श्रीमूला-वैदिकसिद्धान्तसंरक्षिणी-जयमङ्गला-
जयमङ्गलाक्रोडपत्र-नीतिनिर्णीतिनाम्नीभिः
टीकाटिप्पणीभिः संवलितं

# कौटिलीयमर्थशास्त्रम्

प्रथमो भागः

॥ श्रीविश्वेश्वरः शरणम् ॥

❀ श्रीगुरुः शरणम् ❀

श्रीमूला-वैदिकसिद्धान्तसंरक्षिणी-जयमङ्गला-जयमङ्गला-
क्रोडपत्र-नीतिनिर्णीति-नाम्नीभिः
टीकाटिप्पणीभिः संवलितं

# कौटिलीयमर्थशास्त्रम्

प्रथमो भागः

## विनयाधिकारिकं नाम प्रथममधिकरणम्

### प्रथमोऽध्यायः

[ मङ्गलम् ]

**ॐ नमः शुक्रबृहस्पतिभ्याम् ।**

---

॥ ॐ मङ्गलमूर्तये नमः ॥

**टी० गणपतिशास्त्रिभिः विरचिता**

**श्रीमूला**

विघ्नेशं देवतां वाचं प्रणिपत्य गुरूनपि ।
व्याख्यानमर्थशास्त्रस्य कौटिलीयस्य कुर्महे ॥

अथ निखिलविद्याविचक्षणः स्वबुद्धिसामर्थ्यापहृतनन्दराज्यसिंहासनारोपणानुगृहीतचन्द्रगुप्तः कौटिल्यचाणक्यादिपर्यायपदवाच्यस्तत्रभवान् विष्णुगुप्ताचार्यस्त्रिवर्गसम्पत्तिहेतुभूतार्थार्जनोपायोपदेशप्रधानमर्थशास्त्रमारिप्सुः पूर्वाचार्यप्रमाणलक्षणं मङ्गलमाचरति—

'ॐ नमः शुक्रबृहस्पतिभ्याम्' इति ।

ओमिति माङ्गलिकः शब्दः । 'नम' इति प्रणामः । अस्त्वित्यध्याहारः । शुक्रबृहस्पतिभ्यां शुक्रोऽसुरगुरुः बृहस्पतिर्देवगुरुः ताभ्याम् । 'नमस्स्वस्ती'—(२, ३, १६)-त्यादिना चतुर्थी । तौ ह्यर्थशास्त्रप्रवर्तकेष्वाचार्येषु कूटस्थाविति तत्प्रणामोऽत्यन्तमुचितः । तत्र शुक्रप्रणीतमौशनसं नाम, यत्सङ्ग्रहात्मा शुक्रनीतिः, बृहस्पतिप्रणीतं तु बार्हस्पत्याख्यमिति द्रष्टव्यम् । अत एव शास्त्रकर्तृत्वादाचार्यत्वविवक्षया तयोर्देवतात्वाविवक्षणाद् "देवता द्वन्द्वे च" ( ६, ३, २६ ) इत्यानङिह द्वन्द्वो न कृतः ।

श्रीराजेश्वरशास्त्रिद्राविडव्याख्याता

## वैदिकसिद्धान्तसंरक्षिणी

### मङ्गलाचरणम्

श्रीगुरुचरणद्वन्द्वस्मरणं कृत्वाऽर्थशास्त्रस्य ।
वैदिकसिद्धान्तसंरक्षिणीति टीका सपत्रिका क्रियते ॥

ग्रन्थस्य प्रारिप्सितस्य निर्विघ्नपरिसमाप्तये मङ्गलमाचरितमुपनिबध्नाति ॐ नमः इत्यादिना ।

ॐकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

इत्युक्तदिशा श्रवणमात्रेण ॐकारस्य मङ्गलरूपताऽवसेया । अथवा ओमिति शुक्रबृहस्पत्योर्विशेषणम् । ब्रह्मरूपाभ्यामिति तदर्थः । शुक्रेति । भीष्मेण इदमेवौशनससम्मतमर्थशास्त्रमद्य यावत् प्रचलितमस्ति इति महाभारते उक्तत्वात् तत्समयपर्यन्तमौशनसशास्त्रस्य प्रचारनिश्चयात् सञ्जीवनीमन्त्रस्य शुक्रेणैवोपलब्धत्वाच्चादौ तन्नामग्रहणम् । शुक्रस्य अल्पाच्तरत्वात् पूर्वनिपातः इति तु जयमङ्गला ।

### मङ्गलप्रयोजनम्

एतन्नमस्कारः गुरुनमस्कारवत् भगवन्नमस्काररूपः शुक्रबृहस्पत्योः भगवत्तेजोंशरूपत्वात् सिद्ध्यति । तयोस्तदंशत्वं भगवद्गीतायामुक्तम्—

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् । ( अ० १० श्लो० २४ )
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥
( अ० १० श्लो० ३७ ) इति ।

तथा च शुक्रे बृहस्पतौ च वर्तमाना भगवत्कला नमनेन प्रसन्ना सती बुद्धिस्फीतिं प्रतिभां च विस्तारयिष्यतीति सिद्ध्यति ।

### ग्रन्थकर्तरि धृतिः

अत्र च मङ्गलस्य निबन्धनेन नृपतन्त्रार्थमपेक्षणीया धृतिः मन्त्रिणि ग्रन्थकर्तरि अस्तीति स्फुटीभवति । तस्याः खलु सप्तसु राज्याङ्गेषु महती आवश्यकता वर्तते । तथाहि—लोकतन्त्रपराधीनमेव हि नृपतन्त्रम् ।

वित्तं बन्धुर्वयः कर्म विद्या भवति पंचमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥
( म० स्मृ० अ० २ श्लो० १३६ )

इति मनूक्तदिशा धनिकैः, बन्धुभिः, वयोज्येष्ठैः, कर्मकुशलैः, विद्यावद्भिश्च यदा मान्यो भवति तदैव तत्र नृपत्वं सम्भाव्यते । एतत्कर्तृकमान्यतायामेव च

शुक्लपक्षे कला आददानः शशाङ्क इव महीपतिश्चिरं वर्धते नान्यथा। लोकतन्त्रं च संवासिमतप्राप्तिरूपमेव। लोकसम्मतत्वरूपलोकमतलाभश्च सत्वारोग्यशीलबलास्तब्धत्वाचापल्यवतामेव चिरस्थायी भवति इत्यग्रे स्फुटीभविष्यति। उक्तेषु सत्वादिगुणेषु सत्वमेव प्रधानतममभ्यर्हितमेतस्मिन् शास्त्रे तस्यैव राज्यफलहेतुत्वात्।

## सत्त्वं धृतिः

तत्र सत्वस्वरूपं "व्यसने अभ्युदये च यदविकारकर"मिति कामन्दकीयव्याख्यायामुक्तं, धृतिस्वरूपविवेचने "अप्राप्तातीतनष्टानामलाभेऽनभिशोचनमिति" भावप्रकाशने, 'लोभशोकभयादिजनितोपप्लवनिवारणकारणीभूतश्चित्तवृत्तिविशेषो धृति'रिति रसगंगाधरे चोक्तम्। तत्त्रितयपर्यालोचनायां सत्वं धृतिभावरूपमिति सिद्ध्यति। धृतिः किंस्वरूपेत्यालोच्यमाने—

"विवेकः श्रुतिसंपत्तिर्गुरुभक्तिस्तपस्विता।
एते विषयभावेन करणत्वेन च स्थिताः॥
इष्टाधिकानामिष्टानां लाभस्तु विषयत्वतः।
व्रीडा करणभावेन विभावा यत्र सम्मताः॥
प्राप्तभोग्योपभोगस्य त्वप्राप्तातीतभोगयोः।
जीर्णे नष्टे चाविषादो नानुशोचनमित्यपि॥
अनुभावद्वयं यत्र धृतिं तां ब्रुवते बुधाः।"

इति सङ्गीतरत्नाकरोक्तदिशा विवेकश्रुतिसंपत्ति-गुरुभक्ति-तपस्वितैतच्चतुष्टयोद्देश्येनैतच्चतुष्टयं करिष्य इति संकल्पो धृतिरित्युक्तम्।

## कौटिल्ये धृतिः

अर्थशास्त्रस्य प्रस्तुतस्यावलोकनेनैव धृत्यन्तर्गतः ग्रन्थकर्तुर्विवेकः स्फुटीभवति, तत्र तत्राक्षेपसमाधानानां बहुलतरमुपलब्धेः।

श्रुतिसम्पत्ति"र्योऽधीतवान् सुचतुरश्चतुरोप्येकवेदवत्" इति कामन्दकवचनतः स्फुटा।

"कुलशतमप्रतिग्राहकाणामिति लोकप्रवादः" इति जयमङ्गलोक्तेः अभिचाराद्यौपनिषदिकप्रकरणस्य सफलानुष्ठातृत्वात् तस्य तपस्वित्वं निर्विवादम्। मङ्गलग्रन्थेनानेन तस्य गुरुभक्तिरपि धृतिस्वरूपघटिका स्फुटीभवति।

## टीका-प्रयोजनम्

यद्यप्यर्थशास्त्रे दुरूहाणां पदानामर्थनिर्णयः परम्परानुसारेण जयमङ्गलाभिक्षुप्रभमति-प्रतिपदपञ्चिका-नयचन्द्रिका-नीतिनिर्णीतिप्रभृतिटीकासु कृत एवेति नूतनस्यास्य टीकाग्रन्थस्यानावश्यकत्वं प्रतिभायात्, तथापि टीकाग्रन्थेषु अवश्यं कर्तव्येषु

पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।
आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्॥

इति पद्योक्तेषु आक्षेपसमाधानमप्येकं कर्तव्यमस्ति। आक्षेपाश्च पुनः पुनर्नूतना उद्भूता भवन्ति, तेषां समाधानार्थं पुनरपि अन्यस्य टीकाग्रन्थस्य निर्माणमावश्यकं भवति। अन्यथा ग्रंथे अप्रामाण्याशङ्काकवलितत्वानुपयोगित्वादिभिः दुष्टत्वमापद्येतेति नूतनाक्षेपसमाधानाय चिकीर्ष्यमाणस्यास्य "वैदिकसिद्धान्तसंरक्षिण्या"—ख्यस्य टीकाग्रन्थस्य प्रयोजनवत्वं स्फुटं भवेत्।

## अर्थशास्त्र-प्रयोजनम्

अर्थशास्त्रारम्भस्य प्रयोजनं किमिति चेदुच्यते। स्थापितेऽपि लोकतन्त्रे लोकमतं शासनसञ्चालनायापेक्षितं स्वयमेव न प्राप्यते। तत् कथञ्चित् प्राप्तमपि अचिरादेवाननुकूलं भवति सत्वस्य शीलस्य चाभावे। तथा सति स्तब्धता, मानः, परस्परविरुद्धार्थकबुद्धीनामव्यवधानेनोत्पत्तिरूपा चपलता च नैयत्येन भवति। एतेषु दोषेषु समुद्भूतेषु सत्सु भ्रान्तिप्रमादविप्रलिप्सादयो दोषाः स्वयमेवोत्पद्यन्ते। तेन लोकमतं प्रतिकूलं भवति। नियतफलप्राप्तिरपि शास्त्रमन्तरा न भवितुमर्हति, सन्दिग्धे फले प्रवृत्तिस्तु नीत्यपसिद्धान्तः। अतः फलप्रमाज्ञानार्थं शास्त्रारम्भस्य आवश्यकता। शास्त्रप्रसूतं ज्ञानं पूर्वपरम्परया सर्वज्ञेश्वरात् प्राप्तं यत् तदेव ज्ञानं यद्यस्मन्निष्ठं भवति तदा तत्र नित्यज्ञानावृत्तिविषयताशून्यत्वरूपं प्रमात्वमक्षुण्णं भवति।

## सत्वपरिष्कारः

किंच शास्त्रप्रसूतमीशसमवेतज्ञानसमानाकारम् ज्ञानं अस्मन्निष्ठं चेत् सत्वाय भवति इति प्रत्यभिज्ञादर्शने उक्तम्।

स्वाङ्गरूपेषु भावेषु पत्युर्ज्ञानं क्रिया च या।
मायातृतीये ते एव पशोः सत्वं रजस्तमः। इति

यदा किल ईशसमवेतं ज्ञानमस्माकमानन्दरूपतया भातं भवति तदा तत् भानं सत्वपदेन बोध्यते। तथोक्तं भावप्रकाशने—

ज्ञानप्रभा च सानन्दा तस्याः सत्वं प्रजायते। इति

## सत्वं राज्यमूलम्

एवं च एतस्य सत्वस्य बलेनैव—

दिव्येन्द्रजालरम्यार्थदर्शनाभीष्टसिद्धिदः।
अद्भुतः सोऽभिनेतव्यः श्लाघारोमाञ्चदानतः॥

इति नाट्यदर्शनोक्तरीत्या रम्यार्थदर्शनाभीष्टसिद्धिद्वारा जनश्लाध्यतादिकमुपलभ्य राजा सर्वेषां ध्यानं स्वस्मिन् प्रापयति, इति सत्वमेव शास्त्रप्रसूतज्ञानोपलब्धं लोकतन्त्रमूलभूतमिति सिद्ध्यति। तदेवोक्तं कामन्दकीयजयमङ्गलायाम्—

विद्याप्रतिबद्धत्वाल्लोकस्थितेः। इति। ( नी० स० २-१ )

### सत्वं विनाऽविश्वास्यता

यद्यपि पूर्वोक्तसत्वविधुरेषु राज्यसञ्चालकत्वमिदानीं क्वचित् दृश्यते तथापि तेषु लोकमतं पूर्ववदेवानुकूलं स्यादिति वक्तुं न शक्यते। वियतनामयुद्धादिस्वरूपस्य पौण्डमुद्राया अवमूल्यनाद् युत्तरघटनाया देशे दुरवस्थाया वर्तमानायाः सत्याग्रहादि-समस्यायाः स्वरूपस्य च प्रदर्शनेन प्रजाया असात्विकेषु राज्यसञ्चालकेषु अविश्वास्य-त्वस्य विवर्धमानस्योपलब्धेः।

### शास्त्राभावेऽपि प्रवृत्तिः तत्र दोषश्च

अथ शास्त्राध्ययनादिकं विनापि—

अर्थशब्दवपुः काव्यं रसैः प्राणैर्विसर्पति।
अञ्जसा तेन सौहार्दं रसेषु कविमानिनाम्॥
न तथार्थशब्दोत्प्रेक्षा श्लाघ्या काव्ये यथा रसः।
विपाकक्रमभ्याम्रमुद्वेजयति नीरसम्॥

इत्युक्तन्यायेन रसात्मकप्रतीतेर्लोकेषु उत्पादयितुं शक्यतया तया लोकसम्मत-त्वप्राप्तिसम्भवेन शास्त्रस्यारम्भो निष्प्रयोजन एवेति चेदत्रोच्यते।

तत्र तावदादौ रसप्रतीतिः कथं भवतीति चिन्त्यते। तथाहि—
तां प्रति विभावानुभावयोर्व्याप्तिवासना, स्थायिभाववासना, काव्यार्थभावना चेति समूहः कारणम्[1]।

( का० प्र० ३-४-४ अभिनवमतम् )

तत्र विभावानुभावव्याप्तिवासना स्थायिभाववासना च प्रसिद्धैव। काव्यार्थ-भावना तु चित्रतुरगन्यायेन नाटकदर्शिनामात्मनि संजायमाना प्रतीतिः सा च चित्रादौ चित्रत्वतुरगत्वोभयव्यासक्तैकप्रकारताकचित्रतुरगोभयव्यासक्तैकविशेष्यताका भवति। एवं नाट्यदर्शने रामत्वनटत्वोभयपर्याप्तैकप्रकारताकरामनटोभयपर्याप्तैकविशेष्यताका सामाजिकेषु भवति। सेयं साहित्यस्य महान् व्यापारः। एतद्विषये विस्तरस्तु श्रीगोकुलनाथोपाध्यायकृतकाव्यप्रकाशव्याख्यायां द्रष्टव्यः।

इदमेव वासनात्रयं रसाभासमप्युत्पादयितुं समर्थम् भवति तदुत्पादनन्त्वनुचितम्, औचित्यानौचित्यभेदेन तयोर्विशेषात्। तथाहि—

विभावानुभावव्याप्त्यादिसंस्कारः यदि प्रमाजन्यो भवेत् तर्हि तज्जन्या प्रतीतो रस इत्यभिधीयते। यदि च उक्तव्याप्त्यादिसंस्कारो भ्रमजन्यो भवति तदा तज्जन्या प्रतीती रसाभास इति। सत्यामेवं विधायां स्थितौ यदि शास्त्रजन्यं ज्ञानं न भवेत् तदा सत्यत्वबुद्ध्या अयथार्थेषु उक्तव्याप्तिसंस्कारस्योद्बोधेन रसाभासप्रतीतेरुत्पत्यो-

---

१. तदुक्तं काव्यप्रदीपव्याख्यायां तत्सदुपाख्यवैद्यनाथविरचितायाम्-'एवं च रत्यादिनि-रूपितविभावादिनिष्ठव्याप्तिग्रहजन्योद्बुद्धसंस्कारः काव्यार्थभावनाजन्यः संस्कारः रत्यादिवासना चेति त्रयं रसाभिव्यक्तिहेतुः' इति।

पहास्यत्वं स्यात् । अतः प्रमात्मकव्याप्त्यादिज्ञानार्थं शास्त्रस्यावश्यकता स्वीकर्तव्या । तथा चार्थशास्त्रमपि तन्न्यायेन प्रमितव्याप्त्यादिनिर्णयायावश्यमारम्भणीयमिति सिद्ध्यति ।

**नीतिशास्त्रेण सत्वोत्पत्तिः**

एवंरीत्या ईशसमवेतज्ञानप्रभा भावप्रकाशनोक्ता उपर्युद्धृता यदि शास्त्र-चिन्तनेन प्राप्यते तर्हि तेन सत्वलाभ इति निर्णीतम् ।

अत्रेदं चिन्त्यम् । यत् सत्वमदृष्टद्वारा सहकारीति एतत्सहकृतं ज्ञानं धृति-संवलितं प्रातिभं यथार्थमेव उत्पद्यते । तदुक्तं वैशेषिकप्रशस्तपादभाष्ये—

आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेषु अतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु चात्ममनसोः संयोगात् धर्मविशेषाच्च यत्प्रातिभं यथार्थ-वेदनमुत्पद्यते तदार्षमित्युच्यते इति[1] ।

योगसूत्रेऽपि "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" इति वदता पतञ्जलिना स एव विषय उक्तः ।

'शौचसन्तोषे'ति सूत्रे तपस्स्वाध्यायेश्वरप्रणिधानानां नियमेषु अन्तर्भावितानां पुनर्ग्रहणं धर्मविशेषस्याशुलाभप्रदर्शनार्थम्[2] । इति ।

**आनन्दप्रभोपयोगः**

अत्रेदमाकूतम् । शास्त्रप्रसूतज्ञानप्रभा उपर्युक्तसत्वपदार्थघटकस्य आनंद-प्रभात्मकमनःप्रसादस्याभावे सुखाय शान्तये वा न भवति । यतो हि–शास्त्रप्रसूतज्ञानो-पलब्धावपि ज्ञानिषु यदि शास्त्राज्ञामुल्लङ्घ्य विषयप्रवृत्तिः रागद्वेषमूला तर्हि सा दोष-जन्यत्वात् अजितेन्द्रियत्वे पर्यवसायिनी न प्रसादजनिका भवति ? रागद्वेषयोरति-प्रचुरत्वात् । तदुक्तं–"त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः" इति ।

ईशसमवेतशास्त्रानुमोदितज्ञानपारतन्त्र्येण जायमाना प्रवृत्तिस्तु न रागद्वेष-मूलिका भवति । एवं स्थिते जितेन्द्रियत्वं, सत्वे स्थितिञ्च निष्पादयन्तीयं प्रवृत्तिः मनःप्रसादं प्रापयति तेन सुखं शान्तिश्च भवतः । तदुक्तं भगवद्गीतायाम्—

---

१ अत्र भाष्ये धर्मविशेषः यथार्थार्षज्ञानकारणमिति यदुक्तं-तस्य स्फुटीकरणं न्याय-कन्दल्यां-तपःसमाधिजो धर्म इति कृतमस्ति । तद्यथा-तस्योत्पत्तिरनुपपन्ना कारणाभावादित्यनु-योगे इदमुक्तं धर्मविशेषादिति । विशिष्यत इति विशेषः धर्म एव विशेषो धर्मविशेषः विद्यातपः-समाधिजः यो धर्मः तस्मात् प्रतिभोदयः । इति ।

२ तदुक्तं नारायणतीर्थैः-यद्यपि योगाङ्गेषु नियमे शौच-सन्तोष-तपः-स्वाध्यायेश्वर-प्रणिधानानि पूर्वोक्तानि तथापि प्रकृतत्रयाणां दृष्टादृष्टद्वाराऽऽशुकायेन्द्रियमनोजयादिविशिष्ट-फलश्रवणात् तद्दर्शनाच्च ततः पृथगुक्तिरिति मन्तव्यम् ।

( यो० पा० २ सू० १ इति ) ।

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥
प्रसादे सर्वदु:खानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धि: पर्यवतिष्ठते ॥
नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयत: शान्तिरशान्तस्य कुत: सुखम् ॥[1] इति

**नीतिशास्त्रेण सत्वोपलब्धि:**

ननु नीति-शास्त्रस्य विचारे क्रियमाणे सति सत्वगुण: किमुपलब्धुं शक्य: ? इति प्रश्ने शक्य एवेति वदाम: । तथा हि—

उपर्युक्तगीतोक्तदिशा मन:प्रसाद: आत्मवश्येन्द्रियाणां भवति । स च हर्षादनतिरिक्त इति निर्णीयते, भावप्रकाशने "हर्षो मन:प्रसाद: स्या"दित्यादिना उपलम्भात्[2]—

तथा च नीते: वक्ष्यमाणस्वरूपे पर्यालोचिते उपर्युपवर्णिता सर्वविधाऽपि हर्षसामग्री तदनुष्ठाने वर्तते यत: प्रमाणत्रयं, देशकालानुकूल्यं शक्तिं च पर्यालोच्य नीतिमता अग्रे पदं निधातव्यं भवति तेन फललाभो नियत: । अत: अत्रानन्दप्रभारूपो मन:प्रसादोऽस्ति न वेति सन्देहस्यावसर एव नास्ति । ध्वनितं चैतन् नीतिसारे- "आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती" इत्यत्र[3] ।

---

१. मधुसूदनी-टीकायामपि "रागद्वेषाभ्यां वियुक्तैर्विरहितैरिन्द्रियै: श्रोत्रादिभिर्विषयान् शब्दादीननिषिद्धांश्चरन्नुपलभमान:, प्रसादं प्रसन्नतां चित्तस्य स्वच्छतां परमात्मसाक्षात्कारयोग्यतामधिगच्छति । रागद्वेषप्रयुक्तानीन्द्रियाणि दोषहेतुतां प्रतिपद्यन्ते । मनसि स्ववशे तु न रागद्वेषौ । तयोरभावे च न तदधीनेन्द्रियप्रवृत्ति: । अवर्जनीयतया तु विषयोपलम्भो न दोषं वहतीति न शुद्धिव्याघात इति भाव: । एतेन विषयाणां स्मरणमपि चेदनर्थकारणं सुतरां तर्हि भोग: तेन जीवनार्थं विषयान् भुञ्जान: कथमनर्थं न प्रतिपद्येतेति शंका निरस्ता ॥" इति ।

२. हर्षो मन:प्रसाद: स्यादीप्सितार्थोपसंगमात् ।
इष्टसंगमनाद् देवगुरुभर्तृप्रसादत: ॥
अभिरूपोपभोगाच्च बन्धुतृप्ते: सुभोजनात् ।
अचिन्त्येष्टार्थसंपत्तेर्जायते सर्वदा नृणाम् ॥
रोमाञ्चालिङ्गनस्वेदैर्ललितै: करताडनै: ।
नेत्रवक्त्रप्रसादैश्च भाषितैर्मधुरैरपि ।
त्यागदानप्रबन्धै: स्युरनुभावास्तु हर्षजा: ॥ इति ।

३. तासु प्रवर्तमानासु तद्विघ्ननिवारणार्थं दण्डनीति: ।
सा च शाश्वती नित्यस्थितिका तस्या: प्रवर्तमानाया विघ्नेनानुच्छेदात् इति ॥

( ज़० नीति० स० २ )

तस्मान्नीतिं पर्यालोच्य अनुष्ठिते ज्ञानप्रभासम्मिलितानन्दप्रभात्मकहर्षरूपसत्त्वस्योपलब्धिर्नियतैव ।

### साधूनां प्रिया नीतिः

अत एवात्र सत्त्वस्य नैयत्येन नीत्यनुष्ठाने लाभात् साधवः कस्मिन्नप्यवसरे नीतिं परित्यक्तुन्नाभिलषन्ति इति तत्स्वभाव उपवर्णितः "समशीतल" इत्यादिनाग्रन्थेन मानसरामायणे[1]—

सत्त्वगुणस्यास्पदं नीतिमत्त्व येन धार्यते तस्य निर्मलं मनः गृहत्वेन वृणुते भगवानीश्वर इति तुलसीदासकृतमानसरामायणाज्ज्ञायते[2] । एवं तस्मै यो द्रोग्धि स ईशस्य कृपापात्रमपि न भवितुमर्हं इत्यपि सिद्ध्यति ! य ईशकृपापात्रं स एव विश्वास्यः सर्वैः प्रणम्यो भवति । तदुक्तं भागवते —

यस्य प्रसन्नो भगवान् गुणैर्मैत्र्यादिभिर्हरिः ।
तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम् ॥ इति । ( भा० ७ )

तथा-चेश्वरे प्रसन्ने योगक्षेमौ भविष्यतः इति किन्नु वक्तव्यम् !! अत एव—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ( गीता )

इति उपपन्नं भवति । परन्तु मिथ्याज्ञानजन्यवासनया "भीष्मः खल्वयमपवर्गः बहुभद्रकं मे लुप्येत" इति मत्वा नीतिमागमप्रमाणमनुमानं प्रत्यक्षं वा ये अवहेलयन्ति तेषां वचसि कृतौ वा निष्फलत्वात् अप्रमाणिकत्वात् असभ्यत्वात् अश्रद्धेयत्वाच्च गौरवं किं भवेत् ? इति सुधिय एव जानन्तु ।

तदाह श्रुतिरपि-"यस्तित्याज सखिविदं सखायं न तस्य वाच्यपि भागो अस्ति यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम्" इति । अतः साधवः मिथ्याज्ञानजन्यां वासनां तर्कबहुलेन मनसा दूरीकृत्य स्वस्मात् नीतिमत्वरूपं सात्त्विकत्वं नापसारयन्ति ।

### सत्वारोग्ययोः सम्बन्धः

आरोग्यदृष्ट्या विचार्यमाणेऽपि इदमेव सिद्ध्यति यत् आनन्दप्रभासहचरितज्ञानप्रभया नानाविधा मनसो रोगा दूरीभवन्ति । तदुक्तं भावप्रकाशे

---

१. सम शीतल नहि त्यागहि नीती ।
सरल सुभाउ सबहि सन प्रीती ॥
कोटि विघ्न ते सन्तकर मन जिमि नीति न त्याग । इति ।

२. नीति निपुन जिन्हके जग लीका ।
घर तुम्हार तिन्ह कर मनु नीका । इति ।
सम दम नियम नीति नहिं डोलहि ।
परुषवचन कबहूँ नहिं बोलही । इति ( उ० दो० ३७ )

आयुर्वेदीये आस्तिक्यमित्यादिना[1]।

अत्रेदं बोध्यम्—उपर्युक्ता हर्षसामग्री सर्वापि नीतौ वर्तते इति यथा आनन्द-प्रभोच्छलनं अत्र साहजिकम् तथा ईशप्रभायाः शास्त्रद्वारा ग्रहणाज् ज्ञानप्रभापि विवेक-स्वरूपा नासुलभा इति हेतोः नीत्यनुष्ठाने एकाग्रतापि सिद्धैव। तत्सिद्धत्वे सत्वगुणस्य अभिवृद्धिः भवति। सा चेयं द्विविधा भवति, निष्कामोपासनया सकामोपासनया च। तत्र यदि सत्वगुणवृद्धिः सकामस्य उपासनाविषयस्स्यात् तर्हि सा तावन्मात्रमेव फलं दत्त्वा विश्राम्यति। यदि च निष्कामस्य उपासनाविषयः स्यात् तर्हि तेन सञ्चीयमान-मदृष्टं सर्वं सम्पादयितुं समर्थं भवति इति जयमङ्गलाव्याख्याने समाधिनिरूपणावसरे वक्ष्यते।

तस्य बाह्यं स्वरूपम् आस्तिक्यं प्रविभज्यभोजनमित्यादि टिप्पण्यां अनुपद-मुक्तम् स्मर्तव्यम्।

## सत्वगुणाभावे दोषः

यत्तु ज्ञानप्रभामुपेक्ष्य आनन्दप्रभामेव स्वायत्तीकर्तुं केचिद् वाञ्छन्ति। तत्तु न युक्तम्। तत्र पूर्वमपेक्षितसत्वेनोक्तायाः एकाग्रतायाः समाधौ अभ्यर्हितायाः अभावः रजस्तमसोरभिवृद्ध्या आपद्येत। तथा विवेकाभावेन च निष्फलत्वमपि सम्भाव्यते। नैतावन्मात्रेण विश्रान्तिः, किन्तु रजस्तमसी मनसः कामक्रोधाद्यनेकदुरपनेयरोग-कारणभूते भवतः इति अग्रे निरूपयिष्यामः। तेभ्यो नयहीनत्वं नियतं स्यात्। ततः जनापरागोऽपि अनुषक्तः इति। अतो ज्ञानप्रभाप्यपेक्ष्यते आनन्दप्रभायाम्।

नीतिमत्ता येषु वर्तते ते यथा सन्त इति प्रोच्यन्ते तथा ऋषिशब्देनापि व्यव-ह्रियन्ते शास्त्रादौ। तद्यथा–

वंशे विशालवंशानामृषीणामिव भूयसाम्। इति।

(नी० सा० १-२)

नमः शास्त्राय महते त्रिवर्गस्यैकयोनये।
नमस्तस्य प्रणेत्रे च कौटिल्याय महर्षये॥ इति च।

(नी० स० ज० १-१)

शास्त्रकृत्सु ऋषिसंज्ञकत्वं नाधुनिककल्पितं, अपि तु रूढमिति शब्दकल्पद्रुमे

---

१. आस्तिक्यं प्रविभज्य भोजनम् अनुत्तापश्च तथ्यं वचो।
मेधाबुद्धिधृतिक्षमाश्च करुणा ज्ञानं च निर्दम्भता।
कर्मानिन्दितमस्पृहं च विनयो धर्मः सदैवादरात्।
एते सत्वगुणान्वितस्य मनसो गीता गुणा ज्ञानिभिः। इति।

व्यक्तम् विद्याविदग्धमतय इत्यादिना[1] ।

यत्किलापस्तम्बेन धर्मसूत्रे १।२।५।३ अवरे ऋषयो न भवन्ति इत्युक्तम्। तत्तु वेदस्य प्रथमाध्येतृत्वं इति व्याख्यानाभिप्रायेण बोध्यम्। तदुक्तं किरणावल्याम-प्रथमं वेदाध्येतारः इति[2] ।

श्रीशङ्करार्यविरचिता

## जयमङ्गला

पूर्वमतानि यथेदं सङ्गृह्यैकं चकार कौटल्यः ।
टीकान्तराणि दृष्ट्वा सद्व्याख्यानं समुद्धृत्य ॥
क्रियते तथा मयापि त्यक्त्वा च ग्रन्थविस्तरं पूर्णा ।
बालहिता टीकेयं दुर्ज्ञेयं यद् वितत्य सर्वमिदम् ॥

प्रेक्षावतां पूज्यपूजनात् सर्वारम्भा अविघ्नितप्रसरा भवन्तीति मन्यमान आह—'**नमः शुक्रबृहस्पतिभ्याम्**' इति। पूज्याश्च वक्तृत्वप्रयोक्तृत्वैश्वर्ययोगात् त्रिविधाः। तत्र ये शास्त्राणां वक्तारः ते तच्छास्त्रव्यवहारिभिः पूज्यन्ते, ये शास्त्रार्थानां प्रयोक्तारः ते तन्त्रानुवर्तिभिः पूज्यन्ते। ये च अणिमाद्यैश्वर्ययुक्ताः, ते दृष्टादृष्टार्थानुग्राहिणो देवा अत्यन्तं पूज्यन्ते। अनयोश्च त्रितयमपि पूजनीयत्वं निमित्तमस्ति। तत्र कृत्स्नशास्त्रप्रणयनाद् वक्तारौ, देवासुराणां च सन्धिविग्रहप्रयोगात् प्रयोक्तारौ, ऐश्वर्ययोगाच्च देवौ इति मन्यमान इह कौटल्यस्तावेव नमस्कृतवान्। नमः शब्दयोगाच्चतुर्थी। नमः-शब्दश्च मानसीं भक्तिम् अनुमापयति। पाण्यादीनां साधनानां बाह्यां पूजां प्रदर्शयति। अत्र "आनङृतो द्वन्द्वे" ( ६-३-२५ ) "देवताद्वन्द्वे च" ( ६ ३-२६ ) इति नानङ्। पुनर्द्वन्द्वग्रहणात् पूर्वनिर्दिष्टानामेवेति स्थितेः। यथा सूर्याचन्द्रमसोरिति चन्द्रसूर्ययोरिति च व्यवहारौ। ततश्च शुक्रस्याल्पाच्तरत्वात् पूर्वनिपातः।

---

१. ऋषति प्राप्नोति सर्वान् मन्त्रान् ज्ञानेन पश्यति, संसारपारं वा इति ज्ञानसंसारयोः पारगन्तः शास्त्रकृदाचार्यः। विद्याविदग्धमतयो रिषयः प्रसिद्धाः इतिभरतवाक्यादृषिशब्दो रिषिरित्यपरपर्यायत्वेनापि बोध्यते। तस्य व्युत्पत्तिर्यथा मत्स्यपुराणे—

ऋषि हिंसागतौ धातुः विद्यात्सत्यवचः श्रुतिः ।
एष सन्निचयो यस्माद् ब्राह्मणश्च ततस्त्वृषिः । इति । ( शब्दकल्पद्रुमे )

२. ऋषीन् गौतमभरद्वाजादीन् पितॄन् कश्यपच्यवनादीन् देवगणान् कूष्माण्डादीन्। गणशब्दः प्रत्येकमभिसम्बद्ध्यते। प्रजापतयः तत्तत्प्रतिनियतप्रजास्रष्टारः। मनवो राजधर्मप्रवर्तयितारः। देवा हविर्भागभोक्तारः। ऋषयश्च प्रथमवेदाध्येतारः किन्नराः स्वधाभागहारिणः। गणा बलिभागिनः। इति। ( प्र० भा० टी० सृष्टिसंहारप्रकरणम् )

पण्डितराजराजेश्वरशास्त्रिद्राविडव्याख्यातं

## जयमङ्गलाक्रोडपत्रम्

क्रियते इति। यथा उद्देशनिर्देशात्मकं ग्रन्थम् चाणक्यः सर्वस्यार्थशास्त्रस्य पारं विजानानः संक्षेपेण षट्श्लोकसहस्रेण जगाद। तथैवायं टीकानिर्माता सर्वाण्यपि पूर्वाण्यर्थशास्त्रव्याख्यानान्याकलय्य संक्षेपतः जयमङ्गलामिमां टीकां रचितवानित्यस्यापि समस्तार्थशास्त्रटीकाभिज्ञत्वं, मूलकृतः समस्तार्थशास्त्राभिज्ञत्वमिव विशदीभवति।

यतः पूज्यत्वं विना नमनं न भवति यस्माच्च कौटल्यः शुक्रबृहस्पती नमस्करोति तस्मात् तयोः पूज्यत्वं सः मन्यते। तन्निष्ठं पूज्यत्वं किन्निमित्तमिति स्फुटीकर्तुमाह-पूज्या इति।

ननु केषुचिद्ग्रन्थेषु आरम्भे पूज्याः नमस्क्रियन्ते, स्मर्यन्ते कीर्त्यन्ते वा। केषुचित्तु ग्रन्थेषु न ते नमस्क्रियन्ते, स्मर्यन्ते कीर्त्यन्ते वेति नमस्काररूपमङ्गलस्य दृष्टसाधारणतया प्रयोजनवत्त्वम् कथं मन्तव्यम्? इति चेत् प्रतिभासम्पत्तिःमङ्गलस्यासाधारणं फलमिति। तथाहि—प्रतिभासंपत्तिरहितः अधीतशास्त्रोऽपि-अदृष्टकर्मा-कस्मिन्नपि पदे अधिष्ठातुमयोग्यो भवति[1]। अतः समस्तशास्त्रेषु अधीतेष्वपि विद्यावतां प्रतिभासम्पत्तेरपेक्षा वर्तत एव। सेयं गुर्वादीनां पूज्यानां प्रसादाधीनेति तत्र तत्रोक्तम्। तद्यथा—

> यस्य देवे परा भक्तिः यथा देवे तथा गुरौ।
> तस्यैतेऽकथिता ह्यर्थाः प्रकाशन्ते महात्मनां॥
> अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च।
> यत्कृपालेशमात्रेण नमोऽस्तु गुरवे सदा॥ इति॥

एवमेव पूज्यैः सह विनम्रीभूय कृता सङ्गतिर्वादश्च प्रतिभास्फूर्तये कारणं भवति·इति न्यायसूत्रव्याख्याने वाचस्पतिमिश्राः[2]।

---

१. यदाहुः—"नेति बाहुदन्तीपुत्रः—

शास्त्रविद् अदृष्टकर्मा कर्मसु विषादं गच्छेत्—अभिजनप्रज्ञाशौचशौर्यादियुक्तान् कुर्वीत" इति। एतद्विषये कौटिल्योऽपि 'सर्वमुपपन्नम्' इति ग्रन्थेन स्वसम्मतिं सूचयति।

२. तथाहि सहब्रह्मचारी सहाध्यायी। गुरुशिष्यसहाध्यायिभ्योऽन्ये शास्त्रेणानुशिष्टाः· शिष्टश्रेयोर्थिनः श्रेयसि मोक्षलक्षणे श्राद्धास्तेषामपवर्गे श्रद्धादर्शनादस्ति तदुपायाभ्यासः प्राग्भवीय इत्यनुमीयते। तेन तेषामपि प्राग्भवीयसंस्कारवशात् प्रतिभोपासनीयेति। अभ्युपेयादभिमुखमुपेत्य गुर्वादिभिः सहेत्यर्थः इति। न्याय० वार्ति० तात्प० टीका० ४ अ० २ आ० ५१ सू० ६६८ पृ०।

साहित्यविदोऽपि इमां प्रतिभां शक्तिपदेन व्यवहरन्ति। तत्स्वरूपं गोकुलनाथोपाध्यायैः एवमुक्तम्—

"मनसि सदा सुसमाधिनि विस्फुरणमनेकधाऽभिधेयस्य।
अक्लिष्टानि च पदानि विभान्ति यस्यामसौ शक्तिः" ॥ इति ॥

किञ्च यदि पूज्याः कञ्चनोपेक्षन्ते शपन्ति वा, तर्हि सत्यवसरे तस्मिन् प्रतिभोद्बोधकसंस्काराणामुद्बोधो न भवति इति महान् दोषः मङ्गलाभावे स्मर्तव्यः। अत्र युद्धसमये कर्णादीनां प्रसङ्गविशेषे शस्त्रास्त्रे प्रति विस्मरणमुदाहरणं पर्याप्तम्।

पूज्यानामपूजने कारणं गर्वेण मदेन वा विकृतं मनो भवति इति भावप्रकाशने द्रष्टव्यम्[1]। न च इष्टापत्तिरितिवाच्यम् राज्यहानिप्रसंगात्।

अत्रेदमाकूतम्—राज्यसञ्चालने प्रतिक्षणं विलक्षणानि विलक्षणानि कार्याण्युपस्थितानि भवन्ति। तत्र अनेकविधाः प्रयोगा अपि अभ्यूह्या भवन्ति राजनीतिविद्भिः। परन्तु इमे राजनीतिविदो यदि पूज्यान् न नमन्ति, न स्तुवन्ति, न कीर्तयन्ति वा, तर्हि तेषु गर्वमदहेतुकया रजस्तमस्सहचारिण्या मनोविकृत्या पूर्वोक्तरीत्या प्रतिभोद्बोधकसंस्काराणां अनुद्बोधो निश्चतः।

तथाच सकलजनमनोरञ्जकस्य कवित्वस्य बीजभूतं यदौचित्यं तदेव गर्वमदाभ्यामुपहन्यते ततो विवेकस्थाने जाड्यमापद्यते! तेन पारतन्त्र्यमवश्यंभावि[2]।

गुरुपरम्पराऽध्ययने विशेषः।

गुरुपरम्पराप्राप्तस्य अस्मच्छास्त्रस्य अयं विशेषः यत् पूज्यभक्तिपूर्वकं यदि शास्त्रमधीयते तर्हि शास्त्रार्थः स्वयमुपस्थितो भवतीति। यदि गुरुभक्तेः आश्रयणं न क्रियते तर्हि तन्मूलकनिर्विकारतायाः अभावेन मनः क्षिप्तं विक्षिप्तं मूढं वा भवेत्। तेन मस्तिष्कसम्बद्धेषु ज्ञानतन्तुषु कार्यकरणाक्षमत्वम् प्रतिभाया अभावो वा निश्चितः।

---

१. गर्वो विद्याबलैश्वर्य-वयोरूपधनादिभिः।
तमनुत्तरदानेन शून्यालोकैरभाषणैः।
आश्रितैरप्यवज्ञानात् दोर्द्वयांगावलोकनात्।
असूयामर्षपारुष्यापहासगुरुलंघनैः।
अकारणादधिक्षेपाद्गात्राणां विकृतैर्वदेत्।
विद्याभिजात्यसंपत्तिमदेऽनुत्तरभाषणम्।
अवज्ञागर्भितं वाक्यं सुहृदामप्यानादरः। इति।

२. जाड्यमप्रतिपत्तिःस्यात् सर्वकार्येषु सर्वदा।
प्रियाप्रियश्रुतैस्तत्तद्दर्शनैर्व्याधिभिर्भवेत्॥
सुखदुःखाविवेकित्वमिष्टानिष्टानभिज्ञता।
तूष्णीमप्रतिभा चाक्ष्णोरनिमेषोऽनवेक्षणम्॥
अभाषणं पारवश्यमेतैर्जाड्यन्निरूप्यते। इति।

तथा सति स्वातन्त्र्यमसत्प्रायमेवेति प्राक् उक्तमेव। मनसः सविकारतायां ज्ञानतन्तुषु अशक्तिः कथं भवतीति चिकित्साशास्त्रे स्पष्टम्[१]।

---

१. तथाहि चिकित्साचन्द्रोदये—

मस्तिष्क की इस वरकी या बिजली की ताकत के शरीर में चक्कर खाने या चारों तरफ संचार करने से संवेदना-चेतना और इच्छानुसार गति ये ही काम नहीं होते, बल्कि वे सब भी काम होते हैं जिनसे हमारी इच्छा का कोई सम्बन्ध नहीं है। पेट का हाजमा और दिल की धड़कन ये दोनों काम भी स्नायविक शक्ति से होते हैं। आप पेट से ताल्लुक रखनेवाली स्नायु को काट दीजिये, हाजमा या पाचनक्रिया बन्द हो जायगी, बिजली की बैटरी लगा दीजिये फिर पाचन कार्य या हाजमा होने लगेगा।

दिल और रक्तवाहक नाड़ियों में होकर खून सारे शरीर में चक्कर लगाया करता है। खून का यह दौरा भी स्नायविक शक्ति के प्रवाहों को खींचने और दूर करनेवाली शक्तियों के वल से होता रहता है। निश्चय ही खून का दौरा भी स्नायविक शक्ति के प्रवाहों को खींचने और दूर करनेवाली शक्तियों के बल से होता है निश्चय ही खून का दौरा जारी रखनेवाली शक्ति है। नेचर ने रक्त संचालन या खून के दौरे करने के लिये जो कल पुरजे बनाये हैं, वे सभी स्नायविक शक्ति से चलते हैं। मसलन् लकवा या फालिस मारे हुए अंगों में पैदा हुये जख्म या घाव शरीर के और भागों की अपेक्षा बहुत देर में और बड़ी मुश्किल से आराम होते हैं। स्नायविक शक्ति के बिना ठीक रहें, जिन्दगी का कोई भी काम अच्छी तरह से नहीं चल सकता। इस विषय का ज्ञान होने पर प्रत्येक विचारवान् का धर्म और कर्तव्य है कि वह, अपने स्नायुमण्डल को सदा निरोग और दुरुस्त रखें। इस सिस्टम के निरोग रखने के लिए उन तमाम आदतों से किनारा कर लेना चाहिए जो शारीरिक और मानसिक शक्तियों के बल को क्षीण करती हैं। केवल शारीरिक शक्तियों की रक्षा से ही काम नहीं चल सकता, मानसिक शक्तियों की रक्षा की उससे कम जरूरत नहीं है, क्योंकि शरीर और मन का बड़ा गहरा सम्बन्ध है। शरीर और मन के दर्म्यान हमदर्दी या संवेदना का सम्बन्ध स्नायुमण्डल ने स्थापित कर रखा है। अतः मादक और उत्तेजक पदार्थों का हानिकारक असर स्नायुओं पर अवश्य होता है।

काफी चाय अफीम और शराब की आदत से स्नायुमण्डल या नरवस सिस्टम को बड़ी हानि पहुँचती है। तमाखू को लोग मामूली चीज समझते हैं पर वे भी इनसे कम हानिकारक नहीं हैं। उससे भी अनेक दुस्साध्य और चिरस्थायी रोग पैदा होते हैं। इन चीजों के चाहनेवाले इनके बुरे नतीजों को नहीं समझते। इन पदार्थों के सेवन से एक प्रकार की प्रसन्नता और जिन्दादिली पैदा होती है। वही इनके चाहनेवालों को अन्धा कर देती है। उसी की वजह से वे इन बुरे नतीजों का ख्याल तक नहीं करते। इन चीजों ने करोड़ों स्त्री पुरुषों को निकम्मा बना दिया। लाखों पुरुष पुंस्त्व खोकर क्लीव हो गये। लाखों की बुद्धि और स्मरण शक्ति नाश हो गयी। ऐसा होते-होते अन्त में वे उन्माद रोग के शिकार हो गये।

भाइयों! यदि आप स्नायुमण्डल को निरोग रखकर संसार भर के रोगों से बचना

टिप्पण्युद्धृतः मस्तिष्कविकारः अन्यशास्त्रेषु राजसतामससंज्ञया व्यवह्रियते। तदुक्तं-अर्थशास्त्रप्रतिपादितान्वीक्षिकीपदव्यवहार्यषष्टितन्त्रसंग्रहरूपायाम् साङ्ख्यकारिकायाम्[1] तत्रैव द्रष्टव्यम्।

अतः एतन्निरासहेतुभूतस्य सत्वात्मकस्य मूलटीकायामुप-( वैदिक सि० ) वर्णितस्य धृतिभावस्य लाभाय शिष्याः पूज्यान् नमस्कुर्वन्ति स्तुवन्ति, कीर्तयन्ति इदं यद् दृष्टं फलं मङ्गलस्य, तन्न गुरुभक्तिरहितेषूपलयभ्ते इति।
दृष्टादृष्टार्थानुग्राहिणो देवा इति।

## दृष्टोपकारकत्वम् देवत्वस्य

ननु देवत्वस्य दृष्टार्थानुग्राहकत्वं कथमिति चेत् उच्यते। देवत्वं हि ईशकर्तृककार्योपकरणत्वमिति व्यवस्थापयिष्यते। सर्वज्ञेन परमेश्वरेण उपदिष्टादवैदिकविधिभागाद् या प्रेरणा उपलभ्यते तया इष्टसाधनत्वमनुमाय प्रवृत्तौ सत्यां अस्मासु देवत्वं भवितुमर्हति, तथा तत्र नियतफलप्राप्त्या संतोषसुखमपि नियतम्। इदमेव सत्त्वगुणस्य स्वरूपमित्येतत्सर्वं विशिदीकृतं टीकायायाम्। एवंरीत्या निश्चितायां फलप्राप्तौ ईश्वरदासभावेन प्रवृत्तो यो नीतिमान् राजा तस्मिन् अवज्ञापारुष्यानृतभाषणपरदारग्रहणगृहभंजनाग्निदाहादिक्रोधोत्पादकव्यवहाराभावेन सर्वव्यवहारेषु आलापेषु स्पर्शेषु चेष्टितेषु निमित्तेषु च माधुर्यं स्वतःसिद्धं भवति। किञ्च तत्र प्रमाणपरतन्त्रत्वात् अबाधितत्वमौचित्यमपि भवत्येव। इदमेव देवत्वस्य महत्फलं यत् तेन माधुर्यस्य आस्वादग्रहणाय पुष्पेषु षट्पदा इव लोकस्य मनांसि आकृष्टानि भवन्ति। इदमेवाकर्षणं राजनीतिशास्त्रदृष्ट्या आन्दोलनमित्युच्यते। तच्च आवेगे अन्तर्भूतम् तदाहुः—

आवेगस्तु महोत्पातवातवर्षाग्निकुञ्जरैः।
प्रियाप्रियश्रुतैः शत्रुव्यसनाभिहतैरपि। इति। ( भा० प्र० १ अ० )

अत्र हि आवेगस्य अष्टविधो विभागः उक्तः। तत्र प्रियश्रुतिजन्यः आवेगः

---

चाहते हों तो कानून कुदरत को मानो, प्रकृति की आज्ञाओं का पालन करो, पालन ही न करो, कानून कुदरत के खिलाफ कोई काम मत करो। उसकी आज्ञा को मानना अपना प्रधान कर्त्तव्य धर्म समझो। लेकिन यह तभी हो सकता है कि लोग कानून कुदरत या स्वास्थ्यरक्षा विषयक बातों को जानें। इन बातों का ज्ञान लोगों को आयुर्वेदीय ग्रन्थ पढ़ने से ही हो सकता है। मनुष्य जन्म लेकर, मनुष्य को पहले सदा आरोग्य लाभ करने और इस जगत् में अधिक से अधिक दिनों तक रह सकने की विद्या उपार्जन करनी चाहिए। निरोग और दीर्घजीवी हुए विना मनुष्य जगत् में कौन-सा अच्छा काम कर सकता है? अतः इस विद्या का अध्ययन न करना पाप है।" इति।

१. सत्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः। इति सा० का०

(क्रोड०) उक्तान्दोलनस्वरूपः उच्यते। तस्मिन् सति वस्त्राभरणदानालिङ्गनादीनि कार्याणि निसर्गसिद्धानि अनुभावरूपाणि संभवन्ति। तदुक्तम्—

वस्त्राभरणदानाश्रुपुलकालिङ्गनादिभिः।
अभ्युत्थानेन वर्ण्योऽयं प्रियश्रवणजो बुधैः॥ (भा० प्र० १ अ०) इति॥

एवंच देवभात्रे स्थितेन राज्ञा प्रियश्रवणप्रयुक्तः लोकेषु आन्दोलनात्मकः दानव्यवहाराद्यनुभावकः आवेगः दृष्टार्थः संचालयितुं शक्यः। लोकमतमपि आवेग-प्रयुक्तं राज्ञा सहजत एव प्राप्तुं सुलभमिति देवत्वस्य आवेगोत्पादनद्वारा दानमुखेन लोकमतप्राप्तिरूपलोकतन्त्रात्मकदृष्टार्थोपकारकत्वं सिद्धम्।

अत्यन्तं पूज्यन्ते इति। देवपूजने आत्यन्तिकत्वं अनैश्वर्यासमानाधिकरणै-श्वर्यादिगुणसंपत्तिहेतुकत्वम्। तच्च रससंक्रमणवत् ध्यानपूजनादिनापि संभवति। तथाहि-ध्यातव्या देवप्रतिमा यादृशी ऐश्वर्यादियुक्ता भवति तदुपासकेषु तादृशस्यै-श्वर्यादेः सङ्क्रमणं भवतीति देवपूजनं श्रद्धया कुर्वत्सु एकलव्यसदृशेषु इतिहास-प्रसिद्धमेव। ध्वनितं चैतदायुर्वेदेऽपि—

पूर्वं पश्येद् ऋतुस्नाता यादृशं नरमङ्गना।
तादृशं जनयेत्पुत्रं भर्तारं दर्शयेत् अतः[1]॥ इति
(सु० अ० ३ श्लो० २६)

यदि च ध्येयप्रतिमायां वैगुण्यं भवेत् तर्हि ध्यातर्यपि वैगुण्यम् ऋतुस्नातृन्या-येन संभवितुमर्हति। अणुमात्रमपि वैगुण्यम् ईशकार्ये अनुरक्तयोः शुक्रबृहस्पत्योः तद्दशायां नास्ति। अतएव अग्रे "कृत्स्नशास्त्रप्रणयनाद् वक्तारौ, देवासुराणां च संधिविग्रहप्रयोगात् प्रयोक्तारौ, ऐश्वर्ययोगाच्च देवौ" इति वक्ष्यते आचार्येण। तेन तयोः सुलक्षणैश्वर्यसम्पन्नतया तावधिकृत्य ध्यातरि चाणक्येऽपि वक्तृत्वादिगुणत्रयं सम्भावयितुमर्हमिति ध्वनितम्। **ऐश्वर्ययोगादिति**। एतेन शुक्रबृहस्पत्योः धर्मः ज्ञानं वैराग्यं च आसीत् इति सिद्ध्यति। तज् ज्ञेयम् सांख्यतत्त्वकौमुद्याम्[2]।

---

१. "ब्रह्माणमीश्वरं विष्णुं स्कन्दं च संप्रेक्ष्य अभिवाद्य निष्क्रम्य सूर्याचन्द्रमसाविति नतु प्रेतपिशाचरक्षांसि। शुद्धस्नातमात्रा हि सा यं वा पश्यति मनसा वा अभिध्यायति तादृशा-चारवपुषं प्रायेण जनयति। तस्माद् देवगोब्राह्मणगुरुवृद्धाचार्यान् सतः पश्येत्। कल्याणमनाः स्यात्" इति। कश्यप सं० जा० सू० शारीराध्याय।

२. "अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्।
सात्त्विकमेतद्रूपं तामसमस्माद् विपर्यस्तम्। सां० का०
तथैव न्यायसूत्रवार्तिकतात्पर्यटीकायाम् इदमेव तत्त्वमभिसंधाय
'नमामि धर्मविज्ञानवैराग्यैश्वर्यशालिने।
निधये वाग्विशुद्धीनाम् अक्षपादाय तायिने'॥
इति मङ्गलं कृतम्। तद्व्याख्याने वचसः अविशुद्धयश्चतस्रो भवन्ति। तासां निरासः धर्मज्ञानादिभिः, नान्यथा इत्यादि बहुविस्तरेण प्रपञ्चितमुदयनाचार्यैः—

**(क्रोड०)** एवञ्च धर्मज्ञानादिसम्पन्नानां लक्षण्यायाः प्रतिमायाः ध्याने कृते सति आत्मन्यपि ऐश्वर्यं तद्विधमेव प्राप्तुं शक्यते। राज्ञां इदमेवैश्वर्यं प्रभुत्वम्, यस्य प्रभावतः शासनपत्रे लेखारूढो विषयः अविकृतरीत्या कार्यकरणसमर्थो भवति। एतस्यैश्वर्यस्य अल्पीयस्यामपि न्यूनतायां महाननर्थो भवितुमर्हति। तद्यथा रघुनाथराव पेशवामहोदयेन "नारायणरावांस धरा" इति शासनद्वारा आज्ञप्तम्। तत्र मध्ये केनचित् 'ध' स्थाने 'मा' पदं संयोज्य शासनं प्रेषितम् तस्य परिणामः "पेशवा" इतिहासे प्रसिद्धः।

ईदृङ्मेधावी सन् नरः यदि पूर्वोक्तसात्त्विकगुणधर्मज्ञानादिसम्पन्नः एकाग्रभूमिकायां स्थितो भवति। तर्हि स एकाक्यपि भवतु, नृपतिपदाय शमाय च क्षमो भवति। तदुक्तं दशकुमारचरिते उत्तरपीठिकायाम्—"एकशरीरिणमपि मर्त्यं चक्रवर्तिनं विदधीमहि यद्यस्मदुपदिष्टेन मार्गेण आचर्यते" इति। **देवाविति—**राजनीतिशास्त्रे देवत्वस्य नीतिलक्षणानुसारेण कीदृशं स्वरूपं भवितुमर्हतीति वैदिकसिद्धान्तसंरक्षिण्यां संक्षेपतः उक्तमस्ति। तत् विशदीक्रियते।

सर्वज्ञस्य परमेश्वरस्य निःश्वासेन प्रसूतः वेदभागः कस्मिन्नपि अंशे सदोषः अस्तीति अद्ययावत् केनापि प्रमाणपुरःसरं न साधितम्। तत्र यो विधिभागः तत्प्रेरितमेव यदि अस्माभिः सहर्षम् अनुष्ठेयत्वेन स्वीक्रियते तर्हि अस्मासु वेदपरम्परया प्राप्ता ज्ञानप्रभा सफलत्वात् आनन्दप्रभामिश्रिता सती सत्वरूपेण प्रकटीभवति इत्युक्तम्। वेदप्राप्ता च ज्ञानप्रभा येन साधिता यदि च तस्य मनः प्राणो वाक् च भगवतः परमेश्वरस्य उपकरणभूता भवन्ति तर्हि तस्मिन् देवत्वं भवति। अन्यथा तु केवलं मन प्राणवाक्संज्ञयैव ते व्यवह्रियन्ते। अन्यत्रापि एवमेव देवत्वं बोध्यम्। अथ मनआदीनां स्वरूपं नीतिलक्षणानुसारेण प्रसङ्गाद् विमृश्यते। तथाहि—

सत्वपरिणामि द्रव्यं मनः, रजःपरिणामि द्रव्यं प्राणः, तमःपरिणामि द्रव्यं वागिति। तदुक्तम्—भावप्रकाशने तत एव द्रष्टव्यम्[1]।

---

तद्यथा नमामीत्यादि। धर्मो निवर्तकः, विज्ञानं शरीरादिविविक्तात्मसाक्षात्कारः, वैराग्यं रागाभावः, ऐश्वर्यं भूतेन्द्रियजयस्तच्छालिने। अतएव निधये वाग्विशुद्धीनाम्। अधर्महेतुको ह्यविवेकः अविवेकहेतुकमवैराग्यम्। अवैराग्यमूलमनैश्वर्यम्। तन्मूलाश्च वचसामविशुद्धयः। तिस्रः खल्वेताः। तत्र प्रथमा निरभिधेयता, द्वितीया विपरीताभिधेयता, तृतीया निष्प्रयोजनता। ता एताः कथं भूतेन्द्रियजयिनो महामुनेर्भविष्यन्ति। अजितभूतस्य हि विवक्षोस्तथाभूतप्रयत्नानिष्पत्तेरनभिधेया वाग्भवति। अजितेन्द्रियस्य विपर्यासविप्रलिप्साहेतुको विपरीतार्थो वचनसंदर्भः। अजितमनसश्च प्रमादोन्मादवतो निष्प्रयोजनः। एताश्च वचसामशुद्धीः छलजातिनिग्रहस्थानेषु सूत्रकार एव प्रपञ्चयिष्यति। सोऽयं न तथेति भवति वाग्विशुद्धीनां निधिः। अतएव तायी तत्त्वाध्यवसायसंरक्षणसम्प्रदायप्रवर्तकः। इति।

१. यत्सत्त्वपरिणामि स्याद् द्रव्यं तन्मन उच्यते।
ईश्वरस्य च मुक्तानां तत्सङ्कल्पो भविष्यति। अ० १ भा० प्र०
संसारिणां मनस्त्वेन परिणम्य प्रवर्तते। पृ० ६, ७—

(क्रोड०) द्रव्यमित्यनेन जीवोत्पत्तिविचारे कृतया भावप्रकाशनोक्तदिशा शुक्रशोणितात्मकं ग्राह्यम् इत्यभ्यूह्यते[1]। भावप्रकाशने प्रतिपादितं शुक्रशोणितात्मकं द्रव्यं "बहु स्यां प्रजायेय" इति श्रुतेः संकल्परूपमेव बोध्यम्। स च सङ्कल्पः गुणत्रयभेदेन त्रिधा भवति सत्वादिभेदात्।

अत्रायं विवेकः सत्त्वपरिणामि द्रव्यं जीवनिष्ठं चेत् मनः। तद् एव सत्व-परिणामि द्रव्यं ईश्वरे मुक्ते च समवेतं सत् सङ्कल्पः इति व्यपदिश्यते। एवमेव तदेव शुक्रशोणितात्मकं द्रव्यं सङ्कल्पात्मकं रजःपरिणामवत् जीवनिष्ठं चेत् प्राणः। ईश्वरमुक्तयोस्तु समवेतं तदेव स्पन्द इति व्यपदिश्यते। तथैव उपर्युक्तं द्रव्यं सङ्कल्पात्मकं तमःपरिणमवत् जीवसमवेतं चेत् शब्दरूपतां भजते। ईशसमवेतन्तु तदेव शोभना वाक् भवति[2]।

एतेन इदं सिद्धम् यत् ईश्वरे मुक्ते जीवे च स्थिता विभिन्नविभिन्ननाम्ना व्यपदिश्यमानाः मनःप्राणवाचः सत्वरजस्तमःपरिणामिरूपाः द्रव्यात्मिकाः कार्यं कुर्वन्ति इति। ये च रविः चन्द्रः वह्निः इत्यादिनाम्ना तत्र तत्र पुराणेषु देवाः व्यपदिश्यन्ते पुनस्त एव जीवस्य तत्तत्स्थानेषु स्थित्वा कार्यं प्रचालयन्ति च इति। तदुक्तम्[3] भागवते—

---

यद् रजःपरिणामि स्याद् द्रव्यं स प्राण उच्यते
ईश्वरस्य च मुक्तानां क्रियाहेतुः स ईरितः।
संसारिणां पुनरसौ प्राणाकारेण तिष्ठति।
यत्तम.परिणामि स्याद् द्रव्यं सा वागुदाहृता।

अ० १·भा० प्र० पृ० ६

१. द्वाभ्यां त्रयाणां व्यक्तिः स्यात् त्रिभ्यो भवति पञ्चकम्।
पञ्चभ्य. पञ्चकानान्तु चतुष्कं प्रतिपद्यते।
शुक्रार्तवौ द्वयं तत्र त्रितयन्तु गुणत्रयम्।
भूतानि श्रवणादीनि शब्दवागादिपञ्चकम्।
भापणादीनि वाक्यादिचतुष्टयमुदाहृतम्।
तत्संशयप्रमातृत्वनिश्चयानुभवार्थकृत्। इति।

२. ईश्वरस्य च मुक्तानां सा वाग् भवति शोभना।
संसारिणां परिणमेच्छब्दाकारेण सा पुनः।
उक्ता क्रोधादिभिर्भावैस्तत्फलाव्यभिचारिणी।
या मुक्तेश्वरवागुक्ता सा वाणीत्युच्यते बुधैः॥ इति।

३. तदुक्तम् —रविः सोमश्च वह्निश्च तस्य तस्य यथाक्रमम्।
अधिष्ठातार इत्येषा व्यवस्था योगिभिः कृता।
तत्तद्रूपमधिष्ठाय तिष्ठन् आत्मा च तन्मयः।
एते मनःप्राणवाचो मुक्तानामीश्वरस्य च। इति।

(क्रोड०) दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः । इत्यादि । भा० ३ श्लो० २

एतेषु देवेषु उक्ता रविसोमवह्नयः शरीरे वर्तमानाः सन्तः मनःप्राणवाग्रूपा भवन्ति इति ज्ञेयम् ।

एवं च उपाधिभेदेन देवत्वं मनस्त्वादि च तेषु तेषु देवेषु सिद्धम् । स च उपाधिः "कार्योपकरणात्मत्वात् देवा इत्येव कीर्तिताः" इति भावप्रकाशनोक्त-रीत्या ईशकार्योपकरणात्मकत्वम् । तच्च कार्यं जीवस्य ईश्वरस्य च भेदेन द्विधा भवति तत्र अस्मिन्नेव शरीरे यदा जीवस्य कर्तृत्वमस्ति तदा इमे मनःप्राणवाचः जीवकार्योपकरणानि भवन्ति । यदा तु ईश्वरस्य कर्तृत्वं तदा तु ते ईशकार्योपकरणानि भवन्ति तदानीं त एव देवा इति व्यपदिश्यन्ते । जीवस्य कर्तृत्वे अयं स्वतन्त्रः । ईशस्य कर्तृत्वे तु सः स्वतन्त्रः इत्यन्यदेतत् । तथाचायं निष्कर्षः, ईशकार्ये एते यदि उपकरणानि स्युः तर्हि ईशकार्योपकरणत्वं देवत्वं तेषां बोध्यम् । जीवकार्योपकरणत्वे एवं यथाश्रुतनाम्नैव मनः प्राणो वाक् इति ज्ञायन्ते ।

यद्यपि आपाततः जीवेन सह सम्बद्धस्य शरीरस्य चेष्टां प्रति ईश्वरस्य कर्तृत्वं न प्रसिद्धम् । तथापि विचार्यमाणे ईश्वरोऽपि शरीरचेष्टां सञ्चालयन् जीवे वर्तत इति अवश्यं वक्तव्यं भवति । तथाहि—

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः[1] ।

इत्यादिगीतोक्तवचनप्रामाण्यानुसारेण उपभुक्ताहारपचनकर्तृत्वं भगवतः ईश्वरस्यैव अस्ति इति सिद्ध्यति । एवं शरीरान्तर्वर्तिनीनां मांसपेशीनां चेष्टायां विचार्यमाणायां सत्यां तच्चेष्टाकर्तृत्वमपि शारीरविज्ञानानुसारेण ईश्वरे सिद्ध्यति । तथाहि-शरीरे मांसपेश्यः द्विविधाः वर्तन्ते । तासु काश्चन जीवसञ्चालनाधीनाः सत्यः चेष्टन्ते यथा करप्रसारणसंकोचनादिकारिण्यः पेश्यः । अपराश्च स्वतन्त्राः ईश्वराधीनाः । तथाहि-जीवो जाग्रद्दशायां चेष्टमानः स्वशरीरे परिश्रान्तः दुःखमनुभवन् विश्रान्ति-मीहते । यदि स न विश्राम्येत् तर्हि भुक्तस्याहारस्य रसादिरूपेण परिणामो न भवतीति आयुर्वेदसिद्धम्, जीवस्य विश्रामो हि निद्रात्मकः । तदानीं अस्य सर्वाश्चेष्टाः अवरुद्धा भवन्ति एतदवस्थायां समानवायुः[2] भुक्ताहारं रसरूपेण परिणतं तत्तच्छिराद्वारा सर्वत्र सञ्चारयति । एतत्सञ्चरणसमये तत्र तत्र प्राप्तरसानां ग्रहणार्थं शिराः स्वमुखमुद्-घाटयन्ति । रसग्रहणानन्तरं मुखं पिदधति । अयं शिराणां व्यापारः स्वतन्त्रः परं स कस्य प्रेरणया निद्रासमये प्रचलित इति विचार्यमाणे सुप्तस्य जीवस्य कर्तृत्वबाधात् कश्चन अन्यः कर्ता वर्तते इत्यनुमीयते । स ईश्वरान्नातिरिक्तः ।

कर्तृत्वं हि स्वातन्त्र्यापरपर्यायम् । "स्वतन्त्रः कर्ता" इति पाणिनीयसूत्राभि-

---

१. प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् । गीता०
जाठरो भगवानग्निः ईश्वरोऽन्नस्य पाचकः । सुश्रुत०

२. समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः ।
अन्नं गृह्णाति पचति विवेचयति मुञ्चति । भाव० न

(क्रोड०) धानात्। तच्च उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्वरूपमिति तत्र तत्र नैयायिकैः प्रतिपादितं वर्तते। ईदृशं स्वातन्त्र्यं यत्र स एव चेतनः। यत्र तन्नास्ति,सः अचेतनः, जड इत्यर्थः। सम्मतं चैतत् वैज्ञानिकानामपि। एवञ्च निद्रावस्थायामबाधितरूपेण जडात्मकशिरामांसपेशीप्रभृतीनां सञ्चालनं कश्चन जाग्रत् कुर्वाणः स्वतंत्रः चेतनः अस्ति स स्वतन्त्रत्वात् ईश्वर एव। अतः शरीरे उपाधभेदेन जीवस्य ईश्वरस्य च कर्तृत्वं सिद्धम्। मनःप्राणवाचोऽपि जीवकर्तृकक्रियायां यदा उपकरणभूताः भवन्ति तदा जीवः, देवो वा भवतु मानवो वा यः कोऽपि वा सः अल्पज्ञत्वात् अबाधिते एव अर्थे ताः प्रेरयेत् इति न नियमः। एव स्थिते देवोऽपि जीवः तत्काले भ्रान्त इति वक्तुं शक्यते। अतएव शुक्रचार्यः सुरया सह राक्षसैः चूर्णितं शिष्यङ्कचमपि भ्रान्त्या पपौ, इति इतिहासप्रसिद्धमेव। एतस्यामवस्थायां शुक्रबृहस्पतिप्रभृतीनां वचनमपि अननुष्ठेयत्वरूपमप्रामाण्यमावहति। यदा किल मानवोऽपि एकाग्रभूमिकायां तिष्ठन् ऐश्वर्यादिगुणचतुष्टयसम्पन्नः सन् स्वकीयं कर्त्तृत्वमपहाय ईश्वरस्य कर्त्तृत्वे अभिमुखः, तदा ईशकर्त्तृकक्रियायां तस्य जीवस्य मनःप्राणवाचः उपकरणभूताः चेष्टन्ते, समीहन्ते च, तदानीं तद्वचने अबाधितत्वात् अनुष्ठेयत्वरूपप्रामाण्यं निर्विवादमेव। अतः जीवदशायां शुक्रेण उक्तस्य अर्थस्य ईश्वरमुक्तभावे स्थितेन कौटिल्येन कृतः प्रतिषेधः, तथा ईश्वरभावेन स्थितस्य शुक्रस्य तेन कृतः नमनमित्युभयमपि युक्तमेव। अर्थात् सर्वत्र नीतिशास्त्रे देवत्वं ईशकर्त्तृकक्रियोपकरणत्वात्मकं बोध्यम्।
मानसीं भक्तिमनुमापयतीति।

## भक्तेः आयुर्वेदरीत्या उपयोगः

गुरुभक्तिपूर्वकज्ञानाभिवृद्धौ सम्पादितायां शरीरान्तर्गतधातुषु अष्टमस्य सारभूतस्य ओजसः धातोः रक्षणं भवति तस्मादेव शरीरस्यापि सुरक्षा। स धातुः सर्वशरीरे शाखारूपेण स्थिताभिः हृदये च मूलरूपेणावस्थिताभिः दशशिराभिः प्रवहति। तेनैव शरीरस्य चेष्टितंतन्निबद्धं च सत् सफलं भवति, इति साहित्यायुर्वेदाभ्यामवगम्यते।[1]

अतः ओजसस्संरक्षणाय गुरुभक्तिं द्वारीकृत्य शास्त्रप्रसूतं ज्ञानमपेक्ष्यते इति सिद्धम्। यथा यथा पूज्यानां गुरूणां चरणौ भक्तिसाहचर्येण चिन्तितौ स्याताम् तथा तथा गुरुस्वरूपे वर्तमानस्य सत्त्वबहुलस्य ज्ञानतत्त्वस्य संक्रमणेन ओजः उपासकशरीरे नितरां

---

१. दशजीवनधामानि शिरो रसनबन्धनम्।
कण्ठोऽस्रहृदयं नाभिः बस्तिः शुक्लो गुदौजसी।
दशस्थूलशिरा हृत्स्थाः ताः सर्वाः सर्वतो वपुः।
रसात्मकं वहन्त्योजः तन्निबद्धं हि चेष्टितम्।
विद्यन्ते तास्ततस्सप्त शतान्यासां भवन्ति तु।
शिरा जालन्धरा नाम तिस्रश्चाभ्यन्तराश्रयाः।
इडा च पिङ्गला चेति सुषुम्ना चेति नामतः।
भा० प्र० ७ अ० पृ० ८४

(क्रोड०) उच्छलति तेन स्वशरीरेपि नैर्मल्यम्, सर्ववेत्तृत्वं, सर्वशक्तिमत्त्वं प्रभुत्वञ्च संप्राप्तुं नाशक्यम्।

ननु इदमलौकिकं वस्तु गुरुसकाशात् शिष्येण कथं प्राप्तव्यम्। इति चेत् शृणु। यथा नटेन सञ्चारितस्य साधारणीकरणव्यापारस्य महिम्ना अनुकार्ये स्थितानां तत्तद्रसानां भावानां वा सामाजिकेषु संक्रमणं भवति। तथैव ध्यानेनापि गुरुसमवेत-भावानां शिष्येषु संक्रमणं भवितुमर्हति। अतएव योगिनः आहारं विनापि एकाग्रतया ध्यानमात्रेण अभीप्सितान् शरीरारोग्यकरान् रसादीन् सञ्चारयन्तः तदानन्दमहिम्ना अन्तःस्थं ज्वलनसम्भूतं विषं विनाश्य बहिःस्थितस्य प्राणस्य अन्तःप्रवेशमनपेक्ष्यैव चिरकालं प्राणायामादीन् संसाधयन्ति, सिद्धिं च प्राप्नुवन्ति। ओजश्च मूल-टीकायामुपवर्णितायाः आनन्दप्रभामिश्रितायाः ज्ञानप्रभायाः परिणामभूतं वस्तु मन्तव्यम्। तदुक्तं चरके—

हृद्यन्ततस्यात् यदौजस्यं स्रोतसां सम्प्रसाधनम्।
तत्तद्यत्नेन संसेव्यं प्रशमो ज्ञानमेव च॥ इति।

औजस्यं ज्ञानं तदेव भवति यत्प्रमाणत्रयसमन्वितं भक्तिपुरःसरं गुरुप्रसाद-लब्धञ्च। गुरुतत्त्वसाक्षी चेतनः ईश्वर एव। स एव मस्तिष्कभागे स्थितः प्राणादि-सञ्चारणद्वारा जीवनमूलभूतं चरकोक्तरीत्या ओजः ज्ञानद्वारा यदा प्रयच्छति तदा प्रमाणत्रयसमन्वितार्थस्य प्रकाशमुपलभ्य जीव आत्मानं गोपायितुं समर्थो भवति। यदि सः ईश्वरः अप्रसन्नः तर्हि विपरीतार्थप्रकाशमुपलभ्य जीवः आपत्तीरनुभवति।[1]

अतो येन एकाग्रभूमिकायां स्थित्वा सत्वं प्रधानीकृत्य पूज्याः गुरवः अभिध्याताः तस्य ओजस्सम्पादनमूलिका सिद्धिरपि न दूरतः। तथाहि—

विजेतव्या लङ्का चरणतरणीयो जलनिधिः
विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः।
तथाप्येको रामः सकलमवधीद्राक्षसकुलं
क्रियासिद्धिः सत्वे वसति महतां नोपकरणे॥ इति

सत्त्ववतः रामस्य सहायभूताः कपयः आसन्, इत्यत्र न आश्चर्यम्। ते तु सचेतनाः। अचेतना अपि सचेतनस्य साहाय्यं कुर्वन्ति यत्र तत्र सचेतनानां का कथा? तथोक्तम्—

ये मज्जन्ति निमज्जयन्ति च परान् ते प्रस्तरा दुस्तरे
वार्धौ वीर तरन्ति वानरभटान् सन्तारयन्तेऽपि च।
नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः

---

१. न देवा दण्डमादाय रक्षन्ति पशुपालवत्।
यन्तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्।
न कालः खड्गमादाय शिरः कृन्तति कस्य चित्।
कालस्य वलमेतावद् विपरीतार्थदर्शनम्। इति।

(क्रोड०)  श्रीमद्दशरथेः प्रतापमहिमा सोऽयं समुज्जृम्भते ॥ इति ।
तस्मात् ओजः प्राप्तिद्वारा गुरुभक्तिः ज्ञानाभिवृद्धौ सहकारिणीति सर्वं सुस्थम् ।

## नमने गुरुनामकीर्तनम्

ननु मङ्गलप्रसङ्गे गुरुनामसङ्कीर्तनं मूलकृता कथं कृतम् ।

आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।
श्रेयस्कामो न गृह्णीयाज् ज्येष्ठापत्यकलत्रयोः ।

इति स्मृतौ निषेधात् । तन्न । तथाविधाचारदर्शनात् । यत्र सदाचारः धर्ममूलः, स्मार्तःश्रौतो विधिर्वा कर्तव्यं विदधाति तत्र निषेधस्य प्रसक्तिर्न भवति इति मीमांसायाः सिद्धान्तः । प्रणतिसमये गुरूणां पूज्यानां वा यदा ऐश्वर्यं, देवत्वं वक्तृत्वं, प्रयोक्तृत्वमादि च पूज्यत्वनिमित्तं स्मर्तव्यं भवति, तदा गुरु-पितृ-प्रभृतीनामुल्लेखः आचारसिद्धः । तद्यथा—

मधुसूदनसरस्वतीभिः सिद्धान्तबिन्दौ ग्रन्थारम्भे-श्रीभगवत्पूज्यपादानां शङ्कराचार्याणां नामग्राहं नमनं कृतम् । एवमभिवादनादौ सङ्कल्पादौ च नामोच्चारणमपि एतन्न्यायेनैव न दोषावहम् ।

## गुरुमतखण्डनेपि गुरुभक्तिः

ननु शुक्रबृहस्पती ऐश्वर्यसम्पन्नौ देवौ स्तः तर्हि तदीयमतस्य क्वचिन्मूलकृता 'नेति कौटिल्य' इत्युक्त्या कथं प्रतिषेधः कृतः ? इति चेत् उच्यते ।

सर्वेऽपि सचेतनाः स्वकृत्या ईशरूपतां जीवरूपतां वा प्राप्तुमर्हन्ति इति पूर्वं प्रपञ्चितमस्ति । तदनुसारेण यदा ईश्वरकर्तृकक्रियोपकरणत्वरूपदेवत्वमात्मनि जीवे उक्तरीत्या आविर्भवति तदा प्रतिपाद्यार्थविषये यथार्थदर्शनं भवति । यदा च तदनुपकरणत्वम् जीवे आविर्भवति तदा तस्य विपरीतार्थोपि दृष्टिगोचरः भवितुमर्हः । शुक्रबृहस्पती च जीवभावेन, कदाचित् देवभावेन वा स्थातुमर्हतः । एवं स्थिते यदा तौ जीवभावमवलम्ब्य ब्रूतः तदा तद्वचने प्रमाणत्रयघटितनीतिलक्षणदृष्ट्या समन्वयः कर्त्तव्य एव । तद्बाधायां तावानंशः अस्माभिः अननुष्ठेयः । एवं सत्यपि अस्माभिरननुष्ठेयत्वेन निश्चितस्यार्थस्य विधायकं जीवभावेन स्थितयोः तयोस्तद्वचनं सर्वथा अप्रमाणमिति तु न मन्तव्यम्, तस्यापि सत्यवसरे कैश्चित् अनुष्ठीयमानत्वात् तेषां कृते सफलत्वाच्च । वस्तुतः शुक्रबृहस्पत्योः इतरस्य वा मतस्य चाणक्यनिर्दिष्टमतेन सह समन्वय एव अस्तीति यथासम्भवं प्रयतिष्यते ।

ननु चाणक्यो मनुष्यः, शुक्रबृहस्पती च देवौ स्तः इति देवतानां वचनापेक्षया मानववचने दोषबाहुल्यं सम्भवितुमर्हति तथा सति मानववचने देववचनापेक्षया अनुष्ठेयत्वलक्षणं विशेषतः प्रामाण्यञ्च कथं स्वीक्रियताम् । इति चेन्न । वचनानां स्वरूपतः निर्दोषत्वेऽपि अप्रामाण्यं भ्रमप्रमादादिदोषप्रयुक्तमेव वक्तव्यं भवति । यदि

**पृथिव्याः लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि, प्रायशस्तानि सङ्गृह्य एकमिदमर्थशास्त्रं कृतम् ॥**

---

(क्रोड०) च पूर्वोक्तरीत्या मनुष्यः धर्मज्ञानविरागैश्वर्यसम्पन्नः सन् वक्ति तर्हि तद्वचने अप्रामाण्यकल्पनायाः अवसर एव नास्ति, यतः एकाग्रभूमिकायां स्थितस्य तस्य मुक्तत्वे नास्ति शङ्का। तथा च तथाविधस्य ऐश्वर्यादिसम्पन्नस्य मानवस्यापि वाङ् मुक्तानामेव वाक् भवितुमर्हति। सा च उपर्युक्तटिप्पणीस्थ भावप्रकाशनोद्धृत-(पृ० १९) वाक्यात् अव्यभिचरितफला भवतीति स्थितम्। "उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धयः" इत्युक्त्या मुक्तानां तत्समकक्षानां वा उपरिबुद्धित्वात् तेषां वाक् प्रमाणभूता भवत्येवेति चाणक्योऽपि तथाविधः सन् जीवभावदशायां स्थितयोः शुक्रबृहस्पत्योः मतं खण्डयति तर्हि तद्युक्तमेव।[१]

एतेन चाणक्येन मानवेन समयानुसारेण पूर्वाचार्यमतं प्रतिषिद्धम् लोकस्थितिं दृष्ट्वा, इत्यस्माभिरपि वर्तमानदेशकालपरिस्थितिमवलोक्य तन्मतस्यापि परिवर्तनं कर्तुं शक्यते इति शङ्का अपास्ता। (२८ पृ०) अपि च नीतिशास्त्रस्य वर्तमानसमयेऽपि तथाविधमेवाभ्यर्हितत्वमस्तीति वैदिकसिद्धान्तसंरक्षिण्यां प्रपञ्चितत्वात् चाणक्यप्रतिपादिता नीतिः अद्यापि अपरिवर्तनीयैवेति मन्तव्यम् तथात्वस्य अग्रे चिन्तितत्वात्। अत्र विषये जयमङ्गलाङ्कन्मतन्तु अग्रे यथावसरं "अत्र केचिदाहु"-रित्यादिग्रन्थव्याख्याने निरूपयिष्यते।

## टी० गणपति शास्त्रिभिः विरचिता

### श्रीमूला

स्वग्रन्थस्य निर्मूलत्वादिशङ्कानिराकरणपूर्वं प्रकरणाधिकरणसमुद्देशं प्रतिज्ञातु भूमिकां रचयति—पृथिव्या इत्यादिना। पृथिव्या भूमेः, लाभे अप्राप्तायाः प्राप्तौ, पालने लब्धायाः परिरक्षणे च विषये। अर्थशास्त्राणि अर्थो नाम वृत्तिः वर्तनं स्थितिः, सैव हि मनुष्याणां मुख्योऽर्थः तया च मनुष्यसम्बन्धिन्या तदाधारभूता भूमिरुपलक्ष्यते एवं च मनुष्यवती भूमिरित्यर्थः। तस्याः लाभपालनोपायोपदेशकानि शास्त्राणि अर्थशास्त्राणि। यावन्ति, पूर्वाचार्यैः शुक्रबृहस्पतिविशालाक्षादिभिः, प्रस्थापितानि प्रवर्तितानि तानि। प्रायश इति बाहुल्योक्त्या क्वचित् क्वचिदात्मीयदर्शनानां प्रतिपादनं दर्शयति। संहृत्य संगृह्य, एकमिदमर्थशास्त्रं कृतम्। एकं नाना-

---

१. युक्तियुक्तमुपादेयं बालादपि सुभाषितम्।
त्याज्यं तद्विपरीतं तु अप्युक्तं पद्मयोनिना।
चाणक्येनापि उक्तम्—शास्त्रं विप्रतिपद्येत धर्मन्यायेन केनचित्।
न्यायस्तत्र प्रमाणं स्यात् तत्र पाठो हि नश्यति। इति। अ०

शास्त्र-विप्रकीर्ण-समस्तविषयैकनिधानम्। इदं बुद्धिस्थं अर्थशास्त्रम्! कृतं मया प्रणीतम्। एतेन मदीयस्यास्यैकस्य ग्रन्थस्य परिशीलनात् कृत्स्नपूर्वाचार्य—दर्शनविज्ञानं सुखलभ्यमिति सूचयन् स्वशास्त्रस्य—समूलत्वं पूर्वाचार्यग्रन्थैरगतार्थत्वम् च द्योतयति।

श्रीराजेश्वरशास्त्रिद्राविडव्याख्याता

## वैदिकसिद्धान्तसंरक्षिणी

पृथिव्या इति। चतुर्वर्णाश्रमवती हिमवत्समुद्रान्तरवर्तिनी भूमिः, तस्या इत्यर्थः। तदुक्तम् "यस्य प्रभावाद्भुवन"मिति ( नीतिसारव्याख्यायाम्[1] )। एतावद्भूक्षेत्रमेवैतच्छास्त्रे चक्रवर्तिक्षेत्रत्वेन व्यवह्रियते इत्यपि बोध्यम्।
लाभे पालने चेति। निमित्तसप्तमीयमिति टीकायां व्याख्यातम्।

निमित्तत्वं च स्वान्वयव्यतिरेकानुविधाय्यन्वयव्यतिरेकप्रतियोग्यवश्यानुष्ठानकत्वम्। तच्च 'राहूपरागे स्नायात्' 'चर्मणि द्वीपिनं हन्ति' इत्यादौ स्फुटम्[2]। ईदृशन्निमित्तत्वमर्थशास्त्रस्य लाभपालनयोर्वर्तते। अर्थात् एतदर्थशास्त्रमनुष्ठानपर्यवसायितया चिन्तितं चेत् श्लाघामुत्पाद्य स्थायिलोकसम्मतिलाभपुरस्सरं पृथिव्या लाभपालनयोः पर्यवसायि भविष्यति। अर्थशास्त्राभावे तु व्यापकाभावात् व्याप्यभाव इति न्यायेन लाभपालने न भविष्यतः। तदुक्तम्—

आन्वीक्षिकी-त्रयी-वार्ताः सतीर्विद्याः प्रचक्षते।
सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे॥
दण्डनीतिर्यदा सम्यङ् नेतारमधितिष्ठति।
तदा विद्याविदः शेषा विद्याः सम्यगुपासते॥ इति

लाभः स्वस्य करादिग्रहणाद्युपयोगिस्वत्वोत्पादः। पालनं चतुर्वर्णाश्रमाणां मनस आकर्षणानुकूलो भयनिवृत्ति-पोषणादिव्यापारः। तदर्थमर्थशास्त्रमिति संबन्धः।

ननु वर्धनं सत्पात्रप्रतिपत्तिश्च अर्थशास्त्रस्याधिकं फलमिति नीतिसारे उक्तम्, तदत्र कुतो नोक्तमिति चेन्न। तयोरत्रैवान्तर्भावात्। ( तद्द्रष्टव्यं जयमंगलायां[3] )।

---

१. भुवनं चतुर्वर्णाश्रमलक्षणो लोकः।

२. भाट्टदी० २ अ० ४ पा० १ अधि० ( यावज्जीवनिमित्तताधि० ) निमित्तत्वं च स्वान्वयव्यतिरेकानुविधाय्यवश्यानुष्ठानवत्त्वम्। यथा राहूपरागान्वयव्यतिरेकानुविधाय्यवश्यानुष्ठानं यस्य स्नानस्य तद्वत्त्वं राहूपरागे इति।

३. तस्या अर्जनं त्रिविधं नवं भूतपूर्वं पित्र्यं च रक्षणमपि द्विविधं स्वेभ्यः परेभ्यश्च। ननु रक्षितविवर्धनं वृद्धस्य तीर्थप्रतिपादनमप्यस्ति। सत्यमस्य द्वयस्यैव विशेषोऽयं यतो रक्षितविवर्धनमप्यर्जनमेव। वृद्धस्य तीर्थप्रतिपादनमपि गुणवति पुत्रे निक्षेपो वा अश्वमेधादौ विनियोगो वा। तदुभयमपि सर्वथा रक्षणमेव। इति।

(**वैदिक०**) यावन्तोति। सर्वमपि प्राचीनमर्थशास्त्रं कौटिल्येन अदृष्टं नास्ति। अर्थशास्त्राणि ब्राह्मनारदीयवैशालाक्षौशनसबार्हस्पत्यादीनि। अर्थो वृत्तिः, तदर्थं शास्त्रम् अर्थशास्त्रम्, तानि। पूर्वाचार्यैर्ब्रह्म-नारद-शुक्र-बृहस्पति-भारद्वाज-विशालाक्ष-भीष्म-पराशर-वातव्याधीन्द्र-प्राचेतस-मनु-गौरशिरो-व्यासादिभिः प्रस्थापितानि प्रणीतानि। अत्र प्रमाणं भारते अनुसन्धेयं अग्रे प्रदर्शितम्[1]।

ननु वैशालाक्षादिप्राचीनार्थशास्त्रं भारतादन्यत्र निबन्धेषु नोद्धृतं एवञ्च कौटिल्येन तानि दृष्टानि आसन् इत्यत्र विनिगमकं किमिति चेदुच्यते। आधुनिकशिष्टपरिगृहीतनिबन्धेषु तद्वचनानामनुपलब्धावपि भगवत्पूज्यपादशङ्कराचार्यानन्तरभाविसुरेश्वराचार्यापरपर्यायविश्वरूपाचार्यैः स्वकृतायां मिताक्षराटीकायां बालक्रीडायां ( या० स्मृ० अ० २। श्लो० ३०७-३-८ ) वैशालाक्षबार्हस्पत्यौशनसवचनानि उद्धृतानि उपलभ्यन्ते। बृहस्पतिरित्यादिना[2]।

---

१. जयमङ्गलायाम् अर्थशास्त्रे—

ब्रह्माध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम्।
तच्छङ्करेण शक्रेण गुरुणा भार्गवेण च॥
संक्षिप्तं मनुना चैव बहुभिश्च तपोधनैः॥
एतत्ते राजधर्माणां नवनीतं युधिष्ठिर।
बृहस्पतिर्हि भगवान् नान्यं धर्मं प्रशंसति।
विशालाक्षश्च भगवान् काव्यश्चैव महातपाः॥
सहस्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः।
भारद्वाजश्च भगवाँस्तथा गौरशिरा मुनिः॥
राजशास्त्रप्रणेतारो ब्राह्मणा ब्रह्मवादिनः। इति। ( शा० रा० पर्व पृ० १३४
अ० ५८ श्लो० ~~८१-८६~~ १-३ )

२. बृहस्पतिः स्वधर्मविदनुरक्तः शुचिरनुद्धत उद्युक्तो देशकालविन्नीतिनिगमेतिहासकुशलोऽव्यसनी मृदुरर्थशास्त्रकृतयोग्यो हस्त्यश्वपुरुषाचाराहोरात्रयामनिर्गमविनिश्चितमतिश्च स्वपरबलाबलज्ञो बलाधिकृतः सेनापतिः स्यात्। कुलाढ्य उद्युक्तो मृदुरुदात्तः समरचित्तः शूरोऽनुरक्तोऽभेद्यः पत्तिविशेषज्ञ इंगिताकारकुशलः प्रतिहारः स्यात्। वनकुलकालजातिसात्म्यगुणवयःशीलायुरादानगमनकल्पनावान् व्यपगतभयो विजयोर्जितमना हस्त्यध्यक्षः स्यात्। क्षेत्रजातिसात्म्यगुणलक्षणवाहनास्त्रज्ञोऽनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालज्ञो दर्शनीयो नीतिगतिज्ञः प्राज्ञो वाग्मी दूतः स्यात्। उभयत उत्तमवंशप्रभवः शुद्धो मनुबृहस्पत्युशनःशास्त्रविद् दण्डनीत्यादिकुशलोऽशठोऽजिम्हः सम्मानासम्मानाविकृतो विगतभीः कार्याकार्यविनिश्चितमतिरहार्यः सर्वोपधाशुद्धो गूढमन्त्रो मन्त्री स्यात्। अविकार्योऽविकलेन्द्रियः प्रतापवान् सुभगः सुमुखोऽकृपणोऽप्रमादी दक्षो दाक्षिण्यचारित्ररक्षणार्थमधिकरणासन्दिग्धविवेककृदुपरिकः स्यादिति। तथा—बृहस्पतिः ब्रह्मशङ्खस्तुतिपुण्याहशब्दैर्विबुध्योत्थाय सन्ध्यामुपास्य देवपितृब्राह्मणान्

(**वैदिक०**) अतः तत्पूर्वभाविनः कौटिल्यस्य समये वैशालाक्षाद्यर्थशास्त्राण्यासन् उपलब्धानि, इत्यत्र नास्ति विप्रतिपत्तिः।

संहृत्य संक्षिप्य पूर्वग्रन्थानामतिविस्तृतत्वात्। ततः इति शेषः। तदुक्तम्-

प्रजानामायुषो ह्रासं विज्ञाय च महात्मना।
संक्षिप्तं विष्णुगुप्तेन नृपाणामर्थसिद्धये। इति—
(जयमङ्गला अ० १।१)

विष्णुगुप्तेन कौटिल्येन।

## प्राचीनार्थशास्त्रपरिमाणम्

एतत्पूर्वतनग्रन्थानां विस्तार एवं निर्दिष्टः। तद्यथा ब्राह्मं लक्षाध्यायात्मकम्, वैशालाक्षं दशसहस्राध्यायात्मकम्, ऐन्द्रं पंचसहस्राध्यायात्मकम् बार्हस्पत्यं त्रिसहस्राध्यायात्मकम्, औशनसं सहस्राध्यायात्मकमिति (३३ पृ.)। इदं तु षट्श्लोकसहस्रात्मकम्। यद्वक्ष्यति—

"शास्त्रसमुद्देशः, पञ्चदशाधिकरणानि, साशीतिप्रकरणानि, सपञ्चाशदध्यायशतं, षट्श्लोकसहस्राणि"। इति १।१

अथवा संहृत्य स्तोकं स्तोकं परित्यज्येति जयमंगलायाम्। तेन नास्य ग्रन्थस्य गतार्थत्वम्। यद्वा संगृह्येति पाठान्तरम्। एतत्पाठे कानिचन विशिष्टस्थलानि परित्यज्य "यथा नेति कौटिल्य" इत्यादौ ततः अन्यः सर्वोऽप्यंशः पूर्वाचार्य-सङ्गृहीतो बोध्य इति। प्रायशः इति। आधिक्येन अत्र प्राचीनार्थशास्त्रस्य ग्रहणम्। क्वचित्तु "शुल्बधातुशास्त्र" (२।१२ अ०) इत्यादौ स्वनिर्मितस्य धातुकौटिलीयस्य संग्रहो बोध्यते। एकमिति। एतच्छास्त्राध्ययने नास्ति इतरार्थशास्त्राध्ययनापेक्षेति दर्शयति, अनपेक्षितार्थशास्त्रान्तरसहायमिति यावत्। तदुक्तं जयमङ्गलायाम्-अनपेक्षितसहायान्तरम् इति। इदं बुद्धिस्थम्। अथवा अयमुद्देशग्रन्थः निर्देशग्रन्थानन्तरं निर्मितः स्यात् इति यदि स्वीक्रियते, तर्हि संपूर्णनिर्देशग्रन्थात्मकार्थशास्त्रपरः इदंशब्दो बोध्यः। अर्थेति। पुनरर्थग्रहणं स्वमते तस्य प्राधान्यप्रदर्शनार्थम्। तेन क्वचित् धर्मनिरूपणमर्थार्थमिति बोध्यम्। शास्त्रम् पञ्चदशाधिकरणसमुदायात्मकम्। कृतं मयेति शेषः।

इदमर्थशास्त्रं प्राचीनं वा सर्वमपि प्राधान्येन नीतिशास्त्रमित्युच्यते। तदुक्तं कामन्दकीये—

---

मनसा वा नमस्कृत्य धर्मार्थकामभयोपधाशुद्धावञ्चकगृहीतायुधायातयामविश्वासोत्पन्नासन्नपरिवृतेः इति।

तथा- एवं च विशालाक्षः- (अ० ३२३ श्लो० व्याख्यानम्)

वन्यान् वनगतैर्नित्यं मण्डलस्थांस्तथाविधैः।
चारैरालोच्य सत्कुर्याज्जिगीषुर्दीर्घदृक् (आ० ३२८ तमश्लोकव्या०)॥ इति।

(वैदिक०) नीतिशास्त्रामृतं श्रीमानर्थशास्त्रमहोदधेः ।
य उद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे ।। इति ( स० १ श्लो० ६ )

### नीतिलक्षणम्

अस्य स्पष्टीकरणाय नीतिस्वरूपमुच्यते । तत्रोपाध्यायनिरपेक्षायाम्—

'प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतायां फलसिद्धौ देशकालानुकूल्ये सति यथासाध्यमुपायसाधनविनियोगलक्षणा क्रिया नीतिः'' इति ।

जयमङ्गलायां तु—''प्रत्यक्षानुमानागमप्रमाणदेशकालशक्तिपुरस्सरार्थसाधनविनियोगलक्षणा क्रिया नीतिः'' । अ० १ । १ । इति

उभयमतसाधारण्येन प्रत्यक्षादिप्रमाणत्रयनिर्णीतेष्टसाधनताककर्मानुष्ठानं नीतिरिति तदर्थः । जयमङ्गलोक्तशक्तिनिवेशतात्पर्यन्तु तद्व्याख्याने वक्ष्यते ।

### आगमोपयोगः

अत्र नीतिलक्षणे प्रमाणत्रयस्य सार्थक्यं वक्तव्यमस्ति । तत्र अभ्यर्हितत्वात् शब्दप्रमाणस्य नीतावुपयोगित्वं प्रस्तूयते । तथाहि-प्रत्यक्षानुमानाभ्यां निर्णीतेऽपीष्टसाधनत्वे कालान्तरे तत् साधनत्वेनाभिमतं तथैव स्यात् । ततः कश्चन दुरपनेयो दोषो वा नोत्पद्येत! अथवा तस्य अन्यथासिद्धत्वं तत्कार्यं प्रति नास्ति इति सर्वज्ञबुद्धिमन्तरा कस्य बुद्धिर्निर्णेतुं समर्था भवेत्? यथा आधुनिकेऽपि समये दन्तवैद्यः दन्तानां सूक्ष्मातिसूक्ष्मं भेदादिविषयं चिन्तयन् अन्यच्चिन्तयितुमवसरं न लभते । न वा स्वीकृतदन्तचिकित्सायामितरावयवेषु दुष्परिणामो न ततः सम्भविष्यतीति वक्तुं स प्रतिभूत्वं स्वीकर्तुं शक्नोति । तथैव अनुष्ठानात्मकनीतौ दीर्घकालानन्तरं समाजस्य कीदृशी स्थितिर्भविष्यति? किं कदा भविष्यति? कस्य कीदृशः परिणामः? कति वा विरुद्धसंयोगा हानिकराः? इदं लघु, इद गुरु, इदं तत्त्वं, इदं नेति निर्णयः केन कर्तुं शक्यः? सम्भवति च प्रत्यक्षानुमानाभ्यां कृतोपि निर्णयः ईशसमवेतेन ज्ञानेन विसंवाद्यपि । तत्र पूर्वोक्तयुक्त्या ईशज्ञानावृत्तिविषयताशून्यत्वरूपं प्रमात्वं वा न भवेत् । सत्येव ज्ञानप्रभासत्त्वपरिणामिनी नोपलभ्येत । पुरुषबुद्धिप्रसूतेष्वर्थेषु अप्रामाण्यदर्शनेन तत्र सन्दिग्धत्वं दोषबहुलत्वं, आशङ्कार्हत्वं, क्वचिद्यथार्थत्वं वा तत्र न भवितुमर्हं स्यात्? परमेश्वरस्तु यमर्थमुपदिशति, तत्र कार्यकरत्वस्य नैयत्यात् आनन्दप्रभामिश्रितत्वं नियतं इति प्रागुक्तम् । अतः तस्य नैयत्ययुक्तस्य राज्यबीजभूतस्य सत्त्वस्य लाभाय शब्दप्रमाणं नीतिलक्षणे घटकतयोक्तम् ।

### प्रत्यक्षानुमानोपयोगः

अथ नीतिलक्षणे प्रत्यक्षानुमानोभयोपयोगित्वमुच्यते । विषयोऽयं रसप्रतीतौ प्रतिबन्धकानां विचारे कृते सति स्फुटः स्यात् । यतः तत्र ये प्रतिबन्धका विघ्नास्त एव

(वैदिक०) नीत्यनुष्ठाने तदधिकारिणां पुरतः सम्भवन्ति। तन्निवारणोपायाश्चोभयत्रापि समानाः, इति प्रत्यक्षानुमानयोः उपयोगित्वप्रदर्शनार्थं रसप्रतीतौ प्रतिबन्धकभूता विघ्नास्तन्निवारणोपायाश्चाभिधीयन्ते। तथाहि–असम्भावना १-विपरीतभावना २-देशकालविशेषावेशः ३-निजसुखादिविवशीभावः ४-अप्रधानता ५-सन्दिग्धता ६-परिमितप्रमातृता ७-चेति सप्त विघ्नाः साहित्यशास्त्रे अभिनवभारत्याम् उपवर्णिताः। अमुकं कर्म अमुकेन अमुकसमये कृतं इत्येतत्स्वरूपे ज्ञाते तेन मम किं प्रयोजनं? इति ज्ञात्वा तच्चरित्रदर्शनात्सामाजिक औदासीन्यं भजते। तन्निरासाय नाटके विधिभागः चरित्राभिनयेन ज्ञापयितव्यो भवति। तेन वैधं कर्म अस्माभिरनुष्ठातव्यमिति जानानः सामाजिकः नौदासीन्यं ततः स्वीकरोति इति देशकालविशेषावेशः, एवमेव सवसाधारण्येन समयनिर्देशान्निजसुखादिविवशीभावः, साधारणीकरणव्यापारात् परिमितप्रमातृता, रसस्य प्राधान्यात् अप्रधानता, अनुभावादीनां यथावदभिनयात् अभिव्यज्यमानविषये संदिग्धता चेति पञ्चदोषा अपसार्यन्ते। असम्भावनाविपरीतभावनयोर्निराकरणाय ऐतिहासिकं लौकिकं प्रसिद्धं च नेतृचरित्रं नाटके अभिनीयते। अन्यथा अभिनीतं तच्चचरित्रं अलौकिकत्वात् असम्भावितं मन्येरन् नाटकदर्शिनः। तथैव कार्यकारणभावविपरीतं चेत् तच्चरित्रं बाधितमिति ततो विरसीभवन्ति सामाजिकाः। अतः प्रत्यक्षानुमानाभ्यां मिहैवसिद्धत्वं प्रदर्श्य अभिनीतस्य चरित्रस्य लौकिकत्वं संसाध्यते। अर्थात् असम्भावनाविपरीतभावनयोः निरासाय प्रत्यक्षानुमानाभ्यां निर्णीतं यच्चरित्रं लौकिकत्वेन प्रसिद्धं तदेव कविनाऽभिनीयते। एवम् नीतिशास्त्रेणापि यद्विधीयते परिपालनोपायानुष्ठानार्थं, तत्र यदि असम्भावितत्वं आशङ्कितं स्यात् तर्हि तन्निरासाय प्रत्यक्षानुमानाभ्यां नीतिविहिते लौकिकत्वं, तथा पूर्वराजचरितत्वादबाधितत्वं च ज्ञाप्यते इति। एतेन तर्कसचिवस्य इतिहासस्य प्रामाण्यमपि सिद्धं भवति। अतः नीतिलक्षणे प्रत्यक्षानुमानयोर्निवेशः कृतः।

यद्यपि नीतिशास्त्रात्मकमर्थशास्त्रं पृथिव्या लाभपालनार्थं अस्तीति प्राङ् निर्णीतम्। लाभपालने च राजधर्मः। तथा च निष्प्रयोजनत्वात् अर्थशास्त्रं राज्ञः इतरैर्नाध्येयमिति आपाततो भाति, तथापि यस्मिन् समये राजा नीतिशास्त्रं पर्यालोचयन् प्रजाः पालयति तदा इतरे नीतिशास्त्रं मा चिन्तयन्तु। यदा तु तथाविधो राजा नास्ति तदा इतरैः पालनधर्मो नोपेक्ष्यः। न वा तद्विधायकं नीतिशास्त्रम् उपेक्ष्यतामर्हति, पालनधर्मस्य मुख्यत्वात्। तदुक्तम्—

क्षात्रो धर्मो ह्यादिदेवात्प्रवृत्तः पश्चादन्ये शेषभूताश्च धर्माः इति (भारत)[1]।

---

१. तथा—

दण्डनीतिर्यदा सम्यङ्नेतारमधितिष्ठति।
तदा विद्याविदः शेषा विद्याः सम्यगुपासते ॥ ९ ॥
आन्वीक्षिकीत्रयीवार्ताः सतीर्विद्याः प्रचक्षते।
सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे ॥ ८ ॥ इति (नी० स० २)–

शङ्करार्यकृता

## जयमङ्गला

शास्त्रारम्भे प्रयोजनमाह—पृथिव्या इति। अन्यथा अनुक्तप्रयोजने प्रेक्षावताम् अप्रवृत्तेः। पृथिव्या इति तत्स्वभावाया विस्तीर्णरूपाया इत्यर्थः। अनेन शास्त्रस्य महाविषयताम् आह लाभे पालने चेति। लाभनिमित्तं पालननिमित्तं च "निमित्तात् कर्मसंयोग" ( वा० २. ३. ३६ ) इति सप्तमी। लाभो "नवो भूतपूर्वः पित्र्यश्चेति' ( अधि० १३. अध्या० ५ )। पालनमपि स्वेभ्यः परेभ्यश्चेति द्विविधम्। विषयसप्तमी-वा शास्त्रस्य अनन्यत्रभावात्। ननु चोभयोरपि पक्षयोर्वर्धनस्य तीर्थप्रतिपादनस्य चासंग्रहात् कथं प्रतिपत्तिः। यथा वक्ष्यति-"रक्षितवर्धिनी वृद्धस्य तीर्थप्रतिपादनी च" ( अधि० १. अध्या० ४ ) इति। सत्यम्। किञ्चास्यैव विशेषनिर्देशोऽयम्। रक्षित-वर्धनमप्यर्जनमेव, तीर्थप्रतिपादनमपि गुणवति पुत्रादौ निक्षेपः, अश्वमेधादौ वा विनियोगः। तदपि हि रक्षणमेव। तस्मादुभयमपि पालनान्तर्भूतमेव द्रष्टव्यम्।

## जयमङ्गलाक्रोडपत्रम्

निमित्तादिति। वैदिकसिद्धान्तसंरक्षिण्यां निमित्तत्वं (२५ पृ.) स्फुटीकृतम्। सप्तम्या अर्थान्तरमाह—विषय इति। शङ्कते नन्विति।

स्वत्वास्पदीभूतस्य स्वजीवनानन्तरं रक्षणोपायमाह—गुणवतीति। अगुणश्चेत् पुत्रः धनं प्राप्य प्रमादेन अर्थं विनाशयेत् अतः गुणवत्पदोपादानम्। राज्यसंरक्षण-क्षमः अपरोऽपि कश्चित् पुत्रसदृशः गुणवान् भवितुमर्हति तद्व्यावृत्तये पुत्रपदम्। तेन पुत्रे आत्मसम्पद्गुणेषु अन्यतमकुलीनत्वलाभोऽपि अधिको गुणो बोध्यः। गुणवत्पुत्राभावे अश्वमेधादौ सम्पत्तेर्विनियोगो वरः न तु दुष्टहस्ते इत्याशयेनाह-अश्वमेधादाविति।

### राज्ञः सत्वसूचनम्

सर्वा दिशो विजित्य एकत्र सञ्चितायाः सम्पत्तेः विभाजनं यदि राजा न करोति तर्हि विद्याकलाप्रभृतीनां राज्यस्थित्युपायेषु मूलभूतानां संरक्षणं न भवेत्। तदर्थं सञ्चितायाः सम्पत्तेः विभज्य यज्ञे दानमवश्यं तेन कर्तव्यम्। तच्च सत्त्वसम्पत्तेः सूचकम्। यद्यपि यज्ञादन्यत्रापि सम्पत्तेर्दानं भवितुमर्हति तथापि यज्ञस्यैव इदृशी वर्तते यत्र सर्वासां विद्यानां, कलानां च संरक्षणम्, सर्वेषां सेवा, दानद्वारा समस्तानां

---

वीरमित्रोदये व्यवहारप्रकाशेऽपि—

न चैवं प्रजापालनविधेरभिषिक्तक्षत्रियाधिकारिकत्वादन्येषां तत्र फलाभावेनाप्रवृत्तिः। दृष्टद्रव्यादिलाभार्थं कथञ्चित् प्रवृत्तावपि तस्मात् धर्माभावप्रसङ्गः अन्यथादर्शनान्यायप्रदर्शना-वृत्यादिना प्रत्यवायाद्यभावापत्तिश्चेति वक्तव्यम्। अतो दयाऽहिंसादिसाधारणधर्मान्तर्भावेन प्रजापालनस्य तेषामपि धर्मजनकत्वात् नृपपदेन तत्संग्रहसंभवाच्च। इति (वी० व्य० पृ० १३)

## जयमङ्गला

यावन्तीति। यावत्प्रमाणानि साकल्यार्थं वचनम्। अर्थशास्त्राणीति अर्थो येन लोको वर्तते तदर्थं शास्त्रमिति। यद्येवं वार्ताशास्त्रं तत्, न नीतिशास्त्रम्। यस्माद् भूमिहिरण्यधान्यपशुभाण्डोपस्करादिरर्थः अमुत इति कृत्वा, तेन नीतिशास्त्राणीति वक्तव्यम्। सत्यम्। प्राधान्यादेवमुक्तम्। यतो भूम्यादीनामर्थानां पूर्वः पूर्वः प्रधानम्

## जयमङ्गलाक्रोडपत्रम्

रक्षण, समस्तदेवताप्रसादः, सुभिक्षादिसमृद्धिश्च भवितुमर्हति। तथा यागनिमित्तेन धर्मभावनाया वेदमूलिकाया जागरूकत्वात् तन्मूलः सन्धिश्च स्थिरो भवति। तेन सर्वेषामनुरागपात्रता च नियता। अत एव सन्धेयेषु धार्मिकोऽपि एकः विजातीयत्वेन सङ्गृहीतः सत्यार्यावित्यादिना[1]।

सर्वेषां वर्णानामाश्रमाणां तत्तद्वृत्तिजीविकानां च अन्तर्बहिर्वा कुत्रचित् अधिकारानुसारेण यत्र उपयोगः वर्तते एवंविधासु यज्ञसंस्थातिरिक्तसंस्थासु स्थायिसन्ध्यनुकूलं सम्पत्तेर्विभज्य दानं भवितुमर्हतीति न वक्तुं शक्यते। सन्धेः स्थिरतार्थमपेक्षितस्य सत्वसूचकस्य अपौरुषेयवेदमूलकस्य यज्ञादिकर्मणः अङ्गत्वं कथं भवतीति "शान्ति का अग्रदूत"—ग्रन्थे सप्रमाणमुपन्यस्तमस्ति। अतोऽत्र पुनस्तन्न विमृश्यते। एवञ्च अश्वमेधादौ सम्पत्तेर्विनियोगे कृते सति अपेक्षितस्य राज्याधारभूतस्य सत्त्वस्य राज्ञि अभिव्यक्तिर्भवति इति सिद्धम्। अत्राश्वमेध एव न विवक्षितः। किन्तु आदिपदात् सत्त्वगुणस्य परिचायकादि यद्यत् येषु येषु धर्मेषु अभिव्यज्यते ते ते सर्वे धर्माः सन्धायका अत्र विवक्षिताः। इदं फलमुपलक्षणम्। अश्वमेधादिधर्मसम्पादनेन अदृष्टद्वारा सम्भाव्यमानानि उपर्युक्तफलापेक्षया अतिरिक्तफलान्यपि प्रशस्तपादभाष्यादौ उक्तानि वेदितव्यानि (प्र० भा०) कर्मनिरूपणे[2]।

अर्थपदं व्याहर्तुमाह—अर्थ इति। अर्थशास्त्रनीतिशास्त्रयो-र्भेदमाशङ्क्य नीति-

---

१. सत्यार्यौ धार्मिकानार्यौ भ्रातृसङ्घातवान् बली।
अनेकयुद्धविजयी सन्धेयाः सप्त कीर्तिताः। नी० सार स० ९

तथा–ज्ञानं तपो यज्ञविधिः प्रदानमेते कृतादौ सुकृतावताराः।
एतैः समाकृष्य जगन्ति धर्मः सन्तापयामास बलादधर्मम्।
( धर्मविजयनाटके घ० वि० ना० १ अ० १ श्लो० )

२. "योगिनां च बहिरुद्रेचितस्य मनसोऽभिप्रेतदेशगमनं प्रत्यागमनं च तथा सर्गकाले प्रत्यग्रेण शरीरेण सम्बन्धार्थं कर्मादृष्टकारितम्। एवमन्यदपि महाभूतेषु यत्प्रत्यक्षानुमानाभ्यामनुपलभ्यमानकारणमुपकारापकारसमर्थं च भवति तदप्यदृष्टकारितम्, यथा सर्गादावणुकर्म, अग्निवाय्वोरूर्ध्वतिर्यग्गमने, महाभूतानां प्रक्षोभणम्। अभिषिक्तानां मणीनां तस्करं प्रति गमनम्। अयसोऽयस्कान्ताभिसर्पणं चेति"।

## जयमङ्गला

अर्थः[1], प्रधानञ्च मनुष्यवती भूमिः, सर्वकर्मणां योनित्वात्। वक्ष्यति च तन्त्रयुक्तौ— "मनुष्याणां वृत्तिरर्थः, मनुष्यवती भूमिरित्यर्थः। तस्या मनुष्यवत्या भूमेः पृथिव्या लाभपालनोपायभूतं शास्त्रमर्थशास्त्रमिति" ( अधि० १५. अध्या० १ )। वृत्तिरर्थ इति वर्तनहेतुत्वात्। पूर्वाचार्यैरिति। पूर्वग्रहणं प्रकर्षार्थित्वाद् बृहस्पत्याद्युपसंग्रहार्थम्। आचार्यैरिति, न यैः कैश्चित्। प्रस्थापितानि प्रवर्तितानि। प्रायश इति प्रतिषेधार्थम्। (क्वचित् स्वीयमतप्रदर्शनार्थम्, नेति कौटिल्य इति)। अनेन सामान्येनार्थशास्त्रस्य प्रयोजनमुक्तम्। तेषु सत्सु पुनरारम्भोऽनर्थक इति चेदाह-तानीति। संहृत्य ततः स्तोकं स्तोकं परित्यज्य। इयांस्तु विशेषः। अत्र यत् केषाञ्चिन्मतमनुमतं यथा "सर्वमुपपन्नमिति कौटिल्यः" केषाञ्चिन्नानुमतं यथा "नेति कौटिल्यः" इति। एकमिति अनपेक्षितसहायान्तरम्। इदमिति बुद्धिस्थमाह। पुनरर्थशास्त्रग्रहणं प्रसङ्गतो धर्माद्युपदेशेऽपि अर्थोपदेशः प्रधानमिति प्रकाशनार्थम् "अर्थमूलौ हि धर्मकामौ" ( अधि० १, अध्या० ७ ) इति। कृतमिति शास्त्रपरिसमाप्तिमाशंसते। "वृष्टश्च देवो निष्पन्नाश्शालयः" इति। यथा प्रपञ्चित (विचित्र ?) त्रिवर्गाणि पूर्वाचार्यप्रणीतशास्त्राणि संक्षिप्य अल्पेन ग्रन्थेन यदर्थकथनं तदस्य प्रयोजनम्। ऐदंयुगीनानां पूर्वशास्त्राध्ययनासामर्थ्यात् तथा चोक्तम्—

"ब्रह्माऽध्यायसहस्राणां शतञ्चक्रे स्वबुद्धिजम्।
तच्छङ्करेण शक्रेण गुरुणा भार्गवेण च॥
सङ्क्षिप्तं मनुना[2] चैव बहुभिश्च तपोधनैः।
प्रजानामायुषो ह्रासं विज्ञाय च महात्मना॥
संक्षिप्तं विष्णुगुप्तेन नृपाणामर्थसिद्धये।" इति।

## जयमङ्गलाक्रोडपत्रम्

शास्त्रमपि लाभपालनोपायप्रतिपादनात् अर्थशास्त्रान्नान्यत् इति दर्शयितुमाह— सत्यमिति।

प्रवर्तितानीति—बहुत्वोक्त्या कदाचित् क्वचित् आत्मीयदर्शनानां प्रतिपादनार्थमिति गणपतिशास्त्रिभिः व्याख्यातम्।

प्रकाशनार्थमिति—तेन यत्र कौटिल्येन न निषिद्धं न वा स्वमतमिति उक्तम् तत्सर्वं पूर्वाचार्यसम्मतमेव ज्ञेयम्। विशेषविधिनिषेधयोः शेषविधिनिषेधाभ्यनुज्ञाकल्पकत्वमितिन्यायात्। प्रजानामायुष इति।

ह्रासः यः अत्र उक्तः तस्य मूलं महाभारते ज्ञेयम्❀।

---

अशुद्धम्

१. प्रधानं। अर्थः। ( पा० )

२. संक्षिप्तं मनसा। ( पा० )

❀ तद्यथा शा० प० रा० म० भा० अ० ५९—

## जयमङ्गला

सम्बन्धस्तु प्रयोजनस्य शास्त्रस्य प्रतिपाद्यप्रतिपादकलक्षणः, स च तदन्तर्गतत्वात् पृथङ्नोक्तः। सामान्यन्तु प्रयोजनमस्य अस्त्येव।

---

ततो ऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम् श्लो० २९ पूर्वार्ध

ततस्तां भगवान् नीतिं पूर्वं जग्राह शङ्करः।
ब्रह्मरूपो विशालाक्षः शिवःस्थाणुरुमापतिः। ८०।
प्रजानामायुषो ह्रासं विज्ञाय भगवान् शिवः।
संचिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम्। ८१।
वैशालाक्षमितिप्रोक्तं तदिन्द्रः प्रत्यपद्यत।
दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः। ८२।
भगवानपि तच्छाशस्त्रं संचिक्षेप पुरन्दरः।
सहस्रैः पञ्चभिस्तात यदुक्तं बाहुदन्तकम्। ८३।
अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः।
सञ्चिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं तदुच्यते।
अध्यायानां सहस्रेण काव्यः संक्षेपमब्रवीत्।
तच्छास्त्रममितप्रज्ञः योगाचार्यो महायशाः। ८५।
एवं लोकानुरोधेन शास्त्रमेतन्महर्षिमिः।
संक्षिप्तमायुर्विज्ञाय मर्त्यानां ह्रासमेव च। इति।

उदयनाचार्या अपि ह्रासकारणं कुसुमाञ्जलौ व्यवृण्वन्।

तद्यथा "जन्म-संस्कार-विद्यादेः शक्तेः स्वाध्याय-कर्मणोः।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्।
न्याय कु० द्वि० स्त० श्लो० ३

सम्प्रदायस्य वेदादिसम्प्रदायस्य ह्रासोऽनुमीयतां कुतः जन्मादेर्ह्रासदर्शनात्।

प्रयोगश्च वेदादिसम्प्रदायोऽयं अत्यन्तमुच्छिद्यते ह्रसमानत्वात् प्रदीपवत्। स्वरूपासिद्ध्युद्धारायाह जन्मेति। पूर्वं मानस्यः प्रजास्ततः पुत्रमात्रार्थिताप्रयुक्तमैथुनजाः, सम्प्रति सम्भोगकामिप्रवृत्यावर्जितजन्मान इति जन्मह्रासः। पूर्वं चरुप्रभृतिषु संस्कारः, ततो गर्भे, ततो जननानन्तरम् इदानीं कथञ्चिदिति संस्कारह्रासः। पूर्वं सहस्रशाखस्य चतुर्वेदस्याध्ययनं तत एकस्याः शाखाया इत्यादिक्रमेण विद्याह्रासः।

विद्यादेरित्यादिना वृत्तिधर्मादिसंग्रहः। पूर्वमुञ्छशिलवृत्तयस्ततोऽयाचितवृत्तयस्ततः कृष्यादिवृत्तयस्ततः सेवावृत्तय इति वृत्तिह्रासः। पूर्वं तपोज्ञान-यज्ञदानात्मकश्चतुष्पाद् धर्मः ततः त्रेतादौ एकैकह्रासः। कलौ च विसंष्ठुलः स्खलद्यानैकपादिति धर्मह्रासः। पूर्वं यज्ञशेषभुजस्ततोऽतिथिशेषभुजस्ततः स्वार्थसाधितभुजस्ततो भृत्यादिसहभुज इत्यादि धर्मह्रासः। स्वाध्यायस्याध्ययनस्य कर्मणो यागादेः शक्तेः सामर्थ्यस्य ह्रासात् अध्ययनशक्तेः कारणस्य ह्रासात् विद्याशक्तेः कार्यस्य ह्रास इति पृथङ् निर्देशः इति। शेषं तट्टीकायाम् द्रष्टव्यम्।

## जयमङ्गलाक्रोडपत्रम्

एवंरीत्या अतिचिरन्तनकालात् ह्रासे प्रवृत्तेऽपि भगवदनुकम्पया एकाग्रभूमिकासम्पन्नेन गुरुभक्तेन चाणक्येन अर्थशास्त्रमहोदधिं निर्मथ्य अमृतवत् संक्षिप्तमिदमर्थशास्त्रं प्रदत्तं महते उपकाराय अस्मासु समभूत् । यस्य तु सात्त्विकी प्रज्ञा नास्ति न वा वेदानुगामिनी, न च वेदाध्ययनेन धारणावती, तेन तु अपारं शास्त्रं निर्मथ्य वास्तविकं सप्रमाणममृतमुद्धृत्य मार्गः प्रदर्शयितुम् न शक्यः इति तु निश्चितमेव ( पृ० ३४ ) टिप्पण्युद्धृतमहाभाष्यप्रामाण्यात् । तस्य निष्कर्षः । सन्ति केचन शिष्टाः ये जन्मत एव यथाशास्त्रं विनाऽप्यधीति साधुशब्दं प्रयुञ्जते । तेषामात्मसन्तोषः व्याकरणेन असाधितेषु प्रयोगेषु साधुत्वस्य निर्णायको भवति इति । अतथाविधैस्तु यथेच्छं व्यवहृतः प्रयोगः साधुत्वपरिचायको न भवति इत्येवं न्यायः अत्राऽपि अनुसर्तव्यः[१] ।

अयमेव न्यायः तथाविधैः प्रणीतेषु अन्यसमस्तशास्त्रेष्वपि बोध्यः ।

### कौटिल्यमतस्य शास्त्रसम्मतत्वम्

क्वचित् कौटिल्येन पूर्वाचार्यमतं प्रतिषिध्य उपन्यस्ते मते शास्त्रसम्मतत्वं वेदमूलकत्वञ्च नाऽस्ति इत्यतोऽस्य मतस्य शब्दप्रमाणकत्वं कथं भवितुमर्हति इत्ययमंशः अवश्यं विचारणीयतामर्हति । तत्रोच्यते ।

सर्वोऽपि विषयः शास्त्रेण कण्ठतः उक्तः इति नास्ति स्थितिः । अतएव शास्त्राधीनमहावाक्यतात्पर्यनिर्णयार्थं मीमांसापद्धत्या न्यायानामुपयोगः शास्त्रविद्भिः

---

१. महाभाष्ये पृषोदरादि० ६-३-३ पृ० २५७

"पृषोदरादीनीत्युच्यते । कानि पृषोदरादीनि । पृषोदरप्रकाराणि । कानि पुनः पृषोदरप्रकाराणि । येषु लोपागमवर्णविकाराः श्रूयन्ते न चोच्यन्ते । अथ यथेति किमिदम् । प्रकारवचने थाल् । अथ किमिदमुपदिष्टानीति उच्चारितानि । कुत एतत् । दिशिरुच्चारणक्रियः । उच्चार्य हि वर्णानाह उपदिष्टा इमे वर्णा इति । कैः पुनरुपदिष्टाः । शिष्टैः । के पुनः शिष्टाः । वैयाकरणाः । कुत एतत् । शास्त्रपूर्विका शिष्टिः शिष्टिपूर्वकं च शास्त्रम् । तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते । एवं तर्हि निवासतश्चाचारतश्च । स च आचार आर्यावर्त एव । कः पुनः आर्यावर्तः । प्रागादर्शात्प्रत्यक्कालकवनात् । दक्षिणेन हिमवन्तमुत्तरेण पारियात्रमेतस्मिन्नार्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारङ्गताः तत्र भवन्तः शिष्टाः । यदि तर्हि शिष्टाः शब्देषु प्रमाणम् । किमष्टाध्याय्या क्रियते । शिष्टपरिज्ञानार्थाऽष्टाध्यायी । कथं पुनरष्टाध्याय्या शिष्टाः शक्या विज्ञातुम् । अष्टाध्यायीमधीयानोऽन्यं पश्यत्यनधीयानं येऽत्र विहिताः शब्दाः तान् प्रयुञ्जानं स पश्यति । नूनमस्य देवानुग्रहः । स्वभावो वा योयं न चाष्टाध्यायीमधीते । ये चास्यां विहिताः शब्दाः तांश्च प्रयुङ्क्ते । नूनमयमन्यान्यपि जानातीति एवमेषा शिष्टज्ञानार्थाऽष्टाध्यायीति" ।

## जयमङ्गला

क्रियते। तद्द्वारा निर्णीतोऽर्थः शास्त्रमूलको न वेति प्रश्नमादाय न विद्वांसो विप्रतिपद्यन्ते। प्रत्युत "युक्तिहीनविचारे तु धर्महानिः प्रजायते, इत्येव तैः सिद्धान्तितम्[1]।

नीतिशास्त्रविषयोऽपि मीमांसादिसमस्तशास्त्रदृष्ट्या यदि विचार्यते तर्हि कौटिल्यवचनस्याऽपि नीतिशास्त्रमहावाक्यार्थनिर्णये उपयोगित्वात् तत्र वेदमूलकत्वं शास्त्रसम्मतत्वं च वक्तुं युज्यते। तथाहि—एतद्विषयनिरूपणात्पूर्वं शास्त्रं कतिविधं भवति इति अवश्यं ज्ञातव्यमस्ति। अतः आदौ तद्भेदो निरूप्यते। शास्त्रं द्विविधं भवति। अदृष्टार्थकं दृष्टार्थकं च। तत्र अदृष्टार्थकं शास्त्रं 'यजेत', 'उपासीत' 'अग्निहोत्रं जुहोती'त्यादिकम्। ईदृग्विधेषु विधिषु धात्वर्थः अदृष्टोत्पत्त्यर्थं अज्ञातत्वात् विधीयते। नास्त्यत्र न्यायापेक्षा। दृष्टार्थकं च शास्त्रं 'व्रीहीन् अवहन्ति', इत्यादिकम्। एवंविधेषु विधिषु अवघातादि धात्वर्थः। वितुषीकरणरूपेष्टसाधनत्वेन न अज्ञातः इति स न विधीयते। किन्तु "एतादृशस्थलेषु स्वाध्यायोऽध्येतव्यः" इति वचनवलेन प्रयोजनवदर्थज्ञानसाधनीभूताध्ययनभाव्यकत्वेन ज्ञातानामुक्तविधीनां निष्प्रयोजनत्वपरिहाराय नियमादिविधित्वं यथायोग्यं मीमांसान्यायाधीनगौरवलाघवमर्यादया बोध्यं भवति। नह्येतत्कल्पने वेदामूलकत्वं शास्त्रासम्मतत्वं वा कैश्चित् स्वीक्रियते। स एव न्यायः अर्थशास्त्रव्यवहारशास्त्रादिषु दृष्टार्थकेषु समन्वितो भवति। एतानि सर्वाणि शास्त्राणि यत् उद्दिश्य प्रवृत्तानि प्रायः तानि दृष्टफलान्येव। अतः दृष्टमुद्दिश्य प्रवृत्तानि इमानि शास्त्राणि प्रायः नियमविध्यादिपर्यवसायीन्येव भवन्ति। क्वचित् सति सम्भवे तेषु अपूर्वविधित्वं कल्पितमिति अन्यदेतत्। अत एव दृष्टार्थमुद्दिश्य ऋषिभिः प्रोक्तेषु अर्थव्यवहार-शास्त्रादिषु वक्तृतात्पर्यानुरोधेन वाक्यभेदादीनां दोषत्वं न स्वीक्रियते। तदेतत्सर्वं प्रपञ्चितं व्यवहारप्रकाशे द्रष्टव्यम्[2]।

इत्थञ्च नियमविधयः दृष्टार्थकविधिस्थले भवन्तीति स्वीकृतम्। नियमोबलात् इतरव्यावृत्तिरपि अर्थादेव सिद्धा। किञ्च व्रीहीन् अवहन्तीत्यादौ तण्डुलस्य निष्पत्तये वितुषीकरणोद्देश्येन प्रवृत्तोऽयं विधिः इदं कार्यमवघातेनैव कर्तव्यमिति नियमे पर्यवस्यति तथा नियमातिक्रमे प्रत्यवायोऽपि भवति इत्यपि च बोधयति। परन्तु उद्देश्यस्य हानौ नियमं परित्यज्य नखविदलनेनापि व्रीहीणां वितुषीकरणं क्रियते। क्वचित्

---

१. धर्मे प्रमीयमाणे तु वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति। श्लो० वा०

२. (पृ० १३) तस्मादयमत्र निष्कर्षः। उत्सर्गापवादादिमूलभूतान्वयव्यतिरेकादिन्यायमूलकता यत्र सम्भवति तादृशव्यवहारशास्त्रस्य सर्वस्य न वेदमूलकता कल्प्यते। यदंशे तदसम्भवस्तत्रादृष्टार्थकतया वेद एव मूलं कल्प्यते। वास्तुसामुद्रिकादिविधिषु ज्योतिःशास्त्रायुर्वेदप्रामाण्यव्यवस्थापनप्रसङ्गे आचार्यैः स्मृत्यधिकरणे व्यक्तमेव एतत्प्रपञ्चितम्।

## जयमङ्गलाक्रोडपत्रम्

समस्तानां अङ्गानां अप्राप्त्या उद्देश्यस्य सर्वथा विलोपे सम्भवति निषिद्धस्यापि ग्रहणं क्रियते। तदिदमुभयमपि अधोनिर्दिष्टेन विवेचनेन स्फुटीभविष्यति। तत्र नियमातिक्रमोदाहरणं – यथा-व्रीहीनवहन्तीति शास्त्रेण अवघाताभावाभावरूपो नियमः उक्तः। अनुष्ठितेपि तस्मिन् यदि एको वा द्वौ वा व्रीही सतुषौ अवशिष्टौ। तदानीम् अवशिष्टस्य तस्य अवयविभावरक्षणपुरस्सरं वितुषीकरणं अवघातेनाशक्यं तदा नखविदलनमपि कर्तुं मीमांसकैरनुमतम्। अथ निषिद्धोदाहरणम् उच्यते। तथाहि—

"अयज्ञिया वै माषा" इत्युक्त्या हविर्द्रव्येषु माषाः निषिद्धाः। व्रीहयो यवा वा ग्राह्यत्वेनोक्ताः। तथापि यस्मिन् देशे यस्मिन् समये वा व्रीहियवानामनुपलब्धिः तत्र अनिषिद्धेन माषातिरिक्तेन धान्येन हूयते। यदि कदाचित् माषातिरिक्तं धान्यमपि सर्वथा अनुपलब्धं भवति, होमश्च अवश्यं कर्तव्यः, स तु विलोपयितुं न शक्यते। एवं स्थिते निषिद्धैरपि माषैः होमः कर्तव्यः एव भवति। अग्निहोत्रस्य विलोपस्तु न भवति[1]।

एवं चात्र उभयत्रापि स्थले मीमांसकैर्न्यायमाश्रित्य योऽयं निर्णयः कृतः स शास्त्रसम्मतः वेदमूलकश्चेति अस्ति वैदिकसमाचारः। तथैव नीतिशास्त्रविषयेऽपि बोध्यम्। अस्य हि मुख्यमुद्देश्यम् आत्मनि विश्वासं दृढतरं चिरस्थायिनमुत्पाद्य लोकानुरागपुरस्सरं पृथिव्या लाभः पालनं च निर्दिष्टम्। तत्र पूर्वाचार्यैर्निर्दिष्टाः ये विधयस्ते दृष्टार्थकत्वात् प्रायः नियमविधित्वे पर्यवसिताः। तेषां स्वीकरणे क्वचित् व्रीहीणां तण्डुलस्य अवघाते कृते तद्–विनाशवत् यदि प्रजापालनात्मकोद्देश्यस्य विनाशः प्रसक्तो भवति तर्हि स वास्तविको न वेति सूक्ष्मतया परिज्ञाय एकाग्रभूमिकायां स्थितेन उपरिबुद्धिना ऐश्वर्यादिसम्पन्नेन पूर्वाचार्योदाहृतनियमानतिक्रम्यापि अन्यद् यदि विहितं तदपि प्रजापालनार्थं प्रवृत्तानामाचार्याणां उद्देश्यसम्मतत्वाद्वेदमूलकमेव इति युक्तमुत्पश्यामः। तदुक्तम् "यत् किञ्चिद् अनूचानः अभ्यूहति आर्षं तद्भवति" इति।

एवंरीत्या कौटिल्येनोक्तः स्वधीसम्मतोऽप्यर्थः शब्दप्रमाणमूलभूतः सन् प्रत्यक्षानुमानप्रमितः कथं भवतीत्यपि नीतिलक्षणसङ्गमनाय चिन्तनीयमेव। तत्तु तत्र तत्र प्रसङ्गे स्वयं मूलकृतैवव्यवस्थापयिष्यते। इत्यलमतिविस्तरेण।

विषयप्रयोजनसम्बन्धाधिकारिणः मूलस्थेन 'पृथिव्या लाभे पालने चे"ति वाक्येन निरूपिता भवन्तीति विशदीकृत्य, नीतिशास्त्रस्य अध्ययनीयत्वम् अत्यन्त-

---

१. अयज्ञिया इत्यत्राहार्थकप्रत्ययेन साधनत्वमात्रनिषेधात् विशेषविहितातिरिक्तस्थले सर्वत्रैव माषादिप्रविषेधप्रतीतेर्न प्रतिनिधेयाः। द्रव्यसामान्याभावे तु ग्राह्या एवेति ध्येयम्। अत्र च लक्षणया यज्ञोद्देश्येन माषनिषेधविधानात् नैकप्रसरताभङ्गः। भा० दी० अ० ६ पा० ३।

## जयमङ्गला

अत्र केचिदाहुः–धर्मस्यअलौकिकत्वात्तदभिधायकं[1] शास्त्रम्, अर्थस्योपायपूर्वकत्वाद् उपायस्य च शास्त्रपूर्वकत्वाद्[2] युक्तं तदर्थं[3] वार्ताशास्त्रम्। नीतिशास्त्रं तु न युक्तम्, यतो नीतिशास्त्रमनर्थकमिति। प्रत्यक्षानुमानागमप्रमाणदेशकालशक्तिपुरस्सरार्थसाधन विनियोगलक्षणा[4] क्रिया नीतिः, सा प्रेक्षावताम्[5]। दृश्यते नीतिं विना पशूनां तत्कल्पानाञ्च बालानाम् आत्महिततृणस्तन्याहारप्राप्तिरनिमित्ता[6]। शीतोष्णवात वर्षादिपरिहारश्च फलम्। तथाऽनधीतशास्त्राणा-

## जयमङ्गलाक्रोडपत्रम्

मभ्यर्हितम्। तच्चिन्तनाभावे त्रिवर्गसमृद्धिलोपः स्यात् इति दर्शयितुमाह—'अत्र केचिदाहुरिति'।

अयं दुर्बोधत्वादयं ग्रन्थो व्याख्यायते।

अत्र हि आदिमैः सप्तभिर्वाक्यैः नीतिशास्त्रस्य वैयर्थ्यमाशङ्क्य परितनैर्वाक्यैर्भक्तिश्रद्धापूर्वकं तस्यादरणीयत्वं व्यवस्थाप्यते। आशङ्काग्रन्थे सप्तवाक्यात्मके, धर्मशास्त्राणां अर्थशास्त्रान्तर्गतवार्ताशास्त्राणां चावश्यकत्वं प्रथमवाक्येनैव निर्धार्य स्वीकृतम्।

उपरितनैः षड्भिस्तत्रत्यैर्वाक्यैर्नीतिशास्त्रस्य निष्प्रयोजनत्वमुपक्षिप्यते इति स्पष्टमेव। अतो निश्चयेनैतद्वक्तुं शक्यते, यत्लौकिकेष्वेवार्थेषु शब्दात्मकस्यास्य शास्त्रस्य समाधानग्रन्थस्थैः पञ्चविंशतिवाक्यैरावश्यकत्वं स्थिरीकृतम्।

एतेषु वाक्येषु प्रथमवाक्येन धर्मशास्त्रवार्ताशास्त्रयोरावश्यकत्वे स्थिरीकृते नीतिशास्त्रस्यानर्थक्यशङ्कनं द्वितीयवाक्यस्य विषयः। उपरितनैः पञ्चभिर्वाक्यैर्निष्प्रयोजनत्वमेव स्फुटीक्रियते। नीतेः शास्त्रसम्मतं स्वरूपमनिर्धार्य तत्र निष्प्रयोजनतायाः साधयितुमशक्यत्वात् तृतीयवाक्येन प्रथमतस्तत्स्वरूपमनूदितम्। चतुर्थपञ्चमाभ्यां वाक्याभ्यामेवंलक्षणीयाया नीतेरनावश्यकता। षष्ठेन वाक्येन नीतेरावश्यकत्वेऽपि म्लेच्छदृष्टान्तेन तत्र शास्त्रस्यानावश्यकत्वम्। सप्तमेन तु शास्त्रसत्त्वेऽपि तस्य वैयर्थ्यमाशङ्कितम्। अथास्य शङ्काग्रन्थस्य यथाक्रममुत्तरम्—

१—नीतेर्विना फलं नास्ति।

---

अशुद्धम्

१. त्वादमिघायकं शास्त्रम् (पा०)।
२. पूर्वकत्वाद् तद् युक्तम् (पा०)।
३. तदर्थंवा (पा०)।
४. पुरःसरार्थवि (पा०)।
५. प्रेक्षावताम् दृश्यते (पा०)।
६. प्राप्तिरभिहिता (पा०)।

## जयमङ्गलाक्रोडपत्रम्

२—शास्त्रेणैकान्तिको नयः ।

३—शास्त्रे सत्यपि नावश्यमिति सर्वेष्वदः समम् ।

इति त्रिखण्डात्मकेन नवमेन वाक्येन भविष्यतीति शङ्काग्रन्थस्य सर्वस्यापि शङ्कात्रय एव तात्पर्यमित्यत्र न विवादः ।

तत्र म्लेच्छराजनीतिप्रचारवत्यधुनातनसमये नीतिशक्तिं विनापि जीवनं भविष्यतीति शङ्काया अनुत्थितिरेव । अतो दशमैकादशवाक्याभ्यां यदुक्तं जयमङ्गलाकृता तद्विषये वक्तव्यस्य नास्त्यावश्यकतेति प्रथमः पूर्वपक्षोऽनुत्थानपराहतः । द्वादशवाक्यमवलम्ब्य च शिष्टान्येकविंशतिवाक्यान्यालोचनीयतामर्हन्ति ।

"अनधीतशास्त्राणामपि यत्कदाचिद्धिताहितप्राप्तिवर्जनं तदपि "यादृच्छिकीं नीतिमेवासाद्य भवती"तीत्यतइदं वाक्यं यादृच्छिकपदघटितं, "कदाचिद्वासनानुगमाच्च, अनन्तरेषु व्यवहितेषु च जन्मसु सर्वपदार्थस्वभावपरिच्छेदानुभूतलोकयात्राणां यदृच्छोत्पन्नवासनाप्रबोधानां हिताहितवस्तुन्यभिलाषेतरौ भवतः" इत्येकविंशतितमेन वाक्येन स्फुटीक्रियते ।

स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा ।
परिणामं च मन्यन्ते प्रकृतिं पृथुदर्शिनः ।। सु० शा० १-११

इति सुश्रुतग्रन्थोपरि व्याख्याकर्त्रा डल्हणेन—

"यदृच्छा पुनर्लक्षितः आकस्मिकपदार्थाविर्भावः स्वभावस्तावत्सत्त्वरजस्तमसां तद्विकाराणां पृथिव्यादिमहाभूतानां च परिणामस्य तादृशो विशेषः" इति व्याख्यानात् यदृच्छास्वभावशब्दार्थौ स्फुटीभवतः । एवं चालक्षिताकस्मिकपदार्थाविर्भावोद्बुद्धवासनानामित्यर्थो "यदृच्छोत्पन्नवासनाप्रबोधाना"मित्यादिवाक्यांशस्य भवति । वक्ष्यमाणगोकुलनाथोपाध्यायोक्त्यनुसारेण संस्कारविशेषरूपायाः शक्तेः पुरस्करणेन जायमाना नीतिर्यदृच्छोत्पन्नवासनाप्रबोधप्रयुक्ता षष्ठे वाक्ये यादृच्छिकीपदेनोच्यते । तथा-विधाप्युद्बुद्धा वासना पूर्वस्मिन् कस्मिन्नपि जन्मनि शास्त्राधीनसर्वपदार्थस्वभावपरिच्छेदानुभूतलोकयात्राणामेव भवतीति परम्परया शास्त्राधीनत्वमेव तस्या व्यवस्थाप्यते । युक्तश्चायमर्थः प्रतिभाति । विंशे वाक्ये हि अन्वयव्यतिरेकैकशरणौ लब्धस्य ज्ञानस्य बाध्यमानत्वमुपपाद्याधीतशास्त्राणामेव यच्च यावच्च प्राकाश्यं लभते इत्युपपादितम् । तदेतत् व्याकरणशास्त्राध्ययनेनैव सम्पूर्णसंस्कृतभाषाज्ञानं संस्कृतत्वादिजात्यभिव्यक्तिश्च भवतीति दृष्टान्तेनास्माभिरप्यनुभूयते । किञ्च नव्यप्रणाल्या तत्तज्जन्मनि जायमानवासनोद्बोधस्य एतज्जन्मीयान्वयव्यतिरेकप्रयोगमूलकत्वेऽभ्युपगम्यमाने कीरदष्टं फलं मधुरमेव भवतीति सर्वसम्मतः सिद्धान्तो भज्येत । इदमेव तत्त्वं "शास्त्रेणैकान्तिको नयः इति पद्यांशेनाविष्कृतं ग्रन्थकृता । शास्त्रानभ्युपगमेतु अलक्षितनिमित्तवासनोद्बोधो वा शरणीकरणीयः, अन्वयव्यतिरे-

## जयमङ्गला

मपि म्लेच्छादीनां जलारण्यान्तरिक्षवर्तिमीनमृगपक्षिबन्धनार्थसाधनविनियोगलक्षणा-नीतिः[१], तथा अशास्त्रविदां तुल्येऽपि शास्त्रे केषाञ्चिदर्थेन योगोऽन्येषामनर्थेनेति। अत्रोच्यते—

"नीतेर्विना फलं नास्ति शास्त्रेणैकान्तिको नयः।
शास्त्रे सत्यपि नावश्यमिति सर्वेष्वदः समम्॥" इति।

पशवो हि मनुष्यप्रयुक्तैः पाशकूटादिभिरुपहन्यमानाः पाशादिविमोचना-कुशलाः विनाशम्, बालाश्च परिहारानभिज्ञाः सर्पाद्युपद्रावादिकमासादयन्तो नीतेर्विना दृश्यन्ते। अतो नीतेर्विना फलं नास्ति। अनधीतशास्त्राणामपि यत् कदाचित् हिता-हितप्राप्तिवर्जनं तदपि यादृच्छिकीन्नीतिमेवासाद्य भवति। सा चैवंविधा नीतिर्घुणा-क्षरकल्पत्वादनाश्वासा। अपनयबाहुल्याच्चैते शास्त्रविद्भिरुद्धासीक्रियन्ते[२]। शात्रेण तु सम्यक्करणीयवर्जनीयविधानादैकान्तिकत्वं नीतेः क्रियते। उपदेशादिष्वसा[३]वपरिच्छेदोऽप्येषां यदा भवति तदा प्रामाण्यमन्येभ्य एव। तथा हि—

"उपदेशादनायोगाद् वासनानुगमादपि।
परयत्नाददृष्टाद् वा सर्वाः सर्वत्र वृत्तयः॥"

## जयमङ्गलाक्रोडपत्रम्

काख्यस्तर्क एव वा पूर्वोक्तबाधासहकृतः शरणीकरणीयः। उभयथाप्यनधीत-व्याकरणशास्त्राणां यच्च यावच्च संस्कृतं न प्राकाश्यं लभते, न्यूनाधिकसंख्याव्यवच्छेद-पुरस्सरं साधुत्वाभिव्यक्तिश्च न भवतीति वयमनुभवामः। तथैव सम्पूर्णाया राजनीते र्यच्च यावच्च प्राकाश्यं सर्ववाङ्मयं विना न सम्भवतीति किमु वक्तव्यम्? अतो नीति-लक्षणे आगमप्रमाणमावश्यकमिति सिद्धान्तितम् जयमङ्गलाकृता।

"न तत् पदं न तद् वाक्यं न सा विद्या न सा कला।"
जायते यन्न काव्याङ्गमहो! भारो महान् कवेः॥

इति साहित्यमीमांसायाम्—

"विद्याः समस्ता यस्याङ्गमहो! भारो महान् कवेः", इत्यग्निपुराणे च स्मरणात् प्रोक्तस्य शक्तिपदार्थस्य लाभाय दर्शनश्रवणादिभिः सर्वपदार्थस्वभाव-परिच्छेदानुभूतलोकयात्रत्वमनन्तरेषु व्यवहितेषु वा जन्मसु यस्य तस्यैव तादृश-वासनोद्बोध इति, एकविंशतितमेवाक्यार्थः पर्यवसितो भवति, तस्मादर्थशास्त्रा-

---

अशुद्धम्

१. नीतिः। (पा०)।
२. विद्भिरुदासी (पा०)।
३. पि स्वभाव (पा०)।

## जयमङ्गला

इत्येषां हिताहितप्राप्तिपरिहारौ। क्वचिन्मात्रादिचरितोपदेशापेक्षया—नहीदं कुर्विदं मा कार्षीरिति वाचैव श्रोतृणां शब्दार्थप्रतिपत्तृणामुपदेशः, किन्तर्हि अनुकर्त्तृणां नाट्योपदेशवदुपदेशः। कदाचिदनायोगात्—यस्यां प्रवृत्तौ बाध्यन्ते न च फलं प्राप्नुवन्ति ततो निवृत्याऽन्यत्र निराबाधं फलं च किञ्चिल्लभमानाः पौनःपुन्येन इदमतो

## जयमङ्गलाक्रोडपत्रम्

ध्ययनाधीनः ऐकान्तिको निश्चयो भक्तिश्रद्धापुरस्सरं सम्पादनीय इति द्वात्रिंशवाक्यस्य तात्पर्यम्'' इति।

ननु जयमङ्गलाकृन्मते नीतेः लक्षणं प्रत्यक्षानुमानागमप्रमाणदेशकालशक्तिपुरस्सरार्थसाधनविनियोगलक्षणा क्रिया नीतिः इत्युक्तम्। तत्र शक्तिस्वरूपं कीदृक्? इति चेत् उच्यते।

### शक्तिस्वरूपम्

उक्तलक्षणे शक्तिपदनिवेशात्मकस्य विशेषस्यार्थदृष्टया महद् गौरवं वर्तते। यतोऽर्थशास्त्र एव नवमाधिकरणे प्रथमाध्याये प्रथमसूत्रे ''शक्तिदेशकालबलाबले''त्येवं पठितम् अतो देशकालशक्तीनां विचारो नीतौ परमावश्यक इति व्यक्तम्। सोऽयमावश्यको विषयः उपाध्यायनिरपेक्षाकृता कृते प्रागुक्ते लक्षणे देशकालानुकूल्ये इति भागे अव्यक्ततया स्थितोऽपि जयमङ्गलाकारेण स्फुटं निर्दिष्टः स्वयंकृते प्रागुद्धृते लक्षणे।

शक्तौ सत्यां साधनविनियोगः स्वयमेव भवति, अतः स न प्राधान्येन नीतिशास्त्रस्य विषयः किन्तु शक्तिसाधनमेवेति जयमङ्गलाकृतोऽभिप्रायोऽत्र स्फुटः।

[1]''रुद्रहीनम्'' इति वचनानुसारेण शक्तेः समुपार्जनं तस्या यथावद्विनियोगश्च नीतिशास्त्रस्य मुख्यं लक्ष्यमिति स्थिते ''नरत्वं दुर्लभम्''❀ इत्यग्निपुराणवचनानुसारेण शक्तेः समुपार्जनविनियोगौ कस्यचिदेव पुण्यवतो महापुरुषस्य हस्तगतौ भवतो न सर्वेषाम्।

यद्यपि ''शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः'' इत्यमरकोशानुसारेणार्थशास्त्रीयनवमाधिकरणाद्याध्यायोक्तप्रकारेण च प्रभावमन्त्रोत्साहशक्तय एवात्र विवक्षितास्तथापि प्रभावादीनां स्वरूपनिर्धारणे किञ्चिद्वैलक्षण्यमवश्यमालोचनीयतामर्हति। नयचन्द्रिकाकारेण हि ''उत्साहः शौर्यादिमत्वं, प्रभावः कोषादिमत्वं, मन्त्रश्च-विचारपूर्वककार्यनिश्चयश्चेति व्याख्यानं कृतम्। तथाप्यमरकोषे ''प्रभावोत्-

---

१. रुद्रहीनं विष्णुहीनं न वदन्ति नराधमम्।
शक्तिहीनस्तु यो मर्त्यस्तं वदन्ति नराधमम्॥

❀ नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा॥

## जयमङ्गलाक्रोडपत्रम्

साहमन्त्रजा'' इति तज्जन्यत्वं निर्दिश्यते इत्यस्त्येव कश्चिदत्र विशेष आलोचनीयः। तथाहि—भावप्रकाशने-परस्मादात्मनो भान्ति[1]। इत्यनेन हि सर्वान्तर्यामिपरमात्मसमवेतप्रभात्रयमिश्रणस्य शक्तिरूपत्वमुच्यते। ''स न्यस्तचिह्नां''इतिना कलिदासोऽपि तादृशं प्रभाविशेषं राजशरीरे सम्मनुते[2]। तदेव तेजः कोशदण्डादिमत्वमिति पदेन मतुप्प्रत्ययोत्तरत्वप्रत्ययवाच्येन नयचन्द्रिकाकारः प्रतिपादयति। अन्यथा ''कोषदण्डादि'' इत्येव ब्रूयात्। सा सत्ता सा महानात्मा तामाहुस्त्वतलादयः।

इति वदन्तो वैयाकरणा अपि तदेव तेजस्त्व-तलादि शब्दवाच्यमिति प्रतिपादयन्ति। मनसि सदा सुसमाधिनि[3] इत्यादिना साहित्यशास्त्रविद्भिर्वर्ण्यमानं शक्तितत्त्वमेतादृशं उक्ततेजोरूपप्रकाशविशेष एव। यम्—

शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।'' ( का० १ उ० )

इत्यादिना काव्यप्रकाशकारो व्याजहार।

अत्र ''अवेक्षणादिति व्याचष्टे, विमर्शनादिति। विमर्शनमनुषङ्गः पौनःपुन्यम्। निपुणतापदार्थं व्याचष्टे व्युत्पत्तिरिति। तत्तदर्थगोचरो दृढतरः संस्कारः तत्तद्वाक्यार्थप्रतिसन्धानं वेत्यर्थः। स्रग्धरावृत्तत्वावच्छेदेनादौ गुरुचतुष्कत्वमिति संस्कारदाढ्यं व्युत्पत्तिः ''सानन्दं नन्दिहस्ते''त्यादौ तत्तदानुपूर्वीकपदगोचरः संस्कारः शक्तिरिति विवेकः। एवं शास्त्रान्तरविषयेष्वपि प्रणिधेयः सामान्यविशेषभावेन व्युत्पत्तिशक्तिविषययोर्भेद'' इति गोकुलनाथोपाध्यायकृतकाव्यप्रकाशविवरणमवधेयतामर्हति।

''आदौ शास्त्रान्धकार'' इति वसिष्ठस्मृतिटीकामङ्गलपद्ये[4] अन्धकारमयाच्छास्त्रावरणात्तृतीयां व्युत्पत्तिकक्षामतीत्य लब्धो वाटिकाविशेषरूपः संस्कारविशेष एव शक्तितत्त्वमिति वर्ण्यते। तदेतद् गोकुलनाथोपाध्यायोक्तरीत्या सामान्यविशेषगोचरोद्बुद्धसंस्कारयोर्व्युत्पत्तिशक्तिरूपत्वे घटते। विशेषतः शक्तिरूपस्योद्बुद्ध-

---

१. परस्मादात्मनो भान्ति ज्ञानानन्दक्रियाप्रभाः।
ज्ञानप्रभा च सानन्दा तस्याः सत्त्वं प्रजायते॥
क्रियाप्रभा रजः सत्त्वाच्छक्तिः स्यात्तु तमःप्रसूः।

२. स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः।
आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः॥ रघु० २-७

३. मनसि सदा सुसमाधिनि विस्फुरणमनेकधाऽभिधेयस्य।
अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः॥

४. आदौ शास्त्रान्धकारे पतित इव ततोऽभ्यासमार्गे चरिष्णुः।
पश्चाद्व्युत्पत्तिदेहल्युपग इव ततः शक्तिवाटीप्रविष्टः॥
नानाशब्दाख्यपुष्पावचयकरणतो वाग्वशीभूतविश्वो।
यत्प्रेमापाङ्गदृष्ट्या भवति कविवरो भारती सा पुनातु॥

## जयमङ्गला

दुःखम् अन्यथा अदुःखं भवतीति तमोबाहुल्येऽपि यच्च यावच्च प्राकाश्यं लभन्ते। कदाचिद् वासनानुगमाच्च—अनन्तरेषु व्यवहितेषु च जन्मसु दर्शनश्रवणादिभिः सर्वपदार्थस्वभावपरिच्छेदानुभूतलोकयात्राणां यदृच्छोत्पन्नवासनाप्रबोधानां हिताहित-वस्तुन्यभिलाषेतरौ भवतः। ततश्चाभिप्रेतलाभः परिहारश्च। कदाचिद् परप्रयत्नात्-उपकरणसम्पदायत्तमात्मोपकारं मन्यमानो गोवत्सादिवदनं मातुरूधःप्रवेशं योजयन् स्वार्थं साधयति। साऽन्येषां च परनीत्यपेक्षया प्रवृत्तिः साफल्यं लभते। कदाचिददृष्टात्-

## जयमङ्गलाक्रोडपत्रम्

संस्कारस्य प्रकाशमयत्वं वाटिकारूपकेण स्फुटीभवति। संस्काराणां प्रत्यक्षज्ञानजन-कत्वस्य तद्ग्रन्थादेवावगमात्।

पूर्वोक्तपद्ये शास्त्रान्धकार इत्युपक्रमादुत्तरोत्तरं सूक्ष्मतर-सूक्ष्मस्फुट-प्रकाश-लाभस्तास्ववस्थासु लभ्यते। सामान्यविशेषप्रकाशयोर्भेदस्तु न्यायमञ्जरीकारेण माघपद्यमुदाहृत्य वर्णितश्चयस्त्विषामित्यादिना[1]।

रामायणाद्युपवर्णितै रामरावणादिपदै र्यद्रामत्वं रावणत्वादिकं वा प्रकाशते, तद्धि उदात्तनायकत्वादिरूपं सामान्यप्रकाशरूपमेव भवत्याधुनिकतमानामपि। "यदादित्यगत"मिति गीतापद्ये[2] भास्वररूपविशिष्टो यस्तेजोविशेषः उपास्यतया प्रतिपाद्यते सः "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः"।

इत्यादिगीतावाक्येनेश्वररूपतया वर्ण्यते। सोऽयं वह्निः घटपटादिपदवाच्यजाति-रूपः सन् 'समानोग्निः" इति भावप्रकाशनोक्तरीत्या[3] विद्युत्समूहमयत्वात्तज्जातीय-व्यक्तीनामनन्तानां सृष्टिजनकः, एकः सूर्य इवासंख्येषु दर्पणादिषूपाधिषु अनन्तानां सूर्यप्रतिबिम्बानां जनक इवः चरकसंहितोक्त[4] वैद्यकसिद्धान्तसिद्धः आस्ति।

---

१. चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः। इति।

२. यदादित्यगतं तेजो जगद् भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्। भ० गी० १४-१२

३. समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः।
अन्नं गृह्णाति पचति विवेचयति मुञ्चति। भा० प्र० ७ अ० १९४ पृ०

४. सर्वदा सर्वभावानां सामान्यं वृद्धिकारणम्।
ह्रासहेतुर्विशेषश्च प्रवृत्तिरुभयस्य तु।
सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत्। चरके सूत्रस्थाने ४२–४३

## जयमङ्गला

पूर्वदेहोत्पन्नौ धर्माधर्मौ प्रत्युत्पन्नपरिपाकौ देहकारणानां सन्निवेशविशेषरचनायाः कारणीभवतः। एवमिष्टानिष्टफलप्राप्तिपरिहारनिमित्ताय प्रवृत्तिविशेषाय[1] अनन्ताय पुरुषतर्कागोचराय तावेव प्रभवतः इति न किञ्चिदनिमित्तं फलमस्ति। येषामपि शास्त्रविदाङ्केषाञ्चिदपनयात् अनर्थेन योगः स तेषामेवापराधो न शास्त्रस्य। नोलूकः पश्यतीत्यादित्येन नोदेतव्यम्। प्रतिपत्रपराधाच्च शास्त्रानर्थक्यं सर्वशास्त्रेषु

## जयमङ्गलाक्रोडपत्तम्

स च "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैको ऽनुगच्छन्। उपाधिना क्रियते भेदरूपः" इत्यादिश्रुत्या ज्ञायते। प्राज्ञतैजसविश्वात्मकेषु जीवस्वरूपेषु स्वप्नदशायां पित्ताख्यतेजःप्रचुरत्वादात्मप्रकाशमयत्वाद्वा तैजस इति वेदान्तशास्त्रे व्यपदिश्यते च। विद्युत्कणैरेव सर्वजगत्सृष्टिर्जातेति वदद्भिराधुनिकैर्वैज्ञानिकैरपि निर्विवादं प्रत्यक्षीक्रियत एव।

"एकोऽहं बहु स्यां प्रजायेये"ति श्रुत्या वर्ण्यमाना जगन्मूलप्रकृतिगतेयं शक्तिः स्वतन्त्रचेतननिष्ठेति पौराणिकानां सिद्धान्तः, जडप्रकृतिनिष्ठेति निरीश्वरवादिनां नवीनवैज्ञानिकाम्। "स्वातन्त्र्यमेव चेतनत्वं, पारतन्त्र्यमेव जडत्व"मिति नवीनवैज्ञानिकाविरुद्धप्रत्यभिज्ञादर्शनोक्तजडचेतनलक्षणानुसारेणापि तस्याश्चेतननिष्ठत्वमिति पौराणिकसिद्धान्त एव हृदयावर्जको भवति। अयमेवेच्छाज्ञानक्रियाशक्त्यात्मकः समूहः आनन्दरूपतामपि गच्छति। तथा च यस्यैव पुरुषस्य ज्ञानाधिक्यं क्रियाशक्त्याधिक्यं तदुभयवशेन सफलेच्छता च स एव शक्तिमानुत्तमश्चेति गीयते। इदं शक्त्याधिक्यं जगन्मूलायां प्रकृतावीश्वरे च निरवधिकं मन्तुमुचितम्। तदीयानां नियमानामनुसरणेनैव मनुष्यजातेरप्यभ्युन्नतिर्भवितुमर्हतीत्यत्र नास्त्येव पौराणिकनवीनमतयोः कोऽपि भेदः। इयानेव परं विशेष एनयोर्मतयोः-"यदेव किञ्चानूचानोऽभ्यूहत्त्यार्षं तद्भवती"ति निरुक्तस्मृत्यनुसारेण पूर्वशास्त्रानुसरणमुन्नतेर्बीजमिति पौराणिका वदन्ति। पूर्वयुगमज्ञानबहुलमुत्तरोत्तरं प्रज्ञाविवृधिषु, भविष्यति कस्मिंश्चिदागामिनि काले प्रयोगोपलब्धज्ञानानां उपलब्ध्या सर्वज्ञतेति नवीनमतम्। एतादृशनवीनमतानुसारेणैव बौद्धादिभिः पृथक्प्रस्थानोपदेशाः प्रणीताः। भारतीयराजनीतिविदां तु प्रथमः पक्ष एव रोचते। तत्र कारणं तु व्याकरणशास्त्रेणैवं प्रतिपादितम्। "रक्षोहागमलघ्वसन्देहाः प्रयोजन"मिति त्रिमुनिव्याकरणेनैव तत्संस्कृताः शब्दाः

---

अशुद्धम्

१. निमित्त यः प्रवृत्तिविशेष ( पा० )

## जयमङ्गलाक्रोडपत्रम्

साधवोऽन्ये त्वसाधव इत्यसन्दिग्धं लघुनोपायेन संस्कृतभाषास्वरूपं लभ्यते। "प्रयोगानुसारिण्या भाषया भाव्यं न तु व्याकरणनियमस्तत्रोपयुक्त" इति नव्यमतानुसारेण भाषास्थैर्यं कथमप्यसम्भवि, उत्तरोत्तरभाषाकाले पूर्वपूर्वभाषाज्ञानस्य लुप्यमानत्वात्पूर्वसन्दृब्धानामर्थानामैतिहासिकानामस्तमयायैव कारणं स्यान्न तु सर्वज्ञतासम्पतये उद्देश्यभूतायै, इति भयेन भारतीयराजनीतिज्ञाः—

"शास्त्रदृष्टिर्गुरोर्वाक्यं तृतीयस्स्वात्मनिश्चयः"।

इत्युक्तप्रकारेण प्रत्यक्षानुमानागमशक्तिदेशकालपुरस्सरार्थसाधनविनियोगलक्षणां क्रियामुन्नतेर्बीजमाहुः। तदेवं नीतिरूपं धर्मस्य सुन्दरतमं स्वरूपम्। एतादृशशक्तिसम्पत्तिः सरस्वत्युपासकानामेव सम्भवतीति पूर्वं निर्णीतमेव। अन्येषां तु प्रयोगानुसारिणी शक्तिरुद्देश्यविपरीतत्वाद्विसंवादिनी न विस्रम्भणीयतामर्हतीति भारतीयनीतिविदां सिद्धान्तः। युक्तश्चायम्। यत् वैयक्तिकं कार्यमधिकृत्य प्रयोगे क्रियमाणे तस्यासफलत्वे तद्व्यक्तेरेव विनाशः स्यात्। अथवा कथञ्चित् नीतेः वैयक्तिककार्यप्रयोगद्वारा सिद्धान्तान्वेषणे क्रियमाणे असफलप्रयोगैः पूर्वभाविभिर्नाशो व्यक्तिमात्रस्य स्यादिति। नीतेरितरत्र विषये तथा प्रयोगमार्गानुसरणे कदाचिदनुज्ञार्हत्वेऽपि सर्वजनमधिकृत्य प्रस्तुते राजनीतिप्रयोगेऽपि तथामार्गानुसरणे सिद्धान्तान्वेषणात् प्रागेव सर्वराष्ट्रनाशः प्रसज्येतेत्यनर्थायैव स्यात्। तस्मात्—

"मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम्।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम्। किरात० २-३३

इति पन्था एव भद्र इति भारतीयराजनीतिर्मन्यते। अयं च सिद्धान्तः पूर्वोत्तरपक्षमुखेन पूर्वोद्धृतैर्वाक्यैर्जयमङ्गलाकृता स्थिरीकृतः।

एतेन लेखेन आनन्दप्रभामिश्रिता ज्ञानप्रभैव शक्तितत्त्वं भवति इति पर्यवसितम्। यथा नीतिः धर्मस्य सुन्दरतमं स्वरूपम् तथेयं ज्ञानप्रभापि शक्तेः बोध्या। अत्र इदमप्यनुसन्धेयम्—यत् विना योगसम्बन्धं ईशसमवेतज्ञानप्रभा पूर्णतया अस्मासु भानविषया न भवतीत्यतः अपेक्षितः योगसम्बन्धः। स च अग्रे समाधिविचारे स्फुटीभविष्यति।

आनन्दप्रभामिश्रणं च ज्ञानप्रभायां नीतिमार्गानुसरणे कथं भवति इत्ययमंशोऽपि मूलटीकायां स्फुटीकृतः। विस्तरभयान्नोच्यते।

---

१. "जयमङ्गलाग्रन्थोऽयं अनधीतशास्त्राणां म्लेच्छानां नीतिमुपक्रम्य, अपनयबाहुल्याच्चैते शास्त्रविद्भिरुदासीक्रियन्ते इति पञ्चदशेन वाक्येन वर्णाश्रमहीनानां भारतीयजनपदात् तात्कालिकोद्वासनदर्शनाद्बौद्धानां भारतवर्षतो निष्कासनकालिक इति निर्णीयते।

यद्यपि मुद्रितपुस्तके इदं वाक्यं "अपनयबाहुल्याच्चैते शास्त्रविद्भिरुदासीक्रियन्ते" इति दृश्यते, तथापि—

## जयमङ्गला

तुल्यं स्वर्गारोग्यापवर्गार्थिषु शास्त्रेषु। न सर्वे तद्विदो धर्माधर्मसेवापरिहारयोः पथ्यापथ्याहारसेवासेवयोः रागादिहानौ तत्वज्ञाने चाभिनिविशमाना दृश्यन्ते। ये तदर्थिनो भक्तिश्रद्धान्वितास्तेऽपि शास्त्राणां प्रयोजनहेतव इत्यन्यशास्त्रवद् इदमप्यादरणीयमिति।

## जयमङ्गलाक्रोडपत्रम्

इदं नीतिशास्त्रम्।

---

"इम उद्वासीकारिण इमे दुर्भूतमक्रन्नित्यन्यतरः (तै० ब्रा० १-३-६) इत्यादि तैत्तिरीयब्राह्मणसंवादात्, "उद्वासं निवासशून्यम्"। इति तत्रत्यसायणभाष्यसंवादाच्चोद्वासीक्रियन्ते इत्येव पाठः सङ्गतः, लेखकप्रमादादुदासीक्रियन्ते इति पाठो मुद्रितः। जयमंगलाकारेण स्वकीयग्रन्थेषु दण्डिकृतकाव्यादर्शस्योद्धरणात् स दण्ड्युत्तरकालिक इति तात्कालिकीं परिस्थितिं वक्ष्यमाणरीत्या आवेदयन् "उद्वासीक्रियन्ते" इत्याकारकं एव पाठमस्मदुक्तरूपं प्रयुक्तवान् इति भाति। किम्बहुना—

"वानप्रस्थादन्यः प्रव्रजितभावः, सजातादन्यः सङ्घः, सामुत्थायिकादन्यः समयानुबन्धो वा नास्य जनपदमुपनिविशेत"। (कौ० २ अधि० १ अ० ४ सू०)

"ज्ञातिसामन्तधनिकाः क्रमेण भूमिपरिग्रहान् क्रेतुमभ्याभवेयुः।"

कौ० ३ अ० ९ अ० १ सू०

इत्यादिना जातिव्यवस्थावर्जितानां वास्तुभूमिलाभाभावव्यवस्थापनं कौटिल्योपज्ञमेव प्रवर्तते। नीतौ विधानरूपेणागतस्य तस्य विषयस्य वर्तमानरूपेण निर्देशो जयमङ्गलाकृता क्रियमाणस्तस्य पञ्चमषष्ठशताब्दीवर्षासन्नकालभवत्वं सूचयति। तेन प्रोक्ते पञ्चदशे वाक्ये अपनयबाहुल्यादनधीतशास्त्राणां यदुद्वासनं प्रतिपाद्यते तद्बौद्धीयदशरथजातकोक्तां तत्कालभवां परिस्थितिं यद्यनुमापयति तर्हि न कस्याप्यत्र दोषोऽनुमातुर्वक्तुर्वा वक्तुं शक्यते।

"नचान्य आगमो लोकयात्रामुद्वहन् महाजनपरिगृहीत ईश्वरप्रणीततया स्मर्यमाणो दृश्यते (न्या० सू० २-१-६८) इति न्यायवार्तिकतात्पर्यटीकाकर्तुर्वैदिकागमविषयक उल्लेखः, "कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाद्बोद्धव्यम्।" इति (सा० कौं० ५ का०) तदीय सांख्यतत्त्वकौमुद्युल्लेखश्चैतन्मूलभूतः श्लोकवार्तिकगतः—

"न चापि स्मृत्यविच्छेदात्सर्वज्ञः परिकल्प्यते।
विगानाच्छिन्नमूलत्वात्कैश्चिदेव परिग्रहात्॥"

इत्याद्युल्लेखश्च जयमंगलाकृदुक्तमुद्वासनकारणमपनयबाहुल्यमिति विशदयति।

क्रिस्तपूर्वषष्ठशताब्दे प्रवृत्ते सहस्रसंवत्सरव्यायिनि बौद्धकाले आयुर्वेदादिविषयान् विहाय लुप्तप्रायाणां भारतीयानां कतिपयानां विद्यानां पुनरुज्जीवनं पाणिनिप्रभृतिभिः सर्वतन्त्रस्वतन्त्रैराचार्यैः कृतम्। एवंविधेऽपि बौद्धसमये ऽलुप्तप्रचारमिदं नीतिशास्त्रं जयमङ्गलाकारादिभिर्बौद्धैरेव परिगृहीतं यद्वर्णयति तदविरोध्येवार्थः उत्तरत्र कुमारिलभट्टपाद-शङ्कर-

## तस्यायं प्रकरणाधिकरणसमुद्देशः—

### श्रीमूला

तदिदमर्थशास्त्रं साशीतिशतसङ्ख्यैः प्रकरणैः तत्परिच्छिन्नैश्च पञ्चदशसङ्ख्यैरधिकरणैर्विभज्य प्रस्थापितम्। तेषु यथास्थानं वितत्य विशेषतो व्युत्पादयिष्यमाणेषु प्रथमं विषयतः समाख्यातः क्रमत इयत्तया च किमपि सामान्यज्ञानं विशेषजिज्ञासानिमित्तं शिष्याणां जनयितुं तत्समुद्देशं प्रतिजानीते—तस्यायमिति। तस्य अर्थशास्त्रस्य, अयम् आरब्धाध्यायगोचरः प्रदर्श्यमानप्रकारः। प्रकरणाधिकरणसमुद्देशः, प्रकरणानामधिकरणानां च सर्वेषां समुद्देशः संक्षेपेण निर्देशः संक्षिप्तस्वरूपक्रमेयत्ताख्यानमित्यर्थः। क्रियत इति शेषः। प्रक्रियन्ते प्रकर्षेण व्युत्पाद्यन्ते एष्वर्था इति प्रकरणानि। अधिक्रियन्ते विषयीक्रियन्ते एषु प्रकरणानीत्यधिकरणानि।

### वैदिकसिद्धान्तसंरक्षिणी

तस्य निर्देशग्रन्थस्य। अयं बुद्धिस्थः उद्देशग्रन्थ। तस्य नामाभिधातुमाह प्रकरणेति। तत्त्वं च तत्तत्फललाभाय तत्तत्साधनसामग्रीविषयिणी या जिज्ञासा तद्विषयतापर्याप्त्यधिकरणत्वं यावत्स्वर्थेषु तावतामर्थानामभिधायकवाक्यकूटत्वम्। तत्समुदायोऽधिकरणम्। इत्येतत् सर्वं जयमङ्गलाव्याख्यायां स्फुटं भविष्यति। तयोः समुद्देशः संक्षेपेण कीर्तनम्, "समुद्देशः समासेन कथन" मिति तन्त्रयुक्तौ व्याख्यानाद्बोध्यम्।

अत्र पुनः समस्तस्य संक्षेपेण सूत्रमुखेन निर्वचनं पौनरुक्त्याय भवतीति न मन्तव्यम्। यतो यं विषयं अध्येतुमिच्छति जिज्ञासुः स विषयः कुत्र वर्णितो वर्तते इति अनेनोद्देशग्रन्थेन ज्ञात्वा तावान् विषयः साकल्येन तेन ज्ञातव्यः स्यात् इति प्रयोजनसत्त्वान्न पौनरुक्त्यम्। शेषं तदीयटीकाव्याख्यायां वक्ष्यते। उद्देशं कीर्तयति मूले विद्यासमुद्देश इत्यारभ्य तन्त्रयुक्तय इत्यन्तेन। शेषं निगदव्याख्यातम्।

### जयमङ्गला

शास्त्रप्रणयनं च द्विधा समुद्देशतो निर्देशतश्च। तत्र स्वरूपसङ्ख्याभ्यां पूर्वमधिकृत्याह—तस्येति। संक्षिप्तस्य शास्त्रस्य। अयमिति। प्रकरणानामधिकरणानां च समुद्देशः, समासवचनम्। वक्ष्यति—"समासवाक्यं समुद्देशः", "व्यासवाक्यं निर्देशः" ( अधि० १५. अध्या० १ ) इति। अस्य च प्रयोजनम् अध्येतॄणां विदित-

### जयमङ्गलाक्रोडपम्

समुद्देशतः संक्षेपतइति यावत्।

निर्देशतः विस्तरतः इत्यर्थः, तन्त्रयुक्तौ तथैव व्याख्यानात्। उद्देशग्रन्थे

---

भगवत्पाददादिभिः प्रतिपादित इत्येषां सर्वेषां प्राचीनग्रन्थसत्यत्वे तत्प्रतिपाद्यविषयपरिच्छेदे च स्वतःप्रामाण्याभ्युपगमे न कस्यापि विमतिरुचिता।

## जयमङ्गला

शास्त्रार्थं प्रकरणानुपूर्वीकाणाम् प्रज्ञातप्रकरणार्थत्वात् असम्मोहेन[1] अध्ययने प्रवृत्तिः यथाभिलषितप्रकरणार्थप्रत्यवमर्शश्च[2] भविष्यतीति । एवं च कृत्वोक्तं व्यासेन—

"इष्टं हि विदुषां लोके समासव्यासती भाषणम् ।"

( आदिपर्व १।४९ अधि० १, अध्या० १ )

## जयमङ्गलाक्रोडपत्रम्

प्रकरणानां प्रकरणसमूहात्मकानामधिकरणानां स्वरूपं संख्या च निर्दिष्टा अस्ति इत्यभिप्रेत्याह-तत्रेति ।

समुद्देशनिरूपणफलमाह । 'अस्य चेति' ।

आनुपूर्वीकाणामिति । एतेन पूर्वापरप्रकरणयोः सङ्गतिः सुस्पष्टा भवति । तस्य फलमध्येतृणां प्रज्ञातप्रकरणार्थत्वात् असम्मोहो बोध्यः । ननु च प्रकरणानां सङ्गतिप्रदर्शनं यथा क्रियते तथा अधिकरणानां सङ्गतिः कुतो न प्रदर्शिता ? इति चेदुच्यते ।

अधिकरणं हि न प्रकरणादन्यत् अपि तु प्रकरणसमूहः । तच्च सिद्धान्त-शिरोमणिटीकायां मरीच्याम् त्रिप्रश्नाधिकारे द्रष्टव्यम्[1] ।

वक्ष्यति च टीकाकारः पञ्चमाध्याये "सप्रकरणान्येवे"त्यादिना ग्रन्थेन । न च प्रकरणयोः परस्परसङ्गतिप्रदर्शनवत् पूर्वोत्तरसूत्रयोरपि सङ्गतिः कुतो न प्रदर्शिता इति वाच्यम् । टीकाकृतैव पञ्चमाध्याये प्रश्नस्यास्य समाधास्यमानत्वात् । प्रकरणत्वं च एकार्थत्वम् इति अधोनिर्दिष्टटिप्पण्या सिद्धम्꙳ । प्रज्ञातेति ।

---

१. इत्यादि वाक्यं लेखकप्रमादात् अशुद्धं भाति । अतः कामसूत्रीय जयमंगलानुसारेण संयोजनीयम् ।

अशुद्धम्

नुपूर्वीकाणामसम्मोहेन ( पा० ) ।

२. प्रकरणसार्थ ( पा० ) ।

१. च प्रज्ञासमाना भविष्यति ( पा० ) ।

१. तं बुद्धिस्थं-अधिकारं अधिक्रियन्ते गणितादीनि यत्रासावधिकारस्तं प्रकृतार्थ-जिज्ञासाऽगमप्रयोजकतापर्याप्त्यधिकरणीभूतं ग्रन्थैकदेशमिति यावत् । प्रकृतत्वं च उद्देश्यविषय-तापर्याप्त्यधिकरणत्वम् । तत्वं चाधिकारप्रतिपादितसकलोर्थे इति न कापि क्षतिः इति ।

꙳ पूर्वप्रकरणापेक्षं हि तदुत्तरसूत्रम् । उत्तरसूत्रप्रकरणानुरूपं च तदादिमसूत्रम् । तयोः स्वप्रकरणे गुणीभूतयोः नापेक्षा । यथा वाक्यावयवानां पदानां वाक्यान्तरावयवैर्ना-पेक्षा । कथमधिकरणानां प्रकरणानां सम्बन्ध इति चेत् प्रकरणान्येवैकार्थानि अधिकरणं, अधिकरणत्वमेवैषां न समुदायान्तरमित्यदोषः" । ( प्रक्रियन्त इति प्रकरणानि अर्थाः ) ज०

## जयमङ्गला

इति । विद्यासमुद्देशादयश्च यथाप्रस्तुतार्थनिमित्तनामानः । निर्वचनं च यथा निर्देशं वक्ष्यामः । प्रक्रियन्त इति । प्रकरणानि अर्थाः । ग्रन्थभागास्तु तत्साहचर्यात् तन्नामानः प्रकरणार्थाधारत्वात् । अधिकरणानि अधिक्रियन्त एष्विति तानि च यथायथं

## जयमङ्गलाक्रोडपत्रम्

अयं हेतूपन्यासः असम्मोहं प्रति कारणत्वप्रदर्शनार्थः, तेन विदितशास्त्रार्थप्रकरणानुपूर्वीणामित्यनेन न पौनरुक्त्यम् ।

असम्मोहेनेति । मोहः किङ्कर्तव्यमूढता चितस्य शून्यतेति यावत्† ।

यदि च प्रकरणार्थः सुसङ्गतत्वेन न ज्ञातः तर्हि मोहः सम्भवतीति भावः । इदं मोहापसारणं फलमुक्त्वा अपरं फलं प्रदर्शयन्नाह यथाऽभिलषितेति । यं विषयं अध्येतुमध्येता इच्छति सः विषयः कुत्र वर्तते इति अध्येत्रा उद्देशग्रन्थेन ज्ञातं चेत् तावानेव विषयस्तेन सारल्येन अध्येतुं शक्यते अन्यथा विषयस्थलस्यापरिचयात् सर्वस्य ग्रन्थस्य अध्येयत्वमापद्येत इति । उद्देश्यसिद्धौ च महान् श्रमः स्यात् । इत्यपि बोध्यम् ।

इष्टमिति यद्यपि इष्टं हि विदुषां लोके इति इदं पद्यं कामसूत्रे उपलभ्यते तथापि जयमङ्गलाकर्ता व्यासोक्तत्वेन अनुमन्यते, तेन "तदुक्तं व्यासेने"ति अभिधानात् ।

प्रकरणार्थाधारत्वात् प्रतिपादकतासम्बन्धेन इति शेषः ।

यथायथमिति । निमित्तं शक्यतावच्छेदकं तद्भेदाश्च ये उपात्ताः तेषां समाख्याप्रतिपादकाः शब्दाः विनयाधिकारिकमित्यादयः येषां तानि अधिकरणानि इति यावत् ।

---

† तदुक्तं भावप्रकाशने ।

मोहश्चित्तस्य शून्यत्वं पूर्ववैरस्मृतेर्मदात् ।
दैवोपघातान्मात्सर्यात् भयाच्चापि प्रहारतः ॥
आवेगात् तत्प्रतीकारविहतेरेवमुद्भवेत् ।
निश्चेष्टता प्रपतनं वैवर्ण्यं देहघूर्णता ॥
सर्वेन्द्रियप्रमोहश्च निःश्वासो नष्टसंज्ञता ।
मोहस्य कथिताः सद्भिरनुभावाः स्वरूपतः ॥

भा० प्र० १ अधिकारः

तथा काव्यप्रकाशविवरणे—'मोहो विचित्तता' भीतिः दुःखावेगानुचिन्तनैः इति धनिकः । विचित्तता चित्तस्य चैतन्यस्यापाटवम् । यथा—'इतिकर्त्तव्यतोपायादर्शनं मोह उच्यते' इत्यग्निपुराणम् । परस्परविरोधिनानाकर्तव्योपनिपाते किंकर्तव्यमित्यनिर्धारणं मोह इति तदर्थः । इति ।
चतुर्थ उल्लासः । १५९ पृष्ठम् ।

# प्रकरणाधिकरणविभागः

## [ प्रथममधिकरणम् ]

१. विद्यासमुद्देशः । २. वृद्धसंयोगः । ३. इन्द्रियजयः । ४. अमात्योत्पत्तिः । ५. मन्त्रिपुरोहितोत्पत्तिः । ६. उपधाभिः शौचाशौचज्ञानममात्यानाम् । ७. गूढपुरुषोत्पत्तिः । ८. गूढपुरुषप्रणिधिः । ९. स्वविषये कृत्याकृत्यपक्षरक्षणम् । १० परविषये कृत्याकृत्यपक्षोपग्रहः । ११. मन्त्राधिकारः । १२. दूतप्रणिधिः । १३. राजपुत्ररक्षणम् । १४. अवरुद्धवृत्तम् । १५. अवरुद्धे च वृत्तिः । १६ राजप्रणिधिः । १७. निशान्तप्रणिधिः । १८. आत्मरक्षितकम् ॥ इति विनयाधिकारिकं प्रथममधिकरणम् ॥

---

### जयमङ्गला

अध्यक्षाः प्रचरन्त्यनेनेति अध्यक्षप्रचारः धर्मस्थेभ्यो हितं तद्व्यापारोपदेशादिति धर्मस्थीयम्। कण्टकाः शोध्यन्तेऽनेनेति कण्टकशोधनम्। योगः प्रच्छन्नयोगः तस्य प्रवर्तनं योगवृत्तम्। मण्डलयोनिर्मण्डलज्ञानकारणम्। षडेव गुणाः षाड्गुण्यम्। चातुर्वर्ण्यवत्। अभियास्यतः कर्म अभियास्यत्कर्म। सङ्ग्रामा अत्र भवन्तीति साङ्ग्रामिकम्। अबलीयसामिदम् आबलीयसम्। दुर्गलाभस्योपायो दुर्गलाभोपायः। लम्भ इत्यपप्रयोगः ' उपसर्गात् खल्घञोः" (७-१-६७) इति नियमात्। उपनिषद् रहस्यं तदधिकृत्य कृतम् औपनिषदिकम्। तन्त्रयुक्तयः शास्त्रव्याख्यायुक्तयो बह्वयः, तासां प्रकरणभूतानामाधारत्वात् तन्त्रयुक्तिरधिकरणम् इति ।

### श्रीमूला

तत्र विनयाधिकारिकस्य प्रथमाधिकरणस्य प्रथमं प्रकरणं समुद्दिशति— विद्यासमुद्देश इति ! विद्यानाम् आन्वीक्षिकी त्रयी वार्ता दण्डनीतिरित्येतासां चतसृणां समुद्देशः विद्यासमुद्देशः ! तदाख्यं प्रकरणमित्यार्थम्। विद्यासमुद्देश इत्येतच्च सूत्रमिति व्यवहर्तव्यं, विस्तारार्हबहुलार्थगर्भत्वात्। सूत्रमेव चेदं तत्प्रकरणे 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति विद्याः' इत्युपक्रम्य 'स्वधर्मकर्माभिरतो वर्तते स्वेषु वेश्मसु' इत्यन्तैस्त्रिभिरध्यायैर्महता प्रयत्नेन प्रपञ्च्यत इति सूत्रस्य तथाविधं व्याख्यानं भाष्यं भवितुमर्हति। एवं प्रकरणाधिकरणसमुद्देशः'इत्युक्तचरमुत्तराण्यपि वृद्धसंयोग' इत्यादीनि सूत्राणि भवन्ति, तत्तत्प्रकरणगतानि प्रपञ्चनवाक्यानि च भाष्याणि। एवमधिकरणेषु सर्वेषु। एवञ्च 'स्वयमेव विष्णुगुप्तश्चकार सूत्रं च भाष्यं च' इति ग्रन्थान्तोक्तिरुपपन्ना भवतीति वेदितव्यम ।

## श्रीमूला

तत्र विनयविहीनो लोकशास्त्रव्यवहारेष्वशिक्षितो राजा राज्यरक्षणानर्हत्वाद् वैनयिकीषु विद्यास्ववश्यं विनेतव्य इत्यतो विद्यासमुद्देश इत्येतत् प्रकरणमादौ सूत्रितम् ॥ १ ॥

विद्याश्च वृद्धसंयोगाभावे लब्धुं न शक्या इति वृद्धसंयोग इति सूत्रम् ॥ २ ॥

वृद्धसंयोगश्च इन्द्रियजयमन्तरेण न लभ्य इति इन्द्रियजय इति सूत्रम् ॥ ३ ॥

वृद्धैर्विद्यासु शिक्षितो जितेन्द्रियोऽपि सहायाभावे कार्यं साधयितुं न क्षम इति तदनन्तरम् अमात्योत्पत्तिरिति सूत्रम् ॥ ४ ॥

अमात्याश्च केचिद् बुद्धिसाचिव्याय नित्यनैमित्तिककर्मसाचिव्याय चापेक्षिताः, शान्तिकपौष्टिककर्मानुष्ठानाय चान्ये । तदर्थं मन्त्रिपुरोहिताः कर्तव्या इति मन्त्रि-पुरोहितोत्पत्तिरिति सूत्रम् ॥ ५ ॥

तैश्च सर्वप्रकारविशुद्धैर्भाव्यमिति उपधाभिः शौचाशौचज्ञानममात्यानाम् इति सूत्रम् ॥ ६ ॥

उपधाशुद्धिर्गूढपुरुषानन्तरेण ज्ञातुमशक्येति ततो गूढपुरुषोत्पत्तिः इति सूत्रम ॥ ७ ॥

तेषां च स्वामिनियोगमन्तरेणाव्यापाराद् गूढपुरुषप्रणिधिः इति सूत्रम् । गूढ-पुरुषाणां प्रणिधिः प्रणिधानं तत्तत्कार्येषु स्वामिना नियोजनमिति तदर्थः ॥ ८ ॥

तैश्च नियुक्तैः स्वराज्यगतान् क्रुद्धलुब्धादीन् विज्ञाय तद्दोषप्रतिविधानं, परराष्ट्रगतान् विज्ञाय तेषां भेदनेन स्वपक्षे प्रवेशनं चावश्यकमिति स्वविषये कृत्याकृत्यपक्षरक्षणम् इति, परविषये कृत्याकृत्यपक्षोपग्रहः इति च सूत्रे । स्वदेशे कृत्याः शत्रुभेद्याः क्रुद्धादयः, अकृत्याः अभेद्याः सुहृदः, कृत्याकृत्यानां पक्षाणां सङ्घानां शत्रूपजापाद् रक्षणमिति प्रथमसूत्रस्यार्थः । परराष्ट्रे ये कृत्याकृत्याः पक्षाः तेषामुपजापादिना स्वपक्षे सङ्ग्रहणमिति द्वितीयसूत्रस्यार्थः ॥ ९, १० ॥

स्वराष्ट्ररक्षणं परराष्ट्रहरणमित्येतावद् राज्ञः कर्मसर्वस्वम् । तस्य मन्त्रा-यत्तत्वान्मन्त्राधिकारः इति सूत्रम् कर्मणामारम्भोपायादिसम्प्रधारणं मन्त्रः, तस्या-धिकारो मन्त्राधिकार इति ॥ ११ ॥

परराष्ट्रकरणीयानां स्वकर्मणां स्वयं कर्तुमशक्यतया दूतसापेक्षत्वाद् दूत-प्रणिधिः इति सूत्रम् ॥ १२ ॥

यथा राजपुत्रास्स्वपितरि न द्रोहमाचरेयुः, तथा ते प्रयत्नेन परोपजापादिभ्यो रक्षणीया इति राजपुत्ररक्षणम् इति सूत्रम् ॥ १३ ॥

पित्रा क्वचिदवरुध्य तथा रक्ष्यमाणः कुमारः पितरि कथं व्यवहरेत्, पिता च तस्मिन् कथमित्येतद् वक्तुं सूत्रे अवरुद्धवृत्तम् इति, अवरुद्धे च वृत्तिः इति च ॥ १४, १५ ॥

# [ द्वितीयमधिकरणम् ]

## १९. जनपदविनिवेशः[1] । २०. भूमिच्छिद्रविधानम्[2] । २१. दुर्गविधा-

### श्रीमूला

इत्थमात्मानं रक्षतो राज्ञो नियतकालां व्यापारपरिपाटीं वक्तुं सूत्रं राज-प्रणिधिः इति । राज्ञः प्रणिधिः प्रणिधानं व्यापारपरिचिन्तनमित्यर्थः ।। १६ ।।

निशान्तप्रणिधिः इति सूत्रम् । निशान्तं राजभवनं, तस्य प्रणिधिः प्रणिधानं देशसन्निवेशादिचिन्तनम् ।। १७ ।।

आत्मरक्षितकम् इति सूत्रम् । रक्षितमितिभावे क्तः, स्वार्थे च कः । राज्ञ आत्मरक्षणौपयिकं प्रकरणेऽस्मिन्नुपदिश्यत इत्यर्थः ।। १८ ।।

इति विनयाधिकारिकमित्यादि । विनयः विद्यादिशिक्षणं तस्याधिकारः प्रस्तावो विनयाधिकारः, सोऽस्मिन्नस्तीति विनयाधिकारिकं नाम प्रथममधिकरणं समुद्दिष्टमित्यर्थः ।।

इत्थं प्रथमाधिकरणसूत्रिताष्टादशप्रकरणोपदिष्टवर्त्मना समासादितविनय-सम्पत्को राजा तन्त्रावापयोरधिकारी भवति । तन्त्रं नाम स्वराज्यक्षेमसाधनानुकूलः पञ्चस्वाद्येष्वधिकरणेषु पञ्चनवत्या सूत्रैः प्रतिपाद्यमानोऽर्थः । आवापः शत्रु-राष्ट्रहरणानुकूलः षष्ठादिषु त्रयोदशान्तेषु अष्टस्वधिकरणेषु सूत्राणामेकाशीत्या प्रतिपाद्यमानोऽर्थः, अर्थं ह्येनं विज्ञाय प्रवर्तमानो विजिगीषुः परराष्ट्रं स्ववशे करोतीति । तत्र येऽर्थाः द्वितीयेऽधिकरणे अध्यक्षप्रचाराख्ये अष्टात्रिंशता सूत्रैः प्रतिपाद्यन्ते, ये तृतीये धर्मस्थीये एकोनविंशत्या सूत्रैः, ये चतुर्थे दुर्गराष्ट्रसम्बन्धि-कण्टकशोधनाख्ये त्रयोदशभिः सूत्रैः, ये च पञ्चमे राजराज्यकण्टकशोधनपरे योगवृत्तनाम्नि सप्तभिः सूत्रैः, तेष्वेव सर्वेष्वधीनं राज्यकुटुम्बभरणकर्मेति तमेतं चतुरधिकरण्यर्थं तन्त्रमाहुः, तन्निधातो कुटुम्बधारणार्थत्वात् । द्विसूत्रं प्रकरण-द्वयात्मकं मण्डलयोनिसंज्ञमधिकरणं षष्ठम् , एकोनत्रिंशत्सूत्रयुक्तं षाड्गुण्यं सप्तमम् , अष्टसूत्रीरूपं व्यसनाधिकारिकमष्टमं, द्वादशसूत्रमभियास्यत्कर्माख्यं नवमं, त्रयोदश-सूत्रं साङ्ग्रामिकं दशमं, द्विसूत्रं सङ्घवृत्तमेकादशम् , नवसूत्रमाबलीयसं द्वादशम्, षट्सूत्रं दुर्गलम्भोपायाख्यं त्रयोदशमित्येकाशीतिसूत्रामष्टाधिकरणीं शत्रुराज्यहरणो-पायोपदेशिनीमावापं व्यवहरन्ति ।

त्रिसूत्रमौपनिषदं नाम चतुर्दशमधिकरणं तन्त्रावापयोरत्यन्तमनुगुणम् । एक-सूत्रात्मकं तन्त्रयुक्तिसंज्ञं पञ्चदशमधिकरणं कौटिल्यशास्त्राश्रितास्तन्त्रयुक्ती र्द्वात्रिंशतं व्युत्पादयतीति स्थितिः ।

तत्र स्वराज्यं रक्षतो राजधान्याद्यपेक्षणादध्यक्षप्रचाराधिकरणे जनपदविनिवेश इति प्रथमं प्रकरणं सूत्रितम् ।। १ ।।

स्वराज्यगतानां कृषिनिवासानर्हाणां गिरिवनश्वभ्रप्रायाणां भूभागानामुपयोग-प्रकारोपदेशार्थं सूत्रं भूमिच्छिद्रविधानम् इति । भूमिच्छिद्राणां कृष्याद्यनर्हभूभागानां विधानम् उपयोगप्रकार इत्यर्थः । "भूमिच्छिद्रं कृष्ययोग्ये"ति यादवः ।। २ ।।

नम्[3] । २२. दुर्गविनिवेशः[4] । २३. सन्निधातृनिचयकर्म[5] । २४. समाहर्तृसमुदयप्रस्थापनम्[6] । २५. अक्षपटले गाणनिक्याधिकारः[7] । २६. समुदयस्य युक्तापहृतस्य प्रत्यानयनम्[8] । २७. उपयुक्तपरीक्षा[9] । २८. शासनाधिकारः[10] । २९. कोशप्रवेश्यरत्नपरीक्षा[11] । ३०. आकरकर्मान्तप्रवर्तनम्[12] । ३१. अक्षशालायां सुवर्णाध्यक्षः[13] । ३२. विशिखायां सौव-

---

## श्रीमूला

देशस्य शत्रुनाक्रमणीयत्वसम्पत्तये दुर्गापेक्षणाद् दुर्गविधानम् इति सूत्रं, दुर्गविनिवेश इति च ॥ ३, ४ ॥

सन्निधातृनिचयकर्म इति सूत्रम्। सन्निधाता नाम धनादिकं सञ्चित्य निधाता। तस्य निचयकर्म धनादिरक्षणव्यापार उच्यत इति सूत्रार्थः ॥ ५ ॥

समाहर्तृसमुदयप्रस्थापनम् इति सूत्रम्। सर्वायस्थानेभ्यो राजार्थानां सम्यक् समन्ताद् वा आहर्ता समाहर्ता विषयवल्यध्यक्षः। समुदयो धनोत्थानं तस्य प्रस्थापनं मार्गपरिकल्पनं समुदयप्रस्थापनं समाहर्तुः समुदयप्रस्थापनं समाहर्तृसमुदयप्रस्थापनम्। समाहर्ता कया कया विधया समुदयं प्रस्थापयेदित्येतदस्मिन् प्रकरणे उपदिश्यत इत्यर्थः ॥ ६ ॥

अक्षपटले गाणनिक्याधिकारः इति सूत्रम्। अक्षा गणनयोग्यानि रूप्यकादीनि तेषां पटलं स्थानम् अक्षपटलं तस्मिन्, गणनायां नियुक्तो गाणनिकः तस्य कर्म गाणनिक्यं तस्य प्रस्तावो गाणनिक्याधिकारः ॥ ७ ॥

समुदयस्य युक्तापहृतस्य प्रत्यानयनम् इति सूत्रम्। उत्पन्नस्याऽर्थस्य नियुक्तैः पुरुषैरपहृतस्य पुनः प्रापणमित्यर्थः ॥ ८ ॥

उपयुक्तपरीक्षा इति सूत्रम्। युक्तानाम् उपरि नियुक्ताः प्रत्यायितपुरुषा उपयुक्ताः तेषां परीक्षा दोषगवेषणेति सूत्रार्थः ॥ ९ ॥

शासनाधिकारः इति सूत्रम्। तालपत्रादिषु लिख्यमानोऽर्थः शासनं तस्याधिकारो विधिरुच्यत इत्यर्थः ॥ १० ॥

कोशप्रवेश्यरत्नपरीक्षा इति सूत्रम्। कोशो भाण्डागारं तस्मिन् प्रवेशयितुं योग्यानां मणिमुक्तादीनां परीक्षणमत्रोपदिश्यत इत्यर्थः ॥ ११ ॥

आकरकर्मान्तप्रवर्तनम् इति सूत्रम्। सुवर्णरजतरत्नाद्युत्पत्तिस्थानमाकरः, तस्य कर्मान्तः तत्क्रियानिश्चयः, तस्य प्रवर्तनं व्यापारणमित्यर्थः ॥ १२ ॥

अक्षशालायां सुवर्णाध्यक्षः इति सूत्रम्। अक्षशाला अक्षः गण्यं धनं सुवर्णरूप्यादि तस्य शाला तद्घटनशाला तस्यां सुवर्णाध्यक्षः सुवर्णादिघटनगणनाद्यधिकृतः लक्षणया तद्व्यापार इत्यर्थः ॥ १३ ॥

**णिकप्रचारः**[१४] । **३३. कोष्ठागाराध्यक्षः**[१५] । **३४. पण्याध्यक्षः**[१६] । **३५. कुप्याध्यक्षः**[१७] । **३६. आयुधागाराध्यक्षः**[१८] । **३७. तुलामानपौतवम्**[१९] । **३८. देशकालमानम्**[२०] । **३९. शुल्काध्यक्षः**[२१] । **४०. सूत्राध्यक्षः**[२२] । **४१. सीताध्यक्षः**[२३] । **४२. सुराध्यक्षः**[२४] । **४३. सूनाध्यक्षः**[२५] ।

---

## श्रीमूला

विशिखायां सौवर्णिकप्रचारः इति सूत्रम्। विशिखायाम् आपणवीथ्यां, सौवर्णिकप्रचारः सुवर्णनियुक्तस्य व्यापारः ॥ १४ ॥

कोष्ठागाराध्यक्ष इति सूत्रम्। कोष्ठमुदरं लक्षणया तत्पोषणार्थं व्रीहिगोधूमादिकमाहारद्रव्यं तस्य अगारं सङ्ग्रहस्थानम् तस्याध्यक्षः, अर्थात् तद्व्यापारः ॥ १५ ॥

पण्याध्यक्षः इति सूत्रम्। विक्रेयद्रव्याध्यक्ष इत्यर्थः ॥ १६ ॥

कुप्याध्यक्षः इति सूत्रम्। कुप्यं सारदारुवेणुवल्लिवल्कादि तस्मिन् नियुक्तः कुप्याध्यक्षः ॥ १७ ॥

आयुधागाराध्यक्षः इति सूत्रम्। स्पष्टार्थम् ॥ १८ ॥

तुलामानपौतवम् इति सूत्रम्। तुला उन्मानसाधनं, मानं कुडुबादि, ताभ्यां पौतवं परिच्छेदनं तुलामानपौतवं, लक्षणया तत्संशोधनमित्यर्थः। तच्च वाणिजकाः कूटतुलामानव्यवहारिणो माभूवन्नित्येतदर्थम् ॥ १९ ॥

देशकालमानम् इति सूत्रम्। देशो योजनगव्यूतिक्रोशादिः, कालस्त्रुटिलवादिः तयोर्मानं परिच्छेद इति सूत्रार्थः ॥ २० ॥

शुल्काध्यक्षः इति सूत्रम्। शुल्कं पञ्चदशभागादिकं शुल्कव्यवहारे वक्ष्यमाणं राज्ञो देयं, तस्याऽध्यक्षः तद्व्यापार इत्यर्थः ॥ २१ ॥

सूत्राध्यक्षः इति सूत्रम्। सूत्रं कार्पासादिजस्तन्तुः तस्य अध्यक्षः तद्वानादिकारयिता ॥ २२ ॥

सीताध्यक्षः इति सूत्रम्। सीता कृषिः तस्या अध्यक्षः कृषितन्त्र-वृक्षायुर्वेदौ विज्ञाय प्रवर्तकः ॥ २३ ॥

सुराध्यक्ष इति सूत्रम्। सुरा मधुमैरेयादि तस्या अध्यक्षः सन्धानविक्रयाद्यधिकृतः सुराध्यक्षः ॥ २४ ॥

सूनाध्यक्षः इति सूत्रम्। सूना भक्ष्यप्राणिवधस्थानम्, तस्या अध्यक्षः वध्यावध्यनियमनाद्यधिकृतः ॥ २५ ॥

४४. गणिकाध्यक्षः[२६] । ४५. नावध्यक्षः[२७] । ४६. गोऽध्यक्षः[२८] । ४७. अश्वाध्यक्षः[२९] । ४८. हस्त्यध्यक्षः[३०] । ४९. रथाध्यक्षः[३१] । ५०. पत्त्यध्यक्षः[३२] । ५१. सेनापतिप्रचारः[३३] । ५२. मुद्राध्यक्षः[३४] । ५३. विवीताध्यक्षः[३५] । ५४. समाहर्तृप्रचारः[३६] । ५५. गृहपतिकवैदेहकतापसव्यञ्जनाः प्रणिधयः[३७] । ५६. नागरिकप्रणिधिः[३८] ॥

॥ इत्यध्यक्षप्रचारो द्वितीयमधिकरणम् ॥

---

## श्रीमूला

गणिकाध्यक्षः इति सूत्रम्। धनमेव गणयन्तीति गणिका वेश्याः तासामध्यक्षः गणिकाध्यक्षः ॥ २६ ॥

नावध्यक्षः इति सूत्रम्। नावां यानपात्राणां अध्यक्षः आदेयराजभागग्रहणाधिकर्ता ॥ २७ ॥

गोध्यक्ष इति सूत्रम्। गवाम् उपलक्षणेन गोमहिषाजादीनां तदाजीवानां गोपालादीनां च अध्यक्षः नियामक इत्यर्थः ॥ २८ ॥

अश्वाध्यक्ष इति सूत्रम्। अश्वानां लक्षणकुलादिकं विज्ञाय तद्रक्षणादिकर्मानुष्ठाता अश्वाध्यक्षः ॥ २९ ॥

हस्त्यध्यक्षः इति सूत्रम्। अश्वाध्यक्षवद् हस्त्यध्यक्षो व्याख्येयः ॥ ३० ॥

रथाध्यक्षः इति सूत्रम्। रथानां देवरथादीनां घटनाद्यधिकर्ता रथाध्यक्षः ॥३१॥

पत्त्यध्यक्षः इति सूत्रम्। पत्तयः पदातयः ये पादचारेण युध्यन्ते, तेष्वधिकृतः पत्त्यध्यक्षः ॥ ३२ ॥

सेनापतिप्रचारः इति सूत्रम्। सेनापतिः चतुरङ्गबलनेता तस्य प्रचारः सेनाविषयो व्यापारः प्रतिपाद्यत इत्यर्थः ॥ ३३ ॥

मुद्राध्यक्षः इति सूत्रम्। मुद्रा नाम राजचिह्नं राजनामधेयं प्रतिमादिलक्षणं यच्छासनपत्रादौ दीयते, तस्या अध्यक्षः प्रवर्तयिता ॥ ३४ ॥

विवीताध्यक्षः इति सूत्रम्। विवीतं तृणजलवान् अकृष्यः प्रदेशः पश्वर्थः, तस्याध्यक्षः तद्व्यापार इत्यर्थः ॥ ३५ ॥

समाहर्तृप्रचारः इति सूत्रम्। समाहर्ता आयस्थानेभ्यो राजार्थसङ्ग्राहको जनपदाध्यक्षः तस्य प्रचारो व्यापारः जनपदचिन्तनमित्यर्थः ॥ ३६ ॥

गृहपतिकवैदेहकतापसव्यञ्जनाः प्रणिधयः इति सूत्रम्। गृहस्थ-वणिक्-तपस्विवेषाः प्रणिधयः गूढपुरुषाः। अर्थात् तेषां जनपदेषु नियोजनम्। तच्च समाहर्तृकार्योपयोगिने जनपदवृत्तान्तज्ञानाय ॥ ३७ ॥

नागरिकप्रणिधिः इति सूत्रम्। नगरे नियुक्तो नागरिकः, तस्य प्रणिधिः प्रणिधानं व्यापारचिन्तनमित्यर्थः ॥ ३८ ॥

इतीत्यादि। अध्यक्षप्रचारोऽध्यक्षाणां व्यापारः ॥

# [ तृतीयमधिकरणम् ]

**५७. व्यवहारस्थापना[१] । ५८. विवादपदनिबन्धः[२] । ५९. विवाहसंयुक्तम्[३] । ६०. दायविभागः[४] । ६१. वास्तुकम्[५] । ६२. समयस्याऽनपाकर्म[६] । ६३. ऋणादानम्[७] । ६४. औपनिधिकम्[८] । ६५. दासकर्मकरकल्पः[९] । ६६. सम्भूय समुत्थानम्[१०] । ६७. विक्रीतक्रीतानुशयः[११] ।**

---

## श्रीमूला

अथ धर्मस्थीयं तृतीयमधिकरणम्। धर्मस्था नाम धर्मशास्त्रज्ञाः धर्मशास्त्रानुसारेण व्यवहारनिर्णयकर्मण्यधिकृताः। तेषामिदं धर्मस्थीयं तन्निर्णेयव्यवहारपदप्रतिपादकमित्यर्थः। तत्र प्रथमं सूत्रम्—व्यवहारस्थापना इति। कीदृशो व्यवहारः सिद्ध्यति कीदृशो न सिद्ध्यतीति व्यवस्थापनमिति सूत्रार्थः॥ १ ॥

विवादपदनिबन्धः इति सूत्रम्। विवादपदस्य निबन्धः पूर्वोत्तरपक्षात्मना पत्र आरोपणं, तत्पूर्वकं चिन्तनमित्यर्थः॥ २ ॥

विवाहसंयुक्तम् इति सूत्रम्। विवाहा अष्टविधाः ब्राह्मादयः तत्सम्बद्धो व्यवहार इत्यर्थः। एतच्च प्रकरणं त्रिभिरध्यायैर्वितन्यते॥ ३ ॥

दायविभागः इति सूत्रम्। दायः पितृपितृव्यादिधनं तस्य विभागः। अयमपि त्रिभिरध्यायैर्वितन्यते॥ ४ ॥

वास्तुकम् इति सूत्रम्। वस्तु गृहारामक्षेत्रादि तत्सम्बद्धं वास्तुकम्। इदमध्यायत्रयेण वितन्यते। तत्र तृतीयाध्याये उत्तरमपि प्रकरणं प्रवेशितम्॥ ५ ॥

समयस्याऽनपाकर्म इति सूत्रम्। इदमहं करिष्यामीत्यभ्युपगमात्मा सङ्केतः, इदमनेन कर्तव्यमिति बहुभिः सम्भूय कृतो वा सङ्केतः समयः। तस्य अनपाकर्म त्यागाभावः इति सूत्रार्थः। इदं प्रकरणं वास्तुकप्रकरणीयविवीतक्षेत्रपथहिंसाव्युत्पादनाध्याये व्युत्पादितम्॥ ६ ॥

ऋणाऽऽदानम् इति सूत्रम्। ऋणग्रहणनिर्यातनसम्बद्धो व्यवहार इत्यर्थः॥ ७ ॥

औपनिधिकम् इति सूत्रम्। उपनिधिर्निक्षेपः तत्सम्बद्धमनुष्ठानमौपनिधिकम्॥ ८ ॥

दासकर्मकरकल्पः इति सूत्रम्। अत्यन्तपारार्थ्यमासाद्य शुश्रूषका दासाः, भृत्यर्थं शुश्रूषकाः कर्मकराः तेषां कल्पः तत्सम्बन्धी विधिः॥ ९ ॥

सम्भूयसमुत्थानम् इति सूत्रम्। वाणिजकैरन्यैर्वा समुदेत्यारभ्यमाणं कार्यं सम्भूयसमुत्थानम्॥ १० ॥

विक्रीतक्रीतानुशयः इति सूत्रम्। विक्रीतं मूल्यमादाय दत्तं पण्यं, क्रीतं

६८. दत्तस्याऽनपाकर्म[१२]। ६९. अस्वामिविक्रयः[१३]। ७०. स्वस्वामिसम्बन्धः[१४]। ७१. साहसम्[१५]। ७२. वाक्पारुष्यम्[१६]। ७३. दण्डपारुष्यम्[१७]। ७४. द्यूतसमाह्वयम्[१८]। ७५. प्रकीर्णकानि[१९] ॥ इति धर्मस्थीयं तृतीयमधिकरणम् ॥

## कण्टकशोधनम् [ चतुर्थमधिकरणम् ]

७६. कारुकरक्षणम्[१]। ७७. वैदेहकरक्षणम्[२]। ७८. उपनिपात-

---

### श्रीमूला

मूल्यं दत्त्वा गृहीतं तयोर्विषये अनुशयः विक्रयविषयः क्रयविषयश्च पश्चात्ताप इत्यर्थः ॥ ११ ॥

दत्तस्याऽनपाकर्म इति सूत्रम्। दत्तस्य धर्माद्यर्थे वाचा दत्तस्य अनपाकर्म अप्रदानम्। एतच्च विषयविशेषे पुनर्हरणस्याप्युपलक्षणम् ॥ १२ ॥

अस्वामिविक्रयः इति सूत्रम्। अस्वामी परद्रव्यव्यवहर्ता तेन कृतो विक्रयः अस्वामिविक्रयः ॥ १३ ॥

स्वस्वामिसम्बन्धः इति सूत्रम्। स्पष्टार्थम् ॥ १४ ॥

साहसम् इति सूत्रम्। सहसा कृतं कर्म साहसं प्रसभकर्म ॥ १५॥

वाक्पारुष्यम् इति सूत्रम्। वाचा कुत्सनभर्त्सनादिकमित्यर्थः ॥ १६ ॥

दण्डपारुष्यमिति सूत्रम्। दण्डेन करणेन पारुष्यं परुषकर्म द्रोहो दण्डपारुष्यम् ॥ १७ ॥

द्यूतसमाह्वयम् इति सूत्रम्। द्यूतम् अक्षक्रीडा समाह्वयः, अजकुक्कुटादिप्राणिदेवनम् तयोः समाहारः द्यूतसमाह्वयं, तत्सम्बद्धो व्यवहारः प्रकरणेऽस्मिन्नभिधीयत इत्यर्थः ॥ १८ ॥

प्रकीर्णकानि इति सूत्रम्। उक्तविवादपदानन्तर्गतानि याचितकाद्यदानादिनिमित्तानि विवादपदानि प्रकीर्णकानि, तान्यत्राभिधीयन्ते इत्यर्थः ॥ १९ ॥

इति धर्मस्थीयमित्यादि। एवमेकोनविंशतिप्रकरणं धर्मस्थीयमधिकरणं तृतीयं समुद्दिष्टमित्यर्थः ॥

अथ कण्टकशोधनाख्यं चतुर्थमधिकरणम्। तत्रेदं प्रथमं सूत्रम्—कारुकरक्षणम् इति। कारुकाः तक्षायस्कारस्वर्णकारादयः, तेभ्यः कूटकर्मकारिभ्यो देशस्य रक्षणमिहाभिधीयत इत्यर्थः ॥ १ ॥

वैदेहकरक्षणम् इति सूत्रम्। वाणिजकेभ्यः पौतवापचारिभ्यो रक्षणमित्यर्थः ॥ २ ॥

प्रतीकारः[3] । ७९. गूढाजीविनां रक्षा[4] । ८०. सिद्धव्यञ्जनैर्माणवप्रकाशनम्[5] । ८१. शङ्कारूपकर्माभिग्रहः[6] । ८२. आशुमृतकपरीक्षा[7] । ८३. वाक्यकर्मानुयोगः[8] । ८४. सर्वाधिकरणरक्षणम्[9] । ८५. एकाङ्गवधनिष्क्रयः[10] । ८६. शुद्धश्चित्रश्च दण्डकल्पः[11] । ८७. कन्याप्रकर्म[12] ।

---

## श्रीमूला

उपनिपातप्रतीकारः इति सूत्रम् । उपनिपाताः दैविकानि महाभयानि तेषां प्रतीकारः ॥ ३ ॥

गूढाजीविनां रक्षा इति सूत्रम् । ये गूढं लञ्चग्रहणेन स्वामिनं प्रजाश्च वञ्चयन्त आजीवन्ति ते गूढाजीविनः तेषां रक्षा तेभ्यो देशस्य रक्षणमित्यर्थः ॥ ४ ॥

सिद्धव्यञ्जनैर्माणवप्रकाशनम् इति सूत्रम् । सिद्धव्यञ्जनाः मुण्डजटिलतापसवेषा धूर्ताः तैः करणैः माणवप्रकाशनं माणवस्य प्रलोभनविद्यायाः प्रकाशनम् । तच्च चोरादिग्रहणार्थम् ॥ ५ ॥

शङ्कारूपकर्माभिग्रहः इति सत्रम् । आत्मनः परान् प्रति परेषामात्मानं प्रति च शङ्का द्विरूपा, रूपं सलोप्त्रदर्शनं कर्म सन्धिच्छेदादि, एतैः अभिग्रहः चोराणां ग्रहणमिति सूत्रार्थ ॥ ६ ॥

आशुमृतकपरीक्षा इति सूत्रम् । आशु मृतकस्य परीक्षा । किमयं स्वयं मृत उत परेण मारित इति परीक्षणम् ॥ ७ ॥

वाक्यकर्मानुयोग इति सूत्रम् । वाक्यानुयोगः कर्मानुयोगश्चेति सूत्रार्थः । तत्र वाक्यानुयोगः उपपत्तियुक्तैः सामवादैश्चोरपृच्छा । कर्मानुयोगः कशाप्रहारादिना चोरविचारणा ॥ ८ ॥

सर्वाधिकरणरक्षणम् इति सूत्रम् । अधिकरणशब्देन लक्षणया अध्यक्षप्रचाराधिकरणोक्ता अध्यक्षास्तन्नियम्याः पुरुषाश्च गृह्यन्ते । तेभ्यः सर्वेभ्यः प्रजानां धनस्य च रक्षणमिति सूत्रार्थः ॥ ९ ॥

एकाङ्गवधनिष्क्रयः इति सूत्रम् । एकाङ्गं हस्तः पादः कर्ण इत्येवञ्जातीयं तस्य वधश्छेदनम् एकाङ्गवधः तद्युक्तो निष्क्रयः वधस्थानीयो धनदण्डश्चतुष्पञ्चाशत्पणादिः ॥ १० ॥

शुद्धश्चित्रश्च दण्डकल्पः इति सूत्रम् । शुद्धः चित्र इति द्विविधो दण्डविधिः । तत्र शुद्धः अक्लेशमारणं, चित्रः क्लेशमारणम् ॥ ११ ॥

कन्याप्रकर्म इति सूत्रम् । कन्याया अपुष्पितायाः स्त्रियाः प्रकर्म दूषणम् । तत्सम्बद्धो दण्डविधिरत्रोच्यत इत्यर्थः ॥ १२ ॥

८८. अतिचारदण्डः[13] ॥ इति कण्टकशोधनं चतुर्थमधिकरणम् ॥

इति स्वराज्यसंरक्षणाधिकारः तन्त्राख्यः प्रथमो भागः

## [ पञ्चममधिकरणम् ]

८९. दाण्डकर्मिकम्[1] । ९०. कोशाभिसंहरणम्[2] ९१. भृत्यभरणीयम्[3] । ९२. अनुजीविवृत्तम्[4] । ९३. सामयाचारिकम्[5] । ९४. राज्यप्रतिसन्धानम्[6] । ९५. एकैश्वर्यम्[7] ॥ इति योगवृत्तं पञ्चममधिकरणम् ॥

---

### श्रीमूला

अतिचारदण्डः इति सूत्रम्। अतिचारः अभक्ष्यभक्षणम् अगम्यागमनम् इत्येवमादिः तन्निमित्तो दण्ड उच्यत इत्यर्थः ॥ १३ ॥

इति कण्टकशोधनमित्यादि । एवं त्रयोदशप्रकरणं दुर्गराष्ट्रकण्टकशोधनप्रतिपादकं चतुर्थमधिकरणं समुद्दिष्टमित्यर्थः ॥

अथ योगवृत्तं नाम पञ्चममधिकरणम्। योगो विस्रब्धघाती तद्वृत्तं तच्चोपांशुदण्डादिकम्। राजराज्यकण्टकविषय उपांशुदण्डादिप्रयोगेऽस्मिन्नधिकरणे अभिधास्यते। तत्रेदं प्रथमं सूत्रं - दाण्डकर्मिकम् इति । दण्ड उपांशुवधः तस्य कर्म प्रयोगः दण्डकर्म तत्सम्बद्धमिहोच्यत इत्यर्थः ॥ १ ॥

कोशाभिसंहरणम् इति सूत्रम्। कोशस्य सुवर्णादेः अभिसंहरणं पूर्वत आधिक्येन सङ्ग्रहणमर्थकृच्छ्रप्राप्तावित्यर्थः ॥ २ ॥

भृत्यभरणीयमिति सूत्रम्। भृत्याः बुद्धौ शास्त्रे कर्मणि च साहाय्यदायिनः । तेषां भरणं पोषणं तत्सम्बद्धं भृत्यभरणीयम् ॥ ३ ॥

अनुजीविवृत्तम् इति सूत्रम् । अनुजीविनो मन्त्रिप्रभृतयः तैः स्वामिनि कथं वर्तितव्यमित्येतदत्रोपदिश्यत इत्यर्थः ॥ ४ ॥

सामयाचारिकम् इति सूत्रम् ! समयो व्यवस्था आचारोऽनुष्ठानं समयाचारमधिकृत्य प्रवृत्तं सामयाचारिकम् ॥ ५ ॥

राज्यप्रतिसन्धानमिति सूत्रम्। राज्यस्य प्रतिसन्धानं राजव्यसने सति तत्पुत्रानभिषिच्य यत् परिचिन्तनममात्यैः क्रियते तदिहोच्यत इत्यर्थः इदमुत्तरं च प्रकरणमेकस्मिन्नध्याये समावेशितम ॥ ६ ॥

एकैश्वर्यम् इति सूत्रम् । एकस्यैव राजपुत्रस्यैकातपत्रमैश्वर्यं कर्तव्यम् इत्येतदुच्यत इत्यर्थः । एकग्रहणं बहूनामैश्वर्यकरणे अराजकत्वप्रसङ्ग इति द्योतनार्थम् ॥ ७ ॥

इति योगवृत्तमित्यादि । एवं सप्तप्रकरणं योगवृत्ताख्यं पञ्चममधिकरणं समुद्दिष्टमित्यर्थः ॥

## [ षष्ठमधिकरणम् ]

**९६. प्रकृतिसम्पदः**[1] **। ९७. शमव्यायामिकम्**[2] **॥ इति मण्डलयोनिः षष्ठमधिकरणम् ॥**

## [ सप्तममधिकरणम् ]

**९८. षाड्गुण्यसमुद्देशः**[1] **। ९९. क्षयस्थानवृद्धिनिश्चयः**[2] **। १००. संश्रयवृत्तिः**[3] **। १०१. समहीनज्यायसां गुणाभिनिवेशः**[4] **। १०२. हीनसन्धयः**[5] **। १०३. विगृह्याऽऽसनम्**[6] **। १०४. सन्धायाऽऽ-**

---

### श्रीमूला

अथावापो यावत् त्रयोदशमधिकरणम्। तत्र षष्ठं मण्डलयोनिर्नाम। विजिगीष्वरिमध्यमोदासीनाख्यचतुरवयवं मण्डलं योनिः उत्तराधिकरणार्थस्य षाड्गुण्यस्य विषयः। मण्डलं च तद् योनिश्च मण्डलयोनिः मण्डलात्मा षाड्गुण्यप्रकृतिरित्यर्थः। तत्र प्रथमं सूत्रं—प्रकृतिसम्पद इति। प्रकृतयः स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि तासां सम्पदः अपेक्षितगुणपुष्कलता इहोच्यन्त इत्यर्थः ॥ १ ॥

शमव्यायामिकम् इति सूत्रम्। कर्मफलोपभोगानां क्षेमसाधनं शमः। व्यायामस्तु कर्मारम्भोपकरणानां कर्मयोगघटकः, तदुभयमस्मिन् प्रकरणे प्रतिपाद्यत इत्यर्थः ॥ २ ॥ इति मण्डलयोनिरित्यादि। एवं द्विप्रकरणं मण्डलयोन्यधिकरणं षष्ठं समुद्दिष्टमित्यर्थः।

अथ षाड्गुण्याधिकरणे प्रथमं सूत्रं—षाड्गुण्यसमुद्देश इति। सन्ध्यादीनां षड्गुणानां संक्षिप्य प्रतिपादनमिति सूत्रार्थः ॥ १ ॥

तत् किमर्थमित्यपेक्षायां क्षयस्थानवृद्धिनिश्चय इति सूत्रम्। क्षयो ह्रासः स्थानं तादवस्थ्यम्, वृद्धिः उपचयः, तेषां निश्चयः स्वरूपावधारणम्। तदिहोच्यत इत्यर्थः। प्रकरणमिदं पूर्वं चैकस्मिन्नध्याये समावेशितम् ॥ २ ॥

क्षीणकार्यं वक्तुं सूत्रम्—संश्रयवृत्तिः इति। प्रबलमाश्रित्य वर्तनमिति सूत्रार्थः ॥ ३ ॥ समहीनज्यायसां गुणाभिनिवेशः इति सूत्रम्। समः शत्रुणा सदृशशक्तिः, हीनः निकृष्टः, ज्यायान् उत्कृष्टः। आसु तिसृष्ववस्थासु गुणस्थापनाऽत्रोच्यत इत्यर्थः ॥ ४ ॥

हीनसन्धय इति सूत्रम्। हीनेन कोशदण्डभूमीः प्रदाय करणीयाः सन्धय इह वर्ण्यन्त इत्यर्थः ॥ ५ ॥

विगृह्यासनम् इति सूत्रम्। शत्रुणा सह विगृह्य शत्रोर्धान्यादिप्राप्तिप्रतिघातं कृत्वा स्वविषये स्थितिरिति सूत्रार्थः ॥ ६ ॥

**सनम्**[७] । **१०५. विगृह्य यानम्**[८] । **१०६. सन्धाय यानम्**[९] । **१०७. सम्भूय प्रयाणम्**[१०] । **१०८. यातव्याऽमित्रयोरभिग्रहचिन्ता**[११] । **१०९. क्षयलोभविरागहेतवः प्रकृतीनाम्**[१२] । **११०. सामवायिकविपरिमर्शः**[१३] । **१११. संहितप्रयाणिकम्**[१४] । **११२. परिपणिताऽपरिपणिताऽपसृताश्च सन्धयः**[१५] । **११३. द्वैधीभाविकाः सन्धिविक्रमाः**[१६] । **११४. यातव्यवृत्तिः**[१७] ।

---

## श्रीमूला

सन्धायासनम् इति सूत्रम् । अभियानाशक्तौ परेण सन्धिं कृत्वाऽवस्थानमित्यर्थः ॥ ७ ॥

विगृह्य यानम् इति सूत्रम् । पार्ष्णिग्राहादिभिः सह विग्रहं कृत्वा परं प्रति अभियानमित्यर्थः ॥ ८ ॥

सन्धाय यानम् इति सूत्रम् । पार्ष्णिग्राहादिभिः सह सन्धिं कृत्वा शत्रुमुद्दिश्य यानमित्यर्थः ॥ ९ ॥

सम्भूय प्रयाणम् इति सूत्रम् । समहीनज्यायसां शत्रुं प्रति समुदेत्य प्रयाणमित्यर्थः ॥ १० ॥

यातव्याऽमित्रयोरभिग्रहचिन्ता इति सूत्रम् । अरिसम्पद्युक्तो व्यसनी च यातव्यः, अमित्रो नित्यापकारी शत्रुः, अभिग्रहो यानम् । यातव्याऽमित्रयोः कतरं प्रति यानमनुष्ठेयमिति सम्प्रधारणमिहोच्यत इत्यर्थः ॥ ११ ॥

क्षयलोभविरागहेतवः प्रकृतीनाम् इति सूत्रम् । क्षयः गजवाजिपुरुषधनादीनामपचयः, लोभः अतितृष्णा, विरागः प्रद्वेषः, तदुत्पत्तिहेतवोऽमात्यादीनामिहाभिधीयन्त इत्यर्थः ॥ १२ ॥

सामवायिकविपरिमर्शः इति सूत्रम् ! समवायेन चरन्ति सामवायिकाः विजिगीष्वनुयायिनो राजानः तेषां विपरिमर्शः गुरुलघुभावचिन्तनमित्यर्थः ॥ १३ ॥

संहितप्रयाणिकम् इति सूत्रम् । संहितयोः अन्योन्यकृतसन्धिकयोः शत्रुविजिगीष्वोः प्रयाणं भिन्नदिक्कं यानम, तदिह प्रतिपाद्यत इत्यर्थः ॥ १४ ॥

परिपणितापरिपणितापसृताश्च सन्धयः इति सूत्रम् । देशकालकार्यव्यवस्थया कृतः सन्धिः परिपणितसन्धिः, तद्विपरीतोऽपरिपणितसन्धिः, कुतोऽपि निमित्तात् स्वपक्षादपसृतेन पुनः सन्धिः अपसृतसन्धिः, त इमे सन्धय इह व्युत्पाद्यन्त इत्यर्थः ॥ १५ ॥

द्वैधीभाविकाः सन्धिविक्रमाः इति सूत्रम् । सन्धिविग्रहोपादानं द्वैधीभावः तत्सम्बद्धाः सन्धिविक्रमाः कथ्यन्त इत्यर्थः ॥ १६ ॥

यातव्यवृत्तिः इति सूत्रम् । यातव्यो विजिगीषुः तस्य सामवायिकेषु वृत्तिः यातव्ये सामवायिकानां वृत्तिश्चोच्यत इत्यर्थः ॥ १७ ॥

**११५. अनुग्राह्यमित्रविशेषाः[१८] । ११६. मित्रहिरण्यभूमिकर्मसन्धयः[१९] । ११७. पार्ष्णिग्राहचिन्ता[२०] । ११८. हीनशक्तिपूरणम्[२१] । ११९. बलवता विगृह्योपरोधहेतवः[२२] । १२०. दण्डोपनतवृत्तम्[२३] । १२१. दण्डोपनायिवृत्तम्[२४] । १२२. सन्धिकर्म[२५] । १२३. सन्धिमोक्षः[२६] । १२४. मध्यमचरितम्[२७] । १२५. उदासीनचरितम्[२८] । १२६. मण्डलचरितम्[२९]।**

**॥ इति षाड्गुण्यं सप्तममधिकरणम् ॥**

---

## श्रीमूला

अनुग्राह्यव्यामित्रविशेषाः इति सूत्रम् । भूम्येकान्तरा राजानो मित्राणि । तत्र कानि मित्राणि साहाय्यदानेनाऽनुग्राह्याणि कानि नेति विचारोऽत्र क्रियत इत्यर्थः ॥१८॥

मित्रहिरण्यभूमिकर्मसन्धयः इति सूत्रम्। मित्रेण हिरण्येन भूम्या कर्मणा च ये सन्धयः पणबन्धाः त इहाभिधीयन्त इत्यर्थः । इदं प्रकरणं चतुरध्यायीरूपम्॥ १९ ॥

पार्ष्णिग्राहचिन्ता इति सूत्रम्। पार्ष्णिग्राहावस्थापन्नस्य विजिगीषोः चिन्ता अनुष्ठानविचार इत्यर्थः ॥ २० ॥

हीनशक्तिपूरणम् इति सूत्रम्। अपचितानां प्रभुमन्त्रोत्साहशक्तीनां वर्धनमिहोच्यत इत्यर्थः ॥ २१ ॥

बलवता विगृह्योपरोधहेतव इति सूत्रम् । प्रबलेन शत्रुणा सह विगृह्य दुर्गप्रवेशस्य कारणान्यभिधीयन्त इत्यर्थः ॥ २२ ॥

दण्डोपनतवृत्तम् इति सूत्रम् । दण्डेन बलेन उपनतः अधःकृतः तदवस्थापन्नस्य विजिगीषोर्बलवन्तं प्रत्यनुष्ठानमुच्यत इत्यर्थः ॥ २३ ॥

दण्डोपनायिवृत्तम् इति सूत्रम्। दण्डेन बलेन शत्रुमात्मनः समीपमुपनयति उपनमयतीति दण्डोपनायी तदवस्थस्य विजिगीषोर्वृत्तमुच्यत इत्यर्थः ॥ २४ ॥

सन्धिकर्म इति सूत्रम्। सन्धेः शपथादिना दृढीकरणमुच्यत इत्यर्थः ॥ २५ ॥

सन्धिमोक्षः इति सूत्रम्। सन्धिनिमित्तं ग्रहीकृतः सन्धिरित्युपचर्यते तस्य मोक्षो मोचनमुच्यत इत्यर्थः ॥ २६ ॥

मध्यमचरितम् इति सूत्रम्। मध्यमेषु विजिगीषोर्वृत्तिरुच्यत इत्यर्थः। एतदादिप्रकरणत्रयमेकस्मिन्नध्याये सन्निवेशितम्॥ २७ ॥

उदासीनचरितम् इति सूत्रम्। उदासीनं प्रति विजिगीषोरनुष्ठानमभिधीयत इति सूत्रार्थः ॥ २८ ॥

मण्डलचरितम् इति सूत्रम्। मण्डलम् अरिमित्रलक्षणम्। तत् प्रति विजिगीषोरनुष्ठानमुच्यत इति सूत्रार्थः ॥ २९ ॥

इति षाड्गुण्यं सप्तममधिकरणमिति। एवमेकोनत्रिंशत्प्रकरणं षाड्गुण्याधिकरणं सप्तमम् समुद्दिष्टमित्यर्थः ॥

# [ अष्टममधिकरणम् ]

१२७. प्रकृतिव्यसनवर्गः[1] । १२८. राजराज्ययोर्व्यसनचिन्ता[2] । १२९. पुरुषव्यसनवर्गः[3] । १३०. पीडनवर्गः[4] । १३१. स्तम्भनवर्गः[5] । १३२. कोशसङ्गवर्गः[6] । १३३. बलव्यसनवर्गः[7] । १३४. मित्रव्यसनवर्गः[8] । इति व्यसनाधिकारिकं अष्टममधिकरणम् ॥

---

## श्रीमूला

अथ व्यसनाधिकारिकेऽधिकरणे प्रथमं सूत्रम्—प्रकृतिव्यसनवर्गः इति । प्रकृतयः स्वाम्यमात्यादयः, व्यसनानि गुणप्रातिलोम्यादीनि, तेषां वर्गः समूहोऽभिधीयत इत्यर्थः ॥ १ ॥

राजराज्ययोर्व्यसनचिन्ता इति सूत्रम् । राजा स्वामी, राज्यम् अमात्यादि-प्रकृतिपञ्चकं द्रव्यप्रकृतिपञ्चकं च, तयोर्व्यसनचिन्ता व्यसनगुरुलघुभावसम्प्रधारण-मुच्यत इत्यर्थः ॥ २ ॥

पुरुषव्यसनवर्गः इति सूत्रम् । पुरुषस्य व्यसनानि व्यसनप्रभवा दोषाः तेषां वर्गोऽभिधीयत इत्यर्थः ॥ ३ ॥

पीडनवर्गः इति सूत्रम् । अग्न्युदकादिनिमित्ताः शक्त्यपचयाः पीडनानि, तेषां वर्गः संख्यास्वरूपगौरवलाघवतोऽभिधीयत इत्यर्थः । एतदादिप्रकरणत्रयमेकस्मि-न्नध्याये समावेशितम् ॥ ४ ॥

स्तम्भनवर्गः इति सूत्रम् । स्तम्भनं प्रत्यूहोक्त्या राजकार्योपरोधः तद्धेतूनां वर्ग उच्यत इति सूत्रार्थः ॥ ५ ॥

कोशसङ्गवर्गः इति सूत्रम् । कोशस्य राजार्थस्य सङ्गः अप्रदानं कोशसङ्गः तद्धेतुवर्गः उच्यत इत्यर्थः ॥ ६ ॥

बलव्यसनवर्गः इति सूत्रम् । बलं चतुरङ्गं सैन्यं मौलभृतकादिभेदेन षड्विधं तस्य व्यसनवर्गः अमानितविमानितादित्रयस्त्रिंशत्प्रकारोऽभिधीयत इत्यर्थः ॥ ७ ॥

मित्रव्यसनवर्गः इति सूत्रम् । स्पष्टार्थम् । प्रकरणद्वयमिदमेकाध्यायगतम् ॥ ८ ॥

इति व्यसनाधिकारिकमित्यादि । एवमष्टप्रकरणं व्यसनाधिकारेण प्रवृत्त-मष्टममधिकरणं समुद्दिष्टमित्यर्थः ॥

## [ नवममधिकरणम् ]

**१३५. शक्तिदेशकालबलाऽबलज्ञानम्[1] । १३६. यात्राकालाः[2] । १३७. बलोपादानकालाः[3] । १३८. सन्नाहगुणाः[4] । १३९. प्रतिबलकर्म[5] । १४०. पश्चात्कोपचिन्ता[6] । १४१. बाह्याऽऽभ्यन्तरप्रकृतिकोपप्रतीकारः[7] । १४२. क्षयव्ययलाभविपरिमर्शः[8] । १४३. बाह्या आभ्यन्तराश्चापदः[9] ।**

---

### श्रीमूला

अथ अभियास्यत्कर्माख्यं नवममधिकरणम्। अभियास्यतो विजिगीषोः अभियानात् प्राक् चिन्तनीयमर्थजातमस्मिन्नधिकरणे उपदेक्ष्यते। तत्र प्रथमं सूत्रम्—शक्तिदेशकालबलाबलज्ञानम् इति। शक्तेर्देशस्य कालस्य च बलाबलज्ञानमुपदिश्यत इत्यर्थः। इदं प्रकरणमुत्तरं चैकाध्यायगते ॥ १ ॥

यात्राकालाः इति सूत्रम्। शत्रुं प्रति अभियानं यात्रा, तद्योग्याः कालाः ऋतव उच्यन्त इत्यर्थः ॥ २ ॥

बलोपादानकालाः इति सूत्रम्। बलानि मौलभृतकादीनि षट् तेषां उपादानकालाः उद्योजनसमयाः। अमुकबलममुकसमये समुद्योजयितव्यमित्ययमर्थ इह चिन्त्यत इत्यर्थः ॥ ३ ॥

सन्नाहगुणाः इति सूत्रम्। सन्नाहः शस्त्रावरणग्रहणं तस्य गुणाः श्रेष्ठत्वप्रकारः कथ्यन्त इत्यथः ॥ ४ ॥

प्रतिबलकर्म इति सूत्रम्। परबलाभिभवसमर्थं बलं प्रतिबलं, तस्य करणप्रकार उच्यत इत्यर्थः ॥ ५ ॥

पश्चात्कोपचिन्ता इति सूत्रम्। पश्चात्कोपः पार्ष्णिग्राहादिकृतः कोपो दाहविलोपादिः, स इह चिन्त्यत इत्यर्थः। इदमुत्तरं च प्रकरणमेकाध्यायगते ॥ ६ ॥

बाह्याभ्यन्तरप्रकृतिकोपप्रतीकारः इति सूत्रम्। बाह्यप्रकृतयो राष्ट्रमुख्यान्तपालादयः, आभ्यन्तरप्रकृतयो मन्त्रिपुरोहितादयः, तासां कोपो व्यलीकजनितश्चित्तविकारः, तस्य प्रतिविधानमुच्यत इति सूत्रार्थः ॥ ७ ॥

क्षयव्ययलाभविपरिमर्शः इति सूत्रम्। क्षयो युग्यपुरुषापचयः, व्ययो हिरण्यधान्यापचयः, लाभो यानफलं भूम्यादिप्राप्तिः, तेषां विपरिमर्शः गौरवलाघवसम्प्रधारणमभिधीयत इत्यर्थः ॥ ८ ॥

बाह्याभ्यन्तराश्चापदः इति सूत्रम्। बाह्यापदः बाह्यराष्ट्रमुख्यान्तपालाद्युत्पादिता विपदः, आभ्यन्तरापदः मन्त्रिपुरोहिताद्युत्थापिताः, तासां स्वरूपं प्रतिविधानं चोपदिश्यत इत्यर्थः ॥ ९ ॥

१४४. दूष्यशत्रुसंयुक्ताः[१०] । १४५. अर्थाऽनर्थसंशययुक्ताः[११] । १४६. तासामुपायविकल्पजाः सिद्धयः[१२] ॥ इति अभियास्यत्कर्म नवममधिकरणम् ॥

## [ दशममधिकरणम् ]

१४७. स्कन्धावारनिवेशः[१] । १४८ स्कन्धावारप्रयाणम्[२] । १४९. बलव्यसनाऽवस्कन्दकालरक्षणम्[३] । १५०. कूटयुद्धविकल्पाः[४] । १५१. स्वसैन्यप्रोत्साहनम्[५] । १५२. स्वबलाऽन्यबलव्यायोगः[६] । १५३. युद्ध-

---

### श्रीमूला

दूष्यशत्रुसंयुक्ताः इति सूत्रम्। दूष्याः कृत्याः पौरजानपदास्तन्मुख्याश्च, शत्रवः सहजकृत्रिमादयः, तत्संयुक्तास्तदुत्पादिताः, आपद इति विशेष्यमनुवर्तते। ता इहोच्यन्ते स्वरूपतः प्रतिविधानतश्चेत्यर्थः ॥ १० ॥

अर्थानर्थसंशययुक्ताः इति सूत्रम्। अर्थो मित्रहिरण्यभूम्यादिः। अनर्थस्तन्नाशः शरीरनाशश्च संशयोऽर्थप्राणयोः सन्देहः; तैर्युक्ता आपद उच्यन्त इत्यर्थः। इदमुत्तरञ्च प्रकरणमेकाध्यायगतम् ॥ ११ ॥

तासामुपायविकल्पजाः सिद्धयः इति सूत्रम्। तासां पूर्वोक्तानामापदाम् उपायविकल्पजाः उपायाः प्रशमार्थाः सामादयः, तेषां विकल्पः प्रयोगभेदः तज्जनिताः सिद्धयः प्रतीकारा उच्यन्त इत्यर्थः ॥ १२ ॥

इत्यभियास्यत्कर्मेत्यादि। एवं द्वादशप्रकरणमभियास्यत्कर्माख्यं नवममधिकरणं समुद्दिष्टमित्यर्थः ॥

अथ दशमे सांग्रामिकेऽधिकरणे प्रथमं सूत्रम्—स्कन्धावारनिवेशः इति। सैन्यावासस्थानं स्कन्धावारः तस्य निवेशो निर्माणविधिरुच्यत इत्यर्थः ॥ १ ॥

स्कन्धावारप्रयाणम् इति सूत्रम्। स्कन्धावारस्य कटकस्य देशकालाद्यनुगुणसन्नाहपुरस्सरमभिषेणनमुच्यत इत्यर्थः। इदमुत्तरं च प्रकरणमेकाध्यायगतम् ॥ २ ॥

बलव्यसनावस्कन्दकालरक्षणम् इति सूत्रम्। अमानितविमानितादीनि बलव्यसनानि। अवस्कन्दकाला दीर्घकान्तारानुदकाद्यध्वगमनकालाः तेभ्यः सैन्यसंरक्षणमुच्यत इत्यर्थ ॥ ३ ॥

कूटयुद्धविकल्पाः इति सूत्रम्। कूटयुद्धं नाम कपटयुद्धं बलव्यसनावस्कन्दकालादिच्छिद्रमुपलभ्य शत्रुहिंसनं, तस्य विकल्पाः भेदाः कथ्यन्त इत्यर्थः। एतदादिप्रकरणत्रयमेकाध्यायगतम् ॥ ४ ॥

स्वसैन्योत्साहनम् इति सूत्रम्। आत्मयोधानां संग्रामगुणसंकीर्तनादिना युद्धोत्साहजननमुच्यत इत्यर्थः ॥ ५ ॥

स्वबलान्यबलव्यायोगः इति सूत्रम्। स्वसैन्यस्य परसैन्यापेक्षया व्यायोगः विशिष्टमायोजनं व्यवस्थापनं दिक्सूर्यवाताद्यानुगुण्यं यथा स्यात् तथा व्यूहरचनामिति यावत्। तदिहोच्यत इत्यर्थः ॥ ६ ॥

**भूमयः[7] । १५४. पत्त्यश्वरथहस्तिकर्माणि[8] । १५५. पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः[9] । १५६. सारफल्गुबलविभागः[10] । ०५७. पत्त्यश्वरथहस्तियुद्धानि[11] । १५८. दण्डभोगमण्डलाऽसंहतव्यूहव्यूहनम्[12] । १५९. तस्य प्रतिव्यूहसंस्थापनम्[13] ॥ इति साङ्ग्रामिकं दशममधिकरणम् ॥**

## [ एकादशमधिकरणम् ]

**१६०. भेदोपादानानि[1] । १६१ उपांशुदण्डः[2] ॥ इति सङ्घवृत्तं एकादशमधिकरणम् ॥**

---

**श्रीमूला**

युद्धभूमयः इति सूत्रम्। युद्धानुगुणाः समस्थिराभिकाशादिलक्षणाः भूमयः कथ्यन्त इत्यर्थः ।। ७ ॥

पत्त्यश्वरथहस्तिकर्माणि इति सूत्रम्। पत्तिः पदातिः तदादीनां व्यापारा उच्यन्त इत्यर्थः ॥ ८ ॥

पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः इति सूत्रम्। पक्षौ पंचव्यूहात्मना स्थाप्यमानस्य बलस्य बहिः पुरस्तात्कोट्यौ, कक्षौ पश्चादन्तःपार्श्वे, उरस्यम् मध्यम्, एषां पंचानां व्यूहविशेषाणां बलपरिमाणानुगुण्येन व्यूहविभागोऽभिधीयत इत्यर्थः । एतदादिप्रकरणत्रयमेकाध्यायगतम् ॥ ९ ॥

सारफल्गुबलविभागः इति सूत्रम्। सारबलं पितृपैतामहत्वादि दण्डसम्पद्युक्तं, तद्विपरीतं भीरुकं वा फल्गुबलं, तयोर्विभागो विभज्याऽवस्थापनं चिन्त्यत इति सूत्रार्थः ॥ १० ॥

पत्त्यश्वरथहस्तियुद्धानि इति सूत्रम्। स्पष्टार्थम् ॥ ११ ॥

दण्डभोगमण्डलासंहतव्यूहव्यूहनम् इति सूत्रम्। दण्डव्यूहो भोगव्यूहो मण्डलव्यूहः असंहतव्यूहः इत्येतेषां प्रकृतिव्यूहानां तद्विकृतिव्यूहानां च रचनमभिधीयत इत्यर्थः । इदमुत्तरं च प्रकरणमेकाध्यायगतम् ॥ १२ ॥

तस्य प्रतिव्यूहसंस्थापनम् इति सूत्रम्। तस्य दण्डादिव्यूहनस्य अर्थाद् दण्डादिव्यूहानां प्रतिव्यूहस्थापनमुच्यत इत्यर्थः ॥ १३ ॥

इति सांग्रामिकं दशममधिकरणमिति। संग्राममधिकृत्य प्रवृत्तं सांग्रामिकं तदाख्यं दशममधिकरणम्। इत्थं त्रयोदशप्रकरणकं समुद्दिष्टमित्यर्थः ॥

अथैकादशे सङ्घवृत्तेऽधिकरणे प्रथमं सूत्रम्—भेदोपादानानि इति। भेदः संघविश्लेषोपायः तस्य उपादानानि प्रयोगा उच्यन्त इत्यर्थः ॥ १ ॥

उपांशुदण्डः इति सूत्रम्। तूष्णींदण्डः निगूढवध उच्यत इत्यर्थः ॥ २ ॥

इति संघवृत्तमेकादशमधिकरणमिति। संघः शस्त्रोपजीविनां संप्रीभावैकबलानां राजाभिधेयानां समूहः, तस्मिन् वृत्तं तद्विधेयीकरणानुकूले राज्ञो व्यापारः तत्प्रतिपादकम्, एवं द्विप्रकरणम् एकादशमधिकरणं समुद्दिष्टमित्यर्थः। एतच्चैकाध्यायगतम् ॥

# [ द्वादशमधिकरणम् ]

**१६२. दूतकर्माणि[१]। १६३. मन्त्रयुद्धम्[२]। १६४, सेनामुख्यवधः[३]। १६५.। मण्डलप्रोत्साहनम्[४]। १६६. शस्त्राग्निरसप्रणिधयः[५]। १६७. वीवधासारप्रसारवधः[६]। १६८. योगातिसन्धानम्[७]। १६९. दण्डातिसन्धानम्[८]। १७०, एकविजयः[९] ॥ इति आबलीयसं द्वादशमधिकरणम् ॥**

---

## श्रीमूला

अथ आबलीयसं नाम द्वादशमधिकरणम्। अबलीयान् दुर्बलतरः तस्येदमाबलीयसं प्रबले सन्धिमनिच्छति सति दुर्बलतरस्य कृत्यम्। तदिह प्रतिपाद्यम्। तत्र प्रथमं सूत्रम् दूतकर्म इति। दूता नाम निसृष्टार्थाः परिमितार्थाः शासनहरा इति त्रिविधाः तेषां व्यापारोऽभिधीयत इत्यर्थः ।। १ ।।

मन्त्रयुद्धम् इति सूत्रम्। मन्त्रः प्रज्ञोत्कर्षः तेन युद्धं मन्त्रयुद्धम्। तच्च शत्रुषड्वर्गवशगानेकभूमिपतिनाशोदाहरणादिना शत्रोर्मतिमुपजनय्य वञ्चनम्। तदिहोच्यत इति सूत्रार्थः ।। २ ।।

सेनामुख्यवधः इति सूत्रम्। सेना चतुरंगबलं तत्र मुख्याः सेनापत्यादयः तेषां वधोपाय उच्यत इत्यर्थः। इदमुत्तरं चैकाध्यायगतम् ।। ३ ।।

मण्डलप्रोत्साहनम् इति सूत्रम्। मण्डलं मित्रादिमण्डलं तस्य प्रोत्साहनम् आत्मरक्षार्थमुद्योजनं विजिगीषुणा कर्तव्यमुच्यत इत्यर्थः ।। ४ ।।

शस्त्राग्निरसप्रणिधयः इति सूत्रम्। शस्त्राग्निरसानां गूढप्रयोगा उच्यन्त इत्यर्थः। इदमुत्तरं चैकाध्यायगतम् ।। ५ ।।

वीवधासारप्रसारवधः इति सूत्रम्। विवधः पर्याहारः उपचारात् पर्याहारवाही स्वप्रजासकाशलभ्यायभारानेता, आसारः सुहृद्बलं, प्रसारो वनाद् यवसेन्धनाहर्ता, तेषां वध उच्यत इत्यर्थः ।। ६ ।।

योगातिसन्धानम् इति सूत्रम्। योगः कपटोपायः देवतागृहप्रवेशाद्यवसरे शत्रोरुपरि शिलायन्त्रमोक्षणभित्तिपातनादिः तेनातिसन्धानमुच्यत इत्यर्थः। एतदादिप्रकरणत्रयमेकाध्यायान्तर्गतम् ।। ७ ।।

दण्डातिसन्धानम् इति सूत्रम्। दण्डो वधपरिक्लेशार्थाहरणादिः, तेन शत्रोरभिभवनमुच्यत इत्यर्थः ।। ८ ।।

एकविजयः इति सूत्रम्। एकेन सहायनिरपेक्षेणैव विजिगीषुणा विजयः शत्रोरभिभव उच्यत इत्यर्थः ।। ९ ।।

इत्याबलीयसमित्यादि। एवं नवप्रकरणमाबलीयसं द्वादशमधिकरणं समुद्दिष्टमित्यर्थः ।।

## [ त्रयोदशमधिकरणम् ]

१७१ उपजापः[1] । १७२. योगवामनम्[2] । १७३. अपसर्पप्रणिधिः[3] । १७४. पर्युपासनकर्म[4] । १७५. अवमर्दः[5] । १७६. लब्धप्रशमनम् ॥ इति दुर्गलम्भोपायः त्रयोदशमधिकरणम् ॥

इति परराष्ट्रजयाधिकारः आवापाख्यः द्वितीयो भागः ।

## [ चतुर्दशमधिकरणम् ]

१७७. परघातप्रयोगः[1] । १७८. प्रलम्भनम्[2] । १७९. स्वबलोप-

---

### श्रीमूला

अथ त्रयोदशं दुर्गलम्भोपायाख्यमधिकरणमारभ्यते । दुर्गस्य परकीयस्य प्राप्त्युपायोऽस्मिन्नधिकरण उपदिश्यते । तत्र प्रथमं सूत्रम् उपजाप इति । उपजापो भेदः उच्यत इत्यर्थः ॥ १ ॥

योगवामनम् इति सूत्रम् । योगो मुण्डजटिलादिवेषान्यत्वग्रहणं तेनोपायेन वामनं शत्रोर्दुर्गान्निष्क्रामणमभिधीयत इत्यर्थः ॥ २ ॥

अपसर्पप्रणिधिः इति सूत्रम् । अपसर्पा गूढपुरुषाः तेषां प्रणिधानं शत्रुविषये निवासनमुच्यत इत्यर्थः ॥ ३ ॥

पर्युपासनकर्म इति सूत्रम् । परदुर्गं परित उपासनकर्म सैन्यनिवासनव्यापार उच्यत इत्यर्थः । इदमुत्तरं चैकाध्यायगतम् ॥ ४ ॥

अवमर्दः इति सूत्रम् । अवमर्दः परदुर्गग्रहणं तत् कदा केन प्रकारेण कर्तव्यमित्ययमर्थोऽभिधीयत इत्यर्थः ॥ ५ ॥

लब्धप्रशमनम् इति सूत्रम् । विजिगीषुणा लब्धस्य शत्रुदुर्गादेः प्रशमनं लब्धप्रशमनम् । तच्च दुर्गादिवासिनाम् अपूर्वभूपतिविषयशंकाद्यपोहनेन विजिगीषौ विस्रम्भजननम् । तदभिधीयत इति सूत्रार्थः ॥ ६ ॥

इति दुर्गलम्भोपाय इत्यादि । एवं षट्प्रकरणं दुर्गलम्भोपायाख्यं त्रयोदशमधिकरणं समुद्दिष्टमित्यर्थः ॥

अथौपनिषदं चतुर्दशमधिकरणम् । उपनिषत् शत्रुजयोपायरहस्यं तदधिकृत्य प्रवृत्तमौपनिषदम् । तत्र प्रथमं सूत्रम्—परघातप्रयोग इति । शत्रुवधार्थं औषधप्रयोग उच्यत इत्यर्थः ॥ १ ॥

प्रलम्भनम् इति सूत्रम् । औषधमन्त्रप्रयोगद्वारेण क्षुत्प्रतीकारविरूपकरणादिना शत्रुवञ्चनमुच्यत इत्यर्थः । अद्भुतोत्पादनं भैषज्यमन्त्रप्रयोग इति द्विधा विभज्य प्रकरणमिदमध्यायद्वयेन वितन्यते । तत्र मार्जारोष्ट्रादिचक्षुस्साधितचूर्णादिकं भैषज्यं दृश्यादृश्यकरणादिसाधनं, 'बलिं वैरोचनामि'त्यादिर्मन्त्रः ॥ २ ॥

घातप्रतीकारः[3] ॥ इति औपनिषदिकं चतुर्दशमधिकरणम् ॥

## [ पञ्चदशमधिकरणम् ]

१८०. तन्त्रयुक्तयः[1] ।—इति तन्त्रयुक्तिः पञ्चदशमधिकरणम् ॥

इति तन्त्रावापशेषाख्यः तृतीयो भागः ।

## [ शास्त्रेयत्तानिष्कर्षः ]

शास्त्रसमुद्देशः—पञ्चदशाधिकरणानि ( १५ ), सपञ्चाशदध्यायशतम् (१५०), साशीतिप्रकरणशतम् (१८०), षट्श्लोकसहस्राणि (६०००)—इति ॥

---

### श्रीमूला

स्वबलोपघातप्रतीकारः इति सूत्रम्। स्वबलस्य स्वसैन्यस्य परप्रयुक्त विषाम्बुदूषणादिनिमित्तो य उपघातः तस्य प्रतीकारोऽभिधीयत इत्यर्थः ॥ ३ ॥

इत्यौपनिषदमित्यादि । एवं त्रिप्रकरणम् औपनिषदं चतुर्दशमधिकरणं समुद्दिष्टमित्यर्थः । औपनिषदिकमित्यपि पाठः । तदाणन्ताट्ठन् ॥

अथान्तिमं तन्त्रयुक्तिर्नाम पञ्चदशमधिकरणम् । तन्त्रं तन्त्रावापात्मकमिदमर्थशास्त्रं तस्य युक्तिः व्याख्यानोपायभूतो न्यायः स इह प्रतिपाद्यते । तत्रेदं सूत्रम्—तन्त्रयुक्तय इति । तन्त्रोपयुक्ता युक्तयः अधिकरणविधानादयो द्वात्रिंशदस्मिन् प्रकरणेऽभिधीयन्त इति सूत्रार्थः ॥ १ ॥

इति तन्त्रयुक्तिरित्यादि । एवमेकप्रकरणकमिदं तन्त्रयुक्त्यधिकरणं समुद्दिष्टमित्यर्थः ॥

अथ सर्वप्रकारेयत्ताख्यानेन कृत्स्नस्य शास्त्रस्य समुद्देशमाह—शास्त्रसमुद्देश इत्यादि । श्लोक इह द्वात्रिंशद् अक्षराणि, येषां समुदाय एको ग्रन्थ इति गण्यते । शेषं स्पष्टम् ।

### वैदिकसिद्धान्तसंरक्षिणी

अक्षराणां पदानां प्रकरणानां न्यूनातिरिक्तनिवेशपरिहारायाह-पञ्चदशेति । अस्य ग्रन्थस्य निर्माणप्रयोजनं दर्शयन् स्वकीर्तिअनुवर्तयंश्चाम-सुखग्रहणेति ।

इति वैदिकसिद्धान्तसंरक्षिण्यां कौटिलीयार्थशास्त्रव्याख्यायां प्रथमोऽध्यायः ।

## [ ग्रन्थगुणाः ]

सुखग्रहणविज्ञेयं तत्त्वार्थपदनिश्चितम् ।
कौटल्येन कृतं शास्त्रं विमुक्तग्रन्थविस्तरम् ॥ १ ॥

इति कौटलीयेऽर्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
राजवृत्तिः प्रथमोऽध्यायः ।

---

### जयमङ्गला

इति शास्त्रसमुद्देशः, इतिशब्दः परिसमाप्त्यर्थः । शास्त्रस्य प्रकरणाधिकरण-स्वरूपस्य संक्षेपेणोद्देश उक्तः । प्रकरणानामधिकरणानां चानुपूर्वी यथानिर्देशं वक्ष्यामः । इदानीं स्पष्टार्थं सङ्ख्यया शास्त्रसमुद्देशमाह-पञ्चदशेति । तत्र प्रकरणा-धिकरणसंख्यानमन्यनिरपेक्षार्थम् । अध्यायसंख्यानं न प्रकरणवशादेषां[1] सङ्ख्येति दर्शनार्थम् । यतो विगृह्यासनादीनि बहूनि प्रकरणान्येकोऽध्यायः, विद्यासमुद्देशः प्रकरणमेकं त्रयोऽध्याया इति । श्लोकसंख्यानमहीनाधिकत्वज्ञापनार्थम् ।

### जयमङ्गलाक्रोडपत्रम्

प्रकरणवशात् अध्यायानां संख्या कुतो नेति प्रश्नं समाधातुमाह-यतो इति ।

### श्रीमूला

व्युत्पित्सुप्ररोचनार्थं स्वशास्त्रस्य तन्मृग्यगुणपुष्कलतां श्लोकेनाह—सुखेत्या-दिना । सुखं क्लेशासहं ग्रहणं बुद्धिर्येषां ते सुखग्रहणाः सुकुमारमतयः तैरपि विज्ञेयं विज्ञातुं शक्यम् । तदन्यविज्ञेयत्वं तु कैमुत्यसिद्धम् । तत्त्वार्थपदनिश्चितं तत्त्वम् । अर्थस्य याथात्म्यम्, अर्थः शब्दाभिधेयः, पदं वाचकशब्दः, तत्त्वतोऽर्थतः पदतश्च निश्चितम् । किं यथाप्रतिपादितमेवार्थस्य याथात्म्यम् उतान्यदपि स्यादिति सन्देहानुत्थापकं तत्त्व-निश्चितम्, अर्थपदयोरन्यूनानतिरिक्ततया सन्देहाजनकम् अर्थपदनिश्चितमिति बोद्धव्यम् । तत्त्वार्थपदानि निश्चितानि यस्मिन्निति बहुव्रीहिर्वा । तदा तु निश्चित-शब्दस्य परनिपात आहिताग्न्यादित्वात् साध्यः ।

इतीत्यावद्यध्यायसमाप्तिवाक्यम् । तत्र प्रान्ते राजवृत्तिरिति प्रतिपाद्यसूचनम् एतदध्यायसंक्षिप्तस्य कृत्स्नशास्त्रार्थस्य राजसम्बन्धिव्यापारात्मकत्वात् ॥

इति कौटिलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे प्रथमोऽ-ध्यायः राजवृत्तिः ॥

---

१ अशुद्धम्
वशादेष

## जयमङ्गला

सुखग्रहणमित्यादि वचनमध्येत्प्रोत्सहनार्थम्। सन्निवेशत्वात् सुखेन ग्रहणं पठनं यस्मिन्निति सुखग्रहणम्। स्पष्टार्थत्वात् सुखेन विज्ञेयमवगतिर्यस्मिन्निति सुखविज्ञेयम्। यतस्तत्त्वार्थैः निश्चयो यस्मिन्निति। विमुक्तं चास्मिन् ग्रन्थगौरवम्। अतः कालातिपातोऽपि नास्ति। कुटलं नाम गोत्रं स्यापत्यं कौटिल्यः। "गर्गादिभ्यो यञ्" (४-१-१०५) स्वगोत्रकीर्तनं च कीर्त्यर्थम्। तथा चाहुः—

"दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः।
यावत् स्वशब्दो ध्रियते तावत् स्वर्गे महीयते॥" इति॥

शास्त्रं चेदं स्वपरमण्डलभेदाद् द्विधाऽवस्थितं तन्त्रमावापश्च (इति)। स्वकुटुम्बधारणात् तन्त्रम्। "तत्रि कुटुम्बधारणे" इति धातुपाठात्। तच्च अध्यक्षप्रचारादि योगवृत्तान्तम्। परस्माच्छक्तयः सिद्धयश्चात्मनि समन्तादुप्यन्ते व्यस्यन्ते येनासावावापः। स च मण्डलयोन्यादिदुर्गलाभोपायान्तः। तदुभयमपि अविनीतस्य न प्रवर्तत इति आदौ विनयोपदेशः। तन्त्रावापाभ्यामसिद्धेऽर्थे उपनिषत्प्रयोग इत्यन्ते वचनम्। तदुभयमपि तन्त्रावापान्तर्भूतमेव द्रष्टव्यम्। शास्त्रमपि व्याख्यायुक्तिं विना न शक्यते व्याख्यातुमिति तन्त्रयुक्तिः शास्त्रस्यालङ्कारभूता अन्ते समुपदिष्टा। तथा चोक्तम् —

"सूत्रवाक्यसमीक्षाभिः श्लोकैः शास्त्रस्य तद्विधिः।
अलङ्कारश्च तस्योक्ता द्वात्रिंशत् तन्त्रयुक्तयः॥
अर्थस्य सूचनात् सूत्रं वाक्यं च पदसंहतिः।
अन्तर्भाव्या समीक्षा स्याच्चतुष्पाच्छ्लोक उच्यते।" इति।

शास्त्रं चेदं समीक्षाभिः विरचितत्वात् समीक्षाशास्त्रम् इत्याहुः। शास्त्रसमुद्देशश्च प्रथमं प्रकरणं विनय एवान्तर्भूतम्। यतो वक्ष्यति—"शास्त्रार्थानुष्ठानं वेन्द्रियजयः" (अधि. १. अध्याय ६) इति। ततश्च संक्षेपेणाऽपि कृत्स्नं शास्त्रमनुष्ठेयम् इन्द्रियजय इति समुद्देशो विनये निक्षिप्तः॥

इति शास्त्रसमुद्देशः प्रथमं प्रकरणम्।
प्रथमश्चाध्यायः॥

## जयमङ्गलाक्रोडपत्रम्

प्रोत्साहनार्थम् इति। उत्साहनं – बलवदनिष्टाननुबन्धित्वज्ञानम्।

कुटलमिति। अस्मिन् गोत्राभिधानं वंशतात्पर्येण बोध्यम्। तेन गोत्रप्रवरमंजर्युक्तेषु अगस्त्याद्यन्यतमगोत्रेषु अस्य अनुल्लेखेऽपि न क्षतिः।

कौटल्य इति। यद्यपि टीकाकृता कौटल्यपदस्य व्युत्पत्तिः प्रदर्शिता, तथापि इतरटीकाकृत्प्रामाण्यात् मूलकर्तुः कौटिल्य इत्यपि नामधेयमस्तीति ज्ञायते। तद्यथा

उपाध्यायनिरपेक्षायाम्—"कुटो कुम्भी तत्परिमितं धान्यं लाति संगृह्णाति" इति कुटिलः। अर्थात् कुटिलवंशोऽयं कुम्भीधान्यः, तत्र उत्पद्यमानत्वात् अयं कौटिल्यः" इति।

श्यामशास्त्रिगोऽपि उपाध्यायनिरपेक्षोक्तं व्याख्यानं स्वीकुर्वन्ति। एतेन ग्रन्थकर्ताः कुटिलमतिरासीत् इत्ययं ग्रन्थकर्ता कौटिल्यः इति केचिद् व्याचक्षते, तदपास्तम्। योगवृत्तादिप्रकरणेषु कौटिल्यस्य सन्मतेः दृष्टत्वात्[1]।

प्रकरणाधिकरणसमुद्देशस्य ग्रन्थस्य अस्य प्रथमाधिकरणे विनयाधिकारिके अन्तर्भावं दर्शयति—शास्त्रेति।

अन्तर्भावे हेतुमाह-यतो इति।

इति जयमंगलाक्रोडपत्रे प्रथमाध्यायविवेचनं समाप्तम्।

---

'नैवम्' इति भारद्वाजः प्रम्रियमाणे राजनि अमात्यः कुल्यकुमारमुख्यान् परस्परं मुख्येषु वा विक्रामयेत्। विक्रान्तं प्रकृतिकोपेन घातयेत्। कुल्यकुमारमुख्यानुपांशुदण्डेन वा साधयित्वा स्वयं राज्यं गृह्णीयात्। राज्यकारणाद्धि पिता पुत्रान् पुत्राश्च पितरमभिद्रुह्यन्ति 'किमंग! पुनरमात्यप्रकृतिर्ह्येकप्रग्रहो राज्यस्य। तत् स्वयमुपस्थितं नावमन्येत। स्वयमारूढा हि स्त्री त्यज्यमानाऽभिशपतीति लोकप्रवादः।

कालश्च सकृदभ्येति यं नरं कालकांक्षिणम्।
दुर्लभस्स पुनस्तस्य कालः कर्म चिकीर्षतः।
'प्रकृतिकोपकमधर्मिष्ठमनैकान्तिकं चैतत्' इति कौटल्यः।

# प्रथमं प्रकरणम्—विद्यासमुद्देशः

## द्वितीयोऽध्यायः

## राजवृत्तिः[1]

म० म० श्रीगणपतिशास्त्रिविरचिता

### श्रीमूला

अथ समुद्देशनिर्देशक्रमेण अधिकरणप्रकरणानि व्याख्येयानि। तत्र तावत् प्रथमाधिकरणस्यादिमं प्रकरणं द्वितीयादिभिस्त्रिभिरध्यायैः प्रारभ्यते। विद्यासमुद्देश इति हि प्रथमं सूत्रम्। कास्ता विद्या इत्याकाङ्क्षायामाह—आन्वीक्षिकीत्यादि। अर्थतत्त्वस्य हेतुभिः परीक्षणमन्वीक्षा, सा प्रयोजनमस्या इति आन्वीक्षिकी हेतुविद्या। ऋग्यजुःसामानि त्रयी, तेषाम् अभिचारकर्मज्ञानादिफलादथर्ववेदाद् भिन्नप्रस्थानतया पृथक्पंक्तिनिवेश्यानां सम्भूयैकक्रतुकार्यसाधकत्वात् तत्समुदायस्य त्रयीति संज्ञा। कृषिः पाशुपाल्यं वणिज्या च वार्त्ता। दण्डनीतिस्तु राजनीतिः। इति एवं प्रसिद्धा इति शेषः।

### वैदिकसिद्धान्तसंरक्षिणी

ग्रन्थोऽयं द्विधा विभक्तः। एक उद्देशग्रन्थः अपरो निर्देशग्रन्थः। तत्र 'ॐ नमः' इत्यारभ्य 'विमुक्तग्रन्थविस्तरमि'त्यन्तं उद्देशग्रन्थः, अपरो 'राजवृत्तिरि'त्यारभ्य आन्तः। तदारम्भे मङ्गलं निर्दिशति कीर्तनमुखेन-राजवृत्तिरिति। राजा वक्ष्यमाण-स्वामिसम्पदा युक्तः। ऐश्वर्यसम्पन्नत्वात् देवः इति राजकीर्तनमेवात्र मङ्गलात्मकम्। तदाहुः—

> बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
> महती देवता ह्येषा नररूपेण तिष्ठति॥ इति॥

एवमन्यान्यपि वचनानि राज्ञो देवत्वाभिधायकानि तत्र तत्रानुसन्धेयानि। उदयनाचार्या अपि राज्ञो देवत्वमभिदधति तद्यथा—

"प्रतिमादयस्तु तेन तेन विधिना सन्निधापितरुद्रोपेन्द्रमहेन्द्राद्यभिमानिदेवता-भेदाः तत्रतत्राराधनीयतामासादयन्ति दष्टमूर्छितं राजशरीरमिव विषापनयनविधि-नापादितचैतन्यम्" इति। (न्यायकुसुमांजलिः १–१३ श्लो०)

उपाध्यायनिरपेक्षायामपि—

"अतः सर्वस्मान्महीपतिरेव देवः विशिष्टदेवसद्भावेऽपि महीपतिरेव देवः अधिकृतानधिकृतयोः अधिकृते प्रतिपत्तिर्गरीयसी। कौटिल्येनात एववृत्तिरित्युक्तम्"। इति।

---

१. राजवृत्तिरिति अयमधिकारः। आत्मसम्पद्गुणैराभिगामिकगुणैश्च जनरञ्जनाद् राजा तस्य वृत्तिरनुष्ठानं·········अधिकृतं··········राजवृत्तिरिति प्रधान·········।

## वैदिकसिद्धान्तसंरक्षिणी

### राज्ञो देवत्वविषये शाण्डिल्यसूत्राभिप्रायः

ननु शाण्डिल्यसूत्रे देवत्वं राज्ञि प्रतिषिद्धम्। तथा हि-शाण्डिल्यसूत्रस्यादिमश्लोक-व्याख्याने स्वप्नेश्वरकृतभाष्ये-"उच्यते जीवोपाध्य नवच्छिन्नचेतनविषयिणी अनुरक्ति-रेव सेति ( भ० सू० १-२- ) ननु "नराणां च नराधिपः" इत्यादिना विभूतीनामपि भगवद्रूपत्वकथनात् राजादिभक्तेरपि मुक्तिः स्यादित्यत आह प्राणित्वान्न विभूतिषु (-२।१।१९-) जीवोपाध्यनवच्छिन्नविषयैव पराभक्ति र्न तु प्राणादिजीवोपाधि-प्रयुक्तेषु राजादिषु अनुरक्तिर्मुक्तिफलेति।
द्यूतराजसेवयोः प्रतिषेधाच्च। (-२।१।२०) धर्मशास्त्रेषु द्यूतराजसेवयोः प्रतिषेधः स्मर्यते। परमेश्वरत्वे तु तन्न स्यात्" इति।

तथा भक्तिचन्द्रिकायामपि-

"राजादिविभूतिषु भक्तिर्न मुक्तिफला कुतः अज्ञानाधारतोपहितप्राणित्वात् जीवत्ववत्वाच्च इति यावत्।" नराणां च नराधिपः इत्यादिकं तु नेश्वरकोटिस्थत्वा-भिप्रायेण, किन्तु भगवदनुगृहीततदभिमानित्वाभिप्रायेण। तस्मात्तद्भक्तिर्न मुख्य-फलेति भावः। धर्मशास्त्रे हि द्यूतराजसेवयोः प्रतिषेधः स्मर्यते। परमेश्वरत्वे राज्ञः तन्न स्यात्। द्यूतरागनिषेधोऽत्र दृष्टान्तार्थमुक्तः तद्रागस्य भक्तित्वप्रसक्तेरेवाविर्भा-वात्"। इति।

रामरुद्र्यां दिनकरीव्याख्यायां तु ब्रह्मादीनामपि अखण्डं देवत्वं जातिरूपं न स्वीक्रियते। किमुत राज्ञामित्यभिप्रायो वर्णितः—"जलीयतैजसशरीरवृत्तितया देवत्व-स्यापि जातित्वाभावात्" इति। मधुसूदनसरस्वतीभिरपि "जन्म कर्म च मे दिव्यम्।" इति गीताव्याख्यायामीश्वरे पंचभूतानात्मकत्वं साधितम्।[1] (अ० ४ श्लो० ९)

न च रामादिशरीरस्यापि राजत्वात् ईश्वरानात्मकत्वं स्यादिति वाच्यम्। रामतापन्युपनिषत्प्रामाण्येन रामस्येश्वरत्वे स्वीकृतेपि अन्येषु राजसु पाञ्चभौतिका-नात्मकत्वे प्रमाण्याभावेन तेषु ईश्वरत्वं देवत्वं वा नास्तीतिचेदत्रोच्यते। विभूति-निरूपणाध्याये जगत्स्थितिहेतोर्भगवदात्मकस्य सत्वगुणस्योत्कर्षः अत्यर्थमाश्रितत्वं, तत्कुत्र ज्ञेयम्? इति चिन्तितम्। तत्प्रसङ्गे अनेका विभूतय उक्ताः तासु नराधिपस्यापि सङ्ग्रहो वर्तते। अस्यायं भावः—यावदनुल्लङ्घितेशशासनो नराधिपः मर्यादां नाति-क्रामति तावत् स बालोऽपि वा भवतु नावमन्तव्योऽपितु ईशत्वेनोपास्यः। यस्मिन् क्षणे सोऽनात्मवान् भवति ततः प्रभृति तु नोपास्यः सत्वोत्कर्षाभावात् जीवत्व-मात्रवत्वाच्च, इति शाण्डिल्यसूत्राशयः। अन्यथा गीताभक्तिसूत्रयोरसमन्वयापत्तेः। राजनिष्ठं देवत्वं तु ईश्वरोपकरणात्मकत्वमेव उपकरणत्वं च ईशसेवकेषु राजसु मनः

---

[1] जन्मकर्म नित्यसिद्धस्पैव मम सच्चिदानन्दघनस्प लीलया तथानुकरणम्। कर्म च धर्मसंस्थापनेन जगापरिपालनम्। मे मम नित्यसिद्धेश्वरस्य। दिव्यमप्राकृतम्। अन्यैः कर्तुम-शक्यममीश्वरस्यैवासाधारणम्। इवि।

## वैदिकसिद्धान्तसंरक्षिणी

प्राणवाचो द्वारीकृत्य भवति । अर्थात् एतत्त्रितयं यदि सत्वगुणात्मकस्य भगवतः कार्यकरणे अङ्गतया विनियुज्यते तर्हि तदधिष्ठानं राजापि देवो नान्यथा । तत्र प्रमाणादिकं जयमङ्गलाव्याख्यायां प्रपञ्चितम् एतेन राजनिष्ठदेवत्वस्यादृष्टरूपत्वे नीतिलक्षण'सङ्गतिः, दृष्टरूपत्वे तु न तत्प्रसिद्धमित्यादिशङ्काः परास्ताः । ईदृशं देवत्वं राजसु कुलीनत्वात् उपरिबुद्धित्वात् गुणसंपत्तिमत्वात् ईशपारतन्त्र्याच्च साहजिकं भवति नान्येषु । तस्य च परिचायकाः सामुद्रिकशास्त्राभिप्रायेण ध्वजवज्रसदृश्यो रेखाः[१], तथा नाट्यशास्त्राभिप्रायेण गतिमत्त्वं वाक्पाटवं च तेषां स्वाभाविकं भवतीति तत्रतत्रोक्तं वेदितव्यम् । ('नाट्यशास्त्रे'[१] क्षेमेन्द्रसूरिकृते नीतिकल्पतरौ[२] च ।)

ननु ईशोपकरणात्मकत्वं देवत्वं सर्वास्वेव विभूतिषु समानमेव तर्हि भक्तिसूत्रे राजसेवाप्रतिषेधस्य कोऽभिप्रायविशेषः । उच्यते । राजानः प्रायशः उच्चपदाधिष्ठितत्वात् पूज्या भवन्ति तस्याऽवधिः भक्तिसूत्रेण निर्दिश्यते — यावत्सत्वस्याधिष्ठानं राजाऽस्ति तावत् स सेव्यः अन्यथा नेति द्योतयितुं राजसेवाप्रतिषेधः उक्तः । इति ।

## राजवृत्तिरिति सूत्रस्यास्तित्वं

राजवृत्तिरिति । यद्यपि इदं सूत्रं क्वचित् उपलभ्यते क्वचिन्न क्वचित्तु इतस्ततो वर्तते तथापि तस्य स्थाननिर्धारणं द्वितीयाध्यायारम्भे एव मन्तव्यम् प्राचीनटीकायां तथोपलंभात् । तद्यथा —

तत्रेदं शास्त्रम् किमधिकृत्येत्याह राजवृत्तिरिति'' इति ।।

( –ज० २ । १ )

---

१. देवदानवयक्षाणां नृपपन्नगरक्षसाम् ।
चतुस्तालप्रमाणेन कर्तव्याथ गतिर्बुधैः ।। २३ ।।
दिवौकसां तु सर्वेषां मध्यमा गतिरिष्यते ।
तत्रापि चोर्ध्वगा ये तु तेषां देवैः समा गतिः ।। २४ ।।
यदा मनुष्या राजानस्तेषां देवगतिः कथम् ।
अत्रोच्यते कथं नैषाँ गती राज्ञां भविष्यति ।। २५ ।।
इह प्रकृतयो दिव्या तथा च दिव्यमानुषी ।
मानुषी चेति विज्ञेया नाट्यनृत्तक्रियां प्रति ।। २६ ।।
देवा हि प्रकृतिर्दिव्या राजानो दिव्यमानुषी ।
या त्वन्या लोकविदिता मानुषी सा प्रकीर्तिता ।। २७ ।।
देवान्वाजास्तु राजानो वेदाध्यात्मप्रकीर्तिताः ।
एवं देवानुकरणे दोषोह्यत्र न विद्यते ।। २८ ।। ( नाट्य शा० १३ अध्याय )

२. हंसहस्त्यश्वगत्या च पुरुषाःस्युर्नराधिपाः ।। नीतिकल्पतरु ।। ( पुरुषलक्षणशाखायां )

## वैदिकसिद्धान्तसंरक्षिणी

राजवृत्तिरित्ययमधिकार इति च । ( —नीतिनिर्णीतिः टि० २।१ )

अत एवेदमधिकारसूत्रम्। तेन अग्रिमनिर्दिष्टानि समस्तकर्माणि राजाधिकारिकाणि इति सूच्यते। यत्रामात्यादयोऽध्यक्षप्रचारादिषु कर्तारो भवन्ति ते राजप्रतिनिधित्वेन मन्तव्याः ।

राजा—स्वामिसम्पदा संपन्नो रञ्जनकर्ता। तदुक्तम् नीतिनिर्णीतिटिप्पण्याम्—

"आत्मसम्पद्गुणैराभिगामिकगुणैश्च जनरञ्जनाद्राजे"ति। तस्य वृत्तिः अनुवृत्तिः अधिकृतमिति यावत् ।

## जयमङ्गला

इदानीं निर्देशतः शास्त्रं प्रस्तूयते । तत्रेदं शास्त्रं किमधिकृत्येत्यत्राह—राजवृत्तिरिति । अधिक्रियते । सर्वमेतच्छास्त्रं राजवृत्तिः राजाऽनेन वर्तत इति कृत्वा । यतः पुरुषकारो ज्ञानकर्मलक्षणः, ज्ञानपूर्वकं कर्म, ज्ञानं शास्त्रपूर्वकमिति । अमात्या-

## जयमङ्गलाक्रोडपत्रम्

द्वितीयं मूलाध्यायं व्याख्यातुमारभते इदानीमिति । निर्देशतः–विस्तरतः इति भावः । शास्त्रम्—प्रकरणाधिकरणसमूहात्मकम् । स्पष्टीकृतंचैतन्मूलव्याख्याने ।

राजवृत्तिरिति । शास्त्रेण, तदन्तर्गतेन तन्त्रेण, षाड्गुण्येन, विनयाधिकारिकेण, विद्यासमुद्देशेन च पञ्चधा सङ्गतिं प्रदर्शयन्नाह अधिक्रियते इति । इदं हि सूत्रमधिकारसूत्रम् । यतः सर्वोऽप्यत्रत्यः शास्त्रार्थः पृथिव्या लाभपालनहेतुत्वात् राज्ञः जिज्ञासाविषयः इति राजवृत्तिरिति सूत्रेण ज्ञायते । उक्तासु पञ्चसु सङ्गतिषु आद्यां शास्त्रसङ्गतिं प्रदर्शयन्नाह राजेति ।

ननु अर्थशास्त्रे तत्तदधिकरणेषु उक्तानि कानि चन कर्माणि तथाविधानि वर्तन्ते यानि राजेतरैः अमात्यैः अध्यक्षैर्वा अनुष्ठीयन्ते तानि कर्माणि राजवृत्तित्वेन कथं मन्तव्यानीति चेन्न ।

यागादिषु यजमानाध्वर्युहोतृप्रभृतीनां अनेकेषां ऋत्विजां विभज्य उक्तानि स्वस्वकर्माणि तैस्तैरनुष्ठीयन्ते । तथापि यजमानातिरिक्ताः ऋत्विजः यागाधिकारित्वेन न प्रोच्यन्ते अपि तु यजमान एव । ऋत्विजस्तु यजमानेन वृताः आनतिमेव फलमाकांक्षन्ते नान्यत् । अतस्ते न यागाधिकारिणो भवन्ति । अधिकारी स एव यः फलभोक्ता भवति तदुक्तं मीमांसान्यायप्रकाशे—"फलस्वाम्यबोधको विधिः अधिकारविधिः" इति[१] । तथा च उक्तरीत्या फलस्वाम्यं यजमान एव अतोऽसावधिकारी

---

एवं सक्रमे प्रयोज्यवर्गे निरूपिते अधुना तत्राधिकारी निरूप्यते तत्राधिकारो नाम फलभोक्तृत्वसमानाधिकरणं कर्तृत्वम् । श्राद्धादौ पित्रादेः ऋत्विजां चाधिकारव्यावृत्यर्थं विशेष-

## जयमङ्गला

दयोऽप्यनेन वर्तन्त इति चेन्न। तेषां राज्ञैव उह्यमानत्वात्। अथवा तन्त्रमधिकृत्य अयम् अधिकारः। कृत्स्नस्य शास्त्रस्य राजवृत्तित्वेऽपि विशेषग्रहणं स्वकुटुम्बविषय-ख्यापनार्थम्। यतोऽनपेक्षितपरमण्डला स्वतन्त्रवृत्तिः। अथवा एतद् विजिगीषोर्वृत्तिः,

## जयमङ्गलाक्रोडपत्रम्

यागस्येति निर्णीयते। तथैव राजकर्मणः फलं पृथिव्याः लाभः पालनं चेति प्रागुक्तम्। तेन सञ्जायमानं फलं स्वर्गसुखवत् यशः लक्ष्मीः जनानुरागश्च, एतत्सर्वमपि यजमानेनेव राज्ञा अनुभूयते। न तु ऋत्विग्भिरिव अमात्यादिभिः। प्रजाया अपालने तु उक्तफलाभावोऽपि राज्ञ एव दुःखकृद्भवति नान्यस्य। अत एव शत्रुविजये व्यापृतो राजा विना सैन्यं न युध्यति, सैन्यं च महान्तं परिश्रममनुभवति तथापि शत्रुपराजये जेतृत्वं राज्ञ एव इति लोकेषु अभिधीयते। विपरीते विपरीतं च। अतः अमात्यैः स्वस्वकर्मण्यनुष्ठितेऽपि तेषामुक्तराज्यफलभोक्तृत्वाभावात् राज्ञ एव तद्भोक्तृत्वाच्च स एव अधिकारी इति। अतः सर्वमप्येतदर्थशास्त्रोक्तं कर्म राजा-धिकारिकमिति सिद्धम्।

पूर्वसूचितसङ्गतिषु पञ्चसु द्वितीयां तन्त्रसङ्गतिं प्रदर्शयन्नाह अथवा तन्त्रमिति। इदं शास्त्रं तन्त्रमित्युच्यते[1] स्वकुटुम्बधारणात्। तत्र प्रमाणं "तत्रि कुटुम्बधारणे" इति पाणिनीयधातुपाठो बोध्यः। इदञ्च तन्त्रमध्यक्षप्रचारादारभ्य योगवृत्तपर्यन्तम् शास्त्रकृता निरूपितम्। तदाहुः—तच्च अध्यक्षप्रचारादि योगवृत्तान्तमिति ( १ अ० जयमङ्गला० टी०। )

एतत्सङ्गतिविशेषाभिधानप्रयोजनमाह स्वकुटुम्बेति। अयं भावः-नीति सारे

---

णद्वयम्। न चैवं जातेष्टौ पितुः फलभोगाभावादधिकारानापत्तिः, सत्यप्यकरणे प्रत्यवाये करणस्य पूतत्वादिफलकत्वेन पापक्षयफलकत्वाभावादिति वाच्यम्। प्रवृत्तिप्रयोजकफलेच्छा-समानाधिकरणकर्तृत्वस्यैव विवक्षितत्वात्। जातेष्टिश्राद्धादावपि फलस्यात्मनिष्ठत्वेऽपि तदिच्छाया यजमाननिष्ठत्वादधिकाराविघातः। ऋत्विजामपि यजमानस्य फलं भूयादितीच्छाया-स्स्वनिष्ठकर्तृत्वसमानाधिकरणत्वादधिकारापत्तिरतः प्रवृत्तीत्युक्तम्। दक्षिणाप्राप्तिर्मे भूयात् इतीच्छाया एव ऋत्विक्प्रवृत्तिजनकत्वेनोक्तविधेच्छायाः प्रवृत्तिप्रयोजकत्वासम्भवात्। अथं चाधिकारो विध्याक्षिप्तस्वेष्टसाधनत्वसमानाधिकरणस्वकृतिसाध्यत्वबललभ्यत्वाद्विधिप्रमा-णकः। अयमेवाधिकारविधिरित्युच्यत इति भाट्टदीपिका ६ अ०पा० १ अ० १

१ इयं या तन्त्रसंज्ञा टीकाकृता उक्ता सा न केवलं प्राचीनपरम्पराप्राप्तैव आधुनिकैरपि तन्त्रत्वं इति संज्ञया व्यवह्रियते। Home Department

## जयमङ्गलाक्रोडपत्रम्

प्रकृतिकर्मप्रकरणे स्वामिकर्माणि[1] यानि अभिहितानि तेषु एकोनसप्ततिसङ्ख्याकेषु स्वामिकर्मसु कानि चित्कर्माणि कुटुम्बभरणार्थानि वर्तन्ते। कानि चित्तु परमण्डल-सम्बन्धीनि आवापार्थानि। तत्र कुटुम्बभरणोद्देश्येन अध्यक्षप्रचारादारभ्य योग-वृत्तान्तं कर्म अभिहितम्। अतः कुटुम्बभरणे प्रवृत्तः राजा यदा अधिकृतो भवति तदा तन्त्राङ्गतया अध्यक्षप्रचारादियोगवृत्तान्तानि कर्माणि राजवृत्तित्वेन व्यपदिष्टानि भवन्ति।

एतेन कुटुम्बभरणे प्रवृत्तानां गृहस्थानां कृते अर्थशास्त्रोक्तमध्यक्षप्रचारादारभ्य योगवृत्तान्तं कर्म सर्वाङ्गोपसंहारेण प्रकृतिकर्मत्वाद् अत्यन्तमुपयुक्तं भवतीति ज्ञेयम्। उक्तासु पञ्चसु सङ्गतिषु तृतीयां षाड्गुण्येन सङ्गतिमाह-अथवेति। यदा हि राजा

---

राजवृत्तिः – १ अन्वीक्षणञ्च विद्यानां सद्वर्णाश्रमरक्षणम्।
ग्रहणं शस्त्रशास्त्राणां युद्धमार्गोपशिक्षणं।
व्यायामः शस्त्रविज्ञानं वर्मणां लक्षणानि च।
गजाश्वरथपृष्ठेषु यथावत्सम्प्रवर्तनम्।
नियुद्धकौशलं माया परिचित्तप्रवेदनम्।
धूर्तता शाठ्ययुक्तेषु सत्सु सद्वृत्तदर्शनम्।
मन्त्रोद्योगोऽनुमन्त्रत्वं तद्रक्षा तात्स्थ्यमेव च।
उपेक्षा साम दानं च भेदो दण्डश्च साधनम्।
प्रशास्तृसूतसेनानीमन्त्र्यमात्यपुरोधसाम्।
सम्यक् प्रचारविज्ञानं दुष्टानां चावरोपणम्।
गतागतपरिज्ञानं दूतसंप्रेषणानि च।
प्रकृतिव्यसनापोहः क्रुद्धप्रशमनानि च।
गुरूणामनुवृत्तिश्च पूज्यानामनुपूजनम्।
धर्मासनप्रतिष्ठानं राज्यकण्टकशोधनम्।
भृताभृतपरिज्ञानं कृताकृतपरीक्षणम्।
तुष्टातुष्टविचारश्च सर्वेषामनुजीविनाम्।
मध्योदासीनचरितज्ञानं तत्सिद्धिपालनम्।
प्रतिग्रहश्च मित्राणाममित्राणां च निग्रहः।
पुत्रदारादिगुप्तिश्च बन्धुवर्गपरिग्रहः।
खनिद्वीपवनादीनां स्ववृत्तीनां च प्रवर्तनम्।
असतां च परिक्षेपः सतां च परिगूहनम्।
अभूतानां च हिंसानाम् धर्म्याणां च वर्जनम्।
अकार्यप्रतिषेधश्च कार्याणां च प्रवर्तनम्। —

## जयमङ्गलाक्रोडपत्रम्

अमात्यादिद्रव्यप्रकृतिसंपन्नः सन् परराज्यं विजिगीषते तदा स विजिगीषुरिति उच्यते[1]। तस्य इमानि सर्वाणि अर्थशास्त्रोक्तानि कर्माणि विजिगीषुकर्त्तव्यतयोपदिष्टानि इति विजिगीषुवृत्तिः इति भावः। ननु नृपो हि द्विविधो भवत्यवस्थाभेदेन। यथा स्वमण्डलकार्यं चिन्तयन् यदा वर्तते तदा स राजा इत्यभिधीयते। परमण्डलचिन्तावस्थायां तु स एव विजिगीषुरित्युच्यते।[2]

अत एव राज्ञः विजिगीषोश्च न्यूनाधिकसंख्यया गुणाः पृथक्-पृथक् उक्ताः नीतिसारे। तद्यथा—

क्रोधलोभभयद्रोहस्तम्भचापलवर्जितः॥

---

प्रदानं च प्रदेयानामदेयानामसङ्ग्रहः।
अदण्डनमदण्डयानां दण्ड्यानां चापि दण्डनम्।
अग्राह्यग्रहणं चैव ग्राह्याणां ग्रहणं तथा।
अर्थयुक्तस्य करणमनर्थस्य च वर्जनम्।
न्यायतश्च करादानं स्वयं च प्रतिमोक्षणम्।
समर्थनं प्रधानानां निरस्यानां निराकृतिः।
वैषम्याणां प्रशमनं भृत्यानां चाविरोधनम्।
अविज्ञातस्य विज्ञानं विज्ञातस्य च निश्चयः।
आरम्भः कर्मणां शश्वदारब्धस्यान्तदर्शनम्।
अलब्धलिप्सा न्यायेन लब्धस्य च विवर्धनम्।
परिवृद्धस्य विधिवत् पात्रे सम्प्रतिपादनम्।
अधर्मप्रतिषेधश्च न्यायमार्गेण वर्तनम्।
उपकार्योपकारित्वमिति वृत्तं महीपतेः।

१ तदुक्तं नीतिसारे सर्ग ८ प्र० १२ पृ० १७१ श्लो० ६

सम्पन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः।
जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः॥६॥

२ तदुक्तम्। नीतिसारे तद् व्याख्यायां जयमंगलायाम् ( १७० पृ० अ० ८ श्लो० २ )

रोचते सर्वभूतेभ्यः शशीवाऽखण्डमण्डलः।
सम्पूर्णमण्डलस्तस्माद् विजिगीषुः सदा भवेत्।

सम्पूर्णमण्डलस्तस्माद्विजिगीषुरिति निगमनम्। अत्र राजेति वक्तव्ये विजिगीषुग्रहणं यदा प्रतिष्ठितराज्यो राजा परराज्यं विजीगीषते, तदा विजिगीषुरिति विशेषसंज्ञां लभत इति दर्शनार्थम्। तेनेतः प्रभृति-विजिगीषुरधिक्रियते॥२॥

## जयमङ्गला

यतो वक्ष्यति मण्डलयोनौ—राजा आत्मद्रव्यप्रकृतिसम्पन्नो नयस्याधिष्ठानं विजिगीषुः" (अधि० ६ अध्या० २) इति। अथवा इदमेवाधिकरणं प्रत्यधिक्रियते, साक्षाद् राज्ञो व्यापाराभिधानाद् विनयाधिकारिकस्य। अथवा विद्यासमुद्देशमेव

## जयमङ्गलाक्रोडपत्रम्

परोपतापपैशुन्यमात्सर्येर्ष्यानृतातिगः। इत्यादिना[1]। नी० स० ४

तथा च विद्याविभागादिकर्माणि स्वमण्डलसंबन्धित्वान् नृपेण राजावस्थायां चिन्तनीयानि। विजिगीषावस्थायां तु परमण्डलसम्बधीनि। इत्युक्तविद्याविभागादिकर्म विजिगीषुवृत्तित्वेन कथमत्रोऽच्यते। इति चेन्न।

अर्थशास्त्रानुसारेण पृथिव्याः लाभे पालने च प्रवृत्ततादशायां राजा परमण्डलं स्वायत्तीकर्तुं तदुपायत्वेन स्वमण्डले त्रिवर्गसमृद्धिं सङ्घटनं च कर्तुं यदा वांछति तदा स्वमण्डलचिन्तायां स्थितोऽपि राजा परमण्डलायत्तीकरणस्य उद्देश्यत्वात् विजिगीषुपदेन अत्रापि टीकाकृता राजेति संज्ञया व्यवहृतः इति बोध्यम्।

उक्तासु पञ्चसु सङ्गतिषु चतुर्थी विनयाधिकारिकेण सङ्गतिमाह अथवेदमिति। व्यापाराभिधानात् इति। स्वमण्डलपरमण्डलयोः वशीकाराय विनयः अपेक्ष्यते। तदुक्तं कामनन्दकीयव्याख्यायां जयमङ्गलायाम्[2] द्रष्टव्यम्।

अतः विनयो राज्ञो वृत्तिः इति कृत्वा "राजवृत्तिः" इति सूत्रेण विनयाधिकारिकेण सह सङ्गतिर्बोध्या।

पञ्चसु सङ्गतिषु उक्तासु पञ्चमीं सङ्गतिमाह—विद्यासमुद्देशमिति। समुद्देशं विद्याविभागमिति यावत्। लोके हि तास्ताः विद्यास्तैस्तैर्वर्णैः आश्रमिभिश्च अधीयन्ते। यथा गृहिभिः त्रयी, सन्यासिभिः आन्वीक्षिकी, वैश्यैःशूद्रैश्च वार्ता इति। परन्तु राजवृत्तिः इत्युक्त्या राज्ञा चतस्रोऽपि विद्याः अध्येतव्याः इति विशेषनिर्देशात् राजवृत्तिः इत्यनेन सूत्रेण विद्याविभागस्य सङ्गतिर्बोध्या।

---

१. तदुक्तं नीतिसारीयजयमंगलायाम्।

एते गुणा राज्ञो विजीगीषावस्थायां प्राधान्येन व्याप्रियन्ते। तेन प्रागुक्तायामपि स्वमिसंपदि न पुनरुक्तता दोषः। एवं सति केचित्तत्रानुक्ता अपि इहोक्ताः चित्तज्ञताप्रश्रयभक्तिज्ञत्वादयः। तत्रोक्ता अप्यन्ये कार्यसम्भववशादिह नोक्ताः क्रोधलोभद्रोहवर्जनादयः ॥११॥ इति नी० स० ८ प्र० १२ श्लो० १६

२ आत्मानं प्रथमं राजा विनयेनोपपादयेत्।
ततोमात्यांस्ततो भृत्यांस्ततः पुत्रांस्ततः प्रजाः॥

टी. इदमुक्तं भवति स्वयं विनीतोऽमात्यदण्डपुत्रप्रकृतीरान्तरीः प्रजाश्च बाह्या विनीयानुरज्य सरंक्ष्य चाधिकां श्रियमवाप्नोति १ सर्ग २६ श्लो०

## आन्वीक्षिकीस्थापना
## [ विद्याविभागः ]
### जयमङ्गला

प्रकरणं प्रत्यधिक्रियते प्रसिद्धिनिरासार्थम्। यतः सन्यासिनाम् आन्विक्षिकी, धर्मप्रधानानां गृहस्थादीनां त्रयी विशां शूद्राणां च वार्ता, राज्ञां दण्डनीतिरिति। अत आह-राजवृत्तिरान्वीक्षिकीत्यादि। तेन विनयाधिकारे प्रथमम् अयं विनयो यद् विद्योपासनमिति।[1] शास्त्रसमुद्देशानन्तरं विद्यासमुद्देश उच्यत इति प्रकरणक्रमः। ये तु उद्देशापेक्षया सम्बन्धम् आहुः। यथोद्देशस्तथा निर्देश इति, ते स एवोद्देशः कथमिति प्रष्टव्याः। एताः सर्वा राजवृत्तिः। ताश्चेतरेतरापेक्षाः न पुनस्तदन्यापेक्षाः।

### जयमङ्गलाक्रोडपत्रम्

सन्न्यासिनाम् इति। अयं भावः। इहामुत्रार्थफलभोगविरागादि यथा वेदान्तशास्त्राध्ययनाधिकारितावच्छेदकम् तथा एतदेव आन्वीक्षिक्यध्ययनाधिकारितावच्छेदकम् इति न्यायवार्तिकतात्पर्यपरिशुद्धौ श्रीउदयनाचार्यैः उक्तमस्ति। तद् तत् अभिप्रेत्य सन्यासिनाम् आन्वीक्षिकी इत्यत्र उक्तम्।

विद्योपासनम्

अत्र इदमनुसन्धेयम्। संसारे लोके ज्ञानाभावेन रागतः सर्वेऽपि कुपथ्यं कुर्वाणाः रोगिणो भवन्ति। तेषां चिकित्सा ये विद्यावन्तः तैरेव कर्तुं शक्यते। यदि चिकित्सकाः न भवेयुः तर्हि महान् अनर्थः आरोग्यविषये स्यात्। एवमेव त्रिवर्गसमृद्धिविषयेऽपि यदि तथाविधाः विद्वांसः न स्युः तर्हि महान् अनर्थः स्यात् इति किमु वक्तव्यम्। अतः विद्यानामावश्यकता अनुभवसिद्धा। किञ्च तत्तच्छास्त्रैः गुणदोषविवेचनपूर्वकं किं करणीयं, किं परित्याज्यमिति सम्यक् विधीयते। तज्ज्ञानानन्तरं दोषानवबुद्ध्य अनिष्टकार्यात् निवृत्तिः तथा गुणबुद्ध्या गुणवति प्रवृत्तिः अवश्यंभाविनी इति इदमेव विनयस्थापनम्। अतः अत्र विद्योपासनमेव विनयः इत्युक्तम्। तत्र मूलं नीतिसारवाक्यमपि विज्ञेयम्[2]। तदनेन

### वैदिकसिद्धान्तसंरक्षिणी

विद्याप्रतिष्ठामन्तरा लोकस्थितिर्नैव भवेदित्यादि टीकाव्याख्याने व्यक्तम्। अत आदौ विद्याविभागं तत्प्रतिष्ठापनार्थमाह—

---

१. अशुद्धम्
पासनमिति, शा।

२. नयविक्रमसम्पन्नः सूत्थानश्चिन्तयेच्छ्रियम्।
नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः ॥ २१ ॥
विनयो हीन्द्रियजयस्तद्युक्तः शास्त्रमृच्छति।
तन्निष्ठस्य हि शास्त्रार्थाः प्रसीदन्ति ततः श्रियः ॥२२॥ १ सर्ग ॥

आन्वीक्षिकी[1] त्रयी वार्ता[2] दण्डनीति[3]श्चेति विद्याः[4]॥

## वैदिकसिद्धान्तसंरक्षिणी

आन्वीक्षिकी इति। हेतुविद्येत्यर्थः। नीतिसारे आन्वीक्षिकीशब्दार्थस्य तथा व्याख्यानात्। तथाहि—

आन्वीक्षिक्यात्मविद्या स्यादीक्षणात् सुखदुःखयोः।

ईक्षमाणस्तया तत्वं हर्षशोकौ व्युदस्यति॥

आत्मविद्या भावस्वभावविद्या हेतुविद्येति यावत् इति॥ (नीति० २)

### विद्यास्वरूपम्

तथाच आन्वीक्षिकी यथावद्यथार्थज्ञानभाव्यकभावनाकरणभूता सन्देहनिरसनसमर्था प्रमाणादिविचारविद्या, सा न्यायवैशेषिकलोकायतसमूहात्मिका इत्यर्थः। त्रयी पुरुषागोचरादृष्टज्ञानभाव्यकभावनाकरणभूता फलसाधनसमर्था लोकविश्वासाधायिका विद्या वेदपुराणाङ्ग-मीमांसा-धर्मशास्त्रसमष्टिरूपा। वार्ता—धर्माविरोधिविद्याभूम्याद्यर्थज्ञानभाव्यकभावनाकरणभूता जीवनहेतुः पाशुपाल्यकृषिवणिज्यासमुदायात्मिका। दण्डनीतिः—समस्तविद्याप्रवचनाचरणप्रबोधन-प्रचारणहेतुः पृथिव्या लाभपालनवर्धनसत्पात्रप्रतिपत्तिज्ञानभाव्यिका लोकानुरागाधायिका। चकारात् इमा धर्मार्थज्ञानविद्याः परस्परसापेक्षत्वात् चतस्रोऽपि राज्ञाऽध्येतव्या इति ज्ञापयति। तथाच प्रकृते 'च'शब्दो नानुक्तसमुच्चयार्थकः[5]। एतासां तत्तज्ज्ञानभाव्यकत्वं

---

नी०टी० १. प्रत्यक्षपरोक्षाभ्यामीक्षितस्याऽनु पश्चादीक्षणमन्वीक्षा। तच्चानुमानं तत्प्रयोजनं यस्याः सा आन्वीक्षिकी न्यायविद्या।

,, २. वृत्तिरेव वार्ता जगद्वृत्तिहेतुत्वात् कृष्यादिका।

,, ३. दण्डो वधादिकस्तस्य नीतिः प्रणयनं दण्डनीतिः।

,, ४. विद्यते चतुर्विधः पुरुषार्थो·········यकाभिस्ता विद्या राजविद्याः। राजवृत्तिः। राजविद्या पाठः।

५. उक्तसमुच्चयार्थकत्वं चशब्दस्य भवतीति मञ्जूषायां व्यक्तम् (मञ्जूषायां निपातार्थ निरूपणे पृ० ५८)

यद्वा समुच्चितश्चार्थः। स्वभावतश्चाद्युपस्थाप्यस्य असत्वभूतत्वम्। तदुक्तम्।

समुच्चिताभिधाने च व्यतिरेको न विद्यते। इति।

कु० टी० व्यतिरेकः—पृथगर्थोपस्थापकता। इति।

## वैदिकसिद्धान्तसंरक्षिणी

"ताभिर्धर्मार्थौ यद्विद्यात् तद्विद्यानां विद्यात्वमिति" वक्ष्यमाणमूलस्थवचनात् स्फुटीभवति। तस्य प्रयोजनं, इतरकर्मविद्याव्यावृत्तिः चतसृभ्यो विद्याभ्य इतरत्र कर्मविद्यायां ज्ञानविद्यात्वप्रतिषेधस्य जयमङ्गलायामुक्तत्वान् नीतिसारे तथा अभिधानाच्च। तद्यथा—

"विद्याभिराभिर्निपुणं चतुर्वर्गमुदारधीः।
विद्यात्तदासां विद्यात्वं विद् ज्ञाने निगद्यते[१] इति ॥१७॥

विद्यानां क्रमाभिधाने तात्पर्यम्।

ननु आन्वीक्षिकी त्रयी वार्ता दण्डनीतिरिति क्रमेणाभिधानं इच्छामूलं किञ्चिदभिप्रायकं वेति सन्देहे किञ्चिदभिप्रायकमिति निर्णीयते। विद्याविचारहेतुत्वात् धर्मस्य प्रधानत्वात् जीवनहेतुत्वाद्विघ्ननिवारणार्थत्वाच्चेति नीतिसारव्याख्यायां टीकाकृदुक्तं अत्रानुसन्धेयम्[२]।

तथाचाभ्यर्हितं पूर्वमिति न्यायेय विचारस्य सर्वापेक्षयाऽभ्यर्हितत्वात् आदौ आन्वीक्षिकी। ततो जीवनयात्रार्थं धर्मस्याभ्यर्हितत्वात् त्रयी। ततो जीवनस्य कर्तव्यतया अभ्यर्हितत्वाद्वार्ता। विघ्नप्रादुर्भावमात्स्यन्यायोः परिहाराय दण्डस्याभ्यर्हितत्वाद्दण्डनीतिरिति भावः। विभाज्यतावच्छेदकधर्ममाह विद्या इति। एतत्पदनिर्वचनं अग्रे स्वयमेव वक्ष्यते मूलकर्त्रा। विभाजकधर्माः स्वव्याप्यत्वेसति स्वव्याप्याव्याप्या अवश्यं भवन्ति। अत्र व्याप्यत्वं सर्वत्र न्यूनवृत्तित्वं ग्राह्यम्। तेन नासम्भवः।

## जयमङ्गलाक्रोडपत्रम्

चतसृसु विद्यासु नीतित्वम्।

(मूले) ननु अर्थशास्त्रेषु समादृतानां विद्यानां राजवृत्तित्ववन् नीत्यन्तर्गतत्वान् नीतित्वमपि आवश्यकम्। तत् अन्तकथम् ? इति चेत्। अभिधीयते।

नीतित्वं हि प्रत्यक्षादिप्रमाणत्रयेण फलसाधनत्वं यत्र निर्णीयते तत्र संभवतीतिनीतिलक्षणविचारे वैदिकसिद्धान्तसंरक्षिण्यामभिहितम्। तदनुसारेण तिसृषु आन्वीक्षिक्यादिविद्यासु प्रमाणत्रयसमन्वयेन फलसाधनत्वे साधिते नीतित्वं सिद्धं भवति। तथाहि—

---

१ "विदज्ञान इति लाभाद्यर्थकधातुव्यवच्छेदात् आन्वीक्षिक्याद्या ज्ञानविद्या इति दर्शयति। एवं च ज्ञानविद्याधिकारात् सत्योऽप्यन्याः कर्मविद्या व्यापारव्यायामप्रयोजना नोक्ताः"। इति।

२. "तत्र सर्वविद्याविचारहेतुत्वात्प्रधानतमा आन्वीक्षिकी। ततो धर्मस्य प्रधानत्वात् तद्व्यवस्थापनार्थं त्रयी। व्यवस्थापितधर्मस्य लोकस्य जीवनहेतुर्वार्ता। तासु प्रवर्तमानासु तद्विघ्ननिवारणार्थं दण्डनीतिः"। इति। (नी० २-२)

## जयमङ्गलाक्रोडपत्रम्

तत्रादौ आन्वीक्षिक्यां फलसाधनत्वं शब्दप्रमाणेन प्रमितम् कथम् अस्तीति विविच्यते। योगीश्वरेण हि त्रय्यन्तर्गताः विद्याः धर्महेतवः इति निर्णीतम्। तदुक्तम्—

पुराणन्यायमीमाँसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाःस्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इति।

सामान्यतया पुराणन्यायादित्रय्यन्तर्गतविद्यानां धर्महेतुत्वमात्रकथनेन विना आन्वीक्षिकीं तद्धेतुत्वं विवेक्तुन्न शक्यते। तदुक्तं-"बलाबले चैतासां हेतुभिरन्वीक्षमाणा लोकस्योपकरोति" इति। ( अ० १ अर्थ० ) तदिदं आन्वीक्षिक्या विचार्यमाणं हेतुत्वमपि शब्दप्रमाणाधीनमेव। तद्यथा—

हेतुत्वं कार्यनिरूपितकारणत्वं तस्य परिष्कृतं स्वरूपम् अनन्यथासिद्धत्वे सति नियतपूर्ववृत्तित्वम्। इदमेव लाघवान्यथानुपपत्त्यन्वयव्यतिरेकसहचारादिसाहचर्येण आन्वीक्षिक्या निर्णीयते। तत्रापि अनन्यथासिद्धत्वं शब्दप्रमाणं विना निर्णेतुं न शक्यते, "यत्र यत्र प्रामाणिकानाम् अकारणत्वव्यवहारः तत्तद्भिन्नत्वमनन्यथासिद्धत्वम्" इति अभियुक्तैः तस्य परिष्करणात्। एवं च प्रामाणिकानां अकारणत्वव्यवहारः अन्यथासिद्धत्वे नियामकः इत्यायातम्। यदि च प्रामाणिकत्वविषय एव केनचित् सन्देहः उपस्थाप्येत तर्हि कारणत्वविर्णय एव दुःशकः स्यात्। अतः यत्र सन्देहः प्रामाणिकत्वविषये नास्ति तस्य प्रामाणिकस्य निर्णयः आदौ कर्तव्यो भवति। स च यत्र पुरुषसम्बन्धो भवति तत्र भ्रमप्रमादादिदोषसंभवात् इदमित्थमिदमेवेति निर्णयः कर्तव्यः केनन्। तस्मात् पुरुषसम्बन्धरहिता अनादितः प्राप्ता फलोपधायिका या परंपरा तस्या एव प्रामाणिकत्वं स्वीकृत्य तदनुबन्धितया हेतुत्वम् आन्वीक्षिक्या निर्णीयते। तेनैव च पूर्वपरंपरायां सफलतां दृष्ट्वा भविष्यत्कालेऽपि अनेन कारणेन अमुकं फलम् इतरसामग्रीसाचिव्येन अवश्यं सेत्स्यति इति दार्ढ्येन वक्तुं शक्यते।

सोऽयम् अनादिपरम्पराप्राप्तः प्रामाणिकव्यवहारः पूर्वपुरुषमनपेक्ष्य पुरुषसम्बन्धाभाववान् कर्णोपकर्णिकया वेदतदनुयायिशब्दप्रमाणमाधारीकृत्य प्राप्तः इति तदनुगामामिन्या आन्वीक्षिक्या विचार्यमाणस्य हेतुत्वस्य शब्दप्रमाणप्रमितत्वात्, तदुपजीव्यभूतायां तस्यां वर्तमानं फलसाधनत्वं शब्दप्रमाणेन प्रमितमिति सिद्धम्।

अथ प्रत्यक्षानुमानाभ्यामपि तत् साधयितव्यमस्ति। तदपि लोकसिद्धमेव। यथा—आयुर्वेदादौ परस्परविरुद्धतया उपलभ्यमानानामनेकेषां वचनानामान्वीक्षिक्या समन्वयं कृत्वा आरोग्यसाधनत्वमायुर्वेदादिशास्त्रतात्पर्यविषयीभूतेष्वर्थेषु निर्णीय वैद्यैः कृतायां चिकित्सायां फलपर्यवसायित्वम् अनेकपरम्परायां दृष्टं दृश्यते च।

एवं च अन्वयव्यतिरेकाभ्यां अपि फलपर्यवसायिसाधनत्वं सर्वशास्त्रविचारोपजीव्यभूतायां आन्वीक्षिक्यां प्रमितमस्तीति सिद्धमेव। तस्मात् अस्यां विद्यायां प्रमाणत्रयमाधारीकृत्य फलसाधनत्वस्य साधनात् नीतित्वं निर्विवादमेव।

## जयमङ्गलाक्रोडपत्रम्

एवमेव त्रय्यां फलसाधनत्वं "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यम्आप्त-प्रामाण्यात्" इति गौतमेन महर्षिणा न्यायसूत्रे निर्दिष्टम्। तेन त्रयीनिष्ठं फल-साधनत्वं शब्दप्रमाणप्रमितमस्ति। अथ अन्वयव्यतिरेकाभ्यां प्रत्यक्षेण च फलसाधनत्वं त्रय्यां कथं निर्णीतमिति चेत् तदपि सिद्धमेव तथाहि-समस्तेषु आयुर्वेदादिद्वारकेषु वैदिकविधिव अदृष्टसाधनेष्वपि विधिषु दृष्टफलपर्यवसायित्वम्. कथमिति "शांति का अग्रदूत" इत्यस्मिन् ग्रन्थे सूचितमस्ति। तत एव द्रष्टव्यम्[1]।

तस्मात् त्रय्यामपि फलसाधनत्वस्य प्रमाणत्रयेण सिद्धत्वात् नीतित्वं दुर्निवारम्।

वार्तायां हि कृषिकर्म, पशुपालनकर्म, वणिज्याऽऽदि अमुकनक्षत्रे, अमुकयोगे, अमुककरणे, अमुकतिथौ कृतं चेत् सफलं भवति। इत्यादि विहितमस्ति। तदुक्तम्—सीताध्यक्षप्रकरणे—"सूर्यस्य प्रकृतिवैकृताच्च बीजसिद्धिः, बृहस्पतेः स्थानगमनगर्भा-धानेभ्यः सस्यानां स्तंम्बकारिता। शुक्राद्वृष्टिरिति" इति। तैस्तैः विधिभिः तेषु तेषु राशिषु संस्थितबृहस्पतिसूर्यशुक्रगमनादिभिः सस्यफलोपधायकत्वं यदुच्यते कौटिल्येन, वेदमन्तरा तत्केन प्रमाणेन ज्ञातम्? तत्तन्मूलभूतस्य अपौरुषेयस्य वेदस्य अभावे इदंप्रथमतया कथम् वा अवगतं स्यात्? अदृष्टद्वारभूते फलसाधनत्वे इतर-प्रमाणानाम् अनधिकारात् तस्मात्। वार्ताविद्यायां वर्तमानं फलसाधनत्वं शब्दप्रमाणेन

---

१ तद्यथा—इस पर कोई ऐसा शंका सहज ही उठा सकता है कि "अदृष्ट से प्रत्यक्ष का मेल कैसे बैठ सकेगा? इसका उत्तर यह है कि ऊपर ऊपर देखने में जो अदृष्ट दृष्टगोचर नहीं हो पाते उसके बारे में 'वेदान्तसूत्रमुक्तावली' के मर्म पर ध्यान देना चाहिए। उसमें कहा है कि अदृष्ट सर्वथा अदृश्य नहीं होता, कुछ अवस्था में वह दृश्य कोटि में भी आता ही है। इसका स्पष्ट तात्पर्य यों समझ सकते हैं—अग्निहोत्र में शुद्धरूप से प्रदत्त आहुति जलरूप धारणकर सूर्यमण्डल में प्रवेश करती है। इसके ही सहारे पंचभूतों की सूक्ष्म मात्राएँ वृष्टिरूप से पृथ्वी पर और पृथ्वी से अन्न में प्रविष्ट होती हैं। इस प्रकार अन्न द्वारा पुरुष के शरीर में पहुँचकर वही मात्राएँ रस, रक्त, धातुरूप में परिणत हो जाती हैं और वहाँ से स्त्री के उदर में पहुँचकर वही आहुति पिण्ड-गर्भरूप धारण कर लेती है।

इसे यों समझें कि नवनिर्मित होनेवाले शरीर एवं मन में यदि बल, पुष्टि, स्फूर्ति, संस्कार, धारणा मेधा, तुष्टि आदि गुणों का संग्रह बढाना अभीष्ट हो तो संस्कारों द्वारा आहुति की शुद्धि संरक्षित रखनी ही होगी। इस प्रकार यह बात स्पष्ट हो गयी कि जल के रूप में भिन्नता न रखने के कारण ही अदृष्ट प्रत्यक्ष रूप में आ सका। मतलब यह कि इससे नीति के लक्षण में कोई विघात नहीं आता। यही बात भगवान् कृष्ण ने गीता में कही है—"तत्र तं बुद्धिसयोगं लभते पौर्वदेहिकम्।"

## जयमङ्गलाक्रोडपत्रम्

प्रमितम् इति निश्चप्रचम्। वेदप्रमाणेन उक्तसाध्यसाधनभावं वार्ताविद्यया ज्ञातवतां सस्यफलोत्पत्तिः वार्ताशास्त्रोक्तविधानानुसारेण तत्तत्समये कृते आवापे भवति अन्यथा नेति प्रत्यक्षसिद्धत्वात् शब्दप्रमाणेन प्रमितं वार्तानिष्ठं फलसाधनत्वम् अन्वय-व्यतिरेकाभ्यामपि सुग्रहमेव। तस्मात् नीतित्वं वार्तायामपि आन्वीक्षिकी-त्रयी-विद्ययोरिव निर्विवादम्।

राजनीतिशास्त्रविद्यायामपि नीतिलक्षणलक्षितत्वमस्तीति तु प्राङ्निर्दिष्टम्। पुनरत्र प्रकारान्तरेणापि नीतिलक्षणघटकेषु प्रमाणत्रयेषु उक्तशब्दप्रमाणप्रमितत्वं विमृश्यते। तथाहि—राजवृत्तिः अर्जन-वर्धन-पालन-सत्पात्रप्रतिपत्तिरूपा भारतीय-राजनीतिशास्त्रपरा तदा भवति यदा सा न्याय्या भवति। अत्रत्यो न्यायपदार्थश्च 'मन्वाद्युपदिष्टः परिपालनोपायः', इतिस्वरूपतया नीतिसारव्याख्यायां जयमङ्गलायां "न्यायेनार्जनमर्थस्ये" त्यस्य व्याख्याने व्याख्यातः। तत्र मन्वाद्युपदिष्टत्वाभावे परिपालनोपायत्वम् कस्यां राजवृत्तौ अस्तीति असर्वज्ञदुर्ज्ञेयम् संभवति। स्वबुद्ध्या-कदाचित् निर्णीतेपि परिपालनोपायत्वे अनौचित्यमपि स्यात् तन्मा भवतु इत्येतदर्थम् मन्वाद्युपदिष्ट एव परिपालनोपायः अर्थार्जनाय राजवृत्तित्वेन सङ्गृहीतः। अतः राजनीतिशास्त्रे वर्तमानं उक्तफलसाधनत्वं शब्दप्रमाणप्रमितम्।

शब्दप्रमाणप्रमितेऽपि अर्थे पतिमरणानन्तरं सहगमनादौ, राजनीतिशास्त्रेण प्रतिज्ञातस्य परिपालनस्य अभावे तथाविधा सहगमनादिवृत्तिः अनेन शास्त्रेण न अनुमन्यते। अतः अन्वयव्यतिरेकाभ्यां सद यत्र शब्दप्रमाणप्रमितम् परिपालनोपायवत्वं निर्णेतुं शक्यते, तत्त स परिपालनोपायः मन्वाद्युपदिष्टः, प्रत्यक्षानुमानाभ्यां निर्णीतश्च कीदृश इत्येतद् विद्यया निरूप्यते। तस्माद् अनेनापि प्रकारेण राजविद्यानिष्ठं फल-साधनत्वंन्नीतिलक्षणघटकेन प्रमाणत्रयेण समन्वितत्वात् नीतिरूपमेव। इति चतसृणां विद्यानां नीतित्वं पुष्कलमेव।

टीकायां प्रकरणक्रमः—इति। सङ्गतिरित्यर्थः। तत्त्वं च अनन्तराभिधानप्रयो-जकजिज्ञासाजनकज्ञानविषयसम्बन्धत्वम्। सा च प्रकृते शास्त्रसमुद्देशविद्यासमुद्देशयोः हेतु-हेतुमद्भावो बोध्यः।

सर्वा इति। सर्वाः चतस्रो विद्याः। एताः सर्वा अपि राज्ञा अनुष्ठेयत्वात् राजवृत्तिरिति व्यपदिष्टा भवन्ति। सा कथमनुष्ठेया अत आह ताश्चेति।

इतरेतरापेक्षाइति। आन्वीक्षिकीविद्यायाः फलम आत्मविज्ञानम् कार्यकारण-भावविज्ञानम्। कारणत्वनिर्णयोऽपि अपौरुषेयवेदादिनिर्णयम् विना स्थिरतया कर्तुं न शक्यते इत्यपि प्राग् आवेदितमेव। अतः आन्वीक्षिक्याः त्रयीसापेक्षत्वं भवति। तथैव त्रय्यन्तर्गतपदार्थानां बलाबले त्रयीतात्पर्यविषयत्वं च कुत्रास्तीति विना सद्धे-तुत्वनिर्णयं परिज्ञातु न शक्यम्। अतः त्रयीं प्रति आन्वीक्षिक्याः अपि सापेक्षत्वमस्ति। एवमेव अपरयोः विद्ययोरपि प्रागुक्तं सापेक्षत्वं स्मर्त्तव्यम्।

## जयमङ्गला

अत एव ज्ञानविद्याधिकाराद् अन्या विद्याः सत्योऽप्यस्मिन् प्रकरणे नोक्ताः । तेन चतस्र

## जयमङ्गलाक्रोडपत्रम्

ज्ञानविद्याधिकारात् इति । टीकाकृता विनयो विद्योपासनं इत्युपरि निर्दिष्टमस्ति, तेन ज्ञानं तत्तद्विद्याध्ययनभावनायाः भाव्यमस्तीति स्फुटीकृतम् । तथा च चतसृणां विद्यानामवस्थाभेदेन ज्ञानभाव्यकत्वम् भवति इति सिद्धम् ।

ननु चतुर्विद्यातिरिक्तविद्यानां भाव्यं किं ज्ञानं नास्ति ? यदि नास्ति इत्युच्यते तर्हि विना ज्ञानं तत्तद्विद्योक्तानि कर्माणि कथमनुष्ठेयानि भवेयुः ?

किंच यद्येतासां चतसृणां विद्यानां भाव्यं केवलं ज्ञानमेव भवेत् तर्हि अनुष्ठानं विना तदधीतं ज्ञानं वा व्यर्थमेवापद्येत । तत्रापि नीतिस्तु न अनुष्ठिता अकिंचित्करा ।[1] इतिचेद् अत्र उच्यते —

एतासां विद्यानां भाव्यं ज्ञानमस्तीति प्राङ्निर्दिष्टं तस्य नेदं तात्पर्यं यत् ज्ञानमात्रेणैव विश्रामः । अपितु तत्तद्विद्याप्रतिपादितकर्मणोऽपि आवश्यकता फलत्वेन अस्त्येव तथैव व्यायामादिविद्यानामपि भाव्यं यथा कर्म तथा ज्ञानमपि अस्त्येव । तथासति एतासां ज्ञानभाव्यकत्वं कीदृशमिति स्फुटी क्रियते ।

एतासां विद्यानां राजवृत्त्यन्तर्गतानामध्ययनं राज्ञा षोडशवर्षात् प्राक् कार्यमिति सिद्धान्तः अत्र कृतः । तदुक्तम् "ब्रह्मचर्यञ्चाषोडशाद् वर्षादिति" तस्मिन्नध्ययनसमये अध्ययनं तथा अपेक्ष्यते यत्र कामसम्बन्धस्य उद्बोधो न भवेत् । कर्मविद्याः या वर्तन्ते तासु कामसम्बन्धस्य उद्बोधसम्भवात् षोडषवर्षात् प्रागवस्थायां कामसंबद्धकर्मजनकं विद्याध्ययनं निषिद्धम् । अर्थात् अर्थशास्त्रं आन्वीक्षिकीत्रयी वार्तानां अध्ययनसमये ब्रह्मचारिणः पुरतः धमार्थज्ञानमेव भाव्यत्वेन निर्देष्टव्यं भवति[2] इति निर्दिशति ।

तदेवाह कालिदासोपि—

'शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् । इति रघुवं १ सर्ग

---

१. तदुक्तम् जितेन्द्रियस्य नृपतेर्नीतिमार्गानुसारिणः ।
भवन्ति ज्वलिता लक्ष्म्यः कीतर्यश्च नभःस्पृशः ।। इति श्लोक व्याखयायां—नीतिश्चाप्रयुज्यमाना न फलदेति मार्गग्रहणम् । नीतिप्रयोगानुसारिण इत्यर्थः । ( नी० स० १ )

२. धर्मार्थौ यद्विद्यादिति ।
'ब्रह्मचर्यमेव त्वा विद्याग्रहणात् ।।६ । ( कामसूत्रे )
तद् व्याख्यायां—यावद् विद्या न गृह्यते तावत्कामन्न सेवेत, अन्यथा ह्यधर्मः, तद् ग्रहणविद्यातः, विद्यार्थलाभाभावश्च ।" इत्यर्थचिन्तकाः" ( १ अ० २ अध्याये ६ सूत्रे ) इतिग्रन्थेन ब्रह्मचर्यावस्थायां अधीयमानस्यार्थशास्त्रस्य भाव्यं धर्मार्थज्ञानमेवास्तीति अभिप्रायः अर्थशास्त्रस्य प्रकटीकृतः ।

## जयमङ्गला

एव त्रिभिरध्यायैः समुद्दिश्यन्ते। तत्र सर्वविद्याप्रचारहेतुत्वात्[2] पूर्वमान्वीक्षिकी। वर्णाश्रमाणां धर्मकर्मव्यवस्थापनाद् इतराभ्यां प्राक् त्रयी। प्रजाजीवनहेतुत्वाद् दण्ड-

## जयमङ्गलाक्रोडपत्रम्

### विद्यानां निन्दास्तुतिबोधकवाक्यसमन्वयः

ननु आन्वीक्षिक्यादिविद्यानां क्वचिन् निन्दापि श्रूयते। तदुक्तम्—'हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्' इत्यादि। अत्र तु विद्याध्ययनं विधीयते। एवं सति कथमनयोः समन्वयः? इति चेत्, महामीमांसकैः; श्री भास्कराचार्यैः स्वलेखे नित्याषोडशिकार्णवसेतुबन्धव्याख्याने एतद्विषयकः समन्वयः निर्दिष्टः। स एवात्र चिन्त्यः। तत्रावस्थावयोभेदेन प्रवृत्तिनिवृत्त्यर्थं विद्याध्ययननिन्दास्तुती बोध्ये[1]। इत्युक्तम्।

**विचारहेतुत्वादिति**—अत्रेदं बोध्यम्। नीतिसारव्याख्यायां सर्वविद्याविचार-हेतुत्वात् प्रधानतमा आन्वीक्षिकी इति द्वितीयसर्गे तृतीयप्रकरणे विद्याविभागे उक्त-त्वात् सर्वविद्याविचारहेतुत्वात् इति पाठो युक्तो भाति।

---

१. एवं ततश्च जगदाप्तपरमशिवप्रणीतत्वाविशेषेण सर्वासां विद्यानामधिकारिभेदेन प्रामाण्यमेवेति स्पष्टं सूतसंहितादौ। अधिकारश्च यथा नास्तिकानामेवार्हतादिदर्शनेषु, त्रैवर्णि-कादेरेव वैदिकमार्गेषु इति पुरुषभेदेनैव व्यस्थितस्तथैकस्यापि पुरुषस्य चित्तशुद्धितारतम्यादपि कश्चिद्व्यवस्थितः। वर्णभेदेनेव आश्रमभेदेनापि धर्मव्यवस्थादर्शनात्। एवञ्च यानि तत्तद्विद्या-प्रशंसकानि वचनानि तानि तत्तदधिकारिणं प्रत्येव प्रवर्तकानि। यानि च तन्निन्दकानि तानि तत्तदनधिकारिणं प्रति निवर्तकानि न पुन "नहि निन्दा" न्यायेन विधेयस्तावकानि। अतिबाल्य-दशायां बालकीड़नके प्रवर्तयतामेव पित्रादीनां तस्यैवाध्ययनाधिकारे तादृशक्रीडायां ताड़नकर्तृत्व-दर्शनात्।

तदयं मथितोऽर्थः, जातमात्रस्य त्रैवर्णिकस्य क्रीडाधिकारे निवृत्ते अक्षराभ्यासः, ततश्छन्दो-भाषाज्ञानार्थं काव्याध्ययने प्रवर्तकान्यदोषं गुणवत्काव्य" मित्यादीन्यग्निपुराणवचनानि। व्युत्पन्नस्य "काव्यालापांश्च वर्जयेदि"ति निषेधः। काव्याध्ययनजन्यप्रयोजनस्य जातत्वेनोत्तर-भूमिकायामेवावतारात्तां विहाय पूर्वभूमिकायामेवायुःक्षपयतोऽनिष्टं भवतीति तदर्थः। ततो देहाद्यतिरिक्तत्वेनात्मनो ज्ञानार्थं न्यायशास्त्राध्ययने विधिः "शुष्केनात्मानमन्विछे" दित्यादिः। शुष्कं हेतुः, अवयवसमुदायात्मकन्याय इति यावत्। देहादिभिन्नत्वेनामुष्मिकयातायातक्षमतया आत्मनि ज्ञाते तु तादृशफलककर्मस्वधिकारादा "न्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिका" मित्या-दयो निषेधाः पूर्वभूमिकां निषेधन्ति। "धर्ममेवाचरेत्प्राज्ञ" इत्यादिविधय उत्तरभूमिकायां प्रवर्तयन्ति। यदुपयोगित्वेन पूर्वमीमांसायां वेदे कर्मकाण्डस्य चाध्ययनम् तेन धर्मार्थकामेषु साधितेषु चतुर्थपुरुषार्थलिप्सया पूर्वभूमिकात्यागाय "नास्त्यकृतः कृतेनेति कर्मनिन्दा।" (सेतुबन्ध व्याख्या)।

२. विद्याविचारहेतुत्वात् पाठान्तरं वा।

[ तद्विषये मतभेदाः स्वमतं च ]

**त्रयी वार्ता दण्डनीतिश्चेति मानवाः[1] त्रयीविशेषो[2] ह्यान्वीक्षिकीति ।**

## जयमङ्गला

नीतेः प्राग् वार्ता । दण्डनीतिस्तु राजवृत्तित्वे प्रसिद्धैव सती सादृश्यार्थम् इतराभिः सहानूद्यते । इतिशब्दो व्यवच्छेदार्थः ।

## जयमङ्गल क्रोडपत्रम्

अथवा सत्वबुद्धिक्रियावैशारद्यञ्च करोति इत्यग्रिममूलचिन्तने यथाश्रुतः विद्याप्रचारहनुत्वादिति पाठोपि युक्त एव ।

**प्रसिद्धैव सतीती**—प्रकृते च आन्वीक्षिक्यादिविद्यात्रयस्य राजनीत्या सह साहचर्यं प्रदर्श्य उक्तविद्यासहिता राजनीतिः राजवृत्तिः इत्याकारको विधिः अत्र पर्यवसन्नः । अस्मिन् पर्यवसिते विधौ अपूर्वविधित्वम् राजनीत्यध्ययने न सम्भवति । राज्ञा राजनीतिः अध्येतव्या इत्यध्ययनविधेः ज्ञातत्वात् । किन्तु 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति" त्यत्र अपूर्वविधित्वम् यथा लौहित्ये पर्यवस्यति तथा आन्वीक्षिक्यादिविद्यासु तिसृषु उक्तविधेः अपूर्वत्वं भवति । तेन यथा राजनीतिः अध्येतव्या राज्ञा तथा आन्वीक्षिक्यादितिस्रो विद्याः अध्येतव्याः इति विधौ तात्पर्यम् मूलकर्तुः । इत्यस्य टीकाग्रन्थस्य भावः ।

ननु आन्वीक्षिक्यादिविद्यानां पूर्वं पूर्वं क्रमेण प्राधान्यं यदि अस्ति तर्हि बालकाः तत्क्रमेणैव कुतो नाध्याप्यन्ते ? इति चेत् सत्यम् । बालकानां प्रतिभावैभवं दृष्ट्वा अध्ययनक्रमः समयं विभज्य कल्पनीयो भवति । अतः विद्यानामध्ययने पौर्वापर्यक्रमः विपरिवर्तनीयोऽपि भवति । अत्र इदं तत्त्वम्—राजपुत्राः षोडशवर्षपर्यन्तम् बुद्धेः अष्टगुणेषु इदमित्थमिति निर्णयसमर्थेन ग्रहणात्मकगुणेन संपन्ना यथा भवेयुः तथा चूडाकरणानन्तर समयं वर्षावधिञ्च विभज्य आन्वीक्षिक्यादीनां चतसृणां विद्यानामध्ययनक्रमः कल्पनीयः इति मूलोक्तेन पञ्चमाध्यायेन स्फुटीभवति । स सर्वोऽपि क्रमः यथावत् निरूपयिष्यते ।

## श्रीमूला

तत्र मनुशिष्याणां पक्षमाह त्रयीत्यादि । आन्वीक्षिकी त्रयीविशेषो हि त्रय्यनुगामितया त्रय्यर्थविचाररूपतया च त्रय्याः प्रकार एव, न विद्यान्तरमित्यर्थः । तत्र त्रय्यनुगामिनी आन्वीक्षिकी सांख्ययोगतर्कशास्त्राणि, अन्या तु पूर्वोत्तरमीमांसे । आह च कामन्दकः —

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणञ्च त्रयीदं सर्वमुच्यते ।। इति ।।

---

नी०टि० १. मनोः शिष्याः ।
२. स्वमते हेतुवचनमिदम् । आन्वीक्षिकी तर्कः, स च त्रय्यनुगतो न्यायविद्या.... ।

## वैदिकसिद्धान्तसंरक्षिणी

येषां मते आन्वीक्षिकीत्वादयो न तथाविधाः तेषां मतं निर्वक्तुमाह त्रयीति। विद्या इति शेषः। अग्रेपि वचनविपरिणामेन विद्यापदं योज्यम्। "मानवा" मनोः शिष्याः न तु मनुः इति केचिदाचक्षते। टीकाकृतस्तु मानवानां यन्मतं तन्मनोरि त्याहुः। अत्रेदन्तत्वम् पुरुषागोचरादृष्टतत्साधनधर्मज्ञानभाव्यकभावना-करणत्वं यस्यां विद्यायां सा त्रयीति प्रागवोचाम। तथाविधं करणत्वं साधकतमत्वं तत् त्रय्याम्समन्वेति। यदि तदेव साधनतावच्छेदकसाधारणं स्वीक्रियते तर्ह्येतत् करणत्वं त्रयीतिकर्तव्यतारूपायामान्वीक्षिक्यामभ्यर्हिततमायां अपि वर्तते। एवं स्थिते आन्वीक्षिकी त्रय्यामन्तर्भवति। अतोऽत्र विषये मनोरारभ्य तच्छिष्यपरम्परायां नास्ति मतभेदः इति टीकाकृदाशयोऽवगन्तव्यः। तेन मनुविहितमान्वीक्षिक्यध्ययनमुपपन्नं भवति। एवमेवाऽग्रेपि तत्तद्भाव्यकभावनाकरणत्वं करणतावच्छेदकसाधारणमादाय तसां तासां विद्यानामन्तर्भावस्तत्र तत्र वोध्यः।

अथ पूर्वोक्तम् केषाञ्चिन्मतं विमृश्यते। तथाहि—सृष्ट्यारम्भे जगत्पालन-स्थितिहेतुभूतानां सर्वासां विद्यानां समावेशो यत्र तं लक्षाध्यायात्मकं ग्रन्थं

## जयमङ्गला

अत्राचार्याणां विप्रत्तिपत्तिः। मनोः स्मृतिकारस्य मतम्। शुष्कतर्कस्तावद् विद्याविरोधाद् अविद्यैव। तद्यथा—

## जयमङ्गलाक्रोडपत्रम्

### आचार्याणां विप्रतिपत्तिः

अर्थशास्त्रकर्तुः चाणक्यस्य मतेन आन्वीक्षिक्यादिविद्यानां चतसृणामपि पृथक् पृथक् अध्ययनं तत्तत्फलसिद्ध्यर्थं आवश्यकमस्तीति निर्णीतम्। अत्र विषये आचार्याणां मतभेदं प्रस्तौति—अत्रे ति। आचार्याणां मतस्य विवेकार्थं आन्वीक्षिक्या-दिविद्यानां यथावल्लक्षणं वैदिकसिद्धान्तसंरक्षिण्यामुक्तमस्ति। तच्चैवम्—यथावत्—सर्वविद्यातात्पर्यविषयीभूतयथार्थज्ञानभाव्यकभावनाकरणविद्यात्वमान्वीक्षिकीत्वम्। पुरुषागोचरादृष्टज्ञानभाव्यकभावनाकरणविद्यात्वं त्रयीत्वम्। विद्याभूम्याद्यर्थज्ञान-भाव्यकभावनाकरणविद्यात्वं वार्तात्वम्। अर्जनादिचतुर्विधराजवृत्तज्ञानभाव्यकभावना-करणविद्यात्वं राजनीतिविद्यात्वमिति। तत्र त्रय्यामान्वीक्षिक्यन्तर्भाववादिनां मानवानां तात्पर्यमुच्यते। मनुः सामान्यतया आन्वीक्षिकीं न मनुते इति न—

"त्रैविद्येभ्यस्त्रयीं विद्यां दंडनीतिञ्च शाश्वतीम्।
आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः॥ अ० ७, ४३

इति ग्रन्थेन आन्वीक्षिक्यध्ययनविधानात्। अतः मनुः धर्मज्ञानार्थम् आन्वी-क्षिक्याः उपासना कर्तव्या, इति विदधाति। यद्यप्यत्र धर्मज्ञानार्थं इति कण्ठतः नोक्तं

## जयमङ्गलाक्रोडपत्रम्

तथापि मनुप्रणीतशास्त्रस्य धर्माधिकारिकत्वमस्तीति कामसूत्रेण अवगम्यते[1]— ( १ अध्याये १ अधिकरणे ५, ६ सू० )

तस्मात् धर्माधिकारिकसमाख्यया आन्वीक्षिक्यध्ययनं धर्मज्ञानार्थमस्तीति मनोराशयः। सन्यासिभिः आन्वीक्षिक्यध्ययनं यत् क्रियते तत्तु न धर्मज्ञानार्थम् किन्तु आत्मज्ञानार्थमतः सन्यासिभिः अधीयमानानायाः आन्वीक्षिक्याः अध्ययनं कर्तव्यम् इति मनुना यदुक्तम् तत्सार्थकमेव। अतएव वेदाध्ययनमात्रेण यथावद् धर्मज्ञानं न भवतीति हेतुना मीमांसकैः मीमांसायाः तर्कस्य च धर्मज्ञानार्थमध्ययनम् ब्रह्मचारिणा गुरुकुले कर्तव्यमिति निर्णीतम् ।

तेन यादृशी आन्वीक्षिकी धर्मज्ञानार्थं नोपयुज्यते, धर्मज्ञानविरोधिन्येव वा भवति, तादृश्याः आन्वीक्षिक्याः अध्ययनं न कर्त्तव्यम् इति निषेधः—

हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ।

इत्यादिनिन्दया अभ्यूह्यते । अतः—

'वेदशास्त्राविरोधी तु तर्कस्त्रय्येव पश्यताम् ।'

इत्यादिवचनैः धर्मज्ञानार्थम् आन्वीक्षिक्यध्ययनं मनुमतेन सिद्धं भवति ।

तथापि तत् त्रय्यध्ययनान्नातिरिच्यते। यतः पुरुषागोचर ( अदृष्ट ) धर्मज्ञानभाव्यकभावनाकरणत्वं त्रय्यां कौटिल्येन स्वीक्रियते। तत् कौटिल्यसम्मतं लक्षणम् आन्वीक्षिक्यामपि सङ्गतं भवति, इत्यनेन लक्षणेन आन्वीक्षिक्यां त्रयीतरभेदानुमितेः अबाधितत्वात्तत्र त्रयीत्वकल्पनायां नास्ति हेत्वाभासः। अतः आन्वीक्षिक्या आन्तर्भावं त्रय्यामभिप्रेत्य मानवानां मते विद्यानां त्रिविधत्वमस्तीति हृदयम्।

### आन्वीक्षिक्याः धर्मज्ञानार्थमुपयोगः

ननु त्रय्याः धर्मज्ञानार्थमुपयोगित्वं तु क्लृप्तम्। आन्वीक्षिक्याः उपयोगित्वं केन प्रकारेण ? इति चेदुच्यते। त्रय्या निरूपितं धर्मं ज्ञात्वा तदनुष्ठानार्थं प्रवृत्तः आन्तं निर्विघ्नतया सर्वमनुतिष्ठेदेवेति नास्ति नियमः, विघ्नैः उपहन्यमानतायाः स्वभावसिद्धत्वात्। तथाहि—महतां साधूनां यच्चरित्रं भवति तन्महिम्ना त्रिवर्गसमृद्धिसंपादनाय क्रियमाणेव्यापारे विघ्नाअपि उपस्थिताः भवन्त्येव। तेषां निवारणम् केनोपायेन कृतंमिति यावदितिहासतो नोपलभ्यते तावत् तस्य महत्त्वं प्रकाशितं न भवति। अतएव नलरामयुधिष्ठिरप्रभृतयः विघ्नैः उपहताः बभूवुः कथैञ्च तेषान्निराकृतिरभूत् किं तद्वस्तु यस्य बलेन ते महात्मानः विघ्नेन उपहता अपि आरब्धं कार्यं न परित्यजन्तिस्म, इति चिन्तायां धृतिरेवेति साहित्यविदां राजनीतिविदाञ्च निर्णयः। धृतेः स्वरूपं वैदिक सिद्धान्तसंरक्षिण्यां निरुक्तमस्तीति तदत्र न विमृश्यते।

---

१. "प्रजापतिर्हि प्रजाः सृष्ट्वा तासां स्थितिनिबन्धनं त्रिवर्गस्य साधनमध्यायानां शतसहस्रेणाग्रे प्रोवाच ॥५॥ तस्यैकदेशिकं मनुः स्वायम्भुवो धर्माधिकारिकं पृथक् चकार इति।

## वैदिकसिद्धान्तसंरक्षिणी

निर्माय ब्रह्मा मन्वादीनध्यापयामास। ततो मनुः लोकेषु धर्मे ईश्वरे वेदे च आस्तिक्यबुद्धिं दृढां स्थितिं समालोक्य पूर्णधर्मज्ञानोद्देश्येन अधीतग्रन्थात् एकदेशं धर्माधिकारिकं ग्रन्थं स्वशिष्यानध्यापयामास। तेऽपि अधीतविषये निपुणमतयः केचन मनुशिष्याः आन्वीक्षिक्या धर्मज्ञानात् पृथक् प्रयोजनं अस्तीति स्वकाले नान्वविन्दन्। नवा धर्मज्ञानात् पृथक् प्रयोजनमस्तीति चिन्तयितुं पूर्वपक्षाभावादवसरमलभन्त। अतः तेषां मते उक्तरीत्या आन्वीक्षिक्याः पृथगस्तित्वं स्वतन्त्रप्रयोजनाभावान्नास्ति। मनुस्तु सर्वज्ञत्वात् आन्वीक्षिक्याः पृथक् प्रयोजनं जानात्येव, इतीदं त्रय्यामान्वीक्षिक्यन्तर्भावनिरूपकमतं न मनोःअपि तु मानवानामिति टीकाकृन्मतापेक्षया स्वतन्त्रोऽस्य मतस्याशयः इति। सम्भवति चेदं यत् ते उत्तमशिष्याः स्वयोग्यत्वानुसारेण आन्वीक्षिक्याः पृथक् उद्दिष्टं नान्वजानन्।

तदेवमेकदेशिमतमग्रे प्रसृतम्। तत्पर्यवसानं मनुप्रतिपादितविषयातिरिक्तं मतं तच्छिष्याणामज्ञानेनावृतमभूदिति। अथ आन्वीक्षिक्या उक्तमेव अन्तर्भावं हेतुप्रदर्शनेन व्याचष्टे त्रयीविशेषः इति। त्रय्या विशेषः त्रयीविशेषः। त्रयीत्वव्याप्यं आन्वीक्षिकीत्वमिति तदर्थः। तच्च द्विधा विभक्तम्। त्रय्यनुगामिनी त्रयीविरोधिशाक्यादिस्मृतिभिन्नस्मृत्यनुगामिनीभेदात्। यथा मीमांसासांङ्ख्ये। तत्र मीमांसा साक्षात् त्रय्यनुगामिनी। सङ्ख्यं तादृशस्मृतिभिन्नस्मृत्यनुगामीति। तथा चैतन्मते पृथक् प्रयोजनाभावेन आन्वीक्षिक्यध्ययनं पृथक्तया राजवृत्त्यन्तर्गतं नास्ति इति बोध्यम्।

## जयमङ्गलाक्रोडपत्रम्

### धृत्यान्वीक्षिक्योः संबन्धः

यदि देहात्मवादिता धर्मानुष्ठातृषु जागरूका स्यात् तर्हि वर्तमानमैहिकं सुखं परित्यज्य कस्माद्धेतोः एतावान् क्लेशः तेन सोढव्यः? तन्मतेन ऐहिकसुखापेक्षया अधिकतरसुखस्य असंभवात्। देहातिरिक्तात्मवादितायां तु ऐहिकसुखापेक्षया आत्मसुखं सन्तोषजनितं निरुपाधिकमतिशयिततरमस्ति, देहश्च तत्साधनतया उपयुज्यते इति स्वकर्तव्यपरायणाः आत्मसुखं, यशःसुखं च उपलब्धुं प्रयतमानाः अनुचितमार्गेण ऐहिकसुखं तत्वेन न मन्यन्ते, किन्तु न्याय्यमेव पन्थानमनुसरन्ति। ऐहिकसुखं परित्यज्य महता सन्तोषेण देहातिरिक्तवादिनां क्लेशसहनपूर्वकं स्वकर्मणि प्रवर्तने धृतिरेव कारणमस्ति। इत्येवं रीत्या महात्मनां कृते विपदि क्लेशसहिष्णुतायाः, धृतिः आलंबनं भवति। अत्रेदं बोध्यम्। त्रयीद्वारा आत्मनोऽस्तित्वे ज्ञातेऽपि देहातिरिक्तत्वं यावन्न साध्यते आन्वीक्षिक्या, तावत् ज्ञातेऽप्यात्मनोऽस्तित्वे अप्रामाणिकत्वादिशङ्कानामभ्युदयो भवितुमर्हति तन्निरासायान्वीक्षिक्यप्युज्यते। निरस्तायां च अप्रामाण्यादिशङ्कायां सत्वात्मिकाया धृतेः स्वायत्तीकरणं देहातिरिक्तात्मवादिना कर्तुं शक्यते इत्येवं धृतेरान्वीक्षिक्या सह सम्बन्धः स्फुटः।

## जयमङ्गला

"यदुदुम्बरवर्णानां[1] घटीनां मण्डलं महत्।
पीतं न गमयेत् स्वर्गं किं तत् क्रतुशगतं[2] नयेत्।" इति
तस्मात्—

"हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्"। इति।

यस्तु त्र्यनुगामी मीमांसादिः, स्मृत्यन्तरानुगामी साङ्ख्यादिस्तर्कः स त्र्येव। यथाहुः—

## जयमङ्गलाक्रोडपत्रम्

अतः देहेष्वनात्मत्वबुद्धिः धृतेः सुधृतयये अपेक्षिता वर्तते। देहेषु अनात्मत्वबुद्धिश्च आन्वीक्षिक्या शंकासमाधानद्वारा दृढा सम्भवति इति आन्वीक्षिकीस्थापनावसरे सविस्तृतं वैदिकसिद्धान्तसंरक्षिण्यामपि प्रपञ्चितमस्ति। अतः मानवमतेनापि आन्वीक्षिक्याः धर्मज्ञानभाव्यिकायाः उपयोगित्वमस्ति इति सिद्धम्।

**शुष्कतर्कः** वेदविरोधी तर्कः इतिभावः! **यदुदुम्बरेति**। महाभाष्यकविवचनस्य प्राचीनत्वात् तदाधारेण इदं पद्यं शुद्धाशुद्धी विविच्य सन्निवेशितमस्ति। एतच्छ्लोकार्थः तट्टीकायां व्याख्यानतो द्रष्टव्यः [3]

प्रमाणमाह हैतुकानिति। यस्तु इति। ननु टीकायां मीमांसादीनां त्र्यनुगामित्वं साङ्ख्यादीनाञ्च स्मृत्यन्तरानुगामित्वमिति निर्णीतमस्ति। तदुक्तं—"त्र्यनुगामी मीमांसादिः। स्मृत्यन्तरानुगामी साङ्ख्यादिः" इति। नीतिसारव्याख्यायां तु साङ्ख्यादीनां त्र्यनुगामित्वं, मीमांसादीनां तु त्र्यन्तर्गतत्वमभिहितम्। तदुक्तम्-यथावस्थितपदार्थतत्वान्वीक्षणरूपत्वात् आन्वीक्षिकी हेतुविद्या। सा च द्विविधा, त्र्यनुगामिनी, त्र्यन्तर्गता च तत्र पूर्वा साङ्ख्यादिशास्त्रम्। इतरा मीमांसादिशास्त्रम्॥ इति। २ सर्ग ३ प्र० श्लो० ३

---

अशुद्धम्

१. यदुदुम्बरपर्णानां

२. क्रतुशतं

प्रदीपः—यदुदुम्बरेति। अयं श्लोकः सौत्रामणियागे सुरापानस्य दुष्टत्वमुद्भावयति।

उद्योतः—उदुम्बरं ताम्रम्। दुष्टत्वमिति। इदमुपलक्षणम् अन्यत्राप्यदुष्टत्वस्य।

तत्त्वालोकः—यदुदुम्बरेति। उदुम्बरवर्णानां, रक्तवर्णानाम्। घटीनां। कलशीनाम्। महत् विशालम्। ( मण्डलस्य स्वरूपन्ये ऽपेयत्वाल्लक्षणया ) मण्डलस्थम् ( मद्यं ) पीतं (सत्)। यद् यदि। ( पातारं ) स्वर्गं न गमयेत्। तत् तर्हि। क्रतुगतं सौत्रामणी ग्रहपात्रस्थं ( स्वल्पं मद्यं ) पीतं ( सत्पातारं ) किं ( स्वर्गं ) नयेत्, अर्थान्न नयेदिति शब्दार्थः।

## जयमङ्गलाक्रोडपत्रम्

इत्यनयोः जयमङ्गलाकृद्वचनयोः कथं समन्वयः भवतीति चेद्। एवं, मीमांसया विचारार्थं सन्देहनिरासाय यानि वाक्यानि आदाय तात्पर्यं निर्णीयते तानि सर्वाण्यपि वाक्यानि वैदिकान्येव। अतः मीमांसायां निर्दिष्टा विषयाः साक्षात् त्रयीमवलम्ब्य पुरो वर्तन्ते, इति त्रयीमूलत्वात् प्रकृतजयमङ्गलाग्रन्थे मीमांसायाः त्रय्यनुगामित्वं उक्तम्, तदेव नीतिसारव्याख्यायां जयमङ्गलायां अपि उक्तस्थले त्रय्यन्तर्गतत्वपदेन बोध्यते।

सेयं स्थितिः सांख्यकारिकाप्रभृतिग्रन्थेषु नास्ति। अत्र ये बिषयाः सिद्धान्तत्वेन उक्ताः ते कपिलस्मृत्युक्त्यनुसारेण निरूपिताः सन्ति। कपिलादीनां स्मृतिः मीमांसायां स्मृत्यधिकरणोक्तरीत्या श्रुतिमूलिका इति सिद्धान्तितम्। अर्थात् सा श्रुतिः स्मृत्यनुमेया वर्तते। परन्तु तस्याः कीदृशी आनुपूर्वी इति श्रुतीनां सहस्रशाखापेक्षयाऽपि अधिकशाखानां अस्मदाद्यप्रत्यक्षत्वात् अस्माभिः अवगन्तुं न शक्यते। नापि च उपलब्धायां श्रुतौ कः सिद्धान्तः तस्याः अभिप्रेतः इति मीमांसां विना ज्ञातुं शक्यते, इति साङ्ख्यादिनिर्दिष्टाः विषयाः साक्षात् न त्रय्यन्तर्गताः नापि त्रय्यनुगामिनः। अपि तु याभिः वेदः अनुमेयः ताः कपिलादिस्मृतीः मूलत्वेन स्वीकृत्य प्रवर्तन्ते। "अतः स्मृत्यन्तरानुगामी" इत्यस्य जयमङ्गलायां उक्तस्य पदस्य कश्चन परिष्कृतोऽर्थः करणीयः। स च "वेदविरुद्धस्मृतिभिन्नस्मृत्यनुगामी" इति। इदमेव अनुगामित्वं, नीतिसारव्याख्यायां उक्तं साङ्ख्यादिषु त्रय्यनुगामित्वं बोध्यम्। वेदविरुद्धेत्यादि विशेषणात् शाक्यादिस्मृतयः व्यावर्तन्ते। शाक्याः वेदविरोधिनः वेदं विनाशयितुं प्रवृत्ताः अतस्तेषां स्मृतिः न वेदमूलिकेति मीमांसकैः (विरोधाधिकरणे २ वर्णके) साधितम्। अतः तेषां सर्वोऽपि तर्कः न वेदविरुद्धस्मृतिभिन्नस्मृत्यनुगामी संभवति, इति तस्य शुष्कत्वव्यपदेशः कृतोऽस्ति। तदेवोक्तं टीकायाम्—"शुष्कतर्कस्तावद्-विद्याविरोधात् अविद्यैव" इति।

तस्मात् उपरिनिर्दिष्टयोः जयमङ्गलावचनयोः न विरोधः इति बोध्यम्।

## साङ्ख्यादौ मतविरोधपरिहारः

ननु वेदविरुद्धस्मृतिभिन्नस्मृत्यनुगामिष्वेव शास्त्रेषु तत्त्वनिरूपणावसरे विभिन्नानि विभिन्नानि मतानि विरुद्धानीव भासन्ते। तद्यथा–पृथिव्यादीनि तत्त्वानि षट्त्रिंशत् वदन्ति। अन्ये तु पञ्च, अपरे नव इत्यादि।[1]

तद्विरोधपरिहाराभावे साङ्ख्यशास्त्रस्य अप्रामाण्यात् अत्र तद्ग्रहण— मसङ्गतं भाति इति चेन्न। शास्त्रेषु विभिन्नानां मतानां अथवा विभिन्नानां प्रक्रियाणाञ्च यन्निरूपणं भवति तत् प्रमेयस्य स्पष्टीकरणार्थं स्वकीयगुरुपरम्परानुसारेण

---

१ अस्य विस्तार एकादशस्कन्धे द्वाविंशेऽध्याये श्रीमद्भागवते द्रष्टव्यः।

## जयमङ्गलाक्रोडपत्रम्

संप्राप्तया शुद्धप्रतिभया निबन्धकर्तृभिः क्रियते। तद्यथा—संस्कृतभाषायां "भवति, भवतः' भवन्ति' इति प्रयोगाः साधवः पुण्यजनकाः इत्यत्र नास्ति कस्यापि विवादः, अत्र एतादृशानां साधूनां प्रयोगाणां साधने तु पूर्वपरम्पराप्राप्ता विभिन्ना विभिन्ना प्रक्रिया भवितुमर्हति, अतएव पाणिनीय-कालाप-सारस्वतादिभेदेन व्याकरणानि अष्टौ भवन्ति। तत्र प्रक्रियांशे साधुत्वासाधुत्वविचारः न केनापि क्रियते। प्रमेयांशस्य सत्यता तु एकरूपतया सर्वैः अपेक्षिता भवति। तदुक्तं सुभाषिते—

उपायाः शिक्षमाणानां बालानामुपलालनाः
असत्ये वर्त्मनि स्थित्वा ततः सत्यं विनिर्दिशेत् इति।

ईदृश्या विभिन्नया सरण्या अनेकेषु शास्त्रेषु क्रियमाणस्य विचारस्य फलं मतिभाव इत्युच्यते[1]। शास्त्रेषु हि प्रमाणप्रमेयभेदेन विभिन्नया विभिन्नया दिशा विचारणा क्रियते। तत्र प्रमाणमधिकृत्य असंभावनाविपरीतभावनादिशङ्का उपस्थिता यदा भवन्ति तदा तासां निरासः शास्त्रेण कर्तव्यो भवति।

यं तर्कमधिकृत्य प्रमाणविषयिण्यः शङ्काः शास्त्रेण व्यपगता भवन्ति स प्रमाणविषयस्तर्कः इत्युच्यते। तथैव प्रमेयविषये असंभावितत्वाननुगतत्वादिशङ्काः उपस्थिता भवन्ति तासामपि निरासः यं तर्कमधिकृत्य शास्त्रेण क्रियते स प्रमेयविषयकस्तर्कः उच्यते। तदिदं तर्कस्य द्वैविध्यम् मीमांसायां तर्कपादे तथा अन्यपादे च निरूपितं न तिरोहितं विदुषाम्। सङ्गीतरत्नाकरपद्ये तु-

"तर्काख्यौ प्रत्ययावूहापोहौ विधिनिषेधयोः।"

इत्यनेन तर्कभेदोऽपरो निर्दिष्टः अस्ति। तत्र विधिमधिकृत्य सञ्जातः तर्कः ऊहः। निषेधमधिकृत्य सञ्जायमानस्तर्कस्तु अपोह इत्युच्यते। अमुं भेदमाधारीकृत्य न्यायेन विचारणाद्वारा मतिभावप्राप्त्यर्थं गुरुपरम्परया संप्राप्तानि अनेकानि मतानि निर्दिष्टानि सन्ति चेत् तत्र का परिदेवना। प्रमेयांशे मतभेदः कस्यापि नास्ति। यस्य यादृशः संप्रदायः तेन तं संप्रदायमधिकृत्य तत्तत्प्रक्रियापरम्परा प्रमेयप्राप्त्यर्थं तदवगमार्थं वा यदि अवलम्ब्यते तर्हि तत्र नास्ति विरोधः। अतएव एकस्मिन्नेव वेदान्तशास्त्रे सर्वेऽपि निबन्धकर्तारः प्रामाणिकाः ब्रह्मप्रमां तदुपायञ्च चिन्तयन्तः सन्ति। तेषु कस्यापि ब्रह्मविषये न विरोधः तल्लाभाय येन विदुषा यथा अनुभूतं परम्पराप्राप्तञ्च तेन तथा तथा निर्दिष्टम्। यथा – जगदुपादानत्वविषये विवरणकार-वाचस्पत्यादीनां मतभेदः अस्ति। तेषु सर्वेषां शिष्टत्वात् गुरुभक्तत्वाच्च कस्य अप्रामाण्यं वक्तव्यम्। तैः अनुभूता स्वसंप्रदायानुसारिणी या रीतिः येषु शिष्येषु अध्यापिता

१ तदुक्तं सङ्गीतरत्नाकरे :—'अपूर्वप्रतिभानं स्यान्मतिस्तां तु विभावयेत्।
अन्वयव्यतिरेकोत्थैः प्रत्ययैः शास्त्रचिन्तनैः।
ऊहापोहैश्च विविधैरथ तामनुभाययेत्॥

## जयमङ्गलाक्रोडपत्तम्

तैः सा रीतिः पालनीया। वेदप्रामाण्यांशे ब्रह्मप्रमांशे वा सर्वेषां पुनः मतैक्यमेव। तथैव साङ्ख्यशास्त्रेऽपि प्रकृतिपुरुषविवेचनप्रङ्गेन अपेक्षितानां प्रमेयानां तत्त्वानां विभिन्न-सङ्ख्याविषये बोध्यम्। एतेन साङ्ख्यशास्त्रस्यैव समन्वय इति न ज्ञातव्यम्।

## बौद्धादिमतानां समन्वयः

राजनीतिशास्त्रेणापि स्वस्वगुरुपम्पराप्राप्तोपासनादृष्ट्या बौद्धादिमतानामपि समन्वय इष्यते इत्यपि प्रसङ्गादुच्यते। यतः राजनीतिशास्त्रं वेदान्तशास्त्रमेव प्रमाणमूर्धन्यत्वेन स्वीकरोति—

जगन्मृगतृषातुल्यंवीक्ष्येदं क्षणभङ्गुरम्

इत्याद्युक्तत्वात्। तथाचेदं सिद्धं, यद् भारतीयराजशास्त्रेण वेदान्तानुसारिणा नीत्यनुष्ठानोपदेशकुशलेन ब्रह्मातिरिक्तस्य सर्वस्यापि असत्प्रायत्वात् तदंशे अभिनिवेशः वृथा इति मन्यते। एवं सति बौद्धादिभिः स्वप्रक्रियामाश्रित्य स्वस्वदेवताः उपास्यन्ते तत्रापि वैदिकमतानुयायिशास्त्रस्य न विरोधः। तस्मात् तेषामपि मतस्य रक्षणं साङ्ख्यवेदान्तादिषु निर्दिष्टानां मतानां रक्षणमिव अत्र अतिसुलभम् इति निश्चप्रचम्। यदा ते वयं वेदविरोधिनः इत्युक्त्वा विवादैः वेदान् खण्डयितुं प्रवृत्ता भवन्ति[1] तदा मतभेदो भवति। अविरोधित्वे तु न कोऽपि विरोधः, जैनमतानुयायिभिः सोमदेवसूरि—योगघम—भिक्षुप्रभमतिभिः स्वस्वाचार्योपासकैरपि तत्तन्मतानुयायित्वं स्वीकृत्यापि भारतीयराजनीतिशास्त्रस्य वेदस्य च लोकयात्रार्थं प्रामाण्यस्वीकरात् चरविभागे तेषां नियोजनस्यात्रोक्तत्वाच्च।

उपर्युक्तस्य अस्य वेदान्तदृष्ट्या क्रियमाणस्य समन्वयस्य प्रतिष्ठापकत्वात् भगवत्पूज्यपादाः श्रीशङ्कराचार्याः सर्वमतप्रतिष्ठापका इति शास्त्रविद्भिः उच्यते[2]।

## "मनुचाणक्यमतविशेषचिन्तनम्"

अत्र केचित् – मानवं मतं हि धर्मज्ञानार्थं प्रवृत्तम् तथा कौटिलीयमर्थशास्त्रमर्थ-ज्ञानार्थं प्रवृत्तम् इति सर्वमतसिद्धम्, अत एव धर्माधिकारिकं धर्मशास्त्रम् अर्थाधि-कारिकञ्च अर्थशास्त्रम् इतिरीत्या अनयोः शास्त्रयोः पृथक्तया उपन्यासः क्रियते। तत्र धर्मज्ञानं प्रति आन्वीक्षिक्याः पूर्वोक्तरीत्या उपयोगित्वे सिद्धेऽपि यस्मिन् समये पृथिव्या लाभे पालने च राजा प्रवर्तते तस्मिन् समये आन्वीक्षिक्याः अर्थज्ञानो-

---

१ द्रुह्यन्ति ये ब्राह्मणपुङ्गवेभ्यः वेदान् विवादैरपि खण्डयन्ति।
निन्दन्ति विश्वेश्वरपादपद्मं तेषां कुलं कुत्र पुनः पृथिव्याम्? धर्मविजायनाटक

२ तदुक्तं सिद्धान्तविन्दुटीकायां न्यायरत्नावल्याम्। ( पृ० ६ न्या० र० )
विश्वगुरुमित्यनेन नास्तिकषड्दर्शनीकर्तॄणामास्तिकपञ्चदर्शनीकर्तॄणाञ्च शिक्षक आचार्य इति सूचनात् वेदान्तदर्शनस्य सर्वदर्शनशिरोमणित्वं सूचितम्। इति।

## जयमङ्गलाक्रोडपत्रम्

पयोगित्वं न क्लृप्तम् इति, सा राज्ञा राजवृत्तिषु पृथक्तया अर्थज्ञानार्थन्नाध्येतव्येति तस्याः राजवृत्तितः मानवैः पृथक्करणं न कृतम्।

कौटिल्यस्तु अर्थलाभार्थं प्रवृत्तेन राज्ञा तदर्थं अपि अर्थज्ञानाङ्गतया आन्वीक्षिकी अध्येतव्या इति राजवृत्तिषु तस्या ग्रहणं पृथक्त्वेन मनुते। यतो हि विना प्रज्ञावैशारद्यं क्रियावैशारद्यं वा अर्थोऽपि केवलं शास्त्रमधीत्य प्राप्तुं न सुलभः। उक्तवैशारद्यत्वञ्च आन्वीक्षिक्यधीनमित्यनयोः मतयोर्विशेषः इति वदन्ति।

ननु इदमङ्गत्वम् आन्वीक्षिक्यामस्तीति मनुना कथमज्ञातमिति चेन्न। मनुना ज्ञातमेव। तथाहि मनुना हि वार्ताज्ञानं लोकतः संपादनीयम्।[1] इति विहितमस्ति। अस्यायमाशयः—यथा वार्तार्थं शास्त्रस्यापेक्षा नास्ति। केवलं लोकवृत्तं दृष्ट्वा वार्ता परिज्ञेया, धर्मविषयस्तु न तथा। स हि शास्त्रेणैव अवगन्तव्यो भवति। तथा अर्थार्थं प्रवृत्तेन राज्ञा अर्थोऽपि न आन्वीक्षिक्या ज्ञातव्यः अनुपयोगित्वात्।

स्तदर्थं महतः विचारस्य आन्वीक्षिकीप्रसूतस्य तदध्ययनस्यवावश्यकता न विद्यते। इति ज्ञायते तदेव च चाणक्येन प्रतिषिदध्य आन्वीक्षिकी अर्थज्ञानार्थमध्येतव्येति तस्याः पृथक् स्थापनं कृतम्।

ननु अर्थज्ञानाङ्गताया आन्वीक्षिक्यामुपयोगित्वास्य मनुना ज्ञातत्वेऽपि मानवाः कथमिव तस्याभिप्रायं नाविन्दन्। इति चेत् उच्यते—

'वार्तारम्भांश्च लोकतः' इति मनूक्त्या मानवाः 'वार्ता लोकतः अवगन्तव्या' इत्यवजग्मुः। एकलक्षाध्यायात्मकं ब्रह्मणा विनिर्मितं ग्रन्थमवाध्येतुं ते नापारयन्, मेधाह्रासात्। तदा मन्वादिभिः तत्तदधिकारिवर्गै धर्माधिकारिकम्, अर्थाधिकारिकम्, कामाधिकारिकमिति भेदेन ब्रह्मनिर्मितग्रन्थादेव अपेक्षितं विषयमादाय ते ते ग्रन्थाः रचिताः अध्यापिताश्च, तदेवं मानवबार्हस्पत्य-औसनसादिशास्त्राणि पृथक् पृथक् पृथक् प्रादुर्भूतानि।

अथ स्वीयं स्वीयं ग्रन्थमधीत्य ते ते अन्तेवासिनः लक्षाध्यायपरिमितग्रन्थे स्थितस्य विषयान्तरस्य विषये अज्ञा बभूवुः। तस्येदं फलं सम्पन्नं यत् शाखान्तरानध्ययनात् कुत्र कीदृशा विषयाः पूर्वपक्षभावेन, उत्तरपक्षभावेन, वैकल्पिकत्वेन, किमुद्देश्यकत्वेन वा सन्ति इति निर्णयः तान् प्रति दुरधिगमः अभूत। यथा दर्शपूर्णमासे "कदाचन स्तरीरसि" इत्यादि पूषानुमन्त्रणमन्त्रः पठितो वर्तते। अस्य विनियोगः इन्द्रप्रकाशने नास्ति इति सर्वैः मीमांसकैः ज्ञायते। तत्र कारणं "ऐन्द्रया गार्हपत्यमुपतिष्ठते" इति शाखान्तरीयवाक्यमेव। परन्तु येन शाखान्तरं नाधीतं सः दर्शपूर्णमासप्रकरणमात्रमधीत्य उक्तपूषानुमन्त्रणमन्त्रो गार्हपत्योपस्थानाङ्गमिति कथं विजानीयात्? अस्याः अज्ञतायाः कारणं शाखान्तरानध्ययनमेव। तद्वत् सर्वज्ञानां मन्वा-

१. तदुक्तं "त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिञ्च शाश्वतीम्।
आन्वीक्षिकीं तर्कविद्यां वार्तारम्भांश्च लोकतः" इति। मनु अ० ७ श्लो० ४३।

## जयमङ्गलाक्रोडपत्रम्

दीनामाशयः तावन्मात्रमधीतवद्भिः अन्तेवासिभिः अनवगतश्चेत् नात्र आश्चर्यम्। अतएव सर्वाणि शास्त्राणि उत्सन्नकल्पानि बभूवुः।[1]

एवं शास्त्रे उत्सन्ने सति शास्त्रार्थविषये अन्धकारः भवति इति मोहरागादीनामपि उत्पत्तिः भवति। तेन च विलोपः नियतः।[2]

---

कामसूत्रे वात्स्यायनीये सू० ५ तः १३ पर्यन्तं १ अध्याय पृष्ठ ११

( १ ) प्रजापतिर्हि प्रजाः सृष्ट्वा तासां स्थितिनिबन्धनं त्रिवर्गस्य साधनमध्यायानां शतसहस्रेणाग्रे प्रोवाच ॥ ५ ॥

( २ ) तस्यैकदेशिकं मनुः स्वायसम्भुवो धर्माधिकारिकं पृथक् चकार ॥ ६ ॥

( ३ ) बृहस्पतिरर्थाधिकारिकम् ॥ ७ ॥ महादेवानुचरश्च नन्दी सहस्रेणाध्यायानां पृथक् कामसूत्रम् प्रोवाच ॥ ८ ॥

( ४ ) तदेव तु पञ्चभिरध्यायशतैरौद्दालकिः श्वेतकेतुः सञ्चिक्षेप ॥ ९ ॥

( ५ ) तदेव तु पुनरध्यर्धेनाध्यायशतेन साधारण-साम्प्रयोगिक-कन्यासंप्रयुक्तक-भार्याधिकारिक-पारदारिक-वैशिक-औपनिषदिकैः सप्तभिरधिकरणैर्बाभ्रव्यः पाञ्चालः सञ्चिक्षेप ॥१०॥

( ६ ) तस्य षष्ठं वैशिकमधिकरणं पाटलिपुत्रिकाणां गणिकानां नियोगाद् दत्तकः पृथक् चकार ॥ ११ ॥

( ६ ) तत्प्रसङ्गात् चारायणः साधारणमधिकरणं पृथक् प्रोवाच। सुवर्णनाभः साम्प्रयोगिकम्। घोटकमुखः कन्यासम्प्रयुक्तकम्। गोनर्दीयो भर्याधिकारिकम्। गोणिकापुत्रः पारदारिकम्। कुचुमार औपनिषदिकमिति ॥ १२ ॥

( ७ ) एवं बहुभिराचार्यैस्तच्छास्त्रं खण्डशः प्रणीतमुत्सन्नकल्पमभूत् ॥ १३ ॥ इति।

१ तदुक्तं महाभारते शान्तिपर्वणि राजधर्मानुशासनपर्वणि अ० ५९ श्लोक सं० १४ तः २७ पर्यन्तं ( निर्णयसागर प्रेस )

न वै राज्यं न राजासीन्न दण्डो न च दाण्डिकः।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम् ॥
पाल्यमानास्तथान्योऽन्यं नरा धर्मेण भारत।
खेदं परमुपाजग्मुस्ततस्तान्मोह आविशत्।
ते मोहवशमापन्ना मनुजा मनुजर्षभ ॥
प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत्।
नष्टायां प्रतिपत्तौ च मोहवश्या नरास्तदा ॥
लोभस्य वशमापन्नाः सर्वे भरतसत्तम।
अप्राप्तस्याभिमर्शं तु कुर्वन्तो मनुजास्ततः ॥

## जयमङ्गलाक्रोडपत्रम्

दृश्यते हि प्रमादालस्यादिभिः पौरुषक्षयाच्च अल्पज्ञानवत्वम् ।

अयमन्धकारः विद्याविलोपात् मनुपरम्परायां अन्तेवासिषु जातः इत्यस्मिन् अंशे वर्तमानकालीनमुदाहरणं प्रदर्शयितुं शक्यते । परीक्षोपयोगितया परीक्ष्यग्रन्थाः रघुवंश—किरात—नाटक—मंजूषा—शेखरादिग्रन्थैकदेशभूताः प्रकाशिता बभूवुः । ते ते ग्रन्थास्सम्पूर्णतया दुर्लभतां प्राप्ता वर्तन्ते । स्मार्तकर्मणि तत्र तत्र ये उपयुक्ताः मन्त्राः ते वेदभागात् पृथक् उपन्यस्य एकत्रीकृताः संप्रति मन्त्रसंहितेति नाम्ना व्यवह्रियन्ते । तानेव अधीत्य पूजोपजीविनः विद्वांसः यदि सम्पूर्णायाः स्वशाखायाः विषये अज्ञतां प्राप्नुवाना वर्तन्ते । तेन मूलग्रन्थाध्ययनाभावात्, अभ्यासाभावाच्च लुप्तप्रायतां गमिष्यन्ति किमिति चिन्ता प्रादुर्भूता वर्तते । एवंरीत्या सम्प्रदायविनाशो

---

कामो नामापरस्तत्र प्रत्यपद्यत वै प्रभो ।
तांस्तु कामवशं प्राप्तान् रागो नामाभिसंस्पृशत् ॥
रक्ताश्च नाभ्यजानन्त कार्याकार्ये युधिष्ठिर ।
अगम्यागमनं चैव वाच्यावाच्यं तथैव च ॥
भक्ष्याभक्ष्यं च राजेन्द्र दोषादोषं च नात्यजन् ।
विप्लुते नरलोके वै ब्रह्म चैव ननाश ह ॥
नाशाच्च ब्रह्मणो राजन् धर्मो नाशमथागमत् ।
नष्टे ब्रह्मणि धर्मे च देवांस्त्रासः समाविशत् ।
ते त्रस्ता नरशार्दूल ब्रह्माणं शरणं ययुः ।
प्रसाद्य भगवन्तं ते देवं लोकपितामहम् ।
ऊचुः प्राञ्जलयः सर्वे दुःखवेगसमाहताः ॥
भगवन्नरलोकस्थं ग्रस्तं ब्रह्म सनातनम् ।
लोभमोहादिभिर्भावैस्ततो नो भय माविशत् ।
ब्रह्मणश्च प्रणाशेन धर्मो व्यनशदीश्वर ।
ततः स्म समतां याता मर्त्यैस्त्रिभुवनेश्वर ।
अधो हि वर्षमस्माकं नरास्तूर्ध्वप्रवर्षिणः ।
क्रियाव्युपरमात्तेषां ततो गच्छाम संशयम् ।
अत्र निःश्रेयसं यन्नस्तद्ध्यायस्व पितामह ।
त्वत्प्रभावसमुत्थोऽसौ स्वभावो नो विनश्यति ॥

तथैव तन्त्रवार्तिके १ अ० ३ पा० १ अ० स्मृत्याचारप्रामाण्याधिकरणे

शाखानां विप्रकीर्णत्वात् पुरुषाणां प्रमादतः ।
नानाप्रकरणस्थत्वात् स्मृतेर्मूलं न दृश्यते ॥ इति ।

## जयमङ्गला

"वेदशास्त्राविरोधी तु तर्क ( स्त्रय्येव ) पश्यताम् ।" इति ।

तस्मात् त्रयोविशेषः त्रयीभेदः । मानवा इति मनोः शिष्याः । ननु च मानवानामिदं मतं न मनोः । नैतदेवम् । तत्प्रोक्तशास्त्राध्ययनादेव ते मानवाः । न तेषां पृथग् दर्शनमस्ति ।

## जयमङ्गलाक्रोडपत्रम्

अतएव स सम्प्रदायविनाशो माभूत् इत्येतदर्थं मन्वादिभिः वेदप्रतिपादित एव धर्मः स्वीयवाण्या निरूपितः ।[1]

### चाणक्यमन्वोः मतमन्वयः

वस्तुतस्तु आपाततः मनुना आन्वीक्षिकीन्त्रय्यामन्तर्भाव्य यत्स्वकीयं मतं प्रतिपादितम् तस्माच्चाणक्येन स्वमतं पृथक् कृतं आन्वीक्षिक्याः त्रय्याश्च फलस्य पार्थक्येनोक्तत्वात् । तथापि सूक्ष्मतया विद्यानां स्वरूपविचारानन्तरं उभयमपि मतं अविरुद्धमेवेति निर्णीयते ।

तथाहि "धमार्थौ यद् विद्यात् तद् विद्यानां विद्यात्व" मिति विद्यानां लक्षणं चाणक्येन (मूलकृता) प्रत्यपादि । तेन पुरुषागोचरादृष्टभाव्यकभावनाकरणत्वं त्रयीत्वं तथा तत्तद्विद्यातात्पर्यविषयीभूतयथार्थज्ञानभाव्यकभावनाकरणत्वमान्वीक्षिकीत्वमित्यादिरीत्या पृथक्-पृथक् वैदिकसिद्धान्तसंरक्षिण्याम् लक्षणमुक्तमस्ति इत्यनयोर्लक्षणयोर्विवेचने सति मनुसम्मतं आन्वीक्षिकीनिष्ठं त्रयीत्वं चाणक्यस्यापि निर्विवादमेव । तथात्वेपि उक्तयथार्थज्ञानभाव्यकभावनाकरणत्वरूपम् आन्वीक्षिकीत्वन्तु स्वरूपतः त्रयीत्वस्वरूपात् विभिन्नमेव । इत्यत्र नास्ति मनोरपि वैषम्यम् । अतः उक्तस्वरूपद्वयमादाय चाणक्येन अभिहितः विद्याविभागः आन्वीक्षिक्याम् त्रय्या-अन्तर्भावस्य प्रतिपादनकर्तुः मनोः मतेन विरोधं न भजते । एतत्सविस्तरं वैदिकसिद्धान्तसंरक्षिण्यां प्रपञ्चितमस्ति—

एतेन "ननु च मानवानामिदं मतं न मनोः नैतदेवम्, तत्रोक्तशास्त्राध्ययनादेव ते मानवाः न तेषां पृथक् दर्शनमस्ति" इत्यग्रिमः जयमङ्गलाग्रन्थः पूर्वोक्तस्य नन्वित्यादिनोक्तमतस्य खण्डनाय प्रस्तुतः साधु सङ्गच्छते । नन्वेवं मनुचाणक्योभयमतसाधारण्येन यदि त्रयीत्वमान्वीक्षिकीत्वम् च त्रय्यां स्वीक्रियते तर्हि विद्यायाः चतुर्धा विभागः कथमुपपद्येत इति चेन्न । उपधेयसङ्करेऽपि उपाधेरसाङ्कर्यात् ।[2]

**"मनोः शिष्याः"** इति । मनुशास्त्राध्ययनज्ञानजन्यफलवन्तः इत्यर्थः ।

---

१ यत्तु किमर्थं वेदवाक्यान्येव नोपसङ्गृहीतानीति संप्रदायविनाशभीतेः" । इति । अ० १ पा० ३ अ० १

२ स्पष्टीकृतञ्चैतत् हेत्वाभासगदाधर्याम्—

"हेत्वन्तरमाह—उपधेयेति । असङ्करात् ज्ञानासङ्करात् । यद्वा ननूपजीव्यत्वमेव कथं विषयाभेदादित्यत आह उपधेयेति असङ्करात्-भेदात् ।" इति । (पृ० १८११ असिद्धिप्रकरणम् । )

वार्ता दण्डनीतिश्चेति बार्हस्पत्याः—संवरणमात्रं हि त्रयी लोकयात्राविदः[1] इति ।

## श्रीमूला

बृहस्पतिशिष्याणां मतमाह—वार्त्ता दण्डेत्यादि । त्रय्या विद्यान्तरत्वाभावे हेतुमाह—संवरणमात्रं हीति । त्रयीलोकयात्राविदः वार्तादण्डनीत्यनुष्ठानलक्षण-लोकतन्त्रविदुषः, संवरणमात्रं हि नास्तिकोऽयमिति लोकनिन्दाद्वारसंवृतिसाधनमेव केवलम् । लोकतन्त्रसम्यङ्निर्वहणसमर्थमपि त्रय्यपरिग्राहिणं सन्तं नास्तिक इति लोको निन्देदिति त्रयीपरिग्रहस्य यथोक्तनिन्दाद्वारगोपनमात्रफलत्वेनाऽल्पप्रयोजन-त्वान्न सा विद्यान्तरमित्यभिप्रायः । त्रयीनिरासेन तदन्तर्गताया आन्वीक्षिक्या अपि निरासः सिद्धः ।

## वैदिकसिद्धान्तसंरक्षिणी

यथाऽऽन्वीक्षिकी न राजवृत्तिस्तथा त्रय्यध्ययनमपि मास्तु राजवृत्त्यन्तर्गतं, यतः वक्ष्यमाणरीत्या अर्थलाभाय प्रवृत्तेन राज्ञा स्वयमान्वीक्षिकीकुशलत्वाभावेन धर्म-तत्प्रतिपादकवेदविषये सन्दिग्धमतिनापि यथा अर्थः प्राप्येत तथा प्रजायां धर्मभावना प्रचारणीया, तावतैव सर्वं सुस्थमिति मन्वानानां बार्हस्पत्यानां मतमाह वार्तेति । बार्हस्पत्याः बृहस्पतेः शिष्याः । शिष्यप्रदर्शनं मानवमतसादृश्यलाभाय । विश्वासोत्पा-दनद्वारा लोकयात्रार्थं संवरणमावश्यकमित्याह संवरणेति । परलोकविषये स्वस्य सन्देहेऽपि लोके विद्यमानायाः परलोकभावनायाः अप्रत्याख्यानार्थं कञ्चुकवत् अति-परिश्रमेण त्रयी उपयोक्तव्येति भावः । तदेव दर्शयन्नाह-लोकयात्राविद इति । लोकस्य चतुर्वर्णाश्रमस्य । यात्रा यथावद्विश्वासपूर्वकमनुरागमुत्पाद्य निर्बाधतया सुखमयं जीवनम् । तद्विदः कुशला इति यावत् । वेदाध्ययनं ब्राह्मणादिभिः संपाद्यत एव, राज्ञा तत एव त्रयी बोद्धव्येति राजवृत्त्यन्तर्गततया पृथक्धर्मप्रतिपादकविद्याया ग्रहणं न कृतं बार्हस्पत्यैरिति भावः ।

## जयमङ्गला

बार्हस्पत्या इति । बृहस्पतेः शिष्याः । त एवमाहुः वार्तादण्डनीतिफलैव[2]

---

नी० टी १. लोकव्यवहारविदो राज्ञः ।

अशुद्धम्

२. दण्डनीतिफलैव, त्रयी

इदं त्रय्या विशेषणम् तेन त्रय्याः फलं वार्ता दण्डनीतिश्च इत्यवगम्यते । अर्थात् वार्तायाः दण्डनीतेश्च सम्यक् प्रचारणाय एतन्मते त्रयी उपयुज्यते वक्ष्यति च एतत् "निग्रहरुचि" रितीत्यादिना इति भावः

## जयमङ्गला

त्रयी धर्मोपयोगिनी, अतः पृथिव्या लाभपालनयोर्वार्तादण्डनीती एवोपकारिण्यौ। तस्मात् राज्ञो द्वे एव विद्ये।

## जयमङ्गलाक्रोडपत्रम्

अथ अर्थशास्त्राचार्यस्य बृहस्पतेः मतं विवेचयितुमाह—बृहस्पतेः शिष्या इति।

### बृहस्पतिमततात्पर्यम्

अत्रेदं बोध्यम्। बृहस्पतिः विद्याविभागपर्यालोचनावसरे राजवृत्तित्वेन त्रयीं पृथक्तया न निबध्नाति तथापि त्रयीं निष्फलां न मनुते। तस्या उपयोगित्वस्य स्वयं तेन अभिहितत्वात्। किन्तु मनुना स्वातन्त्र्येण यथा धर्मज्ञानाङ्गतया त्रय्याः पृथक् उपन्यासः कृतः तथा अत्र नोपन्यस्यते। किन्तु त्रय्यां अर्थज्ञानाङ्गत्वं स्वीकृत्य अर्थार्थं यथा त्रयी उपयुज्यते तथा तस्याः उपयोगः कर्तव्यः। एवञ्च विद्याभूम्याद्यर्थज्ञान-भाव्यकभावनाकरणत्वरूपमेव वार्तात्वं त्रय्यां स्वीक्रियते। न अतः पृथक् त्रयीस्वरूपं किञ्चिदस्ति। इत्यस्य बृहस्पतिमतस्य मनुमतापेक्षया विशेषो बोध्यः। उपरिष्टाच्चैतद् स्फुटीकरिष्यते। इदमेव अभिप्रेत्याह—वार्तेति। धर्मोपयोगिनीति विश्वासार्थमिति शेषः।

### बृहस्पतिमततात्पर्यस्फुटीकरणम्

भगवान् बृहस्पतिः यान् शिष्यान् पुरस्कृत्य स्वमतं जगाद ते शिष्याः अतीव तपस्विनः अमरावत्यादिनगरपर्यन्तं गमनसमर्थाः ब्रह्मज्ञाः असुरविशेषाः बभूवुः, इतीतिहासतः स्पष्टम्। तथाविधानां त्रय्याः धर्मज्ञानाङ्गतया उपयोगित्वं नास्ति, नरकादिगमनभयाभावात् 'न तस्य प्राणा उत्क्रामन्ति' इत्युक्तत्वाच्च। तथापि लोक-स्थितये तैः ब्रह्मज्ञैः वार्तां दण्डनीतिञ्च प्रचारयद्भिः लोकयात्रायाः निर्बाधतयाऽर्थ-कामसमृद्ध्यासह यथोन्नतिर्भवेत् तथा प्रयतमानैः धर्मप्रचारणाय त्रयी स्थापयितव्या। इति बृहस्पतेराशयः।

### "बृहस्पतिमतेन धर्मस्योपयोगित्वम्"

ननु अर्थज्ञानाङ्गतया अपेक्षितायां वार्तायां अपृथक् भावेन स्थितया त्रय्या धर्मः लोकेषु किमर्थं प्रचारयितव्यः? इति चेत् उच्यते। यदि धर्मज्ञोऽपि राजा वार्ता-न्दण्डनीतिञ्च पुरस्कृत्य धर्ममुपेक्ष्य च प्रवर्तते तर्हि अर्थप्रधानोऽयं रौद्रप्रकृतिः क्रूर-स्वभावः इति लोकैः मन्येत। तद् वक्ष्यति। "अर्थमात्रपरोऽयं निग्रहरुचिः इति परि-वादस्य यत् संवरणं प्रच्छादन"मिति। तेन तद् राजविषये अयं किं कदा कुर्यादिति शङ्का लोकेषु समुत्पद्यते सा च परक्रौर्यात् स्वदुर्नयाद् वा भवति उत्पन्नायाञ्च शङ्कायां राज्यघटकेषु अमात्यादिवर्गेषु यत्र ऐक्यमपेक्ष्यते तत्र भेदः उत्पद्यते। तदुक्तं "शङ्काजननं निर्भर्त्सनञ्च भेदः" इति। स च राज्यस्य विनाशाय मूलभूतं तत्त्वमिति मूलकृतैव वक्ष्यते। अतः सङ्घे एकत्रावस्थितेषु परस्परं शङ्कानां अवसरः

## जयमङ्गलाक्रोडपत्रम्

यथा न भवेत् तथा सर्वैः प्रयत्नः विधेयः। तत्र धर्मरुचिरेव कारणं भवितुमर्हति। इति धर्मज्ञानाङ्गतया त्रय्याः अनुपयोगित्वं ब्रह्मज्ञानां दृष्टया अस्तीऽति वदतापि बृहस्पतिना वार्तायां त्रयीमन्तर्भाव्य प्रचार्य च आत्मनि धर्मरुचित्वं प्रकाश्य वार्ता साधिता।

एतदेव अभिप्रेत्य कामसूत्रे धर्मस्योपयोगित्वं स्थिरीकृतमस्ति।[1]

किञ्च उपनिषदापि धर्मस्य महत्त्वं गायन्त्या उक्तं 'धर्मो विश्वस्य जगतः प्रतिष्ठा' इति। ( ना० उ० )

### "बृहस्पतिमते केचित्तु मतम्"

अत्र केचिद्—बृहस्पतेः तच्छिष्याणां ब्रह्मज्ञानाञ्च उपयुक्तं मतमनभिसन्धाय बार्हस्पत्याः इति वचनेन अन्यमेवाशयं वर्णयन्ति। तथाहि—अर्थलाभाय हि प्रवृत्तो राजा त्रयीं वाजवृत्तित्वेन मा स्वीकरोतु। लोकेषु तैस्तैः त्रयी आन्वीक्षिकी च अधीयते, अध्याप्यते, प्रचार्यते च। तेषां पालनमात्रं राज्ञा कर्तव्यम्। विरोधो न कर्तव्यः। तत्प्रचारेणैव सर्वत्र धर्मस्य प्रचारो भविष्यत्येव इति धर्मश्रद्धोऽयं लोकः करादीन् यथासमयं प्रदाय राजानं उपकरिष्यति। राजापि च यथा तेषु

---

१ न धर्मांश्चरेत्। एष्यत्फलत्वात्। सांशयिकत्वाच्च ॥ २१ ॥ को ह्यबालिशो हस्तगतं परगतं कुर्यात् ॥ २२ ॥ वरमद्य कपोतः श्वो मयूरात् ॥ २३ ॥ वरं सांशयिकान्निष्कादसांशयिकः कार्षापणः। इति लौकायतिकाः ॥ २४ ॥ शास्त्रस्यानभिशङ्क्यत्वादभिचारानुव्याहारयोश्च क्वचित्फलदर्शनान्नक्षत्रचन्द्रसूर्यताराग्रहचक्रस्य लोकार्थं बुद्धिपूर्वकमिव प्रवृत्तेः दर्शनाद्वर्णाश्रमाचारस्थितिलक्षणत्वाच्च लोकयात्राया हस्तगतस्य च बीजस्य भविष्यतः सस्यार्थे त्यागदर्शनाच्चरेद्धर्मानिति वात्स्यायनः। २ अ० १ अ० ५७ पृष्ठ.
तथा उपाध्यायनिरपेक्षायाम्—का० अध्याय २ श्लो० सं० ४

"बार्हस्पत्यास्तु विद्याद्वयमेव मन्यन्त इति दर्शयन्नाह—वार्तेति। वार्ता च दण्डनीतिश्चेति वक्ष्यमाणलक्षणे द्वे एव विद्ये इत्यवस्थिताः कृतनिश्चयाः। कुत इत्याह—लोकस्यार्थप्रधानत्वादिति। चातुर्वर्ण्यस्य लोकस्यार्थो भूम्यादिलक्षणः प्रधानो वृत्तिहेतुत्वात्। स चार्थो वार्तायां लभ्यते, दण्डनीत्या पाल्यत इति भूम्यादेर्लाभपालयोरिष्टत्वात्। या आन्वीक्षिकी सा त्रयीविशेषः। सा पि त्रयी संवरणमात्रप्रयोजना "धर्मरुचिरुपांशुदण्डं प्रयुञ्जीत" इति वचनात्। तेषां मते धर्माधर्मौ न स्तः, परलोकाभावात्। तत्र त्रयी निष्प्रयोजना, केवलं यदा उपांशुदण्डं प्रयोक्तुमिच्छेत् तदा त्रयीं संवरणार्थं प्रयुञ्जीत, तदा त्रय्यनुष्ठानसंवृतः परेषामशङ्कनीयो भवतीति। एतदेव प्रयोजनं नान्यदिति, न पृथग् विद्यात्वेन त्रयी गण्यत इति भावः इत्येवं सुरपुरोधसः शिष्या अन्तेवासिनो मन्यन्ते ॥

## जयमङ्गलाक्रोडपत्रम्

स्वविषये अश्रद्धा न भवेत् तथा धर्मज्ञान् पुरस्कृत्य धर्मान् ज्ञात्वा प्रजां परिपालयेत् ।[२] इति

### केचित्तु मतेन राज्ञः समस्त विद्यालाभः ।

ननु एतन्मते राज्ञा आन्वीक्षिकी त्रयी च राजवृत्तौ अन्तर्गतत्वाभावात् नाध्येतव्या इति निर्णीतम् । तर्हि तद् विषये राज्ञः अज्ञत्वप्रसङ्गः स्यात् ।

न स्यात्, यदि सः सद्भिः उपासितो भवेत् । अर्थात् तत्तद्विद्याध्येतृणां स्वकीयसभायां सदस्यत्वेन वरणं यदि राज्ञा क्रियेत तर्हि राजमण्डले अज्ञत्वस्य कारणं नास्ति । एवंविधं तत्तद्विद्यानिपुणोपासकत्वं प्रह्लादेन आत्मनि सम्पाद्य प्रजानुरागभाजनद्वारा श्रीः उपार्जिता । इति सः स्वयमेव स्वगृहे समागतमिन्द्रं बोधयामास । द्रष्टव्यं चैतन्महाभारते शान्तिपर्वणि ।[२] ( १२४ अ०, ३४, ३५, ३६, ३७, ३८ श्लोकाः )

---

२ तदेव उक्तम् कामसूत्रे—"तं श्रुतेर्धर्मज्ञसमवायाच्च प्रतिपद्येत" इति ।

( २ अ० १ अधिकरण ८ मूत्र

शास्त्रे अनधिकृतो वा धर्मज्ञसमवायात् श्रुतिस्मृत्यर्थ तत्त्वज्ञसंसर्गादित्यर्थः । प्रतिपद्येत -अवबुद्ध्येत इति ।

२ प्रह्लाद उवाच—

नासूयामि द्विजान्विप्र राजाऽस्मीति कदाचन ।
काव्यानि वदतां तेषां संयच्छामि वहामि च ॥ ३४ ॥
ते विश्रब्धाः प्रभाषन्ते संगच्छन्ति च मां सदा ।
ते मां काव्यपथे युक्तं शुश्रुषुमनसूयकम् ॥ ३५ ॥
धर्मात्मानं जितक्रोधं नियतं संयतेन्द्रियम् ।
समासिञ्चन्ति शास्तारः क्षौद्रं मध्विव मक्षिकाः ॥ ३६ ॥
सोऽहं वागग्रविद्यानां रसाना मवलेहिता ।
स्वजात्यामधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ ३७ ॥
एतत्पृथिव्याममृतमेतच्चक्षुरनुत्तमम् ।
यद्ब्राह्मणमुखे काव्यमेतच्छ्रुत्वा प्रवर्तते ॥ ३८ ॥

अतएव नीतिसारे लोकसङ्ग्रहप्रकरणे सद्वृत्तेषु सत्सङ्गस्य परिगणना कृता इत्यवगम्यते । तदुक्तं—

वाक्सूनृता दया दानं दीनोपगतरक्षणम् ।
इति सङ्गः सतां साधुहितं सत्पुरुषव्रतम् ॥ तृ० सर्ग २ श्लोक
जगन्मृगतृषातुल्यं वीक्ष्येदं क्षणभङ्गुरम् ।
सुजनैः सङ्गतं कुर्यात् धर्माय च सुखाय च ॥
सेव्यमानस्तु सुजनैर्महानतिविराजते ।—१३, १४, १५ श्लो०

## जयमङ्गला

किन्तु वार्तादण्डनीत्योः प्रवर्तमानस्यार्थमात्रपरोऽयं निग्रहरुचिरिति परिवादस्य यत्संवरणं प्रच्छादनं धर्मविजयित्वख्यापनार्थम् , तन्मात्रेणोपयुज्यते । लोकयात्राविद

## जयमङ्गलाक्रोडपत्रम्

एतेन राज्ञः धर्मरुचित्वं उपपन्नं भवति । नापि च तेन राजवृत्तित्वाभावात् त्रयी अध्येतव्या भवतीति । अत एव अत्र कौटिल्येन बार्हस्पत्या इत्युक्तं, न तु बृहस्पतेः इति ।

अस्य मतस्य औचित्यं 'न तेषां पृथक् दर्शनमस्ती'ति पूर्वोदाहृतटीकानुरोधात् स्वयं सुधीभिः ऊहनीयम् ।

निगमयति तस्मादिति—

अर्थज्ञानाङ्गतयैव राजवृत्तिः अस्तीति यदि बृहस्पतिमतं तर्हि राज्ञा धर्मरक्षणं कुतः कर्तव्यम् ? इति शङ्कां समाधातुमाह—किन्त्विति ।

**धर्मविजयित्वख्यापनार्थम् इति**

ननु धर्मविजयित्वख्यापनेन किं फलमिति चेत् ? उच्यते । राजानः त्रिविधा भवन्ति । धर्मविजयी, असुरविजयी, लोभविजयी इति । तेषु धर्मविजयिनः राज्यं कीदृशं भवतीति प्रदर्शयितुं अस्य शास्त्रस्य उपक्रमः । अर्थात् । शास्त्राश्रयणमन्तरा भूम्यादयः अर्थाः प्राप्तुं न शक्यन्ते इति नास्ति अभिप्रायः शास्त्रस्यास्य, अपितु न्यायतः अर्जनं कथं भवितुमर्हतीति निरूपयितुमेव शास्त्रमिदं प्रवृत्तम् । तत्र यदि शास्त्रमन्तरा भूम्यादयोऽर्थाः अर्ज्यन्ते तर्हि अर्थस्य आकाङ्क्षायाः कदाचिदपि पूर्त्यसम्भवात् लाभानुसारेण लोभस्य नियतत्वाच्च तदनुबन्धिकामस्यापि अमर्यादितत्वात्

---

सुधालिप्त इव श्रीमान्प्रासादश्चन्द्ररश्मिभिः ॥
हिमांशुमाली न तथा नोत्फुल्लकमलं सरः ।
आनन्दयनि चेतांसि यथा सज्जतचेष्टितम् ॥

सेव्यमान इत्यादि—विराजत इति । धर्मार्थोपचितः इति शेषः । सुजनैः धर्मार्थोपदेशदायिभिः सेव्यमानस्य धर्मार्थोपचयोपपत्तेः अन्यथा सत्सेवामात्रेण कथं विविधप्रकारेण दीप्यते ? इति । एवंरीत्या सभायां सम्मिलितैः विद्वद्भिः सङ्गतस्य राज्ञः अतिशयिततरा शोभा कीदृशी मनोरञ्जिका वर्तते इति एकेन कविना उक्तम् यत् तदत्र प्रसङ्गात् स्मार्यते ।

पयसा कमलं कमलेन पयः पयसा कमलेन विभाति सरः ।
मणिना वलयं वलयेन मणिः मणिना वलयेन विभाति करः ।
शशिना च निशा निशया च शशी शशिना निशया च विभाति नभः ।
भवता च सभा सभया च भवान् भवता सभया च विभाति नृपः ।

सु० भा०

## जयमङ्गला

इति लोकव्यवहारविदः। अन्यथा तदुक्तं धर्ममनाचरन् लोक[1]व्यवहाराद् बाह्यः स्यात्। तथा चोक्तम्—

"योगाय वार्ता लोकस्य नीतिः क्षेमाय चोदिता।
त्रयी तत्रापि मघवन् लोकपक्तिप्रयोजना।" इति।

## जयमङ्गलाक्रोडपत्रम्

तेषु अर्थार्थिषु असुरविजयित्वं लोभविजयित्वं च पर्यवसन्नं भवति। तेन प्रजायाः रञ्जनं यदपेक्षितं तत्स्थाने स्वार्थपरायणत्वात् अपरागः नियततया उत्पद्यते। ततश्च "अनात्मवान् नयद्वेषी वर्धयन्नरिसंपदः। प्राप्यापि महदैश्वर्यं सह तेन विनश्यति"॥ इत्युक्तरीत्या, विनाशः आपद्येत। अतः प्रजानुरागसम्पादनार्थं असुरविजयित्वं लोभविजयित्वञ्च अपसार्य राज्ञा धर्मविजयित्वमेव प्रख्यापनीयं भवति।[2]

अत एव चार्वाकोऽपि विना धर्मविजयित्वख्यापनं लोकयात्रा यथावन्न भविष्यतीति मन्यमानः नीतिस्थापनां चिकीर्षुः तदन्तर्गततया धर्ममनुमन्यते।[3] तद्द्रष्टव्यम्—सर्वदर्शनसङ्ग्रहे चार्वाकमतनिरूपणे।

एतेन अत्र अर्थशास्त्रे आन्वीक्षिक्यां लोकायतिकपदेन चार्वाकमतं सङ्गृहीतं यथा, तथा बौद्धमतमपि कुतो नसङ्गृहीतम्? इति शङ्का परास्ता। चार्वाको हि धर्मं निषेधयितुं प्रयतमानः प्रत्यक्षमेव प्रमाणत्वेन उररीकृत्य लोकयात्रास्थितिं यदा पश्यति तदा नीतिमुखेन धर्ममनुतिष्ठासति अनुतिष्ठति च। न तथा इतरे बौद्धादयः। तदिदं विशदीकर्तुमाह—लोकयात्रेति।

**'लोकपक्तीति'**। लोकानुराग इत्यर्थः, तत्प्रभवत्वात् अर्थस्य न्याय्यस्य।

---

अशुद्धम्
१ लोको व्यवहारात्

लोकव्यवहारादिति पाठे कल्पिते तदुक्तं धर्ममनाचरन् लोकव्यवहारात् राजा बाह्यः स्यात् अर्थात् लोके अविश्वास्यःस्यादि यावत इति अर्थो बोध्यः।

२. तदुक्तम्—का० नी० १ सर्गे ११ श्लोके :-

धार्मिकं पालनपरं सम्यक् परपुरञ्जयम्।
राजानमभिमन्यन्ते प्रजापतिमिव प्रजा.॥ ११ ।

:'कीदृटशं पुनस्तमिच्छन्तीत्याह—धार्मिकमित्यादि। धर्मासुरलोभविजयिनस्त्रयो राजानः। तेषां धार्मिकं धर्मविजयिनं धर्मात्रिरोधेन प्रवृत्तत्वात्। प्रजापतिमिवाभिमन्यन्ते प्रजाः लोकाः लोभासुरविजयिनौ तु सर्वलोकोद्वेगकारित्वादनभिमतौ। इति ज० मं०

३ नीतिकामशास्त्रानुसारेण अर्थकामावेव पुरुषार्थौ मन्यमानाः पारलौकिकमर्थं अपह्नुवानाः चार्वाकमतमनुवर्तमानाः एव अनुभूयन्ते। स० द० सं० अ० १ इति।

अतएव धर्मकामलिप्सुरर्थे प्रवर्तते तन्मूलत्वात्तयोः ( का०नी० व्याख्या ज० मं०, २ सर्ग० ३ प्र० ) इति जयमङ्गलोक्तिः सङ्गच्छते ।

## जयमङ्गलाक्रोडपत्रम्

### राजवृत्तौ त्रयीसन्निवेशतात्पर्यम्

नन्वेवं बृहस्पतिरपि वार्तायां त्रयीमन्तर्भाव्य तां उपदिशत्येव अतः अनुष्ठाने नास्ति अन्तरम् चाणक्यमतापेक्षया बृहस्पतिमते इति स्थितम्। तर्हि चाणक्यः तां राजवृत्तौ किमभिप्रायेण पृथक् कृतवान्, इति चेत् विश्वासार्थं लोकयात्रार्थं वा धर्मो नास्तीति वदता ब्रह्मसाक्षात्कारेण कृतकृत्यत्वात् सोऽपेक्षितो नास्तीति जानता वापि राज्ञाधर्मः संरक्षिणीयश्चेत् धर्मत एव स कुतो न संरक्षणीयः। इत्याद्यनेकाभिप्रायाः स्वमतनिरूपणावसरे निरूपयिष्यन्ते ।

### चार्वाक मतप्रचारको बृहस्पतिः

ननु चार्वाकमतस्य उद्धरणं सर्वदर्शनसङ्ग्रहात् प्रदर्शितमस्ति । तत्र इदं मतं बृहस्पतिना उपदिष्टम् इति निरूपितमस्ति। तद्यथा—'बृहस्पतिमतानुसारिणा नास्तिकशिरोमणिना चार्वाकेण" ( स० द० संग्रह चा० दर्शनम् ) । इति

तत्रायं प्रश्नः । बृहस्पतिर्देवगुरुः कथमिदं चार्वाकमतमुपदिष्टवान् ? इति। अत्र वदामः । 'साम्राज्यं भोज्यं, स्वाराज्यं वैराज्यं वा यस्य आकाङ्क्षितं तेन तत्तल्लाभार्थं अहिंसादिधर्मान् परिपाल्य स्वस्वाधिकारानुसारेण वेदोदितानुष्ठाने यदि प्रयत्येत तर्हि तेन साम्राज्यादि अवश्यं प्रतिबन्धकापसारणे प्राप्येत, इत्येवं निर्णीतमस्ति। तद्दृष्ट्वा कश्चित् दयादिधर्मान् अनुतिष्ठति क्लेशञ्च सहते फलञ्च लभते। फलोपलब्ध्यनन्तरं तु पूर्ववत् दयादिसाधारणधर्मान् स अनुतिष्ठेत् न्यायतः प्रजाः अनुपालयेद्वा इत्यत्र नास्ति आश्वासः। स्फुटञ्चैतत् प्राचीन इतिहासे । तमःप्रकृतयः असुरविजयिनः, रजःप्रकृतयः लोभविजयिनो वा राजपदाधिष्ठिताः ये राक्षसपदभाजो ऽभूवन् ते सर्वेऽपि आदौ वेदोदितपद्धतिमेव अलङ्कुर्वन्ति स्म । ततः राज्यं प्राप्य पूर्वावस्थिताम् तामसीमेव प्रकृतिं प्रदर्शयामासुः । तथापि तेषु प्रेमपरतन्त्रः शुक्राचार्यः प्राप्तस्य राज्यस्य अनुच्छेदाय ब्रह्मचर्यादिधर्मान् पालयितुं उपदिदेश । मन्त्रसाफल्याय रक्षसां राज्यस्य निष्कण्टकत्वञ्च प्रापयितुं स्वयं हिमाचलं सिषेवे । तपश्च तेपे । तत्प्रसङ्गे जन्मत एव दुष्टस्वभावाः राक्षसाः यदि निष्कण्टकं राज्यं स्थिररूपेण प्राप्स्यन्ति तर्हि जगदिदं एकत्र सम्पत्तिसङ्कोचेन अर्थकामयोः सुखात् सदा वञ्चितं भवेत् इति ज्ञात्वा शुक्रस्य अनुपस्थितौ स्वयं शुक्रस्वरूपं गृहीत्वा तान् मोहयितुं राक्षसानां गृहं गुरुः जगाम । "शुक्रश्च तपस्तप्त्वा स्वगृहे परावृत्तः त्वया १० वर्षपर्यन्तम् रतिसुखप्रदानेन वञ्चयितव्यः" इति आदिश्य, जयन्तीनाम्नीं कन्यां शुक्रसमीपे प्रेषयमास । तत्सेवया प्रसन्नः शुक्रः तया सह रेमे । एतन्मध्यवर्तिसमये कृतकशुक्रः गुरुः राक्षसप्रकृतीन् वाक्पाटवेन मोहयामास ।

## वैदिकसिद्धान्तसंरक्षिणी

( तदिदं वाक्पाटवं सर्वदर्शन संग्रहे उक्तम् ।[१] )

तमिमं मध्यवर्तिसमयं व्यतिक्रम्य महर्षिः शुक्राचार्यः स्वशिष्यान् असुरप्रकृतीन् उपदेष्टुमाजगाम। तस्मिन् समये कृतकशुक्रः गुरुः तत्रैव समासीत्। तयोरुभयोः अस्माक गुरुः कः ? इति राक्षसाः सन्दिदिहुः। परस्परञ्च उभावपि कलहञ्च चक्रतुः। तदानीम् असुरप्रकृतिभिः एवं निर्णीतं यत् उभाभ्यामपि गुरुभ्यां स्वीयं स्वीयं मतं निरूपणीयम्। यस्य मतं अस्मभ्यं रोचते स एव अस्माकं गुरुः स्यादिति। तदानीं कृतकशुक्रेण सर्वदर्शनसंग्रहस्थमुपर्युक्तं मतं, तथा शुक्रेण वास्तविकेन लोकयात्रोपयुक्तं औशनससम्मतञ्च निरूपितम्। परन्तु मोहावेशेन असुरप्रकृतयः कृतकशुक्रमतमेव

---

१ न स्वर्गो नापवर्गोवा नैवात्मा पारलौकिकः।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः।
अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविका धातृर्निमिता।
पशुश्चेत् निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति।
स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते।
मृतानामपि जन्तूनां श्राद्धं चेत् तृप्तिकारणम्।
निर्वाणस्य प्रदीपस्य स्नेहः सम्वर्धयेत् शिखाम्।
गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पनम्।
गेहस्थकृतश्राद्धेन पथि तृप्ति रवारिता।
स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्तत्र दानतः।
प्रासादस्योपरिस्थानां अत्र कस्मान्न दीयते।
यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिवेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः।
यदि गच्छेत् परं लोकं देहादेष विनिर्गतः।
कस्माद् भूयो नचायाति बन्धुस्नेहसमाकुलः।
ततश्च जीवनोपायः ब्राह्मणैर्विहितस्त्विव।
मृतानां प्रेतकार्याणि न त्वन्यद् विद्यते क्वचित्।
त्रयो वेदस्य कर्तारः भण्डधूर्त—निशाचराः।
जर्फरी तुर्फरीत्यादि पण्डितानां वचः स्मृतम्।
अश्वस्यात्र हि शिश्नं तु पत्नीग्राह्यं प्रकीर्तितम्।
भण्डैस्तद्वत् परञ्चैव ग्राह्यजातं प्रकीर्तितम्।
मांसानां खादनं तद्वत् निशाचरसमीरितम्। इति।

सायणमाधवीये

## जयमङ्गलाक्रोडपत्रम्

रोचयामासुः । तस्याऽयं परिणामोऽभूत् यत् असुरप्रकृतयः लोकद्वेष्यतां गताः, पर्यन्ते समूलं व्यनश्यन्, इति ।

एवं रीत्या धर्मसंस्थापनमुखेन अर्थकामार्जनाय प्रवृत्तान् असुरप्रकृतीन् मोहयितुं अगत्या देवगुरुः कृतकशुक्रो भूत्वा यत् लोकायतिकं मतं प्रेरयामास तदेव चार्वाकमतमिति नाम्ना चारुवाकत्वात् अद्य लोके प्रवर्तते । तदिदं स्पष्टीकृतम्— अर्थशास्त्रिय-जयमंगलायां-'लोकायतं बार्हस्पत्यं लोकाय बुद्धिं तनो'तीति नैरुक्तम्' इति । ( अ० १ अं० १ ) ।

### चार्वाकमतप्रचारस्य नीतित्वम्

किञ्च यथा चार्वाकमतं उक्तोद्देश्येन प्रवर्तितं तथा स्वयं भगवान् बुद्धो भूत्वा अर्थकामप्रधानान् असुरप्रकृतीन् मोहयितुं बौद्धमतं प्रसारयामास । यतः—यद्येवं यथावसरमेतन्मतं प्रकाश्यतां नोपगच्छेत् तर्हि स्वभावतः असुरप्रकृतयः गृहीतदण्डाः अजेया भवन्ति । तत्रापि वेदोदितकर्माणि यथावत् कृत्वा यदि पुण्यवन्तो भवन्ति तर्हि सुतरामेव अजेयाः स्युः । लोकस्थितिश्च चिराय विनष्टा स्यात् इति । एतन्मतस्यापि- नीतित्वं सिद्धम् एतदनुबन्धी कश्चन अपरोऽपि इतिहासः समुपलभ्यते ।

मिश्र[१] ( Egypt ) देशे कश्चित् समर्थः तत्र गत्वा तत्रत्यान् नागरिकान् हीनकर्मणः पराङ्मुखीकृत्य उत्तमकार्यकरणे स्वाभिमानमुत्पादयितुम् मूलतः संशोधयामास । तथा शुचिभूतेषु तेषु नागरिकेषु शर्मादिपदसंकेतेन चातुर्वर्ण्यं कल्पितवान् । ततः तेऽपि नागरिका दयाऽहिंसादिधर्ममाश्रित्य सर्वदेशेषु साम्राज्यं कर्तुमैच्छन् । तदा तेषु मोहमुत्पादयितुं तन्निरासाय बुद्धावतारो अभूत् इति ।

एवमेव तस्मिन् तस्मिन् अवसरे अन्यत्रापि नास्तिकमतप्रचारः अपेक्षितत्वात् कृतः इति दिवोदासत्रिपुरादीनां इतिहासनिरूपणावसरे पुराणादिषु काशीखण्डादिषु दृश्यते । तस्मात् समयमपेक्ष्य गुरुणा कृतः नीतिसारप्रदिष्टेषु सामदानभेददण्डमायोपेक्षेन्द्रजालेषु उपायेषु मायायां अन्तर्भूतः चार्वाकमतप्रचारो न नीत्यसम्मतो भवति । अतएव भागवतादिषु बुद्धप्रशंसायां 'यज्ञकृतोऽतदर्हान्' इति या उक्तिः उपलभ्यते सा सङ्गच्छते इति ।

---

१. तदुक्तं भविष्यत् पुराणे प्रतिसर्गपर्व । अ० ६

वासं कृत्वा ददौ ज्ञानं मिश्रदेशे मुनिर्गतः ।
सर्वान् म्लेच्छान् मोहयित्वा कृत्वा ऽथ तान् द्विजन्मनः ॥ १२ ॥
सङ्ख्या दशसहस्रं च नरवृन्दान् द्विजन्मनाम् ।
द्विसहस्रं स्मृता वैश्याः शेषाः शूद्रसुताः स्मृता ॥ १३ ॥
तैः सार्धमार्यदेशे स सरस्वत्याः प्रसादतः ।
अवसद्वै मुनिश्रेष्ठो मुनिकार्यरतः सदा ॥ १४ ॥

## जयमङ्गलाक्रोडपत्रम्

### चार्वाकमतस्य वैदिकाना कृते उपयोगित्वम् ।

ननु उपरिनिर्दिष्टं चार्वाकमतं बृहस्पतिना प्रोक्तमिति कृत्वा तद् बार्हस्पत्यमित्युच्यते । तेन बार्हस्पत्यत्वात् वैदिकैरपि इदं मतं अनुष्ठेयं भवतीति भ्रान्तिर्भवति । तदपेक्षया स्पष्टतया चार्वाकमतत्वेन शास्त्रकृद्भिः यदि तन्मतं उद्घोषितं भवेत् तर्हि इयं भ्रान्तिः न प्रसज्येत । तथा कुतो न कृतम् ? इति चेत्, नह्रीदं चार्वाककतं सर्वथा परित्याज्यमित्युच्यते, अपितु पर्यन्ते राजनीत्युपदिष्टात्मगुणसंपत्तिमता सकलस्वामिकर्मकुशलेन निर्व्यसनिना राज्ञा लोकयात्रायै स्वीयनीत्यनुसरणं चार्वाकमतरीत्यापि कर्त्तव्यम् । अर्थात् 'नीतिकामशास्त्रानुसारेण अर्थकामावेव पुरुषार्थौ' इत्याद्युद्धृतसर्वदर्शनसङ्ग्रहोक्तरीत्या तस्य वर्तनमावश्यकम् । नहि सः राजा 'अहं ब्रह्मज्ञोऽस्मि' इति कृत्वा लोकाचारविरुद्धमन्याय्यं वा प्रत्यक्षप्रमाणविरुद्धं वा कर्म अनुतिष्ठेत् । इत्यभिप्रायेण चार्वाकमतस्यापि क्वचित् कदाचित् सङ्ग्राह्यत्वमस्ति । अतएव 'संवरणार्थं त्रयी' इति ग्रन्थेन मूलकृता चार्वाकमतम् अत्र प्रत्यपादि ।

यदि च इदं चार्वाकमितं बार्हस्पत्यमतत्वेन शास्त्रकर्तृभिः निरूपितं न भवेत् तर्हि ब्रह्मविद्भिः राजभिः इदं मतं सङ्गृहीतं न स्यात् । इत्यापत्तिभिया चार्वाकमतं बार्हस्पत्यमतत्वेन उपदिष्टं ज्ञेयम् ।

### ब्रह्मज्ञस्य नृपतिपदाधिकारित्वम्

ननु ब्रह्मज्ञ एव मानवः नृपतिपदे अधिष्ठितः राजा भवितुमर्हति स च चार्वाकमतानुसारेण नीतिवर्तनाधिकारीति उच्यते । परं ब्रह्मज्ञस्यैव तदधिकारित्वपिति कुतो वक्तव्यम् ? तत्र ब्रूमः—सर्वेषां मनुष्याणां शासनाय शक्तिमतः राज्ञः आवश्यकता तदा भवति यदा मात्स्यन्यायः अपरिपालनञ्च प्रसृतं भवति इति निरूपितमस्ति वैदिकसिद्धान्तसंरक्षिण्याम् । तस्माद् राज्ञः प्रधानं कर्त्तव्यं यद् सर्वेषां यथावत् परिपालनम् । तच्च —

विना रागेण सर्वत्र सुखिनामनुमोदनम् ।
यथाशक्ति परित्राणं दुःखिनामविशेषतः ॥ भावप्रकाशन पृ० १३५

इत्येवं भावप्रकाशनोक्तरीत्या पालकस्य मनःस्थितिसत्त्वे भवितुमर्हति । अन्यथा रागद्वेषपराधीनतायां अनौचित्यम् अन्याय्यता, सतामपरिपालनं दुष्टानामनिग्रहश्च इत्यादिदोषाः अपरिहार्यतया आपद्येरन् । एवंस्थिते "स यच्छीलः तच्छीलास्तस्य प्रकृतयो भवन्ति" इति जयमङ्गलानिर्देशानुसारेण सर्वासु सप्तविधासु प्रकृतिषु तेषामेव दोषाणां प्रसक्त्या पुनरपि मात्स्यन्यायः अपरिपाचनश्च यथास्थानमेव तिष्ठेत् । अतः एभ्यो दोषेभ्यः रक्षणाय समानरूपेण सर्वेषां सुखिनामनुमोदनं दुःखिनाञ्च परित्राणां यथाशक्ति स एव कर्तुमर्हति, यः स्थायिशमप्रकृतिसम्पन्नः

## जयमङ्गलाक्रोडपत्रम्

स्यात्। एतत्प्रकृत्यभावे तु रागद्वेषाणां विलयनं कदापि न सम्भविष्यतीति साहित्य-शास्त्रालोचनेन स्फुटतरं वक्तुं शक्यते। तदुक्तं भावप्रकाशने द्रष्टव्यम्।[1]

शमश्च स्थायिधृतिभावात् नातिरिक्तः। धृतिभावस्य च परिष्कृतं स्वरूपं ज्ञानप्रभामिश्रितानन्दप्रभात्मकमित्यादि सप्रपञ्चं प्रपञ्चितम्। पुनरुक्तिभयात् नात्र विमृश्यते। अतएव राज्यस्य मूलभूतं तत्वं सत्त्वं बुद्धिश्च वर्तते इति प्रागुक्तभारतीय-राजनीतिसिद्धान्तोऽपि अत्र स्मर्तव्यः। तदेतत् क्रोडीकृत्य-कामन्दकेन ब्रह्मज्ञ एव राजा प्रथमः अधिकारी इत्यभिहितम्[2]।

यद्यपि यदा हि ब्रह्मज्ञो मानवः अभिषिच्यते राजपदे, तदा त्रय्याः आन्वीक्षिक्या-श्चानुसरणं कृतमकृतमुभयमपि समानमेव, तस्य स्वर्गनरकादिपरलोकप्रसङ्गाभावात्। अतएव उपाध्यायनिरपेक्षायां—तेषां मते धर्मा-धर्मौ नस्तः' इति यत् प्रतिज्ञातमस्ति तद् ब्रह्मज्ञानं लक्ष्यीकृत्य समन्वितं भवतीति। तथापि "लोकसङ्ग्रहमेवापि संपश्यन् कर्तु-मर्हसो" ति, गीताप्रामाण्यात् प्रत्पक्षप्रमाणादिना लोकयात्रोपयोगित्वस्य सिद्धत्वाच्च

---

१. ६ अधिकारके। १३५ पृ०

शान्तो विषयहेयत्वदर्शनश्रवणादिभिः।
धर्माख्यानपुराणैश्च पुण्यतीर्थावगाहनैः॥
पुण्याश्रमनिवासैश्च योगिभिर्नित्यसङ्गमैः।
जडान्ध—वधिरादीनां तारतम्यावलोकनैः॥
व्याधिदारिद्रय—मरणैर्नारक्या यातनाश्रुतेः।
पुण्यक्षयप्रपतनकुयोनिश्रवणादिभिः॥
क्लेशप्रयत्नवैफल्याद्दुःखत्रितयघातनैः॥
इत्यादिभिर्विभावैः स्याच्छमात्मा कस्यचिद्रसः॥
यथाशक्ति परित्राणं दुःखिनामविशेषतः।
विना रागेण सर्वत्र सुखिनामनुमोदनम्।
शाकमूलफलैन्नैः शरीरस्थितिसाधनम्।
व्रतोपवासनियमो वल्कलाजिनधारणम्॥
अहिंसा सर्वभूतानामविरोधादनुग्रहः।
अङ्गेषु कार्श्यं कार्कश्यं स्नानं त्रिषवणोचितम्॥
ऋज्वायतासनं ध्यानं नासाग्राहितलोचनम्।
विषयेभ्यो नियमनमिन्द्रियाणां निवृत्तये॥
इत्यादयो विशेषाः स्युः प्रायः शान्तेषु योगिषु।

२. सुनिपुणमुपसेव्य सद्गुरुं शुचि रनुवृत्तिपरो विभूतये।
भवति हि विनयोपसंहितो नृपतिपदाय शमाय च क्षमः। इति।

## जयमङ्गलाक्रोडपत्रम्

अग्रे वक्ष्यमाणं वर्णाश्रमाचारतत्वं दयाऽहिंसादिसाधारणधर्मतत्त्वं च त्रयीमनुसृत्य ब्रह्मज्ञेनापि राज्ञा अनुष्ठाय लोकपालनं मात्स्यन्यायस्य अपसारणं च कृतञ्चेत् चर्वाकमतमेव एवंरीत्या अनुष्ठितं भवति। अतएव ईदृशानां राज्ञां कृते तदधिकारानुसारेण एकदेशिकः बृहस्पत्युपदेशोऽपि सफलतां भजते। अतएव सः बृहस्पतिः देवगुरुः इति व्यपदिश्यते पुराणादिषु। तस्यायमर्थः—देवानां परलोकानपेक्षाणां ब्रह्मज्ञानां गुरुरिति। तस्मात् बृहस्पतिना ब्रह्मप्रोक्तात् लक्षाध्यायात्मकमूलग्रन्थात् अर्थाधिकारिकं शास्त्रं पृथक् कृतमस्तीत्यभिप्रायकं पूर्वनिर्दिष्टं कामसूत्रवचनं सुसङ्गतं भवति। अतः पर्यन्ते ब्रह्मज्ञानां कृते अनुष्ठेयत्वेन पर्यवसितं लोकयात्रोपयोगि बृहस्पत्युपदिष्टं चार्वाकमतमपि न असाधु इति स्थितम्।

## चार्वाकमतस्य अन्यथानयनम्

नन्वेवं उपर्युक्तरीत्या बृहस्पत्युपदिष्टमिदं चार्वाकमतमतीव उपयोगि भाति तथापि तस्य अन्यथाप्रचारणं बृहस्पतिशिष्येषु असुरप्रकृतिषु कथमभूत्? इति चेत्, नायमपराधः बृहस्पतेः ब्रह्मज्ञस्य वा। अपितु तेषां अल्पज्ञानां तमःप्रकृतिरेव तत्र कारणम्। दृश्यते हि लोके यत् एकस्यैव गुरूपदिष्टवाक्यस्य तदन्तेवासिनः स्वस्वप्रकृत्यनुसारेण अन्यादृशं अन्यादृशमर्थं कल्पयन्ति इति। प्रसिद्धं चैतत् ब्रह्मणः इन्द्रविरोचनाभ्यां सह संजाते संवादे—

कदाचित् वास्तविकतत्त्वजिज्ञासूभूत्वा इन्द्रविरोचनौ ब्रह्माणं प्रष्टुं जग्मतुः। स उवाच 'आत्मानं पश्यतं इति। तच्छ्रुत्वा इन्द्रः शरीरातिरिक्तमात्मानमेव अचिन्तयत्। विरोचनस्तु शरीरमात्मत्वेनाचिन्तयत् इति।[1] तद्वत् बृहस्पत्युपदिष्टचार्वाकमतस्य अन्यथानयनविषयेऽपि बोध्यम्।

## ब्रह्मज्ञेन शास्त्रमध्येतव्यम्

ननु बृहस्पतिः चार्वाकमतं ब्रह्मज्ञानुपदिशति ते च अधीयते इत्यसङ्गतम्, ब्रह्मज्ञस्य सर्वज्ञत्वात् इति चेन्न। ब्रह्मज्ञो हि सर्वज्ञो भवतीति न वेदान्तशास्त्रस्य आशयः। ब्रह्मज्ञानेन ब्रह्मविषयकाज्ञानस्य नाशः तद् विरोधित्वादुपपद्यते। यद्विषयकं ज्ञानं तत् तद्विषयकाज्ञाननाशकमित्येव नियमः सर्वसम्मतः इति ब्रह्मज्ञेनापि अन्यत् अध्येतव्यमेव। अतः अर्थशास्त्रविषयकं यद् अज्ञानं तद् विरोधी ब्रह्मविषयकं ज्ञानं भववीति नाश्यनाशकभावः न कल्पयितुं शक्यः। 'तस्मिन् विज्ञाते सर्वं विज्ञातं भवति' इत्यादिश्रुतिवचनेन सर्वविषयकाज्ञानस्य विरोधि ब्रह्मविषयकं ज्ञानमस्तीति केचिद् वदन्ति। तत् वेदान्तन्यायरत्नावलीकृतः नानुमन्यन्ते, अपितु एतन्मतानुसारेण

---

१. इन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हा संविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः। इत्यादि, छां उ० ७

## जयमङ्गलाक्रोडपत्रम्

सर्वं विज्ञातब्रह्मतादात्म्यवद् भवति इत्येवार्थः कल्प्यते। इति न्यायरत्नावल्याम् द्रष्टव्यम् —[१]

ब्रह्मज्ञानस्य इतरविषयकाज्ञाननाशकत्वं नास्तीत्यत्र इति हासोऽपि योगवासिष्ठे वर्तते। तेनोक्तार्थः स्फुटीभवति। तद्यथा—ब्रह्मज्ञा सत्यपि विषूचिका नाम्नी राक्षसी लोके वार्तां दण्डनीतिञ्च अनभिज्ञातवती यथेच्छं लोकान् जधास जघान च, अतो लोके महान्तमातङ्कं प्रसारितवतीति। तस्मात् योगवासिष्ठोक्तः इतिहासः उक्त-न्यायरत्नावलीवचनेन सह समन्वितो भवति इति ध्येयम्।

### चाणक्योपदिष्टचतसृविद्याधिकारित्वम्

नन्वेवमेतावता प्रबन्धेन ब्रह्मज्ञ एव मुख्यो राज्याधिकारीत्युक्तम्। तर्हि ब्रह्म-ज्ञानामभावे राजैव न भवितुमर्हतीति अभिप्रायः राजनीतेः स्वीकर्तव्यः। इति चेन्न। ब्रह्मज्ञः राजपदाधिकारी यदि प्राप्नोति तर्हि इयं राजनीतिः तमेव राजपदे प्रतिष्ठा-पयितुं वाञ्छतीति प्रथमः पक्षः। तदभावे तु—

अपारे यो भवेत् पारम् अप्लवे यो भवेत् प्लवः।
शूद्रो वा यदि वाऽप्यन्यः सर्वथा मानमर्हति।

इति महाभारतोक्तरीत्या यः लोकपालनसमर्थो वर्तते अथवा तथाविधं सामर्थ्यं यत्र सम्पादनीयत्वेन चिकीर्षितमस्ति सः अब्रह्मविदपि परलोकभीतिं दृढीकृत्य अङ्कुश-स्थानीयं उग्रादपि उग्रतरं धर्मं अलङ्कुर्यात्! तथा स यथावत् प्रतिबोधार्थं आन्वी-क्षिकीं त्रयीं च वार्तादण्डनीतिभ्यां सह ज्ञातुं प्रयतेत। तेन अब्रह्मविदपि राजा अन्यायान् निवृत्तो भूत्वा लोकशास्त्रानुगं मतमेव सर्वत्र परिचालयन् मात्स्यन्यायाभि-भवात् लोकं परित्रातुं अर्हति।

एतस्य बीजभूतं तत्त्वं अङ्कुशस्थानीयत्वेन स्थितमुपर्युक्तं धर्मशासनमेव। तदुक्तं बृहदारण्यकोपनिषदि[१] द्रष्टव्यम्।

---

२. ननु अज्ञातत्वशून्यचैतन्यं द्वितीयपक्षे तत्वज्ञानोत्तरमपि अप्रसिद्धम्। तदापि घटं न जानामीति प्रत्ययेन चितः अज्ञातत्वशून्यत्वाभावात्। इति सन् १३२८ चौ० सं० सीरिज

१. स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रम् यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान्बलीयाँसमाशँसते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मा-त्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तँ सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति॥ १४॥ बृ० उ० १८४ पृ०

भाष्य—अर्थः अप्यबलीयान्दुर्बलतरो बलीयांसमात्मनो बलवत्तरमप्याशंसते जेतुं धर्मेण बलेन। यथा लोके राज्ञा सर्वबलवत्तमेनापि कुटुम्बिक एवं तस्मात् सिद्धं धर्मस्य सर्वबलवत्तरत्वात् सर्वनियन्तृत्वम्।

**दण्डनीतिरेका विद्येत्यौशनसाः[1] तस्यां हि[2] सर्वविद्यारम्भाः प्रतिबद्धाः इति ॥**

---

## जयमङ्गलाक्रोडपत्रम्

तस्मात् अस्य द्वितीयपक्षस्य संरक्षणार्थं प्रचारणार्थञ्च विशेषतया आन्वीक्षिक्याः त्रय्याश्च उपयोगो बोध्यः। इत्येवं रीत्या बृहस्पतिचाणक्ययोः मतस्य परस्परविरुद्धतया भासमानस्यापि अधिकारिभेदेन व्यवस्थापनायां कृतायां समन्वयो भवितुमर्हतीति ध्येयम्।

### स्वमतम्

वस्तुतस्तु—मानवमतविचारणावसरे परिष्कृतस्य त्रयीत्वस्य स्थितिः आन्वीक्षिक्यां अस्तीति न ततः पृथक् आन्वीक्षिकीसत्ता वर्तते इत्याशयमवलम्ब्य मानवमतं विचारितम्। एवमेव, परिष्कृतं वैदिकसिद्धान्तसंरक्षिण्यामुक्तम् आन्वीक्षिकीत्वं परिष्कृतत्रयीत्वस्वरूपात् व्यतिरिच्यते। अतः तस्य पृथक् उपदेशः इति चाणक्यमतं विचारितम्। एवंरीत्या उभयोः समन्वयः कृतः। तथैव वैदिकसिद्धान्तसंरक्षिण्यां परिष्कृतस्य वार्तात्वस्य स्थितिः आन्वीक्षिक्यां त्रय्याञ्च समस्तीति, ततः न आन्वीक्षिकी त्रयी च पृथग्विद्ये भवतः। स्वरूपतस्तु तद्भिन्नमेव इत्येवं सूक्ष्मं तत्त्वं संलक्ष्यते तर्हि प्रागुक्तमानवमतसमन्वयन्यायेन बृहस्पतिचाणक्य-मनुमतानां समन्वयः साधुतय समन्वितो भवितुमर्हति। एवमौशनसमतेऽपि बोध्यम्। इत्यलं अतिकल्पनया।

## श्रीमूला

मतान्तरमाह—दण्डनीतिरेकेत्यादि। दण्डनीतिः, एका एकैव, विद्या प्राधान्येन विद्याव्यपदेशमर्हतीत्यर्थः इति। औशनसाः शुक्रशिष्याः, कुतः? सर्वासां विद्यानामारम्भाः योगक्षेमाः, तस्यां हि प्रतिबद्धाः दण्डनीतावेव प्रतिष्ठिताः, इति कृत्वा। यद् वक्ष्यति—'आन्वीक्षिकीत्रयीवार्त्तानां योगक्षेमसाधनो दण्डः' (अध्याय ४) इति।

## वैदिकसिद्धान्तसंरक्षिणी

अर्थकामाभ्यां प्रयतत एव प्रजा अतः तदर्थमपि राज्ञा वार्ता कुतोऽध्येतव्या। सत्यप्येवं सा अरक्षिता चेदात्मानमपि धारयितुं न समर्था इति शासकस्यावश्यकता वर्तत एव। तथा सति वार्तामपि त्रयीमिव राजवृत्तितः पृथक् कृत्वा तदन्तर्गततया दण्डनीतिरेवोपयुज्यते इति मन्वानानां औशनसानां मतमाह-दण्डेति। शेषं पूर्वोक्त-

---

नी० टी० १. शुक्रशिष्याः

२. सर्वे आरम्भा मात्स्यन्यायाभावे प्रारम्भाणां प्रवर्तनात्।

## वैदिकसिद्धान्तसंरक्षिणी

मत्रापि स्मर्तव्यम्। अत्रायं निष्कर्षः। लाभपालनज्ञानादिभाव्यकभावनाकरणत्वं इतिकर्तव्यताविधया आन्वीक्षिक्यादितिसृषु विद्यास्वपि एतन्मते अस्ति इति। तदाहै-केति। एका प्रधाना। तदधीनत्वादन्यासाम्। इति शब्दोऽयं इतरव्यावृत्यर्थकः। औशनसाः शुक्रशिष्याः। तस्यां दण्डनीतौ। हिशब्दो हेत्वर्थकः तत्प्रधानत्वे। आरंभाः व्यापाराः प्रतिष्ठिताः इति। कथमेतदिति नीतिसारे स्फुटम्—रथनाभिवत्प्रतिष्ठिताः इति ( नी० १ स० २ )। अत्रायंभावः नाभौ स्थिता अराः भ्रमणेनोपर्यधो भागे नेम्यां अवतिष्ठन्ते तथा राजायत्ता नीतिर्यां विद्यामुन्नमयितुं वाञ्छति आश्रयदानेन सा अभिवर्धते। अन्यास्तु उपेक्षिता भवन्ति। तदुक्तं—

नीतिसागरनिष्क्रांताः कुप्रज्ञामारुतेरिताः।
पृथक्त्वेनेव दृश्यन्ते नानाशास्त्रमहोर्मयः ॥ इति।

## जयमङ्गला

औशनसा इति। उशनसः शुक्रस्य शिष्याः। ते हि वार्ताव्यवहारं दण्डनीत्या-मेवान्तर्भावयन्ति। ततश्च दण्डनीतिरेव प्रधानम्। यदाह—तस्यामिति दण्डनीत्याम् यस्मात् सर्वविद्यारम्भाः सर्वविहितव्यापारा योगक्षेमरूपाः प्रतिबद्धाः। तस्या अभावे आरम्भाणामप्रवृत्तेः यथोक्तम्—

## जयमङ्गलाक्रोडपत्रम्

औशनस मतं निरूपयितुमाह—औशनसा इतीति। शुक्रस्येति। अनेन उशनाः शुक्रादन्यः इति केषाञ्चिन् मतन्निरस्तम्।

**प्रधानमिति**। दण्डनीत्यैव इतरासां विद्यानां रक्ष्यमाणत्वात् अस्याः प्राधान्यं बोध्यम्। एवञ्च पृथिव्या लाभपालनवर्धनसत्पात्रप्रतिपत्तिज्ञानभाव्यकभावनाकरणत्व-रूपं औशनसमतेन वैदिकसिद्धान्तसंरक्षिण्यां व्याख्यातं दण्डनीतित्वं इतरासु विद्यासु दण्डनीतिविद्यायामिव समन्वितं भवति। अतः एतेषां मते एकैव दण्डनीतिः इति बोध्यम्।

दण्डनीतेः योगक्षेमरूपत्वम्।

योगक्षेमरूपा इति। अत्रेदं तत्त्वं—न्यायव्याकरणादिकेवलशास्त्राध्येतारः राजप्रसादाभावे आत्मानमपि पालयितुं न समर्था भवन्ति किमुत अन्यान्।[1]

---

१. तदुक्तं नीति सारे—

आन्वीक्षिकीत्रयीवार्ताः सतीर्विद्याः प्रचक्षते।
सत्योपिहि न सत्यस्ता दण्डनीतेस्तु विप्लवे।
दण्डनीतिर्यदा सम्यङ् नेतारमधितिष्ठति।
तदा विद्याविदः शेषा विद्याः सम्यग् उपासते ॥

## जयमङ्गलाक्रोडपत्नम्

तस्मात् राजनीतिः यं पुरस्कुरुते अनुमनुते वा तस्यैव प्रचारो भवति। प्रसिद्धं चैतत् भोजराजेन संस्कृतभाषायाः ईदृशः प्रचारः कृतः यस्याः शुद्ध्यशुद्धिविषयौ हालिकस्यापि परिज्ञाततत्त्वौ आस्ताम्[1] इति। एवं वर्तमानसमयेऽपि आङ्ग्लशासनेन पुरस्कृताम् आङ्ग्लभाषां संस्कृतज्ञाः महता समादरेण समालिङ्गन्ति व्यवहरन्ति च। तदेव मूलकृता सर्वविद्यारम्भं प्रति राजनीतेः योगक्षेमसाधनत्वं रथनाभिसञ्चरण-

प्रयुक्तस्य अरासञ्चरणस्य दृष्टान्तं प्रदर्श्य स्फुटीकृतमस्ति। यथा रथनाभौ स्थिताः अराः उपर्यधोभावेन तिष्ठन्ति नेम्यां तथा राजविद्या समये समये अपेक्षानुसारेण इतराः समस्ताः विद्याः उपर्यधोभावेन प्रापयितुं शक्नोति। अतः सर्वासां विद्यानां कलानाञ्च योगक्षेमौ राजनीत्यायत्तौ इति सिद्धं भवति।

किञ्च अपरयाऽपि दिशा दण्डनीतौ योगक्षेमरूपत्वं कथं भवतीति विमृश्यते। तथाहि—यदि दण्डनीतिः उत्तमं नेतारं न वृणीते तर्हि वेदशास्त्रम् अधीयाना अपि दुष्प्रज्ञा भवितुमर्हन्ति इति नीतिसारवाक्यात् अवगम्यते।[2]

अतएव इतिहासेषु अधीतशास्त्रा अपि केचन राक्षसभावं भजन्तः परधनं परभार्याः अपहरन्तिस्म तथा स्वार्थं साधयितुं सद्वृन्देष्वपि अभिचारं प्रायुञ्जन् इति अनेकानि उदाहरणानि उपवर्णितानि न तिरोहितानि वर्तन्ते। अतः लोकपालकः राजा लोकयात्रासञ्चालनाय दण्डनीतेः आवश्यकतामनुभवन् तां यथावज् ज्ञात्वा यदि प्रचारयति तर्हि वेदशास्त्राध्येतारः स्वीयां मर्यादां नातिक्रमितुमर्हन्ति इति राजनीतेः योगक्षेमरूपत्वं सर्ववादिसम्प्रतिपन्नम्।

## शुक्रमतातात्पर्यम्

एतच्छुक्रमतविषयेऽपि चाणक्यमतेन सह भासमानो विरोधः आपातत एव बोध्यः। तस्य वास्तविकहृदयं बार्हस्पत्यमतनिरूपणावसरे उपवर्णितसमन्वयरीत्या बोध्यम् इति।

---

१　केऽभूवन् नाढ्यराजस्य राज्ये प्राकृतभाषिण.।
काले श्रीसाहसाङ्कस्य के न संस्कृतभाषिणः॥
भूरिभारभराक्रान्त बाधति स्कन्ध एष ते॥
न तथा बाधते स्कन्धो यथा बाधति बाधते।

२. जगदेतन्निराकन्दं कामलोभादिभिर्बलात्।
निमज्ज्यमानं निरये राज्ञा दण्डेन धार्यते॥ इति।

चतस्र एव विद्या[1] इति कौटल्यः । ताभिर्धर्मार्थौ[2] तद्विद्यात् तद्विद्यानां विद्यात्वम्[3] ॥

## श्रीमूला

स्वमतमाह—चतस्र एवेत्यादि । विद्याः चतस्र एव, एवकारेण त्रित्वादि-पक्षव्यवच्छेदः । आसां विद्यात्वविद्यान्तरत्वयोर्विद्यात्वमादौ निर्वचनभङ्ग्या स्थापयति—ताभिरित्यादि । विद्यात्वं नाम धमर्थिवेदनकरणत्वम् । तच्चान्वीक्षिक्यादिषु चतसृषु अविशिष्टमित्यर्थः । विद्यान्तरत्वं तु परस्परविसदृशस्वरूपफलनिरूपणेन यथाक्रमं स्थापयिष्यते ।

## वैदिकसिद्धान्तसंरक्षिणी

तत्तद्भाव्यकभावनाकरणत्वरूपविद्यात्वभेदेन फलभेदेन च प्रतिज्ञातं विभागं समर्थयितुं स्वमतमाह-चतस्र इति । चतस्रः आन्वीक्षिक्यादयः । अत्रायं भावः-यदा परलोकं वेदं धर्मं चाधिकृत्याप्रामाण्यादिशङ्कानामतिभरः अथवा यथा राजा तथा प्रजा इति न्यायेन सर्वोपि जानपदो-राजवदर्थर्शाचर्भवति, विना सेवां जीवनोपायता नास्ति इति वा लोकोः मन्यते तदा दण्डनीत्या सह अन्यविद्यानां पृथक् प्रयोजनं निर्विवादं भवति । एवंविधमतप्रचुरे समये मूलकृतोऽवतरणं अतस्तदा चतसृणां विद्यानां प्रतिष्ठापनमावश्यकमासीदितिचतसृणां उपादानम् । तेन विद्यानां राजनि पूर्णता तदैव स्यात् यदा चतस्रोऽप्यधीयन्ते इति तात्पर्यम् । एवकारेण इतरासां चतुर्विद्या-तिरिक्तानां कर्मविद्यानां धर्मार्थविद्यात्वव्यावृत्तिः सूचिता । ननु कथं व्यावृत्तिरिति शङ्कां समाधातुमाह ताभिरिति । चतुर्विद्याभिः । तृतीयार्थः करणत्वम् । विद्या-दित्यनेन वेदनभाव्यकत्वं अभिधीयते; ज्ञानं उपासीतेतिवत् । वेदने धर्मार्थौ इति द्वितीयान्तार्थस्य धर्मार्थविषयकत्वस्यान्वयः । तेन चतुर्विद्याकरणकभावना धर्मार्थ-विषयकवेदनभाव्यिका इति बोधः । तेन कर्मविद्यानां धर्मार्थोभयवेदनभाव्यकभावना-करणत्वाभावान्नान्वीक्षिक्यादावन्तर्भावः सम्भवति इति ध्येयम् । शेषंक्रोडपत्रे द्रष्टव्यम् ।

---

नी० टी० १. एवेति एवशब्दोऽवधारणे । यस्मादभिधानस्वरूपोपकारकफला हि सर्वाभिन्ना-स्तस्माच्चतस्त एव ।

२. ताभिरिति अभिधानतो भेदं दर्शयन्नाह । ताभिरिति ।

३. विद्यादिति । विचारयेत् । जानीयात् लभेत । सत्तापादनेन विद्यमानो कुर्यादित्यासां विद्यात्वम् । अनेन भिन्नाभिधानता विद निवारणे विचारणे 'विद ज्ञाने', विद्लृ लाभे', 'विद सत्तायाभि'ति धातुचतुष्टयोत्पादनाभिधानत्वात् ।

### जयमङ्गला

"इयं धर्मार्थकामानां पृथिवी लाभ पालना।[1]
वेदिनी नीतिविद्यैव पुरुषार्थस्य साधिका॥" इति।

स्वमतमाह—चतस्र इति। यथोपवर्णितपूर्वाचार्यमतसम्भवेऽपि परस्परं विसदृशव्यापारत्वाद् विसदृशस्वरूपत्वाद् विसदृशफलत्वाच्चतस्र एव। तत्र विसदृशव्यापारं दर्शयन्नाह—ताभिरिति। विचारज्ञान लाभसत्तापादनार्थाभिः।

### जयमङ्गलाक्रोडपत्रम्

अथ चतसृणामपि विद्यानां वैदिकसिद्धान्तसंरक्षिण्यां निरुक्त तत्तद्विद्यालक्षणरीत्या पार्थक्यस्य मूलदर्शयितुमाह–स्वमतमिति। यथोपवर्णितेति।

अनेन चाणक्यस्य पूर्वाचार्यमतखण्डने तात्पर्यं नास्ति, अपितु समुच्चये इति बोध्यम्।

### विद्याध्ययनविधेर्द्वैविध्यम्

अत्रेदं तत्त्वमनुसन्धेयम्— कौटिल्येन राजवृत्तौ अनन्तर्भाव्य यद्यपि सर्वाः विद्याः लोकपालनाय राज्ञा अध्येतव्याः इत्युक्तम्। तथापि एताः समस्ताः चतस्र एव विद्याः अध्येतव्याः सर्वैः इति एकविधविधाविव कौटिल्यतात्पर्यं नावगन्तव्यम्। अपि तु संयोगपृथक्त्वन्यायेन प्रकृताध्ययनविधेः फलभेदेन द्वैविध्यमुचितं भाति। तद्यथा— 'दध्नेन्द्रियकामस्य जुहुयात्" इति वाक्येन दध्नः इन्द्रियार्थत्व अवगम्यते पुनः 'दध्ना जुहोती'ति वाक्येन अपरत्र यागार्थत्वमपि तस्यैव अगगम्यते। तथैव सर्वासां विद्यानां लोकरक्षणे हेतुत्वात् एताः समस्ताः अपि विद्याः लोकरक्षणकामेन राज्ञा अध्येतव्याः इत्येको विधिः उन्नीयते। तथा—

आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ।
अर्थानर्थौ तु वार्तायां दण्डनीत्यां नयानयौ।

इति नीतिसारोक्त्या तैस्तैः विद्याऽध्येतृभिः उपर्युक्ततत्तत्फललाभार्थं एकैका विद्या अध्येतव्या इत्ययं अपरो विद्याध्ययनविधिः तत्तदधिकारिणां कृते बोध्यः। यदि च अयं विधिः उपेक्ष्येत तर्हि यथावत् निगूढतत्वपरिचयाय समस्तस्य तत्तच्छास्त्रस्य एकाग्रतया अध्ययनविलोपप्रसङ्गेन तत्तच्छास्त्रान्तर्गताशेषविषयस्य अवगतिर्न स्यात्, इत्ययं महान् दोषः आपद्येत। एवंरीत्या उपर्युक्ते अध्ययनविधि-

---

नि० ति० १ अशुद्धम्
पालनात्।
मे ? वेदिनी

अत्र पालनावेदिनीति पाठे पालनस्य आवेदिनी इत्यर्थः सुस्पष्टो भवति। अतः इदं नीतिविद्यापदस्य विशेषणं बोध्यम्। तेन अपरः पाठः असाधुर्मन्तव्यः।

## जयमङ्गलाक्रोडपत्रम्

द्वैविध्ये लोकपालनोद्देश्येन आद्यो यो विधिरुक्तः तस्य चारितार्थ्यनिर्वहणार्थं वयोवस्थाभेदेन षोडशतमवर्षपर्यन्तं चतसृणामपि विद्यानाम् अध्ययनक्रमः अग्रे कौटिल्योक्तो बोध्यः इति।

### नीतिसारोक्त २ सर्ग ३ प्र० ६ श्लोक० स्थ प्रसिद्धिविवेचनम्

ननु कौटिल्योक्तां पृथक् पृथगध्ययनविधिद्वैविध्यफलां विद्यां प्रदर्शयितुकामेन कामन्दकेन वार्तिकभूते नीतिसारे द्वितीयसर्गे षष्ठश्लोके—पृथक् पृथक् प्रसिद्ध्यर्थमित्युक्तम्। तत्र उपर्युक्तविधिद्वैविध्यस्य सिद्ध्यर्थमित्यनेनैव सति चारितार्थ्ये प्रसिद्ध्यर्थमिति किमर्थमुक्तम्। इति चेत् तदाशयः स्फुटी क्रियते। तथाहि—

अधोनिर्दिष्टटिप्पण्यनुसारेण[१] कीर्तिः धार्मिकत्वप्रयुक्तोत्कृष्टत्वप्रकारकनानादिग्देशीयलोकसमवेतज्ञानविषयतारूपा अत्र नीतिसारे प्रसिद्धिपदेन संगृह्यते। अर्थात् सैव मुख्यं प्रयोजनमिति भावः। अन्यत्तु सर्वं फलं न सर्वथा श्रमापनोदनाय दुःखनिर्हरणाय वा क्षमं भवति। यथा सूर्यसन्तापमनुभूय क्लिश्यमानेन केनचिद् स्वहस्ते आतपत्रं धृत्वा सूर्यसन्तापदुःखं निराकृतम्, परन्तु सर्वथा तन्निवृत्तं भवतीति न हस्ते आतपत्रधारणस्यैव श्रमप्रयोजकत्वात्। (तद् द्रष्टव्यं कालिदासेन कृते अभिज्ञानशाकुन्तले।[२])

अतः विद्यया जनिष्यमाणे अन्यफले औत्सुक्यं विहाय राज्ञा कीर्तिः यथा सम्पादिता भवेत् तथा विद्याध्ययनाय प्रयतनीयम्। एवं तत्तत्फलाकाङ्क्षिभिः न्यायविद्याध्येतृभिः उत्तमोत्तमविद्यासम्पन्नसच्छिष्यादिनिर्माणेन, वैदिकैः सात्विकान्तेवासिनिर्माणेन, वार्ताविद्भिश्च तद्द्वारा उपार्जितस्य धनस्य सत्पात्रेषु विनियोगेन, कीर्तिः सम्पादनीया। इति नीतिसारकृता वर्णितस्य प्रसिद्धिपदस्य तात्पर्ये ज्ञाते कौटिल्योक्तेन नीतिसारोक्तेन च तत्तद्विद्याफलेन सह न विरोधः। इत्येवं नीतिसारकृतः आशयः स्फुटीकर्तुं शक्यते।

---

१. मधुसूदनसरस्वतीकृतायां गीतोक्त (कीर्तिः श्रीरिति १० अ० ३४ श्लो०) श्लोकव्याख्यायां—कीर्तिः धार्मिकत्वनिमित्ता प्रशस्तत्वेन नानादिग्देशीयलोकज्ञानविषयतारूपा ख्यातिः॥

१, ५ अं० ५ श्लो०

औत्सुक्यमात्रमवसाययति प्रतिष्ठा।
क्लिश्नाति लब्धपरिपालनवृत्तिरेव।
नातिश्रमापनयनाय न च श्रमाय।
राज्यं स्वहस्तधृतदण्डमिवातपत्रम्॥ ५॥

## जयमङ्गला

यत् यस्मात् कारणात्। धर्मार्थौ विचार्यज्ञेयलभ्यस्थिरतया राजा विद्यात् जानीयात्। तद् विद्यानां विद्यात्वम्। यतः आन्वीक्षिकी विचारणार्था विन्तेऽनयेति। त्रयी धर्माधर्मज्ञानार्था विद्याद् अनयेति। वार्ता लाभार्था विन्दत्यनयेति। दण्डनीतिः सत्तापादनार्था विद्यतेऽनया रक्षणयोगात्, इति। सर्वस्माद् विदेः "(संज्ञायां) समजनिषद्—" ( ३-३-९-९ ) इति क्यप्। मोक्षो राज्ञां न विवक्षितः। कामोऽप्यर्थप्राप्त इति नोक्तः।

## जयमङ्गलाक्रोडपत्रम्

**राजा विद्यात्** इति यद्यप्यत्र विचार्यज्ञेयलभ्यस्थिरत्वरूपप्रकारेण चतसृणां विद्यानाम् उपयोगित्वं व्याख्यातमस्ति तथापि लोकानामाकाङ्क्षामनुसृत्य इमाः चतस्रो विद्याः कथं लोकोपयोगिन्यः भवन्तीति नीतिसारबलेन स्फुटीक्रियते।

### विद्यानामाकाँक्षानुसारेणोपयोगित्वम्

लोको हि स्वकीयं जीवनं स्वभावतः सहजप्रेरणयैव कर्तुं वाञ्छति, इति सर्वविदितम्। स्वजीवनाकाङ्क्षायाः पूरणाय अयं लोकः पशुपालनं कृषिं पण्यं वा उपायः इति मत्वा तदर्थं प्रयतते। परन्तु तत्प्रयत्नस्य निश्चयेन साफल्यं तदा वक्तुं शक्यते यदा उक्त प्रयत्नकर्ता स्वस्वव्यापारविषये निपुणमतिः स्यात्। मतौ नैपुण्यञ्च शास्त्रेण वार्तासमयविदां सङ्गत्या तदुपदेशेन च सम्भवति।[1]

यद्यप्यत्र वणिजां सङ्गतिः मतिनिपुणतायै कामसूत्रेण उक्ता। तथापि सूक्ष्मेक्षिकया विचार्यमाणे तत्रापि मूलभतः शास्त्रप्रसूतः परम्परागतः उपदेशः आचाराल्लभ्यः, अथवा साक्षात् शास्त्रमेव मूलं भवति इति निश्चप्रचम्। अतः सर्वैरपेक्षितायाः जीविकायाः प्राप्तये वार्ताशास्त्रस्य अन्वयमुखेन उपयोगित्वं क्लृप्तम्। व्यतिरकेण पर्यालोच्यमानेऽपि इदमपि निश्चितमेव, यत्—यदि वार्ताशास्त्रं तत्प्रसूतो वा परम्परप्राप्तः उपदेशः उच्छिद्येत तर्हि धनधान्यसमृद्धिः प्रजायां न सम्भवितुमर्हति। दृश्यते च अद्य वर्तमानसमये पशुपालनविद्यायाः उच्छेदेन परेषां विश्वासमवाप्य कृषिप्रधानस्य भारतस्य जीवातुभूताः गावः तात्कालिकधनलोभेन देशस्य जीवनस्थितिमज्ञात्वा कर्णधारैः अदर्शनं कारिताः। तेन राज्याय अपेक्षितस्य प्रधानभूतस्य

---

१. तदुक्तम्—कामसूत्रे—( सूत्र १०, १ अ० २ अधि० ) तमध्यक्षप्रचाराद्वार्तासमयविद्भ्यो वणिग्भ्यश्चेति ॥ १० ॥ अध्यक्षाः प्रचरन्त्यनेनेत्यध्यक्षप्रचारः वार्ताशास्त्रम्। तस्माच्छास्त्रे योऽधिकृतः। इतरश्च वार्तासमयविद्भ्यः कृषिपाशुपाल्यवणिज्यादितत्त्वविद्भ्यः। वाणिज्य—मित्युपलक्षणार्थम्, कर्षकेभ्यो गवादिपोषकेभ्यश्च प्रतिपद्येतेत्येवम्। इति

## जयमङ्गलाक्रोडपत्रम्

सत्त्वस्य, तदभिवर्धकानां पयोघृतगोरोचनादीनां दौर्लभ्यात्, विनाशः समभूत् इति। अतः चतसृषु विद्यासु वार्तायाः असाधारणमुपयोगित्वं जीविकार्थमस्ति।[१]

एवं लोकाकाङ्क्षानुसारेण वार्तायाः उपयोगित्वं क्लृप्तमिति कृत्वा कश्चिद् वार्तया यथावत् कृषिं सफलां साधयेत्। परन्तु तस्यां कृष्यां सञ्जातं फलं निराबाधं स उपभुञ्जीत इति नास्ति नियमः। अनेकविघ्नबाधानां सम्भावितत्वात्–[२] तस्मात् रक्षणं कर्तुमसमर्थो लोकः स्वस्य पालनं कर्तुं समर्थं गुणसम्पन्नं कञ्चन आकाङ्क्षते[३]

अत्रेदं बोध्यम्। 'प्रजां रक्षिष्यामीति' कृतप्रतिज्ञः पुरुषः नानाविधान् विभिन्न-विभिन्नप्रकृतीन् एकसूत्रेषु समानीय स्वस्वकर्तव्येषु कया युक्त्या प्रेरयेत्। कया च युक्त्या सम्भावितान् प्रत्यूहान् निवारयेत्, इति यदा महती जिज्ञासा चौर्यादिबाधा-प्रयुक्तजीविकाविच्छेदमूला उदेति, तदा नीतिविद्यायां रक्षणोपायनिरूपिकायां सर्वेषां मनः प्रणिपतति। एवंप्रकारेण सर्वेषां रक्षणाय राजनीतिविद्या अपेक्ष्यते। एतस्याः विप्लवे तु कथमपि रक्षणं न भवितुमर्हति इत्यस्मिन्नंशे प्रत्यक्षतयोपलभ्यमानायाः

---

१. तदुक्तं नीतिसारे—

पाशुपाल्यं कृषिः पण्यं वार्ता वार्तानुजीवनम्। २ सर्ग
सम्पन्नो वार्तया साधु नावृत्तेर्भयमृच्छति। २–३–१४
आयत्तं रक्षणं राज्ञि वार्ता रक्षणमाश्रिता।
वार्ताच्छेदे हि लोकोऽयं श्वसन्नपि न जीवति। १ सर्ग १–१–१

टी० ज०— वार्ता कृष्यादिलक्षणा रक्षणमाश्रिता, अन्यथा नीरक्षा परैरुपहन्यमाना कथं प्रवर्तेत। छेदोऽप्रवृत्तिः। श्वसन्नपि चेष्टमानोऽपि कर्मान्तरेषु न जीवति वार्ताप्रतिबद्धत्वा-च्छरीरस्थितेः॥ १२॥ इति।

२. तदुक्तं—नीतिसारे—५ सर्ग० श्लो० ८१

आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात्।
पृथ्वीपतिलोभाच्च प्रजानां पञ्चधा भयम्। इति।

३. तदुक्तं—

'प्रजां संरक्षति नृपः' सा वर्धयति पार्थिवम्।
वर्धनात् रक्षणं श्रेयः तन्नाशेऽयत् सदप्यसत्।
नी० सार० १ सर्ग १४ श्लो०
'पर्जन्य इव भूतानामाधारः पृथिवीपतिः।
विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ। १ सर्ग १३ श्लो० इति।

## जयमङ्गलाक्रोडपत्रम्

देशस्थितेः उदाहरणेन नाधिकं व्याख्यानम् आवश्यकमस्ति।[1]

तस्मात् वार्तया सम्पादितायाः कृषेः यथावत् न्यायेन उपभोगाय दण्डनीतेः आवश्यकता सिद्धा।

अथैतज्ज्ञात्वा दण्डनीतिं प्रयोक्तुं यदा नेतृपदाधिष्ठितः राजा वा शासको वा कश्चित् प्रवर्तते तदा दण्डविधानस्य नियतत्वात् तत्र पर्यवसितः दण्डः परुषतामापन्नः लोकवैमुख्यमुत्पाद्य आत्मविनाशे कारणं भवति।[2]

एतद्दोषेण दण्डः उपेक्षणीयः इत्यपि वक्तुं न शक्यते। पूर्वं दोषस्य उक्तत्वात्। अतः दण्डप्रणयनस्य यदा दुर्लभत्वमापद्यते तदा धृतेऽपि दण्डे राजप्रजयोः कथमनुरागमूलः स्थिरसन्धिर्भवितुमर्हति इत्याकांक्षा जीविकाकाङ्क्षावत् अभ्युदेति। तदाकाङ्क्षाप्रशमनाय त्रयी विद्या अग्रे प्रसृता। तया हि राजप्रजयोः, गुरुशिष्ययोः पतिपत्न्योरिव पारस्परिकविश्वाससम्पादनद्वारा प्रेम सम्पाद्यते। परन्तु त्रयीमनुसृत्य समृद्धे प्रेम्णि यदि क्वचित् प्रियस्य चेतसि विकृतिः उत्पद्येत अन्योपायैः सा अपसारयितुं अपि न शक्येति स्थितिः यदा भवति, तदा लोकानुमतिमादाय दण्डयितुम् अनिच्छतापि राज्ञा प्रजासु यस्य कस्यचिद् दण्डभागिनः यथावदपराधमनुलक्ष्य प्रणीतो वधादि दण्डः न पारुष्यभाग् भवति, न वा जनपदं विद्वेषं प्रापयति। इति त्रयीस्थापनानन्तरमेव प्रणीतस्य दण्डस्य प्रजापालकत्वं संभवितुमर्हति। अतः परस्परं विश्वासोत्पादनद्वारा ऐक्यसम्पादनाय त्रयी विद्या अपेक्ष्यते। त्रयीद्वारा सम्भाव्यमानं ऐक्यं राजनीतौ षाड्गुण्ये अभ्यर्हितकाञ्चनसन्धिस्वरूपमवगन्तव्यम्। 'शमः समाधिः सन्धिः' इति कौटिल्यव्याख्यानावसरे "स्थायिविश्वासोपगमः सन्धिः' इत्येवं रीत्या नयचन्द्रिकायां प्रतिपादितत्वात् "शान्ति का अग्रदूत" ग्रन्थे स्फुटीकृतत्वाच्च। तस्यायन्निष्कर्षः।

---

१. तदुक्तं नी० सा०

आन्वीक्षिकीत्रयीवार्ताः सतीर्विद्याः प्रचक्षते।

सत्योपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे॥ सर्ग २ ३ श्लो० ८ टी० ज०

सं०-विप्लव इति। दण्डनीतेरयथावत् प्रवृत्तौ अप्रवृत्तौ वेत्यर्थः। उपा० निर०-दण्डनीतेस्तु विभ्रमे नीतिशास्त्रस्य विनाशे सति मात्स्यन्यायसंभवादिति भावः। इति।

२. तदुक्तम् अर्थशास्त्रे—

दण्डकरसाधनाधिकारेण वा जनपदविद्वेषं ग्राहयेत्।

विद्विष्टानुपांशुदण्डेन जनपदकोपेन वा साधयेदिति। कौ० अ० १ अधिकरण

## जयमङ्गलाक्रोडपत्रम्

सङ्गतसन्धि विहाय अन्यत्र सन्धौ अर्थस्य सम्बन्धो वर्तते।[1] सङ्गतसन्धौ तु विश्वास्यत्वमेव। अतोऽत्र सङ्गतसन्धिरेव यावज्जीवनं यथा सुरक्षितः स्यात् तथा काम्यते।

तच्च परम्परागतस्य स्थिरसिद्धान्तस्य अभावे सदा एकरूपं स्यात्, इति केनापि वक्तुं न शक्यते, प्रतिक्षणं मनसः परिवर्तनशीलतायाः दृष्टत्वात्। स च सिद्धान्तः त्रयीनिरूपितात् नान्यः इति सङ्गतसन्धिस्थापनं त्रय्याः असाधारणं प्रयोजनम् अस्तीति विशेषतया अस्माभिः 'शान्ति का अग्रदूत'-'भारतीय राजनीति का दिग्दर्शन वेदापौरुषेयत्व' ग्रन्थयोः सप्रपञ्चं निरूपितमस्ति। नेह पुनः निरूप्यते।

केचन त्रयीमुपेक्ष्य अर्थदानादिना उपहारादिसन्धि वाञ्छन्ति तथापि यथा यथा अर्थलाभो भवति तथा तथा लोभस्यापि अभिवृद्धेः दृष्टत्वात् यत्र अधिको लाभो भवेत् तेन सह अपरत्र संपादितमप्यर्थलोभप्रयुक्तसन्धि उपेक्ष्य सन्दध्यात्। अतो यस्य चेतसि त्रयीप्रयुक्तः परलोकविश्वासः, यावल्लब्धं तत्र सन्तोषः, निराकांक्षत्वं कर्तव्यनिष्ठा च नास्ति तत्र उपहारादिना कृतोऽपि सन्धिः स्थिरतां न भजते। इति तिसृणां विद्यानामुपयोगित्वं प्रदर्शितम्।

### आन्वीक्षिक्याः फलम्

अथ वार्तादण्डनीतित्रयीविद्यानां आकाङ्क्षानुसारेण लोकोपयोगितया फलं प्रदर्श्य आन्वीक्षिक्याः विद्यायाः फलं निरूप्यते। तथाहि—त्रय्या निरूपितं परलोकं विश्वस्य जायमानः सन्धिः स्थिरो भवति इति पूर्वं स्थापितम्। तत्र त्रयीप्रतिपादितधर्मस्य परिग्रहः द्वेधा भवतीति लोके दृष्टम्। यथा कश्चन अनुरागेण तं स्वीकरोति अन्यश्च विनैवानुरागम्। अनयोः यः अनुरागेण धर्मं परिगृह्णाति स पूर्वोक्तरीत्या

---

१. तदुक्तम् का० नी०

एक एवोपहारस्तु सन्धिरेतन्मतं हि न.।
उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिताः ॥ २२ ॥ सर्ग ९ पु० ३४
अभियोक्ता वली यस्मादलब्ध्वा न निवर्तते।
उपहारादृते तस्मात् सन्धिरन्यो न विद्यते ॥ २३ ॥

टी० जम० मैत्रवर्णितः सङ्गतसन्धौ सम्प्रदानाभावात्। सोऽन्यकाले दुर्लभः इत्येक एवेत्यवधारयति।

उ० नि०—उपहार एवैकः सन्धिरभिमतोऽस्माकं यस्मादुपहारभेदा एवान्ये। परस्परोपकारेऽपि वस्त्रालङ्कारादिकस्योपहरण मस्ति, सम्बन्धत्वे दारिकादेरुपहरणमस्ति। केवलं मित्रं वर्जयित्वा शेषा उपहारभेदा एव इति ॥ २२ ॥

## जयमङ्गलाक्रोडपतम्

विश्वास्यः इति वक्तुं शक्यते। अपरो यः अनुरागेण विना तमेव धर्ममनुतिष्ठति सः एवंविधः पुरुषः विश्वास्यः स्यादिति तु न निर्णेतुं शक्यते। एवं स्थितेऽनुरागेण परिगृहीतेऽपि धर्मे त्रयीमाधारीकृत्य कृतोऽपि सन्धिः निष्फलतां यायात् तस्यास्थिरत्वात्। अतः इदमभ्यर्हितम्, यत् एतद्धर्मविषये अनुरक्तिः यथा भवेत् तथा महान् प्रयत्नोऽपि अपेक्षितः। स च आन्वीक्षिकीमुखेन सफलो भविष्यति। तथाहि—

स्वभावतः यथा बाल्यावस्थायां परकीयसंसर्गेणादूषितत्वात् अयमेव मे हितकृत् इति ज्ञात्वा पितरं प्रति विश्वास्यत्वाच्च बालकः पितुराज्ञामनुसरति महता अनुरागेण। आसीत् च तथाविधोऽपि समयः भारते तथा यद् भारतीयाः महता अनुरागेण त्रयीधर्ममनुसरन्तः आसन्। परन्तु कुसंसर्गेण पितृविषये शङ्कादिमिषेण बालकस्य चेतसि यथा यथा अनुरागन्यूनता भवति तथा तथा सः हितोपदेष्टारमपि पितरं नानुसरति। तथैव त्रयीसिद्धान्तविषयेऽपि परसंसर्गेण भण्डधूर्तनिशाचरप्रणीतत्व—पौरुषेयत्व—भ्रमप्रमादादिदोषदुष्टत्व—कल्पितत्व—त्रासदायित्व--सुखपरित्यागित्वादिदोषशङ्कानां जागरूकतायां भारतीयेषु त्रय्यनुरागस्य न्यूनता समभूत्। एतद्दशायां क्वचिद् परिगृहीतत्रयीधर्मा अपि जना त्रयीं न विश्वसन्ति। अतः उपर्युक्ताः दोषाः वस्तुगत्या त्रय्यां सन्ति न वा इत्येतदपि आलोचनीयतां गतमस्ति। तत् आलोचनं प्रत्यक्षानुमाने आधारीकृत्य कर्तव्यम्। ताभ्यामेव त्रयीप्रतिपादितस्य धर्मस्य प्रमितत्वं निर्णेतुं शक्यते, उपर्युक्तशङ्कानामपसारणं च भविष्यति। निःशङ्कत्वाच्च त्रय्यां अनुरागः विश्वासाधायकः यः प्रागासीत् स एव उद्भविष्यति। इत्यनुमानपर्यालोचनादि यस्यां विद्यायां सर्वाङ्गोपसंहारपूर्वकं निरूपितमस्ति सा आन्वीक्षिकी विद्या केन न समाद्रियेत। इत्येवं आन्वीक्षिक्याः त्रयीनिरूपितधर्मविषये अनुरागोत्पादनं असाधारणं लोकानामाकाङ्क्षानुसारि प्रयोजनमवधेयम् इति। इदमेव सर्वं तत्त्वं सङ्क्षिप्य विचारलाभसत्तापादनार्थाभिः, इति पङ्क्त्या जयमङ्गलाकृता ध्वनितम्।

इमाः चतस्रो विद्याः एवंरीत्या लोकस्थितये हेतुभूताः सम्भवन्ति, इति पर्यालोच्य अर्थशास्त्रे नीतिसारे च तन्त्रनिरूपणारम्भे विद्याविभागप्रकरणमभिहितमस्ति।[1] (नीतिसारव्याख्यायां जयमंगलायां २ सर्ग १ श्लोक०)

---

१. तत्राप्रतिष्ठितस्वराज्यस्य राज्ञः परराज्यात्मसात्करणासम्भवात् स्वराज्यप्रतिष्ठापनार्थं षड्भिः सर्गैरुपायः प्रदर्श्यते। तत्रास्मिन् सर्गे प्रकरणत्रयं विद्याविभागः वर्णाश्रमव्यवस्था दण्डमाहात्म्यं च। तत्रायं प्रथमोपायः यत् विद्यावृद्धैः सार्धं विद्याचिन्ता विद्याप्रतिबद्धत्वाल्लोकस्थितेः।

साङ्ख्यं[1] योगो[2] लोकायतं[3] चेत्यान्वीक्षिकी ।

## श्रीमूला

तत्रान्वीक्षिक्याः स्वरूपमाह—साङ्ख्यमित्यादि। साङ्ख्यं प्रकृतिपुरुषविवेचकं शास्त्रं कपिलप्रोक्तं, योगः प्रत्याहारध्यानधारणादिप्रतिपादकं महेश्वरप्रोक्तम्, लोकायतं न्यायशास्त्रं ब्रह्मगार्ग्योक्तम् । एतत्त्रितयात्मिकान्वीक्षिकी ।

## वैदिकसिद्धान्तसंरक्षिणी

आन्वीक्षिक्याः प्रयोजनं दर्शयिष्यन् आदौ तद्विभागमाह—साङ्ख्यमिति । तच्च षष्टितन्त्रमिति जयमङ्गला। कौटिल्यप्रणीतभाष्यात्पूर्वं विस्तृततया तस्यैव विद्यमानत्वात् । वस्तुतः तर्कविद्यामात्रमभिप्रेतम् । तदुक्तमुपाध्यायनिरपेक्षायाम् 'प्रत्यक्षपरोक्षाभ्यामीक्षितस्यार्थस्यानु पश्चात् ईक्षणमन्वीक्षा । सा प्रयोजनं यस्याः सान्वीक्षिकी अनुमानविद्या न्यायवैशेषिकादिका, इति । ( नी० सं० २—७ । )

मूलकृतापि अध्यायान्ते "प्रदीपः सर्वविद्यानामित्युपसंहारे वक्ष्यते ।[4]

तथा च सांख्यं न्यायशास्त्रम् । टिप्पण्यां तु सांख्यं षष्टितन्त्रमिति व्याख्यातम् । अत्र भासमानो विरोधः क्रोडपत्रोक्तदिशाऽवसेयः । योगो वैशेषिकम् इति व्याख्यातं न्यायवार्तिकटिप्पण्याम् । तद्यथा—योगानां वैशेषिकाणाम् । ( अ० १ आ० १ सू० २८ ) इति ।

लोकायतं—लोकस्य बुद्धिं तनोति विस्तारयति इति लोकायतं चार्वाकशास्त्रम्। तच्च पूर्वपक्षमुखेन शङ्कान्तरमुपस्थाप्य तदपसारणाय न्यायवैशेषिकयोः अवकाशं ददाति इत्यस्योपकारित्वं बोध्यम् । एतेन लोके प्रसिद्धा बुद्धिस्तु लोकायत-

---

नी० टी० १. स्वरूपभेदं दर्शयन्नाह साङ्ख्यमिति । पञ्चविंशतितत्त्वानां सङ्ख्यानां सङ्ख्या । तमधिकृत्य कृतं साङ्ख्यम् ।

२. योगो मोक्षेण सह संयोगकृत् । स च षडङ्गः ।

प्रत्याहारस्तथा ध्यानं प्राणयामोऽथ धारणा ।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥

स च न्यायवैशिषिकशास्त्रोक्तः ।

३. लोकायतं बृहस्पतिप्रणीतं नास्तिकशास्त्रम् । तच्च पूर्वपदाविभागेनावस्थितम् ।

४. एतदतिरिक्तानि प्रमाणानि न्यायमधिकृत्य निर्दिश्यन्ते तद्यथा-प्रत्यक्षपरोक्षाभ्यामीक्षितस्यानु पश्चादन्वीक्षणमन्वीक्षा । तच्चानुमानं तत् प्रयोजनं यस्याः सान्वीक्षिकी न्यायविद्या ( नी० निर्णितौ ) यमर्थमभिप्रेप्सन् जिहासन्वा वा कर्मारभते तेनानेन सर्वे प्राणिनः सर्वाणि कर्माणि सर्वाश्च विद्या व्याप्ताः तदाश्रयश्च न्यायः प्रवर्तते । कः पुनरयं न्यायः ? प्रमाणैरर्थसमीक्षणं न्यायः । प्रत्यक्षागमाश्रितं अनुमानं सान्वीक्षा । प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणं अन्वीक्षा । तया प्रवर्तते इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम्' । इति । न्यायभाष्यम्

## वैदिकसिद्धान्तसंरक्षिणी

पदेन नानुमन्तव्या तस्या विद्यात्वाभावात्। तिसृणामासां अध्ययनार्थं अपेक्षितं एकविधिकल्पनं अन्यच्च प्रसङ्गप्राप्तं टीकाव्याख्यायां विशदं—द्रष्टव्यम्। विभाजक-धर्ममाहान्वीक्षिकीति। अस्याः पृथक् प्रयोजनप्रदर्शनार्थं तिसृभ्यो विद्याभ्योऽन्यत्वं प्रदर्शयति–धर्माधर्माविति।

## जयमङ्गला

विद्यानां स्वरूपभेदात् स्थापनोच्यते। तत्रान्वीक्षिकीमधिकृत्याह— साङ्ख्य-मिति। सङ्ख्यानं सङ्ख्या विवेकः, तस्या इदं शास्त्रं, साङ्ख्यं षष्टितन्त्रं पञ्च-विंशतितत्वज्ञानफलम्। योगश्चित्तवृत्तिनिरोधः षडङ्गैश्वर्यफलः। यथोक्तम्—

## जयमङ्गलाक्रोडपत्रम्

**साङ्ख्यमितीति**। ननु उपाध्यायनिरपेक्षायां 'आन्वीक्षिकी अनुमानविद्या न्याय-दर्शनवैशेषिकादिका २ सर्ग ७ श्लो० नी० सा० इति ग्रन्थेन आन्वीक्षिकीपदार्थः न्यायशास्त्रमित्युच्यते। अत्र तु षष्टितन्त्रात्मकं साङ्ख्यशास्त्रमिति। वक्ष्यते। (१०-१०) तदुभयोः कथं समन्वयः ?। उच्यते—

### आन्वीक्षिकीस्वरूपविषये समन्वयः

जयमङ्गलायामुपाध्यायनिरपेक्षायाञ्च विभिन्नविभिन्नपरिस्थित्यनुसारेण दृष्टिभेदात् आन्वीक्षिक्याः व्याख्यानद्वयं उपलभ्यते। तथाहि—यदा किल कौटिल्यः इदमर्थशास्त्रं निबद्धवान् तदानीं न्यायभाष्यस्य अनुदयात् पूर्वपरम्पराप्राप्तगौतमसूत्र-स्य व्याख्यायाः ग्रन्थरूपेण अनुपलब्धत्वात् च न्यायशास्त्रं व्याख्यानरूपेण प्रसृतं नासीत्। अपितु पूर्वपरम्पराप्राप्तं ग्रन्थरूपेण उपनिबद्धं षष्टितन्त्रं प्रथितमासीत्, इति आन्वीक्षिकीपदेन तस्य सङ्ग्रहः कौटिल्याभिप्रेतः स्यात्, इत्येवं विचार्य, कौटिल्य-कालिकीं परिस्थितिमालोच्य च जयमङ्गलाकृता आन्वीक्षिकीपदार्थत्वेन षष्टितन्त्रं व्यवहृतम्।

उपाध्यायनिरपेक्षाकारस्तु अन्यादृशीं परिस्थितिमालोच्य आन्वीक्षिकी-पदार्थत्वेन न्यायशात्रं सङ्गृण्हाति। तथाहि—

परिष्कृतन्यायशास्त्रपरिगणितभाषातिरिक्तभाषायां पूर्वं षष्टितन्त्रादिग्रन्थाः उपनिबद्धा बभूवुः। तत्र अनेकविधप्रश्नानामसमाधेयत्वेन भासमानानां समुदयं कारयित्वा जैनसम्प्रदायप्रवर्तकेषु अन्यतमेन चतुर्विंशतितीर्थङ्करेण वर्धमानमहावीर-स्वामिना षष्टितन्त्रस्य खण्डनं कृतमिति श्रीविन्ध्येश्वरीप्रसादमहोदयैः स्वविरचितयां

## जयमङ्गलाक्रोडपत्रम्

न्यायवार्तिकभूमिकायामुल्लिखितमस्ति ।[1]

अत उक्तेषु प्राचीनपरम्पराप्रवर्तकेषु षष्टितन्त्रादिग्रन्थेषु समुदितानां प्रश्नानां परिष्कृतभाषया समाधानमपेक्षितम् अन्यथा परम्पराप्राप्ते धर्मे अविश्वास्यत्वमापद्येत इति हेतुना उपाध्यायनिरपेक्षाकृता षष्टितन्त्रादिग्रन्थस्य परिष्कारः यदीयभाषया अबाधितो भवति तन्न्यायशास्त्रमान्वीक्षिकीपदेन व्यवहृतम् ।

एतस्मादेव कारणात् बुद्धैः अवयवावयविनोर्भेदमनङ्गीकृद्भिः अवयवत्वावयवित्वयोः स्वरूपभेदमजानानाः वासिष्ठादिब्राह्मणाः स्वधर्मात् भेदिताः इति वासिष्ठाजातकादिग्रन्थात् अवगम्यते । तत्सर्वं आन्वीक्षिक्या न्यायविद्यया समाहितं भवति । इत्यनयोः जयमङ्गलोपाध्यायनिरपेक्षयोः व्याख्यानभेदः परिस्थितिभेदेन समन्वितो भवति । वस्तुतस्तु जयमङ्गलाकृता आन्वीक्षिकीपदेन अभिहितस्य कौटिल्याभिप्रेतस्य षष्टितन्त्रस्य, परमतखण्डनपूर्वकस्वमतव्यवस्थापनं उपाध्यायनिरपेक्षाकृता न्यायशास्त्रं द्वारीकृत्य च अभिधीयते । इति नानयोः टीकयोः मतभेदः । तस्मात् उभयमतसाधारण्येन षष्टितन्त्रादिद्वारा श्रुतिबोधितस्यार्थस्य शङ्कानिरासपूर्वकं दृढीकरणं यया विद्यया क्रियये सा विद्या आन्वीक्षिकीपदार्थः । इति फलितम् ।

एवञ्च स्वस्य प्रमितत्वरक्षायै साङ्ख्यमपि न्यायशास्त्रमपेक्षते इति षष्टितन्त्रपदेन न्यायवैशेषिकयोरपि ग्रहणम् जयमङ्गलाकृतां सम्मतमस्ति इति बोध्यम् ।[2]

---

१. श्वेताम्बरजैनास्त्वेवं वदन्ति २४ तीर्थङ्करो महावीरस्वामी स्वशिष्याय गौतमाय इन्द्रभूतये चतुर्दशपूर्वसंज्ञकान् एकादशाङ्गसञ्ज्ञकान् सिद्धान्तानुपदिदेश । ते चैकादशाङ्गसञ्ज्ञका ४५ भागेषु विभक्ताः । यथा ११ अङ्गानि, १ आचाराङ्गम्, २ सूत्रकृदङ्गम्, ३ स्थानाङ्गम्, ४ समवायाङ्गम्, ५ भगवतीसूत्रमित्यादिना । तत्र ४० नन्दिसूत्रम्, ४१ अनुयोगद्वारसूत्रम् । अस्ति तत्रानुयोगद्वारसूत्रे "जं इमं अन्नाणीहिं मिच्छादिट्ठीहिं सच्छन्दबुद्धिमइ विगप्पियं तं जहा भारहं रामायणं भीमासुरुक्कं कोडल्लयं घोडग्गसुयं सगडभद्दिया उकप्पासियं नागसुहुमं कणगसत्तरीवेसियं वइसेसियं बुद्धसासनं कापिलं लोगायतं सट्ठितंतं माठरपुराणं वागरणनाडगाइ अहवासावतरि करठाउ चत्तारिय वेया संगोवंगासेतं लोइयं नो आगमउ भावसुयम्" ।

२. आन्वीक्षिक्यात्मविद्या स्यात् ईक्षणात् सुखदुःखयोः ।

इतिव्याख्यानावसरे आन्वीक्षिकी हेतुविद्येत्युक्तम् ।

आत्मविद्या पदार्थस्वभावविद्या हेतुविद्येति यावत् । तथा हि इदं सुखसाधनम् इदं दुःखसाधनं । इति पदार्थतत्त्वान्वीक्षणम् ।" सर्ग ३ प्रकरण १ – ११ श्लो०

'यथावस्थितभावस्वभाववेदनमात्मविज्ञानं २' – ७ श्लो० इति च ।

## जयमङ्गलाक्रोडपत्रम्

### साङ्ख्यन्यायसाधारण्येन विधिकल्पनम्

नन्वेवं आन्वीक्षिकीपदेन साङ्ख्यं न्यायश्च सङ्गृह्यते तर्हि राजवृत्तौ आन्वीक्षिक्यध्ययनं विदधतः कौटिल्यस्य तात्पर्यं साङ्ख्येन न्यायेन च यथावत् विचारं भावयेत् इति विधिद्वयकल्पने भवति। तर्हि वाक्यभेददोष आपद्येत इति चेन्न। आत्मविज्ञानस्य जयमङ्गलाकृता यत्कृतं व्याख्यानं (२०३ पृ०) टिप्पण्यामुद्धृतमस्ति। तदनुसारेण यथावस्थितस्वभावावेदनेन विचारं भावयेत्। इत्येवं रूपः एकविधो विधिः उभयोः टीकयोः प्रामाण्यात् कल्प्यते। ततो न वाक्यभेदः।

### आन्वीक्षिकीपदेन न्यायसङ्ग्रहे वैधत्वम्

ननु कौटिल्योदितान्वीक्षिकीपदेन पूर्वाचार्याणां षष्टितन्त्रं यदि पूर्वपरम्पराप्राप्तं विवक्षितमिति जयमङ्गलादर्शनादवगम्यते। ततः परिस्थित्यनुसारेण न्यायशास्त्रं आन्वीक्षिकीपदेन सङ्गृह्य न्यायविद्यायाः अध्ययनं विधीयते। तर्हि तत्र पूर्वपरम्पराप्राप्तत्वाभावात् शब्दप्रमाणतात्पर्यविषयत्वं कथं स्वीकर्त्तव्यम् इति चेन्न। मीमांसोक्ताधोनिर्देक्ष्यमाणन्यायेन न्यायशास्त्रस्याऽपि प्रस्तुतस्य पूर्वाचार्यप्रणीतस्य विचारं भावयेदिति विधिविषयत्वं अस्ति इति तात्पर्यं साधयितुं शक्यते। तथाहि—वेदे समागतः यजेतेति यागादिविधिः यद्यपि स्वमहिम्ना इष्टसाधनत्वमवबोध्य अधिकारिणं स्वोक्ते कर्मणि प्रवर्तयितुं समर्थः तथापि सहस्रशोऽपि विधिं श्रुत्वा यदि कश्चिद तद्वैधं कर्म कर्तुं न प्रवर्तते। तदा तत्प्रवृत्त्युत्पादनाय प्रवृत्तिप्रतिबन्धकीभूतस्यारुच्यादेर्निरासाय प्राशस्त्यज्ञानमपेक्ष्यते। तच्च विधिसन्निधिपठितेन अर्थवादवाक्येनोत्पादयितव्यं भवति। अतः इतिकर्तव्यतात्मकप्राशस्त्यज्ञानार्थं शाब्दीभावनायाः प्रवृत्तिरूपभाव्यं प्रति अर्थवादानामुपयोगित्वं क्लृप्तम् क्वचित् प्राशस्त्यज्ञानार्थं अर्थवादेन कृतस्याऽपि प्रयत्नस्य वैफल्यं पश्यामः। तत्स्थले वैधे कर्मणि विध्याकाङ्क्षानुसारेण नाटकं काव्यं पुराणादिकं वा रुच्युत्पादनद्वारा प्रवृत्त्युत्पादनाय उपयुज्यते। क्वचित् काव्यनाटकादिकं अधिकारिणि वैधकर्म प्रति रुचिमुत्पादयितुमसमर्थं चेत् तत्तद्देशीयभाषायां निबद्धानि वाङ्मयान्यपि उपयोज्यन्ते। अर्थात् विधिना बोधिते कर्मणि जनयिष्यमाणा प्रवृत्तिः येन येन कर्मणा उत्पद्येत तत्तत् कुर्यात्। इति विधितात्पर्ये अवगते रुच्युत्पादनार्थं विधिसन्निहितार्थवादेन सह अन्येऽपि अनुष्ठिताः उपाया काव्यनाटकेतिहासपुराणदेशीभाषादयः सर्वेऽपि वैधा एव। इति मीमांसकैः निर्णीतम्।

तथा प्रकृते आन्वीक्षिकीपदेन परम्पराप्राप्तं षष्टितन्त्रं विवक्षितमस्त्येव यदा किल तत्रैव अनेकविधशङ्काः प्रादुर्भाव्य पूर्वपक्षिभिः त्रयीप्रतिपादिते सर्वोपकारके धर्मे प्रवृत्तिः अरुच्युत्पादनद्वारा प्रतिबध्यते तदा रुच्युत्पादनद्वारा धर्मे प्रवृत्त्युत्पादनाय पूर्वोक्तन्यायेन शङ्कानिरासोऽपि इतिकर्तव्यताकुक्षौ कर्तव्यत्वेन अपेक्ष्यते एव, तथा तत्साधिका विद्याऽपि। अतः 'यथावस्थितभावस्वभावावेदनेनविचारं भावयेत्'।

## जयमङ्गलाक्रोडपत्रम्

इति पूर्वोक्तो विधिः कल्पितः न्यायसङ्ग्राहकः उक्तमीमांसान्यायेन संगत एव। अत एव नीतिसारकृता कामन्दकेन चाणक्यशिष्येण साङ्ख्यस्य आन्वीक्षिकीत्वं विजानतापि आत्मनिरूपणावसरे न्यायसिद्धान्तसम्मतं कौटिल्यकृतन्यायभाष्यानुसारि मतं प्रतिपादितम्।[1]

### सांख्यशास्त्रेण न्यायशास्त्रस्य मान्यता अभिमता

नन्वेवं साङ्ख्यन्तु न्यायशास्त्रस्य प्रामाण्यं न मन्यते, तत्र तदीयसिद्धान्तखण्डनात् इति चेन्न। यद्यपि मूलभूतपदार्थानां निरूपणावसरे अनयोः शास्त्रयोः मतवेदः काममास्ताम्। तथापि अनुमानप्रामाण्यस्य विवेचनपूर्विका साधनसरणिः या न्यायेनोच्यते, सा न्यायशास्त्रस्य असाधारणी रीतिः अस्ति। तस्याः प्रामाण्यं साङ्ख्यशास्त्रेणाऽपि स्वीक्रियते। अत एव साङ्ख्यकारिकायाम्—

'त्रिविधमनुमानमाख्यातम्' इत्यनेन न्यायमतमेव तद्विषये प्रमाणत्वेनोट्टङ्कितम्।

वाचस्पतिमिश्रैः एतद्व्याख्यायां अनुमानभेदनिरूपणं न्यायशास्त्रमाधारीकृत्यैव कृतमस्ति।[2]

### कौटिल्यप्रणीतभाष्यस्य पूर्वपरम्पराप्राप्तत्वम्

नन्वेवं कौटिल्यप्रणीतभाष्यानुसारिभिः इत्यत्रोक्तं तेन ज्ञायते यत् पूर्वं न्यायशास्त्रं नासीदिति, तथा चैतस्य पूर्वपरम्पराप्राप्तत्वं कथं मन्तव्यमिति चेदुच्यते।

न्यायसूत्रं तु गौतमप्रणीतं पूर्वमासीदेव। तद्भाष्यं पूर्वं नासीदिति अस्माभिः अत्र वर्तमानैः योग्यानुपलब्ध्य भावात् निर्णेतुं न शक्यते तदभावकारणं अनेकैः

---

१. धर्माधर्मौ सुखं दुःखमिच्छाद्वेषौ तथैव च।
प्रयत्नज्ञानसंस्कारा आत्मलिङ्गमुदाहृतम्॥ ३१॥
ज्ञानस्यायुगपद्भावो मनसो लिङ्गमुच्यते॥ २ सर्ग

तथा जयमङ्गलायामपि—सप्तविंशति (१—२७) श्लोकव्याख्यायां—षष्टितन्त्रमतमप्रस्तुत्य न्यायमतमेव प्रस्तावितम्। तथाहि—

"आत्मा मनश्च द्रव्यपदार्थौ। तथाहि "पृथिव्यस्तेजो वायुराकाशः कालो दिगात्मा मनश्चेति नव द्रव्याणि" इति। तत्रात्मसमवायिनौ ज्ञानप्रयत्नौ गुणापदार्थौ"॥ इति।

न्यायवार्तिकेऽपि सिद्धान्तनिरूपणावसरे साङ्ख्यपदेन न्यायवैशेषिके विवक्षिते इति वै० सि० सं० रक्षिण्यामुदाहृतवाक्येन स्फुटं भवति।

'प्रदीपस्सर्वविद्यानामि'त्यादि ग्रन्थेन न्यायभाष्ये न्यायमेव सूचयति न तु साङ्ख्यम् इति। श्लोकार्थश्च वैदिकसिद्धान्तसंरक्षिण्यामत्रैव द्वि० ध्याये व्याख्यातो द्रष्टव्यः।

२. सर्वं चैतदस्माभिर्न्यायवार्तिकतात्पर्यटीकायां सप्रपञ्चं प्रपञ्चितमिति नेहोच्यते विस्तरभयात्' इत्यादि।

## जयमङ्गलाक्रोडपत्रम्

पूर्वपक्षवादिभिः शास्त्राणां तत्प्रतिपादकग्रन्थानाञ्च विनाशाय कृतः प्रयत्न एवेति बोध्यम्। अथवा पूर्वं कौटिल्यस्य गुरुभक्त्यादिनिरूपणावसरे यथावत्पूर्वपरम्परा प्राप्तार्थस्फूर्तिः धृतिमत्सु सम्भवतीति अभिहितमस्ति। तद्रीत्या कौटिल्यप्रणीतभाष्य-ग्रन्थोऽपि पूर्वपरम्पराप्राप्तस्यार्थस्य आदर्शकः इति दाढर्येन वक्तुं शक्यते। तेन व्याक-रणमहाभाष्यशाबरभाष्यशाङ्करभाष्यादीनामपि पूर्वपरम्पराप्राप्तार्थनिरूपकत्वं बोध्यम्।

अस्य भाष्यत्वन्तु सूत्रानुसारित्वात् व्याख्यानान्तरानुपजीव्यत्वात सूत्रतात्पर्य-निर्णायकलिङ्गप्रदर्शकत्वात् च बोध्यम्।[1]

### कौटिल्यस्य न्यायभाष्यकर्तृत्वम्

ननु कौटिल्येन प्रणीतं भाष्यं इति उपरितनोक्तग्रन्थेन अर्थशास्त्रप्रणेता कौटिल्यः न्यायभाष्यकर्ता इति यदुच्यते तदसङ्गतम्। न्यायभाष्यस्य कर्तुः अर्थशास्त्र-स्य कर्तुश्च विभिन्नकालिकत्वात्। अर्थशास्त्रस्य हि कर्ता चाणक्यो विक्रमवर्षारंभात् पूर्वं ४००, ई० वर्षारम्भात्पूर्वं ५०० वर्षे स्थितः इति विष्णुपुराणवाक्यैः श्री विन्ध्ये-श्वरीप्रसादमहोदयैः साधितम्। आधुनिकैरितिहासज्ञैरपि खिस्ताब्दात् प्राक् चतुर्थशतके स आसीदिति साधितम् वर्तते।[2] एवं न्यायसूत्रभाष्यकर्ता खिस्ताब्दात् अनन्तरभावी इति च साधितम्। अत्र प्रमाणं टिप्पण्यामनुसन्धेयम्[3]। तस्मात् न्यायभाष्यकर्ता कौटिल्यात् अन्यः। तत्र युक्तयः उच्यन्ते कौ० म० प्राच्यविद्या संशोधन म्हैसूर, प्र० स० एच० डेविरप्पा एम. ए. डाइरेक्ट पृ० २२ महाशयैः।

---

१. सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः!
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥

२. 'नन्दान् हत्वा कौटिल्यो नन्दराज्ये चन्द्रगुप्तमभिषिषेच' इति विष्ण्वादिपुराण-वाक्येभ्यः, मौर्यचन्द्रगुप्तार्यचाणक्यः अर्थशास्त्रं विरचयामास इति। दण्डिवाक्याच्च कौटिल्यः खिस्ताब्दात् प्राक् चतुर्थशतके अजीवत् इति ज्ञायते''। कौ. म. प्राच्यविद्या संशोधन मैसूर प्र. स.

३. 'कर्तर्या कुन्तलश्शातकर्णिश्शातवाहनो महादेवीं मलयवतीं जधान'' इति कामसूत्रे ( ११—७ ) अभिदधानो वात्स्यायनस्तु क्रिस्ताब्दानां १३७ तमाद्वत्सरात् आच २०९ तमाद् वत्सरात् भरतखण्डस्य पश्चिमप्रान्तेषु कृतराज्यानुशासनानां शातवाहनानां वंश्येन शातकर्णिना समकालिको वा आहोस्वित्तदुत्तरकालिको वाऽभवदिति बाढं ज्ञायते। तदित्यर्थं पुराणादिप्रमाण-बलेन कामसूत्र-न्यायसूत्रभाष्ययोः प्रणेतुः वात्स्यायनाद्बाढं प्राचीनः कौटिल्यः कथं वा स्वोत्तरकालिकात्तस्मादभिन्नस्स्यात्।

[ अनुवादैः न्यायभाष्यकर्तुः एतदनन्यत्वानिश्चयः ]

अपि च स्वीये ग्रन्थेऽनूद्यमानस्य स्वीयग्रन्थान्तरस्य स्वीयताप्रदर्शनरूपं ग्रन्थकृता—

## जयमङ्गलाक्रोडपत्रम्

१—तथाहि—शातकर्णेः सातवाहनवंशभूतस्य नामसंकीर्तनम्,

२—न्यायसूत्रभाष्ये अर्थशास्त्रवाक्यानामनुवादकर्तु : अर्थशास्त्रं प्रति स्वीयत्वप्रदर्शनाभावः,

---

सम्प्रदायमुररीकृत्य न्यायसूत्रभाष्येऽर्थशास्त्रवाक्यान्यनुवदन्नपि वात्स्ययनो न कुत्राप्यर्थशस्त्रस्य स्वीयतां प्रदर्शयामास ।

तथाहि—

( १ ) 'प्रदीपस्सर्वविद्यानामुपायस्सर्वकर्मणाम् ।
आश्रयस्सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥'

इति प्रथमाध्याये प्रथमान्हिके प्रथमसूत्रस्य भाष्ये

( २ ) 'परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः ।'

इति प्रथमामाध्याये प्रथमाह्निके चतुर्थसूत्रभाष्ये,

( ३ ) पदसमूहो वाक्यमर्थपरिसमाप्तौ ।'

इति प्रथमाध्याये द्वितीयाह्निके ५५ तमसूत्रभाष्ये च अर्थशास्त्रवाक्यान्यनूदितानि वर्तन्ते । एषु अनुवादेषु —

'शश्वदान्वीक्षिकी मता'

इति अर्थशास्त्रस्य प्रथमाधिकरणे द्वितीयाध्याये पठ्यमानं चतुर्थपादं परिहाय,

"विद्योद्देशे प्रकीर्तिता"

इति विद्योद्देशनामकमनूदितप्रकरणं प्रदर्शयन् वात्स्यायनप्रकीर्तनकर्तारं निगूहयामास । तथैव द्वितीयानुवादे तन्त्रयुक्ति'नामकं पञ्चदशमधिकरणमनुवादस्थलमभिदधानोऽपि तत्रापि स्वीयतां परकीयतां वा सन्दिग्धां चकार । तृतीयानुवादे त्वनुवादप्रदेशमपि ( अर्थ० ११-१० ) न द्योतयामास । यद्यर्थशास्त्रं स्वीयमेव स्यात् तदेदृशं गूहनश्रमं परिहाय तस्य ग्रन्थस्यापि स्वीयतां स प्रकाशयेदेव ।

[ तथैव कामसूत्रकर्तुः एतदनन्यत्वानिश्चयः ]

किञ्च—

यथा दाण्डक्यो नाम भोजः कामाद्ब्राह्मणकन्यामभिमन्यमानस्सबन्धुराष्ट्रो विननाश । रावणश्च सीतामपरे चान्ये च बहवो दृश्यन्ते कामवशगा विनष्टा इत्यर्थचिन्तकाः" इति कामसूत्रे ( १.२ ) अर्थशास्त्रस्य प्रथमाधिकरणीयषष्ठाध्यायात् कतिपयानि वाक्यान्यनुवदन् वात्स्यायनः "अर्थचिन्तकाः" इति गौरवप्रदर्शकं बहुवचनान्तं पदं प्रयुज्य अर्थशास्त्रप्रणेतुः स्वान्यतां स्पष्टीचकारेति सुवचम् ।

अपि चार्थशास्त्रे प्रयुक्तानि पारिभाषिकपदानि प्रयुज्य कामसूत्रं रचयन् वात्स्यायनः तस्य ग्रन्थस्यार्थशास्त्रोत्तरकालिकतां बाढं प्रकटयामास । तथाहि—

## जयमङ्गलाक्रोडपतम्

३ – कामसूत्रे दाण्डक्यो नाम भोजः इति ग्रन्थे "अर्थचिन्तकाः" इति बहुवचनान्तपदप्रयोगप्रयुक्तः अर्थशास्त्रप्रणेतारं प्रति आदरः,

४- अर्थशास्त्रयुक्तीनां पारिभाषिकपदानां कामसूत्रे प्रयोगः,

५— पाणिनिप्रयुक्तव्याकरणस्थपारिभाषिकपदानां न्यायसूत्रभाष्ये प्रयोगः, तत्सूत्राणामनुवादश्च ।

---

| | | |
|---|---|---|
| १. | कामसूत्रमिदं प्रणीतम् । तस्यायं प्रकरणाधिकरणसमुद्देशः ।<br>विद्यासमुद्देशः औपनिषदिकम् ।<br>**1.1.** | इदमर्थशास्त्रं कृतम् । तस्यायं प्रकरणाधिकरणसमुद्देशः ।<br>विद्यासमुद्देशः—औपनिषिदिकम् ।<br>**1.1.** |
| २. | पितृपैतामहं वश्यं इति मित्रसंपत् ।<br>**1.5** | पितृपैतामहं वश्यं इति मित्रसंपत् ।<br>**VI. 1.** |
| ३. | कामोपधाशुद्धान् रक्षिणोऽन्तः स्थापयेदित्याचार्याः । **V. 6** | कामोपधाशुद्धान् बाह्याभ्यन्तरविहाररक्षासु ।<br>**1.10** |
| ४. | इतस्ततश्च स्वयमेवापसृत्योपजपति चेदुभयोर्गुणानपेक्षी चलबुद्धिरसन्धेयः । **VI.4** | स्वदोषेण गतागतो गुणमुभयोः परित्यज्याकारणाद्गतागतश्चलबुद्धिरसन्धेयः । **VII.6** |
| ५. | अर्थो धर्मः कामः इत्यर्थत्रिवर्गः ।<br>अनर्थोऽधर्मो द्वेष इत्यनर्थत्रिवर्गः<br>**VI.6** | अर्थो धर्मः काम इत्यर्थत्रिवर्गः ।<br>अनर्थोऽधर्मश्शोक इत्यनर्थत्रिवर्गः ।<br>**IX.7** |
| ६. | अर्थोऽर्थानुबन्धः<br>अर्थो निरनुबन्धः<br>अर्थोऽनर्थानुबन्धः<br>अनर्थोऽर्थानुबन्धः<br>अनर्थो निरनुबन्धः<br>अनर्थोऽनर्थानुवन्धः<br>अर्थोऽनर्थ इति संशयः<br>धर्मोऽधर्म इति संशयः<br>कामो द्वेष इति संशयः **VI.6** | अर्थोऽर्थानुबन्धः<br>अर्थो निरनुबन्धः<br>अर्थोऽनर्थानुबन्धः<br>अनर्थोऽर्थानुबन्धः<br>अनर्थो निरनुबन्धः<br>अनर्थोऽनर्थानुवन्धः<br>अर्थोऽनर्थ इति संशयः<br>धर्मोऽधर्म इति संशयः<br>कामश्शोक इति संशयस्त्रिवर्गः । **IX.7** |

गवाध्यक्ष—सूत्राध्यक्ष—पण्याध्यक्षाद्युक्ताद्यर्थशास्त्रपारिभाषिकपदानि च तत्र तत्रोपयुक्तानि दृश्यन्ते ।

[ न्यायभाष्यकर्ताऽज्ञातपाणिनेः कौटिल्यादुत्तरकालिकः ]

## जयमङ्गलाक्रोडपत्रम्

६—कौटिल्येन अज्ञातमन्वन्तरयुगान्तरविषयाणां कामसूत्रे निर्देशः,

७—मल्लनागः, विष्णुगुप्तः, इति सांस्कारिकसंज्ञाभेदः,

---

पाणिनिप्रयुक्तानि व्याकरणपारिभाषिकपदानि न्यायसूत्रभाष्ये प्रयुञ्जानो वात्स्यायनो ऽज्ञातपाणिनेः कौटिल्यादुत्तरकालिक इत्यपरं कारणं चात्र दरीदृश्यते । तथाहि—

| न्यायभाष्ये | अष्टाध्याय्यां |
|---|---|
| १. वृक्षस्तिष्ठतीति स्वस्थितौ स्वातन्त्र्यात् कर्ता । | स्वतन्त्रः कर्ता १.४.५४ |
| २. वृक्षं पश्यतीति दर्शनेनाप्तुमिष्यमाणत्वात् कर्म । | ईप्सिततमं कर्म १.१.४९ |
| ३. वृक्षेण चन्द्रमसं ज्ञापयतीति ज्ञापकस्य साधकतमत्वात् करणम् | साधकतमं करणं १.४.४२ |
| ४. वृक्षायोदकमासिञ्चतीति आसिच्यमानेनोदकेन वृक्षमभिप्रैतीति सम्प्रदानम् । | कर्मणा-यमभिप्रैतीति संप्रदानम् १.४.४५ |
| ५. वृक्षे वयांसि सन्तीत्याधारोऽधिकरणम् । १.२.१६ | आधारोऽधिकरणम् १.४.४५ |

किञ्च अस्तेर्भूः ( १.४.५२ ) ब्रुवो वचिः ( १.४.५३ ) इत्यादिसूत्राणि च न्यायसूत्रभाष्ये ( १.२.४१ ) अनूदितानि वर्त्तन्ते ।

[ कामसूत्रकर्तुः एतदन्यत्वे हेत्वन्तराणि । ]

एवं कौटिल्येन अपरामृष्टाः मन्वतन्तरयुगान्तरविषयाः कामसूत्रे ( ११.१.६७ ) निर्दिष्टाः वात्स्यायनस्योत्तरकालिकतां स्पष्टयन्तीति पाश्चात्यविदुषां राद्धान्तः ।

अन्यच्चेदं कौटिल्यस्य वात्स्यायनान्यत्वनिर्धारकं कारणं दरीदृश्यते—स्वीये कामसूत्रव्याख्याने ( १.२ ) वात्स्यायन इति स्वगोत्रनिमित्ता समाख्या । मल्लनाग इति सांस्कारिकी' इति कामसूत्रप्रणेतुर्नामभेदनिर्वचनं कुर्वन् यशोधरः, सति वात्स्यायनस्य कौटिल्यादिनामान्तरे प्रसङ्गसङ्गत्या तत्सूचनमपि नैव जह्यात् । कामसूत्रप्रणेतुर्वात्स्यायनो मल्लनाग इति यन्नामद्वयं प्रसिद्धं निर्दिष्टं, न केवलं व्याख्यातृकृतं तन्नामभेदनिर्वचनमेका प्रसक्तिः, अपि तु अर्थशास्त्राद्वाक्यनामनुवादः कौटिलीयादिम्लेच्छितविकल्पानां विवरणं चापरे द्वे प्रसक्ती आस्ताम् । ग्रन्थनामनिर्देशं विनैव केवलं "तथा चोक्तम्" इत्यर्थशास्त्रात् कामसूत्रव्याख्याने यशोधरेणानूदितानि वाक्यानि चेमानि ।

(१) "संवरणमात्रं त्रयी लोकयात्राविदः ।

( कामसूत्रव्याख्या १.२, पत्र २१. अर्थशास्त्रम् १.२ )—

## जयमङ्गलाक्रोडपत्रम्

८—जयमङ्गलायां कामसूत्रव्याख्यायां कौटिल्यस्य म्लेच्छितविकल्पस्य उदाहृतिः, इति हेत्वष्टकेन न्यायभाष्यकर्ता अन्य एवेति साधितम्। तत्र विमृश्यते।

यदि कामसूत्रकर्तुः समयस्य निर्धारकं सातवाहनवंशोद्भूतशातकर्णेः कीर्तनं हेतुत्वेनोपन्यस्य वात्स्यायनः ई० १३७ तमाद् वत्सरात् उत्तरभावी इत्यनुमीयते, तर्हि पञ्चतन्त्रे वात्स्यायनप्रणीतकामसूत्रस्य उल्लेखानुपपत्तिः स्यात्। तदेतत् पञ्चतन्त्रस्य रचना ई० वर्षात् पूर्वमेव अभवदिति संस्कृतेतिहासलेखविदां नाविदतम्। यतः अस्या रचनाया अनुवादः सीरिअन् अरबी भाषायामुपलभ्यते। किं च अन्यस्यामपि भाषायां समभूत् अनुवादः पंचतन्त्रस्य, इत्यपि वा० स० विश्वविद्यालयध्यक्षचरैः

---

(२) "दैवं मानुषं हि कर्म लोकं पालयति।"
( काम १.२. प. २३. अर्थ VI. २. )

(३) "मेषशृङ्गीक्वाथाभिषुतो गुडप्रतीवापः षिप्पलीमरीचसंभारस्त्रिफलायुक्तो मद्यो मैरेयम्ः"
( काम १.४. प. ५४ अर्थ II. २५ )

(४) "तत्र पूर्वे धर्म्याश्चत्वारः।"
( काम. III. ३ प. २०८. अर्थ. III. २.

(५) "न शोधनमशुद्धस्य ( न दूषणमदुष्टस्य ) विषेणाम्भसश्चरेत् ( विषेणेवाम्भसश्चरेत् )
( कदाचिद्विप्रदुष्टस्य ( कदाचिद्धि प्रदुष्टस्य ) नाधिगम्येत भेषजम्॥"
( काम. V. ६. प. ३०३. अर्थ. १.१० )

(६) 'शौर्यममर्षता शीघ्रता दाक्ष्यं चोत्साहगुणाः।"
( काम. VI. प. ३०९ अर्थ. VI. १.

"तथा च कौटिल्येनार्थशास्त्रे उक्तम्" इतिवा अथवा "तथा च वात्स्यायनेनैव स्वीयेऽर्थशास्त्रे उक्तम्" इति वा विशिष्य निगमनं विहाय, "केवलं तथाचोक्तम्" इति सामान्यतः परोक्तिमिव परामृशन् यशोधरस्तान्येतानि वाक्यान्यन्ववदत्। एवमेव—

'यत्साधुशब्दोपनिबद्धमप्यक्षरविपर्यासादस्पष्टार्थं तन्म्लेच्छितं गूढवस्तुमन्त्रार्थम्। तस्य विकल्पा बहवः पूर्वाचार्योक्ताः तद्यथा—

कौटिलीयं यदि क्षान्तैः स्वरयोर्ह्रस्वदीर्घयोः।
बिन्दूष्मणोर्विपर्यासाद्दुर्बोध मिति संज्ञितम्॥ ( १.३. प. ३९ )"

इति कौटिलीयस्य म्लेच्छितविकल्पस्य पूर्वाचार्योक्तत्वं वदता यशोधरेण कौटिल्यो वात्स्यायनादन्यः पूर्वाचार्य इति बाढं प्रकटितं दृश्यते।

## जयमङ्गलाक्रोडपत्रम्

श्रीमद्भिः बलदेवोपाध्यायमहोदयैः लिखितग्रन्थात् अवगम्यते ।[1]

यस्मादयमनुवादः ईसाजन्मनः प्रागेव संवृत्तः इति सिद्धम् । तस्माद् अस्यानुवादस्य मूलभूतः पञ्चतन्त्रग्रन्थः ततोऽपि पूर्वतन इत्यत्र सन्देहस्य अवकाश एव नास्ति। तत्रोद्धृतस्य वात्स्यायनप्रणीतस्य कामसूत्रस्य ईसापूर्वमेव अस्तित्वमासीदिति अकामेनापि वक्तव्यमेव। एतेन "अस्य ग्रन्थस्य सूत्ररूपत्वात् अयं ग्रन्थ ईसवीयसंवत्सरारंभपूर्वककालिक एवेति प्रतिभाति', इति "संस्कृतसाहित्येतिहासे" श्रीविश्वनाथशास्त्रिभारद्वाजमहोदयैर्लिखितमुपपन्नं भवति।

अथ यद्येवं, तर्हि शातकर्णेः १३७ ई० संवत्सरकालिकस्य कामसूत्रे 'कर्तर्या कुन्तलश्शातकर्णिश्शातवाहनो महादेवीं मलयवतीं जघान, इति ग्रन्थेन कृतं कीर्तनम् कथं सोपपत्तिकं स्यात्न्। तत्रोच्यते। नाऽयं हेतुः असन्दिग्धः। एतन्नामाभिधेयस्य शातवाहनवंशोद्भूतस्य शातकर्णेः अन्यस्य कामसूत्रग्रन्थकर्तुः पूर्वमपि सम्भवात्। अत्र केचित् शातवाहनस्थाने शालिवाहनं संयोज्य तद्वंशोद्भवः शातकर्णिः इति वदन्ति। तदपि चिन्त्यम्। कुन्तलदेशस्य शालिवाहनस्य परस्परमसम्बन्धात्। तथाहि—शालिवाहनः तद्वंशीयाश्च प्रतिष्ठानपुरे दक्षिणस्यां दिशि राज्यमकुर्वन्। अयं शककर्तातुनर्मदादक्षिणभागे स्थितः शातकर्णिस्तु ततः अन्यः, प्रतिष्ठानदेशभिन्नस्य कुन्तलदेशस्य अधिपतित्वात्। कुन्तलदेशस्य स्थितिः कियत्सीमानमारभ्य कियत् सीमपर्यन्तमस्तीति अधोलिखितेन प्रमाणेन स्फुटीभवति।

कुन्तलस्य कामगिरिं समारभ्य द्वारकादेशान्तं स्थितिर्वर्तते, पुनः अस्यैव देशस्य अपरसीमा सौराष्ट्रदेशे संलग्नो वर्तते। कामगिरेः दक्षिणस्यां दिशि हूणदेशः

---

१. पञ्चतन्त्र जिन कथाओं का सङ्ग्रह है। वे भारत में नितान्त प्राचीन हैं। पञ्चतन्त्र के भिन्न-भिन्न शताब्दियों में तथा भिन्न-भिन्न प्रान्तों में अनेक संस्करण हुए। कुछ तो आज भी उपलब्ध हैं। इनमें सबसे प्राचीन संस्करण 'तन्त्राख्यायिका' के नाम से विख्यात है जिसका मूल स्थान काश्मीर है। पञ्चतन्त्र के भिन्न-भिन्न ४ संस्करण उपलब्ध हैं—(१) पञ्चतन्त्र का पहलवी अनुवाद जो उपलब्ध तो नहीं है, परन्तु जिसकी कथाओं का परिचय सीरिअन तथा अरबी अनुवादों की सहायता से प्राप्य है। (२) संस्करण गुणाढ्य की बृहत्कथा में अन्तर्निविष्ट है। यह बृहत्कथा पैशाची भाषा में थी। मूल उसका नष्ट हो गया है परन्तु ११वी शताब्दी के क्षेमेन्द्ररचित बृहत्कथामञ्जरी तथा सोमदेवका कथा सारित्सागर इसी ग्रन्थ के अनुवाद हैं। (३) तृतीय संस्करण 'तन्त्राख्यायिका' तथा उसी से सम्बद्ध जैनकथासङ्ग्रह है। आजकल का प्रचलित पञ्तन्त्र इसी का आधुनिक प्रतिनिधि है। (४) संस्करण दक्षिणी पञ्चतन्त्र का मूलरूप है। नेपाली पञ्चतन्त्र तथा हितोपदेश इस संस्करण के प्रतिनिधि हैं। इस प्रकार पञ्चतन्त्र एक सामान्य ग्रन्थ न होकर एक विपुल साहित्य का प्रतिनिधि है।" पृ० ३८८ ( कथा साहित्य )।

## जयमङ्गलाक्रोडपत्रम्

मरुदेशावधिः ततः पूर्वस्यां दिशि सिंहलोदेशः इति शब्दकल्पद्रुमोद्धृते शक्तिसङ्गमतन्त्रे देशपदविचारे द्रष्टव्यम्।[1]

किञ्च अस्यैव देशस्य गुर्जर इति संज्ञापि प्रतिपादिता काव्येषूपलभ्यते साप्युपन्ना भवति अत एव।

कालिन्दि ! ब्रूहि कुम्भोद्भव ! जलधिरहं नाम गृह्णासि कस्मात्।
शत्रोर्मे नर्मदाहं त्वमपि वदसि मे नाम कस्मात्सपत्न्याः॥
मालिन्यं तर्हि कस्मादनुभवसि मिलत्कज्जलैर्मालवीनाम्।
नेत्राम्भोभिः किमासां समजनि कुपितः कुन्तलक्षोणिपालः॥

इत्यस्य व्याख्यायां गुर्जरः क्षोणिपाल इति कृतं पाठान्तरं सङ्गच्छते। ऐतेन वर्णनेनेदमपि स्पष्टं भवति यत्कुन्तलक्षोणिपालस्याक्रमणेन तत् सीमस्थितदेशाधिपतिमालवीनां नेत्राम्भोभिर्नर्मदायाः मालिन्यसम्पादनेन कुन्तलो गुर्जरो, न तु प्रतिष्ठाननगरमिति।

२ अर्थशास्त्रं प्रति स्वीयताप्रदर्शनाभावरूपः द्वितीयः हेतुरपि वस्तुतो न हेतुः, स्वकृतग्रन्थस्थविषयस्य स्वकृतग्रन्थान्तरे उद्धरणे कृतेऽपि स्वीयताप्रदर्शनस्य शिष्टाचारानियमात्। तथाहि—वाचस्पतिमिश्राः स्वकृतन्यायकणिकाया वाक्यानि ग्रन्थान्तरे उदाहरन्ति। तथा नागेशभट्टा अपि स्वकृतोद्योतग्रन्थस्य वाक्यानि ग्रन्थान्तरे उदाहरन्ति। परन्तु स्वीयतां तत्तद्ग्रन्थेषु इमे न प्रदर्शयन्ति। तथापि तत्तद्ग्रन्थेषु तत्तत्कर्तृकत्वस्य सिद्धिस्स्मरणपरम्परया लेखाद्वा सर्वैः स्वीक्रियते। तन्न्यायेन न्यायभाष्यकर्ता स्वकृतमर्थशास्त्रं स्मरन्नपि स्वीयतां न प्रदर्शयति चेत् न कापि हानिः, नापि च अयं नियमोऽस्ति यत्परकृतस्य उल्लेखः कर्तव्यः स्वग्रन्थे। स्वकृतग्रन्थान्तरं तु न स्मर्तव्यमिति।

---

१. कोङ्कणात्पश्चिमं तीर्थं समुद्रप्रान्तगोचरम्।
हिङ्गुलाजान्तको देवि। दशयोजनदेशतः।
सौराष्ट्रदेशो देवेशि। तस्मात्तु गुर्जराभिधः।
कामगिरिं समारभ्य द्वारकान्तं महेश्वरि।
श्रीकुन्तलाभिधो देशो हूणं शृणु महेश्वरि।
कामगिरेर्दक्षिणतो मरुदेशात्तथोत्तरे।
हूणदेशः समाख्यातः शूरास्तत्र वसन्ति च।
मरुदेशात्पूर्वभागे कामाद्रिर्दक्षिणो शिवे।
सिंहलाभिधो महादेशः सर्वदेशोत्तमोत्तमः।
अवन्तीतः पूर्वभागे गोदावर्यास्तथोत्तरे
मालवाख्यो महादेशो धनधान्यपरायणः॥ इति

## जयमङ्गलाक्रोडपत्रम्

३ अर्थचिन्तकाः इति पदप्रयोगेण आदरात्मकः अर्थचिन्तकान् प्रति उक्तः तृतीयोपि हेतुः अकिञ्चत्करः, वक्ष्यमाणरीत्या अर्थशास्त्रभाष्ययोः एककर्तृकत्व-स्मरणस्य अभियुक्तप्रसिद्धस्य सत्वात् एकग्रन्थकर्ता ग्रन्थान्तरकतरिमात्मानं प्रत्यपि पदान्तरेण आदरप्रयोजकम् "अर्थचिन्तकाः" इति बहुवचनान्तप्रयोगमुल्लिखितुं शक्तोतीत्यस्यापि सम्भवितुं शक्यत्वाच्च। स्वयं वाचस्पतिमिश्राः न्यायशास्त्रे न्याय-मतं, साङ्ख्यशास्त्रे साङ्ख्यमतं, वेदान्तशास्त्रेषु वेदान्तमतं प्रदर्शयन्तः तत्तद्ग्रन्थेषु नैय्यायिकाः वेदान्तिनः, इत्यादिना प्रतिपादयन्तः दृश्यन्ते। न हि तन्मात्रेण तत्तद्-ग्रन्थानां विभिन्नकर्तृकत्वम् विचक्षणाः स्वीकुर्वन्ति। तन्न्यायेन कामसूत्रस्य न्याय-भाष्यस्य अर्थशास्त्रस्य च अनेककर्तृकत्वाभावसाधने न काऽपि हानिः इति प्रत्येतव्यम्।

४ चतुर्थः अर्थशास्त्रप्रयुक्तपारिभाषिकपदानां कामसूत्रे प्रयोगात्मको हेतु विपरीतकल्पनयापि बाधितुं शक्यः। तथाहि–पूर्वोक्तरीत्या कामसूत्रे पञ्चतन्त्र-प्राग्भावित्वस्य सिद्धत्वेन कामसूत्रे प्रयुक्तानि यानि पारिभाषिकपदानि तानि अर्थ-शास्त्रे प्रयुक्तानि स्युः इत्यपि कल्पनायाः सम्भवेन अभियुक्तप्रसिद्धैकर्तृकत्वस्मरण-रूपपूर्वोक्तहेतुप्रावल्येन भिन्नकर्तृकत्वकल्पनायां विनिगमनाविरहात्।

(५) पाणिनीयव्याकरणसूत्राणां प्रयोगः अनुवादरूपेण भाष्यकर्त्रा कृतः। इत्ययं पञ्चमः हेतुः स तु इष्ट एव, न्यायभाष्यकर्तुः पाणिन्युत्तरकालिकत्वात्। तदुक्तम्—

पाणिनिः ई० पू० ७०० वर्षे अभवत् इति। ( संस्कृत सा० इ० से विश्वनाथ-शास्त्रिभारद्वाजकृते पृ० ४५ )। इति।

किञ्च कौटिल्योऽज्ञातपाणिनिः आसीत् इति अज्ञातपाणिनेः कौटिल्यस्य इति ग्रन्थेन श्री H. Dovirapp महाभागै र्यदुच्यते तदपि चिन्त्यम्। तथाहि-कौटिल्यः चतुर्वेदवित् अर्थशास्त्रप्रणेता संस्कृतप्रयोगे कुशलः "मन्त्रिपुरोहितसखः" इत्यादिपाणिनीयसूत्रानुसारं प्रयोगं कुर्वाणः पाणिनिं न विजानाति स्म इति कथं मन्तव्यम्? क्वचित् पाणिनीयविरुद्धम् अर्थशास्त्रे प्रयुङ्क्ते स यदि, तर्हि सः प्रयोगः न्यायशास्त्रपरम्पराप्राप्त 'कालीन' शब्दादिप्रयोगवत् अर्थशास्त्रपरम्पराप्राप्तः बोध्यः। इति कौटिल्यस्य अज्ञातपाणिनित्वं न सिद्ध्यति।

(६) षष्ठे कौटिल्येन अज्ञातमन्वन्तरयुगान्तरविषयाणां कामसूत्रे हेतौ अज्ञातत्वांश-विशेषणम् केन प्रमाणेन ज्ञातम् इति न स्फुटीभवति। संभवति चेदं यत् ज्ञातोऽपि विषयः अनुपयुक्तत्वात् अर्थशास्त्रग्रन्थे कौटिल्येन अनुक्तः स्यादिति। तस्मात् "यदि स्यात् तर्हि उपलभ्येत" इतिप्रतियोगिसत्वप्रसञ्जनप्रसञ्जितप्रतियोगिकस्य स्वेतरस-कलसामग्रीविशिष्टस्य उपलब्ध्यभावस्य असत्वात् न अज्ञातत्वनिर्णयः कर्तुं शक्यते।

## जयमङ्गलाक्रोडपत्तम्

(७) सप्तमः मल्लनागो विष्णुगुप्त इति सास्कारिकसंज्ञाभेदः हेतुः विस्णुगुप्त-वात्स्यायनयोः भिन्नत्वानुमापकः तदा भवेत् यदा एकस्य एकैव सांस्कारिकी संज्ञा भवेत्, नामकरणप्रसङ्गे व्यावहारिकनाक्षत्रादिनामभेदेन एकस्यैव चतुर्विधायाः सांस्कारिकीसंज्ञायाः शास्त्रेषु विहितत्वात्।

किञ्च एकैव व्यक्तिः तत्तच्छास्त्रेषु यदा ग्रन्थं निर्माति तदा स्वस्यैव विभिन्न-नामकत्वेन स्वकृतग्रन्थस्य प्रसिद्धिमुपस्थापयति इति शिष्टाचारोऽपि तत्र तत्र दृश्यते। यथा द्रोणेन्द्रोद्धवप्रभृतीनां अर्थशास्त्रेषु भारद्वाजबाहुदन्तीपुत्रवात-व्याध्रिनामकत्वेन प्रसिद्धिः वर्तते। स एव न्यायः चाणक्येनापि आदृतः स्यात् इति नायं हेतुः कौटिल्यवात्स्यायनयोः भिन्नत्वानुमापकः।

(८) "म्लेच्छितविकल्पात्मकः अष्टमः हेतुः उपर्युक्तहेतुनिरासेनैव सन्दिग्धत्वात् निरस्तो बोध्यः।

पूर्वपक्षोक्तस्य वात्स्यायनविष्णुगुप्तभेदसाधकस्य हेतोर्हेतुत्वे सन्दिग्धेऽपि यावद् तयोरैक्यसाधकः हेतुः नोपलभ्यते तावत् इदमित्थमेवेति निर्णयः कर्तुं न शक्यते। अतः वात्स्यायनविष्णुगुप्तयोः ऐक्यनिर्णयार्थम् सद्धेतवः उपन्यस्यन्ते।

कामन्दकेन आत्ममनसोः निरूपणावसरे तत्साधकाः, मनसः अणुत्वसाधकाश्च हेतवः ये उपन्यस्ताः ते न्यायभाष्यादेव सङ्गृहीताः इति नीतिसारटीकाजयमङ्गला-दर्शनात् अवगम्यते।[1]

नीतिसारपद्ये "आत्मलिङ्गमुदाहृतम्" इत्यनेन धर्माऽधर्मादयः हेतवः आत्मानुमा-पकाः इत्युक्तम्। ये किल अनुमापकत्वेन हेतवः उक्ताः ते अस्माभिः नोच्यन्ते। अपितु प्राचीनाचार्यैः उक्ताः इत्यपि, 'उदाहृत'मिति नीतिसारोक्तनिर्देशेन उन्नीयते।[1] तेन "उदाहृतमन्यत" इति शेषः इति नीतिसारमूलं पूरणीयं भवति। परं कुत्रोदाहृतमिति तु स्फुटं नोक्तम्। तथापि नीतिशास्त्रे पुराणार्थसङ्ग्रहोक्तस्य[2] न्यायशास्त्रोपशास्त्रत्वस्य

---

१. जयमङ्गला—ज्ञानस्यायुगपद्भाव इति। यद्यात्व्यत्कतिरिक्तं मनो न स्यात्, तदाऽत्मेन्द्रिय-सन्निकर्षे ज्ञानमुत्पद्येत न चोत्पद्यते। तस्मादस्ति तदन्यत्। अयुगपद्ग्रहणमेकत्वाणुत्वसाधना-र्थम्। यद्यनेकमेकस्मिन् शरीरे मनः स्यात्, तदानेकेन्द्रियसन्निधानाद् युगपत् सर्वज्ञानानि स्युः, व्यापित्वे च सर्वेन्द्रियैर्युगपन्मनस्संयोगे सर्वाणीन्द्रियज्ञानानि भवेयुः, न च भवन्ति। तस्मात् तदेकमणु च प्रत्येतव्यम्। इति।

२. धर्माधर्मौ सुखंदुःखं इच्छाद्वेषौ तथैव च।
प्रयत्नज्ञानसंस्कारा आत्मलिङ्गमुदाहृतम्॥
ज्ञानस्यायुगपद्भावो मनसो लिङ्गमुच्यते।
न्यायशास्त्राद्विनिष्क्रान्तं नीतिशास्त्रमिति स्थितिः॥ २.३१

## जयमङ्गलाक्रोडपत्रम्

सिद्धत्वात् न्यायशास्त्रे तदुदाहृतम् इति नीतिसारपद्यार्थो भवति। तत्रापि सर्वस्य ग्रन्थस्य आकरस्थाने प्रमाणत्वेन उपन्यसनीयः ग्रन्थो भाष्यं भवतीति न्यायशास्त्रीयग्रन्थानामाधारभूतं न्यायभाष्यमेव धर्मादिसंस्कारान्तानां आत्मसाधकतया, ज्ञानस्य अयुगद्भावस्य, मनसस्तदणुत्वस्य च साधकतया प्रमाणं बोध्यम्। अत एव जयमङ्गलाटीकाकर्त्राऽपि 'पृथिव्यापस्तेजो वायुराकाशः कालोदिगात्ममनांसि' इत्युक्त्वा उक्तनीतिसारपद्यव्याख्यायां "धर्मादयो गुणवत्वात् रूपादिवदाश्रिताः योऽसावाश्रयः स आत्मेत्यात्मनो लिङ्गम्। यथा शेषाणि द्रव्याणि नाश्रयः तथा शास्त्रान्तरे प्रतिपादितम्। ग्रन्थगौरवभयात् तु नोक्तमस्माभिः"। इति ग्रन्थेन न्यायभाष्यप्रामाण्यं ज्ञाप्यते। तस्मात् न्यायभाष्यम् नीतिसारात्प्राक् इति सिद्धम्। किञ्च वक्ष्यमाणप्रकारेण च नीतिसारकर्तुः कामन्दकस्य कौटिल्यसमकालिकत्वात् न्यायभाष्यकर्ता कौटिल्यसमकालिकः, किं बहुना कौटिल्य एव इति गुरुप्रसिद्धिं अनुसृत्य उच्यते। तत द्रष्टव्यमुपाध्यायनिरपेक्षायाम्।[1] तथा एतदुपोद्बलकानि इतराण्यपि प्रमाणानि टिप्पण्यां द्रष्टव्यानि।[2] अतो गुरुपरम्पराप्रसिद्ध्यनुसारेण अर्थशास्त्रकर्तुः न्यायभाष्यकर्तुश्च अभेद सिद्धः।

वस्तुतस्तु अर्थशास्त्र-कामसूत्र-न्यायभाष्य-तत्तटीकादिप्रदर्शनेन एतद्ग्रन्थकर्तारः एककालिकाः कुटिलगोत्रोद्भवाः विभिन्नाः व्यक्तयोपि सम्भवितुमर्हन्ति इति अग्रे निर्देक्ष्यते। यतः—

वात्स्यायन एव कौटिल्यः इत्यभेदसाधकानि टिप्पण्यां निर्दिष्टानि कोषवाक्यानि अन्यया रीत्याऽपि समन्वेतुमर्हन्ति। तदाहुः—विन्ध्येश्वरीप्रसादमहोदयाः न्यायवार्तिक भूमिकायाम्—"अत्र नैयायिका वदन्ति पुरुषोत्तमदेवकृते त्रिकाण्डशेषे ब्रह्मवर्गे—

विष्णुगुप्तस्तु कौण्डिन्यश्चाणक्यो द्राभिलोंऽशुलः।
वात्स्यायनो मल्लिनागः पक्षिलस्वामिनावपि॥

---

१. "श्लो. २ सर्ग १ भुवि विश्रुतः न्याये कौटिल्यः वात्स्यायनः—"गौतमीयस्मृतिभाष्यचतुष्टयेन प्रकाशितपुरुषार्थचतुष्टयोपाय इति महीतले प्रख्यातः॥२॥" इत्युक्त्वा "शुक्रबृहस्पत्योस्तृतीयम् आत्मगुरुं प्रख्यापयितुं दण्डनीतिविषये प्रयोक्तृत्वमभिधाय प्रवक्तृत्वमपि प्रतिपादयितुमाह नीतीति। ६ श्लो०

२. वात्स्यायनो मल्लनागः कौटिल्यश्चणकात्मजः।
द्राभिलः पक्षिलस्वामी विष्णुगुप्तोऽङ्गुलश्च सः॥ ( हेमचन्द्रः )
वात्स्यायनस्तु कौटिल्यो विष्णगुप्तो वराणकः।
द्राभिलः पक्षिलस्वामी मल्लनागोऽङ्गुलोऽपि च॥
कात्यायनो वररुचिर्मेधजिच्च पुनर्वसुः।

## जयमङ्गलाक्रोडपत्रम्

अपि च त्रिकाण्डशेषकोषारम्भे एव।

'अलौकिकत्वादमरः स्वकोशे न यानि नामानि समुल्लिलेख।

विलोक्य तै रप्यधुनाऽप्रचारमयं प्रयत्नः पुरुषोत्तमस्य। इति

परिभाषादिकं सर्वमत्राप्यमरकोशवत्—इति लिखितम्। अमरकोषे तु "त्वन्ताथादि न पूर्वभाक्" इति लिखितम्। अत्र त्रिकाण्डशेषकोषटीकायां बुधमनोहरायां विष्णुगुप्तस्तु कौण्डिन्यः कौटिल्यो वा चाणक्यो द्राभिलोंऽशुल इति पञ्च नामानि चाणक्यस्य। वात्स्यायनो मल्लनागः पक्षिलस्वामी पक्षिलमुनिर्वेति त्रीणि नामानि वात्स्यायनस्येति व्याख्यातम्। कालिकातानगरमुद्रिते अमरत्रिकाण्डशेषहारावली-मेदनीति कोषचतुष्टयपुस्तके सूचिपत्रेऽपि अष्टौ नामानि न चाणक्यस्येति प्रतिपादितम्। एवं स्थिते चाणक्यो भिन्नो वात्स्यायनश्च भिन्न इति प्रतिभाति" इति। तस्मात् कोशेषूक्तिमात्रेण कालादिनिर्णयं अभियुक्तोक्तिविरुद्धत्वात् तथात्वेन न मन्यन्ते नीतिविदः[१] शेषं टिप्पण्यां द्रष्टव्यम्।

---

→ यदि च अष्टौ नामानि वात्स्यायनस्यैव। पञ्च चाणक्यस्य त्रीणि वात्स्यायनस्येति तु टीकाकारसूचीपत्रकारयोः प्रमादः। तदापि "मल्लनाग पक्षिलस्वामिनावपीत्यत्र" समुच्चयार्थकेनापिशब्देन मल्लनागपक्षिलस्वमिनोः समुच्चयेन ग्रहणाद् व्यक्तिभेदः सिद्ध्यति। वात्स्यायनशब्दवाच्यौ मल्लनागपक्षिलस्वामिनावपि भवत इति यावत्। अतः विष्णुगुप्तादि-नामविशिष्टेश्चाणक्य एको वात्स्यायनः, मल्लनागः पक्षिलस्वामी च भिन्नो, भिन्नो वात्स्यायनः।

१ काशिक-राजकीय-संस्कृत-महाविद्यालयी-पुस्तकालयाध्यक्षाः श्रीविन्ध्येश्वरीप्रसाद द्विवेदिनोऽत्र प्राहुः। (वात्स्यान न्या० वा० भूमिका, पृष्ठ ८१)

कोषकारेण वेदधर्मशास्त्रपुराणेषु न्यायदर्शनादिषु च ये शब्दाः येष्वर्थेषु प्रयुक्ता नानास्थानेषु वितता एकत्र सङ्कलय्य कोषे कथिताः। अत एव अमरसिंहः--

समाहृत्यान्यतन्त्राणि सङ्क्षिप्तैः प्रतिसंस्कृतैः।

संपूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम्॥ इति प्राह

अमरानुयायी पुरुषोत्तमदेवोऽपि--

परिभाषादिकं सर्वमत्राप्यमरकोषवदित्युक्त्वात् अमरपरिशिष्टाख्योऽपि महान् कोशोऽतीवोपयुक्तो वर्तते। तद्दर्शनात् न तत्परिशिष्टापेक्षा भवति।

इत्थञ्च--

पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्।

आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥

इतिउक्तत्वात् कोषानां नाज्ञासिद्धत्वं नापि ऐतिहासिकवृत्तक्रमव्यवस्थापकत्वम्। तथाचानेकार्थध्वनिमञ्जर्याख्यकोषे हरिशब्दो विष्णुसूर्यवानरादीनां वाचकत्वेनैकत्र लिखितो न तस्माद् विष्णुसूर्यवानराणामैक्यं नापि तेषामेकदेशकालावस्थायित्वमितिसिद्धम्। इति।

## जयमङ्गलाक्रोडपत्रम्

यद्यपि च श्रीमद्भागवतमहापुराणटीकाकर्तृभिः चाणक्य एव वात्स्यायनः इति भागवत १२ स्कन्धटीकायां उल्लिखितमस्ति। तद्यथा—"नवनन्दान् नन्दश्च तत्पुत्रांश्चेत्येवं नव प्रपन्नान् शरणागतान्। विख्यातान् वा द्विजः कौटिल्यवत्स्यायनादिपर्यायश्चाणक्य उद्धरिष्यत्युन्मूलयिष्यति। मौर्या मौर्यसंज्ञाः।" इति ( श्रीधरी )

नवनन्दानिति—नन्दशब्दः तत्सुतपरश्च 'आत्मा वै पुत्रः' इति श्रुत्यनुरोधात् अतएव नन्दानिति बहुवचनेन च इति विशेषः पञ्च तान् प्रपन्नान् कश्चिद् घातुकः कौटिल्यवात्स्यायनाख्यो द्विजः उद्धरिष्यति। नाशयिष्यति इति यावत्। ततस्तेषां सपितृकाणां सुमाल्यप्रमुखानामभावे तेष्वतिक्रान्तेषुइत्यर्थः। एवं सोमवंशे समाप्ते मौर्या भोक्ष्यन्ति। इति।

भा० १२ स्कन्ध अ० १ श्लो० १२

तथापि—चाणक्यवंशस्य अतिविस्तृतत्वात् एकैव व्यक्तिः कामसूत्रस्य कर्त्रीति न सिद्ध्यति। अस्य वंशस्य विस्तृतत्वे प्रमाणं जयमङ्गलायामुपलभ्यते—"कुलशतमप्रतिग्राहकाणामिति लोकप्रवादः (नी० सा० सर्ग १ श्लो० २)। इति। तथा च वात्स्यायनगोत्रीयः चणकदेशोद्भवः कुटिलवंशस्थः इति रीत्या वात्स्यायनः चाणक्यः कौटिल्यः इति पदवचनैः कौटिल्यवंशीयानां सर्वेषामेव तत्तन्नामनिर्देशस्य सम्भवदुक्तिकत्वात्। अतएव एककुलोद्भवयोः मल्लनागः कौटिल्यः इति इत्येवं सांस्कारिकी संज्ञा अस्तीति प्रागुक्तजयमङ्गलावाक्यमपि साधु सङ्गच्छते। तस्मात् एकवंशोद्भवाः समानकालिकाः अर्थशास्त्रस्य न्यायभाष्यस्य कामसूत्रस्य गौतमीयस्मृतिभाष्यस्य पञ्चतन्त्रग्रन्थस्य निर्मातारः विभिन्ना अपि सम्भवितुमर्हन्ति। अग्रे विद्वांसः प्रमाणम्। यत्किमपि भवतु, ई० संवत्सरारम्भात् पूर्वं पञ्चतन्त्रं न्यायभाष्यं चासीदित्यत्र नास्ति मतभेदः।

अथ कामन्दककालनिर्णयस्य उपरिप्रतिज्ञातार्थस्य अवसरप्राप्तत्वात् विमर्शनं क्रियते।

### कामन्दककालनिर्णयः

ननु "नीतिसारकर्तुः कामन्दकस्य कौटिल्यसमकालिकत्वात्" इति उपरिनिर्दिष्टः हेतुः इतिहासादिभिः कामन्दकस्य ईसानन्तरभावित्वस्य सिद्धत्वात्[1] असिद्धः। इति।

तत्रोच्यते—यद्यपि ऐतिहासिकानामाधुनिकानां कामन्दककालविषये उपर्युक्ता प्रसिद्धिरस्ति। तथापि स्वयं कामन्दकस्य स्वकृतमूलग्रन्थे तट्टीकायाञ्च यादृशी उक्तिः वर्तते। तया ऐतिहासिकप्रसिद्धेः उपर्युक्ताया दौर्बल्यं स्वतःसिद्धं भवति।

१ उदाहरण के लिये कामन्दकीय नीतिसार को लीजिये संभवतः गुप्तकाल में ५०० ई० के आसपास लिखा गया।

( 'प्रा० भा० शासनपद्धतिः' ले० अ० स० अलतेकर )

## जयमङ्गलाक्रोडपत्रम्

तथाहि—

'विद्याश्चतस्र एवैता इति नो गुरुदर्शनम्'। इति ग्रन्थेन का० नी० २-६। कामन्दकः कौटिल्यं गुरुत्वेन वर्णयति।

अयञ्च कामन्दकस्य गुरुः इत्ययमंशः जयमङ्गलायामुपाध्यायनिरपेक्षायां च तत्रैव परमत्वेन व्याख्यातः।[1]

एतत्समस्तग्रन्थस्य पर्यालोचनेन समन्वयदृष्ट्या इदं सिद्ध्यति यत् चाणक्यः कामन्दकस्य परमगुरुः इति। यद्येवं तर्हि कामन्दकेन स्वगुरोः नमनं कीर्तनं वा कुतो न कृतम् इति चेत् परमगुरुसन्निधाने तस्यैव पूजनीयत्वेन विधानदर्शनात्।[2]

अर्थात् गुरुपरमगुर्वोः सन्निधाने परमगुरुरेव पूजनीय उभयसन्निधानाभावे तु गुरुरेव पूज्यः आदर्तव्यः स्तुत्यो वेति। तस्मात् उपाध्यायनिरपेक्षाप्रामाण्येन कामन्दकसमये गुरोः परमगुरोः कौटिल्यस्य च साहचर्यमासीत्। अतः उपर्युक्त-मन्वाज्ञामनुस्मृतवता कामन्दकेन परमगुरुः कौटिल्यः नमस्कृतः, न तच्छिष्यः स्वगुरुः। इत्येतत्सर्वं कामन्दककौटिल्ययोः समकालिकत्वं विना नोपपद्यते। इति कामन्दकस्य ईसानन्तरभावित्वप्रसिद्धे दौर्बल्यात् उपाध्यायनिरपेक्षाप्रसिद्धेश्च प्राबल्यात् कामन्द-कस्यापि कवयितुः कौटिल्यसमकालिकत्वम् एव सिद्ध्यति।

इत्यलं कौटिल्यस्य न्यायभाष्यकर्तृत्वविचारप्रसक्तानुप्रवक्तचिन्तया। प्रकृतमनुसरामः।

### चाणक्यात् पूर्वं न्यायशास्त्रस्यास्तित्वम्

ननु न्यायभाष्यं कौटिल्येन अथवा तत्समकालिकेन एकवंशोद्भवेन अपरेण कौटिल्येन वा प्रणीतम्, इति सिद्धम्। तर्हि ततः पूर्वं न्यायशास्त्रं नासीदिति अर्थादेव आयाति तथा च अस्य वेदमूलकत्वाभावेन भ्रान्त्यादिमूलकत्वं सिद्ध्येत्, इति चेन्न। गौतमप्रणीतं न्यायसूत्रं चाणक्यात् पूर्वत एव आसीदिति निर्विवादम्। गौतम

---

१. तद्यथा। 'शास्त्रकारस्य कौटिल्यो गुरुः ज० म०।

'नः अस्माकं गुरोः' कौटिल्यस्य दर्शनम् इति। तथा अधिकृतदेवतास्तुत्यनन्तरं-पञ्चश्लोककुलकेन परमगुरोरपि नमस्कारमभिधातुमाह वंशेति नी० सा० १-२

एवं शुक्रबृहस्पत्योः तृतीयमात्मगुरुं प्रख्यापयितुं दण्डनीतिविषये प्रयोक्तृत्वमभिधाय प्रवक्तृत्वमपि प्रतिपादयितुमाह। नीतीति। नी० सा० १ उपा० ७२ श्लो०

२. तदुक्तं मनुना— गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत्।
नचानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत्। इति।

स्मृतिमुक्ताफले आपस्तम्बः—

'आचार्यप्राचार्यसन्निपाते प्राचार्यायोपसंग्राह्योपसंजिघृक्षेदाचार्यम् प्रतिषेधेदितरः' इति।

## जयमङ्गलाक्रोडपत्रम्

प्रणीतन्यायस्य शिष्टैः उद्धृता श्रुतिस्वीकृतिः अत्र प्रमाणं बोध्या। तद्यथा 'शुङ्गेन आत्मानमन्विच्छेत्' इति। एतच्छ्रुत्या भास्कराचार्योल्लिखितया न्यायशास्त्रस्य अस्तित्वं वेदकालादेव सिद्ध्यति। वसुन्धरायामनेकेषां विदुषां तत्र तत्र समये अवतारसम्भवात् चाणक्यात् पूर्वं केनचिदपि विदुषा गौतमसूत्रार्थः भाष्यरूपेण न विवृतः इति कथं निर्णेतव्यम्? बौद्धयुगे अनेकेषां शास्त्राणां विलवः अभूत्। तदैव तत्प्राचीनं न्यायभाष्यमपि नष्टं स्यात् इति कल्पनायाः अवसरात्। अथवा अनूचानैः गुरुभक्तैः तत्परम्पराप्राप्तः अर्थः निरूप्यते इत्येतत्सर्वं वैदिकसिद्धान्तसंरक्षिण्यां प्रथमाध्याये सविस्तरं प्रपञ्चितमस्ति। तन्न्यायेन कौटिल्येन न्यायभाष्यं प्रणीय शाबरभाष्यशाङ्करभाष्यादिवत् पूर्वपरम्पराप्राप्तः सूत्रार्थः जिज्ञासूनां कृते प्रकाशितः।

टीकायां साङ्ख्यमिति—अत्र साङ्ख्यपदेन षष्टितन्त्रमभिधीयते। नीतिसारव्याख्यायां तु न्यायशास्त्रमिति अनेनैव टीकाकृता २ सर्गे व्याख्यायते—'अङ्गानि वेदाश्चत्वारः' इत्यत्र। इत्यनयोः कथं समन्वयः? उच्यते। एतदालोचनार्थमादौ सङ्ख्यायाः किं स्वरूपमिति आलोचनमपि आवश्यकम् अन्यथा सङ्ख्यानं सङ्ख्या विवेकः इति टीकाग्रन्थः दुरवगाहः स्यात्, अतः तदादौ विविच्य अनन्तरं उभयोः समन्वयः प्रदर्शयिष्यते। तथाहि—

सङ्ख्या बुद्धिविषयतास्वरूपा भवति। तां बुद्धिं यत् शास्त्रमुत्पादयति तत् साङ्ख्यम् इति साङ्ख्यपदस्य अर्थः। तदुक्तम्—अत्रैव जयमङ्गलायाम्—संख्या विवेकः तस्या इदं शास्त्र'मिति। नन्वेवं सङ्ख्या बुद्धिविषयता इति उक्तेः कोऽभिप्रायः? इति चेदुच्यते—इमौ द्वौ त्रयः इत्यादिप्रतीतिः द्रव्यावलम्बिनी यदि वर्तते तर्हि तत्प्रतीतिविषयतायाः सङ्ख्यायाः गुणत्वं सोपपत्तिकम्', परन्तु इमौ द्वौ इत्यादिप्रतीतिः द्रव्यातिरिक्तावलम्बिनी यदि भवति तर्हि तद्विषयीभूता सङ्ख्या गुणे नान्तर्भवितुमर्हति गुणद्रव्ययोः समवायतादात्म्यसम्बन्धाभ्यां कार्यकारणभावमूलिकायाः 'गुणेगुणानङ्गीकारात्' इत्युक्तेः जागरूकत्वात्। अतः उक्तप्रतीतिविषयीभूतसङ्ख्यायाः बुद्धिविषयतारूपत्वमिति नैयायिकाः।

अत्र बुद्धिपदेन अयमेकः इत्याद्यपेक्षाबुद्धिर्ग्राह्या सा आत्मगुणानां योग्यानां विशेषाणां द्विक्षणावस्थायित्वेऽपि अपेक्षाबुद्धिः त्रिक्षणावस्थायिनी भवति। अन्यथा द्वित्वादिप्रत्यक्षं न सम्भवेत्। तत्काले अपेक्षाबुद्धिनाशे प्रत्यक्षविषयीभूतस्य द्वित्वस्य नाशप्रसंगात्। न केवलं अत्र द्वित्वप्रत्यक्षकार्यानुरोधेन अपेक्षाबुद्धेः त्रिक्षणावस्थायित्वं उक्तम् किन्तु अनुमित्यादिकार्यानुरोधेन इच्छादीनामपि चतुःक्षणावस्थायित्वमस्तीत्यादिकं पक्षताग्रन्थादौ नैयायिकैः कृतन्तत्तद् निरूपणे। प्रपञ्चीकृतञ्चैतत्

## जयमङ्गलाक्रोडपत्रम्

नैयायिकैः दीधितिकृतप्रभृतिभिः[१]। साहित्यिकास्तु नहि अपेक्षाबुद्ध्यादीनामेव त्रिक्षणावस्थायित्वं मन्वते। अपि तु रसप्रतीत्यर्थम् व्यञ्जनजनिता काव्यव्यापार-प्रसूता धीः यावद्रसप्रतीतिः न स्याद् द्वादशक्षणे चतुर्दशक्षणे वा, तावत्पर्यन्तं अनुस्यूता वर्तते इत्यभिदधति।[२]

यस्यापेक्षाबुद्धिः तद्धि विषयता एव द्वित्वादिस्वरूपा सङ्ख्यायाः तदतिरिक्तत्वे वक्ष्यमाणदोषप्रसङ्गात्। तद्यथा - यस्य अपेक्षाबुद्धिः वर्तते स एव द्वौ त्रयः इत्यादि प्रतिपत्तुमर्हति। अन्यथा सर्वसाधारण्येन घटप्रतीतिवत् घटसमवेतस्य-अतिरिक्तपदार्थस्य सङ्ख्यारूपत्वे सर्वसाधारण्येन प्रत्यक्षविषयत्वमापद्येत। विषयता-रूपत्वे तु यस्य बुद्धिः स एव तद्विषयतां विषयञ्च प्रत्यक्षीकरोति। तस्मात् येन सङ्ख्यायाः अनुभवः क्रियते प्रत्यक्षतया तेन सर्वेऽपि तत् सङ्ख्येयाः अपि प्रत्यक्षी-क्रियन्ते इत्यवगमात् सङ्ख्याप्रत्यक्षे तावत् सङ्ख्येयानां समूहालम्बनं ज्ञानं, भवत्येवेतीदृशमेव ज्ञानं विचारणापदेन अभिधीयते। तदुक्तम्—अमरकोषे—'चर्चा सङ्ख्या विचारणा' इति।

नन्वेवं बुद्धिविषयतैव सङ्ख्या इति उच्यते। तर्हि द्रव्यादिष्वपि सङ्ख्यारूपस्य अतिरिक्तस्य गुणस्यास्तित्वं किमर्थं स्वीक्रियते? यदि इष्टापत्तिः, तर्हि नैयायिकैः सिद्धान्तितस्य सङ्ख्यारूपस्य असामञ्जस्यप्रसङ्गात्। इति चेत् उच्यते। द्रव्यगुणादि-सर्वसाधारण्येन सङ्ख्यापदार्थः: विषयतासंबन्धेन अपेक्षाबुद्धिरेव इति वदामः लाघवात्। अत्र द्वौ त्रयः इत्यादिविषयिणी या प्रतीतिः तस्याः विषयतासम्बन्धः घटादिभिः सह वर्तते। सोऽयं विषयतासम्बन्धः समवाय एव अत्र अभीप्सितः। समवायस्य अस्वातन्त्र्यरूपत्वात्। अस्य समवायरूपत्वं न नैयायिकानामपि अनभिमतं तदुक्तम् समवायनिरूपणावसरे।[१]

---

१. "उत्तानास्तु द्वे द्रव्ये इत्यादिलौकिकप्रत्यक्षान्यथानुपपत्त्या अपेक्षाबुद्धीनामिव त्रिचतुःक्षणावस्थायित्वं कल्पयितुमुचितम्।" पृ० १२६

२. तदुक्तम् काव्यप्रकाशविवरणे चतुर्थोल्लासे गोकुलनाथोपाध्यायकृते—

"ततो दशम एकादशे वा क्षणे शब्दार्थचमत्कारभावास्वादगोचरानर्थानुपादाय तथा-विधविभावानुभावव्यभिचारिभावसम्पन्ने परस्पररतिमदालम्बिते रति; इति चवर्णा। स एव पानकरसन्यायेनालौकिकरसास्वादः। स चास्वादकप्रकर्षबलादधिकाधिककालं यथानुभवमव-तिष्ठमानो निखिलैरेवालंकारचमत्कारास्वादादिभिः सह विरमति। सङ्ख्याजनकापेक्षाबुद्धीनां प्रयोजनानुरोधेन त्रिक्षणावस्थायित्वमिव काव्यप्रयोज्यास्वादपरम्पराणामधिकाधिककालव्याप-कत्वमविरुद्धमिति दिक्।" पृ० १३३

१. प्र० भाष्य :—"इहेदमिति बुद्धिर्यतो भवति।"

न्या० क०—"इहेदमिति बुद्धिर्यतः कारणाद् भवति यतश्चासर्वगतानां नियतदेशाव-स्थितानामधिगतान्यत्वानामधिगतस्वरूपभेदानामविष्वग्भावोऽपृथग्भावोऽस्वातन्त्र्यं स समवायः-

## जयमङ्गलाक्रोडपत्रम्

एवञ्च इमौ द्वौ इति प्रतीतिकाले सङ्ख्येयतद्बुद्धयोः मध्यवर्ती विषयता-सम्बन्धः अपृथग्भावत्वेन भासमानत्वात् समवायाऽनतिरिक्तः इति स्वीक्रियते। इयं बुद्धिरूपा सङ्ख्या समवायात्मकतथाविधसम्बन्धेन यत्र द्रव्ये उत्पद्यते। तत् समवायिकारणं इति सिद्धम्।

यद्येवं तर्हि सङ्ख्येयानां पिपीलिकादीनां विनाशे समवायिकारणाभावात् "शतं पिपीलिकादीनामि"ति बुद्धिः कथमुत्पद्येत ? तदानीं तावत् सङ्ख्येयानाम् सयवायिकारणानामसत्वेन सङ्ख्याया अनुत्पत्तेः। इति चेद् न्यायकन्दल्यां सङ्ख्यानिरूपणावसरे यत्समाहितमस्ति तदेव अत्रापि द्रष्टव्यम्।[1]

एतेन एतत्पक्षे बुद्धेः सङ्ख्यारूपायाः उत्पत्तिः सङ्ख्येयानां पिपीलिकानां नाशेऽपि बौद्धपदार्थेषु संभवति। इति नात्र कश्चित् विरोधः।

राजनीतौ तु वेदान्तशास्त्रसिद्धस्य जगन्मृगतृषातुल्यपक्षस्य अनुमतत्वाद् विषयाणां निपतितत्वात् सर्वस्य आत्मरूपत्वमेव स्वीक्रियते। तथा सति उक्तसङ्ख्यात्मकबुद्धिमत्वस्य सिद्धिः सहजत एव नानुपपन्ना। अत्रेदमवधेयम्—सर्वविषयिणी या कापि बुद्धिर्भवतु तस्याः आश्रयपदार्थेन सह यदा अपृथग्भावरूपतया भासते तदा स समवायो वोध्यः। अन्यत्र भासमानतादशायां तु विषयतामात्रम् इति विषयता-समवाययोर्विवेकः। एतावत्पर्यन्तं जयमङ्गलायामुपवर्णितम् विवेकात्मकं सङ्ख्यास्वरूपं पर्यालोचितं तेनैव सङ्कलनपदार्थोऽपि स्फुटीभवति। एवंभूतसङ्ख्यात्मकविवेकवान् यः स एव पण्डितः इत्यपि अमरकोषे व्याख्यातम्—

---

भिन्नयोः परस्परोपश्लेषस्य सम्बन्धकृतत्वोपलम्भात्"। इति। तथा भावप्रकाशनेपि समवायस्वरूपं एवमेव वर्णितमस्ति तथाहुः ६ अ० १५८ प०

व्यक्तिषु व्याप्यवृत्तित्वं सामान्ये कल्पितो गुणः।
स्वाश्रयाभिन्नरूपत्वं धर्मः स्यात्समवायभाक्॥ इति। न्या० क० ट० २८३

१. "यत्र विनष्टेषु सङ्ख्येयेष्वन्ते सङ्कलनात्मकः प्रत्ययो जायते, शतं पिपीलिकानां मया निहतमिति, तत्र कथं शतसङ्ख्याया उत्पत्तिः ? आश्रयाभावात् नोत्पद्यत एव तत्र सा, कारणाभावात्। शतव्यवहारस्तु रूपादिष्विव गौण इत्येके समर्थयन्ति। अपरेतु प्रतीतेस्तुल्यत्वादुपचारकल्पनामनादृत्यातीतानामेव द्रव्याणां संस्कारोपनीतत्वादाश्रयतामिच्छन्ति। यदत्यन्तमसत् खपुष्पादि तदकारणम्, निःस्वभावत्वात्। अतीतानां तु वर्तमानकालसम्बन्धो नास्ति, न तु स्वरूपम् तेषां स्मृतिसन्निहितानां तर्कानुगुणसहकारिलाभात् समवायिकारणत्वमविरुद्धम्। न चैवं सति सर्वत्र तथाभावः, यथादर्शनं व्यवस्थापनात्। अतीतस्य जनकत्वेऽनुभवस्यैव स्मृतिहेतुत्वसम्भवे संस्कारकल्पनावैयर्थ्यमिति चेन्न, निरन्वयप्रध्वस्तस्यानुपस्थितस्याकारकत्वात्। तदुपस्थापनाकल्पनायां तु संस्कारसिद्धिः तथा चान्त्यवर्णप्रतीतिकाले पूर्ववर्णानां विनष्टानामपि स्मृत्युपनीतत्वादर्थप्रतीतौ निमित्तकारणत्वमस्त्येव यथेदं, तथा समवायिकारणत्वमपि केषाञ्चिद् भविष्यति" इति।

## जयमङ्गलाक्रोडपत्रम्

तदुक्तम्—'सङ्ख्यावान् पण्डितः कविः' । इति । एवञ्च जयमङ्गलायां साङ्ख्यशास्त्रं षष्टितन्त्रात्मकमिति निरूपणात् प्राक्सङ्ख्या विवेकः इति निरूपणात् च यथा साङ्ख्यपदेन षष्टितन्त्रं कौटिल्यस्य अभिप्रेतं तथा विवेकनिरूपकस्य न्यायशास्त्रस्यापि अभीप्सितत्वात् चाणक्यपरवर्तिभिः अपरैः टीकाकर्तृभिः साङ्ख्यपदेन विवेकपूर्णषष्टितन्त्रात्मकस्य साङ्ख्यस्य एकदेशभूतः विवेकभागः न्यायपदेन बोधितः । बुद्धेः अनुमानाभ्यासपाटववतामेव उत्पत्तिदर्शनात् अनुमानञ्च भ्रमात्मकव्याप्तिज्ञानमूलकञ्चेत् उपहासाय भविष्यतीति तन्निरासाय न्यायशास्त्रस्य ग्रहणं कृतम् । तद्यथा—'न्यायशास्त्रं सांख्यादि' इति । ( काम० नीति० जय० मंग० २ सर्ग इति ) ।

मूलकृता चाणक्येन तु सर्वस्य विचारस्य कृतत्वात् साङ्ख्यपदेन विवेकपरिपूर्णषष्टितन्त्रात्मकस्य साङ्ख्यस्य विशेष्यांशः षष्टितन्त्रभागः चिन्तितः स एव विशेष्यांशः प्रकृते तट्टीकायां जयमङ्गलाकृता व्याख्यातः, इति नास्ति कश्चन परस्परविरोधः ।

अतएव न्यायशास्त्रस्य प्रामाण्यात् साङ्ख्यतत्त्वकौमुद्यां अनुमानस्य अवान्तरभेदनिरूपणावसरे न्यायशास्त्रोक्तपद्धतिमनुसृत्य अनुमानप्रामाण्यनिरूपणम् वाचस्पतिमिश्रैः अभ्यधायि ।[1]

तस्मात् साङ्ख्यमपि न्यायशास्त्रसहचारि इति निर्विवादम् । यद्यपि केचन आधुनिकाः अनुमानप्रामाण्यमुपेक्षन्ते तथापि सन्ततुलसीदासकविप्रभृतिभिः पूर्वपरम्प-

---

१. त्रिविध मनुमानमाख्यातं तदिति । तत्सामान्यतो लक्षितमनुमानं विशेषतस्त्रिविधम् । पूर्ववत् । शेषवत् सामान्यतो दृष्टञ्च । तत्र प्रथमं तावत् द्विविधं वीतमवीतञ्च । अन्वयमुखेन प्रवर्तमानं विधायकं वीतं व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतम् । तत्रावीतं शेषवत् शिष्यते परिशिष्यते इति शेषः । स एव विषयतया यस्यास्त्यनुमानज्ञानस्य तच्छेषवत् । यदाहुः "प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः परिशेष" इति । अस्य चावीतस्य व्यतिरेकिण उदाहरणमग्रेऽभिधास्यते । वीतञ्च द्वेधा पूर्ववत् सामान्यतो दृष्टञ्च । तत्रैकं दृष्टस्वलक्षणसामान्यविषयं यत् तत्पूर्ववत् पूर्वं प्रसिद्धं दृष्टस्वलक्षणसामान्यमिति यावत्, तदस्य विषयत्वेनास्त्यनुमानज्ञानस्येति पूर्ववत् । यथा धूमाद्वह्नित्व सामान्यविशेषो दृष्टो रसवत्याम् । अपरञ्च वीतं सामान्यतोदृष्टम् अदृष्टस्वलक्षण सामान्यविषयं यथेन्द्रियविषय मनुमानम् । अत्र हि रूपादिज्ञानानां क्रियात्वेन करणवत्वमनुमीयते । यद्यपि च करणत्वसामान्यस्य छिदादौ वास्यादिस्वलक्षणमुपलब्धं तथापि यज्जातीयं रूपादिज्ञाने करणत्वमनुमीयते तज्जातीयस्य करणस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण, इन्द्रियजातीयं हि तत् करणं नचेन्द्रियत्वसामान्यस्य स्वलक्षणमिन्द्रियविशेषः प्रत्यक्षगोचरोऽर्वाग्दृशां, यथा वह्नित्वस्य सामान्यस्य स्वलक्षणं वह्निः । सोऽयं पूर्ववतः सामान्यतोदृष्टात् सत्यपि वीतत्वेन तुल्यत्वे विशेषः ।

## जयमङ्गला

"प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा ॥
तर्कश्चैव समाधिश्चषडङ्गो योग उच्यते ॥" इति ।

## जयमङ्गलाक्रोडपत्रम्

राप्राप्तस्य अनुमानस्य प्रामाण्यं नागरिक्या भाषया निरूपितमस्ति तत्स्मर्तव्यम् ।[१]

किञ्च अनुमानप्रामाण्यस्य मित्रद्वारा उपयोगित्वं कथं सम्पादितं भवतीत्यपि तैः विशेषतया विस्तृतं वर्तते ।[१] समुद्रशरणागति प्रसंगे सुन्दरकाण्ड० ५६ दो० )

तस्मात् अत्यन्तमभ्यर्हितेन न्यायशास्त्रेण सहचरितस्य साङ्ख्यशास्त्रस्य साङ्ख्यपदेन विवक्षितत्वात् साङ्ख्यनिरूपणविषये टीकाकृतां मतभेदो नास्तीति सिद्धम्, इत्यलमस्ति विस्तरेण ।

**'षडङ्गेति'** अस्य फलेन सह अन्वयः । ऐश्वर्यं फलं यस्य सः षडङ्गः योगः इति यावत् ।

**'ऐश्वर्यंति'** ऐश्वर्यं भूतभौतिकवशित्वं फलत्वञ्च प्रवृत्युद्देश्यत्वम् । तदुक्तं मुक्तावल्यां मङ्गलवादे द्रष्टव्यम् षडङ्गान्याह-प्रत्याहार इत्यादि—

योगसूत्रे योगः अष्टाङ्ग उक्तः । स तु वानप्रस्थाश्रमिभिः संसाध्यते । तथाविधो योगः प्रजापालनप्रतिज्ञेन राज्ञा वने वासं विधाय न कर्तुं शक्यः इत्यतः प्रकृते अन्यमेव योगमभिदधाति । तर्क इत्यादिना । तत्र तर्कार्थं अपेक्षितस्य समाधेस्स्वरूपं अभिधीयते—न्यायकन्दल्याम्—

'धारकेण प्रयत्नेन वशीकृतस्य मनसः तत्त्वबुभुत्साविशिष्टेन आत्मना सह संयोगः इति उक्तम् ( ४६२ पृ० प्रत्यक्षप्रकरणे )

सोऽयं आत्मसंयोगः एकदेशे तर्कधारया चिन्तनेन साधितः समाधिरित्युच्यते। एवंभूतः समाधिः क्षत्रियेण स्वीयवर्णाश्रमधर्मे स्थितेन प्रजापालकेन न असाध्यो भवति । योगशास्त्रेण वर्णितः यः समाधिः तेन हि आत्मनः लाभो भवति इति तु

---

१. कुपथ निवारि सुपन्थ चलावा । गुन प्रगटै अवगुन हि दुरावा ।
देत लेत मन संक न धरई । वल अनुमान सदा हित करई ॥

२ सुन्दरकाण्ड ५९ दो.

मैं पुनि उरधरि प्रभु प्रभुताई । करिहउँ बल अनुमान सहाई ।
एहि विधि नाथ पयोधि बंधाइअ । जेहि यह सुजसु लोक तिहुँ गायउ ।

## जयमङ्गलाक्रोडपत्रम्

सत्यम्, परन्तु तत्र पूर्णं वैराग्यमपेक्ष्यते। तदनुसारेण तद्ग्रन्थे यमनियमा अपि तथैव व्याख्याताः 'यो० सू—पृ० १०२—'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ॥३०॥ शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥३२॥ इति योगसूत्रनिरुक्ते योगे न सर्वेऽपि समानतया अधिकारिणो भवितुमर्हन्ति इति न स गृहीतो राजशास्त्रे। न्यायकन्दल्युक्तसामाग्र्यौ तु अधिकृतो गृहस्थोपि प्रवृत्तिमार्गे स्थितो भवितुमर्हति अतस्तत्र तर्कः, यमपदेन साधारणो धर्मः, नियमपदेन च स्वाश्रमधर्मः इति निर्णीतमस्ति। स्वधर्मे स्थितः राजाऽपि यदि तर्ककुशलः स्यात् तर्हि सोऽपि समाधिभागेवेति मत्वा तदधिकारं चिन्तयन् अर्थशास्त्रकर्ता योगमध्ये तर्कम् सङ्गृण्हाति। तत् साधु मन्तव्यम्।

अत्र उपर्युक्ते समाधिलक्षणे धारकप्रयत्नः मनसः एकदेशे धारणजनकत्वेन उक्तः। परन्तु तस्य कीदृशं स्वरूपं भवितुमर्हति इति तु नोक्तम्। अतः तद्-विशदीक्रियते।

वैदिकसिद्धान्तसंरक्षिण्याम् १ ध्याये शक्तेः स्वरूपनिरूपणासरे निरूपितम् ज्ञानप्रभा आनन्दप्रभया मिश्रिता चेत् सत्वं भवति यत्र हि मनः रमते अर्थात् सुखमनुभवति तत्र मनसः कमले भ्रमरस्येव स्थितिः नियता इति लोके दृष्टम्। तथा ज्ञानप्रभायां यथा यथा सुखानुभवः स्यात् तथा तथा शक्रपदलाभादपि अधिकं लाभं मन्वानं मनः तां त्यक्तुं न समीहते।[1] तथाविधायां ज्ञानप्रभायां यदि क्रियाप्रभाऽपि संसृष्टा स्यात् तर्हि तदानीं नियमतः फलोपलब्धेः क्रियाप्रभाविशिष्टा सत्वमयी ज्ञानप्रभा शक्तिपदेन व्यपदिश्यते। इति

एवञ्च ज्ञानप्रभायां सुखानुभवेन मनसो यदवस्थापनं तदेव धारकप्रयत्नः इति बोध्यम्। ज्ञानेऽपि आनन्दानुभवः कथं भवतीति प्रश्नस्तु नीतिनिरूपणे हर्षविभावस्य आलोचितत्वात् तेनैव समाहितत्वाच्च नात्र पुनर्व्याख्यायते।

इदमेव नीतिशास्त्रस्य महत्त्वमितरशास्त्रापेक्षया यदत्र क्रियापर्यवसानं यावन्नभवति तावन्नीतिशास्त्रं न पर्याप्तम्। इतरशास्त्रान्तु विचारणामात्रेणाऽपि कृतकृत्यतां भजते। अतः नीतिः भारतीयराजशास्त्रोक्ता अनुष्ठिता चेत् शक्तिरूपतां भजते धारक प्रयत्नरूपताञ्चेति।

### क्रियासातत्ये फलम्

अथ क्रियानिरूपणप्रसङ्गात् अन्यदपि किञ्चिद् वस्तु प्रकाश्यते। सत्व-प्रचुरायां क्रियायां आरभ्यमाणायां सत्यां असंभावनादयो विघ्ना ये प्रतिबन्धकत्वेन उक्ताः अभिनवभारत्यां ते अकिञ्चित्कराः भवन्ति इति। तथाहि—यदा कस्मिंश्चित् वस्तुनि नैरन्तर्येण क्रिया सातत्येन चाक्षुषविषयीभवति। अथवा धाराप्रवाहन्यायेन

---

[1] तदुक्तम् :—यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः। (गीता)

## जयमङ्गलाक्रोडपत्रम्

क्रमेण सन्ततं एकसजातीयं विभिन्नं विभिन्नं वस्तु उपस्थितं सत् प्रकाशते । तदा अन्तराले सम्भूतस्य क्रियाविच्छेदस्य उत्पद्यमानस्य वा विभिन्नस्य विभिन्नस्य वस्तुनः पार्थक्यम् न चक्षुषा विषयीक्रियते ।·

यथा चित्रपटे एकस्या एव मूर्तेः हस्तचरणादीनां उर्ध्वाधोभागयोर्गमने तत्र एक एव हस्तः ऊर्ध्वं गच्छति अध आगच्छति इति दृश्यते । तद् हस्तचित्रं चित्रपटे दृश्यमानं वस्तुतो विचार्यमाणे नह्येकमेव तथापि अविच्छेदेन क्रियाप्रभायाः उर्ध्वाधोदेशादौ गमनात्मिकायाः प्रदर्शनं अनेकविधहस्ततत्क्रियाविच्छेददर्शनम् बद्ध्नाति । अथवा—

क्रियायाः ईदृशमपि माहात्म्यमस्ति यत् प्रतिकूलसर्वविधदृष्टितिरोधानम् । तथाहि—यद्देशावच्छेदेन क्रिया, विलम्बेन गतिमति शैघ्येण गतिमति च वस्तुनि उत्पद्यते तयोः गतिशीलयोः पदार्थयोः आश्रयभूतस्य देशस्य वैदिकसिद्धान्तानुसारेण-पार्थक्येऽपि तत् पार्थक्यंन्न दृष्टिगोचर भवति । इदमेव विशेषतिरोधानम् तद्यथा—

उद्दिष्टस्थलमुद्दिश्य द्वे धूमशकटे एकस्थानात् एकस्मिन्नेव समये यदि प्रचलिते स्याताम् । तर्हि तयोरेकस्मिन्नेव क्षणे उद्दिष्टस्थलस्य प्राप्तिः[1], क्रियाविभागादीनां क्रमानुरोधेन क्रियामारभ्य पञ्चमक्षणे जनिष्यमाण-क्रियानाशावधिककार्यकारणभावात् आवश्यकी । परं धुमशकटयोः प्राप्तिः तथा न भवति द्रुतगतिमतः शकटस्यापेक्षया मन्दगतिमतः धूमशकटस्य विलम्बेन तत्र प्रापणात् । इयं धूमशकटयोः विलम्बशीघ्रभावेन उद्दिष्टस्थले प्राप्तिः कस्मात् कारणसामग्री-वैषम्यात् अभूदिति चिन्तायां प्रागुक्तक्रियाविभागादिसामग्रीषु न्यूनाधिकत्वयोः कारणत्वस्य विलम्बशीघ्रभावं प्रति वक्तुमशक्यत्वात् पञ्चमक्षणात् प्राक् एकक्रियायाः उत्पत्तुमशक्यत्वात् । अतस्तत्सर्वमुपर्युक्तक्रियास्वभावनिरूपणेन सुसङ्गतं भवति । तस्याः विरोधि विशेषदर्शनात्मकदृष्टितिरोधानं प्रति जनकत्वस्य स्वाभाव्यात् । अर्थात् द्रुतगतिमतः शकटस्य गमनमार्गः विलम्बगतिमतः धूमशकटस्य च गमनमार्गः वेदान्तानुसारेण सङ्कोचविकासाभ्यां विभिन्नो विभिन्नः इत्येवं देशभेदसत्वेऽपि क्रिया-स्वाभाव्यात् चक्षुभ्यीम् तन्मार्गविशेषदर्शनं कर्तुं न पार्यते ।

अत एव यद्यपि राजशरीरं सर्वसाधारणशरीरमिव भासते तथापि तच्छरीर-स्य भूमौ चरणप्रक्षेपः इतरसर्वसाधारणचरणप्रक्षेपापेक्षया वैधर्म्यं भजतीति नाट्शास्त्रे प्रदर्शितमस्ति । तत्कथं भवतीति चेत् तस्य शरीरमेव सत्त्वगुणविशिष्ट तथाविध-मस्ति यत् सत्वगुणलाभवेन तदीयगतिरपि इतरगतिसाधर्म्यं न भजते । अत्रायं निष्कर्षः वक्ष्यमाणरीत्या नीतौ क्रियाप्रभात्मिकायां सत्त्वगुणविशिष्टायां तमः—

---

१. क्रिया, क्रियातो विभागः, विभागात् पूर्वसंयोगनाशः, ततः उत्तरदेशसंयोगोत्पत्तिः ततः क्रियाविभागयोर्नाशः ।

## जयमङ्गलाक्रोडपत्रम्

प्रसूत्वस्वाभाव्यात् विशेषादर्शनरूपं तम इव स्वमहिम्ना सा असंभवानादिदोषान् अपि अभिनवभारत्यां उक्तान्[1] अपसारयति । इति

किञ्च प्रारब्धायाः क्रियायाः आनन्दमिश्रितायाः ज्ञानप्रभासंयुक्तायाः अपरोऽपि अयं स्वभावः यत् परिश्रमाद्यननुभवो नाम । यथा विवाहादिमङ्गलकार्यप्रसङ्गे अपरिमितमात्रया मातरः भगिन्यश्च ऊर्ध्वाधोभागेषु शतशः गच्छन्ति आगच्छन्ति च । तथापि परिभ्रमणगणितरीत्या आलोच्यमाने अनेकयोजनपर्यन्तगमनसंभवेपि परिश्रमं ता नानुभवन्ति । कुतः इति ? चेत क्रियायाम् यत् आनन्दप्रभामिश्रणं तत्प्रयुक्तः एतावद्दूरपर्यन्त कृताया गतेरननुभवः एव इति मन्तव्यम् । इदमेव शक्तेः तमःप्रसवितृत्वम् । तदुक्तं भावप्रकाशने—'शक्तिः स्यात् तु तमःप्रसूः इति । इत्थञ्च । यः ज्ञानप्रभासंयुक्तक्रियाप्रभासम्पन्नः सः जडो वा भवतु, तत्र तस्य सात्त्विकत्वात् उपर्युक्तक्रियाप्रभात्मकशक्तिमाहात्म्याच्च प्रतिकूलसर्वविधदृष्टितिरोधानं यथा, तथा क्रियाशक्तिमहिम्ना कार्यकरणकर्तृत्वञ्च स्वेच्छानुकूलं संस्कारवशाद् उद्बुद्धं भवति इति । सिद्धम् ।[2]

नन्वेवं उपर्युक्तं धूमशकटादिषु स्वस्वगन्तव्यप्रदेशेषु वा जडेषु सात्त्विकत्वप्रयुक्तं लाघवं, तामसत्वप्रयुक्तं गौरवं कथं भवतीति तु न शङ्क्यम् वेदान्तसिद्धान्तस्य वास्तविकसिद्धान्तत्वात् तन्मतानुसारेण सर्वत्र साक्षिभूतस्य आत्मनः तादात्म्यात् सर्वत्र सर्वस्यापि सम्भवात् । 'कूलं पिपतिषति' इत्यादौ महाभाष्ये तथोक्तत्वाच्च ।

किञ्च वैज्ञानिकैः साध्यत्वेन साधनत्वेन च अभिमतयोः प्राकृतीं स्थितिमालोच्य यःकोपि कार्यकारणभावः निर्णीयते । स सर्वोऽपि प्रत्यभिज्ञादर्शनादिसिद्धान्तानुसारेण ईश्वरेच्छातः नातिरिच्यते इति उररीक्रियते । अस्य अयं भावः । सृष्ट्यारंभे 'बहु स्यां प्रजायेय' इत्युक्त्या स्वयमेव जडस्वरूपेण आत्मानं निर्माय

---

१. एतद्दोषनिरूपणं प्राक् कृतमस्ति टीकायाँ—

२. रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगाः ।
निरालम्बो मार्गश्चरणविकलः सारथिरपि ॥
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः ।
क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥
अस्त्रामास तृणं प्रियाद्रुहि तृणामास स्मरारे धनुः ।
दारामास मुनेः शिलाऽपि नृवरामास स्वयं पादुका ॥
कुल्यामास महार्णवोऽपि कपयो योधांबभूवुः पुरा ।
पौलस्त्यो मशकांबभूव भगवन् त्वं मानुषामासिथाः ॥

इत्येतत्सर्वं यथावद् उपपद्यते ।

## जयमङ्गलाक्रोडपत्त्रम्

तयोः साध्यसाधनभावं साधयितुम् यथा यथा नाट्यं कृतम् भगवता, तथा तथा सर्वोऽपि जडवर्गं चेतनवर्गश्च अनुतिष्ठति स्म । तत्संस्कारमहिम्ना अद्यापि सः तथैव कार्य-कारणभावं सम्पादयन् वर्तते । सैव ईश्वरेच्छा प्रागुक्तपरिष्कृतरीत्या शक्तिरूपतायां पर्यवस्यति । धारकप्रयत्नपदेन उपरिनिर्दिष्टा सा प्रभा क्वचिद् जडात्मकवस्तुषु यदा उद्बुद्धा भवति तदा जडवर्गः सप्तसु कारकेषु कर्तृपदव्यपदेश्यो भवति । यथा भूकम्प, जलप्रसरण, महामारीप्रभृतयः । यदा तु स एव जडवर्गः ईश्वरेच्छात्मककर्तृत्व-सम्पन्नस्य चेतनस्य कर्तृपराधीनो भूत्वा कार्यं सम्पादयति तदा सः कर्तृभिन्नकारक-पदव्यपदेश्यो भवति । तस्मात् कूलं पिपतिषतीति महाभाष्यप्रमाण्यात् 'अधिगच्छति शास्त्रार्थः' इत्यादिरीत्या वै० संराक्षिण्यां समुद्धृतपद्याच्च इच्छाज्ञानकृतिसमष्ट्यात्मकं ईश्वरीयं कर्तृत्वं सर्वत्र व्याप्तम् । एवं सत्त्वेऽपि यथा चन्द्रः रात्रावेव तमसि आवरणे प्रकाशते दिवसे तु सन्नपि न प्रकाशते । तद्वत् सर्वत्र प्रायः अस्याः कर्तृत्वशक्तेः पूर्णांशस्य तिरोभावः । क्वचिदंशे तु प्रकाशनम् । सोऽयं उक्तयोः ज्ञानप्रभामिश्रित-क्रियानन्दप्रभयोः प्रभाव एवेति ध्येयम् ।

सेऽयं शक्तिः आनन्दप्रभारूपा नीतिशास्त्रमर्यादितानुष्ठाने यदा प्रादुर्भवति, तदैव वैदिकसिद्धान्तसंरक्षिणोटीकोक्तप्रतिभात्मकमतिभावसम्पत्तिमत्वं भवति । अन्यथा पारतन्त्र्यं दुर्निवारं स्यात् तस्मात् योगिभिः उपास्या शक्तिः, नीति-शास्त्रानुसारेण साधारणैः शास्त्रमर्यादां अनुसरद्भिरपि अवश्यं प्राप्तुं शक्यते । नीत्याख्येन धारकप्रयत्नेन मनः धारितञ्चेत् योगोप्यापद्यते इति वर्णाश्रमधर्मे स्थितेन क्षत्रियेणापि राज्ञा नीतिशास्त्रानुष्ठानमहिम्ना धारकेण प्रयत्नेन मनः धारयितुं शक्यते इति निर्णीतत्वात् समाधिः सुखेन लभ्यः, इति स्थितम् । अत्र समाधिलक्षणे तत्त्वबुभुत्साऽपि अपेक्षिता इति उपर्युक्त न्यायकन्दलीवाक्येन निर्णीतित्वात् राज्ञः नीत्यनुष्ठानेन सह तत्त्वबुभुत्साऽपि अभ्यर्हिता इति भाति । साच चिन्तारूपा अबाधितवस्तुलाभार्था यथार्थविषयिणी चेत् सफला भविष्यतीति; तर्कधारारूपतयापन्ना सती समाधिः इति मन्तव्यम् ।

नन्वेवं तर्कधारात्मकसमाधेः उत्पत्तये बुभुत्सायाः चिन्तारूपायाः साधनत्वं कुतो ऽवगन्तव्यम् इति चेदुच्यते । तर्को हि व्याप्यारोपेण व्यापकारोपः भवति । यथा पर्वते वह्निसत्त्वेपि केनचित् वह्न्यभावः आरोपितः स्यात् तर्हि तत्र दृश्यमानस्य धूमस्याऽपि अभावः आरोपितो भवति । यथा पर्वतो यदि निर्वह्निः स्यात् तर्हि निर्धूमः स्यादिति । अस्यारोपस्य सामग्र्यां आपाद्यस्य व्यतिरेकनिश्चयः आपाद्या-पादकव्याप्तिनिश्चयेन सह गृहीतो वर्तते । यथा उक्तस्थले—वह्न्यभावधूमाभावयोः व्याप्यव्यापकभावनिर्णयः ( अर्थात् यत्र यत्र वह्न्यभावः तत्र तत्र धूमाभाव इति ) धूमाभावाभावरूपस्य आपाद्यव्यतिरेकस्य निर्णयश्च ( यदि वह्न्यभाववान् स्यात्

तर्हि धूमाभाववान् स्यात् त्याकारकः ) तर्क प्रति सहकारी भवति। तथा सति व्यापकारोपस्य धूमाभावनिर्णयात्मकस्य तर्कस्य उक्तसामग्रीबलात् आहार्यनिश्चयत्वं सिद्धम्। आहार्यनिश्चयश्च बाधज्ञानकालीनं इच्छाजन्यज्ञानमिति निर्दिश्यते। अत्र आहार्यलक्षणे यदि इच्छापदं न निवेश्यते तर्हि प्रत्यक्षात्मिकायाः पर्वते धूमवत्ताबुद्धेः प्रतिबन्धिकायाः सत्त्वात् पर्वतो धूमभाववान् इति ज्ञानमेव नोत्पद्येत इच्छा निवेशे तु पर्वते धूमाभाववत्ताज्ञानं जायतामिति इच्छाया उत्तेजिकयाः तत्समकालीनबाधबुद्धेः प्रतिबन्धकत्वं अपनोद्यते इत्यतो हेतोः अत्र तर्करूपे समाधौ आहार्यारोपे बुभुत्सायां निवेशः कृतः।

अर्थात् तर्क एव वारम्वारं धारावाहिकश्चेत् समाधिर्भवति इति सिद्धम्। तर्कस्य एतावन्माहात्म्यं यत् तर्ककुशलेन अभ्यूहितं यत्किमपि तत् अनूचानेन निर्णीतत्वात् आर्षं भवतीति। उक्तञ्चैतत् प्रशस्तपादभाष्ये।[1]

अतएव शबरस्वामिभिरपि आत्मतुष्टिप्रामाण्यविचारे अनूचानदृष्टिरेव सङ्गृहीता उपपद्यते। एतेन वैशेषिकोक्तनियमानां पालनेन योगसिद्धिसम्भवात् योगशास्त्रोक्तनियमानामपालनेऽपि न क्षतिः।[2] अमुं योगवैशेषिकयोः भेदमाकलय्य

---

१. प्रशस्तपादभाष्यम् —

आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु चात्मनसोः संयोगात् धर्मविशेषाच्च यत् प्रातिभं यथार्थनिवेदनं ज्ञानमुत्पद्यते तदार्षमित्याचक्षते। तत् तु प्रस्तारेण देवर्षीणाम्, कदाचिदेव लौकिकानां यथा कन्यका ब्रवीति 'श्वो मे भ्राताऽऽगन्तेति हृदयं मे कथयति'' इति। अत्र न्यायकन्दली —

''आर्षं व्याचष्टे—क्षाम्नायविधातॄणामिति। आम्नायोवेदस्तस्य विधातारः कर्तारो ये ऋषयस्तेषामतीतेष्वनागतेषु वर्तमानेष्वतीन्द्रियेषु धर्माधर्मदिक्कालप्रभृतिषु ग्रन्थोपनिबद्धेष्वागमप्रतिपादितेष्वनुपनिबद्धेष्वागमाप्रतिपादितेषु चात्ममनसोः संयोगाद्यत् प्रातिभं ज्ञानं यथार्थनिवेदनं यथा स्वरूपसंवेदनम् संशयविपर्ययरहितं ज्ञानमुत्पद्यते तदार्ष मित्याचक्षते विद्वांसः। इन्द्रियलिङ्गाद्यभावे यदर्थप्रतिभानं सा प्रतिभा, प्रतिभैव प्रातिभमित्युच्युते। तत्र भवद्भिः तस्योत्पत्तिरनुपपन्ना कारणाभावादित्यनुयोगे सति इदमुक्तम् धर्मविशेषादिति। विशिष्यते इति विशेषो धर्मविशेषः विद्यातपःसमाधिजःप्रकृष्टो धर्मस्तस्मात् प्रतिभोदयः तत्तु प्रस्तारेण वाहुल्येन देवर्षीणां भवति, कदाचिदेव लौकिकानामपि। यथा कन्यका ब्रबीति श्वो मे भ्राताऽऽगन्तेति हृदयं मे कथयतीति। न चेदं संशयः उभयकोटिसंस्पर्शाभावात्। न च विपर्ययः, संवादादतः प्रमाणमेव। इति—

२. तथामनुनाऽपि उक्तम्—

## जयमङ्गलाक्रोडपत्रम्

राजवृत्तौ षडङ्गः तर्कसचिवो योगः इत्युक्तम् इति योगः वैशेषिकशास्त्रोक्त एव ग्राह्यः। अथ—

प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा।
तर्कश्चैव समाधिश्च षडंडो योग उच्यते॥

श्लोकोऽयं व्याख्यायते—

प्रत्याहारः—विप्रतिपन्नविषयेभ्यः इन्द्रियाणां निवर्तनं प्रत्याहारः, यदि च इन्द्रियाणि ततो न निवर्तन्ते। मनश्च सुखबुद्ध्या विषयग्रहणार्थं इन्द्रियाणि संयुनक्ति तर्हि समाधिः कथमपि न सम्भवितुमर्हति।[1]

एवमेव ध्यानादयोपि न्यायभाष्योक्तसमाधिलक्षणे यथा अन्तर्भवन्ति तथा बोध्याः। तद्यथा —

ध्यानम्—तत्त्वबुत्साविशिष्टेन आत्मना सह मनसः संयोग इति समाधिलक्षणघटकीभूता तत्त्वबुभुत्सा बोध्या।

प्राणायामः—"ततः श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" इत्येवं अस्य योगसूत्रलक्षणनिर्दिष्टस्य उपयोगः मनसः संयमनार्थं ज्ञेयः। विना प्राणायामं तस्य संयमासम्भवात्।

धारणा—तर्कानुकूलो यत्नः प्रागुक्तः धारकप्रयत्नात्मकः।

तर्कः—व्याप्यारोपेण व्यापकारोपः।

समाधिः—विजातीयवृत्तिनिरोधपूर्वकः सजातीय तर्कप्रत्ययप्रवाहः।

योगः—योगलक्षणोक्तः तथाविधः आत्ममनसोः संयोग इति।

एषु षट्सु अङ्गेषु बुभुत्सायाः उपयोगित्वस्य प्रागुक्तत्वात्, प्रत्याहृतस्येति समाधिलक्षणे न्यायभष्योक्ते निरूपितत्वात् च बुभुत्सा प्रत्याहारश्च तर्कात्पूर्वमपेक्ष्येते। प्राणायामादीनां तु सामानाधिकरण्यमात्रं बोध्यम्।

### योगसिद्धिः

ननु बुभुत्सया प्रत्याहृतेनेन्द्रियेण जीवेन यदि तर्करूपः समाधिः सञ्चारणीयः इत्युच्यते तर्हि तत्प्रयुक्तशमादीनामुद्भवेन सह दोषाणामपि कोपात् योगसिद्धिः कथं भविता ? तत्र उच्यते—

---

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः
हृदयेनाभ्यनुज्ञातो यो धर्मस्तन्निबोधत। इति।
यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः
स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते। इति। भ८ पु०

१. न्यायकन्दल्युक्ते समाधिलक्षणे प्रत्याहारस्य अनुक्तावपि राजनीतिशास्त्रस्य न्यायशास्त्रोपशास्त्रत्वात् न्यायशास्त्रे समाधिलक्षणे प्रत्याहारस्य निर्देशात् तन्निर्देशः अत्राऽपि कृतः। तथाचोक्तम्। "सतु प्रत्याहृतस्येन्द्रियेभ्यो मनसो धारकेण प्रयत्नेन धार्यमाणस्यात्मना संयोगस्तत्वबुभुत्साविशिष्ट" इति ( न्या० सू० भा० )

**जयमङ्गलाक्रोडपत्रम्**

प्राणापानादिवायूनां रससञ्चारणादिकार्यं तत्तच्छिरामुखेन कथं भवतीति प्राक् भावप्रकाशनवचनोपन्यासपूर्वकं साधितमस्ति। तस्यायं भावः—यथा प्राणवायुः अन्नादीन् प्रवेशयति तथा शरीरस्य बहिर्भागे तैलादिमर्दने जाते रोमकूपद्वारा मर्दितं तैलमुदानवायुराकर्षति अयमुदानो यत्र रसादीन् प्रापयति तत्र आरोग्यमपि भवति इति आधुनिकैः लिम्फाटिक-(Limphacus)-शब्देन तदेव तत्वं व्यवह्रियते। एतत् उदानवायोः रससञ्चारणकार्यमपि नालौकिकम्। शिरावेधानन्तरं सञ्जनितं रक्तस्रावलक्षणं विविच्य उदानस्योपचारे कृते दोषस्य उपशमः भवतीति आयुर्वेदे उक्तं, दृष्टं चैतन्मानुषशरीरेऽपि, यदा किल वायोः प्राधान्यं भवति तदा शिराः अरुणाः पित्तेन नीलाः उष्णाश्च कफेन, गौर्यः शीताश्चेत्यादि ज्ञात्वा वायुसञ्चारण-चिकित्सा सिद्धा भवति किञ्च विनाप्याहारं साधारणी करणव्यापारद्वारा ध्यानेनापि हृद्याः ओजस्याः पदार्थाः शरीरान्तः प्रवेशयितुं शक्यन्ते तेनारोगलाभः इत्यपि दाढर्येन निर्णेतुं शक्यते। तत्रोदाहरणम्—नाटकदर्शनं भवितुमर्हति। तथाहि—

अभिनेता अभिनयसमये अनुकार्यहृदयस्थान् स्थायिभावान् सञ्चारिभावा-नुभावादिभिः सामाजिकानां पुरतः यदा व्यञ्जनाद्वारा प्रकाशयति तदा तद्व्यञ्ज-नायाः अयं प्रभावः यत् सामाजिकस्य चेतसि रजस्तमोभवान् विकारान् अभिभाव्य स्वशरीरमात्रवृत्तिपरिमितप्रमातृताञ्चापनोद्य अपरिमितप्रमातृतां सत्वगुणञ्च उत्पाद्य अनुकार्ये वर्तमानं स्थायिभावमुल्लासयति इति। तन्न्यायेन—

श्रुता दृष्टाः स्मृता ध्याता भवन्ति स्थैर्यहेतवः।
ते स्थिरा इति विज्ञेयाः वीरस्य कविकल्पिताः॥

इति भावप्रकाशनवचनानुसारेण ध्यानेनाऽपि श्रमपरिहारार्थं अपेक्षितस्य रसस्य सञ्चारणमपि कर्तुं पार्यते। तथा सति तर्कात्मकसमाधौ सम्भावितस्य श्रमस्य परिहारे योगसिद्धिः न दुर्लभा इति।

अत्रेदं मन्तव्यम्। अस्मिन् षडङ्गयोगे एकाग्रतया स्थितस्य पुरुषस्य पुरतः भगवत्प्रसादेन स्वतन्त्रताऽनुमापिका पूर्वमुक्ता क्रियाशक्तिः आनन्दप्रभामिश्रिता सती उद्बुद्धा भवति इति गुरुभक्तिनिरूपणावसरे निरूपितमस्ति। सैव शक्तिः अत्र योगेन काम्यते। अस्याः शक्तेः उपर्युक्तायाः स्वातन्त्र्यात् स्वातन्त्र्यं तेन च स्वतन्त्रतारूपमीश्वरत्वं भवितुमर्हतीति स्पष्टं वक्तुं शक्यते। सेयं न हि कुतश्चित् अपरतः प्राप्या वर्तते अपितु शरीरस्य मस्तिष्कभागे वर्तते इति सिद्धान्तात्।

तदुक्तम्—

दहराकाश—मध्यस्थ—सहस्रदल—शोभिते।
विस्फुरत्केसराश्लिष्टकर्णिके पङ्कजोदरे॥

**जयमङ्गलाक्रोडपत्रम्**

निवातदीपवत्स्थायी सोमसूर्याग्निमण्डले ।
आत्मा निःसङ्ग एवैकः साक्षी सर्वस्य कर्मणः[1] ।। इति ।।

---

१. इदं हि भावप्रकाशनपद्यं न सुबोधमिति कृत्वा प्रसङ्गात् विविच्यते ।

'दहरं पुण्डरीकमि'ति वेदप्रामाण्यात्,

'उदरमुपासते त ऋषिवर्त्मसु कूर्पदृशः
परिसरपद्धतिं हृदयमारुणयो दहरम् ।।' इति

भागवतोक्तेश्च १०।८७।१८ उक्तपद्ये दहरपदेन हृदयं विवक्षितम् । तदन्तर्वर्ती यः आकाशः सः दहराकाशः । तस्य मध्ये स्थितानि सहस्रदलानि, तत्सम्बद्धाः नाड्यो मष्विष्कान्तर्वर्तिन्यः, तैः शोभिते मस्तके इत्यर्थः ।

अत्र एवं भवति—यत्, मस्तिष्कान्तर्वर्तिदलानां कमलदलसदृशानां मस्तक स्थिततत्तान्नाडीसम्बन्धेन हृदयसम्बन्धित्वात् मस्तिष्कस्थितानि दलानि हृदये स्थितानि सम्भवन्ति इति तेषां दहाराकाशमध्यस्थसहस्रदलशोभितत्वमुपपन्नम् । अथवा—

स्वशरीरे पद्मानि षड् सन्ति । तेषु पद्मद्विकं मिथोमुखसम्बद्धम् एकं । मुखभागात् आमस्तकम् । अपरं हृदये । तृतीयं नाभिस्थाने अस्ति । तदुक्तं योगवासिष्ठे—

'पद्मयुग्मत्रयं यन्त्रमस्थिमांसमयं मृदु ।
ऊर्ध्वाधोनालमन्योन्यमिलत्कोमलसद्दलम् ।।' इति

एतन्मतरीत्या मस्तिष्कस्य हृदयत्वात् दहरपदेन मस्तिष्कमपि वक्तुं शक्यते । तत्र केसरपदेन उपर्युक्ताः नाड्यः बोध्याः । ताः मस्तिष्कबद्धकर्णिकायां वर्तन्ते । तदुक्तम्—विस्फुरत्केसराश्लिष्टकर्णिके इति । एवं भूते मस्तिष्के पङ्कजोदरे आत्मा सर्वस्य साक्षी । अत एव स जगदुपादानभूतः अस्ति इति 'आत्मा निःसङ्ग एवैक' इत्यनेन स्फुटीकृतम् तस्य सर्वसाक्षित्वात् स्वातन्त्र्येण च ईश्वरत्वं नासङ्गतम् । तस्य प्रसादे सति जीवेन किमिति इतस्ततः भ्रमितव्यम् ? तदुक्तं रसगङ्गाधरे—

'सन्तापयामि किमहं धावं धावं धरातले नितराम् ।
अस्ति मम शिरसि नन्दकुमारः प्रभुः परमः ।।' इति ।

ईश्वरस्वरूपे आपाततः विचार्यमाणे स सर्वत्र अस्त्येव । तथापि शरीरे मस्तिष्कान्तर्वर्तितया स्थितत्वेन यः साक्षी शरीरान्तर्वर्तिनीः नाडीः प्रेरयति, सः अत्र ईश्वरत्वेन व्यवहृतः ।

एवं भावप्रकाशनपद्ये वर्णिता शक्तिरपि आत्मरूपा सती ज्ञानतन्तुद्वारा जीवस्य इन्द्रियार्थसंवेदनामनुभूय क्रियातन्तुद्वारा मनः प्रेरयति । मनसश्चेच्छारूपत्वम् । तदुक्तम्—

'तस्य स्यामितिसङ्कल्पः मन आख्यां लभेत्तु सः ः' ( भा० प्र० ) इति । इच्छात्मकस्य मनसः सत्वपरिणामित्वंपि प्रागुक्तम् ।इच्छात्मके मनःशरीरे स्थितं सत् सर्वत्र—

## जयमङ्गला

लोकायतं बार्हस्पत्यम्। लोकाय बुद्धिं तनोतीति नैरुक्तम्। तदिह लौकिक—

## जयमङ्गलाक्रोडपत्रम्

अयं योगरूपः समाधिः यः उक्तः तत्सिद्धौ कुण्डलिन्यपि जागृता भवतीति नात्र पर्यन्ते अष्टाङ्गयोगापेक्षया न्यूनत्वं भाति। शेषमुपरिष्टात् षष्ठाध्याये स्फुटीकरिष्यते।

---

अहन्त्वेन परिणम्य प्रवर्तते अतः मनसः शरीरपरिमितत्वं नानुपपन्नम्। ये किल तस्य अणुत्वं वदन्ति तेषां मतसमन्वयं षष्ठाध्याये निरूपयिष्यामः।

तस्येदं कार्यं यत् प्राणादिवायुपञ्चकं द्वारीकृत्य तत्तन्नाडीषु रससञ्चारणेन सह पित्रोः सकाशादुपलब्धस्यौजस्तत्त्वस्य प्रापणमिति। प्राणादिद्वारेण मनसः सञ्चालनं तावत्पर्यन्तं न भवति यावत्पर्यन्तं मस्तके वर्तमानस्य ईशस्य आज्ञां तत् न प्राप्नुयात् इत्यपि लोकसिद्धमेव। यतः संवेदनस्य मध्येमार्गं यदि शरीरस्थशिरायाः वेधः संवेदनशून्यत्वं वा अनुष्ठीयते ? तर्हि मध्यवर्त्यङ्गच्छेदेऽपि तत्संवेदनं जीवस्य न भवति।

प्राणादीनां सञ्चरणं कुत्र ? को वा सञ्चरणस्य लाभः इत्यादि भावप्रकाशने उक्तमस्ति तद्यथा—भा० प्र०

"प्राणादिभेदात्पञ्चात्मा शरीरं व्याप्य तिष्ठति।<br>
येन प्राणिति सर्वत्र स प्राणो मूर्धनि स्थितः॥<br>
उरःकण्ठचरो बुद्धिहृदयेन्द्रियचित्तधृक्।<br>
ष्ठीवनक्षवथूद्गारनिश्वासान्नप्रवेशकृत्॥<br>
उरःस्थानमुदानस्य नासानाभिगलांश्चरेत्।<br>
वाक्प्रवृत्ति प्रयत्नोर्जाबलवर्णस्मृतिप्रदः॥<br>
व्यानो बहिःस्थितः कृत्स्नदेहचारी महाजवः।<br>
गत्यवक्षेपणोत्क्षेपनिमेषोन्मेषणादिकृत्॥<br>
प्रायः सर्वाः क्रियास्तस्मिन्प्रतिबद्धाः शरीरिणाम्।<br>
समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वदा।<br>
अन्नं गृह्णाति पचति विवेचयति मुञ्चति।<br>
अपानोऽपानगः श्रोणिबस्तिमेढ्रोरुगोचरः।<br>
शुक्लार्तवशकृन्मूत्रगर्भनिष्क्रामणक्रियः।<br>
दश जीवनधामानि शिरोरसनबन्धनम्॥ इति

तथाचेदं सिद्धं—यत्, ईश्वरस्वरूपायाः स्वतन्त्रशक्तेः साक्षिभूतायाः मस्तके वर्तमानायाः प्रसादः एकाग्रभूमिकायां स्थितेन विद्यासेवाकर्मणा षडङ्गतर्करूप समाधिना च यदा प्राप्येत तदा का सिद्धिः सुदुर्लभा ? तदुक्तम् भागवते—सा विद्या तन्मतिर्यया, इति। तथा—

प्रसन्ने पार्वतीनाथे किमसाध्यं शरीरिणाम्। इति।

## जयमङ्गला

साध्यसाधनोपायफलनिश्चयेऽपि सन्दिग्धपारलौकिकाप्रत्याख्यानोपदेशाय। यथोक्तम्-

## जयमङ्गलाक्रोडपत्रम्

नैरुक्तमिति। अनेन लोकाय वुद्धिं तनोति इति व्याख्यानेन सर्वदर्शनसंग्रहे चार्वाक मतनिरूपणावसरे उक्ता लोकायतपदव्युत्पत्तिः न ग्राह्या इति सूचयति। तथाहि-तत्र लोकेषु आयतं प्रसिद्धम् इत्यर्थाभिप्रायेण लोकायतशब्दव्युत्पत्तिः निरूपिता।

यदि इयं व्युत्पत्तिः अत्र स्वीक्रियते तर्हि लोकस्य प्रवृत्तिः न सर्वत्र शास्त्र-ज्ञानप्रसूतैव भवति, तस्याम् मिथ्याज्ञानवासनाप्रयुक्तत्वस्याऽपि सम्भवात्। एवं चेदृशी-प्रवृत्तिर्यदि अत्र गृह्येत, तर्हि नीतिविरुद्धत्वमापद्येत। अतः नीत्यनुकूलतया इदं व्युत्पत्त्यन्तरप्रदर्शनमिति भावः। तस्य फलमाह—लौकिकेति।

एवञ्च एतन्मतेनापि परलोकस्य सन्दिग्धत्वेऽपि तद्विरुद्धं न करणीयम्, अशुभस्य आपादनप्रसङ्गात् इति ध्येयम्। तदेव वक्ष्यति-'सन्दिग्धे'त्यादिना।

### चार्वाकमतस्य ग्रहणम्

नन्वेवं पूर्वपक्षतया अन्येषु मतेषु सत्सु चार्वाकमतमेव कुतः गृहीतमिति चेन्न। पूर्वपक्षेषु चार्वाकादन्यमतेषु नैष्कर्म्यभावः उपलभ्यते स तु राजशास्त्रे अनिष्टः। अत्र तु प्रत्यक्षस्य प्रामाण्यं स्वीकृत्य यथावत् शरीरस्य निरामयत्वं चिकीर्ष्यते चार्वाकेणापि तदभिप्रेत्य 'ऋणं कृत्वा घृतं पिबेदि'ति उक्तम्। अपिच लोकस्थितिं पर्यालोचयता चार्वाकेण 'लोकसिद्धो राजा ईश्वरः', 'नीतिशास्त्रानुसारेण वर्तनं धर्मः' इत्युक्त्वा लोकानुग्रहक्षमं नीतिशास्त्रं भङ्ग्यन्तरेण इदमेव गृह्यते। तेन पूर्वं सञ्जातस्यापि ऋणस्य अपाकरणं नीतिशास्त्रमनुसरतः चार्वाकस्य नासुलभम्। अत्रायं निष्कर्षः—देहः यदि अस्वस्थः स्यात् तर्हि सः किं कुर्यात्? इति हेतुना ऋणमपि स्वीक्रियते। ततः स्वास्थ्यलाभानन्तरं नीत्यनुष्ठानेन मित्रसम्पत्तेरुपलब्ध्या धनलाभेन प्राग्जातमृणम् अपसारयितुं नाशक्यम् इति। अतः नैष्कर्म्याभावात् चार्वाकमतं पूर्वपक्षरूपेण सङ्गृहीतम्। न्यायशास्त्रेण च परलोकादिविषये सन्दिग्धतां निरस्य अभिनिवेशः उत्पाद्यते, इत्येतत् प्रागुक्तमस्ति, इति चार्वाकमतग्रहणविवेकः।

### लोकायतस्य पश्चाद् ग्रहणम्

नन्वेवं पूर्वपक्षत्वेन अभिमतस्य लोकायतस्य आन्वीक्षिकीविभागप्रकरणे आदौ अभिधानं कुतो न कृतम्? इति चेदुच्यते। क्वचित् पश्चात् उक्तोऽपि अर्थः आदौ संयोजनीयो भवति। क्वचित् पूर्वमुक्तोऽर्थः पश्चात् अपि संयोजनीयो भवति। इत्येतन्मीमांसान्यायकौशलप्रदर्शनाय एवमभिहितम्। तथाहि—

## जयमङ्गलाक्रोडपत्रम्

अर्थक्रमेण शब्दक्रमस्त्यक्तो भवति इति मीमांसान्यायः। तस्योदाहरणम् 'अग्निहोत्रम् जुहोति, यवागूं पचती'ति। अग्निहोत्रहोमानन्तरं यवागुपाकविधानस्य वैयर्थ्यात् अग्निहोत्रहोमेतिकर्तव्यताकाङ्क्षायाश्च जागरूकत्वात् 'यवागूं पचति, अग्निहोत्रं जुहोति' इत्येवमर्थक्रमः मीमांसया साधितः। तथैव अत्र लोकायतस्य पश्चाद् ग्रहणेऽपि आन्वीक्षिक्या धर्मार्थयोः परीक्षणप्रसङ्गे ये ये आक्षेपाः सम्भवन्ति ते सर्वेऽपि उपस्थापयितव्या भवन्ति, अन्यथा धर्मार्थविषये यादृशः अभिनिवेशः षष्ठाध्याये वक्ष्यमाणेऽपेक्ष्यते तादृशो न स्यात्। स्याच्च नास्तिकमतेनापि धर्मार्थयोः खण्डने काचन युक्तिः। इत्येवंरीत्या सन्दिग्धता जागरूकैव भवेत्। एवं "बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः" इति न्यायेन धार्मिकै रपि धर्मः जीविकार्थमुपयुज्यते इति सम्मन्येत। तथा सति तेषु अर्थरुच्यभिवृद्ध्या सत्त्वस्थाने तमोबाहुल्यं प्रसज्येत। तस्मात् उक्तसन्दिग्धतानिरासार्थं पश्चादुक्तमपि लोकायतम् अर्थक्रमस्य बलीयस्त्वेन पूर्वपक्षरूपेण आन्वीक्षिक्याः पूर्वमेव योज्यम्। तेन यथासम्भवं सर्वेषु आक्षेपेषु उपस्थितेषु तत्समाधानाय आन्वीक्षिक्याः यदा प्रवृत्तिः स्यात् तदा तद्द्वारा सन्दिग्धतानिरासानन्तरं धार्मिकाः धर्मविषये दृढम् अभिनिवेशेयुः। सत्त्वञ्च उत्पद्येत तेषु, ततः तद्द्वारा लोकानुरागमात्मनि उत्पाद्य वृत्तिरपि अनुषङ्गतः संपत्स्यत इत्यादि निर्णयः सुखेन सञ्जनिष्यते इति अब्रह्मज्ञानां पुरतः लोकायतमतं पूर्वमपेक्षितमस्ति पूर्वपक्षरूपेण इति बोध्यम्। अथ लोकायतस्य पश्चाद् ग्रहणे कौटिल्यस्य कश्चन अन्योऽप्यभिप्रायः अवश्यमेव स्यात् इति यदा पर्यालोच्यते तदा तु एवं वदामः, यत् ब्रह्मज्ञानां पुरतः अनुष्ठानप्रसङ्गे लोकायतमतमेव स्वीकर्तव्यत्वेनापेक्षितम्, तैः ब्रह्मज्ञानानन्तरं नरकभयाभावेन स्वर्गस्य अकाम्यत्वेन च तदर्थं त्रय्या निहितस्य आचारस्य अनपेक्षितत्वात्। इति वै० रक्षिण्यां प्राक् सविस्तरं प्रपञ्चितमस्ति। तद्बोधनाय लोकायतस्य पश्चाद् ग्रहणं बोध्यम् इति।

यद्वा शास्त्रसिद्धान्ते केचन अप्रामाण्यं व्यवस्थापयिष्यन्तः शब्दस्य अप्रामाण्यं साधयितुं चेष्टन्ते। तदा चार्वाकमतमाश्रित्यैव प्रत्यक्षप्रामाण्यपुरस्कारेण शब्दः अप्रमाणं चेत् तवापि शब्दः कुतः प्रमाणत्वेन स्वीकर्तव्यः इति जल्पस्य अवसरो भवति। इत्यपि शत्रुपक्षपातिनः सभायां महत्तरं कार्यमस्ति। अन्यथा स्वमतस्य संस्थापनं कथमपि न भवेत्। तथाविधा शक्तिः यस्य नास्ति सः शत्रुपक्षपातिनः सभां न प्रविशेत्। इति चरकेण स्वग्रन्थे विशदीकृतमस्ति[१]।

---

१. तद्यथा—"तत्र प्रतिनिविष्टायां परिषदि ज्ञानविज्ञानवचनप्रतिवचनशक्तिसपन्नायां मूढायां वा न कथञ्चित् केनचित् सह जल्पो विधियते। मूढायां तु सुहृत्परिषदि उदासीनायां वा ज्ञानविज्ञानमन्तरेणाप्यदीप्तयशसा महाजनद्विष्टेन सह जल्पो विधीयते। पृ. २५२, (१५) विमानस्थानम्। अध्याय ८. इति।

## जयमङ्गला

"सन्दिग्धेऽपि परे लोके त्याज्यमेवाशुभं बुधैः ।" इति ।
असमासकरणं व्यस्तसमस्तख्यापनार्थम् ।

## जयमङ्गलाक्राडपत्रम्

उक्तजल्पावसरे आन्वीक्षिकीघटकतया लोकायतस्यापि अत्यन्तमभ्यर्हितत्वं सम्भवति, तया समस्तलोकव्यवहारे प्रत्यक्षतः इष्टसाधनत्वं प्रदर्श्यते, तर्हि लोकोऽयं प्रत्यक्षतः इष्टसाधनत्वमवगम्य वर्णाश्रमधर्मे अभिनिविष्टो भवितुमर्हति, इति लोकसङ्घटनार्थं चार्वाकमतमपेक्ष्यते, इति कृत्वा लोकायतम् आन्वीक्षिक्यां पूर्वपक्षरूपेण अन्तर्भाव्यापि पश्चात् निरूपितमिति ।

अप्रत्याख्यानेति । अयं भावः—ब्रह्मज्ञोऽपि राजा चार्वाकमतमपेक्षमाणोऽपि परलोकस्य प्रत्याख्यानं कदापि न कुर्यात् इति दर्शनार्थम् । अन्यथा एतदध्याये बृहस्पतिमतनिरूपणावसरे "अर्थमात्रपरोऽयं निग्रहरुचिः" इति उक्ताऽपत्तिः अस्मिन् प्रसज्येत । इष्टापत्तौ च अर्थरुचित्वेन ख्यातिं प्राप्तः ब्रह्मज्ञोपि राजा अविश्वस्तत्वात् लोकेन निगृहीतो भवेत् इत्येकं फलम् ।

प्रजायां केनचिद् कृतेन नास्तिक्यबहुलप्रचारेण स्वयं सन्दिहानः आन्वीक्षिक्याम् अकुशलः अब्रह्मज्ञोऽपि राजा लोकयात्राव्यवहारं पश्यन् परलोको नास्तीति न प्रतिजानीयात् इति उपदेशो द्वितीयं फलम् ।

अप्रत्याख्यानस्य अपरमपि प्रयोजनं बोध्यम् । यत् परलोकापेक्षी राजा सदाचारेषु तत्साधनत्वं विजानानः लौकिकं साध्यसाधनभावं न विजानाति, तर्हि तत्सदाचारोऽपि लोकस्य उपेक्षाविषयः स्यात्, इति तदपेक्षाऽपि अत्र ध्वनिता इति तृतीयं फलम् ।

अपि च चतुर्थमप्रत्याख्यानस्य फलं यत् लोकयोः परस्परसापेक्षा सङ्गतिः मैत्रीपूर्विका धर्मस्य प्रत्याख्याने न कदापि चिरं तिष्ठेत् ।[१] इति

---

१ तदुक्तं धर्मविजयनाटके धर्मस्वरूपनिरूपणे—
'न्यायस्मृत्योर्विरोधे क्वचिदपि बलवानर्थशास्त्राद्बलीयः
क्वाप्युक्तं धर्मशास्त्रं क्वचिदपि वचने देशभेदाद् व्यवस्था ।
बाधोऽन्यस्मिन्विपक्षे क्वचिदपि गदितो धर्मकल्पे विकल्प—
स्तेनैवं वाक्यभेदात्सुमुखि ! न नियतो धर्मशास्त्रार्थ एकः ॥'

**धर्माधर्मौ[1] त्रय्याम्, अर्थानर्थौ वार्तायाम्, नयापनयौ दण्डनीत्याम्; बलाबले चैतासां हेतुभिः[2] अन्वीक्षमाणा आन्वीक्षिकी लोकस्योपकरोति, व्यसनेऽभ्युदये[3] च बुद्धिम् अवस्थापयति, प्रज्ञावाक्यक्रियावैशारद्यं च करोति ॥**

---

## जयमङ्गलाक्रोडपत्रम्

समस्तेति। यदा नास्ति परलोकः इति वादिभिः सह विवादप्रसङ्गः स्यात्, तदा केवलस्य लोकायतस्य उपयोगित्वं जल्पार्थं मन्तव्यम्। यदा तु तत्त्वनिर्णयाय वादः प्रचलिष्यति, तदा वाद एव कर्तव्यः इति न्यायसूत्रे निबद्धमस्ति।[1]

एवं स्थिते साङ्ख्ययोगापरपर्याये न्यायवैशेषिके उपयुज्येते, इत्येवमेषां व्यस्तकरणम्। यत्र हि वादजल्पवितण्डाः तिस्रोऽपि कक्षाः प्रसक्ताः, तत्र लोकायतसाङ्ख्ययोगाः उपयुज्यन्ते इति समस्तकरणम्। इत्येवं समस्तव्यस्तपदतात्पर्यं बोध्यम् इति।

## श्रीमूला

धर्माधर्मौ त्रय्यामित्यादिना त्रय्यादीनां फलसूचनम्, तच्चान्वीक्षिकीफलस्य तद्विसदृशत्वव्युत्पादनार्थम्। धर्माधर्माविति, प्राधान्येन प्रतिपाद्याविति शेषः। तेन त्रय्यामर्थानर्थनयापनयानामानुषङ्गिकतया क्वचित् क्वचित् प्रतिपादनेऽप्यविरोधः। एवं वार्तादण्डनीत्योरपि ज्ञेयम्। तत्र धर्मोऽध्ययनयजनादिः, अधर्मः श्वमांसभक्षणादिः। अर्थः कालबीजवापादिजन्यं फलम्। अनर्थः अकालबीजवापादिजन्यम्। नयो ज्यायसा सन्ध्यादिः येन योगक्षेमौ निष्पाद्येते, अपनयस्तु ज्यायसा विग्रहादिः येन योगक्षमौ विहन्येते। एतासां त्रय्यादीनाम्। हेतुभिरन्वीक्षमाणा न्यायैः सम्प्रधारयन्ती। व्यसन इत्यादिनोपकारस्वरूपोक्तिः। बुद्धिमवस्थापयति अविकृतां करोति, बुद्धिर्दुःखे यथा नोद्विजेत सुखे च न प्रहृष्येत तथा तां नियच्छतीत्यर्थः। यदाहुः—'न प्रहृष्येत् सुखं प्राप्य नोद्विजेतासुखादपि' इति। प्रज्ञावाक्यक्रियावैशारद्यं विचारवचनकर्मसु पाटवम्।

---

नी० टी० १. संवरणमात्रमेव फलं नान्यदिति। तथा च वक्ष्यति। धर्म्मरुचिरुपांशुदण्डं प्रयुञ्जीतेति।

२. युक्तिभिः।

३. उपकारान्तरं दर्शयन्नाह-व्यसने इति।

१ "प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः, पक्षप्रतिपक्षपरिग्रहो वादः"—न्या० सू० भा०

## वैदिकसिद्धान्तसंरक्षिणी

इज्यादिर्धर्मः। श्वमांसभक्षणादिरधर्मः इति। त्रय्यां स्थित इति शेषः। एवमग्रेऽपि। अर्थेति। काले बीजवापादिनिष्पन्नोऽर्थः। अकाले बीजवापादिनिष्पन्नोऽनर्थः। नयेति। ज्यायसा सन्धिर्नयो, विग्रहस्त्वपनयः। एतासां तिसृणां विद्यानाम्। अथासु बलाबल-विचारमुखेन आन्वीक्षिक्युपयोगं प्रकटयति—बलाबले इति। न्यायसञ्चारणात्मक उपकारः; निर्विकारतात्मकस्य सत्वस्य शङ्कापनयेन उत्पादनं बुद्धेरवस्थापनम्, प्रज्ञावाक्यक्रियाणां वैशारद्यं चेति न्यायविद्यायाः त्रिविधं फलम्। तत्र न्यायसञ्चारणं सूचयति – हेतुभिरिति। युक्तिभिरित्यर्थः। अत्र ज्ञापिका उत्पादिकाश्चोभयविधा अपि युक्तयः परिग्राह्याः। ताभिर्विद्यानां बलाबलविचारो भवति। तथाहि—

वेदविद्या स्मृत्यपेक्षया प्रबला इति सर्वसम्मतम्। किन्तु क्वचित् स्थले स्मृतेः प्राबल्यं भवति। यथा 'वेदं कृत्वा वेदिं करोति', इति श्रुत्यपेक्षया 'क्षुते आचामेत्' इति स्मृतेः प्राबल्यम् इति मीमांसात्मकयुक्त्या साधितम्। इति अनयोः प्राबल्यदौर्बल्यावसर इत्थम्। वेदिः वेदं कृत्वा कर्त्तव्या इति श्रुतिर्विधत्ते। "कृत्वा" इति क्त्वाप्रत्ययेन वेद्याः वेदकरणानन्तर्यं श्रौतं भवति। यदि वेदकरणानन्तरं क्षुत्प्रसङ्गः, तदा स्मृति-विधानेन आचमनं कर्तव्यं भवति। यदि तत् क्रियते तर्हि वेदकरणानन्तर्यबाधः। यदि आचमनं न क्रियते तर्हि स्मृतिबाधः स्यात्। प्रसक्तेऽस्मिन् विरोधे युक्त्या निर्णेतव्यम्। अन्यथा "युक्तिहीनविचारे तु धर्महानिः प्रजायते" इत्युक्तरीत्या धर्महानिः स्यात्। तत्र स्मृतिप्राबल्ये क्रमस्य श्रौतस्य पदार्थधर्मस्य बाधः, श्रुति-प्राबल्ये पदार्थस्याचमनस्य बाधः। एवं स्थिते गुणस्य क्रमस्य बाधापेक्षया आश्रयस्या-चमनस्य बाधे दोषबाहुल्यं युक्त्यैव ज्ञेयम् इति।

एवम् अर्थशास्त्रं धर्मशास्त्रं वा चौर्ये कृते स्तेनो दण्ड्य इति वक्ति। किन्तु प्राणबाधाप्रसक्तौ प्राणरक्षणाय जीवनपर्याप्तधनस्य हीनकर्मणः ग्रहणम् अनुमन्यन्ते व्यवहारविदः। तद्यथा—

'तथैव सप्तमे भक्ते भक्तानि षडनश्नता।
अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥१६॥
खलात्क्षेत्रादगाराद्वा यतो वाप्युपलभ्यते।
आख्यातव्यं तु तत्तस्मै पृच्छते यदि पृच्छति ॥१७॥'
( मनुः अ० ११ ) इति।

स्थलविशेषे अन्नमनुमतमिति कृत्वा जलस्य चौर्यं, हीनकर्मणो जलग्रहणं वा न कर्तव्यम्, तस्यान्यत्र सौलभ्यात्। यथावा शासनं बलीयः, क्वचित् धर्मः प्रबलः, इत्याद्यपि व्यवहारप्रकाशात् युक्त्यैव ज्ञातव्यम्[1]।

---

१. धर्मादीनां चतुर्णां पूर्वपूर्वस्योत्तरोत्तरापेक्षया दुर्बलत्वमाह नारदः—
धर्मश्च व्यवहारश्च चरितं राजशासनम्।—

चतुष्पाद् व्यवहारोऽयमुत्तरः पूर्वबाधकः। इति। ( अ० १ श्लो० १० )

व्यवहारस्य धर्मबाधकतामाह बृहस्पतिः—

शास्त्रं केवलमाश्रित्य क्रियते यत्र निर्णयः।
व्यवहारः स विज्ञेयो धर्मस्तेनावहीयते॥

शास्त्रशब्देन शास्त्रोक्तं साक्ष्यादिप्रमाणम् तेन यो निर्णयः क्रियते स व्यवहारः। तेन धर्मः शपथादिकृतो निर्णयोऽवहीयते मानुषप्रमाणे सति दिव्यानवसरात्। अत एवाह कात्यायनः—

युक्तियुक्तं तु कार्यं स्याद्दिव्यं यत्र विवर्जितम्।
धर्मस्तु व्यवहारेण बाध्यते तत्र नान्यथा॥

चरित्रस्य व्यवहारबाधकतामाह बृहस्पतिः—

देशस्थित्याऽनुमानेन नैगमानुमतेन वा।
क्रियते निर्णयस्तत्र व्यवहारस्तु बाध्यते॥

नैगमाः पौरवणिजः। नैगमानुमतेनानुमानेनेति सम्बन्धः सामानाधिकरण्येन वाशब्दोद्देशस्थित्यपेक्षः।

अमुमेवार्थं स्फुटयति कात्यायनः—

प्रतिलोमप्रसूतेषु तथा दुर्गनिवासिषु।
विरुद्धं नियतं प्राहुस्तं धर्मं न विचालयेत्॥
निर्णयं तु यदा कुर्यात्तेन धर्मेण पार्थिवः।
व्यवहारश्चरित्रेण तदा तेनैव बाध्यते॥ इति॥

स्मृतिविरुद्धमपि नियतत्वान्न विचालयेद्राजा।

राजशासनस्य चरित्रबाधकतामाह बृहस्पतिः—

विहाय चरिताचारं यत्र कुर्यात् पुनर्नृपः।
निर्णयं सा तु राजाज्ञा चरित्रं बाध्यते तया॥ इति।

चरिताचारं पूर्वपूर्वाचरितमाचारम्। यद्यपि "तं धर्मं न विचालयेत्" इत्युक्तमत्र तु "विहाय चरिताचारम्" इत्युच्यते। तेन विरोधः प्रतिभाति। तथापि यदि तद्विचालने पुरराष्ट्रादिक्षोभो न भवति, तदा स्मृत्यादिविरुद्धत्वात्तं दूरीकृत्य स्मृत्याद्यविरुद्धो राजाज्ञया निर्णयः कार्यं इति तात्पर्यम्। अत एव पुरराष्ट्रविरुद्धस्य विवादस्यानादेयत्वमुक्तं पुरराष्ट्रक्षोभापादकतया तदनापादकतया तु स्मृत्याद्यनुरोध एव कार्यो राज्ञेति। अत एवाह कात्यायनः—

विरुद्धं न्यायतो यत्तु चरित्रं कल्प्यते बुधैः।
एवं तत्र निरस्येत चरित्रं तु नृपाज्ञया। इति।

नृपैर्यन्न्यायविरुद्धं चरित्रं न ग्राह्यमिति कल्प्यते। तत्र नृपाज्ञया तच्चरित्रं निरस्यते बाध्यत इत्यर्थः। यथोक्तप्रकारातिरिक्तप्रकारेणैषां बाध्यबाधकताकल्पने दोषमाह कात्यायनः—

अनेन विधिना युक्तं बाधकं यद्यदुत्तरम्।
अन्यथाबाधनं यत्र तत्र धर्मो विहन्यते॥

( वी० मि० व्यवहार प्र० परिभाषापरिष्कारे पृष्ठम् ८८ )

## वैदिकसिद्धान्तसंरक्षिणी

उपकरोति हितं करोति । आन्वीक्षिकीत्यनेनान्वयः । द्वितीयं प्रयोजनमाह— व्यसने इति । व्यसने विपत्तौ । अभ्युदये संपत्तौ । अवस्थापयति बुद्धिं हर्षशोकाभ्यां व्युदस्यति । धृत्युत्पत्त्येति शेषः । आन्वीक्षिकीत्यनेनान्वयः पूर्ववत् । तद्यथा—

हर्षशोकौ अविवेकहेतुत्वात्प्रबलौ शत्रू स्तः । यतः हर्षो मनःप्रसादरूपः तस्य सामग्री अचिन्त्येष्टार्थसंपत्त्यादिरूपा या वर्तते ।[1]

सा सर्वापि हर्षसामग्री हर्षेण सह मानस्य मदस्याप्युत्पादिका भवति इति भावप्रकाशनावलोकनेन निर्णीयते । अत्रायं निष्कर्षः— हर्षस्य लब्धये यतमानः अविवेकी चेत्, स मानमदाभ्यां युक्तो भवति । ताभ्यां मूढता, सुहृदाम् अनादरः, पारुष्यं च नियतमेतेन जनापरागः, ततो विनाशः । तदुक्तम्—

"मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेन मूढता ।
अतिमूढ उदस्यते नयान्नयहीनादपरज्यते जनः ॥
अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः ।
सुकरस्तरुवत्सहिष्णुना रिपुरुन्मूलयितुं महानपि ॥" इति ।
( किराते स० २ )

प्रसिद्धं चैतत् वातापियदुवंशयोर्नाशेतिहासतः । इति ।

अतो हर्षो महान् शत्रुः । शोकोऽपि तथैव । तथाहि—स च प्रतियोगिनि प्रीत्या तन्नाशासहिष्णुत्वलक्षणद्वेषवासनास्वरूपः । तस्मिन्नुदिते सति पर्यन्ते स्त्रीनीचानां यमलोकनिर्याणम्, मध्यमप्रकृतीनामपि मुमूर्षा मृतिर्वा भवति ।[2]

संसारे कस्यापि कृते शोकस्यावसरो नास्तीति नास्ति स्थितिः । तर्हि शोकस्यावसरोऽपि प्रतिपदं वर्तते, तेन नाश उपर्युक्तरीत्या नियतः । ततः संरक्षणाय विवेक एव उपायः । तदुक्तम्—

'उत्तमानामतिप्रौढो विवेकेनैव शाम्यति' इति । ( भाव० नं० ३ )

तस्मात् हर्षशोकौ शत्रू, तन्निराकरणाय विवेक एक एवोपायः । सोऽयं विवेकः

---

१. हर्ष संपत्तिः ९ पृष्ठे द्रष्टव्या ।

२. शोकात्मा करुणो योषिन्नीचादिप्रकृतिः स्वतः ।
अभीष्टविरहाच्छापात् क्लेशाच्च विनिपातनात् ॥
वधादिष्टस्य पुत्रादिनिधनादर्थहादितः ।
राज्यदेशपरिभ्रंशादन्यान्यव्यसनोद्यात् ॥
देवोपघाताद् दारिद्र्याद् व्याधादिभ्यः प्रजायते ।
स्त्रीनीचादिषु शोकोऽयं मरणव्यवसायतः ॥
मध्यमानां भवेच्छोको मुमूर्षा मृतिरेव वा । इति । (भा० प्र० ३ अ०)

## वैदिकसिद्धान्तसंरक्षिणी

यया विद्यया संपद्यते सा न्यायविद्योपयोगिनीति द्वितीयमस्याः प्रयोजनम् ।[1]

तृतीयं प्रयोजनं आह—प्रज्ञे ति । प्रज्ञावाक्यक्रियाणां वैशारद्यं रजस्तमसोरपसारणपूर्वकं सत्वस्य वर्धनेन नैर्मल्यसम्पादनम् । तदिदम्—

"निर्विचारवैशारद्ये अध्यात्मप्रसादः" (४-४७) इत्येतस्य योगसूत्रस्य व्याख्यायां स्फुटम् । तथा हि—'अशुद्धावरणमलापेतस्य प्रकाशात्मनः बुद्धिसत्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यम्' इति ।

अथ प्रज्ञादीनां वैशारद्यं विशदीक्रियते —

मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः ।
शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति ते नराः ॥

इत्युक्त्या प्रवृत्तिर्द्वेधा भवति—एका शास्त्रतो विवेचनपुरस्सरं इष्टसाधनताप्रमापूर्विका, अपरा तु जन्मान्तरीयवासनया इष्टसाधनतामवबुध्य इति । तत्र जन्मान्तरीयवासनाया उद्बोधः घुणाक्षरमिव कदाचित् नीतिमर्यादामनुसृत्य भवति । क्वचित्तु नीतिविरुद्धेऽपि । अत एव समाजोऽपि द्वेधा दृश्यते । एकः शास्त्रानुयायी, अपरः गतानुगतिक इति न्यायेन लोकव्यवहारं पश्यन् प्रवर्तमानः । यः किल लोकव्यवहारं पश्यन् प्रवर्तते, स विवेचक इति वक्तुं न शक्यते, यतः मोहस्यावरणं तत्र स्थिर—मस्ति । यथा पक्षिविशेषः विचित्रतरं वृक्षकोटरेषु गृहन्निर्माति, शुकः स्वादुफलमेवात्ति, तथापि तौ बुद्धिमन्तौ न भवतः इति दृष्टमेव । एतदपेक्षया मनुष्यसमाजस्य अतीव कठिनतमावस्था । यतः गतानुगतिकन्यायेन प्रवर्तमानः समाजः यावत्पर्यन्तं विपरीतं रसाभासमयं नेपथ्यं न पश्यति, न वा शङ्कते, तावत्पर्यन्तं स्वे स्वे कर्मण्यभिरतो भवति । तथापि यदा स विपरीतं नेपथ्यं पश्यति, शङ्कते वा, तदा यस्य नेपथ्यमुत्कृष्टं पारतन्त्र्यस्य द्योतकमपि यत् स्यात् तदनुकरणमपि स कर्तुं प्रयतते । तत्रैव वाऽऽनन्दमनुभवति च । इयं दशा सर्वस्य समाजस्य यदि स्यात्, तर्हि कार्याकार्ये न केनापि ज्ञायेयाताम् । अतः सूक्ष्मतत्वविवेचनाय न्यायविद्या समागता । तया प्राप्तया प्रज्ञया सूक्ष्मया सत्यासत्यान्वेषणकुशलता भवति[2] । ईदृग्विधः न सहसा अन्यत्र प्रवर्तते । तदिदं प्रज्ञायाः वैशारद्यम् ।

---

१. "आन्वीक्षिक्यात्मविद्या स्यादीक्षणात् सुखदुःखयोः ।
ईक्षमाणस्तया तत्त्वं हर्षशोकौ व्युदस्यति । इति ।

टी० तथाहि इदं सुखसाधनं इदं दुःखसाधनमिति पदार्थतत्वान्वीक्षणं ततश्च तया तत्वमीक्षमाणो हर्षशोकौ व्युदस्यति । तद्यथा प्राप्तापि क्षणभङ्गुरा वृद्धिरित्यभ्युदये हर्षमपनयति दृष्टा च जीवतामात्मवतां पुनरावृत्तिर्नलादीनामिवेति व्यसने शोकम्" इति ।

२. परमतनिराकरणपूर्वकस्वमतव्यवस्थापनम् परीक्षा । परमतं परकीयमतिविषयः अनुमानप्रामाण्याभावः, तन्निराकरणं तज्ज्ञानेऽप्रामाण्यज्ञापनम्, यद्वा परमतं परमतिः, सा च—

## वैदिकसिद्धान्तसंरक्षिणी

वाक्यवैशारद्यमपि न्यायविद्यया कथं भवतीत्युच्यते। प्रज्ञाया अपरपर्यायः बोध इत्यभिधीयते। स च द्विविधो भवति—एकः सखण्डोपाधिकः, अपरः अखण्डोपाधिकः यस्य निर्वचनं, नाट्ये अभिनयनं वा कर्तुं शक्यते तद्बोधः सखण्डोपाधिविषयको भवति। यस्य तु न निर्वचनं नापि नाट्ये अभिनयनं कर्तुं शक्यते तद्बोधोऽखण्डोपाधिविषयको भवति। यदि पदार्थः निरुच्यावबोधितः, तर्हि न्यायविद्यया प्रज्ञावैशारद्यं सम्पन्नमित्युच्यते। ततोऽखण्डोपाधिर्येनावगतः स बुद्धिमान् वाग्मी उच्यते। उक्तवैशारद्यमन्तरा अखण्डोपाधिर्येन ज्ञातः स तस्य निर्वचनम्, इदमित्थमेवेति रीत्या निर्धारणं वा कुर्यादेवेति न वक्तुं शक्यते। एवं स्थिते सोऽखण्डोपाधिं जानानोऽपि निर्वचनासामर्थ्यात् वाग्मी वा कुशलो वा न भवति। यश्च केवलं निर्वचनपटुः, नाखण्डोपाधिं एकमनुभवति, स व्युत्पन्नोऽपि अकिञ्चित्कर एव। इति रीत्या प्रज्ञावन्तः त्रयो भवन्ति। तत्रोक्तेषु लक्ष्यलक्षणोभयज्ञः उत्तमः, द्वितीयो लक्ष्यज्ञः मध्यमः, तृतीयः अधमः लक्षणमात्रज्ञ इत्युच्यते शास्त्रविद्भिः। तद्यथा—

"लक्षणज्ञो निकृष्टस्तु लक्ष्यवेदी च मध्यमः।
उभयं यो विजानाति स उत्तम इति स्मृतः॥" इति।
(नी० उपा० ५ स० ७४ श्लोकं)

उक्तोऽयं विषयः प्रज्ञावैशारद्यार्थं उदाहरणमुखेन विशदीक्रियते—पदं सुबन्ततिङन्तभेदात् द्विविधम्। तत्र तत्तत्पदस्यावयवा द्विविधाः, एका प्रकृतिः, अपरः तयोः प्रत्ययः। तत्र सुबन्ते प्रकृतिः प्रातिपदिकसंज्ञा भवति। प्रत्यय एव विभक्तिर्भवति। कतिपयानि प्रातिपदिकानि एवं भवन्ति यत् सर्वासु भाषासु एकानुपूर्वीकाणि। यथा 'राम-कृष्णे'त्यादयः। परन्तु एकोऽपि प्रत्यय एवं नास्ति, यः समानानुपूर्वीकः बह्वीषु भाषासु भवेत्। अस्यायं भावः—यत् तत्तद्भाषासाधारण्येन राम-कृष्णादि-स्वरूपज्ञापनार्थं रामः कृष्णः इति समानानुपूर्वी प्रयोक्तुं शक्यते, अथवा धनुर्धारणस्य मुरलीधारणस्य च चिह्नेन अभिनयद्वारा वा रामकृष्णौ बोधयितुं शक्येते। प्रत्ययार्थस्तु न्यायविद्यया वैशारद्यप्राप्तिमन्तरा सर्वभाषासाधारण्येन कथं बोधनीयः? इति महान् प्रश्नः। तथाहि-नास्ति प्रत्ययस्य तादृश्यानुपूर्वी, यस्याः प्रयोगः सर्वसाधारणबोधनाय प्रयुज्येत। न वा न्यायविद्यापरिष्कृतपद्धतिं विना प्रत्ययार्थस्य कर्तृत्वकर्मत्वादेः स्वरूपं तथाविधं भवितुमर्हति, यस्य अभिनयनं धनुर्धारणाभिनयवत् क्रियेत। न च प्रत्ययाः केवलं भाषासौष्ठवमात्रमित्यपि वक्तुं शक्यम्, तत्तद्भाषाविद्भिः कर्तृत्वादेरवबोधनात्। सोऽयं बोधः उक्तेषु त्रिविधेषु प्रज्ञावत्सु निर्बचनेऽसमर्थानां

---

नानुमानं प्रमाणमित्याकारिका तन्निराकरणं तत्राप्रामाण्यज्ञापनं तत्रासिद्ध्याद्युद्भावनम्, तत्पूर्वकं तदुत्तरकालिकं स्वमतमनुमानप्रामाण्यं तद्व्यवस्थापनमप्रामाण्यज्ञानानास्कन्दिततद्गोचरज्ञानानुकूलव्यापारः। अनुमानाप्रामाण्यज्ञाने असत्यप्रामाण्यज्ञाने अनुमानप्रामाण्यग्रहोत्पत्तेर सम्भवेन व्यापारस्य न ज्ञानजनकत्वसम्भव इति भवति तस्य परमतनिराकरणपूर्वकत्वम्।

**वैदिकसिद्धान्तसंरक्षिणी**

अखण्डतया ज्ञातवतां मध्ये बोधे पर्यवसितः। यथा साहित्यविदां मते विभावानुभावादिना अभिव्यज्यमाना रसप्रतीतिः वेदान्तिनां निर्विकल्पिका आत्मप्रतीतिर्वा अनिर्वचनीयतामापन्नापि सहृदयानुभवैकवेद्यत्वात् यथा प्रमाणभूता भवति। तथैव प्रत्ययार्थकर्तृत्वादिप्रतीतिरपि मन्तव्या। न च तावतैवास्तु किं निर्वचनेन? तदपि न। यद्यखण्डोपाधिप्रतीतिः उचितसन्निवेशेन जन्यते तदा न कापि हानिः। परन्तु अनुचितसन्निवेशेनापि यदि रसाभासप्रतीतिवज्जायेत, नेपथ्यं च तदनुगुणम् उत्कृष्टं भवेत्, तर्हि तदनुकरणं प्रज्ञावैशारद्याभावे समाजेन स्वायत्तीक्रियेतेति आपत्तिः प्राङ्निर्दिष्टा, सैवापत्तिः अखण्डोपाधिप्रत्ययार्थे ज्ञातवत्सु प्रसज्येत। अतः रसाभासनिराकरणाय प्रज्ञावैशारद्यमिव प्रत्ययार्थाभासनिराकरणाय वाक्यवैशारद्यमपेक्ष्यते। तच्च वैशारद्यं व्युत्पत्तिरूपम्। व्युत्पत्तिश्चात्र प्रत्ययार्थस्य निर्वचनम्। तेन विभक्त्यर्थोऽन्यूनानतिरिक्तो निर्णीतो भवति।

किं च अस्य वाक्यवैशारद्यस्य उपयोगः सामान्यतया व्यवहर्तृषु लोकेषु कतिपयेभ्यो न रोचेत, तथापि न्यायालये राजशासने वा व्यवहारदशायां निर्णयकाले वा व्यवहारविदः 'सम्भवती'त्येतावन्मात्रेण न विश्राम्यन्ति, संभवस्तु स्थलेषु मोहाद्यावरणसंभवात्। अतः ते असन्दिग्धमेवार्थं प्रयुञ्जते। यदाहुर्वीरमित्रोदये व्यवहारप्रकाशे राजशासनालेख्ये—

"इदं च साधुशब्दैरेव लेखनीयम्। न लौकिकवत्तदनियमः। तथा च सङ्ग्रहकारः—

सुलिप्यनपशब्दोक्तिसम्पूर्णावयवाक्षरम्।
शासनं राजदत्तं स्यात् सन्धिविग्रहलेखकैः॥" (पृ० १४५) इति॥

अतः असंन्दिग्धत्वाय संस्कृतभाषामयं निश्चितं न्यायविद्योतितं परिष्कृतं रूपमेव तत्रोपायः। नेदं सौष्ठवं अन्यस्यां भाषायां न्यायविद्ययाऽसंघटिते अनिर्वचनशीले अखण्डोपाधिबोधे वा भवति।

एवं रीत्या न्यायविद्यया निरुक्तेषु प्रत्ययार्थेषु असन्दिग्धत अनुभूय व्यवहारविदः शास्त्रकुशला वा वाक्यवैशारद्यं स्तुवन्ति। अत्रायं निष्कर्षः—उक्तेषु त्रिविधेषु प्रज्ञावत्सु लक्षणतः आत्मनि अधमां प्रज्ञामुत्पाद्य उत्तमां प्रज्ञां सम्पादयितुं कुशलाः तेषु अर्थेषु वर्तमानं पूर्वोक्तम् अखण्डं कर्तृत्वाद्युपाधिं परिचिन्वन्ति। सति च तस्मिन् ते उत्तमा इति व्यपदिश्यन्ते। न च न्यायविद्यया प्राप्तेन निर्वचनकौशलेन प्रत्ययार्थः परिज्ञातः। पुनः किमिति परिज्ञातस्यासन्दिग्धार्थस्य स्वरूपम् अखण्डम् अवगन्तुं प्रयासः इति वाच्यम्। विनाऽखण्डार्थं सर्वत्र निर्वचनेन कृतार्थत्वासंभवात्। तद्यथा—द्वितीयार्थः कर्मत्वम्, तच्च धात्वर्थतावच्छेदकफलाश्रयत्वं परसमवेतत्वं च इति नैयायिका निर्वचनं कुर्वन्ति। तेन कर्मत्वस्य स्वरूपमवगतम्, परन्तु यदि निरुक्तं परिष्कृतं कर्मत्वं सर्वत्र यथावत् सङ्गमयितुं प्रयत्येत, तर्हि "काशीं गच्छन् पथि मृतः" इति प्रयोगोऽनुपपन्नः स्यात्। यतो हि "गम"धात्वर्थतावच्छेदकं फलं उत्तरदेशसंयोगः स ग्रामानुयोगिकः

## वैदिकसिद्धान्तसंरक्षिणी

गन्तृप्रतियोगिकः स तु गन्तुः परलोकप्रयाणेनाप्रसिद्धः। एवं च परिष्कृतकर्मत्वस्य काश्यामसत्वेन "काशीं गच्छन् पथि मृतः" इत्यस्य प्रयोगस्यासाधुत्वकल्पनं विना नास्त्यपरा गतिः, किन्तु एवं कल्पनां प्रामाणिकाः ज्यायसीं न मन्यन्ते। तदिदं युक्तियुक्तम्। तथाहि प्रामाणिकानां लक्ष्यव्यवहारमुपजीव्य लाक्षणिकाः लक्षणं परिष्कुर्वन्ति, तेषां लक्ष्यव्यवहारे स्वलक्षणमनुसृत्याप्रामाण्यकल्पनं न युज्यते, इति कृत्वा लाक्षणिकाः कर्मत्वम् अखण्डोपाधिं स्वीकुर्वन्ति। तथा च "काशीं गच्छन् पथि मृतः" इति प्रयोक्तृदृष्ट्या उक्तरीत्या अप्रसिद्धेऽपि उत्तरदेशसंयोगे काश्याम् अखण्डं कर्मत्वमस्त्येवेति नास्य प्रयोगस्य अप्रामाण्यम्। नन्वेवम् उक्तप्रयोगानुपपत्त्या कर्मत्वं तथाविधं न परिष्कारशुद्धमिति चेन्न। न्यायविद्यया कस्याप्यर्थस्य परिष्कृतिः या क्रियते, तस्या फलम् अखण्डोपाधिबोधः। तथा च परिष्कारस्य मर्यादा अखण्डोपाध्यवगतिः। तदवगत्यनन्तरं न्यायविद्यया कृतः परिष्कारः कामं दोषयुक्तो भवतु, न कापि हानिः। यथा अरुन्धतीदर्शनार्थं प्रथमतः शाखायाः अरुन्धतीत्वमुच्यते तथा प्रकृते बोध्यम्। नेदं नैयायिकानामप्यसम्मतम्, श्रीबच्चाझा ( धर्मदत्त ) महोदयैः स्वग्रन्थे विलक्षणप्रतियोगितासंबन्धेन अभावे घटस्य पर्यन्ते अन्वयस्वीकारात्। अन्यथा घटत्वनिष्ठाऽवच्छेदकतायाः इतरवारकनिवेशेऽपि घटत्वनिष्ठावच्छेदकतायास्तदुभयाभिभिन्नत्वेनापुनरपि सामान्यभेदनिवेशस्य, विवक्षितत्वे तत्रापि सामान्यभेदस्य आवश्यकत्वात् अनवस्थापत्तिर्दुर्वारा स्यात्।[1] मुक्तावल्याम् अपि साधर्म्यविचारे तत्र तत्र अखण्डार्थजातिघटितं लक्षणं स्वीकृतम्। तथाहि- "क्षित्यादीनां नवानां तु द्रव्यत्वमुपयोगिता" इत्यत्र गुणवत्त्वं साधर्म्यं क्षित्यादीनां नवानामित्युक्तम्। तच्चोत्पन्नविनष्टे घटेऽव्याप्तम्। अतः गुणसमानाधिकरणसत्ताव्याप्यजातिमत्वं तत् परिष्कृतम्। एतस्य लक्षणस्य समन्वयो गगनादौ, तथाविधद्रव्यत्वजातिमादायैव वक्तव्यः। द्रव्यत्वजातिमत्वं लघुभूतं लक्षणं यद्यपि सम्भवति, तथापि गुरुभूतस्यास्य लक्षणत्वं यादृशजातिपरिचयार्थं-

---

१. 'अथावच्छेदकतात्वावच्छिन्नत्वस्य तादृशावच्छेदकतात्वातिरिक्ततधर्मानवच्छिन्नत्वरूपतया तादृशावच्छेदकतात्वस्यापि तादृशावच्छेदकतात्वगगनोभयभेदवत्वेनासम्भवप्रसङ्गः। यदि च विलक्षणप्रतियोगितासंसर्गेण तादृशावच्छेदकतात्वविशिष्टभेदवदवच्छिन्नत्वविशिष्टाभावत्ववत्त्व रूपमेव तदित्युच्यते, तदा विलक्षणस्वावच्छिन्नप्रतियोगितासंसर्गेण साध्यतावच्छेदकविशिष्टाभाव एव साध्याभावपदार्थोऽस्त्वलमुक्तक्रमेण पर्याप्तिघटिततद्व्युत्पादनेनेति चेत् सत्यम्। उक्तरूपवृत्तित्वस्य तत्तद्धर्मावच्छिन्नत्वरूपताप्रतिपादनेन विलक्षणप्रतियोगितायां बालो व्युत्पादयितुं शक्यो नान्यथा। तद्घटकभेदादिषु तच्छङ्कायां तदादिशब्दोपबन्धेन तद्धर्मावच्छिन्नप्रतियोगिताकाभावस्य तद्धर्मातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभाव इति सामान्येन विलक्षणप्रतियोगितामात्रे व्युत्पादयितुं शक्य इति उक्तरूपेण लक्षणकरणान्नायुक्तमिति गृहाण।" इति जागदीशीपंचलक्षणीविवरणम्।

**वैदिकसिद्धान्तसंरक्षिणी**

मवश्यं वक्तव्यंभवति। तादृशजातेर्यथावत्परिचये गुणसमानाधिकरणत्वाद्यंशस्य परित्यागेऽपि न हानिरिति। एतावत्पर्यन्तं नैयायिकानां मतमवलंब्य कृतेन प्रज्ञावाक्यवैशारद्यविचारेणालम्। अथ साहित्यविदोऽपि एतद्विषये कथं प्रस्तुवन्ति इत्यपि विचार्यते। प्रज्ञावैशारद्यं वाक्यवैशारद्यं च उभयविधं भवति। एकं न्यायविद्यासाहाय्येन सन्देहनिरासक्षमं निर्वचनबहुलं सखण्डमभिधया अभिधीयमानतायोग्यम् अभिनयेन वृद्धव्यवहारेण वा सामाजिकानां हृदये बोधजननयोग्यं च। अपरम् अनिर्वचनीयमखण्डम् अभिधयानभिधेयमभिनयायोग्यं च तद्व्यक्तिमात्रपरम्। पुनरुभयमपि सप्रयोजनं चेति निर्णीतम्। तदेव व्युत्पत्तिशक्तिभेदेन द्विविधं गदन्ति साहित्यविदः। तयोर्मध्ये न्यायविद्यया परिष्कृत्य तदर्थबोधे व्युत्पत्तिरित्युच्यते। अखण्डोपाधिबोधे तु शक्तिरित्यभिधीयते। उदाहरन्ति चात्र। तथाहि-गायकाः कवयो वा केचिदेवं भवन्ति, ये गायने व्यञ्जकस्वरसमूहविशेषापरपर्यायं रागविशेषं स्रग्धरादि छन्दो वा श्रुत्वा अनुकर्तुं पारयन्ति (यथा 'अनूच्चरितः भैरवीराग-स्रग्धराछन्द आदि), किन्तु एवंविधशक्तिमन्तोऽपि तयोः स्वरूपं ते यथावद् विवेचयितुं यदि असमर्थास्तर्हि एते अव्युत्पन्ना इति कथ्यन्ते। अपरे पुनः निर्वचनपटवो न्यायविद्यासाहाय्येन परिष्कृतस्वरूपं विन्दन्तोऽपि उक्तरागछन्दआदीन् शृण्वन्तोऽपि अविलम्बेन नानुकर्तुं पारयन्ति। एते व्युत्पन्ना अपि अशक्ता इत्युच्यन्ते। अधिकं तु काव्यप्रकाशव्याख्यायां श्रीगोकुलथोपाध्यायकृतायां द्रष्टव्यम्। अतः सर्वसाधारण्येन शक्तिविशिष्टज्ञानं विविक्तार्थविषयकज्ञाने कारणम्। वैशिष्ट्यं स्वाश्रयपदविषयकत्व-स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्योभयसंबन्धेनेति ब्रुवन्ति पारिष्कारिकाः। उभयविधस्यास्य व्युत्पत्तिशक्तिनिर्वचनस्य प्रागुक्तमुपयोगित्वं अजानन्तः न्यायविद्यायाः परिष्कारप्रणालीं खण्डयन्तः सुखावहम् अखण्डोपाधिबोधमुररीकुर्वन्ति केचित्। अपरे पुनः न्यायविद्यापरिष्कृतिमेव उत्तमां मन्यन्ते। राजनीतिस्तु व्युत्पत्तिशक्तिभेदेन उभयविधमपि बोधम् अभिमन्यते, यद्विषये इयं प्रशस्तिः—

आदौ शास्त्रान्धकारे पतित इव ततोऽभ्यासमार्गे चरिष्णुः
पश्चाद् व्युत्पत्तिदेहल्यपग इव ततः शक्तिवाटीप्रविष्टः।
नानाशब्दाख्यपुष्पावचयकरणतो वाग्वशीभूतविश्वो
यत्प्रेमापाङ्गदृष्ट्या भवति कविवरो भारती सा पुनातु। इति॥
(वसिष्ठस्मृतिटीकायां मङ्गलाचरणम्)

एतेषु मतेषु कतरन्मतं सत् इति तु पर्यालोचितदिशा अवसेयम्। इदमेव च वैशारद्यं द्विविधाभ्यां सङ्क्षेपतोऽधो लिखिताभ्यां पद्याभ्यां लिख्यते।—

मोहं रुणद्धि विमलीकुरुते च बुद्धिं
सूते च संस्कृतपदव्यवहारशक्तिम्।
शास्त्रान्तराभ्यसनयोग्यतया युनक्ति
तर्कश्रमो न तनुते किमिहोपकारम्॥

**प्रदीपस्सर्वविद्यानां उपायस्सर्वकर्मणाम् ।**
**आश्रयस्सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥ २ ॥**

इति विनयाधिकारिके विद्यासमुद्देशे आन्वीक्षिकी
स्थापना । द्वितीयोऽध्यायः ।

---

## वैदिकसिद्धान्तसंरक्षिणी

प्रायः काव्यैर्गलितवयसः पाणिनीयाम्बुराशेः
पारज्ञस्याप्यपरिकलितन्यायशास्त्रस्य पुंसः ।
वादारम्भे गदितुमनसो वाक्यमेकं सभायां
प्रह्वा जिह्वा भवति कियतीं पश्य कष्टामवस्थाम् । इति ।
( विश्वगुणादर्शचम्पूः )

प्रज्ञावाक्यवैशारद्याभ्यां क्रियावैशारद्यम् अपि व्याख्यातम् । तद्यथा दीर्घकाल-दर्शनेन विवेकपुरस्सरं कर्तव्याकर्तव्ययोः सम्यक् प्रौढिपरिचयं लब्ध्वा उत्तमैरारब्धा क्रिया विना फलप्रसूतिं मध्ये न विश्राम्यति, न वा सा विघ्नभयेन सन्देहेन आहार्येण न प्रारभ्यते वा । तथा हि—

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमजना न परित्यजन्ति ॥ इति । ( नीतिशतकम् )

इत्यलं प्रसक्तानुप्रसक्तचिन्तया ।

करोतीति आन्वीक्षिकीत्यनेनान्वयः । न्यायविद्याध्ययनेऽपि विना विद्याप्रसादं उक्तफलत्रयं न भवेत् इति आन्वीक्षिक्याः कर्तृत्वप्रदर्शनेन स्फुटीकृतम् । विवेचितं चेदमधस्तात् ।

## श्रीमूला

प्रदीप इति । आन्वीक्षिकी सर्वविद्यानां प्रदीपः परीक्षणसाधनत्वात् । सर्वकर्म-णाम् उपायः, आरम्भादिफलाधिगमपर्यन्तानुष्ठानवैचित्र्यप्रतिभोत्पादकत्वात् । सर्वधर्माणां शश्वद् आश्रयः वैदिकलौकिकानां सर्वेषां धर्माणामन्वीक्षावधार्यत्वात् सर्वदा आश्रयभूता । एवञ्च त्रय्यादिविसदृशस्वरूपफलत्वादान्वीक्षिक्या विद्यान्तरत्वं सिद्धमित्यभिप्रायः ॥

इति कौटिलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे द्वितीयोऽ-ध्यायः । विद्यासमुद्देशे आन्वीक्षिकीस्थापना ॥

---

नी० टी० १. अध्यायप्रान्ते श्लोकमाह ।

## वैदिकसिद्धान्तसंरक्षिणी

पूर्वोक्तप्रयोजनं अध्यायान्ते सङ्क्षिप्य दर्शयितुमाह प्रदीप इति। प्रदीपः समस्तविद्यानां प्रकाशकः इतरासां विद्यानां वास्तविक-प्रमेयनिरूपिकाणाम् प्रामाण्यस्वरूपनिरूपणाधीनत्वात्। सर्वविद्यानिष्ठप्रामाण्यनिरूपक इति यावत्। तदुक्तम्—न्यायवार्तिके प्रदीप इत्यादिना[1]

उपायः प्रज्ञावाक्यक्रियावैशारद्यम्। इतरविद्यासु प्रतिपादिता विषयाः केचित् यथाश्रुते बाधिता भवन्ति, तन्निरासाय ते ते परस्परं समन्वयमाकाङ्क्षन्ते तद्रीतिप्रदर्शकः, वैदिकेषु विधिषु साध्यसाधनेतिकर्तव्यताविधेयत्वनिर्णायकत्वात्। द्रव्यगुणकर्मणां अभिमतानभिमतोपायतापरिज्ञापनं वा, इति तु न्यायविदः। तदुक्तम् न्यायवार्तिके—

"प्रकाशितानां करणादुपायः यस्मात् प्रमाणादिप्रकाशितमर्थमितरा विद्याः कुर्वन्ति विषयं विधेयतया निषेध्यतयेति शेषः—"[2] १।१।१ इति।

तट्टीकायाम्:—

"सम्प्रति विद्यानां यानि कर्माणि प्रतिपाद्यानि सोमाग्निहोत्रकृष्यादीनि तत्राप्यान्वीक्षिक्युपायमाह-उपायः सर्वकर्मणां विद्याव्युत्पाद्यानाम् न तु हालिकमृगयादिकर्मणामपि। नहि विद्यापदेभ्यो यावन्मात्रावगतिस्तावन्मात्रेण प्रेक्षावतां परितोषः। मा भूदादित्यो वै यूप इत्यादिभ्य आदित्यादीनां यूपादिता। तस्मात् संशयपरीक्षाप्रमाणविनिवेशद्वारेण तदर्थतत्त्वमवधार्य तत्र त्रयी विनिवेशनीया। एवं दण्डनीतिवार्तयोरप्यवगन्तव्यम्। यस्मादान्वीक्षिकी-परिशोधित-प्रमाणप्रकाशितं सामादि इतरा विद्याः कुर्वन्ति। विषयमिति शेषः। अपिच द्रव्यगुणकर्मणामभिमतानभिमतोपायतापरिज्ञापनेन यथा—एवं सर्वाः विद्याः प्रेक्षावतः प्रवर्तयन्ति निवर्तयन्ति च। तत्र किमविशेषेण साध्यसाधनेतिकर्तव्यतासु प्रवर्तयन्ति, आहोस्वित् साधनेतिकर्तव्यतामात्रे। तत्र यदि साध्यांशोऽपि प्रवर्तनागोचरः तदा श्येनादिसाध्याया हिंसायाः

---

१ "प्रदीपः सर्वविद्यानां भवति प्रकाशकत्वात् प्रदीपवत्। प्रमाणादिप्रतिपादितमर्थं इतरा विद्याः प्रतिपद्यन्त इति। किमितरासु विद्यासु प्रमाणादीनि न सन्ति? न सन्तीत्याह। कथं न सन्ति? अनधिकारात् न ता विद्याः प्रमाणादिपरिज्ञानेनाधिक्रियन्ते इति। प्रमाणादिप्रकाशिते त्वर्थे ताः प्रवर्तन्त" इति।

—न्यायवार्तिक १।१।१ सूत्रम्।

२. "यद्यपीतरा विद्याः प्रामाणिकमेवार्थमभिनिविशन्ते। तथापि एतद्विद्याप्रतिपाद्यमेव प्रमाणाद्युपजीव्य स्वे स्वे व्युत्पाद्ये अर्थतत्त्वे प्रवर्तन्ते। न तु प्रमाणाद्यपि व्युत्पादयन्ति। यथा प्रत्यक्षाद्युपजीव्य प्रवर्तमानमनुमानं न प्रत्यक्षादिविषयमपि तदानीं एव गोचरयति। तदनेन विद्योपकरणग्रहणेन व्यापारः आन्वीक्षिक्या दर्शितः" इति।

—न्यायवार्तिक तात्पर्य टीका, अ० १-१-१

## वैदिकसिद्धान्तसंरक्षिणी

विहितत्वेन नानर्थत्वम्। अत्र साध्यांशं रागतः प्राप्तमनूद्य साधनेतिकर्तव्यत्वे एव विधीयेते। ततः श्येनादिसाध्याया हिंसाया अविहितत्वेन "न हिंस्यात् सर्वा भूतानी"ति प्रतिषेधादनर्थत्वम्। तदिह साध्यांशेऽपि अप्रवर्तनमान्वीक्षिकीगम्यम्" इति।
आश्रयः व्यसने अभ्युदये च वुद्ध्यवस्थापकत्वात्। विद्यया प्रवर्तनायां कर्तव्यायां सहकारोति न्यायमतानुसारिणः। तदुक्तं न्यायवर्तिके—

"सर्वविद्योपकारकत्वादाश्रयः। सर्वासां विद्यानां इयमुपकरोति उपकारित्वादाश्रयो राजभृत्यवदिति"। इति। ( —१।१।१। न्यायवार्तिकम् )
तट्टीकायांच :—

"तदेवमान्वीक्षिकीमाश्रयन्ते सर्वा विद्या इत्याह-आश्रयः सर्वकर्माणाम् सर्वासां विद्यानां पुरुषप्रवर्तना धर्माः तेषामाश्रयः। वार्तिककारस्तु धर्मद्वारेण विद्यानामेवाश्रय इति व्याचष्टे। सर्वविद्योपकारकत्वादाश्रयः। सर्वासां विद्यानामियमुपकरोति विद्यया प्रवर्तनायां कर्तव्यायां इयं सहकारितयोपकरोतीत्यर्थः" इति।

( न्या० वा० टी० १।१।१।— )

सर्वधर्माणां सर्वविद्याप्रतिपाद्यानां पुरुषप्रवर्तनानां सकलशास्त्रार्थानुष्ठानानामिति यावत्। षष्ठ्यर्थश्च प्रयोजकत्वम्। एवञ्च विद्याप्रकाशेन स्वरूपापेक्षया च आन्वीक्षिक्या उपयोगित्वं सिद्धम्।

इति अर्थशास्त्रव्याख्यायां वैदिकसिद्धान्तसंरक्षिण्यां द्वितीयोऽध्यायः। आदितो द्वितीयः।

## जयमङ्गला

आन्वीक्षिकी·······················

इति विद्यासमुद्देशे आन्वीक्षिकी स्थापना द्वितीयोऽध्यायः॥

## जयमङ्गलाक्रोडपत्रम्

## जयमङ्गलापूरणम्

आन्वीक्षिकीति। इतः परं जयमङ्गलाग्रन्थः त्रुटितो वर्तते तस्य पूरणं नीतिसारव्याख्याया न्यायभाष्यस्य च आधारेण यथामति क्रियते।

आन्वीक्षिकी हेतुविद्या। विसदृशफलं प्रदर्शयन्नाह धर्मेति। धर्मः इज्याऽध्ययनादिः। अधर्मः श्वमांसभक्षणादिः। अर्थः काले बीजवपनादिनिष्पन्नो, ऽकाले बीजवापादिनिष्पन्नः अनर्थः। ज्यायसा सह सन्धिर्योगनिष्पादकत्वान्नयः विग्रहस्तु अनिष्पादकत्वात् अपनयः। आन्वीक्षिक्याः उपकारित्वं दर्शयति। बलाबले इति। एतेन तासां परस्पर विरुद्धत्वपरिहाराय क्रियमाणन्यायसञ्चारणमान्वीक्षिक्याः

## जयमङ्गलाक्रोडपत्रम्

फलम्। तदेव सूचयति एतासामिति। त्रयीवार्तादण्डनीतीनामित्यर्थः हेतुभिः युक्तिभिः। ताश्च ज्ञापिकोत्पादिकाभेदेन द्विविधाः। तद्यथा। वेदस्मृत्योः विरोधे क्वचिद् वेदस्य, क्वचित् स्मृतेः प्राबल्यमिति। अर्थशास्त्रधर्मशास्त्राभ्यां कृतेऽपि ऐकमत्येन चौर्यनिषेधे क्वचिद् धर्मत्वव्यवस्थापनम्।

द्वितीयं फलमाह व्यसन इति। विपत्तौ। बुद्धेस्सत्वात्मिकायाः अवस्थापनम् इति तृतीयं फलमाह प्रज्ञेति। प्रज्ञावैशारद्यं क्रियावैशारद्यं वाक्यवैशारद्यं चेत्यर्थः। तत्र प्रज्ञावैशारद्यं सत्यासत्यान्वेषणकुशलत्वम्। वाक्यवैशारद्यं प्रकृतिप्रत्ययादीनां व्युत्पत्तिस्वरूपम्। क्रियावैशारद्यं दीर्घकालदर्शनेन विवेकपुरःसरं कर्तव्याकर्तव्ययोः परिचयप्रौढिः। ( मतिभाव इति यावत् ) शेषं क्रोडपत्रे उक्तम्।

अध्यायान्ते प्रयोजनं दर्शयति प्रदीप इति। एतद् विद्याप्रतिपाद्यमेव प्रमाणादि उपजीव्य समस्तानां विद्यानां स्वस्वव्युत्पाद्ये अर्थे प्रवर्तनात् प्रदीपः। उपायः इतर-विद्यासु प्रतिपादितानां विधानानां यथाश्रुतार्थस्य बाधितत्वेऽपि समन्वयसाकाङ्क्ष-त्वादुपायः। आश्रयः विद्यया प्रवर्तनायामितिकर्तव्यतायां सहकारित्वात्। अतएव शश्वदित्युक्तम्। अर्थात् आन्वीक्षिक्याः कालत्रये अबाधितत्वमिति बोध्यम्। शेषं क्रोडपत्रे द्रष्टव्यम्।

इति श्री पण्डितराज राजेश्वरशास्त्रिद्राविडव्याख्याते
जयमङ्गलाक्रोडपत्रे द्वितीयोध्यायः

# तृतीयोऽध्यायः—

## त्रयीस्थापना

## [ त्रयीवेदतदङ्गानां स्वरूपं तदुपकारश्च ]

**सामर्ग्यजुर्वेदास्त्रयः[1] त्रयी, अथर्ववेदेतिहासवेदौ[2] च वेदाः ।**

---

### श्रीमूला

त्रयीस्थापनार्थं तत्स्वरूपमाह—**सामेत्यादि ।** सामवेदः ऋग्वेदो यजुर्वेद इति त्रयस्त्रयीपदवाच्याः, अथर्ववेदः, इतिहासवेदो महाभारतादिश्च वेदपदार्थाः ।

### वैदिकसिद्धान्तसंरक्षिणी

यद्यपि पूर्वाध्याये लोकायतमतस्य निरूपणावसरे संवरण त्रयीत्युक्त्या त्रयो लोकसंरक्षणार्थं अप्रत्याख्येयेत्युक्तम् जयमङ्गलायाम् । तथापि त्रय्याः ब्रह्मज्ञानरहितस्य-राज्ञः कृते वास्तवोपयोगित्वविषये सन्दिग्धता न दूरे अपास्ता भवतीति, अत आह मूले—त्रयीति । तदुक्तं नीतिनिर्णीतौ—'बार्हिस्पत्यैराक्षिप्तायास्त्रय्याः स्थापनामाह' (—१।३) इति ।

तस्या उपकारं प्रदर्शयिष्यन् विभागमाह—सामेति । 'गीतेर्माधुर्यात्, 'गायन्तं स्त्रियः कामयन्ते'..........' इति वचनात्, गायनस्य स्वभावत एवाल्हादकरत्वात्, सहस्रशाखावत्वेन शरीरबाहुल्याच्चादौ सामग्रहणम् । उक्तञ्चैतत् नीतिनिर्णीतिटिप्पण्यामपि ।

"दृष्टादृष्टपूर्वं वेदयति इति सहस्त्रशाखतया वैपुल्यात् च सामवेदस्य प्रथममुपन्यासः" । (१।३।२। इति । सामाश्रिततया ततः ऋग्ग्रहणम् । ततो यजुः । एते त्रयो मिलिताः वेदाः यज्ञादि निर्वर्तयन्तीति ज्ञापनार्थम् । 'त्रय' इति । एतेषां स्वर-सापेक्षत्वात् समासेनोपादानम् । त्रयीति । त्रयीशब्दो यथा सामर्ग्यजुर्वेदवाचकः तथा सर्वैरङ्गैः सहितस्यापि वाचको वर्तते ।

---

नी० टी० १. बार्हस्पत्यैराक्षिप्तायास्त्र्य्याः स्थापनामाह स्वरूपतस्तावत् सामेत्यादि । दृष्टादृष्टमर्थं वेदयतीति सहस्त्रशाखतया सामेति वैपुल्यात् सामवेदस्य प्रथममुपन्यासः । तदनन्तरं पाठसौन्दर्यादृग्वेदस्य ।

२. प्रत्येकं वेदग्रहणमप्रसिद्धस्य वेदत्वस्य स्थापनार्थम् ।

## वैदिकसिद्धान्तसंरक्षिणी

'श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः।' इत्यमरकोषे,
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः!
धर्मशास्त्रं पुराणं च त्रयीदं सर्वमुच्यते॥
इति नीतिसारेऽपि—उक्तत्वात् नीति० १।२।

मूलस्थं त्रयीपदं……'वेदा……अङ्गानि' इत्यनेन च सम्बध्यते। अतः एतत् त्रयीपदसन्निवेशस्य देहलीदीपन्यायेन उभयत्रान्वयात् 'सामेत्यारभ्य 'अङ्गानी'त्यन्तम् एकं वाक्यं बोध्यम्। तस्मात् 'वेदत्रयम् वेदचतुष्टयम्, साङ्गं वा-सर्वमपि त्रयीसंज्ञया व्यवहर्तव्यमिति फलितम्। अत एव 'त्रयीधर्म इत्यत्र' त्रयी ग्रहणं साभिप्रायं बोध्यम्।

अथर्ववेदेति। पुनर्वेदग्रहणं साभिप्रायं बोध्यम्। तदुक्तम्—

'प्रत्येकं वेदग्रहणं अप्रसिद्धस्य वेदत्वस्य ख्यापनार्थम्' ।इति (नि० नी० अ०१।३।२)

अत्रेदं बोध्यम्। अथर्ववेदस्य पारायणमात्रेण फलसिद्धिः। इतरेषां वेदानां तु पुरश्चरणेन फलसिद्धिः इति अथर्ववेदतदितरवेदानां वैलक्षण्यं सायणाचार्यैः स्वभाष्ये भूमिकायामुक्तम्—

अत एव सारवत्वात् सिद्धमन्त्रता 'समाम्नायते।'
न तिथिर्न च नक्षत्रं न ग्रहो न च चन्द्रमाः॥
अथर्वमन्त्रम्संप्राप्सा सर्वसिद्धिर्भविष्यति'। इति।

तथा 'स्कान्दे' कमलालयखण्डे—आथर्वमन्त्राणांजप मात्रेण अभिमतफलसाधनत्व-मुक्तम्।'

'यस्तत्राथर्वणान् मन्त्रान् जपेच्छ्रद्धासमन्वितः।
तेषामर्थोद्भवं कृत्स्नं फलं प्राप्नोति स ध्रुवम्॥' इति

अथर्ववेदस्य वेदत्वं रहसि आसीत् तदिदं रहस्यं, औपनिषदिकप्रकरणं च सुगुप्तं अथर्वणः वेदत्वोक्त्या प्रकाश्यतां नीतं मूलकृतेति बोध्यम्।

### अथर्ववेदस्य वेदत्वम्

ननु अथर्ववेदस्य वेदत्वे किं प्रमाणमिति चेदुच्यते। यथा इतरेषां वेदानां वेदत्वप्रसिद्धिरद्ययावत् वर्तते अविच्छिन्नपरम्परया, एवं सर्वैरपि शिष्टतमैः तेषां पूज्यत्वेन गृह्यन्ते अतः ते सर्वेपि वेदा इत्युच्यन्ते। तथा तेनैव हेतुना अथर्ववेदस्य तथैव स्वीकृतत्वात् वेदत्वे का हानिरिति न विद्मः।

तदुक्तम्—"निरमिमीत सर्पवेदम् पिशाचवेदम् इतिहासवेदं पुराणवेदम्"
इति। ( गो० ब्रा:० १।१।१०—)

तथा अथर्ववेदेतिहासवेदौ च 'वेदा'
इति। ( को० अ० अ० १ अ० २।)—

यद्यप्यत्र इतिहाससाधारण्येन सर्वेषां वेदत्वं समानमेव भाति, अभियुक्तप्रसिद्ध-त्वात्। तथापि ऋगाद्यथर्वान्तेषु वेदेषु अद्य यावत् सृष्टिकालादारभ्य अविच्छिन्न-

## वैदिकसिद्धान्तसंरक्षिणी

परम्परया स्वसजातीयोच्चारणसापेक्षोच्चारणकानुपूर्वीकत्वं यथा निर्णीतमस्ति तथा नेतिहासादिषु इति राद्धान्तो बोध्यः। प्रलयकालानन्तरमपि पूर्वसृष्टौ वर्तमानं वेदं स्मृत्वा ऋषीन् भगवानध्याययामासेति सिद्धान्तात् तेषां स्वसजातीयोच्चारणसापेक्षोच्चारणकानुपूर्वीकत्वे न विरोधः एतादृशमानुपूर्वीकत्वं तु इतिहासादिषु नास्ति, तेषां इतिहासादिषु दृढककर्तृकत्वस्मरणात्। इत्यादि सर्वमैतिहासिकदृष्ट्या वेदापौरुषेयत्वविचारे 'शान्ति का अग्रदूत' ग्रन्थस्य द्वितीयभागे निर्णीतमस्ति। एवं सत्यपि इतिहासादिषु वेदत्वोक्तिः वेदार्थनिर्णयार्थमपेक्षितत्वात् बोध्या इति नात्र कश्चन विरोधो मन्तव्यः अत एवोक्तम्—'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति।[1]

---

१. किञ्च अथर्ववेदस्य वेदत्वविषये श्रीजयन्तभट्टैर्न्यायमञ्जर्यां यदुक्तं तत्तर्कबहुलत्वादत्रोपस्थाप्यते।

"अत्रकश्चिदाह—युक्तमितरेतरव्यतिषक्तार्थोपदेशित्वेनैक कर्तृकत्वानुमानद्वारकं त्रिवेद्याः प्रामाण्यम्। अथर्ववेदस्य तु त्रय्याम्नातधर्मोपयोगानुपलब्धेस्त्रयीबाह्यत्वेन तत्समानयोगक्षेमत्वम्। अनपेक्षत्वलक्षणप्रामाण्यपक्षेऽपि विक्षिप्तशाखान्तरोपदिष्टविशिष्टज्योतिष्टोमाद्यनेककर्मानुप्रविष्ट-होत्राध्वर्यवादिव्यापारव्यतिषङ्गदर्शनात् तदर्था त्रयी एव यथा प्रमाणमात्रविभागिनी भवितुमर्हति, न तथा पृथग्व्यवहाराऽऽथर्वणश्रुतिः। तथा च लोके क्षत्रस्येमा विद्या प्राणिनामनुग्रहाय प्रवृत्ता। आन्वीक्षिकी त्रयी वार्ता दण्डनीतिरिति प्रसिद्धिः। श्रुतिस्मृती अपि तद्नुगुणार्थे एवं दृश्येते। श्रुतिस्तावत् 'ऋग्भिः प्रातर्दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्येन्हः सामवेदेनास्तमेति वेदैरशून्यस्त्रिभिरेति सूर्यः।' इति। तथा प्रजापतिरकामयत बहु स्यां प्रजायेयति' स तपोऽतप्यत तपस्तप्त्वेमांस्त्रीन् लोकानसृजत पृथिवीमन्तरिक्षं दिव'मिति। तान् लोकानभ्यतपत्तेभ्यस्त्रीणि ज्योतींषि अजायन्त 'अग्निरेव' पृथिव्या अजायत वायुरन्तरिक्षाद्दिव आदित्य इति। तानि ज्योतींष्यभ्यतप्यंस्तेभ्यस्त्रयो वेदा अजायन्त अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात् सामवेद इति। तथा सैव विद्या त्रयी तपतीति स्मृतिरपि मानवी प्रतिवेदं द्वादशवार्षिकब्रह्मचर्योपदेशिनी दृश्यते। षट्त्रिंशद्वर्षाधिकं चर्यं गुरौ त्रैविद्यकं व्रतमिति। श्राद्धप्रकरणेऽपि—

'यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम्।
शाखान्तरगमथाध्वर्युं छन्दोगं वा समाप्तिगम्।' इति।

त्रिवेदपारगानेव श्राद्धभुजो ब्राह्मणान् दर्शयति नाथर्ववेदाध्यायिनः। प्रत्युत निषेधः क्वचिदुपदिश्यते तस्मादाथर्वणं (न) न प्रवृञ्ज्यादिति। एवमाक्षेपे सति केचिदेवमाचक्षते।

'यदि यज्ञोपयोगित्वं नेहास्त्याथर्वणश्रुतेः।
अर्थान्तरे प्रमाणत्वं केनास्याः प्रतिहन्यते॥

शान्तिपुष्ट्यभिचारार्था एकब्रह्मर्त्विगाश्रिताः।
क्रियास्तथा प्रमीयन्ते त्रय्यैवात्मीयगोचरे॥ इति।

एवं, तत्तु सर्वं न साध्यमभिधीयते। तथाहि—तत्प्रमाणं बादरस्याऽनपेक्षत्वादिति। य एव वेदप्रामाण्याधिगतौ जैमिनिना निरदेशि पन्थाः, योवाऽक्षपादेन कणादेन प्रकटितः, तद्वचनादाम्नायप्रामाण्यमिति मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादिति स चतुर्ष्वपि वेदेषु तुल्यः। तत्र विशेषतृषोऽपि न कश्चिदस्ति प्रयत्नेनान्विष्यमाणः प्राप्यते। नहि मीमांसकपक्षे एवं वक्तुं शक्यते त्रय्यैवानादिमती नाथर्वणश्रुतिस्तस्यां कर्तृस्मरणसम्भवादिति। नापि नैयायिकादिपक्षे एवं वक्तुं शक्यम्। आप्तप्रणीतास्त्रयो वेदाः चतुर्थस्तु नाप्तप्रणीत' इति। तेन प्रामाण्याधिगमोपायाविशेषात् समानयोगक्षेमतया चत्वारोऽपि वेदाः प्रमाणम्। व्यवहारोऽपि सर्वेषां सारेतरविचारचतुरचेतसां चतुर्भिरपि वेदैश्चतुर्णां वर्णानामाश्रमाणां च चतसृषु दिक्षु चातुरब्धिमेखलायामवनौ प्रसिद्धम् इति कोयमत्रान्यथात्वभ्रमः?। श्रुतिस्मृतिमूलश्चार्यावर्तनिवासिनां भवति व्यवहारः। ते च श्रुतिस्मृती चतुरोऽपि वेदान् समानकक्षानभिवदतः। ऋग्यजुःसामवेदेष्वपि अथर्ववेदाशंसीनि भूयांसि वचांसि भवन्ति। तद्यथा शतपथे—'अथ तृतीयेऽनीत्युपक्रमस्याश्वमेधे पारिप्लव्याख्याने सोऽयमाथर्वणो वेद' इति श्रूयते। छान्दोग्योपनिषदि ऋग्वेदो यजुर्वेदः सामवेद आथर्वणः चतुर्थ इति पठ्यते। नन्वितिहासपुराणः पञ्चम इति तत्र पठ्यत एव। अतः किमित्याथर्वणश्चतुर्थो न भवति वेदः?। चतुर्थपदोपादानादितिहासतुल्योऽसौ न वेद समानकक्ष्य इति चेत्, केयं कल्पना? चतुर्थ्यन्तशब्दोपादानादप्राधान्ये त्रयो वेदा असृज्यन्ते'त्यादौ त्रित्वसङ्ख्योपादानात्'तेऽपि न प्रधानतामधिगच्छेयुः इतिहासादिभिर्वा सहपरिगणनमप्राधान्यकारणं यदुच्यते तदपि सर्ववेदसाधारणमिति यत्किञ्चदेतत्! तथा शताध्ययनेऽपि ऋचो ब्रह्मणः प्राणा इत्युपक्रम्य आथर्वणे वै ब्रह्मणः समान इति पठ्यते। तथा येऽस्योदञ्चो रश्मयस्ताएवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत' इति। तथा तैत्तिरीये 'तस्माद्वा एतएस्मात् प्राणमयादन्योन्तर आत्मा मनोमय इति प्रस्तुत्य तस्य यजुरेव शिरः ऋग्दक्षिणः पक्षः सामोत्तरः पक्ष आदेश आत्मा, अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा' इति पठ्यते। तथाऽन्यत्र ऋचां प्राची महती दिगुच्यते दक्षिणामाहुर्यजुषां साम्नाम्मुत्तराम् अथर्वणामङ्गिरसां प्रतीची महती दिगुच्यते' इति।

शतपथे ब्रह्मयज्ञविधिप्रक्रमे पय आहुतयो वा देवानां शता देवानां यदृच इत्युपक्रम्य मेद आहुतयो वा शता देवानां यदथर्वाङ्गिरसः स्म य एवं विद्वानथर्वाङ्गिरसो ऽहरहः स्वाध्यायमधीते मेद आहुतिभिरेव देवान् स तर्पयति त एनं तृप्तास्तर्पयन्ति' इति। मन्त्रा अपि तदर्थ प्रकाशनपराः अनुश्रूयन्ते। 'त्वामग्ने पुष्करादध्यथर्वा निरमन्यते'त्यादयो। न चैषामथर्वा नाम कश्चिदृषिरित्येवंप्रकारं व्याख्यानं युक्तम्। अन्यत्राऽप्यसमाश्वासप्रसङ्गात्। इत्येवञ्जातीयकास्तावदुदाहृताः श्रुतिवाचः।

स्मृतिवाक्यानि खल्वपि-मनुस्तावत् श्रुतिराथर्वाङ्गिरसीः कुर्यादित्याभिचारयन्निति श्रुतिशब्देन त्रयीवद् व्यवहरन्ति। याज्ञवल्क्यश्चतुर्दशविद्यास्थानानि गणयन्—

'पुराणतर्कमीमांसा-धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश । इति ।

चतुर एव वेदानावेदयते नान्यथा हि चतुर्दश सङ्ख्या पूर्यते । स्मृत्यन्तरे च स्पष्टमेवोक्तम् ।

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्याह्येताश्चतुर्दश ॥' इति

अन्यत्राप्युक्तम्—पुराणं धर्मशास्त्रं मीमांसा न्यायश्चत्वारो वेदाः षडङ्गानीति चतुर्दशविद्या-स्थानानीति ।

शातातपोऽप्याह—

'ऋक्सामयजुरङ्गानामथर्वाङ्गिरसामपि ।
अपौरुष्यस्य विज्ञानाद्योऽनूचानः स नो महान् ॥' इति ।

तथाऽन्यत्र 'चत्वारश्चतुर्णां वर्णानां वेदानां पारगाधर्मज्ञाः परिषदित्युक्तम् । शङ्ख-लिखितौ च-'ऋग्यजुः सामाथर्वविदः षडङ्गविद्धर्मविद्वाक्यविन्नैयायिको नैष्ठिको ब्रह्मचारी पञ्चाग्निरिति दशावरा परिषदित्युक्तम् । तथा च पङ्क्तिपावनप्रस्तावे चतुर्वेदः षडङ्गवित् ज्येष्ठसामगोऽथर्वाङ्गिरसोऽप्येते पङ्क्तिपावना गण्यन्ते । तदयमेवमादिचतुष्टयप्रतिष्ठाप्रगुण एव प्राचुर्येण धर्मशास्त्रकाराणां व्यवहारः । अन्येऽपि शास्त्रकारास्तथैव व्यवहरन्तो दृश्यन्ते । यथा च महाभाष्यकारो भगवान् पतञ्जलिरथर्ववेदमेव प्रथमममुदाहृतवान् शन्नो देवी रभिष्टय' इति । मीमांसाभाष्यकारेणापि वेदाधिकरणे 'काठकं कालापकं मौद्गलं पैप्पलाद-कमि'ति । यजुर्वेदादिवत् अथर्ववेदेऽपि पैप्पलादकमुदाजह्रे । सर्वशाखाधिकरणेऽपि वेदान्तरशाखान्तरवन्मौद्गलपैप्लादकाख्ये अथर्वशाखे अप्युदाहृत्य विचारः कृतः । तथा च प्रथमयज्ञोनाम चतुष्पनकश्चिदस्तीत्यधिकरणान्ते एव लिखितम् । एवं श्रुतिस्मृतिशिष्टाचारव्य-हारविदामत्र विप्रतिपत्तिसम्भावना एव नास्ति । आह ! न ब्रूमः अथर्ववेदो न प्रमाणमिति । किन्तु त्रयीबाह्य इति । उच्यते । त्रयीयं अथर्ववेदबाह्यैव । न केवलमेवं त्रय्यामपि परस्पर-बाह्यत्वमस्त्येव । ऋक्सामबाह्यानि यजूंषि यजुःसामबाह्या ऋचः । ऋग्यजुर्बाह्यानि सामानि इति कियानयं दोषः ? सर्वभावानामितरेतरसाङ्कर्यसहितत्वात् । येहि शब्दात्मानो ग्रन्थसन्दर्भ—स्वभावा येच तदभिधया अर्थस्वभावास्ते सर्वेऽप्योन्यसंमिश्रितात्मान एव । न च परेणाऽऽत्मान-ममिश्रयन्तोऽपि ते स्वरूपमपि हारयन्तीति । अथोच्यते-नैदृशं त्रयीबाह्यत्वमथर्ववेदे विवक्षितम् । अपितु यदेष न त्रयीप्रत्ययं कर्मोपदिशति, न तत्संबद्धङ्किञ्चिदिति तदस्य त्रयीबाह्यत्वमिति । एतदपि न साधूपदिष्टम्, इष्टिकापश्वेकाहाहीनसत्रादिकर्मणां तत्रोपदेशदर्शनात् । सर्वशाखा-प्रत्ययमेकं कर्मेति न्यायात् । त्रय्युपदिष्टेऽपि कर्मणि सम्बद्धसर्वशाखाप्रत्ययमेव नाथर्वशाखा-प्रत्ययम् । यतः सोमयागादिकर्मणामृग्वेदेन हौत्रं यजुर्वेदनाऽध्वर्यवं सामवेदेनौद्गात्रं क्रियते-नाथर्ववेदेन किञ्चिदि'ति । तदयुक्तम्, अथर्ववेदेन ब्रह्मत्वस्य करणात् । तथा च गोपथब्राह्मणम् । 'प्रजापतिः सोमेन यक्ष्यमाणो वेदानुवाचकं वो होतारं वृणीय'मिति प्रक्रम्य 'तस्मादृग्वेदमेव होतारं वृणीष्व स हि होत्रं वेद यजुर्वेदमेवाऽध्वर्युंवृणीष्वस हि आध्वर्यवं वेद सामवेद मेवोद्गातारं वृणीष्व सह्यौद्गात्रं वेद अथर्वाङ्गरोविदमेव ब्राह्मणं वृणीष्व स हि ब्रह्मत्वं वेदे'ति एवमभिधाय

**वैदिकसिद्धान्तसंरक्षिणी**

**इतिहासवेद इति ।** एतन्नामनिर्देशो वेदे अस्तीति उपरिष्टादुक्तम् ।

इतिहासपदं पुराणानामुपलक्षणार्थम्, अग्रे इतिहासे तेषामन्तर्भावस्य वक्ष्यमाणत्वात् ।

---

पुनराह-अत्रचेन्नैवंविधं होतारमध्वर्युमुद्गातारं ब्रह्माणं वा वृणुते पुरस्तावदेव चैषां यज्ञो रिष्यती'ति तस्मादृग्वेदमेव होतारं कुर्यात्, यजुर्वेदमेवाऽध्वर्युं, सामवेदमेवोद्गातारमथर्वाङ्गिरसोविदमेव ब्रह्माणमिति । तथा यज्ञे यदूनं च विरिष्ठं च यातयामं च करोति तदथर्वणां तेजसाऽऽप्यायतीति । अथाऽनन्ते भृग्वङ्गिरोऽन्यः सोमः पातव्य.' इति । नन्वेताः श्रुतीरथर्वाण एवाधीयते नान्ये च त्रयीविदः । ते त्वेवं पठन्ति । यदृचा हौत्रं क्रियते यजुषाऽऽध्वर्यवं साम्ना चौद्गात्रं । अथ केन ब्रह्मत्वं क्रियते इति । त्रय्या विद्ययेति ब्रूयादिति तथाच यदृचैव हौत्रमकुर्वत, यजुषाऽऽध्वर्यवं साम्नौदगात्रं यदेव त्रय्यैव विद्यायै युक्तं तेन ब्रह्मत्व'मिति । उच्यते । वयमप्येवमादीनि वाक्यानि न नाधीमहि ! किन्त्वेषामयमेवार्थोऽथर्वोऽङ्गिरोविदेव ब्रह्मेति । कथम् ? यतो न त्रयी नाम किमपि वस्त्वन्तरम् । अपि तु त्रयाणां वेदानां समाहार इति । समाहारश्च समाह्रियमाणनिष्ठो भवति । समाह्रियमाणाश्च ऋग्वेदादयस्त्रयो होत्रादिपरत्वे चरितार्था न पुनस्तत्र भेदमर्हन्ति एकैकशः चरितार्थानां समुदायोऽपि चरितार्थ एव । समुदायबुद्धौ हि विभज्यमानायां समुदायिन एव प्रस्फुरन्ति, नावयविवदर्थान्तरम् ते चान्यत्र व्याप्ताः । किन्तु खलु ऋग्वेदादीनां ब्रह्मत्वं कुर्वतामतिभारो भवति । न ब्रूमोऽतिभार इति ! किन्त्वात्मिकत्वेन ब्रह्मत्वकर्तव्यतोपदिश्यते । आत्मिकश्चान्यतमोऽपि न तेषां न भवति वेदः । अथर्ववेदस्सर्वात्मक एव । तत्र हि ऋचो यजूंषि सामानीति त्रीण्यपि सन्ति तेन ब्रह्मत्वं क्रियमाणं त्रय्या कृतं भवति । ननु यस्त्रीन् वेदानधीते तेन चेत् ब्रह्मत्वं क्रियेत, तत् किं तया न कृतं भवति । बाढमित्युच्यते । सोऽपि एकस्मै कामादान्ये यज्ञक्रतवः समधीयन्ते, सर्वेभ्यो ज्योतिष्टोमः सर्वेभ्यो दर्शपूर्णमासाविति श्रुतावपि योगसिद्ध्यधिकरणन्यायेनाऽन्यतममेव बुद्धावादाय विदध्यान्न समुदायं बुद्धावारोपयितुं शक्नुयादित्येकेन तत् कृतं भवति न त्र……।……न्येऽप्यात्मिका वेदा यद्येवं सुतरामथर्ववेदो न पृथक्करणीयः सर्वेषां रूपाविशेषात् । तेषां पृथक् प्रतिष्ठैः स्वैः स्वैः ऋगादिभिरेव व्यपदेश इति । न ते समुदायशब्दव्यपदेश्याः । यत्तु वाक्यान्तरे त्रय्यै विद्यायै शुक्रन्तेन ब्रह्मत्वमिति तत्रेयं चतुर्थी षष्ठयाः स्थाने प्रयुक्ता शुक्रमिति सारमाचक्षते तेन त्रयीविद्यायाः सारेण ब्रह्मत्वं क्रियत इत्युक्तं भवति । न च त्रय्यैव त्रय्याः शुक्रं भवति न चात्यन्तं ततोऽर्थान्तरमेव । तेनेदमर्थर्ववेदात्मकमेव त्रय्याः शुक्रं शुक्रम् इति च गुह्यमाहुः । अथर्वशब्दोऽपि रहस्यवचनः । यज्ञाथर्वाणं चैकस्या इष्टय इति । तेन त्रयी शुक्ररूपेणाऽथर्ववेदेन ब्रह्मत्वमितीत्थमथर्ववेदस्य न त्रयीब्रह्मत्वमित्यलम्, सर्वशाखाप्रत्ययमेकं कर्मेति न सर्वशब्दः सङ्कोचितो भवति । अत एव ब्रह्मवेदाथर्ववेद इति पूर्वोत्तरवाक्ये पठति ऋग्वेदो यजुर्वेदः सामवेदः ब्रह्मवेदः इति । यथा च काठकशताध्ययने ब्राह्मणे ब्रह्मौदने श्रूयते ब्रह्मवादिनो वदन्ति पुरो वा औद्दालकिः आरुणिमुवाच ब्रह्मणे त्वा प्राणाय जुष्टं निर्वपामि ब्रह्मणे त्वा व्यानाय जुष्टं निर्वपामि'इत्युपक्रम्य आथर्वणो वै ब्राह्मणः समानोऽथर्वणमेवैतष्टं निर्वपति चतुःशरावो भवति चत्बारो होमे वेदास्तानेव भागिनः-

## वैदिकसिद्धान्तसंरक्षिणी

### वेद ग्रहणप्रयोजनम्

**वेदाःइति।** पुनर्वेदग्रहणं इतिहासस्य प्रामाण्यख्यापनाय बोध्यम्। तथाहि चक्र-

करोति मूलं वै ब्रह्मणो वेदा वेदानामेतन्मूल्यं यदृत्विजः प्राश्नन्ति तद्ब्रह्मौदनस्य ब्रह्मत्वमिति। तथा सामवेदे पृष्ठ्यस्य चतुर्थेऽहन्याथर्वे पवमाने आथर्वणे साम्नो ग्दात्रं यत्तद्विधाने श्रूयत्ते चतुर्विध-माथर्वणं भवति चतूरात्रस्य वृत्यै चतुष्पदामानुष्टुभाऽनुष्टुभमेवैतदहर्यश्चतुर्थभैषजं वायवीयं तद्धि भैषज्यमेव तत्करोत्याथर्वाणानि यागभेषजानीत्येतदालंबनेयं स्तुतिरत एव प्रागुक्तं यज्ञे यदूनं च विरिष्ठं च यातयामं च करोति तदथर्वणा तेजसाऽऽप्यायतीति तस्मादाथर्वण एव ब्रह्मेति। एतच्च शाखान्तरे विस्तरेणाऽभियुक्तैर्युक्तिभिरापादितमिति नेहेत्यन्ताय प्रतायते। अथापि श्रौतमिदं वाक्यं तदपि प्रकरणाधीतं चेत् तत्रैव क्वचित्कर्मणि निवेक्ष्यते। अनारभ्यवादपक्षेऽपि पूर्वोक्तवाक्यविसदृशार्थत्वादथर्ववेदस्य च त्रयीवाह्यत्वेन सम्पर्कपरिहारार्हत्वान्नियतविषयमेव व्याख्यास्यते। यदप्युच्यते। क्रियते उच्चैः साम्नोपांशु यजुषैतावदर्थधर्मोऽपि न वेदाम्नातः इति तदप्यपास्तम्। मन्त्रधर्मोह्ययमुपदिश्यते न वेदधर्मः। मन्त्रब्राह्मणसमुदायस्य भावा हि-चत्वार इमे वेदग्रन्था मन्त्रास्तु ते गद्यपद्यभेदास्तद्विधैव। गद्यबन्धो यजुरुच्यते पद्यबन्ध ऋगिति। गीतिनिबन्धनन्तु भेदान्तरं सामेति। अत एव जैमिनिना मन्त्रविभागं प्रस्तुत्य तेषामृग्यत्रार्थवशेन पादव्यवस्था गीतिषु सामाख्या, शेषे यजुः शब्दः इत्थमेव तेषां त्रैविध्यमुपपादितम। तेषामेव चायमुच्चैरादिधर्मो न वेदशब्दवाक्यानां मन्त्राब्राह्मणसमुदायात्मकग्रन्थानाम्। अथर्ववेदेऽपीयं त्रिविधैव मन्त्रजातिः इति तत्रापीदं धर्मजातमुपदिष्टं भवति। मन्त्रविभागकृत एवायं त्रयी-व्यपदेशः, इति। तच्च सैषा त्रयी विद्या तपतीत्याद्यपि न विरुध्ययते एवमृग्यजुःसामसमुदायात्म-कमन्त्रोपबन्धात् त्रय्यन्तर्गतश्चाथर्ववेदः पृथग्व्यवस्थितग्रन्थसन्दर्भभावत्वाच्च भिन्न इति स्थितम्। अन्ये पुनः ऋक्प्रचुरत्वात् प्रविरलयजुष्ट्वात् गीयमानसामबत्ववशाच्च वेदमेवाथर्व-वेदमाचक्षते। अनयोरपि पक्षयोस्तु न कश्चिद्विरोधः। यत् पुनरभिधीयते वेदशब्दास्त्रयाणामेव वाचको न चतुर्थस्येति। सोयमत्युत्कटो द्वेषः। वृद्धव्यवहारो त्र प्रमाणम्। वेदेऽयं ब्राह्मणोयमिति तत्र तत्र वेदशब्दे उच्चारिते चत्वारोऽपि प्रतीयन्ते। वेदो मयाऽधीत इति, वदन्तं पृच्छन्ति व्यवहर्तारः, कतमस्त्वयाऽधीतो वेद इति। स आहाऽथर्ववेद इति। न तमेवाक्षियन्ति नाऽसौ वेदो यस्त्वया पठित इति। सोपपदेऽथर्ववेदे वेदशब्द इति चेत्, वेदान्तरेष्वपि तुल्यमेतत्। ऋग्वेदो यजुर्वेदः सामवेद इति। नित्योपपदोऽपि तेषु वेदशब्दः प्रयुज्यते इति, तदितरत्रापि समानमित्युक्तम्। 'चतुर्वेदाध्यायी भारद्वाज'इति। सर्वथा तु सोपपद एवाआयुर्वेदादिषु वेदशब्द इति, न तत्तुल्पकक्षताऽधिक्षेपक्षेत्रतामथर्ववेदो नेतव्यः। ब्रह्मचर्यविधिश्च श्रौत्तश्चतुर्ष्वप्य-विशिष्ट इत्युक्तम्। स्मार्तोऽपि तथैवास्ति। यथाह याज्ञवल्क्यः—

'मेदस्य तर्पयेद्देवानथर्वाङ्गिरसः पठन्।
पितृंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विज।' इति

साम्प्रदायिकमध्यापनम् आदि। यजनादि सर्वमभिन्नमेवेत्यलं प्रसङ्गेन।

इति न्यायमञ्जरी

**शिक्षा [1]कल्पो व्याकरणं निरुक्तं छन्दोविचितिः ज्योतिषमिति चाङ्गानि ।**

---

### वैदिकसिद्धान्तसंरक्षिणी

वर्ती सम्राट् मन्त्रिणोपदेष्टव्यः, मन्त्रिद्वारा विशेषतो नीतिस्तेनाध्येतव्या भवति। नीतौ उपवर्णिताः सर्वेपि अर्थाः नीतिलक्षणानुसारेण यदा अनुमानप्रमाणेन अनुप्राणिता भवन्ति तदा नीतिलक्षणलक्षिता भवन्ति । अनुमानं व्याप्तिं आकाङ्क्षते। सा चोदाहरणेन व्यक्ता भवति । तच्चोदाहरणं वर्तमानचक्रवर्तिनां कृते भूतकालीनानां चक्रवर्तिननां राज्ञां चरितं भवति, एकसमये चक्रर्तिद्वयेन स्थातुमशक्यत्वात् । राजानश्चेतिहासेषु प्रामाणिकेषु प्रसिद्धाश्चेत् व्याप्तिस्तर्हि सिद्धैवे । तदनुसारेण निर्णयो यथार्थो भवितुमर्हति अन्यथा न । अतः कल्पितस्य मनुष्योपवर्णितस्य चेतिहासस्य व्यावृत्तये वेदतदुपजीविपुराणोपवर्णितानामितिहासानां वेदत्वकथनेन तेषु प्रामाण्यं बोध्यते । अत एव काव्यप्रकाशस्य आदिमोल्लासस्य "शक्तिर्निपुणतेति" श्लोकव्याख्यायां शक्तिकारणतयोपदिष्टेतिहासस्यार्थः "पुराणवर्णित इतिहास" कृतः ।

### श्रीमूला

शिक्षा वर्णोच्चारणोपदेशकं शास्त्रम् । कल्पः क्रत्वनुष्ठानोपदेशपरमाश्वलायनादिप्रणीतं सूत्रम् । व्याकरणं शब्दानुशासनं पाणिनीयादि । निरूक्तं निर्वचनशास्त्रं यास्कप्रणीतम् । छन्दोविचितिः छन्दश्शास्त्रं पैङ्गलादि । ज्योतिषं सूर्यादिगत्यादिप्रतिपादकं शास्त्रम् ।

### वैदिकसिद्धान्तसंरक्षिणी

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च त्रयीदं सर्वमुच्यते ।'

इति ग्रन्थेन पुराणादीनां त्रय्यामन्तर्भावस्य नीतिसारे उक्तस्य विषये स्वसम्मतिं प्रदर्शयन्नाह—शिक्षेति । शिक्षादीनां त्रय्यामन्तर्भावादेव विद्याचतुष्टयविभाग उपपद्यते । अन्यथा शिक्षादीनां त्रय्यतिरिक्तविद्यानां सत्वाद् विद्यानां चतुर्धा विभागोऽनुपपन्नः स्यात् । शिक्षा वर्णोच्चारणोपदेशकं शास्त्रम् । कल्पः क्रत्वनुष्ठानेतिकर्तव्यतोपदेशः आश्वलायनादिप्रणीतं सूत्रम् इति यावत् । व्याकरणं शब्दानुशासनं पाणिनीयादि । निरुक्तं वैदिकशब्दानां अवयवार्थनिरूपणम् । छन्दोविचितः पिङ्गलादिप्रणीतं पद्यबन्धशास्त्रम् । ज्योतिषं सूर्यादिग्रहाणां मध्यमस्पष्टगत्यादिबोधकं शास्त्रम् ।

---

नी० टी० १. शिक्षेति । 'सामादीनाँ प्रयोजनम् । अ···कादिकम् । इतिहास···नु···धनुर्वेद आयुर्वेद ताट्यवेद···इति त्रुटितः पाठः ।

**एष त्रयीधर्मः चतुर्णां वर्णानामाश्रमाणां च स्वधर्मस्थापनादौपकारिकः[1]।**

## वैदिकसिद्धान्तसंरक्षिणी

### अङ्गादिषु त्रयीसङ्केतः

अङ्गादिसाधारण्येन कृतः त्रयीपदव्यवहारः कौटिल्यात्प्रभृत्येवावर्तत इति वैयाकरणसङ्केतितनदीवृद्धादिशब्दव्यवहारवत् कौटिल्येनैव अङ्गादिषु त्रयीशब्दः; सङ्केतित इति न मन्तव्यम्, व्यवहारोयं पूर्वत एव प्रवृत्तः न कौटिल्यात्प्रभृति इति सिद्धान्तितत्वात्। तथाहि—

तदधीते तद्वेद इति पाणिनिसूत्रेण न्यायव्याकरणादिपदं शास्त्रे तदर्थेषु च सङ्केतितं वर्तते इति अवगम्यते। अतएव "अयं नैयायिकः अयं वैयाकरण" इति व्यवहारः भवति। एतन्मतं काव्यादिषु विदग्धमतिभिरपि तथा स्वीकृतमुपलभ्यते। तद्यथा—

"तथा च विनिगमनाविरहादर्थविशेषावरुद्धः शब्द इव शब्दविशेषावरुद्धोऽर्थोपि लोकोत्तरचमत्कारव्यञ्जकतया काव्यमित्युभयोः शब्दार्थयोः प्राधान्येन निर्देशो वर्तते। "काव्यं श्रुणोति" इतिव्यवहारस्स्वार्थांशेपि शाब्दबोधार्थकश्रुणोतिनोपपादयितुं शक्यते, "आत्मा श्रोतव्य" इतिवत् इति। (अत्र काव्यप्रकाशविवरणं द्रष्टव्यम्) एवञ्च त्रयीशब्दस्यार्थो वेदवत् वेदार्थोऽपि अतः शिक्षाकल्पादयोपि वेदार्थत्वात् त्रयीस्वरूपा इति कौटिल्येन तत्र तत्र व्यवहृतः त्रयोशब्दो न कौटिल्यकल्पितः, अपि तु परंपराप्राप्त इति।

## श्रीमूला

त्रय्याः फलं वक्तुमाह—**एष** इति। एष त्रयीधर्मः त्रय्युपदिष्टो धर्मः, चतुर्णां ब्राह्मणादिवर्णानां ब्रह्मचर्याद्याश्रमाणां च औपकारिकः उपकारफलः। कस्मात्, स्वधर्मस्थापनात् स्वधर्मेषु स्थापनात्, स्वधर्मानुपदिश्य तेषु नियन्त्रणाद्, अर्थाद् वर्णाश्रमाणाम्।

## वैदिकसिद्धान्तसंरक्षिणी

त्रय्या उपयोगमाह एष इति। एषः बुद्धिस्थः अग्रेवक्ष्यमाणः। एतत्पदार्थं व्याचष्टे त्रयोधर्म इति। त्रयीप्रोक्तः। अयं भावः, त्रयीं ज्ञात्वा तदन्तर्गतविधिप्रतिपाद्यशाब्दीभावनया इष्टसाधनतामनुमाय प्रवृत्तौ सत्यां तद्विषयोऽर्थो धर्मो भवति अतएव चोदनालक्षणार्थो धर्म इति धर्मलक्षणं जैमिनिना कृतम्।' तदेवं अनुष्ठेयोर्थः त्रय्या विहितश्चेत् त्रयीधर्मः अन्यथा स न इति विग्रहेण द्योत्यते। अत्रेदमनुसन्धेयम्। यः कोऽपि जग-

---

नी० टी० १. औपकारिकइति इत्युपकारदर्शनम्।

## वैदिकसिद्धान्तसंरक्षिणी

तीतले भवतु स यदि स्ववंशपरंपराप्राप्तं धर्ममनुतिष्ठति तर्हि तेन तेनानुष्ठितः सर्वो धर्मः त्रयीधर्मं' इति वक्तुं शक्यते। यतः त्रयी सर्वस्यापि कृते स्वपरंपराप्राप्तं धर्मं अनुमनुते। नह्यत्र अपरेणापरस्य धर्मोऽनुष्ठातव्य इति वेदस्य समीहाऽस्ति। यथा ब्राह्मणेन स्वधर्म एव परिपालनीय इत्यादि। एवञ्च यथा वर्णाश्रमाचारधर्मो वर्णाश्रमिणां कृते विहितः तथा "म्लेच्छानां कल्पिता धर्माः" इत्युक्तत्वात् तैः अनुष्ठितःकिल्पितोपि स तेषां कृते त्रयीधर्म एव। न च तर्हि म्लेच्छानां वेदबाह्यत्वं कथमुच्यते इति वाच्यम्। वेदप्रामाण्यास्वीकारे तेषु तथोक्तत्वात्। तथाच केवलं म्लेच्छैर्यदि "वेदानुयायित्वं स्वीकृत्य तथा वर्तामहे', इति बुध्या प्रवर्त्येत धर्मबुद्धया, तर्हि स एव धर्मः वैदिको धर्मस्तेषांकृते भवितुमर्हति। नेदृशी अन्येषु धर्मेषु व्यवस्था अस्ति। अतएव श्रुत्या "धर्मो विश्वस्य जगतः प्रतिष्ठा" इत्युक्तम्—नह्यत्र कश्चित् कमपि स्वस्वकर्मणि स्थितं ततः अन्यत्र बलात् प्रेरयितुं प्रवर्तते एवं स्थिते सर्वेषां वेदानुययिनां विभिन्नाचाराणां भ्रातृभावो नासुलभः। अत इदं सिद्धं यत् आत्मनि वेदानुयायित्वस्य वेदप्रोक्तत्वस्य च तथा स्वीये

## जयमङ्गलाक्राडपत्रम्

ननु श्रुतेर्धर्मनिर्णायकत्वं केन न्यायेनेतिचेदुच्यते। यदा हि 'किं कर्म किमकर्मेति कवयोप्यत्र मोहिताः' इति न्यायेन प्रतिव्यक्तिभेदेन बुद्धिवैलक्षण्यात् केन किं कर्तव्यमिति निर्णयः न भवति, (तदिदं अमेरिकनदेशीयस्थप्याटमहोदयस्य लेखानुवादावसरे पृ० १९३-९४ प्रपञ्चितम्।) तदा मोह-निरासाय कलह-निराकरणाय कर्तव्यनिर्धारणाय च सर्वैर्मिलित्वा कश्चन मतिमान् निर्दुष्टः कर्तव्यनिर्णायकत्वेन निर्णेतव्यो भवति। तत्कार्यं निर्दुष्टया अपौरुषेय्या तात्पर्यवत्या श्रुत्या क्रियते। यथाहि सांप्रतं विधानपरिषदि विधिनिर्माणावसरे परिषत्सदस्यानां मतानि यदा समानतया संभवन्ति। तदा विधिनिर्माणमशक्यं भवति। अतः तत्परिषदः सभापतिः स्वीयमताधिक्यात्मकेनस्वीयमतद्वयेन बहुमतं यत्र कर्मणि प्रकाशयति तदेव विधिरूपेण सर्वैः संमन्यते। तथैव धर्मस्य निर्णयविषयेऽपि श्रुति-प्रतिपादिततत्वस्याशयः अनुमन्तव्यः। किञ्च श्रुतिप्रोक्तानां कर्मणाम् अनुष्ठाने अपरमिदमपि फलमस्ति यत् आस्तिक्यस्थापनापुरःसर सत्वोद्रेक–मूलिकायाः प्रतिभायाः अभ्युदयः, श्रुतिप्रामाण्यविश्वासात् कर्तव्यनिष्ठायान्दार्ढ्यम्, तत्प्रयुक्ता विश्वास्यता च इति।

अत एव मानसरामायणे—श्रुतिः परतीरगमनाय महती नौका अस्तीति उक्तमुपपन्नं भवति। तदुक्तं- तत्र मङ्गलाचरणप्रसङ्गे—

'बन्दौ चारिउ वेद भववारिधि बोहित सरिसु।
जिन्हहि न सपनेहु खेद बरनत, रघुवर विसदु जसु॥

यदि चात्र धर्मनिर्णये श्रुतिः नापेक्ष्यते, आत्मतुष्ट्यैव धर्मः कर्तव्यत्वेन निर्णेष्यते इति उच्यते– तर्हि धर्मनिर्णये कस्यात्मतुष्टिः प्रमाणत्वेन स्वी-

### जयमङ्गला

**स्वधर्मस्थापनादिति।** स्वग्रहणमसाधारणधर्मख्यापनार्थम्। तस्य व्यवस्थापनाद् औपकारिकः उपकाराय प्रभवति ॥

### वैदिकसिद्धान्तसंरक्षिणी

धर्मे अस्वीकृते तत्र त्रयीधर्मत्वं न भवति इति। अत्रेदमुदाहरणम् धरातले या कापि भाषा भवतु तस्यां पाणिनीयव्याकरणसंस्काराभिव्यङ्ग्यत्वं यदा भवति तदा तत्र संस्कृत-भाषात्वं नानुपपन्नं तदव्यङ्ग्यत्वेतु संस्कृतभाषापि अपभ्रष्टैव भवति। "यथा यावत्तैलं तावद्व्याख्यानः" इत्येवं वाक्यं अस्ति। "अत्र व्याख्या नः" इति पदविभागस्याज्ञातत्वे

### जयमङ्गलाक्रोडपत्रम्

कर्तव्या। इत्ययं महान् प्रश्नः जागरिष्यत्येव। परस्परं विरोधश्च उत्पद्येत इति धर्मनिर्णयो न स्यात्। दृष्टञ्चैतत् भाषान्दोलनप्रस्तावेन। तथाहि—तत्तद्देशीयभाषायां राष्ट्रियभाषात्वस्वीकारे इतरप्रान्तस्थाः अतीव क्रोधकलुषितान्तःकरणाः भवन्ति। संस्कृत- भाषायाः राष्ट्रभाषास्थाने स्वीकर्तव्ये न कश्चित् दोषः। तथैव प्रकृतेऽपि बोध्यम्।

स्थापनादिति। असाधारणधर्मख्यापनं त्रय्याः असाधारणं प्रयोजनम्। सत्याहिंसादि-साधारणधर्मस्य वेदानधिकारिभिः तदधिकारिभिर्वा लोकतः अनुष्ठेयत्वेन ज्ञातत्वात्।

### असाधारणंधर्मप्रयोजनम्

ननु असाधारणधर्मस्य व्यवस्थापनमन्तरापि अनुष्ठितेन साधारणधर्मेण समाजे सुव्यवस्था भवितुं कुतो नार्हति ? इति चेदुच्यते। वैदिकसमाजे स्वस्वधर्मव्यवस्थापनेन सह स्वस्वजीविकोपायस्यापि त्रय्या नियमनं कृतं वर्तते। नहीदं नियमनम् अन्यसमाजे उपलभ्यते। अतः एकार्थाभिनिवेशित्वलक्षणस्य अरित्वस्य वैदिकादन्यस्मिन् समाजे प्रायशः निश्चितत्वमेव। अतः स समाजः सत्यादिसाधारणधर्मं पालयितुं वाञ्छन्नपि न समर्थो भवति। एतस्मादेव कारणात् वैदिकादन्यस्मिन् समाजे वृत्तिसाङ्कर्यं जाति-साङ्कर्यं वा रोद्धुं अद्ययावन्न कोऽपि समर्थो बभूव। कस्य कुलीनत्वं सङ्कररहितं परंपरायातमस्ति इति केन निर्णेतुं शक्यते। वैदिकसमाजेषु नाऽयं निर्णयः दुरधिगमः। अत्र वृत्तिनियमनव्यवस्थाया आश्रमव्यवस्थायाश्च त्रयीमाधारीकृत्य धर्म्यत्वेन अद्यापि परिपालनदर्शनात्।

यद्यपि अस्मिन् समाजे साङ्कर्यं कुत्रापि नाभूत् इति न वक्तव्यम् रागान्धत्वप्रयुक्तस्य अत्रापि दर्शनात्। तथापि अद्यावधि तथाविधान्यपि कुलानि अस्मिन् समाजे वर्तन्ते येषु साङ्कर्यदोषाभावस्य निर्णयेन वक्तुं शक्यत्वात्। तद् वक्ष्यते मूलकृता अध्यायान्ते-"तस्मात् स्वधर्मं भूतानामि'त्यादि आरभ्य 'व्यवस्थितार्यमर्यादः' इत्यन्तम्।

## वैदिकसिद्धान्तसंरक्षिणी

तद्वाक्यं असाधु भवति, उक्तपदविभागस्य ज्ञातत्वे तु तदेव वाक्यं साधु भवति। यच्च "काट रेट" इत्याद्याङ्ग्लभाषायां प्रयुज्ते तच्च व्याकरणसंस्कारानभिवाङ्ग्यत्वात् असाधु भवति। परं एकाक्षरीकोशेन एकदेशे नामग्रहणं इत्यादिन्यायेन उणादिना वा आङ्ग्ल-भाषया भाषिते प्रयोगे कथञ्चिदपि व्याकरणसम्मता व्युत्पत्तिः प्रदर्श्येत तर्हि तस्य-प्रयोगस्य तथैव साधुशब्दत्वात् यज्ञादावुच्चारणे न काऽपि क्षतिः। एवं व्याकरण-संस्काराभिव्यङ्ग्यत्वं आङ्ग्लशब्दान्तर्गतेषु सार्धषष्टिशतसङ्ख्याकशब्देषु व्युत्पत्ति-विवेचिताऽन्यत्र। तद्वत् त्रयीधर्मोऽपि सर्वस्य धर्मस्य सङ्ग्राहकः बोध्यः। किञ्च धर्मस्य त्रयीप्रोक्तत्वेन ज्ञातस्य स्वीकृतस्य अपरोप्ययं विशेषः यत् अनुष्ठाने त्रय्या विहितत्व-हेतोः इष्टसाधनत्वमनुमाय यदि सुकृतं भवति तर्हि तत्तद्धर्माय भवति अन्यथा अर्थार्थिम् कामार्थं वा इति भक्तिरसायने उक्तम्।

तद्यथा—

> दृष्टादृष्टफला भक्तिस्सुखव्यक्तैर्विधैरपि।
> निदाघदूनदेहस्य गङ्गास्नानक्रिया यथा॥ इति।

## जयमङ्गलाक्रोडपत्रम्

तस्मात् स्वविशुद्धिपूर्वकस्य साधारणधर्मस्य परिपालनोपयोगिनः असाधारण-धर्मस्य व्यवस्थापनं त्रय्याः प्रयोजनं सिद्धम्।

**उपकाराय प्रभवतीति।** अयं महानुपकारः त्रय्या क्रियते, यत् वैदिके समाजे समाजव्यवस्थोपयोगितया अपेक्षितानां गुणानां जन्मत एव आधानाय कुलशुद्धिः तया व्यवस्थाप्यते। अस्याः माहात्म्यं टीकाकृता राजपुत्ररक्षणे स्पुटीकृतमस्ति। तदुक्तम्—

> 'आहारेष्वथ योनौ च बीजे कर्मणि चापि यः।
> शुचिः कृच्छ्रगतस्यापि न पापे रमतेऽस्य धीः॥' इति

(कौ० ज० म० राजपुत्ररक्षण प्रकरणे)

### त्रयीधर्मे उपकारकत्वस्य प्रत्यक्षतया प्रत्यभिज्ञायमानत्वम्।

ननु उपर्युक्तं त्रयीधर्मस्योपकारकत्वं शब्दप्रमाणेन निर्णीतमपि नीतिलक्षणा-नुसारेण प्रत्यक्षतया तत् प्रत्यभिज्ञायमानं कथं भवेत्? इति चेत् उच्यते—इदं तु सत्यमेव यत् कस्यापि वस्तुनः अप्रत्यभिज्ञातत्वे तद्विषयिणी तत्तद्वस्तुतत्वप्रतिपादि-कया विधया कृतापि व्युत्पत्तिः व्यर्थतामापन्ना भवति। प्रसङ्गेषु अशक्तिमतः पुरुषस्य चेतसि व्युत्पत्तेः अविस्फुरणात् इति प्रथमेऽध्याये चिन्तितमस्ति। अतः प्रत्येकस्य वस्तुनः वास्तविकस्याखण्डोपाधिस्वरूपस्य "तदेवेद"मितिरूपेण यदा परिचयो भवति तदा शक्तिरूपतामापन्नं तद् वस्तु सदा स्फुरतीति। तन्न्यायेन त्रयी-प्रोक्तेन धर्मेण कृतमुपकारित्वमवश्यं प्रत्यभिज्ञया विचारणीयम्। ततः पूर्वं प्रत्य-भिज्ञायाः किं स्वरूपमिति यावन्न विमृश्यते, तावत् धर्मेण कृतमुपकारित्वं प्रत्यक्षतया प्रत्यभिज्ञायमानं न भवेत्। अतः प्रत्यभिज्ञायाः स्वरूपं विमर्शनीयम्।

## वैदिकसिद्धान्तसंरक्षिणी

इत्येतत् एष त्रयीधर्मं इत्युक्त्या मुलकृता स्फुटीकृतम्। अस्पौपकारिक इत्यनेनान्वयः। त्रयीधर्मस्य फलमाह-**चतुर्णामिति**। इदं पदं वर्णानामाश्रमाणां चेत्युभाभ्यां संबध्यते। वर्णानां ब्राह्मणक्षत्रियविट्शूद्राणाम्। आश्रमाणां ब्रह्मचारिगृहस्थवानप्रस्थसन्यासिनाम्। **स्वधर्मेति**। असाधारणधर्मं इत्वर्थः। तस्य स्थापनात् तेषां तेषां कृते अदृष्टांशे दृष्टांशे च धर्मेण त्रय्या धर्मजीविकयोर्नियमितत्वात्। **औपकारिकः**—एकार्थाभिनिवेशित्वस्य समुद्धतत्वस्य च बह्वंशेनापसारकत्वात् शान्तिप्रतिष्ठापकः।

अयं भावः। त्रयीप्रोक्तधर्मादितरत्र त्रय्यामिव दयाऽहिंसादिसाधारणानि कर्तव्यान्युपदिश्यन्ते यद्यपि, तथापि तत्रासाधारणानि कर्तव्यानि नोपदिश्यन्ते अतः तत्र विवाह-नियमबन्धनाभावात् तत्समाजे स्त्रीणां दीर्घकालं सुरक्षास्थिति नं सम्भाव्यते तेन साङ्कर्यन्दुर्निवारं भवति। किञ्च तत्र यः कोपि जीविकार्थं कीदृशमपि यस्य कस्यापि कर्म करोतु तत्र प्रतिबन्धो नास्ति। अतः एकार्थाभिनिवेशित्वरूपमरित्वं बह्वंशेन दुरपनेयम्। एवं तत्र स्वे स्वे कर्मणि कुशलतालाभायापेक्षितानां संस्काराणां परंपरया उद्बोधचिन्ताया अभावेन कुलीनत्वादि उपेक्षितं वर्तते, अत्र तु न तथा। अतः एकार्थाभिनिवेशस्याभावाय नियमनं सदाचरणादिस्वरूपकार्यविधानं पुरुषसंबन्धविरहितया त्रय्या संपादितं फलाय भवति। पुरुषसम्बन्धे सति पक्षपातसम्भावनायाः सदा जागरूकत्वं दुरपनेयम्। ननु त्रय्या स्थापितधर्मविषये दृष्टफलानि शास्त्राणि, पाश्चात्यशास्त्रचिन्तकानां वाक्यानि च संवदेयुर्यदि, तर्हि अस्योपयोगित्वं असन्दिग्धं

## जयमङ्गलाक्रोडपत्रम्

### प्रत्यभिज्ञास्वरूपं

तच्च जीवस्य स्वरूपविमर्शे सति संभवतीति आदौ तत्स्वरूपं साहित्यशास्त्रानुसारेण उपवर्ण्यते। तथाहि भावप्रकाशने जीवविमर्शः चतुस्त्रिंशद्च्छ्लोकैः नादवर्णनप्रसङ्गे कृतः। तत्र आद्यः श्लोकः।

> इह तत्वानि षट्त्रिंशत् शिवः शक्तिः सदाशिवः।
> ईश्वरः शुद्धविद्येति शुद्धान्येतानि पञ्च च॥ इति।

### "षड्त्रिंशद्तत्वनिरूपणम्"।

इदं हि प्रत्यभिज्ञातन्त्रं साङ्ख्यरहस्यबोधानन्तरं ज्ञातव्यं भवति। अतएव साङ्ख्येन सह अस्य विरोधे एतत्सिद्धान्त एव सिद्धान्तत्वेन स्वीकर्तव्यः इति शास्त्रमर्यादा। तद्यथा—साङ्ख्यशास्त्रे पञ्चविंशतितत्वानि अभिहितानि वर्तन्ते। अत्र तु तदुपदिष्टादपि एकादशतत्वानि अधिकानि सन्ति आहत्य प्रत्यभिज्ञासिद्धान्ते शुद्धविद्यास्वरूपबोधनाय षड्त्रिंशत्तत्वानि उक्तानि।

## वैदिकसिद्धान्तसंरक्षिणी

स्वीकर्तुमर्हं स्यात्। तत्तु नास्ति। इतिचेदत्रोच्यते। एतद्विषये कामसूत्रायुर्वेद पाश्चात्यविदुषां वचनानि संवदन्ति इति ब्रूमः। तेषु कामसूत्रे धर्मविषये वात्स्यायनेनैवमुक्तम् अस्ति—

"शास्त्रस्यानभिशङ्क्यत्वात्, अभिचारानुव्याहारयोश्च क्वचित्फलदर्शनात्, वर्णाश्रमाचारस्थितिलक्षणत्वाच्च लोकयात्रयाः, हस्तगतस्य बीजस्य भविष्यत्सस्यार्थे-त्यागदर्शनाच्चरेद्धर्मानिति वात्स्यायनः" इति।

उपर्युक्तसूत्रे धर्मस्य यानि फलानि उक्तानि तानि सर्वाणि दृष्टानि। अतः त्रयो-स्थापितधर्मस्य दृष्टफलं विषये कामसूत्रं संवादि इति निश्चितम्। तेष् फलेषु वर्तमान-समये वर्णाश्रममधिकृत्य सर्वैः शङ्कितत्वात्-वार्णाश्रमाचारस्थितेः लोकयात्रोपयोगित्वं अस्ति न वेति विशेषतो विमृश्यते।

लोकयात्रां प्रति धर्मे बाधकत्वं संमन्य अर्थस्यैव साधनत्वं जानन्ति तद्विदः। अतोऽर्थं पुरुषार्थं मन्वानाः प्रयत्नपुरस्सरं अधिकादधिकं तमेव अर्जयितुं प्रयतन्ते। तेन मनोरथस्य पूर्तिः सन्तोषवैदग्ध्यं च भविष्यतीति निर्णयन्ति। परन्तु अद्य यावत् इतिहासे एकोपि तथाविधो नोपलभ्यते येन हि धर्ममुपेक्ष्य अर्थमर्जयता मनोरथपूर्तिसन्तोषवैदग्ध्यानि लब्धानिस्युः। तदुक्तम्—

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
न दुह्यन्ति मनःप्रीतिं पुंसः कामहतस्य ते॥ इति।

## जयमङ्गलाक्रोडपत्रम्

तत्र शिवः ज्ञानस्वरूपः, शक्तिश्च ज्ञानचिकीर्षाकृतिमत्वरूपं कर्तृत्वमिति शिवशक्त्योः स्वरूपं बोध्यम्। अनयोः प्रत्यभिज्ञा सर्वसाधारणेषु मनुष्येषु कथमुपपन्ना भवतीति चेत् 'घटमहं जानामी'ति प्रयोगेण उपपद्यते।
तदुक्तम्—नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं।

ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिस्स्पन्दते।
जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये॥ (द० स्तो ४) इति।

जानामीति प्रयोगे पदद्वयं प्रकृतिप्रत्ययभेदेन वर्तते। तत्र धात्वर्थः प्रकृत्यर्थः ज्ञानम्। स एव शिवः। मिप्प्रत्ययार्थः कर्तृत्वम्। तदेव शक्तितत्वम्। एतदुभयमपि शुद्धतत्वमित्युच्यते। यद्यपि जीवः क्वचिदंशेन ज्ञानशक्तिसंपन्नोऽपि शिवशक्तिरूपता-आत्मनि ख्यापयितुमर्हति तथापि जीवे नास्ति शुद्धत्वम्, अनानन्दतापादकऽऽवरण-सहचरितस्या (परिमितप्रमातृत्व-बुद्धेः) आणवमलस्य (मम तव इत्यादिबुद्धेः) मायि-कमलस्य (पुण्यपापात्मकस्य) कार्मिकस्य मलस्य च सत्वात्।

## वैदिकसिद्धान्तसंरक्षिणी

प्रत्युत तेनेदं स्फुटं यत् धर्ममुपेक्ष्यार्थार्जिकैः यथा यथा अर्थ उपार्ज्यते तथा तथा तत्प्रयुक्तेन कामसुखेन इन्द्रियाणां तृप्तिरावश्यकी आसीत् परन्तु कामाङ्कुराणां बाहुल्येन कार्यं- पूर्णअभूत् इति बुद्धिर्न भवति। नापिच इन्द्रियाणां तृप्तिः। तदुक्तम्—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूयएवाभिवर्धते। इति

अतएव चाणक्येन धर्ममुपेक्ष्य जीवतां विरुद्धवृत्तित्वात् विनाशो भवति इत्युक्तम्। तृप्तिस्तु दूरंगता[1]—

एतदनुबन्धीतिहासोपि प्रदर्शितिः नीतिसारादौ, तत्रैव द्रष्टव्यः[2]।

## जयमङ्गलाक्रोडपत्रम्

षट्त्रिंशत्तत्वेषु उक्तं शिवशक्तितत्वन्तु परस्परं नैर्मल्यात् प्रकाशकत्वात् शुद्धमभिहितं प्राक्। अत्र अनानन्दतापादकम् आवरणं कदापि नास्ति। उपर्युक्तस्य जीवनिष्ठस्य त्रिविधस्य मलस्य षट्त्रिंशत् (३६) तत्वान्तर्गते शिवे शक्तौ च असत्वात्। एतस्मादेव कारणात् शिवः शक्तिश्च परस्परं यदा सङ्गच्छतः तदा वस्तुमात्रसम्बन्धिना असत्वापादकेन आवरणेन आवृते यथा न भवतः तथा अभानापाद- कावरणेनापि। इति कृत्वा तयोः सर्वं प्रत्यक्षं सिद्धयति। इदं शक्तितत्वं साङ्ख्यैरभि- हितायां प्रकृतौ न अन्तर्भावनीयम्। प्रकृतेः जडत्वेन शक्तेस्तु चेतनत्वेन स्वीकारात्।

यदा किल समरसतापन्नं शिवशक्तितत्वं भगवत्प्रसादेन गुरुप्रसादेन वा यस्य चेतसि उच्छलति तदा अयं उच्छलितचेतस्कः कविः क्रान्तदर्शीत्युच्यते। एतत्तत्वस्या- शीर्वादेन कविः यद् ब्रूयात् तदेव स्यात्। नात्र किमपि बाधकं भवितुमर्हति। तदेवो- क्तम् काव्यप्रकाशस्य मङ्गलपद्ये—

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति॥ इति

तथा एतदनुबन्धी इतिहासः प्रसिद्धः। तद्यथा—हनुमता पाषाणेलिखितस्य हनुमन्नाटकस्य समुद्रे प्रक्षिप्तस्य संशोधनावसरे—

---

१ तद्यथा—तद्विरुद्धवृत्तिरवश्येन्द्रियश्चातुरन्तोपि राजा सद्यो विनंक्ष्यति। इति।

२ दाण्डक्यो नृपतिः कामात्क्रोधाच्च जनमेजयः।
लोभादैलस्तु राजर्षिर्वातापिर्हर्षतोऽसुरः॥
पौलस्त्यो राक्षसो मानान्मदाद्दंभोद्भवो नृपः
प्रयाता निधनं ह्येते शत्रुषड्वर्गमाश्रिताः॥
इति। का० नीस०

## गौदिकसिद्धान्तसंरक्षिणी

किञ्च उपार्जितेप्यर्थे यदाअर्थार्थी आत्मनि अपरिपूर्णतां व्ययाधिक्यं चानुभवति तदा न्यायसीमानं अतिक्रम्यापि परस्मात् अर्थं स समीहते। परस्य पश्यतः अर्थंअपहर्तुं नशक्नोतीति परान् वञ्चयति इति स्वभावसिद्धम्। दृश्यते चेदं वर्तमानसमये पुत्रः, पितरं, पिता पुत्रं, स्वामी भृत्यम्, भृत्यः स्वामिनम्, अध्यापकः शिष्यम्, शिष्योऽध्यापकं च वञ्चयति। वर्णाश्रमाचारोपेक्षायां स्वार्थंसाधनतत्पराणामयं महान् वञ्चनात्मको दुर्नयः येन दुर्नयेन शङ्काहेतुना सर्वे धर्ममनपेक्ष्यार्थार्थिनः सर्वस्मात् शङ्कन्ते। तदुक्तम् अनर्थप्रतिभा शङ्का परक्रौर्यात् स्वदुर्नयात्। इति

ननु च शङ्काऽस्तु तेषु, कोवा दोषः ? इति चेदुच्यते। शङ्कायां जागरुकायां मैत्रीविनाशो नियत इति महान् दोषः। इति शङ्कास्वरूपञ्चिन्त्यते—[1]

## जयमङ्गलाक्रोडपत्रम्

"अयि खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां विपाकः" इति लिप्या बद्धः प्राप्तः प्रस्तरखण्डेष्वन्यतमः प्रस्तरः भोजराजसभायामुपस्थापितः। तदानीमेकेन कविना उक्तसमस्यापूर्तिः एवं कृता—

"क्व जनकतनया क्व रामजाया क्व च दशकन्धरमन्दिरे निवासः"।
अयिखलु.............................. ॥

परन्तु क्रान्तदर्शिना महाकविना कालिदासेन तु—

"शिवशिरसि शिरांसि यानि रेजुः शिव शिव तानि लुठन्ति गृध्रपादैः" ॥ इति पूर्वार्धपूर्तिः कृता। ततः पुनः संशोध्यमाने अपरस्मिन् प्रस्तरखण्डे श्री हनूमतः कालिदासोक्तपद्यमुपलब्धमिति। तदेतद् शिवशक्त्योः स्वरूपं स्फुटीकृतम् भवति। राज्ञाऽपि गुरुप्रसाद ईशप्रसादश्च सम्पादितश्वेत् तर्हि समेषां विश्वासाधायकं शक्तिप्रभावितं कर्मं प्रजानुरागक्षमं भवति। एवं स्थिते नृपः राजा इत्यभिधीयते। तदुक्तं 'राजा प्रकृतिरञ्जनात्' इति। जयमङ्गलाकृताऽपि पूर्वमत्र चोपवर्णितायाः शक्तेः महत्वमाकलय्य नीतिलक्षणे शक्तितत्वं समावेशितम्। तदुक्तम्—

'प्रत्यक्षानुमानागमप्रमाणदेशकालशक्तिपुरास्सरं अर्थसाधनविनियोगलक्षणा-

---

१ तदुक्तं गोकुलनाथोपाध्यायैः—
अनर्थप्रतिभा शङ्केति—घनिकः—
अनिष्टाभ्यागमोत्प्रेक्षां शङ्कामाचक्षते बुधाः। इति महाराजः।
नीचेष्वनर्थसन्देहरूपा शङ्का तदा भवेत् इति शाङ्गंदेवः।
तेन द्वेषविषयस्य वस्तुनो विद्यमानोत्कटकोटिकः सन्देहः शङ्का इति पर्यवस्यति।

## वैदिकसिद्धान्तसंरक्षिणी

शङ्का—किमनिष्टं मम भविष्यतीत्याकारश्चितवृत्ति विशेषः इति वर्णितम् रसगङ्गाधरे। एवञ्च यत्र शङ्का वर्तते तत्र मैत्री न भवितुमर्हति इति अर्थादायातम्।

मैत्र्यां अनर्थशङ्काया अप्रसक्तिः। यदि मैत्री अभिलष्यते तर्हि शङ्कानिरासोपेक्षितः तदर्थं धर्मस्य शासनं अपेक्षितं भाति तत्रार्थस्य मर्यादितत्वं भवति। यावत्पर्यन्तं वर्णाश्रमाचारस्थितिरासीत् तावत्पर्यन्तं वञ्चकत्वप्रसक्त्यभावेन मैत्री अप्रतिहताबभूव। नेदमनैतिहासिकं वक्तुं शक्यते। भारतीयेषु परस्परं शङ्कावसरो नाभूत् इति इतिहासतः पुराणेषु वर्णितत्वात्। यदाप्रभृति च धर्मस्तिरस्कृतः तदा प्रभृति अर्थतत्परता समुद्भूता ततः प्रागुक्तरीत्या वञ्चनादिशङ्काकारणमपि प्रसक्तम् अतः भारते भेदनः संवृत्तं, तत्स्वरूपस्य तथाभिधानात्। "शङ्काजननं निर्भर्त्सनं च भेद"। इति।

अमुं भेदमुत्पाद्य दृष्ट्वा वा शत्रुः पराक्रमस्यावसरं लब्ध्वा मतं स्वीयं भारते प्रचारयितुं सफलोऽभूत्।

तेनेदं सिद्धं भवति यत् वर्णाश्रमाचारमर्यादायां दुर्नयस्य परिहारः शास्त्रेण धर्मं पुरस्कृत्य साधितः। धर्मप्राधान्ये अर्थरुचिः ह्रसमाना भवति। तद्ध्रासेन वञ्चनायाः प्रसङ्गो नास्ति। पारस्परिकशङ्कानां पराहतिश्च।

तदेतत् अभिसन्धाय 'वर्णाश्रमाचारस्थितिलक्षणत्वाच्च लोकयात्रायाः' इत्युक्तं कामसूत्रे। इति।

## जयमङ्गलाक्रोडपत्रम्

क्रिया नीतिः' इति ( ज० मं० अर्थशास्त्र, पृ० ५ ) एवं रीत्या षट्त्रिंशत्तत्वेषु शिवशक्त्योः स्वरूपमभिहितम्।

अथ सदाशिव-ईश्वर शुद्धविद्यातत्वानि षड्त्रिंशत् तत्वान्तर्गतानि निरूप्यन्ते। तत्र **सदाशिवः**—'अहंविशेष्यिका तादात्म्यसम्बन्धेन जगत्प्रकारिका अहं जगदित्याकारिका धीः उच्यते।' **ईश्वरः** 'जगद्:—विशेष्यिका तादात्म्येन अहंप्रकारिका "जगदिदमहम्' इत्याकारिका धीः उच्यते। शुद्धविद्या भेदधीतिरोधानमित्युच्यते। इमानि त्रीणि तत्वानि शिवशक्त्युभयापेक्षया विलक्षणानि भवन्ति। तदन्तर्गतं वैलक्षण्यंच अनान्दतापादकावरणस्य शिवशक्त्योः असत्वात्। एतेषु पञ्चसु साधारणो धर्मः असत्वापादकस्याभानापादकस्य चाभावः एवंरीत्या इमानि त्रीणि तत्वानि शिवशक्त्युभयापेक्षया न्यूनानि, केनचिदंशेन समानानि। भेदधीतिरोधानदृष्टया तु शिवशक्तिभ्यां सह शुद्धानि भवन्ति इत्यभिप्रेत्य षड्शित्सु तत्वेषु शिव-शक्ति-सदाशिवेश्वर-शुद्धविद्याः इति पञ्च शुद्धानि तत्वानि परिगण्यन्ते।

अथ शुद्धाशुद्धानि तत्वान्याह—

माया कालोऽथनियतिः कला विद्या ततः परम्।
रागः पुरुष एतानि शुद्धाशुद्धानि सप्त वै॥ भा० प्र०

## वैदिकसिद्धान्तसंरक्षिणी

धर्माभावे अपस्मारः कुष्टाद्युत्पत्तिश्च भवति इति साहित्ये आयुर्वेदे चोक्तत्वात्[1] देतद्विषये साहित्यायुर्वेदोभयसंवादित्वं अपि सिद्धम् ।

## जयमङ्गलाक्रोडपत्रम्

**माया**—भेदबुद्धिः, तस्या स्वरूपम् अहं त्वं चेत्याद्याकारकं भवति । यदा हि जीवस्य एतादशी बुद्धिः भवति तदाऽहन्ताप्रमाया आत्मनि इतरापेक्षया सङ्कुच्य परिच्छिन्नता अनुभूयते । सैव परिमितप्रमातृतापदेन व्यपदिश्यते । इदमेव जीवस्य मायिकं मलमाणवमित्युच्यते । यदा हि जीवः परिमितप्रमातृताभावमापन्नः म्रियते मलेन तदा अयं बाल्यतारुण्यवार्धक्याद्यवस्था अनुभवन् तिष्ठमानः शिवशक्त्युभयावस्थायामुपवर्णितादानन्दात् वञ्चितो भवति । एतस्मादेव च कारणात् आत्मनि शक्तितत्वं सदपि तिरोहितं भवति । एतेन कालतत्वमपि व्याख्यातम् ।

यदा किल मायाकालयोः आवरणं जीवेषु संपन्नम् तदा जीवः नियतिपरतन्त्रो भवति । नियतिश्च नैयायिकादिसिद्धा अदृष्टरूपा कार्यकारणभावस्वरूपा वा

---

१. तत्र सुश्रुतः—

मिथ्यातियोगेन्द्रियार्थकर्मणामभिसेवनात् ।
विरुद्धमलिनाहारविहारकुपितैर्मलैः ॥
वेगनिग्रहशीलानां अहिताशुचिभोजिनाम् ।
रजस्तमोभिभूतानां गच्छतां च रजस्वलाम् ॥
तथा कामभयोद्वेगक्रोध शोकादिभिर्नृणाम् ।
चेतस्यभिहिते पुंसामपस्मारोभिजायते ॥
हृत्कंपः शून्यता स्वेदो ध्यानं मूर्छा प्रमूढता ।
निद्रानाशश्च तस्मिंस्तु भविष्यन्त्यथ भवन्ति च ।
इति । -सु० उत्तर अपस्मारनिदानं ६१।४-

तथा—ब्रह्मस्त्री सज्जनवध परस्वहरणादिभिः ।
कर्मभिः पापरोगस्य प्राहुः कुष्ठस्य संभवम् ॥
इति । —निदान कुष्टनिदाने ६।३०—

माधवनिदाने च—

विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम्
उन्मादहेतुर्भयहर्षपूर्वो मनोभिघातो विषमाश्च चेष्टाः ।
इति —उन्मादनिदान ४

भावप्रकाशनेऽपि—

अपस्मारो महाभूत पिशाचग्रहणादिभिः
कालातिक्रमणाद्धातुवैषम्यादशुचित्वतः ॥ इति ।—भा० अ० १—

## जयमङ्गलाक्रोडपत्रम्

व्यपदिश्यते। जीवः इमां कार्यकारणभावरूपां नियतिमालोच्यालोच्य तदनुसारेण कार्य कुर्वन् यदा प्रवर्तते तदेव वर्तनं जीवस्य नियतिपारतन्त्र्यमित्युच्यते। इत्येवंरीत्या शुद्धाशुद्धविद्यायां मायाकालनियतितत्वानि व्याख्यातानि। अथ तदन्तर्गतानि अपराणि तत्वान्युच्यन्ते। तथाहि—अतिविज्ञानबहुलेवु अनेकेषु कार्यकारणभावेषु प्रसृतेषु परिगणितान् कार्यंकारणभावान् महता क्लेशेनालोच्य समालोचितकार्यमात्रकर्तृत्वम् जीवेन क्वचित्स्थलेषु संपाद्यते। तदेव च जीवनिष्ठं कर्तृत्वं 'कलापदेन' व्यपदिश्यते। अनया सह शुद्धाशुद्धविद्यान्तर्गतं पंचममविद्यातत्वमपि जीवस्याच्छादकं भवति। एतदवस्थायां शुद्धविद्यापेक्षया अयं विशेषः यदत्र अभानापादकमावरणं न निवर्तते। अत एव मायायां स्थितः पुरुषः 'सर्वं पश्यामीति व्यवहर्तुं न शक्नोति अपि तु शुद्धाशुद्धत्मायादितत्वस्थितेन पुरुषेण कार्मणमलाभावात् 'सर्वमस्ती'ति ज्ञातुं शक्यते अतः तस्य असत्वापादकावरणं नास्ति। इयं या अवस्था, सा अविद्यापदेनोपदिश्यते इदमविद्यातत्वं जोवभावमापन्नस्येश्वरस्य। मायाकालनियतिकलाऽविद्यास्तु पंचमं-कंचुकं व्यपदिश्यते शास्त्रेषु।

अधुना किल अविद्यायां वर्तमानः जीवः कालपरिच्छिन्नः आणवमायिकमलाभ्यामावृतः नियतिपरतन्त्रः क्वचित् स्थलेषु आत्मनः कर्तृत्वं प्रकाशयन् केषुचिदेव धिषयेषु तत्तद्शरीरवशाद्वा वासनावशाद्वा अनुरज्यते यथा उष्ट्रस्य निम्बभक्षणे, मार्जारस्यायमूषकमक्षणें, मृगस्य गानेत्यादि। तदा तत्तद्सुखवासनावासितान्तःकरणोऽयं तत्र तत्र अनुरक्तः इति व्यपदिश्यते। सेयं जीवस्यावस्था रागपदेनाभिधीयते अत्र शास्त्रे। एवंरीत्या मायाकालनियतिकलाअविद्यारागपदव्यपदेश्यैः षडत्रिंशत्तत्वान्तर्गतैः षड्तत्वैः कञ्चुकितः परिच्छिन्नो वा शिव एव पुरुषशब्देन जीव शब्देन वा व्यवह्रियते। एतेषु सप्तसु तत्वेषु आणविकं मायिकं उपर्युक्तं मलमस्तीति अणुत्वं भवति तथापि कार्मणस्य मलस्याभावेन असत्वापादकावरणनिवृत्या तदेशे शुद्धत्वमप्यस्ति इति कृत्वा इमानि सप्ततत्वानि मायामारभ्य पुरुषान्तानि शुद्धाशद्धानि इति व्यपदिश्य। एतेन शुद्धत्वमशद्धत्वंच परस्परविरोधि कथमुच्यते इति शङ्का परास्ता। शुद्धाशुद्धपदस्य शुद्धत्वतदभावरूपर्थतात्पर्यकत्वाभावात्।

एतावत्पर्यन्तं षड्त्रिंशंत्तत्वान्तर्गतानि शिवमारभ्य पुरुषान्तानि द्वादश तत्वानि निरूपितानि। अथावशिष्टानामशुद्धपदव्यपदेश्यानां पञ्चविंशतितत्वानां निर्देशमाह—तत इति।

"ततः प्रकृतिरेतस्याः प्रकृतेस्तु गुणत्रयम्।
गुणत्रयेऽपि भिद्यन्ते रूपनामक्रियाः सदा॥" इति

अत्र प्रकृतिपदेन उक्ताणवादिमलत्रयविशिष्टानां सत्वरजस्तमसां दोषाणां साम्यावस्था बोध्यते। सर्वं प्रकृतिः ईशसमवेता सती। ज्ञानक्रियामायाभेदेन व्यप-

दिश्यते। जीवसमवेता सती तु सत्वरजस्तमोभेदेन व्यपदिश्यते। अर्थात् ईशसमवेतं ज्ञानं जीवे यदा प्रभातं भवति तदा सत्वं भवति। एवमेव क्रिया रजः, माया च तमः इति बोध्यम्। तदुक्तम्।

"स्वाङ्गरूपेषु भावेषु पत्युर्ज्ञानं क्रिया च या।
माया तृतीये ते एव पशोः सत्वं रजस्तमः॥"

इति प्रत्यभिज्ञादर्शनम्।

एतत्छ्लोकार्थः पूर्वं विस्तरेण प्रपञ्चितत्वात् न विस्तार्यते। अस्यां सत्वरजस्तमस्साम्यावस्थायां प्रकृतौ त्रितयविधाणवादिमलसत्वात् जाड्यमस्तीति अस्याः जड़त्वसंज्ञा साङ्ख्यैः प्रदत्ता। अस्याऽयं भावः-यत् आनन्दपरिपूर्णः शिवः शक्तिसंपन्नोऽपि जडरूपतां गतः इति। ततः विषमभावतया गुणात्रयस्योत्पत्तिः ते च सत्वरजस्तमपदेन व्यवह्रियन्ते। अत्रदं बोध्यम्। ईश्वरनिष्ठा इच्छेव ज्ञानरूपतां क्रियारूपतां वा भजमाना गुणत्रयपदभागिनी भवति। यद्यपि च नैयायिकादयः ज्ञानत्वेइच्छात्वकृतित्वानां सामानाधिकरण्यं न स्वीकुर्वन्ति, तथापि आत्मैष नामरूपक्रियाभेदेन जगत्रूपतां गतः इति सिद्धान्तात् ज्ञानत्वेच्छात्वकृतित्वानां सामानाधिकरण्यं स्वीक्रियते इति सर्वेषामात्मतादात्म्यमस्तोति वेदेनैव सिद्धम् नान्यथयितुं शक्यते। तदुक्तम्। "तदैक्षत, आत्मानं स्वयमकुरुत बहु स्यां प्रजायेय" इत्यादि। एतदनन्तरं विकृतिभावमापन्नैः गुणैः सत्वादिभिः रूपनामक्रियाः उत्पद्यन्ते। तत्र रूपत्वं सोमसूर्याग्नित्रितयत्वमिति बोध्यम्।

तदुक्तम् —

'बीजत्रयेण भिन्नं स्यात् सोमसूर्याग्निरूपिणा।

इति भा० प्र० ७ स०

नामत्वं च अकारउकारमकारेति मेदात् प्रणवत्वमिति बोध्यम्।

क्रियात्वन्तु रुद्रोपेन्द्रब्रह्माादिभेदेन तत्तद्देवतान्यतमत्वम्। ताभ्यः सृष्टयादिप्रवर्तना। एतत्सर्वं भावप्रकाशनस्थेन स रुद्रो' इत्यादि पद्येन व्याख्यास्यते। तथाहि-

'स रुद्रोप्रेन्द्रपदमोत्थगुणत्रयविभेदिना॥' इति-भा० प्र० ७

शेषाणि तु तत्त्वानि द्वाभ्यां त्रयाणां व्यवितः स्यात् इत्यादिपद्यैर्व्याख्यास्यन्ते। पृथिव्यादिपञ्चकसमष्टेः शरीरस्य आधारभूतत्वात् जीवस्य परिचयः आदौ कर्तव्यः। तं बोधयितुं पुरुषभेदमाह ईदृगिति।

ईदृग् विलक्षणां शक्तिं यदा सङ्क्रमते पुमान्।
प्राज्ञतैजसविश्वत्वभेदत्रयमथाऽन्वगात्॥

अस्यार्थः—अनानन्दतापादकावरणेन आवृतः शुद्धाशुद्धावस्थाभावमापन्नः मायाकालनियतिकलाअविद्यारागैः कञ्चुकितः पुमान् पुरुषः यदा शक्तिं प्रकृतिं तमो

## जयमङ्गलाक्रोडपत्रम्

रूपां सङ्क्रमते गृह्णाति । तदा सः पुरुषः जाग्रत्स्वप्नसुषुप्तिभेदेन विश्वतैजसप्राज्ञभेदेन च संज्ञां विधत्ते ।

अथैषां प्राज्ञादिनां स्वरूपम् अभिधास्यमानः प्राज्ञमाह प्रधानमिति ।

प्रधानमनयोर्व्याप्तं प्राज्ञ एकोऽन्यवस्तुनि ।

शिष्टस्त्वस्मिंस्त्वसंपूर्णः इत्थमेषां प्रवर्तनम् । भा० प्र० अ० ७

यदा किल जडात्मिका प्रकृतिः सुखरूपतया भानविषयो भवति पुरुषस्य । तदा सा प्रधानपदेन व्यपदिश्यते प्रकृतेः सुखरूपतया भानं च निद्रायामनुभूयते । तत्र हि निर्विकल्पकावृत्तिर्भवतीति सर्वानुभवसिद्धम । अतः निद्रासुखं प्रधानपदेन बोध्यम् । तत्प्रधानम् । अनयोः प्रकृतिपुरुषयोः व्याप्तम् । अथवा तत्सुखम् प्रधानयोः विश्वतैजसयोः व्याप्तमिति वाऽर्थो बोध्यः । अस्मिन् समये पुरुषे प्रमातृत्वस्य आत्मसंबन्धित्वात् अपूर्णत्वं न भासते । इति सः पुरुष इत्युच्यते । **शिष्टेति** शिष्टपदेन विश्वतेजसौ ग्राह्यौ । स्वप्नजाग्रदवस्थायां प्राप्तौ इति यावत् । तौ अस्मिन्-प्रधाने । **असंपूर्णः**—असंपूर्णत्वस्य कारणम् । तत्र अनयोः सुखभानाभाव इति ।

अथ तैजसस्य कार्याण्याह—

तैजसस्सप्तधा भिन्नः बुद्धिगर्वखवायुभिः ।

वन्ह्यम्भःक्षितिभिश्चैते कार्यकारणमूर्तयः । इति ।

अत्र बुद्धिगर्वौ निश्चयाहंकारपदाभिधेयौ अन्तःकरणे अन्तर्भावनीयौ । तदुक्तंन्यायरत्नावल्याम् 'तस्य च ज्ञानशक्तिप्रधानांशोऽन्तःकरणम् ।

तच्च बुद्धिर्मन इति द्विधोच्यते ।'

न्यायरत्नावल्याम् बुद्धेरप्यहमित्याकारकनिश्चय तदन्यनिश्चयरूपवृत्तिभेदेनाहंकारोअनहंकारश्चेति द्वैविध्यम् । तौ तथा आकाशवायुतेजोजलक्षितयः पञ्चमिलित्वा सप्त भवन्ति । एभिः तेजसः विभिद्यते कार्यकारणस्वरूपेण । तदुक्तं कार्येति । अथ तेषां समुदायात्मके पिण्डे तन्मयत्वेन आभासमानः पुरुषः बिश्वसंज्ञां लभतेइति भावः । तदाह—

'एतेषां समवायात्तु विश्व आसीच्चतन्मयः ।' इति भा० प्र० अ० ७

अत्र समवायपदेन स्वातन्त्र्यविरोधकः ऐक्यापादकः सम्बन्धविशेषो बोध्यः । तदुक्तं समवायनिरूपणे न्यायकन्दल्याम्—

'यतश्चासर्वगतानामधिगतान्यत्वानामविष्वग्भावः स समवायाख्यः सम्बन्धः' । इति । ( भा० प्र० भा० पृ० ७७४ स० निरूपणे )

**कन्दली**—इहेदमिति बुद्धिर्यतः कारणाद्भवति यतश्चासर्वगतानां नियतदेशावस्थितानामधिगतान्यत्वानामधिगतस्वरूपभेदानामविष्वग्भावोऽपृथग्भावोऽस्वातन्त्रम् स समवायः । भिन्नयोः परस्परोपश्लेशस्य सम्बन्धकृतत्वोपलम्भात् ।

तथा 'धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः' इति समवेतपदस्यापि अर्थोबोध्यः । उपर्युक्तं परस्परं समवायसम्बन्धस्य फलं पारस्परिको विश्वासः । स च गर्वखादि-

## वैदिकसिद्धान्तसंरक्षिणी

संप्रति एतेषां रोगाणां वृद्धिः प्रत्यक्षसिद्धा वर्तते। तन्निदानं धर्मापेक्षा अस्तीति आयुर्वेदवचनात् कृते निर्णये नास्ति प्रत्यवायः। अशुचित्वस्य परिणामःशीतलाप्रकोपः सुखण्डीरोगश्च वर्धते इति तु न तिरोहितं वर्णाश्रमिणाम्। अपस्मारकुष्ठशीतलादि रोगाशुचित्वयोः साध्यसाधनभावविषये प्राचीननवीनवैद्यानां एकमेव मतं भाति इदं रोगत्रयं वातव्याधेरुपद्रवः इति सुश्रुते वातव्याध्युपद्रवे निरूपितमस्ति। वात-व्याधिश्च ज्ञानतन्तूनां क्रियातन्तूनां च कृशतया भवति इति चिकित्साचन्द्रोदयवचनात् स्फुटम्। एवञ्च उभयमतेन ज्ञानतन्तूनां क्रियातन्तूनाञ्च विकृतिः उक्तोपद्रवत्रये-निदानमिति पर्यवस्यति। तन्निरसनस्योपायः शुचित्वं प्राचीनपरंपराप्राप्तानां नियमानां परिपालनं चेति सर्ववादिसंप्रतिपन्नम्। वेदमूलकानां वर्णाश्रमाचारशुचितादीनामपरि-पालने एतेषां रोगाणां प्रादुर्भावः केवलं भवति इति न अपितु विश्वस्मिन् अनेके अभि-शापाः सम्पद्यन्ते। इत्येवं पाश्चात्यविद्वद्भिरपि वर्तमानसमाजस्य स्वरूपं प्रकटी-कुर्वद्भिः साधु निरुपितम्। तथाहि—अमेरिकन फिलासाफिकल कांग्रेसाधिवेशने दिसम्बरमासे २००६ सञ्जाते प्रो० श्रीपियाटमहोदयेन कृते अध्यक्षीयभाषणे दि"फिला-साफिकल रिव्यू" पत्रे प्रकाशिते सेप्टेंबरमासीये ४१२–,२४ पृष्ठे उद्धृतमस्ति तस्य सारांशोऽत्र विलिख्यते। तथाहि "न केवलममेरिकन समाजः किन्तु पाश्चात्य संस्कृति-निष्ठः सर्व एव समाजः सत्प्रतिपक्षितमतेषु श्रृङ्खलया बद्धो दास्यमनुभवति। श्रृङ्खला-बन्धने मूलकारणं सततात्यन्तिकदुःखानुभव एव। समाजान्तर्गताः सर्वा व्यक्तयः सत्प्रतिपक्षितमताः सन्ति।......।

## जयमङ्गलाक्रोडपत्रम्

सम्मिलितेषु पिण्डेषु दृश्यते। स एव राजनीत्याऽपि सम्पादनीयः तदर्थमेव राजनीति-प्रयत्नः। इत्येतत्सर्वं व्याख्यातृभिः वाल्मीकिरामायणस्य प्रथमसर्गस्य व्याख्यायां व्याख्यातम्। एवंभूताः गर्वखपृथिव्यादिसप्तभिर्मिलितेषु पिण्डेषु तन्मयत्वेन भासमानाः पुरुषाः विश्वपदव्यपदेश्याः व्यष्टिजीवा इत्यभिधीयन्ते। अथ व्यष्टिशरीरे जीवं निरूप्य समष्टिशरीरे विराट्स्वरूपतया वर्तमानमुपर्युक्तं पुरुषं निरूपयति।

सोऽपि त्रैविध्यमन्विच्छम् विराट् पुरुष इति।

सोऽपिईश्वरोऽपि इत्यर्थः। अथ तत् त्रैविध्यमाह।

बीजत्रयेण भिन्नःस्यात् सोमसूर्याग्निरूपिणा। इति

बीजत्रयेण-गुणत्रयेण। शेषं पूर्वं व्याख्यातम्।

एतावत्पर्यन्तं पूर्वैः पद्यैः आकाशदिसप्तभिः मिलिते शरीरपिण्डे तन्मयत्वेन भासमानः विश्वाख्यः पुरुषः अस्तीति निरूपितम्। शरीरस्य स्वरूपं तदुत्पत्तिश्च न निरूपिता। अतः तदुत्पत्तिमाह पञ्चभिः श्लोकैः—भा० प्र० ७ अ०

## वैदिकसिद्धान्तसंरक्षिणी

किञ्च उन्मादावस्थायां गतानां व्यक्तीनां मनस्सु सामाजिकव्यवहारेषु च सुसंबद्धता नाभिव्यज्यते। कीदृग्विधे लाभे जातेपि इष्टसिध्यनुभवो न तेषु भवति। ध्येयानिश्चितत्या न अनुष्ठेयविषये निश्चितिः। ततश्च प्रतिव्यक्ति पराभवनिराशाग्रस्तत्वम्। तथाभूतं मनः न्यायान्यायोत्साहप्रेमसद्भावनासंपत्तिविभागशास्त्रीयोप भोगशमसुखविहीनं संपन्नम्। अग्रिमदुःखपूरभावग्रस्तं मनः अन्याय्याक्रमणेन परकीयसंपत्तिमेव न केवलमपि तु तत्सर्वस्वमपि हर्तुं चेष्टते, बहुसङ्ख्यव्यक्तीरुद्धे जयति' चिकीर्षिताक्रमणस्य साफल्याय पशुसमाजेष्वप्यसंभाव्यं, परां काष्ठां गतं क्रौर्यं कर्तुं व्यक्तिः समाजश्च न विचिकित्सते। इदं मानवसमाजस्य हीनतमदास्यावस्थायाश्चिन्हम्" इति। एतत्प्रतिज्ञासमर्थनाय प्रमाणानि सुविस्तृतानि परीक्षकेण तैनैव पियाट्महोदयेन समुत्थापितानि। "समाजान्तर्गताःउपन्यास लेखकाः, नाटयकराः, तत्परीक्षकाः, समाजपरिवर्तकाः, वक्तृ-पत्रकर-रेडियोवार्ताहराः, जीवशास्त्र-समाज-शास्त्र-मनोविज्ञान-शास्त्रज्ञाः, स्वीयानुसन्धानेन क्रान्तिसमर्थाः, पदार्थविज्ञान-रसायन-प्रभृतिशास्त्रज्ञाः, व्यवहार-प्रविष्टाः साधारणा, जीविकार्जनाय प्रयतमाना, विद्यार्थिनश्चैते सर्वे एव परीक्षिता उक्तां प्रतिज्ञां पोषयन्ति" इति। तेन महोदयेनान्यदुच्यते। विकृतमज्जायन्त्रका विपन्नज्ञानशक्तिक्रियाशक्तिका एव प्राचुर्येण अमेरिकनसमाजे सन्ति इति। पुनः तेन महोदयेन विवाहकुटुंबापरिमितासङ्ख्येयव्यापार राजकीय तदितर-

## जयमङ्गलाक्रोडपत्रम्

'विश्वाख्ये पार्थिवे चाण्डे प्राणिनो भूतमूर्तयः।
चतुष्प्रकारसम्भिन्ना नश्वरास्तु प्रजज्ञिरे॥
जीवत्वमेषामपरं प्रतिभेदमियात्प्रभुः।
कालप्रेरितयोर्वायुर्दम्पत्योः सङ्गमान्मिथः॥
पौरुषीं प्राकृतीं शक्तिं शुक्लशोणितरूपिणीम्।
वायुर्यदर्थसहितं गर्भाशयमुपानयेत्॥
अनादयश्च क्षेत्रज्ञा बहवः कर्मभाविताः।
सन्ति कालार्थिनः शेषाः कश्चित्कालेन चोदितः॥
गर्भाशयं स्वयं पित्रोर्मलाभ्यां सह संविशेत्।
तत्र नित्यो भवेद्वायुः प्राणापानात्मकः स्वयम्॥ इति।

(भा० प्र० अ० ७)

एषां श्लोकानामर्थः स्फुटत्वान्न व्याख्यायते।

अथ आनन्दरूपतामापन्नं शक्तितत्त्वं वस्तुतः स्वतन्त्रं सदपि जीवभावं यदा प्राप्नोति, तदा तत् आणवादिमलत्रयेण आवृतं भूत्वा शरीरस्य आधारभूतं यत् बीजं तेन रूपेण गौणभावं गतमिति दर्शयितुमाह—गुणेति।

## वैदिकसिद्धान्तसंरक्षिणो

सर्वव्यवहाराः समाजे प्रसृतापराधाः मद्यव्यसनं च तत्र कारणानि इत्युपन्यस्तम्। तत्रैव। एतद्विषये तेन दी मार्डन ब्रूमनेन, दी लास्टसेक्सनामकेन श्री लार्ड वर्ग महोदयेन श्रीमत्या फार्नहमममहोदयया चाचिरादेव प्रकाशितो ग्रन्थः प्रमाणार्थं मुपन्यस्तः। किञ्च ते महोदयाः विवाहविच्छेदापृथग्वासवन्ध्यावस्थानां विस्तोर्यमाणं प्राचुर्यम् वैयक्तिककौटुम्बिकप्रेम्णोः कौटुंबिकसामाजिकव्यक्तित्वयोः लोपं व्यक्तित्व-मपि विनश्यदवस्थं च हेतुत्वेन प्रमाणयन्ति। तथा श्री पियाट महोदयाः व्यापार राजकीयसामाजिकव्यवहाराणां नवयुगीना विशेषता विश्वासघाते प्रविष्टा द्योतते इति च वदन्ति इत्यादि।

अपरञ्च धर्मस्य लौकिकफलसाधने उपयोगित्वं आधुनिकानां मतेनापि व्यक्तम्। तदेतत् १—सं० २००६ साङ्गवेद विद्यालयीयविवरणे ३४—३७ पृष्ठे द्रष्टव्यम्।[१]

## जयमङ्गलाक्र:डपत्रम्

"गुणभूतात्मके बीजे कारणार्थसमन्विते।
सर्वव्याप्ता परा शक्तिः अस्मिन् क्षेत्रज्ञतामियात्॥" इति

अर्थात् सर्वेषु व्याप्ता परा शक्तिः गुणभूते स्वयङ्गुणभावतामापन्ना शरीरा-रम्भकबीजभूते तत्वे अधिष्ठिता सती क्षेत्रज्ञभावं प्राप्नोति। अस्मिन् बीजे अपेक्षित-रीत्या सर्वे संस्काराः वर्तन्त एव। वयं गर्भपिण्डे शरीरे यादृशं संस्कारमपेक्षामहे तथा संस्कारेण संस्कृतत्वं शरीरारम्भके बीजे संपादयितुं शक्नुमः। एतत्प्रदर्शयितुमाह—

---

१ कम्पनीनां वार्षिकायव्ययः, विक्रयाय विज्ञापनानि, शेयरमार्केटव्ययहारः, सर्वत्र उपयुज्य-मानानि पौतवानि राजपुरुषव्यापारीयव्यवहारः करनिर्देश-ग्रहणे, ट्रस्टे, रिसिव्यरशिप् इन्साल्टमेन्टानां व्यवस्थाः विश्वासघातेनोत्कोचेन प्रतारणया च परिपूरिता इति गणनया प्रदर्शितास्तैः पृ० ४०० तमे। परकीयवित्ताहरणप्रवृत्तिश्च तद्द्वारा साधिता। तात्कालिक-विस्मरणाय मद्यव्यसनसेवनाय प्रसक्तता समाजान्तर्गता।

सततं पराभवनिराशाग्रस्तमनस्कतया तज्जन्यात्यन्तिकदुःखःनिवृत्त्यर्थं मार्गान्तरालाभात् व्यक्तयः निद्रायामपि स्वप्नरूपेण भयप्रदर्शनोत्प्रेक्षया तद्विस्मरणाय मद्यसेवया कञ्चित्कालं सुखाशां वाञ्छन्ति। सर्वमेव जगत् शत्रुभूतमपि प्रियमित्रं मन्यमानाः तत्समालिङ्गनेन मित्रप्रेम सफलयितुमिच्छन्ति। प्रेमानुभवहीने जीविते समुद्गीर्णाश्रवः मद्यसेवनेन हसनसुखमनुभवन्ति।

परस्वलुण्ठनभ्रूणहत्यामनुष्यमारणाद्यपराधानां विस्तीर्यमाणानां परीक्षणेन परां काष्ठां अधिरूढं क्रौर्यं सिद्धम्भवति। क्षणिकवासनापूर्त्यर्थं समनुष्ठीयमानाः नानाविधोपायाः न्यायालय-व्यवहारेषु प्रकटीभूता ज्ञायन्त एव। युद्धेषु शत्रुसमाजोपरि क्रियामाणो व्यवहारः ततोप्युत्कटं क्रौर्यवेगं प्रमाणयति, यः पशूनामपि समाजेषु न स तथा गण्यते। एवं विधायामवस्थायामन्ततो गत्वा आत्महत्यायामेव विश्राम्यन्ति तत्रत्या व्यक्तयः। एवंविधानां हत्यानाम् सङ्ख्यापि तत्र प्रतिदिनमेधते।

## वैदिकसिद्धान्तसंरक्षिणो

"स्मृतिमन्तो भक्तिमन्तः कृतज्ञाः प्राज्ञाः शुचयो महोत्साहाः दक्षाः धीराः समरविक्रमयोधिनः त्यक्तविषादाः सुव्यवस्थितगतिगम्भीरबुद्धिचेष्टाः कल्याण-भिनिवेशिनश्च सत्वसाराः एषां स्वलक्षणैरेव गुणा व्याख्याता" इति चरके सत्वसाराणां लक्षणं निरुक्तमस्ति, तत्लक्षणलक्षिता वर्तमाने समये अलक्षितप्राया दृश्यन्ते। तदेतत् जयमङ्गलाक्रोडपत्रे १ अध्याये उदयनाचार्योक्तह्रासकारणसमूहस्य उल्लेखेन निरूपितं वर्तते। अधुना केवलं महनीयानां बुद्धिमतां प्रतापिनां कथाः कथास्वेव गीयन्ते एवंविधायाः सर्वस्या दुरवस्थाया मूलं वर्णाश्रमाचारविलोपप्रसक्ता ज्ञानतन्तु क्रियानन्तुविकृतिरेवेति सिद्धम्।

वर्णाश्रमधर्मो भारतस्य प्रकृतिः।

यद्यपिवर्णाश्रमधर्मः न मानवप्रकृतिरिति केचित् वदन्ति। तथापि टिप्पण्युक्त[१] प्रमाणैः धर्मो भारतीयानां प्रकृतिरस्त्येवेति साध्यते।

## जयमङ्गलाक्रोडपत्रम्

'द्वाभ्यां त्रयाणां व्यक्तिः स्यात् त्रिभ्यो भवति पञ्चकम्।
पञ्चभ्यः पञ्चकानां तु चतुष्कं प्रतिपद्यते।' इति।

अस्य कूटश्लोकस्य व्याख्यां स्वयमेव आह—

शुक्रार्तवौ द्वयं तत्र-त्रितयं तु गुणत्रयम्।
भूतानि श्रवणादीनि शब्दवागादिपञ्चकम्।
भाषणादीनि वाक्यानि चतुष्टयमुदाहृतम्।
तत्संशयप्रमातृत्वनिश्चयानुभवार्थकृत्॥' इति। भा० प्र० ७ अ०

---

१ तथाहि—चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः। अ० ४।१३
इति गीतापद्यव्याख्यायां मधुसूदनसरस्वतीभिः उक्तम्।
शरीरारंभकगुणवैषम्यादपि न सर्वे समानस्वभावा इत्याह। चातुर्वर्ण्यमिति।

कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः। इति पद्यव्याख्यानावसरे तेषां चतुर्णामपि वर्णानां कर्माणि प्रकर्षेण विभक्तानि इतरेतरविभागेन व्यवस्थितानि। कैः स्वभावप्रभवैर्गुणैः सत्वादिभिः। तथाहि—ब्राह्मणस्वभावस्य सत्वगुण एव प्रभवः प्रशान्तत्वात्। क्षत्रियस्वभावस्य सत्वोपसर्जनं रजः ईश्वरस्वभावत्वात्। वैश्यस्वभावस्य तम उपसर्जनं रजः ईहास्वभावत्वात्। शूद्रस्वभावस्य रजउपसर्जनं तमो मूढस्वभावत्वात्। अथवा मायायाः प्रकृतिः स्वभावः तत उपादानात्प्रभवो येषां तैः। प्राग्भवीयः संस्कारः वर्तमाने भवे स्वफलाभिमुखत्वेनाभिव्यक्तः स्वभावः स निमित्तत्वेन प्रभवो येषाम्। इति १८ अ० श्लो० ४१

## वैदिकसिद्धान्तसंरक्षिणी

गीतायां स्वभाव इति यदुपवर्णितं तदर्थः प्रकृतिरित्येव मन्तव्यम्। तदुक्तं जयमङ्गलायाम् नीतिसारव्याख्यायाम्—१९ सर्गे। तस्मात् वर्णाश्रमिणां भारतीयानां प्रकृतिरियं यत् स्वस्वधर्मपरिपालनमिति। तन्मर्यादामितिक्रम्य लोलुपत्वं, कामक्रोधवत्त्वं च वंशपरंपरायां भोजनविहारप्रभृतिषु शैथिल्यात्, कर्मणामशुद्धिप्रसङ्गात्, दुष्टसंसर्गात्, आहारप्रातिलोम्यात् व्यसनाभिभूतत्वाद्वा यथा यथा विकृतिस्तेषु यदाप्रभृति संभूता। तथा तथा तदाप्रभृति उपर्युक्तो ह्रासः समभूत्। यथा शरीरे रोगो न प्रकृतिगतो धर्मः अपि तु मिथ्याहारविहाराभ्यां दोषधातुमलानां वैषम्यं यदा भवति तदा तेन रोगाजायन्ते। पथ्यमश्नतो रोगो न भवति। तथैव कामक्रोधादयो मर्यादामतिक्रम्य सेविताः विकृताः संभवन्ति रोगोत्पत्तिवत्।

विकृतितः आत्मनः संरक्षणार्थं तत्प्रागभावपालनार्थं तन्निरसनार्थं वा वर्णाश्रमधर्माः औषधमिव यदि सेव्यन्ते तर्हि एते शरीरे मनसि शुचित्वमासाद्य विकृतिमपसारयन्ति। सुख मुत्पाद्य स्वां प्रकृतिं च प्रापयन्ति। इति स्थितम्। अथ कामक्रोधादीनां विकृतित्वं रोगकारणत्वं च कथं भवति इत्यत्र प्रमाणं सुश्रुते द्रष्टव्यम्।[१]

## जयमङ्गलाक्रोडपत्रम्

अत्र हि संशयप्रमातृत्वनिश्चयानुभवपदेन चित्तबुद्ध्यहङ्कारमनोरूपाण्यन्तःकरणानि बोध्यानि। संशयादिवृत्तिभेदेन अन्तःकरणभेदः उक्तः तस्मिन् विषये चित्तमनसोः संशयनिश्चयवृत्तिविषये वेदान्तशास्त्रस्य मतभेदो दृश्यते। स च स्वस्व शास्त्रानुसारी पन्थाः इति ज्ञातव्यम्। एतावता ग्रन्थेन पूर्वप्रतिज्ञानिर्देशानुसारेण

---

१ चतुर्विधाः आगन्तुकाःशारीरा मानसाः स्वाभाविकाश्चेति। तेषामागन्तवोऽभिघातनिमित्ताः। शारीरा अन्नपानमूला वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः। मानसास्तु क्रोधशोकभयहर्षविषादेर्ष्याऽभ्यसूयादैन्यमात्सर्यकामलोभप्रभृतयः इच्छाद्वेषभेदैर्भवन्ति। इति। ( सुश्रुतम् विरुद्धसंयोगाध्ययः )।

क्रोधस्ताडनशीलता च बहुलं दुःखं सुखेच्छाधिका।
दम्भः कामुकताप्यलीकवचनं चाधीरता दुष्कृतिः॥
ऐश्वर्यादभिमानिताऽतिशयिताऽऽनन्दोधिकश्चाटनम्।
प्रख्याता हि रजोगुणेन सहितस्यैते गुणाश्चेतसः॥
नास्तिक्यं सुविषण्णताऽतिशयिताऽऽलस्यं च दुष्टा मतिः।
प्रीतिर्निन्दितशर्मकर्मणि सदा निद्रालुताहर्णिशम्।
अज्ञानं किल सर्वतोऽपि सततं क्रोधान्धता मूढता।
प्रख्याता हि तमोगुणेन सहितस्यैते गुणाश्चेतसः॥ —भा० प्रकाशे

## वैदिकसिद्धान्तसंरक्षिणी

ये किल वर्णाश्रमधर्मात्तदनुयायित्वाद्वा बहिर्मुखाः प्रकृत्या वर्तन्ते ते बाह्याः कामक्रोधादिप्रवृत्तयो भवन्तु कामम् न तावता हानिः। तेषां कृते वर्णाश्रमधर्मो न कर्तव्यत्वेनोच्यते शास्त्रेषु। तद् दृष्टान्तेन वर्णाश्रमेषु समाजान्तरस्थ कामदिपकृति सादृश्यं न मन्तव्यम्। अतएव वर्णाश्रममर्यादा भारतीयैरेव पालयितुं शक्येति। स्थितम्।

"क्रिया हि द्रव्यं विनयति नाद्रव्यम्" इत्युक्तं मूले। तस्यायंभावः-यद्धि सुवर्ण-नास्ति तत् खनितो निष्कास्य संस्क्रियेत यदि केनचित्, तर्हि किं तत् सुवर्णगुणवत्वेन भूयेत तथैव वर्णाश्रमधर्मस्य वर्णाश्रमिणांच संबन्धे ज्ञेयम्। तदनुबन्धेनैव शास्त्रं वर्णाश्रमिणां कृते धर्मं विदधाति। यतः शास्त्रं उत्तम संस्कारो वा विकृतिं अपसारयितुं

## जयमङ्गलाक्रोडपत्रम्

षट्त्रिंशत्तत्वनि निरूपितानि भूतादिवस्तूनां सर्वैरेव ज्ञातत्वात्। अनेन ग्रन्थेनेदं स्फुटीभवति। यत् मनःप्रभृतितत्वानि शरीरारम्भकबीजद्रव्यस्य परिणामभूतानि इति। तेन "यत्सत्वपरिणामि स्यात् द्रव्यं तन्मन उच्यते" इत्यादीनि भावप्रकाशनोक्त-पद्यानि प्रथमाध्याये व्याख्यातानि भवन्ति। एतत्पद्यस्थद्रव्यपदेन शरीरारंभकस्य बीजभूतस्य तत्वस्य ग्रहणात्। ईश्वरे तु तदद्रव्याभावेऽपि यन्मनः तिष्ठति, तदिच्छा-रूपं बोध्यम्। तेन रजःपरिणामि द्रव्यं, तमःपरिणामि द्रव्यं च स्फुटं भवति। तस्मात् सत्वात्मकस्य ज्ञानस्याऽपि एतन्मते शरीरारंभकबीजद्रव्यरूपत्वमेव स्वीक्रियते। ज्ञानस्य द्रव्यरूपत्वं तु सत्वस्वरूपविचारप्रसङ्गे—

यत् सत्वपरिणामि स्यात्

इइत्यादिपद्यनिरूपणप्रसङ्गे प्राङ्ग्निरूपितमस्ति। पृ० १६।१९

किञ्च-दहराकाशमध्यस्थ सहस्रदलभोमिते।

प्रस्फुरत्कर्णिकाश्लिष्टकर्णिके पङ्कजोदरे॥'

इति पद्यव्याख्यानावसरे ज्ञानतन्तुपदाभिधेयाभिः "नर्वससिस्टम्" शिराभिरा-वेष्टिते मस्तके वर्तमानाः तन्तवः केशरस्थानीयाः तथा आत्मा च तत्रैव स्थितः, तद्वारैव प्रेरणं संवेदनं च भवतीति प्रागभिहितप्रकारेण। स्थूलदृष्टया च विचार्यमाणे 'स्यामिति' सङ्कल्पात्मकं मनः आयुर्वेदोपदिष्टसंस्कारस्वरूपं तत्तत्तन्तुषु वर्तते इति ज्ञानस्य द्रव्यरूपत्वं साधयितुं शक्यते। एवमेव उपासनादृष्टया मनः प्राणवचसां सोम-सूर्याग्निरूपाणां स्वातन्त्र्येण कार्यकरणे जीवत्वम् ईश्वरकार्यकरणेतु देवत्वं व्यव-स्थितमस्ति। इत्याद्यपि प्राक् प्रपञ्चितमेत्रव समन्वैति अपि च सोयमीशसङ्कल्पः संसारिषु अहन्त्वेन परिणम्य प्रवर्तते। अतः शरीरपरिमाणकं मनः इत्यपि सिद्धं भवति। तदुक्तम्—

"संसारिणामहन्त्वेन परिणम्य प्रवर्तते।' इति

यद्यप्यत्र मनस्त्वेन परिणम्येति पाठः "प्रकाशितपुस्तकेऽस्ति। परन्तु सः न

## वैदिकसिद्धान्तसंरक्षिणी

समर्थो न तु प्रकृतिमिति । तस्मात् सीमातिक्रान्ता अर्थकामादयःवर्णाश्रमिणां शरीरस्य मनसो वा यदि प्रकृतयः स्युः तदा धर्मानुष्ठान-वैयर्थ्यात् शास्त्र विसंवादि भवेत् । तन्न दृश्यते इति तत्संवादित्वादेव अद्ययावत् न शास्त्रवैयर्थ्यम् । एतेन सर्वथा काम-क्रोधादयः विकृतयस्सदा परिहरणीया इति मन्येत कैश्चत् । तदपि न साधु मन्तव्यम् । यतो रोगो हि मिथ्यायोगेन यथा भवति तथा अयोगेन अपि भवति अयोगोऽपि विकृति-रेव । अतः तत्तत्सीमानमनतिक्रम्य कामक्रोधादीनां व्यभिचारिभावसाचिव्येन स्वीकरणं न दोषाय । युक्त्या सेविताः कामादयः प्रकृतात्रेवान्तर्भूताः न वर्णाश्रमधर्मात् बहिर्भूताः इति । सच सीमा प्राकृतिकः आरोग्यकर रसायनसदृशः लोकस्याविक्षोभ-करश्च कियदवधिक इति न सर्वज्ञशास्त्रमन्तरा कश्चित् निर्वक्तुं शक्नोति किन्तु शास्त्र-मेव । तच्च न विकृतिं कारयितुं अभिजानाति । अपि तु प्रकृतिमनुसृत्य शास्यान् प्रेरयति इति बोध्यम् । अत्र प्राकृतिकरूपेण आहारविहारादीनामायत्तीकरणे॰ नैहिकसुखमात्रं तत्फलं अपितु ब्रह्मणः निरतिशयसुखस्यानावरणनुभवोऽपि फलान्तरं भवतीत्यपि व्यक्तम् ।

## जयमङ्गलाक्रोडपत्रम्

युक्तः, शिष्टैः अपरिग्रहात् । अहन्त्वेन परिणतः द्रव्यभागः शरीरे प्रभापदेन बोधितत्वात् तेजोरूपः अनुमन्तव्यः । तदुक्तम्—

'यदादित्यगतं तेजो जगत् भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ।' इति । (भ०गी०अ०१०)

अत्र स्थितेन तत्तेज इति पदोपादानेन ज्ञानतत्वस्य ब्रह्मणस्तेज एव आदित्ये अस्ति इति ध्वन्यते ।[1]

---

१. स्पष्टं चैतत् शाङ्करभाष्ये मधुसूदनीटीकायां च । ''यदादित्यगत-मादित्याश्रयं किं तत्तेजो दीप्तिः प्रकाशो जगद् भासयते प्रकाशयत्यखिलं समस्तम् । यच्चन्द्रमसि शशभृति तेजोऽवभासकं वर्तते । यच्चाग्नौ हुतवहे तत्तेजो विद्धि विजा-नीहि । मामकं मदीयं मम विष्णोस्तज्ज्योतिः । अथवा यदादित्यगतं तेजश्चैतन्यात्मकं ज्योतिर्यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकं मदीयं मम विष्णोस्तज्ज्योतिः । ननु स्थावरेषु जङ्गमेषु च तत्समानं चैतन्यात्मकं ज्योतिस्तत्र कथमिदं विशेषणं 'यदादित्यगतमि'त्यादि । नैष दोषः, सत्त्वाधिक्यादाधिक्योपपत्तेः । आदित्यादिषु हि सत्त्वमत्यन्तप्रकाशमत्यन्तभास्वरमतस्तत्रैवाविस्तरां ज्योतिरिति तद्विशिष्यते, न तु तत्रैव तदधिकमिति ।

'यथा हि लोके तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखमाविर्भवति आदर्शादौ तु स्वच्छे स्वच्छतरे च तारतम्येन आविर्भवति तद्वत् ।—

( शा० भा० अ० १५, श्लो० १२ )—

मुधुसूदनी—

'न तत्र सूर्यो भाति, न चन्द्रतारकम् नेमा विद्युतो भान्ति, कुतोऽयमग्निः ?' इति श्रुत्यर्धं प्राग् व्याख्यातम् न तद् भासयते' सूर्य' इत्यादिना। "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुत्यर्धमनेन व्याख्यायते। 'यदाऽऽदित्यगतं तेजश्चैतन्यात्मकं ज्योतिर्यच्चन्द्रमसि यच्चाऽग्नौ स्थितं तेजोजगदखिलमवभासयते, तत्तेजो मामकं मदीयं विद्धि। यद्यपि स्थावर-जङ्गमेषु समानं चैतन्यात्मकं ज्योतिस्तथाऽपि सत्त्वोत्कर्षेणाऽऽदित्यदीनामुत्कर्षात् तत्रैवाविस्तरां चैतन्यज्योतिरिति तैर्विशिष्यते।'यदाऽऽदित्यगतमि'त्त्यादि। यथा तुल्येऽपि मुखसन्निधाने काष्ठकुड्यादौ न मुखमाविर्भवति, आदर्शादौ च स्वच्छे स्वच्छतरे च तारतम्येनाविर्भवति, तद्वत्। 'यदाऽऽदित्यगतं तेज' इत्युक्त्वा पुनस्तत्तेजो विद्धि मामकमि'ति तेजोग्रहणाद् यदाऽऽदित्यादिगतं तेजः प्रकाशः परप्रकाशसमर्थं सितभास्वरं रूपं जगदखिलं रूपवद् वस्तु अवभासयते, एवं यच्चन्द्रमसि यच्चाग्नौ जगदवभासकं तेजः सन्मामकं विध्दी'ति। विभूतिकथनाय द्वितियोऽप्यर्थो द्रष्टव्यः। अन्यथा तन्मामकं विध्दि' इत्येतावद् ब्रूयात्, तेजोग्रहणमन्तरेणैवेति भावः।

तथा तैत्तिरीब्राह्मणे ( तै० ब्रा० २-२-१० )

"इन्द्रः प्रजापतिगतं हरः तत्समीपे आगत्य याचितवान्। तदेव हरः रूप्यं भूत्वा किरीटस्वरूपेण इन्द्रस्य मस्तके अतिष्ठत् इति वर्णनमस्ति। तदपि तेजोरूपमेव। स्पष्टं चैतत् उक्तब्राह्मणे–भाष्यादौः (४२७ पृ०) "अथ वा इदं प्रजापतौ हर आसीत्। यदस्मिन्नादित्ये। तदेनमब्रवीत्। एतन्मे प्रयच्छ अथाहमेतेषां देवानामधिपतिर्भविष्यामीति। कोऽहम्स्यामित्यब्रवीत्, यदेव ब्रवीषीति को ह वै नाम प्रजापतिः। य एवं वेद। विदुरेनं नाम्ना। तदस्मै रुक्मं कृत्वा प्रत्यम्मुञ्चत्। ततो वा इन्द्रोदेवानामधिपतिरभवत्"।

अथ प्रजाप्रतेरग्रे स्वकीयतिरस्करणादूर्ध्वमेवं वृत्तान्त आसीत्। यदिदमिदानीमस्मिन्नादित्ये सन्तापकं तेजो दृश्यते तदिदमस्मिन्काले प्रजापतावासीत्। यादृश आदित्यो अन्धकारादिभर्त्सने समर्थस्तथा प्रजापतिरपि दुष्टशिक्षायां समर्थ आसीत्. तत्तेज उद्दिश्येन्द्र एनं प्रजापतिमब्रवीत्। 'हे प्रजापते, एतत्तेजो मह्यं प्रयच्छ। अथाहं तेजस्वी सन्नेतेषां देवानामधिपतिर्भविष्यामी'ति। ततः प्रजापतिरिदमब्रवीत् एतत्तेजस्तुभ्यं प्रदाय कोऽहं स्यामक्षमं मां को वा गणयेदित्यभिप्रायः। अथेन्द्रः प्रजापतिं प्रत्यब्रवीत्—'कोहमित्यत्रक इत्यनेन शब्देन यदेतत् ब्रवीषीत्ये तदेव त्वम्।' ( भाष्ये )

एवं जगदीशादिभिः सुवर्णस्य तैजसत्वं, 'अग्नेरपत्यं हिरण्यमि'ति श्रुत्यैव प्रतिपादितमस्ति। तस्मात् ज्ञानस्य तेजोरूपत्वं सिद्धम्।

## वैदिकसिद्धान्तसंरक्षिणो

### वेदस्य निर्णायकत्वम्

अथ उपकारकत्वनिरूपणप्रसङ्गात् वेदस्य अपरोऽपि महानुपकारः स्मर्यते स न विस्मरणार्हः। तथाहि-भारते अनेकेषु संप्रदायेषु सत्स्वपि तान् उपजीवयन् सर्वान् एकसूत्रे अयं निबध्नाति। यथा अत्रत्यानां संप्रदायानां इदं अपूर्वं वैशिष्ट्यम् यत् सर्वैरपि स्वात्मा वेदाय त्रयीस्वरूपनिरूपणे समर्पितः। एते स्वस्वोपासनायां दाढर्यार्थं यथाः कथमपि पारस्परिकं मतिभेदं उररीकृत्यापि स्वकीयां इष्टदेवतामेव सर्वापेक्षया मुख्यत्वेन भजन्ति। नैतिके तु कार्ये वैदिकमेव पन्थानमवलंबन्ते। अतएव नीतिशास्त्रस्यास्य

### जयमङ्गलाकाण्डपत्तम्

इदमेव ज्ञानतत्वं मातापितृभ्यां प्राप्तं सत्वपरिणामिभूतमोजोरूपतया शरीरे तिष्ठति। तस्य किरणाः प्रभारूपाः अराशब्देन ध्वन्यन्ते। तत्संपन्नानां दर्शनं स्पर्शनं, समस्तरोगशमने कारणं भवति, इति आधुनिकैरपि स्वीक्रियते। अत एव मस्तके वरदहस्तस्पर्शनमात्रेण शिष्ये विद्यास्फूर्तिः अभूत्, इति महाभारतोक्तेतिहास उपपन्नो भवति। फ्रेञ्चन्यायालये अस्य विषयस्य स्वीकृतत्वात् नास्ति अत्र सन्देहावसरः। एवमेव प्राणवाचावपि रजस्तमःपरिणामिभूते व्याख्याते इत्यलं ज्ञानस्वरूपविचारस्य प्रसक्तानुप्रसक्तचिन्तया।

अत्र त्रयीप्रमाणेन प्रमितं लोकोपकारकत्वं जीवस्य नीतिलक्षणानुसारेण प्रत्यक्षतया प्रत्यभिज्ञायमानं कथं भवेदित्यंशः एतावत्पर्यन्तं न समाहितः तत्समाधानाय षट्त्रिंशतत्त्वस्वरूपमभिधाय एतत्प्रकरणान्तर्गतः भावप्रकाशनोक्तः अग्रिमो भागः प्रस्तूयते।

> ईदृग्विलक्षणोजन्तुः जरायुग्रस्तदेहवान्।
> कालपाकेन पूर्णाङ्गो जायतेऽयमवाङ्मुखः। भावः प्र० अ० ७

अस्यायं भावः—यादृशेन संस्कारेण संस्कृतं शरीरपिण्डं गर्भ एव मातापितृभ्यां प्राप्तं भवति तस्यानन्ततरं परिवर्तनमशक्यम्। तदुक्तं सुश्रुते—

> 'शुक्रशोणितसंयोगे यो भवेद् दोष उत्कटः।
> प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु। इति। (सुश्रुतम्)

अत्र भावप्रकाशनपद्ये यस्य जीवस्य वर्णनं कृतं स जीवः पूर्वमुपवर्णितात् लिङ्गशरीरे वर्तमानात् जीवात् अपरः स्थूलशरीरविशिष्टो ज्ञेयः। तत्र स्थितस्य ज्ञानतत्वस्य नादरूपतया परिचयं प्रदर्शयिष्माणः नादस्वरूपमुपवर्णयितुमाह—

> 'षण्णवत्यङ्गुलायामं सर्वेषां च शरीरिणाम्।
> शरीरं तस्य मध्यःस्यादाधारः कन्दसंज्ञितः॥
> वलयत्रितयाकारः सोमसूर्याग्निमण्डलैः।
> वह्नेः शिखा तस्य मध्ये नीपान्तःकेसराकृतिः॥
> परा प्रकृतिरेषा स्यात् अम्बिकेत्यपपरे विदुः'। इति॥

## वैदिकसिद्धान्तसंरक्षिणी

मूलरचयिता वैदिको ब्राह्मणः कौटिल्यः। तट्टीकाकर्तारश्च वैदिका एवं जैना बौद्धाः अपि वर्तन्ते। यथा भट्टस्वामि-शङ्करार्य-सोमदेव-योग्घमभिक्षुप्रभमतिप्रभृतयः। एते सर्वेऽपि एकस्वरेण वर्णाश्रमधर्मं लोकयात्रोपकारकत्वेन मन्यन्ते। तथाविधसिद्धान्ताभावेन पाश्चात्यदेशे प्रो० श्री पियाटमतानुसारेण सत्प्रतिपक्षितत्वं संपन्नं, भारते तु मतभेदेषु सत्स्वपि निर्णायकत्वं अपौरुषेय्यां त्रय्यां स्वीकृतं समस्ति। अतोऽत्र न विवादस्य सत्प्रतिपक्षस्यवाऽवसरः। तदुक्तं भारविणा।

## जयमङ्गलाक्रोडपत्रम्

अर्थात् जोवस्य इदं स्थूलं शरीरं षण्णवत्यङ्गुलपरिमितं वर्तते। तस्य यः मध्यभागः सः वलयत्रयेण सोमसूर्याग्निमण्डलेन च अधिष्ठितोऽस्ति। तस्य मध्ये वह्नेः शिखा ऊर्ध्वमुत्तिष्ठमाना प्रज्वलति। तस्य अयं भावः—यत् मध्यमा या सुषुम्नानाडी तन्मार्गेण तर्कस्य सञ्चारात् तत्र तर्करूपः अग्निः प्रज्वलति। तदिदमूर्ध्वप्रज्वलनात्मकं ज्ञानं वह्निशिखापदेन जडवादिनां बोधार्थमुच्यते। चेतनवादिनां मतेन तु सा ऊर्ध्वमुत्तिष्ठमाना वह्निशिखा अम्बिकेति भाषया भाष्यते।

नीवारशूकवततन्वी पीता भास्वत्यणूमपा—
'अस्याः शिखाया मध्ये परमात्मा व्यवस्थितः।
स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमस्वराट्॥' ( ना० उ० )
'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्।' गीता०
'भगवानग्निः ईश्वरोऽन्नस्य पाचकः।' चरक १. इति

उपनिषदि अस्या वन्हि शिखायाः ज्ञानमयत्वेन प्रतिपादनात् सोऽयमुदर्यः शिवरूपतयोपवर्णितोऽग्निः चेतनात्मकः निरूपितः सः विद्युद्रूपः सन् तत्र तत्र शरीरान्तः प्राणपानादिवायून् सञ्चारयन् नादं समुत्पादयति। इति दर्शयितुं प्राणापानादिवायुभेदं तत्कार्याणि च निरूपयति।

"बहिस्तिर्यक् चरन्वायुः शरीरान्तः शिवाज्ञया।
प्राणादिभेदात् पञ्चात्मा शरीरं'व्याप्य तिष्ठति॥
येन प्राणिति सर्वत्र स प्राणो मूर्धनि स्थितः॥
उरः कण्ठचरो बुद्धिहृदयेन्द्रियचित्तधृक्-
ष्ठीवनक्षवथूद्गारनिःश्वासान्तः ( न्न ) प्रवेशकृत्।
उरः स्थानमुदानस्य नासानाभिगलांश्चरेत्।
वाक्प्रवृत्तिप्रयत्नोर्जा(र्ज)बलवर्णस्मृतिप्रदः॥
गत्यवक्षेपणोत्क्षेप निमेषोन्मेषणादिकृत्।
प्रायः सर्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम्॥"

**वैदिकसिद्धान्तसंरक्षिणो**

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम् ।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम् ॥ इति

**जयमङ्गलाक्रोडपत्रम्**

समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वदा ।
अन्नं गृह्णाति पचति विवेचयति मुञ्चति ॥
अपानोऽपानगः श्रोणि-बस्ति मेढ्रोरुगोचरः ।
शुक्रार्तवशकृन्मूत्रगर्भनिष्क्रामणक्रियः ॥' इति ।

एतेषु पद्येषु प्राणः मूर्धनि स्थितः इत्युक्तम् । अतः उपरिवाहित्वात् तस्य ज्वलनशीलत्वमुष्णत्वं च भाति । 'निश्वासान्तःप्रवेशकृत् इति पाठस्थाने 'निश्वासान्नप्रवेशकृत् पाठो बोध्यः । उरःस्थानमुदानवायोरधिष्ठानभूतं तत्त्वम् । यस्य वाक्प्रवृत्यादीनि कर्माण्युक्तानि । अत्र वाक्पदेन पूर्वोक्तं तमः परिणामि द्रव्यं बोध्यम्। तदेव विश्वजनकमप्यस्तीति, "उक्ता क्रोधादिभिर्भावै स्तत्फला व्यभिचारिणी" इति पद्यनिरूपणप्रसङ्गे प्रागभिहितमस्ति । तथा 'वाक्प्रवृत्ती'ति पद्ये 'ऊर्जा' इति पाठस्थाने 'उर्ज' इति पाठो युक्तो वर्तते। उदानवायुस्तु सुषुम्नामार्गेण अशुद्धरक्तवाहिन्या नीलवर्णया नाड्या ओजः प्रवाहयितुं यदा पूर्णतया समर्थो भवति, तदा ऊर्ध्वरेतस्कत्वं बलस्मृत्यादिकञ्च संभवति । एव "मन्नं गृह्णाति पचतीत्यादिना कोष्ठगते अग्नौ विद्युत्स्वभावयोः ग्रहणविक्षेपयोः 'दर्शनात् अयमग्निः विद्युदन्तर्भूतोऽस्ति इति वक्तुं शक्यते । अपानः अधोमार्गगामी मलादिगतिप्रेरकः शैत्यमनुभावयति, इति प्राणादिवायूनां विशेषोऽवगन्तव्यः । शेषं निगदव्याख्यातम् ।

अथ स्थूलशरीरस्य संरक्षणं सर्वत्र ओजसः प्रसरणेन भवतीति ओजः जीवनस्य जीवातुभूतं तत्त्वमस्तीति दर्शयितुमाह ।—

'दश जीवनधामानि शिरोरसनबन्धनम् ।
कण्ठोष्ठहृदयं नाभिः बस्ति-शुक्ले गुदौजसि ॥
दशः स्थूलशिराहृत्स्थाः ताः सर्वाः सर्वतो वपुः ।
रसात्मकं वहन्त्योजः तन्निबद्धं हि चेष्टितम् ॥' इति ।

अर्थात् जीवनस्याधारस्थानानि दश वर्तन्ते शिरः रसनबन्धनं कण्ठः, ओष्ठं स्रगिति पाठान्तरे, हृदयं, नाभिः, शुक्रम् बस्तिः, ओजः इति । एतेषु जीवनधामसु ओजः प्रधानम् तदधीनत्वात् चेष्टितस्य इति तन्निबद्धं हि चेष्टितमिति वर्णनात् ।

अत्र तन्निबद्धं यथेप्सितमिति पाठान्तरमस्ति । अस्यायं भावः यत् ओजसि एतावत्सामर्थ्यमस्ति यदभिलष्यते तत्सर्वमोजसा प्राप्तुं शक्यते । अत एव ओजोवाहिन्यः नाड्यः न वेध्याः' । इति आयुर्वेदसिद्धान्तः ।

इदमोजः हृत्स्थाभिः दशस्थूलशिरामिः सर्वतः वायुः प्रवहन् धारयति । सुषुम्नया नाड्या यदा तदोजः प्रवहेत् तदा तदेव ओजोमलतत्वं ज्ञानरूपं सत् वन्हि-

## वैदिकसिद्धान्तसंरक्षिणी

एतद्विषये अपरमपि विदुषां चरितं उपस्थाप्यते तद्यथा—अस्माकं शास्त्रेषु कश्चित् वचनविरोधपरिहाराय मीमांसान्यायं समन्वेतुं तर्कसुपस्थापयति अपरश्च तदीयतर्के

## जयमङ्गलाक्रोडपत्रम्

**शिखास्वरूपं** भवतीतिप्राङ्निरूपितम्। ओजसः वह्नेः शिखा उपरि प्रवहन्ती **कथं नादं समुत्पादयतीति** प्रदर्शयितुमाह।

'भिद्यन्ते तास्ततः सप्त शतान्यासां भवन्ति तु।
शिरा जालन्धरा नाम तिस्रश्चाभ्यन्तराश्रयाः॥
इडा च पिङ्गला चेति सुषुम्नाचेति नामतः।
सुषुम्ना मध्यमा नाडी शिखां वह्नेः समाश्रिता॥
शिखा प्राणेन संसृष्टा नादाख्यां लभते स्फुटम्।
सुषुम्नावर्त्मनैवोर्ध्वं याति व्योमाम्बुजावधिः॥
योगिनान्नादरूपेण स्वानुभूतिविधायिनी।
इतरेषां कलारूपान् वर्णान् विसृजति क्रमात्'॥

**इमान्येव** पद्यानि वाग्भटेऽपि क्रमवैपरीत्येन उक्तानि वर्तन्ते। तत्र **सुषुम्नादयः** शिराः नादजनकस्योजसः प्रवाहिका' इति नोक्तम्। **अत्र** तूक्तम्। **इत्ययं ग्रन्थस्यास्य विशेषो** वोध्यः।

**अत्रेदं** बोध्यं। यत् इडाप्रभृतयः जालन्धरासंज्ञिकाः याः नाड्यः वर्तन्ते, तासु **सुषुम्नामार्गेण** वायुसहकारेण ऊर्ध्वंगामिनः वह्नेर्या शिखा ज्वलनात्मिका सैव **ज्ञानम्**। तन्नादश्रवणे सञ्जाते कुण्डलिनी उत्थिता भवति इति योगिनो वदन्ति।

**अत्र** ओजसः प्रवहणशीलस्य ऊर्ध्वगामिनः वन्ह्यात्मकज्ञानस्वरूपत्वं यदुक्तं **तत्र** प्रमाणं चरके द्रष्टव्यम्—

'हृद्यं तत्स्यात् यदौजस्यं स्रोतसां संप्रसाधनम्।
तत्तद् यत्नेन संसेव्यं प्रशमो ज्ञानमेव च॥ इति

एवञ्च जीवस्य तत्संबद्धशरीरस्य च उपर्युक्तरीत्या स्वरूपेऽवगते सति इदं **स्फुटं** भवति यत् सर्वमेव जगत् शिवशक्त्योः क्रमशः मायादिसप्तावरणेन आवृतयोः **सतोः** तादात्म्यमेव जडचेतनभेदद्वैविध्येन भण्यते। तत्र नादरूपेण ओजः मातृपितृशरीरात् संप्राप्तं शिराद्वारा तत्तच्छरीरेषु सर्वत्र प्रसरति इत्यपि सिद्धमेव। **तथा**—हृद्यं तत् स्यात्'इति चरकवाक्येन ओजसः चेतनशरीरेषु वर्तमानस्य ज्ञान**रूपत्वमपि** साधितमस्ति। तदोजोरूपं ज्ञानं प्रमाणप्रमेययोः बाधितं सत् अप्रामाण्याशङ्कादिकवलितं यदा भवति, तदा तस्य ज्ञानस्य अस्थिरत्वं अभिनिवेशानात्मकत्वं **च सहजतएवापादयितुं** शक्यते। अतः ओजसस्थैर्यार्थं ओजोरूपस्य ज्ञानस्यापि **अबाधितत्वमपेक्ष्यते**। अबाधितत्वं च यत्र वस्तुनि प्रत्यक्षादिप्रमाणत्रयेण प्रमितत्वं

## वैदिकसिद्धान्तसंरक्षिणी

दोषं मत्वा स्वीयं मतं यद्युपस्थापयति तत् युक्तियुक्तंचेत् तन्मतं सर्वे तत्वपक्षपातिनः स्वीकुर्ववन्ति ।अनुतिष्ठन्ति च तथैव वेदार्थम् । तस्मात् पारस्परिकमतभेदसत्वेपि वेदस्यैव निर्णायकत्वात् भारते वर्तमानानां समस्तसत्संप्रदायानां विदुषां मतैक्यं

## जयमङ्गलाक्रोडपत्रम्

भवति, तद्वस्तुविषयकज्ञानस्य कालत्रये बाधः बृहस्पतिनाऽपि कर्तुमशक्यः । अतः यत्र यस्मिन् यस्मिन्नंशे प्रमाणत्रयप्रमितत्वं भवति, तस्मिन्तस्मिन्नंशे यज्ज्ञानमुत्पद्यते तदपि अबाधितत्वात् स्थिरमेव । इत्यत्र न काऽपि विप्रतिपत्तिः । तस्मात् विवेचनदृष्ट्या सचेतस्केन पुरुषेण प्रमाणत्रयप्रमितमेव वस्तु सदा आलम्बनीयम् । तच्च वस्तु भारतीयराजनीतावस्तीति नीतिलक्षणव्याख्यानावसरे प्राक प्रपञ्चितत्वानुसारेण निर्णेतुं शक्यते । अत एव अत्र भारतीयराजनीतौ अभिनिविष्टानां व्यवहारः 'विदग्धानां व्यवहारः इत्युच्यते । तथा तेषामत्र सन्तोषोऽपि नियत एव । "अपूर्वप्रतिभानं स्यान्मतिः" इति निर्दिष्टवचननिरूपितायाः मतेश्च भारतीयराजनीतिवित्सु लाभः सुलभः । एवंविधः लाभः भारतीय-राजनीतीतरराजनीतिषु अन्वयव्यतिरेकयोः व्यभिचारदर्शनात् पूर्वपरंपराप्राप्तस्य प्रमाणभूतस्य शब्दस्य पार्ष्ठिकबलानुपलंभात् व्यवहारेषु वेदग्ध्यस्य, सन्तोषस्य मतेश्च लाभः कालत्रये ऽबाधितरूपेण स्यादिति न वक्तुं शक्यते । अतएव भारतीयराजनीतीतरराजनीत्यवलंबने पर्यन्ते मतिक्षयस्य संभावितत्वात् ज्ञानरूपस्य जीवनाधारस्य उपर्युक्तस्योजसः क्षयः संभावयितुं शक्यते । सोऽयं दोषः भारतीयराजनीतौ नास्ति तथा सति ओजसि संरक्षिते "तन्निबंद्ध यथेप्सितमिति प्राङ्निरूपितवचनबलात् ईप्सितस्य सर्वस्यापि सौलभ्यं भवतीति हेतोः विद्वद्भिः शास्त्रनुकूल्येन वर्तनशीलैः यथेच्छया सर्वमपि स्वानुकूल्येन निर्मातुं शक्यते । इत्यस्ति भारतीयराजनीतेर्महान् गुण. ।

यदा प्रभृति अस्याः भारतीय राजनीतेः उपेक्षणं विद्वत्सु संप्रवृतम् तदा प्रभृति ओजसः न्यूनत्वं तेषु समायातम् । अत एव प्राङ्निर्रूपितः सुषुम्नान्तर्वर्तिनादरूपेण परिणम्यमानः ऊर्ध्वगामी तेजोवेगोऽपि अतीव न्यूनतमो जातः । तस्यैवायं परिणामोऽपि अनुभूयते, यत् प्रमाणत्रयसमन्वयबलात् योगिनः ओजसो बलेन अनेकविधान् रोगान् प्रशाम्यन्तिस्म । परं तेषां रोगाणां प्रशमनमोजसः न्यूनत्वेन न कर्तुं पार्यते । एतावदेव न, अपितु साम्प्रतम् प्रत्यक्षादिप्रमाणत्रयस्याधारेण वस्तुनिर्णायकानां मननशीलानां अभाव एव सर्वत्र दृग्गोचरीभवति । यदि तथाविधाः मननशीलाः तत्र तत्र स्थाने संभवेयुः तर्हि तेषां हृदि यादृशः संस्कारः नादरूपेण जागृयात् स एव नादः समस्तानां हृदि समानाकारतयैव उद्बुध्येत । ततश्च संस्कारमहिम्ना कलारूपेण वर्णेन स एव नादः तत्र तत्र स्थानेषु अभिव्यक्तो भूत्वा सर्वत्र सन्तोषं प्रसारयेत् सर्वेषां मनःसन्तोषः प्रमाणत्रयेण प्रमिते नीतितत्वे एकस्मिन्नेव स्वीकृते सति भवति। अस्य अभावादेव नीतिमननशीलाः दुर्लभतां गताः इत्युच्यते । अस्यापि कारणं

# [ वर्णधर्माः ]

**[1]स्वधर्मो [2]ब्राह्मणस्य—अध्ययनमध्यापनं यजनं याजनं दानं प्रतिग्रहश्चेति;**

---

## वैदिकसिद्धान्तसंरक्षिणी

नासुलभमिति। शेषं क्रोडपत्रे प्राचीनभारतीयदृष्टिकोणे च द्रष्टव्यम्। अधिकं सूतसंहिताया भाष्ये उक्तं तत एवावगन्तव्यम् इति।

## जयमङ्गलाक्रोडपत्रम्

तत्तत्कुलस्यापेक्षानुसारेण संरक्षणाभावोऽस्ति। न हि सर्वे संस्काराः सर्वत्र समुद्बुद्धाः भवन्ति। अपि तु ते पूर्वपरंपराप्राप्ताः संस्काराः तत्तत्कुलीनेष्वैव भवन्ति। यत्र कुले संस्कारा उद्बुद्धा न दृश्यन्ते तत्रकुलेषु अपेक्षितसंस्कारप्रतिबन्धकानां दोषाणां प्रसरणाद् कुलीनत्वप्रयुक्ताः संस्काराः अभिभवस्थितिं प्राप्ताः। अतः दोषनिर्हरणं कार्यम्। शुद्धकलेषु संस्कारास्तु मातापितृद्वारा प्राप्तेन ओजसा सह पूर्वपरम्परया प्राप्ता एव वर्तन्ते इति तत्तत्कुलीनानां कृते न संस्कारप्राप्तौ परिश्रमः किन्तु केवलं इतस्ततः समागतानां दोषाणां निर्हरणं संभाव्यमानेभ्यो दोषेभ्यो वा आत्मनः संरक्षणं च कर्तव्यं भवति। तदेव त्रयीमाधारीकृत्य चतुवर्णाश्रमधर्मेण कर्तुमभिलष्यते। एवं रीत्या त्रयीधर्मस्योपकारकत्वं शब्दप्रमाणेन निर्णीतम्, कुलोनानां कृते आत्मनः संभाव्यमानदोषेभ्यः संरक्षणाय, आत्मनि सञ्जातदोषनिर्हरणाय संभवतीति ज्ञापनानन्तरं वर्णाश्रम धर्मे तत्प्रयुक्तफलोपयोगित्वं प्रत्यभिज्ञायमानं भवितुमर्हतीति सिद्धम्। कथञ्चित् यदि वयं पूर्वोक्तं त्रयीधर्मस्योपकारकत्वं विस्मृत्य "बहवो जनाः वदन्तीति" कृत्वा वर्तामहे, तर्हि लोकोक्तिपश्चाद्भावेन अस्माकं गमनं अन्धविश्वासाधायकं सत् ओजसः क्षयान्नातिरिक्तमिति मन्तव्यम्।

## श्रीमूला

वर्णधर्मं विवृणोति—**स्वधर्म** इत्यादि।

## जयमङ्गला

अतो राज्ञा लोकधर्मा ज्ञातव्या इत्यादिदर्शनार्थमाह स्वधर्म इत्यादि। अयमधिकार उत्तरत्र वर्तते। तत्र ब्राह्मणस्य यजनं दर्शपूर्णमासादि। अध्ययनं स्वाध्याय एव। दानं दक्षिणेति। एतानि कर्माणि धर्माय। याजनाध्यापनप्रतिग्रहास्त्वर्थाय एते प्रधानभूताः। अन्येऽपि धर्मशास्त्रादवगन्तव्याः एवमुत्तरत्रापि योज्यम्।

---

नी० टी० १. कः कस्य स्वधर्म इति तत्प्रदर्शयन्नाह। स्वधर्म इत्यादि। धर्मशब्दोऽत्रानुष्ठाने।
२ योगविभागश्च पृथक् प्रयोजनप्रतिपादनार्थम्।

## वैदिकसिद्धान्तसंरक्षिणी

वर्णानां धर्ममाह-स्वधर्म इति। स्वग्रहणं इतरप्रतिषेधार्थम्। धर्मः कामसूत्रानुसारेण त्रयीप्रोक्तविधिशब्दार्थप्रवर्तनाया विषये प्रवृत्तिः, तथाविधाया निवर्तनाया विषये निवृत्तिर्वा।[1]

## जयमङ्गलाक्रोडपत्रम्

**'स्वधर्म' इति—**

**'भारतीय संस्कृतेः स्वीयं वैशिष्टयम्'।**

ननु वर्तमानसमये पूर्वसमृद्धभारतीयसंस्कृत्यपेक्षया तदितरसंस्कृतेः उन्नतिः तदन्तर्गतेषु ज्ञानरूपयस्योजसोऽपि समृद्धिः अवलोक्यते। तथा सति भारतीयसंस्कृतेः वैशिष्ट्यं अनितरसाधारणं कीदृशमस्तिन् इति चेत्, विमृश्यते। अस्याः भारतीयसंस्कृतेः वैशिष्ट्यं 'जन्मान्तर्गताः संस्कारा, धृतिः, 'प्रतिभा, एवं एतेषां गुणानां स्वाभाविकी स्थितिश्च' इति भेदेन चतुर्विधं दृश्यते। किञ्च विश्वस्मिन् यावत्यः संस्कृतयः वर्तन्ते, तावतीषु संस्कृतिषु भारतीया संस्कृतिः अतिप्राचीना, तथा पूर्वं समृद्धायाः भारतीयसंस्कृतेः ह्रासः इतरसंस्कृतिभिः कृतेनाक्रमणेन उत्तरोत्तरमभिवर्धमानो न तिरोहितः इत्यपि च निर्विवादमेव। इयमेवावस्था पाश्चात्यदेशेष्वपि-हिटलरजिम्, फासिजम् मिसमेरिजम्-इत्यादि तत्तत्संस्कृतीनां समभूत्। एवंसत्यपि पाश्चात्यदेशे समुद्भूतानां संस्कृतीनां भारतीय संस्कृतेश्च एकमितिहासप्रसिद्धं महदन्तरमस्ति। यत् पाश्चात्यप्रदेशेषु अनेकाः एवंविधाः संस्कृतयः यासां समुदयो ह्रासञ्च समभूताम्, ह्रासानन्तरं ताः संस्कृतयः कुत्र सन्तीति वक्तुमपि अशक्यप्रायतां गतमस्ति। भारतीयसंस्कृतिस्तु पूर्वं समृद्धा सती मध्ये क्षयं यातेव समभूदिति भासमानाऽपि अद्यावधि स्वस्यास्तित्वं स्थापयन्ती चकास्ते इति। अयं तु अन्यो विषयः यत् प्रचारकाणां न्यूनतया इतरसंसर्गेण च भारतीयसंस्कृतिविषये समुद्भूताभिः शङ्काभिः अस्याः अस्तित्वं अतीव स्वल्पपरिमाणतया लोकेषु दृश्यते इति। तावन्मात्रेण भारतीयसंस्कृतिः विनष्टा इति तु वक्तुं न शक्यते। पुनः विवेकद्वारा तर्कसाहा-

---

१ तदुक्तम्—कामसूत्रे अलौकित्वाददृष्टार्थत्वादप्रवृत्तानां यज्ञादीनां शास्त्रात्प्रवर्तनं लौकिकत्वात् दृष्टार्थत्वाच्च प्रवृत्तेभ्यः माँसभक्षणादिभ्यः शास्त्रादेव निवारणं धर्मः। इति। का० २।७ टी० "तत्र लोके रूपादिवदविदितस्वरूपत्वादलौकिका यज्ञादयः। ननु विशिष्टद्रव्य — गुणकर्मात्मकत्वाद्विदितस्वरूपाः कथमलौकिका इत्यत आहादृष्टार्थत्वादिति। तेषामनन्तरं फलस्यादर्शनात् ये अदृष्टफलाः सन्तो लौकिकाः न ते प्रेक्षावद्भिः दृष्टसामर्थ्योषधिवत्प्रवर्त्यन्ते इत्यप्रवृत्ताः। आदिशब्दात्तपश्चरणादयः। तेषामप्रवृत्तानां शास्त्रात्पवर्तनं धर्मः। अयं प्रवृत्तिरूपो धर्मः। लौकिकत्वात् दृष्टार्थत्वादिति ये दृष्टतृप्त्यादिफलाः सन्तः लौकिकास्ते तदर्थिभिर्मृगादिमांसभक्षणवत्प्रवर्त्यन्ते। तस्मात्प्रवृत्तेभ्य.श्वमांसभक्षणादिभ्यः। आदिशब्दात् सत्वाभिद्रोह परस्वादानादिभ्यः शास्त्रादेव निवारणं प्रतिषेधनं इति। अयन्निवृत्तिरूपः इति।

## वैदिकसिद्धान्तसंरक्षिणी

अत्रेदं वोध्यम्—इत्युक्तम् प्रवृत्तिर्निवृत्तिश्च धर्मः कामसूत्रे वर्तते। तेन एवञ्च एकमेव गङ्गास्नानं उक्तरीत्या प्रवृत्तिविषयश्चेत् धर्मः अन्यथा अर्थः कामो वा भवति इति। मन्तव्यम्

सर्ववैदिकधर्मरक्षाणेषु ब्राह्मणत्वरक्षणं मुख्यमुक्तं भगवत्पूज्यपादैः—

ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मः। इति

अतो ब्राह्मणस्य धर्ममाहाध्ययनमिति। एतेषु अध्यापनयाजनप्रतिग्रहाणां धर्माणां वृत्तिरूपत्वम् इति नीतिसारे उक्तम् अत्रापि बोध्यम्। तदुक्तम्—

याजनाध्यापने शुद्धे विशुद्धाच्च प्रतिग्रहः।
वृत्तित्रयमिति प्रोक्तं मुनिभिर्ज्येष्ठवर्णिनः। इति। का० २-३।

मूले तु उपस्थितिलाघवात् परस्परसान्निध्यात् धर्मांशं तत्प्रयुक्त धर्मवृत्त्यंशञ्चानुसन्धाय अध्ययनमध्यापनमिति रीत्योक्तम्।

## जयमङ्गलाक्रोडपत्रम्

य्येन शङ्कायाः निरासान्तरं सुषुप्तिगतायाः इव अस्याः संस्कृतेः अभ्युदयः पुनः बाहुल्येन लोकेषु प्रदर्शयितुं नाशक्यम्। तदुक्तम्—

'अभिवर्षति योऽनुपालयन् विधिबीजानि विवेकवारिणा।
स सदा फलशालिनीं क्रियां शरदं लोकइवावतिष्ठति॥' इति।

यदि च मूलत एव भारतीया संस्कृतिः नष्टा स्यात् तर्हि वारिणा महता प्रयत्नेन कृतेऽपि सेचने बीजाभावे अङ्कुरानुत्पत्त्या फलपत्रशाखादीनामनुत्पत्तिरिव भारतीय-संस्कृतेरपि अभ्युदयः कथं शक्यः स्यात् ? तस्मात् भारतीयसंस्कृतेः मूलभूतं तत्त्वम् अतीव सुदृढमस्ति। ग्रीष्मकाले सुदृढदूर्वाबीजं भूमौ विलीनमिव इयं संस्कृतिः बद्धमूला तिष्ठति। पुनः विवेकजलप्राप्त्यनन्तरं दूर्वासमृद्धिरिव भारतीयसंस्कृतिसमृद्धिः नाशक्या। मूलमूतं बीजं भारतीयेषु वेदादारभ्य कुलीनत्वस्य सुव्यस्थितरीत्या संरक्षणमेव नान्यत्। यन्माहात्म्यं कालिदासस्य अधोनिदिर्ष्टेन पद्येन स्मारयितुं शक्यते। तथाहि —

'युवा युगव्यायतवाहुरंसलः कपाटवक्षाः परिणद्धकन्धरः।
वपुःप्रकर्षात् अजयत् गुरुं रघुस्तथापि नीचैर्विनयाददृश्यत् ॥र०वं०३स०

अर्थात् जराजीर्णस्य कृशाङ्गस्य राजपदाधिष्ठानप्रयुक्तकृतभूतिपरिश्रमस्य वृद्धस्य पितुः दिलीपस्य पुरतः स्वभावतः युगव्यायतबाहोः कपाटवक्षसः परिणद्धकन्धरस्य यूनः रघोः सभामुपस्थाय विनयेन उपस्थानमभूत् तस्य गर्भपिण्डेनैव सह मातृपितृद्वारा संस्कारसाचिव्यप्रयुक्तं कुलीनत्वमेव कारणमिति वक्ष्यमाणात् कालिदासोक्तपद्यादेव निर्णीयते—

'रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकुमन्नतत्वम्।
न कारणात् स्वात् बिभिदे कुमारः प्रर्वातितो दीप इव प्रदीपात्॥'

## जयमङ्गलाक्रोडपत्रम्

अनेन हि पद्येन पितुः मातुश्च शरीरस्य शुद्धस्य यादृशः संस्कारः यादृशी च आकृतिः, यादृशं च तेजः, यादृशं बलं च, यादृशं च उन्नतत्वं तादृशमेव तत्सर्वं विशुद्धमातापितृजन्ये बालके गर्भत एव इति वर्णितम्। इयं च मातृपितुशुद्धिः जाति-प्रधान-संस्थायां सत्यां संभवितुमर्हति। दृष्टंचैतत् अद्यावधि तत्तज्जातीयसंस्थानां रुचिभेदानुसारेण आहारविहारादिषु। यथा-द्रविडजातीयः बालकः अम्लं, महाराष्ट्र-जीतोयो मधुरम् तैलङ्गजातीयबालकः तिक्तं आस्त्रदते। किंवहुना? तत्तद्बालकाना-मुदर्यः अग्निरपि स्वानुकूलतया तांस्तानेव रसान्वाऽऽहरति, पचति च। अत एव तेषां तेषां रसः 'आहार' इत्युच्यते। सा चेयमाहाररुचिः पिण्डत एव उदर्याग्नौ अभिव्यज्यमाना जातिप्राधान्यादेव वर्तते। तथोक्तम् वेङ्कटाध्वरिणा लक्ष्मीसहस्र-श्लोक-संपुटे दशावतारे कल्क्यवतारे:—

अम्लेच्छां स महीं करिष्यति विभुः चान्ध्रीयजिह्वामिव।

इदमेव तत्वमभिप्रेत्य अभिनवगुप्तपादैः तत्तच्छरीरे तत्तद्संस्काराणामुदबोधे तत्तज्जातीयता कारणम् इत्यमिहितमस्ति। तथैव गीतायामपि उक्तम्—

कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः। इति[1]।

अ० १८-४१

---

१ शां० भा० ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशस्तेषां ब्राह्मण-क्षत्रियविशां शूद्राणां च शूद्राणामसमासकरणमेकजातित्वे सति वेदेऽनधिकारात्, हे परन्तप कर्माणि प्रवि-भक्तानीतरेतरबिभागेन व्यवस्थापितानि, केन स्वभावप्रभवैर्गुणैः स्वभाव ईश्वरस्य प्रकृतिस्त्रि-गुणात्मिका माया सा प्रभवो येषां गुणानां ते स्वभावप्रभवास्तैः। शमादीनि कर्माणि प्रवि-भक्तानि ब्राह्मणादीनाम्। अथवा ब्राह्मणस्वभावस्य सत्वगुणः प्रभवः कारणं, तथा क्षत्रियस्वभावस्य सत्वोपसर्जनं रजः प्रभवः, वैश्यस्वभावस्य तमउपसर्जनं रजः प्रभवः, शूद्रस्वभावस्य रज उप-सर्जनं तमः प्रभवः, प्रशान्त्यैश्वर्येहामूढतास्वभावदर्शनाच्चतुर्णाम्। अथवा जन्मान्तरकृतसंस्कारः प्राणिनां वर्तमानजन्मनि स्वकार्याभिमुखत्वेनाभिव्यक्तः स्वभावः स प्रभवो येषां गुणानां ते स्वभावप्रभवा गुणाः। गुणप्रादुर्भावस्य निष्कारणत्वानुपपत्तेः स्वभावः कारणमिति कारण-विशेषोपादानन्। एवं स्वभावप्रभवैः प्रकृतिप्रभवैः सत्त्वरजस्तमोभिर्गुणैः स्वकार्यानुरूपेण शमादीनि कर्माणि प्रविभक्तानि। ननु शास्त्रप्रविभक्तानि शास्त्रेण विहितानि ब्राह्मणदीनां शमादीनि कर्माणि, कथमुच्यते सत्वादिगुणप्रविभक्तानीति। नैष दोषः। शास्त्रेणाऽपि ब्राह्मणदीनां सत्वादिगुणविशेषापेक्षयैव शमादीनि कर्माणि न गुणानपेक्षयैवेति शास्त्रप्रविभक्तान्यपि कर्माणि गुणप्रविभक्तानीत्युच्यन्ते।

श्रीधरी—ननु च यथैवं सर्वमपि च क्रियाकारकफलादिकं प्राणिजातं च त्रिगुणात्मक-मेव। कथं तर्हि अस्य मोक्ष इत्यपेक्षायां स्वस्वाधिकारविहितैः कर्मभिः परमेश्वराराधनात्-तत्प्रसादलब्धज्ञानेनेत्येवं सर्वगीतार्थसारं सङ्गृह्य प्रदर्शयितुं प्रकरणान्तरमारभते—'हे परन्तप शत्रुतापन ब्राह्मणानां क्षत्रियाणां विशां शूद्राणां च कर्माणि प्रविभक्तानि प्रकर्षेण विभागतो—

## जयमङ्गलाक्रोडपत्रम्

एतेन टिपण्युक्तभाष्यादिवचनप्रामाण्यात् तेषां तेषां संस्काराणामभिव्यञ्जने ब्राह्मणत्वादिकमभिव्यञ्जकमस्तीति सिद्धम्। इदमेव जातिमर्यादया स्थितस्य भारतीयसंस्कृतिमतः कुलीनत्वप्रयुक्तं साभिनिवेशं विनयस्थापनं भारतीयसंस्कृतेः वैशिष्टयम्। किञ्च यत्र कुलीनताप्रयुक्ता अपेक्षिता संस्काराः उद्बुद्धा वर्तन्ते तान् विलोक्य इतरस्मिन् कुलीने सर्वथा असूयालुत्वं न भवतीत्यपरं तत्त्वं एतत्संस्कृतिवैशिष्टयमधोलिखितेतिहासादवगम्यते। तद्यथा—कदाचित् भीष्मार्जुनसङ्ग्रामे अर्जुनः स्वबाणप्रहारेण भीष्मस्य रथमनेकक्रोशं पश्चात् प्रत्यावर्तितवान्। ततः भीष्मः, सर्वजगदधिष्ठाता श्रीकृष्णः यत्र रथे स्थितः, तं अर्जुनरथं पश्चात्भागे चतुर्हस्तं प्रत्यावर्तितवान् तदा अमुं भीष्मस्य संस्कारोद्बोधमपूर्वं दृष्ट्वा अर्जुनस्य पुरतः कृष्णः भीष्मं प्रशशंस इति। अतः ईदृशी अनसूयालुत्वस्थितिः सर्वत्र साङ्कर्यं प्रसूते जातिशुद्धिविलोपे संस्कारविनाशानन्तरं न भवितुमर्हति इति दार्ढ्येन वक्तुं शक्यते। अतः विशेषतया राजनीतौ अपेक्षितानां संस्काराणं एतच्छरीरे पिण्डशुद्धया उद्बोधनाय जातिसाङ्कर्यं पर्यन्ते विरोधि भविष्यतीत्यत्र नास्ति सन्देहः।

न च प्रयत्नेन शिक्षणादिना राजनीतौ राज्यसञ्चालनाय अपेक्षिताः संस्काराः विभिन्नजातीयेषु याचितकमण्डनन्यायेनापि आधातुं शक्यन्ते तथा सति तत्तजातीयेषु कुलीनेषु तथाविधसंस्काराणां किं मूल्यम् इति वाच्यम्। शुद्ध संस्कारैः संस्कृतः आपतितायां विपदि धीरो भूत्वा स्वीयं पूर्वं प्रतिज्ञातं तथैव निर्वहेदिति दाढ़र्यैन वक्तुमनाश्वासात्। नचेष्टापत्तिरितिवाच्यम्। विना विपत्तिं राजनीतौ अधिकृतस्य उत्साह—प्रभावक्लेशसहिष्णुतावृत्यनुरागस्थैर्यगुणानां परीक्षणस्य अशक्यत्वात् इति। अतो येन नेत्रा भवितव्यं तेन विपत्तिमात्मनः भूषणं मत्वा तदानीम् उपर्युक्ताः गुणाः अवश्यं परिचाययितव्याः इति। येषु कुलीनत्वं नास्ति ते विपदि धीरा भविष्यन्ति' इति नास्ति नियमः। सोऽयं जातिप्रधानायाः भारतीयसंस्कृतेः पाश्चात्यसंस्कृत्यपेक्षया विशेषः स्वीकर्तव्य एव। अथ प्रतिभाविषयेऽपि उच्यते। जातिसाङ्कर्ये पूर्णतया संपन्ने परस्परसत्प्रतिपक्षितत्वेन राज्यसञ्चालनाय अपेक्षितानां संस्काराणां विलयनं भविष्यति। अस्तु कामं, तेन किम्? इति चेत् संस्काराभावेन स्मृतिविलोपो भविष्यतीत्यर्थादायातम्। अतः पूर्वं निर्दिष्टायाः अपूर्वप्रतिभारूपायाः मतेः अभावेन जाडयं निश्चितमेव। तच्च कर्तव्याविस्मरणात्मकं। सति च तस्मिन् स्वहस्तेनैव अर्जितां स्वतन्त्रतामपनोद्य आत्मनः पारतन्त्र्यमपि स्वहस्तेनैवापादितं स्यात् किंच-नह्यत्रैव

---

विहितानि। शूद्राणां समासात्पृथक्करणं द्विजत्वस्वभावेन वैलक्षण्यात्। विभागोपलक्षणमाह—'स्वभावः सात्त्विकादिः प्रभवति प्रादुर्भवति येभ्यस्तैर्गुणैरूपलक्षणभूतैः। यद्वा स्वभावः पूर्वजन्म—संस्कारस्तस्मात् प्रादुर्भूतैरित्यर्थः। तत्र सत्वप्रधाना ब्राह्मणाः। सत्वोपसर्जनरजःप्रधानाः क्षत्रियाः। तमउपसर्जनरजःप्रधाना वैश्याः। रजउपसर्जनतमः प्रधानाः शूद्राः॥ ४१॥ इति।

## जयमङ्गलाक्रोडपत्रम्

विश्रामः, अपितु जाड्येन सह मदमानयोः अभ्युदयश्च ज्ञानाभावे धृतेरसत्वेन नियतः इत्यपि बोध्यम्। नन्वस्तु इष्टापत्तिः। इति चेन्न। ततः गुरुं देवतां वा मदमानान्वितः न भजते ततश्च जनापरागो अवश्यं नियत एव। इत्येवं दोषोऽवश्यमुत्पद्येत इति गृहाण। तथा च राजनीतौ प्रविष्टः यः कोऽपि भवतु सः राज्स्य यस्मिन् कस्मिन्नपि पदेऽधिष्ठितोऽपि स्वदुर्नयेन शङ्काकवलितः सन् यदि विचरेत् तर्हि नीतिमात्मानं च विहन्यात् इत्यादयः दुष्परिणामा अपि जातिमर्यादया प्राप्तसंस्काराणां स्व कर्मणि अभिनिवेशप्रयोजकानामभावे सिद्धा भवन्ति इति स्थितम्। न च गुरुदेवताः न समुद्धतो भजति इति दोषः उक्तः तन्निरासाय गुरुदेवताभजनमावश्यकमिति भाति। तस्य प्रकृते क उपयोग इति शङ्क्यम्। गुरुभक्त्यैव उपर्युक्तदोषाणां निरसनस्य संभवदुक्तिकत्वात्। तदुक्तम्।

भयं द्वितीयाभिनिवेशतः स्यात्—
ईशादपेतस्य विपर्ययोऽस्मृतिः।
तन्मायायाऽतो बुध आभजेत्तं।
भक्त्यैकयेशं गुरुदेवतात्मा॥' इति। (भागवते ११-२-३७)

अतः भागवतस्यापि आशयः अयमेव। यत् निर्भयत्वाय अकार्यान् निवृत्तये वा साधनभूतायाः धृतेः संपादनाय गुरुदेवता-भक्तिः साधनमिति। सा च कुलोनैरेव कर्तुं शक्यते, नान्यैः तेष्वेव प्रागुक्तानसूयुत्वस्य संभवादिति। किञ्च राज्यसञ्चालनाय अपेक्षितायाः सात्विकीप्रतिभायाः उद्बोधनाय गुरुसङ्गतिः यथा संभवेत् विनय-पुरःसरं, तथा प्रयतनमिति। तदुक्तं गौतमेनापि "तं गुरुशिष्य स ब्रह्मचारिशिष्टश्च योर्थिभिरनसूयुभिरभ्युपेयात्'इति। अस्यायंभावः—यत् यावत्पर्यन्तं शास्त्रार्थः गुरुकृपया स्वयं न स्फुरति तावत्पर्यन्तं शास्त्राध्ययनस्य फलमेव न प्राप्तमित्यपि अधिगच्छति शास्त्रार्थ इति पद्येन प्राङ्निरूपितमत्र स्मर्तव्यम्। 'ननु सरस्वती तदुपासकैः उपास्यते तथापि जाड्यं न विनश्यति इति चेत् सरस्वत्याः उपासना न जाता इत्येवं वक्तव्यं हठादापतितं भवति। तदुक्तम्—

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता।
या वीणा-वरदण्डमण्डितकरा या श्वेतपद्मासना॥
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा॥

किञ्च भारतीयराजनीतेरुपर्युक्तवैशिष्ट्येण सह तृतीयं वैशिष्ट्यमधोनिर्देशनुसारेणान्यदपि उपस्थापयितुं शक्यते। तद्यथा—उपर्युक्तरीत्या वेदगुरुप्रसादकामनया कुलीनाः धर्मतत्वविषये यथा यथा प्रतिभां प्राप्नुवन्ति तथा तथा एते कञ्चन अन्तःशमसन्तोषमनुभूय अर्थमप्रधानीकृत्य स्वीयेषु कर्तव्येषु रमन्ते इति। यत्र किल कुलीनत्वं वर्णन

## जयमङ्गलाक्रोडपत्रम्

कर्मणा वा विपर्यस्तं तत्र विद्याप्रतिभाप्रयुक्तः शमसन्तोषः स्यादेवेति वक्तुं न शक्यते। बहुना तदवस्थायां तद्विद्याः प्रधानतया अर्थं मन्यमानाः अर्थलाभे सत्येव सन्तोषमनुभवन्ति। अतः तस्य अर्जनाय वर्धनाय च ते प्रवर्तन्ते। तदानीमिदमपि सिद्धं यत् अकुलीनेषु अर्थप्रधानमनोवृत्तेः स्वभावात् रौद्ररसताऽपि अभिवर्धते। न चास्तां तथैवेति वाच्यम्, तथासति स्वातन्त्र्ये सुखानुभवस्य विस्मरणप्रसङ्गात्।

तथाहि—तर्कः मतिश्च व्यभिचारिभावौ रौद्रे न स्तः इति अर्थरुचिः स्वातन्त्र्येण जीविकोपायमजानानः सेवावृत्तिं कुर्वाणः स्वीयं स्वातन्त्र्यं विस्मरति। नात्र आश्चर्यम्। यतो हि क्वचित् कुलीनोऽपि पञ्जरे अवरुद्धः शुकः उड्डयनं विस्मरति। किमुत सङ्कीर्णविषये।

ननु सांप्रतं कुलीनेष्वपि स्वातन्त्र्यापादकः जाडयाभावो न दृश्यते ? इति चेदुच्यते। यत्र हि कुलीनत्वं सुरक्षितमस्ति दोषाणां च प्रसरणं नास्ति तत्र जाड्यं न भवति। अतः तत्प्रसरणं यथा न भवेत् तथा प्रयतनमपेक्ष्यते तत्रत्यायाः स्थितेर्विलक्षणाया अद्यापि दृश्यमानत्वात् तद्यथा—

'नाभिषेको न संस्कारः सिंहस्य क्रियते वने।
विक्रमार्जित-सत्वस्य स्वयमेव मृगेन्द्रता। इति। (तन्त्रे)

मृगेन्द्रापेक्षया सामर्थ्ये गजः अतिबलवान् परं गजः सिंहं दृष्ट्वा विकृतः स न स्वसामर्थ्यं विस्मरति जडश्च भवति। तत्र कारणं अप्रियदर्शनप्रयुक्तं जाडयम्। तथा मीनः बडिशनिबद्धं भोज्यं दृष्ट्वा तद्ग्रहणाय प्रयतते। आत्मानं च कण्टकेन बद्धमनुभवन्नपि स्वभोज्यं त्यक्तुं नेहते। तत्रापि कारणं प्रियदर्शनप्रयुक्तं जाडयमेव। उभयत्रापि कर्तव्यविस्मरणं पारतन्त्र्यं च समानमेव। तदुक्तम्—

'जाडयमप्रतिपत्तिः स्यात् सर्वकार्येषु सर्वदा।
प्रियाप्रियश्रुतेस्तत्तद्दर्शनैर्व्याधिभिर्भवेत्॥
तूष्णीमिप्रतिभा चाक्ष्णोरनिमेषोऽनवेक्षणम्।
अभाषणं पारवश्यं एतैर्जाडयं निरूप्यते॥ इति। भा० प्र० १ अधि०

एतद्वैपरीत्येन मृगेन्द्रस्तु गजेन्द्रन्दृष्ट्वा लघुत्वात् आत्मनः स्वरूपं ध्यायति कर्तव्यं च न विस्मरति। सहजतयैव स गजं निहन्तुं यतते निहन्ति च। तत्र कारणं जाडयाभावः सत्वात्मिका धृतिर्वा। तदुक्तं उत्साहप्रशंसायां कामन्दकेन—

प्रमाणाभ्यधिकस्यापि महत्सत्वमधिष्ठितः।
करोत्येव पदं मूर्ध्नि केसरी मत्तहस्तिनः॥१६॥ इति। का० नी० १४।प्र०२०

एवमेव ये गार्हस्थ्ये कर्मणि आसक्ताः सांसारिकं वस्तुजातं एकत्रीकुर्वन्तोऽपि यदा—

'हे बाबा, नास्ति तैलं न च लवणमरीच्यादि वाचां' प्रचारः।

## जयमङ्गलाक्रोडपत्तम्

इति श्रृण्वन्ति तदा ते तदप्रियं मन्यमानाः सदा व्यथन्ते। ततश्च क्वचिद-प्रियदर्शनेन क्वचिद् प्रियदर्शनेन च जड़ताप्रयुक्तं पारतन्त्र्यम् कुलीनत्वप्रयुक्त-संस्कारोद्बोधाभावेन उत्लङ्घयितुमसमर्था भवन्तीति अनुभवसिद्धम्। अतः आत्मनः जाड्यात् सरंक्षणाय स्वस्मिन् अविकारित्वमपेक्षते। तदर्थं च धृतिरपि। सा च स्वभावसिद्ध संस्काराभावे न भवितुमर्हति। ते च शुद्धमातापितृप्रयुक्तया दोषा-पहरणसहचरितया जात्या उद्भवन्ति। अत्र विषये एक एव प्रश्नः अवशिष्यते। यत् धृतिभावसम्पादनशीलैः योगक्षेमौ कथं निर्वतितव्यौ इति। तदुत्तर तु स्वयं कृष्ण एव उक्तवान्—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥ इति

तथा पण्डितराजेन जगन्नाथेनापि—

'सन्तापयामि किमहं धावन् धावन् धरातले नितराम्।
अस्ति मम शिरसि नन्दकुमारः प्रभुः परमः।' इति

अत्रेदं तत्वं गीतावाक्येन रसगङ्गाधरवाक्येन च धृतिभावः आलम्बनमित्युक्तम्। स च जोविकोपायः अस्माभिरुच्यते। यतः स एव लोकविश्वासस्य हेतुरस्तोति यत् प्राक् प्रपञ्चितं तत् स्मर्तव्यम्। तथा च धृतिसंपन्नं नरं लोकः यथा विश्वसिति, तथा ईश्वरोऽपि तं विश्वसित्येव। जगन्मित्रं सः कुलोनान् कथमुपेक्षेत। स्वस्वधर्म-स्थितान् पशुपक्ष्यादीनपि ईश्वरो जोवयति, किमुत बुद्धिसंपन्नान् संस्कारसंपन्नान् ईश्वरो न जीवयेत्। इति सुधिय एव विचारयन्तु। तदुक्तं मलुकदासेन हिन्दीसाहित्ये–

अजगर करै न चाकरी पंछी करै न काम।
दास मलूका कह गयो सबके दाता राम॥

तथैव समर्थरामदासैः—

'ब्राह्मणत्व साण्डूनि झाले शिष्य शिष्यांचे।'

तथा—

एष नित्यो महिमा ब्राह्मणानामिति।'

तस्मात् जीविका अनेन मार्गेण सुलभा। तदुक्तं मनुना जीविकाप्रकरणे -

'न लोकवृत्तं वर्तेत वृत्तिहेतोः कथञ्चन।
अजिह्मामशठां शुद्धां जीवेद् ब्राह्मणजीविकाम्॥११॥
सन्तोषं परमास्थाय सुखार्थी संयतो भवेत्।
सन्तोषमूलं हि सुखं दुःखमूलं विपर्ययः।
अतोऽन्यतमया वृत्त्या जीवंस्तु स्नातको द्विजः।
स्वर्गायुष्ययशस्यानि व्रतानीमानि धारयेत्॥ इति

## जयमङ्गलाक्रोडपत्रम्

जीविकोपायं धृतिभावमुपेक्ष्य राजनीतिं च कुलीनैः विस्मृत्य यदाप्रभृति स्वीयाः पुत्राः आङ्ग्लशिक्षांमध्याप्य भक्ष्याभक्ष्येषु शौचाशौचेषु प्रेरिताः, अतएव तदा प्रभृति एते लोकस्य ईश्वरस्य वा अविश्वास्यत्वस्थितौ समापतिताः। एवं स्थिते दारिद्र्यं नियतमेव। तदुक्तम्—

अविश्वासो हि जन्मभूमिरलक्ष्म्या इति।

यथा अस्तेयप्रतिष्ठायां नष्टायां सर्वरत्नोपस्थानं कथं भवेत्? इति प्रश्नः असमाहितो भवति, तथा धृतिभावमुपेक्ष्य कृतः अयं प्रस्तुतप्रश्नोऽपि असमाहित एव तिष्ठेत्। अतः वंशपरंपरया शुद्धमातापितृजन्ये पिण्डे जन्मान्तर प्राप्त-संस्काराणामुद्बोधेन जन्मत एव स्वस्व कर्तव्यं प्रति अपूर्वप्रतिभानस्य, अनसूयालुत्वस्व, धृतेः संस्काराणाञ्च दोषसंसर्गाभावे स्वाभाविकी स्थितिरिति प्रमाणत्रयण इदं प्रमितवस्तुनः भारतीयसंस्कृतेः पाश्चात्यसंस्कृत्यपेक्षया वैशिष्ट्यं सिद्धम्।

### "जातेरस्तित्वस्यानुभवः"

ननु जातिप्रयुक्ताः संस्कारादयः गुणाः भारतीय-संस्कृतौ शुद्धमातापितृ-प्रयुक्ताः इत्युच्यते परन्तु चतुर्वर्णाश्रमेषु अवान्तरजातेः अस्तित्वे प्रत्यक्षप्रमाणप्रमितत्वं कुतो मन्तव्यम्। इतिचेन्निरूप्यते।

प्रायः कृत्वा ब्राह्मणत्वजातेः तत्तद्रत्नत्वादिजातेरिव प्रत्यक्षसिद्धत्वमस्ति, कुशल-परीक्षकैः तत्तद्रत्नादीन् हस्ते गृहीत्वैवरत्नत्व जातिप्रत्यभिज्ञानसामर्थ्यदर्शनात्। परन्तु ये अकुशलाः सन्ति ते इन्द्रियसबन्धसत्वेऽपि जातिं प्रति प्रत्यभिज्ञातुं असमर्था भवन्तीति तेषां कृते अभिव्यञ्जकत्वेन अपरे धर्माः पर्योक्तव्या भवन्ति। तदनुसारेण तत्तज्जातिप्रत्यक्षेअभिव्यञ्जकत्वेन आयुर्वेदोक्ता चिकित्सा अपि वक्तु शक्यते। ततस्तन्मुखेन जातीनां प्रत्यक्षत्वं कथं भवतीति निरुच्यते। तथाहि—

स्तनन्धयस्य कुमारस्य वा नेत्ररोगविशेषे तदपसारणाय उपयुक्तेषु योगेषु प्रायः सर्वत्र स्त्रास्तन्यं चिकित्साशास्त्रे चिकित्सात्वेन विहितमस्ति। तद्द्रष्टव्यं काश्यप- संहितायाम्।[1]

यदि तद्रोगापसारणे विजातीयमातुः स्तन्यं तस्य नेत्ररोगे क्षिप्यते, तर्हि स रोगः विशेषतया अभिवृद्धो भवति। किंबहुना कदाचित् विजातीयमातुः स्तन्येन शिशोः

---

१ चक्षुष्या पुष्पकं माता—रोचना(हर्रे)ऽथ रसाऽञ्जनम्।
कतकस्य फलं षष्ठं तेषां कल्पान्निबोध मे॥ १०॥
जन्मतश्चतुरो मासान् पञ्च षड्वाऽक्षिरोगिणाम्।
विघृष्य नारीस्तन्येन चक्षुषी प्रतिपूरयेत्॥
षटकल्पाध्यायः १८३ पृ०

## जयमङ्गलाक्रोडपत्रम्

सङ्गोपनं आपतितं चेत् विजातीयरक्तसंयोगात् तस्य ऐहिकयात्रासंपूर्त्याचिकित्सकस्यापराधात् स पञ्चत्वं प्राप्नुयात्। अतः शिशोः सङ्गोपनाय मातुः स्तन्याभावे सजातीया धात्री उपयोक्तव्या इति वदन्ति आयुर्वेदविदः।[1]

---

१ तदुक्तं सुश्रुतादौ—.

ततो यथावर्णां धात्रीमुपेयात्। मध्यमप्रमाणां मध्यमवयस्कामरोगां शीलवतीमचपलामलोलुपामकृशामस्थूलां प्रसन्नक्षीरामलम्बोष्ठीम् अलंबोर्ध्वस्तनीमव्यङ्गामव्यसनिनीं जीवद्वत्सां दोग्ध्रीं वत्सलामक्षुद्रकर्मिणीं कुले जातामसंभूयिष्ठैश्च गुणैरन्वितां श्यामामारोग्यबलवृद्धये बालस्य। तत्रोर्ध्वस्तनी करालं कुर्यात्। लम्बस्तनी नासिकामुखं छादयित्वा मरणमापादयेत्। ततः प्रशस्तायां तिथौ शिरःस्नातमहतवाससमुदङ्मुखं शिशुमुपवेश्य धात्रीं प्राङ्मुखीं चोपवेश्य दक्षिणं स्तनं धौतं ईषत्परिसृतमभिमन्त्र्य मन्त्रेणानेन पाययेत्॥ २५॥

"चत्वारः सागरास्तुभ्यं स्तनयोः क्षीरवाहिनः।
भवन्तु सुभगे नित्यं बालस्य बलवृद्धये।
पयोऽमृतरसं पीत्वा कुमारस्ते शुभानने।
दीर्घमायुरवाप्नोतु देवाः प्राश्याऽमृतं यथा॥२७॥ इति

अतोऽन्यथा नानास्तन्योपयोगस्यासात्म्याद् व्याधिजन्म भवति।

२८ सुश्रुते शारीरस्थाने अ० १०

तत इत्यादि। यथावर्णामिति। ब्राह्मणस्य ब्राह्मणीं क्षत्रियस्य क्षत्रियां इत्यादि धात्रीमुपेयात् स्तनदायिनीसमीपं गच्छेत् भिषक् बालग्राहको वा इति शेषः। श्यामा हि प्रायशः प्रचुरक्षीरा भवति। उक्तविपर्यासेन दोषस्य दिङ्मात्रं दर्शयनाह—तत्रेत्यादि। इति शब्दोऽयं एवंप्रकारे। तेन अन्येपि दोषाः एवंप्रकाराः स्वयमप्यूह्य ज्ञातव्याः। अभिमन्त्रणमाह—चत्वार इत्यादि। नियतधात्र्यभावे दोषं दर्शयन्नाह—अतोन्यथेत्यादि।

मातुरेव पिबेत् स्तन्यं तद्ध्यलं देहवृद्धये।
स्तन्यधात्र्यावुभे कार्ये तदसम्पदि वत्सले॥१५॥
अव्यङ्ग्ये ब्रह्मचारिण्यौ वर्णप्रकृतितः समे।
नीरुजे मध्यवयसौ जीवद्वत्से न लोलुपे॥१६॥
हिताहारविहारेण यत्नादुपचरेच्चते।

बालो मातुः जनन्या एव स्तन्यं पिबेत्। कुतः। यस्माच्च तस्याः स्तन्यमतिशयेन देहस्य वृद्धये स्यात्। तदसम्पदि मातृस्तन्यासम्पत्तौ द्वे स्तन्यधात्र्यौ च वत्सले–स्नेहले कार्ये। तथा व्यङ्ग्यरहिते, ब्रह्मचारिण्यौ वर्जितमैथुने, वर्णेन प्रकृत्या–

## जयमङ्गलाक्रोडपत्रम्

अत्रायं विशेषः—आधुनिकपद्धतौ मातुः स्तन्यालाभे शिशोः सङ्गोपनाय तदीयरक्तसजातीयरक्तवत्या धात्र्या दुग्धमनुमोद्यते तावता जातेरस्तित्वं सिध्यत्येव। एतावन्मात्रेणापि बालकानां प्रतिभादिसंपत्तिलाभदृष्ट्या जीवनं निर्बाधं भवेदेवेति आयुर्वेदशास्त्रं न मनुते नवीनशोधानुसारेण असवर्णधात्र्याः सजातीयरक्तवत्या अपि दुग्धमुपार्जयितुं शक्यत्वात्। तेन जाड्यादिदोषोद्भवप्रसारप्रसक्तेः। अतः तद्दोष-निरासाय धात्र्यां सजातीयरक्तमिव स्वसाजात्यमपि शिशुसङ्गोपनाय च काम्यते। नचायुर्वेदेन अत्र प्रसङ्गे रक्तपरीक्षणं नोक्तमिति वाच्यम्। स्वसजातीयदुग्धेनैव स्व-सजातीयरक्तस्य अवश्यंलाभात्। तत्र कारण यत् रक्तेन प्रभावितं **'लिम्फाटिक'** तत्वं दुग्धरूपतामापन्नं दुग्धसजातीयरक्तसाजात्यस्यानुक्तत्वेऽपि संभवति इति रक्तपरीक्षणानुक्तावपि न न्यूनतामापादयति। एवं च आयुर्वेदप्रामाण्यात् अन्वय-व्यतिरेकाभ्यां च जातिः धर्मशास्त्रेणापि प्रत्यक्षसिद्धा। तामनुरुदध्य सर्वो वर्णाश्रमधर्मः विहितः इति नात्रानौचित्यस्यावसरः। तद्वैपरीत्येनाचरणे तु अनर्थोऽपि संभवितु-मर्हति, इत्यवधेयम्। तदुक्तम्—

'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः। इति ( भ० गी० १ अ० )

अस्मात् कारणात् साम्प्रतं विदेशीयानां समृद्धिः वर्तते इति दृष्ट्वा कुलीन-तायाः परित्यागः **बेश्यासमृद्धिमवलोक्य** दरिद्रायाः सतेजस्कायाः पतिव्रतायाः पाति-व्रत्यपरित्याग इव अनुचिताय भवेत्। चाकचक्यमात्रेण अकुलीनेषु धनसमर्पणम्, कुली-नेषु दारिद्र्यानुभवात् कुलीनतायाः परित्यागश्च इति उभयमपि भाविपरिणामालोचने

---

च तुल्ये, तथा निरामये, मध्यवयस्के जीवद्वत्से न लोलुपे—लौल्यवर्जिते आदरयुक्ते, ते हितेनाहारविहारेण यत्नादुपचरेत् ( अष्टाङ्गहृदये बालोपचरणीयाध्याये )—

अथ ब्रूयात् धात्रीमानयतेति समानवर्णां यौवनस्थां निभृतामनातुरामव्यङ्गा मव्यसनामविरूपामविजुगुप्सां देशजातीयामक्षुद्रां अक्षुद्रकर्मणि कुले जातां वत्सलां जीवद्वत्सां पुंवत्सां दोग्ध्रीमप्रमत्तामनन्त्यावशायिनीं कुशलोपचारां शुचिमशुचिद्वेषिणीं स्तनस्तन्यसम्पदुपेताम्। इति। ५१। चरक सं० १ अ०

टी०—'समानवर्णामिति' तुल्यजातीयां यौवनस्थामित्यनेन बालावृद्धे बाला-वृद्धयोरसम्पूर्णाङ्गक्षीणाधातुत्वेन निरस्यति। निभृतामिति विनीताम्। अविरूपामिति अविकृतावयवाम्। अव्यङ्गामिति अहीनङ्गीम्। देशजातीयां समानदेशजाम्। अनन्त्या-वसायिनीमिति शूद्रस्य हि सवर्णत्वे चाण्डालादिस्त्री च प्रसक्ता। सा च निषिध्यते ब्राह्मणादीनामसवर्णत्वेनैव सा निरस्ता। किं वा ब्राह्मणादीनामपि पतितब्राह्मण्यादि-- 'अनन्त्यावसायिनीम्' इति शब्देन क्षिप्यते। युक्तपिप्पलकाविति उच्चैस्तरवृत्तौ।।५१।।

## जयमङ्गलाक्रोडपत्रम्

महामोहाय भविष्यति इति बोध्यम् । अत एव उक्तम् ।
या वेदबाह्यः स्मृतयः याश्च काश्च कुदृष्टयाः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ( मनु० १२ अ० )
उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित् ।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ।। १६ ।।

एवं सति जातेः कुलीनत्वस्य च उपयोगे उक्तरीत्या प्रत्यक्षतः सिद्धे जातिमतां कुलीनानामात्मनि शिष्यत्वस्वीकृतिमपहाय अकुलीनानां आत्मनि शिष्यत्वम् अथवा तेषामनुकरणं स्वकीयगुणगौरवस्य विनाशहेतुत्वात् स्वहानिकरमेव मन्तव्यम् । अकुलीनाः इतरेषां कुलीनानां गुणानां हानिं कारयित्वा स्वकीयव्यापारकौशलेन अर्थमुपार्जयन्ति इत्यत्र इतिहासः प्रसिद्ध एव। यथा भारते 'ढाकामलमल' नाम्ना अतिसूक्ष्मवस्त्रं प्रसिद्धमासीत् यावत् , तावत् यान्त्रिकवस्त्राणां क्रयः अत्र नाभूत् । तदा तैः अत्रत्यानां शिल्पिनामङ्गुष्ठं छित्वा पुस्तकान्यपहृतानि, वस्त्रास्तरणप्रावरणादीनि नवीनकलान्वितानि निर्मितानि, अत्यल्पपरीक्षायामुत्तीर्णाः उच्चपदेषु संस्थापिताः । विशिष्टसंस्था द्वारा व्यसनेषु ते अभिभाविताः तल्लोभे निपतितैः सुवर्णादिद्रव्यजातमाङ्ग्लानां हस्ते समर्पितम् । किञ्च निरर्थकाः शङ्काः उद्भाव्य वेदे शास्त्रे सदाचारे धर्मभावे चाप्रामाण्यम् उपस्थाप्य ततः अत्रत्यानां स्नेहभावस्तैर्विनाशितः । तेन शिल्पिनामुत्तरोत्तरं क्षयोऽभूत्त तस्य परिणामोऽयं जातः यत्तै शिल्पमपि आसीदिति नमन्यन्ते आधुनिकतार्किकाः । तदिदं धर्मविजयानाटकेद्रष्टव्यम् । अन्ततो गत्वा अस्माभिः एतद्विदित्वा आत्मा देशश्च संरक्षणीय एव स्वस्य ह्रासः पारतन्त्र्यं च कुतः केनवाऽभूत् इति अवश्यं विचारणीयम्। पूर्वोक्तरीत्या जातिसंरक्षणस्य कुलीनत्वस्य स्वधर्मस्य च रक्षणस्याभावेन आनुवंशिकाः संस्कारा अपि विलुप्ता बभूवुः, असूयादीनां प्राकट्यं चाभूत्, इत्यादि दोषाणामपसारणाय जातेः अस्तित्वं प्रत्यक्षसिद्धत्वं च साधितम् । किञ्च जातिः भारते अतीव सुसंगठिता १८ दश शताब्दीपर्यन्तमासीत् इति अधोनिर्दिष्टटिप्पणीतः स्फुटं भवति । तत्राप्यवधेयम् ।[1] इत्यलं विस्तरेण ।

---

### भारतवर्षकी जाति-प्रथा

१ Q. अठारहवीं शताब्दी में एक पादरी मि० आब्बे जे. ए. डुबोइस ( Mr. Abbe J. A, Dubois ) सन् १७९२ में भारत आये थे और सन् १८२३ तक दक्षिण भारत में रहे । लगभग ३० वर्ष तक उन्होने दक्षिण भारत में उन गरीबों के बीच उन्हीं की वेश-भूषा में तथा उन्ही के जैसी झोपड़ी में रहकर उनके जीवन का अध्ययन किया था । उस अध्ययन की जानकारी उन्होंने अपनी पुस्तक 'हिन्दुओं के रीति-रिवाज और उत्सव' ( Hindu

Manners, Customs and Ceremonies ) में व्यक्त की है जो आवसफोर्ड विश्वविद्यालय प्रेस द्वारा प्रकाशित की गयी है। उनका उद्देश्य केवल भारत में ईसाई धर्म के प्रसार की सम्भावनाओं का अध्ययन करना था। इस सम्बन्ध में अपना अध्ययन पूर्ण करने के बाद उन्होंने यह टिप्पणी की थी कि जाति-पांतिकी कट्टरता के कारण भारत में ईसाई धर्मका प्रसार बहुत कठिन कार्य है, लेकिन इसके साथ-साथ यह भी कहा कि एक समय आ सकता है जब हिन्दू मन्दिरोंपर ध्वजाओंकी जगह क्रास दिखाई देने लगेंगे। उस समय की जो जाति-पाँति की स्थिति उन्होंने वर्णन की है उसके कुछ उद्धरण यहाँ दिये जा रहे हैं। उद्धरण के संकेतों के लिये ग्रन्थ की पृष्ठ-संख्या आदि जो दी गयी हैं वे सन् १८५९ में मुद्रित संस्करण से हैं—

१. लेखक द्वारा लिखी गयी ग्रन्थ की प्रस्तावना ( सहिष्णुता )

"भारत का प्रत्येक निवासी जहाँ भी उसको अच्छा लगे वहाँ अपना निवास बनाने के लिये पूर्ण रूप से स्वतन्त्र हैं। वह अपने ढङ्ग से रहे, अपनी भाषा बोले और अपने ही रीति-रिवाज बरते, इसमें कोई किसी प्रकारका झगड़ा नहीं करता। उससे केवल इतनी ही अपेक्षा की जाती है कि साधारणतया वह अपने अड़ोस-पड़ोस की मर्यादा से सम्बन्धित प्रचलित नियमों का पालन करे।" ( पृष्ठ १२, पंक्ति ६ से १२ )

२. जाति-प्रथा के लाभ

"हिन्दू विधान में जाति-विभाजन कई पहलुओं से उत्कृष्ट व्यवस्था है—मैं ऐसा विश्वास करता हूँ। मेरी यह मान्यता है कि लोगों के जातियों में विभाजित होने के कारण ही केवल भारतवर्ष असभ्यता की हालत में पहुँचने से बचा रहा है और इसलिये वह अपनी सभ्यता की कला और विज्ञान को कायम रख सका है और पूर्णता की हालतमें पहुँचने से बचा रहा है और इसीलिये वह अपनी सभ्यता की कला और विज्ञान को कायम रख सका है और पूर्णता की हालत में ला सका है, जबकि पृथ्वी की अन्य अनेक जातियाँ असभ्यता की हालत में पड़ी हुई हैं। मैं यह नहीं मानता कि जाति-प्रथा में कोई भी कमी नहीं है, तो भी मेरा विश्वास है कि हिन्दू समाजको जाति-पाँति की प्रथा से जो लाभ हुए हैं, वे हानि से कहीं अधिक हैं।" ( पृष्ठ २८, पंक्ति १८ से २८ )

"बहुत सोच-विचार करने के बाद मुझे जाति-प्रथा के अतिरिक्त कोई ऐसी बात नहीं मिली जो हिन्दुओंको उस प्रकार की असभ्यता का हालत में गिरने से बचाये हुए है जिस प्रकार की स्थिति में उसके अड़ोस-पड़ोस की अन्य जातियाँ और उष्ण प्रदेश की प्रायः सभी जातियाँ फँसी हुई हैं। जाति-प्रथा के अन्तर्गत प्रत्येक व्यक्ति के लिये अपना निजी व्यवसाय नियत किया गया है और वह व्यवसाय पीढ़ी-दर-पीढ़ी से पिता से पुत्र को मिलता आ रहा है तथा जो व्यवसाय विधान द्वारा नियत किया गया है उसको किसी भी व्यक्ति या उसके उत्तराधिकारीके लिये बदलना सम्भव नहीं है। हिन्दुस्तानके विभिन्न विशिष्ट गुणवाले लोगों में सभ्यता बनाये रखने के लिये ऐसा समाज ही सम्भवतः उपाय था जिसका

सृजन बड़ी दूरदर्शिता एवं बुद्धिमत्ता द्वारा किया गया।" ( पृष्ठ २९, पंक्ति ३ से १५ )

३ जाति-प्रथा की नींव

"भारत के विधि-विधान बनाने वाले, चाहे वे कोई भी रहे हों, बहुत ही बुद्धिमान थे और जिनके लिये उन्होंने विधि-विधान बनाये, उनके प्राकृतिक गुणों से अच्छी प्रकार परिचित थे।" ( पृष्ठ ३०, पंक्ति ५ से ७ )

"सभी प्राचीन विधि-विधान बनानेवालों के एक-से धार्मिक सिद्धान्तों से उन्होंने यह निश्चय किया कि कोई व्यक्ति राष्ट्र के लिये निकम्मा न रहे।"

( पृष्ठ ३०, पंक्ति १३ से १५ )

"धर्म और राजनीति के नये परिवर्तनों से होनेवाले संकटों से अच्छी प्रकार परिचित एवं हिन्दुओं की विभिन्न जातियों के लिये स्थायी और अलंघ्य नियम स्थापित करने के इच्छुक इन प्राचीन विधि-विधानकर्त्ताओं को सुदृढ़ शासनके लिये धर्म और राजनीति के दो बड़े आधारों को अच्छी तरह से मिला देने के अतिरिक्त और कोई विश्चित मार्ग नहीं मिला। अतः उनके कोई भी ऐसे प्राचीन आचार और नियम नहीं हैं जिनके साथ धार्मिक सिद्धान्त या लक्ष्य संलग्न न हों। वास्तवमें प्रत्येक बात श्रद्धा के द्वारा निश्चित की गयी है और धर्म उसका प्रेरक है। अभिनन्दनकी रीति, वेश-भूषा का ढंग, पोशाक की कटाई, आभूषणोंका आकार और उनके धारण की रीति, शृंगार के अनेक विवरण, गृह-निर्माण-विद्या, चूल्हेका स्थान, पाक करने के बर्तनों के रखने का स्थान, शयन-विधि, शिष्टता और विनय के रूप—जितने भी नित्य जीवन के पालनीय नियम हैं उनका निश्चित रूप से पालन इन सबको दृढ़ता के साथ नियमित बनाया गया है।" (पृष्ठ ३०, पंक्ति २४ से ४२)

"कोई भी बात अवसर के लिये नहीं छोड़ दी गयी, सबके नियम बना दिये गये हैं और उन सब रीति-रिवाजों का आधार शुद्ध रूप से केवल धर्म है। इसी कारण से हिन्दू लोग अपने रीति-रिवाजों को अलंघ्य मानते हैं क्योंकि ये सब धर्म से सम्बन्धित हैं। वे उनको उतना ही पवित्र मानते हैं जितना धर्म को।" ( पृष्ठ ३१, पंक्ति ४ से ८ )

४. इजिप्ट ( मिश्र ) में जाति-प्रथा

"मिश्र के लोगों में भी जाति-प्रथा है। उनमें भी हिन्दुओं की तरह विधि-विधान द्वारा प्रत्येक व्यक्ति के लिये एक व्यवसाय नियत किया गया है जो पिता से पुत्र को मिलता रहता है। किसी भी व्यक्ति के लिये दो व्यबसाय ( पेशे ) की या व्यवसाय-परिवर्तन की आज्ञा नहीं है। प्रत्येक जाति के लिये रहने के लिये निश्चित स्थान हैं और दूसरी जाति के लोग वहाँ जाकर नहीं बस सकते।" ( पृष्ठ ३१, पंक्ति १७ से २३ )

५. प्राचीन राष्ट्रों में जाति

"जिन-जिन ने जाति व्यवस्था स्थापित की, उन सबने यही समझकर ऐसा किया कि अपरिपक्व अवस्थावाले राष्ट्रों में जितना विस्तृत जाति-भेद होगा उनमें उतनी ही अधिक व्यवस्था और समता बनी रहेगी और व्यवस्था बनाये रखने तया नियन्त्रण रखने में भी

## जयमङ्गलाक्रोडपत्रम्

जातिब्राह्मणादिषु वर्तमानकाले नैवंविधा व्यवस्था दृश्यत इति कथं वर्णव्यवस्थायाः संभव इति चेत् उच्यते—

'ब्रह्मणे ब्राह्मणमित्यादौ ( कृ० य० तै० ब्राह्मण अ ३ ) वेदे पुरुषमेधे विनिनियुक्तानां ब्राह्मणादीनां मध्ये चत्वार एव कण्ठतः पुरुषसूक्ते वर्णिताः अन्ये तु 'पशूंस्तांश्चक्रे वायव्यानारण्यान् ग्राम्यांश्च ये' इति सामान्यत एव वर्णिता इति। "अथैतान् ब्रह्मभिष्टौति सहस्रशीर्षेत्युपर्युद्धृतानुवाकेने" त्युक्तेः वर्णधातोः स्तुत्यर्थकत्वेन तत्रैव मुख्यं त्वस्वीक्रियते। शुक्लादिषु हि तत्संबंधेनैव वर्णपदप्रयोगेऽपि तद्वाच्यत्वन्न संभवति श्रुतिसापेक्षत्वेन तस्य दुर्बलत्वात्, निरपेक्षस्य स्तुत्यर्थस्यैव प्रबलत्वात्। नरमेधस्य कृतयुगादानुष्ठेयत्वेन तस्मिन्समये—

'अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः।
कृते त्रेतादिषु ह्येषामायुर्ह्रसति भागशः॥ ( म० स्म० १-८३ )

इत्यादिभिर्वचनैः कार्तयुगं स्वरूपं ब्राह्मणादीनां शुक्लादिस्वरूपमासीत् इति तदेवौचित्यरूपेण वर्ण्यतें कविसमयसिद्धमित्यभ्युपगमे क्षतिविरहात्।

अयमत्र निष्कर्षः—ब्राह्मणत्वं हि ब्राह्मणपदजन्यबोधीयमुख्यविशेष्यतानिरूपितप्रकारतावत्स्वरूपमनेकविधं भवति, बोधस्य शक्त्या लक्षणया व्यञ्जनया वा जन्यमानत्वेन बहुविधत्वात्। तत्र आद्यबोधप्रकारीभूतो धर्मः ब्राह्मणत्वं पूर्वोक्तप्रसिद्धचतुर्विधान्यतमरूपमेव। ब्राह्मणकार्यंकारिण्या गौण्या प्रयुक्तस्य ब्राह्मणशब्दस्य ब्राह्मणगुणकर्मसमुदाय एव ब्राह्मणत्वं इति बोधप्रकारो द्वितीयः। कविसमयसिद्धं तु गौरत्वादिकं व्यञ्जनाजन्यबोधप्रकारस्तृतीयः। स तु आदर्शरूपेण कविभिर्वण्यते। विधिनिषेधस्थले तु व्यञ्जनाजन्यबोधप्रकाराणामपेक्षा नास्ति। न हि नदीनां सरोजवत्त्वं चन्दनस्य पुष्पाभावः इत्यादयः बहवः पदार्थाः कविभिर्वर्ण्यमाना अपि अधुना लोके क्वचिदपि दृश्यन्ते। न वा तादृशव्यङ्ग्यधर्महीनानां नदोचन्दनादीनाम् औषधविहारादिषु परित्याज्यत्वं आयुर्वेदज्ञा अप्यनुमन्यन्ते।

'पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम्।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः॥'

इत्यादौ फेनादिषु चन्दनगुणयोगाच्चन्दनशब्दे प्रयुज्यमानेऽपि चन्दनस्थाने फेनप्रयोगः चन्दनगुणकारितया वैद्यकशास्त्रेन मतो भवितुमर्हति। किञ्च गुण-

---

स्वधर्मन्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः॥
हिंसाऽनृतप्रिया लुब्धाः सर्वकर्मोपजीविनः।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः॥
इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः।' इत्यादि।

## जयमङ्गलाक्रोडपत्रम्

बहुलाया हरीतक्या अलाभे ईषद्गुणवत्या हरीतक्या उपादेयता, सर्वथा गुणहीनाया अनुपादेयता यथा आयुर्वेदविद्भिरभ्युपगम्यते। तथैव वर्णार्थकब्राह्मणशब्दविषयेपि बोध्यम्।

॥ गुणकर्मनिबन्धना जातिः ॥

ननु एक एव वर्ण आसीद् इति शास्त्रोक्तं कथमुपपद्यते ? इति चेदभिधीयते। न कदाचिदनीदृशं जगद् इति पूर्वमीमांसकमते एकः पक्षः। सृष्टिप्रलयावपि वर्तेते इत्युत्तरमीमांसासम्मतोऽपरः पक्षः। तत्राद्ये पूर्वमीमांसकमपक्षे आम्रवृक्षस्य आम्रबीजादुत्पत्तिः, आम्रबीजस्य च आम्रवृक्षादुत्पत्तिः इति बीजाङ्कुर-न्यायः आम्रवृक्षतद्बीजपरम्परयोः परस्परकार्यंकारणभावापन्नयोरिदं प्रथमतायास्तर्क गम्यतया वक्तुमशक्यत्वेन यथा अनादिपरंपराप्राप्तः। तथा वर्णाअपि। तत्त इदं प्रथमताबोधकानाम्—

'सृष्टवा पुराणि विविधान्यजयात्मशक्त्या वृक्षान्सरीसृपशून्खगदंशमत्स्यान्। तैस्तैरतुष्टहृदयः पुरुषं विधाय ब्रह्मावलोकधिषणं मुदमाप देवः" ( भा० ११ )– इत्यादीनां केवलभगवत्स्तावकत्वमात्रेणार्थवादत्वमेव न स्वार्थे प्रमाण्यम्। तथैव ब्राह्मणत्वादिजातीनां जन्मसिद्धत्वावगमाद् ब्राह्मणमातापित्रोरभावे ब्राह्मणत्वस्य ववतुमशक्यतया एकवर्णाभिधायकानि वचनानि यज्ञकुण्डात् द्रौपद्याद्युत्पत्तिवचना-नामिवार्थवादत्वादीश्वरस्तुतौ तात्पर्यात् न स्वार्थे प्रमाणानि।

कुसुमाञ्जल्यनुसारेण वेदान्तसिद्धान्ते तु सङ्कल्पविशेषमाहात्म्येन एकरूपस्यापि वर्णस्य चातुर्वर्ण्यरूपत्वं संभवति। 'जन्मौषधिमन्त्रतपः समाधिजाः सिद्धयः इति योग-सूत्रानुसारेण सिद्धीनां जन्मसिद्धत्वमिवौषधिमन्त्रतपः समाधिसिद्धत्वमप्यगीङ्क्रियत एव। अत एव योगिनां व्याघ्रादिरूपनिर्माणे "जात्यन्तरपरिणामः प्रकृत्यापूरा"दिति न्यायेन मनुष्योचितदेहारम्भकावयवानामपनयनेन ब्याघ्रोचितदेहावयवानां प्रकृतित आकर्षणेन च सिद्धि भर्वतीति विवेचितं योगसूत्रे। दृश्यते चेदं तृणपुञ्जादिषु अग्निकणप्रक्षेपे पार्थित्रोचितावयवानां धूमरूपेणापगमेन सह वन्ह्युचितावयवानां प्रकृतित आकर्षणेन सह ज्वलितस्य महावह्नेः उत्पतिस्तद्दर्शिभिः इत्यपि विवेचितं तत्रैव[1]—

१ योगसिद्धान्तचन्द्रिकायां नारायणतीर्थविरचितायाम्—'जन्मना विशेषतया देवविशेषेण। औषधिना दिव्यरसायनाद्यात्मकेन यथा माण्डव्यादोनाम्। मन्त्रेण शिव-विष्ण्वादिमन्त्रजपेन। होमपूजादिसिद्धिस्तु मन्त्रप्रधानत्वान्मन्त्रान्तर्गतैव यथा वत्स-राजनन्दीश्वरप्रभृतीनाम्। तपसा अनशनशीतोष्णादिबाधासहनादिरूपेण यथा विश्वामित्रादीनाम्। समाधिना आत्मविषयकभावनाविशेषरूपेण यथा याज्ञावल्क्य-दत्तात्रेयप्रभृतीनां सिद्धिः। इत्येताः पञ्च सिद्धयः। एताः सर्वा अपि पूर्वजन्मकृत-सुकृतक्षपितकल्मषाणामेव लभ्या भवन्ति। एतासु चतस्सृषु विषयविज्ञेयनिरसन-देहादिदार्ढ्यद्वारा समाधावप्युक्ताः। समाधिना तु कैवल्यमेव तेभ्य उत्कृष्टस्तस्मात्→

## जयमङ्गलाक्रोडपत्रम्

तथा च उक्तयोगदर्शनानुसारेण यस्य महापुरुषस्य स्वकीयसङ्कल्पविशेष-बलात् स्वस्य वा अन्यस्य वा जात्यन्तरपरिणामसामर्थ्यं असंदिग्धं यथा गौतमस्य अहल्यादौ यथा वा कल्पवृक्षस्य अन्नादिभावे। तादृशस्य महात्मनः सङ्कल्प-विशेषानुसारिणा वचनेन एकवर्गतो वर्णाश्चतुर्विधाः सृष्टाः इत्युच्यते। तदनुसारेण अग्रेपि ब्राह्मण्यादिपरिवर्तनं न भवतीति न अस्माभिरपि वक्ष्यते। तादशस्तु महात्मा अधुना नावलोक्यते। अतो जन्मकृतैव जातिव्यवस्था अस्मिन्समये शरणीकरणीया भवति। सूक्ष्मेक्षिकया पर्यालोचने तु प्रकृत्यवयवानां आकर्षणविकर्षणाभ्यां जायमानं सङ्करविशेषेणवा जायमानं जातिपरिवर्तनं जन्मकृत-मेव न तु मृत्वा जन्मान्तर भाविगुणकर्मादिकृतं अतो ब्राह्मणमातापित्रोरनपेक्षया जात-त्वात् तत् पृथगुच्यते। तथा च पूर्वमीमांसादृष्टया उत्तरमीमांसादृष्ट्या वा न जन्मान्त-रगुणकर्ममात्रकृतजातिसिद्धिरधुना वक्तुं शक्यते अतः पूर्वमेकवर्णसत्वेपि ईशसङ्कल्प कृतेन चातुर्वर्ण्येन न विरोध इति सिद्धम्।

### "तपस्विनां ब्राह्मणानां वैशिष्ट्यम्"

ननु शमो दमस्तपः शौचमित्यादिना ब्राह्मणदीनां स्वभाविको धर्मः गीतायां, भविष्यत्पुराणे, महाभारते च निरूपितः परं तेऽपि सत्यवसरे क्रोधादिविकृतिपराधीना बभूबुः, किंबहुना विश्वामित्रादयोऽपि। तथा सति तेषां एतत्सामयिकब्राह्मणापेक्षया किं तत्ब्राह्मण्यमस्ति ? इति चेत् सत्यम्।

धर्मयुगादौ ब्राह्मणाः शमदमादिगुणसंपन्नाः सन्तोऽपि क्रोधादिविकृतिमन्तो बभूवुः। तत्र कारणं न ब्राह्मण्यमपि तु मानुष्यम्। तदुक्तं महाभारते—

'स्वाध्यायस्तेषां देवत्वं क्रोधस्तेषांनृणामिव।'

---

कैवल्यार्थं समाधौ इह जन्मन्येव तदर्थमौषधादौ इह जन्मनि जन्मान्तरेऽपि वा तल्लाभाय मन्त्रतपआदौ सोत्साहानां विवेकिनां प्रयत्न आवश्यक इति भावः ॥१॥

ननु सिद्धिस्तृतीयपादे वर्णिताऽणिमादिप्रादुर्भावरूपा तत्राणोर्महद्भावः। एवं स एकधा भवति त्रिधा भवति पञ्चधा। शतञ्चदश चैकं च सहस्राणि च विंशतिरि-त्यादि श्रुतिसिद्धकामरूपतादशायां मनुष्यादिरूपेण परिणम्य स्थितानां देवतिर्यगादि-जातिपरिणामः एवं महतोऽणुभावादिश्च कथम्। पूर्वपरिणामवति परिणामान्तरा-योगात्। "न अनुपमृद्य प्रादुर्भाव" इति न्यायेन पूर्वपरिणामनाशस्य हेतुत्वात्। न च तेषां सङ्कल्पमात्रेण तत्सिद्धः, संयमस्य निमित्तमात्रत्वात्। तत्राह- जात्येति। प्रधानादि-पृथिव्याद्यन्ताः कायेन्द्रियादिप्रकृतयः। तासामापूराद्धर्माद्यनुरोधेन मनुष्यादिदेहावय-वेषु अनुप्रवेशात् कामरूपतादशायां देवतिर्यगादिरूपजात्यन्तरपरिणामः। अणोर्महद्-भावश्च भवति। एवं महतोऽणुभावः प्रकृत्योपगमादित्यपि बोध्यम् ( ना० ती० योग-सिद्धान्त चन्द्रिका - )

## जयमङ्गलाक्रोडपत्रम्

ब्राह्मणत्वं तु अधुनातनब्राह्मणापेक्षया तेषु क्रोधादिमत्स्वपि सत्सु किञ्चित् विलक्षणमस्ति इत्यपि न विस्मर्तव्यम् । तथाहि—

"तप इति तपोनित्यः पौरुषिष्टिः । स्वाध्यायप्रवचन एवेति नाको मौद्गल्यः तद्धि तपस्तद्धि तपः" । इति तैत्तिरीयोपनिषदुक्तरीत्या तपः स्वाध्यायश्रुतशीलवत्वं ब्राह्मण्यं तत्तु क्रोधादिविकृतिमत्स्वपि ब्राह्मणेषु तेषु एतद्युगीनब्राह्मणापेक्षया विशिष्टमस्ति इति । किञ्च श्रुतशीलवद्भिः ब्राह्मणैः क्रुध्यते कदाचित्, इत्यपि सत्यं परं तैः कृतः क्रोधः एतद्युगीनब्राह्मणानां क्रोधापेक्षया कश्चन अन्यादृश एव । इति वक्ष्यमाणरीत्या स्फुटं भवति । तथाहि—तेषां क्रोधः द्विविधावस्थायां संभवदुक्तिकः । कश्चित् राज्ये वर्तमानः अपराध मातनोति देवादिरिव तस्मिन् ब्राह्मणैः क्रोधभावप्रयुक्तः दण्डः यदि निक्षिप्यते, तर्हि तदानीन्तनः क्रोधः दण्डो वा इति । सेयमेका क्रोधस्यावस्था ब्राह्मणैः प्रदर्शिता न अपराधरूपा । अपितु दण्डदातृत्वात् गुणरूपैव अपरस्यामवस्थायामनपराधिनमधिकृत्य कदाचित् ब्राह्मणाः कुध्यन्ति, तदानीं तेषु दण्डदातृत्वं न धर्मप्रयुक्तं कल्पयितुं शक्यते अपितु मोहप्रयुक्तं एव सोयं दण्डः क्रोधो वा अपराऽवस्था । एतस्यामवस्थायां तेषां ब्राह्मणानां मानुष्यमभिव्यक्तम् भवति । तथापि तेषु शमदमादिगुणसंपत्तेः जागरूकत्वात् स्वीयां मोहादिप्रयुक्तविकृतिं ज्ञात्वा यावन्मात्रया क्रोधोऽभूत् तावन्मात्रया किं तदपेक्षया आधिक्येन ते ब्राह्मणाः पश्चात् तेपुः प्रसिद्धं चेतत् सौदासमनपराधिनं राजानं प्रति शापानन्तरं वसिष्ठस्य अतीव विलापः इति । तदुक्तं नारदपुराणे—

> तद्याहि राक्षसत्वं त्वं तदाहारोचितं नृपः ।
> इति शापं ददत्यस्मिन् सौदासो भयविह्वलः ॥२७॥
> आज्ञप्तो भवतैवेति सकंपः स्म व्यजिज्ञपत् ।
> भूयश्च चिन्तयामास वशिष्ठस्तेन रोदितः ॥२८॥ इति
>
> ( ना० पु० ९।२७-२९ )

इदं हि वैशिष्ट्यं शमदमादिगुणसंपत्तिमत्स्वेव ब्राह्मणेषु संभवति । इति मानुष्यप्रयुक्तक्रोधमात्रदर्शनेन तेषां ब्राह्मण्ये वर्तमानयुगीनब्राह्मण्यसादृश्यं न कल्पनीयम्, तेषु कायव्यूहन-आकाशसञ्चरण, त्रिकालदर्शन, शापानुग्रहसामर्थ्यादि गुणानां प्रसिद्धेः । अतः विश्वामित्रादयो महात्मानः न वेषमात्रेण ब्राह्मणाः आसन् इति कल्पनीयम् । इत्यलमतिविचारप्रसक्त्या । इदं तु अवश्यमेव सिद्धं यत् अतीव महता परिश्रमेण अन्यकुलक्रमागतस्य व्यापारस्य तदुपयोगिन्याः प्रतिभायाः समुत्पत्तिः अपरकुलीनेष्वपि महता श्रमेण चरणेषु हस्तकार्यकरणसामर्थ्योत्पत्तिरिव कदाचित् संभवितुमर्हति । परं तदपेक्षया कुलीनत्वप्रयुक्तप्रतिभायाः संस्कारस्य वा स्वल्पेनैव परिश्रमेण आधानं तत्तत्कुलीनेषु संभवितुमर्हति इति पूर्वनिर्दिष्टविश्वास्यता

## जयमङ्गलाक्रोडपत्रम्

लाभाय, पूर्वपरंपराप्राप्तजातिसंरक्षणं नानुचितमिति हेतुना अत्यन्तं अभ्यर्हितत्वात् धर्मस्मृत्यादि शास्त्रानुमोदितं तत्तज्जातीनामस्तित्वं कौटिल्येनाऽपि स्वीकृतम् । इति ।

### 'वृत्तिनियमनेन शूद्राणामर्जनाधिकारवञ्चनाभावः'

ननु धर्मशास्त्रेण अर्थशास्त्रेण वा शूद्राः याजनाध्यापनप्रतिग्रहादिधर्मेभ्यः वञ्चिताः सन्ति । तेन एतद्वृत्तित्रयप्रयुक्तार्जनस्य अधिकारापहरणेन शूद्राः याजनादिमूलक— संपत्तिभोगवञ्चिताः कृताः इत्यवं शास्त्रकर्तृणां पक्षपातः किं नीतिसम्मतो भवितु-मर्हति ? इति चेदुच्यते । शूद्राः न सामान्यतया धनार्जनाद् वञ्चिताः शास्त्रकर्तृभिः । अपितु शूद्रैः याजनाध्यापनप्रतिग्रहाः न कर्तव्या इति शास्त्रकर्तृभिः उक्तं । धनं सेवावृत्या अर्जयितव्यम् तदेव ब्राह्मणैस्तु याजनादिभिः अर्जयितव्यमितिरीत्या विहितम् । एवं रीत्या उभयोः वर्णयोः अर्जनहेतुभूता वृत्तिनियमनव्यवस्था शास्त्रेण कृता । यदि अनयोः वृत्तिनियमनव्यवस्थयोः तुलनां पश्यामः तर्हि शास्त्रस्य पक्षपातः कुत्र वर्तते इति स्फुटीक्रियते ।

भारतीयराजनीतिमतेन धनार्जनं आत्मनि जनानुरागमासाद्य वर्णैः कर्तव्यम् । इति निर्णीतमस्ति तदुक्तम्—नी० सारटीकायाम्—

### 'जनानुराग प्रभवाहि सम्पदः' इति

अनुरागश्च ईश्वरस्य तस्मिन् भृत्ये भवति यः स्वामिनं सेवया प्रसादयति इति अद्यापि दृष्टचरम् । तन्न्यायेन शूद्रः यदि सर्वान् सेवते तर्हि इयं शूद्रस्य सेवावृत्तिः सर्वानुरागसम्पादने सहजत एव कारणं भवति । ब्राह्मणादयः यां याजनादिवृत्ति-मनुतिष्ठन्ति सा व्यवहारे न सेवावृत्तिं दर्शयति अतः एतद्वृत्तौ जनानुरागसम्पाद-कत्वं न भासते तथा सति जनतासु विप्रकीर्णायाः संपत्तेः स्वाभाविको भोगजनकः अर्जनधाराप्रवाहः शूद्रस्य सेवावृत्तौ वर्तते, ब्राह्मणस्य याजनादिवृतौ वा इति सुधीभिरेव ऊह्यताम् । अतः सम्पत्यर्जनस्य मुख्यं साधनं शूद्रायत्तमेव अस्ति इति सः सहजत एव यथा जनान् अनुरञ्जयितुं शक्नोति, न तथा इतरवर्णः इति यदि आलोच्यते, तर्हि शूद्राः सम्पत्यर्जनात् वञ्चिताः इति कथं वक्तव्यम् ? यद्धि ते दरिद्रताभावे संस्थिताः दृश्यन्ते, तत्र कारणं न शूद्रस्य वृत्तिनियमनमपि तु तेषां व्यसनित्वमस्ति । अतः कियदपि धनं धान्यं वा ते अर्जयन्तु, यावत् शूद्रेषु व्यसनित्वं वर्तते तावत् ते सर्वविधवृत्युपायाधिकारप्रदानेऽपि दारिद्र्यान् न कदापि मुक्ताः भविष्यन्ति । अयं च शूद्रैः कृतोऽपराधः व्यसनासक्त्यादिः, न शास्त्रस्य, तदुक्तं मानसरामायणे—

## जयमङ्गलाक्रोडपत्रम्

यह हमारि अति बड़ि सेवकाई । तेहिं न बासन बसन चौराई ।
हम जड जीवगन घाती । कुटिल कुचाली कुमति कुजाती ।
पाप करत निसि बासर जाही । नहिं पट कटि नहिं पेट अघाही ॥

**विप्रेषु दण्डव्यवस्था** (अ० का० दो० २५१)

ननु शूद्रेण कर्तव्यां वृतिं ब्राह्मणः अनुतिष्ठति, तत्कथं सङ्गतं स्यात् ? इति चेन्न । शूद्रवृतिं भजन् ब्राह्मणः श्रीमान् भवतु कामम् पर्यन्ते तु स जनतायां द्वेष्य-कोटावेव समुपतिष्ठति, इति द्वेष्यत्वरूपो दण्डः शास्त्रेण तेषु परवृत्तिहरणे समुपस्थापितः ।

किञ्च, आपाततः शूद्रादिवृतिः ब्राह्मणाय रोचते, परं आपदाद्यवसरे उक्त-द्वेष्यत्वादिस्थितौ वा "विना शूद्रवृत्तिपरिग्रहपरित्यागेन सुखी न भविष्यमी"ति मत्वा ब्राह्मणः तत् परित्यागमेव यदा कुर्यात्, तदा स विश्वमित्रं भवेत् । शूद्राद्यस्तु सेवावृत्ति-परिग्रहे अधिकृता न उक्तद्वेष्यत्वस्थितिभागिनः सन्ति । अतः कथमपि तेषां कृते सेवावृतिपरिग्रहपरित्यागप्रसङ्गो नास्ति । इति भारतीयराजनीतिरहस्यं बोध्यम् ।

अपरञ्च शास्त्रेण ब्राह्मणाः कथं उपांशु दण्डिताः इति चिन्त्यते । ब्राह्मणः कामादिपराधीनो भूत्वा सवर्णया परपरिणीतया सह कृतेनाऽनैतिकव्यवहारेण सन्तर्ति समुत्पादयति यदि, तर्हि इयं सन्ततिः जीवत्पतिकत्वाजीवत्पतिकत्वमेदेन कुण्डगोलकसंज्ञाम् संप्राप्ता शास्त्रेण यजनादिषट्कर्मभ्यः परिहीयते पातित्यात् । अयं दण्डः शूद्रेण समुत्पादितायां तथाविधसन्ततौ नास्ति, तस्याः शूद्रत्वजातिमत्वात् । अपरञ्च ब्राह्मणस्य जनतायां सम्मानं दृष्टवा दर्शकाः तानाक्षिपन्ति । परन्तु सूक्ष्मेक्षिकया पर्यालोच्यमाने अयमाक्षेपः तदा सार्थकः स्यात्, यदा ब्राह्मणादि-वर्णः किञ्चिदपि जनतायाः अपकारकम् कार्यं कुर्वन् सन्मानं लभेत । तथा नास्ति । यतः स लोके जाड्यम् मा प्रसरतु इति कृत्वा ततः संरक्षणाय समस्ताः विद्याः ब्राह्मणेन उपस्थापनीया इति शास्त्रमर्यादा । तत्सत्व एव ब्राह्मणानां देवत्वं सिद्धमिति ( २४८ पृ० ) प्रागुक्तमस्ति । तत्र यदि कथमपि ब्राह्मणः अनुष्ठाने, अभ्यासे, अध्ययने प्रमाद्येत्, तर्हि सत्वस्य विलयनात् जाड्यस्यावरणे विलम्बो नास्ति । तदुक्तं 'क्षणादूर्ध्वंमतार्किकाः' इति । ततः आत्मनः संरक्षणाय सदा ब्राह्मणेन सावधानेन भाव्यम् ।

तदुक्तम् 'न विप्रः क्षणिको भवेत्' इति । एवंविधः महान् परिश्रमः सत्वप्रधान-शरीरेणैव सोढः, न तमःप्रधानशरीरेण कथमपि सोढुम् शक्यः स्यात् । अतएव मा जीव मुनिपुत्रक' इति कविभिः मुनिभ्यो दत्ताः आशिषः साधु सङ्गच्छन्ते । तस्य ब्राह्मणैः कृतस्य कल्पनातीतस्य श्रमस्य विद्याभ्यासस्य इदं फलं यद् ब्राह्मणस्य सन्माननं नाम । एवमेवेतरवर्णैरनुष्ठितस्य धर्मस्यविषये ज्ञेयम् । तस्मात् श्रमजीविनः शूद्रा एव

नापरे इति न, सर्वैरेव स्व-स्वकर्मानुकूलपरिश्रमस्य अनुष्ठितत्वात्। एतेन इदं सिद्धं भवति यत, यत्र सम्मानहेतुस्थितिकत्वं सर्वदृष्टं वर्तते, तत्र शास्त्रकारेण तेषां कृते विधिनिषेधमर्यादायाः बाहुल्यमतीव बोधितं अस्ति तदेतत् अज्ञात्व उक्ताक्षेपा असूयामूलका एवेति सिद्धम्।

"वृत्तिनियमनस्योपयुक्तत्वम्"

ननु भारतीयराजनीतिशास्त्रेण ब्राह्मणत्वादिजातिभेदानुसारेण विहितस्य जीविकावृत्तिनियमनस्य नीतौ कीदृशमुपयोगित्वमिति चेत्? शृणु। पदार्थाः यावत्पर्यन्तम् निराकाङ्क्षाः भवन्ति तावत्पर्यन्तं ते परस्परं न संयुञ्जन्ति। यदा तु तेषु आत्मनः संयोगस्याऽऽकाङ्क्षा उदेति, तदा तयोः साकाङ्क्षयोः पारस्परिकः सम्बन्धः स्थितो भवति सापेक्षत्वात्। यावत्पर्यन्तं च इयमाकाङ्क्षा वर्तते, तावत्पर्यन्तं प्रायः वध्यवधिकभावादिकलहोऽपि न सम्पद्यते। उपवर्णितं चेतत् मार्जारमूषककथायां। (महाभारतस्य शान्तिपर्वराजधर्मानुशासनपर्वणि मार्जारमूषिकसंवादे १२८ तमे अध्याये)

यदि कदाचित् साकाङ्क्षत्वात् परस्परं संयुक्तेषु कलहोऽपि संभवेत्, तर्हि तस्य निराकृतिः सहजगत्या कर्तुं शक्यते। इत्येवंदृष्टतत्त्वा राजनीतिः लोके सर्वेषु मनुष्येषु जीवनोपयोगिपारस्परिकसङ्घटनेन निर्वाह्यामाकाङ्क्षां प्रसारयितुं वर्धयितुं च वाञ्छन्ती धर्मप्रधानां जीविकावृत्तिं नियमयति इति निगूढतत्त्वं भारतीयराजनीत्या समाहितम्।

यद्यपि पारस्परिकसङ्घटनाय अपेक्षितं वृत्तिनियमनं यथाकथञ्चित् येन केनापि कर्तुं शक्यते, परम् शास्त्रकर्तृभिः यदिदं नियमनं कृतमस्ति, तत् कुलपरम्परां समादृत्य। तेन (२४७ पृ०) पूर्वोपवर्णितमतिभावस्य उद्बोधकानां समुपलब्धिर्नाऽसुलभा। अत एव राज्ये अभ्यर्हिता मन्त्रशक्तिः प्रभुशक्तिः उत्साहशक्तिश्च तत्र तत्र वर्णेषु विभज्य स्थापिता। स्वयं स्वतन्त्रा चेत् सा असमर्था भवति। पारस्परिक सापेक्षानुसारेण सम्मेलने ते सा उत्तमतां भजते। इत्येवं रीत्या यस्यां राजसभायां परम्परागतास्तत्तच्छक्तिमन्तः सर्वेऽपि वर्णाः एकीभावेन स्थिताः, सा सभा असाधारणी इत्यत्र नास्ति विवादः। ईदृशीयं पूर्वपरम्परागतस्वभावानुगामिनी व्यवस्था भारतादन्यत्र देशे न दृश्यते। न वा पूर्वपरम्परागतवृत्तिनियमनप्रयुक्तं आपेक्षिकं सर्वजातिषु सर्वसाकाङ्क्षं बान्धव-

---

भीष्म उवाच—'ग्राहयित्वा तु तं स्वार्थं मार्जारं मूषिकस्तथा।
प्रविवेश तु विश्रम्य, क्रोडमस्य कृतागसः॥
एवमाश्वासितो विद्वान् मार्जारेण स मूषिकः।
मार्जारोरसि विश्रब्धः सुष्वाप पितृमातृवत्॥
लीनन्तु तस्य गात्रेषु मार्जारस्य च मूषिकम्॥८३॥

## जयमङ्गलाक्रोडपत्रम्

त्वं ना सुलभं भवति । अतः शास्त्रकर्तृभिः धर्मसूत्रेण सर्वान् विभिन्न-विभिन्न-सम्प्रदायानाबद्ध्य देशे बन्धुभावं समुत्पाद्य भृतकश्रेणिमित्र-शत्र्वाटविक-सैन्यापेक्षया बन्धु-सैन्यबलं यथा साधितं भवेत्, तथा साधितमस्ति इति वृत्तिनियमनस्य नीतौ उपयोगित्वं बोध्यम् ।

### विशुद्धाच्चप्रतिग्रह' इति कामन्दकीयस्य समन्वयः ।

( ज० २०६, पृ० ) 'प्रतिग्रहास्त्विति' ।

ननु कामन्दकीयनीतिसारे याजनाध्यापने शुद्धे इत्युक्त्यनन्तरं 'विशुद्धाच्च प्रतिग्रहः' (का० नी० २ स०) इति –उक्तम् । अत्र तु केवलं प्रतिग्रह एव निरूपितः । तत्र विशुद्धाच्चेत्यस्य किं तात्पर्यम् ? इतिचेत् उच्यते—

नीतिसारे वर्णाश्रमधर्मव्यवस्थात्मकचतुर्थप्रकरणेन सह लोकसङ्ग्रहाख्यं षष्ठं प्रकरणं तृतीयेसर्गेअभिहितम् । इदं च प्रकरणं नाट्यशास्त्रे वर्णितेषु पञ्चसु सन्धिषु विमर्शसन्धिस्वरूपतां प्राप्तं राज्यस्य आदर्शस्थापकमस्ति इति सर्वे भारतीय-राजनीतिविदः मन्यन्ते । तत्र दानमेकं कर्तव्यत्वेन विहितमस्ति । तदुक्तं—

वाक्सूनृता दया दानं दीनोपगतरक्षणम् ।
इति सङ्गः सतां साधु हितं सत्पुरुषव्रतम् ।। इति ।

इदं सर्वमपि लोकसङ्ग्रहहेतुभूतं वाक्सूनृतादि पञ्चविधं कर्म राजा-शूद्रो वा भवतु, क्षत्रियो वा भवतु, सर्वेणापि राजपदाधिष्ठितेन अनुष्ठेयमेव, लोक सङ्ग्रहस्य आकाङ्क्षितत्वात् । यदा हि राजा शूद्रः स्यात् तदा सः मम (–शूद्रस्य–)कर्म यजनादि विहितं नास्ति इति मत्वा तदुपेक्षेत । परन्तु लोक-सङ्ग्रहभूतानि कर्माणि तु कदापि तेनापि नोपेक्ष्याणि भवितुमर्हन्ति । एवं सति यदि सः मूढः अविशुद्धो भवेत्, तदानीं 'अयं दानकर्मणि अविशुद्धत्वादनधिकारीति'' उक्त्वा मत्वा वा अप्रतिग्रहेण ब्राह्मणः तं दण्डयितुं प्रभवेत् । इति उन्मत्तताङ्गतस्य शूद्रस्य राज्ञः दण्ड्यत्वख्यापनार्थं वर्णाश्रमधर्मव्यवस्थाप्रकरणे चतुर्थे सर्गे नीतिसारकृता ''विशुद्धाच्च प्रतिग्रह'' इत्युक्तम् । इदमेवाभिप्रेत्य लोकसङ्ग्रहप्रकरणे षष्ठे दानस्वरूपविवेचनावसरे ''स्थितिमान्[1] इत्यनेन पूर्वोक्तं वेदितव्यम् । तदिदं अर्थशास्त्रवार्तिकभूतस्य नीतिसारस्य 'विशुद्धाच्च' इतिपदतात्पर्यं बोध्यम् ।

---

१ तदुक्तम्— गुणानुरागी स्थितिमान् श्रद्धानो दयान्वितः ।
धनं धर्माय विसृजेत् प्रियां वाचमुदीरयन् ।

स्थितिमान्—स्वयमप्याचारवान् अन्यथा हि आचारस्थितिभ्रष्टादस्मात् कःप्रतिगृह्णीयात् ।

**क्षत्रियस्य—[1]अध्ययनं यजनं दानं शस्त्राजीवो भूतरक्षणं च;**

---

### जयमङ्गलाक्रोडपत्रम्

(ज० २०६ पृ०) **एते प्रधानभूता** इति। तत्तद्वर्णानां कृते विहितानां अध्ययनादि धर्माणामपहारेण अन्ये धर्माः तेस्तैरनुष्ठेया इति ज्ञापनाय प्रधानभूतत्वोपादानम्।

### विहितेषु अन्यधर्माणां समावेशः

ननु नीतिवाक्यामृतादौ ब्राह्मणादीनां कृते अनुष्ठेयत्वेन अन्येऽपि धर्माः उक्ताः इति चेत्? ते सर्वेपि सङ्गृहीता एव, यथायोग्यं तेषां तत्र तत्र अन्तर्भावयितुं शक्यत्वात्। वस्तुतस्तु विशेषतया नीतिवाक्यामृते प्रयुक्तानामितरेषां धर्माणां अर्थशास्त्रे अग्रहणमनङ्गित्वाद् बोध्यम्। अर्थात् यथा इज्यादिधर्माः साध्येरन् तथा लोके प्रयतनीयम्। नतु तानुपेक्ष्य अन्ये धर्माः सेवितव्या[2] इति। एवञ्च लोकस्य इज्याध्ययनादिको धर्मःप्रधानतयासंरक्ष्यः। इति शास्त्रस्य तात्पर्यं बोध्यम्।

(ज० २०६ पृ०) **अपरानपि धर्मान्सूचयितुमाह** अन्ये इति। अत्रेदं तत्वम् **यथा अमरकोषे** 'संपूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम्' इति **प्रतिज्ञातम्। किन्तु तत् संपूर्णतया नोक्तम् अतः अमरकोषस्य** न्यूनत्वं संभवत्येव। तत्रेदं शास्त्रकारैश्चिन्त्यते। व्यवहारोपयोगिनी काचन दिक् संस्कृतभाषाभाषिणां कृते **अमरकोषकारेण प्रदर्शिता**। शेषं तु शिष्टव्यवहाराद् बोध्यते। इतिरीत्या सर्वनामलिङ्गानुशासनं निरुक्तं भवति इति। तथैव प्रकृतेऽपि तत्तद्धर्मनिरूपणविषये मूलकृतामाशयः अवगन्तव्यः।

### श्रीमूला

शस्त्राजीवः शस्त्रेण आजीवो वृत्तिः। भूतरक्षणं प्राणिपालनम्।

### वैदिकसिद्धान्तसंरक्षिणी

क्षत्रियस्येति।क्षत्रियस्याध्ययनादिधर्ममुक्त्वा धर्म्यां वृत्तिमाह शस्त्रेति। यद्यप्यत्र भूतरक्षणग्रहणेन शस्त्राजीवनं लभ्यते तथापि विनाप्याजीवनेन आपन्नानां भूताना त्राणंकर्तव्य मिति ज्ञापयितुं पृथक् भूताभिरक्षणग्रहणम्। अत्रापि इतिशब्दोनुवर्तते।

---

१ नी० टी० क्षत्रियस्यापि स्वानुष्ठानमिति शेषः।

२ तदुक्तं नी०सा० षष्ठ सर्गे—

धर्मसंरक्षणपरो धर्मायार्थं विवर्धयेत्।
ये ये प्रजाः प्रबाधेरन् तांस्तान् हन्यान्महीपतिः॥
धर्माधर्मौ विजानन् हि शासनेऽभिरतः सताम्
प्रजा रक्षेन्नृपः साधु हन्याच्च परिपन्थिनः॥

## जयमङ्गला

**क्षत्रियस्येति**। अध्ययनादयो धर्माः अध्यापनादिषु नाधिकारी क्षत्रियः। शस्त्राजीवः शस्त्रेणाजीवः जीवनम् अर्थार्थम्। भूतरक्षणम् आपन्नभूतत्राणन्धर्मार्थं च। यद्यपि रक्षणं कुर्वन् शस्त्रेणाजीवन लभते, तथापि विनाऽप्याऽऽजीवनम् आपन्नत्राणं कर्त्तव्यमिति रक्षणग्रहणेन दर्शयति।

## जयमङ्गलाक्रोडपत्रम्

### 'क्षत्रियस्य अध्यापनाधिकारः

'क्षत्रियस्येति। अध्यापनादिषु इति। ननु क्षत्रियस्य अध्यापनाधिकारित्वं केन हेतुना नोक्तम्? क्षत्रियेण 'दानमीश्वरभावश्च युद्धे चाप्यपलायनम् (गी० १८) इति गीतोक्त-वाक्यानुसारेण युद्धकरणं हि क्षत्रियस्य स्वभावः। तदनुकूलतयैव क्षत्रियेण वर्तितव्यम्। अतः अयं रणशूरत्वात् ओजः प्राधान्याच्च गौडीगुम्फ एव स्थितो भवितुमर्हति। तदनुबन्धीनि च-टकार-ठकार-संश्लिष्टानि वाक्यान्येव उपयुक्तानि भवन्ति। तदुक्तं चन्द्रालोके 'मूर्ध्नि वर्गान्त्यगाः' इति। वेणीसंहारनाटके भीमवाक्येपि तथा—

"चंचद्भुजभ्रमित चण्डगदाभिघातः
सञ्चूर्णयामि गदया न सुयोधनोरू।
स्त्यानावनद्ध घनशोणितशोणपाणिः
उत्तंसयिष्यति कचांस्तव देवि! भीमः॥' इति।

इत्येतत्प्रमाणजातैः 'क्षत्रियः रणप्रधानः क्रूरो वा, इति हेतोः स न कदापि मधुर-वाक् भवति। इत्ययं उपदेशकुशलत्वाभावेन अध्यापनाधिकारान् निषेधितः शास्त्र-कर्तृभिः। कदाचित् अध्ययनादिकौशलेन क्षत्रियः मधुरवाग् भवतु कामं, तस्य हृदयं तु दण्डप्रणयनकर्तृत्वाधिकारात् अतीव कठोरमिति तु निश्चितमेव। अतएव तत्स्वा-भाव्यात् सैन्ये क्षत्रियप्रायस्य ग्रहणं कृतम्। ब्राह्मणदीनां प्राधान्ये तु ते कोमलहृदय-त्वाच्छ शरणागतिमात्रेणैव शत्रषु दयालवो भूत्वा तमुपक्षेरन् इति सैन्ये ब्राह्मणस्य ग्रहणं न कृतम्[1]। शाकुन्तले अतएव पशुमारणकर्मदारुण इत्युक्त -

साधु[2] सङ्गच्छते? विप्रोयत्र हि पशुमारणकर्मणि प्रवर्तते तस्यापि कारणं नास्य स्वभावः, अपि तु वेदस्य आज्ञा अस्ति इति। तस्मादेव कारणात् वेदानुमोदितहिंसाति-

---

१ कौटिलीयार्थशास्त्रे अभियास्यत्कर्म-प्रकरणे—'ब्राह्मण-क्षत्रिय-वैश्य-शूद्र सैन्यानां तेजः प्राधान्यात् पूर्वं पूर्वं श्रेयः सन्नाहयितुम् इत्याचार्याः। नेति कौटिल्यः। प्रणिपातेन ब्राह्मणबलं परोऽभिहारयेत्। प्रहरणविद्याविनीतं तु क्षत्रियबलं श्रेयः, बहुलसारं वा वैश्य-शूद्र बल'मितिः।

२ "सहजतकिल यद् विनिन्दितं न खलु तत् कर्म विवर्जनीयम्।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः॥"

## जयमङ्गलाक्रोडपत्रम्

रिक्तकर्मणि जुगुप्सन्ते । ये हि किल सर्वथा सात्त्विकाः कोमलहृदयाः, ते वैदिकहिंसा-कर्माण्यपि कर्तुं ह्रियन्ते किमुतान्यत्र । तदुक्तं भागवते षष्ठस्कन्धे चित्रकेतुस्तुतौ ।

परहिंसया तथाऽधर्मः ।' इति ।

ब्राह्मणः सत्वप्रधानत्वात् कोमलहृदयवान् भवति । अतः सः उपदेष्टुं कुशलः इत्येतत्स्वभावं चिन्तयता शास्त्रेण ब्राह्मणानां कृते अर्जनाय उपयुक्तं अध्यापनं वृत्तिरूपेण विहितं न तु क्षत्रियाणां कृते इति ।

अयमेव न्यायः वैश्यादिविषयेऽपि बोध्यः । स हि अर्थप्रधानत्वात् न शमप्रकृतिको भवितुमर्हति । अतस्तस्य बाहुल्येन क्षत्रियसादृश्यमेतदंशे वर्तते । इति सः अपेक्षानुसारेण उपदेशकुशलत्वशोभनहृदयत्वयोः सामञ्जस्याभावात् नाध्यापनस्याधिकारी । एतादृशमतिसूक्ष्मं वर्णनं तेषां तेषां मनोमयस्थितिमालक्ष्य शास्त्रेण तत्तद्वर्णानामुपनयनमपि विभिन्नेषु विभिन्नेषु समयेषु निर्दिष्टमस्ति ।

तथाहि— 'गर्भाष्टमेऽष्टमेवाब्दे ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तुद्वादशे विशः ॥ इति ( म० २।३६ )

अत्रायं भावः सर्वथा अहिंसाशीलत्वात् तस्या एव नैरन्तर्येण आवर्तनाय ब्राह्मणस्य अष्टमे वर्षे उपनयनम् विधीयते । क्षत्रियस्य एकादशवर्षपर्यन्तं कामचारित्वं शास्त्रेणानुमोदितं तेन तावत्पर्यन्तं तस्य कामचारित्वात् स्वभावानुरूपम् हिंसाऽऽदिशीलत्वं अपि दृढं भवति । सवर्था तदेव दृढं न भवतु इत्येतदर्थंउपनयनमपि विहितम् । वैश्यस्तु अनृतशीलो भवति स्वभावतः । अतः तस्य कृते स्वभावानुरूपं क्षत्रियसमयात् अधिकसमयपर्यन्तं कामचारित्वं अभिहितम् । इति—

अतः यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्'

इत्युक्तदिशा बाल्ये कर्मणि उद्बुद्धानां संस्काराणां तेषु तेषु वर्णेषु स्थितिः पुनस्तेषां ततो नियमनं च सोपपत्तिकं ध्येयम् ।

### 'क्षत्रियस्याऽपि अध्यापनाधिकारः'

ननु क्षत्रियः यदि नाध्यापनाधिकारी, तर्हि क्षत्रियैः अध्यापनं कृतमिति इतिहासः कथमुपपन्नो भवति ? इतिचेदुच्यते । यदा हि कुलवन्तः स्वीयकर्मनिष्णाताः नोपलभ्यन्ते, तदा इतरद्वाराऽपि तत्कार्यं कर्तव्यमिति शास्त्रासमयानुसारेण उत्तमानां कार्यस्य करणेऽधिकारिणामभावे अवरेभ्यः विभिन्नकुलोनेभ्यः कार्यकरणसमर्थेभ्यः उत्तमकार्यकर्तृत्वाधिकारः शास्त्रेण अनुमोदितो वर्तते ।

अत एव उक्तं मनुना—

'स्त्रियोरत्नान्यथो विद्या धर्मः शौचं सुभाषितम् ।
विविधानि च शिल्पानि समादेयानि सर्वतः ॥

## जयमङ्गलाक्रोडपत्रम्

तथा—अब्राह्मणदध्ययनमापत्काले विधीयते।

अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः॥ इति ( म० २।२४१ )

किञ्च-राज्यसंरक्षणादिसदृशं महत्तरं कार्यं कर्तुं क्षत्रियो यदा असमर्थो भवति, शूद्रश्च समर्थः वर्तते तदा शूद्रस्तत्कार्यं कर्तुं प्रभवति, न हि क्षत्रियः वर्तते इत्येतावन्मात्रेण तत्कार्यकरणे अगुणः क्षत्रिय आनेयः।

तदुक्तम्—'न चैकपुत्रमविनीतं राज्ये स्थापयेत्' इति।

( कौ० अ० पुत्ररक्षण प्रकरणे–

अपारे यो भवेत् पारमप्लवे यो भवेत्प्लवः।
शूद्रो वा यदि वाऽप्यन्यः, सर्वथा मामर्हति॥ इति च।

(महाभारत—वाक्याच्च)

अपरञ्च मध्यमकर्मणि ये नियुक्ताः, ते यदि उदारगुणसंयुक्ताः वर्तन्ते, तर्हि समयमालक्ष्य यथावसरं प्रोन्नेया, इति नीतिसारे उक्तमस्ति[1]। तत् अपि एतदभिप्रायेण बोध्यम्। अतो न क्षत्रियाः अध्यापनाधिकारात् सर्वथा वञ्चिताः किन्तु कुलीनलाभे क्षत्रियाणामध्यापनाधिकारो नास्ति इत्येव प्रागुक्ताशयो बोध्यः। तेन क्षत्रियस्याध्यापनाधिकारनिरूपकविधिनिषेधयोः अयं भावः यत् कुलीनाः अध्यापनाय अपेक्षितगुणसंपन्नाः तत्तद्कार्यदक्षाः यदा भवेयुः तदा स्वस्वकार्यस्य अव्यभिचरितत्वलाभार्थं नियुक्ताः,

समुत्पन्नेषु कृच्छ्रेषु दारुणेष्वप्यसंशयम्।
दर्शयेत्स्वच्छहृदयः कुलीनश्चतुरस्रताम्॥

इत्युक्तत्वात्। तदा ते ते कुलीनाः स्वस्वकर्माणि कुर्युः, अन्यथा तु अपरेऽपि कुलीनाः तत्तत् कार्यदक्षाः तत्तत्कर्माणि कुर्युः इति सिद्धम्।

### कुलीनत्वस्य स्थितिः

नन्वेवं भारतीयराजनीतिशास्त्रे कुलीनत्वं तत्तद्कर्मकर्तृमातापितृप्रयुक्तमस्ति अथवा तेन सह जातिप्रयुक्तमस्ति? इति चेत् तत्तज्जातिप्रयुक्तमस्तीति सिद्धान्तो वर्तते। यदाहुः—'यथा कन्या तथा हविः इति।' (बालं भट्टी)

एतेन तत्तज्जातिप्रयुक्ताः राज्यायापेक्षिता गुणाः तेषु तेषु उपलब्धुं शक्याः। शक्या च सजातीयेषु अधर्मात् अव्यवहार्यात्, अशुचिकर्मणः निवृत्तिः। तदेतन् महत्फलं जातिशुद्धिप्रयुक्तकुलीनत्वस्य बोध्यम्। तदाहुरभियुक्ताः—

"आहारेष्वथ योनौ च बीजे कर्मणि चापि यः।
शुचिः कृच्छ्रगतस्यापि न पापे रमतेऽस्य धीः।" इति।

---

१ गुणैरुदारैः संयुक्तान् प्रोन्नयेन्मध्यमाधमान्।
महत्तां प्राप्नुवन्तो हि राजानं वर्धयन्ति ते॥

## जयमङ्गलाक्रोडपतम्

### वृत्तिवैषम्याभावः

अतो जातिमर्यादा भारतीयराजनीतिशास्त्रेणापि समस्तविद्याप्रतिष्ठापनकामेन स्वीकृता वर्तते। अत्रायं निष्कर्षः अपेक्षितसंस्कारोद्बोधाय तत्तद्जातीयेष्वेव विवाहः भोजनं च शास्त्रेण नियमिते। तथानियमेऽपि नैतिकवृत्तिव्यवस्था तु सन्मानादिपरीक्षित-गुणतारतम्यानुसारेण नियुक्तानामधिकारिणां कृते समानरूपेणैव वर्तते। अतो वैषम्य-नैर्घृण्ये न स्तः। तेन नात्र अर्थकामयोः विभागविषये कश्चन पक्षपातोऽस्ति इत्यपि सुमन्तव्यम्। तदुक्तं सनातनधर्मप्रदीपस्नेहप्रपूरिण्याम् द्रष्टव्यम्। तथाहि—

डा० श्री अम्बेडकर महोदयेनोक्तं हिन्दुधर्मे ना स्माकमस्त्युन्नत्युपायइति मया बौद्धेन भूयते। इति चेदभिधीयते। यादृशीमर्थंकामोन्नतिमभिलषति महोदयोऽयम् तादृश्या उन्नतेः किं स्वरूपं स मनसि निर्धारितवान् इति विचारावसरे अन्ततो गत्वा सर्वमतसाधारण्येन धर्मार्थकामसमृद्धिरेव सेति वक्तव्यमापतति। किन्तु उक्त-महोदयोऽयं केवलमर्थकामयोरेव समृद्धिमपेक्षते न धर्मसमृद्धिम्। भवतु तथैव। तत्रापि ब्रूमः। कामसमुन्नतिः अर्थसमृद्धिमन्तरा दुःशकेति हेतोः अर्थसमृद्धिरेवोन्नतिपदार्थो मन्यताम्। तथा च समाजे वृत्तिनियन्त्रणशीलस्य धर्मस्य सत्वात् तत्रार्थसमृद्धि-मदृष्ट्वा बौद्धधर्मानुयायितां स्वीकर्तुं प्रयतते सोऽयं महोदयः। परन्तु भारतीयराज-नीत्यनुसारेण स्वधर्मे सर्वस्योन्नतिः भवितुमर्हति न वेति पूर्वं विमृश्यते। राज्ये हि अनेकेषु कार्यविभागेषु तत्र तत्र कश्चनाध्यक्षः आध्यक्ष्यपदे नियोजनीय एव राज्ञा। यथा सुवर्णचर्मणोरध्यक्षस्थाने सुवर्णकारचर्मकारजातीयावेव। एतेन राज्ञा तावपि सदा नियन्त्रयितुं शक्येते अवग्रहादिबलादिति विवेचितं शान्तिका अग्रदूत ग्रन्थे द्रष्टव्यम्[1]।

---

१ शासनकार्यार्थं भारतीयराजनीतौ प्राधान्येनाष्टादश विभागा निर्दिष्टाः तेषु विभिन्नकार्योद्देश्येन विभिन्नजातीया मन्त्रिणो निर्वाचिता भवेयुः। उदाहरणार्थं एको विषयः प्रस्तूयते। भारतीयराजनीत्यनुसारेण सुवर्णाध्यक्षनिर्वाचनं स्वर्णकारजातीयैरेव कर्तव्यम्। केषा-ञ्चिदाभूषणनिर्माणमभीष्टं चेत्तद्विभागद्वारा कारयितुं शक्यं भवति। तस्यैव फलं यत् तद्विभाग निर्देशने यदि सुवर्णचौर्यं न्यायालयतः सिद्धं भवेत्तर्हि तदुत्तरदायित्वं सुवर्णाध्यक्षस्यैवेति तद्वेतनात् क्षतिपूर्तिः राज्ञा कर्तव्या। वेतनापेक्षयाऽधिकक्षतौ तु तन्निर्वाचनकर्तृणां तज्जातीयानामुपरि दण्डो विधेय इति। एवमेवान्यत्र ज्ञेयम्। अतोऽनया रीत्या मतदानसमय एवोच्छृङ्खलस्य निर्वाचनं यथा न भवेत् तथा तत्तज्जातीयैरवहितैर्भूयेत। एवञ्चाऽनया पद्धत्या योग्यरीत्या मतदाने प्रवृत्तिरपि जनतायां जागृता स्यात्। अमात्योऽपि जातीयमर्यादापालनद्वारा जनतायाः स्थायिविश्वासपात्रतार्थं सदा प्रयत्नशीलो भवेदित्येवं जातीयनिर्वाचनास्य महान् लाभः।

एवं रीत्या कृतं जातिनिर्वाचनं शास्त्रेण "स्वजनेभ्यो विजानीयात् कुलं स्थानमवग्रहम्" इति पद्येन प्रतिपाद्यते। प्रसङ्गादिदमपि स्मार्यते यत् मन्त्रिनिर्वाचने अपरेप्युपायाः अनेन

तदनुसारेण तत्तदध्यक्षऽपदेषु स्थिता अध्यक्षास्तत्तज्जातीयाः सर्वेऽपि समानवेतनादिभिः समानतयैव सम्मानभाजो भवन्ति। तदीयव्यवसाय-लब्धद्रव्यविनियोगः तत्कर्मसु नियुक्तिश्च तत्तज्जातीयेष्वेवात्र प्रतिपादिते। तथा च चर्मणो व्यवसाये चर्माध्यक्षाधीनं स्वजातीयेषु विनियोक्ष्यमाणं द्रव्यं याजनाद्युपलब्ध-द्रव्यापेक्षया न्यूनं भवति भविष्यति वेति विश्वसितुं को वा पारयेत्। तथा चाऽर्थ-समृद्धिर्नास्ति हिन्दूधर्मे, इति कथनं भारतीयराजनीतेः अज्ञानस्य फलम् एतेन—

प्रजानां विनयाधानाद् रक्षणाद् भरणादपि।
स पिता पितरस्तासां केवलं जन्महेतवः॥

इति कालिदासोक्त सङ्गच्छते।

---

शास्त्रेण—प्रतिपादिताः। ते च विद्वन्मतं, जातीयमतं, लोकमतं प्रत्यक्षमनुमानं चेति पञ्चभिरुपायैः परीक्षितगुणा मन्त्रिणः शासनसभां प्रविश्य शासनकार्यं सम्पूर्णतया सहायका यदि भवेयुस्तर्ह्यवश्यं गौरूपेयं पृथिवी वत्सस्थानीयाया जनतायाः कृते स्वयं समस्तसम्पद्धारां प्रवाहयिष्यति इत्यत्र नास्ति संशयलेशोऽपि। एतादृशनिर्दुष्टव्यवस्था भारतीयराजनीतितोऽन्यत्र अत्यन्तं दुर्लभैव—

अपि च अपराधानुसारेण दण्डव्यवस्थां विधायापि लोकप्रियतासम्पादनपूर्वकं जनतायां शासन-संस्थायाः पूज्यत्वबुद्धिनिर्माणमतिदुष्करम्, दण्डव्यवस्थायां अपराधिनां संपत्तिहरणे वधदण्डे वा कृते जनतायाः कोपस्य सम्भाव्यमानत्वात्। दण्डो यदि न प्रणीयेत तर्हि शासनसंस्थाया एवान्यथा-सिद्धत्वं भवेत्। शासनसंस्थाभयाभावेन च सर्वत्र मात्स्यन्यायःप्रचलेत्। तदुक्तं कामन्दकेन—

परस्परामिषतया जगतो भिन्नवर्त्मनः।
दण्डाभावे परिध्वंसी मात्स्यो न्यायः प्रवर्तते। इति।

अतो दण्डविधानमावश्यकम्। भारतीयव्यवस्थानुसारेणाऽन्यजातीयमन्त्रिणां तदनुगा-मिनांच च समर्थनं प्राप्य निर्वाचितस्यैकजातीयमन्त्रिणोऽपराधे तज्जातीयेष्वन्येषु दण्डविधानं सुशकं भवति। एतादृशदण्डभयमेवान्येषु मन्त्रिषु तदनुयायिवर्गेषु च सम्यङ्नीतिमार्गानुसरणे प्रवृत्ति-मुत्पादयेत्। जातिव्यवस्थामन्तरा सर्वसाधारण्येन लोकमतेन निर्वाचितस्य मन्त्रिणोऽपराधे यदि सर्वेषां मतदातृणामुपरि दण्डविधानप्रसङ्गः स्यात् तर्ह्यवश्यं जनतायाः कोपपात्रीभूता शासन-संस्था न बहुकालं स्थितिं लभेत। अत एवोक्तं कामन्दकेन—

उद्वेजयति तीक्ष्णेन मृदुना परिभूयते।
दण्डेन नृपतिस्तस्माद्युक्तदण्डः प्रशस्यते। इति।

अयमर्थः—यादृशो दण्डो लोकविद्वेषजनको यादृशं शासनसंस्थानं वा आत्मनो व्यर्थतां संपादयेत्तदुभयस्माद् भिन्नः सुप्रयुक्तो दण्ड एव प्रशस्त इति। वर्तमानपाश्चात्यनीतौ तु मन्त्रिभिर्महत्यपराधे कृतेऽपि शासनसंस्थया तत्क्षेत्रीयेभ्यः सर्वेभ्यो मतदातृभ्यो दण्डदाने साहसं कर्तुं न पार्यते। निर्वाचने जातिनियमाभावेन च जनतायाः सविधे येन मन्त्री निगृहीतः स्यात्ता-दृशमङ्कुशरूपं जातीयनियमनमपि नास्ति। एतस्य दुष्परिणामोऽयमेव यन्मन्त्रिभिर्निर्भयतया प्राप्तस्याधिकारस्य पदस्य च दुरुपयोगः क्रियते। विशेषतः सौजन्यस्यापि विस्मरणं तेषां भवति। एतद्दोषस्य निवारणोपायः कोऽपि जातिमर्यादाया उच्छेदिकायां वर्तमानराजनीतौ नास्ति। इति।

## जयमङ्गलाक्रोडपत्रम्

### कुलीनेषु श्रद्धादार्ढ्यम्

किञ्च कुलीनत्वस्य जातिप्रयुक्तस्य प्रतिभोद्बोधफलातिरिक्तोऽपरोऽपि एको गुणो वर्तते यत् धर्मेषु अनुष्ठीयमानेषु श्रद्धादार्ढ्यमिति। यस्य श्रद्धादार्ढ्यं नास्ति सः न अपेक्षितफलभाग् भवति इति।

इदञ्च श्रद्धावत्वं यथा कुलीनेषु दृश्यते संस्कारदार्ढ्यात्, तथा अपरत्र स्वभावतः बाहुल्येन सम्भवतीति न वक्तुं शक्यते। तदुक्तं गीतायाम्—

शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते।
अथवा योगिनामेव कुले भवति धीमताम्॥ इति[1]। ( गी० ६।४१, ४७ )

इदं हि सुप्रजाजननं जातिमत्कुलीनत्वप्रयुक्तं यदुच्यते, तत् आधुनिकगवेषकैरपि न उपेक्षितुं शक्यते, सुप्रजाजननस्य तैरपि अपेक्षितत्वात्, गोधूमधान्यगवाद्युत्तमपश्वादिप्रभवार्थं तेषां प्रकृतिदर्शनाच्च।

इदं हि कुलीनत्वस्य प्रतिभोद्बोधरूपं सुप्रजाजननकार्यं कथं भवतीत्यत्र उदाहरणं कापालिकसिद्धान्तः। तथाहि—तत्सिद्धान्ते नरबलिः स एव शुद्धो भवति, यः खड्गघातादिभिः म्रियमाणः पुरुषः सहजत एव भगवन्नाम कीर्तयेदिति। एतादृग्रीत्या वृत्तिनियमनेन सर्वेषु वर्णाश्रमेषु एकदेशनिवासिषु पारस्परिकं बन्धुत्वं राजनीतिशास्त्रेण साधितम्, यत्र बन्धुत्वमुद्बुद्धं भवति, तत्र क्रुद्धत्वलुब्धत्वभीतत्वापमानितत्वेषु अन्यतमस्य भेदहेतोः प्रसङ्गः नोत्पद्यते। अतः बन्धुभृतकश्रेणीमित्रशत्रुवाटविकेषु नियमितवृत्तिमतां बन्धूनां सैन्यस्य अतीव प्राबल्यमभेद्यत्वं च साधितम्। इत्येवं कुलीनत्वस्य स्थितिः उत्तरोत्तरप्रतिभोद्बोधनाय विनयस्थापनाय च अपेक्षिता तत्तद्कर्मकर्तृजातीयताप्रयुक्ता वेदितव्या। इदमवधेयमत्र, यत् राजनीतिरियं जातिप्रयुक्तकुलीनत्वस्य माहात्म्यं वर्णयन्ती न केवलं कुलीनत्वमवस्थापयति, अपि तु तत इतरगुणैः अपेक्षितैः सहचरितं सद् यत् कुलीनत्वं तदेवात्राऽनुमन्यते इति।

### अकुलीनेषु प्रतिभोद्बोधः

ननु व्यासादयः शूद्रायां उत्पन्नाः तथापि तेषु प्रतिभोद्बोधः कथं समभूत्? इति चेदुच्यते। ते हि जन्मत एव सिद्धिसम्पन्नाः नास्माकमनुकार्याः अत एव जन्मतः सिद्धत्वात् व्यासादयः शास्त्रप्रणेतारः यथार्थवक्तारश्च संबभूवुः इति तेषामुच्चकुली-

---

[1] म० सू० भाष्यम्—श्रद्धावैराग्यादिकल्याणगुणाधिक्ये तु भोगवासनाविरहात् पुण्यकृतां लोकानप्राप्यैव योगिनामेव दरिद्राणां ब्राह्मणानाम्, न तु श्रीमतां राज्ञां कुले जन्म भवति। धीमतां ब्रह्मविद्यावताम्। एतेन योगिनामिति न कर्मिग्रहणम्। यच्छुचीनां श्रीमतां राज्ञां गृहे योगभ्रष्टजन्म तदपि दुर्लभमनेकसुकृतसाध्यत्वान्मोक्षपर्यवसायित्वाच्च।"

## जयमङ्गलाक्रोडपत्रम्

नोत्पन्नत्वाभावेऽपि न क्षतिः । तथाविधा सिद्धिः अस्मासु नास्ति । अत्रेदमवधेयम् । संस्कारोद्बोधाय प्रतिभोद्बोधाय च कुलीनत्वमेकमस्मासु अवशिष्टं वर्तते । तदऽपि यदि अदृश्यं भवेत् तर्हि विनयस्य स्थाने अहङ्कारस्य प्रादुर्भावः भविष्यति । यतः—दृश्यते यत्र रसमयमेवाध्ययनम् तत्र तावन्मात्रेण मोहस्यापि संभवः ततः शक्तिह्रास एव इति वैदिकसिद्धान्तसंरक्षिण्यां प्रपञ्चितमस्ति । अतः क्वचित् केनचिद् सिद्धेन लब्धमिति कृत्वा असिद्धेनापि तदनुष्ठेयमिति न सम्यक् । किन्तु कार्यकारणभाव एव शरणीकरणीयः । तदनुसारेण कुलीनत्वस्य सुरक्षापुरस्सरं निरभिमानितया सत्वं वर्धनीयम् । तत्र गुरुभक्तिः ईश्वरभक्तिश्च सहकारिण्यौ । ततो ज्ञानलाभः इत्येमुपवर्णितः कार्यकारणभावः यावत्पर्यन्तं देशे जागरूकः आसीत् तावत्पर्यन्तं अष्टादशविद्यासु चतुष्षष्टिकलासु च पारङ्गताः सम्बभूवुः । एवंविधः समयः ५००० पञ्चसहस्रवर्षपूर्वमासीत्, सान्दीपनिद्वारा समस्तानां विद्यानां कलानां च कृष्णेन कृतस्याऽध्ययनस्य पुराणेषु उपवर्णनात् । यद्यपि तादृशी स्थितिः अधुना नास्ति तथापि "अर्थी समर्थो विद्वानधिक्रियते" इति न्यायेन यावच्छक्यं तावत् कुलीनत्वसुरक्षार्थं प्रयतितव्यमेव इत्यलम् ।

(ज० २०६ पृ०) धर्मार्थम् इति । फलमनभिसन्धाय भूतरक्षणं राज्ञा कर्तव्यमन्यथा सः नरकभाक्स्यात् इति ज्ञापनार्थम्, धर्मस्य अपूर्वत्वमतेन तत्पालनार्थं वा ।

### धर्मस्वरूपं

ननु धर्मस्य स्वरूपं कीदृशमिति चेत् राजनीतिशास्त्रं हि सर्वशास्त्रस्य प्रतिष्ठापकत्वात् यन्मते यादृशं धर्मस्वरूपम् निर्णीतमस्ति तत्सर्वमत्र ग्राह्यम् । तत्र केचन धर्मः अपूर्वमिति वदन्ति । अन्ये धर्मः क्रियेति वदन्ति । अपरे ईशप्रसाद एव धर्मं इति च वदन्ति । यन्मते हि अपूर्वं धर्मः तन्मते 'धर्मः क्षरति कीर्तनात्' इति पद्यस्य समन्वयो भवति । अर्थात्—यदि धर्मः क्रियास्वरूपः स्यात् तर्हि तस्याः अनुष्ठानसमय एव नाशात् पुनः कीर्तनेन धर्मस्य नाश्यत्वमनुपपन्नं स्यात् अतो धर्मस्य अदृष्टरूपत्वं स्वीकृतमस्ति । इति नैयायिकमतम् ।

यस्मिन मते च धर्मस्य क्रियारूपत्वमुच्यते तन्मते "धार्मिकोऽयमिति अनुष्ठानसमये प्रामाणिकव्यवहारात् तदानीं चादृष्टोत्पत्यभावात् यागादिक्रियाणामेव धर्मत्वं स्वीक्रियते । यच्चोच्यते "धर्मः क्षरति कीर्तनादिति तत्तु क्रियाजनितफलपरतया व्याख्येयम् । इत्यवं मीमांसकमतम् ।

यन्मते ईश्वरस्यास्तित्वमस्ति तन्मते विधिनिषेधयोः परिपालने सति सः प्रसन्नो भवतीति ईशप्रसाद एव धर्मो भवति । तदुक्तम्—

## वैश्यस्य—अध्ययनं यजनं दानं कृषिपाशुपाल्ये वणिज्या च;

### जयमङ्गलाक्रोडपत्रम्

यस्य प्रसन्नो भगवान् गुणैर्मैत्र्यादिभिर्हरिः ।
तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम् ॥ (भा० ४।६।४७)
तितिक्षया करुणया मैत्र्या वाऽखिलजन्तुषु ।
समत्वेन च सर्वात्मा भगवान् संप्रसीदति ॥
संप्रसन्ने भगवति पुरुषः प्राकृतैर्गुणैः ।
विमुक्तो जीवनिर्मुक्तो ब्रह्मनिर्वाणमृच्छति ॥ इति । (अ०४।११।१३।१४)

एतदुपासकानां भक्तानां मतम् । अथ सर्वनिर्दिष्टतत्तन्मत-सिद्धस्य धर्मस्य शब्दप्रमाणकत्वेऽपि प्रत्यक्षप्रमाणप्रमितत्वंसिद्ध्यधीनेन नीतिलक्षणेनाक्रान्तत्वं कथं भवतीति विशेषनिर्वचनं तु अग्रे यथावसरमाश्रमधर्मनिरूपणे निरूपयिष्यते ।

### श्रीमूला

कृषिपाशुपाल्ये कृषिः केदारेषु । पाशुपाल्यं पशुपालनकर्म गवाश्वादीनां पोषणचिकित्सादि । वणिज्या क्रयविक्रयव्यवहारः ।

### वैदिकसिद्धान्तसंरक्षिणी

[1]वैश्यास्येज्यादित्रयं धर्ममुक्त्या धर्म्यां वृत्तिमाह । कृषीति । कृषिः बीजावापादिः पराशरोक्ता । पाशुपाल्यं पशुपालनकर्म गौतमशालिहोत्रादिप्रणीतम् । वाणिज्यं क्रयविक्रयव्यवहारो विदेहराजप्रोक्तः ।

### पशुपालनकृष्योः पौर्वापर्यम्

ननु पाशुपाल्यं कृषिः पण्यं वैश्यस्याजीवनं स्मृतम् । का० नी० स० २-४ इति पद्येन पशुपालनकर्मणः नीतिसारे प्राथम्येन ग्रहणमस्ति । अत्र तु कृषिः पूर्वमुक्ता उभयोः समन्वयः कथमितिचेन्न ।

प्रजापतिर्हि प्रजाः सृष्ट्वा वैश्याय परिददे पशून् ।
ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः ॥
न च वैश्यस्य कामः स्यात् न रक्षेयं पशूनिति ।
वैश्ये चेच्छति नान्येन रक्षितव्या इति स्थितिः ।

इति मनुवचने वैश्यैः पशुपालनं कर्तव्यम् इति विहितम् । अनेन पशुपालनप्रतिभूत्वं वैश्येषु वर्तत इति निर्णीयते अतः तदनुगुणवान् कामन्दकः वैश्ये तत्प्रतिभूत्वस्य स्थापनार्थं नीतिसारे पाशुपाल्यं प्रागभिदधे ।

---

१ (२०८ पृ० संरक्षिणी शेषः) अध्ययनं षडङ्गस्यस्वाध्यायस्य गुरुसान्निध्ये । अयं धर्मः । अध्यापनम् उपनीतान् वत्तदधिकारिणः प्रति । इदं वृत्तिः यजनं दर्शपूर्णमासादिः अयं धर्मः । याजनं याज्दस्य अधिकारवतः । इदं वृत्तिः । दानं दक्षिणादानादिः अयं धर्मः । प्रतिग्रहः शुद्धात् अयं

## वैदिकसिद्धान्तसंरक्षिणी

मूलकारस्तु कृषिप्रधाने भारते देशे अर्थोपार्जनोपायेषु तस्याः प्राधान्यं चिन्तयित्वा आदौ कृषिमभिदधाति । शेषं क्रोडपत्रे द्रष्टव्यम् ।

## जयमङ्गला

**वैश्यस्येति** अध्ययनादयो धर्माः । कृषिपाशुपाल्ये वृत्यर्थे प्राधान्येन, योगविभागकरणात् । वणिज्या च वणिक्कर्म अन्वाचीयमाना । अल्पफलत्वात् । अतो-वार्तेति नोक्तम् ।

## जयमङ्गलाक्रोडपत्रम्

### कृषिपाशुपाल्योः वणिज्यातः पृथक्करणम्

**वैश्यस्येति** । कृषिपाशुपाल्ये इति—

ननु कृषिपाशुपाल्ययोः वणिज्यातः विभज्य निरूपणे कोऽभिप्रायः ? इति चेच्छृणु । वणिज्यायाः वैश्येन मूलधनादुपरि यः लाभः कर्तव्यः स तु शास्त्रेण मर्यादितः व्यवहारप्रकाशेउक्तः, मर्यादायाः अतिक्रमणे तु वणिजां दण्ड्यत्वं निरूपितम् । एतदेवाभिप्रत्य कौटिल्येनापि पण्याऽध्यक्षप्रकरणे उक्तम्—

"उभयं च प्रजानामनुग्रहेण विक्रापयेत् । स्थूलमपि च लाभं प्रजानामौपघातिकं वारयेत् ।" इति । कृष्यां तु इयन्मर्यादया अन्नमुत्पादनीयमिति वक्तुं केन शक्यते ? तत्र यावान् लाभो भवति स सर्वोऽपि कृषिस्वामिन एव स्वत्वास्पदं भवति । इत्येतत् कृषिकार्यं शास्त्रलोकोभयसम्मतत्वात् वणिज्यापेक्षया अधिकफलप्रदमस्ति । अतः कृषिं वणिज्यातः पृथक्कृत्य तस्या आदौ निरूपणमिति ध्येयम् ।

### कृषिपाशुपाल्ययोः पूर्वनिर्देशे मतभेदः

ननु नीतिसारे "पाशुपाल्यं कृषिः पण्यं वैश्यस्याजीवनं स्मृतम् इत्यभिदधता कामन्दकेन पाशुपाल्यस्य कृष्यपेक्षया आदौ उपन्यासः कृतः स कौटिल्येन सह विरोधं प्रतिभासयतीति चेन्न ।

अत्र हि मतद्वये तस्य तस्य ग्रन्थकर्तुः दृष्टिभेदो वर्तते । तत्र कौटिल्यः अर्थ एव प्रधान इति उक्तवान्तद्वचन निर्देशात् । तेन सः अर्थोपार्जनमभिलक्षयति । इति सिद्ध्यति । कामन्दकस्तु एतद् धर्म-निरूपणे तत्तद्वर्णानां प्रतिभूत्वं प्रदर्शयति । तत्र मूलं वाक्यं मनुवचनं बोध्यम् तथाहि—

प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून् ।
ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः ॥
वैश्ये चेच्छति नान्येन रक्षितव्या इति स्थितिः ।
न च वैश्यस्य कामः स्यान् न रक्षेयं पशूनिति ॥ इति ।

---

वृत्तिः । स च ब्राह्मणस्य विशुद्धः । चकारात् पाशुपाल्यादि आपत्कालीना वृत्तिर्वा बोध्या । इति-शब्दः इतरप्रतिषेधार्थः ।क्षत्रियधर्ममाह—क्षत्रियस्येति । यजनं राजसूयाश्वमेधादिः शेषं स्पष्टम् ।

**शूद्रस्य[1]—द्विजातिशुश्रूषा[2] वार्ता कारुकुशीलवकर्म च ॥**

### जयमङ्गलाक्रोडपत्रम्

इदं हि मनूक्तं पाशुपालनकर्म वैश्येन अनुष्ठेयमेव। इत्येतद्धेतोः पशुरक्षणं प्रति प्रतिभूत्वस्य वैश्ये अस्तित्वप्रदर्शनार्थं कामन्दकेन पाशुपाल्यं आदावुपन्यस्तम्। कौटिल्येनतु अर्थदृष्टिं चिन्तयता कृषावर्थलाभस्याधिक्यात् आदौ सोपन्यस्ता इति बोध्यम्।

### आधुनिकेषु वैश्येषु वैश्यत्वम्

ननु 'वैश्येन वेदोऽध्येतव्यः' इति शास्त्रेण विहितत्वात् वेदाध्ययनार्थं गुरुणा स उपनेतव्यः। परन्तु साम्प्रतं बाहुल्येन उपनयनकर्म वैश्यस्य लुप्तप्रायं दृश्यते। अतः वेदाध्ययनादपि स वञ्चितः दृश्यते। एतदवस्थायां स्वीयधर्मविलोपेन वणिक्षु वैश्यत्वजातिः कथं स्वोकर्तव्या ? इति चेदभिधीयते।

तत्तज्जातीयानां कृते ये ये धर्माः निरूपिताः तेषां विलोपेन तत्र वंशे सर्वत्र जातिः परिवर्तते इति न शास्त्रस्य मर्यादा, अपि तु वंशे यदा हि साङ्कर्यं कर्मकृतं, कुलकृतं वा संभवति, तदा तद्वंशे जातिः परिवर्तते इति शास्त्रस्य मर्यादा। तदनुसारेण वर्तमानेभ्यः वणिग्भ्यः वैश्यत्वं व्यपगतमिति कथं वक्तव्यम्? ते हि स्वीयं वणिज्याकर्मं परम्पराप्राप्तमद्यावधि अनुतिष्ठन्तः सन्त्येव। तस्य यावत्पर्यन्तं स्थिरता वर्तते, तावत्पर्यन्तं तेषु साङ्कर्यं कथमपि नास्ति। तथा च साङ्कर्याभावात् अधुनातनेषु वणिक्षु वैश्यत्वमस्तीति स्वीकारे किमपि बाधकं न पश्यामः। उपनयनादिसंस्काराणां विलोपात् वेदाध्ययनस्य अभावाच्च संस्कारलोपप्रयुक्तं ब्राह्मणेषु व्रात्यत्वमिव वणिक्षु व्रात्यवैश्यत्वमस्तु कामम्। तेषु वैश्यत्वन्तु स्थिरमेव।

यदि च ब्राह्मणानां कृते जीविकार्थं अनुष्ठेयत्वेन विहितं वेदाध्ययनं प्रति अङ्गभूतोपनयनमिव वणिज्यां प्रति उपनयनं वैश्यानां कृतेऽङ्गत्वेन विहितं स्यात् तर्हि उपनयनविलोपप्रयुक्तं वैश्यस्य वणिक्कर्मापि विलुप्तं स्यात्। तथाविधा स्थितिः न क्वचिद् शास्त्रकर्तृभिः शास्त्रेषु निर्दिष्टा। ब्राह्मणवंशपरम्परायां तु उपनयनाभावे वेदाध्ययनाभावात्, तत्प्रयुक्तजोविकाविलोपप्रसक्तेः अवश्यंभावात् प्रायश्चित्तानपनोद्यपातकस्थितौ पुनर्वेदाध्ययनस्य अप्रसक्तत्वात् ब्राह्मणवंशपरम्परायां सांङ्कर्यमहिम्ना ब्राह्मणत्वजातिपरिवर्तनं भवितुमर्हति, न तथा वैश्ये। अतः वर्तमानेषु वैश्येषु वैश्यत्वस्वीकारे न कापि हानिः इति ध्येयम्।

### श्रीमूला

द्विजातिशुश्रूषा द्विजातयो ब्रह्मक्षत्रियवैश्याः तेषां परिचरणम्। वार्ता कृषिपाशुपाल्यवणिज्याः। कारुकुशीलवकर्म शिल्पिकर्म चारणकर्म च।

१ नी० टी० अनुष्ठानमिति शेषः।

२ त्रयो वर्णा द्विजातय इति।

## [ आश्रमधर्माः ]

**गृहस्थस्य[1]—स्वकर्माजीवः[2], तुल्यैरसमानर्षिभि[3]र्वैवाह्यं, ऋतुगामित्वं, देवपित्रतिथिभृत्येषु[4] त्यागः, शेषभोजनं च ।**

---

### वैदिकसिद्धान्तसंरक्षिणी

शूद्रस्य धर्ममाह **द्विजातीति** । द्विजातयः ब्राह्मणक्षत्रियविशः । तेषां शुश्रूषा सेवा । इयं धर्मार्था बोध्या । इयं सामान्या वृत्तिः । विशेषामाह कार्विति । तत्रापि सति ब्राह्मणे न क्षत्रियस्य क्षत्रिये वा न वैश्यस्य इति ध्येयम् । धर्म्यां वृत्तिमाह **वार्तेति** । अस्य कर्मेत्यनेन संबन्धः द्वन्द्वान्ते श्रूयमाणं प्रत्येकमभिसंबध्यते इति न्यायात् । कारुकर्म तक्षणादि । कुशीलवकर्म नृत्यगीतवाद्यादि ।

### जयमङ्गला

**शूद्रस्येति** । द्विजादीनां ब्राह्मणक्षत्रियविशां शुश्रूषा परिचरणन्धर्मार्थम् । वृत्तये च वार्ता । तथा कारुकर्म तक्षणादि । कुशीलवकर्म नृत्तगीतादि । एतद् यथोत्तर मुपचीयमानं वृत्यङ्गम् ।

### जयमङ्गलाक्रोडपत्रम्

वृत्तये इति । अत्र 'वृत्तये वार्ता' इत्युक्तम् । अग्रे यथोत्तरमुपचीयमानं वृत्यङ्गमिति वक्ष्यति । आभ्याङ्ग्रन्थाभ्यां वार्ताकारुकर्मतक्षणादिकर्मसु उत्तरोत्तर-कर्मकरणे शूद्रस्य बहुलं धनार्जनं इति टीकाकृता मूलकृदाशयः व्यञ्जितः । किञ्च वर्णधर्मनिरूपणे वार्ता वैश्यस्य आजीविकेति मूलकृता यद्यप्युक्तं, तथापि स्वस्वधर्मेण जीविकायाः असम्भवदशायां तत्तद्धर्मपरिपालनेन सह जीविकार्थे वार्ता अनुष्ठेया इति मूलकृदाशयोऽप्यत्राभ्यूहनीयः । तदुक्तम् उक्तानुक्तदुरुक्त-चिन्ताकृता अर्थशास्त्रवार्तिकभूते नीतिसारे तट्टीकायां च ।

'शुद्धा च वृत्तिस्तत्सेवा कारूचारणकर्म च' ।

टी०—शुद्धा च वृत्ति रिति चशब्दाद् वार्ता च सामान्या । इति ।

### श्रीमूला

आश्रमधर्ममाह—**गृहस्थस्येत्यादि** । गृहिणः स्वकर्माजीवः स्ववर्णोक्तकर्मणा वृत्तिः । तुल्यैः कुलादिना समानैः । असमानर्षिभिः भिन्नार्षगोत्रैः । वैवाह्यं विवाहः,

---

नी० टी० १. आश्रमाणां स्वधर्ममाह । शेषः पाठः त्रुटितः ।

२ श्रुतवित्तादिना ।

३ एकर्षिगोत्राणां च विवाहनिषेधात् ।

४ देवशब्दोऽग्निरणामुपलक्षणार्थं पञ्चयज्ञनिर्वर्तनमेवभभिहितं भवति ।

## श्रीमूला

स्वार्थे ष्यञ् । ऋतुगामित्वं ऋतुः पुष्पस्नानदिनादूर्ध्वं द्वादशनिशाः तस्मिन् स्त्रीगमनशीलत्वम् । शेषभोजनं देवादिदत्तावशिष्टाशनम् ।

## वैदिकसिद्धान्तसंरक्षिणी

आश्रमधर्ममाह **गृहस्थस्येति** । "आश्रमाणां गृहस्थो योनिरप्रजनत्वादितरेषामि"ति—गौतमवाक्यात् सर्वाश्रमकारणत्वात् अन्नसन्तर्पणहेतुत्वाच्चादौ गृहस्थधर्माभिधानम् । **स्वकर्माजीव** इति । स्वकर्मणा परम्पराऽगतेन आजीवनेन एकार्थाभिनिवेशित्वात्मकस्यारित्वस्य न संभावना । तत्फलं परस्परं कलहाभावो बोध्यः । **तुल्यैः** समानजातीयवर्णैः । "श्रुतवित्तादिना" इति नीतिनिर्णीतिटिप्पण्यां अध्याहृतम् तत्र मूलं मनुवाक्यम् बोध्यम् । तद्यथा–

द्वयोर्विवाहो मैत्री वा नोत्तमाधमयोः क्वचित् । इति ।

### असगोत्रविवाहः

**असमानर्षिभिः** असमानगोत्रैः शास्त्राननुमोदितसमानप्रवरभिन्नैः । समानप्रवरेषु समानगोत्रेषु विवाहे रक्तसान्निध्यात् कुलक्रमागता दोषाः सन्ततौ जन्मतः प्रादुर्भवेयुः । तन्निराकरणाय असमानर्षित्वविधानम्[1] ।

---

[1] प्रपञ्चितं चैतत् भारतीय समाजशास्त्रे—

विवाह्य स्त्री पुरुष किस मर्यादा के बाहिर के होना चाहिये । अन्दर के न होना चाहिये यह भी एक मर्यादा है । एक रक्त के स्त्री पुरुषों का विवाह जिन कुटुम्बों में होता है उनमें त्वचा का रोग पाया जाता है ।

"Stchthyosis is especially apt to be found in families in which consanguinous marriages occur"—DAVENPORT.

एक रक्त के स्त्री पुरुषों के विवाह को प्राणिशास्त्र की दृष्टि से यह आक्षेप है कि उससे उभयपक्ष के दोष संतति में स्थिर हो जाते हैं ।

"Biological objection to cousin marriages is that they perpetuate like defects ( Heredity and Eugenies )".

एक रक्त के स्त्री पुरुषों के विवाह भिन्न रक्त के विवाहों की अपेक्षा दुगुनी संख्या में अधिक संतानहीन होते हैं ।

"Consanguinous marriages are more than twice as apt to be sterile than non-consanguinous marriages. ( Heredity in relation to Eugenies ).

इस प्रकार के निरीक्षण से शास्त्रज्ञों ने यह सिद्धान्त बताया है कि सुप्रजाजनन की दृष्टि से विवाह्य स्त्री पुरुष एकरक्त के न होना चाहिये । उनका रक्त भिन्न भिन्न वंशों का होना चाहिये । यहाँ एक यह प्रश्न उठता है कि एक रक्त की मर्यादा कहाँ तक समझना ? इसका सरल उत्तर यह है कि जहाँ तक उनका रक्त एक होने की जानकारी हो सकती है

वहाँ तक यह मर्यादा है। हिन्दू समाज में विशेषतः ब्राह्मणजाति में, प्रत्येक कुल को उसका गोत्र रहता है। गोत्र का अर्थ उस कुल का स्थापक मूलपुरुष अर्थात् इस मूलपुरुष का नाम गोत्र समझा जाता है। उस गोत्र के सब स्त्री पुरुष उसके वंशज अर्थात् उसके रक्त के होते हैं। इस गोत्र पुरुष तक एक रक्त की जानकारी की जा सकती है तो बीच ही में कहीं वह धागा क्यों और कहाँ तोड़ना ? वंश की सुरक्षितता की दृष्टि से वीच ही में वह तोड़ देना इष्ट नहीं है। इस कारण सवर्ण, पर सगोत्र में स्त्री-पुरुष का विवाह न हो ऐसा निर्बन्ध रक्खा गया है। भिन्न गोत्र विवाह से संतति में एकरक्त दोष नहीं आने पाते और नये गुण प्राप्त होंने का संभव रहता है। आजकल केवल व्यावहारिक सुविधा के लिए सगोत्रत्व का निर्वन्ध न मानने की लोगों में प्रवृत्ति हो रही है, पर सुप्रजाजनन की दृष्टि से वह घातक है। केवल गोत्रनाम भिन्न होने से असगोत्रत्व निश्चित नहीं होता।

गोत्र भिन्न होने पर प्रवर एक रहें तो भी सगोत्रत्व होता है, कारण एक मूलगोत्र में आगे चलकर अनेक गोत्रप्रवर्तक उत्पन्न होते हैं। इससे मूलगोत्र एक रहकर भी गोत्र नाम भिन्न हो सकते हैं। मूलगोत्र एक है या नहीं यह समझने का साधन प्रवर है। एक गोत्र में आगे चल कर अनेक गोत्रप्रवर्तक होते हुये भी उन भिन्नगोत्रप्रवर्तकों ने अपने मूल के प्रवर नहीं वदले, इस कारण गोत्र सैकड़ों होते हुए भी प्रवर केवल ४८ ही हैं। मूल गोत्र ८ अथवा ९ ही हैं। वे प्रवरों से पहिचाने जा सकते हैं। इस कारण असगोत्रत्व के साथ असप्रवर का निर्वन्ध भी रखा गया है।

सब मानवसृष्टि मूलभूत एक स्त्री और एक पुरुष की संतति होने के कारण वहाँ तक पीछे जाने से सारी मानव सृष्टि एक रक्त की है ऐसा कहना पड़ता है, फिर कोई विवाह एकरक्तता के दोष से छूट नहीं सकता यह आपत्ति आती है। पर यह आपत्ति हिन्दू समाज में नहीं आ सकती क्योंकि हिन्दू समाज में यह नहीं माना जाता कि समाज के सब स्त्री पुरुष एक मूल स्त्री और पुरुष की सन्तान हैं। ब्रह्मदेव ने मानस पुत्र निर्माण किये। उन मानसपुत्रों की संतति हिन्दू समाज है। इसका यह अर्थ है कि मूल ऋषि-मानस पुत्र एक रक्त की संतति नहीं है। उन्हें ब्रह्मदेव ने भिन्न-भिन्न रक्त-पिण्ड युक्त ही निर्माण किया। ईश्वर ने जैसा एक साथ भिन्न वर्ण निर्माण किया वैसे ही भिन्न-भिन्न रक्त-पिण्ड ऋषि निर्माण किये यदि ऐसा न होता और सब ऋषि यदि एक ही रक्तपिण्ड के होते तो शास्त्र-निरीक्षकों के उक्त सिद्धान्त के अनुसार सब मानव सृष्टि नष्ट हो गयी होती। अतः एक-एक ऋषि का अलग-अलग रक्त पिण्ड था ऐसा माने बिना सृष्टि की धारणा की सुसंगत उपपत्ति नहीं लगती; अर्थात् एक ऋषि का वंश ही सगोत्र स्त्री-पुरुष एक रक्त के सिद्ध होते हैं और उनका विवाह निषिद्ध होता है और असगोत्र विवाह प्रशस्त सिद्ध होता है।

गोत्र के साथ सापिण्डय का निर्वन्ध भी विचारना पड़ता है। सापिण्डय का अर्थ है एक शरीरान्वयित्व। मूल पुरुष से पुरुष सन्तति द्वारा एक शरीरान्वन्यी है वह गोत्र से ज्ञात होता है, पर संतति द्वारा जो एक शरीरन्वयित्व है वह गोत्र से जाना नहीं जा सकता। बीज

## वैदिकसिद्धान्तसंरक्षिणी

किञ्च विवाहस्य उत्तमं फलं आत्मसंपत्सपन्नस्य पुत्रस्य प्राप्तिः इति निर्णीतमस्ति। तदुक्तम्-"पुत्रफला हि स्त्रियः" इति। नीतिवाद्भिः तदर्थमसमानार्षास गोत्रविवाहोपि अनेकेषु कारणकलापेषु अन्यतमं कारणं अस्ति इत्युच्यते। यद्यत्रोपेक्ष्येत तर्हि पुत्ररक्षणं अतिकठिनं स्यात्। यदि स्वल्पापि विगुणता पुत्ररक्षणं प्रति स्यात् तर्हि पुत्राणां कर्कटकसधर्मत्वात् स पितुः संपत्तिमतो राज्ञः सहजशत्रुः स्यात् इत्पापद्येत। वक्ष्यति च कौटिल्यः सर्वं वैशद्येन–राजपुत्ररक्षणप्रकरणे स्वयमेव। अतः उत्तमभार्यात्वं सम्पादनीयमिति शास्त्रमर्यादामनुसृत्य मूलकृता असगोत्रत्वमसमानर्षित्वं च विहितं बोध्यम्। एवंरीत्या दृष्टोपयोगित्वमसमानर्षिविवाहे निरुपितम्। तस्य अदृष्टोपयोगित्वविषये प्रमाणतया धर्मशास्त्रस्थान्यनेकानि वचनानि विद्वद्भिः सर्वैरेवावगम्यन्ते। तानि नात्रोपन्यस्यन्ते।

### सवर्णविवाहः

नन्वेवमपि असमानर्षिभिः यैः कैः सह विवाहसंबन्धस्य निर्दोषत्वं भवतु। का नाम सवर्णत्वस्यपि विवाहे अपेक्षा ? इति चेन्न। आधुनिक पत्रेषु डा० श्री राजगोपालाचारीप्रभृतिभिः विजातीयरक्तसंबन्धे प्राणहान्यादिदोषप्रसङ्गस्योक्तत्वात्।
( आज पत्र सौर २ फा० सं० २०२४ जनवरी )

आयुर्वेदादिशास्त्रानुसारेणापि विजातीयरक्तसंबन्घस्य दोषवत्वं निरूपितम् तत्सर्वं जयमङ्गलाक्रोडपत्रे द्रष्टव्यं। ( पृ० २१४)

### जनसङ्ख्या

वैवाह्यं विवाहप्रयुक्तं भार्यात्वम्। विवाहानन्तरं भ्रूणहत्यातः गोपनाय उत्तमवंशप्राप्तये शरीरसंरक्षणाय चाह ऋत्विति। ऋतुकालाभिगामित्वं "ऋतौ भार्यामुपेयात्' इति विधानात् बोध्यम्। ननु अनेन विधिना अनेकपुत्रोत्पत्तिः अनुज्ञायते। इष्टापत्तौ जनतायाः अपरिमितसङ्ख्यावृद्धिःस्यात् इति चेन्न। अर्थशास्त्रे स्त्रीणां अवस्रावणस्य स्त्रीव्यसनभयाद् विहितत्वात्। तदुक्तम्—'उपांशुदण्डेन व्याधिना वा व्यावर्तयितुमवस्रावयितुं वा'। इति। एवंरीत्या तस्या अवस्रावणं यदि क्रियते तर्हि ऋतुकालाभिगामित्वं निवारितं भवति। न च दृष्टोपायावलंबनेन तासां कृते अवस्रावणे ऋतुकालेऽनभिगमनमापद्यते तथा सति अदृष्टहानिः स्यादिति वाच्यम्। अपुत्रस्य कृते एव ऋतुकाले अभिगमनविधानात्। तदुक्तं वीरमित्रोदये—"एतदजातपुत्रविषयम्। "जायमानोह वै ब्राह्मणः त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन

---

रक्त पिण्ड के समान क्षेत्रीयरक्त पिण्ड इस अगतिमान विषय में इतना प्रभावी न होने से स्त्री संतति द्वारा एक शरीरान्वयित्व पितृतः ७ और मातृतः ५ या ३ पीढ़ियों तक न हो इतना यदि देखा जाय तो भी विवाह सम्बन्ध में बाधा नहीं आती। शुक्ल यजुर्वेदी ब्राह्मणों में माता के जनक के कुल का गोत्र भी वर्ज्य माना जाता है इत्यादि।

—भारतीय समाजशास्त्र अथवा सनातन धर्म तत्त्वप्रणाली–हिन्दी अनुवाद, अनुबादक रायबहादुरसदाशिव माधव पराण्डे बी० ए०, एल० बी पृष्ठ १०९ से १११ तक।

## वैदिकसिद्धान्तसंरक्षिणी

देवेभ्यः, प्रजया पितृभ्यः, एवं वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वा स्यादिति श्रुतेः"। इति। इदं चानृण्यं ज्येष्ठजननमात्रेणैव भवति। इतरेषां कामजत्वात्।[1] अपि च "व्याधिते" इति टिप्पण्युद्धृतवचनात्—

नारीणामृतौ प्रवासादिगते पत्यौ अस्वस्थे वा ऋत्वनभिगमनेपि भ्रूणहत्या न भवतीति बोध्यम्। अस्वस्थप्रतियोगिनः स्वस्थस्य[2] स्फुटीकरणं सुश्रुतात् बोध्यम्। तथाहि—

समदोषः समाग्निश्च समधातुमलक्रियः।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते। इति

सु० सू० १५ अ० सूत्र ४१—

अतः सुश्रुतोक्तरीत्या पुमान् स्वस्थश्चेत् ऋतावुपेयात् अन्यथा ऋतुकालानभिगमनेपि न भ्रूणहत्यादिदोषः इति सिद्ध्यति। इदमेव कामन्दकेनापि स्फुटीकृतम्—

अग्निहोत्रोपचरणंजीवनं च स्वकर्मभिः।
धर्मदारेषु कल्येषु पर्वजं रतिक्रिया॥ इति

तट्टीकायां कल्येषु स्वस्थेषु सत्सु इत्यर्थः कृतः। सोयमर्थः सुश्रुताशयं समर्थयति। अतो बहुप्रजाभिवृद्धिर्यथा न भवेत् तथा राज्येन प्रयत्नो विधेयः स च प्रयत्नः सत्वस्थापनम्। प्रजाभिवृद्धिनिराकरणाय राज्यमूलभूतस्य सत्वस्य स्थापनमकृत्वा परिवारनियोजनं क्लैव्यादि द्वारा यत् काम्यते तत्तु न मनोरमम्। अनारोग्यकृतोः रजस्तमसोरनिराकरणात्। अतः कामादिविकारापाकरणाय सत्ववृद्ध्यां जातायां सुश्रुतरीत्या परिवारनियोजनं अनुषङ्गतएव सिद्धं भवति। किञ्च प्रजावृद्धिह्रासाय परि-

---

१ अतएव मनुः– ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः।
पितृणामनृणश्चैव स तस्मात्सर्वमर्हति॥
यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते।
स एव धर्मजः पुत्रः कामजानितरान् विदुः। इति।

—वी०सं० गर्भाधान संस्कार पृ० १५

२ किञ्च ऋतुकालाभिगमनमपि स्वस्थपरम्। इत्यपि तत्रैवोक्तम्। तथाहि—इदं तु ऋतुगमनं स्वस्थं सन्निहितं प्रत्युच्यते।

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति।
यः स्वदारान् ऋतुस्नातान् स्वस्थः सन्नोपगच्छति।

इति च पराशरस्मरणात्। इति। अतएवास्वस्थादेरगमने दोषाभावमाह व्यासः—
व्याधिते बन्धनस्थे वा प्रवासेष्वथ पर्वसु।
ऋतुकाले च नारीणां भ्रूणहत्या प्रमुच्यते॥ इति।

## वैदिकसिद्धान्तसंरक्षिणी

वारनियोजनसाधने स्वीकृते अपरोऽप्ययं महान् दोषः यत् व्यभिचारप्रोत्साहनं नाम। अवैधपुत्रोत्पत्तौ धर्मभावस्य सत्वभावस्य वा दूरे भीतिः तिष्ठतु। समाजस्य पुरतः लज्जाप्रसङ्गस्य या स्थितिरासीत् सापि आधुनिकयुक्त्या निरस्ता। एवमवस्थायां व्यभिचाराद्यपनयबाहुल्यं केन निवार्यताम्? इत्यलमतिचिन्तया! तस्मात् सत्व-स्थापनेन ऋतुगामित्वविधानेऽपि न प्रजाभिवृद्धिरिति निर्णीतम्।

(मू. २६४) देवेति। अग्निगुरूणामपि पूज्यत्वात् देवताग्रहणम् उपलक्षणार्थं बोध्यम्। तेन पञ्चमहायज्ञस्य नित्यकर्मणो लाभः। यद्यपि आस्तिकान्तर्गताः मीमांसकादयः देवा-नामस्तित्व न मन्यन्ते तन्मतेन देवपूजनस्यानुऽपयोगित्वं भासते, तथापि ईशभक्तौ स्थितायां वंशे स्वानुरूपा उत्तमसन्ततिप्राप्तिर्न भवेदिति आयुर्वेदादिकामसूत्रादिशास्त्रा-ज्ञया दृष्टलाभाय देवपूजनमुक्तम्। न च तथापि तद्विधानं व्यर्थमितिवाच्यम्, शास्त्रा-णामनुसारेण कृतया देवपूजया अदृष्टस्यापि सोलभ्यसंभवात्। शेषभोजनमिति यज्ञशेषभोजनमित्यर्थः।

## जयमङ्गला

आश्रमानधिकृत्याह—**गृहस्थस्येति**। सर्वाश्रमाणां प्रभवत्वाद् उपकारित्वाच्च प्राग् गृहस्थग्रहणम्। गृहं भार्या यत्र तिष्ठतीति गृहस्थः, तस्य ब्राह्मणादेः स्वेन स्वेन कर्मणा पूर्वोक्तेन आजीवनं वृत्तिः। तुल्यैः अभिजनतस्तुल्यैः। तत्रापि असमानर्षिभिः असमानप्रवरैः अतुल्यगोत्रैरित्यर्थः। वैवाहयं विवाहकर्म कन्यादानवरणम्। ऋतुगामित्वम् ऋतुकालेऽभिगमनशीलता, धर्मप्रजावृद्ध्यर्थम्। अन्यथा दोषः। यथोक्तम्—

> "ऋतुमतीन्तु यो भार्यां सन्निधौ नोपगच्छति।
> तस्याः पुरीषे षण्मासान् पितरस्तस्य शेरते।" इति।

अन्यत्र रत्यर्थम्, सर्वत्र वा प्रतिषिद्धवर्जमिति। देवेषु त्रयीचोदितेषु पितृषु च यथास्वं विप्रादीनां सोमप (।)-हविर्भुग्-आज्यप-सुकालिषु। अतिथिषु तत्कालोप-स्थितेषु। भृत्येषु दासकर्मकरादिषु। त्यागः कृताकृतद्रव्यविनियोजनम्। **शेषभोजनं** पश्चात्कालभोजनं देवपित्रतिथ्यर्थपाकावशेषभोजनं विघसाशित्वप्रतिषेधार्थम्।

## जयमङ्गलाक्रोडपत्रम्

गृहस्थस्येति। आश्रमधर्मनिरूपणे ब्रह्मचर्याश्रममपहाय आदौ गृहस्थधर्म-निरूपणं येन हेतुना कौटिल्याभिप्रेतं तं दर्शयति। सर्वाश्रमाणामिति, स्वकर्माजीवाद्य-

## जयमङ्गलाक्रोडपत्रम्

ष्टविधधर्मापेक्षया नीतिसारे अन्येपि धर्माः निरूपिता वर्तन्ते तथापि तेषामन्तर्भावः यथायथं ऊहनीयः। तथा नीतिवाक्यामृते गृहस्थधर्माः प्रचुरमात्रया निरूपितास्सन्ति। तेऽपि अत्रैवान्तर्भावनीयाः व्युत्पन्नबुद्धिभिः। सङ्क्षेपेण अव्युत्पन्नबुद्धयः गृहस्थस्य समस्तान् धर्मान् ज्ञातुं न शक्नुवन्तीति मत्वा नीतिवाक्यमृते नीतिसारे च पार्थक्येन विस्तरेण धर्मा उक्ताः तत एव वेदितव्याः[1]।

## गृहस्थधर्मफलम्

धर्मो हि गृहस्थादिभिः अज्ञानपूर्वकः ज्ञानपूर्वको वाऽनुष्ठीयते। तदुभयस्यापि धर्मस्य फलं विभिन्नं विभिन्नं भवति। तच्च तत्तत्कुलेष्वभीप्सितेषु वा तत्तल्लोकेषु अभीप्सितपदार्थादिभोगः, तदनुबन्धिनी प्रतिभा च इत्येतद् द्वयम् अबोधपूर्वकस्य धर्मस्य फलम्। बोधपूर्वकस्य धर्मस्य तु विशिष्टकुलेषु जन्म प्राप्य परमश्रद्धामनुभूय गुरुसंनिधिमात्रेण जन्मान्तरागतप्रतिभया पूर्णसुखोत्पत्तिः[2]। इति।

---

१ नित्यनैमित्तिकानुष्ठानस्थो गृहस्थः।

ब्रह्मदेवपित्रतिथिभूतयज्ञा हि नित्यमनुष्ठानम्, दर्शपौर्णमासौ हि नैमित्तिकम्। ( नीतिवाक्यामृते )

अग्निहोत्रोपचरणं जीवनं च स्वकर्मभिः।
धर्मदारेषु कल्येषु पर्ववर्जं रतिक्रिया॥
देवपित्रतिथिभ्यश्च पूजा दीनानुकम्पनम्।
श्रुतिस्मृत्यर्थसंस्थानं धर्मोऽयं गृहमेधिनः।
(का० नी० २।२२६६ ) इति।

२ तदुक्तं वैशेषिकभाष्ये।

'अविदुषो रागद्वेषतः प्रवर्तकाद्धर्मात् स्वल्पाधर्मसहितात् ब्रह्मेन्द्रप्रजापति पितृमनुष्यलोकेष्वाशयानुरूपैरिष्टशरीरेन्द्रियविषयसुखादिभिर्योगो भवति। तथा प्रकृष्टादधर्मात् स्वल्पधर्मसहितात् प्रेततिर्यग्योनिस्थानेष्वनिष्टशरीरेन्द्रियविषय-दुःखादिभिर्योगो भवति। एवं प्रवृत्तिलक्षणाद्धर्मादधर्मसहितादेव मनुष्यतिर्यङ्नारकेषु पुनः पुनः संसारबन्धो भवति। ज्ञानपूर्वकात्तु कृतादसङ्कल्पितफलादिशब्दे कुले जातस्य दुःखविगमोपायजिज्ञासोराचार्यमुपसङ्गम्योत्पन्नषट्पदार्थतत्त्वज्ञानस्याज्ञान-निवृत्तौ विरक्तस्य रागद्वेषाद्यभावात् तज्जयो धर्माधर्मयोरनुत्पत्तौ पूर्वसञ्चितयो-श्चोपभोगान्निरोधे सन्तोषसुखं शरीरपरिच्छेदं चोत्पाद्य रागादिनिवृत्तौ निवृत्ति-

लक्षणः केवलो धर्मः परमार्थदर्शनजं सुखं कृत्वा निवर्तते। तदा निरोधात् निर्बीजस्यात्मनः शरीरादिनिवृत्तिः पुनः शरीराद्यनुत्पत्तौ दग्धेन्धनानलवदुपशमो मोक्ष इति। (गुणनिरूपणे धर्मप्रकरणम्)।

'एवमधर्मस्य साधनमभिधाय सम्प्रति साध्यं कथयति। 'अविदुष' इत्यादिना। यः कर्त्ता भोक्तास्तीत्यात्मानमभिमन्यते, परमार्थतो दुखसाधनं च वाह्याध्यात्मिक विषयं सुखसाधनमित्यभिमन्यते सोऽविद्वान्। स च स्वोपभोगतृष्णापरिप्लुतः सुखसाधनत्वारोपिते विषये रज्यते, तदुपरोधिनि च द्विष्टो भवति। तस्य प्रवर्तकाद्धर्मात् देवो वा स्यां गन्धर्वो वा स्यामिति पुनर्भवप्रार्थनया कृताद् धर्मात् प्रकृष्टात् फलातिशयहेतोराशयानुरूपैः कर्मानुरूपैरिष्टशरीरादिभिः सम्बन्धो भवति ब्रह्मेन्द्रादिस्थानेऽपि मात्रया दुःखसम्भेदोऽस्ति। न चाधर्मादन्यद्दुःखसंभेदोऽस्ति न चाऽधर्मादन्यद दुःखस्य करणमतः स्वल्पाधर्मसहितादित्युक्तम्। यस्य प्रकृष्टो धर्मस्तस्य प्रकृष्टानि शरीरादीनि भवन्ति। यस्य प्रकृष्टतरो धर्मः तस्य प्रकृष्टतराणि भवन्ति, यस्य प्रकृष्टतमो धर्मस्तस्य प्रकृष्टतमानीति प्रतिपादयितुमाशयानुरूपैरित्युक्तम्। इष्टशब्दः प्रत्येकं शरीरादिषु सम्बद्ध्यते द्वन्द्वानन्तरं प्रयोगात्। तथा प्रकृष्टादधर्मात् प्रेतयोनोनां तिर्यग्योनीनां च स्थानेष्वनिष्टैः शरीरादिभिर्योगो भवति। प्रेतादिस्थानेऽपि मनाक् सुखमस्ति, तच्च धर्मस्य कार्यम्। अतः स्वल्पधर्मसहितादित्युक्तम्। उपसंहरति 'एवमि'ति।

एवं धर्मात् संसारं प्रतिपाद्यापवर्गं प्रतिपादयति ज्ञानपूर्वकात्त्विति। स्वरूपतश्चाहमुदासीनो बाह्याध्यात्मिकाश्च विषयाः सर्व एवैते दुःखसाधनम् इति यस्य ज्ञानमभूत्, स दृष्टानुश्रविकविषयसुखवितृष्णः" एवमहं भूयासमिति मे भुयासुः "इतिफलाकाङ्क्षया बिना निवृत्तसाधनतया विहितमपरं चावश्यकरणोयं कर्म करोति। तस्मात् कर्मणो ज्ञानपूर्वकात् कृतादस्य विशुद्धे कुले जन्म भवति। अकुलीनस्य श्रद्धा न भवति। न चाऽश्रद्दधानस्य जिज्ञासा सम्पद्यते। नचाजिज्ञासोस्तत्वज्ञानम्। तद्विकलस्य च नास्ति मोक्षप्राप्तिः। अतो मोक्षानुगुणसङ्कल्पितफलं कर्म विशुद्धे कुले जन्म ग्राहयति, विशुद्धे कुले जातस्य प्रत्यहं दुःखैरभिहन्यमानस्य दुःखविगमोपाये जिज्ञासा सम्पद्यते" कुतो नु खल्वयं मम दुःखोपरमः स्यात्" इति स चैवमाविर्भूतजिज्ञास आचार्यमुपगच्छति, तस्य चाचार्योपदेशात् षण्णां पदार्थानां श्रौतंतत्तत्वज्ञानं जायते। तदनुश्रवणमननिदिध्यासनादिक्रमेण प्रत्यक्षं भवति। उत्पन्नतत्तत्वज्ञानस्याज्ञाननिवृतौ विरक्तस्य विच्छिन्नरागद्वेषसंस्कारस्य रागद्वेषयोरभावात् तज्जयोर्धर्माधर्मयोरनुत्पादः। क्लेशवासनोपनिबद्धा हि प्रवृत्तयस्तुषावनद्धा इव तण्डुलाः प्ररोहन्ति। क्षीणेषु क्लेशेषु निस्तुषा इव तण्डुलाः कार्यं न प्रतिसन्दधते। यथाह—भगवान् पतञ्जलिः—'सति मूले तद्विपाको जात्यायुर्भोगाः' इति। यथाह भगवानक्षपादः—न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य' इति।

## जयमङ्गलाक्रोडपत्रम्

### गृहस्थ-धर्म-तत्फलादीनां नीतिलक्षणाक्रान्तत्वम् ।

यथा हि चित्तशुद्धिः प्रातिभं ज्ञानं च अनुष्ठितस्य स्वधर्मस्य फलम् तथा सुप्रजा-जननमपि अपरं फलं बोध्यम् । विवेचितचैतत् प्रागेव । (पृ. २१४)एतेन तत्तत्धर्मे वेदशब्द-प्रमाण्यप्रमितत्वमिव शब्दप्राभाण्यस्य अनुमानप्रामाण्ये अन्तर्भावं निरूपितवतां वैशेषि-काणां सम्मत्या अनुमानप्रमाणप्रमितत्वमपि अर्थादेव सिद्धं भवति । एवमेव सुप्रजाजन-नरूपदृष्टफलं प्रति साधनत्वस्य पूर्वं (पृ० २५९) विवेचितत्वात् प्रकृतधर्मे प्रत्यक्ष-प्रमाणप्रमितत्वमपि सिद्धं भवतीति समस्तधर्मस्य नीतिलक्षणाक्रान्तत्वमवगन्तव्यम् ।

ननु नीतिवाक्यामृतादिप्रतिपादिते धर्मान्तरे स्वीयेअनुष्ठिते सति अनुष्ठानॄणां चित्तशुद्धिः संभवतीति शास्त्रकर्तृभिरुच्यते ।

### चित्तशुद्धे रूपयुक्तता

तस्याः नीतौ कीदृशमुपयोगित्वमस्तीति चेत् उच्यते । चित्तशुद्धिः तस्यैव भवति, यस्य मनःप्रसादो वर्तते संशयश्च नास्ति यः विशुद्धाभिसन्धिमान् स्यात् तच्च वैशेषिकभाष्ये स्पष्टम्[1] । विशुद्धाभिसन्धिश्च दम्भरहितः सङ्कल्पः, इति रीत्या व्याख्यातः न्यायकन्दल्याम्[2]—

---

पूर्वसञ्चितयोश्च धर्माधर्मयोर्निरोध उपभोगात्, निवृत्तिफलहेतोश्च कर्मा-न्तरात् सन्तोषसुखं शरीरपरिच्छेदं चोत्पाद्य रागादिनिवृत्तौ निवृतिलक्षणः केवलो धर्मः परमार्थदर्शनं सुखं कृत्वा निवर्तते । निवर्त्यते संसारो नयेति निवृत्तिः निवृत्तिलक्षणं यस्यासौ निवृत्तिलक्षणो निवृत्तिस्वभावो धर्मः रागादिनिवृत्तौ भूतायां केवलो व्यवस्थितः सन्तोषसुखं शरीरपरिच्छेदं चोत्पाद्य परमार्थदर्शनज आत्मनि निर्बीजस्यात्मनः शरीरादिनिवृत्तौ पुनः शरीराद्यनुत्पत्तौ दग्धेन्ध-नानलवदुपशमो मोक्षः । यदा परमार्थदर्शनं कृत्वा निवृत्तो धर्मः तदा निर्बीज-स्यात्मनः शरीरादिबीजधर्माधर्मरहितस्यात्मन उत्पन्नादीनाम् शरीरादीनां कर्म-क्षयान्निवृत्तौ भूतायामनागतानां कारणाभावादनुत्पत्तौ यथा दग्धेन्धनस्यानलस्योपशमः पुनरनुत्पादः एवं पुनः शरीरानुत्पादो मोक्ष :' इति । (न्यायकन्दली-)

१. तथाहि वै० भाष्ये० ६५१ संस्कारनिरूपणे—धर्मः पुरुषगुणाः । कर्तुः प्रिय मोक्षहेतुः अतीन्द्रियोऽन्यसुखसंविज्ञानविरोधी पुरुषान्तःकरणसंयोगविशुद्धाभिसन्धिजः वर्णाश्रमिणां प्रतिनियतसाधननिमित्तः । तस्य तु साधनानि श्रुतिस्मृतिविहितानि सामान्यविशेषभावेनावस्थितानि द्रव्यगुणकर्माणि । इति ।

२. विशुद्धो इति । विशुद्धोऽभिसन्धिः दम्भादिरहितः सङ्कल्पविशेषः । तस्माद् धर्मो जायते । वर्णाश्रमिणामिति । वर्णा ब्राह्मणक्षत्रियशूद्राः आश्रमिणो ब्रह्मचारि-गृहस्थवानप्रस्थयतयः, तेषां धर्मः प्रतिवर्णं प्रत्याश्रमं चाधिकृत्य विहितैः साधनैः जन्यत इत्यर्थः ।

## जयमङ्गलाक्रोडपत्रम्

अर्थात् यस्य विशुद्धाभिसन्धिः तस्य चित्तशुद्धिः यस्य तु दम्भः असङ्कल्पो वा वर्तते तस्य न चित्तशुद्धिः इति स्फुटम्।

एवं स्थिते अशुद्धचेतस्कः जनः अर्थतृष्णालुः परान् वञ्चयितुं प्रवर्तमानः आत्मानं गोपायन् कञ्चन दुर्नयमपि अनुतिष्ठासति। कदाचित् सति प्रसङ्गविशेषे विशुद्धाभिसन्धिशून्यः जनः क्रूरकर्माण्यपि कर्तुमभिलषति। एवंरीत्या उक्ताभिसन्धिरहितः दुर्नयं क्रूरकर्माणि च अनुतिष्ठन् लोकस्य पुरतः ममेदं प्रतारणाप्रचुरं कर्म प्रकाशमानं मा भवतु इति हेतुना शङ्कया अनर्थसंभावनया आक्रान्तस्तिष्ठति। एवंविधशङ्काक्रान्तत्वं यस्य समाजस्य घटकेषु सदस्येषु वर्तते। स समाजः पारस्परिकशङ्काबहुलत्वात् सङ्घभावेन स्थातुं न कदाऽप्यर्हति। तथा च सामदानभेददण्डोपायेषु भेदस्य उपायस्य अधिकारित्वं तथाविधशङ्काक्रान्तसदस्यैः स्वदुर्नयमहिम्ना आत्मनि संपाद्यते। एतस्यामवस्थायांमुपर्युक्तशङ्काक्रान्तजनस्य तद्घटितसङ्घस्य वा सर्वाण्यपि कर्माणि तथाविधानि भवन्ति, येभ्यः तान् प्रति लोकः अपरज्येत। तस्य च फलं विनाशः एव[1]।

स्पष्टीकृतंचैतदुपरिष्टात्। अतः दुर्नयबहुलं क्रूरं कर्म वा जनानुरागाभिलाषुकेण सदस्येन तत्सङ्घेन वा न कदापि कर्तव्यम्। अपि तु लोकसङ्ग्रहार्थमुक्तमभिसन्धि संपाद्य यथोक्तं स्वीयधर्माचरणमवश्यं करणीयम्। तदुक्तम्।

'लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हसि।' इति।

तस्मात् चित्तशुद्धेः एकीभावरूपं फलं परस्परभेदनिःसारणाय उपयुज्यमानं नीतौ प्रत्यक्षसिद्धम्।

एवंच धर्मेण सम्पादयिष्यमाणं सुखरूपं फलं ब्रह्मादिदेवतादीनां शरीरविशिष्ट आत्मा अनुभवतीति वैशेषिकवाक्यप्रामाण्येन उक्तमेव। तस्मात् परलोके धर्मफलसुखमपि प्रत्यक्षसिद्धमेव इति मन्तव्यम्। तथा धर्मस्य साधनानि यानि प्रागुक्तवैशेषिकभाष्यवचने निर्दिष्टानि तानि द्रव्यगुणकर्माण्यपि प्रत्यक्षसिद्धान्येव। अतः धर्मः तत्साधनं साध्यं च त्रितयमपि प्रत्यक्षप्रमाणप्रमितत्वात् नीतिलक्षणाक्रान्तं भवितुमर्हति इति वेदितव्यम्।

### अपूर्वप्रत्यक्षम्

ननु यागापूर्वस्य कथं प्रत्यक्षसिद्धत्वमिति चेत्? अपूर्वमपि प्रत्यक्षसिद्धमस्ति तथाहि—अस्मिन् लोके पवित्रात्मना हुताऽऽहुतिः यदा अबादिभूतसूक्ष्मरूपेण परिणता ऊर्ध्वमुत्तिष्ठति तदा तदाधारेण जीवः उपर्युपरि निष्क्रममाणः सूर्यमण्डले आहुतिं

---

१. तदुक्तम्—अपरागसमीरणेरितः क्रमशीर्णकुलमूलसन्ततिः।
सुकरस्तरुवत्सहिष्णुना रिपुरुन्मूलयितुं महानपि॥
मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेन मूढता।
अतिमूढ उदस्यते नयान् नयहीनापरज्यते जनः॥

## जयमङ्गलाक्रोडपत्रम्

निवेश्य क्रमेण चन्द्रमण्डले पर्जन्ये भूमौ पुरुषे स्त्रियामुपविष्टः शरीररूपेण परिणमते ।

तदुक्तम्–"पञ्चम्यामाहुतौ आपः पुरुषवचसो भवन्ति"। (शां०भा०४ अ०) इति । सोऽयं विषयः शान्तिका अग्रदूत ग्रन्थे निरूपितोऽस्ति विस्तरभयान्नात्र प्रकाश्यते । तस्मात् अपूर्वस्यापि प्रत्यक्षसिद्धत्वं सुसम्पन्नम् । येषां तु मते अपूर्वं नास्ति ईश्वर-प्रसादादन्यात् इति सिद्धान्तस्तन्मते यागानुष्ठानानन्तरमीशप्रसादमहिम्ना स्वर्गादि-फलं संप्राप्यते इति उक्तमस्ति। तस्य ईशस्य वा अस्तित्वं प्रत्यक्षरूपत्वं च कथ-मित्यपि प्रसङ्गात् विमृश्यते । तथाहि—

### ईश्वरस्यबीजत्वम्

स्थावरजङ्गमात्मकस्य जगतः उदयः शिवशक्त्योः सङ्गमेन सम्भवति इति भावप्रकाशनायुर्वेदादिग्रन्थेभ्यः विवेचनपुरसरं द्वितीयाध्याये द्वाभ्यां त्रयाणा-मुत्पत्तिः' (पृ० १९६) इत्यादिवाक्येन स्पष्टं ।

समुत्पद्यमानस्य स्थावरजङ्गमात्मकस्य सर्वस्यापि अवस्थितिः संस्काररूपेण सूक्ष्मतया स्वस्वबीजेषु नियता। यस्य अवस्थानमेव नास्ति यथा बालुकाकणे तैलविन्दुः तस्य उत्पत्तिरेव असम्भाविनी । अपि च स्वस्वोपादानेषु स्थितेषु ये संस्कारा देशका-लादिसमुदयात् विशेषतया उद्बुद्धा भवन्ति तदनुरूपा तत्तद्बीजैस्तत्तत्पिण्डसमुत्पत्ति-र्भवति इति यथा तत्तद्बीजव्यष्टिविषये वक्तुं शक्यते, तथा एतादृशमपि बीजं सम्भवति यत्र एकत्रैव समष्टिरपि संस्काररूपेण संभवेत्। तदुक्तम्–'एतन्नानाव-ताराणां निधानं बीजमव्ययम्' (भा० पु०) इति ।

तस्मिन् अव्यये बीजे नानाऽवतारकारणीभूते जगदुत्पतेः प्राक् बुद्धि-चित्ताहङ्कारमनोरूपमन्तःकरणचतुष्टयं शरीरं प्राणश्च संस्काररूपेणैव वर्तन्ते । तस्मात् एकस्मादेव बीजात् सत्वादिगुणभेदेन देशकालादिसाधनवशात् सङ्कल्पाद्वा विभिन्न-विभिन्नस्वभावानां अन्तकरणदीनां तेषु तेषु जीवेषु समुत्पत्तिश्चेत्, तत्र नाश्चर्यम् । यथा "वायोः तिर्यग्गमनं, अग्नेरूर्ध्वज्वलनम् । अयसोऽयस्कान्ताभिसरण"मित्यादि ।

अतः सत्वादिगुणमहिम्ना अन्तःकरणपदव्यपदेश्येषु बुद्धिचित्तादिषु निर्मलत्वसंशयितत्व-निर्णयकारित्वाहङ्कारित्वादयो धर्माः पृथक् समुदीयन्ति। एवं रीत्या समष्टिव्ययष्ट्योरुत्पत्तिप्रकारस्य एकविधत्वेऽपि व्यष्टिबीजेन व्यष्टिपदार्थस्य, समष्टिबीजेन समस्तस्योत्पत्तिर्भवति । इति जगदुपादानं एक ईश्वरोऽस्तिति सिद्ध्यति ।

### संस्काराणां कार्यकारित्वम्

संस्कारस्य एतावत्सामर्थ्यमस्ति, यद्ध्यानमात्रेण यादृश. संस्कारः उपासकैः उद्-बोध्यते तदा तावताऽपि तादृशस्य कार्यकारित्वं दृष्टम् । यथा वृश्चिकदष्टेदेशे अपामार्ग-

## जयमङ्गलाक्रोडपत्रम्

संयोगः वृश्चिकविषमपसारयति यथा वा किञ्चिदन्तरितेनापि अपामार्गेण विषनिर्हरणं सम्भवति तथा ध्यानमात्रेणापि तद्विषयस्य अपामार्गतादात्म्यस्य विषनिर्हरणरूपकार्यकारित्वं सम्भवति, इति योगिनामनुभवः। एवमेव अभिनयादिस्थलेऽपि सामाजिकानां पुरतः विभावानुभावादिमहिम्ना पारस्परिकरजोगुणप्रयुक्तभेदविगलनेन, सह सत्वोद्गम साचिव्येन साधारणीकरणेन अप्रथमेन व्यञ्जनजनितव्यभिचारिभावादिबोधात्मकेन काव्यव्यापारेण नटः यदा भावान् सञ्चारयति, तदा सामाजिकेषु रसास्वादः भवतीति अनुभवसिद्धम् साहित्यिकानाम्। एवञ्च कयापि रीत्या यत्र यादृशाः संस्काराः उद्बुध्यन्ते तत्र तदनुरूपं तत्तद्कार्यं समुत्पद्यते इति स्थिरम्। अत्रेदं चिन्त्यम् सर्वत्रापि संस्कारोद्बोधसमये यदा रसास्वादस्यानुभवः तदा अनुकार्यसामाजिकयोर्मध्ये भेदस्य विगलनेन अनुकार्यस्य ज्ञानानन्दक्रियाप्रभाः अपि स्फुरन्ति। तन्न्यायेन रससञ्चारणद्वारा ईशमूर्ति ध्यानेनअर्चकस्य सहृदयस्य चेतसि ईश्वरभेदस्य विगलने सञ्जाते ध्यानेन प्रत्यक्षीक्रियते यथा तथा ईश्वरीयज्ञानानन्दक्रियाणां प्रभाअपि सङ्क्रमितुं शक्यन्ते तथोक्तम्—

**'परस्मादात्मनो भान्ति ज्ञानान्दक्रियाप्रभा'** इति।

अस्य पद्यस्यायं भावः यत् ज्ञानानन्दक्रियाप्रभाः परस्माद् भान्ति, आत्मनः भान्ति, परस्मादात्मनः भान्ति इति।

## संस्काराणां वैकल्पम्

यत्र तु केचनोपासकाः कृतेऽपि ध्याने अभीप्सितसंस्काराणामुद्बोधात् तत्कार्याद् वा वञ्चिता दृश्यन्ते, तत्र कारणं मनसि सत्वगुणस्य यावदतिशयितत्वमपेक्ष्यते तावन्नास्तीति मन्तव्यम्। पुनः केषुचित् स्थलेषु प्रदर्शितेऽपि काव्यव्यापारे सर्वथा सत्वोद्गमः येषां हृदि न भवति न वा संवेदनं, नापि च रसप्रतीतिः ते तु काष्ठकुड्याश्मसन्निभा एव। अतएव रसप्रतीतौ व्याप्तिसंस्कारः सहृदयतासंस्कारः स्थायिभावसंस्कारः इति त्रितयं कारणं काव्यप्रकाशटीकाकर्त्रा वैद्यनाथेनोक्तं वैदिकसिद्धान्तसंरक्षिण्यां उद्धृतमनुसन्धेयम्। (पृ० ६) एतावता विस्तारपूर्वकम् निरूपितेन विषयेणेदं स्पष्टं भवति यत् केवलं रङ्गमध्ये एव स्थितः अभिनयं पश्यन्, तावन्मात्रमेव वस्तु ज्ञातुं परिचेतुं शक्नोतीति न अपि तु यस्य चेतसि यथा यथा सत्वगुणस्य अतिशयितत्वं भवेत् तथा तथा तत्तादृगुणसम्पन्नं मनः रसास्वादपरम्परासजातीयेन ध्यानमहिम्ना सर्वमपि जगज्जातं प्रत्यक्षीकर्तुं शक्नुयात्। तदुक्तम्—

'आदित्यः सर्वसाक्षित्वान् मनो यत् तदधिष्ठितम्।
तत् संस्कारवशाद् वेत्ति सर्वं तत् तेन निर्मलमिति'। (भावप्रकाशनम्)

निर्मलं मनः इत्यस्य अर्थं एव अयं यत् उपर्युक्तसत्वबहुलं मनः यस्य सः ईशसमवेतसमस्तज्ञानस्य प्रभारूपेण आत्मनि संपादने शक्तः चित्रतुरगन्यानेन ध्यानबलात्

## जयमङ्गलाक्रोडपत्रम्

### ईश्वरः प्रत्यक्षः

ईशस्वयोः मध्ये भेदविगलनात् परस्मादात्मनः तादात्म्यं प्रत्यक्षीकरोति तथा च ईशस्य प्रसादः कथं प्रत्यक्षविषयस्स्यात्? इति प्रस्तुतप्रश्ने इदमेवोच्यते यत् सत्वात्मकमनोवृत्तौ रसात्मकध्यानद्वारा सञ्चरितः ईश्वरोऽपि यदि प्रत्यक्षसिद्धो भवितुमर्हति, तर्हि सुतरामेव तत्समवेतः प्रसादोऽपि । इति ।

प्रसङ्गात् अत्रेदं स्मार्यते—सर्वज्ञतालाभाय सर्वविधोपायानां सरलानां साहित्यनाट्यनीतिन्याय वेदान्तसाङ्ख्यतन्त्रेषुउक्तानां सारल्येन उपलब्धावपि तानुपेक्ष्य दोषानेव आत्मनि प्रादुर्भाव्य वयं असर्वज्ञा भूत्वा तिष्ठामः, तन्न सम्यक्, अतस्तन्निरासार्थं विद्याचिन्तनेन सह तदधिष्ठाता ईश्वरोऽपि रसप्रतीत्या आस्वादनपुरस्सरं उपासकैः नीतिविद्भिः तदाकर्षणार्थं सदा चिन्त्यः ।

यदि आन्वीक्षिक्याः साहाय्येन पदार्थानां द्वितीयोध्यायोक्तरीत्या आत्मभावो न ज्ञायते तर्हि प्रागुक्तं घृत्यात्मकं सत्वम् अस्मद्धस्तादपगतम् भवेत् । तत एव प्रतिभास्थाने जाड्यं समृद्धं दृश्येत । तथाविधेषु अमुमेवास्वादममिलक्ष्य भोजराजेन औद्धत्य प्रेयादयः प्रसिद्धरसेभ्यः अतिरिक्ता; कतिपये रसा उक्ताः सरस्वतिकण्ठाभरणे—

श्रृङ्गारवीरकरुणाद्भुतरौद्रभयानकाः ।
बीभत्सहास्यप्रेयांसः शान्तोदात्तोद्धता रसाः ॥
रतौ सञ्चारिणः सर्वान् गर्वस्नेहौ घृतिं मतिम् ।
स्थायिनोऽप्युद्धतप्रेयः शान्तोदात्तेषु जानते । इति (का० वि० गोकुल ४)

परं एतेषु द्वादशविधेषु गर्वमदौ जाड्यसंपादकत्वात् असर्वज्ञत्वसंपादनात् त्याज्यौ । भगवतः परमेश्वरस्य तादात्म्यभानार्थं उत्साह-स्थायिभावः वीररसः धृतिप्रधानः शमरसो वा अवलम्बनीयः । शेषं प्रागुक्तमेव । तस्मात् ईश्वरः वृत्तिरूपतामापन्नः तथा तत्प्रसादोऽपि हर्षानतिरिक्तः रसप्रतीतौ प्रत्यक्षसिद्ध एव ।
तदुक्तं हरिभक्तिरसामृतसिन्धौ—द्रष्टव्यम्

---

१. अन्याभिलषिताशून्यं ज्ञानकर्माद्यनावृत्तम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ॥१॥
क्लेशघ्नी शुभदा मोक्षलघुताकृत् सुदुर्लभा ।
सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षणी च सा ॥१३॥ (पू० १ लहरी)

तथा श्रीमद्भागवतेऽपि—
यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैः तत्र समासते सुराः ।
हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो बहिः । इति

## जयमङ्गलाक्रोडपत्रम्

### आश्रमधर्मे वर्णधर्मस्य अगतार्थता

ननु आश्रमधर्मं प्रतिपाल्य नीतौ अभ्यर्हितस्य कार्यस्य संभवे वर्णधर्मस्य अनुपयोगित्वमेवास्तु ? इति चेन्न । आश्रमधर्मो हि न केवलं तत्तज्जातिमात्रमर्यादितः वर्णत्रयेणापि तस्य पाल्यमानत्वात्, तथैव वेदेषु कर्तव्यत्वेन विहितत्वात् । अतः कुलीनत्वप्रयुक्ताः गुणाः संस्काराश्च आश्रमधर्मस्य पालनमात्रेण न प्राप्तुं शक्यन्ते, इति कुलीनत्वप्रयुक्तसंस्काराणां तन्मूलकप्रतिभायाश्च समुद्बोधाय जातिशुद्धिरपेक्ष्यते । विशेषतया अस्य स्फुटीकरणपेक्षितं चेत् तत् पूर्वं विस्तृतमस्ति, तत एव द्रष्टव्यं । (पृ० २६७) इदं तु सत्यम् । यदि आश्रमधर्मान् प्रधानीकृत्य वर्णधर्माउपेक्ष्यन्ते, तर्हि जातिसाङ्कर्यम् जातीयकर्तव्यनियमनिबन्धाभावात् संभविष्यति । तथा सति विपदादौ-क्लेशासहिष्णुत्वदशायाम् लोके पूर्वक्रमागतप्रतिज्ञातः चलितो भवति । तद्दशायां, परस्परं विश्वास्यता समुच्छ्रियेत[1] पूर्वतः प्राप्तं पारस्परिकं प्रेमापि उच्छिन्नं स्यात् । तस्य तु फलं दारिद्र्यं नियमेन संभवेत् । तदुक्तं वाल्मीकिरामायणे अयोध्याकाण्डे सर्गे १०९ ।

कुलीनमकुलीनंवा वीरं पुरुषमानिनम् ।
चारित्रमेव व्याख्याति शुचिं वा यदि वाऽशुचिम्[2] ॥४॥ इति ।

किञ्च स्वपरंपरायां येन यथा यशः पूर्वजैः अर्जितम् । तमेव पन्थानं यदि तद्वंशीयः अनुसरत्यग्रेपि, तर्हि तन्मूलिकया स्वापदानप्रसूतया कीर्त्या जनतायाः अनुरागस्य विश्वास्यतायाश्च पात्रं भूत्वा पूर्वजैः संपादितयशोपेक्षयाऽपि अति कीर्तिभाग् भूत्वा जगत्पालको भवति[3] । इदं महत्फलं कार्यं न आश्रमधर्मस्य परि-पालनमात्रेण सर्वैः सर्वत्र प्राप्तुं शक्यते जातिमर्यादामुपेक्ष्य ।
यदि च वयं कुलीनत्वमुपेक्ष्य साङ्कर्यं प्रसार्य यशः सम्पादयितुं प्रयतामहे ।

तर्हि सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम् ।
कुले जन्म मदायत्तं दैवायत्तञ्च जीवितम् ।

---

१ अविश्वासो हि जन्मभूमिरलक्ष्म्याः (नीतिवाक्यामृते)

२ ति० टी० – इदानीं वेदोक्ताचार एव पुंसामिहामुत्र संमानहेतुरित्याह— 'कुलीनमि'ति । पुरुषमानिनं अधीरमिति यावत्, चारित्रं वेदानुमताचारः, तत्संपन्नः सन्कुलीतत्वादिख्यातिं ख्यापयति—असंपन्नश्चाकुलीनत्वादिति'भावः ॥ ४ ॥

३ पूर्वपरम्परा प्राप्ता कृतिः तद्वंशीयैः यदाऽनुस्रियते, तदा सा कृतिः 'कीर्ति'पदेन व्यपदिश्यते । पूर्वपरम्परायां पूर्वजैः अननुष्ठितं सदपि यत् तत् कर्म अपरैः तद्वंशमिः अनुष्ठितं सत् यशो भवति । तदुक्तं भावप्रकाशने—

'स्वापदानप्रसूता चेत् यश इत्यभिधीयते ।
यतो विश्वस्य शमिति तस्माद यश इतीरितम्" ( भाव० ३ अधि० ) इति ।

## जयमङ्गलाक्रोडपत्रम्

इत्येवं रीत्या बह्वीषु असाधारणीषु आपत्सु समापतितासु सत्सु ततः पूर्वं प्रतिज्ञाते कर्मणि अविकृतरूपेण तथैव स्थास्यामः इति निर्णेतुं न शक्यते। मनोमयकोशस्य मानजीवातुभूतस्य साङ्कर्यमहिम्ना समुत्पन्नेषु विलयनदर्शनात्। तदिदं कर्णार्जुनोदाहरणप्रदर्शनेन सुबोधमस्ति। अत एव गीतायां 'सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्' इत्युक्तम्। तस्मात् विपदि स्थैर्यस्य संरक्षणाय अभ्यर्हितस्य कुलीनत्वस्य सुरक्षणं आश्रमधर्ममात्रपालनेन न भविष्यति किन्तु जातिमर्यादापालनेनसह। इति आश्रमधर्मे वर्णधर्मस्यागतार्थता मन्तव्या।

### विवाहफलम्

(ज०पृ० २६९) वैवाह्यमिति—आहरेष्वथ योनौच बीजे कर्मणि चापि यः।
शुचिः कृच्छ्रगतस्यापि न पापे रमतेऽस्य धीः॥
(अर्थं० जयमङ्गला )

इति वचनानुसारेण विनीतस्य पुत्रस्य निर्मितिः आहारबीजयोनिकर्मणां शुचितानिबन्धनेति राजपुत्ररक्षणे वक्ष्यमाणे स्पष्टम्। तत्र योनिर्बीजं संस्काररूपं कर्मचति त्रयं, शुद्धविवाहसंस्काराधीनं, तथा राष्ट्रस्योन्नतिरपि सत्पुत्रावलम्बिता। तदेतत्।

जातिसूत्रीयशारीराध्याये कुमारभृत्याकश्यपसंहितायामिदं प्रतिपादितम्। तथाहिः-

अथातो जातिसूत्रीयं व्याख्यास्यामः॥ १॥
इतिहस्माह भगवान्कश्यपः॥ २॥

जातौ जातौ खलु स्वभाव एवाकृतिभेदं निर्वर्तयिता भवति। स्वभावतो ह्यस्य वायुपरमाणवः संयोगविभागचेष्टाधिकाराः आकुञ्चन प्रसारणकोष्ठाङ्ग प्रत्यङ्ग धातुचेतनास्रोतांसि विभजन्ति। समत्यके धातुरिव निषिक्तः पुरुषः पुरुषमभिनिर्वर्तयति। गौर्गामश्वोऽश्वमेवमादि। नृणा ना मपितु ? मध्ये गर्भनिवृत्तिः। तत्र द्वयोर्दम्पत्यौः स्वभावात्स्वकर्मपरिणामाद्वा प्रजाभिवृद्धिर्भवति। तौ धन्यौ अतो न्यथा भिषजितव्यौ। स्नेहस्वेदवमनविरेचनास्थापनानुवासनैः क्रमश उपचरेत्, मधुरौषधसिद्धाभ्यां क्षीरघृतपुष्टं पुरुषम्। स्त्रियं तु तैल सांसा-भाषा-यामित्येके। सात्म्यैरेवेति प्रजापतिस्व रजस्वलायां चेत्प्रथमे हनि गर्भमावपेत्, तं वातगर्भं 'ते बिफलं वातपुष्पामिवोद्भिदानाम् द्वितीये हनि चेत् स्रंसते च्यवते वा, तृतीये हनि सूतिकासने म्रियते न वा दीर्घायुर्भवति। हीनाङ्गश्च जायते। अत ऊर्ध्वं ऋतुर्द्वादशाहं ब्राह्मणीनामेकादशाहं क्षत्रियाणां, दश वैश्यानां, नवरात्रमितरासाम... ऋतुर्बीजकालमवेक्षते इत्याहुर्महर्षयः अतऊर्ध्व मकालजमाहुः अकालजं हीनं दुर्बलमस्थिरमदृढमपीनभङ्गुरं धान्यमिव भवति॥५॥

अथ शुद्धस्नातां स्त्रियं चतुर्थेऽहनि स्नानगृहे श्वेतेनैवान्येन वाससा वगुण्ठयानवलोकयन्ती शुचिदेवगृहं प्रविश्योद्वाहाग्निं प्रज्वलन्तं धृताक्षतेनाभ्यर्च्य ब्राह्मणमीश्वरं-

## जयमङ्गलाक्रोडपत्रम्

एवंरीत्या विवाहस्य महत्वे परिज्ञाते आदौ विवाहपदार्थो विविच्यते ।

### विवाहपदार्थः ।

विवाहो नाम विजातीयसंस्कारप्रयोजकं पाणिग्रहणम् । ग्रहणंच ममेयमिति-स्वत्वास्पदीभूततया ज्ञानम् । स्वत्वं च प्रतिग्रहजन्यं विवक्षतम् । संस्कारश्च पाणि-ग्रहणमन्त्रावधिकसप्तपदीगमनविहितमन्त्रान्तमन्त्रसमुदायकरणकक्रियाकलापजन्यादृष्ट-विशेषः । तथाविधोक्तसंस्कारप्रयोजकप्रतिग्रहजन्यस्वत्वास्पदीभूतज्ञानविषय पाणि-ग्रहणंमेव विवाहपदार्थः ।

### विवाहस्य कालः

संवर्तो विवाहकालमाह—

रोमदर्शनसंप्राप्ते सोमो भुङ्क्तेऽथ कन्यकाम्
रजो दृष्ट्वा तु गन्धर्वाः कुचौ दृष्ट्वा तु पावकः ।
अष्टवर्षा भवेद्गौरी नवर्षा तु रोहिणी
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ।
माता चैव पिता चैव ज्येष्ठो भ्राता तथैवच
त्रयस्ते नरकं यान्ति दृष्टवा कन्यां रजस्वलाम् ।
तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ।
विवाहोष्टमवर्षायाः कन्यायास्तु प्रशस्यते ।

यमाङ्गिरसावपि—अष्टवर्षा भवेद्गौरीति[१] ।

---

विष्णुं स्कन्दंच स्म्प्रेक्ष्य अभिवाद्य निष्क्रम्य सूर्याचन्द्रमसाविति । नतु प्रेतपिशाच-रक्षांसि । शुद्धस्नातमात्रा हि स्त्री यं वा पश्यति मनसा वाभिध्यायति तादृशाचार-वपुषं प्रायेण जनयति । तस्माद्देवगोब्राह्मणगुरुबृद्धाचार्यान् स्वतः पश्येत्कल्याणमनाश्च-स्यात् । न तु सन्ध्ययोः स्नानं मैथुनं वा, उपेयान्नान्यमनाः । सा चेदिच्छेद्वीरमोजस्विनं शुचिमायुष्मन्तं पुत्रं जनयेयमिति, तस्या एवं शुद्धस्नानात्प्रभृति शुक्लयवसक्तूनां मधुघृताभ्यां श्वेतायाः श्वेतपुंवत्सायाः गोः क्षीरेण संसृज्य मन्थं राजते कांस्ये वा सदा पाययेत् । शालिगौरयवक्षीरदधिघृतप्रायं च काले मात्रयाश्नीयात्, पुष्पाभरणवा-सांसि च शुक्लानि बिभृयात्, सायं प्रातश्च श्वेतमश्वं वृषभं वा पश्येत्, सौहितप्रिय-कथाभिरासीत, अनुकूलपरिवारा च स्यादिष्टमपत्यं जनयति । या तु श्यामं लोहिताक्षं व्यूढोरस्कं पुत्रमिच्छेत्कृष्णं वा, तत्र तादृगुपचारो भोजनवसनकुसुमालङ्काराणान्ता-दृग्देशानुचिन्तनञ्चेति । यवागून्तु कन्यार्थिनीभ्यो दद्यात्, क्षीरोदकतिलसिद्धास्तु वर्ज्याः गौरश्यामकृष्णेभ्योऽन्येवर्णा निन्दिताः ।

१ मरीचिः—गौरीन्ददन्नाकपृष्ठं वैकुण्ठं रोहिणोन्ददत् । कन्यां ददद्ब्रह्मलोकं रौरवन्तु रजस्वलाम् । स्मृतिः—सर्वेषामेव दानानमेकजन्मानुगं फलम् । हाटकगृह-गौरीणां सप्तजन्मानुगं फलम्—

भट्टभाष्ये स्मृतिः—यावन्न लज्जया कन्या पुरुषसन्निधौ योन्यादीन्यवगूहेत ताव-द्भवति कन्यका
आचारमाधवीयेप्येतत् किन्तु तत्र नग्निकेत्यत्र कन्यकेति पाठः ।
सङ्ग्रहकारः—यावच्चैलं न गृह्णाति यावत्क्रीडति पांसुभिः । यावद्दोषन्नजानाति तावद्भवति कन्यका ।
माधवीये स्मृतिः—जन्मतो गर्भाधानाद्वा पञ्चमाद्वापरं शुभम् । कुमारीवरणं दानं मेखलाबन्धनन्तथा ।

ज्योतिर्निबन्धे– षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः । सोमो भुङ्क्ते ततस्तद्व-द्गन्धर्वश्च तथाऽनलः । न चैवं सोमादिभोगकालबोधकं रोमदर्शनसंप्राप्ते इत्यादि संवर्तवाक्यं विरुध्यत इति वाच्यम् । द्वयोरप्यर्थवादरूपतया विरोधाभावात् । तथाहि-ज्योतिर्निबन्धे तावत् षडब्दमध्ये नोद्वाह्या इत्यस्यार्थवादतया वर्षद्वयं यत इत्यादिक-मुक्तम्। संवर्तेनापि रोमदर्शनसंप्राप्ते इत्याद्यर्थवादमभिधाय तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत् इत्युपसंहृतम् । उभयत्रैव विधेयत्वेनाभिमतोर्थस्तदनुगुणार्थ-वादोपन्यासेन समर्प्यते इति न किञ्चिदनुपन्नम् ! अङ्लकृत्य पिता कन्यां भूषणा-च्छादनाशनैः । दत्वा स्वर्गमवाप्नोति पूजितस्तु सुरादिषु । रोमदर्शनसंप्राप्तौ सोमो भुङ्क्तेऽथकन्यकां रजो दृष्ट्वा तु गन्धर्वः कुचौ दृष्ट्वा तु पावकः । अष्टवर्षाभवेद्गौरी नववर्षा तु रोहिणी दशवर्षा भवेत्कन्या अत्त ऊर्ध्वं रजस्वला । प्राप्ते तु द्वादशे वर्षे यः कन्यान्नप्रयच्छति । मासि मासि रजस्तस्याः पिवन्ति पितरः स्वयम् । अष्टमे तु भवेद्गौरी नवमे रोहिणी भवेत् दशमे कन्यका प्रोक्ता द्वावशे वृषली स्मृता । संवर्तः –ऊर्ध्वं दशाब्दाद्या कन्या प्राग्रजोदर्शनात्तु सा गान्धारी स्यात्समुद्वाह्या चिर-ञ्जीवितुमिच्छता । आश्वलायानः प्रदानं प्रागृतोः ।

गौतमः—तस्माद्विवाहयेत्कन्यां यावन्नर्तुमतीभवेत्–

यमः—माता च जनकश्चैव ज्येष्ठो भ्राता तथैव च त्रयस्ते नरकं यन्ति दृष्ट्वा कन्यां रजस्वलाम् ।
शाट्यायनिः—सुप्तां रुदन्तीं निष्क्रान्तां वरणे परिवर्जयेत् ॥११॥

दत्तां गुप्तां द्योतांमृषभां शरभां विनतां विकटां मुण्डां मण्डूषिकां साङ्किरकां
रातां पालीं मित्रां स्वनुजां वर्षकरीं च वर्जयेत् ॥१२॥ आप०गृ०१-३

गृह्यसङ्ग्रहे—अप्राप्ता रजसो गौरी प्राप्ते रजसि रोहिणी अव्यञ्जिता भवेत्कन्या कुचहीना च नग्निका ।

व्यञ्जनैस्तु समुत्पन्नो सोमो भुञ्जीत कन्यकां पयोधरैस्तु गन्धर्वो रजसाग्निः प्रकीर्तितः । तस्मादव्यञ्जनोपेतामरजस्कामपयोधरां अभुक्तां चैव सोमाद्यैः कन्यकान्तु प्रशस्यते । रजस इति शेषे षष्ठी । भुञ्जीत भुङ्क्ते । अरजामरजस्कामीदृशीं कन्या-ममिप्रेत्य प्रशस्यते प्रशंसा क्रियते । नग्निका ।श्रेष्ठेति सूत्रयता गोभिलेनेति वाक्यशेषः । सकर्मकादपि भावे लट् । अत्र च विवाहकर्त्रा तावद्धृताधोवसनाया गौर्याः प्राप्तौ

यतनोयम्। तत्रैव तस्याभ्युदयविशेषात्। रोहिणीकन्ययोस्तु ततोपकर्षः पञ्चषडब्दावनुकल्पौ। सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः। "कन्यकायाः शस्यते राजन् अन्यथा गर्भगर्हित" इति महाभारतवचनात्। दातुस्ते निर्वसनाया दानं प्रशस्तमित्यूहनीयम्। पैठीनसिः – "यावन्नोद्भिद्येते स्तनौ तावदेव देयाऽथर्तुमती भवति दाता प्रतिगृहीता च नरकमाप्नोति। पितृपितामहप्रपितामहाश्च विष्ठायां जायन्ते तस्मान्नग्निका दातव्या। नग्निकाऽनागतार्तवा।"

माधवोये वसिष्ठः—प्रयच्छेन्नग्निकां कन्यां ऋतुकालभयात्पिता।
ऋतुमत्यां हि तिष्ठन्त्यां दोषःपितरमृच्छति।

अङ्गिरा आह—

प्राप्ते द्वादशे वर्षे यदा कन्या प्रदीयते।
तदा तस्यास्तु कन्यायाःपिता पिबति शोणितम्।

यमः—

कन्या द्वादशवर्षाणि याऽप्रदत्ता गृहे वसेत्।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम्।
प्राप्ते द्वादशमे वर्षे यःकन्यान्न प्रयच्छति।
मासि मासि रजस्तस्याःपिता पिबति शोणितम्।
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्।
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः।
वन्ध्या तु वृषलो ज्ञेया वृषलीऋतुमृत्प्रजा।
शूद्री तु वृषली ज्ञेया कुमारो तु रजस्वला। इति।

प्रायेणैतावताकालेनर्तुमती भवतोति द्वादशवर्षोपादानम्। सर्वथात्वनागतार्तवा दातव्येत्यत्र तात्पर्यम्।

अत्रिकाश्यपौ—पितुर्गृहे तु या कन्या रजःपश्यत्यसंस्कृता।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषलो स्मृता।

यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः। अश्राद्धेयमापाङ्क्तेयं तं विद्याद्वृषलोपतिम्। अत्र द्वादशवर्षग्रहणन्नकुर्वाते। अतएव पूर्वलिखिततवचनेष्वपि नग्निकाया दानमुपदिष्टम्।

तथा महाभारते—

त्रिशद्वर्षःषोडशवर्षां भार्यां विन्देत कन्यकाम्।
अतोऽप्रवृत्ते रजसि कन्यां दद्यात्पिता सकृत्।
महदेनः स्पृशेदेनमन्यथैषविधित्सताम्।

अन्यथा प्रवृत्ते रजसि। इति।—

## जयमङ्गलाक्रोडपत्रम्

तथाचैभिर्वचनैः विवाहोऽष्टवर्षमारभ्य दशवर्षपर्यन्तं प्रशस्यते इति अष्टवर्षमारभ्य दशमवत्सरान्तं मुख्यः कालः। अनन्तरन्तु तेषां वर्णानां कृते स्त्रीणां विवाहस्योपनयनस्थाने सत्वात् वर्णानुसारेण तत्तद्वयोमर्यादा, स्त्रीणां विवाहे गौणः कालः।

गौण उपनयनकालस्तु यथाक्रमं षोडशद्वाविंशचतुर्विंशतिपर्यन्तमुक्तः। अत्र वचनानि त्वनेकशः "अषोडशादाद्वाविंशादाचतुर्विंशाच्चवत्सरात् इत्यादीनि ज्ञातव्यानि। एवं सत्यपि ऋतुदर्शनानन्तरं अर्थात् द्वादशवर्षानन्तरं षोडशवर्षपर्यन्तं कृतो विवाह आपत्कल्पतयैव मन्तव्य इतिध्येयम्।

अस्मिन्नापत्कालिके विवाहे द्वादशवत्सरानन्तर्यं स्थापितं नतु ऋतुदर्शनं, यतः तस्य प्रवृत्तिः न सर्वसाधारणतया एकमेव कालमपेक्षते।[1]

अत्र "अत ऊर्ध्वं रजस्वला" इति वाक्यानुसारेण दशमवयसः पूर्वमेव न विवाहो योग्यः किन्तु द्वादशपर्यन्तं इति केषांचिन्मतम्।

अन्येतु— ऋतुकाल इति प्रोक्तं गार्ग्यादिमुनिसत्तमैः
स्त्रीचिन्हं यौवनं प्राप्य षोडशे वत्सरे सदा।
कृत्रिमाद्दशमादूर्ध्वंऔषधस्य च सेवनात्
एकादशे द्वादशे वा ऋतुकालं वदन्ति हि।

---

यत्तु मनुवचनं—त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः। इति

तस्य इयता कालेन यवीयसी कन्या वोढव्या न पुनरेतावद्वयस एव विवाह इत्येस्वार्थः। तथा च शिष्टसमाचारो न विरोत्स्यते। मृतभार्यस्य पुनर्दारकरणे नैष वयोनियमः संभवतीति, पुनर्दारकरणोपदेशोऽन्यथा न स्यात्। मेधातिथिरप्येवं— "पूर्वोक्त विवाहप्रकरणमतिक्राम्याभिधानाच्चैतदेवं प्रतिपत्तव्यम्। इति। पूर्वोक्तमहाभारतवचनस्वारस्यादप्येषा व्याख्या समादर्तव्या भवति। मन्त्रर्थमुक्तावल्यामप्युक्तम्—"एतच्च योग्यकालप्रदर्शनपरम्। न तु नियमार्थम्। प्रायेणैतावता कालेन गृहीतवेदो भवति त्रैभागवयस्का कन्या वोदुर्नो योऽभ्येति गृहीतवेदश्चोपकुर्वाणको गृहस्थाश्रमं प्रति न विलम्बेतेति सत्वर इत्स्यार्थ." इत्यन्तेन इति। विष्णुपुराणम्— वर्षैणैकगुणां भार्यामुद्वहेत्त्रिगुणः पुमान् इति। कन्याया यवोयस्त्वमात्रे तात्पर्यम्। विवाहतत्वार्णवेप्येषैव व्यवस्था। अतएव यवीयसीमित्यवरवयस्कामिति तत्रोक्तम्। अतएव मनुना त्रिंशद्वर्षस्य द्वादशवर्षाया, महाभारतेन च षोडशवर्षाया विवाहोऽभिहित इतिध्येयम।

१ यथा वातजा पित्तजा चेति दारुणा त्रिविधा स्मृता। वातजा द्वादशे वर्षे पित्तजा च चतुर्दशे। दारुणा षोडशे वर्षे शोणितं पतति ध्रुवम्। कालनिर्णयदीपिका-दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला। प्राप्ते तु द्वादशे वर्षे रजः स्त्रोणां प्रवर्तते इत्यादिवचनात्। षोडशवयसोऽनन्तरन्तु व्रात्यसंस्कारेणैव विवाहो योग्यो भवति।

## जयमङ्गलाक्रोडपत्रम्

अनुरागात्द्वादशाब्दे त्रयोदश्यान्तु केचन ।
चतुर्दशे पञ्चदशे स्त्रीचिन्हन्तु भविष्यति ।

इतिवचनात् "दशवर्षा भवेत्कन्या" इति वचनाच्चैकादशवयसः पूर्वमेव विवाहो योग्यः इति । इदमेव मतं सम्यक् । तथाहि—

पिपासितः पशुर्बद्धः कन्यकाच रजस्वला । देवता च सनिर्माल्या हन्ति पुण्यं पुराकृतम् । इत्यादि वचने दशमवयोऽनन्तरजातविवाहे अपरिहरणीया दोषाः समुद्भवन्तीति । दशमवर्षानन्तरमेव ऋदतुदर्शनं भवत्येवेति यद्यपि न नियमस्तथापि तस्यावस्थायां बहीरजोऽभावेपि सा अन्तर्रजस्काऽस्त्येवेति आयुर्वेदेनोच्यते ।

वर्षद्वादशकादूर्ध्वं यदि पुष्पंबहिर्न हि ।

अन्तः पुष्पं भवत्येव पनसोदुंबरादिवत् । अन्तः समुद्भूतरजस्काया लक्षणन्तु सुश्रुते प्रतिपादितम् ।[1]

अनेनोल्लेखेनर्तुस्नातायाः अविवाहितायाः अवश्यमुपर्युक्तान्यूनातिरिक्तमानेन शतेषु शत्तसंख्यया स्थितिर्भवितुर्महतीत्यतः अन्तर्गतरजस्कावस्थायाः पूर्वमेव विवाहस्तासां रक्षणदृष्टया जातिशुद्धिदृष्टया च हितावह एवेति निश्चप्रचम् ।

---

१ "ऋतुस्तु द्वादशरात्रं भवति दृष्टार्तवः अदृष्टार्तवाप्यस्तीत्येके ।
भाषन्तेचात्र—पीनप्रसन्नवदनां
प्रक्लिन्नात्ममुखद्विजाम् ।
नरकान्तां प्रियकथांस्रस्तकुक्ष्यक्षिमूर्धजाम् ।
स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिचाम् ।
हर्षौत्सुक्यपरां चापि विद्यादृतुमतीमपि ।

अनेन ऋतुकालः कामवासनाया उद्रेकं करोतीति सिद्ध्यति । तस्य परिणामोपि विवाहाभावे कीदृशो भवतीति तत्रैव व्यक्तम् ।

ऋतुस्नाता तु या नारी स्वप्ने मैथुनभावहेत् । आर्तवं वायुरादाय कुक्षेः गर्भं करोति हि

मासि मासि विवर्धेत गर्भिण्या गर्भलक्षणम् । कललं जायते तस्या वर्जितं पैतृकैर्गुणैः । इति ।

अर्थात् इदं कललंरक्तार्बुदरोगरूपेण तासु अविवाहितासु परिणमते इति सिद्धं भवति । स्वप्नोत्पत्तेस्तु कार्यकारणभावो वैशेषिकभाष्ये स्पष्टः ।

कामी क्रुद्धो वा यदा यमर्थमादृतश्चिन्तयन् स्वपिति तदा सैव चिन्तासन्ततिः प्रत्यक्षाकारा सञ्जायते । धातुदोषाद्वातप्रकृतिस्तद्दूषितो वाऽऽकाशगमनादीन् पश्यति । पित्तप्रकृतिः पित्तदूषितो वा ग्निप्रवेशकनकपर्वतादीन् पश्यति । श्लेष्मप्रकृतिः श्लेष्मदूषितो वा सरित्समुद्रप्रतरणहिमपर्वतादीन् पश्यति ।" इति ।—

## जयमङ्गलाक्रोडपत्रम्

२८३ पृष्ठोक्ते सुश्रुतवचने वर्षद्वादशकादिति यदुक्तन्तत् गर्भद्वादशतात्पर्यकम। त्रिमासाधिकदशवर्षानन्तरमेकेनापि दिवसेन तस्याअन्तर्गतरजस्कता भवतीति तोडरानन्दग्रन्थे संस्कारसौख्ये उल्लिखितमुपलभ्यते। तस्माद् अव्यञ्जनोपेतामरजस्कामपयोधरामित्यादिधर्मशास्त्रवचनानि तत्रैवोपोद्वलकानि। अतो बाल्ये विवाहकालएव प्रशस्ततरः।

(ज० पृ० २६६) ऋतुमतीमिति। ऋतुमतीविवाहः सर्वथा निन्द्यः यतो जातिशुद्धि स्तदा दुर्लभा।

आङ्ग्लानां राजनीतेर्वर्णसङ्करप्रधानतया तैःऋतुमतीविवाहोपरोधो न कृतो, वरं प्रोत्साहितः। भारतीयराजनीत्या तु तद्विरुद्धतया उत्तरदायिन्यां राज्यव्यवस्थायां जातिशुद्धेरावश्यकत्वाद्बाल्यविवाहएव योग्य इति निर्णीतमस्ति। यद्यपि २८३ पृष्ठोद्धृतसुश्रुत वचनैः सामान्यतो द्वादशवत्सरादारभ्य षोडशवत्सरमध्ये ऋतुस्रावो भवति। किञ्च स्त्रीशरीरस्याभिवृद्धिस्तावच्छोडषवत्सरपर्यन्तं भवतीति वाग्भटग्रन्थेनापि ज्ञायते। तथापि तस्यापवादः कश्यपसहितायां द्रष्टव्यः। (पू०पृ० ५४ सू०—) यच्च—व्यासः—"अनन्यपूर्विकां दवीं शुभलक्षणसंयुताम्।

घृताधोवसनां गौरीं विख्यातख्यातनाम्नः पुत्रवतः सदाचारवतःसतः।

दातुमिच्छोर्दुहितरं प्राप्य धर्मेण चोद्वहेत् इति।

धृताधोवसनां किञ्चिदुपजातलज्जामिति यावत्। स्तनयोरनुद्रेकादधोधृतोत्तरीयामिति द्योतायितुमधःपदम्। अतएव गौरीमिति स्मरन्ति।

एष्टव्या बहवः पुत्रा यद्येको पि गयां व्रजेत्।

गौरीं वाप्युद्वहेद्भार्यां नीलं वा वृषमुत्सृजेत्।

अत्र यजेत वाऽश्वमेधेनेतितृतीयचरणे पाठान्तरम्। यस्याः पितृकुले पञ्च मातृकुले च इत्येवं दशपुरुषा विख्यातास्ताम्। तदसम्भवे ख्यातनाम्न इति स्मृतम्।

---

"ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम्।
यथा धत्ते पुमान् गर्भं गर्भस्थः स विपद्यते।
जातो वा नचिरञ्जीवेत् जीवेद्वा दुर्बलेन्द्रियः
तस्मादत्यन्तबालायाङ्गर्भाधानं न कारयेत्।
अष्टाङ्गहृदये—"पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता।
शुद्धगर्भाशये मार्गेरक्ते शुद्धेऽनिले हृदि।
वीर्यवन्तं सूतं सूते ततो न्यूनाब्दयोः पुनः।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा।
पूर्णषोडशवर्षा स्त्री पूर्णविंशतिकः पुमान्।
समत्वागतवीर्यौ तौ जानीयात्कुशली भिषक्।—

## जयमङ्गलाक्रोडपत्रम्

अनेन[1] वचनेन तत्पूर्वमेवार्थात् त्रिमासाधिकदशवर्षानन्तरमेवाहारादिसुव्यवस्थायां स्त्रीशरीरावयवोपचयः पूर्णतां गच्छति इति कथने न कोपि बाधः। तस्यामवस्थायां च कामवासनाया उद्रेकस्य पूर्णत्वात्स्वप्ने मैथुनादिसंभवाद्रोगः संभाव्यते इति। तदानीं पतिसहवासेन पूर्णायुष्मत्याः प्रजाया एव निर्माणन्नाशक्यम्। किञ्च रजोदर्शनानन्तरमेव गर्भाधानसंस्कारस्य विहितत्वात् तदानीमल्पायुष्मत्याः प्रजायाः कथमपि न सम्भवः। पूर्वोक्तापस्तम्बसूत्रानुसारेणापीदमेव सिद्ध्यति दत्तांगुप्तां—वर्षकरीं च परिवर्जयेत्[2] इति ॥

अत्रायं निष्कर्षः—स्त्रीणां विवाहे गर्भतोष्टमवर्षो मुख्यकालः नवमदशमौ मध्यमौ, तदूर्ध्वं यावदृतुदर्शनं गौणः कालः। ऋतुदर्शनोर्ध्वं तु सर्वथा निन्द्यः इति।
वराद्यलाभेनाविवाहितायास्तादृश्या विषये प्रायश्चित्तादिकम् विधेयम्। तस्मादृतुमतीविवाहः सर्वथा निन्द्य एवेति। तद्विवाहकाल आपत्कालिक एव सप्रायश्चितः। अन्तर्रजस्कतापूर्वं तु प्रशस्ततरः काल इति।

### वरस्यादृश्यत्वे दण्डः

नारद :—दत्तां न्यायेन यः कन्यां वराय न ददाति तां। अदृष्टश्चेद्वरो राज्ञा स दण्डयस्तत्र चोरवत्। इति दण्डं विधन्ते। इति स्मर्तव्यम्

---

१ मनुः—"गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥
असपिण्डा च या मातु रसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥
गृहस्थोऽसमानार्षीमस्पृष्टमैथुनां कनीयसीं भार्यां विन्देत। वसि० ७ अ०
कुलं च शीलंच वपुर्वयश्च विद्यां च वित्तं च सनाथतांच।
एतान् गुणान् सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम्। इति।

२ अस्मिन् सूत्रे ऋतुमतीं कन्यां राताशब्देन सम्बोध्य तस्या विवाहो निषिद्धः तदनुसारेण ब्राह्मणमहासम्मेलने मध्यस्थ निर्णयः—

"धर्मशास्त्रेषु ऋतुमतीविवाहः सर्वात्मना निन्दितः। क्वचिन्महत्यामापदि प्रायश्चित्तविधिपूर्वकं तादृश्या अपि विवाहोऽभ्यनुज्ञायते। एवमपीदमेव व्याजीकृत्य मुख्यकल्पानुष्ठानसमर्थैरपि अयं पक्षो नावलम्नीयः, अस्य पक्षस्यात्यन्तिकापद्विषयत्वात्। आपद्यल्पत्वमहत्वनिर्णस्तु तत्तत्समाजेनैव करणीयः। व्यवहार्यत्वविषये तत्तत्कुलाचारः प्रमाणम्। ऋतुदर्शनानन्तरं सर्वथा साहसेन विवाहविमुखकन्यायास्तु परित्याग एव। इति। धर्माचार्य निर्णयः।

## जयमङ्गलाक्रोडपत्रम्

### वरान्तरम्

दुष्टे तु पूर्ववरे वाग्दत्तापि वरान्तराय देया। तथा च पराशरः—

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते।

### अवान्तरजातीयविवाहः

ननु कन्यालक्षणविचारे "उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्वितां मित्यनेन सवर्णत्वमेवोक्तम्। नत्ववान्तरजातीयत्वम्। तर्हि अवान्तरजातीयत्वं विवाहे कुतोऽपेक्ष्यते ?

अत्रोच्यते। पूर्वपक्षस्यायं भावः। यत् येष्ववान्तरविभागेषु जन्मयौनादि विभागः प्रचलति तेषु यौनः संबन्धोऽयोग्यः शास्त्रविरुद्धश्च। अर्थात् "यथा कन्या तथा हविः" इति वचनानुसारेण यज्ञादौ येषां यैः सह हविस्संबन्धो योग्यस्तेषां यौन-सम्बन्धोपि योग्य इत्यूरीकर्तव्यं इति।

तत्र केषां चन यज्ञसम्बन्धमात्रम्, केषां चन यज्ञयौनोभयसम्बन्ध इति कल्पने वैरूप्यकल्पनापेक्षया सर्वेषां सर्वसम्बन्धकरणं योग्यमिति यद्यमीषां आशयस्तर्हि इदं विचारणीयं। कथं क्षत्रियाणामपि ब्राह्मणेन यौनसम्बन्धो न भवतीति। अतोऽत्रा-वश्यमिदमूरीकर्तव्यम्, यत् कन्यासम्बन्धो यज्ञसम्बन्धश्च साधारणतया न कल्पयितुं युज्यते। किन्त्ववान्तरविभागमादायैव। तथा च यथा श्राद्धादौ अवरणीयान्नान्न-यौनोभयसम्बन्धयोग्यत्ता, एवमेवान्तरविभागेष्वपि न सर्वथा तद्योग्यता। अतएव विवाहाङ्गे कुलपरीक्षणमुपपद्यते। नहि ब्राह्मण्यादिपरीक्षणं कुलपरीक्षणन्नाम। अवान्तर विभागं परीक्ष्यह्ययं विवाहः सर्वथा परिपालनीयो नान्यथा। तत्र सगोत्रायाः सपिण्डायाःदोषान्तरदूषितायाश्च यथा ब्राह्मणत्वादिसाम्येपि न विवाहयोग्यता एवम-वान्तरविभागान्तर्गतायां अपि न तद्योग्यता। अस्य चावान्तरविभागपरिपालनस्य कुलपरीक्षायां विशेषत उपयोगः कुलीनत्वविचारे व्यव्यक्तः। ( पृ० २६७ ) इममुप-योगमभिप्रेत्यैव कुमारिलपादा अपि स्त्रीरक्षणार्थं समूहलेख्यं प्रवर्तितमिति विवेचयन्ति। तत्रैव द्रष्टव्यम्।[1]

तथा च प्रतिकुलं गुणदोषस्मरणात्तदनुकूलं स्वपितृपितमहादिपरंपरासु यत्र विवाहसबन्धो वर्तते तत्रैव विवाहसम्बन्धकरणं योग्यम्। नायं विभागः अप्रामा-

---

१ तद्यथा-"न स्त्रीणां क्वचिद्व्यभिचारदर्शनात्सर्वत्रैव कल्पना युक्ता। लोकविरुद्धानु-मानासंभवात्। विशिष्टेन हि प्रयत्नेन महाकुलीनाः परिरक्षन्त्यात्मानमनेनैव हेतुना। राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपरंपरास्मरणार्थं समूहलेख्यानि प्रवर्तितानि"। इति।

## जयमङ्गलाक्रोडपत्रम्

णिकः तथा ब्राह्मणेष्वनुभूयमानत्वात् । बालंभट्ट्यामपि तथैवोपलंभाच्च ।[1]

"तदनुसारेण यद्देशवासित्वेन येषां यथा अनुष्ठानं उक्तम् तेषान्देशान्तरगमनेपि तथैवानुष्ठानम् । अन्यथा शाखारण्डत्वप्रयुक्तप्रायश्चित्तापत्तिः । न चैषां निर्मूलत्व-मितिवाच्यम् । महार्णवेऽस्योपलभ्यमानत्वात् सदचारस्य तथैवोपलभ्यमान-त्वाच्चेति दिक् ।"

अत्र हि नर्मदोत्तरभागे ये वर्तन्ते ये च नर्मदादक्षिणभागे वर्तन्ते तेषां च विवाहा-दिसंबघो न युक्त इति स्पष्टं विवेचयित्वा नर्मदादक्षिणभागेपि तैत्तिरीयशाखा-वलंबिनामाश्वलायनशाखावलम्बिनाञ्च पृथक्करणात्तेषामपि विवाहादिसम्बन्धायोगः प्रतिपाद्यमानो विरुद्धत्तच्छाखावलम्बिनां परस्परं विवाहायोगङ्गमयति इति चिन्त्यम् ।

---

१ तथाहि—किञ्च चरणव्यूहाख्यपरिशिष्टभाष्ये स्पष्टं वेदशाखयोर्विभाग उक्तः । तथाहि – इतरदेशेषु वेदशाखयोर्विभाग उच्यते । तथाच महार्णवे—

पृथिव्या मध्यरेखा या नर्मदा परिकीर्तिता ।
दक्षिणोत्तरभागेन शाखावेदश्च उच्यते ।
नर्मदादक्षिणे भागे आपस्तंबाश्वलायनी ।
राणायनी पिप्पलायनी यज्ञकन्याविभागिनः ।
माध्यन्दिनी शाङ्खायनी कौथुमी शौनकी तथा ।
नर्मदोत्तरभागे च यज्ञकन्याविभागिनः ।
तुङ्गा कृष्णा तथा गोदा सह्याद्रिशिखरावधि ।
आ आन्ध्रदेशपर्यन्तं बह्वृचस्याश्वलायनी ।
उत्तरे गुर्जरे देशे वेदो बह्वृक् प्रकीर्तितः ।
कौषीतकी ब्राह्मणं च शाखा शाङ्खायनी स्थिता ।
आन्ध्रादिदक्षिणाग्नेयी गोदासागरआवधि ।
यजुर्वेदस्तैत्तिरीया आपस्तंबी प्रकीर्तिता ।
सह्याद्रिपर्वतारम्भादिशां नैर्ऋत्यसागरात् ।
हिरण्यकेशीशाखा च पर्शुरामस्य सन्निधौ ।
मयूरपर्वताच्चैव यावद् गुर्जरदेशतः ।
व्याप्ता वायव्यदेशात्तु मैत्रायणी प्रतिष्ठिता ।
अङ्गवङ्गकलिङ्गाश्च कानीनो गुर्जरस्तथा ।
बाजसनेयि शाखा च माध्यन्दिनी प्रतिष्ठिता ।
ऋषिणा याज्ञवल्क्येन सर्वदेशेषु विस्तृता ।
वाजसनेयिवेदस्य प्रथमा कण्वसंज्ञिका । इति ।

## जयमङ्गलाक्रोडपत्रम्

अत्र चापस्तंबशाखीयानामाश्वलायनशाखीयैर्न विरोधः उभयोरपि अभिन्न देशस्थत्वात् । एतेन सामगा अपि व्याख्याताः । प्रतिवेदं बह्वीनां शाखानामवस्थानाद्येषां यच्छाखीयत्वं परम्परयाऽवगतम् सा शाखा यत्र वेदे वर्तते तत्रैव विवाहो भवति, तर्हि तेषां परस्परविवाहयोगोऽविवादसिद्धएव । एवञ्च दाक्षिणात्येष्वान्ध्राणां केषाञ्चन वाजसनेयिनां बह्वृचानां परस्परविवाहस्तु स्पष्टमेव वचनेनैव निषिद्धः । आपस्तम्बीयानामेवान्ध्राणाम् द्राविडानां महाराष्ट्रीयानां च परस्परम् विवाहस्तु नायोग्यः । यतः स सम्प्रदायो बहुकालादारभ्य प्रचलति । पुनः द्राविडेष्वेवान्ध्रेषु गुर्जरेषु वङ्गीयेषु कानोनेष्वन्येषु च विभागा बह्वो यत्र च परस्परम् विवाहसम्बन्ध इदानीमपि नास्ति, न योग्य ? इति च बहूनां वाद इदानीं वर्तते तैस्तु विवाहाङ्गतया कुलपरीक्षा कर्तव्या वर्तते नह्यादित आरभ्य कुलपरीक्षा सर्वैरपि कर्तुं शक्यत इति । यत्र परस्परम् विवाहो बहोः कालादारभ्य प्रवृत्तआसीत् तेषां नामविशेषादिना व्यवस्था कृतेति मन्तव्यम् । स्त्रीणां कामचारवृद्धौ स्वपतेर्विवाहयोग्यकुलीनत्वमप्येकं निमित्तम् । अतः समुचितं यत्र स्वापितृमातृवंशयो रन्यतरस्य सम्बन्धोऽनादिकालमारभ्य प्रचलितः तत्कुलमेव विवाहार्थं ग्रहणीयम् इति ।

ग्रामादिभेदेन द्राविडादीनां विभागोपि-वडम, बृहच्चरण, अष्टसहस्त्रम्-इत्यादिर्योग्य एव । अतो यावच्छक्ति यत्र पूर्वतनानां सम्बन्धः कया चन परम्परया बहोः कालादारभ्य प्रचलति तत्कुलमेव विवाहार्थं स्वीकर्तव्यमिति । विभागान्तरीयाणां स्वीये विभागे कन्याया वरस्य वाऽलाभेपि विभागान्तरीयकन्यास्वीकारार्थं प्रवृत्तिरनुचितैवेति सिद्धम् । अतिप्रयत्नेनापि स्वीये विभागे वरालाभवादस्तु साहसमात्रनिबन्धनो वैतण्डिकश्चेति वयं सुधोरं वदामः ।

## आचाराअन्यथाकरणम्

विवाहपरम्परागताचारान्यथाकरणे शास्त्रविरोधोस्ति किम् ?
उच्यते । आचारप्रामाण्यं मीमांसायां साधितम् पुनरत्रेदमेव वक्तव्यम् । यदनादिसिद्धाचाराख्यशास्त्रविरोधोऽन्यथाकरणे वर्तते । इष्टापत्तौ तु—

"शिखां पुण्ड्रं च सूत्रं च समयाचारमेव च ।
पूर्वैराचरितं कुर्यादन्यथा पतितो भवेत् । इति स्मरणेन
देशजातिकुलाचारधर्माः सम्यक् प्रकीर्तिताः ।
तथैव ते पालनीयाः धर्मः प्रक्षुभ्यते ऽन्यथा ।"

इति वचनेन च पातित्यादिदोषः प्रसज्येत । अतः अवान्तरविभागेन सहाचारपरिपालनं यौनसम्बन्धरक्षणमत्यत्यन्तमेवोचितम् ।

## जयमङ्गलाक्रोडपत्रम्

### अत्रेयं विचारत्रयी

असमानार्षगोत्रजामित्यत्र समस्तपदत्वाद्गोत्रप्रवरयोर्मिलितयोः पर्युदासनिमित्तत्वं वक्तुं शक्यते ? इति चेन्न ।

प्रत्येकं दोषाभिधानात्पार्थक्येन निषेधः अनुमन्तव्यः ।[1]

### ऋत्वनन्तरं विवाहो धर्म्यः

ऋत्वनन्तरविवाहोढा परित्याज्या, उत प्रायश्चित्ताचरणापूर्वकं सा धर्माधिकारमप्यर्हति वेति चेत् ।

अत्र एवं मन्यन्ते, यदृतुमत्यप्यूढा न परित्याज्या किन्तु प्रायश्चित्ताचरणपूर्वकं धर्माधिकारमप्यर्हत्येवेति । अयमाशयः—यथाहि सगोत्राया विधवाया वोढाया परित्यागो विहितः न तथोढाया ऋतुमत्याः परित्यागः कुत्रापि विहितः, प्रत्युत तस्याः स्वीकारार्हतैव प्रायश्चित्तानन्तरं सर्वत्र प्रतिपाद्यते । अयमत्र निष्कर्षः । विधवात्वं हि स्त्रीणां न पातित्यापादकं किन्तु सम्यक्परिपालितं श्रेयस एव भवति । न हि कुत्रापि वैधव्यमपि पातित्यापादकतया विहितमिति तस्मिन्निमित्ते कस्यापि प्रायश्चित्तस्याविधानात् । प्रायश्चित्तशतेनाप्यपरिहरणीयत्वात् । अनन्यपूर्विकात्वांशस्य विवाहाधिकारप्रयोजकस्य वृषल्यां सत्वात तस्या दाने भवति स्वत्वम् संप्रदानस्यातः । ऋतुमत्या सह विवाहे तस्यां पत्युः स्वत्वमुत्पत्तुमर्हति सहैवानेन पातकमपि वर्तते तन्निराकरणाय प्रायश्चितं कर्तव्यं भवति । यथा ब्राह्मणादेः भृत्यर्जिते स्वत्वम् अस्ति ।

---

१ तदाह बोधायनः—"सगोत्राम् चेन्मत्योपयच्छेन्मातावदेनां बिभृयादिति । गौतमश्च—असमानप्रवरैर्विवाह" इति । शातातपः—परिणीय सगोत्रान्तु समानप्रवरान्तथा । कृत्वा तस्याः समुत्सर्गमतिकृच्छ्रविशोधनमिति । आपस्तंबः—समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च तस्यामुत्पाद्य चण्डालं ब्राह्मण्यादेव हीयते । इति । सङ्ग्रहे-सगोत्राम् समानप्रवरां कामतः परिणीय प्रजामुत्पाद्य गुरुतल्पव्रतं चरेत् । प्रजां चण्डालेषु निक्षिपेत् । अकामतस्तप्तकृच्छ्रं प्रजाया भरद्वाजगोत्रान्तर्भावः । प्रजानुत्पादने चान्द्रायणम् । विवाहमात्रे कृच्छ्रं । सर्वत्र व्रतान्तेऽष्टोत्तरशतं होमः । परित्यक्तां तां जननीवद्रक्षेत् । स्मृत्यर्थसारेपि—इत्यसगोत्रसम्बन्धिविवाहविषये स्थिते, यदि कश्चिज्ज्ञानतस्तां कन्यामुद्वाह्य गच्छति । गुरुतल्पव्रताच्छुद्ध्येत् । गर्भस्तज्जोऽन्त्यतां व्रजेत् । भोगतस्तां परित्यज्य पालयेज्जननीमिव । अज्ञानाच्चेदैन्दवैस्तु शुद्ध्येद्गर्भस्तु कश्यपः । इति ।
वीरमित्रोदये तु—पालनविवाहयोर्विकल्पः । अथवान्येन विवाह, इति पालनविवाहयोर्विकल्पः प्रतिपादितः । अनेनेदं सूच्यते यत्सगोत्रत्वदोष इव परिहरणीयदोषे सत्येव पुनर्विवाहपक्षोपि सम्भवत्यन्यथा तु मातृवत्परिपालनमेवेति । एतेनाव्यङ्गाङ्गीमित्यादयोपि व्याख्याताः ।

## जयमङ्गलाक्रोडपत्रम्

परं तत्र दुष्टत्वमपि स्वीक्रियते। अतएव भगवतो भार्गवस्य विजितपृथ्व्याम् स्वत्वमुपन्नम्। किन्तु ब्राह्मणस्य विजितस्वत्वे गौतमवचनेन गर्हितत्वं वर्तते ''यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम्। तस्योत्सर्गेण शुध्यन्ति जप्येन तपसै व चेति गर्हितार्जितस्यत्याग बोधनात् कश्यपाय तेन तन्निष्कृत्यै पृथ्वी दत्तेत्यन्यदेतत्। स्वत्वे तु न सन्देहः अतएव क्षत्रियस्य ब्राह्मादिनंप्रशस्तो विवाहः तस्मै दानस्याधर्म्यत्वादित्यभिप्रेत्य राज्ञः प्रति भीष्मवाक्यं महाभारते आदि १०२ अध्याये स्वयंवरन्तु राजानः प्रशंसन्त्युपयन्ति च प्रमथ्य तु हृतामाहुर्ज्यायसीं ब्रह्मवादिनः इति। तत्रैव-११९-२२०-२२१-अध्यायेषु सुभद्राहरणप्रस्तावेपि स्पष्टमेव। प्रसह्यहरणे तु विजितत्वप्रयुक्तमेव स्वत्वम् तत्तु धर्म्यमेव क्षत्रियस्येति तदाशयः। इत्थंच ऋतुमती भार्यादिषु स्वत्वं निष्कण्टकं प्रायश्चित्तेन धर्मार्हत्वं च सिद्ध्यतीत्यलमतिविस्तरण।

### अवान्तरजातीयविवाहफलम्

अवान्तरजातीयस्य विवाहस्य किं फलम्? इतिचेत्,

उच्यते। समाजसङ्घटनमेव फलम्। तच्च समाजावयवानां नियन्त्रणं विना न संभवति। बहूनामवान्तरविभागानां प्रतिसमाजं कल्पनेन समाजान्तरीयैः साकं विवाहभोजनादिसम्बन्धायोग्यताव्यवस्थापनेनैव भवति। नान्यथा। इदानीं हि बहवः समाजान्तरेणापि यौनसम्बन्धादिकरणेनन केवलं स्वीयसमाजोल्लङ्घनेन स्वीयं समाजमेव न विघटयन्ति। किन्तु समाजान्तरमपीत्यवान्तरविभागपरिपालनं हि नितरां योग्यम्। वानरा अपि हि ग्रामान्तरीयवानरैःसाकं न यौनसंबन्धं कुर्वन्ति, प्रत्यक्षमिदं तिरुपतिप्रभृतिषु देशेषु। तत्र गोपुरान्तरवर्तिभिर्वानरैर्गोपुरान्तर्वर्तिनो वानरा व्यवहारमपि न कुर्वते। तथा च समाजसङ्घटनं यद्यभिलषितं तर्हि अन्ततो गत्वा विवाहमात्रेऽवान्तरविभागपरिपालनमेव योग्यम्। इदानीं हि समाजात्-बहिष्कृतस्य समाजान्तरेणावलंबदानात् विवाहादिसम्बन्धकरणेन सर्वेपि प्रायेण स्वपितरमपि तृणाय मन्यन्ते इति विवाहे अवान्तरविभागपरिपालने दृष्टं प्रयोजनमेकं वर्तते। एवं अवान्तारविभागपरिपालनत्यगेन बहूनि द्वाराणि सङ्काराय प्रवर्तकानि भवेयुः। यथा इदानीमेकर्षिवंश्यत्वेन ब्राह्मणानामनन्तरं द्विजत्वेन त्रैवर्णिकानाम् ततो वर्णत्वेन ब्राह्मणक्षत्रियाविटशूद्राणामथ मानवत्वेन सर्वजातीनां ततःस्त्रीत्वेन पुरुषत्वेन च सर्वेषां यौनसम्बन्ध इति कल्पनेन हि सर्वः स्वतन्त्रो भवेत् इति समाज शैथिल्यमपरिहरणीयां पूर्वोक्तपतनदशामेवाऽनुयायादतो, विवाहेऽवान्तरविभागपालनमावश्यकमेवेति।

'यत्तु केचिदेकपङ्क्तिभोजनवतां मिथः कन्यासम्बन्धो योग्य इति चाटाः। किमत्र न्याय्यम्। एक पङ्क्तिभोजनेन मिथः कन्यसम्बन्ध उत कन्यासम्बन्धाभावात् पङ्क्तिविच्छेदः। पश्यतुभवान्। एकपङ्क्तिभोजनवत्सु पशुपक्ष्यादिषु किंमिथः शरीर-

## जयमङ्गलाक्रोडपत्रम्

सम्बन्धः अस्ति ? अहो पशुभिरपि समानजातिः प्राथ्यते मनुष्यैस्तु विस्मर्यते। तस्मादिद मत्र न्याय्यं यत् कन्यासम्बन्धाभावात्पङ्क्तिविच्छेद इति। "यथा कन्या तथा हवि" रिति वचनं चात्रानुकूलम्। मिथः पङ्क्तिव्यवहारे जातिविस्मरणमपि प्रसङ्गात् आपद्येत। जातिविस्मृतौ मिथः कन्यासम्बन्धप्रसङ्गात् अश्वतरादिवद्वैरूप्यप्रसङ्गात् सन्ततिविच्छेदापत्तिप्रसङ्गात् सङ्करजातेरन्यस्याएवाङ्गीकारप्रसङ्गाच्च।

अतः उदितोदितवंशस्य कुलीनत्वादिगुणसपन्नस्य निर्माणमावश्यकम् यथा वा सङ्करोन भवेत् तथा संशुद्धवंशसंरक्षणायोद्योगः श्लाघ्यतमः भारतीयराजनीति समादृतः कार्यः। कुलीनत्वादीनामुपयोगोपि जयमङ्गलायां "ब्राह्मणोन्यो वा कुलपुत्र-त्वान्नव्यभिचरति" इत्यादिनोक्तः बोध्यः। विस्तरा द्विरम्यते।

### प्रजावृद्ध्यन्नसमृद्धी

( ज० पृ० २६९ ) धर्मप्रजावृद्ध्यर्थमिति।

ननु राजशास्त्रे धर्मप्रजावृद्ध्यर्थं ऋतुकाले अभिगमनशीलता विहिता वर्तते। परन्तु यदा हि अन्नस्य उत्पत्तिः प्रजाभिवृद्धिपरिमाणतः न्यूनपरि-माणा भवति तदा परिवारनियोजनं भारतीयराजनीतिसम्मतं नास्ति किं? इति चेद् विमृश्यते। अत्र केवलम् ऋतुकालाभिगामित्वमेव न विहितमपितु तेन सह स्वशुद्ध्यर्थं वंशशुद्ध्यर्थं च भारतीयराजनैतिकदृष्टया अपेक्षिताः अपरेपि गुणा विहिताः सन्ति। ते हि यथासम्भवं सर्वैः परिपाल्यन्ते, तर्हि तद्गुणवतां सदाचारिणां शुद्धतमे वंशे प्रजाबाहुल्यं भविष्यतीति न कदापि मन्तव्यम्। अतः भारतीय-राजनीतिप्रतिष्ठायां प्रजाबाहुल्यस्य अवसर एव नास्ति। वस्तुतः भारतीय-राजनीतेः एतद्विषये अपरमपि एकं मतमस्ति तथाहि—प्रजाबाहुल्यं जातमिति अथवा प्रजाबाहुल्यं भविष्यतीति कृत्वा प्रजायाः नियोजनं न अत्र चिन्त्यते। किन्तु यथा धनधान्ययोः प्रजासङ्गोपनाय समृद्धिः प्रचुरमात्रया येनोपायेय संभवेत् तथा चिन्तितमिति। अत्रोदाहरणं यथा प्रकृतिः भाविनं वंशमवरोद्धुन्न वाञ्छति अपि तु यदा प्रजायाः अभ्युदयस्य अवस्था शरीरे संभवति, तदा तदुत्पत्तेः प्राक् बालकस्य जीवनादृष्टहेतुना गर्भिणीशरीरे दुग्धम् उत्पादयितुं सा प्रयतते। ततः प्रजा समुद्भ-वति। स एव न्यायोऽत्र स्मर्त्तव्यः। कस्माच्चित् कारणवशात् यदि गर्भिणी पुत्रवती वा क्रोधेन, शोकेन वा समाक्रान्ता, वात्सल्यशून्या वा भवति तर्हि तु दुग्धमाशु प्रणश्यति।[1]

---

१ तदुक्तम्—पृ० ८ क० संहिता १९ अ० क्षीरोत्पत्तिः—

"लशुनानां पलाण्डूनां सेवनं शयनं सुखम्।
क्रोधाध्वभयशोकानामायासानां च वर्जनम्।
अ···या ··भवति वत्स इति क्षीरविवर्धनम्।—

## जयमङ्गलाक्रोडपत्रम्

स एव न्यायः भूमितः अन्नोत्पत्तिविषयेऽपि मन्तव्यः। पृथिव्यां यदन्नमुत्पद्यते तस्य प्रथमावस्था क्षीरसदृशी वर्तते इति प्रत्यक्षसिद्धम्। तस्यापि विनाशः मातुः दुग्धविनाशसामग्रीतुल्यसामग्र्या संभवितुमर्हति। अस्मन्मते पृथिवी मातृस्थानीया वर्तते सा यावत्पर्यन्तं प्रजाविषये वात्सल्यभावं क्रोधशोकायोः राहित्यं च आत्मनि नानुभवेत्, तावत्पर्यन्तं यावत्यः प्रजाः वर्तन्ते तावतीनां सर्वासां सङ्गोपनाय पूर्वत एव प्रस्नोष्यत्येव। यदि केनापि कारणेन वात्सल्यतः च्यावयिष्यते तर्हि ततः अन्नपूर्वावस्थापन्नस्य पयसो विनाशेन अन्नस्य विनाशोऽवश्यं स्यात्। साम्प्रतं हि इयं पृथिवी माता अनुचितशासनेन अस्मत्प्रमादेन वा आक्रान्ता दुःखमनुभवन्ती उद्विग्नचित्ता वर्तते। एतदवस्थायां इयं कं वत्समधिकृत्य वत्सला भूयात्? वर्णितं चैतत् श्रीमद्भागवते पृथुचरिते द्रष्टव्यम्।[1]

---

वटादीनां च वृक्षाणां क्षीरिकायाश्च वल्कलम्।
पाक्यः कषायः क्वथितः क्षीरं तेन पुनः शृतम्।
पाक्यं गुडविडोपेतं सघृतं शालिमाशयेत्।
अपि शुष्कस्तनीनां तत् क्षीरोपजननं परम्।
शालिषष्टिकदर्भाणां कुशगुन्द्रोत्कटस्व च।
सारिवावीरणेक्षूणां मूलानि कुशकाशयोः।
पेयानि पूर्वकल्पेन श्रेष्ठं क्षीरविवर्धनम्।
स्वभावनष्टे शुष्के वा दुष्टे साध्वीक्षिते हितम्।
अव्याहतबलाङ्गायुररोगो वर्धते सुखम् (?)॥
शिशुधात्र्योरनापत्तिः शुद्धक्षीरस्य लक्षणम्॥"

(इति का० सं० १९ अ० क्षीरोत्पत्तिः, पृ०)

'अवात्स्यल्याद् भयात् शोकात् क्रोधादत्ययतर्पणात्।
स्त्रीणां स्तन्यं भवेत् स्वल्पं गर्भान्तरविधारणात्॥" इति भावप्रकाशे।

सुश्रुत अ० १० शारीरस्थानम्—३०

क्रोधशोकावात्सल्यादिभिश्च स्त्रियाः स्तन्यनाशो भवति। अथास्याः क्षीरजननार्थं सौमनस्यमुत्पाद्य यवगोधूमशालिषष्टिकमांसरससुरासौवीरकपिण्याकलशुनमत्स्यकशेरुकशृङ्गाटक बिदारिकन्द-मधुकशतावरी-नालिकालाबू-कालशाकप्रभृतीनि विदध्यात्। ३०।

१ नूनं ता वीरुधः क्षीणा मयि कालेन भूयसा।
तत्र योगेन दृष्टेन भवानादातुमर्हति।
वत्सङ्कल्पय मे वीर येनाहं वत्सला तव।
धोक्ष्ये क्षीरमयान् कामाननुरूपं च दोहनम्।९।

## जयमङ्गलाक्रोडपत्रम्

किञ्च पृथिव्यां यदन्नमुत्पद्यते तत् तस्याः हर्षचिह्नमिति पृथिवी-धर्मसंवादे १ स्कन्धे निरूपितमस्ति।

तदाहुः श्रीधरस्वामिनः "यस्याङ्घ्रिणा रजस्युत्थितेन विटङ्किताया अलङ्कृतायाः सस्यादिमिषेण रोमोत्सवो भवति" ॥३६॥ इति। (स्कं-१,अ० १६, श्लो० ३६)

साम्प्रतं अधर्मस्याभिवृद्ध्या भूमिः न हर्षेणोल्लसति अतः हर्ष-प्रकाशकस्य रोमाञ्चस्यापि अभावः समुल्लसितः तत्र वर्तते।

किञ्च—अस्मिन् देशे पूर्वं सर्वत्र भगवत्पूजनमिषेण घण्टायाः मधुरो नादः गुञ्जति स्म। वार्तालापोऽपि पारस्परिकः शमप्रधानैः, उत्साहप्रधानैः रसिकैः क्रियमाणः स रि म प—स्वरैः स्वर्यमाणः सर्वेषां आनन्दाधायकः सन् वृक्षेषु फलोत्पादकः बभूव। वृक्षाः यदा हर्षेण उत्फुल्लाः भवन्ति, तदा तेषु हर्षप्रयुक्तः सञ्जायमानः रोमाञ्चः फलरूपतया पर्यवस्यति। विपरीतस्वरं श्रुत्वा आत्मनः प्रतिकूलाञ्च स्थितिं ज्ञात्वा ते क्लिश्यन्ति। तदा ते रोमाञ्चिता न भवन्ति, अतएव न फलोत्पत्तिरपि। तत्र रोमाञ्चो भवति। इति वैशेषिकभाष्ये आत्मप्रकरणे स्पष्टम् (पृ० २००)

एवं जगदीशचन्द्र बोस महाभागेन घण्टादिमधुरनादं शृण्वत्सु वृक्षेषु तज्ज-नितकम्पेन चैतन्यमस्तीति साधितमस्ति। अतएव वृक्षाः घण्टानादश्रवणमात्रेण असात्म्यभूमिमापन्ना अपि रोहेन्तीत्युक्तमुपपद्यते। तदुक्तम्–

निधिदेवमहीपानां प्रभावाच्चैव कृत्स्नशः।
असात्म्यभूमिमापन्ना अपि रोहन्ति पादपाः।' इति।

पूर्वं यत्र यत्र अस्मिन्देशे मधुरनादः आसीत्, साम्प्रतं तत्र तत्र प्रायशः रौद्र-प्रकृतीनां नादो वर्तते। तं श्रुत्वा वृक्षेषु प्रसन्नता कथं संजायेत ? कथं वा ते फलानि प्रसुयुः ? अतः अस्मिन्समये भूमिः वृक्षाः वा प्रभूतमात्रया न अन्नं फलं वा प्रयच्छन्ति।

भारतवर्षे तथाविधसमयः आसीत्, यत्र भूमिः प्रचुरमन्नं वितरति स्म। पुरा चतुर्भिः पणकैः एकमणपरिमितं धान्यं लब्धमासीत्। अकबरसमये तावत्परिमाण-कमन्नं षड्भिः पणैः लभ्यमभूत्। आङ्ग्लराज्ये तु येन मार्गेण भूमिः वृक्षाश्च समुल्लसिता भवन्ति स्म, स मार्गः अवरुद्धः अन्नं च विनष्टम्। पञ्चाशत्वत्सेरभ्यः प्राक् पूर्वसंस्कारेण यन्मात्रया भूमिरन्नं व्यतरत् यस्य त्रिंशच्छेटकपरिमितस्य उप-

---

देहस्य वृद्धि-क्षतभग्नसंरोहणादिनिमित्तत्वाद् गृहपतिरिव। इति। (न्या०कं०) देहस्येति। वृद्धिः प्रसिद्धैव। क्षतस्य भग्नस्य च संरोहणं पुनः सङ्घटनं तयोर्निमित्त-त्वात् गृहपतिरिव प्रयत्नवानधिष्ठाता अनुमीयते शरीरस्य वृद्धिक्षतसंरोहणं प्रयत्न-वता कृतं वृद्धिक्षतभग्नसंरोहणत्वाद् गृहवृद्धिक्षतभग्न—संरोहणवत्।" इति।

## जयमङ्गलाक्रोडपत्रम्

लब्धिः एकेन रूप्येणाभूत् तन्मात्रया तदपि अधुना न दृश्यते। अस्यायमेवार्थः यत् भूमिः वृक्षा वा न हृष्टाः सन्ति, अतएव ते यावन्मात्रयाऽन्नमपेक्ष्यते तावन्मात्रया न प्रयच्छन्ति। भारतीयराजनीतिः अत्र नाश्चर्यं मन्यते। यत्र राजानः अपालकाः चोरा बहुलमात्रया अभिवृद्धाः, यज्ञश्च शून्यतां गतः। अत्यधिकमात्रया वृक्षाः छिद्यन्ते तत्र इदं भविष्यत्येव। अतः परिवारनियोजनचिन्तयापि किंस्याद्? यदि च अन्नं प्रचुरमात्रया लब्धं न भवेत्! यदि चान्नस्य प्राप्तिः प्रचुरा भवेत् तर्हि परिवार-नियोजनया किं स्यात्?, अतः इदं कर्तव्यमस्ति, यत् भारतीयराजनीतिसिद्धान्तः सर्वत्र प्रतिष्ठापनीयः। प्रतिष्ठिते च तस्मिन् एतावत्अन्नम् उत्पद्येत यस्य विनियोगः भारतीयैरन्यत्रापि कर्तुं शक्येत। यदा इयं रीतिः स्थिरा भवति। तदानीं सुखसमृद्धिः कथं भवतीति विचारणायां भूमिः अकृष्टपच्या भवति, दावाग्निः वृष्टिं विनापि प्रशाम्यति, फलं पुष्पं च विशेषतः अभिवर्धते, बलवान् ऊनं न बाधते[1] इत्यादि। विलासितानिमित्तेन परदेशे धनं प्रेष्यते। महद्दौर्भाग्यं देशस्य यत् विलासितां लक्ष्यीकृत्य यथा वृथा धनव्ययः न भवेत्, तथा तु न चिन्त्यते। अपितु प्रजानियोजनार्थं कृत्रिमैरुपायैः जनाः पुंस्त्वात् स्त्रियश्च आर्यमर्यादायाः प्रच्याव्यन्ते। सर्वत्र रसप्रधानं शिक्षणं प्रसृतम् तेन सर्वेऽपि आत्मनि नटभावमलङ्कुर्वन्ति। नटाःयथा महाराजवत् उपचार्याः इति शास्त्रे उक्तं तन्न्यायेन सर्वेऽपि राजोपचारैः संभावनीयतां गताः। यदा हि समस्तेषु अयमुपचारः प्रसक्तस्तदा अनेकविधविलाससाधनसामग्री—(मोटर-रेडियो- फर्नीचर आदि)—बहिःप्रदेशात् आनेतव्या भवति तन्मिषेण अनाचारहेतूनां दोषाणां च व्यभिचारस्य समृद्धिरेव परिणामः स्मर्त्तव्यः।

अपि च समस्तस्य पदार्थस्य उत्पादकाः इलेक्ट्रान प्रभृतयः असङ्ख्याताः पर-माणवः किरणा इतस्ततः परिभ्रमन्ति तेषां संयोगेन प्रचुरमात्रया अन्नं यावद-पेक्ष्यते, तावत् उत्पादयितुं शक्यते। स संयोगः कथं भवेदिति चिन्तनीयम्। यथा समुद्रेषु मेघाः सततं उत्पद्यन्तएव वायुगतिवैपरीत्यात् ते अभिमतदेशं न गच्छन्ति। अतः स्वानुकूलतया वायुगतिः यथा भवेत्, यथा च तत्प्रतिबन्धकमदृष्टमवग्रहात्मकं निरस्येत् तथा चिन्तनीयम्। एवं भारतीयराजनीत्या देवगुरुभर्तृप्रसादादिजनकम् अदृष्टम् उत्पाद्यते। एलेक्ट्रॉनप्रभृतीनां परमाणूनां संयोगः यथा भवेत् तथा प्रयत्यते

---

[1] तदुक्तम्—शशाम वृष्टयाऽपि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः।
ऊनन्न सत्वेष्वधिको बबाधे तस्मिन् वनं गोप्तरि गाहमाने॥
रघुवंश २ सं० १६

सुखेन लभ्या दधतः कृषीवलैरकृष्टपच्या इव सस्यसम्पदः।
वितन्वति क्षेममदेवमातृकाश्चिराय तस्मिन् कुरवश्चकासति। इति।
कि० जु० १ स० १७ श्लो०

## जयमङ्गलाक्रोडपत्रम्

तदर्थंच देवगुरुभर्तृप्रसादः अपेक्ष्यते अत एव स सदा धर्मतः लोकैः न्यायतः परिपालनीयो भवति इति चिन्त्यतामर्हति। तदुक्तं दुर्भिक्षकारणविचारप्रसङ्गे—(साङ्ग० वे० वि० वार्षिकविवरणे[1] संवत् २०२१ का पृ० ५)

### नीत्यन्तरे अनिर्णयः

इमां भारतीय राजनीतिसरणिं विहाय अपरस्यां राजनीतौ किंकर्तव्यम्, को वा न्यायः इत्येतत्सर्वमपि स्थिरं नास्ति। अतः कः सिद्धान्तः केन कथमवलम्बनीयः? इति स्थिरतया न निर्णेतुं शक्यते। यथा कस्मिंश्चित् समये गर्भपातः दोषजनकत्वेन मन्यते स्म। अधुना तु तस्य वैधत्वं चिकित्सकैः चिकीर्ष्यते। एकत्र हिन्दूसङ्ख्यायाः परधर्मप्रवेशेन ह्रासो भवति स कथं निरोद्धव्य इति चिन्त्यते। अपरत्र परिवारनियोजनं काम्यते। इत्येतादृशविचारणा यस्यां राजनीतौ वर्तते सा नीतिः कदा किमालोचयिष्यति इति सिद्धान्तितुमशक्यत्वात् सर्वमेव दुर्वचं भवति। अत्र तु यः सिद्धान्तः स त्रिकालाबाधितत्वात् स्थिर एव। अस्मिन्नेव देशे पूर्वत्रापि जनताया अभिवृद्धिरभूत्। तत्र तस्य ह्रासमियं राजनीतिर्न चिन्तयामास। द्वारकायां कोटित्रयपरिमिताः गुरवः अध्यापकत्वेन तत्र तत्र वृता आसन्। तत्र तेनैव शिष्याणां बाहुल्यात् प्रजासङ्ख्या प्रचुरा आसीदिति निश्चीयते। सत्यप्येवं तदानीं दुर्भिक्षस्य स्थितिः यथा न भवेत् तथा तदानीं प्रयतितम्। तथैव प्रकृतसमयेऽपि अन्नसमृद्ध्युत्पादकमार्गः यथा सफलो भवेत् तथा यतनीयम्। तेनैव रक्षणं भविष्यति। पुंस्त्वात् विचालनन्तु प्रतिभायाः अनुद्गमने पर्यवस्यति। तेन च पारतन्त्र्यादिरूपा महती हानिः राज्येन अनुभूयेत। अतः भारतीयराजनीत्यनुसारेण प्रजाधर्मवृद्ध्यर्थमिति यत् टीकायामुक्तं तत्समञ्जसमेवेति ध्येयम्।

ब्राह्मणादिभुक्तस्यान्नस्य यो ऽवशेषः तद्भोजनं राज्ञा कर्तव्यमिति भ्रमऽनिरासायाह पश्चादिति। ( ज० पृ० २९९ ) तदेव व्याचष्टे देवेति।

---

१ "देश में अन्न आदि संकट क्यों उपस्थित होते हैं, तथा उनके निवारण का उपाय भी कौन सा है? इसमें नीतिसार एवं जयमंगलाका मत है कि राष्ट्र की उन्नति या अवनति मन्त्री एवं पुरोहित की सहयोगिता तथा निर्व्यसनिता पर निर्भर रहती है। "राजराज्याभिरक्षणं मन्त्रिपुरोहिताधीनम्।"

उपर्युक्त वचनानुसार मन्त्रिवर्ग और पुरोहितवर्ग के विना देश को घोर अन्धकार से और कौन वचावेगा? यदि नेता लोग बल, शील, सत्व, आरोग्य इन चार गुणों से सम्पन्न न हों, तो देश किसका अनुगामी होकर सुख की नींद लेगा, इन चार गुणों में से सत्वगुण ही निर्व्यसनिता, सहयोगिता और गुण समृद्धि में साधक होने से वही सुरक्षा में प्रधान कारण है। वह जब प्रचुरमात्रा में रहता है तब नीति का निर्धारण सम्भव होता हैं। सत्व की समृद्धि हुई है अथवा नहीं, इसकी परीक्षा यह है कि सात्विक प्रकृति का मनुष्य आधी रात के अतिरिक्त समय में सदा जागता हुआ प्रसन्न रहता है। सुश्रुत में "सत्वभूयिष्ठानामर्धरात्रे ऐसा कहा है।"

## जयमङ्गलाक्रोडपत्रम्

(ज० पृ० २९९। विघसाशित्वप्रतिषेधार्थम्। भृत्येषु इति शेषः। "अनेन देवतापित्र-तिथिभृत्येषु त्यागः शेषभोजनं च" इति मूलोक्तानुसारेण देवपित्रतिथिभोजनानन्तर भोजनं यथा कर्तव्यं, तथा तेन राज्ञा भोजनं भृत्यभोजनानन्तरमेव कार्यम् इति भ्रमनिरासः सूचितः। अर्थात् भृत्यभोजनात्पूर्वं भोजनं राज्ञा कर्तव्यम् इति भावः। विघसस्वरूपस्य, तथैव व्याख्यानात्।[1]

एवं श्राद्धप्रकाशेऽपि भुक्तशेषप्रकरणे-शिष्टमन्नं किं क्रियताम् इष्टैः सह भुज्यतामित्युक्तत्वाच्च—

### विघसाशित्वलाभः

ननु विघसाशित्वे को लाभः ? इति चेन् मायाजय एव लाभः इति मन्तव्यम्। तदुक्तं भागवते—

'त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः।
उच्छिष्टभोजिनो दासाः वयं मायां जयेमहि ॥' इति

तेन उच्छिष्टं भोजनं भक्त्यङ्गमिति भाति। तथा च देवता–पित्र तिथिगुर्वर्थ-पाकभुक्तावशिष्टं भोजनं भक्त्यङ्गत्वादुचितम्। भृत्यदासास्तु राजसेवकाः। अतः तैर्भुक्तस्य शेषग्रहणम् राज्ञः कृते नोचितम्।

### विधसाशित्वपरिसङ्ख्याविधिः

न च देवतापित्रतिथिभृत्येषु त्यागः इत्यनेन वाक्येन भक्त्यङ्गत्वात् देवताभुक्ता-वशिष्टभोजनं राज्ञः कृते प्राप्तमेव। पुनरिदमभिधानं व्यर्थमेवेति वाच्यम्। तस्य "पञ्च पञ्चनखा भक्ष्याः" इति विधेरिव परिसङ्ख्यापरत्वात्। यथाऽस्य वाक्यस्य 'पञ्च-पञ्चखातिरिक्तस्य भक्षणं न कुर्यात्' इत्यर्थस्तथा देवतापित्रतिथिगुरुभुक्ता-वशिष्टातिरिक्तस्य अपरेण भुक्तावशिष्टस्य भोजनं न्न कुर्यात् इत्यर्थो बोध्यः।

अत्रेदं बोध्यम्। ये किल गृहस्थस्य धर्माः अत्र नीतिवाक्यामृतेचाभिहिताः ते सर्वेपि भूतरक्षायामिज्यायां च गृहस्थस्य कर्तव्यत्वे पर्यवस्यन्ति। तदुक्तम् भागवते—

भिक्षोर्धर्मः शमोऽहिंसा तपोऽन्वीक्षे वनौकसाम्
गृहिणां भूतरक्षेज्या द्विजस्याचार्यसेवनम्। इति।

---

१ तदुक्तम् शब्दकल्पद्रुमे—विधसः—
विघसाशी भवेन्नित्यं नित्यं अमृतभोजनः।
विधसो भुक्तशेषन्तु यज्ञशेषं तथाऽमृतम्।
'आहारः' इति शब्ददरत्नावली। यथा
अयि वनप्रिय विस्मृत एव किं बलिभुजो विधसो भवताऽधुना।
यदनयैव कुहूरिति विद्यया, न पततश्चरणौ धरणौ तव ॥"इत्युद्भटः।

**ब्रह्मचारिणः[1]—स्वाध्यायोऽग्निकार्याभिषकौ भैक्षव्रतत्वं, आचार्ये प्राणान्तिकी वृत्तिः, तदभावे गुरुपुत्रे सब्रह्मचारिणि वा ।**

## श्रीमूला

**ब्रह्मेत्यादि** । ब्रह्मशब्दो वेदवाची तद्ग्रहणार्थे दण्डाजिनधारणादिलक्षणे व्रते वर्तते, तच्चरितुं शीलमस्येति ब्रह्मचारी तस्य ब्रह्मचारिणः । स्वाध्यायः स्ववेदाध्ययनम् । अग्निकार्याभिषेकौ अग्निशुश्रूषात्रिषवणस्नाने । भैक्षव्रतत्वं भैक्षं भिक्षावृत्तिः व्रतत्वं व्रतित्वं गोदानान्तं कर्म तदुभयम् । एवं तावदुपकुर्वाणस्य वेदब्रह्मचारिण आसमावर्तनादनुष्ठानम् । नैष्ठिकस्य विशेषमाह—**'आचार्ये प्राणान्तिकी वृत्तिरि'-त्यादि** । गुरुकुले आप्राणोत्क्रमणकालभाविनी स्थितिः । गुरुपुत्रे आचार्यपुत्रसमीपे । सब्रह्मचारिणि वा समानशाखाध्यायिनि वा वृद्धे । कार्येति शेषः ।

## वैदिकसिद्धान्तसंरक्षिणी

ब्रह्मचारिधर्मानाह ब्रह्मचारिण इति । स्वाध्यायेति । एते **धर्माः** नीतिनिर्णीतौ टिप्पण्यां च नैष्ठिकमुदिश्योच्यन्ते "नोपकुर्वाणक" मित्यादिना । जयमङ्गलाकृतस्तु अत्र-केचित् धर्मा नैष्ठिकस्य केचित्तु उपकुर्वाणिकस्येति मूलकृदभिप्रायं व्याख्यान्ति । किमत्र युक्तमिति तु नीतिसारग्रन्थात् उक्तानुक्तदुरुक्तचिन्तनं कर्तुं अधिकृतात् वार्तिकात् बोद्ध्यम् । तदाधारीकृत्य मूलमिदं यथायथं नैष्ठिकोपकुर्वाणकपरतया योज्यम् । स्वाध्यायः स्वशाखाऽध्ययनम् । तच्च गुरुकुले स्थित्वा कर्तव्यम् । तदुक्तं नीतिसारे—

गुरौ वासोऽग्निशुश्रुषा स्वाध्यायो व्रतचारणम् । इति ।

गुरौ वासो ब्रह्मचारिणो विशेषतयाभ्यर्हितो धर्मः 'द्विजस्याचार्यसेवन'मिति श्रीमद्भागवते-११ स्कन्धे-उक्तत्वात् । अयं धर्मः विद्योपयोगितया बोध्यः । अग्निकार्यम् अग्निशुश्रुषा । अभिषेकः स्नानं त्रिषवणम् । भैक्षं भिक्षोपात्तम् । भोजनार्थ मिदं विहितम् । भिक्षया केन ब्रह्मचारिणा कीदृग्विनयः साधित इति निर्णये सौलभ्यं भवति । अत्रायं भावः—ब्रह्मचारिणा एव वक्तव्यं एवं वा भाव्यं यन्मुद्रया प्रसन्नान्तःप्रहृष्टाः जनपदवासिनः स्वयंप्रदद्युरस्मै भिक्षां इति । व्रतचारिता ब्रह्मचर्यम् । इदं स्वाध्यायाध्ययने अङ्गं वर्तते । तस्य फलं ओजोभिवृद्धिः सत्वगुणप्रकर्षण च प्रतिभोत्पादनम् ।

नैष्ठिकब्रह्मचारिणो धर्ममाह आचार्ये इति । गुरुकुले इत्यर्थः । प्राणान्तिकी प्राणस्यान्तोऽवसानं यस्या इत्यर्थः । यदि गुरुर्नास्ति तदाऽऽह तदभावे इति । गुरुपुत्राभावे पक्षान्तरमाह-सब्रह्मचारिणीति । तुल्यशाखाध्यायिनीति तदर्थः । औपकुर्वाणकनैष्ठिकयोः स्वाध्यायाध्ययनसमये परिश्रमेण वातादीनां प्रकोपोत्पत्तिर्जायेत तच्छम-

१. नी० टी० नैष्ठिकमुद्दिश्योच्यते । नोपकुर्वाणकम् ।

## वैदिकसिद्धान्तसंरक्षिणी

नाय बलवर्धनोद्भूतये च यानि साधनान्यपेक्षितानि शरीरे, तानि एतद्वार्तिके नीतिसारे उक्तानि ।—

समेखलो जटी मुण्डो दण्डी वा गुरुसंश्रयः ।
आविद्याग्रहणात् गच्छेत् कामतो वाऽऽश्रमान्तरम् ॥ इति ॥

तानि सर्वाणि अत्र विवक्षितानि । एतेषां मेखलादीनां स्वाध्यायाभ्यसने कथं विशेषोपयोगित्वं इति-जयमङ्गलाकोडपत्रे द्रष्टव्यम् ।

## जयमङ्गला

**ब्रह्मचारिण इति ।** ब्रह्म वेदः । तदध्ययनार्थं यद् व्रतं तदपि ब्रह्म तच्चरति यः । "व्रते" (३.२.८०) इति णिनिः, तस्य । स्वाध्यायो यस्मिन्नेव वेदे व्रतञ्चरति स एवाध्येय इति स्वग्रहणम् । **अग्निकार्यम्** अभिषेकञ्च स्नानं **यथोक्तम् ।** 'व्रत भोजने' (?) इति ण्यन्तात् **कर्मकर्त्तरि** पचाद्यच् । एतद् वेदब्रह्मचारिण उपकुर्वाणस्य (आ) समावर्तनात् ।

आ मरणान्तात्तु **नैष्ठिकस्य । अयं विशेषः**[१] आचार्यकुले प्राणान्तिकी प्राणा एवान्तोऽवधिर्यस्या विद्यते सा । **वृत्तिः शुश्रूषा ।** तदभावे गुरुपुत्रे द्वितीयः । सब्रह्मचारिणि वा समानचरणे तुल्यशाखाध्यायिनि वृत्तिरिति तृतीयः कल्पः । "चरणे ब्रह्मचारिणि ६. ३. ८६) इति सभावः ।

## जयमङ्गलाक्रोडपत्रम्

ब्रह्मचारिण इति । ननु अग्निकार्यस्य क उपयोगः ? इति चैदुक्त एव शान्तीका अग्रदूतग्रन्थे, यत् "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते" इत्यादि (पृ० २७४) शेषं तत्रैवद्रष्टव्यम् ।

यथोक्तम् इति । नीतिसारे इति शेषः । ब्रह्मचारिणा त्रिसन्ध्यं स्नानं कर्तव्यमिति यावत् । स्वास्थ्याभावेतु मन्त्रादिना स्नातव्यम् । तथा सति अस्वस्थस्य ब्रह्मचारिणः त्रिसन्ध्यस्नायिता भवितुमर्हतीति भावः । अनेन ब्रह्मचारिणा शान्तरसे स्थितेन भाव्यमिति द्योत्यते, त्रिसन्ध्यस्नानस्य शान्तरसानुभावत्वात् । तदुक्तम प्राक् (पृ० २२९) स्नानं त्रिषवणोचितं इत्यादि । "शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः" इत्यादि योगसूत्रोक्तानि फलान्यपि अत्र अनुसन्धेयानि । किञ्च अभिषेकपदमुपलक्षणार्थम् सन्ध्योपासनादीनि अपराण्यपि नित्यकर्माणि ब्रह्मचारिणां कृते बोद्धव्यानि । धर्मशास्त्रेषु तथा प्रतिपादनात् । तदुक्तं -मनुस्मृतौ–

पूर्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति ।
पश्चिमान्तु समासीनो मलं हन्ति दिवाकृतम् ॥ १०२ ॥

---

१. अशुद्धम्
नैष्ठिकस्यायं विशेषः

## जयमङ्गलाक्रोडपत्तम्

### ब्रह्मचर्यं नियमफलम् मित्रत्वम्

( ज० पृ० २९८ ) कर्मकर्तरीति । ब्रह्मचारिव्रतनियमफलं इति भावः । ननु ब्रह्मचारिभिः मूलोक्तानां स्वीयधर्माणां परिपालने कृते नीतौ क उपयोग ? इतिचेदुच्यते । ब्रह्मचर्यव्रतपालेन त्रीणि फलानि संभवन्ति—

तेषु उपर्युक्तनियमपरिपालनेन शान्तरसस्य सत्वमयस्य तेजसः प्रभायाश्च उद्भवेनं तद्दीप्त्या तस्मिन् माधुर्यस्य अनुभवेन च प्रसन्नचेतोभिः सहवासिभिः स्वयं तस्मै भिक्षासमर्पणम् इत्येवं उक्तब्रह्मचर्यनियमस्य एकं फलम्। यस्मिन्समये अत्र देशे उपर्युक्ता ब्रह्मचर्यव्रतनियमशिक्षा ब्राह्मणादिषु प्रसृता आसीत् तस्मिन्समये अतिथयः दुर्लभाः बभूवुः भवन्ति च । तदानीं कश्चन अतिथिर्मद्गेहे आगच्छेत् इति मनीषया गृहस्थाः तथाविधं ब्रह्मचारिणं प्रति प्रतीक्षांबभूवुः इति इतिहासः वरीवर्ति । तदुक्तमुदयनाचार्यैः कुसुमांजलौ । (न्या०कु०रस्तबक पृ० ५७) "पूर्वं दुःखेन ब्राह्मणैरतिथयोऽलभ्यन्त, ततः क्षत्रियातिथयोऽपि संवृत्ताः ततो वैश्यावेशिनोऽपि सम्प्रति शूद्रान्नभोजिनोऽपि । पूर्वममृतभुजः, ततो विघसभुजः, ततोऽन्नभुजः सम्प्रत्यघभुज एव" । इति । एवं विधः समयो यदि अस्माभिः द्रष्टुममिलष्यते, तर्हि ब्रह्मचारिषु विनयस्य गुरुभक्तेश्च उक्तनियमसाहचर्येण तेषु विद्यातेजः समुद्भावनीयम्। तद्दीप्त्या च स्वयं तस्मै गृहस्थाः धनादीन् समर्पयेयुः इति । अतएव वात्स्यायनेनापि विद्याग्रहणादीनार्थान् ब्रह्मचारी षोडवर्षात् प्रागाप्नुयात् इत्युक्तं कामसूत्रे । तद्यथा—"**बाल्ये विद्याग्रहणादीनर्थान्**" **इति** ।

यत्र च वास्तविकं विद्यातत्वं परहितस्य निदर्शकं शुद्धं अबाधितमुदेति सः सर्वस्य विश्वास्यत्वान् मित्रं भविष्यत्येव । अत्र न सन्देहः । केवलं राक्षसप्रकृतिरेव दुष्टस्वभावः तं न विश्वसिति इति तु अन्यदेतत् । मित्रत्वंच स्निग्धत्वरूपं हितसाधनत्ववासनातोऽभिन्नं । तदुक्तं भावप्रकाशने द्रष्टव्यम् ।[1]

---

१ "आर्द्रता शिशिरत्वं यत्सर्वावस्थासु मानसम् ।
द्विधा भवेत् स च स्नेहः कृत्रिमाकृत्रिमात्मकः ।' इति ( ४ अधि० )
( 'ययोः परस्परं चास्ते तदपि स्नेह ईरितः' इति । मालती माधवे । )
'सोपाधिः कृत्रिमः स्नेहो निरूपाधिरकृत्रिमः ।
उपाधौ विनिवृत्ते तु तज्जन्यो विनिवर्तते ।।
स्नेहः स्वभावजो यावद् द्रव्यभावी भविष्यति ।
शङ्का स्यात् कृतके तत्तद्विक्रियान्वेषणात्मिका ।।
स्वाभाविके भयन्तावद्विषयादेः प्रमादतः ।
एकाश्रयः स च क्वापि क्वापि स्यादुभयाश्रयः ।।
एकाश्रयस्तिर्यगादौ मर्त्यादावुभयाश्रयः ।।
आश्रयाद्वासनातश्च जायते तत्र तत्र तु ।
एकाश्रयो वासनातो द्व्याश्रयो हेतुभिर्भवेत् ।।—

## जयमङ्गलाक्रोडपत्रम्

तदिदं मित्रत्वं स्थिरं भवति तत्र, यमधिकृत्य ममत्वेन चित्तस्य द्रवीभावो भवति। एवंभूतस्य स्नेहस्य उत्तरोत्तराभिवृद्धौ विद्यावतः अर्थज्ञस्य किं तद्वस्तु दुर्लभमस्ति, यत् स न प्राप्नुयात् एवंभूतस्य मित्रत्वस्य संप्राप्तिः येन व्यापारेण विद्वद्भिः अर्जयितुं शक्येत, सः व्यापारः स्थिरतया अन्तः-करणे शरीरे वा यैः नियमैः संभाव्यते ते नियमाः ब्रह्मचर्याश्रमे शास्त्रकर्तृभिः अत्र विहित्ताः। तदेतत् ब्रह्मचर्यव्रतनियमस्य द्वितीयं फलं बोध्यम् !

### विद्यालक्ष्मीविरोधतत्परिहारौ

ननु विद्यालक्ष्म्योः परस्परं विरोधोऽस्ति, स कथमुपपद्येत ? इति चेत् उच्यते। विद्वांसः कृतविद्या अपि 'लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हसि' इति वाक्यं विस्मृत्य

वाक्सूनृता दया दानं दीनोपगतरक्षणं।
'इति सङ्गः सतां साधुहितं सत्पुरुषव्रतम् ॥"

इत्यादि नीतिसारोक्तं चतुर्थं प्रकरणमुपेक्षन्ते। ततः प्रजापरागेण लक्ष्मीः क्रुद्धेव दूरे तिष्ठति। सरस्वत्यपि सत्यां च धनसंपत्तौ तत्प्रयुक्तमदेन धनिनः सकाशात् दूरे गच्छति। इत्येवं सरस्वतीलक्ष्म्योः विरोधः। नीतेरालम्बने तु नैवं विरोधः। अतः गुरुभिः अर्थानुकूलतया मित्रोपलब्धिः गुणानां जनानुरागसाधन-भूतानां समुदयश्च च यथा विद्यया यैश्च नियमैः संभवेत्, तथाविधा विद्या तदुपयो-गिनियमाश्च ब्रह्मचर्यावस्थायां शिष्येषु उत्पादनीयाः।

अथ ब्रह्मचर्यनियमस्य तृतीयफलमुच्यते। उक्तब्रह्मचर्यव्रतनियमपरिपालने सति विनयसम्पन्नतायां ब्रह्मचारिणि परमेशितुः प्रसादोऽपि उपर्युक्तफलाभ्यां सह तृतीयं फलं संभवति। तदुक्तं भागवते सुदामकृष्णसंवादे—

'नाहमिज्या प्रजातिभ्यां तपसोपशमेन वा।
तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥' इति ( १०।८०।३४ )

---

स तु स्नेहस्त्रिधा प्रौढमध्यमन्द विभागतः।
विदेशस्थे मृते वापि दुर्बले प्रतियोगिनि।
धर्मिणः क्लेशकारी यः स प्रौढः स्नेह उच्यते।
तत्तद्वियोगजं दुःखं तादृशं प्रतियोगिना।
अनुभूयातिवृत्तश्चेत्स्नेहो मध्यः प्रकीर्तितः ॥" इति ( भा० प्र० ४ अधि० )

१ तदुक्तम्—'उत त्वः पश्यन् न ददर्श वाचं उत त्वः शृण्वन् न शृणोत्येनाम् उत त्वस्यैतस्वं विसस्रे जायेव पत्युः उशती सुवासाः। अत्रासख्वायः सख्यानि जानते यथैषां लक्ष्मीः निहिताऽधिवाचि। सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमश्नुते।' इति। ( ऋ० सं ८-२-२४ )

## जयमङ्गलाक्रोडपत्रम्

एतन्महिम्ना गुरुभक्तः विनयसंपन्नः कीदृशं लोकोपकारजनकं कार्यं करोतीति भगवत्पूज्यपादानामाचार्याणां चरित्रेण अनुमातुं शक्यते ।[1] तच्च टिप्पण्यां व्यक्तं ।

ईदृशी ईशप्रसादजनिका विनयसम्पत्तिः ब्रह्मचारिषु आधुनिकशिक्षापद्धतौ विलासशिक्षाप्रचुरयां कुत्र द्रष्टुं प्रभवेत् ? अतः उपयुक्तंफलत्रयलाभाय ब्रह्मचर्यव्रतनियमाः ब्रह्मचर्यावस्थायामवश्यं परिपालनीया इति तेषां नीतौ उपयोगित्वं सिद्धम् ।

## नैष्ठक ब्रह्मचर्यस्य सार्थक्यम्

( ज० पृ० २९८) नैष्ठिकस्येति । ननु नैष्ठिकब्रह्मचर्यस्य विधाने ग्रन्थकर्तुः किं तात्पर्यम् ? इति चेदुच्यते । यस्य वेदाध्ययनं न सम्पूर्णम् एकं वेदमधीत्य अपरोऽपि वेदः विद्याश्च अध्येतव्याः इत्याकाङ्क्षा जागर्ति तेन नैष्ठिकं ब्रह्मचर्यं पालयितव्यम् इति नैष्ठिकब्रह्मचर्यस्य तात्पर्यम् । तत्र उपोद्बलकः अधोलिखितो वैदिक इतिहासो द्रष्टव्यः ।[2]

यद्यपि मूले ब्रह्मचारिणां लिङ्गानि नोक्तानि । तथापि नीतिसारोक्तानि लिङ्गानि अत्रापि उपयोज्यानि तद्यथा—

'समेखलो जटी मुण्डी दण्डी वा गुरुसंश्रयः ।' ( का० नी० ) इति ।

## मेखलादीनां धारणफलम् ।

ननु मेखलाऽजिनदण्डादिधारणे किं फलं ब्रह्मचारिषु भवतीति ? चेत् । त्रिदोष-हानिः वृष्यत्वं बलं चेति फलं ज्ञेयम् ।[3]

---

१. भगवत्पूज्यपादाः कदाचित् भिक्षार्थं कस्याश्चन निर्धनायाः गेहे गताः भिक्षामयाचन्त । सा च अत्यन्तं विषीदमाना भिक्षार्थं किञ्चन वस्तु अप्राप्य दूनेन चेतसा तेभ्यः शुष्कमामलकं ददौ । तामवस्थां दृष्ट्वा पूज्यपादैः ईशमाराध्य तद्देशे सुवर्णामलकवृष्टिः केरलप्रदेशे कनकधारास्तोत्रेण कारिता ।

२ तद्यथा भरद्वाजेन 'विध्याध्ययनस्य पूर्तये पौनःपुन्येन इन्द्रमाराध्य तत्सकाशात् ब्रह्मचर्यं आयुषः वृद्धिश्च वररूपेण प्रार्थिता इति । तदुक्तम् भरद्वाजो ह त्रिभिरायुर्भिः ब्रह्मचर्यमुवास तंह त्रीणि स्थविरं शयानं इन्द्र उपब्रज्योवाच । भरद्वाज । यत्ते चतुर्थमायुर्दद्याम् । किमेनेन कुर्या इति । ब्रह्मचर्यमेवैनेन चरेयमिति होवाच । तं ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार । तेषां हैकैकस्मान् मुष्टिनाददे । स होवाच । भरद्वाजेत्यामन्त्रय । वेदा वा एते । अनन्ता वै वेदा :। (का० ब्राह्मण अ० १-३-१०-११ अनुवाक्) तैत्तिरीयेपि ।

३ तदुक्तं शालिग्रामकृते निघण्टौ - दण्डः—तद्भेदे स्यात् किंशुलुकः किञ्चुलो हस्तिकर्णकः ।

हस्तिकर्णः परं वृष्यो मेधायुर्बलवर्धनः । ( वटादिवर्गे ३२ )

मुञ्जः—भद्रमुञ्जः शरो बाणः तेजनश्चक्षुवेष्टनः ।

मुञ्जो मुञ्जातको बाणःस्थूलदर्भः सुमेखलः ॥—

## जयमङ्गलाक्रोडपत्रम्

### दण्डादिधारणं नियमार्थं

ननु पलाशादिवत् अन्येऽपि पदार्थाः मुञ्जादिसदृशाः त्रिदोषघ्नाः ब्रह्मचारिभिर्धारयितुं शक्यन्ते, अतः ते एव कुतो न धार्याः ? इति चेत् ।

'मति भेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम् ।
सुकृतः परिशुद्ध आगमः कुरुते दीपइवार्थदर्शनम् ।।

इत्युक्तन्यायेन शास्त्रस्य निर्णायकत्वात्, पलाशदण्डादिधारणादिविधेः नियमविधित्वात् तेषामधारणे नियमादृष्टं व्याहन्येत इति तद्रक्षार्थं पलाशमुञ्जादीनि एव ब्रह्मचारिणा धारणीयानि ।

अत्र विनयाधानपुरःसरं ब्रह्मचारिषु शिक्षाक्रमः कथं सञ्चालनीय इति अग्रे प्रकाशयिष्यते ।

### जटित्वमुण्डित्वविकल्पः

ननु नीतिसारकृता ब्रह्मचारिलिङ्गेषु तस्य जटित्वं मुण्डित्वं वा इति विकल्पेनाभिहितम् तस्य किं तात्पर्यमिति चेत् ? अभिधीयते । यः उपकुर्वाणकः, तेन मुण्डिना भाव्यम् केशधारणे दोषबाहुल्यात् । नैष्ठिकेन तु जटिनाऽपि भवितुं शक्यते, तस्य गृहस्थधर्मे प्रवेशाप्रसङ्गात् । न च क्षौरं हि अमङ्गलमित्युच्यते इति वाच्यम् ; गौतमेन तस्य मङ्गलेषु प्राथम्येन निरूपणात् तदुक्तम्—'एष प्रथमोलङ्कारः ।' इति ।

किञ्च केशधारणेन दौर्बल्यं भवति, यतः केशाः मलानि सन्ति, मलस्य च संरक्षणे उष्णता संवर्धते। अतः दुष्टस्य मलस्य निर्हरणमवश्यं कर्तव्यमिति सिद्धम् भवति । तदुक्तम् कामसूत्रे-(१ अ०४ अध्याये-१०७ पृष्ठे)[1]

---

पित्तदाहऽश्रमरजो दोषं चैव विनाशयेत् ।—गुडुच्यादि वर्ग ७६—
मुञ्जद्वयं तु मधुरं तुवरं शिशिरं तथा ।
दाहतृष्णाविसर्पास्रमूत्रबस्त्यक्षिरोगजित् ।।
दोषत्रयहरं वृष्यं मेखलासूपयुज्यते ।
मुञ्जस्तु मधुरः शीतः कर्फापत्तजदोषजित् ।
ग्रहरक्षासु दीक्षासु पावनो भूतनाशनः ।। (गुडूच्यादिवर्ग—७२)
कुशः—कुशो दर्भस्तथाबर्हिः सूच्यग्रो यज्ञभूषणः ।
ततोन्यो दीर्घपत्रः स्यात् क्षुरपत्रस्तथैव च ।
दर्भद्वयं त्रिदोषघ्नं मधुरं तु वरं हिमम् ।।
मूत्रकृच्छ्राश्मरीतृष्णाबस्तिरुक्प्रदरास्रजित् ।
दर्भस्तु मधुरः शीतो गर्भस्थापनकारकः ।

१ चतुर्थकमायुष्यम् । पञ्चमकं दशमकम् वा प्रत्यायुष्यमित्यहीनम् ।
सातत्याच्च संवृतकक्षा स्वेदापनोदः ।।६।।—

**जयमङ्गलाक्रोडपत्रम्**

तस्मात् पुंस्त्वविनाशकरत्वात्, अमाङ्गल्याच्च उपकुर्वाणकेन केशधारणं गृहस्थेन वा कदापि न कर्तव्यमिति सिद्ध्यति। अयमेव न्यायः वानप्रस्थिनां कृतेऽपि बोद्धव्यः। स हि ऊर्ध्वरेतस्कत्वात् व्रतित्वाच्च केशधारणेऽपि न दुष्यति।

न च शास्त्रेषु "वृथा न विकचो भवेत्" इत्यादीनि वचनानि कृते क्षौरे कथं समन्वितानि भवेयुः, इतिवाच्यम्, येषा कुलपरम्परानुसारेण स्वल्पतरकेशधारणं अनुमतमस्ति, तत्परतया उक्तवचनानां व्याख्येयत्वात्। तदुक्तं शिखां इत्यादि(पृ०२८८)

**गुरुभक्त्युपयोगः कलौ विशिष्टः**

ननु आस्तां ब्रह्मचारिणां कृते गुरुभक्तिः। राजसु नेतृषु वा गुरुभक्तेः किम् महत्वम् तज्जन्यकार्यस्य अन्यैरपि क्रियायोगैः प्राप्तुं शक्यत्वात्? इति चेत्सत्यम्।

अन्येरपि क्रियायौगैः आन्वीक्षिकीत्रयीवार्तादण्डनीतयः अभ्यूहितुं शक्यन्ते, परन्तु तत्र विलम्बेन फलप्राप्तिरस्ति। अतः आञ्जस्येन फलप्राप्तये योगसूत्रे पतञ्जलिना "तपःस्वाधायेश्वरप्रणिधानानि क्रियायोगः" इत्युक्तम्। अत्र 'तपः अनशनं स्वाध्यायात् देवताप्रसादः' इत्यादि व्याख्यातं तट्टीकायां नारायणतीर्थ-स्वामिभिः।अस्य क्रियायोगस्य फलं पूर्वोक्तलक्षणकः समाधिः क्लेशतनूकरणञ्चेति द्वे भवतः। एवंरीत्या सत्स्वपि एतेषु क्रियायोगेषु पुनः पतञ्जलिना स्वातन्त्र्येण ईशप्रणिधानमेव क्रियायोगः उक्तः—

**'ईश्वरप्रणिधानाद्वा'** इति। ईशप्रणिधानेन चिन्तनात्मकेन ज्ञानविज्ञानतत्व-युक्तविनयादिगुणप्राप्तिः कथं भविष्यतीति सोपपत्तिकम् प्रागुपादितमस्ति। (पृ०२७६) पुनरत्र विस्तरभयान्नोच्यते। अत्र तु सङ्क्षेपेण एतावदेव अलं यत् अप्रकाशिता अपि अर्थाः ईशचिन्तनमात्रेण नासुलभा इति। यद्यपि ईशः न साधारणतया दृष्टिगोचरः,

---

टी० प्रत्यायुष्यमिति—यद्गुह्ये क्षुरणकर्म तत्पञ्चमेऽहनि। यत्तु लोम्नामुत्पाटनेन तद्दशमे स्यादित्याह—दशमकं वेति। तत्र लोम्नां चिरेणोद्गमनात्। तथा चोक्तम्—

"आयुष्यं तच्चतुर्थेह्नि स्याद्यत्तु क्षुरकर्मणा॥
प्रत्यायुष्यं यदुद्धाराल्लोम्नां तद्दशमेऽहनि॥

भावप्रकाशे च। (१ भागेपूर्वखण्डे पृ० ९३)

ज्वरातुरः शिरः स्नातो नाक्ष्णोरञ्जनमाचरेत्।
पञ्चरात्रान्नखश्मश्रुकेशरोमाणि कर्तयेत्॥
केशश्मश्रुनखादीनां कर्तनम् संप्रसाधनम्।
पौष्टिकं धनमायुष्यं शौचकान्तिकरम् परम्।
केशपाशे प्रकुर्वीत प्रसाधन्यात् तु साधनम्।
केशप्रसाधनं केश्यं रजोजन्तुमलापहम्।

अतएव भागवते—'लावण्ये केशधारण'मिति कलिदोषनिरूपणावसरे प्रोक्तम्।

## जयमङ्गलाक्रोडपत्रम्

अतो न चिन्तनयोग्यः, तथापि तदधिष्ठितं ज्ञानं येन गुरुशरीरेण चिन्तनद्वारा सम्प्राप्यते तत् ईशस्य प्रतीकमेवेति कृत्वा ईशप्रणिधानस्थाने ईशाधिष्ठितज्ञान—प्रभासम्पन्नगुर्वाराधनं प्रतिभाप्राप्तिहेतुगुरुप्रसादलाभाय सदा कर्तव्यमिति सुदामानं प्रति ईशनिर्दिष्टात् भागवतीयात् (पृ० ३०० पृ०) वाक्यात् ज्ञायते । अतः गुरुप्रणिधानं कलियुगे विशेषरूपेण गुरुभक्तिस्वरूपतया ईशभक्त्यपेक्षया आधिक्येन उक्तमस्ति ।
तदाहुः— 'यस्य देवे परा भक्तिः यथा देवे तथा गुरौ ।
तस्यैतेऽकथिताह्यर्थाः प्रकाशन्ते महात्मनाम् ॥ इति ।

अतः अतिसारल्येन सम्भवितुम् शक्यत्वात् सदा शास्त्रप्रतिभाप्राप्तये गुरुभक्ति-रूपा ईशभक्तिः विशेषतया उपयुज्यते । प्रपञ्चितञ्चैतत् उद्दालकधौम्यारुणिशिष्याणां कथायाम् महाभारते प्रसिद्धायाम् । ननु ईदृशी गुरुभक्तिः ब्रह्मचर्ये एव सम्भाव्यते, गृहस्थेन राज्ञा तु कर्तुम् न सा शक्यते ? इति चेन्न । तत्र तत्र राजनीतिसिद्धान्ते विनय एव ब्रह्मचर्यमिति तात्पर्यं ब्रह्मचर्यस्य बोध्यम् । समस्तदेशवासिना गृहस्थेन राज्ञा वा सर्वस्य मित्रेण यथावन्नीरक्षीरविवेककुशलेन न्यायप्रियेण ओजोबलशौर्योत्साहसम्पन्नेन अत्यर्थसत्वेन भवितव्यम् यदि, तर्हि समाधिकुशलेन तर्कप्रभासम्पन्नेनैव भाव्यम् ! तद्धेतुत्वात् ब्रह्मचर्यं विनयात्मकं राज्ञा नेत्रा वा अवश्यम् पालनीयमिति स्थितेः सदा सर्वदा प्रतिभाप्राप्तये गुरुभक्तिः सर्वैः समा-दरणीया । तदिदं विनयावस्थापनं गृहस्थस्यापि राज्ञः ब्रह्मचर्यरूपमेवेति बोध्यम् । सोऽयं विनयः राज्ञा नेत्रा वा यद्युपेक्ष्यते तर्हि प्रजापरागस्य सम्भवात् स्वात्मनः देशस्य विनाशोपि सम्भवेदिति गुरुभक्तेर्महत्वं स्मर्तव्यम् ।

### गुरोः संसेव्यता

ननु कीदृशः गुरुः संसेव्यः ? इति चेत् प्रपञ्च्यते । वरीवस्यारहस्यादौ भाव-नोपनिषत्प्रामाण्येन गुरुत्वं "विवेकवृत्त्यवच्छिन्ना चित्" इति निर्णीतमस्ति । सा यत्र शरीरे प्रकटा भवति, तत् पूर्वोक्तायाः गुरुरूपायाः चितेः शरीरम् इत्यर्थः निर्गलितो भवति । यद्येवंविधः गुरुः न संसेव्यते, तर्हि विवेकवृत्तिः दुर्लभा स्यात् । इत्येत-दभिप्रेत्य कामन्दकेन उक्तमस्ति -

'सुनिपुणमुपसेव्य सद्गुरुं शुचिरनुवृत्तिपरो विभूतये ।
भवति हि विनयोपसंहितो नृपतिपदाय शमाय च क्षमः । इति ।

अत्र सुनिपुणसत्पदाभ्यां वरिवस्यारहस्योक्तः गुरुपदार्थः स्फुटीभवति । तस्य चिन्तनेन मायाप्रयुक्तं यद् आन्ध्यं तन्नश्यति । मानमदौ च विनाशकरौ निर्गलतः । तदेतत् 'विनयोपसंहित' इत्यनेन ध्वनितम् । पण्डितस्य तदेव पाण्डित्यं यत् अच-क्षुष्मतः सेवकस्य साकाङ्क्षस्य आन्ध्यनिरसनम् । तदुक्तम्—

'योऽन्धंकरोत्यक्षिमन्तं यश्च बालम् प्रबोधयेत् ।
तमहं पण्डितं मन्ये इतरे नामधारकाः' ॥ इति

## जयमङ्गलाक्रोडपत्रम्

### शास्त्रस्य गुरुत्वं ईशत्वं निर्दुष्टत्वञ्च

पुनस्त्र एवं विचार्यते। यत् गुरुणाऽपि कुतः अबाधितम् निर्मलम् ज्ञानमनुभूतमिति ? तर्हि इदमेवोत्तरम्। यत् परम्परया सम्यक् करणीयवर्जनीयविधायकात् शास्त्रादिति। तस्मात् अनुस्युतायां गुरुपरम्परायां प्रथमो गुरुः शास्त्रात्मकः। तत्र दृष्टविधायकशास्त्रतः अद्य यावत् यथावत्तात्पर्यमवबुद्ध्य निर्णीतोऽर्थः सुप्रयुक्तः यो वर्तते तत्र न केनापि दोषशोधकेन भ्रान्तिविप्रलिप्साकरणापाटवान्यतमोऽन्यो वा दोषः, दाढर्येन निर्बाधतया समुट्टङ्कितः किमुतादृष्टशास्त्रेषु। इत्यादिमगुरोः शास्त्रस्य यज्ज्ञानम् तत् निर्दुष्टत्वात् ईशसमवेतज्ञानसमानाकारकत्वात् यथार्थत्वात् "सत्यं ज्ञान"मिति वाक्यात् समस्तपुराणादिसम्मतत्वात् मधुसूदनसरस्वतीप्रमृतिभिः निबन्धकर्तृभिः निर्णीतत्वाच्च ईश्वरस्वरूपमिति सिद्धम्। अतः सुनिपुणः गुरुः ईश्वररूपतया संसेव्यः इति निर्णये न कोऽपि दोषः पदमादधाति। अस्य शास्त्रसमवेतज्ञानस्य निर्दुष्टत्वं कथमिति न शङ्क्यम्। यत्र प्रमाणत्रयप्रमितत्वं भवति, तत्र निर्दुष्टत्वं भवत्येव इति व्याप्तेः निर्दुष्टत्वसम्भवात्। यस्य गुरुभक्तिर्नास्ति, तस्मै प्रमाणत्रयप्रमितोऽर्थः न रोचते। केवलं आन्तरीयसंस्कारो यमर्थमुद्दिश्य उद्बुद्ध्यति सएवाऽर्थो रोचते इति तु अन्यदेतत्।

न च तथैवास्तामिति वाच्यम्, तद्बलात् क्वचित् भ्रान्तिस्थलेऽपि प्रवृत्तिदर्शनात्। अर्थस्य बाधितत्वात् श्रममात्र एव पर्यवसानाच्च। अतः शास्त्रविरोधी पन्थाः जन्मान्तरीयसंस्कारेणोद्बुद्धः सर्वदा फलाय भवेत् इति न मन्तव्यम्। शास्त्रं हि अस्मद्धितावहः पन्था इति पूर्णनिश्चयस्य, तज्जन्यसंस्कारवतः त उदाहरणम् भारतीयेतिहासेषु, मर्यादापुरुषोत्तमः श्री रामभद्रः इति दाढर्येन वक्तुम् शक्यते। तथाहि —भोजराजकृते चम्पूरामायणे अयोध्याकाण्डे—

> भीतो भूभरतः किमम्ब भरतः किंवा वनात् पावनात्।
> त्रस्तोऽहं सगरान्ववायककुदस्तातः कुतः शोचति ॥
> दिव्यायाः सरितो निवापकरणाल्लघ्वीं प्रतिज्ञामिमां।
> आवाभ्यामभिपूरयिष्यति न चेत्पुत्रो कथं स्यादयम्।' इत्यादि।

एवंरीत्या निर्दुष्टज्ञानरूपं शास्त्रम् आदिमः गुरुः तत्संपत्तिः यच्छरीरान्तर्वर्तिकोशे वर्तते स कोषः विज्ञानमयः चिन्तनोयत्वेन उपनिषदि विहितः। यत्र श्रद्धा शिरस्थानीया वर्तते ऋतं सत्यंच दक्षिणोत्तरपक्षस्थानीये योगश्च आत्मा तस्य उपेक्षणं येन क्रियते, सः दुर्भगेएवेति अवश्यं वक्तव्यतामापतति।

### विज्ञानमयकोशः

अत्रेदं तत्त्वम् बहु भद्रकं मे विलुप्येतेति मत्वा निर्दुष्टज्ञानात्मकस्य शास्त्रस्य विज्ञानमयकोषस्य अन्तस्तलम् प्रवेष्टुं यः न प्रयतते। केवलं आलस्येन तद्विषयकद्वेषेण वा करतलगतं मणिं अज्ञानादिव विनिक्षिपति। स विज्ञानस्य शास्त्रस्य

## जयमङ्गलाक्रोडपत्रम्

द्वेष्टा अभिमानात्मके तमोगुणप्रधाने मनोमयकोषे अवस्थाय अन्धे तमसि आत्मनं वृथा निपातयति । पूर्वजन्मान्तरीयमिथ्याज्ञानवासनावशात् अन्नमयात्मकं दृश्यं शरीरं आत्मत्वेन जनो मानयति। सत्यप्येवं स एव यदा महति दुर्धरदुस्सह व्रणादिस्फोटसङ्कटे प्राणबाधायां उपस्थितायां तत्संरक्षणसंस्कारः जागर्ति । तदा अयं जीवः शरीरस्थितं आत्मत्वाभिमानं विगलय्य प्राणं आत्मत्वेनाभिमन्य तद्रक्षार्थं तदनुकूलतया अङ्गच्छेदं कर्तुमपि चेष्टते । अनेनैव न्यायेन यदा किल मानहानि-प्राणरक्षाप्रसङ्गौ उपस्थितौ भवतः, तदा सः प्राणसंरक्षणापेक्षयापि मानमेव आत्मत्वेनानुमनुते । प्राणांश्च तिरस्करोति । एतावत्पर्यन्तम् प्रत्यक्षेण अन्नादिकोशभेदो जीवेन सहजत अनुभूयते । उक्तकोशेष्ववस्थाने तमःसत्वे विवेचयितुं नशक्येते यतः विज्ञानमयकोषावस्थानाभावेन जाड्यमभिवर्धते। स्वातन्त्र्यं च दूरम् अपगतम् भवति, किं बहुना पारतन्त्र्यं दुरपनेयमापद्यते, इत्येवंदोषं मनोमयकोषे स्थितः जीवः यदि भायात्, तर्हि अयं मानमपि पृष्ठतः कृत्वा विज्ञानार्थं गुरुमाश्रयति। तदिदं मनोमयकोषस्थितस्य जीवस्य ततः उपर्यवस्थानम् दुर्घटं, सम्मोहे एव आनन्दस्य भानात्। मनोमयकोशे जीवस्य अवस्थानं विज्ञानमये च अनवस्थितिः इत्यस्य अयमेवार्थः यत् तथाविधस्य जीवस्य रसमात्रमयं जीवनमिति । अत्र च अयं महान् दोषः यत् विवेककौशलाभावेन यः अभिमानो वर्धते स तामसो भवति । तदानीं पूर्वदर्शितरीत्या ( पृ० ३०४) शास्त्रं हि अस्मद्धितावहः पन्थाः इति पूर्णनिश्चयस्य तज्जन्यसंस्कारविलासस्य च अप्रसक्तिर्भवति गुरुभक्तेश्च अभावो भवति । तर्कस्य च अननुगमोऽपि । इमे महान्तो दोषाः आदिमस्य शास्त्रस्य तत्प्रतीकस्य गुरोर्वा असंसेवनेन सम्भवन्ति इति उक्तमेव । तेषां दोषाणां निरासाय भारतीयराजनीति-शास्त्रेण गुरुः संसेव्यः इति सिद्धान्तितम्। तद्द्वारा शिष्येणोपासकेन तर्कं उपलब्धव्यो भवति । तस्य परिचयस्तु टिप्पणीनिर्दिष्टलक्षणया[1] विकोशया दृष्टया कर्तुं शक्यतै । तस्मात् 'मुनिपुणमुपसेव्येति (३०४ पृ०) पूर्वनिर्दिष्टवाक्येन वरिवस्यारहस्य-प्रामाण्येन च विज्ञानमयकोषे स्थितः विवेकवृत्यवच्छिन्नचिदभिन्नः गुरुः संसेव्य इति स्थितम् ।

### गुरुदर्शनं गुरुसौलभ्यञ्च

ननु विवेकवृत्यवच्छिन्नचिद्रूपगुरुतत्वस्य प्रतीकं शरीरमेव यदा दुर्लभं भवति, तदा सः कथं संसेवनीयतामर्हति ? इति चेत्सत्यम्। अयमंशो द्विविधरीत्या यदि चिन्त्येत तर्हि सम्यक्तया हृदयङ्गमः स्यात्। तथाहि दौर्लभ्यस्य— द्विविधं स्वरूपं दृश्यते । तद्यथा—उपरिनिर्दिष्टस्य तथाविधस्य गुरोः दौर्लभ्याद् गुरुभक्तेः ह्रासः,

---

१—विकोशितोभयपुटा प्रोत्फुल्ला चानिमेषिणी ।
अनवस्थिततारा च विकोशा दृष्टिरिष्यते ।। (भा०प्र०५अ०)

## जयमङ्गलाक्रोडपत्रम्

अपरश्च उपासकस्य अनधिकारित्वात् गुरुभक्तिसङ्क्रमणायोग्यता चेति। अतः गुरोः सौलभ्यं गुरुभक्तिसङ्क्रमणयोग्यत्वम् च कथं भवेदिति विभज्य प्रस्तुत विषयः विचारणीयतां गतोऽस्ति। तत्र आदिमं विषयमधिकृत्य उच्यते। गुरोः अभावो नास्ति। अपि तु अपेक्षितगुणवत्त्वेन तद्दर्शनमावश्यकम्। परम् दोषैराच्छन्नत्वात् भस्मान्तःस्थितः अग्निरिव गुरुरपि अदृश्यतां गतः। यदा हि शास्त्रनिष्णाताः अधीतविद्याःअपि परस्परम् शङ्कन्ते, शास्त्रेषु च अविश्वासमुत्पाद्य तत्र सन्देहमुपस्थापयन्ति, ज्ञानप्रभाजनितामानन्दप्रभामनुद्भाव्य जनतायाः पुरतः आत्मनः मुखमालिन्यम् प्रकाशयन्ति, विपरीतमुपदिशन्ति पुत्रान्, शास्त्रविपरीतं स्वतः अनुतिष्ठन्ति च, तदानीं तेषु विद्वत्सु शास्त्रप्रसूतप्रमाणत्रयप्रमितार्थज्ञानरूपगुण एतैर्दोषैराच्छाद्यते, इति गुणविशिष्टगुरुदर्शनं दुर्लभं भवति। अतः विद्वद्भिः आत्मनि उपयुक्तः विद्यागुणः तथा प्रकाशनीयः, विद्यानां तदनुरूपं प्रकाशनं सम्माननं च तथा कर्तव्यं, येन समाजस्य चेतः सहजत एव समाकृष्टं भवेत्। इदं तु निर्विवादं यत् अधुनापि आदिमं गुरुस्थानीयं शास्त्रतत्वमस्त्येव। केवलं तत्र बहिः स्थितैः व्यवहारविद्भिः स्वमतसंस्थापनाय एषु शास्त्रेषु नानाविधाः शङ्काः उत्थाप्यन्ते। समाधानस्य कर्तुमशक्यत्वे शास्त्रवित्स्वपि ताः शङ्काः सूक्ष्मरूपेण जाग्रति। अतः विद्वद्भिः शङ्कानिरासाय स्वस्वविद्यानां तार्किकनियमपद्धत्या चिन्तनं यावन्न क्रियते। तावदेव गुरुदर्शनं दुर्लभं भवति। किञ्च तथाविधा अपि बहवो विद्वांसो वर्तन्ते, येषु आन्वीक्षिकीसाचिवानां विद्यानां तेजः विद्वन्निष्ठं सदपि अभिभूतमिव भवति। अतः वास्तविकविवेकवृत्त्यवच्छिन्नगुरुतत्वप्रकाशनार्थं पण्डितसङ्गतिः परीक्षास्थापना च उपायत्वेन निर्दिष्टे वर्तेते। अन्यथा वास्तविकगुरुतत्वदर्शनाभावे कीदृशी दुरवस्था भवतीति धर्मविजयनाटके द्रष्टव्यम्। सांप्रतं पण्डितसङ्गतिपरीक्षयोः विलोपात् गुरुदर्शनं दुर्लभतां गतमस्ति। यच्च शास्त्ररूपं वास्तविकं वर्तते तदपि उपर्युक्तकारणादेव कार्यकारि न भवति इति प्रमाणत्रयसमन्वयेन विद्यातत्वं सम्यगालोच्य स्थिरतया राजनीतिं च समीक्ष्य याः विद्याः वर्तन्ते, तासां प्रकाशनं गुरुभिः कर्तव्यमिति स्थितम्।

यद्यपि शास्त्र रूपस्य एवंभूतस्य गुरुतत्वस्य प्रकाशने अनेकविधाः सामाजिकनैतिक-स्थितयः प्रतिबन्धिकाः सन्ति, तथापि प्रमाणत्रयसमन्वितं सर्वमपि शास्त्रीयं विधानं सर्वेषां पुरतः आत्मनः हितसाधनत्व स्फुटीकरणानुसारितया यदि प्रकाश्येत तर्हि तस्य शास्त्रस्य गुरुरूपतया प्रकाशने न कस्यापि विरोधः तेनैव च धर्मोऽपि सर्वेषां प्रीतिभाग् भवति। अत एव यदा नीतिमनुसन्दधानः विनयभावमुपगतः धर्मः अव्यभिचरितमर्थं यथा-यथा प्रापयितुं समर्थो भवति, तथा तथा सः लोके आनन्दमुखः

## जयमङ्गलाक्रोडपत्रम्

सन् शोभनीयो भवति ।[1]

अत्र इदमपि अनुसन्धेयम् रागादि पक्षपातपुरः सरं शास्त्ररूपगुरुतत्वप्रकाशनं रोधयितुं केचन बहुमतप्राप्तिरूपं शस्त्रमायत्तीकुर्वन्ति, आस्वादयन्ति च आत्मनः मनोरथमपि । परन्तु यत्प्रमाणत्रयप्रमितम् शास्त्ररूपमाबाधिततत्वं, तत् तथैव स्थास्यति । तद्विरुद्धां स्थितिमभिमन्वानाः अर्थतृष्णयाभिवृद्धया कोपकन्यामसूयां दावाग्निमिव प्रज्वाल्य आत्मनोऽपि अपरेण सह विनाशं निमन्त्रयन्ति । तदेतत् धर्मविजयनाटके स्फुटीकृतम् । एवं रीत्या शास्त्ररूपस्य गुरुतत्त्वस्य सर्वथा अभावासत्वेपि तस्य दौर्लभ्यपरिहारः कथं सम्भविष्यतीति चिन्तितम् ।

### मनसामाकृष्टिः

अथ उक्तरीत्या प्रकाशितेन गुरुतत्वेन लोकस्य मनसः समाकर्षणं कथं भवतीति साहित्यप्रक्रिययोच्यते । यस्य याः आकाङ्क्षाः भवन्ति, तासां पूर्तिः येन कर्तुं शक्यते; तत्र तस्य आकर्षणं स्वभावतः सम्भवति । इत्येवंविधानां भेदः समाजे कामुकादिभेदेन अष्टविधः दृश्यते[2] भावप्रकाशने ।

कामुकादि भेदेन तत्तद्वर्गस्यकीदृश्य आकांक्षाः सम्भवन्ति, इति प्रश्नस्या समाधानं नाट्यस्वरूपनिरूपकेण शास्त्ररूपगुरुतत्वेन तत्रैव समाहितम् अस्ति तुष्यन्तीत्यादिना ।[3]

अर्थात् तरुणाः कामे, विदग्धाः समयाश्रिते, श्रेष्ठिनः अर्थपराः अर्थे, विरागिणः मोक्षे, शूराः नियुद्धादौ, वृद्धाः धर्माख्यानपुराणेषु, रसिकाः रसभावयोः, बालादयो नेपथ्यहास्ययोः रमन्ते । इति स्थितम् । तरुणादीनां तत्र तत्र पूर्वोक्तभेदेन कुतः प्रीतिः इति तु न शङ्क्यम् । तेषां शृङ्गाराद्यन्यतमरसपराधीनत्वात् । रसाश्च शृङ्गारहास्यवीररौद्रबीभत्साद्भुतकरुणभयानकशान्तभेदैर्विभिन्ना भवन्ति । तेषु वीरशृङ्गारशान्तरौद्ररसान् विहाय अवशिष्टाऽ अन्ये रसाः येषु भवन्ति, ते शास्त्ररूपगुरुत्वेन हितसाधनत्वं प्रकाश्य आवर्जनीया भवन्ति ।

---

१ तदुक्तम्—

मुहुर्मुहुः काममुखं निरीक्षन् भजन्नथार्थस्य विधेयभावम् ।
मोक्षेण पृष्ठेऽनुगतः कथञ्चित् धृतावलम्बः परमूर्ध्वगत्या ॥
इति (ध० वि० नाटके०)

२ कामुकैश्च विदग्धैश्च श्रेष्ठिभिश्च विरागिभिः ।
शूरैर्ज्ञानवयोवृद्धैः रसभावविवेचकैः ।
बालमूर्खाबलाभिश्च सेव्यं तन्नाट्यमुच्यते (इति भा० प्र०)

३ 'तुष्यन्ति तरुणाः कामे विदग्धाः समयाश्रिते ।
शूरा बीभत्सरौद्रेषु नियुद्धेष्वाहवेषु च ॥
अर्थेष्वर्थपराश्चैव मोक्षेत्वथ विरागिणः ॥
धर्माख्यानपुराणेषु वृद्धास्तुष्यन्ति नित्यशः ।
सत्वभावेषु सर्वेषु बुधास्तुष्यन्ति सर्वदा ॥
बाला मूर्खाःस्त्रियश्चैव हास्यनेपथ्ययोः सदा । (भा०प्र० इति )

## जयमङ्गलाक्रोडपत्रम्

तन्नान्तरीयकतया अद्भुतरसस्य आविर्भावः परामर्शादिरिव व्यापारस्थाने बोध्यः, हास्यबीभत्साद्भुतकरुणभयानकरसपराधीनः समाजः शृङ्गारवीरशान्तरौद्ररसेषु अन्यतमेन संसक्तजनापेक्षया अधिकसङ्ख्यान्तिका एव भवति, नेतृसङ्ख्यापेक्षया नेयवर्गस्य बहुत्वस्वाभाव्यात्। अतस्तेष्वेव भक्तिः सङ्क्रामणीया वर्तते। तदर्थं च बीभत्सभयानकादिरसेषु तत्र तत्र कश्चन ईदृशः व्यभिचारिभावो वर्तते, यस्यालम्बने सति भक्तिः शास्त्रेण गुरुणा प्रापयितुं शक्यते। यथा करुणे तर्कः, भयानके मदः बीभत्से मतिः। तस्मात् शास्त्रेण स्वविषये भक्तिसम्वर्धनार्थं करुणस्य पुरतः तर्कः, भयानकस्य मदः, बीभत्सस्य च मतिरुत्पादनीया। तथा सति तत्तन्नेयवर्गेषु शास्त्रस्य गुरुतत्वस्य विभिन्नविभिन्न व्यभिचारिभावानां समुद्बोधाय विद्वद्भिः विभिन्नं नाट्यं कर्तव्यं स्यात्। तत्र च महान्प्रयासो भवेदिति विचार्य सर्वसाधारणस्य पुरतः अद्भुतः यथा प्रकाशितो भवेत् तथाविधं नाट्यं शास्त्ररूपगुरुतत्वेन समुल्लासनीयम्। एवं सति अद्भुतरसान्तर्गतस्य तर्कस्य मदस्य मतेः च साहाय्येन तेषु तेषु करुणभयबीभत्सरसेषु अभिरुचिः शास्त्रम् प्रति उपर्युक्तरीत्या समुत्पादयितुं शक्या स्यात्। तस्याञ्च जातायां तेषाँ मनसः ध्यानात्मकमाकर्षणं सम्भवेत्। अत्रायं निष्कर्षः। यदि गुरुभक्तिः सञ्चारणीया, तर्हि विवेकवृत्त्यवच्छिन्नचित्प्रतीकेन शास्त्रशरीरेण गुरुणा स्वस्मिन् अद्भुतरसस्य आविर्भावो यथा भवेत् तथा यतनीयम्। पूर्वोक्तरीत्या गुरुतत्वस्य सौलभ्यार्थं यः सत्वगुणसम्पन्नः उत्साही शास्त्रगुरुः भवेत् सः स्वचरित्रेण समाजस्य हृदये विस्मयमुत्पाद्य तेषां मनः आकृष्य स्वप्रतिपादिते कर्मणि समाजं प्रेरयेत् आत्मनः चरित्रमनुकारयेच्च। तदेतत् अद्भुतरसस्य विभावानुभावसामग्रीप्रदर्शनपरे भावप्रकाशने स्फुटीकृतमस्ति।[1]

---

१ तद्यथा भा० प्रकाशने ३ अधिकारे—

'कर्मणोऽतिशयान्नृणामीप्सितार्थोपसङ्गमात्।
मनोरथफलप्राप्तेर्दिव्यभावावलोकनैः॥
विमानोद्यानभवनसभारामावलोकनैः।
विरुद्धानां पदार्थानामविरुद्धसमागमैः॥
असम्भाव्यस्य चार्थस्य सम्भवोत्पत्तिदर्शनैः।
अदेशकालसम्पत्तेरभीष्टादेरचिन्तितम्॥
इत्यादिभिर्विभावैस्तैरद्भुताख्यो रसो भवेत्।
ध्यानं नयनविस्तारः प्रसादो वदने दृशि।
आनन्दाश्रु सरोमाञ्चमनिमेषावलोकनम्॥
अनिश्चलत्वं मनसो यस्मात् तन्मानसोऽद्भुतः।—

## जयमङ्गलाक्रोडपत्रम्

अतो वीरेण अद्भुतरसप्रकाशनवता शास्त्रगुरुणा सम्भाव्यं इति उक्तम्। तस्य सङ्क्षेपेण न्यायवैशेषिकमताभ्यां युक्तयुञ्जानभेदः स्फुटीकृतः। तत्र वीरः युक्तयोगी अद्भुतो युञ्जानो भवति। यद्यपि भाष्यादौ युञ्जानस्य नाम नाऽस्ति तथापि तत्र युक्तः वियुक्तः इतिसंज्ञया योगी व्यवच्छिद्यते।

यद्यपि च मीमांसकमतेन योगिनामस्तित्वं नास्ति तथापि वेदे युञ्जानस्य निर्देशात्[1] सर्वथा तत्र अप्रामाणिकत्वं नाशङ्कनीयम्।

किञ्च यथा "वेदान्ते वज्रहस्तः पुरन्दरः" इति वचनात् देवतानामस्तित्वं तद् विग्रहश्च साधितः देवताधिकरणे, तथा प्रकृतेऽपि युञ्जानस्य अस्तित्वविषये बोध्यम्। अयं यः युक्तयुञ्जानयोः अन्तर्भावः वीराद्भुतरसयोः कृतः तत्र कारणं युक्तस्य चिन्ताया अभावत्वं अपरस्य चिन्ता च। तदुक्तम्—

"युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः"। इति। (न्या० मु) अद्भुतवीर रसयोः वीरे सत्वस्य अत्युत्कर्षेण अनूचानत्वात् "यत्किञ्चन अनूचानः अभ्यूहति आर्षं तद्भवती"ति वचनात् सर्वदा भानमस्ति, तत्र नाऽस्ति चिन्ता। 'अतः वीरस्य सर्वज्ञता। अद्तरसस्य तु चिन्तायाः सहकारित्वात् वीररसस्यापेक्षया किञ्चित् वैलक्षण्यं बोध्यम्। पुनः जिज्ञासासुस्मूर्षाभेदेन अद्भुतरसस्य वैचित्र्यादि आकरे निरूपित-

चेलाङ्गुलीनां भ्रमणमुत्थायोत्थाय वल्गनम्।
दानप्रबन्धो नटनमाश्लेषश्च परस्परम्।
परस्परस्य भुजयोः परस्परतलाहतिः॥
एवमादिविकारो यः स भवेदाङ्गिकोऽभ्दुतः।
हाहाकारः साधुवादः कपोलास्फलनध्वनिः॥
उच्चैर्हासो दर्पघोषौ गीतमुच्चावचं वचः।
एवमादिर्विकारो यः स भवेद् वाचिकोऽभ्दुतः॥ इति।

१ तदक्तुं काण्वसंहितायां द्वादशाध्याये—

युञ्जानः प्रथमं मनस्तत्वाय सविता धियः।
अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत।
युक्तेन मनसा वयं देवा न प्रतिरन्तु जीवसे

सत्याषाढश्रौतसूत्रे– जुहूं स्रुवं च संमृज्य चतुर्गृहीतमाज्यमष्टगृहीतं वा गृहीत्वा युञ्जानः प्रथमं मन इति। युञ्जान इति। सविता प्रेरकः परमेश्वरः। प्रथममग्निचयनविषये मनो युञ्जानः समादधानो धिया इष्ट्यादिविषयाणि ज्ञानानि तत्वायत्तानि वा विस्तार्याग्निं ज्योतिर्निचाय्य इत्यादि।

देवान् क्रीडापरत्वेन चपलानिन्द्रियविशेषान् मनसा युक्तया च विषयेभ्यो नियम्य इति।

## जयमङ्गलाक्रोडपत्रम्

मस्ति। तत् अप्रस्तुतत्वान्न विमृश्यते। एतावता ग्रन्थेन इदं तु निर्णीतमेव यावत्पर्यन्तं शास्त्ररूपः गुरुः वीराद्भुतरसौ न प्रकाशयति तावत्पर्यन्तं नेयस्थानीयस्य बहुजनसमाजस्य भयानकादिबीभत्सान्तप्रकृतेः मनः आत्मानं प्रति आकृष्टं न भवति अतो नायं विषय उपेक्ष्यः इति।

ननु भयानकबीभत्सादिरसप्रधानता नेयहृदयेषु कथं भवतीति चेत्। जन्मत एव विना कस्यचित् प्रेरणया केचित् सुखं वाञ्छन्ति, केचित् उत्सहन्ते, केचित् जुगुप्सन्ते, केचित् क्रुद्ध्यन्ति इत्यादि दर्शनात् तत्तत्प्रकृतिप्राधान्यस्य सर्वेषां जन्मतः दर्शनात्, भयानकादिरसप्रधानतयाः जन्मसिद्धत्वम्।

केचित् तु अद्भुतरसं द्वारीकृत्य लोके प्रयतमानाः न शास्त्रमपेक्षन्ते। तन्न मनोरमम्। शास्त्रेण हि यदुचितं वस्तु अबाधितं तदेव निरूप्यते। अतः शास्त्रनिर्दिष्टप्रयोगमनुपेक्ष्य यदि अद्भुतरसः सञ्चार्यते गुरुभिः, तर्हि तत्र तन्निर्माणसामग्र्यां आन्तं कुत्रापि अनौचित्यं स्वप्नेऽपि न सम्भवदुक्तिकम्। शास्त्रस्य उल्लङ्घने तु अद्भुतरससामग्र्यां स्वकीयबुद्धिदौर्बल्येन कार्यसाधननिर्णयाभासस्यापि प्रसक्तत्वात् अनौचित्यसम्भवात् रसहानिः स्यात्। अतः शास्त्रप्रतिपादकैः गुरुभिः लोकेषु अद्भुतसञ्चारणाय निश्चितरसफलसाधनताबोधकं शास्त्रमालम्बनीयम्।' इत्येकं अद्भुतरससंचारणं शास्त्रश्रयणस्य फलम। द्वितीयं च फलं शास्त्रश्रयणस्य आस्तिकमतरीत्या इदमपि वक्तुं शक्यते यत् शास्त्रपारतन्त्र्येण पुण्यमधिकमस्ति। अतः पुण्यौचित्ययोर्लाभाय शास्त्रसहकारिता सङ्ग्राह्या।

### शास्त्रचिन्तनम्

ननु अनन्तस्य शास्त्रस्य चिन्तनं सर्वैः दुरूहम्[१], एवं स्थिते गुरुभिः सर्वशास्त्रम् समालोच्य अद्भुतरससञ्चारणं कथं कर्तुं शक्येत इति? चेदुच्यते। अद्भुतरसनिर्माणं हि वीरकर्म इति प्रागुक्तमस्ति तत्रैव सत्यशौर्यत्यागाविस्मयाविसंवादित्वासंमोहदीनामद्भुतरसविभावानां साधितत्वात्। वीररसस्य च कीदृशं स्वरूपं सुन्दरमस्तीति "यत्किञ्चनानूचानः अभ्यूहती"तिप्राङ्निरूपितमस्ति (२१० पृ०)। अतः वीररससम्पन्नः यत् किञ्चिदभ्यूह्य प्रयोगविधिं निर्णयेत्। सः प्रयोगः शास्त्रसम्मत एव भवति। न हि तत्र अनौचित्यस्य सम्भवः। अतएव स्वकीयस्य अनूचानत्वं

---

१ ब्रह्मसिद्धान्तः —

> छन्दः शास्त्रं तस्य पादौ कल्पः पाणी मुखन्तथा।
> शब्दशास्त्रं श्रोत्रयुग्मं निरुक्तं घ्राणमेव च॥
> शिक्षा शास्त्रं ज्यौतिषं तु नयनं पृष्ठमेव च
> एतैरङ्गैरसावङ्गी राजते वेदविग्रहः।
> प्रधानमङ्गमेवेदमङ्गेष्वेषु षट्सु च॥

## जयमङ्गलाक्रोडपत्रम्

प्रदर्शितम् उदयनाचार्यैः ।[१]

गुरुभक्तैः शास्त्रचिन्तकैः सत्वमाश्रित्य यदि स्थीयते तर्हि उपर्युक्तं सर्वमपि वीररसस्य अद्भुतरसनिर्मापकं कर्म लोके चरित्रमिति व्यपदिश्यते । तदेव त्यागित्वं सत्यवत्वं शूरत्वमिति । तस्य किमलभ्यम् ? ये शूरा इत्यादिनोक्तत्वात् ।[२]

एतच्चारित्र्यवान् वीरः लोकस्यैव विस्मयसम्पादक इति न मन्तव्यम् । भगवानपि तं दृष्टवा विस्मितः सन् आत्मत्वेन मनुते । अतोऽयं चतुर्षु भक्तेषु चतुर्थः भक्तः इत्युक्तं आर्त इत्यादिना[३] ।

युक्तञ्चैतत्, उत्कृष्टविद्यावति उपर्युक्तलक्षणके धर्मविजयनाटकोक्तदिशा परीक्षिते मान्यत्वस्य मनुना निरूपणात्[४] ।

यद्यप्यत्र सामान्यतया विद्यायाः वित्ताद्यपेक्षया मान्यत्वमुक्तं, तथापि विद्यावत्वमाभासीकृत्य ये कूटपौराणिकाः कूटज्योतिषिणः कूटधर्मशास्त्रिणः कूटकर्मकाण्डिनः लोकस्थितिं धर्मञ्च रोधयन्ति तथाविधानां वञ्चकत्वात् मान्यत्वं तेषु न स्वीकरणीयम्, लोकापराधहेतुत्वात् । तदुक्तं रामायणे द्रष्टव्यम्[५] । तथा भारविणाऽपि[६] ।

अतः विद्यावत्सु गुणवत्सु सत्स्वेव वित्तापेक्षया मान्यत्वं मन्वभिप्रेतं बोध्यम् । विद्यासु मान्यत्वस्य मनूक्तत्वेऽपि व्यवहारे तथात्वं न दृश्यते । बहुलैः मूर्खैः विद्यावतां अपमाननात् । तथापि यदा केचित् विद्वांसः कञ्चन विद्वांसं सम्मन्यन्ते, तदा मूर्खैरपि सम्माननीयत्वेन सः दृश्यते । तच्च—भागवते १ स्क० शुकागमनप्रस्तावे

---

१ वयमिह पदविद्यां तर्कमान्वीक्षिकीं वा ।
यदि पथि विपथे वा वर्तयामः स पन्थाः ।
उदयति दिशि यस्यां भानुमान् सैव पूर्वा ।
नहि तरणिरुदीते दिक्पराधीनवृत्तिः ।

यथा वा—सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः । इति शा० ना०

२ ये शूरा ये च विद्वांसः ये च सेवाविपश्चितः ।
तेषामेव विकासिन्यः भोग्या नृपतिसम्पदः । इति ।

३ आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ।
तेषां ज्ञानी नित्ययुक्तः स मे युक्ततमो मतः ।

४ वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् । (म० स्मृ० सर्ग २)

५ 'लखि सुवेष जगवञ्चक जेऊ, कालनेमि जिमि रावण राऊ' ।

६ निरत्ययं साम न दानवर्जितं न भूरिदानं विरहय्य सत्क्रियाम् ।
प्रवर्तते तस्य विशेषशालिनी गुणानुरोधेन विना न सत्क्रिया ॥

## जयमङ्गलाक्रोडपत्रम्

द्रष्टव्यम्[1]। अतएव वेदस्य धर्मस्य च प्रामाण्यं महाजनपरिग्रहेण साधितं उपपन्नं भवति।

योहि महाजनपरिगृहीतो भवति, सः इतरेषामपि मान्यो भवति इति न्यायाभाष्यादिषु निरूपणादपीदमेव सिद्धं भवति।[2]

( न्या० मञ्जरी) के महाजनाः इत्यपि तत्रैव साधितम् ज्ञेयम्।[3]

एवं च विवेकवृत्त्यवच्छिन्नगुरुतत्त्वस्य शास्त्ररूपस्य क्वचित् तत्प्रतीकस्य शरीरस्य वर्तमानसमयेऽपि असौलभ्यमिति नास्ति स्थितिः। अद्भुतरसव्यापारेण गुरुभिः वीररससम्पन्नैः लोकेषु गुरुभक्तिसङ्क्रामणं कर्तव्यम् इति सोपपत्तिकं स्थितम्।

### विद्वदसौलभ्यसौलभ्ये

अथ ईदृशस्य गुरुतत्वस्य परम्परायां तदसौलभ्यं कुतोऽभूत् इत्ययं प्रश्नः विचार्यते। अस्य असौलभ्यस्य कारणं द्विविधमस्ति। एकं वृत्तिव्यवस्थाविलोपः द्वितीयं विदुषां विद्यावन्तं प्रति असम्मानश्च तथाहि—पूर्वं हि राजभिः विद्यावत्सु वृत्यर्थं वंशपरम्परायां वर्षाशनव्यवस्था सञ्चारिता इति मानसरामायणे स्पष्टं निरूपितमस्ति। तद्यथा (अयो० काण्ड ८० दोहा)

कहि प्रियवचन सकल समुझाए।
विप्रवृन्द रघुवीर बोलाए।
गुरु सन कहि बरषासन दीन्हे।
आदरदान विनय बस कीन्हे॥

---

१ प्रत्युत्थितास्ते मुनयः स्वासनेभ्यस्तल्लक्षणज्ञा अपि गूढवर्चसम् ॥२८॥
ततो निवृत्ता ह्यबुधाः स्त्रियोऽर्भकाः महासने सोपविवेश पूजितः ॥२२॥

२ (२अ० १ आ० ६८ सू० ८ प्र० शब्द विशेषपरीक्षा)
"एककर्तृकत्वेनेति। मन्त्रायुर्वेदवाक्यानि सर्वज्ञकर्तृकाणि
महाजनपरिग्रहे सति अलौकिकार्थप्रतिपादकत्वात्।

३ ( न्या० मं० अ० ४ पृ० २६५ आगमानां प्रामाण्यव्यवस्था।)
"महाजनप्रसिद्ध्यनुग्रहे हि सति सुवचमाप्तोक्तत्वं भवति नान्यथा। महाजनश्च वेदानां वेदार्थानुगामिनां च पुराणधर्मशास्त्राणां वेदाविरोधिनां च केषांचिदागमानां प्रमाण्यमनुमन्यते, न वेदविरुद्धानां बौद्धाद्यागमानाम् इति। 'चातुर्वर्ण्यं चातुराश्रम्यं च यदेतदार्षदेशप्रसिद्धं स महाजन उच्यते।

"महाजनप्रसिद्ध्यैव वेदप्रामाण्यनिश्चयात्।
किमर्थः कण्ठशोषोऽयमियानार्येण संश्रितः।

वेदप्रामाण्यसिद्ध्यर्थं हि इदं शास्त्रमारब्धमिति गीयते वेदप्रामाण्यस्य च महाजनसिद्ध्यैव सिद्धत्वात् किं शास्त्रेण। इति।

## जयमङ्गलाक्रोडपत्रम्

तथा अर्थशास्त्रेपि—"ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यः ब्रह्मदेयान्यदण्डकराण्याभिरूपदायादकादीनि प्रयच्छेदि"ति। अनेन हि कौटिल्यवाक्येन इदमपि ज्ञायते यावत्पर्यन्तं तद्वंशे पूर्वपरम्पराप्राप्ता विद्या अधितिष्ठति, तावत्पर्यन्तं तत्र वर्षाशनवृत्तिरपि नियता। यदा हि विद्यावत्वं विलुप्येत् तदा वृत्तिरपि विलुप्येत। यत्र च तद्विद्यावत्वं दृश्यते, तेषु इतरवंशाधिष्ठिततद्विद्यानिमित्तकवृत्तिसमर्पणं कर्तव्यमिति। यत्र वंशपरम्परायां वर्षाशनवृत्तिः नियता आसीत् स वंशो धनसम्बन्धेन वृत्तिच्छेदात्मकभयरहितेन विद्याभ्युदयं प्रति प्रमादी अभूत्। यत्र च विद्यावत्वं समुदितम् आसीत्, तत्र वंशपरम्परायां वर्षाशनव्यवस्थाया अव्यवस्थितत्वमभूत्। अतोऽपि हेतोः वृत्तिविलोपेन विद्याह्रासः समभूत्। यदि विद्यावृद्धिः वंशपरम्परायां काम्यते, तर्हि उपर्युक्तरीत्या वृत्तिच्छेदरूपदण्डभययुक्ता वर्षाशनव्यवस्था अपेक्षिता कर्तव्यत्वेन। तेन विद्यावत्वस्य सौलभ्यं भवति। सोऽयं प्राचीनेतिहासः श्री० ५ काशिराजैः माघशुक्लपञ्चम्यां ( २०२४ विक्रम वत्सरे) सामवेदान्तर्गतैकशाखायाः पुस्तकमनेपक्ष्य कण्ठतः पारायणकर्त्रे श्रीकृष्णमूर्तिश्रौतिमहोदयाय त्रिपुरुषसंमितां वृत्ति समर्प्य प्रवर्तितः।

किञ्च-वंशे विद्यावत्ववृद्ध्यर्थं राजसम्माननमुपायत्वेन निर्दिश्यते। परमेतेन सह इदमपि स्मर्तव्यमेव, यत् 'ब्राह्मणानां ज्ञानतो ज्यैष्ठ्यं'—इति वचनात् विद्वद्भिः असूयामात्सर्यादीन् दोषानपहाय विद्वांसः सन्माननीयाः, तद्द्वारैव राजद्वारा सन्माननसम्भावनाकल्पनस्य उचितावहत्वात्। "मूर्खव्यसनिनायकः" इति भारतीयराजनीतिशास्त्रोक्तरीत्या राजद्वारा अविदुषामपि राष्ट्रस्य स्वलक्षणलक्ष्यत्वस्य यायाथार्थ्यार्थं सम्माननीयत्वस्य सम्भावितत्वेन विद्वन्मान्यत्वमपेक्ष्यते। तदेवोक्तं समर्थ रामदासस्वामिभिः। 'ब्राह्मण बुद्धिपासूनि चेविले गुरुत्व साण्डुनि गेले।' इत्यादि। अत्रेदं स्मर्तव्यम्-ब्राह्मणेन हि राजसम्माननं भविष्यति' इतिबुद्ध्या ब्राह्मणत्वं न संरक्षणीयं, किन्तु स्वकर्तव्यत्वबुद्ध्या। तदुक्त ब्राह्मणत्वस्य रक्षणेन रक्षित स्यात् वैदिको धर्मः इति (शां०भा०भू०) तथा "गुरुतायाः किं मूलं यतेतदप्रार्थनं नाम" इति। अतः विवेकवृत्यवच्छिन्नस्य गुरुतत्वस्य असौलभ्ये विदुषां वास्तविकं विद्यावन्तं प्रति-उपेक्षणं, राजद्वारा सञ्चाल्यमानवृत्तिव्यवस्थाविलोपनं च कारणं मन्तव्यम्।

### ब्रह्मचारिप्राप्तिः

ननु वंशपरम्परायां विद्यारूपगुणसमृद्धये उपाये प्रदर्शितेऽपि यावत्पर्यन्तं पुत्रस्थानीयेषु शिष्येषु गुरोर्विद्या न सङ्क्रमति, तावत्पर्यन्तम् लोकविश्वास्यत्वम् गुरुषु न सम्भवेत्।

तदुक्तम्—

आत्मानं प्रथमं राजा विनयेनोपपादयेत्।
ततोऽमात्यान् ततो भृत्यान् ततः पुत्रान् ततः प्रजाः।' इति

वानप्रस्थस्य—ब्रह्मचर्यं भूमौ शय्या जटाऽजिनधारणं अग्निहोत्राभिषेकौ देवतापित्रतिथिपूजा वन्यश्चाहारः ।

## जयमङ्गलाक्रोडपतम्

वर्तमान समये शिष्याणामपि असौलभ्यं विद्यते। अतः ते कथं प्राप्तव्या भविष्यन्ति ? इति चेदभिधीयते। दृष्टादृष्टोपायद्वारा ब्रह्मचारिणामुपलब्धिः गुरुभिः कर्तव्या। तत्र अद्भुतरससञ्चारणेन विद्वद्भिः लोकेषु आत्मानं प्रति अनुरागः उत्पादनीय इति प्रागभिहितम्। (पृ०३०६) तेन यथा लोके मातृपित्रादिः शास्त्राणि प्रति प्रीतिभाग् भवति, तर्हि सः आत्मनः पुत्रान् शास्त्रमध्येतुं प्रेरयिष्यत्येव। शिष्या अपि तेषामधिकारानुरूपं काव्यनाटकादिरसमहिम्ना शास्त्राणि प्रति रुचिम् प्राप्नुयुः। तदनुसारेण शिक्षाक्रमः विद्वद्भिः प्रोत्साहनीयः। किञ्च तत्र अर्थकामसुखमपि यथा सम्भवितुमर्हेत् तथा बोधनीयम्। स च शिक्षाक्रमः अग्रे अभिधास्यते। एवं दृष्टोपायेन सह प्रतिबन्धकदुरदृष्टनिवारणार्थमदृष्टोत्पादकं कर्म श्रौतं अनुष्ठेयम्। तच्च कर्म उपनिषदि उपलभ्यते। तद्यथा—

"आवहन्ती वितन्वाना कुर्वाणा चीरमात्मनः ।
वासाँसि मम गावश्च अन्नपानेन च सर्वदा ।
ततो मे श्रियमावह" इति ।

एतन्मन्त्रजपेन श्रीप्रसादो भवतीति ज्ञायते। तथैव अदृष्टद्वारा ब्रह्मचारिप्राप्त्यर्थं अधोनिर्दिष्टाः मन्त्राः तत्रैव उपलभ्यन्ते। तेऽपि जपितव्याः। तद्यथा—

"आमायन्तु ब्रह्मचारिणः स्वाहा। प्रमायन्तु ब्रह्मचारिणः स्वाहा। विमायन्तु ब्रह्मचारिणः स्वाहा। यथापः प्रवतायन्ति यथामासा अहर्जरं। एवं मां ब्रह्मचारिणः"। इति।

अस्यायंभावः-- यथा आपः मासः वा विस्तारं यान्ति तथा ब्रह्मचारिणोऽपि विस्तारं यान्तु इति। एवञ्च ब्रह्मचार्युपलब्धये तदाकाङ्क्षिभिः गुरुभिः पूर्वोक्तदृष्टव्यापारेण गुरुभक्तिपूर्वकेण विनयेन सह "आमायन्तु" इत्यादिमन्त्राः जपितव्याः, तेन सर्वसंसिद्धिः। सोऽयंऽनिर्गलितोऽर्थः भगवत्पूज्यपादैः शङ्कराचार्यैर्निरूपितो भङ्ग्यन्तरेण।

वित्तं त्यागसमेतं ज्ञानमगर्वं क्षमान्वितं शौर्यम्।
दानं प्रियवाक्सहितं एतच्चतुर्विधं भद्रम्। इति (प्रश्नोत्तरी)

## श्रीमूला

**वानप्रस्थस्येत्यादि।** वानप्रस्थस्य वने प्रकर्षेण तिष्ठतीति वनप्रस्थः, वनप्रस्थ एव वानप्रस्थः स्वार्थेऽण्, तस्य। ब्रह्मचर्यम् ऊर्ध्वरेतस्त्वम्। भूमौ शय्या स्थण्डिले शयनम्। अग्निहोत्रं सायंप्रातरनुष्ठेयमग्निकार्यम्, अग्नये होत्रं हविराज्यादि यस्मिंस्तदिति व्युत्पत्तिः, तच्च अभिषेकस्त्रिकालस्नानं च अग्निहोत्राभिषेकौ। वन्य आहारः कन्दमूलफलादिः।

## वैदिकसिद्धान्तसंरक्षिणी

**अथ** वानप्रस्थ**धर्म**माह—**वानप्रस्थस्येति**। अस्य प्रधानो **धर्म**ः तपोऽन्वीक्षे, "तपोन्वीक्षे वनौकसां" इति श्रीमद्भागवत्वचनात्। अन्वीक्षा न्यायादिविद्या, तस्या उपयोगः प्राक् ज०(पृ०१२४) विस्तरेण प्रपञ्चितः। तदनुगुणाः वार्धक्ये शरीरस्वास्थ्यकराश्च धर्मा अत्रोच्यन्ते ब्रह्मचर्यमित्यादिना। ननु वानप्रस्थाश्रमस्य कलौ निषिद्धत्वेपि **अत्र** किमभिप्रायेणोक्तिरिति जयमङ्गलाक्रोडपत्रे चिन्तितम्। भूमौ मृन्मय्याम् **यत्र** व्यायामादि क्रियते तादृश्यामित्यर्थः। तेन वार्धक्ये अभिवृद्धो दोषः भूमिशयने**न समता**-मुपगच्छति इति भूमिशय्याप्रयोजनमवगन्तव्यम्। जटा व्रतित्वात् **वानप्रस्थैर्धार्यते**। **अग्निहोत्रम्** भार्यासान्निध्यात् बोध्यम्। **अभिषेकः** स्नानम्। शान्तरसस्यानुभावोऽयं, "स्नानम् त्रिषवणोचित"मित्युक्तत्वात्। गार्हस्थ्यात् देवतापित्रतिथिपूजा एतदाश्रम-कृते विधीयते। भृत्यानां वानप्रस्थाश्रमेऽभावेन तेषु त्यागस्याप्रसक्त्या न तद्ग्रहणम्। वन्य इति। वनोद्भवोऽकृष्टपच्यः। त्रिदोषघ्नानि षष्टिधान्यानि भवन्ति तथाविधानां आहारः उपादेयः। वृद्धावस्थायां अग्निः उपर्युक्तमेवाहारं पक्तुं समर्थः इति वन्याहारो वानप्रास्थनां कृते उक्तः। गृहस्थसमत्वमस्य वैद्यनाथोक्त-चतुर्वर्गचिन्तामणिग्रन्थे द्रष्टव्यम्।

## जयमङ्गला

**वानप्रस्थस्येति**। प्रतिष्ठन्तेऽस्मिन्निति **प्रस्थो** देश उच्यते। वनप्रस्थे वनोद्देशे भवो वानप्रस्थः। 'वैखानस इत्यपरनामा।

तस्य अपत्ये सङ्क्रमितगार्हस्थ्यस्य **पत्नीवत्वेऽपि** ब्रह्मचर्यम्। भूमौ **अनास्त-रणायाम्**। शय्या शयनम्। **जटानां** विन्यासीकृतकेशानाम्। **अजिनस्य** चर्मणो **धारणम्**। अग्निहोत्रचरणं पत्नीयुक्तत्वात्। "वनं गच्छेत् सहैव वा" इति वचनात्।

**अभिषेकः यथोक्त** (:) देवतातिथिपूजा। वन्यश्च वनभवः **कन्दमूलफल-नीवारादिः**। आहारः आह्रियते भक्ष्यत इति कृत्वा। न तु शास्त्रप्रतिषिद्धो मांसादिः।

## जयमङ्गलाक्रोडपत्रम्

वानप्रस्थधर्ममभिधातुमाह वानप्रस्थस्येति।

### वानप्रस्थोपयुक्तता

ननु वानप्रस्थस्य क उपयोगः? इति चेत्, तपः अन्वीक्षा च स्तः। तदुक्तं भागवते-तपोऽन्वीक्षे वनौकसाम्" इति। अर्थशास्त्रे ये वानप्रस्थानां **धर्मा उक्ताः** ते तपोऽन्वीक्षा-**धर्मसमृध्यर्थं** बोध्याः। तपः अनशनम्। अन्वीक्षा च तर्कप्रवाहरूपसमाधिपदेन प्रागुक्ता (पृ० १५२) अत्रापि बोध्या। ते च ग्रामे निवसद्भिः न कर्तुं शक्येते। तद्विरो-धिवातावरणस्य तत्र समुत्पादात्। ग्रामे निवसतां लोकानां संमर्दनेन "कार्बनडाइ-आक्साइड्" विषस्योत्पत्तिर्भवति। तद् विषं यूनां न बाधते बलवत्त्वात्। अपि तु वृद्धानाम्। तद्विषबाधायाञ्च तपोऽन्वीक्षे यथावत्कर्तुं न पार्येते

## जयमङ्गलाक्रोडपत्रम्

इत्यात्मनः संरक्षणाय वानप्रस्थिनां कृते वने वासो विहितः। किञ्च देवताः अपि तत्तत्पर्वसु यात्राप्रसङ्गे तीर्थस्नानाद्यर्थं यदा आगच्छन्ति तदा ताः पावित्र्यार्थं वने निवसन्ति न ग्रामे, तत्र अशुचित्वस्य प्रायः सम्भावितत्वात्। अतोऽपि हेतोः वानप्रस्थिनां वने निवासः शास्त्रेषु अनुमतः। तेन तेषां देवताप्रसादोऽपि नासुलभो भवति। ग्रामे रजोगुणसामग्रीबाहुल्यात् तपोऽन्वीक्षार्थमपेक्षितं देशकालनिवाससंवाससाहचर्यादिप्रयुक्तं प्राकृतिकं सत्वं वानप्रस्थिमिः नोपलभ्यते। अन्वीक्षार्थं तु एकाग्रता आवश्यकी। सा च यत्र चञ्चलतास्वभावः तस्मिन् रजोगुणे जागरूके कथं स्यात्? इत्यन्वीक्षणस्य अनुपपन्नत्वात् वने वानप्रस्थिनां निवासः निरूपितः। सात्विकान्तःकरणप्रयुक्ता एकाग्रता अधीतविद्यानां विरक्तानां एकान्ते एव सम्भविष्यति। तदैव तेषु ऋषित्वमपि समुदेष्यति।

तदुक्तम्—"तपसर्षयः। तद् ऋषीणां ऋषित्वम्" इति। एतदालोच्यैव भगवत्पूज्यपादैरपि "सुरतरुमूले निवासः" इत्याद्युक्तम्। अतः तपोन्वीक्षार्थं वानप्रस्थाश्रमः वने निवसतामुपयुज्यते। अन्वीक्षायाश्चोपयोगित्वं कियदस्तीति प्राक् (पृ० १५९) द्वितीयाध्याये आन्वीक्षिकीनिरूपणावसरे निरूपितम्।

### वानप्रस्थस्य ब्रह्मचर्यम्

(ज० पृ० ३१६) तस्येति। पत्नीसत्वेऽपीति।

ननु पत्नीसद्भावेऽपि वानप्रस्थस्य ब्रह्मचर्यं कस्माद्धेतोर्निरूपितम्? इति चेत् तत्पुत्रस्य बहिष्कृतेर्धर्मशास्त्रेषु उक्तत्वात्।
तदुक्तं स्मृतिमुक्ताफले—अनुसन्धेयम्।[1]
(ज० पृ० ३१६) अनास्तरणायाम् इति।

भूमिशय्याफलम्।

ननु वृद्धावस्थायां भूमिशय्या कुतो विहिता? इति चेत् वृद्धावस्थायां वायुः प्रकुप्यति तस्य उपशम आवश्यकः। तत्र मृन्मयी मृद्वी शय्या उपयुज्यते—'भूशय्याऽनिलपितघ्नी" इति आयुर्वेदे विधानात्। अतः वायुदोषशमनाय भूशय्या विहिता।

(ज०पृ०३१६) जटानाम् इति। ब्रह्मचर्यधर्मनिरूपणावसरे केशधारणं निमित्तीकृत्य सप्रपञ्चं (पृ० ३०२) विस्तृतमस्ति तदेव अत्राऽपि मननीयम्।

(ज० पृ० ३१६) अजिनधारणम् इति। अजिनधारणविषये गुणदोषौ पुरश्चर्यार्णवे प्रतिपादितौ। तस्मात् शरीरस्य सुरक्षार्थमन्वीक्षासमये सम्भविष्णूनां दोषाणां निरासार्थं

---

१ 'यस्तु पत्न्या समङ्गत्वा मैथुनं कामतश्चरेत्।
तद् व्रतं तस्य लुप्येत प्रायश्चित्तीयते द्विजः॥
तस्यां यो जायते गर्भो न संस्पृश्यो द्विजातिभिः।
न वेदेऽप्यधिकारोऽस्ति तद्वंशे योपि जायते।'( १७० पृ० )

## जयमङ्गलाक्रोडपत्रम्

च वानप्रस्थैः अजिनमवश्यं धारणीयमिति भावः। तद् अपि मार्गं वैयाघ्रं वा बोध्यम्। तदुक्तम् कामन्दकीय जयमङ्गलायाम्। "अजिनं मार्गं वैयाघ्रं वा" इति।

(ज० पृ० ३१६) अभिषेकः इति। स्नानस्य गुणाः रूपम् तेजः यशश्चेत्यादयः दश भवन्ति इत्यतः अभिषेकः तेषां गुणानां लाभाय¹ अवश्यं कर्तव्यः।

(पृ० ३१६) यथोक्तेति। गृहस्थधर्मे कृताकृतद्रव्यविनियोगः उक्तः अत्र तु स नास्ति इति गृहस्थवानप्रस्थयोर्विशेषः अवगन्तव्यः। किञ्च वानप्रस्थस्य भृत्योऽपि नास्ति। इति नापि भृत्यग्रहणं कृतम्।

(पृ०३१६) कन्दमूलेति। कन्दादयः त्रिदोषघ्नत्वेन आयुर्वेदे निरूपिताः। ते अत्र विवक्षिताः।

### प्रतिग्रहनिवृत्तिः

'वन्य' इत्यनेन वानप्रस्थेन प्रतिग्रहो न कर्तव्यः इति ध्वनितम्—

'प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत् इति वचनात्।

ननु वानप्रस्थस्य प्रतिग्रहनिवृत्तिः किमभिप्रायिका? इति चेत्, अन्यनिरपेक्ष-जीवनप्रदर्शनार्थं²।

अर्थात् कन्था चीराणि वृक्षस्य शीर्णपर्णानि वा वरम्। परमन्वीक्षायाः स्वातन्त्र्यस्य च प्रतिबन्धः येन भवेत् तथाविधम् द्वारीकृत्य जीवनं तु विद्यावतां न युक्तमिति। अतएव नीतिसारे प्रतिग्रहनिवृत्तिः कण्ठत एव उक्ता। 'प्रतिग्रहनिवृत्तिश्च त्रिस्नानं व्रतचारिते'ति।

### वानप्रस्थस्य कलिवर्ज्यत्वम्

ननु "वानप्रस्थाश्रमः कमण्डलुविधारणमि"त्यादिना वचनेन धर्मशास्त्रेषु वान-प्रस्थपरिपालनस्य कलिवर्ज्यत्वमुक्तम्। अत्र मूलकृता कथं तद्विहितम्? इति चेत्सत्यम्। सुराग्रहस्य कलिवर्ज्यत्वेऽपि सौत्रामणियागस्य इतिकर्तव्यत्वेन तदनुमन्यते शास्त्रकृद्भिः। तथा चास्य वचनस्य अयमर्थोभवति, यत्कलिवर्ज्यं सुराग्रहणं उक्तम् तत् सौत्रामणियागोपयुक्तादन्यत् एवञ्च सौत्रामणियागोपयुक्तं तत् सद्भवति इति

१ तदुक्तम्—

"गुणा दश स्नानपरस्य साधो रूपं च तेजश्च यशश्च शौचम्।
आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्ननाशश्च बलं च मेधा।' इति।
तथोक्तम् भागवतेऽपि।

२ 'चीराणि किं पथि न सन्ति दिशन्ति भिक्षाम्,
नैवाङ्घ्रिपाः परभृतः सरितोप्यशुष्यन्॥
रुद्धा गुहाः किमजितोऽवति नोपसन्नान्।
कस्माद् भजन्ति कवयो धनदुर्मदान्धान्। इति।

भागवतवचने उक्तमभजनीयत्वं मदमानसमुद्धतानां द्रष्टव्यम्।

[1]परिव्राजकस्य—संयतेन्द्रियत्वं अनारम्भो निष्किञ्चनत्वं सङ्गत्यागो भैक्षमनेकत्र अरण्यवासो [2]बाह्यमाभ्यन्तरं च शौचम् ॥

## [ सर्वसाधारणाः धर्माः, सर्वेषां स्वस्व-धर्मानुष्ठानावश्यकता च ]

[3]सर्वेषां—अहिंसा सत्यं शौचमनसूयाऽऽनृशंस्यं क्षमा च ।

### जयमङ्गलाक्रोडपत्रम्

तदनुष्ठेयमेव इति । तथा कलावपि उपर्युक्तभागवतकौटिल्यादिवचनानुसारेण अन्वीक्षणस्य समाधेः अत्यन्तमभ्यर्हितत्वात् विचारः कर्तव्य एव । तत्र उपयुक्तं यदस्ति, तावन्मात्रमेव अत्र ग्राह्यम । अन्यत् तु सर्वं वर्ज्यम् । न च गृहस्थेनैव अन्वीक्षणात्मकं कार्यमपि कर्तुं, शक्यमिति वाच्यम्, तेन हि द्रव्यार्जनाद्युपयुक्तोद्योगेषु व्यापृतचित्तेन एकान्ते स्थित्वा सातत्येन तर्कप्रवाहात्मकस्य समाधिरूपस्य अन्वीक्षणस्य कर्तुमशक्यत्वात् । अतः "पुत्रेषु न्यस्तकार्यसम्भारः चित्तविक्षेपशून्यः वनम् एकान्ते निषेव्य अन्वीक्षेत" इत्यादि विधानबोधार्थं वानप्रस्थाश्रमग्रहणकालः पञ्चाशत्तमे वयसि शास्त्रकर्तृभिः आकरे विहितः[1] ।

### श्रीमूला

**परिव्राजकस्येत्यादि ।** परिव्राजकस्य परित्यज्य सर्वं व्रजतीति परिव्राजकः सन्न्यासी तस्य । संयतेन्द्रियत्वं जितेन्द्रियता । अनारम्भः नैष्कर्म्यम् । निष्किञ्चनत्वं निस्स्वत्वम् । सङ्गत्यागः प्रव्रजितान्तरेणापि संसर्गपरिहारः । अनेकत्र भैक्षं प्राणयात्रापर्याप्तस्यान्नस्य बहुषु गृहेषु भिक्षित्वा ग्रहणम् । बाह्याभ्यन्तरशौचं काय-वाङ्मनसोर्नैर्मल्यम् ।

सर्ववर्णाश्रमसाधारणान् धर्मानाह—**सर्वेषामिति ।** अनसूया गुणपक्षपातः आनृशंस्यम् अनिष्ठुरत्वम् ।

### वैदिकसिद्धान्तसंरक्षिणी

शमप्रधानस्य आदर्शभूतस्य लोकस्थितिहेतुभूतसत्वगुणोत्कर्षशीलस्य सन्न्यसतो धर्ममाह—परिव्राजकस्येति । श्रीमद्भागवते "भिक्षोधर्मः शमोऽहिंसा" इत्युक्तम् तानेव धर्मान् आह संयतेति । जितेन्द्रियत्वमिति पाठान्तरम् । सन्न्यासिनां कृते अद्रोह-समता-वाग्यमव्रतचारिताप्रभृतयो गुणाः नीतिसारे अधिका उक्ताः—

---

१. तदुक्तम्—"वनं पञ्चाशतो व्रजेत् । द्वितीयमायुषो भागम्" । इति ।

नी० टी० १. परिव्राजकस्येति—परिव्रजतीति परिव्राजकः ग्रामादिष्वेकरात्रं नगरे पञ्चरात्र-मित्यादिक्रमेण ।

,, ,, २. बाह्यं मृज्जलादिभिः । आभ्यन्तरं भावशुद्ध्या, सा च सकलसत्वहितानुध्यानात् ।

नी० टी० ३. सर्वेषामिति ।......साधारणधर्ममभिधातुमाह ।

## वैदिकसिद्धान्तसंरक्षिणी

सर्वारम्भपरित्यागो भैक्षाश्यं वृक्षमूलिता ।
निष्परिग्रहताऽद्रोहः समता सर्वजन्तुषु ॥
प्रियाप्रियापरिष्वङ्गः सुखदुःखाविकारिता ।
सबाह्याभ्यन्तरम् शौचम् वाग्यमो व्रतचारिता ।
सर्वेन्द्रियसमाहारो धारणा ध्यानयुक्तता ।
भावसंशुद्धिरित्येष परिव्राड्धर्म उच्यते । इति ।

तेऽत्र यद्यपि नोक्तास्तथाऽपि संयतेन्द्रियत्वे तेषामन्तर्भावो विज्ञेयः । अथवा यथायथं तेषु तेषु गुणेषु अन्तर्भावो योज्यः । यद्यपि समस्तानां गुणानां अन्तर्भावः संयतेन्द्रित्वे वक्तुं शक्यः, तथापि ब्रह्मचार्यादि धर्मापेक्षया सन्न्यासिनां कृते सन्न्यासोचितधर्मस्य प्राधान्यख्यापनार्थं अनारम्भादिगुणानां पृथगुपन्यासो बोध्यः ।

**अनारम्भ** इति । "सर्वासां यागादिक्रियाणां आश्रमधर्मव्यतिरिक्तानामननुष्ठानम्" इति जयमङ्गलोक्तमत्र द्रष्टव्यम् । अयं भावः—सन्यासाश्रमस्य धर्माः शान्तरसावस्थायां स्वाभाविका भवन्ति । मानोरथिकाभ्यासिकाभिमानिकवैषयिकशमसुखेषु एकं शमसुखं सन्यासिनां जीवनन्तस्मात् सन्यासाश्रमे आरम्भो नास्ति इति अनारंभस्य शमपरिचायकत्वम् स्फुटम् ।

### सन्न्यासविधिप्रसक्तिः

गृहस्थेन चरित्रं स्थाप्यते सन्न्यासिना तत्परित्यज्यते । तत्र गृहस्थचरित्रस्य स्वरूपं कीदृशमुत्तममिति नाटकस्याभिनयेन व्यक्तं भवति । तथाहि—नाटकदर्शिनां इतिहासश्रोतॄणां वा आस्वादास्पदं वीररसप्रधानस्य श्रृङ्गाररसप्रधानस्य वा नेतुः आदर्शचरित्रं उत्साहास्पदमेवावलंब्याभिनीतं भवति । अतएव नाटकेषु औत्सुक्यमारम्भोवा बीजनाम्ना व्यपदिश्यते, ततः आरभ्य चरित्रप्रस्तावात् । ततः यत्नप्राप्त्याशानियताप्तीः प्रदर्श्य पर्यन्ते त्रिवर्गसमृद्धिफलागमेन नाटकस्य परिपूर्तिः क्रियते । एते औत्सुक्यादयः पञ्च मुखप्रतिमुखगर्भविमर्शोपसंहृतिसन्धिभिः सङ्गतिप्रदर्शनकाले व्यपदिश्यन्ते नाटकेषु । बीजयत्नप्राप्त्याशानियताप्ति फलागमरूपाः गृहस्थाश्रमिणां कृते उपयुक्ताः सन्न्यासाश्रमे न सन्ति । अथ त्रिवर्गसमृद्ध्यन्तरं बीजभूतस्यौत्सुक्यस्य त्यागः कथं कर्तव्यः इत्याकाङ्क्षायां सहजतः क्रमप्राप्तत्वात् सन्न्यासविधिरुपस्थितो भवति । अर्थात् सन्न्यासविधिपूर्वकं औत्सुक्यं त्यक्तव्यम् इति तात्पर्यम् । तत्रायं मीमांसान्याय एवं वक्तुं शक्यते-अङ्गकण्डूयनार्थं स्वीकृतस्य विषाणस्य दीक्षायागानन्तरञ्चात्वाले निक्षिपेदिति विधानेन परित्यागः कृतश्चेत् सम्मानपुरसरं, शृङ्गविसर्जनं वैधं भवति अन्यथा प्रायश्चित्तीयता भवेत् । इदमेव प्रतिपत्तिकर्म । तद्वत् प्रकृतेपि सन्यासविधिना अग्निहोत्रादीनां त्यागः कृतो निर्दोषाय भवति । तदेतदालोच्य अत्र अनारम्भो विहितः । अत्र केचित् यावज्जीवमग्निहोत्रं जुहोति इति विधिः सन्यासविधिना कृतेनाग्निहोत्रत्यागेन कथं समन्वेयः स्यादित्याक्षिपन्ति । तत्तु न मनोरमम् । सन्न्यासविधिना-

## वैदिकसिद्धान्तसंरक्षिणी

कर्तव्यत्वावगमात् अग्निहोत्रात्यागो न दोषाय इति सिद्धान्तात्। त्यागोऽपि वैराग्ये सत्येव विहित इति न विस्मर्तव्यम्।

किञ्च शोकहर्षादिवृत्तिः सन्यासिषु नास्ति, अतोऽस्मिन् आश्रमे अनारम्भ उक्तः। सन्यासी आश्रमान्तरोचितकर्म कर्तुन्नोत्सहते तद्धि तस्य भूषणम्, अनुत्साहस्यानारम्भपदार्थत्वात्। आरम्भश्च भावप्रकाशने व्याख्यातः औत्सुक्यमारम्भ[1] इति।

सङ्गेति। बन्धुमित्रादिभिरसङ्गः[2] इत्यर्थः। तदुक्तं नीतिसारे-प्रियाप्रियापरिष्वङ्गः इति, तट्टीकायाम् 'इष्टानिष्टसङ्गत्याग' इति च। अत्रैव सुखदुःखाविकारितापि नीतिसारोक्ताऽन्तर्भावनीया। "सुखे दुःखे च विकारो हर्षशोककृतो नास्ती"ति उपाध्यायनिरपेक्षायामुक्तं। सा च अवस्था सङ्गत्यागे सम्भवति इति। भैक्षमिति। केचित् 'भिक्षा अनेकत्र' इति अन्वयं वाञ्छन्ति। तेनैकत्र भिक्षा न ग्राह्येति भावः। तदुक्तम् उपाध्यायनिरपेक्षायाम्-"भैक्षं भिक्षासमूहमित्यर्थः" इति। अपरे तु 'वास इत्यनेन अनेकत्रेत्यस्य समन्वयमाहुः, अनेकत्रेत्यनेन अनेकग्रामे इत्यर्थः' इति वदन्ति। तेन वासो नैकस्मिन् ग्रामे नगरे वेति स्थितम्। जयमङ्गलायां तु अनेकत्रारण्ये वास इति उक्तम्। तस्यायं भावः-अनेकत्र नैकस्मिन् ग्रामे वास इति। "ग्रामादिष्वेकरात्रम्" इति विधानात्। इति। अथवा अनेकत्रारण्ये इत्येव पाठः। एतत्पाठे ग्रामसमीपे वासः, न तु ग्रामे इत्यर्थो बोध्यः।

बाह्येति। शौचं मलप्रक्षालनम्। तच्च द्विविधं बाह्यमाभ्यन्तरं च। तत्र बाह्यं मृज्जलादिना कायमलप्रक्षालनम्। आभ्यन्तरं मैत्र्यादिभावनाभिश्चित्तमलप्रक्षालनम्। तदुक्तमीश्वरगीतायाम्—

बाह्यमाभ्यन्तरं शौचं द्विधा प्रोक्तं द्विजोत्तमाः।
मृज्जलाभ्यां भवेद्बाह्यं मनः शुद्धिरथान्तरमिति। इति।

एतेषाम् असाधारणधर्माणां नीतिलक्षणलक्षितत्वं कथं भवतीति स्वर्गानन्त्याय इति मूलव्याख्यानावसरे स्फुटीभविष्यति।

अथ साधारण धर्मं प्रदर्शयितुमाह सर्वेषामिति। वर्णानामाश्रमाणां चेत्यर्थः।

---

१. औसुक्यमात्रबन्धस्तु यद्वीजस्य नियुज्यते।
महतः फलयोगस्य स खल्वारम्भ इष्यते॥ भावप्रकाशन अधि० ७

२. तदुक्तम्—मानापमानयोः शोकहर्षयोः सुखदुःखयोः।
समवृत्तितया प्रायो नानुभावा भवन्ति हि॥
गीतायामपि—निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत्॥ इति॥

## वैदिकसिद्धान्तसंरक्षिणी

**अहिंसेति**। सा च द्विविधा बोध्या एका स्थायिनी अपरा व्यभिचारिणी। तत्राद्या परिव्राजकाणाम, एतेषां शमप्रधाना अहिंसा महाव्रतित्वात्। महाव्रतित्वञ्च योगसूत्रे उक्तम्—

[१]"जातिदेशकालसमयानवच्छिन्नाः सार्वभौमाः महाव्रतम्" इति।

द्वितीया तु अहिंसा संन्यासयतिरिक्तैः क्रियमाणा यथादृष्टयथाश्रुतयथानुमित--यथा ध्यातविषयं व्यवहरणम्। सा च योगसूत्रोक्तैर्जात्यादिभिरवच्छिन्नत्वाद् व्यभिचारिणी बोध्या। सत्यं इति। तस्य फलं "सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम" इति योगसूत्रोक्तं वेदितव्यम्। क्रियाफलाश्रयत्वं च "क्रियाफलं च सत्ये आश्रयति" इति व्याख्यातं टीकाकृद्भिः। तद्यथा "क्रियाऽत्र धर्माधर्मरूपा। फलं सुखदुःखे क्रियाफले आश्रयतीति तथा। तस्य भावः तत्वम्। क्रियाफले स्वेच्छया जनयतीत्यर्थः। यथा धार्मिको भव, स्वर्गी भवेत्युक्ते तथा भवति अमोघवाग्भवति सत्येन वाचः शुद्धा मन्त्रादिजपस्य पूर्णत्वात् इति भावः" इति।

शौचमिति। इदं प्राग्व्याख्यातम्।

अस्य बाह्याभ्यन्तरभेदेन भिन्नस्य फलं शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः इति। [२]"सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च" इति योगसूत्रे वर्णितं फलमत्र स्मर्तव्यम्।

शौचस्य शास्त्रप्रमाणकत्वात् सर्वापि इयं राजनीतिः धर्मप्रधाना अस्तीति।

---

१ जातिर्ब्राह्मणत्वादिः। देशः तीर्थादिः। कालो नियतचतुर्दश्यादिः। समयः नियतो ब्राह्मणभोजनाद्यवसरः। एतैः, ब्राह्मणादिकं प्रयागादौ चतुर्दश्यादौ ब्राह्मणादिप्रयोजनं विना च न हनिष्यामीति क्रमेण जातिदेशकालसमयैरनवच्छिन्ना न भवन्ति, किन्तु कमपि कुत्रापि कदापि कस्याप्यर्थे न हनिष्यामीति जात्यादिभिरनवच्छिन्नाः। सार्वभौमाः सर्वासुरक्षाप्तादि भूमिकासु भवाः महाव्रतमित्युच्यते इत्यर्थः इति।—यो० १।३१ सूत्रम्—।

२. अथ नियमसाध्येषु सिद्धियोगेषु प्रथमं बाह्यशौचसिद्धिमाह-शौचं भावयतः पुरुषस्य शौचे निमित्तभूतामशुद्धिं कायादिषु पश्यतो भवति। घृणा अशुचिरयं कायः सर्वथाऽनहङ्कारः कर्तव्यः इत्यमुनैव हेतुना परैश्च कायवद्भिः स्त्र्यादिभिरसंसर्गः असम्बन्धो भवतीत्यर्थः। आन्तरशौचस्य फलमाह—**सत्वेति**।

भवन्तीति शेषः। आन्तरशौचादित्यनुवर्तते। मैत्र्यादिभावनारूपाभ्यन्तरशौचात् सत्वस्य मनसः शुद्धिर्नमल्यम्। ततः सौमनस्यम् अक्षोभः। तत ऐकाग्र्यम् एकस्मिन् विषये परमात्मनि स्थिरता। तत इन्द्रियजयः विषयेभ्यः पराङ्मुखता तत आत्मदर्शनयोग्यत्वं सामर्थ्यम्। इत्यवं क्रमणे सत्वशुद्ध्यादयः शौचाभ्यासवतो भवन्ति इत्यर्थः। इति यो० २।४०-४१।

### वैदिकसिद्धान्तसंरक्षिणी

**अनसूया**। असूयाया अभावः इत्यर्थः। असूया च परगुणद्वेषः।[1]

तेनान्यगुणद्वेष एवासूयापदार्थं इत्यध्यवसीयते। असूयात्वादयः परस्परमेकत्र सह न वसन्ति न वा तत्वमध्यवस्यन्ति। अतोऽनसूयायाः परस्परसङ्गत्यर्थं अत्यावश्यकता अस्ति। तदुक्तं —

"तं गुरुशिष्यसब्रह्मचारिशिष्टश्रेयोऽर्थिभिरनसूयुभिरभ्युपेयादि"ति— गीतायामपि—

"इदं ते नातपस्काय नाभक्ताय कदाचन।
नचाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति॥ इत्युक्तम्। १८.६७

**आनृशंस्यम्** अनुकम्पा। परदुःखप्रहाणेच्छेति यावत्। क्षमा क्रोधाभावः चकारात् नीतिसारे लोकसङ्ग्रहप्रकरणे उक्ताः परकार्येषु अनिन्दादयो बोध्याः।

### जयमङ्गला

**परिजकस्येति**। वर्षासमयाद् अन्यत्र। "ग्रामे एकरात्रम्, नगरे पञ्चरात्रम्" इति वचनात्। परिव्रजतीति परिव्राजकः, भिक्षुरिति द्वितीयनामा। तस्य यतेन्द्रियत्वम् अलोलुपेन्द्रियता। अनारम्भः क्रियादीनाम्। अकिञ्चनत्वं प्रव्रज्योपकरण—व्यतिरिक्तानुपादानात्। बन्धुमित्रादिभिः यः सङ्गः तस्य त्यागः। भैक्षं भिक्षाणां समूहः नैका भिक्षा[2] तत्रापि नैकस्मिन् ग्रामे नगरे वा स्यात्, किन्तु अनेकत्र। तत्राप्यरण्ये ग्रामादिसमीपे वासः न ग्रामादाविति। बाह्यं शौचं मृदादिभिः अमेध्यापनोदनार्थम्। आभ्यन्तरं मनःशौचम् रागद्वेषादिप्रहाणात्।

वर्णाश्रमाणां धर्मानुक्त्वा सामान्यानाह **सर्वेषामिति**। **अहिंसा** सत्वस्यापीडनम्। **सत्यं** यथार्थवाक्। **शौचं** बाह्याभ्यन्तरम्। परगुणाक्षमता असूया तदभावोऽ**नसूया**। **आनृशंस्यम्** अक्रूरता अनुकम्पेत्यर्थः। **क्षमा** च आक्रोशादितितिक्षा।

### जयमङ्गलाक्रोडपत्रम्

**परिव्राजकस्येतीति**। परिव्राजको यतिः। तत्स्वरूपं नीतिवाक्यामृते धर्मसमुद्देशे[3] द्रष्टव्यम्।

### सन्न्यासधर्मे विशेषता

अयं धर्मः शमप्रधानः "भिक्षोर्धर्मः शमोऽहिंसा" इति वचनात् बोध्यः। शमपदेन लौकिके समस्तेइष्टसाधने वस्तुनि अहितत्वं बुद्ध्वा ततः निवृत्तौ यत्सुख-

---

१. तदुक्तं गोकुलनाथोपाध्यायैः—

परोत्कर्षाक्षमा गर्वदौर्जन्यमन्युजा इति धनिकः।

असूयाऽन्यगुणादीनामौद्धत्यादसहिष्णुता इति महाराजः इति।

२. *अशुद्धम्*

नैका *भिक्षा*, तत्रापि।

३. यः सम्यग्विधानालाभेन तृष्णासरित्तरणाय योगाय यतते स यतिः। इति।

## जयमङ्गलाक्रोडपत्रम्

भानं तदेव बोध्यम् । उपर्युक्ता निवृत्तिः सुखसाधनत्वेन अभिमता यदि किञ्चित्-पदार्थविषयिणी भवति, तर्हि सा बीभत्सेऽन्तर्भवति, समस्तविषयिणी चेत् शम इत्युच्यते । उभयोरपि उद्वेगादीनि चिह्नानि सामान्येन भावप्रकाशने उक्तानि चिन्तनीयानि ।[1]

न च बीभत्सानुभावे वर्णितं द्रुतपदगमनं सन्यासिनः नोपपद्यते इति वाच्यम् । सत्वाभिवृद्धया शरीरस्य लाघवेन द्रुतपदगमनस्य सम्भवदुक्तिकत्वात् । तदुक्तं—( ७४ पृष्ठे ) द्रष्टव्यम् ।

### राजनीतौ सन्यासिनामुपयोगित्वम्

राज्यं हि प्रजायां सुखकरं तदा भवति, यदा तत्स्वामी राजा अतिसूक्ष्मतया विचारपुरःसरम् अन्यायिनमत्याचारिणं तथात्वेन निर्णीय दण्डयति । न्यायमार्गं च संरक्षति । न्यायश्च तेनैव विदुषा निर्णेतुं शक्यते, यः शौचादिमहाव्रतसम्पन्नः स्यात् तस्यैव निर्विकारत्वात् । महाव्रतसम्पन्नता च चतुर्षु आश्रमेषु पूर्वपूर्वतने आश्रमे स्थित्वा ततदाश्रमधर्मान् यथोचितं पालयित्वा स्वकीयान्तःकरणस्य शुध्यनन्तरं क्रमशः सन्न्यासधर्मं स्वीकृतवता सन्न्यासिना सम्पाद्यते, एवंभूता स्थितिः शमप्राधान्ये एव सम्भवति । अत एव "जाति-देश-समयानवच्छिन्ना" इति योगसूत्रेण यन्महाव्रतमुपदिष्टमस्ति, तत् शमप्रधानानां कृत एव बोध्यम् । (३१२ पृ०) यस्य च शमप्राधान्यं नास्ति, सः रागद्वेषयोरन्यतरेण सम्पन्नः यथावन्न्यायं निर्णयेदिति केनापि वक्तुं न शक्यते, किमुत मानवैः । तद् वीरमित्रोदये द्रष्टव्यम् ।[2]

सभासदां रागद्वेषशून्यानामध्यात्मविदामध्यात्मवित्त्वमिदमेव यत् सर्वेषु स्वकीयत्वभावनया दर्शनमिति । तत्रेदं मुदाहरणं प्रदर्श्यते—यथा नखशिखान्तशरीरावच्छिन्नः आत्मा सर्वावयवेषु आत्मभावमासादयन् शरीरान्तर्वर्तिनं कमपि अवयवं

---

१ वस्त्रावगुण्ठनं नासाच्छादनं नेत्रकूणनम् ।
अस्पष्टपादपतनमपवर्त्तितवक्त्रता ॥
द्रुतपादाग्रगमनं ष्ठीवनं च मुहुर्मुहुः ।
एवमाङ्गिक उद्वेगजन्मा बीभत्स उच्यते । (भा०प्र० ३अधि पृ०६७)

२ तथा च बृहस्पतिः—लोकवेदाङ्गधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा ।
यत्रोपविष्टा विप्राःस्युः सा यज्ञसदृशी सभा ॥
चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥
श्रुताध्ययनसम्पन्ना धर्मज्ञाः सत्यवादिनः ।
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥

## जयमङ्गलाक्रोडपत्तम्

न पक्षपातेन पश्यति द्विष्यति रज्यति वा। अत एव सः सर्वेषामपि अवयवानां यथावत् पालनाय यतते। एतस्मादेव कारणात् तस्य नखाशि ग्रान्तसहितस्य उत्तम-पुरुषत्वमुच्यते।

मध्यमः प्रथमश्च तदा सम्भवतो यदोत्तमः मध्यमप्रथमपुरुषयोः शरीरं स्वस्मात् भिन्नम् इति भावं तौ प्रति प्रस्तौति। तदानीं मनसि मध्यमप्रथम – पुरुषयोः सुखदुःखसंवेदनाभावादुत्तमः पुरुषः लोभक्रोधादिपराधोनत्वम् आत्मनि स्वीकृत्य तयोः याथार्थ्येन सापराधत्वनिरपराधत्वनिर्णयं कर्तुं समर्थो न भवति परिमितशरीरान्तर्वर्त्तिनमभिमानं तिरस्कृत्य यः विराट्पुरुषस्वरूपेण सर्वेषु आत्मीयत्वभावेन ख्यातः स न्यायतुलायामपराधं तोलयितुं समर्थः।

अत एव सन्न्यासधर्मो विहितः। यदा वेदान्तसिद्धान्तानुसारेण समस्तमपि जगत् विराट्पुरुषस्य एकस्य अन्तःस्थितादवयवान्नातिरिच्यते इति भानं शास्त्रोदितकर्मकर्तुः शुद्धेऽन्तःकरणे समुदेति तदा तद्दृष्टया जगतीतले मध्यमत्व-मुदासीनत्वं च व्यपगतं भवति, केवलमुत्तमत्वमेव अभिव्यज्यते। इदमेव उदारचरि-तत्वम्। तदुक्तम्—

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥ इति

अतः अध्यात्मविदां न्यायनिर्णये सामर्थ्यात् सन्यासः तल्लाभार्थं राजनीतौ उपयुज्यते। किञ्च भारतीया राजनीतिः विवादस्थलेपु निर्णायकत्वेन अध्यात्मविदं स्वीकरोतीत्यत्र इदमेकमपरमपि कारणं आशु प्रयोगनिर्णयो वर्तते, राजनीतिशास्त्रं प्रयोगशास्त्रम्। प्रयोगश्च सर्वदैव प्रतिक्षणमेकरूपतयैव स्थितः स्यात् इति नास्ति नियमः, तत्प्रयोजकस्य निमित्तस्य प्रतिक्षणं भेदात्। तदुक्तम्—

प्रादुर्भवन्त्यर्थसमं यस्माच्चित्तान्यनुक्षणम्।
तस्माद् योगीव सततं भावयेत् सुसमाहितः। इति। (नी० स० ५)

यथा स्थलविशेषे कानिचन निमित्तानि दृष्टवा विद्वद्भिः एकः प्रयोगः निर्णीतः, परन्तु द्वितीयक्षण एव तस्मिन् स्थले निमित्तान्तरस्य अभ्युदयः पूर्वनिमित्तस्य वा ह्रासो जातः, तदा तत्क्षणमेव पूर्वनिमित्तानुसारेण निर्णीतं प्रयोगं परित्यज्य उत्तरनिमित्तानुसारेण प्रयोगान्तरं विधेयं भवति। दृष्टं चैतत्संनिपातादिषु कर्तव्यायां परिवर्तनीयायां वा चिकित्सायां वैद्यानां पाण्डित्ये। त्रिदोषप्रकोपे जनिते सन्निपात-स्थले तेषां प्रतिक्षणं वृद्धिह्राससन्दर्शनेन निमित्तस्य निर्णयं कर्तुं असामर्थ्यात् साधा-रणजनस्य कृते चिकित्साया अशक्यप्रायत्वात्। नह्येदं लौकिकेष्वेव व्यवहारेषु मन्तव्य-मपि तु अलौकिकेष्वर्थेष्वपि निमित्तभेदानुसारेण प्रयोगान्तरस्य निर्णेतव्यत्वं भवति, इत्यपच्छेदाधिकरणे मीमांसकैः तत्र तत्र दर्शितत्वात्। तथैव राजनीतिप्रयोग—विषयेऽपि बोध्यम्। तदुक्तम्—

## जयमङ्गलाक्रोडपत्रम्

'स्वल्पेनाप्यपचारेण ब्राह्मण्यमिव दुष्यति'' इति । नी० स०

चिकित्सायाम् अपचरितायां सत्यामेकाकी आर्त एव आर्ति गच्छेत् । किन्तु राजनीतौ यथावत् कर्तव्ये निर्णये स्तोकमपि सञ्जातायां स्खलनदशायाम् असङ्ख्यातानां जनानामपरिमेयद्रव्यस्य च हानिः रावणाधिकृतलङ्कादेशहानिवत् राष्ट्रे प्रसज्येत ।

किम्बहुना, अस्मिन् प्रसङ्गे इदमपि वक्तव्यमस्ति यत् राजनीतिप्रयोगनिर्णये, निमित्तभेदानुसारेण विपरिवर्तनीयतां गते सन्निपातादौ करिष्यमाणचिकित्सानिर्णयापेक्षया सहस्रगुणितं काठिन्यमस्ति । अतः अत्र विशेषतया राजनीतिः अध्यात्मविदं जिघृक्षतीति, शमप्रधानस्य अध्यात्मविदः सन्न्यासिनः आन्वीक्षिकीत्रयीवार्त्तादण्डनीतिसम्पन्नस्य उपायविकल्पे अतिकुशलस्य रागद्वेषवियुक्तस्य तन्निर्णायकत्वेन वरणं भारतीयराजनीत्या कृतम् । एवंभूता अध्यात्मविदः वसिष्ठरामदासब्रह्मेन्द्रस्वामिप्रभृतयः तथाविधा अन्ये च बहवः गुरुकल्पाः तत्र तत्र राज्ये स्थिताः तत्तद्राजानं यथार्थन्निर्णयन्यायतत्वं बोधयामासुः ।

न च न्यायदानार्थं निर्णायकत्वेन राज्ञः स्थितेस्ततः पार्थक्येन अध्यात्मविदां सन्यासिनां वरणं भारतीयराजनीतिदृष्ट्याऽपि व्यर्थमेवेति वाच्यम् । उभयोः विभिन्नभाववत्वात् । तथाहि—राज्यस्वामी राजा वीररसाधिष्ठितः उत्साहमतिप्रधानो भवति, सन्यासाश्रमी तु वर्तमानवस्तुमात्रविषयकस्पृहात्मकधृतिप्रधानः शान्तरसाधिष्ठितो भवति ।

अत एव राज्ञः असन्तुष्टत्वात् विजिगीषुत्वम्, शमप्रधानस्य तु सन्तुष्टत्वात् आत्मसुखानुभूतिमत्वम्, तद्भावे तु तदभावः । तदुक्तम्—

'असन्तुष्टा द्विजा नष्टाः सन्तुष्टाश्चैव भूभृतः' । इति ।

अतः उत्साहमतिप्राधान्यधृतिप्राधान्यभेदेन राज्यसंरक्षणाय 'एका मन्त्रिप्रकृतिः अपरा राजप्रकृतिश्चेति भेदमनुरुध्य राज्ञो वीरस्य अध्यात्मविदश्च मन्त्रिणः शान्तस्य-पृथक्तया विधानं राजनीतौ विहितमस्ति ।

यद्यपि सर्वसाधारण्येन सांसारिकैः शमप्रधानानाम् अलौकिकं सुखं नानुभूयते, तथापि तावन्मात्रेण शमनिमित्तस्य सुखस्य अलीकत्वं वक्तुं न युज्यते, इतिहासेषु तथाविधसुखमनुभवतां याज्ञवल्क्य-वसिष्ठ-प्रभृतीनां वर्णनात् सिकन्दरादिभिश्च स्वयात्रायां तन्निरूपितत्वात्, जीवन्मुक्तस्य सुखसंपत्तिविषयमधिकृत्योक्तत्वात्[1] "श्रोत्रियस्य चाकामहतस्येत्या''दिना वेदेनोपवर्णितत्वाच्च । येन राज्येन एवंभूतः शमसुखसम्पन्नः अध्यात्मवित्मन्त्री प्राप्तः, तस्य अतुलनीयं भाग्यमस्ति ।

---

१ भागवते—

'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ।' इति

## जयमङ्गलाक्रोडपत्रम्

अतः उपर्युक्तं सुखं जीवितदशायां सम्प्राप्य यः अध्यात्मवित् स्वीयन्यायनिर्णयेन सर्वमङ्गलकारिप्रयोगनिर्णयेन च राज्यसंरक्षणे आत्मानं समर्पयति तथाविधोऽनया राजनीत्या काम्यते। ईदृशं सुखं वीररसप्रधानेन राज्ञा नानुभवितुं शक्यते इति राजप्रकृत्यपेक्षया अध्यात्मविदः पृथक् स्थानम्।

किञ्च सन्न्यासाश्रमस्य राज्यसंरक्षणाय स्वीकरणे अपरं तृतीयं कारणं जगत्सञ्चालने सर्वविधशक्तिमत्वसम्पादनम्। कथमेतदिति विमृश्यते।

नीतिस्वरूपं हि राज्ञा तदा साधितं मन्यते, यदा तेन किञ्चित् एकं कार्यमारभ्य मध्यसमये समापतिता आपत्तीः निराकृत्य अन्ते यथावत् फलं प्राप्येत। अन्यथा नीतेः शाश्वतीत्वमेव अनुपपन्नं स्यात्। अतः यावत्पर्यन्तं सर्वमपि राज्यम् आत्मनः वशन्न भवेत् तावत्पर्यन्तं राजा शासनमपि कर्तुं न पारयेत्। यत्र राजा अन्यद् वाञ्छति, मन्त्री अन्यच्चिकीर्षति, सेनापतिः अन्यत् करोति, भृत्यवर्गः अन्यत् कल्पयति, तत्र वन्ध्यकोपस्य राज्ञः अस्तित्वमनस्तित्वप्रायमेव भवति। अवन्ध्यकोपस्यैव वशीकरणसामर्थ्यात्। तदुक्तम्—

'अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः' इति।

तदिदं महत्तरं कार्यं भारतीयराजनीत्यनुसारेण अध्यात्मविदा सङ्कल्पमात्रेण साधयितव्यमस्ति। तदुक्तं मम्मटेन—

'नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति॥' इति। (का० प्र०)

यद्यप्यत्र कार्यारम्भसङ्कल्पस्य उल्लेखो नास्ति। तथापि 'भारती'शब्देन कवयितुः अन्तर्गतः समाधिभावनायामभिव्यक्तः नाद एव सङ्कल्पाख्यो बोध्यः। सोऽयं नादरूपः अध्यात्मविदः सङ्कल्पः जगदन्तःपाती किमपि वस्तु आकर्षति, विकर्षति प्रक्षिपति, नवं निर्माति, इत्यादयोऽस्य गुणा लोकेषु दृष्टाः लोहचुम्बकवत् विद्युद्वद्वा सम्भवन्तीति अध्यात्मविदः सङ्कल्पस्य लोहचुम्बकेन विद्युता वा साधर्म्यं वक्तुं शक्यते। उभयोरन्तरमिदमेव यत् लोहचुम्बके विद्युदादौ च वर्तमानं तत्वं जडत्वेन भासते। उपर्युक्तसङ्कल्पे तु चेतनरूपेण भासते इति। येन इदं विद्युत्तत्वं शमे स्थित्वा स्वकीयसङ्कल्पे साधितं सः सर्वमपि जगत् तत्सजातीयविजातीय-विद्युदन्यतररूपेण सङ्कल्पेन कस्यचित् आकर्षणाय कस्यचिच्च विकर्षणाय समर्थो भवति। जगतः उपर्युक्तान्यतरविद्युद्रूपत्वञ्च योगवासिष्ठे उपवर्णितं दृश्यते।[1]

---

१. सर्वं तृष्णात्मकं किंचित्तेजोऽर्काग्न्यभिधं विदुः।
शीतात्मकं तु सोमाख्यमाभ्यामेव कृतं जगत्॥—

## जयमङ्गलाक्रोडपत्रम्

तेन सर्वमिदं जगत् अग्नीषोमोभयात्मकमिति सिद्धं भवति। तत्र अग्निः सोमतत्वस्य अत्ता, तथा सोमोऽपि अग्नेः। यथा मनुष्यान्तर्वर्तिनोऽग्नितत्वस्य आकर्षणमन्नरूपेण वृक्षः करोति, वृक्षान्तर्वर्तिनः सोमतत्वस्याऽन्नस्य आकर्षणं मनुष्यः करोति, स्वसजातीयं तु दूरं विक्षिपति। अतः समस्तमपि जगत् अग्नीषोमोभयात्मकम्। अग्नीषोमतत्वयोः अन्तर्वर्तितत्वस्यापि आकर्षणविकर्षणाभ्यां विद्युद्रूपत्वं सिद्धं भवति। यथा निगेटिव पोजेटिवान्यतरभूता एका विद्युत् सजातीयां विक्षिपति विजातीयामाकर्षति, तथा अग्नीषोमयोरपि अयमेव गुणो दृश्यते। इदमेव कार्यं स्वेच्छया जगतः सञ्चालनसमर्थे अध्यात्मविदां सङ्कल्पे निहितमस्तीति तस्य विद्युत्त्वमुक्तं भवति। तथाविधं कार्यं जडभूतया विद्युता कथं भवतीति अचेतनेषु वैज्ञानिकैः संसाध्य प्रकाशितमस्ति यथा निर्जीवानां मण्डूकानां नेत्राणि विद्युत्संवलनेन निमील्यन्ते उन्मील्यन्ते च। केशेषु प्रसाधनकाले दन्तिकाकचस्पर्शे जाते तज्जनितविद्युन्महिम्ना रोमाञ्चोऽपि भवति इत्यादि। तथाविधमेव कार्यं योगिसङ्कल्पेऽपि दृष्टम् अतः विद्युतः अतीवम् महत्तरं सामर्थ्यं सिद्धं भवति। एतस्मादेव कारणात् शमप्रधानस्य पुरुषस्य अभिमानाभावेऽपि स्तब्धताबाष्परोमाञ्चादयः अनुभावाः सम्भवन्तीति यत् भावप्रकाशने उक्तं, तत् विद्युत्सञ्चारमहिम्नैव ज्ञेयम्। अत एव नाट्यस्थले जीवातुभूताः सात्विका भावाः आनन्दरोमाञ्चादयः अनुकुर्वता नटेन स्थायिभावशून्येन कथं सञ्चारयितुं शक्याः ? इति चिन्तायां सङ्गीतरत्नाकरादौ नृत्याध्याये इदमेवोक्तमस्ति यत् पञ्चभूतेष्वन्यतमे तत्र तत्र तत्तन्नाडीद्वारा प्राणं सञ्चार्य सात्विकभावाः प्रकाशनीया इति। उक्तं चैतत् ३३३ पृष्ठेपि

अत एव नटेन शान्तानुभावोऽपि रोमाञ्चः गात्रसङ्कोचेन जलतत्वे प्राणसञ्चरणसहकृतेन साधयितुं शक्यः। इतोऽधिकं प्रत्यक्षशारीरके द्रष्टव्यम्। अत्रायं कार्यकारणभावनिष्कर्षः यत् सर्वत्रापि विभिन्न-विभिन्नकार्यकारणभावकल्पनापेक्षया साधारण्येन वेगवतो विद्युतो द्रव्यस्य संयोगे सति भूतेषु गतिर्भवति इति लाघवात् कल्प्यते कार्यकारणभावः। तेन चुम्बकसान्निध्ये लौहगतिः निर्जीवमण्डूकनयनोन्मीलनादि इत्यादौ समानभूता एका विद्युत्शक्तिरेव लाघवात् कल्पयितुं योग्या। सैवाध्यात्मविदः सङ्कल्पशक्तिरपीत्यभिधीयते। केचित् अदृष्टशक्तिपदेनापि तां व्यवहरन्ति।

इयं शक्तिः सङ्कल्परूपा शरीरान्तःस्थितं वायुं प्रेरयित्वा तस्य वेगेन उष्णतां समुत्पादयन्ती शरीरे नादात्मना परिणमति।[1]

---

विद्याऽविद्यास्वरूपेण सर्वं सदसदात्मना।
जगद्वा येन निर्वृत्तं तदेवैवं विभज्यते॥
संवित्प्रकाशं विद्यादि सूर्यमग्निं विदुर्बुधाः।
असज्जाड्यं तमोऽविद्यामाहुः सोमं मनीषिणः॥ (यो०वा०स०७१।७६-७७-७८)

१ आत्मा निःसङ्ग एवैकः साक्षी सर्वस्य कर्मणः।

## जयमङ्गलाक्रोडपत्रम्

अत्रेदं तत्त्वम् जीवस्य ध्यानसहकृतेन सङ्कल्पेन मूलाधारस्थस्य अग्नेरुध्वं यदा ज्वाला भवति तदा तद्वेगप्रयुक्तः नादोऽपि समुदेति इति योगिनामनुभवः उपवर्णितो वर्तते । तदुक्तम्—

'आनन्दलक्षणमनाहतनाम्नि देशे नादात्मना परिणतं तव रूपमीशे।
प्रत्यङ्मुखेन मनसा परिचीयमानं शंसन्ति नेत्रसलिलैः पुलकैश्च धन्याः । इति

एवं विधो नादः विराट् पुरुषशरीरनिष्ठः सन् सर्वत्र जगतीतले प्रसरति, जगच्चसञ्चालयति । उपासकैः प्रणवरूपेण यः उपास्यते, सः नादरूप एव। तस्य च व्याप्तिः बहुदूरं वर्तते, तत्र प्रमाणं शारदातिलके द्रष्टव्यम् । उपास्यानां प्रणवेष्वप्यन्तर्हितानाम् अक्षराणां वहुयोजनव्यापित्वम् तान्त्रिकैः साधितमासीत् तत् केवलं शब्दप्रमाणमधिकृत्य उच्यते स्म, परमधुना रेडियो-द्वारा तेषां बहुयोजनव्यापित्वं प्रत्यक्षेणापि ज्ञायते। अतः अध्यात्मविदः सङ्कल्पः इच्छारूपः सर्वमपि जगत्—आकर्षितुं विक्षेप्तुं च शक्नोति। एवंरीत्या स-न्यासाश्रमस्य शमप्रधानस्य ध्यानबलेनैव अभीष्टसाधकस्य राज्यसंरक्षणे महानुपयोगः सिद्धो भवति । अतः राज्यसंरक्षणे न्यायदानम् ततन्नि-मित्तप्रसङ्गे नैमित्तकस्य सफलं परिवर्तनम्, परिवर्तनेन राष्ट्रस्य संरक्षणम्, विद्युदभिन्नेन सङ्कल्पेन आभीप्सितस्य कार्यस्य सम्पादनम् च अध्यात्मविदां कार्यम्। अतो भारतीयराजनीत्या निर्णायकत्वेन तस्य संस्थानमभिलष्यते सोयमनितर-साधारणः सन्यासाश्रमराजनीत्योः सम्बन्धो बोध्यः ।

## वानप्रस्थसन्यासाश्रमयोरन्तरम्

ननु वानप्रस्थेन अन्वीक्षा कर्तव्या इति प्रागुक्तम्। सा च विना शम-साहाय्यं यथावन् न भवितुमर्हति। इति वानप्रस्थेनापि शमभावः आलम्बनीय एव। तथा सन्न्यासेन शमस्य प्राधान्यं स्वीकृतवतापि अन्वीक्षणं कर्तव्यमेव । तथा सति अनयोरुभयोः किमन्तरम् ? इति चेत्, उच्यते । तत्र तत्र ततद् भावनां प्राधान्यमेवेति ! तथाहि—कविर्हि क्वचित् ओजः प्रसादगुणं माधुर्यं बा अभिव्यञ्जयितुं तदनुबन्धिनः शब्दान् योजयितुमऽभिलषति । तदुक्तं चन्द्रालोके[1] द्रष्टव्यम् ।

---

तस्य स्यामिति सङ्कल्पो मन आख्यां लभेत्तु सः ॥
विषयेभ्यः प्रयत्नेन मन आत्माऽधितिष्ठति ।
मनोऽधितिष्ठति प्राणपूर्वान् पञ्च समीरणान् ॥
ते धातून् व्याप्य धमनीमुखेभ्यस्तत्र सम्भवान् ।
अग्नीन् प्रज्ज्वलयन्त्येव तेभ्यो नादः प्रवर्तते ।' (भा० प्र० ७ अधि०) इति ।

१ सर्वैरूर्ध्वैः सकारस्य सर्वै रेफस्य सर्वथा ।
मधुरायां समाक्रान्ता वर्गस्थाः पञ्चमैर्निजैः ।—

## जयमङ्गलाक्रोडपत्रम्

एवं योजने तद्तद्गुणप्रादुर्भावेन रसिकानां चेतसि दीप्तिव्याप्तद्रुतिभेदेन ओजःप्रसादमाधुर्यात्मके वृत्तिविशेषे सुखविशेषः उत्पद्यते। तदुक्तम् गोकुलनाथोपाध्यायैः काव्यप्रकाशविवरणे प्रथम उल्लासे तददोषौ गुणावित्यत्र[1]—

एवं च रसिकैरनुभूतौजोमाधुर्यप्रधानता क्रमेण वानप्रस्थसन्यासाश्रमयोः दृश्यते। तत्र ओजोगुणः वानप्रस्थ, यतः स आश्रमः आन्वीक्षिकीं प्रधानत्वेन मनुते। अतः वानप्रस्थाश्रमिणः काव्यं ओजोगुम्फितं भवति। तत्र चित्तद्रुतिर्नास्ति। अतएव माधुर्यमपि नाऽस्ति। शमप्रधाने सन्यासाश्रमे तु एतद्विपरीता स्थितिर्वतते। तेन निर्मिते काव्ये स्वभावतः चित्तस्य द्रवीभावः माधुर्यं च रसिकैरनुभूयते। एतद्विषये एकमुदाहरणं प्रस्तूयते—

पठन्तु कतिचिद्धठात् खफछठेतिवर्णच्छटाः।
घटः पट इतीतरे कटु रटन्तु वाक्पाटवात्॥
वयं बकुलमञ्जरीगलदमन्दमाध्वीझरी—।
धुरीणपदरीतिभिः भणितिभिः प्रमोदामहे॥ इति॥

अतः सर्वरसानुभवानन्तरं माधुर्यस्य पूर्णतया यत्र अनुभवस्तत्रैव शमे विश्रामः। तदुक्तम्—भावप्रकाशनस्य शान्तरसप्रकरणे—

सर्वप्रकारैः सम्पूर्णकामः सन्तुष्टमानसः।
प्राप्नोति मुक्ति चरमे शान्तेनैव रसेन सः॥ इति।

सोऽयं वानप्रस्थसन्यासाश्रमयोर्भेदः द्रष्टव्यः।

### नीतिसारोक्तसन्यासधर्मान्तरस्यान्तर्भावः

ननु नीतिसारे अन्येऽपि सन्यासधर्मा उक्ताः। ते मूले अपरिगृहीतत्वान् नीतिसारकर्त्रा कल्पिताः किम्? इति चेन्न। धर्मशास्त्रेषु उक्तत्वात् न कल्पिताः। न च मूलकृतोऽसम्मताः इति वाच्यम्, यथायोग्यं नीतिसारोक्तानां धर्माणां संयतेन्द्रियत्वादौ अन्तर्भावयितुं शक्यत्वात्।

---

रहौ द्वेधा तु संयोगः परुषायां शषौ स्वतः।
लकारश्च लसंयुक्तो ह्रस्वव्यवहितौ रणौ॥
लकारोऽन्यैरसंयुक्तो लघवो घमसा रसौ।
रेफाक्रान्ता वर्गयणाष्टवर्गात् पञ्चमादृते।
ललितायां तथा शेषा भद्रायामिति वृत्तयः।
कपाक्रान्तस्तवर्गः स्यात् प्रौढायां च कमूर्धता। (च० ६।२३-२४) इति

१ 'एवमासाद्यमाने भावे तिस्रोऽवस्था। आह्लादकत्वं दीप्तिर्व्यापकता चेति त्रयं द्रुतेन दीप्तेन व्याप्तेन चेतसा रसास्वादो गृह्यत इति त एव माधुर्यौजः— प्रसादाख्या गुणाः।' इति

## जयमङ्गलाक्रोडपत्रम्

तत् विशदीक्रियते—

| नीतिसारे | अर्थशास्त्रे |
|---|---|
| १—निष्परिग्रहतायाः | निष्किञ्चनत्वे |
| २—अद्रोहस्य | अहिंसायाम् |
| ३—समतायाः | सङ्गत्यागे धृतौ वा |
| ४—व्रतचारितामौनयोः | संयतेन्द्रियत्वे |
| ५—समाहारधारणाध्यानानाम् | शमरूपे संयतेन्द्रियत्वे |
| ६—भावसंशुद्धेः | आभ्यन्तरशौचे |

अथ येन हेतुना नीतिसारोक्ताः उपर्युक्ताः गुणाः मूलस्थेषु गुणेषु अन्तर्भाविताः स हेतुः विस्तार्य निर्दिश्यते ।

( १ ) सन्न्यासिना परिग्रहो न कर्तव्य इति नीतिसारकारो वदति । तदपि सत्यमेव । सन्न्यासस्य वैराग्याधिकारकत्वात् । 'यदहरेव प्रव्रजेत् तदहरेव व्रजेत्' इति विधानात्, न च जीवनमस्य कथं भवतीति शङ्क्यम्, वानप्रस्थाश्रमप्रकरणे चीराणि किं पथि न सन्ति' इति प्राङ्निर्दिष्ट ( पृ० ३१८ ) भागवतपद्येन जीविकायाः अन्यथाऽपि साधयितुं प्रदर्शितत्वात् । अत एव सन्न्यासाश्रमे स्थितः पूर्णवैराग्यवत्वात् प्रतिग्रहं त्यजति, इति तस्य निष्किञ्चनतयाऽवस्थानमेव शोभनम् । अतः निष्परिग्रहता निष्किञ्चनतायां अन्तर्भाविता ।

(२) साधारणधर्मेषु अहिंसादीनां सङ्गृहीतत्वात् विशेषतया सन्यासधर्मे अहिंसाप्रधानस्य शमस्य भागवते ( पृष्ठ ३१३ ) निर्दिष्टत्वात् अहिंसायामद्रोहः अन्तर्भावितः ।

(३) समता मिथ्यात्वनिश्चयाभावः तद्ध्वनितं गोकुलनाथोपाध्यायैः—काव्यप्रकाशविवरणे द्रष्टव्यम्[1] ("अहौ वा हारे वा" इति श्लोकव्याख्याने । ४ उ० १७० पृ०)

अत एव "ब्रह्मदर्शनं समत्व"मिति इति वदन्ति । केचितु 'प्रियाप्रियाविकारित्वं तत्' इति व्याख्यान्ति । तदुक्तम्—उपाध्यायनिरपेक्षायाम् द्रष्टव्यम् ।[2]

एवञ्च समता धृत्तौ पर्यवस्यतीति यावत् । अत्र प्रमाणं गीताभाष्येपि द्रष्टव्यम्[3] । उपर्युक्तोभयविध ( मिथ्यात्वनिश्चयाभाव प्रियाप्रियाविकारित्व ) व्याख्यानेन हर्षशोकाभावयोः हर्षशोककृतविकाराभावस्य वा सङ्गत्यागे पर्यवसितत्वात् विना समवृतिं न्यायदानस्य असम्भवदुक्तिकत्वात् । 'समत्वं मूलकृदुक्ते परिव्राजकधर्मान्तर्गते सङ्गत्यागे बा अन्तर्भवतीति हृदयम् ।

---

१ अत्र सर्वत्र समदृष्टिशिवशब्दप्रलापादिभिरनुभावैरुल्लासितो हर्षादिव्यभिचारी शमः स्थायी भावः' इति ।

२ समता सर्वजन्तुषु समबुद्धिः सर्वप्राणिषूपकार्यपकारिष्वपि' ।

३ 'समता रागद्वेषाभावः' ।

## जयमङ्गलाक्रोडपत्रम्

(४) व्रतचारितेत्यस्य ब्रह्मचर्यस्वरूपत्वात् जितेन्द्रियत्वे अन्तर्भावः, 'ब्राह्मणः पाण्डित्यं निर्विद्य बाल्ये तिष्ठासेत्'' इति श्रुतिविधानात्। मौनमपि वाचालताप्रति-षेधरूपं संयतेन्द्रियत्वेऽन्तर्भावितम्। न च उपर्युक्तश्रुतौ मौनमभिहितमस्तीति कथमवगतमिति वाचयम्, तद्भाष्ये तथा निरूपणात्।

(५) नीतिसारे उक्तानि समाहारधारणाध्यानानि प्रधानशमरूपे संयतेन्द्रियत्वे ऽन्तर्भावितानि। तत्र कारणं शमस्यैव लक्ष्यत्वम् बोध्यम्,[1] ।

### अथ मनसो निग्रहविमर्शः

अत्रेदमवधेयम्—''कृत्स्नं हि शास्त्रमिदं इन्द्रियजयः'। इति वक्ष्यमाणमूलग्रन्थेन संयतेन्द्रियत्वे शास्त्रपारतन्त्र्यं इति निर्णीयते। जितेन्द्रियत्वं, विना मनसः वशीकरणं न सम्भवति। अत एवोक्तं नीतिसारजयमङ्गलायाम् ''धारणा मनसो निरोधः'' इति। अतः मनसो वशीकरणमावश्यकम्। ननु मनसः एकत्र धारणम् असम्भवि। मनसः अणुपरत्वेन प्रत्यक्षायोग्यत्वात्। इति चेन्न।

### धारणाध्यान विमर्शः तद्भेदश्च

धारणायाः स्वरूपे अगवते सति मनसः वशीकरणं ज्ञातुं शक्यते इति धारणा विमृश्यते। तथाहि—मनःसहचरितो वायुः इत्युक्त्या याभिः नाडीभिः वायुः प्रवहति, ताभिरेव मनः प्रवहति इति योगप्रकरणे उक्तमस्ति। अतः वायुगत्यवरोधे तत्सहचरित-त्वान् मनसोऽपि अवरोधः भवितुमर्हति। न च वायुरपि नावरोद्धुं शक्यते लौकिकैः इति वाच्यम्, स्वशरीरे सात्विकभावानां सञ्चारणाय लौकिकैः नटैः प्राणधारणं नाटकेषु कर्तव्यमिति काव्यप्रकाशविवरणे (पृ० ३३३) उक्तत्वात्। न च प्राणवहा नाड्योपि न प्रत्यक्षसिद्धाः। कदाचिन् नाडीनां प्रत्यक्षत्वेऽपि तन्निष्ठस्य प्राणस्य वायोरतीन्द्रियत्वात् अप्रत्यक्षत्वमिति दोषतादवस्थ्यम् इति वाच्यम्। यासु नाड़ीषु रक्तं प्रवहति, तासां प्रत्यक्षसिद्धत्वात्, रक्तस्य रङ्गवैजात्येन फेनादिप्रदर्शनेन च वायोः प्रवाहस्य उपनायकविधया सुज्ञेयत्वात्, प्राणवहनाड़ीनां प्रत्यक्षं भवितुमर्हतीति प्रत्यक्षशारीरके उक्तत्वाच्च। ननु प्रथमतः वायुप्रवाहस्यानुमानं कथमिति चेदुच्यते।

''पित्तादुष्णाश्च नीलाश्च श्वेता गौर्यः स्थिराःक्रमात्''। इत्युक्तरीत्या रक्त-वहनाड्यां परीक्षितायां वायुपित्तकफादीनां सञ्चरणमनुमातुं शक्यते। तद्यथा—शिरावेधे कृते सति यदि रक्तस्रावसमये बुद्बुदाकारता प्रत्यक्षगोचरा भवति तदा वायुः सञ्चरति। एवं यदा प्राणः सञ्चार्यते तदा रक्तस्य रक्तता भवति। नाडीनामु-

---

१ तदुक्तम्—

सुनिपुणमुपसेव्य सद्गुरुम् शुचिरनुवृत्तिपरो विभूतये।
भवति हि विनयोपसंहितो नृपतिपदाय शमाय च क्षमः।' इति। नी०सा०

ष्णतायां नीलतायाञ्च पित्तमभिव्यज्यते। श्वेततायां शिरासु कफसञ्चारो भवति इत्यादि। अतः रक्तवहनाडीनां शास्त्रमर्यादामनुसृत्य यदि वक्ष्यमाणनिर्देशानुसारेण नियमनं क्रियते, तर्हि प्राणवायुनियमनं सम्भवेत्। ततश्च मनसोऽपि नियमनं सम्भवति। अमुं विषयं मनसि निधाय योगसूत्रे नारायणतीर्थस्वामिभिः 'देशबन्धश्चित्तधारणा' इत्यत्र व्याख्यातम्[१]— तत्रैव व्यक्तम्।

किञ्च उक्तरीत्या वायोः नियमनेन मनसः नियमनं भवतीति ज्ञात्वैव योगसूत्रे योगसिद्धये साधनत्वेन तपसः पृथगुपन्यासे कृतेऽपि प्राणायामप्रकरणं पृथगुपन्यस्तं साधुसम्मतं बोध्यम्। तदुक्तं नारायणतीर्थस्वामिभिः। (पृ० १०२) इन्द्रियाण्येवेत्यत्र-- "एवकारो भिन्नक्रमः तस्माद् सर्वस्यापीन्द्रियजयमूलकत्वात्तदर्थं चलचित्तेन प्राणायामाभ्यासोऽवश्यं कार्यं इति भावः"।।५२।। इति।

एतेन मनसः निरोधे प्राणायामस्यैव मुख्योपायत्वेन अभिहितत्वात् तं विना मनसः जयासंभवेन मनोजयेन आवरणस्य आत्यन्तिकी निवृत्तिः यावन्न भवेत्, तावत् ध्यानमपि नोत्पत्तुमर्हति। इत्यपि मन्तव्यम् तदुक्तं तैरेव तत्रैव द्रष्टव्यम्।[२]

अतः स्पर्शवहनाड्या नियम्यमानस्य प्राणस्य इतिकर्तव्यतया प्रतिपादितः अवरोधप्रकारः वक्ष्यमाणः अवश्यमनुसन्धेयः। तथाहि—

यदाहि यस्य कस्यचन विषयस्य प्राप्ति प्रति मनुष्यस्य उत्कण्ठा भवति, तदा तस्य तद्विषयणी इच्छा तीव्रा भवति। सत्यां च तस्यां विजातीयप्रतिबन्धकापसारणपुरःसरम् अभिलाषानुसारेण प्राणसञ्चरणमपि सहजतः कर्तुं शक्यम्। इति सात्विकभावोत्पत्तिप्रक्रियायां नाट्यशास्त्रे दर्शितमस्ति।[3]

यस्मिन् विषये अभिलाषा भवति, स विषयः मानसमूर्तिरूपेण परिणम्यते। तत्र च अभिलाषोपनयान् मनः संसृष्टं भवति। अत एव तद्बलात् सा मूर्तिः मानसप्रत्यक्षविषयाऽपि भवति। वायोः नियमनार्थं ध्येयभूता मूर्तिः यदि

---

१ आध्यात्मिके नाभिचक्रहृदयकण्ठमुखभ्रूमध्यमूर्द्धानासादौ, बाह्ये पर्वतमस्तकाकाशादौ बन्धश्चितस्य विषयान्तरपरिहारेण यच्चितस्य स्थापनं तदैकाग्र्यम् सा धारणेत्यर्थः।' इति।

२ 'अर्थमात्रस्य प्रत्ययादिवर्जितस्य ध्येयस्य निःशेषेणासन्दिग्धो सर्वात्मना भासो भानं यत्र तथाभूतं अहमिदं चिन्तयामीत्येवंविधाकारशून्यम्। अत एव निर्विकल्परूपत्वेन प्रत्यक्षागोचरत्वात् स्वरूपशून्यमिव न वस्तुतः स्वरूपशून्यम्, अनुमानवेद्यत्वात् तादृशं ध्यानं भावनाविशेषः'।

३ तदुक्तं गौकुलनाथोपाध्यायैः—'सात्विकास्त्वात्मत्वेनाऽध्यस्तस्य प्राणस्य सूक्ष्मभूत प्रकारात्मकाः स्तम्भत्वादिनाऽष्टधा भिद्यमाना व्यभिचारिणोऽपि वाह्यस्वरूपेण परिणामादनुभावतयाऽपि स्पृश्यन्ते (का० प्र० ४।३०)

## जयमङ्गलाक्रोडपत्रम्

वायुना सह संसक्ता मानसप्रत्यक्षविषयीक्रियते, तर्हि मूर्तिसम्बन्धात् वायुरपि अलौकिकप्रत्यक्षगोचरो भवति इति अभिलाषापरम्परया वायोरपि प्रत्यक्षत्वं भवति इति । नचेदमशक्यमिति शङ्क्यम् । धूलिकणानां सामुदायिकरूपेण उच्छलनदशायां तत्संयुक्ततया वायोरपि धूलिकणस्य प्रत्यक्षेन सह अलौकिकप्रत्यक्षत्वं नानुपपन्नमिति शास्त्रेषु तत्र तत्र उद्घोषितमस्ति । वायुरूपतया कल्पितानां मूर्तीनां यत्र यत्र प्रदेशे स्थिरः विन्यासः स्यात्, तत्र तत्र वायोरपि स्थैर्यमवश्यमेव भवेत् । इति वायोःस्थैर्यान्मनसोपि स्थिरत्वं संभवितुमर्हम् । मूर्तयश्च याः मनोमय्यो निर्मातव्याः ताः शरीरस्वास्थ्यलाभदृष्टया मधुररसाप्लुत्ता निर्मातव्याः । तेन मधुररससञ्चरणात् शरीरमपि स्वस्थं भवति ।

### नादः

अथ नादविषये उच्यते । योगः प्राणवायुं यथा स्वायत्तीकरोति तथा उदानवायुमपि स्वेच्छया ऊर्ध्वं सुषुम्नया नाडया ध्यानेन प्रतिलोमगत्या सञ्चारयितुं प्रयतते तदा उदानवायुः सुषुम्नया नाडया वह्निना समं ऊर्ध्वमभिमुखीभूय शरीरान्तर्नाडीप्रदेशेन ब्रह्मरन्ध्रं प्रयाति, तदा तन्महिम्ना योगी नादं शृणोति । सोऽयं श्रूयमाणः नादः कुण्डलिनीनाम्ना व्यवह्रियते । सैव च अम्बिका परा प्रकृतिः इति नाम्नाप्यभिधीयते इत्यन्यदेतत्

प्रस्तुते पुनरुच्यते । यदोक्तरीत्या प्राणस्य तदधिष्ठितदेशात् स्वाधिष्ठितप्रदेशे निष्क्रमणं कारयितव्यम्, तत्र तीव्रा इच्छाशक्तिरपेक्ष्यते । इमामेव तीव्रामिच्छाशक्तिं 'विल्पावर' शब्देन आधुनिका वदन्ति ! प्राञ्चस्तु सङ्कल्पपदेन ।

युवावस्थायां बलसत्वात् विना ध्यानादिमहिम्नाऽपि शरीरस्य धारणमारोग्यपूर्वकं भवति । वार्धक्ये तु शरीरस्य धारणं नीरोगपूर्वकं कठिनदशामाप्नोति । अतः तदवस्थायां जीवनरक्षणस्य कामनायाः प्राबल्यात् उक्तरीत्या हर्षजनिकां मनःप्रसादजनिकां मधुररसमूर्तिं कल्पयित्वा वृद्धैः स्वाभिलषितप्रदेशे प्राणधारणाव्यापारेण तत्र तत्र रसान् सञ्चार्य वार्धक्यप्रयुक्तदोषकोपस्य अपसारणं कर्तुं शक्यते । यावत्पर्यन्तं अभिलषितप्रदेशे प्राणधारणार्थं मनसः प्रयत्नः अपेक्ष्यते, तावत्पर्यन्तं स प्रयत्नः धारणेत्यभिधीयते । ततः धारणाप्रयुक्तेन अदृष्टेन सहजत एव ध्येयांशे मनः धार्यते, तदा ध्यानमिति व्यपदिश्यते । तत्प्रवाहे च समाधिर्भवति इत्यादि द्वितीयाध्याये तर्कविचारे प्रागुक्तमेव । (पृ० १५०)

तत्तन्मनोभिलषितां मूर्तिं चाभिध्याय स्तम्भिन्यादिभेदा योगसिद्धान्तचन्द्रिकायां वर्णिताः ।

एवंरीत्या धारणस्वरूपे विमृष्टे सति मनसः अतीन्द्रियत्वेऽपि तन्निरोधः न असम्भवदुक्तिकः ।

### प्रत्याहारः

नीतिसारे सर्वेन्द्रियसमाहारस्य धारणाध्यानाभ्यां पृथग् ग्रहणं कृतम्

## जयमङ्गलाक्रोडपत्रम्

सोऽयं समाहारः योगसूत्रे प्रत्याहारपदेन व्यपदिष्टः उभयोः एककार्यकरत्वात् । तदेतत्प्रत्याहारविमर्शनेन स्फुटीभवति ।

तथाहि—विषयेषु रञ्जनीयेषु कोपनीयेषु वा रूपादिषु इन्द्रियप्रवृत्तौ तत्संयोगो भवति । अतः एतत्परित्यागः कर्तव्यो भवति सोयं असंप्रयोगः, अन्तर्मुख परिणामः प्रत्याहारो वा भवति । तदुक्तं योगसिद्धान्तचन्द्रिकायां द्रष्टव्यम्[1] । अत्रापि पुनः तत्तत्प्रदेशे उपर्युक्ता प्राणवायोर्धारणाऽपि कारणत्वेन ज्ञेया ।[2]

---

१ चित्तस्य विषयो मोहनीयो रञ्जनीयः कोपनीयश्च रूपादिस्तेन सम्प्रयोगस्त-दभिमुखता, "तत्परित्यागोऽसंम्प्रयोगो वैराग्येणान्तर्मुखपरिणाम इति यावत् । तस्मिन् सति मधुकरराजमनु मधुमक्षिकाणामिव यश्चित्तस्वरूपानुकार एवेन्द्रियाणां चित्तनिरोधे साधनान्तरं विना तद्वृत्तिनिरोधश्चित्तलक्ष्याभिमुखतारूपः सः । इन्द्रियाणि विषयेभ्यः प्रतीपमाह्रियन्तेऽस्मिन्निति व्युत्पत्तेः प्रत्याहारपदार्थ इत्यर्थः । (पृ०१०२) । 'इन्द्रियार्थेभ्यः शब्दादिभ्यो मनसा निवर्त्येति फलीभूतः प्रत्याहारः । प्राणायामसाध्यमाह दशद्वादशभिर्वेति । द्वाविंशतिसङ्ख्याभिः सञ्चोदनाभिश्चित्ताश्वस्य-प्रतोदनस्थानीयाभिः प्रेरणाभिः प्रतिमानात्मानं जीवं चतुर्विंशादज्ञानात् प्रकृति-संज्ञकान्तं परं प्रति गन्तुं प्रचोदयात् प्रेरयेत् ।

२ तत्राष्टादसु स्थानेषु वायोः प्रत्याहरणं याज्ञवल्क्य आह-

अष्टादशासु यद्वायोर्मर्मस्थानेषु धारणम् ।
स्थानात् स्थानात् समाकृष्य प्रत्याहारो निगद्यते ॥
सम्पूर्य कुम्भवद्वायुमङ्गुष्ठान्मूर्ध्नि मध्यतः ।
धारयत्यनिलं बुद्ध्या प्राणायामप्रचोदितः ॥
व्योमरन्ध्रात् समाकृष्य ललाटे धारयेत् पुनः ।
ललाटाद्वायुमाकृष्य भ्रुवोर्मध्ये निरोधयेत् ॥
भ्रूमध्याद्वायुमाकृष्य नेत्रस्थाने निरोधयेत् ।
नेत्राद् वायुं समाकृष्य नासामूले निरोधयेत् ।
नासामूलात्तु जिह्वाया मूले प्राणं निरोधयेत् ।
जिह्वामूलात् कण्ठकूपे ततो वायुं निरोधयेत् ॥
कण्ठकूपात्तु हृन्मध्ये हृन्मध्यान्नाभिमध्यमे ।
नाभिमध्यात् पुनर्मेढ्रे मेढ्राद्बाह्यलये ततः ॥
देहमध्याद् गुदे गार्गि गुदाद् वै ऊरुमूलके ।
ऊरुमध्यात्तयोर्मध्ये तस्माज्जान्वोर्निरोधयेत् ॥
चितिमूले ततस्तस्माज्जङ्घयोर्मध्यमे तथा ।
जङ्घां ततः समाकृष्य यस्त्वेवं धारयेद्धिया ॥—

## जयमङ्गलाक्रोडपत्रम्

व्यवस्थितरूपेण हर्षजनकमधुररसमूर्तिः येन न साधितता, सः सङ्कल्पात्मकशक्तिं परिघुन्वन् किं वा साधयेत् ? यत्र किल रसमात्रं लक्ष्यीकृत्य अधीयते, तत्र रसनीयत्वमेव अभ्यस्तं सदा तिष्ठेत् । एवं सति वैराग्यमेव नास्ति । प्रत्याहारोऽपि अत एव दूरं गतः । सदा रसे स्थितः विषयं ध्यायन् ओजसः क्षयमेव कुर्यात्। अतः अन्वीक्षया ओजःसंरक्षणार्थं ध्यानमावश्यकम्। ज्ञानप्रभायामानन्दभानं प्रशमरूपं ओजसः निर्वाहकं भवतीत्यत्र प्रमाणम्—"हृद्यं तत्स्यादि"त्यादि" प्राङ्निर्दिष्टं चरकवाक्यं (पृ० २०४) वर्तते, इत्यलम् ।

### विद्यावतोऽपि कर्तव्यांशे अप्रवृत्तिः

ननु सङ्कल्पशक्तेः एतावन्माहात्म्यं विजानतोऽपि फललाभाय विद्यावतः सङ्कल्पे प्रवृत्तिः कुतो न दृश्यते ? इति चेत् उच्यते । विद्यावतोऽपि तदंशे कृतिसाध्यत्वानिर्णयः विद्यावति प्रवृत्तिं न सम्पादयति । तथाहि-ज्ञानप्रभायां आनन्दमिश्रणमात्रेण सत्वमुद्बुद्धम् परम् तावन्मात्रेण प्रवृत्तिः कथं भविष्यति ? यावज् ज्ञानप्रभायां क्रियाप्रभामिश्रणं न भवेत्। अत एव विद्यावत्सु शक्तेरपि अनुद्गमः मन्तव्यः । तदुक्तम्—

ज्ञानप्रभा च सानन्दा तस्याः सत्त्वं प्रजायते ।
क्रियाप्रभा रजः सत्वात् शक्तिः स्यात् तु तमः प्रसूः ॥ इति ।
(पाठान्तरे–उत्तमप्रसूः)

अतः आनन्दप्रभासंवलितज्ञानप्रभायां क्रियाप्रभामिश्रणं कार्यमिति सिद्धं भवति । तदर्थं विद्यावद्भिर्विवेकः शरणीकरणीयः । तथाहि—यदि शरीरस्य कीदृशं स्वरूपमिति विद्यानुसारेण अधोलिखितरीत्या चिन्तयिष्यते, तर्हि विद्यावद्भिः प्रयत्नेनात्मनि प्रतिभावत्वं कृतिसाध्यत्वनिर्णायकं शक्तिमत्वं च उभयमपि संपादयितुं शक्यं स्यात् तद्यथा—शरीरे सुखदुःखादिसंवेदनं तदनुबन्धिन्यश्च चेष्टाः याः का अपि भवन्तु ताः सर्वाः मस्तिष्कस्य नियमनेनैव सम्भवन्ति शिराद्वारा मस्तिष्केण सह रसनानासिकादिसम्बन्धात्। यावन्ति रसनानासिकादिस्थानानि वर्तन्ते, तैः सह आमस्तिष्कं शिराद्वयं सम्बद्धमस्ति । एवमाहत्य सम्बद्धशिराणां द्वादशसमुदायाः भवन्ति । तद्बोधनार्थं प्रत्यक्षशारीरके तत्तद्सङ्ख्याक्रमोऽपि निर्दिष्टः ततः एव अवगन्तव्यः । एतासु शिरासु काश्चिज्ज्ञानप्रापिकाः, काश्चित् क्रियासंवेदिकाः, काश्चित् उभयसंवेदिकाः तथाविधस्थितेः छिन्नशवशरीरे दर्शनात् । एतेन विद्यावत्सु प्रवृत्तिः

---

निष्पापः स विशुद्धात्मा जीवेदाचन्द्रतारकम् ।
एतत्तु योगसिध्यर्थं सामस्त्येनापि कीर्तितम् ॥
प्रत्याहारेषु सर्वेषु प्रशस्तमिति योगिभिः ॥ इति ॥
एवमष्टादश प्रत्याहारचोदनाः (पृ० १०३)

## जयमङ्गलाक्रोडपत्रम्

कुतो न भवति, इति यः प्रश्नः सोऽपि व्याख्यातो भवति। साम्प्रतं हि केचित् ज्ञानार्थं प्रयतन्ते, ते उपर्युक्तरीत्या ज्ञानसंवेदिकासु नाडीषु चेष्टनं चिकीर्षन्ति, अपरे तु क्रियासंवेदिकासु नाडीषु। अतः यत्र क्रिया वर्तते, तत्र ज्ञानं नास्ति उद्बुद्धम्, यत्र ज्ञानमुद्बुद्धम् अस्ति तत्र नास्ति क्रियाया उद्बोधः, इतरनाडीषु स्वकार्यातिरिक्तसम्पादनासामर्थ्यात्। इति कृत्वा विद्यावतां क्रियासम्पादिकासु शिरासु चेष्टाऽभावेन सङ्कल्पे कृतिसाध्यत्वानिर्णयेन न प्रवृत्तिः। तस्मात् क्रियाज्ञानेभयसंवेदिकाः याः नाडयः वर्तन्ते, तासु चेष्टनमावश्यकम्।

### बुद्धिमत्वं कृत्यधीनम्

अपरे पुनरत्र बुद्धिमत्त्वं दैवाधीनं मत्वा ग्लानिमनुभूय अकर्मण्यतास्थितिं प्राप्ता दृश्यन्ते। तदपि न। बुद्धिमत्त्वं हि न दैवाधीनं वस्तु, अपि तु यथा हलेन आकर्षण-समये क्षेत्रेषु सीतायां मध्ये मध्ये गर्तसदृश्यः रेखाः भवन्ति तथा यस्य मस्तिष्के-गर्तसदृश्यः अधिकमात्रा रेखाः सम्भवन्ति तस्य प्रतिभावत्वं क्लृप्तम्। यस्य तु नास्ति तथाविधरेखासमूहवत्वम्, सः प्रतिभाहीनो भवति। यदि च अधोलिखित-रीत्या प्रयत्नः क्रियते, तर्हि मस्तिष्के रेखारहितेऽपि स्थले गर्तसदृशरेखावत्वं सम्पादयितुं शक्यते। तथाहि उदानवायोः ध्यानमार्गेण सुषुम्नानाडया विशिष्टोत्कण्ठामहिम्ना ऊर्ध्वमुच्छलनं सम्पाद्यते, तर्हि मस्तिष्के कर्णिकायां हलनिर्मित-सीतासदृशीनां रेखानां समुत्पत्तिः भवितुमर्हति। तथा च बलवर्णस्मृतिवाक्प्रवृत्तिः सम्भवितुमर्हति। एवंविधः यथा यथा आन्वीक्षिकीप्रस्तुतः विवेकः अभिवर्धते, तथा तथा उदानवायोः ऊर्ध्वगामित्वं भवति। सुषुम्नामार्गेणोदानवायोः उच्छलनमेव विवेकात्मकं ज्ञानं वर्तते। अतः प्रत्यक्षशारीरके निर्दिष्टाः ज्ञानप्रत्यायिकाः क्रियाप्रतिपादिकाः उभय संवाहिकाश्च याः शिराः भवन्ति, तासां स्थानानि समालोच्य गुरुभिः शिष्ये वर्तमानानां ज्ञानक्रियोभयसंवाहिनीनां नाडीनां सञ्चालनं यादृग्विधेन उपदेशेन कर्तुं शक्यं तथाविधोपदेशे शिष्येण प्राप्ते सति मित्रत्वेन परिगणितः शिष्योऽपि स्वोद्दिष्टार्थस्य प्राप्तये कृतिसाध्यत्वमिष्टसाधनत्वेन सह अनुमाय पूर्वनिर्दिष्टं सङ्कल्पं फलोपधायकम् स्वायत्तीकर्तुमवश्यं शक्नोतीति मन्तव्यम्। शेषं तु योगसूत्रे वैशेषिकभाष्ये प्रत्यक्षशारीरके भावप्रकाशने च अभ्यूह्यम्।

### अन्विताभिधानादिशाब्दबोधविवेकः

अत्र केचित् ज्ञानपरिचायिकानां नाडीनां शरीरे वर्तमानानां स्वरूपं श्रुत्वा प्रसङ्गात् समीक्षन्ते। तद्यथा—सामान्यतया ज्ञानं शरीरेषु शिरासंवेदनेन यथा परिचाययितुं सुशकम् अनुभवसिद्धं च, तथा शास्त्रेषु उववर्णिताः शाब्दबोधस्य अन्तर्गताः ( कार्यान्विताभिधानजः, अन्विताभिधानजः इत्यादयः ) अनुभवाः लोकेषु अनुभवसिद्धाः भवन्ति किम् ? इति चेद्नुभवन्त्येव। तथाहि—पूर्वं हि उदानवायुः सुषुम्नानाडया तत्र तत्र प्रदेशे मूर्तिध्यानबलात् यदा ऊर्ध्वमुच्छलति; तदा

## जयमङ्गलाक्रोडपत्रम्

तेन सह उदर्यः वह्निरपि ऊर्ध्वमुत्तिष्ठति, ब्रह्मरन्ध्रं च गन्तुं समीहते। अस्यामवस्थायाम् उदर्याग्नेः ऊर्ध्वज्वलनेन उत्पद्यमानः नादःकुण्डलिन्याख्यः ज्ञानरूपः योगिभिः श्रूयते। संसारिभिस्तु अव्यक्ततया अवगतः मध्यमास्थानापन्नः यदा वैखर्यवस्थायां प्राप्तो भवति, तदा स श्रूयते इत्यादि आकरे प्रपञ्चितमस्ति। तेनेदं भवति—यत् एकमपि तथाविधं ज्ञानं नास्ति यत्र नादो न वर्तते। अस्य नादस्य विषये शास्त्रकर्तृभिः इदमपि सिद्धान्तितम् यत् मध्यमावस्थायां स्थिताः सर्वेऽपि पदार्था अव्यक्तरूपेण भासन्ते, यथा बीजे सूक्ष्मरूपेण स्थिताः पदाथा दृश्यन्ते, तथा तन्नादगताः पदार्था अपि अनुव्यवसायार्हा न भवन्ति। यदा किल पुनः सूक्ष्मरूपेणावस्थितानां भानं भवतु इति मनुष्योऽभिलषति तदा तद्भानार्थम् इतरेषां कारणकलापानां, बीजेन सह अपेक्षितानां पवनभूम्युष्णताजलादीनां इव संयोजनं नादेन सह, प्रमात्रा कर्तव्यं भवति। तत्कारणेषु इन्द्रिय-हेतु-सादृश्य-शब्दार्थापत्यादयः यथायथं ज्ञाताऽज्ञाततया कारणत्वेन अनुव्यवसायार्थमपेक्ष्यन्ते। तत्रापि इन्द्रियसन्निकर्षादिना प्रत्यक्षम् नादः, व्याप्तिज्ञानबलेन अनुमितिर्नादः, शब्दज्ञानेन शाब्दबोधात्मको नादः एवमर्थापत्यादयोऽपि स्वजनितनादे कारणानि भवन्ति।

### बोधवैजात्यम्

केचन शब्दश्रवणेन शाब्दबोधं विजातीयत्वेन स्वीकर्तुं सङ्कोचमनुभवन्ति। तन्न—

> पश्यतः श्वेतिमारूपं ह्रेषाशब्दं च श्रृण्वतः।
> खुरविक्षेपशब्दाच्च श्वेतोऽश्वेतो धावतीति धीः॥

इति न्यायेन यत्र नादे ते ते पदार्थाः स्वस्वस्थाने स्थिता अपि पारस्परिकाकाङ्क्षावशात् तत्तत्सम्बन्धबोधकव्यक्तकारणाभावेऽपि विशिष्टान्वयमुपर्युक्तमश्वद्रष्टुषु पदं विनाऽपि अनुभावयन्ति इति अनुभवसिद्धम्, तथा शब्दश्रवणेन सञ्जायमानः अनुभवोऽपि प्रत्यक्षाद्यनुभवापेक्षया पृथग्विजातीयोऽस्तीति अकामेनाऽपि मन्तव्यम्। तथाहि—यथा जगदीशादिभिः शब्दशक्तिप्रकाशिकाग्रन्थादौ नञर्थबोधकस्थले निरवच्छिन्नविशेष्यकत्वस्य शाब्दबोधे निर्णीतत्वात् शाब्दबोधस्य प्रत्यक्षाद्यपेक्षया विजातीयत्वं साधितम्। तथा अन्वयव्यतिरेकमहिम्ना सञ्जातेपि अनुभवे (अनुमित्यादौ) अनुभूतेपि च विषये मनस. दार्ढ्यं तस्मिन् निष्कंपता च न मन्यते लोकैः। तथोक्तं कालिदासेन—

> आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्।
> बलवदपि हि शिक्षितानामात्मन्यप्रत्ययं चेतः॥ इति।

अत एव जातेऽपि रामदर्शने सन्तशिरोमणितुलसीदासः 'मया रामो न दृष्टः' इत्येवं जानानः खिन्नमना एवाभूत् परं यदा सः—

> 'चित्रकूट के घाट पर भई सन्तन की भीर।
> तुलसीदास चन्दन घिसे तिलक देत रघुवीर॥

## जयमङ्गलाक्रोडपत्रम्

इति हनुमद्वाक्यं श्रुतवान्, तदैव भक्तशिरोमणिः रामदर्शनावसरे निःसंदिग्धान्निष्प्रकंपावस्थां च प्राप्तः एवंरीत्या सन्देहापाकरणसमर्थस्य शाब्दबोधे सत्वात् प्रत्यक्षाद्यपेक्षया तस्य पृथग् विजातीयत्वमस्त्येव। एवमेव प्रत्यक्षशारीरकेष्वपि पृथग्जातीयानां ज्ञानानां चिह्नान्यपि मस्तिष्के विभिन्नानि सन्ति इति उक्तत्वात् शाब्दबोधादीनां पृथग् जातीयत्वं प्रत्यक्षदृष्ट्याऽपि नापलपितुं शक्यते। एतस्मादेव कारणात् अनुमित्यादयोऽपि नादात्मकाः भृकुटिसमुन्नयनाद्यनुभावभेदेन पृथग् जातीया सन्ति इत्यपि निर्णीतम्,[1] तद्युक्तमेव।

### संबन्धस्य बोधविषयता

अत्रेदमनुसन्धेयम्। शब्दश्रवणानन्तरं तत्तत्पदार्थानां मध्यवर्ती आकाङ्क्षागम्यः यः सम्बन्धः, सः अनुभवानुरोधेन क्वचित् परम्परासंबन्धः, क्वचित् साक्षात्सम्बन्धश्च भवति। कथमिति अधोलिखितदृष्टान्तानुसारेण स्फुटो क्रियते। घटं प्रति दण्डः कारणम् इति सिद्धेऽनुभवे दण्डे विद्यमानायाः कारणतायाः अवच्छेदकः घटदण्डयोः मध्यस्थितः सम्बन्धः न साक्षाद् भवितुमर्हति, किन्तु स्वजन्यभ्रमिजन्यभ्रमिमत्तारूपः परम्परात्मको भवति, प्रामाणिकश्च। न चैवं रीत्या सर्वत्र सर्वेषां सम्बन्धो भवत्विति वाच्यम्। नैयायिकैः घटः दण्डस्य कारणमित्याद्यनुभवसिद्धस्थलेष्वेव अनुभवानुरोधेन मध्यस्थितेषु आकाङ्क्षाभास्येषु परम्परासम्बन्धस्वीकारात्। कपालद्वयसंयोगनिष्ठघटकारणतावच्छेदकः सम्बन्धः समवायः घटाधिकरणकपालतत्संयोगयोः मध्ये स्थितो भवति स च साक्षात्, एवञ्च कार्यकारणभावो वा भवतु, अन्वयबोधो वा भवतु उभयत्रापि द्वयोः पदार्थयोः अन्तराले वर्तमानः साक्षात् परम्पया वा भासमानः संसर्गः आकाङ्क्षामात्रेण भास्यो भवति। अतोऽन्वयबोधस्यापि विलक्षणविजातीयत्वमस्तीति सिद्धं भवति।

अथ पूर्वप्रतिज्ञानुसारेण शाब्दबोधान्तर्गतानामनुभवानां अपि वैजात्येनास्तित्वं साधयितुमुपक्रम्यते। तथाहि—यथा अन्वयबोधः विजातीयः तथा विशिष्टबुद्धिः, विशिष्टवैशिष्ट्यमर्यादां नातिशेते' इत्यपि अनुभवसिद्धम्। तत्र वैशिष्ट्यस्य प्रतियोगी प्रतियोगितावच्छेकं वा किं तत् ? इति यदा जिज्ञास्यते, तदा तत्तदाचार्याः स्वस्वगुरुपरम्परानुसारेण अधिकारिभेदेन सम्बोध्यस्य अवस्थाभेदेन च वैशिष्ट्यप्रतियोगी, प्रतियोगितावच्छेदकं च पृथक् पृथक् शाब्दबोधे भातीति निरूपयन्ति। एवंरीत्या अधिकारिभेदेन विशिष्टवैशिष्ट्यमर्यादां निरूपयन्तः प्रभाकर-भाट्ट-नैयायिकाः स्वकीयं मतं प्रकाशयन्तः आसते। तत्र शब्दश्रवणानन्तरं कार्यान्वितमर्थमनुभवन्ति प्राभाकराः। भाट्टा अन्वितमात्रम्। नैयायिकास्तु अनन्वितमिति। एतन्मतभेदेन उपवर्णितेषु शाब्दबोधेषु विजातीयताबीजं तत्तच्छास्त्रकर्तॄणां तत्तदनुभवएव।

---

१ वितर्कोद्वर्तितपुटा तथैवोत्फुल्लतारका।
अधोगतविकारा च दृष्टिरिष्टा वितर्किता॥

## जयमङ्गलाक्रोडपत्रम्

तत्रापि किं बीजमिति चेत् साहित्यप्रक्रियया तत् उच्यते। शाब्दबोधो हि साहित्य-शास्त्रे मतिभावेषु परिगणितः चित्तसन्तोषादिभिः समाजस्य पुरतः अभिव्यञ्जयितुं शक्यते इति निर्विवादम्। तदुक्तम् सङ्गीतरत्नाकरे—

'अपूर्वप्रतिभानं स्यान् मतिस्तां तु विभावयेत्।
अन्वयव्यतिरेकोत्थैः प्रत्ययैः शास्त्रचिन्तनैः।
ऊहापोहैश्च विविधैः अथ तामनुभावयेत् इति।

तथा भावप्रकाशनेऽपि—

नानाशास्त्रार्थनिष्पन्ना मतिः स्यात्श्रुतधारिणी।
संशयच्छेदनैः शिष्यहिताधानार्थदर्शनैः॥
वर्ण्यते चित्तसन्तोषात् विदग्धव्यवहारतः। इति।

अभिव्यञ्जन प्रकारश्च व्यवहारेषु दृष्टः। तद्यथा—

पण्डितास्तदितरे च तेषां तेषां पदानां तत्तदर्थेषु शक्ति प्रयोजक प्रयोज्यवृध्दानां व्यवहारं दृष्ट्वा अवजानन्ति। सोऽयं शक्तिपरिचयः बालाल्पज्ञ-विदग्धैस्सर्वैरपि समानतया क्रियते इति वक्तुं न शक्यते। बालकः वाक्यार्थम-जानानः केवलं पदानि श्रुत्वैव न वाक्यार्थं विजानति। अपितु 'गामानय' इति कस्यचित् वाक्यं श्रुत्वा प्रयोज्यवृद्धः सास्नादिमद्गवानयनाय प्रवर्तते। 'गां बधाने' ति श्रुत्वा तु तस्यैव प्राणिनः बन्धनाय प्रवर्तते। इत्येवं व्यवहारवैजात्यमेकविध प्राणिसम्बन्धिनं दृष्ट्वा बालकः गोपदस्य कार्यान्वितायां गवि शक्ति गृण्हाति। इत्येवं-विधेन बालकस्य व्यवहारेण कार्यान्वितानुभवस्य वैजात्यं स्थिरं भवति। इति प्राभा-कराः। अपरे पुनः प्रयोज्य-प्रयोजकवृद्धव्यवहारदर्शनमन्तरा नाट्यादौ रामकृष्णादीनां विविष्टवेषं दृष्ट्वैव बुद्धिवैशद्यात् 'रामोऽयम्', 'कृष्णोऽयम्' इत्यादिरीत्या प्रातिपदिकार्थमनुभवन्ति। तन्महिम्ना विशेषणीभूतपदार्थसंसर्गेण सह प्रातिपदिक पदार्थानुभवं दृष्ट्वा नामार्थयोः शक्तिग्रहः साधारणेषु जातः, सोऽन्वितविषयकत्वात् अन्वितानुभवः इत्येवंवादिनो भाट्टाः अन्विते शक्तिं गृण्हन्ति।

एतेषां सामाजिकानां तथाविधां स्थितिमालोच्य अभिनेतारोऽपि सुखादिकं हर्षादिव्यापारेण अभिव्यञ्जयन्ति। अन्ये च परोपदेशं श्रुत्वा तावन्मात्रेण सुखमात्र-मनुभवन्ति। एवंविधायामवस्थायाम् एतेषु सामाजिकविशेषेषुयः अनुभवः जातः सोऽनन्वितपदार्थस्यैव इति कृत्वा नैयायिकादयः अमुमनुभवविशेषमालोच्य अनन्विते शक्तिमभिदधति। तदेवेदं अनन्विताभिधानपदेन व्यपदिश्यते।

एवं च साहित्यशास्त्रोक्तरीत्या तत्तदवसरेषु अन्विताभिधानादिजा अनुभवादयः क्लृप्ताः शाब्दबोधेषु अन्तर्गता लोकेषु अनुभवसिद्धाः सन्ति। इत्यलं, सङ्कल्पे कृतिसाध्यत्व विचारप्रसक्तानुप्रसक्तचिन्तया। प्रकृतमनुसरामः।

(६) (पृ० २३१) भावसंशुद्धिः 'अविचिकित्सा' इति नीतिसारीय जयमङ्गलायाम, उपाध्यायनिरपेक्षायां तु 'प्राणिषु अद्रोहबुद्धिः' इत्युक्तम्, अतस्तस्या उभयसाधारण्येन अर्थशास्त्रानुसारेण आभ्यन्तरशौचे अन्तर्भावो बोध्यः।

**स्वधर्मः स्वर्गाय [1]आनन्त्याय च। तस्यातिक्रमे [2]लोकस्सङ्करा-दुच्छिद्येत ॥[3]**

---

**जयमङ्गलाक्रोडपत्रम्**

(पृ० २२३) रागद्वेषादिप्रहाणात् इति। जयमङ्गलाव्याख्यानेन नीतिसारोक्ता भावसंशुद्धिः आभ्यन्तरशौचे अन्तर्भावितेत्युक्तं प्राक् तत्रायं प्रश्नः।

**भावसंशुद्धेः उपयोगिता**

ननु भावसंशुद्धेः राजनीतौ किं प्रयोजनमितिचेदभिधीयते। मनसि हर्षमुत्पाद्य भुक्तस्याहारस्य यथावत् पाचनं भावसंशुद्ध्य तया शरीरस्य संरक्षणं विधातुं शक्यते इति तस्याः सप्रयोजनत्वं बोध्यम्। तथाहि—भुक्तस्य परिणामार्थं हि यानि पाचनयन्त्राणि शरीरे उन्नीतानि, तानि स्वकार्यकरणे क्षमानि तदा भवन्ति यदा मनः हर्षसमन्वितं स्यात् इति शरीरविज्ञानवादिभिः उच्यते, अनुभूयते च। तस्मात् भावसंशुद्धिः परिणामहेतूनां पाचनयन्त्राणामुल्लासाय उपयुज्यते। उक्तसंशुद्ध्यभावे जीवः कामक्रोधादिपराधीनो भूत्वा सदा आत्मनि न्यूनतामनुभवन् न हृष्यति ततो हर्षाभावः ततो मनसोऽपि विषादः तेन मन्दाग्निप्रसङ्गो नियतः ततः पाचनक्रिया अनुपपन्ना भविष्यति इति अविचिकित्सारूपा भावसंशुद्धिः अवश्यमपेक्ष्यते।

न च सत्यामपि भावशुद्धौ अनुष्ठानावसरे हितसाधनत्वं केनापि कारणेन यदि बाधितं भवेत्, तर्हि पुनरपि हर्षाभाव एव स्यात् इति वाच्यम्। एतदर्थमेव नीत्यनुष्ठानस्य *अर्थशास्त्रे अभिधानात्*। नीतिर्हि *प्रत्यक्षादिप्रमाणत्रयसमुच्चयेन यथावत्* हितसाधनत्वमनुमाय, यथोचितं देशकालौ च समीक्ष्य अनुष्ठिता सती न कदाचिदपि हितसाधनताबाधमवतारयितुं शक्नुयात्। एवं च सर्वानुमतत्वात् कार्यकारणभावस्य अबाधितत्वात् आनन्दप्रदत्वाच्च हर्षसाधनत्वं नीत्यनुष्ठाने नियतम्। (शेषं पृ० २८) द्रष्टव्यम्। अतः भावसंशुद्धेन अविचिकित्सेन मनसा येन अनुष्ठीयते, तस्य सङ्कल्पः अवश्यं भुक्तपरिणामहेतूनि पाचनयन्त्राणि सञ्चालयितुं समर्थो भवति। अत एव दम्भादिरहित एव भावसंशुद्धः सङ्कल्पः कार्यकारी भवतीति धर्मस्य व्याख्यानावसरे वैशेषिक भाष्ये उक्तम्। तत् पृ० २७२ द्रष्टव्यम्।

एतदेवाभिप्रेत्य भावसंशुद्धिपदम् अविचिकित्सापरतया व्याख्यातम्। एतेन यस्य भावसंशुद्धिर्नास्ति, स रागद्वेषयोः पतितः शरीरान्तवर्तिनः पाचनयन्त्रस्य विघटने सहायको भूत्वा जीवने क्लिश्यति इति रागद्वेषयोः अन्तर्भावः क्लेशे योगसूत्रेण निरूपितः सोपपत्तिको भवतीति बोध्यम्। इति दिक्।

**श्रीमूला**

स्वधर्मः किमर्थमादर्तव्यस्तत्राह—स्वधर्म इति स्वर्गाय परलोकसुखाय इति।

---

नी० टी० १. मोक्षाय।

२. चतुर्वर्णाश्रमः।

३. दुर्भिक्षव्याधिमरकादिभिः।

## श्रीमूला

आनन्त्याय च इहाविनाशाय मोक्षाय वा । अतिक्रमे उल्लङ्घने । सङ्करादुच्छिद्येत अनुष्ठातृव्यवस्थाविरहेण कर्मसङ्कराद् वर्णसङ्कराच्च उत्सादं प्राप्नुयात् । अयमाशयः– वर्णाश्रमधर्मा हि यथोक्ता अविवादसिद्धलोकयोगक्षेमहेतुभावाः तदुपासकबीजक्षेत्रसङ्क्रान्ततदनुष्ठानवासनासनाथैः तत्तद्वर्णाश्रमिभिरेव स्वकुलधर्मत्वबुद्ध्या भक्तिश्रद्धापुरस्सरमनुष्ठीयमानाः सन्तः सौष्ठवविशेषं प्रतिपत्तुं लोकोपकारे च कमपि कमप्यतिशयमाधातुं क्षमन्ते । ते चेदव्यवस्थमन्यैः कथञ्चिदनुष्ठीयेरन् ध्रुव तर्हि सौष्ठवाद्धीयेरन्, लोकोपकारे च नातिशयमादधीरन्, अनुष्ठानवाह्यतां च क्रमेणासादयेयुरिति धर्मव्याकुलीभावाल्लोकविनाशः स्यादिति ।

## वैदिकसिद्धान्तसंरक्षिणी

अनुष्ठितस्वस्वधर्मफलमाह –**स्वधर्म** इति । स्वीयो नीत्यात्मको धर्मः इत्यर्थः । स च नीतिशास्त्रस्य प्रस्तावात् अष्टादशविद्यास्थाननिर्णीतो ग्राह्य इति भावः । अधिकारिभेदेन अनुष्ठितस्य धर्मस्य फलं द्विविधं भवति **स्वर्गः** मोक्षश्च ।[1] तत्र यः अनादिकालात् प्रवृत्तैः संस्कारैः बहुमात्रया विषयसुखाभिलाषुकः तेनानुष्ठितः स्वधर्मः तदनुष्ठातारं स्वर्गं प्रापयति । यश्च तथाविधाभिलाषाभाववान् तेन अनुष्ठितः स्वधर्मः आनन्दात्मकं मोक्षस्वरूपं फलं प्रापयति ।

प्रयोजनमनुद्दिश्येति इति टिप्पण्युद्धृत भाष्योक्तिमनुसन्धाय आह स्वर्गायेति ।

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरं
अभिलाषोपनीतंच तत्सुखं स्वःपदास्पदम् ।

इत्युक्तसुखस्वरूपः स्वर्गो बोध्यः ।

अननुष्ठिते धर्मे दोषमाह तस्येति । स्वधर्मस्येत्यर्थः । अयं भावः वैदिकधर्मसत्वगुणयोः साहचर्यं नियतमिति (पृ० २०७) प्राक्साधितमस्ति । यथा यथा वैदिकं धर्मं लोकोऽतिक्रामति तथा तथा सात्विकमनोवृत्तिसूचकानां प्रागुक्तानां (२३४ पृ०) आस्तिक्यादि गुणानां ह्रासः संपद्यते । तदानीं सत्वस्याभिभवो भवति तमोगुणश्चाभिवर्धते । नास्तिक्यं अज्ञानं रागश्च तमसा सह प्रवर्धन्ते तेन मर्यादातिक्रमणात् जनतायां अशुचिता, ततः अशुचिपदार्थेष्वनुरक्तिः प्रसूयते, ततः मातापितृदोषस्वाहार-

---

१ तदुक्तं—वैशेषिकदर्शन—प्रशस्तपाद भाष्ये—कर्तुः प्रियहितहितमोक्षहेतुः अतीन्द्रियोऽन्त्यसुखसंविज्ञानविरोधी पुरुषान्तःकरणसंयोगविशुद्धाभिसन्धिजः वर्णाश्रमिणां प्रतिनियतसाधननिमित्तः ।

संविज्ञान विरोधी—दृष्टं प्रयोजनमनुद्दिश्यैतानि साधनानि भावप्रसादौचापेक्ष्यात्ममनसोः संयोगाद्धर्मोत्पत्तिरिति–( धर्मनिरूपणे गुणनिरूतणान्तर्गते ) टी० दृष्टं चेति लाभपूजादि ।

## वैदिकसिद्धान्तसंरक्षिणी

कर्मप्रभृतिषु अशुचितया मानसं वाचिकं शारीरं च साङ्कर्यं समुत्पद्यते। तत्प्रयुक्त गुणप्रातिलोम्यप्रदोषगुणाभावादियुता सन्ततिः समुत्पद्यते। तेन च दौर्बल्यं अप्रतिभावत्वं मानमादौ चापल्यं च जन्मत एव दृश्यन्ते। तत्संपर्कात् पराभियोगासहा सन्ततिः केवलं विषयसुखोपरुद्धा क्रमशीर्णाकूलमूलसन्ततिः शीर्यते इति राज्यं विनश्यति इत्येतत् राजपुत्ररक्षणप्रकरणे विशदीकृतम् इति।

तदेवाह **लोक** इति। लोकः चतुर्वर्णाश्रमः। **सङ्करादिति**। कर्मसङ्करात् वर्णसङ्कराच् च उच्छिद्येत। गुणानां आभिगामिकानां आश्रितोपकारिणां विनाशात् इति शेषः।[1] इदमुपलक्षणम्। धर्मातिक्रमे लस्यापस्मारादि दोषोपि अत्र न विस्मर्तव्यः कुष्ठोन्मादरोगा अपि संभवेयुः इति पृ० १८८) प्राक्प्रपञ्चितम्। तथा मरकहुताशनजलव्याधयोपि धर्मातिक्रमे प्रजापीडनादयश्च समुत्पद्यन्ते। तदुक्तम्—

"दैवान्यष्टौ महाभयानि अग्निरुदकं व्याधिः दुर्भिक्षं मूषिका व्यालाः सर्पाः रक्षांसीति"। अ० अ० ४ अ० ३ प्र० ७८-इति।

## जयमङ्गला

**स्वधर्म** इति। स्वग्रहणं सामान्यनिरासार्थम्। यथायोगं कश्चित् **स्वर्गाय** कश्चिद् आनन्त्याय मोक्षाय। न विद्यते अन्तो अस्येत्यनन्तः, मोक्षः। अनन्त एव आनन्त्यम्। स्वर्गस्य अन्तवत्वात्। तस्य धर्मस्य, अतिक्रमे लङ्घने न केवलं फलाभावः, अपि तु लोकः सङ्करादुच्छिद्येत। नरकं यायाद् **विनश्येद्वा**। सङ्करो-द्विविधः—"कर्मसङ्करो वर्णसङ्करश्च। तत्र पूर्वः शूद्रस्य द्विजकर्म, द्विजस्य आपत्कल्पवर्जं शूद्रकर्मेत्यादि। द्वितीयो ह्यन्तरालाः प्रतिलोमानुलोमाः।

## जयमङ्गलाक्रोडपत्रम्

### धर्मनीतिस्वरूप भेदः

स्वधर्म इति – ननु धर्मनीत्योः को भेदः इति चेन् निरूप्यते। वेद बोधितेष्टसाधनताक इति धर्मः व्याख्यायते। नीतिस्वरूपं तु प्रत्यक्षादि-

---

१ तदैव गीतायां —

धर्मे नष्टे कुलं कृत्स्नं अधर्मोऽभिभवत्युत।
अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः॥
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः।
सङ्करो नरकायैव कुलघ्नानां कुलस्य च।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः॥
दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः। इति।

## जयमङ्गलाक्रोडपत्रम्

प्रमाणत्रयसमन्वितेष्टसाधनताकत्वम् इति । तेन पारलौकिकफलमात्रसाधने धर्मे चार्वाकबौद्धादयः प्रत्यक्षानुमानप्रमाणप्रमितत्वाभावात् सन्दिग्धाः सम्भवितुमर्हन्ति, नीत्यनुष्ठाने तु न तथा, चार्वाकबौद्धानां सन्तोषार्थं प्रत्यक्षानुमानप्रमाणद्वयसन्निवेशः आस्तिकानां सन्तोषार्थं अनुष्ठीयमानायां नीतौ अबाधितफलप्राप्त्यर्थं शब्दप्रमाणस्यापि सन्निवेशो नीतिलक्षणे कृतः । अत एव वेदविहितेषु अनेकेषु अर्थेषु यावानर्थः प्रष्याक्षानुमानप्रमाणाभ्यां हितायोपयुज्यते तावान् आयुर्वेदाद्युपयुक्तः वेदप्रणिहितोः अर्थः वाग्भटादिभिः स्वग्रन्थेषु निरूपितः बौद्धचार्वाकप्रभृतीन् नापरञ्जयति । चार्वाकोऽपि नीतिकामाचारेण वर्तनं धर्मः इत्यभिप्रायेण धर्मं सङ्गृह्णातीति न तिरोहितं सर्वदर्शनसङ्ग्रहदर्शिनाम् । अत एव सर्ववादिसम्प्रतिपन्नत्वात् प्रियत्वाच्च नीतेर्लक्ष्मीस्वरूपत्वं नारायणस्य धर्मरूपत्वं शास्त्रेषु उच्यते । तद्यथा—

'राजनीतिर्महालक्ष्मीः धर्मो नारायणः स्वयम्' इति ।

अर्थात् ब्राह्मणब्रह्मचारिणोरिव धर्मनीत्योः स्वरूपं बोध्यम् ।

यदि च नीतिः प्रत्यक्षामुमानप्रमिता नाभविष्यत्, तर्हि अस्य सुश्रुतादिग्रन्थवत् विशेषतया आलोढनं जैनबौद्धादिः नाऽकरिष्यत् । इदमेव नीतिशास्त्रस्य महत्वं यत् अनेकैः जैनबौद्धैरपि, वैदिकधर्मानुयायिभिः स्वीकृतं नीतिसागरं मथित्वा अर्थशास्त्रस्य समादरो नीतिवाक्यामृतादिग्रन्थनिर्माणेन प्रदर्शितः, तथैव सुश्रुतग्रन्थादि विषयेऽपि बोध्यम् । एतत्सर्वमन्तर्निगूढं तत्वममिप्रेत्य धर्मनीत्योः सामानाधिकरण्यं भगवता अवतीर्य स्थापितम् । तदुक्तम्—

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।

इति गीताव्याख्याने उक्तं ज्ञानेश्वरमहाराजैः—'धर्माशी नीतीशी शेज भरी' इति । न च 'वेदेन धर्मनीत्योः इदं स्वरूपं न मन्यते' इति वाच्यम् 'मतिश्च मे सुमतिश्च मे' इति श्रुत्या धर्मनीत्योः स्वरूपप्रगटनात् । मानसरामायणेपि—

जहं सुमति तहं संपति नाना, जहं कुमति तहं विपति निधाना ।' इति

न च 'एवंविधस्य नीतिस्वरूपस्य समादरः आधुनिकैः विद्वद्भिः न क्रियते' इति वाच्यम्, तुलसीदासमहाभागैः स्वकृतमानसे तत्र तत्र नीतिस्थापनस्य प्रदर्शितत्वात् ।[1] शेषं पृ० २८ द्रष्टव्यम् ।

---

१ दोहा—'देश कालु लखि समऊ समाजू । नीति प्रीति पालक रघुराजू ।
सब नर कल्पित करहि अचारा । जाइ न बरनि अनीति अपारा ।
सहज कृपन सन सुन्दर नीति ।'
'जब जब होइ धर्म के हानि । बाढहि असुर अधम अभिमानी ।।
करहि अनीति जाइ नहि बरनी । सीदहि विप्र धेनु सुर धरनी ।।
तब तब विभु धरि विविध सरीरा । हरहि कृपानिधि सज्जनपीरा ।।—

**जयमङ्गलाक्रोडपत्रम्**

न च 'राजनीतिः आक्रमणाय प्रवर्तते इति दृश्यते। तन्न्यायेन भारतीया राजनीतिरपि परम् आक्रमितुं प्रवृत्ता स्वदुर्नयात् जनानुरागोत्पादने असमर्था सती शत्रूणां समुदयं कृत्वा जनेषु रागोत्पादनाय समर्था कथं भवेदिति शङ्क्यम्, भारतीयराजनीतेः न्यायतः प्रजापालनोद्देश्येनैव प्रवर्तनात्, अगत्या शत्रोर्दण्डनिपातनस्य अनुमोदितत्वात्। अतः इयं राजनीतिः आक्रमणशीलत्वाभावात् न तमोबहुला, अत एव प्रजारञ्जनक्षमा च। इतरराजनीतिस्तु परदेशं आक्रमितुमेव चिन्तयति। तस्यां तमोबाहुल्यात् प्रजारञ्जनक्षमत्वं नास्ति। इदृग्विधराजनीत्यपेक्षया भारतीयराजनीतेः वैधर्म्येण आक्रमणशीलवत्त्वं नानुमन्तव्यम्।

**स्वर्गानन्त्ययोः प्रत्यक्षप्रमाणप्रमितत्वम्**

(पृ० २४३)स्वर्गेति। ननु स्वर्गानन्त्योः शब्दप्रमाणप्रमितत्वेऽपि प्रत्यक्षप्रमाणप्रमितत्वाभावात् नीतौ फलत्वेन तयोः स्वीकृतिः कथं कर्तव्या? इति चेदुच्यते।

स्वर्गो हि गुरुत्वभावनादिवत् यदि अतीन्द्रियः स्यात्, तर्हि तस्य प्रत्यक्षप्रमाविषयत्वं न भवितुमर्हति। स्वर्गविषये एतादृशी स्थितिः शास्त्रकर्तृभिः नानुमन्यते, तस्य सुखरूपत्वात्। तदुक्तम्—

> यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
> अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥ इति॥

व्याख्यातं चैतत् शब्दखण्डे माथुर्याम् (५०२ पृ० श० खं०), शब्दखण्डे तत्त्वचिन्तामणौ शक्तिवादे (पृ० ५०२)। तत्रैव द्रष्टव्यम्[१]

---

> नीति निपुन जिन्हकै जगलीका। घर तुम्हार तिन्हकर मनु नीका॥
> सम सीतल न हि त्यागहि नीति। सरल सुभाऊ सबहि सन प्रीति॥
> कोटि विघ्न ते सन्तकर। मन जिमि नीति न त्याग॥' इति॥

१ 'न दुःखेन सम्भिन्नं' न दुःखसमानाधिकरणं न दुःखावच्छेदकशरीरावच्छेद्यमिति यावत्। अन्यथा स्वर्गिणः सुखस्याप्यात्मनि भावि-भूतदुःखसमानाधिकरणत्वादसम्भवापत्तेः। दुःखावच्छेदकावृत्तिजातिमच्छरीरावच्छेद्यमिति निष्कर्षः। तच्च एकजन्मावच्छेदेन दुःखानुत्पाद एव सम्भवति। तेन राजचक्रवर्तिनो धारावाहिक सुखमात्रावच्छेदककपुण्यपरिपाकमात्रजन्यखण्डशरीरमादाय तदवच्छिन्नसुखे नातिप्रसङ्गः। स्वर्गिणो मरणेऽपि न दुखम् 'ते तराः सुखगृध्नव'' इत्यादिवेदेन तथैव बोधनात् पापविरहाच्च। अत एव स्वर्गिशरीरेऽपि पातभयजन्यदुःखश्रवणादसम्भवः इत्यपि निरस्तम्। पापशरीरविरहेणानायत्या तस्य संसारनिन्दामात्रपरत्वात्। अत एव धर्मजन्यमात्रवृत्तिजातिमच्छरीरावच्छेद्यसुखत्वं स्वर्गत्वमि'त्यपि वदन्ति। दुःखपदं वा मरण पातभीरुत्वादिजन्यदुःखातिरिक्तदुःखपरम्। ग्रस्तमिति। ग्रासो लौकिकसुखापेक्षयाऽपकर्षः तच्छून्यमित्यर्थः। अनन्तरं अन्तरा विच्छेदस्तद्रहितम्। स्वाश्रयावच्छेद्यसुखानधिकरणकालोत्तरोत्पत्तिकसुखावच्छेदकवृत्तिजातिमदनवच्छेद्य—

## जयमङ्गलाक्रोडपत्रम्

एवं च धारावाहिदुःखरहितम् अनभिभूतम् अभिलाषमात्रेण नियतसामग्रीकं सुखं स्वर्गपदवाच्यम्। इदं च स्वभावत एव सुखत्वात् सर्वस्यैव कामनाविषयः, दुःखसंयोगात्मकस्य व्याधेः प्रागभावसंरक्षणाय विनाशाय वा सर्वैः प्रयतितत्वात्[1]।

न च अदृष्टद्वारा यागेन साध्यस्य परलोके सञ्जनिष्यमाणस्य स्वर्गसुखस्य इहलोके पुनरपि प्रत्यक्षाविषयत्वमस्त्येव इति वाच्यम्, तस्याः सुखव्यक्तेः इहलोके अप्रत्यक्षत्वेऽपि तद्वृतिसुखत्वजातेः प्रत्यक्षत्वात्, तद्विषयीभूततथाविधजात्याश्रयतया सामान्यलक्षणया प्रत्यासत्यापि देशान्तरस्थितयोः वह्निधूमयोः व्याप्तिप्रत्यक्षत्वस्येव प्रत्यक्षत्वस्य सम्भवदुक्तिकत्वात्। तदुक्तम्—

'युवा स्यात् साधु युवाऽध्यायकः आशिष्ठो दृढिष्ठो बलिष्ठः तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्'। इत्यारभ्य—"श्रोत्रियस्य चाकामहतस्य"। इति

अर्थात् कश्चन राजा दुकूलरत्नादिधारणेन आत्मानं सुखिनं मनुते तादृग्-

---

मिति यावत्। स्वपदं जातिपरम् स्वर्गिणः सुषुप्तावपि मानाभावात्- युगपत्सकल ब्रह्माडे खण्डप्रलयाभावात् सत्ता द्रव्यत्वादेः स्वाश्रयावच्छेद्य सुखानधिकरण कालाप्रसिद्धया न तदादायासम्भवः। तादृश सुखावच्छेदकावृत्तिजातिमच्छरीरावच्छेद्यमिति वा अनन्तरत्वं वक्तव्यम्। अत्रापि स्वपदं स्वर्गिशरीरवृत्तिजातिपरम्। इत्थं च युगपत् सकलब्रह्माण्डप्रलयाभ्युपगमेऽपि न क्षतिः। 'अभिलाषोपनीतञ्चेति। सुखाभिलाषानन्तरं तत्साधनार्जनविलम्बासहमित्यर्थः। स्वसमानाधिकरणस्वविषयकाभिलाषोत्पत्त्यनियतसामग्र्यजन्यम्, स्वार्गणां तथैव विलक्षणमदृष्टम् यतः सुखविषयकाभिलाषोत्पत्तिसमय एव तत्र कारणानां सर्वेषां सम्पत्तिरितिभावः। 'स्वसमानाधिकरणेत्य भिलाषविशेषणात् संसारितादशायां स्वर्गविषयकाभिलाषे स्वर्गानुत्पादेऽपि न क्षतिः। स्वसमानाधिकरणत्वं च स्वावच्छेदकशरीरावच्छेद्यत्वम्। अभिलाषव्यतिरेकोत्पन्नस्वर्गेऽव्याप्तिवारणाय निषेधद्वयगर्भता। स्वःपदास्पदमिति। स्वरादिपदशक्यमित्यर्थः। न चाग्रस्तत्वादिविशेषणवैयर्थ्यम्, तादृशसुखस्यैव दुःखावच्छेदकावृत्तिजातिमच्छरीरावच्छेद्यत्वनियमेनाव्यावर्तकतया तादृशजातिमच्छरीरावच्छेद्यसुखत्वस्यैव शक्यतावच्छेदकत्वौचित्यात्, ग्रासादिविशिष्टैतादृशशरीरावच्छेद्यसुखे मानाभावादिति वाच्यम्। प्रवृत्तिनिमित्ते विशेषणवैयर्थ्यस्यादोषत्वात् यत्प्रकारेण स्वारसिकबोधस्तस्याव्यावर्तकस्यापि गुरुतरस्यापि शक्यतावच्छेदकत्वादिति भावः। एतेन नारकीयशरीरमपि व्याख्यातम्।' इति।

१ तदुक्तं चरके ( प्रथमाध्याये )

शरीरं सत्वसंज्ञं च व्याधीनामाश्रयो मतः।
तथा सुखानां योगस्तु सुखानां कारणं समः ॥५४॥
निर्विकारः परस्त्वात्मा सत्वभूतगुणेन्द्रियैः।
चैतन्ये कारणं नित्यो द्रष्टा पश्यति हि क्रियाः ॥५५॥ इति।

## जयमङ्गलाक्रोडपत्रम्

विधं च सुखं वल्कलधारिणा केनचित् भिक्षुकेण नानुभवितुं शक्यते इति जानन् आत्मनि कृतकृत्यतामनुभवति। परं तस्य तथाविधां स्थितिं पर्यालोचयन् भिक्षुकः आत्मसन्तोषस्य अनुभवेषु वैलक्षण्यमपश्यन् उभयविधेऽपि सन्तोषे एकविधमेव सुखत्वनुभवति। अतः सिद्धम् एकविधैव सुखत्वजातिः राज्ञा भिक्षुकेण च प्रत्यक्षीक्रियते। तत्र नास्ति किमपि अन्तरम्। अतः उभयोरपि सुखयोः व्यक्ति—भेदेऽपि तदुभयवृत्तिसुखत्वस्य प्रत्यक्षत्वात् राज्ञा अनुभूयमानं सुखं श्रोत्रियेण भिक्षुकेणापि अनुभूयते[1]।

यद्येवं राजादिभिः अनुभूयमानं सुखं अस्माभिर्नानुभूतमिति योगी मन्येत, अथवा सः तल्लाभाय प्रयतेत तर्हि सः सौभरिवत् योगात् अवश्यं च्यवेत्। 'इतो भ्रष्टस्ततोभ्रष्टः' इति गतिमनुभवन् पश्चात् तप्येत्। इति अवश्यं स्मर्तव्यम्। तदुक्तं योगसूत्रे 'परमा वश्यतेन्द्रियाणाम्' इति व्याख्याने[2] नारायणतीर्थस्वामिभिः ( पृ० १०४ ना० ती० )—

एकाग्रतया ध्याने सत्वगुणसमृद्ध्या यत्सुखं जायते, यच्च सुषुप्त्यवस्थायामनुभूयते, तदुभयोः वैषम्यं एकविधजातिमत्वात् नास्ति, यतः उभयोरपि एककार्योत्पादकत्वमस्ति अतएव 'श्रोत्रियः ध्यानबलात् अन्तःसुखमनुभवन् व्याधिं नाशयितुं समर्थो भवति स एव व्याधिः सुषुप्तावपि निराकर्तुं सभाव्यते, इति निर्णीतम्।

तदुक्तम्—'अर्धरोगहरी निद्रा सर्वरोगहरी क्षुधा इति'। एतावदेव न। यां सुखत्वजातिमभिलक्ष्य चार्वाकप्रभृतयः अङ्गनालिङ्गजन्यं सुखं स्वर्गत्वेन व्यपदिशन्ति, तामेव सुखत्वजातिमभिलक्ष्य वैदिका अपि यागसाध्यं स्वर्गं सुखत्वेन अभिलषन्ति अपरे च पुनः श्रोत्रियाः 'वरं वृन्दावनं शून्यम्' इति वदन्तः ऐकान्तिकं सुखमनुभवन्ति।

नचैवं यदि सर्वैरनुभूयमाने सुखे सुखत्वमेकविधमेव तर्हि शास्त्रानुसार्येव पन्थाः नीतिविद्भिः कुतोऽवलम्ब्यते इति वाच्यम्, सुखत्वस्य एकविधस्य अनुभूय-

---

१ 'वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः।
सम इह परितोषे निर्विशेषो विशेषः॥
स तु भवति दरिद्रो यस्य तृष्णा विशाला।
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः॥' इति।

२ 'ततः प्रत्याहारादिन्द्रियाणां मनमआद्येकादशानां भोगकारणानां परमावश्यकता परमो जयः। मोहनीयादिस्वरूपैः रूपादिभिर्विषयैर्बहिर्मुखतां नीयमानान्यपि न यान्तीत्यर्थः। इयमेव वश्यता योगद्वारा परोक्षप्रमाया हेतुः। एतस्याभावादेव 'सौभरि' प्रभृतीनां योगात् प्रच्यावोऽपि। अतएवोक्तं भगवता—
'यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता॥' इति।

## जयमङ्गलाक्रोडपत्रम्

मानत्वेऽपि तदाश्रयत्वं वास्तविकं कुत्रास्तीति सन्देहनिरासार्थं निर्णायकत्वेन शास्त्रस्य परिग्रहौचित्यात्। यथा रजतत्वं यादृशं प्रत्यक्षतः रजतेऽनुभूयते, तादृशमेव शुक्तौ-प्रत्यक्षीक्रियते । सत्यप्येवं रजतत्वाश्रयत्वनिर्णयार्थं पुनरपि विदग्धानां विचक्षणमत्तीनाँ व्यवहारः अज्ञजनैः अपेक्षितः, तथा सुखत्वाश्रयत्वनिर्णयार्थंम अस्माभिः अज्ञजनैः शास्त्रं शरणीकरणीयम् । नन्वेवं उपरिनिर्दिष्टेषु शात्रेण वास्तविकसुखत्वं कुत्रोच्यते इति चेत्, यथावसरं वक्ष्यमाणत्वात्। अत्र तु सुखत्वस्य प्रत्यक्षमस्ति नवेति विचारमात्रस्यैव अभ्यर्हितत्वेन चिन्तनीयत्वात् ।

न च स्वर्गवृत्तिसुखत्वजातेः प्रत्यक्षत्वेऽपि तदाश्रयोभूतस्य स्वर्गसुखस्य तु अस्मद्दृष्टया पुनरपि अप्रत्यक्षत्वमस्त्येव इति शङ्क्यम्, इष्टत्वात्। लोके सर्वाऽपि गौः सर्वैं न दृष्टा इति अस्मद्दृष्ट्या देशान्तरस्थितायाः गोः अप्रत्यक्षत्वात् अनस्तित्वमिति केनापि नोच्यते। तथैव इहलोके दृष्टसुखत्वाश्रयीभूतस्य सुख-विशेषस्य स्वर्गात्मकस्य अस्माभिः अदृष्टत्वेऽपि कस्यचिद् दृष्टिविषयत्वमस्त्येव। तावतापि स्वर्गस्य नीतिफलतया घटकत्वे न व्याघातः। अथवा सामान्यलक्षणया तस्यापि देशान्तरस्य गोप्रत्यक्षत्वमिव प्रत्यक्षत्वं इति प्राक् (२४६ पृ०) निरूपितमेव। अतः स्वर्गत्वस्य तदाश्रयीभूतस्य स्वर्गस्य वा प्रत्यक्षप्रमाणप्रमितत्वं सर्वथा उपपन्नम्।

किञ्च एतादृशं वास्तविकं सुखं राजनीत्या इहलोकेऽपि अनुभवितुं शक्यम् इत्यपि राजनीतेः स्वर्गरूपं फलमस्ति इति न विस्मर्तव्यम्। तथाहि—यः (पृ० २३४) प्रागुक्तास्तिक्यप्रविभज्यभोजनादिसत्वगुणानाम् अवलम्बनं कृत्वा निष्कामतया नीति-धर्मम् अनुतिष्ठति सः तद्द्वारा अदृष्टविशेषमुत्पाद्य इहजन्मन्येव परलोके जनिष्यमाणं स्वर्गसुखसजातीयं शमसुखम् अनुभवन् आत्मानं कृतार्थं मनुते। यश्च उपर्युक्तं नीतिधर्मं सकामः सन् अनुतिष्ठासति सः तत्तद्देवादिशरीरम् उपलभ्य सुखमनुभवति न च देवादिशरीरं अस्माभिः कथं दृश्यताम् इति वाच्यम्। तथाविधानां विजातीय शरीराणां राजादिभावे स्थितानम् अत्रापि लोके दृश्यमानत्वात्। यावमात्रया मानवः स्वचरणौ दूरं निक्षिपन् गच्छति तदपेक्षयापि दूरं स्व-स्वामिगुणसम्पन्नः राजा स्व-चरणौ निक्षिपन् गच्छति। तदुक्तं नाट्यशास्त्रे[1] (१३ अध्याये २५, २६, २७ श्लोकः)

---

१ यदा मनुष्या राजानस्तेषां देवगतिः कथम्।
अत्रोच्यते कथं नैषा गती राज्ञा भविष्यति ॥
इह प्रकृतयो दिव्या तथा च दिव्यमानुषी।
मानुषी चेति विज्ञेया नाट्यनृत्तक्रियां प्रति ॥
देवा हि प्रकृतिर्दिव्या राजानो दिव्यमानुषो।
या त्वन्या लोकविदिता मानुषी सा प्रकीर्तिता ॥
देवान्वाजास्तु राजानो वेदाध्यात्मप्रकीर्तिताः ॥
एवं देवानुकरणे दोषोह्यत्र न बिद्यते ॥ (१३।२५-२८) इति ।

## जयमङ्गलाक्रोडपत्रम्

अत एव काव्येषु सिंहगतिः, अश्वगतिः इत्यादिवर्णनं सोपपत्तिकं भवति। तत्र उपपत्तिः यथा यथा शरीरे सत्वमभिवर्धते, तथा तथा अस्य लाघवात् शरीरस्य लाघवं भवति, तेन च गतिरपि द्रुता भवति। तस्मादेव कारणात् सात्विक लघुशरीरस्य चरणयोरपि भूमौ प्रक्षेपः मानवचरणप्रक्षेपापेक्षया दूरदेशे भवति। यदि सत्वमत्यर्थमभिवृद्धं स्यात्, तर्हि तद्बलाद् योगिनः स्वर्गगमपि यान्ति प्रत्यावर्तन्ते, इतरशरीरे प्रविशन्ति दूरस्थं च शृण्वन्ति, जिघ्रन्ति, पश्यन्ति इत्यादि सर्वं प्रत्यक्ष सिद्धम्। एवं च सकामतया अनुष्ठितः नीतिधर्मः प्रत्यक्षसिद्धं देवादिशरीरं तदनुष्ठातारं प्रापय्य स्वर्गसुखसजातीयमेव सुखं समुत्पादयति।

एतेन सुखानवच्छेदक युगपदनेकावृत्तिदुःखावच्छेदकवृत्तिजातिं नारकीयां तेषु तेषु शरीरेषु अभिव्यज्य अनीतिमार्गः नारकीयं दुःखं समुत्पादयति इत्यपि ज्ञेयम्। एवंरीत्या स्वर्गत्वस्य तदाश्रयस्य च प्रत्यक्षत्वं साधितम्।

### मोक्षस्य प्रत्यक्षत्वम्

अथ आनन्त्यस्यापि प्रत्यक्षत्वं कथं भवति? इति निरूप्यते। आनन्त्यं हि मोक्षः।

स च स्वसमानाधिकरणदुःखासमानकालीनदुःखध्वंसः, नित्यसुखाभिव्यक्तिः, अभिव्यक्तनित्यसुखं वा इति भेदेन शास्त्रेषु उपवर्णितो दृश्यते। एतेषु आद्ये दुःखध्वंसस्य प्रत्यक्षवेद्यत्वम् अस्त्येव। अथ तत्र स्वसमानाधिकरणदुःखासमानकालीनत्वं प्रत्यक्षीकरणीयमस्ति, तच्च सुषुप्त्यादौ प्रत्यक्षीक्रियते एव। यद्यपि जीवेन अज्ञानदशायां यः दुःखध्वंसः अनुभूयते तस्मिन् स्वसमानाधिकरणदुःखासमानकालीनत्वं नास्ति, भविष्यति काले जाग्रद्दशायां दुःखस्योत्पद्यमानत्वात्। तथापि तादृशदुःखासमानकालीनत्वं यथार्थतया कुत्र अस्ति इति तु शास्त्रेण निर्णेष्यते तच्च स्वर्गनिरूपणे व्यक्तम्। अत्र प्रस्तुते तथाविधदुःखासमानकालीनत्वं निद्रायां प्रत्यक्षी भवति इति यदुक्तं तत्तु सत्यमेव।

मोक्षमधिकृत्य पूर्वनिर्दिष्टयोः द्वितीय-तृतीयपक्षयोः ब्रम्हणः नित्यसुखस्य आत्मस्वरूपस्य प्रत्यक्षत्वं सर्वैरेव सुषुप्त्यादौ स्वीक्रियते। तदुक्तं यः साक्षाद् अपरोक्षाद्,ब्रह्म' 'आनन्दम् ब्रह्मणो विद्वान्' इत्यादि। अत्र त्रिविधेऽपि पक्षे इहलोके केनचित् तथाविधं ब्रह्मसुखं दृष्टं किम्? इति चेत् शुकाम्बरीषमैथिलप्रभृति जीवन्मुक्तानां, आधुनिके काले समर्थ रामदास, कबीरादीनाञ्च उदाहरणं दृष्टमस्ति इति नाविदितमैतिहासिकानाम्।

एवंभूतं मोक्षसुखं अश्रद्धावद्भिः गुरुभक्तिशून्यैः सन्दिग्धमतिभिः यद्यपि नानुभूयते, तथापि मोक्षसुखं अप्रत्यक्षम् इति कथं वक्तव्यम्। उलूको न पश्यतीति सूर्य एवनोदीयात्? न सोऽस्ति इति वा उलूकेनाऽपि कथं निर्णेतव्यम्? अतः मोक्षः अप्रत्यक्षः इति वचनमेव अवचनीयतां गतं इत्यास्तां विस्तरः। तस्मात् स्वर्गः तद्वृत्ति सुखत्वं तदवच्छेदकानि तत्तद् देवादिशरीराणि तद्वृत्तयः, जातयः,

## जयमङ्गलाक्रोडपत्रम्

आनन्त्यंच, प्रत्यक्षप्रमाणप्रमितत्वात् शब्दप्रमाणप्रमितत्वात् यथावसरं अनुमानस्य दर्शितत्वाच्च सिद्धमतः स्वर्गानन्त्यपदार्थौं नीतिफलघटकतया उक्तौ उपपन्नौ। इत्यलमति विस्तरेण।

### देवादिशरीरप्राप्तिः नीतिफलम्

ननु किं देवादिशरीरप्राप्तिः भारतीयराजनीतिमर्यादापालनेन संभवितुमर्हति? इतिचेदर्हत्येव। भूदेवः, नरदेवः, कर्मदेव, आजानदेवः इत्यादि देवसंज्ञाः यानधिकृत्य शास्त्रेषु उपवर्ण्यन्ते तेषां हि नीतिपालनमेव तादृक् देवत्वं प्रति प्रयोजकं यथा गुणवान् ब्राह्मणः स्वाध्यायाध्ययनरूपनीतिशीलवान् सत्वप्रकृतिः यदि भवेत् तर्हि सः भूदेवो भवति।

यश्च नीतिसारोक्तस्वामिगुणसम्पत्तिमान् भवति सात्विकश्च सोऽपि इमामेव नीतिमनुतिष्ठन् नरदेवो भवति। यश्च सत्वगुणसम्पन्नः मोक्षकामः जन्मान्तरवशात् राजससंस्कारवान् भूत्वा राजकीयसुखं वाञ्छति तर्हि सः तत्र तत्र लोके देवादिशरीरं प्राप्य कर्मदेवसंज्ञया व्यवह्रियते एवमेव तत्तत्कर्म भेदवशेन नीतिमर्यादया अनुतिष्ठन् आजानदेवादिसंज्ञया व्यवह्रियते। नारायणः, ब्रह्मा, शिवः, सरस्वती वा कोऽपि वा भवतु ते सर्वेऽपि नीतिमर्यादापालनेनैव ब्रह्म-विष्णुसंज्ञाः तत्तकार्याधिकृतिञ्च अलभन्त। तदुक्तम्—नीतिकल्पतरौ द्रष्टव्यम्[१]।

---

१ नीतिर्नाम नरस्य चक्षुरुदितं दिव्यं यदाश्लेषतो।
देवत्वं नितरां परं तु वलिनी मान्या परेहा बुधैः।
तत्राप्यत्र पदं विदां विदधतां किं नाम नाट्यं यया,
स्मार्यं समुपैतिसिद्धिममलां प्रज्ञाञ्च सोक्तान्ततः।
आश्रित्यनीतिमिह सोऽपि महोत्पलस्थः
सम्यग्विधाय च परां विधिराद्यसृष्टिम्।
तत्तद्पदेषु च निधाय निजास्तनूजा—
नास्ते सुखेन परमेश्वर योगनिष्ठः॥३॥
किं वर्ण्यो महिमास्य साधुजनतानन्द प्रदानोद्यतो
वेदोक्ताखिलधर्मपालनमतिस्तत्पीड़नो योगिनः॥
संहर्तुं दनुजाधिपान्हतमतीन्यः साम्प्रतं चाप्यहो।
भूबिम्बं चरणाब्जरेणुभिरलं संभूषयत्यद्भुतम्॥
ईशानः स च सर्वदेवमहितो गौरीपतिः शङ्करो।
भूतीशः स चराचरस्य जगतः कर्त्ताऽथ संहारकः।
चिद्भ्रान्तां नियतिं नयज्ञकुशलः संस्थाप्य बद्धाजिनो।
जूटोत्तण्ड १ तनुनिरन्तर सुखासक्तोऽभवत्संयमो॥५॥
नयज्ञकुशलः कृती स खलु देववृन्दाधिपो
विभज्य विविधाः कृतीरधिकृतांश्च रात्रिंदिनम्।—

## जयमङ्गलाक्रोडपत्रम्

किञ्च यथा देवत्वरूपफलप्राप्तिः नीतिफलमित्युक्तम् तथा इहलोके जन्मान्तरे वा उत्तमकुलीनशरीरप्राप्तिरपि पूर्वजन्मनि अनुष्ठितायाः नीतेः फलं बोध्यम्[१]।

अर्थात् कुलीनैः श्रद्धा पूर्वकम् अव्यभिचरिततया सहजतः सात्म्यभावमापन्नेव नीतिः पाल्यते। नीतिश्च पालिता सति तथाविधसंस्कारोद्बोधवशात् शुचिकुले भावयतीति भावः। अन्यत्र तु आहारमातृपितृकर्मसु अन्यतमसाङ्कर्ये सति नीतिमर्यादापालनं, देवत्वं वा प्रजानुरागजनकं स्थिरं भवेदेवेति न वक्तुं शक्यम्। अत्र यदि कश्चित् कुलीनत्वं जातिमर्यादा वा राजनीतौ किं फलं प्रयच्छतीति प्रश्नमुपस्थापयेत् तर्हि सः ( पृ० २०७ तः ) प्राक् प्रपञ्चितमार्गेण तर्कसचिवेन तोषयितव्यः। एवंविधं हि उत्तमफलं इतरराजनीतौ केवलं अभिलाषाविषय एव बोध्यम् तत्र साङ्कर्यस्य दुरपनेयत्वात्।

गतानुगतिक[२] इत्यादि टिप्पणीस्थ पद्येषु गतानुगतिकत्वं यत्प्रदर्श्यते तत् अलसानां कृते एव न तु परम्परायातशास्त्रप्रमाणसिद्धयथार्थफलादायकभारतीयराजनीतिविदां कृते शोभनमित्यपि बोध्यम्। तस्मात् देवादिशरीरप्राप्ति र्नीतिमर्यादया संभावितुमर्हति इति तत्रत्यकार्यकारणभावपर्यालोचनं नीतिकल्पतरुग्रप्रोक्तप्राङ्निर्दिष्टबचनानुसारेण सिद्धम्।

### उच्च-नीचभावः

ननु स्वधर्मस्य फलं स्वर्ग आनन्त्यं साङ्कर्याभावो वा, भवतु कामं। तेन सह जनतासु उच्चनीचभावोऽपि भारतीयराजनीत्या मर्यादितो दृश्यते। तथा सति सामादिचतुष्टयोपायेषु अन्तर्गतस्य भेदस्याऽपि जनतायां भारतीयराजनीत्या अवसरप्रदानात् प्रजानुरागो विनष्टुमर्हः इति चेदभिधीयते। तत्रादौ इदं विचार्यतां यत् किमयं उच्चनीचभावः केवलं अत्रैवाऽस्ति वा अन्यत्राऽपि इति। यदि च सूक्ष्मे-

---

गुरुं गुरुतरंधिया सुचतुरं पुरोधाय तं
विवेकनिरतोऽस्त्यलं प्रशमयन्स्थितो दानवान्॥
इत्थं यस्य यथाविधोऽस्ति विभवो नीतेःफलं तद्विदुः
तस्माद्यस्य नये रतिः स चतुरा यादृक्छुभा जायते।
तादृङ्नीतिफलं बुधैर्निगदितं ब्रह्मादि कीटान्तकं
सर्वं नीतिफलं विचार्य मतिमांस्तस्माच्छुभां तां श्रयेत्॥७॥ इति

१ तदुक्तम्—
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभि जायते।
अथवा योगिनामेव कुले भवति धीमताम्। इति गीता० अ०

२ गतानुगतिको लोकः न लोको पारमार्थिकः।
वालुकालिङ्गमात्रेण गतं मे ताम्रभाजनम्। (हितोपदेश)

## जयमङ्गलाक्रोडपतम्

क्षिकया पर्यालोच्यते तर्हि उच्चनीचभावः कुत्र नाऽस्ति यः बुद्धिमान्, वाग्मी, सेवाकुशलः, वर्तते सः उच्चपदे स्थास्यत्येव, उच्चो वा भविष्यत्येव। यश्च न कुशलः, न शूरः, न वा सेवानिपुणः सः गजपृष्ठं नैवारोहेत् इत्यपि सत्यमेव। तथैव अत्रापि नीतौ यस्य यादृग्विधासाधारणकार्यकरत्वं तद्योग्यत्वानुसारेण तस्य तत्र तत्र नीतिविद्भिः नियोजनं कृतमस्ति न हि केवलं अमुककुले जन्म इति कृत्वा तावन्मात्रेण तस्मिन् पदे सः नियोज्यते नीतिविद्भिः।

यदि च तस्य अधिकारिणः सम्माननं नीतिविद्भी राज्ञा वा लोकेन वा न क्रियते तर्हि अयमपराधः एतेषामेव न तु गुणवतः। तन्नीतिशतके व्यक्तम्[१]। किञ्च योग्यः योग्यस्थानेषु न नियोज्यते तर्हि लोकस्य हानिरपि स्यात्। अतः इमां मर्यादामनुध्याय तत्तत्कुलप्रयुक्ताऽव्यभिचरितगुणसम्पन्नः तत्र तत्र कर्मणि नियोज्यते, पूज्यते च तत्तद्कर्मानुसारं नीतिविद्भिः। स्वानुरूपं पदं प्राप्य कुलीनः आत्मनिप्रसादमनुभूय फलं यथा भवेत्तथा स्वकर्म आन्तं प्रसाधयितुं दृढसङ्कल्पो भवति। एवंचेत् लोकपालनार्थं गुणानुसारेण अपेक्षितः उच्चनीचभावः विघटनात्मकं भेदमापादयेत् इति कथनं तेषामपि नीतिविदां न शोभनं भवति।

पूर्वंपरम्परातएव उच्चनीचभावमवलम्ब्य मैत्रीभावेन स्थितेषु धर्मप्रधानेषु यो भेदो दृश्यते तस्य कारणं उच्चत्वं नीचत्वं वा नाऽस्ति, अपितु उच्चपदे स्थितः तत्कर्मणि नियुक्तः अज्ञानवशात् रागद्वेषाभ्यां वा निगडितः स्वकर्म विस्मृत्य अन्यान् भर्त्सयति, पिशुनोपदेशश्रवणेन तत्र दोषमविचक्षाणः अपरान् शङ्कते तत्र स्नेहरागविनाशात् मैत्रीस्थाने भेदस्य उत्पत्तिर्भवति। तदुक्तम्—नीसा० स० १८

"स्नेहरागापनयनं सङ्घर्षोत्पादनं तथा।
सन्तर्जनञ्च भेदज्ञैर्भेदस्तु त्रिविधो मतः।
(टी०) उत्पादिता हि शङ्का स्नेहं भक्तिञ्चापनयति स्पर्धाञ्चोत्पादयति" । इति।

अतः प्रकृतिव्यसने पठितं वाक्पारुष्यादिव्यसनं कदापि केनापि कुत्रापि न करणीयम्। इति भारतीयराजनीतिनियमः सर्वैः पालयितव्यः। तथा आन्वीक्षिक्या शङ्कानिरासोऽपि कर्तव्यः। तेन भेदस्य नावसर इति सर्वविधनानाजातीयकर्मसु कुशलतासम्पादनाय समस्तजातीनां संरक्षणमपेक्षितम् तदनुसारेण कर्मसु स्वधर्मे स्थितानामेव नियोजनस्य अभीष्टत्वात् उच्चनीचभावस्य अपेक्षितत्वात् सामाद्युपायान्तर्गतभेदं प्रति अन्यथासिद्धत्वात् सर्वैरपि उच्चनीचभावोऽपि गुणान्तरेण सह समादरणीय एव। न च विभिन्न-विभिन्नजातीनां अस्तित्वमेवास्तीति केन प्रमाणेन ज्ञातं इति शङ्क्यम्। जातिविचारे अस्य दत्तोत्तरत्वात्। (पृ० २१४)

---

शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमाः।
विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः।
तज्जाड्यं वसुधाधिपस्य कवयोह्यर्थं विनापीश्वराः।
कुत्स्याः स्युः कुपरीक्षका हि मणयो यैरर्घतः पातिताः। इति

## जयमङ्गलाक्रोडपत्तम्

(ज० पृ० ३४३) विनश्येदिति। वेदेन निषिद्धत्वात् साङ्कर्यस्य नरकाधायकत्वं यथा कलृप्तं, तथा पूर्वंपरम्परागतोत्तमसंस्काराणाम् अभिभावकत्वात्प्रतिभा-विनाशकत्वात्, जाड्यस्याधायकत्वात, लोकविनाशकरत्वमपि बोध्यमिति भावः। अत्र अपेक्षिता सर्वाऽपि उपपत्तिः (पृ० २१४ तः) पूर्वंग्रन्थाद् बोध्या।

## स्पृश्यास्पृश्यभावो न भेदकारणम्

ननु इतरराजनीतौ उच्चनीचभावे गुणानुरोधेन स्वीकृतेऽपि सर्वमतसङ्ग्रहार्थं स्पृश्यास्पृश्यत्वन्न उररीक्रियते। भारतीयराजनीतौ वैदिकधर्मनिगडितायां तु स्पृश्या-स्पृश्यकल्पना स्वीकृता अतोऽनया अनिच्छन्त्याऽपि भेदकारणं अस्पृश्यत्वप्रयुक्तम् भर्त्सनं सम्भविष्यत्येव इति पुनरपि लोकानुरञ्जनं भारतीयराजनीतौ दूरमेव इति चेन्न।

स्पृश्यास्पृश्यत्वव्यवस्था कुलीनत्वस्य तत्प्रयुक्तगुणानां च साहजिकोद्बोधनाय विवाह, भोजन, पूजनादिकर्मविषयेषु समादृता वर्तते। राजनीतिक्षेत्रेषु तु अर्थ-सम्बन्धिनि व्यवहारे तत्तत्कर्मणि कुशलस्य सर्वविधस्याऽपि तत्तज्जातीयस्य समादरः समानरूपेणैव राजादिभिरनुष्ठेयः, इत्यादि सविस्तरं "शान्तीका अग्रदूत" ग्रन्थे प्रपञ्चितमस्ति।

पूर्वोक्तजातिव्यवस्था (२१४ पृ०) प्रकरणेन कुलीनत्वप्रयुक्तगुणगौरवे अवगते सति भारतीयराजनीतिदृष्टया स्पृश्यास्पृश्यविभागस्य व्यर्थत्वं केन वक्तव्यम्? प्रत्युत एतन्नीतिव्यवस्थायां समृद्धि पश्यन्तः सर्वे सोमदेवसूरिप्रभृतयः भारतराष्ट्रस्य सर्व-विधसमस्तलक्षणसम्पन्नत्वमेव व्याचख्युः। तदिदमपि (Customs and systems) "हिन्दुओं का रीति रिवाज" पुस्तकादप्यवगम्यते। केवलं कैश्चन अधीताङ्ग्लविद्यैः इदं हि निगूढतत्वमविजानद्भिः परराष्ट्रेण स्वानुकूलशिक्षया वञ्चितैः सरलस्वभावासु जनतासु शङ्का उद्भाव्य स्वराष्ट्रं स्वलक्षणात् प्रच्याव्यते। इति नीतिविद्भिः तेषां शङ्कासमाधानं यथा भवेत् तथा आन्वीक्षिक्यादिविद्याचतुष्टयस्य प्रचारः अनुष्ठातव्यः।

## स्पृश्यास्पृश्यविभागे लोकसम्मतत्वम्

अथ स्पृश्यास्पृश्यविभागः किं शास्त्रेण प्रत्यक्षादिना च हितसाधनत्वेन निर्णेतुं शक्यते? इति चेच्छक्यते। तथाहि–बालकेषु 'सुखण्डी' नामको रोगः दृश्यते। तत्र कारणं, आयुर्वेदे रजस्वलादिस्पर्शो धर्मशास्त्रेण निषिद्धः प्रतिपादितोऽस्ति। मातृजातीनां पुष्पवतीनां अस्पृश्यत्वं दिनत्रयावधिकरोगजनकत्वात् स्वीकृतं अनुभवसिद्धम्। एतत् स्पर्शनिषेधातिक्रमणेन सुखण्डीप्राचुर्यं यवनादिषु दृश्यते तेषु उपर्युक्तस्पृश्यास्पृश्यत्वस्याविविक्तत्वात्। एवमेव (चेचक) शीतला-रोगः राष्ट्रे यदा प्रसरति तदा तस्य रोगिणः स्पृश्यास्पृश्यत्वविवेकः अवश्यं संरक्षणीयो भवति। यदि च अयं विवेकः न क्रियते तर्हि शीतलारोगः वर्धमानः अनेकविधान् रोगिणः यमपुरीं प्रदर्शयति। अतः पावित्र्यसंरक्षणाय, रोगपरिहाराय, प्रागुक्त-दिशा बुद्धिनैर्मल्यसम्पादनाय च स्वस्वकर्मानुरूपाणां तत्तत् कुलपरम्पराप्राप्तानां कीटाणूनां असजातीयेषु रोगप्रागभावसंरक्षणोद्देश्येन असञ्चरणाय स्पृश्या-स्पृश्यविभागः प्रत्यक्षदृष्टहिताहितप्राप्तिपरिहाराय क्लृप्तोऽस्तीत्यवश्यं वक्तव्यम्।

## जयमङ्गलाक्रोडपत्रम्

अमुं विषयमधिकृत्य चिकित्साचन्द्रोदये मस्तिष्कनिरूपणावसरे प्रागुक्तम्—'कुदरती कानून को मानो' इत्यादि स्मर्तव्यम् (पृ० १५)।

एतस्मादेव कारणात् एतन्नीतिशास्त्रे प्राकृतिकनियमानुसरणं ईशप्रकाशित वेदमर्यादां पुरस्कृत्य कृतमस्ति। अपि च स्पृश्यास्पृश्यव्यवस्था अतिसूक्ष्मविवेचनया निरूपिता सनातनधर्मप्रदीपे, (अप्रकाशिता) सांगवेदविद्यालये तत एव अनुसन्धेया।

न च वेदमर्यादां पुरस्कृत्य इदं नीतिशास्त्रम् प्रवर्तते इति सत्यं, परं वेदे सदोषत्वशङ्कया कवलिते प्राकृतकार्यकारणभावं पुरस्कृत्य न विवेचनमस्तीति शङ्क्यम्, वेदस्य अपौरुषयत्वेन सतात्पर्यकत्वेन फलवदर्थबोधकत्वेन च सर्वथा निर्दुष्टत्वात्।

### वैदिकेषु शिष्टाः परीक्षणीयाः

न च केचन अपरेऽपि शिष्टाः भवितुमर्हन्ति। तेषामपि वचनं कुतो न प्रमाणत्वेन ग्राह्यं ? इति वाच्यम्। यदि ते शिष्टाः स्युः तर्हि तद्वचनस्वीकारे बाधकाऽभावः अतः शिष्टत्वं कुत्र कथं परीक्षणीयम् अस्तीति प्रसङ्गाद् विमृश्यते। तथाहि—वेदस्य उपदेष्टारं ईश्वरं विहाय अपरे अदृष्टविषये अभ्रान्ताः इति यावत्पर्यन्तं न निर्णीयते तावत्पर्यन्तं तदुपदिष्टेऽर्थे सफलत्वं सदा अस्त्येव इति कथं विवेक्तुं शक्यते ? यतः सफलत्वं हि फलसाधनत्वं, सर्वत्र साधनत्वं च शिष्टसमादृतत्वे सत्येव निर्णेतव्यं भवति। कारणत्वस्य प्रामाणिकपुरुषेच्छाघटितत्वेन वक्ष्यमाणत्वात्।

### कारणत्वम्

तथाहि—अन्यथासिद्धभिन्नत्वेसति नियतपूर्ववृत्तित्वं हि कारणत्वस्य लक्षणं नैयायिकाः व्याख्यान्ति।

दण्डत्वदण्डरूपादौ कारणत्वव्यावृत्तये लक्षणघटकतया अनन्यथा-सिद्धत्वं प्रविष्टम्। तत्वं च यत्र यत्र प्रामाणिकानां अकारणत्वव्यवहारः तत्तद्भिन्नत्वं भवति। अकारणत्वव्यवहारश्च प्रामाणिकानां कुत्र भवतीति चेत् यः नियतो पूर्ववर्ती सन् शरीरेण उपस्थित्या सम्बन्धेन वा वृद्धैः त्रासाधायकेन गौरवेण युत भवति तत्रैव। यथा दण्डत्वे, दण्डरूपे, आकाशे, कुलालजनके रासभादौ च घटनियत-पूर्ववर्तिनि उपर्युक्तगौरवबलात् प्रामाणिकैः अन्यथासिद्धत्वं व्यवहृतम्[१]। कुत्र कादृश गौरवमस्तीति तु मुक्तावलीटीकादिषु समीचीनतया व्याख्यातत्वान् नात्र विमृश्यते। केवलं सङ्क्षेपेण इदमेवोच्यते।

---

१ तदुक्तम्—न्या०मु०

अन्यथासिद्धिशून्यस्य नियता पूर्ववर्त्तिता।
कारणत्वं भवेत्, तस्य त्रैविध्यं परिकीर्तितम्॥

येन सह पर्वभावः कारणमादाय वा यस्य।
अन्य प्रति पूर्वभावे ज्ञाते यत् पूर्वभावविज्ञानम्॥

जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते।
अतिरिक्तमथापि यद्भवेन् नियतावश्यकपूर्वभाविनः॥
एते पञ्चान्यथासिद्धा दण्टत्वादिकमादिमम्।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम्॥

तृतीयन्तु भवेद्व्योम कुलालजनकोऽपरः।
पञ्चमो रासभादिः स्यात् एतेष्वावश्यकस्त्वसौ॥ (सि० मु० व०)

## जयमङ्गलाक्रोडपत्रम्

यत्र तथाविधं गौरवं नाऽस्ति तत्रैव शिष्टाः व्यवस्थिताः इति, घटदण्डयोः कार्यकारणभावनिर्णयनियमानुसारेण कल्पयितुं शक्यते। इदं च व्यवस्थितत्वं उत्तरशिष्टनोर्णीतार्थापेक्षया पूर्वशिष्टैः यत्र अन्यथासिद्धत्वनिर्णयः कृतः तत्र लाघवमस्ति सफलत्वञ्च इति उन्नीयते। तस्मात् पूर्वशिष्टनिर्णीतार्थविरुद्धेषु अर्थेषु फलनियतपूर्ववृत्तिष्वपि सत्सु तत्फलं प्रति साधनत्वमस्तीति न निर्णेतुं शक्यते, अन्यथासिद्धत्वस्य सहजतएव प्राप्तत्वात्। एवं स्थिते पूर्वपूर्वशिष्टेषु सर्वापेक्षयाऽपि अतिप्राचीनः सर्वेषां हितदर्शी शिष्टः को भवितुमर्हति? इत्याकाङ्क्षायां सर्ववादिसम्प्रतिपन्नत्वात् वेदः तत्प्रकाशकईश्वरो वा वर्तते। तेन यत्र अकारणत्वं व्यवहृतं नियतपूर्ववृत्तिस्थले, तत्सर्वं अन्यथासिद्धमिति हेतुना ईश्वरं विहाय अपरेण व्यवहृते वेदेनिषिद्धेऽर्थे (पृ० ३५४) सम्बन्धादिगौरवदोषसत्वात् अन्यथासिद्धत्वस्य निर्णीतत्वात् उद्दिष्टफलसाधनत्वं अर्थात् सफलत्वं नास्तीत्यवश्यमनुमन्तव्यम्।[1]

---

### कारणत्वानुगमः

१. यत्र यत्र प्रामाणिकानां अकारणत्वव्यवहारः इति कारणत्वस्य लक्षणं निरूपितमस्ति इदं कारणत्वलक्षणं यत्तत्पदघटितत्वात् असर्वज्ञदुर्ज्ञेयं भवति। अतः अनुगमकं कारणत्वलक्षणं कीदृशं भवतीति निरूपणार्थं काचन दिक् प्रकाश्यते। तथाहि—

यदाहि बुभुक्षा जायते तदा तत्पूर्तये भोजनसाधनानि यानि वर्तन्ते तेषु सञ्जिघृक्षाऽपि बुभुक्षोर्भवति इति दृष्टत्वात् कार्येच्छाप्रयोज्येच्छाप्रयोज्येच्छाऽप्रयोज्यत्वेसति कार्येच्छाप्रयोज्येच्छाविषयत्वं कारणत्वं इत्येवं कारणत्वलक्षणमनुगम्यते, कार्येच्छा उपायेच्छां प्रति प्रयोजिका इति सर्वसम्मतत्वात्। कार्यं घटः तदिच्छायां सत्यां व्यापारभूता भ्रमिः चक्रे दण्डेन कर्तव्या इति इच्छा कुलाले भवति। तदनन्तरं तत्साफल्याय दण्डः कुलालेन अभिलष्यते। एवञ्च दण्डे कुलालस्य घटरूपकार्येच्छाप्रयोज्येच्छाप्रयोज्यइच्छाऽप्रयोज्यत्वमुपपन्नम्।

दण्डत्वे लक्षणघटकविशेषणदलेच्छाऽप्रयोज्यत्वमस्ति इति तद्वारणाय द्वितीयदलप्रवेशः। न च कार्येच्छाप्रयोज्येच्छाविषयत्वं पुर्वोक्तरीत्या भ्रमणे एव वर्तते। दण्डे तु नास्तीति वाच्यम् तत्रापि एतदिच्छाविषयत्वस्य सत्वात्, व्यापारेण व्यापारिणो नान्यथासिद्धिः भवतीति इति नियमाच्च। कारणत्वलक्षणे प्रयोज्यत्वनिवेशेन ततः कार्यत्वस्य विभिन्नस्वरूपत्वात् न अन्योन्याश्रयो दोषः। प्रयोज्यत्वञ्च स्वाभाववदवृत्तित्वात्मकव्याप्तिस्वरूपं वोध्यं तेन जन्यत्वस्य प्रयोज्यत्वात्मकस्य निवेशे पुनरुक्तशङ्कालेशोऽपि न तिष्ठति। अस्य परिष्कारस्य अवशिष्टोंशो यथा आन्वीक्षिकीकौशलदृष्टया सुसम्पन्नो भवेत् तथा तर्ककर्कशविचारचातुरीनिपुणैः अनुसन्धेयः। अस्मिन् कारणत्वलक्षणे इच्छानिवेशः तस्याः लघुविषयकत्वग्रहणस्वाभाव्यात्। दृश्यते चैतत् कश्चित् चतुरस्रे महति क्षेत्रे ईशान्यां दिशि पिपासितः रासभः स्थितो वर्तते। तत्रैव आग्नेयकोणे तत्पानयोग्यं जलं उपस्थितं वर्तते। तदा स महाऽबुद्धिमानपि जलपानार्थं जिगमिषुः सरलया रेखया प्रयाति न तु वायव्यादि कोणसंबद्धया वक्ररेखया इति ध्येयम्।—

## जयमङ्गलाक्रोडपत्रम्

### शिष्टः ईश्वरः

लाघवं यत्र भवति तत्र वुद्धिमतां इच्छाविषयता वर्तते इति व्याप्तिः स्थिरा वर्तते। परन्तु कुत्र लाघवमस्ति ? कुत्र वा तत्प्रयुक्तं वुद्धिमतामिच्छाविषयत्वमस्तीति ? निर्णयः असर्वज्ञानां कृते अशक्य एव। अतएव क्वचिद् अशक्येषु प्रवर्तमानस्य अङ्गवैकल्यं निष्फलत्वं विपत्तिः चित्तसन्तापश्चेति दोषचतुष्टयं असर्वज्ञैः स्वबुद्धिवैभवमहिम्ना अनुभूयते। तद्बलादेव च असवर्ज्ञोऽयं जनः नेतृपदे अधिष्ठतोऽपि पर्यन्ते स्वकर्मणैव लोकानां पुरतः अविश्वास्यत्वात् काकिणिकातुल्यमूल्योभवति। अतः सर्वज्ञस्य प्रेरणा यत्र वर्तते तत्रैव लाघवं प्रकृतिगतं हिताहितप्राप्तिपरिहारहेतुत्वञ्चास्ति। अन्यत्र तु गौरवात् हिताहितप्राप्तिपरिहारहेतुत्वं निश्चयेन न वक्तुं शक्यम्, इति संमन्य असर्वज्ञेन सर्वज्ञस्य इच्छायाः अनुसरणं कृतं श्रेयः, सर्वज्ञानुमते उपाये अवश्यं साफल्यस्य दाढर्येन वक्तुं शक्यत्वात्। इदमेवानुसन्धाय भारतीयराजनीत्या सर्वज्ञः ईश्वरः आत्मनः श्रेयसः यथावत् अबाधितमार्गनिर्णयाय प्रमाणीकृतः। तत्रैव कर्तृत्वं ज्ञानप्रभामिश्रिता प्रागुद्दिष्टा क्रियाप्रभापि स्फुटा भवति।

---

श्रीगुरुचरणान्तेवासिनो नैष्ठिका गणपतिशास्त्रिण एवमाहुः।

घटपदात् घटो बोद्धव्य इत्याकारकप्रमाणिकेच्छाशक्तिरितिवत् घटार्थं प्राक्क्षणावच्छेदेन नियतपूर्ववृत्तितया दण्ड एष्टव्य इत्याकारकप्रामाणिकेच्छाविशेष्यत्वं कारणत्वम्।

कार्यमुद्दिश्य नियतपूर्ववृत्तितया अपेक्षणीयत्वम् कारणसामान्यलक्षणम्। घटादिविशेषमुद्दिश्य तथापेक्षणीयत्वं दण्डादिकारणत्वमिति विशेषलक्षणम्। अपेक्षणीयत्वं चाश्रान्तापेक्षाविशेष्यत्वम्। तेन नान्यथासिद्धेष्वतिव्याप्तिः। अन्यथासिद्धापेक्षाया अप्रामाणिकत्वाङ्गीकारात्। पट (Pet) पदात् पटो बोध्यव्य इत्यादिवन् नियतत्वं कार्यतावच्छेदकसमवायादिसम्बन्धेन कार्याधिकरणे कारणतावच्छेदकसम्बन्धेन विवक्षितम्। स्वजन्यभ्रमिजन्यभ्रमिमत्तेत्यादिषु सम्बन्धघटकजन्य जनकत्वे कार्यकारणलक्षणलक्ष्यतावच्छेदकतया क्लृप्ते स्वरूपसम्बन्धविशेषरूपे विवक्षणीये। एतादृशविशेष्यतया परम्परया निरूपितोद्देश्यत्वं कार्यत्वम्। नियतत्वघटितत्वाद् व्याप्तिग्रहे प्रयोजकतर्कोपयोगित्वोपपत्तिः।

यत्र यत्र प्रामाणिकानामकारणत्वव्यवहारस्तत्तद्भिन्नत्वमित्यादिघटितं सर्वं अस्यैव परिचायकम्। सामान्याभावदिपरिष्कारे तत्तदवच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वादिघटिते विलक्षणप्रतियोगिताकत्वमिति पर्यवसायितव्यलक्षणपरिचायकत्ववत्। एवंविधाभ्रान्तापेक्षाघटितकार्यकारणभावानधीनाः सर्वे नवनव शोधाः भ्रान्तापेक्षाघटिताः—"उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित्। तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च" इति मनुरपि यथाह।

तेषामपरिनिष्ठितत्वात्, अद्यापि प्रयोगारूढत्वमात्रत्वात्, निगमनाभावात्, निगमयितुमशक्यत्वाच् च। अत एव आधुनिका वैज्ञानिकाः स्वशोधेषु दृढमनाश्वस्ताः—

## जयमङ्गलाक्रोडपत्रम्

अत्राऽयं निष्कर्षः यथा भक्तैः यथावत्सुपूजिता मूर्तिः तेषु यदि प्रसाद-सुमुखी भवति तर्हि तत्प्रसादहेतुना स्वकार्यस्य साफल्यमनुमाय ते ते भृत्याः तुष्यन्ति। तदाहुः—वत्सोत्सुकाऽपि स्तिमिता सपर्यां प्रत्यग्रहीत्सेति नन्दतुस्तौ।

भक्त्योपपन्नेषु हि तद्विधानां प्रसादचिन्हानि पुरःफलानि। इति (रघु०वं० सर्ग २,)

तथैव यदनुष्ठानं भारतीयराजनीतिसम्मतमस्ति तत् प्रमाणत्रयप्रमितत्वात् सफलं, लघु, संस्कृतं, अबाधितं अव्यभिचारि, दृढ़म् विघ्नैरनुच्छेद्यं, राजदेवतागुरुप्रसादकरं विदग्धव्यवहारविषयः उपदेशकरं क्रियाशक्तिसम्पन्नं सात्विकं सत् स्वमण्डलान्तर्गतानां सर्वेषां शुक्लधर्मरुचिकरं भवतीत्यत्र नाऽस्ति सन्देहलेशः। भारतीयराजनीत्य सम्मतमनुष्ठानं तु असाफल्यालाघवादिप्रयुक्तां गुणविपरीततां प्रकाशयत् तामसे—अन्धकूपे अवगाहने कारणं भवेत्। अतः स्पृश्यास्पृश्यविभागः सर्वज्ञप्रणीतवेदमर्यादां पुरस्कृत्य कार्यकारणभावनिदर्शिकायां भारतीयराजनीतौ निर्दिष्टत्वात् चाक्षुषादिनाऽपि तत्सफलत्वस्य दृष्टत्वाच्च न विश्लेषकरः। इति।

---

"चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः" इति तेषां शोधानां अश्रान्तापेक्षाघटितत्वानवधारणात्, "यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः। अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते" इति न्यायात्, वेदशास्त्रविरुद्धशोधानां अश्रान्तापेक्षापर्यन्तमप्राप्तत्वमिति तात्पर्यम्। एवंविधशोधा एव वेदेष्वपीति तु महाभ्रान्ताः। विधि निषेधादितत्त्वेषु अज्ञा विपर्यस्ताः क्वापि अनाश्वस्ताः "अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति। नायं लोकोऽस्ति न परो न सुखं संशयात्मनः" इत्युक्तस्थितिविषयत्वात्तेषाम्। इति। तदुक्तम्—

न्यायान्यायविवेकसाधनमियं नाकृत्रिमा चेच्छ्रुतिः।
नार्वाक्कालिकमन्यदस्ति तदहो! स्यात् कृत्स्नमन्धन्तमः। इति।

अथवा कारणत्वं हि अनन्यथासिद्धत्वघटितम्। अनन्यथासिद्धत्वञ्च प्रामाणिकानां यत्र यत्र नियतपूर्ववृत्तिषु अकारणत्वव्यवहारः तत्तद् भिन्नत्वरूपमिति दिनकरीकृताव्याख्याते कारणत्वलक्षणे आत्माश्रयत्वमन्योन्याश्रयत्वं वा दूषणमस्ति अतः कार्येच्छाप्रयोज्येच्छाप्रयोज्येच्छाविषयत्वमेव कारणत्वं बोध्यम्। प्रयोज्यत्वञ्च व्यापारव्यापार्युभयसाधारणं मन्तव्यम्। कार्यं (घटः) भवतु इतीच्छायां सञ्जातायां घट साधनाय चक्रे भ्रमणं भवत्वितीच्छा कुलाले समुत्पद्यते अथवा घटोत्पत्यर्थं कुलालो दण्डमभिलषति। घटस्य च साधकत्वसाफल्याय व्यापारमुखेन दण्डेन चक्रस्य भ्रमिं कर्तुं कुलाल इच्छतीति कार्येच्छाधीनेच्छाधीनेच्छाविषयत्वम्। क्वचित्तु कार्येच्छाधीनेच्छाविषयत्वमस्तीति उभयसाधारणं प्रयोज्यत्वमुपपन्नं भवति। उपायेच्छां प्रति कार्येच्छा प्रयोजिकेति सर्वैः स्वीकृतत्वात् कारणत्वलक्षणमुक्तं नानुपपन्नं भवति।

एतल्लक्षणे कार्यत्वस्य प्रयोज्यत्वस्य च निवेशात्। पुनरपि अन्योन्याश्रयो दोषो भाति तन्निवारणार्थं स्वाभाववदवृत्तित्वरूपं प्रयोज्यत्वमत्र बोध्यम्।

## [ धर्मस्थापनस्य राजधर्मता ]

तस्मात् स्वधर्मं भूतानां राजा न व्यभिचारयेत् ।
स्वधर्मं सन्दधानो हि प्रेत्य चेह च नन्दति ॥३॥

## [ त्रय्याः लोककल्याणहेतुता ]

व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः ।
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति ॥ ४ ॥

इति विनयाधिकारिके प्रथमाधिकरणे त्रयीस्थापना तृतीयोऽध्यायः आदितः तृतीयः ॥

---

### श्रीमूला

अतः किं कर्तव्यं तत्राह—**तस्मादित्यादि ।** भूतानां मनुष्याणाम् । न व्यभिचारयेत् व्यभिचरन्तं नानुमन्येत । स्वधर्मं सन्दधानः सम्यगनुष्ठापयन् । प्रेत्य परलोके, ल्यप्प्रतिरूपो निपातः ॥

वर्णाश्रमधर्मविधानद्वारेण त्रय्या महाफलत्वं वदन्नध्यायमुपसंहरति—**व्यवस्थितेत्यादि ।** व्यवस्थिता वर्णाश्रमप्रतिबद्धा आर्यमर्यादा सदाचारनियमो यस्य स व्यवस्थितार्यमर्यादः । प्रसीदति मोदते । न सीदति न नश्यति ।

इति कौटिलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे तृतीयोध्यायः । विद्यासमुद्देशे त्रयीस्थापना ॥

### वैदिकसिद्धान्तसंरक्षिणी

उपसंहरति श्लोकद्वयेन **तस्मादिति ।** सर्वेषां सुखलाभाय प्रयतमानया विदग्धव्यवहारं ख्यापयन्त्या राजनीत्याऽनया त्रयीस्थापनादित्यर्थः । न व्यभिचारयेत् त्रयोविपरीतम् अनुष्ठाप्य भूतानाम् प्राणिनां सङ्करं नोत्पादयेत् इति भावः । **सन्दधानः** कर्मसङ्करात् वर्णसङ्कराच्च व्यावर्त्य शासनेन स्वस्वजोविकाम् सम्प्रधार्य यथाधिकारं धर्मप्रेरकः । नन्दति उभयलोके कीर्तिभाग्भवति ।

द्वितीयश्लोकेन त्रय्याः फलं लोके सुखं शान्तिश्चेति दर्शयति **व्यवस्थितेति ।** व्यवस्थिता अनतिक्रान्ता सुरक्षिता आर्यमर्यादा यत्रेति विग्रहः तस्य लोकेन सह अन्वयः । आर्येति । उपायविकल्पे कृतक्षणः आर्यः तदुक्तम्—
यमार्याः क्रिममाणं हि शंसन्त्यागमवेदिनः । इति नीतिसारपद्यव्याख्यायां—
आर्या उपायविकल्पे कृतक्षणाः । इति ॥

उपायविकल्पप्रकरणे नीतिसारोक्ते एकद्विकत्रिक चतुष्कभेदेन सामाद्युपायानां संहृत्य विभज्य वा अधिकारिभेदेन यः प्रयोग उक्तः तत्र कृतक्षणः निर्मलमतिरित्यर्थः । मर्यादा केन कियत् किं कर्तव्यमिति चतुर्वर्णाश्रमस्य परिच्छेदिका-

## वैदिकसिद्धान्तसंरक्षिणी

रेखा स्वस्वकर्तव्या तदनतिक्रमणमिति यावत्। तदेवाह कृतेति। वृत्तिरपि सर्वेषां मर्यादितैवेति बोध्यम्।

### त्रयीफलम्

एतन्नियमनं त्रय्या व्यवस्थाप्यते। सा नरकदण्डभीतिं स्थिरामुत्पाद्य प्रच्छन्नात् पापान्निवारयति कर्तव्येषु स्थिरबुद्धिमुत्पादयति। अतः लोको मर्यादान्नातिशेते। प्रसीदति इति। परस्परसाकाङ्क्षत्वात् स्वकर्मण्यभिरतः परं प्रति आत्मनः अङ्गभावं आसाद्य चतुर्वर्णाश्रमो लोक उन्नतिं प्राप्नोति। यदि त्रय्या अतिक्रमणं क्रियते तदा सुखं न भवति इति व्यतिरेकमाह नेति। विषाद सामग्री-विघटकत्वादिति शेषः। अन्यथा त्रयीलोपप्रयुक्तेन सत्वगुणापकर्षेण तमोबाहुल्येन च कार्यानिस्तरणात् विघ्नात् चौर्याभिग्रहणात् दैवव्यापत्तेः राजादिदोषाद्विषादो जायते[1]। ततः चिन्तानिःश्वासध्यानादिक्लेशम् सततमनुभवन् लोकः सदा विषादभाग्भवति।

इति अर्थशास्त्रव्याख्यायां वैदिकसिद्धान्तसंरक्षिण्यां तृतीयोऽध्यायः।

## जयमङ्गला

यत् एवं तस्मात् **स्वधर्मम्** भूतानां मनुष्याणां राजा न व्यभिचारयेत् हेतुकर्तृत्वेन। हि यस्मात् स्वधर्मं सन्दधानः प्रतिपादयन्नित्यर्थः। प्रेत्य जन्मान्तरे इह च लोके। **नन्दति मोदते**[2] धर्मोपादनात्। त्रयीधर्मव्यवस्था नैकफला।

इति विद्यासमुद्देशे त्रयीस्थापना।

## जयमङ्गलाक्रोडपत्रम्

### आर्यत्वम्, अभियुक्तानां प्रामाणिकत्वञ्च

मूले आर्येति (पृ० ३५८) ननु आर्यत्वं किम्? तच्च जातिरूपमेव। तैः इतिहासेषु क्रूरकर्म कृतम् अत आर्यजातेः द्वेष्यत्वप्रसङ्गः। आर्याः लङ्काङ्गत्वा द्रविडान् अद्विष्यन्। अतः द्वेष्टृत्वात् एते अस्माद्देशान् निष्कासनीयाः। न चाऽयं देशः आर्याणामेव, कथं एतस्माद्देशात् आर्याः निष्कासनीया इति वाच्यम्? एतद्देशनिवासित्वस्य तेषु अस्वीकारात् आदिवासिष्वेव एतद्देशनिवासित्वस्य स्वीकाराच्च। इति चेदुच्यते।

आर्यशब्दः न जातिवाचकः अपितु वक्ष्यमाणगुणविशिष्टत्वं यत्र तद्वाचकः, तथैव संस्कृतवाङ्मये उपलब्धत्वात्। तथाहि आर्यशब्दोऽयं संस्कृतवाङ्मये वेदादारभ्य इतिहासपर्यन्तं व्यवहृतो वर्तते। यथा वेदे निर्दिष्टयवादिपदस्य

---

१ तदुक्तम्—

कार्यानिस्तरणाद्दैवव्यापत्ते राजदोषतः।
चौर्याभिग्रहणाद्विघ्नाद्विषादो नाम जायते॥

२ अशुद्धम्
मोदते। धर्मोपादानात्। त्रयी

## जयमङ्गलाक्रोडपत्रम्

अर्थनिरूपणे वैदिकधर्मे अभियुक्ताः एव सर्वशिष्टसम्मतत्वात् प्रमाणिकत्वेन स्वीक्रियन्ते नत्वितरे। अतः म्लेच्छकल्पितः यवपदार्थः "यवैर्यजेत" इत्यादौ वैदिकैः न स्वीक्रियते, तथैव आर्यशब्दस्याऽपि व्युत्पत्तिः वेदार्थनिरूपणे अभियुक्तानां व्याख्यायामुपलब्धायां सत्यां तथाविधस्यैवार्थस्य स्वीकर्तव्यता उचिता। अतः आर्यशब्देन व्युत्पतिबलात् योगार्थं पुरस्कृत्य मनीषिभिः स्वीकृतोऽर्थः ग्राह्यः। तदुक्तम्—"अर्तुं आचरितुं योग्यः आर्यः" इति।

अमुमेव अर्थमनुसृत्य अपरे एवमाहुः–

"कर्तव्यमाचरन्कामम् अकर्तव्यमनाचरन्।
तिष्ठति प्राकृताचारे स तु आर्य इति स्मृतः।" इति।

अतएव अनार्यत्वेन परिगृहीतोऽपि यदि स्वानि कुलक्रमागतानि कर्माणि ईश्वरप्रसादोद्देश्येन सात्विकस्थितौ स्थितः सन् करोति तर्हि सोऽपि आर्येष्वेव परिगृह्यते। तदुक्तम्—

आर्यरूपमिवानार्यं कर्मभिः स्वैर्विभावयेत्। इति। म० स्मृ०

एतेन चण्डालानां शूद्रणामादिवासिनां वा कर्म अनार्यकर्मेति मत्वा तान् अनार्यान् मन्यन्ते इति प्रत्याख्यातम्, स्वकर्मणा परमेशितुः अर्चकानां शूद्रादीनामपि यथायोग्यस्थाने निवेशितत्वात्। अतएव यदा क्षत्रियास्सन्तोपि पितुराज्ञामुल्लङ्घ्य विश्वामित्रपुत्राः ययातिपुत्राः इव अवर्तन्त तदा ते समाजेन अनार्येष्वेव निवेशिताः। तस्मात् स्वं स्वं कर्म यथायोग्यं येन पालितं भवति स सः आर्यं एव भवति। इत्येवं "अर्तुमाचरितुं योग्यः आर्यः" इति पूर्वोक्तस्य धातुव्याख्यानस्य आशयः।

यदि च आर्यत्वं जातिरूपं भवेत् तर्हि पतितेषु क्षत्रियेषु अनार्यत्वं, चण्डालेषु आदिवासिषु कुलीनेषु आर्यत्वं वेदार्थनिरूपणे अभियुक्तैः निरूपितं कथमुपपद्येत? एवञ्च असाधारण-विपदादियोगेष्वपि तत्तत्कुलीनाः स्वस्वोचितं कर्म कदापि न परित्यजन्ति इत्येवंविधं यत् कुलीनत्व तदेव सर्वसाधारणमार्यत्वमिति आर्यस्वरूपं सङ्क्षिप्तमवगन्तव्यम्। तदुक्त नी० सा० कृता—

कुलं सत्वं दया दानं धर्मः सत्यं कृतज्ञता।
अलोभ इति येष्वेते नानार्यान् प्रचक्षते। नी० सा० १८ स० इति।

एतन्नीतिसारोक्तपद्यदिशा कुलादिगुणाष्टकवत्त्वं आर्यत्वमिति सिद्धम्। एवंभूताः आर्याः राज्ञा अकार्यात् अविचारात् आत्मनः कुपथान्निवृत्तये अङ्कुशस्थाने स्थापनीया भवन्ति। तेषां सामाद्युपायप्रयोगकौशलात्। धर्मतत्वस्य च तैरेव निर्णेतु शक्यत्वात्।[1]

---

१ तदुक्तम्—वीरमित्रोदये—भविष्यपुराणे—नीतिसारे च-
यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः।
स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते। इति।
आर्याः उपायत्रिकल्पे कृतक्षणः। इति च। टीका का० नी० ज० मं०

## जयमङ्गलाक्रोडपत्रम्

### आर्याणामङ्कुशत्वम्

अत्रेयमुपपत्तिः—राज्ञा हि तथा प्रयतनीयं यथा सः आत्मनि प्रजानुरागं सम्पादयेत्। तत्र प्रतिबन्धकं तस्य वाक्पारुष्यदण्डपारुष्यार्थदूषणादिव्यसनित्वं सम्भवति। अतस्तन्निरासाय लोकस्य पुरतः माध्यस्थ्यं प्रदर्शयता तेन विवादे न्यायतः यत्सत्यं भवति तदेव प्रकाशनीयं भवति। परन्तु एवंविधं कौशलं उत्साहप्रधानेन वीररसस्थायिना राज्ञा आर्याङ्कुशमन्तरा कर्तुं न शक्यते इति सविस्तरं प्राक् प्रपञ्चितम्। (पृ० ३२६) अतः न्यायकौशलप्रकाशनाय अङ्कुशस्थाने आर्याः स्थापिताः। ते सात्त्विकाः, विदग्धाः, वीतरागाः, समदर्शिनः, स्वमण्डले परमण्डले वा तत्तदधिकारिणं विविच्य सामाद्युपायादिषु एकद्विकत्रिकचतुष्क भेदेन[1] सामादि प्रयोगं सफलं कर्तुमधिकृताः यत् राजानं आदिशन्ति तदादेशविषयीभूतः राज्ञा संपाद्यते। स एव उपर्युक्त भविष्यपुराणोक्तधर्मलक्षणसङ्गतः धर्मः नीतिशास्त्रे गृहीतत्वात् प्रजानुरञ्जनक्षमः न्यायः सम्भवति। अतः आर्याः यदुपदिशन्ति तदेव राज्ञा पालनीयं भवति इति स्थितम्। यः किल उपायविकल्पेऽसावधानः स न आर्यः इति उपर्युद्धृत (पृ० ३६१) जयमङ्गलाव्याख्यानात् अर्थत एव आयातम्। तथा चेयमीदृशी आर्यता कस्यचिज्जातीयस्य न जन्मसिद्धाधिकारविषयः अपितु येन पुण्यवता पुरुषेण प्राप्तुं शक्येत स एव आर्यः इति सिद्धम्। भगवत्पूज्यपादेषु श्रीमदाद्यशङ्कराचार्येषु केरलदेशवासिषु, तथा अनेकेषु वाचार्येषु आन्ध्रादितत्तद्देशवासिषु, विज्ञानेश्वरादिषु, विद्यारण्यस्वामिषु, गोकुलनाथोपाध्यायादिषु, बङ्गवासिषु श्रीचैतन्यमहाप्रभुप्रभृतिषु, समर्थ रामदास प्रभृतिषु, केरलेषु कुरलप्रभतिषु, उत्तरप्रदेशेषु गौडेषु तुलसीदासप्रभृतिषु नेपालवासिषु भानुभक्तप्रभृतिषु, महाराष्ट्रीयेषु सत्सु इयमार्यता दृश्यते। तस्या एव इदं फलं यत् उपर्युक्तानां तदन्येषां वा धर्मसिन्धुनिर्णयसिन्धुवीरमित्रोदयादिग्रन्थकर्तॄणां वाक्यस्य प्रामाण्यं पूर्वपश्चिमदेशनिवासिभिः सर्वैरैव सर्ववादिसम्प्रतिपन्नत्वेन अङ्गीकृतमस्ति। सन्ततुकाराम, कबीर, नामदेव, गोराकुम्भारप्रभृतीनां वचनस्याप्रामाण्यं केन वक्तुं शक्यते? तथा च एतेषु सर्वेषु महामहिमशालिषु उपायविकल्पे कृतक्षणेषु आर्यत्वमप्रतिषिद्धम्। अतः आर्याभिधेया अमुकैव जातिः इति वक्तुं न शक्यते।

### आर्यद्रविडकलहः

यदि च आर्यद्रविडकलहमिषेण द्रविडेषु आर्यत्वं न स्वीक्रियते तर्हि भगवत्पूज्यपादा आर्याः न स्युः न वा विद्वन्मुकुटमणयश्च। तस्मात् आर्याः एतद्देशीयाः नासन् इत्युक्तिः न साधीयसी इत्यपि स्फुटं भवति। तत्र कारणं 'कृण्वन्तो विश्वमार्यम्'

---

१. तेषामेकयोगाश्चत्वारः द्वियोगास्त्रयः त्रियोगाश्चत्वारः
एकश्चतुर्योगः इति पञ्चदश योगाः अनुलोमाः तावन्तः प्रतिलोमाः इति।

## जयमङ्गलाक्रोडपत्रम्

### आर्याणां निवासो भारते

इति वचनमेव। तथाहि—समस्त संस्कृतिषु प्राचीन संस्कृतेः निदर्शकः ग्रन्थः वेद एव अस्तीति सर्वैः संमन्यते। स च अस्मिन् आर्यावर्ते एव स्थितः। अत्रैव वेदप्रतिपादित मृग गोयवदर्भादिपदार्थानां उत्पत्तिमत्वात्। स च "कृण्वन्तः, इत्युक्त वचनेन विश्व-मार्यतया द्रष्टुमभिलषति इति स्वाशयं प्रकटयति। तस्मात् अत्रैव स्थितवेदस्यार्यपद सङ्केतेन, अत्रैव च यज्ञस्य अनुष्ठेयत्वेन च आर्याणां एतद्देशनिवासित्वमासीत् इति सिद्धं भवति।

अत्र केचिद् भारतादन्यत्र देशे गौरस्तीति वदन्ति तन्न साधु, सास्नारूपलक्षण-लक्षितत्वस्य यूरोपादिदेशे समुद्भुते गवयेऽभावात् स गौर्नास्ति।

### वर्णेतरजातीनां धर्मः

ननु भारतीयराजनीतौ स्वीकृतायां जातिव्यवस्थायां प्रागुक्तायां 'ब्रह्मणे ब्राह्मणमालभेत' इत्युद्धृतवचनेन निर्णीतानां सङ्करजातीनां धर्मः वर्णा-श्रमधर्मबहिर्भूतत्वात् त्रय्यामुपवर्णितो न वर्तते। तथासति सङ्करजातीनां धर्मः एतन्मते कीदृशो भवति? इति चेदुच्यते। त्रय्यन्तर्गते भागवतधर्मे तासां सङ्करजातीनां अधिकारो भवितुमर्हतीति शास्त्रेषु प्रतिपादितम्। तदुक्तं भक्तिसूत्रे—

सर्वेषामधिकारो वर्णाश्रममाद्यनियमात् इति। भ० सू०

भागवतधर्माणां स्वरूपं तु तत्तज्जातीयानां कृते कीदृशमस्ति इति आकरात् द्रष्टव्यम्।

### त्रयीप्रामाण्यम्

मूले (३५८ पृ०) त्रय्येति। ननु त्रयीप्रामाण्यं कुतः स्वीकर्तव्यम्। इति चेदुच्यते। कामसूत्रे त्रय्याः प्रमाण्यं येन हेतुना साधितं। स एव हेतुः अत्र तदीयवचनोद्धरणेन उपन्यस्तः टिप्पण्याम्[1] ज्ञेयः।

तथा "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यं आप्तप्रामाण्यात्" इति सूत्रेण गौतमादिभिः तट्टीकाकर्तृभिश्च वेदप्रामाण्यं साधितम् तदपि अत्र चिन्त्यम्। जयन्तभट्टेनाऽपि वेदप्रामाण्यसाधनं न्यायमञ्जर्यामुपन्यस्तमस्ति तदपि स्मर्तव्यम्। एवंरीत्या प्राचीनैः साधिता वेदप्रामाण्यविषयिणी रीतिः स्मारिता। तामेव मीमांसकादिरीतिं साधयितुं काचन अनुमानप्रणाल्यपि प्रकाशिता

---

१. का० सू०—शास्त्रस्यानभिशङ्क्यत्वात्—२ अ १ अधि० त्रिवर्गप्रतिपत्ति-प्रकरणे—२५ शास्त्रस्येति—'धर्मस्यालौकिकत्वात्तदभिधायकं शास्त्रमुक्तम्, पौरुषेयमपौरुषेयञ्च यत्र पूर्वमभिशङ्कनीयम्।

किमिदं सत्यं मिथ्या वेति, पुरुषादयो रागादिभिरविद्यया चोपप्लुतं वितथमपि ब्रुवन्ति। अपौरुषेयं च वेदाख्यं पुरुषसम्बन्धाभावाददुष्टमनभिशङ्कनीयम्। यथोक्तम्—दोषाः सन्ति न सन्तीति पौरुषेयस्य युज्यते।

वेदे कर्तुरभावात्तु दोषशङ्कैव नास्ति नः॥ इति।

## जयमङ्गलाक्रोडपत्रम्

वर्तते "शान्तिका अग्रदूत ग्रन्थे"। साऽपि अत्र विद्वत्सन्तोषाय टिप्पण्यां उद्धृताऽस्ति । एतद्नुमानप्रणाल्या: विशेषतया साहित्यमर्यादानुसारेण स्फुटीकरणं (शान्ती का अग्रदूत ग्रन्थे २ भागे) हिन्दीभाषायां व्यक्तम् अत्र विस्तरभयान्नोच्यते ।

### आयुर्वेदस्य सृष्टेः प्रागस्तित्वम्

ननु उपर्युद्धृतगौतमवचनेन आयुर्वेदप्रामाण्यात् वेदप्रामाण्यं साधितं नैयायिकैः। परम् आयुर्वेदस्यैव अस्तित्वं सृष्टेः प्राङ्नासीत् इति चेन्न। यदि आयुर्वेदः कुमारभृत्यादिरूपः प्राङ्नासीदिति स्वीक्रियते तर्हि कुमाराणां सङ्गोपनम् पित्रादिभिः अज्ञातं भवेत् तर्हि तदेवाशक्यं स्यात्। इष्टापत्तौ च कुमाराणामुच्छेदः स्यात् । तस्मात् आयुर्वेदस्यास्तित्वं सृष्टेः प्रागेवासीत् इति वक्तव्यमापतति ।

किञ्च पृथक्पृथक्उपयुक्तस्य मधुनः घृतस्य च अतीवोपयोगित्वं आयुर्वेदे प्रतिपादितमस्ति । परम्, तयोः संयोगः हानिकरो भवति इत्येवंविधानेकसंयोगानाम-न्यूनातिरिक्ततया परिगणनं असर्वज्ञानां कृते दुर्ज्ञेयमपि आयुर्वेदेन कृतमस्तीति हेतुना तस्यास्तित्वं प्रामाण्यञ्च साधयितुं शक्यते। तदुक्तम् साङ्गवेद-विद्यालीय २५ वार्षिकविवरणे गोर्वाणवाग्वर्धिनोसभया प्रस्तुते निबन्धे तत्रैव द्रष्टव्यम्[२] ।

---

१. "स्वाध्यायोऽध्येतव्य" इत्यध्ययनविधिवाक्यप्रयोज्यशाब्दभावनाहेतुकेष्ट साधनत्वानुमितिरद्य यावद्धर्मानुष्ठातृनिष्ठा, स्वसजातीयोच्चारणसापेक्षोच्चारणकानु-पूर्वीकशब्दवृत्तिशाब्दभावनाहेतुका, प्रभुशक्तिसमृद्धपुरुषसमवेतशाब्दभावनाहेतुज्ञाना-जन्यत्वे सति, शब्दाजन्ययथार्थज्ञानवत्पुरुषसमवेतप्रकृतेष्टसाधनताविषयक ज्ञानजन्य—शब्दवृत्तिशाब्दभावनाहेतुज्ञानाजन्यत्वे सति, शाब्दभावनाहेतुज्ञानजन्य-त्वात् । आयुर्वेदीयरसायनाद्यनुष्ठानगतप्रायश्चिताधीनपापनाशे इष्टसाधनत्वानुमिति-रेतावत्कालपर्यन्तं बौद्धादिष्वपि समवेता, शाब्दभावनाज्ञानमात्रजन्या अलौकि-कार्थत्वे सति यथार्थप्रवृतिजनकत्वात् । न प्रभुशक्तिसमृद्धनिष्ठशाब्दभावनाज्ञानजन्या, स्वेच्छाधीनप्रवृत्तिजनकत्वात् । एतेन एतावत्कालपर्यन्तं पूर्वं जायमानायामनुमितौ स्वसजातीयोच्चारणसापेक्षोच्चारणकानुपूर्वीकशब्दवृत्तिशाब्दभावनाज्ञानजन्यत्वं सिद्ध-मिदानीन्तनानामनुमित्यभावेऽपि न क्षतिः । इदानीन्तनोच्चारणस्य स्वस्वजातीयोच्चारणसापेक्षतायाः प्रत्यक्षसिद्धत्वादिति निष्कर्षः ।

२. (पृ० ५२ सं० २००३ रजतजयन्ती)

उपवेदानां पर्यालोचने क्रियमाणे तेऽप्यनादिपरम्परामूलका इत्यभ्युगन्तव्यमा-पद्यते । गान्धर्ववेदः षड्जादिस्वरसमाहारात्मक इति सर्वविदितमेव । षड्जत्वादि-

## जयमङ्गलाक्रोडपत्रम्

एवञ्च प्रत्यक्षानुमानशब्दैः साधितस्य त्रयीप्रामाण्यस्य वेदापौरुषेयत्वस्य च अस्तित्वं न केनाऽपि अपन्होतुं शक्यमिति विशेषतया परैः अपरिशीलितः त्रयीप्रामाण्यविषयः समस्तविद्याप्रचाराय अभ्यर्हितः अवश्यं राजनीतौ विद्यारसिकैः अनसूयुभिः अनुसन्धेयः ।

नन्दति मोदते, प्रजानुरागद्वारा श्रियःप्राप्तेः देवगुरुप्रसादद्वारा पारलौकिकोत्तम फलप्राप्तेश्च । तथा नीतिसारेऽपि उक्तम्—

आत्मानं प्रथमं राजा विनयेनोपपादयेत् ।
ततोऽमात्यान् ततो भृत्यांस्ततः पुत्रान् ततः प्रजाः ॥
सदानुरक्तप्रकृतिः प्रजापालनतत्परः ।

---

विवेकः उपदेशसहकृतश्रावणप्रत्यक्षेणैव भवतीति भामत्यादिदर्शनेन स्पष्टम्, गान्धर्वविद्भिः गायनाचार्यैरपि अयं सिद्धान्तः अभ्युपगम्यते । तथा च—

गान्धर्ववेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा ॥-

इत्यनुमानं प्रसरति । तेनैव न्यायेन षड्जादिस्वरसमूहात्मकस्य सामवेदस्यापौरुषेयत्वे नास्त्येव विप्रतिपत्तेरवकाशः । तेनैव न्यायेन उदात्तादिस्वरसमूहात्मकस्येतरस्यापि वेदग्रन्थस्यसर्वस्य गुरुपरम्परामूलकत्वं निःसंशयमेव प्रतीयते, इति गान्धर्वोपवेदद्वारा वेदस्यापौरुषेयत्वं पर्यवस्यति ।

आयुर्वेदोपवेदद्वाराऽपि अयमर्थः सिध्यति । तथाह्युक्तमुदयनाचार्यैरात्मतत्व विवेके—"तथाहि न तावदयमायुर्वेदो प्रमाणम्, संवादस्य प्रायिकत्वात्—न चास्या—न्वयव्यतिरेकभावो मूलम् आवापोद्वापेन योगानामनन्ततया अर्वाचीनेनाशक्यत्वात् । विषादौ तथाकरणे बहुतरानर्थप्रसङ्गात्" इति । औषधीनां तक्रकरकादीनां शीतत्वोष्णत्वे प्रत्यक्षमुपलभ्येते, तद्विपरीते उष्णत्वशीतत्वे तु अपौषेयमात्रैकगम्ये एव ।

एवं विरुद्धसंयोगानां परिगणनं हि इतोऽन्ये विरुद्धसंयोगा न भवन्तीति सूचनद्वारा समस्तविरुद्धसंयोगपरिगणनाशक्त मनुष्यबुद्धिपूर्वकत्वाभावमायुर्वेदस्य सूचयद् वेदमूलकतां दृढयति । पाश्चात्यानां चिकित्सापद्धतिरपि मूलतः भारतीयायुर्वेदमेव अङ्गीकरोति इति स्फुटम् कश्यपसंहिताभूमिकादृशाम् । तर्कतोऽप्येतत्सिध्यति—कुमारभृत्यां विना हि जातस्य शिशोः संरक्षणमेव दुःशकमतः अपौरुषेयमूलकत्वमेव वक्तव्यमापतति आयुर्वेदस्य । मनुष्यसृष्टिश्च अत्र अनादिपरम्परामूलिकैव तर्कतः सिध्यति । अतः आयुर्वेदपरम्परा स्वस्य स्वमूलभूतवेदेन सह अनादित्वं स्थापयति ।—

## जयमङ्गलाक्रोडपत्रम्

विनीतात्मा हि नृपतिः भूयसीं श्रियमश्नुते ।
तस्माद्धर्मं पुरस्कृत्य यतेतार्थाय भूपतिः ॥
धर्मेण वर्धते राज्यं तस्य स्वादुफलं श्रियः ।
आयत्तं रक्षणं राज्ञि वार्ता रक्षणमाश्रिता ॥
वार्ताच्छेदे हि लोकोऽयं श्वसन्नपिन न जीवति ।
न्यायप्रवृत्तो नृपतिरात्मानमथ च प्रजाम् ॥
त्रिवर्गेणोपसन्धत्ते निहन्ति ध्रुवमन्यथा ।
धर्माद्वैजवनो राजा चिराय बुभुजे महीं ॥
अधर्माच्चैव नहुषः प्रतिपेदे रसातलम् ॥ इति ।

एतदेव वक्ष्यति नैकफलेति ।

इति कौटिलीये अर्थशास्त्रे प्रथमाधिकरणे तृतीयाध्याये जयमङ्गलाक्रोडपत्रं सम्पूर्णम् ।

---

धनुर्वेदस्तु अनेकमन्त्रग्रामात्मकास्त्रबहुलः साम्प्रतमुपलभ्यमानोऽपि गुरूपदेशमन्तरेण न कार्यकारी दृश्यते । पूर्वञ्च कार्यक्षम आसीत् गुरुमुखादवगम्यमान इति च इतिहासो दृश्यते यदा, तदा तस्यापि अध्ययनं गुर्वध्ययनपूर्वकमासीत् इति सिद्ध्यति इति सर्वथा सिद्धं धनुर्वेदस्यापि मन्त्रसमूहात्मकस्यानादित्वम् । अतएव गौतमेनाप्युक्तम् । "मन्त्रायुर्वेद प्रामाण्यवच्च तत्प्रामाण्यमाप्त प्रामाण्यादि"ति मन्त्राणामनादित्वञ्च स्पष्टं विवेचितं भामत्यां विज्ञेषु विदितमेव ।

# चतुर्थोऽध्यायः
# वार्तादण्डनीतिस्थापने
## [ वार्तास्वरूपप्रयोजने ]

### कृषिपाशुपाल्ये[1] वणिज्या च ग्रार्ता;[2]

---

### श्रीमूला

अथ वार्ताया विद्यात्वं स्थापयितुं स्वरूपादिकमाह—कृषिपाशुपाल्ये इत्यादि। कृषिः क्षेत्रबीजवापपरिकर्मादिप्रतिपादकं शास्त्रं पराशरप्रोक्तम्। पाशुपाल्यं गवाश्वादिपालनप्रकारोपदेशकं शास्त्रम् गौतमशालिहोत्रादिप्रणीतम्। वणिज्या क्रयविक्रयव्यवहारतन्त्रं विदेहराजप्रणीतम्।

### वैदिकसिद्धान्तसंरक्षिणी

आन्वीक्षिकीत्रय्योः सङ्ख्यां फलं प्रधानगुणभावं स्वरूपञ्च निरूप्य वार्तादण्डनीत्योस्तदभिधातुं आह—कृषीति। कृषिः पराशरोक्ता बीजवापपरिकर्मादिविधानार्था। पाशुपाल्यं गवाश्वादीनां पोषणचिकित्सादि। तच्च गौतमशालिहोत्रादिप्रणीतम्। वणिज्या-क्रयविक्रयादिः। स च विदेहराजप्रोक्तः। एतत्त्रितयं वार्ताभेदः। कृषिः पाशुपाल्यं वणिज्या चेति जयमङ्गलापाठः। पृथक्करणं समस्तव्यस्तज्ञापनार्थम् इति टीकाग्रन्थे स्पष्टम्। एतेन वार्ताभेदस्य निरूपणं कृतम्। वार्तेति। एतेन तत्स्वरूरं बोध्यम्। तच्च वर्तते जीवति अनयेति।[3]

### जयमङ्गला

वार्तायाः नीतेश्च[4] स्थापनमाह—कृषिरित्यादि। कर्षणं कृषिः। "इक्

---

१. नी०टी० ......पापप्रविण......तं पराशरप्रोक्तं शास्त्रमपि कृषिः।

२. नी०टी० शालिहोत्रराजपुत्रपालकाप्यगौतमादिप्रोक्तं शास्त्रम्......

३. तदुक्तं उपाध्याय—निरपेक्षायाम् नीतिसारव्याख्यायाम्—नीति स० २।१४—एतत्त्रयमेव जगद्भृतिहेतुत्वादिह जगति वर्तनाद्वार्तेत्यभिधीयते। जयमङ्गलायामपि तत्रैव वार्ता वर्तते जीवति लोकोनयेति कृत्वा। इति।

४ अशुद्धम्
नीतेश्च।

नीतेश्चेति। उपसंहारे एतदध्यायप्रान्ते वार्तादण्डनीतिस्थापने इति मूलकृता उक्तम्। तस्माज् जयमङ्गलायामपि वार्ताया दण्डनीतेश्च इत्येवपाठः समुचितो भाति। तेन नीतेश्च इति जयमङ्गलोक्तं चकारपदं समञ्जसं भवति। अतएव जयमङ्गलायां एतदध्यायान्ते 'वार्तास्थापना दण्डनीतिस्थापना च' इति उपसंहृतं उपपद्यते। न च एतस्य पाठस्य संवादित्वे इतरनिबन्धकर्तृलेखः प्रमाणं नास्तीति—

## जयमङ्गला

कृष्यादिभ्यः" (३-३-१०५) इतीक्। तत्साहचर्यात् तच्छास्त्रमपि पराशरप्रोक्तम्। तत्र हि जलभूमिबीजपरिकर्मवापकालदोहदव्याधिचिकित्सापुष्पफलरसगन्धनिर्यासविपर्याससम्पत्तिविधानम्। पशून् पालयतीति पशुपालः तस्य कर्म पाशुपाल्यम्। तत्साहचर्याद् गौतमशालिहोत्रादिप्रणीतशास्त्रमपि। वणिज्या वणिक्कर्म। दूतवणिग्भ्यां च (वा० ५-१-१२६) इति यत्प्रत्ययः तदस्यामस्तीति।

"अर्शआदिभ्योऽच्" (५-२-१२०) इत्यच्। वणिज्या वणिग्विद्या विदेहराजर्षिप्रोक्ता। तत्र हि सर्वपण्यानां लक्षणं क्रयविक्रयज्ञानञ्च। केचित् कृषिपाशुपाल्ये इति समस्य पठन्ति तत्र च प्रयोजनम् इतरेतरापेक्षत्वं। वणिज्यायाश्च पृथक्करणं निरपेक्षत्वादित्याहुः। तदयुक्तम्। सर्वेषां परस्परार्थकरणस्य अप्रतिषिद्धत्वात्। तस्माद् असमासकरणं समस्तव्यस्तज्ञापनार्थम्। एतत् सर्वं वार्ता। लोकस्य वर्तनं वृत्तिः सा अस्यामस्तीति "प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः" (५-२-१०१) इति णप्रत्ययः। वार्ता क्रिया, तत्साहचर्याद् विद्यापि। अयं स्वरूपभेदः।

## जयमङ्गलाक्रोडपत्रम्

यथा त्रयीपदव्यवहारः वेदे तदर्थे च प्रवर्तते इति तृतीयाध्याये उक्तमस्ति तथैव कृष्यादिपदव्यवहारोऽपि कृष्यादिकर्मणि कृषिशास्त्रे च भवति इति ज्ञापयितुमाह तदिति। कृष्यवान्तरस्वरूपाणां केषां केषां स्वरूपं कृषिशास्त्रे निरूपितं भवति इत्याह तत्रेति। एवमग्रेऽपि बोध्यम्।

विदेहेति। एतेन कौटिल्यः कृषितन्त्रशिल्पगवाद्यायुर्वेदग्रन्थानुपलभ्य अमुमध्यक्षप्रचारं उक्तवानिति सूच्यते तत्र तत्र कौटिल्येन तथा उक्तत्वात्। तदुक्तम् "कृषितन्त्रशिल्पायुर्वेदज्ञाः चिकित्सकाः प्रतिकुर्युः" इत्यादि।

### भारतीय राजनीतेः पूर्णता

इयं हि भारतीयराजनीतिः देशकालानुकूल्येनेति पदं स्वलक्षणे निवेश्य आत्मनः पूर्णत्वं व्यञ्जयति इति सत्यं, परं, कौटिल्येन संसूचितस्य विदेहप्रोक्तपण्यशास्त्रस्य पराशरनिर्दिष्टकृषिशास्त्रस्य च उपलब्ध्यभावात् वार्तासम्बन्धिनं प्रयोगं निर्णेतुं इयं भारतीय राजनीतिः अधुना न शक्नोति तथासति वर्तमान समये भारतीय राजनीतिः कथं सम्पूर्णा भवेत्? इति चेदेवम्।

वार्तया अर्थार्जनमेव साध्यते तच्च वार्ताशास्त्रानुपलब्धौ कथं परिपूर्णं भविष्यतीत्याशङ्क्य वात्स्यायनेन कामसूत्रे अध्यक्षप्रचारेण अर्थः अर्जयितुं शक्यते इति समाहितमस्ति[1] तदेवोत्तरमत्र बोध्यम्।

---

वाच्यम्। टिप्पणा सङ्गृहीते पाठे तथैव उल्लेख दर्शनात्। तदुक्तं 'विद्यासमुद्देशे वार्तास्थापना दण्डनीतिस्थापनाचेति' इति। तस्मात् वार्तया दण्नीतेश्चेति कल्पितः शुद्धः पाठः अनुमन्तव्यः।

१ तद्यथा 'विद्याभूमिहिरण्यपशुधान्यभाण्डोपस्करमित्रादीनामर्जनमर्जितस्य विवर्धनमर्थः तमध्यक्षप्रचाराद्वार्तासमयविद्भ्यो वणिग्भ्यश्चेति' ॥ १० ॥

## जयमङ्गलाक्रोडपत्रम्

न च वात्स्यायननिर्दिष्टाध्यक्षप्रचारस्य स्वरूपं दुरधिगममस्तीति आशङ्क्यम्। 'अध्यक्षाः प्रचरन्ति अनेन' नेति (पृ० ४९) प्रदर्शितत्वात्। भिक्षुप्रभमतिनाऽपि स्वगतकार्यानुष्ठाने अध्यक्षाः प्रचरन्त्यनेन उपदेशेन इत्यध्यक्षप्रचारः, इति रीत्या उक्तत्वाच्च। (खण्ड २ पृ० ४)

तस्मात् अध्यक्षप्रचारत्वेन कौटिल्योक्तः द्वितीयाधिकरणात्मकः षट्त्रिंशदध्यायघटितः ग्रन्थः बोध्यः। स अर्थार्जनहेतुत्वात् वार्तोद्दिष्टं कार्यं सम्पादयितुमर्हति,। यद्यपि तदिदं प्रागुक्तजयमङ्गलायां 'अध्यक्षाः प्रचरन्तीति' व्याख्यायां कण्ठतः अध्यक्षप्रचारः वार्ताशास्त्रमिति नोक्तं तथापि वार्ताकार्यकरण सामर्थ्यात् अध्यक्षप्रचार एव सम्प्रति वार्ताशास्त्रमस्ति इत्येतस्मात् पृथग्वार्ताशास्त्रं विदेहप्रोक्तत्वेन अनुपलब्धमपि सङ्क्षेपतः कौटिल्येन सङ्गृहीतत्वात् उपलब्धमस्तीति मन्तव्यम्। तेन नैतत्प्रयोगनिर्णयविषये भारतीयराजनीतेः न्यूनत्वमस्तीति ध्येयम्।

### अध्यक्षप्रचारादिति पञ्चम्यर्थे पदविधिसामर्थ्यम्

न च विदेह प्रोक्त वार्ताशास्त्रकार्यस्य अर्थार्जनस्य सम्पादकत्वं विदेहशास्त्रमनपेक्ष्य कौटिल्यनिर्दिष्टेन अध्यक्षप्रचारेण न ज्ञातुं शक्यते इति वाच्यम्। तमध्यक्षप्रचारादिति पञ्चमीं विभक्तिं निर्दिश्य अध्यक्षप्रचारे तत्कार्यकारणसामर्थ्यस्य संसूचितत्वात्। तथाहि 'समर्थः पदविधिः' इति पाणिन्युक्तनियमानुसारेण अध्यक्षप्रचारात् इति पञ्चमी विभक्तिः वार्तारहस्यवेदननिष्ठ कार्यता निरूपित कारणतामसाधारणीमितरनिरपेक्षां बोधयति, 'व्रीहिभिर्यजेत' इति वाक्ये निर्दिष्टतृतीया विभक्तिवत्। न च 'व्रीहिभिर्यजेत' इति वाक्ये समर्थः पदविधिरिति न्यायः मीमांसकैः कथं समन्वितः इति शङ्क्यम्। व्रीहिभिर्यजेत' यवैर्यजेत इति वचनाभ्यां व्रीहियवनिष्ठयागकारणतानिरूपकाभ्यां किं यवनिष्ठं यागकारणत्वं व्रीहिनिष्ठतत्कारणतानिरपेक्षमथवा न इति सन्देहावसरस्य प्रसङ्गात्।

यदि चात्र व्रीहियवनिष्ठं कारणत्वं परस्परमाकाङ्क्षितं भवेत्तर्हि व्रीहिपदोत्तरं व्रीहिभिरिति तृतीयानिर्देशः व्रीहिभिर्यजेत इति वाक्ये न स्यात्। समर्थः पदविधिरितिनियमोत्थस्य सामर्थ्यस्य निराकाङ्क्षत्वरूपस्य व्रीहिपदेऽभावात्। तथासति पदविधित्वमेव अनुपपन्नं भवेत्। ततः व्रीहिभिरिति प्रयोग एव असाधुः स्यात् तस्मात्व्रीहिनिष्ठं कारणत्वं न यवनिष्ठकारणतासापेक्षं अतः "व्रीहिभिर्यजत" "यवैर्यजेत" इति वाक्याभ्यां

---

जयमङ्गला—'विद्या आन्वीक्षिक्यादयः भूमिः कृष्या, अकृष्या वा हिरण्यं सुवर्णादि। पशुर्हस्त्यश्वादिः। धान्यं पूर्वमध्यावरवापः भाण्डोपस्करं गृहोपकरणं लोहकाष्ठमृद्विदलचर्ममयम्। मित्रं सहपांशुक्रीडितादि। आदिशब्दाद् वस्त्राभरणादयः। अध्यक्षाः प्रचरन्त्यनेनेत्यध्यक्षप्रचारः वार्ता शास्त्रम्। तस्माच्छास्त्रेयोऽधिकृतः, इतरश्च वार्तासमयविदभ्यः कृषिपाशुपाल्यवणिज्यादि तत्त्वविद्भ्यः इत्युपलक्षणार्थम्, कर्षकेभ्यो गवादिपोषकेभ्यश्च प्रतिपद्येतेत्येवम् ॥१०॥ इति

**धान्यपशुहिरण्य[1]कुप्यविष्टिप्रदानादौपकारिकी । तथा[2] स्वपक्षं[3] परपक्षं[4] च वशीकरोति[5] कोशदण्डाभ्याम् ॥**

## जयमङ्गलाक्रोडपत्रम्

व्रीहियवयोर्विकल्पेन ग्रहणं यागाङ्गमिति मीमांसकैः साधितमस्ति । स एव न्यायः "तमध्यक्षप्रचारात्" इति वात्स्यायनीयवाक्ये समन्वीयते । एतस्मादेव कारणात् अध्यक्षप्रचारे येषां तन्त्राणां अध्ययनस्य आवश्यकता विद्यते तानि तन्त्राणि अवश्यमध्येतव्यानि । तदुक्तं 'सोताध्यक्षः कृषितन्त्र शिल्पायुर्वेदज्ञः इति । ( कौ० अ०) यत्र तु पण्यादिषु नाऽस्ति इतरेषां तन्त्राणां अभ्यर्हितता तत्प्रयोगः केवलं कौटिलीयपण्याध्यक्षप्रचारादिभिरेव अवगन्तव्यः । अतो विदेहराजप्रोक्तानां ग्रन्थानामनुपलब्धत्वेऽपि न क्षतिः । एवं पराशरप्रोक्तस्य कृषितन्त्रस्य विषयेऽपि अवगन्तव्यम् ।

न च कृष्यादिकर्मणि तत्तदायुर्वेदानामध्ययनमावश्यकत्वेन कौटिल्येनभिहितमस्ति । ते नोपलभ्यन्ते, तथासति पुनरपि भारतीयराजनीतेः अपरिपूर्णता स्यादिति वाच्यम् । शार्ङ्गधरविष्णुधर्मोत्तरपुराणाग्निपुराणगरुड़पुराणादिषु कृषिगवादीनां आयुर्वेदस्य विकीर्णस्य अध्ययनेन कृष्यादिकर्मणां परिचयस्य सम्यक्तया कर्तुं शक्यत्वात् । नैतद्विषयेऽपि भारतोयराजनीतेः अपरिपूर्णता मन्तव्या ।

'कृषिः पाशुपाल्यम्' इति उपलब्धमूलकृत्पाठापेक्षया पाठान्तरमाह (पृ० ३६७) केचिदिति ।

स्वमतमाह तस्मादिति । तथा च कृषिपाशुपाल्यवणिज्यादयः मिलित्वा विभज्य वा यथायोगं यथाविचारं सफला भवन्तीति भावः

ननु नीतिसारे पाशुपाल्यं आदौ निर्दिष्टम् अत्र कृषिः निर्दिश्यते । तथाचानयोः ग्रन्थयोः विरोधो भवतीति चेन्न । ( पृ० ३६८- ) अध्याये 'कृषिपाशुपाल्ये वणिज्या चेत्यत्र उत्तरितत्वात् ।

विद्यापीति । 'विद्लाभे' इति विद्यापदव्युत्पत्तेः पूर्वं (पृ० ११७) प्रदर्शितत्वात् कृषिपाशुपाल्यवणिज्याः विद्यापदेन व्यवह्रियन्ते ।

## श्रीमूला

धान्येत्यादि । तत्र हिरण्यम् अकुप्यं सुवर्णादि ।
कुप्यं स्वर्णरजतातिरिक्तं ताम्रादि तैजसं । सारदारुवेणुवल्लीवल्कादिकमतैजसं च ।

नी० टि० १. **कुप्येति** । धान्यं कृषिः पशून् पाशुपाल्यं हिरण्यकुप्ये वणिजा विष्टिं त्रितयमपि ददाति ।
,, ,, २. **तयेति** । वार्तया ।
,, ,, ३. **स्वपक्षमिति** । तन्त्रम् ।
,, ,, ४. **परपक्षमिति** । आवापम् ।
,, ,, ५. **वशीकरोतीति** । उपप्रदाननिग्रहादिना ।

### श्रीमूला

विष्टिः कर्मकरः। तया कोशदण्डाभ्यां वार्तया जनिताभ्यां कोशदण्डाभ्यां। कोशो धननिचयः, दण्डः सेना ताभ्यां। स्वपक्षं परपक्षं च वशीकरोति स्वायत्तीकरोति अर्थाद् राजा।

### वैदिकसिद्धान्तसंरक्षिणी

तस्याः फलमाह धान्येति। धान्यं पूर्वमध्यापरवापादि। पशुः गोगजाश्वादि। हिरण्यं सुवर्णादि। कुप्यं सारदार्वादि। विष्टयः मार्जका रक्षकादयः। औपकारिकी हितसाधनत्वात्[1]। लोकस्येति शेषः। तस्याः दण्डनीतिं प्रति उपकारकत्वमाह तयेति। वार्तयेत्यर्थः। स्वपक्षं स्वीयं तन्त्रम्। तथैव टिप्पण्यामभिधानात्। "तन्त्रं स्वकुटुम्बधारणं तदपि अध्यक्षप्रचारादारभ्यम योगवृत्तान्तमि"ति पूर्वं (पृ० ७०) जयमङ्लायां व्याख्यातं प्रथमाध्याये। परपक्षं परावापं अत्रैव टिप्पण्यां उक्तेः मण्डलयोनिमारभ्य दुर्गलाभोपायान्तमिति उक्तत्वाच्च। तच्च जयमङ्गलायां तथैव व्याख्यातम्। वशीकरोति अनुरागमुत्पाद्य परेषां मनः आकर्षति। तद्द्वारमाह—कोशेति क्वचित् दानदण्डप्रयोगाभ्यां, क्वचित् दानेन क्वचित् दण्डेन वा इति भावः।

### जयमङ्गला

फलभेदमाह—धान्येत्यादि। तत्र कृषिविद्या पूर्वमध्यावरधान्यप्रदानेन। पशुपालनकर्मविद्या पशुपालनेन। वणिग्विद्या हिरण्यरूप्यप्रदानेन। बिष्टिप्रदानन्तु सर्वासां साधारणम्। यस्मात् कृष्यादिप्रतिबद्धकर्मकरमनुष्या विष्टिः। औपकारिकी उपकाराय प्रभवति वार्ता लोकस्येत्यर्थात्। राजा तु तत्फलद्वारेण तया बिशेषेण उपकरोतीत्याह—तयेत्यादि। वार्तया हेतुभूतया। यौ कोशदण्डौ ताभ्यां करणभूताभ्याम्। राजा स्वपक्षं परपक्षं च वशीकरोति तत्र स्वप्रकृतिमनुगुणां बिभर्ति कोशेन। विलोमां दमयति[2] दण्डेन बलेन। परपक्षमुपगृह्णात्यर्थेन जयति दण्डेनेति वशीकरोति, तस्मादसाधारणस्वरूपफलभेदाद् वार्ता तृतीया विद्या।[3]·········

---

१. धान्य कृषिः पाशुपाल्यं हिरण्यकुप्ये वणिज्या विष्टिं त्रितयमपि ददाति।

२. विलोमान् दमयतीति पाठः अशुद्धः प्रतिभाति, एतत्पूर्ववाक्ये निर्दिष्टस्य विशेष्यभूतस्य प्रकृतिपदस्य स्त्रीलिङ्गत्वेन निर्देशात् तद्विशेषणभूतत्वात् विलोमामित्येव साधुः। अतः विलोमामिति पदच्छेदः उक्तः। अत्राऽयं स्वप्रकृतिमित्याद्युभयोर्वाक्ययोर्निष्कर्षः यत् स्वप्रकृतिमनुगुणां कोशेन बिभर्ति, विलोमां तु दण्डेन दमयति इति।

३. इतोऽग्रे पत्रार्धपरिमिताः पङ्क्तयो मातृकायां लुप्ताः।

## जयमङ्गलाक्रोडपत्रम्

### दण्डस्य प्रजानुरञ्जकत्वम्

(ज०पृ० ३७०) दमयतीति। ननु कस्यचित् दण्डयत्वप्रसङ्गे राज्ञा वधार्थहरणक्लेशेषु एकेन द्वाभ्यां त्रिभिर्वा अपराधी दण्डयो भवति। तदुक्तं "वधः परिक्लेशेशोऽर्थहरणं दण्डः" इति। (कौ० अ० ) एतस्यामवस्थायां परकीयधनापहारे राजा प्रजां कथमनुरञ्जयेत् ? इति चेदुच्यते।

### नीत्यन्तरे अनुरञ्जनाभावः

यस्यां राजनीतौ नाऽस्ति परलोकविश्वासः न वा वेदस्य प्रामाण्यं, नाऽपि च निरतिशयं पारलौकिकं सुखं लौकिकसुखापेक्षया, तस्यां नीतौ कल्पितो दण्डः न प्रजानुरञ्जको भवितुमर्हति मात्स्यन्यायस्य अवश्यं सम्भावितत्वात्।

### नीत्यन्तरे प्रश्नाः

अपि च यथाऽयं मात्स्यन्यायदोषः इतरराजनीतौ असमाहित एव तिष्ठति तथैव भारतीयराजनीत्यननुसरणे दण्डमधिकृत्य अपरेऽपि दोषा असमाहिताः वर्तन्ते। तेऽपि अत्र अनेन सह निर्दिश्यन्ते। तथाहि—अन्यस्वामिकं धनं अपरेण यद्यपह्रियते तर्हि सः धनापहर्ता राज्ञा दण्डयो भवतीति निर्विवादम्। अर्थात् दडप्रणयने स्तेनस्य धनं राज्ञा अपहरणीयं भवति इत्ययं धनापहरणरूपः दण्डेषु अन्यतमः राजप्रणीतः दण्डः इत्युच्यते। अत्र सामान्यतया धनापहारदृष्ट्या विचार्यमाणे राजस्तेनौ उभावपि धनस्य अपहर्तारावेव। एवं सत्वेऽपि एकः न दण्डयः इत्यत्र विनिगमना कीदृशी आस्ते ? इति जिज्ञासायां सत्यां यथोचितमुत्तरं भारतीयेतरराजनीतौ नाऽस्ति। तत्र राजनीतिमतेन इदमेव सम्भाव्यते यत स्तेनस्य दण्ड्यत्वनिर्णयानन्तरं दण्डमिषेण तदीयधनापहरणे बहुमतमनुकूलं यावद्वर्तते तावदेव कथञ्चित् राजकृतं धनापहरणं दोषरूपेण न परिगणयितुं शक्यते। तथापि इदमअवधातव्यं यत् दण्डसमये कृत्यपक्षस्य, क्रुद्धलुब्धभीतापमानितादेः, समुत्थितत्वात् तद्द्वारा अनेकविधप्रचारैः बहुमतं राज्ञः विपरीततया परावर्तयितुं शक्यते। तदा तु राजाऽपि धनापहर्तृष्वेव परिगणितः स्यात् इत्ययं अपरः दोषोऽसमाहितो भवति। एवमेव शास्त्रमन्तरा स्वकल्पनयैव अपराधिषु दण्डरूपेण धनापहारादि यदि निर्णेतव्यं भवति तर्हि दण्ड्यत्वेन मर्यादितपूर्वधनापेक्षया अधिकमपि धनं राज्ञा कुतो नापहर्तव्यमित्ययं तृतीयः दोषः इतरराजनीतौ वर्तते, लोकबहुमतं सङ्गृह्य येन केनापि यथाकथञ्चित् प्रवर्तितुं प्रवर्तयितुं वा शक्यत्वात्। एवंरीत्या लोकमतं सङ्गृह्य यथाकथञ्चित् दण्डप्रणयनेऽपि तदानीं दण्डरूपेण धनापहारकः राजा अपहर्ता इति निर्णेतुं इतराराजनीतिः न समर्था। अत्राऽयं निष्कर्षः—सर्वेऽपि राजादयः स्वस्वसामर्थ्यानुसारेण धनापहारका एव यदि भवेयुः तर्हि कः एतस्मात् हीनकर्मणो निवारयितुं समर्थो भवेत् ? इति कोलाहलस्य निरासः इतरराजनीतौ नाऽस्ति समुचितसमाधानकः।

किञ्च उपरिनिर्दिष्टदोषैः सह निरूपयिष्यमाणः अन्यः दोषोऽपि इतरराजनीतौ असमाहित एव तिष्ठति। तत्र हि इतरराजनीतौ तत्तदपराधानां कृते अपराधानुसारेण एभिः पणैः अयमपराधी दण्डयः अस्मिन्नपराधे, इतिरीत्या कल्पि-

### जयमङ्गलाक्रोडपत्रम्

तायामपि व्यवस्थायां एवंविधा अपि ते मानवाः दृश्यन्ते ये अपराधदण्डत्वेन तावद्धनं प्रयच्छन्ति। पुनरपि अपराधं कृत्वा दण्डरूपेण तावद्धनं प्रदातुं समीहन्ते अपराधात्तु न निवर्तन्ते। अथवा यथा कृतस्यापराधस्य लोके प्रकाशनं न भवेत् तथा व्यवहरन्ति उत्कोचादिप्रदानेन वा अधिकारिणः वञ्चयन्ति। एतादृशानामपराधिनामपराधान्निवारणे इतरराजनीत्या कल्पितोऽपि दण्डः शान्तिविधायकोऽभूत्, इति कुत्राऽपि न दृश्यते प्रत्युत तत्स्थाने प्रजासु क्रोधादिभावस्यैव उद्दीपको भवति। तस्याऽयं परिणामः यत् सर्वत्र मात्स्यन्यायस्य निष्कण्टकं प्रचारः। अतः इतरराजनीतौ दण्डस्य प्रजानुरञ्जकत्वं न क्लृप्तम्।

भारतीयराजनीतौ तु परलोकास्तित्वविश्वासमूलायां वेदप्रामाण्योपबृंहितायां दण्डस्य प्रजानुरञ्जनक्षमत्वं कथं भवतीति अत्रैव स्फुटीकरिष्यते।

ननु भारतीयराजनीत्या कथं तत्साधयितुं शक्यते इति चेदुच्यते।

### भारतीयनीतौ अनुरञ्जनम्

अनया राजनीत्या दण्डप्रणयनात्पूर्वं त्रयीं प्रमाणीकृत्य तत्प्रोक्ता वर्णाश्रम धर्ममर्यादा यदि सञ्चार्यते, तर्हि तया नरकभीतिभावत्वं लोकस्य समुदितं भवति। तदा तन्माभवतु इत्येतदर्थं लोकः सावधानतया श्रुतिप्रोक्तं कर्तव्यकर्म कर्तुं प्रयतते। अधर्माच्च निवर्तते।

### विदुषामधर्मनिवर्तकत्वम्

अथ धर्मबुद्ध्याऽप्रमादेन कृतेऽपि प्रयत्ने प्रमादस्य स्वाभाविकत्वात् अनुचितं नरकापादकं कर्माऽपि उत्तमकर्मणा सह संभवति ? इति चेन्न। अकार्यकरणेन नरकभिया काञ्चन ग्लानिमनुभूय नरकपातात् संरक्षणं कथं भवेत् इति चिन्तया कृतस्य दुष्टकर्मणः विनाशार्थं क्वचित् प्रायश्चित्तं लिखितमस्ति नवेति विज्ञानार्थं लोकः विद्वांसं परिपृच्छति तदुक्त्यनुसारेण प्रायश्चित्तं कृत्वा सञ्जातेन अपराधेन संभूता ग्लानिः निःसार्यते। पुनः तथाविधमेवापराधं कर्तुं न अग्रे सरति, नरकात् बिभेति च।

### राज्ञोऽधर्मनिवर्तकत्वम्

विद्वत्सु प्रायश्चित्तोपदेशकेषु सत्स्वपि तथाविधाः अनेके प्रच्छन्नापराधिनः सन्ति ये विद्वद्भिः उपदेशद्वारा अपराधान्निवारयितुं नशक्यन्ते न वा सर्वविधोऽपि व्यवहारः स्वस्वकार्यदक्षैः विद्वद्भिः द्रष्टुं पार्यते। अतः तस्यापपराधस्य निवारणे क्षमतासिध्यर्थं भारतीयराजनीत्या मूर्धाभिषिक्तः राजा व्यवस्थापितः। अयं मृत्युपर्यन्तं दण्डप्रणयनं कुर्वन्नपि न पापभाग् भवति। सोऽयं राजा यावत्पर्यन्तं त्रयाप्रामाण्यं लोकेषु साधयति तावत्पर्यन्तमेव दण्डं प्रणेतुं शक्नोति, शास्त्रेणैव तथा व्यवस्थापितत्वात्। अस्याऽयं निष्कर्षः प्रमादात् प्रेम्णा वा कृतस्यापराधस्य फलं अतिशयिततरं नारकीयं दुःखं भवति इति श्रुत्वा चित्तं यदा म्लायति तदा स्वल्पेनैव दुःखानुभवेन महतः दुःखस्य अनुभवात् आत्मानं गोपायितुं वयं किं समर्थाः भवेम ? इति चिन्तायां शास्त्रेणैव निरूप्यते यत् मूर्धाभिषिक्तेन राज्ञा अपराधी दण्डप्रयुक्तं दुःखमनुभवितुं सुसज्जो भवेत् तर्हि दीर्घकालिकनरकलोकदुःखजनितां भीतिं व्यपोहितुमर्हति।

## [ दण्डनीतिस्वरूपप्रयोजने ]

**आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः, तस्य नीतिर्दण्डनीतिः[1], अलब्धलाभार्था[2] लब्धपरिरक्षणी, रक्षितविवर्धनी, वृद्धस्य तीर्थेषु प्रतिपादनी च । तस्यामायत्ता लोकयात्रा । तस्माल्लोकयात्रार्थी नित्यमुद्यतदण्डस्स्यात् ॥**

### जयमङ्गलाक्रोडपत्रम्

इत्येवं ज्ञात्वा स्वकीयस्य अपराधस्य शुद्ध्यर्थं ग्लानिमनुभवन् राजसकाशात् आत्मनः दण्ड्यत्वं स्वीकृत्य शुद्धिमभिलषति ।

नापि च पुनः तमेवापराधं कर्तुं चेष्टते । किं बहुना अपराधस्य स्मृतिमात्रेणैव मनः कम्पते । विषीदति च । इति कृत्वा राज्ञा दण्डप्रणयनेन धर्मशास्त्रिभिः निर्दिष्ट प्रायश्चित्तमिव शास्त्रानुमतं दण्डं प्रणीय महानुपकारः कृतः इत्येवं प्रचारेण दण्डस्य प्रजानुरागजनकत्वं संभवितुं मर्हति ।

अत एव गवादीनां वधे राजदण्डस्य स्वीकृत्यनन्तरं नरकलोकाधिकारितानिवर्तनेन हर्षस्यावसरः वर्णाश्रमधर्मिषु दृश्यते । स्फुटीकृतञ्चैतत् शङ्खलिखितयोरितिहासेन ( टिप्पण्याम् )[3] । इदृशोऽनुरागो भारतीयराजनीतिं विहाय अन्यत्र राजनीतौ नाऽस्ति[4]—

### श्रीमूला

दण्डनीतेः स्वरूपादिकमाह-**आन्वीक्षिकीत्यादि** । योगक्षेमौ साधयतीति योगक्षेमसाधनः । दण्डो दमः सामादिषु प्रधानभूत उपायविशेषः । अथवा दण्डस्थत्वाद् राजा दण्डः । सति दण्डभये लोक आन्वीक्षिक्यादिषु सम्यक् प्रवर्तते, नत्वितरथेति दण्डस्याऽऽन्वीक्षिक्यादियोगक्षेमसाधनत्वं विज्ञेयम् । अत एवाहुः—

१. नी० टि० **दण्डनीतिरिति** । इदमेव शास्त्रम् ।

२. नी० टि० **अलब्धेति** । अलब्धयोर्धर्मार्थयोर्लाभार्था ।

३ शङ्खलिखितौ भ्रातरौ विभक्तावास्तां कदाचिल्लिखितः भ्रातुरुपवनं गत्वा तदीयं फलं अनापृच्छ्यैव बुभुजे । ततः शङ्खाज्ञया स चौर्यप्रयुक्तापराधादात्मानंशोधयितुं राजसाम्मुख्यं । प्राप राजापि तदीयौ हस्तौ चिच्छेद ।

४ तदुक्तम्—

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तःसुकृतिनो यथा ॥ (म० स्मृ० ८अ० श्लो०३१८

लोकशास्त्रानुगो नेयो दण्डोऽनुद्वेजनः श्रिये ।
उद्वेजनादधर्मः स्यात् तस्माद् ध्वंसो महीपतेः ॥ का०नी० इति

यथाविधि दण्डप्रणयनञ्च लोकशास्त्रानुगमात् । तदाह लोकशास्त्रानुगो नेय इति । स च अनुद्वेजनीयत्वात् श्रिये भवति ।

## श्रीमूला

सर्वो दण्डजितो लोको दुर्लभो हि शुचिः क्वचित् ।
दण्डस्य हि भयात् कृत्स्नं जगद् भोगाय कल्पते । इति ।

तस्य नीतिः नयनमनुष्ठानम् अर्थात् तदुपदेशः शास्त्रम् । अलब्धलाभार्थेत्यादि दण्डनीतेः फलकथनम् । दण्डेन ह्यलब्धं लभ्यते, लब्धं परिरक्ष्यते, परिरक्षितं वर्ध्यते, वर्धितं च तीर्थेषु पुण्यक्षेत्राध्वरादिषु विनियुज्यते । तस्मादिति । तस्मात् लोकवृत्तेर्दण्डनीत्यधीनत्वात् नित्यम् उद्यतदण्डः सर्वदा दण्डप्रणयनोद्युक्तः स्याद्, अर्थात् राजा ।

## वैदिकसिद्धान्तसंरक्षिणी

नीतिविद्यायाः स्वरूपं फलं प्रधानभावं च दर्शयितुमाह -आन्वीक्षिकीति । योगः अलब्धलाभः । क्षेमः लब्धस्य परिरक्षणं तदुभयस्यापि साधनमित्यर्थः । आन्वीक्षिकीत्रयीवार्तानां दण्डनीतेश्च साधनसाध्यभावः सम्बन्धः योगक्षेमसाधारण्येन बोध्यः । तेन तिसृणामपि विद्यानामुत्पत्तये स्थितये च दण्डस्योपयोगित्वमस्ति इति सूचितम् । तदेतत् नीतिसारपद्यव्याख्यायां द्रष्टव्यम् ।[1] आन्वीक्षिकीति । आन्वीक्षिक्या दितिसृणां पुनर्नामग्रहणं दण्डनीतेः प्राधान्यप्रदर्शनपुरसरं[2] तत्तद्विद्यानां स्वेन स्वेन रूपेण गुणभावप्रदर्शनार्थम् । तद्वक्ष्यति दण्डमूलास्तिस्रो विद्या[3] इति ।

---

१ आन्वीक्षिकीत्रयीवार्ताः सतीर्विद्याः प्रचक्षते ।
सत्योपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे ॥
दण्डनीतिर्यदा सम्यङ्नेतारमधितिष्ठति ।
तदा विद्याविदः शेषा विद्याः सम्यगुपासते ॥—नीतिसार स० २ प्र० ३

सतीरिति विद्यमानाः साक्षाल्लोकोपकारित्वात् । सत्योपि हि न सत्यस्ता इति सदपि असदिवाविशेषादिति मन्यते । दण्डनीतेस्तु विप्लवे इति, दण्डनीतेरयथावत्प्रवृत्तौ अप्रवृत्तौ वेत्यर्थः । सम्यङ्नेतारं सम्यक्प्रयोक्तारं विद्याः सम्कग् उपासते इति तासु तद्विहितेष्वर्थेषु च सम्यगनुष्ठानात् ।—जयमङ्गला सर्ग २ प्रक० ३

२–दमो दण्ड इति प्रोक्तः तात्स्थ्यात् दण्डो महीपतिः । इति नीतिसारपद्यव्याख्यायां—टीका–दमशब्दो दण्डप्रकृतौ उपायविशेषे च दण्डे वर्तते तत्र सर्वप्रकृतिवषयत्वान्नयस्येति दण्डप्रकृतिमपास्य निग्रहरूपमुपायमाश्रित्याह दमो दण्ड इति । सामदानभेदसंभवेपि प्रायशोऽनेनैव नीतेर्व्यपदेशः लोकस्य दोषबहुलत्वात् । यदाहुः

सर्वो दण्डजितो लोके दुर्लभो हि शुचिः क्वचित् ।
दण्डस्य हि भयात्कृत्स्नं जगद्भोगाय कल्पते ।

३—क्षात्रो धर्मोह्यादिदेवात् प्रवृत्तः पश्चादन्ये शेषभूताश्च धर्माः । इति ( महाभा० ) यद्यपि अत्र क्षात्रधर्मस्य प्राधान्यमुक्तं तथापि तत्प्राधान्यात् तन्निरूपिका राजविद्यापि प्रधानेति बोध्यम् ।

## [ कीदृशो दण्डः प्रयोक्तव्यः ? ]

न[1] ह्येवंविधं वशोपनयनमस्ति भूतानां यथा दण्ड इत्याचार्याः। नेति कौटल्यः—तीक्ष्णदण्डो हि भूतानामुद्वेजनीयः मृदुदण्डः परिभूयते, यथार्हदण्डः पूज्यः। सुविज्ञातप्रणीतो हि दण्डः प्रजाः धर्मार्थकामैर्योजयति। दुष्प्रणीतः कामक्रोधाभ्यामज्ञानाद्वानप्रस्थपरिव्राजकानपि कोपयति, किमङ्ग ! पुनर्गृहस्थान् ?॥

**वैदिकसिद्धान्तसंरक्षिणी**

दण्ड इति। दण्डः सामाद्यन्तर्गतः इत्यर्थः[2] सामादीनामप्युपग्राही। तस्येति। आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनस्य दण्डस्येत्यर्थः। नीतिः तत्प्रवर्तिका विद्या। इयमेव राजनीतिरित्युच्यते। तदुक्तम्, "तात्स्थ्यात् दण्डो महीपतिः तस्य नयनात् प्रवर्तनात् नीतिः राजविद्येत्यर्थः"। इति। तस्याः मुख्यं चतुर्विधं फलमाह—अलब्धेति। अलब्धयोर्धर्मार्थयोः लाभर्थेति टिपण्यां व्याख्यातम्। लब्धयोः धर्मार्थयोः राज्यकण्टकात् परिरक्षिणी, भयनिवर्तिका, भयात् सुरक्षितयोः धर्मार्थयोः दानक्रयविक्रयादिना च। विवर्धिनी वर्धयितुं उपकारिणी। वृद्धस्य आयादिना समर्जितस्य। तीर्थेषु अश्वमेधादौ गुणवति पुत्रे वा विनियोगः प्रतिपादनी निक्षेपनिरूपिका। उद्देशग्रन्थे पृथिव्या लाभे पालने चेति प्रतिज्ञातमस्ति तत्र सप्तम्या निर्दिष्टं पालनोपायं अनुसन्धाय व्याचष्टेतस्यामिति। दण्डनीत्यामित्यर्थः। दण्डस्य पालनोपायत्वं नीतिसारव्याख्यायां जयमङ्गलायां प्रथमपद्यव्याख्याने द्रष्टव्यम्[3]। इदमेव तत्वं द्वितीयसर्गे दण्डमाहात्म्यप्रकरणेऽपि उक्तम् बोध्यम्। (पृ० ८७४)। कीदृशो दण्डः लोकं पालयतीति प्रदर्शयिष्यमाणः आदौ दण्डमाहात्म्यं प्रदर्शयन् पूर्वपक्षमतेन दण्डविषये विधेयमाह तस्मादिति। सर्वविद्योत्कृष्टत्वात्। लोकयात्रेति। पारस्परिकविश्वासोत्पत्त्या लोकस्य निराबाधं जीवनं यात्रा तदर्थी। राजेति शेषः। उद्यतदण्डः। नित्यं स्यात् इत्यनेनान्वयो बोध्यः। तेन अत्र नित्यत्वं उद्यतदण्डे विधीयते।

**श्रीमूला**

न हीत्यादि। एवंविधं। यथा दण्डस्तथाविधम्। वशोपनयनम् अनायत्तायत्तीकरणसाधनम्। न ह्यस्ति नास्त्येव।

१. नी० टि० **न ह्येवं विधमिति**। तस्मात् कस्मादित्याह।

२ अथवा दण्डशब्दो दमनमात्रवृत्तिः स्वपक्षपरपक्षदमनोपायाशेषसामाद्युपग्राही द्रष्टव्यः। इति—नीतिसार सर्ग २ प्रकरण-३

३ दण्डधार इति कर्मण्यण् अनेन पालनोपायं व्याचष्टे। डण्दो हि दमनं तं यथार्हं प्रयोक्तृतया बिभ्राणो लोकं स्वमार्गे व्यवस्थापयति। उक्तञ्च—

चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः।
स्वधर्मकर्माभिरतो वर्तते स्वेषु वर्त्मसु—नीतिसार सग-१ श्लोक १

## श्रीमूला

तमिमं दण्डसामान्यश्लाघावादमाचार्याणां प्रतिषेधति नेति। तत्र कारणवचनं तीक्ष्णेत्यादिना। तीक्ष्णदण्डः उग्रदण्डः, भूतानाम् उद्वेजनीयः उद्वेगजनकः उद्विजन्तेऽस्मादित्यपादानेऽनीयर्। यथार्हदण्डः युक्तदण्डः देशकालापराधानुगुण्यप्रयुज्यमानदण्डः, पूज्यः लोकबहुमान्यः। सा पूज्यता युक्तस्य दण्डस्य लोकाभ्युदयहेतुत्वादित्यभिप्रायवानाह–सुविज्ञातेत्यादि। सुविज्ञातप्रणीतः सुष्ठु शास्त्रतोऽवगत्य प्रयुक्तः। अयथावत् प्रणीतस्याऽप्रणीतस्य वा दण्डस्य सर्वानर्थहेतुत्वमाह–दुष्प्रणीत इत्यादिना। कामक्रोधाभ्यामज्ञानाद् दुष्प्रणीतः कामात् क्रोधादज्ञानाच्चाऽयमयथावत् प्रयुक्तः। किं पुनर्गृहस्थान्, संयतेन्द्रियानपि यः कोपयति सोऽसंयतेन्द्रियान् कोपयतीति किमु वक्तव्यम्। अङ्गेत्युपदेश्यसम्बोधनम्।

## वैदिकसिद्धान्तसंरक्षिणी

तदेवाह– नहीति। वशेति[१]। यथाज्ञातकारित्वं वश्यत्त्वम्। भूतानां प्राणिनाम्। आचार्यमतेन राष्ट्रे सर्वत्र दण्ड एव भूतवशीकारार्थं प्रयोक्तव्य इति सामान्यतयोक्तं आचार्यमतं निरस्यति नेति। दण्डस्त्रेधा भवितुमर्हति तीक्ष्णः मृदुः युक्तदण्डः तत्र लोकस्य शास्त्रस्य वा अननुमतः तीक्ष्णः यत्र तत्र अतिमात्रं भयं भवति। मृदुः लोकशास्त्रानुमतोऽपि दुष्टकर्मणो निवृत्यजनकः—अकिञ्चत्करः। युक्तदण्डः—लोकशास्त्रानुमतः भयनिर्वर्तकश्च इति। तत्राद्ये दोषमाह— तीक्ष्ण इति। लोकस्य शास्त्रस्य वा अननुमतः। हिः हेत्वर्थे। तस्यदोषमाह भूतानामिति। उद्वेजनीयः अपरागजनकः। जनकत्वं च लोकशास्त्राननुमतत्वं तच्च अनौचित्यद्वारेण बोध्यम्। द्वितीये दोषमाह मृद्विति। मृदुदण्डः दुष्टकर्मणो निवृत्यजनकः भयानुत्पादक इति यावत्। तमेव दोषमाह परिभूयते इति। अवमन्यते इत्यर्थः। तृतीये गुणमाह—यथार्हेति। लोकशास्त्रोभयानुगः[२] भयोत्पादकः। नीतिसारीयोपायविकल्पप्रकरणोक्तदिशा अधिकारिभेदेन प्रयुज्यमानः सामादिः सर्वोऽपि दण्डः पूज्यलोकानुरागजनकः। पूज्यते इति पाठान्तरम्। यथार्हत्वे दण्डः परुषो न भवति इत्यपि अस्य प्रयोजनं बोध्यम्। इदं स्फुटीकर्तुमाह सुविज्ञात इति। लोकशास्त्रानुमत इत्यर्थः। अत्रेदमनुसन्धेयम्–भारतीयराजनीतिः यथा शास्त्राननुमत स्थले दण्डप्रणयनं नानुमोदते। तथा शास्त्रानुमतत्वेऽपि लोकानुमतत्वभावे वा इति। धर्मार्थेति। धर्मसमृद्ध्यर्थकामसमृद्ध्योरुक्तयुक्त्या प्रजा राजनि अनुरज्यति इति

---

१ अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषा दरः। इति

२ लोकशास्त्रानुगो नेयो दण्डोनुद्वेजनः श्रिये।

३—स हि सर्वस्य लोकस्य युक्तदण्डतया मतः।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः॥—रघुवंश सर्ग ४

## [ सर्वथा दण्डाप्रणयने दोषः ]

अप्रणीतो हि मात्स्यन्यायमुद्भावयति। बलीयानबलं हि ग्रसते दण्डधराभावे। (स च[1]) तेन गुप्तः [2]प्रभवतीति॥

### वैदिकसिद्धान्तसंरक्षिणी

प्रदर्शितम्। लोकशास्त्रयोरनुमतिमन्तरा स्वकल्पनया दण्डस्य प्रणयने उद्वेजनीयत्वं तस्य उक्तम्। तत् कथमित्याह दुष्प्रणीत इति। अन्यायेन प्रणीतः। कथमन्याय्यत्वं दण्डस्येत्याह कामेति। काम इच्छा राग इति यावत्। क्रोधः अक्षमा। अज्ञानं मोहः। एवं च रागः अज्ञानं क्रोधश्चेति त्रयं दण्डस्य अन्याय्यत्वे बीजं भवतीत्यर्थः। एभिः शिष्टस्य अपरिपालनात् दुष्टस्य चानिग्रहाल् लोके अपरागो भवति। इदमेव राज्ञः पतनकारणम्। वानप्रस्थानपोति। अपिना गृहस्था भृत्याः मन्त्रिणश्च गृह्यन्ते। वक्ष्यति च "दण्डकरसाधनाधिकारेण जनपदविद्वेषं ग्राहयेत्" इति। नन्वेव वानप्रस्थाः संसाराद्विरक्ताः किमिति कोपं कुर्युः? तन्न। अभिषेके राजा "प्रजां पालयिष्यामि" इति सर्वेभ्योऽभयप्रदानस्य प्रतिज्ञां कृत्वा विमुह्य न प्रतिपालयति शिष्टान्, अतः सत्यव्रतभङ्गात् राज्ञे ते कुप्यन्ति। यदि न कुप्येयुस्ते न वा नृपं शासेयुः, तर्हि एषामपि राज्याङ्गत्वं हन्येत। सत्यव्रतभङ्गेन रागद्वेषाभ्यां सत्वं नश्यति। तेन शौर्यमपि लुप्तं भवति। अतो गुणाभावात् प्रजापरागः ततो राजनाश इति हृदयम्।

### श्रीमूला

मात्स्यन्यायमिति। महान् हि मत्स्यः क्षुद्रं मत्स्यं ग्रसत इति बलवता दुर्बलस्य यत् पीडनं स मात्स्यन्याय इत्युच्यते। बलियानित्यादि। दण्डधराभावे दण्डप्रणेतुरभावे। तेन गुप्तः प्रभवति सुप्रणीतेन दण्डेन रक्षितः अर्थाद् दुर्बलः प्रभवति बलयुक्तो भवति।

### वैदिकसिद्धान्तसंरक्षिणी

एवं सति दण्डो न प्रणेयः। तत्राह अप्रणीतो हीति। सर्वथा दण्डप्रणयनाभावे मात्स्यन्यायः प्रवर्तेत तेन पुनरपि प्रजापालनं न सुशकम्। तदेव प्रदर्शयति— बलीयानिति। अनेन मात्स्यो न्यायो दर्शितः। दण्डमाहात्म्यमाह—तेनेति शास्त्र लोकोभयानुमतेन यथाधिकारं उपायविकल्पप्रकरणोक्तदिशा सुप्रणीतेन दण्डेन। गुप्तः लोक इति शेषः। स च तेन गुप्त[2] इति पाठान्तरम्। प्रभवति "वृद्धि याति" इति टिप्पणीव्याख्यानम्। दुष्टानां दुर्दैवानां वा विनशनात् इति शेषः।

---

ती० टि० १. **स चेति**। लोकः।
,, ,, २. **प्रभवतीति**। वृद्धि याति।

## जयमङ्गला

···च्छामो यद्यत्र विसंवाद इति । यदि विवेकज्ञानसङ्कटावगाहनत्रासात् प्रणीयेत तदा दोषमाह-अप्रणीत इति । मात्स्यन्यायमुत्पादयति उत्थापयति । तमेव न्यायं दर्शयति-बलीयान् अबलं हि ग्रसते बलीयसा अबलो भक्ष्यते यथोक्तम्—

'अस्ति मत्स्यस्तिमिर्नाम तथा मत्स्यस्तिमिङ्गिलः ।
तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव ! ॥ इति ॥

दण्डधराभावे शासितुरभावे । तेनेति दण्डेन । गुप्तो रक्षितो राजा प्रभवति विनेतुम् । तेन वा व्यवस्थापितः प्रकर्षेण भवति ।

## जयमङ्गलाक्रोडपत्रम्

(मूलपुस्तके अर्धपरिमितपङ्क्तीनामलाभात्)

### जयमङ्गलायाः पूरणम्

**आन्वीक्षिकीति** । सत्योपि हि इतरा विद्याः दण्डाभावे न सत्यो भवितुमर्हन्ति सदपि असदिवाविशेषात् इति । तासां योगक्षेमसाधनत्वं दण्डे सर्वविद्यारम्भ प्रतिबद्धत्वात्[१] ।

'दमो दण्ड' इति । दण्डशब्दो दण्डप्रकृतावुपायविशेषे च दण्डे वर्तते, तत्र सर्वप्रकृतिविषयत्वं नयस्येति दण्डप्रकृतिमपास्य निग्रहस्वरूपमुपायमाश्रित्याह दमो दण्ड इति । सामदानभेदसम्भवेऽपि प्रायोऽनेनैव नीतेर्व्यपदेशः लोकस्य दोषबाहुल्यात्[२] ।

अथवा दण्डशब्दोऽत्र दमनमात्रवृत्तिः स्वपरपक्षदमनोपायाशेषसामग्र्युपग्राही द्रष्टव्यः । तस्य दण्डस्य । नीतिः यथावत् लोकशास्त्रानुमतं प्रणयनं यत्र सा दण्डनीतिः । तस्याः फलमाह अलब्धेति । तेन वर्णाः आश्रमाश्च आन्वीक्षिक्यादिविद्यासु तिसृषु प्रतिष्ठिताः दण्डनीतिः रक्षति इति लोकयात्रायाः तत्त्वं क्लृप्तम् । उपायविकल्पे दण्डस्य प्राधान्यं जानन् पूर्वपक्षमाह तस्मादिति । उपसंहरति नहीति । प्रजा हि यमस्थाने दण्डधरं मन्यमाना नापराध्यन्ति, इति दण्ड एव प्रधानम् । यथाधिकारं प्रयुक्तो दण्डः यथापराग जनको न स्यात् तथा कल्पनीयः इति दर्शयितुमाह नेति । उद्वेजनीयः अधर्मजनकत्वात् लोकस्यातिनिग्रहणात् । दमनमात्रवृत्तिना दण्डेन अतिसाम्ना अतिदानेन अतिभेदेन अतिनिग्रहेण लोकमुद्वेजयति ततः पुनरश्रिये इत्यर्थोक्तम् । मृदुदण्डः—

---

१ दण्नीतिर्यदा सम्यङ्नेतारमधितिष्ठति ।
तदा विद्याविदः शेषा विद्याः सम्यगुपासते ॥
२ सर्वो दण्डजितो लोको दुर्लभो हि शुचि क्वचित् ।
दण्डस्य हि भयात्कृत्स्नं जगत् भोगाय कल्प्यते ॥ इति ।

## जयमङ्गलाक्रोडपत्रम्

किमयं सान्त्वयिष्यति, किं दास्यति, किं भेदयिष्यति, किं निग्रहीष्यतीति। तस्माल्लोको न बिभेति। यथार्हेति—आत्मपरयोस्त्रिवर्गसाधनात्। यथार्हत्वमाह सुविज्ञातेति। लोकशास्त्रानुमत इत्यर्थः। दुष्प्रणीतः—तीक्ष्णदण्ड इत्यर्थः। प्रजां परिपालयिष्यामीति प्रतिजनानोऽपि राजा दण्डेन लोकमुद्वेजयति चेत् अमुं देशं वस्तुं (३७८ ज० पृ०)··· · नेच्छामः यद्यत्र विसंवादः इत्यग्रे पठनीयम्।

विवेकेति। एतेन धर्मशास्त्रन्यायशास्त्रयोरध्ययनं राज्ञा बाल्यावस्थायां यत्कृतं तस्य सार्थक्यं भवति अन्यथा विवेकाभावे धर्मशास्त्रज्ञानाभावे वा उद्वेगजनकस्य दण्डस्य प्रजासु प्रणयनप्रसङ्गात्, ततः प्रजाया आत्मनि अपरागप्रसङ्गाच्च। तदुक्तं अत्रैव स्वयं मूलकृता किमङ्गेत्यादिना[1]।

## राजनीतिस्थापनायां लोकवशित्वम्

ननु भारतीयराजनीतेः देशे स्थापनायां सत्यां सर्वे वश्या भवन्ति इत्यत्र का उपपत्तिः इतिचेदभिधीयते।

राजनीतिर्हि प्रमाणत्रयनिर्णीतेष्टसाधनताककर्मानुष्ठानरूपा क्रियात्मिका तस्यां क्रियासामान्यविज्ञानस्वभावानुसारेण आकर्षकत्वं, क्षेपकत्वं विवेचकत्वं सर्वैः स्वीकर्तव्यम्। न च क्रिया एवं करोतीत्यत्र किं नियामकमिति शङ्क्यम्। विद्युच्छक्तौ आकर्षणादिधर्मस्य दृष्टत्वात्। न च तत्राकर्षणसत्वेऽपि क्रियायां कथमाकर्षकत्वमुपपद्येतेति उक्तदोषतादवस्थ्यमिति वाच्यम्। विद्युच्छक्तेरपि क्रियाया-मेवान्तर्भावितत्वात्।

न च अस्तु कामं आधुनिकविज्ञानसिद्धम्। प्राचीनैः क्रियाया आकर्षकत्वादिकं नाङ्गीकृतमिति वाच्यम्। सृष्ट्यारंभे तथैव स्वीकृतत्वात्। तथाहि—पूर्वसृष्ट्यारंभे विघटिताः परमाणवः इतस्ततः स्वमण्डलरेखामतिक्रम्य दूरमपसृता भवन्ति। पुनः वेगातिशयेन त एव परमाणवः परस्परसंयुक्ता भवन्ति। ततश्च जगदुपत्पत्तिः इति सिद्धान्तितम्। अस्याऽयं भावः यत् प्रलयसमये परमाणौ वेगेन काचन क्रिया एवं समुत्पद्यते या इतरतरपरमाणून् क्षिपति। पुनः कालान्तरे जगदुत्पत्त्युन्मुखावस्थायां परमाणुषु तथाविधा क्रिया भवति यथा ते परस्परमाकृष्टा भवेयुः। मुक्तावल्यां गुणनिरूपणे स्फुटीकृतमेतत्[2]।

---

१ तीक्ष्णदण्डो हि भूतानामुद्वेजनीयः,
मृदुदण्डः परिभूयते, यथार्हदण्डः पूज्यः सुविज्ञातप्रणीतो हि दण्डः प्रजाः धर्मार्थकामैर्योजयति दुष्प्रणीतः कामक्रोधाभ्यामज्ञानाद् वानप्रस्थपरिव्राजकानपि कोपयति, किमङ्ग पुनर्गृहस्थान्।"

२ "कल्पान्ताग्न्यात्मक महत्तमतेजोवेगातिशयेनैव प्रलयानुगुणपरमाणुकर्म-

## जयमङ्गलाक्रोडपत्रम्

किञ्च प्राचीनैः परमाणौ यः वेगः उपवर्णितः, स विद्युत्पदार्थे एव अन्तर्भावितः यतो विद्युतो धर्माः तत्राऽपि भवन्ति। तदेतत् "वेगः चुम्बकत्वं क्रिया गतिरित्यादि विद्युदेव" इति "आत्माराम एन्डसन्स" प्रकाशिते पुस्तके उपलब्ध्या अप्रामाणिकमिति नाशङ्क्यम्।

गुरुत्वाकर्षणादि यद्दृश्यते तदपि वेगेनेति गणनाथसेनः प्रत्यक्षशारीरके उक्तमेवार्थं द्रढयति। एवं वेदान्तसूत्रमुक्तावल्यामपि एतदंशस्य निरूपणात् क्रियायाः आकर्षकत्व सिद्धान्तः वेदान्तेऽपि[1] सिद्धो ज्ञायते।

एवमुपवर्णितां शक्तिसम्पन्नां क्रियां "फोर्स इनर्जीय" पदेन ( Energy force ) व्यवहरन्ति आधुनिकाः। प्राञ्चस्तु तामेव अदृष्टपदेन व्यवहरन्ति[2]।

अतएव क्रियायामदृष्टरूपायां फोर्सवाच्यायां एतावत् सामर्थ्यमस्ति यत् जन्मान्तरे प्रतिभाया उत्पादनम्।

एवंरीत्या अनेकेषु क्रियायाः आकर्षकत्व प्रतिपादकेषु प्रमाणेषु सत्सु राजनीतिरूपक्रियायां सफलायां लोकमनसः आकर्षकत्वं क्रियास्वाभाव्यात् स्वतः सिद्धमेव। यत्र

---

सम्भवात् तद्बलात्तदुत्तरमपि विलक्षणवेगं स्वीकृत्य तद्बलादागमप्रसिद्धप्रलयकालावधि क्रियासन्ततिमभ्युपगम्य पुनः सर्गादिसमये परमाण्वन्तरेण सह संयोगारब्धवतश्च तस्य वेगस्य तत एव विनाशाभ्यनुज्ञानात्, स्पर्शवत्संयोगस्य वेगनाशकतायाः सर्वसम्प्रतिपन्नत्वात्।" इति। (४११ पृष्ठे रामरुद्र्यां पाकजक्रियानिरूपणावसरे।)

१ तदुक्तम्—(अ० २ तृ० पाद वे० सू०मु०)
पृ० २२० 'रश्म्यनुसारी'—मूर्धन्यनाड्योत्क्रामन्रविरश्मिमालम्ब्य गच्छति 'अथ या एता हृदयस्य नाड्यः' (छा० ८।६।१) इत्युपक्रम्य नाडीरश्मिसम्बन्धमुक्ता 'यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" (छा० ८।६।५) इत्युक्त्वा तयोर्ध्वमायन्नमृतत्वमेति इत्यस्योक्तत्वात्।

कामसूत्रेऽपि--

नक्षत्र चन्द्रसूर्यताराग्रहचक्रस्य लोकार्थं बुद्धिपूर्वकमिव
प्रवृत्तेर्दर्शनाद्वर्णाश्रमाचारस्थितिलक्षणत्वाच्च लोकयात्रायाः
नक्षत्र ग्रह पञ्जरमहर्निशं लोककर्मविक्षिप्तम्।
भ्रमति शुभाशुभमखिलं प्रकाशयत् पूर्वजन्मकृतमिति।

२ वे० सू० मुक्तावल्याम्— द्रष्टव्यं तृतीये पादे।

## [ दण्डस्य सन्मार्गहेतुता ]

### चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः ।

---

### जयमङ्गलाक्रोडपत्रम्

हि उक्तंवशीकरणं राजनीतौ बाधितं दृश्यते तत्र कारणं न राजनीतेः क्रियात्वमपितु अनुष्ठातुर्दोषवत्वं मन्तव्यम् ।

अतः भारतीय राजनीतौ शास्त्रसंमतायां वशीकरणसामर्थ्यमबाधितत्वात् उपपन्नं भवति । एतस्मादेव कारणात् एकाकी असहायोपि यदि भारतीयराजनीति-शास्त्रसम्मतं मतमनुतिष्ठति तर्हि सः चक्रवर्तिपदभाग् भवितुमर्हतीति दशकुमार-चरिते प्रतिज्ञातं तदुपपन्नम्[1] ।

किञ्च भारतीयराजनीतेः क्रियात्मिकायाः अपरोऽयं विशेषः यत् इयं जन्मा-न्तरार्जितकर्मभिः सह सामञ्जस्यं संपाद्य प्रजानुरागात्मकं फलं नैयत्येन स्वसेवकाय नृपतये प्रयच्छति । यथा धर्मशास्त्रम् तदनुबन्धो आचारो वा स्वनिर्दिष्टकर्तव्येषु वर्णाश्रमिणः प्रेरयन् पूर्वजन्मान्तरार्जितकर्मभिः सह न असामञ्जस्यमुत्पादयति । तथैवेयं नीतिरपि शास्त्रत्वादनुमन्तव्या । एतस्मादेव कारणात् अस्याः शाश्वतीत्वं जयमङ्गलोक्तं स्थिरीभवति । अतः अर्थार्जनादौ इदं नीतिशास्त्रम् धर्मशास्त्रवत् प्रमाणमनुमन्तव्यम् ।[2]

तस्मात् अचिन्त्यशक्तिप्रकाशिकायां राजनीतिक्रियायां विज्ञानसिद्धविद्युत्-कार्यकरणसमर्थायां लोकवशित्वं सिद्धं भवति । इति ।

### श्रीमूला

अध्यायान्ते श्लोकमाह—**चतुर्वर्णेत्यादि** । स्वधर्मकर्माभिरतः वर्णाश्रमधर्म-कर्मानुष्ठानपरः । स्वेषु वेश्मसु वर्तते स्वास्थ्येन वसतीत्यर्थः । दण्डपालनाभावे हि

---

१ तदुक्तम् दशकुमारचरिते अष्टमोच्छवासे— 'एकामपि काकिणीं कार्षापणलक्षमापादयेम । शस्त्रादृते सर्वशत्रून्घातयेम । एकं शरीरिणमपि मर्त्यं चक्र-वर्तिनं विदधीमहि यद्यस्मदुपदिष्टेन मार्गेणाचर्यते । स पुनरिमान्प्रत्याह--कोऽसौ मार्गः इति । पुनरिमे ब्रुवते 'ननु चतस्रो राजविद्यास्त्रयी वार्तान्वीक्षिकी दण्डनीति रिति । तासु तिस्रस्त्रयीवार्तान्वीक्षिक्यो महत्यो मन्दफलाश्च, तास्तावदासताम् । अधीष्व तावत् दण्डनीतिम् । इयमिदानीमाचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोकसहस्रैः सङ्क्षिप्ता । सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्मक्षमा ।" इति ।

२ तदुक्तम्—

वेदाः प्रमाणं स्मृतयः प्रमाणं धमार्थयुक्तं वचनं प्रमाणम् ।।
यस्य प्रमाणं न भवेत्प्रमाणं कस्तस्य कुर्याद्वचनं प्रमाणम् ।

स्वधर्मकर्माभिरतो वर्तते स्वेषु [1]वर्त्मसु ॥ ५ ॥

इति विनयाधिकारिके विद्यासमुद्देशे वार्तानिण्डनीतिस्थापने
चतुर्थोऽध्यायः विद्यासमुद्देशस्समाप्तः ।

---

## श्रीमूला

स्वगृहेऽपि स्वास्थ्यवृत्तिदुर्लभेति ।

इति कौटिलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे चतुर्थोऽध्यायः, विद्यासमुद्देशे वार्त्तास्थापना दण्डनीतिस्थापना च ।

विद्यासमुद्देशः समाप्तः ।

## वैदिकसिद्धान्तसंरक्षिणी

अध्यायान्ते प्रकरणार्थमुपसंहरन् दण्डमाहात्यमाह चतुरिति । चतुर्वर्णाश्रम इति विशेषणंभारतचकवर्तिक्षेत्राद्वहिःक्षेत्रव्यावृत्यर्थम् । स्वेति । स्वपदं धर्मेण कर्मणा च सम्बध्यते तथा च त्रयीविहिते क्षात्रे धर्मे, कर्मणि वृत्तिरूपे च चरन् तत्रैव बद्धप्रतिज्ञः सन् महता उत्साहेन रतः वर्तते इति । इदं वैशिष्ट्यं नीतिसारे द्रष्टव्यम्[2] । इत्येवमध्यायचतुष्टयं मिलित्वा विद्योद्देशाख्यं प्रकरणं संपूर्णम् ।

इति कौटिलीयार्थशास्त्राव्याख्यायां वैदिकसिद्धान्तसंरक्षिण्यां चतुर्थोऽध्यायः ।

## जयमङ्गला

'चतुर्वर्णाश्रमो 'लोक' इत्युपसंहारः शिष्यावबोधनार्थः । राज्ञा दण्डेन पालित' इत्युपायप्रशंसा । 'स्वधर्मकर्माभिरत' इति विद्याफलम् । 'वर्तते स्वेषु कर्मस्वि'ति राजवृत्तफलम् ।

इति विद्यासमुद्देशे वार्तास्थापना दण्डनीतिस्थापना च
द्वितयं प्रकरणम् । चतुर्थश्चाध्यायः ।

## जयमङ्गलाक्रोडपत्रम्

### वर्णाश्रमबहिष्कारो जातिह्रासः

**चतुर्वर्णाश्रम इति** । ननु भारतीयराजनीतिः वर्णाश्रमधर्मं समामनुते । तत्र एकः महान् दोषः अपरिहार्यो ऽस्ति । यत् वर्णाश्रमधर्मिणः वर्णाश्रमविमुखं बहिष्कुर्वन्ति । जातावन्तर्भावार्थं कृतायामपि—

---

१. नी० टि० अमुं पन्थानं नातिक्रामतीत्यर्थः ।

२ पर्जन्य इव भूतानामाधारः पृथिवीपतिः ।
विकलेपि हि पर्जन्ये जीव्यते न तु भूपतौ ।
प्रजां संरक्षतिनृपः सा वर्धयति पार्थिवम् ।
बर्नंनाद्रक्षणं श्रेयः तन्नाशेन्यत् सदप्यसत् ।

### जयमङ्गलाक्रोडपत्रम्

प्रार्थनायां अपराधिनं न स्वजातौ ते अन्तर्भावयितुं चेष्टन्ते। अपरधर्मानुयायिनः तथाविधं स्वधर्मानुयायित्वेन स्वीकुर्वन्ति। एवं स्थिते वर्णाश्रमधर्मिणः सङ्ख्याह्रासान् मुष्टिमेयाः भूत्वा दुर्बला भविष्यन्ति। अतः वर्णाश्रमधर्मे संभाव्यमानः बहिष्कारप्रयुक्तो भेदः राजनीत्या अनया कथं परिहार्येत इति चेदभिधीयते।

### भेदकारणं तत्परिहारः पृथगवस्थापनञ्च

समानधर्मेषु वर्तमानस्य समाजस्य अन्तः भेदो मा भवतु इत्येतदर्थम् इतरा राजनीतिः स्वधर्महीनं नरं पुनरपि समाजे अन्तर्भावयितुं चेष्टते इति तु सत्यं। परन्तु तावन्मात्रेण अस्मात् समाजात् भेदः व्यपगतः इति न दृश्यते किं बहुना वेदप्रामाण्येन प्रवृत्तचतुर्वर्णसमाजापेक्षया उत्तरोत्तरं भेदः अभिवर्धनशीलो वर्तते। इति भेद-कारणमन्यदेव मन्तव्यम्। तच्च स्नेहविघातकं शङ्काजननं अभिभर्त्सनञ्चास्ते। ततः आत्मत्राणं इतरयाऽपि राजनीत्या अवश्यं कर्तव्यं भवति। भारतीयराजनीतिरपि वर्णाश्रमप्राधान्यं स्वीकृत्य प्रवृत्ता समाजस्य यथा अन्तः शङ्काजननमभिभर्त्सनञ्च न भवेत् तथा प्रयतितुं चेष्टते। तथाकरणे, प्राप्ते च साफल्ये वर्णाश्रमिष्वपि भेदो-त्पत्तिभीतिः न भवितुमर्हति। एवं विधा स्थितिः अनेन समाजेन न प्राप्ता इति न वक्तुंशक्यते यतः जातिबहिष्काररूपः आक्षेपः अभिभर्त्सनात्मकः पूर्वपक्षतया उत्था-पितः एतत्समाजे तावत्पर्यन्तं नासीत् यावत्पर्यन्तं भारतीयराजनीतिप्राधान्यमासीत्। अत्र हि बहिष्कारमवलम्ब्य कस्यचित् भर्त्सनमभीप्सितन्न अपितु यो यथा चेष्टते तदनुरूपं तस्य कार्यकलापकरणे समुचितायां जातौ सन्निवेशं कृत्वा यथोचित वृत्तिव्यवस्थादिविधानम्। यथा – देशे प्रव्रज्याप्रत्यवसितः भिक्षुकः चरदौत्य कर्मणि अपेक्ष्यते तथैव उच्चादर्शस्य प्रतिष्ठापनार्थं सात्विकस्थितिप्रकाश-नार्थञ्च अर्थशास्त्रीयादिमप्रकरणानुसारेण अतिपवित्रः परिव्राड़पि अपेक्षितः। यथा वा जनपदे दूष्यानां वल्लभादीनां दोषज्ञानाय गणिका अपेक्ष्यते। तथा शुचीनां सत्वबहुलानां आत्मगुणसंपत्शीलानां सन्तानानां लाभाय उत्तमा पति-व्रताऽपि अपेक्ष्यते। अनयोः परिव्राड्प्रवज्याप्रत्यवसितयोर्वेश्यापतिव्रतयोर्वा एकत्र अवस्थानादिकं भिन्नरुचित्वात् सामानधिकरण्येन न संभवितुमर्हति। अतः तेषां तेषामधिकारानुरूपं पृथक् संस्थापनं राजनीत्या समादृतम्।

### जातिभेदेपि सौजन्यं नवा बहिष्कारनीतिः

न हि एतावन्मात्रेण तेषु कलहः समुत्पत्तुमर्हति न वा पृथग् अवस्थायामपि तयोरभिभर्त्सनञ्च। यदि स्वस्वजातौ सङ्घटने स्थितेषु कश्चिन्मर्यादामतिक्र-मितुमीहते वर्तते च, नवा पश्चात्तापाभावात् प्रायश्चित्तादिना शुद्धो भूत्वापि अकर्मणः निवृत्तौ योग्यां स्थितिमासीदति। पुनरेवं विधं दुष्टं कर्म न करिष्यतीति विश्वास्यत्वं वा। तथाविधः विकृतोजनः जात्याः पृथगवस्थाप्य राजनीतिः तं स्वयोग्ये कर्मणि

## जयमङ्गलाक्रोडपत्रम्

निवेशयितुमपि अनुमोदते। पुनः शुद्धसन्तानानामभ्युदयार्थं अनया राजनीत्या जातिरपि शुद्धतया संरक्ष्यते। कुत्त इति चेत्, जन्मान्तरगतप्रतिभोद्बोधादि गुणजातस्य राज्ये अपेक्षितस्य (पृ० २०८ तः) पूर्वं निर्दिष्टस्य प्रजासु दौर्लभ्यं मा भवतु इत्येतदर्थम्। एवञ्च स्वजात्यनभिमतकार्यकर्ता प्रायश्चित्तेनाऽपि अनपनीद्यपापकर्मा यदि जात्तः पृथक् अवस्थाप्यते तर्ह्यत्र कृतमिदं हीनकर्मणः पृथगवस्थापनं न बहिष्कारार्थमपि तु उभयोरपि एकराज्यसमष्टिकार्यसञ्चालने अनुगुणत्वात् कार्यकरमेव समभूत्। अतएव भारतदेशे भारतीयराजनीतिमधिकृत्य सम्भूय प्रवृत्तदशायां चातुर्वर्ण्येन सह वर्णसङ्करादिजातीनामपि सौजन्यपूर्वकं जीवनं समभूत् भेदभावस्य शङ्कापि नासीत्, अभिभर्त्सनाभावात्। दृश्यते चैतत् संघटन, सत्तारूढ़ कांग्रेस, स्वतन्त्रदल भाक्रान्देत्यादिभेदेन अवस्थानोपन्यासाय पृथक् प्रयतनम्। जातिभेद संस्थाभेदेन पृथगवस्थानयोर्मध्ये जातिप्राधान्येन पृथगवस्थापने वेदप्राधान्यात् भर्त्सनाभावः। सङ्घटनादिसंस्थायां तु पार्थक्येन संस्थापितायामपि दोषोद्भावनेन कलहप्रसक्तिः इति अन्तरमविस्मरणीयं वर्तते। अतः भारतीयराजनीतिप्राधान्ये बहिष्कारस्य प्राधान्यं नाऽस्ति। प्रत्युत यदा प्रभृति एतत्प्राधान्यं व्यपगतं तदाप्रभृत्येव तेषां तेषां यथोचितमवस्थापनं विस्मृत्य बहिष्कारात्मिका नीतिः जातिप्रधान्ये समुद्भूता तत्र कारणं इतरराजनीतिप्राधान्यम्। इत्यलम्।

### जात्या सदस्यनिर्वाचनम्

न च भारतीय राजनीतौ तत्तज्जातेः संरक्षणं राज्यार्थमनुपयोगीति वाच्यम् निर्वाचनद्वारा लोकस्थितये अपेक्षितेषु मन्त्रिगुणेषु अन्यतमानां स्ववग्रहादिगुणानां परीक्षणस्य जात्यैव अभ्यर्हितत्वात्। तदिदं प्राक् प्रदर्शितम् (पृ० २२१) विस्तरतः 'शान्ती का अग्रदूत' ग्रन्थतश्च अवगन्तव्यम्।

### जातेरस्तित्व स्मारणम्

न च जातेः अस्तित्वमेव नास्ति इति शङ्क्यम्, बालकानां रक्षणाय अपेक्षितस्य स्तन्यपानस्य कृते मातुरभावे अभ्यर्हिताया धात्र्याः स्वजातिमत्व एव तत्संभवः इति चरकवच नपुरःसर प्राक् (पृ० २१६) प्रदर्शितत्वात्। न च जातिशुद्धौ सत्यामपि कामादि विकृतीनां सर्वतोमुखत्वात् जातिप्रधानसंस्थायाः अद्य यावत् यथावदवस्थितत्वं न भवितुमर्हतीति वाच्यम्। यवनबौद्धाङ्ग्लानां प्रचारसमयेऽपि कथञ्चित् शुद्धायाः असङ्कीर्ण वर्णाश्रमपरम्परायाः स्थितेः अद्यावधि दृष्टत्वात्। तदुक्तम्—

आहारेष्वथ योनौ च बीजे कर्मणि चापि यः।
शुचिः कृच्छ्रगतस्यापि न पापे रमतेऽस्य धीः ॥ इति। ज०मं०अ०

### जाताबुच्छृङ्खलता

ननु जातिशुद्धौ तत्सन्तानपरम्परायां उच्छृङ्खलता कथं दृश्यते इति चेन्न। उक्तपद्ये एव दत्तोत्तरत्वात्। आहारमातृपितृकर्मादिशुद्धिषु अन्यतम

## जयमङ्गलाक्रोडपत्रम्

स्याभावे तत्र उच्छृङ्खलता भविष्यत्येव इत्यलं विचारस्य प्रसक्त्यानुप्रसक्त्या। प्रस्तुतमनुस्रियते ।

एतावता प्रबन्धेन भारतीयराजनीत्या जातिप्रधानसंस्थायाः शुद्धिमभिलषन्त्या तत्तज्जातिकर्मकरणे असमर्थानां विकृतचित्तानां पृथगवस्थापनं विधाय राज्यसञ्चालनमर्यादा सुचारुतया साधिता इति साधितं ।

### जातितः पृथगस्तित्वे कारणं उपेक्षादण्डः

अथ तेषां तेषां स्वजातितः पृथगवस्थापने कारणान्तरमपि अस्ति इति प्रसङ्गात् निवेद्यते । तथाहि—

यः जात्युचितं कर्म न करोति । उच्छृङ्खलश्च वर्तते सः राजनीत्या अवश्यं दण्डयो भवत्येव । अन्यथा राजशासनं अकिञ्चित्करमभूदिति मत्वा सर्वोऽपि जनः यथेच्छं व्यवहरेत् । भारतीयराजनीतिः तथाविधेषु बहिष्काराख्यं उपेक्षात्मकं दण्डं विदधाति न तु अभिभर्त्सनम् अतस्तथाविधस्य पृथगवस्थापनं उपेक्षायै विहितम् । अत्राऽयं भाव - कश्चिद् अपराधी मनुष्यः सुसङ्घटिततया जात्या सर्वथा सर्वस्मादपि कार्यात् पृथगवस्थाप्य उपेक्ष्यते तर्हि सः तावन्मात्रेण दण्डभाग् भवितुमर्हति । ततो दुर्बलस्स पुनर्विनीतस्सन् जातिमर्यादया कृतमुपदेशं स्वीकृत्य यथायोग्यं कार्यं विधत्ते विनयञ्च अवलम्बते, इति पृथगवस्थापनफलम् नतु बहिष्कारप्रयुक्तं भेदोत्पादनम् । इत्येवं रीत्या पार्थक्येन अवस्थापनात्मकः उपेक्षारूपो दण्डः भारतीयराजनीत्या विधीयते । एवंविधं सूक्ष्मंतत्त्वमजानानाः इतरराजनीत्यवलम्बिनः बहिष्कारं तीक्ष्णदण्डमुदघोष्य अपराधिनं ग्लानिस्थाने कोपयन्ति भेदञ्चोत्पादयन्ति । इत्ययं महान् दोषः इतर राजनीत्या प्रचारितः नतु भारतीयराजनीत्या ।

न च भारतीयराजनीत्या उक्तदण्डस्य प्रणयनाय राजानमधिकृतमुपेक्ष्य जातिः किमर्थमधिक्रियते । इति चेदेवं । समाजघटकानां नियन्त्रणं यथा सरलरीत्या जातिमर्यादायां स्थितैः उपेक्षादिदण्डः दड्गेषु प्रणीयते न तथा राजा सौकर्येण अपराधिनं दण्डयितुं शक्नोति । दृश्यतैचैतत् । अद्य सत्स्वपि अनेकेषु अधिकारिषु तदधीनेषु न्यायालयेषु शासनं विधिबहिर्मुखान् यथावन् न दण्डयितुं शक्नोति न वाऽ मर्यादां पालयद् वर्तमानशासनं जातिद्वारा तं दण्डयितुमभिलषति, इति भ्रष्टाचारस्य नियन्त्रणं दुःशकमभूत् । न च तर्हि अपराधं कृतवतां पश्चात्तापशीलानां वर्णाश्रमिभिः पृथग् अवस्थापनव्यवस्था भारतीयराजनीत्या नोक्ता इति वाच्यम् तेषांकृते यथासंभवं प्रायश्चित्तादिना जातौ कथमपि प्रवेशस्य असम्भवे भगवद्दीक्षायां अधिकारित्वस्य उक्तत्वात् । राज्ये च श्रमणादिकार्यादिद्वारा तेषां जीवनव्यवस्थायाश्च अभिहितत्वात् ।

नन्वेवमपि सङ्ख्याह्रासविषयकप्रश्नोऽसमाहितो वर्तते । इति चेन्न । जातौ अपराधिनः अप्रवेशेऽपि तस्य पृथगवस्थापनमात्रेण जातिशून्यत्वमभूत् इति केन उच्यते ? केवलं सः प्रायश्चित्तानपनोद्यापराधदशायां धर्मतन्त्रेणाभिहितकर्माधिकाराद्

## जयमङ्गलाक्रोडपत्रम्

धीन इत्येव उच्यते। यथा कश्चिद् असमाश्रेयकुष्ठादिदुष्टः स्वकुलस्य निर्दोषत्व-संरक्षणार्थं अभिभावकैः पृथग् अवस्थाप्यते तर्हि तस्मिन् स्वप्रजात्वं स्वजातिमत्वं वा व्यपगतमिति न वक्तुं शक्यते। तथैव प्रकृतेऽपि बोध्यम्। अतः मर्यादामधिकृत्य पृथगवस्थापिताः जनाः यावज् जीवन्ति तावन्मात्रेण जातेः सङ्ख्याह्रासोऽभूत् इति वक्तुं न शक्यते।

अत्रेदमवधेयं यदि राज्याय अपेक्षितं उत्तमोत्तमसंस्काराधायकं प्रति-भोद्पादकं शुचित्वमुपेक्षामहे। तर्हि जीविकायाः उपायेषु शास्त्रेषु उक्तेष्वपि केवलं दास्यकर्मैव जीविकोपाय इति मत्वा आत्मानं दास्यकर्मणः पृथगवस्थातुं कदापि न प्रभवेम इति जाड्यात्मकं पारतन्त्र्यरूपं पशुत्वं विना, भारतीयराजनीत्यभावे किं हस्तगतं भवेत्? तदिदं प्रत्यभिज्ञादर्शनतः अवगन्तव्यम्।

न चेष्टापत्तिः वक्तुं शक्या। यथेच्छं व्यवहरणेन शुचितामपसार्य स्वातन्त्र्येण जीविकाप्राप्तिप्रकाशिकां प्रतिभामनुपलभ्य केवलं सेवैव जीविका अस्तीति यदा लोको मन्यते तदा सर्वस्यापि सा सुलभा भविष्यत्येवेति नाऽस्ति स्थितिः अतः महद्धानिप्रसङ्गः आपद्येत। सेवायाः अलाभे उन्मादापस्मारादिदोष चौर्यदाहमहालुण्ठनादि दोषाः विदुषां समाजेऽपि प्रसरिष्यन्ति। तस्येदं फलं संभवि-तुमर्हति यत् प्राप्तं स्वातन्त्र्यं परहस्तगतं भविता। तस्माच्चतुर्वर्णाश्रमिणां बहिष्कारनीतिः न अनर्थमावहति नवा सङ्ख्यानां ह्रासोऽपि इत्येतदवधार्य निरुक्तं उपस्थितशङ्कासमाधानं विद्वद्भिः भारतीयराजनीतिमधिकृत्य प्रचारणीयं, संवर्धनीयम् पालनीयम् इत्यलमधिकेन।

इति चतुर्थाऽध्याये जयमङ्गलायाः क्रोड़पत्रं संपूर्णम्

# द्वितीयं प्रकरणं

## पञ्चमोऽध्यायः

### वृद्धसंयोगः

[ सुदण्डमूलविनयहेतुविद्याधिकारिवृत्तम् ]

**तस्मात् दण्डमूलास्तिस्रो विद्याः । विनयमूलो दण्डः प्राणभृतां योगक्षेमावहः ।**

---

### श्रीमूला

वृद्धसंयोग इति सूत्रम् । वृद्धाः आन्वीक्षिक्यादिविद्याकोविदाः, तैः संयोगः शिष्याचार्यभावलक्षणः सम्बन्धोऽभिधीयत इति सूत्रार्थः ।

**तस्मादित्यादि** । तस्मात् चतुर्वर्णाश्रमस्य लोकस्य राज्ञा सुविज्ञातप्रयुक्तदण्डमुखेन पाल्यमानस्यैव स्वधर्मकर्मानुष्ठानप्रवणतोत्पादात्, तिस्रो विद्याः आन्वीक्षिकीत्रयीवार्त्तालक्षणाः, दण्डमूलाः दण्डाधीनस्थितिकाः । दण्डश्च विनयलक्षणेन शास्त्रविज्ञानेन दत्तहस्तः प्राणिनां योगक्षेमसम्पत्तिहेतुरित्याह-**विनयेत्यादि** ।

### वैदिकसिद्धान्तसंरक्षिणी

अथ द्वितीयं प्रकरणमारब्धुं आदिमं सूत्रमाह वृद्धसंयोग इति । विद्यावृद्ध संयोग इति तदर्थः । धर्मेण सह इति शेषः । धर्माभावे केवलया विद्यया लोकस्थितेरसंभवः । अतएव "तङ्गुरुविति"[1] न्यायसूत्रे अनुसूयुभिरिति विशेषणं उपात्तम् इत्युक्तं प्राक् (पृ० १३) । विद्योद्देशवृद्धसंयोगप्रकरणयोरयं हेतुहेतुमद्भावः सङ्गतिः । तामेव सूचयन्नाह तस्मादिति । राजविद्याया इतरविद्यां प्रति योगक्षेमसाधनत्वम् आह दण्डमूला इति । सुविज्ञातप्रणीतः लोकशास्त्रानुमतो दण्डो मूलं प्रवर्तको यासां ताः इति विग्रहः । विद्या आन्वीक्षिकीत्रयीवार्ताः । दण्डस्य यथार्हत्वं कथं अपेक्षितमिति चतुर्थध्याये (पृ० ३७४) उक्तम् । तदपि किं मूलमित्याह विनयेति । विनयोत्र सत्वसहचारी वोध्यः । रजस्तमस्सहचरितविनये दम्भस्य प्रसङ्गोऽन्यथा भवेत् । सत्वं च प्रागुक्तं । तस्य चिन्हं "आस्तिक्यादि कार्यं बोध्यम् ।[2] तेन दण्डः सुप्रयुक्तो भवति । विनयः श्रोत्रादीनां स्वेषु स्वेषु अविप्रतिपत्तिरित्युक्तं नीतिसारव्याख्यायां जयमङ्गलायाम् ।

---

१—तं गुरुशिष्यसब्रह्मचारिशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात् ।

२—आस्तिक्यं प्रविभज्यभोजनमनुत्तापश्च तथ्यं वचो ।
मेधाबुद्धिधृतिक्षमाश्च करुणा ज्ञानं च निर्दम्भता ॥
कर्मानिन्दितमस्पृहं च विनयो धर्मः सदैवादरात् ।
एते सत्वगुणान्वितस्य मनसो गीता गुणा ज्ञानिभिः ॥

## वैदिकसिद्धान्तसंरक्षिणी

(नीतिसार सर्ग १ ।) तत्तात्पर्यं शास्त्रार्थानुष्ठाने बोध्यम् ।[1] ये किल पूर्णतया मिथ्याज्ञानरहिताः ते सर्वेष्वपि विषयेषु इन्द्रियार्थेषु न विप्रतिपत्तिमन्तो भवन्ति । ये च न तथाभूताः तैः अन्ततः शास्त्रार्थानुष्ठाने स्वीयार्यमर्यादा स्थापनीयेति भावः । अन्यथा मदमानाभ्यां विनाशः स्यात् । शेषं तु जयमङ्गलाक्रोडपत्रे द्रष्टव्यम् । अत्रेदमनुसन्धेयम् । विनये सति सेवितो गुरुः विद्याः प्रदाय शिष्येषु विनयमादधाति ।[2]

विद्याविनीतश्च नृपतिः आत्मनः प्रजायाश्च योगक्षेमौ निर्वोढुं समर्थो भवति । प्राणभृतामिति । जीवमात्राणामित्यर्थः । अनेन राजनीत्युक्तोपायेन अनुष्ठितेन दण्डनीतिः न विफला भवति न वा राज्ञः अभयदानवतः[3] विसंवादिनी भवितुमर्हति इति सूच्यते । योगेति । योगोऽलब्धलाभः क्षेमः लब्धपरिपालनम् । तदावहः तत्साधनमित्यर्थः ।

## जयमङ्गला

वृद्धसंयोगं विना विद्या न भवतीति तदनन्तरं वृद्धसंयोग उच्यत इति प्रकरणक्रमः । तमेव दर्शयन्नाह तस्मादिति । तत्र प्रकरणापेक्षया विद्यावृद्धा इति गम्यते । तैः संयोगः शिष्याचार्यसम्बन्धः । तत्र सम्बन्धोऽपि वक्तव्य इति न वाच्यम् । पूर्वप्रकरणापेक्षं हि तदुत्तरसूत्रम् । उत्तरसूत्रप्रकरणानुरूपं च तदादिमसूत्रम् । तयोः स्वप्रकरणे गुणीभूतयोर्नापेक्षा तथा वाक्यार्थावयवानां पदानां वाक्यान्तरावयवैर्नापेक्षा, वाक्ययोरेवापेक्षा । कथम् अधिकरणावयवानां प्रकरणानां सम्बन्ध इति चेत्-प्रकरणान्येवैकार्थानि अधिकरणं, अधिकरणत्वमेवैषां न समुदायान्तरमित्यदोषः । आन्वीक्षिकीत्रयीवार्तानांयोगक्षेमसाधनो दण्डः । तस्माद् दण्डमूलास्तिस्रो विद्या इति दण्डमाहात्म्यम् । दण्डोऽपि किं मूल इत्याह-विनयमूलः सुप्रयुक्त इत्यर्थोक्तम् । कामादिभिर्दुष्प्रयुक्तो भवति । एवंविधः प्राणभृतां मनुष्यादीनां योगक्षेमावहः ।

---

१ कृत्स्नं हि शास्त्रमिदमिन्द्रियजयः ।—अर्थ० अधि १ प्रक० ३

२ शास्त्राय गुरुसंयोगः शास्त्रं विनयवृद्धये ।
विद्याविनीतो नृपतिर्न कृच्छ्रेष्ववसीदति ॥
सुनिपुणमुपसेव्य सद्गुरुं शुचिरनुवृत्तिपरो विभूतये ।
भवति हि विनयोपसंहितो नृपतिपदाय शमाय च क्षमः ॥ नीतिसार सर्ग १ प्र०२

३ सकृदेव प्रपन्नाय तवास्मीति च वादिने ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥

## जयमङ्गलाक्रोडपत्रम्

### विनयवृद्धसंयोगयोः पौर्वापर्यम्

ननु कामन्दकेन नीतिसारे जितेन्द्रियत्वलक्षणविनयसत्वे वृद्धसंयोगः ततः विद्या भवति इति क्रमः उक्तो विद्यते। तद्यथा—"विनयो ह्रीन्द्रियजयस्तद्युक्तः शास्त्रमृच्छति। शास्त्राय गुरुसंयोगः"। इति च। एतदनुसारेणैव प्रकरणान्यपि तत्र सङ्ग्रथितानि उपलभ्यन्ते। कौटिल्येन तु विद्याप्राप्त्यनन्तरं विनयो भवतीत्यभिहितमस्ति। तथैव तेन प्रकरणस्य सन्निवेशनात्। एवंरीत्या जितेन्द्रियत्वविद्यावृद्धसंयोगयोः पारस्परिकपौर्वापर्यविषये आभ्यां ग्रन्थाभ्यां भासमानः विरोधः कथं परिहरणीयः ? इति चेदुच्यते।

विनयो हि द्विविधः। कृतकः स्वाभाविकश्च। तद् वक्ष्यति अत्रैव, "स विनयो द्विविधः" इत्यादिग्रन्थेन। तत्र स्वाभाविकविनये सति वृद्धसंयोगः ततो विद्याप्राप्तिः ततः कृतको विनयः उत्पद्यते। इत्येवंरीत्या विनयस्य द्वैविध्यभेदेन विनयवृद्धसंयोगयोः पौर्वापर्यविषये आशङ्कितो विरोधो परिहृतो भवतीत्यलम्।

### गुरुसेवाविद्ययोः सम्बन्धोपपत्तिः

ननु गुरुसेवाविद्ययोः यः पौर्वापर्यसम्बन्धः अर्थशास्त्रे उक्तः तस्य राज्येन सह कथमापेक्षिकत्वं भवतीतिचेदुच्यते। साहित्यशास्त्रे यावन्तः व्यभिचारिभावाः उक्ताः तेषु धृतिभावस्यैव अद्भुतरसनिर्माणद्वारा प्रजानुरागजनकत्वं संभवति इत्युक्तं (पृ० ७) प्राक्। अतएव राज्यस्य मूलभूततत्त्वेषु "सत्ववुद्धिव्यपाश्रय"मिति ग्रन्थेन नीतिसारकृता सत्वन्निर्दिष्टमस्ति। तस्य अत्यर्थलाभाय जितेन्द्रियत्वमपेक्ष्यते। तेन धृतेः उद्भवात्। अतः जितेन्द्रियत्वं धृतौ पर्यवस्यति। धृतिश्च—शौर्यादिजा वृत्तिः[1]।

एवं सङ्गीतरत्नाकरेऽपि इदमेव धृतिस्वरूपं विषयकरणभेदेन लक्ष्यीकृत्य भङ्ग्यन्तरेण निर्दिष्टमस्ति।[2]

अस्य अनुभावेषु सर्वस्य आह्लादकं रसस्य प्राणभूतमौचित्यं[3] सहजगत्या सम्भवतीति भाव प्रकाशनात् टिप्पणीनिर्दिष्टात् स्फुटी भवति[4]।

### राजमान्यता

एतदनुभाव प्रभावेणैव धृतिमान्पुरुषः यद् अभ्यूहति, यच्चेष्टते यद् वाञ्छति वदति वा तत्सर्वमपि सर्वस्य मनसः सुखाय भवति उचितत्वात्। धृतौ औचित्यस्य

१ शौर्यात् विज्ञानतः शौचाचाराच्च गुरुभक्तितः।
श्रुतप्रभावतो व्रीडान्मनोरथाप्तेर्भवेद् धृतिः। इति भा० प्र०

२ तदुक्तम्—
विवेकः श्रुतिसम्वत्तिः गुरुभक्तिः तपस्विता।
एते विषयभावेन करणत्वेन च स्थिताः॥ सं० र०

३ औचित्यं हि रसस्य प्राणाः।

४ प्रियाप्रियाविकारित्वं तदात्वोचितकारिता।
अप्राप्तातीतनष्टनामलाभेऽनभिशोचनम्॥ (भा० प्र०)

## जयमङ्गलाक्रोडपत्रम्

स्वभावसिद्धत्वात्। राजापि तादृशमेव पुरुषं माननीयत्वेन मन्यते। एतत्सम्माननेन अपरेऽपि तं माननीयत्वेन पश्यन्ति।

सर्वमान्यत्वलाभाय अपेक्षितस्य एवंभूतस्य धृतिभावस्य सहकारिषु प्रियाप्रियाविकारित्वं उक्तभावप्रकाशनपद्ये निर्दिष्टमौचित्यं च यस्य देवे शास्त्रशरीरे गुरौ च नाऽस्ति श्रद्धा तेन अनुष्ठातुमशक्यमित्यपि सत्यमस्ति।

### राजमात्रमान्यत्वे दोषः

केचित् केवलं गुरुभक्तिमनपेक्ष्य धृतिभावञ्चोपेक्ष्य राजमान्यत्वस्य लोकमान्यत्वस्य वा लाभाय प्रयतन्ते। तदर्थञ्च अद्य सर्वैः सेवावृत्तिरेव धनप्राप्तिप्रत्युपायत्वेन मन्यते किन्तु तावन्मात्रेणैव कृतकृत्यता न मन्तव्या। तेषु अर्थप्राधान्यप्रयुक्तस्य रौद्ररसस्य पर्यन्ते कलहप्रयोजकस्य समुदयसम्भवात्। अतः तन्मा भवतु इत्येतदर्थम् विद्यावृद्धसंयोगः धृतिभावस्य पूर्णतायै प्रातिभज्ञानलाभाय च अवश्यं समीहितव्यः। गुरुप्रसादस्यैव प्रातिभज्ञानोत्पत्ति प्रति कारणत्वात्।

तदुक्तम्—यस्य देवे पराभक्तिः यथादेवे तथा गुरौ।
तस्यैतेऽकथिता ह्यर्थाः प्रकाशन्ते महात्मनः इति।

### प्रकाशः

अत्रेदं प्रसङ्गादवधेयम्---यत् अत्र श्रुतौ 'अकथिताह्यर्था प्रकाशन्ते इति यदुक्तम् तत् प्रकाशात्मक विशेष-व्याप्यदर्शनपरतया योज्यम्। विशेषदर्शनमपि न प्रतिभातिरिक्तं वस्तु। अतएव जगदुत्पत्तिसमये मायावच्छिन्नस्य आत्मनः मोहः अभूत् अर्थात् विशेषदर्शनं नाभूत् इति तत्र तत्र प्रतिपादितं उपपद्यते।

### शास्त्राभ्यासः

गुरुभक्त्या देवभक्त्या च शास्त्रप्रकाशनद्वारा विशेषदर्शनान् मोहः अपसार्यते इति उक्तपद्यस्याऽर्थः बोध्यः। अत्राऽयं निष्कर्षः। विनयपूर्वकेण विद्यावृद्धसंयोगेन शिष्येण विद्याविषये कश्चन प्रकाशः उपलभ्यते, तेन च तर्कस्य सञ्चरणात् प्रियाप्रियाविकारित्वमूलभूतः धृतिभावः, ततः राज्याय अपेक्षिता उचितकार्यकारिणी प्रतिभा च तस्मिन् समुदेति। तया अद्भुतरसद्वारा स लोकानुरागं स्वात्मनि उत्पादयति। तत्मूलकञ्च स्थायि बृहदेकं आदर्शरूपं राज्यसङ्घटनं सुशकं भवति। एतत्सर्वमविदित्वा ज्ञानमदाक्षिप्तसन्मार्गः कश्चित्पुरुषः अन्धो भूत्वा उपवर्णितं अमुं विषयं उपेक्षते तदा तु तस्मिन् गुरुभक्त्यभावेन संप्रसृतः विशेषादर्शनरूपः अन्धकारः दुस्तरो भूत्वा "येषामक्लेशेन स्फुरणं राज्यस्य सुव्यवस्थायै अपेक्षितमासीत्"। तेभ्यः पदार्थेभ्यः दूरं प्रापयति, शक्तिहीनत्वञ्चापादयति। हीनशक्तिकत्वस्य जगति लोके कियन्मूल्यमिति सर्वैर्विदितत्वात् तन्न प्रपञ्च्यते। तद्विषये एतावदेव वक्तव्यम्—

शिवहीनं विष्णुहीनं न वदन्ति नराधमम्।
शक्तिहीनस्तु यो मर्त्यः तं वदन्ति नराधमम्। इति।

**जयमङ्गलाक्रोडपत्रम्**

अतः प्रतिभासमुत्पत्तये अक्लेशेन पदार्थानां प्रातिभसंस्कारोद्बोधाय गुरुसेवां कुर्वद्भिः विद्याभिरुचिभिः शास्त्रमभ्यस्य शक्तिमुपलभ्य लोकानां मनः अद्भुतरस-निर्माणेन वशीक्रियते।[1]

**विद्यावतामसुखम्**

ये पुनरत्र गुरुभक्तिसहचरितं शास्त्राभ्यासं तद्वन्तं वा पुरुषं अलक्ष्मीः प्रायशः वृणोतीति मत्वा निष्फलं विजानन्ति। ते कामं विजानन्तु। किन्तु पूर्वनिर्दिष्टदिशा यैः धृतिभावस्य स्वरूपमनुभूयते ते तु गुरुसेवाविद्ययोः सुव्यवस्थायै जनानुरागसम्पाद-कत्वेन अपेक्षितस्य आचार्यसम्बन्धस्य आत्मनि लाभाय न कथमपि उपर्युक्तं विषय-मुपेक्षन्ते अलक्ष्मीवरणं च दृष्टवा नाऽपि ते विषीदन्ति प्रत्युत शास्त्रसुखनिभृतचेतसः इष्टापतिमेव संवदन्तः तिष्ठन्ति।[2]

तस्माद् गुरुसेवाविद्ययोः यः पौर्वापर्यसम्बन्धः अर्थशास्त्रे उक्तः स राज्येन सहापि अपेक्षितो भवतीति हृदयम्।

**प्रतिभोत्पत्तिं प्रति वृद्धसंयोगस्यान्यथासिद्धत्वम्**

ननु विद्यावृद्ध संयोगेन प्रतिभोत्पत्तिरिति सिद्धान्तितं। परं सा जन्मान्तरार्जित-कर्मवशात् केषुचित्कविषु दृश्यते[3]। किं बहुना जन्मान्धसदृशानामतिमूढानामपि क्रान्तदर्शित्वं वर्णितं वर्तते ( पृ० ३९२ )। इति प्रतिभोत्पत्तिं प्रति विद्यावृद्धसंयोगस्य अन्यथासिद्धत्वं कुतो नाशङ्कनीयम् इति चेन्न।

**वृद्धसंयोगस्यानन्यथासिद्धत्वम्**

अत्र हि पूर्वपक्षे कवित्वं क्रान्तदर्शित्वमुक्तमस्ति तस्य मूलम् अग्निसूक्तस्य व्याख्यान इति कैश्चिन् मन्यते तद्यथा—

---

१ तदुक्तम्—आदो शास्त्रान्धकारे पतित इव ततोऽभ्यासमार्गे चरिष्णुः।
पश्चाद् व्युत्पत्तिदेहल्युपग इव ततः शक्तिवाटी प्रविष्टः॥
नाना शब्दाख्य पुष्पावचयकरणतो वाग्वशीभूतविश्वः।
यत्प्रेमापाङ्गदृष्टया भवति कविवरो भारती सा पुनातु॥ इति।
( वसिष्ठस्मृतौ )

२ तदुक्तम्—नास्माकं कटका न वाजिमुकुटाद्यालङ्क्रिया सत्क्रिया।
नोत्तुङ्गस्तुरगो न कश्चिदनुगो नैवांबरं सुन्दरम्।
किन्तु क्ष्मातलवर्त्यशेषविदुषां साहित्यविद्याजुषाम्।
चेतस्तोषकरी शिरोनतिकरी विद्याऽनवद्यास्ति नः।
न सा सभा यत्र न सन्ति वृद्धाः।
वृद्धा न ते ये न वदन्ति धर्मम्।
धर्मो न वै यत्र च नाऽस्ति सत्यं।
सत्यं न तद् यच्छलेनानुविद्धम्। इति।

३ तदुक्तं—रसगंगारे बालादेस्तौ विनापि केवलान्महापुरुषप्रसादादपि प्रतिभोत्पत्तेः।

## जयमङ्गलाक्रोडपत्रम्
### शक्तिः

अग्निहोता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।
देवो देवेभिरागमत् १।१।१।५

(भा०) होता होमनिष्पादकः कविक्रतुः कविशब्दोऽत्र क्रान्तवचनो न तु मेधाविनाम, क्रतुः प्रज्ञानस्य कर्मणो वा नाम । ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा । इति

किं तु एतद्व्याख्यानदर्शनमात्रेण कवित्वं क्रान्तदर्शित्वाभिन्नमिति तु वचनं न समञ्जसं भाति । यतः नदीवृदध्या उपरितनदेशे सुवृष्टिर्जाता इति ज्ञात्वा सुभिक्षं भविष्यतीत्यनुमानवर्णनपरेषु मेघोन्नत्या भाविवृष्ट्यनुमानवत्सु वा क्रान्तदर्शित्वात् उक्तानुमाने हेत्वाभासाभावाच्च कवित्वं व्यापद्येत । अतः क्रान्तदर्शित्वमात्रेण कवित्वं संपद्यते इति तु न वक्तव्यम् अपितु क्रान्तदर्शित्वेन सह अन्यदपि किञ्चद् वस्तु अस्ति यद्बलात् कान्तदर्शी कविरिति व्यपदिश्यते । तच्च वस्तु "शक्ति"रितिनाम्ना साहित्यिकैः संबोध्यते । सा च यैः कारणकलापैः संभवति तत्र देवप्रसादः न गृहीतः अपि तु काव्यावेक्षणादि ।[1]

मम्मटभट्टेनापि शक्तिं प्रति लोकशास्त्रकाव्याद्यवेक्षणं काव्यज्ञशिक्षणमभ्यसनञ्चेति त्रितयं मिलित्वा एकं समुदितं कारणं भवतीति निर्णीतमस्ति । नह्यत्र मम्मटभट्टेन उक्तेषु कारणकलापेषु देवताप्रसादस्य जन्मान्तरार्जितकर्मणो वा सङ्ग्रहः कृतो वर्तते । नचैवमत्रानुक्तत्वेऽपि रसगङ्गाधरकृता तस्याः कारणत्वमुक्तमेवेति चेन । रसगंगाधरकृता कारणत्वेन देवताप्रसादस्य केषांचित् कवीनां प्रतिभां प्रति कारणत्वे उक्तेऽपि सर्वसाधारण्येन सर्वेषां प्रतिभां प्रति देवताप्रसादस्य जन्मान्यरार्जित कर्मणो वा अचिन्त्यस्यऽतथात्वादेव तमुपेक्ष्य काव्यप्रकाशकृता उक्तकारणकलापस्यैव सङ्ग्रहः कृतः । एवञ्च किरणारणिमणिन्यायेन तत्तद्वस्तुकलापानां प्रतिभां प्रति कारणत्वं कल्पयित्वा रसगङ्गाधर काव्यप्रकाशग्रन्थयोः समन्वये कृते न परस्परं विरोधो भाति । अतएव शक्तिर्निपुणतेति व्याख्याने गोकुलनाथोपाध्यायैः केचिदित्यनेन तथा अभिहितमस्ति[2] ।

---

१ तदुक्तम् काव्यप्रकाशे—

शक्तिर्निपुणता लोकशास्त्र काव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाऽभ्यासात् इति हेतुस्तदुद्भवे ॥ (का० प्र०)

२ गोकुल ना० )

'केचितु काव्यं कवेः प्रवक्तुरेव सहृदयस्यैव वा फलं कवयतीति । तत्र प्रवचने सहृदयत्वस्वरूपे विभावादि परामर्शे च यतनीयम् । तत्र यत्नः कारणमुखेनैव संभवतीत्याशयेन शक्तिरित्यादि कारिकायां कारणगणनमित्याह–अस्येति । स्वतो यत्नो योगस्य प्रवचनस्य परामर्शस्य च कारणकलापं गणयति । यत्र पुंसां प्रवृत्तिरर्थात् कार्यं निष्पादयतीत्यर्थ इत्याहुः । तच्चिन्त्यम्, अस्य कारणमुक्त्वा स्वरूपमाहेत्यग्रिमावतारणे काव्यस्यैवेदं कारणवचनमित्यवगमात् । कवित्वबीजभूतः कवित्वे सङ्ख्यावदर्थककविवदप्रवृत्तौ बीजभूतो निमित्तभूतः संस्कारविशेषो भावनाख्यः

## जयमङ्गलाक्रोडपत्रम्

### पौरुषकर्मापरित्यागः, अदृष्टलाभश्च

न च देवताप्रसाद एव लोकशास्त्रकाव्याद्यवेक्षणादिकारणकलापसङ्ग्रहापेक्षया प्रतिभोद्बोधं प्रति कारणतया सङ्ग्राह्यः इति वाच्यम्।

देवताप्रसादव्याजेन पौरुषकर्मणः परित्यागस्य शास्त्रेषु असम्मतत्वात्। दैवस्य अचिन्त्यत्वाल्लौकिकमेव कर्म कर्तव्यमिति शास्त्रोपदेशस्य उपलब्धत्वात्[1]।

न च तर्हि तावन्मात्रेण अदृष्टस्य आनुकूल्यं कथं लभ्येत इति शङ्क्यम्। प्रतिबन्धकाभावे शास्त्रानुसरणे अदृष्टस्य सदानुकूल्यसम्भवात्। दैववादः केवलं कर्मविघ्नेषु अन्यतमः प्रतिबन्धकत्वेन यदा चकास्ते। तदा दैववादस्य सङ्ग्रहः।

वस्तुतस्तु यः कविः पूर्वजन्मान्तरार्जितकर्मवशात् एतज्जन्मनि प्रतिभां प्रदर्शयति। सोऽपि जन्मान्तरे विद्यावृद्धसंयोगेन शास्त्राभ्यासादि कृतवानेव। इत्येव मन्तव्यम्[2]।

अतः अदृष्टस्यौत्कट्येन एतज्जन्मनि कवितोत्पत्तावपि तां प्रति पूर्वमभिहितस्य शास्त्रादिकारणकलापस्य अन्यथासिद्धत्वं न मन्तव्यम्। तदिदं रसगङ्गाधरकृतैव स्फुटीकृतमस्ति। तस्मात् प्रतिभोत्पत्यर्थं विद्यावृद्धसंयोगोऽपेक्ष्यते[3]।

वृद्धसंयोगपदार्थमाह तत्रेति। (ज० पृ० ३८८) ननु तत्र तत्र मूलकृता प्रकरणयोः सङ्गतिः प्रादर्शि यथा तथा पूर्वप्रकरणस्थान्त्यवाक्येन सह उत्तरप्रकरणस्थस्याद्यवाक्यस्य सङ्गतिः कुतो नोक्ता इति शङ्कां समाधातुमाह तत्र सम्बन्धोपीति।

---

प्रतिभानामा प्रणिधानसहकृते चेतसि यो झटित्युद्बुध्यतेऽक्लिष्टपदपदार्थगोचरः संस्कारः सा प्रतिभा विद्वदादिपदप्रवृत्तिनिमित्तम्। तदुक्तम्—

"मनसि सुसमाधिनि विस्फुरणमनेकधाऽभिधेयस्य।
अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः।" इति।

१ तदुक्तम्—नी० सा० १ सर्गे ज० म० १२ श्लोक

'नय विक्रमसम्पन्नः सूत्थानश्चिन्तयेच्छ्रियम्।'

ज० 'एवं लाभपालनोपायं शास्त्रशरीरमुपक्षिप्य विनयमुपदिदिक्षुराह नयविक्रमसम्पन्न इत्यादि। दैवं मानुषं च कर्म लोकं पालयति। तत्र दैवस्य अचिन्त्यत्वान्मानुषमेव नयशौर्यादिकमास्थाय स्वमण्डले श्रियं चिन्तयेत्। तदप्यनुत्थानशीलस्य नोपपद्यत इति सूत्थानः। तत्र विक्रमान्नयः प्रधानं, तत्पूर्वकस्य विक्रमस्यैकान्ततया फलसाधनत्वात्"। इति।

२ जयमङ्गलायाम्—

उपदेशानदनायोगाद् वासनानुगमादपि।
परयत्नाद् अदृष्टाद्वा सर्वास्सर्वस्य वृत्तयः। इतिपद्यव्याख्याने उक्तमस्ति।

३ अतएवोक्तं—

"अधिगच्छति शास्त्रार्थः स्मरति श्रद्धाति च[1]
यत्कृपालेशमात्रेण नमोऽस्तु गुरवे सदा।," इति

कृतकः [1]स्वाभाविकश्च विनयः[2] । क्रिया हि द्रव्यं[3] विनयति नाद्रव्यम्[4] । शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिविष्टबुद्धिं विद्या[5] विनयति नेतरम् । विद्यानां तु यथास्वं[6] आचार्यप्रामाण्यात् विनयो[7] नियमश्च[8] ॥

## जयमङ्गलाक्रोडपत्रम्

### सङ्गत्यनपेक्षा तदपेक्षा च

**गुणीभूतयोरिति** । (ज० पृ० ३८८) गुणानाञ्च पदार्थत्वात् असम्बन्धः समत्वात्स्यात् इति न्यायात् प्रकरणे अङ्गभूतानां वाक्यानां पारस्परिकसङ्गतिप्रदर्शनस्य अनपेक्षितत्वं बोध्यम् । ननु तर्हि प्रकरणान्यपि अधिकरणस्य अङ्गभूतान्येव सन्ति । महावाक्यार्थे अवान्तरवाक्यार्थवत् । एवं सति प्रकरणयोः सङ्गतिप्रदर्शनमनुचितम् । इत्याह कथमिति । (पृ० ३८८) प्रकरणात् अतिरिक्तत्वस्याधिकरणे अभावात् । प्रकरणसमूहस्यैव अधिकरणरूपत्वात् पूर्वापरप्रकरणयोस्सङ्गतिप्रदर्शनमुचितमिति भावः ।

**'सुप्रयुक्त इति'** (ज० पृ० ३८८) इदं मनूक्त्यभिप्रायेण ( दण्ड प्रकरणे) बोध्यम् । सुप्रयुक्तत्वञ्च दण्डस्य लोकशास्त्रानुगत्वे सति बोध्यम् । तदुक्तम्—

'लोकशास्त्रानुगो ज्ञेयो दण्डोऽनुद्वेजनःश्रिये' । इति । (नी० सा० स० २)

## श्रीमूला

**कृतक** इत्यादि । तत्र विनयः क्रियया अभियोगलक्षणया निर्वृत्तः कृतक इत्येकः । विनापि क्रियां वासनावशात् सिद्धः स्वाभाविक इत्यपरः । यथा हि संस्करणाभियोगः शाणघर्षणादिः द्रव्यं खन्यादिप्रभवं पाषाणादिविशेषं संस्करोति न पुनरद्रव्यं यङ्कमपि शिलादिखण्डम्, तथा विद्याभियोगः स्वतस्सिद्धशुश्रूषादिबुद्धिगुणसम्पन्नमेव जनं संस्करोति न तु तद्रहितम् । बुद्धिगुणाश्च तेऽष्टौ भवन्ति—शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशाख्याः तत्र शुश्रुषा श्रवणार्हेषु

१. **स्वाभाविकश्चेति** । पूर्वकृतशुभकर्मणा ।

२. **क्रियेति** । विद्यावृद्धसंयोगलक्षणा ।

३. **द्रव्यमिति** । द्रव्यं सहजविनयसंयुक्तम् ।

४ **अद्रव्यमिति** । द्रव्यं विनयतीत्यत्रैव नाद्रव्यं विनयतीति सिद्धे पुनर्वचनं द्रव्याद्रव्यपरिग्रहणार्थम् ।

५. **विद्येति** । विद्याचतुष्टयम् ।

६. **यथास्वमिति** । यो यस्या विद्याया उचितो '..... नियमश्च । यथास्वम् ।

७. **विनयइति** । प्रत्युत्थानविनयादिः ।

८. **नियमश्चेति** । ब्रह्मचर्यैकभुक्तादिः ।

## श्रीमूला

श्रोतुमिच्छा, तस्यां सत्यां श्रवणम् आसेवा, ग्रहणं श्रुतार्थज्ञानम्, धारणं गृहीताविस्मरणम् विज्ञानं धारितेष्वर्थेषु साध्यसाधनादिस्वरूपविवेकज्ञानम्, ऊहः शब्दानुक्तस्य लिङ्गेनावगतिः, अपोहो युक्तापेतस्य हानं, तत्त्वाभिनिवेशो वस्तुयाथात्म्यज्ञानम्।

एवं विद्याधिकारिणं तदनधिकारिणं चोक्त्वा विद्याग्रहणकाले शिष्येणाचरणीयमाह— विद्यानां त्विति। विद्यानाम् आचार्यप्रामाण्याद् यस्या विद्याया यो य आचार्य उपदेष्टा तस्य प्रामाण्यात्। तदध्ययनकाले तं तं शिष्यं प्रति धर्मानुशासनप्रभविष्णुत्वात्, यथास्वं तत्तदाचार्यानुशासनानतिक्रमेण विनयः शिक्षणम्, 'आहूतश्चाप्यधीयीत' इत्युक्तप्रकारं, समुदाचारो वा गुर्वागमनोपवेशादौ प्रत्युत्थानानुपवेशादिः, नियमश्च गुरुपरिचरणादिव्रतं च, अर्थाच्छिष्यस्य भवति।

## वैदिकसिद्धान्तसंरक्षिणी

ननु विनयेन विद्यावृद्धसंयोगः तेन च विनय इत्यन्योन्याश्रयः स्यात्। अत आह कृतकः इति। कृतकः शास्त्रज्ञानात्प्रसूतः। स्वाभाविकः जन्मान्तरमूलकः[1]। अस्य शास्त्रनिश्चयं प्रति कारणत्वं बोध्यम्[2]। स्वाभाविकविनयेन कार्यसंभवे पुनर्विद्याग्रहणप्रयुक्तविनयोपयोगित्वं जयमङ्गलाव्याख्यायां स्फुटीकृतम्।

स्वाभाविकस्य विनयस्योपयोगं दर्शयति क्रियेति। क्रिया विद्योपदेशः।[3] द्रव्यम् सहजविनयसम्पन्नम्। तदुक्तं टिप्पण्यां "द्रव्यं सहजविनयसंयुक्तम्" इति। शुश्रूषाद्यष्टबुद्धिगुणसम्पन्नं वा। तदुक्तं जयमङ्गलायाम् "द्रव्यं वक्ष्यमाणगुणमित्यादि" इति। नाद्रव्यमिति। सर्वथा सहजविनयेन बुद्ध्यष्टगुणेन वा यो न सम्पन्नस्तमित्यर्थः। एतेन द्रव्याद्रव्यमपि[4] व्याख्यातं भवति। सहजगुणभावसहजदोषवन्तमिति तदर्थः। तेन द्रव्याद्रव्यमपि क्रिया विनेतुं समर्थेति बोध्यम्। तदुक्तम् जयमङ्गलायाम्।[5] वक्ष्यति च चामुमेवार्थं चाणक्यः राजपुत्रप्रकरणे।[6] अनयोः सहजकृत्रिमविनययोर्विशदं विवेचनं टीकाकोडपत्रे द्रष्टव्यम्। निर्दिष्टाष्टगुणसम्पन्नबुद्धिमत्वरूपं द्रव्यत्वमभिदधाति शुश्रूषेत्यादि। शुश्रूषा श्रोतुमिच्छा श्रवणार्हेषु। तेन दशरूपकेष्वन्यतमस्य प्रहसनस्य

---

१ पूर्वकृतशुभकर्मणा इति - नीतिनिर्णीतिः

२ विनीतस्याध्ययनेन शास्त्रनिश्चयान् मतिसंयोग इति यावत् इति —नीतिसार सर्ग १ प्रक० १

३ विद्यावृद्धसंयोगलक्षणः इति

४ द्रव्यं विनयतीत्यनेनैव नाद्रव्यं विनयतीतिसिद्धे पुनर्वचनं द्रव्याद्रव्यपरिग्रहार्थम्।

५ सहजविनयो द्रव्यं, सहजदोषमद्रव्यम्, सहजगुणदोषो द्रव्याद्रव्यम्। तत्र क्रिया द्रव्यं विनयत्येव सौकर्यात्। अद्रव्यं नैव। दुर्बुद्धेरकर्मण्यत्वात् सौकर्याभावात्। प्रत्याख्यानभावाच्च द्रव्याद्रव्यं यत्नेन विनयति तस्याहार्यबुद्धित्वात्।

६ बुद्धिमानाहार्यबुद्धिर्दुर्बुद्धिरित्यादिना। इति—अध्याय १, अधि० १

## वैदिकसिद्धान्तसंरक्षिणी

व्यावृत्तिर्बोध्या। श्रवणं आसेवेति जयमङ्गलायां नीतिसार व्याख्यायाम् ( सर्ग-४, प्रक० ७ ) विद्या इव भक्तिरपि तेनैवोपलभ्यते इत्यपि आसेवात्मकस्य श्रवणस्य फलं बोध्यम्[1]। गुरुप्रसादानुकूलो व्यापार इति तदर्थः। अत्रासेवात्मकं श्रवणं यदुक्तं तत् शुचित्वाद्यङ्गकलापविशिष्टं बोध्यम्। शुचित्वादिकं विना सेवया गुरुप्रसादस्य भक्तेर्वा असम्भवात्। किञ्च गुरुप्रसादानुकूलोव्यापारः न गुरुचरणसंवाहनादिमात्रमपेक्षितम् अपितु अर्थज्ञानमपि बोध्यं "सतोनूचानचेष्टितैः" इति नीतिसारे अभिधानात्। (सर्ग ३ प्रक० ६)

### शुश्रूषा

ननु शब्दःश्रूयते अर्थस्तु न श्रूयते इत्यर्थस्य कथं श्रवणं स्यात्। तन्न। श्रवणंकीर्तनमित्यादौ श्रुशब्दार्थस्य अर्थज्ञानानुकूलव्यापारपरतया व्याख्यातत्वात्।[2] ग्रहणमवधारणम्[3]। इदमित्थमेवेति निश्चय इति यावत्। धारणमविस्मरणम्। विज्ञानं विवेकज्ञानम्। विवेकश्च शास्त्रेषु निर्दिष्टविधिस्वरूपादिविषये बोध्यः। ननु श्रवणविज्ञानयोः को भेदः ? उच्यते। श्रवणात्मकेन बुद्धिगुणेन उत्पत्तिविधिर्ज्ञायते। तत्परिकरेषु अपेक्षितो विनियोगविधिरधिकारविधिश्च विज्ञानेन। ऊहः विधिस्थले सञ्जायमानस्तर्कः। निषेधस्थले च जायमानः अपोहः।[4] अथवा प्रमाणविषयकः प्रमेयविषयकश्च तर्कः ऊहापोहः क्रमादुच्यते। तत्वज्ञानमिति। तत्वाभिनिविष्टा बुद्धिः कर्तव्यविषयिणी सोत्साहसत्वप्रचुरा बुद्धिः। विद्या[5] ज्ञानविद्या कर्मविद्या च वक्ष्यमाणाद्रव्यं विनयति, तया सम्यक् करणीयवर्जनीयविधानात्। तेन ज्ञानक्रियावैचक्षण्यं प्राप्नोति इत्यर्थः, विनयस्य टीकायां तथा अग्रे व्याख्यानात्। यद्यपि बुद्धेरष्टगुणक्रमविषये नीतिसारे धारणानन्तरमूहापोहौ पठितौ। अत्र विज्ञानं पठितं तथापि नीतिसारस्य एतदर्थशास्त्रमूलकत्वात् तदीयपद्ये मूलानुसारेण, बुद्धेरष्ट गुणानां यथाक्रममुत्पद्यमानत्वेन धारणानन्तरमेव विज्ञानं द्रष्टव्यम्। तत्र कुतो नेवं

---

१--तदुक्तं भक्तिव्याख्याने हरिभक्तिरसामृतसिन्धौ—

य: केनाप्यतिभाग्येन जातश्रद्धोस्य सेवते। इति।

टीका--अतिभाग्येन महत्सङ्गादिजातसंस्कारविशेषेण इति। (पूर्वविभागे ९, लहरी)

२—विष्णोः सगुणस्य वा निर्गुणस्य वा शब्देन ज्ञानं तादृशविष्णुप्रतिपादकशब्दस्य श्रोत्रेण सहर्षं च श्रवणम्।—सिद्धान्तविन्दौन्यायरत्नावली श्लोक ८

तथा तत्रैव नारायण्याम्—तत्र श्रवणं भगवद्विषयकशब्दस्य श्रोत्रेण ग्रहणम्, तदर्थबोधश्च —सिद्धान्तविन्दु नारायणी श्लोक ८

३—श्रुतानामर्थानामव धारणं ग्रहणं।—जयमङ्गला अर्थ अध्याय ५

४—तर्काख्यौ प्रत्ययावूहापोहौ विधिनिषेधयोः—सङ्गीतरत्नाकरमतिभावनिरूपणे—

५—विद्याचतुष्टयं, इत्यर्थो व्याख्यातः।

## वैदिकसिद्धान्तसंरक्षिणी

पठितमिति सु श्लोकानुरोधात्तत्र न पठितमिति ग्रन्थेन जयमङ्गलाकृतोत्तरं अभ्यधायि तत्तथैव मन्तव्यम् । अयमत्र निष्कर्षः—ग्रहणं अवधारणं तद्वति तत्प्रकारकं बोध्यम् जयमङ्गलावाक्यप्रामाण्यात् । तत्वाभिनिवेशश्च इदमिष्टसाधनमेव, इदमेव इष्टसाधनं इत्याकारकम्[१] । तदपि अप्रामाण्यज्ञानानास्कन्दितं बोध्यम्[२] । नेतरं । (पृ० ६४) नाद्रव्यम् सहजदोषसम्पन्नं । दुर्बुद्धि इति यावत् । तथा च बुद्धिमान् साहजिकविनियसम्पन्नः अधीती पुरुषः विनीतो जितेन्द्रियः जनानुरागपात्रम् भूत्वा महता हर्षेण प्रियश्रुतिजावेगेन अद्भुतेन जनताद्वारा अपेक्षितवस्तु अनुभावमुखेन स्वयंप्रेरणया लभते।[३] इदं सर्वमभिप्रेत्य मनुनापि स्वाध्यायशीलस्य पयोदध्यादिकुल्यालाभः इत्युक्तम्[४] तत् उपपन्नं भवति । विद्यासु निर्दिष्टा विधयः अनेके सन्ति तेषु केषां परिग्रहः केषां वा नेति निर्णयमन्तरा यथावदनुष्ठानं दुष्करं स्यात् अतस्तद् व्यवस्थापयितुमाह विद्यानामिति। यथा स्वं यथाधिकारम् । विनयः इष्टसाधनताकमनुष्ठानम् । नियमश्च आचार्यप्रामाण्यान् निर्णीतो भवति । अर्थात् आचार्यः शिष्यहिताधानार्थं दृष्टं यद्वक्ति तदेव तेन राज्ञा अनुष्ठेयम् । आचार्यश्च मनुना व्याख्यातः सोऽत्रानुसन्धेयः ।[५] अथवा आचार्यपदेन वंशवृत्तविद्याभिजनवृद्धो विवक्षणीयः (नीतिवाक्यामृतं)

## जयमङ्गला

स विनयो द्विविधः—कृतकः स्वाभाविकश्च । तत्र पूर्वो वक्ष्यमाणः[७]विपाकजस्तु[८] बीजमात्रम् भवन्नपि न कार्यानुष्ठानयोग्यः। यथा जातिविशिष्टमपि सुवर्णं

---

१ यथा धर्मार्थहेतवो विद्या एव नाविद्याः विद्याश्च पृथक् पृथगसाधारणप्रयोजनत्वाच्चतस्रः एव । —अर्थशास्त्र जयमंगला अध्याय ५

२ तदेवोक्तं गङ्गेशोपाध्यायैः- इदमित्थमेवेत्यवधारणस्य निष्कंपप्रवृत्यङ्गस्य-इति ।
माधुरी टीका—इत्थमेवेष्टसाधनमेव । प्रामाण्यनिश्चयाधीनत्वादिति । प्रामाण्यसंशय निवृत्तिद्वारा प्रामाण्यनिश्चयाधीनत्वादित्यर्थः । तथाचेष्टसाधनतार्थावधारणंप्रति पूर्वोत्पन्नेष्टसाधनतादिनिश्चये प्रामाण्याभावज्ञानस्य प्रतिवन्धकतया तद्व्यावृत्तये क्वचित् प्रामाण्य निश्चयोऽपेक्षित इति भावः । इति--माधुरी प्रामाण्यवादः ।

३ विद्या ददाति विनयं विनयाद्याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम् ।। इति

४ यः स्वाध्यायमधीतेऽब्दं विधिना नियतः शुचिः ।
तस्य नित्यं क्षरत्येव पयो दधि घृतं मधु ।। मनुः अ० २।१०७

५ उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ।। मनुः अध्याय १।१४०

६—वंशवृत्तविद्याभिजनस्य वृद्धाः राज्ञामुपाध्यायाः—विद्योद्देश

अशुद्धम्
(७) तत्र पूर्वोवक्ष्यमाण
(८) विवाकजः स तु

## जयमङ्गला

संस्कृतमेव भूषणाय। संस्कारोऽपि सुवर्णस्यैव न लोहस्येति दर्शयन्नाह क्रिया हीत्यादि। क्रिया विद्योपदेशः। सा द्रव्यं वक्ष्यमाणगुणं विनयति नाद्रव्यमिति। अद्रव्यमपि विनयेद् यत्नेन, द्रव्यन्तु सौकर्येणेत्यस्य विनियोग इत्यर्थः। अथवा सहजविनयो द्रव्यं सहजदोषमद्रव्यम्। सहजगुणदोषो द्रव्याद्रव्यम् तत्र क्रिया द्रव्यं विनयत्येव सौकर्यात्। अद्रव्यं नैव दुर्बुद्धेरकमण्यत्वात् सौकर्याभावात् प्रत्याख्यानभावाच्च[1]। द्रव्याद्रव्यं यत्नेन विनयति तस्याहार्यबुद्धित्वात्। कः पुनर्द्रव्यमित्याह—शुश्रूषेत्यादि। शुश्रुषा श्रवणार्हेषु श्रोतुमिच्छा। तस्यां श्रवणम् आसेवा। तस्मिन् सति श्रुतानामर्थानामवधारणं ग्रहणम्। गृहीतानान्धारणम् अविस्मरणम्। धारितानां विविधसाध्यसाधनस्वरूपज्ञानादिभिर्विवेकज्ञानं विज्ञानम्। विज्ञातानामर्थप्राप्तस्योपादानम् ऊहः, यथा द्रव्याद्रव्यं यत्नसाध्यमिति। अनिष्टपरित्यागोऽपोहः, यथा अद्रव्यमिति। वस्तुस्वभावनिर्णयस्तत्वाभिनिवेशः, यथा धर्मार्थहेतवो विद्या एव नाविद्याः, विद्याश्च पृथक्पृथगसाधारण प्रयोजनत्वात् चतस्र एवेति। एतेषु सर्वेष्वभिनिविष्टबुद्धि सततावस्थितबुद्धि द्रव्यं विनयति। का सा क्रियेत्याह विद्येति। विद्या आन्वीक्षिकीत्याद्या, कर्मविद्या च वक्ष्यमाणोपदिश्यमाना। नेतरमद्रव्यं विनयति।

विद्याग्रहणार्थं वृद्धसम्प्रयोगः। तद्ग्रहणं च विनयनियमाभ्यां विना न भवतीत्याह—विद्यानान्त्विति। यथास्वमिति। यो यस्यां विद्यायां विनयः प्रत्युत्थानपरिचर्यादिः, नियमो व्रतं दण्डमेखलादिधारणादि, स आचार्यप्रामाण्यात् स्यात्। यमाचार्या विद्यावृद्धा आहुः सोऽनुष्ठेय इति। अतस्तयोरत्र अनभिधानं विद्यानामानन्त्यात्। पुर्वाचार्यैस्तु उभयमपि स्वशास्त्रे विहितम्।

## जयमङ्गलाक्रोडपत्रम्

### विनयद्वयस्य परिचयः

**विनयो द्विविधः** इति ( ज० पृ० ३९७ ) ननु सहजकृतकौ विनयौ कुत्र कीदृशेन स्वरूपेण वर्तेते इति कथमवगन्तव्यम् ? इति चेदेवम्। ये किल स्वभावतः अनधीतावस्थायामपि असतः पारतन्त्र्यं स्वीकर्तुं ह्रियन्ते। तेषु स्वाभाविको विनयः अस्ति। ये च पुनः विद्यामधिगम्य स्थैर्यप्रतिपत्त्यसंमोहान् अनुभूय यस्यां कस्यामपि स्थितौ आत्मनः स्वातन्त्र्यं स्थैर्येण स्थिरीकुर्वन्तः सन्ति। तेषु कृतको विनयः इत्येव मन्तव्यम्। न च पारतन्त्र्ये को दोषः ? इति शङ्क्यम्, परतन्त्रतया तन्मूलकस्य जाड्यस्य परिचयसम्भवात्। यः किल जड़ो भवति कार्याकार्यकुशलश्च

---

१ अशुद्धम्
प्रत्याख्यानाभावाच्च

२ शुश्रूषा श्रोतुम्
इयं पाठशुद्धिः नीतिसारव्याख्यानमाधारीकृत्य कृता ज्ञेया।

## जयमङ्गलाक्रोडपत्रम्

सः परतन्त्रो भवत्येव पशुवत्। किं बहुना स्वतन्त्रतया विचरन्तोऽपि पशवः यदा लोहपञ्जरे अवरुद्धा भवन्ति तदा तन्महिम्ना सहजगत्या उड्डीयनसंस्कारस्य उद्‌बुद्धस्यापि विलोपो भवति यतः ते उड्डयनमपि क्षणपर्यन्तं विस्मरन्ति इत्यनुभवसिद्धम्। एवमेव मनुष्येषु यदि जाड्यं प्रसृतं भवेत् तर्हि ते स्वातन्त्र्येण किमपि कार्यं कर्तुमशक्नुवानाः स्वामिना यावन्मात्रं दीयते तावन्मात्रम् गृहीत्वा तत्सुखनिभृतचेतसः भवन्ति। न किमपि स्वातन्त्र्येण स्थातुं गन्तुं वक्तुं वा अर्हन्ति सोयं पारतन्त्र्ये महान्दोषः[1]।

अतः कवयः स्वस्मिन् वर्तमानस्य जाड्यस्य हानाय स्वातन्त्र्यस्य संरक्षणाय सरस्वतीप्रसादं प्रार्थयन्ते या कुन्देन्द्वित्यादिना[2]।

एतल्लाभायैव च अन्तेवासिभिः यस्य प्रसादात् सरस्वती उपास्यते सः गुरुरपि संसेव्यत्वेन परिगृह्यते। संसेवितश्च गुरुः स्ववचनमहिम्ना शिष्यं श्रवणद्वारा बोधयति। तदिदं श्रवणं येन नोपलब्धं सः चिन्तनमननादिकं किमपि कर्तुं न शक्नुयादितिकृत्वा नवविधभक्तिषु आदिमं साधनं श्रवणभक्तिः अस्ति इति सिद्धान्तः भागवते निरूपितः। एवञ्च मननादिभक्तिं प्रति श्रवणभक्तिमतएव अधिकारित्वमस्तीत्यायातम्[3]।

न च सरस्वतिसेवामात्रेण स्वतन्त्रतया जीवनमाकाङ्क्षमाणः किं सर्वं लब्धुम् शक्नुयात्[4]? इति शङ्क्यम, ज्ञानरूपायाः तस्याः साक्षिरूपिण्याः परमेश्वरस्वरूपत्वात्, यस्य परमेश्वरः सखा वर्तते। तस्य किं दुर्लभं। अतस्तत्प्रसादः अस्माभिः आकाङ्क्षितव्यः। यस्य एवंविधः संस्कारः ईश्वरप्रसादप्राप्तिं प्रति स्वल्पमात्रयाऽपि जन्मतः उद्‌बुद्धो वर्तते। तस्यैव साहजिको विनयः। तदिदं प्राक् प्रपञ्चितमस्माभिः। तत एव द्रष्टव्यम्। (३ अध्याये वै०सि०सं० पृ० १९६) अत्र तु इदमेव वक्तव्यं। केवलं भगवान् स्वप्रसादसमर्पणाय भक्तस्य एकाग्रतां परीक्षितुं तथाविधां परिस्थितिं निर्माति

---

१ जाड्यं विप्रतिपत्तिः स्यात् सर्वकार्येषु सर्वदा।
प्रियाप्रियश्रुतैः तत्तद्दर्शनैर्व्याधिभिर्भवेत्।
तूष्णीमप्रतिभा चाक्ष्णोरनिमेषोऽनवेक्षणम्॥
अभाषण पारवश्यं एतैर्जाड्यं निरूप्यते॥

२ या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता।
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना॥
या ब्रह्माऽच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता।
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा॥' इति।

३ श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनं।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्। इति।

न्यायरत्नावल्याम् ''श्रवणदेरुक्तज्ञानजननद्वारा श्रवणाद्यनुष्ठानमधीतशास्त्रस्य फलम्, तत्प्राप्तौ सत्यामधीतमुत्तमं मन्ये, तदप्राप्तौ गुणमात्ररूपमपि तन्नोत्तमम् तादृशज्ञानरूपस्य श्रवणस्य कीर्तनहेतुत्वात्तदाह।

## जयमङ्गलाक्रोडपत्रम्

यत्रोपासकः एकाग्रतां प्रकाशयेत्। नन्वेवमपि सर्वविधं स्वातन्त्र्यं मनुष्येषु वर्तते इति यद्युच्यते तर्हि प्राणिमात्रस्यैव अनुकरणं कर्तुं मनुष्यः कुतो न पारयति इति-चेत्पारयत्येव। यस्य एकाग्रता वर्तते सः गुरुसेवया गुरुमीश्वरमभिमुखीकृत्य आत्मनि सुप्ततया स्थितान् सर्वविधानपि संस्कारानुद्बोध्य यस्य कस्यापि पशुवर्गस्य अनुकृतिं कर्तुं सर्वथा भवत्येव। पशुवर्गस्तु न तथा। इत्येवं शारीरविज्ञानवादिभिः सिद्धान्तितत्वात्। तदुक्तं प्रत्यक्ष शारीरके तत्रैव द्रष्टव्यम्।

### साहजिकविनयदर्शनम्

ननु भारतीयराजनीतौ अपेक्षितः साहजिको विनयगुणः उपर्युक्तैकाग्रता-भूमिकासहचरितः ईश्वरप्रसादोपचितः कुत्र दृश्यते ? इति चेत् ये शुद्धसंस्कारसंस्कृत-शरीरपिण्डाः कुलीनाः भवन्ति। तेष्वेव दृश्यते इति प्रागुक्तमत्र। स्मर्तव्यम्(पृ० २०६ त)

### सहज विनयस्यापेक्षणीयता

यदि शुद्धकुलीनाः न स्युः तर्हि साहजिकविनयसिद्धमेकाग्रताभूमिकाविभूषितं जन्म दुर्लभमेव स्यात्। यच्चैतद्विधं जन्म प्राप्तं तथाविधमेव वारं वारं पुनः प्राप्स्यते एव इत्यपि नावगन्तव्यम्। यत्प्राप्तं तस्य दुर्लभत्वात् अतस्तत् स्वातन्त्र्य-प्राप्तये विनियोजनीयमिति भावः। तदुक्तम्—

'एतद्धि दुर्लभतरं लोके जन्म यदीदृशम्'। (भ० गीता) इति।

अतएवास्य उपर्युक्तगुणसम्पन्नस्य जन्मतः साहजिकी उत्पत्तिः कुलीनेषु शुचिषु भवति[1] तेनैव राज्यस्य दुर्घटकार्यकरणे जनानुरागसम्पादने च निर्वाहात् अतः भारतीयराजनीत्या साहजिकविनयलाभार्थं येषां कुलीनत्वं काम्यते ते महात्मानः किं स्वरूपाः इति टिप्पणी निर्दिष्टपद्येन स्फुटी भवति[2]।

### सहजविनयोपेक्षायां दोषः

यदि कश्चित् साहजिकविनयमन्तरा स्वार्थसिद्धये विनयलाभाय परिश्राम्येत् भवतु तत्कामं। तथापि सः दृढस्य अप्रामाण्यज्ञानानास्कन्दितस्याभिनिवेशस्याभावात् सम्पत्तौ च विपत्तौ चोभयत्राऽपि एकरूपतया दार्ढ्येन स्वकर्तव्यांशे अवतिष्ठेत् इत्येवं-आश्वासः तं प्रतिनास्ति इति प्रागभिहितमस्ति (पृ० २१०)। अतः साहजिकस्य विनयस्य अभिनिवेशगुणसहितस्य सत्वमावश्यकम्। तदिदमुक्तं शृङ्गारप्रकाशे भोजराजकृते[3] द्रष्टव्यम्।

---

१ 'शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते।
योगिनां दरिद्राणामिति।

२ 'विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम्॥' इति

३ सत्वात्मनाममलधर्मविशेषजन्मा
जन्मान्तरानुभववासनयावतीर्णः।—

## जयमङ्गलाक्रोडपत्रम्

### अद्रव्ये न कृतकविनयः

सूक्ष्मेक्षिकया विचार्यमाणे यस्य साहजिको विनयो नास्ति सः परिश्रम्य महता प्रयासेन कृतकं विनयं प्राप्तुं शक्नोति इति यदुच्यते तदपि चिन्त्यते। स्वभावतः यत्र विनयो नाऽस्ति सः किंस्वभावः इति चिन्तायां अकरुणः परधने परयोषिति वा स्पृहादिगुणसम्पन्न एव स्यात्[१]। इत्येव वक्तव्यम्। अन्यथा तु साहजिकविनय एव आपद्येत।

एवंभूतः अकरुणत्वादिगुणसम्पन्नः शुश्रूषादिबुद्धिगुणेषु अनधिकारी मूलस्थ द्रव्यनिर्देशानुसारेण द्रव्यपदवाच्यो न भवति अपितु अद्रव्यपदव्यपदेश्यः भवति। तस्य व्यावहारिकं स्वरूपं पुनः कया वाण्या प्रदर्शितं भवतीति काव्येन प्रबोधचन्द्रोदयेन वा गम्यते[२]।

अतः सत्वगुणस्य उदयः भारतीयराजनीत्या कुलीनेषु संस्थापितः। तस्यैव-प्रभावः यत् परराष्ट्रस्य आक्रमणसमये महद्भिर्विद्वद्भिः कुलीनैः तत्त्वे अभिनिवेशं रक्षितवद्भिः गीतगोविन्द, गीता, नीतिसारादीनि पुस्तकानि हृदये सङ्गोपनपुरसरं देशान्तरे नीत्वा स्थापितानीति श्रूयते। तथा ऐहिकप्रयोजनालाभेऽपि स्वस्व कर्तव्येषु सहजविनयप्रयुक्तेन कृतकविनयेनाभिमानः विकल्पप्रत्यय एव फलम्। तदाहुः—

'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति।

मूलकृतापि साहजिकं विनयस्य स्वरूपं यत्र दृश्यते तस्यैव पुनः स्थिरीकरणं विद्यया क्रियते इति हेतुना अत्र विनयद्वैविध्यं निर्दिष्टम्। इत्यलमतिविस्तरेण।

**तत्र पूर्वः**—(ज० पृ० ३९८) इति। कृतक इत्यर्थः। तस्य स्वरूपमाह वक्ष्यमाण इति। तत्त्वञ्च—शुश्रूषेत्यादिबुद्धिलक्षणोक्तं बोध्यम्।

---

सर्वात्मसम्पदुदयातिशयैकहेतुः।
जागर्ति कोऽपि हृदि मानमयो विकारः।
आत्मस्थितं गुणविशेषमलङ्कृतस्य।
शृङ्गारमाहुरिह जीवितमात्मयोनेः।
तस्यात्मशक्तिरसनीयतया रसत्वम्।
रत्यादिभूमनि पुनर्वितथा रसोक्तिः। इति।

१ तदुक्तम्—

अकरुणत्वमकारणविग्रहः, परधने परयोषिति स्पृहा।
सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम्॥ इति।

तद्यथा—

माता केऽयं पिशाची क इव हि जनको भ्रातरः केऽत्र कीटाः।
वध्योऽयं बन्धुवर्गो निखिलविटसुहृच्चेष्टिता ज्ञातयोऽमी॥
आगर्भं यावदेषां कुलमिदमखिलं नैव निःशेषयामि।
स्फूर्जन्तः क्रोधवन्हेर्न दधाति विरतिं तावदङ्गे स्फुलिङ्गाः॥ इति।

## जयमङ्गलाक्रोडपत्रम्

### संस्कारोद्बोधनोपायः

ननु कुलीनानां साहजिकविनयस्य उपयोगित्वे स्थितेऽपि अद्य तथाविध संस्कारवन्तः जनाः न दृश्यन्ते। अतः ते पुनरपि कथं सुलभा भविष्यन्ति इति चेत्। इदमेव प्रकरणम् उत्तरत्वेन अनुसन्धेयम्। अत्र हि तथाविधापेक्षितसंस्कारवतां लाभाय अभ्यर्हिता योजना शिक्षाक्रमनिरूपणावसरे निर्दिष्टा मूलकृता। सा प्रचारणीया यथाक्रमं यथास्थानमस्मिन्नेव प्रकरणे अभिधास्यते। तामनुरुध्यैव प्राच्यैः संस्कारजनकापेक्षात्मकं ज्ञानं यथा भवेत् तथा प्रचार्यते स्म। पुनः तत्साफल्याय अदृष्टमपि विद्याव्रतेन संपादनीयम्। तच्च चैत्रशुक्लप्रतिपदि आरम्भणीयत्वेनोक्तं धर्मशास्त्रे[1] तत्रैव द्रष्टव्यम्।

---

१ तथाहि—जयसिंहकल्पद्रुमे विद्याव्रतप्रकरणे—
"अथास्यामेवारभ्यं विष्णुधर्मोत्तरोक्तं विद्याव्रतम्।
मार्कण्डेय उवाच—

अष्टपत्रन्तु कमलं विन्यसेद्वर्णकैः शुभैः।
ब्रह्माणं कर्णिकायां तु तस्य संपूजयेद्विभुम्॥
ऋग्वेदं पूर्वपत्रे तु यजुर्वेदन्तु दक्षिणे।
पश्चिमे सामवेदन्तु उत्तरेऽथर्वणं तथा॥
आग्नेये च तथाङ्गानि धर्मशास्त्राणि नैरृते।
पुराणञ्चैव वायव्ये ऐशान्ये न्यायविस्तरम्॥
एवं विन्यस्य धर्मज्ञः सोपवासस्तु पूजयेत्।
चैत्रशुक्लमथारभ्य सोपवासो जितेन्द्रियः॥
सदा प्रतिपदं प्राप्य शुक्लपक्षस्य यादव।
संवत्सरं महाभाग शुक्लगन्धानुलेपनैः॥
भूरिणा परमान्नेन धूपदीपैरतन्द्रितः।
संवत्सरान्ते मां दद्याद्व्रते चीर्णे नरोत्तम॥
इदं व्रतं यस्तु करोति राजन् स वेदवित्स्याद्भुवि धर्मनिष्ठः।
कृत्वा तदा द्वादशवत्सराणि विरिञ्चलोकं पुरुषः प्रयाति॥

इति विद्याप्रतिपद्व्रतम्। अस्यामेव गरुडपुराणोक्तं विद्याव्रतान्तरम्।
सनत्कुमार उवाच—

अथ त्वं प्रतिपत्कृत्यं शृणु संपत्करं व्रतम्।
यत्कुर्वाणः श्रियं विन्देद्दुर्लभां मानवैरिह॥
शालितण्डुलसंसिद्धे मण्डले चतुरस्रके।
श्रीशम् श्रियमथो ब्रह्म पूजयेत्सपुरःसरम्॥

## जयमङ्गलाक्रोडपत्रम्

**विपाकजस्त्विति** (ज० पृ० ३९७) जन्मान्तरीय सत्कर्मभव इत्यर्थः ।

**संस्कारोपीति** (ज० पृ० ३९८) ननु तर्हि तंस्कार एव विद्याजनितः उपादीयताम् किं जात्या ? तत्र आह संस्कारोपीति ।

### शास्त्रस्योपादेयत

( **क्रियेति** ज० पृ० ३९८) ननु सहजविनीतः यद् अभ्यूहति तत् सत्यं स्यादेव एवञ्च किमिति विद्योपादानेनेति चेन्न । साधवो हि महत्मानः शास्त्राभ्यासम-

---

अप्रच्छन्नदलैः पद्मैरयुतैस्तं प्रपूजयेत् ।
सहस्रैर्वा यथायोगं पयसा पायसेन च ॥
ततश्च विधिनाऽभ्यर्च्य पार्श्वे देवीं सरस्वतीम् ।
अग्रतः पूजयेदिन्दुं गुरुं पश्चादनन्यधीः ॥
परिवार वियोगेन तांस्तु तत्कारयेदथ ।
(प्रार्थनामन्त्रः)—'मम विद्यां प्रदिशतु देवो वागीश्वरो हरिः ॥
विद्याधिदैवतं देवी विद्या दिशतु मे दश ।
सरस्वती प्रदिशतु वागृद्धिमतिशायिनीम् ॥
सितांशुरपि सपुष्टिं सर्वभोगप्रपूरणीम् ।
पूजा तु प्रणवादिनमोन्तैर्नाममन्त्रैरेव कर्तव्या ॥
इत्येवं कारयेत्साध्यं प्रसन्नः पूजितो गुरुः ।
विधिना चोपवासं तु कारयेन्नियमान्वितम् ॥
समभ्यर्च्य द्वितीयायां देवदेवं श्रियः पतिम् ।
भुञ्जीत पायसान्नेन शुचिराचम्य सन्निधौ ॥
आचार्याय वरं दत्वा कुर्यात् सुप्रीणनं पुनः ।
अनधीतमनारब्धं तदानीमारभेत ह ॥
विद्याव्रतपदं नित्यं गुरुं दैवतमित्यपि ।
तन्मुखाद्धि तदा तस्य निःश्रेयससमागमः ॥
सदा तदुक्तकारी स्यान्नस्यात्तच्छासनातिगः ।
तिष्ठेत्तिष्ठत्सु गुरुषु नचासीत तदग्रतः ॥
न शयीत तदासने कुर्वीत वचनान्यपि ।
न लङ्घयीत वचनं गुरोः कृत्ये यतेत च ॥
निवेद्य गुरवे सर्वं कुर्यादादौ हिताहितम् ।
यशश्च विपुलं लब्ध्वा सदाचारप्रवर्तनम् ॥
पुत्रपौत्रश्रिया जुष्टः पुण्याङ्गतिमवाप्नुयात् ।
एवं समापयेद्विद्वान् विद्याव्रतमुदारधीः ॥

## जयमङ्गलाक्रोडपत्रम्

न्तराऽपि अभ्यूहन्ति इत्यत्र न विवादः। परं ते तद् अभ्यूहितं तावत्पर्यन्तं साधुत्वेन न मन्यन्ते यावत्पर्यन्तं तद्विषयमधिकृत्य शास्त्रेषु वचनोपलब्धिः न स्यात्। तदुपलब्धि यावत् शास्त्रमदृष्ट्वैव विपाकवशात् अभ्यूहितेऽपि विषये अप्रामाण्यादिशङ्कायाः जागरूकत्वात्। तथा चोक्तम्।

'आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्।
बलवदपि हि शिक्षितानां आत्मन्यप्रत्ययं चेतः।। इति। (शा कुन्तलं ना०)

**'द्रव्यमिति'**। (ज०पृ० ३१८) द्रव्यत्वञ्च शुश्रूषादिगुणवत्वम्। तदाह वक्ष्यमाणेत्यादि।

अत्र द्रव्याद्रव्यभेदः उक्तः तस्य स्वरूपं राजपुत्ररक्षणप्रकरणे कौटिल्येनोक्तमनुमन्तव्यम्। तदुक्तम्—"बुद्धिमान् आहार्यबुद्धिः दुर्बुद्धिश्चेति पुत्रविशेषाः। शिष्यमाणौ धर्मार्थावुपलभते चानुतिष्ठति च बुद्धिमान्। उपलभमानो नानुतिष्ठति आहार्यबुद्धिः। आपायनित्यो धर्मार्थद्वेषी चेति दुर्बुद्धिः" इति। अर्थात् बुद्धिमान् द्रव्यं, आहार्यबुद्धिः द्रव्याद्रव्यं, दुर्बुद्धिः अद्रव्यमिति विवेकः।

**'विनयेति'** (ज०पृ० ३९८) यस्य पुत्रः शुश्रूषाद्यष्टगुणसम्पन्नः शिष्यमाणः धर्मार्थौ उपलभते अनुतिष्ठति च। तस्य जीवनं सुखकरं सुखकरेषु तथाविधस्य पठितत्वात्। तदुक्तं—

आयुष्यमानृण्यमविप्रवासः पुत्रश्च वश्यः। इति

**द्रव्याद्रव्यमिति** (ज०पृ० ३९८) द्रव्यस्य स्वतः सिद्धशुश्रूषायाः विनयफलं वक्ष्यति। अद्रव्यं न तु विनयाधानयोग्यम्। द्रव्याद्रव्यं तु रामाद्यनुकार्याणामभिनयेन यथा सामाजिकेषु रसः सञ्चार्यते तथा मतिभावः अनुभावैः विदग्धव्यनहारादिभिः व्यञ्जनजनितबोधमहिम्ना साधारणीकरणव्यापारेण सङ्क्रामयितुं शक्यः। तद्द्वारा द्रव्याद्रव्येषु शुश्रूषादि प्रापयितुं शक्यते इति भावः। शुश्रूषादीनां स्वरूपमाह शुश्रूषेत्यादि।

**स्वरूपज्ञानादिभिः** (ज० पृ० ३९८) स्वरूपमखण्डोपाधिः। स च परिष्कृतेन साध्यसाधनभावेन यादृशं साध्यतायाः साधनतायावाऽच्छेदकं ज्ञातं भवति तद्बोध्यम्। तेन बुद्धेरष्टगुणेषु अन्तर्गतेन अर्थविज्ञानगुणेन सम्पन्नः लक्ष्यलक्षणगुणज्ञानसम्पन्नो भवतीति। एतदवस्थायां विज्ञानगुणवतःउत्तमत्वमनुमन्तव्यम् तदुद्धृतम्—उपाध्यायनिरपेक्षातः (१६४)

बुद्धेः अष्टसु गुणेषु पञ्च शुश्रूषाश्रवणग्रहणधारणविज्ञानगुणाः विजिगीषोः विशेषतो विजिगीषावस्थायां बोध्याः। यस्य विजिगीषा नाऽस्ति तथाविधेनापि राजपुत्रेण आत्मनि जनानुरागसम्पादनयोग्यत्वार्थं द्रव्यत्वस्य समन्वयार्थञ्च उक्तपञ्च गुणवत्वं साधनीयम्। अथ जनानुरागाय अपेक्षितान् बुद्धेरवशिष्टान् गुणानाह

## जयमङ्गलाक्रोडपत्रम्

विज्ञातानामित्यादि। (ज० पृ० ३९८) यः किल ऊहापोहयोः समर्थो भवति स विजिगीषावस्थातः उपरितनीमवस्थामारोहति। अन्यथा तु विद्या उपलब्धाऽपि विवादाय पर्यवस्यति[1]। अतएव यः विवेककुशलः ज्ञानस्य पिपासुः स एव धर्मज्ञानाधिकारीत्युक्तम्[2]।

न च विवेकशक्तिमप्राप्तस्याऽपि अर्थकामासक्तिः दूरे संभवितुमर्हतीति वाच्यम्। अशक्तत्वात्[3]।

**वस्तुस्वभाव इति** (ज० पृ० ३९८) मिथ्याभिनिवेशस्य परित्यागपूर्वकम् कृतिसाध्यं बलवदनिष्ठाननुबन्धि हितसाधनं यत्कर्तव्यं तत्र सोत्साहा बुद्धिरित्यर्थः। एवंरीत्या यस्य विवेको जागर्ति विजिगीषा च व्यपैति स बुद्धिमानित्युच्यते। तदाहुः—

'एतद्बुद्ध्वा बुद्धिमान् स्यात्' इति। (गीता)[4]

अन्यत्र तु 'धार्तराष्ट्रस्य दुर्बुद्धेः' इति गीतायामुपवर्णितं दुर्बुद्धित्वमेव। एवञ्च बुद्धेः समस्तगुणैः सम्पन्नः यः भवति सः मतिभावेन परिपूर्णः सन् "विधिवशात् प्राप्तेन सन्तुष्यता"मित्यादिस्थितिमनुभवन् वर्तमानवस्तुविषयकस्पृहावान् भूत्वा औचित्यपूर्णव्यवहारेण आत्मनि जनानुरागपात्रतामुत्पादयतीतिभावः। एतत्सर्वममृतसदृशं वस्तु अद्रव्यस्य पुरतः उपदेशार्हं न भवति। तस्य विपरीतवस्तुनि अभिनिवेशात्[3]। अतएव—

---

१ तदुक्तम् हितोपदेशे—

विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय।
खलस्य साधोर्विपरीतमेतज् ज्ञानाय दानाय च रक्षणाय॥ इति।

२ तद्यथा।

'अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते।
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः॥ इति म० स्मृ०

३ तदुक्तं—मानुष्ये सति दुर्लभा पुरुषता पुंस्त्वे पुनर्विप्रता।
विप्रत्वे बहुविद्यताऽतिगुणता विद्यावतोऽर्थज्ञता।
अर्थज्ञस्य विचित्रवाक्यपटुता तत्रापि लोकज्ञता।
लोकज्ञस्य समस्तशास्त्रविदुषो धर्मे मतिर्दुर्लभा। सु० रत्नभण्डागार १०५० श्लोक

४ म० सू०—"धार्तराष्ट्रस्य दुर्योधनस्य दुर्बुद्धेः स्वरक्षणोपायमजानतः प्रियचिकीर्षवो युद्धे न तु दुर्बुद्ध्यपनयनादौ एतद्बुद्ध्वाऽन्योऽपि यः कश्चिद् बुद्धिमानात्मज्ञानवान् स्यात्कृतं सर्वं कृत्यं येन न पुनः कृत्यान्तरं यस्यास्ति स कृतकृत्यश्च स्यात्।" इति।

## जयमङ्गलाक्रोडपत्रम्

'इदं ते नातपस्काय नाभक्ताय कदाचन।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥

इत्युक्तं साधु सङ्गच्छते। अतपस्कादीनां असूयालुपर्यन्तानां अद्रव्यत्वेन अनधिकारित्वात् इति हृदयम्।

### शास्त्रज्ञाने विनयस्य उपयोगः

सततावस्थित बुद्धिम्' इति। ( ज० पृ० ३९८ ) अथ सततावस्थितबुद्धेः द्रव्यस्य विनीतत्वात् क्रियारूपां विद्यां प्रति अधिकारित्वं सम्भवतीति अस्य ग्रन्थस्य तात्पर्यमस्ति। तत्र जिज्ञास्यते। शास्त्रप्रतिपादितवस्तुनः सम्यगवगमार्थं विनयः किमिति अपेक्ष्यते ? इति चेत् उच्यते। विनयः नापेक्ष्यते शास्त्रज्ञानाय, इत्येव यदि मनीषा तर्हि विनयाभावे तत्स्थानापन्नः मदो भवतीत्येवायातम्। तत्सत्वे च रजस्तमसोः अन्यतरस्य स्थितिः तस्मिन् अविनीते नियता वर्तते। सत्वस्य विनयात्मककस्याभावात् इत्येव वक्तव्यं भवति। अतः मदस्यापसारणाय विनयः अपेक्ष्यते इत्युक्तं भवति। न च आस्तां मद एव का हानिः ? इति वाच्यम् संस्कारनाशकत्वात्। तदुक्तं वैशेषिकभाष्ये द्रष्टव्यम्। (संस्कारप्रकरणे[1])।

### मुक्तावलीभाष्यविरोधपरिहारः संस्कारश्च

नन्वत्र ज्ञानमदतुःखानां संस्कारविरोधित्वमुच्यते, मुक्तावल्यां तु कालरोगयोः संस्कारनाशकत्वमुक्तम् तद्यथा–''यत्र समूहालम्बनोत्तरं घटपटादीनां क्रमेण स्मरणमजनिष्ट, सकलविषयकस्मरणं तु नाभूत्, तत्र फलस्य संस्कारनाशकत्वाभावात् कालस्य, रोगस्य, चरमफलस्य वा सर्वत्र संस्कारनाशकत्वं वाच्यम्''। इति। तदनयोः कथं समन्वयः ? इति चेत् श्रुणु। संस्काराः कथमुद्बुद्धा भूत्वा स्मृतिं जनयन्ति इति विवेचनानन्तरं उक्तग्रन्थयोः ( वैशेशिक भाष्यमुक्तावल्योः ) समन्वयः वक्तुमुचितः स्यात्, अतः संस्काराणामुद्बोधनक्षमत्वं कथं भवतीत्युच्यते। यदा किल तापकानां विषयाणां योगो भवति प्रतियोगिविधया, तदा चित्तस्य द्रुतिर्भवति। ततश्च द्रुते चित्ते प्रविष्टं द्रव्यं लाक्षारससंस्पृष्टद्रव्यसदृशं भवति। एवं स्थिते द्रुतचित्तप्रविष्टं द्रव्यं संस्काररूपतां प्राप्तं चितस्य काठिन्यदशायामपि ततः नापसरति। अयमेव संस्काराणामुद्बोधः स्मृतिहेतुः परं चित्तस्य द्रवीभावः यदि अपेक्षितमात्रापेक्षया न्यूनः स्यात् तर्हि ईषद् द्रुतचित्ते प्रविष्टं वस्तु न संस्काररूपतां भजते

---

१ ''संस्कारस्त्रिविधो वेगो भावना स्थितिस्थापकश्च। तत्र वेगो मूर्तत्व वत्सु पञ्चसु द्रव्येषु निमित्तविशेषापेक्षात् कर्मणो जायते नियतदिक् क्रियाप्रबन्धहेतुः स्पर्शवदद्रव्यसंयोगविशेषविरोधी क्वचित्कारणगुणपूर्वक्रमेणोत्पद्यते। भावना संस्कारस्त्वात्मगुणो दृष्टश्रुतानुभूतेष्वर्थेषु स्मृतिप्रत्यभिज्ञानहेतुर्भवति ज्ञानमददुःखादिविरोधी।'' इति।

## जयमङ्गलाक्रोडपत्रम्

नापि स्मृतौ हेतुत्वञ्च[1]।

एवं च द्रुतचित्तप्रविष्टस्य उद्बोधनक्षमस्य स्थायिसंस्कारस्य उद्बोधः स्थायी इति सिद्धम्। ईषद्द्रव्यभावापन्नायां चित्तस्यावस्थायां तु यः संस्कारः उत्पद्यते सः व्यभिचारो इत्येवंरीत्या संस्काराणां स्थायित्वं व्यभिचारित्वञ्च भवति। अथ उपर्युक्तभाष्यमुक्तावलोग्रन्थयोः समन्वयः उच्यते। तत्र वैशेषिके भाष्ये हि ज्ञान-मदःदुःखैः संस्कारो विनाश्यते इति यदुच्यते तत् स्थायिसंस्कारनाशकत्वेन-कल्प्यते। मुक्तावल्यां तु कालरोगयोः यत्संस्कारनाशकत्वमुक्तम् तत् व्यभिचारि-संस्कारनाशकत्वपरतया योज्यम्।

इत्येवंरीत्या स्फुटीकृते मुक्तावलीवैशेषिकभाष्ययोः समन्वये प्रस्तुतमधि-कृत्य उच्यते। शास्त्रज्ञानार्थं विनयः नापेक्ष्यते इतिचेत् तत्र मदः अस्तीति प्रागुक्तम्। तत्सत्त्वे च यथार्थविद्यार्थपरिचयहेतुसंस्काराणां विलोपात् कथं विनाशो

---

१ तदुक्तं मधुसूदन सरस्वतीभिः भक्तिरसायने—

चित्तद्रव्यं हि जतुवत् स्वभावात् कठिनात्मकम्।
तापकैर्विषयैर्योगे द्रवत्वम्प्रतिपद्यते ॥४॥
कामक्रोधभयस्नेह हर्षशोकदयादयः।
तापकाश्चित्तजतुनस्तच्छान्तौ कठिनन्तु तत् ॥
द्रुते चित्ते विनिक्षिप्तस्स्वाकारो यस्तु वस्तुना।
संस्कार-वासना-भाव भावना शब्दभागसौ ॥
शिथिलीभावमात्रन्तु मनो गच्छत्यतापकैः।
न तत्र वस्तु विशति वासनात्वेन किञ्चन ॥
द्रवतायाम्प्रविष्टं सद् यत् काठिन्यदशाङ्गतम्।
चेतः पुनर्द्रुतौ सत्यामपि तन्नैव मुञ्चति ॥८॥

नञीषदर्थे। अतापकैरीषत्तापकैः रसौरालोकादिस्थानीयैर्विषयैर्योगेसति मनः किञ्चिद् अवयवविशरणमात्रं प्राप्नोति। अतश्शिथिलीभूते जतुनीव तादृशे मनसि न किञ्चिद् वस्तु वासनात्वेन विशति। किन्तु वासनावैलक्षण्येन तदाभास-त्वेनैव विशतीत्यर्थः चित्तद्रुतौ भवति वासना, शिथिलीभावे तु वासनाभास इत्यत्र विनिगमकमाह—द्रवतायामिति। द्रवावस्थाप्रविष्टहिङ्गुलादिरङ्गस्य जतुनः पुनः काठिन्यापनयनेन काष्ठादिसंयोगे जायमाने यथा स एव रङ्गः प्रतिभासते, शैथिल्या-वस्थाप्रविष्टस्तु रङ्गो न तथा। एवं द्रवावस्थे चेतसि यद्वस्तु स्वरूपं प्रविष्टं सत् काठिन्यदशापर्यन्तं स्थितं तत् पुनर्द्रवोभावान्तरेण विषयान्तरे गृह्यमाणेऽपि प्रकाश-मानत्वाच्चेतसा न त्यज्यते। अतस्सा वासनेत्युच्यते इति।

## जयमङ्गलाक्रोडपत्रम्

भवतीति भारविणा उक्तं टिप्पण्यां द्रष्टव्यम्[1]।

तस्मात् शास्त्रज्ञानाय सर्वथा मदः अपसारयितव्यः। विनयश्च अवलम्बनीयो भवति। यद्येवं नाऽस्ति तर्हि कियत्फलं जीवनस्य स्यात्। इति टिप्पणीलिखितपद्येन स्फुटीभवति[2]।

तस्मात् टिप्पण्युद्धृत भारविमधुसूदनसरस्वतिवचन ( पृ० ४०७ ) प्रामाण्यात् शास्त्राध्ययनमात्रेण संस्काराणामुद्बोधो न भवतीति कृत्वा तेषां स्थाय्युद्बोधाय सत्वगुणाभिन्नस्य विनयस्य उपयोगित्वं महदस्ति इत्यवधेयम्।

### बुद्धिगुणाभावे विद्यानुत्पत्तिः।

ननु "शुश्रूषाश्रावणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम्"। इत्युक्त्या विद्याप्राप्तिसाधनत्वं बुद्धिगुणेषु अस्तीति प्रतिपाद्यते। तदिदं न सम्यक्। विष्णुशर्मणा कुलीनत्वस्य हितोपदेशे साधनत्वेन निर्णीतत्वात्।

तथा च विद्यांप्रति बुद्धिगुणस्य साधनत्वं न संभवति व्यभिचारात्[3] इति चेन्न। क्रिया हि द्रव्यं विनयति नाद्रव्यं इत्युक्तिमनुरुद्ध्य तत्र विष्णुशर्मणा।

---

१ तदुक्तम्—

'मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेन मूढता।
अतिमूढ उदस्यते नयान्नयहीनादपरज्यते जनः॥
अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः।
सुकरस्तरुवत् सहिष्णुना रिपुरुन्मूलयितुम्महानपि॥
कि० २ सर्ग ४९।५० इति।

२ 'षडङ्गादिवेदा मुखे शास्त्रविद्या कवित्वादि पद्यं सुपद्यं करोति।
गुरोरङ्घ्रिपद्मे मनश्चेन्नलग्नं ततः किम्, ततः किम्, ततः किम्। इति।

३ 'अत्रान्तरे विष्णुशर्मानाम महापण्डितः सकलनीतिशास्त्रतत्वज्ञो बृहस्पतिरिवाब्रवीत्। देव ! महाकुलसम्भूता एते राजपुत्राः। तन्मया नीतिं ग्राहयितुं शक्यन्ते। यतः—

नाद्रव्ये निहिता काचित्क्रिया फलवती भवेत्।
न व्यापारशतेनापि शुकवत्पाठ्यते बकः। ४३।
अन्यच्च—अस्मिंस्तु निर्गुणं गोत्रे नापत्यमुपजायते।
आकरे पद्मरागाणां जन्म काचमणेः कुतः।
अतोऽहं षण्मासाऽभ्यन्तरे तव पुत्रान्नीतिशास्त्राभिज्ञान् करिष्यामि इत्यादि। इति।

## जयमङ्गलाक्रोडपत्रम्

**प्रथमतः** राजपुत्रेषु अपेक्षितं कुलीनत्वं निरणायि। ततः हितोपदेशः श्रावितः। तावन्मात्रेण ते राजपुत्राः विनयं प्रापिता इति न। अपितु नीतिविषये तेषु कथञ्चिज् जिज्ञासा समुद्भाविता। इत्येवं हितोपदेशश्रवणस्य बुद्ध्यष्टगुणान्तर्गतशुश्रूषा फलं बोध्यम्। विद्यावत्त्वं तु **यथा** यथा जिज्ञासा उदेति तथा तथा शास्त्रात् संभवति। इत्येवंरीत्या विद्यां प्रति बुद्ध्यष्टगुणेषु मूले निरूपितं साधनत्वं अन्वयव्यतिरेकव्यभिचाराभावात् अबाधितम।

### विनयसाधनता दण्डविद्ययोः

**'विनयनियमाभ्यामिति'**। (पृ० ३९८)। ननु मूले विनयमूलो दण्डः इत्युक्त्वा दण्डस्य विनयसाधनत्वं साधितम्। अग्रे तु विद्यानां तु "यथास्वं आचार्यप्रांमाण्यादि"-त्यत्र मूल एव विद्यायाः विनयस्य साधनत्वं प्रतिपाद्यते। तदनयोर्ग्रन्थयोः कथं समन्वयः? इतिचेन्न। निमित्तभेदेन अवस्थाभेदेन वा विनयसाधनत्वं क्वचिद् दण्डस्य क्वचिद्-विद्यायाश्च बोध्यम्। तद्यथा—बाल्यावस्थायां गुरुः शासनेन कुमारः विनीतः यथा भवेत् तथा प्रयतते। तदनन्तरं तु विद्याद्वारा प्रकाशदानेन गुरुः शिष्यं राजपुत्रं विनीतं करोति। इत्येवमवस्थाभेदेन प्रस्तुतमूलग्रन्थसमन्वयः बोध्यः। अथ निमित्त-भेदेनोच्यते। प्रजासु भयप्रदर्शनपुरःसरं दण्डः संपादनीयः तदुक्तं "प्रजाहि यमस्थाने दण्डधरं मन्यमानाः भयान्न अपराध्यन्तीति"[1]। युवराजस्तु विद्यया विनेय इति।

### गुरुद्वेषेऽपर्यवसानम्

न च शासनद्वारा बालको विनेयः इति यद्युच्यते तर्हि सः तद्दुःखानुभवेन गुरुं द्विष्यन् स्वाधिकारलाभानन्तरं कदाचिद् गुरावेव दण्डं निपातयेत् इति शङ्क्यम्। वास्तविकप्रबोधानन्तरं गुरुं प्रति संभूतस्य द्वेषस्य विलयनप्रसंगात्। अथवा कदाचिद् गुरुं द्विष्यतु सः, परं तच्छिक्षया प्रजासु यथावत् विनयाधानपूर्वकं त्रिवर्गसमृद्धि-प्रचारस्य साधितत्वात् इष्टापतेः। इमामेवेष्टापत्तिमनुसृत्य काचित् किंवदन्ती टिप्पण्यां बोध्या[2]। पर्यन्ते तु स दोषोपि निरस्त एव भवति। इत्येवंरीत्या मूलग्रन्थयोः उक्तयोः समन्वये नकापि हानिरिति बोध्यम्।

---

१ इति यस्मादुभौ लोकौ धारयत्यात्मवान्नृपः।
प्रजानां च ततः सम्यग्दण्डंदण्डीव धारयेत्॥

२ कश्चित् जयपुरस्थराजकुमारः गुरुकुले वसन् महता प्रयासेन विनयं विद्याञ्चोपलब्धवान्। तथापि सः गुरुमद्विष्यत्। तद्द्वेषेण राज्यारोहणानन्तरं तेन राज्ञा गुरुरेव कारागारे निवेशितः। तथापि तं त्यक्त्वा समस्ताः प्रजाः स्वस्य विद्याविनय-महिम्ना प्रजाः सुखवतीः कारयामास। अथ कदाचित् राजनीतिशास्त्रानुसारेण कारां द्रष्टुमागतः सः राजा आदौ गुरुम् अपराधिस्थाने स्थितेषु ददर्श जहर्ष च। तथापि काराप्रविष्टः गुरुः तस्मै विद्याविनयबलात् समस्तप्रजासु विनयाधायकाय राज्ञे आशिष एव प्रायच्छत्। यदि त्वं विद्याविनयसमर्थो न भवेः तर्हि अहमिव—

[ आविवाहात् विद्याग्रहणक्रमः ]

वृत्तचौलकर्मा[1] लिपिं सङ्ख्यानं चोपयुञ्जीत; वृत्तोपनयन[2]स्त्रयीमान्वीक्षिकीं च शिष्टेभ्यः; वार्तामध्यक्षेभ्यः[3] दण्डनीतिं वक्तृप्रयोक्तृभ्यः[4] ।

**श्रीमूला**

वृत्तेति । वृत्तचौलकर्मा कृतचौलः त्रिवर्षः पञ्चवर्षो वेत्यर्थः, लिपिम् अक्षरम्, सङ्ख्यानं गणितं च उपयुञ्जीत नियमपूर्वमधीयीत । त्रयीमित्यादिनाप्येतत् सम्बद्ध्यते । वृत्तोपनयनः लब्धगायत्र्युपदेशः, त्रयीम् आन्वीक्षिकीं च, शिष्टेभ्यः सम्यगधिगततद्विद्येभ्यः, उपयुञ्जीत । वार्त्ताम् अध्यक्षेभ्यः सीताध्यक्षादिभ्यः, उपयुञ्जीत । दण्डनीतिं वक्तृप्रयोक्तृभ्यः प्रवचनप्रयोगकुशलेभ्यः, उपयुञ्जीत ।

**वैदिकसिद्धान्तसंरक्षिणी**

मेधानुसारेण अध्ययनक्रममाह—वृत्तेति । वृत्तं संस्कृतं चौलकर्म वंशानुरूपं यस्य सः[5]। लिपिमक्षराभ्यासं विविधम् उपयुञ्जीतेत्यनेनान्वयः । सङ्ख्यानं गणितं चकारः साहित्यार्थः । उपयुञ्जीत वृत्तोपनयनः अधिकारिभेदेन षष्ठे अष्टमे वर्षे एकादशे द्वादशे वा इति शेषः[6] । वर्णभेदेन विभिन्नवर्षस्योपनयनाङ्गत्वप्रयोजनं क्रोडपत्रे स्फुटीकृतमस्ति तत एवानुसन्धेयम् । त्रयीम् इति । उपयुञ्जीतेत्यनुवर्त्तनीयम् । राजेति शेषः । उपनयनसंस्कृतत्वात् बाल्यकाले ऊहापोहकरणाक्षमत्वाच् च आदौ अध्ययने त्रयीग्रहणम् । तत्क्रमो ग्रहणान्तिकः क्रोडपत्रे द्रष्टव्यः । शिष्टेभ्य इति ।

**शिष्टत्वं**

शिष्टत्वं च नीतिवाक्यामृते व्याख्यातम् । मङ्गलवादे तस्य परिष्कृतं मथुरानाथैरेवं व्याख्यातम् "शिष्टत्वं च बालकपतितान्त्यजाद्यतिरिक्तत्वे सति वेदप्रामाण्याभ्युप-

---

समस्ता प्रजा तव प्रमादात् अतीवासध्यं दुःखमनुभवेत् । न सा अनुभवति केवलमहमेव इति चावदत् । ततः राजा क्षमां याचितवानिति ।

नी०टि० १. **वृत्तचौलकर्मेति** । गर्भपञ्चमवर्षे वृत्तं चौलकर्म यस्य ।

,, २. **वृत्तोपनयन इति** । त्रय्युपयोगार्थं गुरोः समीपे नयनम् उपनयनम् तच्च ब्राह्मणस्य गर्भाष्टमवर्षे क्षत्रियस्यैकादशवर्षे ।

,, ३. **अध्यक्षेभ्य इति** । पण्याध्यक्षादिभ्यः ।

४ **वक्तृप्रयोक्तृभ्य इति** । कर्मप्रधानत्वाद् वार्तायाः ।

५ चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ।। मनुः अध्याय २।३५

६ गर्भाष्टमे प्रकुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ।।
ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ।—मनु० अध्याय २।३६–३७—

## वैदिकसिद्धान्तसंरक्षिणी

गन्तृत्वम्'' ।—माथुरीमङ्गलवादे यद्यप्यत्र शिष्टत्वं सामान्यतयोक्तम् तथापि ये धर्मनिर्णयेऽधिकृताः ते शिष्टा इत्यभिधीयते। तेन धर्माधिकृते भ्यः इत्यर्थो बोध्यः। शेषं शब्दकल्पद्रुमे द्रष्टव्यम्[1]। अर्थात् तत्वाविष्टत्वे शिष्टत्वं पर्यवस्यति। इति भावः। चतसृषु—

विद्यासु अन्तर्गता वार्ता कुत उपलब्धव्येत्याह वार्ता इति। उपयुञ्जीतेत्यनुवर्तनीयम्। राजेति शेषः। अध्यक्षेभ्य इति। अध्यक्षप्रचारे ये अध्यक्षाः प्रतिष्ठिता अनुभविनः मन्त्रिसम्पदुपेतास्तेभ्य इत्यर्थः[2]। एतेन पूर्वाचार्यप्रणीतस्य विस्तृतवार्ताशास्त्रस्य विलोपेपि न क्षतिः। अध्यक्षप्रचारस्य वार्ताशास्त्रस्य प्रयोक्तृभ्यः इति यावत्।[2] अथ कुतोध्येतेव्या दण्डनीति रित्याह (पृ० ४१०) दण्डनीतिमिति। विवेचितव्युत्पत्ति-शक्तिमद्भ्यः इत्यर्थः। अत्रापि उपयुञ्जीत इत्यनुवर्तते इति शेषः। यद्यपि त्र्य्यादी-नामध्यापका अपि वक्तारः प्रयोक्तारश्च सम्भवितुमर्हन्ति तथापि तत्तदध्यापकानां 'शिष्टः' ''अध्यक्षः'' च इति विशेषसंज्ञयानिरूपणं पृथक्संज्ञाप्रदर्शनार्थम्।

## जयमङ्गला

यस्तु दण्डस्य मूलं विनयः स विद्याप्रभावतः। अत एवेदानीं बाल्यावस्थातः प्रभृति राज्ञो वृद्धसंयोगन्दर्शयति वृत्तचौलकर्मेति। चूडाया इदं कर्म चौलम् कर्म-तद् वृत्तमस्येति। स तृतीयाद्वर्षाद् यथाशक्ति प्राक्। लिपिमक्षरचिन्हानि सर्वो-पायहेतुत्वात्। ततः सङ्ख्यानं गणितं सर्वव्यवहाराङ्गम्। उपयुञ्जीत शिक्षेत। तस्मिन् काले अन्यशास्त्रस्य अनधिकारात्। वृत्तोपनयन इति। विद्याः स्वसमीपनयन-मुपनयनम् ( ? ) तच्च क्षत्रियस्य राज्ञ एकादशे वर्षे, तद् वृत्तम् कृतमस्येति। स प्राक् त्रयीम्। अन्यथा व्रतकालातिपातः स्यात् ततो यथेष्टम्। आन्वीक्षिकीम् शिष्टेभ्य इति। विद्याभिजनदेशवृत्तशीलसम्पन्नेभ्य ईक्षणप्रयोगकुशलेभ्यश्च[3]। अन्यथा शास्त्राविदवृष्टकर्मा कर्मोपदेशे व्यामुह्येत। उपयुञ्जीतेति सर्वत्र योज्यम्।

## जयमङ्गलाक्रोडपत्रम्

'यथाशक्तीति' यथाशक्ति इति प्रथमे तृतीये चतुर्थे पञ्चमाब्दे वा शिशोः उच्चारणशक्तिं सुस्पष्टां दृष्टवा चौलकर्म कारयेत् इति शक्तिपदग्रहणेन

---

१ मनुः सप्तर्षयश्चैव लोकसन्तानकारणात्।
तिष्ठन्तीह च धर्मार्थैतान् शिष्टान् परिचक्षते॥
तैः शिष्टैः पालितो धर्मः स्थाप्यते वै युगे युगे। मात्स्ये, अध्याय १२०।

२ तम् अध्यक्षप्रचारात् वार्तासमयविद्भयो वणिग्भ्यश्च इति। कामसूत्र अ० १ अ० २—
अध्यक्षाः प्रचरन्त्यनेनेति अध्यक्षप्रचारः वार्ताशास्त्रम् इति —कामसूत्र अ०१ अ २

अशुद्धम्
३ विद्याभिजनदेशवृत्तशीलसंपन्ने ( न्नेभ्यः शि ) क्षणं।

इयं पाठशुद्धिः टिप्पण्याधारेण निर्धारिता। (पृ० ४१०) टिप्पण्यां वार्तायाः कर्म-प्राधान्यमिव आन्वीक्षिकीविद्यायामपि विद्याप्राधान्येन सह कर्मप्राधान्यं व्यक्तं भवति।

द्योतयति। ननु टीकायां तृतीयादेव वर्षात् चौलकर्मेत्युक्तम्। अत्र तु प्रथमे चतुर्थे तत्कर्म इत्युच्यते। इति चेद् धर्मशास्त्रप्रामाण्यात् तत्कथ्यते। तदुक्तं वीरमित्रोदय-संस्कारप्रकाशे[1] नीतिनिर्णीतौ[2] च। तत एवानुसन्धेयम्।

---

२ वीरमित्रोदये:—मनुः—

चूडाकर्म द्विजातानां सर्वेषामेव धर्मतः।
प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात्। इति।
वाशब्दात् द्वितीयग्रहणम्। तथा च
यमः—ततः संवत्सरेऽपूर्णे चूडाकर्म विधीयते।
द्वितीये वा तृतीये वा कर्तव्यं श्रुतिचोदनात्। इति।
अत्र अपूर्णे इति पदच्छेदः। स च द्वितीयादिष्वप्यनुषज्यते।
ततश्च प्रथमादिवर्षाणामेवाधिकरणत्वं सिद्ध्यति। तदाह
षड्गुरुशिष्यः—आद्येऽब्दे कुर्वते केचित्पञ्चमेऽन्ये द्वितीयके।
जाताधिकाराज्जन्मादि तृतीयेऽब्दे तु चौलकम्॥
उपनीत्या सहैवेति विकल्पाः कुलधर्मतः॥ इति।
यत्तु कल्पतरुणा प्रथमेऽऽब्दे तृतीये वेति मनुवाक्ये प्रथमेऽब्दे वर्तमाने इति व्याख्याय ततः संवत्सरे पूर्णे चूडाकर्म विधीयते।

इति यमवाक्ये नञ्प्रश्लेषमकृत्वा संवत्सरे पूर्णे इति व्याख्यातं, तत्पूर्वापरविरोधाच्चिन्त्यम्। संभवत्यविरोधे विरुद्धव्याख्यानानौचित्यात्। यदपि द्वितीये सम्पूर्णे तृतीयेत्वसम्पूर्णे, तृतीये भूयिष्ठे गते इति लौगाक्षिस्मरणादिति व्याख्यातं, तदपि तथैव विलम्बोपस्थितिकवाक्यान्तरैकवाक्यतापेक्षया समानवाक्यस्थितपदानुषङ्गस्य शीघ्रोपस्थितिकत्वेनाभ्यर्हितत्वादित्यलं वृद्धविरोधेन। वाशब्दद्वयोपादानं पञ्चमसप्तमवर्षयोरपि ग्रहणाय।

तथाचाश्वलायनः,
तृतीये पञ्चमे वाऽब्दे चौलकर्म प्रशस्यते।
प्राग्वाऽसमे सप्तमे वा सहोपनयनेन वा॥ इति॥
अत्रासमे इति पदच्छेदः। युग्मे वर्षे तु गर्हितमिति वक्ष्यमाणात्रिवचनात्।
वशिष्ठोऽपि,
तृतीयेऽब्दे पञ्चमेऽब्दे स्वकुलाचारतोऽपि वा।
चौलं शिशूनां यत्नेन स्वगृह्योक्तविधानतः॥
आधानतो जन्मतो वा सप्तमाब्देऽपि कारयेत्। इति।

तृतीयादिवर्षसङ्ख्या च गर्भतो जन्मतो वा द्रष्टव्या। तथा च
बृहस्पतिः—तृतीयेऽपि शिशोर्गर्भाज्जन्मतो वा विशेषतः।
पञ्चमे सप्तमे वाऽपि स्त्रियाः पुंसोऽथवा समम्॥ इति।—

## जयमङ्गलाक्रोडपत्रम्

'**सर्वोपायेति**' (पृ० ४११) सर्वोपायः न्यायालयीयव्यवहारः तस्य लिपिमूलकत्वात्। तदुक्तं व्यवहारप्रकाशे प्रतिज्ञालेखे[1]—

### लिप्यध्ययनम्

लिप्यध्ययनं यथाविधि कर्तव्यम्। कुत ? इति चेत् सर्वविद्यालाभार्थम्। नद्यः समुद्रं प्रविशन्ति यथा, तथा यथाविधि लिप्यध्येतारं सर्वा अपि विद्याः प्रविशेयुरिति भावः[2]।

'**संख्यानमिति**' (ज०पृ० ४१७) लिपिगणितज्ञानानन्तरं काव्यं छन्दोभाषाज्ञानार्थं अध्यापयितव्यम्।

### 'छन्दोभाषाज्ञानस्योपयोगः'।

ननु छन्दोभाषाज्ञानस्य क उपयोगः ? इति चेत् काव्ययव्यापारजनितरसास्वादलाभार्थम्। अर्थात् छन्दसां भावानाञ्च संस्कारः बालकस्य हृदये यदि आरंभत एव आहितो भवेत् तर्हि काव्यस्यास्वादः तस्य नासुलभो भविष्यति। कथं तदिति तु गोकुलनाथोपाध्यायैः प्रथमाध्याये रसप्रक्रियायां विचारितमस्ति[3] तत एव चिन्त्यम्।

---

एषां चाब्दानामुत्तमादिव्यवस्थामाह नारदः—

जन्मतस्तु तृतीये च श्रेष्ठमिच्छान्ति पण्डिताः।
पञ्चमे सप्तमे वर्षे जन्मतो मध्यमं भवेत्॥
अधमं गर्भतः स्यात्तु दशमैकादशेऽपिवा। इति।

नि० नि० 'गर्भतः पंचमवर्षे वृत्तं चौलकर्म' इति।

१ सङ्ग्रहकारः,

राजस्वहस्तचिह्नेन राजादेशेन संयुतम्।
युक्तं राजाभिधानेन मण्डितं राजमुद्रया॥
सुलिप्यनपशब्दोक्तिसम्पूर्णावयवाक्षरम्।
शासनं राजदत्तं स्यात् सन्धिविग्रहलेखकैः।

२ तदुक्तं कालिदासेन रघुवंशे—

सवृत्तचूलश्चलकाकपक्षकैः अमात्यपुत्रैः सवयोभिरन्वितः।
लिपेर्यथावद् ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत्॥ इति। ( २ सर्ग )

३ तथाहि—

"शक्तिः कवित्वबीजरूपः संस्कारविशेषः। यां विना काव्यं न प्रसरेत्, प्रसृतं वोपहसनीयं न स्यात्, लोकस्य स्थावरजङ्गमात्मकलोकवृत्तस्य, शास्त्राणां छन्दोव्याकरणाभिधानकोशकलाचतुर्वर्गादिग्रहणादितिहासादीनाञ्च विमर्शनात् व्युत्पत्तिः। 'शास्त्राणि गणयति-छन्द इत्यादि। छन्दः पिङ्गलाष्टाध्याय्यादि, व्याकरणं-

## जयमङ्गलाक्रोडपत्रम्

### अध्ययनस्य वैधत्वम्

नन्वेवं ईदृशाध्ययनक्रमे यथाविधित्वं कथमवगन्तव्यमिति चेत् ? शिष्टादृत-पद्धत्या तदवगन्तुं शक्यते[1] । तच्च व्यक्तं टिप्पण्याम् ।

**'अनधिकारादिति'**। (पृ० ४११) अन्यशास्त्रस्याध्ययने अनधिकार: लिपिसङ्ख्या-नाध्ययनसमये उक्तः सः बालकस्य उच्चारणासामर्थ्याद्बोध्यः । सत्यधिकार-सामर्थ्ये तु उपनयनात्प्रागपि पञ्चमाब्दादौ वेदं विहाय बालकस्य शास्त्रमात्राध्ययने न काऽपि हानिरिति बोध्यम् । वक्ष्यतेचैतत् विद्वद्परिषदः प्रस्तावे । ( ४१५ )

**'स्वसमीपेति'** । (पृ० ४११) गुरोः इति शेषः । तदुक्तम् नीतिनिर्णीतौ—

"अग्युपयोगार्थं गुरोः समीपे नयनं उपनयनं तच्च ब्राह्मणस्य गर्भाष्टमवर्षे क्षवियस्यैकादशवर्षे" । इति ।

### गुरुसमीपे नयनाभिप्रायः

ननु गुरोः समीपे नयनं केनाभिप्रायेणोक्तम् ? इति चेत् । गुरुद्वारा मन्त्रग्रहणे तत्सिद्धिर्भवति अन्यथा न इत्यभिप्रायेण । तदग्रे स्फुटीकरिष्यते ( ६ अध्याये ) इदञ्चोपनयनं ब्राह्मणानामष्टमे वर्षे सामान्यतयाऽभिहितमस्ति । कामनासत्वे तु पञ्चमाब्दादावपि तस्योपनयनं भवितुमर्हति[2] ।

क्षत्रियस्य तु उपनयनं एकादशवर्षे टीकाकारेण वक्ष्यते । अत्र उपनयनकर्मणि वर्षभेदः वर्णभेदेनोक्तः । तस्य कारणमग्रे वक्ष्यते । प्रकृते तु उपनयनात् प्राग् अध्ययनस्य क्रमे मूललेखेन अवगतेऽपि षोडषे वयसि गार्हस्थ्यप्रवेशस्य विहितत्वात् तदधिकारात् प्राक् कुमारस्य अध्ययनक्रमः कथं भवितव्यः इति स्पष्टं नाऽस्ति

---

पाणिनीयादि, अभिधानं लिङ्गानुशासनम् वाररुचादि, कोषो विश्वादिः । कलादीनां लक्षणेऽन्वयः । लक्षणं स्वरूपेतरभेदादिबोधकं वाक्यम् । तच्चाभेदेन ग्रन्थेऽन्वेति । इत्यादि १३ पृ० ।

१ "जातमात्रस्य त्रैवर्णिकस्य क्रीडाधिकारे निवृत्ते अक्षराभ्यासः, ततश्छन्दो-भाषाज्ञानार्थं काव्याध्ययने प्रवर्तकानि "अदोषं गुणवत्काव्यं" इत्यादीनि अग्निपुराण-वचनानि ।" इत्यादिना ग्रन्थेन । तस्याऽयं सङ्क्षेपः । काव्याध्ययनार्थञ्च तदङ्गतया धातुरूपावली, शब्दरूपावली, समासचक्रं, शीलनिरूपणं, मूलरामायणमित्यादि अध्येतव्यं भवति । अष्टाध्यायी च अक्षरस्य स्पष्टमुच्चारणार्थं मूलमात्रं अध्येतव्या । ततः उपनयनमष्टमाब्दे भविष्यति । इति ।

२ तदुक्तं मनुस्मृतौ—

'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ।
गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । इति । मनु० ।

## जयमङ्गलाक्रोडपत्रम्

अतस्सर्वेषां सुखावबोधाय शिक्षाक्रमः सर्वोऽपि अत्र विमृष्टो ज्ञेयः। टिप्पण्याम्[1]।

---

१ तद्यथा—

'विद्वत्परिषत्प्रस्तावः'

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं।
विद्या भोगकरी यशः सुखकरी विद्या गुरूणां गुरुः।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतम्।
विद्या राजसु पूज्यते न तु धनं विद्याविहीनः पशुः!
विद्याविनीतो राजा हि प्रजानां विनये रतः।
अनन्यां पृथिवीं भुङ्क्ते सर्वभूतहिते रतः।

इति वचनमनुसृत्य विद्याध्ययनक्रमे व्यवस्थाप्यमाने तत्र कर्तव्यनिर्देशः फलपर्यवसायी अस्मिन् लेखे चिकीर्षितः—

मातेव रक्षति पितेव हिते नियुङ्क्ते।
कान्तेव चाभिरमयत्यपनीय खेदम्।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं।
किं किं न साधयति कल्पलतेव विद्या।

इति सूक्तयः सर्वविद्यफलसाधनतां विद्यानां वदन्ति। अतः
पुराणन्यायमीमांसा धर्मशात्राङ्ग मिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥
आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थशास्त्रकम्।

इति परिगणितेषु अष्टादशविद्यास्थानेषु प्रवेशः सर्वविधफलावाप्तये आवश्यक इति सिध्यति।

"एकदेशविद्यस्तु क्रीड़नको विश्वास्यश्च विदूषको वैहासिकोवा" इति वात्स्यायनवचनेन एकदेशविद्यानां उपहास्यत्वं यतो अवधार्यते अतोऽपि अष्टादशविद्यास्थानेषु सम्यक् परिचयः अनुपहास्यतायै अपेक्षित इत्येव सिद्धयति। न केवलमेतावदेव अपितु—

'शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।

इति काव्यप्रकाशोक्तरीत्या लोकरञ्जनात्मकराजकार्याधिकृतानां पूर्वोक्तेषु शास्त्रेष्विव समस्तलोकवृत्तेषु वेदितृत्वं निखिलकाव्यपरिचयश्चापेक्षित इत्यप्यवसीयते। इदं अतिदुर्घटं कार्यं यया युक्त्या हस्तगतं भवति सा तु गुरुभक्तिरेव विद्यावृद्धसंयोगापरपर्याया अर्थशास्त्रेषूक्ता।

'अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च।
यत्कृपापालेशमात्रेण नमोस्तु गुरवे सदा॥—

इति वचनेन तथा अवगमात् ।

विवेकः श्रुतिसंपत्तिः गुरुभक्तिस्तपस्विता ।
एते विषयभावेन करणत्वेन च स्थिताः ।
इष्टाधिकानामिष्टानां लाभस्तु विषयत्वतः ।
व्रीड़ा करणभावेन, विभावा यत्र सम्मताः ।

इति सङ्गीतरत्नाकरोक्तवाक्यपर्यालोचने,

प्रियाप्रियाविकरित्वं तदात्वोचितकारिता ।
अप्राप्तातीतनष्टानामलाभेऽनभिशोचनम् ।

इत्युपवर्णितस्य फलत्रयस्य विवेकादिसहकृत गुरुभक्त्यधीनत्वावगमादपि पूर्वोक्त एवार्थ उपष्टभ्यते । एवं स्थिते गुरुभक्तिपूर्वकं सकलविद्याधिगमने अवश्यं कर्तव्ये सर्वविद्याध्ययनस्य युगपदनुष्ठातुं अशक्यत्वात्तदध्ययनक्रमो निर्णीतः सेतुबन्धे । तद्यथा—

' ततश्च जगदाप्तपरमशिवप्रणीतत्वाविशेषेण सर्वासां विद्यानामधिकारिभेदेन प्रामाण्यमेवेति स्पष्टं सूतसंहितादौ । अधिकारश्च यथा नास्तिकानामेवार्हतादिदर्शनेषु, त्रैवर्णिकादेरेव वैदिकमार्गेषु इति पुरुषभेदेनैव व्यस्थितस्तथैकस्यापि पुरुषस्य चित्तशुद्धितारतम्यादपि केश्चिद् व्यवस्थितः । वर्णभेदेनेव आश्रमभेदेनापि धर्मव्यवस्था-दर्शनात् । एवञ्च यानि तत्तद्विद्याप्रशंसकानि वचनानि तानि तत्तदधिकारिणं प्रत्येव प्रवर्तकानि । यानि च तन्निन्दकानि तानि तत्तदनधिकारिणं प्रति निवर्तकानि । न पुनर्नहि निन्दान्यायेन विधेयस्तावकानि, अतिबाल्यदशायां, बालक्रीड़नके प्रवर्तयतामेव पित्रादीनां तस्यैवाध्ययनाधिकारे तादृशक्रीड़ायां ताड़नकर्तृत्वदर्शनात् ।

तदयं मथितोऽर्थः जातमात्रस्य त्रैवर्णिकस्य क्रीडाधिकारे निवृत्ते अक्षराभ्यासः, ततश्छन्दोभाषाज्ञानार्थं काव्याध्ययने प्रवर्तकान्य "दोषं गुणवत्काव्यं" इत्यादीन्यग्निपुराणवचनानि । व्युत्पन्नस्य 'काव्यालापांश्च वर्जयेदिति निषेधः । काव्याध्ययनजन्यप्रयोजनस्य जातत्वेनोत्तरभूमिकायामेवावतारात्तां विहाय पूर्वभूमिकायामेवायुःक्षपयतोऽनिष्टं भवतीति तदर्थः । ततो देहाद्यतिरिक्तत्वेनात्मनो ज्ञानार्थं न्यायशास्त्राध्ययने विधिः 'शुष्केनात्मानमन्विच्छे' दित्यादिः । शुष्कं हेतुः अवयवसमुदायात्मकन्याय इति यावत् । देहादिभिन्नत्वेनामुष्मिकयातायातक्षमतया आत्मनि ज्ञाते तु तादृशफलककर्मस्वधिकारात् । "आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकामि"त्यादयो निषेधाः पूर्वभूमिकां निषेधन्ति । 'धर्ममेवाचरेत्प्राज्ञ' इत्यादि विधय उत्तरभूमिकायां प्रवर्तयन्ति । यदुपयोगित्वेन पूर्वमीमांसाया वेदे कर्मकाण्डस्य चाध्ययनं तेन धर्मार्थकामेषु साधितेषु चतुर्थपुरुषार्थलिप्सया पूर्वभूमिकात्यागाय 'नास्त्यकृतः कृतेनेति कर्मनिन्दा" । इति ।

देशकालपरिच्छिन्नञ्च क्रमविधानं कौटिलीये अर्थशास्त्रेऽपि द्रष्टव्यम् । तद्यथा "तस्माद्दण्डमूलास्तिस्रो विद्याः" ! विनयमूलो दण्डः प्राणभृतां योगक्षेमावहः ।—

कृतकः स्वाभाविकश्च विनयः। क्रिया हि द्रव्यं विनयति नाद्रव्यम्। शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम्। विद्यानां तु यथास्वमाचार्य प्रामाण्याद्विनयो नियमश्च। वृत्तचौलकर्मा लिपिं सङ्ख्यानं चोपयुञ्जीत वृत्तोपनयनस्त्रयीमान्वीक्षिकीं च शिष्टेभ्यः, वार्तामध्यक्षेभ्यो, दण्डनीतिं वक्तृप्रयोक्तृभ्यः'' इति। (कौ. अ. अ. १) अत्र ''वृत्तचौलकर्मा लिपिं सङ्ख्यानं चोपयुञ्जीत, वृत्तोपनयनस्त्रयीमान्वीक्षिकीं च शिष्टेभ्यः'' इति वचनेन बालकानामवस्थाविशेषो विद्याविशेषाध्ययनार्थं निर्धार्यंते।

तथा—'चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः।
　　प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात्। (मनु०)

इति मनूक्त्या तृतीयवर्षस्यावस्थाविशेषपरिच्छेदकत्वावगमात्,
　　ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।
　　राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे।
　　गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्॥ (मनु०)

इत्यादि वचनेन पञ्चमाब्दादारभ्य एकादशद्वादशवर्षपर्यन्ताया अवस्थाया उपनयनोत्तरं विद्याधिकारितायाः प्रयोजकत्वावगमात्,
　　''त्रैविद्येभ्यस्त्रयीं विद्यां वार्तारम्भांश्च लोकतः। ( मनुः )

इत्यादि मनुवचनैरर्थशास्त्रोक्तवचनैश्च तादृशविद्याध्ययनकालव्यवस्थापनात्, तदनुकूलबुद्धिशक्तेस्तादृश्यामेवावस्थायां लाभावगतेश्च ''ब्रह्मचर्यन्त्वाविद्याग्रहणात्'' ''ब्रह्मचर्यं चा षोडशाद्'' इति वचनाभ्यां तदुत्तरं षोडषवर्षपर्यन्तकालएव भारतीयराजनीतिदृष्ट्या आचार्यकुलवाससापेक्ष इति प्रतीयते। एवंस्थिते जन्मप्रभृति त्रिवर्षात्मिकयेका प्रथमावस्था, तदुत्तरं पञ्चमषष्ठान्ता द्वितीया, ततश्चैकादशद्वादशवर्षपर्यन्ता तृतीया, तदुत्तरं षोडषवर्षपर्यन्तकाला च चतुर्थी। एताः अवस्थाः अभिभावकाधीनाः शास्त्रेषु दृश्यन्ते। स्तनन्धयशिशुकुमारपौगण्डपदैर्व्यवह्रियमाणास्वावस्थास्वधिकारभेदानुसारेण शैशवावस्थाप्रभृत्येव विद्यावृद्धसंयोगः कर्तव्यो दृश्यते। अतएव—

　　''शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।
　　वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्॥ ( रघुवंश )

इति कालिदासो जगाद। षोडशवर्षस्थाने अष्टादशवर्षकाले व्यतीते प्राप्तव्यवहारयोग्यता भवतीत्याधुनिकसमयः। भारतीयाधुनिकपद्धत्योः तुलनायां क्रियमाणायां भारतीयपद्धतिः शुश्रूषाश्रवणग्रहणधारणाद्यष्टबुद्धिगुणेषु ग्रहणपर्यन्तामवस्थां षोडषवर्षाभ्यन्तर एव साधयति। इति स्पष्टो विशेषोऽत्रावधारणीयः। श्रुतानामर्थानामवधारणं ग्रहणन्तु जयमङ्गलायां उक्तम् तच्च इदमित्थमेवेत्यवधारणं निष्कंपप्रवृत्त्यङ्गमिति प्रामाण्यवादे निरूप्यते। ( पृ० टि० ३६७ ) ईदृशं हि ग्रहणं अष्टादशवर्षपर्यन्तं

अपि आधुनिकपद्धत्या न सम्भववितुमर्हति । कारणं तत्र यूरोपदेशव्यापकः तर्कशास्त्राध्ययनाभाव एव ।

एवं--"प्रदीपः सर्वविद्यानां उपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकीमता ।

धर्माधर्मौ त्रय्याम्, अर्थानर्थौ वार्तायाम्, नयानयौ दण्डनीत्याम्, बलाबले चैतासां हेतुभिरन्वीक्षमाणाऽऽन्वीक्षिकी लोकस्योपकरोति । व्यसनेऽभ्युदये च बुद्धिमवस्थापयति प्रज्ञावाक्यक्रियावैशारद्यञ्च करोति" ( कौ० अ० ४ ) इति अर्थशास्त्रवचनानुसारेण आन्वीक्षिक्याः सर्वविद्याप्रकाशकत्वात् सर्वकर्मोपायत्वात् सर्वधर्माश्रयत्वाच्च व्यसनेऽभ्युदये च निर्विकारिताया प्रयोजकत्वमपि आन्वीक्षिक्यामेव वर्तते । तदुक्तम्—

आन्वीक्षिक्यात्मविद्यास्यादीक्षणात्सुखदुःखयोः ।
ईक्षमाणस्तया तत्वं हर्षशोकौ व्युदस्यति ॥

तथा—'व्यसने अभ्युदये च बुद्धिमवस्थापयति' । इति ।

अतस्तस्या अत्यन्तमभ्यर्हितत्वात् आन्वीक्षिकीव्यतिरेके उक्तत्रिविधफल व्यतिरेकस्यार्थतः सिद्धत्वात्,

"विनयोपग्रहान् भूत्यै कुर्वीत नृपतिः सुतान् ।
अविनीतकुमारं हि कुलमाशु विनश्यति ॥
दुष्टं गजमिवोद्वृत्तं कुर्वीत सुखबन्धनम् ।
विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत् ॥
राजपुत्रः सुदुर्वृत्तः परित्यागं हि नार्हति ।
क्लिश्यमानः स पितरं परमाश्रित्य हन्ति हि ॥

इति वचनैः उक्तविधविनयस्य षोडशवर्षावधित्वे सिद्धे तदुत्तरशिक्षाया उक्तफलासमर्थत्वात् सविनयावज्ञाकारिणामेव शिक्षितानामुत्पत्तेः तत्र प्रकृतिसिद्धत्वात्,

'यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत् ।

इत्युक्तदिशा स्वभावगतं संस्कारोपयुक्तं मार्दवं षोडषवर्षपर्यन्तमेव तिष्ठतीति निकृष्टोऽर्थः । इति प्रथमः परिच्छेदः

२—एवं स्थिते बाल्यकौमार पौगण्डावस्था—भेदत्रये तत्र तत्रोत्पद्यमानानां स्वाभाविकीनां प्रवृत्तीनामनुरोधेन क्रियमाणा शिक्षणव्यवस्था चिन्त्यते ।

'बालस्तावत्क्रीड़ासक्तस्तरुणस्तावत् तरुणीरक्तः" इत्युक्तदिशा षोडषवर्षात् प्रागेव जायमानानां प्रवृत्तीनां शिक्षणोपयुक्तत्वात्, "यन्नवे" इत्युक्त वचनानुसारेण षोडषवर्षात् प्राक्तनानां संस्काराणां योग्यताया बाल्यावस्थायां विद्यमानेन मार्दवत्वविशेषेण घटमानताया अवगमात् । "सहपांसुक्रीड़ितं, उपकारसंबद्धं, समानशीलव्यसनम्, सहाध्यायिनम्, यश्चास्य मर्माणि रहस्याणि विद्यात्, यस्य चायं विद्याद्वा, धात्र्यपत्यं

सहसमृद्धं मित्रम्" इति सूत्रव्याख्यायां जयमङ्गलायां "मिद्यति, स्निह्यतीति मित्र"मिति मित्रशब्दव्याख्यादर्शनाद् बालान्तरप्रेमसंसर्गिजनप्रेम्णोः चौलोत्तरभाव्यवस्थायामेव परिदृश्यमानत्वात्,

तथा—'उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम्।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥ ( रघुवंश )

इति वदता कालिदासेन स्तनन्धयावस्थायां धाऽयधीनत्वबोधनात्, धात्रीकृतशिक्षावस्थाया एव विशेषतः अवबोधनात्, स्तनन्धयविशेषस्य प्रकृते अविचार्यत्वात्,

अपि च—स वृत्तचौलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः।
लिपेर्यथावद् ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥

इत्यादिना समानवयस्कबालान्तरप्रेमसमानाधिकरणस्य लिपेर्यथावद्ग्रहणस्य अवगमात्, बालावस्थायां सवयस्कधान्यादिसंसृष्टजनप्रेमावगतेः, "प्रियजनचेष्टानुकृतिर्लीला" इति परिभाषानुसारेण—

'यद्यदा चरति श्रेष्ठः तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥

इत्युक्तन्यायेन तस्यामवस्थायां विद्याविशेषग्रहणे संसर्गो व्यवस्थाप्यते। अस्यामवस्थायां अधर्म्यानर्थ्यजनसंसर्गनिवारणं मातापित्रोरभिभावकानाञ्च प्रधानं कार्यम्, तत्र असावधानतायां महान् विनाशः।

"अलौकिकत्वादप्रवृत्तानां यागादीनां प्रवर्तनं लौकिकेभ्यश्च मांसभक्षणादिभ्यः शास्त्रादेव निवर्तनं धर्मः। तं श्रुतेर्धर्मज्ञजनसमवायाच्च प्रतिपद्येत। विद्याभूमिहिरण्यपशुभाण्डोपस्करमित्रादीनामर्जनं अर्जितस्य विवर्धनमर्थः। तमध्यक्षप्रचाराद् वार्तासमयविद्भ्यो वणिग्भ्यश्च प्रतिपद्येत" इति सूत्रैरनुपनीततया विद्यानधिकृतानां बालकानां धर्मज्ञजनसमवायात् वार्तासमयविद्वणिग्जनसमवायाच्च धर्मार्थावगतेः विहितत्वाद् "बाल्ये विद्याग्रहणादीनर्थान्' इति सूत्रेण विद्याग्रहणस्यैव प्राधान्येन चिन्त्यमानत्वाच्, च अनुकरणाधीनतादृशविद्याग्रहणं अनुपनीतावस्थायाम् एव शास्त्रेण नियमितम्।

अस्यामवस्थायां काव्याध्ययनस्य निर्दिष्टत्वात् लिपिसङ्ख्यानग्रहणे वृत्ते छन्दोभाषाज्ञानाय भाषाकाव्याध्ययनं, तदुत्तरं यथासंभवं संस्कृतभाषाकाव्याध्ययनमपि युक्तम्। सर्वमेतत् क्रीडनकालेख्यमृन्मयचित्राभिनयकथाद्वारा क्रियमाणं रुचिकरं भवेत्, "बालस्तावत् क्रीडासक्तः" इति वचनात्।

उपनयनोत्तरावस्थायां "वृत्तोपनयनस्त्रयीमान्वीक्षिकीं च शिष्टेभ्यः" इत्यादि सूत्रानुसारेण चतसृणां विद्यानामध्ययनं यद्यपि विहितं, तथापि विद्याग्रहणस्य आन्वीक्षिक्यधीनत्वात् विद्याकण्ठस्थीकरणस्य बाल्य एव सुलभत्वाच्च जिज्ञासोत्थापनानुसारेण व्यवस्था पूर्वपरिचितैः कर्तव्या भवति। उपनीतावस्था हि सप्तमवर्षोत्तर-

भाविनी प्रकृते चिन्तनीया वर्तते, तस्यामवस्थायां सप्तमवर्षात्प्रभृति एकादशद्वादश-वर्षपर्यन्तं उत्सुकतानुकरणयोः स्वाभाविकत्वात्, औत्सुक्याभिवर्धनस्य पूर्वसंसृष्टै-राचार्यैः कर्तुं शक्यत्वात्।

एकादशवर्षोत्तरभाविन्यां पौगण्डावस्थायां "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' इति लक्षणलक्षितायाः कल्पनायाः संस्कृतप्राकृतकाव्यजनितायाः सुखानुभवो हि तादृशीं जिज्ञासां नियमेनोत्थापयितुमर्हति। यया गुरुगृहं गत्वा विनयपूर्वक-मध्ययनाय रुचिरुत्पद्यते। एतावद्दूरपर्यन्तं कार्यं पटुप्रत्ययजनितेन संस्कारेण पट्व-भ्यासप्रत्ययजनितेन संस्कारेण वा करणीयम्। तदुत्तरन्तु कार्यं आदरप्रत्ययजनितेना-दराभ्यासप्रत्ययजनितेन वा संस्कारेण स्वयमेव भवितुमर्हति, आश्रयगुणस्य तत्र प्रयोजकत्वात्। यथासंभवं क्रीड़नादिना तत्रापि न्यायशास्त्राध्ययनं प्राथमिकम्। तदुत्तरभाविन्यामवस्थायां शास्त्रान्तराध्ययनं युक्तम्, इति द्वितीयः परिच्छेदः

३—'मोहं रुणद्धि विमलीकुरुते च बुद्धिं सूते च संस्कृतपदव्यवहारशक्तिम्।
शास्त्रान्तराभ्यसनयोग्यतया युनक्ति तर्कश्रमो न कुरुते कमिहोपकारम्॥

इति वचनात्, मालतीमाधवे नाटके "माधवः आन्वीक्षिकीमधीते" इति माधवस्य तस्यामवस्थायां आन्वीक्षिक्यध्ययनस्योक्तत्वात्, "ब्रह्मचर्यन्त्वा विद्या-ग्रहणात्" इति सूत्रेण ब्रह्मचर्यस्य ग्रहणपर्यन्ततया व्यवस्थापितत्वाच्च

द्वितीयपरिच्छेदोक्तस्य तर्कग्रहणपर्यन्तस्य तर्कशास्त्राध्ययनस्य आवश्य-कत्वं "मोहं रुणद्धि" इति वाक्यादिभिर्निर्णीतमेवं "धर्माधर्मौ त्रय्यां" इत्यादिना वाक्यसन्दर्भेण अर्थशास्त्रे व्यवस्थापितमेव। अतः राजनीत्यनुसारेण अस्याभ्यर्हितत्वे नास्त्येव सन्देहस्यावसरः। वर्तमान—राजनीत्यनुष्ठानामतानुसारेणापि अय-मवश्यानुष्ठेयो भाग इति भाति। प्रो० हुंमायू कबीर महोदयेन कृते 'भारती-शिक्षा और विश्व की एकता' 'ज्ञान और राष्ट्र की एकता'—'नये युग की चुनौती' "भार-तीयशिक्षादर्शन-परम्परा की निरन्तरता" शीर्षकेषु भाषणेषु कर्नाटक विश्वविद्यालय—अन्नामलैविश्वविद्यालय—उस्मानियाविश्वविद्यालय—ऑक्सफोर्ड विश्वविद्यालय-कृतेषु, भारतीयदर्शनप्रणीततर्कशास्त्राश्रयणं सहिष्णुतासुहृद्भावाभ्यां सह कृतं शीर्षको-ल्लिखितानां प्रयोजनानां सिद्धिकरम्। नेतोन्यत्सिद्धिकरमिति स्पष्टं साधितं वर्तते। अतः केन्द्रीयशासनस्य पाश्चात्यदेशीय विद्वत्समाजस्य चानुमतोऽयमर्थ इत्युक्तौ न कापि क्षतिर्दृश्यते।

'विभावितः प्रमाणेन कथाभिरनुभावितः।
तर्कस्सञ्चारितश्चायं रसो लोके न दुःखदः।

इति वदन् रसमहार्णवोऽमुमेवार्थं पुष्णाति। मनोविज्ञानवेदिभिः क्रियमाणं शुष्कतर्कनिन्दनं तु सहिष्णुतासुहृद्भावरूपसहकारिविकल—तर्कभावविषयकमिति न कस्याप्यत्र विरोधः, किन्तु सर्वसंप्रतिपन्नोऽयमर्थः इति स्पष्टं वक्तुं शक्यते। श्रीमन्तः

गोस्वामीतुलसीपादा अपि सूक्ष्मेक्षिकया पर्यालोच्यमाने अमुमेवार्थं व्यवस्थापयन्तीति ज्ञायते ।

बन्दौ गुरुपदकंज कृपासिन्धु नररूपहरि ।
महामोहतमपुंज जासु वचन रविकर निकर ॥

इति वाक्यैः तैः ग्रन्थारम्भ एव तर्कशास्त्रदेवता नमस्कृता, महामोहतमो निवारकत्वलिङ्गात्, परमगुरोरीश्वररस्य चरणरूपकत्वात्, 'ईशस्यैष निवेशितः पदयुगे' इति कुसुमाञ्जलिगतस्य पद्यस्य व्याख्याने तद् व्याख्यातृभिः पदयुगेन प्रमाण-तर्करूपतायाः प्रतिपादितत्वात्, न्यायशास्त्र-देवताया एव नरहरिरूपत्वाच्च । नरहरि-दासरूप-गुरुस्मरणन्त्वत्र लोकप्रसिद्धं व्यञ्जनावृत्त्यैव नतु वाच्यवृत्त्या, तदुत्तरपद्येष्वेव "सुकृतसंभुतन विमल विभूति' इत्यादिषु शंभुशिरोलङ्कारतायास्तदीयरजसः उक्तत्वात् । "बन्दौ प्रथभ महीसुर चरना' इति पद्ये देवतारूपगुरुचरणनमस्कारात् तत्पूर्वपद्यताया व्यवस्थापनाच्च । तथाच राजनीतिशास्त्रसम्मतं तर्कशास्त्रस्य अभ्यर्हितत्वं सिद्धम् । इति तृतीयः परिच्छेदः

४--मातापितृगुरुणां एकवाक्यतायां एव शिक्षणं संभवति । प्रियहिताभ्यामनु-वर्तनीयो हि बालः । तात्कालिकसुखसाधनं प्रियं । भाविसुखसाधनञ्च हितम् । तत्र तात्कालिकसुखसाधने प्रवृत्तिर्यद्यपि क्रीड़ादिना भवति स्वरसतः, तथापि क्लेश-सहिष्णुतात्मकं वीररसे प्रवर्तनं रचनात्मकप्रवृत्तिपदवाच्यं न भवति । मूलप्रवृत्तिषु या मनोविज्ञानवादिभिः पठ्यन्ते ताः प्राणरक्षासम्बन्धिन्यो भोजनेच्छा, भयं, क्रोधः अद्भुतदर्शनप्रभवोत्सुकता, घृणा शरणागतिरूपा भक्तिः, अर्थसङ्ग्रहः लोकोत्तरनिर्मितिरूपा रचना चेत्येवं विधा अष्टौ मूलप्रवृत्तयः । आसां पृथक्तयाधुनिकैः पठ्यमानानामेवविधानां मूलप्रवृत्तीनां १९३० सन् पर्यंतं कृतायां परिगणनप्रक्रियायां चिन्तनं अपि कृतम् । किन्तु तासां साहित्यशास्त्रपरिपठितनेतृवर्गेषु हर्षविभावतया उपलक्षणत्वाङ्गीकारे· न कापि क्षतिः । यद्यपि च क्रीडनकर्मणापि हर्षमुत्पाद्य बालानामध्ययनप्रवृत्तिः कर्तुं शक्या तथापि श्रद्धाया उद्गमस्तत्र न कारयितुं शक्यते । श्रद्धायाः प्रेममयरूपत्वात् । यद्यपि देवताभक्तिनिर्माणद्वाराऽध्ययनस्य हर्षजनकत्व संभवति तथापि गुरुभक्तेः तदङ्गत्वात् तच्छरणागतिभावरूपमूलप्रवृत्तिनिर्माणं माता-पित्रोः कार्यं भवत्येव । शरणागतिश्च तस्मिन्नात्मरक्षितृत्वनिश्चयो बालस्य, स माता-पितृभ्यामेव कार्यः न गुरुणा इति सर्वमवदातम् । विचारविकासे सति उत्सुकता यामुत्पन्नायां रचनात्मकप्रवृत्तिः उत्पादयितुं शक्यते न्यायाधीशस्य सैनिकस्य च खेलाप्रदर्शनेन पौगण्डावस्थायामेव । ततः पूर्वन्त्वेतन्न संभवति सामान्यबुद्धिषु बालकेषु । अतः अनुकरणप्रवृत्ति पुरातनीमाश्रित्यैव प्रयत्नः कर्तव्यो भवति । गुरूच्चारणा-नूच्चारणं हि अध्ययनं निर्णीतं मीमांसायाम् । तच्च गुरोः प्रथमतोऽपरिचितत्वात् भयलज्जादिप्रभवयाऽवहित्थया च प्रथमतः गुरुद्वारा न संभवितु मर्हति । अतः प्राणरक्षासंबधिमूलप्रवृत्तेः मातापित्रधीनत्वात्ताभ्यामेव शिशोः पूर्वोक्ताध्ययने प्राणरक्षासंबन्धिमूलप्रवृत्तिसाधने "यद्यदाचरति श्रेष्ठः तत्तदेवेत्तरोजनः इत्युक्त्यनु-

सारेण गुर्वनुसरणे प्रेरणं कर्तव्यं भवति। तत्रापि विशेषतो मात्रा। मातरि हि बालकस्य श्रद्धा प्रेमबहुला, पितरि भयबहुला। एवं सिद्धे प्रवर्तने किञ्चित् कालानन्तरं अभ्यासे रुचिः स्वयमेवोत्पद्यते।

अनया रीत्या— शुश्रूषा श्रवणंचैव ग्रहणं धारणं तथा।
ऊहोपोहोर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः॥

इति परिगणितबुद्धिगुणेषु आद्यगुणस्य शुश्रूषायाः सिद्धिर्भवति। तस्यां सत्यां श्रवणमासेवा अभ्यासरूपा सिद्धयति। एकादशवर्षवयसः प्रागभ्यसनीयाः ग्रन्थाः सर्वे अस्मिन्नेवावसरे क्रमेण अभ्यसनीयाः। सेतुबन्धोक्तक्रमेणाभ्यासव्यवस्था कर्तव्या। इति शुश्रूषासिद्धिश्रवणसंपत्तिर्नाम चतुर्थपरिच्छेदः।

५—एकादशवर्षावस्थातः श्रुतानामर्थानामवधारणं ग्रहणं षोडशवर्षात् प्राक् कर्तव्यं भवति। अवधारणं च इदमित्थमेवेति निश्चयः तदर्थं प्रमाणशास्त्रस्य आन्वीक्षिक्याः अध्ययनं न्यायाधीश खेलनस्याभिनयेन निर्मातव्यम्।

'रागद्वेषवियुक्तास्तु सप्त पञ्च त्रयोऽपि वा।
यत्रोपविष्टा विप्राः स्युस्सा यज्ञसदृशी सभा।

इति वचनेन तस्य देवताराधनार्थत्वावबोधनात्। शेषं शास्त्रार्थविचारपद्धतौ द्रष्टव्यम्। प्रथमं गुरुणा सह संवादेनैतत् क्रीड़ासामर्थ्यं साधनीयम्। तदनन्तरं समर्थस्य जल्पकथायां स्पर्धाप्रवृत्तौ वीररसस्य सिद्धिः तत्कार्यभूतस्याद्भुतस्य च। एतावत्कालपर्यन्तं बालस्य दुष्टसङ्गतिः सर्वथा प्रतिरोद्धव्या। अन्यथा उद्देश्यहानिर्नियता। इति ग्रहणसिद्धर्नाम पञ्चमः परिच्छेदः।

६—इत उत्तरं गृहीतानामर्थानाम् धारणोहापोहतत्वाभिनिवेशानां कृते अगृहीतानामर्थानामवधारणाय च शिक्षाव्यवस्था अर्थशास्त्रोक्तक्रमानुसारेण यावज्जीवमनुष्ठेया भवति। तथाहि—"ब्रह्मचर्यं चाषोड़शाद्वर्षात्। अतो गोदानं दारकर्म च। १—अस्य नित्यश्च विद्यावृद्धसंयोगो विनयवृद्ध्यर्थं तन्मूलत्वाद् विनयस्य। २—पूर्वमहर्भागं हस्त्यश्वप्रहरणविद्यासु विनयं गच्छेत्। पश्चिममितिहासश्रवणे। पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेति इतिहासः। शेषमहोरात्रभागममपूर्वग्रहणं गृहीतपरिचयं च कुर्यात्। अगृहीतानामाभीक्ष्ण्यश्रवणञ्च। ३—श्रुताद्धि प्रज्ञोपजायते, प्रज्ञया योगो, योगादात्मवत्तेति विद्यासामर्थ्यम्"। इति। तत्रैव सप्तदशाष्टादशवर्षे आङ्ग्लादिभाषाऽध्ययनं कर्तुं युज्यते तस्य चतुःषष्टिकलान्तर्गतम्लेच्छितविकल्पकलारूपत्वात्। इति षष्ठः परिच्छेदः।

**'बालकानां पाठ्यक्रमः'**

'शैशवेभ्वस्तविद्यानां यौवने विषयैषिणाम्।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्'।

इति महाकविः कालिदासः विद्याभ्यासं बाल्ये कर्तव्यं मन्यते।

'आषोड़षाद् भवेद्बालः तरुणस्तत उच्यते।
वृद्धस्स्यात् सप्ततेरूर्ध्वं वर्षीयान्नवतेः परम्।

इत्युक्तनयेन एकादशवर्षात् षोडशवर्षावधि ग्रहणपर्यन्तता पूर्वं व्यवस्थापिता। एकादशवर्षात् षोडशवर्षावधि पञ्चसु वर्षेषु आन्वीक्षिक्याः, तथोपनयनानन्तरं त्रय्या अध्ययनं च इत्येतत्—"वृत्तोपनयनस्त्रयीमान्वीक्षिकीं च शिष्टेभ्यः वार्तामध्यक्षेभ्यो दण्डनीतिं वक्तृप्रयोक्तृभ्यः। ब्रह्मचर्यं चाषोडशाद्वर्षात्" इत्यादि वचनैः विहितम्। तत्र त्रय्यध्ययनस्य कालः सप्तसु वर्षेषु प्रतिदिनं घण्टाद्वयं निश्चितम्। एकादशप्रभृतिपञ्चसु बर्षेषु त्रय्या अध्ययनं पूरणीयम्। अथाभ्यर्हितत्वात् आन्वीक्षिक्यध्ययनस्य कालव्यवस्था चिन्त्यते।

श्रीमद्भागवते—रामकृष्णयोः एकादशवर्षप्रभृति समस्तविद्याध्ययनं प्रायः षण्मासाभ्यन्तर एव संपन्नमिति सकारणमुक्तम्। यथा—

तयोर्द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः।
प्रोवाच वेदानखिलान् साङ्गोपनिषदो गुरुः॥
सरहस्यं धनुर्वेदं धर्मान् न्यायपथांस्तथा।
तथा चान्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम्॥
सर्वं नरवरश्रेष्ठौ सर्वविद्याप्रवर्तकौ।
सकृन्निगदमात्रेण तौ सञ्जगृहतुर्नृप॥ इति।

व्याख्यातं च श्री श्रीधरस्वामिभिः श्रीजीवगोस्वामिभिः श्रीवल्लभाचार्यैश्च इदं पद्यम् तस्यायमाशयः—परविद्याऽपरविद्याग्रहणयोः पौर्वापर्यं सम्यगवस्थापयति शुद्धभावानुवृत्तिभिरित्यनेन। तावत्कालस्य मध्यएव समस्तविद्याग्रहणस्य कारणम्। असाधारणगुरुप्रसादेतरानभिकाङ्क्षित्वमिति। तथाचोक्तं सुबोधिन्याम्—"अत्र भावशुद्धिः अलोलुपत्वादिः। गुरुप्रसादेतरकामनाभावश्चेति"॥ एवं स्थिते सकृच्छ्रवणमात्रेण धारणावतो बालस्य कालनिश्चये सन्थागुणनिकावृत्तिक्रमेण धारणा वेदाध्ययनसमये यावतो ग्रन्थस्य भवति तावद्बुद्धिशक्त्यनुसारेण पञ्चसु वर्षेषु पठनीयानां ग्रन्थानामभ्यसनकालो निश्चेतव्यो भवति। काव्याध्ययनेनार्थग्रहणकालो निश्चितो भवति। न्यायशास्त्राध्ययनं तु गुरुणाध्यापितस्य ग्रन्थस्य चिन्तनगुरुणा संवादेन मतिभावस्य संशयच्छेदनाद्यनुभावसहितस्योत्पत्तिः पञ्चलक्षण्यध्ययनकाले अपेक्षितेन कालेन निश्चिता भवेत्। अतः पञ्चलक्षण्यध्ययनसमये अन्यत्सर्वं कार्यं सङ्कोच्य क्रीडासमये स्थापनीयम्। वेदाध्ययनसमयश्च यथावत् पुरस्करणीयः। अवशिष्टः सर्वोप्यध्ययनकालः पञ्चलक्षणीपर्यन्ताध्ययन एव योजनीयः। अनेनैव क्रमेण इतरग्रन्थाध्ययनमपि व्यवस्थापितं भविष्यति इति विद्वद्परिषदो मतम्।

**पाठ्यक्रमः—षड्वर्षात् आरभ्य षोडशवर्षपर्यन्तम्।**

६ वर्षे—(अ) शब्दरूपावलिः, मासत्रयपर्यन्तम्—अस्यां बालकस्य कृते व्यवहारपुरःसरं विभक्त्यर्थस्य ज्ञानमवश्यमेव कारयितव्यम्।—

## जयमङ्गलाक्रोडपत्रम्

### 'काव्यशास्त्रविधिनिषेधानां समन्वयः'

ननु काव्याध्ययनं शास्त्राध्ययनञ्च षोडशवर्षात्प्राक् कर्तव्यमितिप्रसङ्गात् निरूपितम्। परन्तु 'अदोषं गुणवत्काव्यम्' इत्याद्यग्निपुराणवचनानां 'काव्यालापांश्च वर्जयेत्' इत्यादि निषेधपराणाञ्च समन्वयः कथं भवतीति चेत् तत्तदधिकारावस्था-परत्वेन अध्येष्यमाणस्य तत्र तत्र शास्त्राध्ययने प्रवृत्यर्थं ततः ततः निवृत्यर्थञ्च

---

( ब ) धातुरूपावलिः ६ मासपर्यन्तम्, दशलकाराणामर्थस्य भावना कारयितव्या।

( स ) समासचक्रम्—मासत्रयपर्यन्तम् लघुवाक्यानां प्रयोगः कारयितव्यः।

( द ) अष्टाऽध्यायी मूलमात्रं-कण्ठस्थोकरणमस्मिन्नेव समये वर्षपर्यन्तम्।

७ वर्षे—अमरकोषः अष्टमासपर्यन्तम्।

हितोपदेशः—षण्मासाभ्यन्तरे, अनुवादस्याभ्यासः समासस्य परिचयः श्लोका-नामन्वयः कारयितव्यः। रघुवंशः २ सर्गः-षण्मासाभ्यन्तरे, अस्यानुवादस्य अभ्यासः कारयितव्यः।

८ वर्षे—रघुवंशः ३-४ सर्गौ, तर्कसङ्ग्रहस्य मूलमात्रं कण्ठस्थीकरणम्। मनुस्मृतिः ( २ अ० )

९ वर्षे—तर्कसङ्ग्रहस्य अध्यापनम् एवं विभिन्नसन्धोनां पूर्णपरिचयः किराता-र्जुनीयस्य १–२–३ सर्गाः।

१० वर्षे—न्यायबोधिनी एवं तदर्थमपेक्षितन्यायमतसिद्धपदार्थानां परिचयः कामन्दकीयनीतिसारस्य १—७ अध्यायानां कण्ठस्थोकरणमध्ययनञ्च।

११ वर्षे—माथुरीपञ्चलक्षणी एवं शिशुपालवधस्य सर्गत्रयम्।

१२ वर्षे—कामन्दकीय नीतिसारस्य संपूर्णस्य कण्ठस्थीकरणं, मुक्तालली, साङ्ख्यतत्वकौमुदी, प्रबोधचन्द्रोदयनाटकम्, याज्ञवल्क्यस्मृतिसूत्राणि इत्यादि ग्रन्थानामध्ययनम्।

१३ वर्षे—सिद्धान्तलक्षणम, योगदर्शनम् एवं दिनकरीटीकायाः चिन्तनम्। कौटिलीयस्य अर्थशास्त्रस्य १ भागस्य कण्ठस्थीकरणम्।

१४ वर्षे—व्यधिकरणजागदीशी, वेदान्तपरिभाषा, कौटिलीयार्थशास्त्रस्य २ भागः।

१५ वर्षे—सामान्यनिरुक्तिगादाधरी कौटिलीयार्थशार्थशास्त्रस्य ३ भागः।

१६ वर्षे—व्युत्पत्तिवादस्य १ कारकम्।

तस्मात् उपर्युक्त लेखानुसारेण अध्ययनक्रमः राजनीतिविद्भिः यदि परिणम्येत तर्हि षोडशवर्षानन्तरं तारुण्यावस्थायामितरविद्यायां अभिरुचिशीलोऽपि आन्वीक्षिक्यादिविद्यायां कुशलत्वात् न विपथमारोक्ष्यति इति परैः अपरिशीलतः पन्थाः।

## जयमङ्गलाक्रोडपत्रम्

परस्परविरोधितया भासमानानां उभयविधानमपि 'काव्यालापांश्च वर्जयेत्' अदोषं गुणवत्काव्यमि''त्यादीनां वचनानां समन्वयो बोध्यः। एवमेव न्यायशास्त्राध्ययन विषयेऽपि बोध्यम्। एतत्सर्वं श्रीमदाचार्यवर्यभास्कराचार्यकृत 'सेतुबन्धव्याख्यया स्पष्टं भवति। तद्व्याख्यानं विद्वत्प्रस्तावे (पृ० ४१५) पूर्वमुक्तमेव।

### उपनयनाधिकारविचारः

**एकादशे वर्षे** इति। (पृ० ४११) नन्वेवं ब्राह्मणस्योपनयनमष्टमे वर्षे, क्षत्रियस्योपनयनमेकादशे वर्षे इत्येवं वर्षभेदेन स्मृतिकर्तृभिः तत्तत्कालस्य तत्तद्वर्णोपनयनाङ्गत्वमुक्तम्। तत्राऽयं प्रश्नः, उपनयनं प्रति अङ्गत्वेन विहिते वर्षभेदे किं प्रयोजनमिति चेन् निरूप्यते।

ब्राह्मणः विद्यया जीवति। क्षत्रियस्तु शस्त्रेण। इत्येवंरीत्या अनयोः वर्णयोः जीवनव्यवस्था विभिन्नरीतिकत्वेन तत्तत्संस्कारस्वाभाव्यानुसारेण च शास्त्रकर्तृभिः विहिता दृश्यते। तत्र विद्यया जीवने कर्तव्ये विशिष्टतया लोकानुरागसंपादनार्थमात्मनि विशेषतया विनयाधानार्थञ्च ब्राह्मणेन शान्तरसः सत्यतया अभिनेतव्यो भवति। क्षत्रियेण तु शस्त्रेणाजीवनात् सदा युद्धप्रसङ्गे दत्तचेतस्कत्वात् वीररसेनैव भाव्यम्। तत्सत्व एव क्षत्रियस्य जीवनोपपत्तेः। एवं स्थिते क्षत्रियः यदि अष्टमवर्षात् प्रभृत्येव उपनीय कामचारकामभक्षणादितः व्यावर्त्येत तर्हि युद्धार्थं अपेक्षितमात्रया क्षत्रिये बाल्यकाले बलाधानं न भवितुमर्हेत्। अतः क्षत्रिये बाल्यकाल एव शस्त्रेणाजीवनदृष्ट्या वीररसाधायकं बलमाधातव्यं भवति अतः सः कामाचारकामभक्षणादितः न प्रतिरुद्धः शास्त्रकर्तृभिः, तत्काल एव विद्याध्ययने यदि सः प्रेर्येत तर्हि शरीरमनसोः अपेक्षितं बलं न संभवितुमर्हतीति अनुभवसिद्धत्वात्। अतः बलानुकूलस्य कर्तव्यस्य अभ्यासदार्ढ्याय क्षत्रियस्य उपनयनं प्रति अष्टमाब्दस्य अङ्गत्वं नोक्तं शास्त्रकर्तृभिः, अपितु एकादशवर्षस्येति बोध्यम्। एवमेव वैश्यस्योपनयनं प्रति षोडशाब्दस्याङ्गत्वं शास्त्रकर्तृभिः यद्विहितं तदपि वैश्यस्य वणिज्या कर्मदृष्टया निरूपितं बोध्यम्, तस्य वार्ताद्वारैव जीवननिर्बन्धात्। वैश्येन वार्तया जीवने कर्तव्ये सर्वथा सत्यभाषणं कर्तुं नार्हम्। तथोचोक्तं 'सत्यानृतं तु वाणिज्यम्' इति। यदि बाल्यकाले एव वैश्यः उपनीयेत तर्हि बाल्यकाल एव सत्यभाषणस्य संस्काराधानात् षोडशवर्षानन्तरमपि वार्ताकर्मप्रसङ्गे 'यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्' इति न्यायेन अनृतं स न भाषेत। इष्टापत्तौ च वार्ताच्छेदः स्यात्। अतः वैश्यो बाल्यकाले उपनयनात् शास्त्रकर्तृभिः प्रतिरुद्धः। षोडशवर्षानन्तरं तु कृतेऽपि उपनयने बाल्यकाल एव सञ्जातस्य अनृतभाषणसंस्कारस्य दृढमूलत्वात् वार्ताकर्मणि अनृतभाषणे सः ग्लानिन्नानुभवेत्। न च तर्हि उपनयनानन्तरं तेन अनृतं कथं वक्तव्यमिति शङ्क्यम्। शास्त्रेण तस्याभ्यनुज्ञानात्। न च क्षत्रियस्य बलाधानं कर्तुं एकादशवत्सरः उपनयनाङ्गत्वेन शास्त्रकर्तृभिः अभिहितः तदपेक्षया षोडशवर्षस्यैव उपनयनाङ्गत्वं कुतो नोक्तमिति वाच्यम्, षोडशतमे वयसि गार्हस्थ्यप्रवेशाधिकारप्रदा-

ब्रह्मचर्यं[1] चाषोडशाद्वर्षात्। अतो गोदानं[2] दारकर्म च। अस्य नित्यश्च विद्यावृद्धसंयोगो विनयवृद्ध्यर्थं तन्मूलत्वाद्विनयस्य।

---

## जयमङ्गलाक्रोडपत्रम्

नात्। अतस्ततः पूर्वमेव विद्यालाभार्थं एकादशवयसः अङ्गत्वं विहितम्। तदनन्तरञ्च षोडशवर्षात्प्राक् विद्यायां तस्य यथा प्रवेशो भविष्यति तथा क्रमः प्राग् अस्माभिः निर्दिष्टः। (पृ० ४२३) तत एव बोध्यः। इति।

### कालभेदेन उपनयनफलमभीप्सितम्

ननु क्षत्रियस्य बलं शास्त्रकर्तृणां प्राधान्येन अभीप्सितमस्तीति कथं ज्ञायतामितिचेदेवम्। ब्राह्मणादिवर्णानामुपनयनार्थं वर्णभेदेन अष्टमैकादशषोडशवर्षाणामङ्गत्वं शास्त्रकर्तृभिः यद्यपि विहितमस्ति तथापि कामनापरतया ब्राह्मणस्य पञ्चमं वर्षं तदुपनयनं प्रति ब्रह्मवर्चस्वित्वलाभार्थं अङ्गत्वेन मनुना यथा कीर्तितमस्ति तथा विशेषतया बलार्थित्वदशायां क्षत्रियस्य उपनयनं षष्ठे वर्षेऽपि विहितमस्ति। तदुक्तम् म० स्मृतौ—'राज्ञो बलार्थिनः षष्ठे'। इति। ( मनु० २ अ० )।

### बलार्थमुपनयने विरोधपरिहारः

नचैवं बललाभहेतुना क्षत्रियः कामाचारकामभक्षणान्न प्रतिरुद्धः इति पूर्वमुक्तम्। अधुना तु षष्ठे वर्षे क्षत्रियस्योपनयनं बलार्थित्वात् इत्युक्तम् तथासति अनयोः परस्परं विरोधो भवतीति वाच्यम्, बललाभार्थं उपनयनस्य कर्तव्यत्वेन शास्त्रेषु उक्तत्वात्, यत्र कर्मसु कृतेषु बललाभे न्यूनता अनुभूयते तावतां कर्मणां कृतेष्युपनयने अगतिकगतौ सत्यां लोप एव कर्तव्यो भवति, तावतापि षष्ठे वर्षे कृतस्योपनयनस्य न स्वरूपहानिः इत्येव निर्णीतत्वात्। अतो बलं अभीप्सित मिति दिक्।

**शीलेति**। ( पृ० ४११) शीलस्य स्वरूपं स्मृतिमुक्ताफले वैद्यनाथमहोदयैः निरूपितं द्रष्टव्यम्[3] "सद्भिः संभावनीयताहेतुः आत्मगुणसंपत् शीलमि"ति। अस्योपपत्तिः अग्रे स्फुटीकरिष्यते।

**प्रयोगेति**। (पृ० ४११) प्रयोगकुशलाः कर्मशिक्षकाः, अध्यक्षा इति यावत्। तस्माद्ग्रे आन्वीक्षिक्याम् अध्यक्षाः वार्ताया अध्यक्षा इव वर्तन्ते तैः कर्मण्यपि आन्वीक्षिकी परीक्षितव्या। अन्यथा "शास्त्रविद् अदृष्टकर्मा कर्मसु विषादं गच्छेत्" इति कौटिल्येन वक्ष्यमाणा आपत्तिः प्रसज्येत अतः आन्वीक्षिक्यध्यक्षैरपि कर्मकुशलैः भाव्यमिति भावः।

## श्रीमूला

ब्रह्मचर्यमिति। आ षोड़शाद् वर्षात् षोडशं वयोऽभिव्याप्य, ब्रह्मचर्यं, रक्ष्यमित्यार्थम्। अतः पश्चात्। गोदानं केशान्तकर्म, दारकर्म च विवाहश्च। अस्य कृत-

---

नी० टि० १ **ब्रह्मचर्यमिति**। विद्याविघ्नप्रतिषेधार्थम्।

नी० टि० २ **गोदानमिति**। मन्त्रपूर्वकं समावर्तनाख्यं कर्म। मुण्डनमित्यन्ये।

३ तद्यथा—:'तत्तत्कर्म तथा कुर्यात् येन श्लाघ्येत संसदि।
शीलमेतत् समासन कथितं कुरुनन्दन"॥ इति।

### श्रीमूला

दारस्य, विद्यावृद्धसंयोगः विद्यावृद्धैः सह परिचयः, नित्यः दारकर्मोत्तरकालेऽप्यनुवर्त्यः। किमर्थं, विनयवृद्ध्यर्थं विनयस्य शास्त्रसंस्कारस्य वृद्धये। कस्माद् विनयस्य तन्मूलत्वाद् विद्यावृद्धसंयोगप्रभवत्वात्।

### वैदिकसिद्धान्तसंरक्षिणी

चतसृणां विद्यानां ग्रहणान्तिकाध्ययनकालावधिमाह ब्रह्मचर्यमिति। चकारःत्वर्थकः। ब्रह्मचर्यन्तु इति पाठान्तरम्। एतत्फलं टिप्पण्यां द्रष्टव्यम्।[1]

विघ्नप्रतिषेधमात्रेण समस्तविद्याग्रहणं रामकृष्णादीनामभूत्। अन्येषां तु कृते नित्यं विद्यावृद्धसंयोगं अग्रे वक्ष्यति। राजा बालावस्थायां कामिनीजिज्ञासाशून्यः यावद्वर्तते तावपर्यन्तं धर्माथौं यथा ज्ञातौ स्यातां तथा ज्ञापयितव्यः इति वक्ष्यते। (पृ० ४२८) षोडशवर्षानन्तरं तु कामस्य प्रादुर्भावात् सर्वविधसुखसामग्रीसौलभ्याच्च कामिनीजिज्ञासा विद्याध्ययनं प्रति प्रतिबन्धिका भवितुमर्हति इति ग्रहणान्तिक कालः षोडशववर्षावधिः ब्रह्मचर्य उपयुक्तत्वात् कौटिल्येन निर्दिष्टः। नात्र धर्मशास्त्रस्यापि विरोधः।[2] अतः अनन्तरम्। संस्कारान्तरमाह गविति। मन्त्रपूर्वकं समावर्तनाख्यं कर्म। "मुण्डनमित्यन्ये" इति टिप्पण्यां व्याख्यातम्। अत्र अन्ये इत्यस्य सामवेदिनः इत्यर्थो वाच्यः। तेषां कृते मुण्डनसंस्कारस्यापि शास्त्रेषूक्तत्वात्। अथवा गोशब्दस्य केशवाचकत्वात् केशान्तसंस्कारपरत्वमस्य बोध्यम्[3]। "अस्य" इति पदं देहलोदोपन्यायेन उभयत्र अन्वितं बोध्यम्। विद्यावृद्धसंयोगेन जातेऽपि कृत्रिमे विनये गृहस्थेन राज्ञा सदा विद्यावृद्धसंयोगः कार्य इत्याह नित्य इति। तत्फलमाह विनयेति। तन्मूलत्वात् विद्यावृद्धसंयोगमूलत्वात्। अन्यथा नित्यं वृद्धसंयोगाभावे विनयो न समृद्धः स्यात्। इष्टापत्तौच अशुश्रूषुत्वादिप्रयुक्तदोषः राज्ञि प्रसज्येत तेन पुनरपि जाड्यमापद्येत[4]। वस्तुतस्तु षोडशवर्षात्प्राक् ग्रहणान्तिकं अध्ययनं अभूत् अधुना तु अनुष्ठानपर्यवसाय्यपेक्ष्यते तच्च नित्येन विद्यावृद्धसंयोगेन संपादनीयं। तेनागृहीतग्रहणमपि भविष्यति। किञ्च संयोगोऽप्ययं लोकसङ्ग्रहान्तर्गतत्वान्नित्यमनुष्ठेयः।

### जयमङ्गला

ब्रह्मचर्यं च आ षोडशाद् वर्षात्, विद्याग्रहणार्थं धर्मार्थं (च)। अत इति षोडशाद् वर्षादूर्ध्वम्। गोदानं समावर्तनम्। दारकर्म च अस्य समावृत्तस्य परिणयनं

---

१—ब्रह्मचर्यं विद्याविघ्नप्रतिषेधार्थम्।

२—षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम्। तदर्धिकं पादिकं वा ग्रहणान्तिकमेव च॥ मनु ३।

३—तदुक्तं शब्दकल्पद्रुमे—गोः —त्वचि जातत्यादेवास्य तथात्वं। लोम इति।

४—अशुश्रूषा त्वरा श्लाघा विद्यायाः शत्रवः त्रयः। द्यूतं पुस्तकशुश्रूषा नाटकासक्तिरेव च।—

## जयमङ्गला

धमार्थं सुखार्थं च। विद्यानिमित्ता येषां पूजा ते विद्यावृद्धाः। तैश्च नित्यं संयोगः स्यात्। कृतदारकर्मणोऽपि विद्या विनयार्था। विद्याविनीतस्यापि विनयो वर्धते। इदञ्च कर्त्तव्यप्रयोजनासु कर्मविद्यासु।

## जयमङ्गलाक्रोडपत्रम्

**'धमार्थम्'** (पृ० ४२७) विद्याविघ्ननिवारणार्थं इति बोध्यम्। तदुक्तं नीतिनिर्णीतौ टिप्पण्याम्—"विद्याविघ्नप्रतिषेधार्थं" इति। तेन गुरुसविधे स्थित्वा यः यथावदधीते[1] तस्य शास्त्रार्थः स्वयं प्रसन्नो भवति। विघ्नाश्च दूरीभवन्ति। इति भावो बोध्यः। तदुक्तम्—

अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च।
यत्कृपालेशमात्रेण नमोऽस्तु गुरवे सदा॥ इति।

### गोदानशब्दार्थः

**समावर्तनम्**- (पृ० ४२७) मुण्डनमिति यावत्। ननु गोदानमिति मूले संपतितस्य शब्दस्य मुण्डनमित्यर्थः कथमवगतः? इति चेत्, शिष्टैः तथा व्याख्यातत्वात् तदुक्तं टिप्पण्याम् "मन्त्रपूर्वकं समावर्तनाख्यं कर्म। मुण्डनमित्यन्ये" इति।

### षोडशवर्षे विवाहविधिः'

**दारकर्मेति**। (पृ० ४२७) ननु मूलकृता षोडशे वर्षे "ब्रह्मचर्यं चा षोडशाद्वर्षादि"ति ग्रन्थेन गार्हस्थ्याङ्गभूतं विवाहकर्म विहितम्। तत्केन हेतुना? इतिचेत्। अध्ययने षोडशवर्षसमये समुद्भावितस्य प्रतिबन्धकस्यापसारणाय इति गृहाण। तथाहि—

## जयमङ्गलाक्रोडपत्रम्

### कामिनीजिज्ञासा प्रतिबन्धिका

कामिनीजिज्ञासायाः कामिनीज्ञानान्यज्ञानं प्रति प्रतिबन्धकत्वं भवतीति सर्वशास्त्रसम्मतं मतमस्ति। सेयं इतरज्ञानप्रतिबन्धकभूता कामिनीजिज्ञासा पुत्रस्य षोडशवर्षे समुदेतुमर्हति। अतएव तदुदयात्पूर्वं यथा राजपुत्रस्य धर्मार्थवेदनं विद्याचतुष्टयद्वारा संभावयितुं शक्यते तथा अध्यक्षैः शिष्टैश्च यतनीयमिति उक्तं (पृ० ४२७) प्राक्। षोडशवर्षप्राप्त्यनन्तरं राजपुत्रस्य समुदितायां कामिनीजिज्ञासायां सत्यां सा ज्ञानोत्पत्त्यर्थं प्रतिबन्धिका भवेत्। अतः विषयसिद्धिद्वारा तस्याः अपसारणं शास्त्रकृतां सम्मतं अस्ति इति मत्वा कौटिल्येन विषयसिद्धिरूपा कामिनीप्राप्तिः षोडशे वयसि राजपुत्राणां कृते अनुमोदिता द्रष्टव्या। अतएव भारतीयराजनीत्यनुसरणं

---

निद्रा तन्द्रा भयं क्रोधः आलस्यं दीर्घसूत्रता। एतै वै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः
जाड्यविक्षेपव्यासङ्गप्रमादैः कवली कृता। विद्या स्थास्यति नैकापि क्व पुनस्ताश्चतुर्दश।
(धर्मविजय)

यो हेरिव गणाद्भीतः मिष्टान्नात् गरलादिव। राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति।

1—सतो नूचानचेष्टितैः इति—नीतिसार सर्ग-३

### जयमङ्गलाक्रोडपत्रम्

कर्तुंकामेन दशरथादिना षोडशतमे वयसि रामस्य विवाहः संपादितः, इति इतिहासोऽपि शास्त्रप्रमाणमाधारीकृत्य सोपपत्तिकः इति बोध्यम्।

### षोडशे वयसि विवाहविधिफलम्

किञ्च षोडशवर्षात् प्रागेव वेदाध्ययनस्य वृत्तत्वात् तस्मिन् वयसि तन्नियमाः यथाविधि परिहरणीया भवन्ति। तदानीं यदि विवाहो न विधीयते तर्हि अनाश्रमित्वदोषस्य प्रसक्तिर्भवेत्। 'अनाश्रमी न तिष्ठेत्तु' इति निषेधसूचितदोषात् आत्मनः रक्षणं षोडशे वर्षे गृहस्थेन कर्तुं शक्यते। एतावता अपरोऽप्ययं लाभः अस्य, यद् युवावस्थायां प्राप्तः सः सुखेनैव अध्यापयितुं शक्येत इति। अत्रेदं तत्त्वं—यथा यथा पुत्रस्य अभीप्सितफलप्राप्तिः समये समये भवेत् तथा तथा तद्व्यवस्थापनपुरःसरं सः पित्रा मित्रभावं पुरस्कृत्य यदि अध्याप्यते तर्हि सुखेन पुत्रोऽध्येतुं शक्नोति। एवमेव युवावस्थायां स्त्रीशरीरमपि पुत्रस्य अभीप्सितं वस्तु अस्ति तदेव पित्रा संपादितम, 'प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेदि''ति वाक्यात्[1]। अतो युवावस्थामापन्नस्य बालकस्य सुखलभाय स्त्रोप्राप्तेः अत्र विधानं कृतम्। तदेवोक्तं जयमङ्गलाकृता ''सुखार्थं चेतो''त्यादिना ग्रन्थेन इति।

### 'स्वल्पे वयसि विवाहेपि ब्रह्मचर्यस्य न हानिः'

नन्वेवं षोडशे वयसि विवाहः शास्त्रकर्तृभिः यदि अनुमन्येत तर्हि पूर्णतया युवावस्थामप्राप्तस्य राजपुत्रस्य ब्रह्मचर्यहानिरूपो महान् दोषः प्रयुक्तो भवेत्? इति चेन्न। विवाहमात्रमेव ब्रह्मचचर्यहानिं प्रति प्रयोजकं इति नाऽस्ति स्थितिः यया उक्तदोषः आपादयितुं शक्येत। यस्मिन् समये षोडशवर्षीयः कुमारः विवाह्यते तस्मिन् समये कन्या कियद्वयसी अपेक्ष्यते? इत्यादि शास्त्रकर्तृभिः चिन्तितमस्ति।

''त्रिंशद्वर्षो भवेत् कन्यां हृद्यां द्वादशवार्षिकीम्''। इति मनूक्त्यनुसारेण षोडशवयस्को बोढा स्यात् तर्हि कन्या षट्सप्तान्यतरवयस्का भवितुमर्हति इति शास्त्रसम्मतमस्ति इति निर्णेतुं शक्यते। अतएव रामायणे सीतारामयोः विवाहप्रसङ्गे रामस्य षोडशवयस्कत्वं आसीत् सीतायाश्च सप्तवयस्कत्वमिति।

अत्रेदं बोध्यं— कामसूत्रोक्त्यनुसारेण अधोनिर्दिष्टायुर्वेदावचनानुसारेण साङ्कर्यदोषात् समाजस्यसंरक्षणोद्देश्येन च शास्त्रकर्तृभिः कन्यायाः विवाहसमयः ऋतुदर्शनात् प्राक् सप्तमवर्षादारभ्य दशमवर्षपर्यन्तं निश्चितः। एतत्समये कन्यायः ऋतुदर्शनस्य

---

१ तदुक्तं कामसूत्रे 'भिक्षुकी श्रमणाक्षपणाकुलटाकुहकातीक्षणिकामूलकारिकाभिः न संसृज्येत। शय्या च गुरुजनमूले तदभिमता कार्यंनिष्पत्तिः नायकाभिमतानाञ्च अर्थानामर्जने प्रतिसंस्कारे च यत्नः। ४३। ज्ञाति कुलस्याभिगमतम् अन्यत्र व्यसनोत्सवाभ्याम् तत्रापि नायकपरिजनाधिष्ठिताया नातिकालमवस्थानमपरिवर्तित प्रवास वेशपात्र— गुरुजनानुज्ञातानां करणमुपवासानाम्। ४६''। इति।

## जयमङ्गलाक्रोडपत्रम्

असंभवात् तत्संसर्गोऽपि शास्त्रकर्तृभिः निषिद्धः। स च अभिभावकैः श्वशुरादिभिराप्तैर्मात्रादिभिः पित्रादिभिश्च यथा परिपालितो भवेत् तथा यतनीयमेव।

### बालाया अविवाहे दोषोऽपरिहार्यः

अन्यथा स्त्रीपुरुषयोः पूर्णयुवावस्थां अप्राप्तयोः विवाहेन संसर्गो दुर्निवारः इति मत्वा स एव मा भवतु इत्येतदर्थम् तयोः विवाह एव अवरोद्धव्यः इत्येवं कृतायां मनीषायामपि यथासमयमकृतेऽपि विवाहे प्रौढावस्थाप्राप्त्यनन्तरं संभावितानामपराधानां दुरपनेयत्वं संभविष्यति। अतः यथा अकृतविवाहानां संरक्षणमभिभावकैः कर्तव्यं तथैव कृतविवाहानां बालकानामपि संरक्षणं क्रियेत तर्हि को वा दोषः इति सुधिय एव विचारयन्तु। न च बाल्यकाले विवाहकरणे, प्रौढावस्थायां विवाहकरणे वा उभयत्र समानस्थितिकत्वात् बालाविवाहे किं वैशिष्ट्यमिति शङ्क्यम्। बालावस्थायां विवाहमकृत्वा प्रौढावस्थाप्राप्तायामपि सा अनूढा तिष्ठति तर्हि तस्यां वक्ष्यमाणप्रच्छन्नदोषस्य समाजे आपादनीयत्वात्। तथाहि--बाल्यावस्थायामकृते विवाहे गुल्मादयः दोषाः संभवितुं शक्यन्ते, इति आयुर्वेदशास्त्रेषु प्रतिपादितं वर्तते। तत् विस्तरेण लेखरूपेण साङ्गवेदविद्यालयीये स० २०२२ वार्षिकविवरणे प्रकाशितमस्ति[१] तत्रैव द्रष्टव्यम्।

---

१ वयः स्थापनविषये—

१६ वयसि स्त्रीणां, ३० पुंसां संयोगयोग्यः काल इति निगमनं सर्वसाधारण्येन कृतं न योग्यम्। तथाहि—स्त्रीणां त्रिधा प्रकृतिरुक्ता वातपित्तकफभेदात्। यथोक्तम्—

वातजा पित्तजा चेति दारुणा त्रिविधा स्मृता।
वातजा द्वादशे वर्षे पित्तजा च चतुर्दशे।
दारुणा षोडशे वर्षे शोणितं पतति ध्रुवम्।
( इतिकालनिर्णयदीपिकायाम )

एवं प्रकृतिभेदेन ऋतुकालभेदात्, तथा दर्शनाच्च दारुणायाः षोडशे वर्षे संयोगयोग्यत्वेऽपि इतरयोः तथा निगमने वक्ष्यमाणदोषसम्भवः। तथाहि—

ऋतुस्नाता तु या नारी स्वप्ने मैथुनमाचरेत्।
आर्तवं वायुरादाय कुक्षौ गर्भं करोति हि।
मासि मासि विवर्धेत गर्भिण्या गर्भलक्षणम्।
कललं जायते तस्या वर्जितं पैतृकैर्गुणैः। ( चरके )

इत्याद्युक्तानां अनेकविधरोगाणामुत्पत्तिसम्भवः। ततस्तयो रक्षणं षोडशवयोमाननिगमने दुष्करं दृश्यते। प्रशस्तपादभाष्ये—

"कामी क्रुद्धो वा यदा यमर्थमादृतश्चिन्तयन् स्वपिति तदा सैव चिन्तासन्ततिः प्रत्यक्षाकारा सञ्जायते" इति स्वप्नदर्शनमुपपादितम्। एवमन्यविधाश्चाधयः सन्दृश्यन्ते। ततः कथं तासां रक्षणम्? अतएव—

**जयमङ्गलाक्रोडपत्रम्**

विशेषविवरणमधिकं ( पृ० ३७९ तः ३९१ पृष्ठपर्यन्तं ) प्राक् प्रपञ्चितम् ज्ञेयम् ।

तदिदं न अवास्तविकमिति प्रौढाविवाहे कृते प्रच्छन्नतया संभावितानां पापानां रोगाणाञ्च निवारणं कथमपि कर्तुं न पार्यते इति प्रतिदिनं पदे पदे गर्भपातादि श्रवणात् अनुमीयते । एवमेव यथा इयम् अवैधो प्रवृत्तिः दुर्निवारा तथा स्त्रीणां बाल्ये वार्धक्यमपरिहार्यं स्यात् इत्यपि अपरो दोषः अनुमन्तव्यः, 'स्त्रीणाममैथुनं जरा' इति नीतिवाक्यामृतादिवचनात् । अतः बाल्यावस्थायां बालिकायाः कृते विवाहे न गुल्मादिरोगाणां प्रसक्तिः इत्यस्मिन् महति गुणे संभाविते बालाविवाहे वृथा दोषोद्भावनेन किंप्राप्तमिति न विद्मः । तस्मात् अभिभावकानां प्रातिभाव्ये बालाविवाहे कृतेऽपि स्त्रीपुरुषसंसर्गस्य अप्रसक्त्या न कथमपि ब्रह्मचर्यस्य हानिः भवितुमर्हतीति बोध्यम् ।

**विवाहकालबोधकवचनसमन्वयः ।**

नन्वत्र षोडशेवर्षे विवाहः विधीयते धर्मशास्त्रे तु क्वचित् "त्रिंशद्वर्षो वहेत्कन्या"मित्याद्यपि विहितमस्ति । तदनयोः कथं सामञ्जस्यं स्यात् ? इतिचेत् कामनापरतया तत्सङ्गमयितुं शक्यते । तथाहि—यदि स्वशाखामधीत्य अपरं वेदमध्येतुं वाञ्छति तर्हि अभिलाषानुसारेण अपरमधीत्य 'त्रिंशद्वर्षानन्तरं स्नायात्' इत्याद्यभिप्रायेण 'त्रिंशद्वर्षो वहेत्कन्यामि"त्यादिवचनानि सङ्गमनीयानि । एवमेव अन्यत्रापि बोध्यम् । एवं स्थिते कौटिल्येनाऽपि षोडवर्षे विवाहः उक्तः तस्यापि कारणं समस्तविलाससामग्रीसौलभ्येन राजपुत्रस्य कामिनीजिज्ञासाया उदयः । इत्येतत्सर्वं प्राङ्निरूपितमेव ( पृ० ४२८ ) इति नात्र विवाहकालविधायकवचनानां विरोधो बोध्यः ।

**'येषामिति'** । (पृ० ४२८) विद्याभिजनदेशवृत्तशीलसंपन्नानामित्यर्थः ।

**'तैरिति'** । (पृ० ४२८) विद्याभिजनदेशवृत्तशीलसंपन्नैः सह संयोग इन्द्रियाणां

---

"ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् ।
यद्याधत्ते पुमान् गर्भं गर्भस्थः स विपद्यते ॥
जातो वा न चिरं जीवेत् जीवेद्वा दुर्बलेन्द्रियः ।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत्" ॥

इति सुश्रुतवचनं दारुणप्रकृतिविषकं भवति । तत्रैव प्राचीनलिखितपुस्तकेषु 'ऊनद्वादशवर्षायामिति पाठो दृश्यते । स पाठः वातजप्रकृतिविषये सङ्गच्छते । अतएव "पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता" इत्याद्यष्टाङ्गशारीरवचने 'प्रायिकं चैतत् अर्वागपि साधुगर्भदर्शनात्' इति व्याख्यातमरुणदत्तेन । तस्मात् सर्वसाधारण्येन ऋतुदर्शनमेव तत्र संयोगोपलक्षितःकालः संयोगयोग्य इति वक्तुं युक्तम् । एवं स्थिते उपरिप्रदर्शितं शास्त्रीयं सर्वं प्रकारं विहाय केवलं षोडशवयोमानमेव सर्वासां विवाहविषये निर्धारितं नानुमन्तुं योग्यमिति ।

## जयमङ्गलाक्रोडपत्रम्

विरुद्धप्रतिपत्त्यभावाय[1] भवति इत्येतत् विद्यावृद्धसंयोगस्य फलं बोध्यम् ।

**नित्यं संयोग** इति । (पृ० ४२८) तदिदं "मधुमांसादि अवर्जयन् गुर्वधीनो भूत्वा स्नातकः वेदार्थं विचारयेत्" इति मीमांसकैरुक्तम् तदेवात्रापि बोध्यम् । तेन कृतेऽपि विवाहे देशस्य यथावत् स्थितिरक्षणात् राजा न कदापि स्वकर्मणः हीयेत इति तात्पर्यम् ।

## दारकर्मानन्तरभाविफलम्

**'कृतदारकर्मण'** इति । (पृ० ४२८) दारकर्मणः पूर्वं न हि सर्वोऽपि कामसूत्रप्रभृत्यन्तर्गतव्यावहारिकविषयः वर्ज्यत्वावर्ज्यत्वज्ञापनदृष्ट्या ज्ञापनीयो भवति अतः दारकर्मानन्तरमेव विद्यावृद्धसंयोगस्य इन्द्रियाणां विप्रतिपत्त्यभावात्मकं फलं यथावद् राज्ञा ज्ञातुं शक्यते इति ध्वनितम् ।

**कर्तव्यप्रयोजनासु** इति । (पृ० ४२८) व्यापारव्यायामविद्यासु इति तदर्थः । तदुक्तम् जयमङ्गलायाम् "सत्योप्यन्याः कर्मविद्याः व्यापारव्यायामप्रयोजनाः नोक्ताः" इति (१ सर्ग प्र० ३) ।

## कर्मविद्यानां वैशिष्ट्यम्

ननु कर्तव्यप्रयोजनासु इत्यनेन कर्मविद्यायाः ज्ञानविद्यापेक्षया वैशिष्टयं कीदृशमवगम्यते ? येन कर्तव्यप्रयोजनासु इति विशेषणं सार्थक्यं संभवेत् ? इतिचेन्निरूप्यते । विद्यायाः प्रयोजनं द्विविधमुपलभ्यते । एकं ज्ञानं, अपरञ्च तेन सह कर्माऽपि । तत्र उभयमपि उक्तं प्रयोजनं यत्र सा कर्मविद्या, तस्यां वार्ता-राजनीतिश्च अन्तर्भवतः । अर्थात् सम्यग् अवगतापि वार्ता राजनीतिश्च विद्या तावत्पर्यन्तं पूर्णा न भवति यावत्पर्यन्तं तदुदितमनुष्ठाय नानुभूयते । अपरा तु विद्या ज्ञानमात्रेणापि साफल्यं भजते इति वार्ताशास्त्रं राजनीतिशास्त्रञ्च प्रयोगशास्त्रत्वेन व्यपदिश्यते शास्त्रेषु । आन्वीक्षिकी तु अनुमन्तव्यत्वात् विचारमात्रेणैव सफला-भवितुमर्हति । एवं त्रय्यपि धर्मं ज्ञापयन्ती न सर्वविधं स्वकीयं कर्म अनुष्ठातुं धार्मिकं प्रेरयति । यतः नित्यकर्मसु कानिचन तदङ्गानि यदि नानुष्ठीयन्ते तथापि नित्यकर्मानुष्ठितमितिकृत्वैव क्वचित् कदाचित् तदकरणप्रयुक्तप्रत्यवायपरिहार-रूपं फलं संरक्षितुं शक्यते । एवमेव नित्यकर्मातिरिक्तविषयेऽपि यावान्विचारः अपेक्षितः स सर्वोऽपि त्रयीविद्यया कृतः । परं तत्काले तदनुबन्धी धर्मस्तु नानुष्ठितः । तावतापि न हानिः, कदाचिद् विलम्बेनापि सति संभवे नित्यकर्मातिरिक्तकर्मणा-मनुष्ठातुं शक्यत्वात्, असामर्थ्ये तदकरणे प्रत्यवायाभावाच्च । अतः त्रयीविद्यायाः नाऽयं आग्रहः यत् तदुदितः सर्वोऽपि धर्मः सर्वदा अनुष्ठेय एवेति । एवं स्थितिः वार्ताराजनीतिशास्त्रविषये नाऽस्ति । तदुदितं कर्म यत् यदा अपेक्षितं तदा अधिकारिणा नानुष्ठीयते तर्हि तत्कर्महान्या अर्थस्य जनानुरागस्य च दृष्टस्य हानिः प्रसज्येत ।

---

तदुक्तम्— १ शास्त्राय गुरुसंयोगः शास्त्रं विनयवृद्धये ।
विद्याविनीतो नृपतिः न कृच्छ्रेष्ववसीदति ।
ज० म० स्थैर्यं प्रतिपत्त्यसंमोहाद् इत्यादि ।

## जयमङ्गलाक्रोडपत्रम्

### वार्ताराजविद्ययोः कर्मविद्यात्वम्

किञ्च आन्वीक्षिकीं त्रयीं च विद्यां अधीत्य यदि तदुदितमध्येत्रा नानुष्ठीयते तर्हि तदपराधात् स्वस्य स्ववंशस्य वा हानिः संभवेत्। वार्ताराजनीतिशास्त्रयोः अननुष्ठाने तु न केवलं एकस्यैव हानिः अपितु समस्तस्य देशस्य हानिः प्रसज्येत इति कर्तव्यप्रयोजनासु इति विशेषणेन जयमङ्गलाकृता वार्ताराजनीतिशास्त्रयोः कर्मविद्यात्वं प्रतिपादितम्।

ननु आन्वीक्षिक्यादिविद्याचतुष्टये ज्ञानविद्यात्वमस्तीति प्रतिपाद्यते तदुक्तं 'धर्मार्थौ यद्विद्यात् तद्विद्यानां विद्यात्वमिति'। कर्मविद्यात्वं तु आन्वीक्षिक्यादि-चतुष्टयात् पृथक्भूतासु विद्यासु अस्ति इति प्रतिपादितम्। तदुक्तं नीतिसारे—

'विद्याभिराभिर्निपुण चतुर्वर्गमुदारधीः'।
विद्यात् तदासा विद्यात्वं विदज्ञाने निगद्यते ॥ इति।

अत्र तु कर्तव्यप्रयोजनासु इति ग्रन्थेन वार्ताराजनीतिविद्ययोः कर्मविद्यात्व कथं प्रतिपाद्यते ? इति चेन्न। 'चतस्र एव विद्याः' इति व्याख्याने दत्तोत्तरत्वात्। ( पृ० ८६ ) अत्र कर्मविद्यात्वं न तदुक्तन्यायेन द्रष्टव्यमपि तु दृष्टफलानुसारेण वार्ताराजनीतिशास्त्रोदितं कर्तव्यमेव अन्यथा दृष्टस्य देशस्य च हानिः स्यात्। नेईदृशो महती हानिः आन्वीक्षिकीत्रय्युदितकर्माननुष्ठाने। इत्येवंरीत्या नात्र विरोधो मन्तव्यः।

### 'वार्ताराजनीतिशास्त्रयोः प्रयोगविधानं सार्वदिकम्

ननु वार्ताराजनीतिशास्त्रोदितं कर्म प्रयोगात्मकमस्तीति कृत्वा अनयोः शास्त्रयोः प्रयोगशास्त्रत्वं भवतीति कथने सकृदनुष्ठानेनापि तयोः प्रयोगशास्त्रत्वं मन्तव्यमथवा सदा तदनुष्ठानेऽवधातव्यम् ? इति चेत् सदा अवधातव्यमित्युच्यते। यतः—वार्ता लाभार्था वर्तते। लाभश्च अर्थस्य अभिप्रेतः। यदा हि अर्थः सञ्चितो भवति सञ्चेतव्यो वा तदा तद्ग्रहणाय अन्येऽपि सर्वदा चेष्टन्ते प्रतिक्षणमर्थंलुण्ठनाय मनोवृत्तीनां विभेददर्शनात्। किञ्च सदा अर्थलाभाय तत्कालं प्रयोगभेदः वार्ताध्यक्षेण पुनः पुनः कल्पनीयो भवति। यदि तत्र विलम्बो भवति तर्हि वार्ताया उच्छेदाल् लोकस्यापि उच्छेदः संभाव्यते[1] इति। एवमेव वार्तासदृशी स्थितिः राजनीतावपि वर्तते,

'स्वल्पेनाप्यपचारेण ब्राह्मण्यमिव दुष्यती'ति वचनात्।

किञ्च राजनीतिविषये काकणिकामात्रमपि राजा भ्रान्तः सन् वर्तेत तर्हि सः स्वयं परिणामे असह्यदुःखभागित्येव न, अपि तु विद्यानां समस्तानां सतीत्वं,

---

१ तदुक्तम्—वार्ताच्छेदे हि लोकोऽयं श्वसन्नपि न जीवति।
पाशुपाल्यं कृषिःपण्यं वार्ता वार्ता तु जीवनम्।
संपन्नो वार्तया साधु नावृत्तेर्भयमृच्छति।

## जयमङ्गलाक्रोडपत्रम्

वर्णाश्रमानां प्रतिष्ठितत्वञ्च सत् अपि, असदिव भवत् देशे व्यामोहाय कलहाय मात्स्यन्यायप्रसरणाय च सहायकं भूत्वा देशपारतन्त्रस्य आपादकं स्यात्[1]।

अपि च भूतकालीनलोकमनोवृत्तिवैचित्र्यानुसारेण पूर्वं निर्णीतं नीतिप्रयोगं तदोयोत्तरमनोवृत्तिवैचित्र्यं प्रहापयति इति, चपलेयं राजनीतिः अतीव एकाग्रचित्तेन राज्ञा सदा प्रयोक्तव्या भवति, किं केन कदा कर्तव्यमिति निर्णेतुं अशक्यत्वात् स्वत एव अनूचानेन भूत्वा राजनीतिप्रयोगस्य निर्णयत्वाच्च। अतो वार्ताराजनीतिशास्त्रयोः प्रयोगशास्त्रत्वं अनुमतमिति तयोः सर्वदा देशकालभेदेन पृथक् पृथक् प्रयोग भदविषये अवधातव्यम् तदुक्तम् नीतिसारे—

प्रादुर्भवन्त्यर्थसमं यस्माच्चित्तान्यनुक्षणम्।
तस्माद् योगीव सततं भावयेत् सुसमाहितः॥ इति।

### नीतिप्रयोगभेदोऽदृष्टोत्पादकः

न चैवंरीत्या राजनीतिप्रयोगस्य देशभेदेन कालभेदेन च पृथक् पृथक् कल्पने तस्य अदृष्टार्थत्वमास्तिकैः शब्दप्रमाणवादिभिर्वा नानुमन्येत इति वाच्यम्, पृथक् पृथक् प्रयोगभेदस्य अपच्छदन्यायेन अदृष्टोत्पादकत्वमस्तीति मीमांसकैः स्वीकृतत्वात्[2]।

---

१ तदुक्तम्—आन्वीक्षिकी त्रयी वार्ताः सतीर्विद्याः प्रचक्षते।
सत्योपि हि न सत्यस्ता दण्डनीतेस्तु विभ्रमे॥
दण्डनीतिर्यदा सम्यङ्नेतारमधितिष्ठति।
तदा विद्याविदः शेषाः विद्याः सम्यगुपासते॥
वर्णाश्चैवाश्रमाश्चैव विद्यास्वासु प्रतिष्ठिताः।
रक्षेत्ता रक्षणात्तासां तद्धर्मस्यांशभाङ् नृपः॥ इति।

२ तदुक्तम्—अपच्छेदाधिकरणे शास्त्रदीपिकायां अ० ६ पा० ५ अ० १७, १८, १९
उद्गातुः प्रतिहर्तुश्च सहापच्छेदनेऽस्ति न।
प्रायश्चित्तमुतास्त्यत्र, न निमित्तविघाततः॥
एकैकस्यैव विच्छेदकर्तृत्वान्नु विहन्यते।
कालमात्रं तु तत्रैकं प्रायश्चित्तमतो भवेत्॥

'ज्योतिष्टोमे बहिष्पवमानं प्रसर्पतां यदि प्रस्तोतापच्छिन्द्याद्ब्रह्मणे वरं दद्यात् यदि प्रतिहर्ता, सर्ववेदसं दद्यात् यद्युद्गातापच्छिन्द्याददक्षिणं तं यज्ञमिष्टवा तेन पुनर्यजेत तत्र तद्दद्याद्यत्तस्मिन् दास्यन्स्यादिति तद्यदोद्गातृप्रतिहर्त्रोर्युगपदपच्छेदो भवति तदा किं प्रायश्चित्तं कर्तव्यं नवेति संशयः। तत्रोभाभ्यां क्रियमाणोऽपच्छेदो नैकेन व्यपदेष्टुं शक्यते। तस्माद्यौगपद्ये निमित्तविघातात् प्रायश्चित्तं न कर्तव्यम्।

'स्यादेवं यदि कर्तृत्वं सापेक्षमुभयोर्भवेत्।
एकैकस्य तु यत्नेन निरपेक्षेण जायते॥
विच्छेदस्तेन कर्तृत्वं द्वयोः प्रत्येकमस्ति नः।
कालमात्रं नु तत्रैकं प्रायश्चित्तमतो भवेत्॥

**जयमङ्गलाक्रोडपत्रम्**

**अपच्छेदन्यायस्य लौकिकता**

न च अपच्छेदन्याये अदृष्टार्थत्वस्य शोभनीयत्वेऽपि दृष्टव्यवहारे स न सुचिन्त्य-इति वाच्यम्, चिकित्साप्रसङ्गे अस्य न्यायस्य क्लृप्तत्वात्। तद्यथा—सन्निपातव्याधिः अतीव दुःश्चिकित्स्यो भवति प्रतिक्षणं विजातीयदोषाणामभिवृद्धिसंभवात्। यस्मिन् क्षणे वायुं प्रकुपितं दृष्टवा तत्प्रशमनाय वैद्येन चिकित्सार्थमौषधानि उपयोक्तुं प्रारभ्यन्ते। तस्मिन्नेव क्षणे पित्तस्य विकृतिः यदि उद्भूता भवति तर्हि पूर्वं कल्पितां चिकित्सापद्धतिं त्यक्त्वा अन्या पद्धतिः उपयोक्तव्या भवति वैद्येन, वायुं प्रशमय्यैव तदानीं पित्तस्य समुद्भवात्। एवमेव कफादीनां विकृतावस्थायां बोध्यम्। सेयं चिकित्सापद्धतिः मीमांसकैः निर्दिष्टां अपच्छेदन्यायसरणिमनुमापयति। अर्थात् यथा सन्निपातदौ पूर्वं सञ्जातदोषं प्रशमय्य अनन्तरं दोषान्तरस्य यथा यथा प्रकोपो भवति तथा तथा तदनुसारेण चिकित्सापद्धतिरपि विभिद्यते। तथैव पूर्वस्य अपच्छेदे पूर्वं संजातमपच्छेदसूचितं दुरदृष्टं प्रशमय्यैव अपच्छेदान्तरस्य तत्सूचितस्य दुरदृष्टस्य संभवात् पूर्वजनितापच्छेदसूचितदुरदृष्टस्य विनाशार्थं यत्प्रायश्चित्तं कल्पितमासीत् तस्य द्वितीयापच्छेदादृष्टसूचितदुरदृष्टसमये-पूर्वसञ्जातापच्छेदसूचितादृष्टविलोपात् पूर्वं निर्णीतं कर्तव्यं प्रायश्चित्तात्मकं बाधितं भवति अतः प्रायश्चित्तान्तरं कल्प्यं इति अपच्छेदन्यायः न लौकिक कल्पनातीत इति भावः। एवञ्च प्रतिक्षणं विभिन्नापच्छेदप्रसङ्गे प्रयोगा अपि विभिन्ना विभिन्ना एव कल्पयितव्या भवन्ति। पुनः तेषां शास्त्रसम्मतत्वञ्चास्ते। एवं अपच्छेदन्यायेन कल्पिते निमित्तभेदानुसारिणि प्रायश्चित्तान्तरेपि च। तथा वार्ताराजनीतिशास्त्रप्रयोगस्य प्रतिक्षणं निमित्तभेदेन विभिन्नतया विभिन्नतया कल्पनीयत्वेऽपि शास्त्रसम्मतत्वमस्त्येवेति ध्येयम्।

**शास्त्रनिर्णयस्य नापच्छेदन्यायेन बाधः**

नचैवं उक्तापच्छेदन्यायेन इदमवगम्यते यत् उत्तरकाले सञ्जातनिमित्तेन पूर्वनिमित्तजनितं फलं बाध्यते तर्हि शास्त्रनिर्णयानन्तरभवेन लोकनिर्णयेन शास्त्रनिर्णयोपि बाध्यताम् इति वाच्यम्। शास्त्रनिर्णयबाधस्य लोकनिर्णयेन शास्त्रविपरीतेन असर्वज्ञप्रणीतेन भ्रमप्रमादादि दोषकवलितैन अनन्चान कल्प्तेन बाधितुमशक्यत्वात्।

**प्रयोगभेदे नियामकं**

अत्रेदं तत्वं यद्यपि प्रतिक्षणं राजनीतिप्रयोगाः कल्पनीया भवन्तीति सिद्धम् तथापि ते शास्त्रं तन्निष्णात गुरुञ्च उपेक्ष्य न कल्पनीयाः अन्यथा तथाकरणे महत्या हानेः प्रसङ्गात्। तदुक्तं "दण्डनीतिं वक्तृ—प्रयोक्तृभ्यः" इति। हान्युदाहरणं टिप्पण्यां व्यक्तम्[१]।

---

१ अकृत्वा गुरुं यदि कश्चित् कञ्चन प्रयोगं पूर्णतया अवगन्तुं चेष्टते तर्हि सः तत्र सफलो भविष्यतीति न विश्वसितुं शक्यते। एतद्विषये काचन लौकिकी कथा श्रूयते।

गूजासञ्ज्ञकं पात्रं द्रविडदेशे प्रसिद्धमस्ति तस्य कांस्यमयस्य निर्मितिकलां जानानः द्रविड़देशे कदाचित् एक एव आसीत्। कश्चिदपरः गुरुम—

पूर्वमहर्भागं[1] हस्त्यश्वरथप्रहरणविद्यासु विनयं[2] गच्छेत्, पश्चिममितिहास-

## जयमङ्गलाक्रोडपत्त्रम्

टिप्पण्युक्तेतिहासस्य एतत्फलमस्ति यत् यावत्पर्यन्तं गुरुद्वारा शिष्टाचारः सुदृढः शोभनीयो ज्ञातो न भवेत्। तावत्पर्यन्तं विद्यायाः परिपाकस्थानीयं प्रतिबोद्बोध-द्वारा प्राप्तव्यं यच्छ्रेयः तत् कदापि सुचारुतया न समुत्पत्स्यते। स्वकल्पिते विचारे अप्रमितत्वसंभावनासंभवात्। तत्र प्रमाणं अघोनिर्दिष्टं न्यायसूत्रं द्रष्टव्यम्।

"तं गुरुशिष्यसब्रह्मचारिशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेया"दिति। यद्यपि उपर्युक्तं फलमत्रः सूत्रे नोपवर्णितं तथापि उपर्युक्तं निःसन्दिग्धत्वं 'तं गुरुशिष्यादि-सूत्रविवरणदर्शनात् स्फुटं भवति।

### नीतिसारस्य विद्यानिरूपणे न्यूनतापरिहारः

नन्वेवं कर्तव्यप्रयोजनासु इत्यादिना कर्मविद्याः उल्लिखिताः। नीतिसारकृता तु तासां उल्लेख एव न कृत इति तस्य न्यूनत्वं स्यादिति चेन्न। नीतिसारकारमतेन ज्ञानविद्यानां प्राधान्यमधिकृत्यैव विद्याविभागप्रकरणप्रणयनात्। तदुक्तं जयमङ्गलायां नीतिसारव्याख्यायां "आन्वीक्षिक्याद्या ज्ञानविद्या इति दर्शयती"ति।

## श्रीमूला

भूयः कलाभ्यासं राज्ञ उपदेष्टुमाह—पूर्वमिति। पूर्वम् अहर्भागम् अत्यन्त-संयोगे द्वितीया। हस्त्यश्वरथप्रहरणविद्यासु हस्तिचर्यायामश्वचर्यायां रथचर्यायाम् आयुधविद्यायां च, विनयं शिक्षां, गच्छेत्। पश्चिमं तृतीयमहर्भागम्, इतिहासश्रवणे,

---

कृत्वैव उक्तपात्रनिर्माणकलामपहर्तुकामः तन्निर्मितिकलाशालायामुपस्थितोऽभूत्। दूरे स्थित्वा तेन गूजापात्र निर्माणपद्धतिं विलोक्य उक्तपात्रं निर्ममे। परन्तु इदं हि गुरुमपृष्ट्वा अपरेण निर्मितं पात्रं चालनीयवत् अनेकछिद्रसंपन्नमभूत्। तस्य निराकरणोपायं कृतेऽपि प्रयत्ने सः नाजानात्। पर्यन्ते दीनो भूत्वा उक्तपात्रनिर्मिति कलाविदं छिद्रकारणं पप्रच्छ। सोऽवोचत्। यस्मिन् समये कांस्यरसः उक्तपात्र-निर्माणाय मूषायां प्रक्षिप्यते। तस्मिन्नेव समये मूषयाः अन्तः संभूता बालुकाकणाः आध्मानेन आदौ अपसारयितव्याः ततः कांस्यरसः मूषायां निक्षेप्तव्यः इति। एवं रीत्या कर्मप्रधानानां, विद्यानामध्ययनं गुरुसेवाद्वारा यथावत् बोधपर्यन्तं आलाभं कर्तव्यं भवति। इति।

नी० टि० १ **पूर्वमिति**। भोजनकालात् प्राक्।

,, २ **विनयमिति**। तद्विद्यावृद्धसंयोगात्।

श्रवणे[१]। [२]पुराणमितिवृत्तमाख्यायिकोदाहरणं[३] धर्मशास्त्रं अर्थशास्त्रं चेतीतिहासः ।

---

**श्रीमूला**

**विनयं गच्छेत्** । इतिहासपदार्थविवरणं पुराणमित्यादि । पुराणं ब्राह्मादि । इतिवृत्तं श्रीरामायणमहाभारतादि । आख्यायिका दिव्यमानुषादिचरित्रम् । उदाहरणं न्यायोपन्यासशास्त्रं मीमांसादि, धर्मशास्त्रं औशनसबार्हस्पत्यादि ।

**वैदिकसिद्धान्तसंरक्षिणी**

उक्तं विद्यावृद्धानां नित्यसंयोगं समयं विभज्य प्रदर्शयति । पूर्वमिति । **भोजनात्**[४] पूर्वं इति मन्तव्यम् आयुर्वेदे भोजनोत्तरं व्यायामस्य निषेधात् ।

**विनयं** ज्ञानक्रिययोर्वैचक्षण्यं तयोर्नैपुण्यमिति यावत् । **गच्छेत्** प्राप्नुयात् ।[५] **भोजनोत्तरं** विनयग्रहणोपायमाह पश्चिममिति । भोजनोत्तरं सुखेन निवेशनपूर्वकं **इतिहासादीन्** शृणुयात् । तेन भुक्तमपि सम्यक् जीर्णं भवति[६] । तथा च पुराणश्रवणादिभिः राजा नीतिं सुखेन यथावद्विजानीयादिति भावः । तदेवोक्तम् टीकायां **सुखासीन** इत्यादि । गणपतिशास्त्रिणस्तु पश्चिमं भागमित्यस्यार्थः "दिवसस्य तृतीयं भाग"मिति व्याख्यान्ति । इतिहासस्य पारिभाषिकीं व्याख्यामाह पुराणमित्यादि । **भुवनकोशादी**[७] इति टिप्पण्याम् । वस्तुतस्तु पुराणं सृष्ट्यादिज्ञानफलम् **जयमङ्गलायां** उक्तम् । (कामन्दक नीतिसार सर्ग-२) तत्र धर्मादीनां निरूपणं तु स्थित्यर्थमुक्तम् इति बोध्यम् । पुराणविषये हाजरामहोदयेन तथा बल्लासेनेन दानसागरग्रन्थ निर्मात्रा प्रक्षेपादिदोषा आशङ्किताः तेषां निरासः जयमङ्गलाक्रोडपत्रे टिप्पण्यां निरूपितः। इतिवृत्तं भूतपूर्वाणां चरित्रं नीतौ फलोपधायकत्वनिर्णायकम् । तत्रापि वर्तमानस्य राज्ञः पुरतः दृष्टान्तरूपेण रूपकादौ भूतपूर्वाणां राज्ञां वास्तविकं चरित्रमेव आदर्शरूपेण निर्णायकं[८]। इत्यसाधारणं प्रयोजनमस्य ज्ञेयम् । आख्यायिकोदाहरणं पञ्चतन्त्रादि[९] ।

---

नी० टि० १ **इतिहासेति**। इति एवं ह स्फुटम् आस भूपभुवनकोशादिकम् ।

,, २ **इतिवृत्तमिति**। इति राज्ञो वृत्तं नयानयाभ्यां सम्पत्तिविपत्तिप्रदर्शनार्थं भारतरामायणादि ।

,, ३ **उदाहरणमिति**। असम्भूतकथावाक्यमुक्तप्रत्युत्तरान्वितम् ।
निदर्शनार्थमन्येषा--मुदाहरणमिष्यते ।

४--भोजनकालात् प्राक् (नीतिनिर्णीतिः)-   ५. तद्विधावृद्धसंयोगात्--(नीतिनिर्णीतिः)-

६. शब्दान् रूपान् रसान् गन्धान् स्पर्शांश्च मनसः प्रियान् । युक्तवानुपसेवेत तेनान्नं साधु तिष्ठति ।। सुश्रुत सू० ३६-८८

७. भुवनकोशादीति टिप्पण्याम्- ।

८. तदेवोक्तं टिप्पण्यामपि-इति राज्ञो वृत्तं नयापनयाभ्यां सम्पत्तिविपत्तिप्रदर्शनार्थं भारत रामायणादि ।

९. असंभूतकथावाक्यमुक्तप्रत्युत्तरान्वितम् । निदर्शनार्थमन्येषामुदाहरणमिष्यते ।। यथा तन्त्रपञ्चकादि । इति ।

## वैदिकसिद्धान्तसंरक्षिणी

### पशूदाहरणोपयोगः

ननु तन्त्रादौ पशूनामितिहासो वर्ण्यते तस्य क उपयोगः ? उच्यते। पशवो हि सृष्टिकालादारभ्याद्यावधि एकस्वभावा दृश्यन्ते मनुष्यास्तु न तथा भवन्ति एवं स्थिते नीत्यनुष्ठानार्थं राजा मन्त्रिणा कस्य स्वभावं प्रदर्श्य प्रेरणीयो बोधनीयो वा ? इति प्रश्ने पशूनां स्वभाव उदाहरणरूपेण प्रदर्शयितुं शक्यते। यथा निद्रा वर्तमान समये अमुकस्य मनुष्यस्य कीदृशी वर्तते इति वक्तुं न शक्यते तत्रोदाहरणं श्वनिद्रैव[1] भवति इत्यसाधारणं प्रयोजनं बोध्यम्। शेषं तु जयमङ्गलायां क्रोडपत्रे च व्यक्तमेव। धर्मशास्त्रं मानवादि। अर्थशास्त्रं कौटिल्यप्रणीतधातुवादादि। इतीति। "अयं इतिशब्दः क्वचिन्नास्ति क्वचिदस्ति[2]। प्रस्तुतपाठे इतिशब्दस्य सार्थक्यं एवं बोध्यम्। इतिहासत्वस्य पर्याप्तिः पुराणाद्यर्थशास्त्रान्तेषु वर्तते इतिशब्दस्य प्रथमोपस्थितानां वाचकत्वात्। तेन एतेष्वन्यतमस्याध्ययने इतिहासाध्ययनं सम्पन्नमिति न वेदितव्यम्।

## जयमङ्गला

विनयं ज्ञानक्रियावैचक्षण्यं गच्छेत्। पश्चिममहर्भागं सुखासीनो विनोदधर्मजिज्ञासार्थम् इतिहासश्रवणे विनयं गच्छेत्। कः पुनरितिहास इत्याह—पुराणमिति सृष्ट्यादिज्ञानफलम्। तथा चोक्तम् —

> सृष्टिप्रवृत्तिसंहारधर्ममोक्षप्रयोजनम्।
> ब्रह्मभिर्विविधैः प्रोक्तं पुराणं पञ्चलक्षणम्॥ इति।

इतिवृत्तं नयापनयाभ्यां सम्पत्तिविपत्तिप्रदर्शनफलं रामायणभारतादि। आख्यायिकोदाहरणं वर्जनसेवनफलं तन्त्राख्यायिकादि। तत्र वर्जनफलं लोभोऽत्यन्तं न कार्य इति लोभस्य दोषोदाहरणम् "जम्बुको धनुषा हतः" इत्यादि। सेवनफलमपि

> "प्रत्युत्पन्नेषु कार्येषु यस्य बुद्धिर्न हीयते।
> स निस्तरति दुर्गाणि जलमध्ये कपिर्यथा"॥ इत्यादि।

धर्मशास्त्रम् मानवादि। अर्थसम्बन्धि यत्किञ्चित् धातुवादादिकम् तदर्थशास्त्रमिह गृह्यते।

---

१. सन्नद्धपार्श्वस्थितवीरयोधः सेवेत साध्वीं निशि योगनिद्राम्। इत्युक्तम्। (नीतिसार सर्ग १६।२४) तट्टीका-योगनिद्रां सेवेत मायानिद्रया सुप्यात् यथातुरङ्गह्लेषादिस्वनमपि श्रुत्वा प्रतिबुध्येत। इति जयमङ्गलायाम्। योगनिद्रामिति। योगीव निद्रावसरेपि सचेतन एवेत्यर्थः। इति उपाध्यायनिरपेक्षायाम्।

२. टिप्पणी पाठे।

## जयमङ्गलाक्रोडपत्रम्

### पुराणविरुद्धेतिहासानां प्रामाण्यखण्डनम्

(पृ० ४३८) **इतिहास इति** । ननु पश्चिममितिहासश्रवणे इत्युक्त्वा कौटिल्येन इतिहासश्रवणं विहितं परं श्रवणविषयीभूतस्येतिहासस्य अधुना विसंवादोपलब्ध्या कथं प्रामाण्यमवगन्तव्यम् ? इति चेन्न ।

पुराणेषु उपवर्णितस्येतिहासस्य सर्वांशेन प्रामाण्यं बोध्यम् महर्षिणा व्यासेन लिखितत्वात्, तद्विरुद्धस्येतिहासस्य अननुमतत्वात् । यत्र च पुराणविरोधो नाऽस्ति न वा विसंवादाद्युपलब्धिः तथाविधस्य आधुनिकेतिहासस्य प्रामाण्यकल्पनेऽपि न हानिरिति अन्यदेतत् । कौटिल्येन तु पुराणवर्णितस्येतिहासस्य अप्रामाण्यकल्पनायाः कदापि असंभवात् इतिहासपदार्थस्य वक्ष्यमाणे निर्वचनावसरे पुराणस्य ग्रहणं कृतम् ।

### वृत्तसार्थक्यम्

पुराणेन उपवर्णितं यत्किमपि अत्यावश्यकं सदपि अस्माभिः नीतिरूपेण अनुष्ठेयं न वेति पुराणतात्पर्यस्य नीतौ अभावात् सन्देहो जागरूको भवतीति वृत्तग्रहणं बोध्यम् । तेन अर्थशास्त्रे यः कार्यकारणभावः राजवृत्तानुष्ठाने निरूपितः तस्य बोधाय अन्वयव्यतिरेकावपि परिज्ञातव्यौ भवतः । तत्र घटकीभूतायाः व्याप्तेनिर्णयार्थं दृष्टान्तरूपेण इतिहासस्य उपयोगित्वं बोध्यम् ।

(पृ० ४३८) **प्रवृत्तीति** । स्थितिरित्यर्थः सृष्टिसंहारयोर्मध्ये प्रवृत्तिग्रहणात् ।

### 'पुराणसम्बन्धि हाजरामतखण्डनम्'

(पृ० ४३८) **पञ्चलक्षणमिति** । ननु पुराणे वर्णितस्य "सर्गश्च प्रतिसर्गश्चेति" पुराणलक्षणस्य विष्णुधर्मोत्तरपुराणादिषु असंभवात् पुराणत्वं नास्तीति श्रीहाजरागणनाथसेन प्रभृतिभिः साधितमस्ति तत् एतदीयेन जयमङ्गलास्थे पद्ये वर्णितेन सृष्टिस्थितिसंहारधर्ममोक्षसमुदायात्मकेन पुराणलक्षणेन परास्तम् । तदिदं विवरणं (टिप्पण्यां) उद्ध्रियते ।

---

### हाजरामतखण्डनम्

"पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥" (या० स्मृ० आ०३)

इति याज्ञवल्क्यस्मृत्युक्त्यनुसारेण पुराणानां धर्मप्रतिपादकत्वं परंपरागतं सत्सम्प्रदायसिद्धमिति सर्वे जानन्ति । न केवलमस्मदीयसत्संप्रदायसिद्धमपि तु बौद्धजयमङ्गलादिकृद्विवेचनेनाऽप्ययमंशः प्रमाणितो भवति । तथाहि तत्रत्यो ग्रन्थः—

"कः पुनरितिहास इत्याह पुराणमिति सृष्ट्यादिज्ञानफलम् ।
तथाचोक्तम्—'सृष्टिप्रवृत्तिसंहार धर्ममोक्षप्रयोजनम् ।

ब्रह्मर्षिभिर्विविधैः प्रोक्तं पुराणं पञ्चलक्षणम्"। इति।

( कौ० अ० १-५ व्याख्या जयम० )

अनेन हि ग्रन्थेन धर्मविज्ञानमपि पुराणपञ्चलक्षणान्तर्गतमेकं लक्षणमिति प्रतीयते। एतदविरोध्येव याज्ञवल्क्यवचनं पुराणानां धर्मस्थानत्वं प्रतिपादयति। किं बहुना। "सृष्टिप्रवृत्तिसंहारे" त्युक्ते वचने स्थितिपर्यायायाः प्रवृत्तेरुपादानाद् व्यावहारिकाणां विषयाणामपि प्रतिपादनं युज्यते इति स्फुटम्।

"भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः।
ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः।
स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः।
मन्वन्तराणि सद्धर्म ऊतयः कर्मवासनाः।" ( भाग २, १-३ )

इति श्रीमद्भागवतेऽपि पुराणस्य पञ्चलक्षणान्तर्गतो मन्वन्तरभागः सद्धर्मः इत्युक्त्या पुराणानां धर्मप्रतिपादकत्वं व्यवस्थाप्यते। अतोऽस्त्येव पुराणेष्वपि धर्मशास्त्रस्यान्तर्भाव इति सिद्ध्यति।

कथं तर्हि याज्ञवल्क्यवचने धर्मशास्त्राणां पुराणेभ्यः पृथग्गणनमिति प्रश्नस्त्वनुचितः, प्रसङ्गाद् धर्मप्रतिपादनस्यैव पुराणविषयत्वात् प्राधान्येन धर्मशास्त्रस्य धर्मप्रतिपादनविषयत्वेनाविरोधाच्च। 'तत्वमसी'ति वाक्यघटकत्वंपदार्थकर्मकर्तृजीव स्वरूपविशुद्ध्यर्थं धर्मशास्त्राणां, तत्पदार्थेशस्वरूपविशुद्ध्यर्थं पुराणानां प्राधान्येन प्रवृत्तिरिति सिद्धान्तो माधवाचार्यैः सूतसंहितान्तर्गतस्य—

"ब्रह्मा सर्वजगत्कर्ता शिवस्य परमात्मनः।
प्रसादादेव रुद्रस्य स्मृतीः सस्मार सुव्रतः।" (सूत सं० १,४१)

इति श्लोकस्य व्याख्यानावसरे निर्णीतः। तद्यथा —

"वेदे हि द्वौ भागौ कर्मभागो ज्ञानभागश्चेति। आद्यस्यार्थः स्मृतिमुखेन ब्रह्मणा शिवाज्ञयैव व्याख्यातः। द्वितीयस्य तु विष्णुना व्यासरूपेणावतीय पुराणमुखेनेति स्मृतिपुराणानां वेदमूलता न स्वातन्त्र्यमित्यर्थः।

यद्यपि स्मृतिष्वपि विद्यानिरूपणमस्ति, तथापि तत् प्रासङ्गिकद्रव्यशुद्धिप्रसङ्गेन हि कथितम् "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता" इति चतुर्थाश्रमधर्मप्रसङ्गेन चौपनिषदतत्वनिरूपणं कृतमिति। पुराणानां तु विद्याप्राधान्यम्, प्रासङ्गिकं कर्मनिरूपणम्। पुराणेषु हि जगदुत्पत्तिस्थितिलयकारणत्वं शिवस्याभिप्रेत्योत्पत्तिकारणत्वं सर्गेणोक्तम्। प्रलयकारणत्वञ्च, प्रतिसर्गेण, स्थितिकारणत्वञ्च वंशमन्वन्तर– वंशानुचरितनिरूपणेन। तत्प्रसङ्गदाश्रमधर्मा आगता इति। अतएव धर्मविषये स्मृति-पुराणविप्रतिपत्तौ स्मृतीनां प्राबल्यं तत्र तासां तात्पर्यात् इति, तत्वज्ञानविषये पुराणप्राबल्यमितिविवेकः" इति।

इह केचिदाधुनिका इतिहाससंशोधका आहुः।

"पुराणानि स्वप्राचीनतमस्वरूपे केषां केषां विषयाणां प्रतिपादकान्यासन्निति न निश्चयेन वक्तुं शक्यते। अमरकोषस्य वर्तमानानामनेकेषां पुराणानां चानुसारेण

पुराणेषु सर्गः प्रतिसर्गः वंशो मन्वन्तराणि, वंशानुचरितं चेति पञ्चविषया आवश्यकाः एतेषां पञ्चानामपि लक्षणानां मूलमाख्यानम्, उपाख्यानम्, गाथा, कल्पोक्तिश्चेति चतुष्टयमेव। ब्रह्माण्ड, २-३४-२१, वायु ६०-२१, विष्णु ३-६-१६, एतेषां वचनानामनुसारेण महर्षिव्यासः उक्तचतुष्टयमवलम्ब्यैव पुराणसंहितां रचयामासेति सिद्ध्यति। अतः पुराणैः स्वप्राचीनस्वरूपे सर्गादिपञ्चविषयाणामेव प्राधान्येन वर्णनं क्रियते स्मेत्यत्र नास्ति सन्देहः। परन्तु वर्तमानेषु पुराणग्रन्थेष्वेतेषां विषयाणां क्वचित्पूर्णतया क्वचिदंशतयोपेक्षा कृता वर्तते। धार्मिकेभ्यः सामाजिकेभ्यश्च विषयेभ्योऽत्यन्तं महत्वं दत्तमित्युपलभ्यते। येषु पुराणेषूक्तलक्षणानां पूर्णतयांऽशतो वा वर्णनं दृश्यते, तेष्वपि धार्मिकाणां स्मार्तानां च विषयाणां बर्णनमस्तीति।

( हाजरा, पुराणिक रिकार्डस पृ० ४–५ -

"यदा धार्मिकेषु स्मार्तेषु च विषयेषु पुराणानां प्रामाण्यमङ्गीकृतम् तदा पुराणानां मुख्यविषयेषु पञ्चसु लक्षणेषु लोकानां धारणा एतादृशी संपन्ना यत्—एतानि पञ्चलक्षणानि केवलमुपपुराणानामेव, महापुराणानां तु दशलक्षणान्यावश्यकानि, येषु धार्मिकाणां स्मार्तानाञ्च विषयाणां प्राधान्यं स्यादिति। अतो राज्ञा मृषीणां च वंशं वंशानुचरितं च शुद्धया ऐतिहासिकदृष्ट्या अलिखित्वा प्रायः कल्पनैवाश्रितेति"। ( हाजरा, प्र० रि० पृ० ७ )

"अमरकोषस्यानेकेषां पुराणानां चानुसारेण सर्गादयः पञ्चैव पुराणानां विषयाः। 'वंशानुचरित' मित्यत्र 'भूम्यादेः संस्थानम् इति पाठोऽप्युपलभ्यते, यस्यार्थः 'पौराणिको भुवनकोषः' इति। परन्तु वर्तमानेषु पुराणेषु यत्किमपि पुराणमेतस्याः पञ्चलक्षणरूपायाः परिभाषाया अनुसरणं पूर्णतया न करोति। केषुचित्पुराणेषु पञ्चलक्षणापेक्षयाऽधिका एव विषयाः उपलभ्यन्ते। केषुचिच्चैतेषां पञ्चविषयाणां किमपि वर्णनं नोपलभ्यते। प्रत्युत एतत्स्थानेऽन्येषामेव विषयाणां विस्तारो दृश्यते। किञ्च वर्तमानकाले उपलब्धेषु पुराणेषु चत्वारिंशत्तमोंऽश (१।४०) एवोक्तलक्षणप्रतिपादकः। एतेनेदं सिद्ध्यति, यत्—प्राचीनपुराणानां मुख्यः प्रतिपाद्यो विषयो धर्मोपदेशो नासीत्, तानि च मूलस्वरूपे सांप्रदायिकभावनया न रचितान्यासन्निति। वर्तमानपुराणेषु हि दानव्रत-तीर्थ—श्राद्धादिधार्मिकविषया एव मुख्यसामग्रीत्वेन वर्तन्ते। ये खलूक्तपञ्चलक्षणेष्वन्तर्गतन्न भावयन्ति तथा पुराणानां पञ्चलक्षणपरिभाषां चावास्तविकतया केवलं सैद्धान्तिकीं कुर्वन्ति। तैरिमां दुरवस्थामपनेतुं पुराणेष्वेवायं सिद्धान्तः स्थापितो यत् पञ्चलक्षणानि केवलमुपपुराणानां, परिभाषा तु दशलक्षणरूपा, यस्यां प्रवृत्तिः, रक्षा, मुक्तिः, हेतुः, अपाश्रयश्चेति धार्मिकविषया अपि अन्तर्भवन्ति। वर्तमानपुराणस्थाः केचन विषयाः पुनर्दशलक्षणेष्वपि नान्तर्भवन्ति। यथा—मत्स्यपुराणानुसारेण ब्रह्म-विष्णु-शिव-सूर्यादीनां माहात्म्यवर्णनं धर्मार्थकाममोक्षप्रतिपादनं चोक्तलक्षणातिरिक्तः पुराणानां विषयो वर्तते" इति।

'पुसालकर, स्टडीज् इन् एपिक्स एण्ड दी पुराण भूमिका पृ० ४५-४६

"प्रसिद्धसंस्कृतकोषभूते अमरकोषे अनेकेषु पुराणेषु च पुराणानां पञ्चलक्षणानि उक्तानि। परन्तु 'किरफिल' महोदयेनैतत्प्रदर्शितम् यत् पञ्चलक्षणानि तु पुराणानां चत्वारिंशत्तमांशरूपाण्येव भवन्ति। अतोऽवशिष्टानामेकोनचत्वारिंशदंशानाममरकोशानुसारेण पुराणत्वं न सिद्ध्यतीतीयं परिभाषा न युक्ता। पुराणानां मुख्यं लक्षणमिदमेव यत् पुरातनत्वम्, अतो यः कोऽपि पुरातनो विषयः पुराणप्रतिपाद्यो भवितुमर्हति। एवञ्च जीवनविषयकः सर्वोऽपि पक्षः पुराणान्तर्गतो भवतीति।

श्रीमद्भागवते पुराणानां दशलक्षणान्युक्तानि, किन्तु इमान्यपि चतुर्लक्षश्लोकपरिमितेषु पुराणेषु सम्पूर्णतया व्याप्तानि न भवन्ति मत्स्यपुराणस्थिता पुराणपरिभाषा तु बुद्धिसङ्गता वर्तते। तदनुसारेण सर्वेषु पुराणेषु सर्गादिपञ्चविषयातिरिक्ततया ब्रह्मविष्णुशिवार्कादीनां माहात्म्यस्य, संसारस्थितिसंहारयोर्धर्मार्थकाममोक्षाणाञ्च वर्णनमावश्यकं तद्विरुद्धविषयाणां च। पुराणप्रतिपाद्यविषयविषयकं पुराणस्थमेवेदं वचनं यद्यप्यधिकृतया व्यापकं भवति, तथापि पुराणस्थान् सर्वानपि विषयान् न व्याप्नोती"ति।

( Harprasad Shastri Asiatic Society Sanskrit Catalogue. भाग ५ भूमिका )

"वर्तमानपुराणानीव, पुराणनामयोग्यानि प्राचीनपुराणानि न सन्तीदं तथ्यं। वर्तमानपुराणेषु यत्किमपि पुराणं पुराणोक्ताया एव पञ्चलक्षणपरिभाषाया अनुसरणं न करोतीत्यनेन प्रमाणितं भवति। प्राचीनपरिभाषामनुसृत्य प्रत्येकस्मिन् पुराणे सर्गः, प्रतिसर्गः, वंशः मन्वन्तराणि वंशानुचरितम् अर्थात्—सूर्यवंशीयानां वा रक्षां चरितंचेति पञ्चलक्षणान्यावश्यकानि। वर्तमानकाले यानि लक्षणान्युपलब्धानि तत्रोक्तपञ्चलक्षणात्मकस्त्वांशिक एव विषयो वर्तते। केषुचित्पुराणेषु एतदपेक्षया अधिका एव विषयाः सन्ति। कानिचन पुराणान्येतेषां स्पर्शमपि न कुर्वन्ति। सर्वथा भिन्ना एव विषयास्तत्र निरूप्यन्ते। प्रायः सर्वेषां वर्तमानपुराणानां विषये विशेषरूपेणोल्लेखनीयोऽयं विषयो यदेतेषां साम्प्रदायिकतास्वरूपम्, अर्थात् विष्णुशिवादिदेवेषु केनचित् सम्बद्धता यस्याः प्राचीनपञ्चलक्षणपरिभाषया पूर्णतयापेक्षा कृता वर्तते।

येषु पुराणेषु प्राचीनस्वरूपं केनचिदंशेन सुरक्षितमस्ति, तेषु सृष्टिरचनायाः, आद्यकालीनेतिहासस्य च प्रकरणान्युपलभ्यन्ते। एवं पञ्चलक्षणपरिभाषानुसारेण मूलभूतयोः सूर्यचन्द्रयोर्वंशीयानां महाभारतकालीनवीरपर्यन्तानां प्राचीनानां राज्ञां वंशावल्यपि तत्रोपलभ्यते" इति।

( विंटरनिटज, हिस्ट्री ऑफ इन्डियन लिटरेचर पृ० ५२२–३ )

"अनेकेषु पुराणेषु प्रसिद्धेषु कोशेषु वोपलब्धायाः परिभाषाया अनुसारेण पुराणानां पञ्चलक्षणानि भवन्ति, सर्गः प्रतिसर्गः मन्वन्तराणि प्राचीनराजवंशावली तथा वंशावलीस्थव्यक्तीनां चरितं चेति। यद्यपि वर्तमानकाले उपलब्धेषु पुराणेषु यत्किमपि पुराणमेतस्याः परिभाषाया अक्षरशोऽनुसरणं न करोति, तथाप्यनेकेषु

पुराणेष्विमानि पञ्चलक्षणानि बीजरूपेण सुरक्षितानि सन्ती"ति (घोषाल ४ स्टडीज इन् इन्डियन हिस्ट्री एण्ड कल्चरी १-५१ )

अत्र ब्रूमः।

सृष्टिप्रवृत्तिसंहारधर्ममोक्षप्रयोजनम् ।
बहुभिर्विविधैः प्रोक्तं पुराणं पञ्चलक्षणम् । ( कौ० १-५ व्याख्या )

इत्यर्थशास्त्रजयमङ्गलोद्धृतस्य पूर्वोक्तवचनस्यामरकोषकर्तृसमकालिक कौटिल्यकृतार्थशास्त्रीयपुराणपदार्थप्रतिपादकस्य तत्पूर्वतनव्याख्यापरम्परागतस्योपलभ्यमानत्वेनामरकोशगतपञ्चलक्षणपदस्यापि तादृशार्थपरत्वे नास्त्येव शङ्कावकाशः।

"सर्गश्च प्रतिसर्गश्च वंशोमन्वन्तराणि च ।

इति वाक्यस्यापि "मन्वन्तराणि सद्धर्मः" इति वचनप्रामाण्येन तादृशार्थप्रतिपादकत्वमिति स्फुटं प्रतीयते। स्पष्टीकृतोऽयमर्थ उपक्रमे एवास्माभिः।

एवं सति आधुनिकैरितिहाससंशोधकैः राजनीतिशास्त्रस्यापर्यालोचनेनासूययेव कृता एते सर्वेप्याक्षेपा अश्रद्धेया एव।

तथाहि —यदुच्यते-आख्यानम्, उपाख्यानम्, गाथा कल्पोक्तिश्चेति चतुष्टयमेवैतेषां पञ्चलक्षणानां मूलमिति, तत्र पुराणस्थानामाख्यादीनां मूलत्वमपेक्षितं ?' वा वेदादिस्थानामाख्यानानामिति प्रथममालोचनीयतामर्हति। आद्यपक्षे स्फुट एवात्माश्रयदोषः द्वितीयपक्षस्तु इष्यत एव।

किञ्च "यद्ब्रह्मणानीतिहासान् पुराणानि कल्पा गाथा नाराशंसीरिति"
( तै० आ० २-३ अ० )

तदिदं वेदवाक्यं भाष्यकृता एवं व्याख्यातम्—

"इतिहासा महाभारतादयः, पुराणानि ब्रह्मण्डादीनि, यद्वा देवासुराः संयत्ता आसन्नित्यादय इतिहासाः"। आत्मा वा इदमेकं एवाग्र आसीन्नान्यत्किंचन भीषदि"ति सृष्टयादिप्रतिपादकानि पुराणानि। कल्पाः कल्पसूत्राणि प्रयोगप्रतिपादकानि। गाथाः गायति चोदिता ग्रन्थविशेषाः, "योस्य कोष्ठेत्यादयः, यमगाथाभिः परिगायती"ति विधानात्। नराशंसशब्दोपेता नाराशंस्यद्होता यक्षन्नराशंस" मित्याद्याः मन्त्रब्राह्मणान्तःपठितानामपि पुनरुक्तिः फलातिशयद्योतनार्थमि"ति।

अत्र हि पुराणशब्दस्य व्याख्यायां "सृष्टयादिप्रतिपादकानी"ति वदता भाष्यकृता सृष्टिप्रवृत्तीति पूर्वोद्धृतजयमङ्गलवचनमेव स्मर्यते राजनीतिगतत्वात्। सर्गश्चे'त्यादि वचनस्य स्मरणे सति सर्गादिप्रतिपादनकारीत्येवोच्येतेति विशेषः स्फुटः।

कौटिलीयार्थशास्त्रेऽपि "पश्चिममितिहासश्रवणे पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतीतिहासाः" इति।

अत्र "भारतीभवनप्रकाशितेऽर्थशास्त्रे कौटिलीये आखयायिकोदाहरणम्—

असम्भूतकथावाक्यमुक्तप्रत्युत्तरान्वितम् ।
निदर्शनार्थमन्येषामुदाहरणमिष्यते ॥

## जयमङ्गलाक्रोडपत्रम्

एतेन पुराणे धर्मस्यापि यन्निरूपणं कृतं तल्लोकस्य स्थितिहेतुत्वप्रदर्शनार्थं बोध्यम्। लोकस्य स्थितिहेतुत्वञ्च "सृष्टिस्थितिसंहारे"ति वाक्येन अतिप्राचीनेन जयमङ्गलायामुद्धृतेन साधितम्। अतः पुराणे धर्मनिरूपणम् अर्वाक्कालिकमिति आधुनिकानां मतं परास्तम्।

### शूद्राणां कृते धर्मनिरुपणम्

ननु आस्तां पूर्वत एव पुराणे धर्मनिरूपणम्। परन्तु लोकस्थितये तदुक्तं तत्कथमुपपद्यते ? इति चेन्न। शूद्रा हि वेदाध्ययने अनधिकारित्वात्

---

यथा तन्त्रपञ्चकादि"। इति प्राचीन टिप्पणमुद्धृतं दृश्यते। जयमङ्गलाकृताऽपि आख्यायिकोदाहरणं "वर्जनसेवनफलं तन्त्राख्यायिकादि" इत्यादि वदता उक्त-टिप्पणस्यैवार्थोऽनुमोदितः।

एवंविधानामाख्यायिकानां पुराणमूलत्वमितिहासमूलत्वं चोदाहरणरूपत्वेनैव भवतीति स्पष्टोऽर्थः। पूर्वोक्तपुराणलक्षणप्रतिपादके सृष्टिप्रवृत्तीत्यादिवचने स्थिति-पर्यायायाः प्रवृत्तेरपि प्रतिपाद्यत्वावगमात्। जगत्परिपालनविषया अन्ये सर्वेऽपि धातु-वादादयः पुराणेतिहासान्तर्गता भवन्ति। स्त्रीशूद्रादिसर्वसाधारणेषु श्राव्यत्वोप-युक्तया रचनया महदुपकृतं पुराणैर्लोकस्येति स्थितौ सत्यां तदुपरि संशय-गर्भिताया दृष्टेर्निक्षेपणं त्वसूयाकल्पितमिव भवति।

एतेन 'वंशानुचरितम्' इत्यत्र भूम्यादेः संस्थानम् इति पाठान्तरं वर्णयित्वा आक्षेपोद्भावनमप्ययुक्तमेव। लोकोपयुक्तस्य सर्वस्यैव ज्ञानस्य पूर्वोक्तरीत्या पुराणेन वर्णनीयत्वे सिद्धे ज्ञानकोषरूपेषु सर्वस्यैवांशस्यावकाशसत्वात् उभयोरेव पाठयोः प्रामाण्योपपत्तेः। भागवतोक्तदशलक्षणान्यपि पूर्वोक्तपञ्चलक्षणाविरोधीन्येव। न ह्येकस्मिन् लक्षणे स्थितेऽन्यानि लक्षणानि न सम्भवन्तीति कश्चन नियमः। यथा न्यायशास्त्रे—

"वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ।
स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम्॥ ( भाषा ४·३९ )

इत्यादीनां बहूनां जातिपरिचायकानां जात्यघटितानां लक्षणानां वर्ण्यमानत्वस्य दर्शनात्। प्रयोजनं हि तद्विधानां बहूनां लक्षणानां, सर्वत्र अप्राप्तावपि केनचिदेकेनापि लक्ष्यनिर्णयः। तथा पञ्चलक्षणैर्दशलक्षणैर्वा का नामानुपपत्तिः निष्प्रयोजनता वेति नैव वक्तुं शक्यम्, दशलक्षणवर्जितानामपि पुराणत्वख्यापनाय पञ्चलक्षणस्या-वश्यकत्वात्। अत्रेदमवधेयम्—

राजनीतिशास्त्रं प्रत्यक्षादिप्रमाणत्रयनिर्णीतार्थप्रतिपादकमिति पूर्वमेव प्रतिपा-दितम्। राजप्रकृतिसमवेततयैव कार्यकारित्वाद्राजनिर्णयरूपमेव तदिति दृढनिर्णयेन वक्तुं शक्यते। एवंसति न्यायालयनिर्णयतुल्ययोगक्षेमेषु राजनीतिसिद्धान्तेषु सर्वैः शिष्टैरेकवाक्यतया परिगृहीतेषु सत्सु तानदृष्ट्वा इतिहाससंशोधनं विशेषतः प्राचीन वाक्येषु पुराणादिषु शङ्काविष्करणं च खेदायैव सहृदयानां भवति इति।

## जयमङ्गलाक्रोडपत्रम्

यदि धर्मतत्वज्ञानाद्वञ्चिताः भविष्यन्ति तर्हि ते यथावद् अपेक्षितं कर्तव्यं न जानीयुः, न वा स्वे कर्मणि दृढव्रता भवेयुः, नापि च विश्वास्यत्वमर्हेयुः इति शूद्रसाधारण्येन धर्मज्ञापनद्वारा लोकस्थितये पुराणे धर्मो निरुक्तः। न च शूद्राः धर्मशास्त्रं कुतो न पठेयुः इति शङ्क्यम्। धर्मशास्त्रे अस्य निषेधश्रवणात्[1]।

### शूद्राणां धर्मशास्त्राध्ययने अनधिकारोपपत्तिः

ननु शूद्रा हि सर्वथा साक्षाद् धर्मशास्त्रश्रवणे अनधिकारिण इति टिप्पण्युक्तैर्वचनैरवधार्यते। सोऽयं निषेधः शूद्राणां कृते केनोद्देश्येन अभिहितः? इति चेदभिधीयते।

समाजे घटकाः अष्टविधाः वर्गाः संभवितुमर्हन्ति। तद्यथा कामुकाः, विदग्धाः, श्रेष्ठिनः, विरागिणः, शूराः, ज्ञानवयोवृद्धाः, रसभावविवेचकाः, बालमूर्खाबलाः इति। एतान् सर्वान् संहृत्य यथा समाजस्य रञ्जनं भवेत्तथा नटैः नाट्यमभिनेतव्यं भवति। अतएव नाट्ये उपर्युक्तानां समाजघटकानां प्रत्येकजनानां कृते तत्तदधिकारानुसारेण मनोरञ्जनाय शृङ्गार, वैदग्ध्य, हास्य, शान्त, नेपथ्य, शौर्यादिसूचनं अभिनयद्वारा अभिनेतव्यं भवति[2]।

तन्न्यायेन ऋषिभिः समाजघटकानां तेषां तेषामधिकारस्थितिं दृष्ट्वा तत्तदधिकारानुसारेण नाट्यस्थानीयं वाङ्मयमाबद्धमस्ति। अतः तत्र तत्र वाङ्मये तथाविधा एव अधिकारित्वेन शास्त्रकर्तृभिः उच्यन्ते। एवं स्थिते धर्मशास्त्रस्य पुराणस्य च श्रवणस्य अधिकारित्वं कुत्रास्तीति विवेचनीयतामर्हति। ये हि मीमांसान्याये

---

१ तदुक्तम् बालंभट्ट्याम्—

यान्येतानि त्वयोक्तानि धर्मशास्त्राणि सुव्रत।
नेच्छामि श्रोतुं विप्रेन्द्र गुह्यान्येतानि हि द्विज॥
त्रयाणामेव वर्णानां प्रोक्तान्येतानि पण्डितैः।
श्रेयसे न तु शूद्राणामत्र मे वचनं शृणु॥
ब्राह्मणादिषु वर्णेषु त्रिषु चेन्द्राः प्रतिष्ठिताः।
मन्वादीनि च शास्त्राणि न योग्यानि समन्ततः। इति

पुराणाध्ययनमपि निषिद्धं कौर्मे—

अध्येतव्यमिदं नित्यं विप्रैः पर्वणि पर्वणि
नाध्येतव्यमिदं शास्त्रं वृषलस्य च सन्निधौ।
योऽधीते चैव मोहात्मा स याति नरकान्बहुन्। ३८० शूद्राचारप्रकरण इति

२ तदुक्तम् भा० प्र० ८ सर्गे—

तुष्यन्ति तरुणाः कामे विदग्धाः समयाश्रिते।
अर्थेष्वर्थपराश्चैव मोक्षेत्वथ विरागिणः॥
शूरा बीभत्सरौद्रेषु नियुद्धेष्वाहवेषु च।
धर्माख्यानपुराणेषु वृद्धास्तुष्यन्ति नित्यशः॥
सत्वभावेषु सर्वेषु बुधास्तुष्यन्ति सर्वदा।
बाला मूर्खास्स्त्रियश्चैव हास्यनेपथ्ययोः सदा॥ इति।

## जयमङ्गलाक्रोडपत्रम्

न्यायशास्त्रे च सम्यङ् परिनिष्ठिताः व्याकरणे च कुशलमतयः वेदस्याध्येतारः अव्य-सनिनः भवन्ति ते एव धर्मशास्त्रश्रवणे अधिकारिणो भवन्ति। विप्रकीर्णानां धर्मशास्त्रे-निर्दिष्टाना वचनानां विरुद्धत्वेन भासमानानां यथावत् युक्तीः विचार्य धर्मशास्त्रीय-वचनतात्पर्यनिर्णायकत्वस्य उक्तविधेष्वेव अधिकारिषु सत्वात्। अतः अतीव एकाग्रमनस्काः ये विदग्धाः मीमांसकाः तेषां मनोरञ्जनं धर्मशास्त्रसमन्वये भव-तीति कृत्वा एतच्छास्त्रश्रवणार्थं अधिकारित्वेन ते उक्ताः।

ये च किल उक्तविद्यासु परिश्रमं कर्तुमसमर्थाः द्विजशुश्रूषाकारुशिल्पाद्य—नेककर्मसु.जीविकोपायेषु सदा निरताः शूद्रप्रभृतयः ते हि धर्मशास्त्रश्रवणे एतच् छास्त्रीयवचनतात्पर्यस्य निर्णयं कर्तुमसमर्थत्वात् अनधिकारित्वेन उक्ताः।

किञ्च एतस्मादेव कारणात् एतेषां समाजघटकानां मनोविनोदोऽपि परिश्रमबाहु-ल्यात् धर्मशास्त्रश्रवणे न भवितुमर्हति। मास्तां सः। इतिचेन्न। समाजघटकोऽयं वर्गः न शास्त्रकर्तृभिः उपक्षितुं शक्यः अन्यथा अङ्गस्येव समाजघटकस्य शूद्रस्य महतः वर्गस्य उक्तरीत्या उच्छेदप्रसङ्गात्। इत्येतत् सञ्चिन्तयद्भिः शास्त्रकर्तृभिः विद्यानां तात्पर्यचिन्तने सर्वथा अशक्तानां शूद्रादीनां कृते मनोविनोदमालक्ष्य तद-धिकारानुरूपं पुराणश्रवणं द्वारीकृत्य धर्मतत्वं ज्ञापितम्।

यथा किल राजनीत्या तत्र तत्र स्थितानां स्वीयां स्वीयां मर्यादां चिन्तयन्त्या तस्मिन् तस्मिन् कर्मणि ते ते नियोज्यन्ते परिपाल्यन्ते च। तथैव धर्मशास्त्रश्रवणे समयाश्रितानां विदुषां, पुराणश्रवणे च शूद्राणामुक्तविधानामधिकारित्वं निर्णीतम्। अथ यदि व्यासेन पुराणे धर्मः न निरूप्येत तर्हि शूद्रादयः कर्तव्याद् वञ्चिता अवश्यं भवेयुरिति शूद्राणां कृते धर्मशास्त्रात्पार्थक्येन पुराणश्रवणे अधिकारित्वं सन्धाय प्रतिपाद्य च सर्वं धर्मतत्वं धर्मशास्त्रश्रवणे अनधिकारित्वमुपपादितम्।

## देशव्यापकानाचारान्निवर्तनम्

. न च तत्तन्मनोवृत्तियर्यादानुसारेण अधिकारिभेदमालक्ष्य धर्मशास्त्रश्रवणं पुराण-श्रवणञ्च विधीयते निबन्धशास्त्रकर्तृभिः यद्यपि, तथापि धर्मशास्त्रश्रवणे अधिकृताः ब्राह्मणाः धर्मशास्त्रादि श्रुत्वाऽपि अनाचारे रथ्यादौ ताम्बूलभक्षणादिकर्मणि प्रवृत्ताः दृश्यन्ते तन्निराकरणविषये शास्त्रेषु किं चिन्तितम् इति शङ्क्यम्। ये हि अनाचाराः सर्वसम्मत्या लोकेषु संप्रवृत्ताः तेषां लोकसम्मतत्वात् पालने कृतेऽपि न दृष्टहानिः, इति भारतीयराजनीत्या आदिष्टत्वात्। एवं सत्यपि यथासंभवं लोकमतमनुकूलं कृत्वा ब्राह्मणान् अनाचारात्न्निवर्त्य पुनः स्वधर्मे यथा ब्राह्मणाः अनुवर्तेरन् तथा भारतीयराजनीत्या प्रयतितव्यम्[1]।

---

१ तदुक्तम्--

धर्मश्च व्यवहारश्च चरित्रं राजशासनम्।
विवादार्थश्चतुष्पादः पीश्चमः पूर्वबाधकः॥ इति। (व्यवहारप्रकारे)

## जयमङ्गलाक्रोडपत्रम्

अतः ऋषिभिः धर्मशास्त्रश्रवणस्य पुराणश्रवणस्य च या मर्यादा निरूपिता अस्ति तद्विषये नाक्षेपः न वा पक्षपातः इति हृदयम् ।

### इतिवृत्तस्योपयोगित्वम् ।

इतिवृत्तमिति--(ज० मं० पृ० ४३८) नन्वेव "पुराणमितिवृत्तमि"त्यादिना पुनः इतिवृत्तस्य ग्रहणमयुक्तम् । पुराणेन गतार्थत्वात् इति वाच्यम्, पुराणस्य ईशपदार्थ-निर्वचने तात्पर्यात् नीत्यनुष्ठाने तात्पर्यासंभवात् । यतः तत्वंपदार्थयोः विचारप्रसङ्गे तत्पदार्थः पुराणेन ज्ञातव्यः, त्वंपदार्थश्च धर्मशास्त्रेण इति सूतसंहितादौ उक्तमस्ति । तदिदं प्राक् प्रपञ्चितमस्ति (पृ० ४४०) । तथैव विशेषतया पार्थक्येन उक्तं (पृ० ४३९) इतिवृतस्य उपयोगित्वं प्रागुक्तं स्मर्तव्यम् । अन्यथा चक्रवर्तिपदे एकसमये एक एव राजा समास्ते इति नियमात् तत्पदे समासीनेन राज्ञा व्याप्ति-निर्णयार्थं इतिहासः दृष्टान्तरूपेण अवगन्तव्यश्चेत् तत्प्रागभाविनः चक्रवर्तिनः इतिहासः अवगन्तव्यो भवति । सः अनुपपन्नः स्यादिति ।

### 'आख्यायिकोपयोगः'

**तन्त्राख्यायिकादीति** । (पृ० ४३८) ननु आख्यायिकोदाहरणस्य क उपयोगः ? इति चेदुच्यते । नीतिः यावत् नानुष्ठीयेत तावद् अस्याः साफल्यमभूत् इति वक्तुं न युज्यते, 'जितेन्द्रियस्य नृपतेः नीतिमार्गानुसारिणः' इति वचनात् । अतः नीतौ इष्टसाधनत्वेन सह कृतिसाध्यत्वमपि ज्ञातव्यं भवति । तत्र प्रवृत्युपयोगिनः इष्टसाधनताज्ञानस्य विषयीभूतं मुक्तं नीतिनिष्ठसाधनत्वं शास्त्रेण अवगतमपि तस्य दार्ढ्यार्थं दृष्टान्तरूपेण इतिहासः युज्यते । परन्तु तावन्मात्रेण प्रवृत्ति-विधेयकर्मणि कृतिसाध्यत्वं अज्ञातमेव भवति । अतः तदवगमार्थं तन्त्राख्यायिका उदा-हरणरूपेण उपवर्ण्यन्ते । अत्र प्रायः पशूनां स्वभावनिरूपणं कृतमस्ति । तस्य इदं महत्फलं यत् तेषां स्वभावः अधुनाऽपि एक रूप एव वर्तते । अतस्तत्परिचयेन कृति-साध्यता नीतिकर्मणि असन्दिग्धा भवति । एतदभिप्रेत्यैव च रात्रौ राजा कथं शयीत इति बोधनावसरे सारमेयस्य निद्रायाः उदाहरणमुच्यते । स्वल्पेनापि शब्देन यथा सः जागर्ति, तथा स्वल्पेनापि तुरङ्गस्वनेन राजा जागृयादिति । एवमेव अन्यान्यपि पञ्चतन्त्रादौ निर्दिष्टानि उदाहरणानि तत्तदर्थे प्रयोक्तव्यानि । किञ्चात्र एकमन्यत् इतिहासोदाहरणं टिप्पण्यां उद्धृतमस्ति[1] तदनुसारेण तन्त्रे निरूपिताः पशूनामपराअपि आख्यायिकाः नीतौ कृतिसाध्यत्वनिर्णये उपयुक्ताः भवन्ति इति ध्येयम् ।

---

१ तंजावरक्षेत्रे एक बृहदीश्वरमन्दिरमस्ति । तच्छिखरे महती एका शिला वर्तते सा शिल्पिभिः तत्र कथमवस्थापिता स्यात् इत्येकः महान् सन्देहो भवति । अस्य निराकरणाभावे तत्रावस्थितान्तान्दृष्टवा अद्यत्वे ईदृशं उच्चतमशिखरे शिला-स्थापनं शिल्पिभिः अशक्यमेवेति मन्तुं शक्येत । परं तत्रैव शिलास्थापने अस्मत्कृति-साध्यत्वं कथं भवितुमर्हति इत्यवगन्तव्यं चेत् एवं निर्णीयते आख्यायिकया, यत् तस्य मन्दिरस्य पुरतः एक कलशपुरं वर्तते । तत आरभ्य मन्दिरशिखरान्तं यावत्, मध्येमार्गं

## जयमङ्गलाक्रोडपत्रम्

### पशुकृतिसाध्यं मनुष्येणापि साध्यम्

ननु पशूनामुदाहरणप्रदर्शनेन पशुकृतिसाध्यं यत्कर्म ज्ञातं तत्सर्वमपि मनुष्य-साध्यमस्तीति कथमवगन्तव्यम् ? मनुष्याणां पशूनाञ्च विजातीयसन्निवेशविशेषात् । इति चेन्न । मनुष्यः यद्यत् करोति तत्सर्वं पशुः अनुष्ठातुं न शक्नोति मानवीय कर्मोचितमांसपेशीनां तेषु निसर्गतः अभावात् । मनुष्यस्तु पाशवं कर्म कर्तुं शक्नोति पशुषु स्थितानां तदीयकर्मोचितमांसपेशीनां मानवशरीरे सत्वात् । न च तर्हि मानवेन पशूनां कर्म कुतो न क्रियते इति वाच्यम्, मानवशरीरे पाशवशरीरस्थितानां मांसपेशीनां सत्वेऽपि शुष्कत्वात् अनभ्यासात् असत्प्रायत्वात् । यदि अभ्यासात् मनुष्यः आत्मनः शरीरे स्थिताः पशुमांसपेशीः कम्पयित्वा वशीकुर्यात् तर्हि अयं पशुचेष्टया तत्संभाषणेन पशुत्वमात्मनि यथावत् व्यञ्जयितुं शक्नोतीति मनुष्यकृतेन पशूनामुच्चारणेन ज्ञातुं शक्यते । तदिदं न अविज्ञानसिद्धं शारीरविज्ञानेनापि अनुभूतत्वात् । अतः नीतौ कृतिसाध्यत्वज्ञापनाय तन्त्राख्यायिका इतिहासे मूलकृता अन्तर्भाविता ।

### धर्मशास्त्रस्य ग्रहणं सार्थकम्

**धर्मशास्त्रं मानवादीति** । (पृ० ४३८) ननु 'सृष्टिप्रवृत्तिसंहारधर्ममोक्ष-प्रयोजनमिति' प्राचीनपद्यं उद्धृत्य जयमङ्गलाकृता पुराणस्वरूपं प्रदर्शितम् । एतत्पद्यवर्णनेनैव पुराणे धर्मस्य निरूपणं कृतमस्ति इत्यवगम्यते तथासति एतेनैव चरितार्थत्वे कौटिल्येन धर्मशास्त्रं कुतः पृथक् सङ्गृहीतमिति चेन्न । पुराणस्य श्रवणे शूद्रस्य प्राधान्येन अधिकारः इति ( पृष्ठे ४४६ ) प्राङ्निरूपितमस्ति । न हि तत्र केवलं धर्मं एव निरूपितः अपितु अनेकविधप्ररोचनादृष्टया मध्ये मध्ये इतिहासाः आख्यायिकाश्च उपन्यस्ताः दृश्यन्ते । अतः तच्छ्रवणे तर्ककर्कशविचार-चातुरीधुरीणाः न विशेषतया स्वदन्ते । तद्दृष्टया अनेकविधाः विरोधाभासाः यथा उन्मीलिता भवन्ति तद्व्यावृत्तये, तथा विप्रकीर्णवचनसरसि निमज्जनरसिकानां विदग्धानां कृते च धर्मशास्त्रं पृथङ्निरूपिततस्ति । इति अधिकारिभेदेन धर्मशास्त्रस्य न पुराणेन चरितार्थत्वमनुमन्तव्यम् । शेषं पुराणनिर्वचनप्रसङ्गे (पृ० ४४६) द्रष्टव्यम् ।

### धर्मे स्थितिसाधनत्वम्

ननु लोकस्य स्थितये पुराणे धर्मः निरूपितः इत्युक्तं प्राक् । तस्य उपपत्तिः कीदृशी ? इति चेदेवं । पुराणं हि ईश्वरं निरूपयतीति (पृ० ४४०) प्रागभिहितमस्ति तेन इद लभ्यते यत् ईश्वरसमवेतज्ञानमेव धर्मशास्त्रादिना जीवस्य भाति, सा च जीवसमवेत ज्ञानप्रभा आनन्दप्रभया न मिश्रिता चेत् तज्ज्ञानं सत्वपदव्यपदेश्यन्न भवति इति प्राग्व्याख्यातम् ( शेष पृ० ६ द्रष्टव्यम् ) अतः पुराणेन आनन्दप्रभामिश्रणद्वारा जीवः

---

मृत्तिकाराशिः अवस्थापितः तदाधारेण कलशपुरात् सा शिला रज्वादिभिः आकृष्य शिखरे संयोजिता । ततःमध्यस्थितः मृत्तिकाराशिः विदारितः इत्येवंविधाख्या—यिकाश्रवणानन्तरं शिखरप्रान्ते महत्याः शिलायाः संयोजनं मानवस्य कृतिसाध्यम्—इत्येवं निर्णयो भवति । अतः आख्यायिकाः कृतिसाध्यत्वनिर्णयाय उपयुज्यन्ते ।

**शेषमहोरात्रभागमपूर्वग्रहणं [1]गृहीतपरिचयं च कुर्यात्। अगृहीतानां[2] आभीक्ष्ण्यश्रवणं च ॥**

---

### जयमङ्गलाक्रोडपत्रम्

ज्ञानप्रभायुक्तः सत्वगुणसंपन्नो निर्माप्यते। तावन्मात्रेण सः शक्तिमान् न भविष्यति अतः शक्तेरुद्बोधनाय कृतिसाध्यतां निर्णाययित्वा अव्यभिचारिण्याः क्रियाप्रभायाः संमिश्रणमपि आख्यायिकेतिहासेतिवृत्तधर्मक्रियाज्ञापनेन पुराणेन संस्थाप्यते इत्येवंरीत्या धर्मस्य पुराणे निरूपितस्य लोकस्थितिहेतुत्वं सङ्क्षेपतः अवगतं भवति। विशेषतस्तु शक्तिनिरूपणावसरे प्राक् ( पृ० ४० ) प्रपञ्चितमस्ति। तत् ततएव द्रष्टव्यम्।

### श्रीमूला

शेषं मध्यमम् अहर्भागम् अहोरात्रभागमिति मूलग्रन्थेषु पठ्यते। तदा शिष्टं मध्यममहर्भागं, रात्रौ कार्यान्तरनिद्रादिविनियुक्तावशिष्टतया लभ्यमानं रात्रिभागं चेति व्याख्येयम्। अपूर्वग्रहणं प्रतिनवप्रमेयश्रवणं, गृहीतपरिचयं गृहीतधारणार्थं चिन्तनं च कुर्यात्। अगृहीतानाम् आभीक्ष्ण्यश्रवणम् ईषद्गृहीतान सम्यङ् मनः प्रवेशार्थं पुनः पुनः श्रवणं च।

### वैदिकसिद्धान्तसंरक्षिणी

शेषमिति। हस्त्यादिप्रहरणदिविद्यायां इतिहासश्रवणे चापेक्षिताद्दिवसभागादवशेषमित्यर्थः। अपूर्वेति। पूर्वं षेडशवर्षावधि यन्न गृहीतं तस्य ग्रहणमिति तदर्थः। गृहीतेति। संस्कारदाढर्यार्थमेतत्। तथा च "अनभ्यासेन वेदानां ? आचारस्य च वर्जनात् आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति" इत्युक्तानर्थापत्तिनिराकरणमेतत्फलं बोध्यम्। अन्यथा गृहीतस्य पुनः परिचयालाभेनानर्थक्यं स्यात्। परिचयं अभ्यासम्। अगृहीतानाम्। अनवधा[3]रितानामिति टिप्पणीपाठे सङ्गृहीते एतदर्थः स्फुटो भवति।

### जयमङ्गला

शेष (म) इत्युभयशेषम् अहर्भागम्। अपूर्वग्रहणं विद्याग्रहणकाले अपरिसमाप्तानां ग्रहणम्। अगृहीतानाम् अशक्यग्रहणानाम्। अभीक्ष्णं पुनः पुनः श्रवणं च कुर्यात्।

---

१ नी० टि० **गृहीतपरिचयमिति**। अभ्यासः

२ ,, ,, **अगृहीतानामिति**। मनोधारितानामर्थानाम्।

३ टिप्पण्यां मनोधारितानां अर्थानां इत्युपलभ्यते किन्तु अनवधारितानां इति पाठो युक्तो भाति।

[ विद्याश्रवणफलानि ]

श्रुताद्धि प्रज्ञोपजायते, प्रज्ञया [1]योगः, योगादात्मवत्ता—इति विद्यासामर्थ्यम् ॥

### श्रीमूला

श्रुतादिति। श्रुतात् श्रवणात्, प्रज्ञा त्रैकालिकी बुद्धिः उपजायते। प्रज्ञया योगः शास्त्रोक्तानुष्ठानश्रद्धा, योगाद् आत्मवत्ता मनस्विता सत्त्ववत्ता उपजायते। इति विद्यासामर्थ्यम् इत्येतद् विद्याशक्तिजन्यं फलमित्यर्थः।

### वैदिकसिद्धान्तसंरक्षिणी

श्रुतादिति। विद्यावृद्धसंयोगप्रयुक्तात् सर्वशास्त्राभिगमनात्। प्रज्ञेति। अष्टाङ्गा शुश्रूषादिलक्षणा। योगः उत्थानं प्रवृत्तिः प्रयोग इति यावत्[2]। अयं उक्तप्रवृत्त्या संपादितो योगः कृतके विनये पर्यवसन्नो भवति। तथा च विनयविषये अयं निष्कर्षः—षोडश वर्षावधिकराजपुत्रस्य सहजो विनयो भवति ततस्तु कृत्रिमो भवति इति। वस्तुतः योगोऽत्र द्वितीयाध्यायोक्तदिशा (पृ० १४६) तर्कोऽभिनिवेशपर्यवसायी बोध्यः। आत्मवत्ता आत्मगुणसंपत्। तया च परोपकर्तृत्वं हितकारित्वं चात्मनि उत्पद्यते। एतेषां गुणानां गणनं नीतिसारे ३ सर्गे द्रष्टव्यम्[3]।

यदि आत्मवत्ता राज्ञि न भवेत् तर्हि तस्य स्नेहेन कोपेन वा जानपदस्य को वा लाभः कस्य वा निग्रहो भवेत्? इति राज्ञः अस्तित्वं आत्मगुणाभावे असत्प्रायं भवति। शेषं क्रोडपत्रे व्यक्तम्। विद्यायां सामर्थ्यं कीदृशमस्तीति भक्तिरसायनेन स्फुटं ज्ञेयम्[4]। अग्रिमाध्याये वक्ष्यमाणरीत्या ध्यानबलाद् विद्यामहिम्ना सेवकस्य चित्ते निविष्टो भगवान् सर्वान् प्रत्यूहान् विनाशयति विनयं आधापयति सत्फलं च वितरति।

---

१ नी० टि० **योगइति**। आत्मसम्पद्गुणैरिति शेषः

२ "आत्मसंपतगुणैः इति शेषः" इति (नी० नी०)

३ वाग्मी प्रगल्भःस्मृतिमान् उदग्रो बलवान् वशी।
नेता दण्डस्य निपुणः कृतविद्यः स्ववग्रहः॥
पराभियोगप्रसहः सर्वदृष्टप्रतिक्रियः॥
परच्छिद्रान्ववेक्षी च सन्धिविग्रहतत्ववित्॥ इति।
आदाता सम्यगर्थानां विनियोक्ता च पात्रवित्।
क्रोधलोभभयद्रोहस्तंभचापलवर्जितः।
परोपतापपैशुन्य मात्सर्येर्ष्याऽनृतातिगः।
वृद्धोपदेशसंपन्नः श्लक्ष्णो मधुरदर्शनः।
गुणानुरागी मितवागात्मसंपत्प्रकीर्तिता।

४ पदनखनिविष्टमूर्तिभिरेकादशतामिवावहन्निष्ठां
यं समुपास्ते गिरिशस्तं वन्दे नन्दमन्दिरे कञ्चित्।

[ विद्यायाः सौराज्यमूलता ]

**विद्याविनीतो राजा[1] हि प्रजानां विनये रतः ।**
**अनन्यां[2] पृथिवीं[3] भुङ्क्ते सर्वभूतहिते रतः ॥ ६ ॥**

इति विनयाधिकारिके वृद्धसंयोगः पञ्चमोऽध्यायः

---

## वैदिकसिद्धान्तसंरक्षिणी

इदं विद्यासामर्थ्यं बोध्यम् । किञ्च योगसहितविद्यासु चतसृषु नीत्यनुष्ठानपर्यवसायितया अधीयमानासु सतसु सर्वविधाऽपि हर्षस्य सामग्री वर्तते । तद्यथा ईप्सितार्थोपसङ्गमरूपाणां प्रियमोदप्रमोदानाम् त्रयाणामपि अत्र अस्तित्वं, विनयपुरस्सरं सञ्जातेन अध्ययनेन गुरुभर्तृप्रसादः, विश्वास्यत्वात् अभिरूपोभोगः, फलावश्यंभावात् बन्धुतृप्तिः सुभोजनं च अस्ति इति नीतीतरविद्यापेक्षयाऽत्र हर्षः[4] मनःप्रसादरूपः आह्लादकरः नियमेन वर्तते इति चतुर्विधविद्यायां उक्ताह्लादजनकत्वरूपं विशिष्टं, सामर्थ्यं संस्मरणीयम् । कुसुमाञ्जलि[5] कृन्मतानुसारेणपि शास्त्रस्य ईशपदरूपत्वात् विद्याचिन्तनं ईशपदचिन्तनमेव बोध्यम् ।

## जयमङ्गला

कस्मादित्याह—श्रुताद्धीति । हि यस्मात् श्रुतादुपायपूर्वं प्रज्ञोपजायते । प्रज्ञया योगः कर्मसूत्थानम्, उद्योग इत्यर्थः । योगादात्मसम्पत् । अन्यथा ह्यविद्यमानकल्प एवायं स्यात्, इत्येतद् विद्यासामर्थ्यं वृद्धसंयोगजमित्यर्थः ।

## जयमङ्गलाक्रोडपत्रम्

(श्रुतात् (पृ० ४५१) अगृहीतानां श्रुतादितिशेषः । तदुक्तं टिप्पण्याम्—
'मनोधारितानामर्थानाम्' इति ।

## श्रीमूला

विद्याविनीत इत्यादि । विनये शिक्षणे अनन्यां नाथान्तरशून्याम् एकनाथां इत्यर्थः । शेषं स्फुटम् ॥

इति कौटिलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे पञ्चमोऽध्यायः । वृद्धसंयोगः ॥

---

नी० टि० १ **राजेति** । कुमारस्य भविराजत्वं द्रष्टव्यम् ।
,, ,, २ **अनन्यामिति** । अन्यनृपतिरहिताम् ।
,, ,, ३ **पृथिवीमिति** । प्रमाणतः फलतश्च ।
४ हर्षो मनःप्रसादस्स्यात् ईप्सितार्थोपसङ्गमात् ।
इष्टसङ्गमनात् देवगुरुभर्तृप्रसादतः ।
अभिरूपोपभोगाच्च बन्धुतृप्तेः सुभोजनात् ।
अचिन्त्येष्टार्थ सपेत्तेः जायते सर्वदा नृणाम् ॥
५ सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो ।
विम्लानो न विभेदनेऽमृतरसप्रस्यन्द माध्वीकभूः ।—

## वैदिकसिद्धान्तसंरक्षिणी

अन्ते पर्यवसितार्थमाह श्लोकेन विद्येति। राजेति। नृपतिरितिपाठान्तरम्। यद्यपीदं प्रकरणं राजपुत्रार्थं निरूपितमस्ति तथापि तस्य राजत्व[1]मादाय ग्रहणमिति बोध्यम्। प्रजानां विनयेरतः इति।

यद्यदाचरतिश्रेष्ठः तत्तदेवानुवर्तते।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते। (श्रीमद्भागवद्गीता)

इत्युक्त्यनुसारेण "स यच्छीलस्तच्छीलास्तस्य प्रकृतयो भवन्ति" इत्युक्त्यनुसारेण च राजा स्वयमनुष्ठायोपदिशति प्रजाः। तदैव प्रजा राज्ञ उपदेशं कार्यपर्यवसायितया स्वीकर्तुं अर्हति नान्यथा। किञ्च यथा यथा राजा पावित्र्येण विनयपूर्वकं प्रवर्तते तथा तथा तच्छीरं अग्नियमादिदेवताः प्रविश्य राज्ञः तेजो वर्धयन्ति[2]। तत्तेजसैव प्रजा राज्ञः पुरतः विनीताः सत्यः मालामिव तदाज्ञां स्वीकुर्वन्त्यः अनुतिष्ठन्ति। इदं च राज्ञो मुखे देदीप्यमानं तेजः प्रजासु विनयप्रापणे हेतु मन्तव्यम्। अतएव तथाविधस्य राज्ञः पुरतः दुष्टा दण्डेन आत्मनः शुद्धिर्जातेति मन्वाना नियम्यन्ते। पुनश्च अपराधान् कर्तुं न प्रवर्तन्ते। तथा च कोशदण्डजं वृत्ताध्ययनजं च तेजः यदा सर्वान् विनीतान् कारयति तदा तेजःसंपन्नः राजा पृथ्वीं भुङ्क्ते इतिभावः। इदं हि सामर्थ्यं चतसृषु विद्यासु विनीतस्य जितेन्द्रियस्य सात्विकस्य नान्यस्येति बोध्यम्[3]। तदेवाहानन्यामिति। अन्यनृपति रहिताम्[4]। भुङ्क्ते पालयतीति तदर्थः[5]। अनेन आत्मनेपदप्रयोग उपपद्यते[6]। कथमिति तु जममङ्गलायां द्रष्टव्यम्। (पृ० ४५३)

इति वैदिकसिद्धान्तसंरक्षिण्यां अर्थशास्त्र टीकायाँ पंचमोऽध्यायः॥

---

ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रमत्।
चेतो मे रमयत्वविघ्नमनघो न्यायप्रसूनाञ्जलिः।

१ कुमारस्य भाविराजत्वं द्रष्टव्यम्।—नीति निर्णीति।

२ अग्निवायुमार्काणामिन्द्रस्य वरुणस्य च।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः॥
यस्मादेषां सुरेन्द्राणां मात्राभिर्निमितो नृपः।
तस्मादभिभवत्येष सर्वभूतानि तेजसा॥

तदेवाह कालिदासोपि—

स न्यस्तचिन्हामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः।
आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः॥

३ नरेश्वरा यच्चरितानुकारंवाच्छन्ति कर्तुं न च पारयन्ति।

४ मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः।
तथाप्यनन्यपूर्वेव तस्मिन्नासीद् वसुन्धरा॥–रघुवंश, सर्ग ४।७

५ प्रमाणतः फलतश्च।

६ भुङ्क्ते। पालयित्वा फलमासेवते इत्यनवमे

SARASVATĪBHAVANA-GRANTHAMĀLĀ
[ Vol. 130 ]

# KAUṬALĪYAMARTHAŚĀSTRAM

OF

ĀCĀRYA VIṢṆUGUPTA

[ VOLUME ONE, PART TWO ]

With Five Commentaries

## 'ŚRĪMŪLĀ'

BY

T. GAṆAPATI ŚĀSTRĪ

'Vaidikasiddhāntasaṁrakṣiṇī' & 'Jayamaṁgalākroḍapatram

BY

ŚRĪ PAṆḌITARĀJA RĀJEŚVARA ŚĀSTRĪ DRAVIḌA

## 'JAYAMAṀGALĀ'

BY

ŚRĪ ŚAṀKARĀRYA

&

## 'NĪTINIRṆĪTI'

BY

ŚRĪ YOGGHAMĀCĀRYA

EDITED BY

ŚRĪ VIŚVANĀTHA ŚĀSTRĪ DĀTĀRA

Ex-Head of Department,

Prācīnarājaśāstrārthaśāstra-Department

Sampurnanand Sanskrit University

Varanasi






VARANASI
1991

**Research Publication Supervisor —**
**Director, Research Institute,**
Sampurnanand Sanskrit **University**
Varanasi.

□

**[ Published under the Rare Texts Publication Scheme of 'Sarasvati-Bhavana' Library with financial assistance provided by University Grants Commission.]**

□

**Published by—**
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit **University**
Varanasi–221 002.

□

Available At—
**Sales Department,**
Sampurnanand Sanskrit **University**
Varanasi–221 002.

□

First Edition, 1000 Copies
Price Rs. 116.00

□

**Printed by—**
**VIJAYA PRESS,**
Sarasauli, Bhojubeer
Varanasi–2.

सरस्वतीभवन-ग्रन्थमाला

[ १३० ]

आचार्यविष्णुगुप्तविरचितं

# कौटलीयमर्थशास्त्रम्

## प्रथमभागस्य द्वितीयं सम्पुटम्

म० म० टी० गणपतिशास्त्रिकृतया 'श्रीमूला'व्याख्यया

पण्डितराजराजेश्वरशास्त्रिद्रविडकृताभ्यां 'वैदिकसिद्धान्तसंरक्षिणी'-

'जयमङ्गलाक्रोडपत्रम्'-व्याख्याभ्यां

श्रीशङ्करार्यकृतया 'जयमङ्गला'व्याख्यया

श्रीयोग्घमाचार्यकृतया 'नीतिनिर्णीति'व्याख्यया च

विभूषितम्

सम्पादकः

'शास्त्ररत्नाकर'-श्रीविश्वनाथशास्त्रिदातारः

पूर्वविभागाध्यक्षः,

प्राचीनराजशास्त्रार्थशास्त्रविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी



वाराणस्याम्

२०४८ तमे वैक्रमाब्दे १९१३ तमे शकाब्दे १९९१ तमे ख्रैस्ताब्दे

अनुसन्धान-प्रकाशन-पर्यवेक्षकः—
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
**वाराणसी ।**

□

[ सरस्वतीभवनपुस्तकालयस्य प्रकाशनसम्बन्धिविशेषयोजनान्तर्गत
विश्वविद्यालयानुदानायोगतः प्राप्तवित्तीयसाहाय्येन प्रकाशितम् ]

□

प्रकाशकः—
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्राप्तिस्थानम्—
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्— ११६= ०० रूप्यकाणि

□

मुद्रकः—
**विजय-प्रेस,**
सरसौली, भोजूबीर
वाराणसी ।

# प्ररोचना

बहोःकालात् प्रतीक्ष्यमाणा दिवङ्गतैः **पण्डितराजराजेश्वरशास्त्रिद्राविडैः** सम्पादिता कौटलीयार्थशास्त्रकृतिरधुना प्रकाश्यतामानीयत इति महान्तं परितोष-मनुभवामि। आजीवनं पण्डितवर्यैरस्य महतो ग्रन्थस्य वैदिकसिद्धान्तानुसारं निर्वचने प्रायाति। तैश्च जयमङ्गलाख्या प्राचीना टीकाऽपि स्वक्रोडपत्राख्येण टिप्पणेन संवलिता। श्रीयोग्घमाचार्यप्रणीता **'नीतिनिर्णीतिनाम्नी'** प्राचीना टीका, श्रीगणपतिशास्त्रिभि-र्विरचिता **'श्रीमूला'** टीका चाप्यत्र सङ्गृहीते। आसां टीकानां समुच्चयेनार्थ-शास्त्रग्रन्थस्य गूढा अर्थाः सुखं ग्राह्याः।

खेदस्यायं विषयः पण्डितराजानां परिश्रमं तेषां जीवनकाले मुद्रणावसरं नालभत, तेषां प्रमुखैः शिष्यैः **श्रीविश्वनाथशास्त्रिदातारैः** पाण्डुलिपेष्टीकाभिः संयोजनं सादरं सपरिश्रमं च सम्पन्नम्।

अनया भूमिकया सर्वांशतः सह ऐक्यमत्यमादधानोऽपि अस्याः प्रौढिं सोपपत्ति-त्वञ्च प्रशंसितुमर्हामि। प्रस्तुतस्यार्थशास्त्रसंस्करणस्येदमेव वैशिष्ट्यं यत्तस्य निर्वचनस्य सर्वे पक्षाः समुद्घाटिताः। तेन विदुषां स्वकीयमतनिर्धारणे सौकर्यं भविष्यति। श्रीदातारशास्त्रिणो द्वौ सहयोगिनौ **श्रीजगन्नाथशास्त्रितैलङ्ग-श्रीलक्ष्मीकान्तखनङ्गौ** आस्ताम्। तयोः श्रमोऽधुना सफलः।

कौटलीयमिति अभिधानमधुना विदुषां बहुतरेणादरास्पदम्। कौटलीयमित्येवा-भिधानमाद्रियन्ते बहुशो बुधाः। कुटलगोत्रे विष्णुगुप्तस्य जातत्वात् कौटल्यस्य कौटली-यस्योपपन्नत्वात्। भवतु, कौटिलीयमर्थशास्त्रं कतिभिश्चित् पाश्चात्यैः छलयुक्तिप्रधानं राजशास्त्रमिति मन्यते; किन्तु शास्त्ररीत्या समग्रपरीक्षणेन चायं भ्रम एव प्रतीयते। यतो हि भ्रम एवास्य शास्त्रस्य मूलम्। राज्ञा विद्याविनीतेनैव वर्तितव्यमिति प्रोक्तवता कौटल्येनैवमुक्तम्—**"श्रुताद्धि प्रज्ञोपजायते, प्रज्ञया योगः, योगादात्मवत्ता, इति विद्यासामर्थ्यम्"**।

अनेन वचनेन स्वतःसिद्धं कौटलीयार्थशास्त्रस्य आत्मविद्यामूलत्वम्। वस्तुतो दृष्टस्यादृष्टस्य च, लौकिकस्य लोकोत्तरस्य च, दैहिकस्य आत्मिकस्य च जगतः पार्थक्यं शास्त्रकारैर्न विचीयते स्म। एतादृशोरुभयोर्युग्मयोः परस्परमुपकारित्वमेवाभिमतमस्ति। पण्डितराजकृतः श्रम इममेवार्थं समुपपादयतीति नो हर्षः।

मन्ये, कौटलीयार्थशास्त्रस्य प्रस्तुतं संस्करणं प्राचीनराजशास्त्राध्ययने काञ्चन नूतनां सरणिं विवरिष्यति। साम्प्रतं चतुर्षु खण्डेषु विभक्तोऽयं ग्रन्थः प्रकाश्यतां गच्छतीति महते परितोषाय। अत्र संलग्नाः सर्वे पण्डिता अभिनन्दनार्हाः।

**वाराणस्याम्,**
कार्तिकपूर्णियाम्,
२०४८ वैक्रमाब्दे
(२१-११-१९९१ख्रैस्ताब्दे)

**विद्यानिवासमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्राक्कथनम्

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन सरस्वतीभवनस्थानां महत्त्वपूर्णानामप्रकाशितानां पाण्डुलिपीनां मुद्रणाय तथा दुर्लभानां मुद्रितग्रन्थानां पुनः प्रकाशनाय चैका योजना पञ्चमपञ्चवर्षीययोजनायां विश्वविद्यालयानुदानायोगसमक्षं प्रेषिताऽऽसीत्। आयोगेन च नियोजितस्य निरीक्षकमण्डलस्य संस्तुतिमनुसृत्य प्रकाश्यमानग्रन्थानां महत्तां चोररीकृत्य स्वीकृतिः प्रदत्ता। अस्यां प्रक्रियायां वर्षद्वयं व्यतीतम्। अवशिष्ट-योजनावधेरल्पत्वात्, अत्रत्यप्रकाशनविभागे कार्यबाहुल्यात्, योजनायाश्च सरस्वतीभवन-द्वारा प्रस्तुतत्वात् कार्यस्य शीघ्रमेव सम्पादनार्थं निम्नाङ्कितानां विश्वविद्यालयीय-विदुषामेका समितिर्निर्मिता—

**अध्यक्षः**

**प्रो० बदरीनाथशुक्लः ( कुलपतिः )**

**सदस्याः**

१. प्रो० जगन्नाथोपाध्यायः ( पालिविभागाध्यक्षः, श्रमणविद्यासङ्कायाध्यक्षश्च )
२. श्रीव्रजवल्लभद्विवेदः ( साङ्ख्ययोगतन्त्रागमविभागाध्यक्षः )
३. डॉ० भागीरथप्रसादत्रिपाठो 'वागीशः शास्त्री' (निदेशकः, अनुसन्धानसंस्थानस्य)
४. श्रीबलिरामशास्त्री भारद्वाजः ( उपपुस्तकाध्यक्षः, हस्तलिखितानुभागे )
५. श्रीजनार्दनपाण्डेयः ( सरस्वतीभवनस्थः )
६ श्रीलक्ष्मीनारायणतिवारी ( पुस्तकाध्यक्षः, समितेः संयोजकः )

संयोजकस्य श्रीलक्ष्मीनारायणतिवारिणः सततप्रयत्नेन अनया समित्या प्रकाश-नार्हग्रन्थानां चयनम्, तेषां सम्पादनव्यवस्था, मुद्रणव्यवस्था च तत्परतया सम्यक् प्रारब्धा।

सम्पाद्यमानग्रन्थेषु संस्कृतपालिवाङ्मयस्य प्रायः समस्तप्रमुखविषयाणां महत्त्व-पूर्णाः समुपयोगिनश्च ग्रन्थास्समावेशिताः, तत्तत्सम्पादनकार्यभारो विश्वविद्यालयस्य विद्वद्भ्यः, सम्बद्धविषयाणां कतिपयेभ्यो बहिष्ठविद्वद्भ्यश्च समार्प्यत।

अस्यामेव योजनायां प्रकाश्य प्रस्तूयत इदं कौटलीयमर्थशास्त्रं बहुभिरतिप्रसिद्ध-टीकाटिप्पणीसंवलितम्, **शास्त्ररत्नाकरविश्वनाथशास्त्रिदातारेण** सम्पादितम्।

अर्थशास्त्रं हि पूर्वाचार्यैर्भारतदेशस्य सुखशान्तिसमृद्धये त्रिवर्गोन्नतये च निर्माय राष्ट्रस्य पुरतः समुपस्थापितम्। तद् अतिविस्तृततया दुरूहं जातम्, तत्रत्याः कति-पयेऽशा उत्सन्नकल्पा अभूवन्निति कामसूत्रादिनिर्दिष्टहेतुभिर्ज्ञायते। आचार्यः कौटल्यः सम्पूर्णम् अर्थशास्त्रं वेदञ्च अधीत्य वैदिकमर्यादाया लोकयात्रासाधनत्वञ्चानुभूय तत्सङ्ग्रहभूतमेकम् अर्थशास्त्रं निर्मितवान्। यदर्थमुपजीव्य रामराज्यं धर्मराजराज्यं चन्द्रगुप्तमौर्यराज्यं च स्वर्णयुगायते। तदिदमर्थशास्त्रं पञ्चदशाधिकरणं सार्धशताध्यायं साशीतिप्रकरणशतं षट्सहस्रश्लोकात्मकमुपलभ्यते। तस्येयं प्रतिज्ञा "**पृथिव्या लाभे**

**पालने च "इदमर्थशास्त्रं कृतम्"** (कौ०अ०१।१) इति। तच्च सर्वेष्वपि देशेष्वद्यावधि उत्कृष्टतमं चकास्तीति सर्वैराधुनिकैर्विपश्चिदपश्चिमैरपि सत्क्रियते।

अस्यार्थशास्त्रस्य परम्परायामध्ययनाध्यापनद्वारा कतिपयाष्टीका अपि बभूवुः, याः समवलोक्य जयमङ्गलाभिधेयां टीकां **श्रीशङ्करार्यो** निर्मितवानिति तट्टीकातो ज्ञायते। इयं टीका केवलं प्रथमाधिकरणे उपलब्धा १९५८ ई० वर्षे प्रकाशिता। **श्रीगणपतिशास्त्रिभिः** १९२४ ई० वर्षे अनन्तशयने राजकीयमुद्रणालये सम्पादनपूर्वकं 'श्रीमूला'ख्या स्वरचिता टीका प्रकाशिता।

'नीतिनिर्णीति' नाम्नी टीका **श्रीयोग्घमाचार्यविरचिता** २०१६ वै० संवत्सरे मुम्बापुरीस्थभारतीयविद्याभवनतः सिन्धीजैनग्रन्थमालाद्वारा प्राकाशि। एतट्टीका-त्रितयसत्त्वेऽपि न्यायव्याकरणादिशास्त्राध्ययनपरम्परावद् अर्थशास्त्राध्ययनपरम्परा भारतदेशे समभूदिति न दृश्यते। अत उत्कृष्टतममिदमर्थशास्त्रमधिकृत्य प्राचीन-भारतीयशासनपद्धतिप्रभृतिष्वनेकेषु ग्रन्थेषु विद्वद्भिर्नैके आक्षेपा उद्भाविताः। यतोऽस्य अप्रामाण्यं जनेषु जागर्ति। तन्निरासाय **"विश्वविद्यालय-अनुदान-आयोगेन"** इदमनुभूतं यत् स्वसाहाय्येन पदवाक्यप्रमाणपारावारीणा विद्वांसोऽर्थशास्त्रव्याख्यानाय प्रेरणीयाः। प्रातस्स्मरणीया गुरुचरणाः पद्मभूषणादिविविधविरुदावलीसमलङ्कृताः श्रीमतः **स्व० पण्डितराजराजेश्वरशास्त्रिद्रविडमहाभागाः** संस्कृतविश्वविद्यालयाधिकारिभिः एतदर्थं सानुरोधं प्रार्थिताः। एतैर्द्वादशवर्षाधिकवर्षमर्थशास्त्रमधीत्य राजनीतिवर्गं संस्थाप्य विद्यार्थिनोऽध्यापिताः। ततः 'वैदिकसिद्धान्तसंरक्षिणी'ति नाम निधाय अर्थशास्त्रं व्याख्यातम्। प्रायः अष्टमशताब्द्यां शङ्करार्यैः (शङ्कराचार्यैः) निर्मितां 'जयमङ्गलाम्' अधिकृत्य आधुनिकविद्वदुद्भाविताः शङ्का आन्वीक्षिकीद्वारेण निरस्य क्रोडपत्रमपि व्याख्यातम्।

अधीतेषु विद्यार्थिवृन्देषु शास्त्ररत्नाकरादिभूषाभूषणैः **पण्डितश्रीविश्वनाथ-शास्त्रिदातारैरधीत्य** गुरुचरणकृतं व्याख्यानम् अन्याश्च टीका हृदयङ्गमय्य तन्निर्देशानुसारेण 'वैदिकसिद्धान्तसंरक्षिणी-जयमङ्गलाक्रोडपत्रयोः' सङ्कलनं सम्पादनञ्च विहितम्। एतट्टीकाद्वयोपेतं 'श्रीमूला'दिटीकात्रितयसहितमर्थशास्त्रं प्रथमाधिकरण आदितः पञ्चमाध्यायान्तं विदुषां पुरत उपायनीक्रियते। आशास्यते यद् विद्वद्वरेण्या ग्रन्थ-रत्नमिदमादितोऽन्तपर्यन्तं समवलोड्य अधीति-बोधाचरणप्रचारणैः सर्वसाधारणजनेषु रुचिमुत्पाद्य एतद्देशस्य सुखशान्तिसमृद्धये सहयोगं प्रदास्यन्ति।

विस्तृतं टीकाग्रन्थं दातारशास्त्रिभिः सङ्क्षिप्य भूमिकायां सर्वोऽपि विषयः समालोचितः, यत्र नीतिलक्षणादिकं सर्वं स्फुटीभवति, भवति च शङ्कानां समाधानमपि। विश्वस्यतेऽग्रिमं सम्पुटमप्यचिरेण प्रकाशमेष्यति।

**वाराणस्याम्,**
कार्तिकपूर्णिमायाम्,
वि० सं० २०३७
**(२२-११-१९८० खैस्ताब्दे)**

**बदरीनाथशुक्लः**
तदानीन्तनः कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# सम्पादकीयं वक्तव्यम्

भारतवर्षस्य अभ्युन्नतिः वेदेन **'न मे स्तेनो जनपदे'** इत्यादिना प्रदर्शिता। तत्परम्परा एतद्देशे पूर्वतनराज्येषु वंशपरम्परायां समुदीयते स्म। साम्प्रतं तु अस्यां शताब्द्यां विशेषतो भारतदेशे वर्तमानामशान्तिमनुरुद्धय तन्निवारणोपायं चिन्तयद्भिः श्रीगुरुदेवैः श्रीमद्भिः पण्डितराजराजेश्वरशास्त्रिद्रविडचरणैः राजशास्त्रचिन्तन-प्रचारणं विना देशे शान्तिर्न भविष्यतीति ज्ञात्वा प्रथमतो जयमङ्गलासहितः कामन्दकीय-नीतिसारः अमलनेरनगरस्थपुस्तकागारात् सम्प्राप्तः। तत्र 'विद्याप्रतिबद्धत्वाल्लोक-स्थितेः' इत्युपलभ्य श्रीचरणैः राजनीतिं पर्यालोचयितुं राजनीतिवर्गो वाराणसेये रामघट्टस्थिते व० शा० साङ्गवेदविद्यालये महाराजश्रीकाशीनरेशसान्निध्ये तत्कालीन-बिहारराज्यपालश्रीअणेकरकमलद्वारा पञ्चविंशतिवर्षेभ्यः पूर्वं संस्थापितः। तत्र गुरुवर्य पं० स्व० हरिरामशास्त्रिशुक्ल-गणपतिशास्त्रिहेब्बार-रामचन्द्रशास्त्रिहोसमने-जयरामशास्त्रिशुक्ल-स्व० नटराजऐय्यरप्रभृतिभिः सह अहमपि प्रविष्टः। तत्र गुरुचरणैः महता श्रमेण नीतिसारः कण्ठस्थीकृत्य समुपस्थितनैकविधप्रश्नजालसमाधानपुरस्सरम् अध्यापितः। तत्र तत्र देशान्तरेषु गत्वा तैरस्माभिश्च राजशास्त्रं व्याख्यानमालाभिः संश्रावितं प्रसारितं च। सर्वेषां श्रोतॄणां रुचिं ज्ञात्वा 'राजनीतिशास्त्र का दिग्दर्शन', 'शान्ति का अग्रदूत' इति पुस्तकद्वयं प्रकाशितम्।

ततो गुरुभिः जयमङ्गलादिटीकोपेतं कौटलीयमर्थशास्त्रमध्यापितम्, तत्रोपवर्णितेन विषयेण अस्माभिः सर्वैरपि निरणायि यद् भारतदेशे वर्णाश्रमप्रधाने समेषामेकरूपता-सम्पादकं तत्त्वं धृतिभावापरपर्यायम् आसीत्, अस्ति च। एतदाश्रयं विना क्वचिदपि सुखं शान्तिः समृद्धिर्भ्रातृभावेन सर्वेषां सम्प्रदायानां मानवानां वाऽस्तित्वं च न भवितु-मर्हति। एतच्छास्त्रनिर्देशानुसारेण देशे विद्याप्रचारकार्यमेव नैतिकं प्राथमिकं कार्यं विदुषाम्, इति विज्ञाय अर्थशास्त्रस्य चर्चा पुनरपि चर्चिता। तत्र अनेकविधाः शङ्का आधुनिकैः समुपस्थापिताः, आन्वीक्षिकीमीमांसामर्यादया कार्यकारणभावविवेचनपुरस्सरं समाहिताः। एतदेवानुरुद्ध्य रामायण-महाभारत-पुराणादिग्रन्था अपि यदि समा-लोच्येरन्, तर्हि समाजस्य आन्ध्यं व्यपगतं भवेदिति ज्ञात्वा राजनीतिवर्गे प्रविष्टैः स्वकार्यारम्भः समालोचितः। तदानीमेव तत्कालीनकुलपतिश्रीसुरतिनारायणमणि-त्रिपाठिभिः साहाय्यं सम्प्रदाय विशेषतया प्रोत्साहिता गुरुचरणाः। ततः श्रीगौरीनाथ-शास्त्रिभिरुपकुलपतिभी राजनीतिवर्गे स्वयमुपस्थाय अर्थशास्त्रमधिकृत्य निबन्धः प्रकाशितो भवत्विति अभिप्रायः प्रकटितः। नवीनग्रन्थनिर्माणेऽस्माकं सामर्थ्यमननुभूय गुरुशिष्यसंवाद एव ग्रन्थरूपेण प्रकाशनीय इत्यपि अभ्यधायि। ततः पुनरपि आदितः अर्थशास्त्रं गुरुचरणैरध्यापितं व्याख्यानमालारूपेण। तत्र प्रथमाधिकरणे चतुर्दशा-ध्यायान्तमेव अध्ययनाध्यापनयोर्महान् समयः समतिक्रान्तः। तस्य सम्पादनं सङ्कलनञ्च

अनेन शरीरेण कर्तव्यमस्तीति गुरुचरणानामादेशः समभूत्। तमनुरुद्धय परिश्रम-पुरःसरम् उक्तसंवादस्य सङ्कलनम् अनेकैः वर्षैः कृतमद्य विदुषां सेवायां कथञ्चन समुपस्थापयितुं प्राभवम्।

अर्थशास्त्रकर्ता चाणक्यस्तस्मिन् समये प्रादुर्भूतः, यत्र नीतिशास्त्रस्य विलोप-प्रसक्त्या सह देशे सत्त्वगुणस्योन्मूलनमेव प्रसक्तमासीत्। अनेनैवाचार्येण सर्वाणि शास्त्राणि चतुरो वेदानधीत्य सत्त्वोन्मूलनकारणमनुशील्य आन्वीक्षिक्या सह त्रय्यादिविद्यानां संस्थापनं कृतम्। राज्यञ्च धर्मप्रधानं व्यवस्थापितम्, यद्धि ऐतिहासिकानां मतानु-सारेणापि स्वर्णयुगायते स्म। अनेनैव सिद्धयति यद् अनेन आचार्येण पाटलिपुत्रमवस्थाय चन्द्रगुप्तं मौर्यं राज्यपदे समभिषिच्य स्वयं शमप्रधानः सन् सत्त्वमेव संस्थापितवान्। सोऽयमाचार्य इतः पूर्वं चतुर्विंशतिवर्षशतकपूर्वमवनीतलं भूषयामासेति न्यायवार्तिक-भूमिकाकर्तृभिः उद्धृतात् चतुर्विंशतितमतीर्थङ्करजैनाचार्यवाक्याद् उन्नीतम्। अर्थशास्त्रस्य पदानि गुरुपरम्पराध्ययनाभावाद् दुरवगाहानीति ज्ञात्वा गुरुचरणैः अर्थशास्त्रस्य टीकाः सङ्कलिताः। तासु समग्रस्य अर्थशास्त्रस्य टीका ( स्व० म० म० ) पं० त० गणपतिशास्त्रिभिः प्रणीता दृष्टा।

एते काञ्चिमण्डलपतेः श्रीमूलरामवर्ममहाराजस्य कृपापात्राणि स्वं व्याख्यानं **श्रीमूले**तिनाम्ना सम्पादितवन्तः।

**जयमङ्गला**नाम्नी टीका मद्रप्रान्ते प्रकाशिता। इयं कामन्दकीयटीका-वाक्यसादृश्यात् प्रामाणिकत्वाच्च शङ्करार्यैरेव विरचितेति मन्यते। सापि केवलं प्रथमाधिकरण एव प्रकाशनभावं प्राप्ता। **नीतिनिर्णीति**रपि केषुचित्स्थलविशेषेषु तदीयाभिप्रायं द्योतयति। सा सिन्धीजैनग्रन्थमालायामाचार्यजिनवरमुनिवरसङ्गृहीता उपलब्धा। एषैव स्वकीयपाठाख्याने सामग्री अभूत्।

एतदर्थशास्त्रस्य समस्तटीकासहितस्य प्रकाशनं अशक्यप्रायमस्तीति मन्वान एवासम्; परं श्रीजगन्नाथोपाध्याय–(पालिविभागाध्यक्षः) प्रभृतिविदुषां प्रोत्साहनमुपलभ्य वर्तमानश्रीकुलपतिभिरेतत् प्रकाशनं प्रतिज्ञायाहमादिष्टस्तदर्थम्।

अस्य समग्रस्य प्रकाशनं भागत्रयेण कर्तव्यम्। एकस्मिन् भागे सम्पुटद्वयं भविष्य-तीत्यपि निर्णीतं गुरुचरणैः, कृतस्य व्याख्यानस्य अतिदीर्घत्वात्।

एतत्कार्यसम्पादने **श्री पू० महाराजैः श्रीविभूतिनारायणसिंह**महाभागैः कृतेन प्रोत्साहनेन एतावद्दूरम् अहमागत इति तेषामुपकृतिं स्मरामि।

श्रीगुरुचरणव्याख्यानस्य सङ्कलितस्य शुद्धिः **स्व० गुरुचरणैर्हरिरामशास्त्रिभिः** शुक्लमहाभागैः सम्पादिता। तथैवाग्रे तैर्विधास्यत इत्याशायां स्थितस्तेषां वियोगेन खिन्नमनास्तेषां चरणौ स्मरन् तदुक्ति शरणं मन्यमान आसम्।

एतत्सामग्रीसम्पादने साहाय्यं साङ्गवेदविद्यालयाध्यक्षैः **श्रीरामचन्द्रशास्त्रि-होसमने**महाभागैः पुस्तकं प्रदाय कृतम्, तथा गुरुपुत्राभ्यां **श्रीविश्वेश्वरशास्त्रि-गणेश्वरशास्त्रिभ्यां** पितृचरणानां कृतिः प्रकाश्यतां प्राप्नोतीति श्रुत्वा महता हर्षेण सर्वविधमपि साहाय्यं प्रादायीति तेषां समेषां उपकृतिं सर्वान् सभाजयामि ।

मूलपाठं विभज्य तत्र तत्र शीर्षकं तदेव स्थापितं यद् एन्० एस्० वेङ्कटा-चार्यैर्विद्वद्भिः संयोजितमिति तानपि स्मरामि एतत्प्रसङ्गे । **श्रीटोणपेगोपालाचार्यैस्तु** प्रकाशनाय पुस्तकमेवार्थशास्त्रस्य समर्पितम् । इयं तेषामुपकृतिरपि स्मरणीया वर्तते ।

सम्पादन-प्रकाशनकार्ये च **श्रीलक्ष्मीकान्तशास्त्रिखनङ्ग-श्रीजगन्नाथशास्त्रि-तैलङ्गाभ्यां** महान् परिश्रमः कृतो वर्तते । तदधमर्णतां भजमानस्तयोरुपकृतिं स्मरामि ।

अस्य प्रकाशने प्रमादाद् अज्ञानाद् मुद्रकदोषाद् असौष्ठवाद् असामर्थ्याच्च अशुद्धयो जाताः प्रकाशनानन्तरमुपलब्धा वर्तन्ते । तदर्थं क्षमस्वेत्युक्तिं विनाऽन्य उपायो नास्ति । इयं प्रथमावृत्तिः, तत्र दोषा भविष्यन्त्येवेति ज्ञात्वा विद्वांसः पाठं शोधयित्वा अधीतिबोधाचरणप्रचारणैः समन्वेष्यन्तीमां कृतिमित्याशास्य विश्वेश-गुरुचरणौ नमन् विरमामीति ।

विदुषां वशंवदः

**विश्वनाथशास्त्रिदातारः**

# विषयानुक्रमणिका

## कौटलीयार्थशास्त्रस्थमूलस्यानुक्रमणिका

### तृतीयं प्रकरणम्

#### षष्ठोऽध्यायः ( इन्द्रियजयेऽरिषड्वर्गत्यागः ) ३-४०



#### सप्तमोऽध्यायः ( शास्त्रार्थानुष्ठानम् ) ४१-८०



### चतुर्थं प्रकरणम्

#### अष्टमोऽध्यायः ( अमात्योत्पत्तिः ) ८१-१०६



### पञ्चमं प्रकरणम्

#### नवमोऽध्यायः ( मन्त्रिपुरोहितोत्पत्तिः ) १०७-१८८

### षष्ठं प्रकरणम्

#### दशमोऽध्यायः ( अमात्यपरीक्षाविधिः ) १८९-२५१



### सप्तमं प्रकरणम्

#### एकादशोऽध्यायः ( गूढपुरुषोत्पत्तिः, संस्थोत्पत्तिः ) २५२-२८०



### अष्टमं प्रकरणम्

#### द्वादशोऽध्यायः ( गूढपुरुषप्रणिधिः ) २८१-३९७

# श्रीमूलाया विषयानुक्रमणिका

## तृतीयं प्रकरणम्

### षष्ठोऽध्यायः ( इन्द्रियजयेऽरिषड्वर्गत्यागः )



### सप्तमोऽध्यायः ( शास्त्रार्थानुष्ठानम् )



## चतुर्थं प्रकरणम्

### अष्टमोऽध्यायः ( अमात्योत्पत्तिः )



## पञ्चमं प्रकरणम्

### नवमोऽध्यायः (मन्त्रिपुरोहितोत्पत्तिः )

## षष्ठं प्रकरणम्

### दशमोऽध्यायः (अमात्यपरीक्षाविधिः)



## सप्तमं प्रकरणम्

### एकादशोऽध्यायः (गूढपुरुषोत्पत्तिः)



## अष्टमं प्रकरणम्

### द्वादशोऽध्यायः (गूढपुरुषप्रणिधिः)





# वैदिकसिद्धान्तसंरक्षिण्या विषयानुक्रमणिका

## तृतीयं प्रकरणम्

### षष्ठोऽध्यायः ( इन्द्रियजयेऽरिषड्वर्गत्यागः )



### सप्तमोऽध्यायः (शास्त्रार्थानुष्ठानम्)



## चतुर्थं प्रकरणम्

### अष्टमोऽध्यायः (अमात्योत्पत्तिः)



## पञ्चमं प्रकरणम्

### नवमोऽध्यायः (मन्त्रिपुरोहितोत्पत्तिः)

## षष्ठं प्रकरणम्

### दशमोऽध्यायः (अमात्यपरीक्षाविधिः)



## सप्तमं प्रकरणम्

### एकादशोऽध्यायः ( गूढपुरुषोत्पत्तिः )



## अष्टमं प्रकरणम्

### द्वादशोऽध्यायः ( गूढपुरुषप्रणिधिः )





## जयमङ्गलाया विषयानुक्रमणिका

### तृतीयं प्रकरणम्

#### षष्ठोऽध्यायः (इन्द्रियजयेऽरिषड्वर्गत्यागः)



#### सप्तमोऽध्यायः (शास्त्रार्थानुष्ठानम्)



### चतुर्थं प्रकरणम्

#### अष्टमोऽध्यायः (अमात्योत्पत्तिः)

## पञ्चमं प्रकरणम्

### नवमोऽध्यायः (मन्त्रिपुरोहितोत्पत्तिः)



## षष्ठं प्रकरणम्

### दशमोऽध्यायः (अमात्यपरीक्षाविधिः)



## सप्तमं प्रकरणम्

### एकादशोऽध्यायः (गूढपुरुषोत्पत्तिः)



## अष्टमं प्रकरणम्

### द्वादशोऽध्यायः (गूढपुरुषप्रणिधिः)

## जयमङ्गलाक्रोडपत्रस्य विषयानुक्रमणिका

### तृतीयं प्रकरणम्

### षष्ठोऽध्यायः (इन्द्रियजयेऽरिषड्वर्गत्यागः)

## सप्तमोऽध्यायः ( शास्त्रार्थानुष्ठानम् )

## चतुर्थं प्रकरणम्

### अष्टमोऽध्यायः (अमात्योत्पत्तिः)



## पञ्चमं प्रकरणम्

### नवमोऽध्यायः (मन्त्रिपुरोहितोत्पत्तिः)

## षष्ठं प्रकरणम्

## दशमोऽध्यायः (अमात्यपरीक्षाविधिः)

## सप्तमं प्रकरणम्

### एकादशोऽध्यायः ( गूढपुरुषोत्पत्तिः )



## अष्टमं प्रकरणम्

### द्वादशोऽध्यायः (गूढपुरुषप्रणिधिः)

॥ श्रीविश्वेश्वरः शरणम् ॥

श्रीगुरुः शरणम्

श्रीमूला-वैदिकसिद्धान्तसंरक्षिणी-जयमङ्गला-जयमङ्गला-

क्रोडपत्र-नीतिनिर्णीति-नाम्नीभिः

टीकाटिप्पणीभिः संवलितं

# कौटिलीयमर्थशास्त्रम्

## प्रथमो भागः

( द्वितीयसम्पुटम् )

## तृतीयं प्रकरणम्

### षष्ठोऽध्यायः

इन्द्रियजयेऽरिषड्वर्गत्यागः

## इन्द्रियजयः

[ इन्द्रियजयपदार्थतद्धेतू ]

**विद्याविनयहेतुः[1] इन्द्रियजयः कामक्रोधलोभमानमदहर्षत्यागात् कार्यः ।**

---

॥ ॐ मङ्गलमूर्तये नमः ॥

**टी० गणपतिशास्त्रिभिः विरचिता**

**श्रीमूला**

**इन्द्रियजय** इति सूत्रम् । इन्द्रियाणि श्रोत्रादीनि तेषां जयः शब्दादिषु स्वस्व-विषयेषु अविरुद्धा प्रवृत्तिः । सा शास्त्रसंस्कारमन्तरेण स्वत एव भवन्ती स्वाभाविक इन्द्रियजयः, शास्त्रानुष्ठाननिष्ठावशाद् भवन्ती कृतकः । स इहोच्यत इति सूत्रार्थः । **इदं च** सूत्रमध्यायद्वयेन भाष्यते । वृद्धसंयोगानन्तरं तद्धेतुरिन्द्रियजयः प्रसक्त इति **प्रकरणसङ्गतिः** ।

विद्येत्यादि । विद्याविनयहेतुः विद्यासंस्कारकारणम् । कामेति । परस्त्री-विषयोऽभिलाषः कामः, हिंसाप्रवर्तकश्चित्तविकारः क्रोधः, परद्रव्येच्छा लोभः, बालिश्यादात्मन्यनुपमत्वबुद्धिर्मानः धनविद्यादिप्रभवो गर्वो मदः, इष्टार्थप्राप्त्युप-भोगजन्या प्रीतिर्हर्षः, षडेते शत्रव इत्युच्यन्ते । एषां त्यागाद् वर्जनात् ।

---

**नी० टि० १ इन्द्रियेति ।** इदन्ति प्राप्नुवन्ति प्रभुत्वेन स्वविषयान् ।

श्रीराजेश्वरशास्त्रिद्राविडव्याख्याता

## वैदिकसिद्धान्तसंरक्षिणी

कृतकं विनयं संपादयितुमाह—विद्येति । विनयेति—विद्याविनयो हेतुः यस्य । तदुक्तं—गणपतिशास्त्रिणा "विद्यासंस्कारकारण"मिति । इन्द्रियजय इति कार्यः इत्यनेनान्वयः । तदुक्तं टिप्पण्याम् 'इदन्ति प्राप्नुवन्ति प्रभुत्वेन स्वविषयानि"ति ।

**अरिषड्वर्गः**

काम इति । द्वन्द्वान्ते श्रूयमाणेन त्यागेन तेषामन्वयः । कामः इच्छा । क्रोधः द्वेषः यस्मिन्नुत्पद्यमाने ज्वलितमिव आत्मानं अभिमन्यते । लोभः—परद्रव्यातिश्रद्धा । मानः अवनतिसाध्येष्युन्नतमनस्कता । मदः—शौर्यादिनिमित्तो दर्पः । हर्षः अतिक्रीडनात्तृप्तिः । एते सर्वेऽपि नीतिपरिपालने कर्तव्यविरोधिनः । यत एतेषु सत्सु नयशून्यो भवति राजा । तथासति जनः अपरज्यते । तेन धर्मार्थयोर्विनाशः । अतः धर्मार्थविरोधिनां कामादिव्यसनानां परित्यागः कार्यः इति भावः ।

## जयमङ्गला

विद्यावृद्धसंयोगाद् अवाप्तविद्याविनयेन ज्ञाने सति इन्द्रियजयः शक्यत इति तदनन्तरं इन्द्रियजय उच्यतेऽध्यायद्वयेनेति प्रकरणक्रमः । तदाह—विद्याविनय हेतुरिन्द्रियजय इति । विद्याविनयो हेतुर्यस्य इन्द्रियजयस्य स कार्य इति सम्बन्धः । कथङ्कार्य इत्याह—कामादीनां त्यागादिति । कामादयो मानसा धर्मा बाह्येन्द्रियवृत्ति हेतवः । अतो मनोदोषाभावात् अश्रमेण कर्णादयो विजिता भवन्ति । दोषाः कामक्रोधलोभमानमदहर्षाः[1] । तत्र कामो नेच्छामात्रम्, अपि तु व्यसनहेतुर्यः स ग्राह्यः । क्रोधोऽक्षमा, प्रबलेऽपि[2] यो वाक्पारुष्यादिनिमित्तः । लोभः स्वपरद्रव्यातिश्रद्धा[3]स्वरूपः । मानोऽवनतिसाध्ये[4]ऽप्युन्नतमनस्कता । मदो विद्यासौन्दर्यादिजनितो दर्प इत्यर्थः । हर्षोऽतिक्रीडनात्तृप्तिः[5] तेषां व्यसनहेतूनां त्यागः, तस्मात् त्यागात् कार्य इत्यावश्यकार्यः ।

---

अशुद्धम्

१ दोषाः ··············तत्र

२ प्रत्ययोऽपि

३ व्याप्नोति गर्वा

४ नीतिसाध्ये

क्रीडनोम्म(ति ? त्तिः)

## जयमङ्गलाक्रोडपत्रम्

अध्यायद्वयेनेति। षष्ठसप्तमाध्यायाभ्यामभिहितं यदनुष्ठानं तदेव इन्द्रियजयः, "शास्त्रार्थानुष्ठानं वेति" मूले वक्ष्यमाणत्वात्। तत्र आदिमेऽध्याये (षष्ठाध्याये) अभिहितः इन्द्रियजयः "कर्णत्वगादीन्द्रियाणां स्वेषु स्वेषु विषयेषु अविप्रतिपत्तिः"। ७ मे- "शास्त्रार्थानुष्ठानमिन्द्रियजयः" इति द्वयोरध्याययोः विवेकान्न कस्याऽपि वैयर्थ्यं बोध्यम्।

### इन्द्रियजयसाधनम्

ननु इन्द्रियजयः कथं साधयितुं शक्यः ? इतिचेदुच्यते। स हि ध्येयविषयमधिकृत्य ध्याने कृते सति संभवितुमर्हति। ध्यानं च मनसः एकविषयनिष्ठत्वम्।

### न्यायभाष्य-न्यायकन्दलीसमन्वयः

अत्राऽयं विवेकः—टिप्पण्युद्धृत न्यायभाष्ये[1] "प्रत्याहृतस्ये"त्यादि ग्रन्थेन ज्ञानस्य स्वरूपमुपवर्णितम्। तत्रैव वार्तिककृता मनसः विषयनिष्ठत्वं[2] ध्यानमिति वर्णितम्। न्यायकन्दल्यां तु विजातीयः विलक्षणः आत्ममनसोः संयोगः ध्यानं इति वर्णितम्[3]। तदनयोः ग्रन्थयोः सङ्गतिः एवं भवितुमर्हति—ध्येयविषयातिरिक्तावृत्ति ध्येयवृत्तिविषयताकचिन्ताविषयत्वसंबन्धेन मनसः विषयवृत्तित्वम् इति।

### योगलक्षणे बुभुत्सा

ननु (टिप्पण्युद्धृते) न्यायवार्तिके बुभुत्साविशिष्टस्येति किमुपात्तम् ? इतिचेत्। उक्तसंबन्धस्य एकमात्राकारात्मकवृत्तेर्लाभाय, बुभुत्सायाः; कामिनीजिज्ञासायाः कामिनीज्ञानान्यज्ञानस्येव विजातीयवृत्तिप्रवाहं प्रति प्रतिबन्धकत्वात्। किञ्च मनसो विषयवृत्तितावच्छेदकसंबन्धघटकचिन्तानिवेशने सुसमूर्षायाः तत्वबुभुत्सायाश्च एकार्थाभिप्रायत्वं बोध्यम्। तेन तर्कलाभः। तदाहुः—"वितर्कात्मा भवेच् चिन्ता" इति। चिन्तायाः सत्वे एकाग्रतावस्थायां सर्वं सिद्धं भवति तस्याः दिव्यदृष्टित्वात्।

---

१ स तु प्रत्याहृतस्येन्द्रियेभ्यो मनसो धारकेण प्रयत्नेन धार्यमाणस्य आत्मना संयोगस्तत्वबुभुत्साविशिष्टः सति हि तस्मिन् इन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते तदभ्यासवशात्तत्वबुद्धिरुत्पद्यते। ( न्यायभाष्ये ४-२-३८ )

२ तदाहुर्न्यायवार्तिके "स तु प्रत्याहृतस्येन्द्रियेभ्यो मनस इति। अनेन विक्षेपं निवर्तयति। इन्द्रियेभ्यः प्रतीपमाहृतस्य क्वचित् हृत्पुण्डरीकप्रदेशे आत्मनो निजौकसि धारकेण प्रयत्नेन धार्यमाणस्यात्मना संयोगोऽयम्। स खलु सुप्तावस्थायामस्तीत्यत उक्तं तत्वबुभुत्साविशिष्ट इति। तदभ्यासश्च तद्विषयप्रयत्नोत्पादपौनःपुन्यं तस्मादादरनैरन्तर्यदीर्घकालविशिष्टात्तत्वबुद्धिरुत्पद्यते ॥ ३८ ॥ इति।

३ तथैव न्यायकन्दल्याम्—संप्रज्ञातो धारकेण प्रयत्नेन क्वचिदात्मप्रदेशे वशीकृतस्य मनसो निरभिसन्धि निरभ्युत्थानात् क्वचिदात्मप्रदेशे संयोगः। तत्रायमुत्तरो मुमुक्षूणामविद्यासंस्कारविलयार्थमन्त्ये जन्मनि परिपच्यते। इति।

## जयमङ्गलाक्रोडपत्रम्

अत्र वेदान्तमतेन मनसः विषयनिष्ठत्वं तदा भवति यदा मनसो वृत्तिस्तन्मात्राकारा भवति। इति नात्र कश्चन विरोधः। चिन्ताया दिव्यत्वं तत्वचिन्तामणौमङ्गलारंभे उक्तमुपलभ्यते[1]।

### धारणाध्यानसमाधीनां भेदः

किञ्च ध्यानधारणासमाधीनां विवेकोऽपि चिन्तायाः तारतम्येन मन्तव्यः। तथाहि-प्रयत्नेन उक्तसंबन्धेन मनसः विषयनिष्ठत्व साधितम् चेत् धारणा भवति। अप्रयत्नपूर्वकं साधितं चेत् ध्यानं भवति। तदेव ध्यानं द्वादशदिवसपर्यंतं सन्ततधारया विषयनिष्ठं चेत् समाधिर्भवति। बुभुत्सया ध्यानं भवतीत्यत्र प्रमाणं किराते भारविणा उक्तं द्रष्टव्यम्[2]-

### शास्त्रार्थस्फूर्तिः

अत्रायंभावः—शास्त्रस्य विषयावगत्यर्थं सम्यक्तया समस्तविषयग्रामनिवृत्तिसमर्था चिन्ता यस्य भवति सः तद्विषयं शास्त्रार्थं पश्यति[3] तत्रैव एकाग्रभूमिकोत्पत्तेः। क्षिप्तविक्षिप्तमूढभूमिकायां स्थितास्तु कथमपि शास्त्रार्थं परिचेतुं न पारयन्ति।

### साहित्यमतेन ध्यानालंबनम्

अयं विषयः स्फुटीकरणदृष्ट्या साहित्यशास्त्रमर्यादया निरूप्यते। तथाहि-अस्मिन् शास्त्रे मनोवृत्तयः व्यभिचारिभावत्मिकास्त्रयस्त्रिंशत्सङ्ख्याकाः उपवर्ण्यन्ते। तत्र चिन्तासाचिव्येन ध्यानं, निर्वेदे,असूयायाम्, वितर्के, धृतौ, विषादामर्षाद्भुतेषु च भवति।

ननु असूया-चिन्ता-स्मृति-धृतिभावानां अनुभावविभावयोः अन्यतरस्मिन् ध्यानं साहित्ये नोक्तमिति चेन्न। असूयायां दूरापराधान्वेषणात्—वितर्के आहार्यारोपे इच्छायाः कारणत्वात्, वितर्कस्य चिन्तारूपत्वात्, स्मृतौ विस्मृतार्थस्य स्मरणात्, धृतौ प्रतिभासादात् चिन्तायाः सम्बन्धः असूयाचिन्तास्मृतिधृतिभावेष्वपि अस्त्येव। अतएव ध्यानमपि तत्रास्तीति सिद्धं भवति इतिकृत्वा असूयाद्यन्यतमेषां दृष्टभावानामालम्बनं ध्यानार्थमुपयुक्तं भाति। अत्रेदं बोध्यम्-निर्वेदादयो भावाः यत्तत्वं निमित्तीकृत्य मनसि उदयन्ति। तन्निमित्तं यदि उत्तमं तर्हि तद्विषयकं ध्यानं उत्तमसंबन्धात् उत्तमफलपर्यवसायि भवेत्। अन्यथा तु प्रणनाशाय। तदुक्तं गीतायाम्-"ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते···बुद्धिनाशात् प्रणश्यति"। इति। अतः शास्त्रविषयप्रकाशनार्थं तद्विषये निर्वेदाद्यन्यतमभावाः येन कारणेन संभवन्ति तेषां सङ्ग्रहः कृतश्चेत् दृष्टोपायेनैव तत्वबुभुत्साविशिष्टस्य मनसः एकस्मिन् प्रदेशे आत्मना

---

१ अन्वीक्षानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतं।
चिन्तादिव्यविलोचनेन च तयाः सारं विलोक्याखिलम्॥
तन्त्रे दोषगणेन दुर्गमतरे सिद्धान्तदीक्षागुरु—।
गङ्गेशस्तनुत मितन वचसा श्रीतत्त्वचिन्तामणिम्॥ २॥ इति।

२ प्रणिधाय तत्र विधिनाऽथ धियं दधतः पुरातनमुनेर्मुनिताम्।
श्रममादधावसुकरं न तपः किमिवावसादकरमात्मवताम्॥ कि० ६।१९

३ विनयो हीन्द्रियजयः तद्युक्तः शास्त्रमृच्छति।
तन्निष्ठस्य हि शास्त्रार्थाः प्रसीदन्ति ततः श्रियः॥ इति।

टी० शास्त्रं हि चिन्ताभावनाक्रमेण निर्मलीभवति। इति।

## जयमङ्गलाक्रोडपत्रम्

### अर्थमात्रस्य स्फुरणम्

अपेक्षितः सम्बन्धः नासुलभो भवति। ननु कञ्चनापि तद्गोचरार्थं चिन्तयिता कथं गृह्णातीति ? चेत्। तदपि नीतिसारोक्तदिशा चिन्तनीयम् "आत्मेत्यादिना" टिप्पण्युद्धृतपद्येन[1]।

तत्रोपवर्णितः निगूढः अर्थः जितेन्द्रियत्वलाभार्थं सुसङ्गतिको भवन् विनयाय कथमुपयुज्यते इति जयमङ्गलाकृता साधितमस्ति। ननु प्रस्तुतविषयेन सह आत्मेत्यादि नीतिसारग्रन्थस्य कः सम्बन्धः ? इति चेत् उच्यते।

### आत्मेत्यादिपद्याशयः

आत्मेत्यादि—तदीयपद्येषु प्रयत्न आदरात्मको विवक्षितः तेन अनुपेक्षात्मकेन संस्कारोत्पत्तेः। सति च तस्मिन्नुद्बुद्धे बुभुत्सा संभवति। तया च ध्यानं, बुभुत्सायां सत्यां एकाग्रतालाभेन ध्यानेन च यदा विषयोपलब्धिर्भवतितदा सुखं भवति। इत्येतत्प्रदर्शयितुं "विज्ञानं हृदयं चित्त"मिति नीतिसारपद्ये "प्रवर्तननिवर्तने" इति अभिहितमस्ति। अत्रत्यः टीकाग्रन्थः एवम्। 'सापायेष्वपि विषयेषु मनः प्रवर्तयति"। इति। सापायेष्वपि इत्यस्य बलवदनिष्टानुबन्धिषु इत्येवमर्थो भवति। तथा च सापायेषु अर्थेषु सुखसाधनताधिया ध्याने पर्यवसितया प्रवृत्तिर्भवति। बलवदनिष्टानुबन्धित्वे ध्याते तु निवृत्तिर्भवति। तदिदं ध्यानं द्विविधमुच्यते। आत्मालम्बनं बाह्यालम्बनमिति भेदात्, तत्र योगेन विविक्ततया यस्य आत्मा प्रत्यक्षविषयो वर्तते तस्य तद्विषयकमादरप्रत्ययसहितबुभुत्साजनितं ध्यानं आत्मालम्बनं भबति। सति च तस्मिन् जितेन्द्रियता पूर्णा इति वक्तुं शक्यते। तद्विधमेव ज्ञानं पारमार्थिकमित्युच्यते, बाह्यालम्बनज्ञाने तु आत्मा संसारिणां न विविक्ततया प्रत्यक्षविषयो भवति। अपि तु मिथ्याज्ञानवासना-

---

१ आत्मा प्रयत्नादर्थेभ्यो मनः समधितिष्ठति।
संयोगादात्ममनसोः प्रवृत्तिरुपजायते ॥
विषयामिषलोभेन मनः प्रेरयतीन्द्रियम्।
तन्निरुन्ध्यात् प्रयत्नेन जिते तस्मिन् जितेन्द्रियः ॥
विज्ञानं हृदयं चित्तं मनो बुद्धिश्च तत्समम।
अनेनात्मा करोतीह प्रवर्तननिवर्तने ॥
आत्मा मनश्च तद्विद्यैरन्तःकरणमुच्यते।
ताभ्यां तु सप्रयत्नाभ्यां सङ्कल्प उपजायते ॥
आत्मा बुद्धीन्द्रियाण्यर्थाः बहिष्करणमुच्यते।
सङ्कल्पाध्यवसायाभ्यां सिद्धिरस्य प्रकीर्तिता ॥
उभे एते हि करणे प्रयत्नानन्तर्यके स्थिते।
तस्मात् प्रयत्नसंरोधाद् भावयेन्निर्मनस्कताम्। इति। (नी० सा० १ स०)

## जयमङ्गलाक्रोडपत्रम्

वशादविविक्ततया शरीरावच्छिन्नः सन् प्रत्यक्षविषयो भवति । तावत्पर्यन्तं व्यवहारकाले प्रतिबुद्धज्ञानेन बुभुत्साविशिष्टेन धर्मार्थयोः अप्रतिघातो यथा भवेत् तथा तदविरुद्धो विषयस्तेन ध्येयः। इति कामन्दकस्य आशयो भाति । तेन वीररससंपन्नः आदरपूर्वकं सहजतः बुभुत्सया ध्यायंस्तिष्ठति जितेन्द्रियश्च सन्, तावत्पर्यन्तं स यथावद् विद्यां प्राप्तुमर्हति कृत्रिमविनयसंपन्नश्च भवति । शेषं आकरग्रन्थादौ द्रष्टव्यम्। ( एतेन प्र०खं०पृ० १४५ ष्ठे प्रतिज्ञातमुपपन्नम्। )

### मनसो नियमनोपायः अणुत्वं च

अपि च मनसः अतीन्द्रियत्वेऽपि तेन नियमनं दृष्टप्रणालिकया कथं भवितुमर्हति इति प्रसङ्गात् प्रागुक्तमपि (प्र.खं.पृ. ३३३) पुनरुच्यते। मनसः अणुरूपस्य अप्रत्यक्षत्वेऽपि तत् याभ्यः नाडीभ्यः सञ्चरति ताः यदि नियमिताः भवेयुः तर्हि तद्द्वारा मनसो नियमनं भवितुमर्हति। "मनःसहचरो वायुः" इत्युक्तेः। उदयनाचार्यकृतनिर्देशादपि ज्ञायते, यत् वायुसञ्चरणशीलया नाडया मनः सञ्चरतीति। तथा च तत्तन्नाडीषु अपेक्षानुसारेण वायुः प्रत्यवायपरिहारपुरस्सरं यदि नियमयितुं सुशकःस्यात् तर्हि मनोऽपि तद्द्वारा नियन्त्रितं भवितुमर्हति तदेवेदं गोकुलनाथोपाध्यायेनाऽपि अभिनयस्य साफल्य-विचारप्रसङ्गे व्यक्तीकृतमस्ति[1]।

तथा च गोकुलनाथोपाध्यायोक्तदिशा ध्यानमात्रेण प्राणे निगृहीते मनोऽपि निगृहीतं भवितुमर्हतीति सिद्धम्। तत्रापि नियमितत्वेन अभ्यर्हिते वायावपि विशेषतया प्राणवायोः स्थिरीकरणमपेक्षितम् शरीरवर्तिनीनां सर्वासामपि चेष्टानां प्राणसम्बद्धत्वात्। इयमेव एकाग्रता प्राणस्य स्थैर्यमित्युच्यते ।

आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च अन्तर्गतं मनो ज्ञायते इत्युक्तं तदपि प्राणमनसोः साहचर्यात् बोध्यम्।

किञ्च मनस्स्वरूपं विदधता भावप्रकाशनकृता -

"तस्य स्यामिति सङ्कल्पः मन आख्यां लभेत्तु सः" ।

इति यदभिधीयते तदेव आधुनिकैः Will Power इति संज्ञया व्यवह्रियते। तस्याभिव्यक्तिः तदा भवति यदा मस्तिष्के मध्यान्तरवर्तिकर्णिकायां गतिर्भवति। तदेतत् चिकित्साचन्द्रोदयादुद्धृते (प्र० खं० पृ० १५ ष्ठे) द्रष्टव्यम्।

---

१ सात्विकास्तु आत्मत्वेनाध्यस्तस्य प्राणस्य सूक्ष्मभूतप्रकारात्मकाः स्तम्भत्वादिनाऽष्टधा भिद्यमाना व्यभिचारिणोऽपि बाह्यस्वरूपेण परिणामादनुभावतयाऽपि स्पृश्यन्ते। इति।

## जयमङ्गलाक्रोडपत्रम्

### मनसः परिमाणम्

प्राणोऽपि मस्तिष्क एव स्थितः इति वैद्यशास्त्रे उक्तमेव भावप्रकाशनकृताऽपि उपन्यस्तं[1], तस्मान् मनःप्राणयोः संबंधः मस्तिष्के वर्तते इति सिद्धं भवति। यद्यपि मनसोऽतीन्द्रियत्वं साधितं तथापि तस्य सेन्द्रियत्वं साहित्यदृशा "तस्य स्यामि"ती त्यादिना ग्रन्थेन उपन्यस्तं प्राक्। ( ख० १ पृ० १८ ) स च वेद्य एव। मनः पदेन अभिधीयमानः "तस्य स्यामि"ति सङ्कल्पः यथा ईश्वरस्य वर्तते तथा जीवस्यापि वर्तते। विना सङ्कल्पं नाडीषु चेष्टानुपपत्तेः। अतस्तस्य नियमनं नाशक्यम्। अत्र केचित् एवं वदन्ति, प्राणसहचरितं मनः शरीरप्रमाणकमिति। तन्न। शरीरस्य अधोदेशेऽवस्थितानां नाड़ीनां मस्तिष्केण सह पृथक्करणे सति शरीरस्य तत्तद्देशे लगुडादिना कृतेऽपि आघाते छेदने वा तत्संवेदनं मस्तिष्के न भवति इति प्रत्यक्षसिद्धम्, तदिदं मनः शरीरप्रमाणकं चेत् उपपन्नं न भवति। यदा किल मस्तिष्केण सह सम्बद्धासु शरीरान्तर्वर्तिनीषु तत्तन्नाड़ीषु मनसः वेगेन प्राणकम्पप्रयुक्तो वेगो भवति तदा ज्ञानतन्तुष्वपि तथा वेगः उत्पद्यते। ततश्च संवेदनं भवति। परन्तु प्राङ्निर्दिष्टमार्गानुसारेण (प्र०ख०पृ० २-६) वितर्कचिन्तादि भावान्यतमेषु स्थितस्य यदा ध्यानादिबलात् प्राणमनसोः स्थैर्यं भवति। तदा तत्स्थैर्येण शरीरान्तर्वर्तिनीषु नाडीषु कम्पोऽपि न भवति नवा तत्संवेदनादिकम्। तदेतत्सर्वमपि मनसः अणुत्व एव सोपपत्तिकं भवति। एतदेवाभिप्रेत्य नीतिसारकृता उच्यते ज्ञानस्येत्यादिना[2]।

### ज्ञानं क्रिया

ननु ज्ञानं गुणः कम्पस्तु तद्विजातीयं कर्म तयोः एकत्र अन्तर्भावः कथं भवति ? इति चेन् मास्तां नैयायिकमतेन। प्रत्यभिज्ञाचार्वाकादिमते तु ज्ञानस्य क्रियादिरूपत्वमुच्यते। तथाहि—प्रत्यभिज्ञादर्शनमते ज्ञाने कर्तृत्वं स्वीकृतं वर्तते। तदुक्तं—

बोधस्य चाप्यकर्तृत्वं कर्तृत्वे चाप्यबोधता। इति।

एतदस्वीकारे तु तद् आणवमलं भवति जीवस्य इति निन्दितमस्ति। एवमेव ईश्वरः साक्षी ज्ञानात्मकः इति वेदान्तमतेन न्यायरत्नावल्यां प्रतिपाद्यते। तथा श्रुतावपि "अहं बहु स्यां प्रजायेय" इति। तथाच एभिः उक्तैः प्रमाणैः ज्ञाने यथा कर्तृत्वं सिद्धं तथैव प्रत्यक्षवादिमतेन क्रियारूपत्वं शब्दरूपत्वंचास्ति इत्यपि वक्तुं शक्यते। शरीरान्तर्वर्तिषु मस्तिष्कसंबद्धेषु ऊर्ध्वतन्तुषु कम्पे सति ज्ञानं भवति, यत्र च कम्पः तत्र शब्दोऽवश्यं भवति इति प्रत्यक्षसिद्धत्वात्, 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति व्याकरणसिद्धान्ताच्च। प्रत्यक्षवादिनां मतानुसारेण नाडी-

---

१ १ अधिकारे—प्राणादिभेदात्पञ्चात्मा शरीरं व्याप्य तिष्ठति।
येन प्राणिति सर्वत्र स प्राणो मूर्धनि स्थितः॥ इति। (भाव०)

२ ज्ञानस्यायुगपद्भावो मनसो लिङ्गमुच्यते। (नीतिसार)।
कारिकावलिकृतापि - अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते इतिचोक्तम्॥

## जयमङ्गलाक्रोडपत्रम्

कम्पनविचारदृष्ट्याऽपि ज्ञानं क्रिया, वेगः शब्दश्च एकरूपतामेव भजन्ते इति सिद्धम् ।

पुनः सर्वमिदं वायुपरतन्त्रम् कम्पादिसमये तत्तन्नाडीषु वायोः सञ्चरणस्य नैयत्येन दर्शनात् । तदेवोक्तं भावप्रकाशनग्रन्थे "मनोधितिष्ठति प्राणपूर्वान् पञ्च समीरणान्" । (प्र.ख.पृ. ३२६) इति । अत्राऽयं निष्कर्षः--सङ्कल्पात्मकमनःप्रेर्यो वायुः ततः प्रेर्यः अग्निः तेन नादः तत्रैव च संवेदनादि भवति । मनसः नियमने कृते ज्ञानतन्तौ क्रियानुत्पत्तिः मनोनियमनं च तत्सहचरितप्राणस्य नियमनेन संभवतः । तदेवोक्तं वेदान्तसूत्रमुक्तावल्यां "प्राणाभावेन ज्ञानाभावः" इति ।

### मनसः सङ्कल्पाणुत्वरूपत्वम्

न च मनसः सङ्कल्परूपत्वं अणुरूपत्वञ्च कथमुच्यते ? इति चेत् । तन्मते सङ्कल्पानुबन्धिपरिमाणरूपत्वं मनसो बोध्यम् । अतएव सुषुप्तौ मनो न भवति इत्यस्यार्थः सङ्कल्पो न भवति इति बोध्यम् ।

### योगसिद्ध्यधिकरणन्यायेन मनः सर्वफलसाधने समर्थम्

ननु सङ्कल्पात्मकं मनः "सर्वेभ्यो दर्शपूर्णमासौ" इत्युक्तन्यायेन किं सर्वं फलं साधयितुं समर्थम् ? इति चेत् समर्थम् । परमत्रायं विवेकः—मीमांसकमतेन उद्देश्यस्य अनेकत्वं न भवतीति सर्वफलसाधकं दशपूर्णमासात्मकं कर्म सदपि सकृत् अनुष्ठिताभ्यां दर्शपूर्णमासाभ्यां एकस्यैव उद्देश्यस्य सत्वात् एकदा एकमेव फलं भवति इति योगसिद्ध्यधिकरणे साधितम् । तन्न्यायेन ध्यानमपि शास्त्रानुसारेण उक्तवस्तुविषयकं समस्तफलसवितृ सदपि एकदा एकमेव फलं प्रयच्छति न तु फले फलानि वा । अत्र सर्वत्राऽपि हेतुः मनसः अणुत्वमेव । इतोऽधिकं इन्द्रियजयरसविचारावसरे अग्रे (प्र.ख.पृ० ६-१९) स्फुटीकृतमस्ति । नच ध्यान एव कुतो भरः इति शङ्क्यम् । पदार्थानां सम्यक्तया बुद्धिनिष्ठत्वएव फलप्राप्तिसंभवात्, न तु ततः पृथगवस्थानेऽपि । तस्मात् शास्त्रेण सञ्जाते ज्ञाने प्रतिबुद्धे आदरप्रत्ययेन उद्बुद्धसंस्कारविशिष्टेन यदा ध्यानं क्रियारूपमापन्नं सत् दृढं भवति तदा तदवश्यं फलपर्यवसायि भवति इति हेतौः शास्त्रपरतन्त्राणां ध्यानं दृष्टोपायद्वारा फलपर्यवसायि भवद् इन्द्रियजयावाप्तये उपयुज्यते ।

### शास्त्रबहिर्मुखानामनुरागः

ननु वृद्धसंयोगेन इन्द्रियजयं प्रसाध्य शास्त्रार्थानुष्ठानं कृतवत्सु शास्त्रबहिर्भूताः कथं अनुरक्ताः भविष्यन्ति ? इतिचेदभिधीयते । शास्त्राद् बहिर्भूताः द्विविधाः भवितुमर्हन्ति । एके शास्त्रे आनधिकृताः अपरे शास्त्रतदधिकृतविद्वत्सङ्गतिरहिताश्च तेषु ये शास्त्रे अनधिकृताः शकादयः भारते स्थिताः सन्ति पूर्वतः, ते त्रैवर्णिकानां सङ्गत्या स्वधर्मं परिपालयन्तः विदग्धव्यवहारपरंपरां दृष्टवन्तः

## जयमङ्गलाक्रोडपत्रम्

प्रमाणत्रयं बिश्वसन्ति। तथाविधानाम् आत्मनि अनुरागप्राप्त्यर्थं प्रमाणत्रयसमन्वितं नीत्यनुष्ठानमेव अलम्। ये च किल सर्वथा त्रैवर्णिकसङ्गतिरहिता यवनादयः वर्तन्ते न ते कथञ्चिदपि प्रमाणत्रयं प्रमातुमर्हन्ति तेषु शास्त्रस्य गन्धाभावात्। तथाविधानां कृते नीतिसारकृता लोकसङ्ग्रहनाम्ना पृथगुपन्यस्तं प्रकरणम्। तत एव तद् अवगन्तव्यम्[1]। तदेव मनुरपि आह "वृद्धानि"त्यादिना[2]—

### अर्थशास्त्रस्य न्यूनतापरिहारः

ननु कामन्दकीयनीतिसारोक्तं लोकसङ्ग्रहप्रकरणं कौटिल्येन नोक्तम्। इत्यस्य न्यूनत्वमिति चेन्न। यः विद्यावृद्धसंयोगात् अवाप्तविद्यः विनीतः विजितेन्द्रियश्च स एव नीतिसारोक्तान् वाक्सूनृतादयादानदीनोपगतरक्षणसत्सङ्गतीः आचरिष्यति स्वभावात्। इति मत्वा लोकसङ्ग्रहप्रकरणस्य अन्तर्भावः इन्द्रियजयप्रकरणे संभवति इति न पृथक् कौटिल्येन लोकसङ्ग्रहप्रकरणमभिहितम्। सप्तमाध्याये प्रकारान्तरेण "तस्मादरिषड्वर्गत्यागेने"त्यादि ग्रन्थेन सूचितमपि। अत्राऽयं निष्कर्षः सर्वत्र देशे रजस्तमोभावयोः अभिवृद्धिः स्यात् तर्हि कलहः स्यात् अतः तदभाव-

---

वाक्सूनृता दया दानं दीनोपगतरक्षणम्।
इति सङ्गः सतां साधु हितं सत्पुरुषव्रतम्॥ २॥
अनिन्दा परकृत्येषु स्वधर्मपरिपालनम्।
कृपणेषु दयालुत्वं सर्वत्र मधुरा गिरः॥ ३४॥
प्राणैरप्युपकारित्वं मित्रायाव्यभिचारिणे।
गृहागते परिष्वङ्गः शक्त्या दानं सहिष्णुता॥३५॥
स्वसमृद्धिष्वनुत्सेकः परवृद्धिष्वमत्सरः।
नान्योपतापि वचनं मौनव्रतचरिष्णुता॥ ३६॥
बन्धुभिर्बद्धसंयोगः सुजने चतुरस्रता।
तच्चित्तानुविधायित्वमिति वृत्तं महात्मनाम्॥३७॥
सनातने वर्त्मनि साधु तिष्ठतामयं हि पन्था
गृहमेधिनां मतः।
अनेन गच्छन्नियतं महात्मनामिमं च लोकं
परमं च विन्दति॥ ३८॥
इति पथि विनिवेशितात्मनो रिपुरपि
गच्छति साधु मित्रताम्।
तदवनिपतिमत्सरादृते विनयगुणेन जगद्
वशं नयेत्॥ ३९॥

२ "वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः शुचीन्।
वृद्धसेवी हि सततं रक्षोभिरपि पूज्यते"॥ मनु० ७।३८॥

## जयमङ्गलाक्रोडपत्रम्

संरक्षणाय सत्वभावस्य अभिवृद्धिः अपेक्ष्यते । तदर्थं च आस्तिक्यभावः स्थापनीयः । स च वेदपारतन्त्र्ये एव संभवति इत्येतत् विस्तरतः प्राक् (१ खं० पृ० २३३) अन्यत्र च प्रपञ्चितमस्ति । तेन वेदेन अभिहितः वैदिको धर्मः सङ्क्षिप्तसदाचारनाम्ना नीतिसारकृता सारभूतः (२ खं० ११) प्रकाशितः ।

### म्लेच्छदेशे वैदिकधर्मः

ननु म्लेच्छदेशेषु वैदिकधर्मप्रसारणं कथं न शास्त्रविरुद्धम्? इतिचेन्न—सर्वत्रापि यावन्तो धर्माः वर्तन्ते ते सर्वेऽपि वैदिकधर्म एव अन्तर्भवन्ति । सर्वेषां कृते वेदेन महाभारतादिग्रन्थद्वारा[१] तथा व्यवस्थापनस्य प्रकाशितत्वात् ।

### सर्वो धर्मो वैदिकः

न हि वेदेनोक्तः सर्वो धर्मः सर्वैः अनुष्ठेयः अथवा वर्णाश्रमधर्मः एव वैदिको धर्म इत्युच्यते किन्तु यो यत्र अधिकृतः तेन "अयं धर्मो वेदोक्तः मया अनुष्ठेय" इति मत्वा यद्यनुष्ठीयते तर्हि तेन सः अनुष्ठितो धर्मो वैदिक एव भवति । यथा ब्राह्मणधर्मः क्षत्रियधर्मः वैश्यधर्मः शूद्रधर्मः म्लेच्छधर्मश्चेति ।

न च "वैदिकत्वेन मया धर्मः अनुष्ठेयः" इति कुतो मन्तव्म् ? इति वाच्यम्, वैदिकत्वेन ज्ञप्तिमन्तरा परलोकनिर्णयस्य सर्वथा असंभवात्, रागद्वेषयोः प्राधान्यात्, स्थायिसङ्घटनोपयुक्तमित्रतायाः मूलभूतस्य विश्वास्यत्वस्य कथमपि आत्मनि संपादयितुमशक्यत्वाच्च । तदेतत्सर्वं "शान्ति का अग्रदूत" ग्रन्थे विस्तरतः द्रष्टव्यम् । अतः यः कोऽपि पुरुषो भवतु तेन सह मैत्रीसंपादनार्थमपेक्षितस्य परलोकविश्वासस्य कारणत्वेन वैदिकत्वं स्वधर्मे कल्पनीयमेव । अतएव सर्वथा अधार्मिकः अविश्वास्यो भवति । एतदनुसारेण सर्वथा धर्मानभिमानी अविश्वास्यत्वात् कनिष्ठः ततो वैदिकातिरिक्तधर्माभिमानी वरः ततोऽहिंसावादी बौद्धः, ततः जैनः, ततोपि वैदिकः परलोका-

---

इन्द्र उवाच

१ तदुक्तं महाभारते—'दस्युधर्मान् निबोधत् शा० रा० प० शासने—

मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः ।
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ॥
भूमिपानां च शुश्रूषा कर्तव्या सर्वदस्युभिः ।
वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते ॥१०
पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च ।
दानानि च यथाकालं द्विजेभ्यो विसृजेत्सदा ॥
अहिंसा सत्यमक्रोधो वृत्तिदायानुपालनम् ।
भरणं पुत्रदाराणां शौचमद्रोह एव च ॥
दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता ।
पाकयज्ञा महार्हाश्च दातव्याः सर्वदस्युभिः ॥
एतान्येवंप्रकाराणि विहितानि पुराऽनघ ।
सर्वलोकस्य कर्माणि कर्तव्यानीह पार्थिव ॥ इति ॥

## जयमङ्गलाक्रोडपत्रम्

भिमानी इति विश्वासोत्पदकतारतम्येन विश्वास्यत्वमविश्वास्यत्वं वा विवेचयितुं शक्यते। एतदतिरिक्तं सूतसंहितायां द्रष्टव्यम्। एतावता म्लेच्छकल्पितो वा भवतु बौद्धधर्मो वा भवतु स सर्वोऽपि केन, कदा, कथमनुष्ठेयः इति वेदेन नियमितं वर्तते। तद्रीत्या म्लेच्छादिभिः अनुष्ठितः धर्मः वैदिकान्नाति रिच्यते[1]।
अतो म्लेच्छदेशेष्वपि तन्मर्यादानुसारेण वैदिकाभिमानपुरःसरं म्लेच्छानां कृते तदीयधर्मप्रसारणं वैदिकधर्मप्रसारणमेव मन्तव्यम्। इत्यलं प्रसक्तानुप्रसक्तचिन्तया।

### सङ्गतिः

**प्रकरणक्रमइति**। ( ख० २ पृ० ४) विद्यावृद्धसंयोगेन्द्रियजयप्रकरणयोः संबन्धः कार्यकारणभावरूपः। तदेवोक्तम् "विद्यावृद्धसंयोगादि"त्यादिग्रन्थेन। (ख० २ पृ० ४)

### वृद्धसंयोगेन्द्रियजययोः कार्यकारणभावः

ननु विद्याप्राप्तिद्वारकवृद्धसंयोगेन्द्रियजययोः कथं कार्यकारणभावः ? इतिचेत् अयं विषयःपूर्वमेव विद्यावृद्धसंयोगस्य उपर्युक्ततत्वविचारणावसरे (ख० १ पृ० ३८६) प्रदर्शितः वर्तते। पुनः गीतावाक्यालोचनानुसारेण स्फुटीक्रियते। तथाहि—वृद्धसंयोगाभावे विद्याप्राप्त्यभावे च कामादयः उद्भवन्ति। तन्नाशार्थं योगः अपेक्षितः, तेनैव च इन्द्रियजयः। इत्येतत्सर्वं नियतम्। अतः उक्तः कार्यकारणभावः क्लृप्तः। तदेतत्सर्वं कामादीनां स्वरूपमालोच्य तज्जयार्थं योगः कथमुपायो भवति इत्येतद्गीतायां प्रपञ्चितं वर्तते। तत्र कामस्य विनाशहेतुत्वं कथमस्तीति तदीयग्रन्थेन समुद्ध्रियते टिप्पण्याम्[2]।

---

१ तदेवोक्तम्—यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥
इत्यभिधाय—यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥ इति।

### कामादीनां विनाशहेतुत्वम्

२ तथाहि— काम एषः क्रोध एषः रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥

शा० भाष्यम्-शृणु त्वं तं वैरिणं सर्वानर्थकरं यं त्वं पृच्छसि इति भगवानुवाच। "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा" (वि० पु० ६।५।७४) इति ऐश्वर्यादिकं यस्मिन् वासुदेवे नित्यमप्रतिबद्धत्वेन सामस्त्येन च वर्तते। "उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" उत्पत्त्यादिविषयं च विज्ञानं यस्य स वासुदेवो वाच्यो भगवानिति। काम इति। कामस्सर्वलोकशत्रुर्यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनाम्, स एष कामः प्रतिहतः केनचित्क्रोधत्वेन परिणमते। अतः क्रोधोऽप्येष एव। रजोगुणसमुद्भवो रजश्च तद्गुणश्च स रजोगुणः, स समुद्भवो यस्य स कामो रजोगुणसमुद्भवः, रजोगुणस्य वा समुद्भवः। कामो ह्युद्भूतो रजः प्रवर्तयन् पुरुषं प्रवर्तयति।

## जयमङ्गलाक्रोडपत्रम्

### कामादिविजयः

अथ कामादिविजयः कथं कर्तव्यः इत्येवं विषयोऽपि इन्द्रियाणि पराण्याहुः ३।४२ इति पद्यव्याख्याने भाष्ये उद्धृतोस्ति[१] टिप्पण्याम् ।

---

तृष्णया ह्यहङ्कारित इति दुःखिनां रजःकार्ये सेवादौ प्रवृत्तानां प्रलाप. श्रूयते । महाशनो महदशनमस्येति महाशनः । महापाप्मा कामेन हि प्रेरितो जन्तुः पापं करोति । अतो विद्धयेन काममिह ससारे वैरिणम् ।

आ० गि०—संप्रति प्रतिवचनं प्रस्तौति श्रृण्विति । तस्य वैरित्वं स्फोरयति सर्वेति । अप्रस्तुतं किमिति प्रस्तूयते ? तत्राह—यं त्वमिति । भगवच्छब्दार्थं निर्धारयितुं पौराणिकं वचनमुदाहरति ऐश्वर्यस्येति । समग्रस्य इत्येतत्प्रत्येकविशेषणैः सम्बद्धम् अथ शब्दस्तथाशब्दपर्यायः समुच्चयार्थः । मोक्षशब्देन तदुपायो ज्ञानं विवक्ष्यते । उदाहृतवचस्तात्पर्यमाह ऐश्वर्यादिति । स वाच्यो भगवानिति सम्बन्धः । तत्रैव पौराणिकं वाक्यान्तरं पठति उत्पत्तिमिति । भूतानामिति प्रत्येकमुत्पत्त्यादिभिः सम्बद्ध्यते । कारणार्थौ चोत्पत्तिप्रलयशब्दौ, क्रियामात्रस्य पुरुषान्तरगोचरत्वसम्भवात् आगतिर्गतिश्च इत्यागामिन्यौ सम्पदापदौ सूच्येते । वाक्यान्तरस्यापि तात्पर्यमाह उत्पत्त्यादीति । वेत्तीत्युक्तः साक्षात्कारो विज्ञानमुच्यते । समग्रैश्वर्यादिसम्पत्तिसमुच्चयार्थकश्चकारः ।

उक्तलक्षणो भगवान् किमुक्तवानिति तदाह कामइति । कामस्य सर्वलोकशत्रुत्वं विशदयति यन्निमित्तेति । तथापि कथं तस्यैव क्रोधत्वं ? तदाह–स एष इति । कामक्रोधयोश्च हेयत्वद्योतनार्थं कारणं कथयति–रजोगुणेति । कारणद्वारा कामादेव हेयत्वमुक्त्वा कार्यद्वाराऽपि तस्य हेयत्वं सूचयति रजोगुणस्येति । कामस्य पुरुषप्रवर्तकत्वमेवन रजोगुणजनकत्वमित्याशङ्क्याह कामो हीति । तत्रैवानुभवानुसारिणीं लोकप्रसिद्धिं प्रमाणयति **तृष्णया हीति** । तस्य योग्यायोग्यविभागान्तरेण बहुविषयत्वं दर्शयति । इतीति ।

### कामविजयः

१ भाष्ये-इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहि हीत्युक्तं, तत्र किमाश्रयः कामं जह्यात् ? इत्युच्यते इन्द्रियाणीति । इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं चापेक्ष्य साक्ष्यन्तरस्थत्वव्यापित्वाद्यपेक्षया पराणि प्रकृष्टान्याहुः पण्डिताः । तथेन्द्रियेभ्यः परं मनः सङ्कल्पविकल्पात्मकम् । तथा मनसस्तु परा बुद्धिः निश्चयात्मिका । तथा यः सर्वदृश्येभ्यो बुद्ध्यन्तेभ्योऽभ्यन्तरोऽयं, देहिनमिन्द्रियादिभिराश्रयैर्युक्तः कामो ज्ञानावरणद्वारेण मोहयतीत्युक्तं सबुद्धे द्रष्टा पर आत्मा ।

आ० गि०—पूर्वोक्तमनूद्य कामत्यागस्य दुष्करत्वं मन्वानो' रसोऽप्यस्य (२।५०) इत्यत्रोक्तमेव स्पष्टीकर्तुं प्रश्नपूर्वकं श्लोकान्तरमवतारयति-इन्द्रियाणीत्यादिना । पञ्चेति ज्ञानेन्द्रियवत् कर्मेन्द्रियाण्यपि वागादीनि गृह्यन्ते । किमपेक्षया तेषां परत्वं ?

## जयमङ्गलाक्रोडपत्रम्

वन्हिः धूमेनावृतः न प्रकाशते तथापि सर्वथा न प्रकाशते इति न। एवमेव शास्त्रावलम्बने कृते सति नीतिरपि प्रकाशत एव॥
अर्थात् आत्मना आत्मानं संस्तभ्य हर्षशोकौ कामादींश्च जयेदिति तात्पर्यम्।

**अश्रमेणेति**। (ख० २ पृ० ४) श्रमः कुत्र भवतीति श्रीमद्भागवते उक्तम्[1]।

तस्यायं भावः—जीवो हि उद्दिष्टं फलं साधायितुं प्रवर्त्तमानः स्वकीयोद्योगेन सर्वं आकाङ्क्षितं साध्नोत्येव इति वक्तुं न शक्यते[2]। एवंस्थिते फलोपलब्ध्यभावेन उद्दिष्टप्राप्त्याशया कृतोद्योगः श्रमात्मकफलाय परिणमति। परन्तु यदनुष्ठीयते तत्सर्वमपि समर्थाय रक्षकाय परमेश्वराय यदि समर्प्यते, तर्हि सः स्वयंप्राप्तुमसमर्थाय सेवकाय प्रसन्नः सन् आकाङ्क्षितफलं वितरति[3]। तद्दशायां सेवकोऽपि श्रमं नानुभवतीति भगवदर्पणमेव कर्तव्यमिति भागवताशयो भाति।

इदमेव परमेश्वरस्य स्वातन्त्र्यं कीदृशमस्तीति उदयनाचार्याः प्रकटयन्ति[3]—

अतः यस्मिन् धर्मेऽनुष्ठिते जगदधिष्ठानभूतस्य आत्मनः सगुणरूपेण निर्गुण-रूपेण वा साक्षात्कारः भवति तस्यां कथायां तेन धर्मेण रतिः विशुद्धा भवेत् तर्हि श्रमो नाऽस्ति। तथाविधेन धर्मेण देवगुर्वादीनां अहं सेवकोस्मीति भावो यदि उदेति तर्हि-श्रमः सफलो भवति नान्यथा। तच्च सेवकत्वं कामादीनां प्रादुर्भावे न संभवति। अतः कामादिदोषत्यागात् कर्णत्वगादीनां स्वेषु स्वेषु विषयेषु यथा अविप्रतिपत्तिरीश-प्रसादश्च भवेत् तथा अवधेयम्।

**व्यसनेति** (ख० २ पृ० ४) "व्यस्यति क्षिपति श्रेयः अभिमतमर्थं अथवा अधो व्रजति अनेन तद् व्यसनं" इति नीतिसारव्याख्यायां जयमङ्गलायां व्याख्यातम्, अत्रापि बोध्यम्। तेन निर्व्यसनाः कामादयः इष्यन्त एव।
तदुक्तम् नीति सारे क्रोधलोभभयद्रोह स्तम्भचापलवर्जितः इति - पद्यव्याख्याने—

"क्रोधोऽस्थाने लोभोऽन्याय्यादन्यत्र। भयमकार्यकरणादन्यत्र" इति।
वक्ष्यति च व्यसनहेतूनां त्यागमिति।

---

१ 'धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु वा।
नोत्पादयेद् यदि रतिं श्रम एव हि केवलम्॥" इति

२ 'यत्सम्यगुपक्रान्तं कार्यमेतद्विपर्ययम्।
पुमांस्तत्रानुपालभ्यो दैवान्तरितपौरुषः॥ इति॥" (नी० सा० १३ १९) इति

३ चिकीर्षिते कर्मणि चक्रपाणौ नापेक्ष्यते तत्र सहायसंपत्।
पाञ्चालजायापटसन्निधाने न तन्तवो नैव तुरी न वेमा॥ इति।

४ स्वाम्यं यस्य निजं जगत्सु जनितेष्वादौ ततः पालनम्।
व्युत्पत्तेः करणं हिताहितविधिर्व्यासेधसंभावनम्॥
भूतोक्तिः सहजा कृपा निरुपधिः यत्नः तदर्थात्मकः।
तस्मै पूर्वगुरूत्तमाय जगतामीशाय पित्रे नमः। इति

## जयमङ्गलाक्रोडपत्रम्

**कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिः इन्द्रियजयः, शास्त्रार्थानुष्ठानं वा । कृत्स्नं हि शास्त्रमिदमिन्द्रियजयः ॥**

---

### श्रीमूला

अविप्रतिपत्तिः स्वत एवाविरुद्धा प्रवृत्तिः । शास्त्रार्थानुष्ठानं शास्त्रार्थेषु उपादेयत्वेन शास्त्रतोऽवगतेषु शब्दस्पर्शादिषु अनुष्ठानं प्रवृत्तिनियमः । कृत्स्नं हि शास्त्रमिदमिन्द्रियजय इति अनुष्ठेयतया शास्त्रेण प्रतिपाद्यमानः सर्वोऽर्थ इन्द्रियजयस्य कारणमित्यर्थः, कारणे कार्योपचारः ।

### वैदिकसिद्धान्तसंरक्षिणी

#### इन्द्रियजयपदार्थः

अथ इन्द्रियजयपदार्थमाह कर्णेत्यादिना । कर्णः श्रोत्रम्, त्वक् सर्वशरीरवृत्तिः, जिह्वा रसना, घ्राणं नासिका एतेषां शब्दादिविषयेषु अविरुद्धा प्रतिपत्तिः मिथ्यायोगातियोगायोगरहिता । मिथ्याज्ञानजन्यवासनाप्रयुक्तविरुद्धप्रतिपत्त्यभाव इति यावत् ।

नीतिशास्त्रे अवगते सति विरुद्धप्रतिपत्तिविनाशकं विवेकसमर्थं ज्ञानं भवितुमर्हतीत्यभिप्रेत्य द्वितीयकल्पमाह शास्त्रेति । "शास्त्रानुष्ठानम्" पाठान्तरम्. जयमङ्गलायां टिप्पण्यां च तथोपलब्धेः । तस्य फलं शास्त्राभिनिवेशे स्थिरतामापन्नस्य मनसः स्थैर्यव्यवस्थापनम् इति ।

#### शास्त्रार्थानुष्ठाने निन्दितत्वाभावः

अत्रेदमवधेयम्--द्रुते मनसि आसिक्तं मनोमयं चित्रं यथा स्थिरं तिष्ठेत् तथा तत्संपादनाय कामादयः तापकत्वेनोपयुज्यन्ते । तेषां निन्दितत्वे नीत्यनुष्ठातुः निन्दितत्वादि नियतं स्यात् । अतः निन्दितत्वादिनिरासार्थं शास्त्राविरोधिनः कामादयः उपयोक्तव्याः भवन्ति । ते न इन्द्रियजयं बाधन्ते । शास्त्रनिरूपितस्य मार्गस्य अबाधितत्वात् सफलत्वाच्च । इति शास्त्रानुष्ठानमिन्द्रियजयत्वेन अत्रोपदिष्टम् ।

तदेवोक्तं नीतिर्विना फलं नाऽस्ति शास्त्रेणैकान्तिको नयः ।
शास्त्रे सत्यपि नाऽवश्यमिति सर्वेष्वदःसमम् । इति ।

किञ्च—ज्ञानयोगेन साङ्ख्यानामिति गीतावाक्यप्रामाण्याज् ज्ञानयोगिनां कृते प्रथमः इन्द्रियजय उक्तः । कर्मयोगेन योगिनामित्युक्तरीत्या कर्मयोगिनां कृते इन्द्रियजयस्य स्वरूपम् अन्यदाह कृत्स्नमिति । कृत्स्नं—संपूर्णम् । हीति अस्य पक्षस्य ज्यायस्त्वबोधनार्थं हिशब्दः । ज्यायस्त्वञ्च सर्वेन्द्रियव्यापकमिति । इदं बुद्धिस्थ प्रमाणत्रयसिद्धम् नीतिशास्त्रम् इत्यर्थः ।

### जयमङ्गला

किंस्वरूप इन्द्रियजय इत्याह कर्णत्वगित्यादि । श्रोत्रादीनामन्तः—करणाधिष्ठितानां यथास्वं शब्दादिविषयेषु अविप्रतिपत्तिरिन्द्रियजयः । तत्र

## जयमङ्गला

अज्ञानाधिष्ठितानां विरुद्धा प्रतिपत्तिर्विप्रतिपत्तिः । यथा शास्त्रविहिताद् विपरीता वा गुरुपरिवादश्रवणं, परस्त्रीस्पर्शनं, स्त्रीगुह्यदर्शनम्, अभक्ष्यास्वादनम्, सुराघ्राणम्, इत्येवंप्रकारदोषवती । अतोऽन्यथा तेष्वविप्रतिपत्तिः इन्द्रियजयः । एतत् प्रदर्शनमात्रम्, इदन्तु कृत्स्नं लक्षणम्, शास्त्रानुष्ठानं वेति । शास्त्रे हि अस्मिन् सर्वेषाम् इन्द्रियाणां विषयेषु सर्वरूपा विप्रतिपत्तिः प्रतिषिद्धा, तत्र अनसूयाक्षमादिभिः मनइन्द्रियविप्रतिपत्तिः, अनृतपरद्रव्यादानादिप्रतिषेधात् कर्मेन्द्रिय विप्रतिपत्तिः । तेन पूर्वस्माद्विशेष इत्ययमेव ज्यायानित्याह कृत्स्नं हीति । यस्मात्तु न शास्त्रावयवोऽपि व्यापारशून्यः । न च व्यापारः कश्चिदेकादशेन्द्रियनिरपेक्षः । तस्मादिदमेव शास्त्रं कृत्स्नमिन्द्रियजयः इन्द्रियजयहेतूनाम् अर्थानाम् अभिधानात् ।

### जयमङ्गलाक्रोडपत्रम्

#### विरुद्धप्रतिपत्तितत्परिणामौ

**विरुद्धा प्रतिपत्तिरिति।** विरुद्धा प्रतिपत्तिः तज्जन्यपरिणामश्च कीदृग् भवतीति भगवद्गीतायामभिहितम् । तदेवात्र उद्ध्रियते—

ध्यायतो विषयान् पुंसस्सङ्गस्तेषूपजायते ।
सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते ॥६२॥
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशात् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति[1]। इति ॥ (६३ द्वि०अ०)

---

१ शां० भा०—अथेदानीं पराभविष्यतः सर्वानर्थमूलमिदमुच्यते- ध्यायत इति । ध्यायतश् चिन्तयतः विषयान् शब्दादीन् विषयविशेषानालोचयतः पुंसः पुरुषस्य सङ्ग आसक्तिः प्रीतिस्तेषु विषयेषूपजायत उत्पद्यते । सङ्गात् प्रीतेः सञ्जायते समुत्पद्यते कामस्तृष्णा तस्मात् कामात् कुतश्चित् प्रतिहतात् क्रोधोऽभिजायते ।६२। क्रोधादिति । क्रोधाद् भवति सम्मोहोऽविवेकः कार्याकार्यविषयः । क्रुद्धो हि सम्भूतःसन् गुरुमपि आक्रोशति । सम्मोहात् स्मृतिविभ्रमः शास्त्राचार्योपदेशाहितसंस्कारजनितायाः स्मृतेः विभ्रमो भ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तावनुत्पत्तिः । ततः स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धेर्नाशः कार्याकार्यविषयविवेकायोग्यता अन्तःकरणस्य बुद्धेर्नाश उच्यते । बुद्धिनाशात् प्रणश्यति । तावदेव हि पुरुषः यावदन्तःकरणं तदीयं कार्याकार्यविवेकयोग्यम्, तदयोग्यत्वे नष्ट एव पुरुषो भवति । अतस्तस्यान्त करणस्य बुद्धेर्नाशात् प्रणश्यति पुरुषार्थायोग्यो भवतीत्यर्थः ।

**आ० भा०** - समनन्तरश्लोकद्वयतात्पर्यमाह अथेति । पुरुषार्थोपायोपदेशानन्तर्यमथशब्दार्थः । तन्निष्ठत्वराहित्यावस्थां दर्शयतीदानीमिति । पराभविष्यतो महान्तमनर्थं गमितो विवेकविज्ञानविहीनस्येति यावत् । सर्वानर्थमूलं विषयाभिध्यानं तस्य तथात्वमनुभवसिद्धमिति वक्तुमिदमित्युक्तम् । विषयेषु विशेषत्वमारोपितरमणीयत्वम् । प्रीतिरासक्तिरिति साधारणासक्तिमात्रं गृह्यते । तृष्णेत्युद्रिक्ता-

## जयमङ्गलाक्रोडपत्रम्

### विषयप्रतिपत्तिः ततः फलम्

अत्राऽयं भावः—प्राक्तनीय संस्कारवशात् यः येषु विषयेषु रमते सः तमेव विषयं ध्यायति। तन्महिम्ना तत्सुखसाधनाताया वासनायाः दाढर्यात् तदभिवृद्धिर्भवति। एतद्दशायामुत्कण्ठा जायते। ततश्च "नवं नवं प्रीतिमहो करोति" इति न्यायेन उत्तरोत्तरं कामिनोजिज्ञासेव अभिमतविषयिणी अभिलाषा नैरन्तर्येण प्रवर्धते, स्वविषयेतरं कर्मापि विषयमवगाहयितुं प्रतिबध्नाति च। इत्येवं रीत्या उत्कटवासनावशात् विषयान् ध्यायन् विषयरसिकः तत्प्रतिपत्तिं सुखत्वेन मनुते। सा यदि नीतिसंमता स्यात् तर्हि बलवदनिष्टाननुबन्धि हितं सम्पादयितुं प्रभवेत्। परं विषयवशीकृतो जडः कामिनीनां यौवनावस्थायां समुद्भूतं साहजिकं कामविलासं पश्यन् पुनः विभावानुभावव्यभिचारिभावसंयोगेन तत्तद्रससञ्चारणमनुभवन् गुणदोषयोः विवेकं कर्तुमसमर्थः असत्स्वर्थेषु अविद्यमानानपि गुणानारोपयन् तत्र तत्र विरुद्धप्रतिपत्तिमान् भवति। किं बहुना तत्तत्प्रतिपत्त्या भविष्यन्तमपि स्वस्य आत्मपातन्न जानाति इत्येवंरीत्या विषयाविष्टमनाः विनश्यति। अतः विरुद्धप्रतिपत्तेः आत्मनो रक्षणाय विवेकोत्पादने समर्थं ज्ञानमेव उपायः शास्त्रकृद्भिः चिन्तितः। तच्च नीतिशास्त्रेण प्रमाणत्रयसिद्धार्थप्रतिपादकेन सफलेन संपादयितुं शक्यते। इत्यभिप्रायेणैव एतच्छास्त्रानुष्ठानमिन्द्रियजयः इति वक्ष्यति।

तदेवाह अज्ञानाधिष्ठितानामपीति। (खं० २ पृ० १८) एतेन अज्ञेषु रसाभासो ध्वन्यते। तत्प्रयुक्तविषयप्रवृतेः क्षयव्यसनहेतुत्वात्। तदेव प्रदर्शयिष्यति-विपरीतावा इत्यादिग्रन्थेन।

### 'इन्द्रियजयाय न्यायशास्त्रस्याप्यपेक्षा'
### रसात्मस्वरूपं च

अत्रेदं तत्त्वमनुसन्धयेम्—सर्वं वस्तु कंचन साक्षिणं पुरस्कृत्यैव प्रवर्तते गतिमद् भवति च। स च साक्षी आत्मेति व्यपदिश्यते वेदान्तविद्भिः "आत्मानं स्वयमकुरुत" 'बहु स्यां प्रजायेये'त्यादि ग्रन्थेन। अपरैस्तु स एव रसरूपः इत्यभिधीयते। तथाहि—विभावादिसंयोगेन अभिव्यक्तः चिदात्मैव रसरूपतां गच्छति[1]। अतः रसः

---

सक्तिरुक्ता। प्रतिबन्धेन प्रणाशेन वा प्रतिहतिः।६२। क्रोधस्य सम्मोहहेतुत्वमनुभवेन दृढयति क्रुद्धो हीति। आक्रोशत्यधिक्षिपति। तदयोग्यत्वमेवेत्यर्थः। संमोहकार्यं कथयति सम्मोहादिति। स्मृतेर्निमित्तनिवेदनद्वारा स्वरूपं निरूपयति—शास्त्रेति। क्षणिकत्वादेव तस्याः स्वतो नाशसम्भवान्न सम्मोहाधीनत्वं तस्येत्याशङ्क्याह स्मृतीति। स्मृतिभ्रंशेऽपि कथं बुद्धिनाशः स्वरूपतः सिद्ध्यति तत्राह कार्येति। ननु पुरुषस्य नित्यसिद्धस्य बुद्धिनाशेपि प्रणाशो न कल्पते तत्राऽह तावदेवेति। कार्याकार्यविवेचनयोग्यान्तःकरणाभावे सतोऽपि पुरुषस्य करभवदपगततत्वविवेकविवक्षया नष्टत्वव्यपदेशः तदेतदाह पुरुषार्थेति। ६३ इति।

१ गोकुलनाथोपाध्यायैः काव्यप्रकाशे रतिप्रकरणे प्रगटितं स्वरूपमस्ति।

## जयमङ्गलाक्रोडपत्रम्

आत्मनो न व्यतिरिच्यते। "रसो वै सः रसंवाह्येऽयं लब्ध्वा आनन्दी भवति"। इति। किञ्च स एवैकः साक्षी सृष्टयारंभे नाट्यं कुर्वन् यथा अभिनयं व्यञ्जयामास तथैव अद्यावधि सर्वं जगत् अभिनयति। तदुक्तं श्रुतौ 'आत्मानं स्वयमकुरुत' इत्यादि। एतेन आत्मा रसरूपः साक्षी एक एव स्वतन्त्रः इति सिद्ध्यति। यदि वयं न तेन सह विरुद्ध्यामहे वास्तविकतया च तं द्रष्टुं प्रवृत्ताः स्याम तर्हि सः साक्षी अस्मान् कुपथात् विरुद्धप्रतिपत्तेश्च रक्षिष्यति[1]।

अतः रसाभासात् कुपथादात्मनः रक्षणार्थं रसस्य परिचयोऽपि कर्तव्यो भवति, अन्यथा व्याप्तिभ्रमेण रसाभासे पतित्वा आत्मनः विनाश आपद्येत। वास्तविक रसस्वरूपपरिचयार्थं अपक्षितं व्याप्तिज्ञानं निर्दुष्टं यथा भवेत्तथा तदर्थं न्यायशास्त्रमपि अध्येतव्यमवश्यमेव। तेनैव च सतः परामर्शस्योत्पत्तिः, असतश्च निवृत्तिः संभवितुमर्हति। तदभावे तु अज्ञानाधिष्ठितानां रसाभासे निपतितानां विरुद्धा प्रतिपत्तिः अवश्यं भाविनी। ( शेषं ख० १ पृ० ७ द्रष्टव्यम् )

### मिथ्याज्ञानस्याप्युपयुक्तता

यद्यप्यत्र "अज्ञानाधिष्ठताना"मित्यादिग्रन्थेन मिथ्याज्ञानं नेष्टमिति ध्वन्यते। तथापि शास्त्रेण यदभ्यनुज्ञायते तद्विधं ज्ञानं मिथ्या सदपि धर्मार्थप्रतिघाताभावात् व्यसनाभावाच्च अभ्यर्हितमेव बोध्यम्। तदेवाह—( खं० २ पृ० १८ ) **शास्त्रविहितादिति।**

**गुर्विति।** (खं० २ पृ० १८) टीकाकृतोक्तं गुरुपरिवादश्रवणादि सुराघ्राणान्तमेव दुष्टम् अन्यत्सत्यम्, इति न प्रतिपत्तव्यम्- अपितु यया यया प्रतिपत्त्या विनाशस्स्यात् सा सर्वापि मिथ्या इति मन्तव्यम्।

**परिवाद** इति। (खं २ पृ० १८) गुर्वादिषु वर्तमानोऽपि दोषः नीतिमनुसरद्भिः न श्रोतव्यः। नापि च तच्छ्रवणे प्रतिपत्तव्यम्। तथाकरणे धर्मशास्त्रे निषेधात्[2]।

### नीतिशास्त्रस्य महाभारतदृष्टया उपयोगित्वम्

**शास्त्रे हीति।** (खं० २ पृ० १८) शास्त्रस्य विशेषतया नीतिशास्त्रस्य स्वजीवने स्वसमृद्धिं प्रति कीदृशमुपयोगित्वमिति प्रागभिहितं ( खं० १-३७) वर्तते प्रथमाध्याये आरंभे जयमङ्गलायाम्। अत्र पुनः तस्यैव उपयोगित्वं कथमिति सङ्क्षिप्य इतिहासान्वयव्यतिरेकाभ्यामुच्यते। तत्र इतिहासविषयो यथा—

यावत्पर्यन्तं जानपदो जनः स्वस्वधर्मे प्रवृत्तो बभूव तावत् पर्यन्तं सर्व-

---

१ तदुक्तम्— मनुस्मृतौ यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः।
तेन चेदविवादस्ते मा गङ्गां मा कुरून्गमः ॥९२॥ इति।८।९२।

२ तदुक्तम्—गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः। इति।
श्रुतयोऽप्याहुः—'यान्यस्माकं सुचरितानि तानि त्वया उपास्यानि नो इतराणि'। इति

**जयमङ्गलाक्रोडपत्रम्**

स्यापि कल्याणं समुल्लसदासीत् नासीच्च राजापेक्षा[1]।

**शास्त्रनिर्माणम् तद्वैशिष्टयं च**

परन्तु कालान्तरे यथा यथा आलस्यादनभ्यासात्, असामर्थ्यात्, वेदाभ्यासे परिश्रमानुभवाच्च ब्राह्मण्यमदृश्यतां गतम्। तथा तथा जानपदो जनः अज्ञानबाहुल्येन रागान्धो भूत्वा सीमामर्यादां विसस्मार। उत्तरोत्तरमयं धनादिलोभेन अभिभूतोऽभवत् समृद्धिः शान्तिः सुखमित्यादि सर्वं विलुप्तप्रायमभूत्। सोऽयमितिहासः द्वितीयाध्याये प्रागुद्धृतः। (खं.१ पृ. ६७) द्रष्टव्यः अस्याः दुरवस्थायाः निरासाय राजनीतिस्त्रंलक्षाध्यायात्मकं ब्रह्मणा निरमायि। (खं० १ पृ० २६) इत्येतावत्पर्यन्तमितिहासानुसारेण नीतिशास्त्रस्योपयोगित्वमुक्तम्।

अथ अन्वयव्यतिरेकाभ्यां तत्कथं संभवतीति पुनः प्रस्तूयते। तथाहि—सत्स्वपि अनेकेषु शास्त्रेषु तेषामसत्प्रायता राजनीतेरभावे भवति इति इदं राजनीतिशास्त्रं निर्मितम्। अस्य शास्त्रस्य किं वैशिष्टयम्—इति चेत् एतच्छास्त्रं विना यदि अनुष्ठीयते किमपि स्वकल्पनया, तर्हि चिरस्थायी सुखावहोऽर्थलाभो न भविता। इत्येवं (खं १ पृ० ३६) अत्र आरम्भएव निरूपितम्। तेन अर्थस्य अर्जनाय पालनाय वर्धनाय च एतच्छास्त्रमवश्यं अनुष्ठानपर्यवसायितया स्वायत्तीकर्तव्यम्। नेदं तत्त्वं अन्यशास्त्रेषु अस्ति। तद्यथा—अर्थार्जनन्तु लोकः सदा आकाङ्क्षते। किन्तु एतच्छास्त्रं विनाऽयं वैफल्यमनुभवति। समापतिते मात्स्यन्यायप्रसङ्गे अव्यवस्थानिरासाय राजनीतिशास्त्रस्योपयुक्तत्वं भवति। अनेनैव शास्त्रेण आजीविनं स्थिरमैत्रीसंपादनार्थम् अपेक्षितस्य परलोकविश्वासप्रतिपादकस्य वेदस्य अभ्यर्हितत्वं साध्यते। इत्येवंरीत्या राजनीतिशास्त्रद्वारा दृष्टलाभाय वेदः ब्राह्मण्यं च सुरक्षितं भवति। ततः नीतशास्त्रे नीति-विद्भिः विनयापेक्षिभिः असूयादिदोषजातं न कर्तुं शक्यते। अधिकं खं० १ पृ० ११६ ष्ठे द्रष्टव्यम्।

**नीतिशास्त्रस्योपयुक्तता**

किञ्च धर्मशास्त्रस्य अतिक्रमणे निषिद्धाचरणप्रयुक्तं पापं भविष्यति तेन नरकपातः संभवीति वक्तुंशक्यम्। तथापि प्रायश्चित्तादिना पापमपनोदयितुं शक्यते नरकपातभीतिश्च। अर्थशास्त्रातिक्रमे तु सभूतस्य योगक्षेमाभावस्य निरासः कृतेनापि प्रायश्चितेन न भवितुमर्हति तदिदं राजनीतिशास्त्रस्य उपयोगित्वं मन्तव्यम् तत्रापि राजनीत्यनुष्ठानेनैव। इति विशिष्टं राजनीतिशास्त्रस्य फलं स्मर्तव्यम्। किञ्च अपरिमितप्रमातृभावः गुरुभक्त्याद्याहार्याभिनयेन साधारणीकरणव्यापारमहिम्ना रसरूपतया सामाजिकानां चेतसि यदि समुद्बुद्धो भवेत्, तर्हि शक्तिविचारावसरे निरूपितायाः क्रियाशक्तेरुद्बोधा भवति। इति शक्तिनिरूपणावसरे (ख० १-४०) गुरूपयोगित्वविचारप्रस्तावे च तत्र तत्र प्राङ् (खं० १-२) निर्दशितमस्ति। परन्तु तथाविधः साधारणीकरणव्यापारलाभः नटैः वेषादिविन्यासेन

---

१ तदुक्तं—नैव राज्यं न राजाऽसीन् न दण्डो न च दाण्डिकः।
धर्मेणैव प्रजाः सर्वाः पालयन्ति स्म परस्परम्॥ म० भा० रा० ध० प० इति।

## जयमङ्गलाक्रोडपत्रम्

### मनोमयीमूर्तिध्यानम्

न सदा प्रापयितुं शक्यः सर्वदा अभिनयप्रदर्शनस्य असंभावितत्वात्। अतः मनसि अभीष्टवस्तुनः यथावद् ध्यानेन मनोमयीं मूर्तिं सम्पाद्य तां चिन्तयित्वा क्रियाशक्त्युद्बोधो गुरुभक्तेषु नीतिकुशलेषु संभवितुमर्हतीत्यपि ध्यानस्योपयोगित्व-विचारावसरे (प्र०खं०पृ० १४६ तः) प्रपञ्चितमस्ति। ननु उत्तमचित्रिताया मूर्तेर्ध्यानं तत्समवेताः गुणाः उपासकेषु सर्वेषु न दृश्यन्ते इति चेत्।

### मनसो द्रवत्वम् शास्त्रार्थानुष्ठानञ्चावश्यकम्

तत्र कारणं मनसः द्रुतत्वाभावो बोध्यः। द्रवीभावमन्तरा मनसि या मूर्तिः प्रविशति, सा कठिनभावमापन्ने मनसि न चिरन्तिष्ठति अतस्संस्कारदार्ढ्यार्थं तस्य द्रवीभावेऽपेक्षितः। तद्दशायां प्रविष्टमेव वस्तु स्थायिभावादिपदेन व्यवह्रियते[1]।

एवं द्रवावस्थे चेतसि यद् वस्तु स्वरूपं प्रविष्टं सत् काठिन्यदशापर्यन्तं स्थितं तत् पुनर्द्रवीभावान्तरेण विषयान्तरे गृह्यमाणेऽपि मूर्तिः प्रकाशमाना चेतसो न तिरोधीयते, अतस्सा वासनेत्युच्यते। द्रवीभावश्च मनसःतापकानां विषयाणां संयोगे भवति। ते च तापकाः कामाद्या भवन्तीति तत्रैव प्रतिपादितम्। एवं सति इमे यदि निन्दिताः भवेयुः, तर्हि तत्सङ्गमे शत्रुवश्यत्वं जनापरागजनकत्वं च नियतं स्यात्[2]।

अतः एतद्दोषादात्मनः संरक्षणाय तथाविधानां कामादीनां तापकानां सङ्गमः तथा अपेक्ष्यते, यथा तत्र मिथ्याज्ञानप्रयुक्तत्वं न भवेत्। भवेच्च शास्त्रानुमोदितत्वमतः शास्त्रार्थानुष्ठानमावश्यकम् इति तन्नोपेक्षणीयम्। कृतेऽपि ध्याने शक्त्यनुद्बोधकारणम् प्रदर्शयति यस्मादिति ग्रन्थेन। (खं० २ पृ० १८)

**व्यापारशून्य इति**। (खं० २ पृ० १८) उद्योगशून्य इत्यर्थः। धर्मशास्त्रादिऽव्यापार-निरपेक्षः सन् एकत्रावस्थाने स्थातुं शक्नोति। किन्तु अर्थशास्त्रनिरपेक्षश्चेन्न इति भावः, एतदधीनत्वात् योगक्षेमयोः।

**इदमेवेति**। (खं० २ पृ० १८) अन्ययोगव्यवच्छेदार्थकः एवकारः। तथा च उपरिदर्शितरीत्या अनेन शास्त्रेण ज्ञाने प्रतिबुद्धे उद्भूते मनो नियन्त्रितं भवति। ततः

---

१ तदव्यक्तं भक्तिरसायने—"द्रुते चित्ते विनिक्षिप्तस्वाकारो यस्तु वस्तुना।
संस्कार-वासनाभाव-भावना शब्दभागसौ॥
शिथिलीभावमात्रन्तु मनो गच्छत्यतापकैः।
न तत्र वस्तु विशति वासनात्वेन किञ्चन॥
द्रवतायाम्प्रविष्टं सद् यत् काठिन्यदशाङ्गतम्।
चेतः पुनर्द्रुतौ सत्यामपि तन्नैव मुञ्चति"॥ इति।

२ तदुक्तम्—अविनयरतमादरादृते वशमवशञ्च नयन्ति विद्विषः।
श्रुतविनयनिधिं समाश्रितस्तनुरपि नैति पराभवं क्वचित्॥ इति॥ नीति० १

## जयमङ्गलाक्रोडपत्रम्

इन्द्रियाणि वशीभवन्ति। इत्येवंरीत्या मूलकृता द्वितीयेन्द्रियजयस्वरूपं निरुक्तं तच्च नीतिसारग्रन्थे प्रदर्शितेन सांव्यवहारिकेण इन्द्रियजयेन समशीलं भवति। तदेतत्

"आत्मा प्रयत्नादर्थेभ्यो मनः समधितिष्ठति"।
संयोगादात्ममनसोः प्रवृत्तिरुपजायते॥ (नी० सा० १ स०)
इत्यादि पद्यैः नीतिसारे उपवर्णितमुद्धृतमस्ति। (खं० २ पृ० ७)

### आत्मेतिपद्यव्याख्यानशेषः

एतत्पद्यव्याख्याने ज्ञानं द्विविधम्। प्रतिबुद्धमप्रतिबुद्धंच। तयोः प्रतिबुद्ध-ज्ञानेन मनसो नियमनं कर्तव्यमिति टीकाकृता उक्तं तत्र प्रतिबुद्धत्वं किमिति स्फुटीक्रियते।

### "ज्ञाने प्रतिबुद्धत्वम्"

ज्ञानं हि तदेव प्रतिबुद्धं भवति यद् रसात्मकतया उत्पद्यते, तथासत्येव श्रोतुः चेतसि विभावानुभावव्यभिचारिभावसंयोगाद् अभिव्यक्तः स्थायोभावः तदभिव्यक्तिः, अथवा आनन्दांशे भग्नावरणचिद्विशिष्टत्वम् स्थायीभावे विशिष्य तदवच्छिन्ना चिदेव वा भवति। सोऽयं सिद्धान्तः साहित्यशास्त्रेषु जगन्नाथपण्डित राजादिभिः विवृत एवमुपलभ्यते[1]।

---

१ तद्यथा—रसगङ्गाधरे–रसनिरूपणे—पृ० २७

'यदा विभावादिचर्वणामहिम्ना सहृदयस्वस्य निजसहृदयतावशोन्मिषितेन तत्तत्स्थाय्युपहितस्वस्वरूपानन्दाकारा समाधियोगिनश्चित्तवृत्तिरुपजायते तन्मयी-भवनमिति यावत्। आनन्दोह्ययं न लौकिकसुखान्तरसाधारणः अन्तःकरणवृत्ति-रुपत्वात्। इत्थं चाभिनवगुप्तमम्मटभट्टादिग्रन्थस्वारस्येन भग्नावरणचिद्विशिष्ट रत्यादिः स्थायीभावो रस इति स्थितम्।

वस्तुतस्तु वक्ष्यमाणश्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव सर्वथैव चास्या विशिष्टात्मनो विशेषणं विशेष्यं वा चिदंशमादाय नित्यत्वं एवं-प्रकाशत्वं च सिद्धम्। रत्याद्यंशमादायानित्यत्वमितरभास्यत्वञ्च। चर्वणा चास्य चिद्गतावरणभङ्ग एव प्रागुक्ता, तदाकारान्तःकरणवृत्तिर्वा। इयं च परब्रह्मास्वादात्समाधेर्विलक्षणा, विभावादिविषयसंवलितचिदानन्दालम्बनत्वात्। भाव्या च काव्यव्यापारमात्रात्। अथास्यां सुखांशभाने किं मानमिति चेत्समाधावपि किं मानमिति पर्यनुयोगस्य तुल्यत्वात्। "सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्" इत्यादिः शब्दोऽस्ति तन्मानमिति चेत्, अस्त्यत्रापि "रसो वै सः, रसं ह्येवायं लब्ध्वा-नन्दीभवति" इति श्रुतिः। सकल सहृदयप्रत्यक्षञ्चेति प्रमाणद्वयम्। येयं द्वितीयपक्षे तदाकारचित्तवृत्त्यात्मिका रसचर्वणोपन्यस्ता सा शब्दव्यापारभाव्यत्वाच्छाब्दी, अपरोक्षसुखालम्बनत्वाच्चापरोक्षात्मिका तत्त्वंवाक्यजबुद्धिवत्। इत्याहुरभिनव-गुप्ताचार्यपादाः। इति।

## जयमङ्गलाक्रोडपत्रम्

### रसमयमध्ययनं प्रतिबुद्धम्

रसश्च न कस्यापि परतन्त्रः अपितु स्वतन्त्रः अतएव साक्षित्वेन भासमानः आत्मैव इति साधितमस्ति। अन्येतु सर्वेपि रसपराधीनाः नात्मरूपतां प्राप्नुवन्ति। तद्यथा–जडवर्गः चेतनपराधीनः जडत्वादेव चेतनानामिच्छामनुसरति। शरीरी यद्यदाकाङ्क्षते तत्तदनुसारेण तत्तद्दृष्टजडसंभारान् एकत्रीकरोति इति जडस्य कर्तृभिन्नकारकाद्यन्यतमत्वम्, शरीरिणि तु न तथा। इदं हि जडशरीरिणोरन्तरं यदाऽवगतं भवति तदा शरीरिवर्गादतिरिक्तः यथावद्बुद्धिमुपयोज्य आत्मनि आनन्दं आस्वादयितुं न शक्नोति। शरीरी तु तमाप्नोतुं शक्नोति। तदेवोक्तं गीतायाम्।

"इन्द्रियाणि पराण्याहुः इन्द्रियेभ्यः परं मनः।
मनसस्तु परावुद्धिर्यो बुद्धेः परतस्तु सः"। इत्यादि।

एवंरीत्या जडवर्गापेक्षया शरीरिणः श्रेष्ठत्वेऽपि तस्य पूर्णस्वातन्त्र्यन्तदात्मनि नाऽस्ति। यतः अयं स्वस्वस्थायि-भावानुगामित्वं स्वीकरोति। अतः शरीरिणोऽपि-स्वतन्त्रः स्थायीभावः एव वक्तव्यः। यश्च स्वतन्त्रः स एव आत्मा। रस एव आत्मा इत्येतत् शास्त्रेषु अभिहितम्। अपि च तस्य साक्षिभूतस्य रसस्य, स्वस्य च आत्मनश्च अन्तरं यः पश्यति सः अत्यन्तं भीतश्चेत् निर्विण्णो भूत्वाऽपि न वस्तुतत्वं परिचेतुं समर्थो भवति इत्यपि अवश्यं स्मर्तव्यम्। तदाहुः ब्रह्मविदुपनिषदि— "यदाह्येवैष एतस्मिन् उदरमन्तरं कुरुते अथ तस्य भयं भवति तत्वेव भयं विदुषो मन्वानस्य तदप्येष श्लोको भवति"। इति।

अतः रसतत्वेन सह आत्मानं संयुञ्ज्यात् इति स्थितम्। यदि च कदाचित् रसस्थाने रसाभासेन सह रसानुभवाकाङ्क्षी आत्मानं संयुञ्ज्यात् तर्हि तु साक्षिणमनालोच्य आत्मनः निपातं कुर्यात् असंभावनादिदोषस्य संभवात्। मोहेन च अयथार्थत्वेन अर्थं ज्ञात्वा दुष्टकर्मणि प्रवृत्या अनौचित्यावलम्बनाद् उपहासमासादयेत्। अतः रसात्मनोः संयोगात्पूर्वं रसतदाभासयोः यथावद्विवेकः अवश्यं कर्तव्यः शास्त्रेणेत्यस्ति शास्त्रस्योपयोगित्वम्। एवञ्च शास्त्रानुसरणे कृते यदि रसोऽनुभूयते तर्हि जीवनस्य कृतकृत्यता भवति। तदेवाहुः 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनन्ततोविदुरिति'। इति। अर्थात् यज्ज्ञानं रससहचरितम् श्रोतृषु जायते तदेव मनोनियमनसमर्थं भवितुमर्हति। इत्येवंविधं विशिष्टज्ञानं प्रतिबुद्धम् सांव्यवहारिकमित्युच्यते।

### उपास्यः दक्षिणामूर्तिः

ननु यथावद् शास्त्रस्वरूपस्य वक्तार एव न सन्ति एवंस्थिते युक्ततया शास्त्रार्थः कथमवगन्तव्य? इति चेत्, श्रीदक्षिणामूर्तिः गुरुः शास्त्रोपासकेन एकाग्रमनसा उपास्यः यतः सः उपासितः स्वकीयहस्तमुद्रादिद्वारा अभिव्यञ्जितेन अभिनयेन उपासकस्य सुसमाधिनि मनसि यथार्थमतिमेव प्रकाशयति[१]। एवंरीत्या गुरुद्वारा प्रकाशितायां

---

बीजस्यान्तरिवाङ्कुरो जगदिदं प्राङ्निर्विकल्पं पुनः।
मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम्।—

## जयमङ्गलाक्रोडपत्रम्

मतौ सफलतायाः नैयत्यं इति चाणक्येन कृतनमस्काररूपमङ्गलनिरूपणावरे प्रपञ्चितमस्ति। (पृ० ७ ) यदि कदाचित् इदं निगूढं तत्त्वं विस्मृत्य शास्त्रोपासकः गुरुं विवदेत् तदा तु मनसि सञ्जातोऽपि अर्थप्रकाशः न चिरं अर्थप्रकाशाय समर्थो भवति[1]। अतः असत्सु अनुपलब्धेषु वा शास्त्रवक्तृषु शास्त्रं निर्मलं न भवति इति न मन्तव्यम्। तदेवोक्तं —"शास्त्रं हि चिन्ताभावनाक्रमेण निर्मलोभवति" इति।

### असहायस्य सहायकः

न च निर्मलतया शास्त्रे अवगतेऽपि असहायेन किं कर्तुं शक्यते इति शङ्क्यम्। गुरुरूपेण भगवान् प्रसन्नः सर्वदेशकालौचित्यं दृष्टवा असहायकानपि कार्यं कारयितुं प्रभवत्येव तत्र किमधिकचिन्तनेन।

### वस्तुतत्वप्रकाशप्रतिबन्धः

न च एवंविधं निर्मलं वस्तुतत्वं सदपि सर्वैः कुतो नानुभूयते इति वाच्यम् तेषु सर्वेष्वपि प्रायः कृत्वा स्थितस्य देशकालपरिच्छिन्नपरिमितप्रमातृभावस्य प्रतिबन्धकत्वात्। परिमितप्रमातृभावः सर्वेषामपि स्वस्वशरीरमभिव्याप्यैव तिष्ठति, तावन्मात्रं लक्ष्यीकृत्यैव सुखलाभदुःखहान्यर्थे प्रवृत्तिदर्शनात्। एवंविधः जीवः परात्मचिन्तने आत्मनः लौकिकं सुखं विनष्टं भवतीति ज्ञात्वैव शास्त्रात्-पराङ्मुखो भूत्वा अयथार्थे रसाभासे निगडितो भवति अतः एतस्य परिमितत्वस्य साक्षिणि भासमानस्य निरसनायैव गुरुभक्तिः कारणत्वेन तत्र तत्र प्रदर्शिता वर्तते[2]।

गुरुभक्तिमन्तरा साक्षिणः अपरिमितप्रमातृभावः न कथमपि संभवितुमर्हति। यावच्च व्यसनं भवेत् तावत् क्रियाशक्त्युदबोधात्मकं प्रागुक्तं सामर्थ्यं सर्वस्य प्राणिमात्रस्य पालनाय अपेक्षितं कर्तुमकर्तुमन्यथाकर्तुं[3] वा न शक्नोति व्यसनी—

### परिमितप्रमातृभावः

ननु परिमितप्रमातृभावे देशकालपरिच्छेदः कथं भवतीति चेत् षड्त्रिंशत्तत्व निरूपणावसरे (खं० १ पृ० १८४ तः) कृताद्व्याख्यानाद् अयं प्रश्नः समाधेयः। अर्थात् षट्त्रिंशत्सु तत्वेषु आदिमानि शिवशक्तिसदाशिवेश्वरशुद्धविद्यापञ्चतत्वानि समस्तसंसारेण सह तादात्म्यभावमापन्नानि सन्त्यपि परिमितप्रमातृभावमनुभववतां

---

मायावीव विजृम्भयत्यपि महायोगीव यः स्वेच्छया।
तस्मै श्री गुरुमूर्तये नम इदं श्री दक्षिणामूर्तये ॥

१ ( खं० २ पृ० २०१२ टि० गुरोः..................

२ बन्दहुँ गुरु पदपदुमपरागा। सुरुचि सुवास सरस अनुरागा।
श्री गुरुपद नखमनिगनज्योती। सुमिरत दिव्यदृष्टि हिय होती ॥ इति।

३ मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः।
विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥ (रघुवंश)
शशाम वृष्ट्यापि विना दवाग्निरासीद् विशेषा फलपुष्पवृद्धिः।—

## जयमङ्गलाक्रोडपत्रम्

गुरुभक्तिशून्यैः शरीरे नानुभूयन्ते किन्तु कलामायानियतिरागद्वेषा एव जीवेन परिमितप्रमातृभावदशायामनुभूयन्ते। अत्रैव च देशकालयोः परिच्छेदोऽपि भाति। "अमुकं कर्म अमुकदेशे काले एव भवति" इत्यादि।

एतस्मादेव कारणात् जीवः अल्पज्ञत्वमसामर्थ्यञ्चानुभवन् अमृतः आनन्दोऽपि सन् पुनः पुनः मृत्युमनुभवति। किं बहुना देशकालपराधीनतायाः एतावान् परिणामो दृश्यते यत् उष्ट्रमार्जारव्याघ्रादयः पशवः तस्मिन् तस्मिन्नेव विषये अनुरज्यन्ते।

सोऽयं रागः सर्वविधसामर्थ्यप्रतिप्रतिबन्धकः तत्तन्मात्रविषयं गृह्णातीत्यनुलक्ष्य नीतिसारकृतोक्तं 'आत्मा प्रयत्नादर्थेभ्यो मनः समधितिष्ठति' इत्युद्धृतम्। (खं २ पृ. ७)

### गुरुभक्तिद्वारा रागापसारणे तदितिकर्तव्यता

नन्वेवं देशकालपरिच्छिन्नपरिमितप्रमातृभावसंपादकः विषयेषु नियतः रागः गुरुभक्त्या अपसारयितुं शक्यः इत्युक्तम्। सः केन द्वारेण कथमपसारयितुं शक्यः इति प्रश्नः कथं समाधेयः ? इति चेत्। चेतसि गुरुभक्त्या सह उद्भूतेन रसेन रागः सामाजिकानां अपसारयितुं शक्यः भवति इति प्रागुक्तमेव। ( ख० २ पृ० १९ ) तत्र रसञ्चाचारणे गुरुभक्तेः कः संबन्धः इति स्फुटीकर्तुं पुनः रसस्वरूपं तत्परिचयश्च अत्यावश्यकः इति विविच्यते।

### रसपरिचयः

तथाहि--रसप्रतीतिः अभिनयद्रष्टॄणां तदा सुखावहा भवति यदा सा अनपकृष्टा-सती अविलम्बेन समुत्पद्यते। तदुक्तमालङ्कारिकैः दोषनिरूपणप्रस्तावे—"तददोषौ-शब्दार्थौ" इत्यत्र। तद्यथा ये रसमपकर्षन्ति, ये वा रसं समुत्पादयितुमनुभावयितुं विलम्बयन्ति ते दोषाः[1] शास्त्रेषु सप्तविधाः संभवन्ति। असंभावना विपरीतभावना, निजसुखादिवशीभावः, परिमितप्रमातृता, देशकालविशेषावेशः, अप्रधानता, सन्दिग्धता चेति। एतेषां निरूपणं वैदिकसिद्धान्तसंरक्षिण्यां प्रथमाध्याये (खं. १ पृ. ६) कृतमस्ति। तन्निराकरणाय अविलम्बेन रसप्रतीत्यर्थं काव्ये नाटके वा विभावानुभावव्यभिचारि-भावसंयोगः यथा सामाजिकानां चेतसि स्फुरितो भवेत् तथा कविना यतनीयं भवति। तत्सत्त्वे एव रसप्रतीतिर्भवति इति शास्त्रेषु उक्ततत्वात्[2]।

---

ऊनं न सत्त्वेष्वधिको बबाधे तस्मिन् वनं गोप्तरि गाहमाने। इति। ( रघुवंश )

१ एतेन दोषलक्षणं स्फुटं भवति।

२ कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥
विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः॥ (का० प्र०)

( गोकुलनाथो— ) नाट्यकाव्ययोरिति, आरूढानीति शेषः। तत् तदा। कथ्यन्त इति। तथा च विभावानुभावव्यभिचारिपदानां नाट्यकाव्यारूढत्वे सति—

## जयमङ्गलाक्रोडपत्रम्

### रसानौचित्योदाहरणम्

विभावानुभावसंयोजनेन रसप्रतीतिः कथमुत्पद्यते कथं वा स्वल्पेनापि विपर्यासेन सा दुष्टा भवतीत्यत्र एकं पद्यं प्रस्तूयते।

"भोजराज तू हौ भूसुरचन्द" इत्येनेन पद्येन यादृशो ध्वनिरभिव्यज्यते तत्र उक्तपद्ये "भू" इत्यस्य स्थाने "मू" इति अक्षरसन्निवेशमात्रेण रसः हन्यते। यथा "भोजराज तू हौ मूसरचन्द" इति। एवमन्यत्रापि द्रष्टव्यम्[1]।

अतः रसप्रतीत्यर्थं यथावत् पदानामर्थानाम् सन्निवेशविशेषः औचित्यपुरःसरं दोषासंस्पृष्टः अपेक्षित इति सिद्धं भवति। तत्र अभिनयादिषु इदमपि अपेक्षितमस्ति यत् सामाजिकानुकार्ययोः यः परिमितप्रमातृभावः सः दुष्टत्वात् असंभावनादिदोषेषु अन्यतमत्वात् अपसारणीय इति। तदर्थमेव साधारणीकरणव्यापारेण सामाजिकानां चेतसि परिमितप्रमातृभावनिवारकं सत्वमुद्भावयितुं रजस्तमसो अपसारयितुं च विभावादीनां यथावत्संयोजनम्। तथैव आहार्याभिनयोपि नटेन कर्तव्यो भवति। अन्यथा रसप्रतीतिर्व्याहन्येत[2]।

### गुरुभक्तिराहार्याभिनयः

गुरुभक्तिः पूजादराद्यात्मिका आहार्यत्वेनोक्ता वर्तते तया साधारणीकरणव्यापारमहिम्ना उपासकस्य चेतसि प्रागुदाहृतस्य मतिभावस्य स्फुरणं भवति। द्रोणाचार्योपासकस्य एकलव्यस्य चेतसि धनुर्विद्यास्फूर्तिनिदर्शनात्। दक्षिणामूर्त्युपासकानां कृते प्राक् (खं० २ पृ० २४) तथैव निरूपितत्वात्। इत्येवंरीत्या गुरुभक्त्या आहार्याभिनयेषु अन्यतमया अपेक्षितया साधारणीकरणव्यापारमहिम्ना सत्वगुणमाविर्भाव्य रजस्तमसो अभिभाव्य सामाजिकनिष्ठः परिमितप्रमातृभावः अपसारयितुं शक्यते। एवमेव औचित्यार्थमर्थशास्त्रमपि ज्ञातव्यं भवति इति सिद्धम्। अतः इदमभ्यर्हितम् यत् अव्यभिचरितफलपर्यवसायिनी सुखमयी अभिनिवेशाधायिका रसमयी प्रतीतिः जनानुरागसंपादनाय स्वीयेनाभिनयेन लोकेषु यथा समुत्पन्ना

---

कारणकार्यसहकारित्वानि यथायोगं प्रवृत्तिनिमित्तनीति भावः। व्यक्त इति। तैरित्येतावता विभावादिप्राप्तौ विभावाद्यैरित्यभिधानं विभावादिप्रवृत्तिनिदानस्य काव्यारूढत्वस्य स्थायिभावाभिव्यञ्जकतालाभाय। तेर्व्यक्तो विभावादिभिः सह चर्व्यमाण इत्यपि वदन्ति"। इति।

१ एक बिन्दु के घटै कुंतो कुती होय' इत्यादीनि।

२ तदुक्तं गोकुलनाथोपाध्यायेः काव्यप्रकाशविवरणे—ततश्च लोकवृत्तचातुर्यस्वरूपप्रतिभावतां नटशिवयोरभेदाध्यवसायसहकारेण शिवत्वेनोपस्थिते पार्वतीत्वोपरक्तनटान्तराभिमुखकटाक्षविक्षेप्तरि नटे तच्चेष्टयाऽभिहितस्य व्यञ्जितस्य वा सहकारिण औत्सुक्यादेर्वैशिष्ट्यमवगम्यते। तदेव पदार्थाभिनयो नाम नृत्यमित्यभिधीयते। तादृशपदार्थाभिनयगोचरतैव नाट्यारूढत्वम्" ।इति।

## जयमङ्गलाक्रोडपत्रम्

भवेत् तथाविधमभिनयं प्रदर्शयितुं नीत्यनुष्ठानकर्तॄणामुपकाराय अर्थशास्त्रमिदं प्रणीतम्। तस्मिन्नर्थशास्त्रे महदुपकारकारिणि अस्माकं अभिनिवेशो न स्यात् तर्हि मिथ्याज्ञानप्रयुक्तेष्टसाधनताभ्रमजन्यया प्रवृत्त्या अपरिमितानि दुःखानि आजीवनं सोढव्यानि भविष्यन्ति। तदुक्तम्—'न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्' इति। यद्यपि प्रारब्धवशात् अर्थशास्त्रद्वारा सम्यगुपक्रान्ते कर्मण्यपि नैष्फल्यमनुभूयते। तथापि शास्त्रातिक्रमणे आत्मैव उपालभ्यो भवेत्। तदनतिक्रमणे तु दैवमेव उपालभ्यम् इति स्मर्तव्यम्।

### रसप्रतीतौ ईशस्याभिनयः

किञ्च रसमयप्रतीतेः कारणेषु अनेकेषामभिनयः उपस्थितो भवति इति सत्वेऽपि यः सर्वज्ञस्येश्वरस्य अभिनयो भवेत् सः द्रष्टव्यः तत्र साफल्यस्य निश्चितत्वात्। मानुषकल्पिताभिनयकरणप्रयोज्ये कर्तृप्रेरणे च फलाधायकत्वानिर्णयात्। अतः ईश्वरातिरिक्ताभिनयविषये नीतिमद्भिः मिथ्याज्ञानवासनावशात् प्रेरणां प्राप्तस्य मनसस्संरोधः अवश्यं कर्तव्यः। तदुक्तम्—

तस्मात् प्रयत्नसंरोधात् भावयेन्निर्मनस्कताम्॥ (इति नी० सार १)

काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्॥ इति च।

### शास्त्रवित्सु नेतृत्वम्

किञ्च सर्वो हि लोकः परंपरागतज्ञानसापेक्षोऽपि न साक्षात् शास्त्रमवगन्तुं समर्थो भवति इति नेतृत्वं शास्त्रवित्स्वेव समापद्यते। नेतृत्वं तदेवान्वर्थकं भवेत् यदा तेन समस्ताः शङ्काः समाधीयन्ते। एवञ्च सति "कीर्तिरूपे उरावे" इत्युक्तरीत्या तेन विदुषा कीर्तिरूपेण सर्वेषां हृदि स्थीयते। एतदुभयमपि कार्यं रससञ्चारणपुरःसरं शास्त्रप्रसूतेन ज्ञानेनैव संभवति। शास्त्रमन्तरा सत्वगुणसंपादकानां गुणानां अन्यत्रासंभवात्, पौरुषयत्वेन तत्र तत्र दोषबाहुल्यस्य समुदयसंभवाच्च। अतः तथाविधरसबहुलं ज्ञानं शास्त्रद्वारा संपादितं चेत् नेतृत्वाधायकं भवति[1]।

ये किल शात्रं तिरस्कृत्य मदमानपुरःसरं वर्तन्ते ते कथमपि पर्यन्ते प्रसृतधवलकीर्तयो न भविष्यन्ति। यतः नानादिग्देशीयेषु लोकेषु कञ्चन पुरुषविशेषं पुरस्कृत्य अयं धार्मिकत्वादुत्कृष्टः इति ज्ञाने सञ्जाते एव तज्ज्ञानीयाविषयता कीर्तिर्भवति। तदुक्तं मधुसूदनसरस्वतीभिः। "कीर्तिः श्रीर्वाक्चनारीणां" स्मृतिर्मेधा धृतिः क्षमा" इति गीताश्लोक व्याख्याने[2]। तत्र कीर्त्यर्थघटकः उत्कर्षः मधुसूदनसरस्वती-

---

१ सत्वात्मनाममलधर्मविशेषजन्मा।
जन्मान्तरानुभववासनयावतीर्णः॥
सर्वात्मसंपदुदयातिशयैकहेतुः।
जागर्ति कोऽपि हृदि मानमयो विकारः॥ इति

२ प्र० खं० ११८ टि०

## [ कामाद्यरिषड्वर्गप्रभवेन चञ्चलेन्द्रियाणां विनाशे निदर्शनानि ]

**तद्विरुद्धवृत्तिरवश्येन्द्रियः [1]चातुरन्तोऽपि राजा सद्यो विनश्यति—**

### जयमङ्गलाक्रोडपत्रम्

मिरुपवर्णितः न धनादिसम्बन्धमूलकः अपितु यथार्थविद्यामूलकः धनाद्यपेक्षया विद्याया एव पूजनीयत्वात्[2]।

एवं च सर्वविधशङ्कानां पराहृतिः शास्त्रविदैव कर्तुं शक्यते इति शास्त्राणां संस्थापनं विदग्धत्वस्य परिपोषकमेव सर्वस्य बीजम्। इदमेव च ब्राह्मणत्वस्य स्थापनमाचार्यादिभिः अभिमन्यते[3]।

### श्रीमूला

तद्विरुद्धेत्यादि। तद्विरुद्धवृत्तिः शास्त्रविरुद्धानुष्ठानः। चातुरन्तोऽपि चतुरन्ता चतुस्समुद्रपर्यन्ता भूमिः तस्या ईश्वरोपि। तत्र कामादिषु एकैकेन विनष्टेषु द्वौ द्वौ निदर्शयति—

### वैदिकसिद्धान्तसंरक्षिणी

तद्विरुद्धेति। नीतिशास्त्रविरुद्धवृत्तिः। **अवश्येन्द्रियः अजितेन्द्रियः।** चातुरन्तोऽपि चतुःसमुद्राधिपतिः। सद्यो विनश्यति अपिना कैमुतिकन्यायः प्रदर्शितः किमुत अपरे इति यावत्। सद्यः अचिरेण। विनश्यति आत्मनि कामजक्रोधज व्यसनमुत्पाद्य प्रजापरागं समर्प्येति शेषः। अतएव निर्मूलो भवतीत्यर्थः। तदेव व्याख्यातं जयमङ्गलायाम् विनश्यतीत्यादिना ग्रन्थेन।

### जयमङ्गला

सम्प्रति विप्रतिपत्त्यविप्रतिपत्त्योर्हानोपादानार्थन्दोषगुणावाह—तद्विरुद्धवृत्तिरिति। शास्त्रविहित—विरुद्धवृत्तिः। एवञ्च कृत्वा अवश्येन्द्रियः अजितेन्द्रियः। चातुरन्तोऽपि पृथिवीचतुरन्तभवः। चतुस्समुद्राधिपतिरिति यावत्। एवंविधोऽपि राजा प्रतिकारकालमसंभावयन् विनश्यति विशेषेण नश्यति। अनेन निर्मूलतामाह।

### जयमङ्गलाक्रोडपत्रम्

#### विनाशपरंपराक्रमः

**विशेषेण नश्यतीति।** अत्रेदमनुसन्धेयम्—अजितेन्द्रियः ज्ञानमदाक्षिप्तसन्मार्गः शास्त्रं तदर्थं च अवधीरयति रसाभासे रसत्वं मत्वा तत्रैव च अभिनिविशति। रसप्रतीतौ परिमितप्रमातृभावस्येव रसाभासप्रतीतावपि तन्निरासस्य संभवात्।

---

नी० टि० १ **चातुरन्त इति।** चतुः समुद्रान्ताप······शापि।

२ तदुक्तं—वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी।

एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम्। इति

३ तदुक्तम्—ब्राह्मणत्वस्य रक्षणेन रक्षितस्स्यात् वैदिको धर्म इति।

## जयमङ्गलाक्रोडपत्रम्

प्रकृतिवर्गमपि च मिथ्यार्थे प्रेरयितुं अयं समर्थो भवति तत्र दोषाः उच्यन्ते । भविष्यति-समये रसाभासस्य अप्रमाणिकत्वादेव फलस्य बाधः स्यात् तेन अद्य यावत् क्रियमाणः रसाभासाभिनिवेशोऽपि राजप्रजाभ्यां त्यक्तव्यः स्यात् इति कृत्वा श्रमस्य वैफल्यं, मिथ्यापदार्थे अभिनिवेशे अवश्येन्द्रियता, ततः व्यसनित्वम्, ततः योगक्षेमयोः अभावः, ततः अपालनेन प्रजा अपरज्यते, ततः छिद्रमुपलभ्य प्रजाःद्वारीकृत्य अयं शत्रुवश्यो भवति, ततः विनश्यति, दुःखानि वा दुर्धराणि समनुभवति, इत्येवंविधःअजितेन्द्रियता स्वात्मविनाशयोः परंपराक्रमः अनुमन्तव्यः । अत्रोदाहरणानि मूलकृता अग्रे एव अभिहितानि वर्तन्ते । तस्मात् पूर्वं यः साक्षी रसरूपतया निरूपितः (खं० २ पृ० २७) तद्विरुद्धम् अस्माभिर्नानुष्ठेयम् ।

### शास्त्राभिनिवेशाभावे वृथा जीवनम्

रसमयजीवने उपायप्रदर्शके शास्त्रे यदि रतिर्नोपलब्धा तर्हि किं कृतम् ? इत्यपि आचार्योक्तमवश्यं स्मर्तव्यम् । तदुक्तम्—

गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततः किम् ततः किम् । इति

### परिमितप्रमातृत्वनिरासः

किञ्च एतत्प्रसङ्गात् अन्यदप्यभिधीयते ।

रसमयस्याभिनिवेशपूर्वकमनुष्ठितस्य शास्त्रार्थस्य अयमसाधारणः विशेषोऽस्ति यत् अनेन शरीरे वर्तमानामहन्तां परिमितप्रमातृभावमापन्नां शरीरमात्रवृत्तिमपसार्य अपरिमितभावः जीवे समर्प्यते । इति प्रागुक्तमस्ति । तस्मात् अहन्ता द्विविधा भवतीति निर्णीयते—

### अहन्ताद्वैविध्यम्

एका सूक्ष्मा परिमिता, अपरा अपरिमिता इति । तयोराद्या रसप्रतीतेः पूर्वं शरीरमात्रवृत्तिर्भवति । सा च "अहं स्वप्स्यामि सुप्तो वा" इत्यादिवृत्तौ भाति । इयमेव सूक्ष्मा इति शास्त्रकृद्भिरुच्यते । तथा च तत्तत्सुषुप्त्यादिवृत्तौ शरीरवृत्तितया भासमाना अहन्ता तत्तद्विषयमेव प्रकाशयतीति कृत्वा सा अणुरूपा भवति । तेन "अन्यमना आसम्मया इद न ज्ञातमि"त्यादयः प्रयोगाः सूपपन्ना भवन्ति । तस्याः सर्वशरीरव्यापित्वे मनसः सर्वत्र शरीरे सत्वात् "अन्यस्मिन् मनोऽभूत् अस्मिंश्च न" इति कथनमयुक्तं भवेत् । तस्मान्मनसः अणुत्वं तदेव यत् सूक्ष्माहन्ताश्रयत्वम् । अतएव न्यायभाष्यानुगामिना नीतिसारकृता ज्ञानानामयौगपद्येन मनसः अणुत्वं यद्साधितं तत् सूक्ष्माऽहन्ताश्रयत्वमादाय[1] इति बोध्यम् । इयं सूक्ष्माऽहन्ता यावत्पर्यन्तं तिष्ठति तावत्पर्यंतं अणिमादिसिद्धयो न भवन्ति । अपरा च अहन्ता रसात्मकप्रतीत्यनन्तर-भाविनी बोध्या । इयमेव स्वतन्त्रा साक्षिरूपा । सेयं यदि गुरुभक्तैः शास्त्रपरतन्त्रैः उपासिता भवति—तर्हि तस्य सिद्धयोऽपि नासुलभाः । एवंरीत्या अपरिमिताऽहन्ता—

---

१. 'ज्ञानस्यायुगपद्भावो मनसो लिङ्गमुच्यते । इति

## जयमङ्गलाक्रोडपत्रम्

श्रयत्वरूपतां यदा मनः प्राप्नोति तदा महत्परिमाणकं तदुच्यते। न चायं विभागः कल्पित इति वाच्यम्। भावप्रकाशनकृता तथैवोक्तत्वात्[1]।

## साहित्यन्यायवेदान्तमतेन मनस्स्वरूपम्

टिप्पण्युद्धृतस्य सर्वत इति ग्रन्थस्य (१) भावप्रकाशनस्थितस्यायं भावो भाति — परिमिताऽहन्ताश्रयत्वं यस्मिन्देशे शरीरान्तर्वर्तिनि आत्मनि वर्तते तत् मनोरूपमपि सत् किरणरूपेण सूर्येणेव सर्वत्र शरीरे चैतनारूपेण प्रवहति। इति प्रसरणशील प्रभाविष्टमणुरूपं मनः शरीरमात्रपरिमाणं भवति। एतेन महत्परिमाणकेन मनःस्वरूप निरूपणेन अणुत्वप्रतिपादकेनन्यायशास्त्रेन च यो—विरोधो भाति स निरस्तो वेदितव्यः। तत्र वेदान्तमतं प्रतिपादयद्भिः मधुसूदनसरस्वतीभिः मनोविषये एवमुक्तं भक्तिरसायने मनसो नाणुत्वमिति[2]।

## मनसोऽणुत्वाणुत्वविरोधपरिहारः

अर्थादेतन्मतेन मनसि अणुत्वप्रतीतिः अयथार्था इति सिद्ध्यति। पुनरेतद्विरोधितया मनसः अणुत्वविषये नैययायिकाः एवमाहुः।

विभववान्महानाकाशस्तथा चात्मेत्यभिधाय तदभावादणु मन इत्युक्तम[3] तस्मादणुपरिमाणं मन इति सिद्धम्।

---

१. ज्ञानप्रभासाश्चैतन्यमणोर्जीवस्य सर्वतः।
शरीरव्यापिनी तत्तद्व्यापना (चेतना) भवति स्फुटम्॥
सैषा परात्मनः सर्ववस्तुत्था चेतना भवेत्।

२ अणुत्वाभावे युगपत् सर्वेन्द्रियसम्बन्धसम्भवात् युगपन्नानाज्ञानोत्पत्तिप्रसङ्ग इति चेन्न, एकैनेन्द्रियेणैकदैकमेव ज्ञानं जन्यत इति नियमस्तावदावयोस्समः अन्यथा युगपच्चाक्षुषज्ञानद्वयोत्पत्तिः किन्न स्यात्। नानेन्द्रियजन्यज्ञानानान्तु युगपदुत्पत्तिरिष्यत एव। इति

दीर्घां शष्कुलीम्भक्षयतश्शब्दस्पर्शरूपरसगन्धानां युगपदनुभवात्। सुषुप्त्यन्यथानुपपत्त्या त्वङ्मनस्संयोगस्य ज्ञानमात्रे कारणत्वेन त्वयाभ्युपगमाद्रसनावच्छिन्नत्वक्संयुक्तस्य गुडस्य युगपद्रसस्पर्शोपलम्भस्तवापि दुर्निवारः। तस्मान्नास्मदभ्युपगते मनसि श्रुतिस्मृतिन्यायसिद्धे विमतिस्सम्भवति। समनन्तरप्रत्ययस्त्वतिनिर्युक्तिकत्वादुपेक्षितः विस्तरस्तु वेदान्तकल्पलतायामनुसन्धेयः इति। १६।

३ नित्यद्रव्यगतस्य विभवाभावस्य अणुपरिमाणत्वाव्यभिचारात्। विभवाभावश्चास्य युगपज्ज्ञानानुत्पत्त्यैव समधिगतः। मनसो विभुत्वे युगपत्समस्तेन्द्रियसम्बन्धाच्चक्षुरादिसन्निकृष्टेषु रूपादिषु ज्ञानयौगपद्यं स्यात्। अथ कथमेकेन्द्रियग्राह्येषु घटादिषु मनोधिष्ठितेन चक्षुषा युगपत्सन्निकृष्टेषु ज्ञानानि युगपन्न भवन्ति? आत्मेन्द्रियार्थसन्निकर्षाणां यौगपद्यान्न भवन्ति तावदनेनात्मनः संयोगस्यैकस्य युगपदनेकस्य ज्ञानस्योत्पादनसामर्थ्याभावः कल्प्यत इति चेत्? समानमेतद्विभुत्वेऽपि मनसः तस्मादविभुत्वेपि युक्त्यन्तरं वाच्यम्। तदुच्यते विभुत्वा-

## जयमङ्गलाक्रोडपत्रम्

इति। सोऽयमनयोर्विरोधः अहन्ताभेदेन तदाश्रयभेदेन च निरस्तः। अथ इन्द्रियजयस्य सङ्क्षिप्तं स्वरूपं परिष्कृतं किं भवितुमर्हतीति निर्दिश्यते।

### इन्द्रियजयस्य सङ्क्षिप्तस्वरूपं

शास्त्राभिनिवेशे स्थैर्यं यथा भवेत् मनसः, तथा तद्व्यवस्थापन[1]मेव तत् इति।

अत्राऽयं भावः। यदि भारतीयराजनीतिविद्भिः स्वस्यास्तित्वं संरक्षणीयम् तर्हि तैलधाराकर्षणमिव[2] रसाभिनिवेशपुरःसरं नीतिशास्त्रमाकर्षणीयम्। तस्मिन् योगसाधनत्वस्य (खं० १ पृ० १४६) प्राङ्निर्दिष्टत्वात्। नीत्यतिक्रमणे च मानुषवृत्तेः निर्बाधतया सञ्चालनाशक्यत्वात् तदिदमुदाहरणेन स्फुटीक्रियते। यथा वर्तिस्था दीपकलिका नैरन्तर्येण तैलधारामाकर्षति प्रज्वलति च। एवं मनःकलिकापि नैरन्तर्येण भगवन्मूर्तिं चिन्तासाचिव्येनाकर्षति यदि, तर्ह्येव ईशरूपं द्रष्टुं समर्था भवति। एवंसति मनोऽपि एकाग्रमुच्यते। तदेतत् भक्तिरसायने प्रतिपादितं वर्तते तत एवानुसन्धेयम्[2]।

तथैव नीतिशास्त्रविषयेऽपि मनसोभिनिवेशः अपेक्षितः। सति च अस्मिन्नभिनिवेशे शास्त्रं विलुप्तप्रायं सदपि तथा स्फुरति यथा तन्निर्मलं भवेत्। इयमेव एकाग्रभूमिका[3] इत्युच्यते सत्यां च तस्यां सत्वगुणस्य प्रकाशकस्याविर्भावदर्शनात्।

---

दात्ममनसोः परस्परसंयोगाभावे सत्यात्मगुणानां ज्ञानसुखादीनामनुत्पत्तिरसमवायिकारणाव्यवधानेन प्रदेशवृत्तीनां गुणानामुत्पादात्। आत्मेन्द्रियसंयोगस्यासमवायिकारणत्व शब्दज्ञानानुत्पत्तिः आकाशात्मकेन श्रोत्रेणात्मनः संयोगाभावात्। न च बहिर्देशे प्रत्ययो नापि शब्दज्ञानानुत्पादः तस्मादात्मार्थ संयोगस्यात्मेन्द्रियसंयोगस्यचासमवायिकारणत्वे प्रतिषिद्धे परिशेषादात्मनः संयोगस्यासमवायिकारणत्वं व्यवतिष्ठते तच्च मनसो व्यापकत्वे न संभवतीत्यनुत्पत्तिरेव ज्ञानसुखादीनाम्, अस्ति च तेषामुत्पादः, स एव मनसो विभुत्वं निवर्तयतीति। (न्यायकन्दलांल्यां मनोनिरूपणे)

१ तदेवोक्तं गोतायामपि—

मन एकत्र संयुज्यात् जितश्वासो जितेन्द्रियः।
वैराग्याभ्यासयोगेषु क्रियमाणमतन्द्रितः॥ इति।

२ ततश्च द्रुतचित्तस्य निर्वेदपूर्वकं तत्वज्ञानं, द्रुतचित्तस्य तु भगवत्कथाश्रवणादिभागवतधर्मश्रद्धापूर्विका भक्तिरित्यवधित्वेन द्वयमप्युपात्तम्। ततोऽन्तःकरणशुद्ध्याष्टाङ्ग योगमनुष्ठाय तैलधारावदविच्छिन्नभगवदेकाकारप्रत्ययपरम्परात्मकैकाग्रतायोग्यं मनस्सम्पादयेत्।

३ यदारम्भेषु निर्विण्णो विरक्तस्संयतेन्द्रियः।
अभ्यासेनात्मनो योगी धारयेदचलं मनः॥
धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम्।
अतन्द्रितोऽनुरोधेन मार्गेणात्मवशन्नयेत्। इति॥ (गा०)

## जयमङ्गलाक्रोडपत्रम्

### सात्त्विकमार्गविप्लवकारणम् आन्वीक्षिक्यध्ययनाभावः

नन्वेवं प्रकाशबहुलोमार्गः कथं विलुप्तप्राय इव दृश्यत ? इति चेत् आन्वीक्षिक्याः रसप्रचुराध्ययनाभावेन अन्धे तमसि मार्गः निमग्नोऽभूत्। यद्यपि वेदान्तादिशास्त्राणि वास्तविकं तत्वं प्रतिपादयितुं समीहन्ते। तथापि तानि शास्त्राणि कार्यकारीणि तदैव भवन्ति यदा तत्तच्छास्त्रप्रतिपादकेषु विषयेषु सूक्ष्मा विवेकवती दृष्टिः प्रसज्यते अन्यथा कृते वेदान्ताध्ययनेपि हर्षशोककवलितत्वं न कदापि दूरं यायात्। तस्मात् देशकालादि परिच्छेदेन सह परिमितप्रमातृभावस्य अभ्युदयेन निद्रावस्थायाम् सुप्तायाः क्रिया-शक्तेः पुनर्जागृतिदशायामुच्छलितः परिमितप्रमातृभावः रसानुभवसाहाय्येन दूरीकरणीयः। रसानुभवश्च आहार्याभिनयेन पूजादरादिरूपिण्या भक्त्या गुरुमूर्तिरूपां विवेक-वृत्यवच्छिन्नचित्स्वरूपिणीं अतिकमनीयां शास्त्रमूर्तिमनुसन्ध्याय समुत्पन्नेन साधा-रणीकरणव्यापारमहिम्ना चेतसि समुत्पादनीयः। स च शास्त्रसंबन्धेन संबन्धित्वान् न कदापि वितथो भवितुमर्हति। शास्त्रकृतां मतेन गुरुमूर्तेः विवेकवृत्यवच्छिन्नायाः स्थितेः शास्त्रमूर्त्यनतिरेकात्। अतः शास्त्रस्य तत्रापि नीतिशास्त्रस्य इन्द्रियजयरूपस्य पूजनं, दर्शनं, चिन्तनं सर्वथा सफलम्। किं बहुना यदि शास्त्रमूर्तौ उपासकः रमते तर्हि तस्य उपासकस्य कृते एतद्रत्यपेक्षया अपरः उत्तमः शृङ्गारः[1] कोवाऽव-शिष्यते। ध्वनितं चैतत् श्रुत्यापि—

"युवा स्यात् साधु युवाऽध्यायकः आशिष्ठो दृढिष्ठो बलिष्ठः तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् स एको मानुष आनन्दः"। इति

नमे स्तेनो जनपदे न कदर्यो न च मद्यपी।
नानाहिताग्निर्नायज्वा न स्वैरी स्वैरिणी कुतः। इति च।

ननु इदं तु सर्वैरेव काम्यते ? सत्यं। इदं हि शास्त्रं न केवलमेदर्थमेव अपि तु अकामहतत्वार्थमित्यपि गृहाण। अतः कृत्स्नं हि शास्त्रमिन्द्रियजयः इति सिद्धम्।

अथ मूलस्थोदाहरणव्याख्यानेन भोजादीनां विनाशकथां विशदयति यथेत्यादिना ग्रन्थेन। शेषं निगदव्याख्यातम्।

---

१ तदुक्तं—शृङ्गारप्रकाशे सरस्वतीकण्ठाभरणे वा—
आत्मस्थितं गुणविशेषमलङ्कृतस्य।
शृङ्गारमाहुरिह जीवितमात्मयोनेः॥
तस्यात्मशक्तिरसनीयतया रसत्वम्।
युक्तस्य येन रसिकोऽयमिति प्रवादः॥

**यथा दाण्डक्यो[1] नाम भोजः[2] कामाद् ब्राह्मणकन्यामभिमन्यमानस्सबन्धुराष्ट्रो विननाश, करालश्च वैदेहः[3]। कोपाज्जनमेजयो ब्राह्मणेषु विक्रान्तः, [4]तालजङ्घश्च भृगुषु। लोभादैल[5]श्चातुर्वर्ण्यमत्याहारयमाणः[6], सौवी[7]रश्चाजबिन्दुः। मानाद् रावणः परदारानप्रयच्छन्, दुर्योधनो राज्यादंशं च। मदाद्दं(ड)म्भोद्भवो[8] भूतावमानी, हैहयश्चार्जुनः। हर्षाद्वातापिरगस्त्यमत्यासादयन्, वृष्णिसङ्घश्च[9] द्वैपायनमिति॥**

## श्रीमूला

यथेत्यादिना। भोजवंश्यो दाण्डक्यः कामाद् ब्राह्मणकन्यामपहृत्य तत्पित्रा शप्तो बन्धुराष्ट्रसहितो नष्टः। तथा विदेहाधिपः करालो ब्राह्मणीमभिलषन् ब्राह्मणेन शप्तो नष्टः। कोपाज्जनमेजयो नाम राजाऽश्वमेधे वर्तमाने ब्राह्मणैः सह कलहायितस्तच्छापान्नष्टः, तथा तालजङ्घो भृगुषु विक्रम्य तच्छापान्नष्टः।

लोभाद् ऐल; पुरुरवा नाम राजा चातुर्वर्ण्यमतिमात्रधनहरणेन पीडयंश्चातुर्वर्ण्यकोपान्नष्टः। तथा सौवीरपतिरजबिन्दुः। लोभादैलो नैमिषीयब्राह्मणयज्ञशालां प्रविश्य ततोऽपरिमितं धनं हर्तुमुद्युक्तो ब्राह्मणशापान्नष्ट इत्यैतिह्यं कैश्चिद् वर्ण्यते। मानाद् रावणः सीतां रामायाप्रयच्छन् नष्टः। तथा दुर्योधनो राज्यांशं पाण्डवेभ्योऽप्रयच्छन् नष्टः। मदाद्राजा दम्भोद्भवो नाम कृतसर्वप्रजावज्ञानो नरनारायणाभ्यां सह युद्धमासाद्य हतः, तथा हैहयाधिपः कार्तवीर्यो मदात् परशुरामपितरि प्रयुक्तापराधः परशुरामेण युद्धे हतः। हर्षाद् वातापिरसुरोऽगस्त्यं महर्षिं वञ्चयन्, यादवसङ्घश्च व्यासमतिसन्धित्सुस्ताभ्यां शप्तौ विनेशतुः। इत्यैतिह्यानि।

## वैदिकसिद्धान्तसंरक्षिणी

तदेवोदाहरणद्वयेन प्रदर्शयितुमाह यथेति। दाण्डक्य इति[10]। दण्डकानां सङ्घस्य मुख्यः भोजः[11]। कामादिति[12]। शास्त्रमतिलङ्घ्य आभासभावमापन्नायाः इच्छायाः।

नी० टि० १ **दाण्डक्य इति**। दण्डकविषयास्ते मुख्याः। बृहदश्वाभिधानाः।
,, २ **भोज इति**। भोजान्वयः।
,, ३ **वैदेह इति**। कामादिति शेषः
,, ४ **तालजङ्घश्चेति**। कोपात्।
,, ५ **ऐल इति**। इलायाः इलस्य वाऽपत्यम् ऐलः पुरूरवाः।
,, ६ **अत्याहारयमाण इति**। सर्वस्वमत्याजिहीर्षुः।
,, ७ **सौवीर इति**। सुवीराणां राजा।
८ डंभोद्भवः पा०।
नी० टि० ९ **चेति**। अप्रयच्छन्निति शेषः

१०. दण्डकविषयाः तेषां मुख्या बृहदश्वाभिधानाः ११. भोजान्वयः १२. कामादिविशेषग्रहणेन मूलस्थचकारस्य सार्थक्यं बोध्यम्।

## वैदिकसिद्धान्तसंरक्षिणी

उक्तस्यार्थस्य दाढर्यमवगमयितुं उदाहरणान्तरमाह करालइति। एवमग्रेऽपि बोध्यम्। ऐलः इलायाः अपत्यं पुरूरवाः। अत्याहारयमाणः सर्वस्वमत्याजिहीर्षुः। सौवीरः सुवीराणां राजा अजबिन्दुरिति। अंशञ्चेति अप्रयच्छन्निति शेषः। द्वैपायनं व्यासं उपहसन्निति शेषः।

## जयमङ्गला

यथा इत्यादिना दृढ़ीकरणार्थमितिवृत्ताख्यानम्। दण्डकानां सङ्घस्य मुख्यो दाण्डक्यः, भोज इत्यपरनामा कामाद् ब्राह्मणकन्यामभिमन्यमानः अभिगच्छन् ननाश। स हि अत्यन्तानुच्छिन्नकामदोषः—कदाचिन्मृगयामनुचरन् भार्गवकन्यां विरजोऽभिधानां रूपयौवनवतीं शून्याश्रमस्थां दृष्ट्वा जातरागः तां रथमारोप्य स्वपुरमाजगाम। भार्गवोऽपि समित्कुशमादाय वनादावृत्यागतः शून्यम् आश्रममालोक्य अभिध्यायन् यथावृत्तं ज्ञात्वा सञ्जातक्रोध एव शापमुत्ससर्ज। तच्छापात् सप्तभिरहोभिः पांसुवर्षणादाक्रान्तः सबन्धुराष्ट्रो विननाश। एवं चाद्यापि गीयते राष्ट्रदण्डकमिति। दण्डकमुख्यस्य भृगुकन्याभिमर्शनात् कृतविनाशदर्शनात् एवं पांसुवषणाद् दण्डकारण्यमित्येव प्रसिद्धम्।

करालश्च वैदेहः। कामाद् ब्राह्मणकन्यामभिमन्यमान इत्यनुवर्तते। विदेहेषु भवो वैदेहः। करालनामा राजा योगेश्वरयात्रायां कौतुकाल्लोकसमाजं पश्यन् ब्रह्मविदः कस्यचित् पत्नीं रूपयौवनवतीं दृष्ट्वा कामपरवशः तामपहृत्य पुरमाजगाम। ब्राह्मणोऽपि रोषादेवं वदन् पुरमाजगाम। "तत्पुरङ्कथन्न दीर्यते यत्रैष दुरात्मा तिष्ठती"ति। स च तद्वचनानन्तरं सह प्रकृतिभिः विदीर्णपृथिवीद्वारेण रसातलं प्रविशन्ननाश। तथा चोक्तम्—

ब्राह्मणीं संस्पृशन्नेव सगणो मिथिलेश्वरः।
व्यक्तः सघृणयैवोर्व्या विवेशाशु रसातलम्॥ इति॥

कोपाज्जनमेजयो ब्राह्मणेषु विक्रान्त इति। तथा—चोक्तम्—

नृपतावश्वमेधेन दीक्षिते जनमेजये।
मध्ये किल समेतानां देवतानां हविर्भुजाम्॥
(पत्न्य ? वन्ह्य) गारगतां पत्नीमश्वाङ्गस्पर्शकर्मणि।
ऊरुमूलेक्षणादिन्द्रो रम्भोरूं चकमे बलात्॥
ऋत्विक्तु शङ्कमानोऽसौ क्रोधेर्ष्याकु (पि ? लि) तो नृपः।
विचक्रामाथ वाग्भिश्च कशाभिश्चातिकर्कशम्॥
ऋत्विजो ब्राह्मणान् शान्तान् यो दुष्टोऽस्मान् जिघांसति।
स नश्यत्विति तैरुक्तो राज्ञो मूर्धा व्यशीर्यत॥ इति॥

## जयमङ्गला

तालजङ्घश्च भृगुषु विक्रान्त इति । हैहयाधिपतिः तालजङ्घो नाम राजा प्रत्युत्पन्नार्थकृच्छ्रो भृग्वाश्रमे केनापि निक्षिप्तं सुवर्णभाण्डम् उपलभ्य बलात् आदातुकामः 'कस्त्वमस्य ग्रहीता' इत्यधिक्षेपादुद्दीपितक्रोधो भृगुं दर्पादशेषयितुकामः जातमात्रस्य और्वस्य कोपात् सगोत्रो ननाश । तथा च गीयते—

तत्कृतं तालजङ्घेन भृगून् रोषाज्जिघांसता ।
तं हत्वाऽद्यापि येनाग्निः समुद्रे न विशीर्यति ।। इति

लोभादैलश्चेति । ऐल इलाया अपत्यं पुरूरवाः शक्रदर्शनाय स्वर्गं गतो मूर्तिमतो धर्मार्थकामान् ढौकित्वा धर्ममेवेतरावनादृत्य प्रदक्षिणीचकार ।

ततोऽर्थकामौ क्रुद्धौ तमशपताम् । तत्र कामशापात् कथञ्चिदुपशान्तोर्वशी विरहोन्मादः, अर्थाभिशापादतिप्रवृद्धलोभः चातुर्वर्ण्यं, चतुर एव वर्णान्, अत्याहारयमाणोऽतिशयेनार्थमापादयन् कथं नाम ममैकस्यासाधारणो धर्मः स्यादिति मन्यमानो ऽर्थापहाराद् यज्ञादिक्रियाविरोधोद्विग्नैः ब्राह्मणैरभिशप्तो ननाश ।

अविरोधेन धर्मार्थौ युक्त्या सेवेत पण्डितः ।
धर्मैकपक्षप्रवणो लोभादैलोऽनशत् पुरा ।। इति ।।

सौवीरश्चाजबिन्दुरिति । सुवीर (स्य) राज्ञोऽन्वये अजबिन्दुर्नाम राजा द्रव्यराशिमेकस्थमेव दिदृक्षमाणश्चतुरो वर्णानत्याहारयमाणोऽत्यक्तस्वत्वात् कर्शितापरक्ताभिः प्रजाभिः संहृत्य एकलोष्टोपघातेन हन्यमानो ननाश । तथा चाहुः—

यथा हि नो द्रव्यराशिं सुवीराधिपतिश्चिरात् ।
तथाद्रियत लोष्टानां क्षणाद् (आशी ? राशि) निहत्य तम् ।।इति ।।

मानाद् रावण इति । स समुद्रस्योत्तरे तीरे (रामे) स्थिते सति विभीषणादिभिरुक्तः "सीता दीयतामि"ति मानादप्रयच्छन्ननाश ।

प्रत्याख्यातोऽपि वैदेह्या शापस्यानुस्मरन्नपि ।
मानान्महात्मने सीतां नैच्छद्दातुं निशाचरः ।। इति ।।

दुर्योधनो राज्यांशञ्च—पूर्णेऽप्यवधावप्रयच्छन्ननाश । तथा चोक्तम्—

पञ्च नस्तात दीयन्तां ग्रामा वा नगराणि वा ।
वसेयुस्सहिता यत्र मा च नो भारताऽनशन् ।।

सोऽप्यस्मद्वञ्चनार्थमिति बुद्ध्वा अभिमानादाह—

यावदग्रेण तीक्ष्णायाः सूच्या विध्येत माधव ।
तावदप्यर्धं मया त्याज्यं न भूमेः पाण्डवान् प्रति ।। इति ।।

मदाद्दम्भोद्भव इति । दम्भोद्भवो नाम राजा वीर्यावलेपाद् भूतावमानी लोकाभिभवनशीलः कञ्चिद् योद्धुम् अनासादयन् विदह्यमानो नारदादुपलभ्याधिकप्रभावौ नरनारायणौ बदरिकाश्रमञ्जगाम । तत्र तावभिभवन् नरेणेषीकाभिश्छादित स्सबलो ननाश ।।

## जयमङ्गला

**कार्तवीर्यश्च** कृतवीर्यपुत्रोऽर्जुननामा भूतावमानी कञ्चिदनासादयन् नारदादेव परशुराममभ्यधिकं श्रुत्वा जमदग्न्याश्रममुपगम्य वत्सग्रहणोपायेनाभिभवन् परशुरामेण परशुना छिन्नसहस्रबाहुर्ननाश ॥

हर्षाद् वातापिरिति। हर्षः क्रीडासुखम्। वातापिर्नाम असुरोऽतिक्रीडापरः मायया भ्रातरं कनीयांसमिल्वलनामानं छागीकृत्य हत्वा तन्मांसेनमुनीनतिथीन् भोजयित्वा विद्यामुच्चार्य तमाजुहाव आगच्छेति। असावपि तेषांकुक्षिं निर्भिद्य निर्जगाम। कदचिदागतयागस्त्याय तथैवोपहृत्याह्वयत्। जीर्णोऽसाविति मुनेरुपलभ्य तद्विदारणाय सूक्ष्मीभूय प्रविष्टः सोऽपि तमत्यासादयन् अनुजवज्जीर्णो ननाश। एवञ्च लोके तदत्याशितैः कुक्षिरभिमन्त्र्यते—

इल्वलो भक्षितो येन वातापिश्च महासुरः।
स मे भुक्त तथा पीतमगस्त्यो जरयिष्यति ॥ इति ॥

वृष्णिसङ्घश्च द्वैपायनमिति। वृष्णिपुत्राःस्त्रीवेषधारिणा साम्बेन सह क्रीडितप्रसङ्गाद् द्वैपायनन्दुर्वाससं क्षुधितमलक्षयित्वोपहसन्तः पप्रच्छुः—
भगवन् किमियं साम्बवधूर्विजनयिष्यतीति ? स तान् क्रोधाच्छशाप—

वंशक्षयकरं घोरमायसं मुसलं महत्।
वासुदेवस्य दायादः साम्बो विजनयिष्यति ॥ इति ॥

ते तञ्जातमायसं श्लक्ष्णं चूर्णयित्वा चिक्षिपुः। तदेरकावनमभूत्। कदाचिद् वृष्णयस्समुद्रतीरे एरकापिण्डोपविष्टा आपानकमनुतिष्ठन्तः कलहात् परस्परमेरकापिण्डैर्घ्नन्तो विनष्टा इति।

## जयमङ्गलाक्रोडपत्रम्

### राज्ञो दण्ड्यता

**विननाशेति**। (पृ० ३५) ननु मूर्धाऽभिषिक्तः राजा कथं दण्ड्यते ? इतिचेत्। आचार्यस्थानीयैर्धर्माधिकारिभिः, प्रमादी चेन् मूर्धाभिषिक्तो राजा सः अवश्यमेव दण्डयः इत्येव सिद्धान्तितमस्ति। तदुक्तं चाणक्येन "मर्यादां स्थापयेत् आचार्यान् अमात्यान् वा य एनमपायस्थानेभ्यो वारयेयुः छायानालिकाप्रतोदेन वा रहसि प्रमाद्यन्तमभितुदेयुः"इति। (१।७ कौ०अ०) तस्य अदण्डितत्वे—"यच्छीलो राजा तच्छीलाः तस्य प्रकृतयो भवन्ति" इत्युक्तत्वात् राजनि प्रमाद्यति सति प्रजाऽपि पापकर्मणि रज्येत इति प्रजासंरक्षणार्थं राजा अवश्यमेव दण्डयः। अत्रेदं बोध्यं—वानप्रस्थस्य सन्यासधर्मस्य च राज्ये सुखशान्तिसमृद्धये अङ्गत्वमस्ति इत्यैतत्सर्वं प्राक् (खं० १ पृ० ३१५) विस्तरतः अभिहितमस्ति। लौकिकदृष्टया राज्याङ्गत्वाभावे तपोन्वीक्षयोः उपशमस्य च सर्वथा अभावः प्रसिद्धो भवेत्, ततः त्यागवैराग्यादि सर्वमपि अलोकप्रायं च भविष्यति। न कोऽपि सन्यासाश्रमे, वानप्रस्थाश्रमे वा प्रवेष्टुं समीहेत, इत्यतः तयोराश्रमयोरुपयोगात् वानप्रस्थानां परिव्राजकाणां श्रोत्रियाणां च कृते तत्र तत्र स्वदेशे भारतीयराजनीत्या ब्रह्मसोमारण्यानि (खं० २ पृ० १०) पृथक्कृत्य संस्थापितानि।

## जयमङ्गलाक्रोडपत्रम्

### राज्ञः शासकाः श्रोत्रियाः

तदनुसारेण च राज्ञोऽपि इदं कर्तव्यं भवति यथा ते, क्रुद्धाः न भवेयुः तथा तेषां अनुसरणं राज्ञा कर्तव्यम्। तदनुसरणे राज्ञां गुरुभक्तिः विनयः न्यायप्रियता च प्रकाशिता भवति जनेषु। "अश्माऽपि याति देवत्वं महद्भिः सुप्रतिष्ठितः" इत्युक्तरीत्या श्रोत्रियैः विद्वद्भिः यदा अभिषिच्यते राजा तदा लोकेन देवत्वेन स मन्यते परन्तु यदाऽयं प्रमादी भवति तदा तेजोविनाशं पर्यालोच्य यदि राजानं मन्त्रिणो निगृह्णन्ति तर्हि न तत्कर्म दोषावहम् इत्यतः श्रोत्रियाःअकामहताः भारतीयराजनीत्या राजशासकत्वेन कल्पिताः।

किञ्च श्रोत्रियाणामकामहतत्वात् पूर्णसात्विकत्वाच्च प्रकारान्तरेण तेषु ईश्वरत्वमेव ऐश्वर्यरूपं प्रकाशितं भवति। पुनस्तेषां वागपि अव्यभिचरितफलभगिनी भवति तदाहुः "ऋषीणां पुनराद्यानां वाचमर्थोनुधावति"। इति। अतः ईशः श्रोत्रियो वा यथा क्रुद्धो न भवेत् तथा राज्ञा यतितव्यम्। एतेन देशे त्रयीमनुसृत्य राज्यव्यवस्थायां सञ्चालितायां सत्यां प्रमादः अव्यवस्था वा न कथमपि भवेत् इति हृदयम्। प्रपञ्चितचैतत् ४ अध्यायेऽपि "वानप्रस्थ" इत्यादिग्रन्थेन। बक्ष्यते च ७ माध्यायेऽपि "अधर्मसंयुक्त"मिति ग्रन्थेन।

### हर्षवातापिनाशयोः संबन्धः

**वातापिरिति** ( पृ० ३७ ) ननु हर्षेण सह वातापिनाशस्य कः संबन्धः। इति चेदुच्यते-आत्मनि गर्वभावे जागरूके सति गर्विष्ठः पुरुषः शास्त्रसम्मतमुचिताहँ कर्मानुतिष्ठन्तं दृष्ट्वा स्वाभिलषितविपरीतं जानन्नपहसति, गर्वापहासयोः विभावानुभावत्वात्। तदुक्तम् भाव प्रकाशने—

"गर्वो विद्याबलैश्वर्य वयोरूपधनादिभिः।
असूयाऽमर्षपारुष्यापहासगुरुलङ्घनैः" ॥ इति

उत्कृष्टं प्रति अपहासो हर्षे समुदिते सति नीचैः गर्विष्ठैः क्रियते इति साहित्यशास्त्रे रसमहार्णवे व्यक्तम्। अस्य हासस्योदाहरणं मानसरामायणे एवं प्रदर्शितं वर्तते। "खेल परिहास होई हित मोरा"। इति। अत्राऽयं भावः—संस्कृत ग्रन्थमधीत्यापि अहं (तुलसीदासः) भाषायां प्रबन्धं रचयामीति एतत्कर्म मे-स्खलितम् अनुचितञ्चेति जानानाः खलाः मां हसिष्यन्ति हर्षात्, तर्हि तदिदं तेषामुपहसनं मे हितायैवेति। अर्थात् कस्यचिदाचरणमनुचितं दृष्ट्वा दुर्जनाः हृष्यन्ति हसन्ति च। सुजनास्तु यदि केनचिदपि कोदृशमपि कृतं कर्म प्रमाणप्रमितमस्तीति जानन्ति तर्हि उल्लसन्ति। यदा किल तदेव कर्म प्रमाणविरुद्धं पश्यन्ति तदा ते लज्जन्ते। इत्येवमेतद् विषये सुजनखलयोरन्तरमस्ति। प्रकृते ब्राह्मणा "बुभुक्षवः श्राद्धं भोक्तुं समीहन्ते न विचारयन्ति इत्यहो तेषां मूर्खता, न वा अस्मत्कर्म गृह्यमेते प्रजानन्ति इत्यहो एषां मूढता"। इत्येवं जानन् वातापिः हृष्यति अपहसति च। एवमुपहाससुखमनुभवन् वातापिः श्राद्धभोजिनामुदराणि विदार्य मांस भुक्तवान्

एते चान्ये च बहवः शत्रुषड्वर्गमाश्रिताः ।
सबन्धुराष्ट्रा राजानो विनेशुरजितेन्द्रियाः ॥ ७ ॥

[ जितेन्द्रियानुभाव्यसौख्ये निदर्शने ]

शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेन्द्रियः ।
अम्बरीषश्च [1]नाभागो बुभुजाते चिरं महीम् ॥ ८ ॥

इति विनयाधिकारिके इन्द्रियजये अरिषड्वर्गत्यागः
षष्ठोऽध्यायः

---

## जयमङ्गलाक्रोडपत्रम्

इल्वल इति (पृ० ३७) अतस्तदत्याशितैः इत्युक्तम् यथा, तथा अन्यदपि स्मर्तव्यम्—

"अगस्त्यं कुंभकर्णं च शनिञ्च वड़वानलम्
आहारपरिपाकार्थं स्मरामि च वृकोदरम् ।
आतापिर्मारितो येन वातापिश्च निपातितः ।
समुद्रः शोषितो येन समेऽगस्त्यः प्रसीदतु ।
भोजनं मम जीर्यताम्" । इति ।

## श्रीमूला

उक्ता राजान उपलक्षणम् , अन्येऽपि बहव आसन्नित्याह—एत इत्यादि ।

अरिषड्वर्गस्यान्वयेऽनर्थं निदर्श्य व्यतिरेके निःश्रेयसप्राप्ति निदर्शयति शत्रुषड्वर्गमित्यादि । जामदग्न्यः परशुरामः । नाभागो नभगसूनुः ।

इति कौटिलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे
षष्ठोऽध्यायः इन्द्रियजये अरिषड्वर्गत्यागः ॥

## वैदिकसिद्धान्तसंरक्षिणी

अनुचितकामादिसेवने मूलोच्छित्तिरूपं दोषं प्रदर्श्य शत्रुषड्वर्गविजये फलमाह जामदग्न्य इति । राजकुलीनत्वाभावेऽपि नीतिमर्यादया वर्तनशीलेन मही भोक्तुं शक्या इति प्रदर्शयितुं ब्राह्मणोदाहरणम् ।

**नाभागः** नभगपुत्रः ।

इति श्री वैदिकसिद्धान्तसंरक्षिण्यां षष्ठोऽध्यायः समाप्तः ।

---

१ नी० टि० **नाभाग इति** । नाभागपुत्रः ।

## जयमङ्गला

सर्वत्रापीदमुदाहरणं दढयार्थम् उपसंहरन्नाह—एते चेति । अन्ये चेति ऐकान्तिकत्वं दर्शयति । शत्रुषड्वर्गमिति षण्णां कामादीनां वर्गः, स च शत्रुकल्पत्वाच्छत्रुरिति शत्रुषड्वर्गस्तम् । आश्रितास्तद्वशा इत्यर्थः । ते चान्त ( र ? रा ) बाह्यशत्रुभ्यो बलवन्त इति निश्चयः । येन सबन्धुराष्ट्रा अपि विनेशुः ॥

शत्रुषड्वर्गमिति । उत्सृज्य निर्बलीकृत्य । जामदग्न्यो जितेन्द्रियः । असत्यपि राजबीजत्वे जितेन्द्रियत्वादेव केवलात् । अम्बरीषश्च नाभागो नभगस्यापत्यम् आश्रमस्थितावित्युत्साहरहितौ । बुभुजाते भुक्तवन्तौ । अत्र फलोपभोगादात्मनेपदम् । चिरमित्यव्यवच्छिन्नाम् । महीमिति महाफलत्वमिति दर्शयति ॥ इति

इन्द्रियजये अरिषड्वर्गत्यागः ॥

षष्ठोऽध्यायः ॥

## जयमङ्गलाक्रोडपत्रम्

### शोकादीनामरिषड्वर्ग अन्तर्भावः

षण्णां कामादीनामिति । कामाद्याः षट् सर्वस्य जगतः सञ्चालने स्थायिनो भूत्वा उपयुक्ता वर्तन्ते तथैव हासादिस्थायिभावा अपि । तेपि कामादिष्वेव अन्तर्भावनीयाः । तत्र कामे शृङ्गारः, माने रौद्रः, मदे भयानकः, लोभे हर्षः, हर्षे हास्यं इत्येवं बोध्यम् । शेषंस्पष्टम् ।

षडिति । ननु अत्र शोकः कुतो न गृहीतः ? सत्यं । शोकः द्वेषे अन्तर्भूतः इति न तस्य पृथगुपन्यासः । तदुक्तं गोकुलनाथोपाध्यायैः—

"प्रतियोगिनि प्रीत्या तन्नाशासहिष्णुत्वलक्षणो द्वेषः प्रथमः, द्वितीयस्तु दुःखसाधनविपदुपनिपातगोचरः । तत्राद्यः करुणस्य प्रकृतिः सहि द्वेषांशे दुःखमयोऽपि रत्यंशाह्लादसंवेदात् मुखदन्तव्रणादिरिव"स्वदते ॥ इति

तदनुसारेण प्रतियोगिनि प्रीत्या तन्नाशासहिष्णुत्वलक्षणद्वेषवासना शोकः । द्वेषश्च क्रोधे अन्तर्भवति । तदुक्तं जयमङ्गलायाम् "द्वेषः क्रोध, इति । (नो०सा०१) अतः क्रोधस्त्याज्यः इत्यनेन शोकोऽपि त्याज्यः इति सिद्धम् । अत्रेदं बोध्यम् । इमे सर्वेऽपि आभासाश्चेत् सर्वथा त्याज्याः । औचित्यभावं प्राप्ताश्चेन् न इत्यपि सुवचः । प्रकृतस्थले च दाण्डक्यादिराजभिः शास्त्रमतिलङ्घ्य कामादयोः यदा सेविताः तदा तेषां राज्यं विनष्टम् । अतः रसाभासः सर्वथा त्याज्यः । यथा दाण्डकयस्य कामः शृङ्गाराभासः, जनमेजयस्य उत्साहः वीराभासः, ऐलस्य लोभो हर्षाभासः, वातापिचरित्रं हास्याभासस्योदाहरणम् । इत्येवं यथायथं बोध्यम् ।

इति जयमङ्गलाक्रोडपत्रे षष्ठोऽध्यायः समाप्तः ।

# सप्तमोऽध्यायः

## शास्त्रार्थानुष्ठानम्[1]

### [ राज्ञा अभ्यसनीयाः अंशाः ]

तस्मादरिषड्वर्गत्यागेनेन्द्रियजयं कुर्वीत, वृद्धसंयोगेन प्रज्ञां, चारेण चक्षुः[2], उत्थानेन योगक्षेमसाधनं, कार्यानुशासनेन[3] स्वधर्मस्थापनं, विनयं विद्योपदेशेन, लोकप्रिय(त्व)मर्थसंयोगेन, हितेन [4]वृत्तिम् ॥

---

### श्रीमूला

अस्मिन्नध्याये राजर्षिवृत्तमुच्यते। राजैव सन् य ऋषिः जितेन्द्रियः स राजर्षिः।

तस्मादित्यादि। तस्माद् अरिषड्वर्गत्यागस्य श्रेयस्साधनत्वात्। वृद्धसंयोगेन प्रज्ञां कुर्वीत उत्पादयेत् विकासयेच्च। चारेण चक्षुः कुर्वीत गूढपुरुषं चक्षुस्स्थाने कुर्यात् स्वपरराष्ट्रवृत्तप्रत्यक्षीकरणार्थम्। उत्थानेन उद्योगेन, उत्थानमुद्योगः अनुष्ठानमिति पर्यायाः, योगक्षेमसाधनं योगक्षेमसम्पादनम्। कार्यानुशासनेन स्वधर्मस्थापनम् इदमीदृशमित्थं कर्तव्यमित्याज्ञापनेन स्वधर्मे लोकस्य नियन्त्रणम्। अर्थसंयोगेन लोकप्रियत्वम् अर्थस्य धनस्य स्वीकरणेन समुचितेषु पात्रेष्वर्पणेन च जनप्रियत्वम्। हितेन वृत्तिं तदात्वायत्योर्यत् पथ्यं तेन लोकयात्राम्। कुर्वीतेति सर्वत्रानुषङ्गः।

### वैदिकसिद्धान्तसंरक्षिणी

शास्त्रेति। इन्द्रियजय इत्यर्थः। तदुक्तं जयमङ्गलायां-शास्त्रेत्यादि। तस्मादिति। अरिषड्वर्गत्यागमहीभोगयोः अन्वयव्यतिरेकाभ्याम्। इन्द्रियजयं—शास्त्रार्थानुष्ठानम्। एतेन सामान्यं विधाय विशेषविधिमाह वृद्धसंयोगेनेति। मन्त्रिपुरोहितादिविद्यावृद्धसंयोगेनेत्यर्थः। प्रज्ञां—अष्टगुणसंपन्नाम्। कुर्वीतेति

---

अशुद्धम्

१ शास्त्रानुष्ठानम्

मूले शास्त्रार्थानुष्ठानमित्युक्तत्वान्मूलपाठः शोधितः।

मूले राजर्षिवृत्तमिति गणपतिशास्त्रिणः पठन्ति। अयं पाठः जयमङ्गलासम्मतो नाऽस्ति। नापि च टिप्पणीसम्मतः। शेषं क्रोडपत्रे (४३) द्रष्टव्यम्।

नो० टि० २ चक्षुरिति। चक्षुरिन्द्रियकार्यम्।

,, ,, ३ अनुशासनेति। वर्णाश्रमाणामनुष्ठानानि तेषां शासनेन शिक्षणेन दण्डनेन वा।

,, ,, ४ वृत्तिमिति। कुर्वीतेति सर्वत्र योज्यते।

## वैदिकसिद्धान्तसंरक्षिणी

सर्वत्र अनुषज्यते उत्पादयेदिति भावः। एवमेव यथायथमग्रेऽपि बोध्यम्। तदुक्तं टिप्पण्यां—"कुर्वीतेति सर्वत्र योज्यते" इति।

चारेणेति—चाराभिन्नम् चक्षुः तस्य इन्द्रियकार्यत्वात्। तदुक्तं टिप्पण्याम्—'चक्षुरिन्द्रियकार्यम्' इति।

उत्थानेन उत्साहेन अभिमतचरित्रोपदेशेन। तदुक्तम्—उत्थानमुत्साहो व्यवसाय इत्येकार्थः। इति। (नी० सा० १४ स०) योगक्षेमसाधनम्—आत्मनः प्रकृतीनां चेति शेषः। योगक्षेमयोः अलब्धलाभरक्षणयोः साधनं प्राप्तिम्। कुर्वीत इति पूर्वतः अनुवर्तनीयम्। कार्यानुशासनेन गुरूपदिष्टेन। तदुक्तम् टिप्पण्याम् "वर्णाश्रमाणामनुष्ठानानि तेषां शासनेन शिक्षणेन दण्डनेन वा" इति, विद्वद्भिः अद्वेषरागिभिः हृदयाभ्यनुज्ञातेन इति यावत्। स्वधर्मस्थापनम् त्रयीस्थापना (खं० १ अ० ३) ऽध्यायोक्त तत्तद्वर्णाश्रमधर्मस्थापनम्। विनयः सत्वमित्यर्थः। विद्योपदेशेन धर्मशास्त्रविहितेन अर्थानुष्ठानात्मकेन[1]।

लोकप्रियत्वं लोकस्य सुखमिष्टवस्तुदर्शनजन्यम्। भृत्यभरणीयेन अर्थसंयोगेन दानद्वारा इति शेषः। तद्वक्ष्यति "अर्थेन संयोगोऽस्मिन् वृत्यर्थं संयोगो भृत्यभरणीय"मिति। हितेन पथ्याहारादिना व्यसनत्यागेन च। वृत्तिं वर्तनम् कुर्वीतेति शेषः।

### जयमङ्गला

शास्त्रार्थानुष्ठानं वेति द्वितीयमिन्द्रियजयमधिकृत्याह। तत्र स्वशास्त्रोक्तानामर्थानां यथासारमुद्धृत्य शिष्यहितार्थमाह—तस्मादिति। यस्मादरिषड्वर्गमुत्सृज्य बुभुजाते चिरं महीन्तस्मादरिषड्वर्गत्यागेनेन्द्रियजयङ्कुर्वीत शास्त्रार्थानुष्ठानङ्कुर्वीतेत्यर्थः। तदेव दर्शयन्नाह—वृद्धसंयोगेन प्रज्ञामिति। अनेन मन्त्रिपुरोहितोत्पत्तिमन्त्राधिकारिकान् शास्त्रावयवान् सूचयति। तेषु हि सर्वत्र वृद्धैः संयोगः तेन प्रज्ञामतिशयवतीङ्कुर्वीतेति वर्तते। तेन प्रश्नविवादसंवादादिना यथा प्रज्ञा (नं ?) न तथा अध्ययनश्रवणाभ्याम्। यथोक्तम्—

> साक्षात् पार्श्वस्थितान् पृच्छेल्लेखैस्त्वन्यांस्तथास्य तैः।
> प्रकाशो बहुभिर्धी[2]भिरुल्का[3]भिरिव[4] वर्धते"। इति।

---

१ तदुक्तं—उपदेशादनायोगात् वासनानुगमादपि।
परयत्नाद् अदृष्टाद्वा सर्वाः सर्वस्य वृत्तयः॥

नहि इदं कुरु इदं मा कार्षीरिति वाचैव श्रोतॄणां शब्दार्थप्रतिपत्तॄणां उपदेशः। किं तर्हि अनुकर्तॄणां नाप्तोपदेशवद् उपदेशः। ( अ० १ ज० मं० पृ० )

अशुद्धम्

२ बहुभि (र्धृति घो-भिः)

३ रुक्ता (ल्का)-भिरि (शेषं क्रोडपत्रे ४७ पृ० द्रष्टव्यम्।)

४ व-(र्ध्य-र्ध)-ते

## जयमङ्गला

चारेणेति। गूढपुरुषोत्पत्तिप्रणिधोनेव चक्षुः कुर्वीत। दूरदर्शी स्यादिति। अन्यदेव चारात्मकञ्चक्षुः कुर्यादित्यर्थः। अलं च लौकिकं चक्षुरिति। उत्थानेनेति। राजप्रणि-विविहितनोद्योगेनात्मनः प्रकृतीनाञ्च योगक्षेमसाधनङ्कुर्वीत न भृत्योद्योगमत्रेण[1] तथा चोक्तम—

राजा तूत्थीयते न स्वैः स्वयं कार्येष्वनुत्थितः।
न ह्युद्योगोऽस्ति गात्राणामनुद्युक्तेऽन्तरात्मनि॥ इति।

प्रधानाचरणाच्चेतराचरणम्। तथा चोच्यते—

यद्यदाचरति श्रेष्ठस्ततदेवेतरो जनः।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते॥ इति

कार्यानुशासननेनेति। धर्मस्थीयोक्तेन व्यवहारानुष्ठानेन लोकस्य स्वधर्म-स्थापनं कुर्वीत न स्वेच्छया। तुष्टि[2] नापचरति। तत्रापि विनयमनुशासनं महान्तमल्पं वा विनयं विद्योपदेशेन धर्मार्थशास्त्रविहितेन कुर्वीत, न स्वेच्छया। लोकप्रियमर्थसंयोगेनेति। अर्थेन संयोगोऽस्मिन्नित्यर्थसंयोगो भृत्यभरणीयम् तेन लोकप्रियं लोकसुखङ्कुर्वीत। न साम्ना सुचरितेन वा लोकः प्रीयते यथाऽर्थेन संयुज्यमान इति। तथा चाहुः—

अर्थस्य पुरुषो दासः। इति।

हितेन पथ्याहारविहारेण व्यसनत्यागेन च शरीरस्य राज्यस्य च वृत्तिं वर्तनं कुर्वीतेति। अयं प्रवृत्तिरूप इन्द्रियजयः।

## जयमङ्गलाक्रोडपत्रम्

### सङ्गतिः

शास्त्रार्थानुष्ठानमिति (पृ० ४२) ननु षष्ठाध्यायसप्तमाध्याययोः सङ्गतिः कीदृशी ? इति चेदभिधीयते।

पूर्वं हि इन्द्रियजयः शास्त्रार्थानुष्ठानत्वेन प्रतिपादितः। अत्र तु तं शास्त्रार्थं कथमनुतिष्ठेत् ? किञ्च तत्फल ? मित्याकाङ्क्षोपशमनाय शास्त्रार्थानुष्ठानमिति सामान्येनोपदिष्टस्य विशेषेणाभिधानम् इत्येवं सङ्गतिर्बोध्या।

---

अशुद्धम्

१ कुर्वीत मात्रेण

अयं पाठः "राजानमुत्तिष्ठमानमनूत्तिष्ठन्ते भृत्याः" इत्यादि मूलकृदुक्तात् १९ अध्यायवाक्यात् संशोधितः।

तथा चोक्तम्-यथान्तरात्मा प्रकृतीरधिष्ठितश्चराचरं विश्वमिदं समश्नुते।

**तथा नरेन्द्रः प्रकृतीरधिष्ठितः चराचरं विश्वमिदं समश्नुते** नी० सा० ३।७५ इति।

२ अशुद्धम्.

तुष्टि (तृषा)

## जयमङ्गलाक्रोडपत्रम्

### शमोदयोपयोगः

एतेनेदं ज्ञायते कुलीनो ऽकुलीनो वा भवतु, ब्रह्मज्ञो वा अब्रह्मज्ञो वा स सर्वोपि यदि अरिषड्वर्गजयोपायं सम्यक्तया बुद्ध्वा नीतिमनुतिष्ठति तर्ह्येव स सफलो भवति। अतः इन्द्रियजयप्रकरणं कौटिल्येनारब्धम्। तत्र कर्णादीनां स्वेषु स्वेषु विषयेषु अविप्रतिपत्तिः इन्द्रियजयः षष्ठाध्याये उक्तः। तेन नीत्यनुष्ठातॄणां कृते शमः अपेक्षितः इति ज्ञायते, शमवद्भिरेव अपक्षपातिभिः लोकसङ्ग्रहस्य शक्यत्वात्। यावत्पर्यन्तं शमस्य उदयो न भवति तावत्पर्यन्तं विषयादिन्द्रियाणां प्रत्याहरणं न कथमपि संभवति। असंभूते तस्मिन् इन्द्रियजयस्य असंभवात्। तदेतत् शमस्वरूपे अवगते स्फुटं भवति।

### शमः

तथाहि – 'प्रवृत्यजनकं ज्ञानमुपेक्षाबुद्धिः सा च इष्टसाधने बलवदनिष्टसाधनत्वावगाहिनो द्वेषद्वारा निवृत्तिं भावयन्ती शमसुखं जनयति। सैव वासनारूपेण परिणता बीभत्सप्रकृतिर्जुगुप्सेत्युच्यते[1]।

एतेन सुखसाधनतावासनया इन्द्रियाणां स्वेषु स्वेषु येषु अर्थेषु प्रवृत्तिर्भवति तत्र अनिष्टसाधनताया वासनया निवृत्तौ यदि सुखमुत्पद्यते तर्हि इन्द्रियाणां प्रत्याहारः समभूत् इति ज्ञातुं शक्यते। तथासति इन्द्रियजयः संपन्नः इति स्फुटं भवति। तदेतन्मतं न नीतिशास्त्रसम्मतमेव, अपितु भगवद्गीतासम्मतमपि वर्तते। तदुक्तम्–

"प्रसादे सर्वदुःखानां हानिरस्योपजायते"[2]। इति।

### शमसुखोदाहरणम्

न चेदं शास्त्रमात्रमिति शङ्क्यम्, निन्दितपदार्थग्रहणं प्रति हितसाधनता—वासनया प्रवृत्तस्य बालकस्य चेतसि तस्मिन् निन्दितवस्तुनि दोषवासनामुत्पाद्य मात्रादिभिः संपादितायां ततो निवृत्तौ बालकस्य सुखसाधनताबुद्ध्युत्पत्तेः दर्शनात्। स्फुटं चैतत् –

"कर्मणैव हि संसिद्धिमास्थिता जनकादयः"।

इति पद्यस्य आचार्यादिभिः कृतेन व्याख्यानेन[3]।

---

१ काव्यप्रकाशविवरणे उक्तम् (का० प्र० वि० च० उ०) गोकुलनाथोपाध्यायैः।

२ शां० भाष्ये—प्रसाद इति। प्रसादे सर्वमाध्यात्मिकादीनां हानिर्विनाशोऽस्य यतेरुपजायते। किञ्च प्रसन्नचेतसः स्वस्थान्तःकरणस्य हि यस्मादाशु शीघ्रं बुद्धिः पर्यवतिष्ठते आकाशमिव परे समन्तादवतिष्ठते आत्मस्वरूपेणैव निश्चलीभवतीत्यर्थः। एवं प्रसन्नचेतसोऽवस्थितबुद्धेः कृतकृत्यता अतस्तस्माद्रागद्वेषवियुक्तैरिन्द्रियैः शास्त्राविरुद्धेष्ववर्जनीयेषु युक्तः समाचरेदिति वाक्यार्थः इति।

३ शां० भा०—कर्मणैवेति। कर्मणैव हि यस्मात्पूर्वे क्षत्रिया विद्वांसः संसिद्धि मोक्षं गन्तुमास्थिताः प्रवृत्ता जनकादयो जनकाश्वपतिप्रभृतयः। यदि ते प्राप्तसम्यग्-

**जयमङ्गलाक्रोडपत्रम्**

**शमप्रकृतिनापि शास्त्रार्थोऽनुष्ठेयः**

न च इन्द्रियप्रत्याहरणेन शमसुखमनुभवतः पुरुषस्य किं शास्त्रार्थानुष्ठान प्रयोजनेन ? इति शङ्क्यम्, गीतायामेव दत्तोत्तरत्वात् । तथा चोक्तम्—

नानवाप्तमवाप्तव्यं वर्त एव हि कर्मणि[1] ॥ इति ।

तथा च ब्रह्मज्ञो भूत्वा शास्त्रविरुद्धमनुतिष्ठेत् अनुतिष्ठेयम् वा तर्हि सङ्करस्य कर्ता भूत्वा प्रजाहननापराधी स्यात्, स्यां च, तन्मा भवतु इत्येव श्रीकृष्ण-स्याभिप्रायः । अतो यथावन् नीतिरनुष्ठेयैवातो ब्रह्मज्ञेनापि शास्त्रोदितः पन्थाः अवश्यमनुसर्तव्यः ।[2]

अरिषडवर्गजयः शास्त्रार्थानुष्ठानोपयुक्ततया पूर्वाध्याये निरूपितः । तं सम्यक् बुध्वा नीत्यनुष्ठानकर्म शास्त्रार्थोऽनुष्ठेयः । स च किं फलं प्रयच्छति इत्यभिधातुं सङ्गतिप्रदर्शनमुखेनाह शास्त्रार्थानुष्ठानं वेतीति बोध्यम् ।

**राजर्षिवृत्तमिति पाठविचारः**

मूले राजेति । यद्यपि अयंपाठः गणपतिशास्त्रिभिः प्रकाशितः उपलभ्यते । तथापि तत्र औचित्यं किमस्तीति चिन्तनीयमेव । राजानमधिकृत्य इदं प्रवृत्तं शास्त्रं मध्ये एव राजर्षिवृत्तमभिदध्यात् तर्हि अग्रिमाणि सर्वाणि विधानानि सङ्क्षिप्य राजर्षिवृत्तपदेन सङ्गृहीतानि भविष्यन्ति । तदा "राजवृत्तिरि"ति प्रथमाधिकरणसूत्रेण प्रतिज्ञाता राज-वृत्तिः एतस्माद्राजर्षिवृत्तात् अन्या इति बुद्धिः समुदियात् । तस्मात् राजर्षिवृत्तमिति पाठः न समुचितः । किं बहुना शास्त्रार्थानुष्ठानमिति सूत्रमत्र सङ्क्षिप्य स्वीक्रियते तर्हि कौटिल्येन अस्मिन्नर्थशास्त्रे अत्र वक्ष्यमाणः सम्पूर्णोऽर्थः सङ्क्षिप्य सङ्गृहीतः स्यात् इति ।

**यथासारमिति** (पृ० ४२) । अनेन कौटिल्योक्तः सर्वोऽपि शास्त्रार्थः अनुगमय्य प्रदर्शितः । मन्त्राधिकारिकानिति ( पृ० ४२ ) धीसचिवानित्यर्थः । अमात्यानां कर्मसचिवत्वात् तेऽत्र न विवक्षिताः ।

---

दर्शनास्ततो लोकसङ्ग्रहार्थं प्रारब्धकर्मत्वात्कर्मणा सहैवासन्न्यस्यैव कर्मसंसिद्धि-मास्थिता इत्यर्थः । अथाप्राप्तसम्यग्दर्शना जनकादयस्तदा कर्मणा सत्वशुद्धिसाधन-भूतेन क्रमेण संसिद्धिमास्थिता इति व्याख्येयः श्लोकः । अथ मन्यसे पूर्वैरपि जनका-दिभिरप्यजानद्भिरेव कर्तव्यं कर्म कृतं तावता नावश्यमन्येन कर्तव्यं सम्यग्दर्शनवता कृतार्थेनेति । तथापि प्रारब्धकर्मायत्तस्त्वं लोकसङ्ग्रहमेवापि लोकस्योन्मार्गप्रवृत्ति-निवारणं लोकसङ्ग्रहस्तमेवापि प्रयोजनं संपश्यन् कर्तुमर्हसि । इति ।

१ शां० भा०—न मे मम पार्थ नास्ति न विद्यते कर्तव्यं त्रिष्वपि लोकेषु किञ्चन किञ्चिदपि । कस्मात् नानवाप्तमप्राप्तमवाप्तव्यं प्रापणीयं तथापि वर्त एव च कर्मण्यहम् । २२ । इति ।

२ तदेवोक्तम्—यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः

स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ इति ।

## जयमङ्गलाक्रोडपत्रम्

**अतिशयवतीमिति** ( पृ० ४२) नित्येन विद्यावृद्धसंयोगेन अतिशयवतीमुद्बुद्धदृढतर संस्कारविशिष्टां प्रज्ञामुत्पादयेत् । तेन स्मृतिः प्रत्यक्षायमाणा भवति अन्यथा "क्षणाद्‌ध्वंमतार्किकाः" इति स्थितिः स्यात् । तन्मा भवतु इत्येतदर्थं स्मृतिदार्ढ्याय गौतमेन विद्यावृद्धसंयोगस्य आवश्यकत्वमभिहितम् । तदुक्तम् —'तं गुरुशिष्यसब्रह्मचारिशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयादि''ति ।

**प्रश्नेति** (पृ० ४२) तत्वावगमाय प्रश्नः उपयुज्यते । तदुक्तं गीतायाम्—

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः[1] । इति ॥

**संवादादिनेति** ( पृ० ४२ ) संवादस्य प्रतिभाप्राप्त्युपयोगित्वमस्तीति प्रागुक्तं (खं० २ पृ० ४५) गौतमसूत्रोक्तं ज्ञेयम् । यथा यद्वाञ्छया ईशं सेवकः नमति सेवते वा तस्मै सः अभिलषितमर्थं प्रयच्छति तन्न्यायेन राजा यदि ज्ञानार्थी सन् वृद्धैः सह सङ्गच्छते संवदते वा तर्हि भगवानपि राज्ञे प्रज्ञां प्रयच्छति इति वृद्धसंयोगेन राज्ञा विद्यारूप फलं प्राप्यते । तदाह **यथेति** ।

### साक्षात्पद्यपाठः

**साक्षादिति** (पृ० ४२) । अत्र ज्ञानस्य सत्वगुणात्मकत्वमुक्तं वर्तते —
सत्वस्य च तैजसत्वं, "सत्वं, लघु प्रकाशक"मित्युक्तत्वात् । स एव सिद्धन्तः—
अत्रापि स्थिरीकृतः दृश्यते, तेजसः दृष्टान्तत्वेन उपवर्णितत्वात् । उल्काभिरित्युक्तं सङ्गच्छते तस्मात् एतत्पाठनिर्णये भावप्रकाशनोक्तः सिद्धान्तः आधारीकृतः ।

### विद्यावृद्धसंयोगविधानपौनरुक्त्यम्

ननु पञ्चमेऽध्याये "नित्यश्च विद्यावृद्धसंयोगः" इति ग्रन्थेन विद्यावृद्धसंयोगः उक्त एव । पुनरत्र को विशेषः अनेन विधानेन ? इति चेदुच्यते । पूर्वं विद्वांसः पुराणादिना राजानं प्रति तदर्थस्य श्रावयितारो भविष्यन्ति, न ते राज्ञा सह संवदेयुः । इत्यभिप्रायेण तथाविधविद्वत्संयोगः पञ्चमाध्याये उक्तः । अत्र तु तथाविधैः विद्यावृद्धैः सह संयोग उच्यते ये अमात्याः वर्तन्ते । अमात्यत्वं च तेषां "अमा — सह तिष्ठन्ति" इत्युक्त्या राजविदुषोः सामानाधिकरण्यं बोध्यम् । तदवक्ष्यति — "अमाशब्दोव्ययं सहार्थे कार्यानुष्ठाने राज्ञा सह भवन्तीति । अमेहक्वतसित्रेभ्यः त्यप्" । इति । साऽयं विषयः न्यायसङ्गतः इति मीमांसान्यायेन स्फुटीक्रियते ।

---

1 शा० भा०— तद्विद्धि विजानीहि । येन विधिना प्राप्यत इति । आचार्यानभिगम्य । प्रणिपातेन प्रकर्षेण नीचैः पतनं प्रणिपातो दीर्घनमस्कारस्तेन । कथं बन्धः, कथं मोक्षः, का विद्या का चाविद्या, इति प्रश्नेन, सेवया गुरुशुश्रूषयैवमादिना । प्रश्रयेण आवर्जिता आचार्या उपदेक्ष्यन्ति कथयिष्यन्ति ते ज्ञान यथोक्तविशेषणं ज्ञानिनः । ज्ञानवन्तोऽपि केचिद्यथोक्ततत्वदर्शनशीला, अपरे न, अतो विशिनष्टि तत्वदर्शिन इति । ये सम्यग्दर्शिनस्तैरुपदिष्टं ज्ञानं कार्यक्षमं भवति नेतरदिति भगवता मतम् । ३४ ।

## जयमङ्गलाक्रोडपम्

### विद्यावृद्धसंयोगविध्यन्तरकल्पने न्यायदर्शनम्

"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इति वाक्येन विश्वेदेवदेवताको यागो विहितः। तत्राऽयं प्रश्नः यागोऽयं पूर्वं विहितः वैश्वदेवयागः अथवा अपर इति। तत्र एवं सिद्धान्तितं, यत् पूर्वत्र यागे विहिते तद्विधिवाक्येन इष्टसाधनतायामनुमितायां सत्यां पुनः सैवानुमितिः "वैश्वदेवी आमिक्षा" इत्यादि—वाक्येन न संभवितुमर्हति सिद्धसाधनात्, तस्मात् पूर्वविधिविहिताद् यागात् अपरविधिवाक्येन विहितो यागः भिन्नः। एवमेव 'मासमग्निहोत्रं जुहोति" इत्यत्र विहितमग्निहोत्रं "अग्निहोत्रं जुहोतो"ति विहिताद्यागात् भिन्नम् तथैव प्रकृतेऽपि पञ्चमाध्यायोक्ताद् विद्याग्रहणाद् भिन्नमेतदध्यायोक्तं विद्याग्रहणम्। अतएव वृद्धसंयोगेन प्रज्ञामित्यस्य वचनस्य तदंशस्य वा न वैयर्थ्यम्।

**चारेणेति** (पृ० ४३) अत्र धान्येन धनवानित्यादाविव तृतीय या अर्थः अभेदो बोध्यः।

### चरविभागदौर्बल्यम्

अत्रेदं बोध्यम् व्यसनापन्ने शासने विभागोऽयं दौर्बल्यमनुभवति। यथा तिब्बतसोमप्रदेशे चीनदेशेन सुरक्षापङ्क्तिः चीनभारतयुद्धात्पूर्वं ई० १९५८ निर्मिता १९६२ वर्षपर्यन्तं न ज्ञाता। चरविभागे स्थिरेन चरेण व्यवस्थितकार्ये कृते तु कीदृशो लाभो भवतीति श्री कविकुलगुरुकालिदासेन स्फुटीकृतमस्ति काममिति पद्येन[1]।

किञ्च—परस्परमविदितैः चरैः कृतस्यावेदनस्य एकवाक्यत्वे सति चरवाक्यं प्रमाणं भवति। तेन शब्दस्य पृथक्प्रामाण्यं साधितं भवति। तच् चरविकल्पप्रकरणे स्फुटीकरिष्यते।

भृत्येति। (पृ० ४३) ननु भृत्योद्योगमात्रेण कुतो न कार्यसिद्धिः इतिचेदाह प्रधानेति। "उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धयः" इत्युक्तत्वात् प्रधानः श्रेष्ठः प्रतिभावान् क्रियावान् तदाचरणाधीनत्वात् इतरचराणां अप्रतिभावत्वात्। उक्तार्थे प्रमाणं दर्शयति तथेति। (पृ० ४३) श्रेष्ठ इति। प्रधान अजडः इत्यर्थः[2]।

### उपरिबुद्धित्वं राज्ञः

अत्रेदं बोध्यम्। प्रधानः ज्ञानचक्षुष्मत्तावान् स्वतन्त्रः तज्जनितसंस्कारदार्ढ्येन

---

१ कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने।
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना॥

२ तदुक्तं गीताव्याख्याने—
यद् यदाचति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ।३।२१॥ इति

(शां०भा०) यद्यत्कर्माचरति श्रेष्ठः प्रधानस्तत्तदेव कर्माचरतीतरोन्यो जनस्तदनुगतः। किञ्च श्रेष्ठो यत्प्रमाणं कुरुते लौकिकं वैदिकं वा लोकस्तदनुवर्तते तदेव प्रमाणीकरोतीत्यर्थः। इति।

## जयमङ्गलाक्रोडपत्रम्

अविस्मरणशीलत्वान् न कदाचिदपि कर्तव्यं कार्यं विस्मरति । अपरे तु अप्रधानाः अप्रतिभावत्वात् तत्प्रयुक्तपारतन्त्र्याच्च प्रधानाधीना भवन्ति[1] । अतः भृत्या राजाधीना भवन्ति, राजा तु न भृत्याधीन इति सिद्धम् ।

### प्रधानाङ्गानां पोष्यपोषकभावः

एवंरीत्या प्रधानाप्रधानयोः स्वातन्त्र्ये पारतन्त्र्ये च सिद्धेऽपि प्रधानेन इदं तु अवश्यमेव स्मर्तव्यं यत् स स्वतन्त्रः सन्नपि अभीष्टस्योद्देश्यस्य साधनाय यान्यङ्गान्य-पेक्ष्यन्ते, तान्युपेक्ष्य न स्थातुमर्हति, अङ्गानां प्रधानक्रियां प्रति कारकत्वात् । 'कारकत्वमेवा- ङ्गत्व'मिति भाट्टदीपिकायां व्यक्तम्[2] ।

अतः प्रधानेनाङ्गानि पोष्यन्ते, प्रधानञ्च अङ्गैः संरक्ष्यते ।

### प्रधानस्य स्वातन्त्र्यम्

नन्वेवं प्रधानस्य किं तर्हि स्वातन्त्र्यम् ? इति चेत्, अङ्गानां प्रधानानुसरणमिति । अत्रोदाहरणम—सर्वा अपि आन्वीक्षिक्यादिविद्याः राजनीतिं तत्सेवकमात्मगुणसम्पन्नं राजानं वा प्रधानीकृत्य प्रवृत्ताः, अर्थात् सम्भूय सर्वा विद्याः राजनीतिं संरक्षितुम-भिलषन्ति, राजविद्या च तत्र तत्रोपयुक्तसमस्तविद्यापोषणार्थं दृढसङ्कल्पा सती आन्वीक्षिक्यादिविद्याः प्रचारयति पोषयति च । इत्येवं राजविद्या—तदितरविद्यानां च प्रधानाङ्गत्वम्[3] तथा सर्वत्र बोध्यम् ।

---

१ उक्तञ्चैतत्—'जाड्यमप्रतिपत्तिः स्यात् सर्वकार्येषु सर्वदा ।
प्रियाप्रियश्रुतैस्तत्तद्दर्शनैर्व्याधिभिर्भवेत् ॥
सुखदुःखाविवेकित्वमिष्टानिष्टानभिज्ञता ।
तूष्णीमप्रतिभा चाक्ष्णोरनिमेषोऽनवेक्षणम् ॥
अभाषणं पारवश्यमेतैर्जाड्यं निरूप्यते ।
इति ॥ (भाव प्र० १ अधि० पृ० १५)

२ तद् यथा—'अरुणया एकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति इत्यादौ यदेव अङ्गत्वलक्षणं तदेव शेषपदशक्यतावच्छेदकं, नान्यत् । तत्र अङ्गत्वं नाम पारार्थ्यम् । तच्च यदुद्देश्यप्रवृत्तैककृतिकारकत्वेन विहितं तदङ्गत्वम । स्वर्गोद्देश्येन प्रवृत्तपुरुषकृतौ यागानुकूलायां यागस्य कारकत्वेन विध्यन्वयात्तस्य लक्षणसमन्वयः''॥(३. १. २) इति ।

३ 'क्षात्रो धर्मो ह्यादिदेवात् प्रवृत्तः ।
पश्चादन्ये शेषभूताश्च धर्माः' ॥ इति ॥ महाभारते—
'आन्वीक्षिकीत्रयीवार्ताः सतोर्विद्याः प्रचक्षते ।
सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे ॥
दण्डनीतिर्यदा सम्यङ् नेतारमधितिष्ठति ।
तदा विद्याविदः शेषा विद्याः सम्यगुपासते ॥
वर्णाश्चैवाश्रमाश्चैव विद्यास्वासु प्रतिष्ठिताः ।
रक्षेत् ता रक्षणात् तासां तद्धर्मस्यांशभाङ् नृपः ॥
( का० ना० २ सर्ग, श्लो० ८-१०) इति ।

## जयमङ्गलाक्रोडपत्रम्

### प्रधानस्य स्वतन्त्रता

प्राधान्यं स्वतन्त्रस्य कथमित्युच्यते। सर्वेषामेव पदार्थानां तत्तत्क्रियां प्रति कर्तृत्वादिकारकत्वेन विनियोगे निर्णीतेऽपि तेषु कारकेषु यः चेतनः तमेवानुसरति जड़वर्गः तस्य ज्ञानेच्छाकृत्यभावात्। अतः जड़वर्गः चेतनाधीनः। चेतनवर्गेष्वपि- स्वस्वबुद्धितारतम्येन अपदाः सुपदाधीनाः, सुपदेषु च बहुपदाः ते द्विपदाधीनाः, द्विपदेषु अल्पज्ञाः स्वस्वबुद्धितारतम्येन अधिकाधिकसुज्ञाधीनाः, तेष्वपि मानवाः तेषु संस्कृताः विद्वांसः, तेष्वपि लोकज्ञाः, तेष्वपि कार्यज्ञाः। अत एव लोकज्ञः सर्वशास्त्रविन्नीतिपथप्रदर्शनकुशलः लोके कश्चिदेव भवतीति यदुक्तं तत्सत्यमेव। तदुक्तम्—

मानुषेष्वपि दुर्लभा पुरुषता पुंस्त्वे पुनर्विप्रता।
विप्रत्वे कृतविद्यता विद्यावतोऽर्थज्ञता॥
अर्थज्ञस्य वाक्यपटुता तत्रापि लोकज्ञता।
लोकज्ञस्य सर्वशास्त्रविदुषः धर्मे मतिर्दुर्लभा॥ इति।

एवंविधः सुज्ञः स्वतन्त्रस्सन् अपि 'प्रकृतिस्त्वां नियोक्ष्यति' इत्याद्युक्तत्वात् स्वस्वप्रकृत्यधीन एव भवति। प्रकृतयश्च स्थायिन्यो रतिहासशोकादेर्नातिरिक्ता भवन्ति। इति सर्वोपि वर्गः स्वभावपराधीन एव वर्तते। अतएव सर्वज्ञः सन्नपि आध्यात्मिकादिदुःखत्रितयमननुभवन्नपि शमप्रकृतिः पौनःपुन्येन अङ्गस्थानीयान् अल्पज्ञजनान् संरक्षितुं प्रवर्तते। तदर्थं च महतीं कृतिं करोति, पीडां च सहते। तत्र सर्वत्राऽपि कारण सर्वज्ञस्य स्वभाव एव स च स्वभावः शमात्मकः। तदुक्तम् भावप्रकाशने विनेत्यादिपद्येन।[1]

### शमप्रकृतिर्नीतिमान्

शमप्रकृतिः अविशेषतः दुःखिनो रक्षति यथा तथा नान्यः, अतः नास्तिकः आस्तिकः सर्वोपि वर्गः आत्मनो रक्षां कामयमानः सुशीलं गुणसंपन्नं शमप्रकृतिमेवानुसरति। इत्येवं स्वतन्त्रस्य शमप्रकृतेः सर्वज्ञस्य प्राधान्यम् तद्भिन्नप्रकृतेः अज्ञस्य अङ्गत्वं च सूपपन्नम्[1]। राजनीतिशास्त्रेणाऽपि यथा सर्वेषां सुरक्षा भवति तथा काम्यते तदर्थं च नीत्या शमप्रकृतिसंपन्नया विवेकवत्या सत्यव्रतपालयित्र्या शीलसत्वारोग्यास्तब्धत्वाचापल्यगुणसंपन्नया त्यागशीलया भाव्यम्। तत्स्वरूपं कीदृशमिति भारविणा उपवर्ण्यते तत्रैव द्रष्टव्यम्[2]।

---

१ विनारागेण सर्वत्र सुखिनामनुमोदनम्।
यथा शक्ति परित्राणं दुःखिनामविशेषतः। इति।

२ न तेन सज्जं क्वचिदुद्यतं धनुः कृतं न वा कोपविजृम्भमाननम्।
गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनम्॥ इति।

## जयमङ्गलाक्रोडपत्रम्

राजनीतिशास्त्रमर्यादायाः सोऽयं कार्यक्रमः सफलः भारतीयराजनीत्या प्रथमत एव साधितः। तदितरमतानुयायिनस्तु साम्यवादं शोधयन्त एव परिभ्रमन्ति परं फलं न प्राप्नुवन्ति। इति तु अन्यदेतत्। अतः "प्रधानाचरणाच्चेतराचरणमि"त्यत्र प्रधानः अजडः स्वतन्त्रः इति व्याख्यातम् (पृ० ४७)।

**कार्यानुशासनेनेति**। (पृ० ४३) एतेन धर्मस्थीयं संपूर्ण प्रकरणं स्मार्यते। तदेवाह **धर्मस्थीयेति**। न स्वेच्छयेति।

### स्वकल्पनेन धर्मस्थापने दोषः

ननु स्वेच्छया धर्मस्थापने को दोषः? इति चेत् परंपराप्राप्तस्य अर्थस्य अवरोधे सति मतिभावस्य विनाश एव महान्दोषः—मतिभावस्य स्वरूपं शास्त्रे नानेत्यादिना वर्णितमस्ति[1] —

### मतिभावो धर्मस्थापने हेतुः

तेनेदं स्फुटं भवति। यत् विदुषां विदग्धव्यवहारदर्शनमन्तरा सर्वसाधारणी प्रजा इदं कर्तव्यं इदं न कर्तव्यमिति निर्णेतुं न शक्ता। कर्तव्यविषये अनिर्णीतावस्थायां लोकस्य मर्यादा असुरक्षिता अनिर्णीता च भवति। तथा च सति जनः किङ्कर्तव्यविमूढतां प्राप्तः पारस्परिकसङ्घर्षणेन महान्तं विप्लवमनुभवेदिति कर्तव्यनिर्णयार्थं विदग्धव्यवहारःआवश्यकः। स च सन्तोषासमानाधिकरणश्चेन् न लोकस्य मनसि सन्तोषभावं सङ्क्रामयितुं शक्नोति। विदग्धव्यवहारे वैदग्ध्यं तदेव संपन्नम् यदा विदुषां मनसि पूर्णस्सन्तोषो भवेत्। स च वैफल्ये न संभवति, वैफल्यं च कार्यकारणभावज्ञाने अपूर्णे सति भवति। तत्पूर्णता च इदंप्रथमतया लौकिकप्रमाणैः न संभवति। इति शास्त्रस्याऽपि आधारः प्रमाणान्तरेषु अवश्यं स्वीकर्तव्यः। तेन च पूर्णज्ञानोपलब्धेः कर्मणः साफल्यानुभवात् ततः परलोकास्तित्वविषये विश्वासाच्च सन्तोषोपि पूर्णो जायते। ततः सत्यव्रतादिपरिपालने प्रतिज्ञावतां ततः पश्चात् पद-

---

१ नानाशास्त्रार्थनिष्पन्ना मतिःस्याच्छ्रुतिधारिणी।
संशयच्छेदनैः शिष्यहिताधानार्थदर्शनैः।
वर्ण्यते चित्तसन्तोषाद् विदग्धव्यवहारतः। (इति भा० प्र०)
अपूर्वप्रतिभानं स्यान् मतिस्तां तु विभावयेत्।
अन्वयव्यतिरेकोत्थैः प्रत्ययैः शास्त्रचिन्तनैः॥
ऊहापोहैश्च विविधैः अथ तामनुभावयेत्।
सन्दंशचतुराद्यैश्चकरैरुत्क्षेपणैर्भ्रुवोः।
नानाशास्त्रार्थविषयैः शिष्याणामुपदेशनैः।
तर्काख्यौ प्रत्ययावूहापोहौ विधिनिषेधयोः। इति (सं० रत्नाकर)




## जयमङ्गलाक्रोडपत्रम्

भाक्त्वं न कथञ्चिदपि आपद्यते इत्येवं विदग्धव्यवहारः विदुषां सन्तोषसंवृतः ज्ञेयः। तस्य च यथावत् दर्शनेन लोकेषु मतिरपि सङ्क्रमिता भवति। तेन मर्यादा सुरक्ष्यते तथासति शास्त्रप्रसूतं ज्ञानं मतिभावरूपतां गच्छति। विदग्धव्यवहारं सन्तोषं च अनुभावयति। तदिदं परंपराप्राप्तं शास्त्रं तेन विहितश्च परंपराप्राप्तः धर्मः यदि विनाश्येत तर्हि मतिभावोऽपि लुप्येत इतिः स्वेच्छया धर्मस्थापनं न भारतीयराजनीत्या अनुमन्यते[1]।

अतएव टिप्पणीकारेण "वर्णाश्रमाणामनुष्ठानादि तेषां शासनेन शिक्षणेन दण्डनेन वा" इत्युक्तम्। किञ्च राजवृत्त्या बोध्यमानऋणादानादिव्यवहारः सर्वोऽपि प्रायः कृत्वा पूर्वपरम्पराप्राप्त एव ग्राह्यः इति भूदेवमिश्रेणापि स्वकृते धर्मविजयनाटके प्रादर्शि[2]। तदिदं उपर्युक्तविवेचनेन समन्वितमेव भवति।

## राज्ञो लोकाविद्वेष्यत्वम्

अन्यच्च वृद्धसंयोगमनुतिष्ठता जातिपञ्चायतादिसंस्थाः जनपदे पृथक् संस्थाप्य तद्द्वारा लोकस्थितिं ततद्ग्राममर्यादां च पूर्वपरंपराप्राप्तां विज्ञाय अनुशासितं चेत् तस्य वैदग्ध्यं विख्यातं भवति नान्यथा, इति हेतुना राज्ञा जातिपञ्चायतादिकृतो निर्णयः परिपाल्यते, तद्विरुद्धं तु नानुमन्यते। अन्यथाकरणे राजा लोकविद्वेष्यः स्यादिति व्यवहाराध्याये प्रपञ्चितमस्ति[3]--

---

१ वर्णितञ्चैतत् कालिदासेनाऽपि रघुवंशे—१ सर्ग—
रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्—
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥ इति

२ तथाहि प्राड्विवाकः—अथ खलु चारमुखादष्टादशस्वपि व्यवहारविषयेष्वनृतेनोपजल्पतमिति। तदाकर्ण्य त्वरिततरं मां समाहूय राज्ञाऽऽज्ञप्तम्, यन्मध्यमामात्यो दण्डमुखैरस्माभिः सहस्रधोपालब्धोप्यद्याप्यनवहितस्तिष्ठति। इति तत्सविधे भवतापि ऋणादान-निक्षे-पास्वामिविक्रय-संभूयसमुत्थाना-दत्तानपाकर्माण्यभ्युपेत्या-शुश्रूषा-वेतनादान-संविद्व्यतिक्रम- क्रयविक्रयानुशय- स्वामिपालविवाद- सीमाविवाद-धर्मदण्ड- वाचिकपारुष्य- स्तेय-साहसस्त्रींपुंसधर्म- विभाग-द्यूताख्यानां तेषामवलोकने सावधानेन भवितव्यम्। इति। ( ४ अंक )

३ पाखण्डाः वेदोक्तलिङ्गधारणव्यतिरिक्ताः सर्वे लिङ्गिनः।
नैगमाः सार्थिका वणिक्प्रभृतयः पाशुपतादयो वा।
श्रेणयः एकशिल्पोपजीविनः। पूगा हस्त्यश्वरथारोहादयः।
नानायुधधरा व्राताः समवेतास्तु कीर्तिताः।
कुलानां हि समूहस्तु गणः संपरिकीर्तितः इति ॥ कात्यायनः—

## जयमङ्गलाक्रोडपत्रम्

### संस्थानिर्णयवैरूप्ये कर्तव्यम् ?

ननु पूर्वोक्तरीत्या राज्ञा समयपरिपालने कर्तव्ये तत्र तत्र जनपदे पृथक्तया अवस्थिताभिः संस्थाभिः कृतेषु निर्णयेषु वैरूप्यस्याऽपि संभवात् राज्ञा तत्समयः कथं परिपालयितुं शक्यः इति चेदुच्यते ।

### विद्वन्मतेन निर्णयः

यदि तत्तत्संस्थाभिः कृतः निर्णयः प्रमाणाभासरहितो वर्तते तर्हि स सर्वोऽपि निर्णयः प्रमाणस्य एकरूपत्वात् एकविध एव भवति । यत्र च प्रमाणप्रमितस्थलेऽपि विकल्पो भाति तत्र सर्वत्रापि मीमांसया विकल्पस्य अष्टदोषदुष्टत्वात् व्यवस्थित-विकल्पत्वं स्वीकृतं वर्तते । अतस्तथाविधस्थलेऽपि नानेकरूपत्वमिति आभास-राहित्ये न निर्णयेषु वैरुप्यं संभवितुमर्हति । अतः राज्ञा जातिपञ्चायतसंस्थायामपि विद्वन्मतस्यैव प्रामाण्यमवस्थाप्य तद्द्वारा कृतो निर्णयः परिपाल्यते न तु बहुमत-सङ्ख्यामात्रेण, तत्रैव वैरूप्यप्रसक्तेः । न हि सर्वोपि जनः मीमांसान्यायपद्धत्या शास्त्रेषूपलब्धानां वचनानां न्यायालये समादृतानां समस्तविधानानां वा तात्पर्यं निर्णेतुं शक्नोति । अतस्तन्निर्णयाय तत्र तत्र विवेकवन्तः अद्वेषरागिणश्च ब्राह्मणा एव विद्वांसः संस्थापिताः अर्थशास्त्र-कामशास्त्र-धर्मशास्त्रादिष्वपि । एवंविधानां विदुषां आनृण्यं संपादयितुं यदि जनवर्गः कामयते तर्हि तथाविधानां विदुषां प्रणतिमन्तरा कथमपि न संभवति तत् इत्यपि स्मर्तव्यम्[1] ।

---

द्वौ त्रयः पञ्च वा कार्याः समूहहितवादिनः ।
कर्तव्य वचनं तेषां ग्रामश्रेणिगणादिभिः ।। बृ०
विद्वेषिणो व्यसनिनः शालीनालसभीरवः ।
लुब्धातिवृद्धबालाश्च न कार्याः कार्यचिन्तकाः ।।
शुचयो वेदधर्मज्ञा दक्षा दान्ताः कुलोद्भवाः ।।
सर्वकार्यप्रवीणाश्च कर्तव्याश्च महत्तमाः ।। बृ०

एतद्व्यतिक्रमे दण्डमाह—

योग्रामदेशसङ्घानां कृत्वा सत्येन संविदम् ।
विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत् ।। इत्यादि ।
श्रेणिनैगमपाखण्डिगणानामप्ययं विधिः ।
भेदं चैषां नृपो रक्षेत्पूर्ववृत्तं च पालयेत् ।। इति व्य० प्र० १९२
संविद्व्यति० वीं० मि०

१ उच्चैर्गतिर्जगति सिद्धयति धर्मतश्चेत् । तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।। तेषां प्रकाशनदशा च महीसुरैश्चेत् । तानन्तरेण निपतेत्क्व नु मत्प्रणामः ।। इति चम्पूरामायणम्

## जयमङ्गलाक्रोडपत्रम्

### कार्यानुशासनेऽधिकर्ता विद्वान्

किञ्च कार्यानुशासनं केन कर्तव्यम्, येन स्वधर्मस्थापनं भवितुमर्हति इत्ययं महान् प्रश्नः। तत्रोच्यते-धर्मस्यालौकिकत्वात् अलौकिकार्थप्रतिपादकवचनानां यत्र तत्र प्रकीर्णत्वात् तेषां सर्वेषां समन्वयं कृत्वा यथावन्निर्णयनं न येन केनाऽपि कर्तुं शक्यं भवति। अतः कार्यानुशासनं विद्वद्भिरेव कर्तव्यं भवति। तदेवोक्तं मनुना—

विद्वद्भिः सेवितः सद्भिः नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत[1] ॥२।१। इति।

### मतिभावसङ्क्रमणेनानुशासनम्

अत्राऽयं भावः मतिभावस्य प्रजासु सङ्क्रमणं विना अनुशासनं न यथावत् प्रचारयितुं शक्यते तत्सङ्क्रमणार्थं उपर्युद्धृतमनुनिर्देशानुसारेण (पृ० ५३) विद्वांस एव अधिकारिणः संभवन्ति परन्तु यदा तत्कार्यं येन केनापि जनेन स्वेच्छया सञ्चालयितुमभिलष्यते तदा मतिभावो न प्रसृतो भवति न वा सन्तोषः अवलोक्यते नीत्यनुष्ठाने। तस्मादत्र अयं क्रमः, आदौ शास्त्रेण इष्टसाधनत्वं ज्ञेयम्, ततोऽन्वयव्यतिरेकाभ्यां शास्त्रोदितः साध्यसाधनभावः परीक्षणीयः, ततस्तदनुबन्धो इतिहासोऽपि। एवंविधचिन्तनेन अन्वयव्यतिरेकाभ्यां च यदा शास्त्रतात्पर्यं निर्णेयं भवति तदा मीमांसाऽपि विचारयितव्या भवति, तस्याः पूजितविचारात्मकतर्करूपत्वात्।

एवंरीत्या समस्तशास्त्रचिन्तनपुरस्सरमन्वयव्यतिरेकाभ्यां कृतः शास्त्रार्थ—निर्णयः शास्त्रसम्मतो भवति। एवंविधनिर्णयकुशलाः अनूचानाः यमर्थं निर्णयन्ति।

---

१ "विद्वद्भिरिति। विद्वद्भिर्वेदविद्भिः सद्भिर्धार्मिकैः रागद्वेषशून्यैरनुष्ठितः हृदयेनाभिमुख्येन ज्ञात इत्यनेन श्रेयःसाधनमभिमतम्। तत्र हृदयेनेति स्वरसात् मनोऽभिमुखी भवति। वेदविद्भिरिति इति विशेषणोपादानसामर्थ्यात् ज्ञातस्य वेदस्यैव श्रेयःसाधनज्ञाने कारणत्वं विवक्षितं, खड्गधारिण इत्युक्ते तस्य खड्गेनैव हनने प्राधान्यम्, अतो वेदप्रमाणकः श्रेयसाधनं धर्म इत्युक्तम्। एवंविधो यो धर्मस्तन्निबोधत।" इति। तथा याज्ञवल्क्येन—

श्रुतिः स्मृतिः सदाचारः स्वस्यच प्रियमात्मनः।
सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ ७ ॥ (अ० १ —याज्ञवल्क्यस्मृति।)

श्रुतिर्वेदः। स्मृतिर्धर्मशास्त्रम्। तथा च मनुः –२।१०-"श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः" इति। सदाचारः सतां शिष्टानामाचारोऽनुष्ठानम्। स्वस्य चात्मनः प्रियं, वैकल्पिके विषये यथा गर्भाष्टमेऽष्टमे वाब्दे इत्यादावात्मेच्छैव नियामिका। सम्यक्सङ्कल्पाज्जातः कामः शास्त्राविरुद्धो यथा" मया भोजनव्यतिरेकेणोदकं न पातव्यम् इति। एते धर्मस्य मूलं प्रमाणम्। एतेषां विरोधे पूर्वपूर्वस्य बलीयस्त्वम् ॥७॥

## जयमङ्गलाक्रोडपत्रम्

**स धर्मो नीतिश्च** भवति । तदुक्तम्—

सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः । इति ।

एवञ्च अद्वेषरागिभिः विद्वद्भिः हृदयेनाभ्यनुज्ञातं यत् तत् कार्यानुशासनमिति ज्ञेयम् ।

**नापचरति** इति । (पृ० ४३) प्रजा इति शेषः ।

मतिभावे प्रसृते प्रजायां सन्तोषात्मकः मतिभावानुभावो भवति । तेन च प्रजा राजानं नापचरतीति भावः । तस्यैवेदं निदर्शनं यत् मान्धाता सप्तभिर्दिनैः त्रैलोक्यं वशे स्थापयामास[1] ।

### आचार्यत्वम्

**धर्मशास्त्रविहितेनेति** । (पृ० ४३) धर्मशास्त्रविहितविद्योपदेशेन । अयं अनुष्ठात्मको बोध्यः । अत्राऽयंभावः । अहं धर्ममनुतिष्ठामि त्वमपि । ( शिष्योऽपि ) अनुतिष्ठ इति इत्येवमुपदेशः तथासत्येव उपदेष्टुः आचार्यत्वं सिद्धयति[2] ।

### विद्योपदेशलाभः

एवंरीत्या विदग्धव्यवहारेण मन्वाद्युपदिष्टस्य न्यायस्य सौलभ्यात् सत्वस्यापि लाभो भवति इत्ययं विद्योपदेशस्य महान् लाभः । इदं हि यत्सत्वस्य स्थापनं तदेव विनयस्य स्थापनं बोध्यम् ।

मूले **लोकेति** । (पृ० ४१) लोकप्रियमर्थसंयोगेन इति जयमङ्गलापाठः ।

अर्थार्थी जीवलोकोऽयं ज्वलन्तमुपसर्पति ।
क्षीणक्षीरां निराजीव्यां वत्सस्त्यजति मातरम् ।

इत्युक्तत्वात् अत्र त्यागो व्यज्यते । त्यागेनैव आश्रयेप्सवः आश्रयं लब्ध्वा धनप्राप्त्या सुखिनो भवन्ति । तदुक्तम्—,,त्यागादाश्रयेप्सुभिस्तावदभिगम्यते" । इति (नी० स० जं० मं० ४ स०) अतएव—

निरत्ययं साम न दानवर्जितम् न भूरिदानं विरहय्य सत्क्रियां ।
प्रवर्तते तस्य विशेषशालिनी गुणानुरोधेन विना न सत्क्रिया ।।

इति भारविण उक्तं उपपद्यते । इयमेव पालनी वृत्तिः इत्यभिधीयते ।

**प्रियमिति** (पृ० ४३) सुखं हि द्विविधं भवति । तादात्विकं भविष्यत्कालीनं च । तत्र तादात्विकं प्रियमुच्यते । हितं च भविष्यत्कालीनं भवति । तदात्वे सुखाभावे

---

१ राज्यस्थोऽपि स मान्धाता त्रैलोक्यं सप्तभिर्दिनैः । इति ।
वि० ध० पु० १।१७०।३५

२ तदुक्तं— स्वयमाचरते यस्मादाचारं स्थापयत्यपि ।
आचिनोति च शास्त्राणि आचार्यस्तेन चोच्यते ।। अनु० पा० ३२-३२
वृद्धाश्चालोलुपाश्चैव त्वात्मवन्तो ह्यदांभिकाः ।
सम्यग्विनीता ऋजवस्तानाचार्यान् प्रचक्षते ।।

## जयमङ्गलाक्रोडपत्रम्

भविष्यत्काले सुखं भविष्यति इति आशामात्रेण जनो न रज्यते। अतः तदात्वेऽपि यथासमयं सुखम् उत्पादनीयं भवति। इति ज्ञापनायैव पृथगुपादानम्।

**व्यसनेति**। (पृ० ४३) धूम्रपानादिकर्मणां त्यागेन। तेन भृत्यभरणीयमेव न, अपितु व्यसनाधिकारिकप्रकरणमपि अत्र चिन्तनोयम्।

**प्रवृत्तीति**। (पृ० ४३) विधिविहितः शास्त्रार्थानुष्ठानात्मक इन्द्रियजय उक्तः। निषेधेन अकर्मणः निवृतिरूप इन्द्रियजयः तद् वक्ष्यति—वश्येन्द्रिय इत्यादिना।

### व्यसनत्यागः

ननु व्यसनत्यागः कथं कर्तव्य? इति चेदुच्यते। व्यसनं हि श्रेयःप्रतिबन्धकं कर्म। अतः व्यसनं कस्माद् दूरीभवतीति आदौ आलोचनीयम्। तत्राऽयं अनुभवः—आत्मा शरीरादन्यः इति जानानोऽपि शरीरलालनाय देही प्रयतते शरीरस्य अरोगित्वे अपरिश्रान्तत्वे वा शरीरी स्वयमात्मानं सुखित्वेन अनुभवति। अत्र किं कारणमितिचेत्, यत्किमपि कार्यं कारयितुमात्मा शरीरं प्रेरयति तत्सपादयितुं दास इव इदं सर्वथा चेष्टते। अयं यः शरीरस्य सेवारूपगुणः सः तस्मात् पृथग्जानन्तमपि देहिनं शरोराधीनतां प्रापयति[1]।

तेनेदं सिद्धम्—आत्मावच्छिन्नं शरीरं हि तत्काले व्यसनकर्मणि सुखमनुभवति अन्यत्र च दुःखमनुभवन् कर्तव्ये कर्मणि तत्काले विष इव भासमाने प्रवृत्तेः अनौचित्यं मत्वा धर्मादन्यत्र रमते। तत्रैव आत्मा अपि आसज्जते। इत्येवंरीत्या क्रमेण जीवः व्यसनासक्तो भवति। ततः संस्कारः समुदेति। स च उद्बुद्धः पौनःपुन्येन जीवं स्वगोचरमर्थं प्रापयितुं प्रवर्तयति। ततः देही सुखमनुभवति। इयमेव व्यसनासक्तिः। अतः व्यसनपरित्यागार्थं संस्काराणां परिवर्तनं कर्तव्यम् इति निर्णीयते। संस्कारो हि भक्तिरसायने प्रतिपादितः[2]।

---

१ समस्तदोषदुष्टस्य कायस्यैको महान् गुणः।
यो यथा वर्तयत्येनं तथा तमनुवर्तते॥ इति।

२ चित्तद्रव्यं हि जतुवत् स्वभावात्कठिनात्मकम्।
तापकैर्विषयैर्योगे द्रवत्वं प्रतिपद्यते॥
कामक्रोधभयस्नेहहर्षशोकदयादयः।
तापकाश्चित्तजतुनस्तच्छान्तौ कठिनं तु तत्॥
चेतः पुनर्द्रुतौ सत्यां अपि तन्नैव मुञ्चति।
स्थायिभावगिराऽतोसौ वस्त्वाकारोऽभिधोयते॥
द्रवतायाम्प्रविष्टं तत् काठिन्यदशां गतम्।
द्रुते चित्ते विनिक्षिप्तस्स्वाकारो यस्तु वस्तुना॥
संस्कारवासनाभावभावनाशब्दभागसौ।
शिथिलीभावमात्रन्तु मनो गच्छत्यतापकैः॥
न तत्र वस्तु विशति वासनात्वेन किञ्चन।

## जयमङ्गलाक्रोडपत्रम्

द्रुतभावमापन्ने चेतसि यद्वस्तु प्रविशति तद्वस्तु चित्तस्य काठिन्यदशायामपि यदि भाति तर्हि एतद्दशायां तस्य वस्तुनः यद्भानं तदेव **संस्कारोद्बोधः** शेषं प्राक् (खं० २।२२ पृ०) प्रपञ्चितदिशा बोध्यम् ।

### व्यसने आपत्तिः

जन्मप्रभृत्येव व्यसनसंस्कारः उद्बुद्धो दृश्यते । तस्य परिवर्तनम् आपत्त्या संभवितुमर्हति । शरीरस्य व्यसनप्रयुक्तो विनाशः आपत्तिः यतो हि न हि कश्चिन् मानवः आत्मनः विनाशमभिवाञ्छति । यद्यपि केचिद् आत्मनः शरीरस्य विनाशो भवितेति जानन्तोऽपि रागवशात् व्यसने आरक्ताः कालकवलिताः भवन्ति तथापि ते उत्कट रागमहिम्ना यथार्थतत्वं विस्मृत्य उपर्युक्तदशामालभन्ते । तथापि ये किल प्रबुद्धाः सन्ति तेषां कृते तु आत्मनो नाशापत्तिज्ञापनमेव व्यसनाद् रक्षणाय साधनमिति ।

### आत्मरक्षणोपायः

ननु व्यसनेन आत्मनाशस्य कः सम्बन्ध इति चेदुच्यते ।

शरीरं हि यथात्रत् तावत्पर्यन्तमेव जीवति यावद्धृदये घृतसमानं तत्वम् अवतिष्ठेत् । यतः जीवने घृते च समानजातीयं तत्वं समुपलभ्यते । अतएव देवाः घृतमश्नन्ति इत्युक्तमुपपन्नम् । अत्र पुरूरवसः पुरतः उर्वश्या उपस्थापितः घृतभोजनप्रस्तावः मननार्हः[1] ।

अतः विद्वांसः शरीरे सदा घृततत्वस्य सत्वं वाञ्छन्ति । तद्वैधुर्ये तु प्रधाननाड़ीवैधुर्यं भवति । ततः व्याधीनां समुद्भवो भवति । इत्यवश्यं स्मर्तव्यम् ।

किञ्च शरीरस्य परिपोषकं घृतं यदि न भुक्तं भवेत् तर्हि प्राणस्य अशनापिपासे अपि अधिकमात्रया समुद्भवतः इति हेतुनाऽपि घृततत्त्वस्य प्रापणं रक्षणं पोषणंच अत्यावश्यकं भवति । तदिदमपर्यालोच्य यदि व्यसने आसज्जते तर्हि तद्व्यसनं शनैः शनैः आत्मविषयकं रागमभिवर्धयत् शरीरे प्रविश्य घृततत्वं विनाशयति । तेन जीवनस्य ह्रासः निर्दिष्टात् मृत्युसमयात्पूर्वमेव संभवति ।

अपि च-यथा यथा व्यसने आसक्तिः हृदये धृततत्वाभावश्च भवति, तथा तथा जीवनोपयुक्तपदार्थप्राप्त्यभावात् मूलाधारस्थवन्हिज्वालाऽभिवर्धते । तस्यां च समुत्पन्नायां स्वकीयस्वभावानुसारेण नादोऽपि नियत एव । सोऽयं नादः यदि कोमलः स्यात् तर्हि तु तत्र हानिर्न भवति । घृततत्वस्य संबन्धाभावेन नादः तीव्रतां प्राप्नोति तदवस्थायान्तु शरीरे उष्णतायाः अनुभवेन सह दुःखमप्यनुभूयते । तन्मा भवतु इत्येतदर्थम् योगिनां कृते सर्वथा व्यसनस्य परित्यागः दुग्धघृतयोश्च

---

१ तद्यथा । ६ स्कन्धे उर्वशयुपाख्याने-''घृतं मे वीर भक्ष्यं स्यान्नेक्षे त्वान्यत्र मैथुनात् । संरंस्ये भवतः साकं स्त्रीणां श्लाध्यो वरः स्मृतः इति ॥ ९-१४-२२ हे वीर ! घृतं मे भक्ष्यं स्यात् ! अमृतं वाऽज्यमिति श्रुतेः । देवानां चामृताशित्वात् । श्रीधरी—

**जयमङ्गलाक्रोडपत्रम्**

भुक्त्या व्यसनमुक्तताऽस्ति। तत्सत्वे तु ज्वालायाः वर्धनं यावन्मात्रमपेक्षितं तावन्मात्रमेव भवति। पुनः सहैव तेन तर्कस्यापि मिश्रणं भवेद्यदि तर्हि कुण्डलिन्या अपि मूलाधारस्थ वन्ह्यात्मतेजोमध्येऽवस्थितायाः जीवशक्तेः उत्थानमपि संभवति। पुनः तत्र घृतप्रयुक्तस्नेदसम्बन्धात् काठिन्यं न भवति। तदभावाच्च संभाषणे मन्द्रस्वरादीनामभिव्यक्तिः सहजत एव संभवेत्। एतदभावे तु जीवनस्यास्तित्वेऽपि तस्य कियन्मूल्यं ? अतः आत्मनः रक्षणाय तत्र तत्र अवसरप्राप्ते संभाषणे च स्वतो रञ्जकत्वविशिष्टस्वराणां कोमलताप्राप्तिहेतुनाऽपि व्यसनात् आत्मा अवश्यं संरक्षणीय इति रीत्या व्यसने दोषबोधकान् संस्कारान् समुद्बोध्य आत्मा व्यसनात् संरक्षणीयः।

**नादे तरङ्गाः**

अथ प्रसङ्गात् वन्हिज्वालया सह समुद्भूते नादे तरङ्गाः कियन्तो भवन्तीति इत्यपि संक्षपतः जीवनस्य महत्वबोधनाय अभिधीयते। तत्र षड्जे २५६ तरङ्गाः, ऋषभे २८८ तरङ्गाः, गान्धारे ३२० तरङ्गाः, मध्यमे ३४१, पञ्चमे ३८४, धैवते ४२६, निषादे ४५४ इत्येवङ्क्रमेण भवन्ति। एते सर्वेऽपि तत्तत्सङ्ख्याकाः निर्दिष्टाः मध्यस्थाने समुद्भूतनादविषये बोध्याः। ऊर्ध्वस्थाने च यदा नादः समुत्पद्यते तदा उपर्युल्लिखित सङ्ख्यापेक्षया द्विगुणमानेन तरङ्गाः समुद्भवन्ति। अधस्स्थाने तु मध्यस्थाने समुपवर्णितसङ्ख्यापेक्षया अर्धसङ्ख्यया न्यूना भवन्ति। यथा अधस्स्थाने षडजे १२८ तरङ्गा भवन्ति इत्यादि। यदि ततोऽपि अधस्स्वराः उत्पद्यन्ते तदा तु तत्र तत्र स्वरादौ ६४, ३२, १६, ८, ४, २, ९ सङ्ख्याभेदेन तरङ्गाः संभवन्ति इतोऽप्यधस्तान्नादाभावः एतेच गायकैः श्रुत्या अनुभूयन्ते, इति नादस्य वन्हिज्वालोद्भवस्य मर्यादा उक्ता। पुनस्तत्र मृदुत्वं काठिन्यञ्च कुण्डलिन्याः काठिन्यमृदुत्वप्रयुक्तं बोध्यम्। उपर्युक्तक्रमः तरङ्गाणां सङ्ख्यान्यूननताविषयकः, नादसमये सञ्जायमानः उक्तः। तस्य "समना उन्मना" इत्यादि शब्दैः कुण्डलिनीनिरूपणावसरे कृतः सङ्केतः तत्र तत्र वरिवस्या रहस्यादौ उपलभ्यते[१]।

---

१ तदुक्तम्—

"प्रथमेऽष्टादशवर्णा द्वाविंशतिरक्षराणि मध्ये स्युः।
प्रथमेन तुल्यमन्त्यं सङ्घातेनाष्टपञ्चाशत्॥१४॥ व० र० प्रथमोंशः
मात्राद्वितयोच्चार्या कामकला च त्रिकोणा च।
बिन्दुरहितहृल्लेखा मात्राकालत्रयोच्चार्या॥१५॥
अन्येषां वर्णानां मात्राकालोऽर्धमात्रया सहितः।
बिन्दोरर्धमात्रा परे परे चापि पूर्वार्धाः॥१६॥
सहृत्यैकलवोनो मात्रा कालोऽस्य नादस्य।

टीका० (वरिवस्यारहस्ये) मात्रा लध्वक्षरस्य कालः। तद्द्विगुणो गुर्वक्षरस्य। अतएव कामकला कमला त्रिकोणा योनिश्च द्विमात्रा। हृल्लेखायां द्वयोर्व्यञ्जनयोरेका मात्रा, कामकलाया द्वे मात्रे इति तिस्रः। अन्येषामकारसहितानां ककारादिदश-

## जयमङ्गलाक्रोडपत्रम्

### योगिनामानन्दः

किञ्च यदा किल योगी श्रूयमाणनादावस्थातोऽपि नीचैः मनः स्थापयति तदा उपर्युक्तज्वालायाः अनुभवाभावेन शैत्यमनुभवति। यदि च जोवेन कथमपि इयं-शिशिरता अनुभूयेत तर्हि जोवशक्तिः अन्तर्निहिता उपास्या उच्छलिता भवति। तत्र भवं सुखं योगिनः ध्यानेन ज्ञानप्रभामिश्रितया आनन्दप्रभया अनुभवन्ति। अत्राऽयं निष्कर्षः मनसः द्रवावस्थायां चिन्तितः यादृशः अर्थः समन्वेति अन्तःकरणे, सोऽर्थः उपर्युक्तशीतलत्वानुभवप्रसङ्गे मनसि चिन्ताविषयः स्यात् तर्हि तदानीं चिन्ता-मयी मूर्तिः स्थिरा भवति। इदं मूर्तेः स्थैर्यं संस्कार उच्यते। मधुसूदनसर-स्वतोभिः उक्तस्य "चित्तद्रव्यं हि जतुवत्"। इत्यादि पद्यस्याप्यमेव भावो बोध्यः। अस्य संस्कारस्य यदि केनचित् विलोपः काम्यते तर्हि स कथमपि न कर्तुं शक्यते। मनसः सर्वविधायां व्यवस्थायां संस्कारस्य चिरस्थायित्वात्। मनसो जाग्रदादिभेदेन काठिन्यं विलीनत्वं च बोध्यम्। शारीरकविज्ञाने हि चिरस्थायिनः संस्कारस्य चिन्हत्वेन

---

वर्णानाम्। बिन्दोरपि व्यञ्जनत्वादर्धा मात्रा, "एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ-उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं त्वर्धमात्रकम्"॥ इति वचनात्। परे परे, अर्धचन्द्ररोधिन्याः रोधिन्यर्धकालो नादस्येत्यादि क्रमेण कालवन्तः। अयं भावः काल परमाणुर्लव इत्युच्यते, "नलिनीपत्रसंहत्यास्स सूक्ष्मसूच्यभिवेधने। दले दले तु यः कालः स कालो लवसंज्ञितः। अतः सूक्ष्मतमः कालो नोपलभ्यो भृगूद्वह" इतिवचनात्! (२५६) षट्पञ्चाशदुत्तरशतद्वयलवैरेकामात्रा। बिन्दोरष्टाविंशत्युत्तरशतं (१२८) लवाः अर्धचन्द्रस्य चतुःषष्टिः। रोधिन्या द्वात्रिंशत्। नादस्य षोडश। नादान्तस्याष्टौ शक्तेश्चत्वारः। व्यापिकाया द्वौ लवौ। समनाया एको लवः। उन्मनायास्तु नास्त्येव कालः। यद्यपि योगिनीहृदये चक्रसङ्केते "दीपाकारोऽर्धमात्रश्च इत्यनेन बिन्दोःकालमुक्त्वाऽर्धचन्द्रादेः शक्तिपर्यन्तस्य चतुरंशाष्टांशषोडशांशादिरूप भागद्वैगुण्यं कालस्योक्त्वा शक्त्यादीनां पूर्वपूर्वद्विगुणांशकालवत्वं सामान्येनोक्तम् "चतुःषष्टिस्तदूर्ध्वं तु द्विगुणं द्विगुणं ततः "इति, तेन च वचनेन मात्राया द्वादशोत्तर-पञ्चशततमो भाग उन्मनाकालः, मात्रास्वरूपंच द्वादशोत्तरपञ्चशतलवात्मकत्वमेव प्रतीयते, अतएव "देशकालानवच्छिन्नं तदूर्ध्वं परमं महत्" इत्युत्तरग्रन्थेप्युन्मनायाः परतएव कालानवच्छेदः उक्त इति व्यक्तं प्रतीयते, तथापि "चतुःषष्टिः" इति श्लोकस्य शक्तेश्चतुःषष्टितमो मात्राभागः, तदूर्ध्वं द्विगुणं व्यापिकाया अष्टाविंशत्यु-त्तरशततमोभागः। ततो द्विगुणं समनायाः षट्पंचाशदुत्तरशतद्व्यात्मको भाग इत्यर्थस्ततस्तदूर्ध्वमितिपदाभ्यां द्विगुणपदद्वयेन च स्पष्टं प्रतीयते, अत एवोत्तरार्धे" शक्तत्यादीनां च मात्रांशो "मनोन्मन्यास्तयोन्मनी" इत्यत्र मनोन्मनीति पदस्य समनापर्यायस्य समनापर्यन्तानामित्यर्थकत्वमङ्गीकृत्त शक्त्यादीनां तिसृणा मित्यमृ-तानन्दैर्व्याख्यातम्। नादस्य बिन्द्वादि चक्रस्य ५।।१६।। इति ॥

## जयमङ्गलाक्रोडपत्रम्

शरीरान्तर्गतासु मांसपेश्यादिषु ऊर्ध्वरेखाः प्रदर्शिता भवन्ति। इतोऽधिकं ततएव द्रष्टव्यम्। एवञ्च द्रुते चेतसि प्रविष्टा मनोमयी मूर्तिः संस्काररूपेण परिणम्यमाना यदि ईश्वराद्युत्तमविग्रहविषयिणी स्यात् तर्हि तु सा शोभनैव। यदि च कदाचित् दृष्टविषयिसबन्धिनी तर्हि तु अर्जने दुःखं, रक्षणे दुःखं, व्यये दुःखं, "नित्यं प्राणार्थवत् भयमि"त्याद्युक्तत्वात् शोको मूर्छा मरणमुन्मादः, शरीरक्षयः, लज्जात्यागः, अपकीर्तिश्च इत्यादयो दोषाः उत्पद्येरन्। तत्रापि कामिनीचिन्तनेन शरीरस्य क्षयः अवश्यंभावी[१]। तस्मात् जीवनविनाशादिदोषभुद्भाव्य अनिष्टसाधनत्वं हितसाधनत्वाभावश्च विषयेषु व्यसनापादकेषु प्रतिबुद्धज्ञानस्य यथा विषयौ भवेताम् गुरुभक्तिश्च यथाऽवस्थिता भवेत् तथा प्रयत्ने कृते व्यसनत्यागः संभवितुमर्हति।

### व्यसनत्यागानन्तरं चिन्तनीयम्

ननु व्यसनत्यागे कृते किंचिन्तनीयम्—इति चेदुच्यते। पूर्वं निर्दिष्टं मनसः द्रवत्वं भगवद्विषये कर्तव्यम्। तेन भगवन्मूर्तिविषयकः संस्कारः भक्तिरूपेणाहितो भवति[२]।

अनेकजन्मान्तरोद्भूतसंस्कारवशान् निसर्गतः तेषु तेषु विषयेषु मनसः द्रवीभावः उत्पद्यत इति सत्यं तथापि व्यसनासक्तिर्मा भवतु इति हेतुना सएव द्रवीभावः शास्त्रमाश्रित्य यदि संभवति तर्हि तस्य फलं संसारान्मुक्तिः। इत्येकोयं महान् शास्त्रीयः मार्गः स्मर्तव्यः[३]।

तथा च भगवद्धर्मैः संबद्धैः द्रुते चित्ते ईशमूर्तिम् तदीयप्रसादं वाभिलक्ष्य विषयाः सेविताः न व्यसनोत्पादकाः संभवन्ति। नापि च भगवन्मयी मनोमयी मूर्तिः द्रवावस्थायां चेतसि आरुढा तस्य काठिन्यदशायां प्राप्तायामपि ततः अपसरति। प्रत्युत तत्र तत्र अनुष्ठितेन भगवद्धर्मेण सञ्जाते विषयसेवनेऽपि महानानन्दः समुदेति।[४]

यथा इक्षुरसे स्थितस्य मलस्यापकर्षः पयसा क्रियते तथा भगवत्संबन्धिना

---

१ निकामं सक्तमनसां कान्तामुखविलोकने।
गलन्ति गलिताश्रूणां यौवनेन सह श्रियः। (नी० सार १ सर्ग)

२ द्रुतस्य भगवद्धर्मात् धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते। (भक्तिरसायने)

३ तदुक्तं भागवते ११ स्कन्धे अ० २ नवयोगीश्वरसंवादे—
भयं द्वितीयाभिनिवेशितः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः।
तन्माययातोऽबुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा ॥३७॥
मन्येऽकुतश्चिद्भयमच्युतस्य पादाम्बुजोपासनमत्र नित्यम्।
उद्विग्नबुद्धेरसदात्मभावाद् विश्वात्मना यत्र निवर्तते भीः ॥३८॥

४ वेद दुःखात्मकान् भावान् परित्यागेप्यनीश्वरः।
न निर्विण्णो न चासक्तो भक्तियोगोस्य सिद्धिदः ॥

## [ तेन वर्जनीया अंशाः ]

**एवं वश्येन्द्रियः परस्त्रीद्रव्यहिंसाश्च वर्जयेत्, [1]स्वप्नं लौल्यं, अनृतं, उद्धतवेषत्वं, अनर्थसंयोगं[2] च, [3]अधर्मसंयुक्तम[4]नर्थसंयुक्तं च व्यवहारम् ॥**

### जयमङ्गलाक्रोडपत्रम्

भक्तियोगेन द्रवीभावापन्नमनोनिष्ठस्य मलस्य व्यसनापादकस्य रागादेरपकर्षणं भवति[5]।

### रागाभावे विवेकस्वरूपम्

रागस्यापकर्षणेन च नीतिमतां विवेकः कीदृशो भवतीत्युक्तम् श्री भगवत्पूज्यपादैः श्रीआचार्यं चरणैः—

कस्यचिदपि किमपि नोच्चरणीयम् सुखेन भवजलधि स्तरणीयः ।
गेयं गीतानामसहस्रं ध्येयं श्रीपतिरूपमजस्रम् ।
नेयं सज्जनसङ्गे चित्तं देयं दीनजनाय च वित्तम् । इति ।

### ईशसेवकानान्तरुणत्वम्

अपि च भगवत्संबंधेन संबद्धः न केवलं व्यसनादेव आत्मानं रक्षति अपि तु तत्प्रसादात् वृद्धतां प्राप्तोऽपि तरुणायते इत्येतदपि भगवन्मूर्तिचिन्तनफलं प्रतिपादितमस्ति श्रीमद्भागवते[6] ।

### द्रवीभावाभावे कर्तव्यम्

यः किल दृढतरसंस्काराधायिकां मूर्ति चेतसि आधातुमसमर्थं आस्ते, तेन भगवत्प्रसादः कथं समुपलब्धव्यः इति चेत् नीतिशास्त्रे उक्तस्य विधानस्य सम्यक् चीर्णेनानुष्ठानेन प्राप्तुं शक्यः[7] ।

---

नी.टि. १ **स्वप्नमिति** । निर्दिष्टनिशात्रिभागादन्यत्रालस्यनिरासार्थम् ।
,, २ **संयोगमिति** । द्यूतमृगयास्त्रीपानादिव्यसनकारकैः संयोगं वर्जयेत् ।
,, ३ **अधर्मसंयुक्तमिति** । यत्र क्रोधनः श्रोत्रियो न्यायपराजितोऽप्यात्महननं कर्तेति ।
,, ४ **अनर्थसंयुक्तं चेति** । मायायोगविन्न्यायपराजितोऽपि कोपान्मन्त्रतन्त्रादिभिरपाकरोति ।

५ तदेवोक्तं मानसरामायणेः—
जानी चर्हहिं गूढगति जेऊ । नाम जीह जपि जानहि तेऊ ॥ ३ ॥
साधक नाम जपहिं लय लाए । होहिं सिद्ध अनिमादिक पाए ॥ ४ ॥
जपहिं नाम जग आरत भारी । मिटहिं कुसंकट होहिं सुखारी ॥ ५ ॥
राम भगत जन चारि प्रकारा । सुकृती चारिउ अनघ उदारा ॥ ६ ॥ इति

६ तदुक्तम् भागवते १० स्कन्धे ४५ अ० श्लो० सं० १८,
वीक्षन्तोऽहरहःप्राप्ता मुकुन्दवदनाम्बुजम् ।
नित्यं प्रमुदितं श्रीमत् सदयस्मितवीक्षणम् ॥
तत्र प्रवयसोऽप्यासन् युवानोऽतिबलौजसः ।
पिबन्तोऽक्षैर्मुकुन्दस्य मुखाम्बुजसुधां मुहुः ॥

७ रघुवंशे—प्रसादसुमुखे तस्मिन् चन्द्रे च विशदप्रभे ।
तदा चक्षुष्मतां प्रीतिरासीत्समरसा द्वयोः ॥

## श्रीमूला

एवमित्यादि। (पृ० ६०) परस्त्रीद्रव्यहिंसाः परस्त्रियं परद्रव्यं परहिंसां च। स्वप्नम् अयथोचितां निद्राम्। लौल्यं। चापलम् अनृतं मिथ्यावादम्। उद्धतवेषत्वम् अविनीतवेषताम्। अनर्थसंयोगम् उक्तस्यार्थसंयोगस्य प्रत्यनीकम्।

## वैदिकसिद्धान्तसंरक्षिणी

एवमित्यादि! अरिषडवर्गत्यागेनेत्यर्थः। वश्येन्द्रियः मनसो द्रवीभावावस्थायां प्रविष्टां भगवत्संबन्धिनीं मनोमयीं मूर्तिं सञ्चिन्त्य महतः आनन्दस्य उपलब्ध्या समुत्पन्नचित्तप्रसादः। परस्त्रीति। परग्रहणं द्रव्यादिना समन्वेयम्। स्त्रीव्यसनस्य अतिदुर्धरत्वात् आदौ एतद्ग्रहणम्। परग्रहणात् स्वस्त्रीधनादिव्यावृत्तिः।

आत्मनि संभाव्यमानेभ्यः दोषेभ्यः निवृत्तिमाह स्वप्नमिति। विहितादन्यत्र इति शेषः। तदुक्तम् टिप्पण्याम्--'निर्दिष्टनिशात्रिभागादन्यत्रालस्यनिरासार्थम्"। इति वर्जयेदित्यनुवर्तनीयम्। एवमग्रेपि। लौल्यम् जिह्वादीन्द्रियाणाञ्चपलत्वम्।

अनृतम् अयथार्थभाषणम्, असत्यभाषणमविश्वास्यत्वहेतुः। उद्धतवेषम् आर्यविरुद्धां आचारमयीं संस्कृतिम्। रूढिप्राप्तसङ्केतविरुद्धं वेषमिति यावत्।

अनर्थेति "अर्थादपेतैः सह संयोगः कामजव्यसनहेतुत्वाद्वर्ज्यः। तदुक्तं टिप्पण्याम्—"द्यूतमृगयास्त्रीपानादिव्यसनकारकैः संयोगं वर्जयेदि"ति।

अधर्मसंयुक्तं महापातकिनम्। कुतोऽयं वर्ज्यः तत्राह टिप्पण्याम "यत्र क्रोधनः श्रोत्रियो न्यायपराजितोऽपि आत्महननं करोति" इति।

अनर्थेति। व्यवहारम् मायायोगविदां इति शेषः। तदुक्तं टिप्पण्याम्—"मायायोगविन् न्यायपराजितोऽपि कोपात् मन्त्रतन्त्रादिभिरपाकरोती"ति।

## जयमङ्गला

एवमिति। (पृ. ६०) एवंविधया शास्त्रोक्तया प्रवृत्या। वश्येन्द्रियः वशगतानीन्द्रियाणि यस्य। स कदाचित् प्रतीकारेषु प्रसज्यमानोऽपि परस्त्र्यादि वर्जयेत्। कामातिप्रसङ्गो हि वेश्यायामपि दोषवान्। परस्त्रियास्त्वधर्मानर्थद्वेषानुबन्धित्वाद् बलवत्तरः। स्वद्रव्येऽपि लोभादतिनैपुणं दोषवत्। परद्रव्ये त्वधर्मानुबन्धी लोभो दूरतस्त्याज्यः। क्रोधः पुत्रदारशिष्यादावप्यतिशयेन नेष्यते। पर (भीः ?) हिं सा त्वधर्मानुबन्धित्वादुभयलोकविरुद्धा। अयमिन्द्रियजयो निवृत्तिरूपः। किञ्च स्वप्नं धर्मार्थारोग्यशास्त्रैरननुज्ञातकालमासेवमानो धर्मादीन् बाधते। लौल्यं जिह्वादीन्द्रियाणां चपलत्वं[1] अधर्म्यानारोग्यानायुष्यादिना[2] परिभवाद्यङ्गम्। अनृतं मिथ्याभिधानम्, सर्वदोषकरम् अस्मान्नाभ्यधिकमन्यदस्ति। उद्धतानां राजमल्लमूढावित्तकानां[3] वेषमुद्धतवेषमार्यविरुद्धम् अनर्थ्यसंयोगम् अनर्थ्यैर्नटनर्तकगायकादिभिः संयोगमनर्थहेतुम्। अधर्मसंयुक्तं महापातकसंयुक्तम्। व्यवहारं मायायोगविदां च व्यवहारम्, अनर्थसंयुक्तं दोषवत्वाद्वर्जयेदिति वर्तते।

---

अशुद्धम्

१. चलत्वम् २. लत्वं परिभवा ३. रा० ढवित्तकानाम्

## जयमङ्गलाक्रोडपत्रम्

तदेतत् सर्वमभिप्रेत्याह वश्येन्द्रिय इत्यादि : वशगतानीति । (पृ० ६१) यस्य उपर्युक्तरीत्या एकाग्रता सिद्धा वर्तते सः गुरुणाऽनुक्तमपि शास्त्रार्थं गुरुप्रसादात् प्रतिभया अदृष्टद्वारा पश्यति । यथा—' एक्सरे'' पदेन अभिधीयमानः किरणः शरीरेण संबद्धो भूत्वा तदन्तर्वर्तीन्यस्थीनि ज्ञापयति । तथैव जितेन्द्रियताऽपि सूक्ष्ममर्थम्[1] ।

परस्त्र्यादीति । (पृ० ६१) स्त्रीव्यसनस्य अतिदुर्धरत्वादादौ ग्रहणम् । एतद्व्यसनादात्मनः रक्षणे फलान्तरमपि । तदुक्तं पुरुषपरीक्षायाम्—

परदारपरद्रव्यपरद्रोहपराङ्मुखः ।
गङ्गाप्याह कदाऽऽगत्य मामयं पावयिष्यति ।। इति ।

अपि शब्देन किमुतान्ये मानवाः । इदमेव च स्फुटीकृतं कालिदासेनापि पृक्त इति पद्येन[2] । अत्रेदं तात्पर्यं—प्रजायाः विश्वासः परदारादिसेवनाद् विमुखं प्रति यथा भवति, न तथा परदारादिसेवकान् प्रति अतः राज्ञः कृतेऽपि परस्त्र्यादिसेवनेनात्मनिप्रजा-पराग दोषस्य दुरपनेयत्वात् एतद्दोषादात्मनः रक्षणमुद्दिश्यैव धर्मविजयिना राज्ञा राज्यसञ्चालनं शत्रुनिरसनं च कर्तव्यमित्युक्तमत्र शास्त्रे धार्मिकमित्य दिना[3] ।

### निर्व्यसनिसामर्थ्यम्

अजातशत्रो राज्ञः शरीरे एतावत्सामर्थ्यं संभवति यत् सः स्वहस्तेन विषदूषितं कंचिन्नरं स्पृशति तर्हि तदीयस्पर्शबलात् तस्य विषमपसरतीति ।

कामातिप्रसङ्ग इति (पृ० ६१) । अतिशब्दोपादानमगतिकगतौ वेश्यागमनमपि कर्तव्यम् इति बोधनार्थं, कन्यादिगमनापेक्षयाऽल्पदोषत्वात् ।

वस्तुतस्तु यथासंभवं वेश्यादीनामपि सङ्गमः व्यसनहेतुत्वान्न कर्तव्यः । इत्येव शास्त्रस्य तात्पर्यम्[4] ।

---

१ तदुक्तम्—अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च ।
यत्कृपालेशमात्रेण नमोऽस्तु गुरवे सदा ।।

२ पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धी ।
तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ।। (र० वं० द्वि० २ सर्ग)

३ धार्मिकं पालनपरं सम्यक परपुरञ्जयम् ।
राजानामभिमन्यन्ते प्रजापतिमिव प्रजाः । (का० नी० सा० १ सर्ग)

एवंविधः आदर्शः आधुनिककाले श्रीशिवाजीमहाराजेन स्थापितः स्मृति-पथमायाति । गढ—विजयानन्तरं सैन्येन काचित् तरुणी सुन्दरी यवनी बाजीदेशमुखेन महाराजस्य पुरत उपस्थापिता । तदानीं श्रीशिवराजः अवोचत् तथाविधं भाग्यं-नाभूत् यद्बलाद् अहं ते उदरात् उद्भवामीति । एवमेव पुरुषपरीक्षायां कायस्थ-स्योदाहरणं अग्रे वक्ष्यमाणं स्मर्तव्यम् ।

४ तदुक्तं मनुना (४ अ० १६ श्लोक०)
इन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामतः ।
अतिप्रसक्तिं चैतेषां मनसा स निवर्तयेत् । १६

## जयमङ्गलाक्रोडपत्रम्

स्त्र्यादिव्यसनाभावे कायस्थोदाहरणं टिप्पण्यां द्रष्टव्यम्[1] ।

**परस्त्रिया** इति । (पृ० ६१) स्त्रीव्यसने दुरपनेयदोषः नोतिसारे उक्तः स्मर्तव्यः[2] ।

---

१ तद्यथा—बभूव मिथिलायां बोधिनामा कायस्थः । स तु कायस्थकुलमर्यादया राजनियोगं कुर्वाणोऽपि न कञ्चन प्राणिनं हिनस्ति न परस्वमादत्ते, स्वामिदत्तेनाजीव्यधनेन केवलञ्जीवति । स्वकीयार्जनोचितं दानं देशकालोचितं च कुर्वाणः शिवपूजापरायणः समयं निनाय । प्रत्यासन्ने चान्तकाले तेन पद्यमिदं पौराणिकं श्रुतम्—

परहिंसापरद्रव्यपरदारपराङ्मुखः ।
गङ्गाऽप्याह कदागत्य मामयं पावयिष्यति ? ॥

श्रुत्वा च परामृष्टवान् । यदाजन्मनो मयापि परहिंसा न कृताऽस्ति । न परद्रव्यमनीत्या गृहीतम् न परदाराभिलाषः कृतः तदहमपि तद्विशेषणत्रयविशिष्ट एव । यतः—

अकृत्यं दूरतस्त्यक्तं स्वकृत्ये च मतिः कृता ।
तत्वनैष्ठिकभावेन नीतं च सकलं वयः । १० ।

ततो भगवत्याः श्रीगङ्गाया वाक्यमिदं परीक्षेऽहम् पश्चाद्भागीरथीमुद्दिश्य गत्वा कूलादर्वाक् क्रोशमात्रप्रदेशे स्थित्वा तत्पौराणिकं पद्यार्धं स्वकीयेन श्लोकार्धेन पूरयित्वा श्लोकं पपाठ । तद्यथा—

परहिंसा परद्रव्यपरदारपराङ्मुखः ।
सोहमभ्यागतो देवि ! याहि गङ्गे ! पवित्रताम् ।

तदनन्तरं जातपरितोषया कूलङ्कषकल्लोलमालया सञ्चरत्कूर्ममीनमकरशिशुमारया प्रवाहपतितोभयतटविटपया मुक्ताहारधवलजलया गङ्गया प्लाविताङ्गः स कायस्थो बभूव । आयुषि पूर्णे विधिनियोगात् परित्यक्ततनुर्मुक्तिं गतः । तथाविधं करुणयाभागीरथ्या परिणामपरीक्षितचरित्रमद्यापि तं कायस्थं स्तुवन्ति साधवः ।

वपुर्याति श्रियो यान्ति यान्ति सर्वेऽपि बान्धवाः ।
कथासारे हि संसारे कीर्तिरेव स्थिरा भवेत् ॥१२॥ इति ।

२ नामापि स्त्रीति संह्लादि विकरोत्येव मानसम् ।
किं पुनर्दर्शनात्तस्या विलासोल्लासितभ्रुवः ॥
रहः प्रचारकुशला मृदुगद्गद्भाषिणी ।
कं न नारी रमयति रक्तं रक्तान्तलोचना ॥
मुनेरपि मनोऽवश्यं सरागं कुरुतेऽङ्गना ।
प्रसन्नं कान्तिजननं सन्ध्येव शशिमण्डलम् ॥
मनः प्रह्लादयन्तीभिः मन्दं यान्तीभिरप्यलम् ।
महान्तोऽपि हि भिद्यन्ते स्त्रीभिरद्भिरिवाचलाः ॥—

## जयमङ्गलाक्रोडपत्रम्

**लोभादिति** (पृ० ६१) अतिलोभे कव्युक्तिः स्मर्यते । तद्यथा—

दृढतरबुद्धमुष्टेः मलिनस्य सदा कोषनिषण्णस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥ इति

अत्रोदाहरणानि षष्ठाध्याये मूलोक्तानि स्मर्तव्यानि ।

**निवृत्तिरूप** इति । (पृ० ६१) अन्यथा परस्त्र्यादिषु रागे दोषस्स्यादिति भावः । तद्ध्वनितं न्यायसूत्रेणापि न कर्मकर्तृसाधनवैगुण्यात्[1], इत्यत्र । स्वप्नमिति ( ६१ ) स्वप्नस्य गुणदोषौ चरके धर्मशास्त्रे चोक्तौ तत्रैव द्रष्टव्यौ[2] ।

**शास्त्रैरिति** । (पृ० ६१) स्वापविधानमर्थशास्त्रेणोक्तम् "तृतीये तूर्यघोषेण संविष्टः, चतुर्थ-पञ्चमौ शयीत" इति । (विनयाधिकारिके अ० १९ राजप्रणिधिः) कुतः शयीत इत्यस्य समाधानं धातुसाम्यार्थमिति गृहाण ।

टी०—नामापीत्यादि उल्लासिता उत्क्षिप्ता, रहः शयनम्, प्रचारकुशलेति स्पर्शनं दर्शयति । मुनेरपि प्रसङ्ख्यानसमर्थस्यापि, सरागं मनः कुरुते, दर्शनेन प्रह्लादयति । मनः प्रह्लादयन्तीभिः दर्शन स्पर्शनादिना । महान्तोऽपि विजितेन्द्रिया अपि भिद्यन्ते विपद्यन्ते । तस्मात् तासु नासक्तिः कार्या । (१ सर्ग ज० मं०)

१ अथोपजनाश्रयं कर्मवैगुण्यम् मिथ्यासंप्रयोगः । कर्तृवैगुण्यं योनिव्यापदो बीजोपघातश्चेति । साधनवैगुण्यम् इष्टावभिहितम् । एतावत्पर्यन्तं शरीरेण जनिष्यमाणेभ्यः पापेभ्यः व्यसनेभ्यश्च निवृत्तिरुक्ता । (न्या० सू०) इति ।

**दिवा स्वप्ननिषेधौ**

२ अचिन्तनाच्च कार्याणां ध्रुवं सन्तर्पणेन च ।
स्वप्नप्रसङ्गाच्च नरो वराह इव पुष्यति ॥ २० ॥ २१ अ०
यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः ।
विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः ॥ २१ ॥
निद्रायत्तं सुखं दुःखं पुष्टिःकार्श्यं बलाबलम् ।
वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च ॥ २२ ॥
अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता ।
सुखायुषी न वा कुर्यात् कालरात्रिरिवागता ॥ २३ ॥
सैव युक्ता पुनर्युङ्क्ते निद्रा देहसुखायुषा ।
पुरुषं योगिनं सिद्ध्या सत्या बुद्धिरिवागता ॥ ३३ ॥
गीताध्ययनमद्यस्त्रीकर्मभाराध्वकर्षिताः ।
अजीर्णिनः क्षताः क्षीणा वृद्धा बालास्तथाऽबलाः ॥
तृष्णातीसारशूलार्ताः श्वासिनो हिक्किनः कृशाः ।
पतिताभिहतोन्मत्ताः श्रान्ता यानप्रजागरैः ॥
क्रोधशोकभयक्लान्ता दिवास्वप्नोचिताश्च ये ।
सर्व एते दिवास्वप्नं सेवेरन् सार्वकालिकम् ॥—

धातुसाम्यं तथा ह्येषां बलं चाप्युपजायते।
श्लेष्मा पुष्यति चाङ्गानि स्थैर्यं भवति चायुषः ॥ २४ ॥
ग्रीष्मे त्वादानरूक्षाणां वर्धमाने च भास्करे।
रात्रीणां चातिसङ्क्षेपाद् दिवास्वप्नः प्रशस्यते ॥ २५ ॥
ग्रीष्मवर्ज्येषु कालेषु दिवास्वप्नात् प्रकुप्यतः।
श्लेष्मपित्ते दिवास्वप्नस्तस्मादन्येषु नेष्यते ॥
मेदस्विनः स्नेहनित्याः श्लेष्मलाः श्लेष्मरोगिणः।
दूषीविषार्त्ताश्च दिवा न शयीरन् कदाचन ॥ २६ ॥
हलीमकं शिरःशूलं स्तैमित्यं गुरुगात्रता।
अङ्गमर्दोऽग्निनाशश्च प्रलेपो हृदयस्य च ॥
शोकारोचकहृल्लास पीनसार्द्धावभेदकाः ।
कोठोरुः पिड़का कण्डूस्तन्द्रा कासो गलामयः ॥
स्मृतिबुद्धिप्रमोहश्च संरोधः स्रोतसां ज्वरः।
इन्द्रियाणामसामर्थ्यं विषवेगप्रवर्तनम् ॥
भवेन्नृणां दिवास्वप्नस्याहितस्य निषेवणात्।
तस्माद्धिताहितं स्वप्नं बुद्ध्वा स्वप्यात् सुखं बुधः ॥२७॥

**रात्रिजागरणं**

रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा।
अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम् ॥२८॥
देहवृत्तौ यथाहारस्तथा स्वप्नः सुखो मतः।
स्वप्नाहारसमुत्थे तु स्थौल्यकार्श्ये विशेषतः ॥
अभ्यङ्गोत्सादनं स्नानं ग्राम्यानूपौदका रसाः।
शाल्यन्नं सदधिक्षीरं स्नेहो मद्यं मनःसुखम् ॥
मनसोऽनुगुणा गन्धाः शब्दाः संवाहनानि च।
चक्षुषोस्तर्पणं लेपः शिरसो वदनस्य च ॥
स्वास्तीर्णं शयनं वेश्मसुखं कालस्तथोचितः।
आनयन्त्यचिरान्निद्रां प्रनष्टा या निमित्ततः ॥३०॥
कायस्य शिरसश्चैव विरेकश्छर्दनं भयम्।
चिन्ता क्रोधस्तथा धूमो व्यायामो रक्तमोक्षणम् ॥
उपवासोऽसुखा शय्या सत्वौदार्यं तमोजयः।
निद्राप्रसङ्गमहितं वारयन्ति समुत्थितम् ॥
अतएव च विज्ञेया निद्रानाशस्य हेतवः।
कार्यंकालो विकारश्च प्रकृतिर्वायुरेव च ॥३१॥
तमोभवा श्लेष्मसमुद्भवा च मनःशरीरश्रमसम्भवा च।
आगन्तुकी व्याध्यनुवर्तिनी च रात्रिस्वभावप्रभवा च निद्रा ॥—

## जयमङ्गलाक्रोडपत्रम्

साहित्यशास्त्रे—स्वापस्य कारणमालस्यमुक्तम्[1]।
सति चालस्ये उत्साहशक्तेरभावं दृष्टवा यत्र माताऽपि न रज्यति किमु वक्तव्यम् अन्यविषये[2]।

एतस्य महतो दोषस्य निरसनमुखेन वेदप्रवर्तितधर्मे रुचिमुत्पादयितुम्[2]—र्थवादादयः उपयोक्तव्या भवन्ति[3]।

परिभवेति (पृ० ६१) अधर्म्यानारोग्यानायुष्यादिना इति शेषः।

---

रात्रिस्वभावप्रभवा मता या तां भूतरात्रिं प्रवदन्ति निद्राम्।
तमोभवामाहुरघस्य मूलं शेषाः पुनर्व्याधिषु निर्दिशन्ति ॥३२॥ इति
आचारभूषणे—धर्मशास्त्रे स्वापविधानम्—
नाऽर्द्रवासाः स्वपेन्न पलाशशयने न पञ्चदासकृते।
न गजभग्नकृते न विद्युद्दग्धे नाग्निप्लुष्टे न च।
बालमध्ये न वारिमध्ये न धान्ये न च गोगृहे।
न हुताशसुराणामुपरि नोच्छिष्टो न दिवेति। इति।
विष्णुपुराणेऽपि—नाविशालां न वै भग्नां न समां मलिनां न च।
न च जन्तुमयीं-शय्यामधितिष्ठेदनास्तृताम् ॥इति॥
उशनाः— न तैलाभ्यक्तशिराः स्वपेन्नादीक्षितः कृष्णचर्मणि ॥इति॥
दक्षः— प्रदोषपश्चिमौ यामौ वेदाभ्यासरतो भवेत्।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥इति॥

१ भावप्रकाशने साहित्य शास्त्रे—
"स्वभाव खेदसौहित्यव्याधिगर्भादिभिर्भवेत्।
आलस्यं तच्छिरश्शूलजृम्भणाक्षिविमर्दनैः।
स्तम्भेन गात्रमनसोः स्त्रीनीचादिषु वर्ण्यते ॥
सर्वत्र कार्यप्रद्वेषान्निद्रातन्द्रीनिषेवणात्।
शयनासनरागेण वर्ण्योऽसावितरेषु तु ॥ इति। १ अधिकारे

तदुक्तम्—नीतिसारे—
२ अलसस्याल्पतोषस्य निर्विद्यस्याकृतात्मनः।
प्रदानकाले भवति मातापि हि पराङ्मुखी ॥इति।

टीका—अलसस्य-निरुद्योगस्य अल्पतोषस्य सत्वहीनस्य निर्विद्यस्य अकृतात्मनः माताऽपिहि पराङ्मुखीभवति किमुतान्ये। इति।

३ तदुक्तम्—शा० दी०
लिङोऽभिधा सैव च शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः।
सम्बन्धबोधःकरणंतदोयं प्ररोचना चाङ्गतयोपयुज्यते। इति

## जयमङ्गलाक्रोडपत्रम्

### परिभवपाठशोधनम्

एतत्पाठ संशोधने कारणमेवं चिन्तनीयम्। अतिभोजनेन अधर्मः अनारोग्य-मनायुष्यं च भवति इति। तदुक्तं मनुना—

अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम।
अपुण्यं लोकविद्विष्टं तस्मात्तत् परिवर्जयेत्[1] ॥ इति।

इन्द्रियचपलतया यदि अतिभोजनं क्रियते तर्हि अनारोग्यादिदोषाणामुद्भवो भवति। ततश्च परिभवो भवति। अतएव लौल्यं परिभवाङ्गं भवति। एवमग्रेऽपि बोध्यम्।

### अनृतस्य दोषत्वम्

अनृतमिति (पृ० ६१) अस्य सर्वदोषकरत्वं कथं भवतीति भावप्रकाशने उक्तम् राक्षसेत्यादिना[2]।

एतेनेदं स्पष्टं भवति। मूर्खव्यसनिनायकः रौद्रः मिथ्या वदति। अतएव पर्यन्ते प्रजा तं द्विष्यति। तस्मादनृतभाषणं कदापि न कर्तव्यम्। येन मित्राणि प्राप्तव्यानि तेन स्वच्छेन भाव्यम्[3] न तु अनृतभाषणयुतेन।

---

१ अरोगो रोगाभावः तस्मै हितमारोग्यय्। आयुषे हितमायुष्यम्। तस्मादति भोजनमनारोग्यमनायुष्यं च भवति अजीर्णजनकत्वेन रोगमरणहेतुकत्वात्। अस्वर्ग्यं स्वर्गजनकयागादिविरोधित्वात्। अपुण्यमितरपुण्यप्रतिपक्षत्वात्। लोकविद्विष्टं बहुभोजितया लोके निन्दनात्। तस्मात्तन्न कुर्यात्। इति

२ राक्षसोद्धतदैतेयक्रूरादिप्रकृतिर्भवेत्।
रौद्रस्तस्यानृतं वाक्यमवज्ञापरुषोक्तयः॥
वधान्यदारलाभादिप्रतिज्ञा राष्ट्रभञ्जनम्।
हठाद्ग्राहगृहक्षेत्रदारादीनां च मत्सरः॥
देशजातिकुलाचारविद्याशौर्यादिनिन्दनम्।
आक्रोशकलहाक्षेपवाक्याज्ञाभञ्जनादयः॥
एते विभावा भृकुटीकपोलस्फुरणे मुहुः।
दन्तौष्ठपीडनं हस्तनिष्पेषो रक्तनेत्रता॥
शस्त्रास्त्रग्रहणच्छेदस्तलताडनमोटने। इति

३ मित्रं स्वच्छतया रिपुं नयबलैः लुब्धं धनेनेश्वरम्।
कार्येण द्विजमादरेण युवतिं प्रेम्णा शमैर्बान्धवान्॥
अत्युग्र स्तुतिभिः गुरुं प्रणतिभिः मूर्खं कथाभिर्बुधम्।
विद्याभिः रसिकं रसेन सकलं शीलेन कुर्याद् वशम्।

नीतिसारेऽपि—
इति पथि विनिवेशितात्मनो रिपुरपि गच्छति साधु मित्रताम्।
तदवनिपतिमत्सरादृते विनयगुणेन जगद्वशीभवेत्। इति।—

## जयमङ्गलाक्रोडपत्रम्

### उद्धतानां रा… पाठसमीक्षा

**उद्धतानाम्**। इति (पृ० ६१) एतस्य पाठस्य कारणमिदं राजमल्लो, हि उद्धतो भवति, तस्य शब्दस्य उद्धतपर्यायवाचित्वात्। तदुक्तं शब्दकल्पद्रुमे—उद्धतः राजमल्ल इति त्रिकाण्डशेषः इति।

**मूढेति**। (पृ० ६१) मूढविषये मनुना एवमुक्तमस्ति—

सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना।
न शक्यो न्यायतो नेतुं सक्तेन विषयेषु च[1] ।७।३०।

अतः मूढो नानुकरणीय इति फलति। इदमुपलक्षणम्।

धनिकोऽपि यदि मलवद्वासा भूयात् तर्हि सोऽपि परित्याज्यः। अतः मलिन-वस्त्रधारणं निषिद्धम्। तदुक्तम् आचारभूषणे पूर्वार्धे वस्त्रपरिधान-प्रकरणे—

विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च।
श्रौतं स्मार्तं तथा कर्म न नग्नश्चिन्तयेदपि ।। इति

नग्नानाह सोऽपि—नग्नो मलिनवस्त्रश्च नग्नश्चार्धपटः स्मृतः।
नग्नस्तु दग्धवस्त्रः स्यान्नग्नः स्थूलपटस्तथा ।। इति च।

अतः राजमल्लमूढावित्तकाः उद्धतवेषाः नानुकरणीयाः।

आर्यविरुद्धमिति। (पृ० ६१) आर्याः यादृशं वेषं नाभिनन्दन्ति स वेषः आर्यैः अनभिगम्यत्वान् न कार्यः।

### आर्यपदवाच्यत्वम्

अत्रेदं बोध्यम्। आर्यत्वं हि न जातिवाचकमपितु उपायविकल्पे कृतक्षणवाचकत्वम्।

तदुक्तम्—यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः।
स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते ।। इति

टी० आर्याः उपायविकल्पे कृतक्षणाः इति। एवंविधाः आर्याः सर्वासु जातिषु संभवितुमर्हन्ति। तेन अमुकदेशीयः आर्य इति नास्ति। यथा भगवत्पूज्यपादाः श्री शङ्कराचार्याः द्रविडदेशस्थिताः उत्तरदेशस्थैः सर्वैः आर्यत्वेन मन्यन्ते। महाराष्ट्र-देशस्था विज्ञानेश्वरादयः द्रविडदेशस्थैः आर्यत्वेन स्वीकृताः। अतः आर्यत्वमनार्यत्वं

---

राज्ञः मित्रलाभे कीदृशी स्वाभिभक्तानां स्थितिर्भवतीति श्री पेशवेमहोदयाना-मितिहासेनावगतं भवति। तथाहि—

यदा अहमदनगरे शत्रुभिः पेशवे महाराजः पराजितः। तदा स्वाम्यनुराग-परतन्त्रं यवनसैन्यमपि जीवितं समर्पयति स्म।

१ टी०—सदण्डो मन्त्रिसेनापतिपुरोहितादिसहायरहितेन मूर्खेण लोभवता शास्त्रासंस्कृतबुद्धिपरेण नृपतिना शास्त्रतो न प्रणेतुं शक्यते ।७।३०। इति।

## जयमङ्गलाक्रोडपत्रम्

चाधिकृत्य पारस्परिकविरोधोत्पादनम् तथा अन्योपस्थापितशङ्कामात्रेण आत्मनः विघटनोत्पादनञ्च नोचितम्, शेषं प्राक् प्रपञ्चितम्। (खं० १ पृ० ३६१)

**अनर्थेति**। (पृ० ६१) अनर्थसंयोगमिति पाठान्तरम्। एतत्पाठे विद्यते क्षयो यैः ते अनर्थाः। इति विग्रहो बोध्यः। एवंविधानां संयोगे व्यसनित्वं भवतीत्यत्र प्रमाणं नीतिसारोक्तं बोध्यम्[1]।

**मायेति**। (पृ० ६१) मायाविदां व्यवहारः राज्ञा न स्वयं द्रष्टव्यः कदाचित् तेषां कोपप्रसक्तेः। मायायोगविदां व्यवहारं कुतो वर्जयेदित्यत्र हेतुमाह अनर्थेति। तेन मूले उक्तस्य अनर्थसंयोगस्य साधनाय इदं हेतुपरं वाक्यं बोध्यम्। तस्मात् राज्ञा तथाविधो व्यापारो न कदापि कर्तव्यः येन श्रोत्रियादयः राज्ञे कुप्येयुः[2]।

ननु मायायोगविदादीनां कलहे प्रसक्ते कथं निर्णेतव्यम्। इतिचेत् तथाविधैरेव[3]।

### कौटिलीयप्रकरणानां निषेधे निरूपणीये विस्मरणम्

ननु अरिषडवर्गत्यागेनेन्द्रियजयं कुर्वीत अर्थसंयोगेनेत्येतत्पर्यन्तस्य व्याख्याने कौटिलीयार्थशास्त्रगतानि तत्तत्प्रकरणान्यपि स्मृतानि टीकाकृता। वर्जनप्रसङ्गे तु तदनुबन्धिप्रकरणानि कुतो न स्मृतानि। इति चेदुच्यते। विधिर्हि सर्वाङ्गोपसंहारमपेक्षते। अन्यथा देशकालक्रमादिनिदर्शकस्य प्रयोगविधेः तथात्वं न सम्यक्तयाऽवगतं स्यात्। अतस्तदवगमाय कर्तव्यविधानावसरे पूर्वोत्तरप्रकरणानि स्मृतानि। परस्त्र्यादिव्यसननिषेधावसरे तु सर्वाङ्गोपसंहारस्यानपेक्षितत्वात् एतन्निरूपणप्रसङ्गे पूर्वोत्तरप्रकरणानि उपेक्षितानि।

### कामसूत्रोक्तार्थचिन्तकमतविरोधपरिहारः

ननु कामसूत्रे विषयान्नसेवेति अर्थचिन्तकानां मतं निरूप्यते। तद्विरुद्धमत्र कथमभिधीयते। इतिचेत् विविच्यते।

---

१ तद्यथा—कामजव्यसनवर्गे—प्राणग्लानिः सुहृन्नाशः प्रज्ञाश्रुतिमतिभ्रमः।
सद्भिर्वियोगोऽसद्भिश्च संयोगोऽनर्थसङ्गमः। १५। ६० सर्ग

टी० अनर्थः पानशौण्डादिना

रहस्यभेदस्तत्पक्षादकार्येषु प्रवर्तनम्।
ईर्ष्यामर्षस्तथा क्रोधो निरोधः साहसं तथा ।५६।१४ सर्ग

टी० अकार्येषु नृत्यगीतादिषु—

दुष्प्रणीतः कामक्रोधाभ्यामज्ञानाद् वानप्रस्थपरिव्राजकानपि कोपयति किमङ्ग पुनर्गृहस्थान्। १ अधिकरण ४ अध्याये

२ अग्न्यगारगतः कार्यं पश्येद्वैद्यतपस्विनाम्।
पुरोहिताचार्यसखः प्रत्युत्थायाभिवाद्य च।
तपस्विनां तु कार्याणि त्रैविद्यैः सह कारयेत्।
मायायोगविदां चैव न स्वयं कोपकारणात्। इति। अ० १९ अध्याय

## जयमङ्गलाक्रोडपत्रम्

अत्र कामसूत्रे एवं प्रतिपादितमस्ति—

"न कामांश्चरेत् धर्मार्थयोः प्रधानयोरेवमन्येषां सतां प्रत्यनीकत्वात् । अनर्थजन-संसर्गमसद्व्यवसायमशौचमनायतिं चैते पुरुषस्य जनयन्ति । ३२ । तथा प्रमादं लाघवमप्रत्ययमग्राह्यतां च । ३३ । बहवश्च कामवशगाः सगणा एव विनष्टाः श्रूयन्ते । ३४ । यथा दाण्डक्यो नाम भोजः कामाद्ब्राह्मणकन्यामभिमन्यमानः सबन्धुराष्ट्रो विननाश । ३५ । देवराजश्चाहल्यामतिबलः, कीचको द्रौपदीं, रावणश्च सीतामपरे चान्ये च बहवो दृश्यन्ते कामवशगा विनष्टा इत्यर्थचिन्तकाः[1] । ३६ । इति ।

अत्र न कामांश्चरेत् इत्युपक्रम्य अर्थचिन्ताकानां मतं यन्निरूपितं तत् अस्मिन्न-र्थशास्त्रे नोपलभ्यते तस्मात् वात्स्यायनीयमिदं मतं प्राचीनाचार्याणां संभवतीत्यु-

---

टीका— न कामानिति । प्रधानयोरिति ताभ्यां कामोत्पत्तेः । प्रत्यनीकत्वा-दिति । कामासक्ततया धर्मस्यानाचरणादिति तद्विलोमाचरणाच्च । अर्थस्यानर्जनात् । मद्यनटनर्तकीनटी पारितोषिकासद्व्ययविरोधवर्ती कामः । सतामिति । ज्ञानवृद्धाः तपोवृद्धाः सन्तः कामासक्तिं त्यजन्ति । तेषां च प्रत्यनीकवर्तिनोऽनर्थजना नटनर्तक गायकादयः तैः संपर्कं जनयन्ति । असद्व्यवसायमशोभनव्यवसायं निशीथाभिसरण-प्राकारलङ्घनादिकम् । अशौचं यथोक्तशौचाकरणात् । अनायतिमप्रभावम् कामगर्दभ इति । ३२ । तथा प्रमादं । शरीरोपघातं । परदारादिगमनादौ । लाघवं तारल्यं सहसा प्रवर्तनात् । अप्रत्ययमविश्वासमसत्सङ्गात् । अग्राह्यतां हेयतामपूज्यवृत्तित्वात् । ३३ । बहवोऽनेके कामायत्ता विनष्टाः इति संबन्धः । सगणाः न केवलं सेवितारः तत्परिवारा अपीत्यर्थः । ३४ । तथा च दृढीकरणार्थमाख्यानकम् । दाण्डक्य इति संज्ञा । भोज-इति भोजवंशजः । अभिमन्यमानोऽभिगच्छन् । स हि मृगयां गतो भार्गवकन्यामाश्रम-पदे दृष्टवा जातरागो रथमारोप्य जहार । ततो भार्गवः समित्कुशानादायागत्य तामपश्यन्नभिध्याय च यथावृत्तं राजानमभिशशाप । ततोऽसौ सबन्धुराष्ट्रः पांसु-वर्षणावष्टब्धः ननाश । तत्स्थानमद्यापि दण्डकारण्यमिति गीयते । ३५ । देवराज इन्द्रोऽहल्यामभिमन्यमान इत्येव । सहि गौतमाश्रमे तद्भार्यामहल्यां चकमे । ततः समित्कुशानादायागते गौतमे तद्भार्याऽहल्या शक्रं गर्भस्थमकरोत् । तदैवोपनिमन्त्रणेन गौतमः सभार्य एवाश्रमान्तरं गतः । ततस्तेन योगचक्षुषा समुपालब्धेन्द्रागमनेनास्मै समुपनायितमासनत्रयं दृष्ट्वा चासौ किमेतद्भार्याद्वितीयस्य त्रितयमिति जातशङ्को ध्याने यथावृत्तमवलोक्य रोषात्सहस्रभगो भवेति शशाप । ततोसौ देवराजोऽपि कामा-द्विनाशप्रख्यां तादृशीमवस्थामाससाद । यस्याद्यापि कलङ्कोऽहल्यायै जारइति नास्त-मेति । अतिबलो नागसहस्रबलवत्वात् । सोऽपि कामात् द्रौपदीमभिलषन् भीम-सेनेन हत इति प्रतीतमेतत् । विनश्यन्तो दृश्यन्ते इत्यत्र प्रत्यक्षं प्रमाणम् । किं तत्र पूर्ववृत्तोदाहरणेनेति गम्यते । ३६ । इति ।

[ धर्मादिषु प्राधान्यनिर्णयः ]

**धर्मार्थाविरोधेन कामं सेवेत, न निस्सुख[1]स्स्यात् । समं वा त्रिवर्गमन्योन्या[2]नुबन्धम् । एको ह्यत्यासेवितो धर्मार्थकामानां आत्मानमितरौ च पीडयति ॥ 'अर्थ एव प्रधानः' इति कौटल्यः—अर्थमूलौ हि धर्मकामाविति ॥**

---

## जयमङ्गलाक्रोडपत्रम्

न्नीयते । तदेव मतं नीतिसारकृतापि "सेवेत विषयान् काले" इति सिद्धान्तं साधयितुं पूर्वपक्षरूपेण "विषया न सेवितव्याः" इति प्रतिपादितमस्ति "शुचिशष्पाङ्कुराहार"[3] इत्यादिग्रन्थेन ।

## श्रीमूला

धर्मेत्यादि । धर्मार्थाविरोधेन धर्मार्थयोरबाधेन कामं तृतीयपुरुषार्थम् । वेति पक्षान्तरे । तच्च अन्योन्यानुबन्धं त्रिवर्गं समं सेवेतेति । परस्परसंसृष्टान् धर्मार्थकामांस्तुल्यमात्रया सेवेतेत्यर्थः । सममसेवने का दोषस्तत्राह--धर्मार्थकामानां मध्ये एकः अन्यतमः अत्यासेवितः अतिमात्रं व्यसनितया सेवितः सन् इतरौ अर्थकामौ धर्मकामौ धर्मार्थौ वा, पीडयति हि ।

धर्मादीनां समप्राधान्यमरोचयमान आह—अर्थ एवेति । एवकारेण धर्मकामयोरप्राधान्यमुक्तम् । तत्र हेतुरुच्यते—अर्थमूलौ हीत्यादिना । अर्थमूलौ अर्थसाध्यौ ।

---

नो०टि० १ निःसुख इति । प्रतिषेधद्वयेनेत्युक्तम् । यदल्पसुखः स्यादिति ।

,, २ अन्योन्येति । अन्यो द्वावेकं वा स्वोत्पत्याऽनुबध्नाति ।

३ शुचिशष्पाङ्कुराहारो विदूरक्रमणक्षमः ।
लुब्धकाद्गीतलोभन मृगो मृगयते वधम् ॥ ४१-१ सर्गे नी० सा०
गिरीन्द्रशिखराकारो लीलयोन्मूलितद्रुमः ।
करिणीस्पर्शसंमोहादालानं याति वारणः ॥ ४२ ।
स्निग्धदीपशिखालोक-विलोभित विलोचनः ।
मृत्युमृच्छत्यसन्देहात् पतङ्गः सहसा पतन् ॥ ४३ ।
दूरेऽपि हि भवन् दृष्टेरगाधे सलिले चरन् ।
मीनस्तु सामिषं लोहमास्वादयति मृत्यवे ॥ ४४ ।
गन्धलुब्धो मधुकरो दानासवपिपासया ।
अभ्येत्यसुखसञ्चारान् गजकर्णझलज्झलान् ॥ ४५ ।
एकैकशो विनिघ्नन्ति विषया विषसन्निभाः ।
क्षेमी तु स कथं नुस्याद् यः समं पञ्च सेवते । ४६ । इति

## वैदिकसिद्धान्तसंरक्षिणी

धर्मेति—पर्ववर्जमित्यादिनिषेधाविरोधेन ऋतुकालानुसरणेन च । तदुक्तम्—

अग्निहोत्रोपचरणं जीवनं च स्वकर्मभिः ।
धर्मदारेषु कालेषु पर्ववर्जं रतिक्रिया[1] ।। इति

अर्थेति । सुखसाधनीभूतवस्तुमात्रसंपादनेन । कामं "धर्माविरोधि सुखम् । न निःसुखस्यात्" इत्यत्रैवोक्तत्वात् । सेवेत आदरपूर्वकं सेवेत धर्मार्थयोरिव तस्य प्रधानत्वात् धर्मार्थाविरोधेनावश्यं उपयुक्तमात्रं कामः सेव्यः न प्रचुरः, तदुक्तम् प्रतिषेधद्वयेन न निःसुखस्यादिति अल्पसुखः स्यादिति भावः । तेन नञ्द्वयं सार्थकम् ।

सममिति निष्कृष्टपूर्वोद्धृतसत्वाविरोधेन । त्रिवर्गं धमार्थकामपुरुषार्थम् । तदुक्तम्—"धर्मादर्थोर्थतः कामः कामात्सुखफलोदयः" इति । अन्योन्यानुबन्धम् । धर्मादीनामन्यतमं द्वाभ्यामेकेन वा अनुबद्धम् । तदुक्तम् टिप्पण्यामपि अनुबध्नाति इति । तथा जयमङ्गलायामपि नीतिसारीयायाम—"अतिदानेन धर्मोऽर्थं हत्वा कामं धर्मान्तरञ्च हन्ति । तथा अर्थस्तादात्विकोप्युपादीयमानः ऐलस्येव धर्मकामौ हत्वा अर्थमपि हन्ति । कामः पुनरत्यासेव्यमानः स्त्रीव्यसनादिभिश्चतुर्व्यसनैः धर्मार्थौ हत्वा शरीररक्षयादात्मानमपि हन्ति" इति । मनुष्यवत्याः भूमेः अर्थस्य संरक्षणार्थं प्रवृत्तो राजा उद्देश्यत्वेन अर्थमेव मन्यताम् इति दर्शयितुमाह अर्थेति । प्रधानः उद्देश्यं । तत्र हेतुमाह अर्थेति ।

## जयमङ्गला

स्वदारेष्वपि कामसेवायां विधिमाह—धर्मार्थाविरोधेनेति । ऋतावुपेयात् सर्वत्र वा प्रतिषेधवर्जमिति धर्माविरोधः । कामौपयिकवस्तुमात्रसम्पादनादर्थाविरोधः । यद्येवन्धर्मार्थाविव सेव्यौ प्रधानत्वात् , न काम इत्यत्राह—न निस्सुखः स्यादिति । अवश्यमविरोधेन सेव्यम् । तस्य धर्मार्थयोः फलभूतत्वात् । पितृक्रियाङ्गत्वाद्धर्मार्थम्, अन्वयादिना चार्थार्थम् । तस्मादविरोधेन कालं विभज्य मात्रया सेव्यते । तथा चाह गौतमः—

"न पूर्वाह्णमध्यन्दिनापराह्णनफलान् कुर्यात् । यथाशक्ति धर्मार्थकामेभ्यः' । ( धर्मसू अध्या. ९. सू. ४८ ) इति । समं वा त्रिवर्गं सेवते । नैकमतिशयेनेत्यर्थः । न केवलं समम्, अन्योन्यानुबन्धम् । यस्मिन् सेव्यमानेऽन्योप्यनुबध्यते[2] । तत्र धर्मोऽर्थेन कामेनोभयेन वेति अर्थकामानुबन्धः । अर्थो धर्मेण कामेनोभयेन वेति धर्मकामानुबन्धः । कामो धर्मेणार्थेनोभयेन वेति धर्मार्थानुबन्ध इति । एकस्यातिसेवायां दोषमाह-एको ह्रीत्यादि । धर्मादीनां मध्ये एकोऽत्यन्तसेवितः आत्मानमितरौ च पीडयति । तद्यथा—अतिदानेन धर्मोऽर्थं पीडयित्वा धर्मान्तरं च पीडयति । तपश्चात्यन्तं

---

१ काले ऋतुकाले प्राप्ते पर्ववर्जम् अष्टमी चतुर्दशी पञ्चदशीपरिहारेणेत्यर्थः । अशुद्धम्

२ सेव्यमानेप्यनु ।

## जयमङ्गला

सेवितं ? कामं बाधित्वा शरीरक्षयाद् धर्मार्थौ बाधते। अर्थोऽपि तादात्विकोऽस्ति य उपादीयमानः ऐलस्येव धर्मकामौ बाधित्वार्थमपि बाधते। कामोऽत्यासेव्यमानः शरीरक्षयादात्मानं पडियति। असमुत्थानादर्थम्। अर्थाभावाद्धर्मम्। तस्मात् समं सेवेत।

तत्रापि शरीरान्तरोपात्तधर्ममूलत्वेऽप्यर्थकामयोः वर्तमानव्यापारापेक्षत्वादुपदेशमाह—अर्थमूलाविति। यस्माद् राज्ञो धर्मकामावर्थमूलौ, अर्थमुपजृम्भयतो द्वावप्यविरोधेन भवतः। तस्मादन्योन्यानुबन्धित्वेन अर्थस्य विशेषः।

## जयमङ्गलाक्रोडपत्रम्

प्रकृते च अमुमेव पूर्वपक्षं खण्डयितुमाह स्वदारेष्विति। उक्तञ्चैतन्मूलकृतापि "न च निःसुखस्या"दिति[१]।

---

उपाध्यायनिरपेक्षायामपि— एवं सर्वथा विषयसेवानिषेधे प्राप्ते चायं नियमः इति दर्शयन्नाह सेवेतेति। १-४९ नी०।

सेवेतोपयुञ्जीत विषयान् शब्दादीन्। काले तत्तेवावसरे। तथा च कौटिल्यः धर्मार्थाविरोधेन कामं सेवेत न च निस्सुखः स्यात्। तथा पञ्चमे दिवसस्याष्टऽमे वा भागे स्वैरविहारमिति। (कौ अ० १७।३।) शब्दादिविषयसेवानुमता। रात्रेरपि तृतीयेष्टमे भागे तूर्यघोषेण संविष्ट इति। संवेशनं हि सुरतमभिधीयते। एवमहोरात्रे विषयसेवार्थं याम एकोनुमतः। इति।

एतदेव कामसूत्रेणानुमोदितम्— तद्यथा

श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानामात्मसंयुक्तेन मनसाधिष्ठितानां स्वेषु स्वेषु विषयेष्वानुकूल्यतः प्रवृत्तिः कामः। ११।१२। शरीरस्थितिहेतुत्वादाहारसधर्माणो हि कामाः। फलभूताश्च धर्मार्थयोः। इति।

का० १ अ० २ अ० ३७ सू०

टी० आहारसधर्माण इत्याहारतुल्याः। यथा हारोऽजीर्णादिदं षं जनयन्नपिप्रतिदिनं शरीरस्थितये सेव्यते तथा कामोपि। अन्यथा रोगोद्रेकादुन्मादादिदोषेण न शरीरस्थितिरिति। फलभूताश्च धर्मार्थयोरिति। सुखार्थधर्मार्थयोः सेवा। तदसेवायां तौ वन्ध्यभूतौ केवलमायासफलौ स्याताम्। तथाचोक्तम्—

धर्ममूलः स्मृतः स्वर्गस्तत्रापि परमाःस्त्रियः।
गृहस्थधर्मो दुर्वारः नराणां धर्मयत्नजः।
हिताश्चापत्यसन्तानैः स्त्रियस्त्विह परत्र च।
परं सप्रत्ययो भोगः प्रकर्षार्थाय वै स्त्रियः। ३७। इति (ज० मं०)

## जयमङ्गलाक्रोडपत्रम्

### कामं सेवेतेति विधिप्रवृत्तिः

**धर्मार्थेति** । (पृ० ७२) कथं कामसेवायां धर्मार्थविरोधः ? आह ऋताविति । तेषां मते धर्मार्थावेव प्रधानम् । तन्मतेन स्पष्टीकर्तुमाह तस्येति । अयं भावः स्वर्गार्थमनुतिष्ठतः रागः यथा अपेक्षितो भवति तथा धर्मार्थसाधनार्थं कामः अपेक्षित इति बोधनार्थं धर्मार्थाविरोधेन कामं सेवेतेति विधिः प्रवर्तते । तत्राऽयं निष्कर्षः । सेव् धात्वर्थः प्रीतिजनको व्यापारः । विध्यर्थः नैयायिकमतेनेष्टसाधनत्वम् । तथा च प्रीतिजनको व्यापारः कामः इष्टसाधनं इत्येवंपरं विधिवाक्यं नैयायिकमतेन बोध्यम् । मीमांसकमतेन तु विध्यर्थः आप्ताभिप्रायः इच्छारूपः स च स्वज्ञानाधीनेष्टसाधनत्वानुमिति-प्रयोज्यत्वसंबन्धेन आख्यातार्थभावनायामन्वेति । धात्वर्थश्च कारणतया, धर्मार्थौ च भाव्यतया इत्येवंरीत्या स्वर्गकामो यजेतेति वाक्यार्थवत् प्रीतिजनक कामात्मक व्यापार-करणिका उक्तसंबन्धेन विध्यर्थशाब्दभावनाविशिष्टा धर्मार्थभाव्यिका भावना इत्येवं अस्य विधिवाक्यस्य अर्थो बोध्यः । अत्र प्रदर्शितं भाव्यत्वं निरूपयति धर्मार्थयोरिति । धर्मार्थत्वं निरूपयति पित्रित्यादिना । अर्थार्थत्वमाह अन्वयेति ।

**अविरोधेनेति** । (पृ० ७२) "दिनमष्टधा रात्रिं च विभज्य आत्मबलानुकूल्येन वा" इति वक्ष्यमाणमूलग्रन्थाविरोधेन । अर्थात् सुखसामान्याभावान्नस्यात् । किन्तु निःशब्दस्य अल्पार्थत्वात् अल्पसुखः स्यात् इति भावः अधिकसुखाकाङ्क्षायां तु विषयासक्ति-प्रसङ्गः आपद्येत । एतदेवोक्तं नीतिसारेऽपि—

"सेवेत विषयान्काले मुक्त्वा तत्परतां वशी" । इति ।

धर्मार्थत्वं प्रमाणयति गौतममइत्यादिना ग्रन्थेन ।

"न निस्सुखस्यादि"तिमूलमल्पसुखस्स्यादिति टिप्पण्यनुसारेण व्याख्यातम् । तत्र अनभिरुचिं ज्ञात्वा अन्तिमसुखभोगावधिं प्रदर्शयितुमाह नैकमिति । तथा च राज्य-संरक्षणार्थमपेक्षितस्य सत्वस्य प्राङ्निर्दिष्टस्वरूपस्य अतिक्रमो यथा न भवेत् तथा विषयसेवनमनुमतमिति हृदयम् ।

अन्यथा दाण्डक्यादीनां विनाशस्येवाजितेन्द्रियाणां अन्येषां येषां केषामपि विनाशस्य अवश्यंभावित्वमापद्यते । तदेतत्सर्वं कामसूत्रकृदुक्त्युपन्यासेन प्राक् प्रदर्शित-मस्ति "न कामांश्चरेदि"त्यादिना । (खं० २ पृ० ७०)

**अनुबन्ध इति** । (पृ० ७२) एतत्सर्वं ग्रन्थजातं धर्मार्थानुबन्धइत्यन्तं कामसूत्रीय-व्याख्यानेन स्फुटं भवति तट्टिप्पण्यां द्रष्टव्यम्[1] ।

---

[1] शतायुर्वै पुरुषो विभज्य कालमन्योन्यानुबद्धं परस्परस्यानुपघातकं त्रिवर्गं सेवेत । १ ।

(टी०) विभज्य—वक्ष्यमाणेन न्यायेन ।

अन्योन्यानुबद्धमिति—धर्मादीनामन्यतमं द्वाभ्यामेकेन वानुबद्धम् ।—

## जयमङ्गलाक्रोडपत्रम्

विज्ञानेश्वरादिमतेन अर्थकामयोः धर्ममूलत्वं साध्यते। अत्र तु अर्थमूलत्वं तयोःसाध्यते। तत्सङ्गमयितुमाह तत्रापीति (पृ० ७३)।

### अर्थएवेति मूलपाठानुसारेण चिन्ता

मूले प्रधान इति। अत्रेदं बोध्यम्–'अर्थ एव प्रधान' इति कौटिल्यसूत्रं उद्धरणाभावात् जयमङ्गलासम्मतमस्ति न वेत्यत्र प्रमाणं नोपलभ्यते। योग्घममतेऽपि अयं पाठो नास्ति तथापि श्रीमूलायां यत्परंपरायामेतत्सूत्रं वर्तते तन्मतानुसारेण तात्पर्यं विविच्यते।

तथाहि—"शरीरस्थितिहेतुत्वादाहारसधर्माणो हि कामाः। फलभूताश्च धर्मार्थयोः" इत्युक्त्या (१।२।३७) वात्स्यायनेन विषयसेवा विहिता कामसूत्रे वर्तते। अत्र शरीरस्थितिहेतुं संचिन्त्य अर्थशास्त्रकृतापि "कामं सेवेत" इत्युक्तम्। तथापि अस्य सूत्रस्यायमभिप्रायः—इतरवत् राजा प्राधान्येन कामे प्रवर्तेत तर्हि तदविरोधेन अर्थाः अर्जनीयाः पालनीयाश्च भविष्यन्ति। कामविरोधे तु अङ्गभूतः अर्थ एव परित्यक्तव्यः स्यात्। उद्देश्याङ्गयोर्विलोपप्रसङ्गे उद्देश्यं न हातव्यमिति मीमांसकैः साधितं वैदिकसिद्धान्तसंरक्षिण्यां प्रथमाध्याये उद्धृतममस्ति[1]।

अतः कामं प्रधानीकृत्य साधारणो जनः सेवितुमर्हति। राजा तु न तथा। किन्तु अर्थं प्रधानीकृत्य कामं सेवेत राजा इति। तत्र प्रमाणस्य कामसूत्रे उपलम्भात्[2]।

---

तद्यथा—प्रजार्थिनो धर्मपत्न्यामनभिप्रेतायामृतावभिगमनं धर्मः कामानुबद्धः।
अपरिणीतस्य सवर्णानभिप्रेतकन्यालाभोऽर्थो धर्मानुबद्धः।
परिणीतस्याधमवर्णादभिप्रेतकन्यालाभोऽर्थः कामानुबद्धः।
धर्मपत्न्यामभिप्रेतायां कामातुरायामनृतौ कामो धर्मानुबद्धः।

परिणीतस्य निष्किञ्चनस्यासवर्णायामर्थवत्यामभिप्रेतायामधिगतायां कामोऽर्थानुबद्धः। इत्येकानुबद्धाः।

अपरिणीतस्य सवर्णायामनन्यपूर्वायामभिप्रेतायां यथाविधिसंयोगो धर्मोऽर्थ—कामानुबद्धः। तस्यैवाभिप्रेतसवर्णकन्यालाभोऽर्थो धर्मकामानुबद्धः। तस्यैवार्थरूपवत्यां परस्परोत्कण्ठयोद्वाहितायां कामो धर्मार्थानुबद्धः। इति द्व्यनुबद्धाः।

परस्परस्यानुपघातकमिति। यत्रानुबन्धो नास्ति तत्रैकमितरयोरनुपघातकम्। एकानुबन्धे वान्यस्यानुपघातकं सेवेत। इति। २ अध्याये। १।

१ अयज्ञिया वै माषाः (प्र०खं०टि०पृ० ३६)

२ अर्थश्च राज्ञः तन्मूलत्वाल्लोकयात्रायाः वेश्यायाश्चेति त्रिवर्गप्रतिपत्तिः १५

टी०—अर्थस्तु राज्ञो गरीयान् तन्मूलकत्वादिति, वर्णाश्रमाचारलक्षणा लोकयात्रा सा मा भूदन्यथेति तस्याः पालनं राज्ञो धर्मः। तच्च प्रभुशक्तौ सत्याम्। प्रभुशक्तिश्च कोषदण्डबलम्। ते चार्थत इति तन्मूला लोकयात्रा। इति। १।२।

[ आचार्यामात्यादिसचिवसंपत्त्यावश्यकता ]

मर्यादां[1] स्थापयेत् आचार्यानमात्यान् वा, य एनमपायस्थानेभ्यो वारयेयुः, छायानालिकाप्रतोदेन वा रहसि प्रमाद्यन्तमभितुदेयुः ॥

सहायसाध्यं राजत्वं चक्रमेकं[2] न वर्तते ।
कुर्वीत सचिवांस्तस्मात् तेषां च श्रृणुयान्मतम् ॥६॥

इति विनयाधिकारिके इन्द्रियजये शास्त्रार्थानुष्ठनम् । राजर्षिवृत्तं)
सप्तमोऽध्यायः इन्द्रियजयस्समाप्तः ॥

---

## जयमङ्गलाक्रोडपत्तम्

### प्राधान्येन कामसेवने दोषः

अथ तथा सेवने को दोषः ? उच्यते ।

यदि नृपः कामं प्रधानीकृत्य अर्थं चिन्तयेत्तर्हि प्रधानाविरोधेन अर्थाः अर्जनीयाः भवन्ति । एवं स्थिते उद्देश्यभूतस्य कामस्य विलोपप्रसङ्गे राज्ञा अर्थः परित्यक्तव्यः स्यात् तथासति लोकयात्राया उच्छेदः स्यात् । एतदेव प्रादर्शि नीतिसारेणापि[3] तस्मादित्यादिना ।

यद्यपि एतट्टीकायां "अर्थायार्थान्तराय कामोऽर्थप्राप्तः" इत्येवंरीत्या कामोऽपि सङ्गृहीतः तथापि कामस्य प्राधान्यं न स्वीकर्तव्यं इत्याशयो बोध्यः ।

### अर्थस्य धर्ममूलत्वसमन्वयः

किञ्च अर्थस्य प्राधान्यं यदा मन्यते तदा इदमपि मन्तव्यं यत् धर्मोऽपि सुरक्षितो भवेद् यथा तथा स सेवितव्यः इति । तद्व्यक्तम् धर्मविजये नाटके[4]—

अर्थस्य धर्ममूलत्वं यदन्यत्र उच्यते । तत्तु जन्मान्तरधर्ममूलत्वाभिप्रायेण । तदुक्तम्—
"जन्मान्तरोपार्जितधर्ममूलत्वात् तदुपबृंहणीयत्वाच्चार्थस्येति । इति ॥ का० नी० ज० मं० १ सर्ग

## श्रीमूला

मूर्धाभिषिक्तं राजर्षिवृत्तमाह—मर्यादामिति । आचार्यान् गुरून् अमात्यान् मन्त्रिणो वा, मर्यादां स्थापयेत्, सीमां परिकल्पयेत्, ताद्धर्म्यात् ताच्छब्द्यम् सीमामिवालङ्घनस्थानमात्मनो विदध्यादित्यर्थः । ते कीदृशाः, ये एनं राजानम्,

---

नी० टि० १ मर्यादामिति । तान् मर्यादां कुर्यादित्यन्वयः ।
,, २ चक्रमिति । राज्यचक्रम् ।
३ तस्माद्धर्मं पुरस्कृत्य यतेतार्थाय पार्थिवः ।
धर्मेण वर्धते राज्यं तस्य स्वादु फलं श्रियः ॥इति । १ स०
४ मुहुर्मुहुः काममुखं निरीक्षन् । भजन्नथार्थस्य विधेयभावम् ।
मोक्षेण पृष्ठेनुगतः कथञ्चित् । धृतावलंबः परमूर्ध्वगत्या ॥ इति ।

## श्रीमूला

अपायस्थानेभ्यो वारयेयुः अनर्थकारणानुष्ठानेभ्यो निवर्तयेयुः, रहसि प्रमाद्यन्तम्-अन्तःपुरादावतिप्रसजन्तमेनं, छायानालिकाप्रतोदेन छायात्रिपौरुष्यादिरूपं छाया-प्रमाणं अतीतघटिकावेदकं राजप्रणिधिप्रकरणे वक्ष्यमाणं, नालिका घटिकाप्रमाणं तदुभयरूपेण प्रतोदेन कार्यान्तरकालातिपातसूचनद्वारा प्रसक्तेष्टकर्मप्रत्यूहजनकतया मनोव्यथाकारित्वात् प्रतोदतुल्येन पुनःपुनश्छायानालिकानिवेदनेनेत्यर्थः, अभितु-देयुर्वा परिव्यथयेयुश्च प्रमादभङ्गार्थम् ।

किमर्थं यथोक्तसचिवस्थापनेनात्मा परतन्त्रतां नीयत इति चेत् तत्राह—सहायेत्यादि । सहायसाध्यं सहायनिर्वाह्यन्नत्वेकाकिनात्मना निर्वाह्यम् । तत्र दृष्टान्तः चक्रमेकं न वर्तत इति, शकटादौ युक्तम् एकं चक्रान्तर-सहायरहितं चक्रं न परिभ्रमति । सचिवान् आचार्यानमात्यांश्च । श्रुणुयाच्च श्रुत्वानुतिष्ठेच्च ।

इति कौटिलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे
सप्तमोऽध्यायः इन्द्रियजये राजर्षिवृत्तम् ।
इन्द्रियजयः समाप्तः ।

## वैदिकसिद्धान्तसंरक्षिणी

अकार्येषु आसक्तौ तन्निराकरणोपायं दर्शयति मर्यादामिति । मर्यादां सीमानमिव तं प्राप्य प्रवाह इव राजा अकार्यान्निवर्तेत । गुर्वादिवाक्यमादरणीयमिति भावः । तदुक्तम् टिप्पण्याम् तान्मर्यादाङ्कुर्यादित्यर्थः इति ।
आचार्यानिति (पृ० ७६) उपलक्षणार्थञ्चैतत् बन्धुमित्रादीनाम्[1] ।
आचार्यादयः अपायस्थानेभ्यः व्यसनस्थानेभ्यः वारयेयुः निवर्तयेयुः ।
तन्निवारणोपायमाह—छायेति । त्रिपौरुष्यादिच्छायेति भावः[2] ।
वाहयेयुः वाहनमिवेति पाठान्तरम् ।
प्रतोदेनेति (पृ० ७६) प्रतोदतुल्येन निवेदनेन[3] ।

---

१ संक्षेपादिति सद्वृत्तं बन्धुमित्रानुजं विनाभ् । (का० स० ५)

२ सुवर्णमाषकाश्चत्वारश्चतुरङ्गुलायामाः कुंभाच्छिद्रमाढकमंभसो वा नालिका द्वादशाङ्गुलं शङ्कुप्रमाणम् । तदुक्तम्—द्वादशाङ्गुला वितस्तिः छायापौरुषञ्च । २ अधि० २० अध्याय । ३८ प्रकरणम् ।

(टी०) गणपतिशास्त्रिणः 'नालिकायाः प्रकारान्तरमाहुः—सुवर्णेत्यादि । सुवर्णमाष-काश्चत्वारश्चतुरङ्गुलायामा इति मेयमानयोरभेदोपचारात्सुवर्णमाषकचतुष्टय प्रमाणा चतुरङ्गुलदीर्घा जलनिर्गमनालशलाकोच्यते, कुंभच्छिद्रं तत्समानं जल-धारकघटच्छिद्रम्, आढकमम्भसः तत्कुंभगतमाढकमितं जलम्, इतिशब्द इहाध्या-हार्यः, इति वा नालिका इत्येतत्त्रितययोगेन वा नालिका परिच्छिद्यते । यथोक्तमान-शलाकायुक्तच्छिद्रात् कुम्भादाढकपरिमितं जलं छिद्रतो यावता कालेन गलति सा वा नालिकेत्यर्थः । इति ।

३ बोधयेयुः प्रमाद्यन्तमुपायैर्नालिकादिभिः । रहसि रहस्ये । प्रमाद्यन्तं विषय परवशम् । तदुक्तमानन्दगिरिणा ।

कार्यान्तरासक्ततया चिकीर्षितस्य कर्तव्यस्याकरणं प्रमादः । इति ।१४।८

## वैदिकसिद्धान्तसंरक्षिणी

अभितुदेयः। उद्वेजयेयुः राजपुत्ररक्षणप्रकरणोक्तदिशा। पशूनिवेति शेषः। सहायेति (पृ० ७६) अमात्यप्रभृतयः सहायाः। राजत्वं राजकर्म। चक्रं समूहसाध्यं कर्म वा। कुलालचक्रमिव। राज्यचक्रमिति टिप्पणी। एकमसहायम्। वर्तते प्रवर्तते। तस्मात् सहायेन राजकर्मप्रवर्तनात्। कुर्वीत अमात्यपदे नियोजयेत्। सचिवाः सहायाः तेषम् सहायानाम्। मतं शास्त्राहितपरिज्ञानपूर्वकं मतं सुमतिं। तया असंशयं भूतिसमुत्पत्तेः[1]

इति श्री वैदिकसिद्धान्तसंरक्षिण्यां शास्त्रार्थानुष्ठाने सप्तमोऽध्यायः समाप्तः।
प्रथमाध्याये इन्द्रियजयो नाम चतुर्थं प्रकरणम्।

## जयमङ्गला

अतः सातत्येनार्थानुष्ठाने मर्यादां स्थापयेद् आचार्यानमत्यान् वेति। मर्यादामिव सीमामिवानतिक्रमणीयत्वात्। य एनमिति ये आचार्या अमात्या वा। एनं अपायस्थानेभ्यः यत्रापायोऽवश्यं सन्निहितस्तेभ्यो वारयेयुः। युष्माभिरहं प्रसङ्गेभ्यो निवारणीय इति। तत्र आचार्या धर्म[2]विरोधात्, अमात्या अर्थ[3]विरोधाद् वारयन्ति।

अदर्शनगोचरं च कथं वारयेयुरित्याह—छायेति। छाया त्रिपौरुष्यादि। नालिका "सुवर्णमाषाश्चत्वारश्चतुरङ्गुलायामाः" (अधि० २ अध्या० २०) इत्यादि। तत्सम्बन्धेन। कालप्रविभागशंसिपटहशङ्खध्वनिः प्रतोदनार्थत्वात् प्रतोद इव तेन। रहसि अन्तःपुरे। प्रमाद्यन्तं सज्जमानम्। पशुमिवाभितुदेयुः इयमनुष्ठानान्तरवेला वर्तत इति।

तेषां स्थापने प्रयोजनान्तरमाह—सहायसाध्यमिति। राजत्वं राजभावः सहायै[4]रेव क्रियते, नात्मनैवास्य सिद्ध्यति इति। यथा चक्रं भ्रमणयोग्यमपि कुलालदण्ड निरपेक्षं न प्रवर्तते। अथवा राजत्वं पृथिवीजयपालनव्यापारसमूहः सर्वप्रकृतिसहायेन राज्ञा शक्यो नैकाकिना[5]। यथा अनेकावयवतत्साध्ये व्यापारे किमेकावयवं चक्रं प्रवर्तते। कुर्वीत सचिवान् सहायान्। तस्माच्च निवर्तन[6]प्रवर्तनात्। तेषां च शृणुयान्मतम्। (न)केवलं चेतयितारो ज्ञानस्याप्याधातारः[7]। इति शास्त्रार्थानुष्ठानम्[8]।

इतीन्द्रियजयश्चतुर्थप्रकरणम्।
सप्तमश्चाध्यायः॥

---

१ 'गुरुस्तु विद्याधिगमाय सेव्यते श्रुता च विद्या मतये महात्मनाम्।
श्रुतानुवर्तीनि मतानि वेधसामसंशयं साधु भवन्ति भूतये। इति।
का० नी० सर्ग० १२ प्र० २ श्लोक।

जं० टी० श्रुता च विद्या शास्त्रपरिज्ञानायेत्यर्थः। श्रुतमविनाशि वर्धते। अर्थावगमस्य तदधीनसिद्धिकत्वात्। श्रुतानुवर्तीनि शास्त्राहितपरिज्ञानपूर्वकाणि वेधसां विदुषां असंशयं भूतये भवन्ति। अनधिगतशास्त्राणान्तु यानि मतान्युत्पद्यन्ते तानि घुणाक्षरकल्पत्वान् नावश्यंभावीनि।

अशुद्धम्

२ धर्माविरोधात् ३ अर्थाविरोधात् ४ सयैरेव ५ नैकान्तिकः ६ वर्तनप्रवर्तनात् ७ आधातारः इति ८ शास्त्रानुष्ठानम्।

## जयमङ्गलाक्रोडपम्

### अकार्यान्निवर्तनफलम्

**वारयेयुरिति**। (पृ० ७८) अकार्यान्निवर्तने किं फलमिति चेन्नोतिसारे "नृपस्य ते हीत्यत्रोक्तं वेदितव्यम्[1]।

किञ्च मन्त्रिणामुपदेशेन प्रवृत्तस्य राज्ञः त्रिवर्गसमृद्धिं दृष्टवा बालकाः गुरूपदेशे श्रद्धानास्तमनुवर्तेरन् इत्यपि फलं बोध्यम्।
कुतो वारयेयुः इति चेत् तथैव राज्ञा उक्तत्वात्। तदाह युष्माभिरिति।
वारयन्तीति। (पृ० ७८) तदुक्तं नीतिसारे—

सज्जमानमकार्येषु निरुन्ध्युर्मन्त्रिणो नृपम्।
गुरूणामपि चैतेषां श्रुणुयान्नृपतिर्वचः। इति। नी० सा० ४ सर्ग ३९ श्लोक

**वारयेयुरिति**। (पृ० ७८) राजपुत्ररक्षणोपायेन ब्यसनिनम् उद्वेजयेयुरित्यर्थः। तदुक्तम् नीतिसारे—

पानस्त्रीद्यूतगोष्ठीषु राजानमभितश्चराः।
बोधयेयुः प्रमाद्यन्तमुपायैर्नाटिकादिभिः[2]।

---

१ नृपस्य ते हि गुरवः त एव गुरवो मताः।
य एनमुत्पथगतं वारयन्त्यनिवारिताः॥
सज्जमानमकार्येषु सुहृदो वारयन्ति ये।
सत्यन्नते हि सुहृदो गुरवो गुरवो हि ते॥ इति नी० सा०-४२-४३।

टी० ज० मं०—एवञ्चानुतिष्ठमानाः परेपि त एव सुहृदो गुरवश्चास्य भवन्ति तदाह नृपस्य तेहीत्यादि। अनिवारिताः स्वतन्त्राः॥ गुरवो गुरव इति तदानीं मित्र-पदादपरं गुरुपदं प्राप्नुवन्ति। तच्च महदित्यर्थः।

उ० नि०—"मन्त्रिणां जगन्नाथबोधकानां प्रशंसामभिधातुमाह नृपस्येति। नृपस्य जगन्नाथस्य। ते हि यस्मान्मन्त्र्यादयः सुहृदो बान्धवाः त एव गुरवोऽभ्यर्हिततरा आचार्याः मताः शास्त्रकारमताः। एनं नृपं य उत्पथगतं शास्त्रनिषिद्धमभिप्रवृत्तं वारयन्ति। अनिवारिताः केनाप्यनिषिद्धाः। एतदेव द्रढयितुमाह सज्जमानमिति। अकार्येषु निषिद्धचरणादिषु सज्जमानमकार्येषु आसक्तिं यान्तमनाचारेषु, सुहृदोनुरक्त हृदयाः शुद्धहृदया वा बान्धवाः वारयन्ति ये ते सत्यं सुहृदो न भवन्ति। किन्तु गुरव आचार्याः। किं सामान्या गुरव इति ? न। गुरवो महान्त इति॥ ४२॥ इति।

२ उ० नि०—अनुजीविवृत्तसंयोगात् प्रसङ्गतः तन्त्रयुक्त्या बन्धुमित्राणां समुद्दिष्ट-मपि भूयोप्यनुजीविनां वृत्तं अभिधातुमाह पानेति। पानगोष्ठी यथाह—कौटिल्यः मद्यकामं योगपानैरुद्वेजयेयुरिति। परस्त्रीकामं आर्याव्यञ्जनाभिरमेध्याभिः शून्यागारेषु उद्वेजयेयुरिति। द्यूतकामं कापटिकैः पुरुषैः उद्वेजयेयुरिति। राजपुत्रा-वस्थायामभिहिता एते उपायाः यथासम्भवं वृद्धस्यापि योज्या इति।

## जयमङ्गलाक्रोडपत्रम्

### वर्तनप्रवर्तनादिति पाठशोधनम्

**वर्तनेति** । (पृ० ७८) एतत्पाठसंशोधने कारणं अमात्यैः चिकीर्षितं राज्ञः अधर्माग्निवारणं धर्मे प्रवर्तनं च । अथवा यथाश्रुतपाठे वर्तनमवस्थानं धर्मे प्रवर्तनम-प्रवृत्तस्य इत्यर्थोऽध्याहार्यः । एवं निवर्तनं प्रवृत्तस्य इत्यग्रेपि बोध्यम् ।

**चेतयितार इति** । (पृ० ७८) न पटहादिवारणमात्रेण समये समये बोधयितारः किन्तु सततमुपदेष्टारः । ध्वनितं चैतन् नीतिसारे—

सत्यं न ते हि सुहृदो गुरवो गुरवो हि ते ।
य एनमुत्पथगतं वारयन्त्यनिवारताः । इति । (नी० सा० ४–४३)

अतएव विनयस्य विद्यावृद्धसंयोगः सार्वदिकमिति फलम् प्रागुक्तं स्मर्तव्यम् । **ज्ञानस्याधातार इति** । यथा राजा अनुष्ठानपर्यवसायिनीं आनन्दप्रभामिश्रितां ज्ञानप्रभां अध्यक्ष-प्रचारादिभिः प्राप्नुयात् तथा वक्तव्यं मन्त्रिभिरिति भावः । अत्राऽयं विवेकः—अस्मिन् प्रकरणे त्रिवर्गप्रतिपत्तिघटकमनुष्ठानमुक्तम् । पूर्वाध्याये तु त्रिवर्गविषये अविप्रति-पत्तिरुक्ता । ततः पूर्वतनाध्यायैः विद्याविभागवृद्धसंयोगाभ्यामवबोध उक्तः । आहृत्य एतावत्पर्यन्तं त्रिवर्गप्रतिपत्तिः बोधिता । तदुक्तम् कामसूत्रे । "त्रिवर्गप्रतिपत्तिफलं शास्त्रं तस्मिन् प्रतिपत्तौ विप्रतिपत्तौवा तदुपायपर्येषणमपि । तद्यथोक्तम् —

प्रतिपत्तिस्त्रिविधा अनुष्ठानमवबोधः संप्रतिपत्तिश्चेति । इति । (काम० अ० १ अ० २ सू० १) तदेतत् त्रिवर्गप्रतिपत्तिमनुष्ठानं विचिन्त्य प्राक् शास्त्रार्थानुष्ठानमिति त्युक्तं तत्रैव ज्ञानस्याप्याधातारः इति शास्त्रार्थानुष्ठानं इत्यंवविधं वाक्यम् ।

### आधातार इति पाठविचारः

अथवा ज्ञानस्य आधातार इति एकं वाक्यम् । इति शास्त्रार्थानुष्ठानमिति च वाक्यान्तरं बोध्यम् । एतावता अत्र शास्त्रार्थानुष्ठानस्य संक्षिप्योपसंहारः प्रदर्शितः । एतन्मते शुध्यशुद्धी तत्रैव निर्दिष्टे ।

इति श्री जयमङ्गलाक्रोडपत्रे शास्त्रार्थानुष्ठानम् । सप्तमोध्यायः समाप्तः ।



# चतुर्थ प्रकरणम्

## अमात्योत्पत्तिः

### अष्टमोऽध्यायः

### [ अमात्ययोग्यताविषये मतभेदाः स्वमतं च ]

**सहाध्यायिनोऽमात्यान् कुर्वीत दृष्टशौचसामर्थ्यत्वात् इति भारद्वाजः— ते ह्यस्य विश्वास्याः भवन्तीति ॥**

**नेति विशालाक्षः—सहक्रीडितत्वात् परिभवन्त्येनम् । ये ह्यस्य गुह्यसधर्माणस्तानमात्यान् कुर्वीत,—समानशीलव्यसनत्वात्; ते ह्यस्य मर्मज्ञभयान्नापराध्यन्तीति ॥**

---

### श्रीमूला

अमात्योत्पत्तिरिति सूत्रम् । अमात्या नाम राज्ञः सहायाः तेषामुत्पत्तिः करणमिहोच्यत इत्यर्थः । विद्यावृद्धसंयोगेन्द्रियजययुक्तोऽपि राजा सहायमन्तरेण राज्यपालनं कर्तुमशक्त इति सहायापेक्षायां तदुत्पत्तिरुच्यत इति प्रकरणसङ्गतिः ।

के तावदमात्यपदमर्हन्तीत्यपेक्षायां भारद्वाजादयः सप्ताचार्याः सप्तधा वर्णयन्ति । तत्र भारद्वाजस्य पक्षमाह —सहाध्यायिन इत्यादि । दृष्टशौचसामर्थ्यत्वात् शौचं हृदयशुद्धिः तच्च सामर्थ्यं कार्यनैपुण्यं च दृष्टं सहाध्ययनकाले प्रत्यक्षितं येषां भावस्तत्वं तस्मात् । विश्वास्याः विश्वासयोग्याः ।

तं पक्षं विशालाक्षः प्रतिषेधति—नेतीत्यादि । परिभवन्ति अवजानन्ति । के तर्ह्यमात्याः कार्यास्तत्राह —ये होति । गुह्यसधर्माणः गुह्यं शीलच्युतिः पारदारिकत्वादि तत्र समानाः । तथाविधानाममात्योकरणे गुणमाह—ते होति । ते हि मर्मज्ञभयात् अस्मन्मर्मज्ञो राजेति भयात् । अस्य नापराध्यन्ति अपराधं न कुर्वन्ति, यत्नेन शीलसौष्ठवमासाद्य स्वकर्म सम्यगनुतिष्ठन्तीत्यर्थः ।

### वैदिकसिद्धान्तसंरक्षिणी

अमात्यस्य सहायस्य कर्मसचिवस्योत्पत्तिः कारणमिति सूत्रार्थः । मन्त्रिगुणान् परीक्ष्यैव जानपदो जनः अमात्यो मन्त्री वा भवति । परीक्षितव्याश्च गुणाः अग्रिमेऽध्याये वक्ष्यन्ते । तेषु कतिपये गुणाः येन व्यापारेण परीक्षितव्याः स व्यापारः तैस्तैराचार्यैः तत्तद्गुणपरीक्षणार्थमुक्ताः तेषु द्रोणमतमाह—

सहाध्यायिन इति । आषोडशाद्वर्षाद् विद्याग्रहणादीनर्थान् प्राप्नुवानाः स्निग्धाः बाल्यकालत एव विश्वास्याः । तान् अमात्यान् सहायकान् कुर्वीत । सहाध्यायिभ्यः अमात्या-

## वैदिकसिद्धान्तसंरक्षिणी

धिकारप्रदाने हेतुमाह दृष्टशौचेति। शौचं मन्त्रिपदे नियोक्ष्यमाणस्यामात्यस्य परस्त्री-द्रव्यस्वामिद्रोहादिविषये उपधाशोधनम्, सामर्थ्यम् गुणवतामवकाशदानं शक्तिश्च येषु ते अमात्याः सहायकाः। हि शब्दो हेतौ सहाध्यायित्वप्रयुक्तदृष्टिविषयशौचसामर्थ्या-भ्याम्। अस्य राज्ञः। विश्वास्या भवन्ति अयं मदिष्टं साधयिष्यतीति निश्चयविषया भवन्ति। सन्धेया भवन्तीति यावत्।

सहाध्यायिनः अमात्यत्वे विशालाक्षमतेन दोषमाह—नेतीति। विशालाक्षः एकलक्षाध्यायात्मकग्रन्थकर्तुः प्रथमः शिष्यः। निषेधे हेतुमाह सहेति। परिभवन्ति अवजानन्ति। स्वमतमाह ये इति। अमात्यत्वेन विवक्षिताः। एतन्मतेन आमात्यत्व-प्रयोजकं धर्ममाह अस्येति, राज्ञः। गुह्यं गूहनीयम् निन्दितम् समानो धर्मो येषां। तान् गुह्यसधर्मणः। तथाविधानाममात्यपदनियोजने हेतुमाह समानेति। समानं सहकारि शीलं व्यसनञ्च तद्वत्वात्। कथमेतेभ्यः राज्ञः पराभवो न स्यादित्याह मर्मेति। मर्म अकार्यं दुश्चेष्टितमिति यावत्।

## जयमङ्गला

कुर्वीत सचिवानित्युक्तम्। कीदृशानिति इन्द्रियजयानन्तरममात्योत्पत्ति-रुच्यते। ते च द्विधा कर्मामात्या बुद्ध्यमात्याश्च। तत्र पूर्वानधिकृत्याह-सहाध्यायिन इत्यादि। तेन सह ये गुरुकुले सातत्येनाधीतवन्तः, तान् सहाध्यायिनः कुर्वीत अमात्यानिति। अमाशब्दोऽव्ययं सहार्थे, कार्यानुष्ठाने राज्ञा सह भवन्तीति। अमेहक्वतसित्रेभ्यस्त्यप्। (वा. ४.३.१०४) दृष्टशौचसामर्थ्यानिति। सहसंवासाद् दृष्टशौचान् ज्ञातोपधाशुद्धीन्[1] ज्ञातोपधाकर्मणा परीक्ष्य निर्दोषत्वेन स्निग्धत्वेन च ज्ञातान्, ज्ञातकर्मसामर्थ्यांश्च तत्र शौचान्न तम् अभिसन्दधति। सामर्थ्याद् यथादिष्टं साधयन्ति। भारद्वाज इति। भरद्वाजस्यापत्यम्। यस्मात्ते राज्ञो विश्वसनीया भवन्ति।

नेति विशालाक्ष इति। विशालाक्षो महेश्वरः। भारद्वाजस्यार्वाक्कालभावि-त्वेनापि तन्मतमीश्वरमतेन विरुध्यत इति शास्त्रकारस्तद्व्यपदेशेन प्रतिषेधमाह— नेतीति। किं तर्हि सहक्रीडितत्वादिति। सहाध्यायिनां सहक्रीडितत्वमवश्यम्। अतश्च पूर्वप्रणयात् परिभवस्तेभ्योऽवश्यम्भावी। आज्ञाफलं च राजत्वम्। येऽस्य गुह्यसधर्माण इति। समानो धर्मो येषामिति ते सधर्माणः (गुह्ये) गूहनीये निन्दिते हिंसादौ कर्मणि सहकारितया येऽस्य राज्ञस्समानधर्माणस्तान् कुर्वीत। समानशीलव्यसनत्वा-दिति। सहकारित्वात् समानशीला, गुह्यकर्मत्वाच्च समानव्यसनाः तच्छीला विश्वास्याः। पूर्ववद्विशेषो यदस्मन्मर्मज्ञोऽयमिति तदयं नापराध्यति न परिभवति। एवं च कृत्वा शौचे कार्यनिष्ठायां च यतन्त इति।

अन्यस्त्वाह—नेति। नैतावदेव सहाध्यायिमात्रं लक्षणम्। किन्तु परिभव प्रतिषेधार्थं गुह्यकर्मत्वम् अपरमिति। अस्मिन् व्याख्याने उत्तरत्रापि दोषप्रति-विधानाय शेषत्वेन लक्षणान्तरं योज्यम्।

---

अशुद्धम्
१. शुद्धान्।

## जयमङ्गलाक्रोडपत्रम्

### सङ्गतिः

राजा असहायो भूत्वा शासनसञ्चालनाय अपेक्षितं कार्यजातं सम्पादयितुम-समर्थः निगूढतया सञ्जातस्यार्थस्य बोधं प्रति असहायतादशायां असमर्थत्वात् । तदुक्तं नीतिसारे —

"अविज्ञातस्य विज्ञानं विज्ञातस्यार्थनिश्चयः ।
आरम्भः कर्मणां शश्वादारब्धस्यान्तदर्शनम्[1] ॥ इति ३०।१२ सर्गे

वक्ष्यति च मूलकारः—अनुपलब्धस्य ज्ञानं उपलब्धस्य निश्चितबलाधानं अर्थ-द्वैधस्य संशयश्छेदनं एकदेशदृष्टस्य शेषोपलब्धिः । इति मन्त्रिसाध्यमेतदिति" (१ अधिकरण १५ अध्याय) । विनयं विद्योपदेशेनेति च अतः एककार्यकारित्वं सङ्गतिः ।

### सूत्रार्थः

अमात्योत्पत्तिरिति । राज्ञा अमा सह भवन्ति सञ्चरन्ति उपदेशाय धर्मे अर्थे च प्रवर्त्तनाय इत्यमात्याः । वक्ष्यति च "अमाशब्दो ऽव्ययं सहार्थे । कार्यानुष्ठाने राज्ञा सह भवन्तीति अमेह क्व तसि त्रेभ्यस्त्यप्" इति । तथा च धर्मे प्रवर्तनाय योग्यमार्गप्रदर्शकाणां उत्पत्तिः अनेन प्रकरणेन विचारयिष्यते इति सूत्रार्थः । पूर्वापरप्रकरणयोः सङ्गतिं स्फुटि कर्तुमाह कुर्वीतेति ।

### प्रकरणसमुदायार्थः

राज्यं हि सप्तानां स्वाम्याद्यङ्गानां समुदायात्मकम् शरीरं तदा स्थिरं भवति यदा प्रत्येकानि अङ्गानि सुपरीक्ष्य स्वस्वकर्मणि नियोजितानि भवेयुः । तदुक्तम् —

एकाङ्गेनापि विकलं एतत् साधु न वर्तते ।
तस्य सामग्र्यमन्विच्छन् कुर्वीताशु परीक्षणम् ॥ इति ।

परीक्षणञ्च तदीय तत्तद्गुणानामेव । गुणवत्त्वं चात्र परोपकारित्वम्-तदुक्तम् —

गुणः परोपकारित्वं हितकारित्वमेव वा । इति ।
भावप्रकाशने पृ० ३० पं० १२

### अमात्यानां गुणपरीक्षाया अपेक्षा

अत्रेदमनुसन्धेयम् यः उपकारे रतः परेषां कृते आत्मानमङ्गतया नियोजयति स विश्वास्यत्वात् लोकानुरागोत्पादने क्षमो भवति । अतएव स विना अर्थव्ययं परिश्रमञ्च निर्वाचनावसरे संवासिमतं प्राप्नोतुमर्हति । तद्बहुमतानुरोधेन गुणसंपन्नं

---

१. देशकालान्तरितत्वात् असाक्षात्कृतस्य विज्ञानम् मन्त्रिभ्य एव । मन्त्रिसाक्षात्कृतस्यापि तत्वाभासनिश्चयभूयस्त्वे निश्चयो बुद्ध्यन्तरात् । अर्थद्वैधस्य दशया यातव्योः कं प्रति यायादित्यादि सन्देहे तच्छेदनं मन्त्र्युपदेशात् । शेषदर्शनम् एकदेशदृष्टस्येति शेषः । सन्धिविग्रहयोः सन्धिः श्रेयानिति शेषोपलब्धिः । एतच्चतुष्टयरूपं मन्त्रिसाध्यमिति तेषां शृणुयात् ॥३०॥ इति ।

## जयमङ्गलाक्रोडपत्रम्

मन्त्रिणं प्राप्य यजमानस्थानीयो राजा पुरोहितस्थानीयं तं "पुरोहितं बृणीते ऋत्विजं वृणीते" इतिवत् राज्यकर्मणि वृणुते। इत्येवंविधं भारतीयराजनीतिहृदयं "राजनीति का दिग्दर्शन" "प्राचीन भारतीय राजनीति का दृष्टिकोण' ग्रन्थयोः लिखितं वर्तते। गुणप्रकर्षश्च यैः कैरपि इन्द्रियजयं विना न आत्मनि सम्पादयितुं शक्यते। व्यसनानि च कामजानि क्रोधजानि गुणप्रकर्षप्रतिबन्धकानि भवन्ति ।
अतः जितेन्द्रियता अवश्यमपेक्ष्यते। तदुक्तम्—

जितेन्द्रियत्वं विनयस्य लक्षणं गुणप्रकर्षो विनयादवाप्यते।
गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥ इति। नी. सा. ज.

एतस्मादेव कारणात् कृतकस्वाभाविकभेदेन इन्द्रियजयद्वैविध्यमुक्तम्। द्वैविध्यतत्स्वरूपतदनुष्ठानोपायसाधनतन्माहात्म्यतदन्वयव्यतिरेकादयो विषयाः निरुक्ताः प्राग् अर्थशास्त्रे[1] नीतिसारे च। तस्मात् राज्ञा आदौ कार्यनियोजनात्प्राङ्नियोक्ष्यमाणानां गुणाः परीक्षितव्याः इति सिद्धयति। परीक्षा च परमतनिराकरणपूर्वकं स्वमतस्य हेतुपुरःसरं व्यवस्थापनम्[2]। परीक्षितव्याश्च गुणाः यैरुपायैः ते सहाध्यायित्वप्रभृतयः एतत्प्रकरणोक्ता मन्तव्याः। तेषु एकैनैकेनाचार्येण तेषु कतिपये गुणाः परीक्ष्यत्वेन सङ्गृहीताः। कौटिल्येन तु पर्यन्ते सर्वेषां गुणानां परीक्षणाय समस्तानामाचार्याणां मतं सङ्गृहीतमस्ति "सर्वमुपपन्नमित्यादिना ग्रन्थेन।" इति। प्रघट्टकार्थः।

### अथ टीकाग्रन्थः व्याख्यायते

### अमात्यत्वम्

**कर्मामात्या** इति। (खं० २ पृ० ८२) तत्वञ्च—स्ववग्रहादिगुणसम्पत्तिमत्त्वम्।[3]

### बुद्ध्यमात्यत्वं

**बुद्ध्यमात्याश्चेति**। (पृ० ८२) तत्वं च पूर्वोक्तगुणवत्वे सति समस्तोपधाशुद्धत्वे-सति स्मृत्यादिगुणवत्त्वम्[4]। तच्च

---

१. तदुक्तम्—कौटिल्येन—"तस्मादरिषड्वर्गत्यागेनेन्द्रियजयं कुर्वीतेत्यादि।" इति।

२. तदुक्तं जगदीशेन पञ्चलक्षण्याम्—

'समारब्धा या अनुमानप्रामाण्यपरीक्षा परमतनिराकरणपूर्वकं स्वमतेनानुमानप्रामाण्यसाधनम्'। इति।

३. स्ववग्रहो जानपदः कुलशीलबलान्वितः।
वाग्मी प्रगल्भश्चक्षुष्मानुत्साही प्रतिपत्तिमान् ॥ २८ ॥
स्तम्भचापलहीनश्च मैत्रः क्लेशसहः शुचिः।
सत्यसत्वधृतिस्थैर्यप्रभावारोग्यसंयुतः ॥
कृतशिल्पश्च दक्षश्च प्रज्ञावान् धारणान्वितः।
दृढभक्तिरकर्ता च वैराणां सचिवो भवेत् ॥ —नीतिसारे

४. स्मृतिस्तत्परतार्थेषु वितर्को ज्ञाननिश्चयः:—

## जयमङ्गलाक्रोडपत्रम्

नीतिसारग्रन्थोक्त वेदितव्यम्[1]। सर्वोपधाशुद्धत्वंच कौटिल्येन' सर्वोपधाशुद्धान् मन्त्रिणः कुर्यादिति उक्तत्वात् अत्राभिहितम्। गुणपरीक्षायां कर्तव्यायां उपायप्रदर्शकेष्वाचार्येषु भारद्वाजमतं विवेचयन्नाह तेनेति।

दृष्टेति। (पृ० ८२) दृष्टशौचसामर्थ्यत्वात् इतिपाठान्तरम्। दृष्टं मन्त्रिपदे नियोक्ष्यमाणस्य अमात्यस्य शौचम् उपधाशोधनम् शुद्धिर्येषां। शुद्धिः परद्रव्यपरदारादिविषयिणी बोध्या।

निर्दोषत्वेनेति। (खं० २ पृ० ८२) निर्दोषत्वात् भयाभावेन इत्यर्थः। स्निग्धत्वेनेति-स्नेहेन वञ्चनाभावः ज्ञायते।

सामर्थ्यानिति। (पृ० ८२) सामर्थ्यं गुणवतामवकाशदानेन कार्यसामर्थ्यं परीक्ष्येत। अत्रेऽयमुपपत्तिः-"शीलं संवसता ज्ञेय"मित्युक्तत्वात्, सहवसिभिः सहनिवासिनां शीलं परीक्ष्यते[2]।

अत्रायंभावः। बहुकलं संवासेन शीलमवगम्यते। शीलं च सद्भिः संसदि संभावनीयताहेतुः गुणः[3]।

अतएव गौतमेनापि प्रतिभाप्राप्तये शीलपरीक्षणोद्देश्येन गुरुशिष्यादीनाम् एकत्रावस्थानं विधीयते[4]।

---

१. दृढता मन्त्रगुप्तिश्च मन्त्रिसम्पत् प्रकीर्तिता ॥ ३१ ॥ नी० सा० सर्ग

२. पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः।
शनैः शनैः पदं धत्ते जीवानां वधशङ्कया।
बकः किं वर्ण्यते राम येनाहं निष्कुलीकृतः।
सहवासी विजानाति चरितं सहवासिनः ॥ इति

३. तदुक्तम् वैद्यनाथेन स्मृतिमुक्ताफले— तदुक्तं महाभारते—
तत्तत् कर्म तथा कुर्यात् येन श्लाघ्येत संसदि।
एतच्छीलं समासेन कथितं यदुनन्दन। इति।

४. 'तं गुरुशिष्यसब्रह्मचारिशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात्' इति। वात्स्यायनेनापि एतदभिप्रेत्यैवोक्तम्—सहायविमर्शः त्रिधा स्नेहतः गुणतः जातितश्च। तत्राद्यमधिकृत्याह—'सहपांसुक्रीडितमुपकारसम्बद्धं समानशीलव्यसनं सहाध्यायिनं यश्चास्य मर्माणि रहस्यानि च विद्यात्, यस्य चायं विद्याद्वा धात्र्यपत्यं सहसम्बद्धं मित्रम् ॥ ३२ ॥

टी० मिद्यति स्निह्यतीति मित्रं नवप्रकारम्। तत्र सहपांसुक्रीड़ितमेकत्रानुभूतबाल्यत्वात् स्निह्यति। उपकारसंबद्धमर्थेन जीवितरक्षया चोपकृतत्वान्मैत्र्या वर्तते। यच्चास्य नायकस्य मर्माण्यकार्याणि यच्च रहसि भवानि विद्यात्तदुभयं मर्मज्ञं रहस्यधरं च नायकप्रतीतेरास्पदत्वात् प्रतिस्निह्यति। यस्य चेति—यस्य नायको मर्माणि रहस्यानि विद्यात्तदुभयं यस्मिन्। स मानितस्नेहत्वात्प्रीत्या वर्तते। सहसंबद्धं धात्रीक्रोडे नायकेन सह स्तन्यपानादिना समृद्धं धात्र्यपत्यं सहपांसुक्रीडितत्वेऽप्यत्यर्थं स्निह्यतीति—

## जयमङ्गलाक्रोडपत्रम्

### सहाध्यायित्वोपयोगः

ननु सहाध्यायिग्रहणं किमर्थं कृतम् ? इति चेत् उच्यते—

विद्याग्रहणमाषोडषाद्भवतीत्युक्त्या तद्ग्रहणं बाल्यकाले एवाभिहितमस्ति। तदानीं सहाध्यायिनोपि समानवयस्का यथा उपदिश्यन्ते तथा तदनुरूपसंस्कारवन्तो भवन्ति। परस्परं च तेषु स्थायिस्नेहः समुद्भूतः न प्रतिनिवर्तेत।

तदुक्तम्—

यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्।

तथा 'नवं हि द्रव्यं येन येन द्रव्येणालिह्यते तत्तदाचूर्षति। एवमेयं नवबुद्धिः यद्यदुच्यते तत्तच्छास्त्रोपदेशमिवाभिजानाति" ! इति च। कौटिल्य अर्थ० प्र० अ० १

बाल्यकाले गुरुगृहे निवसत्सु विद्यामुपार्जयत्सु यः पारस्परिकः स्नेहो भवति तेन मित्रयोः पारस्परिकं हृदयं निबध्यते। कामसूत्रे चोपवर्णिते "स्नेहतः" इतिः यदुक्तं तदेव स्निग्धत्वमत्र "स्निग्धत्वेन ज्ञातान्" इत्युक्तमस्ति। अस्य स्नेहस्यैव लाभाय "विद्याग्रहणादीनर्थानि"ति कामसूत्रे उक्तं सोपपत्तिकं भवति। स्नेहे समुद्भूते सति मनसि द्रवीभावः शिशिरत्वं[1] चानुभूयते। यद्बलात् ईश्वरमपि स्निग्धः आकर्षति किमुत मानवम्। तदुक्तम् भागवते नवयोगीश्वरसंवादे ११ स्कन्धे २ अध्याये ५५ श्लो० भागवतस्वरूपनिरूपणे—

विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोप्यघौघनाशः।
प्रणयरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः ॥५५॥

---

प्रकर्षार्थं वचनम्। यदेकस्मिन् ग्रामे वा सह सम्बद्धं तत्सहपांसुक्रीडितं द्रष्टव्यम्। इति नवधा मित्रम्।

टी० गुणतो विमर्शमाह—

मू० 'पितृपैतामहमविसंवादकमदृष्टवैकृतं वश्यं ध्रुवमलोभशीलमपरिहार्यममन्त्रविस्रावीति मित्रसम्पत् ॥ ३३ ॥

टी० पितृपैतामहम्—पितामहादागतं पैतामहम्। पितुः पैतामहम् नायकस्य तु प्रपितामहं। यथाऽनयोर्मैत्री तथा पित्रोः पितामहयोश्चासीदिति। अविसंवादकं यथादृष्टश्रुताधिकारिणम्। अदृष्टवैकृतं तादात्म्यककार्यस्यादिमध्यावसानेष्वदृष्ट व्यभिचारम्। वश्यम् यथोक्तकारिणम्। ध्रुवं न त्यजति। अलोभशीलं न तृष्णया प्रवर्तते। अपरिहार्यं न परेण ह्रियते, अनुरक्तत्वात्। अमन्त्रविस्रावि गूढमन्त्रम्। मित्रसंपत्, मित्रसम्बन्धात् ॥ ३३ ॥

मित्रगुणा धर्मिद्वारेणोक्ता जातितो विमृश्यन्ते—

मू० रजकनापितमालाकारगान्धिकसौरिकभिक्षुकगोपालकताम्बूलिकसौवर्णिक पीठमर्दविटविदूषकादयो मित्राणि। तद्योषिन्मित्राश्च नागरकाः स्युरिति वात्स्यायनः ॥ ३४ ॥ इति।

१. भावप्रकाशने—मनसो यत्द्रवार्द्रत्वं विषयेषु च तत्वतः ( ममत्वता )—
भयशङ्कावसानात्मा स एव स्नेह उच्यते।—

## जयमङ्गलाक्रोडपत्रम्

### स्नेहः

द्रवीभावश्च सुखविशेषः अन्येच्छानधीनेच्छाविषयो भवति। स एव अकृत्रिमः स्नेह इत्युच्यते।[1]

स्नेहश्च रतेः द्वितीयावस्थायां प्रकाशितो भवति। सः प्रौढमध्यादिभेदेन विभिन्नो भवति[2]—

भावप्रकाशनोक्तः प्रौढस्नेहः येनोपलब्धः यश्च उक्तस्नेहवान् यादृशं कोष-

दर्शनाच्चन्द्रकान्तवत्।
आर्द्रता शिशिरत्वं च सर्वावस्थासु मानसम् इति॥

१. तदुक्तम्—

सोपाधिः कृत्रिमस्नेहः निरुपाधिरकृत्रिमः।
उपाधौ विनिवृत्ते तु तज्जन्यो विनिवर्तते॥ इति।

२. स्नेहः स्वभावजो यावद्द्रव्यभावी भविष्यति।
शङ्का स्यात्कृतके तत्तद्विक्रियान्वेषणात्मिका।
स्वाभाविके भयं तत्तद्विषयादेः प्रमादतः।
एकाश्रयः स च क्वापि क्वापि स्यादुभयाश्रयः॥
एकाश्रयस्तिर्यगादौ मर्त्यादावुभयाश्रयः।
आश्रयाद्वासनातश्च जायन्ते तत्र तत्र तु॥
एकाश्रयो वासनातो द्व्याश्रयो हेतुभिर्भवेत्।
स तु स्नेहस्त्रिधा प्रौढमध्यमन्दविभागतः।
विदेशस्थे मृते वापि दुर्बले प्रतियोगिनि।
धर्मिणः क्लेशकारी यः स प्रौढः स्नेह उच्यते।
तत्तद्वियोगजं दुःखं तादृशं प्रतियोगिना।
अनुभूयातिवृत्तश्चेत् स्नेहो मध्यः प्रकीर्तितः।
तदात्वव्यसनापत्तिमात्रको मन्द उच्यते।
स्थिरश्च गत्वरश्चेति नश्वरश्चेति स त्रिधा॥
उत्तमे मध्यमे नीचे तत्तत्कार्यवशाद्भवेत्।
उत्तमे वृद्धिमभ्येति नोपकारानपेक्षते॥
उपकारं न जानाति स स्नेहः स्थिर उच्यते।
बहूपकारप्रभवः उपकारानपेक्षते॥
मध्यमे वर्धितः किञ्चित् स स्नेहो गत्वरो भवेत्।
नीचादावस्थिरः प्रायः स्नेहो ज्यायसि तु स्थिरः॥
एवं पुत्रकलत्रादौ पित्रादावपि दृश्यताम्। इति। भा० प्र० ४

## जयमङ्गलाक्रोडपत्रम्

दण्डादिप्रदानेनोपकरोति तदनुरूपं प्रतिकर्तुं कः समर्थः स्यात्' ?

किञ्च आर्द्रतावस्थामापन्ने चेतसि यः पदार्थः संस्काररूपेण आरूढो भवति। स पदार्थः मनसः घनभावेऽपि न तज्जहाति। एतादृश्याः मनोमय्याः मूर्तेः निबिड-संयोगः स एव संस्कार उच्यते। 'द्रुतस्य भगवद्धर्मात् धारावाहिकतां गता' इत्यादीनि मधुसूदनसरस्वतीकृतभक्तिरसायनस्थानि पद्यान्युद्धृत्य प्राक् ( ) प्रपञ्चितमस्ति—

तदनुसारेण सहाध्यायिनश्चेतसि स्थायी सहाध्यायिहृदयप्रवेशः फलमिति बोध्यम्। अन्यच्च मनसः द्रवार्द्रता आनन्दरूपात् ओजसः सहचरी इति। प्राङ् ( ख० २।७७ ) निर्दिष्टम् ओजोऽपि स्नेहेन लभते, ओजश्च प्राणाश्रय, इति च भावप्रकाशनवाक्यमुद्धृत्य प्राक् ( प्र० ख० २०३ ) स्फुटीकृतमस्ति। तस्मात् ओजोवर्धनाय अपेक्षितः स्नेहभावः सहाध्यायिभिः अभिवर्धनोयः इत्यपि ध्वनितम्। अभिवर्धिते च ओजसि तद्वतः महामतेः कीदृशं सौष्ठवं भवतीति उपरिष्टाद् (प्र० ख० पृ० २२।१४९) व्यक्तम्।

अनेन यथा यथा स्नेहो वर्धते तथा तथा अहिंसादयः साधारणाधर्मा अपि अनायासेन सिद्धा भवन्ति, अवञ्चकत्वमपि च। तस्मात् सहाध्यायिनः स्निग्धाः परस्परं विश्वास्या भवन्तीति सहाध्यायिनोऽमात्यान् कुर्वीत। इति तात्पर्यम्। तदेव प्रपञ्चितं मूले ते इत्यादिना ग्रन्थेन।

---

१. "इदं तु मम दीनस्य मनो भूयः प्रकर्षति।
यदिहास्य प्रियाख्यातुर्न कुर्मि सदृशं प्रियम्॥
एष सर्वस्वभूतस्तु परिष्वङ्गो हनूमतः।
मया कालमिमं प्राप्य दत्तश्चास्तु महात्मनः" ॥१४॥ वा रा सु.१।१३।१४

अध्यात्मरामायणेऽपि—सु० काण्डे ५ सर्गे ॥६०॥

हनूमंस्ते कृतं कार्यं देवैरपि सुदुष्करम्।
उपकारं न पश्यामि तव प्रत्युपकारिणः ॥६०॥
इदानीं ते प्रच्छामि सर्वस्वं मम मारुते।
इत्यालिङ्ग्य समाकृष्य गाढं वानरपुङ्गवम् ॥६१॥

धर्मविजयेऽपि—

"अभूतः पक्षपातोऽयं भूयानयमनुग्रहः"। इति अ० ५ धर्मविजय

तथैव नीतिसारे – १४ सर्गे ऊनचत्वारिंशत्तमे पद्ये —

ततः करोति सुबहु मित्रं स्नेहनिबन्धनम्।
तस्मिन् व्यसनमापन्ने मित्रकर्म न विद्यते ॥३९॥ इति।

मेदनं स्नेहः-१८ सर्गे ७ श्लो० —

तथा—शङ्कारातिभयत्राणं प्रीतिविश्रम्भभाजनम्।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम्॥ हितो० मित्र २७६

## जयमङ्गलाक्रोडपत्रम्

### मित्रप्राप्तौ लाभः

अभिसन्दधतीति। (पृ० ८२) अनेनवाक्येन स्निग्धे वञ्चकत्वाभावो ध्वन्यते यत्र स्नेहः तत्र वञ्चनाभावः इति व्याप्तेः। दृश्यते चेतन् मद्यपोऽपि पिता स्निग्धं पुत्रं मद्यपानान्निवार यतीति।[1]

### द्रोणमतनिष्कर्षः

रामस्यापेक्षितं कार्यं रामायणोक्तं मित्रैरमात्यैः साधितमस्ति इति ज्ञात्वा तत्परिचायकं विश्वास्यत्वस्य आधायकं सहाध्यायित्वं द्रोणेनोक्तमिति।

विश्वसनीया इति। (पृ० ८२) विश्वासः अयं मदिष्टं साधयिष्यत्येवेत्याकारको निश्चयः स एव सन्धिरित्युच्यते "राज्ञां विश्वासोपगमः सन्धिः" इत्यग्रे मूले वक्ष्यमाणत्वात्। तेनामात्येषु सन्धेयत्वं षड्गुणेषु सन्धेरेव मुख्यत्वात् अपेक्षितमस्ति तच्च सहाध्यायित्वप्रयुक्तं वेदितव्यम्।

### सहाध्यायित्वे परिभवः

ननु सहाध्यायित्वमात्रेण कथं परिभवः इति चेत्, परिभवो हि सहक्रीडितत्वप्रयुक्तात् प्रणयात्। क्रीडितत्वञ्च सहाध्यायित्वे नियतमिति। तद्दर्शयितुमाह सहेति। प्रणयेति, तत्वञ्च भावप्रकाशने व्याख्यातम्।

"मानप्रकर्षप्रभवरोषास्वादकषायितम्।
प्रेम नीतं प्रकर्षं चेत्स एव प्रणयः स्मृतः॥" इति। ४ अधिकारे १५ पंक्ति

### अवज्ञा

**परिभव** इति। (पृ०८२) स च अवज्ञा, स्वावधिकोत्कृष्टत्वप्रकारकज्ञानविषयत्वाभावः।

तथोक्तम्— अवज्ञा सा प्रकृष्टस्य यत्तथाऽज्ञायमानता।
अवज्ञा मानसी ज्येष्ठे न्यक्कारो वाक्तिरस्कृतिः॥ इति। मा० प्र०३ अ०

यस्य प्रसादे न विधेयानां लाभः, नाऽपि च तेषु यत्कोपे भयं स न राजा भवितुमर्हति[2]।

---

१. तदुक्तम्— पापान्निवारयति योजयते हिताय,
गुह्यन्निगूहति गुणान् प्रकटीकरोति।
आपद्गतं च न जहाति ददाति काले।
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः॥ नी० श० इति॥

तुलसीरामायणेऽपि—
कुपथ निवारि सुपंथ चलावा। गुन प्रगटहि अवगुनहि दुरावा॥
देत लेत मन संक न धरहीं। बल अनुमान सदा हित करहीं॥ इति।

२. अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषाऽऽदरः।
अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः॥ किरात।

## जयमङ्गलाक्रोडपत्रम्

राजा हि तावदेव राजपदे तिष्ठन् शोभमानो भवति यावत् तस्याज्ञा अनुल्लङ्घनीया भवति। तदेवाह आज्ञेति। तत्स्वरूपं भावप्रकाशनादौ व्यक्तम्[1]।

गुह्येति। (पृ० ८२) एतेन एवंभूतस्य मित्रत्वमपि साधितं भवति। मित्रं च अमित्रादीन् संस्तम्भयितुं समर्थं भवति इत्येतदर्थं समानशीलव्यसनस्य सख्यम् इष्यते, तदेत् कामसूत्रेण निर्दिष्टं प्राक् (पृ० ८५) उद्घृतमस्ति भारद्वाजमतनिरूपणे। मित्रकार्यं च कीदृग् इति नीतिसारे प्रपञ्चितम्[2]

तच्छीला इति। (पृ०८२) समानशीलव्यसनाः आपदि विकृतिं न भजन्ते, अतो विश्वास्याः[3]। तदुक्तम् धृतिं चैवानुरागं च स्थैर्यं चापदि लक्षयेत्[4]। इति।

### गुह्यसधर्मभ्यो न परिभवः भारद्वाजविशालाक्षमतयोरन्तरञ्च

नन्वेवं मर्मज्ञत्वमात्रेण गुह्यसधर्मभ्यः कथं न परिभवः इत्याह मर्मेति। अत्रेयमुपपत्तिः — राजा दुश्चेष्टितं यदि प्रकाशयेत् तर्हि मन्त्रिपदाय अपेक्षितगुणवत्त्वेन प्रसिद्धस्य लज्जायाः प्रसङ्गः स्यात् स मा भवतु इत्येतदर्थं समानशीलव्यसनो राजानं नाभिभवति। द्रोणमते तु अभिभवति। इत्येवं भारद्वाजविशालाक्षयोः अर्वाक्कालिकेश्वरयोः मते अन्तरं बोध्यम्।

### लज्जास्वरूपम्

लज्जायाः कीदृशौ विभावानुभावौ इति भावप्रकाशने व्यक्तम्[5]।

---

१. अनियुक्ता अपि स्वे स्वे कृत्ये यत्सन्निधौ पुनः।
प्रभुत्वं तदिति प्रोक्तमाज्ञा सैव भयात्मिका॥ ३ अधिकारे

२. संस्तम्भयति मित्राणि शत्रूनुत्सादयत्यपि।
भूकोशदण्डैर्व्रजति प्राणैश्चाप्युपकारिताम्॥
तत्तत् करोति सुबहु मित्रं स्नेहनिबन्धनम्।
तस्मिन् व्यसनमापन्ने मित्रकर्म न विद्यते॥३९॥
उपकारादृतेऽप्याशु मित्रं श्रेयसि तिष्ठति।
मित्रवान् साधयत्यर्थान् दुस्साध्यानप्यनादरात्॥४०॥ १४ स०

३. विश्वास्यत्वे स्थिरत्वं च सत्यशपथप्रतिभूप्रतिग्रहैः। इति शान्तिका अग्रदूत ग्रन्थाद् बोध्यम्।

४. मानसरामायणेऽपि—
धीरज धर्म मित्र अरु नारी। आपदकाल परिखऊँ चारी॥

५. तद्यथा — अकार्यकरणाज्ञानाद् गुर्वाज्ञादिव्यतिक्रमात्।
अनिर्वाहात्प्रतिज्ञायाः त्यागे भयोऽनुतापतः॥
व्रीडा तदनुभावास्स्युः उर्वीलेखनचिन्तनम्।
मुखावनम्रताऽव्यक्तवचनं नखकर्तनम्॥—(भा० प्र० अ० १—)

## जयमङ्गलाक्रोडपत्रम्

तत्त्वञ्च स्वविशिष्टक्रियाविषयको विद्वेषः । वैशिष्टयञ्च स्वकर्तृकत्वस्वकर्मकत्वान्यतरसम्बन्धेन । तच्च गोकुलनाथोपाध्यायकृते विवरणे द्रष्टव्यम्[१] ।

### मतत्रयविवेकः

**यतन्त** इति । (पृ. ८२) अस्मिन् अमात्योत्पत्तिप्रकरणे सर्वेषां मतेन अनुस्यूततया राजाऽमात्ययोः स्नेहो वर्तत एव । किन्तु तत्र तत्र मते स्नेहान्तर्गताः प्रेम्णः राग-यानुरागस्य च अवस्थाः तत्तल्लक्षणानुसारेण सूक्ष्मेक्षिकया विवेचयितव्याः । इत्येवं रीत्या तत्तदाचार्याणां मतेषु स्थितं निगूढमन्तरं चिन्तनीयम् । तत्र स्नेहलक्षणानि उपरिष्टान् निरूपितानि । (पृ.८७) रागानुरागयोः प्रेम्णां अवस्थाः निरूपिताः भावप्रकाशनतो[२] ज्ञेयाः ।

---

वस्त्राङ्गुलीयकस्पर्शो　दूरादेवावगुण्ठनम् ।
अनिर्गमो बहिः क्वापि सर्वत्राप्यनवस्थितिः ॥ (१३ पृ० ६ पङ्क्ति)

१. अथ व्रीडा-दुराचारादिभिर्व्रीडा　धाष्टर्याभावः　इति　धनिकः ।
"चेतोनिमीलनं व्रीडा　स्तुत्यकार्यक्रियादिभिः" इति भोजराजः ।
निमीलनं स्वक्रियाविद्वेषः स्वस्य क्रियया सह क्वचित् कर्तृत्वम्, क्वचित् कर्मत्वं सम्बन्धः ।
तत्रातीतायां स्वकर्तृकक्रियायां विद्वेषोऽनुतापो व्रीडेत्युच्यते ।
व्रीडाऽनुतापः शुचिभिर्दृष्टे कार्ये कृते भवेदिति शार्ङ्गदेवस्मरणात् । इति ।

**रागानुरागौ**

२.　"रज्यते दीप्यते चित्ते स राग इति कथ्यते ।
सुखदुःखात्मकं भोग्यं सुखत्वेनाभिमन्यते ॥
येन रागः स इत्युक्तो रञ्जनाद्विषयात्मनोः ।
नीली-कुसुम्भ-मञ्जिष्ठारागौपम्येन स त्रिधा ॥
क्षालितो यस्तु नापैति यश्च नातीव शोभते ।
नीलीरागः स एवेति कथितो रागवेदिभिः ॥
योऽपैति क्षालितः क्षिप्रमध्यक्षं योपि शोभते ।
कुसुम्भराग एवैष इति विद्वद्भिरीरितः ॥,
अतीव शोभते यस्तु नापैति क्षालितोऽपि सन् ।
स एव कविभिः सर्वैर्मञ्जिष्ठा राग उच्यते ॥
ज्येष्ठो मञ्जिष्ठरागः स्यान्नीलीरागस्तु मध्यमः ।
कुसुम्भरागः कविभिरधमः परिकीर्तितः ॥
रागोऽनुवृत्तो विच्छिन्नमनुराग उदाहृतः ।
अनुरूपोऽथवा राग इति वा निर्णयो भवेत्" ।। —४ अ. भा. प्र. ८३ पृ.

प्रेमस्वरूपमित्थमभिहितमत्रैव —
परस्पराश्रयघनं　निरूढं　भावबन्धनम् ।
यदेकापायतो ऽपायि तत्प्रेमेति निगद्यते ॥ —

साधारण एष दोषः इति पराशरः—तेषामपि मर्मज्ञभयात् कृताकृतान्यनुवर्तेत[1] ॥

यावद्भ्यो गुह्यमाचष्टे जनेभ्यः पुरुषाधिपः ।
अवशः कर्मणा तेन वश्यो भवति तावताम् ॥१०॥

य एनमापत्सु प्राणाबाधयुक्तास्वनुगृह्णीयुः[2] तानमात्यान् कुर्वीत, दृष्टानुरागत्वादिति ॥

## जयमङ्गलाक्रोडपत्रम्

तासु प्रेमरागयोरवस्था उक्तमतयोः दृश्यते। अनुरागावस्था तु नारदेन विवेचिते मते बोध्या—

तत्तदाचार्योक्तमतभेदेन अमात्यपदनियोजनप्रयोजकं लक्षणान्तरविशेषं मतान्तरेणाह अन्येति। ( पृ० ८२ ) तथा च भारद्वाजमते तत्प्रयोजकं सहाध्यायित्वं एकमेव। विशालाक्षमते तु तेन सह सहक्रीडितत्वमपि एवमुत्तरत्राऽपि बोध्यम्। तदेव स्फुटयति नेति।

## श्रीमूला

पराशरमतमाह—साधारण इति। एष दोषः दुश्शीलत्वं, साधारणः गुह्यसधर्मणां राज्ञश्च समानः। अस्तु को दोष इति चेदाह— मर्मज्ञभयात् अमात्या मन्मर्मज्ञा इति भयात्। तेषामपि अमात्यानमपि! कृताकृतानि असुष्ठुकृतानि कर्माणि। अनुवर्तेत अनुसरेत्, अर्थाद् राजा।

अस्मिन्नर्थे श्लोकमाह—यावद्भ्य इत्यादि। गुह्यम् आचष्टे स्वं शीलभ्रंशं प्रकाशयति। अवशः अधीरः। एवञ्च गुह्यसधर्मणोऽमात्यान् न कुर्यादित्यभिप्रायः।

कांस्तर्हि कुर्यादित्यत्राह—य एनमिति। अनुगृह्णीयुः उपकुर्युः।

---

इदं तदिति सङ्कल्पो ययोर्न क्वापि दृश्यते।
तद्भावबन्धनर्मिति कथयन्ति मनीषिणः॥
एतत्प्रेम रतिं पुष्येत्तैर्विभावादिभिः पुनः।
यदक्लिष्टं विगाहेत कौटिल्यं प्रीतिकारकम्॥
तदेव प्रेम कौटिल्यं यत्स्वातन्त्र्यं मिथः प्रियम्।
स्वातन्त्र्यं तद्यदन्यस्य मनोरथानिरोधनम्॥ इति॥ ४ अ. पृ. ७९

नी० टि० १. **अनुवर्तेतेति**। न तत्र दण्डप्रणयनं करोति सः।
,, २. **अनुगृह्णीयुरिति**। स्वप्राणदानेन रक्षेयुः।

## वैदिकसिद्धान्तसंरक्षिणी

एतन्मतं दूषयति पाराशरमतेन साधारण इति। राजामात्योभयसाधारण इत्यर्थः। पाराशराः पराशरशिष्याः। तेषामिति! प्रकाशितदुश्चेष्टितानाम्मन्त्रिणाम्! अस्य कृताकृतानीत्यनेनान्वयः। मर्मज्ञभयादिति अयां टिप्पणीपाठः। कृताकृतानि किञ्चित्सम्यक्कृतानि किञ्चिदकृतानि च। अनुवर्तेतेति। व्याख्यातञ्चैतत् टिप्पण्याम् "न तत्र दण्डप्रणयनं करोति सः" इति। निष्कृष्टार्थमाह यावद्भ्य इति। अयं रहस्यं जनानां पुरतः प्रकाशयेत्, इति मन्त्री अवशः, अधीरः सन् वश्यः, रहस्यकर्मणा प्रकाशनभियानुवर्तते इति श्लोकतात्पर्यम्। अत एवाधार्मिकस्य पुरतः रहस्यं न कथमपि प्रकाशनीयम्। तदुक्तं "असूयकायानृजवेऽयताय न मा ब्रूया अवीर्यवती तथा स्याम्" इति। अमुं दोषं परिहर्तुं पाराशर मतमाह य इति। अमात्यत्वेन विवक्षिताः। अमात्यत्वे प्रयोजकमनुरागं ज्ञापयितुं ज्ञापकमापदि उपकारम् आह य एनमिति। राजानमित्यर्थः। प्राणेति। आपत्सु इत्यर्थः अनुगृह्णीयुः। व्याख्यातं टिप्पण्याम् 'स्वप्राणदानेन रक्षेयुः' इति। अभिहितञ्चैतदन्यत्रापि।

'मित्रगोब्राह्मणार्थेषु सद्यः प्राणान्परित्यजेत्'! इति। (ज० मं० का० नी० १०।६) उपाध्याय निरपेक्षायामपि तत्रैव द्रष्टव्यम्[1] ( स० श्लो० ६ )—शेषं स्पष्टम्

## जयमङ्गला

साधारण एष दोष इति। समानोऽयं दोषः। पाराशरा इति! पराशर शिष्याः समानदोषं दर्शयन्त आहुः—तेषामपीति। यथा ते नापराध्यन्ति तथा तेषामप्ययं मर्मज्ञत्वभयात् कृताकृतानि किञ्चित्कृतानि किञ्चदकृतानि असम्यक्कृतानीत्यर्थः। अनुवर्तेत उपेक्षेतेत्यर्थः।

लोकेऽप्येतदिति श्लोकेनाह—यावद्भ्य इति। गुह्यमाचष्टे कथयति, किमु यः समक्षं करोति। जनेभ्य इति, किमुतामात्येभ्यः। पुरुषाधिपः किमुत विजिगीषुः। अवशः सन् तेन कर्मणा गुह्यकर्मकथनेन। तावतां वश्यो भवति, मा भूद्रहस्यभेद इति। तस्माद् य एनं राजानम्। आपत्सु प्राणबाधयुक्तासु क्लेशेन विनाशेन वा युक्तासु। अनुगृह्णीयुः तानमात्यान् कुर्वीत दृष्टानुरागत्वात्।

## जयमङ्गलाक्रोडपत्रम्

### विशालाक्षमते मर्मज्ञत्वे दोषः

एतन्मते यथा दोषप्रकाशनभिया अमात्यः राजानं न विरुणद्धि तथा राजापि तस्मादेव हेतोः अमात्यं न विरुन्ध्यात् तथासति कृतापराधेष्वपि मन्त्रिषु न

---

१. 'अधर्मेति—अधर्मद्रोहाभ्यां युक्तं मित्रमप्युपेक्षेत। तत्साहाय्यादानं विग्रहोपरामाय भवति। आत्मवन्मित्रजाते त्विति। मित्रस्यात्मा प्रकृतिः तद्युक्तम् तत्त्वं मित्रसम्पद्गुणसम्पन्नत्वम्। तथा च कौटिल्यः "पितृपैतामहं नित्यं च वश्यमद्वैध्यं महल्लघुसमुत्थान"मिति। एतद्गुणरूपो मित्रस्यात्मा, स विद्यते यस्य तदात्मवन्मित्रम्। तदर्थं जाते विग्रहे प्राणानपि परित्यजेत् न विग्रहम्" इति।

तथा नी० सारेऽपि—

'धृतिञ्चैवानुरागञ्च स्थैर्यं चापदि लक्षयेत्'। इति च। (का० नी०४ स० श्लो० ६)

**नेति पिशुनः—भक्तिरेषा न बुद्धिगुणः। सङ्ख्यातार्थेषु कर्मसु नियुक्ताः ये यथाऽऽदिष्टमर्थं सविशेषं वा कुर्युः तानमात्यान् कुर्वीत, दृष्टगुणत्वादिति ॥**

---

## जयमङ्गलाक्रोडपत्रम्

राजा दण्डं प्रणयेदित्यापत्तिं चिन्तयन् दोषाभिधानपुरःसरं पाराशरमतं निरूपयति साधारण इति।

### पराशरमते विशेषः

जनेभ्य इति। (पृ० ६३) अमात्येषु रहस्यप्रकाशनदोषप्रसङ्गे जनग्रहणं कैमुतिकन्यायप्रदर्शनार्थम्। तदेव विशदयति किमुत इति! **वश्य** इति। (पृ०६३) यथाभिप्रेतार्थकारी पाराशरमते अमात्यत्वे प्रयोजकः अनुराग एव बोध्यः। तदाह तस्मादिति। रागस्वरूपं पूर्वं व्याख्यातम्! (खं० २ पृ० ६१)

### राजामात्ययोरनुरागः अनुग्रहश्च

**अनुगृह्णीयुरिति**। (पृ०६३) प्रभोः प्राणबाधायामुपस्थितायां राजजीवनार्थं अमात्यः अहमात्मानं समर्पयिष्यामि, तथैव व राजापीत्येवमध्यवसायोऽनुग्रहपदार्थो-बोध्यः। यथा सन्तप्ते पयसि जलदाहं दृष्टवा पयः उच्छलति तदसहमानं जलं पयसि आपतति इत्येवं क्रमेण जलक्षीरयोः पारस्परिकात्मसमर्पणेन अध्यवसायो दृश्यते तथा राजाऽमात्ययोरनुग्रहविषये बोध्यम्।

## श्रीमूला

उक्तं पक्षं खण्डयति—नेतीति। पिशुनः नारदः। तत्र हेतुरुच्यते—भक्तिरेषा न बुद्धिगुणः, स्वशरीरनैरपेक्ष्येण राजरक्षणप्रवृत्तिर्नामायं सेवाधर्मः न तु बुद्धिगुणः बुद्धिगुणसम्पन्नश्चामात्यो भवितुमर्हतीत्याशयः! सङ्ख्यातेत्यादि। ये सङ्ख्यातार्थेषु परि-गणितद्रव्योत्पत्तिषु, कर्मसु नियुक्ताः अर्थं यथादिष्टं सविशेषं वा कुर्युः द्रव्यं क्लृप्त-सङ्ख्यान्यूनं क्लृप्तसङ्ख्याधिकसङ्ख्यं वा भावयेयुः।

## वैदिकसिद्धान्तसंरक्षिणी

एतन्मतं खण्डयति नेति। निषेधे हेतुमाह भक्तिरिति। एषा अनुरक्तिः प्रेम्णः अन्तिमावस्था। गणपतिशास्त्रिणस्तु "स्वशरीरनैरपेक्ष्येण राजरक्षणप्रवृत्तिः" इत्याहुः। सा न अमात्यत्वे प्रयोजिका अपितु बुद्धिगुणोऽपि तमेव विशदयति सङ्ख्या-तेत्यादिना ग्रन्थेन। सङ्ख्यातार्थेषु परिच्छिन्नपदेषु परिच्छिन्नसाधनेषु वा। श्रीगणपतिशास्त्रिणस्तु 'परिगणितद्रव्योत्पत्तिषु' इत्याहुः।

यथादिष्टम्। एवमीदृग् इति। अर्थं द्रव्यम् सविशेषमधिकं शोभनं वा अनुक्तमपि। गणपतिशास्त्रिणस्तु "क्लृप्तसङ्ख्यान्यूनं क्लृप्तसङ्ख्याधिकसङ्ख्यं वा इति व्याचक्षते। कुर्युः भावयेयुः, कर्मकौशलात्। तान् बुद्धिगुणसम्पन्नान्। अमात्यत्वनियोजने हेतुमाह दृष्टेति। अनुरागो व्याख्यातः। (पृ० ६१)

**नेति कौणपदन्तः[1] —अन्यैरमात्यगुणैरयुक्ता ह्येते । पितृपैतामहान-मात्यान् कुर्वीत, दृष्टापदानत्वात्[2] । ते[3] ह्येनं [4]अपचरन्तमपि न त्यजन्ति, सगन्धत्वात्[5] । अमानुषेष्वपि चैतत् दृश्यते--गावो ह्यसगन्धं गोगणमतिक्रम्य सगन्धेष्वेवावतिष्ठन्ते इति ॥**

## जयमङ्गला

नेति पैशुनः । पिशुनो नामाचार्यः कोऽपि । नारद इति केचित् । भक्तिरेषा न बुद्धिगुण इति । आपद्यनुग्रहे भक्तिमात्रं, न बुद्धिकौशलम् । स्त्रियोऽपि भर्तर्यनुरागवत्यः सत्या भरणीया भवन्ति । बुद्धया चैषां सर्वार्थया प्रयोजनम् । तस्माद् ये कर्मसु व्यापारेषु । सङ्ख्यातार्थेषु परिच्छिन्नफलेषु परिच्छिन्नसाधनेषु वा । नियुक्ता यथादिष्टं यथा आदिष्टम् एवमीदृगीदृगिति । सविशेषम् अधिकं शोभनं वा कुर्युः कर्मप्रावीण्यात् । तानमात्यान् कुर्वीत दृष्टगुणत्वात् ।

## जयमङ्गलाक्रोडपत्रम्

### पराशरमते दोषः

तन्मते दोषं नारदमतेन अनुवदति, नेति पिशुन इत्यादिना—

बुद्धिकोशलं बुद्धिचातुर्यं—अभ्युच्चयापचयाभ्यां सूक्ष्मतत्वार्थालोचनम् इति यावत् । तत्र दृष्टान्तमाह स्त्रियोपीति ।

### बुद्धयनुरागौ अमात्यत्वहेतू

अत्राऽयं भावः अनुरागएव मन्त्रित्वे प्रयोजकश्चेत् तथाविधोऽपि अमात्यः मूर्खः राजानं विनाशयितुमर्हति अतः मूर्खो मन्त्री न कार्यः इति भावः । तदुक्तम्—नीतिसारे—

मन्त्रयेतेह कर्माणि सहाप्तेन विपश्चिता ।
आप्तं मूर्खमनाप्तञ्च मन्त्रिणं परिवर्जयेत्[6] ॥ इति ।

अतः बुद्धिगुणोऽपि अमात्यत्वे प्रयोजकः । इति नारदमततात्पर्यं बोध्यम् ।

---

नी.टी. १. **कौणपदन्त इति** । कुणपदन्तः शन्तनुगङ्गाशापात् पूतिदन्तोऽभूत् । तस्यापत्यं भीष्मः ।

२. **दृष्टापदानत्वादिति** । दृष्टं पितृ (मातृकुले) कालेऽवदानमुपधाशुद्धिर्येषाम् दैङ्ग शोधनेऽस्य धातो रूपमिदम् ।

,, ३. **त इति** । द्वितीयोऽपि हेतुः ।

,, ४. **अपचरन्तमपीति** । वाक्पारुष्यादिभिरुद्वेजयन्तमपि ।

५ **सगन्धत्वादिति** । गन्धः परिचयजनितस्नेहः संवासाभ्यासजा प्रीतिः समानो गन्धः सगन्धः ।

६. टी० मन्त्रज्ञैः सह मन्त्रिभिः इत्यस्य विशेषमाह सहाप्तेन विपश्चितेति । आप्तेन मन्त्रज्ञेन च मन्त्रिणा कार्याणि मन्त्रयेतेत्यर्थः । यः पुनरनाप्तः योऽपि न मन्त्रज्ञः तदुभयमपि त्यजेत् ।—

## श्रीमूला

नारदपक्षं कौणपदन्तो निराचष्टे-नेति कौणपेत्यादि। (पृ० ९५) अन्यैर्गुणैः धनभावनार्तिरिक्तैर्विश्वास्यत्वानुरक्तत्वादिभिर्गुणैः। पितृपैतामहान् पितृपितामहक्रमागतान्। दृष्टापदानत्वात् दृष्टं साक्षादनुभूतम् अपदानं पूर्ववृत्तं येषां ते दृष्टापदानाः तेषां भावस्तत्वं तस्मात्। एतेन पूर्वपुरुषशीलप्रत्येयगुणत्वमुक्तम्। गुणान्तरमाह—ते हीति। अपचरन्तमपि एनम् आत्मापकारिणमपि स्वामिनम्। सगन्धत्वात् सम्बन्धित्वात् परिचितत्वात्, सम्बन्धसामान्यवचन इह गन्धशब्दः। पशुदृष्टान्तमाह—अमानुषेष्विति। एतत् परिचयस्य परिचितात्यागकारणत्वम्। असगन्धम्। अपरिचितम्।

## वैदिकसिद्धान्तसंरक्षिणी

एतन्मतं दूषयन् भीष्ममतमुत्थापयति नेतीत्यादिना। (पृ० ९५) कौणपदन्तः भीष्मः। तदाहुः "तस्यापत्यं भीष्मः" इति (टि० ९५)। पिशुनमते दोषमाह अन्यैरिति। अभिजनान्वयप्रयुक्तैः अव्यभिचारिशुचित्वादि गुणैः। अयुक्ताः असम्पन्नाः। हिः हेत्वर्थे। ते भक्तिबुद्धिमन्तः। स्वमतेन अमात्यत्वप्रयोजकं अव्यभिचारिगुणपयोजकं कुलीनत्वमप्याह पित्रिति। कुतः पितृपैतामहान् कुर्वीत इत्याह दृष्टेति। अवदानत्वादिति टिप्पणीपाठान्तरम्। 'अन्वयानुवृत्तेर्ज्ञातिविशुद्धकर्मत्वात्। तदुक्तं टिप्पण्यामपि। "दृष्ट पितृ-कुले अवदानमुपधाशुद्धिः येषां देङ्शोधने" अस्य धातोरूपमिदम्" इति। अत्र टिप्पण्यां-पितृपैतामहैः इतिपाठः पूरणीयः मूलपाठानुरोधात्। तदुक्तं गणपतिशास्त्रिभिः—"एतेन पूर्वपुरुषशीलप्रत्येयगुणत्वमुक्तम्" इति। अमात्यत्वप्रयोजकत्वे हेत्वन्तरमाह ते इति। तदुक्तं टिप्पण्यां—'द्वितीयोपि हेतुः" इति। ते कुलीनाः। हिः हेत्वर्थे। एनं राजानं स्वामिनमिति यावत्। अपचरन्तमपि स्वदोषादमार्गे प्रवर्तमानमपि। उक्तं टिप्पण्यामपि—"वाक्पारुष्यादिभिरुद्वेजयन्तमपि" इति। न त्यजन्ति अनुवर्तन्त एव। तदाहुः।—

पान-स्त्री-द्यूत-गोष्ठीषु राजानमभितश्चराः।
प्रमाद्यन्तं बोधयेयुः उपायैर्नाटिकादिभिः॥ इति।

सगन्धत्वात् प्रीतिमत्वात्। तदुक्तं टिप्पण्याम्। "गन्धः परिचयजनितः स्नेहः संवासाभ्यासजा प्रीतिः। समानो गन्धः सगन्धः" इति। अत्र न्यायं दर्शयितुमाह गाव इति। असगन्धमप्रीतिमन्तं सगन्धेष्वेवे प्रीतिमत्स्वेवावतिष्ठन्ते। विश्वासपूर्वकमिति शेषः।

---

टिप्पणी अत्र एका कथा प्रसिद्धा।

काचन मक्षिका इतस्तो भ्रमन्ती ग्रीष्मसमये मध्याह्ने विश्रान्तिं कुर्वन्तं राजानं पीडयामास। अनुरक्तत्वात् राज्ञा स्वात्मरक्षणार्थं वानरः तत्र नियोजितः स नासायां क्रीडन्तीं मक्षिकां ददर्श। पौनपुन्येन तामपसारयामास च। तथापि सा मक्षिका पुनरपि प्रभुं पीडयतीति मत्वा मक्षिकां नासिकाग्रस्थितां व्यापादयितुमियेष मक्षिका उड्डीय पलायिता। परं तत्प्रहारेण राजनासिका च्छिन्ना।

## जयमङ्गला

नेति कौणपदन्तः भीष्मः। पूतिदन्तस्य शन्तनोरयं पुत्र इति दाक्ष्यादिभि[1]रन्यैरमात्यगुणैरयुक्ताः। पूर्वगुणसमुच्चयेऽप्यभिजनशौर्यादिभिर युक्ता ह्येते। पितृपैतामहानिति। पितुः पैतामहान्। अमात्यान् कुर्वीत दृष्टापदानत्वादिति। अन्वयानुवृत्तेर्ज्ञात विशुद्धकर्मत्वात्। ते ह्येनमपचरन्तम्। स्वदोषादमार्गे प्रवर्तमानमपि। न त्यजन्ति किन्त्वनुवर्तन्त एव। अमानुषेषु अप्रेक्षापूर्वकारिष्वप्ययं न्यायो दृश्यत इत्याह गावो हीति। अनपेक्षितपरस्परोपकारास्सजातीयत्वेऽपि। असगन्धम् अपरिचितम्। गोगणमतिक्रम्य सगन्धेष्वेव तुल्यपरिचयेष्वेव अवतिष्ठन्ते।

## जयमङ्गलाक्रोडपत्रम्

### नारदमते दोषः कुलीनत्वाभावः

नारदमतेन वंशपरम्परायातानां दाक्ष्यादिगुणानाममात्यपदनियोजने हेतुत्वं न उक्तम्। इष्टापत्तौ च आपदि स्वकार्यकरणे स्थैर्यं न स्यात् अतः अभिजनदाक्ष्यक्लेशसहिष्णुत्वादिगुणा अपि वंशपरम्पराप्राप्ता अपेक्ष्यन्ते इत्यभिप्रेत्य कौणपदन्तमतं व्याख्याति भीष्म इत्यादिना। पूतिदन्तस्येति। पूतिदन्तत्वं शन्तनोः कथमिति टिप्पण्यामुक्तम् "कुणपदन्तः शन्तनुः गङ्गाशापात् पूतिदन्तोऽभूत् तस्यापत्यम् भीष्मः" इति। (पृ० ९६)

### दाक्ष्यादिभिरिति पाठविचारः

दाक्ष्यस्य अभिजनान्वये अवश्यजातत्वं भवति। तद्वक्ष्यति अत्रैव कौटिल्यमत निरूपणावसरे। तथा च दाक्ष्यमपरित्यागित्वमभयं कर्मकौशलं च इत्येते प्रधानगुणाः अभिजनान्वयित्वे अवश्यंभाविनः इति ध्यात्वा दाक्ष्यादिभिरिति संशोधितम्।

### बन्धुभावः

**अपादानत्वादिति**। अत्रेदमनुसन्धेयम्। "कुलीनाः परस्परं पूर्वपरम्परायातसम्बन्धात् बन्धुत्वमनुभवन्ति बन्धवश्च बन्धून् नापत्सु परित्यजन्ति।

तदुक्तम् — निर्गुणं ह्यपि भर्तारमापत्सु न परित्यजेन्।
ततः परतरो नाऽस्ति य आपत्सूपतिष्ठति॥ इति।

अत्र "स बन्धुर्योऽनुबध्नाति हितेष्वत्याहितादरः"। इत्युक्तत्वात् बन्धुषु मित्रत्वं सहजत्वप्रयुक्तं ज्ञेयम्।

तदुक्तम् — औरसं मैत्रसम्बद्धं तथा वंशक्रमागतम्।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम्[2]॥७४॥ इति। (४ सर्ग नी०सा०)

---

अशुद्धम्

१. दाक्ष्यादन्यैः।

२. टी० —मित्रभेदानाह औरसेत्यादि। तत्र कौटिलीये त्रिविधं मित्रमुक्तम्। सहजं प्राकृतं कृत्रिमञ्च। इह तु शास्त्रकारेण सहजस्य द्विविधसम्बन्धज्ञापनार्थं चतुर्विधं मित्रमुक्तम्।"

## जयमङ्गलाक्रोडपत्रम्

### मौलानां राज्यहेतुत्वम्

अत्रोदाहरणं यादवाः भवितुमर्हन्ति। तैः बन्धुभावे अवस्थाय सङ्घीभूय-स्वराज्यं सम्पादितम्। बन्धुभिः बन्धुषु कथं वर्तितव्यम् इत्यत्र महाभारतोक्तः कृष्णनारदसम्वादः अनुसन्धेयः[1]।

### परिचयः

**तुल्यपरिचयेष्विति**। (पृ० ९७) परिचयः अनुपेक्षात्मकं ज्ञानं तेन न विस्मरणं भवति।

---

### बन्धुषु वृत्तिः

१. राजधर्मानुशासन पर्व ८१ अध्याये

**नारद उवाच**

"आपदो द्विविधाः कृष्ण बाह्याश्चाभ्यन्तराश्च ह।
प्रादुर्भवन्ति वार्ष्णेय स्वीकृता यदि वान्यतः ॥१३॥
सेयमाभ्यन्तरा तुभ्यमापत् कृच्छ्रा स्वकर्मजा।
अक्रूरभोजप्रभवा सर्वे ह्येते त्वदन्वयाः ॥१४॥
अर्थहेतोर्हि कामाद् वा वाचा बीभत्सयाऽपि वा।
आत्मना प्राप्तमैश्वर्यमन्यत्र प्रतिपादितम् ॥१५॥
कृतमूलमिदानीं तज्ज्ञातिवृन्दं सहायवत्।
न शक्यं पुनरादातुं वान्तमन्नमिव त्वया ॥१६॥
बभ्रूग्रसेनयो राज्यं नाप्तुं शक्यं कथञ्चन।
ज्ञातिभेदभयात् कृष्ण त्वया चापि विशेषतः ॥१७॥
तच्च सिद्ध्येत् प्रयत्नेन कृत्वा कर्म सुदुष्करम्।
महाक्षयं व्ययो वा स्यात् विनाशो वा पुनर्भवेत् ॥१८॥
अनायसेन शस्त्रेण मृदुना नुहृदयच्छिदा।
जिह्वामुद्धर सर्वेषां परिमृज्या मृज्य च ॥१९॥

**वासुदेव उवाच**

अनायसं मुने शस्त्रं मृदु विद्यामहं कथम्।
येनैषामुद्धरे जिह्वां परिमृज्यानुमृज्य च ॥२०॥

**नारद उवाच**

शक्त्याऽन्नदानं सततं तितिक्षार्जवमार्दवम्।
यथार्हप्रतिपूजा च शस्त्रमेतदनायसम् ॥२१॥
ज्ञातीनां वक्तुकामानां कटुकानि लघूनि च।
गिरा त्वं हृदयं वाचं शमयस्व मनांसि च" ॥२२॥ इति।

**नेति वातव्याधिः—ते ह्यस्य सर्वमवगृह्य[1] स्वामिवत् प्रचरन्तीति। तस्मान्नीतिविदो [2]नवानमात्यान् कुर्वीत। नवास्तु यमस्थाने दण्डधरं मन्यमानाः भया नापराध्यन्तीति ॥**

## श्रीमूला

उक्तं पक्षं वातव्याधिर्नानुमन्यत इत्याह—नेति वातेत्यादि। वातव्याधिरुद्धवः श्रीकृष्णमन्त्री। ते कुलक्रमागता अमात्याः। अस्य सर्वमवगृह्य स्वामिनः समस्तं विभवमवष्टभ्य स्वामिवत् प्रचरन्ति स्वतन्त्रवृत्तयो भवेयुः। के तर्ह्यमात्याः कार्या इत्याह - तस्मादित्यादि। नवान् पूर्वसम्बन्धरहितान्। दण्डधरं यमस्थाने मन्यमानाः राजानं यमवदुग्रदण्डं बुध्यमानाः।

## वैदिकसिद्धान्तसंरक्षिणी

भीष्ममते दोषमाह नेतीति। वातव्याधिः उद्धवः। निषेधे हेतुमाह त इति। महाध्यायित्वगुणसम्पन्नाः स्वामित्वाभिमानिनः। हिः हेत्वर्थे। अस्य स्वामिनः। सर्वस्वं चेष्टितं वा। अवगृह्य आक्रम्य अपहृत्य वा। स्वामिवत् स्वामिभावेन। प्रचरन्ति प्रवर्तन्ते वयमेव स्वामिन इति। तदुक्तं टिप्पण्याम्—'सर्वमाक्रम्य प्रभुमात्रमेनं स्थापयित्वा स्वामिवत्प्रचरन्ति। सोऽयं महानत्र दोषः। तथा चोक्तम्—

"वटवृक्षप्ररोहेव प्रकृतिः स्कन्धनाशिनी।
अमात्याख्यद्वियोगेन भवेन्मूलोपघातिनी॥ इति

चित्तविकारिणीति वचनात्"। इति।

दोषं परिहरति उद्धवमतेन तस्मादिति। नीतिविदः नीतिमार्गविदः। स्वामित्वप्रवृत्तिदोषं परिहर्तुम् आह नवानिति। अमात्यत्वे[1] अव्यवहृतान् इत्यर्थः। तथाचोक्तं-टिप्पण्यां-"क्रमागतान् पूर्वममात्यत्वेऽव्यवहृतान्" इति। नीतिशास्त्रमात्रविदः इति यावात् यथोक्तदोषाभावात्।

## जयमङ्गला

नेति वातव्याधिः उद्धवो नाम। ते ह्येवङ्गुणत्वेऽपि निर्भयत्वात् सर्वं चेष्टितम् अपहृत्य स्वामिवत् प्रचरन्ति वयमेव स्वामिन इति। तस्मान्नितिविदो ज्ञातपूर्वकत्वादि सर्वगुणान् नवान् यथोक्तदोषाभावान् अमात्यान् कुर्वीत। तदेव दर्शयन्नाह—नवास्त्विति। ते हि यमस्थाने यमप्रसङ्गे। प्रीतिद्वेषानपेक्षत्वात् दण्डयितारं मन्यमाना नापराध्यन्तीति।

---

वै० टी० १. **अवगृह्येति**। सर्वमाक्रम्य प्रभुमात्रमेनं स्थापयित्वा स्वामिवत् प्रचरन्ति। तदेवं महानत्र दोषः। तथाचोक्तम्—

वटवृक्षप्ररोहेव प्रकृतिः स्कन्धनाशिनी।
आमात्याख्यद्वियोगेन भवेन्मूलोपघातिनी॥
···श्चित्तविकारिणीति वचनात्।

वै० टी० २. नवानिति—क्रमागतान् पूर्वममात्यत्वेऽव्यवहृतान्।

नेति बाहुदन्तीपुत्रः[१]—शास्त्रविद् अदृष्टकर्मा कर्मसु विषादं गच्छेत् । अभिजनप्रज्ञाशौचशौर्यानुरागयुक्तानमात्यान् कुर्वीत, गुणप्राधान्यादिति[२] ॥

## जयमङ्गलाक्रोडपत्रम्

### भीष्ममते दोषः

अस्मिन्मते सहाध्यायित्व—समानशीलत्व—कुलीनत्वानि अमात्यकार्यप्रयोजकानि उपलब्धव्यानि भवन्ति, तद्द्वारा दाक्ष्यविश्वास्यत्वरागित्वादिगुणवत्तायाः सुपरीक्षितत्वात् न तावता स्वामिभावेन वर्तनात्मको महान्दोषः न व्यावृत्तो भवति । सति च तस्मिन् राज्यस्वामित्वस्य हानिः प्रसज्येत ।

इतीममपि दोषमभिसन्धायाह नेतीत्यादिना ग्रन्थेन । ( पृ० ९९ )

**उद्धव** इति । ( पृ० ९९ ) अभियुक्तैः वातव्याधिपदसङ्केतस्य उद्धवे प्रयुक्तत्वादेवं व्याख्यानम् । भीष्ममते दोषमुत्थापयति एवमिति ।

**स्वामिवदिति** । (पृ० ९९) अत्रोदाहरण्यं टिप्पण्यां-द्रष्टव्यम्[३] ।

**ज्ञातेति** । (पृ० ९९) पूर्वत आगतः पूर्वकत्वादिः सर्वगुणः ज्ञातः येषामिति विग्रहो बोध्यः । **यथोक्तेति** । ( पृ० ९९ ) नवान् पूर्वसम्बन्धरहितान् इति व्याख्यान्ति गणपति शास्त्रिणः ।

### नवेषु रागद्वेषाभावौ

**नापराध्यन्तीति** । ( पृ० ९९ ) अत्रेदं बोध्यम्-पुराणाः केचित् परस्परं क्रमागतत्वात् स्निह्यन्ति, अपरे द्विष्यन्ति इति तेषु रागद्वेषौ सम्भवितुमर्हतः । नवास्तु तु न तथा इति ।

## श्रीमूला

इममपि पक्षं बाहुदन्तीपुत्रो न सहत इत्याह—नेति बाह्विति । कुत इत्यत्राह—शास्त्रेत्यादि । नीतिशास्त्रग्रन्थनिष्णातस्तदर्थानुष्ठानपरिचयविकलः अमात्यकर्मसु अवसादं प्राप्नुयात् अनिर्वाही स्यादित्यर्थः । कांस्तर्हि अमात्यान् कुर्वीतेत्यत्राह—अभिजनेत्यादि । अभिजनो वंशशुद्धिः, प्रज्ञा बुद्ध्यतिशयः, शौचमुपधाशुद्धिः, शौर्यम् उत्साहशक्तिः, अनुरागः स्वामिभक्तिः, एतैर्युक्ता ये पुरुषाः तान् अमात्यान् कुर्वीत । कुतः, गुणप्राधान्यात् गुणानामेव प्रधानत्वात् ।

---

नी० टी० १. बाहुदन्तीपुत्र इति—बाहुदन्ती इन्द्रमाता तस्याः पुत्रः ।

,, २. गुणप्राधान्यदिति—सर्वेषाममात्यगुणानां मध्य एत एव गुणाः प्रधानभूताः ।

३. सखीनिव प्रीतियुजोऽनुजीविनः समानमानान् सुहृदश्च बन्धुभिः ।
स सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बन्धुताम् ॥ इति । किरात

## वैदिकसिद्धान्तसंरक्षिणी

उद्धवमते दोषं प्रकाशयति इन्द्रमतेन नेतीत्यादिना। (पृ० १००) बाहुदन्ती इन्द्रस्य माता। तदुक्तं टिप्पण्याम्—"बाहुदन्ती इन्द्रमाता तस्याः पुत्रः" इति। निषेधे हेतुमाह शास्त्रेति। अदृष्टकर्मा अनभ्यस्तकर्मा। विषादं मोहं कार्यानिस्तरणात्। एतन्दोषं परिहरन् इन्द्रमतमाह तस्मादिति। वातव्याधिमतेन उपस्थितं विषादं परिहर्तुम् आह अभिजनेति। अभिजनः कुलीनः प्रज्ञा--औत्पादिकी, शास्त्रसमुद्भवा, परिणामिनी, वृद्धसंसर्गादागताऽऽहार्याऽष्टाङ्गा[१]।

शौचमुपधाशुद्धिः। तच्च आभ्यन्तरं अर्थप्रयोगादौ मायानृतादिराहित्यं। न तु मृज्जलादिजनितं बाह्यमात्रं अत्र ग्राह्यम्। तथैव भाष्ये व्याख्यानात्। गीता० (१८।४३[२]) शौर्यम्—बलवत्तरानपि प्रहर्तुं प्रवृत्तिः। ( तदुद्धृतम्—गीताव्याख्यायां (१८।४३[३]) )

अनुरागः अनुवृत्तो रागः। युक्तान् एतैः प्रधानगुणैः सम्पन्नान्। तथाचोक्तं टिप्पण्याम्—"सर्वेषाममात्यगुणानां मध्य एत एव गुणाः प्रधानभूताः" इति। प्राधान्यमितरगुणाभावेऽपि अभिजनादिगुणानामपेक्षितत्वम्।

तदुक्तम्— कुलीनाः शुचयः शूराः श्रुतवन्तोऽनुरागिणः।
दण्डनीतेः प्रयोक्तारः सचिवास्स्युर्महीपतेः[४] ॥ इति। (नी०सा० स०४४)

## जयमङ्गला

नेति बाहुदन्तीपुत्रः। बाहुदन्तीपुत्र इन्द्रः। अन्योपि शास्त्रविददृष्टकर्मा। नवो वैद्यादिः। कर्मसु विषादं गच्छेद् व्यामुह्यते यथोक्तम्—

यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः।
स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम् ॥ इति।

शास्त्रं चेदं विशेषेण कर्मप्रदर्शनार्थं कर्मण्याभ्यासगम्यत्वात्। तेन दृष्टकर्मेत्यर्थादापन्नम्। तस्मादभिजनादियुक्तान् आमात्यान् कुर्वीत।

## जयमङ्गलाक्रोडपत्रम्

### उद्धवमते दोषः

नव इति। स च अननुभवेन शास्त्रोदितं कर्म न परिचिनेति। अतएव अकुशलत्वात्

१. तदुक्तम् कामन्दकेन नी० सारे-१६ सर्गे ॥ ३३ ॥ "औत्पादिकी उत्पत्तिप्रतिबद्धा। साचाष्टाङ्गा तत्त्वतो भवति। शास्त्रसमुद्भवा सम्यग्विज्ञातशास्त्रतत्त्वस्य तदनुस्यूता। सांसर्गिकी आहार्यबुद्धिः ज्ञानवृद्धसंसर्गादागता। परिणामिनी या तदात्वे नोत्पद्यते, किन्तु पश्चाद्बुद्धिः स्वयं विमृशतो भवति। एताश्चतस्रो बुद्धयः सदा मन्त्रशक्तौ व्याप्रियन्ते ॥३३॥ इति।

२. आभ्यन्तरं मनोबुद्ध्योर्नैर्मल्यमायारागादिकालुष्याभावः। (शाङ्करभाष्यम्)

(३ भा०) शूरस्य भावो विक्रमो बलवत्तरानपि प्रहर्तुं प्रवृत्तिः। रा०भा०—शौर्यं युद्धे निर्भयप्रवेशसामर्थ्यम्। पिशाचभाष्य—शौर्यं मरणे निर्भयत्वम्। वेङ्कटनाथ—शौर्यं युद्धे निर्भयप्रवृत्तिः। मधुसूदनी—शौर्यं विक्रमो बलवत्तरानपि प्रहर्तुं प्रवृत्तिः। इति।

४. टी०-अन्यगुणाभावेऽपि कुलीनत्वादिभिः षड्भिर्गुणैः युक्ताः अमात्याः स्युः इति।

## जयमङ्गलाक्रोडपत्रम्

कर्मकाले विषीदति । यद्येवं तर्हि तेषु अमात्यव्यवहारः अनुपपन्नः । इतीमन्दोषमुद्धव-मतेन सम्भवन्तं दृष्टान्तेन विशदयति वैद्यादिरिति ।

**व्यावृह्येतेति** । (पृ० १०१) विषादो । मोहः इति । साङ्ख्यतत्वकौमुद्यां व्याख्यातः तद्यथा-

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृतयश्च गुणाः[1] ॥११॥ इति ।

**यस्त्विति** । ( पृ० १०१ ) इदं वाक्यं चरके उपलभ्यते ।

**इन्द्रमते विशेषः कर्मपर्यवसायी नीतिशास्त्राध्ययनविधिश्च**

**कर्मप्रदर्शनार्थमिति** । (पृ० १०१) अत्राऽयं निष्कर्षः स्वाध्यायोऽध्येतव्य इत्यत्र स्वाध्यायस्य अध्ययनभावनाभाव्यत्वं तव्यप्रत्ययेन बोधितं सदपि बाधितं भवति, स्वाध्यायस्यापुरुषार्थत्वात् । अतः स्वर्गस्य भाव्यत्वं स्वीकृत्य परंपरया इष्टार्थानुसारेण स्वर्गसाधनयागसाधनार्थज्ञानसाधनस्वाध्यायस्योद्देश्यत्वे स्वीकृते तव्यप्रत्ययार्थत्वं समन्वितं भवति । तस्मात् स्वाध्यायाध्ययनमात्रेण न विश्रामः अपि तु यथावत् कर्मपर्यवसायो स्वाध्यायो यथा भवेत् तथा वेदार्थो ज्ञेय इति सिद्ध्यति । अधीत्य स्नायादित्यादावपि स्नाननिष्ठ त्वाप्रत्ययेन बोध्यं अध्ययनानन्तर्यम् गुरुकुले स्थित्वा वेदमधीत्य तदर्थमवगम्य च स्नायात् इत्येतावत्पर्यन्तं पर्यवस्यति । तथैव अत्रापि नीतिशास्त्रस्याऽध्ययनमात्रेण न कृतकृत्यता भवति तदध्येतॄणामनभ्यस्तकर्मणां विषादापत्तेः । अपि तु त्रिवर्गसमृद्धिजनककर्मपर्यवसितम् अध्ययनम् अर्थात् प्राप्तं भवति इतीन्द्रमतेन पूर्वं प्रतिपादितैर्गुणैः समस्तैः सह 'कर्मणि कुशलताऽप्यपेक्ष्यते' इति ।

**कर्मण्येति** । (पृ० १०१) स चासौ अभ्यासश्चेति विग्रहः तथाचोक्तं दशकुमारचरिते बोद्धम्[2] ।

किञ्च 'कुलीनाः शुचयः शूरा' । (पृ० १०१) इति कामन्दकोक्तपद्येनोक्तं दण्डनीतिप्रयोक्तृत्वम्, 'कर्मण्यपदेन' विवक्षितम् । एतेन कामन्दकोक्ताः कुलीनत्वादयः षड्गुणाः अत्रैव अन्तर्भवन्ति इति बोध्यम् ।

---

१. गुणा इति परार्थाः । सत्वं लघु प्रकाशकमित्यत्र क्रमेण निर्दिश्यन्ते । तदनागतावेक्षणेन तन्त्रयुक्त्या वा प्रीत्यादीनां यथासङ्ख्यं वेदितव्यम् । एतदुक्तम्भवति । प्रीतिः सत्व प्रीत्यात्मकः सत्वगुणः, अप्रीतिर्दुःखं अप्रीत्यात्मको रजोगुणः, विषादो मोहः विषादात्मकस्तमोगुण इति । ये तु मन्यन्ते न प्रीतिर्दुःखाभावादतिरिच्यते, एवम् दुःखमपि न प्रीत्यभावादिति, तान् प्रत्यात्मग्रहणम् । नेतरेतराभावाः सुखादयः, अपितु भावाः । आत्मशब्दस्य भाववचनत्वात् । प्रीतिरात्मा भावो येषां ते प्रीत्यात्मनः । एवमन्यदपि व्याख्येयम् । इति

२ 'कोऽसौ मार्गः' इति । पुनरिमे ब्रुवते-ननु चतस्रो राजविद्यास्त्रयीवार्ताऽन्वीक्षिकी दण्डनीतिरिति । तासु तिस्रस्त्रयीवार्तान्वीक्षिक्यो महत्यो मन्दफलाश्च, तास्तावदासताम् । अधीष्व तावद्दण्डनीतिम् । इयमिदानीमाचार्यविष्णुगुप्तेन मौर्यार्थे षट्श्लोकसहस्रैः सङ्क्षिप्ता । सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्मक्षमा इति ।

**सर्वमुपपन्नमिति कौटल्यः—[1]कार्यसामर्थ्याद्धि पुरुषसामर्थ्यं कल्प्यते। सामर्थ्यतश्च—**

**विभज्यामात्यविभवं देशकालौ च कर्म च।**
**आमात्याःसर्व एवैते कार्यास्स्युर्न तु मन्त्रिणः[2] ॥ ११ ॥**

**इति विनयाधिकारिके अमात्योत्पत्तिः।**
**अष्टमोऽध्यायः ॥**

---

## जयमङ्गलाक्रोडपत्रम्

### उद्धवेन्द्रमतयोर्विशेषः

**तस्मादिति।** वातव्याधिमते शास्त्रस्य विचार एव उक्तः, इन्द्रमते तु कर्मपर्यवसायी शास्त्रविचारः उक्तः इति विशेषो बोध्यः।

## श्रीमूला

स्वमतमाह – सर्वमिति। सर्वम् उपपन्नं, शौचसामर्थ्यादयो गुणाः स्वामिपरिभवादिदोषाश्च पूर्वोक्ताः सहाध्यायिप्रभृतिषु न्याय्याः। कुतः, हि यस्मात् कारणात्, पुरुषसामर्थ्यं पुरुषस्य तत्तदधिकारपदयोग्यता, कार्यसामर्थ्यात् सामर्थ्यतश्च कार्याणां सहाध्ययनक्रीडादीनां शक्त्या सामर्थ्याच्च प्रज्ञाशास्त्रसंस्कारशौर्यादितारतम्ययोगित्वलक्षणात्। कल्प्यते व्यवस्थाप्यते इत्यर्थः। गुणदोषोभयोपपन्नत्वं वदता चार्थादिदमुक्तं भवति—सहाध्यायिप्रभृतयो न हेयाः विश्वास्यत्वादिगुणयोगात्, नापि मन्त्रिपदे कर्तव्याः परिभवादिदोषयोगात्, पारिशेष्यात् तु कर्मसचिवपदे कर्तव्याः तत्तद्गुणापेक्षेषु च कर्मसु देशकालानुरोधेन नियोक्तव्या इति।

एतदर्थकमध्यायप्रान्ते श्लोकमाह – विभज्येत्यादि। अमात्यविभवं विश्वास्यत्वाद्यमात्यगुणसम्पदम्। विभज्य यस्मिन् देशे यस्मिन् काले यस्य कर्मणः सुष्ठु निष्पत्तये यो गुणोऽपेक्ष्यते, तं तं यथायथं विविच्येत्यर्थः। सर्व एवैते तत्तद्गुणवन्तः सहाध्याय्यादयः सर्वेऽपि। अमात्याः कर्मसचिवाः कार्याः। मन्त्रिणस्तु न कार्याः मन्त्रिपदे न तु निवेश्याः।

इति कौटिलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके
प्रथमाधिकरणे अष्टमोऽध्यायः अमात्योत्पत्तिः।

## वैदिकसिद्धान्तसंरक्षिणी

स्वमतमाह सर्वमिति। तत्तदाचार्योक्तममात्यत्वतदभावसम्पादकगुणदोषप्रकाशकं मतमुपपन्नम्। युक्तियुक्तित्वादिति शेषः। तत्र हेतुमाह कार्येति[1]।

---

सं॰टी॰ १. कार्येति—कार्याणि विजिगीषोः समाहर्तृकर्मादीनि खनिद्रव्यहस्तिवनकार्योपयुक्तकर्मान्तवमानान्येवमष्टादशस्वपि तीर्थेषु मुख्यामात्या अष्टादश। तेषां कारणिकत्वेन स्थिताः प्रत्येकं त्रयस्त्रय एवमुपयुक्ताश्चतुःपञ्चाशत् सर्वेऽपि। द्विद्विसप्ततिसङ्ख्याः तदपेक्षया उच्यते कार्यसामर्थ्यादिति।

सं॰ टी॰ २. न तु मन्त्रिण इति। अमात्यसंज्ञासामान्यान्मन्त्रिणामपि कर्तव्यत्वे प्राप्ते प्राह।

## वैदिकसिद्धान्तसंरक्षिणी

### सामर्थ्यम्

सामर्थ्यं (पृ० १०३) तत्तत्कार्यस्य जननयोग्यत्वम् । तत्र यावन्तो गुणाः येषु येषु स्थलविशेषेषु साधकतया अपेक्ष्यन्ते ! तत्र तत्र तावद्गुणसम्पत्तिः पुरुषसामर्थ्यं पुरुषस्य तत्तदधिकारपदयोग्यता। गणपतिशास्त्रिणश्चैवमाहुः –"हि यस्मात्करणात्, कार्य-सामर्थ्यात् सामर्थ्यतश्च कार्याणां सहाध्ययनक्रीडादीनां शक्त्या ! सामर्थ्याच्च प्रज्ञाशास्त्र-संस्कार शौर्यादितारतम्ययोगित्वलक्षणात्" इति । अत्र टिप्पणी अनुसन्धेया[1] । यावद्भिः पुरुषैः श्रमं विना कार्यं सम्पादयितुं शक्यते तावन्तः पुरुषाः तत्र तत्र नियोजिताश्चेत् शासनसञ्चालनं आञ्जस्येन भवति । इत्याशयो बोध्यः ।

तदुक्तं दूतचरविकल्पे जयमङ्गलायां नीतिसारे—

गुणसाकल्यं सामर्थ्यस्य तदुपेतो निसृष्टार्थो वेदितव्यः ! इति ! (नी०स०१३)

एवं सत्त्वेऽपि तेषु तेषु अमात्येषु दोषस्यापि अपरिहरणीयत्वात् मन्त्रिकार्यं तैः न सम्पाद-यितुं शक्यते अपि तु अमात्यकार्यमिति प्रदर्शयन्नाह सामर्थ्यत इति । ( पृ० १०३)

तत्त्वञ्च - निरुक्तं मधुसूदनसरस्वतीभिः गीताव्याख्यायाम्—

बलं शरीरसामर्थ्यं स्वोचिते कार्ये श्रमाभावप्रयोजकम् । इति । गीता १७।८।

सङ्ग्रहश्लोकमाह—विभज्येति । देशे काले यो गुणोऽपेक्ष्यते तं यथायथं विभज्य नियोजयेत् तदाहुः ।

यो यद्वस्तु विजानाति तं तत्र विनियोजयेत् ।
अशेषविषयप्राप्ताविन्द्रयार्थेष्विवेन्द्रियम् ।। इति ।[2] (नी०सा० ५ सर्गे ७५)

आमात्यविभवं अमात्यसम्पदं । विभागे देशकालावपि स्तः इत्याह देशेति । सर्व एवैते सहाध्यायित्वादिगुणवन्तः । एवकारः अप्यर्थः ! एते अमात्याः कर्मसचिवाः मन्त्रिपदं तु तथाविधाः एकदेशगुणवन्तः न कार्याः इत्यभिधात्तुमाह नेति ।

टिप्पण्यामुक्तञ्चैतत्–'अमात्यसंज्ञासामान्यान्मन्त्रि कर्तव्यत्वे प्राप्ते आहः' इति (पृ० १०३) न मन्त्रिणः समस्तगुणाभावादिति शेषः ।

इति श्रीवैदिकसिद्धान्तसंरक्षिण्यां अमात्योत्पत्तिः अष्टमोऽध्यायः ।

---

१. "कार्याणि विजिगीषोः समाहर्तृकर्मादीनि खनिद्रव्यहस्तिवनकार्योप-युक्तकर्मपर्यवसानान्येवमष्टादशस्वपि तीर्थेषु मूलामात्या अष्टादश । तेषां कारणिकत्वेन स्थिताः प्रत्येकं त्रयस्त्रय एवमुपयुक्ताश्चतुः पञ्चाशत्सर्वेपि द्विद्विसप्ततिसङ्ख्याः । तद-पेक्षया उच्यते कार्यसामर्थ्यादिति" इति । (पृ० १०३) ।

२. "अशेषविषयप्राप्ताविति । यथान्तरात्मा रूपाद्यर्थोपभोगमिन्द्रियैः साधयन् स्वविषय एवेन्द्रियं प्रवर्तयति तद्योग्यत्वात् एवं राजापीन्द्रियस्थानीयमध्यक्षं कर्मसिद्धये तद्विषय एव कर्मणि नियोजयेत् । इति ।

## जयमङ्गला

सर्वमुपपन्नं युक्तम् । यत आभिजात्यादिषु प्रधानगुणेषु सत्सु परिभवादयो दोषा नावतरन्त्येव । अतो विश्वासः । वश्यत्वम्, आपत्स्वनुग्राहित्वं, दाक्ष्यं, अपरित्यागित्वम्, भयम्, कर्मकौशलं चेत्येते प्रधानगुणा अभिजनान्वयित्वाद् अवश्यंभाविनः । तस्माद् अभिजातस्य अव्यभिचारित्वात्, प्राज्ञस्य बुद्धिसम्पन्नत्वात्, शुचेरवधारित शुद्धित्वात्[1], शूरस्य आपदि प्रतीकारसमर्थत्वात्, अनुरक्तस्य स्वाम्यर्थकारित्वात् किमसाध्यमस्तीति सर्वमुपपन्नम् । अन्यच्च कार्यसामर्थ्याद्धि कर्मसामर्थ्यादेव पुरुषसामर्थ्यं पुरुषाणां शक्तिः कल्प्यते । लघुनि समे महति वा कर्मणि तथाविधशक्तिः पुरुषो नियुज्यते ।

ततः किमित्याह—विभज्येति । अमात्यानां[2] विभवम् अमात्यानां शक्तिसम्पदं यथावत्तं विभज्य विभागेनावस्थाप्य । देशकालौ च कार्यञ्च विभज्य । न हि सर्वः[3] सर्वज्ञः सर्वदेव कुशलः सर्वकालयोग्यः सर्वकर्मकुशलो वा । कश्चिदेव क्वचित् कदाचित् किञ्चित् कर्तुं समर्थ इति सर्व एवैते यथोक्तगुणा अमात्याः कर्मसचिवाः कार्यास्स्युर्न तु मन्त्रिणः, यथोक्तगुणैरपर्याप्तत्वात्[4] । अमात्यसामान्यप्रसङ्गेऽपि विशेषेण व्युदासः क्रियत इति ।

अमात्योत्पत्तिः पञ्चमं प्रकरणम् । अष्टमश्चाध्यायः ।

## जयमङ्गलाक्रोडपत्रम्

स्वमतं विशदयति—यत इति ।

**नावतरन्त्येवेति** । आभिजात्यादिषु षट्सु गुणेषु सत्सु **सहाध्यायित्वादिमात्रप्रयुक्तदोषप्रयुक्तं विभवं न राजानः** प्राप्नुवन्ति इति भावः ।

**स्वमततात्पर्यम्**

**क्रियत** इति । तथा च अमात्यपदे भारद्वाजादितत्तदेकदेशमतेन अमात्या नियोक्तुं शक्यन्ते न तु मन्त्रिपदे इति हृदयम् ।

---

अशुद्धम्

१. अवधारितशुद्धत्वात् ।
२. अमात्याशून्यं विभवम् ।
३. न हि सर्वज्ञः ।
४. गुणैरपर्याप्तत्वात् अमात्य ।

## जयमङ्गलाक्रोडपत्रम्

### समस्तमतनिष्कर्षः

| सङ्ख्या | मतानि | अमात्यत्वप्रयोजकम् | दोषाः |
|---|---|---|---|
| १. | भारद्वाजः— | शुचितानुमापकः सहाध्यायित्व प्रयुक्तस्नेहः । | परिभवः |
| २. | विशालाक्षः— | सहाध्यायित्वेन सह समानशील-व्यसनित्वप्रयुक्तो रागः । | अमात्येच्छानुसारित्वम् । |
| ३. | पराशरः— | ताभ्यां सहापदि प्राणसमर्पणाध्यवसायप्रयोजकोऽनुरागः । | अप्रज्ञावत्त्वम् । |
| ४. | नारदः— | स्नेहरागानुरागत्रितयेन सह बुद्धिमत्वमपि-विशेषदर्शनम् | कुलीनत्वादिप्रयुक्त-दाक्ष्याद्यभावः । |
| ५. | भीष्मः— | स्नेहरागानुरागबुद्धिमत्वचतुष्टयेन सह कुलीनत्वमपि । | बन्धूनां स्वामिभावेन प्रवृत्तिः । |
| ६. | वातव्याधिः— | पञ्चभिः सह नवीनत्वम्-असम्बन्धैः सह सम्बन्धः शास्त्रमात्रवित्त्वं च । | कर्मण्यकुशलता |
| ७. | इन्द्रः— | पूर्वोक्तस्नेहरागादिभिः षड्भिर्गुणैः सह प्रयोगकुशलत्वम् । | ( अदोषत्वम् ) |
| ८. | कौटिल्यः— | मन्त्रित्वार्थे सर्वे गुणाः, अमात्यत्वेतु कार्यसामर्थ्यानुरोधेन पुरुषसामर्थ्यम् । | ,, इति |

इति जयमङ्गलाटोका—क्रोडपत्रे—अष्टमोऽध्यायः समाप्तः ।

❀

# पञ्चमं प्रकरणम्

## नवमोऽध्यायः

### मन्त्रिपुरोहितोत्पत्तिः

[ गुणसम्पदानुगुण्येन अमात्यभेदाः ]

**जानपदः[१] अभिजातः[२] स्ववग्रहः[३] कृतशिल्पः चक्षुष्मान्[४] प्राज्ञः धारयिष्णुः[५] दक्षः वाग्मी प्रगल्भः प्रतिपत्तिमान्[६] उत्साहप्रभाव[७]युक्तः क्लेशसहः शुचिः मैत्रः[८] दृढभक्तिः शीलबलारोग्यसत्त्वसंयुक्तः [९]स्तम्भचापल्य[१०]वर्जितः संप्रियः[११] वैराणाम्[१२]कर्ता[१३]—इति अमात्यसम्पत्[१४]। अतः पदार्धगुणहीनौ मध्यमावरौ[१५] ॥**

---

**श्रीमूला**

मन्त्रिपुरोहितोत्पत्तिरिति सूत्रम्। मन्त्री प्रधानामात्यः यस्मिन्नायत्ताः कर्मसचिवाः, पुरोहितः पुरोऽग्रे धीयते सर्वकार्येषु प्रमाणत्वेन निवेश्यत इति पुरोहितः, तयोरुत्पत्तिरिहाभिधीयत इत्यर्थः। इत्यमात्यसम्पदिति। अमात्यस्य मन्त्रिणो गुणवैभवम् एवम्प्रकारम्। जानपदत्वादयस्तु गुणप्रकाराः। तत्र जानपदः विजिगीषू-

---

नो० टि० १. **जानपदः इति**। जनपदभवः। राज्ञ इति शेषः।

,, २. **अभिजात इति**। आहारे···योनौ च गर्भे कर्मणि चापि यः।
शुचिः कृत्स्न (च्छ्र) गतस्यापि न पापे·रमतेऽस्य धीः॥

,, ३. **स्ववग्रहः इति**। उत्पथप्रवृत्तं स्वामिनं सुखेनावगृण्हातीति।

,, ४. **चक्षुष्मानिति**। शास्त्रचक्षुः।

,, ५. **धारयिष्णुरिति**। अविस्मरणशीलः।

,, ६. **प्रतिपत्तिमानिति**। प्रतिपत्तिः प्रतिभा। अविमर्शेऽपि यथावदुत्तरं दीयते।

,, ७. **प्रभावेति**। दैवजनिता प्रभुशक्तिः प्रभावः।

,, ८. **मैत्र इति**। मित्रसाधुकारी बहुमित्रो भवति।

,, ९ **स्तंभ इति**। स्तंभो मिथ्याभिमानादविनयः।

,, १०. **चापलेति**। अस्थिति (रचित्त) ता।

,, ११. **संप्रिय इति**। ···· सौभाग्ययुक्तः।

,, १२. **वैराणामिति**। स्वामिदोषादुत्पन्नानामपि प्रशमयिता।

,, १३. **अकर्तेति**। बुद्ध्यमात्य।

,, १४. **अमात्यसम्पदिति**। स्मृतिस्तत्परताऽर्थेषु वितर्को ज्ञाननिश्चयः।
दृढता मन्त्रगुप्तिश्च मन्त्रिसम्पत् प्रकीर्तिता॥

,, १५. **मध्यमावराविति**। मन्त्रिणाविति शेषः।

## श्रीमूला

राष्ट्रभवः। अभिजातः विशुद्धान्वयः। स्ववग्रहः शोभनबन्धुरिति साम्प्रदायिकाः, सुखेनावग्रहीतुं प्रामादिकाकार्यप्रवृत्तेर्वारयितुं शक्यः। कृतशिल्पः कृतं शिक्षितं गजाश्वारोहणरथयुद्धायुधगान्धर्वविद्यादिकं येन स तथा। चक्षुष्मान् अर्थशास्त्रं चक्षुः तदभिज्ञः। प्राज्ञः सहजबुद्धिसम्पन्नः। धारयिष्णुः अविस्मरणशीलः। दक्षः क्षिप्रकारी वाग्मी मधुरोपपन्नवक्ता। प्रगल्भः प्रौढः। प्रतिपत्तिमान् प्रतिकर्तुं प्रतिवक्तुं च समर्थः, इतिकर्तव्यतानिश्चयवान् वा। उत्साहप्रभावयुक्तः उत्साहयुक्तः पुरुषकारवान् प्रभावयुक्तः प्रभुशक्तिमान्। क्लेशसहः जितश्रमः। शुचिः चतुर्विधोपधाशुद्धः। मैत्रः सर्वत्र स्निग्धव्यवहर्ता। दृढभक्तिः अविचाल्यराजानुरागः। शीलबलारोग्यसत्त्वसंयुक्तः शीलं सद्वृत्तं, बलं देहशक्तिः, आरोग्यं निर्व्याधित्वम्, सत्त्वं धैर्यम्, एतैर्युक्तः। स्तम्भचापल्यवर्जितः स्तम्भवर्जितः विगर्वः प्रणतिशीलो वा, चापल्यवर्जितः स्थिरप्रकृतिः। संप्रियः सौम्यदर्शनः। वैराणामकर्ता स्त्रीभूम्यादिनिमित्तानां वैराणामनुत्पादकः शमयिता च। एभिः पञ्चविंशतिगुणैः सम्पन्न उत्तमो मन्त्री। अत इति। अतः एभ्यो गुणेभ्यः, पादार्धगुणहीनो मध्यमावरौ, चतुर्थांशगुणहीनो मध्यमः, अर्धगुणविहीनोऽधम इत्यर्थः।

## वैदिकसिद्धान्तसंरक्षिणी

अमात्यनिरूपणानन्तरमेककार्यकारित्वान् मन्त्रित्वं तच्च पूर्णं कथं संभवति इति अभिधातुमध्यायान्तरं सङ्क्षेपेण बोधयति मन्त्रिपुरोहितोत्पत्तिरिति। जानपदादि पञ्चविंशतिगुणविशिष्टः मन्त्री, आथर्वणादिभिः आपत्प्रतीकारकर्तृत्वादिगुणविशिष्टः पुरोहितश्च तयोरुत्पत्तिः इति सूत्रार्थः। मन्त्रिगुणानभिधातुमाह जानपद इति। स्वदेशोद्भवः स्वदेशश्च तस्य समभिहितः टिप्पण्याम्—'जनपदभवः राज्ञ इति शेषः' इति। अयं (मन्त्री) हि स्वदेशीयानामाचारस्वभावादिज्ञातृत्वात् तत्परिपालनशीलो भवति। अभिजातः कुलीनः तस्योपयोगित्वं टिप्पण्यां व्यक्तम्--

> "आहारेष्वथ योनौ च गर्भे कर्मणि चापि यः।
> शुचिः कृत्स्नगतस्यापि न पापे रमतेऽस्य धीः" ॥ इति। (पृ० १०७)

स्ववग्रहः सुखेनावग्रहणम् अकार्याद् व्यावर्तनम् यस्य। तदुक्तं टिप्पण्यां— "उत्पथप्रवृत्तं स्वामिनं सुखेनावगृह्णातीति"।

कृतशिल्प इति कलाभिरित्यर्थः। तदुक्तमुपाध्यायनिरपेक्षायाम्—"अभ्यस्त कलाकलापः"। इति। चक्षुष्मान् विशुद्धदर्शनः चक्षुः शास्त्रं तद्वान् इति यावत्। तदुक्तं टिप्पण्याम्। "शास्त्रं चक्षुः" इति। प्राज्ञः अष्टविधप्रज्ञागुणसंपन्नः। धारयिष्णुः स्मृतिर्धारणा तद्वान्, अनेकवर्षान्तरितेष्वपि अविस्मरणशीलः इति यावत्। तदुक्तम्— नीतिसार "व्याख्यायाम्—स्मृतिरनेकवर्षान्तरितेष्वप्यविस्मरणम्"। इति। (४-३०) टिप्पण्यामपि—"अविस्मरणशीलः" इति। (पृ० १०७) पुनर्ग्रहणमवधानार्थं। दक्षः अनलसः। वाग्मी— अर्थयुक्तवाक्। उक्तञ्चैतत् उपाध्यायनिरपेक्षायाम्—"वाग्मी

## वैदिकसिद्धान्तसंरक्षिणी

"प्रशस्तवाक्। प्राशस्त्यञ्च वाचां स्वल्पैरक्षरैर्मनोहरैरनल्पार्थप्रतिपादनम्" इति। प्रगल्भः अपरिषद्भीरुः। प्रतिपत्तिमान्–भयस्खलितेषु आशु प्रतिविधाता। टिप्पण्यामेवमाहुः—"प्रतिपत्तिः प्रतिभा, अविमर्शेऽपि यथावदुत्तरं दीयते" इति। प्रभावः–प्रभुशक्तिः कोषदण्डजन्यं तेजः इति यावत्। टिप्पण्यां तु 'दैवजनिता प्रभुशक्तिः प्रभावः"[1] (पृ० १०७) इति।

उत्साहः–शौर्यादिगुणोत्साहसंपन्नः। उक्तञ्चैतत् नीतिसारे—(१६–३२)

"बलवद्विचेष्टां बलवतीं विक्रमचेष्टाम्। तथाचाह"– विक्रमबलमुत्साहशक्ति"-रिति[2]। प्रभावोत्साहौ सदापेक्ष्येते प्राधान्यादत आह युक्त इति। उत्साहस्य प्रभावं प्रति कारणत्वात् पूर्वग्रहणम्। क्लेशः शीतोष्णाद्यायासः तं सहते विना परिश्रममभ्यासं च इति क्लेशसहः। शुचिः धर्माद्युपधाशुचिः। मैत्रः मित्रार्जनकुशलः। स हि बहुमित्रः अनुच्छेद्यो भवति सन्धेयश्च। टिप्पण्यामेवमुक्तम्—' मित्रसाधुकारी बहुमित्रो भवति" इति। दृढभक्तिः स्थिरस्नेहः। शीलं सद्भिः संभावनीयताहेतुर्गुणः। बलम् ओजो धातुः। आरोग्यम् दोषधातुमलाग्निसाम्यम्। घृतिः वर्तमानवस्तुविषयिणी स्पृहा। सत्वं व्यसने अभ्युदये च यदविकारकरं। धृतिभावः इति यावत्। स्तंभः अविनयः दर्प इति यावत्। तदुक्तं टिप्पण्यां "स्तभो मिथ्याभिमानादविनयः" इति। चापलं इष्टसाधनताभ्रमजन्या प्रवृत्तिः। संप्रियः सात्विकत्वान्निर्विकारित्वाल् लोकस्य प्रेमविषयः। टिप्पण्यां तु "सौभाग्ययुक्त" इति। अकर्तेति विरोधानां प्रतिकर्ता। टिप्पण्यान्तु "स्वामिदोषादुत्पन्नानामपि शमयिता" इत्युच्यते।

उपसंहरति—इतीति। अमात्येति "बुद्ध्यमात्य" इति टिप्पणी। संपत् व्याख्यातं टिप्पण्याम्—

"स्मृतिस्तत्परतार्थेषु वितर्को ज्ञाननिश्चयः।
दृढता मन्त्रगुप्तिश्च मन्त्रिसंपत्प्रकीर्तिता" ॥ इति।

तदेवोक्तं गणपतिशास्त्रिभिः—"पञ्चविंशतिगुणैः संपन्नः उत्तमो मन्त्री" इति।

मध्यमावरमन्त्रिस्वरूपमाह अतः इति। समस्तमन्त्रिगुणापेक्षया इत्यर्थः। "मध्यमावरौ मन्त्रिणौ" इति शेषः इति टिप्पण्याम्। तथा च मन्त्रिगुणापेक्षया पादगुणहीनः मध्यमो मन्त्री अर्धगुणहीनः अवरो मन्त्रीति विवेकः। तदुक्तं गणपतिशास्त्रिभिः चतुर्थांशगुणहीनो मध्यमः अर्धगुणहीनोऽधम इत्यर्थः इति।

---

१ "स्वसम्पदुपेतौ कोषदण्डौ, प्रभुशक्तिः तयोरेव प्रभुशक्तिनिष्पादने सामर्थ्यात्। तथाचाह–कोषदण्डबलं प्रभुशक्तिरिति। (नी० सा० ज० मं०) "सुकोशदण्डौ शोभनकोशदण्डौ प्रभुशक्तिमाहुः" इति च। (उ०पा०) किञ्च प्रभावादिति प्रभुशक्तेः। (ज० मं० १।२) इति। उ० नि०—यस्य महीपतेः प्रभावात् प्रभुशक्तेः कोषदण्डबलं हि प्रभुशक्तिः इति। (१–१)

२ उ० नि० उत्साहशक्तिः बलवतो विजिगीषोर्विचेष्टामाहुराचार्याः त्रिशक्ति युक्तो भवतीह राजा। शक्तिरहितस्तु राजैव न भवति। (नी० सा० व्या० १६-३२)

## जयमङ्गला

पूर्वोक्तगुणा यदि न मन्त्रिणः तर्हि ते कीदृशाः, पुरोहिताश्च कीदृशाः स्युरिति मन्त्रिपुरोहितोत्पत्तिरुच्यत इति प्रकरणक्रमः। जानपद इत्यादि। जनपदे भवः न अटव्यादिभवः। आर्यदेशभवः, स्वजनपदे वा भवः। स हि सदा तत्परिपालनशीलो भवति। अभिजातः अभिजनवान्। ब्राह्मणोऽन्यो वा कुलपुत्रत्वान्न विकर्मणि प्रवर्तते न प्रवर्तयति च। तथा चाह—

एवमर्थं कुलीनानां नृपाः कुर्वन्ति सङ्ग्रहम्।
आदिमध्यावसानेषु यतो यान्ति न विक्रियाम्॥ इति।

स्ववग्रहः शोभनमवग्रहणं यस्य। स हि प्रमाद्यन्तं राजानं मृदुना क्रमेण शोभनमवगृह्णाति। शोभनो वाऽवग्रहः स्ववग्रहः स्नेहयुक्तं मित्रम् अवगृह्यतेऽनेनेति कृत्वा। स हि कल्याणमित्रयुक्तत्वान्नोत्पथं प्रतिपद्यते। कृतशिल्पः ज्ञातानि इष्वस्त्रादीनि शिल्पानि येन स दण्डनयनयोग्यो भवति। चक्षुष्मान् प्रमाणत्रयविशुद्धदर्शन इत्यर्थः, नोत्पथं प्रतिपद्यते, न प्रतिपादयति च। प्राज्ञः स्वाभाविकी शास्त्रसमुत्था च प्रज्ञा विद्यते यस्य स परैर्नाभिसन्धीयते। अभिजनप्रज्ञादीनां प्रागुक्तत्वात् पुनरिह ग्रहणं प्रकर्षार्थम्। पादार्धगुणहीनौ चापरित्यागार्थम्। धारयिष्णुः अविस्मरणशीलः, स हि कार्यं न हापयति। दक्षः अनलसः कर्मस्वविश्रान्तः, उत्साहगुणेऽन्तर्भावेऽपि पुनर्ग्रहणं दाक्ष्यमपरित्याज्यमिति दर्शनार्थम्। वाग्मी अर्थयुक्तवाक्, शोभना वाग् यस्य। स हि परान् रञ्जयन् आदेयवचनो भवति, यस्तु अनर्थकं बहु भाषते स वाचाल एव। प्रगल्भः वचनानुष्ठानयोः परिषदि असाध्वसः। प्रतिपत्तिमान् भये स्खलितेऽपि आशु प्रतिविधाता, वाग्मितादयश्चैते विशेषेण दूतौपयिकाः। उत्साहप्रभावयुक्त इति। "शौर्यममर्षः शीघ्रता दाक्ष्यं चोत्साहगुणाः" (अधि० ६ अध्या० १) इति वक्ष्यति[1]। तत्र प्रभावः प्रतापः, शौर्याद्युत्साहगुणयुक्तोऽपि कश्चिन् निष्प्रतापः प्रागुत्साहाद् अभिभूयते कश्चित् प्रतापवत्त्वेऽपि अकृतोत्साहः पश्चाद् अभिभूयते। उभयगुणस्तु सदा अप्रधृष्यः, अतश्च सह निर्देशः। क्लेशसहः शीतोष्णवर्षा[2]कष्टासहत्वात् लाभ विघ्नमासादयति। शुचिः धर्मादिविशुद्धचित्तत्वादहिंसकः। मैत्रः मित्रेषु कुशलो मित्रार्जनकुशल इत्यर्थः। स हि पक्षवृद्धिमाप्नोति। दृढभक्तिः स्थिर[3]स्नेहः, कृच्छ्रेऽप्यपरित्यागी। शीलादियुक्त इति। तत्र शीलं लोकप्रसिद्ध्या अपरपरिवादादिकम् तद्धि लोकरञ्जकम्। बलं प्राणः सर्वकर्माङ्गम्। पथ्यम् आरोग्यम्। सत्वं व्यसनेऽभ्युदये च यदविकारित्वम्। स्तम्भचापलहीन इति। स्तम्भो मदजनितो विकारः, निर्मदत्वाद् अभिगमनीयः। अचपलः विमृश्यकारी। संप्रियः अनुप[4]कुर्वन्नपि सुभगाकाररुचिरः सुभगचरितश्च परान् सुखयति। वैराणामकर्ता विरोधानां प्रतिकर्त्ता न प्रकृतीरपरञ्जयति।

---

अशुद्धम्
१ वक्ष्यति···तत्र
२ वर्षासहत्वात्
३ चिरस्नेहः
४ अननुप

## जयमङ्गला

अमात्यसंपदिति । एतत् सर्वमभिधानं यतो निमित्तात् प्रवर्तते तन्निमित्तममात्यसंपदित्यर्थः । अमात्यशब्देन अत्र मन्त्रिणो बुद्धिसचिवस्याभिधानं द्रष्टव्यम् । अत इति गुणविंशतिकात् । पादार्धगुणहीनौ मध्यमावरौ ज्ञेयौ, सर्वगुणस्य उत्तमत्वम् अर्थप्राप्तम् ॥

ननु च गुणानां पादेन अर्धेन च हीनत्वाद् गुणपादार्धहीनाविति प्राप्नोति, अस्मिन् पादार्धगुण इत्यत्र पादमर्धं वा गुणा एव, अतः सामानाधिकरण्यम्, पादेन अर्धेन च गुणैर्हीनौ पादार्धगुणहीनाविति । पादार्धगुणौ च तौ हीनौ च सर्वगुणाद् इत्यस्मिन् व्याख्याने पादगुणस्य मध्यमत्वं प्राप्नोति । यथासङ्ख्यादिति पूर्वमेव व्याख्यातम् । अत्र पञ्चविंशतेः किञ्चिद् वैषम्येऽपि प्रायोवृत्त्या चतुर्भागोऽर्धभागश्च । अथवा पूर्वोक्तान् सर्वसाधारणान् अभिजनादींस्त्यक्त्वा विंशतेर्गुणानां सुकरो विभागः तत्र पञ्चदशगुणयुक्तः पादहीनः, दशभिर्गुणैर्युक्तोऽर्धहीनः । अभिजनादयस्तु पञ्च साधारणा इति ।

## जयमङ्गलाक्रोडपत्रम्

### सङ्गतिः

पूर्वाध्याये विभज्येत्यनेन मन्त्रित्वार्थमपेक्षितानां सहाध्यायित्वादिसमस्तगुणानां सामर्थ्यापेक्षया पादार्धादिभेदेन विभागसूचनात् विभज्यमानगुणवत्सु मन्त्रित्वं निषिद्धयते । अतः मन्त्री कीदृशशक्यतावच्छेदकविशिष्ट इति जिज्ञासया प्रसङ्गात्, राष्ट्रव्यसनापोहरूपकैकार्यकारित्वाच्च जिज्ञासूनां व्युत्पादनाय मन्त्रिपुरोहितोत्पत्तिरत्राभिधीयते इति सङ्गतिर्बोध्या । तामेव सूचयति पूर्वोक्तेत्यादिना ग्रन्थेन । मूले अमात्यसम्पदिति । यद्यपि उपक्रमे अत्र अमात्यसंपदित्युक्तम् तथापि मन्त्रिमन्त्राभिमन्त्रितम् इत्युपसंहारेण सह एकवाक्यतया उपक्रमगतममात्यपदं मन्त्रिपरतया बोध्यम् ।

**जानपद इति** । (पृ० ११०) जन्मभूम्यां भव इत्यर्थः । तदुक्तमुपाध्यायनिरपेक्षायाम्— "जानपद इति विषिगीषुजनपदभवः–स्वजन्मभूमिवात्सल्यात् तद्विरुद्धं न समाचरति" इति ।

**अटव्यादीति** । (पृ० ११०) ननु आटविकाः कुतो निषिध्यन्ते इति चेदनर्थत्वात् ते मन्त्रित्वाद् व्यावर्तिताः । अनार्यत्वन्तेषां नीतिसारे उक्तम्—१९ सर्गे ८ श्लोके—

प्रकृत्याऽधार्मिका लुब्धा अनार्याः सत्यभेदिनः ।
तस्मादारण्यकतया तेभ्यः शत्रुबलं गुरु[1] ॥ ८ ॥ इति ।

---

१ टी०—लुब्धा आटविकाः । अनार्याः स्वयमार्या: न भवन्ति, आर्याधिष्ठिता अपि न भवन्ति । आरण्यकतयेति । यस्मादाटविकानामेते दोषास्तस्मात् तेभ्यः शत्रुबलं गुरु तद्विपरीतत्वात् ॥ ८ ॥ इति

## जयमङ्गलाक्रोडपत्रम्

### अनार्यस्य मन्त्रित्वे दोषः

अत्रेदं बोध्यम् । अनार्यस्य स्वभावव्यसनित्वस्य व्यसनिनः मन्त्रित्वे राष्ट्रमपि व्यसनि स्यात्, व्यसनस्य प्रतीकारश्च आर्यैरेव मन्त्रिभिः कर्तुं सुशकः । तेषामुपायविकल्पे कृतक्षणत्वात् । तथाचोक्तम् नी० सारे ७ श्लोके षष्ठ सर्गे—

यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः ।
स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते ॥ ७ ॥
टीका-आर्याः उपायविकल्पे कृतक्षणाः । इति ।

**स्वजनेति** । (पृ० ११०) एतेन "अनार्यकर्मा स्वजनपदप्रभवो वा"[1] इति जयमङ्गलाकृता नीतिसारव्याख्याने साधितं सोपपत्तिकं भवति ।

### परजनपदप्रभवोऽपि मन्त्री

स्वग्रहणसार्थक्यं वैदिकसिद्धान्तसंरक्षिण्यां प्रपञ्चितम् । (पृ० १०८) यदि स्वजनपदभवस्य आर्यस्य लाभो न भवति तदा तु परजनपदप्रभवः गुणवांश्चेन् मन्त्रित्वेन वरणीयः । अनार्यकर्मा तु कथमपि न ग्राह्यः, स्वस्वभावानुसारेण जनपदे व्यसनप्रसरणस्य अपरिहरणीयत्वात्[2] ।

**अभिजनवानिति** । (पृ० ११०) अभिजातस्य प्रयोजनं स्वयमेव वक्ष्यति एवमर्थमित्यादिना । नीत्यनुष्ठाने प्रवृत्ताः पुरुषाः स्वस्य प्रभावं स्थापयितुं देशभक्तिवाक्चातुर्योत्साहप्रभावधृतिक्लेशसहिष्णुतास्थैर्याविषादिताश्च ख्यापयन्ति । तदिदं ख्यापनं तत्तथैवेति परीक्षितुं महत्यां विपदि परीक्ष्यस्य निपातः परेषामसहनशीलः अपेक्षित इति राजनीतिरादिशति[3] । (देशभक्त्यादयो गुणा आयुर्वेदेपि द्रष्टव्याः[4] ।)

---

१ स्ववग्रहो जानपदः कुलशीलबलान्वितः ।
वाग्मी प्रगल्भश्चक्षुष्मानुत्साही प्रतिपत्तिमान् ॥ २७ ॥ इति ।

टी० – जानपदः, नाटव्यां भवो नार्यकर्मा । स्वजनपदप्रभवो वा न परजनपदप्रभवः इति ।

२ यस्य वर्णस्य यो राजा स वर्णः सुखमेधते । इति ।

३ उत्साहं च प्रभावं च तथा क्लेशसहिष्णुताम् ।
धृतिं चैवानुरागं च स्थैर्यं चापदि लक्षयेत् ॥ (नीतिसार)
आपद्युत्साहप्रभावौ क्लेशसहिष्णुत्वं च ॥ (अर्थशास्त्रम्)
धीरज धर्म मित्र अरु नारी । आपत्काल परिखिय चारी ॥ (मानस)

४ तदुक्तमायुर्वेदे—क्षान्तिर्दाक्ष्यं दाक्षिण्यमानुकूल्यं शौचं कुले जन्म धर्मसत्याहिंसा साम कल्याण ज्ञानविज्ञानस्थितिविनिवेशः पाटवं यथोक्तकारित्वं ब्रह्मचर्यमनुत्सेकः लोभेर्ष्याविवर्जनमिति । अतोऽन्यथा दोषैः स वर्ज्यः । (कश्यपसंहिता विमानस्थानम् १–४)

अध्यापने कृतबुद्धिराचार्यः शिष्यमेवादितः परीक्षेत । तद्यथा प्रशान्तमार्यप्रकृतिं अक्षुद्रकर्माणमृजुं चक्षुर्मुखनासावंशं तनुरक्तविशदजिव्हमविकृतदन्तोष्ठं अभि…णं धृतिमन्तं अनहङ्कृतं मेधाविनं वितर्कस्मृतिसंपन्नं उदारसत्वं तद्विद्यकुलजमथवा तद्विद्यवृत्तं तत्वाभिनिवेशिनं अव्यङ्गमव्यापन्नेन्द्रियं निभृतमनुद्धतवेषमव्यसनिनं—

## जयमङ्गलाक्रोडपत्रम्

### विपदि कुलीनस्य निर्विकारिता

विपदि हि अवस्थानं निर्विकारतया तस्यैव यः कुलीनत्वप्रयुक्तेन्द्रियजयेन स्वाभाविकेन कृतकेन च परिपुष्टः स्यात्। अन्यथा अकुलीनः अश्रद्धया समापतितायामापदि दुःसहायां प्रतिज्ञातादपि कार्यंजाताद्वैरस्यं भजते रणाङ्गणे इषुनिपातग्रस्तकर्ण इव। अकुलीने श्रद्धाया अभावः वैशेषिकटीकायां कन्दलीकृतोक्तः। तद्यथा-"नास्ति अकुलीनस्य श्रद्धा"। इति। (धर्म नि०प्र० भाष्ये) तथा "ब्राह्मणोन्यो वा कुलपुत्रत्वान्न व्यभिचरति" इति च। (ज०मं०)।अतएव कुलीन एव शिष्योऽध्याप्यः अन्यथा तु बुद्धिमनर्थे कर्मण्यपि प्रयुञ्जीत। तेन च दुष्टानां संवर्धनात् देशस्य कण्टकाकीर्णता समुत्पद्येत इत्यादि आयुर्वेदोक्तमत्राप्यनुसन्धेयम्।

ननु मित्रस्य सत्कुलीनत्वं गुण इति कुतश्चिन्त्यमिति चेत् कुलीनस्य कृच्छ्रादौ चतुरस्रतालाभार्थ[1]मित्युक्तत्वात्, प्रजया सह मैत्रीभावेन वर्तनान्यथानुपपत्त्या मन्त्रिसंपदि कुलीनत्वापेक्षोक्ता वेदितव्या।

किञ्च कुलीनत्वं परीक्ष्यैव सैन्ये कार्यकरणाय सैनिकत्वेन नियोक्तव्या भवन्ति न हि ब्राह्मणः वीरः योद्धा सन्नपि प्रामुख्येन सैन्ये नियोक्तव्यो भवति। तत्र हेतुः तस्य दयैव। यदि हि शत्रुः दीनः सन् दैन्यं प्रदर्शयन् सेनाप्रमुखस्य ब्राह्मणस्यवीरस्य शरणमायाति, तर्हि दयार्द्रो भूत्वा सेनाप्रमुखो ब्राह्मणः हस्तागतमपि शत्रुं वस्तुत उपेक्षानर्हं बन्धनाद् विमुञ्चेत्। अतः कुलीनपरम्परागतं संस्कारं वीक्ष्यैव सैन्यादिषु नियोजनं कर्तव्यमिति राजनीत्या सिद्धान्तितम्[2]।

---

अर्थतत्वभावकामकोपने शीलशौचाचारानुरागदाक्ष्यप्रादक्षिण्योपपन्नं अध्ययनाभिकामं अर्थविज्ञाने कर्मदर्शने चानन्यकार्यमलुब्धमनलसं सर्वभूतहितैषिणं आपदि सर्वानुशिष्टप्रतिपत्तिकरमनुरक्तमेवङ्गुणसमुदितमध्याप्यमेवमाहुः। (चरक वि०) ब्राह्मणक्षत्रियवैश्यानामन्यतममन्वयवयःशीलशौर्यशौचाचारविनयशक्तिबलमेधाधृतिस्मृतिमतिप्रतिपत्तियुक्तं जिव्हौष्ठदन्ताग्रमृजुवक्त्राक्षिनासं प्रसन्नचित्तवाक्चेष्टं क्लेशसहं च भिषक् शिष्यमुपनयेतातो विपरीतगुणं नोपनयेत्। (इति सु सू० अ० २-)

१ 'समुत्पन्नेषु कृच्छ्रेषु दारुणेष्वप्यसंशयम्।
दर्शयेत् स्वच्छहृदयः कुलीनः चतुरस्रताम्॥' इति नी० स० ४

टी०—'सत्कुलमि'त्यस्य प्रयोजनमाह समुत्पन्नेष्वित्यादि। 'चतुरस्रता मवक्रताम्'। इति

२ नीतिसारेऽपि 'प्रवासायासदुःखेषु युद्धेषु च कृतश्रमः॥
अद्वैध्यः क्षत्रियप्रायो दण्डो दण्डविदो मतः (४।६५)

टी० 'आयासः कर्मसु व्यापारः। दुखं शीतोष्णवर्षादिप्रभवम्। कृतश्रमः न सहसा श्राम्यति, अद्वैध्यः राज्ञा सह वृद्धिक्षयत्वात्। क्षत्रियप्रायः क्षत्रियाणां युद्धयोग्यत्वादितरेषामपि तत्सम्पर्कादुत्सहोभवति। इति।

## जयमङ्गलाक्रोडपत्रम्

इतिहासेऽपि प्राचीनसमये आदर्शराज्ये तत्र तत्र गुणसम्पन्नानां कुलीनानां नियोजनेन राजा आश्वस्त आसीदिति अस्ति। आधुनिकेऽपि राज्ये कुलीनत्वस्योपयोगिता दृष्टा, यथा यौधेयगणाः सिकन्दरस्य पुरतः शौर्यं[1] प्रदर्शितवन्तः। १९६५ ई० वर्षे पाकिस्तानेन सह भारतस्य सञ्जाते युद्धे भारतीयैः कुलीनैः प्रदर्शितं यत् शौर्यं तद् विदितमेव।

किञ्च कोषसंरक्षणं यदि केन चित् कर्तव्यं तत् कुलीनैरेव राजभवतैः कर्तव्यं भवति, तेष्वेव आप्तत्वस्य अविसंवादात्। इत्येवं कुलीनस्य माहात्म्यं स्मर्तव्यमनुपेक्षणीयं च। ब्राह्मण इति। (पृ० ११०) ब्राह्मणग्रहणं मनुप्रदर्शितार्थसूचनार्थम्।
तथा चोक्तम्— 'सर्वेषां च विशिष्टेन ब्राह्मणेन विपश्चिता।
मन्त्रयेत् परमं मन्त्रं राजा षाड्गुण्यसंश्रम्॥' (म०स्मृ७।५७) इति।
जातेरस्तित्वं न वा इत्यस्य समाधानं पूर्वालोचनतो ज्ञेयम्। (प्र०खं० १/२१४ पृ०)

### राजमन्त्रिणोरवग्रहः

**शोभनमिति**। (पृ० ११०) अवग्रहणं नीतिसारव्याख्यायामपि उक्तमुपलभ्यते। "प्रमादादकार्यप्रवृत्तः सुखेन निवर्त्यते" इति। (नी०सा० ४।१४) एतत्पक्षे राज्ञोऽवग्रणं भवति। मन्त्रिणेऽवग्रहणपक्षे तु विग्रहान्तरमाह—शोभन इति। षष्ठीबहुव्रीहिपक्षे राज्ञोऽवग्रहणं मन्त्रिणा सुखेन कर्तव्यं भवति। तृतीयाबहुव्रीहिपक्षे मन्त्रिणामवग्रहणं राज्ञा कर्तव्यं भवति। तेन राजा मन्त्री च प्रमादिनौ न स्याताम् इत्यर्थो लभते। मन्त्रिणामवग्रहणं येनोपायेन कर्तव्यम् तन्दर्शयितुमाह-स्नेहयुक्त इति। (पृ० ११०) अपरश्च सुखावग्रहणोपायः-जात्या सम्पादितं मन्त्रिनिर्वाचनमित्यपि "शान्ती का अग्रदूत" ग्रन्थे निरुक्तं स्मर्तव्यम्।

एतेन स्ववग्रहस्य द्विविधार्थविवेचनेन लोकसङ्ग्रहप्रकरणस्थः नीतिसारीयः सर्वोपि सदाचारः चिन्तितो भवति। तस्यायं सङ्क्षेपः—

मित्रं स्वच्छतया रिपुं नयबलैः लुब्धं धनेनेश्वरम्।
कार्येण द्विजमादरेण युवतिं प्रेम्णा शमैर्बान्धवान्॥
अत्युग्रं स्तुतिभिः गुरुं प्रणतिभिः मूर्खं कथाभिः बुधम्।
विद्याभी रसिकं रसेन सकलं शीलेन कुर्याद्वशम्॥ इति।

**नवेति**। (पृ० ११०) वाकारो व्यवस्थितविकल्पार्थकः नतु पूर्वमतास्वारस्यार्थकः।

अत्रायं निष्कर्षः—मन्त्री सुखेन अकार्यान्निवर्त्य राजानं, तथोक्तकारिणं कुर्वीत। स्वजनाः मित्रं राजानं उत्पथान्निवर्त्य मन्त्रिणमपि यथोक्तकारिणं कुर्वीरन् इति। तदेवाह—स हीति। (पृ० ११०)

---

१ सिल्यूकसेन सह सिकन्दरसाम्राज्यगौरवम् इतिहासप्रसिद्धम्।
Americans Lamk was broken by Rajue wilh brauery.
भारत का नवीन इतिहास।

## जयमङ्गलाक्रोडपत्रम्

### नीतिसारे शिल्पाग्रहणप्रयुक्तन्यूनतापरिहारः

इष्वेति। (पृ० ११०) राज्ञा दण्डप्रणयनस्य अवश्यकर्तव्यत्वात् शिल्पान्तर्गततया प्राधान्येन इषुग्रहणम्। एतेन नीतिसारे स्वामिसम्पद्वर्णनप्रसङ्गे कलाविरवस्य अग्रहणप्रयुक्तं न्यूनत्वं निरस्तम्, "नेता दण्डस्य" इत्यनेन कृतशिल्पत्वस्यापि सूचनात्।

शास्त्रदर्शनेन किं भवतीत्याह—प्रमाणत्रयेति। (पृ० ११०) प्रमाणत्रयसार्थक्यं नीतिलक्षणे प्राग् (प्र० १ पृ० २८) विवेचितं बोध्यम्। उक्तं चैतद् रघुवंशेऽपि—

कामं कार्णान्तविश्रान्ते विशाले तस्य लोचने।
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना॥ इति। (रघुवंश ४सर्ग)

नोत्पथमिति। (पृ० ११०) कथं नोत्पथं प्रतिपद्यते इति चेत् कार्याकार्ययोः शास्त्रणः सम्यक्तया विधानात्[1]। (द्रष्टव्यं चैतत् टिप्पण्याम्।)

---

१. तदुक्तम् नीतिसारे—

शास्त्राय गुरुसंयोगः शास्त्रं विनयवृद्धये।
विद्याविनीतो नृपतिर्न कृच्छ्रेष्ववसीदति॥ स० १।६२॥
वृद्धोपसेवी नृपतिः सतां भवति सम्मतः।
प्रेर्यमाणोऽप्यसद्वृत्तैर्नाकार्येषु प्रवर्तते॥६३॥—
गुरुस्तु विद्याधिगमाय सेव्यते। श्रुता च विद्या मतये महात्मनाम्।
श्रुतानुवर्तीनि मतानि वेधसाम् असंशयं साधु भवन्ति भूतये॥६४॥

टी० ज० मं०—तद्दर्शयति श्लोकद्वयेन-शास्त्रायेत्यादि। शास्त्रं विनयवृद्धये सम्यक् करणीयवर्जनीयविधानात्। ततश्च विद्याविनीतो नापत्स्ववसीदति स्थैर्यं प्रतिपत्त्यसम्मोहादियोगात्॥६२॥

सम्मतः अभिगमनीयः। असद्वृत्तैः अनर्थजनैः। नाकार्येषु प्रवर्तते वृद्धोपसेवी विद्यावृद्धैस्ततो निवर्त्यमानात्॥६३॥

वृद्धसंयोगमधिकृत्याह—गुरुस्त्विति। श्रुता च विद्या परिज्ञानायेत्यर्थः। यतः श्रुतमविनाशि वर्धते अर्थाधिगमस्य तदधीनसिद्धित्वात्। श्रुतानुवर्तीनि शास्त्राहित परिज्ञानपूर्वकारीणि। वेधसां विदुषां। असंशयं भूतये भवन्ति। अनधीतशास्त्राणां नु कार्यसिद्धये यानि मतान्युत्पद्यन्ते तानि घुणाक्षरकल्पत्वान्नावश्यम्भावीनि॥६४॥

तथा प्रकृतिव्यसनप्रकरणेऽपि—

आत्मामात्यप्रजादुर्गकोषाणां दण्डमित्रयोः।
व्यसनेभ्यः समुन्नेता राजा यः स त्रिवर्गभाक्॥ ३॥
अशास्त्रचक्षुर्नृपतिरन्ध इत्यभिधीयते।
वरमन्धो न चक्षुष्मान् मदादाक्षिप्तसत्पथः॥ ४॥ १५ सर्गे

(टी०) तस्मादात्मीयव्यसनापोहे स एव दक्ष इत्याह आत्मेत्यादि। तत्र द्विधा राजा चक्षुष्मान्—अचक्षुष्मांश्च—चक्षुष्मानपि द्विविधः सुगृहीतशास्त्रोऽगृहीतशास्त्रश्च। तत्र यः सुगृहीतशास्त्रश्चक्षुष्मान् स व्यसनेभ्यः समुन्नेता समुत्थापयिता।३—

अशास्त्रचक्षुरिति । शास्त्रमेव चक्षुस्तदस्य नास्तीति कृत्वाऽन्ध उच्यते । वरमन्धो न चक्षुष्मानिति । चलितशास्त्रस्त्वचक्षुष्मान् । स हि शास्त्रादन्यथानिविष्टबुद्धि-ज्ञानमदाक्षिप्तसन्मार्गो भवति ॥ ४ ॥

यदाह—

'शास्त्रचक्षुर्नृपस्तस्मान्महामात्रमते स्थितः ।
धर्मार्थप्रतिघातीनि व्यसनानि परित्यजेत् ॥ ६ ॥ इति ।

एवं कामसूत्रेऽपि—(मू०) धर्मार्थाङ्गविद्याकालाननुपरोधयन् कामसूत्रं तदङ्गविद्याश्च पुरुषोऽधीयत ।३।१।।

(टी०) धर्मार्थाङ्गविद्याकालाननुपरोधयन् कामसूत्रं तदङ्गविद्याश्च पुरुषोऽधीयीत धर्मेत्यादि । तत्र धर्मविद्या श्रुतिः स्मृतिश्च । अर्थविद्या वार्ताशास्त्रम् । तयोरङ्ग-विद्या दण्डनीतिः, योगक्षेमसाधनात् । आन्वीक्षिकी तु तत्वनिश्चयहेतुत्वात् । तासां प्रधानानां यथास्वमध्ययनकालाननुपरोधयन्नहापयन्, अन्तराऽन्तरा कामसूत्रमिदमेव तदङ्गविद्याश्च गीतादिका अधीयीत पाठश्रवणाभ्याम् ॥ १ ॥

(मू०) प्राग्यौवनात् स्त्री । प्रत्ता च पत्युरभिप्रायात् ॥ २ ॥

(टी०) प्रागिति । प्राग्यौवनात् स्त्री कामसूत्रं तदङ्गविद्याश्चाधीयीत पितुर्गृह एव । तरुण्याः परिणीतत्वादस्वतन्त्रायाः कुतोऽध्ययनम् । 'युवतिः' इति पाठान्तरम् । तत्र—स्त्रीपर्यायो द्रष्टव्यः । प्रत्ता चेति । प्रकर्षेण दत्ता, निष्ठायामेव अच् उपसर्गात्तः इति तत्वम् । ऊढेत्यर्थः । त्रिविधं दानम् । मनसा वाचा कर्मणा चेति । पत्युरभिप्रायादिति । यदा पत्यानुज्ञाता तदाऽधीयीत, अन्यथा स्वैरिणीत्याशङ्कनीया स्यात् ॥ २ ॥

(मू०) योषितां शास्त्रग्रहणस्याभावादनर्थकमिह शास्त्रे स्त्रीशासनमित्याचार्याः ॥३॥

(टी०) शास्त्रग्रहणस्याभावादिति । तासां शास्त्रानधिकारात्, शास्त्रं ग्रहीतुमसमर्थ-त्वाच्च । इहेति । कामशास्त्रे स्त्रियमुद्दिश्य शासनम्, इदं कार्यमिदं नेत्येवं रूपं उपदेष्टुमनर्थकमित्याचार्या मन्यन्ते ॥ ३ ॥

(मू०) प्रयोगग्रहणं त्वासाम् । प्रयोगस्य च शास्त्रपूर्वकत्वादिति वात्स्यायनः ॥४॥

(टी०) प्रयोगग्रहणमिति । प्रयुज्यत इति । प्रयोगोऽर्थस्तद्ग्रहणं तासाम्, तद्विज्ञेभ्यो मा भूच्छास्त्रग्रहणम् । स च योषिदुपयोगीति शास्त्रेणावेदितः कथमन्यैरुपदिश्यते । तस्मान्नार्थकं स्त्रीशासनम् । ४ ॥

(मू०) तन्न केवलमिहैव । सर्वत्र हि लोके कतिचिदेव शास्त्रज्ञाः । सर्वजनविषयश्च प्रयोगः ॥ ५ ॥

(टी०) तन्न केवलमिहैवेति । तत्प्रयोगग्रहणं न केवलमिहैवास्मिन्नेव काम-शास्त्रे । सर्वत्र हीति । हि शब्दो हेतौ, सर्वेषु व्याकरणज्योतिःशास्त्रादिषु दृश्यते । तदेव दर्शयति लोक इत्यादिना । कतिचिदेव शास्त्रज्ञाः ये तद्ग्रहणसमर्थाः । तेभ्यः समर्थैरसमर्थैश्च प्रयोगो गृह्यत इति सर्वजनविषयः । प्रयोगग्रहणं च शास्त्रग्रहणात् प्रधानम् । गृहीतस्यापि शास्त्रस्य प्रयोगज्ञानफलत्वात् ॥ ५ ॥

(मू०) प्रयोगस्य च दूरस्थमपि शास्त्रमेव हेतुः ॥ ६ ॥—

## जयमङ्गलाक्रोडपत्रम्

उक्तं च टीकाकृताऽपि-शास्त्राध्ययनफलं उद्देशव्याख्याने "अत्र केचिदाहुरि"त्यादिना। तच्च व्याख्यातं तत्रैव। (प्र० खं० १ पृ० ३७)
किञ्च शेघ्र्ं शास्त्रानुगतप्रवृत्तेरसाधारणं फलमित्यभिहितं नीतिसारेऽपि आरब्धानीत्यादिना[1]।
शास्त्रेण तद्विद्येन वा सह मन्त्रणे अकृते दोषमाह नीतिसारे—

अहिते हितबुद्धिरल्पधीः अवमन्येत मतानि मन्त्रिणाम्।
चपलः सहसैव संपतन्नरिखड्गाभिहतो विबुध्यते॥
अविचार्य बलावलेपादहमित्येव समुद्धतोऽनयात्।
चपलः स्वमतेन संपतन्न निपत्याल्पमना विबुध्यते[2]॥ इति। नी० १२।५६।५७

---

(टी०) प्रयोगस्य चेति। गृहीतशास्त्रस्य। दूरस्थमपीति शास्त्रज्ञजनाधारत्वाद् विप्रकृष्टमपि शास्त्रं पारम्पर्येण हेतुः। एकः शास्त्रज्ञः प्रयोगं गृह्णाति, ततोऽन्यः, ततोऽन्य इति॥६॥

(मू०) अस्ति व्याकरणमित्यवैयाकरणा अपि याज्ञिका ऊहं क्रतुषु प्रयुञ्जते॥७॥

(टी०) अस्तीति। शब्देनाचोदितार्थस्य युक्त्या विमृश्य च स्थापनमूहः। स च प्रातिपादिकलिङ्गवचनान्तरोपादानेन व्याकरणे उक्तः। तद्व्याकरणमस्ति यतोऽयमूहः पारम्पर्याशयात्, इत्यवैयाकरणा अपि याज्ञिकास्तं क्रतुषु प्रयुञ्जते।

तद्यथा—आग्नेयमष्टाकपालं पुरोडाशं निर्वपेत्" इति प्रकृतिप्रयोगः। "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति विकृतिप्रयोगः। अत्र सूर्यमुद्दिश्योहः। निर्वपेदिति लिङ्गात् सौर्यं चरुं निर्वपेदाग्नेयवदिति॥७॥

(मू०) अस्ति ज्यौतिषमिति पुण्याहेषु कर्म कुर्वते॥८॥

(टी०) पुण्याहेष्विति। अस्ति ज्यौतिषमित्यज्यौतिषिका अपि कुतश्चिदुपलभ्य प्रस्तदिनेषु कर्म कुर्वते। तत्र शास्त्रमेव हेतुः॥८॥

(मू०) तथाऽश्वारोहा गजारोहाश्चाश्वान् गजांश्चानधिगतशास्त्रा अपि विनयन्ते॥९॥

(टी०) तथेति। अनधिगतशास्त्रा इति। हस्त्यश्ववैद्यकं हस्तिशिक्षेत्यनधीत्याम्नायात्पोषणदम्यादिकं कर्म कुर्वत इत्येव। तत्रापि शास्त्रमेव हेतुः॥९॥ इति।

१ आरब्धानि यथा शास्त्रं कार्याण्यमलबुद्धिभिः।
वनानीव मनोहारि प्रयच्छन्त्यचिरात् फलम्॥
सम्यगारभ्यमाणं हि कर्म यद्यपि निष्फलम्।
न तत्तथा तापयति यथा मोहसमीहितम्॥
यत्तु सम्यगुपक्रान्तं कार्यमेति विपर्ययम्। (एतद्व्याख्या ११८ पृष्ठे टिप्पण्यां द्रष्टव्या)
पुमांस्तत्रानुपालभ्यो दैवान्तरितपौरुषः॥ नी० १२।१७-१८-१९

२ (टी०) अहित इत्यादि। दुःखहेतौ सुखहेतुरित्येवंबुद्धित्वात्। मतानि कृतपञ्चाङ्गविनिर्णयानुपदेशान् योऽवमन्यते सहसा संपतन्। मन्त्रिभिरविमृश्य वर्तमानः शत्रु--

## जयमङ्गलाक्रोडपत्रम्

शास्त्रत एव परिच्छेदः भवत्युपायानामवगतौ । अन्यत्र तु मोहेनापरिहार्येणानेके दोषाः समुत्पद्यन्त इत्यप्यत्र स्मर्तव्यम्[1] ।

परैरिति। (पृ० ११०) आत्मपरयोः अभ्युच्चयापचययोरालोचनस्य परामर्शपूर्वकं कर्ता सामर्थ्यान्नातिसन्धीयतपरैः इति भावः। प्रागुक्तत्वादिति। (पृ० ११०) बाहुदन्तीपुत्रमतनिरूपणावसरे ८ अध्याये इति शेषः। अतएव कार्यनिर्णयार्थं शास्त्राण्यधीयानं मन्त्रिणं कुर्यात् इत्युक्तमुपपन्नम्[2] ।

---

भिश्छिद्रेषु प्रहृतश्चेतयते। अविचार्यं स्वयं बलादहमिति जातदर्पो हि न स्वयं विमृशति। स्वमतेन विचारशून्येन। अनिपत्य न बुध्यते स्वपदात् परिभ्रष्ट एव वेदयते। अल्पमना अल्पबुद्धिः।

(टी०) वनानीवेति। तान्यपि वृक्षायुर्वेदविहितेन विधिना ज्ञात्वारब्धान्यचिरात् फलं ददतीति। ननु सम्यगारभ्यमाणं कर्म कदाचिन्निष्फलं भवत्येव। ततश्च निर्णयानिर्णययोः को भेद इत्याह सम्यगित्यादि। न तापयति तत्र पुरुषस्यानुपालभ्यत्वात्। यदाह यत्तु सम्यगित्यादि। उपक्रान्तमारब्धम् विपर्ययन्नैष्फलम्। देवान्तरितपौरुषः अलक्षणेन दैवेन बलवता तिरस्कृतपुरुषकार इत्यर्थः। तत्र देवमेवोपालभ्यमत्रगुमान्। इति।

१ शक्याशक्यपरिच्छेदं कुर्यात् बुद्ध्या प्रसन्नया।
केवलं दन्तभङ्गाय दन्तिनः शैलताडनम् ॥ १ ॥
अशक्यारंभवृत्तीनां कुतः क्लेशादृते फलम्।
आकाशमास्वादयतः कुतस्तु कवलग्रहः ॥ १२ ॥
नाग्निं पतङ्गवद्गच्छेत् स्पृश्यमेव तु संस्पृशेत्।
किमन्यत् स्यादृते दाहात्पतङ्गस्याग्निमृच्छतः ॥ १३ ॥
मोहात्प्रक्षिपतश्चेष्टां दुःखलभ्येषु वस्तुषु।
भवन्ति परितापिन्यो व्यक्तं कर्मविपत्तयः ॥ १४ ॥
बुध्या बोध्यानुगतया परीयात्संपदः पदम्।
विशुद्धपदविन्यासः पर्वताग्रमिवोन्नतम् ॥ १५ ॥ इति।

२ मनुनाप्येतदेवोक्तम्—
ब्राह्मणान् पर्युपासीत प्रातरुत्थाय पार्थिवः।
त्रैविद्यवृद्धान् विदुषः तिष्ठेत्तेषां च शासने ।७।३७।

तदाह कात्यायनः—
एकं शास्त्रमधीयानो न विद्यात् कार्यनिर्णयम्।
तस्माद्बह्वागमः कार्यो विवादेषूत्तमो नृपैः। इति। नी० क० पृ० २५

## जयमङ्गलाक्रोडपत्रम्

प्रकर्षार्थमिति। (पृ० ११०) मन्त्रिपदे यस्य नियोजनं कर्तव्यं सोऽभिजनादि-गुणप्रज्ञानसंपन्नोऽस्ति नवेति विशेषेणानुसन्धेयम्। तथा च मन्त्री कुलीन एव ग्राह्य इति स्थितम्[1]।

मन्त्रार्थनिर्णयाय सति संभवे कुलीना ब्राह्मणाः नियोक्तव्याः इत्यप्यवधेयम्[2]।

**विप्रस्यैव अमात्यमण्डले प्रवेशः**

**अत्रेदमनुसन्धेयम्**—गुणप्रकर्षमभिलक्ष्य ब्राह्मणो मन्त्रिपदे नियोक्तव्य इति स्थितम्। तत्र गुणसंपन्ने ब्राह्मणे अन्यस्मिन् च तथाविधे उपस्थिते गुणान्तरैः सह ब्राह्मणे कुलीनत्वस्य श्रद्धादाढर्यप्रयोजकस्य विपद्यपि एकरूपतयाऽवस्थानप्रयोजकस्य विद्यमानत्वात् अधिकगुणसंपन्नो ब्राह्मणो मन्त्रिपदे नियोक्तव्यत्वेन विहितो भवति। अन्यथा तथाविधस्य अपमानने सञ्जाते कुलीनः मानित्वात् परं आश्रित्यैनं हन्यात् त्यजेद्वा[3]।

---

१ तदुक्तं मनुना—
मौलान् शास्त्रविदः शूरान् लब्धलक्षान् कुलोद्भवान्।
सचिवान् सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान्। इति ७।५४

२ व्यवहारप्रकाशे—
चत्वारो वेदधर्मज्ञाः पर्षत् त्रैविद्यमेव वा।
सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः॥
एते च ब्राह्मणा एव। मनुबृहस्पतिभ्यां विप्रपदोपादानात्।
स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः।
धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः॥
इति द्विजोत्तमपदस्य कात्यायनेनोपादानात्।
नारदः—
राजा तु धार्मिकान् सभ्यान्नियुञ्ज्यात् सुपरीक्षितान्।
व्यवहारधुरां वोढुं ये शक्ताः पुङ्गवा इव॥
धर्मशास्त्रेषु कुशलाः कुलीनाः सत्यवादिनः।
समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः॥ अ० १।४४-४५
सब्राह्मणपुरोहितः ससभ्य इति पूर्वोदाहृतकात्यायनवचने ब्राह्मणानां सभ्यानाञ्च च भेददर्शनान्नियुक्तानियुक्तविशेषेण गोबलीवर्दन्यायेन सभ्यानां ब्राह्मणानां च राज साहाय्यं व्यवहारदर्शनेऽवगन्तव्यम् इति भावः।

३ "कुलीनान्नावमन्येत सम्यग्वृत्तान् मनस्विनः।
त्यजन्त्येते हि भर्तारं घ्नन्ति वा मानहेतवः।" नी० ५।६७। इति
गुणैरुदारैः संयुक्तान् प्रोन्नयेन्मध्यमाधमान्।
महत्तां प्राप्नुवन्तस्ते वर्धयन्ति नरेश्वरम्। ५।६८ नी० सा०

## जयमङ्गलाक्रोडपत्रम्

### शूद्रास्यपि मण्डले प्रवेशः

यदि च कुलीनाः सन्तोपि गुणान्तरसंपन्ना नोपलभन्ते ब्राह्मणाः, तर्हि तु कुलान्तरोद्भवान् अपि इतरगुणसंपन्नान् मन्त्रिकर्मणि राजा वृणुयात्।
तथा चोक्तम्—अपार इत्यादिना[1] भारते—
न च शूद्रो मनुना निषिध्यते। तदुक्तं मनुना—
जातिमात्रोपजीवी वा कामं स्यात् ब्राह्मणब्रुवः[2]।

इति वाच्यम्। पालनार्जनयोः उद्देश्ययोर्विलोपे प्रसक्ते निषेधमतिक्रम्य शूद्रेणापि राज्यपालनसंभवे तस्यापि स्वीकारार्हत्वात् अमात्यमण्डले शूद्रस्यापि भारतेन स्वीकृतत्वात्, धर्मनिर्णयार्थम् अधिकृतिरूपेण शूद्रस्य निषिद्धत्वेपि अमात्यमण्डले गुणवतस्तस्य विदुरस्येव प्रवेशे अनिषेधाच्च। अतएव अनधिकृतत्वात् ब्रह्मविषयमधिकृत्य धृतराष्ट्रः विदुरेण न बोधित इति भारतोक्तं नायुक्तिकमिति। शूद्रेष्वपि असङ्करस्य कुलीनत्वात्प्राथम्यं बोध्यम्। एवं सत्वेपि शास्त्रेण दत्ताधिकारः कुलीनो ब्राह्मणादिः यथा गुणसंपन्नो भवेत् तथा तु यतितव्यमेव विचक्षणैः। उपलब्धे च तस्मिन् शूद्रोऽपि तस्मात् कार्यात् परावर्त्य स्वकार्यं साधयेत्। तस्य कुलीनत्वाच्छास्त्रानुयायित्वाच्च एवं वर्णान्तरविषयेपि बोध्यम्।

इन्द्रमतनिरूपणावसरे निरूपितानामभिजनादीनां पुनर्ग्रहणस्य प्रयोजनान्तरमाह पादेति। (पृ० ११०) पादार्धत्वं कथं ग्राह्यमिति त्वग्रे वक्ष्यते। धारयिष्णुत्वस्य फलं दर्शयति अविस्मरणेति। (पृ० ११०) अनेकवर्षान्तरितेष्वपीत्यर्थः।

अनलस इति। (पृ० ११०) ननु शैघ्र्यादनलसत्वे को विशेषः। इति चेदनलसः अविश्रान्तः सन् अन्यदारभते। (तदुक्तम् ४-२०) नीतिसारे–"शैघ्र्यं क्षिप्रकारिता। कश्चिदलसोऽपि त्वरयैकं कर्म कृत्वा श्राम्यति, दक्षस्त्वविश्रान्तोऽन्यच्चारभते"। इति। उत्साहगुणे अन्तर्भूतत्वेऽप्यस्य पुनः ग्रहणसार्थक्यं निरूपयति पुनरिति।

### वाग्मिताव्याख्याविरोधपरिहारः

अर्थेति। (पृ० ११०) ननु नीतिसारे व्याख्यायां" (१-२३) "सङ्क्षेपविस्तराभ्यां स्पष्टललितपदाभिधेयता" वाग्मिता इत्येवोक्तम्। अत्र तुअर्थयुक्तत्वमपि वाग्मितायां निवेशितं तदनयोः कथं समन्वयः इतिचेत्। "विशिष्टवाचकानां पदानां सति विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वं भवती"ति विघ्नविघातायेति मुक्ता-

---

१ "अपारे यो भवेत्पारं अप्लवे यो भवेत् प्लवः।
शूद्रो वा यदिवाप्यन्यः सर्वथामानमर्हति ॥

२ यत्र विप्रो न विद्वान् स्यात् क्षात्रियं तत्र योजयेत्।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥ वी० व्य० पृ० २५ का०—
धर्मप्रवक्ता नृपतेः न तु शूद्रः कथञ्चन ॥
यस्य राज्ञस्तु कुरुते शूद्रो धर्मविवेचनम्।
तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यत ।२०-२१

## जयमङ्गलाक्रोडपत्रम्

वलीव्याख्याने उक्तमस्ति । तदनुसारेण १-२३ श्लोके कामन्दकीये, सत्यस्य विशेषणस्य अर्थयुक्तत्वबोधकस्य पार्थक्येन ग्रहणाद् तदंशं विहाय वाग्मिता स्पष्टेत्यादिपदाभिप्रेयतापरतया व्याख्याता । अत्र तु सत्यस्य उक्तिर्नास्ति इति अर्थयुक्तत्वमत्र निवेशितम् ।

**वाचाल इति** । (पृ० ११०) यो बहुगर्ह्यवाग्भवति स न वाग्मी[1] ।

**विशेषेणेति** । (पृ० ११०) वाग्मितादयः गुणाः दूतौपयिकाः "वाग्मी प्रगल्भः स्मृतिमान्" इत्यादिना उक्ताः । तदुक्तं नीतिसारे—

"प्रगल्भः स्मृतिमान् वाग्मी शस्त्रे शास्त्रे च निष्ठितः ।
अभ्यस्तकर्मा नृपतेः दूतो भवितुमर्हति" ॥ इति ।

तत्र निसृष्टार्थादिभेदेन एतेषां तारतम्यमग्रे वक्ष्यते ।

### वक्ष्यतिपाठशोधनम्

वक्ष्यतीति । (पृ० ११०) एतत्पाठसंशोधने कारणं निष्प्रताप इति व्याख्यानम् । तथैवोक्तं नीतिसारव्याख्यायाम्-(१६-२८) "प्रभावोत्साहसम्पन्नमिति । शौर्याद्युत्साहगुणयुक्तोऽपि कश्चिदप्रतापः । प्रतापवत्त्वे सत्यप्यकृतोत्साहश्चाभिभूयते । उभयगुणस्तु सदैवाप्रधृष्यो भवति[2] । अतश्च सह निर्देशः" । इति ।
एतेन मूले उत्साहानन्तरं प्रभावग्रहणमुपपन्नं भवति[3] ।

अत्रेदमनुसन्धेयम्—प्रभुशक्तिरत्र वक्ष्यमाणा अकार्ये प्रवृत्तावुत्पन्नायां राजा मां निग्रहीष्यतीति भये प्रजासु उत्पन्ने सति युक्ता—

---

१ तदुक्तम्—वाचो ग्मिनिः । (५।२।१२४) वाग्मी आलजाटचौ बहुभाषिणि ५।२।१२५ कुत्सित इति वक्तव्यम् कुत्सितं बहु भाषते वाचालः वाचाटः । यस्तु सम्यग्बहु भाषते स वाग्मीत्येव ।

टी०—वाच शब्दात् आलच् आटच् एतौ मत्वर्थे बहुभाषिणि इत्यर्थः । ग्मिनोपवादः । यत्तु सम्यगिति । न च अबहु अकुत्सितं च यो वदति तत्रापि वाग्मीति कुतो न भवतीति वाच्यम् । "यो हि सम्यग्बहुभाषते वाग्मीत्येव स भवती"ति-भाष्यबलेन पूर्वसूत्रस्य सम्यग्बहुभाषिण्येव प्रवृत्तेऽभ्युपगमादिति भावः इति ।
(तद्धितेषु मत्वर्थीय प्र० ३८ सि० कौमुदी)

२ नी० ८ स० १२२ श्लोक० ।
"सर्वैर्गुणैर्विहीनोपि स राजा यः प्रतापवान् ।
प्रतापयुक्तात्त्रस्यन्ति परे सिंहान्मृगा इव ।
प्रतापयुक्तो नृपतिः प्राप्नोति महतीं श्रियम् ।
तस्मादुत्थानयोगेन प्रतापं जनयेत्प्रभुः" । १३ । इति ।

३ "प्रजा हि यमस्थाने दण्डधरं मन्यमाना नापराध्यतीति" । नी० स० १ ज०

## जयमङ्गलाक्रोडपत्रम्

अतएव हि केवलं राज्ञामुत्साहशक्तिमवलोक्य विनेया प्रजा न अधर्मान्निवर्तते। अतः प्रभुशक्तिरुत्साहशक्त्या सहात्यन्तमभ्यर्हिता वर्तते।
व्याख्यातं चैतत् प्रभुशक्तिस्वरूपं भावप्रकाशने द्रष्टव्यम्[1]। निष्प्रतापः इति। (पृ० ११०) अव्यवहितपूर्ववर्तितासंबन्धेन राजा प्रतापाभाववान् यदि स्यादित्यर्थः। प्रतापश्च व्याख्यातः भावप्रकाशने—

प्रतपन्ति यतो द्वेष्याः स प्रताप इहोच्यते। इति ॥ (भाव प्र० ३ अधिकारे) तस्यापि पूर्वोक्त एवाशयोवगन्तव्यः।

भयं च राज्ञः प्रतापसत्वे प्रजायां कथं इत्येतत् भावप्रकाशने स्पष्टम्[2]। भयं हि उत्कटकोटिकानिष्टशङ्केति तदाशयः।

व्युत्पत्तिवादे—भयं च परतोऽनिष्टसंभावना। इति उक्तम्। तत्तु मन्त्रिनिर्दिष्टशासनवैपरीत्ये अनिष्टसंभावनापरतया योज्यम्। मन्त्रिणोधिकृत्य कीदृशं भयं प्रजायामपेक्षितमिति काव्यप्रकाशविवरणादव्यक्तम्। "यद्यपि भयन्नाम दुःखसाधनत्वेन दुःखाभेदेन वा द्विष्टस्य वस्तुनो दर्शनं तच्च नास्वाद्यम्[3] तथापि गुरुदेवतापित्रादिविषयो बहुमानः स्वावधिकोत्कर्षवत्तया ज्ञानं वासनारूपेण परिणतं भयमिति व्यपदिश्यते। इति। ( का० गो० ४।४१।)

यच्चोक्तं "अनिष्टसाधनोपनिपाते तज्जिहासोर्हानाशक्यता, तथा "रागविषयस्य नाशके समुपस्थिते तन्निवारणासामर्थ्यमात्मनो मन्यमानस्य दैन्यात्मनश्चित्तवृत्तिविशेषो भयम्"। (गी० २।५६ मधुसूदनी) इति। ततु मन्त्रिणःप्रभावसत्वे भवति अतस्थताविधः प्रभावः मन्त्रिणोत्पादनीयः अन्यथा वन्ध्यकोपस्य प्रत्यक्षहेडप्रसादाभावे मन्त्रिणोस्तित्वे वैयर्थ्यमेव। अभिभूयते इति। (पृ० ११०) बलवत्सजातीयकृतम्। न गृह्यते उपेक्ष्यत इति अर्थः। उपेक्षाविषयः बलवत्कृतं कर्म आज्ञापनादिः। तथा च निष्प्रतापः उत्साहः। प्रागेव प्रथमतः। नाद्रियते आदावेव इति भावः।

पश्चादिति। (पृ० ११०) प्रतापी सन्नपि निरुत्साही चेत् पश्चान् नाद्रियते। आदौ तु सेव्यते इति भावः। गुणयोः प्रयोजनमाह सहेति।

### वर्षाकष्टेतिपाठशोधनम्

वर्षेति। एतत्पाठसंशोधनेकारणं नी० सा० टीकास्थं जयमङ्गलावाक्यं बोध्यम्।

"आपत्काले शीतोष्णवातवर्षादिक्षमता" इति। (उ० नि०)–आपदां दैवात्समुत्पन्नानां क्लेशानां च शीतोष्णक्षुत्तृष्णादीनां च सहनम्। (४-२८) इति। क्लेशसहः। शीतोष्णदुःखक्षुत्तृडादिक्लेशान् सहत इति।

---

१ अनियुक्ता अपि स्वे स्वे कृत्ये यत्सन्निधौ प्रजाः।
प्रभुत्वन्तदिति प्रोक्तम् आज्ञा सैव भयात्मिका ॥ इति।

२ महारण्यप्रविष्टाश्च महासङ्ग्रामचारिणः।
भयानकालंबनाः स्युःगुरुराजापराधिनः। इति। भा० शन आदि १

## जयमङ्गलाक्रोडपत्रम्

शुचिः—शौचं हि परलोकविश्वासमूलक स्थायिविश्वास्यत्वप्रदर्शनार्थम्[१]।
मैत्रः—तेन मन्त्रिणि साधुहितकारित्वं ज्ञायते।

अतएव शुचिसङ्गतौ मैत्र्याः विस्तारो भवति इति शुचितायाः प्रयोजनं बोध्यम्[२]।

गणपतिशास्त्रिभिरेवं व्याख्यायते—सर्वत्र स्निग्धव्यवहर्ता इति।

### स्थिरस्नेहपाठशोधनम्

**स्थिरेति**। (पृ० ११०) एतत्पाठशोधने नीतिसारवाक्यं स्मर्तव्यम्। (४-७) "स्थिरस्नेहोऽयं न हरिद्रारागवद्विरज्यते इति दृढभक्तिः सद्भिराश्रियते" इति। तदेवाह—कृच्छ्र इति।

### दृढभक्तित्वपरीक्षणोपायविरोधपरिहारः

**अपरित्यागीति**। (पृ० ११०) ननु आपदा स्थिरभक्तित्वं परोक्षणीयम् इत्यनेन ग्रन्थेन टीकाकृता ध्वन्यते। उक्तञ्चैतन् नीतिसारेऽपि—

धृतिं चेवानुरागं च स्थैर्यं चापदि लक्षयेत्। इति। (४-३५)

अत्र तु मुलकृता संव्यवहारात् शौचं मित्रतां दृढभक्तित्वं चेत्युक्तम्। एवं-सति कथमनयोः समन्वय इति चेदुच्यते।

आपद्धहेतुना परित्यागाभावोऽनुमेयइति नीतिसारस्याऽशयः, नीतिसारे (स० ४/२८) "अन्यत्रागमनर्मि"ति व्याख्यानात्। मूले तु संव्यवहारात् स्निग्धनिष्ठ-स्नेहस्य नित्यत्वमनुमेयम् इति आशयः। अत्रैव "स्थिरस्नेहः" इति व्याख्यानात्। किञ्च "यथा नार्थशीलो, न द्वेष्टि, दृढस्नेहत्वात् अस्मान्"। इत्येवं (पृ० १३१) वक्ष्यमाणत्वात् अपरित्यागेन मित्रस्य स्नेहः परिचितो भवतीति स्फुटम्। ततश्च पौनःपुन्येन अभ्यासे जाते द्वेषाभावः स्नेहमूलत्वात् स्थिरोऽनुमेयो भवतीति यावत्। तदुक्तम्—

'अङ्गीकृतं सुकृतिनः परिपालयन्ति'। इति।

अन्यच्च यदा एकत्र मन्त्रिणः, दृढभक्तिः ज्ञायते तदा तेन शुचिना सह मैत्रीं कर्तुं अपरोऽपि समीहते इत्यपि दृढभक्तेः उपयोगित्वं बोध्यम्।

**शीलमिति**। (पृ० ११०) सद्भिः संभावनीयताहेतुः गुणः शीलम्। इत्यादि प्राक् प्रपञ्चितम्। (प्र० खं० २।८१)

**अपरेति**। (पृ० ११०) न परपरिवादादिकमित्यर्थः। आदिपदात् "अनिन्दा परकृत्येषु" इत्याद्युक्तं लोकसङ्ग्रहप्रकरणं बोध्यम्। तस्य फलमाह—तद्धीति।

---

१ तदुक्तम्—मृद्घटवत् सुखभेद्यः दुःसन्धानश्च दुर्जनो भवति।
सुजनस्तु कनकघटवत् दुर्भेद्यः सुकरसन्धिश्च।

२ आदौ तन्व्यो बृहन्मध्या विस्तारिण्यः पदे पदे।
यायिन्यो न निर्वर्तिन्यः सतां मैत्र्यः सरित्समाः। (नीतिसार)

## जयमङ्गलाक्रोडपत्रम्

**बलमिति** । (पृ० ११)० कायबलमित्यर्थः । तदुक्तमुपाध्यायनिरपेक्षायाम्[१]—(स० ४।१४) "बलं च कायबलम् तेनान्वितः[२]" इति । युद्धाध्वलङ्नादिक्रियासामर्थ्यम्,

भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिर्णवः ॥१६॥ (१ सर्ग रघुवंश)

इत्युक्तत्वात् अधृष्य इति यावत् । पथ्यमिति । तज्जन्यत्वादारोग्यमिति व्याख्यातम् । तच्च ओजसः संरक्षणेन इत्योज आरोग्यं ज्ञेयम् । सति तस्मिन् दोषधातूनां साम्यं संभवति[३] । नी० सा० व्याख्यायमिदमेवोक्तम् । "दोषधातूनां साम्यं कर्माङ्गम्" इति । (४-२८) उ० नि० यां—"नीरोगते"ति च ।

**सत्वमिति** । (पृ० ११०) निर्विकारितेत्यर्थः । सात्विकः तत्वं विवेचयितुं समर्थः यतः अपूर्वप्रतिभानं गुर्वादिप्रसादं च स लभते ।

**मदेति** । (पृ० ११०) तेन गुर्वाज्ञादिव्यतिक्रमः ततः भर्त्सनं प्रतिभायाः अभावः राज्यस्य विनाशकरो भवति[४] अतो मदजनितविकारान्निवर्तनं युक्तम् । मदश्च सम्मोहानन्दसंभेदः इति भावप्रकाशने व्याख्यातत्वान् मदं प्रति कारणं दृढं मिथ्याज्ञानं भवति । तस्य दूरीकरणाय गुर्वादिसमोपे निविश्य आन्वीक्षिक्यादिविद्याः प्रयत्नेन अध्येतव्याः । शेषं उद्देशग्रन्थादिनिर्वचनोक्तदिशा अवसेयम् । ( प्र० खं० १।१३ ) अभिगमनीय इति ।

**विमृश्येति** । (पृ० ११०) चपलत्वाभावो विमर्शकारिता, गोकुलनाथोपाध्यायैः चपलतायाः तथैवोपवर्णितत्वात्[५] ।

---

१ युद्धाध्वलङ्घनादिक्रियासमर्थः" । ( ज० मं० ४-१४ )

२ कायबलसंपन्नः वृकोदरवत् । ( उ० नि० )

३ प्रसन्नात्मेन्द्रियमनाः समधातुमलक्रियः ।
समाग्निः समदोषश्च स्वस्थ इत्यभिधीयते ॥ इति ।

४ विद्याभिजात्यसंपत्तिमदेऽनुत्तरभाषणम् ।
अवज्ञागर्भितं वाक्यं सुहृदामप्यनादरः ।

५ अथ चापलम्–तत्र
"मात्सर्यद्वेषरागादेश्चापलं त्वनवस्थितिः" इति धनिकः ।
अनवस्थितिः परस्परविरुद्धार्थकबुद्धीनामव्यवधानेनोत्पत्तिः । यथा—
विनिकषणरणत्कठोरदंष्ट्रा क्रकचविशङ्कटकन्दरोदराणि ।
अहमहमिकया पतन्तु कोपात् सममधुना न किमत्र मन्मुखानि ॥
अथवा प्रस्तुतमेव तावत् सुन्दरीहितं करिष्ये अत्र सीताकवलने, तत्समीहित सम्पादने च कर्तव्यताबुद्ध्योरव्यवधानं रावणे प्रतिभाति । महाराजस्तु—

## जयमङ्गलाक्रोडपत्रम्

**अत्रेदमवधेयम्**—टिप्पण्युद्धृतवाक्यानुसारेण अविमृश्यकारित्वे अनवस्थितिः परस्परविरुद्धार्थकबुद्धीनामव्यवधानेनोत्पत्तिः, आत्मप्रकाशनपरा चेष्टा, हितसाधनताभ्रमजन्या प्रवृतिरिति लक्षणत्रयमपि अन्तर्भावनीयम्—

### गुणतालिका

**अमात्येति** । (पृ० १११) **अथ विशेषतः शिष्य बुद्धिवैशद्याय** अर्थशास्त्रनीतिसारयोरुक्तगुणानां तुलनार्थे तालिका अत्र प्रस्तूयते ।

| अर्थशास्त्रे | नीतिसारे |
|---|---|
| १—जानपदः | जानपदः |
| २—अभिजातः | कुलान्वितः |
| ३—स्ववग्रहः | स्ववग्रहः |
| ४—कृतशिल्पः | कृतशिल्पः |
| ५—चक्षुष्मान् | चक्षुष्मान् |
| ६—प्राज्ञः | प्रज्ञावान् |
| ७—धारयिष्णुः | धारणान्वितः |
| ८—दक्षः | दक्षः |
| ९—वाग्मी | वाग्मी |
| १०—प्रगल्भः | प्रगल्भः |
| ११—प्रतिपत्तिमान् | प्रतिपत्तिमान् |
| १२—उत्साहयुक्तः | उत्साही |
| १३—प्रभावयुक्तः | प्रभावसंयुतः |
| १४—क्लेशसहः | क्लेशसहः |
| १५—शुचिः | शुचिः |
| १६—मैत्रः | मैत्रः |
| १७—दृढभक्तिः | दृढभक्तिः |
| १८—शीलयुक्तः | शीलान्वितः |
| १९—बलयुक्तः | बलान्वितः |
| २०—आरोग्ययुक्तः | आरोग्यसंयुतः |
| २१—सत्वयुक्तः | सत्वसंयुतः |

---

आत्मप्रकाशनपरा चेष्टा चपलतोच्यते । इत्याह । चेष्टा तज्जनकप्रवृत्तिः ।
यथा— कश्चित् कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम् ॥
परिस्खलत्केसरचक्रवालं लीलारविन्दं भ्रमयाञ्चकार ॥ इति
"तच्चापलमनालोच्य कार्यंकारित्वमुच्यते इति शाङ्र्गदेवः ।
**अनालोच्येति—हितसाधनतामप्रमायेत्यर्थः**– । हितसाधनताभ्रमजन्या प्रवृतिरिति यावत् । इति । ४ उल्लास

## जयमङ्गलाक्रोडपत्रम्

| अर्थशास्त्रे | नीतिसारे |
|---|---|
| २२—स्तम्भहीनः | स्तम्भहीनः |
| २३—चापलहीनः | चापलहीनः |
| २४—सप्रियः | |
| २५—वैराणामकर्ता | वैराणामकर्ता |
| २६— | सत्यसंयुतः |
| २७— | घृतिसंयुतः |
| २८— | स्थर्यसंयतः |
| २९— | अनुरागः |

### अर्थशास्त्रनीतिसारोक्त गुणगणनाविरोधपरिहारः

ननु उपर्युक्तगुणानां अर्थशास्त्रनीतिसारयोर्दृष्टया विवेचने कृते मतभेदः कथं उपस्थित, इति चेत् । सत्यं वाग्मितायां, घृतिं सत्वे, स्थैर्यं दृढभक्तौ, संप्रियत्वमनुरागे अन्तर्भाव्य उभयोरपि ग्रन्थयोः समन्वयः बोध्यः । तदुक्तम् जयमङ्गलायामर्थशास्त्रे अत्रैव टीकायाम्—"वाग्मी अर्थयुक्तवाक्, सत्वं व्यसनेऽभ्युदये चाविकारित्वम् दृढभक्तिः स्थिरस्नेहः[1], कृच्छ्रेपि अपरित्यागी सुभगचरितश्च परान् सुखयति" । इति ।

### गुणान्तर्भावे विनिगमना

ननु क्लेशसहत्वे धृतेरन्तर्भावः कुतो न वाच्य इति चेन्न । क्लेशसहत्वे प्रतियोगिविधया दुःखस्याऽभावोऽस्ति घृतिमांस्तु आपदि वर्षाद्यायासं सहमानोऽपि न दुःखमनुभवति । इति, सत्वे घृतेरन्तर्भावः औचित्यमावहति । उपर्युक्तरीत्या तत्र तत्र सत्यादीनामप्यन्तर्भावे कृते पृथगुपादानं व्यर्थं भाति, तथापि अमात्यादीनां विशेषतया सत्यादिविषये अवधानं भवतु इत्येतदर्थम् नीतिसारकृता तेषां गुणानां पृथगुपादानं कृतम् ।

### नीतिसारे मन्त्रिगुणेषु रागाग्रहणन्यूनतापरिहारः

न च अनुरागः नीतिसारकृता कथं नोक्त इति वाच्यम् । तेनाप्युक्तत्वात् ।

उपधाशोधिताः सम्यगीहमानाः फलोदयम् ।

तेऽस्य सर्वं परीक्षेरन् सानुरागाः कृताकृतम् । इति । नी० ४

अतः नात्र विषये मूलनीतिसारयोर्विरोधः ।

**सर्वमिति**। (पृ. १११) यतो "निमित्तात् प्रवर्तते तन्निमित्तं" इत्युक्तत्वात् उपर्युक्तगुणवत्त्वं मन्त्रिपदप्रवृत्तिनिमित्तम् शक्यतावच्छेदकमित्यर्थः । तेन नीतिसारोक्तानां सत्यस्थैर्यादीनामप्यवयुत्य अनुवादो बोध्यः ।

### मन्त्रित्वानुगमः

समस्तगुणानां संसर्गविधया सङ्ग्रहणं अनुगमश्च भवतु इत्येतदर्थं संपत्पदविशिष्टत्वं स्वशक्यतावच्छेदकगुणपर्याप्तिसंबन्धेनेत्यवगन्तव्यम् । न च राज्ञा सर्वविधगुणसंपन्नः तत्तत्कर्मणि न नियुक्तः तेन गुणवतापि

१ स्थैर्यं = स्थिरं विचलत्वम् । ( का० उ० नि० ४-२८ ) स्थैर्यम = अन्यत्रागमनम ( ज० मं० ४-२८ )

## जयमङ्गलाक्रोडपत्रम्

अमात्यकर्म[1] नीतिसारोक्तमनुष्ठेयं स्यादिति शङ्क्यम्। दूताध्यक्षधर्मस्थ-मित्रपुरोहिताद्यन्यतमत्वस्यापि तत्र विशेषणत्वोपगमात्। अत्रेति। (पृ० १११) अमात्यपदोपादानेऽपि अन्ते मन्त्रिणि उपसंहारात् अत्र धीसचिवो बोध्यः बुद्धीति। (पृ० १११) सत्यप्येवं, नीतिसारे पृथक् धीसचिवस्य[2] ग्रहणात् जानपदादिगुण-पर्याप्तोऽवरमन्त्री बोध्यः। न च कौटिल्यस्यानभिमत इति वाच्यम्। उत्तरमन्त्रिण स्त्रयश्चत्वारो वा कार्याः इत्यग्रे तेन वक्ष्यमाणत्वात्। वस्तुतस्तु मध्यमादिभेदेन मन्त्रित्रितयसाधारणं प्रवृत्तिनिमित्तं लक्षणमभिजनदिपञ्चगुणवत्त्वं इन्द्रोक्तं भवति। उत्तरमन्त्रित्वं पञ्चविंशतिगुणसंपन्नस्य भवति। मध्यमावरयोः प्रवृत्ति-निमित्तमत्रैव वक्ष्यते। मध्यमावरमन्त्रिणां लक्षणं प्रदर्शयति अत इति। (पृ० १११) अभिजनप्रज्ञाशौचशौर्यानुरागाः पञ्च त्रिष्वपि समस्तेषु मन्त्रिषु अपरिहार्याः। पादा-र्धविभजनं गुणविंशतिकात् कर्तव्यमित्याह गुणेति। (पृ० १११)

ननु उत्तमो मन्त्री नाभिहितो मूले इत्याह सर्वेति। तथा च मध्यमावरयोः निरूपणात् उत्तमत्वं सहजत एव प्राप्तं भवति।

### गुणतःप्रयोजनसङ्ग्रहः

अथ सर्वेषामवबोधाय तत्तद्गुणानां प्रयोजनं टीकोक्तदिशा एकत्रोपन्यस्यते। तेन मन्त्रिलक्षणसमन्वितिः सुग्रहा भवेत्।

| गुणाः | प्रयोजनम् |
|---|---|
| १—जानपदः | स हि सदा तत्परिपालनशीलो भवति। |
| २—अभिजातः | न त्रिकर्मणि आर्यदेशप्रभवः प्रवर्तते न प्रवर्तयति च। |
| ३—स्ववग्रहः | स हि प्रमाद्यन्तं राजानं मृदुना क्रमेण शोभनमवगृह्णाति। शोभनो वाऽवग्रहः स्ववग्रहः स्नेहयुक्तं मित्रं अवगृह्यतेऽनेनेति कृत्वा। |
| ४—कृतशिल्पः | स हि दण्डनयनयोग्यो भवति। |
| ५—चक्षुष्मान् | नोत्पथं प्रतिपद्यते न प्रतिपादयति च। |
| ६—प्राज्ञः | स परैर्नाभिसन्धीयते। |
| ७—धारयिष्णुः | सहि कार्यन्न हापयति। |
| ८ दक्षः | कर्मस्वविश्रान्तः। |
| ९—वाग्मी | परान् रञ्जयन् आदेयवचनो भवति। |

---

१ मन्त्रो मन्त्रफलावाप्तिः कार्यानुष्ठानमायतिः।
आयव्ययौ दण्डनीतिरमित्रप्रतिषेधनम्।
व्यसनस्य प्रतीकारो राजराज्याभिरक्षणम्।
इत्यमात्यस्य कर्मेदं हन्ति स व्यसनान्वितः। नी० १४ स० प्रकृतिकर्म।

२ स्मृतिस्तत्परताऽर्थेषु वितर्को ज्ञाननिश्चयः।
दृढ़ता मन्त्रगुप्तिश्च मन्त्रिसंपत्प्रकीर्तिता॥ नी० स० ४

## जयमङ्गलाक्रोडपत्रम्

| गुणाः | प्रयोजनम् |
|---|---|
| १०—प्रगल्भः | परिषद्यसाध्वसः । |
| ११—प्रतिपत्तिमान् | भयस्खलितेऽपि आशु प्रतिविधाता । |
| १२—उत्साह (युक्तः) | शौर्याद्युत्साहगुणयुक्तोपि कश्चिन्निष्प्रतापः |
| १३—प्रभावयुक्तः | प्रागुत्साहाद्दभिभूयते कश्चित्प्रतापवत्त्वेपि अकृतोत्साहः पश्चादभिभूयते । |
| १४—क्लेशसहः | शीतोष्णादिकष्टसहत्वाल्लाभविघ्नमासादयति । |
| १५—शुचिः | अहिंसकः |
| १६—मैत्रः | स हि पक्षवृद्धिमाप्नोति । |
| १७—दृढभक्तिः | कृच्छ्रेऽप्यपरित्यागी । |
| १८—शीलम् | लोकरञ्जकम् । |
| १९—बलम् | सर्वकर्माङ्गम् । |
| २०—आरोग्यम् | पथ्यम् । ओजोवर्धकम् । |
| २१—सत्वम् | व्यसनेऽभ्युदये च अविकारित्वम् । |
| २२—स्तम्भहीनः | निर्मदत्वादभिगमनीयः । |
| २३—अचपलः | विमृश्यकारी । |
| २४—संप्रियः | अनुपकुर्वन्नपि सुभगाकाररुचिः सुभगचरितश्च परान् सुखयति । |
| २५—वैराणामकर्ता | न प्रकृतीरपरञ्जयति । |

पादार्धगुणेति । मूलस्य साधुत्वं समर्थयितुमाशङ्कते नन्विति । (पृ० १११) विग्रहान्तरमाह—पादार्धगुणाविति । (पृ० १११) नन्वेवं मन्त्रिगुणसंख्या २५ वर्तते ततः पादार्धगुणवत्वमनुपपन्नमित्याह—अत्रेति । अभिजनप्रज्ञाशौचशौर्यानुरक्तत्वं त्रिष्वपि मन्त्रिषु अव्यभिचरितमपेक्ष्यत एव इति पूर्वोक्तं बाहुदन्तीपुत्रमतं स्मरन् पक्षान्तरमाह—अथवेति ।

### अमात्यवैविध्यविरोधपरिहारः

यद्यपि अष्टमाध्याये मतभेदेन अमात्यानां षड्विधता भाति तथापि सा उत्तममध्यमावरकर्मभेदेन कर्मसचिवानां विधा भवति । अत्र तु मन्त्रिभेदः उक्त इति न विरोधो भवति ।

### मन्त्रिगुणसङ्ख्यान्यूनतापरिहारः

ननु नीतिसारे मन्त्रिगुणेषु दण्डनीतिप्रयोक्तृत्वमपि[1] उक्तम्—
सत्यम्, दण्डनीतेः प्राधान्यदर्शनार्थं तद्बोध्यम् । प्राधान्यं चोक्तं महाभारते—

क्षात्रो धर्मो ह्यादिदेवात्प्रवृत्तः पश्चादन्ये शेषभूताश्च धर्माः । इति

एतदेव ध्यात्वा अष्टचत्वारिंशत्संस्कारेषु क्षात्रधर्मस्य आत्मगुणस्यैव प्राधान्यं तदर्थत्वं चान्येषां धर्माणां इत्युक्तं गौतमेन[2] । तदप्युपपन्नम्—

१ "कुलीनाः शुचयः शूराः श्रुतवन्तोऽनुरागिणः ।
दण्डनीतेः प्रयोक्तारः सचिवाः स्युर्महीपतेः ॥ इति (नी० सा० स० ४)

२ गर्भाधान-पुंसवन—सीमन्तोन्नयन जातकर्मनामकरणान्नप्राशन-चौलोप—

[ तत्तद्गुणपरीक्षाक्रमाः ]

**तेषां जनपद[1]मवग्रहं[2] चाप्ततः[3] परीक्षेत[4], समानविद्येभ्यः शिल्पं शास्त्रचक्षुष्मत्तां च; कर्मारम्भेषु प्रज्ञां धारयिष्णुतां दाक्ष्यं च, कथायोगेषु वाग्मित्वं प्रागल्भ्यं प्रतिभानवत्त्वं च; आपद्युत्साहप्रभावौ क्लेशसहत्वं च; संव्यवहाराच्छौचं मैत्रतां दृढभक्तित्वं च; संवासिभ्यः[5] शीलबलारोग्यसत्त्वयोगं अस्तम्भं अचापल्यं[6] च, प्रत्यक्षतः संप्रियत्वं अवैरित्वं च ॥**

---

**श्रीमूला**

जानपदत्वादिज्ञानोपायानाह्—तेषामित्यादि । तेषां जानपदत्वादीनां मध्ये अथवा उत्तममध्यमाधमानां मन्त्रिणाम् । आप्यतः आप्तियोग्यात् प्रत्येतव्याद् विश्वासयोग्यादित्यर्थः, 'आप्तिः प्रत्ययितत्वे स्याल्लाभसम्बन्धयोरपि' इति केशवः । आप्तश्च यथादृष्टार्थवादी । परीक्षेत परीक्ष्य जानीयात् । समानविद्येभ्यः तुल्यविद्याविद्भ्यः । कर्मारम्भेषु कार्यानुष्ठानेषु । कथायोगेषु कार्यकथनप्रसङ्गेषु । प्रतिभानवत्त्वं नवनव प्रज्ञोन्मेषशालित्वम् । संव्यवहारात् समाचरणात् । संवासिभ्यः सहवासिभ्यः । प्रत्यक्षतः स्वयमनुभवात् ।

---

नयनानि चत्वारि वेदव्रतानि, स्थान-सहचारिणीधर्मसंयोगः पञ्चानां यज्ञानामनुष्ठानं एतेषां च अष्टकापार्वणश्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः, अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः, अग्निष्टमोत्यग्निष्टम उतथ्यः षोडशी वाजपेयातिरात्राप्तोर्यामा इति सप्त सोमयज्ञसंस्था इत्येते चत्वारिंशत्संस्कारा, न चाष्टावात्मगुणा, न स ब्रह्मणः सायुज्यं सालोकयं च गच्छति इति । यस्य तु खलु संस्काराणामेकदेशोप्यष्टावात्मगुणा अयं स ब्रह्मणः सायुज्यं सालोक्यं च गच्छतीति । वीरमित्रोदय सं० उद्देशप्रकरणम् ।

नो० टि० १ **जनपदमिति** । जन्मभूमिम् ।

,, २ **अवग्रहमिति** । ज्ञातिवर्गम् । अन्तरङ्गत्वात् ।

,, ३ **आप्ततः** । उभयाप्तात् ।

,, ४ **परीक्षेतेति** । परि समन्तात् बहुभ्य ईक्षेत ।

,, ५ **संवासेभ्यइति** । अथ कथमाप्तात् समानविद्येभ्यः संवासेभ्यः परोपदेशाद् गुणाः परीक्ष्याः यथा कर्मारम्भेषु कथायोगेष्वापदि संव्यवहाराच्च लिङ्गादिभ्यः ।

,, ६ **अचापलमिति** । स्थैर्यम् ।

## वैदिकसिद्धान्तसंरक्षिणी

अमात्यानां गुणान् परीक्षितुं तदुपायानाह तेषामिति। (पृ० १२९) जानपदत्वादि-गुणानां मध्ये इत्यर्थः। एवमग्रेऽपि योज्यम्।

जनपदं "जन्मभूमिरि"ति टिप्पण्याम्। परीक्षेतेत्यनेनान्वयः "अभिजनं कुलमाभिजात्यमि"ति उपाध्यायनिरपेक्षायाम्। अवग्रहं नियामकम्। टिप्पण्यां तु "ज्ञातिवर्गमन्तरङ्गत्वादि"ति उक्तम्। अत्रायं भावः ज्ञातय एव नियामका इति। स्पष्टीकृतं चैतत् 'शान्ति का अग्रदूत" ग्रन्थे। आप्ततः। "उभयाप्तात्" इति टिप्पण्याम्। स्वजनात् इति भावः। एवशब्दाद् अत्रागमः प्रमाणम्। तथा च उभयाप्तमुखेन शब्दतः देशकुलावग्रहान् परीक्षेत इति निर्गलितोर्थः। शिल्पं कलादि-कर्मविद्या। शास्त्रेति। निर्दुष्टं शास्त्रदर्शनम्। परीक्षेतेति शेषः। कर्मारंभेषु दुर्गादिकार्यकर्तव्येषु। प्रज्ञां विशुद्धदर्शनप्रसूतां मेधाम्। पुनर्ग्रहणं अपूर्वप्रतिभानार्थम्। धारयिष्णुतां इदं कृतं इदं कार्यं चेति। दाक्ष्यमनालस्यम्। कर्मकौशलादिना प्रतिभा-दिगुणत्रयस्यानुमानं भवति इत्यनुमानं प्रमाणम्। कथायोगे वादे व्याख्याने च। वाग्मितां स्पष्टललितपदाभिधेयताम्। प्रागल्भ्यं परिषद्यसाध्वसत्वम्। प्रतिभानं व्युत्पन्नमतित्वं। परीक्षेतेति शेषः। अत्र प्रमाणं प्रत्यक्षम्। आपदोति। सङ्ग्रामाध्व दुर्भिक्षकोशक्षयादिकार्येषु। उत्साहः शौर्यामर्षशौर्यदाक्ष्यचतुष्टयम्। विक्रमचेष्टा-मिति यावत्। प्रभावः प्रभुत्वं आज्ञा। क्लेशसहिष्णुतां शीतोष्णवातवर्षादिसहिष्णुताम्। एतत्त्रितयं आपदि यस्मादस्ति, तस्मादन्यदाप्ययमुपर्युक्तगुणवानिति भावः। संव्यव-हारादिति। (पृ० १२९) ऋणादानाद्यष्टादशान्यतमकर्मणः। शौचं उपधाशुद्धिः। मैत्रतां मित्रे स्नेहः, तेन मदाभावः। दृढभक्तित्वं आराध्ये स्नेहः अत्र मानाभावः। एते अनुमेयाः। संवासिभ्यः तत्सान्निध्येन सन्तोषपुरस्सरं निवसद्भ्यः। शीलं सद्भिः संभावनीयताहेतुर्गुणः। बलं श्रमाभावसमानाधिकरणं ओजः। आरोग्यं दोषधातूनां साम्यं कर्माङ्गम्। सत्वं व्यससने अभ्युदये। अस्तब्धता दर्पाभावः। अचापलं विरुद्धार्थकबुद्धीनामुत्पत्तेरभावः, विनय इति यावत्। एते आगमेन वेद्याःषट्। प्रत्यक्षतः वेद्यौ गुणौ संप्रियत्वं निर्विकारित्वात्प्रेमविषयत्वम्, अवैरित्वं च विरोधाभावः।

## जयमङ्गला

ते च गुणाः कथमस्य स्युरिति परीक्षायामाह—तेषामिति। तेषां गुणानां मध्ये पूर्वांस्त्रीन् गुणान् जानपदत्वादीन्। आप्यत इति। स्वजन आप्यते प्राप्यते संबद्ध्यत इति आप्याः[1]। तेहि विशेषेण जानन्तीति तत एव परीक्षेत। आगमयेद् अयमीदृश इति। समानविद्येभ्य इति। यो यत्समानविद्यः स तं विशेषेण जानातीति। शिल्पं शास्त्रमेव। चक्षुष्मत्तां प्रज्ञां च गुणद्वयं परीक्षेत

---

अशुद्धम्

१ इत्याप्ताः।

## जयमङ्गला

आगमयेत्। कर्मारम्भेष्विति। कर्मणां दुर्गादीनाम् आरम्भेषु आरम्भविकल्पेषु। प्रज्ञां धारयिष्णुताम् इदं कर्तव्यमित्यनुस्मरणम्। दाक्ष्यं मनसः सत्वम् अश्रान्तत्वं परीक्षेत अनुमिनुयात्। कथायोगेष्विति। कथाप्रयोगेषु वाग्मित्वम्, प्रागल्भ्यम्, प्रतिभैव प्रतिभानं तद्वतो भावः प्रतिभानवत्त्वं प्रतिपत्तिमत्त्वमित्यर्थः। अनुभवादेव परीक्षेत न तर्कागमाभ्याम्। आपद्युत्साहप्रभावाविति। यो [1]ह्यस्यामापदि न विषीदति न मन्दप्रभावः क्लेशांश्च सहते सोऽन्दापि कर्मण्य इति परीक्षेत अनुमिनुयात्। संव्यवहारादिति। लोकेन सह पौनःपुन्येन सम्यग् व्यवहृतिः तस्माच्छौचादीन् परीक्षेत। यथा नार्थशीलो, न द्रुष्टि दृढस्नेहत्वादस्मान् कार्येष्वायस्य[2]। तथा अस्यैते गुणा नित्या इति तर्कयेदित्यर्थः। सहवासिभ्य इति। सह वासो येषां तेभ्य इति। शीलबलारोग्यसत्वयोगम् अस्तम्भम् अचापलं च परीक्षेतागमयेत्। प्रत्यक्षत इति। स्वानुभवत[3] एवेति। सम्प्रियत्वम् अवैरित्वं च परीक्षेत॥

## जयमङ्गलाक्रोडपत्रम्

आप्यत इति। (पृ० १३०) आप्तत इति टिप्पणीपाठः। तत्र तथाग्रहणात्। उभयोरप्यर्थः स्वजनात् इत्येव। तदुक्तमुपाध्यायनिरपेक्षायाम्— "परीक्ष्य गोत्रजेभ्यो जानीयात् कुलमाभिजात्यम्। आसन्नतरेभ्यः स्थानं जन्म जनपदं वा। नियामकंच बन्धुवर्गमेतत्" इति। (नी० सा०स० ४-३३) अत्रापि स्वजन आप्यते संबध्यत इत्याप्य इति निरुक्तिः उक्तमेवार्थं पुष्णाति।

## जातिद्वारा कुलपरीक्षणे ब्रह्मज्ञोत्पत्तिफलम्

ननु कुलादिपरीक्षायामाप्यत्वेन स्वजनाः कुतः स्वीकृताः। इति चेत्, कुलशुद्धौ कश्चिद् ब्रह्मज्ञो भविता इति। तथाविधा वंश्याः आप्या कुलं रक्षन्ति वेदेनाप्यशब्दतो बोधनात्। एतत् संहिता-ब्राह्मण-भाष्येषु स्पष्टम्[4]—

---

अशुद्धम् १ यस्याम्। २ आयस्य तथा। ३ स्वानुभावतः।

### ब्रह्मज्ञोत्पत्तीतिहासः

४ (मू०) संब्रह्मणा पृच्यस्व एकताय स्वाहा द्विताय स्वाहा त्रिताय स्वाहा।
तै० सं० १-१८

(भा०) एकतायेति। कल्पः अत्रैतत्पात्रसंक्षालनं गार्हपत्याङ्गारेणाभितप्य हुत्वा अन्तर्वेदि प्रतीचीनां तिसृषु लेखासु निनयन्नेकताय स्वाहा द्विताय स्वाहा त्रिताय स्वाहेति। तेन इदं पात्रप्रक्षालनोदकं हुतमस्तु। एकतादीनामुत्पत्तिप्रकारमाह —"देवा वै हविर्भृत्वाऽभूवन् कस्मिन्निदं म्रक्ष्यामह इति। सोऽग्निरब्रवीत्। मयि तनूः संनिदधाम्। अहं वस्तं जनयिष्यामि यस्मिन् म्रक्ष्यध्व इति। ते देवा अग्नौ तनूः संन्यदधत। तस्मादाहुः अग्निः स वां देवता इति। सोऽङ्गारेण यः अभ्यपातयत्। तत एकतोऽजायत। स द्वितीयमभ्यपातयत् ततो द्वितोऽजायत। स तृतीयमभ्यपातयत्। ततस्त्रितोऽजायत। यदद्भ्यजायन्त तदाप्यानामाप्यत्वं। यदात्मभ्योऽजायन्त तदात्म्यानामात्म्यत्वम्"—

## जयमङ्गलाक्रोडपत्रम्

अर्थात् यदा देवाः बीजवधादिपापं संमार्ष्टुं चिन्तयामासुः तदा अग्निनोक्तम् अपो मातरः देवाः पितरो भूत्वा यदि एकतादीन् ब्रह्मज्ञान्वंशे उत्पादयिष्यन्ति तर्हि तेभ्य उक्तं पापं समर्प्य शुद्धा भविष्यन्ति इति । तथैव साधितम् । ततश्च द्विषन्तः असाधुकृत्यान् इत्युक्तदिशा ये ब्रह्मज्ञान् द्विष्यन्ति ते तत्पापं जिघृक्षन्ति इति त्वन्यत् । अतएव कुलीनाः गुणसंपन्नाः अत्यन्तमवधानेन विचरन्तः कुलं संरक्षन्ति इदं कुलीनस्य तत्वं कुलीना एव परस्परं जानन्ति इति तेषां आप्यशब्देन ग्रहणमत्र कृतम् ।

अदृष्टसङ्क्रमणं

न च अपरस्य पापं परस्मिन् कथं सङ्गच्छते इति वाच्यम्,
मनुना तथात्वनिरूपणात् । तदुक्तम्—

"अन्नादेभ्रूणहा मार्ष्टि पत्यौ भार्यापचारिणी ।
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम् । इति (८-३१७) ।

अतएव मूलमनुसृत्य प्रवर्तमानेन नीतिसारकृता स्वजनेभ्यो विजानीयात्— (स० ४) इत्यादिना कुलादिगुणपरीक्षणे उपयुक्तत्वेन स्वजना निर्दिष्टाः। न च स्वजनमात्रमेव उक्तमिति वाच्यम्, तस्य ज्ञातिपरत्वात् । तदुक्तम्—

सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः । इति । (अमर० मनुष्यवर्ग ३४)

जात्युपेक्षायां दोषः

किञ्च ज्ञातयः जातीयत्वेन स्थिताः सन्ति देशे इति आधुनिका न मन्वते, तत्फलं तेषु इदमेव संवृत्तम्, यत्ते मन्त्रिसभायां प्रविविक्षोर्मन्त्रिणः कुलस्थानावग्रहगुणपरीक्षणाद् वञ्चिता भवन्ति। तत्परिणामः मन्त्रिणां सांप्रतिकानां निरङ्कुशत्वं दुरपनेयं संपन्नं इति ।

## जातिसिद्धौ मीमांसकयुक्तिः

न च तथापि जातिसिद्धिः कया युक्तया संभाव्येति वाच्यम्। मीमांसकैः साधितत्वात्[1] महाभारतेऽप्युक्तत्वाच्च ।

---

(ब्रा.का. ३ प्र. २ अ. ८) देवाः पूर्वं व्रीह्यवघातादिना हविः संपाद्य बीजवधादिपापलेपः कस्मिन् पुरुषे मार्जनीयः इति विचार्याग्निवचनेन स्ववीर्यमग्नौ स्थापितवन्तः। ततः सोऽग्निः सर्वदेववीर्यधारिणाङ्गारेणाब्देवतामभिलक्ष्य तद्वीर्यमपातयत् । तस्मादुत्पन्नानां एकतादिनामकानां देवविशेषाणामापो मातरो देवा आत्मनः पितर इत्याद्यनामकत्वमात्मनामकत्वं च युक्तम् । स च लेपः परंपरया व्रीह्यवघातिनि पुरुषे पर्यवसितः इत्याह ते देवा आप्त्येषूदमृजत आप्त्या अमृजत सूर्याभ्युदिते सूर्याभ्युदितः सूर्याभिनिर्मुक्ते, सूर्याभिनिर्मुक्तः कुनखिनि, कुनखी श्यावदति, श्यावदतोऽग्रादधिषौ, अग्रदिधिषुः परिवित्ते परिवित्तो वीरहणि वीरहा ब्रह्महणि । तद्ब्रह्महणं नात्यच्यवत । इति

मीमांसकमतेन जातिप्रत्यक्षम्

१ कथं पुनरयं दृष्टविरोधो यदा समानाकारेषु पिण्डेषु ब्राह्मणत्वादिविभागः शास्त्रेण निश्चीयते ? नायं शास्त्रस्य विषयो लोकप्रसिद्धत्वाद्वृक्षत्वादिवत् । कथं पुन--

रिदं लोकप्रसिद्धम् ? प्रत्यक्षेणेति ब्रूमः । कस्मात् पुनः मातापितृसंबन्धानभिज्ञाश्चक्षुः-सन्निकृष्टेष्वनास्थातनं प्रतिपद्यन्ते ? शक्त्यभावात् । यथा वृक्षत्वं प्रागभिधानव्युत्पत्तेः । नैतत्तुल्यम् । वृक्षत्वं प्रागभिधायकव्यापाराज्जात्यन्तरव्यवच्छिन्नं स्वव्यक्तिष्वनुगतं शाखादिमद्रूपेण दृश्यते न तु ब्राह्मणत्वम् । अपिच व्युत्पन्नशब्दोपि निमित्तान्तरादृते नैव प्रतिपद्यते । नचोपवीताध्ययनादिनिमित्तम्, वर्णत्रयसाधारणत्वात् । अध्यापनाद्यपि भिन्नाचारक्षत्रियवैश्यप्रतियोगित्वात् सन्दिग्धम् । सर्वं च दुष्टशूद्रेषु संभाव्यमानत्वादनिश्चितम् । यस्त्वविचारितसिद्धमेव प्रतिपद्येत स शुक्तिकामपि रजतं मन्यमानः क्रीणीयात् । नैष दोषः, क्वचिद्धि किञ्चिज्जातिग्रहणे इतिकर्तव्यता भवतीति वर्णितमेतत् । तेन यथैवालोकेन्द्रियानेकपिण्डानुस्यूतिस्मरण-व्यक्तिमहत्त्वसन्निकर्षाकार विशेषादयोऽन्यजातिग्रहणे कारणम्, तथैवात्रोत्पादकजातिस्मरणम् । अयं चोत्पाद्योत्पादकसंबन्धो मातुरेव प्रत्यक्षः । अन्येषान्त्वनुमानाप्तोपदेशाद्यवगतः कारणं भवति । नचावश्यं प्रत्यक्षागतमेव प्रत्यक्षनिमित्तं भवति, चक्षुरादेरनवगतस्यापि निमित्तत्वदर्शनात् । आन्तरालिकस्मृतिव्यवहितमपि चेन्द्रिय-संबन्धानुसारिप्रत्यक्षमित्येतत् साधितम् । न च यत्सहसा सर्वस्य प्रत्यक्षं न भवति तन्निपुणतोपि पश्यतां प्रत्यक्षमित्येतदप्युक्तमेव । "स्त्र्यपराधात्तु दुर्ज्ञानोऽयं सम्बन्ध" इति स्वयमेव वक्ष्यति । न च तावन्मात्रेण प्रत्यक्षता हीयते । न हि यद् गिरिशृङ्गमारुह्य गृह्यते तदप्रत्यक्षम् । न च स्त्रीणां क्वचिद् व्यभिचारदर्शनात्सर्वत्रैव कल्पना युक्ता, लोकविरुद्धानुमानासंभवात् । विशिष्टेन हि प्रयत्नेन महाकुलीनाः परिरक्षन्त्यात्मानम् । अनेनैव हेतुना राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपारंपर्याविस्मरणार्थं समूहलेख्यानि प्रवर्तितानि । तथाच प्रतिकुलं गुणदोषस्मरणात्तदनुरूपाः प्रवृत्तिनिवृत्तयो दृश्यन्ते । नच भर्तृव्यतिरेककृतेन वर्णसङ्करोऽपराधेन जायते दृश्यते ह्यपराधिनीनामपि स्वभर्तृनिमित्तः प्रसवः । तदपराधनिमित्तस्तु तासामशुभफलोपयोगी भवेत् । नत्वपत्यानां वर्णसङ्करः । नच नियोगतो वर्णान्तरैरेव सह प्रमादः । सवर्णेन चोत्पादितस्य नैव वर्णान्तरत्वापत्तिः । सङ्करजातानामपि च पुनरुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वान्यतरवर्णापत्तिः स्मर्यते । तत्र त्वेतावन्मात्रमागमिकं प्रत्येतव्यम् । न ह्ययं पुरुषेयत्तानियमो लौकिकप्रमाणगम्यः । तस्मात्सत्यपि सारूप्ये यथा केनचिन्निमित्तेन स्त्रीपुंस्कोकिलादिज्ञानं तथैव दर्शनस्मरणपारंपर्यानुगृहीतप्रत्यक्षगम्यानि ब्राह्मणत्वादीनि इति भवत्यज्ञानवचनस्य प्रत्यक्षविरोधः । येषामप्याचार-निमित्ता ब्राह्मणत्वादयस्तेषामपि दृष्टविरोधस्तावदस्त्येव । नत्वाचारनिमित्तवर्णविभागे प्रमाणं किञ्चित् । सिद्धानां हि ब्राह्मणादीनामाचारा विधीयन्ते तत्रेतरेतराश्रयता भवेत् । ब्राह्मणादीनामाचारास्तद्वशेन ब्राह्मणादय इति स एव शुभाचारकाले ब्राह्मणः, पुनरशुभाचारकाले शूद्र इत्यनवस्थितत्वम् । तथैकेनैव प्रयत्नेन परपीडानुग्रहादि कुर्वतां युगपत्-ब्राह्मणत्वाब्राह्मणत्वविरोधः । एताभिरुपपत्तिभिस्त्विदं प्रतिपाद्यते, न तपआदीना समुदायो ब्राह्मण्यम्, न तज्जनितसंस्कारः, न तदभिव्यङ्ग्या जातिः । किन्तर्हि, मातापितृजातिज्ञानाभिव्यङ्ग्या—

प्रत्यक्षसमधिगम्या। तस्मात् पूर्वेणैव न्यायेन वर्णविभागे व्यवस्थिते "मासेन शूद्रो भवति" इत्येवमादीनि कर्मनिन्दावचनान्यथावा वर्णत्रयकर्महानिप्रतिपादनार्थानीति वक्तव्यम् इति। (मीमांसातन्त्रवार्तिक १ अ० पा० २)—

जातेरस्तित्वेतिहासः

किञ्च महाभारतेपि जातेरस्तित्वं साधयितुं भीष्मेण धर्मराजस्य पुरतः य इतिहासः उपस्थापितस्स मननार्ह इति तत्संवादः उद्ध्रियते। तद्यथा—

**युधिष्ठिर उवाच—** क्षत्रियो यदि वा वैश्यः शूद्रो वा राजसत्तमः।
ब्राह्मण्यं प्राप्नुयादेव तन्मे व्याख्यातुमर्हति॥
ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैर्नराधिप।
तपसा वा सुमहता कर्मणा वा श्रुतेन वा॥
ब्राह्मण्यं अर्थवदिच्छेत् कथं शक्यं पितामह।

**भीष्म उवाच—** ब्राह्मण्यमतिदुष्प्रापं वर्णैः क्षत्रादिभिस्त्रिभिः॥
परं हि सर्ववर्णानां स्थानमेतद्युधिष्ठिर।
बह्वीस्तु संसरन् योनीः लभमानः पुनः पुनः॥
पर्याये तात कस्मिंश्चित् ब्राह्मणो नाम जायते।
अत्राप्युदाहरन्तीममितिहासं पुरातनम्॥
मतङ्गस्य च संवादं गर्दभ्याश्च युधिष्ठिर।
द्विजातेः कस्यचित्तात तुल्यवर्णः सुतो भवत्॥
मतङ्गोनाम नाम्नासीत् सर्वैः प्रमुदितो गुणैः।
स यज्ञकारः कौन्तेय पित्रोत्सृष्टः परन्तप॥
प्रायाद्दुर्दमयुक्तेन रथेनाप्याशुगामिना।
स बालं गर्दभं राजन् वहन्तं मातुरन्तिके॥
निरविध्यत्प्रतोदेन नासिकायां पुनः पुनः।
तं दृष्ट्वा नासि निर्भिन्नं गर्दभी पुत्रगर्द्धिनी॥
उवाच मा शुचः पुत्र चण्डालस्त्वाभिविध्यति।
ब्राह्मणो दारुणो नास्ति मैत्रा ब्राह्मण उच्यते॥
आचार्यः सर्वभूतानां शास्ता किं प्रहरिष्यति।
अयन्तु पापप्रकृतिर्बाले न कुरुते दयाम्॥
स्वयोनिं मानयत्येष भावो भाव नियच्छति।
एतच्छ्रुत्वा मतङ्गस्तु दारुणं रासभोवचः॥
अवतीर्य रथात्तूर्णं रासभीं प्रत्यभाषत।
ब्रूहि रासभि कल्याणि माता मे येन दूषिता॥
केन मा वेत्सि चण्डालं ब्राह्मण्यङ्केन मेऽनशत्।

**गर्दभ्युवाच -** ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन हि।
जातस्त्वमसि चण्डालो ब्राह्मण्यन्तेन तेऽनशत्॥—

एवमुक्तो मतङ्गस्तु प्रतियायाद्गृहं पुनः ।
तमागतमभिप्रेत्य पिता वाक्यमथाब्रवीत् ॥
कस्मात्प्रतिनिवृतोसि किञ्चिन्न कुशलं तव ।

मतङ्ग उवाच— अन्ययोनिरयोनिर्वा कथं स कुशली भवेत् ॥
कुशलन्तु कुतस्तस्य यस्येयं जननी पितः ।
ब्राह्मण्यां वृषलाज्जातं पितर्वेदयते हि माम् ॥
अमानुषी गर्दभी यं तस्मात्तप्स्ये तपो महत् ।
एवमुक्त्वा स पितंर व्रतस्थः कृतनिश्चयः ॥
ततो गत्वा महारण्यमतपत् सुमहत्तपः ।
ततः स तापयामास विबुधांस्तपसान्वितः ॥
तं तथा तपसा युक्तमुवाच हरिवाहनः ।
मतङ्ग तप्यसे किन्त्वं भोगानुत्सृज्य मानुषान् ॥
वरन्ददामि ते हन्त । वृणीष्व त्वं यदिच्छसि ।

मतङ्ग उवाच— ब्राह्मण्यं कामयानोऽहं इदमारब्धवांस्तपः ॥
गच्छेयं तदवाप्येह वर एष वृतो मया ।

भीष्म उवाच— एतच्छ्रुत्वा तु वचनं तमुवाच पुरन्दरः ॥
मतङ्ग दुर्लभमिदं विप्रत्वं प्रार्थ्यते त्वया ।
ब्राह्मण्यं प्रार्थयानस्त्वं अप्राप्यं अकृतात्मभिः ॥
विनशिष्यसि दुर्बुद्धे तदुपारम मा चिरम् ।
श्रेष्ठं यत्सर्वभूतेषु तपो यदतिवर्तते ॥
तदग्र्यं प्रार्थयानस्त्वमचिराद्विनशिष्यसि ।
देवतासुरमर्त्येषु यत्पवित्रं परं स्मृतम् ॥
चाण्डालयोनौ जातेन न तत्प्राप्यं कथञ्चन ।
एवमुक्तो मतङ्गस्तु संशितात्मा यतव्रतः ॥
अतिष्ठदेकपादेन वर्षाणां शतमच्युतः ।
तमुवाच ततः शक्रः पुनरेव महायशाः ॥
ब्राह्मण्यं दुर्लभं तात प्रार्थयानो न लप्स्यसे ।
मा कृथाः साहसं तात नैष धर्मपथस्तव ॥
विमार्गतो मार्गमाणः सर्वथा न भविष्यसि ।
नहि शक्यं त्वया प्राप्तुं ब्राह्मण्यं इह दुर्मते ॥
मतङ्गः परमं स्थानं वार्यमाणोऽसकृन्मया ।
चिकीर्षस्येव तपसा सर्वथा न भविष्यसि ॥
तिर्यग्योनिगतः सर्वो मानुष्यं यदि गच्छति ।
स जायते पुल्कसो वा चण्डालो वाप्यसंशयम् ॥--

पुल्कसः पापयोनिर्वा यः कश्चिदिह काङ्क्षते ।
स तस्यामेव सुचिरं मतङ्ग परिवर्तते ॥
ततो दशशते काले लभेत शूद्रतामपि ।
शूद्रयोनावपि ततो बहुशः परिवर्तते ॥
ततस्त्रिंशद्‌गुणे काले लभते वैश्यतामपि ।
वैश्यतायामपि चिरं कालं तत्रैव वर्तते ॥
ततः षष्टिगुणे काले लभते ब्रह्मबन्धुताम् ।
ब्रह्मबन्धुश्चिरं कालं ततस्तु परिवर्तते ॥
ततस्तु द्विशते काले लभते काण्डपृष्ठताम् ।
काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्तते ॥
ततस्तु त्रिशते काले लभते जपतामपि ।
तं च प्राप्य चिरं कालं तत्रैव परिवर्तते ॥
ततश्चतुःशते काले श्रोत्रियो नाम जायते ।
श्रोत्रियत्वे चिरं कालं तत्रैव परिवर्तते ॥
मतङ्ग संप्रधार्यैवं यदहं त्वामूचचुदम् ।
वृणीष्व काममन्यं वै ब्राह्मण्यं हि सुदुर्लभम् ॥
एवमुक्तो मतङ्गस्तु संशितात्मा धृतव्रतः ।
सहस्रमेकपादेन ततो ध्याने व्यतिष्ठत ॥
तं सहस्रावरे काले शक्रो द्रष्टुमथागमत् ।
तदेव च पुनर्वाक्यं उवाच वत्मं वृत्रहा ॥

मतङ्ग उवाच— इदं वर्षसहस्रत्वे ब्रह्मचारी समाहितः ।
अतिष्ठमेकपादेन ब्राह्मण्यं नाप्नुयां कथम् ॥

शक्र उवाच— चाण्डोलयोनौ जातेन नावाप्यं वै कथञ्चन ।
अन्यं कामं वृणीष्व त्वं मा वृथा तेऽस्त्वयं श्रमः ॥
एवमुक्तो मतङ्गस्तु भृशं शोकपरायणः ।
अध्यतिष्ठद्‌गयां गत्वा सोङ्गुष्ठेन शतं समाः ॥
तं तपन्तमभिद्रुत्य पाणिं जग्राह वासवः ।

शक्र उवाच— मतङ्ग ब्राह्मणत्वं ते विरुद्धमिह दृश्यते ॥
ब्राह्मण्यं दुर्लभतरं संवृतं परिपन्थिभिः ।
बह्वीस्तु संसरन् योनोर्जायमानः पुनः पुनः ॥
पर्याये तात कस्मिंश्चिद्‌ब्राह्मण्यमिह विन्दति ।
तदुत्सृज्येह दुष्प्रापं ब्राह्मण्यमकृतात्मभिः ॥
अन्यं वरं वृणीष्व त्वं दुर्लभोऽयं हि ते वरः ।

मतङ्ग उवाच— किं मां तुदसि दुःखार्तं मृतं मारयसेऽत्र माम् ॥—

## जयमङ्गलाक्रोडपत्रम्

(पृ० १३६) टिप्पण्यामुद्धृते इतिहासे जातिमर्यादाया अस्तित्वं सिद्धत्वेनोक्तं-जातिभेदस्वीकारे वैज्ञानिक्यो याः शङ्का उद्भवितुमर्हास्तासां समाधानं प्रागुक्तं (प्र० खं० १।२०८) विद्यते ततएव चिन्तनीयम् ।

## निबन्धान्तरे जातिचिन्तनम्

किञ्च जातेरस्तित्वं धर्ममर्यादायां पूर्वत एव धर्मज्ञैश्चिन्तितमासीत् इति निबन्धान्तरादपि विज्ञायते । तद्व्यक्तं टिप्पण्याम्[1] ।

---

### जातिचिन्तनम्

भीष्म उवाच— तन्तु शोचामि यो लब्ध्वा ब्राह्मण्यं न बुभूषते ।
ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैर्दुरासदम् ।
सुदुर्लभं तदावाप्य नानुतिष्ठन्ति मानवाः ।

इति अनु० २१७ अध्याये-१

१ वर्ज्याश्च द्विविधाः दोषवन्तः सजातीयाः, गुणवन्तोऽपि विजातीयाः सुतरां दोषवन्तः । तत्र सजातीयेषु अनिषिद्धलाभेऽभिशस्तत्वादिबलवद्दोषरहितो दुष्टोपि ग्राह्यः । विजातीयस्तु गुणवानपि तत्वादेव त्याज्यः किमुत दोषवान् । तथाच श्राद्धदीपकलिकायां भविष्यत्पुराणे आदित्यः—

तस्मात्संपूजयेदेनं गुणांस्तस्याविचिन्तयन् ।
केवलां चिन्तयेज्जातिं गुणान्नो विनतात्मज ।। इति ।

कन्यादानादिसंबन्धयोग्यां जातिं "यथा कन्या तथा हविरि"त्युक्तेः । तेन तेपि सर्वथा हेया एवेति दिक् ।। इति । (श्राद्ध प्र० वालंभट्टी श्लोक० २२४ पृ० ४६७) एवमेव विवाहेपि दोषाद्रक्षणाय जातिमर्यादाया विचारणा अपेक्ष्येति निरूप्यते निबन्धकृद्भिः ।

तद्यथा— शिखां पुण्ड्रं च सूत्रं च समयाचारमेव च ।
पूर्वैराचरितं कुर्याद् अन्यथा पतितो भवेत् ।।
सामयाचारिका धर्माः जातिभेदकुलोद्भवाः ।
ग्रामाचाराः परिग्राह्याः येच विध्यविरोधिनः ।। देवलः ।।
कन्यादानं पितुः श्राद्धं सोमपानं तथैव च ।
स्वबन्धुष्वेव कुर्वीत नान्यथा पतितो भवेत् ।।
यस्तु देशानुसारेण कुलमार्गेण चोद्वहेत् ।
नित्यं स व्यवहार्यः स्यात् वेदाच्चैतत् प्रदर्श्यते ।। (निर्णयसिन्धौ)-

तथा—गुर्जरत्वाद्यवान्तरजातिः दत्तकादाविव कन्यादानेप्यपेक्षिता ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः । (गीता)
ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवेत् ।
तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित ।—

## जयमङ्गलाक्रोडपत्रम्

### जातिशुद्धिफलम्

किञ्च जातिशुद्धेः फलं वक्ष्यति—

आहारेष्वथ यौनौ च बीजे कर्मणि चापि यः

शुचिः कृच्छ्रगतस्यापि न पापे रमतेऽस्य धीः । इति । (ज०मं० राजपुत्र) संबद्ध्यते इति । (पृ० १३०) वृद्धैः स्वजनैः । वेदोक्तरीत्या पुण्यपापाभ्यां इति शेषः । आप्या इति । आप्याः इत्येवं छेदः तेन बहुवचनोपपत्तिः । परीक्षेतेति । बहुभिः इति शेषः । तदुक्तं टिप्पण्याम् "परि समन्तात् बहुभ्य ईक्षेते"ति । एतेन जातीयबहुमतविवेचनं अत्र ध्वनितम् । एवमग्रेपि बोध्यम् । आगमयेदिति । (पृ० १३०) साक्षिदोषाभावे भ्रमादिदोषचतुष्टयाद्यन्यतमाभावेन इति योज्यम् । एवमग्रेपि ।

शास्त्रमेवेति । (पृ० १३०) शास्त्रं चक्षुर्विद्यते इति तु विग्रहो न साधुः "न कर्मधारयान्मत्वर्थीयः बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर" इत्यभियुक्तोक्तेः ।

### शास्त्रचक्षुष्मत्तापदार्थः प्रज्ञा

ननु शास्त्रचक्षुष्मत्ता पदार्थः प्रज्ञा कथं भवति इति चेदुच्यते । प्रतिभा तस्यैव भवति यस्योद्बोधकेन स्वल्पेनापि जन्मान्तरभवः संस्कारः उद्बुद्धः विप्रकृष्टानप्यर्थान् प्रकाशयति, "नवनवोन्मेषशालिनी प्रतिभेत्यत्र तथोपवर्णितत्वात् । संस्कारश्च पित्तात्मक मूलाधारस्थवन्हिज्वालानाद इति स्वीक्रियते तान्त्रिकैः[1]—मूलाधारेत्यादिना ।

---

(बोधायनधर्मरहस्ये) अध्वर्यूद्गातृहोतॄणां सन्ति सूत्राण्यनेकशः ।
यत्रास्ते योनिसम्बन्धः सूत्रज्ञातिकुलोचितः ॥
विवाहे सोमश्राद्धे च अग्न्याधाने विशेषतः ।
एतैः स्वजातिभिः कुर्याद् अन्यथा पतितो भवेत् ॥
कन्यादाने तथा श्राद्धे कुलीनो ब्राह्मणः सदा ।
एव ज्ञात्वा प्रयत्नेन श्राद्धे यज्ञे च पार्थिव ।
कन्यादाने विशेषेण योज्याश्चात्र कुलोद्भवाः ।

ब्राह्मणमहासभा विशिष्टाङ्क ४५ पृ० ५१।५२५ पृ०

(आश्व० सू० १-५-४) कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति । यथोक्तं पुरस्तात् । ये मातृतः पितृतश्च दश पुरुषं समनुष्ठितविद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो वा ब्राह्मण्यं निनयेयुः पितृतश्चैक इति । अग्रे च वचनं वरगुणेभ्यः कुलमेव प्रधानं स्यादित्येवमर्थम् इति ।

टी० कुलशब्देनोभौ वंशौ महापातकादिरहिताविति सिद्धौ । तथाऽपस्मारादिदोषरहिता-विति कुलमग्रे परीक्षेत । कथं । ये मातृतः पितृतः चेति यथोक्तं भवन्ति चैवं वक्तारः ।

१ मूलाधारस्थवन्ह्यात्मतेजोमध्ये व्यवस्थिता ।
जीवशक्तिः कुण्डलिनो प्राणाकाराऽथ तैजसी ॥
मायाऽऽशीर्षान्निदन्तीं तामुच्चरत्यनिशं खगः ।
सुषुम्नामध्यदेशे सा यदा कर्णद्वयस्य तु ॥
पिधाय न शृणोत्येनं ध्वनिं तस्य तदा मृतिः ॥

## जयमङ्गलाक्रोडपत्रम्

मञ्जूषायामपि संस्काररस्य नादात्मत्वं चिदचिन्मिश्ररूपेणास्तीतिनिर्णीतं विद्यते। तथा चेदृशो नादः संस्कारश्च येनोपलब्धः तत्र नादरूपत्वाच् छब्दोपि समुत्पद्यत एव। यदा नादः तदा संस्कारोद्बोधाज् ज्ञानमपि अस्त्येव, "न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इत्युक्तत्वात्। अतएव स्वशब्देन संबोध्यस्य पुरतः यावत् अन्तर्गतां मतिं वक्ता न प्रकाशयेत् तावत् तस्य ज्ञानं समुदितं इति न मन्यते। तस्मात् प्रज्ञैव शास्त्रं इति स्थितम्। यदि प्रज्ञा प्रमाणत्रयप्रमिता तर्हि तत्संबन्धो नादेपि शब्दाख्यः प्रमाणत्रयप्रमितत्वान् निर्दुष्ट इति तच्छास्त्रमबाधितमेव भवति। एतदर्थं शुद्धज्वालात्मकस्य पित्तस्य शुद्धतायै सदाचारादिः शुद्धिश्चात्र काम्यते। अतः शास्त्रं प्रज्ञा इत्युक्तं उपपन्नमेव। अतः प्रज्ञा इति वाक्यं न पृथग् बोध्यमस्य चक्षुष्मत्तेतिव्याख्यानात्। तथा च विशुद्धं दर्शनं प्रज्ञेति भावः। किञ्च तत्कालेय उपस्थितः विकल्पः सन्देहः तन्निरासः प्रज्ञया क्रियते। इति संशयच्छेदनान्मतिभावः निर्दुष्टशास्त्राध्ययनप्रसूतः प्राग्भवीयः संस्कारः प्रतिभा इति भावः। प्रज्ञां प्रज्ञाविशेषम्। प्रज्ञा गुणस्यपृथक्तया पुनर्ग्रहणं निर्दुष्टपूर्वप्रयोगपरित्यागपूर्वकप्रयोगान्तरप्रदर्शनार्थम्। तथाचात्रापच्छेदन्यायः स्मर्तव्यः। यथा सन्निपातादिषु पूर्वन्निमित्तं बाधित्वा निमित्तान्तरमुत्पाद्यैव अन्यो दोषः कुपितो भवति तदा पूर्वन्निर्णीतं चिकित्साप्रयोगं बाधित्वा चिकित्सान्तरं अनुष्ठीयते तथैव प्रतिक्षणं निमित्तान्तरोत्पादान्नीतौ प्रयोगः परिवर्तनीयो भवति एतदर्थं नीतौ प्रतिभाविशेषोऽपेक्ष्यते इति भावः। कथेति। (पृ० १३१) विचार्यं विषयमधिकृत्य प्रवृत्तेषु इति शेषः। तदुक्तं शास्त्रार्थविचारपद्धतौ—"विचार्यविषयो नानावक्तृको वाक्यविस्तरः कथा तस्याः षड्ङ्गानि प्राहुः" इति। वाग्मित्वं स्पष्टललितपदाभिधेयता। अत्रैव सत्यमन्तर्भूतमिति प्रागुक्तं (प्र० खं० २ पृ० १२०) स्मर्तव्यम्। प्रागल्भ्यं वचनानुष्ठानयोः परिषद्यसाध्वसत्वम्। तदुक्तं भावप्रकाशने द्रष्टव्यम्[1]।

प्रतिपत्तीति। (पृ० १३१) झटित्युपस्थितिः उद्बुद्धसंस्कारप्रयुक्ता। तदुक्तं मुक्तावलीटीकायाम्—"नवनवोन्मेषशालिनी बुद्धिः प्रतिभा"। इति।
विवृतञ्चैतत् गोकुलनाथोपाध्यायैरपि तत्रैव द्रष्टव्यम्[2]।

उत्साहेति। (पृ० १३१) शौर्यमुत्साहान्तर्गतम् तच्च बलवत्तरं दृष्ट्वा तं प्रति निर्भीकतया प्रवर्तनम्। तदुक्तं गीताभाष्यव्याख्याने—शौर्यमित्यादिना ग्रन्थेन[3]। एवंचात्र शौर्यस्य प्राधान्यं उत्साहान्तर्गतेषु दाक्ष्यादिगुणचतुष्टयेषु स्मर्तव्यम्।

---

१ "निस्साध्वसत्वं प्रागल्भ्यं प्रयोगेषु च सर्वतः"॥ १ अ० इति।

२ मनसि सुसमाधिनि विस्फुरणमनेकधाभिधेयस्य
अक्लिष्टानि च पदानि विभान्ति यस्यामसौ शक्तिः। (का० प्र० वि० १)

३ प्र० खं० २ पृ० सं० १०१।

## जयमङ्गलाक्रोडपत्रम्

### गुणपरीक्षणे नीतिसारविरोधपरिहारः

ननु नीतिसारकृता आपदि अपरेपि स्थैर्यधृत्यादिगुणाः परीक्षणीया इत्युक्तम्[1]।

सत्यम् कौटिल्येन इमे गुणाः यद्यपि कण्ठतो नोक्ताः तथापि घृतिः सत्वे, अनुरागः संप्रियत्वे, स्थैर्यं दृढभक्तावन्तर्भवति इति प्रपञ्चितं पुरस्तात्। (प्र०खं० २ पृ० १२६) अतः तेषां परीक्षणं कौटिल्येनोक्तमेव "संव्यवहाराच्छौचमित्यारभ्य अवैरित्वं चे"त्यन्त-ग्रन्थेन। तस्मात् कौटिल्येन परीक्षणविचारे धृतिस्थैर्यादि गुणाः त्यक्ता इति न। नीति-सारकृतापि एवंविधं परीक्षणं कौटिल्योक्तमनुमन्यत एव। तथासति सूत्रवार्तिकयोरय-माशयः यत् उत्साहप्रभावक्लेशसहिष्णुताः आपद्येव परीक्षणीयाः। घृत्यनुरागस्थैर्याणि तु संव्यवहारादिभिरपि इति। व्यवहृतिरिति। (पृ० १३१) ऋणादानादिः[2]।

### सं-पदप्रयोजनं

ननु व्यवहारत इत्यनुक्त्वा संव्यवहारत इति कुत इति चेन्न। व्यवहारे एकः पक्षो निगृहीतो भवति तत्राप्ययं न कदापि निगृहीत इति बोधनार्थम्। एवञ्चायं तथा व्यवहरेल्लोके, यथा कुत्रापि निगृहीतो न भवेत् इति भावः। आपदि परीक्षितानां गुणानां विशेषमाह नित्या इति। तथाचापद्धेतुकानुमितिविधेयता नित्यगुणे वर्तते। अतएव तस्य नाया स इति मत्वा पूर्ववाक्ये आयस्य इतिच्छेदः कृतः बोध्यः।

### शीलसंबन्धो नीतौ

शीलेति। (पृ० १३१) ननु शीलादिगुणवद्भिः सह संवसतां राजनीतौ कः संबन्धः इति चेत्, विश्वस्तभावेन सतां सान्निध्येन वासे निबाधिता। यतः ग्रामे नगरे पत्तने खेटे खर्वटे वा पार्श्वभागे दुष्टाः एव संवसेयुः तर्हि मात्स्यन्यायप्रदर्शनात् अपहरणाद्वाऽन्तरा किम-वशिष्येत। अतः देशे संविविक्षवः पार्श्वभागे महात्मानं चिन्तयित्वैव वसन्ति आपदि तेषूपकरणशीलस्य दर्शनात्। तदुक्तं कामसूत्रे—'नगरे पत्तने खर्वटे वा महत्ति सज्जनाश्रये स्थानम्"। इति

संप्रियत्वमिति। प्राग् अनुपकुर्वन्नित्युक्तं वर्तते अतः इदं संवासिमतनिर्वाचनेन न परिज्ञातव्यम्, प्रत्यक्षेणैव सुभगचरिते सुखसाधनत्वस्य ज्ञातव्यत्वात्। अवैरित्वमिति। (पृ० १३१) अत्रायं भावः। क्वचित् प्रकृतिसुखकरत्वं मन्त्रिषु ज्ञातव्यं क्वचित्तु दुःखापकारकत्वाभावः। नानेन पौनरुक्त्यम्।

### अमात्यपदव्यवहारः

मूले अमात्येति। (पृ० १०७) तक्षणादिसंस्कारानन्तरं दारु यूपपदवाच्यं भवति। तथापि "यूपं तक्षती"त्यत्र वाक्ये तक्षणात् पूर्वं तद्दारुणि व्रियमाणो यूपपदव्यवहारः भावियूपत्व-मादायोपपद्यते। तथा प्रकृतेपि अमात्यपदव्यवहारविषये बोध्यम्। अमात्यसंपादित्यत्रा मात्यपदार्थस्य सपत् इति विग्रहो बोध्यः। तेन कर्मवरणात् प्राग् अमात्योऽप्रसिद्ध इति शङ्का परास्ता।

---

१ उत्साहं च प्रभावं च तथा क्लेश सहिष्णुतां।
धृतिं चैवानुरागं च स्थैर्यं चापदि लक्षयेत्॥ इति।

२ तदुक्तं व्यवहार-प्रकाशे—
ऋणादानादिलौकिककार्यविषया कथैव व्यवहारः इति।

[ राजव्यवहारेष्वावश्यकानि साधनानि ]

[1]प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः । स्वयंदृष्टं प्रत्यक्षम्, परोपदिष्टं परोक्षम् । कर्मसु कृतेनाकृतावेक्षणमनुमेयम् ॥

मन्त्रिस्थापनावश्यकता

[2]यौगपद्यात्तु कर्मणां अनेकत्वादनेकस्थत्वाच्च देशकालात्ययो मा भूदिति परोक्षममात्यैः कारयेदित्यमात्यकर्म ॥

---

## श्रीमूला

कस्मात्, पुनर्जानपदत्वादिगुणज्ञाने प्रत्यक्षम् आप्तवाक्यमनुमानमिति त्रीणि प्रमाणानि आश्रयणीयानि, न पुनरेकमेवाश्रीयेतेत्याशङ्कायामाह—प्रत्यक्षपरोक्षानुमेयेत्यादि । राजवृत्तिः दण्डनीतिप्रतिपाद्यो राजव्यवहारः । परोपदिष्टम् आप्तवाक्यावगतम् । कृतेन अकृतावेक्षणमनुमेयम् अनुष्ठितेन कर्मांशेन करिष्यमाणांशपरिणामोत्प्रेक्षणमनुमानायत्तमित्यर्थः । एवञ्च यतो राजवृत्तिस्त्रिप्रमाणावसेया ततस्त्रिप्रमाणप्रदर्शनमित्यभिप्रायः । किमर्थं महता प्रयासेन परीक्ष्यैवामात्याः कर्तव्या इति चेत्, तत्राह—यौगपद्यादित्यादि । अयं भावः—कर्माणि खलु नाम राजकीयानि बहूनि बहुप्रकाराणि बहुप्रदेशस्थानि सद्यः करणीयानि च भवन्ति । तानि सर्वाणि साक्षादेव राज्ञा स्वयमनुष्ठातुं न शक्यन्त इति यथादेशकालं तेषामनुष्ठानसिद्ध्यर्थममात्या एव तत्र राज्ञा नियोक्तव्याः । एषितव्याश्च ते गुणवन्त एव कर्मानुष्ठानसम्यक्त्वायेत्यावश्यकं तेषां महता प्रयासेन गुणपरीक्षणमिति । इत्यमात्यकर्मेति, एष मन्त्र्युत्पत्तिप्रकार उक्त इत्यर्थः ।

## वैदिकसिद्धान्तसंरक्षिणी

उपसंहरति इतीति । अमात्येति । यूपं तक्षति इत्यत्र तक्षणात्पूर्वं यूपव्यवहारस्येव वरणात्पूर्वं गुणसंपत्तिमति अमात्यपदव्यवहारः । शेषं क्रोडपत्रे द्रष्टव्यम् ।

## जयमङ्गला

ननु जनपदशिल्पशीलादीन् आगमतः, प्रज्ञोत्साहशौचादीन् अनुमानेन च, वाग्मि[3]त्वसंप्रियतादीन् प्रत्यक्षतः परीक्षेतेति कथं प्रमाणत्रयोपदेश इति चेत् । यस्मात् प्रत्यक्षपरोक्षानुमेया राजवृत्तिरिति । सा राजवृत्तिः प्रत्यक्षानुमानादि नातिक्रामति । मन्त्रिपुरोहितसखः अमात्यान् शोधयेदित्यादि प्रत्यक्षा, तपस्विनां तु कार्याणि धर्मस्थीयरिति परोक्षा, यश्चैषां यथोद्दिष्टमर्थं सविशेषं वा कुर्यात् सोऽन्यदापीत्यनुमेया ।

---

नो० टि० १ प्रत्यक्षेति । परीक्षेतेति सर्वत्र सम्बन्धः । २ अयौगपद्यादिति पाठान्तरम् । अशुद्धम्—३ वादित्व ।

## जयमङ्गला

तत्रेति प्रत्यक्षादिषु। स्वयं दृष्टम् आत्मीयैरक्षैर्विषयीकृतं प्रत्यक्षम्। ननु च विषयाकारप्राधान्येन तद्वस्तु। सत्यम्, एवं विज्ञानपरिच्छेद्यत्वाद् वस्त्वपि प्रत्यक्षम्। सर्वत्र च वस्तुप्रधानो निर्देशः प्रत्यक्षाद्याभासनिरासार्थः। परोपदिष्टमिति। परैरविसंवादकैरुपदिष्टं वचनेन संज्ञया वा। परोक्षं परप्रत्यक्षम् आप्तोपदेश इत्यर्थः। वक्ष्यति च—"त्रयाणामेकवाक्यत्वे सम्प्रत्ययः" (अधि० १ अध्या० १२) इति। कर्मस्विति। दुर्गादिकेषु कृतेषु कर्तव्येषु वा कृतेन उपलब्धेन अकृतस्यावेक्षणमालोचनमनुमेयं करिष्यत्ययमिदं कर्म शक्तिमत्वाद् यथेदं कृतवानिति[1]। यद्यवमकृतावेक्षणमनुमानं किमुच्यतेऽनुमेयमिति। नैष दोषः। वाक्यैकदेशव्याहारात्। अकृतावेक्षणं यत्र तदनुमेयमिति वस्तूपादाने प्रयोजनमव्यभिचारिणि नियमार्थम्। यौगपद्यात्तु कर्मणामिति। अनेकं कर्म, अनेकस्थमनेकदेशस्थं न स्वयं युगपदनुष्ठातुं शक्यते। यत्त्वेकदेशस्थम् ऊर्णाविमर्ककर्मेत्यादि, तद्युगपच्छक्येत[2] क्रमेण चानेक देशस्थमपि यथा-पूर्वमहर्भागं हस्त्यादिषु विनीयेत। पश्चिममितिहासश्रवण इति। तत्र युगपदनेकदेशस्थं च हेमन्ते स्वदेशे दुर्गकर्म, परदेशे यात्रा स्वबलप्रायस्येति। इत्येवंविधस्य स्वयङ्करणे देशकालात्ययो मा भूदिति परोक्षममात्यैरिति। प्रकरणान्मन्त्रिभिः कर्म कारयेत्। इत्यमात्यकर्मेति। एवंजातीयकममात्यकर्म स्वयमनुष्ठानायोग्यत्वात्॥

## जयमङ्गलाक्रोडपत्रम्

### प्रमाणत्रयनिर्देशः वस्तुप्राधान्ये

ननु राजवृत्तिरित्यनेन वस्तुप्राधान्यं प्रतिज्ञातं कथमत्र प्रमाणत्रयनिर्देशः। इतिचेत्, अधीनत्वाद्वस्तुन इति प्रमाणनिर्देशः। यदि प्रमाणत्रयं निर्देष्टव्यं तर्हि वस्तुप्राधान्यं "प्रत्यक्षपरोक्षानुमेया राजवृत्तिरि"तिना कुत उक्तम् इति चेन्न। वस्तुनि आभासनिरासस्य प्रदर्शने तात्पर्यात्। तथाच यत्र प्रमाणत्रयप्रमितत्वं तत्र वस्तुनि निर्दुष्टत्वमस्त्येवेति कौटिल्यस्याशयः व्यक्तो भवति। वक्ष्यति च तदेव "प्रत्यक्षाभासनिरासार्थः" इत्यादिना।

**यस्मादिति**। (पृ० १४१) राजवृत्तिः प्रत्यक्षपरोक्षानुमेया यतः इत्यर्थः। तत्वं च नीतिलक्षणे अर्थार्जनादिचतुर्विधवृत्तिज्ञानभाव्यकभावनाकरणत्वात्मके निरूपितम्। केचित्तु—राजवृत्तिरेकैकप्रमाणपरतन्त्रापि भवतीति वदन्ति। वस्तुतस्तु नीतिसारसिद्धान्तानुसारेण प्रत्येकं राजवृत्तिः प्रमाणत्रयपरतन्त्रैव[2]। तदुक्तम्

---

अशुद्धम्—१ कृतवानिमि। २ शक्येत। क्रमेण चे।

२ आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती।
विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः। इति॥ (नी० २-२)

शाश्वती नित्यस्थितिका, तस्याः प्रवर्तमानाया विघ्नेनानुच्छेदात्। इतरास्त्वाशाश्वत्य इत्यर्थोक्तम्। इति टीकायाम्।

## जयमङ्गलाक्रोडपत्रम्

### प्रमाणत्रये समस्तमतसन्तोषः

यत्र प्रमाणत्रयप्रमितत्वं भवति तत् केनापि मतेनोच्छेद्यं न भवति । स्वस्वीकृत प्रमाणप्रमितेऽर्थे तेषां तेषां सन्तोषात् । नचेदं धर्मशास्त्रस्यासम्मतमितिवाच्यम् । मनुना तथोक्तत्वात् । यदाहुः—

प्रत्यक्षं चानुमानं च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ।। इति[१] । (मनु० १२।१०५)

### प्रमाणत्रयक्रमविपर्यासे तात्पर्यम्

प्रत्यक्षेति । ननु आगमतः इति ग्रन्थेन प्रत्यक्षादिप्रमाणत्रितयस्य क्रमं विहाय मूले जयमङ्गलायां वा तस्य व्युत्क्रमेणाभिधाने किं—

---

### प्रमाणत्रयविदितं कार्यम्

१ अत्र मेधातिथिः—सुहृद्भूत्वोपदिशति लौकिकमर्थं । धर्मो वेदार्थः । तस्य शुद्धिर्विवरणपूर्वकाशयनिराकरणेन निश्चितसिद्धान्तव्यवस्थापनमुत एतत्प्रत्यक्षादि-प्रमाणनिश्चये सति भवति । सुविदिते हि प्रत्यक्षे ज्वालादिवैषम्येण प्रत्यभिज्ञायते । शब्द-नित्यत्वात्सिद्धिः । यस्य तु सम्यग् विवेकः स उभयोरविशेषेण प्रत्यक्षमध्यव-सायः स्यात् । ज्वालादिषु च चानुमानेनोपरि दृष्टशब्देपि तथा संभावयेत् । तथा-नित्यशब्दसमुदायात्मको वेदःस्यात् । यस्य तु विहितानि कुशलप्रमाणेषु प्रशब्दोऽतद्-गहृणनिबन्धनो नास्त्यभिज्ञानो मन्यमानो ज्वालाविदुषो भेदग्रहणनिबन्धनमिव सित-विशितं विशेषो न ज्वालाबाधेन शब्दे बाधं संभावयति । एवमनुमानमपि सुवि-वेचितं न भारतादिग्रन्थप्रमाणोपलक्षणत्वाच्च । तेन शौर्यादिशास्त्रान्तकर्मण्यता-सिद्धिः । अनुविवेचितं ह्यनुमानं स पक्षयोर्दर्शनादर्शनमात्रेणानुमानप्रवृत्तिं मन्वानो वेदेपि कर्तारं कल्पयेत् । यदा तु निपुणमतिर्भवति तत्तत्प्रयोजकस्य स्नात-व्यलक्षणया तस्य कर्तृत्वस्व करणस्याभावादपौरुषेयत्वमध्यवस्यति । शास्त्रं च विविधागमं । शास्त्रे विविधप्रतिषेधात् तस्य विविधोनेकप्रकारः आगमो यत्रा गम्यते स आगमः । बहुशाखत्वाद्वेदस्य । श्रुतिस्मृतिभेदेन च विविधत्वमुक्तम् । सचायमर्थः । स्वाध्यायविद्याक्षेपः शुद्धभावेनोपदिष्टः । स हि जिज्ञासा च निश्चयावसानेन च प्रत्यक्षादिषु सम्यङ्निधिः स्त्रोशूद्रोच्छिष्टमेवेत्यदत्तं भवितुमर्हति । नहि तच्छूद्रस्योच्छिष्टमिति शक्यं वक्तुम् । किं तेन तदुच्छिष्ट-मिति । एवमादौ सन्देहे तूच्छिष्टवचनं प्रमाणं कर्तव्यम् । यथा ये शूद्रादयो-विप्रांशास्तेषामयं धर्मसन्देहः शिष्टोपदिष्टमेव युक्तं कर्तुं । ततश्च न्यूनाधिकभावेन कृता कल्पना स एव तत्र धर्मः । तेषामपि तथोपदिशतां न दोषः । यत आह "सधर्मः स्यादशङ्कित" इति । अधर्मं ब्रूते दोषधर्मे तु (कापि चिकित्सा । तथा गोत्रप्रवरसन्देहे कथं च स्मृतिविच्छेदे ब्राह्मणवचनाद्गोत्रप्रवरसिद्धिः । तत्र च प्रवरसन्देहे सर्वेषां मानसे संशय इत्युक्तम् । गोत्रसंशये तर्हि भविष्यति । तत्र च गोत्रसंशयाभावे कुतः प्रवर-संशयः । प्रतिगोत्रप्रवराणां भेदेन पठितत्वात् । उपपद्यते एवमेतद्गोत्रनामधेयम् ।—

## जयमङ्गलाक्रोडपत्रम्

तात्पर्यम् । इति चेदुच्यते । राजवृत्तौ कार्यसञ्चालनार्थं अभिषिक्तो राजा चार्वाकमतमनुतिष्ठति इति सर्वसाधारणमतेन प्रत्यक्षस्य प्राथम्येन ग्रहणं । तथाविधनृपत्यभावे अपरेण आगमप्रमाणं प्रधानतयाऽनुसन्धेयं भवतीति तत आगमोपन्यासः, ततोनुमानस्यावसरः, इति मूले जयमङ्गलाकृता च प्रत्यक्षपरोक्षानुमानेति प्रमाणक्रमो गृहीतः ।

### प्रमितस्य प्रमाणान्तरेण पुनः प्रमितत्वम्

ननु एकस्य वस्तुन एकेन प्रमाणेन प्रमितत्वानन्तरं प्रमाणान्तरं कथं उपयुज्यते इति चेदुच्यते ।

केनापि पुरुषेण यः कोऽपि अर्थोनुष्ठेयः स सुखानुभवपुरस्सरं अनुष्ठीयते, तर्हि तत्राभिनिवेशो भवति। आनन्दाभिव्यक्तिश्च शब्दादिना श्रुते अर्थे तथा न भवति यथा अभिनयेन दृष्टे अर्थे । अतः सामाजिकैः पुरतः अभिनयं दृष्ट्वा नीतिः प्रत्यक्षतः अवगृहीता भवतु इत्येतदर्थं नीतौ प्रत्यक्षमाश्रीयते। यदा किल तद्द्वारा सुखसाधनतावासना उद्बुद्धा भवति सामाजिकेषु, तदा तद्वासितान्तःकरणः राजानमनुसरति प्रेम्णा । एवं रीत्या प्रत्यक्षतः प्रमितत्वे क्लृप्तेपि यावद् वक्ष्यमाणां शक्तिं नलभते तावद् रसनीयत्वं निर्बाधं न भवति, शक्त्यभावे रसास्वादविलोपप्रसक्तेः । अतएव यदाऽऽत्मनि शक्तिगुणो जागर्ति तदा स एव शृङ्गार इति व्यपदिष्टमुपपन्नं भवति । तद्व्यक्तं आत्मस्थितमिति ग्रन्थेन[1] ।

रसप्रतीतिः रसत्वेन भासमानापि बाधादनौचित्याच्च द्वेष एव फलवती भवति, सा न भवत्वतः आत्मशक्तिरसः नीयतयेत्युक्तम् ।

आत्मस्थितमिति पद्येन उक्ता शक्तिश्च ईशसमवेतज्ञानप्रभा क्रियाप्रभाऽऽनन्दप्रभामिश्रिता जीवनिष्ठा सती शक्तिरूपतां प्राप्नोतीति प्रथमाध्याये प्रपञ्चितं वर्तते । (प्र.खं.० १ पृ० ४१) सा च शब्दप्रमाणमुपेक्ष्य प्रत्यक्षप्रमाणमात्रे न संभवति अनास्थायाः संभवात् । यतः अस्माभिरर्जितं ज्ञानं ईशसमवेतज्ञानसमानाकारं अस्त्येवेति विवेक्तुं न शक्यते । तथासति शक्तिहानिप्रसङ्गात् । तअः परंपराप्राप्तापौरुषेयवेदप्रमाणप्रमितत्वमपि तत्र तत्रापेक्ष्यते । तथा सति ईशसमवेतज्ञानसमानाकारक ज्ञानविषयत्वस्य ईशसमवेतज्ञानावृत्तिविषयत्वशून्यत्वस्य वा जीवोपार्जितज्ञाने यत्र तत्र नेशसमवेताबाधित ज्ञानप्रभाप्राप्तिसन्देहलेशोपि । इति नीतिलक्षणे शब्दप्रमाणप्रमितत्वनिवेशः कृतः । प्रत्यक्षतया दृष्टे वस्तुनि व्याप्तिवासनाभावे अनुमित्यनुत्पादात् रसनीयत्वं न भवति । अतो नीतौ अनुमानस्यापि सन्निवेशः टीकाकृता कृतः ।

---

प्रवराश्च भिन्नाः नानागोत्राणि तत्र सत्यपि प्रवरनिश्चये योऽत्र सन्देह उत्पद्यते इति ।) १२ । १०५ इति ।

१ "आत्मस्थितं गुणविशेषमहंस्थितस्य
शृङ्गारमाहुरिह जीवितमात्मयोनेः ।
तस्यात्मशक्तिरसनीयतया रसत्वम् ।
रत्यादिभूमनि पुनर्वितथा रसोक्तिः" ॥ इति ।

## जयमङ्गलाक्रोडपत्रम्

### राजा रक्ष्यः

उक्तलक्षणलक्षिता नीतिर्येन केनापि अनुष्ठातुमर्हा नेति कुलीनः सत्वप्रकृती राजा रक्ष्य इति सिद्धान्तितम्।

तदुक्तं काटमहोदयेनापि "राजैव रक्ष्यो वयं प्रतिबिंबभूताः"। इति।

### परिषदोऽद्भुतरसविभावत्वम्

अद्भुतरसस्य प्रजासु सङ्क्रमणार्थं विभावत्वेन राज्ञः सभा विद्वद्भिरधिष्ठिता धर्मसदृशी एका मन्त्रिपरिषन्नाम्नी आवश्यकी तदर्थं च परिषदि सदस्यत्वेन वरणार्थं अधिकारितया गुणवत्वमेव प्राधान्येन क्लृप्तम्। अन्यथा रञ्जनक्षमं नीत्यनुष्ठानं सम्पन्नं न भवेत् अतः गुणपरीक्षणोपाया अत्राभिहिताः इत्येतच्छोभनम्। किञ्च परीक्षितगुणवतां सम्मेलनं कीदृशीं योग्यतां समादधातीति मनुना स्फुटीकृतम् —

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातः यो धर्मस्तन्निबोधत[1]। इति ॥२।१॥

---

१ **मेधातिथिः**—**अद्वेषरागिभिः**। इदं बाह्यधर्मानुष्ठाने द्वितीयं कारणम्। व्यामोहः पूर्वमुक्तः। अनेन लोभादय उच्यन्ते रागद्वेषग्रहणस्य प्रदर्शनार्थत्वात्। लोभेन मन्त्रतन्त्रादिषु प्रवर्तयन्ति। अथवा रागद्वेषयोर्लोभोऽन्तर्भूतः। नात्मनि ये भोगोपायास्तेषु रक्ता उपायान्तरेण जीवितुं असमर्था लिङ्गधारणादिना जीवन्ति। तदुक्तं "भस्मकपालादिधारणम्, नग्नता, कषाये च वाससी, बुद्धिपौरुषहीनानां जीविके"ति। द्वेषो विपरीतानुष्ठानकारणम्। द्वेषप्रधाना हि नातीव तत्वावधारणे समर्था भवन्त्यतो धर्ममेव धर्मत्वेनाध्यवस्यन्तीति। अथवोभावपि रागद्वेषौ तत्वावधारणे प्रतिबन्धकौ। सत्यामपि कस्याञ्चित् शास्त्रवेदनमात्रायां लब्धेपि विद्वद्व्यपदेशे रागद्वेषवत्तया विपरीतानुष्ठानं संभवति। जानाना अपि यथावच्छास्त्रं कस्यचिद्द्वेष्यस्योपघाताय प्रियस्य चोपकाराय कौटसाक्ष्याद्यधर्मं सेवन्ते। तेषां वेदमूलमेवानुष्ठानं इत्यशक्यनिश्चयं कारणान्तरस्य रागद्वेषलक्षणस्य संभवादतस्तत्प्रतिषेधः। अत्र चोच्यते **सद्भिरिति**। सच्छब्दः साधुतावचनो वर्णितः। कीदृशी च साधुता तस्य यदि रागद्वेषाभ्यामधर्मे प्रवृत्तिः संभाव्यते तस्मादद्वेषरागिभिरिति न वक्तव्यम्। एवं तर्हि हेतुत्वेनोच्यते। यतो रागादिवर्जिता अतः सन्तो भवन्ति। रागद्वेषप्रधानत्वाभावश्चात्र प्रतिपाद्यते। न सर्वेण सर्वं तदभावयोग्यावस्थागतस्य हेतोर्निरन्वयमुच्छिद्यते। तथा च श्रुतिः-"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती"ति। रागो विषययोपभोगगृध्नुता तत्प्रतिषेधव्यापारो द्वेषः। लोभोऽसाधारण्येन स्पृहा मात्सर्यं परस्य चेतन्माभूद्विभवख्यात्यादि। चित्तधर्मा एते। अथवा चेतनावत्सु स्त्रीसुहृद्बान्धवादिषु स्नेहो रागः। लोभोऽचेतनेष्वपि धनादिषु स्पृहा।

**हृदयेन**। हृदयशब्देन चित्तमाचष्टे। अनुज्ञानं च हृदयस्य प्रसादः। एषा हि स्थितिः। अन्तर्हृदयवर्तीनि बुद्ध्यादितत्त्वानि। यद्यपि बाह्यहिंसाऽभक्ष्यभक्षणादिषु मूढा धर्मबुद्ध्या प्रवर्तन्ते तथापि हृदयाक्रोशनन्तेषां भवति। वैदिके त्वनुष्ठाने परितुष्यति मनः।—

## जयमङ्गलाक्रोडपत्रम्

अत्राय निष्कर्षः :—अबाधितत्वं शब्दप्रमाणेन, सुखमयत्वं प्रत्यक्षेण, निश्शङ्कता च अनुमानेन नीतौ ज्ञाप्यते, इति तल्लक्षणे प्रमाणत्रयनिवेशः टीकाकृताऽभिहितः प्राक्। प्र० खं० १। पृ० ३७)।

### प्रमाणत्रयेण मतिभावः

अपि च साहित्यशास्त्रे प्रदिष्टेषु ३३ व्यभिचारिभावेषु मतिभाव एवैक ईदृशो व्यभिचारिभावः यः वैदग्ध्यसन्तोषशिष्यहिताधानार्थंदर्शनसंशयच्छेदनैः अभिव्यक्तः सङ्क्रान्तश्चेद्विनयाय भवति। अतः संशयच्छेदनवैदग्ध्यसन्तोषोपलब्ध्यर्थं क्रमेण अनुमानागमप्रत्यक्षादीनि उपयुज्यन्ते। नीतौ च मतिभाव एव स्वगुणप्रकाशनेन प्रकाशितः, सर्वेषां सुखोपधायक इति नीतिलक्षणे प्रमाणत्रयस्य समादरः कृत। मतिभावस्य विभावानुभावा निरूपिता "अपूर्वे"त्यादि ग्रन्थेन[1] प्राक्।

### मानाधीना राजवृत्तिः

नातिक्रामतीति। (पृ० १४१) मूलोक्तप्रत्यक्षादिप्रमाणग्रहणात् अप्रमाणं औदासीन्यं च व्यवच्छिद्यते। तथा च प्रमाणं विना राजवृत्तिर्न प्रवर्तते इति भावः। प्रत्यक्षादिवेद्यत्वमुदाहरति मन्त्रीति। (पृ० १४१) यद्यपि तत्र तत्र एकस्यैव प्रमाणस्योल्लेखः कृतः तथापि तेषु प्रमाणयोरपरयोः उपयुक्तत्वमपि स्मर्तव्यम्। तत्प्रयोजनस्यानुपदमेवोक्तत्वात्। व्यक्तं चैतत् कामन्दकीयजयमङ्गलायाम्[2]।

---

तदस्य सर्वस्यायमर्थः। न मया तादृशो धर्म उच्यते यत्रैते दोषाः सन्ति। किन्तु एवंविधैर्महात्मभिरनुष्ठीयते स्वयंश्च यत्र चित्तं प्रवर्तयति वा। अत आदरातिशय उच्यमानेषु धर्मेषु युक्तः। अथवा हृदयं वेदः सह्यधीतो भावनारूपेण हृदयस्थितो हृदयम्। ततश्च त्रितयमत्रोपात्तम्। यदि तावदविचार्यैव स्वग्रहात्काचित्प्रवृत्तिः कस्यचित्तथाप्यत्रैव युक्ता। एतत् हृदयेनाभ्यनुज्ञात इत्यनेनोच्यते। अथाप्ययं न्यायो "महाजनो येन गतः स पन्था" इति तदप्यत्रैवास्ति। विद्वांसो ह्यत्र निष्कामाः प्रवृत्तपूर्वा अनिन्द्याश्च लोके। अथ प्रमाणिकी प्रवृत्तिः ? सापि वेदप्रामाण्यात्सिद्धैवेति। सर्वप्रकारं प्रवृत्याभिमुख्यमनेन जन्यते।

अन्ये तु एतं श्लोकं सामान्येन धर्मलक्षणार्थं व्याचक्षते। एवंविधैर्यः सेव्यते स धर्मोऽवगन्तव्यः। प्रत्यक्षवेदविहितस्य स्मार्तस्य आचारतः प्राप्तस्य सर्वस्यैतल्लक्षणं विद्यते। अत्र तु य एतैः सेव्यते तं धर्मं निबोधेति पाठो युक्तः।२।१। इति।

१ अपूर्वप्रतिभानं स्यान्मतिस्तां तु विभावयेत्।
अन्वयव्यतिरेकोत्थैः प्रत्ययैः शास्त्रचिन्तनैः॥
ऊहापोहैश्च विविधैः अथ तामनुभावयेत्॥ (प्र० खं० २ पृ० ५०)

२ कर्मानुमेयाः सर्वत्र परोक्षगुणवृत्तयः।
तस्मात्परोक्षवृत्तीनां फलैः कर्म विभावयेत्॥

(ज०) 'परोक्षगुणवृत्तय' इति। येषां गुणवृत्तिरन्यतः श्रुता तेषां स्वनिश्चयार्थं पुनः कर्मभिरनुमातव्या कर्म फलैः। इति—( ४।३८ )—

**जयमङ्गलाक्रोडपत्रम्**

न च टीकाकृता एकमेव प्रमाणं प्रदर्शितं तदनुपपन्नमिति वाच्यम्, प्राधान्यदर्शनार्थं तथोक्तत्वात् "तथाच प्रत्यक्षानुमानादि नातिक्रामति" इति टीकाकृद्वचनात् "प्रमाणत्रयेण सर्वं परीक्ष्यमि"ति उपाध्यायनिरपेक्षोक्तेश्च। त्रयनिर्देशात् न्यूनाधिकसङ्ख्यायाः प्रमाणेषु व्यवच्छेदोपि बोध्यः।

**मन्त्रिकृता परीक्षा राजकृतैव**

**शोधयेदिति**। (पृ० १४१) ननु राजवृतो मन्त्री अमात्यान् कथं शोधयेत् तस्याराजत्वात्। इति चेन्न। राज्ञा वृतो मन्त्री तत्प्रतिनिधिभूत्वा अमात्यान् परीक्षते इति तत्परीक्षणं अपि राजकर्तृकमेव बोध्यम्। अनेन परीक्षणोदाहरणं टीकाकृता तपस्विनेत्यादिग्रन्थेन यत् प्रदर्शितं तेनापीदं पूर्वोक्तं स्फुटमेव। अतः विभिन्नैः कृता परीक्षा सर्वापि आहृत्य राज्ञैव संपादिता इत्येवं समभिधीयते।

**स्वयंपाठः**

**स्वयमिति**। पृ० १४२) अयं पाठः टिप्पण्यां यद्यपि प्रक्षिप्तो वर्तते तथापि अत्र व्याख्यातत्वात् ग्राह्यः।

**विषयस्य प्रत्यक्षसंज्ञा**

**प्रत्यक्षम्**, (पृ० १४२) प्रमात्मकं प्रमाणजनितत्वादिति शेषः। ननु विषयस्य प्रत्यक्षसंज्ञा कथंभवतीत्याह नन्विति। विषयस्यापि प्रत्यक्षसंज्ञा अभियुक्तैः व्यवहृतेति भावः। वस्तुप्राधान्यस्य प्रयोजनमाह सर्वत्रेति। शब्दस्य प्रामाण्योपपत्तिं प्रदर्शयितुं मूलवाक्यं वक्ष्यमाणं स्मारयति वक्ष्यतीति।

**एकवाक्यत्वे इति पाठः साधुः**

एकवाक्यत्वे **इति**। (पृ० १४२) यद्यपि मूले त्रयाणामेकवाक्ये इत्युक्तम्। तथापि टीकायामुद्धृतत्वादेकवाक्यत्वे इत्येव पाठः साधुः। अस्य विग्रहः-एकानि समानानुपूर्वीकाणि समानार्थकानि वा वाक्यानि येषां ते एकवाक्याः चराः तेषां भावः चरवृत्तिधर्मः। अन्यथा एकस्य वाक्यस्य त्रितयवृत्तित्वमुपपन्नं न भवेत् तेषां तद्वाक्यानां च भेदात् इति। अनुमेयं दर्शयति दुर्गादिकेष्विति।

**व्याहारादिति**। (पृ० १४०) व्याहारः विवक्षितत्वम्। अनुमाविषयः अनुमेयम्। तत्र अनुमा इत्यनेन सहालोचनस्य अन्वयो विवक्षितः। अनुमेयस्य व्युत्पत्तिमाह अकृतेति। वस्तुप्राधान्यनिर्देशफलमाह वस्त्विति।

---

उ०—परोक्षगुणवृत्तय इति। परोक्षा अप्रत्यक्षा। गुणस्य रामणीयकत्वादिकस्य। वृत्तयः येनैव केयूराद्याभरणं कृतं सोऽन्यदपि रमणीयं करोतीत्यनुमीयते इति कर्मानुमेयाः परोक्षगुणवृत्तयः। यत एवं, तस्मात् परोक्षवृत्तीनां कर्मणां फलैर्निष्पत्तिलक्षणैः अनिष्पन्नं कर्म विभावयेत् अनुमिन्वीत। तथा च कौटल्यः—'प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिस्तत्र स्वयं दृष्टं प्रत्यक्षं परोपदिष्टं परोक्षं कर्मणां कृतेनाकृतावेक्षणमनुमेयम्। इति। प्रमाणत्रयेण सर्वं परीक्ष्यमिति भावः। इति। (नी०सा०उ०)

## जयमङ्गलाक्रोडपत्रम्

### अयौगपद्यादिति पाठसमीक्षा

मू० यौगेति। (पृ० १४१) यद्यपि अयौगपद्यादिति मूलं क्वचिदुपलभ्यते तथापि मनुस्मृत्यनुरोधात् यौगपद्यात् इत्येव पाठो युक्तो भाति। तद्ध्वनितं मनुनापि—

मौलान् शास्त्रविदः शूरान् लब्धलक्षान् कुलोद्भवान्।
सचिवान्सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान्॥ इति[1] ७।५४।

### राज्ञः संपूर्णकर्मकरणेऽशक्तिः

ननु राज्ञैव सर्वाणि कर्माणि कुतो नानुष्ठेयानि? अशक्यत्वात्। तदाहानेकमिति। कर्मेति। (पृ० १४२) क्वचित् अनेकं अनेकदेशस्थं अपि वा स्वकर्म युगपत् क्रमेण वा राजा अनुष्ठातुं पारयतीति तद्व्यावृत्तये कर्मपदेन अत्र द्रव्यप्रकृतिकर्म बोध्यम्। तत्रापि च मन्त्रिकर्म अत्र विवक्षितम् उपक्रमोपसंहारयोः मन्त्रिण एवोल्लेखात्। तदाहुः टिप्पण्याम्—

---

१ मेधातिथिः—पितृपितामहान्वयागता बहुसुतधनबान्धवाः प्रकटगोभूमिधनास्तद्देशवासिनो मौलाः। मूलं प्रतिष्ठा तत्र भवा मौलाः। शास्त्रविदः शास्त्रं शासनं भृत्यविधिज्ञानं तेनान्येऽपि गुणा गृह्यन्ते। तद्यथा - प्राज्ञः दृढकारी धारयिष्णुर्दक्षः वाग्मी प्रबलः प्रतिपत्तिमानुत्साहप्रभावयुक्तः क्लेशसहः शुचिर्दानशीलः योग्यसत्वयुक्तः स्तम्भचापलहीनः प्रियो वैराणामकर्तेति। शूरशब्देन राजकार्ये शरीरकलत्रापत्यधनादिष्वपि निरपेक्ष उच्यते। तथा मरणेऽभीरुः युद्धोत्साही एक एव परिभवभयाद्बहुभिर्विरुद्ध्यते। दृढप्रहारी बलवान्। लब्धलक्षाः परिदृष्टकर्मता-मननेहा दृष्टखड्गव्यापाराः कृतार्थाधिकारा अनुभूतमन्त्रिभूमयः। कुलोद्गताः कुलाङ्कुशनिगृहीता ह्यकार्ये न वर्तन्ते। सचिवान् सहायान्। नित्यमेते राज्ञः पार्श्ववर्त्तिनो भवेयुः। सप्तवाऽष्टौ वा। नियमोऽयं येन चाल्पे एकचित्ता भवन्ति। ततश्च राजमन्त्रउद्घाटितः स्यात्। बहूनामपि मन्त्रभेदः। तस्मादेतावन्त एव कर्तव्याः। सुपरीक्षितान् धर्मार्थकामभयोपधाभिः सेयं परीक्षोच्यते। पुरोहितः स्वल्पकार्ये राज्ञा व्याजेनाधिक्षिप्तः बहुनाऽर्थसंप्रदानेनाप्तपुरुषैरेकैकममात्यमुपजपेत् राजविनाशाय। एतच्च सर्वं मन्त्रिभ्यो रोचते। अथ कथं भवत? इति, प्रत्याख्याने धर्मोपधाशुद्धः। सेनापतिः केनचिदुपदेशेन पूर्ववदधिक्षिप्तः बहुना च संप्रदानेनाप्तपुरुषैरेकैकममात्यमुपजपेत् राजविनाशाय, एतच्च सर्वं मन्त्रिभ्यो रोचते। अथ कथं भवत? इति प्रत्याख्याने अर्थोपधाशुद्धः। परिव्राजिकान्तःपुरे लब्धविश्वासा एकैकममात्यमुपजपेत्। सा राजमहिषी भवन्तं कामयते कृतसमागमोपायेति, प्रत्याख्याने कामोपधाशुद्धः। राजप्रयुक्ता एव केचित्पुरुषाः प्रवादमाविष्कुर्युः कृतसमयैरमात्यै राजा हन्यत इति। उपलब्धप्रवादः पुरोहितस्याप्तः कश्चिदमात्येषु मन्त्रं श्रावयेत्। इमं प्रवादमुपश्रुत्य भवतां निग्रहो राज्ञा क्रियत इति। तेषामेव चान्यतमः पूर्वमेव कृतसंवित्कः प्रत्येकं राजाऽमात्येषु उत्साहयेत्। तत्र ये प्रत्याचक्षते ते भयोपधाशुद्धाः। अथवा मौलान् शास्त्रविदः कुर्यात् अर्थप्रमादकर्तृसन्निधातृन् ये अर्थं ग्रामेभ्यः समाहरन्ति, समाहृतं च रक्षन्ति विनियुञ्जते च—

[ पुरोहितयोग्यताः, तत्स्थापनावश्यकता च ]

**पुरोहितं उदितोदितकुलशीलं, षडङ्गे वेदे दैवे निमित्ते दण्डनीत्यां च अभिविनीतं, आपदां दैवमानुषीणां 'अथर्वभिरुपायैश्च' प्रतिकर्तारं कुर्वीत। तं आचार्यं शिष्यः, पितरं पुत्रः, भृत्यस्स्वामिनमिव चानुवर्तेत' ॥**

---

### जयमङ्गलाक्रोडपत्रम्

''अमात्यसंज्ञासामान्यान्मन्त्रिणां कर्तव्यत्वे प्राप्ते प्राह इती''ति।

### राजकर्मणो न मन्त्रिकर्मत्वम्

मन्त्रिणां किञ्चित्कर्म राजा क्रमेण कालभेदेन वा कर्तुं यदि प्रवर्तेत, तर्हि तद् राजकर्म न मन्त्रिकर्मत्वेन व्यवह्रियते मन्त्रिणोऽयजमानत्वात्। तदेव स्फुटीकर्तुं पूर्वपक्षोत्तरपक्षमुखेन विशदयति यत्त्वित्यादि। (पृ० १४२) एकदेशे संभाव्यमानि कर्माणि यौगपद्येन कर्तव्यानि उदाहरणमुखेनाह—

ऊर्णेति। (पृ० १४२) क्रमेण अनेकदेशस्योदाहरणमाहनेकेति। युगपदनेकदेशेषु कर्तव्यान्याह युगपदिति। (पृ० १४२) परोक्षमिति। (पृ० १४२) त्रयाणामेकवाक्यत्वे संप्रत्यय इत्युक्तरीत्या चरद्वाराऽमात्यकर्मणः संवादबोधनार्थम् परोक्षग्रहणम्। अमात्योऽत्र मन्त्री विवक्षित इत्यत्र हेतुमाह प्रकरणादिति।

### श्रीमूला

पुरोहितोत्पत्तिमाह—पुरोहितमित्यादि। उदितोदितकुलशीलत्वादियुक्तं पुरोहितं कुर्वीत। उदितोदितकुलशीलम् उदितोदितम् उदितैः शास्त्रोक्तैर्विद्याभिजनादिभिः उदिताः समृद्धाः उदितोदिताः तेषां कुलं शीलं वृत्तं च यस्य तं तथाभूतम् उदितोदितकुलजातम् उदितोदिताचारयुक्तं चेत्यर्थः। षडङ्गे वेदे, दैवे ज्योतिश्शास्त्रे-पूर्वकर्मपरिपाकलक्षणदैवप्रतिपादके, निमित्ते शकुनशास्त्रे, दण्डनीत्यां च, अभिविनीतं शिक्षितं। दैवमानुषीणां देवकृतानां मानुषकृतानां च, आपदाम्। अथर्वभिः अथर्वमन्त्रप्रयोगैः। उपायैश्च सामदानादिभिश्च। प्रतिकर्तारं परिहर्तारम्। तमिति। शिष्य आचार्यमिव, पुत्रः पितरमिव, भृत्यःस्वामिनमिव च, तम् अनुवर्तेत अनुसरेत्-तत्परतन्त्रो भवेत्।

### वैदिकसिद्धान्तसंरक्षिणी

पुरोहितम् अदृष्टद्वारा विशिष्टश्रेष्ठफलसंपादनसमर्थम्। उदितोदितकुल-

---

सर्वथा अर्थव्ययहारिणो मौलाः कर्तव्या इत्युक्तं भवति। शास्त्रविदो बुद्धिसचिवा मन्त्रिणः। शूरान् बलाध्यक्षान्। लब्धलक्षानित्यादि सर्वेषां विशेषणमेकैकस्य। समुदितपरीक्षा च योक्ता राजविषया राजामात्येषु उत्साहनमिति सा न युक्तेति मन्यन्ते। एष एव हि बुद्धिभेदो भवेदमात्यानाम्। तस्मादन्या काचित् स्त्री साध्वी प्रयोज्यते, अन्यो विनाशविषय उदाहार्यः।५४।

नी० टि० १ **अथर्वभिरिति**। अथर्वविहितप्रतिविधानैः।

,, २ **उपायैरिति**। दण्डनीत्याऽभिहितैः सामादिभिः।

,, ३ **अनुवर्तेतेति**। अनेन परस्परानुकूलता दर्शिता।

## वैदिकसिद्धान्तसंरक्षिणी

शीलं विद्यातपस्समाधिजधर्मवत्त्वं परंपरयाऽविच्छिन्नम् यत्र तम्। शीलं सद्भिः संभावनीयताहेतुगुणवन्तम्। वेदे आथर्वणे। तदुदिते तत्कर्मणि पुरोहितस्य अधिकृतत्वात्। साङ्गे। षडङ्गे। तेन वेदतात्पर्यं अवगतं भवति। अनेन अदृष्टव्यापार द्वारा प्रतीकारलाभः। दण्डनीत्याम् इति। (पृ० १४६) तया दृष्टद्वारा सामादिभिः प्रतीकारलाभः। तदेवाहापदामिति। "अथर्वभिरिति। अथर्वविहितप्रतिविधानै"रिति टिप्पण्याम्। उपायैरिति। "दण्डनीत्याऽभिहितैः सामादिभिः"। इति टिप्पण्याम्।

### पुरोहितानुवर्तनेतिकर्तव्यता

प्रतिकर्तारं व्यसनानां इति शेषः। परस्परमानुकूल्ये पुरोहितं प्रति विनयभावेन वर्तने च राज्ञः श्रीलाभः जनानुरागश्च इति दर्शयितुमाह तमिति। उपर्युक्तगुणसंपन्नं पुरोहितम्। अनुवर्तने दृष्टान्तमाह आचार्यमिति। शिष्याचार्ययोः उपमानभूतयोः उपमेयेन सह साधर्म्यं पूज्यपूजकभावः, पितृपुत्रयोरानुकूल्यम्, भृत्यस्वामिनोः योगक्षेमसाधर्म्यं च क्रमेण बोध्यम्। आचार्यं सुनिपुणं शुचिं गुरुम्। शुचिरनुवृत्तिपरो भवति। पितरं साहजिकस्नेहवन्तं, पुत्रः अनुकूलो भवति भृत्यः अनुजीविवृत्तिसंपन्नः स्वामिनं आत्मसंपदोतं प्रति अनुवर्तते च यथा, तथा राजापीति भावः। स्फुटञ्चैतत् टिप्पण्याम्—"अनेन परस्परानुकूलता दर्शिता" इति।

## जयमङ्गला

यथाऽमात्येभ्योऽधिका मन्त्रिणस्तथा मन्त्रिभ्यः पुरोहितोऽधिक इति गुणान्तराधिक्यं दर्शयन्नाह-पुरोहितमित्यादि। पुरो धीयते नियुज्यते दृष्टादृष्टेष्विति पुरोहितः। "दधातेर्हिः" (७-४-४२)। कीदृशं वृर्वीतेत्याह–उदितोदितकुलशीलमिति। चतुर्विधाः पुरुषाः, येषाम् आ चतुर्थाद् आ सप्तमाद्वा वृत्ताभिजनसम्पन्नाः पूर्वे, नापरे ते उदितास्तमिताः। विपर्यये त्वस्तमितोदिताः। येषां न पूर्वे नापरे तेऽस्तमितास्तमिताः येषां पूर्वे चापरे च वृत्ताभिजनसम्पन्नास्ते उदितोदितकुलशीला इति। तमेवंविधम्। साङ्गे[1] षडङ्गे षडङ्गवेद इति प्रकरणादाथर्वणे, दैवे निमित्ते दैवान्तरितभौमशकुनादौ। दण्डनीत्याम् चाभिविनीतम् आभिमुख्येन शिक्षितम्। दैवीनाम् अग्न्युदकादीनाम्। मानुषीणां च दूष्यादिसंयुक्तानाम् (आपदाम्) यथाक्रमम् अथर्वभिरथर्वविहितैः प्रयोगैः। उपायैश्च सामादिभिः। प्रतिकर्तारं प्रतिविधातारं कुर्वीत। स[2]चानुवर्तितो नाकार्यकारीत्याह–शिष्य इव पूजया, पितरमिव स्निह्यन्तम् पुत्र इवानुकूल्येन, स्वामिनो योगक्षेमसाधनपरं भृत्य इवानुजीविवृत्तेन अनुवर्तेत। इवशब्दः षड्भिरेव सम्बन्धनीयः।

---

अशुद्धम्— १ प्रसङ्गे षडङ्ग। २ चाननुवर्तिने।

## जयमङ्गलाक्रोडपत्रम्

अधिक्या इति । ( पृ० १५० ) आधिक्यं श्रेष्ठसफलोपधायकत्वात् । चतुर्विधा इति । (पृ० १५० उदितोदितवंशस्य वृत्ताभिजनसंपन्नत्वमुपाध्यायनिरपेक्षायां व्याख्यातम्—

"यत्र वंशे वेदविद्यादिमन्तो ब्राह्मणा अनुष्ठानसंपन्नाः पूर्वपुरुषा आचतुर्थादासप्तमाद्वा इति"। नी० स० १ श्लोक० २)

जयमङ्गलायां तदीयायामपि "तपोविद्याद्यविच्छेदादुदितवंशाना"मित्यर्थः । इति । तत्वं च विद्यातपस्समाधिजधर्मवत्वम् इत्यर्थः । अत्रेदं स्मर्तव्यम् —

### अथर्वविहितपदार्थः

"अथर्वविहितं कुर्यान्नित्यं शान्तिकपौष्टिकम्" (नी० स० ४) इति पद्येन नीतिसारकृता पुरोहितगुणेषु शान्तिकर्मकरणमित्युक्तम् तस्यार्थः ब्रह्मर्त्विगाश्रितं कर्म इति ज्ञेयम् । तदुक्तं न्यायमञ्जर्याम् —

"यदि यज्ञोपयोगित्वं नैहास्त्याथर्वणश्रुते" रित्यादिना[1] ।

किञ्च पुरोहितेन मुख्य एव कल्पः यथासंभवं आदरणीयः रामायणोपवर्णितपुत्रकामेष्टिवत् । तत्र प्रमाणं तत एवानुसन्धेयम्[2] ।

### षडङ्गेपाठशोधनम्

षडङ्गे इति । (पृ० १५० ) उपाध्यायनिरपेक्षायां—'साङ्गवेद' इत्युक्तत्वात्, प्रसङ्गस्याप्रसक्तत्वाच्च अत्र प्रसङ्गे इति भ्रमादापतितमिति भाति ।

---

१ अर्थान्तरे प्रमाणत्वं केनास्य प्रतिहन्यते ।
शान्तिपुष्ट्यभिचारार्थाः एकब्रह्मर्त्विगाश्रयाः ॥
क्रियास्तया प्रमीयन्ते त्रय्येवात्मीयगोचरे । (अथर्ववेदप्रामाण्याक्षेपः )

२ "ततोऽब्रवीद् ऋष्यश्रृङ्गं राजा दशरथस्तथा ।
कुलस्य वर्धनं तत्तु कर्तुमर्हसि सुव्रत ॥
तथेति च स राजानमुवाच द्विजसत्तमः ।
भविष्यन्ति सुता राजंश्चत्वारस्ते कुलोद्भवाः ॥
( वा० रा० बा० १४।५८-५९ )
मेधावी तु ततो ध्यात्वा स किञ्चिदिदमुत्तरम् ।
लब्धसंज्ञस्ततस्तं तु वेदज्ञो नृपमब्रवीत् ॥
इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात् ।
अथर्वशिरसि प्रोक्तैर्मन्त्रैः सिद्धां विधानतः ॥
( वा० रा० बा० १५।१-२ )

## जयमङ्गलाक्रोडपत्रम्

### अथर्वमात्रग्रहणे जयमङ्गलानीतिसारविरोधपरिहार

वेदस्याथर्ववेदे उपसंहारं दर्शयति– प्रकरणादिति । (पृ० १५०) नीतिसारेण "त्रय्यां"चेत्यादिना त्रयीसङ्ग्रहः कृतः । तथा च पुरोहितः न केवलं अथर्ववेदविदेव भूयात् अपि तु वेदान्तरविदपि । तथात्वेपि शान्तिकर्मादिकं तु आथर्वणैरेव कर्तव्यम् इति भावः । तेन न जयमङ्गलानीतिसारयोर्विरोधो भवति ।

### अथर्वप्राधान्यम्

न चैवं प्राधान्येनाथर्ववेदः कुतो गृह्यते इति शङ्क्यम् अथर्ववेदस्याशुफलकारित्वात् । तदाहुः एवमित्यादिना[1] ।

पौरोहित्यं च आथर्वणं कुर्यादित्यपि निर्णीतम् पौरोहित्यं अथर्वविदैव कार्यम् तत्कर्तृकाणां कर्मणां राजाभिषेकादीनां तत्रैव विस्तरेण प्रतिपादितत्वात् । तथा च भविष्यपुराणे—

"पौरोहित्यं शान्तिकपौष्टिकानि राज्ञां अथर्ववेदेन कारयेत् ब्रह्मत्वं च इति" इत्यादि । पुरोहितस्य मन्त्रसिद्धिमाहात्म्यं भागवतेऽप्युपवर्णितमस्ति । तद्यथा—

तमत्रिर्भगवानैक्षत् त्वरमाणं विहायसा । इति । (भा० ४–१९–१२)

किञ्च कालिदासेनापि आथर्वणमन्त्रसिद्धपुरोहितप्रभाव उपवर्णितः —

'वसिष्ठमन्त्रोक्षणजात् प्रभावात्' । इत्यादि । (रघुवंशे) ।

अग्न्युदकादीनामिति । (पृ० १५०) आदिशब्दादवर्षणादयः । तदुक्तम्—"अमानुषोऽग्निः अवर्षमतिवर्षं मारकः दुर्भिक्षं सस्योपघातः जन्तुवर्गः व्याधिभूतपिशाचशाकिनी सर्पव्यालमूषकक्षोभाश्चेत्यापदः" । इति । (नीतिवाक्यामृतं पुरोहितोद्देशः)

गुर्वादीन् प्रति अनुष्ठेयं शिष्याद्यनुवर्तनव्यापारं विशदयति पूजयेत्यादि । तथा च शिष्यः पूजया गुरुं, पुत्रः अनुकूलतया पितरं, अनुजीविवृत्तेन सेवकः स्वामिनं प्रसादयति । तद्वत् पुरोहितं आचार्यत्वेन पितृत्वेन स्वामित्वेन च मत्वा राजा पूजया अनुकूलतया अनुजीविवर्तनेन सेवेतेति फलितम् ।

---

१ एवं सारभूतब्रह्मात्मकत्वात् ब्रह्मकर्तव्यप्रतिपादनाच्चायं ब्रह्मवेद इत्यभ्याख्यायते । तथा च श्रुतिः—

चत्वारो वा इमे ऋग्वेदो यजुर्वेदः सामवेदो ब्रह्मवेदः—(गो० ब्रा० १, २ १) इति । अत एव सारवत्वात् सिद्धमन्त्रता समाम्नायते —

"न तिथिर्न नक्षत्रं न ग्रहो न च चन्द्रमाः ।
अथर्वमन्त्रसंप्राप्त्या सर्वसिद्धिर्भविष्यति" ॥ (अ० प० २, ५, ५)

तथा स्कान्दे कमलालयखण्डे आथर्वणमन्त्राणां जपमात्रेणाभिमतफलसाधनत्वम् उक्तम्—

यस्त्वाथर्वणान् मन्त्रान् जपेच्छ्रद्धासमन्वितः ।
तेषामर्थोद्भवं कृत्स्नं फलं प्राप्नोति स ध्रुवम् ॥ इति । (अथर्वभाष्योपोद्घातः)

## जयमङ्गलाक्रोडपत्रम्

### पुरोहितश्रैष्ठ्यबीजम्

ननु पूर्वोक्तरीत्या पुरोहितस्य इतरातिशयितं श्रेष्ठत्वं भाति। तत्कथं उपपद्यते ? इति चेन्न। विशेषगुणवत्वात्तस्य श्रैष्ठ्यं स्वीकार्यं भवति। कोसौ विशेषः। इतिचेन्मन्त्रप्रयोगेणादृष्टद्वारा बाधानिरासपूर्वकं अबाधितं राज्यरक्षणमेव। ननु मन्त्रप्रयोगस्य वर्तमानसमये फलवत्तादर्शनन्न भवति ? द्रष्टव्यञ्चैतत्सुश्रुते[1]। कल्पस्थाने ७-१०

१ अरिष्टामपि मन्त्रैश्च बध्नीयात् मन्त्रकोविदः।
सा तु रज्वादिभिर्बद्धा विषप्रतिकरी मता॥
देवब्रह्मर्षिभिः प्रोक्ताः मन्त्राः सत्यतपोमयाः।
भवन्ति नान्यथा क्षिप्रं विषं हन्युः सुदुस्तरम्॥
विषं तेजोमयैर्मन्त्रैः सत्यब्रह्मतपोमयैः।
यथा निवार्यते क्षिप्रं प्रयुक्तैर्न तथौषधैः॥
मन्त्राणां ग्रहणं कार्यं स्त्री-मांस-मधुवर्जिना।
जिताहारेण शुचिना कुशास्तरणशायिना॥
गन्धमाल्योपहारैश्च बलिभिश्चापि देवताः।
पूजयेन्मन्त्रसिद्ध्यर्थं जपैर्होमैश्च यत्नतः॥
मन्त्रास्त्वविधिना प्रोक्ता हीना वा स्वरवर्णतः।
यस्मान्न सिद्धिमायान्ति तस्माद् योज्यो गदक्रमः॥

टीका—मन्त्रकोविदो मन्त्रज्ञः पुरुषः एव। मन्त्रैः अरिष्टां बध्नीयात्। न परमन्त्रैरेवारिष्टेत्याह सात्विति। सा पुनररिष्टा मन्त्ररहिता रज्वादिभिर्बद्धा विषप्रतिकरी विषप्रतीकारहेतुः। एनेन मन्त्रतन्त्राभ्यां तु विषप्रतीकारः। मन्त्रस्य शक्ति दर्शयन्नाह-देवब्रह्मर्षिभिरित्यादि। देवर्षिविहितत्वेन सत्यतपोमयाः प्रोक्ताः कथिता न तु कृताः, मन्त्राणां नित्यत्वात्। अन्ये तु सत्य ब्रह्मतपोमया' इति पठित्वा व्याख्यानयन्ति। देवा इन्द्रादयः। ब्रह्मा स्वनामप्रसिद्धः। ऋषयो देवर्षिब्रह्मर्षि राजर्षयः। तत्र देवकृतत्वेन सत्वप्रत्ययाः, ब्रह्मकृतत्वेन ब्रह्ममयाः त्रिविधर्षिकृतत्वेन तपोमया मन्त्राः, कुरुकुला मेरुण्डादयः परतन्त्रा इह तु नोपदिष्टाः। विषमित्यादि। मन्त्रग्रहणविधिमाह–मन्त्राणामित्यादि। तत्र मधु, मद्यं क्षौद्रं च द्वितयमपि वर्जनीयम्। संयदाहारेण, हविष्त्रेकाहारेण इत्यर्थः। शुचिना = बाह्याभ्यन्तरपवित्रेण, माल्यं माला। उपहारो धूपदीपादिकम्। पूजोपकरणं बलिः पशुनैवेद्यम्। होमश्चेति चकारेण ध्यानेनापीत्युक्तं समुच्चीयते। मन्त्रस्यासिद्धौ अगदक्रमो योज्य इत्याह—मन्त्रास्त्वित्यादि। अविधिना स्त्रीमांसमधुवर्जनादिविधिं विना प्रोक्ता गुरुणेति शेषः।

चिकित्सा चन्द्रोदयेऽपि—'आजकल मन्त्र सिद्ध करनेवाले कहा मिल सकते हैं ? जब कि सुश्रुत के जमाने में ही उनका अभाव सा था। सुश्रुत में लिखा है कि—मन्त्रास्त्वविधिना प्रोक्ताः—मन्त्र अगर विधि के बिना उच्चारण किये जाते हैं, तथा स्वर और वर्ण से हीन होते हैं तो सिद्ध नहीं होते। अतः साँप के काटे की दवा ही—

## जयमङ्गलाक्रोडपत्रम्

### कलौ मन्त्रसिद्धिः

सत्यम् । सर्वेषां मन्त्राणां संप्रति फलजनकत्वादर्शनेपि केषां चिन्मन्त्राणां सफलत्वं कलावपि भवति शीतलाप्रकोपशामकत्वस्य मन्त्र एव दृष्टत्वात् । अत्रेदमवधेयम्-नह्यदृष्टोत्पादनद्वारा कार्योत्पादकमन्त्रसाधनसामर्थ्यं पुरोहितादन्यत्र क्लृप्तमिति तस्थानमितरापेक्षया विशिष्टम् । कलावपि मन्त्राणां सामर्थ्यङ्कार्योत्पादने अस्तीत्यत्र प्रमाणं मन्त्रमहोदधौ उपन्यस्तमुपलभ्यते [1] ।

---

करनी चाहिए। जब भगवान् धन्वन्तरि ही सुश्रुत में ऐसा कहते हैं, तब क्या कहा जाय ? उस प्राचीनकाल में ही जब सच्चे मंत्रज्ञ नहीं मिलते थे तब, अब तो मिल हो कहाँ सकते हैं ? मन्त्र सिद्ध करने वाले को स्त्रीसंग, और मद्य आदि त्यागने होते हैं। जिताहारी और पवित्र होकर कुशासन पर सोना पड़ता है। एवं गन्ध, माला और बलिदान से मन्त्र सिद्ध करके देवपूजन करना होता है। कहिये, इस समय कौन इतने कार्य करेगा ? ( सर्पविषचिकित्सा, जंगम विष अ०)

१ सिद्धिप्रदाः कलियुगे मन्त्रास्तान्वदाम्यतः ।
त्रयाणां एकाक्षरोऽनुष्टुप्त्रिविधो नरकेसरी ॥ १०९ ॥
एकाक्षरोऽर्जुनोऽनुष्टुप्द्विविधस्तुरगाननः ।
चिन्तामणिः क्षेत्रपालो भैरवो यक्षनायकः ॥
गोपालो गजवक्त्रश्च चेटका यक्षिणी तथा ।
मातङ्गी सुन्दरी श्यामा तारा कर्णपिशाचिनी ॥
शबर्येकजटा वामा काली नीलसरस्वती ।
त्रिपुरा कालरात्रिश्च कलाविष्टप्रदा इमे ॥११२॥
(तरङ्गः २४) इति ।

किञ्च कलौ कतिपये मन्त्रा अपामार्गादयश्च वृश्चिकविषादिहरणे समर्था भवन्ति । तद्यथा दत्तात्रेयतन्त्रे—

ईश्वर उवाचः—सिंहं दृष्ट्वा नमस्कारमन्त्रो जाप्यः पुनः पुनः ।
पलायन्ते सिंहाः सर्वे नान्यथा शङ्करोदितम् ।
पुष्यार्केन गृहीत्वा तु श्वेतार्कस्य तु मूलकम् ।
धारयेद्दक्षिणे हस्ते सिंहबाधाभयन्न हि ।

ॐ नमो अग्निरूपाय ह्रीं नमः ।

आस्तिकं मुनिराजं च नमस्कारं पुनः पुनः ।
स्वप्ने सर्वभयं नास्ति नान्यथा शङ्करोदितम् ॥
गृहीत्वा शुभनक्षत्रे अमृतामूलकं हरेत् ।
यन्मूलं धारयेत्कण्ठे सर्वबाधाभयन्नहि ॥—

## जयमङ्गलाक्रोडपत्रम्

अन्यच्च-कलौ गणेशसहस्रनामस्त्रोत्रमपि अदृष्टद्वारा अभीष्टफलदं भवतीत्यपि दृष्टं वर्तते । कलावेव कौटिल्येनाभिचारः शत्रुनाशाय प्रयुक्तः फलभाग् बभूव । अतोऽत्रापि यदि शुचिना पुरोहितेन यज्ञादयोऽनुष्ठीयेरन् तर्हि ते सफला भवयुरव । यस्य मन्त्रसिद्धिर्नास्ति स न कदाचिदपि मन्त्रं प्रयोक्तुं शक्नोति । अतः पुरोहितेन सिद्धिः आदौ प्राप्तव्यैव ।

### पुरोहितस्य विशिष्टो गुणः

इयं प्राप्तिः पुरोहितस्य महान् गुणः । सैव तस्य वैशिष्ट्ये कारणम् यदालोच्य राजा तमनुवर्तते इति भावः । ननु सिद्धिरलौकिक्येव उच्यते तस्य ? न । किन्तु अपूर्वभानमप्यत्र सिद्धिर्विवक्षिता । तत्वं चोद्बुद्धसंस्कारसाचिव्येन प्रत्यक्षरूपतामापन्नं ज्ञानं इति । शेषं प्राग्व्याख्यातम् । (प्र० खं १ पृ० ४१) तदुक्तं स्मर्यते एतत्प्रसङ्गे—

'ध्यानादिभावं स्मृतिरेव लब्ध्वा चिन्तामणिस्तद्विभवं व्यनवित' । इति । तथाच स्मृतिरेव ध्यानादिभावमुपलभ्य प्रत्यक्षरूपेण पर्यवस्यति तदेवापूर्वभानमित्याशयः । चिन्तयैव पदार्था भान्ति इत्यत्र तत्वाचिन्तामण्यां कृतं मङ्गलं अपि व्यञ्जकं अस्ति[१] ।

एतन्महिम्नवैकाग्रतया चिन्तितोर्थः बहिः परिस्फुरति इत्येतावत्पर्यन्त ध्यानस्य फलमनुभूयते[२] ।

---

गृहीत्वा शुभनक्षत्रे अमृतामूलकं हरेत् ।
अपामार्गस्य मूलकम् धारयेद्दक्षिणे कर्णे वृश्चिकभयनाशनम् ॥
उत्तरस्यां च दिग्भागे गारीवा नाम राक्षसः ।
तस्य मूत्रपुरोषाभ्यां हुतो स्तंभो स्वाहा ॥
अनेन मन्त्रेण सप्ताञ्जलिजलं अग्निमध्ये क्षिपेत् ।
अग्निः शाम्यति गृहीत्वा रविवारे तु श्वेतकरवीरमूलकम् ॥
धारयेद्धक्षिणे हस्ते अग्निबाधाभयन्नहि ॥ इति ।
ईश्वरदत्तात्रेयसंवादे द्वितीयःविंशः पटलः

१ अन्वीक्षानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतम् ।
चिन्तादिव्यविलोचनेन च तयोः सारं विलोक्याखिलम् ॥
तन्त्रे दोषगुणेन दुर्गमतरे सिद्धान्तदीक्षागुरुः ।
गङ्गेशस्तनुते मितेन वचसा श्रीतत्वचिन्तामणिम् ॥ (मङ्गलवाद प्रत्यक्षखण्ड) श्लोक २ इति ।

२ वैशेषिकभाष्येपि योगिनां प्रातिभं ज्ञानमित्येवोक्तम् । तद्यथा—
"आम्नायविधातॄणामृषीणामतीताऽनागतवर्तमानेष्वतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु चात्ममनसोः संयोगाद् धर्मविशेषाच्च यत् प्रातिभं यथार्थ निवेदनं ज्ञानमुत्पद्यते । तदार्षमित्याचक्षते । शेष पूर्वं द्रष्टव्यम् । (प्र०खं० १ पृ० १५१)

## जयमङ्गलाक्रोडपत्रम्

### ध्यानमहिमा

तद्व्यक्तं लालजी रामशुक्लमहोदयेन कृते बालमनोविज्ञाने'।

१ "मनुष्य की शक्ति दो प्रकार की होती है। एक साधारण अथवा लौकिक दूसरी असाधारण अथवा अलौकिक। मनुष्य अभ्यास के द्वारा इन दोनों प्रकारों की शक्तियों को बढ़ा सकता है। मनुष्य की साधारण शक्तियां चित्त की एकाग्रता धारणाशक्ति की प्रवीणता, स्मरण की तीव्रता, बुद्धि की प्रखरता और इच्छाशक्ति की दृढ़ता है। इन सब शक्तियों को बढाने के लिए मनुष्य को दो प्रकार के अभ्यास करने पड़ते हैं। एक जानबूझकर इन शक्तियों को व्यायाम कराना और दूसरे शरीर और मन की शिथिलीकरण की अवस्था में इन शक्तियों को वृद्धि के लिये आत्म निर्देश देना। प्रथम प्रकार का अभ्यास हमारे विद्यालयों के द्वारा कराया जाता है। दूसरे प्रकार के अभ्यास के लिये कुशल मनोवैज्ञानिक की देखरेख उसकी सलाह और उसके पथप्रदर्शन की आवश्यकता होती है। अपने चेतन मनकी शक्तियों को बढ़ाना अर्थात् साधारण मानसिक शक्तियों को अधिक से अधिक विकसित करना प्रत्येक मानव का कर्तव्य है। हरएक सुन्दर शिक्षा प्रणाली का यही उद्देश्य होता है। जहाँ तक अलौकिक अथवा असाधारण मानसिक शक्तियों की बात है इन्हें प्राप्त करने की चेष्टा करना खतरे से खाली नहीं। अलौकिक शक्तियां वे हैं जिन्हे प्राप्त करके हम कुछ ऐसी बातें कर सकते हैं जिन्हें भौतिक विज्ञान की प्रणाली से समझाया नहीं जा सकता। मनुष्य के मन में ऐसी शक्तियां हैं इसमें किसी भी गंभीर चिन्तन करनेवाले व्यक्ति को सन्देह नहीं है। उदाहरणार्थ मनुष्य अपने मन में ऐसी शक्ति को विकसित कर सकता है कि उसको आँख पर पट्टी बांध दी गई थी फिर उसके पीछे १० फूट दूरी पर रखे हुए एक श्यामपट पर कालेज के प्रिन्सि-पल ने कुछ वाक्य अंग्रेजी में लिखें। इन वाक्यों को इस विद्यार्थी ने ठीक जेसे के तैसा बता दिया। यहाँ इस विद्यार्थी की अलौकिक शक्ति के विषय में कोई सन्देह का स्थान नहीं था। यह विद्यार्थी लेखक का भली प्रकार से जाना पहचाना व्यक्ति था। और उसी के द्वारा वर्ष भर तक पढ़ाया गया था। उनकी आँख पर पट्टी कालेज के ही एक अध्यापक ने बान्धी थी। श्यामपट उसके मुह की और न होकर पीठ की ओर था और उस पर लिखा गया वाक्य उसके किसी साथी के द्वारा लिखा न होकर कालेज के प्रिन्सिपल के द्वारा लिखा गया था। वाक्य के पढ़ने में उसने एक भी शब्द की गलती न की। जब विद्यार्थी लेखक से विदाई ले रहा था तब उसने इस अलौकिक शक्ति के बारे में पूछा तो विद्यार्थी ने यही कहा "चित्त की एकाग्रता के अभ्यास से मनुष्य को दूसरे व्यक्ति के मस्तिष्क में चलनेवाले विचारों का पता चल जाता है"। आगे यह भी कहा "आपको चित्त की एकाग्रता का अभ्यास बहुत अच्छा है। अतएव शीघ्र ही आप इस शक्ति को प्राप्त कर सकते हैं"।

जिस प्रकार दूसरे व्यक्ति के मन में चलने वाले विचारों को हम अपने अलौकिक प्रयास से जान सकते हैं उसी प्रकार भविष्य में होने वाली घटनाओं की रूपरेखा भी हमें ज्ञात हो सकती हैं। इस प्रसंग में काफी मनोविज्ञान शाला में हिन्दु कालेज के भूतपूर्व हेडमास्टर डा० ओटोउल्फ द्वारा दिया गया भाषण जो मनोविज्ञान के मार्च १९५२ के अंक में प्रकाशित हुआ है उल्लेखनीय है। भविष्य में होनेवाली घटनाओं का चित्र कभी कभी मनुष्य के मन में उसकी जागृत अथवा स्वप्नावस्था में उसी प्रकार आ जाता है जिस प्रकार वे बाद को घटित होती हैं। जिन लोगों से हमारा विशेष स्नेह होता है उसके जीवन में यदि कोई दुर्घटना होनेवाली है तो उसका चित्र हमारे अचेतन मन में आ जाता है। यदि किसी व्यक्ति का मन निर्मल है तो यह घटना दिवास्वप्न में चित्रित हो जाती है। मेरी माता के जीवन में होने वाले इस प्रकार के दो एक अनुभव उल्लेखनीय हैं। एक बार मेरी मा ने देखा कि एक नवयुवक जो उस समय फौज में काम कर रहा था एक इञ्जन के पास असावधानी की अवस्था में खडा हुआ है। इसी बीच इञ्जन फट पड़ा और नवयुवक को बहुत चोट आयी। मेरी मा इस नवयुवक को स्नेह की दृष्टि से देखती थी। उसने तुरन्त उस युवक को बुलाया और अपना स्वप्न सुनाकर उसे भावी दुर्घटना के विषय में सचेत कर दिया। इसके तीन मास पश्चात् वह युवक वास्तव में एक मशीन के पास खड़ा काम कर रहा था। उसी समय उसे एक विलक्षण सी आवाज सुनायी पड़ी। मेरी माँ की कही हुई बात उसे इस समय याद आ गयी और वह मशीन से दूर भागकर मकान के बाहर चला आया। वह बाहर आया ही था कि मशीन फट गई। इसी प्रकार एक बार माँ ने अपने स्वप्न में देखा कि दूध की गाड़ी ले जानेवाले घोड़े पागल हो गये हैं और वे दूध की गाड़ी को इधर-उधर दौड़ाने लगे हैं। इस गाड़ी में दूध बेचनेवाला फस गया और मरते-मरते बचा। माँ ने जब अपना स्वप्न दूसरे लोगों से कहा तो वे हसने लगे परन्तु वह नहीं मानी और उसने दूधवाले को बुलाकर इस प्रकार की घटना से सचेत किया। इस कथन के कुछ समय के बाद ही वास्तव में स्वप्न में देखी गयी घटना घटी और समय पर चेतावनी मिल जाने के कारण दूध वाला अपनी जान बचा सका। डा० ओटो उल्फ ने कुछ उदाहरण देकर इसी व्याख्यान में यह भी बताया कि जिस प्रकार बिना किसी भौतिक साधन के हम दूसरे व्यक्ति के मन के विचार जान सकते हैं और दूर की घटनाओं का ज्ञान प्राप्त कर सकते हैं। उसी प्रकार अपने प्रिय व्यक्ति के संबन्ध की बातें भी हमें ज्ञात हो जाती हैं। कभी-कभी जानवरों के मन की बातें भी उनको प्यार करनेवाले स्वामी जान लेते हैं। डा० ओटो उल्फ ने अपने बचपन की कुछ घटनाओं का उल्लेख करते हुए बताया मैं कभी-कभी रात को देर करके घर लौटता था मैं अपने कमरे की ताला कभी-कभी किसी ऐसे जगह रख देता था जहाँ मेरा हाथ नहीं पहुँचता था। एक दो बार मुझे अपने घर के दरवाजे पर देर तक ठहरना पड़ा। इसी बीच मैंने

## जयमङ्गलाक्रोडपत्तम्

एवं सत्यपि यो गुरुभक्तो न भवेत् यो वा विवेककुशलः सन्तोषसुखवान् वा न स्यात् स तु उपर्युक्तां सिद्धिं प्राप्नुवन्नपि विनश्येत् तथाऽयं राजपुरोहितो नास्ति इत्यपि स्मर्तव्यम् । ध्वनितं चैतद् बालमनोविज्ञानलेखकेन तत्रैव[१] । (अ० ४४ अ०)

---

कल्पना की कि मैं सिढ़ी से चल कर दूसरी मंजिल पर पहुँच गया हूँ और धीरे-धीरे माँ-माँ कहता हूँ। इस कल्पना का परिणाम यह होता कि मेरी माँ अपने बिस्तर—से उठकर कमरे के बाहर आती और सीढ़ी से उतरकर नीचे कमरे के किवाड़ खोलती जहाँ मैं उसे खड़ा मिलता।

अभी हाल की बात है कि एक दिन मैं अपने कमरे में किसी फाइल को ढूँढ़ने गया। जब मैं कमरे के बाहर आया तो अनायास मुझे पीछे हटकर देखने की प्रेरणा हुई। मैंने वहाँ देखा कि कमरे के दरवाजे में अधर पर मेरा कुत्ता टँगा हुआ है। मुझे देखकर आश्चर्य हुआ कि कुत्ता अधर में कैसे टंग गया। मैं जग रहा हूँ कि सो रहा हूँ फिर विचार आया कुत्ते को ढूँढ़ा वह कहाँ है। कुत्ता घर में नहीं दिखायी दिया। इसी बीच एक बन्द आलमारी से कुछ आवाज सी आयी। उसे खोलकर देखा गया तो कुत्ता उसमें बन्द था। पीछे ज्ञात हुआ कि जब आलमारी खुली हुई थी तब कुत्ता उसमें बैठ गया था और कुछ दूसरी बातों में ध्यान फँसे रहने के समय ही आलमारी में ताला बन्द कर दिया गया था। बन्द आलमारी में बैठा हुआ कुत्ता जब घबड़ाने लगा तो संभवतः उसने अपने विचार अपने मालिक को भेजे। इसी के कारण कुत्ता एक दिवाल स्वप्न में टंगा हुआ दिखाई दिया।

दूर की घटनाओं को जान सकने के दो उदाहरण डा० विलियम ब्राउन ने अपनी साइकालोजी एण्ड साइकोथ्रोपी नामक पुस्तक में दिये हैं। प्रथम उदाहरण स्वीडेन वोर्ग का है। एक बार स्वीडेन वोर्ग इमैन्ड आल काण्ट के साथ बर्लिन को एक पार्टी में बैठे हुए थे। इसी समय वे अचानक कुछ बेचैन से हो गये कुछ देर बेचैन रहने के बाद वे शान्त हो गये। वहाँ पर उपस्थित लोगों ने जब उनके इस प्रकार बेचैन और फिर शान्त होने का कारण पूछा तो उन्होंने बताया कि स्टाक होम में आग लग गई थी और वह उनके मकान के पास आ गई थी इसीलिए वे बेचैन से हो गये थे। परन्तु मकान में लगने के पूर्व ही आग बुझा दी गई। अतः वे शान्त हो गये। पता चलाने पर घटना सत्य सिद्ध हुई। इसका वर्णन काण्ट ने अपनी आत्म जीवनी में दिया है। दूसरी घटना डा० विलियम ब्राउन द्वारा किये गये एक सैनिक की है। इस सैनिक को फ्रान्स के एक अस्पताल में सम्मोहनावस्था में लाकर अपने घर का ध्यान करने को कहा गया और वहाँ जो कुछ उस समय हो रहा था उसका वर्णन करने को कहा गया। उस सैनिक ने जो वर्णन किया पीछे खोज करने पर वह सत्य पाया गया। इति। (बालमनोविज्ञान ४४ अ०)।

१ यदि मनुष्य अपनी सामान्य चेतना को उसकी समकक्षी दूसरी चेतना के बदले न छोड़े वरन् वह उसे एक महान चेतना से मिला दे तो एक ओर उसकी—

## जयमङ्गलाक्रोडपत्रम्

### पुरोहितः ऐन्द्रजालिकः तत्फलं च

ईदृक् सिद्धिमान् पुरोहितः राजराज्यसंरक्षणार्थं स्वयञ्चिन्तितं पश्यन् यदा परान्-अपि दर्शयति तदा स तथाविधः ऐन्द्रजालिकसंज्ञया साहित्यविद्भिः व्यवह्रियते[1]।

ननु अस्या नीतौ क उपयोगः इतिचेत्। उपायसप्तकेषु शत्रुभयोत्पादनाय कृतकरक्तवृष्ट्यादिप्रदर्शनं अस्याः फलं बोध्यम्। परिगणनं चास्योपायेषु नीतिसारे उपलभ्यते[2]।

### सिद्धेः पूर्णता

इन्द्रजालप्रदर्शनमात्रेण ध्यानस्योपयुक्तता न मन्तव्या अपितु पुरोहितस्य सिद्धिस्तदैव यदा स देवतामपि साक्षात्करोति। सति च तस्मिन् पुरोहितः सिद्ध इत्युच्यते। अतो देवतादर्शनार्थमपेक्षितस्य ध्यानस्य लाभाय पुरोहितेन साधकेनात्मनि स्मृतिः संपादनीयेति प्रत्यभिज्ञादर्शनतोऽवगम्यते।

### स्मृत्युत्पत्तिः

स्मृतिः कथमुत्पद्यते ? इति चेत्। तद् विवृतं भावप्रकाशने तत्रैव द्रष्टव्यम्[3]।

---

सामान्य चेतना का लोप हो जायगा। और दूसरी ओर उसका असीम प्रसार भी हो जायगा। परन्तु यह तभी हो सकता हैं जब मनुष्य चेतना में सीमा उत्पन्न करनेवाली सभी प्रकार की वासनाओं का चाहे वह चेतन मन में उपस्थित हों अथवा अचेतन मन में परित्याग करने में समर्थ हो। यह कार्य अत्यन्त कठिन है। जब तक मनुष्य पूर्णतः निरीह नहीं हो जाता तब तक उसके व्यक्तित्व द्वारा प्रकाशित अलौकिक शक्तियाँ उसका लाभ न कर अन्त में हानि ही करती हैं। कहा जाता है कि ईश्वर को शक्ति का उपयोग ईश्वर ही कर सकता है। अलौकिक शक्तियाँ ईश्वरीय शक्तियाँ हैं। जब हम अपने आपको आध्यात्मिक तत्व से मिला देते हैं अर्थात् जब हमारी कोई अपनी इच्छा नहीं रह जाती तो तभी हमारे व्यक्तित्व द्वारा प्रकाशित अलौकिक शक्तियाँ अपने आपका और लोक का कल्याण करती हैं। इस प्रकार जो व्यक्ति जितना ही अधिक अपनी अन्तरात्मा की समीपता पाता है वह अपने आपमें अलौकिक शक्तियों का उतना ही अधिक साक्षात्कार करता है। इसके लिये मनुष्य को मानसिक शुद्धि की आवश्यकता होगी। इत्यादि। अ० ४४

१ देशकालापरोक्षं यत्परोक्षस्यैव वस्तुनः।
मन्त्रौषधादिभिः सोयमिन्द्रजाल इतीरितः॥ भावप्रकाशनं अ० ?

२ साम दानं च भेदश्च दण्डश्चेति चतुष्टयम्।
मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः॥ इति। नी० स० १८

३ देशकालोपयुक्तानां सुखदुःखानुषङ्गिणाम्।
चिरविस्मृतवस्तूनां स्मरणं स्मृतिरुच्यते॥ —

## जयमङ्गलाक्रोडपत्रम्

तस्यायं भावः—इह जन्मनि पूर्वाननुभता अपि विषयाः विहारस्थले रम्यवचनादि-श्रवणैः सुखसाधनत्वेन मन्यन्तेऽविहरणशीलेन बालकेनापि। तदाहुः रम्याणीत्यादिना[1]।

तेषां बालकानामयं यो वासनोद्बोधः स नैतज्जन्मोद्भूतानुभवमूलकः। किन्तु जन्मान्तरीयानुभवमूलक इत्येव वक्तव्यं भवति। अनुभवश्च द्विक्षणावस्यायी अतस्तज्जनितो वासनात्मकः संस्कारः वर्तमानजन्मनि विहरणाद्युद्दीपनादीनुपलभ्य उद्बुद्धो भवति ततश्च स्मृतिर्भवति। तदेवोक्तं टिप्पण्यां (१) तच्चेतसा स्मरति नूनमबोधपूर्वमिति। एवंरीत्या चिन्तायामवस्थितोपि मनुष्यः ध्यायन् यथार्थमर्थंपश्यति चेत् तत्र-किमाश्चर्यम्। एतदेव दर्शनं पुरोहितस्य कार्यं प्रधानम्। ईदृगुपलब्धौ सत्यां पुरोहितेन प्रयुक्ताः मन्त्राः सफला भवितुमर्हन्ति। एवं च यो ध्यानादिभावेन स्थितः सङ्कल्पमहिम्ना च चिन्तयायुक्तो भूत्वा यथेन्द्रजालं संपादयति, दर्शयति च स्वपुत्रशिरश्छेदनादि, अनधीतवाक्यान्यपि पठति, उपस्थितानां जनानामाश्चर्यं संपादयति तथा साधकोपि ध्यानादिभावे स्थितः एकाग्रसङ्कल्पमहिम्ना विषहारकमन्त्रान् प्रयोज्य विषं हारयति। एवं सिद्धः पुरोहितोऽपि सुगुप्तानपि मन्त्रान् स्वप्नादौ श्रृणोति[2]। कवितां च प्रादुर्भावयति। तदुक्तम्

तथा— शिवशिरसि शिरांसि यानि रेजुः।
शिव ! शिव तानि लुठन्ति गृध्रपादे॥
अयि विषमः पुराकृतानाम्।
भवति हि जन्तुषु कर्मणां विपाकः॥ इति। (प्र० खं० १-१८७)

---

दौःस्थ्यान्निद्राक्षयाद्रात्र्याः प्रहरात्पाश्चिमादपि।
चिन्ताया मुहुरभ्यासात्समानश्रुतिदर्शनात्॥
भवेत्तदनुभावस्तु भ्रूसमुन्नमनं मुहुः।
उद्वाहनं च शिरसः सदृशस्यावलोकनम्॥
हर्षश्च शिरसः कंपः कथितो रसकोविदैः॥ इति अ० १ पृ० १६॥

१ रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्।
पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः॥
तच्चेतसा स्मरति नूनमबोधपूर्वम्।
भावस्थिराणि जननान्तरसौहृदानि॥ इति

२ आदिष्टवान् यथा स्वप्ने रामरक्षामिमां हरः।
तथा लिखितवान् प्रातः प्रबुद्धो बुधकोशिकः॥ इति। (रामरक्षास्तोत्र)
तथा वाल्मीकिरामायणे—
मा निषाद ! प्रतिष्ठां त्वम् अगमःशाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥ इति वा० सं० ११

## जयमङ्गलाक्रोडपत्रम्

इति सयस्यापूर्तिः कविकुलगुरुणा कालिदासेनाकारि साच यथार्थाऽभूदिति श्रूयते। एवंविधा या साधकस्योपलब्धिः प्रातिभज्ञानरूपा सैव पौरोहित्यविशेषः।

### पुरोहितत्वसंपादने क्रमः देवदर्शनञ्च

तत्रायं क्रमः पुरोहितः शुचिर्भूत्वाऽऽदौ स्वाध्यायमधीते। अधीतस्स्वाध्यायः मन्त्रत्वाद् अध्येतरि अदृष्टमुत्पादयति गुणदोषौ च प्रत्येकस्य कर्मणः सम्यक्तया प्रकाशयति। ततश्चाध्येताऽकार्यान्निवर्तते ततः धर्म्येअर्थ्ये च प्रवर्तते। तेनायं स्वास्थ्यं लभते। निर्विकारिता च शास्त्रपारतन्त्र्यात् सहजसिद्धा भवति। एतस्मादेव हेतोः स्मृतिः तया च ध्यानादिभावः तेन च पुनः संस्कारः एवं क्रमेण संस्कारोद्बोधः। एतन्महिम्ना स्वाध्यायाभ्यसनादृष्टेन देवतादर्शनमपि अस्य नाऽसुलभम्। इयमेव मन्त्रसिद्धिः। इन्द्रजालस्य मायायाश्च प्रयोगस्ततथाविधस्य कृते सुलभः। तदेतत् क्रोडीकृत्य योगसूत्रे योगसिद्धान्तचन्द्रिकायां च स्फुटीकृतमस्ति। तत्रैव द्रष्टव्यम्'—

---

### देवतादर्शनम्

१ स्वाध्यायादिष्टदेवतासंप्रयोगः (योगसूत्रे २-४४)

टी० वेदान्तोपनिषदाद्यावृत्तिरूपत्वात् सगुणमन्त्रजपस्तोत्रपाठादिरूपाच्च स्वाध्यायादिष्टदेवतासंप्रयोगः दर्शनप्रतिबन्धकदुरितनिवृत्त्यादिना साक्षात्कारो भवतीत्यर्थः। संभाषणानुग्रहादीनि च भाष्ये कण्ठरवेणोक्तानि। देवता ऋषयः साध्याश्च स्वाध्यायशीलस्य दर्शनं गच्छन्ति कार्ये चास्य वर्तन्त इति दिक। देवतेत्युपलक्षणम्। इष्टानामभिमतानां देवानामृषीणां सिद्धानां यक्षाणां गन्धर्वाणामन्येषां महानुभावानां संप्रयोगो दर्शनं भवति। तेभ्यः स्वान् पुनातीत्यर्थः। ते दर्शनप्रतिबन्धकपापनिवृत्त्या दर्शनमायान्ति। कार्यं चानुकूला भवन्तीत्यर्थः। योगचन्द्रिका २-४४—

तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः।२-१

टी० तप उपवासादिना कायशोषणम् उक्तमीश्वरगीतायाम्—

उपवासपराकादिकृच्छ्रचान्द्रायणादिभिः।
शरीरशोषणं प्राहुस्तापसास्तप उत्तमम्॥ इति।

स्वाध्याय उपनिषदाद्यावृत्तिः। उक्ता च तत्रैव—

वेदान्तशतरुद्रीयप्रणवादिजपं बुधाः।
सत्वशुद्धिकरं पुंसां स्वाध्यायं परिचक्षते॥ इति।

प्रणिधानं स्तुत्यादिजनिता शक्तिः उक्ता तथात्रैव—

स्तुतिस्मरणपूजाभिर्वाङ्मनःकायकर्मभिः।
सुनिश्चला भवेद्भक्तिरेतदीश्वरपूजनम्॥ इति।

स्तुतिरत्र गुणमात्रकथनम्। पूजा चासनपाद्याद्यर्पणम्। एताभिर्जनिता भक्तिरीश्वरपूजनम्। तच्च सर्वक्रियाणां परमेश्वरे परमगुरावर्पणम्। तत्फलसन्न्यासो वा। त्वाह—   कामतोऽकामतो वापि यत्करोमि शुभाशुभम्।—

## जयमङ्गलाक्रोडपत्रम्

### मन्त्रसिद्धिबलाबले

यद्यपि स्वाध्यायानध्येतारोपि केचित् कापालिकाः इन्द्रजालादिकं साधयन्ति। तथापि शास्त्रोदितत्वात् स्वाध्यायाध्ययनप्रयुक्तमदृष्टं सर्वापेक्षयातिशयिततरं अदृष्टान्तरमभिभवितुं समर्थमिति स्वाध्यायाध्ययनशीलः पुरोहितः अत्रोक्तः। अधीतः स्वाध्यायः तावत्फलं संपादयितुं नालं भवति यावत् तस्य यथार्थोऽर्थः तात्पर्यविषयतया नावगाहितः स्यात्। अतः स्वाध्यायतात्पर्यावगाहनाय परंपरया यत्संप्रदायेन तदर्थो ज्ञातव्योस्ति तद्भक्तिरवश्यं, तदर्थबुभुत्सुना कर्तव्या। न च स्वाध्यायमधीत्य स्वत एव तदर्थो ज्ञातुं संभाव्यते इति वाच्यम्। अल्पज्ञेन विप्रकीर्णस्य समस्त वेदस्य अध्ययनाशक्तेन तत्तात्पर्यं ज्ञातुमशक्तत्वात्। तथा च कलावपि दत्तात्रेयतन्त्रोक्त्यनुरोधात् विषादिदोषनिर्हरणक्षमः स्वाध्यायाध्ययनशीलः अथर्ववित् इन्द्रजालादिक्रियासमर्थः उत्पत्तुं नार्हति इति न मन्तव्यम्। यदि तु पुरोहितोऽपि औषधि तपःसमाधिजं धर्मं उपेक्षते तर्हि तु सिद्धिर्दूरमपास्ता। इति स विषापसारणसदृशादृष्टफलं जप्तेपि तत्तन्मन्त्रे साधयितुं न शक्नुयात् इत्यपि न विस्मर्तव्यम्। अतः पुरोहितेन दृष्टादृष्टद्वारकसिद्धये शुचित्वं सत्वञ्चावलंबनीयमेव, तथा सत्येव मेधोत्पत्ति-

---

तत्सर्वं त्वयि सन्यस्तं त्वत्प्रयुक्तः करोम्यहम्॥

इत्यादि स्मृतिभिर्व्याख्यातम्। द्वितीयं तु कर्मफलानां भोक्ता परमेश्वर इति चिन्तनम्।

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति॥ इत्यादिना बोधितम्।

एतानि निरुक्तार्थभावनाविशिष्टभक्तियोगभिन्नत्वात् क्रियायोगादिव्यापारमात्रत्वात् क्रियायोग इत्येकवचननिर्देशात्कायमनोव्यापारः समुच्चित एव क्रियायोगो विशिष्टफल इति ज्ञापितम्। यद्यपि योगाङ्गेषु नियमे शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि पञ्चोक्तानि तथापि प्रकृतत्रयाणां दृष्टादृष्टद्वारा कायेन्द्रियमनोजयादिविशिष्टफलश्रवणाद्दर्शनाच्च ततः पृथगुक्तिरिति मन्तव्यम्। २।१।

समाधिभावनार्थः क्लेशतनूकरणार्थश्च।२-२।

टी०—समाधेर्भावनमुत्पादनमर्थः फलं यस्य स तथोक्तः। महत्सु क्लेशादिषु सत्सु समाधिर्न सिद्ध्यति। तत्र क्रियायोगः क्लेशादींस्तनूकृत्य समाधिं भावयति। तनूकरणमिह सूक्ष्मीकरणम्। श्लक्ष्णं दभ्रं कृशं तन्विति कोशात्। च्विप्रत्ययेन च स्वोचितफलाधायकानामतनूनां तनुवत्करणं स्वोचितफलेष्वभिभवमात्रं न स्वरूपतो हानिः। वर्णाश्रमाद्यभिमानादिमूलकेन क्रियायोगेनाविवेकोच्छेदासंभवादिति ज्ञापितम्। तथाच क्रियायोगेन सञ्जातासञ्जातविवेकज्ञानमुत्पाद्य सवासनमिथ्याज्ञानं नाशयतीति निष्कर्षः। २।२। इति।

## जयमङ्गलाक्रोडपत्रम्

संभवात् । मेधा च ब्रह्मविषयिणी प्रज्ञा इति श्रीमच्छङ्कराचार्यवाक्यं अत्र प्रमाणतया स्मर्तव्यम् । तथा तैतिरीयोपनिषद्यपि उक्तम् तत् द्रष्टव्यं टिप्पण्याम्[1] ।

### कलौ मन्त्रसिद्धिः पुरोहितसौलभ्यं च

न च दत्तात्रेयतन्त्रमपि कलौ न सिद्ध्यति इति शङ्क्यम्, कलावपि पुरोहितैः मन्त्रसिद्धिः साध्या भवतु इत्याशयेन तस्य प्रणीतत्वात्[2] ।

अत एव सत्वस्य शुचित्वस्य चानुवृत्त्यर्थं मूलकृता "पुरोहितमुदितोदितकुलशीलमित्यादि" ग्रन्थेन कुलस्य निर्देशः कृतः । तस्माद्वर्तमाने समये पुरोहितो नाऽसुलभः ।

### पुरोहितानुसरणे कारणान्तरम्

किञ्च राज्ञः पुरोहितानुसरणे अन्यदपि कारणमस्ति । तद्यथा—

षडङ्गवेदवित्वं ब्राह्मणत्वम् । रक्षिते तस्मिन् अन्यत्सुरक्षितं भवति । अत्रैव धर्ममर्यादापालनस्य सुशकत्वात् । तथाहि—

प्रजायां रौद्ररसः अर्थप्रधानत्वे सति उद्भवति तर्हि न कथञ्चिदपि योगक्षेमौ जनपदे भवितुमर्हतः । नापि च राजप्रजयोः परस्परं प्रेमानुरागपर्यवसायि भविष्यतीति सर्वत्र स्थायिधृतियुता सात्विकतैव पुरस्करणीया । न चापरैः अयमर्थः सर्वथोपेक्षित इति वाच्यम् । तत्रापि धृतिदर्शनात् । ननु वर्णाश्रमधर्माधीनत्वे को विशेष इति चे दुच्यते । शौचं सन्तोषः विवकिता च धर्माधीनत्वे उत्तरोत्तरमभिवर्धते । असूया ईर्ष्या वा परस्परं नोदेति, अपितु वास्तविकशत्रावरिप्रकृतिसंपन्ने एव । इत्यादि विस्तरतः अत्र । ( प्र० खं० १ पृ० २१० ) चान्यत्र च निरूपितं वर्तते । तदेतत् सर्वमपि परंपराप्राप्तयथार्थार्थनिरुपकशास्त्राधीनम्, अत्रैव शमस्य स्थायिन उत्पादने सामर्थ्यात् यथार्थज्ञानवत्वेन सफलत्वान्नीतिरूपत्वात् फलजनकत्वात् हर्षोपधायकत्वाच्च । अत एवानन्दप्रभापि वेदप्रसूतज्ञाने नियता तथा अकामहतत्वमप्यत्र विशेषतया सिद्ध्यति । अतएव मनसि शीतलतानुभूयतेऽकामहतैः ।
तदिमेवानुसन्धाय कविभिरभिधीयते—

यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः ।
हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो बहिः ॥ इति । (भाग०)

---

१ श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्तिः शान्त्या चित्तं चित्तेन स्मृतं स्मृत्या स्मारं स्मारेण विज्ञानं विज्ञानेनात्मानं वेदयति । मेधावी भूयासम् इत्यादि च ।

२ गुरुभक्ताय दातव्यं अभक्तं न कदाचन ।
अथातः संप्रवक्ष्यामि दत्तात्रेय तथा श्रुणु ॥
कलौ सिद्धिमहातन्त्रं विना कीलेन कथ्यते ॥ १२ ॥
न तिथिर्न च नक्षत्रं न योगो नास्ति वासरः ।
न व्रतं नियमं होमं काकवेलाविवर्जितः ॥ १३ ॥—

## जयमङ्गलाक्रोडपत्रम्

### ब्राह्मणत्वस्वरूपम्

ज्ञानमर्जितं कामहतत्वन्तु न व्यपगतं किन्तेन ज्ञानोपार्जनश्रमेण । इति[1] ।

तस्माद्वेदाध्ययनस्य धर्मानुष्ठानस्य चेदं फलं यत् अकामहतत्वशिष्टा शमप्रधाना सात्विकी मनोवृतिः । इदमेव ब्राह्मणत्वस्वरूपं नीत्यनुगतं लोकसङ्ग्राहकं विश्वासोत्पादकञ्च अत्रैव षण्णामङ्गानामध्ययनस्य पर्यवसानम् । अतएव पुरोहितोऽपि अनया राजनीत्या काम्यते । उपर्युक्तब्राह्मणतत्वस्य विलोपे लोकयात्राविनाशः, तत्सत्वे तद्रक्षणम् इति भाष्यकृता षडङ्गसहितस्य वेदस्याध्ययनं विधीयते—

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येतव्यः ज्ञेयश्च" इति। (भा० १-१)

भगवान् अपि ब्राह्मणत्वं राजसतामसनोवृत्तिभ्यां लुप्तं लोकयात्रां विलोपयिष्यतीति ज्ञात्वा अवतरति । शमप्राधान्यं च यया विद्यया संपाद्यते तां रक्षति च इति भाष्यकृता गीताभाष्ये निरूप्यते[2] ।

वेदेनापि शमप्रधानवृत्यां स्थितः गूढं वस्तु ज्ञातुं वेदानुवचनेन चेष्टेत इत्युक्त्वा उपर्युक्त एवार्थः स्फुटीकृतः । तद्यथा—

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन, दानेन, तपसानाशकेन" इति ॥

अतः शमप्रकृतिः षडङ्गवेदवित् ब्राह्मणः क्षत्रप्रकृतेः अङ्कुशस्थाने भारतीयाराजनीत्या अनुमतोऽकार्यान्निवर्तयति वर्धयति च राज्यं इति कृत्वा पुरोहितस्य अनुसरणं राज्ञा कर्तव्यं इति यदुक्तंतद्युक्तमेव । तथा च वक्ष्यते मूलकृतापि ब्राह्मणेनेत्यादिना ।[3]

---

केवलं तन्त्रमन्त्रेण औषधी सिद्धिरूपिणी ।
यस्य साधनमात्रेण क्षणं सिद्धिश्च जायते ॥ इति १४ ॥ (१ पटलः)

१ षडङ्गादिवेदा मुखे शास्त्रविद्या कवित्वादि पद्यं सुगद्यं करोति ।
गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततःकिं ततः किम् ॥ इति ।

२ 'द्विविधो हि वेदोक्तो धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च जगतः स्थितिकारणम् । प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुः यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोर्थिभिरनुष्ठीयमानः दीर्घेण कालेनानुष्ठातॄणां कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे, प्रवर्धमानेचाऽधर्मे जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुः भौमस्य ब्रह्मणो ब्राह्मणत्वस्य चाभिरक्षणार्थं देवक्यां वसुदेवादंशेन किल संबभूव । ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मः तदधीनत्वाद् वर्णाश्रमभेदानाम् । (गीतोपोद्घातशाङ्करभाष्यम्)

३ ब्राह्मणेनैधितं क्षत्रं मन्त्रीमन्त्राभिसंहितम् ।
जयत्यजितमत्यन्तं शास्त्रानुगतशस्त्रितम् ॥ इति । (अ० १ अ० ६)

## जयमङ्गलाक्रोडपत्रम्

### वैदिकधर्मस्वीकृतौ शास्त्रान्तरसंवादः

वैदिकशासनस्य राज्यं अभ्यर्हितमालक्ष्य शास्त्रान्तरेष्वपि विप्रदीनां धर्मनिरूपणावसरे वैदिक एव धर्मः धर्मपदेन व्याख्यातः[१]।

---

१ तदुक्तम् —**प्रशस्तपादभाष्ये धर्मनिरूपणे**—

ब्राह्मणक्षत्रियवैश्यानामिज्याध्ययनदानानि। ब्राह्मणस्य विशिष्टानि प्रतिग्रहाध्ययनयाजनानि स्ववर्णविहिताश्च संस्काराः। क्षत्रियस्य सम्यक् प्रजापालनमसाधुनिग्रहो युद्धेष्वनिवर्तनं स्वकीयाश्च संस्काराः। वैश्यस्य क्रयविक्रयकृषिपशुपालनानि स्वकीयाश्च संस्काराः। शूद्रस्य पूर्ववर्णपारतन्त्र्यममन्त्रिकाश्च क्रियाः। आश्रामिणान्तु ब्रह्मचारिणो गुरुकुलनिवासिनः स्वशास्त्रविहितानि गुरुशुश्रूषाग्नीन्धनभैक्ष्याचरणानि मधुमांसदिवास्वप्नाञ्जनाभ्यञ्जनादिवर्जनम्। विद्याव्रतस्नातकस्य कृतदारस्य गृहस्थस्य शालीनयायावरवृत्युपार्जितैरर्थैः भूतमनुष्यदेवपितृब्रह्ममुख्यानां पञ्चानां महायज्ञानां सायं प्रातरनुष्ठानम्, एकाग्निविधानेन पाकयज्ञसंस्थानां च नित्यानां शक्तौ विद्यमानायामग्न्याधेयादीनां च हविर्यज्ञसंस्थानामग्निष्टोमादीनां सोमयज्ञसस्थानां, च ऋत्वन्तरेषु ब्रह्मचर्यमपत्योत्पादनं च।

ब्रह्मचारिणो गृहस्थस्य वा ग्रामान्निर्गतस्य वनवासो वल्कलाजिनकेशश्मश्रुनख रोमधारणं च। वन्यहुतातिथिशेषभोजनानि वानप्रस्थस्य। त्रयाणामन्यतमस्य श्रद्धावतः सर्वभूतेभ्यो नित्यमभयं दत्वा संन्यस्य स्वानि कर्माणि, यमनियमेष्वप्रमत्तस्य षट्पदार्थप्रसङ्ख्यानाद्योगप्रसाधनं प्रव्रजितस्येति। दृष्टं प्रयोजनमनुद्दिश्यैतानि साधनानि भावप्रसादं चापेक्ष्यात्ममनसोः संयोगाद्धर्मोत्पत्तिरिति। इति।

**न्यायकन्दली**— ब्राह्मणस्य विशिष्टान्यसाधारणानि धर्मसाधनानि प्रतिपादयति प्रतिग्रहाध्यापनयाजनानि। प्रतिग्रहो विशिष्टाद् द्रव्यग्रहणम्, अध्यापनं तु प्रसिद्धमेव, याजनमार्त्विज्यम्। एतानि ब्राह्मणस्य धर्मसाधनानि तस्यामीभिरेवोपायैरर्जितानां द्रव्याणां धर्माधिकारात्। स्ववर्णविहिताश्चाष्टचत्वारिंशत्संस्काराः वैदिककर्मानुष्ठानयोग्यतापादनद्वारेण ब्राह्मणस्य धर्मसाधनम्। क्षत्रियस्य विशिष्टानि धर्मसाधनानि, सम्यक् प्रजापालनं, न्यायवृत्तीनां प्रजानां परिरक्षणम्, असाधुनिग्रहः दुष्टानां यथाशास्त्रं शासनम्, युद्धेष्वनिवर्तनं युद्धेषु विजयावधिः प्राणावधिर्वा आयुधव्यापारः। स्वकीयाश्च संस्काराः। वैश्यस्य क्रयविक्रयकृषिपशुपालनानि, मूल्यं दत्वा परस्माद् द्रव्यग्रहणं क्रयः, मूल्यमादाय परस्य स्वद्रव्यदानं विक्रयः। कृषिः परिकर्षितायां भूमौ बीजस्य वपनं रोपणं च, पशुपालनं गोजाविकादिपरिरक्षणम्। एतानि वैश्यस्य धर्मसाधनानि, तस्यामीभिरेवोपायैरर्जितानां धनानां धर्माङ्गत्वात्। शूद्रस्य पूर्वेषु वर्णेषु पारतन्त्र्यममन्त्रिकाश्च क्रियाः धर्मसाधनम्। आश्रमिणां तु धर्मसाधनमुच्यते— ब्रह्मचारिणो गुरुकुलनिवासिन इति। उपनीय यः शिष्यं साङ्गं सरहस्यं च वेदमध्यापयति स गुरुः, तस्य कुले गृहे वसनशीलस्य ब्रह्मचारिणः—

## जयमङ्गलाक्रोडपत्रम्

### विप्रनमनप्रयोजनम

उपर्युक्तं धर्मस्य महत्वमालोच्य चम्पूरामायणे महाराजेन भोजेन तथाविधा ब्राह्मणाः नमस्कृताः ।

उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेत् ।
तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।।
तेषां प्रकाशनदशा च महीसुरैश्चेत् ।
तानन्तरेण निपतेत् क्व नु मत्प्रणामः ।। इति । (बा०का०चं० २ श्लो०) ।

---

स्वशास्त्रविहितानि ब्रह्मचारिणमधिकृत्य शास्त्रेण विहितानि । गुरुशुश्रूषा गुरोः परिचर्या गुरुशुश्रुषा च, अग्निश्चेन्धनं च भैक्ष्यं च तेषामाचरणानि । गुरुशुश्रूषा-भैक्ष्ययोः करणमेवाचरणम् । अग्नेराचरणम्, प्रत्यहमग्नौ होमः । इन्धनस्याचरणमग्न्यर्थं वनादिन्धनस्याहरणमिति विवेकः ।

गृहस्थस्य धर्मसाधनम कथयति—विद्याव्रतस्नातकस्येति । यो वेदाध्ययनार्थं गृहीतं व्रतमधीते वेदे विसर्जितवान् स विद्याव्रतस्नातकः, तस्य कृतदारस्य कृतपत्नीपरिग्रहस्य गृहस्थस्य शालीनयायावरवृत्युपार्जितैरर्थैर्भूतमनुष्यदेवपितृब्रह्माख्यानां पञ्चानां महायज्ञानां सायंप्रातरनुष्ठानम् । यावता धान्येन कुशूलपात्रं कुम्भीपात्रं वा परिपूर्यते, त्र्यहमेकाहं वा वर्तनं भवति तावन्मात्रस्य परेण स्वयमानीयमानस्य श्रद्धया दीयमानस्य यः परिग्रहः सा शालीना वृत्तिः । परस्मादप्रतिग्रहगतश्चक्रमादाय यत्प्रत्यङ्गनं भिक्षाटनं सा यायावरवृत्तिः । ताभ्यामुपार्जितैरर्थैः पञ्चानां महायज्ञानां सायंप्रातरपराण्हे चानुष्ठानं गृहस्थस्य धर्मसाधनम् । भूतेभ्यो बलिप्रदानं भूतयज्ञः । अतिथिपूजनं मनुष्ययज्ञः । होमो देवयज्ञः । श्राद्धं पितृयज्ञः । ब्रह्मयज्ञो वेदपाठः । एकाग्निविधानेन पाकयज्ञसंस्थानामिति अनुष्ठानम् । एकाग्निरिति औपासनिकः । तस्य विधानं विवाहकाले परिग्रहः । तेन पाकयज्ञसस्थानां पाकयज्ञविशेषाणामष्टकापार्वणी चैत्र्याश्वयुज्यादीनां नित्यानामवश्यकरणीयानां सति सामर्थ्येऽनुष्ठानम् । अग्न्याधेया—दीनामिति, अनुष्ठानं धर्मसाधनम्, अग्न्याधेयशब्देनाग्न्याधानस्याभिधानम्, यद् ब्राह्मणेन वसन्ते क्रियते । हविर्यज्ञसंस्था हविर्यज्ञविशेषा दर्शपौर्णमासचातुर्मास्याग्रायणादिका इष्टयः कथ्यन्ते । अग्निष्टोमादीति । अग्निष्टोमौक्थ्ययषोडशीवाजपेयातिरात्राप्तोर्यामाः सप्तसोमयज्ञविशेषाः सोमयज्ञसंस्था उच्यन्ते । ऋत्वन्तरेष्विति । ऋतुकालादन्यकालेषु ब्रह्मचर्यं, व्रतरूपेण स्त्रीसेवापरिवर्जनं धर्मसाधनम् । अपत्योत्पादनमपि धर्मसाधनम् पुत्रेण लोकाञ्जयतीति श्रुतेः ।

वनस्थस्य धर्मसाधनं कथयति—ब्रह्मचारिणो गृहस्थस्य वेति 'यदहरेवास्य श्रद्धा भवति तदहरेवायं प्रव्रजेत्" इति श्रवणात् सति श्रद्धोपनये ब्रह्मचारिणो वनवासो भवति । गृहस्थस्य वा तस्य वानप्रस्थव्रतमाचरतो वल्कलाजिनकेशश्मश्रुनखरोम-धारणम्, वन्यस्य फलमूलस्य भोजनं हुतशेषभोजनं, अतिथिशेषभोजनं च धर्म—

**जयमङ्गलाक्रोडपत्रम्**

अतएवाहुः—दैवाधीनं जगत् सर्वं मन्त्राधीनं तु दैवतम् ।।
ते मन्त्रा ब्राह्मणाधीनाः ब्राह्मणो मम दैवतम् ।। इति ।

दैवाधीनत्वं जगतः कथमस्तीति न्यायकुसुमाञ्जलौ साधितम् । तत्रैव द्रष्टव्यम्[१] ।

---

साधनम् । यः प्राजापत्यामिष्टिं निरूप्य सर्वस्वं दक्षिणां दत्त्वात्मन्यग्निं समाधाय पुत्रे भार्यां निक्षिप्य प्रव्रजितः, न तस्य होमो न तस्यातिथिपरिग्रहः यस्तु सह पत्न्या सहैवाग्निना वनं प्रस्थितः, तस्य हुतशेषभोजनमतिथिशेषभोजनं च धर्मसाधनम् ।

यतिधर्मं निरूपयति—त्रयाणामिति । यस्याश्रमपरिग्रहेऽपि नियमो नास्ति श्रद्धोपगमे सति ब्रह्मचार्येव यतिर्भवति, गृहस्थो वा भवति, वानप्रस्थो वेत्यनेनाभि प्रायेणोक्तं त्रयाणामन्यतमस्येति । श्रद्धावतः चित्तप्रसादवतः सर्वभूतेभ्यो नित्यमभयं दत्वा भूतानि मया न जातु हिंसितव्यानीति अद्रोहसङ्कल्पं गृहीत्वा स्वानि कर्माणि काम्यानि संन्यस्य परित्यज्य यमनियमेष्वप्रमत्तस्य । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाइति । तपश्शौचादयस्तु नियमाः । यथाह स एव भगवान्—शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमा इति । न्यायभाष्यकारस्तु प्रत्याश्रयं विशिष्टं धर्मसाधननियममाह । तेष्वप्रमतस्य ताननतिक्रमतः । षट्पदार्थप्रसङ्ख्यानात् षण्णां पदार्थानां तत्त्वज्ञानाद्योगस्यात्मज्ञानोत्पादनसमर्थस्य समाधिविशेषस्य प्रसाधनमुत्पादनं प्रव्रजितस्य धर्मसाधनम् । यथैतानि धर्मं साधयन्ति तथा कथयति—दृष्टं चेति । लाभ-पूजादिप्रयोजनमनुद्दिश्यानभिसन्धाय यदैतानि साधनानि क्रियन्ते, तदैतानि साधनानि भावप्रसादं चाभिप्रायविशुद्धिं चापेक्ष्यात्ममनसोः संयोगाद्धर्मोत्पत्तिरिति' इति ।

(मू०) १ एकस्य न क्रमः क्वापि वैचित्र्यंच समस्य न ।
शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रमः ।।७।।

टी०—न तावदेकस्मादनपेक्षादनेकम् अक्रमात् क्रमवत्कार्यानुपपत्तेः । क्रमवत्तावत्कार्यकारणस्वभावत्वात्तस्य तत्तथा यौगपद्यवदितिचेत् । अयमपि क्षणभङ्गेपरिहारो, न तु सहकारिवादे । पूर्वपूर्वानपेक्षायां क्रमस्यैव व्याहतेः । क्रमनियमे त्वनपेक्षानुपपत्तेः । नाप्यनेकमविचित्रम् । यदिह्यन्यूनमनतिरिक्तं वा दहनकारणमदहनस्यापि हेतुर्नासावदहनो दहनो वा स्यादुभयात्मको वा स्यात् । न चैवम् शक्तिभेदाभेदाभ्यामदोष इति चेन्न । धर्मिभेदाभेदाभ्यां तस्योपपत्तेः । असङ्कीर्णोभयजननस्वभावत्वादयमदोष इति चेन्न । नहि स्वाधीनमस्यादहनत्वम्, अपितु तज्जनकस्वभावाधीनम् । तथा च तदायत्तत्वाद्दहनस्यापि तत्त्वं केन वारणीयम् । न हि तस्मिञ्जनयितव्ये नासौ तत्स्वभावः । तस्माद् विचित्रत्वात् कार्यस्य कारणेनापि विचित्रेण वा भवितव्यम् । न च तत्स्वभावस्तथा । ततः सहकारिवैचित्र्यानुप्रवेशः । न तु क्षणोपि तदनपेक्षस्तथा भवितुमर्हतीति ।—

## जयमङ्गलाक्रोडपत्रम्

अत एव भीष्मेणाऽपि सनातनधर्मनिरूपणावसरे ब्राह्मणस्य शमप्रकृतिमत्वं ज्ञात्वा प्रातिभज्ञाने अयथार्थत्वं न भवतीति हेतुना ब्राह्मणाः नमस्कृताः। तदुक्तम्—

"ब्राह्मणेभ्यो नमस्कृत्य धर्मान् वक्ष्ये सनातनान्" ।। इति ।

विना ब्राह्मणसम्बन्धं राज्यसमृद्धिर्न भवतीति मनुनापि उच्यते नाब्रह्मेत्यादिना[1] ।

---

अस्तु दृष्टमेव सहकारिचक्रं किमूपर्वकल्पनयेति चेन्न। विश्ववृत्तितः।

(मू०) विफला विश्ववृत्तिर्नो न दुःखैकफलाऽपि वा ।
दृष्टलाभफला नापि विप्रलम्भो पि नेदृशः ।।८।।

(टी०) यदि हि पूर्वपूर्वभूतापरिणतपरम्परामात्रमेवोत्तरोत्तरनिबन्धनं, न परलोकार्थी कश्चिदिष्टापूर्तयोः प्रवर्तेत। न हि निष्फले दुःखैकफले वा कश्चिदेको पि प्रेक्षापूर्वकारी घटते। प्रागेव जगत्। लाभपूजाख्यत्यर्थमिति चेल्, लाभादय एव बन्धनाः। न हीयं प्रवृत्तिः स्वरूपत एव तद्धेतुः। यतो वाऽनेन लब्धव्यं यो वैनं पूजयिष्यति स किमर्थम्। ख्यात्यर्थमनुरागार्थञ्च। जनो दातरि मानयितरि च रज्यते। जनानुरागप्रभवा हि सम्पद् इति चेन् न। नीतिनर्मसचिववेष्वेव तदर्थं दानादिव्यवस्थापनात्। त्रैविद्यतपस्विनो धूर्तबका एवेतिचेन्न। नास्तिकैरपि तथा करणप्रसङ्गात् संभोगवत्। लोकव्यवहारसिद्धत्वादफलमपि क्रियते वेदव्यवहारसिद्धत्वात् सन्ध्योपासनवदितिचेद्, गुरुमतमेतन्नतु गुरोर्मतम्। ततो नेदमनवसर एव वक्तुमुचितम्। वृद्धैर्विप्रलब्धत्वाद् बालानामिति चेन्न। वृद्धानामपि प्रवृतेः। न च विप्रलम्भकाः स्वात्मानमपि विप्रलभन्ते तेऽपि वृद्धतरैरित्येवमनादिरितिचेन्। न। तर्हि विप्रलिप्सुः कश्चिदत्र यतः प्रतारणशङ्का स्यात्। इदम्प्रथमएव कश्चिदनुष्ठायापि धूर्तः पराननुष्ठापयतीति चेत्। किमसौ सर्वलोकत्तर एव, यः सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्येण तपसा श्रद्धया वा केवलपरवञ्चनकुतुहली यावज्जीवमात्मानमवसादयति। न कथञ्चनैनमेकं प्रेक्षाकारिणोऽप्यनुविदध्युः। केन वा चिन्हेनायमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निर्णीतः ? न ह्येतावतो दुःखराशेः प्रतारणसुखं गरीयः यतः पाखण्डाभिमतेष्वप्येवं दृश्यते इति चेन् न। हेतुदर्शनादर्शनाभ्यां विशेषात्। अनादौ चैवम्भूतेऽनुष्ठाने प्रतीयमाने प्रकारान्तरमाश्रित्यापि बहुवित्तव्ययायासोपदेशमात्रेण प्रतारणा स्यान्, न त्वनुष्ठानागोचरेण कर्मणा। अन्यथा प्रमाणविरोधमन्तरेण पाखण्डित्वप्रसिद्धिरपि न स्यात्।

१ नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्धते ।
ब्रह्मक्षत्रं च संपृक्तमिह चामुत्र वर्धते ।३२२। (६ अ० ३२२ श्लो०)
कुलूकभट्टी—ब्राह्मणरहितक्षत्रियो वृद्धिं न याति, शान्तिकपौष्टिक-व्यवहारेक्षणादि-धर्मविरहात्। एवं क्षत्रियरहितोऽपि ब्राह्मणो न वर्धते, रक्षां विना

## जयमङ्गलाक्रोडपत्रम्

एवं च स्वराष्ट्रे परराष्ट्रे वा स्वकीयराज्ञः गौरवस्थापनं कर्तव्यम् चेत् तन्मन्त्रिस्थानीयेन शान्तरसप्रधानेन अद्वेषरागिणा प्रकाशनीयं भवति अन्यथा नरदेवत्वं राज्ञः न कथमपि ख्यातं स्यात्। तदेतत् प्रभावस्थापनं कर्म शमप्रकृतिना ब्राह्मणेन विधेयं भवति। तदेव पुरोहितेनानुष्ठीयते। अतः ब्राह्मणस्य शान्तरस प्रधानस्य श्रैष्ठ्यमतिशयिततरो गुणः समस्ति। अत्रेदं चिन्त्यम्—

दुरापमपि लोकेऽस्मिन् यद्यद्वस्त्वभिवाञ्छति।
तत्तदाप्नोति मेधावी तस्मात् कार्यः समुद्यमः॥ (का० नी० ५ श्लो० ११)

इत्युक्तदिशा यः कश्चित् प्रभूततरां श्रियं वाञ्छति, तेन राजा अनुसर्तव्यो भवति। न हि तथाविधेन भृत्येन राजाऽसत्कार्यान्निवारयितुं सर्वथा शक्यः स्यात् प्रतिकूलाचरणे राजकोपस्य प्रसङ्गात्। यथा "करग्रहणोपायोगि शास्त्रसम्मतं स्वत्वं यत्र पर्याप्तम् तद् विहाय प्रजाभ्यः अदत्तोपादानं राज्ञा कर्तुंन्न शक्यम्" इत्येवंरुपया वाण्या प्रचारः धनाकाङ्क्षिणा नर्मसचिवेन राजेच्छाविरोधभयात् स राजा न बोधयितुं शक्यते, शक्यते च कुम्भीधान्येन "तृणाय जगन्" मन्यमानेन शान्तरसप्रधानेन ब्राह्मणेनैव[1]। एवंविधं त्यागबहुलं जीवनं चिख्यापयिषुः सर्वविधार्जनसमर्थोपि केवल- "महमीश्वरप्रसादमुद्दिश्यैव साङ्गवेदस्य अध्येता" इत्येवं स्वान्तः सुखमनुबुभूषुः दुःखपङ्के निमग्नं जगत् समुद्दिधीर्षुः क इति यदि इतिहासेषु दृश्यते शोध्यते केनचित्तर्हि शमप्रकृतिरेव दृष्टिगोचरो भवति।

### शमः शास्त्रप्रकाशकः

ननु इदं अतिशयिततरं कर्म किमुद्दिश्य एतैः स्वायत्तीकृतम् इतिचेत्। शास्त्ररहस्यावगमार्थमित्युच्यते। यतः यावत्पर्यन्तं विद्यार्थिनां चेतः 'विवेक-श्रुति-संपत्तिगुरुभक्तितपस्विते'त्यादिगुणसंपन्नं न भवेत् तावत्पर्यन्तं शास्त्रं न निर्मलीभवति। प्रातिभं च भानं शास्त्रविषये नोदेति। तदुक्तं—

"विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहस्मि। असूयकायानृजवेऽयताय न मा ब्रूया अवीर्यवती तथा स्याम्"। इति। (मुक्तिकोपनिषत्संहिता)।

इदं ते नातपस्काय नाभक्ताय कदाचन।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति[2]॥ इति च। (गीता १८।६७)

---

यागादिकर्मानिष्पत्तेः। किन्तु ब्राह्मणः क्षत्रियश्च परस्परसम्बद्ध एवेहलोके परलोके च धर्मार्थकाममोक्षावाप्त्या वृद्धिमेति। दण्ड-करणे चेयं ब्राह्मणस्तुतिर्ब्राह्मणानामपराधिनामपि लघुदण्डप्रयोगनियमार्था। इति (३२२)

१—टी०—वर्तमानकाले स्थिताः काञ्चीकामकोटिशङ्कराचार्याः नास्तिकैरपि महता समादरेण पूज्यन्ते अत्र हेतुः तेषामद्वेषकारित्वमेव।

२ शा०भाष्यम्—सर्वगीताशास्त्रार्थमुपसंहृत्यास्मिन्नध्याये विशेषतश्चान्त इह—

## जयमङ्गलाक्रोडपत्रम्

**तथाचायमत्र विवेकः**—उपर्युक्तगुणसंपन्नो मन्त्री शमप्रकृतिः यदा राज्ञा उपलभ्यते तदा राज्यरक्षणं मन्त्र्यायत्तं सफलं भवति "कार्यनिश्चयो मन्त्रयायत्त" इति

---

शास्त्रार्थदाढर्याय सङ्क्षेपत उपसंहारं कृत्वाऽथेदानीं शास्त्रसम्प्रदायावधिमाह—इद-मिति। इदं शास्त्रं ते तव हिताय मयोक्तं संसारविच्छित्तये अतपस्काय तपोरहिताय न-वाच्यमिति व्यवहितेन सम्बद्ध्यते। तपस्विनेऽप्यभक्ताय गुरुदेवभक्तिरहिताय कदाचन कस्याञ्चिदप्यवस्थायां न वाच्यम्। भक्तस्तपस्व्यपि सन्न शुश्रूषुर्यो भवति तस्मा अपि न वाच्यम्। न च यो मां वासुदेवं प्राकृतं मनुष्यं मत्वाऽभ्यसूयत्यात्मप्रशंसा-दिदोषाध्यारोपणेन ममेश्वरत्वमजानन्न सहतेऽसावप्ययोग्यस्तस्मा अपि न वाच्यम्। भगवति भक्ताय तपस्विने शुश्रूषवेऽनसूयवे च वाच्यं शास्त्रमिति सामर्थ्याद्गम्यते। तत्र मेधाविने तपस्विने वेत्यनयोर्विकल्पदर्शनात् शुश्रूषाभक्तियुक्ताय तपस्विने तद्युक्ताय मेधाविने वा वाच्यम्। शुश्रूषाभक्तिवियुक्ताय न तपस्विने नापि मेधाविने वाच्यम्। भगवत्यसूयायुक्ताय समस्तगुणवतेऽपि न वाच्यम्। गुरुशुश्रूषाभक्तिमते च वाच्यमित्येष शास्त्रसंप्रदायावधिः।

**हनुमत्पैशाचभाष्ये**—इदं शास्त्रं तव हिताय मयोक्तम् संसारविच्छित्तये न विद्यते तपः स्वधर्मवृत्तिलक्षणं तस्यासावतपस्कस्तस्मै। न विद्यते मयि भक्तिर्भजनं सेवा यस्यासावभक्तस्तस्मै। न कदाचन कदाचिदपि। नचाशुश्रूषवे यो गुरोरशुश्रू-षुस्तस्मै। न च मामीश्वरं सर्वप्राणिसुहृदं योऽभ्यसूयति द्वेष्टि इदं शास्त्रं त्वयाऽ-तपस्कायाशिष्याय वा वाच्यम्। तथेश्वरेऽभक्ताय न वाच्यम्। मां यो द्वेष्टि तस्मै न वाच्यम्॥ ६७॥

**नी०भा०टी०**—एवं श्लोकद्वयेन ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनां इति साङ्ख्ययोगौ द्वितीयाध्याये दर्शितावुपसंहृत्य विद्यासम्प्रदायविधिमाह—इदमिति। अतपस्काय तप आलोचनं तद्रहिताय, अयत्नशीलायेत्यर्थः। अभक्ताय श्रद्धाहीनाय। अशुश्रूषवे गुरुसेवामकुर्वते। मां परमात्मानं योऽभ्यूसयति मदीयगुणा-सहिष्णुतयामयि दोषारोपपरो भवति तस्मै न। प्रत्येकं सम्बद्धत्वादेतेषां विशेष-णानामन्यतमाभावेऽपि कदाचन महत्यपि सङ्कटे इदं न वाच्यं नोपदेष्टव्यम्। अत्र "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ तस्यैतेऽकथिता ह्यर्थाः प्रकाशन्ते महात्मनः"। इति श्रवणादसूयारहितायार्जवोपेतायाभ्यासशीलाय गुरुपरमेश्वराराधनपराय च एतद्रहस्यं देयं, नान्यस्मै इत्यर्थः॥ ६७॥

**चरकेऽपि**—अथाध्यापनविधिः—अध्यापने कृतबुद्धिराचार्यः शिष्यमेवादितः परीक्षेत। तद्यथा प्रशान्तमार्यप्रकृतिमक्षुद्रकर्माणमृजुचक्षुर्मुखनासावंशं तदनुरक्त-विशदजिह्वमविकृतदन्तौष्ठमभि[illegible]मणं धृतिमन्तमनहङ्कृतं मेधाविनं सम्पन्न-मुदारसत्वं तद्विद्यकुलजमथवा तद्विद्यवृत्ततत्वाभिनिवेशिनमव्यङ्गमव्यापन्नेन्द्रियं

## जयमङ्गलाक्रोडपत्रम्

चतुर्दशे सर्गे प्रकृतिकर्मविचारे जयमङ्गलायामुक्तत्वात्। राज्ञः प्रभावोऽपि स्वदेशे परदेशे वा तथाविधेनैव मन्त्रिणा प्रचारयितुं शक्यते नान्येन। तदुक्तम्—टिप्पण्यां

"पुरोहितेन ब्राह्मणवचनं च ब्राह्मणानुष्ठानतत्परताख्यापनार्थं तेन वृद्धि नीतम्" इति। (६ अध्या० १ अ० अर्थशास्त्र)

### स्वातन्त्र्यम् शरीरस्वास्थ्यञ्च

अत्रेदं चिन्त्यम्—पुरोहितप्रकृतिभिः लोकेषु राज्ञः प्रभावव्यवस्थापनं यदा चिकीर्ष्यते तदा तेन इदमपि चिन्तनीयं भवति यत् शरीरस्वास्थ्यमपि। तच्च यदि न संभवेत् तर्हि शमस्य स्थायिता न भविष्यति अतः यथा शरीरे स्वास्थ्यं भवेत्, तथा यतनीयम्। तदर्थं च यदि औषध्याद्युपचाराः प्रयुज्यन्ते, तर्हि सदा तत्परतन्त्रतया भाव्यं स्यात्। अतः स्वातन्त्र्यसंरक्षणं स्वास्थ्यं च यथा भवेत्, तथा वर्तनार्थं शास्त्रकृद्भिः सत्वं शरणमुक्तं वर्तते। इदं हि निर्विकारितानाम्ना प्रसिद्धं व्याध्यपसारणे समर्थं भवति। कथमिति चेत्तदुपपत्तिरत्रोच्यते (प्र० खं० १ पृ० १०) पुनः—

यस्य तात्पर्यमिदमेव यत् कीदृशोऽपि व्याधिर्भवतु सर्वत्र शीतोष्णतयोरन्यतराधिक्यं भवति[1]। यदि यथाधिकारं ते व्यवस्थापिते भवेतां तर्हि व्याधिर्न स्यात् इति। अतः शैत्यमौष्ण्यं च चिन्तनीयम्। तयोः उष्णता शरीरस्योर्ध्वभागे, शीतलता चाधोभागे, अनुभूयते। शरीरे इयं शीतलता उष्णता वा इयन्मात्रया इदानीं वर्तते इति न केनापि निर्णेतुं शक्यम्। यतः यावन्मात्रया उष्णताया भानं भवति तदपेक्षया न्यूनमात्रया सत्यामपि उष्णतायां तदत्रेन सा स्थितापि भानविषयो न भवति किन्तु शीतलता-

---

वितर्कस्मृतिनिभृतमनुद्धतवेषमव्यसनिनमर्थतत्वभावकमकोपनं शीलशौचाचारानुरागदाक्ष्यप्रादक्षिण्योपपन्नमध्ययनाभिकाममर्थविज्ञाने कर्मदर्शने चानन्यकार्यमलुब्धमनलसं सर्वभूतहितैषिणमाचार्यसर्वानुशिष्टप्रतिपत्तिकरमनुरक्तमेवङ्गुणसमुदितमध्याप्यमेवाहुः" ॥ ७ ॥ (विमानस्थाने ३५ पृ०।) (प्र० खं० २।११२)

१ 'व्याधिस्स्याद्देशकालादिदोषवैषम्यसंभवा।
व्याधिर्ज्वरात्मा द्वेधा स्यादुष्णशीतविभागतः॥
शिरःकंपाङ्गसङ्कोचमुखशोणास्यकूणनैः।
परिदेवितरोमाञ्चहनुसञ्चलनादिभिः॥
वर्ण्यते तत्र सदाहस्तु भू-शय्या-परिदेवितैः।
विक्षिप्तबाहुचरणवक्त्रैः शीताभिलाषतः॥
शीतानुलेपनोत्क्रोशरक्तेक्षणतयोच्यते।
वर्ण्यते व्याधिसामान्यं गात्रस्तम्भास्यकूणनैः॥
श्वासश्लथाङ्गतोत्क्रोशस्रस्ताक्षस्पन्दितादिभिः।' इति।

स्वेनानुभूयते इति आपामरसिद्धम्[1]।

अतः शीतोष्णते अपेक्षाबुद्धिकृते इति वक्तव्यं भवति। तथा चोष्णता-वैषम्यप्रयुक्तस्य व्याधेर्निराकरणाय शरीरोर्ध्वभागे भावनया (ध्यानेन) शीतलता अनुभवनीया भवति। तेन औष्ण्यविषमताप्रयुक्तो व्याधिरपि दूरे भवति। एवमेव शीतलतावैषम्यप्रयुक्तव्याधेर्निरासाय विपरीतं कर्म कर्तव्यं भवति। सत्यप्येवं भावनापि यथाकथञ्चित्क्रियमाणा कार्यकारिणी संभवेत् इति न मन्तव्यम्। अपितु रसप्रवाहादि-सञ्चरणं येन पथा आयुर्वेदे शरीरविज्ञाने वोक्तमस्ति तेनैव पथा तत्प्रवाहभावना विहिता चेत्कार्यकारिणी स्यात् अन्यथा अनर्थायापि सा भवेत्। अतः रसप्रवाहः शरीरे कथं भवतीति शास्त्रमादृत्य प्रकाश्यते।

### रसप्रवाहः

शरीरस्याधोभागे स्थिता शीतलता रसप्रवाहनाड्या उष्णताधारे मस्तके स्थिता भवति चेदुष्णताया उपशमनं भवतीत्यत्रोक्तं तत्रोदाहरणं तैलमर्दनम्। यथा पादतले मर्दितं तैलं रसप्रवाहनाड्या ऊर्ध्वभागे प्रसृतं सत् शिरसि शैत्यं बोधयति यथा, तथा प्रकृतेपि इदं नानुपन्नं मन्तव्यम्। तथाहि—हृदयप्रदेशे फुप्फुसत्वेन व्यवाह्रियमाणं वस्तु चालनीसदृशं जालमयं भवति तत एव रक्तं गलति, उत्पद्यते च। अत्रैव सर्वशरीरे-प्रसृतानां तत्तन्नाडीनां साक्षात्परपरया वा मूलभागः स्थूलः संयुक्तो विद्यते। मुख्यास्तु तत्र दश। तत एव च फुप्फुसात् प्रवहितं रक्तं सर्वशरीरं पोषयति। शिराणां यथा यथा उपरितनो भागो भवति तथा तथा मूले वर्तमानस्थौल्यापेक्षाया ह्रस्यमाने तस्मिन् कार्श्यमनुभूयते अश्वत्थादिदलवर्तिशिराभागवत्। फुप्फुसान्निर्गतं रक्तं स्थूलभागेन शिरातः शैघ्र्येण प्रवहणशीलं अपि अग्रभागे कार्श्यसत्वात् तद्वतीभ्यः शिराभ्यः निर्गमनसमये रक्तं क्रमशः मान्द्येन सरति। तदवस्थायां तत्र तत्र शिरोर्ध्वभागे कियत्कालपर्यन्तं अवरुद्धात् रक्ताज्जलं स्पन्दते। तदेव कफरूपेण व्यवह्रियमाणं भवति। एतज्जलनिर्गमनानन्तरं शिराणां ऊर्ध्वभागे स्थितं रक्तं अशुद्धं उच्यते। तद्दशापन्नं रक्तं कृष्णं भवति। तथाविधरक्तवाहिनीनां शिराणां स्थानं वेन्द्रं मस्तिष्कं भवति। उपर्युक्तस्य शुद्धजलस्य सञ्चयः नाभेः पार्श्वे अधोभागे भवति। तदन्तर्वर्तिशिराभ्यः नाभिपार्श्वस्थितः कफः प्रवहति। एतद्भेदेन काश्चन सिरा रक्तप्रवाहिन्यः काश्चन

---

१ तुच्छा निर्वचनीया च वास्तवी चेत्यसौ त्रिधा।
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः॥
अस्य सत्वमसत्वं च जगतो दर्शयत्यसौ। (पञ्चदशी)

## जयमङ्गलाक्रोडपत्रम्

भवन्ति। आद्याः कृष्णा अशुद्धरक्तवाहिन्यो भवन्ति। द्वितीयाः श्वेताः कफवाहिन्यः भवन्ति। (अत्र सर्वत्रापि प्रमाणं टिप्पण्यां द्रष्टव्यम्) (१)।

---

### सिराधमनीहृदयादिस्वरूपम्

१ तदुक्तम्—दशस्थूलशिराहृत्स्थाः ताः सर्वाः सर्वतो वपुः।
रसात्मकं वहन्त्योजः तन्निबद्धं हि चेष्टितम्॥ (यथैप्सितम्)।

भावप्रकाशनम् (अ० ७)

अष्टाङ्गहृदये कफादिवाहिनीनां शिराणां लक्षणं प्रतिपादितम्। तद्यथा शरीरस्थाने—

तत्र श्यावारुणाः सूक्ष्माः पूर्णा रक्ताः क्षणात्सिराः॥३६॥
प्रस्यन्दिन्यश्च वातास्रं वहन्ते पीतशोणितम्।
स्पर्शोष्णाः शीघ्रवाहिन्यो नीलपीताः कफं पुनः॥३७॥
गौर्यः स्निग्धाः स्थिराः शीताः संसृष्टं लिङ्गसङ्करे।
गूढाः समस्थिताः स्निग्धा रोहिण्यः शुद्धशोणितम्॥३८॥—
धमन्यो नाभिसंबद्धा विंशतिश्चतुरुत्तराः।
ताभिः परिवृतो नाभिश्चक्रनाभिरिवारकैः॥३९॥
ताभिश्चोर्ध्वमधस्तिर्यग्देहोऽयमनुगृह्यते।
स्रोतांसि नासिके कर्णौ नेत्रे पाय्वास्यमेहनम्॥४०॥ इति।

(टी०) अत्र विशेषः। सङ्ग्रहे चोक्तम्। तासां खलु धमनीनां मध्याद्दश धमन्य ऊर्ध्वं प्रसृता, दशाधः प्रसृता, स्तिर्यक् चतस्रः। ताभिर्यथास्वमङ्गावयवा ऊर्ध्वाधस्तिर्यक्-समाश्रिता धार्यन्ते आप्याय्यन्ते च। तासामूर्ध्वगा हृदयमभिप्रपन्नाः प्रत्येकं त्रिधा जायन्ते। एवं तास्त्रिंशत्। ततस्त्रिंशतो मध्ये द्वे वातपित्तकफरक्तरसान्वहतः। एवं दश। द्वे द्वे शब्दरूपरसगन्धान् गृह्णीतः। एवमष्टाभिः शब्दरूपरसगन्धा गृह्यन्ते द्वाभ्यां ताभ्यां भाषते घोषं करोति स्वपिति प्रतिबुध्यते च एवमष्टौ। द्वे चाश्रु वहतः। तथैव द्वे स्तनाश्रिते नार्याः स्तन्यं नरस्य शुक्रं वहतः। अधोगमाः पक्वाशयस्था दश त्रिधा जयन्ते। एवं ता अपि त्रिंशत्। तत्राद्याः पूर्ववद्दश द्वे द्वे वातपित्तकफरक्तरसान्वहतः। द्वे वहतोऽन्नमन्नाश्रयेण, द्वे मूत्रं, द्वे तोयं, द्वे शुक्रं वहतः। द्वे च मुञ्चतः। ते एव नारीणामार्तवं वहतः द्वे वर्चोनिरसने स्थूलान्त्रप्रतिबद्धे एवं द्वादश। शेषास्त्वष्टौ धमन्यस्तिरश्चीनाः स्वेदमभिवर्धयन्ति तिर्यग्गामिन्यस्तु चतस्रो भिद्यमानाः सुबहुधा भवन्तीति। इति।

प्रत्यक्ष शारीरके गणनाथसेनेनापि एतद्विषये उक्तमस्ति तदप्यत्र विमृश्यते—

प्र० शा०—धमनीखण्ड १ अध्याय—

**सिरानाम**—अविशुद्धशोणितवहाः सर्वदेहगाः प्रणाल्योऽस्मिन् शास्त्रे। ताभिः शरीरप्रचारान्मलिनीभूतं शोणितं अभिप्रवर्तते हृदयाभिमुखम्। निखिलदेहव्याप्तानामपि तासां मिलितानामाशयं हृदयं समुद्रइवापगानाम्।

**धमन्यो नाम**—विशुद्धशोणितवहाः सर्वदेहगाः प्रणाल्योऽस्मिन् शास्त्रे। तासां मूलं हृदयं तद्धि धमनीषुद्वारेण सर्वत्र शोणितं धमनी जालकेषु विक्षिपति वा। ताभिर्जीवरक्तवाहिनीभिः केदार इव कुल्याभिरभिप्रीयते शरीम्। पृ० ८ अ० २

मुखलालाक्षारस्वभावा भुक्तचवर्णकाले तण्डुलगोधूमाद्यन्नभिन्नसङ्घातं विधाय मधुरस्वरं करोति तच्च आमाशयस्थेन मधुरशीतलेन स्तोकेन क्लेदकाख्येन श्लेष्मणा संसृज्यमानं प्रक्लिन्नतरं भवति। उक्तं च—

माधुर्यात् पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च।
आमाशये संभवति श्लेष्मा मधुरशीतलः॥ इति।

( सुश्रु० सूत्र २१ अ०। सिद्धान्त निदानम् ५। )

**रक्तं नाम—सकल धातुप्रीणनः सारः** शरीरस्य रस एव रञ्जकाख्येन पित्तन तथा विपरिणमितः, तस्य च सङ्ग्रहणप्रेरणस्थानं हृदयम् तद्धि हृदयादेव धमनीरनुप्रविश्य कृत्स्नं शरीरमहरहस्तर्पयति वर्धयति धारयति जीवयति यापयति च। मलिनीभूतं च तत् शरीरप्रचारात् सिराभिः प्रविशति हृदयमेव पुनः शुद्ध्यर्थं फुप्फुसगमनाय। प्रत्यक्ष शारीरके अध्याय २ पृ० ९

तच्च रक्तं धमनीषु जालकेषु सिरासु च क्रमेण प्रवहति हृदयं केन्द्रीकृत्य। हृदयेन हि धमनीषु विक्षिप्यते रक्तं धमनीभिश्च जालकेषु। सङ्गृह्यते च तज्जालकेभ्यो हृदयेनैव सिराभिः सर्वकायगाभिः। स्पन्दते च जालकेभ्यः कोऽपि तन्वच्छभागः शोणितस्य लसीकासंज्ञः सर्वत्र शरीरे धातुपोषणाय।

**धमन्यः** नाम—हृदयाद् बहिर्मुखं रक्तवहाः प्रणालिकास्थूलाः सूक्ष्माश्च। ता जीवच्छरीरे अरुणाभाः रक्तपूर्णाश्च। मृतके तु पाण्डुवर्णाः शून्यगर्भाश्च। तासां निर्मापण्यः प्राचीरिकाः, हृदस्थूलाः कठिनस्पर्शाश्च। तासु सर्वत्र उज्वललोहितं रक्तं प्रवहति, अन्यत्र फुप्फुसाभिगाया धमन्यास्तच्छाखाप्रशाखाभ्यश्च। फुप्फुसाभिगा हि स्थूलधमनीसिराभिरानीतमविशुद्धं रक्तं प्राणवायुसंयोगाय फुप्फुसौ प्रापयति स्वशाखाप्रशाखाभिरिति विशेषः।

**हृदयम्**—पुनः रक्तस्य युगपत् सङ्ग्रहणप्रेरणयन्त्रमुरोगुहास्थम्। तत् पेशी कोषमयं चतुःप्रकोष्ठञ्चेति अग्रे वक्ष्यते। तच्च प्रतिनियतसङ्कोच—विस्फाराभ्यां विक्षिपति रक्तमाकर्षति च तत् पृथक् प्रकोष्ठैः। तत् दक्षिणार्धे सार्वकायिकं सिरारक्तमाकर्षति। उत्तराऽधरमहासिराभ्याम्, प्रेरयति चाकृष्टं रक्तमधरप्रकोष्ठसङ्कोचेन फुप्फुसयोः फुप्फुसभिगाया धमन्या, रक्तस्य संयोगेन विशोधनाय। तस्य वामार्धंन्तु फुस्फुसविशोधितरक्तमाकर्षति उत्तरप्रकोष्ठे फुस्फुसप्रभवेन, सिराचतुष्टयेन, प्रेरयति चाकृष्टं रक्तमधरप्रकोष्ठस्य सङ्कोचेन सर्वत्र शरीरे महाधमनीद्वारेण। महाधमनी च क्रमेण शाखाप्रशाखाप्रविभागेन जालकेषु पर्यवस्यति सर्वशरीरपोषणाय। जालकेषु निःस्रवावशिष्टं रक्तं तु सूक्ष्मसिरामार्गेषु प्रविशति। अनुपद्यते च उत्तरोत्तरस्थूलाभिः

सिराभिर्महासिराद्वयं, तन्मार्गेण च हृदयम्। तदेतदुक्तस्य निरन्तरगतागतं संवहनं नाम।

**सिराखण्डम् १ अध्याय १३२**

इह खलु सर्वासां सिराणामाशयो हृदयं समुद्रइवापगानाम्। अतश्च सर्वा अपि सिराः हृदयाभिमुख्यः। अविशुद्धरक्तवहाश्च ताः अन्यत्र फुस्फुस प्रभवाभ्यः सिराभ्यः। फुस्फुसप्रभवा हि ताः फुस्फुसान्तर्विष्णुपदामृतस्पर्शेन विशोधितं रक्तं हृदयं प्रापयन्तीत्युक्तपूर्वं। सर्वासां च सिराणामारम्भो जालकेभ्यः। तेभ्यो हि सङ्गृह्यते जालकान्तरीयं रक्तं सूक्ष्मैः सिराप्रतानैः। तैश्च मिलितैः सम्भवन्ति सिरास्तन्व्यः। तासां परस्परसंमेलनेन क्रमशः परिणाम उत्तरोत्तरस्थूलासु सिरासु। स्थूलसिराणांच काण्डसिरासु प्रवेशः। काण्डसिराणां च उत्तराधरमहासिरयोः। तयोश्च हृदयस्य दक्षिणालिन्दे। हार्दिको मूलसिराऽपि तत्रैव प्रविष्टा। सोऽयं सिरा परिणामक्रमो व्याख्यातः। विपरीतश्च तद्वर्णनक्रमो धमनीवर्णनक्रमस्य, सिराधमन्यो-र्यथाक्रमं संयोगविभागाभ्यां परिणामात्। सन्ति च शिरःकपालानामभ्यन्तरतः मस्तिष्कबहिर्वृतेः स्वरद्वयान्तरालेषु अस्थिपरिखाश्रिताः आयतसिरामार्गाः तेषां सिरासरित् सिराकुल्या इति वा संज्ञा। सिराप्राचीरिकाः सिराकपाटिकाः सिराकञ्चु-कानि च व्याख्यातपूर्वाणि धमनीखण्डादौ। न च सन्ति सिराकपाटिकाः सर्वासु सिरासु। उत्तराधरमहासिरयोः प्रतीहारिण्यां सिरायां मस्तिष्कयकृद्वृक्क गर्भाशयादिप्रभवासु सिरासु गर्भस्य शिशोः संवाहिन्यां महासिरायां च कपाटिकानामदर्शनात्। सिराकञ्चुकानि च धमनीकञ्चुकेभ्योऽभिन्नानि बहुशः।

**रसायनीखण्डम् १ अध्याय ५५५**—रसायन्यः नाम सूक्ष्माः रसवाहिन्यः नालिकाः सर्वत्र शरीरे प्रसृताः अन्यत्र नखरोमबहिस्त्वक्तरुणास्थिभ्यः। तासां सूक्ष्मतरास्तनुस्वच्छेन प्राचीरिकाद्वयेन निर्मिताः अन्यास्तु प्राचीरिकात्रयेण। आकृतितश्च सर्वा अपि ताः सूक्ष्ममुक्तामालिकाकाराः शिथिलकार्पाससूत्राकारा वा।

रसश्च द्विविधः शुद्धो मिश्रश्चेति। तत्र यः शोणितस्य तन्वच्छभागो लसीकाख्यो जालेकभ्यः स्यन्दमानो धातून्पुष्णाति धातुपोषणावशिष्टश्च रसायनीभिः प्रतिनिवर्तते, स शुद्धः। यः पुनरन्त्रेभ्यो दुग्धघृतादीनां स्नेहबहुलः सारो लसीकामिश्रः पयस्विनीसंज्ञैः स्रोतोभिराकृष्यमाणो रसप्रपां प्रविशति, स मिश्रः। तस्य पायस इति संज्ञा तत्सादृश्यात्। सोऽसौ द्विविधोऽपि रसो रसकुल्याभ्यां गलमूलिकयोः सिरयोः प्रविशति, ततश्चोत्तरमहासिराम्। असङ्ख्याश्च ता रसायन्यः कक्षावङ्क्षणोदरादि प्रदेशेष्ववस्थितान् रसग्रन्थीन् प्रविशन्ति, समर्पयन्ति च स्वरसं तदभ्यन्तरतः। स च रसस्तेषु सञ्चरन् सम्यग्विशोधितो बहिरभिप्रवर्तते नवीनाभिः रसायनीभिः। ताश्चाग्रे प्रसरन्त्यो मध्येपथमपराभिरपि रसायनीभिर्मिलिताः पुनरपि तादृशान् ग्रन्थीन् प्रविशन्ति। एवञ्चोत्तरोत्तरं परस्परसम्मेलनेन स्थूलस्थूलाः स्वल्पतरसङ्ख्याश्च ताः रसप्रपां रसकुल्ये वा प्रविशन्ति। सन्ति च तासु कपाटिकाः सिराकपाटिकावत् लसीकायाः प्रतिनिवर्तनवारणाय। ताश्च कपाटिकाः रसकुल्ययोः स्फुटतमाः॥ इति॥

## जयमङ्गलाक्रोडपत्रम्

### रसवाहियन्त्रवचननिष्कर्षः

टिप्पण्युद्धृतवचनानुसारेण कृतया भावनया रसवाहिनीभिः नाडीभिः अधोदेशस्थितः शीतलताप्रचुरो रसः ऊर्ध्वदेशे प्रवाहितः उष्णमये मस्तिष्के प्रयुक्तः औष्ण्यविषमताप्रयुक्तं व्याधिमपसारयितुं समर्थो भवति इति स्थितम्। अत्रेदं स्मर्तव्यम्। शिरास्थूलभागान्मूलदेशान् निस्सृतं रक्तं सूक्ष्मभागेन शिराणां अग्रदेशे निरुद्धं पीडनशीलं सत् सूक्ष्मैः शिरारन्ध्रैः जलरूपेण बहिर्निर्गलितं भवति यदा, तदा तज्जलं रस इत्युच्यते। स एव च ओजसो निदानमित्युच्यते वैद्यकग्रन्थे—

'रसात्मकं वहन्त्योजः'। (भा० प्र०)

'ओजो बले स्थिरांशे च'। इति।

एवंच उपर्युक्तं शुद्धं जलं रसत्वेन व्यवह्रियमाणं ततत्स्थानेषु प्रविष्टं सत् ओजो नामान्तरेण व्यवह्रियते प्राणापानादिरिव।

तदिदं ओज आत्मकं रसतत्वं शुद्धं यदि शरीरस्य तत्र तत्र देशेषु दोषदुष्टेषु संसृष्टं भवति तर्हि तत्तत्देशवर्त्यौष्ण्यं तत्त्रेन सदपि शीतलतया प्रमाविषयो भवति सुखयति च। इदमेवोष्णतानिराकरणम्। इति।

### ओजसः प्राणत्वं रक्षकत्वम् च

यद्यपि स्वयङ्कृतिमत्वाद् रसात्मकं ओजस्तत्वम् अपि उष्णमेव तथापि मस्तकादिप्रदेशेषु स्थितोष्णत्वमात्रापेक्षया रसे वर्तमानोष्णता न्यूनमात्रिकेति तत्र शैत्यमनुभूयते। रसात्मकमोजश्च—(आक्सीजन) – ज्वलनकार्यकरत्वात्, सजीवत्वात् प्राणात्मकं मन्यते शास्त्रकृद्भिः। यतः तत् यथेप्सितं तथा शरीरं सञ्चालयितुं समर्थं भवति।

तदुक्तं—तन्निबद्धं हि चेष्टतम्—यथोप्सितम् इति वा। (पृ० १७३)

तदेतत् मुख्यतया शरीरान्तर्वर्तिहृदयदेशे यावत् तिष्ठति तावत् शरीरी प्राणिति। किञ्च रसात्मकस्य ओजसो यस्मिन् समये रसवाहिनीभिः नाडीभिः उच्छलनं भवति तदा नादोऽपि भवति। तद्वक्ष्यते मूलाधारस्थेत्यादिनिर्वचने। (पृ० १७७)। यदि च कथञ्चित् ओजसः प्रवाहो न भवेत् नापि च नादो भवति तदा शरीरे सर्वत्र अशुद्ध रक्तस्य प्रसरणात् मृत्युरपि नियत इति ओजसः रसस्य प्रवहणं यथा अवरुद्धं न भवेत् तथा यतितव्यम्। तदिदं बालाद्यवस्थायां निसर्गत एव ऊर्ध्वगामि भवति। वृद्धावस्थायान्तु रसप्रवाहः ऊर्ध्वदेशगामी दोषादिप्रतिबन्धवशात् न भवति। तदवस्थायां ध्यानादिना अधोद्वारेण निर्गमनशीलं रसं ऊर्ध्वदेशाभिमुखं कर्तुं वाञ्छन्ति योगिनः। तद्दशायां अयं प्रवाहः केसराश्लिष्टपङ्कजोदरे मस्तिष्के संलग्नो योगिषु शीतलतां अनुभावयति। इत्थञ्च फुफ्फुसादिषु तत्र तत्र ध्यानबलेन संप्रापितः रसः

## जयमङ्गलाक्रोडपत्रम्

तत्रत्यान् समुद्भूतान् दोषान् विनाश्य प्राणायामादिसाधने साफल्यं प्रापयति। तदेतत् भास्कराचार्यैः उल्लिखितटीकातोऽप्यवगम्यते[१]।
तदपि स्वेप्सया तत्तत्स्थानेषु रससञ्चारणकार्यं योगाभ्यासरसिकैः[२] गुरुभक्तैरेव संपादयितुं शक्यं नान्येन इत्यपि स्मर्तव्यम्।

---

१ शिवाऽर्कमण्डलं भित्त्वा द्रावयन्तीन्दुमण्डलम्।
तदुद्भूतामृतस्यन्दिपरमानन्दनन्दिता॥
कुलयोषित्कुलं त्यक्त्वा परं वर्षजमेत्य सा। (भैरवयामले)

टी० अयमर्थः—शिवा नाम शक्तिः कुण्डलिनी। अर्कमण्डलं हृत्कमलोपरि स्थितम्। भित्त्वा भिन्नं कृत्वा अवयुत्याच्छाद्येत्यर्थः। अर्कमण्डलोपरि स्थितं ब्रह्मद्वारं पिधाय सहस्रकमलान्तःस्थितमिन्दुमण्डलं दशति द्रावयति। अतएव कुलयोषित् कुण्डलिनी शक्तिः कुलं कुलमार्गं सुषुम्नामार्गं त्यक्त्वा तत्रैवेन्दुमण्डले आस्थाय परं वर्षण-मुत्कृष्टवर्षणं द्विसप्ततिसहस्रनाडीषु वर्षणं कृत्वेति शेषः।
तथा—(सौन्दर्यलहरी ८ श्लो०)

मूलकन्दं फणाग्रेण दृष्ट्वा कमलकन्दवत्।
मुखेन पुच्छं सङ्गृह्य ब्रह्मरन्ध्रं समाश्रितः॥
पद्मासनगतस्स्वस्थो गुदमाकुञ्च्य साधकः।
वायुमूर्ध्वगतिं कुर्वन् कुंभकाविष्टमानसः॥
वाय्वाकाशवशादग्निः स्वाधिष्ठानगतो ज्वलन्।
ज्वलनाघातपवनाघातैरुन्निद्रितो हि राट्॥
रुद्रग्रन्थिं ततो भित्त्वा विष्णुग्रन्थिं भिनत्त्यतः।
ब्रह्मग्रन्थिच भित्त्वैव कमलानि भिनत्ति षट्॥
सहस्रकमले शक्तिः शिवेन सह मोदते।
सा चावस्था परा ज्ञेया सैव निर्वृतिकारणम्॥ इति—सौन्दर्यलहरी श्लो० १०
सिरा जालन्धरा नाम तिस्रश्चाभ्यन्तराश्रया।
इडा च पिङ्गला चेति सुषुम्ना चेति नामतः॥
सुषुम्ना मध्यमा नाडी शिखां वन्हेः समाश्रिता।
शिखा प्राणेन संसृष्टा नादाख्यां लभते स्फुटम्॥
सुषुम्नावर्त्मनैवोर्ध्वं याति व्योमांबुजावधि।
योगिनां नादरूपेण स्वानुभूतिविधायिनी॥
इतरेषां कलारूपान् वर्णान् विसृजति क्रमात्। इति। भाव० ७-पृ०-१६४

२ 'सन्ति च मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञानसंज्ञानि षट्चक्राणि मेरमध्यान्तरस्थानि। तानि नानावर्णपद्माकारतया योगिनां ध्यानगोचराणि'।—

## जयमङ्गलाक्रोडपत्रम्

रसेन योगिनः मस्तिष्के शैत्यमनुभवन्तीत्यनेन सर्वथा तत्र रसे शरीरपुष्ट्याधायके उष्णता नास्त्येव इति न, तस्या अपि तत्र भानात्। इत्यादि प्रागुक्तमत्र (प्र० खं० २।१७६) स्मर्तव्यम्।

### कुण्डलिनी

एतदुष्णताविषये इदमेव वक्तव्यमस्ति यत् प्रस्तुतरसे शीतत्वेन भासमानः अग्निः औदर्यान्नातिरिच्यते। यतः मूलाधारस्थः सन्नपि अग्निरेव उक्तरसेन सह ज्वालारूपेण शिरोभिमुखः उत्तिष्ठति। तदिदं प्रज्वलनं सुषुम्नामार्गेण आब्रह्मरन्ध्रं प्रापितं शीतलतामनुभावयत् कुण्डलिनीनाम्ना व्यपदिश्यते[1]।
एतदेव चाभिप्रेत्य नैयायिकैः जीवनलक्षणे नोक्तं सङ्गृह्यते। तद्यथा—
"विपच्यमानकर्माशयसहितस्य आत्मनो मनसा सह संयोगो जीवन"मिति।

### मूलधारस्थपद्यव्याख्या

ओजसः अस्मिन् प्रवाहवेगे संभूयमाने नादोऽपि समुत्पद्यते। तदेवोक्तं मायाशीर्षान्नि-दन्तीमिति। (प्र.खं. २।१३८)। तदवरोधे तु ओजसः क्षयो ज्ञातव्यः। ततश्चाशुद्धरक्तस्य प्रसरणान्मृतिरपि नियतैव। तथा तत्रैव पद्ये सत्यप्यौष्ण्ये शीतत्वानुभवः मायात्व-प्रयुक्त इति बोधयितुं तस्या मायात्वं प्रदर्शितं मायेत्यादिना। (प्र० खं० २।१३८)
यद्यपि शरीरस्य जीवितत्वात् तत्र सञ्चरन् ओजोपदाभिधेयस्स रसः सर्वदेशं व्याप्य प्रवहति तेनैव च शैत्यस्यानुभवो वर्तते। तथापि मूलाधारस्थवन्हिज्वालया स्थितो द्रवभावं प्राप्तो रसः ऊर्ध्वं गच्छन् हृदयप्रदेशे स्थितेनोष्णेन रक्तेन सह यावन्न संयुनक्ति तावत् शरीरधारणार्थमपेक्षितस्यौजसो रक्षणं न भवति इति प्राधान्यप्रदर्शनार्थं, उक्तं "मूले"त्यादि (पृ० १३८) पद्ये मूलाधारस्थेति। तत्रैव पद्ये जीवशक्त्यभिधा-नात् शरीरधारणमनयैव भवतीति ध्वनितम्। अत्रत्यो द्रवो येन येन मार्गेण ज्वालया-सह ऊर्ध्वमुच्छलति स मार्गः सर्पाकारो वर्तते इति तज्ज्वालायाः कुण्डलिनीत्वव्यप्रदेशः, अन्यत्रत्वंबिकात्वेन। तदुक्तं भावप्रकाशने[2]। सेयं कुण्डलिनीत्वेन व्यपदिश्यमाना प्रवहणशीला नादरूपेण परिणता श्रोत्रपथमपि प्राप्ता यदि 'सा' इति स्वरेण संपन्ना भवति, तर्हि श्रोतुरानन्ददायिनी भवति, अस्य स्वरस्य शुक्रधातुस्थाग्निप्रभवत्वात्[3]।

---

तत्क्रियाश्च भिन्ना प्राणयात्रार्थाः नास्मादृशमिच्छाधीनाः। योगिनान्तु नियम्या एव ताः। (प्रत्यक्षशारीरक नाडीखण्ड अ० १) अतीन्द्रियप्रत्यक्षन्तु तस्य योगिजनगम्यम् इति। (वायुपञ्चकवर्त्म १२ अ०)

१ 'मूलाधारस्थ वन्ह्यात्मतेजोमध्ये व्यवस्थिता।
जीवशक्तिः कुण्डलिनी (प्र० खं० २।१३८)।' इति

२ परा प्रकृतिरेषा स्यादंबिकेत्यपरे विदुः।

३ 'शुक्रधात्वग्निजो नादः स्वरः षड्जः चतुःश्रुतिः'। इति। (भाव० अ० ७)

## जयमङ्गलाक्रोडपत्रम्

### स्वरस्याकर्षकत्वम्

अयं स्वरः प्रथमस्वरसप्तकस्य अवयवभूतः अधस्थो विज्ञेयः। एतत्स्वरोच्चारण समये शरीरान्तर्वर्तिनीनांस्वरतन्त्रीणां आकर्षणं नास्ति। अतएवास्य श्रोतुर्मनोरञ्जकत्वमपि नियतम्, अपि च शमप्रधानः न कामपरतन्त्रः नापि तदर्थं वा प्रवर्तते। अतः कामविघातस्याप्रसङ्गात् क्रोधाद्युत्पत्तेरवसराभावेन शरीरान्तर्वर्तिनानां तन्त्रीणामाकर्षणं शमप्रधाने नास्ति, कामप्रधानस्य तु सदाऽभीष्टसिद्धिः भवेदेवेति न वक्तुं शक्यते, एवं स्थिते इच्छायाः विघातस्य नैयत्येन विषयलोपादिना तदसिद्ध्या वा शोकस्य "प्रतियोगिनि प्रीत्या तन्नाशासहिष्णुत्वलक्षणद्वेषस्योदयः" कामप्रधाने संभाव्यते। तद्दशायां "निषादस्य, सप्तमस्वरस्य त्वग्धातुस्थवह्निप्रभवस्य[1] द्विश्रुतिकस्य समुत्पत्तिर्भवति। यद्यपि 'निषाद'स्वरः ऊर्ध्वदेशोद्भवः षड्जस्वरापेक्षया न्यूनमात्रया स्थितत्वादानन्दाधायको भवति इति सत्यं, तथापि तन्नाशासहिष्णुत्वलणद्वेषनिरासाय प्रतियोगिभूतं विषयं संपादयितुं यदा कामी समीहेत तदा तत्प्रतिघातकर्तृभिः सह विरोधोपि तस्य नियतः। कामुकेनैतद्दशायां उच्चार्यमाणः प्रकृतिसप्तकस्वरान्तर्गतः षड्जस्वरोऽपि समुदेति[2] स च शरीरान्तर्वर्तितन्त्रीणां समाकर्षणेन क्रोधप्रयुक्तेन अवस्तनप्रथमसप्तकापेक्षया ऊर्ध्वसप्तकस्वरे संपन्नः सन् न श्रोतॄन् अनुरञ्जयति। न वा निषादोपि स्वरः।

न च साहित्यशास्त्रे 'रौद्राच्च करुणो रस' इतिनिर्णीतमस्ति[3]। अत्र तु कामप्रयुक्तत्वं तस्योच्यते।

---

१. त्वग्धातुवह्निजो नादो निषादो द्विश्रुतिः स्वरः।

२. स री वीरेऽद्भुते रौद्रे धो बीभत्से भयानके।
कार्यौ गनी तु करुणे हास्यश्रृङ्गारयोर्मपौ॥ ( सङ्गीतरत्नाकरे )

३. तदुक्तम्—सरस्वतीकण्ठाभरणटीकायाम्-२ परिच्छेदे ३४ श्लोके रामसिंहविरचिते—

तत्र विषयवैचित्र्याद्विकासाद्याश्चतस्रश्चित्तावस्थाः। विषयो हि दीप्तिमसृणमध्यमभेदेन त्रिविधः। विभावाद्युपधामहिम्ना तन्मयीभवनयोग्यं हि चेतः कदाचिद्विकसति। सत्वाविर्भावो विकासः। न्यग्भूतरजस्तमोगुणं हि चेतः सत्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिमासादयति।

ततः सत्त्वभागप्रतिष्ठितः श्रृङ्गारस्तदाभासो पि भूमिकामालम्बते, अतएव शुक्तिरजतवद्भावोदयेऽपि, दोषमहिम्नैव काव्यमहिम्ना तद्व्यञ्जनात् तत्समानभूमिकया हास्यो रसः प्रादुर्भवतीत्यभिसन्धायाह "श्रृङ्गाराद्धि भवेद्धास्यम्" इति भरतमुनिः। तेन विकासभूमिकौ श्रृङ्गारहास्यौ। विकासात्प्रच्युतमप्राप्तगुणान्तरप्रादुर्भावं विक्षिप्तचित्तमुच्यते। तत्रोचितविभावादिवैचित्र्यादाविर्भवद्रजोगुणस्य चेतसो विक्षेपप्रच्युतिदशायां रौद्ररसोन्मेषः। अतएव समानभूमिकया "रौद्राच्च करुणोरसः इत्याह।—

## जयमङ्गलाक्रोडपत्रम्

नियमेन यत्र यदीयैकफलानन्तरं अपरंफलं द्वितीयरसो अवश्यंभावी ।
तथाविधस्थले एव रौद्रेण करुणस्योत्पत्तेः, इति सिद्धान्तितत्वान्नात्र विरोधः[1] ।

---

यदा तु सत्वतमोनिमीलनेन केवलरजःप्रतिष्ठं चेतस्तदा बहुमुखव्यापारोन्मेषाद्विस्तराख्यामवस्थामासादयति । तद्भूमिको वीररसस्तदवस्थामेवास्थायाद्भुतोऽपि "प्रथत इति वीराच्चैवाद्भुतोत्पत्तिः" इत्युक्तम् । न्यग्भूतरजोगुणस्य प्रबुद्धतमसश्चेतसोऽवस्थाविशेषः स सङ्कोचस्तमालम्ब्य बीभत्सः प्रादुरास्ते । तदेकभूमिकश्च भयानक इति "बीभत्साच्च भयानकः" इत्याह ॥ इति ॥

१ तदुक्तम् तत्रैव—शृङ्गारात्तु भवेद्धास्यो रौद्राच्च करुणो रसः ।
वीराच्चैवाद्भुतोत्पत्तिः बीभत्साच्च भयङ्करः ॥ (६ अ० ३२ श्लोके)

(टी०) "तेषां रसानामुत्पत्तौ हेतवः सूचकाश्चत्वारः । रसानामुत्पाद्योत्पादकप्रकारो यावान् सम्भवति स चतुर्भिरेव सूचित इति यावत् । तथा हि तदाभासत्वेन तदनुकाररूपतया हेतुत्वं शृङ्गारेण सूचितम् । यतो विभावाभासादनुभावाभासाद्व्यभिचार्याभासाद् रत्याभासे प्रतीते चर्वणाभाससारः शृङ्गाराभासः । कामनाभिलाषमात्ररूपा हि रतिरत्र व्यभिचारिभावो न स्थायी । तस्य तु स स्थायिकल्पत्वेन भाति । तद्वशाद्विभावाद्याभासता । अतश्च स्थाय्याभासत्वं रतेः । यतो रावणस्य सीता द्विष्टा वाऽप्युपेक्षिका वेति हृदयं नैव स्पृशतीति । तत्स्पर्शे ह्यभिमानोऽस्या विलीयत एव । 'मयीयमनुरक्ता" इति तु निश्चयो ह्यनुपयोगी कामजमोहसारत्वात् शुक्तौ रूप्याभासवत् ।

यद्यपि—

दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिं ।
चेतः कालकलामपि प्रसहते नावस्थितिं तां विना ॥
एतैराकुलितस्य विक्षतरतेरङ्गैरनङ्गातुरैः ।
सम्पद्येत कथं तदाप्तिसुखमित्येतन्न वेद्मि स्फुटम् ॥

इत्यादौ रावणवाक्ये तावति रत्याभासतैव । न तु हासः स्फुरति । तथापि सीतालक्षणविभावरावणवयःप्रकृतिविरुद्धः चिन्तादैन्यमोहादिको व्यभिचारिगणः अश्रुपात–परिदेवितादि चानुभावजातमनौचित्यात्तदाभासरूपं सद्धास्यविभावरूपम् । तद्वक्ष्यते "विकृतपरवेषालङ्कार" इत्यादि । एवं तदाभासतया प्रकारः शृङ्गारेण सूचितः ।

तेन करुणाद्याभासेष्वपि हास्यत्वं सर्वेषु मन्तव्यम् । अनौचित्यप्रवृत्तिकृतमेव हास्यविभावत्वम् । तच्चानौचित्यं सर्वरसानां विभावानुभावादौ सम्भाव्यते । तेन-व्यभिचारिणामप्येषैव वार्ता । अतएव संवित्सतत्त्वनिपुणैश्चिरन्तनैः रस-भाव-तदाभासव्यवहारस्तत्र क्रियते । अमोक्षहेतावपि तदाभासतायां शान्ताभासो हास्य एव ।—

## जयमङ्गलाक्रोडपत्रम्

(यदीयफलानन्तरं द्वितीयो रसोवश्यंभावी तस्योदाहरणं रौद्रः।
रौद्रस्य हि फलं वधबन्धनादि तद्विभावकेनावश्यं करुणेन भाव्यम्[1]।

---

प्रहसनरूपस्यानौचित्यस्य त्यागः सर्वपुराणार्थेषु व्युत्पाद्यः। एतच्च लक्षणे वक्ष्यते।
तत्र हास्याभासो यथास्मत्पितृव्यस्य वामनगुप्तस्य—

लोकोत्तराणि चरितानि न लोक एषः।
सम्मन्यते यदि किमङ्ग वदाम नाम॥
यस्त्वत्र हास्यमुखरस्त्वममुष्य तेन।
पार्श्वोपपीडमिह को न विजाहसीति॥

एवं यो यस्य न बन्धुश्च्छोके करुणेपि हास्य एवेति सर्वत्र योज्यम्। एतदेवोदाहरणम्। एवमन्यत्तेनानुमेयमिति मुनिना यथाग्रहणं कृतम्"। इति

१ यथा वेणीसंहारे—अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा।
घ्रातस्ताभ्यां शिरसि विनतोऽहं च दुःशासनश्च॥
तस्मिन् बाले प्रसभमरिणा प्रापिते तामवस्थां।
पित्रोःपार्श्वं व्यपगतघृणः किन्नु वक्ष्यामि गत्वा॥

एवं रौद्रानन्तरं नियमेन भयानकः। शृङ्गारानन्तरं नियमेन करुणः। व्याप्रियते त्वसौ तज्जन्मनि। यथा तापसवत्सराजचरिते वासवदत्तादाप्ताद्वत्सराजस्य। ननु तत्र रतेरविच्छेदाद् बन्धुताकृतः शोकः ? नैतत्, करुणोत्पत्तिकालेपि हि क्रोधस्याविच्छेद एव। यदाह—

निर्वाणवैरदहनाः प्रशमादरीणां।
नन्दन्तु पाण्डुतनयाः सह माधवेन॥ इति।

न च बन्धुतामात्रं हेतुः। एवं हि सति—

उत्कम्पिनी भयपरिस्खलितांशुकान्ता।
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती॥
क्रूरेण दारुणतया सहसैव दग्धा।
धूमान्धितेन दहनेन न वीक्षितासि॥

इत्यत्र ते इति प्राणभूतं पदं निरुपयोगितां गमितं स्यात्। रतिप्रलापेषु च कुमारसम्भवे शृङ्गार एव करुणस्य जीवितम्।

हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम्।
उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः॥ (कु० ४-६) इत्याद्युक्तिषु।
एवं वीराद्भयानकोत्पत्तिः। यथा—

'कर्णस्यात्मजमग्रतः शमयतो भीतं जगत्फाल्गुनात्' इति।—वे० सं० ५-५

यत्त्वत्र शङ्कुकेनोक्तं नात्रोत्साहस्य व्यापारः इति। तदसत्। एवं हि निर्विषय एवोत्साहः स्यात्, कर्तव्याननुसन्धानात्। युद्धवीरे च पराजयजनितः प्रतापापरपर्यायः शत्रुहृदयदाहदायी। तद्वनितादिषु तु भयानक एव जीवितम्।—

## जयमङ्गलाक्रोडपत्रम्

यस्तु रसो रसान्तरं फलत्वेनाभिसन्धाय प्रवर्तते तस्योदाहरणं वीरः।

महापुरुषोत्साहो हि जगद्विस्मयफलाभिसन्धानेनैव[१]। रौद्रस्तु परविनाशन फलत्वेनाभिसन्धाय प्रवर्तते न करुणामिति विशेषः। विदूषकहासस्तु नायिकाहासं फलत्वेनाभिसन्धत्ते इति मन्तव्यम्। यस्तु रसस्तुल्यविभावत्वान् नियमेन रसान्तरं हि परमाक्षिपति, तस्योदाहरणं बीभत्सः। तस्य हि ये भावा रुधिर-प्रभृतयः, तेऽवश्यं भयहेतवः। तथा तद्व्यभिचारिणो मरण-मोहाऽपस्माराद्याः तदनुभावास्तु मुखविकूण-नादयः[२]।) (इत्यादि यथायथं ऊह्यम्।) (ग्रन्थ चिन्हस्थं टिप्पणीगतमपि बोधार्थं मुपन्यस्तम् बोध्यम्।)

तस्मात् षड्जस्वरापेक्षयाऽपि माधुर्यम् मध्यमस्वरे भवति, तत्र ओजसः पूर्णत्वात्। अतः ईदृग्विधस्वरसंपादनार्थं शरीरे उष्णता यथा न भवेत् तथा यतितव्यं भवति। स च प्रयत्नः शरीरस्य अधोदेशस्थितशीतरसस्य ध्यानादिद्वारा सुषुम्नामार्गेण ऊर्ध्वदेशे उच्छलनात्मकः। तथाविधं शैत्यं अनुभवन् स्थितः पुरोहितो यदा उत्साहस्थायिभाववता राज्ञा संसेव्यते तदा तथाविधगुरोर्महिम्ना राज्ञो-देहसंस्थानं "स री" स्वरोच्चारणविशिष्टमेव भवति। एवंविधे नृपे औष्ण्यप्रयुक्त दोषो न भवति। सत्वगुणः नैर्मल्यञ्च तत्र वर्धते। तथाविधो गुरुभक्तो राजैव प्रजा अनुशास्ति रञ्जयति च। अन्यथा राजशरीरं कामासक्तं उष्णतामनुभवत् तमोभावमापद्येत। तदिदं सर्वं रहस्यवादप्रयोगे ( Mesmerism ) दृष्टम्। तद्यथा—गुरोः सान्निध्ये उपविष्टः शिष्यः शान्तमनाः तिरोहितं पुस्तकमपि गुरुप्रसादात् यथावत् पठितुं समर्थो भवति इत्यादि। अतएव उक्तम्—

"सत्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः॥ इति।

इत्यलं व्याध्यपसारणविषये प्रसक्तानुप्रसक्तचिन्तया।

## पुरोहितस्योपयुक्तत्वे हेत्वन्तरम्

अपि च पुरोहितः शमप्रधानः शासनेन अवग्रहस्थाने राज्ञा स्थापनीयः अन्यथा राज्यसञ्चालने कीदृग्घानिः स्यादिति उक्त पुरस्तात्। ( प्र० खं० १ पृ० ३२४ ) पुनरपि किञ्चिद् विविच्यते। तथाहि—

राजा विजिगीषुः स्थाय्युत्साहसंपत्तिमान् न भवेत् तर्हि तं षण्ढं स्त्रीव श्रीर्न भजति अतः तेन उत्साहवता भाव्यमिति राजनीतिमर्यादा। यस्य च उत्साहः

---

यथा—स पातु वो यस्य हतावशेषास्तत्तुल्यवर्णाञ्जनरञ्जितेषु।
लावण्ययुक्तेष्वपि वित्रसन्ति दैत्याः स्वकान्तानयनोत्पलेषु॥ इत्यादि।

नियमेन तु भवतीति वक्तव्यम्। नियमश्चकारेणोक्तो रौद्रादित्यानन्तर्य-सूचकपञ्चम्यनन्तरं प्रयुक्तेन।

१ यथा—दोर्दण्डञ्चित चन्द्रशेखरधनुर्दण्डाव भङ्गोद्यतः। (वीरचरिते २५४)

२ यथा वेणीसंहारे—

'संस्तभ्यन्तां निहतदुःशासनपीतशोणितस्नपितबीभत्सवृकोदरदर्शनवैक्लव्य-स्खलितप्रहरणानि रणाद्विद्रवन्ति बलानि' इति।

## जयमङ्गलाक्रोडपत्रम्

स्थायी स वीर इत्यभिधीयते[1]। तत्रैकोऽयमपि दोषोऽस्ति, यत् वीरस्य व्यभिचारिभावेषु धृतिमतिभ्यां सह उग्रताऽपि वर्तते[2]।

यदि उग्रता सर्वथा न भवेत् तर्हि सः अपराधिनं दण्डयितुं न प्रवर्तेत। अतएव स्थायीशमप्रधानः ब्राह्मणो न राजपदभाक्त्वेन राजनीत्या अनुमन्यते। अत्रेदमवधेयम्। यत् अपराधिनं दण्डयितुं राजा यदा प्रवर्तते तदा अपराधिनः क्रोधभाजनं राजा भविष्यत्येव तन्मा भवतु इत्येतदर्थम् शमप्रधानो गुरुः राज्ञा अनुगन्तव्य इति सिद्धान्तितम्। शमप्रधानश्च विना रागेण स्वकीय माधुर्यपरिपूर्णव्यवहारेण सर्वान् स्वायत्तीकरोति, तदाज्ञया च विनम्रीभूयस्थितो राजापि अगत्या यदि अपराधिनमनुशास्ति तर्ह्येव गुरुबलात् अनुशासने प्रवृत्तः अयं न क्रोधभाग् भवति। यद्यपि च तद्भाक्त्वं गुरुषु शमप्रधानेषु न्यायपक्षपातिषु आपद्येत। तथापि तथाविधस्य गुरोः विलक्षणः कश्चित् प्रभावः यः स सर्वं शमयितुं समर्थः। स च प्रभावः बहुजनस्य स्थायिविश्वास जनकप्रेमापरपर्यायः। अनुभवनीयं शैत्य प्रागुक्तं औष्ण्यशामकं सत्यस्मिन् प्रभावे विशेषतयात्र स्मर्तव्यम्। सत्यप्येवम् यदि कश्चित् तथाविधाय विदुषेऽपि द्रुह्यति तर्हि इतरे मित्रभूताः एनमपराधिनमुपेक्षितुं न कथमपि प्रभवन्ति[3]। तेषु स्वभावत एव मित्रद्रोहप्रयुक्तोग्रतायाः समुत्पत्तेः।

अपि च राज्यसञ्चालनाय अपेक्षितस्य पुरोहितस्य शान्तरसः कीदृक्स्वरूप इति भावप्रकाशनतः व्यक्तम्[4]—

---

१ तदुक्तं भावप्रकाशने।

　　'उत्तमप्रकृतिर्वीरः उत्साहात्मा विभाव्यते।

　　उत्साहः सर्वकृत्येषु सत्वजा मानसोक्रिया।' (२ अधिकर ३५ पृष्ठे इति)

२ 'वीरगा भावाः आवेगो हर्ष एव च।

　　गर्वासूयोग्रतास्तर्को धृतिर्बोधस्स्मृतिर्मतिः।

　　मदः स्वेदश्च रोमाञ्चो दृश्यन्ते ते क्वचित् क्वचित्। इति। (२ अधि० ३३)

३ तदुक्तम्—'पुत्रमित्रकलत्रादिद्रोहादेवोग्रता भवेत्।

　　तत्रानुभावोऽतिक्रूरवधबन्धनताडनैः॥ (भावप्रकाशने प्रथमाधिकारे पृ०२३)

४ तथाहि— शान्तो विषयहेयत्वदर्शनश्रवणादिभिः।

　　धर्माख्यानपुराणैश्च पुण्यतीर्थावगाहनैः॥

　　पुण्याश्रमनिवासैश्च योगिभिर्नित्यसङ्गमैः।

　　जडान्धबधिरादीनां तारतम्यविलोकनैः।

　　व्याधिदारिद्र्यमरणैर्नारक्या यातनाश्रुतेः।

　　पुण्यक्षयप्रपतन कुयोनिश्रवणादिभिः।

　　क्लेशप्रयत्नवैफल्याद्दुःखत्रितयघातनैः।—

## वैदिकसिद्धान्तसंरक्षिणो

अतः क्षत्रियस्य वीररसप्रधानस्य क्रोधोग्रतादिव्यभिचारभाववतः राज्यं शमप्रधानेन ब्राह्मण्यसंपन्नेन ब्राह्मणेन एधितव्यम् इति "ब्राह्मणेनैधितं क्षत्र"मिति मूलेन ध्वन्यते। तथासत्यपि कस्य चन विप्रतिपत्तिः स्यात्तर्हि सा अशोभावहा स्यात्। इति हृदयम्।

**शमप्रधानस्य रक्षकः**

किञ्च यदा किल ब्राह्मण्यं अधर्माभिभवात् कामक्रोधादिपरतन्त्रैः अतिक्राम्यते, तद्धेतुनैव विनाशदशायां च जगत् उपतिष्ठते, तदा शमप्रधानस्य रक्षणं भगवता अवतीर्य क्रियते। तन्मुखेन राज्यमपि रक्ष्यते।[1]

---

इत्यादिभि विभावैः स्याच्छमात्मा कस्यचिद्रसः।
यथाशक्ति परित्राणं दुःखिनामनुमोदनम्॥
शाकमूलफलैरन्नैः शरीरस्थितिसाधनम्।
व्रतोपवासनियमो वल्कलाजिनधारणम्॥
अहिंसा - सर्वभूतानामविशेषादनुग्रहः।
अङ्गेषु कार्श्यं कार्कश्यं स्नानं त्रिषवणोचितम्॥
ऋज्वायतासनं ध्यानं नासाग्राहितलोचनम्।
विषयेभ्यो नियमनमिन्द्रियाणां निवृत्तये॥
इत्यादयो विशेषाः स्युः प्रायः शान्तेषु योगिषु।
मानापमानयोः शोकहर्षयोः सुखदुःखयोः॥
समवृत्तितया प्रायो नानुभावा भवन्ति हि।
आनन्दबाष्प रोमाञ्च स्वेदस्तम्भाः स्युरेकदा॥
शान्तानुभावो रोमाञ्च एक एवेति केचन।
नोपकुर्वन्ति शान्तस्य भावाःसञ्चारिणो यतः॥
तस्माच्छान्तरसस्यैवं विकलाङ्गत्वमुच्यते।
निवृत्ते विषयासङ्गे स्वान्ते शान्तिमुपेयुषि॥ इति।

भा० प्र०, ६अ०१३५पृ०

१ तदुक्तम्—'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्।
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे।' इति। ४।७।८

भाष्यम्–"यदा यदा हि धर्मस्य ग्लानिर्हानिर्वर्णाश्रमादिलक्षणस्य प्राणिनामभ्युदयनिःश्रेयससाधनस्य भवति भारत। अभ्युत्थानमुद्भवोऽधर्मस्य तदात्मानं सृजाम्यहम्मायया।

परित्राणाय परिरक्षणाय साधूनां सन्मार्गस्थानां विनाशाय च दुष्कृतां पापकारिणाम्। किञ्च धर्मसंस्थापनार्थाय धर्मस्य सम्यगवस्थापनं तदर्थं संभवामि युगे युगे प्रतियुगम्। ४।७।८ इति।

[ उक्तार्थनिगमनम् ]

[1]ब्राह्मणेनैधितं क्षत्रं [2]मन्त्रिमन्त्राभिमन्त्रितम् ।
जयत्यजितमत्यन्तं शास्त्रानुगम[3]शस्त्रितम् ॥ १२ ॥

इति विनयाधिकारिके मन्त्रिपुरोहितोत्पत्तिः ।
नवमोऽध्यायः ।

---

**जयमङ्गलाक्रोडपत्रम्**

तदेवाह अनुवर्तयेतेत्यादिना ग्रन्थेन इत्यलमतिविस्तरेण ।

**श्रीमूला**

एवञ्च करणे अलब्धलाभो भवतीत्यर्थकं श्लोकमाह--ब्राह्मणेनेति । ब्राह्मणेन यथोक्तगुणेन पुरोहितेन, एधितं वर्धितं मन्त्रिमन्त्राभिमन्त्रितं मन्त्रिणो यथोक्तगुणस्य मन्त्रेण अर्थनिश्चयेन अभिमन्त्रितं संस्कृतम् । अभिरक्षितमित्यपि पाठः । अतएव शास्त्रानुगं शास्त्रोक्तानुष्ठानपरं, क्षत्रं क्षत्रियकुलं कर्तृ, अशस्त्रितं सत् अशस्त्रयुक्तं सत्, युद्धं विनैवेत्यर्थः । शास्त्रानुगतशस्त्रितमिति पाठे शास्त्रानुगमात्मकशस्त्रयुक्तं तदतिरिक्तशस्त्रानपेक्षमित्यर्थः । अत्यन्तम् एकान्ततः, अजितं जयति अलब्धं लभते ।

इति कौटिलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे
नवमोऽध्यायः मन्त्रिपुरोहितोत्पत्तिः ॥

**वैदिकसिद्धान्तसंरक्षिणी**

अन्ते श्लोकमाह ब्राह्मणेनेति ।

ब्राह्मणग्रहणं जातिकर्मणोः प्राधान्यदर्शनार्थम् । तदुक्तम् टिप्पण्याम्—"ब्राह्मण वचनञ्च ब्राह्मणानुष्ठानतत्परताख्यापनार्थं" इति । एधितं वृद्धिं नीतम् । तदुक्तम् । टिप्पण्याम्—"तेन वृद्धिं नीतम्" इति । क्षत्रमिति । इदं कर्तृ । अस्य जयतीत्यनेनान्वयः

---

भूमिकायांच—दीर्घेण कालेनानुष्ठातॄणां कामोद्भवाद्धीयमान-विवेक-विज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे, प्रवर्धमाने चाधर्मे जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन किल संबभूव । ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मस्तदधीनत्वा—द्वर्णाश्रमभेदानाम् ।

नो० टि० १ **ब्राह्मणेनेति** पुरोहितेन । ब्राह्मणवचनं च ब्राह्मणानुष्ठानतत्परताख्यापनार्थं । तेन वृद्धिं नीतम् ।

,, २ **क्षत्रमिति** । 'कर्तृ' इति शब्दस्योपरि लिपीकृतम् ।

( अपरा टिप्पणी पृष्ठस्याधोभागे लिखिता । यथा— )

क्षत्रेण ब्रह्म सम्पृष्टं क्षत्रं च ब्रह्मणा सह ।
उदीर्णे दहतः शत्रून् वनानीवाग्निमारुतौ ॥

,, ३ **शास्त्रानुगमिति** । कर्म ।

## वैदिकसिद्धान्तसंरक्षिणी

मन्त्रीति। (पृ० १८५) उत्तरमन्त्रिणा परामर्शात्मकेन मन्त्रेण अभिमन्त्रितम् सफलं भवति। अनयोः अनुकूलयोः सतोः साफल्यमुक्तं टिप्पण्याम्—"क्षत्रेण ब्रह्म संपृष्टम् क्षत्रञ्च ब्रह्मणा सह। उदीर्णौ दहतः शत्रून् वनानीवाग्निमारुतौ" इति। जयति लभते निराबाधमित्यर्थः।

शास्त्रानुगमिति। सत्रं दण्डनीत्यनुगामि। तेन दैवपुरुषविपत्प्रतीकारः।

### शास्त्रानुगतपाठसमीक्षा

शास्त्रानुगतेति पाठान्तरम्। इदन्तु न सम्यङ् मन्त्रमाहात्म्यप्रसङ्गे शस्त्रितत्वोक्तेरनौचित्यात्, टिप्पण्यां टीकायां च "शास्त्रानुगमशस्त्रितमित्येवाभिधानाच्च। अशस्त्रितम्—विना युद्धम्। मन्त्रणबलाद् रञ्जनद्वारा उत्कर्षमाहुरित्यर्थ इति।

इति श्री वैदिकसिद्धान्तसंरक्षिण्यां नवमोऽध्यायः समाप्तः।

## जयमङ्गला

मन्त्रिपुरोहितयोरन्योन्यापेक्षितां दर्शयन्नाह ब्राह्मणेनेति। ब्राह्मणेन पुरोहितेन। एधितं क्षत्रमिति जातिकर्मोपलक्षणम्। मन्त्रिणा [illegible] मन्त्रिणो यो[1] मन्त्र (कल्पितः) मन्त्राधिकारोत्पन्नः, तेन अभिमन्त्रितम् आ भमुख्येनोत्पादितनिश्चयम्। जयत्यजितमत्यन्तम्। ननु च लाभत्रैविध्ये नवस्य अजितत्वं, न पित्र्यभूतपूर्वयोरिति तयोः परिपालनलक्षणो जयस्त्यक्तो भवति? नायं दोषः। नैवमुच्यते यदजितं तदेव जीयत इति। किन्तु जयत्यन्यदप्यजितमिति। अथवा[2] क्षत्र तन्न कदाचिद्विपक्षेण जीयते जयति च, किं तर्ह्यजितमेवेति। यथाहुः—

विजयन्तेऽथजीयन्ते प्रायेणेह जिगीषवः।
कौरव्यस्तु जयत्येव कैश्चिदप्यपराजितः॥ इति।

शास्त्रमनुगच्छतीति शास्त्रानुगम् अथर्वदण्डनीत्यनुगामि। अशस्त्रितम् शस्त्रं करोत्यभ्यस्यतीति शस्त्रितम्। अतथाभूतमशस्त्रितम् अयुद्ध्यमानमभिमन्त्रितमयुद्धेन[3] जयति। जयति निराबाधमित्यर्थः॥

इति मन्त्रिपुरोहितोत्पत्तिः षष्ठं प्रकरणम् नवमश्चाध्यायः॥

## जयमङ्गलाक्रोडपत्रम्

अन्योन्यापेक्षितामिति। ननु मन्त्रिपुरोहितयोः राज्ञा सह अन्योन्यापेक्षित्वं कथम्? इति चेदुच्यते। मन्त्रिभिः राज्ञः देवभावः देशे प्रचार्यते। राज्ञः देवभावे प्रकाशिते सत्येव प्रजायाः राज्ञि समादरो भवति विद्वत्संस्थापितमूर्ताविव। वक्ष्यति चैतत् "तस्माद् राजानो नावमन्तव्या" इत्यग्रिममूलग्रन्थेन। इदं प्रभावस्थापनं मन्त्रिकर्म[4]।

---

अशुद्धम् १ यो (ग)-मन्त्रः २ अथवा (न) क्षत्रम्
,, ३ अतथाभूतमशस्त्रितम्। अयुद्ध्यमानमभिमन्त्रितयुद्धेन।
४ तदुक्तम् नीतिसारे—मन्त्रो मन्त्रफलावाप्तिः कर्यानुष्ठानमायतिः।—

## जयमङ्गलाक्रोडपत्रम्

अतः मन्त्री उपासको भवतीति कृत्वा राज्ञा सः मित्रमिव व्यवह्रियते। पुरोहितश्च गुरुस्थानीयः उपास्यः देवकर्म प्राधान्येन राज्ञो राज्यस्य च हितार्थं साधयति। तथा राज्यदोषे राजान स्वामित्वे अनुमन्त्र तस्मिन् सम्पादित व्यसनमपि प्रतीकरोति। तदुक्त जयमङ्गलायां तत्रैव—

"व्यसनस्य प्रकृतीनां प्रतीकारः मन्त्रिपुरोहिताधीनः तथा राजराज्याभिरक्षणं मन्त्रिपुरोहिताधीनामेव"[1] इति।

एवंरीत्या क्रमेण दृष्टादृष्टोभयसाधनद्वारा मन्त्रिपुरोहितयोः राज्ञा सह अन्योन्यापेक्षिता विज्ञेया। इति।

**आभिमुख्येनेति**। (पृ० १८६) प्रमाणत्रयेण समन्वीय, देशकालशक्तीश्च समीक्ष्य क्रियमाणेन सफलत्वनिश्चायकेन मन्त्रेणेति भावः।

**अन्यदपीति**। (पृ० १८६) पित्र्यं भूतपूर्वं चेत्यर्थः। तथाच केवलं अर्जितं नवं तदेव जयति इति न अपितु भूतपूर्वं पित्र्यञ्च उभयं अजितमपि अजितमेव यदि परिपालितं भवति। अन्यदपीति अनेन तयोः सङ्ग्रहः।

अथवेति कल्पान्तरमाह। एतन्मते अजितं क्षत्रस्य विशेषणम्। यदा अजितमिति क्रियाविशेषणम् तदा जयति निराबाधं इत्यर्थः। वक्ष्यतिच "ब्राह्मणेन पुरोहितेन एधितं मन्त्रिमन्त्राभिमन्त्रितं क्षत्रं न कदापि विपक्षेण जीयते जयति वा इति" तथा च न सन्देहः। अपितु तत् अजितमेव इति भावः। तमेव स्फुटयन्नाह विजयन्त इति।

### अभिमन्त्रितमयुद्धेनेति पाठसमीक्षा

अभीति। (पृ० १८६) अभिमन्त्रितमयुद्धेन इति पाठः साधु भाति। अस्यैव स्वारस्यात् अभिमन्त्रितस्य परस्परप्रहरणात्मकयुद्धभिन्नत्वात्। "रणात् पराजयते" इत्यादौ तथा बोधनात्[2], "कोशो मन्त्रश्च युद्ध्येते प्रथमं। हस्त्यश्वरथपदातिभिर्व्यायामयुद्धमन्त्यावस्थायां क्रियते तस्मात् प्रथमं मन्त्रेण सामभेदात्मकेन कोशेन कृतेन च जयेदरीन्" इत्युक्तत्वाच्च। (नी०स० १७।२। जयमङ्गलायां नीतिसारीयायाम्)

---

१ आयव्ययौ दण्डनीतिरमित्रप्रतिषेधनम्॥
व्यसनस्य प्रतीकारः राजराज्याभिरक्षणम्।
इत्यमात्यस्य कर्मेदं हन्ति तद्व्यसनान्वितः। इति। (नी० स० १४।२१, २३।)

२ विभक्त्यर्थनिर्णये—रणात् पराजयत इत्यत्र पलायननिलयनादिर्भङ्गः फलं। शौर्याभावो व्यापारो धात्वर्थः। शौर्यन्तु परकर्मकप्रहरणकर्तृत्वं प्रकृते बोध्यम्। रणस्तु परस्परप्रहरणं रणगोचरद्वेषस्य रणे प्रवृत्त्यनुत्पादद्वारा रणाभावप्रयोजकत्वं। रणाभावप्रयोज्यो दर्शितः शौर्यस्याभावः। इति (पञ्चमीविभक्तिप्रकरणम्।)

## जयमङ्गलाक्रोडपत्रम्

**मन्त्रिपुरोहितोत्पत्तिरिति।** (पृ० १८६) ननु मन्त्री अमात्यो वा राज्ञा समस्तगुण-परीक्षणानन्तरं व्रियते। मन्त्रित्वममात्यत्वं च ततो भवति। अत्र पूर्वमेव अमात्यमन्त्रि-शब्दप्रयोग उपपन्नः कथं भवति'' ? इति चेन्न। ''अध्वर्युं वृणीते, यूपं तक्षती''त्यादि-प्रयोगेषु वरणात् तक्षणाद्वा पूर्वमेव तत्र तत्र अध्वर्युयूप शब्दप्रयोगः मीमांसकैः साधुत्वेन साधितः। (तद्व्यक्तं मीमांसायां सप्तमाध्याये) तथैव प्रकृतेपि। तथा च यादृग्गुण-समुच्चयेन युक्तं अमात्यं मन्त्रिणं वा कुर्यात् तादृशाः गुणाः निरूपिताः इति मन्तव्यम्। उत्पत्तिः इति। (पृ० १८६) मन्त्र्यमात्ययोःवंरणेनेतिति शेषः।

इति जममङ्गलाक्रोडपत्रे नवमोऽध्यायः समाप्तः।



## षष्ठं प्रकरणम्—

# उपधाभिश्शौचाशौचज्ञानममात्यानाम्

### दशमोऽध्यायः

[ अमात्यपरीक्षाविधिः ]

मन्त्रिपुरोहितसखः[1] सामान्येष्वधिकरणेषु स्थापयित्वाऽमात्यान् [2]उपधाभिः शौचयेत् ॥ ( शोधयेत् पा० )

---

**श्रीमूला**

उपधाभिः शौचाशौचज्ञानममात्यानामिति सूत्रम् । उपधाभिः छलैः, अमात्यानां शौचाशौचज्ञानं शौचं स्वामिन्यदुष्टभावता अशौचं दुष्टभावता तयोर्ज्ञानम् अभिधीयत इति सूत्रार्थः । जानपदत्वादिगुणसम्पन्नोऽप्युपधाशुद्धिविरहेऽमात्यत्वं नार्हतीत्युपधाशुद्धिरुच्यत इति प्रकरणसङ्गतिः ।

मन्त्रीत्यादि । मन्त्रिपुरोहितसखः मन्त्रिपुरोहितसमुपेतः । सामान्येषु अधिकरणेषु साधारणेषु अप्रधानेष्वधिकारपदेषु । उपधाभिः छलैर्वक्ष्यमाणैः शौचयेत् शोधयेत् ।

**वैदिकसिद्धान्तसंरक्षिणी**

शुचित्वज्ञानायापेक्षितत्वादुपधानिरुपणस्येति पूर्वापरप्रकरणयोः सङ्गतिं सूचयन्नभिदधाति मन्त्रीति । मन्त्रिपुरोहितौ तत्तद्गुणसंपन्नतया व्याख्यातौ तयोः सखा "एतौ मे हितं साधयिष्यत" इति निश्चयवान् राजेति शेषः । टिप्पण्यां तु एवमभिधीयते "मन्त्रिपुरोहितादिसख इति द्रष्टव्यम् । सेनापतियुवराजयोरप्यत्रोपयोगदर्शनात्" इति । सामान्येष्वधिकरणेषु धर्मार्थव्यवहारेषु लघुषु, कुप्याध्यक्षादिकर्मसु बहिरवस्थितेषु कर्मसु वा । आमात्यान् मन्त्रिपुरोहितातिरिक्तान् अमात्यपदे नियोक्तुमभीष्टान् । एतेन मन्त्रिप्रभृतिभिः अमात्यत्वेन वरणीयाः शोधयितव्या इति स्थितम् । तदुक्तं टिप्पण्याम्—"लोहकारोपकरणन्यायेन पुराणैर्मन्त्र्यादिभिरभिनवाः परीक्ष्यन्ते" इति । उपधाभिः । धर्मार्थकामभयालंबनाभिः उपजापोक्तिभिः । छलैस्तथाविधोपजापक्रियाभिरिति यावत्[3] । शोधयेत् शुचित्वं परीक्षयेत् ।

---

नी० टि० १. मन्त्रिपुरोहितेति—मन्त्रिपुरोहितादिसख इति द्रष्टव्यम्, सेनापतियुवराजयोरप्य-
,, त्रोपयोगदर्शनात् । लोहकारोपकरणन्यायेन पुराणैर्मन्त्र्यादिभिरभिनवाः परीक्ष्यन्ते ।

२. उपधाभिरिति—त्रिवर्गभयालम्बनाभिरुपजापोक्तिभिः ।

३ तदुक्तम्— न्यायवर्तिके— वचनविघातोऽर्थविकल्पोपपत्त्या छलम्—(। १० ।)

## जयमङ्गला

एवं मन्त्रिपुरोहितावुत्पाद्य तयोः मुखेन[1] विशिष्टविनियोगार्थम् उपधाभिः शौचाशौच ( ज्ञान ) ममात्यानामुच्यते । भावपरीक्षार्थमुपधीयन्ते युज्यन्ते स्फटिकं रक्तद्रव्यरागोपधानैरिव आभिरित्युपधाः, धर्माद्यालम्बना उपजापक्रियाः ताभिरमात्यानां शौचाशौच ( ज्ञान ) मिति । मन्त्रिपुरोहितसख इति । मन्त्रिपुरोहितयोः सखेति षष्ठीसमासेन आत्मनोऽपि तयोराधिक्यमाह । अन्यथा तौ सखायावस्येति "मन्त्रिपुरोहितसखा" इति स्यात् "राजाहस्सखिभ्यष्टच्" ( ५-४-९१ ) इति तत्पुरुषसमासान्तस्य विहितत्वात् । अत एव तद्व्यतिरिक्तामात्यशुद्ध्यर्थमिदं प्रकरणम् ।

तौ च पित्र्यौ भूतपूर्वौ वा नवावपि सहोत्थायिनावात्मवदेव ज्ञातशौचसामर्थ्यौ । तत्रैतत्स्याद् अन्येऽप्यस्य पित्र्यभूतपूर्वाः सहोत्थायिनो वा स्युः किं परीक्षयेति । न सन्ति, न च सर्वे परीक्ष्या इति ब्रूमः । किन्तु सत्स्वपि पूर्वेषु ये नवाश्रिताः ये न विज्ञातशौचाः ते विनियोगविशेषार्थं परीक्ष्यन्ते । अत्र च सहायातिशयख्यापनार्थं तयोरुपादानम् । अन्यथा मन्त्रिपुरोहितसेनापतिसख इति वक्तव्यं स्यात्, सेनापतेरप्युपधाङ्गत्वात् । अत्र चोपधाङ्गत्वात् प्राङ्मन्त्रिणो निर्देश्याः तेष्वसत्सु कैरुपदध्यादिति । नायं दोषः । न वचनक्रमापेक्षया अनुष्ठानप्रतिपत्तिः, किन्तु सामर्थ्यापेक्षयैव । न हि 'भुङ्क्ष्व पच्यताम्' इत्युक्ते पच्यतामित्यनुक्त्वा कथं भुङ्क्ष्वेत्युक्तमिति चोद्यं भवति । तथाऽप्ययमाचार्यः प्राधान्यादमात्योत्पत्तिं तत्सङ्घाच्च[2] प्राक् तत्परीक्षां आह । सामान्येष्वधिकरणेषु धर्मार्थव्यवहारस्थानेषु प्राक्च्छौचाशौचज्ञानादविभक्तयथार्हकर्तृषु । अथवा सामान्येषु लघुषु कुप्याध्यक्षादिषु कर्मसु यत्र स्तोकमतिपत्यते । अमात्यान् स्थापयित्वा विनियोज्य । उपधाभिः शोधयेत् परीक्षेत, पुरोहितेन सेनापतिना स्वयं च महिषीव्यपदेशेन ।।

## जयमङ्गलाक्रोडपत्रम्

### सङ्गतिः

अमात्यानां शौचाशौच ज्ञानप्रकरणेन सङ्गतिं प्रदर्शयन्नाह एवमिति । गणपतिशास्त्रिणस्तु सङ्गतिमेवमाहुः "उपधाभिः शौचाशौचज्ञानममात्यानामिति सूत्रम् । उपधाभिः छलैः अमात्यानां शौचाशौचज्ञानं शौचं स्वामिन्यदुष्टभावता अशौचं दुष्टभावता तयोर्ज्ञानम् अभिधीयत इतिसूत्रार्थः । जानपदत्वादि गुणसम्पन्नोऽप्युपधाशुद्धिविरहेऽमात्यत्वं नार्हतीत्युपधाशुद्धिरुच्यत इति प्रकरण सङ्गतिः" इति ।

---

वचनविघातोऽर्थविकल्पोपपत्त्या छलम् । वचनविघातो यः क्रियते सामान्य शब्दस्य विशेषानेकसम्बन्धित्वे सति अविवक्षिताध्यारोपेण छलं तद्वेदितव्यम् ।

अशुद्धम्

१. सुखेन २ तत्परीक्षां प्रामाह ।

## जयमङ्गलाक्रोडपत्रम्

टीकाकृन्मतेन तूपोद्धातसङ्गतिर्बोध्या । तदाहुः[१] —

"चिन्तां प्रकृतसिद्ध्यर्थामुपोद्धातं विदुर्बुधाः" इति ।

अत्रायं भावः । नवमाध्याये अमात्यगुणनिरूपणे शुचित्वमुपधाशुद्धत्वं इति "शुचिः धर्मादिविशुद्धचित्तत्वा"दितिग्रन्थेन टीकाकृता व्याख्यातम् । तद्विशेषणमुपधास्वरूपं "विशिष्टबुद्धिं प्रति विशेषणज्ञानं कारणम्" इति कार्यकारणभावबलान्निरूपितमिति ।

### द्रोहे कारणमशुचित्वं

ननु इतरगुणसंम्पन्नाः पुरोहितादयो राज्ञे किं द्रुह्यन्ति ? द्रुह्यन्त्येव यदि ते शुचयो न स्युः । वर्णितं चैतत् श्रुत्याऽपि – त्वष्टुः पुत्रो विश्वरूपः किञ्चित् अशुचि कारणमुपस्थाप्य हविष्षु अशुचित्वमभिधाय देवानां हविः राक्षसेभ्यः देवानां पुरोहितो भूत्वाऽपि समर्पितवान्[१] इति ।

---

१ तदाहुः-विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् स्वस्रीयोऽसुराणां तस्य त्रीणि शीर्षाण्यासन्त्सोमपानं सुरापानमन्नादनं स प्रत्यक्षं देवेभ्यो भागमवदत् परोक्षमसुरेभ्यः सर्वस्मै वै प्रत्यक्षं भागं वदन्ति यस्मा एव परोक्षं वदन्ति तस्य भाग उदितस्तस्मादिन्द्रो ऽबिभेदीदृङ्वै राष्ट्रं विपर्यावर्तयति इति तस्य वज्रमादाय शीर्षाण्यच्छिनद्यत्सोमपानं आसीत् स कपिञ्जलोऽभवद्यत् सुरापानं स कलविङ्को यदन्नादनं स तित्तिरिस्तस्याञ्जलिना ब्रह्महत्यामुपागृण्हात्तां संवत्सरमबिभस्तं भूतान्यभ्यक्रोशन् ब्रह्महन्निति स पृथिवीमुपासीददस्यै ब्रहहत्यायै तृतीयं प्रतिगृहाणेति साऽब्रवीद्वरं वृणै खातात् पराभविष्यन्तीमन्ये ततो मा पराभूवमिति पुरा ते संवत्सरादपि रोहादित्यब्रवीत् तस्मात्पुरा संवत्सरात् पृथिव्यै खातमपि रोहति वारेवृतं ह्यस्यै तृतीयं ब्रह्महत्यायै प्रत्यगृण्हात् तत् स्वकृतमिरिणमभवत् तस्मादाहिताग्निः श्रद्धादेवः स्वकृत इरिणेनावस्येत् ब्रह्महत्यायै ह्येष वर्णः स वनस्पतीनुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृण्हीतेति तेऽब्रुवन् वरं वृणै वृक्णात् पराभविष्यन्तो मन्यामहे ततो मा पराभूमेत्याव्रश्चनाद्वो भूयांस उत्तिष्ठानित्यब्रवीत्तस्मादाव्रश्चनाद्वृक्षणां भूयांस उत्तिष्ठन्ति वारेवृतं ह्येषां तृतीयं ब्रह्महत्यायै प्रत्यगृण्हन्त्स निर्यासोभवत् तस्मान्निर्यासस्य नाश्यं ब्रह्महत्यायै ह्येष वर्णोऽन्यो खलु य एव लोहितो यो वा व्रश्चनान्निर्येषति तस्य नाश्यं काममन्यस्य स्त्रीषंसादमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृण्हीतेति ता अब्रुवन् वरं वृणामहा ऋत्वियात् प्रजां विन्दामहे काममाविजनितोः संभवामेति तस्मादृत्वियात्स्त्रियः प्रजां विन्दन्ते काममाविजनितोः संभवन्ति वारेवृतं ह्यासां तृतीयं ब्रह्महत्यायै प्रत्यगृण्हन्त्सा मलवद्वासा अभवत् तस्मान्मलवद्वाससा न संवदेत न सहासीत नास्या अन्नमद्यात् ब्रह्महत्यायै ह्येषां वर्णं प्रतिमुच्यास्तेथो खल्वाहु रभ्यञ्जनं वा व स्त्रिया अन्नमभ्यञ्जनं एव न प्रतिगृह्यं काममन्यदिति यां मलवद्वाससं संभवन्ति यस्ततो जायते सोभिशस्तो यामरण्ये—

## जयमङ्गलाक्रोडपत्रम्

### मन्त्रिपुरोहितयोः क्रमाभिधानम्

मन्त्रीति। (पृ० १६०) ननु मन्त्रिपुरोहितेति क्रमस्य किं फलम् ? इति चेदुच्यते। मन्त्री प्रत्यक्षप्रमाणादन्येषु प्रत्यक्षं प्रधानतया समन्त्रीय सर्वां नीतिमनुष्ठेयत्वेन निर्णयति, तत्कर्मणि तस्य विशेषतया नियुक्तत्वात्। अतः स चार्वाकमतस्यापि ग्राहको भवति। पुरोहितस्तु आगमप्रमाणं स्वीकृत्यैव प्रवर्तते पौरोहित्ये कर्मणि शास्त्रस्यैव प्रधानत्वात्। यदा किल प्रत्यक्षप्रमाणेन इष्टसाधनतां बुदध्वा पि न कश्चिदास्तिकः प्रवर्तते तदा तं आस्तिकं प्रवर्तयितुं आगमप्रामाण्यस्य समन्वयार्थं प्रत्यक्षे पुरोहितः प्रवर्तते इत्येवंरीत्या क्रमेण प्रमाणयोः प्रवृत्तिदर्शनात् मन्त्रिपुरोहितयोः क्रमाभिधानम्[1] एतेन मूलकृदपि शब्द प्रामाण्यं पुरोहितत्वात् प्रधानतया अनुमनुते इत्यपि स्फुटम् इति। तदेव वक्ष्यति "विशिष्ट विनियोगार्थम्" इत्यादिना। टिप्पण्यामपि एतदभिप्रेत्यैव "मन्त्रिपुरोहितादिसखः"

---

तस्यै स्तेनो यां पराचीं तस्यै ह्रीतमुख्य पगल्भो या स्नानि तस्या अप्सु मारुको अभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरपमारी याङ्क्ते तस्यै काणो या दतो धावते-तस्यै श्यावदन्या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुं सृजति तस्या उद्बन्धुको या पर्णेन पिबति तस्या उन्मादुको या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेत् अखर्वेण वा पात्रेण प्रजायै गोपीथाये-ति। (तै० सं० २-५-१)

भाष्यम्—विश्वरूपो वै इति विश्वानि बहुविधानि रूपाणि यस्यासौ विश्वरूपः शिरोभिरुपेतत्वाद्विश्वरूपत्वं। यो विश्वरूपनामकस्त्वष्टुः पुत्रः स देवानां पुरोहितः न तु शरीरसम्बन्धी, असुराणान्तु भागिनेयः। स च सात्विकेन शिरसा सोमं पिबति राजसेनान्नमत्ति। तामसेन सुरां पिबति। स च यज्ञमण्डलेषु गत्वा सर्वेषां श्रोत्र प्रत्यक्षं यथा भवति तथा देवेभ्यो हविर्भागोऽयुक्त इति वदति। सर्वेषां परोक्षं यथा भवति तथा रहस्ये ऋत्विग्भिः सहायं हविर्भागोऽसुरेभ्यो युक्तोतस्तानेवोद्दिश्य प्रयच्छतेति स एवं वदति। तेषामृत्विजां परोक्षवादे विश्वास उत्पन्नः तस्य परोक्षवाद-स्य हृदयपूर्वकत्वात् लोकेपि तवायं भाग इति सर्वस्मै पुरुषाय प्रीतिमुत्पादयितुं तत्समीपं सर्वे वदन्ति हृदयपूर्वकत्वाभावान्न स उदितो भवति। परोक्षं यदर्थं भाग उच्यते तस्यैव भागो हृदयपूर्वकत्वादुदितो भवति। एवं वृत्तान्तं श्रुत्वा तस्माद्विश्व-रूपादिन्द्रोऽबिभेत् किमिति, ईदृक्स्वामिद्रोहं सर्वथा कृत्वा राष्ट्रं विपर्यावर्तयतीति। अस्मत्तोपवीयासुरेभ्यः समर्पणं विपर्यावृत्तिः। ततस्तस्य द्रोहिणः शिरस्सु छिन्नेषु तानि शिरांसि पक्षित्रयरूपेणोत्पन्नानि"। इति।

१ तथोक्तं भावप्रकाशने—

त्रिधानुमानिकोऽध्यक्षः साक्षादिन्द्रियगोचरः।
दासीसख्यादिमुखतः श्रुतिः श्रवणमुच्यते॥
यथोत्तरो गुरुःषड्भिरुपायैस्तदुपाचरेत्॥ इति।६४।

## जयमङ्गलाक्रोडपत्रम्

इति मूलमुद्धृत्य आदिशब्देन सेनापत्यादिः सङ्गृहीतः। तथाच मन्त्रिपुरोहिताधीनत्वाद् राजा आदर्शराज्ये न आत्मानं स्वतन्त्रं मन्यते अपितु लोकपरतन्त्रम्, निर्वाचनस्य राज्यस्य च लोकपराधीनत्वात्[1]।

नवीनाः कर्मणि नियोक्ष्यमाणाः उपधाभिरपरीक्षिताः पुराणैः मन्त्रिभिः परीक्षितव्याः ततः कर्मणि नियोक्तव्याः इत्येतत्प्रदर्शनार्थमाह सख इति। अतएव मूलकृता अमात्यान् इत्युक्तम्। तत्र अभिनवानिति शेषः इति बोध्यम्। तथाचोक्तं टिप्पण्याम्—

"लोहकारोपकरणन्यायेन पुराणैर्मन्त्र्यादिभिः परीक्ष्यन्ते" इति।

### मुखेनेति पाठसमीक्षा

मुखनेति। (पृ० १९०) मन्त्रिमुखेन परीक्षणात् मुखेनेति पाठः साधुः। अत्र विशेषः सटीके नीतिवाक्यामृते द्रष्टव्यः[2]।

अथवा यथाश्रुतपाठे मन्त्रिपुरोहितयोः यथा सुखं भवेत् अमात्यानां विनियोजनेन, तथा विशिष्टविनियोगार्थम् अयमुपक्रमः इत्यर्थो बोध्यः। वक्ष्यति चैतत् 'तयोराधिक्ये आहे"त्यादिना ग्रन्थेन।

### उपधाशुद्धत्वविशिष्टे विधित्वं

"विशिष्टेति"। (पृ० १९०) विशिष्टाः धर्माद्युपधाशुद्धाः तेषां विनियोगार्थं। तथाच एतत्प्रकरणोक्तः उपधाशोधनविधिः विशिष्टविनियोगात्मको बोध्यः। लोहितोष्णीषत्वविशिष्टर्त्विक्प्रचरणवत्। तथाहि "लोहितोष्णीषाः ऋत्विजः प्रचरन्ती"त्यत्र ऋत्विक्प्रचरणस्य प्राप्तत्वात् विधेस्तत्तात्पर्यम् लोहितोष्णीषत्वे पर्यवस्याति। तथैव प्रकृतेपि उपधाशुद्धत्वविशिष्टे अयं विधिः पर्यवस्यति। अथवा विशिष्टस्थानेषु धर्मस्थीयकण्टकशोधनादिषु विनियोगार्थमित्यर्थो बोद्धव्यः। वक्ष्यति चैतत् "धमार्थव्यवहारस्थाने"त्यादिना।

### उपधाया निमित्तत्वम्

उपधाभिरिति। (पृ० १९०) नीतिवाक्यामृते उपधा निमित्तं इत्युक्तमस्ति[3]।

---

१ तदेव स्फुटीकृतं कालिदासेन—

नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम्।
पूर्व एवाभवत्पक्षः तस्मिन्नाभवदुत्तरः॥ इति।

२ तथाचोक्तम्-(मू०) मन्त्रिपुरोहितसेनापतीनां यो युक्तमुक्तं करोति स अहार्यबुद्धिः।

(टी०) अहार्या हर्तुमशक्या अभेद्या वा बुद्धिर्यस्य सः अहार्यबुद्धिः। मन्त्रिपुरोहित सेनापतिभिर्देशकालाद्यनुरोधेन युक्तमुक्तं करोति स रिपुभिरपि अहार्यो भवति। राजेति शेषः"। इति। (मन्त्रसमुद्देशे मुग्धबोधिनी)

३ तद्यथा—(मू०) "धमार्थकामभयव्याजेन परचित्तपरीक्षणमुपधा"।

(टी०) धमार्थकामभयानां निमित्तं कृत्वा परेषां चित्तस्य परीक्षाकरणं उपधासंज्ञकं भवति अतोऽशेषोपधाविशुद्धं मन्त्रिणं कुर्यात्" इति। ( नी० वा० मुग्धबोधिनी। )

## जयमङ्गलाक्रोडपत्रम्

निमित्तत्वं धर्मार्थकामभयान्वयव्यतिरेकानुविधाय्यन्वयव्यतिरेकप्रतियोग्यवश्यानुष्ठानकत्वम् । तेन अस्य अमात्यस्य हृदि राजद्रोहः स्वल्पोऽप्यस्ति नवा इति परीक्षिकैः बोध्यते । तथासति धर्मादिविनाशार्थलोभभयादिनिमित्ते प्राप्ते द्रोहः परीक्ष्यस्य अमात्यस्य राजानं प्रति अवश्यं भविष्यति । तस्मिन् उत्पन्ने सति अयं स्वाधिकारे नियोक्तुं अयोग्यः अन्यथा योग्य इति फलितम् ।

एतेन धर्मादिनिमित्ताभासमुत्पाद्य राज्ञे अमात्यो द्रुह्यति न वेति उपधाभिः छलेन परीक्षयेत् इत्यायातम् । अतः परीक्ष्येणामात्येनापि परीक्षकेण उपस्थापितस्य धर्मादिनिमित्तस्य वास्तविकत्वमस्ति नवेति अत्यन्तं सूक्ष्मेक्षिकया अवश्यं ज्ञातव्यमिति हृदयम् ।

### निमित्तानिमित्तविचारः

ननु परीक्ष्येण कथं निमित्तस्य वास्तविकत्वावास्तविकत्वे निर्णेतव्ये ? इति चेदेवम् । पुरोहितः कामादिविकृतिमप्राप्तोऽपि पौरोहित्यकर्मणो राज्ञा व्यावृत्तः यदा धर्मादिनिमित्तं राजद्रोहार्थमुपस्थापयति तदा तन्निमित्तस्य अवास्तविकत्वं बोध्यम् अन्यथा तु वास्तविकत्वम् । वक्ष्यति चैतत्—"अयाज्यस्ये"त्यादिना ग्रन्थेन । उदाहरणंचास्य मुद्राराक्षसनाटके उपलभ्यते । तट्टिप्पण्यां व्यक्तम् [१]।

---

१ तथाचोक्तम्—ततः प्रविशति राजा प्रतीहारी च ।

राजा—स्वगतम् । राज्यं हि नाम राजधर्मानुवृत्तिपरस्य नृपतेर्महदप्रीतिस्थानम् ।

परार्थानुष्ठाने रहयति नृपं स्वार्थपरता ।
परित्यक्तस्वार्थो नियतमयथार्थः क्षितिपतिः ॥
परार्थश्चेत् सार्थादभिमततरो हन्त परवान् ।
परायत्तः प्रीतेः कथमिव रसं वेत्ति पुरुषः ।४।

अपि च दुराराध्या लक्ष्मीरात्मवद्भिरपि राजभिः ।

तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न सन्तिष्ठते ।
मूर्खान् द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि ॥
शूरेभ्योऽप्यधिकां बिभेत्युपहसत्येकान्तभीरूनपि ।
श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशम् ॥५॥

अन्यच्च कृतककलहं कृत्वा स्वातन्त्र्येण त्वया कञ्चित्कालं व्यवहर्तव्यमित्यार्यादेशः । स च कथमपि मया पातकमिवाभ्युपगतः । अथवा शश्वदार्योपदेशसंस्क्रियमाणमतयः सर्वदैव स्वतन्त्रा वयम् । कुतः ।

इह विरचयन् साध्वीं शिष्यः क्रियान्न निवार्यते ।
त्यजति तु यदा मार्गं मोहात्तदा गुरुरङ्कुशः ॥
विनयरुचयस्तस्मात् सदैव निरङ्कुशाः ।
परतरमनः स्वातन्त्र्येभ्यो हि वयं हि पराङ्मुखाः ॥५६ इति ॥ (अङ्क ३)

## जयमङ्गलाक्रोडपत्रम्

एवञ्च पुरोहितेन आवेशमात्रेण उपस्थापितम् निमित्तं ज्ञात्वा वक्तृ रागापरागस्वरादि विषयानविचार्यैव यदि परीक्ष्यो राज्ञे द्रुह्यति । तर्हि सः दुष्टः । इति बोध्यम् ।

### शौचाशौचज्ञानमिति मूलसमीक्षा

शौचेति । (पृ० १९०) धर्मादिविशुद्धचित्तत्वे अयमहिंस्रः । तदभावे तु हिंस्रः । इत्याकारकज्ञानं टिप्पणीकृन्मतेन । एतन्मतेन तु तथाविधं हिंस्रत्वमहिंस्रत्वं च बोध्यम् । अत्र जयमङ्गलायां शौचाशौचममात्यानामिति अध्यायान्ते उक्तम् । तस्मादारंभेपि । शौचाशौचममात्यानां इत्येव पाठो भाति । टिप्पणीकारमते तु शौचाशौचज्ञानम् इति पाठान्तरमुपकल्प्यते । उभयोरपि अभियुक्तत्वाद् अत्रत्यपाठविषये मौनमेव शरणं युक्तं भाति ।

### उपधाविचारः

उपधामाह भावेति । (पृ० १९०) उपधीयन्ते छद्मना इति शेषः । स्फटिकमिति । असद्भूतधर्मस्य आरोपप्रदर्शनार्थमिदमुदाहरणम् । स्फटिके जपाकुसुमसान्निध्ये पुष्पगतरूपभ्रमस्येव परीक्ष्ये धर्मे रागोत्पत्तिः राजद्रोहविशिष्टा । इदमेव उपाधिमत्त्वम् । व्यक्तीकृतञ्चैतन्मुक्तावल्याम् । "उप समीपे विद्यमानवस्तुनि आधीयन्ते गुणाः" । इति । एतेन नीतिसारीय ४ सर्गस्था उपधाविषयिणी जयमङ्गला व्याख्याता भवति । उपधायाः स्वरूपममरकोशादौ व्यक्तम् । तच्च टिप्पण्यां द्रष्टव्यम्[1] ।

### राजद्रोहे कर्तव्यता

अत्रेदं चिन्त्यम् पौरोहित्यमन्त्रिगुणसंपत्तौ विद्यमानायां सत्यां यदिनिर्विकारतया मन्त्रिपुरोहितौ राजचेष्टितं अधर्म्यत्वेन निर्णयतः तदा तु तथाविधस्य राज्ञः वेनरावणादेरिव दण्डयत्वात् तदीय दण्डप्रणयनं प्रति यदुचितं तदमात्येनापि मन्त्रिपुरोहितानुगामिना अनुष्टेयमेव । अन्यथा तु अमात्यस्यैव दुष्टत्वं स्यात् । पुनरत्रापि विशेषः । राजा आत्मानं निमितीकृत्य पुरोहितादिमुखेन उपधया अमात्यान् शोधयेदिति यन्मते, तन् न स्वमतमपितु आचार्यमतम्, तथैव मूलकृता अध्यायान्ते प्रदर्शितत्वादिति ।

---

१ "भेदोपजापावुपधा धर्माद्यैर्यत्परीक्षणम् । (अमर० २-८)

(टी० महेश्वरकृता) "धर्मार्थकामैर्भयेन च परीक्षणममात्यादीनां आशान्वेषणम् उपधा स्यात् । तद्यथा भावज्ञानाय राज्ञा प्रेरितेनाप्तेन दुष्टोयं राजा तदेनमुत्सृज्यान्यमभिषेचयामोऽन्यं वा साधुं नृपं व्रजाम इत्युक्तोऽमात्यादिर्यदि तद्भाषणन्न मन्येत तर्हि सत्यन्धार्मिकोयमिति निश्चयो धर्मपरीक्षणम् । एवमर्थपरीक्षणादि बुध्योद्यहर्तव्यम्" । इति ।

शब्दकल्पद्रुमेऽपि—"उपधीयते शुद्धिज्ञानमत्र, राज्ञा धर्मार्थकामभयैरमात्यादेर्यत्परीक्षणमित्यमरः धर्मार्थकाममोक्षद्वारा परीक्षा यथा —

## जयमङ्गलाक्रोडपत्रम्

एतैरुपर्युक्तव्याख्यानैः अमात्यो नियोक्ष्यमाणः सामान्येषु अधिकरणेषु स्थितः मन्त्रिपुरोहितादिभिः उपस्थापिते निमित्तेऽपि न स्वामिद्रोही न वा गूढापकारी च भवति। तस्मात् अयं न राजद्रोही न वा गूढापकारी भविष्यति, इत्ययं ज्ञानोदयः उपधाफलम्।

### षष्ठीतत्पुरुषप्रयोजनम्

**आत्मनोपोति** । (पृ० १९०) अत्रायं निष्कर्षः—अयं मे हितं साधयिष्यतीति निश्चयाश्रयः यः स सखा भवति। एतन्निश्चयस्य स्थायित्वसंपादनार्थं मन्त्रिपुरोहितादिभिः तथा प्रयतितव्यम् यथा तौ प्रति राजा विश्वसेदिति मन्त्रिपुरोहितयोः सखेति षष्ठीतत्पुरुषसमासेन निर्णीतम्। अतएव वयं ईश्वरस्य सखायो भवितुमर्हामः ईशोऽस्माकं हितं साधयितुं प्रवर्तते इति निश्चितत्वात्[1]।

---

धर्मार्थकाममोक्षैश्च प्रत्येकं परिशोधनैः।
उपेत्य धीयते यस्मादुपधा परिकीर्तिता ॥
अर्थकामोपधाभ्यान्तु भार्याः पुत्रांस्तु शोधयेत्।
धर्मोपधाभिर्विप्रांस्तु सर्वाभिः सचिवान् पुनः ॥

इति कालिकापुराणे ८५ अ०। "भूयो भूयश्चोपधाभिर्विशोध्य तं मे मतिसहायमकरव"मिति दशकुमारचरिते विश्रुतचरिते"। इति।
एवं मनुभाष्यकर्त्रा मेधातिथिनापि उपधाविषये उक्तमस्ति—

"मौलान् शास्त्रविदः शूरान् लब्धलक्षान् कुलोद्गतान्।
सचिवान् सप्त चाष्टौ च प्रकुर्वन्ति परीक्षितान्"। (मनु ७-५४)

(टी०) "सुपरीक्षितान् धर्मार्थकामभयोपधाभिः। सेयं परीक्षोच्यते। पुरोहितः स्वल्पकार्ये राज्ञा व्याजेनाधिक्षिप्तः बहुनाऽर्थसंप्रदानेनाप्तपुरुषैरेकैकममात्यमुपजपेत् राजविनाशाय। एतच्च सर्वमन्त्रिभ्यो रोचते अथ कथं भवत इति। प्रत्याख्याने धर्मोपधाशुद्धः। सेनापतिः केनचिदुपदेशेन पूर्ववदधिक्षिप्तः बहुना च संप्रदानेनाप्तपुरुषैरेकैकममात्यमुपजपेत् राजविनाशाय। एतच्च सर्वमन्त्रिभ्यो रोचते। अथ कथं भवत इति प्रत्याख्याने अर्थोपधाशुद्धः। परिव्राजिकान्तःपुरे लब्धविश्वासा एकैकममात्यमुपजपेत् सा राजमहिषी भवन्तं कामयते कृतसमागमोपायेति। प्रत्याख्याने कामोपधाशुद्धः राजप्रयुक्ता एव केचित् पुरुषाः प्रमादमाविष्कुर्युः "कृतसमयैरमात्यै राजा हन्यत" इति उपलब्धप्रवादः पुरोहितस्याप्तः कश्चिदमात्येषु मन्त्रं श्रावयेत्। इमं प्रवादमुपश्रुत्य च भवतां विग्रहो राज्ञा क्रियत इति तेषामेवचान्यतमः पूर्वमेव कृतसंविल्कः प्रत्येकं राजाऽमात्येषूत्साहयेत्। तत्र ये प्रत्याचक्षते ते भयोपधाशुद्धाः"। इति।

१ मङ्गलभवन अमङ्गलहारी द्रवहु सो दसरथ अजिरविहारी। इति।

## जयमङ्गलाक्रोडपत्रम्

ईश्वरस्तु अस्मानधिकृत्य उपर्युक्तनिर्णयवान्नास्ति अतः सः अस्माकं सखा न भवितुमर्हति। यदा हि सर्वविषयान् सन्त्यज्य वयं ईश्वरं सेवामहे विपदादिषु च तदीय रागपरीक्षायां उत्तीर्णा भविष्यामः, तदा अस्माकमीश्वरोपि सखा भवितुमर्हती त्यन्यदेतत्। तदेवोपवर्णितं षष्ठीसमासेनेति ग्रन्थेन।

### पदे नियोजनं मन्त्रिपुरोहितनिर्णयाधीनम्

**सहायातिशयेति**। (पृ० १९०) अतिशयग्रहणं मन्त्रिपुरोहितयोः अमात्यानां परीक्षणे विशेषाधिकारप्रदर्शनार्थं। तथा च सेनापतिना टिप्पण्युक्तदिशा परीक्ष्य "अयममात्यः एतत्स्थाने योजनीय" इति कृतेऽपि निर्णये राज्ञा सेनापतिवचनश्रवणमात्रेण स परीक्षितोऽप्यमात्यः तत्तत्पदेषु तावन् न नियोजनीयः यावन् मन्त्रिपुरोहितौ न निर्णयतः। न वा मन्त्रिपुरोहिताभ्यामकृते परीक्षणे सेनापतिना सैन्यसंबन्धिकार्यादन्यत्र स परीक्षितो मन्तव्यः। तदेवाह अन्यथेति।

### टीकाटिप्पण्योर्विरोधपरिहारः

न च "मन्त्रिपुरोहितसेनापतिसख" इत्यादिपूर्वोद्धृतटिप्पणोविरोध इति वाच्यम् सर्वविधव्यसनप्रतीकारकर्मणि मन्त्रिपुरोहितावेव विशेषतया अधिकृता विति नीतिसारे निर्दिष्टत्वात्। टिप्पण्यां तु उपधार्थं सेनापतिरपि उपयुज्यते इति प्रदर्शनार्थं तद्ग्रहणम्। अतएव उपधाविधिप्रस्तावे सेनापतिपरिव्राजकद्वारा अर्थोपधा-भयोपधयोः शुद्धिः तत्र तत्र मूलकृज्जयमङ्गलोक्ता प्रकृतेन "मन्त्रिपुरोहितसेनापति-सख" इति वाक्येन न विरुद्ध्यते इति सुस्थम्। पूर्वपक्षमुत्थापयति अत्र चेति।

**उपधाङ्गत्वात् इति**। (पृ० १९०) उपधाकर्तृत्वात्। अथ मन्त्रिपुरोहितेति क्रमं निर्दिश्य पुरोहित कर्तृका उपधाशुद्धिरादौ, "पुरोहितमयाज्ये"त्यादिग्रन्थेनाग्रिमेण कथ प्रस्ताविता ? किंबहुना "प्रवहणनिमित्तमेकैकम"त्यादिना ग्रन्थेन अमात्यकर्तृकत्वेन-उपधाशुद्धिरेव आदौ वक्तव्या आसीदिति पूर्वपक्षिणामाशयं उपपत्तिमुखेनाह तेष्विति। अर्थात् मन्त्रिकर्तृकपरीक्षया यावत्पर्यन्तममात्याः परीक्षिता न भविष्यन्ति तावत्पर्यन्तं पुरोहितः अमात्यद्वारा परीक्षिष्यमाणेषु उपजापं न कर्तुमर्हेत् इति भावः। समादधाति नार्यमिति।

### अर्थक्रमस्यबलीयस्त्वम्

**चोद्यमिति**। (पृ. १९०) अत्रोदाहरणान्तरं वैदिकमपि "अग्निहोत्रं जुहोति यवागूं पचति[१]"

---

१ तदुक्तम्—भाट्टदीपिकायाम्—

अ० ५ पा० १ अ० २ अर्थाच्च--अर्थः प्रयोजनम्। तच्च व्युत्क्रमे अनुपपद्यमानत्वात्क्रमे प्रमाणम्। अग्निहोत्रं जुहोति यवागूं पचति इत्यत्र यवागूपाकस्य पाठक्रमात् पश्चात्करणे पाकसंस्कृताया 'यवाग्वा होमरूपस्य यवाग्वा अग्निहोत्रं जुहोति' इति वचनसिद्धस्य प्रयोजनस्यानिष्पत्तेः, पाकस्य च यवागूत्पादकत्वेपि अनुपयुक्तायास्तस्याः प्रयोजन-त्वानुपपत्तेस्तदन्यथाऽनुपपत्या पूर्वं पाकः पश्चाद्धोमः। न च 'तृतीया च होश्छन्दसि'—

## जयमङ्गलाक्रोडपत्रम्

इति स्मर्तव्यम्। अग्निहोत्रानन्तरं यथा—यवागूपाकस्य वैयर्थ्यम्, विनाहविर्द्रव्यं अग्निहोत्रहोमस्य अशक्यत्वं च स्यात् अतः अर्थक्रमानुसारेण आदौ यावगूं पचति ततः अग्निहोत्रयागः इत्यर्थक्रमः मीमांसाशास्त्रेण साधितः। तथा प्रकृतेऽपि उपधा-शौचनिर्णयार्थं सामर्थ्यापेक्षया यथा क्रमस्यौचित्यं भवति तथा कल्पनीयम्।

ननु क्रमवैपरीत्ये अपेक्षितायाः उपर्युक्तमीमांसाप्रदर्शितयुक्तेः अयोग्यतया तत् संभावनाऽभावात् क्रमवैपरीत्ये असन्तोषमनुभवन् प्राक्पुरोहितकर्तृकपरीक्षाभिधाने मूलकर्तुः अन्यं भावमाह तथापीति। तत्रायन्निष्कर्षः अत्र हि शौचाशौचज्ञानविषयत्वाद् अमात्योत्पत्तिरेव विधीयते, अन्ते अमात्यवर्गं पुरस्कृत्य गूढपुरुषान् विधास्यति इति अमात्योत्पत्तये मूलकारः तत्परीक्षामात्रमाह। नह्यत्र परीक्षाविधेः विषये मन्त्रिपुरोहितयोः क्रमापेक्षा अपि तु सर्वत्र त्रय्याः स्थापनया धर्मस्य प्रचारणाद् विशेषतया राजानं प्रति प्राधान्येन सेव्यसेवकभावस्य धर्मतः अभ्यर्हितत्वाच्च धर्मोपधाशुद्धिः प्राङ्निरूपिता। तेनात्र प्रकरणे अमात्यविषये निर्दिष्टो विधिरयं "अग्निहोत्रं जुहोति" इत्युत्पत्तिविधिवत् बोध्यः। एतत्स्वरूपं च न्यायप्रकाशे उक्तम्[1]।

तत्सङ्घादिति। (पृ० १९०) सङ्घस्य विधित्वं आग्नेयादित्रिकद्वयस्य दर्शपूर्णमासत्वविधिवत् बोध्यम्।

---

इति स्मरणात् होः कर्मणि तृतीया चकारात् द्वितीया चेत्यर्थकात् 'यवाग्वा जुहोति' इत्यत्र यवाग्वास्तृतीयया कर्मत्वावगमेन होमस्य प्रयोजनत्वासिद्धिः। तथात्वेपि यावग्वा उपयोगाभावेन होमवाक्य एव सक्तुन्यायेन विनियोगभङ्गाङ्गीकारात्। पाकस्य तु दृष्टार्थत्वात्संस्कारकर्मत्वमेव। इति।

१ "स च विधिश्चतुर्विधः उत्पत्तिविधिर्विनियोगविधिः प्रयोगविधिरधिकार विधिश्चेति। तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः यथाग्निहोत्रं जुहोतीति। उत्पत्तिविधौ च कर्मणः करणत्वेनैवान्वयः होमेनेष्टं भावयेदिति। न तु होमं कुर्यादिति साध्यत्वेन। तथा सति साध्यस्य साध्यान्तरान्वयायोगेनाधिकारवाक्यावगत फलसंबन्धो न स्यात्। करणत्वेन त्वन्वये होमेनेष्टं भावयेत्, किं तदिष्टमित्याकाङ्क्षायां फलविशेषसंबन्धो घटते।

न च उत्पत्तिविधाविष्टवाचकपदाभान कर्मणा इष्टं भावयेदिति कथं वाक्यार्थ इति वाच्यम्। विधिश्रुतेरेवेष्टबोधकत्वात्। सा हि पुरुषार्थे पुरुषं प्रवर्तयन्ती कर्मणः फलसम्बन्धमात्रं बोधयति। तस्माद्युक्तमुत्पत्तिविधौ कर्म करणत्वेनान्वेतीति। अत एवोद्भिदा यजेत इत्यादौ तृतीया उद्भिच्छब्द उपपद्यते, उद्भिदा यागेन इष्टं भावयेदित्यन्वयोपपत्तेः। इति।
(न्याये प्रकाशे—वि० विधि०)।

## जयमङ्गलाक्रोडपत्रम्

### प्रागिति पाठसमीक्षा

तेन अमात्यविधानं ततः पृथक् तत्सङ्घविधानंच आग्नेय—दर्शयोः पृथग्विधानवत् उपपन्नं भवति। आग्नेयविधेः उत्पत्तिविधित्वं आग्नेयत्रिकयाग-सङ्घस्य दर्शत्वं च मीमांसायां यत्प्रतिपादितं तदपि स्फुटीकरणाय उद्धृतं[1] टिप्पण्याम्। तदनुरोधेनैव सङ्घाच्च प्रागिति पाठः कल्पितः।

सामान्येष्विति पदं व्याख्याति धर्मेत्यादिना। समानस्य भावः सामान्यं इति व्युत्पत्या सामान्यानां सर्वेषामपि कृष्यादिकर्मसु नियोजनं संभवति। तदुक्तम्— "सर्वत्राशुचीन् खनिद्रव्यहस्तिवनकर्मान्तेषूपयोजयेत्" (१—१० अ० शास्त्र०) इति। तदभिप्रायेण कल्पान्तरमाह अथवेति।

---

१ न्यायप्रकाशे—

दर्शपूर्णमासपदं च कालनिमितम्, तद्योगश्चाग्नेयादिषूत्पत्तिवाक्यैरवगतः। अतस्त-द्वाचित्वेन दर्शपूर्णमासपदं प्रसिद्धम्। न च आग्नेयादीनां बहुत्वात्द्विवचनान्तत्व-मस्यानुपपन्नमिति वाच्यम्। विद्वद्वाक्यद्वयसिद्धसमुदायद्वयाभिप्रायेण तदुपपत्तेः। इति।

कर्मान्तरविधायित्वे स्यात् सर्वेषां प्रधानता।
समुदायानुवादौ तु रूपाभावादिमौ मतौ॥
द्रव्यं कथंचिल्लभ्येत देवता तु न लभ्यते।
लभ्यते मन्त्रवर्णाच्चेन्नाज्यभागाङ्गता यतः॥
लिङ्गक्रमाभ्यां मन्त्राणां आज्यभागाङ्गता स्थिता।
वचनार्थन्तु व्यवस्थार्थमल्पार्थत्वादबाधतः॥

वार्त्रघ्नीवृधन्वतीनां हि लिङ्गक्रमाभ्यामाज्यभागाङ्गत्वेनाव्यवस्थया प्राप्तानां तादर्थ्याबाधेन व्यवस्थामात्रं वार्त्रघ्नी पौर्णमास्यां, वृधन्वती अमावास्यायामित्ये-ताभ्यां विधीयते लाघवादिति नैतेषां मन्त्राणां य एवं विद्वानिति विहितकर्मान्तरसं-बन्धः येन मान्त्रवर्णिकी देवता स्यात्। न च कल्पयितुं देवता शक्यते, विधिगम्यत्वात् देवतात्वस्य। न चासत्यां देवतायां यागानुष्ठानं संभवतीति गत्यभावात्समुदायानु-वादत्वं, तत्र पौर्णमासीसंयुक्तेन वाक्येनोपपदवशात्पौर्णमासीकालयुक्तानां त्रयाणां तन्त्रेणानुवादः। तेनैवैकानुवादेन त्रयाणामपि तेषामेकसमुदायापत्तिः, तदेकत्वाच्च पौर्णमासीमित्येकवचनम्, एवममावास्यासंयुक्तेपि। ततश्च समुदायद्वयसिद्धिः। काल-योगाच्चाग्नेयादीनां प्रसिद्ध्यर्थं दर्शपूर्णमासाभ्यामिति द्विवचनान्तं कालयोगि चोपपदं शक्नोत्याख्यातं विशेषे स्थापयितुमिति तेषामेव प्राधान्यमितीयमेव च द्विवचनापेक्षित समुदायद्वयसिद्धिः समुदायानुवादप्रयोजनमिति नानर्थक्यम्। यत्तूक्तं पौर्णमास्यां पौर्णमास्येत्येतदपि वाक्यद्वयमनर्थकं स्यादिति नानर्थकम्, आग्नेयादीनामेव त्रिकस्य त्रिकस्य सहप्रयोगार्थत्वात् उत्पत्तिवाक्येषु हि तेषां प्रत्येकं कालयोगान्नैकप्रयोगता सिद्ध्येत। शास्त्रदीपिकायामपि— २ अ० २ पा० ३ अधिकरणम्।

[ धर्मव्याजेन तत्परीक्षाक्रमः ]

( तत्र ) पुरोहितमयाज्ययाजनाध्यापने [1]नियुक्तममृष्यमाणं राजा अवक्षिपेत् । [2]सत्रिभिः [3]शपथपूर्वमेकैकममात्यं उपजापयेत्—

## श्रीमूला

छलप्रयोगमाह पुरोहितमिति । राजा अयाज्ययाजनाध्यापने याजयितुमनर्हस्य वृषलीपत्यादेर्याजनेऽध्यापने च नियुक्तं चोदितम्, अमृष्यमाणम् अधर्मनियोजनेन प्यन्तं, पुरोहितम् अवक्षिपेत् अवमन्येत स्वपदादवरोपयेद् वा । सः अवक्षिप्तः पुरोहितः, सत्रिभिः स्त्रीपुरुषलक्षणनिमित्तादिशास्त्राभिज्ञापदेशचारिणः सञ्चारविशेषाः सत्रिणः गूढपुरुषप्रणिधौ वक्ष्यमाणाः तैः प्रयोज्यकर्तृभिः, एकैकम्, अमात्यं, शपथपूर्वम् उपजापयेत् भेदयेत् । उपजापस्य शपथपूर्वत्वमनुद्भेदार्थम् ।

## वैदिकसिद्धान्तसंरक्षिणी

पुरोहितम् उदितोदितगुणसंपन्नमित्यादिप्रागभिहितगुणसंपत्तिविशिष्टम् । अयाज्येति । अयाज्याः अनध्याप्याश्च शूद्रादयः ।

"तथाविधं शूद्रापुत्रं याजय" इत्यादिना नियुक्तं । अमृष्यमाणम् अमर्षाभिनय-विशिष्टं कृतकत्वात् । अमर्षस्वरूपं भावप्रकाशने उक्तं—

"प्रतिक्रियेच्छाऽमर्षः स्याद्विद्यैश्वर्यबलाधिकैः ।
आक्षिप्तस्य सभामध्येऽवमानं गमितस्य वा ॥
शिरः प्रकंपनस्वेदध्यानोपायगवेषणैः ।
उत्साह व्यवसायाद्यैर्वर्ण्योऽसौ रसकोविदैः ॥ इति ॥

काव्यप्रकाशविवरणेऽपि । ४ उल्लासे " अथामर्षः । तत्र

"अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता' इति धनिकः । अभिनिवेशः क्रोधः "कृतापराधेषु स्थिरोऽमर्षत्वमश्नुते" इति महाराजस्य दर्शनात् । निश्शङ्कशङ्करस्तु "विद्याधनबलैश्वर्याधिकैर्मध्ये समं नृभिः । अधिक्षेपादमर्षः स्यात् प्रतिकारस्पृहात्मक इत्युममर्षमूचे" इति ।

टिप्पण्याम् एवं व्याख्यातम्—"असहनतया प्रतिपद्यमानम् स्वामिसङ्केतादेव । परीक्ष्यानां परीक्षार्थम्" इति । अवक्षिपेत् असूयया अभिमानेन वा अवज्ञया वा । अत्रैव आक्षेपस्य अनुभावतया संभावितत्वात् । तदुक्तं भावप्रकाशने -

नी०टि० १. नियुक्तमिति—असहनतया प्रतिपद्यमानम् । स्वामि सङ्केतादेव परीक्ष्याणां परीक्षार्थम् ।

,, २. सत्रिभिरिति—सपुरोहितो बहिरवस्थितः ।

,, ३. शपथपूर्वमिति—पूर्वमेव शपथानमात्यं करयित्वा यश्च·········सः स्थितस्त्वं स्थित एवानभिमतेऽपि । न मन्त्रभेदः कर्तव्यः ।

## वैदिकसिद्धान्तसंरक्षिणी

'असूया नाम सा दूरापराधान्वेषणादिभिः ।
दोषप्रख्यापनमधोमुखता भ्रुकुटीकृतिः ॥
अप्रदानं दृशोरीर्ष्या परिवर्तितवक्त्रता ।
अवज्ञेत्यनुभावाः स्युरसूयायामुदाहृताः ॥ इति ॥

**स** इति । पुरोहितः । "वहिरवस्थितः" इत्युक्तं टिप्पण्याम् । **जयमङ्गलाकृता** अवक्षिप्तः इति व्याख्यातम् । सत्रिभिः कापटिकोदास्थितादिभिः वक्ष्यमाणैः । एतेषां प्रयोज्यकर्तृत्वं बोध्यम् । शपथपूर्वकं इति । "पूर्वमेव शपथानमात्यं कारयित्वा यश्च ' स स्थितः त्वं स्थित एव अनभिमतेऽपि न मन्त्रभेदः कर्तव्य" इति **टिप्पण्याम्** व्याख्यातम् । एकैकं तत्तदमात्यपदेषु नियोगार्थतया चिन्तितम् । भेदसौकर्यार्थं एकग्रहणाम् । उपजापयेत् भेदनेन शौचाशौचं जानीयात् ।

## जयमङ्गला

**तत्र** पुरोहितमिति । अयाज्यस्य अयाजनार्हस्य[1], याजनेऽध्यापने **च** "अमुं शूद्रापुत्रं याजय अध्यापये"ति नियुक्तम् तेन सह कृतसंवित्कत्वात् । अमृष्यमाणम् अक्षममाणं कथमयमेवं करोतीति । राजाऽवक्षिपेत्[2] प्रत्ययार्थमवरोपितार्थमानन्निर्भर्त्सयेत् । स सत्रिभिरिति । सोऽवक्षिप्तः सत्रिभिर्वक्ष्यमाणलक्षणैः प्रयोज्यैः । शपथपूर्वं स्वयं शपथं कृत्वा विश्वासार्थं[3] तांश्च कारयित्वा । राज्ञो भिन्नोऽयमिति ख्यापनार्थम् । एकैकं स्वाशयाविष्करणार्थम् उपजापयेत् भेदयेत् ।

## जयमङ्गलाक्रोडपत्रम्

### शूद्राणामयाज्यत्वादि

**शूद्रापुत्रमिति** । (पृ. २०१) एतेषां अयाज्यत्वमनध्याप्यत्वंच मीमांसायां साधितमस्ति[4]।

---

अशुद्धम् — १ अयजनर्हस्य  २ रजावक्षिपेत्  ३ विश्वासार्थतांच

४ तद्यथा शास्त्रदीपिकायाम् —(६ अ० १ पा० सूत्र ७)

"चातुर्वर्ण्यमविशेषात्" किमग्निहोत्रादिषु चतुर्णामपि वर्णानामधिकारः ? उतापशूद्राणां त्रयाणामिति । तदर्थमिदं विचार्यते किं कामश्रुतिप्रयुक्तं विद्यार्जनम् ? उत स्वाध्यायविधिसिद्धविद्योपजीविन्यः कामश्रुतयः ? इति । द्विधा चात्र पूर्वः पक्षः । एकस्तावत्स्वाध्यायाध्ययनं क्रत्वनुष्ठानज्ञानौपयिकतया विहितं क्रत्वङ्गं क्रतुविधिभिरेव प्रयाजादिवत्प्रयुज्यते । क्रतवश्चाविशेषेण चातुर्वर्ण्यमविकुर्वाणाश्चतुर्णामध्ययनं प्रयुञ्जते, तत्र त्रयाणां वसन्ते ब्राह्मणमुपनयीतेत्यादिभिरुपनयनसंस्कारोऽध्ययनाङ्गत्वेन विहितश्चतुर्थस्तु विध्यभावादनुपनीत एवाधीत्य विद्यां लब्ध्वाऽधिक्रियत इति । द्वितीयस्तु न क्रत्वङ्गमध्ययनं श्रुत्याद्यभावादक्षरग्रहणादिदृष्टकार्यपरम्परया वाक्यार्थज्ञानं यावद्गतं ज्ञानस्यानुष्ठानौपयिकत्वेन स्वयमेव फलत्वोपपत्तेस्तत्रैवाध्ययनं स्वविधिना विनियुज्यते न तद्द्वारेण क्रतौ । तेनाधानमिवाग्न्यर्थं, ज्ञानाङ्गं न क्रत्वङ्गम्-

अतस्तेन विनापि क्रतूनामवैगुण्यादनधीतवेद एव शूद्र उपद्रष्टृवचनादनुतिष्ठन्नधिक्रियते। क्रतवो ह्यविशेषेण चतुरोऽप्यधिकुर्वाणास्त्रयाणामध्ययनविधिसिद्धविद्यत्वाद्विद्यार्जनं न प्रयुञ्जते, शूद्रस्य त्वन्यतःसिद्धविद्यत्वाभावात्तदर्जनमपि प्रयुञ्जते, अतो यद्यपि स्वाध्यायविधिरनिर्दिष्टकर्तृकत्वात्कर्तारमपेक्षमाणः प्रकृतोपनयनसंस्कृतान्किमर्थं वयमाचार्यसमीपमानीता इत्येवं प्रयोजनमपेक्षमाणान्ब्राह्मणादीनेव कर्तृत्वेन स्वीकुर्वंस्तेषामेवाध्ययनं विधत्ते न शूद्रस्य। तथाप्यसावविहितेनैवाध्ययनेनोपायान्तरेण वा विद्यां लब्ध्वाऽधिक्रियेतेति।

सत्यमध्ययनं नाङ्गम् तत्कृतात्वङ्गमर्थधीः।
तद्वतः क्रतवो लब्ध्वा न तुर्यस्याक्षिपन्ति ताम्।

क्रतुविधयोऽन्यथाऽनुपपत्त्या विद्यार्जनमाक्षिपन्ति, यदा तु स्वाध्यायविधिविहिताध्ययनोपात्तविद्यान् द्विजन्मनो लभन्ते तदा तैरेव लब्धात्मानोऽनुपपत्तिक्षयान् न चतुर्थस्य विद्यामाक्षिपन्ति, यदा चैवं विहितोपायसिद्धज्ञानवत एव विधयोऽधिधिकुर्वन्ति तदा तदेव ज्ञानमकर्मकालोपात्तमपि अग्निवत्क्रतूनामङ्गमिति तच्छून्यस्य स्वाच्छन्द्येन विद्यामर्जयतोऽपि न सिद्ध्यत्यधिकारः। मन्त्रवत्सु च अनधीतवेदस्य कुतोऽधिकारः, कुतस्तरां चानग्नेरग्निसाध्येषु। तस्मात्त्रयाणामधिकारः इति॥(६-१-७सूत्र०)
वेदान्तसूत्र मुक्तावल्यांच —(१ – ३—३६ सूत्रं)

संस्कारपरामर्शात्तदभावाभिलापाच्चास्य। "तं होपनिन्ये" इत्यादिना विद्याधिकरण उपनयनसंस्कारोक्तेः। "शूद्रश्चतुर्थो वर्ण एकजातिः" म० १०।४– "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति" मनु० १०।१२।५–इत्यादिस्मृत्या शूद्रे तदभावोक्तेश्च॥ ३६॥

**तदभावनिर्धारणे च प्रवृत्तेः। ३७।**

अध्ययनार्थं गतं जाबालं किं गोत्रोऽसीति पृष्टो "न ज्ञायत" इति च सत्यं वदन्तं "नैतदब्राह्मणो विवेक्तुमर्हति"–छा० ४।४।५–इत्यनेनाशूद्रत्वं निर्धार्यैव तदुपनयने "गौतमस्योपत्वा नेष्य" इत्यनेन प्रवृत्त्युक्तेः। ३७।

**श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च। ३८।**

"अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्" इत्यादेः श्रवणस्योदाहरणे जिह्वाच्छेदो धारणे शरीरभेद इत्यादेरध्ययनस्य, "न शूद्राय मतिं दद्यात्" इत्यादेरर्थज्ञानस्य प्रतिषेधाच्च। विदुरादेश्च भरतादिवज्जातिस्मरत्वादेव ज्ञानित्वात्। तथा चाधीतवेदादेवाभ्युदयनिःश्रेयसौपयिकार्थबोधोत्पादस्वीकारात् सामर्थ्यादध्ययनस्यार्थबोधे विनियोगात्पूषानुमन्त्रणमन्त्रेऽपि समाख्यया मन्त्रविशेषस्य सामान्यसंबन्धे पूषदैवत्यकर्मणि बुद्धे सत्येव तदीयदेवताप्रकाशनद्वारा लिङ्गेन तदङ्गत्वबोधस्य सिद्धत्वेऽपि प्रकृते लिङ्गस्य विशेषनिष्ठत्वेन सामान्यसंबन्धबोधकसमाख्यादिनिरपेक्षत्वाच्छ्रुतपदार्थान्वयानुरोधेनाध्ययनस्य गुणकर्मत्वनिर्णयात्फलं क्रत्वपेक्षितबोधरूप दृष्टार्थतया नियमसंभवेऽदृष्टार्थत्वाकल्पनादुपनीतत्रैवर्णिकस्यैवाध्ययनाधिकारित्वान्न शूद्रस्य वेदपूर्वकविद्याधिकार इति भावः इति॥ ३८॥

## जयमङ्गलाक्रोडपत्तम्

ननु प्राङ् "मुखेन" (सुखेन) विशिष्टविनियोगार्थमित्युक्तम् अत्र तु तेन पुरोहितेनैव सह विरोधः कथमुच्यते ? इत्याह कृतेति।

**करोतीति।** (पृ० २०१) एते चानुभावाः आक्षेपादयः सत्रिभिः सञ्चालनीया न तु स्वयम्, तथैव मूले अभिहितत्वात्। अन्यथात्वे पुरोहितस्य असत्यभाषित्वं प्रसज्येत।

**प्रत्ययार्थमिति।** (पृ० २०१) राजा हठात् पुरोहितद्वारा अयाज्ययाजनं कारयति न तु पुरोहितः स्वयं तत्कर्तुं प्रवर्तते। तत्र हेतुमाह अवलोकितेति। एवञ्च राज्ञा असूयया अवज्ञया वा पुरोहितः अवक्षिप्तः इति फलितम्[1]।

आक्षेपोपि असूयायामेव अन्तर्हितः—तथैव असूयास्वरूपस्य टीकायां व्यक्तत्वात्[2]।

असूयास्वरूपं वैदिकसिद्धान्तसंरक्षिण्यां (पृ० २०१) व्यक्तम्।

एवंविधस्य अवज्ञाप्रयुक्तस्याक्षेपस्योदाहरणम् वेदेपि उपलभ्यते "दैव्यो वै वर्णः ब्राह्मणः" इत्यादिषु[3] (तै० ब्रा० १-२।७)

एतेन स्फुटं भवति यत् ब्राह्मणेन सह अमर्षो न विधातव्यः इति। प्रकृते तु कृतसंवित्कः अतएव कृतकः इति बोध्यम्।

## विश्वासार्थं तांश्चेतिपाठसमीक्षा

**विश्वासेति।** (पृ० २०१) विश्वासार्थं स्वयं शपथः कर्तव्यः। परीक्ष्याअपि तथैव कारयितव्या अमात्या इति पूर्वोद्धृतटिप्पणीवाक्यात् (पृ० २०१) स्पष्टं भवति। अतः अत्रत्या पङ्क्तिः एवं संशोधिता "विश्वासार्थं तांश्चे"ति। एतेन मन्त्रभेदाभावः फल बोध्यम्।

## पुरोहितेन शपथग्रहणं न कर्तव्यम्

शपथग्रहणं पुरोहितेन तु न कथमपि कर्तव्यम्। पौरोहित्यगुणसंपत्तिविरोधात् इति चिन्त्यम्। अत्र प्रमाणतया पूर्वमुद्धृतं मौलान् शास्त्रविदःशूरान् इति मनुवाक्यं सटीकं स्मर्तव्यम्–(प्र० खं० २ पृ० १०६)

ननु शपथादिग्रहणव्यापाराः कुतः कर्तव्या इत्याह राज्ञ इति।

---

१ तदुक्तं भावप्रकाशने-२ अधिकारे

"अवज्ञा सा प्रकृष्टस्य यत्तथाऽज्ञावमानता।
अवज्ञा मानसी ज्येष्ठे न्यक्कारो वाक्तिरस्कृतिः॥
वाचिकी गुणनिन्दा स्यात् शारीरी ताड़नादिका।
प्रकृष्टयोर्द्वयोरेकमानेनैवावमानिता॥ इति॥

२ मृषैव दोषमारोप्य क्रोश आक्रोश उच्यते।
असूयादिभिरन्योन्यं क्षेप आक्षेप उच्यते॥ इति॥

३ ब्राह्मणश्च शूद्रश्च चर्मकर्ते व्यायच्छेते। दैव्यो वै वर्णो ब्राह्मणः। असुर्यः शूद्रः। इमे रात्सुरिमे सुभूतमक्रन्नित्यन्यतरो ब्रूयात्। इम उद्वासीकारिण इमे दुर्भूतमक्रन्नित्यन्यतरः। यदेवैषां दुष्कृतं या राद्धिः तदन्यतरोपहन्ति। ब्राह्मणः सञ्जयति। अमुमेव आदित्यं भ्रातृव्यस्य संविदन्ते। (तै० ब्रा० १।२।७)

अधार्मिकोऽयं राजा, साधु[1] धार्मिकमन्यमस्य [2]तत्कुलीनमवरुद्धं [3]कुल्यमेकप्रग्रहं[4] सामन्तमाटविकमौपपादिकं[5] ( औपपादुकं पा० ) वा प्रतिपादयामः[6]। सर्वेषा[7]मेतद्रोचते, कथं वा तवेति। प्रत्याख्याने[8] शुचिरिति धर्मोपधा।

## श्रीमूला

उपजापनप्रकारमाह—अधार्मिक इत्यादिना। अधार्मिकः अधर्मप्रवृत्तः। धार्मिकमिति तत्कुलीनादिषु सर्वत्र सम्बद्ध्यते। तत्कुलीनं प्रकृतराजवंशभवम्। अवरुद्धम् अवरुध्य रक्ष्यमाणं तत्पुत्रादिकम्। कुल्यं राजभावार्हकुलोत्पन्नम्। एकप्रग्रहम् एकः तुल्यः सर्वैरविशेषं क्रियमाणः प्रग्रहः पूजा यस्य तं सर्वपूजितमित्यर्थः। सामन्तं विषयानन्तरं राजानम्। आटविकम् अटवीपतिम्। औपपादिकम् उपपादं प्रत्यन्तपर्वतसमीपे भवः तम्।

अथवा औपपादिकमिति अस्माभिः सम्भूय सम्प्रधारणीयमित्यर्थः। उपपादं समर्थनमर्हतीति ठक्। अस्य प्रतिपादयामः अस्य स्थाने निवेशयामः। एतद् उपन्यस्तं मतम्। कथं वा तव मतमिति गम्यम्। प्रत्याख्याने शुचिः इत्थमुपजापितोऽमात्यो 'नाहमीदृशं कुर्यामि'ति यदि निरस्येत् तर्हि शुद्ध इत्यर्थः। इति धर्मोपधा। धर्मस्थापनवाचोयुक्तया छलनम्। स एष धर्मप्रधानेषु शोधनप्रकारः।

## वैदिकसिद्धान्तसंरक्षिणी

उपजापप्रकारमाह अधार्मिक इति। अधर्मे प्रवृत्तः। अयं बुद्धिस्थः प्रस्तुतः। एतस्मादेव कारणात् कलाहीनमूर्तिवन् निमज्जनीयः। तत्स्थाने कोऽभिषेचनीयः इत्याह साध्विति। धार्मिकस्य विशेषणं। साधुत्वं नीतिसारोक्तसदाचारसङ्ग्रहणात्मकं। धार्मिकत्वं फलसंपत्तिमत्वप्रदर्शनार्थम्। साध्विति क्रियाविशेषणं वा, टिप्पण्यामपि तथोपलम्भात्। "कर्मधारयोऽत्र अथवा साध्विति क्रियाविशेषण"मिति। अथवा साधु धार्मिकत्वं

---

नी०टि० १ साध्विति—कर्मधारयोऽत्र अथवा साध्विति क्रियाविशेषणम्।

„ २ तत्कुलीनमिति—कस्यचिदन्योऽभिमत इत्याह तत्कुलीनम्। तस्य राज्ञो भ्रातरं पुत्रं वा।

„ ३ कुल्यमिति—सोऽपि कृतार्थः सन् पित्रारि (दि) वैरमनुस्मरिष्यतीत्याशङ्कयाऽऽह कुल्यं च व्यवहितम्।

„ ४. एकप्रग्रहमिति—राज्ञा समानचिन्हं मानार्हम्।

„ ५. औपपादुकमिति—उत्पाद्य यो राजा न भवत्ययं च राजयुक्तश्चन्द्रगुप्तसमः।

„ ६. प्रतिपादयाम इति—राज्ये इति वाक्यशेषः।

„ ७. सर्वेषामिति—.........स्यादित्याशङ्कायां सर्वेषामिति महापुरुषाणाम्।

„ ८. प्रत्याख्याने इति—पृष्टो विमृशति नायमनुजीविनां......।

## वैदिकसिद्धान्तसंरक्षिणी

राज्ञोऽअन्येषु अनुयोजनीयम्। अन्यमिति। कोसावन्योऽभिमत इत्याहास्येति। षष्ठयर्थः सम्बन्धः अन्यमित्यादिना तस्यान्वयः। एतत्सम्बन्धिनमित्यर्थः। एतत्संबन्धी यः कोऽपि वा राज्याधिकारित्वेन योजनीयः ? इति चेदाह तत्कुलीनमिति। भ्रातरं, पुत्रं वेत्यर्थः। अथ वा भ्रातुः पुत्राद् वा यदि भयमुत्प्रेक्षते। तदाह तत्कुलीनमिति। भ्रात्राद्यन्यं तत्कुलीनमित्यर्थः।

पक्षान्तरमाहावरुद्धमिति निर्वासितम्। कुल्यं कञ्चित् राजवंशाद्वा अन्यं। तदुक्तं टिप्पण्याम्—"सोऽपि कृतार्थः सन् नु पित्रादिवैरं स्मरिष्यति इत्याशङ्क्याह कुल्यञ्च व्यवहित"मिति। कुलीनः कीदृश इत्याह एकेति। राजसदृशमित्यर्थः। उक्तञ्चैतत् टिप्पण्यामपि—"राज्ञा समानचिन्हं मानार्ह"मिति। सामन्तं राजपूजार्थिनम्। आटविकं वनेचरं राजसधर्माणम्। औपपादिकमिति उपपादकमिति पाठान्तरम्। जन्मत एव राजगुणप्रतिभासंपन्नं अराजबीजिनमजीति भावः। उक्तञ्चैतत् टिप्पण्याम्। "उत्पाद्यं यो राजा न भवति। अथ च राजयुक्तः चन्द्रगुप्तसम" इति। समुच्चयनिरासार्थमाह वेति। प्रतिपादयामः। "राज्ये इतिवाक्यशेषः" इति टिप्पण्युक्तं बोध्यम्। सर्वेषामिति। इतरस्य राजत्वेनाभ्युन्नीते विषये स्वीकृतिं प्रदत्तवताम् अन्येषाम् इत्यर्थः। तदुक्तं टिप्पण्याम्—"कथमेवं स्यादित्याशङ्कायां सर्वेषाम् इति महापुरुषाणाम्" इति।

### रुचिधातुयोगेपि षष्ठीप्रयोजनम्

सर्वेषामिति वस्तुगत्या तेष्वभिरुचिर्नास्ति इति छलं बोधयितुमनादरे षष्ठी। रुच्यर्थः विभक्त्यर्थनिर्णये व्याख्यातो द्रष्टव्यः[1]।

तथा च प्रकृते सर्ववृत्तिसुखस्य उद्देश्यत्वं सामानाधिकरण्यञ्च रुच्यर्थोनाऽस्ति इति षष्ठ्या बोध्यम्। शुचित्वलिङ्गमाह प्रत्याख्याने इति। (पृ० २०४) "स्वामिद्रोहे पापभयात् इति शेषः। पापञ्च जयमङ्गलायां द्रष्टव्यम्[2]।

टिप्पण्यान्तु "पृष्टो विमृशति नायमनुजीविनाम्" इत्युक्तम्। तथा च जयमङ्गलानुसारेणात्र धर्मभयादेव निवृत्तिः इति बोधनीयम्।

---

१ "वस्तुतस्तु रुचिरुत्कटेच्छा उत्कटत्वं च द्वेषप्रतिबन्धकतावच्छेदको जातिविशेष इत्यन्यत्र विस्तरः। रुच्यर्थाः रोचत्यादयः। तदर्थकर्तृत्वं विषयस्येति रोचते इत्यादावाख्यातस्य विषयत्वमर्थ इति। प्रीयमाणशब्दार्थः प्रीतिमान्। प्रीतिः सुखं तथाच चतुर्थ्यर्थः सुखं तस्य सामानाधिकरण्योद्देश्यत्वाभ्यां सबन्धाभ्यां रुचावन्वयः सामानाधिकरण्यनिवेशात् देवदत्तसुखस्य समानाधिकरणोद्देश्यिनी योत्कटेच्छा तद्विषयो मोदक इत्यन्वयबोधः"। इति।

२ "ब्रह्मद्रुहाञ्च ये लोका गुरुपुत्रद्रुहाञ्च ये।
पतिद्रुहाञ्च ये स्त्रीणां ते समस्ता नृपद्रुहामिति।

## वैदिकसिद्धान्तसंरक्षिणी

प्रत्येति । (२०४) प्रत्याख्यानञ्च अस्वीकरणम् 'न स्वीकरोमीति प्रत्याख्यानम् इति यावत् । तदुक्तं लेखप्रकरणे अर्थशास्त्रे शासनाधिकारे—'न प्रयच्छामीति प्रत्याख्यानमि''ति ।

निर्णेतव्यमर्थमाह शुचिरिति । शुचिरहिंस्रः । (उक्तञ्चैतन्नवमाऽध्याये द्रष्टव्यम् ।)

धर्मोपधेति । (पृ० २०४) धर्मं निमित्तीकृत्य अयं राजद्रोहं नाचरिष्यति धर्मतः हिंसाविरतत्वादिति निर्णयः इति तात्पर्यम् ।

## जयमङ्गला

किमित्याह-अधार्मिकोऽयमिति । धर्मेण चरति यः स तद्विपरीतः, येन मामप्ययाज्ययाजनादौ नियुङ्क्ते । तस्मात् साधुर्धार्मिकं साधुं धार्मिकं चेति । क्रिया विशेषणं वा साधु शोभनं प्रतिपादयाम इति । अन्यमस्य भ्रातरम् ।[1] पुत्रं वा बन्धु-विनाशानुशयात् । ततो भयोत्[2] प्रेक्षा चेत् तत्कुलीनं तत्कुलापत्यम् ।

तस्मादपि चेदाशङ्का ततोऽवरुद्धं निर्वासितम्[3] । स ह्यासन्नत्वात् स्निग्धतरो भवति । सोऽपि कृतार्थः पित्र्यापकारं स्मरिष्यतीति कुप्येत्, कञ्चित् कुलीनं तं चैकप्रग्रहम् । राज्ञा सहैकपूजमित्यर्थः । स हि प्रजानुमतो भवति निराश्रयोऽसाविति चेत् सामन्तम् । प्रतिवेशिनं[4] । तस्माच्चेत् पूर्ववासनया स्वप्रवृत्त्यव-ग्रहाशङ्का, आटविकं राजसधर्माणम् । तस्माच्चेदनार्यपरिवाराशङ्का, उपपादकम् अकस्मादुत्पत्तिशीलम् । अराजबीजिनमित्यर्थः । चन्द्रगुप्तप्रकारं साधुधार्मिकमिति सर्वत्र योज्यम् । प्रतिपादयामः किमित्यर्थाद् राज्यमिति गम्यते । तत्राप्रतिपत्तिमन-र्थभयोपेक्षां निरसितुमाह-सर्वेषामेतद्रोचते कथं वा ( भव?तवे ) ते इत्यभिप्रायप्रश्नः । प्रत्याख्याने तु शुचिरिति । स चेद्विमृश्यकारी यद्यपि पुरोहितस्येदं मतं तथापि विचार्यम् । अर्वाक्षिप्तत्वादमर्षेणायं[5] वदति स्वधर्मं तावदपेक्षे अधार्मिकोऽस्तु मा वा राजा किं ममात्र । स्वाम्यनभिद्रोहो मे धर्मः । तथा चाहुः—

> ब्रह्मद्रुहाञ्च ये लोका गुरुपुत्रद्रुहाञ्च ये ।
> पतिद्रुहाञ्च ये स्त्रीणां ते समस्ता नृपद्रुहाम् ॥ इति ।

मवमिति प्रत्याख्याने याथातथ्यपरिज्ञानाच्छुचिरितीयं परीक्षा धर्मोपधा ।

## जयमङ्गलाक्रोडपत्रम्

येनेति । (पृ० २०६) इदं हि सत्रिणः अनुवादवाक्यम् । "मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः" । इति सप्तशत्यां अनूदितर्षिवाक्यवत् ।

### भ्रातरं वा । पुत्रमित्यादि पाठसमीक्षा

अन्यं व्याख्याति भ्रातरमित्यादिना । भ्राता शुम्भ इव, बन्धुविनाशानुशानुशयो तदाह पुत्रं इति । तस्यापि भयोत्प्रेक्षितत्वे आह—तत्कुलीनमिति । एतदुपपत्त्यैव जयमङ्गलायां भ्रातरं । पुत्रं इति पाठः शोधितः ।

---

अशुद्धम्—१ भ्रातरं पुत्रं वा बन्धु २ भवेत्प्रेक्षा ३ निर्धारितं ४ प्रतिबै तस्मात् ५ दृधृर्षेण

## जयमङ्गलाक्रोडपत्रम्

### दायानधिकारित्वेन भ्रातुः प्राथम्येनोक्तिः

ननु जयमङ्गलाकृता अन्यत्वेनादौ भ्राता कथमुक्तः, दायाधिकारिषु पुत्रस्यैव प्रथमाधिकारित्वात् ? तदुक्तं राजनीतिप्रकाशे राज्याधिकारनिर्णये—"गौणस्यापि पुत्रस्याभावे भ्रात्रादीनामधिकारस्य दायक्रमलभ्यत्वात्" इति । इति चेन्न ।

राज्ञो जीवित्वे सत्रिणः कर्तव्यायाममात्यपरीक्षायां पुत्रं न भेदयेयुरपि तु भ्रातरम् इति राजनीतिशास्त्रे निर्णीतमस्ति[1] । अतो भेदनप्रसङ्गात् आदौ भ्रातुर्ग्रहणम् ।

### राज्योपधाधिकारित्वेन वरणीयाः

अत्राऽयं प्रघट्टकार्थः—आदौ भ्राता[१] राज्ञः, ततः बन्धुविनाशानुशयात् पुत्रः[२], ततः भयोत्प्रेक्षायां आसन्नः अवरुद्धः[३], ततः अनासन्नः[४], ततः पित्र्यापकार-प्रयुक्तभयोत्प्रेक्षायां कुलीनः[५] कश्चित् प्रग्रहवान्, तस्य निराश्रयत्वे सामन्तः[६], ततः स्वप्रवृत्त्यवग्रहशङ्कायामाटविकः[७], ततोऽनर्थशङ्कायामुपपादकः अराजबीजी[८]। इत्येवं क्रमेण राज्यप्रतिपादनं अस्माभिः करिष्यते । इति धर्मोपधाधिकारिणः बोध्याः ।

**तस्मादिति** । (पृ० २०६) तस्मात् आसन्नात् कुलापत्यात् । कल्पान्तरमाह अवरुद्धमिति ।

निर्वासितमिति । ( पृ० २०६ ) अयं अनासन्नः पुत्रः मन्तव्यः । **स हीति** । (पृ० २०६) आसन्नः पुत्रः । **सोऽपीति** । (पृ० २०६) अयं अनासन्नः पुत्र एव । कुतः पुत्रः इतिचेदाह पित्र्य इति । तस्य कोपाशङ्कायामाह कञ्चिदिति । **एकपूजमिति** । (पृ० २०६) अयं हि केवलं मानार्थी । असौ भ्रात्रादेरन्यः राजमानार्थी तुल्यः । तत्र दोषमाह निराश्रय इति । दुर्गुणत्वादस्थिरः । तदुक्तम् नीतिसारे—

> लुब्धः क्रूरोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः ।
> मूढो योधावमन्ता च सुखोच्छेद्यो रिपुः स्मृतः[२] ॥ इति ।८।१५

### प्रतिवेशिनमिति पाठसमीक्षा

प्रतिवेशिनमिति । (पृ० २०६) एतत्पाठनिर्धारणं "राज्ञा समानचिन्हं" इति टिप्पण्युक्तत्वाद् बोध्यम् । अत्र गणपतिशास्त्रिणः एवमर्थं व्याचख्युः । "सामन्तं विषयानन्तरं राजानमिति" । इति । तदपि चिन्त्यम् ।

---

१ तदुक्तम्—(१७ अध्याये अर्थशास्त्रे कौ०)

"सत्रिणस्त्वेनं तव स्मः" इति वदन्तः पालयेयुः । यौवनोत्सेकात् परस्त्रीषु मनः-कुर्वाणं आर्याव्यञ्जनाभिः स्त्रीभिरमेध्याभिश्शून्यागारेषु रात्रावुद्वेजयेयुः । मद्यकामं मदनीययोगपानेनोद्वेजयेयुः । द्यूतकामं कापटिकैः पुरुषैरुद्वेजयेयुः । मृगयाकामं प्रतिरोधकव्यञ्जनैस्त्रासयेयुः । पितरि विक्रमबुद्धिं तथेत्यनुप्रविश्य भेदयेयुः । अप्रार्थनीयो राजा विपन्ने घातस्सम्पन्ने नरकपातः, सङ्क्रोशः प्रजाभिरेकलोष्टवधश्चेति

२ टी० अस्थिरो दुर्गुणः मित्ररहितः निराश्रयत्वादभियोगमात्रसाध्यः । इति ।

## जयमङ्गलाक्रोडपत्रम्

### सामन्तनियोजने दोषः

ननु सामन्तोऽपि पूर्वकृताशुभवासनया अस्मान् मन्त्रिपदे न नियोक्ष्यति। राजप्रेरणया स्वदोषेण वा अस्मासु बुद्धिस्थसामन्तेन शत्रुत्वस्य पूर्वं ज्ञातत्वात्। तदेवाह पूर्वेति। स्वप्रवृत्तीति। (पृ० २०६) स्वमन्त्रेषु भूतपूर्वाणामप्रवृत्या अस्मान् अवग्रहिष्यति सामन्तः। इत्याशङ्कायां कल्पान्तरमाह आटविकमिति। तत्स्वरूपमाह राजेति। आटविकोपि राजसधर्मा भवति। तस्यापि श्राद्धादिकर्तृत्वात् तदुक्तं मुद्राराक्षसे-चतुर्थाङ्के-मलयकेतुवाक्यम् स्मर्तव्यम्[1]।

तत्र दोषमाह तस्मादिति। आटविकादित्यर्थः। तेषां हि अनार्यता स्वभावः अतः अविश्वास्यत्वं नियतम्। उपपादकं व्याख्याति। अकस्मादिति। (पृ० २०६) शुद्धे मातापितृके राजवंशे अप्रसूतमपि। अदृष्टहेतुना राजोचितगुणवन्तमिति यावत्। अत्रैतदभ्यूह्यते—वाचस्पत्यकोषादौ—उपपादकः उपपादयति उपपत्तियुक्तकारके। उपपत्तियुक्ते युक्तियुक्ते च। उपपादुक उपपाद्यते दृष्टकारणनिरपेक्षतया अदृष्टमात्र-सहकृतेभ्योऽणुभ्यः जायमाने देवदेहे नारकिदेहे च (हेम) दिव्योपपादुका देवाः इत्यमरः इति। वाचस्पत्य कोषेपि—"औपयिकः उपायेन सञ्जात उपयुक्त" इति। यद्यपि वाचस्पत्यकोषे नरकस्वर्गान्यतरानुकूलशरीरे उपपादक शब्दः शक्तो भाति। तथापि तन्न्यायेन अकस्मादेव दृष्टकारणनिरपेक्षात् अदृष्टात् राजसञ्चालने अपेक्षितगुणसंपत्तिमतः कस्यचित् शरीरमुत्पन्नम् तत्राप्युपपादपदं अर्थशास्त्रपरिभाषितं मन्तव्यम् इति। अशुद्धवंशे उत्पन्नं दर्शयति चन्द्रगुप्तसममिति।

### चन्द्रगुप्तसममिति पाठसमीक्षा

चन्द्रगुप्तसममित्ये (पृ० २०६) तत्पाठसंशोधने पूर्वमुद्धृता टिप्पणी द्रष्टव्या। अत्रेदं चिन्त्यम्। कुलीनादिषु सर्वेषु उत्तरोत्तरसङ्ग्रहणे शङ्का प्रदर्शिता वर्तते। तेन भेदस्य उपजापस्य वा आलम्बनात्मकाः भीतवर्गेषु यथायथं ते योज्याः।

---

१ निःश्वस्यात्मगतम्—"अयं दशमो मासस्तातस्योपरतस्य न चास्माभिर्वृथा-पुरुषाभिमानमुद्वहद्भिस्तमुद्दिश्य तोयाञ्जलिरप्यावर्जितः। प्रतिज्ञातमेतत् पुरस्तात्—

वक्षस्ताड़नभिन्नरत्नवलयं भ्रष्टोत्तरीयांशुकं।
हाहेत्युच्चरितार्तनादकरुणभूरेणुरूक्षालकम्॥
तादृङ्मातृजनस्य शोकजनितसंप्रत्यवस्थान्तरं।
शत्रुस्त्रीषु मया विधाय गुरवे देयो निवापाञ्जलिः॥

२ तदुक्तम् अर्थशास्त्रे १४ अध्याये विनयाधि०—स्वयमुपहतः विप्रकृतः पापकर्माभिख्यातः तुल्यदोषदण्डेनोद्विग्नः पर्यात्तभूमिः दण्डोपनतः सर्वाधिकरणस्थः सहसोपचितार्थः तत्कुलीनोपाशंसुः प्रद्विष्टो राज्ञा राजद्वेषी चेति भीतवर्गः॥ इति।

## जयमङ्गलाक्रोडपत्रम्

### चाणक्यस्य विश्वास्यत्वम्

ननु एवंविधं प्रयोगमालक्ष्य चाणक्ये विश्वासघातित्वमस्तीति निर्णीयते। तदुक्तं भागवतस्य—१२ स्कन्ध—१२ श्लोक १ अध्याय टीकायाम्—

नव नन्दान् द्विजः कश्चित्प्रपन्नानुद्धरिष्यति[1]। इति।

उच्यते। चाणक्यो न विश्वासघातकः अपि तु यदा नन्देन सोऽपमानितः दर्पात् तदा अनाचारशीलं तं स पातयामास[2]।

---

१ श्रीमद्राघवाचार्यकृतभागवतचन्द्रिकायाम्—

नवनन्दानिति। नन्दशब्दस्तत्सुतपरश्च 'आत्मा वै पुत्रः' इतिश्रुत्यनुरोधात्। अतएव नन्दानिति बहुवचनं नवेतिविशेषणं च तान् प्रपन्नान् विश्वस्तान् कश्चिद् विश्वस्तघातुकः कौटिल्यवात्स्यायनाख्यो द्विज उन्मूलयिष्यति नाशयिष्यति इति यावत्। इति।

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे—

तान् प्रजापालनपरान् प्रपन्नान् विश्वस्तान् कश्चिद् विश्वासघातकः कौटिल्य-वात्स्यायननामकश्चाणक्यः उद्धरिष्यति उन्मूलयिष्यति। मौर्या मौर्यनामकाः जगति मोक्ष्यन्ति। १२। इति।

मुद्राराक्षसेपि (१ अं०) 'सूत्रधारः'—"कुटिलमतिः स एव येन।

क्रोधाग्नौ प्रसभमदाहि नन्दवंशः॥
चन्द्रस्य ग्रहणमिति श्रुतेः सनाम्नो।
मौर्येन्दोर्द्विषदभियोग इत्यवैति।इति।

२ तदुक्तं—कथासरित्सागरे (१ आलंबके ४ तरंगे)

योगनन्दोऽथ विजने सशोको व्याडिमब्रवीत्।
शूद्रीभूतोऽस्मि विप्रोऽपि किं श्रिया स्थिरयाऽपि मे॥ ११४
तच्छ्रुत्वाऽऽश्वास्य तं व्याडिः कालोचितमभाषत।
ज्ञातोऽसि शकटालेन तदेनं चिन्तयाऽधुना॥
महामन्त्री ह्ययं स्वेच्छमचिरात्त्वां विनाशयेत्।
पूर्वनन्दसुतं कुर्याच्चन्द्रगुप्तं हि भूमिपम्॥
तस्माद्वररुचिं मन्त्रिमुख्यत्वे कुरु येन ते।
एतद्बुद्ध्या भवेद्राज्यं स्थिरं दिव्यानुभावया॥
इत्युक्त्वैवं गते व्याडौ दातुं तां गुरुदक्षिणाम्।
तदेवानीय दत्ता मे योगनन्देन मन्त्रिता॥
अथोक्तः स मया राजा ब्राह्मण्ये हारितेऽपि ते।
राज्यं नैव स्थिरं मन्ये शकटाले पदस्थिते॥
तस्मान्नाशय युक्त्यैनमिति मन्त्रे मयोदिते।
योगनन्दोन्धकूपान्तः शकटालं तमक्षिपत्॥
किञ्च पुत्रशतं तस्य तत्रैव क्षिप्तवानसौ।—

जीवन्द्विजोऽमुना दग्ध इति दोषानुकीर्तनात् ।
एकः शरावः सक्तूनामेकः प्रत्यहमम्भसः ॥
शकटालस्य तत्रान्तः सपुत्रस्य न्यधीयत ।
स चोवाच ततः पुत्रानमीभिः सक्तुभिः सुताः ॥
एकोऽपि कृच्छ्राद्वर्तेत बहूनां तु कथैव का ।
तस्मात् स भक्षयत्वेकः प्रत्यहं सजलानमून् ॥
यः शक्तो योगनन्दस्य कर्तुं वैरप्रतिक्रियाम् ।
त्वमेव शक्तो भुङक्ष्वैतदिति पुत्रास्तमब्रुवन् ॥
प्राणेभ्योऽपि हि धीराणां प्रिया शत्रुप्रतिक्रिया ।
ततः स शकटालस्तैः प्रत्यहं सक्तुवारिभिः ॥
एक एवाकरोद्वृत्तिं कष्टं क्रूरा जिगीषवः ।
अबुद्ध्वा चित्तमप्राप्य विस्रम्भं प्रभविष्णुषु ॥
न स्वेच्छं व्यवहर्तव्यमात्मनो भूतिमिच्छता ।
इति चाचिन्तयत्तत्र शकटालोऽन्धकूपगः ॥
तनयानां क्षुधार्तानां पश्यन्प्राणोद्गमव्यथाम् ।
ततः सुतशतं तस्य पश्यतैतद् व्यपद्यत ॥
तत्करङ्कैर्वृतो जीवन्नतिष्ठत्स च केवलः ॥१२९॥ इति
दिवसेष्वयथ गच्छत्सु तत्तपोवनमेकदा ।
अयोध्यात उपागच्छत् विप्र एको मयि स्थिते ॥
स मया योगनन्दस्य राजवार्तामपृच्छयत ।
प्रत्यभिज्ञाय मां सोऽथ सशोकमिदमब्रवीत् ॥
श्रुणु नन्दस्य यद्वृत्तं तत्सकाशाद्गते त्वयि ।
लब्धावकाशस्तत्राभूत् शकटालश्चिरेण सः ॥
सञ्चिन्तयन् वधोपायं योगनन्दस्य युक्तितः ।
क्षितिं खनन्तमद्राक्षीच्चाणक्याख्यं द्विजं पथि ॥
किं भुवं खनसीत्युक्ते तेन विप्रोऽथ सोऽब्रवीत् ।
दर्भमुन्मूलयाम्यत्र पादो ह्येतेन मे क्षतः ॥
तच्छ्रुत्वा सहसा मन्त्री कोपने क्रूरनिश्चयम् ।
तं विप्रं योगनन्दस्य वधोपायममन्यत ॥
तमापृष्ट्वाऽब्रवीत्तं च हे ब्रह्मन् दापयामि ते ।
अहं त्रयोदशीश्राद्धं गृहे नन्दस्य भूपतेः ॥
दक्षिणातः सुवर्णस्य लक्षं तव भविष्यति ।
भोक्ष्यसे धुरि चान्येषामेहि तावद्गृहं मम ॥—

## जयमङ्गलाक्रोडपत्रम्

किञ्च स्वयं चाणक्येनापि मन्त्रिणः विश्वास्यत्वं कीर्तिमत्वंच कथं भविष्यतीति चिन्तितमस्ति योगवृत्तप्रकरणे । तत्र कथमपि राजा न प्रतारयितव्यः इति भाषितम् । तत्रैव द्रष्टव्यम्[1] । (तदुक्तम्—५ अधि० प्र० ९४-९५ अ० ६) ।

तेन इतिहासार्थशास्त्रविरोधात् न चाणक्यस्य विश्वासघातुकत्वं बोध्यम् ।

---

इत्युक्त्वा शकटालस्तं चाणक्यमनयद्गृहम् ।
श्राद्धाहेऽदर्शयत्तं च राज्ञे स श्रद्दधे च तम् ॥
ततः स गत्वा चाणक्यो धुरि श्राद्धे उपाविशत् ।
सुबन्धुनामा विप्रश्च तामैच्छत् धुरमात्मनः ॥
तद्गत्वा शकटालेन विज्ञप्तो नन्दभूपतिः ।
अवादीन्नापरो योग्यः सुबन्धुर्धुरि तिष्ठतु ॥
आगत्यैतां च राजाज्ञां शकटालो भयात्ततः ।
न मेऽपराध इत्युक्त्वा चाणक्याय न्यवेदयत् ॥
सोऽथ कोपेन चाणक्यो ज्वलन्निव समन्ततः ।
निजां मुक्त्वा शिखां तत्र प्रतिज्ञामकरोदिमाम् ॥
अवश्यं हन्त नन्दोऽयं सप्तभिर्दिवसैर्मया ।
विनाश्यो बन्धनीया च ततो निर्मन्युना शिखा ॥
इत्युक्तवन्तं कुपिते योगनन्दे पलायितम् ।
अलक्षितं स्वगेहे तं शकटालो न्यवेशयत् ॥
तत्रोपकरणे दत्तो गुप्तन्तेनैव मन्त्रिणा ।
स चाणक्यो द्विजः क्वापि गत्वा कृत्यामसाधयत् ॥
तद्वशाद्योगनन्दो दाहज्वरमवाप्य सः ।
सप्तमे दिवसे प्राप्ते पञ्चत्वं समुपागमत् ॥ (कथासरित्सागरे आ० ५ तरंगे) इति

[1] एवमेकैश्वर्यममात्यः कारयेदिति कौटिल्यः । नैवमिति भारद्वाजः । प्रम्रियमाणे वा राजन्यमात्यः कुल्यकुमारमुख्यान् परस्परं मुख्येषु वा विक्रामयेत् । विक्रान्तं प्रकृतिकोपेन घातयेत् । कुल्यकुमारमुख्यानुपांशुदण्डेन वा साधयित्वा स्वयं राज्यं गृह्णीयात् । राज्यकारणाद्धि पिता पुत्रान् पुत्राश्च पितरमभिद्रुह्यन्ति, किमङ्ग पुनरमात्यप्रकृतिर्ह्येकप्रग्रहो राज्यस्य । तत् स्वयमुपस्थितं नावमन्येत । स्वयमारूढा हि स्त्री त्यज्यमानाऽभिशपतीति लोकप्रवादः ।

कालश्च सकृदभ्येति यं नरं कालकाङ्क्षिणम् ।
दुर्लभः स पुनस्तस्य कालः कर्म चिकीर्षतः ॥

प्रकृतिकोपकमधर्मिष्ठमनैकान्तिकं चैतदिति कौटिल्यः । इति ।

## जयमङ्गलाक्रोडपत्रम्

अतएव श्रीधराचार्यैः चाणक्यस्य विश्वासघातित्वमनुक्त्वैव व्याख्यातम् उपपद्यते।[1]

यच्च तत्र तत्र शत्रुमारणाय परीक्ष्यपरीक्षार्थं प्रयोगाः उक्ताः, तथा क्वचित् शास्त्रविपरीतमेव भणितमस्ति चाणक्येन, तत्तु लोकविद्विष्टत्वात् शत्रोः, विनाऽन्यथाभावं परीक्ष्यस्य स्वामिभक्तिपरीक्षायाः कर्तुमशक्यत्वाद्वा । इति दिक् ।

### अमर्षेणेति पाठसमीक्षा

अमर्षेणेति । (पृ० २०६) एतत्पाठोऽयमवक्षेपस्य अमर्षकारणत्वमस्तीति भावप्रकाशने उक्तत्वात् शोधितः ।

### पुरोहितस्य राजद्रोग्धृत्वाभावः

अत्राऽयं भावः-पुरोहितः स्थानादवरोपितः राज्ञा इति अमर्षेण स औद्धत्यप्रयुक्तं राज्ञो धर्मविरोधं प्रस्ताव्य भेदयितुं यदि वाञ्छति तद्दशायां रागद्वेषप्रयुक्तवचनस्य तथाविधस्य पुरोहितस्य वचनं सामान्याधिकरणेषु स्थितैः अमात्यत्वेनाभिमतैः प्रमाणत्वेन न मन्तव्यम्, इत्यपरीक्ष्यैव परीक्ष्यः पुरोहितवाक्यं सत्यत्वेन यदा मनुते तदा अयं दोषः परीक्ष्यस्य, इति पुरोहिते विवेचके राजद्रोग्धृत्वं न मन्तव्यम् । तस्य उपधापरीक्षकत्वात् । इति ।

न च "शस्त्रं" द्विजातिभिर्ग्राह्यं "इति वचनेन राजद्रोहः कर्तव्यः स्मर्यते इति वाच्यम्, वास्तविकाधर्मिष्ठराजद्रोहपरतया समन्वितत्वात् ।

### पुरोहितस्य अनृतभाक्त्वाभावः

नच पुरोहितः एवंविधपरीक्षायां प्रसक्तः अनृतदोषभाग् भवत्येव इति शङ्क्यम् । तथाविधकर्तव्यस्य धर्मशास्त्रेणाप्यनुमोदितत्वात्[2] ।

किञ्च "मौलान् शास्त्रविदः शूरान्" इत्युक्त्वा मनुना अमात्यपरीक्षा विहिता वर्तते। (प्र०खं० २ पृ० १६६) परीक्षणोपायाश्च मेधातिथिना अर्थशास्त्रोपदिष्टा एव उक्ताः

---

१ "नवनन्दान्नन्दं च तत्पुत्रांश्चेत्येवं नव प्रपन्नान् शरणागतान् विश्वस्तान् विख्यातान्वा द्विजः कौटिल्यवात्स्यायनादिपर्यायश्चाणक्यः उद्धरिष्यत्युन्मूलयिष्यति । मौर्या मौर्यसंज्ञाः" । इति ।

श्रीमद्विश्वनाथ चक्रवर्तिकृतसारार्थदर्शिन्याम्—

नवनन्दान् नन्दं च तत्पुत्रानष्टौ चेत्येवं नव प्रपन्नान् विश्वस्तान् द्विजश्चाणक्यः उद्धरिष्यति उन्मूलयिष्यति । मौर्याः मौर्यसंज्ञाः । १२ । इति ।

२ शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।
द्विजातीनां च वर्णानां विप्लवे कालकारिते । ३४८ ।
आत्मनश्च परित्राणे दक्षिणानां च सङ्गरे ।
स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दुष्यति ॥ (मनु ३४९ ८ अध्याये) ॥ इति।

## जयमङ्गलाक्रोडपत्रम्

सन्ति तस्मात् एतद्विधानान्यथानुपपत्त्या पुरोहितेन कृतं अमात्यपरीक्षणं धर्मशास्त्रानुमोदितं ज्ञायते। तथासति कर्तव्येषु व्यापारविश्रया अपेक्षितं चेदनृतभाषणं तर्हि तदपि कर्तव्यमेव भवतीत्यर्थादेवायातम्। एवञ्च परीक्षणावसरे कृतमनृतभाषणम् अधर्मविहन्न मन्तव्यम्। अतएव धनापहारस्य संभावनायामनृतभाषणस्याभ्यनुज्ञातत्वमुपपद्यते।[1]

अतएव गोतमेन तत्वाध्यवसायसंरक्षणार्थं वादस्य अशक्यतायां जल्पवितण्डे आश्रयितव्ये इत्युक्तम्[2] इति। (४ अ० २ आ० सू० ५०)

ननु राजरक्षायां, कर्तव्यायां यदि द्रोहमाचरेत्कश्चित् तर्हि तस्य प्रायश्चितेनाप्यपनोद्यं महापातकं भवति तन्मा भवतु इत्येतदर्थमाह-स्वाम्येति। (पृ० २०६) पातकमाह ब्रह्मेति। (पृ० २०६) ब्रह्मद्रुहामिति वचनं निर्दिष्टराजपरम्।

स्वामिनः पालकस्य रक्षणं यदत्र विहितं तस्योपष्टम्भकं श्रीमद्भागवतीयं वचनं बोध्यम्[3]।

राजद्रोग्धृभिः सह संवासो निषिद्धः

नृपद्रोग्धुः ब्रह्मगुरुपुत्रपतिस्त्रीद्रोग्धृसाधर्म्यप्रदर्शनेन अत्युत्कटपातकित्वं भवति तेन संवासोपि तथाविधैः सह न कर्तव्यः, कृतघ्नत्वादीनामपि तेषु संभवात्, इति मनुवचनेनापि ज्ञातुं शक्यते[4] तत् टिप्पण्यां द्रष्टव्यम्।

---

१ विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे।
विप्रस्य चार्थेऽप्यनृतं वदेत पञ्चानृतान्याहुरपातकानि।
(म० भा० कर्णपर्व अर्जुनकृष्ण संवाद)

२ "ननु यत्र वादस्यैव दशेयमीदृशी तत्वनिर्णये, दत्तजलाञ्जली तर्हि जल्पवितण्डे इत्यत आह स्वपक्षरागेण चैके न्यायमतिवर्तन्ते। तत्र तत्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टक शाखावरणवत् (सू० ५०) इति। तद्व्याचष्टे अनुत्पन्नतत्वज्ञानानामिति। इति। (न्या० वा० ता० टी०)

३ भिक्षोर्धर्मः शमोऽहिंसा तपोऽन्वीक्षे वनौकसाम्॥
गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम्॥ इति॥ (११ स्कन्ध)

४ बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्॥ (११ अ० १९० श्लोक)

(मेधातिथिटी०) शरणागतो यः शत्रुभिरभिहन्यमानो बलवताऽन्येन वोपद्रूयमानः परिज्ञानार्थं कञ्चिदन्यमभिधावेत् "त्रायस्व मामि"ति, एवं कृतदोषो विद्वान् समुपधावेत् "उद्धर मां देहि प्रायश्चित्तमिति" शरणागतः। कृतघ्नः कृतमुपकारं विस्मृत्य योऽपकाराय यतते यो वा कृतोपकारं पुनर्विनाशयति तस्यैवोपकृतस्यापकार्ये—

[ अर्थसम्पादनोपायकथनव्याजेन तत्परीक्षा ]

सेनापतिः असत्प्रग्रहेणावक्षिप्तस्सत्रिभिरेकैकममात्यमुपजापयेल्लो-[1]भनीयेनार्थेन राजविनाशाय—सर्वेषामेतद्रोचते, कथं वा तवेति। प्रत्याख्याने शुचिरित्यर्थोपधा।

## जयमङ्गलाक्रोडपत्रम्

राजद्रोहिणः कृतघ्नत्वं भवतीति शब्दकल्पद्रुमे व्यक्तम्[2]। प्रयोक्तुः पातकित्वन्न भवत्यतस्तेनायथार्थः सन्नपि स्वामिद्रोहः प्रकाशनीयः। तत्फलं वस्तुगत्यास्वामिद्रोग्धुः पातकित्वज्ञानमिति सर्वं समञ्जसम्।

ब्रह्मेति। परीक्षणप्रसङ्गे अस्य प्रयोगस्य उक्तत्वात् नृपं प्रति कृतोपि द्रोहः नाधर्माय "शस्त्रं द्विजातिभिर्ग्राह्यम्, इति प्राङ्निर्दिष्टत्वात्"। ( पृ० २१२ ) तस्मादिदं ब्रह्मद्रुहामिति वचनं—निर्दुष्टराजपरतया समुन्नेयम्।

## श्रीमूला

अर्थोपधामाह—सेनापतिरित्यादि। असत्प्रग्रहेण अवक्षिप्तः अपूज्यपूजनेन निमित्तन परिभूतः, अपूज्यपूजने राज्ञा चोदितस्तदकुर्वन्नर्थमानाभ्यां हापित इत्यर्थः। लोभनीयेन उपजाप्यपुरुषकाम्येन। राजविनाशायेत्युपजापफलमुच्यते। तदनुकूल उपजापप्रकारस्तु अपथप्रवृत्तोऽयं राजा, साधु सत्पथवर्तिनमन्यमस्य स्थाने तत्कुलीनमवरुद्धं वा प्रतिपादयाम इत्येवमादिरूपो गम्यः। सर्वेषामित्यादिकं तच्छेषवाक्यम्। लुब्धेष्वेष शोधनप्रकारः।

---

उद्यच्छति। यद्यप्येषा शब्दव्युत्पत्तिस्तथापि लोकप्रसिद्धेयंत्रोपकर्तुरपकारे वर्तते स कृतघ्नः। अत्र जातिर्नापेक्ष्यते बालादिस्वरूपमेव कारणं। स्त्रियो व्यभिचारिण्योपि। यद्यपि तासां स्वल्पं प्रायश्चितं तथापि वाचनिकः संवासप्रतिषेधः। संवासः सङ्गतिस्तद्गृहनिवासश्च। १९० इति।

कुल्लूकभट्टी—बालं यो हतवान्, कृतोपकारमपकाराचरणेन यो विनाशितवान्, प्राणरक्षार्थमागतं यो हतवान्, स्त्रियं च यो व्यापादितवानेतान्यथावत्कृतप्रायश्चित्तानपि संसर्गितया न परिवसेत्। १९०। इति।

नी० टि १. लोभनीयेनेति—यस्य यस्य यस्मिन्नर्थे लोभोस्ति।

२ भर्तृपिण्डापहर्ता च पितृपिण्डापहारकः।<br>यस्माद्गृहीत्वा विद्यां च दक्षिणान्न प्रयच्छति॥<br>पुत्रान् स्त्रियं च यो द्वेष्टि यश्च तान् घातयेन्नरः।<br>कृतस्य दोषं वदति सकामान्न करोति यः॥<br>न स्मरेच्च कृतं यस्तु आश्रमान्यस्तु दूषयेत्।<br>सर्वांस्तानृषिभिः सार्धं कृतघ्नानब्रवीन्मनुः॥—

## वैदिकसिद्धान्तसंरक्षिणी

अर्थोपधामाह सेनापतिरिति। अस्योपजापयेत् इत्यनेनान्वयः। अर्थं निमित्तीकृत्य शुचित्वपरीक्षायां कर्तव्यायां उपजापयिता सेनापतिः अमात्यस्य पुरतो राजानमधिकृत्य येन कारणेन अमर्षं प्रदर्शयेच्चरद्वारा तं कारणमाह असदिति। असतः दासीपुत्रादेः प्रग्रहः सन्माननम् तत् सेनापतिद्वारा अभिलष्यते राज्ञा, अतः सेनापतिः नियोजतः अवमानितो भवति। इदमेवावमाननममर्षकारणं तदाह अवक्षिप्तेति। तन्निमित्तीकृत्य उपजापप्रकारमाह सत्रिभिरिति। (पृ० २१४) स सत्रिभिरिति क्वचिदुपलब्धं पाठान्तरमनुपयुक्तत्वात् अशुद्धं भाति। सत्रिभिः तीक्ष्णादिभिः। निवेदयितव्यस्याभिप्रायस्य सत्यत्वज्ञापनार्थं शपथपूर्वकमिति। उपजापयेत् भेदयेत्। लोभनीयेनेति। परस्वहरणेच्छाविषयेणेत्यर्थः तदुक्तम्—लोभः परद्रव्यातिश्रद्धा इति (नी०स० १) जयमङ्गलायाम्। टिप्पण्यामपि—"यस्य यस्मिन्नर्थे लोभ" इति व्याख्यातम्। परस्वत्वास्पदं वस्तु नापहरणीयमिति भावो यस्य नास्ति सोऽत्र लोभनीयमर्थन्निमित्तीकृत्य अर्थशुचित्वपरीक्षया भिद्येतेति भावः। शेषं पूर्वं व्याख्यातम्।

### जयमङ्गला

सेनापतिरित्यादि। अमुन्दासीपुत्रं सत्कारेण पूजयेति राज्ञा उक्तः स तेनासत्प्र-ग्रहेण असतः पूजया अमृष्यमा[1]णेन राज्ञा[2] कृतसंवित्केन अवक्षिप्तः अवरोपिततदर्थमानः सत्रिभिरेकैकमुपजपेत्। सेनापत्यायत्तत्वादर्थस्येति।

---

ब्रह्मघ्ने च सुरापे च चोरे च गुरुतल्पगे।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः॥

कृतघ्नस्वरूपं तत्रैवोपवर्णितम्—

कृतं येन केन चिज्जनेनोपकृतं हन्ति नाशयति यः अहङ्कारादिप्रयुक्तया। दुष्टबुद्ध्योपकृतस्यानङ्गीकारकत्वात् तथात्वम् इति।

कृतघ्नस्याभोज्यान्नता मनुना उक्ता स्मर्तव्या—

मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन। (अ० ४।२०७ श्लो०)

इत्युपक्रम्योक्तम्—

पिशुनानृतिनोश्चान्नं क्रतुविक्रयकस्य च।
शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च॥ इति। (अ० ४।२१४)

(टी०) पिशुनो यो विश्रब्धमर्थं कथितं भिनत्ति परच्छिद्रवादी वा परोक्षम्। अनृती कृतकौटसाक्ष्यः। क्रतुविक्रयकः क्रतुर्यज्ञस्तं कृत्वा विक्रीणीते क्रतुफलं मदीयं तवास्त्विति मूल्येन ददाति। यद्यपि परमार्थतः क्रतोर्विक्रयो नास्ति तथापि यस्यैवंविधा यात्राऽन्यविप्रलंभेन वा प्रवृत्तिस्तस्य प्रतिषेधः। शैलूषो नटः भार्यापण्य इत्यपरे। तुन्नवायः सौचिकः। कृतघ्नः कृतमुपकारं यो नाशयति! प्रत्युतोपकर्तुरपकारे वर्तते न च शक्तः सन् प्रत्युपकारेऽपि॥

१ अशुद्धम्—अमृष्यमा—(णो ? णेन)  २ रा-लाज्ञा

## जयमङ्गला

भूमिकोशहस्त्यादिना अर्थेन राजविनाशाय राजविनाशार्थमुपजपेत् । सर्वेषामेतद्रोचते कथं वा तवेति । तत्रेदृशोऽर्थः धर्मादिविरोधी न न्याय्य इति प्रत्याख्याने शुचिरितीयं परीक्षा अर्थोपधा ॥

## जयमङ्गलाक्रोडपत्रम्

अर्थं निमित्तीकृत्य परीक्षणोपायं निरूपयिष्यन्नाह सेनपतिरिति (पृ० २१५)

### अर्थपरीक्षणकर्तृत्वं सेनापतेः

ननु धर्मपरीक्षणकर्तृत्ववत् अर्थपरीक्षणकर्तृत्वमपि पुरोहिते कुतो नोक्तमिति चेच्छृणु ।

पुरोहितो ब्राह्मणः, सेनापतिः क्षत्रियः अनयोरपरः मानधनः प्रथमस्तु न तथा[1]। अमानी जनः सर्वं भगवद्भावतया पश्यन् प्रणमति । तदुक्तं श्रीमद्भागवते—

प्रणमेद्दण्डवद्भूमौ आश्वचाण्डालगोखरम् । (११ स्कन्ध) इति ॥

एवंस्थिते पुरोहितः मानित्वाभावात् दासीपुत्रस्य पूजने कर्तव्यतया आज्ञप्तोपि न अमर्षं विधातुमर्हति । तथा तु न मानधनः क्षत्रियः । अतएव क्षत्रियस्यैव सैन्ये युद्धयोग्यत्वात् प्राधान्येन सङ्ग्रहणं कृतं वर्तते । सैन्यस्य क्षत्रियप्रायस्य मानधनत्वं भारविणा वर्णितमुपलभ्यते[2] ।

तथा च सेनापतिः क्षत्रियो दासीपुत्रपूजायां यदि नियुक्तो भवति तर्हि तस्य मानभङ्गो भवति । एतस्मादेव च कारणान्मानसंरक्षणपरः स राज्ञे रुष्टः अर्थलोभमिषेण परीक्ष्यममात्यं भेदयितुं शक्नुयात् । धर्मपरीक्षायां पुरोहितस्य नियोजने कृते तस्य अयाज्ययाजनार्थमादिष्टस्य अधर्मभाक्त्वं भवति गुरुत्वच्युतिप्रसक्तिश्च । अत्र तु सा नास्ति इत्येवंतारतम्येन अत्र सेनापतिः, तत्र पुरोहित आदिष्ट इति ।

---

१ तदुक्तम—सम्मानात् ब्राह्मणो नित्यमुद्विजेत विषादिव ॥
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥ मनुः २।१६२।

मेघातिथिः—भिक्षमाणस्य ब्रह्मचारिणो गृहे वोपाध्यायस्य जीविकयाऽध्यापयतः यत्र संमाननं न स्यात् न तेन चित्तक्षोभमाददीतापि तु संमानादेवोद्विजेत् पूजयैव दीयमानं न बहु मन्येत । अमृतमिवाकाङ्क्षेदभिलषेदवमानमवज्ञां सर्वदा । उत्कण्ठा-सामान्यात् अधीतात्त्वर्थमाकाङ्क्षेरारोप्य षष्ठी कृता । ननु चानर्जितमभोज्यं ? सत्यं चित्तसङ्क्षोभप्रतिषेधार्थमेतत् । न तु तादृशस्य भोज्यतोच्यते । संमानावमानयोः समेन भवितव्यं न पुनरत्रमाननं प्रार्थनीयम् । ब्रह्मचारिणस्त्ववमतमपि भिक्षादानम् न चायं प्रतिग्रहोऽयाचितं प्रतिगृह्णीतेत्येतस्य येन विषयः स्यात् । २ अ० इति १६२।

२ महौजसो मानधना धनार्चिताः ।
धनुर्भृतः संयति लब्धकीर्तयः ॥
न सम्मतास्तस्य न भिन्नवृत्तयः ।
प्रियाणि वाञ्छन्त्यसुभिः समीहितम् । इति ॥

## जयमङ्गलाक्रोडपत्रम्

**पूजयेति**। (पृ० २१५) गौरविते प्रीतिहेतुना व्यापारेणेत्यर्थः[1]।

भगवतः प्रीतिमत्त्वम्

**ननु** भगवतः मनो नास्ति तर्हि तत्प्रीतिहेतुत्वं पूजायां कथमुपपद्यते इतिचेत्। पूजाप्रकाशे समाहितमेवात्र उत्तर बोध्यम् टिप्पण्याम्[2]।

सेनापतिना कर्तव्यस्य भेदस्य निष्कर्षः

अत्रेदं चिन्त्यम्—यथा राजा मणेः तत्वं विवेचयितुमसमर्थो, मणौ काचसाधर्म्यं पश्यति तर्हि सः लोकविद्वत्संश्राणीयो न भवितुमर्हति[3]।

तथा अपमाननकर्तृ राज्ञो गुणविवेचनासमर्थस्य लोकसंश्रयणीयत्वायोग्यत्वं सर्वत्र लोके उक्तदृष्टान्तेन प्रसार्य सारल्येन सेनापतिः अमात्यं भेदयितुमर्हति इति भावः।

नन्वसत्पूजायाः किं फलम्? इति चेद्दुर्भिक्षादि। तदुक्तम्—

अपूज्या यत्र पूज्यन्ते पूज्यानां च व्यतिक्रमः।
त्रीणि तत्र प्रजायन्ते दुर्भिक्षं मरणं भयम्॥ इति॥

**कृतसंवित्केनेति**। (पृ० २१५) परीक्षायाः प्रकरणप्रसङ्गात् राजसेनापत्योः

---

पूजापदार्थः

१ तदुक्तं पूजाप्रकाशे—तत्र पूजा नाम देवतोद्देश्येन द्रव्यत्यागात्मकत्वाद्याग एव। यद्यपि केषांचिदावाहनादीनामयागात्मकत्वात् पूजात्वं न स्यात्। न च तेषां पूजात्वं नास्त्येवेति वाच्यम्, षोड़शस्वप्युपचारेषु शास्त्रकाराणां पूजाशब्दप्रयोगात्। तथापि यागायागसमुदाये पूजाशब्दो गौरवितप्रीतिहेतुक्रियात्वेनोपाधिना रूढ एव यथा इष्टिपशुसोमसमुदाये राजसूयशब्दः इति। न्यायरत्नावल्याम्-अर्चनम्-श्रवणादिभिन्नो विष्णुप्रीतिहेतुर्व्यापारः इत्युक्तम्। तदपि पूर्वोक्तपूजाशब्दार्थान्नातिरिच्यते।

२ "यद्यपि ईश्वरे यागायागसमुदायक्रियया जीववदन्तःकरणवृत्तिरूपा प्रीतिर्नोत्पद्यते, अन्तःकरणाभावात्। तथापि मायावृत्तिविशेष एव प्रीतिः शिक्षादिवत् सा च यद्यपि उत्पन्नत्वान्नश्यति, तथापि फलं यावत् तिष्ठति अन्येषां मते अपूर्ववत्।

३ तदुक्तम्—उत्तमाभिजनोपेतान् न नीचैः सह वर्धयेत्।
कृशोपि हि विवेकज्ञो याति संश्रयणीयताम्॥
निरालोके हि लोकेऽस्मिन् नासते तत्र पण्डिताः।
जात्यस्य हि मणेर्यत्र काचेन समता मता। (का० स० ५।७०)

(ज०) निरालोक इति। अस्मिन् लोके यो न विवेकज्ञः, तत्र नासत इति संबन्धः।

(उ० निरपेक्षा)—अविवेकित्वस्य दोषं दर्शयन्नाह-निरालोक-इति। आलोको-हेयोपादेयदर्शकं ज्ञानं, तच्च न विद्यते यस्य लोकस्य-चातुर्वर्ण्यस्य स निरालोको लोको निर्विवेक इत्यर्थः। एवंभूतेपि लोके क्षुधापीडिता अपि पण्ड़ितास्तत्र नासते नावस्थितिं कुर्वन्ति। यत्र जात्यस्य हि मणेर्वज्रादेः काचेन निकृष्टमणिना समता समानता मताऽभिमतेत्यर्थः॥ ५।७०।

## जयमङ्गलाक्रोडपत्रम्

कलहः वास्तविको नास्ति ( प्र० खं० २ पृ० १९४ ) प्राङ्निर्दिष्टचाणक्यचन्द्रगुप्त-कलहवत् इति सूचनार्थं कृतसंवित्कग्रहणम् ।

उपजपेदित्यणिजन्तप्रयोगोपपत्तिः

**उपजपेदिति**। (पृ० २१५) ननु पुरोहितकर्तृकोपधापरीक्षायामुपजापयेदित्युक्तम्। **अत्र कथ**मुपजपेदित्युच्यते । इति चेन्न । पुरोहितो गुरुः इतिकृत्वा गुरुत्वच्युतिभङ्गेन **तत्र तत्र स स्वयमुपगन्तुं** नार्हति इति विशेषावधानार्थमुपजापयेदित्युक्तम् । **अन्यत्र** तु उपजपेदिति ।

### उपजापयेदिति पाठः

**जयमङ्गला**नीतिनिर्णित्यनुसारेण उपजापयेदिति पाठान्तरमुपलभ्यते । **तस्याय**माशयः—**स्वा**मिप्रकृतित्वाद्[1] यदि सेनापतिः स्वयमुपगन्तुं नाभिलषति । **तदा** उपजापयेत् इति **बो**ध्यम् ।

### अर्थोपधायां सेनापतेर्नियोजनोपयुक्तता

ननु सेनापतिरेव कुतः अस्मिन् कार्ये नियुक्तः ? इतिचेद् अर्थाधिकारित्वाद् **इति** गृहाण । तदेव दर्शयति सेनापत्यायत्तत्वादिति । उपजापप्रकारः धर्मोपधापरीक्षणवज् ज्ञातव्यः । तत्प्रदर्शितं गणपतिशस्त्रिणा –"तदनुकूल उपजापप्रकारस्तु अपथप्रवृत्तोऽयं राजा, साधुसत्पथवर्तिनमन्यमस्य स्थाने तत्कुलीनमवरुद्धं वा प्रतिपादयाम इत्येवमादिरूपो गम्यः" । इति ।

**धर्माविति**। (पृ० २१६) अर्थलोभेन कृते राजद्रोहे तज्जनितदुरितस्य कथमपि **प्रायश्चित्तादिना विनाश्यत्वं** नास्तीति ज्ञापनार्थमियमुक्तिः । अत्रेदं बोध्यम्, राजद्रोहे महत्पापमितिरीत्या जानन् अयं तस्मान् निवृत्तोपि अन्यतः अर्थान्तरहरणात् निवृत्तः **स्यात् इत्यंशे तु** न विश्वसितव्यम्, यतः इतरार्थहरणप्रयुक्तस्य दुरितस्य उपपातके **अन्तर्गत**त्वात्प्रायश्चित्तापनोद्यत्वमस्ति । अतः राजद्रोहातिरिक्तस्थले **अविश्वास्यत्वमेव मन्तव्यम्** । तदेतत् "ईदृशेऽर्थे" इत्युक्त्या जयमङ्गलाकृता बोधितम् । उपपातकत्वं च **अर्थ**हरणस्य स्मृतौ उक्तम्[2] तत्रैव द्रष्टव्यम् ।

---

१ राजा युवराजः सेनापतिश्चेति स्वामिप्रकृतयः । (नी० सा० १९ सर्ग)

२ (अ० ११।५९-६६ मनुस्मृतिः)

गोवधोऽयाज्यसंयाज्यपारदार्यात्मविक्रयाः ।
गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च ॥ ५९ ॥
परिवित्तिताऽनुजेऽनूढे परिवेदनमेव च ।
तयोर्दानं च कन्यायास्तयोरेव च याजनम् ॥ ६० ॥
कन्याया दूषणं चैव वार्धुष्यं व्रतलोपनम् ।
तडागारामदाराणामपत्यस्य च विक्रयः ॥ ६१ ॥
व्रात्यता बान्धवत्यागो भृत्याऽध्यापनमेव च ।
भृताच्चाध्ययनादानमपण्यानां च विक्रयः ॥ ६२ ॥—

[ कामपूरणोपायकथनव्याजेन तत्परीक्षा ]

**परिव्राजिका[1] लब्धविश्वासा[2]ऽन्तःपुरे कृतसत्कारा महामात्र[3]मेकैक-मुपजपेत्—राजमहिषी त्वां कामयते कृतसमागमोपाया; महानर्थश्च भविष्यतीति। प्रत्याख्याने शुचिरिति कामोपधा।**

---

## श्रीमूला

स्त्रैणेषु प्रयोज्यां कामोपधामाह परिव्राजिकेत्यादि। परिव्राजिका भिक्षुकी कृतसत्कारा राजमहिषीभिः पूजिता। अर्थश्च धनादिकं च।

## वैदिकसिद्धान्तसंरक्षिणी

कामोपधामाह परिव्राजिकेति। भिक्षुकी टिप्पण्यामुक्ता, "परिव्रजनशीलव्रतेति"। लब्धविश्वासा श्रद्धास्पदीभूता अतएव परिव्राजकचिन्हं सार्थकं भवति। कैः विश्वास्या इतिचेत् परीक्ष्यैः। तदुक्तं टिप्पण्याम्—"परीक्ष्येषु" इति। अन्तःपुर इति। अन्तःपुचारिणीयं सञ्जातसत्कारा विश्वास्या राजमहिष्या रहस्यभूतमर्थम् अवश्यं विज्ञापयितुमर्हा इति भावः। कृतसत्कारा अन्तःपुरान्निष्क्रम्य परिभ्रमणशीला। महामात्रं भूतिसपन्नं। तदुक्तं टिप्पण्याम्—"मात्राशब्देन विभूतिः सा महती एषाम्" इति। उपजापप्रकारमाह राजेति। अनेन लोके लब्धुमशक्यस्य महतो रत्नस्य लोभेन सत्यां कामुकतायामवश्यं परीक्ष्यस्य प्रवृत्तिर्भविष्यति राज्ञां सविधे रत्नानां सङ्ग्रहणात्। प्रदर्शितञ्चैतत् सप्तशती ग्रन्थे "रत्नभुजो वयम्" इति।

महिष्या कथं समागमः? इत्याकाङ्क्षायामाह कृतेति। अन्तःपुरामात्यैः वषे-

---

सर्वाकरेष्वधीकारो महायन्त्रप्रवर्तनम्।
हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म च ॥ ६३ ॥
इन्धनार्थमशुष्काणां द्रुमाणामवपातनम्।
आत्मार्थं च क्रियारम्भो निन्दितान्नादनं तथा ॥ ६४ ॥
अनाहिताग्निता स्तेयमृणानामनपक्रिया।
असच्छास्त्राधिगमनं कौशीलव्यस्य च क्रिया ॥ ६५ ॥
धान्यकुप्यपशुस्तेयमद्यपस्त्रीनिषेवणम्।
स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यं चोपपातकम् ॥ इति।

उपपातकस्य प्रायश्चितापनोद्यत्वं तत्रैव द्रष्टव्यम्।

एतैर्व्रतैरपोहेयुर्महापातकिनो मलम्।
उपपातकिनस्त्वेवमेभिर्नानाविधैर्व्रतैः ॥ १०७ ॥ विशेषस्तु तत्रैव द्रष्टव्यः। इति।

नो०टि० १. परिव्राजिकेति—परिव्रजनशीलव्रता।
,, २. लब्धविश्वासेति—परीक्ष्येषु।
,, ३. महामात्रमिति—'मात्राशब्देन विभूतिः, सा महती एषाम्'।

## वैदिकसिद्धान्तसंरक्षिणी

वरादिभिः समागमव्यवस्था क्लृप्तेति आशयः। एवंकृते फलं निर्दिशति महानिति। अर्थः रत्नलाभः। अकृते दोषमाह महानर्थः इति। महान् अनर्थ इति भावः। शुचित्वनिमित्तमाह प्रत्याख्यान इति। राजदारगमने महत्पापमिति ज्ञात्वा प्रत्याख्यानम्।

## जयमङ्गला

परिव्राजिकेति। वक्ष्यमाणगुणा परिव्राजिका लब्धविश्वासा श्रद्धेया अन्तःपुरे कृतसत्कारत्वादनिवार्यप्रवेशा। महामात्रं महती मात्रा यस्येति तम्। एकैकमुपजपेत्। राजमहिषी नान्या काचित् त्वां कामयते। कश्चिदशक्यत्वात् प्रत्याचक्षीतेत्याह-कृतसमागमोपाया वर्षवराद्यन्यरूपग्रहणात्[१]। महानर्थश्च ते भविष्यतीति : नन्वर्थोपधापीयं कुतो निर्णयः। एवं तर्हि महान् कामप्राप्त्यैव पुरुषार्थस्ते भविता। यथाहुः— धर्मार्थयोः फलं कामः कामः स्त्रीभोगमुख्यकः।
स्त्रीषु रूपवती श्रेष्ठा सुरूपासु सयौवना॥ इति।

अथवा महाननर्थो महानर्थः अनङ्गीकरणे तत्क्रोधाद्भवितेति। अगम्या हि राजदारा इति काम्याकाम्यपरिज्ञानात् प्रत्याख्याने शुचिरितीयं परीक्षा कामोपधा॥

## जयमङ्गलाक्रोडपत्रम्

**परिव्राजिकेति।** स्त्रीणां सन्यासधर्मनिषेधनिर्देशस्य शास्त्रान्तरेषु उद्धृतत्वात् अत्र गृहीतलिङ्गमात्रा भिक्षुकी बोध्या। तदुक्तं नीतिसारव्याख्यायां चरविकल्पप्रकरणे "गृहीतालिङ्गा भिक्षुकी"ति।

**श्रद्धेयेति।** श्रद्धया तस्यां पूज्यत्वभावना समुदिता भवति। एतेन श्रद्धाचिन्हं दृष्ट्वा श्रद्धया ये पूजयन्ति तैः श्रद्धेया इति स्फुटीकृतम्। तस्मादेवंविधाः ये स्त्रैणाः तेः कामोपजापेन भेद्या भवन्ति न वेति प्ररिव्राजिकाद्वारा परीक्षणीया भवन्ति इति तात्पर्यम्।

स्त्रैणेषु प्रयोज्यां कामोपधामाह—परिव्राजिकेत्यादि। परिव्राजिका भिक्षुकी इति।

**मात्रेति।** एतेन दरिद्राः नोपजप्तव्याः तेषां श्रीमद्भिः सह सख्यासंभवात्। इति ज्ञेयम्। तदुक्तं कामसूत्रे—

"सहपांसुक्रीडितमुपकारसंबद्धं समानशीलव्यसनं सहाध्यायिनं यश्चास्य मर्माणि रहस्यानि च विद्यात् यस्य चायं विद्याद्वा धात्र्यपत्यं सहसंबद्धं मित्रम्"। इति।
(अ० १ अ० १ सू० ३२)

एतेन कामोपजापे परीक्ष्यनिष्ठा कामुकता निमित्तमिति बोध्यम्।

कामुकेन महिषीसङ्कल्पोऽवश्यं कर्तव्यः

मूले सामान्यतयोक्तं व्याख्यातुमाह नन्विति। समागमस्य अस्वीकारे दोष-

---

अशुद्धम्
१ वर्षवराद्यरूप

## जयमङ्गलाक्रोडपत्रम्

माह अथवेति । (पृ० २२०) अनेन महिषीसङ्कल्पास्वीकारे प्रत्यवायो भवितेति सूचनात् कामुकेनेदं अवश्यं कर्तव्यमिति सूचितम् । यथा पुरोहितेन धर्मोपरोधे शस्त्रग्रहणं कर्तव्यमेवं सेनापतिनाऽपि सैन्यसंरक्षणाप्रसक्तौ इति, "शस्त्रं द्विजातिभिर्ग्राह्यमि"त्यादि वचनान्युदाहृत्य (प्र.खं २ पृ० २१२) प्राक्दर्शितित्वात् सिद्धम्, तथा कामुकस्यापि कृते महिषीसङ्ग्रहणं कर्तव्यतया सिद्ध्यति । तत्प्रत्याख्याने युक्तिं प्रदर्शयितुकाम आहागम्येति । अगम्यात्वं शब्दकल्पद्रुमे व्यक्तम्[1] ।

---

**अगम्याः**

१ यम उवाच--(ब्रह्मवैवर्ते प्रकृतिखण्डे अ० २)

या या गम्या नृणामेव निबोध कथयामि ते ।
स्वस्त्री गम्या च सर्वेषामिति वेदे निरूपिता ॥
अगम्या च तदन्या या इति वेदविदो विदुः ।
सामान्यं कथितं सर्वं विशेषं श्रृणु सुन्दरि ॥
अगम्याश्चैव या याश्च निबोध कथयामि ते ।
शूद्राणां विप्रपत्नी च विप्राणां शूद्रकामिनी ॥
अत्यगम्या च निन्द्या च लोके वेदे पतिव्रते ।
शूद्रश्च ब्राह्मणीं गच्छेत् ब्रह्महत्याशतं लभेत् ॥
तत्समं ब्राह्मणी चापि कुंभीपाकं व्रजेद् ध्रुवम् ।
यदि शूद्रां व्रजेद्विप्रः वृषलोपतिरेव सः ॥
स भ्रष्टो विप्रजातेश्च चाण्डालात् सोऽधमः स्मृतः ।
विष्ठासमश्च तत्पिण्डो मूत्रं तस्य च तर्पणम् ॥
तत् पितॄणां सुराणां च पूजनं तत्समं सति ।
कोटिजन्मार्जितं पुण्यं सन्ध्यार्चातपसार्जितम् ॥
द्विजस्य वृषलीभोगान्नश्यत्येव न संशयः ।
ब्राह्मणश्च सुरापीती विट्भोजो वृषलोपतिः ॥
हरिवासरभोजो च कुंभीपाकं व्रजेद् ध्रुवम् ।
गुरुपत्नीं राजपत्नीं सपत्नोमातरं प्रसूम् ॥
सुतां पुत्रवधूं श्वश्रूं सगर्भां भगिनीं सति ।
सोदरभ्रातृजायां च भगिनीं भ्रातृकन्यकाम् ॥
शिष्यां च शिष्यपत्नीं च भागिनेयस्य कामिनीं ।
भ्रातृपुत्रप्रजाश्चैवाप्यगम्या आह पद्मजः ॥
एतास्वेकामनेकां च यो व्रजेन्मानवाधमः ।
स मातृगामी वेदेषु ब्रह्महत्याशतं लभेत् ।
अकर्मार्होपि सोऽस्पृश्यो लोके वेदेऽतिनिन्दितः ।
स याति कुंभीपाके च महापापी सुदुष्करम् ॥ इति—

[ पापभयनिवारणोपायकथनव्याजेन तत्परीक्षा ]

**प्रवहणनिमित्तमेकोऽमात्यः सर्वानमात्यानावाहयेत् । तेनोद्वेगेन राजा तानवरुन्ध्यात् । कापाटिकश्छात्रः [1]पूर्वावरुद्धस्तेषामर्थमानावक्षिप्तमेकैकममात्यमुपजपेत्—असत्प्रवृत्तोऽयं राजा, साध्वेनं हत्वा अन्यं प्रतिपादयिष्यामः । सर्वेषामेतद्रोचते, कथं वा तवेति । प्रत्याख्याने शुचिरिति भयोपधा ।**

---

**जयमङ्गलाक्रोडपत्रम्**

एवञ्च राजमहिषीसंबन्धे सञ्जाते प्रायश्चित्तादिनाप्यनपनोद्यं पातकं भवति इति जानानः परिव्राजिकोक्तं परीक्ष्योऽमात्यः, कामुकः सन्नपि प्रत्याख्याति इति स कामतः शुचिः न राजद्रोहीति सिद्ध्यति ।

**श्रीमूला**

भयोपधामाह प्रवहणेत्यादि । प्रवहणनिमित्तं प्रवहणं नौविशेषः कर्णीरथश्च, तेन जलस्थलयात्राक्रीडोद्यानभोजनादिकं गोष्ठीकौतुकं लक्ष्यते, तदर्थमित्यर्थः ।

---

कामसूत्रेपि—अगम्यास्त्वेवैताः कुष्ठिन्युन्मत्ता पतिता भिन्नरहस्या प्रकाशप्रार्थिनी गतप्राययौवना नातिश्वेताऽतिकृष्णा दुर्गन्धा संबन्धिनी सखी प्रव्रजिता संबन्धिसखिश्रोत्रियराजदाराश्च । (१ अ० ५ अ० २९ सूत्रम्)

( टी० ) नायकस्य तु कन्याविधावगम्यत्वं सूचयति । तुशब्दो विशेषणार्थः । एवकारो नियमार्थः । सत्स्वपि कार्येष्वेता अगम्या इत्यर्थः । कुष्ठिनीति जुगुप्सित व्याध्युपलक्षणार्थम् । उन्मत्ता यत्किञ्चनकारिणी न सुखावहा । पतिता स्वजात्यपेक्षया महापातकाचरणात् तत्संपर्कात् पतितः स्यात् । भिन्नरहस्या लोके रहस्यं प्रकाशयन्ती नायकं लज्जयति । प्रकाशप्रार्थिनी प्रकटं नायकमभिलषन्ती त्रपयत्यनर्थञ्च करोति । गतप्राययौवना तत्सेकादाऽऽयुस्तेजश्च हीयते । अतिश्वेता अति कृष्णा चाप्रशस्ता । कन्या पुनर्भूश्च ज्ञेया । निन्द्यत्वादन्या अपि यथासंभवं योज्याः । दुर्गन्धे गुह्ये वक्त्रे च दुष्टगन्धा सयोगे वैमुख्यं जनयति । संबान्धिनी भ्रातुरपत्यस्य भगिन्या वा परिणय संबन्धेन बाह्येन संबद्धा । सखीभार्यावधस्य तदनुरोधात् । प्रव्रजिता क्वचिच्छासने गृहीतव्रता धर्मार्थयोर्वैलोम्यात् । संबन्धिसखिश्रोत्रियराजदाराश्चेति । विद्यासंबन्धेन राजसंबन्धेन वा संबद्धाः संम्बन्धिनस्तेषां दाराः । आचार्याणां शिष्यभार्या भ्रातृ भार्या इत्यादयोपि धर्मवैलोम्यात् । सखिद्वारा मित्र भार्याऽधर्मद्रोहादिभयात् । तथा चोक्तम्—रेतःसेकः स्वयोगेषु कुमारीष्वन्त्यजासु च ।

सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ।

श्रोत्रियदाराज्वलदग्निप्रख्या धर्मवैलोम्यात् ॥—

( शेषं २२३ पृष्ठे द्रष्टव्यम् ।)

नी० टि० १ पूर्वेति सङ्केतादेव ।

## श्रीमूला

आवाहयेत् आनीय मेलयेत्। तेनोद्वेगेन तन्निमित्तेन उद्वेगेन अक्षमया। तान् अमात्यान्। अवरुन्ध्यात् अर्थमानापहारादिनाऽपकुर्यात्। कापटिक इति। पूर्वविरुद्धः राज्ञा पूर्वमपकृतः, छात्रः कापटिकः अध्यापकाधेतृवृत्तिः कापटिकाख्यः गूढपुरुषविशेषः तेषाम् अमात्यानाम् मध्ये, अर्थमानावक्षिप्तम् अर्थमानाभ्यां हापितम्, एकैकम् अमात्यम्, उपजपेद् राजसकाशाद् भेदयेत्। उपजापप्रकारकथनम् असत्प्रवृत्त इत्यादिना। असत्प्रवृत्तः अशोभनकर्मप्रवृत्तः। इयमुपधा भीरुविषया।

## वैदिकसिद्धान्तसंरक्षिणी

भयोपधामाह प्रवहणेति। (पृ० २२२) प्रवहणमुत्सवादि प्रहवणेति पाठे प्रहूयन्तेऽस्मिन्निति। एकः मुख्यः "एके मुख्यान्यकेवलाः" इति कोषात्। अमात्येति। अनेन भयोपधकर्तृत्वं प्रधाने मन्त्रिणि बोध्यम्। आह्वानप्रयुक्तस्यावरोधस्य कारणमाह तेनेति। उद्वेगेनेति।भयप्रयुक्तेन मनसः कम्पेन। अवरुन्ध्यादिति।

अवरोधश्च विभक्त्यर्थनिर्णये व्यक्तः[1]। कृतेऽवरोधे कारावरोधे तद्वासप्रयुक्तया पातकित्वोत्पत्त्या मन्त्रिणां सञ्जातः अपमान एव तेषु भेदनहेतुः। स च कापटिकेन भविता इत्याह कापटिक इति। पूर्वविरुद्धः संविदमाधारीकृत्य पूर्वत एव कारायामवरुद्धः। तदुक्तं टिप्पण्याम् -"सङ्केतादेवे"ति। तेषाम् अवरुद्धानामित्यर्थः।

---

राजदाराश्च चतुराश्रमगुरुभार्या दृष्टादृष्टविरोधात्। इत्येतदाचार्याणां मतमनुक्तमपि ज्ञेयम्। अत्र च यथोक्तव्यतिरेकेण परिगृहीताः सर्वा एवागम्याः स्युः इति।

(मू०) संबन्धि सखिश्रोत्रियराजदारवर्जमिति गोणिकापुत्रः। ३०।

दृष्टपञ्चपुरुषा नागम्या काचिदस्तीति बाभ्रवीयः। ३१।

१ देशान्तरसञ्चारविरोधी व्यापारो रुधेरर्थः। देशान्तरमन्यदेशः। सञ्चारविरोधित्वं सञ्चारानुत्पादप्रयोजकत्वं व्यापारे साक्षाद्विशेषणीभूतानुत्पादस्वरूपफलवत्तया। गोः प्रधानकर्मत्वं। गोपदोत्तरद्वितीयाया आधेयत्वं अर्थः। व्रजपदोत्तर द्वितीयाया अन्यपदार्थैकदेशभेदान्वितं प्रतियोगित्वमर्थः। एवं व्रजप्रतियोगिताकभेदवद्देशसञ्चारानुत्पादप्रयोजकव्यापारानुकूलकृतिमान् गोपाल इत्याकारकः शाब्दबोधः व्रजं गां रुणद्धि गोपाल इत्यत्र भवतीति कश्चित्।

गुरुचरणास्तु विभागानुत्पादः कर्मानुत्पादो व्यापारश्च रुधेरर्थः। व्रजं गां रुणद्धि गोपाल इत्यादौ द्वितीययोराधेयत्वमर्थः विभागानुत्पादः कर्मानुत्पादे स व्यापारे योगक्षेम साधारण्या जनकतयाऽन्वेति। एवं व्रजवृत्तिविभागा- नुत्पादस्य प्रयोजको यो गोवृत्तिकर्मानुत्पादस्तत्प्रयोजकव्यापारानुकूलकृतिमान् गोपाल इत्याकारकः शाब्दबोधः। व्रजपदोत्तर द्वितीयाया भेदोऽप्यर्थः। तेन गां गां रुणद्धि इति न प्रयोगः इति पदवाक्यरत्नाकरे प्राहुः। युज्यते चैतत् विभागानुत्पाद स्वरूप गुण फलवत्तया व्रजस्य गौण कर्मत्वोपपत्तिरिति ; इति।

## वैदिकसिद्धान्तसंरक्षिणी

अर्थमानाभ्यां अवक्षिप्तं अवमानितम् । एकेति भेदने सारल्यार्थम् । उपजपेत् भेदयेत् । तत्प्रकारमाह साध्विति । असदिति । अशोभनं प्रवृत्तं आचरणमस्येति । राजान्तरनियोजने एकवाक्यता सर्वेषामस्तीति प्रदर्शनार्थमाह सर्वेषामिति । अन्येषामवरुद्धानाम् । राजद्रोहस्य महापातकित्वमस्तीति मतिमतामसत्कर्मणि प्रवृत्यभावं प्रदर्शयति प्रत्येति । शुचिरिति । धर्मादिविशुद्धचित्तत्वात् भयादिप्रसङ्गेष्वपि आसन्नकालेषु अहिंसकः इति भावः ।

## जयमङ्गला

प्रह्वणनिमित्तमिति । (पृ० २२२) प्रहूयन्ते हूयन्तेऽस्मिन् स्वजनमित्राणीति प्रह्वणम् उद्वाहादिरुत्सवः, तन्निमित्तम् । एकोऽमात्यः प्रधानमन्त्रीत्यर्थः । स राज्ञा कृतसंवित्कः सर्वानमात्यान् स्वगृहेऽन्यगृहे वा आवाहयेन्मेलयेत् । तेनोद्वेगेनेति । तेषामेकत्र मेलनात् तेन भयेन । "राजा मदपचिकीर्षया हि यूयं संहताः", "तिष्ठत तावद्, विचारयामी" तानवरुन्ध्यात् पृथक् सह वा । कापटिकश्च वक्ष्यमाणलक्षणस्तत्रास्मिन्नवरोधस्थाने दूतादिव्यपदेशेन पूर्वावरुद्धः । तेषां मध्येऽर्थमानावक्षिप्तम् अर्थमानाभ्यां च्यावितम् । एकैकमुपजपेत् । असत्प्रवृत्तोऽयम् । असदशोभनं प्रवृत्तमस्येति येनादुष्टमान समप्येवं कृतवान् । अत एनं हत्वाऽन्यं प्रतिपादयामः सर्वेषामेतद् रोचते कथं वा तवेति । यद्येवं स्यात् किंन्विद[1]मेवमेव, अथवा अयमपरागाद् ब्रवीतीति, अथवा अलं चिन्तया सर्वथा निर्दोषोऽस्मि सर्वथा निष्प्रतिकारमसमञ्जयमिति प्रत्याख्याने शुचिरितीयं परीक्षा भयोपधा ॥

## जयमङ्गलाक्रोडपत्रम्

### मन्त्रिणि भयोपधापरीक्षकत्वम्

प्रधानेति । भयन्निमित्तीकृत्य कर्तव्ययां परीक्षायां प्रधानमन्त्रिणः नियोजनं वक्ष्यमाणं युक्तियुक्तं बोध्यम् तस्य तथासामर्थ्यात् । इदं हि मन्त्रिकर्तृकं कर्म कृतकमस्ति परीक्षाप्रकरणात् इत्याह कृतेति ।

### राजानमनादृत्येतरेषामाह्वाने राज्ञः कोपः

ननु मन्त्रिणा कृतमुत्सवनिमित्तमितरेषामाहूतं ज्ञात्वा राज्ञा कुत उद्वेजनीयम् ? इति चेदुच्यते । राजानमन्तरा सङ्घीभूय मन्त्रिभिः निर्णये प्रारब्धे राज्ञः उपेक्ष्यत्वप्रसङ्गात् राजा तन्न सहते इति स कुप्यति । यद्यपि सत्वबुद्ध्युत्साहगुणेषु प्राधान्येन सत्वमवलम्ब्य वास्तविकपरामर्शकारी बुद्धिसाहाय्यदाता मन्त्री भवति । तत्परिषदि च उपस्थितविषयमधिकृत्य सद्धेत्वसद्धेतुविचारणा भवति । अतः कार्यकारणभावमूलकः मन्त्रः मन्त्रिपरिषदा राज्ञ उपस्थितिमन्तराऽपि प्रकाशितोनानुचितः ।

---

अशुद्धम्—१ किंचिदमेव

## जयमङ्गलाक्रोडपत्रम्

### परिषदो मन्त्रप्रकाशनावश्यकता

न च कुत एतत्? इति वाच्यम्। अकारणत्वव्यवहारस्य प्रामाणिकमन्त्रकुशलाधीनत्वात्। तदुक्तम् कारणत्वविचारप्रसङ्गे दिनकर्यां मुक्तावलीप्रकाशे[1]—

सत्यप्येवं "उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धय." इत्युक्तरीत्या मन्त्रिबुद्ध्यपेक्षयापि सत्यान्वेषणपरा बुद्धिः यस्मिन् आत्मगुणसंपन्ने परीक्षणकुशले अत्यर्थसत्ववति राजनि अतिशयिततरा भवति तद्राजद्वारा मन्त्रिपरिषदोपि निग्रहस्थानप्रसङ्गः संभवतीति राजानमन्तरा मन्त्रिपरिषन् न कथमपि वस्तुतत्वं निर्णेतुमर्हति। मन्त्रकुशलायां सत्यामपि मन्त्रिपरिषदि राज्ञः राज्यस्य प्राणस्थानित्वं उक्तमुपाध्यायनिरपेक्षायां, युक्तम्। तथाचाहुः—(उ० निरपेक्षा १ सर्ग १८) स्वामी शेषाङ्गानाममात्यादीनां, ईश्वरः प्राणभूतः" इति।

### मन्त्रिपरिषद उपरिबुद्धित्वे स्वहानिः

राज्ञः अत्यर्थसत्वगुणाभावे तु तन्निरपेक्षा सती यदि मन्त्रिपरिषन् निर्णेतुं सक्षमा भवेत् तर्हि तु राज्ञो ह्रासः, शासने प्रभुत्वाभावश्च आपपद्यत एव। नाऽपि च राजा स सत्यसामर्थ्ये उपरिबुद्धित्वाभावेन मन्त्रिपरिषदं निरोद्धुं शक्तः इति स्मर्तव्यम्[2]।

---

१ नचानियतरासभादेः पञ्चमान्यथासिद्धत्वात् तेनैव वारणे नियतपदं व्यर्थमिति वाच्यम् अवश्यक्लृप्तत्वस्यैकस्याभावेन यत्र यत्र प्रामाणिकानां न कारणत्वव्यवहारस्तत्तद्भेदस्य निवेशनीयतया नियतपदेनैव रासभादेर्वारणे तद्भेदस्याप्रवेशादित्यभिप्रायात्। पूर्ववर्तित्वं चाव्यवहितपूर्ववर्तित्वं, तेन व्यवहितपूर्ववर्तित्वव्युदासः। इति।

२ स्पष्टीकृतञ्चैतत् धर्मविजयनाटके ४ अङ्के—आदिष्टोऽस्मि भूपतिना मुकुतेन, यत्सदस्यामात्यव्यवहारोऽयं द्रष्टव्य इति। तत्कदाऽसौ धर्मासनं सम्भावयिष्यति। अयेऽस्माकं सदस्यः।

सदस्यः—कष्टः खलु धर्मः सभासदाम्। यतः—

मा सभां प्रविशतु प्रतिष्ठितः।
संस्थितो वदतु वा समञ्जसम्॥
पात्रतां भजति यत्र विब्रुवन्।
अब्रुवन्नपि नरः किल्बिषाम्॥ ४॥

अपि च—योऽनुयाति कुपथस्थितं नृपं। रागलोभभयकृद्विचेतनः।
गण्डशैल इव मज्जति स्वयं। मज्जयत्यपि स मेदिनीपतिम्॥ ५॥

किञ्च—निसर्गोज्वलप्रकृतिरपि दुर्जनसंसर्गेण दूषित एव। यतः—

पाथसां मकरवानिवाशयः सर्पयुङ्मलयजो यथा द्रुमः।
सज्जनोऽपि खलु सभ्यसङ्गमाद् भूपतिर्भवति भीतिदायकः॥ ६॥—

## जयमङ्गलाक्रोडपत्रम्

उद्वेगेनेति । (पृ० २२२) उद्वेगस्वरूपञ्च भावप्रकाशने व्यक्तम्[1] ।

भयेनेति । (पृ० २२२) राजानमुपेक्ष्य एकत्र संभूय सङ्घटने प्रयुक्ते अनर्थः संभाव्यते इति शङ्कया,

प्राड्विवाकः-गुरुः खलु सन्देशो देवस्य यद् दुरात्मन्यनृते क्षणमपि न विश्वसितव्यमिति ।

यतः— शृङ्गिणां क्षितिभुजां नदीनदस्रोतसां नखभृतां नतभ्रुवाम् ।
दंष्ट्रिणामनृतसक्तचेतसां शस्त्रिणाञ्च चरिते न विश्वसेत् ॥ ७ ॥

सदस्यः—विद्यया विमलयाऽप्यलङ्कृतो दुर्जनः सःसि माऽस्तु कश्चन ।
साक्षरा हि विपरीततां गताः केवलं जगति तेऽपि राक्षसाः ॥ ८ ॥

प्राड्विवाकः– अद्य खलु चारमुखादष्टादशस्वपि व्यवहारविषयेष्वनृतेनोपजल्पमिति । तदाकर्ण्य त्वरिततरं मां समाहूय राज्ञाऽऽज्ञप्तम्, यन्मध्यमामात्यो दण्डमुखेनास्माभिः सहस्रधोपालब्धोऽप्यद्याऽप्यनवहितस्तिष्ठति इति । तत्सविधे भवताऽपि—ऋणादाननिक्षेपास्वामिविक्रयसम्भूयसमुत्थानादत्तानपकर्माभ्युपेत्याशुश्रूषावेतनादानसंविद् - व्यतिक्रमक्रयविक्रयानुशयस्वामिपालविवादधर्मदण्डवाचिकपारुष्यस्तेयसाहसस्त्रीपुंस धर्मविभागद्यूताह्वानां तेषामवलोकने सावधानेन भवितव्यमिति । तत्र च —

ग्राह्यः समर्थः प्रतिभूर्विवादे भाषानुरोध्युत्तरमाशु लेख्यम् ।
हीनः प्रदद्याद्धनिने धनानि नृपस्य दण्डं पणकृत्पणञ्च ॥ ९ ॥

ततश्च— उक्तिभिर्लिखितवीरशासनः साक्षिभिर्विविधदिव्यकर्मभिः ॥
निर्णयोऽस्तु विनिवारितच्छलः पीडयतामनृतसङ्गतो जनः ॥१०॥

तत्र च— ससुताः शुचयः कुलप्रसूता धनवन्तः सदयाः स्वधर्मसंस्थाः ।
ऋषयः समदर्शिनस्तटस्थास्त्र्यवराः संसदि साक्षितां भजन्तु ।

एवञ्च— पक्षपातधनकामनापरत्रासवद्भिरपि या विलोकिता ।—
साऽन्यथा व्यवहृतिः प्रवर्ततां वर्तताञ्च निखिलं यथा स्मृतिः ॥ १२ ॥

भवांश्चात्र साहाय्ये निर्दिष्टः ।

सभ्यः—धन्योऽस्म्यनुगृहीतोऽस्मि । आर्य ! ममापि चेतसि सर्वदाऽयं मनोरथः, परन्तु अनृतचरित्रादुद्विग्नोऽस्मि । यतः—

उष्णःक्वचित्क्वचिदुपाश्रितशीतभावः साधारणः क्वचिदुपायशतैरसाध्यः ।
नानाप्रलापकुशलः परिशङ्कनीयः कर्णे जपोऽतिबलवानिव सन्निपातः ॥१३॥

प्राड्विवाकः–सत्यं

चन्दनारणिनिश्शेषमणिभ्यां जन्मवानपि जगद्दहनोऽग्निः ।
तापसस्य बटुरप्यबलानां पीडनाय पिशुनः पटुरेव ॥

[1] 'उद्वेगोऽरिकृता भीतिः'
उद्वेगो मनसः कम्पः क्रोधशोकभयादिजः ।
निश्वासोन्निद्रताचिन्ताः स्तम्भो वैवर्ण्यमश्रु च ॥
न शय्यासनयोः प्रीतिर्हृल्लेखो दीनतापि च ।
एवमुद्वेगजा भावाः कन्दर्पपरिकल्पिताः ॥ इति ॥

## जयमङ्गलाक्रोडपत्रम्

मन्त्रिपरिषदि कृतायां तदानीन्तन्यां मन्त्रणायां स्वस्य अन्यथासिद्धत्वभिया सञ्जातत्रासेनेति निष्कर्षः। नृपं पृथगवस्थाप्य कृते मन्त्रणे दोषं प्रदर्शयितुमाह मर्दिति। (पृ० २२२)

अवरोधश्च द्विविधो भवितुमर्हति। तत्राद्यमाह पृथगिति। द्वितीयमाह सहेति।

कापटिकस्योपजापकत्वम्

**कापटिक** इति। (पृ० २२२) अयं कर्तव्यायां परीक्षायामुपजापको भवतीति नीतिवाक्यामृते उक्तम्[1] "कपट इवाचरति" इति। वक्ष्यति चाग्रिमाऽध्याये—कपटेन चरतीति।

उपलक्षणञ्चैतत्—अन्येषामपि भेदसाधकानां। तद्भेदश्च नीतिसारे उपायविकल्पप्रकरणे द्रष्टव्यः।

न च कापटिकद्वारा क्रियमाणस्य भेदौपायस्य धर्मशास्त्रीयनिबन्धानादृतत्वमितिवाच्यम् मेधातिथिना मनुभाष्ये तद्वर्णनात्। उद्धृतञ्चैतत् नवमे अध्याये प्राक्। (प्र० खं० २।१४७)

कापटिकपदार्थः

ननु कापटिकस्य किं स्वरूपमिति चेत् प्रगल्भश्छात्रः। तदुक्तम्—नीतिवाक्यामृते—"परमर्मज्ञः प्रगल्भश्छात्रः कापटिक" इति, जयमङ्गलायां नीतिसारे—"अध्यापकश्छात्रवृत्त्या स्थितः तस्य कापटिक इत्यपरं नाम" इति च।

कापटिकादन्येषां अग्रहणम्

ननु उदास्थितादयः वक्ष्यमाणाः अमात्यभेदने कुतो न नियोक्तव्याः? इति चेन्न। उदास्थितो हि मठाधीशः विद्यालयाध्यक्षो वा, गृहपतिश्च कर्षको भवति। इमौ स्वकर्मणा आश्रितान् पोषयतः। प्रकृते एतत्कर्माप्रसक्त्या कापटिकस्यैव ग्रहणम्।

न च मूलोक्तदिशा मिथ्याप्रयोगमनुष्ठातुं राजा कापटिकं प्रयोजयेत् इत्यसङ्गतमिति वाच्यम्, 'सर्वत एव आत्मानं गोपायेत्' इत्यभिधानात् 'शरीरमनुपालयेत्' इति नी० सारे ७ सर्गे) विधानाच्च। इतः परं छात्र इति पाठान्तरम् नीतिनिर्णीतौ सङ्गृहीतत्वात्। न च गुरुणा विद्यार्थी न तर्हि सङ्ग्राह्यः तस्य आशङ्कनीयत्वादितिवाच्यम् अग्रिमाध्याये उत्तरस्य दास्यमानत्वात्। कापटिकस्य काराप्रवेशे हेतुमाह दूतादीति। अयं श्रमणादितुल्यो बोध्यः। एवञ्च तस्य मिथ्याभाषणेऽपि न क्षतिः। वक्ष्यति २ अधिकरणे "वानप्रस्थादन्य इति।

---

१ "कापटिकोदास्थितगृहपतिकवैदेहकतापसकितवत्रिरात्राक्षशालिकयमपट्टिकाहितुण्डिकशौण्डिकसौनिकपाटच्चरविदूषकपीठमर्दकनटनर्तकगायकवादकवाग्जीवक··भिषक् इन्द्रजालिकनैमित्तिकसूदाऽरालिकसंवाहकतीक्ष्णक्रूररसदजडमूकबधिरान्धच्छद्मानः - स्थायियायिभेदेन अपसर्पवर्गः।" इति। (नी० वा० चरसमुद्देश प्रकरणेऽपि)

## जयमङ्गलाक्रोडपत्रम्

ननु अवरुद्धः दूतादिव्यपदिष्टः कापटिकः अमात्यान् कथं सान्त्वयेत्। इति-चेत् "धर्महानिः कथमपि न सोढव्या" इत्यादिना[1]।

भेदनप्रकारः

अदुष्टेति। (पृ० २२२) "अयममात्यः साधुः धर्माधर्मावपि कथमनुष्ठेयौ इति विवेचयितुमप्यसमर्थः यतः राज्ञो बिभेति[2]। "एवंविधमृजुस्वभावमपि राजा रुणद्धि" इत्येवंरीत्या छात्रो बोधयेदेकैकम्। एकैकस्य भेदने फलं किं भवति इति भारते व्यक्तमनुसन्धेयम्[3]—

प्रतिपादयामइति। (पृ० २२२) एतेन सङ्घटनप्रकारः यः को वा संभाव्यते स सर्वोऽप्यनुष्ठेयः इति बाध्यम्। भेदनेपि यदि प्रत्याख्याति तर्हि स शुद्धः। प्रत्याख्यानं कुत इत्याह यद्येवमिति। (पृ० २२२) अत्रायं भावः-छात्रस्य उक्तिमात्रेण राजद्रोहे अमात्यो न प्रवर्तेत अन्यथा निरपराधराजद्रोहप्रयुक्तपातकात् नरकमापद्येत।

---

१ आचारेन्दौ—महर्षिर्भगवान् व्यासः कृत्वेमां संहितां पुरा।
श्लोकैश्चतुर्भिर्धर्मात्मा पुत्रमध्यापयच्छुकम्॥
माता पुत्रसहस्राणि पुत्रदारशतानिच।
संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे॥
हर्षस्थानसहस्राणि भयस्थानशतानि च।
दिवसे दिवसे मूढमाविशन्ति न पाण्डितम्॥
ऊर्ध्वबाहुर्विरौम्येष न च कश्चित् शृणोति मे।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते॥
न च कामात् भयात्क्रोधाल् लोभाद्वा धर्ममुत्सृजेत्॥
न जातु कामान् न भयान्न लोभात्।
धर्मं जह्याज् जीवितस्यापि हेतोः॥
धर्मो नित्यः सुखदुःखे त्वनित्ये।
जीवो नित्यः हेतुरस्य त्वनित्यः। इति।

२ तदुक्तम्—विदुरनितौ अ० १
दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान्।
मत्तः प्रमत्तः उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः॥
त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश।
तस्मादेतेषु सर्वेषु न प्रसज्जेत पण्डितः॥ १०७॥ इति।

३ तद्यथा कालकवृक्षीयोपाख्याने—( शा० प० ८२ अ० श्लो० ५९, ६० )
अदर्शयन्निमं दोषं एकैकं दुर्बलीकुरु।
ततः कारणमाज्ञाय पुरुषं पुरुषं जहि॥
एकदोषा हि बहवो मृद्नीयुरपि कण्टकान्।
मन्त्रभेदभयाद् राजन् तस्मादेतद्ब्रवीमि ते॥

## जयमङ्गलाक्रोडपत्रम्

अतः स वस्तुतत्वं चिन्तयेत् इति । तद्भेदनमाह अपीति । किमिति । (पृ० २२२) इदं हि छात्रकथनं सत् अथवा अपरागप्रयुक्तं इति सञ्चिन्तयेत् । (पृ० २२२) वचनतात्पर्यं कथं लक्षयेदित्युक्तं नीतिसारे मण्डलचरितै । तत्रैव द्रष्टव्यम्[1] ।

राजद्रोहासंभावना

तदेवाह अथवेति । (पृ० २२२) स्वकर्तव्यमाह सर्वथेति । (पृ० २२२) यद्यपि निरपराधावरुद्धच्छात्रवचनात् राजा परोक्षतः प्रतिकर्तुं शक्यः स्यात् ।

तथापि—ब्रह्मद्रुहाञ्च ये लोका गुरुपुत्रद्रुहाञ्च ये ।
पतिद्रुहाञ्च ये स्त्रीणां ते समस्ता नृपद्रुहाम् ॥

इत्युक्तदिशा राजद्रोहप्रयुक्तं दुरपनेयं नारकीयं दुःखं भविष्यति इत्याकारिका अनर्थसंभावनात्मिका भीः यस्य वर्तते सः राज्ञे न द्रुह्येत् इति भावः । भयस्वरूपञ्च भावप्रकाशने प्रस्फुटितम्[2] तत्रैव द्रष्टव्यम् ।

यद्यपि टिप्पण्युक्तभयस्यावसरः अपराधात् प्राङ्नाऽस्ति अमात्यानां, तथापि भयस्य स्वरूपं बोधयितुमिदमुक्तं वेदितव्यम् ।

---

१ प्रायोगिकं मात्सरिकं माध्यस्थं पाक्षपतिकम् ।
सोपन्यासं च जानीयाद् वचः सानुशयं तथा ॥ ८।८३ ॥

(टी०) तेषां मित्राणां वचः वाक्यतात्पर्यं लक्षयेत्, यदाह प्रायोगिकमित्यादि । तत्र परप्रयुक्तस्य प्रायोगिकम् । परस्य सम्पदसहिष्णोर्मात्सरिकम् । उभयपक्षावनाश्रितस्य माध्यस्थम् । एकपक्षमाश्रितस्य पाक्षपातिकम् । अर्थलिप्सोः सोपन्यासम् । प्रत्ययचिकीर्षोश्च सानुशयमिति । ८३ । इति

२ तद्यथा—२ अधिकारे—

भयं चितस्य चलनं तच्च प्राहुरनेकधा ।
स्वरूपमेवमाचार्यैः स्थायिनां कथितं पुरा ।
बिभेति भापयत्यन्यान्त्रासादि भयमुच्यते ॥

भयस्यालम्बनानि यथा—

महारण्यप्रविष्टाश्च महासङ्ग्रामचरिणः ।
भयानकालंबनाः स्युः गुरुराजापराधिनः ॥

भयस्य व्यभिचारिभावा यथा—

शङ्कानिर्वेदचिन्ताश्च जाड्यं ग्लानिश्च दीनता ।
आवेगो मद उन्मादो विषादो व्याधिरेव च ॥
चिन्ता मोहोऽपस्मृतिश्च त्रासश्चालस्यमेव च ।
मध्ये मध्ये स्तंभकम्पौ रोमाञ्चः स्वेदवेपथू ॥
वैवर्ण्यमरणत्रास गद्गदाद्या भयानके ।—

[ एवं परीक्षितानां तत्तद्योग्यतानुगुणकार्यविशेषेषु नियोजनम् ]

तत्र धर्मोपधाशुद्धान् धर्मस्थीयकण्टकशोधनेषु स्थापयेत् । अर्थोपधाशुद्धान् समाहर्तृसन्निधातृनिचयकर्मसु । कामोपधाशुद्धान् [1]बाह्या-[2]भ्यन्तरविहाररक्षासु[3] । भयोपधाशुद्धानासन्नकार्येषु[4] राज्ञः । सर्वोपधाशुद्धान् मन्त्रिणः कुर्यात् । सर्वत्राशुचीन् खनिद्रव्यहस्तिवनकर्मान्तेषूपयोजयेत् ।

---

### श्रीमूला

उपधाशुद्धानां यथायथं विनियोगस्थानान्याह तत्रेत्यादि । तत्र उपधाचतुष्टयशोधितेषु मध्ये । धर्मस्थीयकण्टकशोधनेषु धर्मस्थानुबन्धिषु कर्मसु कण्टकशोधनेषु च वक्ष्यमाणेषु । स्थापयेत् नियुञ्जीत । समाहर्तृसन्निधातृनिचयकर्मसु समाहर्तृकर्मसु धनोत्थापनादिलक्षणेषु, सन्निधातृनिचयकर्मसु च धनरक्षणलक्षणेषु । बाह्याभ्यन्तरविहाररक्षासु बाह्याभ्यन्तरा ये विहाराः कामक्रीडाः अर्थाद् विहारसाधनभूता नृपस्त्रियः तद्रक्षणकर्मसु । तत्र बाह्या भोगिन्यः, आभ्यन्तर्यस्तु देव्य इति ज्ञेयम् । आसन्नकार्येषु शरीररक्षणादिकमर्सु । सर्वेति । सर्वोपधाशुद्धान् चतसृष्वप्युपधासु दृष्टशौचान् । सर्वत्रेति । सर्वासु उपधासु, अशुचीन्, खनिद्रव्यहस्तिवनकर्मान्तेषु खनिः सुवर्णरजताद्युत्पत्तिस्थानं, द्रव्यवनं दारुयोग्यवृक्षप्रायं वनं, हस्तिवनं गजोत्पत्तिवनम्, एतत्सम्बन्धिषु कर्मान्तेषु व्यापारस्थानेषु । उपयोजयेत् अर्थात् कायायासकर्मणि ।

---

भयस्य विभावाः—भयानको भयस्थायी स्वभावकृतकात्मकः ।
विकृतैश्च रवैः सत्वै विकृताकारदर्शनैः ।
शून्यारण्यादिगमनः सङ्ग्रामादिप्रवेशनैः ।
गुरुराजापराधैश्च विभावैरेव मादिभिः ॥

अनुभावा यथा—दिङ्मोहः कान्दिशीकत्वं सहायान्वेषणं मुहुः ।
पार्श्वयोर्वीक्षणं पाणि पादयोरपि कम्पनम् ।
दशाङ्गुलीनामभययाचनं दन्तदर्शनम् ।
एतैर्भयानकस्तज्ज्ञैः कथितस्त्वाङ्गिकात्मना ॥
ऊरुस्तम्भश्च हृत्कम्पः स्वेदो दृक्चलतारका ।
शुष्कौष्ठताऽऽस्यशोषश्च गद्गदत्वं विवर्णता ॥
विषयस्यापरिच्छित्तिरुक्तानुक्तानभिज्ञता ।
एतैर्भयानकः स्वाभाविको मानस उच्यते ॥ इति ।

नी० टि० १. बाह्येति—उद्यानादि ।
,, २. आभ्यन्तरेति । अन्तःपुरादि—
,, ३. रक्षासु इति—······पालनेषु ।
,, ४. आसन्नेति—आसन्नेषु च कार्येष । निर्भयत्वात् । जनपदोत्पन्नान्······।

## वैदिकसिद्धान्तसंरक्षिणी

उपधापरिक्षाफलमाह तत्रेति। चतुर्षु उपधाशुद्धेषु। धर्मस्थीयेति। व्यवहारादौ कण्टकशोधने च कौटिल्येन वक्ष्यमाणे। धर्मप्रधानेषु इतियावत्। स्थापयेत् नियोजयेत्। अर्थोपधाशुद्धानां विनियोगमाह अर्थो इति। समाहर्त्रिति समाहर्तृसान्निधात्रोः कर्म अर्थप्राप्तिः अर्थसंरक्षणात्मकं च अध्यक्षप्रचारे वक्ष्यमाणं वेदितव्यम्। तथा च अर्थ प्रधानेषु कर्मसु तेषां नियोगः। कामोपधाशुद्धिफलमाह कामो इति। "बाह्यं उद्यानादि। आभ्यन्तरं अन्तःपुरादि" इति टिप्पण्याम् व्याख्यातम् तत्र उद्यानादौ विहारः बाह्याभिः वारविलासिनीभिः सह। आभ्यन्तरविहारः राज्ञीभिः सह इति विवेकः। रक्षासु पालनकर्मसु। अत्र सर्वत्रऽपि निमित्ते सप्तमी बोध्या। भयोपधाशुद्धानां विनियोगमाह आसन्नेति आसन्नेषु च कार्येषु निर्भयत्वात्। मन्त्रिणः वरणयोग्यतामाह सर्वेति। अयं हि सन्ध्यादीनामालोचकः स्वल्पमपि दूषयेत् तर्हि अन्धस्य गर्तेपात इव राज्ञः पातः स्यात्। अतः तस्माद्रक्षणाय चतुष्टयोपधाशुद्धत्वं मन्त्रिणः आवश्यकम्। मन्त्रिणःव्यसने राज्ञो नाशस्य नियतत्वमुक्तम् नीतिसारे।

'अमात्यैर्व्यसनोपेतैर्ह्रियमाणो हि भूपतिः।
अशक्त एवोत्पतितुं छिन्नपक्ष इवाण्डजः॥ २५॥ इति।

## जयमङ्गला

परिशुद्धानां नियोगमाह-तत्रेति। धर्मादिशुद्धेषु ये[1] धर्मोपधाशुद्धास्तान् धर्मस्थीयकण्टकशोधनेषु धर्मप्रधानेषु स्थापयेत्। अर्थोपधाशुद्धान् समाहर्त्रादिकर्मस्वर्थप्रधानेषु। कामोपधाशुद्धान् बाह्याभ्यन्तरविहाररक्षासु।

विहरन्त्यस्मिन्निति विहारः। तत्र बाह्यो विहार उपवनं बाह्यस्त्रीणां राजोपभोग्यानां वारविलासिनीनाम्। आभ्यन्तरो विहारो राज्ञीनाम्। तद्रक्षासु स्थापयेत्। भयोपधाशुद्धानात्मासन्नकार्येषु। सर्वोपधाशुधान् मन्त्रिणः कुर्यात्। सर्वनर्मणां तदायत्तत्वात्। मन्त्रिपरिषदत्रैवान्तर्भूता। सर्वत्राशुचीन् धर्मादिष्वशुद्धान् खनिद्रव्यहस्तिवनकर्मान्तेषु उपयोजयेत्। नाधिकृता[2] किन्तूपयोजयेदन्यैरधिकृतैः सह कारयेत्।

## जयमङ्गलाक्रोडपत्रम्

**स्थापयेदिति**। (पृ० २३१) अत्राऽयं प्रघट्टकार्थः। ये धार्मिकाः देशे कण्टकभूता भवन्ति तेषान्निरासः धर्मोपधाशुद्धधार्मिकद्वारा कर्तव्यः। यतः धर्मोपधाशुद्धे राजद्रोह प्रयुक्तनरकभाक्त्वभयोत्पत्तिः धर्मे बद्धश्रद्धत्वाद् भवति। अतएवाह—धर्मस्थीयेति एवं च कण्टकशोधनेषु स्थितः धर्मं निमित्तीकृत्य कृतपापकर्मणः निघ्नन्नपि न

---

अशुद्धम्

१ धर्मादिशुद्धेषु (ये) धर्मो

२ नाविकाकृतान्

## जयमङ्गलाक्रोडपत्रम्

सङ्क्लिष्टचित्तो भवति तेन राजोपेक्षणस्य कर्तमशक्यत्वात् । तदुक्तं कण्टकशोधन-प्रकरणे—६ सर्गे १, ८, ६ श्लोके द्रष्टव्यम्[1] ।

तदेतत् सर्वं विचार्य धर्मस्थीयकण्टकशोधनेषु धर्मोपधाशुद्धानां विनियोग उक्तः ।

### शुद्धानां विनियोगफलम्

अत्रेदं चिन्त्यम् धर्मोपधापरीक्षा मन्त्रिद्वारा संपादिता अतीव महत्वशालिनी भवति यतः राज्ये स्थितेषु राजानमधिकृत्य यदि द्रोहाभावोऽस्ति तर्हि तदपेक्षया किमन्यदपेक्ष्यते । सर्वापेक्षया अद्रोहो हि महान् धर्मः तं भयादपि न जह्यादिति कामसूत्रतः स्पष्टं भवति[2] । तत्रैव द्रष्टव्यम् ।

---

१ लोके वेदे च कुशलः कुशलैः परिवारितः ।
आदृतश्चिन्तयेद् राज्यं सबाह्याभ्यन्तरं नृपः ॥१॥
धर्माधर्मौ विजानन् हि शासनेऽभिरतः सताम् ।
प्रजा रक्षेन् नृपः साधु हन्याच्च परिपन्थिनः ॥८॥
राज्योपघातं कुर्वीरन् ये पापा राजवल्लभाः ।
एकैकशः संहता वा तान् दूष्यान् परिचक्षते ॥६॥

(टी०) एवमनुगवः परितोषितैश्चानुजीविभिः परिवारितः सबाहयाभ्यन्तरं राष्ट्रं निरूपयेत्, यथा स्वपरैर्नोपहृन्यत इति तदुपघातप्रतिविधानाय सर्गद्वयमुच्यते । तदेवाद्यश्लोकेन दर्शयति । लोके वेदे च कुशल इति । दृष्टव्यवहारो दृष्टशास्त्रश्चेत्यर्थः । स हि पापान्निघ्नन्नपि न सङ्क्लिष्टचित्तो भवति । कुशलैरनुजीविभिः ।

धर्माधर्मौ विजानन्निति । सद्भिः शंसितगर्हितावेतौ विजानन् । शासनेऽभिरतः सतां करणीयमिदं, नेदमित्यस्मिन् वृद्धानुशासनेस्थितः परिपन्थिनश्चोरादिकण्टकान् ।

दूष्या अपि राज्यतोदनात् कण्टका हन्तव्या इत्युपदिशन्नाह राज्योपघात-मित्यादि । राजवल्भाः प्रागेव दोषोत्पत्तेः, दोषोत्पत्तौ तु राज्ञो दूषणार्हा दूष्याः ॥ ६ ॥ इति ।

कामसूत्रे नागरकवृत्तप्रकरणे ।

ग्रामवासी च सजातान्विचक्षणान्कौतूहलिकान्प्रोत्साह्यः, नागरकजनस्य वृतं वर्णयञ्श्रद्धां च जनयंस्तदेवानुकुर्वीत गोष्ठीश्च प्रवर्तयेत् । सङ्गत्या जनमनुरञ्जयेत् कर्मसु च साहाय्येन चानुगृह्णीयाद् उपकारयेच्चेति नागरकवृत्तम् ।

(टी०) ग्रामवासी चेति । सजातान्समानजातीयान् । तत्रापि विचक्षणान्प्राज्ञान्, कौतुहलिकान्कौतुकवतः, प्रोत्साह्य कथमित्याह—वृत्तं वर्णयन्नमुष्मिन्नगरे इत्थं गोत्रपुत्राणां लोकमनोहारि चेष्टितं श्रूयपे, भवतामपि युक्तं वैचक्षण्यानुरूपं जीवित फलं तदनुकर्तुमिति श्रद्धां च जनयन् यात्रामपि तद्दर्शनेन गोष्ठीश्च प्रवर्तयेत् । तै सह सङ्गत्या जनमनुरञ्जयेत् । सङ्गीतमैत्रीभ्यमित्यर्थः । साहाय्येनानुगृहणीयात् ।

### जयमङ्गलाक्रोडपत्रम्

तस्य फलं शुद्धामात्यं प्रति राज्ञो विश्वासः ।

शासने धर्मप्रधानैः कर्तव्ये उग्रता हेतुः

धर्मप्रधाना हि वीराः उत्साहस्थायिभाववन्तः पुरोहितवचनमादृत्य धर्मद्रोग्धृत्वेन भासमानं राजानं प्रशासितुं वाञ्छन्ति तत्र हेतुः वीरेऽव्यभिचारिभावेषु अन्यतमा उग्रता बोध्या[1] ।

धर्मोपधाफलम्

यदि भेद्यस्य धर्मप्रधानस्य राजद्रोहप्रयुक्तं नरकभयं न भवेत्तर्हि उग्रतायाः अभ्युदये सः अवश्यं पुरोहिततादिद्वारा राजानं निहन्त्येव[2] ।

इति ज्ञात्वा बहुजनसंत्रासिमित्राय राज्ञे ये द्रुह्यन्ति तथाविधेषु अपराधिषु दण्डस्य प्रवर्तनाय धर्मप्रधानानामुग्राणां वीराणां धर्मोपधाशुद्धानां कण्टकशोधने नियुक्तिः विहिता ।

अर्थोपधाफलं मदगर्वचपलेभ्यः आत्मरक्षणञ्च

**समाहर्त्रादीति** । (पृ० २३१) अर्थप्रधाना रौद्राः क्रोधस्थायिभाववन्तो भवन्ति । एते मदगर्वचपलताद्यन्यतमवत्वात् अर्थापहरणे प्रवृत्ता यत्किञ्चिदर्थाहरणनिमित्त दर्शनमात्रेणापि राज्ञे द्रोग्धुं प्रवर्तेरन् तथाविधप्रवृत्तिनिरासाय अर्थोपधाशुद्ध्या

---

यात्रोत्सवादिषु प्रवर्तमानमुपचारयंश्च परस्परमुपचरेत् । ४९ । तत्र चैषां काव्यसमस्याः कलासमस्याश्चेत्युक्तम् । तत्र विशेषमाह—भवन्ति चात्र श्लोकाः—

नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया
कथां गोष्ठीषु कथयंल्लोके बहुमतो भवेत् ॥ ५० ॥

नात्यन्तमिति । कश्चिदेव संस्कृतं वेत्ति देशभाषां च । कथां काव्यकलाविषयां चर्चाम् ।

या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्पिणी ।
परहिंसाऽऽत्मिका या च न तामवतरेद्बुधः ॥ ५१ ॥

या गोष्ठीति । यदा स्वयं गोष्ठीं न प्रवर्तयेत्तदाऽन्यप्रवर्तितां यायात् । तत्रापि या लोकविद्विष्टा लोकस्यासंमता स्वैरविसर्पिणी स्वातन्त्र्येण प्रवृत्ता निरङ्कुशेत्यर्थः । परहिंसात्मिका परदूषणपरा न तत्रावतरेद् बुधः । तत्र ह्यवतरणमबुधस्य दृश्यते । इति ।

१ हास्येऽमी वीरगा भावा आवेगो हर्ष एव च ।
गर्वासूयोग्रतास्तर्को धृतिर्बोधः स्मृतिर्मतिः ॥
मदः स्वेदश्च रोमाञ्चो दृश्यन्ते ते क्वचित्क्वचित् ।
आवेगो जडतोन्मादो वितर्को मोह एव च ॥

२ पुत्रमित्रकलत्रादिद्रोहादेवोग्रता भवेत् ।
तत्रानुभावोऽतिक्रूरवधबन्धन ताडनैः ॥ इति ।

## जयमङ्गलाक्रोडपत्रम्

परीक्षितानां नियोजनं सन्निधातृसमाहर्त्रादिस्थाने विहितम्। रौद्ररसे मदगर्वादीनां साहचर्यं भावप्रकाशने व्यक्तम्। तत्रैव द्रष्टव्यम्[1]।

कामोपधाशुद्ध्याऽवहित्थाभावादात्मनो रक्षणम्

**तद्रक्षास्विति**। (पृ० २३१) कामप्राधान्ये रतिभावकः शृङ्गाररसो भवति तद्व्यभिचारिभावेषु अवहित्था उक्ता वर्तते[2]।
सत्याञ्चावहित्थायां प्रतारणाऽपि नियतैव[3]।

शृङ्गारिणः मनुष्यस्य अवहित्थाकाले प्रतारणाबलेन असत्यभाषणमवश्यं संभाव्यते। अतः भेद्यस्य सत्यासत्यत्वविवेचनाय कामोपधाशुद्ध्या परीक्षिताः शृङ्गारिणो नटविटादयः बाह्याभ्यन्तररक्षायां नियुक्ताः वेदितव्याः।

**विलासिनीनामिति**। (पृ० २३१) राज्ञीनां बहिरवस्थानाभावाद् वारविलासिनीग्रहणम्। ननु विहारार्थं प्रवृत्ताः वेश्याः किं राज्ञा संरक्षणीयाः? इति चेत् संरक्षणीया एव तासामपि कुलीनतया शास्त्रेषु शङ्खचूडादिसंज्ञया व्यवहृतत्वात्।

भयोपधाशुद्ध्या मदभावादात्मरक्षणम्

**आसन्नेति**। (पृ० २३१) अत्रायं भावः भयस्थायिभावस्य व्यभिचारिभावे मदोऽपि सङ्गृहीतो वर्तते। तद्व्यक्तं द्वितीयाधिकारे भावप्रकाशने[4]।
'मदश्च उत्तमस्त्रीपरिष्वङ्गमद्योपयोगादिभिः सञ्जायमाने मोहे आनन्दः' इति व्याख्यातं शास्त्रज्ञैः।

अतः मदोऽपि विश्रान्तिस्थानं भवति। तन्निरसनाय भयोपधाशुद्धानामासन्नकार्येषु नियुक्तिः। तेन मदो निरस्यति। एवं च धर्मस्थीयादितत्तत्कार्येषु विनियुक्तानामुपधाशुद्धानां शृङ्गाररौद्रवीरभयभाववतां अवहित्थोग्रतागर्वमदानां परिज्ञानाय चतुर्विधरीत्या उपधाशुद्धेः पृथक्-पृथक् उपयोगित्वस्य सिद्धत्वात्

---

१ हर्षावेगोग्रतोन्मादा मदगर्वौ च चापलम्।
ईर्ष्याऽसूया श्रमोऽमर्षावहित्थाऽपत्रपा अपि॥
निश्वासस्तम्भरोमाञ्चस्वेदा रौद्रे रसे हिताः॥

२ मदः श्रमोऽवहित्थं च हर्षो गर्वः स्मृतिर्धृतिः
असूयाग्लानिशङ्काश्च वितर्कोऽपत्रपाऽपि च।
रोमाञ्च वेपथुस्वेदाः शृङ्गारे भोगनामनि।

३ अवहित्थं भयव्रीडाधाष्टर्यकौटिल्यसंभवम्।
शून्यस्मितं कथाभङ्गो मिथ्याधैर्यं तदीक्षणम्।
अन्तर्व्यथा बहिर्गर्व भावनेत्यवहित्थजाः॥ इति

४ शङ्का निर्वेदचिन्ताश्च जाड्यं ग्लानिश्च दीनता।
आवेगो मद उन्मादो विषादो व्याधिरेव च।
चिन्ता मोहोऽपस्मृतिश्च त्रासश्चालस्यमेवच।—

## जयमङ्गलाक्रोडपत्रम्

नैकस्या उत्तरया वैयर्थ्यं बोध्यम् । वक्ष्यति च 'यस्य यत्र शौचं तं तत्राधिकुर्यादि''त्यादिग्रन्थेन । (पृ० २४१)

**'मन्त्रिण'** इति । (पृ० २३१) मन्त्रिपदे नियुक्तिस्तु तदैव भवति, यदा सः चतुर्विधरीत्या उपधाशुद्धो भवति । तत एव तस्य विश्वास्यत्वं भवतीति भावः ।

**तदायत्तत्वादिति** । (पृ० २३१) चतुर्विधोपधाशुद्धेषु मन्त्रिष्वेव राष्ट्रादौ समुद्भूतव्यसनप्रतीकारसामर्थ्यात् सर्वदा तेष्वेव विश्वास्यत्वाच्चेति भावः ।

परिषदः शमप्राधान्ये राज्ये सुखम्

**मन्त्रिपरिषदिति** । (पृ० २३१) तथाविधानामुपधाशुद्धानां मन्त्रिणां समूहः इत्यर्थः । एतेन शृङ्गाररौद्रभयोत्साहस्थायिभावेषु अवहित्थोग्रतामदचपलतानां व्यावृत्तिर्भवति । अत एव मन्त्रिपदे शान्तरसस्थायिभावे शमे यः स्थितः स्यात्, स एव मन्त्री कार्यः, अत्रैव अवहित्थादिदोषाणामप्रसक्तेः एतेषामसाहचर्यस्य तत्र तत्रोक्तेः । शमः, विना विषयमात्रे बीभत्सं न संभवति तत्र आत्मजगतोः सत्यत्वानित्यत्वयोः निर्णयः हेतुत्वेनापेक्ष्यते तथा एतत्सहकारितया मिथ्याज्ञानप्रयुक्तः विषयाभिनिवेशो यथा न भवेत् तथा चित्तशुद्धिरपि स्पृहणीया भवति । तदेतत् कारणद्वयं साधितुं श्रद्धागुरुभक्तिपूर्वकं वेदानुसरणं एकमेव समर्थम् । अतः सन्देहापनोदनाय शान्तरसप्रधानानां वेदानुयायिनां परिषत् मन्वादिभिः पुरस्कृता उपपन्ना भवति । तदुक्तम्—

> धर्मेणाधिगतोयैस्तु वेदः सपरिबृंहणः ।
> ते शिष्टा[१] ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥१०९॥ (१२ अ० मनु० स्मृ०)
> दशावरा वा परिषद्यं धर्मं परिकल्पयेत् ।
> त्र्यवरा वापि वृत्तस्था तं धर्मं न विचालयेत् । ११० ।
> त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः ।
> त्रयश्चाश्रमिणश्च पूर्वे परिषत् स्याद् दशावरा ॥ १११ ॥
> ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च ।
> त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये । ११२ । इति ।

---

मध्ये मध्ये स्तम्भकम्पौ रोमाञ्चः स्वेदवेपथू ॥
वैवर्ण्यमरणत्रासगद्गदाद्या भयानके । इति ।

१ शिष्टलक्षणमनेन कथ्यते । ननु चार्थकामेष्वसक्तानामित्यत्रोक्तानामेव शिष्टलक्षणादन्योऽपि तस्य तत्रार्थ आशङ्कितोऽतो न तस्य लक्षणपरतैव । यच्च विशिष्टेनोक्तं 'शिष्टः पुनरकामात्मा' इति तत्र विद्वत्तया श्रुतत्वात् । यत्र परिपूर्णत्वादधिगतोऽर्थतश्च विदितः । परिबृंहणानि—तथा च भगवान्व्यासः ।

इतिहास पुराणाभ्यां वेदार्थमुपबृंहयेत् । इति ।

स्मृतयोऽप्येवं गृहीतार्था भवन्ति । ब्राह्मणग्रहणमनुवादस्तेषामपि धर्मप्रवचना—

## जयमङ्गलाक्रोडपत्रम्

याज्ञवल्क्योपि

चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥ इति ।
(या० स्मृ० अ० १ श्लो० ६)

शमप्रधानानां राज्ये मन्त्रिपरिषत्त्वं इतिहासतोपि क्लृप्तम् । तत् टिप्पण्यां द्रष्टव्यम्[१] ।

धिकारात् । श्रुतिप्रत्यक्षहेतवः—प्रत्यक्षं हेतवश्च प्रत्यक्षहेतवः । हेतुशब्देन प्रत्यक्षादन्याभिधानमुच्यते । श्रुतः प्रत्यक्षो हेतुश्च तेषां श्रुतिप्रत्यक्षहेतवः एतदुक्तं भवति । प्रमाणानि यथा प्रत्यक्षं निर्विवादं प्रामाण्यमेव तादृशीं श्रुतिं मन्यन्ते । यान्यपि हेतूत्थानि तेषु विश्वसन्ति श्रुतिमेव तर्कं मन्यन्ते, हेतुशास्त्राश्रयणेन चेदं न प्रमाणीकुर्वन्ति । अथवा श्रुतेः प्रत्यक्षश्रुतेः प्रत्यक्षशब्दः श्रौते प्रत्यये प्रत्यक्षतुल्यत्वात्प्रयुक्तः । स च हेतुर्धर्माधर्मपरिज्ञाने कारणं येषां त एवमुच्यन्ते ॥ १०६ ॥

दशावरे यस्या दशावराः यदि बहवो न संनिधीयन्ते दशावश्यं संनिधातव्यास्तदभावे त्र्यवराः । वृत्तस्थेति । यदुक्तं अर्थकामेष्वसक्तानाम् इति तस्यैवायमनुवादः । न चैषां पुरुषसङ्ख्याऽपि तु गुणसङ्ख्या । तथा च वक्ष्यति "कोऽपि वेदवित्" इति । एकस्य यतो गुणसमूहस्य बाहुल्येनासंभवात् पुरुषप्रधानतया सङ्ख्याया निर्देशः कृतः ॥ ११० ॥

तानीदानीं परिषत्त्वहेतुर्गुणान् दर्शयति ।

पुरुषप्रधानेऽपि निर्देशे गुणपरतैव विज्ञेया । पूर्वोक्ताच्चेतो विषाणीवरुद्धान् प्रतिबालधिः साप्रावानतिगोत्रे लिप्सामिति । यस्त्रैविद्यो वेदत्रयस्याध्येता, तदर्थस्य च वेदिता, अनुमानादिकुशलः, तर्कोऽयमूहापोहबुद्धियुक्तः । ननु च नैवंविदो वेदार्थवित्त्वमेव संभवतीत्युक्तम् । सत्यं । परोपदेशादपि कस्यचिद्याचनावती वेदनमात्रा सभवत्यपि अतश्च प्रत्ययेन विना वेदार्थग्रहणार्थंहेतुकेन भवतीत्युक्तं । एतेन नैरुक्तो व्याख्यातः । धर्मपाठको मन्वादिस्मृतिश्रुतिशास्त्राणामध्येता । त्रयश्चाश्रमिणो ह्येते ह्यनुष्ठानपराः कुशलतरा धर्मेषु भवन्ति । पूर्वो ब्रह्मचारी गृहस्थो भिक्षुरित्येके । तस्य हि ग्रामप्रवेशो नानिषिद्धो गौतमेन चेयं मानुषी पठिता "ब्रह्मचारी गृहस्थो भिक्षुर्वैखानस" इति । अन्येत्वाहुः हिंसानुज्ञातास्तीति । कथमसौ धर्माश्रयात्तस्मात्तापससकाशमन्यैः सह गन्तव्यम् ॥ १११ ॥

निरुक्तव्याकरणमीमांसाभिर्वेदार्थो ज्ञायते । ते च सर्वे साधारणाः । न हि तत्रैकस्य वेदस्यार्थो ज्ञायतेऽन्यस्य नित्यमयं प्रकारोऽस्ति । अथ ऋग्वेदादीत्यादि कथं भेदोपपत्तिः । तथा तत्र गृह्यसूत्रमिति ॥ ११२ ॥

१ इन्द्रस्याङ्गिरसो नरस्य सुमतिः शैब्यस्य मेधातिथिः ।
धौम्यो धर्मसुतस्य वैन्यनृपतेः स्वौजा निमेर्गौतमिः ॥
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो ।
यद्वत्तस्य विभोरभूत् कुलगुरुः मन्त्री तथा माधवः । इति । (न्यायमाला अ० १)

## जयमङ्गलाक्रोडपत्रम्

### शमप्राधान्ये सर्वं सुस्थम्

अपि च शमप्रधानानां मन्त्रिणां निर्व्यसनित्वात् तन्माधुर्येण राष्ट्र तदायत्तं भवति तेन तत्र शुद्धिर्निर्व्यसनित्वं च भवतः। इत्थञ्च धर्मप्रधानतायां प्रमादाभावात् स्वकार्यकरणकुशलता, विश्वास्यत्वात् एकात्मता च जानपदेषु प्रसरति इति शमप्रधाने सर्वोपधाशुद्धे मन्त्रिमण्डले सर्वं सुस्थम्। उक्तं चैतत् "मन्त्रो मन्त्रफलावाप्तिरि"ति कामन्दकीयपद्योद्धरणे[1]। (का० नो० १४–२३)।

**सर्वत्रेति**। (पृ० २३१) रसाभासेन प्रवृत्ताः सत्यवसरे अशुचय एव भवन्ति इति प्रदर्शयति धर्मादिष्विति।

### अधिकृतानिति पाठसमीक्षा

**अधोति**। (पृ० २३१) नाविकानिति पाठः अप्राकरणिकत्वादसङ्गतः। नाधिकृतानिति पाठे तु अधिकृतान् न कुर्यात् किंत्वन्यैः सह अधिकृतानित्यर्थः। तदेवाह किन्त्विति।

**उपयोजयेदिति**। (पृ० २३१) खन्यादिषु अधिकृतैः सह स्थितानामशुचीनाम् नाशेपि नानुपपत्तिः न वा तैः सह संसर्गात् नागरिकेषु भेदप्रसक्तिः। इति खन्यादिषु अशुचिनियोगप्रयोजनं बोध्यम्।

### राज्ञः दूषणेऽलक्ष्यत्वम्

**आत्मानमिति**। (पृ० २३१) अत्रेदं तत्वं-यदि राजानमधिष्ठाय उपधाभिः अमात्याः परीक्ष्यन्ते तर्हि अशुचित्वात् राजद्रोहे कदाचित् कर्तव्यत्वेन स्वीकृते अनेन परीक्षकेण सत्र्यादिना "निमित्ते उपस्थापिते सति नैमित्तिकमवश्यमनुष्ठेयमि"ति न्यायात् स्ववचनं संवादयितुं राजा वा राज्ञी वा दूषयितव्ये भविष्यतः। एवंस्थिते यदि तद्दूषणमशक्यपरिहारं स्यात्तर्हि स्वार्थहानिरेव प्रसज्येत। अतः अन्य एव कश्चिद् दूषयितव्यः। तथाचाहुः टी० गणपतिशास्त्रिणः—

"अदुष्टोपि यद्युपधावशात् कदाचित् प्रकर्षेषु दुष्टान्तःकरणाभावात् तदानीमशक्यप्रतीकारस्तत्सकाशादनर्थं आपतेत्"। इति। कौ० १।१०। इति।

ननु आपतनाख्यमापादनं कथं सङ्गच्छते राज्ञः सुरक्षितत्वादनर्थेभ्यः। नचोग्रः किं न कुर्यात् उग्रताचपलतयोः रौद्ररसे व्यभिचारित्वादिति वाच्यम् व्यभिचारिभावानां तादात्विककालव्यपगमानन्तरं विलीनत्वात् तत्परिणामभूतस्य वधादेरसं-

---

[1] मन्त्रो मन्त्रफलावाप्तिः कार्यानुष्ठानमायतिः।
आयव्ययौ दण्डनीतिरमित्रप्रतिषेधनम्॥ २३॥ इति।

(ज० मं०) तत्र षट्त्रिंशता श्लोकैः प्रकृतिकर्माह मन्त्र इत्यादि। बहुत्वात् स्वामिकर्म प्रकृतिकर्मणः पश्चाद् वक्ष्यति। मन्त्रः कार्यनिश्चयो मन्त्रयायत्तः। मन्त्रफलावाप्तिः दूरादेवामित्रानुत्सार्य या साध्यस्य फलस्य प्राप्तिर्दूतायत्ता। कार्यानुष्ठानं दुर्गादिकर्मप्रवर्तनमध्यक्षाधीनम्। आयतिः प्रभावोऽमात्यैः क्रियते। आयव्ययौ अक्षपटलिकाधीनौ। दण्डनीतिः वधादीनां दण्डसाध्येषु यथार्हं नयनं धर्मस्थायत्तम। अमित्रप्रतिषेधनं मित्राधीनम्। २३। इति।

[ एतासु परीक्षासु उक्तक्रमेण राज्ञ एव लक्ष्यत्वमित्याचार्यमतनिगमनम् ]

त्रिवर्ग[1]भयसंशुद्धानमात्यान् स्वेषु कर्मसु ।
अधिकुर्याद्यथाशौचमित्याचार्या व्यवस्थिताः[2] ॥१३॥

## जयमङ्गलाक्रोडपत्रम्

### व्यभिचारिभावानां स्थायित्वम्

भवात् इति चेन्न । व्यभिचारित्वेन स्वीकृतानां भावानां स्थायित्वस्यापि संभावितत्वं भवति षण्ढस्योपचारेण स्थायिपुंस्त्वलाभ इव । न च कथं व्यभिचारिणां स्थायित्वं भवति इति शङ्क्यम् तस्यापि स्थायित्वभावात् । तथाहि—विभावानुभावयो र्व्याप्तिवासना सहृदयवासना मध्यवर्ति भाववासना च यद्युद्बुद्धा स्यात् तर्हि तन्महिम्ना व्यभिचारिणः सन्तोपि उग्रतादयः स्थायिनः भवितुमर्हन्ति । भावानां व्यभिचारित्वम् वासनात्रितयान्यतमाभावे संभवति अन्यदा स्थायित्वमपि । तस्मात् उक्तत्रितयवासनानां जागृतौ उग्रतादीनां स्थायित्वसंभवात् तथाविधः राजवधमकृत्वा न निवर्तते संपूर्णायास्तत्सामग्र्याः संभवात् अशुचिद्वारा राजद्रोहस्य निमित्तानुसारेणावश्यकानुष्ठानस्य न संभवानुपपत्तिः ।

किञ्च धर्माधर्मभावनायाः केनापि कारणेन जाते भङ्गोपक्रमे राजद्रोहार्थं धृतिरपि स्थायिनो भवितुमर्हति तदानीं सा दीर्घकालं धृता सती अवश्यं स्वकार्ये सफला साकारा च भवति । तद्व्यक्तं कामसूत्रे "आर्यत्वप्रयुक्तानीत्यादिना" । तत्रैव द्रष्टव्यम् ।

### द्रोहसफलता

अत्रेदं तत्वं-राज्ञः दूरे स्थितस्यापि राजद्रोहस्तदा सफलो भवति यदा अधार्मिकत्वात् अपमाननकर्तृत्वशीलत्वाच्च अयं राजा द्वेष्यः अनार्यश्च इति दृढ निश्चयः उत्पद्यते ।

ननु निरपराधं अपरं निमित्तीकृत्य विषादिप्रयोगेण कृतोपधाप्रवृत्तिः कथमौचित्यमावहेदिति चेन्न । ये हि राज्योपघातं कर्तुं प्रयतमानाः अमात्यादयः दूष्याः भवन्ति तेषां अत्र प्रस्तावेन नात्रानौचित्यम् इति कौटिल्यमततात्पर्यम् । तद्वक्ष्यते टिप्पण्याम्—"बाह्यमधिष्ठानमि"तिव्याख्यायाम्—"राजस्थाने दूष्यामात्यं लक्ष्यं कृत्वा राजमहिषीस्थाने दूष्यपत्नीं च दूष्यार्थादिकं चाधिष्ठानम्" । इति ।

## श्रीमूला

तदिदमाचार्याणां मतमित्यर्थकं श्लोकमाह त्रिवर्गेत्यादि । त्रिवर्गभयसंशुद्धान् त्रिवर्गभयैर्धर्मार्थकामभयोपधाभिर्दृष्टशौचान् । अधिकुर्यात् नियोजयेत् । यथाशौचं तत्तच्छुद्ध्यानुगुण्येन ।

---

नी० टि० १. त्रिवर्गेति—आचार्यमतमुपसंहरन्नाह ।
,, ,, २. व्यवस्थिता इति—न वयमिति वाक्यशेषः ।

[ राजातिरिक्तस्यैव लक्ष्यत्वमिति सयुक्तिकं स्वमतकथनम् ]

**न त्वेव कुर्यादात्मानं देवीं वा [4]लक्ष(क्ष्य)मीश्वरः ।**
**शौचहेतोरमात्यानामेतत्कौटल्यदर्शनम् ।१४।**

## श्रीमूला

उक्तमाचार्यमतम् । स्वमतं तु नैवं, किन्तु अमात्यशुद्धिपरीक्षार्थे स्वात्मानं देवीं च विषयं नैव राजा कुर्यादित्येवंरूपमित्याह नत्वेवेत्यादि ।

## वैदिकसिद्धान्तसंरक्षिणी

स्वमतं प्रदर्शयिष्यन् 'आचार्यमतमुपसंहरन्नाह' त्रिवर्गेति। धर्मार्थकामभयोपधा शुद्धान्। अमात्यान् अमात्यत्वेनाभिमतान्। स्वेषु तत्तदुपधाशुद्धिमनुसृत्य संबद्धेषु। अधिकुर्यात् नियोजयेत्। व्यवस्थिता इति। न "वयमिति वाक्यशेषः" इति टिप्पणी। जयमङ्गलायां तु नास्माभिस्ततोऽपनीयन्ते इति। (पृ० २.९) परीक्षायां लक्ष्यविषये स्वमतं प्रदर्शयति 'न त्विति'। आत्मानं राजानं। देवीं राजमहिषीं। लक्ष्यमिति। राजानं राजमहिषीं वा। निहत्य अन्यं प्रतिपादयामः इत्यादिरूपेणाधिष्ठानम्। निमित्तं उपधावाक्यप्रतिपाद्यकर्म इति यावत्। ईश्वरः लब्धैश्वर्यः स्वामी उक्तरीत्या लक्ष्यत्वेनात्मानं देवीं वा न कुर्यादित्यर्थः। एवञ्च तस्मिन्निमित्ते आत्मानं देवीं वा नृपः लक्ष्यं न कुर्यादित्याह शौचेति। (पृ० २३९)

परमतव्यावृत्त्यर्थमाह नत्वेवेति। आत्मानं राजानम्। लक्ष्यं दूष्यं। न कुर्यादित्यनेनान्वयः।

## जयमङ्गला

अत्र सम्यङ्मतपरिग्रहार्थमाह-त्रिवर्गभयसंशुद्धानिति। त्रिवर्गे भये च सम्यक् शुद्धान् स्वेषु कर्मस्वधिकुर्यात्। यथाशौचमिति। यस्य यत्र शौचं तं तत्राधिकुर्यात्। इत्याचार्या व्यवस्थिताः विशेषेण स्थिताः। नास्माभिस्ततोऽपनीयन्ते ॥

किन्तु न त्वेव कुर्यात् न कथञ्चित् कुर्यात्। आत्मानं देवीं हत्वाऽन्यं प्रतिपादयामः, त्वां कामयत इति। लक्ष्यमधिष्ठानम्। ईश्वरो लब्धैश्वर्यो राजा। शौचहेतोरमात्यानाम्। प्रधान दोषापाये[1]न इतरगुणानामुपायत्वं युक्तमिति !

## जयमङ्गलाक्रोडपत्रम्

लब्धैश्वर्यः इति। (पृ० २३९) नन्वेवंरीत्या राजशब्दव्याख्यानस्य किं प्रयोजनम्? इति चेत् "नागत्वान्तं निवर्तते"ति व्याप्तिप्रदर्शनार्थम्। तथाहि—

राजा मन्त्र्यायत्तसिद्धिक– स्वायत्तसिद्धिक भेदेन द्विविधो भवति। तयोः स्वायत्तसिद्धिको राजा मन्त्रकुशलः परामर्शे समर्थः विद्वान् गुरुस्थानीयो भवति तदुपासका अपि गरुभक्तिवशात् धृतिसंपन्ना भवन्ति। अथ तथाविधा यदि राज्ञःकृतकं सदपि अन्या-

अशुद्धम्
1 प्रधानदोषापाये (न)

न दूषणमदुष्टस्य[1] विषेणेवाम्भसश्चरेत् ।
कदाचिद्धि[2] प्रदुष्टस्य नाधिगम्येत भेषजम् ।१५।
कृता च कलुषा बुद्धिरुपधाभिश्चतुर्विधा ।
नागत्वाऽन्तं निवर्तेत स्थिता सत्ववतां धृतौ ।१६।
तस्मा[3]द्बाह्यमधिष्ठानं[4] कृत्वा कार्ये चतुर्विधे[5] ।
शौचाशौचममात्यानां राजा मार्गेत सत्रिभिः ।१७।

इति विनयाधिकारिके उपधाभिश्शौचाशौचज्ञानममात्यानां दशमोऽध्यायः ।

---

## जयमङ्गलाक्रोडपत्रम्

य्यत्वेन कर्म चारादिपुखाज् ज्ञात्वा राजहनने प्रवृत्ताः तर्हि ते स्वेतरसामग्रीं सङ्कलय्य राजहननं अकृत्वा धृतिवशान् न कथमपि निवर्तन्ते । तथापि मन्त्र्यायत्तसिद्धिकस्थले राजा गुरुर्न भवितु मर्हति तस्य मन्त्र्यायत्तसिद्धिकत्वात् इति गुरुभक्तेः प्रसङ्गः उपासकेषु तत्सेवकेषु अस्त्येवेति नियमेन वक्तुं न शक्यते । अतः स्थायिधृत्यभावात् 'नागत्वान्तं निवर्तेतेति व्याप्तिः न भवितुमर्हति । अतो मन्त्र्यायत्तसिद्धिकं व्यावर्त्य मूलकारोक्ता "नागत्वान्तं निवर्तेत' इति व्याप्तिः लब्धैश्वर्यव्याख्यानेन सुसाधिता ।

प्रधानेति । (पृ० २३९) गुरौ आत्मनि वा अङ्गिनि दोषापाये । इतरगुणानां इतरेषामङ्गानां वा दुष्टत्वं अनुचितमार्गप्रदर्शकत्वरूपं न युक्तमन्यथा स्वस्मात् विश्लेषणं विधाय स्वस्य, अनर्थोऽवश्यंभावी स्यात् । वक्ष्यति चैतन् मूलकारः राजपुत्र रक्षणप्रकरणे (१ अधिकरे १७ अध्याये) ''महादोषमबुद्धबोधनमिति कौटिल्यः'' ।इति ।

## श्रीमूला

कुत आत्मानं देवीं च न लक्षं कुर्यादित्यत्राह न दूषणमिति । अदुष्टस्य स्वभावाद् दोषशून्यस्य अमात्यादेः प्रतीकारसमर्थस्यापि, दूषणम् उपधया वञ्चनम्, अम्भसः विषेण दूषणमिव, न चरेत् न कुर्यात् । सति प्रतीकारसामर्थ्ये दूषणेन को दोष इत्यत्राह कदाचिदित्यादि । अयमर्थः अदुष्टोऽपि यद्युपधावशात् कदाचित् प्रकर्षेण दुष्टान्तकरणो भवेत् तदानीम् अशक्यप्रतीकारस्तत्सकाशादनर्थ आपतेदिति ।

---

नी० टि० १. अदुष्टस्येति —अमात्यहृदयस्य ।
,, २. कदाचिदिति—कुलिकवेलोपयुक्तात् ।
,, ३. तस्मादिति – कौटल्यः स्वमतमाह ।
,, ४. अधिष्ठानमिति – राजस्थाने दूष्यामात्यं लक्ष्यं कृत्वा राजमहिषीस्थाने दूष्यपत्नीं च दूष्यार्थादिकं चाधिष्ठानम् ।
,, ५. चतुर्विध इति—त्रिवर्ग भयशुद्धिपरीक्षालक्षणे ।

## श्रीमूला

उपधादूषिता च धीराणां बुद्धिर्यतमाना स्वाध्यवसितार्थसिद्धिमप्राप्य नैव विरमतीत्याह कृता चेत्यादि ।

कथं तर्ह्यमात्याः शोधनीया इत्याकाङ्क्षायामाह तस्मादिति । तस्माद् राजा, चतुर्विधे चार्थे उपधाप्रयोगे, बाह्यं बहिरङ्गं दूष्यम्, अधिष्ठानं लक्षं कृत्वा, अमात्यानां शौचाशौचं, सत्रिभिः सत्रिद्वारेण, मार्गेत परीक्षेत ॥

इति कौटिलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे दशमोऽध्यायः ।

उपधाभिः शौचाशौचज्ञानममात्यानाम् ।

## वैदिकसिद्धान्तसंरक्षिणी

कुतो न आत्मा नियोक्तव्य इत्याह नेति । अदुष्टस्य अजातपापस्य । "अमात्यहृदयस्थे"ति टिप्पण्याम् ।

दृष्टान्तेन स्फुटीकर्तुमाह विषेणेति । व्यापादयेत् व्याप्नुयात्, निमित्ती नियततां प्राप्नुयादिति यावत् । ननु औषधादिना पुरोहितादिभिरितरैः अदुष्टः अमात्यादिः कथं न शोधयितुं शक्य इतिचेदाह कृतेति । कलुषा पुरोहितादिद्वारा राजानं प्रति अमात्यभेदनाय प्रवर्तिता । बुद्धिः धृतिरूपा दृढनिश्चयः इति यावत् । कलुषोत्पादनकारणमाह उपधाभिरिति । चतुर्धा उपधायाश्चातुर्विध्येन बुद्धेश्चातुर्विध्यम् । तथाविधायाः फलमाह नेति । निवर्तेतेत्यनेनान्वयः । अन्तं विनाशं । अगत्वा अकृत्वा । स्थिता धृत्याभासे स्थिता, इदं करिष्यामीति अभिनिवेशान्तं गता इत्यर्थः। सत्त्ववतां दृढसङ्कल्पवताम् । कौटिल्यः स्वमतमाह तस्मादिति । 'नागत्वान्तन्निवर्तेते'ति दोषपरिहारार्थम् । अधिष्ठानं लक्ष्यम् । टिप्पण्यां तु एवमुक्तम् "राजस्थाने दूष्यामात्यं लक्ष्यं कृत्वा राजमहिषीस्थाने दूष्यपत्नीं च दूष्यार्थादिकञ्चाधिष्ठानम" । इति । निमित्तमिति शेषः । लक्ष्यं नैमित्तिकमाह बाह्यमिति । लक्ष्यभेदे निमित्तमाह कार्यं इति, उपधाभेदेन त्रिवर्गभयशुद्धिपरीक्षालक्षणे चतुर्विधे ।

अमात्यानां बाह्याधिष्ठाने नियुक्तानाम् । राजेति । मन्त्रिपुरोहितसखः इति शेषः उपक्रमे तथोक्तत्वात् । मार्गेत परीक्षेत शौचाशौचमित्यनेनान्वयः । सत्रिभिः चरविशेषैः । एतेनोत्तरप्रकरणार्थजिज्ञासोत्थापनात् तेन सङ्गतिः स्फुटीभवति ।

इत्यर्थशास्त्रव्याख्यायां वेदिकसिद्धान्तसंरक्षिण्यां दशमोऽध्यायः ।

## जयमङ्गला

को दोष इति चेदाह—न[1] दूषणमिति । परीक्षणात् प्रागदुष्टस्य अज्ञातदोषस्य अनेनासता अधर्मेण अम्भस इवादुष्टस्य विषेण दूषणं न युक्तमित्यर्थः । तद्दूषणमधिष्ठाने चरेद्व्याप्नुयादित्यर्थः । पुरोहितादिभिर्दूषयित्वान्यैः नैवं युक्तमिति शोधयेदिति चेदाह—कदाचिद्धि प्रदुष्टस्य नाधिगम्येत भेषजम् । अनैकान्तिकत्वात् प्रतीकारस्य । अथवा

१ अशुद्धम् (न) दूषणम्

## जयमङ्गला

न कदाचिदप्यधिगम्येत भेषजम् । यथाहु :—

पायसेन सकृद्दग्धो बालो दध्यपि शङ्कते ।
भायिताश्वासिता वाऽपि न विश्वसिति कर्हिचित् ।। इति ।।

अयं चापरो दोष इत्याह–कृता चेति । कलुषीकृता बुद्धिरुपधा चातुर्विध्याच्चतुर्विधा । तेन वान्येन वोपायेन अगत्वान्तं राजानमविनाश्य देवीं वा नाधिगम्य न निवर्तेत । सत्ववतामारब्ध कार्यावसायिनाम् । धृतौ अपि च शक्तौ[1] स्थिता सती ।

तस्मादेतद्दोषपरिहारार्थमाहाभिप्रायसिद्धये च–तस्मादिति । बाह्यं लक्ष्यं कृत्वा देवस्थानादिसंस्कारे तद्द्रव्ये वा तद्द्रव्ययोगे वेश्यायोजने तुच्छतरापकार भायने च कार्ये चतुर्विधेऽपि । शौचाशौचं मार्गेत अन्वेषयेत् । न ह्येकत्र शुद्धोऽन्यत्र[2] शुचिः स्वामिनो भीरवश्चेति[3] राजा मन्त्रिपुरोहितसखः एको वा यथायोगं मार्गेत । सत्रिभिरिति । गूढपुरुषोपलक्षणं कापटिकपरिव्राजकयोरपि ग्रहणम् ।

इति शौचाशौचज्ञानममात्यानां सप्तमं प्रकरणम् । दशमश्चाध्यायः ।।

## जयमङ्गलाक्रोडपत्रम्

अज्ञातेति । (पृ० २४१) अजातपापस्य इत्यर्थः । व्याप्नुयादिति । इदं "सत्रिणामेकश्चैन मृगयाद्यूतमद्यस्त्रीभिः प्रलोभयेत् । पितरि विक्रम्य राज्यं गृहाणेति, तमन्यः सत्री प्रतिषेधयेदिति आम्भीयाः" (१ अ० १७ अध्याय) इत्युक्तराज पुत्ररक्षणवदनुसन्धेयम् । यथा पूर्वपक्षिणा स्वमते अभिनिवेशितः शिष्यः गुरोरसान्निध्ये अपरेण उत्तररूपेण प्रतिबोधितोपि प्रथम गुरुवाक्यमुल्लङ्घयितुं न सहते । तथैव प्रकृतेपि अदुष्टहृदयोऽमात्यः आत्मानं राजानं वा निमित्तीकृत्य हनने बोधितः अपरेण प्रतिबोधितोपि पूर्वगुरुशासनात् न निवर्तेत तच्च राजपुत्ररक्षणप्रकरणे आम्भीयमतनिरूपणावसरे प्रतिपादितम् । व्यञ्जितंचैतत् मुक्तावल्याम् अवयविसाधने। वक्ष्यते चैतत् अत्र—'पायसेन सकृद्दग्ध' इति ग्रन्थेन ।

भायिता इति । (पृ० २४२) पूर्वपक्षीयमतस्य सम्यक्परिचयानन्तरं भयादिनापि ततो निवर्तयितुं कृतेपि उद्यमे तं न सः विश्वसिति अविश्वास्यत्वात् । अत्रेदमुदाहरणम् । वृत्रभयेन कम्पितः इन्द्रः वृत्रं हत्वापि पलायनं कृतवानिति इतिहासो बोध्यः ।

एवंविध एव स्थायिभक्तिमतां गुरुशिष्यादीनामाभ्यन्तरवर्ती दृढ़स्थायिभावः अपेक्षितः। यत्र न कथञ्चिदपि विश्लेषणं संभावितं किथञ्चित् सम्भावितमपि पुनः अभेद्यतामापादयितुं शक्यते[4] ।

कृते दूषणे राजहननसामग्र्याः सत्वात् तदुपघातः एतद्द्वारा अवश्यं भवेत् अन्यथा उपधापरीक्षकस्याविश्वास्यत्वं आपद्येतेति दूषाणान्तरं स्फुटीकुर्वन्ना-

---

अशुद्धम् १ शक्ता २ अन्यत्राशुचिः ३ भीरवश्चेति ।

४ मृद्घटवत् सुखभेद्यः दुःसन्धानश्च दुर्जनो भवति ।
सुजनस्तु कनकघटवत् दुर्भेद्यः सुकरसन्धिश्च ।। इति ।

## जयमङ्गलाक्रोडपत्तम्

हायमिति। (पृ० २४२) अभ्युपगमः अमात्येन स्वीकृतराजवधोत्साहः वीररसप्रधान इत्यर्थः। यदीमां स्वीकृतिं दूषणभावमापन्नोऽमात्यः सफलां न विदधाति तर्हि प्रतिज्ञाया अनिर्वहणप्रयुक्तां लज्जामनुभवेत् सत्री इत्याह कलुषीकृतेति।

आरब्धेति। (पृ० २४२) अत्रायं भावः—यदि धृतिमान् सङ्कल्पं दीर्घं विदधाति तर्हि कार्यरूपतया परिणमनं वास्तविकं भवत्येवेति धृतेः विशेषं प्रदर्शयितुमाह अपि चेति। (पृ० २४२)

### शक्तेतिपाठसमीक्षा

शक्तेति। (पृ० २४२) अयमेव पाठः साधुः नीतिलक्षणे शक्तिपदप्रवेशात्। सा च विवेक-श्रुतिसंपत्ति-गुरुभक्तितपस्वितासिद्ध्यर्थं एतच्चतुष्टयं यावज्जीवमहं करिष्ये" इति सङ्कल्परूपा शक्तिनिरूपणे प्राग् विवेचिता (प्र० खं० १ पृ० ५-४१)। बाह्याधिष्ठानभेदे उपधाभेदालंबनमाह—

### उपधानिमित्तम्

देवस्थानेति। (पृ० २४२) अत्रायं भावः—देवमन्दिरे स्थितं स्वामिनं निमित्ती-कृत्य धर्मोपधा, देवद्रव्यं यत्राधिकारे स्थाप्यते तथाविधव्यवहारकुशले मन्दिरस्वामिक शिष्यादौ वा अर्थोपधा, वेश्यायोजने कामोपधा, तुच्छापकारादौ च भयोपधा इति

ननु देवद्रव्यभोगः कथं संभवेत्? इति चेत् अर्थशास्त्रोक्तरीत्या देवद्रव्यमप्य-र्जनीयं भवतीत्युक्तमेव। तथाचोक्तम्। (अर्थ १।१८ अवरुद्धे वृत्तिप्रकरणे)—"एकचरः सुवर्णपाकमणिरागहेमरूप्यपण्याकरर्मान्तानाजीवेत् पाषण्डसङ्घद्रव्यमश्रोत्रियभोग्यं वा देवद्रव्यं वा गूढमनुप्रविश्य सार्थयानपात्राणि च मदनरसयोगनतिसन्धायापहरेत् पारग्रामिकं वा योगमातिष्ठेत्"[१]। इति।

---

१ टी० एकचरः एकाकी अलब्धकोशदण्डसहायः। सुवर्णपाकमणिरागहेमरूप्य पण्याकरकर्मान्तान् सुवर्णपाकं पुटपाकेन लोहादेः सुवर्णत्वापादनकर्म रसतन्त्रप्रयोग-मिति यावत्। मणिरागहेमपण्यानि वज्रवैडूर्यमौक्तिकादिर्मणिः लाक्षादि रञ्जनद्रव्यं रागः। हेम स्वर्णं रूप्यं रजतं इत्येतद्रूपाणि। पण्यानि विक्रेयपदार्थान्। आकरकर्मान्तं रत्नादि। खनिव्यापारं चाजीवेत् उपजीवेत्। एष कोशार्जनेऽभ्युपायः। उपायान्तर-माह पाषण्डेति।

पाषडसङ्घद्रव्यं पाषण्डैः स्वसङ्घार्थं सङ्गृह्य स्थापितं धनम् अश्रोत्रियभोग्यं। देशद्रव्यं छान्दसब्राह्मणभोग्यातिरिक्तं देश्यजनसमुदायद्रव्यं। देवद्रव्यं इत्यपि पाठः। आढयविधवाद्रव्यं वा आढयाः समृद्धधनाः या विधवास्तासां द्रव्यं वा, गूढं द्रव्याप-जिहीर्षा गुप्तिपूर्वं अनुप्रविश्य अनुकूलाचरणेन वशयित्वा अर्थात् पाषण्डादीन् अपहरेत्। किञ्च सार्थयानपात्राणि सार्थस्य वणिक्सङ्घस्य यानपात्राणि पोतान् पण्यमुक्तान् मदनरसयोगेन मदकररसदानोपायेन अतिसन्धाय वञ्चयित्वा अर्थात् वणिक्सङ्घमप-हरेत् इति। (श्रीमूला)

## जयमङ्गलाक्रोडपत्रम्

देवद्रव्यहरणे दोषः

ननु देवद्रव्यहरणे यदि दोषः स्यात् तर्हि धर्मोपधाशुद्धिपरीक्षोपपद्येत। तदेव न। इति चेन्न, मर्यादामुल्लङ्घ्य देवद्रव्यहरणे धर्मशास्त्रे दोषस्योक्तत्वात्[१]। एवं चायं भेद्यः परीक्ष्योऽमात्यः देवद्रव्यहरणप्रयुक्तं दोषं स्मरति नवेति उपधा परीक्षयाऽवगन्तव्यमिति भावः।

देवस्थानोपयोगः

ननु देवस्थानस्य राजनीतौ क उपयोग ? इति चेदुच्यते। देवप्रसादे जीवनं सुखमयं हर्षेणाप्लावितं भवति हर्षविभावत्वात्तस्य। देवप्रसादार्थं कृतायां पूजायां हर्षोपलब्ध्या नीतित्वं भवति। किञ्च ये किल कर्ममीमांसका नास्तिका वा नीतिमनपेक्षमाणा देवमन्दिरं अधोनिर्दिष्टस्य समाजान्तरवर्तिदशविधवर्गस्य कर्षकं मन्तुं न वाञ्छन्ति ते जीवने पूर्णं सुखं नानुभवितुमर्हन्ति एतेषां देवप्रसादानधिकारित्वात्। अतो[२] दशविधवर्गस्याकर्षकत्वात् देवमन्दिरस्यानुपयुक्तत्वन्न भवति।

अपि च समाजे वर्गाणां अनेकविधत्वमनुभूयते[२] यथा कामुकः[१] विदग्धः[२] श्रेष्ठो[३] विरागो[४] शूरः[५] ज्ञानवयोवृद्धः[६] रसभावविवेचकः[७] बालः[८] मूर्खः[९] स्त्री[१०] इति।

स उपर्युक्तः सर्वविधो वर्गः यद्यभिनयेन स्वस्वफलप्राप्त्या सन्तोषमनुभवति तर्हि तं प्रति एते सन्तुष्टाः स्व मङ्गलं श्रृण्वन्तो जीवितुमर्हन्ति इत्येतदर्थमेव नाटयं प्रणीतम्। तत्र सर्वेपि कामुकादयः आकृष्टा भवन्ति। यतो नाट्ये सर्वेषां तोषावहा सामग्री वर्तते श्रृङ्गार-नेपथ्य-शुचित्वविराग ज्ञान रसभावविवेचनादीनां नैयत्यात्। दशविधानां वर्गाणां सन्तोषकारकत्वं नाट्ये कथमिति विवेचितम् भावप्रकाशने-व्यक्तम्[३]।

---

१ देवस्वं ब्राह्मणस्वं वा लोभेनोपहिनस्ति यः।
स पापात्मा परे लोके गृद्ध्रोच्छिष्टेन जीवति। इति। मनु० ११०-२६।

२ तदुक्तम्—कामुकैश्च विदग्धैश्च श्रेष्ठिभिश्च विरागिभिः।
शूरैर्ज्ञानवयोवृद्धै रसभावविवेचकैः।
बालमूर्खाबलाभिश्च सेव्यं तन्नाटयमुच्यते। इति भा० प्र०

३ तुष्यन्ति तरुणाः कामे विदग्धाः समयाश्रिते।
अर्थेष्वर्थपराश्चैव मोक्षेष्वथ विरागिणः॥
शूरा बीभत्सरौद्रेषु नियुद्धेष्वाहवेषु च।
धर्माख्यानपुराणेषु वृद्धास्तुष्यन्ति नित्यशः॥
सत्वभावेषु सर्वेषु बुधास्तुष्यन्ति नित्यशः।
बाला मूर्खाः स्त्रियश्चैव हास्यनेपथ्ययोः सदा। इति—(भाव० ५)

## जयमङ्गलाक्रोडपत्रम्

तद्रीत्या राजनीतिं उपयोक्तुकामाः पूर्णसुखबुभुक्षवो देवप्रसादं कामयन्ते पूजनादिना। किञ्च देवप्रसादाकाङ्क्षी यामितिकर्तव्यतासामग्रीं सङ्गृह्य शास्त्रमर्यादया देवतां पूजयति तत्र सर्वत्रौचित्यात् सा पूजा सामाजिकानां चेतसि रसाविर्भावाय सहकारिणीति सर्वस्य वर्गस्य सङ्घटनं न दुःशकम्। अन्यत्र तु कामरागद्वेषपरतन्त्रताया जागरूकत्वात् प्रतारणादिदोषसंभवेन अनौचित्यं उदेति ततो रसभङ्गः ततः सन्तोषाभावः ततः सङ्घटनाभावः। कामसूत्रेऽपि—पारदारिकेऽधिकरणे उक्तानि विराग कारणानि असन्तोषात् विघटकानि इत्युक्तं तत्रैव द्रष्टव्यम्[1]। अतः महानुपयोगः देवमन्दिरस्य स्मर्तव्यः।

---

१ व्यावर्तनकारणानि ।१७। पत्यावनुरागः ।१८। अपत्यापेक्षा ।१९। अतिक्रान्तवयस्त्वम् ।२०। दुःखाभिभवः ।२१। विरहानुपलंभः ।२२। अवज्ञयोपमन्त्रयते इति क्रोधः ।२३। अप्रतर्क्यः इति सङ्कल्पवर्जनम् ।२४। गमिष्यतीत्यनायतिरन्यत्र प्रसक्तमतिः इति च ।२५। असंवृताकार इत्युद्वेगः ।२६। मित्रेषु निसृष्टभाव इति तेष्वनपेक्षा ।२७। शुष्काभियोगीत्याशङ्का ।२८। तेजस्वीति साध्वसम् ।२९। चण्डवेगः समर्थो वेति भयं मृग्याः ।३०।

नागरकः कलासु विचक्षण इतिव्रीडा ।३१। सखित्वेनोपचरित इति च ।३२ अदेशकालज्ञ इत्यसूया ।३३। परिभवस्थानमित्यबहुमानः ।।३४।।

आकारितोपि नाववुध्यत इत्यवज्ञा ।३५। शशो मन्दवेग इति च हस्तिन्याः ।३६। मत्तोऽस्य माभूदनिष्टमित्यनुकम्पा ।३७। आत्मनि दोषदर्शनान्निर्वेदः ।३८। विदिता सती स्वजनबहिष्कृता भविष्यामीति भयम् ।३९। पलित इत्यनादरः ।४०। पत्या प्रयुक्तः परीक्षत इति विमर्शः। ४१। धर्मापेक्षा चेति ।४२।

टीका०—तत्रेति। स्त्रीपुरुषशीलावस्थापने, यानि व्यावर्तनकारणानि तानि प्रकरणान्तर्गतान्युच्यन्ते। पत्यावनुरागो व्यावृत्तिकारणम् उत्पन्नायामपीच्छायाम्। अपत्यापेक्षेति। स्तनन्धयं ममापत्यमिति। अतिक्रान्तवयस्त्वमति। परिणतवया लज्जते बलात्परपुरुषाय अङ्गार्पणनेति। दुःखाभिभवः इष्टमरणादिदुःखाभिभूता जातेच्छाऽपि व्यावर्तते। विरहानुपलम्भो भर्तुः सदा सन्निहितत्वाद्वियोगं न पश्यति येन सम्प्रयुज्यते। अवज्ञयोपमन्त्रयतेऽनादरेणाभियुङ्क्त इति परिभवात्क्रोधो व्यावृत्तिकारणम्। अप्रतर्क्यो दुरवगाहचित्त इति तस्मिन्नबहुमानात्सङ्कल्पवर्जनम्, मनो न सङ्कल्पत इत्यर्थः। गमिष्यतीति। न चिरकालमनेन सम्प्रयोग इत्यनायतिर्भविष्यत्कालाभावः कारणम्। अन्यत्र प्रसक्तमतिरिति वाऽनायतिस्तावत्कालिकत्वात्। असंवृताकारः आकारसंवरणमकुर्वंल्लोके मामुद्गतिकां करोतीति परिभवादुद्वेगः। मित्रेषु निसृष्टभावस्तानि च यदाहुस्तत्करोतीति च तेष्वपेक्षा मयि त्ववज्ञा। शुष्काभियोगी निष्कारणमभियुङ्क्त इत्याशङ्का। तेजस्वीति साध्वसं प्रमादावस्खलितेऽनर्थं करिष्यतीति। मृग्या इति। मन्दवेगायाः चण्डवेगः समर्थोवेत्यश्व इति भयम्। नागरक इति। यो नागरकवृत्तावधिकृतः, कलासु च विचक्षणो नागरकादन्यः। व्रीडा ग्राम्याया—

## जयमङ्गलाक्रोडपत्रम्

एतेन निरीहोपि परलोक- सुखमात्रापेक्षी अल्पसुखभोगी अनीतिकुशलत्वा-दसाधुरेव। इति चिन्त्यम्। इतोऽधिकम् हिन्दुधर्मस्वायोगे द्रष्टव्यम्[1]—

अविदग्धायाश्च। सखित्वेनेति। मित्रत्वेन मयाऽयमुपचरितः कथं पुनरेवं कुर्यामिति च व्रीड़ा। अदेशकालज्ञ इति चासूया देशकालयोर्नाभियुङ्क्त इति। परिभवस्थानं नीचत्वात् ततश्च सखीजनोऽन्यो वा मां परिभविष्यत्यसत्सङ्गतेति तस्मिन्नबहुमानः कारणम्। आकारित इति। अभिप्रायं दर्शितो न विबुद्ध्यत इत्यवज्ञा न विदग्ध इति। हस्तिन्या इति। चण्डवेगायाः शशो मन्दवेग इति चावज्ञा। मत्तोऽस्येति। मन्निमित्तेन मामधिगच्छतो मा भूदनिष्टं शरीरतोऽर्थतो वेत्यनुकम्पा। आत्मनि दोषदर्शनादिति। शरीरे रोगादिकं वैगन्ध्यादिकं पश्यन्त्या निर्वेदः। स्वजनस्य विप्रतिपन्नेति तस्माद् बहिष्कृता भविष्यामीति भयम्। पलितो वृद्ध इत्यनादरः। पत्या प्रयुक्त इति। किं पतिव्रता नेति ज्ञातुं नियुक्तः परीक्षत इति विमर्शः। धर्मापेक्षा च कारणम्। अस्त्येव हि काचित्स्वीया धर्ममपेक्षते। १७-४२। इति

मन्दिर संस्थोपयोगः

१ आन्वीक्षिकीत्रयीवार्ताः सतीर्विद्याः प्रचक्षते।
सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विभ्रमे॥
दण्डनीतिर्यदा सम्यङ्नेतारमधितिष्ठति।
तदा विद्याविदः शेषा विद्याः सम्यगुपासते॥

इति कामन्दकनीतिसारोक्तन्यायेन त्रय्या अपि विद्याया योगक्षेमरूपधर्मस्वरक्षा राजनीत्यायत्तैवेत्यवगम्यते। प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतेष्टसाधनताककर्मानुष्ठानरूपभारतीयराजनीतिर्मठमन्दिरादिद्वारा प्रवर्तमाना दृश्यते।

अतः मठमन्दिरादिसंस्थानां नीत्यनुसारि संरक्षणं नीतिशास्त्रदृष्टया विवेचनेनैव भवितुमर्हति, तत्रेषन्मात्रमपि व्यतिक्रमे कृते सति राष्ट्रस्य स्थितिलोप एव सुनिश्चितो भवति। इत्यतः राज्यस्थितिमूलत्वमेतेषां कया रीत्या वर्णितमिति प्रथममुपदर्शयामः। सुव्यक्तमेतत्, प्रत्यक्षेत्यादिपूर्वोक्तलक्षणा भारतीया राजनीतिः चार्वाकस्यापि हृदयावर्जिका पदवाक्यप्रमाणपारावारपारीणस्येव। अत एवोक्तम्—

'अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।
ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रञ्जयति। इति।

एवं स्थिते हिन्दुधर्मस्वायोगे हिन्दुधर्मसम्बन्धस्यावर्जनीयतया भारतीयराजनीतिरुपस्थाप्यमाना न तिरस्करणीयतामर्हति। तत्र भारतीराजनीतिदृष्टया वेदान्तनयानुसारेण ईश्वरप्रसादकोपयोरेव धर्माधर्मरूपत्वे स्थिते तादृशधर्मोद्देश्यकविनियोगमात्रार्हं धनमेव हिन्दुधर्मस्वमिति व्यपदेष्टुं योग्यं। यथा दर्शपूर्णमासयागे 'अग्नये जुष्टं निर्वपामो' त्यादिरीत्या निरुप्तं व्रीह्यादिद्रव्यम्। तस्य हि द्रव्यस्यावघातादि संस्कारेण पुरोडाशनिर्वृत्त्या अग्निदेवतोद्देश्येन द्रव्यत्यागरूपाग्नेययागे पर्यवसानं व्यवदानमात्रस्याग्नौ होमात्मकप्रक्षेपेण भवति। यजमा—

पञ्चमा इडां भक्षयन्ती"ति भक्षण-द्वारा ऋत्विग्बलाधानेन प्रतिपत्तिविशेषश्च सम्मान विशेषरूपः कण्ठधारितस्रजो निर्माल्यतां गताया अपि अवकरादिपर्युदासेन समुचित-स्थाननिवेशादिव भवति इति। सोऽयंमीमांसकसिद्धान्तः भारतीयराजनीत्यनुसारेण देवपूजने स्वीक्रियते। तदुक्तं नीतिसारे—

शुचिरास्तिक्यपूतात्मा पूजयेद्देवताः सदा।
देवतावद्गुरुजनमात्मवच्च सुहृज्जनम् ॥
प्रणिपातेन हि गुरून् सतोऽनूचानचेष्टितैः।
कुर्वीताभिमुखान् भूत्यै देवान् सुकृतकर्मणा ॥ इति

अत्र टीका—"एवं पञ्चविधं प्रजासङ्ग्रहोपायं प्रदर्श्य इदानीं विषयभेदेनान्य-दाह—शुचिरित्यादिना श्लोकत्रयेण। शुचिर्बाह्याभ्यन्तरशौचयोगात्। आस्तिक्यं भावितपरलोकता। पूजयेद्देवता अभिमुखीकरणार्थम्। तेषां या यस्य पूजा तामाह प्रणिपातेनेत्यादिना। गुरून् पित्रादीन्। सतो विद्यावृद्धान्। अनुचानः प्रवचने साङ्गेऽ-धीती। सुकृतकर्मणा यागादिपुण्यकर्मणा गन्धपुष्पधूपोपहारादिना चे"त्यादि।

अभिमुखीकरणार्थमित्यस्य प्रसादार्थमित्यर्थः स्पष्टः। यागादिपुण्यकर्मगन्ध-पुष्पाद्योः सुकृतपदेन सङ्ग्रहात् आग्नेयादियागोदाहरणं प्रस्तुते नासङ्गतम्।

अथ टीकोक्तं प्रजासङ्ग्रहोपायत्वं तु कथमस्येति विवेचयामः।

तत्र "मनोग्रहणं वै सङ्ग्रहणमितिश्रुतेः" राजा प्रकृतिरञ्जनात्, इत्युक्तत्वात् सत्वबुद्ध्युभयमूलं प्रकृतिरञ्जनं राज्यस्थितावसाधारणं कारणम्। तच्चोक्तं नीतिसारे—

स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत्।
एतावदुच्यते राज्यं सत्व बुद्धिव्यापाश्रयं ॥ इति ॥

अत्र राज्यस्थितिसाधनयोः सत्वबुद्ध्योर्मध्ये सत्वस्याभ्यर्हितत्वात् पूर्वनिपातः कृतः। तत्स्वरूपं च—

परस्मादात्मनो भान्ति ज्ञानानन्दक्रियाप्रभाः।
ज्ञानप्रभा च सानन्दा तस्याः सत्वं प्रजायते ॥
क्रियाप्रभा रजः सत्वाच्छक्तिः स्यात्तु तमः प्रसूः। इत्युक्तं साहित्यशास्त्रे ॥

वक्ष्यमाणविषये बहूपयोगित्वादिदं सत्वस्वरूपं विशदीक्रियते ॥

भगवान् सर्वभूतेषु लक्षितः स्वात्मना हरिः।
दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः ॥

इति (भागवतः २ स्कंध २ अध्यायपञ्चम) श्लोकानुसारेण परमात्मा तावत् प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतोर्थ इति ज्ञायते।

"भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया।
तदध्यवस्यत् कूटस्थो रतिरात्मन्यतो भवेत् ॥" इति।

अत्र श्रीधर स्वामिभिः "ततः पूर्वतनपद्ये ब्रह्मा कूटस्थो निर्विकार एकाग्रचित्तः सन्नित्यर्थः त्रीन् वारान् कार्त्स्न्येन साकल्येन, ब्रह्मा वेदमन्वीक्ष्य विचार्य यत आत्मनि हरौ रतिर्भवेत् तदेव मनीषया अध्यवस्यत् निश्चितवानि" त्युक्त्वेदमुक्तं यत्

"नन्वनुभूतेर्थे रतिर्भवति अननुभूते तु भगवति कथं रतिः स्यात् तत्राह । भगवान् सर्वेषु भूतेषु लक्षितः दृष्टः । कथं स्वात्मना क्षेत्रज्ञान्तर्यामितया । कैर्दृश्यैर्बुद्ध्यादिभिः । तदेव द्वेधा दर्शयति । दृश्यानां जडानां दर्शनं स्वप्रकाशं द्रष्टारं विना न घटत इत्यनुपपत्तिमुखेन लक्षणैः स्वप्रकाशान्तर्यामिलक्षणैः तथा बुद्ध्यादीनि कर्तृप्रयोज्यानि, करणत्वात् वास्यादिवत्" इति ।

आधुनिका अपि वैज्ञानिका जडचेतन विभागव्यवस्थायां-यद्वस्तु स्वस्थितिपरिवर्तने परापेक्षं तज्जडं, यत्तु तदर्थं स्वतन्त्रं तच्चेतनमिति प्राकृतिकनियमानामनुसरणमेव वैज्ञानिकानां कार्यमिति च वदन्तः-

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चेति ॥

श्रुतिमेव प्रकारान्तरेणोपोद्बलयन्ति । अतः पूर्वोक्तपरमात्मस्वरूपे प्रत्यक्षादि निर्णीतार्थं स्वरूपत्वमुपपन्नम् । घटं जानातीत्यादौ भासमानज्ञान स्वरूपं हि स्वनिरूपिताज्ञानाविषयत्वप्रयोजकविशिष्टचिदभिन्नसाक्षिस्वरूपमिति निर्णीतं वेदान्तशास्त्रे ।

"नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं ।
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते ॥
जानामीति तमेव भान्तमनु भात्येतत्समस्तं जगत्" ।

इत्यादिना श्रीदक्षिणामूर्तिस्तवे भगवत्पादसूक्त्या आबालवृद्धं प्रत्यभिज्ञायते । तथैव प्रत्यभिज्ञाकारिका —

"बोधस्य चाप्यकर्तृत्वं कर्तृत्वस्याप्यबोधता ।
द्विधाऽऽणवं मल" मित्यादि ॥

"प्रागस्वाप्समिति प्रबोधवचसा यः प्रत्यभिज्ञायते" इति भगवत्पादसूक्तिश्चास्यां प्रत्यभिज्ञायां प्रमाणम् ।

तस्यास्याधुनिकविज्ञानसम्मतस्य परमात्मनः "तदध्यवस्यत् कूटस्थ" इति भागवतपद्ये निर्विकारात्मक कूटस्थमात्रवेद्यत्वोपवर्णनात् तादृशनिर्विकारभारतीयराजनीतिज्ञमात्रवेद्यत्वं भवसि । विकृतसाम्यवादादिराजनीतिगम्यत्वं तु मास्तु । सर्वथा प्रमाणऽसिद्धोऽयमर्थो विशेषज्ञैर्नापलपितुं शक्यत इत्येव वक्तव्यम् ।

सत्वरजस्तमोगुणेषु सत्वगुणस्य यत्स्वरूपं साहित्यशात्रे उक्तं परस्मादात्मन "इत्यादि, तत्र परमात्मा भारतीयराजनीतिदृष्ट्या प्रमाणत्रयेणोपपन्नः आधुनिकराजनीतिदृष्ट्या अपीति सिद्धम् । अधुना तदीया ज्ञानानन्दक्रियाप्रभा विविच्यन्ते । ईश्वरस्तावत् सर्वविषयकज्ञानेच्छाकृतिमान् इति परिपूर्णज्ञानेच्छाक्रिया शक्तियोगात्स्वतन्त्रः ।

सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।
इति विद्यात्समासेन लक्षणं सुखदुःखयोः ।—

इति मनूक्त्यनुसारेण स्वातन्त्र्यस्य परिपूर्णज्ञानक्रियाशक्तिमत्त्वात्तदीयेच्छाया निरन्तरं पूर्यमाणत्वेन सा आनन्दरूपा । तथा चेश्वरस्था ज्ञानेच्छाकृतय एव ज्ञानानन्दक्रियारूपाः क्रमेण भवन्ति । ईश्वरनिष्ठानाममीषां गुणानां प्रभाशब्देन उपादानं तु "प्रभा हि तेजोरूपे"ति सिद्धान्तानुसारेण—

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।

इत्युक्तजाठराग्निरूपस्येश्वरस्य सर्वज्ञस्य रूपविशेषं अभिलक्ष्य कृतम् । तथा च यस्मिन् जीवदेहे यादृश्या मात्रया ज्ञानानन्दक्रियाशक्तिप्राचुर्यं तादृश्या मात्रया तदीयं तेजस्वित्वं तत्र दृश्यत इति सर्वानुभवसिद्धम् । एवं च परमात्मसमवेतज्ञान-प्रभैव भास्वररूपा प्रकाशते इति—

नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं ।
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते ॥

इति भगवत्पादसूक्त्या

यदादित्यगतं तेजो जगद्भासयते खिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥

इति गीतायाम् उपक्रमे तेजःशब्दे सत्येव पुनस्तेजःशब्दोपादानात् तादृशशुक्ल भास्वररूपस्य ईश्वरदृष्ट्योपास्यत्वप्रतीतेश्च अवसीयते ।

सूर्यचन्द्राग्नयश्चेमेऽध्यात्मरूपा ज्ञानक्रियेच्छात्मिका एव परमात्मसमवेताः शारीरविज्ञाने 'नान्वायलेन्स' पेशीषु स्वतन्त्रज्ञानतन्तुषु क्रियातन्तुषु चाधुनिक शारीरविज्ञानेनानुमीयन्ते, अध्यात्मतन्त्रेषु उपवर्ण्यन्ते च, 'थियोसोफी' दर्शन कारैराधुनिकैः 'अरा' ( URA ) पदेन व्यवह्रियन्ते च, मेस्मेरिजम् आदिप्रयोगेषु फ्रेन्चन्यायालयादिषु स्वीकृताश्च । सामान्यतया 'अरा' पदवाच्यत्वेन स्वीकृता-नाममीषां तु अवान्तरभेदः ज्ञानानन्दक्रियाप्रभारूपत्वेन साहित्यशास्त्रे विशदीक्रियते । परमात्मप्रसादप्रभैव परमात्मगतानन्दप्रभा, परमात्मगतज्ञानप्रभैव विज्ञानप्रभा । एवं च परमात्मेच्छामनुसृत्य क्रियायां क्रियमाणायां यथा तदीयानन्दप्रभा अभिव्यज्यते तथा ज्ञानेषु जीवात्मसमवेतेष्वपि नित्यज्ञानावृत्तिविषयताशून्यत्वरूप प्रामाण्या-भिव्यक्तेस्सत्वे परमात्मसमवेतज्ञानप्रभाया अप्यभिव्यक्तिः स्थिता । तदुक्तं प्रत्यभिज्ञाकारिकायाम्—

स्वाङ्गकल्पेषु भावेषु पत्युर्ज्ञानं क्रिया च या ।
मायातृतीये ते एव पशोः सत्वं रजस्तमः ॥ इति ।

अत्र पत्युर्ज्ञानं पत्युरानन्दश्चोभयं मिलितं तच्च यस्यां पतिव्रतायां स्त्रियां उदेति सैव सतीत्युच्यते । तस्या स्वभावः सत्वंः प्रोक्तज्ञानानान्दप्रभयोर्मिश्रणमेव आनन्दांशे भग्नावरणसाक्षितादात्म्यापन्नस्थायिभावादिरूपरसात्मकम्—

शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमां ।
ज्ञात्वेत्थं न पुनर्विशन्ति जननीगर्भेऽर्भकत्वं नराः । इत्युक्तम् ।—

अत एव पूर्वोक्तनीतिसारवाक्ये टीकायां सत इत्यस्य विद्यावृद्धानित्यर्थःकृतः। तत्र विद्यापदेन ईश्वरसमवेतज्ञानस्योक्तौ वृद्धपदेन तत्प्रसादरूपः धर्म एव विवक्षितः। अत एव "विद्या धर्मेण शोभते" इत्युच्यते। एतादृशसत्वोत्कर्षे सति साहित्यशास्त्रप्रसिद्धश्चित्तसन्तोषरूपरसोऽपि सिद्ध्यति। अन्यथा तु रसाभास एव, यत्र सदोषत्वं नियतमिति सिद्धान्तः।

अस्य सत्वस्य सर्वत्रोद्गमाय सन्ति बहवः प्रकाराः। तदुक्तम्—

कामुकैश्च विदग्धैश्च श्रेष्ठिभिश्च विरागिभिः।
शूरैर्ज्ञानवयोवृद्धैः रसभावविवेचकैः॥
बालमूर्खाबलाभिश्च सेव्यन्तन्नाट्यमुच्यते॥
तुष्यन्ति तरुणाः कामे विदग्धाः समयाश्रिते॥
अर्थेष्वर्थपराश्चैव मोक्षेत्वथ विरागिणः।
शूरा बीभत्सरौद्रेषु नियुद्धेष्वाहवेषु च॥
धर्माख्यानपुराणैश्च वृद्धास्तुष्यन्ति नित्यशः।
सत्वभावेषु सर्वेषु बुधास्तुष्यन्ति सर्वदा॥
बाला मूर्खाः स्त्रियश्चैव हास्यनेपथ्ययोः सदा। इति। (भाव०)

तथा च मठमन्दिरादयो हि बालमूर्खादिप्राकृतजनानां कृते चित्रतुरगन्यायेन सत्वस्य उदयाय साधारणीकरणव्यापारप्रधानाः संस्थाः भवन्ति। तद्द्वारा सत्वस्य प्रचारः स्त्रीबालप्राकृतादिजनेषु भवति। इति मत्वैव—

"शुचिरास्तिक्यपूतात्मा पूजयेद्देवताः सदा" इत्युक्तं नीतिसारे।

शुचिरित्यनेन धर्मांश आस्तिक्यमित्यनेनेश्वरसमवेतज्ञानांशश्चाभिव्यज्यत इति सूच्यते। तदभिव्यक्तिरूपमेव "मनोग्रहणं सङ्ग्रहणं" प्रजानामिति राजनीतिसिद्धान्तः।

मठमन्दिरादिहिन्दुधर्मसंस्थासु आलोच्यमानासु राजनीतिसर्वस्वायमानस्य एतादृशसाधारणीकरणस्य विच्छेदे तासां चित्तसन्तोषविच्छेदो नियतः। तमुपेक्ष्य सिनेमादिभिः क्रियमाणोऽभिनयस्तु रसाभासतां गच्छेदित्यतः—

अनौचित्यादृते नान्यत् रसभङ्गस्य कारणम्।

इत्यालोच्यास्मिन् सर्वत्रौचित्येन सह साधारणीकरणव्यापाररक्षणार्थे यतनीयं विशेषज्ञैः। औचित्यं च "येन कर्मणा प्रसन्नो गुरुराजदेवतादिरभीष्टफलदो भवति तादृशमि"ति परिष्कृतं काव्यप्रकाशटीकायां विशेषतोऽवधेयतामर्हति। आधुनिकविश्वविद्यालयेषु गुरुप्रसादः तृणाय मन्तव्यतां गतः ईश्वरप्रसादश्च तदुत्तरमेव। अत एव राजप्रसादोऽपि लुप्यमानतां गतः इति पश्यामः। गुरुप्रसादे तु सति—

शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन।

इतीश्वरप्रसादोऽपि नियतः। वस्तुगतया आधुनिकविश्वविद्यालयीयच्छात्रेष्वपि—गुरुप्रसादो राज्येन काम्यते तदैव राजप्रसादोऽपि नियतः इत्यालोच्यैव "शुचिरास्तिक्ये"ति नीतिसारोक्तं स्मार्यते।—

## जयमङ्गलाक्रोडपत्रम्

चतुर्विधपरीक्षापरीक्षितस्य किं सर्वत्र शुचित्व ? मस्तीत्यत आह न हीति।

### शुचिरिति पाठसमीक्षा

शुचिरिति। (पृ० २४२)अत्रायं भावः एकत्र परीक्षायां शुचिः अपरत्र तथा स्यादेवेति नियमः न, प्रागुक्तधृतिभावास्तित्वानियतत्वात्। इति परीक्षा चतुर्विधाऽपि अमात्यस्य पुनः पुनः कार्येति।

### भीरव इति पाठसमीक्षा

भीरव इति। (पृ०-२४२)इदं हेतुवाक्यम्। तथाच यस्मात् स्वामी भोरुः तस्मान् मन्त्रिपुरोहितसख इति योजना बोध्या। तेन भोरू राजा मन्त्र्यायत्तसिद्धिको भवति इति स्थितम्। अभीरुस्तु स्वामी विवेकी गुरुत्वसंपन्नः स्वायत्तसिद्धिको भावति यदि, तर्हि तस्य मन्त्र्यायत्तसिद्धिकत्वाभावेन मन्त्रिपुरोहितसखत्वाभावेऽपि न क्षतिः इत्यभिप्रेत्य-कल्पान्तरमाह—एको (पृ० २४२) वेति। उक्तं चैतत् लब्धैश्वर्य इत्यादिना ईश्वर इति मूलव्याख्याने अत्रव।

सत्यप्येवं मन्त्रिपुरोहितसख इत्युपक्रमबलात् उभयविधेनापि राज्ञा मन्त्रिपुरोहितसखत्वं संपादनोयम्। तदुक्तं—

मार्गं सन्मार्गगतिभिः सिद्धये सिद्धकर्मभिः।
पूर्वैराचरितं सद्भिः शास्त्रीयं न परित्यजेत्[1] ॥इति॥

### मन्त्रिपुरोहितसखित्वस्योपादेयतायां न्यायः

उपसंहारो हि उपक्रमाविरोधेन भवति यत्रोपक्रमे सन्दिग्धता तत्र तु उपसंहारानुरोधेनोपक्रमो निर्णेतव्यो भवति इति मीमांसकैः सधितं वर्तते। यथा उपसंहारे उच्चैर्ऋचा क्रियते "इत्यादिना उक्तस्यर्कशब्दस्यार्थः" ऋचो वा 'ऋग्वेदो' वा इति सन्देहे तदपाकरणं "अग्नेर्ऋग्वेद" इत्यादिना वर्तते। यतः उपक्रमस्थः ऋग्वेदशब्दः असन्दिग्धार्थः सन्दिग्धार्थस्यर्कशबद्स्यग्वेदमात्रपरत्वनिर्णायको भवति[2]। तथैव राजपदमपि उपक्रमानुरोधेन मन्त्रिपुरोहितसखत्वविशिष्टतया स्वायत्तसिद्धिकमपि नृपं बोधयति।

सत्रिभिरिति। (पृ० २४२)सर्वेषां चराणामुपलक्षणार्थं यतः उपसंहारे अग्रिमाध्याये संपूर्णानां चराणां सङ्ग्रहस्य गूढपुरुषरूपेण सङ्ग्रहणात्। अत्राप्युदाहरणं वारुणेष्टौ अश्वप्रतिग्रहोतुः प्रायश्चित्तं[3] बोध्यम्।

इति वैदिकसिद्धान्तसंरक्षिण्यां प्रथमाधिकरणे दशमोऽध्यायः संपूर्णः

---

सर्वस्याप्यस्य निष्कृष्टोर्थोऽयं यत् प्रोक्तरीत्या राज्यस्थितिहेतुमठमन्दिरादिषु प्रवर्त्यमानं देवताराधनं तदनुकूलव्यापाराः, राजानीतिज्ञानां तत्तत्संस्थामूलभूतशास्त्रानुसारित्वं च आस्तिक्यशुचित्वयोः प्राधान्येनानुसरण एव भवति। इति।

१ टि०—मार्गं मन्त्रनिर्णयाख्यं पूर्वैराचरितं सेवितम्। ते ह्यमुमेवाश्रित्य सिद्धकर्माणोऽभवन्।

२ अ० ३ पा० ४ अ० १४ उच्चैर्ऋचा क्रियते।

३ अ० ३ पा० ४ अ० १५ यावतोऽश्वान् प्रतिगृण्हीयात्।

# सप्तमं प्रकरणम्

## एकादशोऽध्यायः ।

### गूढपुरुषोत्पत्तिः ।

### संस्थोत्पत्तिः ।

[ राज्ञः कापटिकादिगूढपुरुषसम्पादनावश्यकता ]

**उपधाभिरशुद्धामात्यवर्गो गूढपुरुषानुत्पादयेत्, कापटिकोदास्थित-गृहपतिकवैदेहकतापसव्यञ्जनान् [1] सत्रितीक्ष्णरसदभिक्षुकीश्च ।**

---

### श्रीमूला

गूढपुरुषोत्पत्तिरिति सूत्रम् । अमात्यशौचाशौचपरीक्षणं गूढपुरुषानन्तरेण न शक्यं कर्तुमिति तदुत्पत्तिरुच्यत इत्यर्थः । तत्रास्मिन्नध्याये संस्थोत्पत्तिः, उत्तरस्यादौ सञ्चारोत्पत्तिः ।

उपधाभिरित्यादि । उपधाभिः शुद्धामात्यवर्गः धर्मोपधादिभिः छलोपायैः शोधितसचिववर्गः । उत्पादयेत्, राजा । के ते गूढपुरुषा इत्यकाङ्क्षायामाह— कापटिकेत्यादि । चकारात् कुब्जवामनकिरातमूकबधिरजडान्धनटनर्तकगायनवादन-वाग्जीवनकुशीलवा अपि गृह्यन्ते ।

### वैदिकसिद्धान्तसंरक्षिणी

पूर्वापरयोः प्रकरणयोः सङ्गतिमाह उपधाभिरिति । धर्माद्यालम्बनोपजाप-क्रियाभिः । शुद्धेति । शुद्धः धर्मादिविशुद्धचित्तत्वादहिंसक इत्यर्थः । शुद्धः अमात्यवर्गो यस्य स राजैव पूर्वप्रकरणोक्तो बोद्ध्यः गूढेति । चारान् संस्थाश्च । पुरुषपदं जातिमात्रपरं तेन भिक्षुकीग्रहणं नानुपपन्नम् । उत्पादयेत्, अमात्यवर्गेष्ववेउत्पादयेत् नियोजयेत्, तेषामेव उपधया परीक्षितशुचित्वात् । एतेन गूढपुरुषव्यवस्थापने राज्ञ एव कर्तृत्वम् चिन्त्यम् ।

### जयमङ्गला

अमात्यवर्गान्तर्भूतत्वात् गूढानामेव पुरुषाणाम् अमात्यशौचाशौचानन्तरं तद्विशेषगूढपुरुषोत्पत्तिरध्यायद्वयेनोच्यते । उपाधिभिरित्यादि । शुद्धोऽमात्यवर्गो यस्य

---

नी० टि० १ सत्रीति । तेषां लक्षणमभिधातुमाह ।

## जयमङ्गला

**स** राजा गूढपुरुषान् गूढप्रयोगान् पुरुषान् उत्पादयेत् रचयेत्। जातिशब्दत्वात् भिक्षुक्यन्त[1]र्भावः। तत्र कापटिकादयः पञ्चसंस्थासंज्ञाः सत्र्यादयश्चत्वारः सञ्चारसंज्ञाः द्वैराश्येन स्थिताः।

## जयमङ्गलाक्रोडपत्रम्

### सङ्गतिः

पूर्वापरप्रकरणयोः हेतुहेतुमद्भावसङ्गतिं स्फुटीकुर्वन्नाह अमात्येत्यादि।

अन्तर्भूतत्वादिति। (पृ० २५२) चाराणां दूतानां च अमात्यत्वम् भवति। तत्र दूतानाममात्यत्वविषये नीतिसारे टिप्पण्याञ्चोद्धृतं प्रमाणं बोध्यम्[2]।

गुढपुरुषाणां चराणाममात्यत्वं तु अत्रैव व्यक्तम् "तद्विशेषो गूढपुरुषोत्पत्तिरित्यादिग्रन्थेन।

### गूढपुरुषविवेचनम्

गूढपुरुष इति। (पृ० २५२) "धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः"। इत्यादि श्लोकोक्तरीत्या शिष्टैः परिगृहीतं श्रुतिप्रामाण्यमुल्लङ्घ्य परेषु छले कृतेऽपि ये "नानृतं वदेत्" इत्यादि वचनसूचितं पातकं उपेक्षमाणाः न ग्लानिमनुभवन्ति पौनःपुन्येन प्रतारणे प्रवर्तन्ते च, राजद्रोहात् विरमन्ति, ते श्रमणादयः अत्र गूढपुरुषपदेन बोध्याः।

### पातित्ये शरणम्

ननु पौनःपुन्येन छलकरणे अपराधाभिवृद्धौ सत्यां वेदकर्मणोऽधिकारात् पतितत्वस्य स्वकर्मणो हानरूपस्य अपरिहार्यत्वात् का तथाविधस्य गतिः? इतिचेत् तन्त्राश्रयणम्। तदुक्तम्—

श्रुतिभ्रष्टः स्मृतिप्रोक्तप्रायश्चित्तेऽभयं गतः। इति

---

१　अशुद्धम्
भिक्षुकान्तर्भावः

२　यातव्याय प्रहिणुयाद् दूतं दूत्याभिमानिनम् ॥१॥

(ज० म०) सन्धिविग्रहाद्यर्थो मन्त्रः। स च स्वपरमतसम्पादनाधीनः। तच्च प्रस्तावशाद्दूताच्चाराच्च भवति। अतो मन्त्रविकल्पानन्तरम् उभयविधिः षाड्गुण्यशेषभूत उच्यते। तत्र प्रधान्याद्दूतविधिमाह—कृतमन्त्र इत्यादि। कृतमन्त्रः उद्धृतमन्त्रः दूत्याभिमानिनमिति। यो मन्त्री दूतकर्मणि जाताभिमानो मन्त्रिसम्मतश्च तं दूत्येन यातव्याय शत्रवे प्रेषयेत्। तस्य कार्यसाधनयोग्यत्वात् ।१। अमात्यस्वरूपो दूतः तस्य प्रकृतिसम्पदि गुणा उक्ता एव। पुनरिह कतिपयगुणोपादानं प्राधान्यार्थम्। निष्ठितः प्रकृष्टः। अभ्यस्तकर्मा बहुधा कृतदूत्यः ॥२॥

(उ० नि०)— सत्यप्यमात्यगुणासम्पन्नत्वेऽवश्यंभाविनो दूतगुणानभिधातुमाह।

[ कापटिकनियोजनक्रमः ]

**परमर्मज्ञः[1] प्रगल्भः छात्रः[2] कापटिकः[3] । तमर्थमानाभ्यामुत्साह्य मन्त्री ब्रूयात् राजानं मां च प्रमाणं कृत्वा यस्य यदकुशलं पश्यसि तत्तदानीमेव प्रत्यादिशेति ।**

---

## जयमङ्गलाक्रोडपत्रम्

जातीति । (पृ० २५३) पुरुषशब्दस्य जातिमात्रपरत्वात् पुरुषत्वमविवक्षितम् तेन भिक्षुक्यपि स्त्री पुरुषे अन्तर्भाव्यते ।

कापटिकेति । (पृ० २५३) आदिशब्दात् उदास्थितगृहपतिकतापसव्यञ्जनाः । संस्थेति । (पृ० २५३) सत्र्यादयश्चत्वारश्चाराश्च यासु जीविकामिषेण तिष्ठन्ति ताः संस्थाः । पूर्वेषामिति । (पृ० २५३) संस्थान्तर्गतानां छात्रादीनां कापटिकादिव्यञ्जनानाम् ।

## श्रीमूला

परेति । परमर्मज्ञः परच्छिद्रवेदी, प्रगल्भः प्रौढः, छात्रः अध्यापकाध्येतृवृत्तिः । निष्परिग्रहत्वाच्छरीरमात्रपरिच्छदो राजकार्यैकपरः । एवङ्गुणः कापटिकः कपटवृत्तित्वात् तदाख्ययोच्यते । अस्य विनियोगमाह तमित्यदि । अर्थमानाभ्यां धनबहुमानाभ्याम् । यस्य यदकुशलं पश्यसि यस्य अमात्यादेः यद् अवद्यं चौर्यं परदाराभिमर्शनमित्येवञ्जातीयम् उपलभसे । प्रत्यादिश विज्ञापय ।

## वैदिकसिद्धान्तसंरक्षिणी

परेति । परस्य रहस्यं अकार्यं वा जानाति यः स परमर्मज्ञः । प्रगल्भः सभासु निर्भीकः । गुरुरूपं छत्रमाश्रित्य तिष्ठति, छत्रभूतोऽयं गुरुदोषान्निवारयति वा । ( टिप्पण्यां तु "छात्र इव कपलिका ( कर्पदिका ) मात्र परिच्छद" । इति । ) अथवा कापटिकश्छात्रः छत्रवत्स्थित्वा गुरुगुणान् प्रकाशयति इति कपटेनाचरतीति कापटिकः । टिप्पण्यांमपि तथैवोक्तम् । "कपटेन चरति कापटिक" इति तं कापटिकम् । अर्थेति । तस्मै अर्थमानौ हि दत्वा प्रोत्साहनं । कापटिकस्य दानं वेतनार्थं, मानं उत्साहार्थम् । प्रमाणमिति । मां मन्त्रिणं राजानञ्चानतिक्रम्य इत्यर्थः । यस्य मन्त्रिपुरोहिताद्यष्टादशतीर्थेष्वन्यतमस्य द्वादशाध्याये वक्ष्यमाणस्य । अकुशलं राजद्रोहादिकिल्विषं । तदानीमेव कालमहापयन् प्रत्यादिश निवेदय । अस्मासु इति शेषः । कापटिकोऽपि तथा कुर्यात् इत्यर्थप्राप्तम् ।

---

नी० टि० १. परमर्मज्ञ इति । परेषाम् आत्मनोऽन्येषां मर्माणीव नर्माणि यदुद्घटनात्तत्तन्मर्मणि विद्ध इव व्यथते तानि जानातीति ।

,, २. छात्र इति । छात्र इव कपलिकामात्रपरिच्छदः ।

,, ३. कापटिक इति । कपटेन चरति कापटिकः ।

## जयमङ्गला

तत्र पूर्वेषां लक्षणानि कर्माणि चास्मिन्नध्याये दर्शयन्नाह—परमर्मज्ञ इति।

परेषां मर्माणि[1] नर्माणि यानि तानि जानातीति तथा। तैर्हि परानुपतापयति। प्रगल्भो धृष्टः[2] प्रत्यादेशसमर्थः। छात्रः निस्सङ्गत्वादुपतापनभयनिरपेक्षः, स सर्वत्र मित्रायमाणः कपटेन चरतीति कापटिकः। तमर्थमानाभ्यामुत्साह्येति। अर्थप्रदानेन पूजया च जनितोत्साहं मन्त्री ब्रूयात्—राजानं मां च प्रमाणीकृत्य अवधिं कृत्वा यस्य यदकुशलं किञ्चित्किल्बिषं[3] पश्यसि तत्तदानीमेव कालमहापयन् प्रत्यादिश अस्मासु प्रकाशयेति। स तथा कुर्यादित्यर्थोक्तमेतत्कर्म।

## जयमङ्गलाक्रोडपत्रम्

### कापटिकः

छात्रव्यञ्जनस्य कापटिकस्य लक्षणमाह—परेति। व्याख्यातं चैतत् टिप्पण्याम्—"परेषां आत्मनोऽन्येषां मर्माणीव नर्माणि युदुद्घटनात् तन्मर्मणि विद्ध इव व्यथते तानि जानातीतीति"।

### नर्माणीति पाठसमीक्षा

नर्माणीति। अयं पाठः पूर्वोद्धृत टिप्पणीप्रामाण्यात् कल्पितः "मर्म दुश्चेष्टितम्", इति निर्णीतत्वात्। तदुक्तं नीतिसारव्याख्यायां - मर्म दुश्चेष्टितम् यद्विनाशकरम्[4] इति।

तथा च रहस्यमकार्यम् इति यावत्। तज्ज्ञः मर्मज्ञः कापटिकः इत्युच्यते। स्थानानीति पाठे तु नर्माणि रहस्यभूतानि अकार्याणि इत्यर्थो बोध्यः।

### कापटिकस्य सङ्ग्राह्यता

ननु छात्रः अध्यापकैः कथं सङ्ग्राह्यः तस्य कापटिकत्वेन उक्तत्वात्। इति चेन्न। न हि कापटिकच्छात्रस्य कापटिकत्वं प्राकृतिकं वस्तु अनेकेषु छात्रेषु तदभावस्यापि दर्शनात्। अपि तु कापटिकत्वस्य प्रसक्तिः तदा भवति यदा अध्ययनकाले अधीतग्रन्थेभ्यः यथाऽपेक्षितं प्रबोधपर्यवसायि वैदग्ध्यप्रकाशकं आनन्दप्रभासंवलितं ज्ञानं न भवति। अतः गुरुभिः बाल्ये वयस्येव सः यथावत् अध्यापितो भवति चेत्तदा न दोषः। विहितंचैतत् धर्मशास्त्रेऽपि।

---

अशुद्धम्

१ मर्माणि स्थ नानि   २ प्रगल्भो (दृ) धृष्टः

३ (सर्ग १३ प्र० ८–६५ श्लो०)   ४ (किञ्चित् बिम्बिवषं)

उ० नि०—मर्म युक्त्या अभियुक्तमात्रो म्रियते। इति।

कामसूत्रे तट्टीकायाञ्च मित्रनिरूपणे—'परमर्मज्ञत्वभयात् इति। (सूत्र ३५। १५ अधिकरणे अध्याये) यश्चास्य नायकस्य मर्माण्यकार्याणि, यश्च रहसि भवानि विद्यात्तदुभयं मर्मज्ञं रहस्यधरं च नायकप्रतीतेरास्पदत्वात्प्रतिरिनह्यति। इति।

## जयमङ्गलाक्रोडपत्रम्

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ इति ।

अध्ययनकाले एव शङ्कानिरसनपूर्वकं गुरुणा कापटिक छात्रः तथा परलोकादिविषये प्रतिबोधयितव्यः यथा तेन गुरुद्रोहे स्वामिद्रोहे च पातकित्वं ज्ञातं भवेत् । ततः प्रतिबुद्धोऽयं छात्रः "राज्ञो रक्षणं कर्तव्यं धर्मश्च पालनीयः" इति मत्वा गूढपुरुषो भूत्वाऽपि लोकतत्वग्रहणार्थं कापटिकं कर्म करोति चेत्करोतु तथाविधस्य सङ्ग्रहणे न दोषः ।

नचेदमनुचितमिति वाच्यम् तत्त्वाध्यवसायसंरक्षणार्थं इव चातुर्वर्ण्यसमाजस्य यथावस्थितसङ्घटनारंक्षणार्थं सिक्ख-आर्यसमाजादितत्तत्संप्रदायप्रेरकाणामपि उपयुक्तता राजनीत्या अनुमन्यते । यदि तु धर्मप्रधाने भारतदेशे अस्य जीवातुभूतस्य चातुर्वर्ण्यस्य संरक्षणं कर्तुमेते न प्रभवन्ति तदा तु एतेषां कापटिकत्वं राजधर्मरक्षणे असमर्थत्वात् भारतीयराजनीत्यनुमतं न भवति इति स्थितम् । एवंच बौद्धादयः सर्वेऽपि वेदे धर्मे च अतीव श्रद्दधानाःसन्तः सर्वेऽपि भारतीयराजनीतिकुशलाः सुरक्षिताः तावत्पर्यन्तं सन्ति यावत् ते चतुर्वर्णाश्रमविरोधिनो न भवन्ति ।

कापटिकस्य स्वरूपं बोधयितुं मूलस्थं विशेषणान्तरं व्याख्यातु माह प्रगल्भ इति । यः विजिगोषुकथां कर्तुं समर्थः तस्यैव कृते छलप्रयोगस्याभ्यनुज्ञातत्वात् ।

### धृष्ट इति पाठसमीक्षा

प्रगल्भः इति । ( पृ० २५५ ) शब्दकल्पद्रुमे उक्तत्वात् धृष्टः पाठः शोधितः । धृष्टः छलं करोति अवहित्थास्वभावत्वात्तस्य । अत एव स प्रगल्भः इत्युच्यते । अयं हि छलप्रयोगकुशलः गुर्वाज्ञ तिक्रामित्वेन प्रसिद्धो भवति । अतः प्रथमत एव कारायां अवरुद्धो भवति । येन अमात्याः भयोपधाशुद्ध्या परीक्ष्यन्ते, इति दशमाध्याये प्रतिपादितम्. "कापटिकश्छात्रः पूर्वावरुद्धः" इत्यादिग्रन्थेन । तस्य स्वरूपं मनुना एवं प्रदर्शितमस्ति ।

अनृतं च समुत्कर्षे राजगामि च पैशुनम् ।
गुरोश्चालीकनिर्बन्धःसमानि ब्रह्महत्यया ॥ इति ।

धृष्ट इति । (पृ० २५५) उद्वृत्त इत्यर्थः—तदेवाभिदधाति प्रत्यादिशेति ।

### गुर्वतिक्रमोपि राजनीतिसम्मतः

ननु गुर्वाज्ञातिक्रमणं किं राजनीतिसम्मतं ? इतिचेत्सम्मतमेव । कथमिति चेदुच्यते । राज्यकण्टकभूतानां दूष्यानां परिचयस्य राज्यसंरक्षणोद्देश्येन अपेक्षितत्वात् तस्य च कापटिकद्वारेणैव संभावितत्वात्, छलवितण्डयोरिव अपेक्षितत्वाच्च ।

छात्र इति । (पृ० २५५) छात्र इव इत्यर्थः न तु छात्रः, यतः छत्रं आतपमिव अयं गुरुदोषं निवारयति । कापटिकस्तु न तथा । तदुक्तं शब्दकल्पद्रुमे—

"कपटेन चरति इति ठक् इति । छात्रः—अन्यमर्मज्ञः 'तत्र परमर्मज्ञः प्रगल्भश्च छात्रः कपटव्यवहारित्वात् वृकापटिकः स्यर्थ्यतोऽर्थमानाभ्यामुपगृह्य तं, रहसि राजा ब्रूयात् "यस्य यत् दुर्वृत्तं पश्यसि तत् तदानीमेव मयि वक्तव्यम्" इति । सोपि तथा करोति

## जयमङ्गलाक्रोडपत्रम्

**कापटिकस्तु न तथा** यतः अयं गुरुदोषप्रकाशनशीलो भवति। **अतएवायं** दण्डभाग् भवति **इत्युक्तं प्राक्**।(प्र० खं० २।२२४)

ननु यद्ययं दण्ड्यो भवति तर्हि कदाचित् तस्य घनापहाराद्यपि संभाव्येत ? तदा आह-निस्सङ्गत्वादिति। (पृ०२५५) एवं चेद् राजानं प्रत्यपि सः अवहित्थां कुर्यात् तच्छीलत्वात् छात्रस्य। तत्राऽऽह मित्रायमाण इति। मित्रद्रोहे उत्कटद्वेषविषय पातकस्मरणशीलः इत्यर्थः। मित्रद्रोहे च पातकं मनुना उक्तम्—

बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत् ।१९०। इति।

**अतः राज्ञे स न** दुह्यति। **उक्तंचैतन्** नी० सारेऽपि-( सर्ग ९-६६ श्लो० )

'विस्रम्भे नित्यमुद्युक्तो निगूढाकारचेष्टितः।
प्रियाण्येवाभिभाषेत यत्कार्यं कार्यमेव तत्[1] ।६६। इति।

तदेवाह कपटेनेति। ( पृ० २५५ )

छात्रविशेषणम्

**अयमपि** उदास्थितादिवत् **प्रज्ञाशौचशौर्यादियुक्तगुणविशिष्टो बोध्यः**। तदुक्तं नीतिवाक्यामृते चारलक्षणे—

अलौल्यममान्द्यममृषाभाषित्वमभ्यूहकत्वं चेति चारगुणाः'। इति।

कापटिकस्य प्रज्ञाशौचादिगुणः

यद्यप्यत्रेदं विशेषणं नोक्तं तथापि प्रज्ञाशौचयुक्तत्वं उदास्थितादिस्वरूपे हेतुत्वेनोपन्यस्य तत्कर्म अभिहितम् तथैव अत्रापि विना प्रज्ञाशौचादिसंपत्ति अकुशलः दोषदर्शनादिकार्यकरणे अशक्तस्स्यात् इति प्रज्ञादिविशेषणमभिहितं बोध्यम्। तस्य कर्मकरणे उत्साहवर्धनार्थम् उपायमाह अर्थेति। अर्थदानं हि तुष्टिदानाभिप्रायेण "तुष्टान् अर्थमानाभ्याम्" इति वचनात्। इदं हि तुष्टिदानं वेतनरूपं बोध्यम्, तदुक्तं नीतिवाक्यामृते —'तुष्टिदानमेव चाराणां वेतनम्' इति।

**अवधिमिति**। (पृ० २५५) माम्-मन्त्रिणं-राजानं चानतिक्रम्येत्यर्थः। अनेन राजमन्त्रिणौ एतत्कार्ये पूर्वापरभावेन तटस्थानीयौ भवतः इति सिद्ध्यति। तथा च मन्त्रिणो दोषः राज्ञे, राज्ञो वा दोषः मन्त्रिणे, कापटिकेन छात्रेण नात्रेदनीयः मर्यादायां स्थितेषु प्रस्तुततत्क्रियानधिकरणत्वं भवतीति "आङ्" इत्यस्यार्थं सिद्धान्तितत्वात्[2]।

---

१ ज० मं० –स्वकार्ये निगूढाकारचेष्टितः कार्यसंवरणार्थ प्रियाण्येवाभिभाषेत। जातविस्रम्भेऽपि यत्कार्यं हृदि स्थितं तत्प्रच्छन्नं कर्तव्यमेव, तदर्थत्वादन्यस्येति। उ०नि० — लब्धविस्रम्भो नित्यमुद्युक्तः सावधानो निगूढाकारचेष्टितः कृतेङ्गिताकारविपर्यासः 'आचरन् हि प्राज्ञो धूर्तिम्' इतिवचनात्। प्रियाण्येवाभिभाषेत जयजीवेत्यादिकानि, यत्तु कार्यविनाशदिकं तत्कार्यमवश्यं कर्तव्यमेव। इति।

२ तथाचोक्तं व्युत्पत्तिवादे—तत्रैव व्यक्तम्। तथाहि—

"आरभ्य तस्यां दशमीं तु यावत्प्रपूजयेत्पर्वतराजपुत्रीम्" ।
इत्यादौ मर्यादा सीमा कालरूपा देशरूपा च । कालनिष्ठं तत्वं च तत्कालनिष्ठस्व-समभिव्याहृतकालप्रागभावानधिकरण-स्वप्रागभावाधिकरण - स्वसजातीययावत्काल-वृत्तिसमभिव्याहृतक्रियानधिकरणत्वं । एवं चोक्तस्थले यावच्छब्देन पूजारूपक्रियायां शुक्लदशमीनिष्ठतादृशसीमात्वनिरूपकत्वं प्रत्याय्यते । तावतैवार्थतः शुक्लदशम्यां मर्यादात्वं लभ्यते ।

तन्निष्ठसीमात्वनिरूपकत्वं च तदवृत्तित्वे सति कृष्णनवमीप्रागभावानधिकरण शुक्लादशमीप्रागभावाकरणतिथिकूटव्यापकत्वम् । तावता षोड़शतिथ्यधिकरणकषोड़श-पूजारूपस्यैकैककर्मणो विधेयतया लाभः । व्याप्यकालसमुदाये सजातीयत्वविशेषणात् पूजायामुक्तविशेषणद्वयाक्रान्तदण्डादिसमुदायाव्यापकत्वेपि न बाधः अन्वयिताव-च्छेदकरूपेण साजात्यस्य विवक्षणात् । उक्तस्थले च तिथिमित्यस्याध्याहारेण दशमीपदार्थं तावच्छेदकस्य तिथित्वघटितत्वेन वा यावत्पदार्थान्वयित्वावच्छेदकतया तिथित्वभाना-त्तेन रूपेण दण्डादेर्दशमीसजातीयत्वाभावात् । तिथिश्चाखण्डकालविशेषरूपा, न तु चन्द्रमण्ड़लकलारम्भाद्यनुगुणक्रियाप्रचयरूपा, पूजायास्तावत् क्रियावृत्तित्वासम्भवात् । अत्र च प्रागभाव एव यावत्पदार्थः द्वितोयार्थः प्रतियोगित्वमनुयोगित्वं वा । तत्र तत्प्रकृत्यर्थदशम्या अन्वयः । तावता दशमीप्रतियोगिकप्रागभावलाभः । तस्य स्वप्रतियोग्यवृत्तित्वविशिष्टव्यापकतासंबन्धेन पूजारूपसमभिव्याहृतक्रियायामन्वयः । व्यापकत्वं च स्वाधिकरणतिथिनिष्ठाभाव प्रतियोगितानवच्छेदक पूजाविशेषत्ववत्त्वम् । स्वाधिकणत्वं च स्वाधिकरणकृष्णनवमीप्रागभावावच्छिन्नभेदविशिष्टकालिक विशेषणतासम्बन्धेन । एतेन कृष्णनवमीप्रागभावाधिकरणप्रतियोगिकभेदस्याव्याव-र्तकतया तत्सामान्यभेदनिवेशे भाविकृष्णनवमोप्रागभावाधिकरणत्वमादाय नाप्रसिद्धिः, तथासत्यपि तत्तदशमोप्रागभावाधिकरणकालस्य स्वाधिकरणकृष्ण-नवमोप्रागभावावच्छिन्नभेदवत्व संबन्धेन तत्तत्प्रागभावाधिकरणत्वाक्षतेः । नचैव-मपि व्यवहितपूर्वकृष्णनवमीप्रागभावावच्छिन्नभेदघटितसम्बन्धेनाव्यवहितपूर्वं कृष्णनवमीपूर्वतिथीनामपि तत्तद्दशमीप्रागभाववत्त्वात्तदधिकरणतिथिव्यापकत्वं पूजायां न संभवतीति वाच्यम् । स्वावच्छिन्नकृष्णनवमीप्रागभावाधिकरणत्वसम्बन्धे स्वावच्छिन्नभेदस्यैव प्रागभावसम्बन्धे निवेशनीयत्वात् । स्वाधिकरणनिष्ठाभाव प्रतियोगितानवच्छेदकत्वमपि तादृशावच्छेदकत्वसम्बन्धेन स्वावच्छिन्नस्य भेदः अत स्तादृशावच्छेदकत्वत्वावच्छिन्नाभावनिवेशे यत्किञ्चिद्दशमीप्रागभावधिकरणनिष्ठा-भावप्रतियोगितामादायासिद्धिवारणाय विशिष्य तत्तत्तागभावरूपस्वपदार्थस्य संबन्धमध्ये प्रवेश्यतयाऽननुगम इति निरस्तम् । देशरूपा सीमा च, काशीतः कौशिकीं यावद् यातीत्यादौ, तत्र कौशिक्याः गमनसीमात्वं प्रतीयते । तच्च, काशीपूर्वकौशिकी पश्चिमदेशव्यापकगमनानधिकरणत्वम् । यावत्पदेन च कौशिक्यनधिकरणत्वे सति काशीपूर्व-कौशिकीपश्चिमदेशव्यापकत्वं गमने प्रत्याय्यते । तत्र द्वितीयार्थोऽवधित्वम-वधिमत्वं वा प्रतीचीत्वाद्यन्वयि । निष्कर्षः पूर्ववत्स्वयमूहनीयः ॥

[ उदास्थिततनियोजनक्रमः ]

प्रव्रज्याप्रत्यवसितः [1]प्रज्ञाशौचयुक्त उदास्थितः[2]। स[3] वार्ताकर्मप्रदिष्टायां भूमौ प्रभूतहिरण्या[4]न्तेवासी [5]कर्म कारयेत्। [6]कर्मफलाच्च सर्वप्रव्रजितानां[7] ग्रासाच्छादनावसथान् [8]प्रतिविदध्यात्। [9]वृत्तिकामांश्चोपजपेत् एतेनैव[10] वेषेण राजार्थश्चरितव्यो भक्तवेतनकाले चोपस्थातव्यमिति। सर्वप्रव्रजिताश्च[11] स्वं स्वं वर्गमुपजपेयुः।

[ गृहपतिकव्यञ्जननियोजनक्रमः ]

कर्षको वृत्तिक्षीणः[12] प्रज्ञाशौचयुक्तो गृहपतिकव्यञ्जनः। स कृषिकर्मप्रदिष्टायां भूमाविति समानं पूर्वेण[13]।

---

प्रमाणीकृत्येतिपदास्यार्थः

## जयमङ्गलाक्रोडपत्रम्

ननु प्रमाणीकृत्येतिमूलोक्तस्य अवधिं कृत्वेति जयमङ्गलायां निरूपितम् तत्र अवधिशब्दः मर्यादार्थकः कथं ज्ञातः? इति चेन्न शब्दकल्पद्रुमे तथोक्तत्वात्। तद्यथा—"अवधानं। सीमा कालः। "अथ चेदवधिः प्रतीक्ष्यते" इति भारविः। बिलं इति विश्वमेदिन्यौ"। इति।

अकुशलं व्याख्याति किञ्चिदिति। (पृ० २५५) कापटिकस्य प्रत्यावेदनं कर्म इति सूचयितुमाह इतीति।

## श्रीमूला

प्रव्रज्येत्यादि। प्रव्रज्याप्रत्यवसितः चतुर्थाश्रमात् प्रतिनिवृत्तः सन्न्यासं प्राप्य ततश्च्युतः: बौद्धशैवव्रतादिच्युतानामपीदमुपलक्षणम्। प्रज्ञाशौचयुक्तः प्रज्ञया मत्या

---

,, १. प्रज्ञेति। प्रज्ञाशौचयुक्त इत्यपि द्रष्टव्यम्। काकाक्षिगोलकन्याय···।

,, २. उदास्थित इति। उदित्युत्कर्षवाचित्वान्मोक्ष एव। तस्मादास्थितः प्रतिनिवृत्तः।

,, ३. स इति। वृत्तिकामत्वात्।

,, ४. हिरण्येति। तत्कर्मानुरूपराजार्पितहिरण्यः प्रभूतशिष्यश्च।

,, ५. कर्म कृषि-पाशुपाल्यवणिज्या-लक्षणम्।

,, ६. कर्मफलाच्चेति। मूलराशेरधिकात्।

,, ७ प्रव्रजितानामिति। शाक्याऽऽजीव-पाशुपतादीनाम्।

,, ८. प्रतीति। प्रत्येकम्।

,, ९. वृत्तीति। प्रव्रज्याप्रत्यवसितत्वाद्ये वृत्तिकामास्तानुपलक्ष्य उपजपेत्।

,, १०. एतेनैवेति। उपजापप्रकारमाह।

,, ११. प्रव्रजिताश्चेति। उदास्थितवत्।

,, १२ वृत्तिक्षीण इति। दैवात् क्षीणबीजबलीवर्दादिः।

,, १३. पूर्वेणेति। कर्मफलाच्च सर्वेत्यादि द्रष्टव्यम्।

## श्रीमूला

शौचेन सत्त्वेन च युक्तः, उदास्थितः तदाख्यः। प्रभूतहिरण्यान्तेवासी प्रभूताः प्रचुराः हिरण्यान्तेवासिनः धनानि शिष्याश्च यस्य स तथाभूतः। अनेन वार्ताकर्मापेक्षिता मूलधनसम्पत् कर्मकरसम्पच्चोक्ता। सः उदास्थितः, वार्त्ताकर्मप्रदिष्टायां कृषिवाणिज्यपाशुपाल्यकर्मार्थे उपकल्पितायां, भूमौ, कर्म वार्त्ताकर्म, कारयेद् अर्थादन्तेवासिभिः। कर्मफलाच्च सर्वप्रव्रजितानां सर्वेषां स्वकर्मकरातिरिक्तानामपि सन्न्यास्यादीनाम्। सर्ववेषधारिणामित्यपि पाठः। तत्र वेषधारिणः सन्न्यासिशैवशाक्यदिगम्बरादय एव। ग्रासाच्छादनावसथान् अन्नवस्त्रवासस्थानानि, प्रतिविदध्यात् संविदधीत। ग्रासादिप्रतिविधानस्य सर्वविषयत्वं प्रसिद्ध्यर्थं, प्रसिद्धिश्च तदर्थिनवनवान्तेवास्युपस्थानार्थेति बोद्धव्यम्। वृत्तिकामान् स्वदीयमानग्रासादिना नित्यदेहयात्रायां ये कामयन्ते तान्, उपजपेच्च उपजापेन वशीकुर्याच्च। एतेनैवेत्यादिरुपजापप्रकारः अनेन परिगृहीतेनैव बौद्धभिक्षुपाशुपतादिवेषेण। राजप्रयोजनं परराष्ट्रवृत्तगवेषणरूपं युष्माभिरनुष्ठेयं, गृहीतपरराष्ट्रवृत्तान्तैश्च धान्यतण्डुलादिभृतिग्रहणकाले सन्निधातव्यमित्यर्थः। सर्वेति। स्वं स्वं वर्गम् उपजपेयुः बौद्धा बौद्धं पाशुपताः पाशुपतम् इत्येवं स्वस्वजातीयम् उपजपेयुः उपजप्य स्वसहायान् कुर्युः।

कर्षक इति। वृत्तिक्षीणः कृषिवृत्त्या क्षयं प्राप्तः प्रज्ञाशौचयुक्तः, कर्षकः कृषिशीलः, गृहपतिकव्यञ्जनः तन्नामा। तत्कृत्यमाह—स कृषीत्यादि। भूमाविति समानं पूर्वेणेति, भूमावित्यादिकम् उदास्थितकृत्योक्तेन तुल्यम्। तच्च 'प्रभूतहिरण्यान्तेवासी कर्म कारयेत्। कर्मफलाच्च सर्वगृहपतिकव्यञ्जनानां ग्रासाच्छादनावसथानि'-त्यादिकं यथोचितमूह्यम्।

## वैदिकसिद्धान्तसंरक्षिणी

उदास्थितस्य लक्षणं कर्म चाभिधातुमाह—

प्रव्रज्याया इति। सन्न्यासिभावात् परिव्राजकभावात्। उपलक्षणार्थं चैतत्। प्रत्यवसितः प्रच्युतः, "स्वकर्मभ्यो हानं पतनम्" इति सूत्रात् प्रव्रज्याकर्मणि पूर्वमधिकृतः पश्चादनधिकृतः इति यावत्। प्रज्ञा शुश्रूषाद्यष्टबुद्धिगुणवती। शौचम् उपधया परीक्षितस्वाम्यनभिद्रोहः। प्रज्ञाशौचग्रहणं प्रतिभासम्पन्नस्य तत्कर्मणि नियोजनार्थम्। उदास्थितः पूर्वं मोक्षार्थं यत्नं कृतवान् अधुना तु तस्मात् च्युतः। तदुक्तं टिप्पण्याम्—"उदित्युत्कर्षवाचित्वान् मोक्ष एव। तस्मादास्थितः प्रतिनिवृत्तः" इति। सः वृत्तिकामः। तदुक्तं टिप्पण्याम्—"वृत्तिकामत्वादि"ति। तस्य कर्म आह स इति। वार्ताकर्म कृषिःपाशुपाल्यादि। तत्प्रदिष्टायां तद्योग्यायां। साधनसामग्रीसञ्चयार्थमाह प्रभूतेति। प्रभूतं हिरण्यं धनादि राजार्पितम्, छात्रवर्गश्च यस्य। तदुक्तं टिप्पण्याम्—"तत्कर्मानुरूपराजार्पितहिरण्यः प्रभूतशिष्यश्चेति। वेतनादिप्रदानार्थं हिरण्याद्युपयुज्यते, सहायकत्वेन च अन्तेवासी उपयुज्यते। अनेकेषां कार्याणां सौकर्येण साधनाय प्रभूतत्वं बोध्यम्। कर्मेति—"कृषिपाशुपाल्यवाणिज्यलक्षणं। कारयेत्

## वैदिकसिद्धान्तसंरक्षिणी

चराणां सफलता

स्वयं गुरुस्थानीयो भूत्वा इत्यर्थः। अन्तेवासिनश्च गुरुभक्ताः इति, स्वस्वकर्मणि-कुशलाः सफलाः भवन्ति गुरुभक्तिप्रयुक्तौचित्यस्य सत्वात्। कर्मफलान् "मूल-राशेरधिकात्" इति टिप्पण्याम्। परिवृद्धस्य विधिवत्पात्रेषु प्रतिपादनस्य राजवृत्तेः रन्तर्गततत्वात्। सर्वप्रव्रजितानां प्रव्रज्यानां प्रत्यवसितानां वा एतेन राज्ये स्थितानां साधूनामपि रक्षणं भवति।

एतन्मुखेन इतरचरादीनां जीवनं ततः देशस्थितसमस्तवार्तानां सङ्ग्रहणञ्च निर्बाधितयोपपन्नं भवति। टिप्पण्यां—तु "शाक्यजैन (आजीव) पाशुपतादीनां" इति। आवसथो निवासः। प्रति प्रत्येकं।" तदुक्तं टिप्पण्याम् "प्रत्येकमि"ति। ग्रासाच्छादनादिग्राहिषु ये वृत्तिकामाः तेषां कर्माह। वृत्तीति। टिप्पण्यांतु—"प्रव्रज्या-प्रत्यवसितत्वाद्येवृत्तिकामाः तान् उपलक्ष्य उपजपे"दिति। राजेति उपजापप्रकारमाह। एतेनेति। उदास्थितेनैव। राजार्थः राजप्रयोजनम् परराष्ट्रवृत्तगवेषणीयम्। अन्विष्य परकीय राजवृत्तप्रत्यर्पणम् इति शेषः। चरितव्यः–राजार्थः विचरन् ज्ञातव्यः। स तथा ज्ञातव्यः यथा आभासो न भवेत्। मत्सविधे कदाऽगन्तव्यम्? तदाह भक्तेति। चराणां भक्तं वेतनम् भवतीति ज्ञायते। सर्वप्रव्रजिताश्च–उदास्थितवत् सर्वश्रमणादयः उदासीनवदित्यर्थः। तदुक्तम् टिप्पण्याम् "उदास्थितवदि"ति। स्वमिति—पाशु-पतादयः स्वं स्वं पाशुपतादिवर्गमिति भावः। उपजपेयुः भिन्द्युः। अत्रायं भावः स्वस्ववर्गस्थिताः वेतनभोगिनः चराः तत्र तत्र सङ्घस्थितं वर्गं विभिद्य स्वसहायान् कुर्युरित्यर्थः।

तृतीयचरस्य गृहपतिकस्य स्वरूपम् कर्म चाभिधातुमाह कर्षक इति। कृषीवल इत्यर्थः। वृत्तीक्षीणः–वृत्तिशून्य इत्यर्थः। "दैवात् क्षीणबीजबलीवर्दादीत्युक्तं" इति टिप्पण्याम्। प्रज्ञेति व्याख्यातम्। उदास्थितवत् अस्य कर्म अभिधातुमाह स इति। कृषीवल इत्यर्थः गृहपतिक इति यावत्। उदास्थितसाधर्म्यात् तदीयं कर्म अतिदेष्टव्यं अतस्तदनभिधाय केवलं विशेषांशमभिधत्ते कृषीति। अतिदेशं सूचयितुमह समानमिति। तदुक्तं टिप्पण्याम् "कर्मफलादि च सर्वेत्यदि द्रष्टव्य" मित्यादि।

## जयमङ्गला

प्रव्रज्याया इति। परिव्राजकभावाच्छ्रमणभावाद्वा प्रत्यवसितः श्रान्तः प्रज्ञाशौचयुक्तत्वात् कर्मण्यः। स उदास्थित इत्येवंसंज्ञः[१] अपवर्गार्थमुद्यम्य निवृत्तत्वात् सर्वाश्रमत्यागादुत्कर्षाशयः[२]।..............

---

अशुद्धम्

१ इत्येवं सज्ञः।

२ इतः परं पत्रार्धपरिमिताः पङ्क्तयस्त्रुटिताः।

## जयमङ्गलाक्रोडपत्रम्

द्वितीयमुदास्थितं चरं गुणकर्मभ्यां स्फुटयन्नाह प्रव्रज्याया इति ।

प्रव्रज्या संन्यासः । प्रव्रज्याप्रत्यवसितः इति पाठान्तरेऽपि प्रव्रज्यायाः प्रत्यवसितः इत्यर्थो बोध्यः । प्रत्यवसितः श्रान्तः । इयं हि प्रव्रज्या उदास्थितस्य गुणः । अत्र श्रमणोऽपि सङ्गृह्यते । प्रव्रज्याया द्वितीयार्थमाह श्रमणेति । श्रमणो बौद्धादिः—तथा वक्ष्यते अत्रैव टिप्पण्याम्—"प्रव्रजितानां शाक्यजैनपाशुपतादीनां" इति ।

प्रव्रज्यायां श्रमः

ननु बौद्धानां प्रव्रज्याप्रत्यवसितत्वं ( श्रान्तत्वं ) कथं भवति ? इतिचेन्न । वेदेन यस्य श्रमणधर्मः कर्तव्यतया विहितः सः तस्माद्धर्मात् तदा विश्रान्तः यदा स धर्ममनुष्ठातुमशक्तः प्रव्रज्यया भ्रष्टो भवति । एवं स्थिते राज्ञा सः उदास्थितत्वमारोप्य चरकर्मणि नियोज्यते । एवं यत्यादिविषयेऽपि बोध्यम् । कथमेतदिति स्फुटी क्रियते । यतिः एकरात्राधिकमेकग्रामे न वसेदित्युक्तम् धर्मसिन्धौ—यतिधर्मे[1]

कर्तव्यानि षडेतानि सर्वथा नृपदण्डवत् इति ।

कौटिल्येनाऽपि-परिव्राजकस्य संयतेन्द्रियत्वं अनारम्भो निष्किञ्चनत्वं सङ्गत्यागः भैक्ष्यं नैकत्रारण्ये वासः' । इत्युक्तम् ।

यदि च यतिः एकरात्रापेक्षया अधिकं वसति ग्रामे, तर्हि तद्भरणस्य भारः ग्रामस्थेषु आपद्येत । स माभवतु इत्येतदर्थं यतिना भ्रमितव्यम् । परन्तुः सः असमर्थः यदि, तर्हि भ्रमणाद् विश्रान्तो भवति । तद्दशायामस्य प्रव्रज्याप्रत्यवसितत्वमुपपन्नं भवति । श्रान्त इति । (पृ० २६१) श्रमः धातुवैषम्यं अनारोग्यमितियावत् । तद् व्यक्तं काव्यप्रकाशविवरणे । तत्रैव द्रष्टव्यम् । एवञ्च व्याधिना निरुद्धत्वात् प्रव्रज्यायां साधयितव्यायाः एकाग्रतायाः समाधेर्वा अभावः प्रतिफलति ।

तदुक्तम्—योगसूत्रे—नारायणतीर्थैः तत्रैव द्रष्टव्यम्[2] ।

---

१ यतिहस्ते जलं दद्याद् भिक्षां दद्यात्पुनर्जलम् ।
भैक्ष्यं पर्वतमात्रं स्यात्तज्जलं सागरोपमम् ॥
एकरात्रं वसेद्ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत् ॥
अष्टौ मासान्विहारः स्याद्यतीनां संयतात्मनाम् ।
महाक्षेत्रप्रविष्टानां विहारस्तु न विद्यते ॥
भिक्षाटनं जपः स्नानं ध्यानं शौचं सुरार्चनम् ॥
कर्तव्यानि षडेतानि सर्वथा नृपदण्डवत् । ( धर्म-३ परिच्छेद )

२ व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥३०॥ ये चित्तं तत्फलसाधनेभ्यो योगादिभ्यो विक्षिपन्ति ते विक्षेपा ऐहिकामुष्मिक-फलप्रतिबन्धरूपा योगाद्यन्तराया नव ॥

## जयमङ्गलाक्रोडपत्रम्

अथवा—"बहिस्तूभयथापि स्मृतेराचाराच्च" इति सूत्रव्याख्यानानुसारेण प्रव्रज्याप्रत्यवसितत्वं बोध्यम् ।

वस्तुतस्तु "भिक्षोर्धर्मः शमोऽहिंसा तपोन्वीक्षे वनोकसाम् गृहिणो भूतरक्षेज्या" इति भागवतोक्तेः शमाहिंसाभ्यां च्युतः प्रव्रज्याप्रत्यवसितो बोध्यः । कर्मानुगुणं गुणान्तरमाह प्रज्ञेति । (पृ० २६१) प्रज्ञा–अष्टविधगुणविशिष्टा, शौचम्–उपधाया परीक्षितस्वाम्यनभिद्रोहः ।

उदास्थित इति । (पृ० २६१) उत् उत्कर्षार्थं मोक्षार्थं वा समन्तात् स्थितः यत्नं कृतवान् । अधुना तु तं न करोति इति, भूतकालार्थकक्तप्रत्ययनिर्देशादवगम्यते ।

इत्येवंसंज्ञः इति पाठसमीक्षा

उत्कर्षाशय इति । (पृ० २६१) अस्य विशेषणमि"त्येवं राज्ञ" इति । तथा च प्रागयं श्रौतधर्मानुष्ठानतत्पर आसीत् अधुना तु तथा नास्ति इति उदास्थितसंज्ञो भवति इत्येवंरीत्या एकं वाक्यं बोध्यम् । अस्मिन्मते "इत्येवंसंज्ञः ।" इति वाक्यच्छेदो न कर्तव्यः ।

अथवा भिन्नं वाक्यं परिकल्प्य पूर्वोक्तं व्याख्यानं बोध्यम् ।

उपायानां गूढत्वम्

ननु अस्मिन् संस्थोत्पत्तिप्रकरणे आदितः सान्तं य उपायाः उक्तास्ते सर्वे कथं गूढत्वेन व्यवहृताः ? गूढतया को वा प्रकाशं मासद्विमासानन्तरमश्नीयात् ? सर्वेषां पुरतः रहस्यप्रकाशकस्य शास्त्रस्य उपस्थितत्वात् । इतिचेत्सत्यम् । शास्त्रेषु सर्वं निरूपितमित्येतावन्मात्रेण सर्वोऽपि जनवर्गः तत्पठित्वा चक्षुष्मान् स्यादिति नास्ति स्थितिः । यतः वृत्तिवैचित्र्येण समाजस्थितानां स्वस्व विषयेष्वेव अनुरक्तिर्भवति अन्यत्र मोहश्च । वृत्तिवैचित्र्येण समाजः अष्टधा विभक्तो वर्तते । कामुको विदग्धः, श्रेष्ठी अर्थपरः विरागी, शूरः, ज्ञानवयोवृद्धः रसभाव-विवेचकः मूर्खः बालः स्त्री इति । एतेषु मूर्खाः नेपथ्ये एव रमन्ते नतु तत्वं विवेचयन्ति । केचन तर्के अनिष्णाताः शास्त्रं पठित्वाऽपि मुग्धाः भवन्ति । केचन विरलाः भवन्ति ये चाकचक्यं दृष्टवा लोलुभ्यमानाः न भवन्ति । अत्रेयमुपपत्तिः-येन सर्वज्ञेन जगद्विरचितं सः "तिरोधानमनुग्रहः सृष्टिः स्थितिः संहार" इति पञ्चविधं मृत्युभेदं निर्माति ।

अन्यथा भगवद्रूपं ब्रह्म जगतः पुरतः उपस्थितं भवत् जगन्मोहाद्दूरे स्थापयत् तस्य विलयाय कारणं स्यात् एवं स्थिते भगवतः प्रादुर्भावः जगतः उच्छेदाय कारणं भवेत् तन्माभवतु इत्येतदर्थं पुरतःतिष्ठन्नपि सः आत्मानं तिरोदधाति । अर्थात् द्रष्टुः पुरतः उपस्थितोऽपि ब्रह्मविशेषांशः अदृश्यो भवति । कथमेतदितिचेत् उच्यते

## जयमङ्गलाक्रोडपत्रम्

दृश्यं जगत् द्वैतमतानुसारेण सत्यतया उक्तं सदपि वैदिकसिद्धान्तानुसारेण मृषैवेति राजनीत्याऽपि संमन्यते। एवं स्थिते सर्वोऽपि प्रपञ्चः संस्कारात्मक एव। स च यथा सङ्कल्प्यते तथा दृश्यते। इत्येतावन्मात्रमेव जगत्स्वरूपम्। तत्र जगन्निर्मातुः ईश्वरस्य अयमेव सङ्कल्पो यत् अकुशलाः कुशला वा गुरुभक्तिरहिताश्चेत् मुग्धाः भवन्तु। इति। तस्यैवेदं फलं यदधीतशास्त्राणामपि अभक्तानां मोहो भवति। तथाविधानां राज्यकार्यसञ्चालनाय उच्चपदस्थाने नियोजनं न राजनीत्यनुमतम्। एते च उत्कृष्टत्वाभिमानिनः मोहपरतन्त्रया विकृताः सन्तः अनुत्तीर्णगुणाः भवन्ति। ये किल शास्त्रपरतन्त्राः गुरुभक्ताः तथाविधानां सङ्ग्रहः राज्ञा कर्तव्यः। इत्थं च राजा सिद्धतापसव्यञ्जनादिप्रचारं तत्रैवानुतिष्ठेत् येषां सङ्ग्राह्यत्वमस्ति। एवं च चर कर्मणा दोषं बुद्ध्वा कण्टकाद् राज्यं तेन रक्षितव्यं भवति। यदि च छलादिप्रयोगाद् दूरं साधून् स्थापयित्वा तान् मित्रभावेन सङ्गृह्णाति तर्हि राज्यस्य त्रिवर्गसमृद्धिः नियता भवेत्। अतएव कामसूत्रे पारदारिकं भार्याधिकारिकमित्यादि भेदेन सर्वविधां कामस्थितिमुक्त्वा स्वीयभार्याणां रक्षणम् कार्यविशेषे पारदारिकादिप्रसङ्गञ्च ज्ञात्वा दुष्टादुष्टविवेको भवति विदुषाम्। तथा प्रकृतेपि मोहवशाद् ईश्वरसङ्कल्पेन जनितान्मोहात् दुष्टाः शास्त्रेण उक्तेऽपि उपाये तस्माद्वञ्चिताः भवन्ति इति न रहस्योद्घाटनरूपो दोषः पदमादधाति। नेदं शास्त्रकर्तृणामननुमतम्। तैरेव तथाऽनुष्ठानात्। तथाहि—ये किल शास्त्रज्ञाः वेदसिद्धान्तमुपेक्ष्य जगतः सत्यत्वमनुमन्यन्ते। तेषामहङ्कारनिरासाय अनभ्यर्हितमपि वितण्डामतमवलम्ब्य खण्डनखण्डखाद्यनिर्मितिः ग्रन्थकृता कृता। तथाचोक्तम् मङ्गलाचरणे—

शब्दार्थनिर्वचनखण्डनया नयन्तः सर्वत्र निर्वचनभावमखर्वगर्वान्।
धीरा यथोक्तमपि कीरवदेतदुक्त्वा लोकेषु दिग्विजयकौतुकमातनुध्वम्[1]। इति।

---

१ श्रुतिजनित बोधरक्षामेव खण्डनप्रयोजनं मत्वा परान् शिक्षयति शब्दार्थेति। यथोक्तमेतद्ग्रन्थस्वरूपं शुकवदुक्त्वापि दिग्विजयेन यत्कौतुकं तद्विस्तारयत दिक्ष्वित्यर्थः। कुतर्काभ्यासरसिकानां पराजयक्रीडैव कौतुकं क्रीड़ा।तथा च ईदशक्रीडा बहिर्मुखतादशायां कार्येत्युपदेशः। कौतुकमाश्चर्यं लोके हि दर्शयतेत्यपि केचित्। अखर्वगर्वान् अनल्पगर्वान् शब्दश्चार्थश्च तयोर्निवचनं निरुक्तिः तत्त्वानुभूतिः प्रमेत्यत्र तस्यभावस्तत्वमिति। किमयं यौगिकः शब्दः किंवाऽखण्डमेव तत्त्वपदं क्वचिदर्थे रूढमिति शब्दनिरुक्तिः तत्वं यदि अबाधितं रूपं तदापि किं स्वस्याबाधितं उत परस्य तत्रापि किं यस्य कस्यचिदथ सर्वस्याथवा स्वपरसाधारणस्य सर्वस्य तदपि किञ्चित्कालनियतं सर्वकालनियतं वेत्याद्यर्थनिरुक्तिः, तस्याः खण्ड़ना दोषज्ञापना, सर्वत्र सर्वस्यां कथायां—

## जयमङ्गलाक्रोडपत्रम्

प्रतारणाया अनुमतत्वम्

अतएव "यदि च वेदान्तसिद्धान्तः सत्यः प्रपञ्चश्च मायिकः इति यथावत्स्वीक्रियते तर्हि तत्सिद्धान्तानुयायिनः समाद्रियन्ते" इत्यादि निबन्धकर्तॄणां वचनं साधु-सङ्गच्छते। एतेन मूढानां कामिनामर्थप्रधानरजस्तमोवृत्तीनां निरासाय राज्यसंरक्षण-कामेन राज्ञा कृतापि प्रतारणा न विधिमतिक्रामतीति स्फुटं भाति। अत्रोदाहरणम्—भक्तानां भागवतधर्मः स सर्वथा कैतवरहितः[1] इति पूर्वोक्तानुमतत्वसिद्धौ स्फुटं भवति।

अन्यथा कश्चिद् भक्तोऽपि भूत्वा मानमदादिना यदि अन्धो भवति तर्हि तद्दोष निरासाय भगवतः कैतवकरणमनुपपन्नं स्यात्। अत्र प्रमाणं 'ज्ञानिनामपि चेतांसि' इति (सप्तशति) "मत्तः स्मृतिर्ज्ञान मपोहनं चेति इत्यादि (गीता) वाक्यं स्मर्तव्यम्।

विपरीतसंस्कारोद्बोधः

ननु ज्ञानविपरीताः संस्काराः ज्ञानिनां कथमुत्पद्यन्ते इतिचेद् व्यञ्जनाव्यापारेण अन्यादृशसंस्कारोत्पत्तिदर्शनात् प्रतिबन्धकं प्रति उत्तेजकत्वाच्च नेदमनुपपन्नम्।

तद्यथा—रामो नाम बभूव हुँ तदबला सीतेति हुँ तौ पितुः।
　　वाचा पञ्चवटीवने निवसतस्तामाहरद् रावणः॥
　　कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरिताम्।
　　सौमित्रे! क्व धनुर्धनुर्धनुरिति प्रोक्ता गिरः पान्तु वः॥—

इत्यलमतिविस्तरेण।

---

वादजल्पवितण्डात्मिकायां यद्वा सर्वत्र शब्दे अर्थे लक्ष्ये लक्षणे च निर्गतं वचनं येभ्यस्ते निर्वचना मूकास्तस्य भावो मूकत्वं नयन्तः प्रापयन्तः। उक्त्वापि उच्चार्यापि अर्थज्ञानाधिकोत्प्रेक्षाहीना अभीत्यर्थः। शब्दार्थयोर्निर्वचने निरुच्येते इति निर्वचने सद-सत्त्वे शब्दार्थौ न सत्यौ बाध्यमानत्वात् नाप्यसत्यौ प्रत्यक्षत्वादिति। तत्खण्डनी न सन्ना-प्यसन्नापि सदसत्किन्त्वनिर्वचनीयं शब्दार्थयुगलमित्येवंरूपा। तया सर्वत्र देवासुरमानु-षयोनिषु येऽभिमानाः गर्वापसर्याया अहङ्कारा अखर्वाश्च ते गर्वास्तान्निर्वचनभाव-मनिर्वचनीयत्वं नयन्तः अध्यासरूपतामापादयन्त इति यावत्। दिश्यते व्यपदिश्यते आचार्येणेति दिक् ब्रह्म। विजयते इति। दिग्विजयोऽविद्यादि तस्य कौतुकं कोलाहल-मातनुध्वं किं कृत्वोक्त्वा निरुच्य सत्त्वेनेति शेषः। एतन्नामार्थयुगलं यथोक्तं प्रथमश्लोकोक्तविशेषणयुक्तमपि शब्दाद्वक्ष्यमाणस्वरूपं ब्रह्म ध्यात्वा। कीरः शुक इत्यर्थः। इत्यपि व्याचक्षते। तदसाधीयः। तथासति ब्रह्मोपासनैव निदिध्यासनात्मि-केत्युक्तं भवति॥३॥

१　धर्मः प्रोज्झितकैतवोऽत्रपरमो निर्मत्सराणां सताम्।
　　वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्॥
　　श्रीमद्भागवते महामुनिकृते किंवा परैरीश्वरः।
　　सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्। इति।

[ वैदेहकव्यञ्जननियोजनक्रमः ]

**वाणिजको[1] वृत्तिक्षीणः प्रज्ञाशौचयुक्तो वैदेह[2]कव्यञ्जनः । स वणिक्कर्मप्रदिष्टायां भूमाविति समानं पूर्वेण[3] ।**

[ तापसव्यञ्जनस्य भाव्यर्थकथकत्ववेषेण नियोजनक्रमः ]

**मुण्डो[4] जटिलो[5] वा वृत्तिकामस्तापसव्यञ्जनः । स नगराभ्याशे प्रभूतमुण्डजटिला[6]न्तेवासी शाकं यवसमुष्टिं वा मासद्विमासान्तरं प्रकाशमश्नीयात्, गूढमिष्टमाहारम् ।**

## श्रीमूला

वैदेहकव्यञ्जनसंज्ञमाह — वाणिजक इत्यादि । वृत्तिक्षीणः धनविरहाद्वाणिज्यवृत्तिच्युतः । भूमाविति समानं पूर्वेणेति । तच्च 'प्रभूतहिरण्यान्तेवासी' त्यादिकं 'स्वं स्वं वर्गमुपजपेयुरि''त्यन्तं । प्रव्रजितशब्दस्थाने वैदेहकशब्दस्य यथास्थानयोजनेन बोद्धव्यम् ।

तापसव्यञ्जनाख्यमाह—मुण्ड इत्यादि । मुण्डः भिक्षुक्षपणकादिः । जटिलः शैवपाशुपतादिः । शाकं हरिताख्यं सस्यम् ।

'मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् ।
त्वक् पुष्पं कवकं चेति शाकं दशविधं स्मृतम् ॥'

इत्युक्तरूपं, वृक्षमूलपत्रफलाकं वा । यवसमुष्टि मुष्टिमेयं तृणम् । मासद्विमासान्तरम् एकमासव्यवहितं मासद्वयव्यवहितं वा, इदमशनक्रियाविशेषणम् । प्रकाशं सर्वजनप्रत्यक्षं यथा भवति तथा ईदृशं प्रकाशाशनं निराहारख्यात्यर्थम् । गूढम् अन्याविदितम् ।

## वैदिकसिद्धान्तसंरक्षिणी

वैदेहकस्य स्वरूपं कर्मचाभिधातुमाह वाणिजक इति । वणिगेव वाणिजकः इति । वृत्तिक्षीणः धनादिविरहात् । प्रज्ञाशौचेति प्राङ्निर्दिष्टम् । ( प्र० खं० २ पृ० २६० ) वैदेहक इति । विदेहराजशास्त्रानुष्ठानाद् वैदेहकव्यञ्जनः । कर्माभिधातुमाह वणिगिति । शेषं कर्षकवद्बोध्यम् । तदुक्तं टिप्पण्याम्—''शेषं गृहपतिसमान''मिति ।

---

नी० टि० १ वाणिजक इति— वणिगेव वाणिजकः ।
,, २ वैदेहकेति—विदेहराजशास्त्रानुष्ठानाद् वैदेहकव्यञ्जनः ।
,, ३ पूर्वेणेति—शेषं गृहपतिसमानम् ।
,, ४ मुण्ड इति—शाक्याऽऽजीवादिः ।
,, ५ जटिल इति—पाशुपतादि ।
,, ६ जटिलान्तेवासीति—जटिलग्रहणं मुण्डादीनामप्युपलक्षणार्थम् । यदि शाक्यः क्षपणको वा तापसव्यञ्जनस्तदा तच्छिष्या मुण्डा अपि भवन्ति ।

## वैदिकसिद्धान्तसंरक्षिणी

तपसव्यञ्जनस्य स्वरूपं कर्म चाभिधातुमाह मुण्ड इति । मुण्डः शाक्याजीवादिः । भिक्षुकः क्षपणकादिः । जटिलः पाशुपतादिः । तस्य चरकार्ये नियोजने हेतुमाह वृत्तीति । तापसव्यञ्जनः इति लक्ष्यनिर्देशः । तस्य कर्माभिधातुमाह स इति । गुरुस्थानीयः तापसव्यञ्जनः । तस्य योगित्वं सिद्धिदातृत्वञ्च प्रख्यापयितुमाह नगरेति । तत्र तत्र यथायोगं चराणां नियोजनाह प्रभूतेति । जटिलेति । एतदुपलक्षणार्थं मुण्डश्रमणादीनां । तदुक्तम् टिप्पण्यां—"जटिलग्रहणं मुण्डादीनामप्युपयलक्षणार्थम् । यदि शाक्यः श्रमणको वा तापसव्यञ्जनः तदा तच्छिष्याः मुण्डा अपि भवन्ति" इति । मुण्डजटिलादयः अन्तेवासिनो यस्य एवंभूतः कथं सिद्धिं प्रकाशयेत् इत्याह शाकमिति । एतेन व्रतोपवासनियमपरतयाऽऽत्मनः शमरसप्राधान्यम् प्रदर्शितं भवति । तथा चोक्तं-

> शाकमूलफलैरन्नैः शरीरस्थितिसाधनम् ।
> व्रतोपवासनियमैः वल्कलाजिनधारणम् ।। इति । (प्र० १ खं० २ पृ० १८४)

मासमिति । ( मासकक्षुद्योगादि सुश्रुतादौ औपनिषदिकोक्तं स्मर्तव्यम्[1] ) 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीयानिर्देशात् मासात्पूर्वं कृतोऽपि आहारः यथा प्रकाशं न गच्छेत् तथा प्रयतनीयमिति भावः ।

ननु मासद्विमासानन्तरं प्रकाशं यवसमुष्टिभोजने कथमस्य जीवनं स्यात् इति चेदाह गूढमिति ।

## जयमङ्गलाक्रोडपत्रम्

### प्रयोगभेदः

**मूले वाणिजक इति । (पृ० २६६) ननु अत्र पृथक् पृथक् चतुर्विधाः प्रयोगा उक्ताः तद्भेदकारणं किमितिचेत्; ज्ञानार्थकृषितापसभेदेन तत्तदर्थित्वभेदः कारणमिति ।**

---

१ टी०—मासोपवासयोगस्य प्रकारान्तराण्याह । माषयवेत्यादि । माषादि चतुष्टयचूर्णं क्षीरघृताभ्यां मिश्रितं पीत्वेत्येकः प्रकारः, वल्लीक्षीरघृतं समप्रमाणसिद्धं पीत्वेति द्वितीयः, सालपृश्निपर्णीमूलकल्कं पयसा मिश्रं पीत्वेति चतुर्थः । तत्र माषो मलदः, यवो दीर्घशूकः, कुलत्थो धान्यभेदः, क्वचित्तु कुलस्थेति पाठः । दर्भः अश्ववालः । वल्ली अजमोदकः । सालः अर्जुनः, पृश्निपर्णी लाङ्गली, कल्कः द्रव धश्चूर्णम् ।

श्वेतबस्तमूत्रे सप्तरात्रोषितैः सिद्धार्थकैः सिद्धं तैलं कटुकालाबौ मासार्धमासस्थितं चतुष्पदद्विपदानां विरूपकरणम् ।

वैदेहकान्तेवासिनश्चैनं समिद्धयोगैरर्चयेयुः शिष्याश्चास्या[1]वेदयेयुः—

## श्रीमूला

वैदेहकेति । वैदेहकान्तेवासिनश्च वणिग्वृत्तयः शिष्याश्च, एनं तापसव्यञ्जनं, समिद्धयोगैः समिद्धैः समृद्धैः, योगैरिष्टार्थलाभैः, अर्चयेयुः सभावयेयुः । अथवा समिद्धयोगैः तापसप्रसादात् समृद्धार्था वयमिति कपटयुक्तिभिः, अर्चयेयुः धनदानादिना पूजयेयुरित्यर्थः । शिष्या इति । अस्य तापसस्य शिष्याश्च असौ तापसः, सिद्धः योगी, अत एव सामेधिकः समेधा भाविनी सम्पत्तिः तदभिज्ञः, इति आवेदयेयुः प्रख्यापयेयुः ।

## वैदिकसिद्धान्तसंरक्षिणी

वैदेहकेति । अन्तेवासिनः तच्छिष्याः अथवा वैदेहकाः वणिजः विदेहराजेन प्रोक्तायां विद्यायां निपुणा वैदेहकाः । अन्तेवासिनः शिष्या दरिद्राः । एते देवता-सान्निध्यप्रकाशनार्थम् यं तापसं बृहत्या पूजया पूजयन्ति स योगित्वेन जनपदे प्रगटो भवति । एनं तापसव्यञ्जनं । समिद्धयोगैः समृद्धैर्योगैः इष्टार्थलाभैः । अर्चयेयुः यथा तापसव्यञ्जनानां महत्त्वं प्रकाशितं भवेत्तथा अर्चयेयुरित्यर्थः । विद्याप्रकाशनमुखेन सार्वज्ञनिरूपणेन । सतां सङ्ग्रहार्थं आह शिष्या इति ।

## जयमङ्गलाक्रोडपत्रम्

मूढानां आकर्षणार्थमाह मूले वैदेहक इति । अर्चयेयुः इति । लोको हि पूजितपूजको भवति[2] ।

मूल समिद्धेति । एतेन मूढानामपि नासङ्ग्रहः यत ते पूजितस्य पूजकाः भवन्ति । तदाह अर्चयेयुरिति । अर्चनेन सिद्धादिभिः स्थापितायां प्रतिमायां देवत्वं संपद्यते[3] । तथा च देवतायाः सान्निध्यस्य प्रकाशनाय बृहती पूजा वैदेहकैः कार्या । तेन तापसानां योगित्वं प्रकटीभवति । नेपथ्यदर्शनेनाविद्या अपि आकृष्टा भवन्ति । तत इतरे शिष्या दरिद्राः तापसानां महत्वं प्रकाशयेयुः । इति नान्यतरवैयर्थ्यम् । नवाऽर्चनासमर्थस्य शिष्यस्य वैयर्थ्यम् ।

---

नो० टि० १ अस्येति—सिद्धतापसव्यञ्जनस्य ।

२ गतानुगतिको लोको न लोकः पारमार्थिकः ।
वालुकापिण्डमात्रेण गतं मे ताम्रभाजनम् ॥

३ तदाहुः—

अर्चकस्य तपोयोगात् अर्चनस्यातिशायनात् ।
आभिरूप्याच्च बिबानां देवः सान्निध्यमृच्छति । इति ।

"असौ सिद्ध स्सामेधिकः[1]" इति। [2]समेधाशास्तिभिश्चाभिगताना[3]मङ्ग-विद्यया[4] शिष्यसंज्ञाभिश्च[5] कर्माण्यभिजने (ईप्सितानि)[6] ऽवसितान्या (प्रत्या) दिशेद[7]ल्पलाभं[8], अग्निदाहं, चोरभयं[9], दूष्यवधं[10], तुष्टदानं, विदेशप्रवृत्ति-ज्ञानं[11], "इदमद्य श्वो वा भविष्यतीदं वा राजा करिष्यति[12]" इति॥

---

## जयमङ्गलाक्रोडपत्रम्

मूले शिष्या इति। (पृ० २६८) शिष्याणां माध्यमेन मतिभावप्रकाशनद्वारा आत्मनि विश्वासभावसंपादनार्थमियमुक्तिर्बोध्या। तथाचोक्तम् टिप्पण्याम् "प्रसिद्धिवशा-दिति"। प्रसिद्धिश्च वैदिकसिद्धान्तसंरक्षिण्यां व्याख्याता (प्र० १ खं० १ पृ० ११) तत एवानुसन्धेया। अत्रायं भावः—राजा हि विद्यां द्वारीकृत्य वार्तादिकुशलान् अभिमुखी-कृत्य सर्वेषां हितप्रदर्शनेन मनः आकृष्य च विद्वद्भ्यः धनं वितरति। एतेन विदुषां सतां च सङ्ग्रहः आञ्जस्येन भवति। तदुक्तं टिप्पण्याम्—"अनेन सत्पुरुषसङ्ग्रहस्स्या-दि"त्यादि।

## श्रीमूला

एवमारोपितमाहात्म्यस्तापसव्यञ्जनः किं कुर्यादित्याह—समेधाशास्तिभिरिति। समेधाशास्तिभिः अभिगतानां भाविसम्पद्विज्ञानाभिलाषैस्तां प्रष्टुमागतानाम्, अभिजने अवसितानि कर्माणि तत्कुलनिष्पन्नानि वृत्तानि, अङ्गविद्यया अङ्गानां शरीरा-वयवानां प्रश्नकालिकचेष्टाविशेषैः शुभाशुभज्ञप्तिप्रतिपादकेन ज्योतिषाङ्गशास्त्रेण, पुष्पशकट्येत्यन्ये, सा त्वाकाशवाणी। शिष्यसंज्ञाभिश्च शिष्याणामक्षिभ्रूविलासादि-सूचनैश्च, आदिशेत्, कथयेदित्यर्थः। आदेष्टव्यान्तराण्याह—अल्पलाभं किञ्चिद्ध-नप्राप्तिं आदिशेत् प्रष्टुर्मध्यमत्व इत्यौचित्यलभ्यम्। अग्निदाहं चोरभयं च,

---

नो० टि० १सामेधिक इति—समेधायै वृद्धये प्रभवति।

,, २ समेधेति—समेधनं समेधः।

,, ३ अभिगतानामिति—अर्थिनाम्। प्रसिद्धिवशात्।

,, ४ अङ्गविद्ययेति—यया प्रष्टुः प्रश्नसमये अङ्गस्पर्शं दृष्ट्वा आदेशः क्रियते।

,, ५ संज्ञाभिरिति—सङ्केतितस्वाङ्गविकारैः।

,, ६ ईप्सितानीति—जातेरनुरूपाणि।

,, ७ प्रत्यादिशेदिति—प्रतिपुरुषम्।

,, ८ अल्पलाभमिति—मन्त्री ते वस्त्रयुगं दास्यतीति।

,, ९ चौरभयमिति—चौरभयं अग्निदाहं च दूष्यगृहेष्वेव।

,, १० दूष्यवधमिति—राज्ञः सकाशादस्य मृत्युरिति।

,, ११ प्रवृत्तीति—उदन्तः शिक्षितपारावतगलबद्धपत्रकाद् विदित्वा।

,, १२ करिष्यतीति—आदिशेदिति सम्बन्धः।

## श्रीमूला

आदिशेत्, प्रश्नकृतो राजापकारित्वे। दूष्यवधं ये दूष्याः कृत्याः प्रष्टारस्तेषां वधम्, आदिशेत्। तुष्टिदानं सन्तोषनिमित्तमर्थदानम्, आदिशेत्, प्रश्नकृतो राजोपकरित्वे। विदेशप्रवृत्तिज्ञान दूरदेशवृत्तान्तज्ञानम्। आदिशेत् इदमद्य श्वो वा भविष्यतीत्यादिशेत्। इदमद्य श्वो वा राजा करिष्यतीत्यादिशेत्। वाक्यान्त इति—शब्दः प्रकारार्थः। एवञ्जातीयमन्यच्चादिशेदित्यर्थः।

## वैदिकसिद्धान्तसंरक्षिणी

सिद्धतापसव्यञ्जनस्य सिद्धत्वार्थख्यापनार्थं एनं प्रति किं आवेदयेयुरित्याह असाविति। असौ तापसः। तम् व्याख्याति सिद्ध इति। योगी सामेधिकः। 'समेधायै वृद्धये प्रभवति' इति टिप्पण्याम्। श्रीमूलायां तु—"समेधा भाविनी सम्पत्तिः तदभिज्ञः" इत्युक्तम्। पूजितस्तापसः किं कुर्यादित्याह स मेधेति। सः तापसः पूजितः इति शेषः। अत्र मेधेतिच्छेदः। समेधेति व्याख्याने समेधनं समेधः इति टिप्पण्याम्। "भाविसम्पद्विज्ञानाभिलाषैः" इति श्रीमूलायाम् व्याख्यातम्। अनुग्रहतः समेधस्य सम्वर्धनस्य आशास्तिभिः आशासानैः। तत्रैव व्यक्तं जयमङ्गलायाम्-"आशंसनानीत्यादि"। अभिगतानामर्थिनाम्। कुतोऽर्थित्वमिति चेत् "प्रसिद्धिवशादि"ति टिप्पणी बोध्या। कथ बोधयितव्यं इत्याह अङ्गेति। अङ्गविद्या मिताक्षरो करपल्लवी च विद्या तद्व्यक्तं कामसूत्रे। तत्रैव द्रष्टव्यम्। जयमङ्गलायान्तु 'ज्योतिषनिमित्तज्ञानादिकया" इति उक्तम्। "यथा प्रष्टुः प्रश्नसमये अङ्गस्पर्शं दृष्ट्वा आदेशः क्रियते"। इति तु टिप्पण्याम् व्याख्यातम्।

व्याख्यातञ्चैवम् श्रीमूलायां गणपतिशास्त्रिभिः—"अङ्गानां शरीरावयवानां प्रश्नकालिकचेष्टाविशेषैः शुभाशुभज्ञप्तिप्रतिपादकेन ज्योतिषाङ्गशास्त्रेण पुष्प शकट्येत्यन्ये सा तु आकाशवाणी" इति। शिष्यसंज्ञाभिः आकारेङ्गितादिभिः। नीतिनिर्णीतौ तु 'सङ्केतितस्वाङ्गविकारैः" तथा श्रीमूलायां "शिष्याणां अक्षिभ्रूविलासादि सूचनैः" इत्युक्तम्। किं तद् बोद्धव्यम् इत्याह कर्माणीति। अभिजनेप्सितानि। 'जातेरनुरूपाणि" इति टिप्पणी बोध्या। उपस्थितस्य जनस्य ईप्सितानि कर्माणि वीणावादकत्वादिकर्माणि। प्रत्यादिशेत् प्रतिपुरुषं पूर्वमेव कथयेत् कीर्तयेत् तेन सार्वज्ञख्यातिः। एतेन अपरेऽपि तत्रोपस्थिता भवेयुरिति लाभः। अथवा निर्देष्टव्यानि गृहकर्माणि बोद्धव्यानि। तेषु कानि चनेप्सितानि कर्माणि बोधयितुमाह अल्पेति। अत्र कर्मवैजात्यतारतम्यं राजापकरित्वतदुपकारित्वभेदेनौचित्यपुरःसरं यथायोगं बोध्यानि। यथा—अल्पलाभः मन्दस्य, उपकारिणः तुष्टिदानं, अपकारिणो दूष्यवधादि।

अल्पलाभमिति। 'मन्त्री ते वस्त्रयुगं दास्यति' इति टिप्पण्याम्। अग्नीति। 'अग्निदाहं चौरभयं दूष्यगृहेष्वेवे"ति टिप्पणी अस्ति। दूष्येति राज्ञः सकाशात् अस्य मृत्युरिति। लोकसम्प्रत्ययार्थमाह इदमिति। करिष्यतीति अदिशेदिति शेषः।

## जयमङ्गला

···दासस्तु कर्त्तव्या लोकद्वयबहिष्कृता । आशास्तय आशंसनानि ताभिर्हेतुभिः, आगतानामङ्गविद्यया ज्यौतिषनिमित्तज्ञानादिकया । तैश्च संसृष्टवतां शिष्याणां स्वाङ्गस्पर्शादिसंज्ञाभिः । कर्माण्यभिजनेऽवसितानीति । इदं ते कर्म वीणावादकत्वं वैश्यश्चासि[२] सेवाञ्चे[1]च्छसीति प्रत्ययात् प्राग् आदिशेत् । अथवा कर्माण्येव यान्य-भिजनापेक्षयाऽभीप्सितानि तानि वैद्यत्वेन जीवनमश्वदमकत्वेन वेति । किञ्चाल्प-लाभंश्श्वस्ते वस्त्रलाभो भविता यथौचित्यं[२] । बलाद् दक्षिणपूर्वस्यामग्निरुत्थाता । चोरेभ्यो[3] भयं चोराणां वा पञ्चरात्राद् भविता । दूष्यवधम् । प्रष्टुमभिप्रेतं बुद्ध्वा कामस्ते सम्पन्नः येनासौ स्वामी[४] सन्तुष्टः । न सम्पन्नस्ते येनासावसन्तुष्टः[५] तत्कुलोपाशंसुप्रभृतीनादाय[६] नियमनं भविता । विदेशप्रवृत्तिज्ञानम्[७] । कलिङ्गेषु राजा मृत इति आ पञ्चरात्राद्धि स्फुटमेतद् भविष्यतीति । इदमद्यैव राज्ञा दौर्मनस्यं सौमनस्यं श्वः पुनरिदं भविता इदं वा राजा शोभनमशोभनं वा करिष्यतीत्यादिशेत् ।

## जयमङ्गलाक्रोडपत्रम्

### मायातो रक्षणम्

अङ्गविद्ययेति । ननु मुण्डजटिलतापसव्यञ्जनेन देशे सर्वत्र माया प्रसृता वर्तते ततः आत्मा कथं संरक्ष्यः इतिचेदन्वीक्षैव शरणम् । (वै० सि० सं० विनयाधिकारिके २ अध्याये द्रष्टव्यम् ) अन्यथा तु विक्षेपव्यासङ्गजाड्यादिभिः मोहः वस्तुतत्वबोधनाय प्रतिबन्धको भवेदेव ।

### विधेयजीवनम्

शिष्याणामिति । अत्रेदं टीकाकृतां तात्पर्यम्-करपल्लवीविद्यायां अङ्गस्पर्शेन सङ्केतमुपजीव्य प्रवृत्ताः अङ्गादिकं स्पृष्टवा गुरुं बोधयन्ति । गुरुस्तु पूर्वक्लृप्तसङ्के-तानुसारेण अर्थं बुद्धवा प्रष्टारं उत्तरेण समादधाति । तदेवाह अङ्गेत्यादिना

### सेवाञ्चेति पाठसमीक्षा

अयं पाठो ग्रन्थस्वारस्येन शोधितः ।

प्रागिति । प्रष्टुः कथनात्पूर्वमित्यर्थः । कर्मान्तरमाह अथवेति । अस्मिम् पक्षे इमानि कर्माणि गृहकर्माणि बोद्धव्यानि । तदेवाह अभिजनेति । किं तद् अभिजनेप्सितमिति स्फुटीकर्तुमाह तानीति ।

---

अशुद्धम् — १ सेवान्वे २ यथाचेयं ३. चोरेभ्यो भयं चाराणां
,, ४. येना सावसन्तुष्टः ५. सन्तुष्टः
,, ६. प्रभृतीनामादाय ७. विदेशप्रतिज्ञानं ।

## जयमङ्गलाक्रोडपत्रम्

### यथौचित्यमिति पाठसमीक्षा

**यथौचित्यमिति।** (पृ० २७१) पाठोऽयं श्रीमूलव्याख्यानुसारेण संशोधितः। तद्यथा "आदेष्टव्यान्तराण्याह– अल्पलाभं किंचिद्धनप्राप्तिम्, आदिशेत्, प्रष्टुर्मध्यमत्व इत्यौचित्यलभ्यम्" इति। तथाच औचित्यमित्यत्र वाक्यच्छेदः। एतेन इवस्ते वस्त्रलाभो भविता यथौचित्यम् इति रीत्या जयमङ्गलाशायः स्फुटो भवति। बलात् इत्युत्तरेणान्वयी। अयं वस्त्रलाभः मन्त्रिद्वारा बोध्यः। तदुक्तम् टिप्पण्याम्–"मन्त्री ते वस्त्रयुगं दास्यतीति" इति। वक्ष्यमाणं तुष्टिदानं तु राज्ञः सकाशाद् बोध्यम्। वक्ष्यति चैतद् स्वामीत्यादिना। तेन अल्पलाभतुष्टिदानयोः न पौनरुक्त्यप्रसङ्गः।

### चोरेभ्य इति पाठसमीक्षा

**चोरेभ्य इति।** चोरेभ्यो भयं चौराणां वा इत्ययं पाठः मूलानुसारेण टिप्पण्यनुसारेण च संशोधितः। तदुक्तम् –"चौरभयं अग्निदाहं च दूष्यगृहेष्वेवेति"। दूष्येति। (पृ० २७१) कुतौ दूष्यवधः इतिचेदाह प्रष्टुमिति।

### सन्तुष्ट इति पाठसमीक्षा

**सन्तुष्टः इति।** (२७१) तथाच प्रष्टुमभिप्रेतमित्यारभ्य सन्तुष्टः इत्यन्तमेकं वाक्यं बोध्यम्। तेन तुष्टिदानमित्यर्थः स्फुटो भवति। "न संपन्नः" इत्यारभ्य असन्तुष्टः भवितेत्यन्तं द्वितीयं वाक्यं बोध्यम्।

### तुष्टिदानस्य व्यतिक्रमेणव्याख्याप्रयोजनम्

ननु मूलक्रमव्यतिरेकेण तुष्टिदानदूष्यवधौ कुतौ विपर्यस्य व्याख्यातौ? इतिचेत्। दूष्यवधकर्तृत्वं राज्ञ एव इति लाभार्थम् इति गृहाण। तथा च दूष्यवधः तुष्टिदानं च उभयमपि राजकर्तृकमेव बोध्यम्। अत्र हि न्यायः अर्थक्रमस्य शब्दक्रमापेक्षया बलीयस्त्वरूपो बोध्यः।

### प्रभृतीनादायेति पाठसमीक्षा

**प्रभृतीनिति** (पृ० २७१) अयं पाठः उपर्युक्तनिर्वचनानुसारेण संशोधितः।

### विदेशप्रवृत्तीति पाठसमीक्षा

**विदेशेति।** (पृ० २७१) इदं पाठशोधनं मूलानुसारेण बोध्यम्।

**पञ्चरात्रादिति।** (पृ० २७१) अत्रेदं बोध्यम्—"उदन्तः शिक्षित पारावतगलबद्धपत्रकाद् विदित्वा" इति टिप्पणीव्याख्यानेन स्फुटं भवति यत् द्रुतगतिमत्पारावतद्वारा रहस्ये कलिङ्गेषु राजा मृत इत्यादि स्वयं वेदितव्यम्। ततः कलिङ्गदेशात् एतावत्पर्यन्तं पत्रप्राप्तिः यावद्भिर्दिवसैः भवति तान् दिवसान् परिगणय्य "अमुकदिवसे अमुकदेशे अमुकस्य राज्ञः एवं स्थितिरभूत् अथवा भविष्यति" इत्याद्युपदेशेन मुण्डनैः सार्वज्ञं सूचयितव्यं भवति इति पञ्चरात्रादित्यस्याशयः। एतेन पञ्चरात्रेति उपलक्षणम् बोध्यम्।

[ तत्कथितानां अर्थानां निगूढं यथार्थताकरणम्, सदसतोर्भेदेन क्रियावैलक्षण्यं च ]

**तदस्य गूढास्सत्रिणश्च संपादयेयुः । सत्त्वप्रज्ञावाक्यशक्तिसम्पन्नानां [1]राजभाव्यमनुव्याहरेन् मन्त्रिसंयोगं च ।**

**मन्त्री[2] चैषां वृत्तिकर्मभ्यां वियतेत[3] । ये च कारणादभिक्रुद्धास्तानर्थमानाभ्यां शमयेत् । अकारणक्रुद्धान् तूष्णींदण्डेन राजद्विष्टकारिणश्च[4] ॥**

## श्रीमूला

आदिश्यतां काममीदृश, कथं पुनरिदं संपादयितुं शक्यमित्यत आह—तदस्येति । अस्य तापसस्य, तद् आदेशनम्, गूढाः सत्रिणः संपादयेयुश्च यथार्थयेयुश्च लाभाग्निदाहादीनां प्रच्छन्नोत्पादनेनेत्यर्थसिद्धम् । सत्त्वेति । सत्त्वप्रज्ञावाक्यशक्तिसम्पन्नानां धैर्यबुद्धिवाग्मित्वप्रभुशक्तियुक्तानां प्रष्टृणां, राजभाव्यं राजसकाशात्, भाविनमर्थं धनादिलाभरूपं, मन्त्रिसंयोगं च मन्त्रिसमागमं च अनुव्याहरेद् आदिशेत् । आदेशसम्पादनाय मन्त्रिकर्तव्यमाह—मन्त्रीति । मन्त्री च अर्थाद् घटितसंयोगः, एषां वियतेत सत्त्वप्रज्ञादिसम्पन्नानामर्थे विशिष्य यत्नं कुर्यात् । कथं वियतेतेत्यत्राह - वृत्तिकर्मभ्यां वृत्तिः आजीवः कर्म व्यापारः ताभ्यां सत्त्वप्रज्ञाद्यनुरूपवृत्तिकर्मपरिकल्पनेनेत्यर्थः । ये चेति । ये, कारणाद् अपकाररूपात्, क्रुद्धाः क्रुद्धत्वेन कापटिकादिद्वारा विज्ञाताः, तान्, अर्थमानाभ्यां शमयेत् शान्तक्रोधान् कुर्यात् । अकारणक्रुद्धान् राजद्विष्टकारिणश्च तूष्णींदण्डेन उपांशुवधेन शमयेत् ।

## वैदिकसिद्धान्तसंरक्षिणी

ननु मुण्डोक्तं सर्वं कथं सेत्स्यतीत्याह तदिति । गूढाः दशमाध्याये उक्ताः । सत्रिणः "सत्रं छद्म प्रकीर्तितम्" इत्युक्तत्वात् प्रच्छन्नाः सम्पादयेयुः । तेन मुण्डोक्तं अविसंवादं भवति । सत्त्वेति । सत्त्वं धृतिः प्रज्ञा अष्टगुणसम्पन्ना ऐकाग्र्यमिति यावत् । वाक्यम् सङ्क्षेपविस्तराभ्यां स्पष्टं ललितञ्च पदसमूहः साकाङ्क्षः । शक्तिः आनन्दप्रभाविशिष्टा क्रियाप्रभामिश्रिता ज्ञानप्रभा । एता एव राज्यसञ्चालनक्षमा भवितुमर्हन्ति इति तान् संशोध्य, राजसविधे तापसव्यञ्जनाः प्रेषणीया भवन्ति । तदेवाह राजेति । "अस्य राज्ञः सकाशात् तव भाग्यं लक्ष्मीर्भविष्यति इति, राज्ञो वा भाग्यम् राजभाग्यमिति सकलचक्रवर्तित्वम् । अनेन सत्पुरुषसङ्ग्रहः स्यादिति"

नी० टि० १ राजेति—अस्य राज्ञः सकाशात्तव भाग्यं लक्ष्मीर्भविष्यतीति राज्ञो वा भाग्यं सकलचक्रवर्तित्वं अनेन सत्पुरुषसङ्ग्रहः स्यात् ।

२. मन्त्रीति – सङ्केतितः ।

३. वियतेतेति—एवं च सर्वज्ञत्वे सिद्धे सर्वेऽपि वृत्त्यर्थिनः स्वाशयं ( त्वाच्च ) आन्तरं प्रकाशयन्ति क्रुद्धास्तुष्टाश्च जायन्ते । तेषां प्रतिविधेयमाह ।

४. राजद्विष्टकारिण इति—अभिचारादिविधायिनः ।

## वैदिकसिद्धान्तसंरक्षिणी

टिप्पण्यां व्याख्यातम् । एतेन राज्ञः अक्षुद्रपरिवारत्वं सारल्येन सम्भावयितुं शक्यम् । ततश्च राज्ञः परिषदपि सतां परिषद् भविष्यति। अन्यत्फलमाह मन्त्रीति। केचित् मन्त्रिसंयोगञ्चेत्यनन्तरं ब्रूयादिति पठन्ति तत्तु चिन्त्यम्। अनुव्याहरेद् इति। पूर्वमेव कण्ठत उक्तस्य अस्य सर्वत्रापि अन्वयः। मन्त्रिसंयोगं मन्त्रिसमागमम्। तापस इति शेषः । तस्य तापसवचनस्य अविसंवादित्वं कथं भवेदित्याह मन्त्रीति। "सङ्केतित" इति टिप्पण्यनुसारेण। एषां सत्त्वप्रज्ञानुरूपवृत्तिकर्मकल्पनं यथा तेषां भवति तथा कुर्यात्। एतेन राजभाग्यमपि मन्त्रिणा प्रकाशयितुं शक्यम्। वियतेत— विशेषेण तथा यतेन यथा तापसस्य दिव्यदर्शनं सर्वज्ञत्वं चाविप्लुतं भवेत्।

नन्वस्य को लाभः? इति चेत्तदाहुः टिप्पण्याम् "एवञ्च सर्वज्ञत्वे सिद्धे सर्वेऽपि वृत्त्यर्थिनः स्वाशयं (त्वामयं) प्रकाशयन्ति। क्रुद्धास्तुष्टाश्च जायन्त" इति। अत्रायं भावः सर्वज्ञत्वविश्वास्यत्वाह्लादकत्वेषु सिद्धेषु सत्सु तापसस्यः पुरतः उपस्थाय राजानमधिकृत्य ये किल कारणक्रुद्धाः अकारणक्रुद्धा वा ते सर्वेऽपि स्वाशयं प्रकटयिष्यन्ति। स च नृपं, ततः तेषु यथोचितमुपायानुष्ठानं राजा सम्पादयेत्। इत्याशयेन कारणक्रुद्धादीनां प्रतिविधेयमाह ये चेति। सम्बन्धिन इत्यर्थः। कारणक्रुद्धा राजदोषेणेत्यर्थः। शमयेत् क्रोधमपसार्य अनुरञ्जयेदित्यर्थः। राज्ञो निर्दोषत्वेऽपि स्वयं दोषेण ये कृत्याः क्रुद्धादो भवन्ति तेषां वशीकरणोपायमाह अकारणेति। दुःशीला अत-एव क्रुद्धा इत्यर्थः। तूर्णोंदण्डेन अप्रकाशदण्डेन। अन्यथा दण्डकरणे राज्ञः अविश्वास्यत्वमप्रियत्वञ्च स्यात्, अतस्तूष्णीं ग्रहणम्। ये किल राजद्विष्टमाचरन्ति प्रोत्साहयन्ति वा तेषां कृतेऽपि अप्रकाशदण्डमाह राजेति। 'अभिचारादिविधायिनः" इति टिप्पण्यां व्याख्यातम्। आततायिन इत्यर्थः।

## जयमङ्गला

तदेतदल्पलाभादिकं गूढा अज्ञातप्रयोगाः सत्रिणः प्रच्छन्नचाराः सम्पादयेयुः लोकसम्प्रत्ययार्थम्। सत्त्वेति[1]। सत्त्वेन प्रज्ञया वाक्येन वाग्मितया शक्त्या सामर्थ्येन सम्पन्नानाम् सपरिग्रहयोग्यानाम्। राजभाग्यमिति राजसम्बन्धि[2] (भाव्यं) भाग्यं पट्टसम्बन्धादि दिव्येन चक्षुषा पश्यन्निव अनुव्याहरेत्। मन्त्री सन् मन्त्रित्वादाहूयाभिप्रायं पूरयिष्यतीति। मन्त्री चैषां सत्त्वादियुक्तानां सत्वाद्यनुरूप(या) वृत्यनु[3]रूप-

---

अशुद्धम्

१ सत्येन

२ राजसंबन्धिवाक्यम्

३ वृत्यानुकर्मण

## जयमङ्गला

कर्मणा च विशेषेण यतेत। ये च राज्ञा सम्बन्धिनः कारणादभिक्रुद्धाः राज्ञः दोषेणेत्यर्थः। क्रुद्धग्रहणमुपलक्षणार्थं लुब्धभीतमानिनां च। तानमात्यान् अर्थमानाभ्यां शमयेत्। अकारणक्रुद्धान् स्वदौश्शील्यात् क्रुद्धान्। तूष्णींदण्डेन प्रच्छन्नदण्डेन। राजद्विष्टकारिणश्चेति राजद्विष्टं महान्तमनर्थं कर्तुकामाद् तूष्णींदण्डेन शमयेत्।

## जयमङ्गलाक्रोडपत्रम्

### तापसराज्ञोः सर्वज्ञता

तदेतदिति। (पृ० २७४) अत्रायं भावः—कापटिकोदास्थितगृहपतिकतापसव्यञ्जनेषु तापस उच्चः, यतः तेन स्वस्य सार्वज्ञ्यं प्रकाशनीयं भवति। तदुक्तं टिप्पण्याम्–"एवञ्च सर्वज्ञत्वे सिद्धे सर्वेऽपि वृत्यर्थिन आन्तरं भावं (त्वामयं) प्रकाशयन्ति क्रुद्धास्तुष्टाश्च जायन्ते" इति। वैदेहकाश्च इतरे सत्रिणः तापसस्य सार्वज्ञ्यप्रकाशकाः, एतत्प्रकाशनेन ये केऽपि इतरे जनपदे स्थिताः तेऽपि एनमनुसरन्ति। अन्तर्गतं च भावं रहस्यं च तस्य पुरतः प्रकाशयन्ति। एतेन संस्थोत्पत्तिरभूत्। चरा यत्र तिष्ठन्ति सा संस्था। तन्मुखेन च सर्वमपि गूढं तत्त्वं कृत्यपक्षं च राजा ज्ञातुं समर्थ इति तस्यापि सर्वज्ञता सिद्ध्यति।

### सत्त्वेनेति पाठसमीक्षा

सत्त्वेति। (पृ० २७४) सत्त्वेनेति जयमङ्गलापाठः श्रीमूलाव्याख्यानुरोधात् शोधितः।

### सात्त्विकानां तापसाश्रयणम्

ननु सत्त्वादिसंपन्नाः कथमिव तापसं समाश्रयन्ते? इति चेदुच्यते। तापसः शिष्टः सर्वज्ञश्च अतो न धूर्त इति ज्ञात्वा सत्त्वप्रज्ञावाक्यशक्तिसंपन्नाः सत्सङ्गतिलाभलोभेन तथाविधगुणसंपन्नं समाश्रयन्ते।

### सर्वज्ञताप्रकाशनम्

ननु सर्वज्ञताप्रकाशनमेव अस्य फलं तर्हि सर्वोऽपि सर्वज्ञतया आत्मानं साधयितुं वाञ्छेद् यथा बुद्धकपिलादि। तथा सति कोऽत्र विशेषः? न चेष्टापत्तिरिति वाच्यम्। सर्वेषां सर्वज्ञत्वात्, कस्य वचः प्रमाणमप्रमाणं वेति विनिगमनाविरहाद् सत्प्रतिपक्षिततायाः स्थितेरापादयितुं शक्यत्वाच्चेति चेन्न। मीमांसकैः वेदं विहाय अन्यः कोऽपि सर्वज्ञो नास्तीति सिद्धान्तितम्। यश्च किल अपौरुषेयं वेदं प्रमाणीकृत्य तदाज्ञां नोल्लङ्घयति कृपाभाक् च भवति स योगेन सर्वज्ञो भवितुमर्हति। यश्च वेदं विरुध्यते तस्य सर्वज्ञत्वं युक्त्यसहत्वात् स्वीकर्तुं न शक्यते। न च एवं चेत् तापसः श्रमणादिः कथं भवेत् सर्वज्ञः? इति शङ्क्यम्। श्रमणः चरसम्बन्धो दृग्विधकार्यकरणे शास्त्रेणानुमतः इत्युपपत्तेः। यद्यपि श्रमणवेषधारी बुद्धस्योपासकः, तथापि स उपासनामूलं प्रमाणं वेदमेव हि मनुते, अतः तापसवेषोऽपि वेदानुयाय्येवेति कृत्वा तथाविधं सत्त्वप्रज्ञावाक्यशक्तिसंपन्नं विश्वसन्ति।

## जयमङ्गलाक्रोडपत्रम्

नन्वेतद्वेषः तापसानां कृते किमर्थं शास्त्रेण अनुमतः ? इति चेत्। तेषु माधुर्य-जनकस्य रसस्य स्वाभाविकत्वात्।

### धार्मिकस्यापि चरत्वम्

ननु वेदानुयायी भूत्वा स कथं राज्यसञ्चालनकर्मणि निन्दितं छद्म कर्तुं प्रवर्तताम् ? इति चेन्न। तदपि अपेक्षितत्वात् कर्तव्यमेव। यथा स्थलविशेषेषु जल्पवितण्डे पराहङ्कारखण्डनार्थमुपयुज्येते विवादेषु, तथा राज्ये सत्त्वप्रज्ञावाक्यशक्ति-संपन्नानामुत्तमकर्मणि नियोजनाय तत्परिचयो गूढचरद्वारा प्राप्तव्यो भवति। तदिदं परिचयकर्म तापसवेषधारिणा गूढचरेणैव क्रियते, ततो दुष्टाश्च निराक्रियन्ते। इत्येवं-रीत्या वास्तविकराज्यसंरक्षणार्थं शास्त्रानुमतत्वात् छलतया कृतमपि कर्म राजशास्त्रेण निर्दिष्टं धर्म्यं मन्तव्यम्।

एतेन सर्वत्र प्रसृतेन्द्रजालिकमायाप्रयुक्तभ्रमजालात् परकोयतीक्ष्णाहङ्कार-खड्गधाराप्रवहणात् शिष्टेन आत्मा कथं रक्षितव्यः ? इत्यादि शङ्काः परास्ताः। ननु यदीदं छलकर्म कर्तव्यत्वात् शास्त्रानुमतं तर्हि धार्मिकवेषधारी कुतो न तत् स्वीकरोति ? इति चेत्। इष्टत्वात्। यद्यप्येवं तथापि राजनीतौ दुःखिनां परित्राणाय सुखिनामनु-मोदनाय च समाजमध्ये धार्मिकः कश्चन शमरसप्रधानः वीतरागस्तद् वेषधारी अपेक्ष्यत इति सविस्तरं प्राक् प्रपञ्चितमस्ति। ( प्र० खं० १-३२४ ) तथाविधेन कस्यामप्यव-स्थायां न कथञ्चनापि छलप्रयोगः कर्तुं शक्य इति हेतोः प्रस्तुते प्रसङ्गे धार्मिकवेषधारी पर्युदस्तः शास्त्रविद्भिः। अत एव प्रव्रज्याप्रत्यवसितः प्रज्ञाशौचयुक्त इत्यत्र मूलकृतं प्रव्रज्याप्रत्यवसितग्रहणं साधु सङ्गच्छते।

### प्रव्रज्याप्रत्यवसितस्य सर्वज्ञतोपपत्तिः

ननु अयं प्रव्रज्याप्रत्यवसितोऽभूत् तथासति तस्य सर्वज्ञत्वं कथं संभाव्यते ? इति चेन्न। तस्यापि शास्त्रानुयायित्वात् तदनुमोदितकर्मण्येव विनीतत्वात् प्रव्रज्या-प्रत्यवसितोऽपि यथोक्तप्रायश्चित्तानुष्ठानेन अशुद्धिं परिमार्जयितुं शक्नोति। पुनः वेद-प्रसादाच्च सर्वज्ञत्वमपि प्राप्नोतुमर्हति। एवं सत्यपि "बहिस्तूभयथापि स्मृतेराचारान् अव्यवहार्यो वचनादिह जायते" इत्याद्युक्तत्वाच्च प्रव्रज्याप्रत्यवसितस्य तत्सदृशस्य वा पृथक्संस्थानं सर्वेषां मर्यादाव्यवस्थापनाय शास्त्रकृद्भिरुक्तं तत् तु आचारे तथैव पालनीयम् इति हृदयम्।

### भाग्यमिति पाठसमीक्षा

संबन्धीति। राजभाग्यमिति। ( पृ० २७४ ) संबन्धिवाक्यमिति स्थाने "सम्बन्धिभाग्यम्"। इति जयमङ्गलासंशोधनं टिप्पणोपाठमादृत्य कृतम्। तदुक्तम् —

"अस्य राज्ञः सकाशात् तव भाग्यं लक्ष्मीर्भविष्यतीति राज्ञो वा भाग्यं सकलचक्रवर्तित्वम् इत्यर्थो वा बोध्यः। अनेन सत्पुरुषसङ्ग्रहः स्यात्" इति। अथवा

## जयमङ्गलाक्रोडपत्रम्

राजसम्बन्धि भाव्यमिति पाठान्तरम् "राजभाव्यमि"ति मूलपाठमादृत्य मन्तव्यम्। किं तद्भाग्यमित्याह पट्टेति। (पृ० २७४)

दिव्यवेषोपयोगः

दिव्येनेति। (पृ० २७४) ननु अस्याभिनयः कथं भवति? इति चेदित्थं भारविणा वर्णितस्य शान्तरसस्य अभिनय इव तदभिनयो ज्ञातव्यः[1]। तथा हि—

अधः टिप्पण्यां निर्दिष्टेन व्यासस्वरूपेण तस्य माधुर्यं विश्वास्यत्वं च प्रकाशितं भवति। इत्येतद् दिव्याभिनयस्य फलं बोध्यम्। एतेन दिव्यस्य वैयर्थ्यं परिहृतं भवति। अत एव तदननुकूलः अजिनधारणादिवेषः विस्रम्भाजनकत्वात् परिहृतः। अत एव राज्ञः मुकुटादिधारणं वेदादौ उपवर्णितम् अद्यावधि दृष्टसफलतां भजते। तथा माधुर्यविश्वास्यत्वहेतुनैव "प्रव्रजितानां शक्याजीवपाशुपतादीनामि"ति एतदाध्यायारम्भे टिप्पण्यां व्याख्यातम्। ननु एवंविधः पाशुपतादीनां वेषः माधुर्यादिप्रयुक्त्या राजानं रञ्जयितुं समर्थ इति क्व दृष्टम्? इति चेद्दृष्टमेव। तद्व्यक्तं पद्मपुराणे वेनचरित्रे। तथा च चरः यदा माधुर्येण लालित्येन च युक्त्या दृष्ट्या पश्यन्निव राजभाग्यं स्वपुरोवर्तिनः पुरस्ताद् अनुव्याहरति तदा श्रोता तमेव विश्वसिति। एवमेव सर्वत्र बोध्यम्।

वृत्त्यनुरूपकर्मणेति। (पृ० २७५) इदं सत्त्वाद्यनुरूपेत्यस्य व्याख्यानम्।

ननु लुब्धादयोऽपि कृत्याः सन्ति तेषां सङ्ग्रहणमप्युचितम्। तन्नोक्तम्। अतः मूलस्य न्यूनत्वं स्यात्। अत आह क्रुद्धेति (पृ० २७५)

कर्तुकामानिति। (पृ० २७५) ननु वेदानुमतश्चेदभिचारः, तर्हि सः कथं न पापजनको भवति? अभिचारादिकर्मणः पापजनकत्वेनोक्तत्वात्, इति चेदुच्यते। आततायिसदृशमाततायिनमेव वा प्रति यद्यभिचारः आभिचारिकैरनुष्ठीयते तर्हि स दोषजनको न भवति अन्यथा तु दोषजनक एव। तत् प्रायश्चित्तत्वे रघुनन्दनकृते द्रष्टव्यम्।

---

१. ततः शरच्चन्द्रकराभिरामैरुत्सर्पिभिः प्रांशुमिवांशुजालैः।
बिभ्राणमानीलरुचं पिशङ्गीर्जटास्तडित्वन्तमिवांबुवाहम्॥
प्रसादलक्ष्मीं दधतं समग्रां वपुःप्रकर्षेण जनातिगेन।
प्रसह्य चेतस्तु समासजन्तमसंस्तुतानामपि भावमार्द्रम्॥
अनुद्धताकारतया विविक्तां तन्वन्तमन्तःकरणस्य वृत्तिम्।
माधुर्यविस्रम्भविशेषभाजा कृतोपसंम्भाषमिवेक्षितेन॥
धर्मात्मजो धर्मनिबन्धिनीनां प्रसूतिमेनःप्रणुदां श्रुतीनाम्।
हेतुं तदभ्यागमने परीप्सुः सुखोपविष्टं मुनिमाबभाषे॥ (किरात॰ ३।१-४)

**पूजिताश्चार्थमानाभ्यां राज्ञा राजोपजीविनाम् ।**
**जानीयुः शौचमित्येताः[1] पञ्च संस्थाः[2] प्रकीर्तिताः ॥१८॥**

इति विनयाधिकारिके गूढपुरुषोत्पत्तौ संस्थोत्पत्तिः एकादशोऽध्यायः ।

---

## जयमङ्गलाक्रोडपत्रम

तदनुबन्धो शिष्टाचारोऽपि दृश्यते । तथा हि—कौटिल्यः नन्दमभिचारेण व्यापादितवान् इति[3] । शम् ।

## श्रीमूला

गूढपुरुषेषु मन्त्रिणः समुदाचार उक्तः । राज्ञस्तमाह—पूजिताश्चेति । राज्ञा अर्थमानाभ्यां पूजिताः सन्तः अर्थाद् गूढपुरुषाः, राजोपजीविनाम् अमात्यादीनां शौचं शुद्धिं जानीयुः । एतावता अध्यायार्थं तत्प्रान्ते सञ्चष्टे—इत्येताः पञ्च संस्थाः प्रकीर्तिता इति । इत्थं कापटिकाद्येकैकप्रधानाः पञ्च संस्थाः सम्यक् तिष्ठन्ति राजप्रयोजनकारिण आस्विति संस्थाः गूढपुरुषकर्मस्थानानि प्रकीर्तिता व्युत्पादिता ।

इति कौटिलीयार्थशास्त्रव्याख्यायां विनयाधिकारके प्रथमाधिकरणे
एकादशोऽध्यायः । गूढपुरुषोत्पत्तौ संस्थोत्पत्तिः ।

## वैदिकसिद्धान्तसंरक्षिणी

अध्यायान्ते निर्दिष्टमर्थं प्रव्रज्याप्रत्यवसितादीनां नामकरणपूर्वकम् सङ्क्षेपेणाह पूजिता इति । पूजिताः प्रव्रज्याप्रत्यवसितादयः गूढपुरुषाः अर्थमानाभ्यां अर्थेन सम्मानेन च । एतेन ते कर्मण्या अपि भवन्ति । शौचं जानीयुरित्यन्वयः । केषां शौचमित्याह राजेति । सत्त्वप्रज्ञावाक्यशक्तिसम्पन्नानाम् उपजीविनां सामान्येष्वधिकरणेषु स्थितानां तदधिकारित्वेन नियोक्ष्यमाणानाञ्च । शौचमुपधाशुद्धिम् । "इतीति । इतिशब्दः प्रकारे" एता उद्दिष्टा वक्ष्यमाणाश्च व्रजवास्यादयः । पञ्चतां तु न व्यभिचरन्ति । "व्रजवास्यार्टविकादोनां गृहपतिकव्यञ्जने अन्तर्भावः । श्रवणस्य वा तापसव्यञ्जने" इति टिप्पण्यामुक्तम् । एतेन गूढपुरुषाः संस्थानामानः पञ्चविधा एव भवन्ति इति स्फुटं भवति । तदेव ज्ञापयितुमाह

---

नी० टि० १ एता इति—इति प्रकारे । एता उद्दिष्टा वक्ष्यमाणाश्च व्रजवास्यादयः । पञ्चतां तु न व्यभिचरन्ति । व्रजवास्याटविकादीनां गृहपतिकव्यञ्जनेऽन्तर्भावः । श्रवणस्य वा तापसव्यञ्जने ।

नी० टि० २ संस्था इति—सम्यगेकस्मिन् स्थाने स्थिताः ।

३ तदुक्तं नी० सा० जयमङ्गलायाम्—

"नन्दतिरस्कारामर्षितस्तत्सभायां नन्दात् पृथिवीं पृथक् करोमीति कृतप्रतिज्ञो निर्गत्य राजपुरुषैरनुबध्यमानश्चन्द्रगुप्तसंश्रयादवष्टब्धस्तस्मै नन्दराज्यं प्रतिश्रुत्य नन्दमभिचारवज्रेण व्यापाद्य तद्राज्यमादित्सुरेकाकी ज्ञानबलेन दण्डकोषसम्पन्न-माटविकं पर्वतकमुत्साह्य(द्य) प्रभावोत्साहशक्तिभ्यां राक्षसाद्यमात्याधिष्ठितमौलब-लान्मेदिनीमाच्छिद्य चन्द्रगुप्तायोपनीतवानिति पुरुषकारसम्पत्कथनम् ।" इति ।

## वैदिकसिद्धान्तसंरक्षिणी

पञ्चेति। संस्थाः "सम्यक् एकस्मिन् स्थाने स्थिताः" इति टिप्पण्याम्। प्रकीर्तिताः पूर्वैराचार्यैः अर्थशास्त्रान्तरेषु इति शेषः।

इति कौटलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे
गूढपुरुषोत्पत्तिर्नामैकादशोऽध्यायः।

## जयमङ्गला

पूजिताश्चेति। एते एवंधर्माणः न केवलं मन्त्रिणा राज्ञा च अर्थमानाभ्यां पूजिताः कर्मण्या भवन्ति। किञ्चिदपदिश्य राजोपजीविनां शौचं जानीयुः। एताः पञ्चाप्येकया संज्ञया संस्था इति प्रकीर्तिताः। तथा चाहुः—

चारो[1]ऽन्तेवासिना तेन भक्ताच्छादगृहाणि च।
सन्तिष्ठते[2] यतस्तेन संस्थास्ताः परिकीर्तिताः॥

इति कौटलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकरणे
गूढपुरुषोत्पत्तौ संस्थोत्पत्तिरेकादशोऽध्यायः।

## जयमङ्गलाक्रोडपत्रम्

पूजिता इति। कापटिकोदास्थितगृहपतिकतापसव्यञ्जनाः संस्थानामानः। "निगूढं पूजिता अर्थमानाभ्याम्" इति तिरक्कुरलकग्रन्थे व्याख्यातं तस्यायं भावः- याभ्यां मानपूजाभ्यां संस्थानां गूढत्वं न प्रकाशितं भवति तथा मानपूजे विधातव्ये। एतेन सर्वसाधारणेभ्यः प्रव्रजितादिभ्यः मठद्वारा दीयमानं ग्रासाच्छादनादि मठपतिभिः कृतम् इति ख्यातिः न भवति। नापि च गूढत्वं प्रकाशमेति।

### श्रमणस्यान्तर्भावः

ननु श्रमणस्य जयमङ्गलायां प्रव्रज्याप्रत्यवसिते "अन्तर्भाव उक्तः। टिप्पण्यां तु तापसव्यञ्जनेऽन्तर्भाव उक्त इत्येनयोः पूर्वापरविरोधः संभवति। इति चेन्न। टिप्पण्युक्तेन वाकारपाठेन प्रव्रज्याप्रत्यवसितेऽपि अन्तर्भावो भवितुमर्हति। तदुक्तं टिप्पण्याम्—"श्रमणस्य वा तापसव्यञ्जने" इति।

अन्तेवासिनेति। चाराणां कृते इति शेषः। तथा च अन्तेवासिना चारविषये मठपत्यादिः आवेदितव्यो भवति। तेनेति। चारेण। अन्तेवासी चारद्वारा ग्रासाच्छादनादीनि प्राप्नोति अन्यथा तु न इति तात्पर्यं बोध्यम्। एवं तापसव्यञ्जनादि विषयेऽपि बोध्यम्। यतः तिष्ठन्ति। तेन कापटिकादयः संस्था इति भाव इति।

---

अशुद्धम्—
१ चारान्ते
२ सन्तिष्टते

## जयमङ्गलाक्रोडपत्रम्

तदुक्तं जयमङ्गलायां नीतिसारव्याख्यायां चरविकल्पे ३६ श्लोके[१]—

अत्रायमभिसन्धिः केचित् छलप्रयोगे कौशलं व्यवहारमाहुः। अपरे पुनः सन्दिग्धार्थसंभाषणं व्यवहारमाहुः। अन्ये तु यद् यस्येष्टमनिष्टं वा भवेत्, तत्तथैवेति भाषणे व्यवहारमाहुः, राजनीतिस्तु इष्टसाधनतयाऽऽनुकूल्येन वर्तनमेव व्यवहारं मन्यते। तदुक्तं मानसरामायणे मित्रलक्षणे—

"बल अनुमान सदा हित करही" इति। एतेषु अन्यमते उदासीनस्य। केचित्तु मते चराणां प्रयोग इति ज्ञेयम्।

ननु यस्यां राजनीतौ चरप्रयोगाः छलबहुला उक्ताः मोहसम्पादकाः, सा राजनीतिः अविश्वास्यत्वाद् दुष्टा कुतो न मन्तव्या? इति चेन्न। इयं नीतिः अन्यैः कारितेन छलप्रयोगेण उपासकान् राजभक्तान् पालयति। दुष्टान् मोहयति। तदिदं शिष्टसमतत्वान् नानुचितम्। अत उपर्युक्तकर्मप्रतिपादिका भारतीयराजनीतिरपि दुष्टा न भवितुमर्हति। ध्वनितं चैतत् सौन्दर्यलहर्याम् "हरिस्त्वामाराध्य" इत्यादिना।

यत्र किल महात्मानोऽपि मुग्धा आत्मानं प्रव्रज्याप्रत्यवसितस्य पुरतः समुपस्थाय समर्पयन्ति। तत्र तेषां हृदि अभिलषितराजनीतौ अपेक्षितं कार्यमभीष्टम् आस्ते। अथवा तान् मातृशक्तिः बलात् तथाविधे कर्मणि नियोजयति तत्र महात्मत्वप्रकाशनं मातृशक्त्या चिन्तितं मन्तव्यम्, यतः विपद्यपि सा तान् निरन्तरं संरक्षति। अन्यथा तु साऽपि मातृशक्तिः ज्ञानिनं महात्मानं मोहयितुमग्रे पदं कथं निदध्यात्? तद्व्यक्तं मानसरामायणे भरतचरित्रे। अतथाविधास्तु उपर्युक्ते चरकर्मणि मुग्धा भवन्ति तर्ह्यपि न हानिः। तेषां संमोहनद्वारेण दूरे संस्थापनस्य चिकीर्षितत्वात्। अतो भारतीयराजनीतौ निर्दिष्टः जलप्रयोगः राज्यस्य त्रिवर्गसंपादक इति छलप्रयोगप्रकाशिकाऽपि इयं राजनीतिः निर्दुष्टैव एवेति दिक्।

इति श्रीजयमंगलाक्रोडपत्रे एकादशाऽध्यायः समाप्तः। इति।

---

१ एव एषु पञ्चसु सञ्चाराः सन्तिष्ठन्त इति संस्थाः। गणपतिशास्त्रिणः श्रीमूलायामेवमाहुः—इत्थं कापटिकाद्येकैकप्रधानाः पञ्च संस्थाः सम्यक् तिष्ठन्ति राजप्रयोजनकारिण आस्विति संस्था इति।

# अष्टमं प्रकरणम्— गूढपुरुषप्रणिधिः

[ सत्रितीक्ष्णरसदभिक्षुकीणां क्रमेण लक्षणानि ]

**[1]ये चाप्य[2](सं)संबन्धिनोऽवश्य[3]भर्तव्यास्ते [4]लक्षणमङ्गविद्यां[5]जम्भकविद्यां मायागतमाश्रमधर्मं निमित्त[6]मन्तरचक्रमित्यधीयानाः [7]सत्रिणः [8]संसर्गविद्या वा ।**

---

## श्रीमूला

गूढपुरुषप्रणिधिरिति सूत्रम् । गूढपुरुषाणां प्रणिधिः प्रणिधानं कार्येषु नियोजनमिहोच्यत इत्यर्थः । तत्र पूर्वाध्यायोद्दिष्टेषु गूढपुरुषेषु कापटिकादीनां स्वरूपं वर्णितम्, सत्रितीक्ष्णरसदभिक्षुकीणां तु तद् वर्णनीयमवशिष्यते । तदिहादावभिधीयते । उभयेषां गूढपुरुषत्वाविशेषेऽप्यध्यायात्पृथक्त्वकरणं कर्तृभेदद्योतनार्थम् । कापटिकादीनां हि पञ्चानां मन्त्रिसहितो राजा कर्ता, 'तमर्थमानाभ्यामुत्साह्य मन्त्री ब्रूयादि'त्युक्तत्वात् । सत्रितीक्ष्णरसदभिक्षुकीणां तु विना मन्त्रिणं स्वयमेव राजा कर्ता, मन्त्रिशुद्धिपरिज्ञानायापि तन्नियोजनात् । यद्वक्ष्यति—'तान् राजा स्वविषये मन्त्रिपुरोहितसेनापतियुवराजे'त्यादि । इत्थं स्फुटः कर्तृभेदः । स्वरूपतोऽप्युभयेषामस्ति भेदः । संस्थाशब्दवाच्या हि कापटिकादयः स्वस्थाने सम्यक् तिष्ठन्तो राजार्थमनुतिष्ठन्ति, न सञ्चरन्तः, सत्रिप्रभृतयस्तु सर्वत्र सञ्चरन्त एव राजार्थमनुतिष्ठन्ति सञ्चारपदवाच्या इति ।

ये चास्येत्यादि । अस्य राज्ञः, सम्बन्धिनः संगन्धाः, अवश्यभर्तव्या अवश्यपोष्या ये भवन्ति, लक्षणं सामुद्रिकादि, अङ्गविद्यां शिक्षाव्याकरणादिम् अङ्गस्पर्शेन शुभाशुभपरिज्ञानविद्यां वा, जम्भकविद्यां वशीकरणान्तर्धानविद्यां मायागतम्, इन्द्रजालम्, आश्रमधर्मं मन्वादिधर्मशास्त्रं निमित्तं कपिञ्जलरुत-पूर्णकुम्भदर्शनादि । अन्तरचक्रं पक्षिभिः शुभाशुभज्ञापनं पक्षिशास्त्रम्, इत्यधीयानाः एवञ्जातीयकमधीत्य विदन्तः, संसर्गविद्या अधीयाना वा कामतदनुबन्धिगीतनृत्तादिशास्त्राणि अधीयानाश्च, ते सत्रिणः सत्रिसंज्ञाः ।

---

नी० टि० १. य इति । सञ्चारोत्पत्तिरभिधीयते ।

,, २. आप्येति । आप्यानां मन्त्रिपुरोहितोपाध्यायादीनां सम्बन्धिनः ।

,, ३. अवश्येति । अवश्यभर्तव्याः ।

,, ४. लक्षणमिति ।.....लक्षणादि .....परिचयकारकम् ।

,, ५. अङ्गविद्यामिति । पूर्वोक्तां शुभाशुभज्ञानफलाम् ।

,, ६. निमित्तमिति । भौमान्तरिक्षविकारैः शुभाशुभसूचकम् ।

,, ७. सत्रिण इति । सत्रिणो विद्यमानमपि त्रायति गोपायतीति सत्रं छद्म तद्विद्यते येषां ते सत्रिणः ।

,, ८ संसर्गविद्येति । संसृज्यन्ते जना यस्यां सा संसर्गविद्या गीतनृत्यादिका ताम् ।

## वैदिकसिद्धान्तसंरक्षिणी

गूढान्तर्गतसंस्थोत्पत्तिमुक्त्वा गूढचरतद्विनियोगलक्षणमभिधातुमाह—ये चेति। यच्छब्दार्थमाह—आप्येति। आप्या मन्त्रिपुरोहितोपाध्यायादयस्तेषां सम्बन्धिनः। उक्तञ्चैतत् टिप्पण्याम्—"आप्यानां मन्त्रिपुरोहितोपाध्यायादीनां सम्बन्धिनः" इति। ये चास्येति पाठान्तरम्। जयमङ्गलाकृताऽपि अस्य पाठान्तरस्य व्याख्यातत्वात्। ये च अपि असम्बन्धिन इति पदयोजनमेतन्मते। तेन यथाकथञ्चित्सम्बन्धबद्धा अपि-शब्देन बोध्याः। एतेषाम् आपेक्षिकं विनियोगमभिधातुमाह—अवश्यमिति। भरणद्वार-मभिधत्ते तेषामिति। अवश्यभर्तव्यानां मध्ये इति शेषः। लक्षणमिति। हस्तिपुरुषा-दीनामिति शेषः। अधीयाना इत्यनेनास्यान्वयः। अङ्गविद्यामिति। अङ्गस्पर्शेन शुभा-शुभपरिज्ञानफलमिति यावत्। अनेन हस्त्यश्वादीनां शुभाशुभप्राप्तिपरिहारौ ज्ञायेते। तदाहुः टिप्पण्यां—"पूर्वोक्तां शुभाशुभज्ञानफलामि"ति। न च लक्षणेन सह पौनरुक्त्यम्। इतरव्यावृत्तये तस्योपयुक्तत्वात्। तदाहुः टिप्पण्यां—"लक्षणादि परिचयकारकमि"ति। श्रीमूलायां तु लक्षणं सामुद्रिकादीत्याहुः। अथवा अङ्गविद्या-मिति। शिक्षाव्याकरणादिम्। जम्भकविद्यां वशीकरणादिविद्याम्। मायायोगः इन्द्रजालः[1]।

आश्रमधर्मं ब्रह्मचार्यादीनां धर्मम्। श्रीमूलायां "मन्वादिधर्मशास्त्रमि"ति व्याख्यातम्। निमित्तं—उत्पातनिमित्तं शुभाशुभादि। तदाहुः—"भौमान्तरिक्ष-विकारैः शुभाशुभसूचकम्" इति। अन्तरचक्रम्। वायसादिविरावादि। इतीति। एवं-प्रकारां सुवर्णरजतादिनिर्माणविद्याम्। अधीयानाः सर्वेऽपि सत्रिशब्देन व्यवह्रियन्ते। तदाहुः—सत्रिण इति। तत्त्वञ्चोक्तं टिप्पण्याम्—"सत्रिणो विद्यमानमपि त्रायति गोपायतीति सत्रं छद्म तद् विद्यते येषां ते सत्रिणः" इति। श्रीमूलायामपि—"निमित्तं कपिञ्जलरुतपूर्णकुम्भदर्शनादि," "अन्तरचक्रं पक्षिभिः शुभाशुभज्ञापनं पक्षिशास्त्रम् इत्यधीयाना एवञ्जातीयकमधीत्य विदन्तः" इति। समष्टौ उपविश्य क्रियमाणमध्ययनमाह—संसर्गेति। संसर्गविद्या नृत्यगीतादिविद्येति यावत्। तदाहुः टिप्पण्याम्—"संसृज्यन्ते जना यस्यां सा संसर्गविद्या गीतनृत्यादिका ताम्" इति। अथवा कामतदनुबन्धिगीतनृत्यशास्त्रविद्या वा।

## जयमङ्गला

इदानीं सञ्चाराणां लक्षण[2]नियोजनादीनाहुः—ये चास्येति। ये चास्य राज्ञः सम्बन्धिनोऽपि सन्तोऽवश्यभर्तव्या बालवृद्धव्यसन्यनाथास्ते ह्युपगृहीताः कर्मण्याः, ये चाऽप्यसम्बन्धिन इति। तत्राऽप्यस्य स्वजनाः सम्बन्धिनश्च यथाकथञ्चित् सम्बन्धिन

---

तदुक्तम् १. देशकालापरोक्षं यत्परोक्षस्य वस्तुनः
अशुद्धम् मन्त्रौषधादिभिः सोयं इन्द्रजाल इतीरितः॥ इति।
२. लक्षणानियोजनात्तेनाहुः।

## जयमङ्गला

इति। अथवाऽऽध्यानां सम्बन्धिनस्तत्प्रतिबद्धाः पूर्ववच्चावश्यभर्तव्या इति । तेषां लक्षणं पुरुषहस्त्यादीनाम् । अङ्गविद्यां शिक्षादिकां[1] जम्भकविद्यां वशीकरण-भागिनीं[2] तन्त्रप्रकारां[3] ( ? ) मायायोगमिन्द्रजालम् । आश्रमधर्मं गृहस्थादिधर्मम् । निमित्तं दिव्यान्तरिक्षभौमम् । अन्तरचक्रं शिवावायसादिरुदितम् । इतिशब्दादेवं-प्रकारं धातुवादादिकम् अधीयानाः पठन्तः । सत्रिणः सत्रं छद्म विद्यते येषामिति । संस( गद्वि ? र्गविद्या वे )ति । संसृजनं संसर्गः, तद्धेतुकां नृत्तगीतवादित्रादिकां वा विद्यामधीयानाः पृथङ्निर्देशः सर्वजनसम्पर्कहेतुत्वादियमेव सर्वैर्विकल्प्यत इति ।

## जयमङ्गलाक्रोडपत्रम्

पूर्वाध्याये उक्तसंस्थोत्पत्त्यनन्तरं उत्तराध्याये वक्ष्यमाणगूढपुरुषप्रणिधानेन सह सङ्गतिं प्रदर्शयितुमाह—इदानीमिति । (पृ० २८२) एतेन अवसरसङ्गतिः स्फुटा भवति ।

### नियोजनादीनिति पाठसमीक्षा

नियोजनादीनिति । (पृ० २८२) एतत् पाठसंशोधनं गूढपुरुषप्रणिधिरिति सूत्रानुसारेण कृतम् । प्रणिधिपदेन गूढपुरुषस्याभिहितत्वात् । तदुक्तं श्रीमूलायाम्—"गूढपुरुषाणां प्रणिधिः प्रणिधानं कार्येषु नियोजनमिहोच्यते" इति । तथा च अयमध्यायो नियोजन-रूपप्रणिध्यर्थकः । चाराणां लक्षणं तु तदङ्गम् । एतेन गूढपुरुषप्रणिधिः इति सूत्रं व्या-ख्यातम् । अनयोरध्याययोः अन्तरम् कोदृगिति श्रीमूलायां व्याख्यातम् । "तत्र पूर्वाध्याये कापटिकादीनां स्वरूपं वर्णितम्, सत्रितीक्ष्णरसदभिक्षुकीणां तु तद् वर्णनीयमवशिष्यते । तदिहाभिधीयते । उभयेषां गूढपुरुषत्वाविशेषेऽप्यध्यायपृथक्त्वकरणं कर्तृभेदन-द्योतनार्थम् । कापटिकादीनां हि पञ्चानां नियोजने मन्त्रिसहितो राजा कर्ता "तमर्थ-मानाभ्यामुत्साह्य मन्त्री ब्रूयादि"ति । सत्रितीक्ष्णरसदभिक्षुकीणां नियोजने तु विना मन्त्रिणं स्वयमेव राजा कर्ता, मन्त्रिशुद्धिपरिज्ञानायापि तन्नियोजनात् । तदुक्तं श्रीमूलायाम्—"तान् राजा स्वविषये मन्त्रिपुरोहितसेनापतियुवराजे"त्यादि, इत्थं स्फुटः कर्तृभेदः । स्वरूपतोऽप्युभयेषामस्ति भेद इति । तथा च गूढान्तर्गतकाप-टिकाद्युत्पत्ति-कापटिकादिसंस्थोत्पत्त्युभयकर्तृत्वं राजमन्त्र्युभयनिष्ठं व्यासज्यवृत्ति, चारसंस्थास्वरूपं तद्विनियोगश्च पूर्वाध्यायस्य विषयः । अस्मिन्नध्याये गढचरोत्पत्तिकर्तृत्वं राजनिष्ठम्, चरस्वरूपं चरविनियोगश्च विषय इति रीत्या अनयोर्भेदः सिद्धः ।

अत्रेदं तत्त्वम्—अध्यायद्वयेनानेन गूढचरोत्पत्तौ राजमन्त्रिणोः, राज्ञश्च सार्थक्यं अवगतं भवति, संस्थानां राजमन्त्र्युभयद्वारा नियोजनस्य, चराणां तु राजद्वारैव नियो-जनस्योक्तत्वात् । एतेन मन्त्रिणः अज्ञातचरस्वरूपा भवन्ति इति ज्ञायते । अत एव

---

अशुद्धम्
१. शिक्षादिकांवशीं;  २. वशीकरणाद्यर्थाभगिनो;  ३. त्रप्रकारं ।

## जयमङ्गलाक्रोडपत्रम्

मन्त्रिणां परीक्षणे गूढचरनियोजनमुपपन्नं भवति । अस्येति (पृ० २८२) अस्य राज्ञ इत्यर्थः जयमङ्गलाकृता व्याख्यातः । तथा च ये चाप्यसम्बन्धिन इत्यप्यर्थो गूढतया ध्वनितो भवति । अनयोरयं विवेकः – राज्ञः परिवारान्तर्गताः पुत्रादयो ये ते सम्बन्धिनो भवन्ति । एतेभ्यो बहिर्वर्तमानाः सम्बन्धिनः असम्बन्धित्वेनोच्यन्ते । किञ्चैतद्व्याख्यानेन अपिशब्दस्यापि सार्थक्यं भवति, तस्य समुच्चयबोधकत्वात् । तच्च "घटं पटमपि" इत्यादौ अपिशब्देन घटसम्बन्धिनः पटस्य बोधो भवतीत्यभिप्रायेण उक्तं मञ्जूषायां द्रष्टव्यम् । एवंविधेषु स्थलेषु पूर्वपदार्थः समुच्चये विशेषणं भवतीति स्मर्तव्यम् । व्याख्यानान्तरे तु आप्यानां स्वजनानां सम्बन्धिनः प्रतिबद्धाः । चकाराद् अप्रतिबद्धा अपि ग्राह्याः । अस्तु कामं तेन किमित्याह—पूर्ववदिति ।

ननु आप्यशब्दः सम्बन्धिपरतया कथं व्याख्यातः ? इति चेत्, नवमाध्याये आप्यतः इति पाठान्तरत उत्तरं व्यक्तम्, तत एव द्रष्टव्यम् । पूर्ववद् गूढपुरुषवत् । अनेन अत्र आप्यानां तत्सम्बन्धिनां च भरणोपाय उक्तः । भरणाभावे दोषं व्यञ्जयति—अवश्येत्यादिना । (पृ० २८३) ननु गूढपुरुषकारित्वमात्मनि केन द्वारेण सम्पादनीयमित्याह—तेषामिति । केषामित्याह—पुरुषेति ।

### वशीकरणभागिनीमिति पाठसमीक्षा

वशीकरणभागिनीमिति । (पृ० २८३) एतत्पाठसंशोधनेन तन्त्रोक्तां वशीकरणविद्यामित्यर्थो बोध्यः । जम्भकेति । जम्भधातुः कप्प्रत्ययेन सम्बद्धः "जभीजृभी गात्रविनामे गात्रस्य विनामः वक्रभावः" इति भ्वादिप्रकरणे सिद्धान्तकौमुद्यां पठितः । वेदेऽपि–'सानुभ्यः जम्भक'मिति मन्त्रः (यजुर्वेदसंहिता—३०-१६, तै० ब्रा०[५] अष्टके) उपलभ्यते । तत्र यद्यपि भाष्यकर्तार एवं व्याचख्युः—"जभि नाशने जम्भयतीति तद् हिंसकम् इति । (महीधरभाष्ये) तथापि प्रकृते विश्वासोत्पादनद्वारा जनवार्ताग्रहणप्रसङ्गात् जृम्भपरः जम्भकशब्दो बोध्यः । तदुक्तं जृम्भयितारमिति[१] । (सायणभाष्यम्) तद्विद्या जम्भकविद्या इति फलितम् । अस्याः स्वरूपं नित्योत्सवे रश्मिमालायामुपलभ्यते । तट्टिप्पण्यां द्रष्टव्यम्[२] ।

---

१ सानुभ्यः पर्वते शिखराभिमानिभ्यः जम्भकं गात्राणां जृम्भयितारम् इति । (अर्थशास्त्रे औपनिषदिकप्रकरणे ३ अ०) एतस्य प्रयोगः—त्रिरात्रोपोषितः कृष्णचतुर्दश्यां पुष्ययोगिनां श्वपाकीहस्ताद् विलखावलेखेन क्रीणीयात् । तन्माषैः सह कण्डोलिकायां कृत्वा असङ्कीर्ण आदहने निखानयेद् द्वितीयस्यां चतुर्दश्याम् उद्धृत्य कुमार्याः पेषयित्वा गुलिकाः कारयेत् । तत एकाङ्गुलिकामभिमन्त्रयित्वा यत्रैतेन मन्त्रेण क्षिपति तत्सर्वं प्रस्वापयति" इति ।

२ ऐं नमों भगवति महामाये पशुजनमनश्चक्षुस्तिरस्करणं कुरु कुरु हुं फट् स्वाहा । इयं वार्तालीप्रत्यङ्गभूता तिरस्करिणी । ३३ । ऐं ग्लौं हस्रक्फ्रंह् ल–

**जयमङ्गलाक्रोडपत्रम्**

एतस्या विद्याया देवता विवस्त्रा भवति यथा पशुवर्गो मुग्धो भवन् स्वकर्तव्यं विस्मरति साधकश्च सफलो भवति। तदेतत् तद्ध्यानेन स्फुटं भवति—

मुक्तकेशीं विवसनां सर्वाभरणभूषिताम्।
स्वयोनिदर्शनान्मुह्यत्पशुवर्गान्नमाम्यहम् ॥ ( नित्योत्सवे तिरस्करिणीध्याने )

बाणासुरकृष्णयुद्धप्रसङ्गे बाणपक्षाद् युद्धार्थमुपस्थितः शङ्करः कृष्णेन जृम्भजम्भकविद्यया प्रभावित इति तच्चरित्रमननाद् व्यज्यते[1]। किञ्च, जम्भकविद्याधिष्ठात्री

---

देवो क्ष म ल व र यूं स ह् क्ष म ल व र यीं ह्सौं स्हौः अमुकानन्दनाथ श्रीपादुकां पूजयामि नमः। एषा वार्तालो गुरुपादुका। ३४। ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि वराहमुखि वराहमुखि अन्धे अन्धिनि नमः रुन्धे रुन्धिनि नमः। जम्भे जम्भिनि नमः। मोहे मोहिनि नमः। स्तम्भे स्तम्भिनि नमः। सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक् चक्षुर्मुखगतिजिह्वास्तम्भनं कुरु कुरु शीघ्रं वश्यं ऐं ग्लौं ठः ठः ठः ठः हुँ अस्त्राय फट्। इति द्वादशोत्तरशताक्षरो महावाराहीमन्त्रः।

पूर्वोक्ताभिश्चतसृभिः युक्ता इयं महावाराही आज्ञाचक्रे परिपूज्या। प्रथमद्वितीयकूटयोः हृल्लेखावर्जं पञ्चदश्येव त्रयोदशाक्षरी श्रीपूर्तिविद्या ब्रह्मरन्ध्रो यष्टव्या। तद्यथा—क ए ई ल ह् स क ह् ल स क ल ह्रीं, इयं कादिपूर्तिविद्या। ह् स क ल ह् स क ह् ल स स क ल ह्रीं, इयं हादिपूर्तिविद्या। ३६। प्रथमत्रिकस्थाने त्रितारी कुमारी वाक् ग्लौं इत्यष्टबीजपूर्वा श्रीगुरुपादुकैव महापादुका सर्वमन्त्रसमष्टिरूपिणी स्वैक्यविमर्शिनी महासिद्धिप्रदायिनी द्वादशान्ते वरिवस्या यथा ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ह्स्रव्फ्रें ह् स क्ष म ल व र यूं स ह् क्ष म ल व र यीं ह्सौं स्हौः अमुकानन्दनाथ श्रीगुरुश्रीपादुकां पूजयामि नमः। ३७।

१ तदुक्तं भागवते बाणासुरकृष्णयोर्युद्धवर्णने—

तन्माता कोटरा नाम नग्ना मुक्तशिरोरुहा।
पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया ॥ ( १०।६३।२० )

वैष्णवतोषिण्यां—तस्य बाणस्य। मातेति। श्रीहरिवंशानुसारेण महातपसा शिवपुत्रतां प्राप्तस्य तस्य पार्वतीमातृकत्वात्कोटराख्या पार्वत्याः काचिन्मूर्तिः श्रीहरिवंशादौ कोटरीति प्रसिद्धा। तथा च श्रीहरिवंशे—

बाणं त्रायस्व देवि! त्वम् इति शिवदिष्टया पार्वत्या-
गच्छेति लंबे शीघ्रं त्वं बाणसंरक्षणं प्रति ॥ इत्युक्तम्।

लंबामधिकृत्य वाक्यम्—

कृष्णस्यैकस्य तद्रूपं दर्शयत्पार्श्वमागता।
अन्तर्धानमुपागम्य त्यक्त्वा सा वाससी पुनः ॥
परित्राणाय बाणस्य विजयाधिष्ठिता पुनः।
प्रमुखं वासुदेवस्य दिग्वासाः कोटरी स्थिता ॥
लंबैव कोटरीति तद्विशेषश्च ततो ज्ञेयः।

## जयमङ्गलाक्रोडपत्रम्

विवस्त्रा कोटरा नाम्नी वर्तते सा कृष्णं मोहयितुं तत्पुरतः प्रादुर्बभूव सोऽयम् इतिहासः तन्त्रोक्तां दिशं स्मारयति ।

सत्यप्येवं कोटराप्रयोगोऽयं आत्मने फलाय मा भवतु इति हेतुना चक्षुषी कृष्णः पिदधे इत्यपि रश्मिमालोक्तध्यानाद्युल्लेखेन समञ्जसं भवति ।

उत्तररामचरितेऽपि—चन्द्रकेतुलवसुमन्त्रचन्द्रकेतुसंवादप्रसङ्गे पञ्चमाङ्के जृम्भक-वर्णनं कृतमुपलभ्यते । तद् उक्तविद्यामूलकं बोध्यम्[1] ।

---

विष्णुपुराणे तु—कोटरी नाम मन्त्रमयी दैत्यकुलदेवता ।

तथा च तत्र—

नाम्ना दैतेयविद्याऽभूत् कोटरी पुरतो हरेः ॥ इति ।

शब्दकल्पद्रुमे तन्त्रसारे—यस्य मध्ये हकारोऽस्ति कवचं मूर्धनि द्विधा ।
अस्त्रं तिष्ठति मन्त्रः स तिरस्कृत उदीर्यते ॥

१ तदाहुः—लवः सोन्माथम्—कथमनुकम्पते नाम—विचिन्त्यं भवतु, कालहु-रणप्रतिषेधाय जृम्भकास्त्रेण तावत् सैन्यानि संस्तम्भयामि । इति ध्यानं नाटयति ।
सुमन्त्रः—तत्किमकस्मादस्मत्सैन्यघोषः प्रशाम्यति ।
लवः—पश्याम्येनमधुना प्रगल्भम् ।
सुमन्त्रः—ससंभ्रमम्, वत्स ! मन्ये कुमारकेणानेन जृम्भकास्त्रमामन्त्रितमिति ।
चन्द्रकेतुः—अत्र कः सन्देहः ?

व्यतिकर इव भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति ।
अथ लिखितमिवैतत्सैन्यमस्पन्दमास्ते
नियतममितवीर्यं जृम्भते जृम्भकास्त्रम् ॥ १३ ।

आश्चर्यम्—

पातालोदरकुञ्जपुञ्जिततमश्श्यामैर्नमो जृम्भके-
रुत्तप्तस्फुरदारकूटकपिलाज्योतिर्ज्वलद्दीप्तिभिः ।
कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरवस्तीर्यते
मीलन्मेघतडित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव ॥ १४ ।

सुमन्त्रः—कुतः पुनरस्य जृम्भकाणामागमः स्यात् ?
चन्द्रकेतुः—भगवतः प्राचेतसादिति मन्यामहे ।
सुमन्त्रः—नैतदेवमस्त्रेषु विशेषतो जृम्भकेषु । यतः—

कृशाश्वतनया ह्येते कृशाश्वात्कौशिकं गताः ।
अथ तत्सम्प्रदायेन रामभद्रे स्थिता अपि ।

चन्द्रकेतुः—अपरेऽपि प्रचीयमानसत्त्वप्रकाशाः स्वयं सर्वं मन्त्रदृशः पश्यन्ति ।

## जयमङ्गलाक्रोडपत्रम्

अन्यच्च इयं विद्या येन गुरुभक्तिमाश्रित्य संसाधिता स देवीकृपया अणिमामहिमादिशक्तिमप्युपार्जयितुं शक्नोति। यतः साधको गुरुभक्तो विद्यया शरीरान्तर्वर्तिनमुदर्यमग्निमुपास्ते। उपासितः सोऽग्निर्ध्यानेन स्थूले महति स्वल्पीयसि वा यादृशे शरीरे गृहीतो भवति तथाविधं शरीरं साधकः अवलम्बते, ततश्चाभीप्सितं कार्यं साधयति इति हि तन्त्रमर्यादा। अत्रेदं तत्त्वं यत् सृष्ट्युत्पत्तिप्रसङ्गे कश्चन चेतनः अग्निः यत्र यत्र यथा यथा उद्बुबोध तत्तच्छरीरं तथा तथा कार्यमकरोत्। इदं यदग्न्यवस्थानं तदेव गर्भाधानम्। तेन तेनाग्निना प्रेरितं तत्तच्छरीरम् अपि आदौ स्वं स्वं कार्यमन्वतिष्ठत्। सोऽयं विषयः आत्माऽङ्गीकर्तृणां मतेन उपपादयितुं शक्यः। तन्न्यायेन इयमपि विद्या अग्निमुदर्यं साधयितुं साधकानां साधनमस्ति। तथा च शरीरस्य दीर्घह्रस्वभाव उदर्याग्निमहिम्ना नासंभवि। जम्भकेन सह अग्नेः सम्बन्धः कथम् अस्तीति वेदवर्णितेतिहासतोऽवगन्तव्यम्[1]।

उदर्याग्निमहिम्ना शरीरस्य रूपान्तरं भवति इति इतिहासादुपलभ्यते—सुन्दरकाण्डे हनुमान् क्वचित् शतयोजनपरिमाणः, क्वचिन् मशकपरिमाणोऽभूत्। इत्ययं एतदग्नेर्महिमा स च कीदृश इति योगवासिष्ठेऽपि उक्तम्[2] —

१ तथा हि—तै० सं० २–५ वृत्रेन्द्रकथाप्रसङ्गे—

इन्द्रः शत्रुरभवत् स संभवन्नग्नीषोमावभिसमभवत्स इषुमात्रमिषुमात्रं विष्वङ् अवर्धत। स इमान् लोकानावृणोद्यदिमान् लोकानावृणोत्तद्वृत्रस्य वृत्रत्वं तस्मादिन्द्रोऽबिभेत्। स प्रजापतिमुपधावत्। शत्रुर्मेऽजनीति। तस्मै वज्रं सिक्त्वा प्रायच्छदेतेन जहीति। तेनाभ्यायत। तावब्रूताम्। अग्नीषोमौ मा प्रहारावामन्तः स्व इति। मम वै युवम् इत्यब्रवीत्। मामभ्येतमिति। तौ भागधेयमैच्छेताम्। ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्। तावब्रूताम्। अभिसन्दष्टौ वै स्वो न शक्नुव ऐतुमिति। स इन्द्र आत्मनः शीतरूरावजनयत्। तच्छीतरूरयोर्जन्म। य एवं शीतरूरयोर्जन्म वेद। नैनं शीतरूरौ हतः। ताभ्यामेनमभ्यनयत्। तस्माज्जञ्जभ्यमानादग्नीषोमौ निरक्रामतां प्राणापानौ वा एनं तदा वै जहिताम्। प्राणो वै दक्षोऽपानः क्रतुः। तस्माज्जञ्जभ्यमानो ब्रूयात्—"मयि दक्षक्रतू" इति। प्राणापानावात्मन् धत्ते सर्वमायुरेति।

सा० भाष्ये—जञ्जभ्यमानो मुखविदारणरूपं गात्रविनामं कुर्वन्। जञ्जभ्यमानान् मुखविदारणं कुर्वतः। इति।

२ निर्वाणप्रकरणे ७२ सर्गे पू०

अणुतां स्थूलतां वापि यथा गच्छति योगिनाम्।<br>
देहो नाम तथा सम्यग्वक्ष्यमाणमिदं शृणु ॥ १ ॥<br>
हृद्यब्जचक्रकोशोर्ध्वं प्रस्फुरत्यानलः कणः।<br>
हेमभ्रमरवत् सान्ध्यं विद्युल्लव इवाम्बुदे ॥ २ ॥

स प्रवर्धनसंवित्त्या वात्ययेवाशु वर्धते ।
संविद्रूपतया नूनमर्कवद्याति चोदयम् ॥ ३ ॥
सन्ध्याभ्रप्रथमार्काभो वृद्धिमभ्यागतः क्षणात् ।
क्षालयत्यखिलं साङ्गे देहं हेम यथाऽनलः ॥ ४ ॥
जलस्पर्शासहो युक्त्या गलयेत्प्रपदादपि ।
बाह्यदावानलः स्पर्शात्स्वान्ते वस्तुविशेषतः ॥ ५ ॥
सशरीरद्वयं पश्चाद्विधूय क्वापि लीयते ।
विक्षोभितेन प्राणेन नीहारो वात्यया यथा ॥ ६ ॥
आधारनाडी निर्लीना व्योमस्थैवावशिष्यते ।
शक्तिः कुण्डलिनी वह्नेर्धूमलेखेव निर्गता ॥ ७ ॥
क्रोडीकृतमनोबुद्धिमयजीवाद्यहङ्कृतिः ।
अन्तःस्फुरच्चमत्कारा भूमलेखेव नागरी ॥ ८ ॥
बिसे शैले तृणे भित्तावुपले दिवि भूतले ।
सा यथा योज्यते यत्र तेन निर्यात्यते तथा ॥ ९ ॥
संवित्तिः सैव यात्यङ्गरसाद्यन्तं यथाक्रमम् ।
रसेनापूर्णतामेति तन्त्रीभार इवाम्बुना ॥ १० ॥
रसापूर्णा यमाकारं भावयत्याशु तत्तथा ।
धत्ते चित्रीकृतो बुद्धौ रेखा राम यथा कृतिम् ॥ ११ ॥
दृढभाववशादन्तः स्थित्वा व्याप्नोति सा ततः ।
मातृगर्भनिषण्णेषु सुसूक्ष्मेवाङ्कुरस्थितिः ॥ १२ ॥
यथाभिमताकारं प्रमाणं वेत्ति राघव ।
जीवशक्तिरवाप्नोति सुमेर्वादि तृणादि च ॥ १३ ॥
श्रुतं त्वया योगसाध्यमणिमाद्यर्थसाधनम् ।
ज्ञानसाध्यमिदानीं त्वं शृणु श्रवणभूषणम् ॥ १४ ॥
एकं चिन्मात्रमस्तीह शुद्धं सौम्यमलक्षितम् ।
सूक्ष्मात् सूक्ष्मतरं शान्तं न जगन्न जगत्क्रिया ॥ १५ ॥
तच्चिनोत्यात्मनात्मानं सङ्कल्पोन्मुखतां गतम् ।
यदा तदा जीव इति प्रोक्तमाविलतां गतम् ॥ १६ ॥
असत्यमेव सङ्कल्पभ्रमेणेदं शरीरकम् ।
जीवः पश्यति मूढात्मा बालो यक्षमिवोद्धतम् ॥ १७ ॥
यदा तु ज्ञानदीपेन सम्यगालोक आगतः ।
सङ्कल्पमोहो जीवस्य क्षीयते शरदभ्रवत् ॥ १८ ॥
शान्तिमायाति देहोऽयं सर्वसङ्कल्पसङ्क्षयात् ।
तदा राघव निश्शेषं दीपस्तैलक्षये यथा ॥ १९ ॥

## जयमङ्गलाक्रोडपत्रम्

टिप्पण्युक्तयोगवासिष्ठग्रन्थपर्यालोचनेन एतत् सिद्धं यत् साधक आत्मनः शरीरस्य उदर्याग्निध्यानं द्वारीकृत्य दीर्घह्रस्वतनुभावमासादयितुं शक्नोति। तदेतत् तत्त्वम् उपर्युक्तया जम्भकविद्ययाऽपि सुलभम् इति जम्भकेति संशोधनं कृतम्।

ननु हनुमता लङ्कायां प्रवेशावसरे मध्येमार्गम् आत्मशरीरस्य अतिमहत्परिमाणवत्त्वं मशकतुल्यपरिमाणवत्त्वं च साधितं तदिदं कथं सोपपत्तिकं भवेत्? इति चेद् वेदान्तशास्त्रदृष्ट्या उपपत्तिः भवितुर्हतीति उक्तमुपरिष्टाद्—२ अध्याये—वेदान्तमतानुसारेण। किञ्च, यत्किंचिज्जगतीदं सर्वं तदसत्यं स्वप्नरूपमिति वेदवचनोपन्यासपुरस्सरं साधितम्। तदनुसारेण मिथ्याभूते वस्तुनि वास्तविकपरिमाणधर्माभावेन स्वल्पं महद्वा यत्किमपि रूपम् उपासको यथा साधयितुमिच्छति तत्तथैव विपरिवर्तते। अतो हनूमतस्तत्सदृशानामुपासकानां वा किमपि चरित्रं दुर्घटं नास्तीति जम्भकविद्यायाः सफलत्वादिविषये संवादित्वे वा न कश्चन विरोध इति हृदयम्।

---

निद्राव्यपगमे जन्तुर्यथा स्वप्नं न पश्यति।
जीवो हि भाविते सत्त्वे तथा देहं न पश्यति॥ २०॥
अतत्त्वे तत्त्वभावेन जीवो देहवतः स्थितः।
निर्देहो भवति श्रीमान् सुखी तत्त्वैकभावनात्॥ २१॥
अनात्मनि शरीरादावात्मभावनमङ्ग यत्।
सूर्याद्यालोकदुर्भेदं हार्दं तद्दारुणं तमः॥ २२॥
आत्मन्येवात्मभावेन सर्वव्यापि निरञ्जनम्।
चिन्मात्रं मम लोकोऽस्तीति ज्ञानादित्येन नश्यति॥ २३॥
अन्ये च विदितात्मानो भावयन्ति तथैव तत्।
तत्तथैवाशु पश्यन्ति दृढभावनया तथा॥ २४॥
दृढभावानुसन्धानाद्विमूढा अपि राघव।
विषं नयेदमृततताममृतं विषतामपि॥ २५॥
एवं यथा यदेवेह भाव्यते दृढभावनात्।
भूयते हि तदेवाशु तदित्यालोकितं मुहुः॥ २६॥
सत्त्वभावनदृष्टोऽयं देहो देहो भवत्यलम्।
दृष्टस्त्वसत्यभावेन व्योमतां याति देहकः॥ २७॥
अणिमादिपदप्राप्तौ ज्ञानयुक्तिरिति श्रुता।
भवता साधुना राम युक्तिमन्यामिमां शृणु॥ २८॥
स्वकेनाभ्यासयोगेन जीवः कुण्डलिनीगृहात्।
उद्धृत्य योज्यते यावदामोदः पवनादिव॥ २९॥
व्यज्यते विरतस्पन्दो देहोऽयं काष्ठलोष्टवत्।
देहेऽपि जीवेऽभिमतावासेचक इवादरः॥ ३०॥

## जयमङ्गलाक्रोडपत्रम्

इन्द्रजालमिति। ( पृ० २८३ ) मायागतमिति पाठान्तरं भाति। अस्यापि व्याख्यानम् उक्तार्थं एव पर्यवसितं बोध्यम्। इन्द्रजालस्वरूपं नीतिसारकृता उपायविकल्पप्रकरणे अभिहितं तट्टिपण्यां द्रष्टव्यम्[1]। मायेन्द्रजालमधिकृत्य यदुक्तं तदपि टिप्पण्यां द्रष्टव्यम्[2]।

स्थावरं जङ्गमं वापि यथाभिमतयेच्छया।
भोक्तुं तत्सम्पदं सम्यग्जीवोऽन्तर्विनिवेश्यते ॥ ३१ ॥
इति सिद्धिश्रियं भुक्त्वा स्थितञ्चेत्तद्वपुः पुनः।
प्रविश्यते स्वमन्यद्वा यद्यत्तात विरोचते ॥ ३२ ॥
देहादयस्तथा बिम्बान् व्याहावत्याखिलानथ।
संविदा जगदापूर्य सम्पूर्णं स्थितयेऽथवा ॥ ३३ ॥

ज्ञात्वा सदाऽभ्युदितमुज्झितदोषमीक्षेद्यथा समभिवाञ्छति चित्प्रकाशः। प्राप्नोति तत्तदचिरेण तथैव राम ! सम्यक्पदं विदुरनिवारणत्वमेव ॥ ३४ ॥ इति।

( योगवासिष्ठे, पूर्वार्द्धे, प्र० ६, ८२ सर्गे)

१—सर्गे १८ प्र० २७—देवताप्रतिमास्तम्भसुषिरान्तर्गता नराः।
पुमान् स्त्रीवस्त्रसंवीतो निशि चाद्भुतदर्शनः ॥ ५४ ॥
वेतालानां पिशाचानां देवानां च सरूपता।
इत्यादिमाया विज्ञेया मानुषी मानुषेश्वरैः ॥
कामतो रूपधारित्वं शस्त्रास्त्राश्माम्बुवर्षणम् ॥ ५५ ॥
तमोऽनिलोऽनलो मेघा इति माया ह्यमानुषी।
जघान कीचकं भीम आश्रितः स्त्रीसरूपताम् ॥ ५६ ॥
चिरं प्रच्छन्नरूपोऽभूद् दिव्यया मायया नलः।
अन्याये व्यसने युद्धे प्रवृत्तस्यानिवारणम्।
इत्युपेक्षाऽर्थकुशलैरुपेक्षा त्रिविधा मता ॥ ५७ ॥
अकार्ये सज्जमानस्तु विषयान्धीकृतेक्षणः।
कीचकस्तु विराटेन हन्यतामित्युपेक्षितः ॥ ५८ ॥
मेघान्धकारवृष्टयग्निपर्वताद्भुतदर्शनम् ।
दूरस्थानां च सैन्यानां दर्शनं ध्वजमालिनाम् ॥ ६० ॥
छिन्नपाटितभिन्नानां संस्रुतानां प्रदर्शनम्।
इतीन्द्रजालं द्विषतां भीत्यर्थमुपकल्पयेत् ॥ ६१ ॥
इत्युपायाः समाख्याता नाना नानार्थसाधकाः ॥ इति।

२—सद्रूपा भावना माया स्वत एवासतः पुरा।
अथवाऽन्यपदार्थानामन्यथाऽऽकृतिरेव वा ॥

## जयमङ्गलाक्रोडपत्रम्

इन्द्रजालविद्यायाः साफल्याय दत्तात्रेयादितन्त्रोक्ताः प्रकारा अनुसन्धेयाः, ते टिप्पण्यां द्रष्टव्याः[1] ।

एते सर्वेऽपि तत्र तत्र योगा इत्युच्यन्ते । अतो मायायोगमिति पाठान्तरमपि सङ्गच्छते । दिव्येति (पृ० २८३) भौमान्तरिक्षोत्पातादयोऽशुभस्य सूचका भवन्ति इति तत्सूचनं दिव्यस्य फलं ज्ञेयम् । तदाहुः—

दिव्यभौमान्तरिक्षविकारैः शुभाशुभसूचकम् । इति ।

नीतिसारेऽपि शुभाशुभनिमित्तप्रसङ्गे—

सिद्ध्यसिद्धी निमित्तानि यतः शंसन्ति कर्मणाम् ।
विद्यादात्महिताकाङ्क्षी तस्मादेतानि तत्त्वतः ॥३५ । इति ।

ननु निमित्तशब्देन दिव्यानां कथं ग्रहणमिति चेत् ? निमित्तं हि शकुनज्ञानं तत्र दिव्यान्तरिक्षभौमादयो गृहीताः । तेन सर्वेषामपि निमित्तानां ग्रहणं बोध्यम् । निमित्तस्य शकुनत्वं तु नी० सा० व्याख्यायां जयमङ्गलायां व्यक्तम्—"एवं निवेशितस्य स्कन्धावारस्य जयपराजययोः शुभाशुभनिमित्तं जानीयादिति निमित्तज्ञानमुच्यतेऽष्टादशभिः श्लोकैः" इति ।

पठन्त इति । ( पृ० २८३ ) एतावत्पर्यन्तमुक्तम् अध्ययनं सत्रिणां भरणवैयर्थ्यपरिहाराय ज्ञेयम् ।

सत्रमिति । (पृ० २८३) त्रित्वं हि तेषां तेषाम् उपर्युक्तधर्मे बोध्यम् ।

विकल्प्यत इति । (पृ० २८३) संसर्गविद्यैः सङ्घीभूय सङ्गीतादि अधीयत इति भावः । ननु विकल्पः कस्मिन्नंशे ? इति चेत्, सर्वैः सह सम्भूय एकान्ते वा उपविश्य तत्तद्विद्या अध्येतव्या इति । तत्र सर्वजनसंसर्गार्हत्वं गीतनृत्यादिके मन्तव्यम्, इतरविद्यायां तु एकान्तसंसर्गहेतुत्वमिति अनयोरन्तरं बोध्यम् ।

---

देशकालापरोक्ष्यं यत्परोक्षस्येव वस्तुनः ।
मन्त्रौषधादिभिः सोऽयमिन्द्रजाल इतीरितः ॥ इति । ( २ अधिकरभाव० )

१. गृहीत्वा शुभनक्षत्रे ह्यपामार्गस्य मूलकम् ।
धारयेद्दक्षिणे कर्णे वृश्चिकाणां भयन्नहि ॥
सिंहं दृष्ट्वा नमस्कारं मन्त्रं जाप्यं पुनः पुनः ।
सर्वे सिंहाः पलायन्ते नान्यथा शङ्करोदितम् ॥
(ॐ नमः अग्निरूपाय ह्रीं नमः)

पुष्यार्के च गृहीत्वा तु श्वेतार्कस्य तु मूलकम् ।
धारयेद्दक्षिणे हस्ते सिंहबाधाभयन्नहि ॥
आस्तीकं मुनिराजं च नमस्कृत्य पुनः पुनः ।
स्वप्ने सर्पभयन्नास्ति नान्यथा शङ्करोदितम् ॥

## जयमङ्गलाक्रोडपत्रम्

नन्वेवं अध्ययनसामर्थ्याद् मूले अधियाना वा इत्यनुल्लेखाच्च संसर्गविद्यस्यापि भरणीयत्वव्यपदेशो बोध्यते, तथा सति सत्रिण इति तन् निर्वचनं अनुचितं भवति, इति चेत्, न, संसर्गविद्या वा इति मूलोक्तौ स्थितेन वाकारेण संसर्गविद्या अधीतलक्षणादिविद्या वा भरणीया इति विकल्पभ्रमः स्यात्, तन्निरासाय आदौ सत्रिपदोपादानम्। तेन भरणीयेषु अधीतविद्येषु न विकल्पः; किन्तु सर्वा अपि विद्याः प्रकाशनीयाः सर्वे चाऽधीतविद्याः सत्रिणो भर्तव्या एवेति निर्विवादम् । ननु तर्हि विकल्पः कस्मिन्नंशे ? इति चेदुच्यते विद्याध्ययनांशे । तद्यथा—जम्भकविद्यादिसंसर्गविद्यान्तेषु यत्र यस्य रुचिः स्यात्, सा तेन अध्येतव्या इति । अत एव मूले "इत्यधीयानाः सत्रिणः" इति वदता चाणक्येन गृहीतं इतिपदं सार्थकं भवति, राज्ञाङ्कृते समस्तविद्याप्रचारस्य तदध्येतॄणां संरक्षणस्य च कर्तव्यतया अभिहितत्वात् । नन्वेवं समुच्चिततया अधीतविद्यानां सत्रित्वं यदि विधीयते, तर्हि समुदायस्य उद्देश्यविशेषणत्वाद् ग्रहैकत्वाधिकरणवद् अविवक्षितत्वमेव मन्तव्यम्। न च इष्टापत्तिरिति वाच्यम् । समस्तविद्याप्रचारस्य राज्ञः अभ्यर्हितत्वादिति चेत्, न, यथा "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत"इत्यादौ अष्टवर्षत्वस्य ब्राह्मणगतस्य "तमध्यापयीत" इति वाक्यस्थतत्पदेन सङ्ग्रहणाद् विवक्षितत्वं भवति। तथा अत्रापि सत्रिणां विनियोगेन वक्ष्यमाणेन उपर्युक्तसत्रिगतसमुच्चयत्वस्य उद्देश्यविशेषणस्याऽपि सङ्ग्रहणात् समुच्चितत्वमत्र अविवक्षितं न भवति। तेन संसर्गविद्या वा इति पृथग्ग्रहणेन सत्रित्वं द्विविधं भवति । एकान्ते संसर्गविद्याध्ययनशीलत्वम्, सर्वजनसम्पर्कहेतुकविद्याध्ययनशीलत्वं चेति । न चैवं "इत्यधीयानाः" इत्यत्रेतिशब्दघटितत्वात् सत्रिगतसमुदायत्वस्यैव विद्यागतसमुदायत्वमिति वाच्यम्, राज्ञा अवश्यभर्तव्यैः सत्रिभिः समस्तविद्याध्ययनस्य कर्तुमशक्यत्वात् ।

अत्राऽयं विशेषः—एकान्ते उपविश्य अङ्गविद्याध्ययनं प्रथमः कल्पः। अनेकजनसंसर्गेण करणीयं नृत्तगीताध्ययनं तु द्वितीयः अनुकल्पः। ननु कथमयं भेदः ? इति चेदुच्यते। येन हि अङ्गविद्यादि अधीयते स सम्बन्धी राज्ञा भर्तव्यः। येन तु नृत्तगीतादि

---

गृहीत्वा पुष्यनक्षत्रे अमृतामूलकं हरेत्।
तन्मालां धारयेत्कण्ठे सर्पबाधाभयन्नहि॥
गृहीत्वा शुभनक्षत्रे धत्तूर-मूलकं तथा।
धारयेद् दक्षिणे बाहौ व्याघ्रबाधाभयन्नहि॥
उत्तरस्मिंश्च दिग्भागे मारीचो नाम राक्षसः।
तस्य मूत्रपुरीषाभ्यां सूतोऽग्निः स्तम्भितो भवेत्।
गृहीत्वा रविवारे तु हयमारकमूलकम्।
धारयेद्दक्षिणे हस्ते अग्निबाधाभयन्नहि॥ इत्यादि।

## जयमङ्गलाक्रोडपत्रम्

अधीयते स प्रजयाऽपि भर्तुं शक्यत इति तस्यानुकल्पत्वं प्रदर्शितम् । एतेन मूले संसर्गविद्यानां विशेषज्ञापनार्थं पृथग् ग्रहणम् । अत्रोदाहरणं पत्नी पिनष्टि दासी वेति वाक्यं बोध्यम ।

ननु वर्तमानसमये शासनं हि संप्रचलितं विज्ञानोन्नतिमाकाङ्क्षमाणं अनेकनूतनविद्याः कलाश्च प्रोत्साह्य वर्धयति । यथा गायनयन्त्रादि—अनया च नूतनकलया संसर्गविद्योपजीविनोऽपि विनाशिताः । राजवृत्तिं विना निर्बाधं जीवनं न सम्भवति इति तामाकाङ्क्षमाणा एते विदेशीयविद्यामधीयाना महता प्रयासेन विद्यान्तरे अन्यथासिद्धत्वं ज्ञात्वा प्राचीनपरम्पराप्राप्ता अङ्गविद्या नाशयामासुः । यद्यपि अङ्गविद्या आन्वीक्षिक्यादयश्च कैश्चिद् विद्योपासकैः कर्तव्यबुद्धया अधीयन्त इति सत्यम्, तथापि तैः अङ्गविद्याऽध्येतृभिः जीविकार्थं कथं वर्तितव्यम् । इति चेदुच्यते ।

सर्वत्र मात्स्यन्यायस्थितेः "बलीयान् अबलीयांसं निहन्ति" इत्याकारिकायाम् अभ्युदयदशायाम् अध्ययने अध्यापने वा विद्यावतां दुरवस्था अपरिहार्यतया स्थिता वर्तत इति दृश्यते, तथाविधसमयेऽपि विद्वद्भिः मतिभावे स्वकीया मनोवृत्तिः रमयितव्या । यतो मतिभावे चित्तसन्तोषः प्राक्प्रपञ्चितवृत्तिभावस्य प्रकाशकः कथञ्चिज्जीवातुभूतो विदुषामवलम्बनं भवति । यदि च विद्वांसोऽपि साधारणतया इतरसमानधर्माणो वर्तेरन्, तर्हि विद्यायाः सर्वथा विनाशाद् राज्यमपि विद्यामूलतया प्रतिष्ठापितं सर्वथा विलयतां गतं भविष्यतीति मूलच्छेदेन वृक्षस्य नाश इव सर्वस्यैव नाशः स्यात्, तन्मा भवतु इत्येतदर्थं राज्यसंरक्षणाङ्गतया कुलीनैः विद्वद्भिः चित्तसन्तोषो न कथमपि त्याज्यः । न चैतावता प्रश्नोऽसमाहित एवेति वाच्यम्, अत्रैव समाहितत्वात् । तथा हि—विद्यया काव्यनिर्माणानुकूलपदपदार्थरचनाजनिका शक्तिरुत्पद्यते । सैव शक्तिः यथा काव्यमुत्पादयति, तथा क्रियामपि उत्पादयितुं समर्था भवतीति कवित्वमाहात्म्यं ग्रन्थकर्तृभिस्तत्र तत्र प्रपञ्चितं दृश्यते । तदाहुः—"सोऽकामयत बहु स्यां प्रजायेयेति" । अत्रेयमभिसन्धिः—मूलभूतवेदान्तसिद्धान्तानुसारेण कार्यकारणभावलाघवेन च सर्वोऽपि प्रपञ्चः अविद्यावृत्तिकः स्वप्नः, विद्यया विनाश्य इति सिद्धान्तितं वर्तते[1] ।

---

१. तद्यथा वेदान्तसूत्रमुक्तावल्याम्—

अत्र चाधिकारघटकस्य मोक्षस्य फलस्य विचारसाध्यता ज्ञानद्वारा "तमेव विदित्वा मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" । ( श्वे० ३।८ )

"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति" ॥ इत्यादि श्रुतेः । ( श्वे० ६।२० )

## जयमङ्गलाक्रोडपत्रम्

स्वप्नश्च तद्द्रष्टुः जीवस्य संस्कारः चिन्तासहकृतो यादृशमर्थमधिकृत्य समुदेति, तादृशार्थविषयो भवतीति (पृ० ४३० अ० ५ अधि० ६) वैशेषिकभाष्यदर्शनात् स्फुटम्।

एतन्न्यायेनैव मूलाज्ञानस्यापि स्थितिरीश्वरे साक्षिणि वर्तते मायातद्वृत्त्यवच्छिन्ने चेति तत्र यादृशः संस्कार उद्बुद्धो भवति, तथाविध एव प्रपञ्चो दृश्यो भवति। जीवेश्वरयोः स्वप्ने इदमेवान्तरं यद् इदं बहिर्निष्ठं सर्वं वस्तुजातम् ईश्वरस्य स्वप्नः, जीवस्य तु निद्रायाः पूर्वापरभावेन अन्त इति।

यथा द्वित्वादयः पदार्थाः पुरुषविशेषस्य बुद्धौ उत्पद्यन्तेऽतस्ते बौद्धा भवन्ति, तथैवायं प्रपञ्चोऽपि विषयविषयिभावेन बुद्धिमाधारीकृत्य परमात्मनि संस्थितो बौद्ध एव। तथा च यथा यथा संस्कारो यमधिकृत्य परिवर्तयितुं शक्यः स्यात् तथा तथा प्रपञ्चोऽपि परिवर्तयितुं शक्यते। किञ्च, यथा बौद्धाः पदार्थास्तेन तेन जीवेन ज्ञायन्ते, ईश्वरसङ्कल्पे तु स्थिता वयं सर्वेऽपि तथैव - व्यवहरामः, यथा स सङ्कल्प्यते। तस्य अन्यथासङ्कल्पने तु अन्यथा भवति इति न कश्चित् प्रपञ्चपतितानां परस्परव्यवहार-विरोधः। अयमेव नियमः प्रकृतेऽपि ज्ञेयः।

ईश्वरसेवायां स्थितो मतिभावसम्पन्नः कविरपि यथा कल्पयति, तथा तस्य बुद्धिविषयतां गतं वस्तुजातं विपरिवर्तते[1]। अत एव उक्तं ब्रह्मादीनां कल्पत्वम्, यथा ब्रह्मा एकस्मिन् नाभिस्थितकमलतन्तौ यथा कल्पयति तथा विश्वं स्वर्गादिलोकभेदेन सञ्जायते। तदेतत्सर्वं सृष्टिनिरूपणावसरे पुराणादौ लोकबहुत्वनिरूपणे व्यक्तम्। अतो मतिभावे स्थितेन यदभिलष्यते तथा भवति

---

लोकेऽपि ज्ञानस्याज्ञाननिवर्तकत्वक्लृप्तेश्च। अतश्च ज्ञाननिवर्त्यत्वात् "नेह नानास्ति किंचन" ( बृ० ४।४।१८ ), "नैवात्र काचन भिदास्ति" ( नृ० ३ ता० २ ), "तदेतद् अद्वयं स्वप्रकाशं महः नेदमात्मैवेतत्" ( नृ० ३ ता० ८ ), "नह्यस्ति द्वैतसिद्धि-रात्मैव सिद्धो द्वितीयः ( नृ० उ० ता० ८ ), "ऐतदात्म्यमिदं सर्वम्" ( छा० ६।८।७ ), "त्रयमप्येतत् सुषुप्तं स्वप्नं मायामात्रम्" ( नृ० उ० ता० १ ) इत्यादिश्रुतिभिः, घटः सन्नित्यादि प्रत्यक्षस्याधिष्ठानसत्ताविषयत्वेन दृश्यसत्यत्वे मानाभावाच्च बन्धः समूलो मिथ्या। इति।

१. अत्रेदमुदाहरणं भोजराजोक्तं मन्तव्यम्—

अद्य धारा निराधारा निरालम्बा सरस्वती।
पण्डिताः खण्डिताः सर्वे भोजराजे दिवं गते॥
अद्य धारा सदाधारा सदालम्बा सरस्वती।
पण्डिता मण्डिताः सर्वे भोजराजे भुवं गते॥
शोकः श्लोकत्वमागत इत्यादीनि पद्यानि बोद्धव्यानि। ( रामायणे )

## जयमङ्गलाक्रोडपत्रम्

इति मतिभाववतां जीवनोपायादिविषयमधिकृत्य दुःखानुभवस्य अवसरो नास्ति, स्वकीयं स्वरूपं तु अवश्यं चिन्तनीयम्।

तस्माद्दासत्वम् ईशितुः स्वीकर्तव्यं विद्वद्भिः। तेन विना एतेषां पालनं न सम्भवीति शिष्टैः भगवद्दास्ये अवस्थेयम्। दास्यं च ईशसङ्कल्पकार्ये अवस्थाने सम्भवति। तथा सत्येव ईशप्रसन्नताया उपलब्धेः। अत एव अर्थशास्त्रे राजनीत्यनुष्ठाने प्रविविक्षुभिः आत्मा विनयेनोपपादनीय इत्युक्तं स्फुटीकृतञ्चैतद् अधस्तात्। विनयश्च श्रवणकीर्तनादिनवविधभक्तिषु पादवन्दने अन्तर्भूतः। अत्र सर्वत्रापि प्रतिबन्धकः जीवस्य हृदि संरूढः कामावेश एव भवति इति हेतोः भक्ताः कामानां हृदि असंमोहं प्रार्थयन्ते, ईशस्य पुरस्तादुपस्थाय। तदुक्तं प्रह्लादेन ७ स्कन्धे—"कामानां हृद्यसंमोहं त्वामहं वृणे" इति।

इत्थं च स्वकर्तव्यतया भगवद्दास्यबुद्ध्या अध्ययशीलानां मतिभाववतां वृत्तिलोपप्रयुक्तो दोषो[1] न पदमादधाति इति शम्।

---

१. मनुनापि उक्तं चैतद् अन्यत्रापि—

न लोकवृत्तं वर्तेत वृत्तिहेतोः कथञ्चन।
अजिह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविकाम्॥ (मनु० ४|११)

क्लिश्यन्नपि हि मेधावी शुद्धं जीवनमाचरेत्।
तेनेह श्लाघ्यतामेति लोकेभ्यश्च न हीयते॥ (नी०सा० ५ सर्गे)

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥ (भगवद्गीता)

चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन्।
रुद्धा गुहाः किमजितोऽवति नोपसन्नान्
कस्माद् भजन्ति कवयो धनदुर्मदान्धान्॥ (श्रीमद्भागवते)

धीरज धर्म मित्र अरु नारी। आपतकाल परखिये चारी।
(रामचरितमानस)

उत्साहं च प्रभावञ्च तथा क्लेशसहिष्णुताम्।
धृतिं चैवानुरागञ्च स्थैर्यं चापदि लक्षयेत्॥ (नी०सा०)

विपदः सन्तु नः शश्वत् तत्र तत्र जगद्गुरो।
भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम्॥ इत्यादि। (श्रीमद्भागवते)

**ये जनपदे शूराः[1] त्यक्तात्मानो[2] हस्तिनं व्यालं वा द्रव्यहेतोः (पुरुषसामग्र्यादिकं वा) प्रतियोधयेयुस्ते तीक्ष्णाः। ये बन्धुषु निस्नेहाः क्रूराश्चालसाश्च[3] ते रसदाः।**

**परिव्राजिका[4] वृत्तिकामा[5] दरिद्रा विधवा[6] प्रगल्भा[7] ब्राह्मण्यन्तःपुरे[8] कृतसत्कारा[9] महामात्रकुलान्यधिगच्छेत्[10]॥**

---

## श्रीमूला

ये जनपद इत्यादि। त्यक्तात्मानः शरीरनिरपेक्षाः। व्यालं व्याघ्रादिम्। तीक्ष्णास्तदाख्याः।

ये बन्धुष्वित्यादि। क्रूरा आततायिनः। अलसा अनुत्साहाः, रसदास्तदाख्याः, विषदानेऽपि निश्शङ्का इति कृत्वा तथोक्तिः।

परिव्राजिकेत्यादि। वृत्तिकामा भोगार्थिनी। महामात्रकुलानि अधिगच्छेत्। असकृदमात्यगृहाणि गच्छेत्। सत्कारस्वीकारार्थम्। यैवम्भूता सा परिव्राजिकेत्यभिधीयत इत्यर्थः।

## वैदिकसिद्धान्तसंरक्षिणी

गूढपुरुषेषु तीक्ष्णान् आह—ये इति। के ते इत्याह—जनपदे इति। शूरा विक्रमकारिणः। निर्भया इति टिप्पण्याम्। त्यक्तात्मान आत्मनो जीवितमपि समर्पयितुं समुत्सुकाः, निर्भयवृत्तित्वात्। द्रव्यहेतोः प्रचुरं द्रव्यं लप्स्ये इत्याशयेनेत्यर्थः।

भर्तव्येषु रसदानभिधातुं तत्कर्माण्याह—ये इति। के इत्याह—बन्धुष्विति। रसदत्वं स्नेहे सति न भवतीत्याह—निरिति। क्रूरा इति। धर्मानुष्ठातारो न रसं दातुं समर्था भवन्ति। शूरो विद्वान् वा एवंविधं कर्म कर्तुं नोत्सहत इत्याह—अलसा इति। क्रियाविद्वेषिण इत्यर्थः। क्रियाशीलवत्वे "यद्युद्योगिनो भवन्ति तदा रसदत्वं नाङ्गीकुर्वन्ती"ति टिप्पण्यां व्याख्यातम्। चतुर्थं सत्रिणमाह—परिव्राजिकेति। परिव्राजिका परिव्राजकलिङ्गधारिणी सर्वत्र परिव्रजतीति। वृत्तिकामा 'वृत्तिकामत्वात् राजकार्यकारिणी' इति टिप्पण्याम्। वृत्तिकात्मवे हेतुमाह—दरिद्रेति। निर्धना इत्यर्थः। विधवा,

---

नी० टि० १. शूरा इति। निर्भयाः; २. त्यक्तात्मान इति।.........अगणितजीविताः।

३. अलसाश्चेति। यद्युद्योगिनो भवन्ति तदा रसदत्वं नाङ्गीकुर्वन्तीति।

४. परिव्राजिकेति। परिव्राजकलिङ्गधारिणी सर्वत्र परिव्रजतीति।

५. वृत्तिकामेति। वृत्तिकामत्वात् राजकार्यकारिणी।

६. विधवेति। स्वतन्त्रा; ७. प्रगल्भेति। जितसभा।

८. अन्तःपुरे इति। पूज्यत्वादन्तःपुरे राजानुमत्या कृतसत्कारा।

९. महामात्रेति। ऋद्धिमदमात्यगृहाणि; १०. अधिगच्छेदिति। चारसञ्चारार्थम्।

## वैदिकसिद्धान्तसंरक्षिणी

स्वतन्त्रा। प्रगल्भा 'जितसभा' इति टिप्पण्याम्। पूज्यत्वप्रदर्शनार्थं ब्राह्मणीति। सा च ब्राह्मणीत्वेन ख्याता। मुण्डावृषल्योः पृथक् वक्ष्यमाणत्वादत्र ब्राह्मणीपदमुपात्तम्। टिप्पण्यां "पूज्यत्वाद् अन्तःपुरे राजानुमत्या कृतसत्कार" इति उक्तम्। एतेन पूज्यत्वं यथा स्थिरं भवेत् तथा मुण्डाजटिलादिभिर्भाव्यम् इति भावः।

महामात्रेति। (पृ० २९६) तेषां गृहाणीत्यर्थः। तदुक्तं टिप्पण्याम्—"वृद्धिमदमात्यगृहाणि इत्यर्थः" इति। अधिगच्छेत् चारसञ्चारार्थमिति शेषः। उक्तं चैतत् टिप्पण्याम् "चारसञ्चारार्थम्" इति।

## जयमङ्गला

ये जनपद इति। शूरा विक्रान्ताः। त्यक्तात्मानः शौर्यान्नात्मरक्षणपराः। द्रव्यहेतोर्द्रव्यतृष्णया। ऐकान्तिकं[1] प्राणनाशमावहन्तो हस्तिनं व्यालं व्याघ्रादिकं योधयेयुः, न छद्मना हन्युः, ते तीक्ष्णा इत्यन्वर्थसंज्ञाः।

परिव्राजिकेति। परिव्राजकधर्मे स्थिता, अनेकत्र वासाद् गमनागमेष्वशङ्क्या पूज्या च। वृत्तिकामा राजार्थकारिणी। दरिद्रा अनन्यगतिः, अत एव वृत्तिकामा। विधवा न जीवद्भर्तृका स्वतन्त्रा। अन्ये पुनरविधवा इत्याहुः। अविधवा पुंस्कामेत्यर्थः। प्रगल्भा प्रतारणकुशला। ब्राह्मणी न क्षत्रिया, सा हि पूज्या भवति। अन्तःपुरे कृतसत्कारा पूजितपूजकत्वाल्लोकस्य। महामात्रकुलान्युपेयानि वा अभ्युपगच्छेत्।

## जयमङ्गलाक्रोडपत्रम्

### पराक्रमः

विक्रान्ता इति। (पृ० २९७)

लघुविक्रमकारित्वं शौर्यमित्यभिधीयते।
शस्त्रास्त्रादिहतस्यापि पराक्रमितुं मनः।
प्रवर्तते फलप्राप्तौ स पराक्रम ईरितः॥ (भाव० ३ अधि०)

बलवत्तरानपि प्रहर्तुं प्रवृत्तिः इत्याचार्याः। एवंविधेषु पुरुषेषु अनिष्टसंभावनात्मकं भयन्नास्ति इति भावः। त्यक्तेति। ननु "मा न भूवं भूयासम्' इत्यभिनिवेशः सर्वस्यास्ति तथा सति कथं शूरः मृत्युं वाञ्छति ? इति चेदुच्यते। शूरो द्विधा भवति—एकस्तत्त्वाभिनिवेशी अपरो रौद्रः। तयो रौद्रः क्रोधस्थायिभावकः। अपर उत्साहस्थायिभावकः। आद्ये समुद्भूतः क्रोधः विघ्नैरसाधितः फलोपधायको न स्यात्, तर्हि स्वप्राणहारको भवति[2]।

---

१. अशुद्धम्—ऐकात्मिकम्।
२. तदुक्तं—भावप्रकाशने ३ अधि०—
यावत्फलावधिः क्रोधः कैश्चिद्विघ्नैरसाधितः।
क्रुद्धः क्रोधस्य कौटिल्यात् प्राणांस्त्यजति कामतः॥

## जयमङ्गलाक्रोडपत्रम्

### क्रोधः

क्रोधोऽयं शत्रुमित्राद्यधिकारिभेदेन पञ्चधा विभक्तः त्रिधा भवति, तत्स्वरूपं टिप्पण्यां व्यक्तम्[1]।

तेनेदं स्फुटं यत् क्रुद्धः क्रोधे अतीव अभिवृद्धे सति प्राणान् कामतः त्यजति। अतः क्रोधस्य कौटिल्यं "मा न भूवं भूयासम्" इत्यभिनिवेशस्य नाशकम्, कामिनी-जिज्ञासायाः कामिनीज्ञानान्यज्ञानं प्रति प्रतिबन्धकत्ववत्। वीरस्तु युद्धे प्राणान् त्यक्तुं समीहते तत्र कारणं तेषां तत्त्वाभिनिवेशः, सूर्यमण्डलभेदं कृत्वा ब्रह्मलोकाप्तिरूपो वा। प्रकृते तु शूरपदेन रौद्रो बोध्यः। तस्य तीक्ष्णसंज्ञया सङ्ग्रहात्। तद्वक्ष्यति— "तीक्ष्णा अन्वर्थसंज्ञाः"[1] इति।

नन्वेवं रघुवंशीयाः अनरण्यादयो राजानः रावणस्य सकाशाद् आत्मनो मृत्युर्भविष्यतीति मन्वाना अपि कथं तेन सह युयुधुः ? इति चेन्न। अवश्यमेव अस्माद् रावणात् पराजयो भविष्यति इति जानाना अपि 'वरं रामो न रावणः' इति न्यायेन उभयथापि शत्रुः हनिष्यत्येव तर्हि धारातीर्थे मरणं सद्यो मुक्तिकरमिति बुद्ध्वा प्राणान् समर्पयामासुः। न च धर्मराजसदृशा राज्यनिमित्तेन कथं युयुधुरिति शङ्क्यम्। "ज्ञानिनामपि चेतांसि देवी भगवती हि सा। बलादाकृष्य मोहाय महामाया प्रयच्छति" ॥ इत्याद्युक्तत्वात्। इत्यलं प्रसक्तानुप्रसक्तचिन्तया।

क्रूरा हि द्रव्यतृष्णया प्राणनाशार्थमपि साहसिके कर्मणि प्रवर्तन्त इति दर्शयितुमाह—ऐकान्तिकमिति। (पृ० २९७)।

अनेन हिंस्रपश्वादिभिः सह युद्धे अन्तो भविष्यति इति निश्चयवन्तोऽपि द्रव्यतृष्णया तीक्ष्णं कर्म कर्तुं प्रवर्तन्त इति सिद्धम्। एवंविधानां स्वरूपं कीदृशमिति भर्तृहर्युक्तं स्मर्तव्यम्[2]।

---

१. क्रोधस्त्रिधा भवेत् क्रोधकोपरोषविभेदतः।
शत्रुमित्रप्रियाभृत्यपूज्यादिष्वेव पञ्चधा ॥
क्रोधो रौद्रेषु भूयिष्ठः कोपो धीरेषु शस्यते।
स्त्रीपुंसयोर्मिथो रोषः प्रणयादिर्हि कथ्यते ॥
क्रोधस्तिष्ठति सर्वत्र क्रुद्धानामाफलोदयात्।
कोपोऽनुनाथितः सद्यो निवर्तेत फलोदयात् ॥
उद्दीप्तश्चेत् प्रवर्धेत तत्तदुद्दीपनैर्मुहुः।
रोषः प्रायेण सर्वत्र शाम्यत्येनानुनाथितः ॥ इति। (भावप्रकाशनम्-३)

२. जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छतात्
शीलं शैलतटात्पतत्वभिजनः सन्दह्यतां वह्निना।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ (भ० श० अर्थप०)

## जयमङ्गलाक्रोडपत्रम्

### क्रूरस्य ग्राह्यत्वत्याज्यत्वे

यद्यपि राज्ये क्रूरादयः पूर्वोक्तं कर्म कर्तुं राज्ञा नियोज्यन्त इति सत्यं तथापि ईदृग्विधानां बाहुल्यं देशे यथा न भवेत्, तत्रापि राज्ञाऽवधेयम्। अन्यथा विनाशोऽप्यापद्येत तदुक्तं दशकुमारचरिते—"हुतनाथा" इत्यादिना।

तीक्ष्णानां व्यापारः शस्त्रसम्बन्धी भवति इति प्राधान्येन तत्कर्मणि एतेषां विनियोगः स्मर्तव्यः[१]।

मूले क्रूरा इत्युक्तम्। तस्यायं भावः—धर्मानुष्ठातारो न सहसा विषदानेन हन्तुं प्रवृत्ता भवन्ति, तथाविधकार्यकरणे परेषु शङ्कोदयप्रसङ्गात्। शङ्कायाश्चाकार्यनिवर्तकत्वाद्[२] इति।

---

अन्यच्च—माता निन्दति नाभिनन्दति पिता भ्राता न संभाषते
भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते।
अर्थप्रार्थनशङ्कया न कुरुते सम्भाषणं वै सुहृ-
त्तस्माद् द्रव्यमुपार्जयस्व सुमते द्रव्येण सर्वे वशाः॥

१. तदुक्तं नीतिसारीयजयमङ्गलायां चरप्रकरणे—
तीक्ष्णः प्रव्रजिता चैव सत्री रसद एव च।
एते प्रधानसञ्चाराः सर्वे नान्योन्यवेदिनः॥ इति॥ (१३-३८)

(टी०) यः शूरः त्यक्तात्मा निस्त्रिंशः स तीक्ष्णस्तस्य प्राधान्येन शस्त्रव्यापारे विनियोगः 'तीक्ष्णः क्रूरकर्मा शस्त्रेण घातकः'। (अ० शा०) ये जनपदे शूरास्त्यक्तात्मानो हस्तिनं व्यालं वा द्रव्यहेतोः प्रतियोधयेयुस्ते तीक्ष्णा इति।

२. चौर्यादिग्रहपापादिकर्मक्ष्मापापराधजा।
शङ्का सन्देहरूपा स्यात् स्त्रीनीचप्रकृतिश्रिता॥
स्वात्मोत्था च परोत्थेति सा पुनर्द्विविधा भवेत्।
स्वरभेदोऽश्रुवैवर्ण्यमास्यशोषोऽवकुण्ठनम्॥
पार्श्वावलोकनं जिह्वालेहनं चोरुकम्पनम्।
आकारसंवृतिरिति भावाः शङ्कानुभावकाः॥
आत्मोत्था तु परिज्ञेया दीनदृष्टिविलोकनैः।
परोत्था त्वङ्गचेष्टाभिर्विज्ञेया भावकोविदैः॥
तारापुटभ्रूदृष्टीनां विकारानिङ्गितं विदुः॥ इति। (अधि० १ भावप्रकाशनम्)

काव्यप्रकाशेऽपि—अथ शङ्का।

तत्र "अनर्थप्रतिभा शङ्का" इति धनिकः। "अनिष्टाभ्यागमोत्प्रेक्षां शङ्कामाचक्षते बुधाः" इति महाराजः। नीचेष्वनर्थसन्देहरूपा शङ्का तदा भवेत्" इति शार्ङ्गदेवः। प्रतिभोत्प्रेक्षासन्देहास्तुल्यार्थास्तेन द्वेषविषयस्य वस्तुनोऽविद्यमानोत्कटकोटिकः सन्देहः शङ्केति पर्यवस्यति। द्वेषो द्विविधः—प्रेष्ठवस्त्व-

## जयमङ्गलाक्रोडपत्रम्

मूले क्रूरा इति। पापाशया इत्यर्थः। श्रीमूलायाम् आततायिन इति। अलसा इति। इदं हि विशेषणं भर्तव्योपयोगीतरक्रियाभ्यावृत्त्यर्थम्। आलस्यं किं स्वरूपमिति भावप्रकाशने व्यक्तम्[1]।

आलस्यगुणसम्पन्नः क्रियाविद्वेषी भवतीति स न शूरः, न वा विद्वान्, नाऽपि च सेवाविपश्चिद् भवितुमर्हति। अत एवाऽयं कुत्रापि किमपि कर्म न कर्तुं रतिमान् अनुत्साहवत्त्वात्। अस्मादेव च कारणाद् बन्धुष्वपि न रक्तो भवति इति स सर्वैरपि परित्यज्यते। व्यक्तं चेतद् नीतिसारेऽपि[2]।

अत एव क्रूरा इत्युक्तं मूले। तेनैव अयं नास्तिकः तमःप्रधानः निःशङ्कं विषं दातुमुत्सहते। एतेन विषदाने अधिकृतस्तमोगुणसम्पत्तिमान्बोध्यः।

ननु राज्ये गूढप्रणिधिकार्यकरणे कश्चनागुणोऽपि उपर्युक्तरीत्या यदि अपेक्ष्यते तर्हि रामराज्ये सर्वेऽपि सदस्या इत्यभिप्रायकं वर्णनं कथमुपपद्यते ? इति चेन्न। तथाविधे

---

भिलाषात् तत्प्रतिकूलार्थगोचरो बलवदनिष्टोपायगोचरश्च। तत्र प्रथमः शृङ्गारादेरङ्गम्। इतरस्तु भयानकादेः, तदुक्तम्—

प्रिय विप्रियजा शङ्का शृङ्गारे शार्ङ्गिणोदिता।
चौर्यराजापराधादिप्रभवा तु भयानके॥ इति।

१. स्वभावखेदसौहित्यव्याधिगर्भादिभिर्भवेत्।
आलस्यं तच्छिरःशूलजृम्भणाक्षिविमर्दनैः॥
स्तम्भेन गात्रमनसोस्स्त्रीनीचादिषु वर्ण्यते।
सर्वत्र कार्यप्रद्वेषान्निद्रातन्द्रीनिषेवणात्।
शयनासनरागेण वर्ण्योऽसावितरेषु तु॥ इति।

काव्यप्रकाशेऽपि—आलस्यं श्रमगर्भादेर्जैह्म्यजृम्भासितादिदृग् इति धनिकः। श्रमगर्भादेर्विभावाज्जातं जैह्म्यम्। क्रियाविद्वेष आलस्यं सुखसंविन्मदादिभिः इति भोजराजगणनात्। अतितृप्तिः स्वभावश्च गर्भव्याधिश्रमादयो विभावाः। अनुभावास्तु निद्रा-तन्द्रा-समासनात्—

ऋते सर्वक्रिया द्वेषो यत्रालस्यं तदुच्यत इति शार्ङ्गिनिगदाच्च।
यथा—चलति कथञ्चित् पृष्टा गच्छति वाचं कथञ्चिदालीनाम्।
आसेतुमेव हि मनुते गुरुगर्भभरालसा सुतनुः॥ इति।

२. अलसस्याल्पतोषस्य निर्विद्यस्याकृतात्मनः।
प्रदानकाले भवति माताऽपि हि पराङ्मुखी॥ इति। ( कां )
श्रीमूलायाम्—अलसाः अनुत्साहाः।

## जयमङ्गलाक्रोडपत्रम्

आदर्शभूते राज्ये यत्र पूर्णतया कर्तव्याकर्तव्यप्रतिपादिका त्रयी प्रधानतया विलसति तत्र नास्तिक्यं न संभवितुमर्हति। अथवा विहितत्वाद् उग्रताऽपि आसीदेवेत्यपि वक्तुं शक्यं सर्वथा तस्या अभावे वीररसस्य अभाव एव आपद्येत, तद्व्यभिचारभावेषु उग्रतायाः परिगणनात्[1]।

यदा किल तथाविधे राज्ये गूढतया साम्राज्यं विनाशयितुं कश्चन वाञ्छति तदा तद्विनाशाय गूढपुरुषतया तथाविधस्य रसदस्यापि अपेक्षा वर्तत एव। यदा तु तथाविधदुष्टकर्मा नाऽस्ति तदा तु रसदस्यानुपयोगित्वमेव। सत्यप्येवं राज्येनावश्य-भर्तव्यत्वात् क्रूरोऽपि तथाविधः संरक्षणीयः। न चैवं सति स क्रूरश्चेद् धर्मराज्येऽपि राजानं हन्तुं प्रभवेदिति वाच्यम्, राज्ञः सत्त्वगुणस्वभावेन तत्प्रभावस्यानौचित्यावह-कर्मनिराकरणे शक्तत्वात्। व्यक्तं चैतन्मानसरामायणे गुहसौमित्रिसंवादे।

स्त्रीणां संन्यासः, उपयोगश्च

परिव्राजकधर्म इति। (पृ० २९७) जीवन्मुक्तिविवेकोक्तः स्त्रीणां संन्यासोऽपि अनेन शास्त्रेणानुमन्यत इति भाति। तथापि कल्यतिरिक्तः काल एव स्त्रीणां संन्यास-स्यानुमतत्वं मन्तव्यम्। अत एवात्र मुण्डाशब्दः अर्हतादिपर इति टिप्पण्यामुक्तं सङ्गच्छते। तदुक्तं—'मुण्डाः अर्हतबुद्धभिक्षुक्यः' इति।

तदुपयोगं वदति। (पृ० २९७) अनेकत्रेति। संन्यासधर्मे दीक्षितस्य एकत्र वासो निषिद्ध इति प्रागुक्तत्वात् परिव्राजिकाया अनेकत्र वासस्तदाश्रमोचित एव।

पूज्येति। (पृ० २९७) आश्रमस्थानं हि तपस्विनां भवति। तेषु शमस्य सञ्चर-णात् प्रतारणाया अभावेन लोकस्य विश्वास्यभूतं तत्स्थानं भवति। अतस्तत्र अधिकृतः परिव्राजकः परिव्राजिका वा सञ्चरति। तस्य पूज्यत्वमपि नियतमेव। महमात्रोप-जापेऽपि तथाविधाया उपयुक्तता स्वाभाविको भवति इत्यनेनापि स्फुटं भवति।

अविधवेति। (पृ० २९७) यद्यपि अविधवायाः परित्यागो न शास्त्रसम्मत इति राजद्वारा तस्या उपजापकार्ये नियोजनमनुपपन्नमिव भवति। तथापि स्थलविशेषेषु यस्याः परित्यागः शास्त्रेषूक्तः। सैवात्र ग्राह्या।

तथाविधया परिव्राजिकया आत्मनि तथात्वख्यापनार्थं स्वदीक्षोचितदण्डधार-णादि कार्यम्।

---

१. वीरगा भावा आवेगो हर्ष एव च।
गर्वासूयोग्रतास्तर्को धृतिर्बोधः स्मृतिर्मतिः॥
मदः स्वेदश्च रोमाञ्चो दृश्यन्ते ते क्वचित् क्वचित्॥ इति।

## जयमङ्गलाक्रोडपत्रम्

प्रतारणेति । ( पृ० २९७ ) प्रागल्भ्यं हि निर्भयत्वं प्रागुक्तम् । अत्र तु प्रतारणं कुशलत्वमुच्यते । तस्यायं भावः—यत् प्रतारणं कर्म निर्भयतया कर्तव्यम् इति । तदुक्तं भावप्रकाशने—

'दुस्तरस्य स्वभावेन येन केनापि कर्मणा ।
मिथ्यातरणयोग्यार्थकथनं स्यात्प्रतारणम् ।। इति ।

यो दुस्तरोऽर्थो भवति सः स्वकीयेन स्वभावेन कर्मणा तरणयोग्यतया परिव्राजिकया एवं निरूपयितव्यो येन अविद्यापठितोऽपि तद् दुस्तरं कर्म कर्तुं समीहेत । वस्तुगत्या तु दुस्तर एव इति भावः । अस्य किं फलमिति चेन्मूर्खाणामात्मनि विश्वासः ।

कुशल इति । (पृ० २९७) कौशलं भावप्रकाशनोक्तदिशाऽवगन्तव्यम् । तद्यथा—
सुखप्रयोगचातुर्यं कृत्येष्वाहुस्तु कौशलम् । इति ।

योगसूत्रेऽपि—"प्रवृत्त्याऽऽलोकन्यासाद् अनायासेन सूक्ष्मव्यवहितविप्रकृष्टं ज्ञानं भवति"[१] इति । एवञ्च या जितरामा वशीकृतरामा च भवति सा सुखेन प्रयोगे कुशला भवति इति संस्मर्तव्यम् । तेन तस्या वशे राजा वर्तते ।

ब्राह्मणीति । ( पृ० २९७ ) उपलक्षणमेतन्मुण्डादीनाम्, टिप्पण्यामपि तथा व्याख्यानात् । ब्राह्मणीत्वग्रहणं पूज्यत्वख्यापनार्थम् । इति ।

महामात्रेति । ( पृ० २९७ ) परीक्षणीया महामात्रपदेन बोद्धव्याः । कुलपदेन परिव्राजिकायास्तथाविधपरीक्षणीयपूज्यत्वं बोध्यम् । तदुक्तं श्रीमूलायाम्-'महामात्रकुलानि अधिगच्छेत्, असकृदमात्यगृहाणि गच्छेत्, सत्कारस्वीकारार्थम्" इति ।

अभ्युपगच्छेदिति । ( पृ० २९७ ) अधिगच्छेदिति श्रीमूलायां पाठान्तरम् । अत्रेदं चिन्तनीयम् । एवंविधा या दरिद्रा वृत्तिकामा परिव्राजिका भवति, तथाविधाया एव महामात्रकुलेषु प्रसर्पणात् तद्द्वारा रहस्यभेदः संभवितुमर्हति । तत आत्मा रक्ष्यः ।

---

१ भा० ना० ती०—प्रवृत्तिर्ज्योतिष्मती प्रागुक्ता । तस्यां दृढायां य आलोकः सात्त्विकप्रकाशप्रसरो बुद्धेस्तस्य न्यासाद् विषयेषु योजनात् कः कीदृशः क्व कदेत्यादि प्रतिसंधानरूपात् सूक्ष्मस्य परमाण्वादेर्व्यवहितस्य निध्यादेर्विप्रकृष्टस्य मेर्वन्तर्वर्त्तिनो रसायनादेर्ज्ञानमुत्पद्यते । यथा चक्षुर्न्यासेन घटादीनामपरोक्षं भवति तद्वदित्यर्थ इति ।

**एतया मुण्डा[1]वृषल्यो व्याख्याताः[2] । इति[3] सञ्चाराः ।**

## श्रीमूला

एतयेति । एतया ब्राह्मणपरिव्राजिकया उक्तया, मुण्डावृषल्यो व्याख्याताः । उक्तप्राया ब्राह्मणपरिव्राजिकासमानाचारा वेदितव्या इत्यभिप्रायः । तत्र मुण्डाः शाक्यभिक्षुक्यः, वृषल्यः शूद्राः । इति सञ्चारा इत्युक्तरूपाः सत्रिप्रभृतयः सञ्चारशब्देनाख्यायन्ते ।

## वैदिकसिद्धान्तसंरक्षिणी

एतया परिव्राजिकया । परिव्राजिकात्वं व्याख्यातम् । परिव्राजकलिङ्गधारिणी सर्वत्र परिव्रजतीति । मुण्डा इति—अर्हतबुद्धभिक्षुक्य इति टिप्पण्याम् । वृषल्यः शूद्रा अधार्मिक्य इति तु युक्तं भवति । तदुक्तम्—

वृषो हि भगवान् धर्मः तस्य यः कुरुते ह्यलम् ।
वृषलं तं विदुर्देवाः तस्माद् धर्मं न लोपयेत् ॥ इति ।

व्याख्याता इति । (पृ०२९७) वृत्तिकामा दरिद्रा इत्यादिना इत्युक्तम् इति शेषः। टिप्पण्याम्—वेश्या देवतालिङ्गधारिण्यो व्याख्याता इति । वृत्तिकामा अन्तःपुरे कृतसत्कारा महावेश्यामात्रकुलानि गच्छेद् इति योज्यम् इत्युक्तम् । एतदेव लक्षणं तासामपि बोध्यम् । संस्थापेक्षया सत्र्यादीनां नामान्तरं ज्ञापयितुमाह—सञ्चारा इति । सत्र्यादयस्तत्र तत्र चरित्वा निगूढार्थं विचिन्वन्ति इति सञ्चाराः । टिप्पण्याम्—इत्येवं प्रकाराः सत्र्यादयः कुब्जादयश्च सञ्चाराः । सञ्चरन्तीति सञ्चारा इति व्याख्यातम् । का० जयमङ्गलायान्तु एते प्रधानं सञ्चारयन्तीति सञ्चारा इत्युक्तम् । संस्थास्तु एकत्रैव स्थित्वा वृत्तं चरद्वारा जानन्तीति चारसंस्थयोर्भेदः ।

## जयमङ्गला

एतया परिव्राजिकया । मुण्डा प्रव्राजिका वृषल्यः पतिताः परित्य-[4]क्तचारित्र्यधर्मा व्याख्याताः । वृत्तिकामा इत्यादि । एते चतुर्विधाः सत्र्यादयश्चतुर्विधाः सञ्चाराः सञ्चारयन्ति वार्तामिति कृत्वा ।

---

नी॰ टि॰ १. मुण्डा इति । अर्हतबुद्धभिक्षुक्यः ।

२. व्याख्याता इति । वेश्यामातरो देवतालिङ्गधारिण्यो व्याख्याता इति । वृत्तिकामाऽन्तःपुरे कृतसत्कारा महामात्यकुलानि गच्छेदिति योज्यम् ।

३. इतीति । इत्येवम्प्रकाराः सत्र्यादयः कुब्जादयश्च सञ्चाराः । सञ्चरन्ति सञ्चारयन् चारमिति ।

४. अशुद्धम्—परित्यः ।

## जयमङ्गलाक्रोडपत्रम्

वृषल्य इति। तत्त्वञ्च अधार्मिकत्वम्। तद् व्याख्यातं शब्दकल्पद्रुमे—

वृषो हि भगवान् धर्मः तस्य यः कुरुते ह्यलम्।
वृषलं तं विदुर्देवास्तस्माद् धर्मं न लोपयेत्॥

चन्द्रगुप्तराजः। अधार्मिकश्य इति जटाधर इति। अत एव वक्ष्यति परित्यक्त-चारित्र्यधर्मा इति।

तदेव व्याख्याति—परित्यक्तेति।

### चरकर्मणि ब्राह्मण्या उपादानम्

ननु यद्यत्र शूद्रादयो विवक्ष्यन्ते तर्हि ब्राह्मण्या विशेषतया उपादानं किमर्थं कृतम् ? इति चेदुच्यते। आत्मनि स्थायिविश्वास्यत्वलाभार्थं शमस्य सत्त्वप्रधानस्य अपेक्षा भवति तथा ब्राह्मणाश्च सत्त्वप्रधाना इत्यपि च व्याख्यातम्। अतः अत्र ब्राह्मणीपदेन सत्त्वप्रधाना शमप्रकृतिः विवक्षिता, तां गुरुस्थाने संस्थाप्य एता मुण्डावृषल्यादयः स्वकार्यसम्पादनसमर्था भवन्ति।

वस्तुतस्तु देशसंरक्षणाय कण्टकशोधनाय च राजनीतौ यद्यदपेक्षितं तत्सर्वमपि धर्मसाद्गुण्यं भजते। तदकरणे तु महान् प्रत्यवायो राज्यविनाशात्मकः संपद्येत। ततः संरक्षणाय कर्तव्यहेतोः सत्त्वप्रधाना ब्राह्मणी चरकार्थं निमित्तवशाद् यद्यनुतिष्ठति तथापि तस्या असाधुत्वं कथं निर्णेतव्यं स्यात् ? अतो ब्राह्मणी विशेषतया नियोजिता। पुनः अवध्यत्वं च ब्राह्मणस्याऽस्ति इति मत्वा कदाचित् प्रकाशतामापन्ने सा वध्यत्वं नापद्यत इति हेतुनापि दूतकर्मणि ब्राह्मणवद् अन्तःपुरस्थचरकर्मण्यपि ब्राह्मणी नियोजिता। तामनुरुध्य अवश्यभर्तव्या वृत्तिकामाः परित्यक्तचारित्र्यधर्मा ब्राह्मण-जातीया अपि गृहीताः। अथवा परित्यक्तचारित्र्यधर्मा इत्यनुगमेन तथाविधया यया यया महामात्रकुलसंशोधनकार्यं सम्पद्येत, सा सर्वविधाऽपि नियोजयितुं शक्यत इति भावः। तत्रापि पूज्यत्वमवश्यं चिन्तनीयमन्यथा कार्यहानिः स्यात्। अत एव वेश्यादयोऽप्यत्र सङ्गृह्यन्ते।

### वेश्यानामपि उपयोगः

न च राजगृहे वेश्यानां कथं प्रवेशः ? धूर्तताकार्यपरिज्ञानार्थं तासामुपयुक्तत्वात् कलामुखेन राजगृहं प्रविश्य धनापहरणं याभिः याभिः कलाभिः संभवति तासां तासां कलानां प्रशिक्षणहेतोश्च। तदेतत् क्षेमेन्द्रविरचितकाव्यविलासग्रन्थेन उपन्यस्तमत्र टिप्पण्यां द्रष्टव्यम्[१]।

---

वेश्याधूर्तयोः परिचयः

१—४ सर्ग—'तत्रापि वेशयोषाः कुटिलतराः कूटरागहृतलोकाः।
कपटचरितेन यासां वै श्रवणः श्रमणतामेति॥१॥
हरिण्यश्चटुलतरा बहुलतरङ्गाश्च निम्नगामिन्यः।
नद्य इव जलधिमध्ये वेश्याहृदये कलाश्चतुःषष्टिः॥२॥

वेशकला नृत्यकला गीतकला वक्रवीक्षणकला च ।
कामपरिज्ञानकला ग्रहणकला मित्रवञ्चनकला च ॥ ३ ॥
पानकला केलिकला सुरतकलाऽऽलिङ्गनान्तरकला च ।
चुम्बनकला परकला निर्लज्जानांगसक्षमकला च ॥ ४ ॥
ईर्ष्याकलिकेलिकला रुदितकला मानसंक्षयकला च ।
स्वेदक्षमकम्पकला पुनरेकान्तप्रसाधनकला च ॥ ५ ॥
नेत्रनिमीलननिःसहनिस्पन्दकलाऽमृतोपमकला च ।
विरहासहरागकला कोपप्रतिषेधनिश्चयकला च ॥ ६ ॥
निजजननीकलहकला सद्गृहगमनोत्सवावेक्षणकला च ।
हरणकला जातिकला केलिकला चौरपार्थिवकला च ॥ ७ ॥
गौरवशैथिलकला निष्कारणदोषभाषणकला च ।
शूलकलाऽभ्यङ्गकला निद्राक्षिरजस्वलाम्बरकला च ॥ ८ ॥
रुक्षकला तीक्ष्णकला गलहस्तगृहार्गलार्पणकला च ।
सन्त्यक्तकामुकाहूतिदर्शनयात्रास्तुतिकला च ॥ ९ ॥
तीर्थोपवनसुरालयविहरणहेलाकला गृहकला च ।
वश्योषधमन्त्रकला वृक्षकला केशरञ्जनकला च ॥ १० ॥
भिक्षुकतापसबहुविधपुण्यकला द्वीपदर्शनकला च ।
खिन्ना कला त्रिषष्टपर्यन्ते कुट्टनीकला वेश्या ॥ ११ ॥
अज्ञातनामवर्णेष्वात्मापि ययार्प्यते धनांशेन ।
तस्या अपि सद्भावं मृगयन्ते मोघसङ्कल्पाः ॥ १२ ॥
निखिलजनवञ्चनार्जितमलिनधनं रागहृद्धहृदयानाम् ।
खादति गुणगणभग्नो नग्नो हीनोऽथवा कश्चित् ॥ १३ ॥
नीचस्तुरगारोहो हस्तिपकः खलतरोऽथवा शिल्पी ।
वञ्चितसकलजनानां तासामपि वल्लभो गर्वी ॥ १४ ॥
राजा विक्रमसिंहो बलवद्भिर्भूमिपैः पुरा विजितः ।
मानी ययौ विदर्भान्गुणयशसा मन्त्रिणा सहितः ॥ १५ ॥
तत्र स वेश्याभवनं प्रविश्य भुवि विश्रुतां विलासवतीम् ।
भेजे गणिकां बहुधनभोग्यामप्यल्पविभवोऽपि ॥ १६ ॥
तं राजलक्षणोचितभाषानुगुणं विलोक्य पृथुसत्त्वम् ।
विविधमणिकनककोषं चक्रे सा तद्व्ययाधीनम् ॥ १७ ॥
सहजमनुरागमद्भुतमौचित्यं वीक्ष्य भूपतिस्तस्याः ।
विस्मयविवशः प्रेम्णा जगाद विजने महामात्यम् ॥ १८ ॥
चित्रमियं बहुवित्तं क्षपयति वेश्याऽपि मत्कृते तृणवत् ।
प्रीतिपदवीविसृष्टो वेश्यानां धननिबन्धनो रागः ॥ १९ ॥

मिथ्याधनलवलोभादनुरागं दर्शयन्ति बन्धक्यः ।
तदपि धनं विसृजति या कस्तस्याः प्रेम्णि सन्देहः ? ॥ २० ॥
इति वचनं भूमिपतेः श्रुत्वा मन्त्री विहस्य सासूयः ।
तमुवाच कस्य राजन्वेश्याचरितेऽस्ति विश्वासः ? ॥ २१ ॥
एताः सत्यविहीना धनलवलीनाः सुखक्षणाधीनाः ।
वेश्या विशन्ति हृदयं मुखमधुर्निर्विचाराणाम् ॥ २२ ॥
प्रथमसमागमसुखदा मध्ये व्यसनप्रवासकारिण्यः ।
पर्यन्ते दुःखफलाः पुंसामाशाश्च वेश्याश्च ॥ २३ ॥
अद्यापि हरिहरादिभिरमरैरपि तत्त्वतो न विज्ञाताः ।
समविषमबहुलमोहा वेश्याः संसारमायाश्च ॥ २४ ॥
इति सचिववचो नृपतिः श्रुत्वा कृत्वा च संविदं तेन ।
मिथ्या मृतमात्मानं चक्रे वेश्यापरीक्षार्थं ॥ २५ ॥
तस्मिन् कुणपशरीरे विन्यस्ते मन्त्रिणा चितावह्नौ ।
सहसैव विलासवती वह्निभुवं भूषिता प्रययौ ॥ २६ ॥
तां प्रबलज्वलितोज्वलवह्निज्वालानिपातसावेगाम् ।
दोर्भ्यामालिङ्ग्य नृपो जीवामीत्यभ्यधान्मुदितः ॥ २७ ॥
ततस्याः प्रेम दृढं सत्यं च विचार्य संभृतस्नेहः ।
राजा निनिन्द मन्त्रिणमसकृद्वेश्यागुणाभिमुखः ॥ २८ ॥
अथ वेश्याधनसञ्चयमात्माधीनं महीपतिर्विपुलम् ।
आदाय गजतुरङ्गमभटविकटामाददे सेनाम् ॥ २९ ॥
संभृतविपुलबलौघैर्जित्वा वसुधाधिपान् स भूपालः ।
निजमाससाद मण्डलमिन्दुरिवानन्दकृत्पूर्णः ॥ ३० ॥
सा चान्तःपुरकान्ता मूर्ध्नि कृता भूभुजा विलासवती ।
शुशुभे श्रीरिव चामरपवनाकुलितालका तन्वी ॥ ३१ ॥
साथ कदाचिन्नरपतिमेकान्ते विरचिताञ्जलिः प्रणता ।
ऊचे नाथ ! मया त्वं कल्पतरुः सेवितश्चिरं दास्या ॥ ३२ ॥
यदि नाम कुत्रचिदहं याता ते हेतुतां विभो ! लक्ष्म्या ।
तन्मम सफलामाशामर्हसि कर्तुं प्रसादेन ॥ ३३ ॥
पुण्यफलप्राप्यानां हृतपररजसां स्वभावविमलानाम् ।
तीर्थानामिव महतां नहि नाम समागमो विफलः ॥ ३४ ॥
अभवन् मम कोऽपि युवा दयितो धनजीविताधिकप्रणयी ।
बद्धः स विदर्भपुरे दैववशाच्चाररक्षेण ॥ ३५ ॥
तन्मुक्तये मया त्वं शक्ततरः सेवितो महीनाथः ।
अधुना क्रियतामुचितं सत्त्वस्य कुलस्य शौर्यस्य ॥ ३६ ॥
इति वञ्चनामवाप्तो विस्मित इव तद्वचो नृपः श्रुत्वा ।
सुचिरं विलोक्य वसुधां सस्मारामात्यवचनं सः ॥ ३७ ॥

अथ तां तथैव राजाऽऽदवास्य विदर्भेषु भूभुजं जित्वा ।
धनमुक्तेनास्याश्चोरेण समागमं चक्रे ॥ ३८ ॥
इत्येवं बहुहृदया बहुजिह्वा बहुकराश्च बहुमायाः ।
तत्त्वेन सत्यरहिताः को जानाति स्फुटं वेश्याः ॥ ३९ ॥
वर्णनदयितः कश्चिद्धनदयितो दासकर्मदयितोऽन्यः ।
रक्षादयितश्चान्यो वेश्यानां नर्मदयितोऽन्यः ॥ ४० ॥

॥ वेश्यावृत्तं नाम चतुर्थः सर्गः ॥

नवमः सर्गः

वञ्चकमाया महती महीतले जलधिमेखले निखिले ।
नष्टधियां मत्स्यानां जालाली धीवरैर्विहिता ॥ १ ॥
सर्वस्वमेव परमं प्राणा येषां कृते प्रयत्नोऽयम् ।
वैद्या वेद्याः सततं येषां हस्ते स्थितास्तेऽपि ॥ २ ॥
एते हि देहदाहा विरहा इव दुःसहा भिषजः ।
ग्रीष्मा दिवसा इवोग्रा बहुतृष्णाः शोषयन्त्येव ॥ ३ ॥
विविधौषधपरिवर्तैर्योगैर्जिज्ञासया स्वविद्यायाः ।
हत्वा नृणां सहस्रं पश्चाद् वैद्यो भवेत् सिद्धः ॥ ४ ॥
विन्यस्य राशिचक्रं ग्रहचिन्तां नाटयन् मुखविकारैः ।
अनुवदति चिराद् गणको यत्किञ्चित्प्राश्निकेनोक्तम् ॥ ५ ॥
गणयति गणने गणकश्चन्द्रेण समागमं विशाखायाः ।
विविधभुजङ्गक्रीडासक्तां गृहिणीं न जानाति ॥ ६ ॥
प्रथमं स्ववित्तमखिलं कनकार्थी भस्मसात्कृत्वा ।
पश्चात्सधनान्रसिकान्विनाशयत्येष वणिकानिपुणः ॥ ७ ॥
शतवेधी सिद्धो मे सहस्रवेधी रसोऽपि निर्यातः ।
इति वदति धातुवादी नग्नो मलिनः कृशो रूक्षः ॥ ८ ॥
ताम्रघटोपमशीर्षो धूर्तो हि रसायनी जराजीर्णः ।
केशोत्पादनकथया खल्वाटानेव मुष्णाति ॥ ९ ॥
प्रह्लादनशुचितारकशम्बररमणीजनेऽपि बद्धाशः ।
बिल्वादिभिरतिकामी हुत्वा धूमान्धतामेति ॥ १० ॥
खेचर्यः सुखसाध्या यत्नाद् यदि लभ्यते नभःकुसुमम् ।
उक्ताः प्रयोगविद्भिर्मशकास्थिषु सिद्धयो बहुधा ॥ ११ ॥
कृष्णाश्वशकृद्वर्त्या पश्यति गगने सुरेन्द्रभवनानि ।
मण्डूकवसालिप्तो भवति पुमान् वल्लभोऽप्सरसाम् ॥ १२ ॥
इत्युक्त्वा पुनराशां दिशि दिशि विलसन्ति धूर्तसङ्घाताः ।
यैर्विविधसिद्धिलुब्धाः क्षिप्ताः शतशो नराः श्वभ्रे ॥ १३ ॥

वश्याकर्षणयोगी पथि पथि रक्षां ददाति नारीणाम् ।
रतिकामतन्त्रमूलं मूलं मन्त्रं न जानाति ॥ १४ ॥
बहवो रथ्यागुरवो लब्दीक्षाः स्वल्पयोगमुत्पाद्य ।
व्याधा इव वर्धन्ते मुग्धानां द्रविणदारहराः ॥ १५ ॥
हस्तस्था धनरेखा विपुलतरास्याः पतिश्च चलचित्तः ।
मृद्नाति कुलवधूनामित्युक्त्वा कमलकोमलं पाणिम् ॥ १६ ॥
बद्धेऽङ्गुष्ठे सलिले पश्यति विविधं जनभ्रमं कन्या ।
न प्राप्यते च चोरो मोहोऽसाविन्द्रजालस्य ॥ १७ ॥
खादति पिबति च धूर्तः प्रलापकारी नृणां तलाघातैः ।
चेटावेशं कृत्वा निर्मन्त्रं क्षुद्रधूपेन ॥ १८ ॥
कक्षपुटे नागार्जुनलिखिता युक्तिर्विधीयतां धूपे ।
यो हर्तुं मोहादिति धूर्तोऽग्नौ क्षिपति परवित्तम् ॥ १९ ॥
यक्षीपुत्राश्चोरा विज्ञेयाः कूटधूपकर्तारः ।
येषां प्रत्यक्षफलदारिद्र्यं राजभङ्गश्च ॥ २० ॥
बहुतरधनेन वणिजा पुत्री सा पुत्रवद्गृहीतैव ।
मदधीनेति कथाभिः कन्यार्थं भुज्यते धूर्तैः ॥ २१ ॥
चिन्त्यः स्वेङ्गितवादी मर्मज्ञो हृदयचोर एवासौ ।
तिष्ठति परप्रयुक्तो मिथ्याबधिरोऽथवा मूकः ॥ २२ ॥
भस्मस्मेरा वेश्या वृद्धाः श्रमकाः सदैवता गणिकाः ।
एताः कुलनारीणां चरन्ति धनशीलहारिण्यः ॥ २३ ॥
विधवा तरुणी सधना वाञ्छति दिव्यं भवद्विधं रमणम् ।
धूर्तो जडमित्युक्त्वा सर्वस्वं तस्य भक्षयति ॥ २४ ॥
प्रत्यहवेतनयुक्ताः कर्मसु ये कारुशिल्पिनो धूर्ताः ।
विलसन्ति कर्मविघ्नैर्विज्ञेयाः कालचोरास्ते ॥ २५ ॥
अक्षव्याजैर्विविधैर्गणनाहस्तादिलाघवैर्निपुणाः ।
धूर्ताश्चरन्ति गूढं प्रसिद्धकितवा विदेशेषु ॥ २६ ॥
भोजनमात्रोत्पत्तिर्बहुव्ययो द्यूतमद्यवेश्याभिः ।
विज्ञेयो गृहचोरो बन्धुजनो वेश्मदासो वा ॥ २७ ॥
कृतकं शास्त्रमसत्यं साक्षाद् दृष्टश्च केन परलोकः ।
इति वदति यः स शङ्क्यो निरङ्कुशो मत्तमातङ्गः ॥ २८ ॥
बहुलाभलुब्धमनसां हरन्ति ये दुःसहेन लाभेन ।
ऋणधनमधिकविदग्धा विज्ञेया लाभचोरास्ते ॥ २९ ॥
अधिकरणाम्बुधिमध्ये ज्वलन्ति वडवाग्नयः सततभक्षाः ।
जनधनघनमनसो ये भट्टाख्या न्यायचोरास्ते ॥ ३० ॥

विभवाम्भोरुहमधुपा दुःसहविपदनिलवेगविमुखा ये ।
सुहृदस्ते सुखचौराश्चरन्ति लक्ष्मीलताहृताः ॥ ३१ ॥
यद्यत् किञ्चिदपूर्वं परिचरितं कल्पनादसम्बद्धम् ।
वर्णयति हर्षकारी बहुवचनः कर्णचोरोऽसौ ॥ ३२ ॥
दोषेषु गुणस्तुतिभिः श्रद्धामुत्पाद्य चतुरवदना ये ।
कुर्वन्त्यभिनवसृष्टिं स्थितिचौरास्ते निराचाराः ॥ ३३ ॥
आत्मगुणख्यातिपराः परगुणमाच्छाद्य विपुलयत्नेन ।
प्रभवन्ति परमधूर्ता गुणचौरास्ते विमूढहृदयेषु ॥ ३४ ॥
वल्लभतामुपयाताः परवाल्लभ्यं विचित्रपैशुन्यैः ।
ये नाशयन्ति धूर्ता मात्सर्याद् वृत्तिचौरास्ते ॥ ३५ ॥
समदमभक्तिविहीनस्तीव्रव्रतदुर्ग्रहग्रस्तः ।
अभिभवति प्रतिपत्त्या साधुजनं कीर्तिचोरोऽसौ ॥ ३६ ॥
देशान्तरसंभविभिर्भोगवरैर्वर्णनारम्यैः ।
येऽपि नयन्ति विदेशं पशुसदृशान्देशचौरास्ते ॥ ३७ ॥
नानाहासविकारैर्बहुवैदग्ध्यैः सनर्मवैचित्र्यैः ।
रमयति दिवसमशेषं प्रकृतिव्यापारचोरोऽसौ ॥ ३८ ॥
भक्षितनिजबहुविभवाः परविभवक्षपणदीक्षिताः पश्चात् ।
अनिशं वेश्यावेशस्तुतिमुखरमुखा विटाश्चिन्त्याः ॥ ३९ ॥
अतिशुचितया न वित्तं गृह्णाति करोति चाग्रचमङ्घ्रिप्रकारम् ।
यो नियमसललमत्स्यः परिहार्यो निःस्पृहनियोगी ॥ ४० ॥
रथ्यावणिजः पापाः स्वयमेत्य गृहेषु यत् प्रयच्छन्ति ।
तत्स्वकरार्पितमखिलं भवति परं काचशकलमपि ॥ ४१ ॥
छन्दानुवर्तिनो ये श्वभ्रपातेऽपि साधुवादपराः ।
सर्वस्वहारिणस्ते मधुरा विषवद्विशन्त्यन्तः ॥ ४२ ॥
तव नरपतिः प्रसादी गुणगणनपरः परं विजने ।
उक्त्वेति राजदासैः सेवकलोकः सदा मुषितः ॥ ४३ ॥
स्वप्ने मयाब्जहस्ता दृष्टा श्रीस्त्वद्गृहं प्रविष्टा सा ।
मासोपवासतुष्टा देवी श्रीः सादरा प्राह ॥ ४४ ॥
मद्भक्तस्ते दास्यति सर्वं तत्त्वं मया लब्धम् ।
इत्युक्त्वा सरलानां विलसन्ति गृहे गृहे धूर्ताः ॥ ४५ ॥
पुरविप्लवनगरोदययज्ञविवाहोत्सवादिजनसङ्घे ।
प्रविशन्ति बन्धुवेशाः परेऽपि सर्वापहाराय ॥ ४६ ॥
परिजनपानावसरे पिबति न मद्यं निशासु जागर्ति ।
ध्यानपरः सेवार्थी किमपि च कर्तुं कृतोद्योगः ॥ ४७ ॥

न ददाति प्रतिवचनं ददाति वा गद्गदाक्षरैर्विषमम् ।
नष्टमुखः सोच्छ्वासः प्रवेपते तत्क्षणं चौरः ॥ ४८ ॥
यश्चाधिकपरिशुद्धिं प्रार्थयति रटति यश्च साटोपः ।
चोरापह्नवकारी शङ्कायतनं स पापः स्यात् ॥ ४९ ॥
प्रत्यक्षेऽपि परोक्षे कृतमकृतं कथितमप्यनुक्तं च ।
यः कुरुते निर्विकृतिः स परं पुंसां भयस्थानम् ॥ ५० ॥
कृतकृतकमुग्धभावः षण्ढ इव स्त्रीस्वभावसंलापः ।
विचरति यः स्त्रीमध्ये स कामदेवो गृहे धूर्तः ॥ ५१ ॥
सततमधोमुखदृष्टिः सति विभवे मलिनदशनवसनश्च ।
विलिखन् कोषनियुक्तः कोषगृहे मूषकश्चिन्त्यः ॥ ५२ ॥
तिष्ठति यः सकलदिनं गृहदासः प्रीतो(ति) वेश्मभवनेषु ।
गृहदीर्घकथाः कथयन् स चरः सर्वात्मनः त्याज्यः ॥ ५३ ॥
निन्द्ये बहुदण्डार्हे कर्मणि यः सर्वथा प्रतारयति ।
आजीवभीतिभोज्यस्तेन निबद्धः स्थिरो राशिः ॥ ५४ ॥
दृष्ट्वा गुह्यमशेषं तस्य रहस्यं च लीलया लब्ध्वा ।
धूर्तेन मुग्धलोकस्तेन शिलापट्टके लिखितः ॥ ५५ ॥
राजविरुद्धं द्रव्यं रूपं वा कूटलेख्यमन्यद्वा ।
निक्षिप्य यात्यलक्ष्यं धूर्तो धनिनां विनाशाय ॥ ५६ ॥
क्षुद्रः क्षीणोऽपि गृहे लब्धास्वादः कृतो धनैर्येन ।
शस्त्रविषपाशहस्तः स पाशहस्तो धृतस्तेन ॥ ५७ ॥
लज्जाधनः कुलीनः संभावितशुद्धशीलमर्यादः ।
नारीक्रियते धूर्तैः प्रायेण सगर्भनारीभिः ॥ ५८ ॥
दृष्टाभिरदृष्टाभिः क्रूराभिः कृतकवचनमुद्राभिः ।
धूर्तो मुष्णाति वधूं मुग्धां विप्रोषिते पत्यौ ॥ ५९ ॥
सजनेऽपि साधुवेषा विधृताभरणाश्च हेलया धूर्ताः ।
धीरा हरन्ति सकलं दृष्टे हासोऽन्यथा लाभः ॥ ६० ॥
देशे कृत्वा स्फीते कुम्भधनो डम्बरैर्गृहं पूर्णम् ।
निःक्षेपलक्षहारी वर्षेण पलायते धूर्तः ॥ ६१ ॥
शुचितरकनकविभूषणतनुवस्त्राः संभ्रमेण पूज्यन्ते ।
रिपुभग्नराजपुत्रव्याजेन गृहे गृहे धूर्ताः ॥ ६२ ॥
आदाय देषवृषभं पुण्यं छागं च धूर्तविक्रीतम् ।
मुग्धस्य दुःखपाकः समर्घलाभोदितो हर्षः ॥ ६३ ॥
साधिक्षेपत्यागो महतां संपत्सु यः कृतासूयः ।
तस्मै भयेन वित्तं रिक्तोऽपि ददाति यत्नेन ॥ ६४ ॥
निःसारभूर्जभारैः कृत्वा युक्तं महासार्थम् ।
धूर्तो दिशि दिशि विचरन् धनिकसहस्राणि मुष्णाति ॥ ६५ ॥

[ तेषां नियोजनक्रमः ]

**तान् राजा स्वविषये मन्त्रिपुरोहितसेनापतियुवराजदौवारिका[1]-न्तर्वंशिक-प्रशास्तृ-समाहर्तृ[2]-संनिधातृ[3]-प्रदेष्टृ[4]-नायक- [5]पौरव्यावहारिक-**

---

**जयमङ्गलाक्रोडपत्रम्**

ननु कण्ठतः क्षत्रियायाः निषेधः कुतः कृतः ? इति चेन्न । क्षत्रियजात्या ब्राह्मणजातिवद् आत्मापमाननं न सोढुं शक्यते । विद्याद्वारकपूज्यत्वलाभार्थं तु अपमाननमपि सोढं भवति । तच्च ब्राह्मणजातौ सुलभम् इति विश्वास्यत्वाधायक-पूज्यत्वसिद्धये क्षत्रियाया निषेधः । अन्यच्च—शासकस्य क्षत्रियप्राधान्याद् गूढा क्षत्रिया चेत् सा स्वकीयपुत्राणामभ्युदयाय अस्मान् सङ्कटयितुं वाञ्छति । इत्येव-मनेकशङ्काभ्युदयसंभावनया महामात्यकुलस्य विश्वास्या न संभवितुमर्हति इत्यभि-प्रायेण क्षत्रियाया निषेधः कृतः । व्याख्याता इति मूलं व्याख्याति वृत्तीत्यादिना ।

---

धूर्तो वसन् विदेशेषूद्दिश्य सुरापगागयायात्राम् ।
मृतबन्धूनामार्थे द्रविणं गृह्णाति मुग्धेभ्यः ॥ ६६ ॥
मुष्णाति सार्थरमणीं शाटीमादाय निद्रया मुग्धान् ।
धूर्तेन कूटरूपं दत्वा निशि वञ्च्यते सापि ॥ ६७ ॥
वधिरं वा मूकं वा वणिजं निक्षिप्य भाण्डशालायाम् ।
धूर्तो नयति त्वरया बहुमूल्यं वर्णकद्रव्यम् ॥ ६८ ॥
किञ्चित्परिचयमात्रैः किञ्चिद्धाष्ट्र्यैः सकल्पनैः किञ्चित् ।
किञ्चिद्विवादकलहैः सर्वज्ञो वञ्चकश्चरति ॥ ६९ ॥
मिथ्याऽवरधनिकः पुस्तकविद्वान् कथाज्ञानी ।
वर्णनशूरश्चपलश्चतुर्मुखो जृम्भते धूर्तः ॥ ७० ॥
सर्वावयवविधूननकृतसङ्केतान् विसृज्य गेहेषु ।
भोक्तुं व्रजति दिगन्तान् स्वेच्छाचारी महाधूर्तः ॥ ७१ ॥
शतवार्षिकमामलकं भुक्त्वा श्रीपर्वतादहं प्राप्तः ।
धूर्तो वदति गुरूणां पुरतः शकुनं स्मरामीति ॥ ७२ ॥
एता लेशेन मया कथिता मात्राश्चतुःषष्टिः ।
को वेद वञ्चकानां मायानां शतसहस्राणि ॥ ७३ ॥

॥ इति नवमः सर्गः ॥

नी० टि० १. दौवारिकेति । अन्तःपुरे नियुक्तः ।
२. समाहर्त्रिति । समाहितो कोशसमः ।
३. सन्निधात्रिति । गृहामात्यः ।
४. प्रदेष्ट्रिति । प्रदेष्टा कण्टकशोधनादिकृतः ।
५. पौरव्यावहारिकेति । पुरव्यवहारे नियुक्तः ।

[1]कार्मान्तिक-मन्त्रिपरिषदध्यक्षदण्डदुर्गान्तपालाटविकेषु [2]श्रद्धेयदेश-वेषशिल्पभाषाभिजनापदेशाद् भक्तितः [3]सामर्थ्ययोगाच्चापसर्पयेत् ।

## श्रीमूला

संचाराणां विनियोगमाह—तानिति । राजा स्वविषये आत्मजनपदे तान् सञ्चाराद् अपसर्पयेत् चारयेत् । केषु चारयेत् ? मन्त्रिपुरोहितसेनापतिप्रभृतिष्वष्टादशपुरुषेषु विषये, मन्त्र्यादीनां शुद्धिज्ञानायेत्यर्थलभ्यम् । तत्र मन्त्र्यादयः प्रसिद्धाः । दौवारिको द्वाराधिकृतः प्रतिहारी, अन्तर्वंशिकः अन्तःपुराधिकृतः, प्रशास्ता स्कन्धावारनिवेशयिता, समाहर्ता राजार्थसमाहरणकर्ता, सन्निधाता भाण्डागाराधिकृतः, प्रदेष्टा कण्टकशोधनादिकृतः, नायकः एकद्विसहस्रपदातिनेता, पौरव्यावहारिकः पुरमुख्यः पुरप्राड्विवाको वा । पुरपाठेऽप्ययमेव । कर्मान्तिकः आकरकर्माधिकृतः । मन्त्रिपरिषन् मन्त्रिसभा, तदध्यक्षः । भाषाटीकायां तु मन्त्रिपरिषदध्यक्षो नाम द्वादशमण्डलाधिकारनेतेत्युक्तम् । दण्डपालः सैन्यसेनामुखादिनेता, सेनापतिस्तु अक्षौहिणीश्वरः पूर्वमुक्तः । दुर्गपालः प्राकारादिरक्षी, अन्तःपालो राज्यसीमारक्षी यो वीवधाध्यक्ष इत्युच्यते, आटविकः अटवीराज्याधिपतिः । तान् कीदृशान् ? श्रद्धेयदेशवेषशिल्पभाषाभिजनापदेशान् देशो मध्यदेशगोऽदेशादिः, वेषः प्रलंबश्मश्रुत्वादिः, शिल्पं कलाकौशलम्, भाषा प्राच्योदीच्यादिव्याहारभेदः, अभिजनः ब्राह्मणादिजन्म, एषां देशादीनाम् अपदेशो निर्देशः श्रद्धेयः अनभिशङ्कनीयो विश्वसनीयो येषां तान् तथाभूतान् । कथं कृत्वा चारयेत, भक्तितः सामार्थ्ययोगाच्च भक्तिं सेव्यगतां सामर्थ्ययोगं सेवकगतं चानुसृत्य । अयं भावः—सेव्येषु मन्त्र्यादिषु यो यद्देवभक्तः तस्मिंस्तद्देवभक्तवेषान् स्वस्वसामर्थ्यानुरूपच्छत्रग्रहणादिकर्मनियुक्तांश्च कृत्वा चारयेदिति ।

## वैदिकसिद्धान्तसंरक्षिणी

एतेषां विनियोगमाह—तानिति । चतुर्विधानपि सत्र्यादीन् । एतेषां नियोगकर्तृत्वमाह—राजेति । मन्त्रिण्यपि सञ्चाराणां नियोजनस्य कर्तव्यात् । स्वविषये स्वमण्डले इत्यर्थः । तान् अपसर्पयेदित्यनेनान्वयः । स्वविषये शुद्धिमकृत्वा परविषये अपसर्पणमयुक्तम् इति स्वग्रहणम् । यत्र चाराणां विनियोजनं तानि अष्टादशतीर्थान्याह—मन्त्रीति ।

मन्त्रिपुरोहितयोः चारनियोजनं तुष्टातुष्टत्वलाभार्थम् । एतत्स्वरूपं टीकायां व्यक्तम् । मन्त्री धर्मार्थकामभयोपधाभिः परिरक्षितः शुद्धः स्वगुणसम्पद्विशिष्टः

नी० टि० १. कार्मान्तिकेति । ये केचन खनिद्रव्यहस्तिवनादीनां कर्मान्ता तेषु नियुक्ताः ।

२. श्रद्धेयेति । श्रद्धेयो यस्य यो देशः, यस्य यो वेष इत्याद्यपदेशात् ।

३. सामर्थ्ययोगादिति । गूढपुरुषप्रणिधानं चामात्यादिषु वृत्तान्तपरिज्ञानार्थं····च निक्षिप्य शस्त्ररसप्रयोगार्थम् ।

## वैदिकसिद्धान्तसंरक्षिणी

पुरोहितः त्रय्यां दण्डनीत्याञ्च कुशलः अथर्ववित् मन्त्रिगुणसंपन्नः सर्वोपधाशुद्धः। सेनापतिः सेनानीः स्वगुणसंपन्नः स्वामिप्रकृतिः। युवराजो विनीतो यौवराज्ये अभिषिक्तः कुमारः। दौवारिको द्वाराधिकृतः प्रतीहारः। अन्तर्वंशिको राजकुलस्य अन्तर्नियुक्तः अन्तःपुराध्यक्षः। प्रशास्ता बलाध्यक्षः। श्रीमूलायान्तु स्कन्धावार-निवेशयिता इति व्याख्यातम्। उपाध्यायनिरपेक्षायां "प्रशास्ता—सैन्यप्रसाधकः" (नी० सा० १४ सर्गे, ४६ श्लोके)। जयमङ्गलायां तु "बलाधिकृत" इत्युक्तम्। तथा च सेनापतिः चतुरङ्गस्य बलस्य नेता भवति। प्रशास्ता तु "तद्दशकस्य नेता" इत्यनयोर्विवेकः। समाहर्ता यो जनपदाद् राज्ञ आयं समाहरति सः। सन्निधाता भाण्डागाराधिपतिः। टिप्पण्याम्—गृहामात्य इत्युक्तम्। प्रदेष्टा कण्टकशोधनाधिकृतो न्यायसमीक्षाकृत्। नायको बलाध्यक्ष इति का. जयमङ्गलायाम् (सर्गे १९, श्लोके ४५) व्याख्यातम्। अत्र तु सहस्राध्यक्ष इति। श्रीमूलायामपि एक-द्वि-सहस्रबलातिनेता, तथा उपाध्यायनिरपेक्षायां सहस्रबलनेता इत्युच्यते।

अत्र मूलं 'अङ्गदशकस्यैकः पतिः पदिकः, पदिकदशकस्यैकः सेनापतिः। तद्दशकस्यैको नायकः' इत्युक्तं कौटिलीयं[1] बोध्यम्।

एतेन नीतिमयूखकारेण 'नायकः सेनापतिः' इति उक्तं तल्लाक्षणिकं मन्तव्यम्। पौरव्यावहारिकः, टिप्पण्यां पुरव्यवहारे नियुक्त इति व्याख्यातम्। धर्मस्थः प्राड्-विवाक इत्यर्थः। अत्र हि पौरव्यावहारिक इत्यनेन पुरमुख्यः पुरप्राड्विवाको वा इति गणपतिशास्त्रिभिर्व्याख्यातम्। तत्र हेतुः जयमङ्गलायां धर्मस्थ इति व्याख्यानं बोध्यम्। कार्मान्तिकः आकरकर्माधिकारी। टिप्पण्याम्—'ये केचन खनि-द्रव्य-हस्ति-वनादीनां कर्मान्तास्तेषु नियुक्तः" इत्युक्तम्। मन्त्रिपरिषदध्यक्ष उत्तरमन्त्रिपरिषद-ध्यक्षः। चतुर्विधोपधाशुद्धमन्त्रिपरिषदध्यक्ष इति यावत्। मन्त्रित्वस्य पूर्वं

---

१. श्रीमूलायाञ्च—अङ्गदशकस्येति। इहाङ्गशब्देन प्रधानभूते रथहस्तिरूपे व्यूढे सेनाङ्गे गृह्यते, तेन रथदशकहस्तिदशकयोरित्यर्थः। एकः पतिः भर्ता, पदिकः तत्संज्ञः। ननु अस्मिन् प्रधानाङ्गदशकारब्धे व्यूहेऽन्ययोरश्वपत्तिरूपयोरवश्यं-भावात् तत्सङ्ख्याप्यभिधानीया? 'सत्यम्; किन्तु अर्थसिद्धा सेति कृत्वा नोक्ता। अर्थ-सिद्धिश्चेत्थम्। एकैकस्य रथस्य हस्तिनो वा पुरोयायिनः पञ्चपादगोपाः पञ्चेत्याहृत्य दशानामश्वानां योगाद् रथदशकेनाश्वशतकमाक्षिप्तं भवति। तथा एकैकस्याश्वस्य त्रयः पुरोयायिनः पुरुषास्त्रयः पादगोपा इत्याहृत्य षण्णां पतीनां योगादश्वशतकेन पतीनां षट्शतमाक्षिप्तं भवतीति। एवञ्च रथानां हस्तिनां वा दशकस्याश्वशतकपति-षट्शताभ्यां युक्तस्य नेता पदिकसंज्ञ इत्युक्तं भवति। पदिकदशकस्येति। पदिकानां दशकस्य स्वस्वनेयबलसहितस्य एकः पतिः, सेनापतिः तत्संज्ञः। तद्दशकस्येति। सेनापतिदशकस्य, एकः पतिः नायक इति आख्यायत इति शेषः। (१० अधि. ६ अ.)।

## वैदिकसिद्धान्तसंरक्षिणी

"सर्वोपधाशुद्धान् मन्त्रिणः कुर्यात्" इति व्याख्यानात्। श्रीमूलायामेवमुक्तम्—"मन्त्रि-परिषत्नमन्त्रिसभा तदध्यक्षः। भाषाटीकायान्तु मन्त्रिपरिषदध्यक्षो नाम द्वादशमण्डला-धिकारी नेता इत्युक्तम्। टीकाकृतस्तु मन्त्रिपरिषदध्यक्षः सन्धिविग्रहिकः, यस्य लक्षण-ममात्यसम्पदुपेत सर्वसमयविदिति वदन्ति। दण्डपालास्तेषां तेषां हस्त्यादीनाम् अध्यक्षाः। दुर्गपाला नगरपालाः। अन्तपालाः जनपदान्तरक्षाधिकृताः। आटविकाः। वनचरा राजसधर्माणः। श्रद्धेयत्वेन भेद्यस्य अभिमतः जनपदः। वेषः संस्थानम्। लिङ्गम् आश्रमाणाम्। भाषा देशभाषा तत्तज्जनपदीयमातृभाषा वा। शिल्पम्—नानाविधि-संस्थानभेदेन एकस्यैव पदार्थस्य अनेकविधविन्यासः। तदुक्तं भावप्रकाशने –३ अधिकारे ७६ पृष्ठे—

> एकस्यैव पदार्थस्य नानारूपप्रकल्पनम्।
> वाङ्मनःकर्मभिर्यत्तच्छिल्पमित्यभिधीयते ॥ इति।

एषामपदेशेनान्वयः। अभिजनः जातिः, अन्वयो वा। अपदेशेति। अपदेशो अनेन देशभाषादिव्याजेन चरानपसर्पयेदिति भावः। तदाहुः—

> अन्यार्थकथनं यत्तु सोऽपदेश इति स्मृतः ॥ इति।

अत्र कथनं वेषादीनामुपलक्षणार्थम्। तथा च तद्देशीयत्वेन तदभिमतवेष-धारित्वेन तदभिमतशिल्पकलाकौशलप्रदर्शनेन इति निष्कर्षः। तेन परस्य शङ्का न भवतीति फलं सिद्ध्यति। तदुक्तं कामन्दकीयजयमङ्गलायाम्—'अपदेशेन व्याजेन शङ्कापरिहारार्थम्" इति। व्यपदेशानिति जयमङ्गलाकृत्पाठः। अत्र बहुव्रीहि-समासः। अस्य तान् इत्यनेन अन्वयः।

अपसर्पणकारणभूतं श्रद्धाधायकसामान्यव्यापारमभिधायाधिकारिविशेषभेदेन चरान् नियोजयितुमाह—भक्तित इति। यत्र यस्य स्नेहः, यत्र देशादौ तथाविधस्नेहतः। सामर्थ्येति योऽभीष्टमर्थं साधयितुं समर्थः, तद्भावाद् इति भावः। योगादिति। सामर्थ्योक्तिसमनन्तरं योगग्रहणं रसदानादिप्रयोगलाभार्थम्। तदुक्तं टिप्पण्याम्—"गूढपुरुषः प्रणिधानं च अमात्यादिषु वृत्तान्तपरिज्ञानार्थम् ( औपनिषदादि प्रयोगञ्च ) निश्चित्य शस्त्ररसप्रयोगार्थं"मिति। अपसर्पयेत् चालयेत्।

## जयमङ्गला

गूढपुरुषत्वेऽप्येषां विनियोगभेदात् पृथक्त्वम्। तदाह—तानित्यादि। राजा प्राक् स्वविषये मण्डले मन्त्र्यादिष्वपसर्पयेत्। अशुद्धस्वमण्डलस्य परमण्डलेऽपसर्पणा-संभवात्। तत्र मन्त्रिणि पुरोहिते च तुष्टातुष्टत्वमात्रज्ञानार्थम्। ततोऽन्येष्वेकाकी तत्सहायो वा अपसर्पयेत्। सेनायाश्चतुरङ्ग्याः पतिः सेनापतिः। युवराजः कुमारः विनीतत्वाद्यौवराज्येऽभिषिक्तः। दौवारिको द्वारे नियुक्तः प्रतीहारः। वंशः कुल-मिति पर्यायत्वाद् राजकुलस्यान्तर्नियुक्तोऽन्तर्वंशिकः। स्त्र्यध्यक्षा अन्तःपुरिकाः।

## जयमङ्गला

प्रशास्ता बलाधिकृतः। आय-समाहरणे नियुक्तः समाहर्त्ता देशव्यवहारी। सन्निधाता सम्यङ्निधाता स्थापयिता भाण्डागारिकः। प्रदेष्टा प्रकर्षेण देष्टा निबद्धवद्व्यवस्थापयिता कण्टकशोधनाधिकृतः। नायकः सहस्राध्यक्षः। वक्ष्यति–"तद्दशकस्यैको नायकः" (अधि० १०, अध्या० ६[1]) इति। पौरव्यावहारिकः पौराणां ये व्यवहारास्तत्र नियुक्तः। धर्मस्थ इत्यर्थः। कार्मान्तिकाः सर्वकर्मान्तस्थानाधिकृताः। मन्त्रिपरिषन् मन्त्रिसमूहः, 'मन्त्रिपरिषदं कुर्वीत' इति वचनात्। तदध्यक्षो मन्त्रिपरिषदध्यक्षः सन्धिविग्रहिकः[2]। यस्य लक्षणममात्यसम्पदुपेतः सर्वसमयविदिति। दण्डपाला हस्त्यश्वरथपदात्यध्यक्षाः। दुर्गपाला नागरिकाः। कोट्टपालका[3] इत्यर्थः। अन्तपालो जनपदान्तरक्षानियुक्तः। आटविकाः शबरादिनायकाः। एते[4]ष्वष्टादशसु श्लिष्टत्वाच्छ्रद्धेयदेशादीनपदिशन्ति। तत्र देशान् द्रमिडोऽस्मि[5] कालिङ्गोऽस्मीति। वेषं लिङ्गं परिव्राजकोऽस्मीति पाशुपतोऽस्मीति। भाषा देशालापम् एषास्मद्देशभाषेति। शिल्पं चित्रं लिखितुं वीणां वादयितुं जानामीति। अभिजनं जातिं वैश्योऽस्मीति, अन्वयं वा सूपकारपुत्रोऽस्मीति वैद्यपुत्रोऽस्मीति। एवं व्यपदेशांस्तान्। भक्तित इति। यस्य यत्र भक्तिः स्नेहोऽस्ति द्रमिडे पाशुपते वा। सामर्थ्ययोगाच्चेति। यो यत्र समर्थः कार्यं साधयितुं तत्र। अपसर्पयेत् चारयेत्।

## जयमङ्गलाक्रोडपत्रम्

### पुनश्चरनियोजनसार्थक्यम्

साधारणधर्मं दर्शयितुमाह—गूढ इति। (पृ० ३१४) सञ्चारा राज्ञा कुत्र विनियोक्तव्या इत्याह–स्वविषय इति। तुष्टातुष्टत्वेति। मन्त्रिपुरोहितादयः पूर्वमुपधया परीक्षिताः। अधुना तेषां चित्तसन्तोषः कुत्र वर्तत इति ज्ञातुं तेषु चरा विनियोज्यन्त इति पुनः मन्त्रिषु चरविनियोजनं न वैयर्थ्यमावहति। अन्यथा उपधाभिः परीक्षितस्य मन्त्रिणः पुनः संशोधनं व्यर्थं स्यात्। अत एव मात्रपदमपि अत्र सार्थकं बोध्यम्। तेन शौचाशौचज्ञानस्य व्यावृत्तिः।

### द्रोहः

अत्रेदमवधेयम्। पूर्वाध्याये तत्तत्पदेषु नियोक्तुमभ्यर्हितानां मन्त्रित्वेन परिगृहीष्यमाणानां तेषां तेषां शौचाशौचपरिज्ञानार्थं स्वामिभृत्ययोर्न यथा भेदः स्यात् तथा तदुपायानुष्ठानं परीक्षारूपतयोक्तम्। अत्र तु यदि सः परीक्ष्यः न स्वामिनो विश्लिष्यति तर्हि तस्य स्वामिनं प्रति राजद्रोहा[6]भावः परीक्ष्यते।

---

अशुद्धम्

१. ११।६; २. (सान्ध्यविग्रहः) सन्धिविग्रहिकः।

३. तो ? (को)ट्टपालको।

४. एते (ष्व); ५. द्रविडो।

६. द्रुह्यतिर्द्रोहोऽपकारः ( सि० कौ० ५७५ सू०सं०) अपकारो दुःखजनिता क्रिया।

## जयमङ्गलाक्रोडपत्रम्

द्रोहश्च घातेच्छासमनियतः परीक्ष्यस्य दुःखजनकक्रिया धर्मः । तदुक्तं विभक्त्यर्थनिर्णये (पृ० २८७) "द्रुहेः दुष्टाचरणमर्थः" इत्यादि । तट्टिप्पण्यां द्रष्टव्यम्[1]।

द्रोहे च सति यं प्रति द्रोहस्तमधिकृत्य उग्रता समुत्पद्यत इति भावप्रकाशने व्यक्तम्[2]।

### द्रोहाभावो मैत्र्याम्

सा चोग्रता राजादिस्वामिविषये मित्रभावे जाग्रति सति तत्प्रतिबन्धकवशात् नोत्पद्यते । तद्व्यक्तं वैशेषिकभाष्ये न्यायकन्दल्याम्—तट्टिप्पण्यां द्रष्टव्यम्[3] ।

इयं च मैत्रीभावना पुरोहितादौ अत्यन्तमभ्यर्हिता वर्तते । अतस्तेषु सा विशेषतया उपधादिभिः परीक्षोपाये राज्ञा अवगन्तव्या भवति । अन्यथा क्रुद्धपुरोहितद्वाराऽपि

---

१. देवदत्ताय द्रुह्यतीत्यत्र चतुर्थ्या द्वेषान्वयि समवेतत्वमर्थः । तथा च देवदत्तसमवेत-द्वेषविषयाचाराश्रयत्वं वाक्यार्थः । अनिष्टानुकूलव्यापारो द्रुहेरर्थः । अत एव द्रोहोपकार इति काशिका । चतुर्थ्यास्तु अनिष्टान्वयि आधेयत्वमर्थः । अनिष्टं च दुःखं सुखाभावश्च । देवदत्ताय द्रुह्यति यज्ञदत्त इत्यत्र देवदत्तवृत्तिदुःखानुकूलव्यापारानुकूलकृतिमान् यज्ञदत्त इति ।

व्युत्पत्तिवादेऽपि—"क्रोधस्य द्वेषविशेषात्मकतया भक्तिश्रद्धादिवज् ज्ञानविशेषरूपत्वेन वा सविषयकत्वात्, एवं शत्रवे द्रुह्यन्तीत्यादावपि तेनैव सम्प्रदानत्वम् । द्रोहोऽपचिकीर्षा अहितेच्छेति यावत् । अहितभागितयेच्छाविषयता तन्निरूपकत्वं चतुर्थ्यर्थ इच्छान्वयी, अहितान्वय्याधेयत्वं वा, अतः कर्मणेत्यादिसूत्रस्याविषयः । ईर्ष्या अक्षान्तिः परोत्कर्षासहिष्णुता परोत्कर्षगोचरो द्वेष इति ।

"क्रुधद्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः" (१-४-३७)

इति सूत्रव्याख्याने कौमुद्यां बालमनोरमायाम्--घातेच्छासमनियतः चित्तवृत्तिविशेषः कोपः इति ।

२. स्पर्शानभिज्ञताचेष्टावैधुर्याद्यैश्च वर्णयेत् ।
पुत्रमित्रकलत्रादिद्रोहादेवोग्रता भवेत् ॥
तत्रानुभावोऽतिक्रूरवधबन्धनताडनैः ॥ (भा० प्र० १ अधिकारे )

३. न्यायकन्दल्याम्—"अतीते दुःखहेतौ तज्जदुःखस्मृतिजो द्वेषः । प्रयत्नधर्माधर्मस्मृतिहेतुः । एनमहं हन्मीति प्रयत्नो द्वेषात् । वेदार्थविप्लवकारिषु द्वेषाद्धर्मस्तदर्थपरिपालनपरेषु द्वेषादधर्मः । स्मृतिरपि द्वेषादुपजायते यो यं द्वेष्टि स तं सततं स्मरति । क्रोधो द्रोहो मन्युरक्षमाऽमर्ष इति द्वेषभेदाः । शरीरेन्द्रियादिविकारहेतुः क्षणमात्रभावी द्वेषः क्रोधः । अलक्षितविकारश्चिरानुबद्धापकारावसानो द्वेषो द्रोह इति ।

## जयमङ्गलाक्रोडपत्रम्

### धर्मप्राधान्ये मैत्री

राज्ञो घातः संभवितुमर्हेत् । तदुक्तं विश्वरूपाध्याये—(तै० सं० २ काण्डे, ५ प्रश्ने, १ अनुवाके) तट्टिप्पण्यां द्रष्टव्यम्[1] । तथा हि—

विश्वरूपो हि देवानां पुरोहितो भूत्वा यज्ञे समर्पितं हविः देवेभ्यः प्रायच्छत्; परन्तु अयं त्वष्टुः पुत्रत्वाद् राक्षसैः सह प्रेमसम्बन्धाच्च रक्षोभ्योऽपि यज्ञे देवेभ्यः समर्पितं हविः प्रायच्छत् । अयमपि राजद्रोह एव । अतः पुरोहिते राजानं प्रति अनुरागः अपेक्ष्यते । सोऽयं अर्थप्राधान्ये सति न कदापि चिराय अनुवृत्त्या स्थिरो भवितुमर्हेत्, इति परीक्षाद्वारा धर्मप्राधान्यं ( शुचित्वाशुचित्वे ) ततः सन्तोषमैत्री अवश्यं परीक्षितव्ये । तदर्थमेव राज्ञा एकाग्रेण भाव्यमन्यथा प्रकृतीनां विश्लेषापत्तिः स्यात्[2] ।

एतेषां चित्तं विकुर्वते न वा इत्ययमंशः चारैः वेदितव्यः । तदुक्तं कौटिल्येन "अपसर्पेणेवोपलभ्यत इति कौटल्यः"[3] इत्युपयुक्तपरीक्षायाम् । (अ० ९)

### परीक्षाविषयः सन्तोषः

सेयं परीक्षा चारैस्तेषां तेषां पुरोहितप्रभृतिमन्त्रिणां सन्तोषविषयिणी कर्तव्या, अतो राजद्रोहाभावसन्तोषभेदेन इदमध्यायद्वयमगतार्थं मन्तव्यम् । अत एव अस्मिन्नध्याये सन्तोषस्यैव परीक्षणीयत्वात् मूलकृता दौवारिकपर्यन्तानामष्टादशानां तीर्थानां कृतं ग्रहणमुपपद्यते ।

---

१ विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् । स्वस्त्रियोऽसुराणां तस्य त्रीणि शीर्षाण्यासन्–सोमपानं सुरापानं अन्नादनम् । स प्रत्यक्षं देवेभ्यो भागमवदत् परोक्षमसुरेभ्यः । सर्वस्मै वै प्रत्यक्षं भागं वदन्ति । यस्मा एव परोक्षं वदन्ति । तस्य भाग उदितस्तस्मादिन्द्रोऽबिभेत् । ईदृङ्वै राष्ट्रं विपर्यावर्तयतीति । तस्य वज्रमादाय शीर्षाण्यच्छिनत् । यत् सोमपानमासीत् स कपिञ्जलोऽभवत् । यत् सुरापानं स कलविङ्कः । यदन्नादनं स तित्तिरिः । तस्याञ्जलिना ब्रह्महत्यामुपागृह्णत् ।

२. प्रादुर्भवन्त्यर्थसमं यस्माच्चित्तान्यनुक्षणम् ।
तस्माद् योगीव सततं तानि पश्येत् समाहितः ॥

उ० नि०—अविश्वासी संव्यवहारार्थश्च भवति । तदुपदेष्टुमाह—प्रादुर्भवन्तीति । प्रादुर्भवन्त्युत्पद्यन्ते । अर्थसमम्, अर्थैः, कार्यैः सहैव चित्तान्यन्यथा भवन्ति । यदि कार्यं मित्रत्वादिकमुत्पद्यते तदा चित्तमपि स्निग्धं स्यात् । यदि शात्रवादिकं कार्यमुत्पद्यते तदा चित्तमपि शत्रुभावि भवति, कार्यं मित्रारिकारकमिति । अनुक्षणं प्रतिमुहूर्तम् । तस्माद् योगीव समाहित एकाग्रमनास्तानि पश्येत् प्रतीकारार्थम् । एवमविश्वासश्च संव्यवहारश्च प्रवर्तेत इति ।

३. श्रीमूलायाम्–अपसर्पणेवेति । अपसर्पणैवोपलभ्यते चारद्वारेणैव दुष्टादुष्टत्वमध्यक्षाणां निश्चीयते 'त्रयाणामेकवाक्ये संप्रत्यय' इति गूढपुरुषप्रणिध्युक्तदिशेत्यर्थः । ते ह्यल्पायतेरपि

## जयमङ्गलाक्रोडपत्रम्

तद्वक्ष्यति "ताम् राजा स्वविषये मन्त्रिपुरोहितसेनापतियुवराजदौवारिकान्तर्वंशिकप्रशास्तृसमाहर्तृसन्निधातृप्रदेष्टृनायकपौरव्यावहारिककार्मान्तिकमन्त्रिपरिषदध्यक्ष - दण्डदुर्गान्तपालाटविकेषु श्रद्धेयदेशवेषशिल्पभाषाभिजनापदेशान् भक्तितः सामर्थ्ययोगाच्चापसर्पयेत् ।" इति ।

### राज्ञि भिन्नभिन्नप्रकृतीनामनुरागः

ननु जनपदे स्थिता भिन्नभिन्नप्रकृतयः कथमेकस्मिन् राज्ञि अनुरक्ता भवन्ति ? इति चेदुच्यते । राजा राजकुले अधिष्ठितो मन्त्रिपुरोहितसखो वीरप्रकृतिः स्थाय्युत्साहभाववानपेक्ष्यते, मन्त्रिपुरोहितौ च राजानं परोपकारतत्परधर्मज्ञानवैराग्यार्थसम्पन्नं शमप्रकृतिमनुमन्येत इति भारतीयराजनीतिसिद्धान्तः । तदनुसारेण शमप्रकृत्यधीनस्य राज्ञ उत्साहस्य प्रकाशेन विलक्षणप्रतिभाशक्त्योः प्रकाशनाद् अद्भुतस्य सङ्क्रमणं सर्वत्र समाजे संभवति । ततो जनता आकृष्यते । आकृष्टा च सा तथाविधस्य राज्ञः समागमेन काञ्चन शीलप्रयुक्तां शीतलतां चन्द्रकान्तश्चन्द्रिकामिव अनुभवति । इदमेवाकर्षणम् अनुरक्तिरूपं बोध्यम् । प्रकृतमनुसरामः । उक्तरीत्या यत्र श्रद्धेयत्वमस्ति तत्र अजय्यत्वमस्ति । अत एव मन्त्र्यादयो यान् श्रद्दधते ते श्रद्धेया गूढपुरुषा मन्त्र्यादीनां सन्तोषपरिज्ञानार्थं राज्ञा विनियोजनीयाः, इत्युक्तं श्रद्धेयेत्यादिना ग्रन्थेन । एवञ्च तद्द्वारा मन्त्र्यादीनां यथार्थमतिविवेको नासुलभः ।

### सन्तोषजसुखेन आत्मीयता

ननु राजानं प्रति सन्तोषवृत्तौ सत्यामपि मन्त्रिषु द्रोहो नोत्पद्यते, इति कथमवगम्यते ? इति चेदेवम् । तथा हि—अत्र सन्तोषपदेन तज्जं सुखमपेक्षितम् । तथा चोक्तम्— "सन्तोषादनुत्तमः सुखलाभः"[१] इति ।

इदं च सुखं यत्र न, तत्र वैषयिकाभिमानिकाभ्यासिकशमजसुखेषु वैषयिकादित्रिविधान्यतमसुखोपलब्धावपि तृष्णाया अप्रशमनाद् द्रोहोत्पत्तियोग्यताऽस्त्येव । शमजसुखस्य उपलब्धौ तु तृष्णायाः प्रशमेन मोहस्यानवसरो ज्ञेयः । अतोऽत्र विद्याशमजन्यं सुखमेव जयमङ्गलाकृतामभिमतम् । तथा चोक्तं वैशेषिकभाष्ये न्यायकन्दल्यां च सुखप्रकरणे । टिप्पण्यां तद् द्रष्टव्यम्[२] ।

---

महाकुटुम्बिन उद्धारग्रहणेन महाव्ययत्वदर्शनात् प्रभूतराजप्रजाव्ययापहारिणोऽपि सहजकृपणतयाऽल्पव्ययत्वदर्शनाच्च व्यभिचरिते इत्यभिप्रायः ।

१. तथान्यत्राऽपि—

यदृच्छालाभतो नित्यमलं पुंसो भवेदिति । तां निष्ठामृषयः प्राहुः सन्तोषं सुखलक्षणमिति । यदृच्छालाभतः अनायाससिद्धिलाभः । नित्यं सर्वदा । अलं पूर्णम् । तथा च पूर्णमिति बुद्धिरनुपादित्साहेतुः सन्तोषः । इति ।

२. भाष्यम्—"तद्विद्याद्याशमसन्तोषधर्मविशेषनिमित्तमिति ।"

न्यायकन्दली—"यत्तु विदुषामात्मज्ञानवतामसत्सु विषयानुस्मरणसङ्कल्पेऽसति

## जयमङ्गलाक्रोडपत्रम्

अन्यथा तु द्रोहो मन्त्रिषु भवेदेवेत्यभिध्यायैव वास्तविकचिरन्तन-स्थायिसुखलाभहेतुना भारतीयराजनीत्या त्रयी पुरस्कृता वर्तते। यतः त्रयीं विहाय अन्यविद्यायाम् उक्तसुखस्य उत्पादने अशक्तिः सर्वथा दृष्टचरा। यत्र इदं विद्याजन्यं सुखं सुरक्षितं वर्तते, तत्रैव राज्यमपि सुरक्षितं भवति। तथा चायं निष्कर्षः–विद्याशमजन्यौ प्रागुपवर्णितौ धृतिमतिभावौ, तत्प्रयुक्तो विदग्धव्यवहारः सन्तोषः शिष्यहिताधानार्थदर्शनञ्च यत्र राज्ये वर्तते, तदेव सफलं राज्यम्। अधर्मप्रचारे तु अनर्थः अतुष्टिश्च नियते, ततो राज्यनाशोऽपि ध्रुवः। इत्येवंरीत्या सन्तोषद्रोहाभावयोः सामानाधिकरण्यं उपपन्नम्।

मन्त्रिणि पुरोहिते च चारनियोजनं राज्ञैव कर्तव्यम्। इतरत्र तु मन्त्रिसहायेन राज्ञा इति ज्ञापयिष्यन् आह—तत इति। (पृ० ३१५)

पौर इति। (पृ० ३१५) अत्र पौरव्यावहारिक इत्यनेन पुरमुख्यधर्मस्थमेकं कल्पयन्ति। एवं कल्पने तीर्थानां प्रकृतानां मन्त्र्यादीनां सङ्ख्या कार्मान्तिकं विहाय १७ भवति। तदिदं कामन्दकीयजयमङ्गलाव्याख्यानेन विरुद्धं भवति। तदुक्तम्—

कार्ययोगीनि अष्टादशतीर्थानि संभवन्ति। इति। (१३-३६) अत्रोच्यते—

मूलमतमनुसृत्य पौरव्यावहारिकपदं एकमेव प्रोक्तम्। कामन्दकीयायान्तु पौरः व्यावहारिकश्चेति पृथक्त्वेनेति न विरोधः।

मन्त्र्यादीनां सप्तदशत्वपक्षे पौरव्यावहारिकपदं टीकाकृत एवं व्याख्यान्ति। पौराणां ये व्यवहारास्तत्र नियुक्त इति। अत्र पौरपदेन येषु येषु राजविरोधेन मन्त्रशक्तिः, उत्साहशक्तिः, प्रभुशक्तिः संपन्ना सती शासनं बाधितुं क्षमा भवति। तत्रैव विशेषतया गूढतत्त्वपरिज्ञानार्थं आदित एव राज्ञा चरा नियोक्तव्याः, अन्यत्र तु मन्त्रिणाऽपि ते नियोजयितुं शक्यन्त इति बोध्यम्।

### आर्योऽध्यक्षः

सन्धिविग्रहिक इति। (पृ० ३१५) अनेन व्याख्यानेन सन्धिविग्रहकुशलः लेखको बोध्यते। अत्रेदमवधेयम्। यः किल अध्यक्षो भवति, तस्यैव मुद्रया प्रमाणितेन शासनलेखेन सर्वाण्यपि शासनानि प्रचलन्ति। तत्रैव च सामदान-भेददण्डोपायाः प्रयुज्यन्ते। अत एतदुपायप्रयोगकुशलः आर्य इत्यभिधीयते। इत्येवंविधो मन्त्रिपरिषदध्यक्षः अपेक्षित इति ध्वन्यते।

सर्वसमयविदिति। (पृ० ३१५) अनेन ग्रन्थेन परिषदध्यक्षस्य वैदग्ध्यमप्यपेक्षितम्। इति ज्ञायते। वैदग्ध्यञ्च भावप्रकाशने व्याख्यातम्[1]।

---

विषयेऽसति चानुस्मरणे असति च सङ्कल्पे चाविर्भवति, तद्विद्याशमसंतोषधर्मविशेष-निमित्तमिति। विद्या आत्मज्ञानम्। शमो जितेन्द्रियत्वम्। संतोषो देहस्थितिहेतुमात्राति-रिक्तानभिकाङ्क्षित्वम्। धर्मविशेषः प्रकृष्टो धर्मो निवर्तकलक्षणः। एतच्चतुष्टयनिमित्तम्।

१. लौकिके वैदिके चार्थे तथा सामयिकेऽपि च।
सम्यक्परिचयप्रौढिर्वैदग्ध्यमिति गीयते॥

## जयमङ्गलाक्रोडपत्रम्

### विदग्धस्य बीजाद्यवस्था

विदग्धो हि सामयिकः देशे वर्तमानानां प्रजानां यथा दुःखविनिर्गमो भवेत्, तथा देशकालभिज्ञो भवति। स एव सफलं नीतिकर्म अनुष्ठातुं शक्नोति। यतः दुःख-निर्गमस्य समयपरत्वं निर्वहणसन्धेः अङ्गेषु व्याख्यातम्। तथा चोक्तं भावप्रकाशने—आनन्दो वाञ्छितावाप्तिः समयो दुःखनिर्गमः। इति।

कृतिर्लब्धार्थशमनं तत्स्थिरीकरणं तु वा। इत्युक्त्याऽपि मन्त्रिपरिषदध्यक्षस्य अतीवकार्यकौशलं प्रदर्शितं भवति। तत्कौशलं कार्यस्य पञ्चविधावस्थानां पूर्णत्वे भवति[१]। तथा च त्रिवर्गसमृद्धिसंपन्नराजराज्याभिरक्षणरूपफलागमो यदि मन्त्रिणा साधितः स्यात्, तदा मन्त्रिकृतं राजकर्म साधु संपन्नमित्युच्यते[२]।

बीजानन्तरं भाविफलागमो व्यापारापेक्षया चतुर्थ्यवस्थायां भवति[३], तथोक्तम्—बीजानन्तरभाविकार्यान्तावस्था आरम्भयत्नप्राप्त्याशानियताप्तिरूपाः। एतासां लक्षणं तत्रैव व्यक्तम्[४]।

चरित्रस्य आरम्भावस्थायाम् औत्सुक्यरूपबीजस्य निक्षेपानन्तरं यदि फलागमो न भवति तर्हि मन्त्रिकर्म वृथा भवति। अत एव मन्त्रिकर्मणो वैयर्थ्यं मा भवतु इति हेतुना अर्थशास्त्रेऽपि पञ्च अवस्था उक्ताः, तत्समुदाय एव मन्त्रः पञ्चाङ्ग इति प्रतिपादितम्। वक्ष्यति चैतत्--

---

१. अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः।
आरम्भ-यत्न-प्राप्त्याशा-नियताप्तिफलागमः ॥

२. अभिप्रेतं समर्थञ्च कृतिरूपं क्रियाफलम्।
दृश्यते यन्निवृत्तेति फलयोगः स उच्यते ॥

३. कार्यस्य नायकादीनां व्यापारापेक्षया पुनः।
पञ्चावस्था भवन्तीति भरतादिभिरुच्यते ॥

४. औत्सुक्यमात्रबन्धस्तु यद्बीजस्य नियुज्यते।
महतः फलयोगस्य स खल्वारम्भ इष्यते ॥
अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति।
परञ्चौत्सुक्यगमनं स प्रयत्नः प्रकीर्तितः ॥
ईषत् प्राप्तिश्च या काचिद् अर्थस्य परिकल्प्यते।
सत्तामात्रेण तं प्राहुः विधिवत्प्राप्तिसंभवम् ॥
नियुक्तानुफलप्राप्तिः यदा ह्येवं प्रपश्यति।
नियतान्ते फलप्राप्तिः सगुणां तां विनिर्दिशेत् ॥
अभिप्रेतं समग्रञ्च प्रतिरूपं क्रियाफलम्।
दृश्यते यन्निवृत्तेति फलयोगः स उच्यते ॥

## जयमङ्गलाक्रोडपत्रम्

"कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्, देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धिरिति पञ्चाङ्गो मन्त्रः" इति[1]।

### बीजादिषु सन्धिः

इमाः पञ्चविधा अवस्था महनीयानां चरित्रे द्रष्टव्याः, आसाम् आरम्भयत्न-प्राप्त्याशा-नियताप्तिफलागमान्तानाम् अवस्थानाम् उत्तरोत्तरकार्येण पूर्वपूर्वकार्यस्य सम्बन्धख्यापनार्थं मध्ये मध्ये सन्धयोऽपि मुखादयः पञ्च भवन्ति[2]। तत्र—

मुखादि पञ्चसन्धिषु अङ्गानि चतुःषष्टिसङ्ख्यानि उक्तानि, मुखे द्वादश, प्रतिमुखे त्रयोदश, गर्भे द्वादश, अवमर्शे त्रयोदश, उपसंहृतौ चतुर्दश[3]।

---

सर्वस्यैव हि कार्यस्य प्रारब्धस्य फलार्थिभिः।
यथा नु क्रमशो ह्येताः पञ्चावस्था भवन्ति हि॥

१. व्याख्यातञ्चैतद् जयमङ्गलायां मन्त्रविकल्पप्रकरणे— "प्रशस्तः स्वाङ्गसाफल्याद्भवतीति तान्यङ्गान्याह—सहाया इत्यादि। अत्र दुर्गकर्मणि सहाया मुख्याः क्षुद्राश्च पुरुषाः। साधनोपाया दुर्गस्यारम्भं प्रत्युपायाः कुद्दालकुठार-करपत्रादयः। विभागो देशकालयोरिति। तत्र जनपदान्ते जनपदमध्ये चेति देशविशेषः। वर्षासु काष्ठादिकर्म, ग्रीष्मे हेमन्ते चेष्टकादिकर्मेति कालविभागः। विपत्तेश्चेति आरब्धे दुर्गकर्मणि दैव्या मानुष्याश्चोत्पन्नाया विपदः अथर्वभिरुपायैः सामादिभिश्च प्रतीकारः। सिद्धिरिति कार्यस्येति शेषः। तत्र मन्त्रविषयान्ते निष्पन्नं दुर्गमविषह्य-माश्रितः परकर्माण्युपहनिष्यामि जनपदमध्ये च समुदयस्थानं भवतीत्यादि। पञ्चाङ्ग इष्यते मन्त्र इत्येव। उक्तञ्च कर्मणामारम्भोपायः पुरुषद्रव्यसंपद् देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गो मन्त्र इति।

२. मुखं प्रतिमुखं गर्भः सावमर्शोपसंहृतिः।
अवान्तरैककार्यस्य सम्बन्धः सन्धिरिष्यते॥ (पृ० २०७ भाव०)

३. बीजारम्भोदाहृतिर्या मुखसन्धेश्च सा भवेत्।
अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात्॥
उपक्षेपः परिकरः परिन्यासो विलोभनम्।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना॥
उद्भेदः करणं भेद इत्यङ्गानि मुखस्य तु।
बीजन्यास उपक्षेपस्तद्बाहुल्यं परिक्रिया॥
तन्निष्पत्तिः परिन्यासो गुणाख्यानं विलोभनम्।
सम्प्रधारणमर्थानां युक्तिरित्यभिधीयते॥
बीजागमः समाधानं प्राप्तिः कोऽपि सुखागमः।
परिभावोऽद्भुतावेशो विधानं सुखदुःखकृत्॥

करणं प्रकृतारम्भ उद्भेदो गूढभेदनम् ।
भेदः प्रोत्साहनाऽङ्गानि कथितानि यथार्थतः ॥
बिन्दुः प्रयत्नानुगमादङ्गान्यस्य त्रयोदश ।
विलासः परिसर्पश्च विधूनं शर्मनर्मणी ॥
नर्मद्युतिः प्रगमनं निरोधः पर्युपासनम् ।
पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ॥
रतिचेष्टा विलासः स्याद्दम्पत्योर्नवसङ्गमे ।
परिसर्पस्तु बीजस्य दृष्टनष्टानुसर्पणम् ॥
विधूतमरतिर्यूनोस्सुरता प्राप्तिसम्भवा ।
यूनोररत्युपशमः शम इत्युच्यते बुधैः ॥
परिहासवचो नर्म धृतिस्तज्जा द्युतिर्भवेत् ।
युक्तोत्तरं प्रगमनं निरोधः स्यान्निरोधनम् ॥
अनुनीतिः पर्युपास्तिः पुष्पं सातिशयं वचः ।
प्रत्यक्षनिष्ठुरं वज्रमुपन्यासः प्रसादनम् ॥
वर्णसंहार इत्युक्तो नानाजातीयसङ्गमः ।
अङ्गानि द्वादशैतस्य गर्भसन्धेर्यथाक्रमम् ॥
अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।
सङ्ग्रहश्चानुमानञ्च तोटकाधिबले तथा ॥
उद्वेगसम्भ्रमाक्षेपा इत्यङ्गानि भवन्ति तु ।
अभूताहरणं तत्स्याद्वाक्यं यत्कपटाश्रयम् ॥
तत्त्वार्थकीर्तनं मार्गो रूपं सन्देहकृद्वचः ।
द्वित्रार्थसमवाये तु वितर्को रूपमुच्यते ॥
यत्तु सातिशयं वाक्यं तदुदाहरणं भवेत् ।
क्रमः सञ्चिन्तितार्थाप्तिर्भावज्ञानमथापरे ॥
सङ्ग्रहः सामदानोक्तिरभ्यूहो लिङ्गतोऽनुमा ।
चेष्टयाऽन्यातिसन्धानं वदन्त्यधिबलं बुधाः ॥
संरम्भयुक्तं वचनं यत्तत्तोटकमुच्यते ।
उद्वेगोऽरिकृता भीतिः शङ्कात्रासौ च सम्भ्रमः ॥
गर्भबीजसमुत्क्षेपादाक्षेप इति कीर्तितः ।
इत्यादिनैव षष्ठेऽङ्के सोऽवमर्शो विलोक्यते ॥
तत्रापवादसम्फेटौ विद्रवद्रवशक्तयः ।
द्युतिः प्रसङ्गश्छलनं व्यवसायो निरोधनम् ॥
प्ररोचना विचलनमादानञ्च त्रयोदश ।
दोषप्रख्यापवादः स्यात सम्फेटो रोषभाषणम् ॥

## जयमङ्गलाक्रोडपत्रम्

उपसंहृत्याख्ये अन्तिमसन्धौ उक्तेष्वङ्गेषु दुःखनिर्गमरूपः समय उक्तः, तस्य वेत्ता मन्त्रिपरिषदध्यक्षः अपेक्षितः। तथाविधस्य लाभे सति राजराज्याभिरक्षणस्य प्राशस्त्येन संभवात्। तदेतद् बोधयितुं सर्वसमयविदिति मन्त्रिपरिषदध्यक्षविचारे उक्तम्।

कोट्टेति। (पृ० ३१५) धर्मविजयनाटके तु अयमेव क्रोष्टपाल इत्युक्तम्।

मन्त्र्याद्यष्टादशतीर्थद्वारै राज्यस्य रक्षणं भज्जनं वा भवति, इति हेतोः तेषां कृत्यत्वमकृत्यत्वं वा ज्ञातुं तत्र तत्र यया रीत्या चरा अपसर्पयितुं शक्यन्ते तां रीतिं दर्शयन्नाह—तेष्विति।

श्रद्धेयेति। (पृ० ३१५) एतेषु सर्वेष्वपि तत्र तत्र आत्मनि विश्वासोत्पादनार्थम् अपेक्षितं कृत्यपक्षसाजात्यम्, एकदेशचारित्वेत्यादिरूपेण अथवा कलाकौशलादिरूपेण बोध्यम्।

स्फुटीकृतञ्चैतट्टिप्पण्याम्—"श्रद्धेयो यस्य देशः, यस्य यो वेशः, इत्याद्यपदेशादि"ति।

द्रमिडपाठः

द्रमिड इति। (पृ० ३१५) वैष्णवस्य टीकाकर्तृत्वात् पाशुपत इति वक्ष्यमाणग्रन्थेन भक्तिप्रस्तावात्, तदीयभाषाचारानुसारेण च द्रमिड इति पाठो भाति। भावप्रकाशनेऽपि भाषानिरूपणप्रसङ्गे द्रमिडपाठस्य ग्रहणं कृतम्। तदाह—द्रमिडान्ध्रजाः (३१५ पृ०) इति। वेशेति। (पृ० ३१५) वेशशिल्पादयः सञ्चरणस्य उपाया मन्तव्याः। एतेनैव व्यापारेण चरास्तत्र तत्र गत्वा अन्तः प्रवेष्टुमर्हन्ति इति स्फुटीकृतम्। तदाहुः नीतिसारकृतः। (स० १३, प्र० १५, श्लो० २७) तट्टिप्पण्यां द्रष्टव्यम्[1]।

---

विद्रवो वधबन्धादिर्द्रवो गुरुतिरस्कृतिः।<br>
विरोधशमनं शक्तिस्तर्जनोद्वेजने द्युतिः॥<br>
अप्रस्तुतार्थकथनं प्रसङ्ग इति कथ्यते।<br>
विकत्थना विचलनमादानं कार्यसङ्ग्रहः॥<br>
एषां क्रमप्रधानत्वे प्रक्रिया पूर्ववद्भवेत्।<br>
बीजवन्तो मुखाद्यर्थाः परमे च प्रयोजने॥<br>
लभन्ते यत्र सम्बन्धं तन्निर्वापणमुच्यते।<br>
यदा हि रामाभ्युदये सुग्रीवश्च विभीषणः॥<br>
कपयो राक्षसा रामाऽभिषेकाभ्युदयं ययुः।<br>
उपसंहृतिसन्धेश्च संज्ञा निर्वहणन्त्विति॥ (२१२ पृ०)

१ 'तपस्विलिङ्गिनो धूर्ताः शिल्पपण्योपजीविनः।<br>
चराश्चरेयुः परितः पिबन्तो जगतां मतम्॥

(टी०) तस्य व्यापारमाह—तपस्वीत्यादि। तापसलिङ्गित्वं शिल्पपण्योपजी-

## जयमङ्गलाक्रोडपत्रम्

### भाषाशिल्पपाठो भाषास्वरूपभेदौ

भाषेति। (पृ० ३१५) जयमङ्गलाकृतां पाठः "भाषा शिल्पेति" भाति। अत्र भाषायाः प्रथमं व्याख्यानात्। अन्येषां मतेन तु मूले शिल्पभाषेति। भाषा तत्स्वरूपं च भावप्रकाशने लभ्यते—

मानाद्यर्थस्य संप्राप्तिः भाषेति परिभाष्यते। इति।

तथा च मानाद्यर्थसंप्राप्तेरनुकूलं तेषु तेषु देशेषु अनुवर्तितम्, शब्दोच्चारणं आकाङ्क्षादिसहितमिति। अस्या उपयोगो नीतिसारे उक्तः[1]। भाषाभेदाश्च भावप्रकाशने व्यक्ताः ( १७ पृष्ठे[2] । )

अपसर्पणीयानि अष्टादशतीर्थानि नीतिसारीयजयमङ्गलार्थशास्त्रयोः

| का० ज० | कौ० अ० |
|---|---|
| (१) मन्त्री, पुरोहितः, सेनापतिः | मन्त्री, पुरोहितः; सेनापतिः |
| (२) युवराजः, दौवारिकः, अन्तर्वंशिकः | युवराजः, दौवारिकः, अन्तर्वंशिकः |
| (३) प्रशास्ता, समाहर्ता, सन्निधाता | प्रशास्ता, समाहर्ता, सन्निधाता |
| (४) प्रदेष्टा, नायकः, पौरः | प्रदेष्टा, नायकः, पौरव्यावहारिकः |
| (५) व्यावहारिकः, परिषदध्यक्षः, दण्डपालः | कार्मान्तिकः, मन्त्रिपरिषदध्यक्षः दण्डपालः |
| (६) दुर्गपालः, अन्तपालः, आटविकः | दुर्गपालः, अन्तपालः, आटविकः, इति। |

---

वित्वञ्च सञ्चरणोपायः । धूर्ताः परातिसन्धानचतुराः। परितः पिबन्तो विदन्तः, विशेषुर्नृपतेः सकाशमिति सम्बन्धः।' इति।

१. देशभाषाज्ञानं व्यवहारार्थम् ( १९ स०, ३७ श्लो० )

२. भाषा स्यात्सप्तधा देश्या विभाषाऽपि च सप्तधा।
मागध्यवन्तिका प्राच्या शौरसेन्याञ्च (न्यर्ध) मागधी ॥
पैशाची दाक्षिणात्या च तत्तद्देशेषु भाष्यते।
शकाराभीरचण्डालशबरद्रमिडान्ध्रजाः ॥
हीना वनेचराणां च तत्तज्जातिषु दृश्यते।
एतेऽष्टादशभिर्भाषाभेदैर्व्यवहरन्ति च ॥
ता भाषास्तेषु केषाञ्चिद्देशानां नामभिः कृताः।
द्रमिडाः कन्नडान्ध्राश्च हूणहिम्मीरसिंहलाः ॥
पल्लवा यवना जैनाः पार्वतीयाः सपामराः।
कषवर्ध्रककाम्भोजशकनग्नाः सवाकटाः।
एतेऽष्टादशभाषाणामाश्रयाः सह कोङ्कणाः॥ इति। (३१० पृष्ठे)

[ मन्त्रिप्रभृत्यष्टादशवर्गेषु बाह्यसमाचार-
परिज्ञानक्रमः ]

**तेषां बाह्यं चारं छत्रभृङ्गारव्यजनपादुकासनयानवाहनोपग्राहिणः तीक्ष्णा विद्युः । तं सत्रिणः संस्थास्वर्पयेयुः ।**

---

## श्रीमूला

सञ्चाराणां मध्ये तीक्ष्णा मन्त्र्यादीनां बाह्यं समाचारं छत्रभृङ्गाराद्युपग्रहण-वृत्त्या तान् सेवमानाः सन्तो जानीयुरित्याह—तेषामित्यादि । तत्र छत्रम् आतपत्रम् । भृङ्गारः पात्रभेदः कनकालुकाख्यः । व्यजनं तालवृन्तम् । पादुका उपानत् । आसनम् उपवेशसंवेशाधारः । यानम् आन्दोलिका । वाहनम् अश्वः । तमिति । तं तीक्ष्णविदितं चारम्, सत्रिण उक्तलक्षणाः, संस्थासु, अर्पयेयुः निवेदयेयुः ।

## वैदिकसिद्धान्तसंरक्षिणी

मन्त्र्यादीनां बाह्यं चारमधिकृत्याह—तेषामिति । मत्र्यादीनाम् । चारं बहिर्भवं कर्म । येन छद्मचरितेन बाह्यं कर्म ज्ञातव्यम्, तत्प्रदर्शयिष्यन् आह—छत्रेति । छत्रादीनां सर्वेषां ग्राहिण इत्यनेन अन्वयः । तथा च छत्रादिग्राहिण इत्यर्थः । छत्रभृङ्गारादीनाम उपग्रहणं स्वभावो येषाम् इत्यर्थो बोध्यः । एते हि अन्तःप्रवेशानर्हाः । छत्रम् आतपत्रम् । भृङ्गारं कनकालुकम् । पादुका पादत्राणम् । व्यजनं तालवृन्तम् । आसनं पीठम् । यानं शिबिकायुग्यादि । वाहनं हस्त्यश्वादि । छत्राद्युपग्राहिणः तीक्ष्णरसदगूढपुरुषेषु कतमे भवन्ति ? तत्राह - तीक्ष्णा इति । तमिति । (पृ० ३२५) तीक्ष्णाः छत्राद्युपग्राहिणो भूत्वा यमर्थं ज्ञातवन्त तं बाह्यं चारमित्यर्थः । उपलभ्येति शेषः । सत्रिण इति । उक्तलक्षणाः । संस्थासु कापटिकोदास्थितगृहपतिक-वैदेहकतापसव्यञ्जनासु अर्पयेयुः निवेदयेयुः ।

## जयमङ्गला

नियुक्तानां व्यापारमाह—तेषामिति । मन्त्र्यादीनाम् । बाह्यश्चारञ्च-रितम् । छत्राद्युपग्राहिणः छत्राद्युपग्रहणशीला अन्तःप्रवेशा[1]नर्हाः । प्रत्यासन्नवर्तिनो मर्मज्ञास्तीक्ष्णाः स्वाम्यादेशे यथेष्टव्यापारसमर्था विद्युः । तत्रासनं पीठिकादि । यानं[2] युग्यादि । वाहनं हस्त्यश्वादि । तं चारं बाह्यमुपलभ्य । सत्रिणः संस्थास्विति कापटिकादिषु । यथायोगम् अर्पयेयुः[3] आचक्षीरन् ।

## जयमङ्गलाक्रोडपत्रम्

नियुक्तानामिति । (पृ० ३२५) ननु चारस्य बाह्याभ्यन्तरभेदेन मन्त्र्यादीनां व्यापारभेदः कुतः कल्पितः ? शूरपण्योपजीवित्वादिव्यापारभेदेन पार्थक्यं च कुतो वा

---

अशुद्धम्

१. प्रवेशर्हाः;　　२. (वाहनम्? यानम्) ।

३. (स्थाप) ? अर्प ।

[ अमात्यादिविषयकाऽऽन्तरसमाचार-
विज्ञानक्रमः ]

**सूदारालिकस्नापकसंवाहकास्तरककल्पकप्रसाधकोदकपरिचारका रसदाः कुब्जवामन[1]किरातमूकबधिरजडान्धच्छद्मानो नटनर्तकगायनवादकवाग्जीवनकुशीलवाः स्त्रियश्चाभ्यन्तरं चारं विद्युः। तं भिक्षुक्यः संस्थास्वर्पयेयुः।**

---

## जयमङ्गलाक्रोडपत्रम्

कृतमिति चेदुच्यते। मन्त्र्यादीनां बाह्ये चारकर्मणि राज्ञा नियुक्ता राज्ञा सह वार्तालापं कर्तुमसमर्था बहिर्यथेप्सितं कार्यं यथाकालं वा कर्तुं शक्नुवन्ति, न तथा आभ्यन्तरा भिक्षुक्यो बाह्याभ्यन्तरकार्ये इति हेतोर्बाह्याभ्यन्तरभेदेन चराणां पार्थक्यं कल्पितमेवमेव व्यापारभेदविषयेऽपि बोध्यम्।

अन्तरिति। (पृ० ३२५) कुतः अन्तःप्रवेशानर्हाः ? इति चेद्बाह्ये कर्मणि नियुक्त्वादेव।

छत्रम् आतपत्रम्। छादयति अनेन वा। मूले भृङ्गारम्—सुवर्णपात्रविशेषो यज्जलं बिभर्ति तत्। तदुक्तम्—

'भृङ्गारः कनकालुका। सौवर्णे राजते ताम्रे कांस्ये मणिमये तथा। इति पुष्पावतंसाभमेवासुगन्धि सलिलं पिबेत्' ।इति (सुश्रुते सू० स्था० ४५, अ० १३२)।
मूले व्यजनं-तालवृन्तं व्यजत्यनेनेति। पादुका—पादत्राणम्, तदुक्तम् अमरकोषे सरामाश्रमीव्याख्ये—पद्यतेऽनया, पादमुपनह्यते, पादमुपनह्यति वेति।

तीक्ष्णा इति। (पृ० ३२५) एते हि छत्रादिग्रहणव्याजेन विश्वासानुकूलं व्यापारतिष्ठन्तोऽपि क्रूरत्वाद् राजविरोधिकार्यकरणे न कथमपि पश्चात् पदं विचलन्तीति मनुभावः।

आसनं पीठम्, तदुक्तम् अमरकोशे–आस्यतेऽत्र 'आस उपदेशने'। इति। यानम् शिबिका-युग्यादि। तदुक्तं तत्रैव–"सर्वहस्त्यश्वरथादिदोलान्तम्"इति। 'यानं स्याद् वाहने गतौ' (इति मेदिनी) इत्युक्तत्वाद् याने वाहनानामन्तर्भावेऽपि वाहनपदसमभिव्याहाराद् अत्रत्ययानशब्दो हस्त्यश्वातिरिक्तवाहनपरो बोध्यः। वाहनं हस्त्यश्वादि। एतेषामुपग्रहणं यथायोग्यं वेदितव्यम्।

ननु तीक्ष्णैः ज्ञातोऽपि अर्थः कथं स्वस्वामिने बोधनीय इत्याह—तमिति। [पृ० ३१५] बाह्यं चारमित्यर्थः। उपलभ्य इति शेषः।

## श्रीमूला

विषदानसुलभसौकर्यां सूदारालिकादिवृत्तिमाश्रिता रसदाः, तथा कुब्जवामनादिच्छलजीविनः, नटनर्तकादयः, स्त्रियश्च गृहान्तर्गतं चारं जानीयुरित्याह—

---

नी० टि० १. किरातेति। म्लेच्छजातिबर्बरशिराः।

## श्रीमूला

सूदेत्यादि। सूदः अन्नकारः, आरालिको भक्ष्यकारः। स्नापकः स्नपयिता, संवाहकः अङ्गमर्दकः, आस्तरकः शय्यास्तरणकर्ता, कल्पको नापितः, प्रसाधकः अलङ्कर्ता, उदकपरिचारकः जलहारकः। कुब्जः गडुलः, वामनः खर्वः, किरातः अल्पतनुः, जडः लोकव्यवहारानभिज्ञः। कुब्जादिषु शेषाः प्रतीताः। नटो नवरसाभिनयकर्त्ता, नर्तकः चारणः अङ्गविक्षेपमात्रकर्ता, गायनः गान्धर्ववित्, वादकः वंशवीणादिवादयिता, वाग्जीवनः पुरावृत्तकथनोपजीवी पुस्तकवाचकः, कुशीलवः वेणः लङ्घनप्लवनादिवृत्तिः। स्त्रियः प्रतारिकाः, स्त्रीग्रहणं षण्डस्याप्युपलक्षणम्। तमिति। तं रसदादिविज्ञातं चारं भिक्षुक्य उक्तलक्षणाः, संस्थास्वर्पयेयुः।

## वैदिकसिद्धान्तसंरक्षिणी

बाह्यप्रचारज्ञानोपायमुक्त्वा आभ्यन्तरचारवेदनोपायमाह—सूदेति। सूदः सूपादिव्यञ्जनकारः, माहानसिक इति यावत्। आरालिकः विचित्रभक्षकर्ता, स्नापकः स्वामिनः स्नपयिता; संवाहकः तस्याङ्गमर्दकः। आस्तरकः स्वामिशय्याप्रसाधकः। कल्पकः नापितः। प्रसाधकः शलाकाभ्यञ्जनालङ्कारकर्ता, उदकपरिचारकः जलकर्मकुशलः। एते सर्वेऽपि रसदा भवन्ति। एतेषां रसदत्वं विषदानादिसौकर्यसंभवात्।

अथ आभ्यन्तरप्रचारानितरानप्याह—कुब्जेति। कुब्जः गडुल इति श्रीमूलायाम्। वामनः खर्वः असम्पूर्णावयव इत्युपाध्यनिरपेक्षायाम्। किरातः तद्देशस्थो म्लेच्छः अल्पतनुः। मूको न वक्ति, जडो न वक्ति शृणोति वा। लोकव्यवहारानभिज्ञ इति श्रीमूलायाम्। अन्धो न पश्यति। एते सर्वे गुणाः स्वामिनः अन्तश्चरणाय विश्वासाधायकाः, यतः अन्तःपुरस्थः प्रचारः जडमूकादिद्वारा न भिद्यत इत्यभिप्रायेण। अथ अन्तः प्रचरणार्हान् चराणां गुणानाश्रयमुखेन वदति। नटः अभिनेता। नर्तकः चारणः अङ्गविक्षेपकर्ता। गायनः गान्धर्वशास्त्रवित्, वादकः वीणादिवाद्यकुशलः। वाग्जीवनः पुराणादिप्रवचनपटुः। कथकादय इति जयमङ्गलायाम्। कुशीलवः लङ्घनप्लवनादिवृत्ति इति श्रीमूलायाम्। स्त्रियः वृषल्यादयः अनिषिद्धोचितप्रवेशनिष्कासनाः। कुब्जादिभिः अन्तः प्रविश्य विदितं गूढभावं कथं स्थानान्तरमपसर्पयेदित्याह—तमिति। भिक्षुक्य इति। सञ्चरणकर्त्र्यः परिव्राजिका मुण्डादयः। कुत्र चारं अर्पयेयुस्तदाह—संस्थास्विति। कापटिकोदास्थितगृहपतिकवैदेहकतापसव्यञ्जनासु इत्यर्थः।

## जयमङ्गला

आभ्यन्तरं के विद्युरित्याह—सूदेत्यादि। सूदः सूपकारः। आरालिकः कण्टकः। स्नापकः स्नापयिता। संवाहकोऽङ्गमर्दकः, आस्तरकः शय्याप्रसाधयिता[1]।

अशुद्धम्

१. प्रसाधयिता। उदक।

## जयमङ्गला

कल्पको नापितः। उदकपरिचारकः पानीयकर्मान्तिकः। एते रसदा रसावचारणस्थाननियोगत्वात्। किमेत एवाभ्यन्तरं विद्युरित्याह—कुब्जादयश्च कुब्जवामनो। किरातो म्लेच्छविशेषः। एते विदूषकादिच्छद्मानश्चान्तःपुरचारिणो विश्वास्याश्च। तत्र मूको यो न वक्ति। जडो यो न वक्ति शृणोति च। गायना वीणावादकाः। वाग्जीवनाः कथकादयः, कुशीलवा रङ्गोपजीविनः। स्त्रियश्च वृषल्योऽनिषिद्धो[1]चितिप्रवेशित्वाद् आभ्यन्तरं चारं विद्युः। तमित्यान्तरं चारम्। भिक्षुक्यः परिव्राजिका उच्चितनिष्कासप्रवेशाः संस्थास्वर्पयेयुः[2]।

## जयमङ्गलाक्रोडपत्रम्

बाह्यप्रचारज्ञानोपायमुक्त्वा आभ्यन्तरचारवेदनोपायमाह—सूदेति। (पृ० ३२७) सूदयति रसान् इति उक्तं शब्दकल्पद्रुमे।

आरालिकः—कुटिलः। तदाहुः वाचस्पत्ये—अरालं कुटिलं चरति इति ठक्। पाचके कुटिलचारिणि च। धनलोभेन परप्रेरितो हि पाचको विषादिसंसृष्टं पचतीति तस्य कुटिलचरित्वम्, अतो राज्ञा यथाभूताः पाचका नियोज्यास्तद्दर्शितम्, तट्टिप्पण्यां द्रष्टव्यम्[3]।

कण्टक इति। (पृ० ३२७) कुटिलवदाचरणकर्तृकत्वात् कण्टक इति व्याख्यानं सूपपादनीयम्। अत आरालिकस्य कुटिलवदाचरणशीलत्वं प्रसिद्धम्। आस्तरक इति। ( पृ० ३२७ ) आस्तीर्यतेऽसौ कम्बलाम्, वक्तास्तरशय्याकुशासनम्।

कथं रसदा भवन्ति इत्याह—रसदेति। (पृ० ३२७) ननु एते रसदाः सूदादयो राजानमन्यं वा स्वामिनं किमर्थं हन्युः ? इति चेल् लोककण्टकस्य राज्ञो हननस्यापि धर्म्यत्वात्। तदुक्तम्—

धर्म्यामारेभिरे हिंसामृषिकल्पा महीभुजः[4]।
तस्मादसाधून् पापिष्ठान् निघ्नन् दोषैर्न लिप्यते ॥५॥ इति। (का० ६, स० )

---

**अशुद्धम्**

१. वृषल्यो निषिद्धो ; २. (सर्पेयुः ?) संस्थास्वर्पयेयुः।

३. रिपवो विक्रमाक्रान्ता ये च स्वेऽकृत्यतां गताः।
सिसृक्षवः क्रोधविषं विवरं प्राप्य तादृशम् ॥
विषैर्निहन्युर्निपुणं नृपतिं दुष्टचेतसः।
स्त्रियो वा विविधान् योगान् कदाचित्सुभगेच्छया ॥
विषकन्योपयोगाद्वा क्षणाज्जह्यादसून्नरः।
तस्माद् वैद्येन सततं विषाद् रक्ष्यो नराधिपः ॥ ( वाचस्पत्यकोशे )

४. ( ज० ) तत्रापि हिंसा काचित् क्रियमाणा धर्मार्हा भवतीत्याह–धर्म्यामित्यादि। धर्मादनपेतां हिंसां पश्वालम्भनवत्। ऋषिकल्पा मन्वादयो राजानः। असाधून् प्रजाबाधकान्। पापिष्ठान् ( पापात्मनः ) असाधुतयैव। दोषैर्न लिप्यते, तेषां निग्रहेण भूयसो जनस्यानुग्रहाद् व्याघ्रादिघातवत्।

## जयमङ्गलाक्रोडपत्रम्

### सूदादीनां नियोजनप्रयोजनम्

ननु सूपकारादय एतावन्मात्रया भिन्नभिन्नकार्येषु कुतो नियोक्तव्याः ? इति चेत्, तेषामवश्यभर्तव्यत्वाद् इति जानीहि। तदुक्तं प्राक्—'ये चाप्यसम्बन्धिनोऽवश्यभर्तव्याः' इत्यादि। (कौ० अ० ११, अर्थ० शा०) अवश्यभर्तव्यत्वं चैतेषां परेषु स्वकीयगूढक्रिया-प्रकाशो मा भवतु इत्यपह्नवार्थं ज्ञेयम्। नीतिसारे परराज्यस्य आभ्यन्तरगूढतत्त्वनिगूढार्थं नियुक्ताः, एवं कौटिल्योक्ताश्चेमे भवन्ति। तथा हि—

नीतिसारार्थशास्त्रयोः नियुक्तसूदादिविषये मतभेदः

| नीतिसारे | कौटिल्ये अर्थशास्त्रे |
|---|---|
| (१) अन्नव्यञ्जनकर्ता | सूदः |
| (२) कल्पकः | कल्पकः |
| (३) स्नापकः | स्नापकः |
| (४) प्रसाधकः | प्रसाधकः |
| (५) भोजकः | |
| (६) गात्रसंवाहकः | संवाहकः |
| (७) जलदायकः | उदकपरिचारकः |
| (८) ताम्बूलदायकः | रसदायकः |
| (९) कुसुमदायकः | |
| (१०) गन्धदायकः | |
| (११) भूषणदायकः | आरालिक इति। |

### मतभेदपरिहारः

ननु कामन्दकेन कौटिल्येन च न्यूनातिरिक्तसङ्ख्यया सूदादय उपवर्णिताः, तदेकवाक्यता कथं समन्वेति ? इति चेत्। तेषां तेषां यथायोगं तत्र तत्रान्तर्भावेन उभयोरेकवाक्यतायां न कोऽपि दोषः। यथा ताम्बूलकुसुमादिदायकानां प्रसाधके अन्तर्भावः। एवमन्यत्राप्यूह्यम्।

---

उ०नि० धर्मादनपेतां धर्म्यां हिंसां पापिनां हननम्। आरेभिरे आरब्धवन्तः। ऋषि-कल्पा ऋषिसमा एव राजानः। यथा महर्षयो यज्ञेषु पश्वालंभनलक्षणं धर्मं कुर्वन्ति तथा राजर्षयोऽपि चोरादिनिग्रहरूपां धर्म्यामेव हिंसां कुर्वन्ति। तस्मादसाधूंश्चोरपारदा-रिकान्, अन्यानपि पापिष्ठान् स्वामिद्रोहकरादीन् हिंसन् दोषैर्न लिप्यत इत्यर्थः।

तथैवोक्तमन्यत्रापि—

विषेण वा माधव मायया वा गोविन्द शस्त्रेण तथाऽग्निना वा।
यैस्तैरुपायैररविन्दनाभ शत्रोर्वधं वेदविदो वदन्ति॥ (नी० १८ स०)

## जयमङ्गलाक्रोडपत्रम्

### रसदपरिगणनस्य नीतसारमतेन प्रयोजनम्

किञ्च, रसदेषु गन्धताम्बूलादिप्रसाधनकर्तृणां नीतिसारकृन्मतेन अन्तर्भावे कृतेऽपि पृथङ्निर्देशेनेदं स्फुटं भवति यत् कामन्दकोक्तस्नापकादिपरिगणितकर्मकराद्यपेक्षया न्यूनाः कर्मकरा न कर्तव्या इति ।

कुब्जादय इति । (पृ० ३२८) कुब्जत्वादिकं राज्ञः अन्तःपुरे जीविकालाभहेतुत्वपरिचयार्थम् ।

किरात इति । (पृ०३२८) किरं शूकरं ताते हिनस्तीति किरातजातीयो म्लेच्छभेदो निषादः । किरातदेशे[1] भवः किरात इत्युक्तं वाचस्पत्यकोषे—किराती इत्युक्तिश्चामरग्रहणे अस्या नियुक्तत्वाद् बोध्या ।

विदूषकादिति । (पृ० ३२८) विदूषकादय ऐकदेशिका अधीतविद्या हास्यरसादिसञ्चारणेन विनोदयितारो भवन्ति इत्येतेषां वैशिष्ट्यं बोध्यम् । अत एव एतेषामन्तःपुरप्रवेशो नासुलभ इत्यपि स्पष्टम् । तदाह—अन्तरिति ।

रङ्गेति । (पृ० ३२८) नटस्य उल्लेखात् तदतिरिक्ता रङ्गोपजीविनः अत्र उक्ताः ।

### वृषल्योऽनिषिद्धा इति पाठः

वृषल्य इति । ( पृ० ३२८ ) अग्रे अनिषिद्धोचितप्रवेशत्वादित्युक्तत्वाद् अकारप्रश्लेषोऽत्र बोध्यः । स्पष्टीकृतञ्चैतत् श्रीमूलायाम्—"स्त्रियश्च गृहान्तर्गतं चारं जानीयु"रिति ।

ननु सूदादयो निगूढं पराभिप्रायम् अन्तः प्रविश्यापि कथं जानीयुः ? इति चेन्न, तर्केण परस्य इङ्गिताकारौ दृष्ट्वा पराभिप्रायः चारैः बुद्ध्यत इति । तद्व्यक्तं नीतिसारे । तट्टिप्पण्यां द्रष्टव्यम्[2] ।

एतेन राजनीतिविदा कार्यकुशलेन राजनीत्या सह साहित्यशास्त्रोक्तरीत्या सत्त्वभावा दृष्ट्यादयश्च अवश्यं ज्ञातव्याः ।

---

१. 'तप्तकुण्डं समारभ्य रामक्षेत्रान्तिकं शिवे ।
किरातदेशो विज्ञेयो विन्ध्यशैले च तिष्ठते ॥

२. तर्केङ्गितज्ञः स्मृतिमान् मृदुर्लघुपरिक्रमः ।
क्लेशायाससहो दक्षश्चारः स्यात् प्रतिपत्तिमान् ॥ (का० रा० १३।२६)

[का०ज०म०] तर्केङ्गितज्ञ इति । तर्क ऊहः । गूढवस्तुप्रेक्षणमिति यावत् । इङ्गितम् अन्यथावृत्तिः ।

[उ० नि०] तर्केति । तर्क ऊहः प्रज्ञागुणः, येन अनुक्तमपि ऊहति । इङ्गितम् अन्यथावृत्तिः पूर्वं प्रवृत्तायाः क्रियाया अन्यथात्वम् इङ्गितम् । आकारस्यापि उपलक्षणार्थं तज्जानातीति ।

## जयमङ्गलाक्रोडपत्रम्

तथा विदुषो विद्वत्त्वं कथं परिपूर्णं भवतीति भारव्युक्तदिशा ज्ञात्वा चरैः पण्डितैर्भाव्यम् इति सिद्ध्यति। तथा चोक्तं किरातार्जुनीये २ सर्गे—

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम्।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम्॥ ३३॥ इति।

### तर्कस्वरूपम्

अत्रेदं बोध्यम्—तर्को हि 'यदि वह्न्यभाववान् स्यात्, तर्हि धूमाभाववान् स्यात्' इत्येवंरूपः, आपाद्यवाप्यापादकवत्तानिश्चयापाद्यव्यतिरेकनिश्चयाभ्यां भवति। स च आहार्यरूपत्वान्न अनुमानेऽन्तर्भवति इति नैयायिकैः तर्कस्य स्वरूपमुच्यते। स एव साहित्यविदां मतेन वैयञ्जनिको बोधः सम्भवति। तथा हि—व्यङ्ग्यत्वं स्थायिभावानां विभावानुभावसाधारणीकरणमहिम्ना सम्भवति। तत्त्वं च व्यञ्जनाव्यापारजन्यबोधविषयत्वम्। एवंविधबोधोत्पादने हेतुः साहित्यविद्भिरुक्तो व्यञ्जनाव्यापारः अर्थापत्तौ अन्तर्भवतीति वेदान्तकल्पलतायां साधितम्। तत्रायं भावः—'इदं विना इदं नोत्पद्यते, इत्येवंविधमर्थापत्तिस्वरूपं व्यञ्जनास्वरूपान्नातिरिच्यते। तस्माद् एतन्मतानुसारेण साहित्यविद्भिः निर्दिष्टा व्यञ्जना व्यतिरेकव्याप्तिरूपा भवति। तज्जन्यश्च बोधः अर्थापत्तिजन्य एव। एवंविधबोधे अपूर्वत्वं तदेव, यद् दृष्टान्ताभावेऽपि व्यतिरेकव्याप्तिमहिम्ना साध्यस्य भानम्। तत्रेदम् उदाहरणम्—निर्णेतुमिति[1]। तट्टिप्पण्यां द्रष्टव्यम्।

### अर्थापत्त्या व्यञ्जनया च जन्ये बोधे अन्तरम्

न च अर्थापत्त्यैव सम्भवति बोधे पुनः साहित्यविद्भिस्तस्य वैयञ्जनिकत्वं कुतः स्वीक्रियत इति चेत्, इदं चिन्त्यम्। साहित्यविद्भिस्तत्र तत्र विभावानुभावव्यभिचारिभावसाधारणीकरणव्यापारमहिम्ना उद्‌बुद्धः स्थायिभावविषयकः संस्कारः व्यञ्जना इत्युक्तम्। तस्येदं फलं यत् तथाविधोद्बुद्धसंस्कारसाहचर्येण अर्थापत्तिजन्यस्यापि बोधस्य प्रत्यक्षत्वमिति। प्रत्यभिज्ञादर्शनानुसारेण प्रत्यक्षत्वादीनां साङ्कर्यन्न जातिबाधकं बोध्यम्। तथा चायं निष्कर्षः—चरैराकारेङ्गितादिभिः परतत्त्वम् अनुभूयते, सोऽनुभवः संस्कारसंस्कृतत्वे सति प्रत्यक्षायमाणः, अन्यत्र तु अर्थापत्तिजन्य इति। तत्राप्ययं विशेषः—राज्ये स्वदोषेण स्वामिदोषेण वा क्रुद्ध-लुब्ध-भीताऽपमानिताः सन्तो ये अन्तर्बहिर्वा निवसन्ति, तेषाम् अन्तर्गतस्य भावस्य परिचयः अष्टाभिः सात्त्विकैः भावैः कथमपि न असुलभ इति। तथा च ध्वनितम्—

कथाप्रसङ्गेन जनैरुदाहृताद् अनुस्मृताखण्डलसूनुविक्रमः।
तवाभिधानाद् व्यथते नताननः सुदुस्सहान्मन्त्रपदादिवोरगः॥ इति।
(कि० १।२४)

---

१. "निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि!।
अन्यथानुपपत्त्यैव पयोधरभरस्थितेः॥" इति।

## जयमङ्गलाक्रोडपत्रम्

### क्रुद्धत्वादीनां परिचयसाधनम्

अनेन पद्येन दुर्योधनस्य धर्मराजं प्रति क्रुद्धत्वं भीतत्वम् अपमानित्वं च शङ्का-वृत्त्या अवगतं भवति। एवमेव सर्वत्रापि बोध्यम्। तत्र-कृत्यपक्षेषु संभवतां क्रोधा-दीनाम् अर्थापत्तिजन्यः अनुभवो व्यञ्जनाबलात् प्रत्यक्षायमाणः सात्त्विकभावाविर्भाव-परिचयेन स्फुटो भवति। तट्टिप्पण्यां द्रष्टव्यम्[1]।

इत्थञ्च टिप्पण्युक्तैः विभावानुभावव्यभिचरिभावैः सात्त्विकभावादिषु अष्टविधेषु स्तंभादिषु कस्यचन आविर्भावे जाते सति भीतत्व-क्रुद्धत्वापमानित्व-लुब्धत्वान्यतमं कृत्यपक्षेषु भेद्येषु च ज्ञातुं शक्यते।

यद्यपि टिप्पण्युक्तसात्त्विकभावेषु भयक्रोधयोरेव उक्तत्वेन इतरयोः ग्रहणं न भवति, तथापि अपमानितत्वं क्रुद्धे अन्तर्भाव्य तदनुबन्धि सात्त्विकभावोदयेन अपमानितो बोद्धुं शक्यः। एवं लोभेन परद्रव्यहरणे अभिनिवेशप्रयुक्तशङ्कया भयेन लोभः अभ्यूह्यः।

न च स्तम्भादिसात्त्विकभावैः आविष्कृतैः क्रोधादय एव कथं व्यङ्ग्याः? इतरेषामपि व्यञ्जनस्य शक्यत्वाद् इति वाच्यम्, परिशेषानुमानप्रणाल्या पर्वतीय-वह्न्यनुमितिवत् पारिशेष्ये सति क्रोधादीनां व्यञ्जने बाधकाभावात्।

---

सात्त्विकभावाविर्भावः

१. स्तम्भो मदगदक्रोधभयविस्मयगर्वजः।
तथा हर्षविषादादेर्जायते नीचमध्ययोः॥
सचेतनोऽपि निश्चेष्टो निष्प्रकम्पो जडाकृतिः।
स्तब्धगात्रश्च शून्यश्च स्तम्भवान् इति कथ्यते॥
स्वेदः सम्पीडनक्रोधश्रमव्यायामभीतिभिः।
धर्महर्षज्वरग्लानिसुखलज्जादिभिर्भवेत्॥
स्वेदापनयनेनैव व्यजनग्रहणेन च।
तथा वाताभिलाषेण ह्यनुभावः प्रकाश्यते॥
रोमाञ्चः क्रोधरुग्भीतिहर्षशीतादिभिर्भवेत्।
तं चोत्सुकासकृद्गात्रसंस्पर्शैः पुलकैर्वदेत्॥
स्वरभेदो गदमदक्रोधहर्षभयज्वरैः।
तस्याऽनुभवाः कविभिर्वर्ण्यन्ते गद्गदादिभिः॥
स्थानभ्रष्टैः स्वरैर्भूयः स्खलितैर्गद्गदैरपि।
वाष्पो जृम्भाभयक्रोधशीतैरनिमिषेक्षणैः॥
जायते रोगशोकाभ्यां धूमाञ्जनविजृम्भणैः।
वर्ण्यतेऽसौ मुहुर्वाष्पमोक्षणैर्नेत्रमार्जनैः॥
वैवर्ण्यमातपक्रोधव्याधिशीतभयक्लमैः।
अङ्गकार्श्याङ्गसौन्दर्यविप्लवाद्यैस्स वर्ण्यते॥

## जयमङ्गलाक्रोडपत्रम्

### सात्त्विकभावोदयानुदयौ

न च अन्येषु व्यभिचारादिभावेषु सत्सु सात्त्विकभावानामेव अत्रोक्तिः किमभिप्रायिकेति शङ्क्यम्, तेषां सहसा अपह्नोतुमशक्यत्वात्, तेषु सत्स्वेव रससञ्चरणस्वाभाव्याच्च ।

न च क्वचिद् भेद्यः कृत्यो वा सात्त्विकभावानपि अपह्नोतुमर्हतीति वाच्यम्, अभिव्यञ्जनीयस्य क्रोधस्य निश्चयदार्ढ्यायैव 'त्रयाणामेकवाक्यत्वे संप्रत्ययः' इति न्यायेन कृत्येषु भेद्येषु वा क्रोधादिनिश्चयस्य दार्ढ्येन सम्भवात् । नन्वेवं सति यथा विजिगीषुः परेषु चरान् अपसर्पयति तथा परोऽप्यत्र, एवंसति स्वीयसात्त्विकभावानां स्तम्भादीनामपि सङ्गोपनं न भवितेति चरेभ्यः आत्मनस्त्राणं कथं स्यात् ? इति चेन्न ।

यदि भारतीयराजनीतिपरतन्त्रो राजा सात्त्विकः सन् द्वितीयाध्यायोक्तदिशा समाधिभाक् स्यात्, तर्हि सः सात्त्विकभावान् रोद्धुं शक्नुयात् ।

यतः आत्मत्वेनाध्यस्तः प्राणो यदा सूक्ष्मभूतप्रकारेण सञ्चरति, तदा तन्महिम्ना सात्त्विकाः स्तम्भादयः अष्टौ भावा अभिव्यक्ता भवन्ति ( तट्टिप्पण्यां द्रष्टव्यम्[1] ) ।

तत्र पृथिवीभूतेन सह अभिमाने जाते स्तम्भो भवति । स्वेदस्तेजसि । वाष्पो ( नेत्राश्रु ) जले, वैवर्ण्यं तेजसि, कम्पो वायौ, प्रलयः आकाशे । स्वरभेद इत्येतत्सर्वं

---

कम्पो गदभयस्पर्शहर्षरोषजरादिभिः ।
वेपनैः स्फुरणैः कम्पैः स वर्ण्यः कविपुङ्गवैः ॥
प्रलयो मदनिद्रारुक्प्रहारैरुपजायते ।
स च दुःखाभिषङ्गाच्च निश्चेतनतयोच्यते ॥ [भा०प्र० १]

सात्त्विकभावोदयः

१. तदुक्तं गोकुलनाथोपाध्यायैः—

रत्यादयोऽष्टौ व्यभिचारिणोऽपि सन्तः क्वचित् स्थायित्वमापद्यन्ते । सात्त्विकास्त्वात्मत्वेनाध्यस्तस्य प्राणस्य सूक्ष्मभूतप्रकारात्मकत्वादिनाऽष्टधा भिद्यमाना व्यभिचारिणोऽपि बाह्यरूपेण परिणामादनुभावतयाऽपि स्पृश्यन्ते यदाहुः—

"पृथग् भावा भवन्त्येतेऽनुभावत्वेऽपि सात्त्विकाः ।" इति ।

विवृतं चैतन्नृत्याध्याये शार्ङ्गदेवेन—

उक्तै रत्यादिकैर्भावैः संविद् विक्रियते यदा ।
प्राणेऽध्यस्यत्यथात्मानं देहं प्राणस्तनोति सः ॥
तदा स्तम्भादयो देहे विकाराः प्रभवन्त्यमी ।
कदाचित् स्पन्दमानः स देहे प्राणश्चरत्ययम् ॥
यदाऽध्यास्ते धरां स्तम्भमन्तर्भावयते तदा ॥ इत्यादिना ।

(का० प्र० ४ उल्लासे, १५४ पृष्ठे)

## जयमङ्गलाक्रोडपत्रम्

प्रकटीकृतं सङ्गीतरत्नाकरे—७ अध्याये नर्तनाध्याये—४६७ पृष्ठे[1]।

---

१. नृत्याध्याये—"उक्तै रत्यादिभिर्भावैः संविद्विक्रियते यदा ॥ १६४५॥
प्राणेऽध्यस्यति सात्मानं देहं प्राणस्तनोति सः।
तदा स्तम्भादयो देहे विकाराः प्रभवन्त्यमी ॥ १६४६ ॥
एवं सति स्वाद्यमानरत्यादि-स्वैर्विभावकैः ।
विभाविता देहसंस्थैः स्तम्भाद्यैरनुभाविताः ॥ १६४७॥
अध्यस्तसंविदि प्राणे प्रकाशन्तेऽन्तरे भवाः ।
एते स्युः सात्त्विका भावाः सत्त्वप्राणप्रकाशनात् ॥
साङ्ख्योक्तो वा गुणः सत्त्वं साधुत्वं वा तदुच्यते ।
निर्मलप्राणदेहत्वं साधुत्वमिह संमतम् ॥
तत्र सत्त्वे भवा भावाः सात्त्विकाः संमताः सताम् ।
चत्वारि क्ष्मादिभूतानि प्राधान्येनावलम्बते ॥
कदाचित्स्वप्रधानः सन्देहे प्राणश्चरत्ययम् ।
यदाध्यास्ते धरां स्तम्भं भावं भावयते तदा ॥
प्राणाज्जलस्थादश्रूणि तेजस्स्थात्तु विवर्णता ।
स्वेदश्चाकाशनिष्ठात्तु प्रलयो जायते ततः ॥

[टी०] "उक्तैरित्यादि। रत्यादिभिर्भावैः स्थायिभावैः संविद्विषयानभिमुखं ज्ञानं यदा विक्रियते विषयविशेषाभिमुखीक्रियते। सा विक्रियमाणा संवित्प्राणे शरीरान्तश्चरे जीवननिमित्ते वायुविशेषे। आत्मानं स्वसंविदाकारमित्यर्थः। अध्यस्यति आरोपयति। स प्राणः। देहं स्थूलदेहम्। आत्मानं तनोति अध्यस्तसंविदाकारं करोति। देह आत्मबुद्धि जनयतीति स एव फलितोऽर्थोऽवगन्तव्यः। तदा स्तम्भादय इति। यदैवैवं परम्परया देहे चात्माध्यासो भवति, तदा स्तम्भादयोऽमी देहे विकाराः प्रभवन्तीति सात्त्विकोत्पत्तौ सामग्री दर्शिता। देहे विकार इत्यनेन बाह्यानां स्तम्भादीनां रत्याद्यनुभावत्वमपि दर्शितं भवति। आन्तराणां तु स्तम्भादीनां सात्त्विकत्वमेवेत्यवगन्तव्यम्।

एवं सतीत्यादि। एवं सत्युक्तप्रकारेण देहे स्तम्भादिषु विकारेषूत्पन्नेषु। स्वाद्यमानरत्यादिस्वैरिति। स्वाद्यमानाश्च ते रत्यादयश्च तेषां स्वैः संबन्धिभिः। रत्यादीनां प्रतिनियतैरित्यर्थः। विभावकैर्ललनोद्यानादिभिर्विभाविता उत्पादिताः। देहसंस्थैः स्तम्भाद्यैर्विकारैरनुभाविता अनुभाव्यत्वं प्रापिताः प्रकाशिता इत्यर्थः। अध्यस्तसंविदीति। अध्यस्ता संविद्यस्मिन्निति तथोक्तस्तस्मिन् प्राणे प्रकाशन्त इति, प्राणमाश्रित्य प्रतिभासन्त इत्यर्थः। अन्तरे भवा इति। उक्तप्रकारेणान्तरेऽन्तरात्मनि भवाः संभूता इति भावः। सत्त्वप्राणप्रकाशनात्सत्त्वाख्ये प्राणे प्रकाशनात्सात्त्विकास्स्युः।

मतान्तराश्रयणेन सत्त्वशब्दस्यार्थान्तरं दर्शयति—साङ्ख्योक्तो वेत्यादि। तत्रेति। त्रिषु पक्षेषु। चत्वारीत्यादि। अयं प्राणो वायुरूपश्चत्वारिक्ष्मादिभूतानि पृथिव्यप्तेज आकाशानि। पर्यायेण कदाचित्स्वप्रधानः स्वात्मवायुरेव प्रधानः सन् देहे चरतीति सम्बन्धः।

## जयमङ्गलाक्रोडपत्रम्

तदिदं तत्त्वमभिसन्धाय यदि राजा तत्र तत्र नाडीषु आत्मत्वेन अध्यस्तस्य प्राणस्य सञ्चरणभावनामकुर्वन् निर्विकारतया अवतिष्ठते तर्हि एकस्याऽपि सात्त्विकभावस्य उदयो न भवितुमर्हति, नाऽपि च राज्ञो निगूढं तत्त्वं परचरो विजानीयात् ।

शान्तरसे सात्त्विकभावानुदयः

ननु सात्त्विकभावस्य उदयमन्तरा कश्चन अवस्थातुं शक्नोति ? शक्नोत्येव यदि तस्मिन् शान्तरसः स्यात् । यतः शान्तरसस्य अभिनयो न भवितुमर्हति सात्त्विकभावोदयाभावात् । अत एव तस्य रसत्वमेव नाऽस्ति इति व्याख्यान्ति साहित्यरसिकाः । तदुक्तं भावप्रकाशने—षष्ठेऽधिकारे (पृ० १३६) व्यक्तञ्चैतट्टिप्पण्याम्[1] ।

यत्र शान्तरसो हि निर्वेदस्थायिभावकस्तत्त्वावबोधजो भवति तत्र अनुभावोदयाभावेन निर्वेदो योगिषु सन्नपि नाटकदृष्ट्या अभिनयाभावेन तस्य अनुपादेयतां स्वीकुर्वन्ति साहित्यिकाः, तदुक्तं भावप्रकाशने—

'तत्त्वावबोधजो योगिष्वनुपादेयतां व्रजेत्' । इति ।

एवंगुणसम्पन्ना राज्ये राजानः, मन्त्रिणः, सेनानायकाः, अध्यक्षा यदा भवन्ति, तदैव तेषु मित्रता, शङ्काऽसमाधिकरणा भवति । तदुक्तं मानसरामायणे[2] ।

---

तत्र प्राणस्य पृथिव्याद्यवलम्बने स्तम्भादिभावोद्भावनमाह–यदाध्यस्त इत्यादि । जलस्थादश्रूर्णाति। जायन्त इत्यध्याहार्यम् । तेजस्थात्प्राणाद्विवर्णता स्वेदश्च जायत इति सम्बन्धः। आकाशनिष्ठात्प्राणात्तु प्रलयो जायते ।

१. "नोपकुर्वन्ति शान्तस्य भावाः सञ्चारिणो यतः ।
तस्माच्छान्तरसस्यैवं विकलाङ्गत्वमुच्यते ॥
निवृत्ते विषयासङ्गे स्वान्ते शान्तिमुपेयुषि ।
निर्वेदादेरनुदयादनुभावो न दृश्यते ॥
अतो हर्षाद्यनुभवराहित्याद्विकलाङ्गता ।
अस्तीति सत्तामात्रेण प्रायः शान्तो विभाव्यते ॥
यतो न भावोऽभिनयो न शक्यो नाट्यकर्मणि ।
शमे स्थायिनि तत्र स्युर्भावा हर्षादयः कथम् ॥
अतोऽयं विकलप्रायस्तथापि श्रेष्ठ उच्यते ॥ इति ।

२. कुपथ निवारि सुपन्थ चलावा ।
गुन प्रगटहि अवगुणहि दुरावा ॥
देत लेत मन सङ्क न धरहीं ।
बल अनुमान सदा हित करहीं ।
विपतिकाल कर सतशुभ नेहा ।
श्रुति कह सन्त मित्र गुन एहा ॥
( मा० रा० कि० काण्डे, दोहा ७४ )

## जयमङ्गलाक्रोडपत्रम्

एवंरीत्या आत्मनः स्वरूपं सङ्गोप्य स्वकीयचरद्वारा परस्य मन्त्र्यादीनधिकृत्य तेषु सन्तोषः, अभिमानश्च कियन्मात्रया अस्तीति निगूढं तत्त्वं क्रोधादि उत्पाद्य राज्ञा चरेण ज्ञातव्यम् । इति चरनियोजनसार्थक्यं भवति ।

सर्पयेयुरिति । ( पृ० ३२८ ) अत्र श्रीमूलासम्मतः पाठः अर्पयेयुरिति । नीतिनिर्णीतिसम्मतस्तु पाठः सर्पयेयुरिति । अत्र तु कोष्ठके पाठद्वयसत्त्वात् जयमङ्गलाकृत्संमतिः कतरस्मिन् पाठ इति सुधीभिरेव यथायोग्यं चिन्तनीयम् ।

गूढतत्त्वपरिचयोपायः

ननु परस्य मन्त्र्यादयोऽपि न सर्वे सदृशा यत् सहजत एव तेषां स्वविषये वास्तविकं कीदृशं मतमस्तीति चरः परिचिनुयात् ? कथं वा तन्मतपरिचयाय क्रोधादीन् समुत्पादयेत् ? इति चेदभिधीयते—

यदा किल भेद्यः क्रुद्धो वा मन्त्री "स्वविषये लोकस्य एवंविधा धारणा, स्वस्मै वा लोको रोचते" इत्येवंरीत्या आत्मनः पुरतः स्वमतं जल्पति तदा तद्विरुद्धं चरेण वक्तव्यम् । यदि स्वमतं प्रत्यक्षप्रमाणत्रयप्रमितं वर्तते तर्हि मन्त्री आत्मनः मतमधिकृत्य प्रमाणमुपस्थापयेदेव । यदि नास्ति प्रमाणं तर्हि प्रतिज्ञातार्थस्थापनाविषये मन्त्र्यादिः वितण्डां कुर्यात् क्रुद्ध्येद्वा । एवंकृते मन्त्रिणस्तात्पर्यं आत्मीयता च कुत्रास्तीति चरो ज्ञातुमर्हेत्[१] ।

यथा दुर्योधनो नीतिकुशलः इङ्गितकारमपह्नोतुं जानाति, तथापि तस्यान्तर्गता भावा वर्णिलिङ्गिना चरेण ज्ञाता एव कथाप्रसङ्गेन । इति चरस्यापि वैशिष्ट्यमस्ति । तत्र कारणं स्वामिनो महाराजस्य सात्त्विकता । तद्व्यक्तं किराते । तत्रैव द्रष्टव्यम्[२] ।

न चैवं स तु—

स यौवराज्ये नवयौवनोद्धतं विधाय दुःशासनमिद्धशासनः ।
...................................अशङ्कितकारमुपैति शङ्कितः ॥

इत्येवंविध आसीत्, तस्य चरेण भावः कथं ज्ञातः ? इति चेत् । ये किल असात्त्विका भवन्ति तेषां अधःपतने अन्तर्गतभावप्रकाशने च विभूतय एव कारणं भवन्ति[३] ।

भिक्षुक्य इति । ( पृ० ३२८ ) एतासां पृथग् ग्रहणं सूदादिभिः ज्ञातस्य अन्तःपुरवर्तिनो गूढतत्त्वस्य बहिरपसर्पणार्थं भिक्षुक्यः कापटिकादिसंस्थासु भोजनाच्छादनादिमिषेण संस्थिताः संस्थाध्यक्षं निवेदयन्ति इति भावः । इत्यलं प्रसक्तानुप्रसक्तचिन्तनेन ।

---

१. कथाप्रसङ्गेन जनैरुदाहृताद् अनुस्मृताखण्डलसूनुविक्रमः ।
तवाभिधानाद् व्यथते नताननः सुदुःसहान् मन्त्रपदादिवोरगः ।
( कि० १।२४ )

२. निसर्गदुर्बोधमबोधविक्लवाः क्व भूपतीनां चरितं क्व जन्तवः ।
तवानुभावोऽयमवेदि यन्मया निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥
( कि० १।६ )

३. असमापितकृत्यसम्पदां हतवेगं विनयेन तावता ।
प्रभवन्त्यभिमानशालिनां मदमुत्तम्भयितुं विभूतयः ॥

[ ज्ञातानां वृत्तान्तानां राज्ञि गूढं
निवेदने उपायाः ]

**संस्थानामन्तेवासिनः संज्ञालिपिभिश्चारसञ्चारं कुर्युः । न चान्योन्यं [1]संस्थास्ते वा विद्युः ।**

[ चारे प्रवृत्तानां भिक्षुक्यादीनाम् अन्तःप्रवेशा-
लाभकाले तद्वृत्तान्तावेदनोपायाः ]

**भिक्षुकीप्रतिषेधे द्वास्स्थपरम्परा [2]मातापितृव्यञ्जनाः [3]शिल्पकारिकाः [4]कुशीलवा दास्यो वा [5]गीतवाद्यभाण्डगूढलेख्यसंज्ञाभिर्वा चारं निर्हरेयुः । दीर्घरोगोन्मादा[6]ग्निरसविसर्गेण वा गूढनिर्गमनम् ।**

---

**श्रीमूला**

संस्थास्वर्पितश्चारः केन द्वारेण राजानं प्राप्नुयादित्यत्राह—संस्थानामित्यादि । संज्ञालिपिभिः अर्थसूचनाय स्वसङ्केतकल्पिताभिर्लिपिभिः पत्रे निवेशिताभिः । चार-सञ्चारं चारस्य बाह्यस्याभ्यन्तरस्य च व्यापारस्य सञ्चारं राज्ञि समर्पणम् । न चेति । संस्थास्ते वा अन्योन्यं न विद्युः, संस्थाः संस्थान्तरवेदिनः सञ्चाराश्च सञ्चारान्तरवेदिनो न भवेयुः, संवादच्छलनपरिहारार्थम्, एकविज्ञाने सर्वग्रहणं मा भूदित्येतदर्थं च । अन्योन्यवेदने हि स्वस्वचारस्यान्यचारेण संवादं मिथ्यैव परिकल्प्य स्वामिनं वञ्च-येयुः । एकस्मिन् विज्ञाते तद्द्वारेणान्यस्य तद्द्वारेणान्यस्येति क्रमेण सर्वस्य ग्रहणं च प्रसज्येतेति ।

यदि भिक्षुक्यो नान्तःप्रवेशं लभेरन् तदा सूदादिसकाशाच्चारः कथं निष्क्रा-मयितव्य इत्यत्राह—भिक्षुकीति । भिक्षुकीप्रतिषेधे भिक्षुकीनामन्तःप्रवेशप्रतिरोधे, द्वास्स्थपरम्परा चारं निर्हरेत् । एको द्वास्स्थस्तदनन्तराय द्वास्स्थाय, स तदनन्तरायेति क्रमेण चरमो द्वास्स्थो भिक्षुक्यादये बाह्यजनाय राज्ञे वा चारं समर्पयेदित्यर्थः । तदभावे मातापितृव्यञ्जनाः अन्तःपुरसेवकजनस्य माताऽहं पिताऽहमिति बन्धुत्वाप-देशिनो वृद्धाः स्त्रियः पुरुषाश्च चारं निर्हरेयुः । शिल्पकारिकाः केशसंस्कारपत्र-वल्लीरचनादिवैचित्र्यं शिल्पं तत्कर्त्र्यः, कुशीलवा गायन्यः, दास्यो वा परिचारिका वा, चारं निर्हरेयुः । गीतपाठ्यवाद्यभाण्डगूढलेख्यसंज्ञाभिर्वा गीतेन सूचनीयार्थं

---

नी० टी० १. संस्था इति । संस्थाः संस्थान्तरं चारसञ्चाराः, चारसञ्चारान्तरञ्च ।

२. मातेति । मातापितृवद् व्यञ्जयन्तीति भृत्या एवापत्यस्नेहं किल दर्शयन्तः ।

३. शिल्पेति । तत्प्रतिषेधे । स्त्री ।······

४. कुशीलवा इति । तत्प्रतिषेधे इति शेषः ।

५. भाण्डगूढलेख्येति । तूर्यभाण्डान्तरनिहितगूढलेख्यैः ।

६. उन्मादेति । अनभिलक्षितशिरोवेदनादिः ।

## श्रीमूला

सूचकपदबन्धचारुणा गेयेन, पाठ्येन तथाविधेन श्लोकेन, वाद्येन वंशवीणादिना, भाण्डगूढलेख्येन भाण्डे जलकुम्भादौ क्षिप्तेन गूढलेख्येन च याः संज्ञा अर्थसूचनाः ताभिर्वा चारं निर्हरेयुः, अर्थात् तत्तत्कुशलाः। उक्तोपायासंभवे सूदादयः स्वयमेव चारनिर्हरणायान्तःपुराद् दीर्घरोगोन्मादापदेशादिना निमित्तेन निर्गच्छेयुरित्याह—

दीर्घेत्यादि। दीर्घरोगोन्मादाग्निरसविसर्गेण समाहारद्वन्द्वोऽयम्। दीर्घरोगेण गुल्मादिना उन्मादेन ग्रहपीडया अग्निरसविसर्गेण शालायामग्निदानेन अन्नादौ विषदानेन च। अग्निरसविसर्गवचनं तज्जनितेऽन्तःपुरसम्भ्रमे गूढपुरुषाणां रोगाद्यपदेशं विनैव निर्गमनसौकर्यात्।

## वैदिकसिद्धान्तसंरक्षिणी

संस्थानां कापटिकादीनाम्। अन्तेवासिनः शिष्याः। संज्ञालिपिभिः सङ्केतिताभिः। सञ्चारं बाह्याभ्यन्तरचारसञ्चारम्। ननु तेऽपि मिथ्या ज्ञापयितुं प्रभवन्ति? इति चेदाह न चेति। विद्युः इत्यनेनान्वयः। अन्योन्यं संस्थाः संस्थान्तरम्। चाराः चारान्तरम्। तथा च संस्थास्तत्र तत्र प्रचारज्ञानार्थं नियुक्ताः परस्परं यथा न विद्युः, तथा राज्ञा व्यवस्था विधेयेति भावः। एवं सञ्चारविषयेऽपि बोध्यम्। यदा अन्तर्गृहगता भिक्षुकी ज्ञातनिगूढतत्त्वा केनापि कारणेन प्रतिबन्धकवशेन वा बहिर्गन्तुमसमर्था भवति, अथवा अन्तःप्रवेष्टुमनर्हा भवति, तदा चारनिर्हरणोपायमाह— भिक्षुकीति। द्वास्स्थेति। तत्र तत्र कक्षायां द्वास्स्थपरम्पराद्वारेषु दौवारिकव्यञ्जनाः सङ्केतमुखेन चारं निर्हरेयुरिति भावः। त एव वा भृत्या मातृपितृव्यञ्जना भूत्वा स्नेहं दर्शयन्तः चारं निर्हरेयुः इति पक्षान्तरमाह—मातेति। टिप्पण्याम् एवं व्याख्यातम्—"माता पितृवद् व्यञ्जयन्तीति भृत्या एव अपत्यस्नेहं किल दर्शयन्तः" इति। तत्प्रतिषेधे पक्षान्तरमाह—शिल्पेति। शेषसंस्कारपत्रवल्लीरचनादि वैचित्र्यं शिल्पम्, तदुक्तं भावप्रकाशने-३ अधिकारे—

एकस्यैव पदार्थस्य नानारूपप्रकल्पनम्।
वाङ्मनःकर्मभिर्यत्तच्छिल्पमित्यभिधीयते ॥ इति।

कर्म्यः ("तत्प्रतिषेधे स्त्री" इति टिप्पणी)। तत्प्रतिषेधे कुशीलवास्तदनु गायन्यः। तत्प्रतिषेधे दास्यः परिचारिकाः। तदाहुः "तत्प्रतिषेधे शेषः" इति। (टिप्पणी)। प्रचारनिर्हरणसाधनमाह—गीतेति। व्याख्यातं निगदेन। द्वास्स्थाद्यलाभे स्वस्य बहिर्निर्गमनोपायमाह—दीर्घेति। औपनिषदिकादिप्रयुक्तः कुष्ठादिः। उन्मादः व्याधिविशेषो मस्तिष्कविकारः। अनभिलक्षितशिरोवेदनादिः। "असं बन्धप्रलापादिः" इति व्याख्यातं जयमङ्गलायाम्। अग्निना शालाया दाहः। रसविसर्गो विषदानम्।

## जयमङ्गला

संस्थानां येऽन्तेवासिनः शिष्यास्ते राजसम्भाषणस्य लक्षितत्वाद् गात्रस्पर्शादिसंज्ञाभिः सङ्केतिताभिः। चारसञ्चारमिति बाह्याभ्यन्तरयोश्चारयोस्सञ्चारं कुर्युः।

## जयमङ्गला

न चान्योन्यमिति। न च संस्थाः संस्थान्तरम्। ते च सञ्चारा न सञ्चारान्तरं विद्युः सङ्ज्ञानपरिहारार्थम्। एकस्मिन् वा ज्ञाते[1] मा भूत् सर्वग्रहणमिति। केवलन्तु सत्रिणो भिक्षुक्यश्च चारार्पणार्थं संस्थाभिः संसृज्यन्ते।

भिक्षुकीप्रतिषेध इति। तीर्थं चेत् स्वशङ्कया भिक्षुकीं निषेधयति तदा द्वास्स्थपरम्परा इति। दौवारिकव्यञ्जनाः सत्रिणः प्रतिकक्षपरम्परया भिक्षुकीष्वर्पयेयुरित्यर्थः। मातृपितृव्यञ्जना इति मातृपितृच्छद्मानः। शिल्पकारिकाः पत्रच्छेदादिकारिकाः। कुशीलवदास्यो रङ्गोपजीविदास्यः। गीतेन तद्वस्तुप्रतिबद्धेन सङ्केतितवेणुवीणावाद्येन। पाठ्येन द्व्यर्थनिबन्धनेन श्लोकपाठ्येन। भाण्डेनान्तर्लिखितेन। गूढलेख्येन पूर्वाचार्यकल्पितेन। तथा चोक्तम्—

ग्रहनयनवसुसमेतः षडाननोऽक्षणि सागरा मुनयः।
ज्वलनाङ्ग[2] गण्डकश्रृङ्गं दुर्लिखितं गूढलेख्यमिदम्॥ इति॥

अङ्गस्पर्शादिसंज्ञया वा यथायोगं चारन्निर्हरेयुः निष्कासयेयुः। तदसम्भवे विधानान्तरमाह—दीर्घरोगेति। औपनिषदिकप्रयोगेरुत्पादितेन दीर्घरोगेण कुष्ठादिना तद्दर्शनस्याप्रशस्तत्वात्। उन्मादेन असम्बन्धप्रलापहेतुना। तथा अग्निरसयोः प्रणिधानाग्निसर्गेण व्यामोहितारक्षत्वाद् गूढनिर्गमनं प्रच्छन्नार्थनिष्कासनम्।

## जयमङ्गलाक्रोडपत्रम्

अथ स्वस्वामिने राज्ञे परस्य आभ्यन्तरो भावः कथमावेदनीयः? इत्याह—संस्थानामिति। (पृ० ३३८)

संस्था इति। (पृ० ३३९) विद्युरित्यनेन अन्वयः। नीतिनिर्णीतौ "संस्थाः संस्थान्तरं चारसञ्चाराः चारसञ्चारान्तरञ्चे"त्युक्तम्।

सङ्ज्ञानेति। (पृ० ३३९) एकत्र संवासेन परिचयेन वा मित्रभावं समागतेषु गुह्यगोपनाभावेन एकः परस्य स्वामिनो वा अन्तर्गतं भावं गायाद् इति भावः।

ज्ञाते इति पाठः

ज्ञात इति। एतस्य पाठस्य संशोधनं कामन्दकीयजयमङ्गलानुसारेण कृतम्। भिक्षुकीत्वप्रयुक्तशङ्कया अनिष्टं भविष्यतीति उत्कटैकतरकोटिकया अनर्थप्रतिभयाद् अन्तर्बहिःशालाद् आगन्तुं यदि चराः प्रतिषिध्यन्ते, तदा प्रचारसञ्चारोपायमाह—द्वास्स्थपरंपरा इति। (पृ० ३३९) एको द्वास्स्थस्तदनन्तराय द्वास्स्थाय, स तदनन्तराय

---

अशुद्धम्

१. (वाञ्छा)? ज्ञा।

२. ज्वलनागण्डकश्रृङ्गद्वयलि।

## जयमङ्गलाक्रोडपत्रम्

भिक्षुकीति। इति क्रमेण चरमो द्वास्स्थो भिक्षुक्यादये, बाह्यजनाय राज्ञे वा चारं समर्पयेदित्यर्थः। तदभावे आह—मात्रिति। अस्यार्थः "मातापितृव्यञ्जनाः, अन्तःपुरसेवकजनस्य माताऽहं पिताऽहमिति बन्धुत्वापदेशिनो वृद्धस्त्रियः पुरुषाश्च" इति श्रीमूलायाम्। नीतिनिर्णीतौ "मातापितृवद् व्यञ्जयन्तीति भृत्या एव अपत्यस्नेहं किल दर्शयन्तः" इति रीत्या व्याख्यातः।

कुशीलवेति। ( पृ० ३३९ ) कुशीलवा गायन्यः, दास्यः, परिचारिका वा। नीतिनिर्णीतौ "तत्प्रतिषेधे श्री" इत्युक्तम्। एते कथं चारं निर्हरेयुः इत्याह—गीतेति। "गीतेन सूचनार्थसूचकपदबन्धचारुणा गेयेन" इति श्रीमूलायाम्। तथा च तथाविधश्लोकेन द्व्यर्थनिबन्धनेन वेति भावः। वाद्येन सङ्केतितवीणादिवाद्येन। भाण्डेन "तूर्यभाण्डान्तरलिखितेन लेख्येने"ति नीतिनिर्णीतौ उक्तम्। अत्राऽयं भावः—भाण्डे जलकुम्भादौ क्षिप्तेन गूढलेख्येन च इति। गूढलेखेन इत्यस्य स्वरूपमाह–तथा चेति। उक्तम् इति। कामसूत्रे ( १ अधिकरणे, ३ अध्याये ) इति शेषः। अस्य पद्यस्य अर्थः कामसूत्रे व्याख्यातः। स च तत एव बोध्यः[1]।

---

१. कामसूत्रटीकायां—म्लेच्छितविकल्पा इति—यत्साधुशब्दोपनिबद्धमप्यक्षरविन्यासादस्पष्टार्थं तन्म्लेच्छितं गूढवस्तुमन्त्रार्थम्। तस्य विकल्पा बहवः पूर्वाचार्योक्ताः। तद्यथा—

'कौटिलीयं यदि क्षान्तैः स्वरयोर्ह्रस्वदीर्घयोः।
बिन्दूष्मणोर्विपर्यासाद् दुर्बोधमिति संज्ञितम्॥
अको खगौ घङौ चैव चटौ तपौ यशौ तथा।
एते व्यस्ताः स्थिराः शेषा मूलदेवीयमुच्यते॥
ग्रहनयनवसुसमेतं षडाननोक्षाणि सागरा मुनयः।
ज्वलनाङ्गं गण्डकशृङ्गं दुर्लिखितं गूढलेख्यमिदम्॥ इति॥

एवंप्रकारा अन्येऽपि द्रष्टव्याः।

अक्षरमुष्टिकाकथनमिति। अक्षराणां मुष्टिरिव मुष्टिका गुप्तिरिति। सा साभासा निराभासा च। तत्र साभासा अक्षरमुद्रेत्युच्यते। तथाकथनं गूढवस्तुमन्त्रणार्थं ग्रन्थसङ्क्षेपार्थं च। तस्या आचार्यरविगुप्तेन चन्द्रप्रभाविजयकाव्ये प्रकरणं पृथगुक्तम्। यथोक्तम्—

गहनप्रसन्नसर्वां कतिपयसूत्रामिमानन्तमुखोम्।
अनधीत्यक्षरमुद्रां वादसमुद्रे परिप्लवते॥ इति। तत्रेदमुदाहरणम्–
मे-वृ-मि-क–सि-क–तु-वृ-ध-म-कुं-मी-मू-ध-स–बां-सु-श-क-नि-ध-क–आय-व्ययाः।
फा-चै-वै-ज्ये-आ-श्रा-भा-आ-का-मा-पौ-मा चैव। इति।

अस्या आर्याया अयमर्थः–प्रथमपादेन मेषादयो राशय उक्ताः। द्वितीयेन राशीनां लग्नात्प्रभृति मूर्ति-धन-सहज-बान्धव-सुत-शत्रु-कलत्र-निधन-धर्म-कर्माऽऽय-व्यया इति

## जयमङ्गलाक्रोडपत्रम्

ग्रहनयनकोष्ठकम्

| | | |
|---|---|---|
| १<br>गण्डकश्रृङ्गम् | २<br>नयनम् | ३<br>ज्वलनः |
| ४<br>सागरः | ५<br>अक्षाणि | ६<br>षडाननः |
| ७<br>मुनिः | ८<br>वसुः | ९<br>ग्रहाः |

अस्मिन् कोष्ठके पञ्चचत्वारिंशत्सङ्ख्यया योगे परिज्ञाते स्वरादयो ज्ञायन्ते। तथा हि—तत्र एकसङ्ख्यामारभ्य द्वादशसङ्ख्यापर्यन्तम् —स्वराः। त्रयोदशसङ्ख्यामारभ्य सप्तत्रिंशत्सङ्ख्यापर्यन्तं कादिमावसानानि अक्षराणि। यादिहकारान्तानि अक्षराणि बोध्यानि। शेषाणि तु यथायोग्यं तेषु तेषु अक्षरेषु अन्तर्भावनीयानि। एवमादिपरिभाषया गूढलेख्यं बोध्यम्। तदिदमुपलक्षणार्थं मुष्टिकापताकाकिसलयादीनाम्।

### साङ्केतिक-न्यायपरिभाषाद्युपयोगः

अत्रेदमुदाहरणान्तरम्—

'वसूनां रूपकाभावात् परमेष्ठी न विद्यते' इति।

वसवः तन्डुलाः। परमेष्ठी ओदनः[1]। तथा च तण्डुलाभावेन ओदनो न पक्वः। एवमेव कूटश्लोकादौ अर्थो द्रष्टव्यः। यथा—

विशेषसंज्ञाः। इतरार्धेन फाल्गुनादयो मासा इति। निराभासा मुद्रेत्युच्यते। तथाकथनं गुह्यवस्तुमन्त्रणार्थम्। यथोक्तम्—

'मुष्टिः किसलयं चैव च्छटा च त्रिपताकिका।
पताकाङ्कुशमुद्राश्च मुद्रा वर्गेषु सप्तसु॥
अङ्गुल्यश्चाक्षराण्येषां स्वराश्चाङ्गुलिपर्वसु।
संयोगादक्षरं युक्तं भूतमुद्रा प्रकीर्तिता॥ इति।

एवमन्यापि काव्यसंज्ञाभूता मुद्रा द्रष्टव्या।

ग्रहनयनवसुसमेतं—सागरा मुनय इत्यस्यार्थः।

तथा च अस्य श्लोकस्य अयमर्थः, तथा हि ग्रहाः=९, नयनं=२, वसुः=८, षडाननः=६, अक्षाणि=५, सागरः=४, मुनिः=७, ज्वलनः=३, गण्डकश्रृङ्गम्=१।

श्रूयते आप्तवाक्याद् इयं कथा—रणवीरराज्ञा कश्चिद् आङ्ग्लः कण्ठप्रदेशे रेखापरिवर्तनव्याजेन हृतः।

१. ओदनमुद्ब्रुवते। परमेष्ठी वा एषः। यदोदनः।

[ चारनिवेदितानां च वृत्तान्तानां परीक्षयैव विश्वास्यत्वम् ]

**त्रयाणामेकवाक्ये(त्वे)सम्प्रत्ययः । तेषामभीक्ष्णविनिपाते तूष्णीं दण्डः प्रतिषेधो वा ।**

**[ सौलभ्येन परराष्ट्रवृत्तान्तावेदनोपायः ]**

**कण्टकशोधनोक्ताश्चापसर्पाः परेषु[1] कृतवेतना वसेयुः सम्पातनिश्चारार्थं त उभयवेतनाः ।**

---

**जयमङ्गलाक्रोडपत्रम्**

'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥

अस्यार्थो वेदज्ञानं विना न भवितुमर्हति । अतः सोऽवश्यं ज्ञातव्यः । तदुक्तम्—"आश्रावयेति चतुरक्षरम् अस्तुश्रौषडिति चतुरक्षरम् । यजेति द्व्यक्षरम् । ये यजामहे इति पञ्चाक्षरम्, वौषट् इति द्व्यक्षरम्" इति । एतत्सर्वं वेदधर्मनीतिलोकमर्यादासंरक्षणार्थं नियुक्तं चेन् नानर्थाय भवति । एतन्न्यायेनैव नैयायिकादिभिः स्वीयां परिष्कृतां न्यायभाषां परिकल्प्य सर्वत्र स्वकोया प्रणाली प्रसारिता । तया वेदतात्पर्यं वेदेन सह सुरक्षितं भवति । अतः तत्सर्वम् उपपन्नमेवेति मन्तव्यम् ।

अङ्गेति । (पृ० ३३९) अक्षरमुष्टिकरपल्लव्यादिसङ्केतेनेत्यर्थः । एवमपि चारप्रचारो न भवतोति चेद् युक्त्यन्तरमाहु-अग्नीति । (पृ० ३३९) अग्निना दाहो भवति । रसदानेन मूर्छा भवति इति ताभ्यां रक्षका मोहयितव्याः । तत्फलं चरबहिर्गमनम् । एवमन्यत्रापि ऊह्यम् ।

**श्रीमूला**

गूढपुरुषार्पितस्य चारस्य कथं विश्वास्यतेत्याकाङ्क्षायामन्योन्यानभिज्ञाः त्रयो गूढपुरुषाः परचारमधिकृत्य यदि वाक्यमेकार्थं ब्रूयुस्तदा तत्र विश्वासः कार्यो न त्वन्यथेत्यभिप्रायेणाहु—त्रयाणामित्यादि । एकवाक्ये परस्परवाक्यसंवादिनि वाक्ये । संप्रत्ययो विश्वासः । अभीक्ष्णविनिपाते पौनःपुनिके वाक्यविसंवादे । तेषां तूष्णीं दण्डः प्रतिषेधो वा ते उपांशु ताडनीया गूढपुरुषकर्मणो वारणीया वेत्यर्थः ।

किमेतावन्त एव चारपुरुषाः, उतान्येऽपि सन्तीति जिज्ञासायामाह—कण्टकेत्यादि । कण्टकशोधनोक्ताः कण्टमशोधनाधिकरणोक्ताः सिद्धप्रव्रजितचक्रचरादयश्च अपसर्पा गूढपुरुषाः कार्याः । ते परेषु शत्रुषु तद्राज्ये तन्मन्त्र्यादिष्वष्टादशतीर्थेषु च कृतवेतनाः कल्पितजोविका वसेयुः सेवां कुर्युः । किमर्थं, सम्पातनिश्चारार्थम् । सम्पातानां चाराणां निश्चारार्थं निरायासानुष्ठानार्थं शत्रुचाराणां स्वराज्यापसर्पणे प्रवृत्तिपरिहाराय च । ते उभयवेतना विजिगीषोः शत्रोश्च वेतनग्राहिणः ।

---

नी० टि० १. परेष्विति । अरिमित्रादिषु ।

## वैदिकसिद्धान्तसंरक्षिणी

महता कष्टेन ज्ञातेऽपि गूढे प्रचारे तज्ज्ञापकेषु चरेषु विश्वास्यता कथं स्यात् ? तेष्वपि छलार्थं प्रवृत्तिसंभवात्। तत्राह—त्रयाणामिति। त्रयाणां चरकर्मणि नियुक्तानाम्, परस्परमविदितानाम्। एकवाक्ये इति। परस्वराविसंवादिनि। 'एकवाक्यत्वे' इति जयमङ्गलापाठः। संप्रत्यय ऐकान्तिकी प्रतीतिः। तेषां चरकर्मणि नियुक्तानाम् अभीक्ष्णविनिपाते पुनर्पुनः विसंवादे तूष्णीं दण्ड उपांशु दण्डः परज्ञापननिषेधार्थं प्रतिषेधग्रहणात् जयमङ्गलाकृत्तु स्वव्याख्यायां वधमेव दण्डमाह। प्रतिषेधो निवारणं चरकर्मणः। माऽभूत् प्रकाशवधे अन्यसञ्चाराणां सन्त्रास इति सकृद् द्विर्वा प्रमादाज्ञानादिभिः विसंवादे प्रथमत उपेक्षेत। ततोऽप्यपराधे "न पुनरेवं कार्यमिति' इति जयमङ्गलाकृद् व्याख्यानानुरोधेन कौटिल्योक्तोऽयं दण्डो ज्ञेयः। परमण्डले गूढपुरुषप्रणिधीनधिकृत्याह—कण्टकेति। वक्ष्यमाणे कण्टकशोधने उक्ता ग्राम्याणामध्यक्षाणां शौचाशौचज्ञानार्थं प्रणिहिताः। अपसर्पाः तापसप्रव्रजितादयः। चकारात् कापटिकादयः। अपसर्प्यन्ते इति अपसर्पाः। परेषु अरिमित्रादिषु। "तेषां तेषां मन्त्र्याद्यष्टादशसु" इति टिप्पणी। कृतवेतनाः स्वीकृतभृतयः। किमर्थमावसेयुः ? तदाऽऽह – संपातेति। संपाताः चराणां स्थान-प्रवेश-निष्कासास्तेषां ज्ञानार्थम्। स्वराज्ये परराज्ये मण्डलान्तरे नियुक्ता इमे भवन्ति ते अपसर्पाः। उभयवेतनाः जिगीषुणा शत्रुणा च प्रदत्तवेतनाः। किमर्थमुभाभ्यां वेतनं देयमिति चेत् ? "स्वयमभृताः किमिति सङ्कटमवगाहन्ते ? परैरभृताश्च अशङ्कनीयाः स्युः" इति जयमङ्गलायां व्याख्यातम् उत्तरं बोध्यम्।

## जयमङ्गला

तत्रापि त्रयाणामेकवाक्यत्वे सम्प्रत्ययः। सम्यगैकान्तिकी प्रतीतिरित्यर्थः। कदाचिदेकस्य द्वयोर्वा परोपग्रहोऽसम्यगुपलब्धिर्वा स्यात्। तेषामिति चाराणाम्। अभीक्ष्णविनिपाते पुनः पुनर्विसंवादने। तूष्णीं दण्डः प्रच्छन्नवधः। प्रतिषेधो निवारणम्। मा भूत् प्रकाशवधे अन्यसञ्चाराणामुत्त्रास इति सकृद् द्विर्वा प्रमादाज्ञानादिभिः विसंवादयस्तूपेक्षेत न पुनरेवं कार्यमिति।

इतरमण्डले गूढपुरुषप्रणिधानमाह—कण्टकशोधनोक्ता इति। समाहर्ता कण्टकशोधने वक्ष्यमाणे ग्राम्याणामध्यक्षाणां शौचाशौचज्ञानार्थं प्रणिहितास्तापसप्रव्रजितादयः। अपसर्पा अपसर्प्यन्त इति कृत्वा। ते कापटिकादयश्च चशब्दात्। परेषु शत्रुषु। कृतवेतनाः कृतभृतयो वसेयुः। सम्पातनिश्चारार्थमिति। सम्पतन्त्येभिरिति सम्पातास्सञ्चाराः। तेषां गूढस्थानप्रवेशनिष्कासाः। तत्र निश्चरति इति निश्चारः। तदर्थंके साक्षिव्यापारिणः[1] निरूपणार्थं तत्साक्षिणो वसेयुः। त उभयवेतना इति ते चोभयवेतनाः स्युः स्वयमभृताः किमिति सङ्कटमवगाहन्ते परैरभृताश्चा शङ्कनीयाः स्युः।

---

अशुद्धम्—१. सम्यक्षिव्याचारिणः।

## जयमङ्गलाक्रोडपत्रम्

त्रयाणामिति । (पृ० ३४३) सम्प्रत्ययस्य अर्थमाह—सम्यगिति । ऐकान्तिकीति निर्दुष्टा इत्यर्थः, विश्वास्या इति यावत् । अस्याः सार्थक्यमाह—एकस्येति । परोपग्रह इति—यत्र चरः प्रेषयितव्यस्तत्र वर्तमानो यदि चरजातीयः स्याद् अपरः, तर्हि तस्य परस्य आनुकूल्येन अयं चर वर्तेत एकजातीयत्वात्, विजातीयश्चेत् प्रातिकूल्येन वर्तेत इत्येवंरीत्या परवशीकरणमित्यर्थः । असम्यगिति । भ्रमप्रमादादिदोषैः इति शेषः । अप्रतिपत्तिर्विप्रतिपत्तिर्वा इति यावत्[1] । यद्वा—यत् किल परस्मात् न श्रुतं न वा स्वयं दृष्टम्, तदानीम् उपलब्धिः यथाकथञ्चिज्जाता सैव असम्यग् । अथवा—शत्रुमण्डले स्वमण्डले वा कृत्याः क्रुद्धादयो विभिन्नस्वभावाः परस्परमविदिताः परेणोपगृहीता वा गूढतत्त्वं ज्ञातुं यदि प्रेष्यन्ते तर्हि ते विभिन्नस्वभावत्वात् क्रोधादिदोषाद् वा तत्त्वं वास्तविकम् उपलब्धुम् असमर्था भवन्ति । तस्यामवस्थायामेकस्य द्वयोर्वा परोपग्रहः असम्यगुपलब्धिर्वा सम्भाव्यते । तदभिप्रेत्याहासम्यगिति । किञ्च, परोपग्रहः परस्य वशीकरणमानुकूल्येन प्रातिकूल्येन वा परत्र मिथ्याभाषणम् । ज्ञातार्थस्य अन्यथाऽऽविष्करणं प्रतारणा सैव वा परोपग्रहः, सा च अङ्गविद्यायां निष्णातया, ब्राह्मण्या वाऽपि कर्तुं शक्यते, असम्यगुपलब्धिस्तु न तथाविधयोः संभवितुमर्हति । अतस्तत्सङ्ग्रहार्थं परोपग्रहरूपा प्रतारणा उक्ता ।

ननु परोपग्रहणस्य आदौ ग्रहणं कुतः कृतमिति चेदभिधीयते । सत्यपि चरस्य नैपुण्ये परोपग्रहस्य तत्र संभवाधिक्यात् । यतः असम्यगुपलब्धिस्तेषु

ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति ।।

इति उक्तत्वात्संभवितुमर्हति, इति परोपग्रहणमादौ कृतम् । दोषस्यास्य निरासायैव त्रयाणां चराणां ग्रहणं कृतम् । सति च तेषामेकवाक्यत्वे उक्तदोषा न संभवन्तीति भावः । अयमेव नियमो वेदादिपाठसन्देहनिरासाय अद्यावधि अनुमन्यते । अत्रेदमवधेयम्—चरवचनेन शब्दस्य प्रामाण्यं राजनीतौ स्वातन्त्र्येण साधितं भवति । यतः चरवाक्यं साक्षिवाक्यवत् शब्दप्रमाणेऽन्तर्भूतं भवति आकाङ्क्षादिमत्—पदकदम्बकत्वे सति सतात्पर्यकत्वात् । साक्षिवाक्यस्य च शब्दप्रमाणान्तर्गतत्वं व्यवहारप्रकाशे व्यक्तम्[2] ।

---

१. असम्यगुपलब्धेः कारणानि । भ्रम, प्रमाद, करणपाटवानि अथवा परकीयम्, एतेन न दृष्टं न वा श्रुतम्, तदा असम्यगुपलब्धिर्भवति ।

२. "अनयोश्च साक्षिलेख्ययोः शब्दाभिव्यञ्जकत्वाच्छब्दप्रमाणेऽन्तर्भावः । तथा हि–यथोक्तगुणवतां दोषरहितानां च साक्षिणामाप्तवाक्यावश्यम्भावात्, आप्तवाक्यस्य च प्रामाण्यात् । तदुभयविशेषणवत्तानिर्धारणायैव साक्षिपरीक्षोपदेशः, आप्तवाक्यस्य च वक्तृज्ञानानुभावकत्वेन स्वातन्त्र्येण वा प्रामाण्यमित्यन्यदेतत् ।

## जयमङ्गलाक्रोडपत्रम्

### चरत्रित्वप्रयोजनम् (शब्दप्रामाण्यं च)

ननु प्रमाणत्वम् एकस्य चरस्य वाक्येऽपि अर्थबोधजनकं ज्ञानविषयत्वात् पर्याप्तमेव। तदा इतरचरवाक्यं पुनरुक्तत्वाद् व्यर्थमेव भवति? इति चेन्न, सति सन्देहे अर्थस्य सत्यत्वनिर्णयार्थं त्रयाणां वाक्यानां सार्थक्यं भवितुमर्हति। तद्व्यक्तं व्यवहारप्रकाशे तत्रैव द्रष्टव्यम्[1]।

इत्थञ्च यथा व्यवहारालये त्रयाणां साक्षिणां पुनरुक्तत्वेऽपि सार्थक्यं स्वीकृतम्, तथैव उभयोः चरयोः वाक्यार्थसन्देहे मध्यस्थवाक्यवत् तृतीयस्य नियामकत्वं बोध्यम्। तदेतत् बोधयितुं पुनरपि स्फुटीक्रियते। तथा हि—परराष्ट्रे गूढतत्त्वं परिज्ञातुं गतश्चरस्तत्रत्यं वृत्तान्तं विज्ञाय स्वामिनं बोधयितुं लिखितरूपेण अभिप्रायं ज्ञापयति। सोऽयमस्य चरस्य वाक्यप्रयोगः परोपग्रहाभिन्नो भवति। अर्थात् परेण यदुच्यते, तदनेन चरेण अनुमन्यते, इत्येवंरूपः परोपग्रहः। स च प्रायोगिकेऽन्तर्भूतो भवति। तदुक्तं कामन्दकेन—

'प्रायोगिकं मात्सरिकं माध्यस्थं पाक्षपातिकम्।
सोपन्यासं च जानीयाद् वचः सानुशयं तथा[2] ॥' इति। का०८।८३)

तदिदं प्रायोगिकवाक्यं चरेण प्रापितं विद्वत्सभायां तावत् प्रमाणं न भवति, यावत् तत् चरान्तरवाक्येन न संवदति। मूर्खपरिषदि तु तथाविधमपि एकेन चरेण प्रतिपादितं प्रमाणत्वेन स्वीक्रियते। अत्रोपवर्णितः परिषद्भेदः चरकोक्तदिशा अवसेयः[3]।

---

१. "त्रयाणां साक्षिणाम् एकस्यान्यथावादे द्वितीयस्य तत्तुल्यस्य सत्प्रतिपक्षितत्वात्तृतीयस्य चैकतया तत्र साक्षितोऽकृतनिर्णय इत्यत्र कात्यायनतात्पर्यात्, मूलभूतन्यायविरोधेऽनयोर्वचनयोरेवमवश्यं सङ्कोच्यत्वादिति।

वाचस्पतिः—पञ्चषेष्वपि साक्षिष्वधिकगुणस्यैकस्याप्यन्यथावादित्वे तद्विरुद्धार्थाभिधायिनां सर्वेषामन्येषामसाक्षित्वम्। गुणस्याप्येकस्य बहुवाक्यविरुद्धाभिधानाद् असाक्षित्वमिति सर्वेऽपि ते न साक्षिण इति न मन्वादिविरोध इति मदनरत्नकारः। वयं तु गुणत्वक्स्यैव "शतमप्यन्धानां न पश्यति एकेनापि बहूनां प्रतिबन्धाच्च" इत्यादिन्यायेन प्राधान्यात् गुणवतः साम्ये वादिनिर्दिष्टानामेकस्याप्यन्यथावादित्वे सङ्ख्याधिक्येऽपि गुणवत्तरत्वाभावे बहुत्वमेव विनिगमकमत एव सङ्ख्यानपेक्षमेव गुणवत्तमत्वमत्र ग्राह्यवचने हेतुमाहेति ब्रूमः।

२. तेषाम् मित्राणां वचः वाक्यतात्पर्यं लक्षयेत्। यदाह प्रायोगिकमित्यादि। तत्र परप्रयुक्तस्य प्रायोगिकम्। परस्य सम्पदसहिष्णोः मात्सरिकम्। उभयपक्षौ अनाश्रितस्य माध्यस्थम्, एकपक्षमाश्रितस्य पाक्षपातिकम् अर्थलिप्सोः सोपन्यासम्, प्रत्ययचिकीर्षोश्च सानुशयमिति ॥

३. तद्यथा—"परिषच्च खलु द्विविधा, ज्ञानवती, मूढपरिषच्च। सैव द्विविधा सती त्रिविधा पुनरनेन कारणविभागेन सुहृत्परिषत्, उदासीनपरिषत्, प्रतिनिविष्ट-

## जयमङ्गलाक्रोडपत्रम्

अत एव एकेन शास्त्रेण प्रतिपादितः सिद्धान्तः स्वगोष्ठ्यां तदनुयायिभिः अनुमतोऽपि सर्वेषां सम्मानार्हो भवत्येवेति न वक्तुं शक्यते। तदनुमतत्वन्तु तदेव भवति, यदा शास्त्रान्तराणि अनेन शास्त्रसिद्धान्तेन सह संवदन्ते। अत एव विद्वांस एकवाक्यतापरिचयार्थम् अनेकानि शास्त्राणि आश्रयन्ति। तेनैव न्यायेन चरविषयेऽपि एकवाक्यत्वबोधनार्थं त्रयाणां चराणां ग्रहणम्। उक्तरीत्या चरत्रयस्य एकवाक्यतायां परोपग्रहव्यावृतिः फलम्, एकस्य मध्यस्थवाक्यवत्वाद् इति।

किञ्च एकेन प्रमाणेन उपलब्धस्य प्रमाणान्तरेण पुनरुपलंभे पौनरुक्त्यदोषम् उद्भाव्य प्रमाणान्तरेण न ज्ञातव्यमिति विद्वद्भिः नोदासितव्यम्; अपि तु प्रमाणान्तरैरपि ज्ञातव्यम्। तद्व्यक्तं माधवनिदाने मधुकोशव्याख्यायाम्[1]।

तदेतदभिसन्धाय त्रयाणां ग्रहणं कृतम्। ननु त्रयोऽपि विसंवदेयुरिति चेन् न, परस्परमपरिचितास्ते न कथमपि एकार्थविषये विसंवदेयुः, तथैव प्रमाणस्वाभाव्यात्। तद्व्यक्तं व्याप्तिग्रहोपायप्रकरणे[2]।

---

परिषच्चेति। तत्र प्रतिनिविष्टायां परिषदि ज्ञानविज्ञानवचनप्रतिवचनशक्तिसंपन्नायां मूढायां वा न कथञ्चित्केनचित्सह जल्पो विधीयते। मूढायां तु सुहृत्परिषद उदासीनायां वा ज्ञानविज्ञानमन्तरेणाप्यदीप्तयशसा महाजनद्विष्टेन सह जल्पो विधीयते। तद्विधेन च सह कथयता आविद्धदीर्घसूत्रसङ्कुलैर्वाक्यदण्डकैः कथयितव्यम्।

१. "व्याधेर्ज्ञातव्यस्य पञ्च ज्ञानोपाया भवन्तीति तानाह— निदानमित्यादि। एते पञ्च व्यस्ताः समस्ताश्च व्याधिबोधकाः। न च समस्तपक्षे कृतकरणत्वं वाच्यम्, प्रमाणसंप्लवस्यापि दृष्टत्वात्। न यो ह्यनुमानेन प्रतीतो वह्निः, स एव प्रत्यक्षागमाभ्यां नोपलभ्यते। न वा निदानादीनि प्रेक्षावन्तो नैवमालोचयेयुः एकेनैव प्रतिपादितो व्याधिरिति वयमिहोदास्महे।

२. चिन्तामणौ–किञ्च सम्बन्धभूयोदर्शनं भूयस्सु स्थानेषु दर्शनं भूयसां वा दर्शनं भूयांसि वा दर्शनानि न। तथा एकत्र रूपरसयोर्द्रव्यत्वघटत्वयोश्च व्याप्तिग्रहात्, एकत्रैव धारावाहिके तद्धीप्रसङ्गात्, भूयस्त्वस्य त्रिचतुरादित्वेनाननुगमाच्च। अपि च पार्थिवत्वलौहलेख्यत्वादौ शतशो दर्शनेऽपि व्याप्त्यग्रहात्। तर्कसहकृतं तथेति चेत् ? तर्हि सहचारदर्शन-व्यभिचारादर्शनसहकृतः स एव व्याप्तिग्राहकोऽस्तु आवश्यकत्वात्, किं भूयोदर्शनेन ? न च तेन विना तर्क एव नावतरति, प्रथमदर्शने व्युत्पन्नस्य तर्कसम्भवात्।

न चैवमेवास्तु। तर्कस्य व्याप्तिग्रहमूलकत्वेनानवस्थानात्। जातमात्रस्य प्रवृत्तिनिवृत्तिहेत्वनुमितिजनकव्याप्तिज्ञानं तर्कं विनैवातो नानवस्थेति चेत् ? तर्हि व्यभिचारात् सोऽपि न व्याप्तिग्रहे हेतुः। न चैतद्बुद्धाववान्तरजातिरस्ति, सामान्यप्रत्यासत्त्या सर्वोपसंहाराविनाभावग्रहः सामान्यरूपता च न सकृद्दर्शनगम्येति भूयो दर्शनापेक्षेति

## जयमङ्गलाक्रोडपत्रम्

टिप्पण्यां निर्दिष्टेन चिन्तामणिग्रन्थेन इदं सिद्धं यद् व्यभिचारनिर्णये तत्सन्देहे वा न यथा व्याप्तेः प्रामाण्यं किन्तु त्रिचतुरादिस्थलेषु तत्सत्त्वे तत् सत्त्वम्, तदसत्त्वे, तदसत्वम् इति दृष्टे सति व्याप्तेः प्रामाण्यं निर्णीयते। एवं निगूढतत्त्वप्रामाण्यविषयेऽपि अयमेव न्यायो बोद्धव्यः। तथा हि—यदि परस्परमविदिताः चराः त्रय एकमेव वस्तु समानरूपतया प्रतिपादयन्ति, तर्हि व्यभिचारो बाधो वा नास्तीति निर्णीयते, इति चरत्रयसम्बन्धात्तद् वाक्यं प्रमाणम्। एतदेवोक्तं चरकेणापि, तत्रैव द्रष्टव्यम्[1]।

---

चेन्न, सामान्यस्य हि प्रत्यासत्तित्वं लाघवान्न सामान्यतया ज्ञातस्य तदनभ्युपगमाच्च। न च काकतालीयत्वादिशङ्काव्युदासार्थं द्वितीयादिदर्शनापेक्षेति वाच्यम्। द्वितीयादिदर्शनेऽपि शङ्कातादवस्थ्यात्। न त्वनौपाधिकत्वज्ञानं व्याप्तिज्ञाने हेतुः। तद्देशकालतत्रावस्थितघटादीनामुपाधित्वशङ्कानिरासः कस्यचित् साधनव्यापकत्वज्ञानेन कस्यचित् साध्याव्यापकत्वज्ञानेन स्यात्, तच्च भूयोदर्शनं विना नावतरतीति चेन्न, अयोग्योपाधिव्यतिरेकस्यानुमानाधीनज्ञानत्वेनानवस्थापातात्।

अथ साध्यसाधनसहचरितधर्मान्तराणामुपाधित्वसंशये न व्याप्तिग्रहोऽतस्तेषामनुपाधित्वज्ञानं भूयोदर्शनाधीनसाध्यव्यापकत्वज्ञाने सतीत्येतदर्थं भूयोदर्शनापेक्षा। अत एव यावता दर्शनेन तन्निश्चयस्तावद् भूयोदर्शनं हेतुरिति न वारसङ्ख्यानियमो न वाऽननुगमः।

यद्यपि चान्यस्य साध्यव्यापकत्व-साधनव्यापकत्वसंशयो नान्यव्याप्तिग्रहप्रतिबन्धकस्तथापि तदाहितव्यभिचारसंशयः प्रतिबन्धक इति तद्विधूननमावश्यकमिति चेन्न, अयोग्योपाधिसंशयाधीनव्यभिचारसंशयस्य तथाप्यनुच्छेदात्। स च न भूयोदर्शनान्नाप्यनुमानादित्युक्तम्। अपि च भूयोदर्शनाहितसंस्कारो न बहिरिन्द्रियसहकारी तद्व्यापारं विनापि च सहचारादिज्ञानवतो व्याप्तिग्रहात्, नापि मनस इन्द्रियादिवद् भूयोदर्शनजन्यसंस्कारस्य तज्जन्यस्मरणस्य वा प्रमाणान्तरत्वापतेः।

तस्मात्परिशेषात् सकृद्दर्शनगम्या सा। तथा हि—उपाध्यभावो व्याप्तिः। अभावश्च केवलाधिकरणं तत्कालसम्बन्धो वा स्वप्रकाशरूपं तज्ज्ञानं वा ? तच्च प्रथमदर्शनेन अवगतमेव चक्षुरादिना। न चाधिकस्तदभावोऽस्ति। न च प्रतियोगिज्ञानमधिकरणादिज्ञानजनकं येनोपाधिज्ञानं विना तन्न स्यात्। एवमुपाध्यभावे ज्ञाते किञ्चिन्न ज्ञातुमवशिष्यते। उपाध्यभावव्यवहारस्तु तद्वियमपेक्षते, दीर्घत्वादिव्यवहार इवावधिज्ञानम्। न चैवं रासभसम्बन्धतुल्यवह्निधूमसम्बन्धज्ञानादेवानुमितिः स्यादिति वाच्यम्, उपाधिस्मरणे सति उपाधितव्याप्येतरसकलतदुपलम्भकसमवधाने चोपाध्यनुपलम्भसहितस्य केवलाधिकरणज्ञानस्य अनुमितिहेतुत्वात्तद्व्यवहारहेतुत्वाच्च।

१. "बुद्धिमानात्मनः कार्यगुरुलाघवे कर्मफलमनुबन्धं देशकालौ च विदित्वा युक्तिदर्शनाद्भिषग्बुभूषुः शास्त्रमेवादितः परीक्षेत। विविधानि हि शास्त्राणि भिषजां हि प्रचरन्ति लोके। तत्र यन्मन्येत महद्यशस्वि धीरपुरुषानुमोदितमर्थबहुलमाप्तजनपूजितं

## जयमङ्गलाक्रोडपत्रम्

### चरत्रयग्रहणस्य प्रयोजनान्तरम्

चरत्रयग्रहणस्य अपरोऽयं विशेषो यत् चरस्य एकस्य गुणवतोऽलाभे बहूनां ग्रहणं कर्तव्यं भवति । तत्रापि अनेकेषु चरेषु सङ्ग्राह्येषु सत्सु त्रय एव कार्या इत्यभिप्रायेणाह—त्रयाणामिति । तेन न्यूनसङ्ख्याव्यवच्छेदो गूढतत्त्वस्य याथार्थ्यविवेकश्च फलम् । तद्व्यक्तं व्यवहारप्रकाशे तत्रैव द्रष्टव्यम्[1] ।

---

त्रिविधशिष्यबुद्धिहितमपगतपुनरुक्तदोषमार्षं सुप्रणीत-सूत्र-भाष्यसङ्ग्रहक्रमं स्वाधारमनवपतितशब्दमकष्टशब्दं पुष्कलाभिधानं क्रमागतार्थमर्थतत्त्वनिश्चयप्रधानं सङ्गतार्थमसङ्कुलप्रकरणमाशुप्रबोधकं लक्षणवच्चोदाहरणवच्च तदभिप्रपद्येत शास्त्रम् । शास्त्रं ह्येवंविधममल इवादित्यस्तमो विधूय प्रकाशयति सर्वत इति ।

१. अत्र सर्वत्र न्यूनाधिकविशेषणोपादानं न दोषाय । अनृतभाषणभीरुत्व-सत्यवदनशीलत्वस्य च साक्षित्वप्रयोजकस्योपलक्षणार्थत्वात्तेषाम् । ते च साक्षिणः कियत्सङ्ख्याकाः ? कुत्र ग्राह्याः ? इत्यपेक्षायामाह बृहस्पतिः—

नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा ।
उभौ वा श्रोत्रियो ख्यातौ नैकं पृच्छेत्कदाचन ॥

लिखितादिषु स एवाह—

लिखितौ द्वौ तथा गूढौ त्रिचतुष्पञ्च लेखिताः ।
यदृच्छाः स्मारिताः कुल्यास्तथा चोत्तरसाक्षिणः ॥
दूतकः खटिकाग्राही कार्यमध्यगतस्तथा ।
एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च ॥

खटिकाग्राही–गणकः । एक एवेत्येवकारो वाद्यपेक्षाया 'नैकं पृच्छेत कदाचन' इत्यनेनोक्ताया अनावश्यकत्वार्थो न नियमार्थोऽदृष्टार्थत्वप्रसङ्गात् । "त्र्यवराः साक्षिणो ज्ञेयाः" इति योगीश्वरीयमप्येतदभिप्रायकमेव । लिखितादीनामुभयानुमतत्वे ग्राह्यत्वमेकस्यापीत्याह योगीश्वरः—

उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ।

यद्यपि श्रौतस्मार्तक्रियापरा धर्मप्रधाना इत्यादि विशेषणोपादानात् त्र्यवराणामपि धर्मवित्त्वं समानम् । तथाऽपि तेषामुभयाननुमतानामपि भवत्येव साक्षित्वम् । द्वयोरेकस्य चोभयानुमत्यैवेति भेद इति मिताक्षरा ।

नारदोऽपि—

उभयानुमतो यः स्याद्द्वयोर्विवदमानयोः ।

आप्तत्वेन राजादिभिरवधारितोऽप्येकः साक्षीत्याह व्यासः—

शुचिक्रियश्च धर्मज्ञः साक्षी यस्त्वनुभूतवाक् ।
प्रमाणमेकोऽपि भवेत्साहसेषु विशेषतः ॥ इति ॥

## जयमङ्गलाक्रोडपत्रम्

अत्रायं भावः-सर्वोऽप्यर्थः हिताहितसाधनतया सङ्ग्रहपरिहारार्थं राज्ञा निर्णेतव्यः। तत्र अनेकविधा दोषाः, गुणाश्च प्रतिपदं अत्र परत्र च उत्पद्यन्ते। एवं स्थिते कमपि विषयमधिकृत्य निर्णयो दुष्करो भवति। यदि राजैव निर्णेतुमसमर्थो भवति तर्हि तन्नियुक्ता निर्णेतुं कथं समर्था भवेयुः ? अतो वस्तुनिर्णयार्थं भारतीयराजनीत्या धृतिभावः राज्ञः कृते अपेक्षित इत्युक्तम्। तस्य स्वरूपमिदमेव "विवेक-श्रुतसंपत्ति-गुरुभक्ति-तपस्विता-सिद्धयर्थम् एतच्चतुष्टयं यावज्जीवं करिष्ये" इति सङ्कल्पेन शास्त्रानुरणनम्। संप्राप्ते च धृतिभावे उचितकारिता समभिवृद्धा भवति, यतः सा धृतिभावस्य अनुभावो वर्तते। अतः तथाविधेन धृतिमता प्रतिभातो योऽर्थः, स तथेति निर्णेतव्यो भवति। एवं प्रतिभातेऽर्थे सन्देहावसरोऽपि नास्ति। इदमेव प्रातिभं ज्ञानमुच्यते। प्रतिभासंपन्नस्य विधेया अपि स्वामिमहिम्ना स्वकीयं स्वकीयमर्थं यथार्थतया निर्णेतुं पारयन्ति इति।

नन्वेवं धृतिमान् प्रतिभासम्पन्नः तानेव चरान् विनियोजयेत्। ये विद्याध्ययनसम्पन्ना गुणवन्तः स्वकीयं कार्यं कर्तुं प्रभवेयुः। तथाविधेषु चरेषु एकोऽपि चरो न विसंवदेत्। इति त्रिग्रहणं व्यर्थम्, इति चेन्न, चराणां हि नियोजनं छलं द्वारीकृत्यैव। अतस्तेषु आटविकसाधर्म्यं संभाव्यते। इति सर्वथा तत्प्रयुक्तदोषस्य चरवाक्ये संभावितस्य निरासाय त्रिग्रहणं कृतम्। न च राजानं त एव हन्युः, इति वाच्यम्, तेषां राजभक्तत्वात्।

ब्रह्मद्रुहाञ्च ये लोकाः गुरुपुत्रद्रुहाञ्च ये।
पतिद्रुहाञ्च ये स्त्रीणां ते समस्ता नृपद्रुहाम्। (ज० मं० अ० शा० १० अ०)

इत्याद्युक्तरीत्या राजानं प्रति विश्वास्यत्वाच्च। न च तथापि कदाचित् राजानं प्रति छलं कुर्युः इति शङ्क्यम्, "न मे भक्तः प्रणश्यति" इत्यादिना दत्तोत्तरत्वात्। अनुभूता यथार्थत्वेन प्रमितचरा वागस्येत्यनुभूतवाक्।

कात्यायनः—अभ्यन्तरस्तु निक्षेपे साक्ष्यमेकोऽपि वाच्यते।
अर्थिना प्रहितः साक्षी भवेदेकोऽपि याचिते॥

याचित इति निक्षेपविशेषणम्। न्यायतौल्यादन्यत्रापीति वाचस्पतिः। मदनरत्नकारस्तु याचितं विवाहाद्यर्थं याचितं गृहीतमाभरणादिकं याचितकमिति यावदित्याह। निक्षेपविशेषणवैयर्थ्यादयाचिते तस्मिन्नभ्यन्तरस्यैकस्यासाक्षित्वप्रसङ्गाद्व्यवहितान्वयप्रसक्तेश्चोत्तरैव व्याख्या प्रख्या। कुण्डलादिपण्यविवादे तन्निर्मातैकोऽपि साक्षीत्याह स एव—

संस्कृतं येन यत्पण्यं तत्तेनैव विभावयेत्।
एक एव प्रमाणं स विवादे तत्र कीर्तितः॥

इदं च बहूनामसंभवे सत्यवादिनोर्द्वयोरेकस्य वानुमतिप्रदर्शनार्थं न नियमार्थम्। अदृष्टार्थत्वप्रसङ्गादिति ध्येयम्, इति।

## जयमङ्गलाक्रोडपत्रम्

नन्वेवं हि त्रयोऽपि चरा विसंवादे प्रवृत्ता एकमेव अर्थं ब्रूयुः, दैवात् ? इति चेन्न, राज्ञः प्रभावाद् एवंविधस्य असंभवदुक्तत्वात् । तथा हि—राजा सात्त्विकः, धृतिमान् मतिमान् उपरिबुद्धिः, भक्त उचितकार्यकारी, संपूर्णायाः प्रजायाः परिपालने दृढप्रतिज्ञः केनचन महता तेजसा सुसंपन्नो भवति । तद्धि इतरस्य तेजः अभिभवितुं समर्थम् । अतो विसंवादे प्रवृत्तानां दैवादपि एकवाक्यत्वं भवितुं नार्हति । अत एवोक्तम्—

निसर्गदुर्बोधमबोधविक्लवाः क्व भूपतीनां चरितं क्व जन्तवः ।
तवानुभावोऽयमवेदि यन्मया निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥इति॥ [किरात०१।६]

### चराणां दण्डयत्वादण्डयत्वे

पुनः पुनरिति । [पृ० ३४३] अत्राऽयं निर्गलितोऽर्थः—यदि चराः प्रमादाज्ञानाभ्यां वार्तां विरुद्धां ब्रुवन्ति तर्हि सकृद् द्विर्वा राजा तानुपेक्षेत । तत आधिक्ये तु चरकार्यान्निवारणेन राजा तान् दण्डयेत् । यदि चरः पुनः पुनः विप्रलिप्सति, तदा तु तस्य वधयोग्यस्य वध एव दण्डः । यदि च चरवाक्यं विरुद्धं सदपि शास्त्रान्तरेण प्राप्तम्, तदा तु चरवाक्यस्य अनुवाद्यत्वमेव । अतो न तस्य दुष्टत्वं मन्तव्यम् । यदि च चरस्य वाक्यं विप्रलिप्सुत्वेऽपि शास्त्रान्तरेण प्राप्तमेव, तर्हि तदवस्थायामपि राज्ञा तस्य वध्यत्वं न अनुमन्तव्यम् । इत्येतत् "विसंवादयस्तु" इति ग्रन्थेन जयमङ्गलाटीकाकृता वक्ष्यमाणेन तुशब्दघटितेन बोध्यम् । प्रकाशवधे दोषमाह—मेति । [पृ० ३४३] प्रमादेति । प्रमादः कर्तव्यविषयकसंस्काराभावः । अज्ञानं करणासंपत्त्या ज्ञानोत्पत्त्यभावः ।

गूढपुरुषप्रणिधिप्रकरणात् परमण्डलमधिकृत्य नियोक्ष्यमाणेषु चरेषु किञ्चिदन्यत् कर्तव्यं सूचयितुं प्रसङ्गादाह—इतरेति । गूढपुरुषप्रणिधीन् वक्ष्यमाणे अधिकरणे प्रतिपादनीयान् इति शेषः ।

चशब्दादिति (पृ० ३४३) चः समुच्चये, घटं पटं च पश्य इत्यादौ घटसमुच्चितं पटं पश्य इति यथा, "तथा चापसर्पा" इति मूलतः अपसर्पसमुच्चिताः कापटिकादय इत्यर्थो भवति । तत्र मूले उक्तसमुदायत्वमस्पष्टम् । तदेव स्फुटीकर्तुमाह—कापटिकादय इति ।

शत्रुष्विति । [पृ० ३४३] उपलक्षणार्थं मित्रादीनाम् । तदुक्तं टिप्पण्याम्—"अरिमित्रादिष्विति ।"

### साक्षिव्यापारिण इति पाठः

साक्षीति । (पृ० ३४३) साक्षिव्यापारिण इति पाठः 'साक्षिणो वसेयुः' इति व्याख्यादर्शनात् शोधितः । चारप्रवेशनिष्कासस्थानज्ञानार्थम् अपसर्पाः साक्षिकार्यं कुर्वन्ति इति भावः । तदेव प्रयोजनं दर्शयितुमाह—निरूपणार्थमिति । [पृ० ३४३] इतः पूर्वं साक्षिकार्यकारिण इति वाक्यं योजनीयम् ।

### उभयवेतनस्यायत्तीकरणम्

उभयेति । [पृ० ३४३] अरिर्विजिगीषुश्चेत्यर्थः । तयोः अरिः वेतनं स्वविश्वास्यत्व-

[ तदावेदकानां च परीक्षा ]

**गृहीतपुत्रदारांश्च कुर्यादुभयवेतनान् ।**
**तांश्चारिप्रहितान्[1] विद्यात्तेषां[2] शौचं च तद्विधैः[3] ॥ १९ ॥**

---

## जयमङ्गलाक्रोडपत्रम्

बोधनार्थं चराय प्रयच्छति । विजिगीषुस्तु तदानीं चरपुत्रादीन् आयत्तीकृत्य चराय वेतनं प्रयच्छेद् इति विवेकः । तद्वक्ष्यति गृहीतेत्यादिना ।
परैरिति । ( पृ० ३४३ ) अन्यथात्वे परैः, एत एवाशङ्किता भवेयुः ।

## श्रीमूला

गृहीतेत्यादि । उभयवेतनान्, गृहीतपुत्रदारान् कुर्याद् गृहीता राज्ञा पूजापूर्वमात्मवशे कृताः पुत्रा दाराश्च येषां तांस्तथाभूतान् कृत्वा परेषु शौचं च स्वीयानामुभयवेतनानां शुद्धिं च, तद्विधैः विद्याद् उभयवेतनद्वारेण जानीयात् ।

## वैदिकसिद्धान्तसंरक्षणी

उभयसाधारणः अपसर्पः स्वस्माद् विपरीतो मा भवतु इत्येतदर्थमाह— गृहीतेति । अपसर्पस्य पुत्रदारादयः स्वायत्ता भवेयुः दानमानादिना । उभयवेतनान् उभौ अरिविजिगीषू, ताभ्याम् उभाभ्याम् अपसर्पेभ्यो वेतनं दीयत इत्युभयवेतनान् । तानिति उभयवेतनान् । के ते इत्याह—अरीति । अरिप्रहितान् स्वराज्ये इति शेषः । विद्यात् जानीयात् । विजिगीषुः विद्यादिति शेषः । तेषां चरकार्ये नियुक्तानां उभयवेतनानाम् । शौचं धर्मादिविशुद्धचित्तत्वम्, विद्यात् कैः इत्याह तद्विधैरिति । "उभयवेतनैः स्वकीयैः" इति टिप्पणी । कथं ते विद्युः, तत्राहुः टिप्पण्याम्—

मत्स्यस्येव गतिं मत्स्याश्चाहेरिव पदान्यहिः ।
स्वचेष्टितानि जानन्ति धूर्ताधूर्तविचेष्टितम् ॥ इति ।

तथा—

'अहिरेव विजानाति अहेः पादान्न संशयः' इति । ( वा० रा० )

मानसरामायणेऽपि —'खग को भाषा खग ही जाने' । जयमङ्गलाकृतस्तु "उभयवेतनप्रकारैः सिद्धतापसादिभिः, न तु उभयवेतनैः" इति आहुः ।

---

नी०टि० १. तानिति । उभयवेतनान् ।

" " २. तेषामिति । उक्तं च—मत्स्यस्येव गतिं मत्स्याश्चाहेरिव पदान्यहिः ।
स्वचेष्टितैर्विजानन्ति धूर्ताधूर्तविचेष्टितम् ॥

" " ३. तद्विधैरिति । उभयवेतनैः स्वकीयैः ।

## जयमङ्गला

एवञ्च[1] कृत्वा साधारणार्थप्रतिबन्धवत्वाद्[2] विधानान्तरमाह— गृहीतपुत्रदारां-श्चेति। प्रच्छन्नगुप्तपुत्रदारान्। दानमानाभ्यां वा गृहीतपुत्रदारान् कुर्यात्। अव्यभिचारार्थं तांश्चोभयवेतनान् प्रचारनिश्चारार्थमरिणा प्रहितान् विद्यात्। तेषामिति प्रहितानाममात्यानाञ्चोभयवेतनानाम्। शौचम् अस्मत्कार्यपरा इति। चकारादशौचञ्च विद्यात्। तद्विधैरिति। उभयवेतनप्रकारैः सिद्धतापसादिभिः, न तूभयवेतनैः। अरिसाधारणत्वाद् अनवस्थानिवृत्त्यर्थमेवमुच्यते। तथा चाहुः—

कः समानाभिहारेण च्छन्नानुभयवेतनान्।
भृत्यराशौ स्थितान् वेत्ति ? शङ्खे क्षीरकणानिव ॥ इति।

## जयमङ्गलाक्रोडपत्रम्

साधारणतया उभयवेतनत्वं किमर्थमिति समाधास्यन्नाह—एवञ्चेति। साधारणार्थप्रतिबन्धत्वात् साधारणार्थव्याप्यत्वात्। अशङ्कनीयत्वस्य इति शेषः। प्रतिबन्धशब्दो व्याप्तिपरतया साङ्ख्यतत्त्वकौमुद्यां व्याख्यातः[3]। अव्यभिचारार्थमिति भावः। साधारणार्थसम्बन्धे चराः स्वस्माद् व्यभिचरिताः[4] मा भवन्तु इत्येतदर्थम् उभय-वेतनत्वं बोध्यमिति यावत्।

असाधारणार्थदानेनापि उभयवेतनस्य स्वस्माद् व्यभिचरितत्वं मा भवतु इत्याशयेन कर्मान्तरं सूचयितुमाह—विधानान्तरमिति। गृहीतत्वं व्याख्याति—प्रच्छन्नेति। तेन अपसर्पस्य पुत्रदारादयः अपरेण गृहीता न भवेयुरिति भावः। कथं गृहीतव्याः इत्याह—दानेति। एवञ्च तथाविधापसर्पद्वारा कार्यसिद्धिरिति भावः।

प्रहितान् इति। (पृ० ३५२) ननु अरिप्रहितत्वं कथं ज्ञेयम् ? इति चेदुच्यते। अयं किल "पर एवं वक्ती" त्येतावन्मात्रं परिज्ञाय वा, हेतुं विना प्रमाणान्तरं विना वा कञ्चन विषयं निर्वक्ति ? इति परिज्ञातुं तद्विरुद्धं सम्भाषणीयम्। तत्र स द्रुह्यति, क्रुध्यति वा, न तु स्वपक्षस्थापनार्थं हेतुं प्रस्तौति। एवंस्थिते स पुरुषः अरिप्रहितो विज्ञेयः। यदि तु स तथा नाऽस्ति; किन्तु अनुमाय निर्णयपुरःसरं वक्ति, तर्हि अरिप्रहितो नाऽस्ति इति स विश्वास्यः। उक्तञ्चैतत्—

'बल अनुमान सदा हित करही। इति। (मा० रा० कि०)

तद्विधैरिति। (पृ० ३५२) सिद्धतापसैः। अग्रेचराणामेवंविधानां नियोजनीयानां मूलकृता वक्ष्यमाणत्वाद् अतः सिद्धेत्याद्युक्तम्।

---

अशुद्धम्—१. एतच्च ; २. साधारणार्थप्रतिबन्धकत्वात्।

३. समाधिस्वभावनिरूपणे-"लिङ्गं व्याप्यम्, लिङ्गी व्यापकम्। शङ्कितसमारोपितोपाधिनिराकरणेन वस्तुस्वभावप्रतिबद्धं व्याप्यम्। येन च प्रतिबद्धं तद्व्यापकम् इति।

४. कस्यचिन्न्यायाधीशस्य व्यवहारे अपराधी अभियुक्तो बभूव; परन्तु अभियुक्त-प्रियया सेविताऽयं न्यायाधीशस्तदनुरागवशेन दुष्टोऽप्यपराधी निर्दुष्टतया बन्धनान् मोचितः। इति स० मा० परांडे नागपुरन्यायाधीशमहोदयाः प्रोचुः।

## जयमङ्गलाक्रोडपत्रम्

### उभयेत्यस्य श्रीमूलाव्याख्याचिन्ता

उभयेति। ( पृ० ३५२ ) अत्र गणपतिशास्त्रिभिः "गृहीते"त्यादिपद्यव्याख्यायाम् "उभयवेतनानां शुद्धिम् उभयवेतनद्वारेण जानीयात्" इत्युक्तम्।

तच्च यथा सङ्गतं भवेत् तथा अवश्यं चिन्त्यम्। तथा हि—तन्मते उभयवेतनस्य शौचपरिज्ञाने उभयवेतन एव यदि नियोज्यः, तर्हि तदर्थं पुनरन्य इत्येवमनवस्थादोषः प्रसज्यत इति। तन्निरासाय जयमङ्गलाकृता सिद्धतापसानां ग्रहणं कृतम्। तदुक्तम्—"उभयवेतनप्रकारैः सिद्धतापसादिभिः, न तु उभयवेतनैः, अरिसाधारणत्वात्। अनवस्थानिवृत्त्यर्थमेवमुच्यते" इति। अत्रेदमवधेयम्—स्वयंप्रेरणयोभयवेतनस्य शुद्धिं विजानीयाद् राजा इति चेत्, तत्राह टिप्पण्याम्—स्वकीयैरिति। तथा च उभयटीकाकृन्मतानुसारेण स्वीयैः सिद्धतापसव्यञ्जनैः उभयवेतनस्य शुद्धिं रजाा विजानीयात्, यत् एतेऽपि आश्रिता एव इति। तदेव स्फुटीकृतम् अनवस्थेत्यादिना ग्रन्थेन।

### सिद्धपरीक्षा

ननु सिद्धतापसा अनुरागेण वशीभूता राजकार्यं करिष्यन्ति इति राज्ञा कथं निर्णतव्यमिति चेत्, संव्यवहाराद् इत्युच्यते। स च संव्यवहारेण क्रियमाणः परीक्षणप्रकारो मन्त्रिपरीक्षायां मन्त्रिपुरोहितोत्पत्तौ उक्तः। तथैव तेषां स्थिरस्नेहोऽपि "संव्यवहाराच्छौचं मैत्रतां दृढभक्तित्वञ्च" इत्याद्युक्तदिशा बोध्यः। तेनैव हेतुना "सिद्धोऽयं स्वकार्यकरणे कुशलः" इत्यपि अनुमातुं शक्यम्। स्नेहस्वरूपञ्च भावप्रकाशने व्यक्तम्[1]।

---

स्नेहस्वरूपम्

१. 'मनसो यद्द्रवार्द्रत्वं विषयेषु ममत्वता(तः)।
भयशङ्कावसानात्मा स एव स्नेह उच्यते॥
द्विधा द्रवः स्यान्मनसो दर्शनात्स्पर्शनादपि।
जतुवद्वह्निसंस्पर्शाद्दर्शनाच्चन्द्रकान्तवत्॥
आर्द्रता शिशिरत्वं यत्सर्वावस्थासु मानसम्।
द्विधा भवेत्स च स्नेहः कृत्रिमाकृत्रिमात्मकः॥
सोपाधिः कृत्रिमः स्नेहो निरुपाधिरकृत्रिमः।
उपाधौ विनिवृत्ते तु तज्जन्यो विनिवर्तते॥
स्नेहः स्वभावजो यावद् द्रव्यभावी भविष्यति।
शङ्का स्यात् कृतके तत्तद्विक्रियान्वेषणात्मिका॥
स्वाभाविके भयं तत्तद्विषयादेः प्रमादतः।
एकाश्रयः स च क्वापि क्वापि स्यादुभयाश्रयः॥
एकाश्रयस्तिर्यगादौ मर्त्यादावुभयाश्रयः।
आश्रयाद्वासनातश्च जायते तत्र तत्र तु॥

[चराणां वासार्थस्थानकल्पनाचातुर्यं
निगमनं च]

एवं[1] शत्रौ[2] च मित्रे च मध्यमे चावपेच्चरान् ।
उदासीने च तेषां च तीर्थे[3]ष्वष्टादशस्वपि ॥ २० ॥
अन्तर्गृह(गता)चरास्तेषां कुब्जवामनष(प)ण्डकाः ।
शिल्पवत्यः स्त्रियो मूकाश्चित्राश्च म्लेच्छजातयः ॥ २१ ॥

---

जयमङ्गलाक्रोडपत्रम्

ननु सिद्धस्य वास्तविकत्वपरिचयार्थमुभयवेतनस्य शौचपरिज्ञानार्थं च तद्विधानामेव नियोजनं कुतः कर्तव्यम् ? इत्याह–क इति । तथा चेति । (पृ० ३५२) साङ्ख्यतत्त्वकौमुद्यामिति शेषः ।

समानेति । (पृ० ३५२) जले बिन्दुर्जलरूपतया विलीनो यथा जलादन्येन विवेक्तुं न शक्यते तथा उभयवेतनोऽपि न विवेक्तुं शक्यते, इति तत्परीक्षार्थं तद्विधानामेव बुद्धिमतां नियोजनमिति भावः ।

---

एकाश्रयो वासनातो द्रव्याश्रयो हेतुभिर्भवेत् ।
स तु स्नेहस्त्रिधा प्रौढमध्यमन्दविभागतः ॥
विदेशस्थे मृते वापि दुर्बले प्रतियोगिनि ।
धर्मिणः क्लेशकारी यः स प्रौढः स्नेह उच्यते ॥
तत्तद्वियोगजं दुःखं तादृशे प्रतियोगिनि ।
अनुभूयातिवृत्तश्चेत्स्नेहो मध्यः प्रकीर्तितः ॥
तदा त्वव्यसनापत्तिमात्रको मन्द उच्यते ।
स्थिरश्च गत्वरश्चेति नश्वरश्चेति स त्रिधा ॥
उत्तमे मध्यमे नीचे तत्तत्कार्यवशाद्भवेत् ।
उत्तमे वृद्धिमभ्येति नोपकारानपेक्षते ॥
उपकारं न जानाति स स्नेहः स्थिर उच्यते ।
बहूपकारप्रभव उपकारानपेक्षते ॥
मध्यमे वर्धितः किञ्चित् सस्नेहो गत्वरो भवेत् ॥

नी० टि० १. एवमिति । अरिविषये गूढपुरुषप्रणिधानं दर्शयन्नाह ।

२. शत्राविति । शत्रौ चशब्दात् शत्रुमित्रे तन्मित्रे । मित्रे च स्वकीये समुच्चयात् तन्मित्रेषु च । मध्यमे उदासीने समुच्चयात् तन्मित्रेषु च निक्षिपेत् चरान् ।

३. अष्टादशस्विति । उक्तेन न्यायेन मन्त्र्यादिषु तीर्थेष्वष्टादशसु च । तेषां पूर्वोक्तानाम् । एवं द्वादश ( सु राजसु ) विजिगीषुं विहायैकादशराजानः प्रत्येकं तेषां मन्त्र्यादितीर्थान्यष्टादशैव गूढप्रणिधानस्थानानां द्वे शते सप्तविंशत्यधिके एषु स्थानेषु ।

## श्रीमूला

एवमित्यादि । आवपेत् विसृजेत् । अष्टादशसु । तेषां तीर्थेष्वपि शत्रुमित्र-मध्यमोदासीनानां मन्त्रिपुरोहितसेनापतिप्रभृतिषु पूर्वोक्तेषु कार्यस्थानेषु च ।

अन्तरित्यादि । तेषामन्तर्गृहचराः शत्र्वादितत्तीर्थान्तानाम् अन्तर्गृहसञ्चारिणः कर्तव्याः । चित्राः नानाप्रकाराः ।

## वैदिकसिद्धान्तसंरक्षिणी

अथ अन्यत्रापि विभज्य कर्तव्यं चरकार्यं षट्सु स्थानेषु प्रदर्शयति—एवमिति । टिप्पण्याम् "अरिविषये गूढपुरुषप्रणिधानम्" इत्युक्तम् । चेति । चकारात् शत्रु-मित्राणां मित्रमित्राणि शत्रुत्वेन मित्रत्वेन च सङ्गृहीतव्यानि । तेषामिति । शत्रुमित्र-मध्यमोदासीनानां मित्र-शत्रु-मित्रमित्र-शत्रुमित्र-मित्रारिमित्र-पार्ष्णिग्राह-आक्रन्द, पार्ष्णिग्राहासारा-क्रन्दासार-मध्यमोदासीनानाम् एकादशानां राज्ञाम् । तीर्थेष्विति । तेषां प्रत्येकं मन्त्रि-पुरोहित-सेनापति-युवराज-दौवारिकान्तर्वंशिक-प्रशास्तृ-समाहर्तृ-सन्निधातृ-प्रदेष्टृ-नायकपौर-व्यावहारिक-कार्मान्तिक-मन्त्रिपरिषदध्यक्ष-दण्ड-दुर्गान्तपालाटविकेषु । आहत्य स्वकीयेषु अष्टादशसु, अर्यादिराजसु तत्तीर्थेषु च सप्तविंशत्यधिकद्विशतस्थानेषु चरान् आवपेत् ।

| | | |
|---|---|---|
| (१) अरिः | १८ मन्त्र्यादि | =१९ |
| (२) मित्रं | १८ ,, | =१९ |
| (३) मित्रमित्रं | १८ ,, | =१९ |
| (४) अरिमित्रं | १८ ,, | =१९ |
| (५) मित्रारिमित्रं | १८ ,, | =१९ |
| (६) पार्ष्णिग्राहः | १८ ,, | =१९ |
| (७) आक्रन्दः | १८ ,, | =१९ |
| (८) पार्ष्णिग्राहासारः | १८ ,, | =१९ |
| (९) आक्रन्दासारः | १८ ,, | =१९ |
| (१०) मध्यमः | १८ ,, | =१९ |
| (११) उदासीनः | १८ ,, | =१९ |
| (१२) विजिगीषुः (स्वयमग्राह्यः) | १८ ,, | =१८ |
| | | २२७ |

---

दोषश्रवणमात्रेण सौमनस्यं विहाय यः ।
प्रतिकूले प्रवर्तेत स स्नेहो नश्वरो भवेत् ॥
नीचादावस्थिरः प्रायः स्नेहो ज्यायसि तु स्थिरः ।
एवं पुत्रकलत्रादौ पित्रादावपि दृश्यताम् ॥

## वैदिकसिद्धान्तसंरक्षिणी

अथ सामान्यतः चरावापमुक्त्वा स्थानवशाद् विशिष्य चरावापमाह--अन्तरिति। तेषामिति—शत्र्वाद्युदासीनान्तानाम्। अन्तर्गृहगता इति। प्रदेशावासार्थम् अन्तर्ग्रहणं तेषामिति चराणाम्। मध्ये इति शेषः। के अन्तर्गृहगताः? इत्याह—कुब्जेति। कुब्जादयः अस्मिन्नेवाध्याये पूर्वमेव व्याख्याताः। शिल्पवत्योऽपि पूर्वमेव अस्मिन्नध्याये व्याख्याताः। तत्संपत्तौ अन्तःपुरे प्रवेशः सुलभो भवति। मूकबधिरादीनाम् उपलक्षणार्थम्। चित्राः किरातदेशोद्भवाः म्लेच्छादयः। एते सर्वे नीतिसारोक्तदिशा अन्तःपुरप्रवेशार्हतया विश्वास्यत्वेन स्वीकृता अनुसन्धेयाः।

## जयमङ्गला

एवं कर्मसाक्षित्वेन स्थापितोभयवेतनो राजा एवं शत्रौ मित्रे तन्मित्रे मित्रमित्रे[1]वाऽन्तर्भावं विजानीयात्। मध्यमे उदासीने च वक्ष्यमाणलक्षणे। चरांश्छत्र्वाद्युपग्राहिणः। आवपेत् स्थापयेत्। तेषाञ्च विजिगीषुं त्यक्त्वा एकादशानां राज्ञां प्रत्येकम्। तीर्थेष्वष्टादशस्वपि। मन्त्रिपुरोहिता[2]ः। भर्तृकार्यमेषु स्थित्वा तरन्तीति तीर्थानि। तत्रैकादशसु राजसु तदीयेष्वात्मीयेषु च प्रत्येकमष्टादशस्वपि तीर्थेष्विति सप्तविंशत्यधिकं शतद्वयं भवति।

एवं गूढपुरुषान् प्रणिधाय चरेषु प्रविभागार्थमाह—अन्तर्गृहगता इति। तेषां चराणाम्। कुब्जादय इति। अन्तर्गृहगता इति यात्रोचितप्रवेशत्वात्।

## जयमङ्गलाक्रोडपत्रम्

अथ सम्पूर्णमण्डलेषु गूढपुरुषप्रणिधानं दर्शयितुं शत्रुमित्रमध्यमोदासीनचतुष्टयमण्डलेषु गूढपुरुषप्रणिधानमधिकृत्याह–एवमिति। तत्संसूचितं टिप्पण्याम्—"अरिविषये गूढपुरुषप्रणिधानं दर्शयन्नाहे"ति।

तन्मित्र इति। (पृ० ३५६) शत्रुमित्रमित्रामित्राणां ग्रहणं मूलस्थ "च" शब्दाद्बोध्यम्। तदुक्तं टिप्पण्याम्—"शत्रौ चशब्दात् शत्रुमित्रे तन्मित्रे। मित्रे च स्वकीये। समुच्चयात् तन्मित्रेषु च। मध्यमे उदासीने समुच्चयात् तन्मित्रेषु च निक्षिपेत् चराने"ति। उपलक्षणार्थञ्चैतत् पार्ष्णिग्राहादितन्मित्रादीनामपि, तेषामपि शत्रुमित्रत्वेनापि ग्रहणात्। विजानीयादिति। (पृ० ३५६)निगूढम् अन्तःस्थं भावं विजानीयादित्यर्थः।

### पुनः स्थापनविधिः तीर्थं च

स्थापयेदिति।(पृ० ३५६)पुनर्विधानमधिकारविधिज्ञापनार्थम्। यथा वै तुष्ण्यर्थ-

---

अशुद्धम्

१. मित्रामित्रे।

२. मन्त्रिपुरोहिता भर्तृ।

## जयमङ्गलाक्रोडपत्रम्

मवघातो विधीयते, तथा अन्तर्गतभावज्ञापनार्थं चरान् उक्तविधान् अर्यादिमण्डलेषु आवपेत् स्थापयेद् इति भावः। तथा च तन्मिश्रे इत्यारभ्य स्थापयेद् इत्यन्तं ज०म० वाक्यं न भिन्नम्; अपि तु एकमेव, तथाकल्पने अधिकारविच्यवगमलाभात्। तीर्थं व्याख्याति—मन्त्रीति। (पृ० ३५६) एतेषां तीर्थत्वं शब्दकल्पद्रुमे द्रष्टव्यम्[१]।

तथा च मन्त्रिपुरोहितादीन् तीर्थवद् निमित्तीकृत्य एषु स्थित्वा भर्तृकार्यं चरास्तरन्ति इति परराष्ट्रीयगूढप्रचारतरणार्थम् आधारभूता मन्त्रिपुरोहितादयो भवन्ति इति भावः। एतदेवाह—एष्विति। (पृ० ३५६) अत्र टिप्पण्युक्तम् अनुसन्धातव्यम्।

### अन्तर्व्याख्याने विशेषः

अन्तरिति। (पृ० ३५६) अत्र गणपतिशास्त्रिभिरेवं व्याख्यातम्—"तेषा मन्तर्गृहसञ्चारिणः कर्तव्याः" इति; परन्तु अन्तर्गृहचरत्वं केषामिति प्रश्न एभिः न समाहितः। टीकाकृद्भिस्तु स्पष्टतया समाहितः, इत्यनयोर्विशेषः।

### यात्रेति पाठः

यात्रेति। (पृ० ३५६) केचिद् यत्रेति पाठं संमन्यन्ते। तत्तु न सम्यक्। पूर्वं हि "गूढस्थानप्रवेशनिष्कासाः" इत्युक्तत्वात्, चराणां यात्राया एव प्रदर्शितत्वाच्च। यात्राया औचित्यं "दीर्घरोगोन्मादाग्निरसविसर्गेण वा गूढनिर्गमनम्" इति कौटिल्योक्त्यनुसारेण अनुसन्धेयम्। तस्याऽयमाशयः—रोगप्राबल्योद्भवे सति राज्ञा सेवको न द्रष्टव्य[२] इति कामन्दकेनोक्तत्वाद् राजा उद्भूतरोगं चरं बहिर्देशे यात्रार्थम् अनुमन्येत इत्यभिप्रायेण बोध्यः।

यानि तीर्थानि मन्त्रिप्रभृतीन्यष्टादशतीर्थान्यवगाह्य राजा कृतकृत्यो भवति, तानि उक्तानि शब्दकल्पद्रुमे[३]।

---

१. मन्त्री इति मेदिनी। मन्त्रीप्रभृत्यष्टादशराष्ट्रसंपत्। यथा महाभारते—

कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः॥ (२-५-३८)

२. न चानुजीविनं पश्येदकल्पं पृथिवीपतिः।
अन्यत्रात्ययिकात् कार्यात् सर्वत्रात्ययिको गुरुः॥ इति।

उ० नि०—साङ्क्रामिकव्याधिप्रतीकारार्थमाह—न चेति। न चानुजीविनं भृत्यं पश्येदकल्पं व्याधितं पृथिवीपतिः, व्याधिसंसर्गनिषेधार्थम्। अन्यत्रात्ययिकाद्रोगात्। यदि मुख्योऽनुजीवी, अत्ययकारिणाऽभिभूयते तदा पश्येदात्मना प्रतीकारं कृत्वा। कस्मादित्याह—सर्वस्यैवातुरो गुरुः। स मञ्चादिस्थितोऽपि द्रष्टव्य एव। एवमनुजीविनोऽरनुक्ता भवन्तीति॥ ४८॥

३.　मन्त्री पुरोहितश्चैव युवराजश्च भूपतिः।
पञ्चमो द्वारपालश्च षष्ठोऽन्तर्वंशिकस्तथा॥

दुर्गेषु[1] वणिजस्संस्थाः दुर्गान्ते[2] सिद्धतापसाः ।
कर्षकोदास्थिता राष्ट्रे राष्ट्रान्ते व्रजवासिनः ॥ २२ ॥
वने वनचराः[3] कार्याश्श्रमणाट[4]विकादयः ।
परप्रवृत्तिज्ञानार्थाः(र्थं) शीघ्राश्चारपरम्पराः ॥ २३ ॥

---

## श्रीमूला

दुर्गेष्विति । दुर्गेषु जलादिदुर्गवत्सु राजधान्यादिमहानगरेषु, वणिजः, सम्यक् तिष्ठन्तीति संस्था गूढपुरुषाः कार्याः । दुर्गान्ते दुर्गसीमायां सिद्धतापसाः संस्थाः कार्याः । राष्ट्रे कर्षका उदास्थिताश्च संस्थाः कार्याः । राष्ट्रान्ते राष्ट्रसीमायां व्रजवासिनो गोपाला गूढपुरुषाः कार्याः ।

वन इति । वने श्रमणाटविकादयः क्षपणाटवीपालप्रभृतयो वनचराः कार्याः। परप्रवृत्तिज्ञानार्थाः शत्रुव्यापारज्ञानप्रयोजनाः शीघ्राः क्षिप्रमारिण्यः चारपरम्पराः कर्तव्याः ।

## वैदिकसिद्धान्तसंरक्षिणी

संस्थाप्रणिधानमाह–दुर्गेष्विति । तदुक्तं टिप्पण्याम्–"सञ्चारप्रणिधानमुक्त्वा संस्थाप्रणिधानमाह–"दुर्गेषु वणिजः संस्था" इत्यादि । वणिज इति । वैदेहकव्यञ्जनाः संस्था इति । स्वकर्मानुकूलचरितोपेताः । तद्व्यक्तं नी० सारे तत्रैव द्रष्टव्यम्[5] । दुर्गप्रान्ते दुर्गाद्बहिः । तत्र के नियोज्याः ? इति चेत्, आह—सिद्धतापसा इति ।

---

कारागाराधिकारी च द्रव्यसञ्चयकृत्तथा ।
कृत्याकृत्येषु चार्थानां नवमो विनियोजकः ॥
प्रदेष्टा नगराध्यक्षः कार्यनिर्माणकृत्तथा ।
धर्माध्यक्षः सभाध्यक्षो दण्डपालस्त्रिपञ्चमः ॥
षोडशो दुर्गपालश्च तथा राष्ट्रान्तपालकः ।
अटवीपालकान्तानि तीर्थान्यष्टादशैव तु ॥ इति ।

नी० टि० १. दुर्गेष्विति । स्थानवशात् चरावापमाह ।

२. दुर्गान्तेष्विति । सञ्चारप्रणिधानमुक्त्वा संस्थाप्रणिधानमाह । दुर्गेषु वणिजः संस्था इत्यादि ।

३. वनेचरा इति । वनेचरा गृहपतिक( वैदेहकादि )भेदात् ।

४. श्रमणा इति । मुण्डतापस-बौद्ध-जैनाः । आटविकादयो गृहपति(कादयः) ।

५. संस्थानवत्यः संस्थाश्च कार्याः कार्यसमृद्धये ।
तिष्ठेयुर्यासु सञ्चाराः परचर्योपवेदिनः ॥ इति ।

चरविकल्पे—"संस्थानं वेषश्चरितश्च तदुपेता इति ।
एषु पञ्चसु सञ्चाराः सन्तिष्ठन्त इति संस्थाः ॥

## वैदिकसिद्धान्तसंरक्षिणी

राष्ट्रे जनपदे नियोक्तव्यानाह—कर्षकेति। कर्षको गृहपतिः, उदास्थितः प्रव्रज्याप्रत्यवसितः। जनपदान्ते नियोक्तव्यानाह--व्रजेति। व्रजवासिनो गोरक्षकादयः। वने नियोज्यानाह--वन इति। प्रव्रजितक्षपणादयः। वागुरिकादय इति यावत्। आदिपदेन मुण्डतापसादयः। इयं चाराणां हि परम्परा कियद्दूरान्तरितं तया स्थापनीया इत्याह--परेति। शीघ्रा इति। द्रुतगतयः परावस्कन्दाद्यपसरणादिकार्यप्रवृत्तिज्ञानापेक्षितकार्याविरोधेन द्रुतगतिः स्यात्, तथा स्थापनीयेत्यर्थः। तद्देशान्तरम् अष्टगव्यूत्यन्तरितमिति जयमङ्गलायां व्याख्यातं बोध्यम्।

## जयमङ्गला

न केवलं सञ्चारा दुर्गेषु वणिजः संस्था वैदेहकव्यञ्जनाः। दुर्गान्ते दुर्गस्य प्रान्ते। सिद्धतापसा इच्छाविख्यातसिद्धयः[1]। स्वापनविसर्जनाकर्षणो····(औपनिषदिकप्रकरणोक्ताः) (तापस-गोप)स्थव्यञ्जना उदास्थिताश्च राष्ट्रे जनपदे स्युः। जनपदान्ते च। व्रजवासिनो गोरक्षकव्यञ्जनाः। गोपव्यञ्जनस्यास्मादेव विनियोगात् स पाशुपाल्यप्रदिष्टायाम्[2] इत्यादिनोत्पत्तिरवगन्तव्या। अथवोदास्थितविशेषोऽयम्, यतः "स वार्ताकर्म प्रदिष्टायां भूमौ" इत्युक्तम्। वार्ता च कृषिः पाशुपाल्यं वाणिज्यं चेति।

वने वनचरा इति। जनपदमध्येऽन्ते वा वनोद्देशे वनचरास्स्थाप्या वने चरन्तीति। ते च श्रमणाटविकादयः प्रव्रजितक्षपणकप्रकाराः। यान् वक्ष्यति—"तेषामन्तराणि वागुरिकशबरपुलिन्दादयो रक्षेयुः"। (अधि० २, अ० १) इति। परप्रवृत्तिज्ञानार्थमिति। परस्यावस्कन्दापसारणवार्ताज्ञानार्थम्। शीघ्राः शीघ्रगतयः। चारपरम्पराः चराणां परम्पराः, अष्टमात्रगव्यूत्यन्तरिताः। ते हि द्रुतं वार्तां सम्पादयन्ति।

## जयमङ्गलाक्रोडपत्रम्

दुर्गेष्विति। पूर्वाऽध्याये वणिजादिसंस्थानां नियोजनम् उक्तमेव, तासां पुनरुपादानं देशभेदेन तत्तत्संस्थाया नियोजनप्रयोगभेदार्थं बोध्यम्।

वणिग्देशे हि क्रयविक्रयादिपण्यप्राधान्यं भवति, अतस्तद्योग्यत्वात् चरसंस्थानार्थं वणिजां ग्रहणम्।

प्रान्त इति (पृ० ३५६)। दुर्गाद् बहिः सिद्धतापसा इत्यनेनान्वयः। सिद्धतापसान् व्याख्याति--इच्छेति।

ननु दुर्गाद् बहिः सिद्धाः कुतः स्थापिता इति चेत्, गूढयत्यादीनां बहिरेव भृतिदानार्थं परचराप्रवेशार्थञ्च जानीहि। तथा हि—सिद्धसन्निधौ प्रायः सर्वविधा एव गूढप्रणीता आगच्छन्ति। तद्द्वारैव अर्थानां बहिश्चरणोपायोऽपि प्रागुक्तः।

---

अशुद्धम्—१. इच्छाविख्यातसिद्धयः प्रस्वाप; २. भूमौ (इत्यादि)।

## जयमङ्गलाक्रोडपत्रम्

यदि सिद्धा अन्तशत्रुप्रणिहिता अपि अन्तरागत्य तिष्ठन्ति, तर्हि तन्मिषेण शत्रवः स्वकीयं छिद्रस्थानं जानीयुः, तन्मा भवतु इत्येतदर्थं सिद्धानां बहिः संस्थापनम् ।

### सिद्धिख्यातिः

ननु इच्छामात्रेणैव सिद्धिप्रख्यापनं सिद्धैः कथं क्रियते ? इति चेदुच्यते । औदर्योऽग्निः साधितश्चेत् तद्बलाद् यत्किमपि साधयितुं यथाकथञ्चित् परिवर्तयितुं वा शक्यते इत्युक्तं प्राक् तदेवात्र स्मर्तव्यं पुनः स्फुटीक्रियते ।

तत्रादौ औदर्योऽग्निः कीदृश इत्यादि सविस्तरं प्रपञ्च्यते । तथा हि— स्वेप्सितविषयादौ उत्कटेच्छायां सत्यां तद्विषयालाभे मनुष्यः सन्तपति इति स्वानुभवसिद्धम् । अतः अग्निप्रज्वलनं विना तापानुपपत्त्या अग्नेः इच्छायाश्च समानकालीनत्वाद् अग्निः इच्छातो नातिरिच्यत इति सिद्धम् । सोऽयमग्निः शरीरे मूलाधारस्थितः स्वतन्त्रश्च सन् शक्तिरूपतां भजते[1] ।

स एवाग्निः सुषुम्नामार्गेण ऊर्ध्वमुत्तिष्ठन् यदा देहस्यान्त उच्छलति तदा स नादरूपतां लभते[2] । सोऽयं नादो योगिभिरनुभूयते । इतरैस्तु श्रोत्रे पिहिते अनुश्रूयते । यदि नैवं तर्हि मृत्युरेव ध्रुवः । अयं अग्न्यात्मको नादः सृष्ट्यारंभे विराट्पुरुषस्य शरीरे यथा यथा हि परिणमति स्म तथा तथा स एव अग्निः इच्छानुरूपं समस्तं विश्वं ससर्ज[3] ।

सोऽयं नादो वाग्रूपेण स्थितः संसारिषु वैखरीरूपेण परिणतोऽनुभूयते, न तु अन्तःनादरूपेण परिणतः, तथापि योगिभिरनुभूतत्वात् स न अलीको न वा व्यर्थः[4] ।

एवंविधो योगिभिरनुभूयमानो नादः "मध्यमा वाक्" इति उच्यते, तत्र चिदचिन्मिश्रसंस्कारस्य समुद्बोधात् । ततः पूर्वं तु सूक्ष्मसंस्काररूपेण जगत्स्थितिमिती वाक् 'परा' इत्युच्यते ।

---

१. मूलाधारस्थवह्न्यात्मतेजोमध्ये व्यवस्थिता ।
जीवशक्तिः कुण्डलिनी प्राणाकारा च तैजसी ॥
गुणभूतात्मके बीजे कारणार्थसमन्विते ।
सर्वव्याप्ता परा शक्तिः अस्मिन् क्षेत्रज्ञतामियात् ॥

२. सुषुम्ना वर्त्मनैवोर्ध्वं याति व्योमाम्बुजावधि ।
योगिनां नादरूपेण स्वानुभूतिविधायिनी ॥

३. वागेव विश्वा भुवनानि जज्ञे ।
अग्निर्वाग्भूत्वा प्राविशत् जज्ञे दैवीं वाणीम् ॥

४. तदुक्तम्—यत्तमःपरिणामि स्यात् द्रव्यं सा वागुदाहृता ।
ईश्वरस्य च मुक्तानां सा वाग् भवति शोभना ॥

## जयमङ्गलाक्रोडपत्रम्

प्रलये नियतकालपरिपाकानां सर्वप्राणिकर्मणां उपभोगेन प्रक्षयात् लीनसर्वजगत्का माया चेतने ईश्वरे लीयते।

प्रलयश्चायं अपुनःप्रादुर्भावफलकः, नात्यन्तिको नाश उत्तरसर्गानुपपत्तेः। नाऽपि सर्वथा अभानं प्रतिभासमात्रशरीरस्य मिथ्यावस्तुनः अनवभासे तदभावस्यैवोपपत्तेः; किन्तु सुप्तेव तिष्ठति कार्यप्रवृत्यभावात्। स्वप्रतिष्ठेश्वरप्रकाशस्य अत्यन्तनिर्विकल्पकतया तद्बलाद्भासमानापि अभातप्रायैव। ततः अपरिपक्वप्राणिकर्मभिः कालवशात् प्राप्तपरिपाकैः स्वफलप्रदानाय भगवतोऽबुद्धिपूर्विका सृष्टिः मायापुरुषौ प्रादुर्भवतः। ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते। ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते। इदमेव शक्तितत्त्वम्। तस्य बिन्दोः अचिदंशो बीजम्। चिदचिन्मिश्रोंऽशो नादः। चिदंशो बिन्दुः। अचिच्छब्देन शब्दार्थोभयसंस्काररूपा अविद्या उच्यते इत्यादि। शेषं टिप्पण्यां द्रष्टव्यम्[1]।

---

१. अस्माद् बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानं सृष्ट्युपयोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते। एतच्च जगदुपादानमेव। 'रव, परा' आदिशब्दैः व्यवह्रियते।

बिन्दोस्तस्माद् भिद्यमानाद् रवोऽव्यक्तात्मकोऽभवत्।
स एव श्रुतिसंपन्नैः शब्दब्रह्मेति गीयते॥ (पटल १, श्लोक ४३)

इत्युक्तेः। एतत् सर्वगतमपि प्राणिनां मूलाधारे संस्कृतपवनचलनेनाभिव्यज्यते। ज्ञातमर्थं विवक्षोः पुंसः इच्छया जातेन प्रयत्नेन योग एव मूलाधारस्थपवनसंस्कारः, तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्दं परा वाग् उच्यते। तदुक्तं हरिणा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ इति। (वा० प० १)

तदेव नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्तं मनोविषयः पश्यन्तीत्युच्यते। एतद्द्वयं सूक्ष्मतमसूक्ष्मतरमीश्वराधिदैवं योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते। ततो हृदयपर्यन्तमागच्छता तेन वायुना हृदयदेशेऽभिव्यक्तं तत्तदर्थविशेषतत्तच्छब्दविशेषोल्लेखिन्या बुद्ध्या विषयीकृत्य हिरण्यगर्भदैवत्या परश्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा मध्यमा वागित्युच्यते। स्वयं तु कर्णपिधाने सूक्ष्मतरवागभिघातोपांशुशब्दप्रयोगे च श्रूयमाणा सेत्याहुः। एतदवस्थात्रयमपि सूक्ष्मतमसूक्ष्मतरसूक्ष्मप्रणवरूपम्।

सैव चास्यपर्यन्तं आगच्छता तेन वायुना कण्ठदेशं गत्वा मूर्धानमाहत्य परावृत्य तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या विराडधिदैवत्या वैखरी वागित्युच्यते।

प्रणव एव व्यानोदानाभ्यां सह वैखरीरूपं प्रतिपद्यते। अत एव हरिणा व्याकरणस्य त्रिविधा वाग्विषय इत्युक्तम्।

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्॥ इति।

मञ्जूषाग्रन्थस्यास्य स्पष्टीकरणार्थं रत्नप्रभोद्ध्रियते, तथा हि—

अस्मादिति। गुणत्रयात्मकाद् बिन्दोरित्यर्थः। तदुक्तम्—

सच्चिदानन्दविभवात् सकलात् परमेश्वरात्।
आसीच्छक्तिस्ततो नादः नादाद्बिन्दुसमुद्भवः॥
पराशक्तिमयः साक्षात् त्रिधाऽसौ भिद्यते पुनः।
बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः॥
बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः।
समवायः समाख्यातः सर्वागमविशारदैः॥
भिद्यमानात्पराद्बिन्दोः अव्यक्तात्मा ततोऽभवत्।
शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः॥ इति।

समवायः सम्बन्धः क्षोभ्यक्षोभकभावरूपः सृष्टिहेतुः। तत्र पराद्बिन्दोः इत्युक्त्या प्रथमबिन्दोरेव मूलोक्तरूपो नादोऽजायत इति प्रतीयते। तदुक्तम्—

कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा। स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते॥ स बिन्दुर्नादबीजत्वभेदेन च निगद्यते॥ (प्रपञ्चसारे प० १, श्लोक २४)

मूले चिदंशो बिन्दुरित्यनेन नहि तृतीयः प्रकारः कथ्यते; किन्तु नादान्तर्गतचित्पदार्थः प्रदर्श्यते। तस्मान्मूले अस्माद्बिन्दोरित्यस्योक्त एवार्थः। कस्यचिन्मते त्रिधासौ भिद्यते, 'पुनः बिन्दुर्नादो बीजम्' इत्युक्तेः। सूक्ष्माद्बिन्दोः स्थूलबिन्दुरजायत इति। मूले अस्मादित्यस्य द्वितीयबिन्दोरित्यर्थः। एतदिति। तथा च श्रुतिः—"वागेव विश्वा भुवनानि जज्ञे" इति। आदिना शब्दब्रह्मादिपरिग्रहः। रवपरादीति। तदुक्तम्—

स रवः श्रुतिसंपन्नैः शब्दब्रह्मेति कथ्यते॥ (प्रपञ्च० प० १ श्लोक० ४३) इति।

सर्वगतमपीति। एतेन पूर्वोक्तावस्थात्रयस्येश्वरशक्तिरूपत्वेन व्यापकत्वेऽपि तत्तत्स्थानाभिव्यक्तेस्तत्तत्स्थानस्थत्वमप्युच्यत इति सूचितम्। मूलाधार इति। षण्णवत्यङ्गुलो देहायामः। तत्राङ्गुलार्धसहितं सप्तचत्वारिंशदङ्गुलात्मकमध उपरि च परित्यज्यैकाङ्गुलपरिमितं मध्यं मूलाधार इत्युच्यते। तदुक्तम्—

पाय्वन्ताद्द्व्यङ्गुलादूर्ध्वं लिङ्गाच्च द्व्यङ्गुलादधः।
मध्यमेकाङ्गुलं यच्च देहमध्यं प्रचक्षते॥

मूलाधारो मूलप्रकृत्यात्मिका कुण्डलिनी। सा महदादिभिर्वेष्टिता सर्पवत्तिष्ठति। मूलाधारादुत्थितः पवनो नाडीद्वारेण कार्याणि करोति।

इति पातञ्जले स्पष्टम् । तदुक्तम्—

गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ।
अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ॥ [ १।२।१९।१२० संगीत० ]

आधाराद्द्वयङ्गुलादूर्ध्वं मेहनाद्द्वयङ्गुलादधः ।
एकाङ्गुलं देहमयं तप्तजाम्बूनदप्रभम् ॥ [इति सङ्गीत० १।२।१४५] इति ।

मूलाधार एव पवनोऽपि उत्पद्यते । तदुक्तम्—

देहेऽपि मूलाधारे तु समुदेति समीरणः । [प्रपञ्चसारे पट० १ श्लो० ८१] इति ।

अत एव व्यञ्जकत्वमपि तस्य । पवनसंस्कार इति । इच्छया जातेन प्रयत्नेन सह मूलाधारस्थपवनसंबन्ध एव तत्संस्कारः । तदभिव्यक्तं पवनाभिव्यक्तम् । स्वप्रतिष्ठतयेति । एतेनाधारान्तरं नास्तीति सूचितम् । निस्पन्दं क्रियाशून्यम् । पश्यन्त्यां स्पन्दसामान्यम् । मध्यमायान्तु स्पन्दविशेषः । अनादीति आद्यन्तरहितम् । शब्दोपग्राह्यतया शब्दतत्त्वं स्थितिप्रवृत्तिप्रविभागादिशब्देन क्रियते । तच्चाक्षरनिमित्तत्वादक्षरमित्युच्यते । प्रत्यक्चैतन्ये निवेशितस्य परबोधार्थमभिव्यक्तेरर्थभावेन विवर्तते, विवर्तश्च रज्जूरगवदतात्त्विकोऽन्यथाभावः । तत्त्वादप्रच्युतस्य [अपरित्यक्तपूर्वरूपस्य] रूपान्तरप्रकारकप्रतीतिविषयत्वमिति यावत् । एतेन परिणामवादारम्भवादौ निरस्तौ । कारणस्वरूपाविरोधेन च कार्यप्रतिभास इति ब्रह्मणो निर्विकारत्वान्न नित्यत्वहानिः । तदाह—

विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ इति । [ वा० प० १।१ ]

तदेवेति—'रव', 'परा' आदिशब्दवाक्यं शब्दब्रह्मैवेत्यर्थः ।

अभिव्यक्तमिति । नाभिदेश इति शेषः । एतद् द्वयमिति । परारूपं पश्यन्तीरूपञ्च शब्दब्रह्मेत्यर्थः । सूक्ष्मतममिति सूक्ष्मतमा परा सूक्ष्मतरा च पश्यन्तीत्यर्थः । ईश्वराधिदेवमिति–ईश्वर एव अधिष्ठात्री देवताऽनयोरिति भावः । समाधाविति । समाधिश्च –

"सोऽहं ब्रह्म न संसारी, न मत्तोऽन्यत्कदाचन ।
इति विद्यात् स्वमात्मनं स समाधिः प्रकीर्तितः ॥

इत्युक्तरूपः । निर्विकल्पकेति –तत्त्वञ्च चिन्मात्रविषयकत्वम् । ज्ञानविषय इति । पूर्वत्र मनोविषय इतिवज्ज्ञानविषय इति पुंल्लिङ्गपाठः । उपांशुशब्दश्च यथा जले निमग्नस्य । श्रूयमाणेति । अत्र 'स्वरूप' इत्यस्यान्वय इयं मध्यमा वाक् सूक्ष्मा, सूक्ष्मप्रणवरूपा च । सं वेति– मध्यमावागेवेत्यर्थः । परश्रोत्रेणापीति । तदुक्तम्—'वैखरीं श्रुतिगोचरा' इति । विराडिति –अपञ्चीकृतकार्यसमष्टिः । सूक्ष्मशरीरोपहितो हिरण्यगर्भः । पञ्चीकृतभूतकार्यसमष्टिः स्थूलशरीरोपहितो विराट् । एतदुभयविलक्षण ईश्वरः । व्यानोदानाभ्यामिति । तदुक्तम्—

"हानोपादानचेष्टादि, व्यानकर्मेति चोच्यते ।
उदानकर्म तत्प्रोक्तं देहस्योन्नयनादि यत्" ॥ इति ।

तथा—हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः ॥

अन्नप्रवेशनं मूत्राद्युत्सर्गोऽन्नविपाचनम् ।
भाषणादि निमेषादि तद्व्यापाराः क्रमादमी ॥ ( अमर० को० टी०—१।१।६२ ) इति ।

वैखर्या इति । अनेकतीर्थभेदायास्त्रय्या वैखर्याः, मध्यमायाः, पश्यन्त्याश्च वाच एतत् परं पदमित्यद्भुतमित्यर्थः । तीर्थमुपायः प्रकार इति यावत् । प्रकारमेवाह—श्लिष्टेति । श्लिष्टत्वं व्यक्तत्वञ्चेति धर्मद्वयं वर्णांशे प्राप्तं साधुभावत्वमपभ्रष्टत्वञ्च । ध्वनिभेदमाह—दुन्दुभीति । अयम्भावः—वैखरी स्वपरप्रत्यक्षा । मध्यमा पदप्रत्यक्षानुपपत्त्या व्यवहारकारणम् । पश्यन्ती तु व्यवहारातीता योगिनां समाधौ गम्या । परा तु योगिनामप्यगम्या ।

तदुक्तम्—"स्वरूपज्योतिरेवान्तः परावागनपायिनी ॥
तस्यां दृष्टस्वरूपायामधिकारो निवर्तते" । इति ।

ऋग्वेदेऽपि—

"चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ इति ।

अत्र माधवेन ऋग्वेदभाष्ये चत्वारि पदानि इत्यनेन वैखरी, मध्यमा, पश्यन्ती, परारूपाणि दर्शितानि । पतञ्जलिना तु नामाख्यातोपसर्गनिपाताश्चत्वारि इत्युक्तम् । अभियुक्तव्याख्यानादुभयपरकत्वं प्रामाणिकमेव । पतञ्जलिनाऽपि "गुहायाम्" त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते न निमिषन्तीत्यर्थः [महाभा० पस्पशा०] इति व्याख्यानं कुर्वता माधवाभिमतं व्याख्यानमपि मन्यत एवेति गम्यते । नन्दिकेश्वररेणाप्युक्तम्—

"अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ।
आद्यमन्तेन संयोगादहमित्येव जायते ॥
इकारादिहकारान्ता वर्णाः समभवंस्ततः ।
सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत् ॥
ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः परम् ॥
वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः ॥

वृत्तिवृत्तिमतोरत्र भेदलेशो न विद्यते ।
चन्द्रचन्द्रिकयोर्यद्वत्तथा वागर्थयोरपि ॥ इति । [शक्त्याश्रयनिरूपणम्]

## जयमङ्गलाक्रोडपत्रम्

टिप्पण्युद्धृतमञ्जूषावाक्यानुसारेण वाचां परा-पश्यन्ती-मध्यमा-वैखरीभेदेन चातुर्विध्यमुक्तम्। एतासु चतुर्विधासु वाक्षु या परा वाग् भवति, सा उपर्युक्त्यनुसारेण 'प्रकृतिः', 'अम्बिका', 'शक्तिः', 'कुण्डलिनी' इत्यादिपदैस्तत्तच्छास्त्रेषु व्यवह्रियते।

तदुक्तम्— वलयत्रितयाकारः सोमसूर्याग्निमण्डलैः।
वह्नेः शिखा तस्य मध्ये नोपान्तःकेसराकृतिः॥
परा प्रकृतिरेषा स्यात् अम्बिकेत्यपरे विदुः॥

ततश्च मध्यमावस्थायां समुद्भूतेन नादेन चिदचित्संस्कारविशिष्टेन अर्थसंबन्धस्यापि भानात् सैव वाक् अर्थाकारेण परिणता जगद्रूपेण परिणमति। न तु वास्तविकं जगदस्ति। तदिदं मान्त्रिकेष्वपि दरीदृश्यते। तद्यथा मन्त्रपाठमात्रेण स्वेच्छानुसारं समाधिभाग्भिर्निर्विकारे चित्तेऽभिमतोऽर्थः प्रत्यक्षं दृश्य एव। तदिदमाहार्यज्ञानं मन्तव्यम्। अत एव बाधज्ञानसत्त्वेऽपि तत् प्रतियोगिमत्ताज्ञानं न प्रतिबध्नाति। एवंविधस्य ज्ञानस्य विकल्पत्वमुच्यते। तदुक्तम्—

'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति।

एवञ्चायमत्र सिद्धान्तः—सृष्ट्यारम्भे यथा ईश्वरस्य हृदि नादो भवति, तथैव छायेव तत्तदर्थोऽपि स्फुरति। तदिदं नादतत्त्वम् अभीप्सितार्थोपादने समर्थम्। तदनुबन्धी यदा नाद उपासनया संमुखीभवति, तदा सिद्धत्वं भवति। अद्यापि जीवोत्पादने संरक्षणे च तत्कार्यकारित्वयोगात् स अनुमेयोऽपि लौकिकैर्न द्रष्टुं शक्यः। केवलं वैखर्यां परिणतस्य नादस्य श्रवणयोग्यत्वमनुभूयत इति त्वन्यदेतत्। एवञ्च उपर्युक्ते नादे अधिष्ठित उपासको यदेव तत्त्वं ध्यायति नादरूपेण, तदेव तत्त्वं बहिः जगद्रूपेण तेन प्रदर्श्यते आहार्यज्ञानरूपतया।

यद्यपि सामान्यपुरुषाणामिच्छासमये अन्तःस्थितो नाद एव परिणमति; तथापि कार्यावसायित्वं तस्य सदा नाऽस्ति। योगिनां तु इच्छा कार्यावसायिन्येव, तत्र कारणम् ईशेच्छां सङ्कल्परूपामनुसरन् योगी आत्मानं अनुसन्धानोपायत्वेन तन्मयत्वेन समुपयाति। तदेवोक्तम्—

मनसि समधिनि विस्फुरणमनेकधाऽभिधेयस्य।
अक्लिष्टानि पदानि विभान्ति यस्यामसौ शक्तिः॥ इति।

अत एव क्रान्तदर्शी कविः समाधिस्थितः स्वकीयनादोपबृंहितकविताबलेन जगदपि विपरिवर्तयितुं शक्नोतीति काव्यप्रकाशादौ निर्णीते युक्तमेव। तथा चोक्तम्—

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति॥ (का० प्र०)

किञ्च तथैव—अद्य धारा सदाधारा सदालम्बा सरस्वती।
पण्डिताः मण्डिताः सर्वे भोजराजे भुवं गते॥
अद्य धारा निराधारा निरालम्बा सरस्वती।
पण्डिताः खण्डिताः सर्वे भोजराजे दिवं गते॥

## जयमङ्गलाक्रोडपत्रम्

इति कालीदासोक्तमुदाहरणम् अत्र स्मर्तव्यम्। अत इदं सिद्धम् यद् योगी उदर्यमग्निं ध्यानेनोपास्य यादृशशब्दार्थोभयसंस्कारविशिष्टतया मूलाधाराद् ऊर्ध्वंज्वलनरूपेण अनुध्याति तादृशमेव दृश्यमपि विपरिणमते। एतद्ध्यानार्थं कश्चन धारकप्रयत्नोऽपेक्षितो भवति, समाधिलक्षणे तथोक्तत्वात्। तद्यथा "धारकेण प्रयत्नेन धार्यमाणस्य मनसस्तत्त्वबुभुत्साविशिष्टेन आत्मना सह संयोग" इति। स च धारकप्रयत्नः चित्रतुरगन्यायेन वस्तुदर्शनजन्यः अद्भुतरसजनक एव। तथा हि यादृशं वस्तु दृश्यत्वेनापेक्ष्यते तादृशं दर्शनं स्मरणेन चिन्तनेन वा भवति। यतः चिन्तनं तद्विधं दर्शनं चित्रतुरगवद् भवति इति गोकुलनाथोपाध्यायैः उक्तम्। सति च एतस्मिन् चित्रतुरगन्यायेन अद्भुतरसो व्यक्तो भवति। चित्रतुरगन्यायेनाभिव्यक्तस्य काव्यव्यापारस्य नाट्यव्यापारस्य च अद्भुतरससाधनतया तत्र तत्रोक्तत्वात्। समुदिते च अद्भुते ध्यानस्य समाधिरूपस्य समुदयः अनुभावरूपेण प्रकृत्या भवति इति अद्भुतरसो यत्राभिव्यज्यते तथाविधवस्तुनो दर्शनचिन्तनादिप्रयत्नो धारकत्वेन न्यायभाष्यादौ समाधिलक्षणे ऊहितव्यः। अद्भुतस्य समाधिकारणत्वं तदीयस्थायिभावेन विस्मयेन उत्पन्नं भवति, विस्मयस्य लोकोत्तरोत्कर्षवासनारूपत्वात्[1]।

उत्कर्षश्च निर्दुष्टगुणवत्त्वम्। तत्त्वञ्च हितकर्तृता। उञ्चैतत्–"गुणः परोपकर्तृत्वम् हितकर्तृत्वमेव वा" इति। उत्कर्षे लोकोत्तरत्वञ्च कृत्यसाध्यत्वेन लोकैः निर्णीतस्य अर्थस्य तत्साध्यतया प्रदर्शनम्। यद्यपि लोकोत्तरवस्तुनः काव्यव्यापारनाट्यव्यापारान्यतरमहिम्ना दर्शनचिन्तनादिकमकृत्वैव योगं साधयितुं केचन प्रवर्तन्ते। प्रवर्तन्तां कामम्। नहि तत्र साधारणस्य प्रवृत्तिर्हि जायते यतो धारकप्रयत्नमुक्तमुपेक्ष्य योगसाधने श्रमो भवति। चित्रतुरगन्यायेन लोकोत्तरगुणवद्वस्तुनि आत्मानं तादात्म्यीकृत्य चिन्तनादि यदि क्रियते, तर्हि तत्र श्रमो नास्ति। स्थिरे च चिन्तने चिन्तकस्य यथा यथा उत्कण्ठा भवेत्, तथा तथा मूलाधारस्थरसस्य उर्ध्वगामिन्या सुषुम्नानाड्या ऊर्ध्वस्रोतो वहति। तथा सति तत्सान्निध्येन वह्निज्वालायाः कुण्डलिन्या अपि ऊर्ध्वमुच्छलनात् शक्तिरपि लब्धुं शक्या भवति।

सति च ज्ञानरूपायास्तस्याः कुण्डलिन्या ऊर्ध्वमुच्छलने चित्रतुरगन्यायेन काव्यव्यापारनाट्यव्यापारान्यतरमहिम्ना तर्कहर्षादयोऽपि तथाविधधारकप्रयत्नवतः उदीयुरेव। यतः अद्भुतरसव्यभिचारिभावेषु तर्कहर्षादयोऽपि गण्यन्ते। तथा चोक्तम्[2]–

---

१. उक्तञ्चैतद् गोकुलनाथोपाध्यायैः—"लोकोत्तरोत्कर्षवत्तया ज्ञानं विस्मयः, तत्प्रकृतिकोऽद्भुतः। तमुदाहरति चित्रमिति। अत्र वेग आलम्बनम्, तदीया गुणा उद्दीपनम्, स्तुतिवचनेन च विकासादयोऽनुभावाः, धृत्यादयो व्यभिचारिणः। तैः विस्मयः स्वदते।

२. हर्षगर्वस्मृतिमतिश्रमा धृतिमदादपि।
तर्कोऽवबोधश्चिन्ता च रोमाञ्चः स्तम्भवेपथूः॥

## जयमङ्गलाक्रोडपत्रम्

किञ्च, पूर्वोक्तरीत्या यदि ध्यानेन ऊर्ध्वस्रोतोवाहिन्या नाड्या प्राणादिपञ्चस्व-न्यतम उदानवायुः ऊर्ध्वं प्रवहेत्, तर्हि स्मृतिः मतिश्च अवश्यं भवेताम्[1]। उदानकार्य-त्वेन स्मृत्यादीनामुक्तत्वात्। तथा हि—एवंक्रमेण तत्त्वबुभुत्साविशिष्टेन धारकप्रयत्नवता येन महात्मना मतिर्लब्धा, तेन अग्निज्वालाया ऊर्ध्वम् उच्छलनात् नादोऽपि मध्यमा-वैखर्यादिशब्दव्यपदेश्य उपलब्ध एव इति मन्तव्यम्। एतन्नादसमये तत्तन्नाडीषु कम्पोऽपि भवत्येव, विना कम्पं नादासम्भवात्। सोऽयं कम्प बहिर्मुखतया सूर्यकिर-णादिमिश्रणवशाच्च सर्वैः श्रोतुमयोग्योऽपि—
मननशीलैः योगिभिः रात्रौ अनुश्रूयते। इदं यत् नादात्मना परिणम्यमानं योगिनां ज्ञानं तदेव प्रातिभमुच्यते। प्रातिभं न स्मार्तादन्यात्। स्मृत्यनुभवादीनां तत्रोपलब्धेः[2]।

एवंविधं स्मृतितत्त्वं चिन्तासत्त्वे योगिभिः प्रातिभरूपेण यद्विषयकमुपलभ्यते, तत् प्रतिभातं वस्तु यथार्थं भवति। तदेव निर्दिष्टं 'चिन्ताया मुहुरभ्यासादिति' टिप्पण्याम्[3]।

ननु चिन्ताभावः कुतोऽपेक्ष्यते ? इति चेत् चिन्तायां सत्यां ध्यानं विना परिश्रमेण संभवति इति चिन्ताया अपेक्षा वर्तते। किञ्च, शरीरे बलवर्णं वाक्प्रवृत्तिलाभाय उदानवायुः सुषुम्नया नाड्या ऊर्ध्वं यथा प्रवहेत् तथा ध्यानंविस्मयजनकं काव्यनाट्या-न्यतरव्यापारमहिम्ना कर्त्तव्यमिति उपरि निर्दिष्टमस्ति। तदेतत् कथम् ईप्सितं साधयतीत्युच्यते।

पृथ्वीतत्त्वसंबद्धो मधुररसो गुरुभूत उपर्युक्तध्यानमार्गे वैपरीत्येन ऊर्ध्वस्रोतो-वाहिन्या नाड्या यदि प्रवहति, तर्हि स मधुररसो हृत्सम्बद्धः सन् ओजोरूपतां भजते। तथासति ईप्सितं साधयितुं शक्यं भवति। तदुक्तं भावप्रकाशने (टिप्पण्यां द्रष्टव्यम्[4])।

---

१. उरःस्थानमुदानस्य　नासानाभिगलांश्चरेत्।
वाक्प्रवृत्तिप्रयत्नोर्जा　बलवर्णस्मृतिप्रदः　॥ (भावप्रकाशनम्)

२. देशकालोपयुक्तानां　सुखं　दुःखानुषङ्गिणम्।
चिरविस्मृतवस्तूनां　स्मरणं　स्मृतिरुच्यते ॥

३. दौस्थ्याद् निद्राक्षयाद् रात्र्याः प्रहरात् पश्चिमादपि।
चिन्तायाः　मुहुरभ्यासात्　समानश्रुतिदर्शनात् ॥
भवेत्　तदनुभावस्तु　भ्रूसमुन्नयनं　मुहुः।
उद्वाहनं　तु　शिरसः　सदृशस्यावलोकनम् ॥
हर्षश्च शिरसः कम्पः कथितो रसकोविदैः ॥ (१ अधिकारः, भावप्रकाशनम्)

४. दश　जीवनधामानि　शिरोस्नसबन्धनम्।
कण्ठौष्ठहृदयं नाभिः बस्तिः शुक्लो गुदौजसी ॥
दश स्थूलशिरा हृत्स्थास्ताः सर्वाः सर्वतो वपुः।
रसात्मकं वहन्त्योजस्तन्निबद्धं हि चेष्टितम् ॥ (६ अधि०) (यथेप्सितम्)

## जयमङ्गलाक्रोडपत्रम्

दृष्टञ्चैतद् मूलाधारस्थितं हि बीजतत्त्वम् ओजोरूपतामापन्नं सत् मातृपितृसं कात् तदिच्छानुसारेण आदौ भविष्यतो बालकस्य हृदये प्रवहति। तत इच्छानुसारे संपूर्णशरीरं निर्मापयति, तदिदं निगूढं तत्त्वं भारतीयैः पवित्रैः गुरुभक्तैः एकाग्रभूमिकाय स्थितैः जगतां हितं चिन्तापूर्वकं ध्यायद्भिः वीरान् सत्त्वसंपन्नान् बालकान् निर्मा साधितमस्ति इति कामसूत्रप्रत्यभिज्ञादर्शनं तन्त्रसाहित्यप्रत्यक्षशारीरकादिदर्शना स्फुटं भवति।

ननु तत्तद्देशे धारकेण प्रयत्नेन अभीप्सिता मूर्तिः कथं ध्येया ? इति चेत्, पु स्मार्यते। मधुररसप्रधाना मूर्तिः प्राणाधारा तैजसी वह्निज्वालाम्बिकारूपा अधोमुख मातापितृभ्यां प्राप्तम् ओजस्तत्त्वं रसात्मकं भुञ्जाना सत्यपि तमेव रसं वैपरीत्ये ऊर्ध्वदेशं प्रापयति इति प्रागुक्तं तत्र ऊर्ध्वप्रवाहे उदानवायुः सहकारी बोध्यः, तस्ये रससञ्चारणद्वारा वाक्प्रवृत्तिस्मृत्यादिकार्यकरत्वात्। तदर्थं चित्रतुरगन्याये मधुररसप्रधाना मूर्तिः वैपरीत्यमार्गेण हृदि ध्येया। ( मूर्तेः मस्तकमधोभागे मूर्ते अधोभागस्तूपरिभागे इति वैपरीत्यं बोध्यम्। ) तथा च यथा यथा ध्यानमहिम्न चित्रतुरगवद्दृश्यमाना मूर्तिः रसरूपतया स्थिता निर्गलिता उदानवायुसहचारे मधुररसं तत्र तत्र प्रापयति, तथा तथा ध्यातुः माधुर्यस्य आस्वादेन हर्षबलाद् दुःखाभा सुखाभिव्यञ्जकः सञ्जायते। एवंरीत्या दुःखं व्यपगतं भवति। मधुररससंपर्केण तत्तदवयवेषु पूर्वमुद्भूता दोषा दुष्टाः कफादयश्च व्यपगच्छन्ति स्वास्थ्यञ्च लभते अतस्तत्तदवयवेषु मधुररसमयी मूर्तिः चित्रतुरगन्यायेन ध्येया। एतेन पृथ्वीतत्त्वसंबद्धस गुरुभूतस्य मधुररसस्य अधोगतिः स्वाभाविकी शरीरे, अत एव तस्य ऊर्ध्वमुच्छलन भावेन प्रमेहार्बुदसदृशा असाध्या रोगा जायन्ते। तेषामपि निरासः चित्रतुरगन्याये ध्यानबलान् मधुररसस्य देहे ऊर्ध्वस्रोतोऽभिप्रवाणे सति संपद्यते इति स्थितम्। तदि रसमाहात्म्यं तत्रैव द्रष्टव्यम्। वैशेषिकभाष्ये तदीयटीकाविवेचनाद् अपि स्फु भवति। इदं तु अवश्यं ध्येयं यत् शास्त्रविरुद्धाचरणे गुरुभक्त्यभावे च न कथञ्च अभीप्सितसिद्धिर्भवितुमर्हति इति शास्त्रविरुद्धमाचरणं नानुष्ठेयम्। उक्तञ्चैत श्रीमद्भागवतेऽपि सप्तमस्कन्धे तत्रैव व्यक्तम्[1]।

अत्रेदमवधेयम्—योगिनां यद्धि प्रातिभं ज्ञानं तत् स्मृतिव्यभिचारिभावसा चर्यात् स्मार्तमुक्तमस्ति। तस्यार्थः स्मृतिसमशीलमिति। एवंसत्वेऽपि व्याकरण सिद्धान्तानुसारेण तत् शब्दादपि नातिरिच्यते। तथा हि—श्रोतारः पदानि श्रुत्वा तद च वृत्त्या शक्त्या च स्मृत्वा शाब्दयन्ति। तथैव नादमहिम्ना संस्कारोद्बोधेन यो

१. एतत्सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत्।

## जयमङ्गलाक्रोडपत्रम्

योगिनां ज्ञानं भवति, तत्र कारणान्तरकल्पनापेक्षया उभयसाधारण्येन शक्तिविशिष्ट-ज्ञानस्यैव कारणत्वं लाघवान्मन्तव्यम्। तदुक्तं नागोजिभट्टैः मंजूषायाम्, तट्टिप्पण्यां द्रष्टव्यम्[1]।

यद्यपि टिप्पण्युद्धृतमञ्जूषावाक्ये उपवर्णिता शक्तिः ईशसंकेतं बोधयति बोध्यबोधक-भावं पराम्परायातं वा। तथापि योगिनां प्रातिभज्ञानेन उपर्युक्तविधेन, काव्यमपि निर्मीयते यस्मात्, तस्मात् प्रकृते निर्दिष्टशक्तिपदेन संस्कारकल्पिका शक्तिरपि वृत्तिवद् गृह्यते। तदुक्तम्—

मनसि सुसमाधिनि विस्फुरणमनेकधाऽभिधेयस्य।
अक्लिष्टानि च पदानि विभान्ति यस्यामसौ शक्तिः॥ इति।

एवञ्च समाधिना उपवर्णितशक्त्यात्मकेन जायमाना पदार्थोपस्थितिः मञ्जूषोक्त-दिशा स्मृतिरूपैवेति न मन्तव्यम्; अपि तु धीरेव। तज्जन्यश्च बोधः शक्तिविशिष्टज्ञान-जन्यत्वात् शाब्दबोधान्नातिरिच्यते। अत एव शाब्दबोधं प्रति व्यापारत्वेन गृहीतशक्तिधीवद् महावाक्यार्थज्ञानं प्रति व्यापारेषु पदार्थज्ञानमप्यन्तर्भवितुमर्हति। तस्माद् इदं सिद्धं यद् इच्छासहकृतेन नादमहिम्ना योगिनां हृदये अर्थः प्रतिभातो भवति, ईश्वरस्य सृष्टौ तथोपवर्णितत्वाद् इति। एवञ्च यदा जीवः अर्थं प्रत्येति, तदा श्रुतिगोचरतया अश्रुतिगोचरतया वा ऊर्ध्वम् उदानवायुसहकृतस्य मूलाधारस्थस्य अग्नेः ऊर्ध्वमुच्छलनान् नादो भवत्येव वृक्षे सति छायावत्। तस्माद् उत्तमानां चेतसि इच्छाप्रसूताग्नेः ऊर्ध्वज्वलनात्मिका नादानतिरिक्ता ज्वाला स्वानुरूपमर्थं निर्मात्येव। तदेव ध्वनयन्नाह – इच्छाविख्यातसिद्धय इति।

---

१. तत्रागृहीतवृत्तिकस्य शाब्दबोधादर्शनात् 'न हि गुड इत्युक्ते मधुरत्वं प्रकारतया गम्यते' इति समर्थसूत्रभाष्याच्च तद्धर्मावच्छिन्नविषयकशाब्दत्वावच्छिन्नं प्रति तद्धर्मा-वच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः। यद्यपि गुड इत्युक्ते अर्थप्रतीतौ तद्गतं मधुरत्वं गम्यते, तथापि न तच्छब्दजप्रतीतिविषयः; किन्तु मानान्तरजन्यप्रतीतिविषयः। यत्र तु गुडो मधुर इति वाक्यार्थे गुड इत्येकदेशः प्रयुज्यते, तत्रापि मधुराभिन्नो गुड इत्येव बोधो न तु मधुरत्वप्रकारको गुडविशेष्यकः। ध्वनितं चेदम् "अन्नेन व्यञ्जनम्" (२।१।३४) इति सूत्रे भाष्ये।

टी०—विशेषणविशेष्यभावव्यत्यासेन गृहीतशक्तिकस्य पुंसो घटपदाद्घटत्वविशिष्टघट-बोधवारणाय तद्धर्मावच्छिन्नेति। ज्ञाने वृत्तिवैशिष्ट्यं च स्वविषयकोद्बुद्धसंस्कार-सामानाधिकरण्य-स्वाश्रयपदविषयकत्वोभयसम्बन्धेन बोध्यम्। अतो नागृहीतवृत्ति-कस्य बोधः, नापि विस्मृतवृत्तिकस्य, नापि तद्वाचकपदमजानतः, नापि घटपदादाश्रय-त्वेनोपस्थिताकाशस्य, जनकतयोपस्थितचैत्रादेश्च बोधः। संस्काराजनकशक्तिग्रहसत्त्वे तेन शाब्दबोधजनने च न मानम्। संस्कारकल्पिका च वृत्तिस्मृतिरेव शाब्दबुद्धिरेव वेत्यन्यदेतत्।

## जयमङ्गलाक्रोडपत्रम्

सिद्धिः ऐश्वर्यं भूतभौतिकवशित्वमिति यावत्। तदुक्तं न्यायवार्तिकतात्पर्यपरिशुद्धौ तत्रैव द्रष्टव्यम्।

राजविनियुक्तानां चराणां गूढपुरुषाणां संस्थानां तापसानां च लोके सिद्धत्वेन प्रसिद्धिः आवश्यकीति द्योतनार्थं विख्यातेति। तत्ख्यापनञ्च पूर्वाध्याये कृतेन मूलव्याख्यानेन वेदितव्यम्।

राष्ट्रे विनियोक्ष्यमाणान् गूढपुरुषानाह—स्वापन इति। स्वापनादय उदास्थितानां भेदविशेषाः। कर्षकस्तु मूलतो ग्राह्यः। तत्स्वापनप्रकारश्च औपनिषदिकप्रकरणे व्याख्यातः[1]।

उत्कर्षणविसर्जने चाद्भुतसिद्धिप्रदे इति साधकस्तापसविशेषः, तेनापि विश्वास्यताया उत्पादनात्। तथा चोक्तं कर्पूरमञ्जर्याम्। तट्टिप्पण्यां[2] द्रष्टव्यम्।

---

१. यथा स्वपन्त्यजगराः स्वपन्त्यपि च भूखलाः।
तथा स्वपन्तु पुरुषा ये च ग्रामे कूतूहलाः॥
भण्डकानां सहस्रेण रथनेमिशतेन च।
इमं गृहं प्रवेक्ष्यामि तूष्णीमासन्तु भाण्डकाः॥
नमस्कृत्वा मनवे बद्ध्वा शुनकफेलकाः।
ये देवा देवलोकेषु स्वभुजेषु च ब्राह्मणाः॥
अध्ययनपारगाः सिद्धा ये च कैलासतापसाः।
एतेभ्यः सर्वसिद्धेभ्यः कृतं ते स्वापनं महत्॥
अतिगच्छति च मय्यपगच्छन्तु संहताः।
अलिते पलिते मनवे स्वाहा॥ ३५८। इत्यादि (२ अध्याये)

२. ( भैरवानन्दः किञ्चिन्मदमभिनीय पठति )
मन्त्रो न तन्त्रं न च किमपि ध्यानं ज्ञानं च नो किमपि गुरुप्रसादात्।
मद्यं पिबामो महिलां रमयामो मोक्षं च यामः कुलमार्गलग्नाः॥
अपि च—रण्डा चण्डा दीक्षिता धर्मदारा
मद्यं मांसं पीयते खाद्यते च।
भिक्षा भोज्यं चर्मखण्डं च शय्या
कौलो धर्मः कस्य नो भाति रम्यः॥
मुक्तिं भणन्ति हरिब्रह्ममुखादिदेवा
ध्यानेन वेदपठनेन क्रतुक्रियाभिः।
एकेन केवलमुमादयितेन दृष्टो
मोक्षः समः सुरतकेलिसुरारसैर्वा।
हरिब्रह्ममुखाश्च ते आदिदेवाश्चेति विग्रहः। अत्र व्यतिरेकः।
राजा—इदमासनम्। उपविशतु भैरवानन्दः।

भैरवानन्दः—दर्शयामि तमपि शशिनं वसुधावतीर्णं
स्तम्भामि तस्यापि रवे रथं नभोऽर्धे ।
आनयामि यक्षसुरसिद्धगणाङ्गना-
स्तन्नास्ति भूमिवलये मम यन्न साध्यम् ॥

एतेनावमर्शसंध्यङ्गो व्यवसाय उक्तः । तत्रावमर्शलक्षणं दशरूपके—
'क्रोधेनावमृशेद्यत्र व्यसनाद्वापि लोभनात् ।
गर्भनिर्भिन्नबीजार्थः सोऽवमर्श इति स्मृतः ॥' इति ।
व्यवसायलक्षणमपि तत्रैव—'व्यवसायः स्वशक्त्युक्तिः' इति ।
तद्गुण किं क्रियताम् ?
राजा—वयस्य, त्वया कुत्रापि अपूर्वं दृष्टं महिलारत्नम् ।
विदूषकः—दृष्टं तावत् ।
राजा—कथय ।

विदूषकः—अस्त्यत्र दक्षिणापथे वैदर्भं नाम नगरम् । तत्र मयैकं कन्यारत्नं दृष्टम् । तदिहानीयताम् ।

कन्यारत्नमुत्कृष्टा कन्या, 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इत्युक्तत्वात् ।

भैरवानन्दः—आनीयते ।

राजा—अवतार्यतां पूर्णिमाहरिणाङ्को धरणीतले ।

पूर्णिमाचन्द्रवदाह्लादकारी स्त्रीरत्नमानीयतामित्यर्थः । दृष्टान्तालङ्कारः । नायिका कर्पूरमञ्जरी ।

राजा—अहह, आश्चर्यमाश्चर्यम् !
यद्धौताञ्जनशोणलोचनयुगलग्नालकाग्रं मुखं
हस्तालम्बितकेशपल्लवचये दोलायन्ते यद्बिन्दवः ।
यदेकं सिचयस्याञ्चलं निवसितं तत्स्नानकेलिस्थिता
आनीतेयमद्भुतैकजननी योगीश्वरेणामुना ॥

धौताञ्जनमत एव शोणमित्यर्थः । सिचयस्य वस्त्रस्याञ्चलं पल्लवं तन्निवसितं पृथग्भूतम् । स्रवज्जलमित्यर्थः । अत्र स्वभावोक्तिः ।

अपि च—एकेन पाणिनलिनेन निवेशयन्ती
वस्त्राञ्चलं घनस्तनस्थलस्रं समानम् ।
चित्रे लिख्यते न कस्यापि संयच्छन्तौ
अन्येन चङ्क्रमणतश्चलितं कटिवस्त्रम् ॥

एतावता प्रबन्धेन भैरवानन्देन कर्पूरमञ्जर्या आकर्षणं कृतम् । अथ भैरवानन्दकृतम् उक्तसंवादे विसर्जनमुच्यते । १ जवनिकान्तरम्—

## जयमङ्गलाक्रोडपत्रम्

### स्वापनम्

ननु आदौ स्वापनग्रहणं कुतः कृतम् इति चेत्, अपेक्षितायाः सिद्धेः विशेषतया लाभप्रदर्शनार्थम्। कथं तदिति शृङ्गारप्रकाशोक्त्यनुसारेण अत्रानुसन्धीयते। समाधिर्हि "धारकेण प्रयत्नेन धार्यमाणस्य मनसः तत्त्वबुभुत्साविशिष्टेन आत्मना सह संयोगः"। निद्रापि प्राय एतादृश्येव तयोः समाधौ मनसो विलयनं न भवति, निद्रायां तु विलयनं भवति। उभयत्राऽपि चित्तसंतोषाद्यनुभावदर्शनात् साधर्म्यमस्ति। अतः स्वापनमुखेन समाधिः व्यञ्जिता। अत्रोदाहरणं वाल्मीकिचरित्रमस्ति। अयं महर्षिः प्रागूजन्मनि व्याध आसीत्। तदानीं राममन्त्रोच्चारणेऽपि असमर्थः 'मरेति' जपन् एव एकाग्रो निद्रायां स्थित एव रामप्रसादभागभूत्। अत्र एवं क्रमः Hipnotism प्रयोगे आधुनिकैः कृतः अवगन्तव्यः। तद्यथा आदौ गुरुः शिष्यं स्वापयति। बहिर्मुखव्यापारान् निवर्तयति, ततो बहिर्मुखव्यापारान्मुक्तः शिष्यो गुरुदृष्टिवशात् अपेक्षितसंस्कारोद्बोधमहिम्ना स्वप्न इव तान्येव अक्षराणि अर्थांश्च पश्यति। तथैव च जाग्रत्पश्यति वदति च। तद्वत् प्रकृतेऽपि स्वापनप्रयोगेऽपि बोध्यम्। ननु स्वप्ने अन्येऽपि भावा विरोधिनो उत्पतुमर्हन्ति ? यथा रत्यादिः, तर्हि कथमभीप्सितसिद्धिः ? इति चेत्, गुरुभक्तिसहकृतया धृत्या विरोधिभावानुत्पत्तेः।

अथ समाधिनिद्रयोः सन्तोषात्मकसुखानुभावसाधर्म्यप्रदर्शनार्थं निद्राया विभावादयः शृङ्गारप्रकाशोक्तदिशा उद्ध्रियन्ते।

---

देवी—आर्य भैरवानन्द, तत्र प्रसादेन अपूर्वं संविधानकमनुभूतम्। कर्पूरमञ्जरीदर्शनेन। तत्तिष्ठतु तावदेषा पञ्चदशदिवसानि। पश्चाद्ध्यानविमानेन नेष्यथ।

अत्र भैरवानन्देन कौलादिधर्मा उक्ताः। साधननिदर्शने कर्पूरस्तवराजे लिखितस्य—

वदामस्ते किं वा जननिचयमुच्चैर्जडधियो
न धाता नापीशो हरिरपि न ते वेत्ति परमम्॥
तथापि त्वद्भक्तिर्मुखरयति चास्माननमिते
तदेतत् क्षन्तव्यं न खलु पशुरोषः समुचितः॥

इति पद्यस्य कृतायां व्याख्यायां श्रीसदाशिवदीक्षितेन—

पश्वाचारश्च शैवश्च वीरश्च दिव्य एव च।
सिद्धान्तश्च भवेद्भावः कौलश्च भाववर्जितः॥
भावातीते भवेन्मुक्तिर्भावैर्बद्धो भवेन्नरः।
दिव्यो देवस्वरूपश्च सिद्धान्तो देव एव च॥

(कालिकाकल्पे)

तथा मानसरामायणेऽपि दृश्यते—

मुनिवेशछद्मधारिणा शत्रुणा राजा अश्वसहितः रात्रावेव स्वगृहं प्रापितः। इति।

## जयमङ्गलाक्रोडपत्रम्

'निद्राया दौर्बल्यमुदश्रमक्लमालस्यचिन्तात्याहारस्वभावाभ्यासादय आलम्बन-विभावाः। मनःसन्तोषनिश्चिन्ततताविविक्तस्थानलाभानुकूलादय उद्दीपनविभावाः। शिरोवेदनगौरवशरीरलोलनेत्रघूर्णनजृम्भणगात्रमर्दननिःश्वसितोच्छ्वसितस्रस्तगात्रताक्षि-निमीलनसर्वाङ्गक्रियादयोऽनुभावाः। मोहजडताऽपस्मारस्तम्भस्वेदस्वरभेदवेपथुवैवर्ण्या-स्त्रादयो व्यभिचारिणः। इति।

निद्रायां चित्तसंतोषस्य उद्दीपनत्वमत्रोक्तम्। अतः समाधिसाधर्म्यं निद्राया उक्तं भवति।

अपि च यथा समाधौ चिन्तासहकृतेन धारकेण प्रयत्नेन धृते मनसि तद्योगेन बुभुत्सिता अर्थाः प्रत्यक्षीक्रियन्ते तथा चिन्तासहकृतायां निद्रायां निद्रितो मनुष्यो यदा स्वप्नमनुभवति तदा निद्राप्राक्क्षणावच्छेदेन चिन्ताविषयभूतमर्थं पश्यति। इदं यत्स्वप्ने भानं तद् गुरुभक्तानाम् उत्तमप्रकृतीनां यथार्थमेव भवति, यथा हरिश्चन्द्रेण विश्वामित्राय कृतं दानं सत्यम् इति। अनेनापि हेतुना निद्रायाः समाधिसाधर्म्यं नासम्भवि। किञ्च, नाट्यदर्शने नाट्यारोहणव्यापारेण नटव्यापारं दृष्टवतः सामाजिकस्य 'साहंकृतौ हृदि पुनः स्वदते रसोऽसौ' इत्युक्तदिशा रसः स्वदते, तथा समाधौ अपि ध्यानप्रवाहे सञ्जायमाने ध्याताया मूर्तेराध्यातुः साहङ्कृतित्वं भवति। अतो यथा यथा मूर्तौ चित्रतुरगन्यायेन व्यभिचारिभावादयः अनुभूयन्ते, तथा तथा त एव भावा आत्मनो ध्यातुः शरीरेऽपि अहंप्रयुक्ततादात्म्यवशात्संभवन्ति। अयं यो ध्येयायां मूर्तौ अभिमानः स एव योगः। निद्रायामपि अवस्थितः पवित्र आत्मा जीवः अनन्तरवस्थितसूक्ष्म-संस्कारोद्बोधवशाद् यादृशं विषयमधिकृत्य अभिमानवशाद् विकृतिमापद्यते, तादृश्येव विकृतिः रति-क्रोधशोकाद्यन्यतमा तस्य पवित्रात्मनः जीवस्य जाग्रदवस्थायामवश्यं सृष्ट्यारम्भ इव फलाय भवति इति समाधिनिद्रयोः साधर्म्यमवगन्तव्यम्। तदेतन् नानुपन्नम्। ईश्वरस्य तथैव अवस्थानात्। सृष्ट्यारम्भकाले मूलाज्ञाननिद्रायां स्थित ईश्वरः संसारिणामदृष्टवशात् प्रबुद्धेन संस्कारसाचिव्येन सांसारिकबोधाभिमुखेन साभिमानेन मनसा यद्यद् वाञ्छति यथा वा अन्तर्नादस्तस्य भवति तथैव सृष्टेरपि वैषम्यं भवति इति सृष्टिनिरूपणावसरे प्रपञ्चितम्। तदेतद् इन्द्रियाद्युपाधियोगेन साभिमाने मनसि रत्यादयो विकारा उत्पद्यन्ते इति नाट्यनिरू-पणेऽप्युक्तम्। तदेतद् भोजराजेनाऽपि प्रकटीकृतम्। तद्यथा—

"तेभ्यस्तेभ्य आलम्बनविभावेभ्यस्तदाकारपरिणतेन्द्रियबुद्ध्युपाधियोगिनोऽ-भिमानिमनसस्ते ते रतिक्रोधशोकादयो भावाः समुत्पद्यन्ते"। इति।

अत्रत्यानि शृङ्गारप्रकाशस्य वाक्यानि दुरूहानिति टिप्पण्यां तत्र तत्र विशेषार्थ-बोधनाय व्याख्यातानि तत्रैव द्रष्टव्यानि[1]।

---

शृङ्गारप्रकाशवाक्यानि तदर्थश्च

१. (मूलम्) यथेन्दुसन्निधेश्चन्द्रकान्तः स्यन्दते, यथार्कसन्निधेस्सूर्यकान्तः ज्वलति, यथा कर्पूरसन्निधेः स्फटिको विलीयते।

(मूलम्) अथ यथेन्दूदये समुद्रः क्षुभ्यति, यथाऽपथ्यसेवनया व्याधिरभिवर्धते, यथा-नार्यसन्निधेरसाधुः सुतरां दुःखाकरोति, तथा तेभ्यस्तेभ्य उद्दीपनविभावेभ्यस्तत्तदनुभव-संस्कारयोगिनो मनसस्तत्तद्भावाभिवृद्धये ते ते विकारा उपजायन्ते। अयं यथैकस्यापि भूरुहादेः काण्डस्कन्धशाखाविटपादयः प्रकाराः पल्लवपत्रपुष्पफलसम्पदादयो विकारा एकस्याप्यम्भसः प्रवाहावर्तबुद्बुदतरङ्गादयो विवर्ता मुक्ताफेनलवणकरकादयो विपरिणामाः, एकस्यापि ध्वनेस्तारमध्यमन्द्रकुष्टादयो भेदा वर्णपदवाक्यकूजितादयो अवच्छेदाः, एकस्यापि वायोः प्रवहावहपरिवहादयः स्कन्धाः प्राणापानव्यानादयोऽनु-बन्धास्तेभ्यस्तेभ्य उपाधिभ्यो जायन्ते, तथैकस्यापि रतिक्रोधशोकादेस्तेभ्यस्तेभ्य उपाधिभ्यस्ते तेऽनुभावा व्यभिचारिणश्चाभ्यन्तरा बाह्याश्च व्यवस्थासम्भवाभ्या-मुपलभ्यन्ते। तत्राभ्यन्तरा व्यभिचारिषु चिन्तौत्सुक्यावेगवितर्कादयो बाह्याः स्वेदरोमाञ्चाश्रुवैवर्ण्यादयः अनुभावेष्वाभ्यन्तराः स्मरणेच्छाद्वेषप्रयत्ना बाह्या मनोवाग्बुद्धिशरीरारम्भास्त उभयेऽप्यनुक्रियमाणाः सात्त्विकाङ्गिकवाचिकचित्र-सामान्याभिनयव्यपदेशं लभन्ते।

अथ यथेक्षुभ्यो रसः, सर्षपेभ्यस्तैलं धातुभ्यो हिरण्यम् अश्मभ्यो लोहं दध्नो नवनीतं काष्ठतोऽग्निस्तेभ्यस्तेभ्यो यन्त्राग्निमन्थसंयोगेभ्यो निष्पतति, तथा स्वेभ्यः स्वेभ्यो विभावानुभावव्यभिचारिसंयोगेभ्यो रतिक्रोधशोकादिभ्यस्ते ते रसा निष्पद्यन्ते।

अथ यथा लवणरसादयः स्वसंयोगिनो मृद्वीकादीनप्यात्मरूपतां नयन्त उपचीयन्ते तथा रत्यादिजन्मानो रसाः रसादीन् विभावादीनप्यात्मरूपतां नयन्त उपचीयन्ते।

अथ यथा सर्पिर्जतुमधूच्छिष्टादीनां घनतुहिनकरकादीनामाप्यानां त्रपुसीसरज-तादीनां तैजसानामग्निसंयोगाद् द्रवतामद्भिस्सामान्यं भवति तथा विभावानुभाव-व्यभिचारिणां रससंयोगाद्रसता रसेनैव सामान्यं भवति।

अथ यथेक्षुरसेभ्यो मधुनिष्पत्तिर्यथा मधुरादिभ्यः षाण्डवोत्पत्तिर्यथा गुडादिभ्य आसवोत्पत्तिस्तथा तेभ्यस्तेभ्यो रससामान्येभ्यो रसविशेषाभिनिर्वृतिः भवति।

अथ यथैकस्याग्नेर्भौमदिव्यौदर्यादयो जातिभेदा दाहालोकपाकादयोऽर्थक्रिया धूमार्चिरङ्गारादयोऽवस्थाः संदृश्यन्ते, तथैकस्यापि रसस्य भावरसतदाभासादयो जाति-भेदा उत्कंठाभिषङ्गनिर्वृत्यादयोऽर्थक्रियोत्पादाभिवृद्धिस्थैर्यादयोऽवस्थास्समुपलभ्यन्ते।

(टीका) अथ बुद्धिवैशद्यार्थं शृङ्गारप्रकाशीयपद्यानि कतिचन दुर्विज्ञेयत्वाद् व्याख्यायन्ते। तेभ्यस्तेभ्य आलम्बनविभावेभ्यस्तदाकारपरिणतेन्द्रियबुध्युपाधियोगिनोऽ-भिमानिमनस इत्यादिना ग्रन्थेन रत्याद्यवस्थां प्रति मनस इन्द्रियाद्युपाधौ सङ्घातः अभिमान द्रुतिविक्षेपसङ्कोचभेदेन विभिन्नरूपतां प्राप्तः कारणं भवति इति साधितम्। यद्यपि द्रुत्यादीनामत्र कण्ठतया उल्लेखो नाऽस्ति मूले, तथापि मूले वक्ष्य-माणोदहरणात् द्रुत्यात्मकत्वं सिद्धं भवति।

इयं या विचित्रता अनुभूयते, तत्रापि हेतुः आदर्श इव मनसः स्वच्छता ज्ञेया।

आलम्बनेति। तत्त्वञ्च आरुरुक्षोः कस्यचिद् गुरुत्वात् पतनसंभावनार्था तत्प्रतिबन्धकरज्जुस्थानीयं बोध्यम्। अत्रोदाहरणं किरातार्जुनीयम् "अभिमानवतो मनस्विनाम्" इत्यादि पद्यं स्मर्तव्यम्।

उपाधीति। इन्द्रियाद्युपाधित्वञ्च साक्षात्कारव्यञ्जकलौकिकविषयताशालिज्ञानत्वम्। उपर्युक्तायाः स्वच्छताया ज्ञापनाय उदाहरणमाह—यथेन्दुसन्निधेश्चेत्यादि। अत्र भोजराजेन उदाहरणत्रयं प्रायः प्रदर्शितम्।

ज्वलति इति। ज्वलितमिवात्मानम् इत्यादि कामन्दकीयनीतिसारजयमङ्गला-वैशेषिकभाष्याभ्यामुक्तं क्रोधस्वरूपं स्मर्तव्यम्। तदेतत् प्रकृतोदाहरणसिद्धं वस्तुवैलक्षण्यं तदनुबन्धिशब्दैरपि अभिव्यज्यते उत्पाद्यते च काव्यतः। तदुक्तं वैशेषिकभाष्ये न्यायकन्दल्यां बुद्धिनिरूपणावसरे, तत्रैव द्रष्टव्यम्।

स्फटिक इति। एतदुदाहरणेन अपञ्चीकृतपञ्चभूतसमष्ट्यात्मकं मनः शुद्धं बोध्यम्। यथा—

> 'रामो नाम बभूव हुं तदबला सीतेति हुं तो पितुः
> वाचा पञ्चवटीवने निवसतुः तामाहरद् रावणः।
> कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरितां
> सौमित्रे क्व धनुर्धनुरिति प्रोक्ता गिरः पान्तु वः॥

इत्युदाहरणे कृष्णस्य रामसाक्षात्कारोऽभूद् इति ध्वन्यते। साक्षात्कारकाराणाञ्च कृष्णस्य उद्बुद्धः संस्कारो व्यभिचारिभावेन अर्थाभिव्यंजने उद्बुद्धः सन् भवति।

उक्तेषूदाहरणेषु विकासो विलयनं प्रज्वलनं च, भिन्नं भिन्नं प्रयोजनं बोध्यम्। तदेव च 'स्यन्दते ज्वलति विलीयते' इति ग्रन्थेनोक्तम्।

अथ उद्दीपनेन मनसस्तद्भावाभिवृद्धये उद्दीपनविभावानां कर्म बोधयितुं उदाहरणान्याह—अथ यथेत्यादि। यथा गर्भस्थं ओजो बिन्द्वाश्रितं सत् करचरणाद्यवयवदशारहितगर्भे क्रमशः अभिवर्धमानं शरीरभावं प्राप्नोति। यथा वा मूलाज्ञानं अव्यक्ततया स्थितं महदहङ्कारादिषोडशविकारान्ततत्तदवस्थाघटितरूपेण क्रमशः परिणतं व्यक्तं भवत् स्थूलतामापद्यते। तथा अन्तःस्थितोऽपि सूक्ष्मो भाव उद्दीपनैः अभिवर्धमानो बहिरभिव्यज्यता इति उद्दीपनस्य उपयोगो द्रष्टव्यः। तदेव द्रढयति—इन्दूदयेत्यादिना। अत्रापि पूर्ववत् दृष्टान्तत्रयेण विकासविलयनप्रज्वलनानि बोध्यानि।

इन्दूदये आकर्षणबलात् समुद्रः क्षुभ्यति, अभिवर्धते इत्युक्तम्। तदतेद् अभिवर्धनं न बहिःप्रदेशात् समागतजलप्राचुर्यप्रयुक्तमस्ति; अपि तु ऊर्ध्वदेशकिरणेन तत्र स्थितेन जलसमुदायस्य समुन्नयनमेव। एतेन इदं स्पष्टं यत् सर्वेष्वपि पदार्थेषु 'न्यूट्रान, इलेक्ट्रान, प्रोटान' इत्यादिनाम्ना परभावः वैशेषिकभाष्यसिद्धान्तिता वा मण्डलेन परभ्रमन्ति। तत्र कारणं तेषां परस्परम् आकर्षणमेव। यदि कदाचित् कारणान्तरवशात् स्वस्वमण्डलसीम्नो मर्यादामतिक्रम्य दूरं बलात्कारेण ते निक्षिप्येरन्, तर्हि

वेगेन ते उच्छलनशीला भूत्वा मध्ये स्थितेषु पदार्थेषु अभिघातं कुर्वन्तस्तान् पदार्थान् भङ्क्तुं समर्था भवन्तीति तेषामपि नाशस्य संभावितत्वान् महती जनस्य घनस्य भूमेश्च उपहृतिर्भवति इति कार्यकारणभावे आलोचिते अणुविस्फोटो अवगतो भवति।

अनार्येति। अपरत्ववशाद् मनस आकर्षणं भवति। किञ्च, साधुः अनार्यसङ्गतो दुःखी भवति। असाधुसंसर्गात् तत्संसर्गिणः मूर्खता उदेति। अत एव तस्य अपरत्वं भवति। तदनार्ये कर्मणि प्रेरयति। ततो दुःखम् अनुभूयत इति भावः। किञ्च, आर्यपदम् उपायविकल्पे कृतक्षणपरं जयमङ्गलोक्तदिशा अनुसन्धेयम्। तेन अनार्या नीतिविपरीतमाचरन्ति दुःखाकुर्वन्तीति भावः।

अत्रायं निष्कर्षः—उद्दीपनैः कालवेषादिभिः संस्काराणामुद्बोधनं कृत्वा विभवादयो विशेषतः स्मार्यन्ते। इत्युद्दीपनस्य उपयोगित्वं क्लृप्तम्। अथवा यमधिकृत्य संस्कारा विकृतयश्च उत्पन्नास्तमेवाधिकृत्य पुनः संस्कारान् उद्बोधयन्ति इत्यनयोर्विवेकः। तद्यथा—

हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे।
वत्स राम गतोऽसीति सन्तापेनानुमीयते॥ इति।

अथ व्यभिचारिभावाभिव्यक्तिं दर्शयितुमाह—अथ यथैकस्यापि इति। व्यभिचारिभावाश्च मनसो द्रवीभावमुत्पादयन्ति तस्य कार्यप्रकारभेदकार्यभेदादीन् दृष्टान्तमुखेन ज्ञापयन्नाह–भूरुहादेरिति। इन्द्रियादिनानोपाधिभ्यो व्यभिचारिभावसहकृतेभ्यः अनुभावाः कथमिव जायन्त इति दर्शयिष्यन्नाह—काण्डेति। विकारा आच्छादकाः। इदं भूरुहोदाहरणं पृथिवीमाश्रित्य उक्तम्।

अथ जलेन कार्यान्तरमुखेन उदाहरणान्तरमाह—अंभस इति। प्रवाहेति इति। एकस्मिञ्जले विवर्तानाम् अनेकविधानात् प्रवाहादीनामारम्भो भवति इति प्रवाहाद्युत्पत्तिः एकत्र कथमेकसमये अभूदिति शङ्का परास्ता, विवर्तरूपेणोत्पत्तौ बाधकाभावात्। तदेव स्फुटीकर्तुमाह—विवर्ता इति। विवर्ता अपि क्रियाविवर्तान् न अतिरिक्ताः। तद्विपरिणामफलमाह—मुक्तेति। अथ शब्दमाश्रित्य दृष्टान्तान्तरमाह–एकस्यापीति। अवच्छेदा इति। यथा वीणायां तत्र तत्र प्रदेशे अङ्गुलिस्पर्शे सति विभिन्नजातीयाः स्वरास्तत्तद् भागावच्छेदेन ध्वन्यन्ते। तथैव काव्यस्थलेऽपि तत्तदवच्छेदेन व्यभिचारिभावादयो ध्वन्यन्ते, इति ध्वनितम्। अथ वायुमाश्रित्य उदाहरणमाह—वायोरिति। प्रवहेति। पृथिवी सदा स्वधुरि गतिशीला अस्ति इति तस्या विवर्ता वायुप्रवहणे भान्ति इति गोलके तत्तद्देशभूभ्रमणप्रतिबिम्बतया भासमाना वायवः प्रवहादिसंज्ञां भजन्ते। अयमेव वायोः भासमानः क्रियागुणः खरशीतकम्प्यादिभेदेन उपवर्णितो दृश्यते। तत्रेदं बोध्यं यथा वायोः एकस्यैव अवयविनः शरीरे स्थितस्य तत्तद्देशावच्छेदेन प्राणादिसंज्ञाभाक्त्वं भवति, अत एव ऊर्ध्वाधोभेदेन वायोः उत्क्षेपणापक्षेपणादिगतिमत्वं भवति यथा तथैव तत्तन्नाड्यवच्छेदेन शरीरे प्रवाहः अभीप्सितः। यदि तर्हि रसमयीनां तत्तन्मूर्तीनां शरीरे ध्यानं कर्तव्यम्। तेन

तत्तच्छरीरेऽपि ऊर्ध्वाधः स्रोतोमुखेन रसः प्रवाहयितुं शक्यते, स्वास्थ्यञ्च सुलभं भवति। इत्येतद् वायूदाहरणस्य फलं बोध्यम्। अत्र शरीरस्य तत्तन्नाड्यवच्छेदेन स्थितो विवर्ततया भासमानः प्राणापानादिः साङ्ख्यमतेन जीवनयोनियत्नरूप इति तु अन्यदेतत्। अनुबन्धा इति। तत्त्वञ्च यदुद्देश्येन प्रवृत्तेः पश्चान्नियतभावित्वे सति बलवदनिष्टाननुबन्धित्वं तत्त्वं तच्च निकृष्टतमवस्तुतत्त्वमपहाय ईश्वररूपं गुर्वात्मकं वा वस्तु ध्यातव्यम्। तथासति अनुबन्धः अवश्यंभावी। अथ दार्ष्टान्तिके योजयति—तथैकस्यापीति। उपाधिभ्यः प्रागुक्तेन्द्रियाद्युपाधिभ्यः। अनुभावादिति। क्रमवैपरीत्येन अनुभावाद्युपन्यासाः सर्वेषां व्यभिचारिभावादीनामपि अनुभावा भवन्ति इति ज्ञापनार्थम्। व्यभिचारिण इति। इन्द्रियाद्युपाधौ सञ्जातमानसाभिमानप्रयुक्ताः सर्वेऽपि आहृत्य अनुभावव्यभिचारिभावादयः अर्थैक्याद् एकं वाक्यमिव रसात्मकम् एकं तत्त्वम् उल्लासयन्ति। व्यभिचारिभावेषु मध्ये इति शेषः। निर्धारणे सप्तमी। तदर्थश्च जात्यादिविशेषणविशिष्टयद्धर्मविच्छिन्नस्य तादृशविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्वविशिष्टविधेयवत्तया प्रतिपादनं तद्धर्मावच्छिन्नार्थकपदात्षष्ठीसप्तम्याविति। एवमेव अनुभावादिनिर्धारणं व्याख्येयम्। तदेव कार्यान्तरं प्रदर्शयितुमाह—आभ्यन्तरा इति। एतेन "ते द्विविधाः, आत्मनो वा आभ्यन्तरशरीरस्य वा धर्माः" इत्यादि गोकुलनाथोपाध्यायेन उक्तमपि साधुसम्मतं भवति।

ननु इन्द्रियाद्युपाधियोगिनो मनस इति भोजराजेन गोकुलनाथोपाध्यायेन च उक्तं तत्रेदं चिन्त्यते। तथा हि—

मनस अतीन्द्रियत्वात् कथं इन्द्रियाद्युपाधियोग्याभिमानवत्त्वं सम्भवति? इति चेदुच्यते—तत्र मनःपदेन 'मनःसहचरो वायुः' इति किरणावल्याम् उदयनाचार्यैः प्रतिपादनाद् वायुर्बोध्यः। अत एव 'सात्त्विकास्तु आत्मत्वेन अध्यस्तस्य प्राणस्य सूक्ष्मभूतप्रकारात्मिका' इति गोकुलनाथोपाध्यायेनोक्तम्, 'प्राणोऽध्यस्ततयात्मानं देहं प्राणिति सः' इति नृत्याध्याये शार्ङ्गदेवोक्तं च संगच्छते।

अत्राऽयं भावः—प्राणो यया नाड्या प्रवहति सा नाडी रक्तवहेत्युच्यते वायोरतीन्द्रियत्वेऽपि तस्य सञ्चरणं बुद्बुदेन ज्ञायते। यदा हि वायोः इतस्ततस्तत्तन्नाड्यां प्रवहणं भवति, तदा नाड्या निष्पीडने कृते बुद्बुदा निःसरन्ति। आसां नाडीनां प्रत्यक्षत्वात् तदन्तरवर्तितया प्रवहणशीलस्य वायोरपि नियमनं नाडीनियमने सति नासंभवि। ततः प्राणसहचरितं मनोऽपि नियमयितुं शक्यते। आसनादौ चित्रतुरगन्यायेन मूर्तीनां तदन्तरवर्तीनीनां नाडीनां स्वीयानां च ध्यानबलात् प्रत्यक्षं न दुरूहमिति अनुभवसिद्धम्। अतः पूर्वोक्तरीत्या नाडीनिययमनद्वारा अभीप्सिते देशे प्राणस्य गत्यागती स्वायत्तीकृते भवतः। एतेन कुम्भकादौ सिद्धिरपि भवतीति। प्रपञ्चितञ्चैतद् योगसिद्धान्तचन्द्रिकायां नारायणतीर्थस्वामिभिः, तथैव वासुदेवानन्तसरस्वतीभिः स्वजीवनचरित्रे, तत एव तदनुसन्धेयम् इति।

अत्रेदमवश्यं चिन्तनीयम्—हठात् प्रसह्य वायोः नियन्त्रणं तु न कर्तव्यम्, अन्यथा सुप्तोत्थितसिंह इव वायुः आत्मानमेव प्रहरेत्, तत उन्मादादिरोगाक्रान्तिश्च भवेत्। यथा युक्त्या सेवितः सिंहः अनुकूलो भवति तथा युक्त्या सेवितो वायुः योगिनां योगसाधने अनुकूलो भवति इति। तथा च शृङ्गारप्रकाशे मनःपदेन, सङ्गीतरत्नाकरे प्राणपदेन च तद्वहनशीला नाडी बोध्या। तदेतत्सर्वं ध्यानसहकृतया भगवच्चरणारविन्दोपासनया निष्कामकृतया भगवत्कृपासचिवया सिद्ध्यति। अत एव भगवदङ्गेषु यत्र मन्त्रन्यास उक्तः, तस्याऽपि इदमेव फलं यत् तत्र तत्र तेषां तेषां न्यासे कृते चित्रतुरगन्यायेन ध्याते च तत्तदङ्गानां पीडनात् स्वेदो भवति ततश्च आत्मन्यपि स्वेदसङ्क्रान्तिः। ततो दोषनिःसरणम् इति शरीरस्य स्वास्थ्यमनुमन्तव्यम्। तत्समये आत्मनि हर्षो भवति इत्येवंरीत्या उपपत्तिं ज्ञात्वा हर्षपूर्वकस्वास्थ्यलाभाय अभ्यासेन ध्यानबलात् चित्रतुरगन्यायेन पीडनादिकृत्यनन्तरं प्राणवायुस्थैर्यम्, ततो मनःस्थैर्यम् इत्यादि सर्वं यथाक्रमं कारणपरंपरया उपपन्नं भवति। "अभ्यासाद्रमते चित्तम्, अभ्यासेन तु कौन्तेय, वैराग्येण च गृह्यत" इति गीतायामपि उक्तम्, तत्साध्वेव।

आभ्यन्तरादिव्यपदेशानाह—सात्त्विकेति। चित्रेति। सामान्याध्यायेन उक्तमनुसृत्य अभिनीताः सामान्याः। विशेषतया अभिनीताः चित्रा इति सामान्यचित्रयोर्भेदो बोध्यः। रसं विवेचयितुमाह—अर्थेभ्य इति उदाहरणमुखेन। इक्षुभ्य इति। इक्षुदध्नोरुदाहरणम् आह्लादकत्वं माधुर्यं च शृङ्गारे, ततोऽपि विशिष्टं शान्तरसे, इति दर्शयितुं पृथगुक्तम्। यन्त्रेति द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इत्युक्तदिशा यन्त्रयोगाग्निसंयोगमन्थसंयोगेभ्य इति व्याख्येयम्। उदाहरणत्रयेण रतिक्रोधशोकानां स्वरूपं ज्ञापितम्। यथा मन्थारणि-यन्त्रसंयोगभेदेन अग्निवैजात्यं विलक्षणं भवति, तथैव विभावानुभावव्यभिचारिभावभेदो द्रष्टव्यः। रसा इति। ननु तत्र तत्र देशे आत्मनि रसास्वादलाभार्थं मूर्तिरूपं कथं ध्येयमिति चेत्, प्रागुक्तमपि अभ्यर्हितत्वात् पुनरुच्यते। मधुररसप्रधाना हि मूर्तिः प्राणाकारा अम्बिका तेजसी अधोमुखी मातृपितृभ्यां प्राप्तमोजस्तत्त्वं भुञ्जाना शरीरे रसं तद्बहुनाडीतः सुषुम्नामार्गेण ऊर्ध्वदेशे प्रापयति इति ज्ञापितम्। तत्र उदानवायुः सहकारी बोध्यः। तस्यैव रससञ्चारणद्वारा वाक्प्रवृत्तिस्मृत्यादिकार्यकरत्वाद् इत्याद्युक्तम्। अतस्तदुक्तदिशा चित्रतुरगन्यायेन यथा यथा ध्यातव्यमूर्तिदेशे रसतत्त्वमारूढं भवति, तथा तथा स्वशरीरेऽपि रसःशरीरस्य ऊर्ध्वभागे उच्छलति इति विज्ञानसिद्धत्वाद् रसाधिष्ठितेषु तत्तदवयवेषु मधुररसमयी मूर्तिरेव ध्येया। तथा सति माधुर्यस्य आस्वादनेन आत्मनि हर्षो जायते। ततः सुखाभिव्यञ्जको दुःखाभावोऽनुभूयते, अर्थाद् दुखं व्यपगतं भवति। एवं सति स्वास्थ्यं वर्धते इति नीतिमता न कथमपि उपर्युक्तं ध्येयतत्त्वं उपेक्षितुमर्हम्। अन्यथा पृथिवीतत्त्वाधिष्ठितस्य भुक्तान्नविपरिणतस्य मधुररसस्य गुरुत्वाद् अधोगतिस्वाभाव्याच्च वार्धक्ये तदलाभेन प्रमेहार्बुदसदृशा अचिकित्स्यरोगा जायन्ते। तेषां निरासो भुक्तान्नपरिणतस्य मधुररसस्य

उपर्युक्तदिशा ध्यानबलाद् धमनीमुखेन ऊर्ध्वमुच्छलने कृते भवति तदिदं रसमाहात्म्यं वैशेषिकभाष्ये तट्टीकायाञ्च व्यक्तम् । तद्यथा—

भाष्यम्—"रसो रसनग्राह्यः पृथिव्युदकवृत्तिर्जीवनपुष्टिबलारोग्यनिमित्तं रसनसहकारी मधुराम्ललवणतिक्तकटुकषायभेदभिन्नः" इति।

टीका—"जीवनपुष्टिबलारोग्यनिमित्तम् । जीवनं प्राणधारणम् । पुष्टिरवयवोपचयः, बलमुत्साहविशेषः, आरोग्यं रोगाभावः, एषां रसो निमित्तम्"इति । एतच्च सर्वं वैद्यशास्त्रादवगन्तव्यम् । अत्र शास्त्रविरुद्धचरणं तु अपथ्यं मत्वा योगिना सर्वथा हेयम्, अन्यथा फलसिद्धिः कथमपि न स्यात् । रसादीनाम् आत्मसंपदं प्रदर्शयितुमाह—अथेति । मृद्वीकादीति । रसस्य लाभेन सर्वं सिद्धयति इति दर्शयितुम् एतदुक्तम् । रसे द्रवत्वं स्फुटयितुमाह—सर्पिरिति । तदिदं वैशेषिकमतं प्रकाशयति—"सर्पिर्जतुमधूच्छिष्टादीनां कारणेषु परमाणुषु अग्निसंयोगावेगापेक्षात् कर्मोत्पत्तौ तज्जेभ्यो विभागेभ्यो द्रव्यारम्भकसंयोगविनाशात् कार्यद्रव्यनिवृत्तावग्निसंयोगादौष्ण्यापेक्षात् स्वतन्त्रेषु परमाणुषु द्रवत्वमुत्पद्यते'' इति ।

"तेजःसंयोगेन परमाणूनां द्रवत्वं प्रतिबद्धमित्यन्यत्राप्यद्रव्यस्य लवणवह्निसंयोगेन द्रवत्वप्रतिबन्धदर्शनादनुमतम् ।

किञ्चात्र रसात्मकं तत्त्वं द्रवरूपं बोध्यम् । तदुक्तम्—

"तस्यात्मरसनीयतया रसत्वं रत्यादिभूमनि पुनर्वितथा रसोक्तिरिति" । तद्द्रवभेदेनैव जातिभेदार्थभेदक्रियाभेदावस्थाभेदा द्रष्टव्याः । तदनेन रसभावोदयभावसन्ध्यादिपदेन सूक्ष्मतया यथायथं व्यपदेशः । अत्र उदाहरणत्रयेण माधुर्योजःप्रसादा द्रुतिदीप्तिविकासात्मिका बोध्याः । करकादीनामिति । यथा जलगतोष्णतायां प्रसारितायां तदेव जलं करका भवति परं पुनरपि सा जलरूपतामापद्यत एव, तदानीं पुनरपि ३२ त अध उष्णतायामपनीतायां तदेव जलं करकारूपेण स्थिरभावमापद्यते । अत एव जले सांसिद्धिकं द्रवत्वं वर्तते । सीसकादिस्थले तु अग्निसंयोगेन तदीयं चूर्णं द्रवरूपतां गच्छति । इति सीसकस्य नैमित्तिकं द्रवत्वमस्ति, इत्थममुं भेदं प्रलक्ष्य करकानामाप्यत्वं सीसस्य तैजसत्वमुक्तं सूपपन्नं भवति । रसे चित्रत्वं बोधयितुमाह—यथेति । उदाहरणमाह—इक्षुरसेभ्य इति । आसवोत्पत्तिरिति । अनेनोदाहरणेन मादकतापि सामाजिकस्य संभवितुमर्हति । ततो विनाशः स्यादिति ध्वनितम् । रसावान्तरधर्मं निरूपयितुमाह—अथेति । अत्रापि वैशेषिकदृष्टया दृष्टान्तमाह—दाहेति । धूमेति । संस्कारसमये धूमावस्था अङ्गारावस्थायां रसाभासः । अतो रसावस्थायां बोध्यम् । अवस्थया जातिविशेषमाह—जातीति । उत्कण्ठा औत्सुक्यम् । अभिषङ्गः अनुरागः । निर्वृतिः समाप्तिः । एवंरीत्या विभावानुभावादोनामपसारणे तु स्वस्थाने अवस्थानम् । इति सूक्तम् । अत्रेदं तत्त्वम्—कार्यस्य आवश्यकतामनुभूय रससञ्चारः सङ्क्रमितव्यः,

## जयमङ्गलाक्रोडपत्रम्

अत्रायं भावः——यथा कर्पूरसान्निध्यमात्रेण स्फटिकस्य विलयनं भवति तथा इन्द्रियादिसान्निध्येन मनसो विलयनं भवति। एतावता सिद्धं यत् साभिमानस्य या आद्या विकृतिः सा भाव इति। तद्व्यक्तं भावप्रकाशने।

शृङ्गारप्रकाशे तु भावानामुत्पत्तिः साभिमाने मनसि माधुर्योजःप्रसादैः संभवतीत्युक्तं तत् टिप्पण्यां व्यक्तमेव। सरस्वतीकण्ठाभरणे तु 'सत्त्वाविर्भावो विकासः' इत्यादि ग्रन्थेन भावोत्पत्तिः प्रपञ्चिता। सर्वसाधारण्येन अयं निष्कर्षो यत् मनसो धृतिविक्षेपसङ्कोचैः साभिमाने मनसि भावा रत्यादय उदीयन्ति। अन्तःकरणञ्च अपञ्चीकृतपञ्चभूतसमष्टिः। यदा किल तत्र तत्र तन्मनः अहन्त्वेन भाति तदा जगत आरम्भो भवति। मनसः अहन्त्वेन उदाहरणं दक्षिणामूर्तिस्तोत्रम्—

देहं प्राणमपोन्द्रियाण्यचलां बुद्धिञ्च शून्यां विदुः
स्त्रीबालान्धजडोपमास्त्वहमिति भ्रान्ता भृशं वादिनः।
मायाशक्तिविलासकम्पितमहाव्यामोहसंहारिणे
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये॥

स्त्र्यादीनां शून्येऽपि अभिमानो भवतीत्यस्योदाहरणम्।

आहारे विरतिः समस्तविषयग्रामान् निवृत्तिः परा
नासाग्रे नयनं यदेतदपरं यच्चैकतानं मनः।
मौनं चेदं इदं च शून्यमखिलं यद्विश्वमालोकसे
तद्ब्रूयाः सखि योगिनी किमसि भोः किं वा वियोगिन्यसि ?॥ इति।

(सुभाषित)

एवंरीत्या भावस्वरूपं निरूप्य प्रस्तुतमुच्यते। शृङ्गारप्रकाशीये निर्दिष्टे वाक्ये चन्द्रकान्तसूर्यकान्तयोरुदाहरणे माधुर्यं ज्वलनं च ज्ञातं भवति, तथैव रतिक्रोधयोः अभिव्यक्तेः। किञ्च, चित्रतुरगन्यायेन मूर्तिप्रत्यक्षे कृते इन्द्रियादिना मूर्तौ प्रत्यक्षायां सत्याम् उपनयविधया साभिमाने मनस्यपि तत्प्रत्यक्षं संभवितुमर्हति इति यदुक्तम्, तत् प्रत्यक्षं चित्रदर्शनात्मकम्, अथवा ध्यानेनापि कर्तव्यमिति तु सामग्रीवशात् किं कदा ग्राह्यम् इति योगिभिः यथावदभ्यूह्यम्।

ननु इन्द्रियाद्युपाधिना साभिमानस्य मनसः अद्याऽपि सृष्ट्युत्पत्तिः संभवितु-

---

अन्यथा तु सोऽपि कुपथे प्रेरकः स्यादिति भावः। उपलभ्यन्त इति। यथा तन्त्रीस्पर्शे स्वशरीरे विद्युत्संचारो भवति, तथा चित्रादिदर्शने सति विभावानुभावानां तत्त्वाभिनिवेशोत्पादिका धारा यदि साभिमाने मनसि विद्युदिव धृतिभावमनाश्रित्य स्थिरा स्यात्। तर्हि तु नेतृपदे अधिष्ठितानां विदुषां विनाशः स्यात्, अतः सा तत्त्वाभिनिवेशोत्पादिका धारा धृतिभावमाश्रित्य आत्मनि संचारयितव्या तदा तु इयं विनाशहेतुः न भविष्यति इत्यलं शृङ्गारप्रकाशोक्तपङ्क्तिचिन्तनेन।

## जयमङ्गलाक्रोडपत्रम्

मर्हति चेत्, वर्तमानसमये सा कुतो न उपलभ्यते ? इति चेदभिधीयते । मानमदविस्मयाद्यन्यतमप्रतिबन्धकवशात् सृष्टयुत्पत्तिः न संभवति सत्यपि कारणकूटे । अत्रेदं रहस्यम्--विस्मयो लोकोत्तरोत्कर्षवासना इत्यभिधीयते । सत्याञ्च तस्यां ध्येयं वस्तु अवगाहितुं मनो यदा एकाग्रं भवति तदा तद् अभिमानगम्यं भवति । तत्र सा वासना ईशविषयिणी यदा भवेत् तदा तु उचितैव । यतस्तदानीन्तनाभिमानस्य प्रतिबन्धकत्वं न संभवति । अन्यत्र तु ईदृशाभिमानसमानकालीना वासना विस्मयरूपा प्रतिबन्धिका । सा यथा न उदीयात् तथा ईशभक्तैरुपासकैः विद्वद्भिः स्मर्तव्यम् । तत्रेदमुदाहरणम् —

यदि वक्ति गिरां मतिः स्वयं
यदि वाचामधिदेवतापि वा ।
अयमस्मिन् पुरोहयानन-
स्मरणोलङ्घितवाङ्मयाम्बुधिः ॥ इति ।

ननु वस्तुनो ध्यानमात्रेण मनः साभिमानं कथं भवति ? इति चेदत्र साहित्यसिद्धान्तः स्मर्तव्यः । तद्यथा काव्यव्यापारेण व्यञ्जनया सत्त्वोद्रेकेण मनः अपरिमितप्रमातृभावं प्राप्तं सत् तदाकारतया परिणतं भवति । ईदृशो योऽयं परिणामः, स एव अभिमानः । अत एव चित्रतुरगन्यायेन धारकप्रयत्नाख्यं ध्यानं प्राणनिरूपितं स्मर्तव्यम् । अतो नाऽत्र मनसः साभिमानस्य विषये न काचन अनुपपत्तिरिति सर्वमनवदातम् ।

अथ विस्मये विदुषामवस्थानं कथं न भवेद् इति चेत्, विस्मयोत्पादकानां भावानां आलम्बनम् विद्वद्भिः न क्रियताम् इति चिन्त्यम् । विस्मयजनिता भावा विप्रलम्भरोमाञ्चचिन्तावितर्कोत्साहेर्ष्याचौर्याभिग्रहजुगुप्साचपलताऽऽवेगा भवन्ति ।

अत्र प्रमाणं श्रृङ्गारप्रकाशीयं वचनं द्रष्टव्यम् । तट्टिप्पण्यां ज्ञेयम्[1] ।

---

१. तद्यथा —"विप्रलम्भे ग्लानिचिन्तौत्सुक्यावेगविस्मयदैन्यासूयादयो भवन्ति । रोमाञ्चे हासत्रासवितर्कावेगशङ्काऽवहित्थाव्रीडावस्तंभखेदवेपथुस्वरभेदादयो व्यभिचारिणः । चिन्तायां विस्मयविषादनिद्रानिर्वेदग्लानिशङ्काश्रमदैन्यमोहविरतिवैवर्ण्यादयो व्यभिचारिणः । वितर्के निर्वेदग्लानिशङ्काश्रमविषादविस्मयदैन्यचिन्तामोहस्मृतिव्रीडावेगजडतास्तंभस्वेदादयो व्यभिचारिणः । उत्साहे विस्मयव्यामोहविषादाध्यवसाया विषयसादृश्यादय आलंबनविभावाः । ईर्ष्यायां क्रोधोत्साहविस्मयवितर्कदम्भजुगुप्सामोहनिर्वेदासूयामर्षथुवेपथुवैवर्ण्याश्रुस्वेदगद्गदादयो व्यभिचारिणः । चौर्याभिग्रहे क्रोधोत्साहविस्मयजुगुप्सासूयास्मृतिमतिमोहचपलताहर्षामर्षमदावेगवैवर्ण्याश्रुगद्गदादयो व्यभिचारिणः ।

## जयमङ्गलाक्रोडपत्रम्

टिप्पण्यां निर्दिष्टेन एतावता प्रबन्धेनेदं साधितं यद् विस्मयं परित्यज्य विद्वान् यादृशमर्थं चिन्तयन् स्वपिति, स एवार्थः अशेषविषयपरिबृंहितो यथार्थस्तस्य विदुषः प्रबोध-

---

जुगुप्सायां विस्मयभयनिर्वेदग्लानिशङ्कामोहस्मृतिजडतावेगविषादापस्मारमदवेपथुस्वरभेदवैवर्ण्याश्रुमूर्छाप्रलापादयो व्यभिचारिणः। चपलतायां हासक्रोधोत्साहविस्मयजुगुप्साहर्षावेगविषादोग्रतात्रासरोमांचवेपथुस्वेदस्वरभेदादयो व्यभिचारिणः। आवेगे—शोकभयविस्मयशंकाश्रमचिन्तावैवर्ण्याश्रुप्रलयादयो व्यभिचारिणः। इति।

॥ धृत्यभावे अभिमानविस्मयालम्बिनो भावाः ॥

| भावाः | व्यभिचारिभावाः |
|---|---|
| (१) विप्रलम्भे | (१) ग्लानि-चिन्ता-औत्सुक्य-आवेग-विस्मय-दैन्य-असूयेत्यादयः। |
| (२) रोमांचे | (२) हास-त्रास-वितर्क-आवेग-शङ्का-अवहित्था-व्रीडा-अवस्तंभ-स्वेद-वेपथु-स्वरभेदादयः। |
| (३) चिन्तायाम् | (३) विस्मय-विषाद-निद्रा-निर्वेद-ग्लानि-आशंका-श्रम-दैन्य-मोह-स्मृति-वैवर्ण्यादयः। |
| (४) वितर्के | (४) निर्वेद-ग्लानि-शंका-श्रम-विषाद-विस्मय-दैन्य-चिन्ता-मोह-स्मृति-मति-व्रीडा-वेग-जडता-स्तंभ-स्वेदादयः। |
| (५) उत्साहे | (५) विस्मय-व्यामोह-विषाद-अध्यवसाय-विमथ-सादृश्यादयः। |
| (६) ईर्ष्यायाम् | (६) क्रोध-उत्साह-विस्मय-वितर्क-दैन्य-जुगुप्सा-मोह-निर्वेद-असूया-अमर्ष-वेपथु-वैवर्ण्य-अश्रु-स्वेद-गद्गदादयो व्यभिचारिणः। |
| (७) चौर्याभिग्रहे | (७) क्रोध-उत्साह-विस्मय-जुगुप्सा-असूया-स्मृति-मति-मोह-चपलता-हर्ष-अमर्ष-मद-आवेग-वैवर्ण्य-अश्रु-गद्गदाः। |
| (८) जुगुप्सायाम् | (८) विस्मय-भय-निर्वेद-ग्लानि-शंका-मोह-स्मृति-जडता-वेग-विषाद-अपस्मार-मद-वेपथु-स्वरभेद-वैवर्ण्य-अश्रु-मूर्छा-प्रलापादयः। |
| (९) चपलतायाम् | (९) हास-क्रोध-उत्साह-विस्मय-जुगुप्सा-हर्ष-आवेग-विष्मद-उग्रता-त्रास-रोमाञ्च-वेपथु-स्वेद-स्वर-भेदादयः। |
| (१०) आवेगे | (१०) शोक-भय-विस्मय-शङ्का-श्रम-चिन्ता-वैवर्ण्य-अश्रु-प्रलयादयः। |

## जयमङ्गलाक्रोडपत्रम्

वेलायां स्फुरति। पुनः यथार्थत्वात् सिद्धिमपि प्रयच्छति, अतो गुरुभक्तस्य विदुष इष्टस्य मनोरथस्य प्राप्तिरपि नासुलभा। कृत्यसाध्यत्वेन अनुमिते वस्तुनि तत्साध्यत्वम् उक्तरीत्या प्रदर्शितमपि भवति। एवमेव मानादिविषये बोध्यम्। इति सर्वं सुस्थम्।

ननु यत्र कृत्यसाध्यस्थले तत्साध्यत्वं प्रदर्श्यते, तत्रैव विस्मयोऽपि संभवेत्। एवञ्चेत् विस्मयसामग्र्यां वर्तमानायां सत्यां विस्मयाद् आत्मा कथं संरक्ष्य इति चेन् मतिभावाश्रयणेन इति गृहाण। मतिश्च नीतिशास्त्रप्रदर्शितवास्तविकतत्त्वाभिनिवेशे संभवति। तथासति न विस्मयप्रसङ्गः। न च नीतिशास्त्रेण हि लोकसम्मतस्यार्थानुष्ठानस्य संपादनाय नायकेन धृतिरालम्बनीया इत्युच्यते, तत्राऽयं प्रश्नः—सर्वत्र आवेगमुत्पाद्यैव नीतिशास्त्रं स्वकीयं कार्यं साधयितुं समर्थं भवति, इति तत्रैव कुतो न भरः? इति चेत् शास्त्राध्ययनप्रयुक्तमतिभावस्याभावेऽपि आवेगस्य आलम्बने कृते देवतादीनां स्मरणं नाशक्यम्; किन्तु मतिप्रयुक्तं नीतिनिर्धारणं तु न सुशकमत उल्कापातादिप्रियाप्रियश्रवणादिप्रयुक्तावेगमुपेक्ष्य मतिप्रयुक्तेन धृतिसहकारेणैव नीतिनिर्धारणेन नीतिशास्त्रवता नायकेन धृतिरालम्बनीया इत्युक्तम्। यदा हि धृतिमान् योगी धृतिकारणेषु शौर्यज्ञानादिषु गुरुभक्त्यादिषु च अभ्यासाद्रमते तदा तस्य मन एकाग्रं सद् यदभ्यूहति तद् आर्षं भवतीति "श्वो मे भ्राता आगन्ता" इति वैशेषिकभाष्योक्तग्रन्थात् स्मर्तव्यम्। यस्य धृतिभावो नाऽस्ति, तस्य जीवनं भारायितं वृथैव इत्यपि न विस्मर्तव्यम्। तदाहुः—

> षडङ्गादिवेदा मुखे शास्त्रविद्या कवित्वादिपद्यं सुगद्यं करोति।
> गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततः किं ततः किम्॥ इति।

तत्र धृत्यावेगयोः किमपि उपर्युक्तं विशिष्टमन्तरं शृङ्गारप्रकाशे उक्तं टिप्पण्यामुदाहृतं तत एव ज्ञेयम्[1]।

यद्यपि मूले स्वापमात्रकथनेन सर्वसाधारणस्वापसाधर्म्यदर्शनात् किमपि महत्त्वं न भाति। तथापि यस्मिन् स्वापे मनमदसमानाधिकरणाया धृतेरुक्तायाश्च

---

१. "धृतेरष्टैश्वर्यकुलरूपयौवनविद्याबलादयः आलम्बनविभावाः। श्रुतविज्ञानशौचाचारदेवगुरुभक्त्यादय उद्दीपनविभावाः। प्राप्तविषयोपभोगाप्राप्तनुशौचादयोऽनुभावाः। तृप्तिहर्षादयो व्यभिचारिणः।

आवेगस्य विद्युदुल्कानिर्घातचन्द्रसूर्योपरागकेतुदर्शनभ्रमणप्रियाप्रियश्रवणदुस्स्वप्नदुर्निमित्तदर्शनव्यसनाभिघातादयः सालम्बनविभावाः। उक्तविषयकीर्तनानुभवसंप्रधारणादय उद्दीपनविभावाः। सर्वाङ्गस्रस्ततावकुण्ठनाक्षिमर्दनत्वरितगमनाङ्गपीडनप्रधावनच्छन्नाश्रयणधूमाकुलविधूननत्वरितापसर्पणपश्चादवलोकनाभ्युत्थानालिङ्गनभूमिशयनपरिदेवितविलापक्रन्दितदेवतानुस्मरणादयोऽनुभावाः। शोकभयविस्मयशङ्काश्रमचिन्तावैवर्ण्याश्रुप्रलयादयो व्यभिचारिणः"। इति।

## जयमङ्गलाक्रोडपत्रम्

साहचर्यमस्ति तथाविधस्वापे मूलाज्ञाने स्वच्छत्वात् स्फटिकसादृश्याच्च यत्किञ्चिद्-बुभुत्सितं वस्तु तद् भातुमर्हति। यतस्तथैव भूत्वा ईशः सृष्टिमकरोदिति तान्त्रिकैः प्रपञ्चितमुद्धृतमस्ति। इति मूलोक्तस्य अत्रत्यस्वापस्य विशेषो बोध्यः।

न च स्वापे स्थितः पश्यति स्वप्नम् 'अहं निद्रायां स्थितः अपश्यम्' इति प्रयोग-दर्शनात्, तथा च जयमङ्गलाकृता औपनिषद्प्रकरणे उक्तं स्वापं विहाय अत्र स्वापनं कुत उक्तम्? इति शङ्क्यम्। गाढनिद्रावस्थायां सुषुम्नायाः शैथिल्यं भवति। तदा नादो न भवति, न वा श्रूयते इति स्वापनमुक्तम्। ननु धृतेः निद्रायाश्च कथं संबन्ध उपपद्यते इति चेदेवं सत्यां धृतौ मानमदयोरभावस्य निर्विकारत्वस्य च लाभेन ते व्यभिचारिभावास्तृप्तिहर्षादयो निद्रायामप्युद्दीपना भवन्ति इति शृङ्गारप्रकाशे व्यक्तम्। तदाहुः—'धृतेः तृप्तिहर्षादयो व्यभिचारिणः'। निद्राया अपि "दौर्गत्यमुदश्रम-क्लमालस्यचिन्तात्याहारस्वभावाभ्यासादयः आलम्बनविभावाः। मनःसन्तोषनिश्चि-न्तताविविक्तस्थानलाभानुकूलादय उद्दीपनविभावाः। शिरोवेदनगौरवशरीरलोल-ननेत्रघूर्णनगात्रमर्दननिःश्वसितजृंभणोच्छ्वसितग्रस्तगात्रताऽक्षिनिमीलनसर्वाङ्गक्रियादयो विभावाः। मोहजडताऽपस्मारालस्यस्वेदस्वरभेदवेपथुवैवर्ण्यास्रादयो व्यभिचारिणः" इति। अतो धृतेरालम्बने तृप्तिहर्षादीनाम् उद्दीपनविभावानां सान्निध्याद् निद्रा आप-तति इति धृतिनिद्रयोः सम्बन्धो बोध्यः। तत्र निद्रायां तत्प्रयुक्ताः जडतामोहादीनां विरोधिनां व्यभिचारिभावानां निरासाय यथास्थितवस्तुप्रकाशनाय च चिन्ताप्यपेक्ष्यत इत्युक्तम्। सत्याञ्च तस्यां निद्रावस्थां गतः स्वप्नावस्थां यदा प्राप्नोति, तदानीं रत्यादयो व्यभिचारिणः संस्कारोद्बोधका उत्पत्तुमर्हन्ति। तदुक्तं शृङ्गारप्रकाशे—

"स्वप्नस्य निद्रादय आलंबनविभावाः। निद्रादिकारणान्येवोद्दीपनविभावाः, अक्षिनिमीलनस्वप्नादयोऽनुभावाः प्रायेण सर्वे रत्यादयो व्यभिचारिणः" इति।

अत्र श्रुतादिकारणकधृतिभावमहिम्ना उद्बुद्धैः फलेग्राहिभिः तत्तत्संस्कारै-र्मूलाज्ञाने स्थितो यद्यत् पश्यति स्वप्ने तत्तत्सर्वं सत्यं भवति। इत्येवं यथार्थवस्तुप्रदर्श-नार्थं चिन्ता–धृति–स्वप्न–निद्राचतुष्टयं स्वापनशब्देन[१] व्यवहृतं मूलकृता। तदेतदिन्द्रजाले मेस्मेरिजम् इत्यादिप्रयोगे दृष्टम्। तत्राऽयं विशेषः—उपर्युक्तेषु सर्वेष्वपि स्थलेषु यद्यद् अपरोक्षं भाति तत्सर्वं भ्रमात्मकं चेदिन्द्रजालम्। अयमेव इन्द्र-जालस्य विशेषो यद् एकसमयावच्छेदेन तावद् देशव्यवहितवर्तिदर्शकेषु तद्दर्शनाभावः, अत्र सर्वतो दोषश्च युगपदेवास्ताम्। अतः सर्वेऽपि दर्शका एकसमयावच्छेदेन भ्रान्ता भवन्ति। यदि च उपर्युक्तेषु तेष्वेव स्थलेषु अपरोक्षरीत्या भातस्य वस्तुनो याथार्थ्यं स्यात्,

१. अन्तर्देशे विपरीतनाड्या सह संयुक्तं मनो यदा तदा सुषुप्तिरुच्यते। पुरीतद् देशाद् बहिर्देशाभिमुखं यदा मनो भवति तदा निद्रेत्युच्यते। यदा च नान्तरे मनस्तदा स्वप्नो भवति। यदा च पुरीतद् देशाद् बहिर्निर्गच्छति मनस्तदा बोधो भवति। इति सुषुप्तिनिद्राप्रबोधाभेदः।

## जयमङ्गलाक्रोडपत्रम्

तर्हि सर्वमपि दर्शनं प्रमैव। एतत्सर्वं ब्रह्मभाषिताद्यधिकृत्य प्रत्यभिज्ञादर्शने भास्कर्यां प्रतिपादितमस्ति। एवं वासुदेवानन्दसरस्वतीस्वामिभिरपि उक्तं तच्चरित्रे द्रष्टव्यम्।

किञ्च, निद्रायां व्यभिचारिणः सर्वे भवन्तीति शृङ्गारप्रकाशे उक्तत्वाद्[1] इदं सुस्पष्टं यत् स्वापात् पूर्वं पश्चाद्वा उत्कण्ठया यो यादृशमर्थं चिन्तयति स चिन्तयिता पुरुषः स्वापकालेऽपि स्वप्नावस्थायां पश्यति शृणोति च तं चिन्ताविषयीभूतमर्थम्। तस्मात् स्वापकाले तथाविधश्रवणानुकूलः कश्चिन्नादोऽपि वर्तते, अतो यस्य चिन्तालाभो धृतिश्चास्ति स निगूढमपि अर्थं स्वापकाले दृष्ट्वा व्याख्यातुं शक्नोति। तद्व्यक्तं चिन्तामणिग्रन्थे चिन्तादिव्यविलोचनेनेति पद्ये।

अत एव भगवानपि स्वकीयभक्तस्य चिन्तालाभो भवतु इति हेतुना इष्टद्रव्यादि अपहरति। तदुक्तम्—

यस्यानुग्रहमिच्छामि तद् विशो मिथुनोऽस्म्यहम्[2]। इति।

यद्येवं प्रभुर्नानुतिष्ठेत् तर्हि वयं मदेन व्यापृता भवेम इति निर्णीतम्। मदो मोहानन्दसंभेदः, तत्र स्वभावत एव जीवः प्रवर्तते। पुनः अशक्ये अर्थे अयं मनोरथं करोति तत तर्काभावात् फलवैकल्याद् अधः पतति। अतो भगवानेव शरणीकरणीयः, तर्कश्च संपादनीयः, तदैव मतिनिर्धारणं संभवितुमर्हति।

यद्यपि स्वप्नावस्थायां स्वापे वा अन्तर्बाह्यपदार्था न भवन्ति, तथापि व्यभिचारिभावादयः स्वेदादयश्च सात्त्विकाः "आन्तरा" अपि वर्तन्ते। तदेतत् "आन्तराः" इत्यादिग्रन्थेन भोजराजेन प्रागुक्तमत्र स्मर्तव्यम्। स्वप्नावस्थायां व्यभिचारिभावादीनाम् उद्बोधः केवलं व्यञ्जनया सञ्जातबोधमात्रेणैव भवति। तदेतद् गोकुलनाथोपाध्यायेनोक्तं स्मर्तव्यम्।

---

१. तथोक्तं शृङ्गारप्रकाशेऽपि—

"चिन्तायाः परद्रव्यापहारदारिद्र्येष्टजनवियोगादय आलम्बनविभावाः प्रारब्धासिद्धि-समीहितानवाप्तिदेशभ्रमणादय उद्दीपनविभावाः सन्तानध्यानाधोमुखतनुभावादयोऽनुभावाः। शोकभयविस्मयविषादनिद्रानिर्वेदग्लानिशङ्काश्रमदैन्यमोहस्मृतिवैवर्ण्यादयो व्यभिचारिणः" इति।

२ भावप्रकाशनेऽपि—

ऐश्वर्यभ्रंशदारिद्र्यादिष्टद्रव्यापहारतः ।
वितर्कात्मा भवेच्चिन्ता स्मृतेरन्या प्रतीयते ।। इति।

ऐश्वर्यभ्रंशः भावप्रकाशनोक्तः शृङ्गारप्रकाशोक्ते चिन्तालम्बनविभावे परद्रव्यापहारे अन्तर्भावनीयः, दारिद्र्यं हि द्रव्याभावः। इष्टद्रव्यञ्च स्वत्वास्पदं यद् भवति तद्बोध्यम्। ऐश्वर्यभ्रंशपदेन यथेष्टविनियोगयोग्यस्य ऐश्वर्यस्यापहार इत्यर्थो बोध्यः। इत्येवं दारिद्र्यैश्वर्यभ्रंशयोर्भेदो बोध्यः।

## जयमङ्गलाक्रोडपत्रम्

ननु स्वापे उद्बुद्धसंस्कारवशाद् यद् ज्ञायते तज्ज्ञानं प्रत्यक्षं सत्यञ्च भवतीति कुतः ? इति चेत्। तत्र उपपत्तिरुच्यते। ज्ञाधात्वर्थो वेदान्तिमतेन स्वनिरूपिताज्ञानाविषयत्वप्रयोजकचिदभिन्नः साक्षी इति सिद्धान्तितम्। तत्र अभानापादकम् आवरणं निवृत्तं चेत् तत् प्रत्यक्षम्, तत्रैव यदि असत्त्वापादकमावरणं निवर्तेत तर्हि तस्य ज्ञानस्य प्रामाण्ये कानुपपत्तिः ? उभयोरप्यावरणयोः निवारणसामग्री सर्वाऽपि धृतिसम्पन्नस्य सचिन्तस्य मदमानरहितस्य गुरुभक्तस्य एकाग्रभूमिकायां स्थितस्य स्वापे स्वप्नावस्थायां वा वर्तते आवरणनिराकरणाद् इति तदीयज्ञानस्य याथार्थ्ये नानुपपत्तिः, ईश्वरतद्भक्तयोः सङ्कल्पानतिरिक्तत्वात्। तस्माद् एवंविधानां स्वापशीलानां सर्वं सुस्थम्। तत्रायं क्रमः—अन्तःकरणस्य दीप्तिः आन्वीक्षिकीद्वारा साधनीया। ततः भगवत्सेवया द्रुतिः, ततश्च माधुर्यम्, तेनैव जगद्वशीकारः। तत्र भगवत्सेवायां कर्तव्यायां तदीयं चित्रं शास्त्रोक्तं सुलक्षणं ध्येयम्। यथा यथा भगवत्सेवा वर्धते तथा तथा भवगद्भक्तिरपि अप्रत्यूहा संवर्धते। अत्र प्रमाणं भगवद्भक्तिरसायनोक्तं वेदितव्यम्—

> द्रुतस्य भगवद्धर्माद् धारावाहिकतां गता।
> सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥ ३१ ॥ इति।

एतेन चिन्तनसमये मोहोऽपि नियतो भवति सति च तस्मिन् पुनरपि विनाशः संपद्यते। इति प्रत्युक्तम्—

किञ्च, यदा हि तत्तद्देवता आस्वादनार्थं ध्यातव्या भवन्ति। यदा वा तद्द्वारा रसोऽपि शरीरे प्रवाहयितव्यः, तदाणु(तावन्मात्रपरिमितप्रमातृ)तया आत्मानं प्रकल्प्य स मूर्तौ अध्यस्ततया स्थापयितव्यः। तथासति देवतान्तस्स्थितरससंपर्काद् ध्याताऽपि शीतलतामनुभवन् सुखी भवति, रसं स्वदते, स्वस्थश्च भवति। तदुक्तम्—

> योऽन्तःप्रविश्य मम वाचमिमां प्रसक्तां
> संजीवत्यखिलशक्तिधरः स्वधाम्ना।
> अन्यांश्च हस्त-चरण-श्रवणत्वगादीन्
> प्राणान्नमो भगवते पुरुषाय तुभ्यम् ॥ इति। (श्रीमद्भागवते)

आत्मनः अणुरूपत्वं तु 'एषोऽणुरात्मा' इति श्रुतेः 'चैतन्यमणोर्जीवस्य' इति भावप्रकाशनोक्तवचनात्, 'जीवोऽणु'रिति रामानुजमताच्च वेदितव्यम्। यन्मते हि आत्मनो महत्त्वमावेद्यते तन्मतयोः समन्वयः परिमितापरिमितप्रमातृभेदेन विज्ञेयः। एवंरीत्या साधकाः क्रमेण सिद्धा भवन्ति। ते च शून्य-समाधि-स्वप्न-जाग्रदादिभेदेन भिन्ना भवन्ति। एते सर्वेऽपि जीवात्मनोः तादात्म्यस्य संयोगरूपस्य साधका इति ते योगिन उच्यन्ते। समाधिसमयेऽपरिमितप्रमातृभाव उदेति इत्यत एव ते सुखिनः संवृत्ताः, रोमाञ्चमुखेन आत्मस्थितमानन्दम् अनुभावयन्ति। तदाहुः—'आनन्दलक्षणमनाहतनाम्नि देशे' इत्यादि। ( योगसिद्धान्तचन्द्रिका )

## जयमङ्गलाक्रोडपत्रम्

इदं हि उपर्युक्तं तत्त्वमवश्यं जिज्ञासितव्यमनुभवनीयञ्च यतो दुःखभयाघातेन पीडितस्य तत्सुखकरमस्ति। तत्र चिन्ता-धृति-सहकृतो मानमदासमानाधिकरणः स्वापरूपः समाधिरेवोपायत्वेनोक्तः। अत एव शास्त्रेषु तत्र तत्र सलक्षणाया ईशमूर्ते रसमय्यास्तादात्म्यं विभावव्यभिचारिभावादिद्वारा यदि व्यज्यते तर्हि उपासकोऽपि उपास्येन सह तादात्म्यमनुभवन् उभयोर्मध्यवर्तिनं भेदभावं विगलय्य रसमयो भवति। तन्महिम्ना स्वरूपं लभमान ऐश्वर्यसम्पन्नोऽपि भवितुमर्हति इति प्रतिपादितम्। तत्कामुक एतल्लभाय सर्वत्र गुरुभक्तिपुरःसरं शुचित्वादिपालनमुखेन धृतिभावमवलम्ब्य सज्जनतायां स्थातव्यमिति सिद्ध्यति। तदेतद् उक्तं भागवते १० स्कन्धे—

तया कथितमाकर्ण्य मानप्राप्तिं च माधवात्।
अवमानं च दौरात्म्याद् विस्मयं परमं ययुः॥ इति।

आचार्याः प्रश्नोत्तरमालिकायाम् अपि 'ज्ञानमगर्वम्' इत्यादिना वदन्ति—

इत्यलं प्रसक्तानुप्रसक्तचिन्तया।

कर्षकेति। ( पृ० ३५९ ) दुर्गान्ते सिद्धतापसा उक्ताः, कर्षकोदास्थितौ तु राष्ट्रे नियोजनीयौ इति विवेकः।

गोरक्षव्यञ्जना इति। ( पृ० ३५९ )[१] एते च "पशुपालनकर्मप्रदिष्टायां भूमौ कार्यं कुर्युः इति 'कृषिकर्मप्रदिष्टायां भूमौ' इत्यादिमूलोक्तवदनुसन्धेयम्। तदाह—गोपेति। मूले कण्ठतस्तथाऽनुक्तत्वाद् गोपस्य उदास्थे अन्तर्भावं दर्शयन् हेतुमाह—स इति।

वनचरा इति। ( पृ० ३५९ ) 'गृहपतिकभेदा बोध्याः' इति टिप्पणी। श्रवणा इति। मुण्डतापसबौद्धजैनाटविकादयः। एतेन इतरेऽपि चरा यथाधिकारं तत्र तत्र कर्मणि विनियोजयितुं शक्यन्त इति दर्शनार्थं चरपदं बोध्यम्। तेषां स्वरूपं नीतिवाक्यामृताद् द्रष्टव्यम्[२]—

---

प्रमादशोधनम् ( ३५९ पृष्ठे )

| अशुद्धम्— | शुद्धम् |
|---|---|
| १. आकर्षणो-स्थव्यञ्जना (पृ० ३५९) | कर्षकोदास्थितसिद्धतापसगृहस्थव्यञ्जनाः। |

२. चारसमुद्देशे—

कापटिकोदास्थित-गृहपतिक--वैदेहक-तापस-कितव-किराताक्षशालिक--यमपट्टिकाऽहितुण्डिक--शौण्डिक--शौभिक-पाटच्चर--विट-विदूषक-पीठमर्दक-नट-नर्तक-गायक-वादक-वाग्जीवक-गणक-शाकुनिक-भिषगिन्द्रजालिक-नैमित्तिक-सूदा-रालिक-संवाहक-तीक्ष्ण-क्रूर-रसद-जड-मूक-बधिरा-च्छद्मानः स्थायियायिभेदेनापसर्पवर्गः।

परमर्मज्ञः प्रगल्भः छात्रः कापटिकः।

यं कञ्चन समयमास्थाय प्रतिपन्नाचार्याभिषेकः प्रभूतान्तेवासी प्रज्ञातिशय-

## जयमङ्गलाक्रोडपत्रम्

एतेन सूचितं यत् 'यो यद्वस्तु विजानाति तं तत्र विनियोजयेत्' ।
अशेषविषयप्राप्ताविन्द्रियार्थेष्विवेन्द्रियम् ।। ७५, सर्गे ५ ।।

---

युक्तो राजपरिकल्पितवृत्तिः उदास्थितः ।
गृहपतिकवैदेहको ग्रामकूटश्रेष्ठिनो ।
बाह्यव्रतविद्याभ्यां लोकविडम्बनहेतुस्तापसः ।
कितवो द्यूतकारः ।
अल्पाखिलशरीरावयवः किरातः ।
आक्षशालिकः प्रतिगृहं चित्रपटदर्शी ।
यमपट्टिको गलत्रोटिकः ।
अहितुण्डिकः सर्पक्रीडाप्रसरः ।
शौण्डिकः कल्पपालः ।
शौभिकः जपायां काण्डपटावरणेन नानारूपदर्शी ।
पाटच्चरः चरो बन्दिकारो वा ।
व्यसनिनां प्रेषणाजीवो विटः ।
सर्वेषां प्रहसनपात्रं विदूषकः ।
कामशास्त्राचार्यः पीठमर्दकः ।
गीताङ्गप्रावरणेन नृत्यवृत्त्याजीवी नटः ।
नाटकाभिनयरङ्गनर्तकः नर्तकः ।
रूपाजीववृत्त्युपदेष्टा गायकः ।
गीतप्रबन्धगतिविशेषवादकः चतुर्विधातोद्यप्रचारकुशलो वादकः ।
वाग्जीवको वैतालिकः सूतो वा ।
गणकः सङ्ख्याविद् दैवज्ञो वा । शाकुनिकः शकुनवक्ता ।
भिषग् आयुर्वेदविद् वैद्यः शस्त्रकर्मविच्च ।
ऐन्द्रजालिकस्तन्त्रयुक्त्या मनोविस्मयकरः, मायावी च ।
नैमित्तिकः लक्ष्यवेधी दैवज्ञो वा ।
महानसिकः सूदः ।
विचित्रभक्ष्यप्रणेता आरालिकः ।
अङ्गमर्दनकलाकुशलो भारवाहको वा संवाहकः ।
द्रव्यहेतोः कृच्छ्रेण कर्मणा यः जीवितविक्रयी स तीक्ष्णः, असहनो वा ।
सदा बन्धुषु निःस्नेहः क्रूरः ।
रसदो विषप्रयोक्ता ।
लोकव्यवहारानभिज्ञो जडः ।
जिह्वाश्रवणनयनहीना मूकबधिरान्धाः । इति ।

## जयमङ्गलाक्रोडपत्रम्

तदुक्तरीत्या यः चरो यत्कर्म कर्तुमधिकृतस्ततः स न निवर्तनीय इति ।

अष्टमात्रेति । (पृ० ३५९) 'गव्यूतिः स्त्री क्रोषयुगम्' इत्यमरोक्तदिशा षोडश-क्रोषदेशान्तरितेन चराणां परंपराः स्थापयितव्याः । तन्मर्यादया वार्तासंप्रेषणम्, पत्रप्रापणादि तेन नासुलभमिति भावः । पूर्वं हि जङ्घाकरिकाः पत्रवाहकाः अष्ट-गव्यूतिपर्यन्तं गच्छन्ति स्म इति इतिहासदर्शनाद् नेदमसम्भवीति मन्तव्यम्[१] ।

द्रुतमिति ( पृ० ३५९ ) तत्त्वञ्च एतावदेव यो एको जङ्घाकरिकः गोणीं यस्मिन्नेव क्षणे अपरस्मै नेत्रे समर्पयति तस्मिन्नेव क्षणे स अपसरेत् तद्गोणीं गृहीत्वा इति ज्ञापनार्थम् । नन्वेवं चरैरेव परकीयचरा बोद्धव्याश्चेत् राज्ञः सर्वज्ञत्व-प्रसिद्धिः व्याहन्येत इति चेन्न । राज्ञा तथाविधा बोद्धव्या इत्यभिप्रायः । न तु चरैरेव चरा बोद्धव्या इति । अत्रायं भावः—ये साधुत्वस्य दम्भं कुर्वन्ति, तेषां स दम्भः चरादिद्वारा सम्यक्तया ज्ञातश्चेत् तत्तद्पदेषु दाम्भिका अधिकृता न भवेयुः । गुणिनां गुणगौरवं पूजितत्वञ्च भवेद् इति ज्ञापनार्थमयं विकल्पः ।

ननु दम्भः कथं ज्ञेयः ? चरैरेव । तैरेव कथं ज्ञेयः ? इति तदवस्थैव शङ्का जागर्ति । इति चेदुच्यते । दम्भो हि विसंवादकत्वमिति जयमङ्गलायाम् । सोऽव-हित्थायामन्तर्भवति । सा च विक्रियानिह्नवरूपा । तद्व्यक्तं काव्यप्रकाशनिरूपणे ।

"तत्र 'लज्जाद्यैर्विक्रियागुप्ताववहित्थाऽन्यविक्रिया'' इति धनिकः ।

एकविक्रियानिन्ह्नवतात्पर्यकं विक्रियान्तरमित्यर्थः । अवहित्था तु हर्षादेर्लज्जा-

---

१. तथा हि—'मराठे इग्रज' नामकपुस्तके ( पृ० ९४ ) प्रकरण ३, श्रीनृसिंह-चिन्तामणिकेलकरकृते—

"सरकारी टपालाच्या मजली चा टप्पा लहान असल्यामुळें सरकारी डांक लवकर जाई परन्तु खासगी टपालवाले ही वेल पड़त्यास रोजी ३०/३५ मैलांची मजल करीत, व कंकवेला तर दरबारापेक्षां बाजारात च दूरची बातमी आधीं पसरे । कासिदाचा करार पंचविसा रोजी तेथे (काशीस) पाठावे व जवाब पंचविसा रोजीं (पुण्यास) यावे । करार रुपये पंचवीस व रोज शेर अन्न असा पुरावा मिळतो । कलकत्याहून दिल्लीस भर पावसाल्यांत हि पंधरा दिवसांचे आंत डांक जाई । सरकारी टपालवाल्यास नदीवर ताबड़तोब नांव किंवा सांगड हक्कानें मिळे तसेच जंगलांतून वाट असल्यास नजीकचे गांवकामगार त्याला अड्चणीच्या जागे-पुरती सोबत व मशाल ही देत. बंगी डांके पेक्षा हरकारयाची डांक अधिक जलद व हरकायाच्या डांकेपेक्षा काशीद डांक अधिक जलद पोंचे, सरकारी डांकवा ल्याला दरमाहा पगार असे खासगी डांकवाल्यास खेपेपुरते वेतन ठरविण्यांत येई व पत्रे मुक्कामाला पोचती झाली म्हणजे तेथे ते मिळे वाटखर्चापुरती थोड़ी रक्कम अगाऊ मिळे" ॥ इति ॥

## जयमङ्गलाक्रोडपत्रम्

द्याकारगोपनम् इति भोजः। अनुभावपिधानार्थोऽवहित्थं भाव उच्यते" इति निश्शङ्कशङ्करः। इति। सा च शृङ्गारे, हास्ये, रौद्रे च भवति। तथा चोक्तम्—

मदःश्रमोऽवहित्थञ्च हर्षो गर्वः स्मृतिर्धृतिः।
असूयाग्लानिशङ्काश्च वितर्कोऽपत्रपापि च॥

रोमाञ्चवेपथुस्वेदाः शृङ्गारे भोगनामनि।
शङ्का त्रपा चपलता श्रमो ग्लानिरपत्रपा॥

हर्षप्रबोधाऽवहित्थस्वेदाश्रुपुलका अपि। हास्येऽमी—
हर्षावेगोग्रतोन्मादा मदगर्वौ न चापलम्॥

ईर्ष्याऽसूयाश्रमोऽमर्षोऽवहित्थाऽपत्रपाऽपि च।
निश्वास्तम्भरोमाञ्चस्वेदा रौद्रे रसे हिताः॥ इति। (भावप्रकाशने २ अ०)

एतत्त्रिविधरसव्यभिचारिभावान्तर्गता इयमवहित्था उक्तत्रिविधरसस्थायिभावसाहचर्येण ज्ञातुं नाशक्या। यतो रतिहासक्रोधस्थायिभावान् विहाय इतरस्थायिभाववत्सु दम्भो नाऽस्ति। तदिदं 'विफला विश्ववृत्तिर्नो' इति न्यायकुसुमाञ्जलिव्याख्यायां स्पष्टम्[१]—

---

१. विफला विश्ववृत्तिर्नो न दुःखैकफलाऽपि वा।
दृष्टलाभफला वापि विप्रलम्भोऽपि नेदृशः॥ ८॥

यदि हि पूर्वपूर्वभूतपरिणतिपरम्परामात्रमेवोत्तरोत्तरनिबन्धनं न परलोकार्थी कश्चिदिष्टापूर्तयोः प्रवर्तेत। न हि निष्फले दुःखैकफले वा कश्चिदेकोऽपि प्रेक्षापूर्वकारी घटते, प्रागेव जगत्। लाभपूजाख्यात्यर्थमिति चेत्, लाभादय एव किन्निबन्धनाः? न ह्रीयं प्रवृत्तिः स्वरूपत एव तद्धेतुः। यतो वाऽनेन लब्धव्यं यो वैनं पूजयिष्यति। स किमर्थम्? ख्यात्यर्थमनुरागार्थञ्च। जनो दातरि मानयितरि च रज्यते। जनानुरागप्रभवा हि सम्पद् इति चेन् न। नीतिनर्मसचिवेष्वेव तदर्थदानादि व्यवस्थापनात्। त्रैविद्यतपस्विनो धूर्तबका एवेति चेन्न। तेषां दृष्टसंपदं प्रत्यनुपयोगात्। सुखार्थं तथा करोतीति चेन्न। नास्तिकैरपि तथा करणप्रसङ्गात्। सम्भोगवत् लोकव्यवहारसिद्धत्वादफलमपि क्रियते वेदव्यवहारसिद्धत्वात् सन्ध्योपासनवदिति चेत्, गुरुमतमेतन्न तु गुरोर्मतम्। ततो नेदमनवसर एव वक्तुमुचितम्, वृद्धैर्विप्रलब्धत्वाद् बालानामिति चेन्न, वृद्धानामपि प्रवृत्तेः। न च विप्रलंभकाः स्वात्मानमपि विप्रलभन्ते। तेऽपि। वृद्धतरैरित्येवानादिरिति चेत्, न. तर्हि विप्रलप्सुः कश्चिदत्र, यतः प्रतारणशङ्का स्यात्। इदम्प्रथम एव कश्चिदनुष्ठायापि धूर्तः पराननुष्ठापयतीति चेत्, किमसौ सर्वलोकोत्तर एव यः सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्येण तपसा श्रद्धया वा केवलपरवञ्चनकुतूहली यावज्जीवात्मानमवसादयति,

## जयमङ्गलाक्रोडपत्रम्

तद् व्याख्यानेन सिद्धं भवति। विवेकश्रुतसंपत्तिगुरुभक्तितपस्वितैतच्चतुष्टयं सन्तोषश्च यत्र वर्तते, तेषु न दम्भः सर्वथा तदानीं शमस्य प्रादुर्भावाद् इति। तथैवोक्तं भावप्रकाशे—

आस्तिक्यं प्रविभज्य भोजनमनुत्तापश्च तथ्यं वचो
मेधाबुद्धिधृतिक्षमाश्च करुणाज्ञानञ्च निर्दम्भता।
कर्मानिन्दितमस्पृहं च विनयो धर्मः सदैवादराद्
एते सत्त्वगुणान्वितस्य मनसो गीता गुणा ज्ञानिभिः॥

यत्र आस्तिक्यादिभावो नाऽस्ति, तत्र क्रोधादयो रजस्तमोगुण-धर्मादय उत्पद्यन्ते। तत्सत्त्वे कामुकतादि व्यक्तं भवेत्। अतस्तदभावप्रदर्शनार्थम् अवहित्था क्रियते[1]। सा च दंभरूपा भवतीत्युक्तमेव। अतो धूर्तानां सर्वविधोऽपि व्यवहारः स्वामिभक्तास-तथाविधधूर्तद्वारा सन्निरूपकग्रन्थादिद्वारा वा बोध्य इत्यायातम्। वक्ष्यति चैतत् 'तथाचाहु'रित्यादिग्रन्थेन, मूले 'तादृशैरेव तादृशाः' इत्यादिग्रन्थेन च। गणपति-शास्त्रिभिः 'तादृशैरेव तज्जातिभैरेवे'ति उक्तम्। कीदृशो भवति तथाविधानां व्यवहारः? इति तु काव्यमालायां प्रागुदितमेव। तत एव स्मर्तव्यम्। तत्रेदमपि बोध्यम्—

देशाटनं पण्डितमित्रता च वाराङ्गना राजसभाप्रवेशः।
.... .... .... ....एतानि चातुर्यमूलानि मतानि नृणाम्॥ इति।

ननु अवहित्थात्मकव्यभिचारिभावसहचरितः स्थायिभावोऽपि रत्यात्मकः कथं

---

कथञ्चनैकं प्रेक्षाकारिणोऽप्नुविदध्युः? केन वा चिह्नेनायमीदृशस्त्वया लोकोपकारपज्ञेन प्रतारकः? इति निर्णीतः, न ह्येतावता दुःखराशेः प्रतारणसुखं गरीयः। यतः पाखण्ड-मतेष्वप्येवं दृश्यते इति चेन्न, हेतुदर्शनादर्शनाभ्यां विशेषात्। अनादौ चैवंभूतेऽनुष्ठाने प्रतीयमाने प्रकारान्तरमाश्रित्यापि बहुवित्तव्ययायासोपदेशमात्रेण प्रतारणा स्यात्। न त्वनुष्ठानागोचरेण कर्मणा। अन्यथा प्रमाणविरोधमन्तरा पाखण्डित्वासिद्धिरपि न स्याद् इति।

१. तदुक्तं तत्रैव—

क्रोधस्ताडनशीलता च बहुलं दुःखं सुखेच्छाऽधिका
दम्भः कामुकताप्यलीकवचनं चाधीरता दुष्कृतिः।
ऐश्वर्यादभिमानितातिशयिताऽऽनन्दोऽधिकश्चाटनं
प्रख्याता हि रजोगुणेन सहितस्यैते गुणाश्चेतसः॥
नास्तिक्यं सुविषण्णतातिशयिताऽऽलस्यं च दुष्टा मतिः
प्रीतिर्निन्दितशर्मकर्मणि सदा निद्रालुताऽहर्निशम्।
अज्ञानं किल सर्वतोऽपि सततं क्रोधान्धता मूढता
प्रख्याता हि तमोगुणेन सहितस्यैते गुणाश्चेतसः॥ इति।

परस्य चैते बोद्धव्याः तादृशैरेव तादृशाः ।
चारसञ्चारिणस्संस्था गूढाश्चागूढ[1]संज्ञिताः ॥२४॥
अकृत्यान्[2] कृत्यपक्षीयैः दर्शितान्[3] कार्यहेतुभिः ।
परापसर्पज्ञानार्थं मुख्यानन्तेषु वासयेत् ॥२५॥

॥ इति विनयाधिकारिके गूढपुरुषोत्पत्तौ सञ्चारोत्पत्तिः, द्वादशोध्यायः ॥

---

## जयमङ्गलाक्रोडपत्रम्

ज्ञेयः ? इति चेत्, स्थायिसंस्कारैरित्युच्यते । संस्कारत्वञ्च भक्तिरसायनोक्तदिशा अवगन्तव्यम् । तथा चाहुः—

चित्तद्रव्यं हि जतुवत् स्वभावात् कठिनात्मकम् ।
तापकैर्विषयैर्योगे द्रवत्वं प्रतिपद्यते ॥ इति ।

जतुनो हि दहनात्मकतापकयोगमन्तरेण द्रुतिर्न भवति, सौरालोकादियोगे तु शिथिलीभावमात्रं न द्रुतिरिति सर्वसिद्धम्, एवं चित्तस्यापि वक्ष्यमाणकामादिविषया-त्मकतापकसंयोगं विना न द्रवीभावः । विषयमात्रसंयोगपाटवे तु शिथिलीभावमात्रमिति तापकपदोपादानेन सूचितम् । अत्रायं भावः—तापकविषयादियोगेन उत्पन्ना संस्कारा न व्यभिचरन्तीति ।

## श्रीमूला

परस्येति । एते तादृशा उक्तजातीयाः, गूढाश्चागूढसंज्ञिताः छन्नरूपा अपि अच्छन्नचिह्नधारिणः, परस्य शत्रोः, चारसंचारिणः सत्रितीक्ष्णादयः, संस्थाश्च कापटिकोदास्थितप्रभृतयश्च तादृशैरेव तज्जातीयैरेव, बोद्धव्या ज्ञातव्याः ।

अकृत्यानिति । अकृत्यान् मुख्यान् असाध्यान् विरुद्धानपि राष्ट्रमुख्यान्, कृत्यपक्षीयैः कार्यहेतुभिः साध्यपक्षोचितैः कार्यकारणैः, दर्शितान् कृत्यता यथा स्यात्, तथा बोधितान्, कृत्वेत्यर्थम् । परापसर्पज्ञानार्थं शत्रुचारपुरुषज्ञानार्थम् अन्तेषु राष्ट्र-सीमसु वासयेत् ।

॥ इति कौटिलीयार्थशास्त्रव्याख्यायां विनयाधिकारिके प्रथमाधिकारणे द्वादशोऽ-ध्यायः, गूढपुरुषोत्पत्तौ सञ्चारोत्पत्तिः गूढपुरुषप्रणिधिः ॥

---

१. कापटिकोदास्थित-तपस्वि-वैदेहक-गृहपतिकसंज्ञका अगूढसंज्ञका इति ।········ तपस्वि·········गृहपतिकसंज्ञिताः ।

२. अकृत्यानिति । परस्य शत्रोर्बोद्धुं न शक्यते । उक्तं च—

कः समानाभिहारेण छन्नानुभयवेतनान् ।
भृत्यराशौ स्थितान् वेत्ति शङ्के क्षीरकणानिव ॥

तत्परिज्ञानार्थम् उपायान्तरमाह—अकृत्यानित्यादि ।

३. दर्शितानिति । क्रोधलोभभयमानैः कारणभूतैः निरूपितान् । तद्यथा—मन्त्री सेनापत्यादिकान् कृतककृत्यान् कृत्वा मानाधिकारभ्रष्टान् राष्ट्रान् निर्वासयेत् । तेषु च परावसर्पा विश्वसन्ति । ततश्च ते विजिगीषोः सूचयन्त्येवं परावसर्प-ज्ञानार्थे मुख्यानन्ते वासयेदिति ।

## वैदिकसिद्धान्तसंरक्षिणी

"स्वामिना राज्ञा स्वकीयचराणां नियुक्तिः कुत्र कर्तव्या" ? इत्युक्त्वा परेण नियुक्तानां गूढपुरुषाणां विषये कर्तव्यमाह—परस्येति। परस्य = शत्रुप्रभृतेरित्यर्थः। तत्सम्बन्धिनस्तत्स्वामिकाः गूढपुरुषाः, अगूढपुरुषाश्च बोद्धव्या राजपुरुषादिवत्। स्वामिनेति शेषः। "के ते बोद्धव्याः ?" इति वक्ष्यति—तादृशा इत्यादिना।

गूढपुरुषबोधनप्रकारमाह—तादृशैरिति। स्वकीयगूढागूढसजातीयैरित्यर्थः। सञ्चारैः संस्थाभिर्वा तादृशाः प्रागुक्ताः चरसजातोयाः संस्थासजातीयाश्च। बोद्धव्या इत्यनेन सहान्वयः। तथा च परस्य यादृशाः तीक्ष्णादयः सञ्चारा वणिजादयः संस्था वा स्वराज्ये परेण नियुक्ता भ्रमन्तो वर्तन्ते, तेषां परिचयस्तत्तत्सजातीयैरेव कर्तव्यः। तथा चोक्तम्—

'अहिरेव विजानाति अहेः पादान्न संशयः' इति।

तदेव दर्शयन्नाह—चारसञ्चारिण इति। सर्वत्र चरणशीला भवन्तीति चाराः। तान् चारान् याः सञ्चारयन्ति ताः संस्थाः चारसञ्चारिणः। एतेन चाराणां संस्थानाञ्च लक्षणं स्पष्टम्। तासु संस्थासु सञ्चरणशीलाः सत्रितीक्ष्णप्रभृतयः प्रागुक्ताः। संस्थाः कापटिकोदास्थितादिभेदेन प्रागुक्ताः स्मर्तव्याः। गूढाः तीक्ष्णरसादयः।

अगूढसंज्ञिता इति। अत्र जयमङ्गलाकृता अगूढसंज्ञितैरिति पाठः कृतो वर्तते। तथा च स्वगूढपुरुषैः अगूढसंज्ञितैः। अत्राऽयं भावः—यद्यपि परचारसंस्थास्वरूपबोधनार्थं राज्ञा गूढपुरुषा नियुक्ताः, तथापि तेषां सङ्केतः अगूढतया ज्ञापनीय इति मूलकृतामाशयो ज्ञायते॥ २४॥

पुनः विशेषविधानमाह—अकृत्यानिति। अयं भावः—ये स्वभावतः क्रोधलोभभयमानवर्जिताः, ते मन्त्र्यादिभिः कृत्यपक्षीयैः क्रोधलोभादिकमापाद्य स्वामिद्वारा निर्वासिता भवन्ति, तथाविधानकृत्यान् मुख्यान् राष्ट्रान्ते निवासयेत्, येन परापसर्पज्ञानं सुकरं भवेत्। अकृत्यान् मुख्यान् वासयेदित्यन्वयः।

तस्य वासनहेतुभूतदोषस्योत्थापनप्रकारमाह—कृत्यपक्षीयैरिति। कृत्यवर्गप्रभवैरित्यर्थः। तेन सह कार्यहेतुभिरित्यन्वीयते। तथा च छिद्रकथनापसर्पग्रहणादिभिः कार्यैः संश्रुत्यार्थान् विप्रलब्ध इत्यादिभिः पूर्वोक्तैः हेतुभिश्च दर्शितान्[1] दुष्टत्वादिना परिज्ञापितान्, मुख्यानित्यनेनान्वयः।

परापसर्पज्ञानार्थमिति। परेण अप्रकटरूपेण प्रेषितानां पूर्वोक्तानामपसर्पाणां ज्ञानार्थं परिचयार्थम्। मुख्यान् अक्षुद्रान् भद्रानिति यावत्। एतैः परोपजापयोग्या भवन्ति। अन्तेषु जनपदस्य सीमसु। वासयेत् स्थापयेत्। तेन परापसर्पणकुशलाः जनपदान्तस्थितैः संसृज्य अन्तः प्रवेष्टुं नार्हन्ति। जनपदान्ते स्थितानां नियुक्तानामकृत्यानां विश्वासस्थानीयत्वादिति॥ २५॥

॥ इति वैदिकसिद्धान्तसंरक्षिण्यामर्थशास्त्रटीकायां द्वादशोऽध्यायः॥

---

१. बोधितस्वानुकूलमार्गान् कृत्वेति शेषः।

## जयमङ्गला

परस्य वेति। परप्रयुक्ताश्चैते बोद्धव्याः। तादृशैरेव तादृशा इति। समानशीला एव समानशीलान् विन्दन्ति। तथा चाहुः—"सर्पस्येव पदान्यहिः स्वचेष्टितेन जानन्ति, धूर्ता एव हि धूर्तचेष्टितम्" इति। तदेव दर्शयन्नाह—चारसञ्चारिण इति। चारसञ्चारणशीलाः परसंस्थाः स्वचारसञ्चारिभिः स्वसंस्थाभिर्बोद्धव्याः। गूढाश्च परगूढपुरुषास्तीक्ष्णरसादयः। अगूढसंज्ञितैः स्वगूढपुरुषैरगूढसंज्ञितैरिति। ननु च तांश्चारिप्रहितांस्तद्विधैर्विद्यादित्युक्तमेव किमर्थम्? सत्यम्। उभयवेतनाश्रयेणोक्तम्। इह त्वसाधारणं वेतनाश्रयेणोक्तम्॥ २४॥

विशेषविधानार्थमाह—अकृत्यानित्यादि। न स्वभावतः अकृत्यान्; किन्तु कृत्यपक्षीयैः कृत्यवर्गभवैः कार्यैः छिद्रकथनावसर्पग्रहणादिभिः। हेतुभिश्च संश्रुत्यर्थान् विप्रलब्ध इत्यादिभिः। कृत्याकृतिः [1]परं प्रकाशित्वात् (?) परापसर्पज्ञानार्थम्। मुख्यान् अक्षुद्रान्। ते हि परोपजापयोग्याः। अन्ते जनपदस्य। आवासयेत्। परापसर्पणावहितैः संसृज्य न जनपदं प्रविशन्ति। तेषां कृत्यतया विश्वासस्थानोयत्वादिति॥ २५॥

॥ इति कौटलीयार्थशास्त्रव्याख्यायां विनयाधिकारके प्रथमाधिकरणे
गूढपुरुषप्रणिधिर्नाम द्वादशोऽध्यायः॥

## जयमङ्गला-क्रोडपत्रम्

परप्रयुक्ता इति। द्वादशविधे प्रकृतिमण्डले विजिगीषुं विहाय शत्रुमित्रमध्यमोदासीना अत्र परपदेन बोद्धव्याः। तैः सर्वैरपि विजिगीषुराज्ये स्थितानां क्रुद्धलुब्धभीतापमानितानां कृत्यानां बोधनार्थं नियुक्ता ये भवन्ति, ते परप्रयुक्ता एते चरादयः। समानशीलानिति। कर्मणा वेषेण संस्थानेन च एकस्वभावानित्यर्थः।

चरा हि तर्केङ्गितज्ञाः स्मृतिमन्तो मृदवः लघुपरिक्रमा वर्णाश्रमलिङ्गिनो धूर्ताश्च भवन्ति, तेषामिङ्गितमाकारश्च न केनापि अवगन्तुं शक्येते। तेषामवहित्था कर्मणि विद्वत्त्वात्। अवहित्थास्वरूपञ्च अत्रैवाऽध्याये प्रागुक्तं स्मर्तव्यम्। कस्मिंश्चरे अवहित्थाव्यभिचारो भावोऽस्तीति तत्रैव प्रपञ्चितम्। इति हेतोः द्वादशविधमण्डलस्थितराजभिः तथाविधा एव चरा नियुक्ताः। तदेव सूचितं मूलकृताऽपि—'तादृशैरेव तादृशाः' इत्यादिना।

परसंस्था इति। संस्थानमित्यर्थः, देशः चरितञ्चेति यावत्। आभ्यामुपेतास्संस्थाः चरा भवन्ति। तत्र ये मन्त्रिपुरोहितसेनापतिप्रभृतिषु अष्टादशस्थानेषु चरविकल्पप्रकरणे उक्तेषु गूढतया चरन्ति, ते गूढचराः चाराः, 'चारस्तु गूढपुरुषः' इत्यमरवचनात्।

---

1. परप्रकाशित्वात् परं प्रत्यप्रकाशित्वात्।

## जयमङ्गला-क्रोडपत्रम्

यत्र चारा दत्तदायाः कल्पितवृत्त्या तिष्ठन्ति तास्संस्थाः। एताभिः स्वसंस्थाभिः स्वचारैश्च विजिगीषोरन्येषाञ्च दुर्गकोषबलपरापसारभूमिहस्त्यश्वरथपदातिशत्रुपरिच्छेदसुहृद्बन्धुभेदकृत्यपक्षराष्ट्राटव्यन्तपालादीनां यथावत्स्वरूपं बोध्यम् ।

गूढाश्चेति। गूढाः तीक्ष्णप्रव्रजिताभिक्षुरसदप्रकृतयो भवन्ति। अथ च कापटिकोदास्थितगृहपतिर्वैदेहकतापसव्यञ्जनादयोऽपि गूढाः सम्बोध्यन्ते। अगूढेति, अत्र 'अगूढसंज्ञितैरि'ति जयमङ्गलासम्मतः पाठः। तेन तृतीयाविभक्तिप्रतिपादितं करणत्वं स्पष्टं भवति। अत्राऽयं भावः—स्वराज्यात् तत्र तत्र देशे वेतनमादाय परराज्ये शत्रुमित्रादिभिर्बहिः अगूढत्वेन नियोज्य स्थापिता वणिक्–कृषीबल–लिङ्गि–भिक्षुकाऽध्यापका भवन्ति। तत्र सर्वत्रापि विद्याशिल्पादिव्यपदेशेन चाराः प्रविश्य राजराज्यस्थितं सर्वं गूढजातं निवेदयन्ति। इहेति। एते परेण गूढत्वेन नियुक्तत्वाद् एकवेतना भवन्ति इति जयमङ्गलाकृतामाशयः ॥ २४ ॥

अकृत्यानिति। परराज्यात् कृत्यादिभिः संसृज्य तत्र तत्र राजप्रजयोः विघटनार्थं स्वस्वामिनं प्रति पूज्यत्वभावनोत्पादनार्थं तन्मिषेण क्रोधादिच्छिद्रेण स्वस्वामिप्रवेशयोग्यतासिद्ध्यर्थञ्च नियुक्तानां चराणां स्वराज्ये प्रवेशो मा भवत्वित्येतदर्थं राष्ट्रान्ते नियोक्तव्याः कीदृशाश्चरा भवन्तीति विशेषज्ञापनार्थं विधानमिदं बोद्धव्यम् ।

परविषये कृत्याकृत्यपक्षोपग्रहे अध्याये उक्तेषु क्रुद्धादिवर्गेषु ये सर्वथा अप्रविष्टा विश्वास्याश्च त एव राष्ट्रान्ते स्थित्वा परराज्यचरान् स्वराज्ये प्रवेशयितुं कथमपि अवकाशं न दास्यन्तीति ज्ञापयितुं मूलकृता अकृत्यानिति विधीयते । तदेवाह—न स्वभावतः अकृत्यानिति। अर्थाद् ये स्वभावतः अकृत्यास्तानित्यर्थः। यथा हि दुर्गद्वारेषु आप्ता निर्लोभिनः स्वामिभक्ताश्च अवधानपूर्वकं नियोज्यन्ते, तथैव राष्ट्रान्तविषयेऽपि। अन्यथा राज्यस्य रक्षणमसम्भवि इति बोद्धव्यम् ।

उपधाशुद्धिविचारे सर्वथा ये धर्मार्थकामभयोपधासु अनुत्तीर्णाः, त एव पर्यन्ते निवेशनीया इति विधाने अनधिकृतानामकृत्यानां राष्ट्रान्ते नियोजनं कथं भविता ? इत्याह—किन्तु कृत्यपक्षीयैरिति। तदेतदाशङ्क्यैव रावणेन वनवासिनं रामचन्द्रमधिकृत्य शङ्कोत्थापनं कृतम्[1] ।

---

१. रावणः आत्मश्लाघानिरतः रामं भर्त्सयन् सीतां कथयति—

भुञ्जाना मानुषान् भोगान् दिव्यांश्च वरवर्णिनि ।
न स्मरिष्यसि रामस्य मानुषस्य गतायुषः ॥
स्थापयित्वा प्रियं पुत्रं राज्ये दशरथेन यः ।
मन्दवीर्यः सुतो ज्येष्ठस्ततः प्रस्थापितो वनम् ॥
अङ्गुल्या न समो रामो मम युद्धे स मानुषः ।
तव भाग्येन सम्प्राप्तं भजस्व वरवर्णिनि ॥

(वा० रामायणे अरण्यकाण्डे ४८ तमे सर्गे १५-१६,१९)

## जयमङ्गला-क्रोडपत्रम्

यथा भयोपधाविचारावसरे प्रवहणनिमित्तम् एकोऽमात्यः सर्वानमात्यान् आवाहयेत्, तेनोद्वेगेन राजा तानवरुन्ध्यात्। कापटिकश्छात्रः पूर्वावरुद्धस्तेषामर्थमानावक्षिप्तमेकैकममात्यमुपजपेत्। असत्प्रवृत्तोऽयं राजा सहसैनं हत्वाऽन्यं प्रतिपादयामः। सर्वेषामेतद् रोचते, कथं वा तवेति। इत्युक्तरीत्या कृत्यपक्षीयैः 'संश्रुत्यार्थान् विप्रलब्धः' इत्यादिहेतुभिः अकृत्यादीनां स्वामिविरुद्धानि कार्याणि आरोप्य राज्ञा ते सर्वे अकृत्या अन्ते नियोजयितव्याः। तदेवाह—कृत्याकृतिरिति।

| अशुद्धम् | शुद्धम् |
| --- | --- |
| परं प्रकाशित्वात् | परं प्रति प्रकाशित्वात्। |

अथवा उपर्युक्तदिशा अकृत्यास्सन्तोऽपि कृत्यत्वेन ये ख्यापिताः, तान् परराज्ये वासयेत् निर्वासयेत् इत्यपि आशयो बोद्धव्यः। मुद्राराक्षसे अस्य निदर्शनं द्रष्टव्यम्[1]। अनयोः प्रयोजनमाह—परापसर्पज्ञानार्थमिति।

मुख्यानिति। अक्षुद्रानित्यर्थः। अकृत्या अपि सन्तो यदि करुणरौद्रहास्यभयानकबीभत्सरसेषु स्थिता नेयवर्गा भवेयुः, तर्हि ते परापसर्पैः शत्रुचरैः स्वामिभेद्या भवितुमर्हन्ति। तन्मा भवतु इत्येतदर्थं मुख्यानित्युक्तम्।

अत्रेदमवधेयम्—केचित् प्रकरणाधिकरणसमुद्देशम् अर्थशास्त्रात् पृथक्कृत्य तथैव प्रकाश्य च अर्थशास्त्रारम्भो विद्याविभागे आन्वीक्षिकीस्थापनां प्रथमाध्यायत्वेन स्वीकृत्य कृतः। तत्र 'राजवृत्तिः' इति सूत्रन्तु प्रकरणाधिकरणसमुद्देशे न निर्दिशन्ति; अपि तु एतत्प्रकरणपर्यन्ते राजवृत्तिनिरूपणम् इत्युपसंहरन्ति। अपरे पुनः अर्थशास्त्राङ्गत्वेनैव प्रकरणाधिकरणसमुद्देशं स्वीकृत्य तं प्रथमाध्यायत्वेन आमनन्ति। आदौ च राजवृत्तिः इति सूत्रमुल्लिखन्ति। अत्रेदमालोच्यते—

---

१. (नेपथ्ये तत उत्सारणा क्रियते।)
चाणक्यः—शार्ङ्गरव ! शार्ङ्गरव ! ज्ञायताम्, किमेतत् ?
शिष्यः - यथाऽऽज्ञापयति उपाध्यायः (इति निष्क्रम्य पुनः प्रविश्य)
उपाध्याय ! एष राज्ञश्चन्द्रगुप्तस्याज्ञया राजापथ्यकारी क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्वास्यते।
चाणक्यः—अहह ! क्षपणक ! अथवा अनुभवतु राजापथ्यकारित्वस्य फलम्। भोः श्रेष्ठिन् ! चन्दनदास ! एवमपथ्यकारिषु तीक्ष्णदण्डो राजा। तद् क्रियतां पथ्यं सुहृद्वचः। समर्प्यतां राक्षसस्य गृहजनः। अनुभूयतां चिरं विचित्रफलो राजप्रासादः। (मु० रा० प्र० अङ्क, पृ० ३२)

## जयमङ्गला-क्रोडपत्रम्

केचिन्मते ऐतिहासिकी दृष्टिः स्वीकृता। तद्रीत्या सम्पूर्णमर्थशास्त्रं समाख्याय अनन्तरं तत्रस्थान् सर्वान् विषयानालोच्य मूलकृता प्रकरणाधिकरणसमुद्देशः पृथक्तया उपन्यस्त इति। अयं समुद्देशः शास्त्रारम्भे नास्तीति; परन्तु केचिन्मते राजवृत्तिरिति सूत्रं समुद्देशग्रन्थे निर्देशग्रन्थे च नोपलभ्यते। जयमङ्गलाकृता तु राजवृत्तिग्रन्थे आदौ उद्धृतम्। व्याख्यातञ्चैतत् क्रोडपत्रेऽपि।

अपरमते तु मीमांसादृष्टिः स्वीकृता इति भाति। तद्रीत्या भगवान् आचार्यः कौटल्यः 'विवेकश्रुतिसम्पत्तिगुरुभक्तितपस्वितासम्पन्नः दिव्यां दृष्टिमालोच्य सर्वमर्थशास्त्रं बुद्धिस्थं कृत्वा प्रकरणाधिसमुद्देशं निरूपितवान्' इति स्वीकारे अयं प्रकरणाधिकरणसमुद्देशः अर्थशास्त्राङ्गत्वेन स्वीकृत इति हेतोः जयमङ्गलाकृत्परम्परायामयं द्वादशोऽध्यायः। केचन मते तु अयमेकादशोऽध्याय इति स्मर्तव्यम्।

॥ इति जयमङ्गलाक्रोडपत्रे द्वादशोऽध्यायः ॥



SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 130 ]

# KAUṬALĪYAMARTHAŚĀSTRAM

OF

ĀCĀRYA VIṢṆUGUPTA

[ VOLUME TWO, PART ONE ]

With Four Commentaries

## 'ŚRĪMŪLĀ'

BY

T. GAṆAPATI ŚĀSTRĪ

## 'CĀṆAKYAṬĪKĀ'

BY

ŚRĪ BHIKṢUPRABHAMATI

## 'PRATIPADAPAÑCIKĀ'

BY

ŚRĪ MADBHAṬṬASVĀMĪ

&

## 'NĪTINIRṆĪTI'

BY

ŚRĪ YOGGHAMĀCĀRYA

EDITED BY

ŚRĪ VIŚVANĀTHA ŚĀSTRĪ DĀTĀRA

Ex. Head of Department,

Prācīnarājaśāstrārthaśāstra-Department

Sampurnanand Sanskrit University

Varanasi






VARANASI

1991

**Research Publication Supervisor—**
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.

[ **Published under the Rare Texts Publication Scheme of Sarasvati Bhavana Library with financial assistance provided by University Grants Commission.** ]

**Published by—**
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit University
Varanasi–221 002.

Available at—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi–221 002.

First Edition, 1000 Copies
Price Rs. 160·00

**Printed by—**
**VIJAYA PRESS,**
Sarasauli, Varanasi.

सरस्वतीभवन-ग्रन्थमाला

[ १३० ]

आचार्यविष्णुगुप्तविरचितं

# कौटलीयमर्थशास्त्रम्

## [ द्वितीयभागस्य प्रथमं सम्पुटम् ]

म० म० टी० गणपतिशास्त्रिकृतया 'श्रीमूला'व्याख्यया

श्रीभिक्षुप्रभमतिकृतया 'चाणक्यटीका'व्याख्यया

श्रीमद्भट्टस्वामिकृतया 'प्रतिपदपञ्चिका'व्याख्यया

श्रीयोगघमाचार्यकृतया 'नीतिनिर्णीति'व्याख्यया च

विभूषितम्

सम्पादकः

'शास्त्ररत्नाकर'श्रीविश्वनाथशास्त्रिदातारः

पूर्वविभागाध्यक्षः,

प्राचीनराजशास्त्रार्थशास्त्रविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी



वाराणस्याम्

२०४८ तमे वैक्रमाब्दे    १९१३ तमे शकाब्दे    १९९१ तमे ख्रैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।

□

[ सरस्वतीभवनपुस्तकालयस्य प्रकाशनसम्बन्धिविशेषयोजनान्तर्गतं
विश्वविद्यालयानुदानायोगतः प्राप्तवित्तीयसाहाय्येन प्रकाशितम् ]

□

प्रकाशकः—
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वारणसी–२२१ ००२.

□

प्राप्तिस्थानम्—
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्— १६०=०० रूप्यकाणि

□

मुद्रकः—
**विजय-प्रेस,**
सरसौली, वाराणसी ।

# प्ररोचना

बहोःकालात् प्रतीक्ष्यमाणा दिवङ्गतैः **पण्डितराजराजेश्वरशास्त्रिद्राविडैः** सम्पादिता कौटलीयार्थशास्त्रकृतिरधुना प्रकाश्यतामानीयत इति महान्तं परितोष-मनुभवामि। आजीवनं पण्डितवर्यैरस्य महता ग्रन्थस्य वैदिकसिद्धान्तानुसारं निर्वचने प्रायाति। श्रीयोग्घमाचार्यप्रणीता **'नीतिनिर्णीतिनाम्नी'** प्राचीना टीका, श्रीगणपति-शास्त्रिभिर्विरचिता **'श्रीमूला'** टीका, श्रीभिक्षुप्रभमतिकृता **'चाणक्यटीका'**, श्रीमद्भट्ट-स्वामिप्रणीता **'प्रतिपदपञ्चिका'** टीकाश्चाप्यत्र सङ्गृहीताः। आसां टीकानां समुच्चये-नार्थशास्त्रग्रन्थस्य गूढा अर्थाः सुखं ग्राह्याः।

खेदस्यायं विषयः पण्डितराजानां परिश्रमं तेषां जीवनकाले मुद्रणावसरं नालभत। तेषां प्रमुखैः शिष्यैः **श्रीविश्वनाथशास्त्रिदातारैः** पाण्डुलिपेष्टीकाभिः संयोजनं सादरं सपरिश्रमं च सम्पन्नम्।

अनया भूमिकया सर्वांशतः सह ऐक्यमत्यमादधानोऽपि अस्याः प्रौढि सोपपत्ति-त्वञ्च प्रशंसितुमर्हामि। प्रस्तुतस्यार्थशास्त्रसंस्करणस्येदमेव वैशिष्ट्यं यत्तस्य निर्वचनस्य सर्वे पक्षाः समुद्घाटिताः। तेन विदुषां स्वकीयमतनिर्धारणे सौकर्यं भविष्यति। श्रीदातारशास्त्रिणो द्वौ सहयोगिनौ **श्रीजगन्नाथशास्त्रितैलङ्ग-श्रीलक्ष्मीकान्तखनङ्गौ** आस्ताम्। तयोः श्रमोऽधुना सफलः।

कौटलीयमिति अभिधानमधुना विदुषां बहुतरेणादरास्पदम्। कौटलीयमित्येवा-भिधानमाद्रियन्ते बहुशो बुधाः। कुटलगोत्रे विष्णुगुप्तस्य जातत्वात् कौटल्यस्य कौटली-यस्योपपन्नत्वात्। भवतु, कौटिलीयमर्थशास्त्रं कतिभिश्चित् पाश्चात्यैः छलयुक्तिप्रधानं राजशास्त्रमिति मन्यते; किन्तु शास्त्ररीत्या समग्रपरीक्षणेन चायं भ्रम एव प्रतीयते। यतो हि भ्रम एवास्य शास्त्रस्य मूलम्। राज्ञा विद्याविनीतेनैव वर्तितव्यमिति प्रोक्तवता कौटल्येनैवमुक्तम्—**"श्रुताद्धि प्रज्ञोपजायते, प्रज्ञया योगः, योगादात्मवत्ता, इति विद्यासामर्थ्यम्"**।

अनेन वचनेन स्वतःसिद्धं कौटलीयार्थशास्त्रस्य आत्मविद्यामूलत्वम्। वस्तुतो दृष्टस्यादृष्टस्य च, लौकिकस्य लोकोत्तरस्य च, दैहिकस्य आत्मिकस्य च जगतः पार्थक्यं शास्त्रकारैर्न विचीयते स्म। एतादृशोरुभयोर्युग्मयोः परस्परमुपकारित्वमेवाभिमतमस्ति। पण्डितराजकृतः श्रम इममेवार्थं समुपपादयतीति नो हर्षः।

मन्ये, कौटलीयार्थशास्त्रस्य प्रस्तुतं संस्करणं प्राचीनराजशास्त्राध्ययने काञ्चन नूतनां सरणिं विवरिष्यति। साम्प्रतं चतुर्षु खण्डेषु विभक्तोऽयं ग्रन्थः प्रकाश्यतां गच्छतीति महते परितोषाय। अत्र संलग्नाः सर्वे पण्डिता अभिनन्दनार्हाः।

**वाराणस्याम्,**
**मौनी-अमावास्यायाम्,**
**२०४७ वैक्रमाब्दे**
**(१५-१-१९९१ खैस्ताब्दे)**

**विद्यानिवासमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्राक्कथनम्

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन सरस्वतीभवनस्थानां महत्त्वपूर्णानामप्रकाशितानां पाण्डुलिपीनां मुद्रणाय तथा दुर्लभानां मुद्रितग्रन्थानां पुनः प्रकाशनाय चैका योजना पञ्चमपञ्चवर्षीययोजनायां विश्वविद्यालयानुदानायोगसमक्षं प्रेषिताऽऽसीत्। आयोगेन च नियोजितस्य निरीक्षकमण्डलस्य संस्तुतिमनुसृत्य प्रकाश्यमानग्रन्थानां महत्तां चोररीकृत्य स्वीकृतिः प्रदत्ता। अस्यां प्रक्रियायां वर्षद्वयं व्यतीतम्। अवशिष्टयोजनावधेरल्पत्वात्, अत्रत्यप्रकाशनविभागे कार्यबाहुल्यात्, योजनायाश्च सरस्वतीभवनद्वारा प्रस्तुतत्वात् कार्यस्य शीघ्रमेव सम्पादनार्थं निम्नाङ्कितानां विश्वविद्यालयीयविदुषामेका समितिर्निर्मिता—

**अध्यक्षः**

प्रो० बदरीनाथशुक्लः ( कुलपतिः )

**सदस्याः**

१. प्रो० जगन्नाथोपाध्यायः ( पालिविभागाध्यक्षः, श्रमणविद्यासङ्कायाध्यक्षश्च )
२. श्रीव्रजवल्लभद्विवेदः ( साङ्ख्ययोगतन्त्रागमविभागाध्यक्षः )
३. डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री' (निदेशकः, अनुसन्धानसंस्थानस्य)
४. श्रीबलिरामशास्त्री भारद्वाजः ( उपपुस्तकाध्यक्षः, हस्तलिखितानुभागे )
५. श्रीजनार्दनपाण्डेयः ( सरस्वतीभवनस्थः )
६. श्रीलक्ष्मीनारायणतिवारी ( पुस्तकाध्यक्षः, समितेः संयोजकः )

संयोजकस्य श्रीलक्ष्मीनारायणतिवारिणः सततप्रयत्नेन अनया समित्या प्रकाशनार्हग्रन्थानां चयनम्, तेषां सम्पादनव्यवस्था, मुद्रणव्यवस्था च तत्परतया सम्यक् प्रारब्धा।

सम्पाद्यमानग्रन्थेषु संस्कृतपालिवाङ्मयस्य प्रायः समस्तप्रमुखविषयाणां महत्त्वपूर्णाः समुपयोगिनश्च ग्रन्थास्समावेशिताः, तत्तत्सम्पादनकार्यभारो विश्वविद्यालयस्य विद्वद्भ्यः, सम्बद्धविषयाणां कतिपयेभ्यो बहिष्ठविद्वद्भ्यश्च समार्प्यत।

अस्यामेव योजनायां प्रकाश्य प्रस्तूयत इदं कौटलीयमर्थशास्त्रं बहुभिरतिप्रसिद्धटीकाटिप्पणीसंवलितम्, **शास्त्ररत्नाकरविश्वनाथशास्त्रिदातारेण** सम्पादितम्।

अर्थशास्त्रं हि पूर्वाचार्यैर्भारतदेशस्य सुखशान्तिसमृद्धये त्रिवर्गोन्नतये च निर्माय राष्ट्रस्य पुरतः समुपस्थापितम्। तद् अतिविस्तृततया दुरूहं जातम्, तत्रत्याः कतिपयेंऽशा उत्सन्नकल्पा अभूवन्निति कामसूत्रादिनिर्दिष्टहेतुभिर्ज्ञायते। आचार्यः कौटल्यः सम्पूर्णम् अर्थशास्त्रं वेदञ्च अधीत्य वैदिकमर्यादाया लोकयात्रासाधनत्वञ्चानुभूय तत्सङ्ग्रहभूतमेकम् अर्थशास्त्रं निर्मितवान्। यदर्थमुपजीव्य रामराज्यं धर्मराजराज्यं चन्द्रगुप्तमौर्यराज्यं च स्वर्णयुगायते। तदिदमर्थशास्त्रं पञ्चदशाधिकरणं सार्धशताध्यायं साशीतिप्रकरणशतं षट्सहस्रश्लोकात्मकमुपलभ्यते। तस्येयं प्रतिज्ञा "पृथिव्या लाभे

**पालने च···इदमर्थशास्त्रं कृतम्"** (कौ० अ० १।१) इति। तच्च सर्वेष्वपि देशेष्वद्यावधि उत्कृष्टतमं चकास्तीति सर्वैराधुनिकैर्विपश्चिदपश्चिमैरपि सत्क्रियते।

अस्यार्थशास्त्रस्य परम्परायामध्ययनाध्यापनद्वारा कतिपयाष्टीका अपि बभूवुः, याः समवलोक्य जयमङ्गलाभिधेयां टीकां **श्रीशङ्करार्यो** निर्मितवानिति तट्टीकातो ज्ञायते। इयं टीका केवलं प्रथमाधिकरणे उपलब्धा १९५८ ई० वर्षे प्रकाशिता। **श्रीगणपतिशास्त्रिभिः** १९२४ ई० वर्षे अनन्तशयने राजकीयमुद्रणालये सम्पादनपूर्वकं 'श्रीमूला'ख्या स्वरचिता टीका प्रकाशिता।

'नीतिनिर्णीति'नाम्नी टीका **श्रीयोग्घमाचार्यविरचिता** २०१६ वै० संवत्सरे मुम्बापुरीस्थभारतीयविद्याभवनतः सिन्धीजैनग्रन्थमालाद्वारा प्राकाशि। एतट्टीका-त्रितयसत्त्वेऽपि न्यायव्याकरणादिशास्त्राध्ययनपरम्परावद् अर्थशास्त्राध्ययनपरम्परा भारतदेशे समभूदिति न दृश्यते। अत उत्कृष्टतममिदमर्थशास्त्रमधिकृत्य 'प्राचीन-भारतीयशासनपद्धतिप्रभृतिष्वनेकेषु ग्रन्थेषु विद्वद्भिर्नैके आक्षेपा उद्भाविताः। यतोऽस्य अप्रामाण्यं जनेषु जागर्ति। तन्निरासाय **"विश्वविद्यालय-अनुदान-आयोगेन"** इदमनुभूतं यत् स्वसाहाय्येन पदवाक्यप्रमाणपारावारीणा विद्वांसोऽर्थशास्त्रव्याख्यानाय प्रेरणीयाः। प्रातस्स्मरणीया गुरुचरणाः पद्मभूषणादिविविधविरुदावलीसमलङ्कृताः श्रीमतः **स्व० पण्डितराजराजेश्वरशास्त्रिद्रविडमहाभागाः** संस्कृतविश्वविद्यालया-धिकारिभिः एतदर्थं सानुरोधं प्रार्थिताः। एतैर्द्वादशवर्षाधिकवर्षमर्थशास्त्रमधीत्य राजनीतिवर्गं संस्थाप्य विद्यार्थिनोऽध्यापिताः। ततः 'वैदिकसिद्धान्तसंरक्षिणी'ति नाम निधाय अर्थशास्त्रं व्याख्यातम्। प्रायः अष्टमशताब्द्यां शङ्करार्यैः(शङ्कराचार्यैः) निर्मितां 'जयमङ्गलाम्' अधिकृत्य आधुनिकविद्वदुद्भाविताः शङ्का आन्वीक्षिकीद्वारेण निरस्य क्रोडपत्रमपि व्याख्यातम्।

अधीतेषु विद्यार्थिवृन्देषु शास्त्ररत्नाकरादिभूषाभूषणैः **पण्डितश्रीविश्वनाथ-शास्त्रिदातारैरधीत्य** गुरुचरणकृतं व्याख्यानम् अन्याश्च टीका हृदयङ्गमय्य तन्निर्देशा-नुसारेण 'वैदिकसिद्धान्तसंरक्षिणी-जयमङ्गलाक्रोडपत्रयोः' सङ्कलनं सम्पादनञ्च विहितम्। एतट्टीकाद्वयोपेतं 'श्रीमूला'दिटीकात्रितयसहितमर्थशास्त्रं प्रथमाधिकरण आदितः पञ्चमाध्यायान्तं विदुषां पुरत उपायनीक्रियते। आशास्यते यद् विद्वद्वरेण्या ग्रन्थ-रत्नमिदमादितोऽन्तपर्यन्तं समवलोड्य अधीति-बोधाचरणप्रचारणैः सर्वसाधारणजनेषु रुचिमुत्पाद्य एतद्देशस्य सुखशान्तिसमृद्धये महयोगं प्रदास्यन्ति।

विस्तृतं टीकाग्रन्थं दातारशास्त्रिभिः सङ्क्षिप्य भूमिकायां सर्वोऽपि विषयः समालोचितः, यत्र नीतिलक्षणादिकं सर्वं स्फुटीभवति, भवति च शङ्कानां समाधानमपि। विश्वस्यतेऽग्रिमं सम्पुटमप्यचिरेण प्रकाशमेष्यति।

**वाराणस्याम्,**
कार्तिकपूर्णिमायाम्,
**वि० सं० २०३७**
**(२२-११-१९८० खैस्ताब्दे)**

**बदरीनाथशुक्लः**
तदातीन्तनः कुलपतिः
**सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य**

# सम्पादकीयं वक्तव्यम्

भारतवर्षस्य अभ्युन्नतिः वेदेन **'न मे स्तेनो जनपदे'** इत्यादिना प्रदर्शिता। तत्परम्परा एतद्देशे पूर्वतनराज्येषु वंशपरम्परायां समुदीयते स्म। साम्प्रतं तु अस्यां शताब्द्यां विशेषतो भारतदेशे वर्तमानामशान्तिमनुरुद्ध्य तन्निवारणोपायं चिन्तयद्भिः श्रीगुरुदेवैः श्रीमद्भिः पण्डितराजराजेश्वरशास्त्रिद्रविडचरणैः राजशास्त्रचिन्तन-प्रचारणं विना देशे शान्तिर्न भविष्यतीति ज्ञात्वा प्रथमतो जयमङ्गलासहितः कामन्दकीय-नीतिसारः अमलनेरनगरस्थपुस्तकागारात् सम्प्राप्तः। तत्र 'विद्याप्रतिबद्धत्वाल्लोक-स्थितेः' इत्युपलभ्य श्रीचरणैः राजनीतिं पर्यालोचयितुं राजनीतिवर्गो वाराणसेये रामघट्टस्थिते व० शा० साङ्गवेदविद्यालये महाराजश्रीकाशीनरेशसान्निध्ये तत्कालीन-बिहारराज्यपालश्रीअणेकरकमलद्वारा पञ्चविंशतिवर्षेभ्यः पूर्वं संस्थापितः। तत्र स्व० गुरुवर्य हरिरामशास्त्रिशुक्ल-गणपतिशास्त्रिहेब्बार-रामचन्द्रशास्त्रिहोसमने-जयरामशास्त्रिशुक्ल-स्व० नटराजऐय्यरप्रभृतिभिः सह अहमपि प्रविष्टः। तत्र गुरुचरणैः महता श्रमेण नीतिसारः कण्ठस्थीकृत्य समुपस्थितनैकविधप्रश्नजालसमाधानपुरस्सरम् अध्यापितः। तत्र तत्र देशान्तरेषु गत्वा तैरस्माभिश्च राजशास्त्रं व्याख्यानमालाभिः संश्रावितं प्रसारितं च। सर्वेषां श्रोतॄणां रुचिं ज्ञात्वा 'राजनीतिशास्त्र का दिग्दर्शन', 'शान्ति का अग्रदूत' इति पुस्तकद्वयं प्रकाशितम्।

ततो गुरुभिः जयमङ्गलादिटीकोपेतं कौटलीयमर्थशास्त्रमध्यापितम्, तत्रोपवर्णितेन विषयेण अस्माभिः सर्वैरपि निरणायि यद् भारतदेशे वर्णाश्रमप्रधाने समेषामेकरूपता-सम्पादकं सत्त्वं धृतिभावापरपर्यायम् आसीत्, अस्ति च। एतदाश्रयं विना क्वचिदपि सुखं शान्तिः समृद्धिभ्रातृभावेन सर्वेषां सम्प्रदायानां मानवानां वाऽस्तित्वं च न भवितु-मर्हति। एतच्छास्त्रनिर्देशानुसारेण देशे विद्याप्रचारकार्यमेव नैतिकं प्राथमिकं कार्यं विदुषाम्, इति विज्ञाय अर्थशास्त्रस्य चर्चा पुनरपि चर्चिता। तत्र अनेकविधाः शङ्का आधुनिकैः समुपस्थापिताः, आन्वीक्षिकीमीमांसामर्यादया कार्यकारणभावविवेचनपुरस्सरं समाहिताः। एतदेवानुरुद्ध्य रामायण-महाभारत-पुराणादिग्रन्था अपि यदि समा-लोच्येरन्, तर्हि समाजस्य आन्ध्यं व्यपगतं भवेदिति ज्ञात्वा राजनीतिवर्गे प्रविष्टैः स्वकार्यारम्भः समालोचितः। तदानीमेव तत्कालीनकुलपतिश्रीसुरतिनारायणमणि-त्रिपाठिभिः साहाय्यं सम्प्रदाय विशेषतया प्रोत्साहिता गुरुचरणाः। ततः श्रीगौरीनाथ-शास्त्रिभिरुपकुलपतिभिः राजनीतिवर्गं स्वयमुपस्थाय अर्थशास्त्रमधिकृत्य निबन्धः प्रकाशितो भवत्विति अभिप्रायः प्रकटितः। नवीनग्रन्थनिर्माणेऽस्माकं सामर्थ्यमननुभूय गुरुशिष्यसंवाद एव ग्रन्थरूपेण प्रकाशनीय इत्यपि अभ्यधायि। ततः पुनरपि आदितः अर्थशास्त्रं गुरुचरणैरध्यापितं व्याख्यानमालारूपेण। तत्र प्रथमाधिकरणे चतुर्दशा-ध्यायान्तमेव अध्ययनाध्यापनयोर्महान् समयः समतिक्रान्तः। तस्य सम्पादनं सङ्कलनञ्च

अनेन शरीरेण कर्तव्यमस्तीति गुरुचरणानामादेशः समभूत्। तमनुरुद्धय परिश्रम-पुरःसरम् उक्तसंवादस्य सङ्कलनम् अनेकैः वर्षैः कृतमद्य विदुषां सेवायां कथञ्चन समुपस्थापयितुं प्राभवम्।

अर्थशास्त्रकर्ता चाणक्यस्तस्मिन् समये प्रादुर्भूतः, यत्र नीतिशास्त्रस्य विलोप-प्रसक्त्या सह देशे सत्त्वगुणस्योन्मूलनमेव प्रसक्तमासीत्। अनेनैवाचार्येण सर्वाणि शास्त्राणि चतुरो वेदानधीत्य सत्त्वोन्मूलनकारणमनुशील्य आन्वीक्षिक्या सह त्रय्यादिविद्यानां संस्थापनं कृतम्। राज्यञ्च धर्मप्रधानं व्यवस्थापितम्, यद्धि ऐतिहासिकानां मतानु-सारेणापि स्वर्णयुगायते स्म। अनेनैव सिद्धयति यद् अनेन आचार्येण पाटलिपुत्रमवस्थाय चन्द्रगुप्तं मौर्यं राज्यपदे समभिषिच्य स्वयं शमप्रधानः सन् सत्त्वमेव संस्थापितवान्। सोऽयमाचार्य इतः पूर्वं चतुर्विंशतिवर्षशतकपूर्वमवनीतलं भूषयामासेति न्यायवार्तिक-भूमिकाकर्तृभिः उद्धृतात् चतुर्विंशतितमतीर्थङ्करजैनाचार्यवाक्याद् उन्नीतम्। अर्थशास्त्रस्य पदानि गुरुपरम्पराध्ययनाभावाद् दुरवगाहानीति ज्ञात्वा गुरुचरणैः अर्थशास्त्रस्य टीकाः सङ्कलिताः। तासु समग्रस्य अर्थशास्त्रस्य टीका स्व० म० म० पं० त० गणपतिशास्त्रिभिः प्रणीता दृष्टा।

एते काञ्चिमण्डलपतेः श्रीमूलरामवर्ममहाराजस्य कृपापात्राणि स्वं व्याख्यानं श्रीमूलेतिनाम्ना सम्पादितवन्तः।

जयमङ्गलानाम्नी टीका मद्रप्रान्ते प्रकाशिता। इयं कामन्दकीयटीका-वाक्यसादृश्यात् प्रामाणिकत्वाच्च शङ्करार्यैरेव विरचितेति मन्यते। सापि केवलं प्रथमाधिकरण एव प्रकाशनभावं प्राप्ता। नीतिनिर्णीतिरपि केषुचित्स्थलविशेषेषु तदीयाभिप्रायं द्योतयति। सा सिन्धीजैनग्रन्थमालायामाचार्यजिनवरमुनिवरसङ्गृहीता उपलब्धा। एषैव स्वकीयपाठाख्याने सामग्री अभूत्।

एतदर्थशास्त्रस्य समस्तटीकासहितस्य प्रकाशनं अशक्यप्रायमस्तीति मन्वान एवासम्; परं श्रीजगन्नाथोपाध्याय–(पालिविभागाध्यक्षः) प्रभृतिविदुषां प्रोत्साहनमुपलभ्य वर्तमानश्रीकुलपतिभिरेतत् प्रकाशनं प्रतिज्ञायाहमादिष्टस्तदर्थम्।

अस्य समग्रस्य प्रकाशनं भागत्रयेण कर्तव्यम्। एकस्मिन् भागे सम्पुटद्वयं भविष्य-तीत्यपि निर्णीतं गुरुचरणैः, कृतस्य व्याख्यानस्य अतिदीर्घत्वात्।

एतत्कार्यसम्पादने **श्री पू० महाराजैः श्रीविभूतिनारायणसिंह**महाभागैः कृतेन प्रोत्साहनेन एतावद्दूरम् अहमागत इति तेषामुपकृतिं स्मरामि।

श्रीगुरुचरणव्याख्यानस्य सङ्कलितस्य शुद्धिः **स्व० गुरुचरणैर्हरिरामशास्त्रिभिः** शुक्लमहाभागैः सम्पादिता। तथैवाग्रे तैर्विधास्यत इत्याशायां स्थितस्तेषां वियोगेन खिन्नमनास्तेषां चरणौ स्मरन् तदुक्तिं शरणं मन्यमान आसम्।

एतत्सामग्रीसम्पादने साहाय्यं साङ्गवेदविद्यालयाध्यक्षैः **श्रीरामचन्द्रशास्त्रि-होसमने**महाभागैः पुस्तकं प्रदाय कृतम्, तथा गुरुपुत्राभ्यां **श्रीविश्वेश्वरशास्त्रि-गणेश्वरशास्त्रिभ्यां** पितृचरणानां कृतिः प्रकाश्यतां प्राप्नोतीति श्रुत्वा महता हर्षेण सर्वविधमपि साहाय्यं प्रादायीति तेषां समेषां उपकृतिं सर्वान् सभाजयामि ।

मूलपाठं विभज्य तत्र तत्र शीर्षकं तदेव स्थापितं यद् एन्० एस्० वेङ्कटाचार्यैर्विद्वद्भिः संयोजितमिति तानपि स्मरामि एतत्प्रसङ्गे । **श्रीटोणपेगोपालाचार्यैस्तु** प्रकाशनाय पुस्तकमेवार्थशास्त्रस्य समर्पितम् । इयं तेषामुपकृतिरपि स्मरणीया वर्तते ।

सम्पादन-प्रकाशनकार्ये च **श्रीलक्ष्मीकान्तशास्त्रिखनङ्ग–श्रीजगन्नाथशास्त्रि-तैलङ्गाभ्यां** महान् परिश्रमः कृतो वर्तते । तदधमर्णतां भजमानस्तयोरुपकृतिं स्मरामि ।

अस्य प्रकाशने प्रमादाद् अज्ञानाद् मुद्रकदोषाद् असौष्ठवाद् असामर्थ्याच्च अशुद्धयो जाताः प्रकाशनानन्तरमुपलब्धा वर्तन्ते । तदर्थं क्षमस्वेत्युक्तिं विनाऽन्य उपायो नास्ति । इयं प्रथमावृत्तिः, तत्र दोषा भविष्यन्त्येवेति ज्ञात्वा विद्वांसः पाठं शोधयित्वा अधीतिबोधाचरणप्रचारणैः समन्वेष्यन्तीमां कृतिमित्याशास्य विश्वेश-गुरुचरणौ नमन् विरमामीति ।

विदुषां वशंवदः

**विश्वनाथशास्त्रिदातारः**

# विषयानुक्रमणिका

## अथाध्यक्षप्रचारो नाम द्वितीयमधिकरणम्

### एकोनविंशं प्रकरणम्

**प्रथमोऽध्यायः** (जनपदनिवेशः) ३-२२



### विंशं प्रकरणम्

**द्वितीयोऽध्यायः** ( भूमिच्छिद्रविधानम् ) २३-३१



### एकविंशं प्रकरणम्

**तृतीयोऽध्यायः** (दुर्गविधानम्) ३२-५६



### द्वाविंशं प्रकरणम्

**चतुर्थोऽध्यायः** (दुर्गनिवेशः) ५७-६६

## त्रयोविंशं प्रकरणम्

### पञ्चमोऽध्यायः (सन्निधातृनिचयकर्म) ६७-७४



## चतुर्विंशं प्रकरणम्

### षष्ठोऽध्यायः (समाहर्तृसमुदयप्रस्थापनम्) ७५-८६



## पञ्चविंशं प्रकरणम्

### सप्तमोऽध्यायः (अक्षपटले गाणनिक्याधिकारः) ८७-१०१



## षड्विंशं प्रकरणम्

### अष्टमोऽध्यायः (समुदयस्य युक्तापहृतस्य प्रत्यानयनम्) १०२-११८

## सप्तविंशं प्रकरणम्

### नवमोऽध्यायः (उपयुक्तपरीक्षा) ११९-१३३



## अष्टाविंशं प्रकरणम्

### दशमोऽध्यायः (शासनाधिकारः) १३४-१६१



## एकोनत्रिंशं प्रकरणम्

### एकादशोऽध्यायः (कोषप्रवेश्यरत्नपरीक्षा) १६२-२०२

**त्रिंशं प्रकरणम्**

**द्वादशोऽध्यायः** (आकरकर्मान्तप्रवर्तनम्) २०३-२२८



**एकत्रिंशं प्रकरणम्**

**त्रयोदशोऽध्यायः** (अक्षशालायां सुवर्णाध्यक्ष) २२९-२५१

## द्वात्रिंशं प्रकरणम्

### चतुर्दशोऽध्यायः ( विशिखायां सौवर्णिकप्रचारः ) २५२-२७३



## त्रयस्त्रिंशं प्रकरणम्

### पञ्चदशोऽध्यायः ( कोष्ठागाराध्यक्षः ) २७४-२९५

## चतुस्त्रिंशं प्रकरणम्

### षोडशोऽध्यायः ( पण्याध्यक्षः ) २९६-३०५



## पञ्चत्रिंशं प्रकरणम्

### सप्तदशोऽध्यायः ( कुप्याध्यक्षः ) ३०६-३१४



## षट्त्रिंशं प्रकरणम्

### अष्टादशोऽध्यायः ( आयुधागाराध्यक्षः ) ३१५–३२८

## सप्तत्रिंशं प्रकरणम्

### एकोनविंशोऽध्यायः ( तुलामानपौतवम् ) ३२९–३४२



## अष्टात्रिंशं प्रकरणम्

### विंशोऽध्यायः ( देशकालमानम् ) ३४३-३५५



## एकोनचत्वारिंशं प्रकरणम्

### एकविंशोऽध्यायः (शुल्काध्यक्षः) ३५६–३६७

**द्वाविंशोऽध्यायः** ( शुल्कव्यवहारः) ३६८-३७४



**चत्वारिंशं प्रकरणम्**

**त्रयोविंशोऽध्यायः** ( सूत्राध्यक्षः ) ३७५-३८२



**एकचत्वारिंशं प्रकरणम्**

**चतुर्विंशोऽध्यायः** (सीताध्यक्षः ) ३८३-३९६



**द्विचत्वारिंशं प्रकरणम्**

**पञ्चविंशोऽध्यायः** ( सुराध्यक्षः ) ३९७-४०७

## त्रिचत्वारिंशं प्रकरणम्

### षड्विंशोऽध्यायः ( सूनाध्यक्षः ) ४०८-४१२



## चतुश्चत्वारिंशं प्रकरणम्

### सप्तविंशोऽध्यायः (गणिकाध्यक्षः) ४१३-४२१



## पञ्चचत्वारिंशं प्रकरणम्

### अष्टाविंशोऽध्यायः ( नावध्यक्षः ) ४२२-४२९



## षट्चत्वारिंशं प्रकरणम्

### एकोनत्रिंशोऽध्यायः (गोऽध्यक्षः) ४३०-४४२

## सप्तचत्वारिंशं प्रकरणम्

### त्रिंशोऽध्यायः (अश्वाध्यक्षः) ४४३-४५६



## अष्टचत्वारिंशं प्रकरणम्

### एकत्रिंशोऽध्यायः ( हस्त्यध्यक्षः ) ४५७-४६३



### द्वात्रिंशोऽध्यायः ( हस्तिप्रचारः ) ४६४-४७३

## एकोनपञ्चाशपञ्चाशैकपञ्चाशानि प्रकरणानि

### त्रयस्त्रिंशोऽध्यायः (रथाध्यक्षः, पत्त्यध्यक्षः, सेनापतिप्रचारश्च ) ४७४-४८१



## द्विपञ्चाशत्रिपञ्चाश-प्रकरणे

### चतुस्त्रिंशोऽध्यायः (मुद्राध्यक्षो विवीताध्यक्षश्च) ४८२-४८६



## चतुःपञ्चाशपञ्चपञ्चाशप्रकरणे

### पञ्चत्रिंशोऽध्यायः (समाहर्तृप्रचारः) ४८७-४९८



## षट्पञ्चाशं प्रकरणम्

### षट्त्रिंशोऽध्यायः (नागरिकप्रणिधिः) ४९९-५१६



॥ इत्यध्यक्षप्रचारो नाम द्वितीयमधिकरणम् ॥

## अथ धर्मस्थीयं नाम तृतीयमधिकरणम्

### सप्तपञ्चाशाष्टपञ्चाशप्रकरणे



### एकोनषष्टितमं प्रकरणम्

**चतुर्थोऽध्यायः** (निष्पतनादयः) ५४७-५५२



**षष्टितमं प्रकरणम्**

**पञ्चमोऽध्यायः** (दायविभागः, दायक्रमः) ५५३-५५७



**षष्ठोऽध्यायः** (अंशविभागः) ५५८-५६१



**सप्तमोऽध्यायः** (पुत्रविभागः ) ५६२-५६६



**एकषष्टितमं प्रकरणम्**

**अष्टमोऽध्यायः** (वास्तुकम्) ५६७-५७०

**नवमोऽध्यायः** (वास्तुविक्रयः) ५७१-५७६



**एकषष्टितमद्विषष्टितमे प्रकरणे**

**दशमोऽध्यायः** (विवीतक्षेत्रपथहिंसा समयस्यानपाकर्म च) ५७७-५८३



**त्रिषष्टितमं प्रकरणम्**

**एकादशोऽध्यायः** (ऋणादानम्) ५८४-५९१



**चतुःषष्टितमं प्रकरणम्**

**द्वादशोऽध्यायः** ( औपनिधिकम् ) ५९२-५९९

## एकसप्ततितमं प्रकरणम्

### सप्तदशोऽध्यायः (साहसम्) ६२०-६२२



## द्विसप्ततितमं प्रकरणम्

### अष्टादशोऽध्यायः ( वाक्पारुष्यम् ) ६२३-६२५



## त्रिसप्ततितमं प्रकरणम्

### एकोनविंशोऽध्यायः ( दण्डपारुष्यम्) ६२६-६३०



## चतुःसप्ततिपञ्चसप्ततितमे प्रकरणे

### विंशोऽध्यायः ( द्यूतसमाह्वयं प्रकीर्णकानि च ) ६३१-६३५



॥ इति धर्मस्थीयं नाम तृतीयमधिकरणम् ॥

❁ ❁ ❁

श्रीमूला-चाणक्यटीका-

प्रतिपदपञ्चिका-नीतिनिर्णीति-

नाम्नीभिष्टीका -टिप्पणीभिः

संवलितं

# कौटिलीयमर्थशास्त्रम्

द्वितीयो भागः

* श्रीविश्वेश्वरः शरणम् *

॥ श्रीगुरुः शरणम् ॥

'श्रीमूला'–'चाणक्यटीका'–'प्रतिपदपञ्चिका'-
'नीतिनिर्णीति'-नाम्नीभिष्टीका-टिप्पणीभिः संवलितं

# कौटिलीयमर्थशास्त्रम्

## द्वितीयो भागः

## अथ अध्यक्षप्रचारो नाम द्वितीयमधिकरणम्

### एकोनविंशं प्रकरणम्

### प्रथमोऽध्यायः

[ स्थानीयादिपरिकर्मित-सारक्षिदुर्गपरिवृतसमीप ग्रामवृन्दविशिष्ट-राष्ट्ररचनाविधिः ]

**[1]जनपदनिवेशः ।**

---

म० म० त० गणपतिशास्त्रिविरचिता

श्रीमूला

अथाध्यक्षप्रचाराख्यम् द्वितीयमधिकरणमारभ्यते । यथोक्तगुणसम्पन्नो राजा सर्वाणि कार्याणि तत्तदध्यक्षद्वारेणैवाध्यक्षयितुं प्रभवतीत्यतोऽध्यक्षांस्तद्व्यापारांश्च-प्राधान्येनाभिधातुमिदमधिकरणम् ।

तत्रेदं प्रथमं सूत्रम्—जनपदनिवेश इति । जनश्चतुर्वर्णाश्रमजातिलक्षणः, पदं तस्य स्थानं स्थानीय-द्रोणमुख-कार्वटिक-सङ्ग्रह-ग्रामादिकं, तस्य निवेशः रचनाऽत्राभि-

---

(नी०) १. जनाश्चातुर्वर्ण्यं ते पद्यन्तेऽवस्थानं कुर्व्वंति यस्मिन् असौ पृथ्वीभागो जनपदस्तस्मिन् चातुर्वर्ण्यादर्थायोगमव [ स्थापनमिति ] ।

श्रीमूला

धीयत इति सूत्रार्थः। 'स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणि' प्रकृतिरित्युक्तं तत्र स्वाम्यमात्यप्रकृती प्रतिपादिते, जनपदप्रकृतिरिदानीमभिधीयते।

## भिक्षुप्रभमतिकृता अर्थशास्त्रव्याख्या

### चाणक्यटीका

एवं विनयोपदेशात् राज्ञः कार्यानुष्ठानयोग्यता प्रतिपादिता। इदानीम् अमात्यादिभिः सह तेन कार्याण्यनुष्ठेयानि। तानि च स्वपरमण्डलाश्रयभेदाद् द्विविधानि। तत्र अन्तरङ्गत्वाद् अन्येषाञ्च कारणत्वात् स्वमण्डलाश्रितान्युच्यन्ते। तान्यपि योगक्षेमभेदाद् द्विविधानि। तत्र योगपूर्वकत्वात् क्षेमस्येति तदभिप्रायकोऽध्यक्षप्रचारउच्यते। स्वगतकार्यानुष्ठानेऽध्यक्षाः प्रचरन्त्यनेनोपदेशेनेति अध्यक्षप्रचारः इत्यधिकरणक्रमः।

प्रकरणक्रमस्तु राजपुत्ररक्षणादीनि आत्मरक्षान्तर्भूतान्येव प्रकरणानि। तत्र चोक्तम् "रक्षितो राजा राज्यं रक्षति" इति। राज्यञ्च जनपदप्रधानमेव। तस्य च पुरुषवत्तया सामग्र्यम्। यथा च वक्ष्यति—"पुरुषवद्धि राज्यम्" (अधि० ७, अध्या० ११.) इति। सर्वकर्मणाञ्च उत्तरप्रकरणभाविनां योनित्वात्। तस्मात् तन्निवेश आत्मरक्षानन्तरम् उच्यते। सूत्रसम्बन्धस्तु पृथिव्याख्येय (?) इत्युक्तं पुरस्तात्। पूर्वप्रकरणापेक्षं हि ······ना सूत्रम्, उत्तरप्रकरणानुरूपञ्च तदादिसूत्रम्। तयोः स्वप्रकरणे गुणीभूतयोः नापेक्षा। यथा वाक्यावयवानां पदानां वाक्यान्तरावयवानां प्रत्यनपेक्षा, वाक्यद्वयोर्वा अपेक्षा, कथम् अधिकरणावयवानां प्रकरणानां सम्बन्ध इति चेत् प्रकरणान्येव एकार्थानि, अधिकरणं तु अधिकरणमेव, न समुदायान्तरमित्यदोषः॥

## श्रीयोग्घमाचार्यप्रणीता

### नीति-निर्णीतिटीका

इदानीमध्यक्षप्रचारो द्वितीयमधिकरणमभिधीयते।······पृथ्वीभागो जनपदस्तस्मिंश्चातुर्वर्ण्यादेर्यथायोगमवस्थापनमिति सूत्रार्थः।···रे···जनपददुर्गकोशदण्डादीनामभिधीयत इति महासम्बन्धः। अनन्तरसम्बन्धस्तु तन्त्रावापयोः साधारणत्वादा······ सुप्रतिविहिततन्त्रस्यावापेऽधिकारः। तन्त्रं चाऽध्यक्षप्रचारधर्म्मस्थीयकण्टकशोधनयोगवृत्तपर्यन्तम् तेषामादावधिकरणमध्यक्षप्रचारः। अध्यक्षा इति स्वव्यापारे···नि सावधानतयाऽक्षीणीन्द्रियाणि येषां ते प्रचरन्त्यनेनेत्यध्यक्षप्रचारः। तस्याऽप्यादौ जनपदः सर्वकर्मणां योनिरिति जनपदनिवेश इत्यनन्तरसम्बन्धः। अथवा···राजा राज्यं रक्षतीत्युक्तं च। राज्यं च जनपद एव यस्माज्जनपदादेव सर्वप्रकृतीनामुत्पत्तिः। उक्तं च—

'मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं प्रचक्रिरे।'

पश्चाद्राजा मन्त्रिणमुत्पादयति। जनपदादेव दुर्गं कोशो दण्डश्च। तस्मादेव मित्रव्यवस्था। भूमेरेकान्तरं मित्रमित्येवं, जनपदः शेषप्रकृतीनां योनिस्तस्यादौ लाभः पालनं चाभिधीयते।

**[1]भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन[2] वा निवेशयेत् ।**

---

श्रीमूला

भूतेत्यादि । भूतपूर्वं पूर्वं स्थितम् अभूतपूर्वं अभिनवं वा, जनपदं, परदेशापवाहनेन परदेशाज्जनानयनेन, स्वदेशाभिष्यन्दवमनेन वा अभिष्यन्दोऽतिवृद्धिः वमनमाहरणं स्वदेशे जनानामतिवर्धनादाधारापर्याप्तिदोषादन्यत्राहरणेन वा, निवेशयेद् रचयेत् ।

चाणक्यटीका

तत्र प्रकरणावताराय सूत्रमाह-भूतपूर्वमिति । भूतः पूर्वो भूतपूर्व इति । अयं शब्दो भवतेः सामान्यशब्दत्वात् शब्दान्तरापेक्षया विशेषं परिगृह्णाति । आढ्यो भूतपूर्व इति यथा, तदिह विशेषशब्दानुपादानात् केन विशेषेण भूतपूर्व इति । तत्र निवेशस्य विधीयमानतया सान्निध्यात् तदपेक्षया निविष्टपूर्वमिति योज्यम् । जनपदशब्दोपात्तो विशेषः, जनाः पद्यन्ते······अनेन विशेषेण अयं शब्दो देशविशेषे प्रवृत्तः न कान्तारपर्वतादिषु । तेन जनपदत्वेनैव भूतपूर्वमपूर्वं भवति । ( पर ) देशापवाहनेनेति । देशस्था देशाः, तेषामपवाहनं वक्ष्यति—"सुखं वा सानुग्रहपरिहारसौकर्यं फललाभभूयस्त्वेन स्वकर्मणाम्" ( अधि० ७, अध्या० १ ) इत्यादिना । स्वदेशेनाभिस्यन्दसपत्य ( ? ) धान्यपशुमनुष्याद्याधिक्यम् । शरीरस्येव श्लेष्मोद्रेको मा भूत् । अल्पाश्रयत्वादकर्मण्यत्वमिति । तस्य वमनेन अपकर्षणेन । तं प्रस्तारेण अव्यवस्थया वा न निवेशयेत् । किन्तर्हि ? स्थानीयादिकल्पनया ॥

नीति-निर्णीतिटीका

पूर्वं भूतो भूतपूर्वः । निविष्टपूर्व इत्यर्थः । अभूतपूर्वस्तद्विपरीतः । अनिविष्टपूर्वे जनपदशब्दो न प्रवर्तते । पर्वतसमुद्रादौ कथं तस्य निवेश इति चेत्, स्मर्यमाणनिवेशो भूतपूर्वः स्वल्पवीरुल्लतादिसुखसाध्यः, अस्मर्यमाणनिवेशो महावृक्षावलुप्तनिःशेषनिवेशचिह्नो दुःखसाध्य इति भावः । तमुभयस्वरूपम् । परदेशापवाहनेन परदेश इति ।

---

(नी०) १. निविष्टपूर्वं अनिर्विष्ट पूर्वं च । अनिविष्टपूर्वे जनपदशब्दो न प्रवर्तते । पर्वतसमुद्रादौ कथं तस्य निवेश इति चेत् स्मर्यमाणानिवेशो भूतपूर्वः [ स्वल्पवीरुल्लतादि सुखसाध्यः । ] अस्मर्यमाणनिवेशो महावृक्षावलुप्त [ निःशेषनिवेशचिह्नो दुःख ] साध्य इति भावः ।

२. स्वदेशाभिष्यंदवमनेन वेति । यथा निर्झरासन्ननिम्ने कालांतरेण निःष्यंदो जलसंग्रहो भवति । तद्वत्ततः प्रजाभिष्यंदः सन्ततिबाहुल्यम् । एकस्मिन्नेव कुटुम्बे पुत्रनप्तृभ्रातृभागिनेयादिबाहुल्यात् । न धान्यादिप्राचुर्यात् । मूलकुटुम्बमवस्थाप्य शेषाणामपकर्षणं वमनं तेन वा निवेशयेत् ।

**शूद्रकर्षकप्रायं[1] कुलशतावरं[2] पञ्चशतकुलपरं[3] ग्रामं[4] क्रोशद्विक्रोशसीमानमन्योन्यारक्षं[5] निवेशयेत् ।**

**[1]नदीशैलवनभृष्टिदरीसेतुबन्धशाल्मलीशमीक्षीरवृक्षान् अन्तेषु सीम्नां स्थापयेत् ॥**

---

नीति-निर्णीतिटीका

तत्रस्थाः प्रजास्तासामपवाहने नाकर्षणेन। तच्च द्विधा दण्डेन दाहलोपविध्वंसभयदर्शनेन कदाचिदनुग्रहपरिहारप्रदानादिभिः। स्वदेशाभिष्यन्दवमनेन चेति। यथा निर्झरासन्ननिम्ने कालान्तरेण निष्यन्दो जलसङ्ग्रहो भवति। तद्वत्ततः प्रजाभिष्यन्दः सन्ततिबाहुल्यं एकस्मिन्नेव कुटुंबे पुत्रनप्तृभ्रातृभागिनेयादिबाहुल्यात्। न धान्यादिप्राचुर्यात्। मूलकुटुंबमवस्थाप्य शेषाणामपकर्षणं वमनं तेन वा निवेशयेत्। लाभपालनार्थं च निवेशक्रममाह।

श्रीमूला

शूद्रेत्यादि। ग्रामं, शूद्रकर्षकप्रायं शूद्रकृषीवलबहुलं, कुलशतावरं गृहशतान्यूनं, पञ्चशतकुलपरं पञ्चशतानधिकगृहयुक्तं, क्रोशद्विक्रोशसीमानं क्रोशसीमानं द्विक्रोशसीमानं वा एकस्माद् ग्रामाद् ग्रामान्तरस्य क्रोशदूरव्यवधानं क्रोशद्वयव्यवधानं वा यथा भवेत् तथा क्लृप्तमित्यर्थः, अन्योन्यमारक्षतीत्यन्योन्यारक्षं परस्परसाहाय्यकरणक्षमं, निवेशयेत्।

नदीत्यादि। सीम्नाम् अन्तेषु, नदी, शैलः शिलाकूटः, वनं, गृष्टिर्बदरा नामौषधिर्वृक्षविशेषो वा, दरी श्वभ्रं, सेतुबन्धः, शाल्मली स्थिरायुराख्यो वृक्षः, शमी सक्तुफला, क्षीरवृक्षः वटादिरित्येतान् स्थापयेत् सीमरक्षार्थम्।

---

(नी०) १. विष्ट्यादिभिरुपभोग्यत्वात्।

२. कुलशतभेदे मतभेदस्तथाहि—

चुल्याधाने कुलं विद्यादित्यांभीयाः प्रचक्षते।
दम्पत्ययोः कुलमित्येके हलं त्वन्ये प्रचक्षते॥ इति।

चुल्याधानं—दम्पत्योः क्षेत्र-विभागेऽनंगत्वादेकद्वित्रिहलत्वेन कुलं तदुत्तममध्यमावरतयेष्यते।

३. अर्धतृतीयकुलशतकृष्यो मध्यमः, सार्द्धक्रोशसीमा भवतीत्यर्थादापद्यते।

४. शूद्रादिजातिसमूहो ग्रामः।

५. गोरुतं निशावसाने यावन्तं प्रदेशं गवां रुतं व्याप्नोति। पूर्वस्मात्क्रोशे पश्चिमचिह्नं उत्तरस्मात्क्रोशे [ दक्षिणचिह्नमिति ]।

१. भृष्टिरिति पा.।

चाणक्यटीका

शूद्रकषकप्रायमिति। विष्ट्या सञ्जातेन चोपकारित्वात्। कुलशतेनावरं क्रोशसीमानम्। पञ्चभिः कुलशतैः परं प्रकृष्टं द्विक्रोशसीमानम्। अर्थात् अध्यर्ध-क्रोशसीमानं मध्य (म) कुलशतस्य। दाम्पत्यमेकचुल्याधानत्वं एकगृहाधानत्वं वा क्षेत्रविभागं प्रत्यनङ्गभूतम्। तस्माद् एकद्वित्रिहलत्वेन कुलानां कुलत्वम्। चतुः-षड्गवत्वेन च हलत्वमेवेष्यते। षड्गवतया च हलस्य मध्यमा प्रतिप्रत्तिः। तावता विभागेन कुलक्षेत्रयोः अन्योऽन्यप्राकाम्यं भवति। तथा चोक्तम्—

"हलमष्टगवं धर्म्यं षड्गवं व्यावहारिकम्।
चतुर्गवं नृशंसानां द्विगवन्तु गवाशिनाम्॥" इति।

तत्र क्रोशस्थितानि इतरेतरापेक्षया सीमानि यस्य स क्रोशसीमा। यथा पूर्वस्मात् क्रोशे पश्चिमम्, उत्तरस्मात् क्रोशे दक्षिणमिति। चतुर्धा च ग्रामोपभोगः क्षेत्रेण वास्तुना गोप्रचारतया देवतास्थानारामतटाकरथ्योदपानादिभिश्च। धनुस्सहस्र-द्वयं च क्रोशः, चतुर्हस्तंच धनुः। तत्र क्षेत्रप्रतिबद्धत्वात् कुलानां ग्रामार्धं तावद् धनुस्सहस्रं तिर्यग्धनुःसहस्रद्वयेन गुणितं कुलशतेन भिद्यमानं विंशतिर्धनुःसहस्राणि प्रत्येकं कुलस्य क्षेत्रम्। एवं समुदायेन विंशतिर्धनुर्लक्षाणि कुलशतस्य क्षेत्रम्। ततोऽर्धं दशधनुःसहस्राणि अविभागेन साधारणोपयोगित्वाद् देवस्थानादिषु प्रतिकुलं पर्याप्तानि समुदायेन दशधनुर्लक्षाणि। ततोऽप्यर्धं पञ्चधनुःसहस्राणि प्रतिकुलं पशु-प्रचारभूमिः पर्याप्ता समुदायेन पञ्चधनुर्लक्षाणि ततोऽप्यर्धं पञ्चधनुःसहस्राणि प्रत्येकं वास्तुभूमिः इक्षुशाकापरसस्यगृहगोशालादिषु प्रभवति। समुदायेन पञ्चधनुर्लक्षाणि। एवं चत्वारिंशद् धनुर्लक्षणानि। क्रोशसीम्नो ग्रामस्य। द्विक्रोशसीम्नोऽपि चतुर्धनुः-सहस्रेषु तिर्यग्धनुःसहस्रचतुष्कगुणितेषु दशधनुर्लक्षपरिमाणाः षोडशभागाः भवन्ति। तत्र दश भागाः पञ्चानां कुलशतानां क्षेत्राणि। एको भागो देवस्थानादिषु। कुल-वृद्धावपि तावता चरितार्थत्वान्न वर्धते।

तस्मात् साधारणोपभोग्यत्वाद् वृद्धिः प्रत्यन्तभूम्यधिके तु न निवार्यते। क्षेत्रादयस्त्वसाधारणोपभोग्यत्वान्नियम्यन्ते। शेषाः पञ्च भागाः प्रत्येकमर्धविभक्ता वास्तुगोभूमिषु पर्याप्ताः। एवमध्यर्धक्रोशसीम्न्यपि धनुःसहस्रत्रितयेन गुणिते दश-धनुर्लक्षपरिमाणा नव भागा भवन्ति। तत्र पञ्च भागाः अर्धत्रिकुलशतानां (?) क्षेत्राणि [illegible]····षु भागेषु अर्धत्रिकभागाः पुनः प्रत्येकमर्धविभक्ताः गोवास्तुभूमिप्रवि-[illegible]र्याः। शेषोऽप्यर्धभागः देवस्थानादिषु साधारणोपभोग्यो भवति। अत्र भूम्याधि-[illegible]त्र निवार्यते वृद्धिः। यथोक्तम्

"ग्रामादर्धं कुलक्षेत्रमर्धार्धं गोनिवासभूः।
धनुः सहस्रमात्रं तु पुण्यस्थानाय शेषयेत्॥
दशभागास्तथा क्षेत्रं पञ्चगोवास्तुभूमिषु।
शेषभागेऽप्यथैकस्तु पुण्यस्थाने विधीयते॥

**अष्टशतग्राम्याः मध्ये स्थानीयं, चतुश्शतग्राम्याः द्रोणमुखं द्विशत-ग्राम्याः [१]कार्वटिकं, दशग्रामीसङ्ग्रहेण सङ्ग्रहणं स्थापयेत् । अन्तेष्वन्तपाल-दुर्गाणि जनपदद्वाराण्यन्तपालाधिष्ठितानि स्थापयेत् ।**

**तेषामन्तराणि वागुरिकशबरपुलिन्दचण्डालारण्यचरा रक्षेयुः ।**

चाणक्यटीका

पञ्चभागास्तृतीयेऽपि क्षेत्राण्यर्धत्रिका अपि ।
वास्तुगोभूमिषु क्षेत्रं शेषं शेषे प्रकल्पयेत् ॥'' इति ।

अनया च कल्पनया भूम्या विहितां (?) स्थापयेत्, मा भूत् सीमाविवाद इति ॥

नीतिनिर्णीतिटीका

शूद्रकर्षकप्रायमिति । शूद्रकर्षकबाहुल्यं । विष्ट्यादिभिरुपभोग्यत्वात् । वैश्य-कर्षकाः स्वल्पाः, क्षत्रियब्राह्मणौ कर्षकत्वेन नेष्येते धर्म्मार्थक्षतेः । कुलशतावरमिति । कुलशतभेदे मतभेदस्तथाहि ।

'चुल्याधाने कुलं विद्यादित्याम्भीयाः प्रचक्षते ।
दम्पत्यं कुलमित्येके हलं त्वन्ये प्रचक्षत' इति ॥

चुल्याधानदम्पत्ययोः क्षेत्रविभागेऽनंगत्वादेकद्वित्रिहलत्वेन कुलं तदुत्तम-मध्यमावरतयेष्यते । कुलशतकृष्योऽवरो निकृष्टः क्रोशसीमा । पञ्चकुलशतकृष्यः पर उत्तमः क्रोशद्वयसीमा । सार्द्धद्वयकुलशतकृष्यो मध्यमः, सार्द्धक्रोशसीमा भवती-त्यर्थादापद्यते । तं ग्रामम् । शूद्रादिजातिसमूहो ग्रामः । चतुर्हस्तधनुःसहस्रद्वयं क्रोशः । गोरुमिति पर्याय···( नि ) शावसाने यावत्तं प्रदेशं गवां रुतं कृष्टं व्याप्नोति । तद्गोरुतं क्रोश इति च । पूर्वस्मात् क्रोशे पश्चिमचिन्हमुत्तरस्मात् क्रोशे दक्षिणचिह्न-मिति । शेषयोरप्ये·····धनुःसहस्रप्रमाण आयामो द्विधनुःसहस्रप्रमाणेन विस्तरेण गुणितश्चत्वारिंशद्धनुर्लक्षप्रमाणं क्षेत्रं···षष्टिलक्षाधिका धनुषां कोटिरिति । न चायं नियमो द्रष्टव्यः, भूमेः सारासारत्वात्···हारिकां ॥

''चतुर्गवं च म्लेच्छानां द्विगवं तु गवाशिनामिति ॥ इति ।'' दिग्दर्शनमेतत् । ···च ग्रामनिवेशः । गृहक्षेत्रगोप्रचारपुण्यस्थानदिग्विभागेन केचिदित्यत्रापि नियमो निरर्थकः ।

अन्योन्य···।

विवादपरिहारार्थं चिह्नान्याह–नदीशैलवनमिति । भ्रष्टिरिति । पाषाणोपरसि-कतादेर्व्या···पर्वतविकार एव । सेतुबन्धः कृत्रिमो जनविदितः । शमीशाल्मलीक्षीरवृक्ष-ग्रहणं चिरस्थायित्वार्थम् । शेषं प्रतीतम् ।

श्रीमूला

अष्टशतेत्यादि । अष्टशतग्राम्याः अष्टशतानां ग्रामाणां समूहस्य, मध्ये स्थानीयं

१. खार्वटिकं पा. ।

श्रीमूला

नदाख्यं तावद्ग्रामजनतायाः क्रयविक्रयादिकर्मणोपजीव्यं रमणीयं महाग्रामं, स्थापयेत् निवेशयेत्। चतुश्शतग्राम्याः मध्ये, द्रोणमुखं तदाख्यं स्थानीयप्रत्यवरं ग्रामभेदं स्थापयेत्। द्विशतग्राम्या मध्ये, कार्वटिकं तदाख्यं कर्वटापरपर्यायं द्रोणमुखप्रत्यवरं स्थापयेत्। दशग्रामीसंग्रहेण ग्रामदशकसंग्रहणेन, संग्रहणं तदाख्यं कर्वटादधमं महा(ह)-द्रङ्गापरपर्यायं स्थापयेत्।

अन्तेष्विति। अन्तेषु जनपदावसानेषु, अन्तपालदुर्गाणि, अन्तपालाधिष्ठितानि अन्तपालैरनुष्ठिताध्यक्ष्याणि, जनपदद्वाराणि जनपदप्रवेशमार्गभूतानि च स्थापयेत्।

तेषाम् अन्तराणि अन्तपालदुर्गाणामन्तरालदेशान्, वागुरिकशबरपुलिन्दचण्डालारण्यचराः वागुरिकाः मृगबन्धनजीविनः, शबराः शूद्राद् भिल्लयां जाताः, पुलिन्दाः निष्ट्यात् किरात्यां जाताः, चण्डालाः श्मशानपालाः अरण्यचराः वनचारिणश्च, रक्षेयुः।

चाणक्यटीका

अष्टशतग्राम्या मध्य इति। चतुर्षु पार्श्वेषु द्वयोर्द्वयोः ग्रामशतयोरेव स्थानं मध्यं भवति। अनतिविप्रकृष्टत्वात् समुदयो व्यवहारो वाऽत्र संग्रहीतुं शक्यते। समुदयस्य व्यवहाराणाञ्च स्थानाय हितत्वात् स्थानीयम्। द्रोणमुखमिव द्रोणमुखम्। चतुर्षु ग्रामशतेष्विव यः प्रत्यायः स तेन विच्छिन्नः स्थानीये प्रक्षिप्यत इति (?) कार्पटिकमिति रूढम्। विषयव्यवहाराणां स्थानत्रयम् (?)। दशग्रामीसंग्रहेणेति। दश दश ग्रामान् संहृत्य महत्तरायत्तान् योगक्षेमदानकरप्रविचयार्थं कृत्वा अनेन प्रकारेण प्रस्थापयेत्॥

अन्तेष्विति जनपदस्य। अन्तपालदुर्गाणि तेन रक्ष्यमाणत्वात्। जनपदद्वाराणीति। अपरिज्ञातानीति मन्यतो (?) निष्कासप्रवेशयोः प्रतिषेधार्थम्। अन्तपालाधिष्ठितानीति। तेन नित्यमविरहितत्वात् स्थिरीकरणार्थं पुनर्वचनम्। तेषामिति चतुर्णां स्थानीयादीनाम् अन्तरालानि। पुलिन्दाः शबरविशेषा एव। अत्यन्तं जनपदभाषाचारानभिज्ञाः अरण्यचराः मृगय्वादयः। रक्षेयुः यथा उन्मार्गेण कश्चिन्न सञ्चरति॥

नीति-निर्णीतिटीका

ग्रामविशेषानाह अष्टशतग्राम्याइति। अष्टशतग्रामसमाहारस्य मध्ये चतुर्दिशं द्वे द्वे ग्रामशते निवेश्य तन्मध्ये स्थानीय''समुदायव्यवहारस्थानाय हितमिति। तथैव चतुःशतग्राम्यामध्ये द्रोणमुखम्। यथा द्रोणमुखं चतुराढकोपलक्ष्यमेवं ग्रामशतचतुष्टयोपलक्षितम्। तद्वद् द्विशतग्राम्याः कार्वटिकमिति रुढिसंज्ञा। दशग्रामीसंग्रहेणेति। दश दश ग्रामाः सङ्गृह्यन्ते येन मुख्यग्रामेणासौ सङ्ग्रह एवं स्थानीयस्य द्वे द्रोणमुखे चत्वारि कार्वटिकानि। अशीतिः सङ्ग्रहाः। अनेन विभागेन जनपदनिवेशः कार्यः।

पालनार्थमाह-अन्तेष्वन्तपाल इति। अन्तेषु जनपदस्य चतुर्दिशम्। अन्तपालदुर्गाणि जनपदरक्षाक्षमाणि। जनपदद्वाराण्यन्यतःप्रवेशनिर्गमयोर्निषेधात्। अन्तपालैः प्रबलबलयुक्तैऽरधिष्ठितानि स्थापयेत्। तेषां चतुर्णां द्वाराणामन्तराणि वागुरा मृगबन्धार्थं जालं तेन व्यवहरन्तीति वागुरिका व्याधाः। शबराः किंचिज्जनपदभाषाभिज्ञा वनेचराः। पुलिन्दास्तु भाषानभिज्ञाः। चण्डालाः प्रतीताः। अरण्यचराः सर्पग्रहादयः। ते रक्षेयुः प्रवेशनिर्गमप्रतिषेधं कुर्युरित्यर्थः।

[ ब्रह्मदेयादिरूपेण क्षेत्रपरिकल्पनाविधिः ]

**ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यो ब्रह्मदेयान्यदण्डकराण्यभिरूपदायकानि प्रयच्छेत्। अध्यक्षसङ्ख्यायकादिभ्यो गोपस्थानिकानीकस्थचिकित्सकाश्वदमकजङ्घाकरिकेभ्यश्च[1] विक्रयाधानवर्जम् ॥**

श्रीमूला

ऋत्विगित्यादि। ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यः याजकाध्यापकपुरोधश्छान्दसेभ्यः। अदण्डकराणि दण्डो नाम द्विःकृषिक्लृप्तौ त्रिःकृष्यनुष्ठानादिनिमित्तः कुल्यादिजलात्युपयोगादिनिमित्तो वा दमः, करः कृषिफलषष्ठांशः तदुभयरहितानि। अभिरूपदायकानि अभिरूपेभ्यः अर्हेभ्यः पुत्रादिभ्यो, दायः दानं येषां तानि तथाभूतानि वंशपारम्पर्यभोग्यानीत्यर्थः। यथेच्छविनियोगयोग्यानीति वा। ब्रह्मदेयानि ब्राह्मणेभ्यो देयानि अर्थात् क्षेत्राणि, प्रयच्छेद् दद्यात्। अध्यक्षेत्यादि। विक्रयाधानवर्जं मूल्यमादाम दानं विक्रयः, आधीकरणमाधानम्। तदुभयाधिकारवर्जम् केवलोपभोगायेत्यर्थः। अध्यक्षसंख्यायकादिभ्यः अध्यक्षाः सुवर्णाध्यक्षादयः संख्यायकाः गणकाः तत्प्रभृतिभ्यः। गोपस्थानिकानीकस्थचिकित्सकाश्वदमकजंघाकरिकेभ्यश्च गोपः दशग्रामीपञ्चग्राम्याद्यधिकारी, स्थानिको नगरचतुर्भागाधिकारी, अनीकस्थः हस्तिशिक्षाविचक्षणः, चिकित्सको वैद्यः, अश्वदमकः अश्वशिक्षाभिज्ञः, जंघाकरिकः जांघिको दूरदेशगतागतजीवी, एतेभ्यश्च, क्षेत्रं प्रयच्छेदिति सामर्थ्यलभ्यम्।

चाणक्यटीका

क्षेत्रकल्पनेदानीमुच्यते। त्रिवर्गमूलत्वाद् धर्मस्य, तदर्थं तावता (?) ब्राह्मणेभ्यो दानार्हाणि धर्मार्थं वा दानार्हाणि। ब्रह्मदेयानि, क्षेत्राणीति, वक्ष्यमाणापेक्षया। अदण्डकराणीति, क्षेत्रसम्बद्धेन राज्ञा दण्डकरौ न ग्राह्यौ। अभिरूपदायकानीति। वृत्ताध्ययनतपःसम्पन्नाः तत्पुत्रपौत्रादयोऽपि स्वामिनो येषामिति। तानि तेभ्यो न पुनः राजदेयानीत्यर्थः। अध्यक्षाः समाहर्त्रादयः, संख्यायकाः गाणनिकाः, आदिशब्दात् लेखकरूपदर्शकादयः। दशकुलीचिन्तको गोपः। वक्ष्यति—"दशकुलीं गोपश्चिन्तयेत् (अधि० २ अ० ३९) इति। स्थानिकाः स्थानमुख्याः। अनीकस्थाः हस्तिलक्षणविदः।

हस्त्यश्वनराणां चिकित्सकाः। अश्वदमकाः स्वनामप्रतीताः। जङ्घाकारिकाः लेखहारकाः तेभ्योविक्रयाधानवर्जम्। ब्रह्मदेयानां विक्रयाधेयत्वात्॥

नीति-निर्णीतिटीका

धर्म्मोद्दिश्ये(शे)न भूमिदानमाह ऋत्विगाचार्येति। ऋत्विजः शान्तिगृहाधिकृताः षोडश। आचार्या विद्यानामुपाध्यायाः। पुरोहितः प्रतीतः। श्रोत्रियाश्छन्दोऽध्यायिनः स्नातकास्तेभ्यः, ब्रह्मदेयानि। तदभिधानक्षेत्राण्यदण्डकराणि। अभिरूपदायादकानि। यस्मै दत्तं तदनुरूप एव दायादो भवितुमर्हतीत्यर्थः।

---

१. कारिकाः पा०।

[ क्षेत्रेषु कृपिसौकार्यपरिकल्पनम् ]

**करदेभ्यः कृतक्षेत्राण्यैकपुरुषिकाणि प्रयच्छेत् । अकृतानि[1] कर्तृभ्यो नादेयात् अकृषतामाच्छिद्यान्येभ्यः प्रयच्छेत्; ग्रामभृतकवैदेहका वा कृषेयुः । अकृषन्तोऽवहीनं[2] दद्युः । धान्यपशुहिरण्यैश्चैनाननुगृह्णीयात्, तान्यनु सुखेन दद्युः । अनुग्रहपरिहारौ चैभ्यः[3] कोशवृद्धिकरौ दद्यात्, कोशोपघातकौ[4] वर्जयेत् । अल्पकोशो हि राजा पौरजानपदानेव ग्रसते । निवेशसमकालं यथागतकं वा परिहारं दद्यात् । निवृत्तपरिहारान् पितेवानुगृह्णीयात् ॥**

---

नीति-निर्णीतिटीका

प्रकर्पेण यच्छेदपुनर्विलोपाय ।

अर्थोद्देशानाह । अध्यक्षेति । अध्यक्षाः समाहर्त्रादयः । संख्यायका गणितज्ञाः आदिग्रहणाद्रूपदर्शकनीवीग्राहकोत्तराध्यक्षाः । गोपो विंशतिकुलीं विंशतिग्रामीं वा गोपायतीति । स्थानिको गोपानामेवाधिष्ठातृस्थाने नियुक्तः । अनीकस्थाः प्राधान्याद्धस्तिन एवानीकं तद्विनयाधानाय तत्र तिष्ठन्तीत्यनीकस्था हस्तिशिक्षाविदः । चिकित्सका नरहस्त्यश्वादिभिषजः । अश्वदमकाः शालिहोत्रविदोऽश्वानां विनयकर्तारः । जंघाकारिका दीर्घाध्वगा लेखहारकादयः । तेभ्यो विक्रयाधानवर्जानि । अनेन ब्रह्मदेयानामभिरूपेषु विक्रयाधानमनिषिद्धं भवति अदण्डकरत्वं ब्रह्मदेयैः समानमेतेषामपि ॥

श्रीमूला

करदेम्य इति । करदेभ्यः राजभागदायिभ्यः, कृतक्षेत्राणि कृतानि क्षेत्राणि पूर्वसिद्धसौष्ठवान् व्रैहेयशालेयादीन् केदारान्, ऐकपुरुषिकाणि एकेनैव ग्रहीतृपुरुषेण भोग्यानि, प्रयच्छेत् । अकृतानि साध्यसौष्ठवानि अर्थात् क्षेत्राणि, कर्तृभ्यो नादेयात् सौष्ठवसाधकेभ्यः करदेभ्यो न गृह्णीयात्, सर्वविधस्वाम्येन तेष्वेव स्थापयेदित्यर्थः । इह आदेयादित्यात्मनेपदाकरणमार्षम् ।

अकृषतामिति । अकृषतां कृषिमकुर्वतां, क्षेत्राणीति शेषः । आच्छिद्य हृत्वा, अन्येभ्यः प्रयच्छेत् । तदभावे ग्रामभृतकवैदेहकाः ग्रामाधिकारिणो वणिजश्च कृषेयुः । अकृषन्तोऽभ्युपेत्य कृषिमकुर्वन्तः, अवहीनं नष्टं दद्युः । अनुपायाच्केदकर्षणं तदा कथमि-

---

१. अकृतानि चेति नी० पा० ।

२. अकृषन्तोवाऽवहीनं नी० पा० ।

३. चेतेभ्यः ।

४. (ति) ।

श्रीमूला

त्याह—धान्यपशुहिरण्यैश्च कृष्यनुष्ठानापेक्षितैः, एतान् अभ्युपेतकृषीन् अनुगृह्णीयात् । अनु पश्चात् कृषिफलप्राप्त्यनन्तरं, तानि धान्यादीनि, सुखेन आत्मवृत्त्यपीडया दद्युः, कर्षका राज्ञे । अनुग्रहेत्यादि । एभ्यः कृषिकर्तृभ्यः, अनुग्रहपरिहारौ च स्वस्थ वृद्धयर्थं दीयमानं द्रव्यमनुग्रहः, दौस्थ्यपरिहारेण स्वास्थ्यसिद्धयर्थं दीयमानं द्रव्यं परिहारः तौ कोशवृद्धिकरौ दद्यात् आत्मकोशवर्धने यथा पर्यवस्येतां तथा दद्यात् । कोशोपघातिकौ कोशक्षयफलौ अनुग्रहपरिहारौ वर्जयेत्, कुतः हि, यतः अल्पकोशः राजा पौरजानपदानेव ग्रसते पीडयति, स्वकोशपूरणार्थम् । निवेशेत्यादि । निवेशसमकालं परिहारं निवेशः इदम्प्रथमकुलस्थापनं तत्तुल्यकालं परिहारं तत्काले क्लृप्तो यः स्वास्थ्यसिद्धयर्थं उपकारस्तमित्यर्थः । दद्यात् यथागतकं वा दद्यात् आगतानतिक्रमेण च दद्यात् नवनवागतकुलेभ्योऽपि दद्यादित्यर्थः । निवृत्तेत्यादि । निवृत्तपरिहारान् प्रत्यर्पितपरिहारद्रव्यान्, पितेव, अनुगृह्णीयाद् वृद्धयर्थमनुग्रहद्रव्यं दत्त्वोपकुर्यात् ।

चाणक्यटीका

कृतानि क्षेत्राणि प्रहतानि हलाद्युपहतानि । हलाद्यकृतानि खिलानि कर्तृभ्यः । "करदेभ्य एव आधेयानी"ति वचनात् पुत्रेभ्योऽपि नेयम् ॥

अकृषतां करदानां कृतानि तद्भिन्नखिलानि वा आच्छिद्य अन्येभ्यः प्रयच्छेत् । पुनस्तेषामेवेदं भविष्यतीति उपेक्षया तदसंभवाद्वा नैतेऽपि कृषेयुः, तदा ग्रामभृतकाः नापितादयः, वैदेहका वाणिजकाः कृषेयुः । अवहीनमिति क्षेत्रं स्वीकृत्य अकृषन्तः यत् फला···। धान्यादिभिरनुगृह्णीयात् । अशक्ता न कृषेयुः । सुखेनेति अपीडया उत्पन्नं स्तोकमित्यर्थः ॥

अनुग्रह उक्तलक्षणः । परिहारः उचितस्यानादानम् । कालनियमेन त्रिवार्षिकः पाञ्चवार्षिको वा । कोशवृद्धिकराविति । यदा मन्येत आभ्यां जनपदोऽसक्तः प्रभूतकृष्यादिकर्मतया धान्यपण्यहिरण्यैः कोशं मे वर्धयिष्यतीति तदाद्या ( ? ) यदा वनभोजनाद्यासक्तस्तदा वर्जयेदित्यर्थः । प्राप्ते पुनर्वचनं प्रवृत्तपूर्वयोरपि प्रतिषेधार्थमाह अल्पकोशो हीति । यथागतकं वेति । यावद् आयाताः प्रतिवसन्ति तस्य तदा गमनाद्यपेक्षया दद्यात् । तत्र धर्मकालापेक्षया उक्तधर्माधर्मार्थी हरिहारस्य । निवृत्तपरिहरानिति पूर्णपरिहारकालान् न परिहारानुशयात् पीडयेदित्यर्थः ॥

नीति-निर्णीतिटीका

करदेभ्य इति । करदकर्षकेभ्यो निवेशकाले कृते क्षेत्राण्यचिरकाला·····नि सुकरत्वादेकपुरुषिकाणि प्रयच्छेत् [ । ] उपगते तु पुत्रादौ पालने स्वेच्छा ॥

अकृतानीति । अकृतान्य···र्यमाणसंस्काराणि । वृत्त···दिकं कृत्वा ये कुर्वन्ति । तेभ्यः कर्तृभ्यो नोदयानि । तत्संततेरपीत्यर्थः । उभयापवादमाह अकृषतामिति । कृतमकृतं वा क्षेत्रमकृ [ षताम् आच्छि ] द्यान्येभ्यः प्रयच्छेन्मा भूत् क्षेत्रफलाहानिरिति ॥

ग्रामभृतकेति । ग्रामभृताः कुंभकारायस्कारादयो ग्रामेण भ्रियंत इति । वैदेहका

[ क्रयविक्रयानुकूलस्थानकल्पनं, तदनुकूलसेतुबन्धनविधिश्च ]

**आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् वारिस्थलपथपण्यपत्तनानि च निवेशयेत्। सहोदकमाहार्योदकं वा सेतुं बन्धयेत्। अन्येषां वा बध्नतां भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात्, पुण्यस्थानारामाणां च। सम्भूयसेतुबन्धादपक्रामतः कर्मकरबलीवर्दाः कर्म कुर्युः, व्ययकर्मणि च भागी स्यात्, न चांशं लभेत ॥**

---

नीति-निर्णीतिटीका

...॥ अकृषंतो—वे ति स्वयमकर्षणेऽन्येषामपि निषेधेऽवहीनं विनष्टक्षेत्रफलं क्षेत्रिणो दद्युः। कर्षणसामग्रीसंपादनायाह धान्यपशिवति।

धान्यैर्भोजनार्थं पशुभिः कर्षणाय बलीवर्दादिभिर्हिरण्यैराच्छादनार्थमाहत... ...त्कृष्यादिफलात् सुखेन तर्जनावरोधादिभिर्विना भूयोप्यनुग्रहं करिष्यामीति ...षिता दद्युरिति ॥

अनुग्रहेति दत्वाऽन्नमनुग्रहः पाश्चादपीडया ग्रहणमनुग्रहः। दंडकरादेर्ग्राह्यस्य ...हरणमग्रहणं परिहारः। तौ कोशवृद्धिकरौ चैतेभ्यो दद्यात्। अनुग्रहः परिहारो ... यत्र दत्तः कृष्यादिभिः कोशवृद्धिं करोति। तादृग्भूतौ दद्यात् कोशोपघातकौ ...र्जयेदित्येतस्मिन्नर्थापत्या सिद्धे अत्यंतनिषेधार्थं वचनं। प्रमादिनां व्यसनिनां च नैव ...द्यात्। कोशस्यानुत्पत्तेरुत्पन्नस्य च वा भक्षणात्।

अवर्जने दोषं दर्शयन्नाह अल्पकोशो हीति। कोशोपघातकानुग्रहपरिहारदाना... ...ल्पकोशो हि राजा पौरजानपदानेव ग्रसते पीडयति॥ "क्षीणा नरा निःकरुणा ...न्ति" त्यन्यायेनापि प्रजाभ्योऽर्थान् गृह्णाति ततश्च प्रकृतयः क्षीयन्ते। तस्मात्को... ...क्षयकरौ वर्जयेदिति भावः।

निवेशे परिहारविधिमाह निवेशसमकालमिति। निवेशे पूर्वगतानां यः ...लः पश्चादागतानामपि तदैव निवृत्तो भवतीति। तद्यथा पंचवार्षिकादिः परिहारो ... नत्र वर्षेण वर्षद्वयेन वा पश्चादागतानामपि निवेशोदित एव कालः समः प्रथम... ...वेशो दुःकरः पश्चात्सुकर इति भावः। अयं च भूतपूतपूर्वे ( भूतपूर्वे ? ) द्रष्टव्यः। ...गतकमिति। यदा आगतो भवति तदा परिहारकालो गम्यत इति द्वितीयः पक्षः। ... चाभूतपूर्वे द्रष्टव्यः। निवृत्तपरिहारान् जनपदान् पितेवानुगृह्णीयात्। जनपदे तु ...हूनमित्यनुशयो न कार्यः सांत्वपूर्वं करादिकमनुगृह्णीयादित्यर्थः।

श्रीमूला

आकरेत्यादि। आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् आकरकर्मान्तः ...व्यापारस्थानं, द्रव्यवनं दारुचन्दननिर्यासाद्युपकरणप्रसवक्षमं वनं, हस्तिवनं ...वनं, व्रजप्रचारः गोध्यक्षे वक्ष्यमाणः, वणिक्पथप्रचारः वणिक्पथव्यापारः एतान्,

## श्रीमूला

वारिस्थलपथपण्यपत्तनानि च जलपथस्थलपथपण्यक्रयविक्रयस्थानानि च, निवेशयेत् कारयेत्। पत्तनशब्दस्य क्रयविक्रयस्थानवाचित्वमाश्रित्येत्थं व्याख्यातम्। नावेकगम्यपुरवाचित्वाश्रयणे तु पण्यपत्तनं पण्यप्रधानं नौमात्रगम्यं पुरमिति व्याख्येयम्। पट्टनशब्दपाठे पुनः पण्यपट्टनं पण्यप्रधानं पट्टनं शकटैरश्वैर्नौभिश्च गम्यं पुरमित्यर्थः, 'पट्टनं शकटैर्गम्यं घोटकैर्नौभिरेव च' इति यादवाभिधानात्।

सहोदकमिति। सहोदकं नित्यप्रवृत्तोदकं नद्यादौ, सेतुं वारणं, बन्धयेत् कुल्यादिद्वारेण कृष्याद्यर्थम्। आहार्योदकं नद्यादितो वर्षासु तुंगस्थलेभ्यश्च समानेयजलं सेतुं वा बन्धयेत्। बध्नतां सेतुं रचयताम्, अन्येषां वा जनानां च, भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात्। भूमिः प्रभूतजलावरोधयोग्यं स्थलं। मार्गः जलप्रवेशनिर्गमसरणिः। वृक्षोपकरणं सारदार्वादिकम्। एतैरनुग्रहम् एतद्दानोपकारं कुर्यात्। पुण्यस्थानारामाणां च निर्मीयमाणानां विषये, भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात्। सम्भूयेत्यादि। सम्भूयसेतुबन्धाज् जनैः संघीभूय क्रियमाणात् सेतुबन्धाद्, अपक्रामतः अपसरतः अनिच्छया स्वीयं कर्मांशमकुर्वतो जनस्य, कर्मकरबलीवर्दाः भृत्याः उक्षाणश्च, कर्म कुर्युः राजा बलात् तैः कर्म कारयेदित्यभिप्रायः। अपक्रामतोऽन्यमपि दण्डमाह—व्ययकर्मणीति। व्ययकर्मणि च भागी अंशभाक् स्यात् अंशं च न लभेत, अर्थात् सेतुबन्धानन्तरभवे तत्फले।

## चाणक्यटीका

विषयसन्निवेशम् अभिधाय इदानीम् आश्रयाणां व्यवस्थापनमाह–एत्य अस्मिन्-कुर्वन्तीत्याकरः सुवर्णरूप्यताम्रादिप्रभवः। तत्र कर्मान्तान् वक्ष्यमाणविधानेन निवेशयेत् कोशार्थम्। द्रव्यवनं दार्वाद्युपलक्षणार्थम् संरक्षणेन वानेन (?)। हस्तिवनं त्रासच्छेदप्रतिषेधेन। व्रजं वक्ष्यमाणलक्षणं दोहनप्रतपालनाभ्याम्। वणिक्पथस्म प्रचरणं गतागताभ्यां क्रयविक्रयरक्षादिभिः। वारिपथपण्यानाम्-उपनदमुपसमुद्रञ्च पत्तनानि विक्रयस्थानानि। स्थलपथपण्यानाञ्च हैमवतदाक्षिणात्यानां वणिक्पथमेव कृतव्यवस्थानं निवेशयेदिति॥

सहोदकं तत्रैवोत्पन्नोदकम्। अन्यस्मादानीतोदकम् अहार्योदकम्। भूमिरुदकाधारस्य। मार्ग आहार्योदकस्य। उपकरणं शकटकुद्दालपट्टिकादि। पुण्यस्थानं सभाप्रपातटाकादि। आरामाः प्रयासफलार्थाः। तेषां भूम्यादिभिरेवानुग्रहः। अपक्रामत इति। सेतुबन्धात् संभूयानुक्त्वा कस्यचिदुत्तिष्ठतः कर्मकराः कर्मान्तरे नियुक्ताः, बलीवर्दाश्च बलादानीय कर्म कारयितव्या इत्यर्थः। व्ययकर्मणि चेति। व्ययेन यत्र खनकादीनां तत्र भागं वहेदित्यर्थः। नचांशमिति। कर्मकाले यदाज्ञापनाद्यनुग्रहः कृतः कर्मातिरिक्तं वा यदुपकरणम्। तस्य असन्निहितत्वान्न लभेत॥

## नीति-निर्णीतिटीका

ग्रामादीनां निवेशमभिधाय कोशोत्पत्तिस्थानानां निवेशमाह आकरेति। आ समंतात्क्रियंते सुवर्णादि येष्वित्याकराः। आकराद्युत्पन्नानां रत्नसारफल्गु-

[ राज्ञा ग्रामवृद्धैश्च भरणीयानां संक्षेपः ]

**मत्स्यप्लवहरितपण्यानां सेतुषु राजा स्वाम्यं गच्छेत् । दासाहितकबन्धूनशृण्वतो राजा विनयं ग्राहयेत् । बालवृद्धव्याधितव्यसन्यनाथांश्च राजा बिभृयात्, स्त्रियमप्रजातां, प्रजातायाश्च पुत्रान् । बालद्रव्यं ग्रामवृद्धाः वर्धयेयुः[१] आव्यवहारप्रापणात्, देवद्रव्यं च ॥**

नीति-निर्णीतिटीका

कृ्यानां संस्कारकर्मणामंतः समाप्तिर्येषु ते कर्मांताः । द्रव्यहस्तिवने इति द्रव्यं शाकतिनिशादिसारदारु तस्य वनानि । हस्तिनां च वनानि । व्रजानि गोमंडलानि पशुपालपरिकल्पनया । वणिक्पथप्रचारान् । वणिजां पंथा वणिक्पथः स्थले जले च तत्र प्रचारा स्वागमाश्चौराद्यपनयनेन । वारिस्थलपथपण्यपत्तनानि च । उपवनं उपसमुद्रं आ स्नदित्यापतत्पण्यं तन्यते क्रयविक्रयाभ्यां विस्तार्यत इति [ कार्वटिका ] दिविशेष च पत्तनं ततोन्यत्र क्रयविक्रयनिषेधान्निवेशयेदिति संबंधः ॥

सहोदकमेति । सहोदकं सहजोदकं आहार्यो ····[अन्य ] स्मादानीयमानजलम् ··उदकनिरोधार्थं । मृत्पाषाणादिभिबंधयेदिक्षुशाल्याद्यर्थं ॥

अन्ययेषां वा जनपदादीनां ब [ घ्नतां भूनिमार्गं ] वृक्षकुद्दालाद्युपकरणानुग्रहं कुर्यात् । पुण्यस्थानारामाणां च देवगृहादीनामारा ( मा ) णां भूम्यादिभिरनुग्रह ·· [ कुर्यात् ] ।

सम्भूयेति । संभूय सह सेतुबंधं करिष्याम इति समयं कृत्वा । व्ययकर्मणि ·· ··बलीवर्दाः ·····र्मणि च भागी हिरण्यभागदायी स्यान्न च फलस्याशं लभते ॥

श्रीमूला

मत्स्येत्यादि । सेतुषु, उत्पद्यमानानामिति शेषः । मत्स्यप्लवहरितपण्यानां मत्स्याः ··· प्लवाः, कारण्डवाः, जलजलजविहारिणः, हरितानि पद्मोत्पलकशेरुकादीनि, एषां ···नां, स्वाम्यं स्वामित्वं, राजा गच्छेत्, नतु सम्भूयसेतुकारिणोऽपि । दासेत्यादि । ···ण्वतः स्वरक्षकनिदेशावधीरिणः, दासाहितकबन्धून् दासान् गर्भदास-गृहजात-···-दायोपगतादीन् आहितकान् स्वामिना धनग्रहणेनाधितां नीतान् बन्धून् ···च राजा, विनयं प्रणतिं, ग्राहयेत् ! बालवृद्धव्याधितव्यसन्यनाथांश्च अनाथा ···दयः तांश्च, बिभृयात् पोषयेत् । अप्रजातां वन्ध्यां स्त्रियं, प्रजातायाः पुत्रांश्च, ··· मा च ते च यद्यनाथा इत्यार्थम् ।

बालेत्यादि । बालद्रव्यं बालस्य अप्राप्तव्यवहारस्य नाथहीनस्य द्रव्यं, ग्रामवृद्धाः, ··· नोपयुञ्जीरन्, तथैव स्थापयेयुर्वर्धनार्हं चेद् वर्धयेयुश्चेत्यभिप्रायः । कियन्तं ··· आ व्यवहारप्रापणात् व्यवहारप्राप्तिकालं यावत् । देवद्रव्यं च देवालयद्रव्यं च, ··· वर्जयेयुः, अवधेरयोगान्नित्यम् ।

---

१ वर्जयेयुः पा० ।

[ उत्पथगामिनां गृहस्थसन्न्यासिनां दण्डविधिः ]

**अपत्यदारान् मातापितरौ भ्रातॄनप्राप्तव्यवहारान् भगिनीः कन्याः विधवाश्चाबिभ्रतः शक्तिमतो द्वादशपणो दण्डोऽन्यत्र पतितेभ्यः**

चाणक्यटीका

प्लवाः पक्षिणः । हरितपण्यानि शाकादीनि । आहितकः स्वदासः अन्यस्वामिनः अर्थं गृहीत्वा य आहितः । अशृण्वतः स्वामिनां निविशताम् । विनयं ग्राहयेत् यथा— स्वामिनां विधेयीभवति । बालः अप्राप्तव्यवहारः । व्यसनी दुःखाभिभूतः । अनाथः निस्स्वजनः एते यदा शून्यनिवेशिताः विनाशीभवन्ति तदा एनान् बिभृयात् । अप्रजातामिति । गर्भिणीम् अनाथामित्येव । प्रजातायाश्च पुत्रानिति न तावतैव सनाथा भवंति ।।

बालद्रव्यमिति । यदा बालोऽनाथः स्यात् । ग्रामवृद्धाः व्यवहारिणः । वर्धयेयुः कृष्यादिप्रयोगैः । आ व्यवहारप्रापणादिति । "द्वादशवर्षा स्त्री प्राप्तव्यवहारा । षोडशवर्षःपुमान् ।" ( अधि० ३, अध्या० ३० ) इति । यच्च ग्रामदेवताद्रव्यं निवेशसमकाले दत्तं भूतपूर्वं वा तत् त एव वर्धयेयुः आ विनियोजनदित्यूह्यम् ।।

नीति-निर्णीतिटीका

मत्स्यप्लवेति । मत्स्यानां प्लवानां हरितानां नालिकादीनां पण्यानां शृंगाटककसेरूकादीनां सेतुषु जनपदवद्धेष्वपि राजा स्वाम्यं गच्छेत् । निविष्टस्य जनपदस्य विनयार्थमाह—

दासाहितकेति । दासा गृहजातादयः । आहितकाः अन्यैराधी ( न ) कृताः । बांधवाः पुत्रभ्रात्रादयः स्वामिवचनं गुरुवचनं वा विनयादशृण्वन्तो राजा विनयं ग्राहयेत् साम्ना दण्डेन वा ।।

बालवृद्धेति राजेति संबंधः । बालादीनामंतपतितोऽप्यनाथशब्दो विशेषणमन्यथातिप्रसंगस्स्यात् । व्यसनिनः पङ्ग्वादयः । स्त्रियमप्रजातां गर्भिणीमनाथामित्यपेक्ष्यं । प्रजातायाश्च पुत्रान् न तेषां मातृसद्भावमात्रेण सनाथतेति भावः ।।

बालद्रव्यमिति अनाथबालद्रव्यं ग्रामवृद्धा ग्रामकूटादयो वर्द्धयेयुः । कृष्यादिभिराव्यवहारप्रापणात् । "द्वादशवर्षा स्त्री षोडशवर्षः पुमान् प्राप्तव्यवहार इति । देवद्रव्यं च ग्रामवृद्धा वर्द्धयेयुरिति समुच्चयः । वृद्धाश्चात्र धर्म्मतोऽर्थतश्च द्रष्टव्याः । श्रोत्रियभोग्यत्वापायनाद्धर्म्मतो वृद्धिं यास्यति । उक्तं हि ।" अश्रोत्रियभोग्यं देवद्रव्यमपरुद्धकुमारहार्यमितिसनाथ बलादीनामभरणे दण्डमाह—

श्रीमूला

अपत्येत्यादि । अपत्यदारान् अपत्यं दारांश्च । दारमिति पाठे समाहारद्वन्द्वः । अप्राप्तव्यवहारान् भ्रातॄन् बालान् सोदर्यान् । कन्याः भगिनीः विधवा भगिनीश्च । शक्तिमतः रक्षणोपायवतः । पतितेभ्योऽन्यत्र पतितव्यतिरेकेण, अपत्यादीनामपतितानामेवारक्षणे दण्डो, नतु पतितानाम् ।

**अन्यत्रमातुः पुत्रदारं अप्रतिविधाय प्रव्रजतः पूर्वः साहसदण्डः, स्त्रियं च प्रव्राजयतः लुप्तव्यवायः[1] प्रव्रजेदापृच्छ्य धर्मस्थान्, अन्यथा नियम्येत ॥**

---

श्रीमूला

पतितेष्वपि प्रतिप्रसवमाह—अन्यत्र मातुरिति । माता तु पतितापि रक्षणीयै-त्यर्थः ।

पुत्रेत्यादि । पुत्रदारमप्रतिविधाय प्रव्रजतः पुत्राणां दाराणां च जीवनोपायमदर्शयित्वा प्रव्रजतः, स्त्रियं प्रव्राजयतश्च प्रव्रजन्तीं प्रयोजयतश्च, पूर्वः साहसदण्डः प्रथमः साहसदण्डः 'पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः' इति मनूक्तलक्षणः कर्तव्यः । लुप्तेत्यादि । लुप्तव्यवायः निश्शेषनष्टमैथुनशक्तिः पुरुषः । धर्मस्थान् धर्मशास्त्रानुसारेण व्यवहारनिर्णयेऽधिकृतान् प्राड्विवाकादीन्, आपृच्छय अनुज्ञाप्य, प्रव्रजेत् परिव्रजेत् सन्न्यस्येत्, अन्यथा नियम्येत अनेवंप्रव्रजन् कारागृहे निवेश्येत ।

चाणक्यटीका

शक्तिमत इति कार्योपकरणसम्पन्नस्य । पतितेभ्य इति महापातकयुक्तेभ्यः ।

"संवत्सरेण पतितः पतितेन समाचरन् ।"

इति दोषात् । माता तु पतिताऽपि गर्भधारणाद्युपकारित्वाद् धर्मार्थैव भर्तव्या ॥

अप्रतिविधायेति । पुत्रानुत्पाद्य गुणवति पुत्रे कटुम्बमाधाय शेषपुत्राणां निवेशनं प्रतिविधानम् । पूर्वः साहसदण्ड इति । वक्ष्यमाणः । स्त्रियमिति आत्मीयाम् । लुप्तव्यायामः बाह्याभ्यन्तरशक्तिविकलः । धर्मस्थाः धर्माधिकरणनियुक्ताः । ते ह्यापृष्टाः किमयम् आलस्यात् प्रव्रजति, उत प्रव्रज्याफलदर्शित्वात्, किं पुत्रादीन् प्रतिविधायेति [illegible] एनमनुजानीयुः । अन्यथेति अलुप्तव्यायामोऽपि आलस्यात् अनापृच्छ्य वा [illegible]रेव नियम्येत बध्येत । पूर्वोक्तदण्डेन वा केवल······वृथा प्रव्रजेदन्यतः ॥

नीति-निर्णीतिटीका

अपत्यदारमिति [ अ ] पत्यदारं मातापितरौ भ्रातॄनप्राप्तव्यवहाहरान् [illegible] कन्या विधवाश्चाबिभ्रतः शक्तिमतो भरणशक्तिरस्ति चेद्गृहस्थस्य द्वादशपणो [illegible] पण इति मुख्यमाहृतद्रव्यं । अस्यापवादः अन्यत्र पतितेभ्यः माहपातक-[illegible]न्यत्राभरणे दंडः । अस्याप्यपवादः अन्यत्र मातुरिति । पतिताऽभिशस्ता वा न [illegible] त्यागमर्हतीति । उक्तं च मनुना—

नास्ति मातृसमो देवो नास्ति मातृसमो गुरुः ।
पतिता वाऽभिशस्ता वा न माता त्यागमर्हति ॥

---

[1] व्यायन्मः पा० ।

२

[ स्वदेशवासानर्हाणां परिगणनम् ]

**वानप्रस्थादन्यः प्रव्रजितभावः, सजातादन्यः सङ्घः, सामुत्थायकादन्यः समयानुबन्धो वा नास्य जनपदमुपनिविशेत ॥**

———————

नीति-निर्णीतिटीका

प्रजाक्षयनिषेधायाह पुत्रदारमिति । पुत्रदारमप्रतिविधाय ग्रासाच्छदनादिभिः प्रव्रजतः तपसे गच्छतः पूर्वः साहसदंडः । सार्द्धसाग्रपणशतद्वयप्रमाणो दंडः । अन्यथा अविरक्ता अपि कुटुंबभरणक्लेशभयात् प्रव्रजंति । उक्तञ्च

मर्त्ये गृहाश्रमो घोरः पार्थिवैरपि दुस्तरः ।
क्लिश्यन्त्यत्रासमर्था ये क्लीबाः पाषंडमाश्रिता इति ॥

स्त्रियं च चालुप्तव्यायामामनिवृत्तरजस्कामिति द्रष्टव्यं । प्रव्राजयतः प्रजोत्पत्ति-निरोधदोषात्पूर्वः साहसदण्डः ॥

लुप्तव्यायाम इति । लुप्तव्यायामः प्रजननशक्त्यभावात् प्रव्रजेद् वार्द्धके ( क्ये ) मुनिवृत्तिरिष्यते । तत्राप्यापृच्छय धर्म्मस्थान् वक्ष्यमाणन्यायात् प्रव्रज्योपदेशार्थं धर्मश˙˙दिति । अन्यथा करणे नियम्येत । दी˙˙

श्रीमूला

अथ जनपदवासानर्हानाह्—वानेत्यादि । वानप्रस्थादन्यः प्रव्रजितभावः वैखान-सादतिरिक्तः प्रव्रजितावस्थः, अर्थाच्चतुर्थाश्रमी, अस्य राज्ञो जनपदं नोपनिविशेत नाध्यासीत । प्रतिषेधनिमित्तं तु अभिशङ्कनीयशीलत्वमुक्तप्रायम् । सुजातादन्यः सङ्घः सुष्ठु जातात् राजराज्यक्षेमायोत्पन्नात् जनसंघाद् अन्यो दुर्जातः जनसङ्घः, अस्य जन-पदं नोपनिविशेत । सामुत्थायकादन्यः समयानुबन्धो वा समुत्थायकाः सम्भूयसेतु-बन्धादिराजप्रजानुकूलकर्मकारिणः तेषां सम्बन्धी सामुत्थायकः सामुत्थायकात् समयानु-बन्धाद् अन्यः राजजनपदद्रोहफलः समयानुबन्धः सङ्केतरचना च, अस्य जनपदं नोपनिविशेत ।

चाणक्यटीका

वानप्रस्थादन्यः प्रव्रजितभावः प्रव्रजितविशेषः परिव्राजकः श्रमणादिः सोऽपि तत्र न वसेत् । ते हि कर्मफलानां भोक्तारो गार्हस्थ्याद् ग्रामनिवासित्वात् कर्मापवादेन निविष्टमप्युत्थापयन्ति । वानप्रस्थास्तु साग्निहोत्राः वनवासित्वाच्च न जनपदाव-स्थानेन धर्मोपघाताय । जनपदनिवेशेन सह यो जातः यो वा भूतपूर्वस्य जनपदस्य सहोषितः तस्मादन्यः सङ्घः वृन्दचरः । सजातीयानां वा संघातानाम् अभोग्यः । धर्मा-र्थाभिवृद्ध्यनुकूलं समुत्थानम् । समुत्थाननिमित्तं यः समयानुबन्धः संहत्य प्रवृत्तिलक्षणः स सामुत्थानिकः । यथा—आगच्छत आरामं सेतुबन्धं वा ( कर्ता ) स्म इति । ततोऽन्यः यथा—आगच्छत, संहत्य विहराम इति । नास्य राज्ञो जनपदमुपनिवेशेत सेवेत इति ॥

[ ग्रामेषु विनोदस्थानानां उपवनप्रेक्षणशालादीनां निषेधः, तत्फलं च ]

**न च तत्रारामा विहारार्थाः शालाःस्युः । नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा न कर्मविघ्नं कुर्युः; निराश्रयत्वात् ग्रामाणां, क्षेत्राभिरतत्वाच्च पुरुषाणां, कोशविष्टिद्रव्यधान्यरसवृद्धिर्भवतीति ॥**

---

नीति-निर्णीतिटीका

प्रजाविप्लवनिषेधार्थमाह । वानप्रस्थेति वानप्रस्था दान्यः प्रव्रजितभावः । श्रमणसौगतादिः । सजातादन्यः संघो बहूनामेकोभावः सहोत्पन्नानामेव तस्मादन्यः संघः श्रेणीबंधः सामुत्थायिकादन्यः समयानुबंधः सम्यगुत्थानं धर्म्मार्थमिति समुत्थायस्तेन चरतीति । सेतुबंधतडागाद्यर्थः समयानुबंधस्तस्मादन्यः चौर्यादिसमयानुबंधो नास्य जनपदमुपनिविशेत । अयंनिवेशविषयो नियमः आगतवस्तु······ [नट]पडादयोराज्ञानुज्ञाताः प्रविशंत्यन्यथोदास्थितपरिव्राजकाश्रमादिपाषंडानामुपादानं ख्यं स्यात् । श्रेण्याः सेनाङ्गत्वं च हीयते ।

श्रीमूला

न चेति । तत्र जनपदे, आरामाः विहारार्थाः सर्वजनविनोदस्थानान्युपवनानि, शालाश्च प्रेक्षणीयप्रयोगशालाश्च, न स्युः । आरामशालाप्रतिषेधस्य फलमाह—नटेत्यादि । नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा कर्मविघ्नं कृष्याद्यनुष्ठानविघ्नं न कुर्युः । नाट्यनृत्तगानवादनकथावर्णननर्मक्रियासु स्ववृत्तिषु न चेष्टेरन्निति यावत् । कस्मात्, ग्रामाणां निराश्रयत्वान् नाट्यादिप्रयोगयोग्यशालारहितत्वात् । एवञ्च सिद्ध परमफलमाह—क्षेत्रेत्यादि । पुरुषाणां क्षेत्राभिरतत्वाद् विनोदस्थानाभावेन स्वस्वकर्मस्थानासक्तत्वात्, कोशविष्टिद्रव्यधान्यरसवृद्धिर्भवति कोशस्य, विष्टेः हठकारनिव्यस्य कर्मणः, द्रव्यस्य द्रुभवस्य दार्वादिपदार्थस्य, धान्यस्य, रसस्य तैलक्षुरसादेश्च वृद्धिः भवति । इति एवम्प्रकारं फलम् उन्नेयमित्यर्थः ।

चाणक्यटीका

विहारार्थाः क्रीडनार्थाः । शालाः पानगोष्ठीमण्डपाः कर्मविघ्नकरत्वात् । धर्मार्थास्तु स्युरेव । नर्तकाः छात्रादयः । वाग्जीवनाः कथाकुशलाः । कुशीलवाः प्लवनलङ्घनादिष्वभियोगिनः ( ये ) तत्रैव वर्तन्ते । निराश्रयत्वादित्यादिना फलमनुवदति । आरामाद्यभावेन निराश्रयत्वम् । नटाद्यभावेन क्षेत्राभिरतत्वम् । विष्टिः वक्ष्यमाणलक्षणा । द्रव्यं सारदार्वादि । कुप्यमितिपाठान्तरम् । रस्तैलादिः ।

नीति-निर्णीतिटीका

कोशवृद्ध्यर्थमाह नचेति । नच अ ( त ? ) त्र निवेशे आरामाः विलासैरारम्भकर्यका इति । छायामात्रोपयोगिनस्तु स्युः । विहारार्था वा शाला द्यूतादिक्रीडार्थाः

[ राजकर्तव्यसङ्ग्रहः ]

**परचक्राटवीग्रस्तं व्याधिदुर्भिक्षपीडितम् ।**
**देशं परिहरेद्राजा व्ययक्रीडाश्च वारयेत् ॥४९॥**
**दण्डविष्टिकराबाधैः रक्षेदुपहतां कृषिम् ।**
**स्तेनव्यालविषग्राहैः व्याधिभिश्च पशुव्रजान् ॥५०॥**
**वल्लभैः कार्मिकैः स्तेनैः अन्तपालैश्च पीडितम् ।**
**शोधयेत् पशुसङ्घैश्च क्षीयमाणवणिक्पथम् ॥५१॥**
**एवं द्रव्यं द्विपवनं सेतुबन्धमथाकरान् ।**
**रक्षेत् पूर्वकृतान् राजा नवांश्चाभिप्रवर्तयेत् ॥५२॥**

इति कौटिलीऽर्थशास्त्रेअध्यक्षप्रचारे द्वितीयाधिकरणे जनपदनिवेशः
प्रथयोऽध्यायः, आदितो द्वाविंशः ।

---

नीति-निर्णीतिटीका

शाला न स्युः । कर्षणे विहरणात् कर्म्मविघ्ने कोशावृद्धिरिति भावः । नटादयः प्रतीतास्ते च कृषिकर्मविघ्नं प्रेक्षणादिभिर्न कुर्युरिति अत्र हेतुः—

निराश्रयत्वादिति निराश्रयत्वाद्ग्रामाणां शालारामाभावात् क्षेत्रभिगमत्वाच्च पुरुषाणां नटाद्यभावात् । कोशादिवृद्धिर्भवति । कोशो हि हिरण्यदानात् । विष्टिः सीतादिसाहाय्यदानात् । द्रव्यं वस्त्रादि । धान्यानां रसानां तैलघृतादीनां वृद्धिर्भवति । तद्वृद्धया राज्यवृद्धिः ।

श्रीमूला

परचक्रेति । राजा परचक्राटवीग्रस्तं परचक्रं शत्रुकपटः शत्रुसैन्यं वा । अटवी तात्स्थ्याद् अटवीपालः ताभ्यां ग्रस्तं, व्याधिदुर्भिक्षपीडितं, देशं परिहरेत् परचक्रादिभ्यो दूरीकुर्यादित्यर्थः । व्ययक्रीडाश्च धनव्ययहेतुभूताः क्रीडाश्च वारयेत् ॥

दण्डविष्टीति । दन्डविष्टिकराबाधैः दण्डविष्टिकरणामतिरेचननिमित्ताभिः पीडाभिः, उपहतां कृषिं रक्षेत् युक्तदण्डविष्टिकरो भूत्वेत्यार्थम् । स्तेनव्यालविषग्राहैः व्याधिभिश्च उपहतान् पशुव्रजांश्च रक्षेत् स्तेनादिभिरुपघातो यथा न भवेत् तथा पालयेत् ॥

वल्लभैरित्यादि । वल्लभैः राजदयितैः, कार्मिकैः राजशुल्काधिकृतैः, स्तेनैः, अन्तपालैः, पशुसङ्घैश्च व्याघ्रादिसङ्घैश्च, पीडितम्, अत एव क्षीयमाणं वणिक्प्रचारवैरल्यात्, वणिक्पथं शोधयेत् रक्षेत् वल्लभादिपीडापरिहारद्वारेण ॥

एवमित्यादि । स्पष्टार्थः श्लोकः ॥

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे प्रथमोऽध्यायः जनपदनिवेशः, आदितो द्वाविंशः ॥

चाणक्यटीका

न केवलं निविशमानमेव प्रतिपालयेत् चिरोषितमपि सोपद्रवम्। तदाह-परचक्रेति। ग्रस्तमुपद्रुतमित्यर्थः। व्याधिना दोषजेन दैवजेन वा। परिहरेत् परिहारेण पालयेत्। एवंच राजा इत्युच्यते। व्ययक्रीडाः व्ययप्रधानाःक्रीडाः ॥

अनुचितो दण्डः अनुचितः करः एषाम् अतिशयः प्रयोगः आबाधः। कृषिं रक्षेद् यथा नावसीदति। तत्र अवबद्धत्वात् प्रजानाम्। ननु च निवेशोऽयं प्रकृतः न निविष्टरक्षणम्। कोऽत्र दोषः। यदि निवेशप्रसङ्गेन रक्षणमुच्यते। अथवा एतदपि निवेशनं यदनुपस्थानम्। विषं स्थावरजङ्गमादि ॥

वल्लभाः कार्मिकाः वणिक्पथकर्मणि शुल्कादौ नियुक्ताः। पशुसङ्घैरिति। व्याघ्रैः हस्तियूथैर्वा पीड्यमानम्। अथवा वल्लभादिभिः पीडितं वणिक्पथम्। रक्षेदिति वर्त्तते। क्षीयमाणं तृणलतागुल्मादिभिः खिलीभवन्तम्। पशुसङ्घैः गोष्ठैः। शोधयेत् प्रकाशं कुर्यात् ॥

कृषिः पाशुपाल्यं वणिज्या च वार्त्ता प्राधान्याद् रक्षणं स्वशब्देनैवाभिधाय एवमित्यनेन प्रकारेण द्रव्यद्विपवनादिकमपि—यथायथमुपद्रुतं प्रवृत्तं रक्षेदिति अतिदिशति। नवान् प्रवर्त्तयेत्। चिरोषितोऽपि देशे न पूर्वप्रवृत्तैरेव सन्तुष्येदिति ॥

जनपदनिवेशः प्रथमंप्रकरणम्।

॥ प्रथमश्चाध्यायः ॥

नीति-निर्णीतिटिका

उत्तरत्रापि परिहारमाह।

परचक्राटवीग्रस्तं    व्याधिदुर्भिक्षपीडितम्।
देशं परिहरेद्राजा व्ययक्रीडाश्च वर्जयेदिति ॥

परचक्रं शत्रुसैन्यं आटव्याटविकस्ताभ्यां ग्रस्तं कृतदाहविलोपं व्याधिदुर्भिक्षपीडितं देशं परिहरेत् दण्डकरादि न गृह्णीयादित्यर्थः। व्ययक्रीडाश्च कर्षकादीनां परस्परस्पर्द्धया ..... व्ययक्रीडा निषेधयेत्। विघ्नं मा भूदिति।

वार्त्तारक्षार्थमाहदण्डविष्टिकरेति।

दण्डविष्टिकरैः ..... चितादभ्यधिकगृहीतैः समाहर्त्रादिभिर्ये आबाधास्तैरुपहतां पीडितां कृषिं रक्षेदिति सम्बन्धः। स्तेनैश्चोरैर्व्यालैर्व्याघ्रादिभिर्विषैः स्थावरजङ्गमैर्ग्राहैः शिशुमारादिभिर्व्याधिभिरीशानज्वरादिभिरुपहतान् पशुव्रजान् रक्षेत् ॥

वल्लभैरिति—

वल्लभैः राज्ञीकुमारादिभिः। कार्म्मिकैः शुल्काध्यक्षादिभिः। स्तेनैरन्तपालैश्चा पीडितं रक्षेदिति वर्त्तते। पशुसङ्घैश्च क्षीयमाणं वणिक्पथं शोधयेदिति। राजा स्वपशुभिरननुगृह्णीयादिति भावार्थः।

अतिदेशमाह—

एवं द्रव्यमिति ।

एवमनंतरोक्तविधानेन वल्लभादिभिः पीड्यमानं दव्यवनं [ द्विपवनं ] हस्तिवनं सेतुबन्धमथाकारान्.....पूर्वकृतान् राजा नवांश्चाभिप्रवर्त्तयेत् ॥

इति मुग्धविलासाङ्कयोग्धमविराचेतीतिनिर्णीत्यभिधानायाम् कौटिलीय राजसिद्धान्तटीकायामध्यक्षप्रचारे ।

॥ प्रथमोऽध्यायः ॥

## विंशं प्रकरणम्

### द्वितीयोऽध्यायः

[ अकृष्यभूमौ गोप्रचार—तपोवनाराममृगवनादिपरिकल्पनेन साफल्यकरणम् ]

### भूमिच्छिद्रविधानम् ।

**अकृष्यायां भूमौ पशुभ्यो विवीतानि प्रयच्छेत् प्रदिष्टाभयस्थावरजङ्गमानि च ब्राह्मणेभ्यो ब्रह्मसोमारण्यानि, तपोवनानि च तपस्विभ्यो गोरुतपराणि प्रयच्छेत् । तावन्मात्रमेकद्वारं खातगुप्तं स्वादुफलगुल्मगुच्छमकण्टकिद्रुममुत्तानतोयाशयं दान्तमृगचतुष्पदं भग्ननखदंष्ट्रव्यालं मार्गयुकहस्तिहस्तिनीकलभं मृगवनं विहारार्थं राज्ञः कारयेत् ।**

---

श्रीमूला

भूमिच्छिद्रविधानमिति सूत्रम् । भूमिच्छिद्रं सस्याद्युत्पत्त्यनर्हा भूमिः तस्य विधानं सफलत्वसम्पादनप्रकारः उच्यत इति सूत्रार्थः । वणिक्पथप्रचारान् निवेशयेदित्युक्तमधस्तात्, निवेशयस्थानं त्वधुनाभिधीयते ।

अकृष्यायामिति । अकृष्यायां भूमौ मालगर्तशैलशर्करिलप्रायतया कृषिरहितायां भूमौ, पशुभ्यो गोमहिषमेषेभ्यः विवीतानि प्रयच्छेत् तृणजलवन्ति स्थलानि विसृजेत् । प्रदिष्टेत्यादि । किञ्च, प्रदिष्टाभयस्थावरजंगमानि दत्ताभयानि स्थावरजंगमानि स्थावराणि वृक्षलतादीनि जंगमानि सौम्यमृगादीनि च येषु तानि तथाभूतानि, गोरुतपराणि गव्यूतिपरमपरिमाणानि, ब्रह्मसोमारण्यानि वेदाध्ययनसोमयागाद्यनुष्ठानार्थानि वनानि, ब्राह्मणेभ्यः प्रयच्छेत् ब्राह्मणसमुदायोपयोगाय विसृजेत्, तपोवनानि च यथोक्तविशेषणानि, तपस्विभ्यः प्रयच्छेत् । तावदिति । तावन्मात्रं गोरुतपरम्, एकद्वारं, खातगुप्तं परिखापरिक्षिप्तं, स्वादुफलगुल्मगुच्छं मनोज्ञफललताप्रतानस्तबकम्, अकण्टकिद्रुमं कण्टकशून्यवृक्षयुक्तम्, उत्तानतोयाशयम् अगम्भीरजलाधारं, दान्तमृगचतुष्पदं दान्ताः मनुष्यपरिचयविश्वस्ता मृगाश्चतुष्पदाश्चान्ये यस्मिस्तत् तथाभूतं, भग्ननखदंष्ट्रव्यालं भग्ननखदंष्ट्राः उद्धृतनखदंष्ट्रा व्याला व्याघ्रादिमृगाः यस्मिस्तत् तथाभूतं, मार्गयुकहस्तिहस्तिनीकलभं मृगयुकर्मयोग्याः करिकरिणीकरिपोताः यस्मिस्तत् तथाभूतं, मृगवनं, राज्ञः विहारार्थं कारयेत् । मार्गयुकशब्दः आर्हीयठगन्तः । मार्गायुकेति मातृकापाठेषु द्वितीयस्याचो दीर्घत्वं साध्यम् ।

## चाणक्यटीका

शून्यनिवेशनसम्बन्धेन एतच्छेषं भूमिच्छिद्रापिधानमुच्यते। कृषियोग्या भूमिः क्षेत्रम्, तस्य विभागो व्याख्यातः। कृष्यनर्हायाः छिद्रायाः विवीतादिभिः छादनमपिधानमिवेति। यत्तूक्तम्—'एवंद्रव्यं द्विपवनम्', 'व्याधिभिश्च पशुव्रजान्' इति। तानि तत्प्रकाराणि च स्थानानि विवेश्यन्ते ॥

पशुव्रजस्थानमेव तावदाह—अकृष्यायामिति। पशवो ग्रामीणा राजकीया अन्ये वा पशुपालसम्बन्धिनः गावश्चखरोष्ट्रादयः। विवीतानि। विविधं वीतं येषु। विगतिकानि अशनखादनानि येष्विति यथासम्भवं गत्यादीनां ग्रहणम्। प्रदिष्टाभयेति। अच्छेद्यतया च दत्ताभयानि ऋक्षमृगादीनि येष्विति। ब्रह्मारण्यानि यत्र आरण्यकादि शास्त्रम् अधीयते। सोमारण्यानि यत्र यज्ञकर्माणि क्रियन्ते। गोरुतपराणि प्रकर्षेण क्रोशमात्राणि, ततः प्रकर्षे चोरव्यालाश्रयः स्यात्। तावन्मात्रम् गोरुतमात्रम्। लता वल्ल्यः। गुल्माः शाखाप्रतानवन्तः करमर्दप्राचीरामलकादयः। गुच्छाः प्रताना बिम्बीवर्षकादयः। तैः स्वादुफलैः युक्तम्। विश्रामाशनार्थम्। उत्तानोतोयाशयम्। श्रमतृष्णापनयार्थम्। उत्तानत्वात् सुखेनावतीर्यते, ग्राहाद्युपद्रवाभावश्च। चतुष्पदा महिषगवयादय आखेटकार्थाः दान्तत्वान्न घ्नन्ति। व्यालाः व्याघ्रादयः। तेच बालावस्थायामेव भग्ननखदंष्ट्राः कार्याः। तत्र मृगयाशीला मृगयवः तेषां कर्म मार्गयुकं पञ्चविधं हस्तिशिक्षोक्तम्। तेन युक्ताः तत् कर्म गोशब्दे (?) गौण्या वृत्त्या मार्गयुकमिति व्यपदिश्यते। तेहि स्वयं मृगयाङ्गत्वाद् रूपमादाय विशस्य च स्वामिने समर्पयन्ति। हस्तीति जातिशब्दोऽप्ययं हस्तिनीकलभग्रहणाद् अप्राप्तमदेऽपि विशिष्ट एव वर्त्तते। मत्तस्य व्यालस्य च हस्तिनः क्रीडाङ्गत्वात्, मदोन्मर्दनदोषाच्च परिहारः। कलभः सप्तवर्षो वा अष्टवर्षो वा, तेच मार्गयुका यत्रेति विग्रहः। विहारार्थं क्रीडार्थम्। सर्वसाधारणोपभोग्यमित्यर्थः ॥

## नीतिनिर्णीतिटीका

भूमिच्छिद्रापिधानमिति सूत्रम्। भूमेश्छिद्रमिवच्छिद्रमकृष्यत्वं धान्याद्यभावात्। अपिधानमावरणमपिधानमिवापिधानम्। धर्मार्थकामाख्यफलस्वभावात्। अपिपूर्वो दधातिरावरणे वर्त्तत इति सूत्रार्थः। सम्बन्धस्तु जनपदनिवेशशेषमेवैतत्। कृष्यायां भूमौ निवेश उक्तः। अकृष्यायामुच्यत इति ॥

(अकृष्यायामिति।) पाषाणादिभिरकृषियोग्यायां भूमौ पशुभ्यो गोमहिष्यादिभ्यो विवीतानि तृणारण्यानि प्रयच्छेत्। वी प्रगतिप्रजनकान्त्यसनखादनेषु पठितोऽत्र खादने द्रष्टव्यः ॥

(प्रदिष्टेति।) प्रदिष्टं दत्तमभयं छेदवधनिषेधात् स्थावराणां वृक्षादीनां, जंगमानां पक्षिमृगादीनां येषुं तानि, तपस्विभ्यो वानप्रस्थस्नातकादिभ्यो ब्रह्मसोमारण्यानि ब्रह्मारण्यं यत्रारण्यकादिवेदोपनिषदधीयते। सोमारण्यं यज्ञभूमिस्तानि। गोरुतपराणि क्रोशपराणि। क्रोशः परं प्रमाणमिति। अधिकं प्रमाणं नेष्यते चौराद्याश्रयदोषात्।

**सर्वातिथिमृगं प्रत्यन्ते चान्यन्मृगवनं भूमिवशेन वा निवेशयेत् ।**

[ ओषधिवन हस्तिवनयोः विधानम् ]

**कुप्यप्रदिष्टानां च द्रव्याणामेकैकशो वा वनं निवेशयेत्, द्रव्यवन-कर्मान्तान् अटवीश्च द्रव्यवनापाश्रयाः । प्रत्यन्ते हस्तिवनमटव्या रक्षन् निवेशयेत् ॥**

---

नीति-निर्णीतिटीका

धर्मापिधानमुक्त्वा कामापिधानमाह—( तावन्मात्रमेकद्वारमिति । ) तावन्मात्रं गोरुतपरमेव च । एकद्वारं रक्षासौकर्यार्थम् । खातगुप्तं द्वारखातयोरुपादानात् प्राकारोपपन्नम् । स्वादुफला गुल्माः करमर्दकादयः । गुच्छा बदरामलकादय स्थाः शाखिनो यस्मिन् । अकंटकिनो द्रुमा यस्मिन् । उत्ताना अगाधेतरास्तोयाशया यस्मिन् । दांता विनयं ग्राहिताः, मृगा एणादयश्चतुष्पदा महिषगवयादयो····· योगार्थम् । भग्ना नखा दंष्ट्राश्च बालत्व एव येषां व्यालानां व्याघ्रादीनां ते यत्र । मार्गयुकमिति । मृगयुर्व्याधस्तस्य कर्म मार्गयुकं हस्तिशिक्षोक्तं येषां हस्तिहस्तिनीकल-भानां यस्मिन् । ते हि शिक्षावशात् मृगं विधृत्य हत्वा वा राज्ञेऽर्पयंतीति मृगयावनं विहारार्थं राज्ञः कारयेत् ॥

श्रीमूला

सर्वेत्यादि । प्रत्यन्ते समीपे, भूमिवशेन वा योग्यभूम्युपलम्भानुसारेणाप्रत्यन्ते वा, सर्वातिथिमृगं सर्वे अतिथिमृगा यस्मिन् देशान्तराल्लुब्धकोपद्रुता आगत्य वसन्ति तत् सर्वातिथिमृगं नाम, अन्यत् मृगवनं निवेशयेत् ।

कुप्येति । कुप्यप्रदिष्टानां कुप्याध्यक्षप्रकरणोक्तानां, द्रव्याणां शाकतिनिशादि-सारदारुवर्गस्य उटजचिमियादिवेणुवर्गस्य मालतीमूर्वादिवल्कवर्गस्य चेत्येतेषाम् एकै-कशो वा वनं निवेशयेत् एकैकस्य एकैकं वनं कल्पयेत् । द्रव्यवनकर्मान्तान् अटवीश्च द्रव्यवनसम्बद्धानि कर्माणि वनानि च, द्रव्यवनापाश्रयाः द्रव्यवनोपजीविनः पुरुषाः, निवेशयेयुरिति विपरिणामेन सम्बन्धः विदध्युरित्यर्थः ।

प्रत्यन्ते इति । प्रत्यन्ते जनपदावसानदेशे, हस्तिवनं नागवनम्, अटव्यारक्षम् अटव्या आरक्षाः परिरक्षका यस्मिंस्तत् तथाभूतं, निवेशयेत् । नागवनाध्यक्षः, पार्वतं नादेयं सारसम् आनूपं च पर्वताश्रयं नद्याश्रयं सरोव्यपाश्रयं साम्बुदेशाश्रयं च, नागवनं, विदितपर्यन्तप्रवेशनिष्कसनं विज्ञातपरिसराभिगमनिर्गमं कृत्वा, नागवनपालैः पालयेत् । हस्तिघातिनं शबरपुलिन्दादिं, हन्युः । स्वयंमृतस्य अर्थाद्धस्तिनः, दन्तयुगम्, आहरनः उपनयतः वनेचरजनस्य, सपादचतुष्पणो लाभः पारितोषिकं, देयः इति शेषः ।

चाणक्यटीका

वनवशेन वेति । जनपदस्येति यदि स्याद् उक्तवनदाच्छेदासंभवन्तौ (?) । न्याय्यपस्कारार्थम् ।

[ हस्तिवनरक्षणविधिः ]

**नागवनाध्यक्षः पार्वतं नादेयं सारसमानूपं च नागवनं विदित-पर्यन्तप्रवेशनिष्कसनं नागवनपालैः पालयेत् । हस्तिघातिनं हन्युः । दन्तयुगं स्वयंमृतस्याहरतः सपादचतुष्पणोलाभः ॥**

---

### चाणक्यटीका

अपृथग्विधानमाह–कुप्यप्रदिष्टानामिति । कुप्याध्यक्षोक्तानाम् । एकैकश इति सजातीयानां प्रायेणैकत्र संवर्त्तिनियोगसंपदश्च भवन्ति ( ? ) । चशब्दात् संकीर्ण-मपि । कर्मान्ताः द्रव्यच्छेदनपाटनादीनि । अटवीश्चेति । ताटस्थ्यादाटविकाद् रक्षार्थं विष्ट्यर्थञ्च । ( द्रव्यवनापाश्रयाः ) द्रव्यवनमपाश्रित्य तज्जातपण्योपजीविनः । अन्त्ये-वनवशेन वेति वर्तते ॥

प्रत्यन्ते जनपदोपघातप्रतिषेधार्थम् । हस्तिवनं हस्तिनां निवासभूमिर्वनम् । तद्यथा लौहित्यस्य प्रयागस्य गङ्गाया हिमवतश्च मध्ये प्राच्यं वनम् । जनपस्य तदन्तः-पातित्वादुपघातः स्यात् । तस्मात्तस्यैव प्रत्यन्ते निवेशयेद् व्यवस्थापयेत् । छेदाभावोऽ (त्र) त्रासनादिनिवारणेन । अटव्यारक्षम् । अन्यथा परोऽपि हस्तिबन्धं कुर्यात् । पूर्वमाश्रयत्वाद् द्रव्यहस्तिवनयोर्निवेशमात्रमुक्तम् । इह त्वकृष्यायामिति विषयप्रदर्शना-र्थमुच्यते ॥

### नीति-निर्णीतिटीका

सर्वातिथिमृगमिति । सर्वेऽतिथिवत् पूज्यन्ते दत्ताभयाः पोष्यन्ते धर्मार्थं यत्र प्रत्यन्ते तस्मिन् निवेशयेत् । अन्यद् वा वनं रक्षया निवेशयेदिति सम्बन्धः । चशब्दा-दन्यदपि मृगवनं निवेशयेत् । मृगयारण्ये निक्षेपार्थं, भूमिवशेन वा अप्रत्यन्तेऽपि यत्र मृगाः सन्तीति ।

अर्थापिधानमभिधातुमाह—(कुप्यप्रदिष्टानामिति ।) कुप्याध्यायप्रदिष्टानां द्रव्या-णामिति । तरूणां शाकतिनिशादीनां प्रत्येकश एकजातीयानां पृथक्पृथग् वनानि निवेश-येत् । द्रव्यवनकर्म ( र्मा )तांश्च वृक्षच्छेदनतक्षणादिस्थानानि निवेशयेत् । अटवीश्चा-टविकांश्च द्रव्यवनापाश्रया रक्षणार्थं निवेशयेदिति सम्बन्धः ।

हस्तिवननिवेशमाह—( प्रत्यन्ते इति । )

प्रत्यन्ते जनपदमध्ये पीडावहत्वात् हस्तिवनं निवेशयेदिति सम्बन्धः । अट-व्यारक्षमाटविकारक्षम् ॥

### श्रीमूला

नागवनेत्यादि । नागवनपालाः, हस्तिपकपादपाशिकसैमिकवनचरकपारिकर्मि-कसखाः हस्तिपक आधोरणः, पादपाशिकः पादपाशबन्धनकुशलः, सैमिकः सीमाधिकृतः, वनचरकः वनवासी, पारिकर्मिकः हस्तिपरिचरणचतुरः एतैः सहिताः, हस्तिमूत्रपुरी-

[ हस्तिसञ्चारसीमादिपरिज्ञानं प्रशस्तानां ग्रहणं च ]

**नागवनपालाः हस्तिपकपादपाशिकसैमिकवनचरकपारिकर्मिकसखाः हस्तिमूत्रपुरीषच्छन्नगन्धाः भल्लातकीशाखाप्रतिच्छन्नाः पञ्चभिस्सप्तभिर्वा हस्तिबन्धकीभिः सहचरन्तः शय्यास्थानपद्यालण्डकूलपातोद्देशेन हस्तिकुलपर्यग्रं विद्युः ॥**

———

श्रीमूला

च्छन्नगन्धाः हस्तिमूत्रपुरीषगन्धन्यक्कृतगन्धान्तराः, भल्लातकीशाखाप्रतिच्छन्नाः अरुष्कराख्यवृक्षविटपावच्छादिताः, पञ्चभिः सप्तभिर्वा हस्तिबन्धकीभिः सह गजबन्धनशिक्षिताभिर्वशाभिः सह, चरन्तः सन्तः, शय्यास्थानपद्यालण्डकूलपातोद्देशेन शयनास्थानपदपङ्क्तिविष्ठावप्राघातप्रदेशदर्शनेन, हस्तिकुलपर्यग्रं गजयूथसञ्चारपरमावधिं विद्युः ।

चाणक्यटीका

इदानीं प्रचाररक्षणग्रहणानि अनन्तरवनसंबन्धेनाह—नागवनाध्यक्ष इति । अस्मादेवऽनुमतनियोगः । पर्वतादिचरत्वात् पार्वतादिव्यपदेशं चतुर्विधम् । ननु च नदी पर्वत उभयञ्चेति त्रिविधः प्रचार उक्तः तत्रा (? न्त्रा) न्तरे । सत्यम् । निवासभूमावेतानि स्थानानि सम्भवन्ति इति पालनापेक्षया भेद उक्तः । अनूपं बहुपङ्कोदकप्रायम् । विदितो ज्ञातः पर्यन्तः प्रमाणं प्रवेशनिष्कासौ च तत्रत्यानां हस्त्युपघातिनां च यत्र । नागवनपालास्तदायत्ता एवाटविकाः । हन्युरिति नागवनपालाः । आहरत इति अर्पयतः, नागवनपालस्य श्रमवधार्थम् । पानभोजनाय यातः (?) कुटुम्बार्थं पणचतुष्टयमिति उभयथाऽस्य प्रीतिरुत्पादिता । लाभोऽध्यक्षेण कार्य इति शेषः ॥

हस्तिपको हस्त्यारोहः । पादपाशिकः पादपाशनियुक्तः । सीमको वनमर्यादाभिज्ञः । वनचरो लुब्धकः । पारिकर्मिको रज्जुवेण्वाद्युपकरणसंपादकः । तत्रत्यहस्तिमूत्रादिव्यवहितात्मगन्धाः । हस्तिनो भल्लातकि (? क) वृक्षं परिहरन्ति । अतस्तत्तत्रवर्तीभिः शाखाभिर्व्यवहितात्मरूपाः । शाखाग्रहणं वृक्षानुकारार्थम् । पञ्चभिः सप्तभिर्वेति । यथोक्तम्—

संयोगकामो नैराश्यं युग्मासु प्रतिपद्यते ।
अयुग्मासु रयेत्त (? मेता) स्मात् पूरणाशंसयावशः ॥ इति ।

हस्तिबन्धक्यो हस्तिगणिकाः । शय्यास्थानं पांसुवालुकापङ्कादि । पद्यं पदनिवेशचिह्नम् । लण्डं पुरीषम् । कूलघातो नदीकूले दन्ताभ्याघातः । एत एवोद्देशाः । पर्यग्रं समग्रम्, अभिन्नसञ्चारं वा ॥

नीति-निर्णीतिटीका

( नागवनेति । ) चतुर्विधं वनं पालयेदिति सम्बन्धः । पवर्ते भवं पार्वतं तस्य लक्षणं कटुतिक्तकषायाम्लवृक्षौषधिरसद्रवः । पार्वतस्तृणपाषाणविषमो देश उच्यते । नद्यां भवं नादेयम् । तथा च उक्तम्—

नलवंजुलविष्यन्दिवालुकास्थलसंयुतः ।

सर्वसाधारणद्रव्यो नादेयो देश उच्यते ।।

सरसि भवं सारसम् । उक्तं च—

उत्तृणः स्थलसंरोधी स्निग्धमूलवनौषधिः ।

विदाही जलविष्यन्दी सारसः संप्रकीर्तितः ।।

तथा—

सुस्वादुमधुरस्निग्धकषायौषधिवीरुधः ।

बहुपंकोदकक्षारः सोऽनूपो देश उच्यते ।।

तत्र भवमानूपम् । एवं चतुर्विधमपि वनं नागवनपालैः कृत्वा नागवनाध्यक्षः पालयेत् । हस्तिनां वनं सर्वोप·····वनिषेधात् । विदितपर्यन्तप्रवेशनिष्कासमिति सम्बन्धः ।।

( हस्तिघातिनमिति । ) हस्तिघातिनं हन्युर्नागवनपालाः । दंतयुगं स्वयंमृतस्य हस्तिनो नागवनपालस्यान्यस्य वाऽऽहरतः सपादचतुष्पणो लाभः । पादस्याधिकत्वं तात्कालिकभोजनार्थमन्यथा पंचादिष्वपि संपूर्णेषु पणेषुदत्ते·····भोजनाय पणभंग-मस्थिभंगमिव मन्यमाना नातिप्रहृष्यंतीति भावः ।
ग्रहणार्थं हस्तिकुलाग्रज्ञानायाह—( नागवनपाला इति । )

नागवनपालाः, हस्तिपक आरोहकः, पादपाशनियुक्तः, सैमिको वनमर्यादा-भिज्ञः । वनचरकः शबरादिः, पारकर्मिकः शिक्षोक्तपरिकर्मकुशलस्तेषां सहाया भूत्वा, हस्तिमूत्रपुरीषच्छन्नगंधास्तद्रसभावितकंचुकिभिः । भल्लातकी आरुष्करवृक्षः तस्य पत्रोपलक्षितशाखाच्छन्नरूपाः । हस्तिनो हि भल्लातकी········हरंतीति । पंचभिः सप्तभिरिति विषमसंख्याग्रहणं हस्तिप्रलोभनार्थम् ।

उक्तं च—

संयोगकामो नैराश्यं युग्मासु प्रतिपद्यते ।

अयुग्माश्चारयेत्तस्मात्पूरणासं········[ ।। ]

हस्तिबंधक्यो गणिकाबंधक्य इव हस्तिप्रलोभनात् । ताभिरिति तदारुढः सहचरंतः कुल·····निक्षेपचिन्हाकारतः, लिं ( लें ? ) डं पुरीषाकारतःकूलाघातो दंतोत्खाताकारतः, तदुद्देशे··रिग्रहार्थं पर्यग्रं समस्तप्रमाणं विद्युर्ग्रहणार्थम् ।।

**यूथचरं एकचरम् निर्यूथं यूथपतिं हस्तिनं व्यालं मत्तं पोतं बद्धमुक्तं च निबन्धेन विद्युः । अनीकस्थप्रमाणैः प्रशस्तव्यञ्जनाचारान् हस्तिनो गृह्णीयुः ।**

[ हस्तिरक्षणफलं, हस्तिभेदाश्च ]

**हस्तिप्रधानो हि विजयो राज्ञाम् । परानीकव्यूहदुर्गस्कन्धावारप्रमर्दना ह्यतिप्रमा णशरीराः प्राणहरकर्माणो हस्तिन इति ॥**

**कलिङ्गाङ्गगजाः श्रेष्ठाः प्राच्याश्चेदिकरूशजाः ।**
**दाशार्णाश्चापरान्ताश्च द्विपानां मध्यमा मताः ॥५३॥**
**सौराष्ट्रिकाः पाञ्चनदाः तेषां प्रत्यवराः स्मृताः ।**
**सर्वेषां कर्मणा वीर्यं जवस्तेजश्च वर्धते ॥५४॥**

इत्यध्यक्षप्रचारे भूमिच्छिद्रपिधानं द्वितीयोध्यायः आदितस्त्रयोविंशः ।

---

श्रीमूला

यूथेत्यादि । यूथचरंयूथेनैव सह चरति नत्वेकाकी यस्तम्, एकचरम् एक एव चरति नतु यूथेन सह यस्तं, निर्यूथं यूथनिर्गतं, यूथपतिं, व्यालं क्रूरस्वभावं, मत्तं प्रभिन्नं, पोतं दशवर्षकं, बद्धमुक्तं च, हस्तिनं, निबन्धेन विद्युः यूथचरादिहस्तीयत्तादिकं गणनपुस्तके समारोप्य तेन जानीयुरित्यर्थः । अनीकस्थप्रमाणैः प्रशस्तव्यञ्जनाचारान् हस्तिशिक्षाविचक्षणैः प्रमाणभूतैः श्लाघितलक्षणचर्यान् हस्तिनः, गृह्णीयुः, राजार्थे ।

हि यस्मात् कारणाद्, राज्ञां विजयः हस्तिप्रधानः शत्रुजयः हस्तिमुख्यसाधनकः । हस्तिनां मुख्यसाधनत्वं विशदयितुमाह—परेत्यादि । अतिप्रमाणशरीराः महाप्रमाणदेहाः अत एव प्राणहरकर्माणः, हस्तिनः, परानीकव्यूहदुर्गस्कन्धावारप्रमर्दनाः परेषां शत्रूणां सैन्यविन्यासस्य प्राकारादिदुर्गस्य राजधान्याश्च विध्वंसकाः खलु । इतिर्हेतुवचनः गृह्णीयुरित्यनेन सम्बन्धनीयः ।

गजेषूत्तममध्यमाधमान् श्लोकाभ्यामाह—कलिंगेत्यादिना सौराष्ट्रिका इत्यादिना च । कलिगांगगजाः कलिंगांगदेशोद्भवा गजाः । दाशार्णाः दशार्णदेशभवाः, आपरान्ताः पश्चिमदेशजाः । प्रत्यवराः अधमाः । श्रेष्ठादीनां त्रयाणां वीर्यवेगप्रतापाः क्रियया वर्धन्त इत्याह—सर्वेषामित्यादि ।

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे द्वितीयोध्यायः भूमिच्छिद्रविधानम् आदितस्त्रयोविंशः ॥

## चाणक्यटीका

यूथचरं निर्यान्तंचारिणम् । निर्यूथं यूथान्निर्गत्य चारिणम् । हस्तिनम् अप्राप्तव्यपदेशम् । व्यालं दुष्टम् । निबन्धनेनेति एतावन्तो यूथचरा इत्यादिना गणनेन । अनीकस्थप्रमाणैरिति तदुपदेशैः । व्यञ्जनं लक्षणम् । आचारश्चरितं देवसत्त्वादिभेदेन । गृह्णीयुरिति ग्रहणोपायस्तन्त्रान्तरापेक्षयः । एतावांश्च हस्तिवनव्यापारः, अन्यद्धस्त्यध्यक्षकर्म वक्ष्यमाणम् ॥

हस्तिप्रधान इति प्रयासफलमाह । कथं प्राधान्यमिति चेदाह–परानीक इति । परशब्दः प्रत्येकमभिसम्बध्यते । अनीकं सैन्यसंघातः । व्यूहदुर्गे वक्ष्यमाणलक्षणे । स्कन्धावारः कटकसन्निवेशः । एतान् प्रमर्दयन्तीति प्रमर्दनाः । कथम् । यस्मादन्येभ्योऽश्वरथादिभ्योऽतिमात्रशरीराः सेनानां प्राणान् हरन्ति ॥

वनानामुत्तमत्वादिभेदेन हस्तिनामप्युत्तमत्वादिभेदं दर्शयति–कलिङ्गाङ्गगजा इति ॥

तेषां प्रत्यवरा इति । प्रत्यवराः किमिति वध्यन्त इत्याह—सर्वेषामिति अधमानामपि । कर्मणा दम्यादिना । वीर्यम् उत्साहः कर्मण्यता । तेजः शौर्यं निर्भयत्वं चेति ॥

इति भूमिच्छिद्रापिधानं द्वितीयं प्रकरणम् । द्वितीयश्चाध्यायः ॥

## नीति-निर्णीतीटीका

(यूथचरमेकचरमिति) यूथे चरतीति यूथचर···एकचरमिति, स्वयमेव यूथान्निःसृतं । निर्यूथं यूथान्निर्धारि ( टि ? ) तं । यूथपतिं हस्तिनं तेष्वपि व्यालं दुष्टं मत्तं हस्तिनमिति सर्वत्र योज्यम् । पोतं बालं बंधमुक्तं केनाप्य·····यं वा निबंधेन लेख्यपुस्तकारोपणेन विद्युः ॥

( अनीकस्थेति । ) अनीकस्था हस्तिशिक्षाविदस्तेषां येऽतिकुशलत्वात्····· माणभूतास्तैः प्रकर्षेण शस्तानि व्यज्यंते शुभत्वादिर्यैस्तानि व्यंजनानि लक्षणानि, आचाराश्चरितानि प्रशस्तानि येषां तान् हस्तिनो गृह्णीयुः । ग्रहणोपायाश्च पञ्चतन्त्रान्तरोक्ताः तद्यथा—

वशाकल्पावपातौ च वारिकर्म्मानुगम्य यत् ।
आपाने च पतत्येतदनुसृत्य च बंधनम् ॥ इति ॥

कथमेतेषां महाप्रयत्नेन ग्रहणमित्याह—( हस्तीति । ) विजये हस्तिन एव प्रधानं तदायत्तत्वात् विजयस्य । यस्मात्तदेव दर्शयतीति ।

( परानीकेति । ) अनीकं सैन्यं व्यूहं दंडभोगादि, दुर्गंवप्रप्राकाराद्युपलक्षितम् । स्कंधावारः शिबिरसन्निवेशः । परेषामनीकव्यूहस्कंधावारप्रर्मदनाः । यतस्तेऽन्यचतुष्पदेभ्योऽतिप्रमाणशरीरास्तथा प्राणहरकर्म्माणः स्पृशन्नपि गजो हंतीति । तस्मात् संग्राह्या हस्तिन इति ।

वनाश्रयां श्रेष्ठतामाह—( कालिङ्गेति । )

नीति-निर्णीतिटीका

उत्कलानां च देशस्य दक्षिणस्यार्णवस्य च ।
सह्यस्य च कलिङ्गस्य मध्ये कालिङ्गकं वनम् ।।

तथा—

वैदेशं नर्मदा चैव ब्रह्मवर्द्धनमित्यपि ।
मध्ये च पारियात्राणां वनं स्यादांगरेयकम् ।।

इति वनद्वयजाः श्रेष्ठाः ।

लोहित्यस्य प्रयागस्य गंगाहिमवतोरपि ।
मध्ये प्राच्यं वनं तत्र संभवंति दिशां गजाः ।।

तथा—

मेकला त्रिपुरी चैव दशार्णो देश इत्यपि ।
उन्मत्तगंगामित्येषां मध्ये चेदिकरुषकम् ।।

तथा—

देशस्य च दशार्णानां ख्यातस्य च महागिरेः ।
विन्ध्याद्रेर्वेत्रवत्याश्च मध्ये दाशार्णकं वनम् ।।

तथा—

अवन्तीनाञ्च देशस्य नर्मदायास्तथैव च ।
द्वारकाऽर्बुदयोश्चैव मध्ये सौराष्ट्रकं वनम् ।।
कुरुक्षेत्रस्य देशस्य कालिकाकाननस्य च ।
सिन्धोर्हिमवतश्चैव मध्ये पाञ्चनदं वनम् ।। इति

कालिङ्गकांगरेयकवनभवाः श्रेष्ठाः । प्राच्यचेदिकरूषवनदाशार्णपरांतकभवा मध्यमाः । सौराष्ट्राः पाञ्चनदभवा अवराः ।

अस्यापवादः—( सर्वेषामिति । ) अवराणामपि कर्मणा स्थितभौमोत्तरा······ ादिना······। बलं उत्साहलिंगं जवो वेगस्तेजः शौर्यं च वर्द्धते ।।

इति मुग्धविलासाङ्कयोग्वमविरचितनीतिनिर्णीत्यभिधानायां कौटलीय-
राजसिद्धान्तटीकायामध्यक्षप्रचारे द्वितीयोऽध्यायः ।।

## एकविंशं प्रकरणम्

### तृतीयोऽध्यायः

### दुर्गविधानम् ।

[ राष्ट्रान्तेषु चतुर्विधदुर्गनिर्वाणविधिः, तत्प्रयोजनं च ]

**चतुर्दिशं जनपदान्ते साम्परायिकं दैवकृतं दुर्गं कारयेत्, अन्तर्द्वीपं स्थलं वा निम्नावरुद्धमौदकं, प्रास्तरं गुहां वा पार्वतं, निरुदकस्तम्बं इरिणं वा धान्वनं, खञ्जनोदकं स्तम्बगहनं वा वनदुर्गम् । तेषां नदीपर्वतदुर्गं जनपदारक्षस्थानं, धान्वनवनदुर्गं अटवीस्थानं, आपद्यपसारो वा ।।**

---

श्रीमूला

दुर्गविधानमिति सूत्रम् । दुर्गरचनोच्यत इति सूत्रार्थः । जनपदप्रकृतिरुक्ता, दुर्गप्रकृतिरधुनाभिधीयते ।

चतुर्दिशमिति । जनपदान्ते, चतुर्दिशं चतसृषु दिशासु व्यापकं, साम्परायिकं युद्धोचितं, दैवकृतं दुर्गं कारयेत् स्वभावविषमस्थलं दुर्गत्वेनाश्रयेत् । किं रूपं तत् कारयेदित्यत्राह—अन्तरित्यादि । अन्तर्द्वीपं मध्यगतद्वीपम् अर्थात् समन्तान्नदीपरिवेष्टनमित्येकं, निम्नावरुद्धं स्थलं वा निम्नैः सरोभिः समन्ताद् वेष्टितं स्थलं वेत्यपरम्, औदकं जलपरिवेष्टनदुर्गमत्वादौदकपदव्यपदेश्यं दुर्गम् । प्रास्तरं गुहां वा पर्वतप्रस्तरमयमित्येकं देवखातबिलात्मकं वेत्यपरम्, पार्वतं पर्वतकृतं दुर्गम् । निरुदकस्तम्बम् इरिणं वा जलतृणसङ्घातशून्यमित्येकम् ऊषरं वेत्यपरम्, धान्वनं धन्वकृतं दुर्गम् । खञ्जनोदकं खञ्जनं पंकिलत्वात् गतिवैक्लव्यकरमुदकं यस्मिस्तत् तथाभूतमित्येकं स्तम्बगहनं वा अप्रकाण्डद्रुमदुष्प्रवेशं वेत्यपरं, वनदुर्गं तदाख्यम् । तदेवमौदकाद्येकैकद्वैविध्यादष्टौ दुर्गाणि सिद्धानि । तेषामिति । तेषां दुर्गाणां मध्ये, नदीपर्वतदुर्गं नदीदुर्गं पर्वतदुर्गं च, आपदि जनपदारक्षस्थानं जनपदस्य रक्षाहेतुः, भवति, धान्वनवनदुर्गं अटवीस्थानं धान्वनदुर्गं वनदुर्गं च आटविकरक्षास्थानमापदि, अपसारो वा, आपदि अपसरणस्थानं वा अर्थाद् राज्ञः ।।

चाणक्यटीका

भूमिच्छिद्रापिधानजनपदनिवेशानन्तरं तदनन्तराया दुर्गप्रकृतेः निवेशार्थं दुर्गविधानमेव तावदुच्यते । "अन्तेष्वन्तपालदुर्गाणि" ( अधि॰ २, अध्या॰ १ ) इत्युक्तानि । तानि किंजातीयानि किंविधानि इत्यतस्तद्विधानमुच्यते—

## चाणक्यटीका

चतुर्दिशमिति चतसृषु दिक्ष्वित्यर्थः। जनपदान्ते स्वजनपदरक्षार्थं परजनपदपीडार्थंञ्च नाभ्यन्तरगतं तन्त्रस्थानीयं वक्ष्यमाणम्। साम्परायिकं सम्यक् प्रकृष्टम् अयोगमनम्, निरायासेन प्रकृष्टा गतिः साम्परायः। "तस्मै प्रभवति—" (५-१-१०१) इति। दैवकृतम् अयत्नेनैव जातम्॥

तच्च संभवश्चतुर्विधः द्विर्गता आपो यस्मिन् देशे स द्वीपः, तस्यान्तः अन्तर्द्वीपम्, राजदन्तादेराकृतिगणत्वात् पूर्व (? पर) निपातः यथाऽन्तरङ्गमिति। स्थलं वा निम्नेन चोदकेन समपङ्केन वा अवरुद्धं ग्रस्तम्। एतद्द्विविधम् औदकम्॥

प्रस्तरस्योपरिभवं प्रास्तरं शिखरमेव समन्ततः टङ्कच्छिन्नपार्श्वत्वाद् दुर्गमम्, नदात्ममार्गादिकरणेन संस्कार्यम्। समन्ततःप्राकारद्वयवत् विषमपर्वतेन परिक्षिप्तो महानवकाश एकद्वारो गुहावत्। गुहावतां (अ) विषमकरणेन संस्कुर्यात्। एतद् द्विविधं पर्वतस्योपरिभवं पार्श्वे वा पार्वतम्॥

निरुदकस्तम्बम् आत्मोपभोगव्यतिरिक्तमुदकं स्तम्बाश्च अश्वगजयवसार्थाः यस्य यत्र न सन्ति। इरिणं वा ऊषरप्रायवान् (यं ?) अन्यत्रोत्पादितात्मभोगमात्रपर्याप्ततृणोदकम्। एतद् द्विविधं धन्वनि भवं धान्वनम्। वप्रादिभिरश्मनिचयैश्च संस्कुर्यात्। धन्वा निर्ज(नो ? लो)देशः॥

खण्डनोदकं विच्छिन्नप्रवाहोदकं, क्वचित् क्वचित् उदकमिति यावत्। स्तम्बगहनं वा स्तम्बैर्बदरीवैकङ्कतादिभिः गहनं, वृक्षसंकुलं वा वनग्रहणात्। तदुभयं वनदुर्गम्। परिखादिभिः निचयैश्च संस्कुर्यात्॥

एषामुपभोगमाह—तेषामिति। जनपदारक्षा अन्तपालाः, तेषां स्थानम्। तत्रस्थाः परैरधृष्या जनपदं रक्षन्ति। धान्वनवनदुर्गाश्रयाश्चाटविका यापयन्ति। परेषां बाधकाश्चाधृष्याश्च भवेयुः। आपदि पराभियोगलक्षणायाम् अपसारो वा कलत्रस्थानं[1] जनपदस्य। एतच्चे दैवकृतमुत्तमम्॥

## नीति-निर्णीतिटीका

दुर्गविधानमिति सूत्रम्॥ दुःखेन गम्यते परैरिति दुर्गस्तस्य विधानं वप्रादिरचनयेति सूत्रार्थः। सम्बंधस्तु स्वाम्यमात्यजनपदानां लाभः पालनं चाभिहितम्, दुर्गप्रकृतेरभिधीयत इति महासंबंधः। अनंतरसंबंधश्च जनपदनिवे˙˙˙ न्तपालदुर्गाण्युद्दिष्टानि। स्थानीयं च यत्र निशांतमभिहितं तेषां विधानमिति।

जनपदरक्षार्थं तावत् स्थानीयादिदुर्गविधानमाह—चतुर्दिशमिति। चतुर्दिक्षु जनपदांते सांपरायिकमिति। परेषां शत्रूणां आय आगमनं परायः सम्यक् सर्वसामग्र्या परायस्तस्मै प्रतिस्खलनाय प्रभवतीति सांपरायिकम्। अथवा सम्यक् परेषामायः कोशसंपत् तद्विनाशाय प्रभवतीति सांपरायिकम्। स्वजनपदरक्षायै परजनपदविलोपाय

---

1. "कलत्रन्तु नृपादीनां दुर्गस्थाने" इति केशवस्वामी।

[ राष्ट्र मध्ये स्थानीयरूपदुर्गरचनाविधिः ]

**जनपदमध्ये समुदयस्थानं स्थानीयं निवेशयेत्, वास्तुकप्रशस्ते देश. नदीसङ्गमे, ह्रदस्य वा अविशोषस्याङ्के सरसः तटाकस्य वा वृत्तं दीर्घं चतुरश्रं वा वास्तुकवशेन, प्रदक्षिणोदकं, पण्यपुटभेदनं अंसपथवारिपथाभ्यामुपेतम् ॥**

———————

नीति-निर्णीतिटीका

प्रभवतीत्यर्थः। दैवकृतं स्वर······नेव दुर्गं देवखाततडागवत्कारयेत् परिखादिभिः संस्कारयेदित्यर्थः। चतुर्दिशमित्युक्ते चत्वार्यंतपालदुर्गाणीत्यर्थापन्नम्। दुर्गस्य मूल-प्रकृतयश्चतस्र औदकं पार्वतं धान्वनं वनदुर्गमिति।

प्रत्येकं द्वैविध्यादष्टौ दुर्गाणि तानि दर्शयन्नाह—अन्तर्द्वीपमिति। द्विधा गता आपो यस्मिस्तद्वीपम्। द्वीपस्यांतर्नदीस्रोतसामंतरे भवमन्तर्द्वीपमित्येकम्। स्थलं वा निम्नेन जलेनावरुद्धं दैववशात्। निम्नशब्देनात्र तात्स्थ्याज्जलमभिधीयते। 'निम्न-योधिन' इति वचनात्। एवं द्विविधमुदकस्येदमौदकम्। प्रास्तरं गुहा वा पार्वतमिति। प्रस्तरे एकखण्डे भवं प्रास्तरम्। गुहा वा गूहनात् गुहा। यत्र पर्वतश्चतुर्दिशं वेष्टयित्वा द्वारमेकं मुक्त्वा गूहनात् सा गुहा। एवं द्विविधं पार्वतम्। निरुदकं निस्तंबं निस्तृणं-निर्विटपं च एकम्। इरिणमूषरं यत्नोत्पादिततृणोदकमेवं द्विविधं धान्वनम्। 'निरुद-कोद्देशो धन्वे'त्याम्नायात्। खंजनोदकं 'खजिगतिवैकल्प' इति पाठात्, सपङ्कजलम्। स्तम्बगहनं केवलवृक्षस्तंबगहनं वा एवं वनदुर्गमपि द्विविधम् ॥

तेषामिति। तेषां दुर्गाणां मध्ये नदीदुर्गं पर्वतदुर्गं च, जनपदारक्षा अंतपालाः, तेषां स्थानं परप्रवेशनिषेधात्। धान्वनं दुर्गं वनदुर्गं च अटवीस्थानमाटविकानां स्थानं जनपदरक्षार्थमेव। आपद्यपसारो वा आपदि पराभियोगलक्षणायां अपसारो वा कलत्रमपसार्य स्थाप्यत इति।

श्रीमूला

दुर्गविधानमुक्त्वा स्थानीयादिकमाह—जनपदेत्यादि। जनपदमध्ये, समुदय-स्थानं धनोत्पत्तिस्थानभूतं, स्थानीयं महाग्रामादिकं पूर्वोक्तं निवेशयेत्। कीदृशे प्रदेशे, वास्तुकप्रशस्ते वास्तुविद्याभिज्ञनिर्दिष्टे देशे, नदीसङ्गमे नद्युपश्लेषे, अविशोषस्य सदा-जलस्य, ह्रदस्य सरसः, तटाकस्य पद्माकरस्य वा अङ्के समीपे वा। कीदृशं निवेशयेत्, वास्तुकवशेन वास्तुस्थित्यनुसारेण वृत्तं वर्तुलाकारं, दीर्घं, चतुरश्रं वा, प्रदक्षिणवाहिस-लिलं, पण्यपुटभेदनं पण्यपुटानां पण्यकरण्डानां तत्तत्पण्योत्पत्तिस्थानेभ्यः प्रहितानां भेदनं बन्धविस्रंसनम् अनन्यत्रकार्यतया सङ्केतितं यस्मिंस्तत् तथा भूतम्, अंसवारि-पथाभ्यामुपेतं स्थलमार्गजलमार्गाभ्यां गम्यम् ॥

चाणक्यटीका

अन्यथा यत्नेनापि तत्कार्यमिति दर्शयन्नाह—जनपदमध्य इति। समुदयस्य समाहर्तृसमाहृतस्य कोशस्य स्थानं स्थानीयं राज्ञोऽपि स्थानाय हितं निवेशयेत्।

[ स्थानीयं परितः सपरिमाणनिर्देशं परिखानिर्माणविधिः ]

**तस्य परिखास्तिस्रः दण्डान्तराः कारयेत्, चतुर्दश द्वादश दशेति दण्डान् विस्तीर्णाः, विस्तारादवगाधाः पादोनमर्धं वा त्रिभागमूलाः**

---

### चाणक्यटीका

निवेशनं चास्य वक्ष्यति, रचना तावदुच्यते। वास्तुविद्यामधीयन्ते वास्तुकाः तैः प्रशस्ते। ह्रदो देवखातः। सरोऽदैवतं तटाकं पुरुषकारनिवष्पन्नम्। अङ्के पार्श्वे। वृत्तादिग्रहणं त्रिकोणसर्पकुटिलार्धचन्द्राकृतीनाम् अप्रशस्तत्वाच्च निवृत्त्यर्थम्। वास्तुवशेन वेति। यथा-यथा वास्तु लभ्यते तथा-तथा वृत्तादिकं कुर्यात्, सर्वासु दिक्षु सुलभजलत्वात् वृत्तं चतरश्रं वा, दीर्घह्रदादीनामेकपार्श्वजलत्त्वाद् दीर्घम्। पण्यपुटभेदनमिति। दिगन्तरागताः क्रयविक्रयार्थं यत्र पण्यपुटा भिद्यन्ते व्यवहार्यन्ते। कुत एतत्, अंसपथवारिपथाभ्यामुपेतत्वात्। अंसपथः कायभारखराश्वोष्ट्रशकटादिमार्गः। वारिपथो नौयानपात्रादिः॥

### नीति-निर्णीतिटीका

मध्ये दुर्गविधानमाह जनपदमध्ये इति। सर्वतोऽनन्तरारीणां व्यवहितत्वात् समुदयमुदयहेतुत्वात् कोशस्तस्य स्थानम्, स्था [ नीयमि ] ति राज्ञः स्थानाय हितं निवेशयेदिति। दुर्गं विधायेति भावः। दैवकृतं चेद्भवति संस्कुर्यान्नचेद्वक्ष्यमाणोपदेशेन कुर्यात्॥

वास्तुकेति। वास्तुकप्रशस्ते देशे वास्तुविद्याविद्भिः श्लाघिते देशे नदीसंगमे दुर्गत्वाज्जलसौकर्यार्थं च। तदलाभे ह्रदस्याविशोष्यस्यांकै सरसो देवखातस्य तडागस्य वा मनुष्यखातस्यांक इति वर्तते। वृत्तं दीर्घवृत्तं वा। चतुरस्रं दीर्घचतुस्रं वा। दीर्घशब्दो मध्यस्थ उभयत्र योज्यः। त्रिकोणार्द्धचंद्रादीनामप्रशस्तानां निवृत्यर्थं वा। वास्तुवशेन वा भूमिवशेन दीर्घत्वमपि भवतु। प्रदक्षिणोदकं प्रशस्तत्वात्। पण्यपुटभेदनं ततोऽन्यत्र न पण्यपुटा भिद्यंत इति कृतनियमं पण्यानां संग्रहार्थम्। शुल्कस्य चाविनाशार्थम्। अंसपथः स्थलपथः पुरुषबलीवर्दोष्ट्राद्यंसैः स्कंधैरुह्यमानपण्यत्वात् वारिपथश्च ताभ्यामुपेतं पण्यशुल्कसंग्रहार्थमेव॥

### श्रीमूला

तस्येति। तस्य स्थानीयस्य, तिस्रः प्रथममध्यमतृतीयाः, परिखाः कारयेत्, कीदृशीः, दण्डान्तराः द्विचत्वारिंशदङ्गुल एको हस्त इति गणनया देशकालमानप्रकरणोक्तया चत्वारो हस्ता एको दण्डः दण्डमितम् अन्तरं परस्परव्यवधानं यासां ताः तथोक्ताः, चतुर्दशदण्डान् द्वादश दण्डान् दशदण्डान् इत्येवंक्रमेण विस्तीर्णाः, विस्ताराद् विस्तारपरिमाणात् पादोनं चतुर्भागहीनम्, अर्धं वा अवगाधा निम्नाः, तदुभयानुपपत्तावाह—त्रिभागमूला वा विस्तारत्रिभागमानं मूलम् अधस्तलं निम्नत्वं यासां तास्तथा-

**मूले चतुरश्राः, पाषाणोपहिताः पाषाणेष्टकाबद्धपार्श्वा वा, तोयान्तिकीः आगन्तुतोयपूर्णा वा, सपरिवाहाः, पद्मग्राहवतीश्च ॥**

---

## श्रीमूला

भूताः, मूले चतुरश्राः सम्यग्बद्धाः, पाषाणोपहिताः शिलारचिताः, पाषाणेष्टकाबद्ध-पार्श्वा वा, तोयन्तिकीः आजलोदयदेशखाताः स्वतः सम्पन्नजला इत्यर्थः, आगन्तुतोय-पूर्णा वा नद्याद्यागतजलसम्भृता वा, सपरिवाहा जलनिर्गममार्गोपेताः, पद्मग्राहवतीः नलिननक्रयुक्ताः ।

## चाणक्यटीका

तस्येति स्थानीयस्य । समन्तात् परिखन्यन्त इति परिखाः । दण्डान्तरा इति अन्योऽन्यतो दण्डेन प्रमाणेनान्तरिताः । ततो न्यूनान्तराः विशरणादेकीभवन्ति, अधिकान्तराः परकीयाणाम् आश्रया भवन्ति । चतुर्दश द्वादशेति । स्थानीयस्य प्रकृतत्वात् ततः प्रभृति क्रियाक्रमः । आभ्यन्तराः विस्तारेण चतुर्दश दण्डाः । मध्या-द्वादश दण्डाः । बाह्या दश दण्डाः विस्तारात् पादोनमवगाढाः[1]—आद्यायाः अवगाढो दश दण्डाः दण्डार्धञ्च । मध्यमायाः नव दण्डाः । बाह्यायाः सप्त दण्डा दण्डा (र्धञ्च) र्धानि[2] (?) अरत्निद्वयञ्च आद्यायाः । चत्वारो दण्डाः मध्यमायाः । त्रयो दण्डाः (सप्त) अष्टाङ्गुलोऽरत्निरिति चान्त्यायाः, यथाह्यानुपूर्व्येण खातानां स्थैर्यं भवति । मूल चतुरश्रा वेति मूलेन सह चतुरश्रा वा, भूमेः स्थैर्यमवेक्ष्य यथा ह्यगम्यतरा भवन्ति । पाषाणोपहिता यत्र दण्डमात्रमन्तरं तस्य स्थैर्यार्थं तत्रैव पाषाणैः प्रमादाद-दत्रान्तिकीपाशः (?) तोयान्तिकीर्वा उद्भिज्जान्तोदकासंभवे वा आगन्तुकेन तोयेन पूर्णाः । तस्मान्न निस्तोया इति च । उपलक्ष्यमूलार्धत्वात् सपरिवाहा इति । अतिरि-क्तोदकस्य निष्क्रमत्वाद् अन्योऽन्यसंप्लवः उपप्लवोपघातश्च मा भूतामिति परानुपल-क्षितेन यन्त्रेण उदकं बहिर्निष्कास्यते ॥ खातविधिरुक्ता ॥

## नीति-निर्णीतिटीका

तस्येति । तस्य स्थानीयस्य परि समंतात् खन्यन्त इति परिषा ( खा ) स्तिस्र इति न्यूनाधिकत्वे दोषदर्शनात् । दंडांतरा द्विचत्वारिंशदङ्गुलहस्तेन चतुर्हस्तो दंडस्त-त्प्रमाणतः परस्परांतर ( रा ? ) लाः । अतो न्यूनान्तरा विशीर्यंते । अधिकांतराः परेषामाश्रया भवंति ॥

---

१. अवगाथा इति मुद्रितमूलकोशेषु दृश्यते । अवगादा इति चाणक्यटीका । अवगाधशब्दस्य निम्नार्थत्वम् अनन्तशयनव्याखयानोक्तम् अदृष्टचरं वेदियव्यम् ।

२. इतः परम् "अर्धमवगाढाः—आद्यायाः सप्तदण्डाः, मध्यमायाः षड्दण्डाः, बाह्यायाः पञ्चदण्डाः, त्रिभागमवगाढाः—चत्वारो दण्डाः अष्टाङ्गुलम्" इत्याकारको ग्रन्थभागो मातृकायां त्रुटितो भाति ।

[स्थानीयपरिखयोर्मध्ये मृच्चयनिर्माणविधिः, मृच्छेषविनयोगश्च ]

**चतुर्दण्डावकृष्टं परिखायाः, षड्दण्डोच्छ्रितं अवरुद्धं तद्द्विगुणविष्कम्भं खाताद्वप्रं कारयेत्, ऊर्ध्वचयं मञ्चपृष्ठं कुम्भकुक्षिकं वा, हस्तिभिर्गोभिश्च क्षुण्णं, कण्टकिगुल्मविषवल्लीप्रतानवन्तं। पांसुशेषेण वास्तुच्छिद्रं राजवास्तु वा पूरयेत्।**

---

नीति-निर्णीतिटीका

चतुर्दशेति। अभ्यन्तरे चतुर्दश दंडान् विस्तीर्णा, मध्यपरिखा द्वादश, वहिः परिषा (खा) दशदंडान् विस्तीर्णा कार्या। न बाह्यतोयपरिगणनाक्रमो गृह्यते चतुर्दशदण्डान् वितीर्णायां बाह्यपरिखायां गृहीतायामितरयोरध्यवसायो ग्रहणे भवतीति भावः। विस्तरादवगाढाः पादोनमर्द्धं चेति। चतुर्दशदंडविस्तीर्णायाः पादोनो विस्ता·····दश दंडाः। अर्द्धं वा सप्त दंडाः द्वादशदंडविस्ताराया: पादोनत्वं नव दंडाः। अर्द्धं वा षट् दंडाः। दशदंडविस्ताराया: सार्द्धसप्तदंडाः, पंचदंडा वा गांभीर्यमित्यर्थः। त्रिभाग इति विस्तारादेव त्रिभागो मूले यासामूर्ध्वविस्तरादेव तृतीयभागो मूले विस्तारो भवतीत्यर्थः। तद्यथा—चतुर्दशदंडायाश्चत्वारो दंडाः हस्तद्वयमष्टाविंशत्यंगुलां·····याश्चत्व (त्वा) रो दंडाः। दशदंडाया दंडत्रयमेको हस्तश्चतुर्दशांगुलानीति। मूल·····पाषाणैरुपहिता वा दंडप्रमाणेष्वंतरालेष्वेव बद्धा दाढर्यार्थं तृणाद्यभावार्थं·····मंतिके समीपे सिरागतं यासां आगंतुकतोयपूर्णा वा उद्भिजतोयाभावे सति परैरलक्ष्य मार्गा··लक्ष्यमूलतां कर्तुं सपरिवाहा अधिक जलप··रिवाहनार्थं सह परिवाहेन वर्तत इति। अन्यथान्योऽन्यसंप्लवो वप्रोपघातश्च स्यात्। पद्मग्राहवत्वे च दुःखावतारिणीं कारयेदिति संबंधः।

श्रीमूला

वप्रविधानमाह—चतुर्दण्डावकृष्टमिति। खाताद् वप्रं कारयेत् परिखातादुद्धृनया मृदा प्राकाराधारभूतं चयं निर्मापयेत्। कथम्भूतं, परिखायाः चतुर्दण्डावकृष्टं षोडशहस्तविप्रकृष्टं षड्दण्डोच्छ्रितं चतुर्विंशतिहस्तोन्नतम् अवरुद्धं मृद्गलनं यथा न भवेत् तथाऽधस्तात् कृतसंरोधं, तद्द्विगुणविष्कंभम् उच्छ्रयद्विगुणविस्तारम्, ऊर्ध्वचयम् अधःस्थूलोपरिकृशमूर्ध्वचयाख्यं, मञ्चपृष्ठम् उपर्यधस्ताच्च तुल्यवैपुल्यं मञ्चपृष्ठाख्यं, कुम्भकुक्षिकं वा ऊर्ध्वाधःकृशं मध्यस्थूलं कुम्भकुक्षिकाख्यं वा हस्तिभिर्गोभिश्च क्षुण्णं प्रघातदृढीकृतं, कण्टकिगुल्मविषवल्लीप्रतानवन्तं कण्टकवद्भिस्तृणसङ्घातैः विषलताप्रतानैश्च युक्तम्। पांस्वित्यादि। पांसुशेषेण वप्रविनियुक्तावशिष्टया मृदाः, वास्तुच्छिद्रं नगरवास्तुगर्तं राजवास्तुगर्तं च, पूरयेद्वा पूरयेच्च।

चाणक्यटीका

चतुरो दण्डान् अपकृष्टमपसृतं परिखायाः वप्रस्यान्तरत्वाद् आभ्यन्तराया

[ प्राकारनिर्माणविधिः, तत्र दारुसंसर्गनिषेधश्च ]

**वप्रस्योपरि प्राकारं विष्कम्भद्विगुणोत्सेधं ऐष्टकं द्वादशहस्तादूर्ध्वं ओजं युग्मं वा आचतुर्विंशतिहस्तादिति कारयेत् । रथचर्यासञ्चारं**

---

### चाणक्यटीका

इति गम्यते । अवरुद्धं पाषाणैर्बद्धपार्श्वम् । द्विगुणविष्कम्भम् उच्छ्रायात्, द्वादशदण्डमित्यर्थः । खातादिति । खातप्र (तलैः ? सृतात्) पांसुप्रकरात् । ऊर्ध्वचयमिति ऊर्ध्वं चयो यस्य तं वल्मीकनिकरसंस्थानम् । पांसुविशेषवशेन वा ततोऽप्यगम्यं मञ्चकपृष्ठं कुम्भकुक्षिकं वा कुम्भाकारसंस्थानम् । दृढीकरणार्थं हस्त्यादिभिः संक्षोद्य संक्षोद्य रचितम् । कण्टकिगुल्मैर्विषवल्याश्च प्रतानेन मारणार्थं वहिःपार्श्वे युक्तम् । वास्तुच्छिद्रं नगरस्य निम्नम् । पांसूनामल्पत्वे राजवास्तु वा ॥

### नीति-निर्णीतिटीका

वप्रविधानायाह चतुर्दण्डेति । चतुरो दंडानवकृष्याभ्यंतरपरिखायाश्चतुर्दंडप्रमाणमंतरं मुक्त्वेत्यर्थः । षट्दंडोच्छ्रितं चतुर्विंशतिहस्तोत्सेधमवरुद्धं पाषाणादिभिर्बद्धोभयपार्श्वं पांसुविसरणनिषेधार्थम् । द्विगुणविष्कंभमुच्छ्रयाद् द्विगुणविस्तारं द्वादशदंडविस्तारमित्यर्थः । खातादिति । खातोत्थपांसुभिर्वप्रं प्राकाराधिष्ठानं सेत्वाकारत्वाच्च वप्रशब्दप्रयोगः । तं कारयेत् ॥

ऊद्ध्वंचयमंतरं मुक्त्वा चयाः शिलादीनां कर्तव्यदार्ढ्यार्थम् । ततश्च वल्मीकशिखराकारो भवतीति भावः । मंचकपृष्ठं मध्ये किञ्चिन्निम्नं प्राकारदार्ढ्यार्थम् । कुंभकुक्षिकमिति । आयतशिलास्तंभवत्वात् कुंभसमानकुक्षिकुश्चीयते । दुरारोहो भवत्विति । हस्तिभिर्गोभिश्च क्षुण्णं हस्तिभिर्महाकायत्वात् । गोभिस्तीक्ष्णखुरत्वात् घनत्वापादनार्थम् । कंटकिनो बदर्यादयः । गुल्मा भल्लातक्यादीनां ( नि ? ), विषाणि हलिनीकरवीरादीनि वल्ल्यो हस्तिवारुणीकरमर्दाद्यास्तत्प्रतानवंतं मूल इत्यर्थः ॥

पांसुशेषेण इति । पांसुशेषेण च प्रपूरणावशिष्टपांसुभिर्वास्तुच्छिद्रं नगरवास्तुनिम्नं राजवास्तुनिशांतभूमिनिम्नं वा पूरयेत् सामत्वापादनार्थम् ॥

### श्रीमूला

प्राकारविधानमाह—वप्रस्येति । विष्कम्भद्विगुणोत्सेधं स्वविस्तारद्विगुणोच्छ्यम् । ऐष्टकं पक्वेष्टकचितम् । उत्सेधमानं विशदयन्नाह—द्वादशहस्तादूर्ध्वम् ओजं युग्मं वा त्रयोदशपञ्चदशादिविपमसंख्यहस्तप्रमाणोत्सेधं चतुर्दशषोडशादि समसंख्यहस्तप्रमाणोत्सेधं वेत्यर्थः । उत्सेधमानस्य परमावधिमाह—आ चतुर्विंशतिहस्तात् चतुर्विंशतिहस्तोत्तमपरिमाणोत्सेधमित्यर्थः । उत्सेधं केचिद् विषमसंख्यमिच्छन्ति समसंख्यमपरे, तत्रान्यतरानिर्बन्धोऽकिञ्चित्कर इत्योजयुग्मोभयाक्त्या सूचयति । इति एवम्प्रकारं,

**तालमूलं मुरजकैः कपिशीर्षकैश्चाचिताग्रं, पृथुशिलासहितं वा शैलं कारयेत् । न त्वेव काष्ठमयं; अग्निरवहितो हि तस्मिन् वसति ।**

---

श्रीमूला

प्राकारं, वप्रस्योपरि कारयेत् । अनुक्तविशेषणकथनपूर्वं प्राकारस्य प्रकारान्तरमाह— रथेत्यादि । रथचर्यासञ्चारं रथचर्यया रथगत्या सञ्चारो रथिगतागतं यस्मिस्तं तथाभूतम् उपरि रथगतागतपर्याप्तविस्तारयुक्तत्वमनेनोक्तं, तालमूलमूरजकैः कपिशीर्षकैश्च आचिताग्रं तालवृक्षमूलप्रतिकृतिभिर्मुरजप्रतिकृतिभिः कपिशीर्षप्रतिकृतिभिश्च शिलेष्टकाचूर्णनिर्मिताभिः समन्विताग्रं, पृथुशिलासंहितं शैलं वा विपुलशिलाबद्धम् ऐष्टकविलक्षणं शिलामयं वा कारयेत् । अर्थात् प्राकारम् काष्ठमयं तु प्राकारं, नैव कारयेत् । कुतः, हि यतः, तस्मिन् काष्ठमये, अग्निः अवहितः सन् वसति ।

चाणक्यटीका

द्वादशहस्तादूर्ध्वं यथायोगम् । ओजस्त्रयोदशादिहस्तसंख्यं त्रयोदशपञ्चदशेत्यादिकम् । युग्मं वा समहस्तसंख्यं चतुर्दशषोडशेत्यादिकम् । अर्धत्रयोदशादिहस्तनिवृत्त्यर्थमुभयग्रहणम् । आचतुर्विंशतिहस्तादिति । परेण प्रकर्षेण चतुर्विंशतिहस्तोत्सेधम् । तेन ऊर्ध्वं द्वादश प्राकारा भवन्ति । तेनैव षड्हस्तादूर्ध्वम् । आद्वादशहस्तादिति विष्कम्भस्यापि द्वादशविधत्वम् उत्सेधार्थतयैवोक्तं वेदितव्यम् । रथचर्येति । "पञ्चारत्नयो रथपथः" ( अधि० २, अ० ४ ) इति वक्ष्यति । पन्थाश्चर्येतिचानर्थान्तरम् । तत्प्रमाणम् ऊर्ध्वं युध्यमानानां संचारो यस्य प्राकारस्येति । षड्ढस्तमूलः शनैर्हीयमानः हस्तन्यूनोऽयं पञ्चारत्निकः पञ्चारत्निप्रदेशः । प्राकारापेक्षया मध्य- (? मूल) षड्भागोनशिरस्काः द्वादशापि प्राकाराः कार्याः । तालमूलमिति । तालस्येव मूलं यस्येति शिफाभिरिव पाषाणाभिरुपचितमूलं सन्धिम् । इष्टकामुखमात्रविस्तारैर्योधावरणकुडयकैर्मुरजसंस्थानैः समशिरोभिः, कपिशीर्षकैश्व अश्वत्थपत्रसंस्थानैरेकान्तरैः आचिताश्रम् । वहिःपार्श्वं इति । प्रयोजनापेक्षया नेयम् । यद्येवं तद्वद्धैकदेशत्वात् कथं रथचर्यामात्रसंचार इति । एकदेशहानेरपि व्यपदेशानिवृत्तेः । नचात्र गतागतमेव संचारोऽभिप्रेतः । किं तर्हि सम्यग्रथाचरणम् तदङ्गभूतान्येव वावरणानीति । तैः सह रथचक्र (? र्या) प्रमाणत्वम् । विस्तीर्णादि (? भिः) शिलाभिः संहतं निच्छिद्रं (? चितम्) शैलं वा प्राकारम् । ईदृशमेव न त्वेव काष्ठमयं स्तम्भान्निखन्य कारयेत् । दोषमाह—अग्निरिति । अवहितः सुनिहितः ॥

नीति-निर्णीतिटीका

वप्रस्यापरीति । उक्तलक्षणस्य वप्रस्योपरि प्राकारं प्रकृष्टाकारं विष्कंभद्विगुणोत्सेधमिति विस्तारद्विगुणोच्छ्रायम् । अनुक्तोऽपि विष्कंभस्त्रयोदशविधः प्रकाराणां वक्ष्यमाणादुत्सेधात् प्रत्येकमर्द्धप्रमाणः कार्य इति व्याप्त्यर्थं वचनम् । ऐष्टकं इष्टक-

[ प्राकारोपरि तत्तत्स्थानेषु अट्टालकप्रतोलीन्द्रकोशदेवपथचार्या प्रधावितिकानिष्कुह द्वाराणां परिकल्पनविधिः ]

**विष्कम्भचतुरश्रं अट्टालकं उत्सेधसमावक्षेपसोपानं कारयेत्, त्रिंशद्दण्डान्तरं च द्वयोरट्टालकयोर्मध्ये सहर्म्यद्वितलां द्व्यर्धायामां प्रतोलीं कारयेत् ।**

———————

### नीति-निर्णीतिटीका

चितम् । द्विचत्वारिंशदंगुलहस्तेन द्वादशहस्तादाद्यात् प्राकाराद्दूर्ध्वमुपरिष्टादोजं विषमहस्तसंख्यं, युग्मं समहस्तसंख्यम् । तद्यथा—त्रयोदशहस्त ओजश्चतुर्दशहस्तो युग्मः, पंचदशहस्त ओज इत्येवं योज्यमाचतुर्विंशतिहस्तात् द्वादशहस्तादूनः चतुर्विंशतिहस्तादधिको न कार्य इति नियमः । औजयुग्मग्रहणं च ह···न्यूनेन वितस्त्यंगुलादिभिरुत्सेधवृद्धिर्न कल्पनीयेति ज्ञापनार्थम् । एवं च त्रयोदशशैव प्राकारा भवंति । विष्कंभप्रमाणमपि षट्हस्तादित्यर्थादापद्यते । एवं भ··कारयेता ॥

रथचर्यासञ्चारमिति । रथचर्यासंचारस्य प्रमाणं पंचारत्निप्रमाणा वक्ष्यति । पंचारत्नयो रथपथ इ··मुरजक कपिशीर्षकावरुद्धं प्रदेशं विहाय प्रकारमस्तके पंचारत्निप्रमाणोऽवकाशो योधानां संचारार्थं कार्यः । तालमूलं तालवृक्षाकारमूलं दाढर्यार्थम् । मुरजकैर्मुरजकाकारैर्योधावरणकुट्टाकैः कपिशीर्षकैः कपिशीर्षकाकारैस्तीक्ष्णाग्रैरेकजातीयैर्विमिश्रैर्वा आचितमग्रं बहिर्मस्तकधारा यस्य ॥

पृथुशिलासंहतमिति । संपत्तौ तु पृथ्वीभिः शिलाभिः संहतं शैलं वा प्राकारं कारयेत् । न त्वेव काष्ठमयं कारयेत् । हि यस्मादग्निर [ वहितः ] सन्निहितस्तस्मिन् वसति अल्पेनापि यत्नेन परैर्निहितः सर्वं दहतीति भावः ।

### श्रीमूला

विस्कम्भेत्वादि । अट्टालकं प्राकाराग्रे रणगृहं, कारयेत् । कीदृशं, विष्कम्भचतुरश्रं विस्तारस्यानुरूपम् अर्थादायमे चोत्सेधे च, उत्सेधसमावक्षेपसोपानम् उत्सेधानुरूपावरोहसोपानं, त्रिशद्दण्डान्तरं च त्रिशद्दण्डप्रमाणंमिथोऽव्यवधानं च ।

द्वयौरिति । द्वयोरट्टालकयोर्मध्ये, सहमर्यद्वितलां हर्म्यं धवलगृहमिति ख्यातमैष्टकं गृहं तेन तदीयेन च द्वितलेन सहिताम्, अध्यर्धायामां विस्तारात् सार्धगुणपरिमाणदैर्घ्यां प्रतोलीं गृहविशेषं, कारयेत् ।

### चाणक्यटीका

विष्कम्भेन समविस्तारायामः । कः पुनरस्य विष्कम्भः इति चेत्, प्राकारशिरोभागाश्रयस्यास्य पञ्चारत्नयः तेन सहेच्छन्तों विस्तृतस्य यावता पर्याप्तमिति उत्सेधस्त्वस्योपरि निस्सङ्गं साधु यत्र व्याप्रियन्ते ( ? ) प्राकारप्रकरणाद् ऊर्ध्वं पञ्चारत्निप्रमाणाधिकः तत्सम एव (आ) प्राकारमूलाद् अवक्षेपो निर्गमो यस्य स एवंविधः

**अट्टालकप्रतोलीमध्ये त्रिधानुष्काधिष्ठानं सपिधानच्छिद्रफलकसंहितमिन्द्रकोशं कारयेत् । अन्तरेषु द्विहस्तविष्कम्भं पार्श्वे चतुर्गुणायामं अनुप्राकारं अष्टहस्तायतं देवपथं कारयेत् । दण्डान्तराः द्विदण्डान्तरावा चार्याः कारयेत् । अग्राह्ये देशे प्रधावितिकां [1]निष्कुहद्वारं च ॥**

---

चाणक्यटीका

सोपानो यस्य इष्टकामयः फलकामयो वा । उपर्यारोहणमपि एतत् सोपानेनैव त्रिंशद्दण्डान्तरं वेति अट्टालकानामितरेतरस्त्रिंशद्दण्डान्तरःसमन्तात् कार्यः । अट्टालकाति (रिक्त) देशे चोपरिष्टान्मुरजाः कपिशीर्षकाश्च स्युरिति ॥

द्वयोः द्वयोः अट्टालकयोर्मध्ये समन्तादेव सह हर्म्येण द्वितला विस्तारादध्यर्धेनाधिकायामा प्रतोली ॥

नीति-निर्णीतिटीका

प्राकारमस्तके युद्धार्थमट्टालकादिविधानायाह विष्कम्भचतुरस्रेति । विष्कंभेन पंचारत्निप्रमाणेन समानाश्चतस्रोऽप्यस्रयो यस्य तमट्टालकम् । 'अट्टातिक्रमहिंसयोरिति पाठात् प्राकारातिक्रमं परहिंसां च आ समंताल्लातीत्यट्टालकः । प्राकारोपरि युद्धार्थं कोष्ठसन्निवेशः । तद्यथा—पश्चावरणस्तंभचतुष्टयोपरि तुलाफलकास्ताराच्छाद्यककपोतपाल्यादिपरिकरोद्ध्वं मुरजकपताकादिरचनोऽट्टालकः । उत्सेधसमावक्षेपसोपान इति । सवप्रस्य प्राकारस्य य उत्सेधस्तस्य समो योऽवक्षेपः तत्र सोपानान्यारोहणार्थं निश्रेणीपदानीव यस्य । तद्यथा—वप्रमूलात् प्राकारोत्सेधं यावदायातं सूत्रमवक्षिप्यान्तर्मुखं तत आरभ्य सोपानानि क्रियन्ते । ततश्चायुधव्यापृतोभयकराणामपि योधानामारोहणं सुखेनैव संपद्यत इति भावः । तमेवंभूतं कारयेत् । त्रिंशद्दण्डान्तरं च त्रिंशस्त्रिंशद्दण्डा अंतरं यस्य । जातावेकवचनम् । यावत्प्राकारस्यायतत्वं [ त ] त्र त्रिंशस्त्रिंशद्दण्डमंतरं कर्तव्यमिति भावः ।

द्वयोरिति । द्वयोरिति वीप्सा द्रष्टव्या । द्वयोर्द्वयोरट्टालकयोर्मध्ये त्रिंशद्दण्डान्तरे सहर्म्यद्वितलां ह [ र्म्यमुत्तरा ] गारं घण्टाद्युपेतं तेन सह द्वे तले यस्यास्तामध्यर्द्धायामाम् । अट्टालकः समचतुरस्रो भवति । तदपेक्षयाऽध्यर्द्धायामामर्द्धेनाधिक आयामो भवतीत्यर्थः । तद्यथा—पञ्च [ ा ] रत्निविस्तार आयामस्तदर्द्धेनाधिक आयामो भवतीत्यर्थः । आयतचतुरस्रा प्रकर्षेण तोल्यते परानीकमस्यां स्थितैरट्टालाधिकोत्सेधायामिति प्रतोली तां कारयेत् ॥

श्रीमूला

अट्टालकप्रतोलीमध्य इति । अट्टालकप्रतोल्योर्मध्ये, इन्द्रकोशं खट्वाविशेषं कारयेत् । कथम्भूतं, त्रिधानुष्काधिष्ठानं त्रयाणां धानुष्काणां धन्विनां स्थितिपर्याप्तं,

---

१. निष्किर—पा० । निष्कर पा० ।

## श्रीमूला

सापिधनच्छिद्रफलकसंहितं सापिधानानि अवच्छादसाधनोपेतानि छिद्राणि यस्मिंस्तेन तथाभूतेन फलकेन संहितं कृतसन्धानं च ।

अन्तरेष्विति । अनुप्राकारम् अन्तरेषु अट्टालकप्रतोलीन्द्रकोशानामन्तरालेषु, द्विहस्तविष्कम्भं द्विहस्तविस्तारं, पार्श्वे अर्थात् प्राकारस्य, चतुर्गुणायामम् अष्टहस्तायतमित्यर्थः, देवपथं देवपथ इव देवपथः रहस्यमार्गः तं, कारयेत् । मातृकायाम् 'अष्टहस्तायतमि'त्यपि पठ्यते । तत्तु पुनरुक्तं द्रष्टव्यम् ।

दण्डेत्यादि । दण्डान्तराः दण्डप्रमाणविष्कम्भाः, द्विदण्डान्तरा वा चार्याः आरोहावरोहभूमीः कारयेत् । अग्राह्य इति । अग्राह्ये ग्रहणायोग्ये देशे प्रधावितिकां प्रतिपक्षैर्बाणे प्रयुज्यमाने तद्गोचरपरिहारेण भटस्य सुखतिरोधानार्थः क्षुद्रो वरणः प्रधवितिका तां, कारयेत्, प्राकारोपरि । निष्कुहद्वारं च कोटरविवरं च प्राकारबहिर्वर्तिप्रतिपक्षचेष्टितगूढदर्शनार्थं, कारयेत् प्रधावितिकान्तिके ।

## चाणक्यटीका

अट्टालकप्रतोल्योर्मध्ये त्रयो धानुष्का यावत्यस्मिन्नवकाशे सुखेन व्यायच्छन्ति तत्प्रमाणम् । सापिधानं सावरणपट्टं स्वशरनिर्गमार्थं परशरवारणार्थञ्च अधोमुखच्छिद्राः सर्व एव फलका यस्य तत् । सुश्लिष्टपट्टसन्धिकमिति इन्द्रकोशसंज्ञिकं कारयेत् । कोष्ठफलकमित्यर्थोक्तम् ।।

अन्तरेष्विति । अट्टालकप्रतोलीन्द्रकोशान्तरेष्विति । पार्श्वे इति प्राकारमूलरक्षार्थत्वात् । बाह्ये तुला वर्हिर्निष्कास्य, अष्टहस्तायामं संश्लिष्टभूमित्वाद् देवपथमिति ।।

दण्डान्तरा द्विदण्डान्तराश्चेति अट्टालकादिशून्ये देशेऽभ्यन्तरतोऽधिकाराद् द्विहस्तविस्तारा एव । इष्टकामयीः फलकमयीर्वा । किमुत्सेधाः, यत्र चरन्तः प्राकारगुप्तो······द्रणपरा विध्यन्ति । अट्टालकादिस्थास्तु उपदिष्टाः (? विष्टाः) शयिता वा विध्यन्तीत्ययं विशेषः ।।

अग्राह्य इति परैरग्राह्येऽधृष्ये खातगुप्ते । प्रधावितिकामिव प्रधावितिकां गोमूत्रिकया पुरुषप्रमाणं क्षुद्रप्राकारं महाप्राकारात् प्रभृति आमहाखातं प्राप्तानुखातमेव किञ्चिदावृतं योधरक्षार्थम् । निष्करद्वारञ्च प्रधावितिकागुप्तमेव । येन निष्पत्य अनुप्राकारमूलं युद्धाय कीर्यन्ते योधाः । स (? तच्चै) चैकं सत्येकत उभयतो वा महद् द्वारम् अग्राह्ये देशे भवत्येव । एकैकमिति चतुर्दिशमष्टौ चत्वारि वा निष्करद्वाराणीति ।।

## नीति-निर्णीतिटीका

अट्टालकेति । अट्टालकप्रतोलीमध्ये सार्द्धदशाङ्गुलोपेतचतुर्दशदण्डप्रमाणेऽत्रापि वीप्सैव । त्रिधानुष्काधिष्ठानं पंचारत्निधनुस्तत्र धन्विनं स्थापयेदिति वचनात् । त्रयाणमधिष्ठानं पंचदशहस्तायतं भवति । सापिधानैच्छिद्रफलकैस्संहतम् । सच्छिद्र-

[ परिखाबहिर्भागे सापायरथ्यापरिकल्पनविधिः ]

**बहिर्जानुभञ्जनीत्रिशूलप्रकरकूपकूटावपातकण्टकप्रतिसराहिपृष्ठतालपत्र-शृङ्गाटकश्वदंष्ट्राऽर्गलोपस्कन्दनपादुकाऽम्बरीषोदपानकैःछन्नपथं कारयेत् ॥**

———————

नीति-निर्णीतिटीका

फलकत्वं शरनिर्गमार्थं। सापिधानत्वं परशरप्रतिस्खलनार्थम् । इंद्रकोशं इद्रकारः कोशः। अक्षिसमानसहस्रच्छिद्रोपेतत्वात्तं कारयेत् ॥

अंतरेष्विति। अंतरेषु स ( सा ? ) द्वैकत्रिंशदङ्गुलायतपञ्चदण्डेषु द्विहस्त-विष्कंभम्। पार्श्वे प्राकारबहिःपार्श्वे चतुर्गुणायामं अष्टहस्तं सारदारुमयम्। ताम्र-पत्रिकाबद्धमधः कृतशरमार्गं सर्वतः छादितं देवपथमाप्रवेशनिर्गमत्वात् प्राकारमूल-रक्षणार्थं कारयेत् ॥

दण्डान्तरेति। दंडांतरा चतुर्हस्तांतरा द्विदंडांतरा वा अष्टहस्तांतराश्चर्या उत्सेधसमावक्षेपसोपाना अस्यांतरतः कारयेत् प्राकारारोहणार्थम्। प्राकारं समा-लक्ष्य···। अट्टालकसोपानानि तु महान्ति एकदैव बहुपुरुषारोहणार्थानि। चर्यारुढाश्च योधाः कपिशीर्षकाच्छादिता युध्यंते।

आग्रह्येइति। महाखातवप्रयोर्मध्ये चतुर्दंडप्रमाणेऽवकाशे गोमूत्रिकाकारा पुरुषप्रमाणमुण्डप्राकारेणाग्राह्ये परेषां निष्किरद्वारैर्निर्गत्य परिखारक्षार्थं प्रधावंति योधा अस्यामिति प्रधावनिकां कारयेत्। निष्किरद्वारं च अग्राह्य एव देशे देवपथ-स्याधस्तात् प्राकारकुक्षिप्रदेशेषु, निष्किरद्वारं निष्कोर्यंते बहिः परिखाररक्षार्थं योधा येन तदारोहणावतरणार्थं कृतं तिर्यक्प्राकारबाह्यभित्तिषु स्वल्पतरसोपानं कालाय-सदृढकपाटं कारयेत्। जातावेकवचनम्। वक्ष्यति च दुर्गलंभोपाये 'निष्किरादुपनिष्कृत्य दुर्गस्थान् घातयेदि'ति।

श्रीमूला

बहिरिति। बहिः परिखाबहिर्भूमिषु, जानुभञ्जनी-त्रिशूल-प्रकर-कूप-कूटाव-पात-कण्टक प्रतिसरा-हिपृष्ठ-तालपत्र-शृङ्गाटक-श्वदंष्ट्रा-र्गलोप-स्कन्दन-पादुका-म्बरीषो-दपानकैः छन्नपथं कारयेत्। जानुभञ्जन्यो जानुमात्रीनामधेया दारुमया यन्त्रकीलाः। त्रिशूलप्रकरः सारदारुलोहनिर्मितानां तीक्ष्णत्रिशृङ्गणामायुधविशेषाणां समूहः। कूपा अन्धवः। कूटा अयश्शलाकाः। अवपातास्तृणादिच्छन्ना गर्ताः। कण्टकप्रतिसराः आयसाः, कण्टकाचिता रज्जुविशेषाः। अहिपृष्ठानि निर्मांससर्पपृष्ठास्थिसदृशाका-राण्ययोमयानि तीक्ष्णाग्राणि। तालपत्राणि तथाविधान्येव तालपत्राकाराणि। शृङ्गा-टकानि त्रिकोटिकानि लोहयन्त्राणि। श्वदंष्ट्रास्तदाकारा यन्त्रभेदाः। अर्गलानि विष्कम्भाकाराणि यन्त्राणि। उपस्कन्दनानि स्खलनार्थानि काष्ठानि। पादुकाः एक-पादमात्रपातपर्याप्ताः पङ्कपूरिता गर्ताः। अम्बरीषाणि अग्निसम्भृततप्तभ्राष्ट्रगर्भा गर्ताः। उदपानकानि दुष्पीतोदकाः कुपुष्करिण्यः। एतैश्छन्नं पन्थानं कारयेत्।

[ प्राकारे सपरिकरप्रतोलीमहाद्वारपरिकल्पनम् ]

**प्राकारमुभयतो मण्डपकम् अध्यर्धदण्डं कृत्वा प्रतोलीषट्तलान्तरं द्वारं निवेशयेत्, पञ्चदण्डादेकोत्तरवृद्धया अष्टदण्डादिति चतुरश्रं, द्विदण्डं वा।**

---

चाणक्यटीका

बहिरिति। तृतीयपरिखाया बहिः। जानुभञ्जिनीः शरभा इवाष्टाभिः जानुमात्रोत्सेधैः पादैः क्षिप्तजानुभञ्जनयोग्याः सारदारुदण्डाः। वेणुखदिरादिमयानां शूलानां प्रकरः पङ्क्तिः। कूपः शुष्कावटः। कूटं मुखपातयन्त्रम्। अवपातो हस्तिग्रहणार्थः। कण्टकप्रतिशरः सर्पत्वे (?) मुखकण्टकमाला। अहिपृष्ठं निर्मांसाहिपृष्ठास्थिसंस्थानं लोहमयम्। [1]तलपत्रं क्षुरसंस्थानम् आतपत्रबद्धावृतम् (?)। शृङ्गाटकं त्रिकण्टका मण्डूकी। श्वदंष्ट्रा गोक्षुरकस्थानीया। अर्ध (? अर्गलं)—छिद्रावलम्बी वृक्षः। उपस्कन्दः विच्छिद्रा (? पिच्छिला)[2] भूमिः। पादुका तत्प्रमाण एव कण्टकोपचितः पांसुच्छन्नो गर्त्तः। अम्बरीषको भ्राष्ट्रे नित्यो (? निहितो) ऽग्निः। उदपानम् उदकपूर्णं कूपम्। तैश्छन्नोऽनुमार्गदेशः छन्नपथः सञ्चारः॥

नीति-निर्णीतिटीका

परिखादीनां रक्षार्थमाह। बहिर्जानुभंजनीति। जानुभंजनप्रयोजना सचक्राष्टपादसमन्विता सरभस्येवाधश्चत्वार ऊर्ध्वं··ति सा यं··भञ्जनं करोतीति। शूल [ प्रक ] रकूपसारदारुमयशूलप्रकरोपलक्षितकटपांसुच्छादितकूपैः कूटानि मृगपक्षिवधार्थमिव··बंधनार्थमिव कृता गर्त्ताः, कंटकप्रतिसरा अयोमयकंटकमाला, अहिपृष्ठं निर्मांसाहिपृष्ठसमानमयोमयमेव।··ति। शृंगाटकश्वदंष्ट्रा लोहमय्यो हस्तिगतिस्खलनाय। अर्गलाः सारदारुमय्यो यंत्रेण निपातिता मार्गनिरोधं कृत्वा तिष्ठंति····· देशैर्वा पादुका पदप्रमाणा गर्ता वित्तस्त्यवगाढा यत्र पतितः पादोऽस्थान एव भज्यते। अंबरीषो निर्धूमः कारीषाग्निः··शयाः, तैश्छन्नमिति निरन्तरं व्याप्तम्। छन्नपथमिति कटपांसुभिःप्रच्छादितत्वात् परैरलक्ष्यत्वादापदि रात्रौ गूढं पिहितत्वाच्च तं छन्नपथं·· दिति।

श्रीमूला

इत्थं परिखावप्रप्राकाराणां विधानमुक्त्वा द्वारविधानमाह—**प्राकारमुभयत** इत्यादि। अस्यार्थः—यत्र द्वारं निर्मित्सितं, तत्र प्राकारोभयभागयोः **अध्यर्धदण्डविस्तारं मण्डपं** परिकल्प्य प्रतोलीषट्तलैरवच्छादितं तदाधारभूतैः षड्भिस्तोरणस्तम्भैर्युक्तं द्वारं निवेशयेत् कारयेत्। पञ्चदण्डात् प्रभृति एकोत्तरवृद्ध्या अष्टदण्डपरमावधिकेन

---

१. 'तालपत्रम्' इति मुद्रितकोशपाठः।

२. 'उपस्करः (?) न्दः प्रस्खलिनी भूमिः स्थपुटपिच्छिला,' इति वैजयन्ती॥

## श्रीमूला

विस्तारेण प्राकारानुरूपेण युक्तं चतुरश्रं निवेशयेदिति । द्विदण्डं वेति । दण्डद्वयविस्तारयुक्तं वा द्वारं निवेशयेत् । इदमेकीयपक्षे । पक्षान्तरमाह—षड्भागमिति । आयामाद् दैर्घ्येण, षड्भागमष्टभागं बाऽधिकम् आश्रितविस्तारमानापेक्षया तदीयषष्ठांशाधिकं तदीयाष्टमांशाधिकं वा निवेशयेत् । इदमेवं विवृण्वन्ति—पञ्चदण्डचतुरश्रस्य षड्भागः साष्टाङ्गुलं हस्तत्रयं, अष्टभागस्तु सार्धं हस्तद्वयं, चतुर्विंशत्यङ्गुलं एको हस्तः, हस्तचतुष्टयमेको दण्ड इति चाश्रयणादिति । एवं षड्दण्डचतुरश्रादिषून्नेयम् ।

## चाणक्यटीका

(द्वार)विधानमुच्यते—प्राकारमिति । अध्यर्धदण्डनिष्कासप्रवेशमार्गमवशिष्य तमुभयतः "उपसर्वतसोः कार्या" (वा० २-३-२) इत्यादिना द्वितीया । तस्योभयपार्श्वयोः कृत्वेत्यर्थः । किं कृत्वा ? प्राकारम् । किंसंस्थानम् । मेण्डकारमिव बाहुप्राकारम् । संक्षेपतस्तद्यथा—पञ्चदण्डस्य प्रतोलीद्वारस्य तावत् षड्ढस्तान्मार्गाद् अधिकाश्चतुर्दण्डहस्ताः तानुभयतः सप्त हस्ताः प्राकाराग्रान् मेषघोणवन्निष्क्रान्ताद् अपकृष्य अर्धतृतीयदण्डप्राकारमध्येन सहान्तर्बहिश्च बाहू प्रसार्य मेषशृङ्गवन्मार्गाभिमुखौ सप्त सप्त हस्तान्निवर्त्तयेत् । तदेवं पट्टसाग्रमुखे प्राकारमस्तके तुला धरण्यास्तिष्ठन्ति । प्रतोलीमिव प्रतोलीसंज्ञकं द्वारं षड्वान्तराणि (?) सप्तानां तुलानां तुलावष्टब्धदेशादूनत्रिहस्तप्रमाणानि यस्य······(निवे) शयेत् । तेन मेडकच्छेदमात्रं तु ला (? द्वा) रमिति कथयन्ति । षट्प्रतोलीषट्तुलान्तरमिति समासमपीत्यन्ये, प्रतोलीसम्वन्धीनि तादर्थ्यात् षड् तुलान्तराणि षड्द्वारम् अर्थात् प्रतोलीसंज्ञकमिति व्याचक्षते । पञ्चदण्डादेकेनोत्तरोऽधिको यस्य निवेश इति । अष्टदण्डादिति प्राकारापेक्षया द्वादशविधस्य हस्तोत्तरोऽप्येतत्प्रमाणं (?) चेदमेवं समविष्कम्भत्वात् । चतुरश्रं चतुरश्रमेखलेनेत्याह (?) षड्भागमिति । पञ्च दण्डा यतस्य विस्तारः षष्ठाङ्गुलः त्रिहस्ताधिकः । षड्भागं वेति अर्धतृतीयहस्ताधिकविस्तारः एतद्द्वादशविधस्याप्युत्तरषड्भाग अष्टभागश्चाप्यूह्यः ।

## नीति-निर्णीतिटीका

··दिद्वाराण्याह प्राकारमिति । प्राकारस्य द्वारप्रतोलीक्षेत्रमात्राविशेषितभूप्रदेशस्य, उभययोगे षष्ठ्यपवादे द्वितीया, तम् । उभयत इति । उत्तरद्वारे पूर्वापरयोः, पूर्वद्वारे दक्षिणोत्तरयोः, दक्षिणद्वारे पूर्वपश्चिमायोः । पश्चिमद्वारे दक्षिणोत्तरयोः प्राकारोत्सेधयोरुभयत इति योज्यम् । मेंढकमिति वास्तुशास्त्रे लोके च मेषस्य संज्ञा । तत्र शृंगाकारग्रहणार्थमुपादानं कपिशीर्षकमुरजादिवत् । मेषशृङ्गद्वय- संस्थानं द्वारशुषिराभिमुखाग्रबाहुप्राकारं तयो··रतोऽपि कृत्वा मेंढकाकारप्रतिपादने च निराश्रितत्वात् प्राकारकोणेनादाढर्यार्थं भवति इति भावः । अध्यर्द्धदण्डमिति । षट्ढस्तविष्कंभं आयामस्तु द्वारक्षेत्रत एव सिद्धः··मुभयमेंढकशृंगचतुष्टयमध्येऽष्टहस्तं द्वारमार्गावकाशं मुक्त्वा कार्य इत्यर्थः । तमेवंविधं मेंढकं कृत्वा प्रतोलीषट्तुलांतरं द्वारं निवेशयेदिति संबंधः ।

**षड्भागमायामादधिकमष्टभागं वा । पञ्चदशहस्तादेकोत्तरमाष्टादशहस्तादिति तुलोत्सेधः । स्तम्भस्य परिक्षेपाष्षडायामाः द्विगुणो निखातः चूलिकायाश्चतु-**

नीति-निर्णीतिटीका

प्रतोल्याः ष···नामन्तराणि यस्मिन् कपाटयुगद्वितयान्तरे तत्प्रतोलीषट्तुलान्तरं द्वारं निवेशयेत् ।

प्रतोलीक्षेत्रस्य प्रमाणमाह—पंचदंडादेकोत्तरमिति । द्वादशहस्तोत्सेधस्य प्राकारस्य पञ्चदण्डं द्वारक्षेत्रम् तस्मादेकोत्तरमिति एकैकेनांशेनोत्तरमा अष्टदण्ड···च दंडस्योपरि दंडत्रयमधिकम्, तच्च द्वादशधा क्रियमाणं हस्तमात्रमेव भवति । ततश्च प्रथमप्राकारे पञ्चदंडं, द्वितीये हस्तोत्तरं, तृतीये द्विहस्तोत्तरं, चतुर्थे त्रिहस्तोत्तरं, पंचमे··डमेवं चतुर्विंशतिहस्तेऽष्टदंडकमिति । षड्भागमायामादधिकमष्टभागं वा स्वकीयस्वकीयप्रमाणात् षड्भागमायामादधिकमष्टभागं वा । पञ्चदण्डे आयामे षड्भागो हस्तत्रयं चतुरङ्गुलानि । अष्टमभागः सार्द्धहस्तद्वयमित्येवं द्वादशस्वपि क्षेत्रेषु योज्यम् ।

श्रीमूला

पञ्चदशेत्यादि । एतद् व्याचक्षते—द्वादशहस्तोत्सेधस्य प्राकारसभागृहस्य पञ्चदशहस्तोत्सेधांस्तुलास्तम्भान् कुर्यात् । एवं तद्धस्तचतुर्भागाश्रयेण एकोत्तरवृद्ध्या अष्टादशहस्तपर्यन्तमुत्सेधं कुर्यात् । स एष तुलोत्सेध इति । तलोत्सेध इति पाठे उक्तमानैस्तुलास्तम्भैरुपलक्षितस्यादितलस्योच्छ्रय इत्यर्थः ।

स्तम्भस्येति । स्तम्भस्य परिक्षेपाः परिधयः षडायामाः स्तम्भोत्सेधषड्भागदीर्घाः, पञ्चदशहस्तोत्सेधस्य स्तम्भस्य परिधिमानं सार्धद्विहस्तं कल्पनीयमिति भावः । निखातो द्विगुणः स्तम्भस्य निखातायामः परिक्षेपायामद्विगुणः, पञ्चदशहस्तोत्सेधस्य पञ्चहस्त इति भावः । चूलिकायाश्चतुर्भागः, चूलिका नाम स्तम्भशिखा, तस्या आयामः परिक्षेपायामचतुर्भाग इत्यर्थः ।

**चाणक्यटीका**

पञ्चदशहस्तादिति । द्वादशहस्तस्य प्राकारस्य पञ्चदशहस्तस्तलोत्सेधः, एवमुत्तरत्रापि षडङ्गुलवृद्धिर्योज्या ।

द्वारबन्धनस्तम्भानां तुलासन्धारकाणां च प्रमाणमुच्यते । परिक्षेपः स्थूलता ते षड्ढस्तस्तम्भस्य दैर्घ्यं, नायामस्यानेन लक्षणमुच्यते । पञ्चदशहस्तः तलोत्सेधः तेनैवास्य निर्ज्ञातत्वात् अर्धं तृतीयहस्तत्वं परिक्षेपस्यै वलक्ष्यते । गुणनिर्देशं तूत्तराः । द्विगुणो निखातः परिक्षेप एव द्विगुणः पञ्चहस्तो निखातः । चूलिकायास्तम्भशिखायाः तुलाफलकसन्धारणार्थायाः संबन्धी परिक्षेपादेव चतुर्भागः पञ्चदशाङ्गुलः परिणाहेनेति बोद्धव्यम् ! दैर्घ्यं तु तुलापरिणाहादेवार्थोक्तम् । वाशब्दस्य सापेक्षत्वात् । क्रमवशेन किञ्चिन्न्यूनोऽभ्यधिको वेति व्याख्येयम् । अपरे त्वाहुः—चूलिकायाश्चतुर्भागो निखात एवोर्ध्वतुलोपरिच्छेदस्त्वधो न्यासपट्टो ऽिवति ।

**भागः। आदितलस्य पञ्च भागाः शाला वापी सीमागृहं च। दशभागिकौ (समत्तवारणौ) द्वौ प्रतिमञ्चौ; अन्तरमाणिः। हर्म्यं च समुच्छ्रयादर्धतलं, स्थूणावबन्धश्च, आर्धवास्तुकमुत्तमागारं त्रिभागान्तरं वा, इष्टकावबद्धपार्श्वं,**

---

## नीति-निर्णीतिटीका

तथैव द्वारतलस्योत्सेधं त्रयोदशविधमेव दर्शयन्नाह—पञ्चदशेति। मेंढकप्राकारास्याय-मुच्छ्रयो द्रष्टव्यः। तन्मस्तक एव यस्मात्तलं तस्य तलोच्छ्रयः।

साद्धे······रुत्तर······ह्यम्॥

स्तंभस्येति। द्वादशहस्दोत्सेधे प्रकारे द्वादशहस्तोत्सेध···द्वारग्रहतुलापिण्डपल··· स्तारभूमिकाबन्धादौ द्रष्टव्यम्। तलोच्छ्रयवृद्धयैव स्तंभोच्छ्रयवृद्धिर्व्याख्याता। स्तंभ-स्थौल्यमाह—स्तंभस्य परिक्षेपाः···द्वादशहस्तायामस्य द्विहस्तं स्थौल्यं भवतीत्यर्थः। स्तंभायामस्य षष्ठोंशो विष्कंभ इति भावः। द्विगुणो निखा···। न त्वेव काष्ठमयं कारयेत्। "अग्निरवहितो हि तस्मिन् वसती"ति वचनसामर्थ्यात्। प्रतोल्यां सकलकाष्ठं ताम्रवेष्टितं द्रष्टव्यम्···परिक्षेपचतुर्थभागप्रमाणं भवति। एवं द्वारनिवेशमभिधाय

## श्रीमूला

आदीत्यादि। अयमर्थः—प्रतोलिकात्रितलेषु मध्ये प्रथमतलं पञ्चधा विभज्य तेषु पञ्चसु भागेषु शाला वापी सीमागृहं च कार्याणीति। इदं विवृण्वन्ति—मध्यमे भागे वापीं, वापीप्रान्तभागयोः दीर्घचतुरश्रे द्वे शाले, शालाप्रान्तयोः सीमागृहं च कारयेदिति। सीमागृहं नाम शालाद्वयप्रान्तयुगलगते पञ्चभागे क्रियमाणं चतुष्कोणं कोष्ठगृहमित्याहुः। दशभागिकाविति। दशभागिकौ शालादशभागविस्तारौ, समत्त-वारणौ निर्यूहयुक्तौ, द्वौ प्रतिमञ्चौ मञ्चप्रतिकृती ऐष्टकौ सन्निवेशविशेषौ, कार्यौ, अर्थाच्छालायाः प्रान्ततः। अन्तरं शालासीमागृहयोरन्तरालं कार्यम्। आणिः कार्यः। स च क्षुद्रं द्वारमित्याहुः। हर्म्यं चेति। हर्म्यम् उपरितलं चन्द्रशाला तच्च, समुच्छ्रयादर्धतलम् उत्सेधेन प्रथमतलस्यार्धं प्रथमतलोत्सेधापेक्षयाऽर्धोत्सेधं कार्यम्। आणिहर्म्यमिति पाठे आणिः सीमा तत्रत्यं हर्म्यं सीमागृहवदुपरितले सीमनिर्मिता चन्द्रशालेत्यर्थः। स्थूणावबन्धश्च क्षुद्रस्तम्भनिवेशश्च अर्थाद् द्वितीयतले। आर्धवास्तु-

## चाणक्यटीका

आदितलस्येति। आदिभूमेरुपरिष्टाद्यस्तलस्तुलापट्टं (? ट्टः) चतुरश्रः पञ्चदण्डा-दिप्रमाणायतस्य पञ्चभागाः कर्त्तव्याः। ततः प्रथमो दण्डः शालासंस्थानतिर्यगायतः ·रणाहरणादिस्थानार्थ······स्यात्। मध्यपञ्चमभागो वापीसंस्थानः चतुरन्तैस्तटैरिति च परिक्षिप्तोभय······त्यच्छन्नत्वात् सुषिर एव। तथा हि—तुलामात्रोपस्थितविरल-·न्लपट्टगताः पुरुषाः कवाटभङ्गोद्यतानधोभूमिगतान् प्रविशतो निवारणे पाषाण-·मुसलादिभिः परान् घ्नन्तः उभयोः कवाटयोः रक्षां कुर्वन्ति। षड्ढस्तात् प्रथम-

चाणक्यटीका

द्वारादुभयतः अष्टावष्टाङ्गुलानि तदधिकऋज्वायतं च मध्यदण्डत्रयमिति तृतीयः, पञ्चमभागो वार्थः तैश्व छिद्रैः परान् निघ्नन्ति । तदपि शालाप्रमाणसंस्थानमेव छिद्राधिकं तु तत्स्यात् । दशभागिकाविति । वाप्यास्तूभयतो यौ तत्प्रमाणौ त्रिदण्डायतौ षोडशाङ्गुलाधिकषडन्तविस्तीर्णौ पञ्चभागौ तयोरर्धमर्धमवच्छिद्य अर्धोच्छ्रायौ द्वौ प्रतिमञ्चौ फलकाहृतौ स्याताम् । उभयतश्चेतो दशभागिकावित्युच्येते । तौ प्रमाणतः त्रिदण्डायतावेव अष्टाङ्गुलाधिकत्रिहस्तविस्तीर्णौ तत्रस्थानीयौ याः (? कयौधाः) कवाटारक्षाणामात्मीयनां परेषां च प्रवेशनिष्कासपरिज्ञानं कुर्युः । अन्तरमाणीति (? णी इति) यत्तयोः प्रतिमञ्चयोः पृष्ठतो दशभागद्वयमवशिष्टं निस्तलान्तरं चारार्थमन्तरद्वारमित्यर्थः । तस्याणित्वं सामर्थ्यप्राप्तम् । अस्यै (व) त्वाणीति (? णी इति) द्विवचनान्तमेवाभिधीयते । तस्य प्रयोजनापेक्षं प्रमाणमास्थाप्य शेषो हर्म्यवदिष्टकारचितारक्षिकभूमिकमेव स्यात् शयनाशनयोग्यम् । ननु चाणिरिति छिद्रापिधानमुच्यते, तद्योगाच्चाणिमाण्डव्य इति । नैष दोषः, छिद्रसाहचर्यात् कीलाभिधानं स्यात् । तथा चाणिद्वारं नि (?) च्छिद्रिकाद्वारं वक्ष्यति ।

अपरे त्वाहुः—बाह्यः पञ्चभागः शालामध्ये क्वापि तस्यां सीमागृहमुभयतो द्वारप्रकारसीमत्वाद्यर्थम् । अभ्यन्तरपञ्चभागो द्विधाविभक्तो द्वौ प्रतिमञ्चकाविति । तत्र विभागे प्रयोजनाभावः । यच्चान्तरं वा विच्छिद्राणि कवटावापत्यौ (?) हर्म्यस्य बाह्यतश्चतुर्षु पार्श्वेषु स्थूणाः कृत्वा तासामुपरि फलकास्तृतकुट्टिमस्थानमुच्यते । वर्धमानच्छेदमध्योन्नतस्तलबन्धश्चेति । तथा नाम यद्यायुज्यते को दोषः ।।

द्वितीयं तलमाह—समुच्छ्रयादिति । आदितलस्य पञ्चदशहस्तस्य प्रकृतत्वात्तस्येह योऽर्धादिष्टहस्तसमुच्छ्रायं तलं द्वितीयमिति । अर्थात् पर्यवसानायाम्[१] (?)········कथं तदुत्थाप्यत इत्याह—स्थूणाबन्धश्च अस्य कार्य इति शेषः । स्थूणासु क्षुद्रस्तम्भिकासु तलोऽस्त्येव । तत्र निखातब्या इत्येतन्निखातयोग्याः स्थूणाः स्युः विस्तारादितलस्यैवस्यात् । अन्येत्वाहुः—अर्धमिष्टकाभिरुत्थाप्य तत्रोपरि स्थूणाबबन्ध इति । अर्धवास्तुक मिति । अर्धतृतोयां दण्डानां काशतृतीयार्थमवस्थाप्य (?) अग्रतः पृष्ठन उभयतो वा तत्प्रमाणमवशिष्टे भागे स्याद् अगारमेतन्मध्योन्नतः तलभागमेव कर्त्तव्यमित्यन्ये । तथा च शुकपञ्जरमिति तदाख्यायते द्रमिडैः वालाग्र[२] चोतिचोन्याचार्यैरिति (?) । भागान्तरं वेति । उत्तमागारं शून्यतृतीयो भागः षोडशाङ्गुलाधिकोऽध्यर्धदण्डः स्यात् ।

नीति-निर्णीतिटीका

मेंढकप्राकारमस्तकनिविष्टस्यादितलविधानमाह—आदितलस्येति ।

---

१. इतः परं मातृकायां पत्रार्धपरिमितो ग्रन्थभागः "पराजेरसोढः" (१-४-२६) इत्यादिपाणिनिसूत्रव्याख्यारूपः ग्रन्थान्तरात् प्रक्षिप्तोऽस्ति ।

२. मृच्छकटिके प्रासादवालाग्रप्रतोलिकायां निगडबद्धः स्थावरकश्चेटः जीर्णगवाक्षेणाऽधः पतित्वा चारुदत्तपरित्राणाय त्वरते ।।

**वामतः प्रदक्षिणसोपानं, गूढभित्तिसोपानमितरतः, द्विहस्तं तोरणशिरः,**

नीति-निर्णीतिटीका

तद्यता एवं भागास्तले कार्याः प्रत्यंशं पञ्च कोष्ठकाः ।
यथायोगं विभागोऽत्र शालासीमागृहादिषु ॥
कोष्ठकस्य त्रिभिस्त्र्यंशैः कोष्ठको जायतेऽत्र तु ।
त्रिभिः षडंशैः कोष्ठार्द्धं पादोऽपि द्वादशांशकैः ॥
···कोष्ठत्रयं त्र्यंशैरुभयोः पार्श्वयोरपि ।
पञ्चकोष्ठा भवेद्वापी मध्यस्थं कोष्ठकत्रयम् ॥

द्वारबन्धप्रदेशस्तलव्यपदेशं न लभते जनावकाशप्रदेशाभावात् । आदितलस्य पञ्च··प्रमाणस्य पञ्चभाग आयामेन विंशत्यादिहस्तविष्कंभेन दंडादिप्रमाणोऽभ्यन्तरभागावस्थितः । शाला प्रहरणावरणादिस्थानम् । शालाग्रतः स्थितं षडङ्गुलान्तरं शुषिरं वापी··रत्वात् । यया प्रविशतः शत्रूनुपरि स्थिताः प्रहरंति । अग्रस्थितः शालाप्रमाणो भागस्सीमागृहम् । बाह्याभ्यान्तरभागयोः सीम्नि स्थितत्वात् । सीमागृहं युद्धार्थम् । युद्धार्थौ दशभागिकौ द्वौ प्रतिमञ्चौ अर्द्धदण्डादिप्रमाणौ वापीभागस्योभयतः द्वाररक्षकावस्थानभूतौ प्रतिमञ्चौ प्रविशतां परिज्ञानार्थम् आदितलस्य ।

···धा कृत्वा वाप्याः पार्श्वद्वयेऽपि च ।
प्रतिमंचौ च तौ कार्यौ गोप्तृणां स्थितये सदा ॥

प्रविशतां परिज्ञानार्थम् ॥

अन्तरमाणीति । शाला-वापी-सीमागृहप्रतिमञ्चावरुद्धप्रदेशे··मन्तरमित्युच्यते । तत्र आणी इत्याणिद्वयं सोपानमार्गद्वारद्वयमित्यर्थः । शेषप्रदेशद्वये हर्म्यं रक्षकशयनासनार्थं धवलगृहम् । द्वितीयतलविधिमाह—समुच्छ्रयादिति । समुच्छ्रयात् पञ्चदशहस्तादूर्द्धं मार्द्धसप्तहस्तः समुच्छ्रयः । उच्छ्रयापेक्षयाऽर्द्धतलमुच्यते । क्षेत्रं त्वादितलसमानम् । स्थूणाबन्धश्चात्र स्थूणाः क्षुद्रस्तंभा आदितलस्योपरिस्थूणा··न्यासं कृत्वा, बन्धो द्वितीयतलबन्धः । स्तंभतुलादिभिः कार्य इति वाक्यशेषः ॥

अर्द्धवास्तुकमिति ।··णवास्तुश्च भूतलं चार्द्धप्रमाण··तीयतलमित्यर्थः । उत्त-

श्रीमूला

कमिति । उत्तमागारं तृतीयतलम्, आर्धवास्तुकं, त्रिदण्ड एको वास्तुरिति परिभाषया वास्तोरर्धं सार्धदण्डः तत्प्रमाणकं कार्यम्; अर्थात् पञ्चदण्डचतुरश्रस्य द्वारस्य । त्रिभागान्तरं वा पञ्चदण्डत्रिभागोऽन्तरमवकाशो यस्य तत् तथाभूतं वा, उत्तमागारं कार्यम् । इह वाशब्दात् त्रिभागद्वयान्तरपक्षार्धान्तरपक्षयोरपि सङ्ग्रह इत्याहुः । इष्टकावबद्धपार्श्वं, वामतः प्रदक्षिणसोपानम्, इतरतो दक्षिणतः, गूढभित्तिसोपानं च कार्यम् । तृतीयतलविधिरयमधस्तलेऽपि योज्यः ।

द्विहस्तमिति । तोरणशिरः द्वारशीर्षं, द्विहस्तं, कार्यम् । त्रिपञ्चभागिकौ त्रयः

**त्रिपञ्चभागिकौ द्वौ कवाटयोगौ, द्वौ द्वौ परिघौ, अरत्निरिंद्रकीलः, पञ्चहस्तमणिद्वारं, चत्वारो हस्तिपरिघाः। निवेशार्धं हस्तिनखः मुखसमः। सङ्क्रमोऽसंहार्यो वा भूमिमयो वा निरुदके ॥**

———————

### चाणक्यटीका

अस्य तु स्थूणाबन्धवचनं सिद्धमेव, शोभनार्थं युद्धार्थं दिगवलोकनार्थं त्वेतत्। प्राकार-मूलात् प्रभृति तलारोहणार्थं सोपानविधिमाह—द्वारस्य निर्गते वा इष्टकावबद्धपार्श्वमात्रं काष्ठमयं तु शैलमित्यन्ये। प्रदक्षिणावस्थितं सोपानं मङ्गलार्थं द्वितीयतलारोहणार्थं स्यात्। गूढं सुगुप्तं महाजनेनालक्षितं भित्तिगतमेव सोपानं महापुरुषार्थं (?) रोहणार्थम्। दक्षिणः स्यात् (? रक्षिणोऽस्माद्) गूढभित्तिसोपानेन ह्यवतीर्यान्यं वेषमात्मनः कृत्वा दृश्यमानसोपानपङ्क्त्या पुनः समारोहन्ति प्रभूतजनसंख्यापनार्थम्। एतच्च स्थ······तमेव स्यात्। आपदि तूद्घाटाचते ॥

द्विहस्तमिति द्वारबन्धकाष्ठादुपरि द्विहस्तमात्रार (?) शिखाभित्तिः स्यात्। अतश्च पञ्चदशहस्तोच्छ्रितस्य देहलीपट्टं हस्तमात्रं परिकल्प्य द्वादशहस्तोच्छ्रायं षढ्ढ-

### नीति-निर्णीतिटीका

मागारं च घण्टाकलशादिरचनया, त्रिभागांतरं वा द्वितीयतलात्तृतीयतलं त्रिभा··· कर्तव्यमित्यर्थः ॥

इष्टकेति। इष्टकावबद्धपार्श्वमिति काष्ठ···निषेधार्थं। वामत इति द्वारनिर्गमे भागे। प्रदक्षिणसोपानमिति पश्चिममेंढकभित्तेरारभ्य पश्चि···मेंढककभित्तिलग्नानि द्वारं यावत्सोपानकानि धीयन्त इत्यर्थः ॥

गूढभित्तिसोपानमिति। दक्षिणतोऽभ्यंतरभागे गूढमेंढक···कभित्तौ सोपानं कार्यम् गूढप्रवेशनिर्गमार्थम्। द्विहस्तं तोरणशिर इति। उत्तरदेहल्यां द्विहस्तं शुषिरं

### श्रीमूला

पञ्चभागाः अनयोरिति तथाभूतौ, द्वौ कवाटयोगौ कार्यौ। द्वौ द्वौ परिघौ अर्गले, कार्यौ। इन्द्रकीलः कवाटधारणार्थः प्रधानः कीलविशेषः, अरत्निः निष्कनिष्ठमुष्टिकहस्तदीर्घः कार्यः। अणिद्वारं क्षुद्रद्वारम् अर्थान्महाकवाटमध्यगं, पञ्चहस्तं कार्यम्। हस्तिपरिघाश्च-त्वारः गजार्गलानि लक्षणया गजगतिद्वाराणि चत्वारि कार्याणि, कृत्स्नो द्वारमण्डपाव-काशश्चतुर्गजप्रवेशपर्याप्तःकार्य इत्यभिप्रायः।

निवेशार्धमिति। हस्तिनखः दुर्गावतरणार्थः क्रमनिम्नो हस्तिनखाभो मृत्कूटः। निवेशार्धं द्वारसन्निवेशस्यार्धमानः पञ्चदण्डचतुरश्रस्य सार्धद्विदण्डोत्सेधमान इत्यर्थः। मुखसमः द्वारसमानविस्तारश्च कार्यः। सङ्क्रम इति। सङ्क्रमः दुर्गसञ्चरः, असंहार्यः स्थिरो दार्वादिमय इत्यर्थः तथाविधो वा, निरुदके भूमिमयो वा कार्यः।

## चाणक्यटीका

स्तविस्तीर्णं विस्तारद्विगुणायतं द्वारम् एवं इतराम् (?) अप्यनया कल्पनया प्रमाणाधिक्यं योज्यम् । त्रिपञ्चभागिका ऋतवति (?) कौ द्वाविति महाद्वारस्य कवाटस्थानमाह—तलस्येव दण्डप्रमाणान् पञ्चभागान् कृत्वैकैकं पञ्चभागः बहिरुभयतोऽवाच्यान्तर्गतपञ्चभागाः (?) कर्त्तव्याः ते विद्यन्ते ययोस्तौ प्रथमद्वितीययोश्चतुर्थपञ्चमयोर्मध्ये द्वौ कवाटयौगौ स्यातां कवाटद्वयापेक्षत्वात् । योगग्रहणमुद्घाटसौकर्यार्थम् । न चैको महान् कवाटो दण्डमात्रे शालावस्थिते पञ्चमभागे सम्मातीति वचनात् । कवाटयुगद्वये द्वौ परिघो द्वौ द्वौ परिघार्गलौ कवाटयुगस्यैकैकस्याभ्यभ्तरे तत्साधारणार्थौ स्याताम् । अरतिनिरिन्द्रकील इति । निखननोत्खननसुखत्वात् काष्ठाविपरीताश्रयगर्तंग (त) इन्द्रध्वजकीलो हस्तमात्रः अतश्चेन्द्रकील इत्युच्यते । स हि द्वारं पिधाय कवाटयुगसन्धिश्लेषणार्थं निखन्यते । अपवारणे चेदमिति नोक्तम् । हस्तिपरिघा इति । पञ्चभागः मनुष्याणां गवाश्वस्य वा निर्गमनार्थं पञ्चहस्तमेवार्धादर्धं तृतीयहस्तविस्तारम् आणिद्वारं छिद्रिकाद्वारमित्यर्थः । अन्यत्कवाटार्गलाद्यर्थप्राप्तागाराद्बहिः हस्तिप्रतिघातक्षमावार्यामिव (?) परिघाः स्युः द्वाररक्षार्थम् ॥

निवेशरक्षार्थमिति । द्वारनिवेशस्य स्थानस्यार्धतृतीयस्थानं हस्तिनखाकारं पुरोनिर्गतान्तःप्रकृष्टत्वात् हस्तिनखवद्धस्तिपादाघातप्राकारमूलत्वात् उभयतो मार्गनिर्गतं हस्तिनखसंज्ञं द्वारपालानां जागरूकाणां चाश्रयार्थम् । अन्यस्त्वाह—अतु (?लि)-न्दद्वयमित्यर्थः । यत्रोच्यते हस्तिनखेष्वनलं प्रतीकार इति ( ? ) । अन्यस्त्वाह द्वाराद् बहिः पुरस्ताच्च कुर्यात् करिनखं दृढम् । तथा वा गच्छतां वेगाद् भवेद् वृ (? म) न्दनिभा गतिः । इति

मुखसमद्वारं मुखसमोऽध्यर्धदण्डविस्तारः । सङ्क्रमन्त्यनेनेति सक्रमः । खातमुखसमश्चतुर्दशहस्तविस्तार इति केचित् । तदयुक्तम् । द्वाराधिकस्य विस्तारस्यानर्थक्यात् । स च संहर्तुं शक्योवइष्टब्य (? अवष्टम्भ) फलकः । स्वकार्यपरिसमाप्तौ हस्तिनः कथमनुप्रवेश इति चेद् ऊ (? द्द) ढैः फलकैरेवोदकच्छन्नैः तथा खाततीर्थेन तदत्र प्रतिविधानमेवैतत्स्यात् । भूमिमयो वा निरुदके स्थाने एतावतीं भूमिं नैव खन्यादित्यर्थः उक्तं । प्रतोलीद्वारम् ॥

## नीति-निर्णीतिटीका

मुक्त्वा···करतोरणं विधातव्यम् वातप्रवेशनार्थं शरमोक्षार्थं च । त्रिपञ्चभागिकौ द्वौ कपाटयोगाविति । पञ्चधावि···अन्तर्बहिश्चैकैकं पञ्चभागं परित्यज्य मध्यमास्त्रयः पञ्चभागा अंतरगयोः कपाटयोगयोस्तौ त्रिपञ्च [ भागिकौ द्वौ कपाट ] योगौ··· पञ्चमयोश्च पञ्चमभागयोः सन्धौ भवत इत्यर्थः । कपाटयोगद्वयग्रहणं द्विर्बद्धं सुबद्धं भवतीति । द्वौ परिधौ प्रत्येकमित्यर्थः । समन्ततः कपाटोपघातकं हन्तीति । परिघा··· कपाटयोर्मध्ये त्रिभागपार्श्वे अभ्यन्तरतः स··म्य भवतः द्वितीयस्यापि तथैव ॥

[ गोपुरादिद्वारेषु विशेषः ]

**प्राकारसमं मुखमवस्थाप्य त्रिभागगोधामुखं गोपुरं कारयेत् ।**

---

नीति-निर्णीतिटीका

अरत्निरिन्द्रकीलक इति । चतुर्विंशत्यङ्गुलो लौहः कपाटयुगसन्धिमाक्रम्याधोदेहलीविवरं प्रविशति कीलस्तस्मिन् इन्द्रजिता किलेन्द्रो बद्ध इन्द्रकील इत्युच्यते । ऊद्ध्र्वभागेऽपीष्यते, मस्तककीलाख्यः ॥

पञ्चहस्तेति । कपाटयोगयोरेकैकवामकपाटे पञ्चहस्तोत्सेधं आणिद्वारं क्षुद्रकद्वारमित्यर्थः । ····तेऽपि द्वारे प्रवेशनिर्गमार्थं । अत्रापि कपाटार्गलादिकं चार्थप्राप्तं कपाटानां च लोहकण्टकचितत्वमर्थापन्नम् दुर्गविधानप्रस्तावात् ॥

चत्वार इति । कपाटरक्षार्थं··हस्तिनामसाध्याश्चत्वारः परिघाः । हस्तिनिवारणार्थं हस्तिपरिघाः ॥

निवेशार्द्धमिति । निवेशः प्रतोल्याः पञ्चदण्डादिस्तदर्द्धं सार्द्धदंडद्वयादि हस्तिनखं देहलीतो··कारेण क्रमान्निम्नं शिलामयम् ॥

मुखसम इति । मुखं द्वारशुषिरं तत्समः परिखासु सङ्क्रमो मार्ग इत्यर्थः । अधिकस्य प्रयोजनाभावात् ।··रुषा मुखे मांति तावतामेव परिखासु सङ्क्रमणं युक्तम् । स च संहार्यः काष्ठयन्तादिना । सोदके खातप्रदेशे भूमिमयो वा निरुदके । तावतीं भूमिपहाय खातव्यमित्र्थः । प्रतोली··शेषमाह ।

श्रीमूला

इत्थं महाद्वारविधानमभिधाय द्वारान्तरविकल्पमाह—प्राकोरत्यादि । प्राकारसमं मुखमवस्थाप्य प्राकारतुल्यमानं निस्सरणं परिकल्प्य, त्रिभागगोधामुखं त्रिभागः विस्तारतृतीयांशस्तत्प्रमाणं गोधामुखं गोधामुखाकारं द्वारं यस्य तत् तथाभूतं, गोपुरं

**चाणक्यटीका**

गोपुरद्वारस्य पूर्वस्माद्विशेषमाह—प्राकारसममिति । प्रतोलीद्वारे द्वादशहस्ते प्राकारे पञ्चदशहस्तोच्छ्रिता प्रथमा भूमिः । अत्र तु द्वादशहस्तोच्छ्रायमेव मेण्डकविभागं मुखमवस्थाप्य त्रिभागगोधामुखमिति उभयतः षोडशाङ्गुलावध्यर्द्धादपरिकल्प्य (?) ततस्तत्प्रमाणं सप्तस्तम्भमालं प्राकारं निष्कास्याग्रेऽध्यर्धदण्डं प्रवेशनिष्कासार्थं गोधामुखसंस्थानायामं परिकल्प्य गोपुरसंज्ञकं द्वारम्, अन्यत् प्रतोल्या समानम् । एतत्तु तोरणशिरोऽवशिष्टदशहस्तोच्छ्रितं द्वारं तुलापोटप्रतिबन्धं परिकल्प्य तोरशिरसा सह द्वादशहस्तमेव व्याख्येयम् ॥

नीति-निर्णीतिटीका

प्राकारसममिति । मुखमादितलादधःशुषिरं तच्च द्वादशहस्ते प्राकारे पञ्चदशहस्तं "पञ्चदशहस्तस्तलोत्सेध" इति वचनात् । अत्र गोपुरे प्राकरसममेव मुखं कर्तव्यम् ।

**प्राकारमध्ये कृत्वा वापीं पुष्करिणींद्वारं. चतुश्शालं अध्यर्धान्तराणिकं कुमारीपुरं, मुण्डहर्म्यं द्वितलं मुण्डकद्वारं, भूमिद्रव्यवशेन वा ॥**

---

## नीति-निर्णीतिटीका

द्वादशहस्ते प्राकारे द्वादशहस्त एव मेंढकः। दशहस्तास्तंभाः हस्तद्वयं च स्तभोद्ध्र्व-परिकरस्य। एवं सपरिकरः स्तंभोऽपि द्वादशहस्त···एवं प्रतोलीतस्त्रिहस्तान्न्यूनो-च्छ्रयमित्येको विशेषः। त्रिभागगोधामुखमिति। त्रिभागं क्षेत्रस्य पंचदंडा··मग्रतोधि·· मुखाकारो मेंढकप्राकार एव···यो योधानां युद्धसौक (क) र्यार्य द्वाररक्षातिशयार्थं च। प्रायोविवीताभिमुखं गवामेतत् द्वारमिति गोपुरं··टकयोः शृंगाटकाकारेण वि·· तयोर्गोधामुखाकारं भवति तत् कारयेत् शेषं प्रतोलीसमानम्। पुष्करिणीद्वारमाह—

## श्रीमूला

पुरद्वारं, कारयेत्। प्राकारमध्य इति। प्राकारमध्ये वापीं कृत्वा पुष्करिणीद्वारं वापी-योगवशेन पुष्करिण्याख्यं द्वारं कारयेत्। अध्यर्धान्तराणिकम् अन्तरम् अणिश्च पूर्वोक्ता-दध्यर्धाधिकं यस्य तत् तथाभूतं, चतुश्शालं शालाचतुष्टयं, कृत्वा, कुमारीपुरं कुमारी-पुराख्यं द्वारं कारयेद्, अर्थाद् यथोक्तचतुश्शालयुक्तं द्वारमेव कुमारीपुरसंज्ञं बोद्धव्यम्। द्वितलं द्विभूमं, मुण्डहर्म्यं निश्शृङ्गं हर्म्यं, वृत्तमालिकामित्यन्ये, कृत्वा, मुण्डकद्वारं मुण्डहर्म्ययोगान्मुण्डकाख्यं द्वारं, कारयेत्। भूमिद्रव्यवशेन वा भूमिद्रव्यसम्पदनुरोधेन वा कारयेद्, अर्थाद् यथोक्तमेकैकं द्वारम्।

## चाणक्यटीका

प्राग्द्वारमध्य इति मेण्डकाल·····दप्रकाराणां मध्ये वापीं कृत्वा वापीसंस्थानेन पञ्चदण्डान् समन्ततोऽतिरिक्तानवकल्प्य पुष्करिणीसंज्ञकं कारयेत्। अन्यत् प्रतोल्या तुल्यम्। अत्र प्रथमकवाटयुगरक्षार्थं प्रथमतलादङ्गता निष्कासनीया, आणिद्वारञ्च अग्राह्ये देश इत्यध्याहार्यम्। चतुश्शालमिति। चतस्रः शाला दण्डमात्रविस्तीर्णाः समन्ततः परिकल्प्य यत·····ष्टं त्रिदण्डायतं विस्तीर्णमन्तरालं तस्याध्यर्थं भागमुभयत एकतो वा पादास्तृतं कृत्वा ततोऽध्यर्धं द्वाररक्षार्थं वृत्तं कुर्यात्। अध्यर्धमिति वाप्या एव द्रष्टव्यम्। आभ्यन्तरबाह्ययोः शालयोरुभतो दण्डमात्रौ पक्षौ कृत्वा ततोऽध्यर्धभागं त्रिदण्डायाममात्रं विवृतं कुर्यात्। केचित् सान्निकमिति समन्ततः ताण्डमाच्छिकर्याणि-विदित्यन्ये पठन्ति (?)। तेषामेष एवार्थः आणिद्वारवदिति तुल्यं व्याख्येयम्। सर्वत्रास्य भावात् आणिकमित्यपात् एवार्थाभावात् (?) आलोकनच्छिद्रसादृश्याच्चैतत्। कुमारीसंज्ञकं द्वारमेकतलमिति मुण्डहर्म्यं द्वितलमिति उत्तमागाराभावान्मुण्डकेन गूढेन हर्म्येणैव सह द्वितलप्रतोलीद्वारकल्पं तं मुण्डकद्वारं पञ्चद्वारवितानानि यथेष्टं कार्याणि। अथवा भूमेः समत्वविषमत्वविस्तीर्णानि द्रव्याणि चोपकरणादीनि महान्ति ह्रस्वानि यथोक्तं विधिं कल्पयेत्।

[ कुल्यापरिकल्पनं, कुल्यासु निवेशनीयानां भाण्डानां सङ्ग्रहश्च ]

**त्रिभागाधिकायामाः भाण्डवाहिनीः कुल्याः कारयेत् ।**

---

### नीति-निर्णीतिटीका

प्राकारमध्य इति । प्रकारयोर्मेढकयोर्मध्ये यच्छुषिरं तत्सम‥ फलकास्तारो भूमिकबंधो‥युद्धसौक (क) यर्थिमनेनैव विशेषेण प्रतोल्येव पुष्करणीद्वारमित्युच्यते । चतुरस्रा वापीत्युच्यते‥चतुरस्रा तु‥णीत्येकाऽर्थः ।
कुमारीपुरमाह चतुःशालमिति । चतस्रश्चतुर्दिशं शाला एव कार्याः । न सीमागृहव्यपदेशः । प्रतोल्यपेक्षया अन्तरमर्द्धेनाधिकं वापीस्थाने विधेयम्, प्रतिमंचक‥पनीय तत्क्षेत्रमपि वापीमध्ये प्रक्षिप्यैवमर्द्धेनाधिकमन्तरं भवति । तच्च साणिकं आणियुक्तं तुलाफलकांतरे छिद्रयुक्तं युद्धसौकर्यार्थं कुमारीपुरमिव सर्वतः कुटयमुक्त‥नं शेषप्रतोलीसमानमिति ।

मुण्डकद्वारमाह मुण्डहर्म्यमिति । मुण्डेनोत्तमागाराभावात् । हर्म्यद्वितलेन युक्तं प्रतोलीद्वारमिव मुण्डकद्वारम् । यथा‥रहितो मुण्ड इत्युच्यते । तथा द्वारमप्युत्तरागाररहितमिति ।
पञ्चद्वारभेदानभिधाय सर्वापवादमाह भूमिद्रव्येति ।

भूमेः समत्वं विषमत्वं च‥निम्नता च दुर्गा भूमिस्तदैकयैव परिखया पर्याप्तमथ समा तदा पंच सप्त वा परिखाः कारयेदिति मानवाः । यदि द्रव्यं काष्ठहिरण्याद्यधिकं तदा उक्तादधिका अपि विशेषात् । न्यूने द्रव्ये न्यूना इति । निवेशयेद्दुर्गमिति वाक्यशेषः ॥

### श्रीमूला

त्रिभागेत्यादि । त्रिभागाधिकायामाः त्रिभागाधिकः स्वविस्तारमानापेक्षया तृतीयांशाभ्यधिकमानः आयामो दैर्घ्यं यासां तास्तथाभूताः, भाण्डवाहिनीः कर्मोपकरणगतागतव्यवहारार्थाः कुल्याः कारयेत् ।

### चाणक्यटीका

त्रिभागावधिकायामाइति । परिकल्पिताद्विस्तारादष्टहस्तविस्तारत्वं द्वादशहस्तायताः । साङ्ग्रामिकभाण्डवाहिनीः कुल्या[1] नुपपरिका (?) अपवरकान् अर्थात् प्राकारस्याऽभ्यन्तरेऽनुप्राकारं कारयेत् ॥

### नीति-निर्णीतिटीका

प्राकाराद्यारूढयोधरणोपकरणस्थानार्थं‥त्रिभागेति । यदि दशहस्तो विष्कंभस्तदा पंचदशहस्त आयाम इत्यादि । भाण्डं रणोपकरणं तद्वहंति चाविच्छिन्नतया निर्व्यूढेऽन्यदाधेयमि [ ति ]‥‥‥‥कुल्यासु जलमविच्छिन्नं तथात्र भाण्डमिति । कुल्याव्यपदेशो भाण्डशालानाम्, ताश्चानुप्राकारमन्तः कारयेत् ।

---

१. कौटलीयस्य केरल भाषाटीका कुल्यशब्दस्य कोष्ठकार्थत्वमाह ।

**तासु पाषाणकुद्दालकुठारीकाण्डकल्पनाः ।**
**मुसृण्ठिमुद्गरा[1] दण्डचक्रयन्त्रशतघ्नयः ॥५५॥**
**कार्याः कार्मारिकाः शूलवेधनाग्राश्च वेणवः ।**
**उष्ट्रग्रीव्योऽग्निसंयोगाः कुप्यकल्पे च यो विधिः ॥५६॥**

इति कौटिलीयेऽर्थशास्त्रेऽध्यक्षप्रचारे द्वितीयाधिकरणे तृतीयोऽध्यायः ।
दुर्गविधानम्, आदितश्चतुर्विशः ॥

---

### श्रीमूला

कुल्यासु निवेशनीयानि भाण्डानि श्लोकद्वयेनाह—**तास्वित्यादि**, कार्या इत्यादि च । काण्डो, बाणः, कल्पना गजोपकरणं, मृसृण्ठिर्गदा, सायः—कीला दारुमयी, मुद्गरः दीर्घगदाकारं स्थूलाग्रमायुधं, दण्डः क्षेपाणीयो लगुडविशेषः, चक्रं सारवृतमायुधं, यन्त्रं जामदग्न्यभैमादि, शतघ्निः लोहकण्टकाचितं चतुस्तालप्रमाणमायुधम् । कार्मारिकाः कर्मारोऽयस्कारः तच्छिल्पसाध्याः तोमरादयः, उष्ट्रग्रीव्यः ऊष्ट्रग्रीवाकाराः शस्त्र्यः, अग्निसंयोगाः अग्निः संयुज्यते विपक्षदाहार्थमेष्वित्यग्निसंयोगाः गुल्गुलुमदनसर्जरसश्रीवेष्टगन्धपाषाणादयः कुप्यकल्पे च यो विधिः कुप्याध्यक्षप्रकरणे यो विधीयते स च, तासु कुल्यासु कार्यः । स तु शाकतिनिशादिदारुवर्गः उटजचिमियादिवेणुवर्गः गोधासेरकद्वीपिप्रभृतिचर्मवसादिश्चेतिबोद्धव्यम् । स्पष्टमन्यत् ॥

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
तृतीयोऽध्यायः दुर्गविधानम्, आदितश्चतुर्विशः ॥

### चाणक्यटीका

भाण्डानि कथयति तास्विति । (पाषाण इति) यन्त्रगोष्पणाः पाणिक्षेप्याः । कुद्दाला इति खननदारणार्थानामुपसंग्रहः । कुठारीति वास्यादीनां दारुच्छेदनोपकरणानाम् । काण्डकल्पना इति काण्डसंस्कारोपकरणानाम्[2] । मुसृण्ठीति कीलबहुलो वर्नुलः काष्ठविशेषः । गदाप्रकाराणां मुद्गरा इति सञ्चूर्णानां (?) गदानाम् । दण्डा इति क्षेप्याणां दारुमयानां मुक्तसाधितानाम् । चक्राणि आयुधानि । यन्त्राणि पाषाणादिक्षेपणोपकरणानि । शतघ्नयः कीलसहस्राचिताः स्थूलपरिघाः युगपद् बहूनामपि घातनार्थाः ॥

---

१. भुषुंढी, भुसुण्डी, पा० ।

२. "भुसुण्ठी स्यात् दारुमयी वृत्तायःकीलसञ्चिता" इति वैजयन्ति । (५४५ अ.)

## चाणक्यटीका

कार्याः तस्विति संबध्यते। कार्मारिकाः कर्मारनिर्मिताः। शूलाः वेधनाग्राः तीक्ष्णत्वाद् दीर्घवेणवः। उष्ट्रग्रीवी उष्ट्रग्रीवाकारा दात्राकृत्या कचग्रहण्येव। अग्नि-संयोगाः दुर्गलाभे वक्ष्यमाणसर (ल) देवदार्वादिः। कुप्याध्यक्षे च सारदारुलोहदिसङ्ग्रहे यो विधिः सोऽत्राप्यापदि कार्यः ॥

इति भिक्षुप्रभमतिकृतायां चाणक्यटीकाकायाम् आध्यक्ष्ये दुर्गविधानं तृतीय प्रकरणम् ॥ तृतीयश्चाध्यायः ॥

## नीति-निर्णीतिटीका

यद्वहन्ति तास्तदिदानीं भाण्डमाह तास्विति।

तासु कुल्यासु पाषाणा हस्तयन्त्रादिक्षेप''लाः खननयुद्धार्थाः, कुठार्यश्छेदन-युद्धार्थाः, कांडकल्पनाः शरसंस्कारोपकारणानि। मुषंढ्योः गदादि''। मुद्गरा रजकमुद्गराकाराः प्रहरणविशेषाः। दंडा लोहदारुमयाः। [ चक्रा ] णि हस्तयंत्र-क्षेप्याणि। यन्त्राणि जामदग्न्यसर्वतोभद्रबहुमुखादीनि। बाणपाषाणादि''चिताशतं हन्तीति'''''कर्म्मारिका इत्ययस्कारघटिताः, शूलावेधनानाश्चक्राख्याः, वेणव उष्ट्रग्रीवाकार''दुर्गलंभे''णैर्यन्त्रैस्तैलादिकानि यैः क्षिप्यंते। कुप्यकल्पे च कुप्यानां कल्पना''

इति मुग्धविलासाङ्कयोग्घमविरचितनीतिनिर्णीत्यभिधानायां कौटलीय-राजसिद्धान्तटीकायामध्यक्षप्रचारे तृतीयोऽध्यायः ॥

# द्वाविंशं प्रकरणम्

## चतुर्थोऽध्यायः

## दुर्गनिवेशः ।

[ वास्तुविभागक्रमारम्भः ]

**त्रयः प्राचीना राजमार्गाः, त्रय उदीचीनाः इति वास्तुविभागः । सः द्वादशद्वारः युक्तोदकभूमिच्छन्नपथः ॥**

———————

श्रीमूला

दुर्गनिवेश इति सूत्रम् । दुर्गं परिखावप्रप्राकाराट्टालप्रतोलीन्द्रकोशदेवपथादिकं यथोक्तम् । तस्मिन् निवेशः राजमार्गादिविभजनपूर्वं योग्यदेशरचनीयं राजामात्यादि-दुर्गान्तर्निवासिप्रकृतिभवनसंस्थानं तदिहोच्यत इति सूत्रार्थः ।

चाणक्यटीका

एवंविधदुर्गस्य निवेशनमभिधीयते । वास्तुविभागपूर्वकत्वादितरेषामिति तमेव तावदाह त्रयः प्राचीना इति । पश्चिमाद् देशात् पूर्वं गतास्त्रयः, दक्षिणादुत्तरं त्रय इति । मङ्गलार्थं पश्चिमदक्षिणमुखत्वं नोक्तम् । राज······त्रा किमेभिर्विभक्तं यत्तद्वास्तु । किञ्चातः, षोडशवास्तुविभागाः स्युः । एवं तर्हि वास्तुविद्याकल्पनेनैवावगतं वास्तु प्रागवस्थाप्य तन्मध्ये त्रिभी राजमार्गैर्विभजेत् । वास्तुनो विभजनं विभागः, स राजमार्गकृतो वास्तुविभागः । द्वादशद्वार इति । न प्रतिराजमार्गं द्वाराणि, किन्तु महाद्वाराण्येव राजमार्गद्वाराणि । इतराणि च यथोक्तचत्वारि निष्करद्वाराणि चत्वारि महाद्वारैकदेशभूतानि चाणिद्वाराणि चेति । बाह्यमुदकं येन यन्त्रेण स्रोतसा वा प्रवेश्यते स उदकपथः । नगरोदकं येन निष्कास्यते स भ्रमपथः । आपदि निष्कासनप्रवेशनार्थः सुरुङ्गादिः प्रच्छन्नत्वाच्छन्नपथः एते प्रयुक्तप्रमाणा यस्य वास्तुविभागस्य । उदकभ्रम-पथयोर्महत्त्वे चोदि(ऽनति)प्रवेशादल्पत्वे शोच्छ(षितु)मशक्यत्वात् (?) छन्नपथस्याति-महत्वेऽदृढत्वाद् अत्यल्पत्वेऽवस्थानाभावादिति ।

नीति-निर्णीतिटीका

·····विधीयत इति सूत्रार्थः । सम्बन्धस्तु विहितमपि दुर्गमनिविष्टमनुपयोग··· नामा कश्चिद्देवविशेष इति प्रतिकूलत्वात् सर्वैर्देवैर्विजित्योत्तानः पातितस्तस्य···दग्रे ब्रह्मा स्थितः । देवो···दङ्गमवष्टभ्य स्थितः । स तत्रस्थः पूज्यते । तस्यमर्मसिरावंसादि परित्यज्य निवेशः क्रियमाणः प्रशान्तो भवतीति । वास्तुविभागः कर्तव्य इति शेषः ।

[ वीथीविभागाः तत्परिमाणविशेषाश्च ]

**चतुर्दण्डान्तराः रथ्याः, राजमार्गद्रोणमुखस्थानीयराष्ट्रविवीतपथाः,**

---

नीति-निर्णीतिटीका

त्रयः प्राचीना राजमार्गा॰॰वीथिमुखमञ्चतीति। त्रय उदीचीना उदङ्मुखाः प्रागुदग्ग्रहणं मङ्गल्यार्थम्। ते चैकाशीतिपदे नवनवकविभक्ते वास्तुनि द्रष्टव्याः। वास्तुहृदयादुत्तरे नवभागे यथोक्त॰॰पुरविधानमिति वचनसामर्थ्यात्। नह्येकाशीति पदं विहाय नवभागसम्भवः। तथा चोक्तम्—

"दश पूर्वायता वंशा दश चैवोत्तरायताः।
नवभाग कृता ज्ञेयाः पदानां नव॰॰॥"

दश पूर्वामुखान्यनुवंशे सूत्राणि प्रसार्य दशै वोदङ्मुखानीति। चतुरस्रपादानां नवनवका भवन्ति। नवके नवके मध्यमे पदे मर्मत्रिमर्मोद्ध्वगामिनः॰॰॰[ रा ] जमार्गास्तथैव त्रय उदीचीनास्ते च महामर्मरूपा वंशाः। तथा चोक्तम्—

वंशमेकहृदयं नवमर्म्मं चतुः शिरम्।
उत्तानसंस्थितं विद्धि पुरुषं वास्तुक॰॰॥

इतोऽग्रे पाठो नोपलभ्यते।

श्रीमूला

राजमार्गाः प्राक्प्रत्यगायतास्त्रयो दक्षिणोत्तरायतास्त्रय इत्येवं षोढा वास्तुर्विभक्तव्य इत्याह—त्रयइत्यादि। स इति। स वास्तुविभागः, द्वादशद्वारः दिशि दिशि द्वारत्रिकक्रमेण द्वादशभिर्द्वारैर्युक्तः, युक्तोदकभूमिच्छन्नपथः उदकं वापीकूपादि भूमिर्जलनिर्गममार्गः छन्नपथः गूढसुरुङ्गामार्गः ते युक्ता वास्तुविस्तारानुरूपा यस्मिन् स तथाभूतः, कार्यः इति शेषः।

चतुरित्यादि। रथ्या अल्पमार्गाः उपवीथ्य इत्यर्थः, चतुर्दण्डान्तराः, चतुर्दण्डविस्ताराः। राजमार्गद्रोणमुखस्थानीयराष्ट्रविवीतपथाः, राजमार्गो द्रोणमुखपथः स्था-

चाणक्यटीका

तस्मिन् बहिश्च राजमार्गविशेशेषु राजमार्गाः विशेषेणोच्यन्ते—चतुर्दण्डोत्तरा इति। चतुर्भिश्चतुर्दण्डैरधिका इत्यर्थः। तत्र रथ्या चतुर्दण्डा। अष्टदण्डा राजदण्डा राजमार्गद्रोणमुखादीन् गन्तुं पन्थाः नट (?) द्रोणमुखादिपथः। संयानीयपथ इति समेत्य यानाय हितत्वात् संयानीयपथः। देवयात्रोत्सवादिसंवरणयोग्यः, रचितसेनादर्शनार्थः व्यूहपथः। येन पथा हस्त्यश्वादयो (यो ? यु) ग्याः कार्यन्त इति केचित्। पशुपथ इति पशूनां गोमहिषोष्ट्रादीनां पन्थाः। क्षुद्रपशवः अजाविकादयः। वास्तुमार्गा उक्ताः॥

**संयानीयव्यूहश्मशानग्रामपथाश्चाष्टदण्डाः, चतुर्दण्डस्सेतुवनपथः, द्विदण्डो हस्तिक्षेत्रपथः, पञ्चारत्नयो रथपथः चत्वारः पशुपथः, द्वौ क्षुद्रपशुमनुष्यपथः ॥**

[ राजभवनपरिकल्पनं, तस्य च नवधा विभागेन उत्तरभागमारभ्य क्रमेण अन्तःपुरादिकल्पनं च ]

**प्रवीरे वास्तुनि राजनिवेशः चातुर्वर्ण्यसमाजीवे, वास्तुहृदयादुत्तरे नवभागे [1]यथोक्तविधानमन्तःपुरं प्राङ्मुख मुदङ्मुखं वा कारयेत् । तस्य**

श्रीमूला

नोयपथः राष्ट्रपथः विवीतपथ इत्येते, संयानीयव्यूहश्मशानग्रामपथाश्च संयानीयं क्रयविक्रयव्यवहारप्रधानं पट्टनं तत्पथः, व्यूहपथः शत्रुपरिवेष्टनावसरे प्राकारेषु समन्तात् सद्यो गन्तुमुपकल्पितः सैन्यस्य मार्गः, श्मशानपथः ग्रामपथ इत्येते च, अष्टदण्डाः कार्याः । सेतुवनपथः सेतुपथो वनपथश्च, चतुर्दण्डः । हस्तिक्षेत्रपथः हस्तिपथः क्षेत्रपथश्च, द्विदण्डः । रथपथः पञ्चारत्नयः निष्कनिष्ठमुष्टिकहस्तपञ्चकविस्तार इत्यर्थः, पशुपथः गोमहिषादिमार्गः, चत्वारोऽरत्नयः अरत्निचतुष्टयप्रमाणः, क्षुद्रपशुमनुष्यपथः मेषादिक्षुद्रपशुमार्गः मनुष्यमार्गश्च, द्वौ अरत्नी ।

प्रवीर इति । प्रवीरे प्रकर्षेण वीर्ययुक्ते, चातुर्वर्ण्यसमाजीवे वर्णचतुष्टयोपजीव्यगुणसम्पन्ने, वास्तुनि, राजनिवेशः राजभवनं कार्यम् । वास्त्वित्यादि एकाशीतिपदात्मकस्य वास्तुनो मध्यमो नवभागो वास्तुहृदयं, वास्तुहृदयाद् उत्तरे नवभागे, यथोक्तविधानं निशान्तप्रणिधिप्रतिपादितप्रकारम् अन्तःपुरं, प्राङ्मुखम् उदङ्मुखं वा कारयेत् ।

चाणक्यटीका

इदानीं निवेशा उच्यन्ते । तत्रापि राजनिवेशपूर्वकत्वादितरेषामिति तमेवाह—प्रवीर इति । वास्तुप्रशस्तत्वेऽपि दुर्गस्य, प्रवीरे वास्तुन्यप्रधृष्ये मध्ये राजनिवेशः । कस्मात् । चातुर्वर्ण्यस्य समाजीवना (दा) श्रयत्वात् । तस्मिन् गुप्ते चातुर्वर्ण्यं गुप्तमिति । अथवा मध्यगतः सुखं चातुर्वर्ण्येन वक्ष्यमाणचतुर्दिशनिवेशेन सेव्यते, एकपार्श्वे तु केषाञ्चित् दूरमिति न तु सुखं सेव्यते । कः पुनः प्रवीरो देश इत्याह—वास्तुहृदयादिति ।

"दश पूर्वायता वंशा दश चैवोत्तरायताः ।
तैर्ज्ञेया मध्यसंस्थानं पदानां नवकं नव ॥" इति ।

तत्र मध्यमस्य नवकस्य हृदयादुत्तरे नवभागे । अन्यथा हृदयनिहितो वास्तुपुरुषो न निवेशं वर्धयति स्वयमभावात् । यथोक्तम्—

"त्रीणि त्रिकाणि यस्माद्धि हृदयं तस्य मध्यमम् ।
तन्मुक्त्वाति (? वि ) पदः स्थानमुत्तरेणाभिपूज्यते ।" इति ।

१. यथोक्तं पा० ।

**पूर्वोत्तरं भागमाचार्यपुरोहितेज्यातोयस्थानं मन्त्रिणश्चावसेयुः। पूर्वदक्षिणं भागं महानसं हस्तिशाला कोष्ठागारं च। ततः परं गन्धमाल्यधान्यरस-पण्याः प्रधानकारवः क्षत्रियाश्च पूर्वां दिशमधिवसेयुः। दक्षिणपूर्वं भागं भाण्डागारमक्षपटलं कर्मनिषद्याश्च। दक्षिणपश्चिमं भागं कुप्यगृहमायुधागारं च। ततः परं नगरधान्यव्यावहारिककार्मान्तिकबलाध्यक्षाः पक्वान्नसुरामांस-**

---

श्रीमूला

तस्येति। आचार्यपुरोहितेज्यातोयस्थानम् आचार्यपुरोहितयोर्यज्ञस्थानं तोयस्थानं च, मन्त्रिणश्च, तस्य अन्तःपुरस्य पूर्वोत्तरं भागमावसेयुः पूर्वोत्तरे भागे स्थितिं कुर्यु-रित्यर्थः। महानसं पाकशाला, हस्तिशाला हस्तिपृष्ठाकारं सभागृहम्, कोष्ठागारं च च अन्तर्गृहमपवरकाख्यं च, पूर्वदक्षिणं भागम्, आवसेयुरिति सम्बध्यते आश्रयेयुरिति च तदर्थः। तत इति। ततः परं राजभवनाद् बहिः, गन्धमाल्यधान्यरसपण्याः गन्ध-पण्याः माल्यपण्याः धान्यपण्याः रसपण्याश्च, प्रधानकारवः मुख्यशिल्पिनः, क्षत्रियाश्च, पूर्वां दिशमधिवसेयुः। भाण्डागारम्, अक्षपटलं रूप्याद्यायव्ययगणनस्थानम्, कर्मनिष-द्याश्च स्वर्णरजतशिल्पस्थानानि च, दक्षिणपूर्वं भागम्, अधिवसेयुः आश्रयेयुः। कुप्यगृहं स्वर्णरजतेतरस्थानम्, आयुधागारं च दक्षिणपश्चिमं भागम् आश्रयेत्। ततः पर-मिति। ततः परम्, नगरधान्यव्यावहारिककार्मान्तिकबलाध्यक्षाः नगरव्यावहारिकः,

चाणक्यटीका

यथोक्तमिति। निशान्तप्रणिधौ "सप्राकारपरिखाद्वारम्" (अधिः १. अ० २०) इत्यादिना विहितम्। प्राङ्मुखमुदङ्मुखं वा स्यादिति। इदं मङ्गलार्थम्। तस्येति। किं वास्तुहृदयस्य? यद्येवं, वास्तुहृदयमिति प्राप्नोति। एवं तर्हि तस्य दुर्गस्य वास्तु-हृदयापेक्षया पूर्वोत्तरं भागमिति "दिङ्नामान्यन्तराले" (२-२-२६) इति सामान्येन द्विधा विभक्तत्वादन्तरालानामित्यष्टौ विदिशो भवन्ति। पूर्वोत्तरः, पूर्वदक्षिणः, दक्षिणपूर्वः, दक्षिणपश्चिमः, पश्चिमदक्षिणः, पश्चिमोत्तरः, उत्तरपश्चिमः, उत्तरदक्षिणः इति। तत्र पूर्वविशिष्टः उत्तरपूर्वस्यां दिशि उत्तरो भागस्तमाचार्यादयः अधिवसेयुः। इज्यातोययोः स्थानम् अग्निहोत्ररूपा·····यथायोगं स्यादिति। अर्थाद्विभक्तिविपरि-णामः। तद्यथा—"देवदत्तस्य गावोऽश्वा हिरण्यमाढ्यो वैधवेय" इति। पूर्वविशिष्टं दक्षिणमिति पूर्ववद्योजनीयम्। महानसादि अधिवसेयुः। तात्स्थ्यादित्युच्यते अभ्युप-चारात्। ततः परमिति। ताभ्यां भागाभ्यामवशिष्टं पूर्वभागमित्यर्थः। गन्धादिपण्याः गन्धादिविक्रेतारः। प्रसाधनकारवः अञ्जनिकशलाकामधूच्छिष्टलाक्षापटलकेशनिका (?) प्रधानाः कर्त्तारः। क्षत्रियाणां पराक्रमोत्कर्षहेतुत्कत्वात् ऐन्द्रया दिशः। भाण्डागारम् आयस्थानम्। कर्मनिषद्या कर्माणि निषीदन्त्यस्यामिति निषदनं निषद्या, तद्व्यव-हारिणामधिवासाः अधिवसेयुरित्युपचारः पूर्ववत्। नगरधान्यव्यावहारिका नगरस्थेन

**पण्याः रूपाजीवाः तालावचराः वैश्याश्च दक्षिणां दिशमधिवसेयुः। पश्चिमदक्षिणं भागं खरोष्ट्रगुप्तिस्थानं कर्मगृहं च। पश्चिमोत्तरं भागं यानरथशालाः। ततः परं ऊर्णासूत्रवेणुचर्मवर्मशस्त्रावरणकारवः शूद्राश्च पश्चिमां दिशमधिवसेयुः। उत्तरपश्चिमं भागं पण्यभैषज्यगृहम्। उत्तरपूर्वं भागं कोशः गवाश्वं च ततः परं नगरराजदेवताः लोहमणिकारवः ब्राह्मणाश्चोत्तरां दिशमधिवसेयुः। वास्तुच्छिद्रानुलासेषु[1] श्रेणीप्रवहणिकनिकायाः आवसेयुः॥**

---

## श्रीमूला

धान्यव्यावहारिकः, कार्मान्तिकः आकरादिकर्मान्ताधिकृतः, बलाध्यक्षः सेनाध्यक्षः इत्येते, पक्वान्नसुरामांसपण्याः पक्वान्नादिविक्रेतारः, रूपाजीवा वेश्याः, तालावचरा नटाः, वैश्याश्च, दक्षिणां दिशम् अधिवसेयुः। खरोष्ट्रगुप्तिस्थानं गर्दभकमेलककारागृहाणि, कर्मगृहं च यत्र गृहादिकं निर्मीयते च ध्वंस्यते च परीक्षाद्यर्थं तत् स्थलं च, अथवा खरोष्ट्रादिव्यापारशाला च, पश्चिमदक्षिणं भागम्, आश्रयेत्। यानरथशालाः शिबिकादियानशालाः रथशालाश्च, पश्चिमोत्तरं भागम्, आश्रयेयुः। ततः परमिति। ततः परं ततः परस्तात् पश्चिमां दिशम्, ऊर्णासूत्रवेणुचर्मवर्मशस्त्रावरणकारवः ऊर्णा वानकारवः कार्पासतन्तुवानकारवः वेणुवानकारवः चर्मकारवो वर्मकारवः शस्त्रावरणकारव इत्येते, शुद्राश्च, अधिवसेयुः। पण्यभैषज्यगृहं पण्यगृहम् औषधशाला च, उत्तरपश्चिमं भागम्, अधिवसेत्। कोशः धान्यादिसङ्ग्रहस्थानं, गवाश्वञ्च गावोऽश्वाश्च, उत्तरपूर्वं भागम् अधिवसेत्। तत इति। ततः परं, नगरराजदेवताः नगरदेवता, राजकुलदेवताश्च, लोहमणिकारवः अयस्कारवैकटिकाः, ब्राह्मणाश्च, उत्तरां दिशमधिवसेयुः। वास्त्वित्यादि। श्रेणीप्रवहणिकनिकायाः श्रेणी रजकतन्तुवायतुन्नवायादयः, प्रवहणिकाः विदेशागता वणिजः तेषां समूहाः, वास्तुच्छिद्रानुलासेषु वास्तुच्छिद्रावकाशेषु आवसेयुः। वसेयुरिति श्रेयान् पाठः।

## चाणक्यटीका

धान्येन ये क्रयविक्रयादि कुर्वन्ति। कर्मान्तिको राज्ञः। बलाध्यक्षः पत्तिसेनापतिः, कानि (?) पक्वान्नं पिष्टकादि। रूपाजीवाः पण्यस्त्रियः। तालावचराः तालैरातोद्यैरवचरन्ति। ये रङ्गोपजीविनो नटादयः। गान्धर्वा इत्यन्ये। वैश्यानां दाक्ष्यस्य संपादनहेतुत्वादस्या दिशः। गुप्तिस्थानम् बन्धनागारं कारागृहं यातनास्थानमत्राधिवसेयुरिति। तस्मात् (?) पूर्ववदुपचारः। यानशाला शिबिकादीनां स्थानम्। रथशाला रथानां स्थापनकारणशाला। ऊर्णाकारवो देवताः (?)। सूत्रकारवस्तन्तुवायाः।

---

१. वास्तुछिद्रानृसालेषु पा०।

[ परमध्ये बहिश्च तत्तद्देवालयनिर्माणविधिः ]

**अपराजिताऽप्रतिहतजयन्तवैजयन्तकोष्ठकान् शिववैश्रवणाश्विश्रीमदिरागृहं च पुरमध्ये कारयेत् । कोष्ठकालयेषु यथोद्देशं वास्तुदेवताः स्थापयेत् । ब्राह्मैन्द्रयाम्यसैनापत्यानि द्वाराणि । बहिः परिखायाः धनुश्शतावकृष्टाः**

---

चाणक्यटीका

वेणुकाररवो वरटाः[1] वर्मकारवः सन्नह्नघटकाः । शस्त्रकारवस्तीरपाकाः । आवरणकारवो हस्त ( ? स्ति) वारकादिकारवः अवकृत्वाच्छिद्रादिवसनयोग्याः (?, पश्चिमा दिक् । भैषज्यगृहम् आरोग्यशाला, शृङ्गिवेरादिभैषज्यानां गृहमित्यन्ये । नगरदेवता या तत्राधिकृता । राजदेवता, यत्र राज्ञो भक्तिः । लोहकारवः सुवर्णताम्रलोहादिकारवः । मणिकारवो मणिरञ्जकाः । ब्राह्मणानां प्रशस्तत्वदधिवासयोग्या । वास्तुच्छिद्रानुसालेष्विति । वास्तुच्छिद्रेषु यथोक्तैरप्या ( प्रा ? ) सेषु प्राकारसमीपेषु च देशेषु रजकादिश्रेणीनां प्रवणीनां च क्षुद्रवणिजां गान्धारकादीनां निकायाः समूहाः । अन्ये त्वाहुः—श्रेणयो ये समयबद्धा द्रमिडवत् । प्रवहणयो ये वाणिजकाः सङ्घावस्थिताः । निकायाश्च ये क्षुल्लकास्ताम्बूलिकादय इति ।

श्रीमूला

अपराजितेत्यादि । अपराजिताऽप्रतिहतजयन्तवैजयन्तकोष्ठकान् अपराजिता दुर्गा, अप्रतिहतो विष्णुः, जयन्तः सुब्रह्मण्यः, वैजयन्त इन्द्रः, एतेषामालयान्, शिववैश्रवणाश्विश्रीमदिरागृहं च शिवादीनां मदिरान्तानां पञ्चानां गृहं च, पुरमध्ये कारयेत् । कोष्ठकेत्यादि । कोष्ठकालयेषु पूर्वोक्तेषु, यथोद्देशं स्वस्वदेशानतिक्रमेण, वास्तुदेवताः स्थापयेत् । ब्राह्मेत्यादि । ब्राह्मैन्द्रयाम्यसैनापत्यानि ब्राह्मं ब्रह्मदेवताकमुत्तरम्, ऐन्द्रं पूर्वं, याम्यं दक्षिणं, सैनापत्यं पश्चिममित्येतानि, द्वाराणि, अर्थात् पुरस्य । बहिरिति । परिखाया बहिः, धनुश्शतावकृष्टाः दण्डशतविप्रकृष्टाः, चैत्यपुण्यस्थानवनसेतुबन्धाः चैत्य

चाणक्यटीका

अपराजितो विष्णुः । अप्रतिहत इन्द्रः । जयन्त इन्द्रपुत्रः । वैजयन्तः स्कन्दः । एषां कोष्ठकान् इष्टकामयान् । पुरमध्ये पुरान्ते वा कारयेत् । वैश्रवणो धनदः । अश्विनीकुमारौ । श्रीदेवी मदिरादेवी च । आसां गृहं कोष्ठकम् । पुरमध्य एवेति नियमार्थो योगविभागः । (यथो) पदोद्देशमिति वास्तुविद्याविहितत्वात् द्वात्रिंशत् प्रतिदिशम् अष्टावष्टौ वास्तुदेवताः विना विग्रहैः पूजार्थमेव सङ्कल्पेन स्थापयेत् । प्राच्यादीनि तद्देवतात्वाद् उत्तरादीनि महाद्वाराणि स्थापयेत् तदधिष्ठितानीत्यर्थात् ।

बहिः परिखाया इति बाह्यायाः । धनुश्शतेनेव अपकृष्टमिति क्रिया-

---

१. “वरटः·······मत्यजात्यन्तरे व्रात्याज्जाते” इति केशवस्वामी ।

**चैत्यपुण्यस्थानवनसेतुबन्धाः कार्याः, यथादिशं[1] च दिग्देवताः ॥**

[ व्यवस्थया श्मशानपरिकल्पनम्, पाषण्डादीनां तत्समीपवासित्वं च ]

**उत्तरः पूर्वो वा श्मशानवाटः, दक्षिणेन वर्णोत्तमानाम् । तस्यातिक्रमे पूर्वस्साहसदण्डः । पाषण्डचण्डालानां श्मशानान्ते वासः ॥**

[ कर्षकादिशक्त्यानुगुण्येन क्षेत्रादिसारानुगुण्येन च तत्तदुपयोक्तव्यक्षेत्रमर्यादा-स्थापनविधिः, तत्र सङ्ग्राह्याः पदार्थाश्च ]

**कर्मान्तक्षेत्रवशेन वा कुटुम्बिनां सीमानं स्थापयेत् । तेषु पुष्पफलवाटषण्डकेदारान् धान्यपण्यनिचयांश्च अनुज्ञाताः कुर्युः, दशकुलीवाटं कूपस्थानम् ।**

---

श्रीमूला

उद्देशवृक्षः, पुण्यस्थानं तीर्थादिकं, वनं सेतुबन्ध इत्येते, कार्याः । दिग्देवताश्च, यथदिशं स्वस्वदिगनुरोधेन कार्याः ।

उत्तर इत्यादि । वर्णोत्तमानां शूद्राणाम् । वर्णोत्तराणामित्यपि पाठः । पूर्वः साहसदण्डः सार्धद्विशतपणलक्षणः ।

पाषण्डेत्यादि । पाषण्डचण्डालानां कापालिकादीनां प्लवपुल्कसादीनाञ्च । कर्मान्तेत्यादि । कुटुम्बिनां दुर्गान्तवासयितव्यानां वर्णावराणां, कर्मान्तक्षेत्रवशेन कर्मनिवृत्तेः क्षेत्रस्य चानुरूप्येण, सीमानं तदुपयोक्तव्यक्षेत्रमर्यादां, स्थापयेत् । वाशब्दश्चस्थाने वाक्यभूषणम् । तेष्विति । तेषु क्षेत्रषु पुष्पफलवाटषण्डकेदारान् पुष्पफलवाटः पुष्पफलदायकं वनं, षण्डः पद्मादिसङ्घातः, केदारो धान्योत्पादभूमिः एतान् धान्यपण्यनिचयांश्च धान्यपण्यसङ्ग्रहांश्च अनुज्ञाताः कुर्युः, अर्थात् तत्कर्मार्हाः । ते च सीताध्यक्षो विवीताध्यक्षो दुर्गसीमवासिनः कुटुम्बिनश्च । दशकुलीत्यादि । दशकुलीवाटं मध्यमहलद्वयकर्षणीया भूमिः कुलं, दशानां कुलानां समाहारो दशकुली । दशगवकृष्या भूमिरित्यपरे । तावत्प्रमाणं वाटं, कूपस्थानं कूपमातृकं, कुर्युः एकैकस्य दशकुलीवाटस्यैकैकं

चाणक्यटीका

[illegible]पणम् । अतो विप्रकर्षे दुरारक्ष्यत्वात् सन्निकर्षेऽतिसंपीडा । चैत्यस्थानं स्तूपस्थानमित्यपरे । पुण्यस्थानं प्रपारामादि । वनम् उपवनम् । सेतुबन्धस्तटाकादिः । एते उपभोगार्थाः शोभनार्थाश्च । यथा दिशञ्चेति । इन्द्रोऽग्निर्यमो निर्ऋतिर्वरुणो वायुः कुबेर ईशान इति पूषाद्यायतनेषु स्थाप्याः ।

उत्तर इति चतुर्धा श्मशानं विभज्य शूद्राणाम् प्रथामाद् भागादुत्तरो [illegible]नाम् । ततोऽप्युत्तरः क्षत्रियाणाम् । ततोऽप्युत्तरो ब्राह्मणानाम् । पूर्वो वेति [illegible]णाम् । प्रथमात् पूर्वो वैश्यानाम् । ततोऽपि पूर्वः क्षत्रियाणाम् । ततोऽपि पूर्वो

---

१. यथादिशश्चा पा० ।

**सर्वस्नेहधान्यक्षारलवणभैषज्यशुष्कशाकयवसवल्लूरतृणकाष्ठलोहचर्माङ्गारस्नायुविषविषाणवेणुवल्कलसारदारुप्रहरणावरणाश्मनिचयान् अनेकवर्षोपभोगसहान् कारयेत् । नवेनानवं शोधयेत् ॥**

---

### चाणक्यटीका

ब्राह्मणानामिति । कस्यां दिशि श्मशानमिति दक्षिणेन नगरस्येत्यर्थात् । धनुश्शतावकृष्टमिति वर्त्तते । तस्यातिक्रम इति । दिग्विशेषस्य भागनियमस्य चातिक्रम इति । पाषण्डाः कापालिकश्रमणशाक्यादयः तेषामाश्रमबाह्यत्वात् बध्यबन्धनमगाधहरणं तत्परिच्छेद तत्परिच्छेदग्रहणम् (?) चण्डालानाम् ॥

कर्मान्तक्षेत्रवशेनेति । नात्र क्रोशतामपेक्षते । एवं कर्मान्ताः कुटुम्बिनः नागराः तेषामिदं प्रमाणं सीम्नो युक्तमिति । अथवा सामन्तक्षत्रानुरोधेन एतावत्सीमकक्षेत्रं प्रयुक्तमिति तदनुरोधेन सीमानं स्थापयेत् । तेष्विति तेषु विभक्तेषु सीमप्रदेशेषु । वाटानिति कृतपरिक्षेपानित्यर्थः । धान्यानां पण्यानां च जीरकाणाम् । निचयांश्चेति । निचयग्रहणं नियमार्थम् । तत्र यथोत्पन्नभागानित्येवमर्थम् । कुर्युः स्वाम्यनुज्ञाता नागराः । दशकुलीवाटमिति दशकुलानि समाहृतानि दशकुली तत्प्रमाणों वाट एको यत्र यतस्तत् कूपस्यैकैकस्य स्थानं कुर्यादिति ॥

### श्रीमूला

कूपं पोषणार्थं कुर्युरिति भावः । निचेतव्यद्रव्याण्याह—सर्वस्नेहेत्यादि । सर्वविधस्नेहादिद्वाविंशतिनिचयान् बहुवर्षोपभोगक्षमान् निवेशयेद् दुर्गेषु । तत्र शाकं वृक्षसम्बन्धि, मूलपत्रकरीराग्रफलकाण्डाधिरूढकत्वक्पुष्पकवकात्मकं दशकम् । यवसं धान्यपलालम् । वल्लूरं शुष्कमांसम् । अङ्गारो निर्वाणाग्निकर्मिन्धनम् । स्नायुर्वस्नसा । प्रहरणं खड्गादि । स्पष्टमन्यत् । नवेनेति । नवेन अनवं शोधयेत् नूतने यथोक्तद्रव्यजाते लब्धे पुराणं तद् व्ययये त् ।

### चाणक्यटीका

तत्रैवं निवेशिते दुर्गे द्रव्याणां निचया उच्यन्ते सर्वस्नेहेति । सर्वशब्दः प्रत्येकं योज्यः । सर्वस्नेह स्तैलादयः । धान्यानि पूर्वमध्यमावराणि । क्षाराः फाणितादयः । लवणानि सैन्धवादीनि । गन्धास्तरा (? श्चन्दना) दयः । भैषज्यानि शृङ्गिबेरादीनि । शाकानि पुष्पमूलफलोपभोग्यानि । यवसा दूर्वाश्यामाकादयो हस्त्यश्वादियोग्याः । वल्लूराः कर्तितवराहादिमांसानि । तृणानि दर्भादीनि छादनार्थानि । काष्ठादीनि इन्धनार्थानि एतानि शाकादीनि शुष्काणि । लोहानि ताम्रादयः । चर्माणि पात्रावर- (? शस्त्रवरक) योग्यानि । अङ्गाराः लोहादिकर्मार्थाः । स्नायूनि काण्डगुणोपस्करार्थानि । विषाणि स्थावरजङ्गमानि शस्त्रप्रलेपाद्यर्थानि । विषाणानि शार्ङ्गाद्युपकरणार्थानि ।

[ चतुरङ्गसैन्ये निर्वाहकशूरजनप्राचुर्यस्यावश्यकता ]

**हस्त्यश्वरथपादातं अनेकमुख्यं अवस्थापयेत् । अनेकमुख्यं हि परस्पर-भयात् परोपजापं नोपैतीति । एतेनान्तपालदुर्गसंस्कारा व्याख्याताः ॥**

[जनोपप्लावकानां दुष्टानां आवासस्थानव्यवस्था]

**न च बाहिरिकान् कुर्यात् पुरराष्ट्रोपघातकान् ।**
**क्षिपेज्जनपदस्यान्ते सर्वान् वा दापयेत् करान् ॥५७॥**

इत्यध्यक्षप्रचारे दुर्गनिवेशः चतुर्थोऽध्यायः
आदितः पञ्चविंशः

---

चाणक्यटीका

वेणवस्तोमराद्यर्थाः । वल्कलानि रज्ज्वाद्यर्थानि । सारदारूणि[1] शाकादीनि यन्त्रा-द्यर्थानि । प्रहरणानि शक्त्यादीनि । आवरणादीनि ब (? फ) ल किटिकादीनि । अश्मानि यन्त्रक्षेप्याः पाषाणाः । एतान् निचयान् महतो राशीन् ॥

श्रीमूला

हस्तीत्यादि । हस्त्यश्वरथपादातं चतुरङ्गं सैन्यम्, अनेकमुख्यम् अनेके मुख्या बलप्रधाना यस्मिंस्तत् तथाभूतम्, अवस्थापयेद्, दुर्गेषु । बलप्रधानानां बहुत्वे गुण-माह—अनेकेत्यादि । एकश्चेद् बलप्रधानः स समानपुरुषान्तराभावान्निर्भयो लोभादिना परोपजापमङ्गीकृत्य कृत्स्नं बलं स्वाधिष्ठीयमानं भेदयेत्, बहवश्चेद् बलप्रधानाः ते परस्पराभिशङ्किताः परोपजापं नोपगच्छेयुरिति । वहुप्रधानाधिष्ठितं बलं पराभेद्यं भव-तीति भावः ।

एतेनेति । एतेन यथोक्तेन पुरदुर्गसंस्कारविधिना, अन्तपालदुर्गसंस्काराः व्याख्याताः, जनपदसीमापालाधिष्ठितानां दुर्गाणां गुणाधानान्युक्तप्रायाणि, ते पुरदुर्ग-संस्कारवद् विधातव्या इत्यर्थः ।

अध्यायान्ते श्लोकमाह—न चेति । बाहिरिकान् कितववञ्चकनटनर्तकादीन्, न च कुर्यात् पुरे नैव वासयेदित्यर्थः, अर्थाद् राजा । तत्र हेतुसमर्पकं विशेषणं पुरराष्ट्रो-पघातकानिति, यतस्ते पौरान् जानपदांश्च कापथप्रवर्तनयोपघ्नन्ति तस्मादित्यर्थः ।

चाणक्यटीका

दुर्दस्य रक्षाविधानमाह—अनेकमुख्यमिति । हस्त्यादिचतुरङ्गं बलं प्रत्येकम् अनेकमुख्याधिष्ठितमित्यर्थः । तद्विचित्रवैषम्यात् परस्पराशङ्कया न परोपजापमुपैतीति ॥

एतेनेति । संस्थानीयसंस्कारेण अध्यायद्वयविरहितेनेत्यर्थः ॥

---

१. "शाकः ········वृक्षभेदे तु ना पृथुन्छदसंज्ञके ।" इति केशवस्वामी । ( ५ १३ अ० )

श्रीमूला

यदि वासयेत् तदा विधिमाह—जनपदस्य, अन्ते सीमायाम् । 'जनपदे चैतानि'त्यपपाठः । क्षिपेद् वासयेद्, बाहिरिकान् । सर्वान् वा सर्वानिव जनपदान्तवास्तव्यानन्यान् कौटुम्बिकानिवेत्यर्थः, करान् दापयेद् बाहिरिकान् । इहाणिकर्तॄणां बाहिरिकाणां णौ कर्मत्वमपाणिनीयं, जल्पतिप्रभृतित्वकल्पनया वा ददातेरौपसङ्ख्यानिकं तत् साध्यम् ।।

इति कौटलीयार्थशास्त्रव्याख्यायामध्यक्षप्रचारे द्वितीयाधिकरणे
चतुर्थोऽध्यायः दुर्गनिवेशः, आदितः पञ्चविंशः ।।

**चाणक्यटीका**

**न च** बाहिकारिकानिति । यद्येवं निवेश्यमानो लोको **न संमाति तथापि तत्सम्बन्धे समीपे बहिर्निवेश्ये च** असौच (?) बाहिरिकः पुरि (? कपुरी) स्यात् । **सा** ह्युभयान्तरालस्थत्वात् चौर्ययाञ्चाभिक्षणवञ्चनादिभिः पुरस्य राष्ट्रस्य चोपघातिका । **क्षिपेज्जनपदस्यान्त** इति । यदि पूर्वोषितापि स्यात् तत्तुल्ययोगक्षेमीकरणार्थं । सर्वानिति तत्रत्यान् भिक्षावृत्तीनपि करान् दापयेत् । करादानप्रसङ्गेन शौचाशौचज्ञानार्थमिति ।।

इति दुर्गनिवेशश्चतुर्थप्रकरणम् ।
।। चतुर्थोऽध्यायः ।।

## त्रयोविंशं प्रकरणम्

### पञ्चमोऽध्यायः ।

### सन्निधातृनिचयकर्म ।

[ कोशाधिपतिकर्तव्यसङ्ग्रहः ]

**सन्निधाता कोशगृहं पण्यगृहं कोष्ठागारं कुप्यगृहमायुधागारं बन्धनागारं च कारयेत् ॥**

[ कोशगृहनिर्माणप्रकारः ]

**चतुरश्रां वापीं अनुदकोपस्नेहां खानयित्वा पृथुशिलाभिरुभयतः पार्श्वं मूलं च प्रचित्य सारदारुपञ्जरं भूमिसमं त्रितलमनेकविधानं**

---

श्रीमूला

सन्निधातृनिचयकर्मेति सूत्रम् । सन्निधाता द्रव्यं सञ्चित्य निधाता भाण्डागाराधिपतिः तस्य निचयकर्म द्रव्यसङ्ग्रहरक्षणकर्म, तदिहोच्यत इति सूत्रार्थः । निचेयद्रव्यप्रसङ्गान्निचेतृव्यापाराभिधानम् ।

सन्निधातेति । सन्निधाता, कोशगृहं रत्नस्वर्णादिनिधानस्थानम् । पण्यगृहं विक्रेयद्रव्यनिवेशस्थानम् । कोष्ठागारम् उदरोपयोगिधान्यस्नेहादिनिक्षेपस्थानम् । कुप्यगृहं सारदारुवेणुवल्लीवर्गादिरक्षणस्थानम् । आयुधागारं, बन्धनागारं च कारागृहं च, कारयेत् ।

चाणक्यटीका

अध्यक्षाणां प्रचारः वस्तुतः सन्निधातृसमाहर्तृपूर्वकः । तत्पूर्वकाश्च सर्वाध्यक्षाः । समाहर्तृविषयो जनपदनिवेश उक्तः । न च दुर्गमन्तरेण सन्निधातुर्निचयकर्मेति तदर्थं दुर्गविधिर्निवेशश्चोक्तः । तयोरपि समाहर्तुः सम्प्रेष्य भूतत्वात् प्राधान्यात् सन्निधातृकर्तृकनिचयकर्मोच्यते—सन्निधातेति । समाहर्त्रा सर्वतो जनपदात् समाहृतानि द्रव्याणि सम्यङ् निधत्ते स्थापयतीति । भाण्डागारिक इत्यर्थः ॥

श्रीमूला

कोशगृहनिर्माणप्रकारमाह—चतुरश्रामिति । चतुरश्रां वापीं तदाकारं गर्तम्, अनुदकोपस्नेहाम् उदकोपक्लेदरहिताम् खानयित्वा, उभयतः समन्तात्, पार्श्वं मूलं च पृथुशिलाभिः, प्रचित्य सारदारुपञ्जरं सारदारुमयपञ्जरयुक्तम्, भूमिसमत्रितलं

**कुट्टिमदेशस्थानतलं एकद्वारं यन्त्रयुक्तसोपानं देवतापिधानं भूमिगृहं कारयेत् । तस्योपरि उभयतो निषेधं सप्रग्रीवं ऐष्टकं भाण्डवाहिनीपरिक्षिप्तं कोशगृहं कारयेत् प्रासादं वा, जनपदान्ते ध्रुवनिधिं आपदर्थं अभित्यक्तैः पुरुषैः कारयेत् ।**

---

चाणक्यटीका

अनुदकोपस्नेहामिति । अनुद्भिज्जोदकाम्, अस्विद्यत्कुड्यान्ताञ्च । उभयत इति उभयमित्यर्थः । किं तत् । पार्श्वचतुष्टयं मूलं चेति । एवमुभयतो ग्रहणमनर्थकम् । अतः उभयस्मात् कारणात् उपस्नेहनिवृत्त्यर्थं पार्श्वम् । उदकनिवृत्त्यर्थं मूलं च । प्रचित्येति । अपरे उभयतः पृथुशिलाभिरायामविष्कम्भाभ्यामिति चिरावस्थानार्थं योजयन्ति । सारदारुमयः पञ्जरो यत्र । भूमिसमं नाधिकं नापि न्यूनं त्रीणि तलानि यस्य पुरुषप्रमाणानि तम् । त्रिभूमिकमित्यर्थः । अनेकविधानमिति । नानाजातीयद्रव्यस्थापनार्थानि बहूनि कोष्ठकविधानानि यत्र ।

श्रीमूला

भूमिसमानि भूम्यानुरूप्यनिर्मितानि त्रीणि तलानि उपरितलमध्यमतलाधस्तलानि यस्य तत् तथाभूतम्, अनेकविधानम् अनेकानि विधानानि कोष्ठकादिरचनाः यस्मिंस्तत् तथाभूतम्, कुट्टिमदेशस्थानतलं देश उपरितलं, स्थानं मध्यतलं, तलम् अधोभूमिका इत्येतानि कुट्टिमानि दृढनिबद्धानि यस्य तत् तथाभूतम्, एकद्वारम् यन्त्रयुक्तसोपानं यन्त्रे युक्तानि यथावसरनिवेशनापसरणक्षमतया संश्लिष्टानि सोपानानि यस्य तत् तथाभूतं, देवतापिधानम् उत्कीर्णदेवताप्रतिमाङ्कं पिधानं दार्वादिमयमाच्छादनं यस्य तत् तथाभूतम्, भूमिगृहं कारयेत् । तस्येति । तस्य भूमिगृहस्य, उपरि, उभयतोनिषेधं बहिरन्तश्चार्गलयुक्तम्, सप्रग्रीवं प्रग्रीवेण मुखशालया सहितम्, ऐष्टकं पक्वेष्टकामयं, भाण्डवाहिनीपरिक्षिप्तं द्रव्याधारशालापरिवृतम् कोशगृहं प्रासादं वा उपरिगृहमिव कारयेत् । जनपदेत्यादि । आपदर्थं विपत्कालोपयोगार्थम्, ध्रुवनिधिम् अनपायनिधिकम् अर्थात् प्रासादम्, जनपदान्ते, अभित्यक्तैः, वध्यैः पुरुषैः, कारयेत् । वध्यपुरुषा हि राज्ञा यत्नरक्षिताः निधिगुप्तिस्थानविधानरहस्यं निर्माणकाले नोद्भिन्द्युः, निर्माणनिर्वृत्त्युत्तरकाले च सद्यो मारिता भवन्तीति सोऽयं ध्रुवनिधिरनन्यवेद्यो वेदितव्यः ।

चाणक्यटीका

देशः पार्श्वानि स्थानम् अधोभूमिः तलम् उपरिष्टात्, त्रिष्वपि तलेषु कुट्टिमानि यत्र, कुट्टिमकुड्यं कुट्टिमभूमिकं कुट्टिमतलञ्चेत्यर्थः । एकद्वारम् उत्सङ्गकयुक्तम् । यन्त्रयुक्तसोपानं यन्त्रेणोत्क्षेप्यावपात्यं सोपानं निःश्रेण्यादियोगात् ।

[ पण्यगृहादिनिर्माणप्रकारः ]

**पक्वेष्टकास्तम्भं चतुश्शालं एकद्वारं अनेकस्थानतलं विवृतस्तम्भापसारं उभयतः पण्यगृहं कोष्ठागारं च, दीर्घबहुलशालं कक्ष्यावृतकुड्यं अन्तः कुप्यगृहं, तदेव भूमिगृहयुक्तं, आयुधागारं, पृथग् धर्मस्थीयं, महा-**

चाणक्यटीका

उभयत्तोनिषेधम् उभयपार्श्वायतकुड्यम् । सप्रग्रीवं स (को ? शा) लामुखम्[1] । ऐष्टकम् अग्न्याद्यापत्प्रतीकारार्थम् । भाण्डवाहिनीभिः शालाभिः संवरा(रणा)र्थं समन्तात् वेष्टितम् । प्रासादं वा भूमिगृहेण सह । जनपदान्त इति समुच्छिन्नस्याप्यादानयोग्यं भवति । ध्रुवमिति अवश्यकार्यम् । आपदर्थम् अनाद्यध्यायसीम (?) कोशगृहविकल्प एवायम् । अभित्यक्तैरिति । अत्यन्तम् अस्त्रैर्हन्तव्यैरित्यर्थः । संवरणविशेषपरमेतत् । कारयेदिति । पुनर्ग्रहणं सन्निधातरि प्रकृते राज्ञः कर्तृत्वप्रतिपादनार्थम् ॥

श्रीमूला

पण्यगृहादिविधिमाह—पक्वेत्यादि । पक्वेष्टकास्तम्भं पक्वेष्टकामयैः स्तम्भैर्युक्तम् चतुश्शालं चतस्रश्चतुर्दिग्गता अन्योन्यसम्मुखीनाः शालाः यस्मिंस्तत् तथाभूतम्, एकद्वारम्, अनेकस्थानतलम् अनेकैः कोष्ठैर्भूमिकाभिश्च युक्तम्, उभयत उभयपार्श्वयोः, विवृतस्तम्भापसारं विवृतस्तम्भः विस्तृतस्तम्भः अपसारोऽलिन्दो यस्य तत् तथाभूतं, पण्यगृहं, कोष्ठागारं च कारयेत् । दीर्घबहुलशालम्, कक्ष्यावृतकुड्यं कक्ष्याभिः प्रकोष्ठकैः वृतं परीतं कुड्यं यस्मिंस्तत् तथाभूतं, कुप्यगृहम् अन्तः कारयेत् । भूमिगृहयुक्तं, तदेव कुप्यगृहमेव, आयुधागारं कारयेत् । बन्धनागारम् धर्म-

चाणक्यटीका

**पक्वेष्टकास्तम्भं** न दारुमयस्तम्भम् अग्निभयात् । अनेकस्थानतलम् अनेकं स्थानं भूमिगतम् अनेकञ्च तलम् उपरिष्टान्नानाविधपण्यस्थापनार्थं यस्य । विवृतस्तम्भापसारमुभयत इति । विष्कम्भपार्श्वयोरस्तमिति स्तम्भावसामथोष्टं नापण्यानि नश्यन्ति (?) कोष्ठागाराद् विशेषप्रतिविधानार्थम् आदावुपन्यस्तं पण्यगृहं, पण्यानां महासारत्वात् । कोष्ठमुदरं तदुपयोगिनामवस्थानाय गृहं कोष्ठागारम् । दीर्घशालं दीर्घद्रव्याणां स्थापनार्थम् । बहुलशालं भिन्नजातीयानां पृथगवस्थानार्थम् । अन्यथा हि एकत्र निचये सति अधोगतेन कार्यमिति आयासः तत्परिवर्तनात् स्यात् । कक्ष्यावृत्तकुड्यमिति । अत्र दा (रुका ? रुणां) निर्गमप्रवेशस्य सङ्कटत्वात् नान्तः कुड्यमस्ति स्तम्भशाला एवेष्टकायुक्ताः, बाहस्तु विद्यते कुड्यं तत् कथमावरणमन्त इति चेत्, कक्ष्यावरणप्रकारा एव कुड्यं यस्येति तत् कक्ष्यावृत्तमन्तः कुड्यं (?) प्यमिति । तदेवेति कुड्यं (?) प्यगृहं भूमिगृहेण महार्हसन्नहनादिस्थापनेन अधिकं (?) पूर्वस्माद्वि-

१. प्रग्रीवं मुखशालेति चाणक्यटीकाकृदिति अमरटीका सर्वस्वम् ।

**मात्रीयं, विभक्तस्त्रीपुरुषस्थानं अपसारतः सुगुप्तकक्ष्यं बन्धनागारं कारयेत् ।**

[ उक्तानां षण्णामप्यगाराणां तत्तत्प्रकारैः रक्षणविधिः,
वृष्टिमापकयन्त्रपरिकल्पनविधिश्च ]

**सर्वेषां शालाखातोदपानवच्च स्नानगृहाग्निविषत्राणमार्जारनकुलारक्षाः स्वदैवपूजन ( युक्ताः ) वृत्ताः कारयेत् ।**

---

श्रीमूला

स्थीयं महामात्रीयं पृथक् कारयेत् धर्मस्थीयमित्येकम् महामात्रीयमित्यपरं च प्रत्येकं निर्मापयेत् । तत्र धर्मस्था व्यवहारनिर्णेतारः तत्सम्बन्धि धर्मस्थीयं व्यवहारार्थमागतानामवस्थित्यर्थं व्यवहारपराजितनिरोधार्थं च स्थानमित्यर्थः। महामात्राः सन्निधातृसमाहर्तृप्रभृतयोऽर्थाधिकारिणः तत्सम्बन्धि महामात्रीयं विश्वासाधित्वेन गृहीतानां युद्धप्रगृहीतादीनां च जनानां निवेशस्थानमित्यर्थः। बन्धनागारं कीदृशम्, विभक्तस्त्रीपुरुषस्थानम्, अपसारतः सुगुप्तकक्ष्यम् अपसरणमार्गमनुसृत्य सुष्ठु रक्षितकक्ष्यम् ।

सर्वेषामिति । सर्वेषां कोशगृहादीनां षण्णां, शालाखातोदपानवत् शालापरिखाकूपैस्तुल्यं स्नानगृहाग्निविषत्राणमाजरिनकुलारक्षाः स्नानगृहम् अग्नित्राणं मानुषाग्निना त्रिरपसव्यपरिगमनरूपं, निशान्तप्रणिध्युक्तं विषत्राणं मार्जारनकुलौ विषत्राणभूतौ मार्जारनकुलौ वा आरक्षां रक्षिपुरुषैर्गुप्तिं च, स्वदैवपूजनयुक्ताः स्वस्वदैवतार्चनयुक्ताः कारयेत् । तत्र कोशगृहस्य धनदो देवता, पण्यकोष्ठागारयोः श्रीदेवी, कुप्यगृहस्य विश्कर्मा, आयुधबन्धनागारयोर्यमवरुणाविति विवेकः ।

चाणक्यटीका

शिष्टम् । पृथग्धर्मस्थीयमिति धर्मस्थीयव्यवहारपराजितानां निरोधस्थानमपि साहचर्याद् धर्मस्थीयमुच्यते । तथा महामात्रेण दृष्टव्यव्यवहाराणां स्थापनं महामात्रीयम् । अनुज्ञायते च महामात्राणां व्यवहारो महामात्रैरिति तदुभयं पृथग्यत्रेति । एवं साहसव्यवहाराणां कण्टकशोधनाद्य (?) ध्यवसितानां पृथग् इत्यार्थापन्नम् । विभक्तस्त्रीपुरुषस्थानम् अपराधतः कारणात् । अन्यथा हि अविभक्तस्थानाः अन्योऽन्यं व्यभिचारं कुर्युः कुलस्त्रीणामपि सद्भावात् । अन्ये तु अल्पापराधानां तादृग्विधं स्थानम् अल्पापराधानां च तद्योगादिति व्याचक्षते । सुगुप्तकक्ष्यं सुगुप्तप्रकोष्ठम् । पक्षवतां बन्धनस्थानाद् बहिर्निष्कासप्रतिषेधार्थम् । अथवा यथापराधं सुतमां सुतराञ्च गुप्ता कक्ष्या यस्येति ॥

सर्वेषामिति । कोशगृहादीनां यथाप्रदेशम् । शालाः खातादिभिः युक्ताः । उदपानं शरीरस्थित्यर्थम् । वर्चोगृहम् उच्छ्वासभूमिः । अग्नित्राणम् उदककुम्भनिःश्रेणीपरशुशूर्पाङ्कुशादि । मार्जारनकुलाः मूषिकसर्पप्रतीकारार्थाः आरक्षाः । यदि कल्पेत यावत् स्वस्य दैवतस्य पूजनम् । कोशे वैश्रवणस्य । कोष्ठागारे सीतायाः ।

**कोष्ठागारे वर्षमानं अरत्निमुखं कुण्डं स्थापयेत् ।**

[ रत्नादीनां सङ्ग्रहविधानं वञ्चकानांदण्डश्च ]

**तज्जातकरणाधिष्ठितः पुराणं नवं च रत्नं सारं फल्गु कुप्यं वा प्रतिगृह्णीयात् । तत्र रत्नोपधावुत्तमो दण्डः कर्तुः कारयितुश्च, सारोपधौ मध्यमः फल्गुकुप्योपधौ तच्च तावच्च दण्डः ।**

---

श्रीमूला

कोष्ठेत्यादि । कोष्ठागारे वर्षमानं वर्षं वृष्टिर्मीयतेऽनेनेति तथाभूतम्, अरत्निमुखम् अरत्निचतुरश्रमुखं, कुण्डं गर्तं स्थापयेत् खानयेत् ।

तज्जातेत्यादि । पुराणं नवं च, विविच्येति शेषः । रत्नं मणिमुक्तादिकम्, सारं चन्दनादि, फल्गु वस्त्रादि, कुप्यं वा दारुचर्मवेणुवल्ककोष्ठोपकरणादिकं वा, तज्जातकरणाधिष्ठितः रत्नादितत्तद्वस्तुव्यवहारिवंश्यैः कायस्थैश्चोपेतः सन्, प्रतिगृह्णीयात् सङ्गृह्णीयात् । तत्रेति । तत्र, रत्नोपधौ निर्गुणरत्नं प्रतिनिधाय गुणवद्रत्नहरणे, कर्तुः कारयितुश्च, उत्तमो दण्डः पणसाहस्ररूप उत्तमसाहसः । सारोपधौ मध्यमः मध्यमसाहसः । फल्गुकुप्योपधौ, तच्च तावच्च दण्डः यद् द्रव्यं हृतं तच्च तत्समपरिमाणं तज्जातीयमपरं चेत्युभयं दण्डो भवति ।

चाणक्यटीका

पण्यगृहे श्रियः । कुप्यायुधागारयोः ईशानस्य स्कन्दस्य वा । बन्धनागारे यमवरुणयोरिति ।

वर्षमानमिति । कोष्ठागारस्थानां व्रीह्यादीनामन्येषाञ्च वर्षायत्तत्वात् । अतोयवर्ष (?) मीयते येन तद् अरत्निमुखं कुण्डम् । किमवगाढमिति चेद् यावता द्रोणः पूर्यते । कुत एतत् । वर्षमानग्रहणाद् द्रोण एतन्माप्यते "षोडशद्रोणं जाङ्गलानाम्" (अ० २, अध्या० २८) इत्यादिना ।

यदर्थं गृहाणि स निचय उच्यते—तज्जात इति । तत्र जात इव तज्जातस्तदभिज्ञ इत्यर्थः । तेन लेखकादिना करणेन कर्मसाक्षिणा सहितः आत्मविशुद्ध्यर्थम् । रत्नं मुक्तामण्यादि, सारं चन्दनादि, फल्गु चन्दनादि (?) (वस्त्रादि), कुप्यं शाकादि । एतन्नवं पुराणं वा समाहर्तृभ्यः प्रतिगृह्णीयात् । तत्रेति । यथानिर्दिष्टे रत्नादौ । रत्नोपधाविति । उपधाउपधिः परिवर्त्तनं रत्नाभासेन । उत्तम इति । पञ्चपणशतावरः सहस्रपणपरः साहसदण्डः । अर्थ (?) त्र कोशदण्डयिता प्रदेष्टा । कर्तुरिति उपधातुः । कारयितुश्चेति उवधापयितुः । सारोपधौ मध्यमः कर्तुः कारयितुश्च । तच्च तावच्चेति यथापरिवर्तितं द्रव्यं दाप्यः तन्मूल्यप्रमाणश्च दण्डः । रत्नाद्युपधौ तद्दापयित्वा अधिकं दण्डनीय इति ज्ञापनार्थं द्विगुण इति नोक्तम् ॥

**रूपदर्शकविशुद्धं हिरण्यं प्रतिगृह्णीयात् । अशुद्धं छेदयेत् आहर्तुः पूर्वः साहसदण्डः । शुद्धं पूर्णमभिनवं च धान्यं प्रतिगृह्णीयात् । विपर्यये मूलद्विगुणो दण्डः । तेन पण्यं कुप्यमायुधं च व्याख्यातम् ॥ सर्वाधिकरणेषु युक्तोपयुक्ततत्पुरुषाणां पणद्विपणचतुष्पणाः, परं अपहारेषु पूर्वमध्यमोत्तमवधा दण्डाः ॥**

---

श्रीमूला

रूपेत्यादि । हिरण्यं प्रणीतमुद्राङ्कं स्वर्णं रजतं च दीनारादिकम् रूपदर्शकविशुद्धं रूपपरीक्षकमुखेन विज्ञातशुद्धिकं, प्रतिगृह्णीयात् । अशुद्धं कूटप्रणीतं, हिरण्यं, छेदयेद् भञ्जयेद् अपुनरुपयोगाय । आहर्तुः कूटहिरण्यानेतुः, पूर्वः साहसदण्डः ।

शुद्धमिति । शुद्धं निर्बुसं, पूर्णम् अनूनमानम्, अभिनवं च धान्यं, प्रतिगृह्णीयाद्, धान्यग्रहणाधिकृतः । विपर्यये अतथाविधधान्यप्रतिग्रहे, मूलद्विगुणो दण्डः ।

पण्यकुप्यायुधप्रतिग्रहेऽपि धान्योक्त एव न्याय इत्याह—तेनेत्यादि ।

सर्वेत्यादि । सर्वाधिकरणेषु सर्वेष्वधिकारस्थानेषु, युक्तोपयुक्ततत्पुरुषाणां युक्तः प्रधानः, उपयुक्तस्तत्सहकारी तत्पुरुषाः तयोरधश्चराः तेषां पणद्विपणचतुष्पणाः एकः पणः द्वौ पणौ चत्वारः पणाश्च, दण्डाः, अपहारेषु पूर्वोक्तजातीयेषु । परमपहारेषु सकृद्दण्डनात् परतोऽपहारेषु, पूर्वमध्यमोत्तमवधा दण्डाः पूर्वसाहसो मध्यमसाहस उत्तमसाहसो वधश्च दण्डाः । तत्राद्यास्त्रयो दण्डा यथाक्रमं प्रयोक्तव्याः, वधदण्डस्तु ततोऽपि परस्तादपहारेषु प्रयोक्तव्य इति बोद्धव्यम् ।

चाणक्यटीका

रूपकदर्शकः सौवर्णिकः । हिरण्यमिति सर्वरूप्योदाहरणार्थम् । अशुद्धम् अव्यावहारिकम् अर्भकच्छेदेन लाञ्छयेदव्यवहारार्थम् । आहर्तुरिति येनौपनायिकेनाशुद्धम् आहृतम् ॥

शुद्धं तुषादिरहितम् । पूर्णं प्रस्थादिना मानेन । नवं कालक्षमत्वात् । विपर्यय इति अशुद्धाद्युपनये ॥

एतेनेति शुद्धादिपरीक्षणेन मूलद्विगुणदण्डेन चेत्यर्थः । सर्वाधिकरणेष्विति सन्निधात्रादिस्थानेषु अध्यक्षप्रचारोक्तेषु युक्ताः अध्यक्षाः । उपयुक्ताः गणकलेखकादयः । तत्पुरुषाः करणमनुष्याः । तेषां पणापहारे पूर्वः । द्विपणापहारे मध्यमः । चतुष्पणापहारे तु उत्तमः । पञ्चपणापहारे चौर्ये वधः । अन्तरालापहारे अन्तरालदण्डाः विकल्प्याः, वधोऽप्येकाङ्गहानादिना विकल्प्यः ॥

[ कोशचौर्ये तत्कर्तुः ज्ञाताज्ञाततत्परिचारकाणां च शिक्षाविशेषाः ]

**कोशाधिष्ठितस्य कोशावच्छेदे घातः तद्वैयावृत्यकाराणां[1] अर्धदण्डः । परिभाषणं अविज्ञाते । चोराणां अभिप्रधर्षणे चित्रो घातः तस्मादाप्तपुरुषाधिष्ठितः सन्निधाता निचयाननुतिष्ठेत् ।**

[ अध्यायार्थसारः ]

**बाह्यमाभ्यन्तरं चायं विद्याद्वर्षशतादपि ।**
**यथा पृष्टो न सज्जेत व्ययशेषं च दर्शयेत् ॥५८॥**

इत्यध्यक्षप्रचारे सन्निधातृनिचयकर्म पञ्चमोऽध्यायः ।
आदितष्षड्विंशः ।

---

श्रीमूला

कोशेत्यादि । कोशाधिष्ठितस्य कोशाधिष्ठातुः भाण्डागाराध्यक्षस्य, कोशावच्छेदे कोशस्य सुरुङ्गाद्युपायेनापहारे, घातः वधदण्डः । तद्वैयावृत्यकाराणां तस्य वैयावृत्यकाराः विशेषेण आसमन्ताद्वर्तत इति व्यावृत्तः परिचारक स्तस्य कर्म वैयावृत्यं परिचर्या तत् कुर्वन्तः परिचारकाः तेषाम् अर्धदण्डः । अविज्ञाते सति अर्थात् कोशाधिष्ठातृकृते कोशावच्छेदे, परिभाषणं तद्वैयावृत्यकाराणां सनिन्दोपालम्भः । चोराणामिति । चोराणाम् अभिप्रधर्षणे कुड्यसन्धिच्छेदादिना धनापहरणे, चित्रो घातः ।

तस्मादित्यादि । स्पष्टम् ।

बाह्यमिति । बाह्यं जनपदोत्थम्, आभ्यन्तरं नगरोत्थं च, आयं, विद्यात्,

चाणक्यटीका

कोशाधिष्ठितस्येति । कोशं प्रति अधिकारेण स्थितस्य कोशाध्यक्षस्य कोशविचारणायाम्, कोशच्छेदेऽल्पेऽपि घात एव नान्यो दण्ड इति नियमार्थम् । अन्यथा पूर्वेणैव वधो लब्ध एव । व्यापृतस्य कर्म वैयापृत्यं तत्कारिणां परिचारकाणाम् अर्धदण्डः, यथोक्तेभ्यो दण्डेभ्यः । कोशाधिष्ठितेन हृतद्रव्यार्धमिति यावत् । अविज्ञाने केन हृतं किं मूषिकैरन्येन वेत्यविज्ञाने । परिभाषणं 'न पुनः प्रमादः कार्यः'' इति । चोराणामिति । यदा चोराः पुनः पुनः प्रधर्षयन्ते कोशं तदध्यक्षतत्पुरुषाणाम् । चित्रो घातः शूलारोपणादिभिः । अन्यस्त्वाह—तेषामेव कोशध्यक्षतत्पुरुषाणाम् अभिधर्षणे उपाधिरहिते सन्धिच्छेदाच्चौर्ये चित्रो घात इति ।

तस्मात् इति । एवञ्जातीयकदोषपरिहारार्थं निगमयति आप्ताः शुचयः ॥

---

१. वैययापृत्य ।

## श्रीमूला

**सन्निधाता । कथं विद्यात्**, यथा वर्षशतादपि पृष्टः अतीतं वर्षशतिमधिकृत्यापि आयं **चोदितः, न सज्जेत न** सक्तो भवेत् निष्प्रतिबन्धं वदेदित्यर्थः, व्ययशेषं दर्शयेच्च **व्ययितावशिष्टं** द्रव्यं दृष्टिगोचरं कारयेच्च, भाण्डागारे ।।

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे **पञ्चमो**ऽध्यायः सन्निधातृनिचयकर्म, आदितः षड्विंशः ।।

## चाणक्यटोका

**अ (?) बाह्यं** जनपदागतम् । आभ्यन्तरं दुर्गादुत्पन्नम् । पृष्टः राज्ञा । **न सज्जेत न** विषण्णमनाः स्यात् । कस्मिन्नित्याह—व्ययादिषु कियान् व्ययः, कियानवशिष्टः, **कियानायः**, प्राग् इति ऐषमस्तनपरुत्तनादिषु । या (?) वर्षशतमि (?) तादिति **अतिशयोक्तिः** ।।

इति सन्निधातृनिचयकर्म पञ्चमं प्रकरणम् ।

।। पञ्चमश्चाध्यायः ।।

# चतुर्विशं प्रकरणम्

## षष्ठोऽध्यायः ।

## समाहर्तृसमुदयप्रस्थापनम् ।

[ समाहर्त्रा चिन्तनीयाः अंशाः ]

**समाहर्ता दुर्गं राष्ट्रं खनिं सेतुं वनं व्रजं वणिक्पथं चावेक्षेत ।**

[ दुर्गपदार्थविवरणम् ]

**शुल्कं दण्डः पौतवं नागरिको लक्षणाध्यक्षो मुद्राध्यक्षः सुरा सूना सूत्रं**

---

श्रीमूला

समाहर्तृसमुदप्रस्थापनमिति सूत्रम् । समाहर्ता विषयबल्यध्यक्षः तेन करणीयं समुदयप्रस्थापनं धनोत्पत्तिप्रवर्तनमुच्यत इति सूत्रार्थः । अर्थोपधाशुद्धः सन्निधातृकर्मणि समाहर्तृकर्मणि च नियोक्तव्य इत्युक्तं प्राक् । तद्व्यापार इदानीमभिधीयते ।

दुर्गादिसप्तकं समाहर्त्रा चिन्तनीयमित्याह—समाहर्तेत्यादि ।

चाणक्यटीका

अथ सन्निधाता चिनोति तत् केन कथं को (?) क्व वा अर्जित इति समाहर्तृसमुदयप्रस्थानमुच्यते । सम्यङ्न्यायाद् आहरन्तीति समाहर्त्तारः तेनाध्यक्षेण समुदयस्य कोशादेवावेक्ष्यमाणतया शरीराद्यपेक्षणात् प्रकर्षेण स्थापनमुपार्जनमिति शरीरप्रत्यवेक्षणमूलत्वात् समुदयस्य तत्तावदुच्यते—समाहर्त्तेति । दुर्गादिसप्तविधमायशरीरम् ।

श्रीमूला

दुर्गपदार्थं विवृणोति—शुल्कमित्यादि । शुल्कं घट्टदेयं, दण्डः दम उत्तमसाहसादिः, पौतवं तुलामानपरिच्छेदः, नागरिको नगराध्यक्षः, लक्षणाध्यक्षः, क्षेत्रारामादिसीमाचिन्हाध्यक्षः, मुद्राध्यक्षः, सुरा मद्याध्यक्षः, सूना प्राणिवधाध्यक्षः सूत्रं सूत्राध्यक्षः

चाणक्यटीका

अस्म प्रपञ्चमाह—शुल्कः पण्यानां प्रवेशनिष्कासयोः यथोचितविंशतिभागादिग्रहणाद् आयाङ्गम् । दण्डो वधपरिक्लेशावपास्य अन्यायकारिणां विनयार्थं मदर्थंहरणम् अपराधानुरूपम् । पौतवमिति रूढिशब्दोऽयम् । शोधनमित्यर्थः । औणादिकस्तुन् पवनं पोतुः, तत्र भवं पौतवम् । तुलामानयो राजकीययोस्तत्संव्यवहारिभ्यो लाभः ।

**तैलं घृतं क्षारः सौवर्णिकः पण्यसंस्था वेश्या द्यूतं वास्तुकं कारुशिल्पिगणो देवताध्यक्षो द्वारबाहिरिकादेयं च दुर्गम् ।**

[ राष्ट्रखनिपदार्थौ ]

**सीता भागो बलिः करो वणिक् नदीपालः तरो नावः पट्टनं विवीतं**

---

श्रीमूला

तैलं तद्विक्रयी, घृतं तद्विक्रयी, क्षारः गुडविक्रयी, सौवर्णिकः सुवर्णनियुक्तः, पण्यसंस्था पण्यनिवेशशालाः, द्यूतं, वास्तुकम्, आवसथनिर्मातारस्तक्षादयः, कारुशिल्पिगणः कारवः स्थूलशिल्पकाराः शिल्पिनः सूक्ष्मशिल्पकाराः तेषां गणः, देवताध्यक्षः देवालयकार्यधूर्वहः, द्वारबाहिरिकादेयं च द्वारबाहिरिकसम्बन्धि आदेयं पुरादिद्वारपालैर्भृतित्वेन ग्राह्यं बाहिरिकेभ्यो नटनर्तकादिभ्यो राज्ञा ग्राह्यं चेति यावत् । दुर्गं शुल्कादिद्वाविंशत्युपायलभ्यं द्रव्यं दुर्गशब्दितमित्यर्थः ।

चाणक्यटीका

नागरिकः नगरनियुक्तः जङ्घाविष्ट्यादिभिरायस्याश्रयः । लक्षणाध्यक्षः गजपतिरूप्यादिहननाद् आयहेतुः । मुद्राध्यक्षो दुर्गनिष्कासप्रवेशयोः पण्यानां मुद्रयिता आयाङ्गम् । सुरासूनयोरध्यक्षौ वक्ष्यमाणप्रपञ्चावायाश्रयौ । सूत्रं तदध्यक्षनियोगात् कर्तनवानाभ्यामायाङ्गम् । तैलं तिलादीनाम् । घृतं गवादीनाम् । क्षारः फाणितादि । तन्नियुक्तेभ्य उत्पादादायनिमित्तम् । सौवर्णिकः सुवर्णादिपरीक्षापण्येनायाङ्गम् । पण्यसंस्थापि पणितायस्य निमित्तमेव । वेश्या गणिकाध्यक्षे कृतप्रपञ्चा आयस्य हेतुः । द्यूतं द्यूतकाराणां व्यवस्थाकरणदायाश्रयः । वास्तुकं वास्तुपण्यं गृहक्षेत्रादि, तदध्यक्षनियोगात् क्रयविक्रयाभ्यामायस्य हेतुः । कारवः तन्तुवायादयः, तेषां गणः श्रेणी द्रव्योत्पादहेतुः । देवताध्यक्षो याच (?) निमित्तद्रव्योपसङ्ग्रहादायाङ्गम् । देवद्रव्यादानमधर्म इति चेत्, न; धर्मकृत्येषु नियोजनात् । द्वारबाहिरिकादेयं द्वारात् प्रवेशनिष्कासयोरादेयम् । द्वारपण इत्यन्ये । बाहिरिकायाश्च यथोक्तायाः कर इति । एतत् सर्वं दुर्गाश्रयत्वाद् दुर्गमित्युच्यते । क्वचिच्चात्र कर्मग्रहणं शुल्को दण्ड इति, नागरिको लक्षणाध्यक्ष इतिउभयप्रदर्शनज्ञापनार्थम् । अध्यक्षाः कुशलाः स्वकर्मभिरायस्य हेतुतां यान्तीति ।

श्रीमूला

सीतादित्रयोदशकं राष्ट्रशब्दितमित्याह—सीतेत्यादि । सीता कृषिः, भागः धान्यषड्भागः, बलिः उपहारः शिक्षा वा, करः फलवृक्षादिसम्बद्धं राजदेयं, वणिक् वणिग्द्वारेणादेयं, नदीपालः तीर्थरक्षकद्वारेणादेयं, तरः नदीतरणवेतनं, नावः नावध्यक्षद्वारलभ्यं, पट्टनम् अल्पनगरलभ्यं, विवीतं विवीताध्यक्षद्वारेणादेयं ।

**वर्तनी रज्जूः चोररज्जूश्च राष्ट्रम् । सुवर्णरजतवज्रमणिमुक्ताप्रवालशङ्खलोह-लवणभूमिप्रस्तररसधातवः खनिः ॥**

[ सेतुवनपदार्थौ ]

**पुष्पफलवाटषण्डकेदारमूलवापाः सेतुः । पशुमृगद्रव्यहस्तिवनपरिग्रहो वनम् ।**

---

चाणक्यटीका

सीता स्वकृषिः सीताध्यक्षे वक्ष्यमाणा । भागः कुटुम्बिभक्तौ भागेन कुटुम्बिभिर्यत् कृष्यादिकर्म क्रियते, तद्भागेनोपलक्षितत्वाद् भाग इत्युच्यते । बलिरुपदा । करो जङ्घादिना हिरण्यप्रत्यायः । वणिगिति निवासवणिग्भ्यः प्रत्यायः, पण्यादिकलनालाभाद् वणिक्पथस्य पृथग्ग्रहणात् । नदीपालो दीर्घस्रोतसः शुल्कस्यादाता । तरः पारावारतरणपण्यहेतुस्तरणिकनियोगात् । नावः नौभृत्यादिहेतवो नावध्यक्षे प्रप (ञ्चात् ? ञ्चिताः) । पट्टनं पण्यकलनस्थानं प्रत्यायहेतुः । विवीतं यवसमूल्यायनिर्वृत्तम् । वर्तनी जनपदप्रवेशमार्गो यत्र । वक्ष्यति—"अन्तपालः सपादपणिकां वर्तनीं गृह्णीयात्" (अ० धि० २ अ० २१) इति । रज्जुः ग्रामपरि (ज्ञा ? धि) प्रमाणम् । तत्र हि ग्रामा (त्क ? क्ष) पटलाध्यक्षात् प्रत्यायः । चोररज्जुः प्रदेष्टृव्यापारः चोरपरिज्ञानं प्रत्यायकारणम् । राष्ट्रान्तर्भावात् सर्वं राष्ट्रमित्युच्यते ।

श्रीमूला

वर्तनी मार्गः तल्लभ्यम् अर्थादन्तपालद्वारलभ्यं, रज्जूः विषयपालादेयमित्याहुः, चोररज्जूः चोरग्राहकाय ग्रामदेयमित्याहुः ।

खनिमाह—सुवर्णेत्यादि । वज्रः हीरकः, मणिर्मरतकादिः । भूमिधातुः प्रस्तरधातुः रसधातुश्च । स्पष्टमन्यत् । सुवर्णादि द्वादशकं खननलभ्यत्वात् खनिशब्दवाच्यम् ।

चाणक्यटीका

सुवर्णादीनां यथासम्भवं भूमिः प्रस्तरो रसो वा पारदादिरेते धातवः खननसाध्यत्वात् खनिरित्युच्यते ॥

श्रीमूला

सेतुमाह—पुष्पेत्यादि । पुष्पवाटः कुङ्कुमादिवनं, फलवाटः वार्ताकोर्वारुकादिवाही, अनयोः पुष्पफलशब्दाभ्यां ग्रहणं वाटशब्देन तु इक्षुवाटस्य षण्डं कदलीक्रमुकादि, केदारः धान्यक्षेत्रं, मूलवापः आर्द्रकहरिद्रालामज्जाद्युत्पत्तिस्थलम् । पुष्पवाटादयः षट सेतुशब्दिताः ।

वनमाह—पशुमृगेत्यादि । पशुवनमृगवनद्रव्यवनहस्तिबनानां परिग्रहो वनमिति शब्द्यत इत्यर्थः । तत्र पशुर्गवयादिः, मृगो हरिणादिः, द्रव्यं शाकतिनिशादि, हस्ती कालिंगादिः ।

[ व्रजवणिक्पथपदार्थौ ]

**गोमहिषमजाविकं खरोष्ट्रं अश्वाश्वतराश्च व्रजः ॥ स्थलपथो वारिपथश्च वणिक्पथः । इत्यायशरीरम् ।**

[ आयमुखसङ्ग्रहः ]

**मूलं भागो व्याजी परिघः क्लृप्तं रूपिकं अत्ययश्च आयमुखम् ।**

---

चाणक्यटीका

पुष्पफलानां वाटाः, कदलीक्ष्वादिषण्डाः, कोद्रवा व्रीह्यादयः, मूलवापा आर्द्रकादयः, कन्दवापाः पिण्डालुकादयः, सेतुप्रभवत्वात् सेतुरित्युच्यते । तत्र सुलभः प्रत्यायः ।

पशुरिति ग्राम्याणां ग्रहणम्, मृग इति आरण्यानाम्, द्रव्यहस्त्यर्थो वनपरिग्रहः नतु ब्र ( ह्म ) सोमाद्यर्थ इत्येतद्वनम् ।

श्रीमूला

गवाद्यष्टकं व्रजशब्दितमित्याह—गोमहिषमित्यादि । अजाश्छागाः । अविका मेषाः । खरा गर्दभाः । अश्वतराः वेसराः । स्पष्टमन्यत् । वणिक्पथं द्विविधमाह—स्थलेत्यादि ।

इतीति । इति आयशरीरम् । उक्तसप्तषष्टिप्रकारं दुर्गादिसप्तकं धनागमस्थानम् ।

चाणक्यटीका

तथा व्रजः वणिकपथश्चायस्य हेतुः । आयशरीरमिति आयस्योत्पत्त्याश्रयत्वात् प्राणस्येव शरीरम् ।

श्रीमूला

उक्त आयशरीरे मूलादिसप्तकं प्रधानत्वाद् मुखस्थानीयमित्याशयेनाह—मूलमित्यादि । मूलं धान्यफलादिविक्रयलब्धं धनम् । मूल्यमित्येव पाठः क्वचित् । भागः षड्भागः, व्याजी विंशतिभागः पुनर्माने मा भूदूनतेत्यधिकं गृह्यमाणः, परिघः आतरद्रव्यं, क्लृप्तम् अमुकग्रामस्यैतावदिति प्रतिनियतं हिरण्यं धान्यं च, रूपिकं लवणाध्यक्षेण तद्विक्रयिभ्यः प्रस्थशतस्याष्टमांशो गृह्यमाणो लवणभागः, अत्ययश्च अध्यक्षप्रचारधर्मस्थीयकण्टकशोधनोक्तविधया गृह्यमाणमपराधदण्डद्रव्यं च, आयमुखम् । अत्र सङ्ग्रहश्लोकान् पठन्ति—

"शरीरं सप्तधा यस्य तावन्त्येव मुखानि च ।
प्रभेदाः सप्तषष्टिः स्युर्व्यये द्वाविंशतिः स्थिताः ॥
द्वाविंशतिविधं दुर्गं राष्ट्रभेदास्त्रयोदश ।
खनिर्द्वादशधा तत्र सेतवश्चैव षड्विधाः ॥
वनं चतुर्विधं ज्ञेयं व्रजभेदोऽपि चाष्टधा ।
द्विधा वणिक्पथश्चैवं शरीरं सप्तषष्टिधा ॥"

[ व्ययशरीरविवरणम् ]

**देवपितृपूजादानार्थं स्वस्तिवाचनं अन्तःपुरं महानसं दूतप्रावर्तिमं कोष्ठागारं आयुधागारं पण्यगृहं कुप्यगृहं कर्मान्तो विष्टिः पत्त्यश्वरथद्विपपरिग्रहो गोमण्डलं पशुमृगपक्षिव्यालवाटाः काष्ठतृणवाटश्चेति व्ययशरीरम् ॥**

---

चाणक्यटीका

अस्माच्च शरीराद् आयो यैर्द्वारैः प्राण इव स्रोतोभिर्निर्गच्छति तानि मुखान्युच्यन्ते। तत्र मूल्यं धान्यादीनि येन विक्रीयन्ते। ननु च विक्रये सत्युत्पन्नं मूल्यमायः, ततश्च विक्रय एव वक्तव्यो मुखत्वात्, न मूल्यमिति। मूल्यवचनादेव (वि) क्रयो गतार्थ इति नोक्तम्। भागः षड्भागा (धि ? दि) कः यथोक्तम्—"धान्यषड्भागं हिरण्यभागं च" (अधि० १ अ० १३) इति। राष्ट्रे तु आयशरीरस्यान्यार्थत्वात् व्याजी द्विविधा दण्डव्याजी यथा पञ्चकं शतमिति, षोडशभागो मानव्याजीति। परिघः मा (ष्य ? प्य) मानेषु धान्यादिषु यत् सङ्ख्यापरिच्छेदार्थः। शलाकासूर्पकमानावबद्धो लाभ इति केचित्। क्लृप्तं (?) कुलक्षेत्रग्रामादिकं परिच्छिद्य अमुना इदं देयमिति यल्लब्धम्, तत् कलृप्तं (?) परिच्छिन्नमित्यर्थः, यत् पिण्डकर इत्युच्यते लोके। रूपिकं दण्डकर्मणि ये शतमुपनयन्ति तैः (रूपिकां ? राज) भाव्यमष्टौ पणा देयाः। अत्ययः अपराधजो दण्डो धर्मस्थीयकण्टकशोधनोक्तः।

श्रीमूला

अथ व्ययशरीरमाह—देवेत्यादि। देवपितृपूजादानार्थं देवपितृपूजादानप्रयोजनकं, तत्र देवाराधनं पितृपूजा श्राद्धकर्म दानं पर्वसु ब्राह्मणबालवृद्धातुरानाथदिभ्यो दीयमानं, स्वास्तिवाचनं शान्तिकपौष्टिकार्थे पुरोहिताय दीयमानम्, अन्तःपुरं देवीभोगिनीराजपुत्रेभ्यो देयं, महानसं पाकशालार्थो व्ययः, दूतप्रावर्तिमं दूतस्य परविषयगतागतप्रवर्तनार्थो व्ययः, कोष्ठागारं भोज्यद्रव्यावस्थानगृहं तन्निर्माणादिनिमित्तो व्ययः, आयुधागारम् आयुधनिर्माणशाला तद्रक्षणशाला च पण्यगृहं पण्यगृहार्थो व्ययः, कुप्यगृहं तत्सम्बद्धं धनं शाकतिनिशादिसारदारुवेणुवल्लीवल्कादिच्छेदनानयनरक्षाणादिविषयो व्यय इति यावत्, कर्मान्तः कृष्यादिव्यापारव्ययः, विष्टिः हठकारितकर्मार्थो व्ययः, पत्त्यश्वरथद्विपपरिग्रहः पत्त्यादिचतुष्टयार्थो व्ययः, गोमण्डलं गोमहिषमेषाद्यर्थो व्ययः, पशुमृगपक्षिव्यालवाटाः पशवो वन्यपशवः मृगा हरिणादयः पक्षिणः शुकशारिकादयः व्यालाः सिंहव्याघ्रादयः एषां वाटाः रक्षणस्थानानि तन्निमित्तो व्यय इत्यर्थः, काष्ठतृणवाटः काष्ठतृणवाटार्थो व्ययः, चशब्दादावश्यकव्ययान्तरपरिग्रहः, त एते द्वाविंशतिर्व्ययाः व्ययशरीरम्।

[ कालविभागक्रमप्रदर्शनम् ]

**राजवर्षं मासः पक्षो दिवसश्च व्युष्टम् । वर्षाहेमन्तग्रीष्माणां तृतीयसप्तमा दिवसोनाः पक्षशेषाः पूर्णाः । पृथगधिमासक इति कालः ।**

[ समाहर्तृचिन्तनीयाः अवशिष्टाः षडंशाः ]

**करणीयं सिद्धं शेषं आयव्ययौ नीवी च ॥**

---

### चाणक्यटीका

अत्र सप्तानाम् आयशरीराणां न यथाक्रमं सप्त आयमुखानि, किन्तु एकैकस्य सप्तेति । यद्व्ययशरीरमपि समुदयस्थापना ( न्मा ? दा ) यान्तरोत्पादनमुत्पद्यत इति तदप्यवेक्ष्यते । देवार्थं पुष्ट्याद्युपहारः । पित्रर्थं श्राद्धादिः । पूजनार्थं वस्त्रालङ्कारादिः । दानार्थं तपस्विबालवृद्धादिभ्यः । स्वस्तिवाचनं प्रस्थानादौ दानम् । अन्तःपुरं स्त्रीकुमारादिभरणम् । महानसं स्वपाचनशाला । दूतप्रावर्तिमं स्वदूतेभ्यःपरदूतेभ्यो वा यद्दीयते प्राभृतकादि । कोष्ठागारादीनि तत्करणनिचयतद्व्यापृतपोषणव्यपाश्रयाणि । कर्मान्त इति आकारादिः । कर्मान्तो व्ययसाध्या विष्टिः । पत्यादि ( षु ? ) परिग्रहणं तत् परिचारकवर्गग्रहणार्थम् । गोमण्डलं चिकित्सनादिना व्ययाङ्गम् । मण्डलग्रहणं व्रजोपलक्षणार्थम् । महिषादीनां पत्परिचारकाणां च ग्रहणम् । पशवो युद्धार्थं ये परिगृहीता गवादयः । क्रीडार्थं मृगाः । पक्षिणश्च तथा । व्याला व्याघ्रसिंहादयः, एषां वाटाः परिग्रहा वा । काष्ठतृणानां वाटाः । तेषु कर्मकरेभ्यो दीयते । अपरे काष्ठानि तृणानि वाटाश्च आवरणानि गृहादीनां मूल्यदानादिति वर्णयन्ति । व्ययशरीरान्मुखं व्यतिरिक्तं वा नास्ति, स्वयं निर्गतत्वादिति नोक्तम् ।

### श्रीमूला

राजेत्यादि । राजवर्षम् आ राजराज्याभिषेकादारब्धः संवत्सरः, मास, पक्षः, दिवसश्च, व्युष्टं राजवर्षादिचतुष्टयं व्युष्टसंज्ञमित्यर्थः । एतच्च अमुकराजवर्षेऽमुकपक्षे दिवसेऽ मुकपुरुषेणानीतमेतावद् धनम्, अद्यामुकपुरुषायैतावद् दत्तमिति रीत्या निबन्धपुस्तकादिषु लेख्यमिति बोद्धव्यम् । वर्षाहेमन्तेत्यादेरयमर्थः—राजवर्षस्य त्रिधा विभक्तस्य सिंहकन्यातुलाबृश्चिकाश्चत्वारो रविमासा बर्षर्तुरित्येको भागः, धनुर्मकरकुम्भमीनाख्साश्चत्वारो हेमन्त इति द्वितीयः, मेषवृषभमिथुनकुलीराख्याश्चत्वारो ग्रीष्म इति तृतीयः । इत्येतेषां त्रयाणां भागानां ये प्रत्येकमष्टौ पक्षास्तेषु तृतीयपक्षे सप्तमपक्षे चैकैको दिवसो हीयते, अवशिष्टास्तु पक्षा अनूनदिवसा इति । पृथगिति । अधिमासकः अधिकः सौरमासादतिरिक्तः शुक्लप्रतिपदादिदर्शावसानश्चान्द्रो मासः, पृथग्, इति कालः उक्तप्रकारो व्यवहारार्थः कालो विज्ञेयः ।

करणीयादिषट्कमुद्दिशति—करणीयमित्यादि ।

[ करणीयसिद्धशेषाणां प्रत्येकं षोढा विभ-
जनेन तेषां निर्वचनम् ]

**संस्थानं प्रचारः शरीरावस्थापनं आदानं सर्वसमुदयपिण्डः सञ्जातम्—एतत्करणीयम् । कोशार्पितं राजहारः पुरव्ययश्च प्रविष्टं, परमसंवत्सरानुवृत्तं शासनमुक्तं मुखाज्ञप्तं चापातनीयम्—एतत्सिद्धम् । सिद्धिप्रकर्मयोगः दण्डशेषं आहरणीयं, बलात्कृतप्रतिस्तब्धं अवसृष्टं च प्रशोध्यम्—एतच्छेषम् असारमल्पसारं च ॥**

———

चाणक्यटीका

व्युष्टमन्तरेणायव्ययपरिशुद्धिर्नास्तीति तदवेक्षेत । राजवर्षमिति । यस्य कस्याचिद् राज्ञो राजत्वादारभ्य यद्वर्षं मासः पक्षो दिवसश्चेति । तद्यथा—श्रीमहाराजे मगधाननुशासति द्वात्रिंशे वर्षे श्रावणमासे शुक्लपक्षे त्रयोदश्याम् इदमुत्पन्नमस्मादिदं व्ययितमत्र इति । वर्षाहेमन्तग्रीष्माणामिति लोकप्रतीत्या त्रित्वम् (क्र ? ऋ) तूनाम् । तथा वक्ष्याति—"कालः शीतोष्णवर्षात्मा" (अधि० ९ अध्या० १) इति । तृतीयसप्तमा इति । भाद्रपदकार्तिकपौषफाल्गुनवैशाखाषाढपक्षाः (कृष्ण ?) दिवसोनाः । शेषा इति । प्रथमद्वितीयचतुर्थपञ्चमषष्ठाष्टमा इत्यर्थः । एष्वायव्ययौ परिशोध्यौ । येऽन्येऽधिकदिवसाः तैः पृथगेव अधिमासकः पिण्डनीयः, एतच्च कालमाने वक्ष्यति । अयं कालः "यथाकालमनागतानाम्" इत्यादौ प्रतिपत्तव्यः ॥

श्रीमूला

करणीयं षड्विधमाह—संस्थानमित्यदिना । तत्र संस्थानम् अमुकग्रामादियदादेयमिति क्लृप्तिः, प्रचारो देशः, शरीरावस्थापनं जनपदनगरयोरायशरीरमेतावदिति निश्चयः, आदानं धान्यहिरण्यादेर्यथाकालग्रहणं, सर्वसमुदयपिण्डः सर्वेषां समुदयानां पिण्डः प्रतिग्रामं प्रतिनगरं चोत्पन्नानां धनानां सङ्घातः तज्ज्ञानमित्यर्थः, सञ्जातं सर्वोपायलब्धधनेयत्ताज्ञानम्, एतद् उक्तं षट्कं, करणीयम् अवश्यकार्यत्वात् करणीयशब्दितम् ।

चाणक्यटीका

अस्मिंश्च काले करणीयादिकमवेक्ष्यम् । तत्र संस्थानं स्थितिः इदमनेनैव अस्मिन्नेव काले कर्त्तव्यमिति रा (जा) ज्ञा । प्रचारः प्रचरन्त्यस्मिन्निति योगविषयो देशः । शरीरावस्थापनमिति आयशरीरस्यावस्थापनं यथायथं कर्मभिः फलकल्पनम् । तद्यथा—"शुल्कं प्रवेश्यानां मूल्यपञ्चभागः" (अधि० २ अध्या० २२) इत्यादि । अथवा इयन्ति अत्रायशरीराणीति परिगणनम् । आदानं यथाकालं शुल्कदण्डादिग्रहणम् । सर्वसमुदयपिण्डः एतावत्सु ग्रामेषु ऐकध्येन एतवद्धिरण्यं धान्यं च राज्ञो भवतीति । अस्मादेव समुदयपिण्डाद् अस्मिन्नेव काले न्यूनमधिकं वा कालवशादिदमुत्पन्नमिति सञ्जातम् । एतदवश्यकर्त्तव्यतया करणीयमित्युच्यते ॥

### श्रीमूला

सिद्धमाह—कोशेत्यादि । कोशार्पितं भाण्डागारिकहस्तेऽर्पितं, राजहारः राज्ञा स्वीयकार्यार्थं समाहर्तृसकाशाद् गृहीतं, पुरव्ययश्च पुरे शालानिर्माणाद्यर्थं व्ययितं धनं च, प्रविष्टं प्रविष्टशब्दितम् । परमसंवत्सरानुवृत्तम् अतीतवर्षसम्बद्धमप्रविष्टतया स्थितं, शासनमुक्तं राजाज्ञालेखनिरस्तं मुखाज्ञप्तं राजवाग्विश्राणितं च, आपातनीयम् आपातनीयशब्दितं समुदयाद् व्यवकलनीयमिति कृत्वा । एतत् प्रविष्टत्रिकमापातनीयत्रिकं चेत्युभयरूपं षट्कं, सिद्धं सिद्धशब्दितम् ।

षड्विधं शेषमाह—सिद्धीत्यादि । सिद्धिप्रकर्मयोगः सिद्धौ सिद्धधान्यादौ प्रकर्मयोगः स्वायत्तीकरणप्रवृत्तिरदत्तकरप्रवेशनार्था, दण्डशेषं सैन्यौपयुक्तावशिष्टद्रव्यं च, आहरणीयं सुखेनाहर्तुं शक्यत्वादाहरणीयसंज्ञम् । बलात्कृतप्रतिस्तब्धं राजवल्लभाद्याश्रयबलाददत्तं देयं प्रतिस्तब्धापरपर्यायम्, अवसृष्टं च पुरमुख्यैः कामचारादत्तं च, प्रशोध्यं प्रयत्नसाध्यत्वात् प्रशोध्यसंज्ञम् । एतद् उक्तमाहरणीयद्विकं प्रशोध्यद्विकं चेतीदं चतुष्टयमित्यर्थः, असारं प्रवेशनार्थे कृतेऽपि व्यये निष्फलम्, अल्पसारं च बहुव्ययसाध्याल्पफलं च, शेषं तत्संज्ञम् ।

### चाणक्यटीका

कोशार्पितं कोशाध्यक्षहस्तोपनीतत्वान्नाक्षपटलेऽधिगतम् । राजभावः राज्ञो विहारादौ यदुपयुक्तम् । पुरव्ययः दुर्गसंस्कारार्थं यद् व्ययितम् । एतत् त्रयमपि प्रविष्टकाख्यं सिद्धम् ।।

परसंवत्सरानुवृत्तं पूर्वस्मिन् संवत्सरे य (द्वय ?न्नव्य) यितम् । शासनमुक्तं यत् परिहारपत्रेण प्रवेशार्हमेव प्रतिमुक्तम् । मुखाज्ञप्तं अस्यात्त्वया न ग्राह्यमिति साक्षादुक्तम् । एतत् त्रयम् (अपनीयार्थं ? आपादनीयं) विभावनीयमिर्त्यः । क्वचिच्चासिद्धमुत्पन्नत्वात् सिद्धमित्युच्यते ।।

सिद्धिप्रकर्मयोगः गृहकर्मप्रारम्भार्थं तत्कारि (भ्योऽव ? भ्यः उप) कारार्पितं यन्न तावत् तैः प्रत्यर्प्यते । अथवा कर्मकरणार्थं गतेन अधिकृतमनुष्येणोद्धृत्य यावदुपयुक्तं यत्तत् सिद्धिप्रकर्मयोग उच्यते । अध्यक्षस्य वा आजीवादेव शिष्यत इति शेषमुच्यते, दण्डादेः (कं ?) परिकल्पितस्य यदेकदेशाद्दत्तावशिष्टम् । तदुभयमाहरणीयाख्यम् अनवेक्ष्यैवादातव्यत्वात् । बलात्कृतप्रतिस्तब्धमिति बलात्कृतं बलात्कारः तेन वल्लभाटविकाद्याश्रयात् प्रतिस्तब्धम् अविहतसाधनं साध्यमानं निरुद्धमित्यर्थः । अवमृष्टं यन्मुख्यादिभिः बलादुपयुक्तम् । एतद् द्वयं प्रशोध्याख्यम् । विघ्नाद्युपशमनप्रकर्षेण आभिमुख्येन शोधनीयत्वात् । ए (तद्) द्विविधं शेषमसिद्धत्वादुच्यते । यत् करदमपि कुलम् असारं बीजावशेषत्वात् किञ्चिदपि दातुमसमर्थम् । तथा अल्पसारं भक्तबीजावशेषमुचिदादपि दातुमसमर्थम् । तदुभयमविशेषमेव अनादेयाख्यम् । पृथक्करणं प्रशोध्यमित्यनेन असंबन्धार्थम् ।।

[ आयस्य प्रकारभेदेन द्विस्त्रेधा ततः पञ्चधा च
विभजनेन तत्स्वरूपनिर्वचनम् ]

**वर्तमानः पर्युषितोऽन्यजातश्चायः। दिवसानुवृत्तो वर्तमानः। परमसांवत्सरिकः परप्रचारसङ्क्रान्तो वा पर्युषितः। नष्टप्रस्मृतमायुक्तदण्डः पार्श्वं पारिहीणिकमौपायनिकं डमरगतकस्वपुत्रकं निधिश्चान्यजातः। विक्षेपव्याधितान्तरारम्भशेषश्च व्ययप्रत्यायः। विक्रये पण्यानामर्घवृद्धिः उपजा मानोन्मानविशेषो व्याजी क्रयसङ्घर्षे वा वृद्धिरित्यायः।**

---

श्रीमूला

आयं त्रेधा विभज्य व्युत्पादयति—वर्तमान इति। आयः, वर्तमानः पर्युषितः अन्यजातश्च इति त्रिविधः। तत्र दिवसानुवृत्तः नित्यः, वर्तमानः। परमसांवत्सरिकः अतीतवर्षग्राह्यः वर्तमानवर्षे गृहीतः, परप्रचारसङ्क्रान्तः भूतपूर्वाध्यक्षकालप्रविष्टः—यद्वा शत्रुविषयादागतः, वाशब्दः समुच्चये, पर्युषितः तदाख्यः। नष्टप्रस्मृताद्यष्टकमन्यजात इत्याह—नष्टेत्यादि। नष्टप्रस्मृतं विस्मृताभिज्ञातमिति भाषाटीका। प्रशब्द इह प्रकर्षे न तु धात्वर्थविपरीतत्वे इति तत्पक्षे वक्तव्यम्। नष्टमपगतं प्रस्मृतं विस्मृतमिति तु कोष्ठागाराध्यक्षप्रकरणे भट्टस्वामी। आयुक्तदण्डः तत्तत्कार्याध्यक्षेभ्योऽपराधिभ्यो गृहीतो दण्डः, पार्श्वं करातिरेचनलक्षणवक्रोपायलब्धं धनम्। प्रभुत्वाधिगम्यमिति केचित्। पारिहीणिकं चतुष्पदविनाशितसस्यदण्डाधिगम्यं धनम्, औपायनिकम् उपायनत्वेन गृहीतं, डमरगतकस्वं डमरः शत्रुकलहविप्लवः तदवसरे शत्रुसैन्यादपहृत धनम्, अपुत्रकम् अविद्यमानदायादकं धनं, निधिश्च निधिलाभश्च, अन्यजातः अष्टावेतेऽन्यजातशब्दिताः। आयस्य प्रकारान्तरमाह—विक्षेपेत्यादि। विक्षेपव्याधितान्तरारम्भशेषश्च विक्षेपशेषः, किञ्चित्कार्यसाधनाय नियुक्तस्य सैन्यस्यार्थे व्ययितावशिष्टं धनं व्याधितशेषः, भेषजशालाव्ययितशिष्टम् अन्तरारम्भशेषः, दुर्गप्रासादादिनिमित्तव्ययितावशिष्टम् इत्येतत् त्रिकं, व्ययप्रत्यायः तदाख्ययोच्यते। पुनरप्यायस्य पाञ्चविध्यमाह—विक्रय इत्यादिना। विक्रये पण्यानामर्घवृद्धिः क्लृप्ताभ्यधिकेन मूल्येन पण्यविक्रयाल्लब्धमधिकं धनं विक्रेतृसकाशादुपस्थापितम्, उपजा प्रतिषिद्धविक्रयलब्धं, मानोन्मानविशेषः मानोन्मानयोर्विशेषकरणेन मेयाधिक्यसम्पादनाल्लब्धं, व्याजी विंशतिभागः पुनर्मीयमानमेयोनतापरिहारार्थमधिकतया गृह्यमाणः, क्रयसङ्घर्षे वृद्धिः स्पर्धया मूल्यवर्धनाल्लब्धं, वाशब्दश्चकारार्थः। इत्यायः उक्तप्रकारेणायो व्याख्यातः। भाषाटीका तु नष्टप्रस्मृतादिकमन्तरारम्भशेषान्तमेकादशकमन्यजातभेद इति, व्ययप्रत्यायादिषट्कमायस्य प्रकारान्तरमिति च व्याचष्टे। नत्तु 'विक्षेपव्याधितान्तरारम्भशेषश्च व्ययप्रत्यायः' इति कोष्ठागाराध्यक्षवक्ष्यमाणग्रन्थेन विरुध्यते।

[ व्ययविभागः तत्स्वरूपाणि च ]

**नित्यो नित्योत्पादिको लाभो लाभोत्पादिक इति व्ययः। दिवसानुवृत्तो**

———————

चाणक्यटीका

दिवसानुवृत्तो यः प्रतिदिवसमुत्पद्यैव वर्त्तमान आयः। परमसांवत्सरिकः यत् परमसंवत्सराध्यसनम् ऐषमस्याध्यस्यते। परपचारसङ्ग्रान्तः······यान्यस्याध्यक्षस्य कर्मकाले जात ऐषमः, तत एवाध्यक्षान्तरं सञ्चारितः। अयं पर्युषित इव पर्युषितः। नष्टप्रस्मृतः प्रागदृष्टः पश्चात्काले न स्मृतः। आयुक्तदण्डः अध्यक्षाणां यथा (वर? पराध) दण्डः। पार्श्वमुत्कोचद्रव्यम्। अस्य पार्श्वतो हस्ता (द्) दीयमानत्वात्। पारिहीणिकं परिहीणो यो बलान्निर्गतः तस्य यद्धनं प्रबलीधनमित्यर्थः (?)। अन्यस्त्वाह—भृत्यविक्षेपादौ यत् परिहीयते तद्विगुणमादीयमानं पारिहीणिकम्। आयुक्तदण्ड एवेदमिति चेत्, परिहीणस्य प्रत्यानयनं पारिहीणिकम्। तावन्मात्रदण्डस्तु त्रिगुणश्चतुर्गुण इत्यादिकः। औपायनिकम् उपायनाद्यद् भवति। (स ? ड) मरगतस्वं यत् परविषयलोपाज्जातं द्रव्यम्। अथवा यच्छत्रुविषयं ह (? हि) त्वा अधमर्णादागतानां डामरिकाणां स्वमाच्छिद्यानीतम्। अपुत्रकम्, अपुत्रान्मृतादुद्भवति। निधिश्च स्वयं दृष्टोऽन्यदृष्टो वा। अयं यथोचितादानहेतोर्वार्तादिकर्मणोऽन्येन प्रकारेणायातः निरुपादानकारणः अन्यजात इत्युच्यते॥

सोपादानमन्यमाह—व्ययप्रत्यायः हिरण्ये (जा ? दा) तव्ये कुप्यभूम्यादीनां दानाद् यो ब्याज (?) लाभः, अथवा प्राग्रहेरभावाद् (?) व्ययस्य प्रत्यागमनमिति व्ययप्रत्यायः। पण्यानामिति विक्रेयराजपण्यानां यदर्घस्याधिक्यम्। उपजा या मूलातिरिक्तात् (?) सञ्जातग्रहणेन यदधिकमुपजायते। मानोन्मान इति मानं प्रस्थादि उन्मानं तुलादि। तदवशेष इति अधिकेनादाय हीनेन व्ययक्रियायां यदधिकमुत्पद्यते। व्याजी द्विविधा, उचिता अनुचिता च। या उचिता सा प्रागायमुखेऽभिहिता। इह तु राजदोषाज्जनपददोषाद्वा रचिता। पञ्चकं शतमुचिता व्याजी। तस्यैतदधिकग्रहणादनुचिता भवति। यथोक्तम्—

"प्रजानां दोषबाहुल्याद् राज्ञां वा भावदोषतः।
रूपव्याज्याव धर्मिष्ठे धर्म्या तु प्रकृतिः स्मृता॥" इति।

(अधि० ३ अध्या० १७)

क्रयसङ्घर्ष इति द्वयोः क्रेत्रोः एकैकस्य द्रव्ये स्पर्धायां वृद्धी राजाहार्या। अयमायत्यानियत (?) इति वा आयः॥

श्रीमूला

अथ व्ययमाह नित्य इति। नित्यो नित्योत्पादिकः लाभो लाभोत्पादिक इति

**नित्यः; पक्षमाससंवत्सरलाभो लाभः तयोरुत्पन्नो नित्योत्पादिको लाभोत्पादिक इति ।**

[ नीवीपदार्थः तद्विभागश्च ]

**व्ययसञ्जातादायव्ययविशुद्धा नीवी, प्राप्ता चानुवृत्ता चेति ।**

[ आयापेक्षया व्ययस्य न्यूनत्वावश्यकता ]

**एवं कुर्यात् समुदयं वृद्धिं चायस्य दर्शयेत् ।**
**ह्रासं व्ययस्य च प्राज्ञः साधयेच्च विपर्ययम् ॥५९॥**

इत्यध्यक्षप्रचारे समाहर्तृसमुदयप्रस्थापनं षष्ठोऽध्यायः ।
आदितः सप्तविंशः ।

---

श्रीमूला

चतुर्विधो व्ययः । तत्र दिवसानुवृतः प्रात्यहिको व्ययः नित्यः । पक्षमाससंवत्सरलाभ इति । तादर्थ्यात्सावध्यर्थ्यं, पक्षलाभार्थो मासलाभार्थः । संवत्सरलाभार्थश्च व्ययः लाभः लाभशब्दितः । तयोर्नित्यलाभयोः, उत्पन्नः तत्र नित्योत्पन्नो लाभोत्पन्नश्च व्ययः, नित्योत्पादिको लाभोत्पादिक इति व्यपदिश्यत इति शेषः । यथाक्रमं च सम्बन्धः । क्लृप्तवेतनातिरेकेण एतावतो नित्यव्ययस्यैतावदिति विशेषतः कर्मकरेभ्यो यद् दीयते स व्ययो नित्यव्ययोत्पन्नत्वान्नित्योत्पादिकशब्दितः, एतावतो लाभनिमित्तव्ययस्यैतावदिति विशेषतस्तेभ्यो यद् दीयते स लाभाख्यव्ययोत्पन्नत्वाल्लाभोत्पादिकशब्दित इति विवेक्तव्यम् ।

सर्वव्ययावशेषो नीवीत्याह—व्ययेत्यादि । व्ययसञ्जाताद् व्ययसमष्टेः सर्वव्ययद्वारेभ्य इत्यर्थः, उत्थितेति शेषः, आयव्ययविशुद्धा आयव्ययसम्यग्गणनपरिनिश्चिता, नीवी नीवीशब्दितं द्रव्यमित्यर्थः । सा च द्विप्रकारा प्राप्ताचानुवृत्ता चेति । तत्र प्राप्ता भाण्डागारं प्रविष्टा अनुवृत्ता तत्प्रवेशाय प्रस्थितेति ज्ञेयम् ।

चाणक्यटीका

दिवसानुवृत्तः दिवसे दिवसेऽनुवृतः महानसादिव्ययः । लाभ इति यः पक्षादिषु इति तादर्थ्यात् ताच्छब्द्यं, पक्षलाभार्थो मासलाभार्थः संवत्सरलाभार्थश्च व्ययः, भृत्यानामनित्योऽपि कर्मापेक्षया लाभः । क्रमोल्लङ्घनं सङ्क्षेपाबाधनार्थम् । तयोरिति नित्यलाभयोः निमित्तवशात् पाकद्वैगुण्यं नित्योपादिकः । कर्मविशेषात् पक्षादिषु भृतिद्वैगुण्यं त्रैगुण्यं वा लाभोत्पादिक इति ॥

(सञ्जात भृति यथोक्तेभ्यः आयस्थाने यस्यायमुत्पन्नं तस्मात् सञ्जातायाः आयः व्ययः (आस्थापयिता) अवशिष्ट उपनयार्हो द्रव्यपिण्डः नीवीत्युच्यते । अध्यक्षस्य व्यवहारप्रच्छादनेन नीवीसाधर्म्यात् । सा द्विविधा प्राप्ता उपसंहृता । अप्राप्ता पुरग्रामायुक्तकादिषु यथायथं स्थितेति ॥

### श्रीमूला

अध्यायान्ते श्लोकमाह—एवमिति । एवम् उक्तैः, प्रकारैः समुदयं धनोत्पत्तिं, कुर्यात्, आयस्य वृद्धिं च, व्ययस्प ह्रासं च दर्शयेत् समाहर्ता । स कीदृशः, प्राज्ञः प्रजानुपपीडयाऽऽयवृद्धिप्रदर्शने कर्मकरानुपपीडया व्ययह्रासप्रदर्शने च निपुणः विपर्ययं च साधयेत् आयव्यययोर्वृद्धिह्रासवैपरीत्यं यदि यदृच्छयोपनमेत् तदपि वारयेदित्यर्थः, यद्वा विपर्ययं व्ययवृद्धिमपरिहार्यतया प्रसक्तां कालान्तरभाव्यायवृद्ध्युपायनिश्चयेन-समर्थयेदपीत्यर्थः ।

इति कौटिलीयार्थशास्त्रव्याख्यायामध्यक्षप्रचारे द्वितीयाधि-
करणे षष्ठोऽध्यायः समाहर्तृसमुदयप्रस्थापनम् ।
आदितः सप्तविंशः ।।

### चाणक्यटीका

एवमिति । अन···एतेनैव···वृद्धिम् आयव्ययशरीरापेक्षया दर्शयेद् इदंमया वर्धितम् इति । व्ययस्य (प्रायं ? ह्रासं) वृथादानादिपरिहारेणायं मया व्ययोऽप्यधिक इति (?) । प्राज्ञ इति न जनपदपीडया संवर्धयेत् । न पुरुषकर्म·· ···व्ययं ह्रासयेत् । (एवं यदि ? विपर्ययमि) ति आयह्रासं दैवाद्युपद्रवजं व्ययबृद्धिं स्वपरचक्रोपद्रवजं साधयेदपनयेदित्यर्थः । प्रज्ञापयेद्वा स्वामिने । अस्मात् कारणादेतदुभयं विपर्यस्तं मिथ्यात्मदोषनिवृत्त्यर्थमिति ।।

इति समाहर्तृसमुदयप्रस्थापनं षष्ठं प्रकरणम् ।
।। षष्ठश्चाध्यायः ।।

# पञ्चविंशं प्रकरणम्

## सप्तमोऽध्यायः ।

## अक्षपटले गाणनिक्याधिकारः ।

[ गणने नियुक्तानां सङ्घीभूय लेखनादिकर्मकरणार्थं
शालानिर्माणविधिः ]

**अक्षपटलं अध्यक्षः प्राङ्मुखमुदङ्मुखं वा विभक्तोपस्थानं निबन्धपुस्तकस्थानं कारयेत् ।**

---

श्रीमूला

अक्षपटले गाणनिक्याधिकार इति सूत्रम् । अक्षपटले अक्षाणां द्रव्याणां पटले गणनपुस्तकलेखनादिकर्मानुष्ठानदेशे, गाणनिक्याधिकारः गाणनिका गणननियुक्तास्तेषां कर्म गाणनिक्यं तस्याधिकारः प्रस्ताव इह क्रियत इति सूत्रार्थः । अर्थोपधाशुद्धा अर्थसम्बद्धे कर्मणि नियोक्तव्या इत्युक्तमधस्तात् । स पुनरर्थव्यापार इदानीमभिधीयत इति सम्बन्धः ।

अक्षेत्यादि । अध्यक्षः आयुक्तप्रधानः अक्षपटलं तत्तदध्यक्षाणां सम्भूयस्वस्वकर्मानुष्ठानदेशं कारयेत् । कीदृशं, प्राङ्मुखमुदङ्मुखं वा, दिग्द्वयोपादानं तन्मुस्य माङ्गलिकत्वद्योतनायातादृशस्य वैपरीत्यद्योतनाय च । पुनः कीदृशं, विभक्तोपस्थानं विभक्तानि उत्तममध्यमाधमानामध्यक्षाणां पृथक्स्थित्यनुकूलतया विभज्य विहितानि उपस्थानान्यन्तःकक्ष्याः यस्मिंस्तत् तथाभूतम् । पुनः कथम्भूतं, निबन्धपुस्तकस्थानं नबकपुस्तकनिवेशाधिष्ठानभूतम् ।

चाणक्यटीका

समाहर्तृसमाहृतस्य समुदयस्य प्रतिग्रहीता सन्निधाता । तेन च गणनानवेक्षितं न प्रतिगृह्यत इति गाणि (? गणना) व्यापार उच्यते । अथवा (क्रयात् पुनः प्रक्रीयमाणां कर्मनित्य ?) आयव्यय नीवीसङ्कलनम्, तस्य अधिक्रिया अधिकारः, तस्य स्थानमक्षपटले गाणानिक्याधिकारः, तस्य तावद् गृहमेवाह अक्षपटलमिति । अक्षाणि [illegible]कोपकरणानि परिच्छेदसाधनतया इन्द्रियाणीव तुलादीनि, तेषां पटलं गृहम् । अध्यक्ष इति सन्निधाने परिज्ञाय सम्यङ् निधातव्यमिति । अथवा तृतीयोऽ(ध्य?)क्ष [illegible]ध्यक्षोऽयमक्षपटलिक इत्याह । उपतिष्ठन्त्यस्मिन् स्वकर्मपरिशुद्धयर्थमध्यक्षा इति [illegible]स्थानं कर्मोद्देशः स्वभाण्डनिक्षेपस्थापना विभक्तं यस्य । निबन्धनं निबन्धो लेख्यं [illegible] यत् पुस्तकस्य स्थानम् ॥

[ तत्र पुस्तकेषु लेखनीयाः अंशाः ]

**तत्र अधिकरणानां सङ्ख्यां, प्रचारसञ्जाताग्रं, कर्मान्तानां द्रव्यप्रयोगे वृद्धिक्षयव्ययप्रयामव्याजीयोगस्थानवेतनविष्टिप्रमाणं। रत्नसारफल्गुकुप्यानां-**

---

श्रीमूला

निबन्धपुस्तकेषु लेखनीयं वस्तुजातमाह—तत्रेति। तत्र अक्षपटले, अधिकरणानां सङ्ख्याप्रचारसञ्जाताग्रं द्रव्योत्पत्तिस्थानानां संख्यां नामतः परिगणनं, प्रचारसञ्जातयोरग्रं च प्रचारो जनपदः सञ्जातं सर्वोत्पत्तिसमुदायः तयोरियत्तां च निबन्धपुस्तकस्थं कारयेत् एतावद्भ्य उत्पत्तिस्थानेभ्य इयत्परिमाणे जनपदे प्रत्यब्दमेतावद् धनमुत्पद्यत इति निबन्धपुस्तके लेखयेदित्यर्थः। कर्मान्तानां द्रव्यप्रयोगे कर्मान्ताः खनिधान्योत्पत्तिभूमिपण्यरूप्यादिकर्मस्थानानि तत्सम्बद्धे द्रव्यप्रयोगे तत्तत्कर्मकरेभ्यो द्रव्याणां विनियोग इत्यर्थः, बृद्धिक्षयव्ययप्रया मव्याजीयोगस्थानवेतनविष्टिप्रमाणं वृद्धि क्षयव्ययादीनामष्टानां प्रमाणं च, निबन्धपुस्तकस्थं करयेत्। तत्र बृद्धिः कुसीदं, क्षयः युग्यपुरुषविनियोगः, व्ययः धान्यहिरण्यविनियोगः, प्रयामः सिद्धधान्यराशिः क्रयादरो वा, व्याजी तुलादण्डसम्बद्धा दण्डव्याजी प्रस्थमानसम्बद्धा मानव्याजी चेत्युभयविधा, योगो द्रव्यापद्रव्यमिश्रणं, स्थानं ग्रामदिकं, वेतनं कर्मकरबृतिः, विष्टिः बलकारितं कर्म। रत्नसारफल्गुकुप्यानां-

चाणक्यटीका

तत्रेति। अक्षपटले स्थिते। अधिक्रियते येषु अध्यक्षास्तेषाम् अधिकरणानामायशरीराणाम्। सङ्ख्याम् एतावत्यस्मिन् राष्ट्रे आयशरीराणि इति। प्रचारम् अस्याधिकृतस्यैतावान् देशो यत्रानेन प्रचरितव्यमिति। सञ्जाताग्रं सञ्जातहिरण्यपरिमाणम् एतावदत्रोत्पद्यत इति। निबन्धपुस्तकस्थं कारयेदिति वक्ष्यमाणेन सम्बन्धः। कर्मान्तानां यथायोगं प्रवृत्तानाम्। द्रव्यप्रमाणम् अस्मिन् कर्मान्ते द्रव्याणीयन्ति लोहादीन्युत्पद्यन्ते। इयन्तः कटकरूपादयः प्रयोगाः। प्रकृतस्य द्रव्यसंस्कारे सति, इयती मूल्यबृद्धिः। सुवर्णादीनां कर्मणि इयान् क्षयः। वक्ष्यति हि—"तप्तकलधौतकयोः काकणिकः सुवर्णे क्षयो देयः (अधि० २ अध्या० १४) इति। कर्मकरणां भक्तादीनामियान् व्ययः, (इयाधियाममायाभ्रि ? इयानधिक आयमान्या) ह्रियमाणस्य। वक्ष्यति हि—"पूर्वयोः (पञ्चपलिकः प्र) यामो मांस (लोह) लवणमणिवर्जम्"—(अधि० २ अध्या० १९) इति। व्याजीति अधिकलाभः। तद्यथा—"रूपिकमष्टकं शतं व्याजीति ब्रूयात्।" योगो द्रव्यसंयोग इत्यर्थः। तद्यथा—"तीक्ष्णकाकणी रूप्यद्विगुणो रागप्रक्षेपः" (अधि० २ अध्या० १४) इति। इयन्ति कर्मान्तानां स्थानानि। इयदस्मिन् कर्मणि वेतनं भृतिः। इयद्भिर्विष्टिभिरिदं कर्म क्रियत इति व्यवस्था, न विक्रमार्थमेतत्। (एकदेशंविध ? एवंविधं) निबन्धपुस्तकस्थं कारयोदिति सम्बन्धः।

**अर्घप्रतिवर्णकप्रतिमानमानोन्मानावमानभाण्डं, देशग्रामजातिकुलसङ्घानां धर्मव्यवहारचरित्रसंस्थानं, राजोपजीविनां प्रग्रहप्रदेशभोगपरिहारभक्तवेतनलाभं, राज्ञश्च पत्नीपुत्राणां रत्नभूमिलाभं, निर्देशौत्पातिकप्रतीकारलाभं,**

---

श्रीमूला

अर्घप्रतिवर्णकप्रतिमानमानोन्मानभाण्डं रत्नादीनां चतुर्णामर्घादिषट्कं, निबन्धपुस्तकस्थं कारयेत्। तत्र अर्घ मूल्यं, प्रतिवर्णको वर्णगुणः, प्रतिमानं माषगुञ्जादि, मानम् आकृतिपरिच्छेदः, उन्मानमूर्ध्वमानं, भाण्डं मूलधनम्। देशग्रामजातिकुलसङ्घानां देशः पूर्वदेशमध्यमदेशादिः, ग्रामः प्रसिद्धः, जातिर्ब्राह्मणादिः, कुलं गोत्रं सङ्घगणः एषां पञ्चानां, धर्मव्यवहारचारित्रसंस्थानं धर्मः यजनादिः स्मृत्युक्तः, व्यवहारो दायभागः, चारित्रं समुदाचारो देशादिप्रतिनियतो मातुलकन्यापरिणयादिलक्षणः तेषां संस्थानमविचालनं यद्वा स्वरूपं, निबन्धपुस्तकस्थं कारयेत् राजोपजीविनां, प्रग्रहप्रदेशभोगपरिहारभक्तवेतनलाभं प्रग्रहः पूजा मन्त्रिपुरोहितादीन् प्रति प्रत्युद्गमनबहुमानः, प्रदेशो वासस्थानं, भोग उपायनं परिहारः, करमुक्तिः, भक्तम् अश्वगजपदात्यभ्यवहारः, वेतनं भृतिः इत्येषां लाभं, निबन्धपुस्तकस्थं कारयेत्। राज्ञः पत्नीपुत्राणां पत्नीनां पुत्राणञ्च-रत्नभूमिः लाभं तदुपयुज्यमानानां रत्नानां भूमीनां स्थानीयादीनांच लाभं निबन्धपुस्तकस्थं कारयेत् निर्देशौत्पादिकप्रतीकारलाभं निर्देशं राजतत्पत्नीपुत्राणां नित्यदेयातिरिक्तं देयं सामन्तव्यपदेशाख्यम् औत्पादिकलाभम् उत्सवादिभवं धनलाभं प्रतीकारलाभं व्याध्यादिप्रशमननिमित्तं धनलाभं च, निबन्धपुस्तकस्थं कारयेत्। औत्पत्तिकेति

चाणक्यटीका

रत्नसारफल्गुकुप्यानां प्रत्येकदिवसवार्तया अर्घविशेषम्। यथासाम्भवं चैषां प्रतिवर्णकं वर्णमानकम्। मानभाण्डं प्रस्थादि काष्ठमयम्। प्रतिमानभाण्डम् अयोमयादि। उन्मानभाण्डं तुला। अवमानभाण्डमपि तन्त्रादिपरिच्छेदार्थम्। रज्जवः शलाकाः

तथा देशादीनां प्रत्येकं धर्मादिचतुष्टयम्। धर्म आचारः। यथा—पण्यादीनां नागरागममुद्दिश्य आवरणे सर्वातिथ्यम् (?)। व्यवहारः साक्षिभिर्विशिष्टैर्निर्णयो धर्मस्थीयकृतप्रपञ्चः यथा—पण्यापण्यादीनामेवं कर्त्तव्यम्, नागरागपुत्रिकापुत्राः औरसेन समानदायादाः। चरित्रं चरितम्। यथा—वन्ध्यानामेव राजगृहे कुटुम्बिगृहं प्रवेष्टव्यम् (?)। संस्थानं संस्थितिः राजाज्ञा, अत्रेदं कर्त्तव्यम् इदं न कर्त्तव्यमिति। जातिर्ब्राह्मणादिः। कुलं गोत्रम् माठरादिः। सङ्घः लिच्छविप्रभृतीनामिति।

राजोपजीविनां मन्त्र्यादीनाम्। प्रग्रहः प्रत्युत्थानादिपूजा। प्रदेशः पारितोषिकदानम्, यथार्हं वा समाविप्रकृष्टस्थानम्। भोगो ग्रामक्षेत्रादिः। परिहारः तस्यानादानम्। भक्तं दिवसानुवृत्तम्। वेतनं प्रतिवर्षं भृतिः। एषां वा यथोचितानुष्ठानार्थम्।

**मित्रामित्राणां च सन्धिविक्रमप्रदानादानं, निबन्धपुस्तकस्थं कारयेत् ।**

**ततः सर्वाधिकरणानां करणीयं सिद्धं शेषं आयव्ययौ नीवीं उपस्थानं प्रचारचरित्रसंस्थानं च निबन्धेन प्रयच्छेत् ॥**

[ जानमतिकृतिशक्त्याद्यानुगुण्येन अध्यक्षपदवीनियोजनम्,
कुपथप्रवृत्ताध्यक्षनष्टद्रव्यभागिनां निर्देशश्च ]

**उत्तममध्यमावरेषु च कर्मसु तज्जातिकमध्यक्षं कुर्यात्; सामुदायिकेष्व-**

---

श्रीमूला

पाठे भूकम्पनिर्घाताद्युत्पातदोषशान्त्यर्थं धनलाभमित्यर्थो बोद्धव्यः। मित्रामित्राणां, सन्धिविक्रमप्रदानादानं च मित्रेषु सन्धाय प्रदीयमानं धनम् अमित्रेषु विक्रम्य विगृह्य आदीयमानं धनं च निबन्धपुस्तकस्थं कारयेत् ।

तत इति। सर्वाधिकरणानां सर्वेषां कर्मस्थानानाम् अर्थात् तदध्यक्षाणां, सिद्धं शेषम् आयव्ययौ नीवीं करणीयादिष्टकं पूर्वाध्यायोक्तलक्षणम्, उपस्थानं कायस्थानां स्वस्वकार्यदर्शनार्थसन्निधानकालं, प्रचारचरित्रसंस्थानं च प्रचारो जनपदः चरित्रमाचारः संस्थानं पूर्वस्थितिरित्येतत्त्रिकं च, निबन्धेन प्रयच्छेत् निबन्धपुस्तके दद्यात् ।

उत्तमेत्यादि। उत्तमध्यमावरेषु कर्मसु तज्जातिकं तदनुरूपम्, अध्यक्षं कुर्यात् ।

चाणक्यटीका

रत्नलाभमिति नियमार्थं प्राधान्यात्, वस्त्रादिलाभनिब ( द्धे ? न्धे ) तु कामचारः। राज्ञः इत्यसमासकरणं भक्तवेतनलाभनिबन्धार्थम्। इदं क्रियतामिदं ( नी ? दी ) यतामिति राजादेशो निर्देशः तदनुस्मरणार्थम्। औत्पातिकं तदादिष्टमनादिष्टं वा सुखपरिबोधनार्थम्। यथा—प्रवृत्ते कर्मणि उपनिपतितापत्प्रतीकारार्थम् इदमस्मिन् कालेव्य ( य ? यि ) मिति प्रतीकारलाभम् आत्मविशुद्ध्यर्थम्। तथा मित्रस्य सन्धा ( व ) पि यद्दत्तम् इयद्वाऽस्मादात्तम्। एवं विग्रहकार्यार्थमिदमुपेक्षया दत्तम् एतदुपेक्षया वा अस्मादियदात्तमिति। तथा शत्रोः स ( काशा ) दपि इयद्दत्तमिदमात्तम्, विग्रहे युद्धे इयद्रक्षाया अस्मै दत्तम्, अस्माद्विलोपादिना इयदात्तमिति निबन्धक्लृप्तं कारयेत् ।

तत इति निबन्धपुस्तकादुद्धृत्य। सर्वाधिकरणानामायशरीराणाम्। उपस्थानं सङ्कलनकालं प्राग् आषाढ्या युष्माभिरुपस्थातव्यमिति। निबन्धनेनेति-पत्रशासनेन। प्रयच्छेद् अर्थात् सर्वाधिकृतेभ्य इति। प्रचारसंस्थानयोः करणीयान्तर्गतत्वात् पुनस्तद्ग्रहणं प्राधान्यख्यापनार्थम्। विशेषेण प्रचारसंस्थाने प्रयच्छेदित्यर्थः। वक्ष्यति—"प्रचारचारित्रसंस्थानान्यनुपलभमानो हि प्रकृतः समुदयमज्ञानेन परिहापयति" इति ।

**वक्लृप्तिकं व्यमुपहृत्य न राजाऽनुतप्येत । सहग्राहिणः प्रतिभुवः कर्मोपजीविनः पुत्राः भ्रातरो भार्या दुहितरो भृत्याश्चास्य कर्मच्छेदं वहेयुः**

[ वेतनदानोपयोगिसंवत्सरादिविभागः ]

**त्रिशतं चतुःपञ्चाशच्चाहोरात्राणां कर्मसंवत्सरः तमाषाढीपर्यवसानं ऊनं पूर्णं वा दद्यात् । करणाधिष्ठितमधिमासकं कुर्यात् ॥**

---

श्रीमूला

तत्रोत्तमं कर्म धनसङ्ग्रहणं भाण्डागाराधिकारश्च मध्यमं कोष्ठागारायुधागारादिगतं कर्म, अवरं सुरासूनाद्यध्यक्षकर्म । तज्जातिकानां बहुत्वे व्यवस्थार्थमाह—सामुदायिकेष्विति । सामुदायिकेषु एककर्मसाधकसमुदायान्तर्गतेषु बहुषु कर्मकरेषु मध्ये, अवक्लृप्तिकम् अववलृप्तिर्नाम असावदः कर्माध्यक्षयितुं क्षम इति नैपुणगुणकीर्त्युपलम्भमूला संभावना साऽस्मिन्नस्तीत्यववलृप्तिकस्तं यथोक्तसम्भावनाविषयमित्यर्थः । अयमभिप्रायः—कर्मकरेषु नैपुणयुक्तं समनैपुणेषु गुणयुक्तं समगुणेषु च कीर्तियुक्तमध्यक्षं कुर्यादिति । अववलृप्तिकमपि किं सर्वमेवाध्यक्षं कुर्यात्, नेत्याह—यमुपहृत्य न राजानुतप्येति । राजा, यम् उपहृत्य अपराधवशाद् दण्डयित्वा, नानुतप्येत पश्चात्तप्तो न भवेत्, तं तथाविधमवक्लृप्तिकमध्यक्षं कुर्यादिति सम्बन्धः । एतेन ब्राह्मणात्मबन्धुमहासम्बन्धिनां व्युदासः सिद्धः ।

अपचरदध्यक्षविषयं सामान्यन्यायमाह—सहग्राहिण इति । अस्य कर्मच्छेदम् अनेनाध्यक्षेणादत्तं देयशेषं, सहग्राहिणः सहहर्तारः, प्रतिभुवो लग्नकाः, कर्मोपजीविनः कर्मकराः सङ्ख्यायकाः, पुत्राः, भ्रातरः, भार्याः, दुहितरः, भृत्याश्च इत्येतेऽष्टौ, वहेयुः प्रापयेयुः पूर्वपूर्वाभावे यथोत्तरं दद्युरित्यर्थः ।

त्रिशतमिति । अहोरात्राणां त्रिशतं चतुष्पञ्चाशच्च कर्मसंवत्सरः चतुष्पञ्चा-इन्न (ममध्य) माधमेति । सन्निधातृसमाहर्त्रादिविषयमुत्तमं कर्म महाफलत्वात् ।

चाणक्यटीका

कुप्यासुधागारादिविषयं मध्यमफलत्वात् । सुरासूनादिविषयमल्पफलत्वात् तज्जातिकमिति जातिरेव जातिकं तदस्यास्तीति (तज्) जातिकं तत्प्रकारमुत्तमादिकम् । समग्रपादहीनार्धामात्यसम्पदुपेतमित्यर्थः । सामुदायकेष्विति । समुदयप्रयोजनेष्वायस्थानेषु । अवक्लृप्तिकमिति (अवक्लृप्तम्) आयच्छेदपूरणं तदस्यास्तीति न निःस्वमित्यर्थः । अपि च तथाविधमप्यपराधे सति यमुपहृत्य शारीरेण हैरण्येन वा दण्डेन, स्नेहात् तत्पक्षप्रक्षेपाद्वा दुष्कृतमिदं मयेति (राजा) नानुतप्येत ॥

सहग्राहिणो यैः सम्भूय कर्म कृतम् । प्रतिभुवो लग्नकाद् यत् कर्म कृतम् । कर्मोपजीविनो यैस्तदेव कर्मोपजीव्यते सङ्ख्यायकलेखकैः । अस्येति अध्यक्षस्य उपरतस्य प्रोषितस्य वा । कर्मच्छेदमिति कर्मजफलस्य अर्धकृतस्य कर्मणः छेदं वहेयुः पूर्वपूर्वाभावे ।

[ चारद्वारा देशवृत्तान्तज्ञानस्यावश्यकता, तदभावे
धनहानिः तत्र हेत्वष्टकनिर्देशश्च ]

**अपसर्पाधिष्ठितं च प्रचारम्। प्रचारचरित्रसंस्थानान्यनुपलभमानो हि प्रकृतः समुदयं अज्ञानेन परिहापयति, उत्थानक्लेशासहत्वादालस्येन, शब्दादिष्विन्द्रियार्थेषु प्रमादेन, सङ्क्रोशाधर्मानर्थभीरुर्भयेन, कार्यार्थिष्वनु-**

---

श्रीमूला

शदधिकत्रिशतसङ्ख्याका दिवसाः सर्वकर्मविषय एकः संवत्सरो गण्यते। तत्र दिवसषट्कोनता ऋतावृतावेकदिवसह्रासाद् बोद्धव्या। तं कर्मसंवत्सरम् आषाढीपर्यवसानं दद्यात् आषाढमासपूर्णिमान्तम् अर्थाच्छ्रावण मासोपक्रमं कल्पयेत्। ऊनं पूर्णं वा दद्यात् तं चाध्यक्षस्यान्तरालकालापगमे तावत्पर्यन्तमपूर्णं गणयेत्, पूर्णकालस्थितिपक्षे तु पूर्णं गणयेत् कर्मभृतिशोधनादावित्यर्थः। अधिमासकं करणाधिष्ठितं गणकाधिष्ठितं गणकद्वारेण गणितं कुर्यात्। प्रचारं च जनपदं च अपसर्पाधिष्ठितं चारावेक्षितं, कुर्यात्।

अपसर्पाप्रणिधाने दोषमाह—प्रचारेत्यादि। प्रचारचरित्रसंस्थानानि देशवृत्तान्तान् तत्पूर्वास्थितीश्च, अनुपलभमानः अपसर्पद्वारेणाविजानन्, प्रकृतः अध्यक्षः, अज्ञानेन हेतुना, समुदयं धनोत्पत्तिं परिहापयति परिहीयमानं प्रयोजयति। पुनः केनकेन हेतुनेत्येतद् उत्थानेत्यादिनाऽभिधीयते। उत्थानक्लेशासहत्वादालस्येन उद्यमखेदासहनत्वनिमित्तयाऽलसतया, शब्दादिषु इन्द्रियार्थेषु प्रमादेन गीतकामिन्यादिषु विषयेष्वनवधानप्रवृत्त्या संङ्क्रोशाधर्मानर्थभीरुर्भयेन निन्दाधर्मलोपानर्थोपनिपातशङ्कित्वमूलेन साध्वसेन, कार्यार्थिषु अनुग्रहबुद्धिः कामेन कार्यार्थिनोऽनुग्रहीष्यामीत्येवंबुद्धिमूलया

चाणक्यटीका

कर्मसंवत्सर इति अधिकृतेन अनेन कालेन कर्म समापनीयं कर्मफलं चोपनेयमिति। ऊनमिति। कतिचिन्मासान् कर्म कृत्वा अवसन्नेऽध्यक्षे सहग्राहिभिः शेषान् मासान् आषाढीं यावत् शोधयितव्यं युष्माभिरिति परिभाष्य दद्यात्। पूर्णं वेति आषाढ्याः परतोऽन्यस्याध्यक्षस्य तस्यैवाषाढीमर्यादामर्पयेत्। नान्तराले दद्यात् आददीत वा। अन्यथालूनविशीर्णं कर्म स्यात्। करणाधिष्ठितम् (अधिमासं) कुर्याद् अधिकायव्ययहेतुत्वादस्य॥

अपसर्पाः कण्टकशोधनोक्ताः सिद्धप्रव्रजितादयः। तैरधिष्ठितं प्रचारं च कुर्यात्। ते ह्यध्यक्षणां समुदयहापनकारणं ज्ञास्यन्ति तानि चाज्ञानादीनि वक्ष्यमाणानि। (यत्न ?) प्रचारचरित्रेति। प्रकृतोऽध्यक्षः परिहापयति। उत्थानमुद्योगः तत्र क्लेशं शीतादिदुःखं न सहत इति। (इन्द्रियार्येषु) (प्रसक्तमनात्मतौत्सुक्यम्) (?) सङ्क्रोशः प्रजाभ्यो दण्डकराहरणे तत्प्रकोपाच्चानर्थो विनाशोऽधर्मश्च मे मा भूदिति तेभ्यो भीरुः। व्यवहारसन्नेष्वपि मैत्र्यादिना अनुग्रहं प्रति बुद्धिर्यस्य न कामेनेति इच्छया।

**ग्रहबुद्धिः कामेन, हिंसाबुद्धिः कोपेन, विद्याद्रव्यवल्लभापाश्रयाद्दर्पेण, तुलामानतर्कगणिकान्तरोपधानाल्लोभेन ।**

[ एवं धनहानिसम्भवे मतभेदेन दण्डनिर्देशः ]

**"तेषाम् आनुपूर्व्या यावानर्थोपघातः तावानेकोत्तरो दण्डः" इति मानवाः । सर्वत्राष्टगुणः इति पाराशराः । दशगुणः इति बार्हस्पत्याः । विंशतिगुणः इत्यौशनसाः । यथाऽपराधम् इति कौटल्यः ।**

---

श्रीमूला

म्वेच्छया, हिंसाबुद्धिः कोपेन नृशंसत्वनिमित्तेन क्रोधेन, विद्याद्रव्यवल्लभापाश्रयाद् दर्पेण विद्याद्रव्यराजवल्लभव्यपाश्रयनिमित्तेन मदेन, तुलामानतर्कगणिकान्तरोपधानाल्लोभेन तुलान्तरेण उन्मानदण्डविशेषेण मानान्तरेण प्रस्थादिमानसाधनविशेषेण तर्कान्तरेण संभावनाविशेषेण गणिकान्तरेण गणनविशेषेण च यदुपधानं छलनं तत्प्रयोजकेन लोभेनेत्यर्थः । तदेवमज्ञानालस्यप्रमादभयकामकोपदर्पलोभात्मका अष्टौ दोषाः समुदयपरिहापननिमितित्तभूता वेदितव्याः ।

परिहापितसमुदयानां दण्डचिन्तायामाह—तेषामिति तेषाम् उक्तदोषयुक्तानामष्टानाम्, आनुपूर्व्या क्रमेण, यावान् अर्थोपघातः तत्तदोषवशादुपहतो यत्परिमाणोऽर्थः, तावान् एकोत्तरः तत्परिमाण एकादिगुणाधिकोऽर्थः, दण्ड इति, मानवाः मनुशिष्याः, वदन्तीति शेषः । सर्वेषु दोषेष्वविशेपादष्टगुण इति पाराशराः, दशगुण इति बार्हस्पत्याः, विंशतिगुण इति शुक्रशिष्याश्च मन्यन्त इत्याह—सर्वत्रेत्यादि । स्वमतमाह—यथेत्यादि । यथापराधम् अपराधानुसारेण अपराधमहत्वाल्पत्वादिपर्यालोचनया दण्डः कल्पनीय इत्यभिप्रायः ।

चाणक्यटीका

वैरात् कार्यार्थिषु हिंसां प्रति बुद्धिर्यस्य स तेषां वर्णोपघातेन प्रवृत्तः कोपेन हापयति । विद्यापाश्रयान्मत्तोऽन्यः को विद्वानिति । द्रव्याश्रयान्मत्तोऽन्यः (को धनी) कुपितमपि राजानं प्रसादयिष्यामीति । वल्लभापाश्रयाद् युवराजस्य लाभेन न तस्माद् बिभेमीति दर्पेण राजार्थं प्रति नाद्रियते । तुलामानान्तरोपधानात् महत्या तुलया गृहीत्वा अल्पयोपनीतार्थः । मानेन कर्मान्तरोपधानात् । तर्कपरिच्छेद्यं महार्हं क्रीत्वा अन्यत् तुच्छकर्मपरिच्छेद्यमुपनयति । गणिकान्तरोपधानात् प्रभूतस्याल्पां संख्यां निदधाति, अन्यां चोपनीय प्रभूतं लिखति ॥

तेषामिति अज्ञानादिभिः हापयताम् । आनूपूर्व्येति अज्ञानाद् यावानर्थो हापितस्तेन स तावन्तमेव दद्यात् । आलस्यादिभिः द्वौ त्रीन् चतुरः पञ्च षट् सप्त

[ अध्यक्षाणां वार्षिकगणितप्रदर्शनकालः, कपटालापनिषेधः,
न्यूनाधिकभावदर्शने व्यवस्था च ]

**गाणनिक्यान्याषाढीमागच्छेयुः । आगतानां समुद्रपुस्तभाण्डनीवीकानामेकत्र सम्भाषावरोधं कारयेत् । आयव्ययनीवीनां अग्राणि श्रुत्वा नीवीं**

---

चाणक्यटीका

अष्टावितिक्रमेण दण्ड्या इति मानवानामभिप्रायः । अज्ञानं नाम विनियोक्तुरपि ईदृशमधिकुर्वतः समानो दोषः, अतस्तदप्युच्यते दोषवादः—

प्रमादाज्ञानदैवादिभिस्तं शिरसि मार्जता ।
दोषैः शोधयता दोषं मूर्खो मूर्खेण वध्यते ॥ इति ।

तस्मादपि समर्थः सन्नालस्येन हापयन्नधिकदोषः । तस्मादपि निश्शङ्कतया लाभेषु प्रमाद्य (न्), ततोऽपि भोरुरसौ बहु नाशयति, ततोऽपि कामरोषप्रवणौ क्रमेणाधिकदोषत्वादवसादकौ, दर्पस्त्वेषां निग्रहमिति (?) स एव लुब्धस्तूपात्तराजजनपदार्थं दापनीय इति अष्टगुण इति यस्मादज्ञानविजृम्भितान्येवैतानि किमत्र विशेषेणेति । यद्येवं दशगुण इति बहिस्पत्याः । पुनरेवं मा कार्षीरिति विंशतिगुण इति औशनसाः । यथापराधमिति यद्यप्येषाम् अज्ञानप्रभवत्वं तथापि न हेत्वनपेक्षो दण्डो न्याय्यः । किंतर्हि, यैरेव हेतुभिरपराधं कृतवन्तः तदनुरूपो युक्तः । तद्यथा— अज्ञानादिभिः रत्नमपहा (?) मुपधापयत उत्तमः साहसदण्डः, मध्यमसारं मध्यमः, कुप्यादिकमल्प इति । एवं नियमे तद्द्रव्यप्रत्यानयनं च कृतं भवतीति ॥

श्रीमूला

अथाध्यक्षाणां वार्षिकगणितप्रदर्शनकाल उच्यते—गाणनिक्यानीति । गाणनिक्यानि गणनाः अर्थात् तत्प्रदर्शकाः अध्यक्षाः आषाढीम् आगच्छेयुः गणनप्रदर्शनार्थमाषाढमासि आगच्छेयुः । समुद्रपुस्तभाण्डनीवीकानां समुद्रं मुद्रायुक्तं पुस्तभाण्डं निबन्धपुस्तकपेटी नीवी व्ययितशिष्टधनं च येषां तथाविधानाम् आगतानाम् अध्यक्षाणाम्, एकत्रासम्भाषावरोधं पुस्तकदर्शनस्थलेऽन्योन्यमन्त्रणशून्यमवरुध्य रक्षणं कारयेत् । आयव्ययनीवीनाम्, अग्राणि इयत्ताः, श्रुत्वा मुखत आकर्ण्य, नीवीम्,

चाणक्यटीका

यदर्थोऽयं प्रपञ्चः सेदानीं गणनोच्यते । गाणनिक्यानीति । तत्प्रधानत्वाद् गणका अपि कर्मशब्देनोक्ताः । आषाढीमिति सहचरितमुभयतः पक्षम् । न चैकस्मिन्नहनि सर्वा गणनास्तिष्ठन्ति सङ्कलनार्थम् । आगच्छेयुरिति । अनया क्रियया नित्यसम्बन्धा द्वितीया । आगतानामिति आयव्ययनिबन्धपुस्तकानां भाण्डं समुद्रं कृत्वा (निषि ? विवि) च्य एकत्र स्थाने स्थितानां असंमन्त्रणविशिष्टम् अवरोधं कारयेत् । अन्यथा हि एवमस्माभिरेकमतिभिर्मन्त्रयितव्यमिति संवनार्थमित्ययं दोषः स्यात् । तत आयादीनामग्राणि समुदयपिण्डप्रमाणानि श्रुत्वा । तद्यथा—दशसहस्राण्यायः, तस्मात्

**अवहारयेत् । यच्चाग्रात् आयस्य अन्तरवर्णे नीव्याः वर्धेत, व्ययस्य वा यत्प रिहापयेत, तदष्टगुणमध्यक्षं दापयेत् । विपर्यये तमेव प्रति स्यात् ॥**

---

### श्रीमूला

अवहारयेत् अपनाययेत् । यच्चेति । नीव्याः, अन्तरवर्णे व्ययितावशेषस्यावहारितस्य प्रकारवर्णनपुस्तके, यद् धनम्, आयस्याग्राद् अध्यक्षोक्ताद्, वर्धेत अधिकतया विभाव्येत, व्ययस्य वा अग्राद् अध्यक्षोक्ताद्, यद् धनं, परिहापयेद परिहीणं कुर्यात्, तद् अष्टगुणम्, अध्यक्षं दापयेद् अध्यक्षसकाशाद् गृह्णीयादित्यर्थः । विपर्यय इति । आयस्य यथाप्राप्तादधिकतया लेखनं व्ययस्य यथाकृतादूनतया लेखनं व्ययितावशेषस्य यथास्थितादाधिक्येन लेखनं वा विपर्ययः तस्मिन् पुस्तकदृष्टे सति, तमेव प्रति स्यात् अधिकमध्यक्षस्यैव भागः अध्यक्षायैव देयं नतु तस्य दण्डः कश्चिदित्यर्थः । 'लक्षणेत्थम्भूते' त्यादिना भागे प्रतेः कर्मप्रवचनीयता ।

### चाणक्यटीका

त्रीणि व्ययः । उभयपरिशुद्धोऽयं सप्तसहस्रप्रमाणानि इति । ततो नीवीं स्वमनुष्यै-गात्मसात् कुर्यात् तत उत्तरकालं परिगणयेदिति वक्ष्यमाणात् गम्यते । तच्चाह—यच्चेति । यदायस्य दशसहस्राग्रा सङ्ख्या तस्माद् अन्तरवर्णे प्रतिदैवसिकचूर्णायिलेख्ये पिण्डयमाने वर्धेत । यदि द्वादशसहस्राणीति पूर्णायः स्यात्, तत्रापि सहस्रत्रये व्ययिते वर्धिताधिकेन सहैव यदि नवसहस्राणीत्युपनीता तेन तदास्य न दोष इत्याह नीव्या इति । यत्प्रमाणा नीवी ततोऽपि वर्धेत । अपरे नीव्यामित्यधिकरणार्थं योजयन्ति । व्ययस्य वा अग्रादन्तरवर्णे यदि (त्) परिहापयेत् परिहीयेतेति वक्तव्ये कर्तृनिर्देशः स्वा-तन्त्र्यख्यापनार्थः । व्ययपरिहाणिं स्वातन्त्र्ययुक्तः अध्यक्षः करोति आयवृद्धिं यस्त्वन्या-नवधानजेति (?) । तद् आयाधिकं व्ययाधिकं वा अष्टगुणमध्यक्षं दापयेत् । अपरः कल्पः यच्चाग्रात्तस्य नीव्या आयान्तरपरिपणे वर्धेत तस्यायान्तरवर्णे वा हापयेदिति शेषं पूर्ववत् । विपर्यय इति । आयान्तरपरिपणे हानान्नवसहस्राण्याथान्तरवर्णे स्युः । आयान्तरपरिपणे वृद्धौ वा त्रिसाहस्रे व्ययाचयारि (?) व्ययान्तरपरिपणे स्युः । तदे-वायाग्रं च तं प्रति स्यात् प्रमाणम् अध्यक्षो न मिथ्यावादीति (न ?) दण्डयितव्यः । लेख्यप्रमादोऽयमस्येत्युपेक्षणीयमिति ॥

अन्यस्त्वाह—प्रमादेऽपि दण्डः स्यादिति । नैतद्युक्तम् । अयन्त्वर्थः विपर्यये तमेव प्रतीति आयान्तरवर्णे हापितम् 'बहुसिद्धमल्पं कृतम्' इति । व्ययान्तरवर्णे वर्द्धित-त्वादल्पदण्डं ? मल्पसिद्धं बहु) कृतमिति हरणोपायशङ्कया दण्डनीयः स्याद् अष्टगुणमिति ।

[ अकाले, प्रदर्शनीयोपकरणशून्यतया चागतानां त्यक्तस्वस्वकर्मणोः
गणककार्मिकयोश्च दण्डः ]

**यथाकालमनागतानां अपुस्तनीविकानां वा देयदशबन्धो दण्डः। कार्मिके चोपस्थिते कारणिकस्य अप्रतिबध्नतः पूर्वस्साहसदण्डः, विपर्यये कार्मिकस्य द्विगुणः ॥**

[ आयव्यादिपट्टिकायाः सर्वज्ञेयता अपप्रचारकर्तॄणां दण्डश्च ]

**प्रचारसमं महामात्रास्समग्राः श्रावयेयुः। अविषममन्त्रः पृथग्भूतो मिथ्यावादी चैषामुत्तमदण्डं दद्यात् ॥**

---

श्रीमूला

क्लृप्तकालेऽनागतानां पुस्तकनीवीविरहेणागतानां चाध्यक्षाणां देयदशगुणो दण्ड इत्याह—यथाकालमित्यादि। कार्मिक इति। कार्मिके अध्यक्षे उपस्थिते पुस्तदर्शनार्थं यथाकालं सन्निहिते सति। अप्रतिबध्नतः अप्रतियुज्यमानस्य असम्बध्नतः, कारणिकस्य गणनाधिकृतस्य, पूर्वः साहसदण्डः। विपर्यये अप्रतियोगदोषे कार्मिकगते सतीत्यर्थः, कार्मिकस्य द्विगुणः पूर्वः साहसदण्डः।

प्रचारेत्यादि। महामात्राः राज्ञः प्रधानभूताः कर्मसहायाः, समग्राः, अविषममात्राः अविषमाः परस्परानुकूलाः प्रवृत्तीः सङ्गता आयव्ययनीवीयत्ता वा प्रचारसमं श्रावयेयुः प्रचारो जनपदः तात्स्थ्याज्जानपदाः तत्साधारणं यथा भवति तथा श्रावयेयुः, जानपदान् सदसि मेलयित्वा बोधयेयुरित्यर्थः। एषां महामात्राणां मध्ये, पृथग्भूतः विसंवादी, मिथ्यावादी च, उत्तमदण्डम् उत्तमसाहसदण्डं, दद्यात्।

चाणक्यटीका

यथाकालमिति आषाढीम्। अपुस्तभाण्डनीवीकानां वेति। तदानयने कालं हर्तुं यथाकालमिति। यथाकालम् पिच्छिलविमोक्षाभिप्रायेणागतानां वा। देयदशबन्ध इति आयस्य यद् विशुद्धा नीवी देया तस्य दशभागः सप्तसहस्रेषु सप्तशतानि। कार्मिक इति कर्मनियुक्ते समाहर्त्रादौ यथाकालमागते। कारणिकस्य करणनियुक्तस्या (क्षा ?) क्षपटलिकस्य द्वेषानादरादिभिः कलनापूर्वकमुत्तरवर्णेऽनुपनिबध्नतः। विपर्यय इति कारणिके करणार्थमुपस्थिते सन्निहितस्यापि कार्मिकस्य नोव्यपलेपे मद्यप्रसभादिभिः परिशोधयतः (?)।

प्रचारसममिति प्रचारे समवृत्तिमिच्छाद्वेषरहितं किञ्चिद् विद्वेषादिभ्यो द्विकमादाय (?) सम्प्रियाप्रियत्वोपेक्षयापि राजार्थं पूरयेदेवेति। अथवा प्रचारसमं युक्तं न तदनुरोधाद् राजार्थहापितम् न रा (जा) र्थोपरोधात् प्रचाराद्रोहिणमीदृशं महामात्राः श्रावयेयुः। अर्थाद् राज्ञ इति गम्यते। ते हि साक्षिभूताः सर्वकार्येष्ववतिष्ठन्ते।

[ उपनेतव्यद्रव्यानुपनेतॄणां निरीक्षणीयकालः, ततः परीक्ष्य दण्डश्च ]

**अकृताहोरूपहरं मासमाकाङ्क्षेत । मासादूर्ध्वं मासद्विशतोत्तरं दण्डं दद्यात् ॥ अल्पशेषलेख्यनीवीकं पञ्चरात्रमाकाङ्क्षेत । ततः परं कोशपूर्वमहोरूपहरं धर्मव्यवहारचरित्रसंस्थानसङ्कलननिर्वर्तनानुमानचारप्रयोगैरवेक्षेत ।**

---

श्रीमूला

अकृतेत्यादि । अकृताहोरूपहरं कृते क्लृप्ते अहोरूपे दिवसे हर्तव्यं यो हरत्युपनति स कृताहोरूपहरः उपहर्तव्यद्रव्ययथाकालोपहर्ता स न भवतीत्यकृताहोरूपहरः तं, तथाविधमध्यक्षं, मासम् आकाङ्क्षेत प्रतीक्षेत, हर्तव्यहरणार्थमेकमासावधिं तस्मै दद्यादित्यर्थः । मासावधावहर्तुर्दण्डमाह—मासादिति । मासाद् उर्ध्वम् अनुपहरणे, मासद्विशतोत्तरं मासस्यैकैकस्य द्वे शते उत्तरे यस्य तं तथाभूतं, दण्डं पूर्वोक्तं, दद्यात् । अल्पशेषार्पणीयनीवीके विशेषमाह—अल्पेत्यादि । अल्पशेषनीवीकं, ततः परं मासात् परतः, पञ्चरात्रं रात्रिपञ्चकमधिकम्, आकाङ्क्षेत । तत उर्ध्वमप्यनुपहरणे दण्डं दद्यादित्यर्थंसिद्धम् । कोशेत्यादि । कोशपूर्वम् अहोरूपहरम् अर्पणीयनीवीधनपुरस्सरं क्लृप्तदिवसपुस्तकोपनेतारम् अध्यक्षं, धर्मव्यवहारचरित्रसंस्थानसङ्कलनर्निर्वर्तनानुमानचारप्रयोगैः अवेक्षेत धर्मप्रयोगादिभिरष्टभिः प्रकारैः परीक्षेत—किमसौ वस्तुत एव सद्वृत्तः उत दाम्भिक इति । तत्र धर्मः स्मृतिविहितः, व्यवहारः पूर्वपक्षोत्तरपक्षलक्षणः, चरित्रं लोकाचारः संस्थानं पूर्वस्थितिः, सङ्कलनं सर्वधनैकीकारगणना, निर्वर्तनं कार्यनिष्पत्तिः, अनुमानं कृतेनाकृताभ्यूहः, चारा गूढपुरुषाः ।

चाणक्यटीका

समग्रा यावद्भिर्विचारितम् । अविषममन्त्राः सम्प्रत्ययहेतुत्वात् । एषामिति महामात्राणाम् । पृथग्भूतः अन्योऽन्यथा श्रावयेत्, अन्यथा श्रावयन्नपि यदि प्रतिपादयेन्न दोषः । मिथ्यावादी च यदि स्यात्, उत्तममिति कार्मिककारणिकानां मिथ्यादूषणात् ॥

अकृताहोरूपमिति अहरहरुत्थितानां रूपाणाम् अङ्गानां (? अक्षाणां)[1] यः समाहर्ता स येनाविश्वासेन अन्यो न कृतः (?) तं राजाधीनबहुकार्यतया व्यग्रम् । अथवा अहोरूपाणि प्रतिदिवसोत्थितानि कर्माणि तानि हरति यत् पिण्डपत्रं न तावात् कृतं येन । अहन्यहन्युत्थितस्य ह्यायव्ययरूपस्य विप्रकीर्णस्य सङ्कलनेनान्यो लेख्यः क्रियत इति । मासद्विशतोत्तरमिति मासे मासे द्वे शते उत्तरे यस्य दण्डस्येति ॥

अल्पशेषलेख्यनीवीकमिति अल्पशेषं लेख्यम् अल्पशेषा च नीवी साम्या यस्य तं मासात् पञ्चरात्रमित्यर्थः । ततः परमिति एवमुपेक्ष्य पञ्चरात्रादूर्ध्वम् । कोशपूर्वं कोशेन सहार्थमानीतम् । अहोरूपहरं पिण्डपत्रम् । अवेक्षेत किं धर्मादीनुपहरन्त्यो (?) हत्योत्पादितम्, अनुपहत्य किमायव्ययनोव्यनेन संपूर्णे (?)र्णा सङ्कलिता किं मृदुनोप-

---

१. अक्षाणि आयमुखानि रूपाणि इति अमरकोशे क्षीरस्वामी । ११।८।५

[ गणनलेखनपरिपाट्यः ]

**दिवसपञ्चरात्रपक्षमासचातुर्मास्यसंवत्सरैश्च प्रतिसमानयेत् । व्युष्टदेश-कालमुखोत्पत्त्यनुवृत्तिप्रमाणदायकदापकनिबन्धकप्रतिग्राहकैश्चायं समानयेत् ।**

---

श्रीमूला

गणनलेखनपरिपाटीमाह—दिवसेत्यादि । दिवसपञ्चरात्रपक्षमासचातुर्मास्यसंवत्सरैश्च प्रतिसमानयेत् दिवसः पञ्चरात्रं पक्षो मासश्चातुर्मास्यं संवत्सर इत्येभिर्विभागैः सङ्ख्याय सम्पादयेत् अर्थाद् आयव्ययनीवीः । अयं भावः—संवत्सरस्यादिमे मासि पूर्वपक्षस्य प्रतिपदमारभ्यापञ्चम्या दैनन्दिनी आयव्ययनीवीः पृथग् गणनपुस्तकेषु विलिख्य पञ्चमीपर्यन्तदिवसपञ्चकाङ्कान् संकल्प्य निवेशयेत् । एवं षष्ठ्यादि-दशम्यन्तदिवसपञ्चकाङ्कान् एकादश्यादिपञ्चदश्यन्तदिवसपञ्चकाङ्कांश्च प्रत्येकं सङ्कलय्य निवेशयेत् । तानिमांस्त्रीन् दिवसपञ्चकाङ्कनेकीकृत्य पक्षाङ्कं, पूर्वापरक्षद्वयाङ्कैकीकरणेन मासाङ्कं, मासचतुष्टयाङ्कैकीकरणेन चातुर्मास्याङ्कं, चातुर्मास्यत्रिकाङ्कैकीकरणेन संवत्सराङ्कं च सम्यक् सङ्ख्याय सम्पादयेदिति । आयव्ययनीवीनां साधारणविधि-वचनानन्तरं प्रातिस्विकविधिष्वभिधानीयेषु प्रथममायस्य व्ययनीवीनिमित्तत्वेन प्राधान्यात् तं दर्शयति—व्युष्टेत्यादि । व्युष्टदेशकालमुखोत्पत्त्यनुवृत्तिप्रमाणदायक-दापकनिबन्धकप्रतिग्राहकैः आयं समानयेत् व्युष्टादिविवरणयुक्ताम् आयगणनां सम्पादयेदित्यर्थः । तत्र व्युष्टं राजवर्षमासपक्षदिवसाः, देशः, कालो वर्षादिः मुखम् आयमुखमायशरीरं च, उत्पत्तिः तदुत्पन्नं शुल्कादि, अनुवृत्तिः स्थानान्तरसङ्क्रान्तिः, प्रमाणं, दायकः करस्य दाता, दापकः दापयिता राजपुरुषः, निबन्धको लेखकः,

चाणक्यटीका

क्रमेण वा (दा) रुणेन साम्यं निर्वर्तितमित्येषु यथासंभवम् अनुमानेन चारेण प्रयोगेण वा प्रत्यक्षेणेति ।

(अकलंश्चयादी ? सकलांश्चायादीन्) प्रतिदिवसोत्पान्नेनायेन पञ्चरात्रम् । पञ्च-रात्रोत्पनेन त्रिगुणेन पक्षम्, पक्षकृतेन द्विगुणेन मासम्, तेन चतुर्गुणेन चातुर्मास्यम्, तत् त्रिगुणेन वर्षमिति । एवं षड्भिर्गणनाविशेषैः प्रतिसमानयेत् प्रज्ञापयेत् कार्मिकः । उपनयस्कन्धार्थञ्च एतदुक्तं न हि सर्वस्य कर्मसंवत्सरः पूर्यत इति सामान्येनाभिधाय पुनरायादीनां प्रत्येकं समानयनं स्फुटकरणार्थमाह—व्युष्टेति । व्युष्टेन यथा—प्रवर्तमाने पञ्चदशराजवर्षे, (कालेन) पौषकृष्णपञ्चदश्यामिति । देशेन वत्सगुल्मान्नागराद्याहृत-मिति (?) । कार्यमिति आयशरीरम् । मुखोत्पत्तिरिति आयमुखोत्पत्तिः शुल्कपण्यं मुखमिति कार्यमुखोत्पत्तिभ्यां प्रतिवर्षमुत्पाद्यमानं कार्षापणसहस्रमिति । अनुवृत्त्या अनुवर्त्तनेन । प्रमाणेन च वणिग्देवदत्तेन पक्षिश्रेष्ठवचनादुपनीतमिति । दायकदाप-काभ्यम् विष्णुदत्तकेन लवकेन निबद्धः स्थावरेण भाण्डा (गा) रिकेणोपसंहृतमिति । निबन्धकप्रतिग्राहकाभ्यामिति·····॥

**व्युष्टदेशकालमुखलाभकारणदेययोगपरिमाणाज्ञापकोद्धारकविधातकप्रतिग्राहकैश्च व्ययं समानयेत्। व्युष्टदेशकालमुखानुवर्तनरूपलक्षणपरिमाणनिक्षेपभाजनगोपायकैश्च नीवीं समानयेत् ॥**

[ दुष्टवृत्तानां गणकादीनां दण्डः ]

**राजार्थे कारणिकस्याप्रतिबघ्नतः प्रतिषेधयतो वाऽऽज्ञां निबन्धात् आयव्ययमन्यथा वा विकल्पयतः पूर्वस्साहसण्डः। क्रमावहीनमुत्क्रममवि-**

---

### श्रीमूला

प्रतिग्राहको ग्रहीता। व्ययसमानयनविधिमाह—व्युष्टदेशकालमुखलाभेत्यादि। तत्र व्युष्टदेशकालमुखानि पूर्वोक्तानि, लाभः 'पक्षमाससंवत्सरलाभो लाभ, इति गताध्यायोक्तः कारणं निमित्तं, देयं दानीयद्रव्यं, योगो द्रव्यापद्रव्यमिश्रणं, परिमाणमियत्ता, आज्ञापकः चोदकः, उद्धारकः ऋणग्राही ऋणं वा, निधातृकः भाण्डागारिकः, प्रतिग्राहकः ब्राह्मणादिः। नीवीविधिमाह—व्युष्टदेशकालमुखानुवर्तनेत्यादि। तत्र रूपं द्रव्यस्य स्वरूपं, लक्षणं तच्चिन्हं परिमाणं, तन्मानं निक्षेपभाजनं द्रव्यनिधानभाण्डं गोपायकस्तद्रक्षः, शेषं प्रतीतम्।

अथ यथासम्भवं सामान्यदण्डमाह—राजार्थ इति। राज्ञो धनहिरण्यादिलाभरूपे प्रयोजने, अप्रतिबघ्नतः असम्बध्नतः राजार्थं पुस्तकेष्वलिखित इत्यर्थः, आज्ञां, प्रतिषेधयतो वा अननुतिष्ठतश्च, आयव्ययं, निबन्धात् क्लृप्तनियमाद्, अन्यथा प्रकारान्तरेण कल्पयतोऽपि वा, कारणिकस्य पूर्वः साहसदण्डः।

### चाणक्यटीका

लाभकारणमिति कार्तिक्यादिना कारणेन दत्तमिति। देयस्य योगो युक्तिः दीनारैश्चूर्णिकया वा योजितः। परिमाणं शतं वा सहस्रं वा। आज्ञापको दूतकः कुमारवचनाद्वा प्रतिहारवचनाद्वा। उद्धारकः अनेन वणिग्धस्तादुद्धृत्य दत्तमिति। वि (यात ? दाय) को यो दापनार्थं विशेषेण यतते दीयतामस्मै, गुणवानयमिति। अपरे माता उन्माता चेति वर्णयन्ति, पठन्ति च विधातक[1] इति। प्रतिग्राहको लब्ध्वा ब्राह्मणाय दत्तमिति। रूपं द्रव्यम्। जातिः लक्षणम्। द्रव्यं जातिविशेषणं विवर्णं चतुष्कं वा। निक्षेपभाजनं ताम्रघटकः करण्डको वा। गोपायकः परिपालयिता।

राजार्थे रत्नभूम्यादिलाभे रत्नादी(न)नुपनिबध्नतः प्रतिबन्धितारमन्यं वा प्रतिषेधयतः। आज्ञानिबन्धादिति राजाज्ञाया निबन्धो निबन्धप्रस्तावकृतः। तस्मात् स्वप्रत्ययकारितया रागद्वेषाभ्यां वा आयव्ययम् ऊनाधिकत्वेन अन्यथा कुर्वतः ॥

---

१. अयमेव पाठो महीसूर मुद्रितकोशाहृतः। विधानक इति विधायक इति वा स्यात्।

**ज्ञातं पुनरुक्तं वा वस्तुकमवलिखतो द्वादशपणो दण्डः। नीवीमवलिखतो द्विगुणः, भक्षयतोऽष्टगुणः, नाशयतः पञ्चबन्धः प्रतिदानं च। मिथ्यावादे स्तेयदण्डः। पश्चात् प्रतिज्ञाते द्विगुणः प्रस्मृतोत्पन्ने च।**

[ संक्षेपेण राज्ञो हितोपदेशः ]

**अपराधं सहेताल्पं तुष्येदल्पेऽपि चोदये।**
**महोपकारं चाध्यक्षं प्रग्रहेणाभिपूजयेत् ॥६०॥**

इत्यध्यक्षप्रचारे द्वितीयाधिकरणे अक्षपटले गाणनिक्याधिकारः सप्तमोऽध्यायः आदितोऽष्टाविंशः।

---

श्रीमूला

क्रमेत्यादि। वस्तुकं, क्रमावहीनमवलिखतः उत्तममध्यमाधमेषु क्रमहीनं लिखतः, उत क्रममवलिखतः पूर्वमधमं पश्चादुत्तममिति व्युत्क्रमं लिखतः, अविज्ञातमवलिखतः वेदितुमनर्हया रीत्या लिखतः, पुनरुक्तमवलिखतो वा लिखितं पुनर्लिखतो वा द्वादशपणो दण्डः।

नीवीमिति। नीवीम् अवलिखतः अवहीनं लिखतः, द्विगुणः पणचतुर्विंशतिः, दण्डः। नीवीं भक्षयतः, अष्टगुणः पणषण्णवतिः, दण्डः। नीवीं नाशयतः नटनर्तकादिभ्यो दत्त्वा लोपयतः, पञ्चबन्धः पञ्चगुणः षष्टिपणो दण्डः प्रतिदानं च नाशितपुनर्दानं च, भवति। मिथ्यावादे स्तेयदण्डः असत्यवचने चौर्यदण्डः। पश्चात् प्रतिज्ञाते पूर्वमलिखित एव गणनपरिशोधनायां विज्ञाते विषये, प्रस्मृतोत्पन्ने च पूर्वं विस्मृत्य पश्चाच्चिन्तिते च विषये, द्विगुणः स्तेयदण्डाद् द्विगुणः, दण्डः।

चाणक्यटीका

क्रमावहीनं पूर्वमप्रधानं पश्चात् प्रधानम्। उत्क्रमं व्युत्पत्ति लिखित्वा मुखतो दशकायमिति (?)। (अ) विज्ञातामव्यक्ताक्षरम्। पुनरुक्तं लिखितमे (व)। वास्तुकम् (आद्यदिस्थानं श ?) शास (न) पत्रम्। अवलिखत इति समानकरणविशेषैरवगताल्लेख्यधर्मादन्यथा लिखत इति। अर्थाल्लेखकस्य नेयम्।

अवलिहत इति ईषदास्वादयतः। द्विगुण इति अवलीढात्। भक्षयतः लाभात् स्वयम् उपयुञ्जानस्येत्यर्थः। विनाशयतः रक्षाशैथिल्यादनाहृतस्य। पञ्चबन्धः नष्टपञ्चमो भागः। प्रतिपादनञ्च नष्टस्य। मिथ्यावाद इति अवहेलनादि कृत (क) त्वान्न मा (?) मया कृतमिति। स्तेयदण्ड इति [1]कोशभाण्डागाराध्यक्षशालाभ्यश्चतुर्भागमूल्येषु द्विगुणो दण्ड इत्यादि। प्रतिज्ञात इति अवलेहनादावङ्गीकृते। यच्च प्राक् समाहर्तृविस्मृतमासीत् तत् सङ्कलनोत्तरकालं प्रस्मृतत्वाद् उपपन्नं तत्रापि द्विगुणः॥

---

१. कोशभाण्डागाराक्षशालाभ्यश्चतुर्भागमूलेषु एत एव द्विगुणा दण्डाः इति कौटल्यो-वक्ष्यति। ४.१

श्रीमूला

श्लोकमाह्—अपराधमिति। अल्पमपराधं सहेत, अर्थादध्यक्षस्य अल्पेऽपि उदये आयवृद्धौ अर्थादध्यक्षोपपादितायां, तुष्येत्। महोपकारं अध्यक्षं, च शब्दस्त्वर्ये, प्रग्रहेण प्रकृष्टग्रहणेन यावज्जीवपरिग्रहेण, अभिपूजयेत् बहु मानयेत् ॥

इति कौटिलीयार्थशास्त्रव्याख्यायामध्यक्षप्रचारे द्वितीयाधिकरणे
सप्तमोऽध्यायः अक्षपटले गाणनिक्याधिकारः,
आदितोऽष्टाविंशः ॥

चाणक्यटीका

सहेत इति सम्पन्नानां दुर्लभत्वात्। तुष्येत् समुत्साहनार्थम्। उदय इति कोशवृद्धौ। समोपकारम् उचितान्महीभृतः कोशोदयस्य संपादकम्। प्रग्रहेण वस्त्रालङ्कारादिभिरिति ॥

अक्षपटले गाणनिक्याधिकारः, सप्तमं प्रकरणम्।
॥ सप्तमश्चाध्यायः ॥

# षड्विंशं प्रकरणम्

## अष्टमोऽध्यायः ।

## समुदयस्य युक्तापहृतस्य प्रत्यानयनम् ।

[ धनसङ्ग्रहस्यावश्यकता ]

**कोशपूर्वाः सर्वारम्भाः । तस्मात् पूर्वं कोशमवेक्षेत ।**

[ धनाभिवृद्धितन्नाशहेतूनां परिगणनम् ]

**प्रचारसमृद्धिः चरित्रानुग्रहः चोरग्रहः युक्तप्रतिषेधः सस्यसम्पत् पण्यबाहुल्यम् उपसर्गप्रमोक्षः परिहारक्षयः हिरण्योपायनम्—इति कोशवृद्धिः ।**

———

श्रीमूला

समुदयस्य युक्तापहृतस्य प्रत्यानयनमिति सूत्रम् । समुदयो नाम द्रव्योत्पत्तिस्थानेभ्य उत्थितं धनं, युक्ता अध्यक्षाः, युक्तापहृतस्य समुदयस्य प्रत्यानयनं पुनः प्रापणमिहाभिधीयत इति सूत्रार्थः । किमर्थं धनसङ्ग्रहे महान् यत्न उपदिश्यत इत्यपेक्षायामाह—कोशेत्यादि । सर्वारम्भाः कोशपूर्वाः सर्वाणि कार्याणि तन्त्रसम्बद्धानि जनपदनिवेशादीनि, आवापसम्बद्धानि च सन्धिविग्रहादीनि, धननिमित्तकानि । तस्मात् कारणात्, कोशम्, पूर्वं सर्वकार्याणामग्रे, अवेक्षेत यथा स वृद्धिं प्राप्नुयात् न क्षयं, तथा चिन्तयेदित्यर्थः ।

कोशस्योदयहेतून् नव दर्शयति—प्रचारेत्यादि । प्रचारसमृद्धिः जनपदसम्पत्, चरित्रानुग्रहः देशजातिकुलाचाराणां पूर्वस्थित्यनतिक्रमेण परिपालनम्, चरित्रलक्षणसन्तुष्टा हि जनाः कोशं राज्ञो वर्धयन्तीति, चोरग्रहः तस्करवधस्तस्करेभ्यो धनग्रहणं च, युक्तप्रतिषेधः युक्तानामध्यक्षाणां प्रतिषेधो धनापहाराद् वारणम् उत्कोचग्रहणनिमित्ताद्वा प्रजापीडनाद् वारणम्, सस्यसम्पत् उच्चावचधान्यसमृद्धिः, पण्यबाहुल्यं पण्यानां जलजानां स्थलजानां च विक्रेयद्रव्याणां बहुलमुत्पत्तिरुपलम्भश्च, उपसर्गप्रमोक्षः अग्न्याद्युपद्रवमोचनम्, परिहारक्षयः करमुक्त्यभावः अवधौ धनग्रहणोपेक्षाविरहो वा, हिरण्योपायनं सुवर्णरजतादिरूपोपदा, इति कोशवृद्धिः एवं नव कोशवृद्धिहेतवः ।

चाणक्यटीका

कथं पुनः कोशादयः सम्पद्यन्त इति चेत् प्रचारसमृद्ध्यादिना । भवत्येवासौ यदि युक्ता न हापयन्नि । तैर्वापहृतस्य प्रत्यानयनं क्रियत इति समुदयस्य युक्तापहृतस्य प्रत्यानयनमुच्यते । कोशादयः कथं महोपकारोऽध्यक्षस्येति चेदाह—कोशपूर्वा

**प्रतिबन्धः प्रयोगः व्यवहारः अवस्तारः परिहापणं उपभोगः परिवर्तनं अपहारश्च—इति कोशक्षयः ।**

[ धनक्षयहेतुभूतानां प्रतिबन्धादीनां अष्टानाम् स्वरूपविवरणम्,
तत्तत्कर्तृणां दण्डाश्च ]

**सिद्धीनामसाधनम् अनवतारणम् अप्रवेशनं वा प्रतिबन्धः; तत्र दशबन्धो दण्डः ।**

---

चाणक्यटीका

इति । सर्वारम्भाः तन्त्रावापोत्कटजनपदनिवेशादयः सस्यादयश्च । अवक्षेतेति, कथं वर्धेत कथं न क्षीयेत कथमपहृतं प्रत्यानीयेत तत्त्रितयमप्याह—प्रचारसमृद्धिः जनपदस्फीतता । चरित्रानुग्रहः तदनुज्ञानार्थं हि जानपदा इदमस्माकं चरित्रमस्त्विति राज्ञे किञ्चित् प्रयच्छन्ति । चोरनिग्रहात् चोरगतद्रव्यावाप्तिः चोरनिग्रहश्च । युक्तोऽध्यक्षः तत्प्रतिषेधाद् अहानमर्थस्य दण्डलाभश्च । राजकर्मान्तोत्थितसस्यसम्पदा कोशो वर्धते तथा राजपण्यानां बाहुल्ये मूल्यवृद्धिः । उपसर्गाणाम् अभावो मोक्षः । तथा—सति तत्प्रतिविधानेन कोशो न क्षीयते । परिहारस्य क्षयः पूर्ण (?) ऊनता, ततो दण्डकराद्युपचयः हिरण्यं चोपायनं (ली ? का) कनिका[1] कोशं प्रविशति, वस्त्राद्युपायनन्तु यथासुखं व्ययेन तिरोधीयत एवेति ।

श्रीमूला

कोशक्षयहेतूनष्टावुद्दिशति—प्रतिबन्ध इत्यादि ।

सिद्धीनामिति । सिद्धीनां सिद्धद्रव्याणां राजग्राह्यकरादीनाम्, असाधनम् अनुत्पादनम्, उत्पन्नानां वा अनवतारणमहस्तप्रापणम्, अवतारितानां वा अप्रवेशनं भाण्डागाराप्रापणम्, इति प्रतिबन्धस्त्रिधा । तत्रेति । तत्र प्रतिबन्धे, दशबन्धो दशगुणः, दण्डः ।

चाणक्यटीका

प्रतिबन्धादयः कोशक्षयाः, तेषां स्वरूपम् अत्यादानञ्चाह—सिद्धीनामिति । सिध्यन्त इति सिद्धयः करादयः, तेषां प्राप्तकालानामप्यसाधनम् । अनवतारणम् अन्येनि मात्रेति विना (?) आयकल्पनाया पत्रेषु लेख्याकरणम्, अनारोपणमित्यर्थः । तथा मौचिकहस्तस्थानाम् अप्रवेशनाम् अध्यक्षस्यानर्पणम् । देयदशबन्ध इति प्रतिबद्धस्य दशम्य ।

---

१. काकणी इति मुद्रितकौटलीयपाठः, "काकिण्याश्चोपसंख्यानम्" इति काशिकावृत्तिः ।

**कोशद्रव्याणां वृद्धिप्रयोगः प्रयोगः; पण्यव्यवहारो व्यवहारः, तत्र फलद्विगुणो दण्डः। सिद्धं कालमप्राप्तं करोति, अप्राप्तं प्राप्तं वेत्यवस्तारः; तत्र पञ्चबन्धो दण्डः। क्लृप्तम् आयं परिहापयति व्ययं वा विवर्धयतीति परिहापणम्; तत्र हीनचतुर्गुणो दण्डः। स्वयमन्यैर्वा राजद्रव्याणामुपभोजनमुपभोगः; तत्र रत्नोपभोगे घातः, सारोपभोगे मध्यमः साहसदण्डः; फल्गु कुप्योपभोगे तच्च तावच्च दण्डः। राजद्रव्याणामन्यद्रव्येणादानं परिवर्तनम्; तदुपभोगेन व्याख्यातम्। सिद्धम् आयं न प्रवेशयति, निबद्धं व्ययं न प्रयच्छति, प्राप्तां नीवीं विप्रतिजानीते इत्यपहारः; तत्र द्वादशगुणो दण्डः।**

---

श्रीमद्भट्टस्वामिप्रणीता

प्रतिपदपञ्चिका

कल्याणकृत् भूयात्।

सिद्धीनामित्यादि, सिद्धीनां द्रव्याणामसाधनमनुत्पादनम्। उत्पन्नानां वाऽनवतारणम्। अनुपहस्तीकरणम्, उपहस्तीकरणानां च तेषामप्रवेशनमनुपनयनमित्ययं त्रिविधः प्रतिबन्धः। तत्रेति प्रतिबन्धे, प्रतिबन्धद्रव्यदशबन्धो दशभागो दण्डः।

श्रीमूला

कोशेत्यादि। कोशद्रव्याणां कोशप्रवेश्यद्रव्याणाम्, वृद्धिप्रयोगः वृद्ध्यर्थं प्रयोगः, स्वयं वृद्धिमुपजीव्य पश्चात् मूलं कोशेऽर्पयिष्यामीति, स प्रयोगः। पण्यव्यवहारः कोशद्रव्यैर्वाणिज्यकरणं व्यवहारः। तत्र प्रयोगव्यवहारयोः दण्डः फलद्विगुणः। सिद्धमिति। सिद्धं प्राप्तम्, कालं ग्राह्यद्रव्यग्रहणकालम्, अप्राप्तं, करोति आपादयति उत्कोचलिप्सया, अप्राप्तं वा कालं प्राप्तं करोति प्रद्वेषेण, इत्यवस्तारः इत्यनेन प्रकारेण प्राप्तकालाप्राप्तीकरणमप्राप्तकालप्राप्तीकरणमिति द्विविधोऽवस्तारः। तत्र अवस्तारे, दण्डः पञ्चबन्धः। क्लृप्तमिति। क्लृप्तं प्रतिनियतम् आयं परिहापयति न्यूनयति, व्ययं वा क्लृप्तं विवर्धयति अतिरेचयति, इति परिहापणम्, एवं द्विधा परिहापणम्। तत्र, दण्डः हीनचतुर्गुणः नाशितद्रव्यचतुर्गुणः। रत्नसारफल्गुकुप्यानां राजद्रव्याणां स्वयमुपभोजनं परैर्वापभोजनमिति द्विविध उपभोग इत्याह—स्वयमित्यादि। तत्र दण्डोपदेशवाक्यम्—तत्रेत्यादि। तच्च उपभुक्तद्रव्यं च। तावच्च तत्परिमाणमपरं च। परिवर्तनं व्याचष्टे—राजद्रव्याणामित्यादि। अन्यद्रव्येणादानम् अन्यद् द्रव्यं सच्छायं प्रतिनिधाय ग्रहणम्। उपभोगेन तद् व्याख्यातमिति उपभोगसमानदण्डं परिवर्तनमित्यर्थः।

त्रिप्रकारमपहारमाह—सिद्धमिति। सिद्धम् उत्पन्नम्, आयम्, न प्रवेशयति लेख्ये नारोपयति इत्येकोऽपहारः। निबद्धं पुस्तकारोपितं व्ययं राजाज्ञप्तं पारितो-

श्रीमूला

षिकादिलक्षणम्, न प्रयच्छति राजनिर्दिष्टाय पात्राय न ददाति, इति द्वितीयोऽपहारः। प्राप्तां हस्तगताम्, नीवीं, विप्रतिजानीते नाद्यापि हस्तप्राप्तेत्यपलपति, इति तृतीयोऽपहारः। तत्र अपहारे, दण्डो द्वादशगुणः।

**चाणक्यटीका**

कोशनिवेशार्हाणां द्रव्यानां लाभाशया अध्यक्षेण वृद्धयर्थं यो योगः क्रियते स प्रयोगः। तथा पण्यानां व्यवहारो विक्रयादिः। तत्रेति प्रयोगव्यवहारयोः। यत् फलम् उत्पद्यते तद्द्विगुणः।

सिद्धं प्रत्यायकालसाधनकालमानानुरोधान्न तावत् साधनकालः प्राप्नोतीति कालहरणेन कोशं हाययति। अप्राप्तं प्राप्तं वेति राजद्रव्यप्रयोगेण द्विगुणोदया (द) ष्टाष्टाभिर्मासैः (?)।

अथ वर्णसम्पत्तौ जानायां प्राप्तकाल एव चतुर्षु मासेषु प्राप्तोऽयं कालः अर्धमस्मिन् भवत्विति कुर्वन् परिहापयति। व्ययं वा शतत्रयं चत्वारि कुर्वन् वर्धयति। हीनचतुर्गुणः यावद्धीयते तस्य चतुर्गुणः।

अन्यैर्वेति पति (?) त्नीभृत्यमित्रबान्धवैः। रत्नोपभोग इति। ननु च उपभोगमात्रं न रत्नस्य विनाशः, सत्यम्। अप्रतिसङ्गनिवृत्त्यर्थं दण्डः। तच्च तावच्चेति तच्चोपभुक्तं दापनीयः, तावच्चापरं दण्डनीयः। यदि चोपभोगाद् विनष्टं स्यात् तदा तज्जातीयं दापनीयम् इत्यर्थः। एवं सारोपभोगेऽपि योज्यम्।

अन्यद्रव्येणेति। आत्मीयेन तत्प्रमाणेन अन्य (त् ?) प्रमाणेन वा तद्वर्णेन अन्यवर्णेन वा, तज्जातीयेन अन्यजातीयेन वा, कृतेन अकृतेन वा हेतुभूतेनेत्यर्थः। अस्माच्च परिवर्तनादुपनीयवर्णमानं प्रमाणवर्णं जात्यभावेनातिसन्धानमसत्यपि परिवर्तने प्रत्यायपूरणार्थं छलनमुपधिरित्ययं विशेषः। तदुपभोगेनेति तद् रत्नसारफल्गुकुप्यपरिवर्तनदण्डसारूप्याद् व्याख्यातम्।

सिद्धमायमिति। असत्ययि प्रतिन्धे सिद्धं स्वहस्तीकृतमप्यायं समाहर्ता प्रवेशनकालेऽपि नोपनयति। पृथक्(नि)बद्धमप्युचितं व्ययं लब्ध्वा कालहरणेन प्रयच्छति। प्राप्तां सन्निधापितामपि नीवीं न तावत् प्राप्तेति अल्पशेषा वेति विप्रतिजानाति अपलपति। द्वादशगुण इति, यावतोऽपि जि (गीषि ? हीर्षि) तस्य।

प्रतिपदपञ्चिका

प्रयोगमाह—कोशद्रव्याणमित्यादि, तत्प्रवेश्यानां वृद्धिप्रयोगः। वृद्ध्यर्थं प्रयुज्य तां वृद्धिं स्वयमुपजीव्य कालान्तरेण मूलद्रव्यदानम्।

व्यवहारं व्याचष्टे—पण्यव्यवहार इति। कोशद्रव्यैर्वाणिज्यकरणम्। तत्रेति, प्रयोगव्यवहारयोर्द्वयोरपि फलद्विगुणो दण्डः।

[ चत्वारिंशतां राजद्रव्यापहरणद्वाराणां निर्देशः ]

**तेषां हरणोपायाश्चत्वारिंशत्—**

**पूर्वं सिद्धं पश्चादवतारितं, पश्चात्सिद्धं पूर्वमवतारितं, साध्यं न सिद्धं, असाध्यं सिद्धं, सिद्धमसिद्धं कृतं, असिद्धं सिद्धं कृतं, अल्पसिद्धं बहुकृतं, बहुसिद्ध मल्पं कृतं, अन्यत् सिद्धमन्यत्कृतं, अन्यतस्सिद्धमन्यतः कृतं, देयं न दत्तं,**

---

प्रतिपदपञ्चिका

अवस्तारमाह—बहिर्लब्धस्याऽर्थस्य सिद्धं कालं पूर्णमवधिमपूर्णमिति करोति। उत्कोचनयाचनकादिभिर्नाम तथाऽन्यस्य प्रद्वेषादप्राप्तमपि कालं प्राप्तं करोति। तदेवं प्राप्ते कालस्याग्रऽहणात् प्रजार्थहानिरप्राप्तकालस्य ग्रहणात् प्रजापीडनं कोशक्षयहेतुरित्ययं उभयप्रकारोऽवस्तारः। तत्र च पञ्चबन्धो दण्ड इति।

परिहापणमपि द्विविधमाह—

क्लृप्तमायं प्रसिद्धामुत्पत्तिं, परिहापयति न्यूनीकरोति। व्ययं च महानसादिपरिव्ययं वर्धयति। प्रसिद्धादधिकं करोतीत्येतत् परिहापणम्। तत्रेत्यायपरिहापणे व्ययविवर्धने च, यावन्मात्रं नाशितं तच्चतुर्गुणो दण्ड इति।

द्विविधमेव उपभोगमाह—

स्वयमन्यैर्वा राजद्रव्याणां रत्नसारादीनामुपभोजनं यथेष्टविनियोग उपभोगः। तत्रेत्यादि, सुबोधम्। तच्चेति सर्वशेषः।

परिवर्तनमाह—राजद्रव्याणामित्यादि, निगदव्याख्यातम्।

अपहारं त्रिविधमाह—(न) सिद्धमायं उत्पन्नमर्थं न प्रवेशयति। निबद्धं लेख्यकारोपितं व्ययं हिरण्यादिकं राज्ञा कस्यचिद् दत्तं न प्रयच्छति न ददाति। प्राप्तामुपहस्तीभूतां नीवीमुक्तलक्षणां विप्रतिजानाति। नाऽद्यापि उपहस्तीभवतीत्यपहृ(ह)तमित्यपहारः। तत्रेति, त्रिविधेऽप्यस्मिन्, द्वादशगुणो दण्डः।

श्रीमूला

तेषामिति। तेषाम् अध्यक्षाणाम्, हरणोपायाः राजद्रव्यापहरणद्वाराणि, चत्वारिंशद् वक्ष्यमाणरीत्या। अपहारपरिहरणार्थमपहृतप्रत्यानयनार्थं च तद्व्युत्पादनम्। तान् दर्शयति—पूर्वं सिद्धमित्यादिना। पूर्वं सिद्धं पश्चादवतारितमिति। पूर्वसस्यत्वात् पूर्वप्रवेश्यः शाल्यादेः करः पश्चिमसस्यगोधूमादिकरेण सह प्रवेशितः स तु मध्यकालेऽध्यक्षेणोपजीव्यो भवति। पश्चात् सिद्धं पूर्वमवतारितमिति। पश्चिमसस्यगोधूमादिकरस्य कियांश्चिद् भागः पूर्वसस्यकरेण सह पूर्वमेव प्रवेशित आत्ययिकराजकार्यार्थत्वच्छलात्। साध्यं न सिद्धमिति। ग्राह्यः करो न गृहीतो लञ्चादिना राज्ञ एवमाज्ञेति। असाध्यं सिद्धमिति, अकरददेवब्राह्मणादेरग्राह्यः करो

श्रीमूला

गूढं गृहीतः । सिद्धमसिद्धं कृतमिति । करदेन प्रवेशित एव करः अप्रवेशित इत्युक्त्वाऽपहृतः, गृहीत एव करस्यैकदेशो न गृहीत इत्यपलपितो वा । असिद्धं सिद्धं कृतमिति । कृत्स्नकरदानार्हे काले तस्य करस्यार्धं दत्त्वा शेषार्धं पश्चात् दास्यामीत्युक्तेन लञ्चवशीकृतेनाध्यक्षेण तच्छेषार्धं दत्तत्वेन पुस्तके लिखितम् । अल्पसिद्धं बहुकृतमिति । पञ्चाशति प्रविष्टायां शतं प्रविष्टमित्यध्क्षेण लञ्चग्राहिणा लिखितम् । बहुसिद्धमल्पं कृतमिति । शतं गृहीत्वा पञ्चाशदिति पुस्तके लिखितं लञ्चादिना । अन्यत् सिद्धमन्यत् कृतमिति । शालिः सिद्धः कोद्रवो लिखितः शालिकरग्रहणनिमित्तस्य लाभस्यात्मसात्कारार्थम् । अन्यतः सिद्धमन्यतः कृतमिति । देवदत्ताद् गृहीतं यज्ञदत्ताद् गृहीतमिति पुस्तके लिखितम् ।

चाणक्यटीका

तेषाम् इति अपहरताम्, अध्यक्षाणाम् । एतद्विशेषा एव हरणोपाया उच्यन्ते । पूर्वं सिद्धं पश्चादवतारितमिति । सिद्धिकालाद् पूर्वं श्रावण एव रा (जा) ज्ञामपदिश्य द्रव्यलाभार्थमुत्कोचलाभार्थं वा साधितं पश्चाद्भाद्रपदावतारकल एवावतारितं लेखीकृतम् । यावत्तत् सिद्धम् वाऽवतार्यते तावत् तेनार्थेन संव्यवहरति, पश्चल्लब्धोपचयः तावन्मात्रमेवावतारकाले अवतारयतीत्यर्थः । पश्चात् सिद्धम् उत्कोचेन कालहरणं कृत्वा कार्तिकादौ पूर्वम् अवतरणकाल एवावतारितम् । एतद् द्वयमपि सिद्धीनां कालव्यत्यासाद् अवस्तारस्य भेदः ।

साध्यम् उचितं कर्षकेभ्यः किञ्चिद् गृहीत्वा न सिद्धम् । सिद्धीनामसाधनत्वात् प्रतिबन्धोऽयम् । क्लृप्तस्यायस्य हापनात् परिहापणं वा ।

असाध्यम् अनुचितं ब्रह्मदेया ( का ? ) दिभ्योऽपदेशात् सिद्धम् । राजाज्ञेति भीता लाभं प्रयच्छन्ति । धर्मस्य किल क्लृप्तस्य हापनात् परिहापणमेतत् । आयस्येति नत्रोक्तम् ।

सिद्धमपि करादि स्वयमुपयुज्य राजार्थं पूर्वं तावदस्मादसिद्धं इति असिद्धं कृतम् ।

असिद्धं वा कुटुम्बिनामुपजीव्य सिद्धं कृतमिति अपहारपरिहापणे । अल्पसिद्धम् ऊनसिद्धं पूर्णं कृतम् । तस्मात् किञ्चिद् गृहीत्वा । विपर्येण पूर्णमपि मार्जयित्वा अल्पमुपयुज्य अल्पम् अस्मात् सिद्धमिति कृतम् । पूर्वेण तुल्यमेतावानत्र विशेषः । तत्र पूर्वं ( ? र्णं ) सिद्धमसिद्धञ्च, इह त्वेकदेशं सिद्धमसिद्धञ्चेति ।
अन्यन्महार्घं शाल्यादिसिद्धम् अर्घोपजीवनार्थम् अन्यद् अल्पमूल्यं निबद्धम् ।

अन्यतो देवदत्तात् सिद्धम्, तत् पुनर्भावयितुं अन्यतो यज्ञदत्तात् सिद्धम् उत्कोचं गृहीत्वा निबद्धम् । सिद्धस्याप्रवेशानाद् अपहारोऽयम् । सिद्धीनामसाधनात् प्रतिबन्ध इत्येके ।

दीर्घप्रवासिने आदिष्टमपि देयम्, यदायमागत्य प्रज्ञाप ( यित्वा ? यति ) तदैव दास्यामीति, अदत्तम् । कालविपर्यासादयं कालावस्तारः ।

**अदेयं दत्तं, काले न दत्तं, अकाले दत्तं, अल्पं दत्तं बहुकृतं, बहुदत्तमल्पं कृतं,**

---

प्रतिपदपञ्चिका

इत्येवं कोशवृद्धिक्षयावभिधाय ततः कोशक्षयशेषभूतान् पौरजानपदराजार्थ-विषयानध्यक्षाणां हरणोपायानाह—तेषां हरणोपायाश्चत्वारिंशत् । एतेषामध्यक्षाणां हरणोपाया अर्थापहारनिमित्तानि चत्वारिंशत् वक्ष्यमाणानि । परिज्ञातानां परिहार-सौकर्यार्थमपहृतप्रत्यानयनार्थं च तेषामुपन्यासः ।

तानाह—पूर्वं सिद्धं पश्चादवतारितमित्यादि । पूर्वं प्रवेष्टव्याः शालयः, पश्चिमसस्येन गोधूमादिना, सह प्रवेशिताः । कार्तिकमासपिण्डकोपाः (कराः) । चैत्रमासपिण्डकेन (करेण) सार्थमन्तराले तदुपजीवनम् । पश्चात्सिद्धं पूर्वमवतारितमिति । गोधूमादिधान्य-करः किंचिदतित्वरितं राजप्रयोजनमपदिश्य शाल्यादिग्रहणेन सह गृहीतः । साध्यं न सिद्धमिति । लञ्चेन प्रीत्या वा राजाऽऽदेशोऽयमिति करदान् रुद्ध्वा करदीकृतम् साध्यं सिद्धमिति । देवब्राह्मणाद्यकरदं करदीकृतं तच्च स्वयं गृह्णाति । सिद्धमसिद्धं कृतमिति । करदायिना प्रवेशितमप्रवेशितमित्यपहृतम् । प्रभूतदातव्यत्वात् किमप्यादाय तदपलापो वा । असिद्धं सिद्धं कृतमिति । सहप्रदायिना करदेन अध्यक्षोऽभिहितो ( लञ्चार्थंमदत्त-मपि ) (आत्त) दत्तमिति लिखति । अल्पसिद्धं बहुकृतमिति । पञ्चशतानि प्रविष्टानि (लञ्चादिना) सहस्रमपि लिखितम् । बहुसिद्धमल्पं कृतमिति । सहस्रे प्रविष्टे मत्सरा-ल्लञ्चार्थं वा स्वयं पादमपहृत्य पञ्चशतानि प्रवेशे कृतानि ।

अन्यत्सिद्धमन्यत्कृतमिति । शाल्यादि सिद्धं कोद्रवादिकृतम् । अन्यतः सिद्ध-मन्यतः कृतमिति । देवदत्तात् प्रविष्टं यज्ञदत्तान्निबद्धम् ।

श्रीमूला

देयं न दत्तम् अदेयं दत्तमिति, देयं स्वर्णरजतादिकं कस्मैचिद् दातव्यतया राज्ञाज्ञापितं तस्मै न दत्तं, किन्तु अदेयं फल्गुकुप्यादिकं कालान्तरे कथञ्चिद् दत्तम् । काले न दत्तमकाले दत्तमिति । यज्ञाद्यर्थं कस्मैचिद् दीयतामिति राज्ञाऽऽज्ञप्तं यज्ञादि-काले वर्तमाने न दत्तम्, किन्त्वतिक्रान्ते कथञ्चित् दत्तं लञ्चग्रहणपीडापुरस्सरम् ।

चाणक्यटीका

अदेयमपि नि ? इभमात्रं राजकुलं प्राप्य लोभादन्यदुपग्रहीतुं दत्तम् । व्ययस्य वर्धनादिदं परिहापणम् ।

यस्मिन् काले दातव्यं तस्मिन् स्वयमुपयुञ्जानेन न दत्तम् । तदर्थेन मैत्रीं वा कर्तुमप्राप्त एव काले दत्तम् । अयं कालविपर्ययादवस्तारः ।

आज्ञया कस्मैचिदल्पं दत्तं स्वयं शेषमुजीवितुं बहु निबद्धम् । बहु वा दत्तं प्रति-ग्राहकेण सम्भूय स्वयमेतावदस्तु यथोद्दिष्टम् अस्मै मया दत्तमिति प्रकाश्य अल्पं कृतम् ।

**अन्यद्दत्तमन्यत्कृतं, अन्यतो दत्तमन्यतः कृतं. प्रविष्टमप्रविष्टं कृतम् अप्रविष्टं प्रविष्टं कृतम्. कुप्यमदत्तमूल्यं प्रबिष्टं, दत्तमूल्यं न प्रविष्टं, सङ्क्षेपो विक्षेपः**

---

प्रतिपदपञ्चिका

देयं न दत्तम्, अदेयं दत्तमितिएवायं राज्ञा कस्यचित्सुवर्णहिरण्यादिकं देयं दत्तम्। तत्सुखेन नैव दत्तम् क्लेशयित्वा कालेन फल्गुकुप्यादिकम्। काले न दत्तमकाले दत्तमित्ययमप्येक एव। यज्ञविवाहादिनिमित्तं राज्ञा कस्यचिद् दातव्यमित्यादिष्टम्। तत्तदानीं न दत्तम्। अतीते काले क्लेशयित्वा लञ्चेन हि न्यस्तं दत्तम्। अल्पं दत्तं बहुकृतम् परं दूतस्य सहस्रं दीयतामित्यादिष्टे, तच्छतोत्तरं बहुकृतं परं दूतस्य कृत्वा तच्छतमात्मना गृहीतम्।

श्रीमूला

अल्पं दत्तं बहुकृतमिति। शतं दीयतामिति राजाज्ञायां तत् पञ्चाशतात्मसात्कारार्थया साग्रं पुस्तके विलिखितम्। बहुदत्तमल्पं कृतमिति। शतं देवदत्ताय दीयतामिति राजादेशे विंशतिं स्वयं गृहीत्वाऽशीतिमात्रं तस्मै दत्तम्। अन्यद् दत्तमन्यत् कृतमिति। राज्ञादिष्टाः शालयः कोद्रवास्तु दत्ताः। अन्यतो दत्तमन्यतः कृतमिति। देवदत्तायादिष्टं यज्ञदत्ताय दत्तम्। प्रविष्टमप्रविष्टं कृतमिति। कोशे निवेश्यमुपहस्तितमेव द्रव्यमनुपहस्तिमिति वा किञ्चिदेवोपहस्तितमिति वोक्त्वाऽपहृतम्, अथवा कार्यविशेषार्थे 'प्रजाभ्यो धनमुत्थाप्यानीयतामि'त्यादिष्टे तदुत्थाप्य नाद्याप्युत्थितमित्युक्त्वा कालहरणेनोपजीवितम्। अप्रविष्टं प्रविष्टं कृतमिति। अगृहीत एव करदेभ्यः करो लञ्चं गृहीत्वा प्रविष्ट इति लिखितम्। कुप्यमदत्तमूल्यं प्रविष्टमिति। कुप्यं वस्त्रादिकं राजादेशाद् ऋणेन गृहीतं कथञ्चित् कालान्तरे दत्तमित्यैकदेशं कृत्वा दत्तसमग्रमूल्यमिति पुस्तके लिखितम्। दत्तमूल्यं न प्रविष्टमिति। महामूल्यदानेन क्रीतं कुप्यं तावन्मूल्यक्रीतत्वेन पुस्तकेऽनिबद्धम्, अर्थादल्पमूल्यक्रीतत्वेन निबद्धमित्ययं विशो-

चाणक्यटीका

तदन्यत् परुत्सङ्क्रान्तं संव्यवहरति, पश्चादुपनयनकाले प्रवेशयति। देयं न दत्तमदेयं दत्तमित्यनेन तुल्यम्।

अन्यद् अल्पमूल्यं राजतभाण्डं दत्तमन्यन्महार्घ्यं सौवर्णभाण्डमुपजीवनार्थमुपनिबद्धम्।

प्रविष्टं कोशाध्यक्षस्योपनीतमपि तेन सम्भूय भक्षयितुम् अप्रबिष्टं कृतम्।

अप्रविष्टं वा लोभात् कालहरणार्थं प्रविष्टं कृतम्। प्राप्तमप्राप्तं वेत्ययमवस्तारः।

कुप्यमदत्तमूल्यमपि क्रीत्वा अर्धवृद्धौ राजकुलान्मूल्यं निष्कासयिष्यामीति प्रवेशितम्।

दत्तमहार्घ्यमूल्यं वा समार्घं क्रीत्वा प्रवेशयिष्यामीत्यभिप्रेत्य न प्रवेशितम्। सम्यव्यवहारादयं व्यवहारः।

**कृतः, विक्षेपः सङ्क्षेपो वा, महार्घमल्पार्घेण परिवर्तितम्, अल्पार्घं महार्घेण वा, समारोपितोऽर्घः, प्रत्यवरोपितो वा, रात्रयः समारोपिता वा, प्रत्यव-**

———————

चाणक्यटीका

सङ्क्षेपो विक्षेप इति। कस्मिंश्चिदायपिण्डे सहस्रेऽधिकलाभार्थं प्रतिकुटुम्बं पृथग् पृथग् विक्षेपेण साधयन्ते। एकादश शतमार्थमुत्पादयति।

प्रतिपदपञ्चिका

बहु दत्तं अल्पकृतम्। सहस्रं दीयतामित्यादिष्टे, अष्टौ शतानि दत्वा शतद्वयमात्मना गृह्णाति। अन्यत् दत्तमन्यत्कृतम्। यथा दत्ता गोधूमाः कृताः शालयः। अन्यतो दत्तमन्यतो कृतम्। देवदत्तादादाय यज्ञदत्तात्कृतम्। प्रविष्टमप्रविष्टं कृतम्। गोष्ठागारमहानसप्रवेश्यं कुटुम्बिकादिभिः प्रवेशितमपि सर्वमेकदेशं वा न प्रविष्टमित्युक्त्वाऽऽहृतम्। यद्याऽऽदिष्टोऽध्यक्षो यत्लब्धव्यमायग्रहणमुद्गृह्यानीयतामिति तत्प्रविष्टमपि तस्य नाद्याप्युद्ग्राहयतादिति वदन् कालहरणेनोपजीवति।

अप्रविष्टं प्रविष्टं कृतमिति। हिरण्यादिकरोद्ग्रहणकाले दुर्गतः कुटम्बी लञ्चं दत्वा कालहरणार्थं प्रविष्टमपि अप्रविष्टं कास्यति। कुप्यमदत्तं मूल्यं प्रविष्टमिति। वस्त्रास्तरणादि स्वाम्यादेशादुद्धारकेण गृह्णाति। क्लेशयित्वा च मूल्यैकदेशं ददत् पूर्णं तल्लिखति। दत्तमूल्यं न तत्प्रविष्टमिति, कुप्यमिति वर्तते। कालादनन्तर्येण(न्तरार्घेण) सकलमर्घान्तरं वा गृह्णाति। यद्वा, अल्पमूल्यं प्रवेश्य महन्मूल्यं स्वयं गृह्णाति। सङ्क्षेपो विक्षेपः कृत इति, सहस्रकपिण्डकरदायिनि ग्रामे विप्रकीर्णकरं कृत्वा तद्-

श्रीमूला

ऽपहारोपायः। सङ्क्षेपो विक्षेपः कृत इति। सङ्क्षेपः जनसमूहदेयः पिण्डकरः विक्षेपः कृतः विप्रकीर्णकरः कृतः समूहिभ्यः प्रत्येकं विभज्य ग्राह्यः कृत इत्यर्थः। तथाकरणे हि राजद्रव्यमुपजीवितुं शक्यं ग्राम्यजनाश्चेति। विक्षेपः संक्षेपो वेति, जनादेकस्माद् बहुभिर्मासैरल्पशो ग्राह्यो विप्रकीर्णकरः एकस्मिन्नेव समये संपिड्य ग्राह्यः कृतः, एवं हि कुर्वताऽध्यक्षेण राजद्रव्यमुपजीवितुम्, लभ्यते जनाश्चेति। महार्घमल्पार्घेण परिवर्तितमिति। महार्घं युग्यवाहनादि अल्पार्घेण युग्यादिना विनिमितं विनिमायापहृतम्। अल्पार्घं महार्घेण वेति। अल्पमूल्यम् अत एव महाविक्रयविषयभूतं सामुद्रलावणादि पण्यं महामूल्येन अत एव अल्पविक्रयविषयेण सैन्धवलवणादिना परिवर्तितं विनिमितम्, तद्धि शीघ्रविक्रयेण लाभमुत्पादयत् पण्याध्यक्षस्योपजीव्यं भवतीति। समारोपितोऽर्घ इति, अर्घस्य यथास्थितादर्घादतिरेचनमित्यर्थः। तथा हि—करणे क्रेतारः स्वोपकारकामा भवन्तः पण्याध्यक्षस्यार्घनियामकस्योपजीव्या भवन्तीति। प्रत्यवरोपितो वेति, अर्घ इति सम्बध्यते, अर्घप्रत्यवरोपणे हि कृते विक्रेतारः यथास्थितार्घकामा भवन्तः पण्याध्यक्षस्योपजीव्या भवन्तीति।

श्रीमूला

रात्रयः समारोपिता इति । पञ्चरात्रवेतनं कर्मकरेभ्यो दत्त्वा सप्तरात्रवेतनं दत्तमित्येवञ्जातीयो रात्रिसमारोपः, अनेन ह्युपायेन कर्मकरेभ्यो धनमपह्रियते।

चाणक्यटीका

विक्षेपः सङ्क्षेपो वेति। पुनः पुनः सिद्धो युष्माकं विमर्दो भविता। तेन सङ्क्षिप्य शतमेकमुत्काल्य चिरेणापि प्रयच्छत अधिकं वा विमर्दो हीयत इति। सिद्धस्याऽधिकस्याऽप्रवेशनादपहारोऽयम् ।

महार्घं राजद्रव्यम् अल्पार्घेणात्मीयेन परिवर्तितम्। अल्पार्घम् अमहाविषयविक्रयं महार्घेण दुर्लभक्रयेण परिवर्तितमिति दुर्लभा हि महार्घस्य क्रेतार इति। तत् परिवर्त्तनमेतत् ।

समारोपितोऽर्घः। राजधान्ये पादिके द्रोणे तावन्मात्रमुपजीवितुं द्विपादोऽर्घः कृतः ।

प्रत्यवरोपितो वा। राजार्थं द्विपादिकमाख्याय पादिकः कुम्भो गृहीतः। अथवा राज्ञः कृते स्वल्पेनार्घेण सुवर्णादिकं क्रीत्वा उपजीवनार्थं स्वामिना कियता क्रीतमिति पृच्छ्यमानोऽर्थं समारोप्य कथयति। राजविक्रये वा अल्पोऽर्घ इत्युक्त्वा अवशिष्टमुपजीवति। तस्य लाभस्याप्रवेशनादपहार एवायम्।

रात्रयः समारोपिताः। रात्रिग्रहणेन अहोरात्रस्य ग्रहणम्। कतिचिद् दिवसान्

प्रतिपदपञ्चिका

व्यामोहेन राजार्थं ग्रामं च उपजीवति। विक्षेपस्संक्षेपो वा कृत इति, वर्तते। निक्षिप्तकरदायिनः पिण्डकरादानेनोपजीवति। धान्यपशुहिरण्यकुप्यविष्टिभिः विक्षिप्य संवत्सरावधि सहस्रकरदायिनि ग्रामे तत्सहस्रं एकदैव पिण्डीकृत्य गृह्णन् पूर्ववदुपजीवति। महार्घमल्पार्घेण परिवर्तितमिति। युग्मशतपूर्णायां श(तमु)त्मुखकायां (शन्मरुभ्र) पंचाशत्पणकं युग्मं प्रक्षिप्य द्विशतमूल्यं स्वयं गृह्णाति। अल्पार्घं महार्घेण वा परिवर्तितमिति। तद् यथा पण्याध्यक्षः पण्यक्रयविक्रयकाले महार्घेण सैन्धवलवणादिनाऽल्पविक्रयविषयेणाऽल्पं अर्थं सामुद्रादिकं महाविक्रयविषयं पण्यप्रतिपण्यविनिमयेन यथार्घं गृह्णाति, तत्रस्थ(स्थाप्यखा)भाण्डेन शीघ्रविक्रयपण्यलाभं फलम्।

समारोपितोऽर्घ इति, धान्यादिविक्रये स्थितादर्घादधिकभारोऽप्यक्रेतॄनुपजीवति। प्रत्यवरोवेतेति, अर्घ इति वर्तते। धान्यादिक्रये स्थितादर्घाधीनमनर्घं कृत्वा विक्रेतॄनुपजीवति।

रात्रयस्समारोपिता इति। रात्रिग्रहणेन अहोरात्रग्रहणं भृत्यकर्मकरादीनां

**रोपिता वा, संवत्सरो मासविषमः कृतः, मासो दिवसविषमो वा, समागमविषमः, मुखविषमः, धार्मिकविषमः, निर्वर्तनविषमः, पिण्डविषमः, वर्णविषमः, अर्घविषमः, मानविषमः, मापनविषमः, भाजनविषमः इति हरणोपायाः ॥**

---

श्रीमूला

प्रत्यवरोपिता वेति। रात्रय इति वर्तते, स्वामिसकाशाद् दशरात्रव्ययं गृहीत्वाऽष्टरात्रव्ययो गृहीत इत्येवञ्जातीयं रात्रिप्रत्यवरोपणम्, अनेन ह्युपायेन स्वामिद्रव्यमुपजीव्यते। संवत्सरो मासविषमः कृत इति। अधिमासरहित एव संवत्सरः साधिमासः कृत इत्यर्थः। अनेनोपायेनाधिमासलाभोऽपह्रियते। मासो दिवसविषमो वेति। अनूनदिवसो मासो दिवसोनः कृतः। समागमविषम इति। समागमे विषये विषमो व्यापार इत्यर्थः। तद्यथा समागतानां दृष्टानां कर्मकाराणां भक्तवेतनदाने परोक्षं कमपि द्रष्टव्यमपदिश्य स्वयं तद्भक्तवेतनं गृह्णाति। मुखविषम इति। कुतश्चिदायमुखादुत्पन्नं द्रव्यमन्यस्मादायमुखादुत्पन्नमिति ख्यापितम्, तदधिकृतादुत्कोचं गृहीत्वा। धार्मिकविषम इति। 'ब्राह्मणेभ्यः प्रत्येकं पणशतं दीयतामि'ति राजादेशे पुरोहितेन पुरोहितपुरुषेण वा तदर्धापहरणम्। निर्वर्तनविषम इति। किञ्चित्कर्मनिर्वर्तनप्रवृत्तौ विषमाचरणमित्यर्थः, तद्यथा—करदेभ्यः करोद्ग्राहकर्मनिर्वर्तनप्रसङ्गे करदान् 'युष्माभिरद्यैव करो निर्यातयितव्य' इत्यवरुध्य लञ्चग्रहणेन कञ्चिन्मुञ्चतीति। पिण्डविषम इति। पिण्डे समूहे विषमाचरणं, यथा—समूहदे ये विषये समूहिनमेकं लञ्चग्रहणादिना वर्जयित्वा समूहिभ्य इतरेभ्यो देयग्रहणम्। वर्णविषम इति। ब्राह्मणा एवाद्योत्तीर्णा नान्ये इत्युक्त्वा तद्दिवसवेतनस्यात्मसात्करणं नावध्यक्षेण कृतम्, अथवा स्वर्णेऽष्टवर्णके ग्राह्ये नववर्णकं स्वर्णदायकाद् गृहीत्वाऽष्टवर्णस्यैव राज्ञेऽर्पणं सुवर्णाध्यक्षेण कृतम्। अर्घविषम इति। सेनानिवेशादावर्घस्याव्यवस्थितत्वात् तं किञ्चिदधिकमपदिश्य राजार्योपजीवनम्। मानविषम इति। परिमाणोन्मानसाधनवैषम्यमित्यर्थः। तच्च हीनैस्तैर्देयं दत्त्वा महद्भिर्दत्तमिति ख्यापनम्, अथवा देयस्य हीनैर्दानं महद्भिः स्वीकरणम्। मापनविषम इति। मापनकृतं वैषम्यं मातृहस्तविशेषोत्पादितं वस्त्रादिमानविषयं वैषम्यम्। भाजनविषम इति। 'आज्यपूर्णं घटशतं दीयतामि'त्युक्ते अल्पानां घटानां शतं दत्त्वा महतां घटानां शतं दत्तमिति लेखनम्, तेन राजद्रव्यमपह्रियत इत्ययं चत्वारिंशत्तमो द्रव्यापहरणोपायः। इतिशब्दः परिसमाप्तिवचनः। हरणोपायाः समाप्ताः, किञ्चिद्भेदेन संभवन्तोऽप्यन्ये यथोक्तेष्वेवान्तर्भवन्तीत्यभिप्रायः।

चाणक्यटीका

कर्म कारुभिः कारयित्वा अपूर्णेष्वेव दिवसेषु वृत्तिदिवसाः पूर्णा इत्यपदिश्य स्वयं भृतिमादातुं समारोपिता रात्रयः।

पूर्णेष्वपि च न तावद् दिवसाः पूर्यन्त इति कर्मकारानतिसन्धातुं प्रत्यवरोपिताः। पूर्वो व्ययस्य बर्धनात् परिहापणम्। उत्तरो निबद्धस्य अप्रदानादपहारः।

चाणक्यटीका

संवत्सरो मासविषमः, राजानमतिसन्धातुं मासेनाधिकः, कर्मकारानतिसन्धातुं मासोनः कृतः ।

मासो दिवसविषमः, दिवसेनाऽधिको न्यूनो वेति पूर्ववत् । समागमविषमः यदाध्यक्षोऽस्मिन् मासे (दिवसे) वा गणनार्थं समागन्तव्यमिति जनपदान् प्रतार्य तस्मिन् कालेऽसमागताननेन छलेन तान् दण्डयति ।

मुखविषमः, अन्यस्मादायमुखाद् दण्डादेरुत्पन्नम् अनिबद्धमित्यप(हृत्य) ? दिश्य सञ्जातादौ निबध्नाति । तदीयलाभमुपजीवितुमायस्याऽप्रवेशनादयमपहारः ।

धार्मिकविषमः, ब्राह्मणेभ्यः सहस्रं दीयतामित्याज्ञायां ब्रह्मब्रुवेभ्यो दश दश दत्वा शतं शतम् अस्माभिर्लब्धमिति वाचयित्वा नवशतान्युपजीवति । निबद्धस्याऽप्रदानादपहारोऽयम् ।

निर्वर्तनविषमो नाम समुचितान्निर्वर्त्तनविशेषादन्यथाकरणम् । तद्यथा—मृदुना उपक्रमेन साध्यम् उत्कोचार्थी दारुणेन साधयतीति । अवस्तारप्रयोगोऽयम् ।

पिण्डविषम इति । अल्पं समुदयपिण्डं निबद्धमधिकं कृत्वा बहु निबद्धं वा अल्पं कृत्वा स्वार्थं साधयतीति । सिद्धस्याऽप्रवेशनादपहारोऽयम् ।

वर्णविषमः, वर्णपरिच्छेद्यस्य हीनवर्णस्य द्रव्यस्याऽधिकमूल्येन विक्रयः । परिवर्तनभेदोऽयम् ।

अर्घविषमः, राजपण्यविक्रयकाले महान्तमल्पमघ निबध्नाति । क्रयकाले विपर्यस्यतीति ।

मानविषमः, महता प्रस्थादिना आययुपसङ्गृह्य अल्पेनोपनयति ।
मापनविषमः, हस्तकौशलात्तेनैव मानेन प्रभूतमाकृष्य व्ययकाले न्यूनं मापयति ।
भाजनविषमः, घृतघटशतं दीयतामिति दत्तायामाज्ञायाम् अल्पं दत्वा शेषं गृह्णाति । अनुग्राह्येभ्यो वा लोभान्महाप्रमाणैर्ददातीति । उपभोगोऽयम् । एतच्च ( सं ? ) गतानुगतिकन्यायान् प्रतिबन्धादिष्वन्तर्नीयते ।

अयं त्वथ अत्र नैवैते प्रतिबन्धादीनां विशेषाः, प्रतिबन्धादयः अन्यस्य ( ? ) अध्यक्षणामज्ञानालस्यप्रमादभयकामकोपदर्पदोषजाताः स्युः । लोभकृतास्त्वेते प्रेक्षापूर्वकारिणां सोपधयो दोषाः अनन्तरेणैव लोभेन सम्बध्यन्ते । तथा अपहरणोपाया इत्युक्तम् । बहुलख्यापनार्थं चेदं चत्वारिंशदिति । तद्यथा—जातिविषमाः, समानविषमाः, उन्मादविषमाः, सङ्ख्याविषमाः इत्यादिकल्पनावैचित्र्यादपर्यवसानो लोभप्रणीतः ।

प्रतिपदपञ्चिका

...दैवसिके भक्तवेतनदानेऽष्टदैवसिकं दत्तमिति वदन् भृत्यादीनां दैवसिकमर्थम् अपहरति । प्रत्यवरोपिता इति । रात्रय इति वर्तते, तेषामेव भृत्यादीनामष्टदैवसिक-

[ उक्तैरुपायैः द्रव्यापहरणशङ्कायां प्रश्नपूर्वकं सत्यांशपरिज्ञानेन राष्ट्रे ख्यापनम्, तत्तदपहृतद्रव्यप्रतिनिवर्तनं च ]

**तत्रोपयुक्तनिधायकनिबन्धकप्रतिग्राहकदायकदापकमन्त्रिमन्त्रिवैयावृत्यकरान् एकैकशोऽनुयुञ्जीत । मिथ्यावादे चैषां युक्तसमो दण्डः । प्रचारे**

---

प्रतिपदपञ्चिका

भक्तवेतनदाने सप्तदैवसिकं दत्तमित्येकदिवसहापनेन दैवसिकं राजार्थमपहरति । संवत्सरो मासविषमः कृतः मासो दिवसविषम इति । सम्पूर्णमपि पक्षं दिवसोनं कथयन्ति । समागमविषम इति । दृष्टस्य भक्तवेतनदाने कदाचित् परोक्षमपि दृष्टं (द्रष्टव्यं) कृत्वा स्वयं गृह्णाति । मुखविषम इति । आयं मुखान्तरोत्पन्नं द्रव्यमन्यमुखाधिकृतेन लञ्चदानपूर्वं प्रार्थितस्तदीयायमुखोत्पन्नं श्रावयति । धार्मिकविषम इति । पुरोहितस्तत्पुरषो वा लञ्चेन ब्राह्मणान्नित्यकपिलान्तं प्रयच्छति ।

निर्वर्तनविषम इति । वर्णान्तरोत्तारणेऽपि नावध्यक्षो ब्राह्मणा एवाद्योत्तीर्णा इति । तद्दैवसिके वेतनं भुङ्क्ते । सौवर्णिकादिपर्णकं वैषम्येण वा तदन्तरमुपजीवति । अर्घविषम इति । कटकादौ प्रत्यहमर्घरपानवस्थितत्वात् क्रयविक्रययो राजार्थं मुष्णाति । मानविषम इति, मानं तुल्याद्युपलक्षणार्थम् । मानतुलावैषम्यं हि तैर्दानैर्महद्भिः श्रावणम् । मापनविषममिति । हस्तवैषम्येण क्रयविक्रये यदुपजीवति स तस्य लाभम् । भाजनविषय इति, घटसहस्रं सर्पिषो । दीयतामित्यादिष्टे लघुतरघटसहस्रदानात्तदन्तरोपजीवनम् । इति शब्दः समाप्तौ हरणोपाया इति । वर्तमाने पुनस्तद्ग्रहणं देशकालादिभेदभिन्ना अप्येते एतावन्त एवेति ज्ञापनार्थम् । तदपहारदण्डास्तु पूर्वप्रकरणोक्ता वक्ष्यमाणाश्च यथाभिहितं योजनीयाः ।

श्रीमूला

तत्रेति । तत्र हरणोपायेषु शङ्क्यमानेष्विति शेषः, उपयुक्तादीन् अष्टौ एकैकशः प्रत्येकम्, अनुयुञ्जीत पृच्छेद्—'इदमनेनाऽध्यक्षेणापहृतं न वे'ति । तत्रोपयुक्तो युक्तानामुपरि नियुक्तः प्रत्ययितपुरुषः, निधायकः भाण्डागारिकः, निबन्धको लेखकः, प्रतिग्राहकः प्रतिग्रहीता, दायकः करदः, दापकः राजपुरुषः, मन्त्री युक्तस्य धीसचिवः, मन्त्रिवैयावृत्यकरः मन्त्रिणः कर्मकरः । मिथ्येत्यादि । मिथ्यावादे च एषाम् उपयुक्तादीनाम्, युक्तसमः अध्यक्षतुल्यो दण्डः । प्रचारे च जनपदे च अवघोषयेत् सपटहताडमव-

चाणक्यटीका

इहादेशस्यादाता एकैकमनुयुञ्जीत, अनुनीय ( प्रय ? पृ ) च्छेत्—किमनेन युक्तेनाऽपहृतम्, कियद्वा इति । मिथ्यावादे च वाक्यभेदेऽपरिच्छिन्ने दुष्टस्य प्रच्छादनाददुष्टस्य दूषणात् । युक्तसम इति । युक्तस्य यो ( दण्डो ) यथापराधम् उक्तः, स तेषा-

**चावघोषयेत्—'अमुना प्रकृतेनोपहताः प्रज्ञापयन्तु' इति। प्रज्ञापयतो यथोपघातं दापयेत्। अनेकेषु चाभियोगेषु अपव्ययमानः सकृदेव परोक्तः सर्वं भजेत। वैषम्ये सर्वत्रानुयोगं दद्यात्। महत्यर्थापचारे चाल्पेनापि सिद्धः सर्वं भजेत।**

———————

प्रतिपदपञ्चिका

तत्रेति। तेषां हरणोपायानाम् अन्यतमशङ्कायामेतानेव पुरुषानेकैवशः प्रत्येकम् अनुयुञ्जीत। किलैतदमुनाऽध्यक्षेणोपहृतं न वेति पृच्छेत्। तत्रोपयुक्तः औपरिकः, निधायकः स्थापकः, मन्त्रियुक्तस्य बुद्धिसहायः वैयावृत्यकरः, कर्मकाराः शेषाः प्रदेशान्तरे व्याख्याताः। मिथ्यावादे चैषामिति, एषामुपयुक्तादीनां मिथ्यावादेऽन्यथा-कथने युक्तसमोऽर्थापहारिणो युक्तस्य यो दण्डः स एवेति। प्रचारे चेति। प्रचारे जनपदे। अवघोषयेत् पटवाहरणघोषेणैवं ब्रूयात्। अमुनाऽमुकनामधेयेन प्रकृतेन युक्तेन। उपहरता

श्रीमूला

ख्यापयेत्, केन प्रकारेण, अमुना प्रकृतेन अध्यक्षेण, उपहताः उत्कोचग्रहणादिना पीडिता जनाः, प्रज्ञापयन्तु आवेदयन्तु स्वां स्वां पीडामित्यार्थम्, इति अनेन प्रकारेण। प्रज्ञापपयतः जनस्य, यथोपघातम् उपघातानुरोधेन, दापयेद् द्रव्यम्। अनेकेष्विति। अनेकेष्वभियोगेषु उपधातावेदनेष्वनेककृतेषु युगपत् प्राप्तेषु सत्सु, अपव्ययमानः सर्वमुपघातमात्मकृतमनभ्युपगच्छन् युक्तः, सकृदेव परोक्तः एकत्राभियोगे एकेनाभि-योक्त्रा साक्ष्यादिभिर्विभावितः पराजितः, सर्वं भजेत सर्वाभियोगार्थं यथाभागं दद्यात्। वैषम्य इति। अनेकेष्वभियोगेष्वेकत्र संप्रतिपत्तिरितरत्र विप्रतिपत्तिश्च वैषम्यं तस्मिन्, सर्वत्रानुयोगं दद्याद्, विप्रतिपन्नेषु सर्वेष्वभियोगेषु साक्षिप्रश्नावसरं दद्याद्, राग-द्वेषादिनिमित्तमिथ्याभियोगशङ्कापनुत्तये। एकाभियोक्तृविषयमाह—महतीति। महति अर्थापहरे, प्रभूतस्वर्णरजतादिनानार्थापहारे, केनचित् प्रज्ञापिते, अल्पेनापि सिद्धः एकदेशेनापि साक्ष्यादिभिर्विभावितापचारः, सर्वं भजेत अभियोगविषयं कृत्स्नमर्थं दद्याद्, अर्थाद् विप्रतिपद्यमानो युक्तः।

चाणक्यटीका

इत्यर्थः। प्रचारे यत्राऽसौ प्रचरितः प्रकृत अध्यक्षः। उपहत इति। अन्यायेन दण्डकरो दापित इत्यर्थः। प्रज्ञापयतु दोषमितिशेषः। प्रज्ञापयतः प्रतिपादयतः साक्षिभिः। उपहृत्यवोपहतस्य यथाविधमुपघातं द्रव्यादानाद् दापयेदध्यक्षः। अनेकेष्विति। बहुभिरभियुक्तो यदि सर्वत्रैवाऽपव्ययते नाहमेवं करोमीति। सकृदेव एकत्रैव। परोक्तो जितः। सर्वम् अभियोगहिरण्यम्। भजेत दाप्यो दण्डनीयश्चेत्यर्थः।

अस्याऽपवादमाह—वैषम्य इति। वैषम्यं द्विविधम्। तद्यथा—केनचिन्मिथ्या-दण्डनोऽस्मीत्यभियुक्तः, अन्येन भक्षक इति; एकेनोपेक्षक इत्यभियोगवैषम्यम्।

[ अध्यक्षादिकृतदुष्कार्यसूचकानां सत्यत्वादिशोधनेन सत्यत्वे सम्माननम्, अन्यथा दण्डश्च ]

**कृतप्रतिघातावस्थः सूचको निष्पन्नार्थः षष्ठमंशं लभेत। द्वादशमंशं**

———————

चाणक्यटीका

किञ्चित् प्रतिपद्यत इति प्रतिपत्तिवैषम्यम्। तत्र सर्वत्रैकैकस्मिन्नेव पदे योगं प्रतिपादनं प्रतिपादको दद्यात्। नैकेन सर्वं साधयेत्। महतीति। एकैकस्मिन्निति सहस्रे शते वा एकदेशं शतं वा पञ्चाशद् ( वा ) प्रतिपादितः सर्वं सहस्रं शतं वा भजेत प्रतिपादयितुम्। योगवि( घातो ? भागो )महत्यर्थोपघाते साम्येऽप्यनुयोगं दद्यात्, नाल्पेन महान्तं साधयेत्। अल्पेनापि सिद्ध एकैकस्मिन्नेवाभियोगे। महति सर्वं भजेतेति।

कृतप्रतिघातावस्थ इति। यद्यहं न प्रतिपादयामि, तदा प्रतिघातावस्था शरीरनिग्रहावस्था कार्येति कृतकरणः। सूचको ने ( ? ) हेतुकः। निष्पन्नार्थः षष्ठमंशं प्रतिपादितार्थस्य पुनरुत्साहनार्थमुपकारत्वाच्च। भृतकस्तु राज्ञः तस्य वा कृत-

प्रतिपदपञ्चिका

अर्थापहारादिना पीडिताः प्रज्ञापयन्त्वावेदयन्त्विति। प्रज्ञापयतो यथोपघातम् यदन्यायेनापहृतं तद् दापयेत्। अनेकेषु चाभियोगेष्विति। यदानुभावो(विता) वेदयितारो भवन्ति। तदासौ युक्तोपव्य(र्य)मानो मिथ्याकुर्वाणः, सकृदेव परोक्तः एकेनापि अभियोक्त्रा साक्ष्यादिसाधने भावितः सर्वं भजेत। स तेन। (सर्वमिति हि) हिअनेकार्थाभियुक्तेन सर्वार्थव्यपलापिना भावितैकदेशेन देयम्। यदभियुज्यत इति, वैषम्य इति, अनेकेष्वभियुक्तो यदा क्वचित् सम्प्रतिपत्तिं करोति, तदा सम्प्रतिपत्तिविषये यथोचितं दापयेदिति उक्त एव विधिः। प्रतिपत्तिविषये तु सर्वत्रानुयोगं साक्ष्यादिप्रश्नावकाशं दद्यात्। जानपदा अस्याहितपूर्वमत्सरा विपक्षप्रयोजिता वा कदाचिदन्यथा कुर्युरिति। महत्यर्थापहारे चेति। एकेनैवाभियोक्त्रा यदा प्रभूतहिरण्यादिनिमित्तमभियुक्तो भवति, तदल्पेनाऽपि सिद्धेन एकदेशेनाऽपि विभावितेन सर्वं यथाभियुक्तं भजेत दद्यात्।

कृतप्रतिघातावस्थ इति अनेन सूचकविधिमाह—कृतो गृहीतः प्रतिघातनिमित्तं शरीरद्रव्योपघातप्रतिषेधादर्थमवस्थः प्रतिभूः, येन स कृतप्रतिघातावस्थः। यथाऽहं पुनरध्यक्षवचनान्नं त्वया विनाशयितव्या(नि)नु गृहीतप्रतिभूः सूचको निष्पन्नार्थः। षष्ठमंशं

श्रीमूला

कृतप्रतिघातेत्यादि। सूचकः अध्यक्षापचारपिशुनः, कृतप्रतिघातावस्थः कृतः स्वीकृतः प्रतिघातावस्थः प्रतिघातार्थोऽवस्थः अध्यक्षोत्पाद्यानर्थप्रतीकारार्थः प्रतिभूर्येन स तथाभूतः भवेदिति शेषः, यद्यध्यक्षापचारं कश्चित् सूचयेत् स प्रतिघातप्रातिभाव्यं गृहीत्वैव सूचयेदित्यर्थः। स निष्पन्नार्थः सिद्धसूचितार्थः, षष्ठमंशं लभेत, साधिताद्

**भृतकः। प्रभूताभियोगादल्पनिष्पत्तौ निष्पन्नस्यांशं लभेत। अनिष्पन्ने शारीरं हैरण्यं वा दण्डं लभेत, न चानुग्राह्यः।**

[ सूचकेन स्वसूचितांशसत्यत्वसिद्ध्यनुपदमेव स्वमोचनम्, दूष्येण साकं उपजापादिना मेलने वधश्च ]

**निष्पत्तौ निक्षिपेद्वादमात्मानं वाऽपवाहयेत्।**
**अभियुक्तोपजापात्तु सूचको वधमाप्नुयात् ॥६१॥**

इत्यध्यक्षप्रचारे समुदयस्य युक्तापहृतस्य प्रत्यानयनम् अष्टमोध्यायः।
आदित एकोनत्रिंशः।

---

श्रीमूला

धनात्। द्वादशमिति। भृतकः भृत्यः सूचकः, द्वादशमंशं लभेत। प्रभूतेत्यादि। बहुप्रकारद्रव्यविषयेऽभियोगे प्रभूताभियोगाद् अभियोगविषयबहुप्रकारद्रव्यमध्याद्, अल्पनिष्पत्तौ अल्पस्यैव साक्ष्यादिभिः संसिद्धौ, निष्पन्नस्यांशं लभेत सूचकः। अनिष्पन्न इति। अनिष्पन्ने अभियुक्तेऽर्थे सर्वथैवासंसिद्धे सति, शारीरं हैरण्यं वा दण्डं मिथ्याभियोगनिमित्तं दमं, लभेत, न चानुग्राह्यः न च रक्षणीयः, निर्दोषविसृष्टाध्यक्ष-प्रभवेभ्योऽनर्थेभ्य इत्यार्थम्।

निष्पत्ताविति। निष्पत्तौ सूचितार्थसत्यत्वसिद्धौ, वादम् अभियोगम्, निक्षिपेद् विरमयेत् सूचकः, आत्मानं वा अपवाहयेत् आत्मानं चाभियोगबन्धान्मोचयेत्,

चाणक्यटीका

संविधान उत्साहनार्थमेव लभते। प्रभूतार्थमभियुज्य यद्यल्पं निष्पादयेत् इति, तदा निष्पन्नस्यांशं षष्ठं द्वादशं वा। न त्वेकदेशनिष्पादनाद् बन्ध्यः। सर्वनाशे वरमल्पोऽपि भाव इति लाभाच्च तत्पराः सन्तो न चोदयन्ति। अनिष्पन्नार्थे एकदेशेनापि। शारीरम् एकाङ्गच्छेदनम्। हैरण्यं वा अपराधानुरूपम्, मिथ्यावादित्वात्। न चाऽनुग्राह्य इति अधिकृतेभ्यो न रक्ष्यः। अन्यस्तु सूचको रक्ष्य इति ज्ञापयति। तथा चोक्तम्—

"ह्रियमाणं यदन्येन भृतो वा यदि वा भृतः।
यो राजद्रव्यमाचष्टे पृच्छतेऽपृच्छतेऽपि वा॥
श्रोतव्यो रहसि (क्षिप्तं) रक्ष्यश्चामात्यतोऽपि वा।
आयुक्ता ह्यपयन्तारं भूयिष्ठं घ्नन्ति भारत!॥" इति॥

निष्पत्ताविति। निष्पत्तौ प्रमाणैः सम्भावितायाम्। अभियुक्ते अभियुक्तोपजा-

प्रतिपदपञ्चिका

लिखेत्। द्वादशमंशं भृतक इति, भृतकोऽनुजीवी प्रभूतार्थाभियोगादिति, यदा सूचकेन प्रभूतार्थनिवेदनं कृतम्। स च तावानर्थो न सञ्जातः स्वल्पो निष्पन्नः, तदा निष्पन्न-स्यैवांशं लभेत। अनिष्पन्नार्थस्तु एकांतमृषावादी शारीरमेकं वधादिकं हैरण्यं वा

श्रीमूला

अनिष्पत्तौ वादपरिसमापनमात्ममोचनं वा सूचकेन कर्तुमशक्यमित्यभिप्रायः । भट्टस्वामी तु 'निष्पत्तौ सूचितार्थसंसिद्धौ, निक्षिपेद् अन्यत्र दूष्यादौ सञ्चारयेद्, वादं सूचकत्वापवादम् । आत्मानं वापवाहयेद् 'अहमेतस्मिन् काले विषयेऽत्र नासमिति प्रख्यापयेद्' इति व्याचष्टे । यदि तु अभियुक्तेनाध्यक्षेण लञ्चोपप्रलोभनाद्युपायैर्भेदं नीतः सूचकः स्वामियुक्तार्थासाधकं राजान्तिके ब्रूयात्, तदा स वधदण्डमर्हतीत्याह—अभियुक्तेत्यादि ॥

इति कौटिलीयार्थशास्त्रव्याख्यायामध्यक्षप्रचारे द्वितीयाधिकरणे अष्टमोऽध्यायः ।
समुदयस्य युक्तापहृतस्य प्रत्यानयनम्,
आदित एकोनत्रिंशः ॥

चाणक्यटीका

पाधिक्षेपान्निक्षिपेत् । परित्यजेद् वा व्यवहारं नाऽहं जानामीति । आत्मानं वाऽध्यक्षादेव लब्धार्थः सन् अपवाहयेद् अपसारयेत् पलायेतेत्यर्थः । तु शब्दस्य वा अवधारणार्थत्वाद् वधमेव ( ? ) ।

समुदयस्य युक्तापहृतस्य प्रत्यानयनं नाम अष्टमं प्रकरणम् ॥
॥ अष्टमश्चाऽध्यायः ॥

प्रतिपदपञ्चिका

अर्थहरणलक्षणं देशकालाद्यपेक्षया दण्डं लभेत । न चाऽनुग्राह्यो मिथ्याभियोगेन अध्यक्षेणोपहन्यमानेन रक्षणीय इति ।

अधुना अध्यायप्रान्ते श्लोकमाह—निष्पत्तावित्यादि, निष्पत्तौ सूचितार्थसंसिद्धौ निक्षिपेदन्यत्र दूष्यादौ सञ्चारयेत् । वादं सूचकत्वापवादमात्मानं वाऽपवाहयेत् अहमेतस्मिन् काले विषये नासमिति प्रख्यापयेत् । अभियुक्तोपजापादिति । यदा स एव अभियुक्तोऽध्यक्षः सूचकं वदति, किमर्थं त्वया षड्भारनिमित्तं राजकुले समावेदितं अहमेव तवार्थं प्रयच्छामि पूर्वावेदितं तु यथोपसंहरति । राजा तथा क्रियतामित्येवमुक्ता यदा स एवाऽद्य राजानं ब्रूयात् । तदा नावभियुक्तोपजापात् सूचको वधमाप्नुयात्, वधे न योजयितव्यो न क्षन्तव्य इति ।

इति श्रीभट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रटीकायाम्
अध्यक्षप्रचारे द्वितीयेऽधिकरणे अष्टमोऽध्यायः ।

समुदयस्य युक्तापहृतस्य प्रत्यानयनम् । आदित एकोनत्रिंशाऽध्यायः ॥

# सप्तविंश प्रकरणम्

## नवमोऽध्यायः ।

## उपयुक्तपरीक्षा

[ नियोज्यानां नियुक्तानां चाध्यक्षाणां शक्तिपरीक्षावश्यकता,
परीक्षाक्रमः, कर्मप्रवर्तनक्रमश्च ]

**अमात्यसम्पदोपेताः सर्वाध्यक्षाः शक्तितः कर्मसु नियोज्याः। कर्मसु चैषां नित्यं परीक्षां कारयेत्, चित्तानित्यत्वान्मनुष्याणाम् ।**

---

श्रीमूला

उपयुक्तपरीक्षेति सूत्रम् । उपयुक्ता युक्तानामुपरि नियुक्ताः प्रत्ययितपुरुषाः, औपरिका इति ये व्यपदिश्यन्ते, तेषां परीक्षा दोषगवेषणेति सूत्रार्थः । युक्तापहृत-प्रत्यानयनोक्त्या गताध्याये युक्तानां परीक्षणीयत्वमवगतम् तत् किमुपयुक्तानामप्यस्ति, उत नेति सन्देहे प्रकरणमिदमारब्धमिति सङ्गतिः ।

अमात्येत्यादि । अमात्यसम्पदोपेताः 'जानपदोऽभिजात' इत्युक्तजानपदत्वादि-गुणसमृद्धियुक्ताः । एतेनार्थोपधाशुद्धियोगमात्रेण नालामिति सूचितम् । सर्वाध्यक्षाः सर्वे अध्यक्षा उपयुक्ता युक्ताश्च, शक्तितः तत्तत्कर्मसामर्थ्यानुसारेण, कर्मसु नियोज्याः । एषां कर्मसु च, परीक्षां दोषगवेषणां नित्यं कारयेत् । अर्थोपधाशुद्धानामेव कर्मसु नियोक्तव्यत्वस्य प्रागभिधानान्नियोगानन्तरं पुनः परीक्षायाः किं कारणम्, तत्राह— मनुष्याणां चित्तानित्यत्वादिति । मनुष्यचित्तं स्वभावादव्यवस्थितं यतः । स्वाभाविक-

चाणक्यटीका

यस्मादेवं केचिद् विविधैरुपायैरपहरन्ति, अपहरन्तोऽप्येवम् अन्यैर्वैरद्वेषाभ्यां सूचकैरपहन्यन्ते, तस्मात् कर्मकालात् प्राङ्नियोगात्, कर्मकालाद् उत्तरकालञ्च उपयुक्तानाम् अध्यक्षाणां परीक्षणमिति प्रकरणमुच्यते । सन्निधातृसमाहर्त्रोः प्रागुक्तत्वात् तदवशिष्टा अध्यक्षा उपयुक्ताः, तेषां परीक्षोच्यते । नियोगात्तावत् पूर्वमुपयुक्ताः परीक्ष्याः किङ्गुणाः स्युः इत्याह—अमात्येति । अमात्यसंपदा जानपदादिकया सर्व-गुणपादार्धगुणहान्या युक्ताः उत्तममध्यमाधमाः सर्वाध्यक्षा इति । ननु प्रकरणात् सामुदायिक इत्येव । किं तर्हि (वि) वीताध्यक्षेऽपि तेषाममात्यसम्पदेति चेत् शक्तितो यस्मात् सम्पन्नाः शक्ताः कर्माणि कर्तुमिति । अथवा सम्पदुपेतत्वेऽपि ये यत्कर्तुं शक्तास्ते तत्र । कर्मसु चेति कर्मकाले परीक्षां समर्थैः कारयेत् । उपधाशुद्धत्वाद् अमात्यसंपदोपेतत्वात् पुनः परीक्षणमनुपपन्नमिति चेत् चित्तानित्यत्वात् कार्यवशाद्

**अश्वसधर्माणो हि मनुष्याः नियुक्ताः कर्मसु विकुर्वते । तस्मात् कर्तारं करणं देशं कालं कार्यं प्रक्षेपमुदयं चैषु विद्यात् । ते यथासन्देशं असंहता**

---

प्रतिपदपञ्चिका

उपयुक्तपरीक्षेति सूत्रम् । उपयुक्ता औपरिका युक्तानामुपरि नियुक्ताः प्रत्ययितपुरुषाः । यत्र चैते(वि)परीक्ष्यन्ते, तत्र अन्येषामपि युक्तादीनां दण्डापूपिकन्यायात् परिक्षणमागृहीतम्, परीक्षा च तत्तदध्यक्षाणां दोषाण्वेषणमिति सूत्रार्थः । सम्बन्धस्त्वर्थो यथा शुद्धान्तसमाहर्तॄन् सन्निधात्रादिकर्मसु स्थापयेदित्युक्तम् । न चार्थोपधाशुद्धिमतामपि जानपदादिगुणरहितानां कस्मिंश्चित्कर्मणि योगदानं युज्यते इति तत्प्रतिपादनार्थमाह—अमात्यसम्पदोपेता इति । अमात्यसम्पदुक्ता जानपदोऽभिजातः, इत्येवमादिका तयोपेतास्सर्वाध्यक्षाश्शक्तित इति । यस्य यत्र शक्तिः स तत्र नियोक्तव्य इति । तेषु कर्मस्वेषामध्यक्षाणां नित्यं सततं परीक्षां कारयेत् । तस्मात् पुनः पूर्वपरीक्षितानां पुनः पुनः परीक्षावचनं तदाह—चित्तानित्यत्वान्मनुष्याणामिति, एतच्च स्वाभाविकमनित्य-

श्रीमूला

चित्तानित्यत्वमुक्त्वाऽवस्थाविशेषभवमाह—अश्वेत्यादि । यथा हि अश्वा रथवहनकर्मानियोगदशायां साधुशीला एव सन्तस्तन्नियोगदशायां विकारं प्राप्नुवन्ति, एवं कर्मसु अनियोगदशायां सुशीला एव परिदृष्टाः नियोगदशायां शीलवैकृतं प्राप्नुवन्तीत्यर्थः । तस्मादिति । तस्मात् यथोक्तात् कारणात्, कर्तारम् अध्यक्षम्, करणं धर्माद्यधिकरणम् अनुष्ठानं वा, देशं स्थानीयादिकम्, कालम् अहोरात्रादिं दुर्भिक्षकालादिं वा, कार्यं

चाणक्यटीका

अनियतस्वभावा चित्तवृत्तिरिति । मनुष्यजातिव्यापित्वं धर्मस्याह—अश्व (स) धर्माण इति । यथा सुदान्ताः प्रकृत्यवस्थायां विज्ञातस्वरूपाः कर्मसु युद्धादिषु भयश्रमाभियोगात् चित्रश्रवणाद्वा विकुर्वते अन्यादृशीं गतिं कुर्वते । एवं ह्याह—

"अवाहनकृतो नाशो वाजिनः कामुकस्य वा ।" ॥इति॥

एवमध्यक्षाः कर्मणि अज्ञानालस्यप्रमादभयादिभिः आगन्तुकनिमित्तापेक्षया विकुर्युरिति यस्मात् कर्मसु चित्तानित्यत्वं तस्मात् विनियोक्तुकामः कर्त्रादीनेषां प्राक् परिच्छिन्द्यात् । तद्यथा—एतावत्कर्तृभिः कर्मकरैः, अनेन कर्मकरणेन क्रियोपायेन

प्रतिपदपञ्चिका

त्वम् । वैशेषिकं तु दृष्टान्तेन दर्शयितुमाह—अश्वसधर्माण इति । तत्राश्वे बहवो धर्माः ऊर्ध्वस्वापादयः । तत्प्रतिषेधार्थमाह—नियुक्ताः कर्मसु विकुर्वत इति । अश्वा हि यदैव रथपृष्ठवहनव्यापारे नियुज्यन्ते, तदैवावश्यं कियन्तमपि विकारमुदर्शयन्ति । तद्वन्नियुक्ता अपि यत एवं हि स्यात् तत्तत्कर्त्रादीन् सम्यग्विद्यात् । कर्ता अध्यक्षः, करणं धर्मा-

**अविगृहीताः कर्माणि कुर्युः संहताः भक्षयेयुः, विगृहीताः विनाशयेयुः । न चानिवेद्य भर्तुः किञ्चिदारम्भं कुर्युः अन्यत्रापत्प्रतीकारेभ्यः ।**

---

श्रीमूला

करणीयम्, प्रक्षेपं कर्मकरभृतिम्, उदयं लाभं च, एषु अध्यक्षेषु विषये, विद्यात् । ते अध्यक्षाः, यथासन्देशं स्वाम्यादेशानतिक्रमेण, असंहता अकृतान्योन्यसङ्केताः, अविगृहीताः अकृतान्योन्यविरोधाः, कर्माणि कुर्युः । संहतिविग्रहयोर्दोषमाह–संहता इत्यादि । कर्माणीत्यनुवर्तते । कर्माणि भक्षयेयुः कर्मफलान्यपहरेयुः । कर्माणि विनाशयेयुः निष्फलीकुर्युः । स्वामिनमपृष्ट्वा न कमपि कर्मविशेषमग्निजलादिनिमित्तविपत्प्रतीकारातिरेकेण कुर्युरित्याह—न चानिवेद्येत्यादि ।

चाणक्यटीका

विन्यासविशेषेण, अनेन वा द्रव्येण सारदार्वादिकेन, साधनेन, अस्मिन् देशे जनपदे मध्येऽन्ते वा, अस्मिन् काले हेमन्तादौ, इदं कार्यं दुर्गादिकम्, अनेन प्रक्षेपेण सहस्रेण वा धनेन, एवंविधायं शुल्काद्यायनिमित्तम् आपत्प्रतीकारफलं वा निर्वर्त (य) त इत्याकलयेत् । ते तु नियुक्ताः सन्तः कथं कर्माणि कुर्युरित्यत आह—ते यथासन्देशं स्वाम्यादेशमनतिवर्त्तमानाः । असंहता अविगृहीताश्च इतरेतरेण कर्म कुर्युः । किमर्थमिति चेत् अन्योऽन्यदोषप्रच्छादनेन संहता राजार्थं भक्षयेयुः । विगृहीताश्च परस्परद्वेषाद् अन्योन्यावग्रहापेक्षं कार्यं विनाशयेयुः । तद्यथा—सीताध्यस्य कर्म कालाति—पातनेन कुप्यैर न नु गृह्णानोऽपि तदध्यक्षो विनाशयति इत्यादि योजनीयम् ॥

नचानिवेद्य भर्त्तुः अनाख्याय । किञ्चिदल्पमपि आरम्भं तत्समापनानुज्ञानकामचारार्थम् । अस्यापवादः अन्यत्रेति । चोरडामरिकाग्न्युदकाद्यापत्प्रतीकारेभ्यः । निवेदनायां हि मा भूत् कालातिपत्तिरित्यभिप्रायः ।

प्रतिपदपञ्चिका

धिकरणादि, देशःस्स्थानीयादि, कालोऽहोरात्रादिः दुर्भिक्षादिर्वा, कार्यं कर्तव्यम् दुर्गसन्ध्यादि, प्रक्षेपः कर्मकरादिपरिव्ययः । समुदयो लाभः, इत्येतत्सर्वं जानीयात् । ते अध्यक्षा यथा सन्देशं स्वामिना यथादिष्टमसंहताः परस्परमकृतसंविदः अपि गृहीताः परस्परानुपघातिनः कर्माणि समाहर्तृसन्निधातृव्यापारप्रभृतीनि कुर्युः । सङ्घातविग्रहयोश्च तेषां दोषमाह—संहताः परस्परदोषप्रच्छादनेन भक्षयेयुः । कर्माणीति वर्तते । अत्र कर्मशब्दश्च कर्मफले वर्तते । विगृहीताः परस्परावबद्धमत्सराः कर्माणि विनाशयेयुः । अफलान्यर्धफलानि वा कुर्युः । न चानिवेद्य भर्तुः अनाख्याय किञ्चिदारम्भं क्रियाविशेषं कुर्युः । एतत्तु यथादिष्टस्यैव प्रतिप्रश्नार्थवचनमिति केचित् । अपूर्वारम्भार्थमित्यपरे । अस्यापवादोऽन्यत्र—आपत्प्रतीकोरभ्य इति । आपदोऽग्न्युदकादिकास्तत्र न पृच्छेत् । प्रमादस्थानेषु च स्त्री-मद्य-गेयादिष्वेषां अत्ययं दण्डं राजा स्थापयेत् । नियोगकाल एव स्थापनम् । श्रावणं कुर्यात् ।

[ कर्मकरेषु असतां निग्रहः सताम् अनुग्रहश्च ]

**प्रमादस्थानेषु चैषामत्ययं स्थापयेद्दिवसवेतनव्ययद्विगुणम् । यश्चैषां यथाऽऽदिष्टमर्थं सविशेषं वा करोति, सः स्थानमानौ लभेत ।**

[ राजजनपदसम्बन्धिनां द्रव्याणां कर्मकरकृतभक्षणादिज्ञाने मतभेदेनोपायद्वयम् ]

**"अल्पायतिश्चेत् महाव्ययो भक्षयति, विपर्यये, यथाऽऽयतिव्ययश्च न**

---

श्रीमूला

प्रमादेत्यादि । एषाम् अध्यक्षाणाम्, प्रमादस्थानेषु स्त्रीमद्यादिव्यसनेषु दृष्टेषु, अत्ययं दण्डम्, स्थापयेत् सद्य एव प्रयुञ्जीत । कियन्तं स्थापयेत्, दिवसवेतनव्ययद्विगुणं दिवसवेतनस्य प्रमाददिवससम्बन्धिनोऽध्यक्षवेतनस्य दिवसव्ययस्य प्रमादनिमित्त-कतद्दिवसकर्मादर्शनजन्यस्यार्थनाशस्य च द्विगुणम् ।

यश्चैषामिति । एषाम् अध्यक्षाणां मध्ये, यः, अर्थं राजकार्यं, यथादिष्टं करोति स्वाम्युपदिष्टप्रकारकं निष्पादयति, सविशेषं वा करोति आदिष्टाभ्यधिकगुण-युक्तं वा निष्पादयति, सः, स्थानमानौ लभेत प्रकृष्टं पदान्तरं पूजां च प्राप्नुयात् ।

राजार्थजानपदार्थग्रसनाग्रसनोपलम्भेऽभ्युपायाकाङ्क्षायां व्ययमहत्त्वाल्पत्व-

चाणक्यटीका

प्रमादस्थानेषु स्खलितस्थानेषु विनियस्थो भवेत् परिभाषणं कुर्याद् अस्मिन् स्खलितेऽयं दण्ड इति । ( तं ? स ) कीदृश इत्याह—भृतानां दिवसवेतनम् अध्यक्षाणां व्ययद्विगुणं दिवसोपभोगो यः पानभोजनादिना तद्द्विगुणमिति । अर्थाच्चिशब्दलोपो द्रष्टव्यः । अन्ये दिवसवतेनव्ययद्विगुणमिति कृतसमासं पठन्ति । भृत्यभरणीयादि— ( व ? ह ) वेतनमाकलय्य अध्यक्षस्य कर्दमकरणं च (?) द्विगुणो दण्ड इति । अज्ञानादिषु त्वपरिभाषितोऽपि प्रागुक्तोऽयमिति अध्यक्षाणा ( मित्येत्य ? मत्ययो ) युक्तम् । उपयुक्तग्रहणेन सर्वेषामुक्तत्वात् । तस्माद् अप्रमादार्थमेव परिभाषणं सर्वेषा-मितियुक्तम् । तथा आयप्रमादस्थानेष्वित्युक्तमत्ययं स्थापयेदिति च ॥

यश्चैषां यथादिष्टं तथैव कार्यं कुर्यात् । अधिकं (स) विशेषम् । मानञ्च पूजां वस्त्रादिकं लभेत ॥

प्रतिपदपञ्चिका

प्रमत्तस्याध्यक्षस्य कर्माकरणे यद्दिवसवेतनं दत्तं तत्द्विगुणमादेयम् । व्यय-द्विगुणमिति च यावत् । यावती हानिः करणे जाता सा द्विगुणादपनेया व्ययशब्दश्च व्ययनिमित्ते फले वर्तते । यश्चैषामध्यक्षाणां यथादिष्टं पूर्वप्रसिद्धं सविशेषं समधिकं वा विकल्पेन कुर्यात् । उत्पादयेत् । स स्थानमानौ लभेतेति, स्थानमधिकारान्तरं मानः पूजा ।

**भक्षयति" इत्याचार्याः । "अपसर्पेणैवोपलभ्यते" इति कौटल्यः ।**

[ व्ययेषु न्यूनाधिक्यदर्शनेनानुमेयाः अनर्थाः, तद्धेत्वानुगुण्येन दण्डः तत्परिहारश्च ]

**यः समुदयं परिहापयति स राजार्थं भक्षयति । स चेदज्ञानादिभिः**

---

श्रीमूला

समत्वलिङ्गकमनुमानमाचार्या अभ्युपायं मन्यन्त इत्याह—अल्पेत्यादि । अल्पायतिरल्पधनागमः, महाव्ययश्चेद् अनल्पार्थोपभोगो यदि भवेत्, तदा सः भक्षयति राजप्रजार्थमुपजीवति । पिपर्यये यथायतिव्ययश्च महायतित्वे सत्यल्पव्यय आयत्यनुरूपव्ययश्च न भक्षयति । इत्याचार्याः । स्वमतमाह—अपसर्पेणवेति । अपसर्पेणैवोपलभ्यते चारद्वारेणैव दुष्टादुष्टत्वमध्यक्षाणां निश्चीयते । 'त्रयाणामेकवाक्ये संप्रत्यय' इति गूढपुरुषप्रणिध्युक्तदिशेत्यर्थः । एवकारेण महाव्ययत्वाल्पव्ययत्वयोरूपलब्ध्युपायत्वं व्यवच्छिद्यते । ते ह्यल्पायतेरपि महाकुटुम्बिन उद्धारग्रहणेन महाव्ययत्वदर्शनात् प्रभूतराजप्रजाद्रव्यापहारिणोऽपि सहजकृपणतयाऽल्पव्ययत्वदर्शनाच्च व्यभिचरिते इत्यभिप्रायः ।

यः समुदयमिति । यः, समुदयं द्रव्योत्पत्तिम्, परिहापयति न्यूनयति, स

चाणक्यटीका

अल्पायतिश्चेदिति अल्पोपादानः सन् यो महाव्ययः स राजार्थं भक्षयतीति अनुमानाज्ज्ञायते । विपरीतो बहूपादानो योऽल्पव्ययः समोपादानव्ययश्च न भक्षयति । मत्व्यभिचारित्वेतदनुमानम् । कश्चिद् बहूपादानोऽपि राजा ( र्थहाना ? र्थादान ) लोभात् तत् प्रच्छाद ( नं नवा नृपो ? यन्नल्पमन ) ल्पं वा भक्षयेत् । समोपादानव्ययश्च राजद्रव्यमादाय प्राज्ञत्वाद्यथायाति व्ययञ्च करोत्येव । तस्माद् अपसर्पेणैवोपलभ्यते सदसद्वा भक्षणमिति ॥

यद्यनुमानादुपलभ्येत परमिदमनुमानं युक्तं तदाह यः समुदयं निबद्धं हापयति

प्रतिपदपञ्चिका

अत्राचार्यमते नानुमानिकं परीक्षणप्रकारमाह–अल्पायतिश्चेदिति अल्पायतिकोऽल्पागमः चेच्छब्दो यद्यर्थे, महाव्ययः प्रभूतोपभोगः तत्रायरहितस्य व्ययस्यासम्भवात् व्यक्तं राजार्थं जानपदं वा भक्षयतीत्यनुमीयते । विपर्यये तु प्रभूतायतिरल्पव्ययो यथायतिव्ययश्चानुपव्ययो न भक्षयतीत्येवमाचार्या मन्यन्ते तदपवादार्थमाह—अपसर्पेण अपसर्पणैवेत्यादि, एवकारोऽवधारणे, अपसर्पेण त्रयाणामेकवाक्यतया निश्चितमुपलभ्यत इति । कौटिल्य इति । कस्मादायव्ययलिङ्गस्य नैकृतिकेषु व्यभिचारदर्शनादिति ।

समुदयमुत्पत्तिं परिहापयति न्यूनीकरोति । स राजार्थं भक्षयति, अन्यथा

**परिहापयति, तदेनं यथागुणं दापयेत् । यः समुदयं द्विगुणमुद्भावयति स जनपदं भक्षयति । स चेद्राजार्थमुपनयति, अल्पापराधे वारयितव्यः; महति यथापराधं दण्डयितव्यः । यः समुदयं व्ययमुपनयति स पुरुषकर्माणि**

---

श्रीमूला

राजार्थं भक्षयति । सः, अज्ञानादिभिः अज्ञानालस्यभयप्रमादकामकोपदर्पलोभैर्गणनिक्याधिकारोक्तैः, परिहापयति चेद्, एनं, तद् हापितं द्रव्यं, यथागुणं द्विगुणं त्रिगुणम् अधिकगुणं वा अपराधानुसारिगुणम्, दापयेत् ।

यः समुदयं द्विगुणमिति । यः समुदयम्, द्विगुणं क्लृप्तादधिकम्, उद्भावयति, सः, जनपदं भक्षयति कथमन्यथा समुदयाधिक्यमिति । सः, राजार्थम् उपनयति चेत् स्वोद्भावितमधिकं साकल्येन राज्ञेऽर्पयति चेत्, तर्हि, अल्पापराधे अल्पेऽपराधे जनपदपीडने, वारयितव्यः 'मा पुनरेवं जानपदेभ्यः क्लृप्ताधिकमुद्भावये' ति प्रतिषेद्धव्यः । महति द्विगुणत्रिगुणाद्युद्भावनरूपे कोशक्षयकलकजनपदकर्शनहेतावपराधे स्वयमपहरणरूपे च, यथापराधं दण्डयितव्यः । यदुक्तम्—

"यथान्नकर्शनात् प्राणाः क्षीयन्ते सर्वदेहिनाम् ।
तथा कोशा नरेन्द्राणां क्षीयन्ते राष्ट्रकर्शनात् ॥" इति ।

यः समुदयं व्ययमिति । यः, व्ययं कर्मार्थव्ययाय क्लृप्तं धनम्, समुदयम् उपनयति समुदये प्रवेशयति व्ययितमकृत्वेत्यार्थम्, सः, पुरुषकर्माणि भक्षयति पुरुषान्

चाणक्यटीका

स राजार्थं स्वयमन्यैर्वा अवश्यमेव भक्षयति । तदैनमिति अध्यक्षम् । यथागुणं यथापरिभाषितगुणमेव दापयेदित्यर्थः । 'एषामानुपूर्व्या यावानर्थोपघात' ( अधि० २ अ० ७ ) इति दर्शयति ॥

राजार्थस्य भक्षणेऽनुमानमुक्तम् । जनपदार्थस्योच्यते । यः समुदयनिबन्धमकृत्वा कर्मविशेषमनुभूतम् अकस्मादु (द्) भूतं द्विगुणं दर्शयति जनपदं पीडयति । अन्यथा कथमस्योद्भवः स्यादिति । स चेज्जनपदपीडया द्विगुणं समुदयं राजार्थं समाहर्तुः समर्पयति राज्ञो वा, अल्पेऽपराधे वारयितव्यः—न मे हितमेतत्, न त्वया जनपदः

प्रतिपदपञ्चिका

सिद्धोत्पत्तेः कथं न्यूनत्वं स चेदज्ञानादिभिरिति, अज्ञानालस्यप्रमादभयकामकोपदर्पलोभैरष्टाभिर्निमित्तैः हापयति । तदेवं यथागुणमिति द्विगुणं त्रिगुणाद्यपक [ द्विगुण त्रिगुणन्दापयित्तव्य ] उत्पादयति । स जनपदं भक्षयति । अन्यथा हि—समुदयद्वैगुण्यं नोपपद्यत इति । स चेद्द्विगुणादिकं निरवशेषं राजार्थम् उपनयति । राज्ञःप्रवेशयति । ततोऽल्पे प्रजापीडापराधे नैवं पुनरेवं कर्तव्यमिति वाचा वारयितव्यम् । महत्यपराधे

**भक्षयति स कर्मदिवसद्रव्यमूल्यपुरुषवेतनापहारेषु यथाऽपराधं दण्डयितव्यः । तस्मादस्य यो यस्मिन्नधिकरणे शासनस्थः स तस्य कर्मणो याथातथ्यं आयव्ययौ च व्याससमासाभ्यामाचक्षीत ।**

---

श्रीमूला

कर्मकरान् कर्माणि च नाशयति कर्माननुष्ठापनेन । तस्य दण्डमाह—स इति । सः, कर्मदिवसद्रव्यमूल्यपुरुषवेतनापहारेषु कर्मार्थदिवसस्य यद् द्रव्यं तद्दिवसकर्मसाध्यं फलं तस्य मूल्यं कल्पितः कश्चिदर्घः कर्मदिवसद्रव्यमूल्यं पुरुषवेतनं पुरुषाणां कर्मकराणां वेतनं कर्मदिवसद्रव्यमूल्यस्य पुरुषवेतनस्य च अपहारेषु विनाशनेषु, यथापराधम् अपराधानुसारेण दण्डयितव्यः कर्मदिवसद्रव्यमूल्यं कर्मकरपुरुषवेतनं च यावत् कर्माकरणेन हापितं तावद् दापयितव्य इत्यभिप्रायः ।

तस्मादिति । तस्मात् समुदयविषयेऽपराधे दण्डविधानात्, योऽध्यक्षः, यस्मिन्नधिकरणे, शासनस्थो नियुक्तः, सः, तस्य कर्मणः तदधिकरणसम्बद्धस्य कर्मणः, याथातथ्यं यथास्थितिम्, आयव्ययौ च, व्याससमासाभ्यां सङ्क्षेपविस्ताराभ्याम्, अस्य राज्ञः, आचक्षीत निवेदयेत् ।

चाणक्यटीका

पीडयितव्य इति । महत्यां जनपदपीडायां राजार्थकरणेऽल्पतया यथापराधं दण्डनीयः । तच्चोद्भावितं प्रत्यर्पणीयमेवेति ॥

यः समुदयं वर्धयितुमुपयुज्य वा प्रतिपूरयितुं व्यये प्रब्रुवेन (?) अतिसन्धायोपनयतीति स पुरुषकर्माणि निष्फलीकुर्वन् वेतनादानेन भक्षयतीति । स हि पञ्च दिवसान् कर्म कारयित्वा चतुरस्त्रीन् प्रतिपाद्यमान एव द्वन्द्वेन वा ( ? ) दिवसान् ( परि ? अप ) हरति, द्रव्यं वा महार्घं बहुभिरल्पमूल्यं कुर्वन् द्रव्यमूल्यमपहरति, पुरुषवेतनमेव वा महान्तमल्पं करोतीति स कर्मदिवसाद्यपहारेषु यथापराधं दण्डनीय इति ॥

यस्मादेवं तस्मादस्य राज्ञोऽध्यक्षैर्भक्षितस्य परिज्ञानार्थम् । यो यस्मिन् उत्तरेऽतीते वा अन्धकारे शासनस्थः आज्ञाकारी । स तस्य आत्मीयस्य कर्मणो याथातथ्यं स्वरूपम् । आयव्ययौ च शरीरमुखप्रपञ्चनाद् व्यासेन, संपीड्य समासेन वा आचक्षीत राजजनपदार्थपुरुषकर्मभक्षाशङ्कापरिहारार्थम् ॥

प्रतिपदपञ्चिका

प्रजापीडया निर्विशेषानुपनयने च यथापराधं दण्डयितव्यः । अभिहितञ्च ।

"यथान्नकर्शनात्प्राणाः[१] क्षीयन्ते सर्वदेहिनाम् ।
तथा कोशा नरेन्द्राणां क्षीयन्ते राष्ट्रकर्शनात ।।" इति ।

---

१. कर्षन्ते इति पाठ ।

[ अनालोचितभाविपर्यवसानवतां त्रिविधानां कुपुरुषाणां निर्देशः, स्वरूपविवरणम् तेषां निग्रहश्च ]

**मूलहरतादात्विककदर्यांश्च प्रतिषेधयेत् । यः पितृपैतामहमर्थमन्यायेन भक्षयति स मूलहरः । यो यद्यदुत्पद्यते तत्तद्भक्षयति स तादात्विकः यो**

---

### पतिपदपञ्चिका

द्विगुणशब्दोऽत्राधिक्यमात्रोपलक्षणार्थम् । यस्समुदयं व्ययमुपनयतीति द्विकर्मको निर्देशः । व्ययं व्ययनिमित्तं द्रव्यं कर्मकरादिभ्यो न प्रयच्छति । समुदये प्रवेशयति । स पुरुषकर्माणीति, पुरुषे कर्मशब्दो जातिवचने । पुरुषाः कर्मकरादयः, कर्माणि तत्साध्यानि, पुरुषान् कर्माणि च द्वयमपि भक्षयति विनाशयति । स कर्मदिवसेति । कर्मार्थो दिवसः तेन निष्पादितं द्रव्यं कर्मदिवसद्रव्यम् । तस्य मूल्यं कर्मदिवसद्रव्यमूल्यं पुरुषाः कर्मकरादयः तेषां वेतनं पुरुषवेतनम् । कर्मदिवसद्रव्यमूल्यं च पुरुषवेतनानि च कर्मदिवसद्रव्यमूल्यपुरुषवेतनानि । तदपहारेषु यथापराधं दण्डयितव्यः ।

कर्मकरस्य भृते तदानादरकरणेन कर्मणो यावती हानिः संजाता यावन्मत्रं च तस्य न दत्तं देशकालाद्यपेक्षया तदनुगुणं दण्डयितव्य इति । यतश्चैते समुदयपरिहापणादिष्वभिहित दण्डाः तस्मादस्य विजिगीषोर्यो यस्मिन्नधिकरणे अधिकारे शासनस्थोऽधिकृतः, स तस्य कर्मणो याथातथ्यं यथावस्थितिं आयव्ययौ चशब्दान्नीवीं च व्याससमासाभ्यामाचक्षीत आवेदयेत् ।

### श्रीमूला

मूलहरेत्यादि । मूलहरतादात्विककदर्यान् प्रतिषेधयेत् मूलहरणादिकर्मणो वारयेत् । के पुनर्मूलहरादय इत्यत्राह—यः पितृपैतामहमिति । यः, पितृपैतामहं पितृपितामहार्जितम्, अर्थम्, अन्यायेन भक्षयति दुर्विनियोगेन नाशयति, स मूलहरः । यद्यदुत्पद्यते प्रत्यहं लभ्यते, तत्तद् यः, भक्षयति दुर्विनियोगेन नाशयति, स तादात्विकः ।

### चाणक्यटीका

भूयस्तरामात्यसम्प्रयोगेऽपि मूलहरादीनां यथा सन्निधात्रादयो नाधिकुर्युस्तथा प्रतिषेधयेत् । सन्निधात्रादिनेव वा नियुक्तान् उत्तरकालं मूलहरादीन् ज्ञात्वा निवारयेद् एभ्यो दोषेभ्य इति । पितृपैतामहमिति यः स्वपित्रा पितामहेन वा पूर्वार्जितम् ( अर्थम् ) अन्यायेन वेश्याद्युपभोगेन नाशयति सः मूलम् आत्मार्थस्येव राजार्थस्यापि हरतीति अनुमीयते । यो यद्यदुत्पद्यते स्वद्रव्यं तत्तत् तदात्व एव कालान्तरे कथं वर्तितव्यमित्यनपेक्ष्य भक्षयति । स तदात्वाप्रयोजनमुत्तरकालं परद्रव्यादानमन्तरेण

### प्रतिपदपञ्चिका

मूलहरादींश्च प्रतिषेधयेत् । कर्मभ्योऽवरोधयेत् अपसर्पयेत् । तांश्च मूलहरादीन् स्वयमेव व्याचष्टे यः पितृपैतामहमित्यादि । निगदव्याख्यानं गूढम् । स पक्षवांश्चेति ।

**भृत्यात्मपीडाभ्यां उपचिनोत्यर्थं स कदर्यः। स पक्षवांश्चेदनादेयः, विपर्यये पर्यादातव्यः। यो महत्यर्थसमुदये स्थितः कदर्यः सन्निधत्ते, उपनिधत्ते, अवस्रावयति वा—सन्निधत्ते स्ववेश्मनि, अवनिधत्ते पौरजानपदेषु, अवस्रावयति परविषये—तस्य सत्री मन्त्रिमित्रभृत्यबन्धुपक्षमागतिं गतिं च**

———————

श्रीमूला

यः भृत्यात्मपीडाभ्याम् अर्थम्, उपचिनोति वर्धयति, स कदर्यः। प्रतिषेधानन्तरमपि मूलहरणाद्यनुवृत्तावाह—स इति। सः मूलहराद्यन्यतमः, पक्षवांश्चेत् पक्षो बन्धुसम्पत् तद्वान् यदि, अनादेयः अग्राह्यः। तद्बन्धुकोपपरिहारार्थमगृहीतधन एव स्थानादवरोपणीय इत्यर्थः। विपर्यये पक्षवत्त्वाभावे, पर्यादातव्यः सर्वस्वं हर्तव्य इत्यर्थः।

यो महतीति। यः कदर्यः महति अर्थसमुदये स्थितः सन्, सन्निधत्ते अवनिधत्ते अवस्रावयति वा, तत्र सन्निधानावनिधानावस्रावणानि विवृणोति—स्ववेश्मनि सन्निधत्ते भूगर्तस्तम्भकोटरादिषु स्थापयति, पौरजानपदेषु अवनिधत्ते रक्षणार्थं निक्षिपति, परविषये अवस्रावयति शत्रुजनपदे धनसञ्चारणं करोति, तस्य अध्यक्षस्य,

चाणक्यटीका

कथं जीवेत्। योऽसम्प्रदानेन भृत्यान् पीडयित्वा अनुपभोगेन च आत्मनः सञ्चिनोत्यर्थं सोऽर्थपतित्वस्य कुत्सनात् कदर्य इत्युच्यते। मूलहरणातादात्विकयोस्तु अर्थत इत्यर्थः। स तादृशो जनपदमन्यं वा कथं न पीडयेत्। स पक्षवांश्चेदिति कदर्य आश्रयवान् यदि, प्रकोपपरिहारार्थम् अनादेयधनत्वाद् अनादेय इत्युच्यते। मूलहरतादात्विकयोस्तु किञ्चिद्दातव्यं नास्तीत्यप्रसङ्ग एव।

ननु कदर्यो यथापराधं दण्डयः। किमित्यस्य द्रव्यमानीयते चेत्, कोऽन्यस्तद् द्रव्योस्यपभोगस्स्यात्। अनधिकृतस्यापि चेदृशस्य द्रव्यमादातुं युक्तमेवोपयोगार्थम्।

"योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः।
तयोरपि कुटुम्बाभ्याम् आहरेद् यज्ञसिद्धये॥" इति। मनु० ११।१४

अत् एव विधानार्थमाह—विपर्यय इति विनाशः पर्यादातव्यः अध्यक्षेणादातव्य इति॥

किं विविधदोषः पुनरसावित्याह—यो महत्यर्थसमुदये अधिकृतः कदर्यत्वाद् राजद्रव्यं वा सम्यङ् निधत्ते निखन्य स्थापयति स्ववेश्मन्येव। स्ववेमश्मनो वा

प्रतिपदपञ्चिका

स इति मूलहरादीनाम् अन्यतमम् पक्षसम्बन्धानुबन्धो यदि भवति तदा नादेयो न ग्राह्यः। तत्पक्षकोपप्रतिषेधार्थं विपर्यये पक्षरहितः पर्यादातव्यो गृहीतसर्वस्वः कार्यः। यो महत्यर्थसमुदये ऐश्वर्ये स्थितस्सन्निधत्त इत्यादि। तत्र सन्निधानादीन्स्वयमेव व्याचष्टे। सन्निधत्ते स्ववेश्मनि, यथा खननादिप्रकारेण स्थापयति। उपनिधत्त इति।

**द्रव्याणामुपलभेत । यश्चास्य परविषये सञ्चारं कुर्यात्तमनुप्रविश्य मन्त्रं विद्यात् । सुविदिते शत्रुशासनापदेशेनैनं घातयेत् ।**

---

श्रीमूला

मन्त्रिमित्रभृत्यबन्धुपक्षं मन्त्र्यादिचतुष्टयबलम्, द्रव्याणामागतिं गतिं च, सत्री गूढपुरुषप्रणिध्युक्तलक्षणः, उपलभेत ।

यश्चेति । यश्च परविषये, अस्य कदर्यस्य, सञ्चारं द्रव्यसंचारणं कुर्यात्, तम्, अनुप्रविश्य अनुकूलतया प्रविश्य तन्मित्रं तद्भृत्यो वा भूत्वेत्यर्थः, मन्त्रं विद्यात् अभिसन्धिरहस्यं जानीयात् सत्री । सुविदित इति । सुविदिते सत्रिद्वारेण सम्यग् विज्ञाते मन्त्रे, एनं कदर्यं, शत्रुशासनापदेशेन घातयेत् शत्रुणा कदर्यमभिसम्बुध्य प्रहितं 'प्रेषितोऽर्थः प्रतीष्टः, अवशिष्टः क्षिप्रं प्रेष्यतामि'ति लिखितवृत्तान्तं किमपि लेख्यं शत्रुविषयागतजनहस्तादन्तपालेन गृहीतोपनीतमित्येवं कूटसृष्टस्यैव शत्रुशासनस्य अपदेशेन प्रख्यापनेन हतं कारयेत् ।

चाणक्यटीका

अपनीय पौरजानपदेषु विश्वासस्थानेषु निधत्ते । अगम्य वा अवस्रावयति परविषये राष्ट्रान्तरे । तत्परिज्ञानमावापः । तस्य सत्री तस्य पूर्वप्रणिहितः सत्री मन्त्र्यादीना-हारयेत् । अयमस्य ( निःशि ) क्षयिता, इमे चास्य इयन्तो भृत्याः, एतानि मित्राणि, एतानि द्रव्याणि, एतावानस्य मातृपितृबन्धुपक्षः, अथवा एतेऽस्य बान्धवाः, अयमस्य स्वजनः, तातः श्व ( शुर ) श्च, अतश्च इतश्च इयन्ति द्रव्याण्यागच्छन्ति, ( अमुञ्च अमुञ्च ? अदश्च अदश्च ) स्थानं गच्छन्ति इत्येवमुपलब्धे सुकरमादानम् ॥

परविषयस्तुते तु, विधिरुच्यते यश्चेति । मन्त्र्यादीनामन्यतमः तं परविषये द्रव्यावस्रावणार्थं गता-गतं कुर्वन्तम् आनुकूल्येन प्रविश्य आत्मसाद्भूतः सत्री मन्त्रि-मित्रं मन्त्रफलं परमार्थमागमयेत् । सुविदिते अवस्रावणे कृते चिकीर्षिते वा तेषु रक्षार्थं त्वन्मित्रेणामुना तद्द्रव्यमानीतम्, शेषमप्यवस्राव्य त्वया यथाशक्ति अपहृत्य आगन्तव्यम् इति शत्रुलेखं प्रकाश्य पक्षपातिनमपि दोषवत्त्वात् सर्वैस्त्यक्तं घातयेत् । मा अमात्योऽप्येवं कार्षीदिति ॥

प्रतिपदपञ्चिका

पौरजानपदेषु यो निक्षिपति अवप्रायति । यश्शत्रुविषयेऽर्थसञ्चारं करोति तस्य स्त्रीमन्त्रिमृत्यादिपक्षद्रव्याणामागमनं गमनं चोपलभेत जानीयात् । यस्माच्च (यश्च) कदर्यादेः परविषये द्रव्यसञ्चारं कुर्यात् । तं भृत्यादिभावेन अनुप्रविश्य सत्री मन्त्रं विद्यात् कदर्यादिरहस्यं जानीयात् । सुविदिते सम्यग्विज्ञाते । शत्रुशासनापदेशेनेति अभिव्यक्तं गृहीतं शत्रुलेखाद्वाऽर्थान् शत्रुलेखवाही गुल्मपालो वा राज्ञ उपनयेत् । तत्र च लेखे कदर्यादिभिर्लिखितव्यम् । प्राप्तोऽयं यस्त्वयार्थो मा गन्तव्यमित्यादि तदभिख्यार्थेय एनं कदर्यादिकमभिव्यक्तं च घातयेत् । एते द्रव्यापहारिणां दोषा भवन्ति ।

[ ससाक्षिकव्यवहारस्यैव युक्तता, उत्तराध्यक्षयोः तच्छिष्ययोग्यताश्च ]

**तस्मादध्यक्षाः सङ्ख्यायकलेखक रूपदर्शकनीवीग्राहकोत्तराध्यक्षसखाः कर्माणि कुर्युः । उत्तराध्यक्षाः हस्त्यश्वरथारोहाः । तेषामन्तेवासिनः शिल्पशौचयुक्ताः सङ्ख्यायकादीनामपसर्पाः ।**

[ कर्मप्रवर्तनोपयोगिशालाकल्पनविधिः ]

**बहुमुख्यमनित्यं चाधिकरणं स्थापयेत् ।**

---

श्रीमूला

तस्मादिति । तस्माद् राजद्रव्यापहारे यथोक्तदण्डविधानात्, अध्यक्षाः, अस्य राज्ञः, कर्माणि धनसम्बद्धानि कार्याणि, सङ्ख्यायकलेखकरूपदर्शकनीवीग्राहकोत्तराध्यक्षसखाः कुर्युः सङ्ख्यायकादिसाक्षिकाः सन्तः कुर्युः । सङ्ख्यायकाः गणकाः, लेखकाः प्रसिद्धाः, रूपदर्शकाः निष्कदीनारादिरूपपरिशोधकाः, नीवीग्राहकाः व्ययितशिष्ट धनग्रहणाधिकृताः, उत्तराध्यक्षा औपरिकाः ।

के पुनरुत्तराध्यक्षाः कर्तव्या इत्यत्राह—उत्तरेत्यादि । हस्त्यश्वरथारोहाः हस्त्यारोहाः अश्वारोहा रथारोहाश्च वृद्धभावदिना युद्धाक्षमत्वं प्रतिपन्नाः, उत्तराध्यक्षाः कर्तव्याः । तेषामिति । तेषाम् उत्तराध्यक्षाणाम्, शिल्पशौचयुक्ता अन्तेवासिनः शिल्पं नियोगानुष्ठानकौशलं शौचं स्वकृत्याऽविसंवादनं ताभ्यामुपेताः शिष्याः, संख्यायकादीनामपसर्पाः संख्यायकलेखकादिप्रवृत्त्युपलम्भार्था गूढपुरुषाः कर्तव्याः ।

बह्वित्यादि । अधिकरणं युक्तकर्मस्थानम्, बहुमुख्यं स्थापयेत् बहवो मुख्याः

चाणक्यटीका

तस्मादिति निगमयति । यस्माद् घातयितव्या अन्येऽप्येवं मा भूवन्निति । अस्य एवंविधोराज्ञः । तस्माद सर्वे महत्यल्पे (वा) समुदये नियुक्ताः सङ्ख्यायकाद्यविरहिताः कर्माणि कुर्युः । सङ्ख्यायको गणकः लेखको लेखिता । परीक्षको रूपदर्शकः । भाण्डागारिको नीवीग्राहकः । हस्त्वश्वरथविद्याविदो विद्वत्वादेव शिक्षयितारो यत्क्षयिता श्चोत्तराध्यक्षाः विदुः ।

प्रतिपदपञ्चिका

तस्मात्अस्द राज्ञोऽध्यक्षास्सङ्ख्यायकादिसमेताः कर्माणि कुर्युः । तत्र सङ्ख्यायको गणकः लेखकः प्रतीतः उपदर्शी नीवीग्राहकः सन्निधातृपुरुषः उत्तराध्यक्षा औपरिकाः तानाह उत्तराध्यक्षा इत्यादि । हस्त्यश्वस्थारोहाः प्रतीताः । तेषां हि वार्धक्यात् सङ्ग्रामेऽपि कलितानामत्र विनियोगः । ये तु तेषामन्तेवासिनः शिल्पशौचयुक्ताः शिल्पं शस्त्रशिक्षादि शौचमभ्युपेतस्याव्यभिचारः अपसर्पाः युक्तादीनां वृत्तान्तोपलब्धये गूढपुरुषाः स्युः ।

[ एवं विश्वप्रयत्ने कृतेऽपि कर्मकरैः अर्थभक्षणस्य दुष्परिहार्यता दुर्ज्ञेयता च ]

**यथा ह्यनास्वादयितुं न शक्यं**
**जिह्वातलस्थं मधु वा विषं वा ।**
**अर्थस्तथा ह्यर्थचरेण राज्ञः**
**स्वल्पोऽप्यनास्वादयितुं न शक्यः ॥६२॥**

---

श्रीमूला

प्रधाना यस्मिंस्तत् तथाभूतं कुर्यात्, बहवश्चेत् प्रधानास्तेऽन्योन्यशङ्किता राजाद्यर्थं नापहरन्तीति । अनित्यं च स्थापयेत् अनित्यं न विद्यते नित्यः स्थिरश्चिरस्थायी युक्तो यस्मिंस्तत् तथाभूतं च कुर्यात् । नित्यो हि युक्तश्चिरसंवाससुलभां मित्रसम्पदमवष्टभ्याऽऽत्मदोषान् निह्नुवीत, जानपदाश्च तस्य दोषान् कालान्तरात्मापकारभिया नाविष्कुर्युरिति ।

अध्यायान्ते श्लोकानाह—यथाहीत्यादि । अनास्वादयितुं न शक्यम् अर्थादास्वादनपरिहारमिच्छतापि । अशक्यत्वोपपादकमाह—जिह्वातलस्थमिति । विनापि पुरुषयत्नेन तदुदरप्रवेशं यद्देशसन्निकर्षे लभेत तद्देशनित्यसन्निहितमीत्यर्थः । अर्थ इति योऽत्यल्पत्वाद् भक्षितविज्ञातोऽप्यनर्थापर्यवसायी मधुस्थानीयो, यश्च महत्वाद् वधदण्डान्तपरमानर्थपर्यवसायी विषस्थानीयः, स उभयविधोऽपि । अर्थचरः अर्थेषु व्याप्रियमाणोऽध्यक्षः । तदेवमर्थभक्षणस्याध्यक्षदुष्परिहरत्वमनेनोक्तम् ॥

चाणक्यटीका

बहुमुख्यमनेकायत्तं परस्परभयान्नापचरिष्यति । एकमुख्यं हि यथेष्टं भक्षयति । अनित्यञ्च नित्ये हि कृतास्पदाः (अ) संहता अपि संव (स्ये ? दे) रन् । अधिकरणम् अधिक्रियन्ते कार्याण्यस्मिन्निति । तद्रचयेत् ।

कस्मात् पुनरेतावान् प्रपञ्चः क्रियते । ननु उपधाशुद्धान् प्रमादस्थानेषु च परिभाषितान् उभयलोकाविरुद्धत्वादविकारिण एवाधिकुर्यात् । यद्येवं लभ्येत कृतस्यादुर्लभत्वे तदिति (?) ।

रक्षातिशयविधानार्थं स्वभावमनुवदति–यथेति । जिह्वातलस्थं गोचरप्राप्तम् । मधु वा विषं वेति न केवलं पथ्यमेव मध्वादि, अपथ्यमपि विषादिनेत्यतिशयोक्तिः । अथवा अब्रह्मचर्यादिना मधुना परलोकविरुद्धम्, विषञ्च इहपरलोकविरुद्धमिति । अर्थचरेण अधिकृतेन राज्ञो हिताहितं धर्मानर्थांश्च अनवेक्षमाणेन स्वल्पोऽप्यनास्वादयितुं न शक्यः ।

प्रतिपदपञ्चिका

बहुमुख्यमनित्यञ्चेति, बहुमुख्यं बहुप्रधानं बहवो हि परस्पराशङ्कया न भक्षयन्ति । अनित्यञ्चेति, अनित्यस्य नित्यव्यपेक्षा जानपदा यथावस्थितिं पृष्ट्वा कथयन्ति ।

**मत्स्या यथाऽन्तस्सलिले चरन्तो**
**ज्ञातुं न शक्याः सलिलं पिबन्तः ।**
**युक्तास्तथा कार्यविधौ नियुक्ताः**
**ज्ञातुं न शक्या धनमाददानाः ॥६३॥**
**अपि शक्या गतिर्ज्ञातुं पततां खे पतत्रिणाम् ।**
**न तु प्रच्छन्नभावानां युक्तानां चरतां गतिः ॥६४॥**

---

प्रतिपदपञ्चिका

न च मैत्रीभावं भयं वोपगच्छन्ति । एवं यथोक्तेनापि प्रकारेणार्थानां प्रविष्टानां सम्यग्रक्षणं न शक्यं कर्तुम् । किमु ( ग ) दूरस्थितानाम्, मेतत्प्रतिपादनाय तद्रक्षाय नदतिशयप्रतिपादनार्थं चाध्यायप्रान्ते श्लोकमाह—यथा ह्यनास्वादयितुमित्यादि । मधु वा विषं वेति । मधुविषदृष्टान्तोपादनं परिणत्यामविरुद्धस्य वा विवेचन प्रतिषेधार्थम् । येन द्रव्येण जिह्वातलस्थग्रहणं विनापि भावदोषेण स्तोकस्यापि अवश्यमास्वादनार्थं अशक्यपरिहारार्थं च । तत्र येन द्रव्येण यावता भक्षितेनापि न दूष्यते, नत्पक्वान्नहरितशाकादिकं, अल्पमूल्यं च मधुरस्थानीयम् विपरीतं, रत्नसारादिमहामूल्यं च वधपरिक्लेशादिदण्डं निमित्तं विषस्थानीयम् । तत्र परिणतिमविगणय्य भक्षयन्त्येवाधिकृताः । अथवा यथा कश्चित् मधुभक्षो व्रतभङ्गभयादनिच्छन्नपि जिह्वातलस्थितं मध्वास्वादयति । तथा च मरणभीरूर्दृष्टादृष्टदोषमविगणय्य राजार्थं भक्षयन्त्येवाधिकृता इति । मत्स्या अन्तःसलिले यथा चरन्त इत्येत्च्छलोकद्वयं क्षणस्य दुर्विज्ञेयतातिशयज्ञापनार्थं रक्षाशैथिल्यार्थं च । निगदव्याख्यानं श्लोकत्रयम् ।

श्रीमूला

कृतमप्यध्यक्षैरर्थभक्षणं जलचरमत्स्यजलपानवद् गगनचरपक्षिगतिवच्च स्वामिना दुरवबोधमिति श्लोकद्वयेनाह—मत्स्या यथान्तरिति, अपि शक्या गतिरिति च ॥

चाणक्यटीका

एवं हृतस्याप्यागमानुमानाभ्यां ज्ञापनमवश्यंभावीति शक्यमेव । दुष्करं त्वेतत् । तथाहि—मत्स्या इति । सलिले चरन्तः स्वविषयत्वात् । कार्यविधाविति—स्वविषयगतेऽर्थविधौ । नियुक्ता अध्यक्षाः । ज्ञातुमपसर्पैः तथा व्यापृतैः न शक्या धनमाददानाः । काममन्यत्र नियुक्ता अन्यत्रापचरन्तोऽपि ज्ञायेरन्निति आगमाशक्यत्वमुक्तम् ।

अनुमानाशक्यतामाह—अपि शक्येति । अस्मिन् वृक्षे निलीयन्ते अस्मादपक्रान्ता इनिगतेः सावलम्बनत्वं शीघ्रतां वा दृष्ट्वा । न तु प्रच्छन्नभावानां गूढचक्राभावानां (?) युक्तानां चरतां व्यवहरतां गतिः, भावेन तु क्रिया अनुमीयते, स चैषां प्रच्छन्न इति तस्माद् यथोक्तं यत्नमातिष्ठेत् ।

[ एवं अन्यायेनार्थभक्षकाणां शिक्षाः
प्राज्ञानामुत्तेजनं च ]

**आस्रावयेच्चोपचितान् विपर्यस्येच्च कर्मसु ।**
**यथा न भक्षयन्त्यर्थं भक्षितं निर्वमन्ति वा ॥६५॥**
**न भक्षयन्ति ये त्वर्थान् न्यायतो वर्धयन्ति च ।**
**नित्याधिकाराः कार्यास्ते राज्ञः प्रियहिते रताः ॥६६॥**

इत्यध्यक्षप्रचारे उपयुक्तपरीक्षा नवमोऽध्यायः
आदितस्त्रिंशः ॥

---

श्रीमूला

अत एतेषु राजा किं कुर्यात्, तत्राह—आस्रावयेदिति । उपचितान् अर्थभक्षण-समृद्धान् अध्यक्षान्, आस्रावयेद् भक्षितमर्थमाहारयेद् उपचयरूपेण लिङ्गेनापसर्पाद्युपायेन च तदपचारमवगम्येत्यार्थम् । कर्मसु विपर्यस्येत् व्यत्ययेन निवेशयेद्-उच्चकर्मस्थानेभ्योऽवरोप्य नीचकर्मस्थानेषु नियुञ्जीतेत्यर्थः । आस्रावणविपर्यसनभयाच्चाध्यक्षा अर्थभक्षणे न प्रवर्तन्ते, भक्षितं चार्थं प्रत्याहरन्तीत्यभिप्रायेणाह—यथेत्यादि । तथा आस्रावयेदित्येवं पूर्वार्धेन सम्बन्धः । सोऽयमर्थभक्षकविषयो विधिः प्रपञ्चितः ॥

ये पुनरर्थचरा अपि सन्तो महान्तं यत्नमास्थाय राजजानपदार्थं न भक्षयन्ति,

चाणक्यटीका

किञ्च आहारयेच्चेति प्रतिपादयेच्च । उपचितान् अर्थान् । आयुक्तदण्डो ह्ययम् एवं विपर्यस्येच्च कर्मसु इतरेतरसाध्येष्विति अन्वयव्यतिरेकज्ञापनार्थम् । यथा न भक्षयन्त्यर्थान् आभ्यां प्रकाराभ्याम् । भक्षितान्निर्वमन्ति वा आहार्यमाणाः कर्मान्तरं (याच ? नीय) माना इति ।

(न) भक्षयन्ति येत्वर्थान् । ननु च ज्ञातुमशक्या इति विरुध्यते । यदि न विरुध्यते

प्रतिपदपञ्चिका

एवं सति का विप्रतिपत्तिरित्याह—आस्रावयेदित्यादि, आस्रावयेद् यथोक्तेन अपहृतप्रत्यानयनप्रकारेण प्रत्यानयेत् । उपचितान् प्रभूतापहृतवित्तान् विपर्यस्येच्च कर्मस्विति, स्थानान्तरविपर्यासं कारयेत् । तथा च गूढपुरुषादिप्रयोगैः कुर्यात् । यथा न भक्षयन्त्यर्थान् भक्षितांश्च निर्वमन्ति प्रत्यर्पयन्ति । इत्ययमशुद्धानामयमभिहितः प्रकारः । शुद्धानां त्वभिधीयते न भक्षयन्तीत्यादि । नत्वभिहित एवायं यथा ह्यनास्वादयितुं

श्रीमूला

प्रत्युत न्यायतः परिवर्धयन्ति, तथाविधा राजप्रियहितानुष्ठानपराः स्थिराधिकाराः कर्तव्या इत्याह—न भक्षयन्तीत्यादि ॥

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे नवमोऽध्यायः उपयुक्तपरीक्षा, आदितस्त्रिंशः ॥

चाणक्यटीका

यदि भक्षयति ज्ञातुं न शक्या ज्ञाने यतितव्यमित्ययमत्र वाक्यार्थः। इदं तर्हि विरुध्यते। स्वल्पोऽप्यनास्वादयितुं न शक्य इत्येतदप्यतिशयाधानम्। अथवा अन्यत् स्वादनमन्यद् भक्षणम्। न्यायतो जनपदापीडया। वर्धयन्ति च धर्मलाभादभक्षितत्वाद्वा। नित्याधिकाराः कार्यास्ते न विपर्यसनीयाः। राज्ञः अर्थभक्षणाभावात् प्रिये न्यायतश्च वर्द्धनात्। हिते धर्मार्थिसक्ता इत्यर्थः।

इति उपयुक्तपरीक्षा नवमं प्रकरणम्।

॥ नवमश्चाध्यायः ॥

प्रतिपदपञ्चिका

न शक्यमित्यभक्षणस्यासम्भव एव। तत्कथमुच्यते न भक्षयन्ति ये त्वर्थानिति। भक्षणद्वैविध्यात् द्विविधं हि भक्षणं विरुद्धमविरुद्धं च। तत्राविरुद्धभक्षणम् अभक्षणमेव। तदधिकृत्याह—न भक्षयन्ति येत्वर्थानिति। न्यायतः प्रजानाम् अबाधादिना अस्थानादिपरिहारेण च वर्धयन्ति स्फीतीकुर्वन्ति[1]। नित्याधिकारास्ते कार्या इति, बहुमुख्यमनित्यं च अधिकरणं स्थापयेदित्यस्यापवादार्थमेतद्वचनमिति।

इति श्री भट्टस्वामिनः कृतौ प्रतिपदपञ्चिकायाम् अर्थशास्त्रटीकायाम् अध्यक्षप्रचारिके द्वितीयेऽधिकरणे नवमोऽध्यायः ॥ उपयुक्तपरीक्षा, आदितः त्रिंशोऽध्यायः।

---

१. स्थितिं कुर्वन्ति—पा०

# अष्टाविंशं प्रकरणम्

## दशमोऽध्यायः ।

## शासनाधिकारः ।

[ शासनपदार्थः, तत्प्राधान्यम्, लेखकयोग्यताः—
लेखनक्रमश्च ]

**शासने शासनमित्याचक्षते । [1]शासनप्रधाना हि राजानः, तन्मूलत्वात् सन्धिविग्रहयोः ।**

---

### श्रीमूला

शासनाधिकार इति सूत्रम् । शासनं नाम लिखितकार्यार्थं तालपत्रादि, तस्याधिकारो विधिरुच्यत इति सूत्रार्थः । 'अर्धगुणहीनः शासनहरः' इति शासनं यत् सूत्रितं दूतप्रणिधौ तदिह निरूप्यत इति सङ्गतिः ।

किं तच्छासनमित्याह—शासने शासनमित्याचक्षत इति । पत्रारूढोऽर्थः शासनं तस्मिन् शासनमिति व्यपदेशं कुर्वन्त्याचार्याः, न तु सन्दिष्टेऽर्थे वाचिकाख्ये इत्यर्थः । कुतः पुनः शासनवाचिकयोर्मध्ये शासनस्य निरूपणादरो, न तु वाचिकस्येत्याकाङ्क्षायामाह—शासनेत्यादि । सान्धिविग्रहयोरिति षाड्गुण्योपलक्षणम् । तेनायमर्थः—हि यस्माच्छासनमेव राज्ञां मन्त्रगुप्तिपुरस्सरषाड्गुण्यव्यापाराव्यभिचारनिर्वाहकतया प्रधानम्, वाचिकं तु सन्देशहरगतप्रमादादिदोषसम्भावितमन्त्रभेदतया व्यभिचारित्वान्न प्रधानमिति ।

### चाणक्यटीका

अमात्यसम्पदुपेताः सर्वेऽध्यक्षाः, शासनाध्यक्षस्त्वधिकतरगुणः स्यात् । कस्मादिति चेत् तद्व्यापारस्य प्राधान्यात् सर्वाध्यक्षव्यापारश्रयभूतत्वाच्च । तथा च स्वविषयव्यापारं प्रति 'अधिकरणानां सङ्ख्याप्रचारादिनिबन्धपुस्तकस्थं कारयेत्', 'करणीयादिनिबन्धेन प्रयच्छेत्' इति च, परविषयं प्रति 'अर्धगुणहीनः शासनहरः', 'शासनमेवं वाच्यः परः' इत्यादि च प्राधान्यमत्रैव वक्ष्यामः । तस्मादध्यक्षसम्बन्धेनैव शासनाधिकार इति प्रकरणमारभ्यते । शासने इति । शासनम् अनुज्ञानम् इदं कुरु इदं मा कार्षीरिति । तस्मिन् शासने निमित्तभूते तत्कारणत्वादधिकरणत्वाच्च । शासनमिति लेखम् आचक्षते पूर्वाचार्याः । तस्मात् सर्वाज्ञाकारणभूतत्वाच्चास्य प्राधान्यम् । अथवा,

---

१. 'शासनं प्रधानं राज्ञाम्' इति चाणक्यटीकासम्मतः पाठः ।

**तस्मादमात्यसम्पदोपेतः सर्वसमयवित् आशुग्रन्थः चार्वक्षरो लेखवाचनसमर्थो लेखकः स्यात्। सोऽव्यग्रमना राज्ञस्सन्देशं श्रुत्वा [1]निश्चित्यार्थं**

---

चाणक्यटीका

करणलेख्ये स्वविषयगतमधिकारजातं करणीयादि निबन्धेन प्रयच्छेदिति स्वपरविषयगतं च प्रज्ञापनादि परविषयगतं च सन्देशः शासनं स्थितम् इत्याचक्षते। तथा चोक्तम्—'शासनमेवं वाच्यः परः' इत्यादि। तच्च शासनं प्रधानं राज्ञाम्, सन्धिविग्रहयोः तन्मूलत्वादिति। सर्वेषां गुणानाम् उदाहरणतया वा सन्धिविग्रहोपादानम्। नह्यसन्दिशता अलिखिता च सन्धिविग्रहाववधारयितुं शक्यौ इत्येवं ब्रुवता तत्रगतानां कार्याणां शासनमूलत्वमुक्तं बोद्धव्यम्। तस्मात्तत्प्राधान्यम् राज्ञाम्, अतस्तदध्यक्षोऽपि अध्यक्षान्तरेभ्यो विशिष्टगुणः स्यात्॥

प्रतिपदपञ्चिका

शासनाधिकारः इति सूत्रम्। तत्र शासनमारोपिताधिकारो विधिरिति, सूत्रार्थः। कथं पुनरधिकारशब्दो विधिमभिधत्ते। ज्ञापकात्। वक्ष्यति हि 'कौटिल्येन नरेन्द्रार्थे शासनस्य विधिः कृत' इति। एवं शासनविधिरिति, वक्तव्ये अधिकारग्रहणं सर्वाधिकाराणामपि शासनप्रधान्यज्ञापनार्थम्। सम्बन्धस्तु द्विविधः, राजशासनं वाचिकं, पत्रलिखितं च। तत्र वाचिकं दूतप्रणिधावुक्तम्। "शासनमेवं वाच्य" इत्यादिना, लिखितं त्वभिधीयत इति, अथवा अर्धगुणहीनश्शासनहर इत्युक्तम्। नच्छासनमभिधीयत इति, अयं वा सम्बन्धः। कस्मात्पुनश्शासनविधिं प्रति, महान्यत्न इति। तदाह शासने शासनमित्याचक्षत इति।

अत्र वक्ष्यमाणो हि शब्दस्सम्बध्यते। यस्माच्छासन एव, तालतालीभूर्जादिपत्राणामन्यतमस्मिन् यदभिलिखितं तदेव शासनं भवति। अव्यभिचाराद्वाचिकं तु शासनमेव न भवति। इङ्गिताकारमदप्रमादसुप्तप्रलापादिभिर्मन्त्रभेदसम्भवादित्येवमाचक्षते ब्रुवते। शुक्रबृहस्पतिप्रभृतय आचार्या इति वाक्यशेषः। किञ्च शासनप्रधानका राजानः तदीयतन्त्रावापगतसमस्तव्यापारा हि यस्मात्कस्मादित्याह तन्मूलत्वादिति। तन्मूलत्वाच्छासननिमित्तत्वात्। सन्धिविग्रहयोरिति। सन्धिविग्रहग्रहणं षाड्गुण्योपलक्षणार्थम्।

श्रीमूला

शासनस्य प्रधानत्वाद् विशिष्टगुण एव तल्लेखको भवितुमर्हतीत्याह—तस्मादित्यादि। तस्माद्, अमात्यसम्पदोपेतः 'जानपदोऽभिजात' इति मन्त्रिपुरोहितोत्पत्तिप्रकरणोक्ताः पञ्चविंशतिर्जानपदत्वादयो गुणा अमात्यसम्पत् तया युक्तः, सर्वसमयवित् सर्वेषां वर्णानाम् आश्रमाणां वर्णातिरिक्तानाम् चाचाराभिज्ञः,

---

१. निश्चितार्थं लेखं—पा०।

### श्रीमूला

आशुग्रन्थः शीघ्रवाक्यसन्दर्भप्रसरः, चार्वक्षरः चारूणि एकैकशः समुदायतश्च दर्शनीयान्यक्षराणि लिपयो यस्य सः, लेखवाचनसमर्थः लेखस्य स्फुटसुस्वरयथास्थान-वाक्यविश्रमसुभगपठनप्रवीणः, लेखस्याप्रकाश्यार्थस्य संज्ञालेखस्य वर्जिताक्षरस्य पदवाक्यसङ्केतितलेखाविशेषात्मकस्य वाचने व्यवहारे समर्थऽ इत्यपरे। एवमेकोनत्रिंशता गुणैर्युक्तो लेखकः स्यात्। स च लेखको राज्ञोच्यमानं वाचिकमनाकुलेन मनसा श्रुत्वाऽर्थान् पौर्वापर्यक्रमेण परलेखार्थानुगुण्यानुगुण्याभ्यां च निश्चित्य लेखं लिखेदित्याह—सोऽव्यग्रेत्यादि। तत्र युक्तानामव्यग्रमनस्कता राजसत्काराद् भवति।

### चाणक्यटीका

अतश्च अमात्यसम्पदोपेत इति पुनर्वचनं साकल्यपरिग्रहार्थम्। गुणान्तर-विधानात्तु इदं नार्श्रायेतेत्याशङ्कानिवृत्त्यर्थम्। एवङ्गुण (व) त्वेऽपि ये वाप्यस्यान्य-गुणाः स्युरिति तानाह—सर्वसमयवित् सर्वेषां राज्ञाम्, तथा देशकुलजातिसङ्घाश्रयाणाम् अन्ततः पाषण्डानां विदिताचारोपचारः, तदनुरूपं लेखं प्रतिविदध्यात् शब्दान् आशु गृह्णाति, ग्रथितान् वाचयतीति च आशुग्रथनः। चार्वक्षरः शोभनानि दर्शन-सुखवाचकानि अक्षराणि यस्य। अर्थविबोधात् सर्वलिपिज्ञत्वाच्च शीघ्रं लेखवाचन-समर्थः। सोऽव्यग्रमना इति। कान् कियतः कीदृशान् वा अर्थान् समाज्ञापयतीत्य-वहितमनाः। राज्ञः सन्देशं श्रुत्वा तांश्च दर्शनार्थं (प्र ?) पत्रे निदध्यात्, अयं प्रथमः अयं द्वितीयः अयं तृतीयः इत्यानुपूर्व्या तानालोच्य लेखं भूर्जादिपत्रेषु विदध्यात् विरचयेत्। एवञ्च निश्चितार्थो भवति।

### प्रतिपदपञ्चिका

यतश्चैवंभूतं शासनमतस्तस्य लेखे नास्यापि प्रधानेन भवितव्यमित्याह—तस्मादमात्यसम्पदोपेता इत्यादि, अमात्यसम्पद् जानपदादयः पञ्चविंशतिर्गुणाः। तया समस्तया समन्वितः। तथा सर्वसमयपरिज्ञानादिभिश्चतुर्भिरित्येवं सङ्क्षेपणैकोनत्रिं-शद्गुणो लेखको भवति। तत्र सर्वसमयपरिज्ञानादिभिः चतुर्भिरेवंवित्सर्ववर्णाश्रमा-चाराभिज्ञः सर्वलिपिज्ञ इति केचित्। सर्वभाषाभिज्ञ इत्यपरे। आशुग्रन्थः सकृदुक्तग्राही। शीघ्रकविरिति केचित्। लघुहस्तत्वाद्द्रुतलेखीत्यपरे। चार्वक्षर इति। असंसक्तलिखितत्वात् सुबोधानि समुदायशोभीनि चाक्षराणि यस्य लेखवाचनसमर्थ इति। विस्पष्टमधुरकरणसुविभक्तार्थपदवर्णाभिधायी न्यूनातिरिक्ताक्षरप्रतिविधानाभिज्ञ इतिकेचित्। प्रकाश्याप्रकाश्यलेखाभिज्ञो जिताक्षरश्चेत्यपरे। स एवंभूतो लेखकः स्यात्। सोऽव्यग्रमना अनाकुलचित्तो यथोद्दिष्टस्य सम्यगवधारणार्थं तच्चानाकुल-चित्तत्वं उत्तरोत्तरसत्कारोपगृहीतः[1]। सम्यक्सर्वकार्याण्यनुतिष्ठन्ति। उक्तं हि—यदाहुः—

———

१. सत्कारनिमित्तकम् सर्वेऽपि ह्यध्यक्षाः उत्तरोत्तरसंस्कारोपगृहीताः। पा०

**समीक्ष्य कार्यं लेखं विदध्यात् । देशैश्वर्यवंशनामधेयोपचारमीश्वरस्य, देशनामधेयोपचारमनीश्वरस्य ।**

———————

श्रीमूला

"नीचापि बुद्धिर्नृपमानयोगाच्छ्रेष्ठत्वमायाति तदाश्रितानाम् ।
अग्र्यापि निर्वाति हि मानहीना स्नेहं विना दीपशिखेव तूर्णम् ॥"

इति । परलेखानुरूप्यानानुरूप्यनिश्चयविषयेऽपि श्लोकमुदाहरन्ति—

"श्रुत्वा नरेन्द्रवाक्यं परभावं चावधार्य परलेखात् ।
लेखः खलु कर्तव्यो गुणदोषविनिश्चयज्ञेन ॥"

इति । कीदृशं विदध्यात्, ईश्वरस्य राज्ञः, देशैश्वर्यवंशनामधेयोपचारं देशादीनां चतुर्णामुपचारो यस्मिस्तं तथाभूतम् । तत्र देशोपचारोऽध्युष्यमाणदेशनिर्देशेनोपचारः, यथा—मध्यदेशमलंकुर्वाणमिति । ऐश्वर्योपचारः भूकोशदण्डसम्पन्निर्देशोपचारः 'मध्यदेशाधिपतिमसङ्ख्याताप्रतिहतदण्डक्षपितरिपुपक्षम्' इत्येवञ्जातीयः । वंशोपचारः 'सोमान्वयभूषणम्' इत्येवम्प्रकारः । नामधेयोपचारः 'महाराजाधिराजश्रीसिंहवर्मदेवम्' इत्येवञ्जातीयः । अनीश्वरस्य अमात्यादेः, देशनामधेयोपचारं देशोपचारनामोपचारयुक्तम् । तत्र देशोपचारः 'कान्यकुब्जमलंकुर्वाणम्' इत्यादिः । नामोपचारः 'श्रीसोमदत्तमित्यादिः ।'

चाणक्यटीका

देशोपचारं सर्वसम्पदुपेते रमणीयतरेऽमुके स्थाने इति । ऐश्वर्योपचारं परम्परानुगतप्रजापालनाधिकारदीक्षित इति । वंशोपचारं अमुककुले (केऽर्थ ?) पितृपादानुध्यात इति । देवताऽपि आश्रयसामान्या वंशेऽन्तर्भावनीया परमभागवत इति । (सु ?) नामधेयोपचारं श्रीमहावासुदेव इति । राज्ञ इति । ईश्वरस्य लेखं विदध्यादित्येव अनीश्वरस्य ऐश्वर्यासम्भवात् ॥

प्रतिपदपञ्चिका

नीचोऽपि बुद्धिर्नृपमानयोगाच्छ्रेष्ठत्वमायाति तदाश्रितानाम् ।
अग्र्याऽपि निर्वाति हि मानहीना स्नेहं विना दीपशिखेव तूर्णम् ॥

इति । राज्ञः सन्देशं श्रुत्वा निश्चित्यार्थं पौर्वापर्यक्रमेणावधार्यार्हति, यद्वा विस्तराभिहितस्य सङ्क्षेपार्थं निश्चित्य ज्ञात्वा ततो लेखं विदध्यादिति । आह च—

श्रुत्वा नरेन्द्रवाक्यं परभावं चावधार्य परलेखात् ।
लेखः खलु कर्तयो गुणदोषविनिश्चयज्ञेन ॥

देशेश्वर्येत्यादि, लेखं विदध्यादिति, वर्तते देशाद्युपचारैश्चतुर्भिरीश्वरस्य राज्ञो लेखं विदध्यात् । तत्र देशोपचारो यत्र स्थितः । तद्यथा—मध्यदेशमलङ्कुर्वाणमित्यादि । ऐश्वर्यं भूमिकोशदण्डसम्पत् । तद्यथा—मध्यदेशाधिपः परिमाणकोशराशिम-

[ निकषगुणाः ]

**कालिङ्गकः तापीपाषाणो वा मुद्गवर्णो निकषः श्रेष्ठः। समरागि विक्रयक्रयहितः। हस्तिच्छविकः सहरितः प्रतिरागी विक्रयहितः। स्थिरः परुषो विषमवर्णश्चाप्रतिरागी क्रयहितः।**

[ तेषां छेदैः तापैश्च परीक्षाः ]

**छेदः चिक्कणः समवर्णः श्लक्ष्णो मृदुर्भ्राजिष्णुश्च श्रेष्ठः।**

**तापे बहिरन्तश्च समः किञ्जकवर्णः कारण्डकपुष्पवर्णो वा श्रेष्ठः। श्यावो नीलश्चाप्राप्तकः॥**

---

श्रीमूला

निकषगुणमाह—कालिङ्गक इति। कालिङ्गकः कलिङ्गदेशे महेन्द्रपर्वतादुत्पन्नः पाषाणः, तापीपाषाणो वा तापी नाम आरट्टदेशवाहिनी नदी, तद्गतः पाषाणो वा, मुद्गवर्णो निकषः श्रेष्ठः। समरागी यथास्थितवर्णग्राही, विक्रयक्रयहितः क्रेतृविक्रेत्रोरुभयोरप्यनुकूलः। हस्तिच्छविकः गजचर्मवत् खरशुष्कः, सहरितः हरितवर्णयुक्तः, प्रतिरागी अपकृष्टस्यापि सुवर्णस्य रागोत्कर्षप्रदर्शकः, विक्रयहितः विक्रेतुरनुकूलः। स्थिरः दृढः, परुषः खरः, विषमवर्णः नानावर्णश्च, अप्रतिरागी उत्कृष्टस्यापि सुवर्णस्य यथास्थितरागाप्रदर्शकः निकषः, क्रयहितः क्रेतुरनुकूलः।

निकषमुक्त्वा छेदमाह—छेद इति। छेदः छिन्नः स्वर्णखण्डः। चिक्कणः स्निग्धः, समवर्णः बहिरन्तश्च तुल्यवर्णः, श्लक्ष्णः मसृणः, मृदुः भ्राजिष्णुश्च श्रेष्ठः।

अथ तापमाह—ताप इति। अग्नितापितः स्वर्णभागः, बहिरन्तश्च समः समानवर्णः, तापनात् पूर्वं पश्चाच्च किञ्जल्कवर्णः, कुरण्डकपुष्पवर्णो वा अम्लानकुसुमवर्णो वा, श्रेष्ठः। श्यावः कपिशः, नीलश्च, अप्राप्तकः तत्संज्ञः अशुद्ध इति यावत्।

चाणक्यटीका

कालिङ्गकः कलिङ्गदेशभवः। तापी नदी महाराष्ट्रीया[1] मुद्गवर्णः उभयो निकषः निकष्यतेऽस्मिन्निति। समरागी ( नामपि मलिनोज्ज्वलरागः ? )। सहरितः परभागं करोति। प्रतिरागी हीनस्याविशेषेण रञ्जयिता। स्थिरः कठिनत्वात् सुवर्णस्यातिलेपी परुषः स्वभावात् परुषयिता। विषमवर्णः नानावर्णत्वाद् इदम् ईदृशमित्यनिश्चयकारी। अप्रतिरागी शोभनस्याप्रतिरञ्जयिता ( विक्तं नो मधूः ? )······।

अन्तर्बहिश्च श्लक्ष्णो मसृणः समः सदृशवर्णः। अप्राप्तको लोहान्तरसंसृष्ट इत्यर्थः।

---

१. आरट्टदेशवाहिनीति केरलभाषाटीका।

[ रूप्यसुवर्णव्यवहारोपयोग्युन्मानविधिः ]

**तुलाप्रतिमानं पौतवाध्यक्षे वक्ष्यामः। तेनोपदेशेन रूप्यसुवर्णं दद्यादाददीत च।**

[ सुवर्णादिपरिकर्मस्थानरक्षणविधिः ]

**अक्षशालाम् अनायुक्तो नोपगच्छेत्। अभिगच्छन् उच्छेद्यः। आयुक्तो वा सरूप्यस्वर्णस्तेनैव जीयेत।**

**विचितवस्त्रहस्तगुह्याः काञ्चनपृषतत्वष्टृतपनीयकारवो ध्मायकचरकपांसुधावकाः प्रविशेयुः निष्कसेयुश्च।**

---

श्रीमूला

अथ रूप्यसुवर्णयोरुन्मानविध्यपेक्षायामाह—तुलेत्यादि। तुलाप्रतिमानं तुलापरिच्छेदविधिम् पौतवाध्यक्षे तुलामानपौतवप्रकरणे, वक्ष्यामः। इयमनागतावेक्षणरूपा तन्त्रयुक्तिः। तेनोपदेशेन तत्प्रकरणोक्तमानविधिना, रूप्यसुवर्णम्, दद्याद्, आददीत च गृह्णीयाच्च।

पालनविधिमाह—अक्षशालामिति। अक्षशालाम्, अनायुक्तः अनधिकृतः, नोपगच्छेत्। अभिगच्छन् वारितोऽप्यभिमुखं गच्छन्, उच्छेद्यः हृतसर्वस्वः कर्तव्यः। आयुक्तो वा नियुक्तोऽपि वा सरूप्यस्वर्णः रूप्यस्वर्णसहितो, गच्छन् तेनैव रूप्येण स्वर्णेन च जीयेत दण्डयेत्।

विचितेत्यादि। विचितवस्त्रहस्तगुह्याः वस्त्रं हस्तो गुह्यं च विचितं रूप्यस्वर्णयुक्तं न वेति परीक्षितं येषां ते तथाविधाः भूत्वा, काञ्चनपृषतत्वष्टृतपनीयकारवः काञ्चनकारवः रसवेधस्वर्णीकरणशिल्पिनः पृषतकारवो गुलिकादिसूक्ष्मशिल्पकारिणः त्वष्टृकारवः पट्टपात्रादिशिल्पिनः तपनीयकारवः नानाजातीयभूषणशिल्पिनश्च, ध्मायकचरकपांसुधावकाः भस्त्राध्मायकाः परिचारकाः धूलिशोधकाश्च, प्रविशेयुः अक्षशालां निष्कसेयुश्च ततो निर्गच्छेयुश्च।

चाणक्यटीका

पौतवाध्यक्षे वक्ष्यामः। सुवर्णपरीक्षा प्राप्तापि बाह्यत्वात् अनेकार्थत्वाच्च। तेनोपदेशेनेति यथोक्तेन······येण वक्ष्यमाणेन तुलाप्रतिमानेन दद्यात् कर्मार्थं कारुभ्यः। निष्पन्नञ्च आददीत असंभवात् ( ? )। स्वर्णवदेव रूप्यस्येति रूप्यग्रहणेन ज्ञापयति॥

उच्छेद्य इति। अपरिजिहीर्षयोपदेशेन······सर्वस्वमाहार्य इत्यन्ये। सरूप्यसुवर्ण इति। आत्मीयरूप्यसुवर्ण इति। आत्मीयरूप्यसुवर्णस्तेनैव तद्द्रव्येण जीयेत तदेवास्यापह्रियेत इत्यर्थः। परिवर्तयितुकामत्वादस्येति॥

**सर्वं चैषामुपकरणमनिष्ठिताश्च प्रयोगास्तत्रैवावतिष्ठेरन् । गृहीतं सुवर्णं धृतं च प्रयोगं करणमध्ये दद्यात् । सायं प्रातश्च लक्षितं कर्तृकारयितृमुद्राभ्यां निदध्यात् ।**

---

### चाणक्यटीका

विचितवस्त्रगुह्या इति । विचितं वस्त्रं गुह्यञ्च मुखकर्णरन्ध्रादीनि येषामिति । काञ्चनकारवः क्षेपणकारवः । अन्येषां कर्मणां स्वशब्देनाभिधानम् । पृषतत्वष्टृतपनीयकारव इति । ( मरकारौशकीरादिस्सूदादि···? ध्मायकाः सरकपांसुधावकाः[1] । ये पांसून् सुवर्णमिश्रान् जलेन क्षालयन्ति तेषां प्रविशतां यदि सुवर्णादि दृश्यते, तदा यथानुरूपो दण्ड इत्यर्थादापन्नम् ॥

### श्रीमूला

सर्वं चेति । एषां कारुप्रभृतीनां, सर्वम् उपकरणम्, अनिष्ठिताः प्रयोगाश्च असमाप्तानि शिल्पानि च, तत्रैव अवतिष्ठेरन् अक्षशालातो बहिर्न नीयेरन् । गृहीतमति । गृहीतं भाण्डागाराद् आत्मनोपात्तं सुवर्णं, प्रयोगं च यत्र सुवर्णं प्रयुक्तं तं पदार्थं च, करणमध्ये धृतं दद्यात्, करणानां राजलेखकानां स्वस्वपुस्तकेष्वर्थं लिखतां साक्षिभूतानां मध्ये तुलाधृतं कृत्वा प्रत्यर्पयेत्, अर्थात् सुवर्णाध्यक्षः । सायं प्रातश्च दैनन्दिनव्यापारस्यावसाने प्रारम्भे च, कर्तृकारयितृमुद्राभ्यां लक्षितं कर्तृकारयित्रोः सौवर्णिकसुवर्णाध्यक्षयोर्मुद्राभ्यां चिह्नितम् स्थापयेत्, सुवर्णम् । करणमध्य इत्येव ।

### चाणक्यटीका

उपकरणं भस्त्रासन्दंशादि । अनिष्ठितान्·····प्रयोगा इति प्रयुज्यमानान्यलङ्कारभाण्डानि । तत्रैव अक्षशालायाम् । तिष्ठेयुः आपरिसमाप्तेरिति ॥

गृहीतं कोशागारात् । करणमध्य एवाध्यक्षः ( तं रूप्यो ? ) दद्यात् । धृतञ्चेति परी·····पणकाचार्पणादि । ( अ ) निष्पन्नं करणमध्य एवार्पयेद् राज्ञ इति । लक्षितं विदितं विदध्यात् । प्रातःकरणमध्ये कर्तुम् । सायमक्षशालायामिति ॥

### प्रतिपदपञ्चिका

पालनविधिमाह—सायं प्रातश्च रात्र्यादौ प्रत्युषसि च लक्षितं चिह्नितं कर्तृकारयितृमुद्राभ्यां सुवर्णकाराध्यक्षमुद्राभ्यां निदध्यात् स्थापयेत् । करणमध्य इति वर्तते ।

---

१. "सरकपांसुधावकाः सारत्रिभागं लभेरन्" इति कारुकरक्षणे वक्ष्यते । 'सरकोऽस्त्री मणौ' इति केशवस्वामी ।

[ तत्र प्रवर्तयितव्यानां कर्मणां भेदाः, विवरणं च ]

**क्षेपणो गुणः क्षुद्रकमिति कर्माणि । क्षेपण काचार्पणादीनि । गुणः सूत्रवानादीनि । घनं सुषिरं पृषतादियुक्तं क्षुद्रकमिति ।**

[ शुद्धमिश्रमणिसंयोजनयोः विधिः ]

**अर्पयेत् काचकर्मणः पञ्चभागं काञ्चनं दशभागं कटुमानम् । ताम्रपाद-युक्तं रूप्यं रूप्यपादयुक्तं वा सुवर्णं संस्कृतकं तस्माद् रक्षेत् ।**

---

श्रीमूला

**अथ कर्म त्रिधा विभज्य व्याचष्टे—क्षेपण** इत्यादि । **क्षेपणः** तदाख्यं कर्म, **काचार्पणादीनि** मणिसंयोजनादीनि । **गुणः** तत्कर्म, **सूत्रवानादीनि** कटिसूत्रग्रथनादीनि । **क्षुद्रकं** सूक्ष्मपरिकर्म, **घनं** कटकाङ्गुलीयकादि, **सुषिरं** सरन्ध्रम् स्थालीभृङ्गारादि, **पृषतादियुक्तं** पृषतो गुटिका आदिपदात् पत्रभङ्गादि तद्युक्तम् । **इति**शब्दः प्रकारान्तर-सङ्ग्रहार्थः ।

**अर्पयेदिति** । **काचकर्मणः** मणिसंयोजनस्य विधिरुच्यत इति वाक्यशेषः । **पञ्चभागं** मणेः पञ्चमं भागं तलभागं **काञ्चनम् अर्पयेद्** आधारसुवर्णे प्रवेशयेत् । **दशभागं** काञ्चनप्रवेशितस्य भागस्यार्धम्, **कटुमानम् अर्पयेत्** मणिदार्ढ्यार्थो वास्तुकोपरिसुवर्ण-पट्टिकाबन्धः कटुमानमित्युच्यते । तत्र प्रवेशयेदित्यर्थः । रत्नार्पणाधारबन्धे रूप्यमये ताम्रपादयोजनेन तावद्रूप्यहरणम् सुवर्णमये रूप्यपादयोजनेन तावद् सुवर्णहरणं च पश्यतोहरैः सुकरं यतः, **तस्मात्** कारणाद् आधारबन्धो द्रव्यान्तरमिश्रणाद् यत्नेन **रक्षणीय** इत्युपदिशति—**ताम्रपादे**त्यादि । **संस्कृतकं**, यथोक्तमिश्रणाशुद्धमपि रूप्यं सुवर्णं वा शुद्धसदृशं प्रतिभायादित्यर्थः ।

चाणक्यटीका

सम्प्रति कर्माण्युच्यन्ते—क्षिप्यन्तेऽस्मिन् सुवर्णकाराद्य·····क्षेपणः । **काचार्प-णादीनि**, काचोऽर्प्यते यस्मिन् मणिर्मुक्ता वज्रः प्रवालो वा अवबध्यत इति, उदाहरणार्थत्वात् काचस्य । **सूत्रवानादीनीति** । सूत्रीकृत्य सुवर्णं यत्र शृङ्खलावेणी-पट्टिकाद्यूयते । कण्ठादिभूषण·····काञ्चनेनासुषिरेण यद् युक्तम्[1] अङ्गुलीयादि । ( शुचि ? सुषिर ) युक्तं मकुटकटकादियुक्तम् तदेव ( सिद्ध्यर्थकादि ? ) गुटिकायुक्तम् । आदिशब्दात् पत्रादियुक्तमपि ( संयूह्यादि ? ) घटादिद्रव्यम् ॥

तस्य प्रकारमाह—**अर्पयेदिति** । काचकर्मणः ( संग्रामा ? संस्कृताद् ) वास्तुकात् **पञ्चमं भागं** येन काचोऽवबध्यते । ननु च काचमर्पयेत् सुवर्ण इति वक्तव्यम् । सत्यम् । एवं सुवर्णवृत्त्या अर्पितं भवत्येवेति न दोषः । दशभागं कट(टु)मानमिति सुवर्णस्य ।

---

१. घनसुषिरपृषतादियुक्तं क्षुद्रकमिति टीकाकृतः समस्तपाठः ।

**पृषतकाचकर्मणः त्रयो हि भागाः परिभाण्डं, द्वौ वास्तुकं; चत्वारो वा वास्तुकं, त्रयः परिभाण्डम् ।**

---

चाणक्यटीका

( पञ्चसुवर्णस्य सुवर्णात् सहिता एकेन भागेन तावस्य विको बध्यते । ? ) दशभागेन सुवर्णेन कटमानं मधूच्छिष्टस्य लाक्षाया वा प्रच्छादनं कार्यम् । शेषं सुवर्णत्रयं सार्धं वास्तुकर्म भवति । ( सं ) स्कृतमिति, ईदृशेषु सूचनीयमानं दुर्लक्षं कृत्रिमञ्च भवति । तस्माद् रक्षणीयं विशेषेणेति सर्वत्र योज्यम् ।

प्रतिपदपञ्चिका

त्रिप्रकारं कर्माह—क्षेपण इत्यादि । तानि च स्वयमेव व्याचष्टे—क्षेपणः काचार्पणादीनि मणियोजनादीनि । गुणःसूत्रवनादीनि कटिसूत्रग्रथनादीनि । घनम् अङ्गुलीयकटकमहीस्थलाकादि । सुषिरं भृङ्गारादि । पृषितं गुलि ( ट ) का तद्युक्तम् । आदिशब्दात् पतिकापत्रभङ्गादियुक्तं च । क्षुद्रकं सूक्ष्मपरिकर्म, इतिशब्दः प्रकारे ।

क्षेपणविधिमाह—अर्पयेत् प्रवेशयेत् । काचकर्मणः मणिसंयोजनकर्मणः मणौ पञ्चमं भागं तलभागं काञ्चनमित्याधारसुवर्णं प्रवेशयेत् । दशभागं सुवर्णप्रवेशितार्थं कटमानं प्रवेशयेत् ।

मणेर्दार्ढ्यार्थं वास्तुकोपरि सुवर्णपट्टिकाधानं कटु(ट)मानं ताम्रपादयुक्तमित्यादिना हरणोपायसम्भवमभिधाय रक्षाप्रयत्नाधिक्यार्थम् आह—संस्कृतकर्मति, संस्कृतमिव शुद्धसदृशं यतो भवति तस्माद् रक्षेत् । शेषमृजु ।

श्रीमूला

शुद्धकाचकर्मविधिमुक्त्वा मिश्रकाचकर्मविधिमाह—पृषतेत्यादि । पृषतकाचकर्मणः गुटिकामिश्रकाचकर्मणि क्रियमाणे, तदर्थं सुवर्णं पञ्चधा विभज्य त्रयो भागाः, परिभाण्डं पद्मस्वस्तिकाद्याकारं पृषतमणिप्रतिवापस्थानं भवति, द्वौ वास्तुकं द्वौ भागौ आधारपीठबन्धः इत्येकः प्रकारः । यदि मणयः स्थूलास्तदा विधिमाह—चत्वारो वेत्यादि ।

चाणक्यटीका

पृषतकाचकर्मण इति, गुणकर्मण्येकरूपत्वाद् विभागो नोक्तः, क्षुद्रकर्मण्युच्यते । अङ्गुलीयकादौ पृषतं काचश्च विद्येते इति । पृषतकाचकर्मणः पञ्च भागान् सुवर्णकस्य कृत्वा त्रयो भागाः ( च ? ) भाण्डे सर्वत इति ( अपरपिण्डितादि ? ) संस्कारार्थाः[१] । द्वौ भागौ वास्तुकं मण्डलम् उपरिसंस्काराधारभूतं वास्तुस्थानीयं कारयेत् । एवं सप्त भागान् कृत्वा चत्वारो भागा वास्तुकम् । वा शब्दो विकल्पार्थः । यथा वा साधु समस्येत तथा वास्तुपरिभाण्डं वा विकल्पयेदित्यर्थः ।

---

१. 'परिभाण्डे सर्वत इति परिभाण्डं परिभाण्डादिसंस्कारार्थाः' इति पठनीयं भाति ।

[ संयोजनावलेपनवासनानां तक्षकर्मणां विधिः ]

**त्वष्टृकर्मणः—शुल्बभाण्डं समसुवर्णेन संयूहयेत्। रूप्यभाण्डं घनं घनसुषिरं वा सुवर्णार्धेन अवलेपयेत्। चतुर्भागसुवर्णं वालुकाहिङ्गुलकस्य रसेन चूर्णेन वा वासयेत्।**

---

प्रतिपदपञ्चिका

शुद्धकाचकर्मणां विधिमभिधाय पृषतव्यामिश्रकाचकर्मणो विधिमाह—पृषतकाचकर्मण इति, पृषतव्यामिश्रकाचकर्मणः पञ्चधा सुवर्णं विभज्य त्रयो भागाः परिभाण्डं पृषतमणिबन्धाद्यर्थं देयम्। द्वौ वास्तुकमाधारपीठनबन्धः, यद्वा परिकर्मवशात् सुवर्णं सप्तधा विभज्य चत्वारो वास्तुकं त्रयः परिभाण्डमिति।

श्रीमूला

त्वष्टृकर्माह—त्वष्टृत्यादि। त्वष्टृकर्मणः ताम्ररजतनिर्मितघनपत्रादिकर्मणः विधिरुच्यत इति शेषः। शुल्बभाण्डं ताम्रभाण्डं, समसुवर्णेन संयूहयेत् ताम्रपलतुल्यपलेन सुवर्णेन दृढपत्रीकृतेन संयोजयेत्। रूप्यभाण्डं, घनम् अङ्गुलीयककङ्कणादि, घनसुषिरं वा स्थालीकलशभृङ्गारादिकं वा, सुवर्णार्धेन अवलेपयेत् रूप्यपलशतकृतं भाण्डं पञ्चाशता सुवर्णपलैस्तनुपत्रीकृतैरेव श्लेषयेत्। अवलेपविधिमुक्त्वा वासनाविधिमाह—चतुर्भागसुवर्णमिति। रूप्यभाण्डमिति वर्तते। अयमर्थः—रूप्यपलशतकृतं भाण्डं पञ्चविंशतिपलसुवर्णेन चूर्णीकृतेन वालुकाहिङ्गुलकचूर्णमिश्रेण पारतयुक्तेन तुषाग्निद्रवीकृतेन वासयेत्। एवं तावत् सुवर्णस्य समस्यार्धस्य चतुर्भागस्य च योजनेन त्रिप्रकारं त्वष्टृकर्म व्युत्पादितम्।

चाणक्यटीका

त्वष्टृकर्मण इति सुषिरस्य ( तटा ? कटका ) देः पत्रकर्मणः ताम्रमयं रूप्यमयं वा कटकघटकादि कृत्वा अन्यतमेन तत्प्रमाणेन सुवर्णेन श्लक्ष्णपत्रीकृतेन संयूहयेत् वेष्टयेदित्यर्थः। शिष्टप्रयोगाद् यूहतिर्धातुरनुमेयः। ऊहतेर्वा पृषोदरादिपाठाद् युगागमः। अयमतिस्फीतस्य विधिः॥

रूप्यभाण्डं घनं घनसुषिरं वा ईषत्सुषिरं तदर्धेन सुवर्णेन तनुपत्रीकृतेन लेपयेत्। मध्यमविभवस्यायं विधिः। चतुर्भागसुवर्णं वा रूप्यताम्रभाण्डं वालुका हिङ्गुलुकेन द्रवीकृतेन। यवनेष्वेवायं ( भ ? द्र ) वतीति तदसम्भवाच्चूर्णीकृतेन वा वासयेद् भावयेत्। पश्चान्मन्दाग्निना निष्टप्य श्लक्ष्णीकुर्यात्। यावद् भाण्डेन सङ्घातं गमितमिति। अयं मन्दविभवस्य॥

प्रतिपदपञ्चिका

त्वष्टृकर्माह—त्वष्टृकर्मण इति, घनपत्रादिकर्मणो विधिरुच्यत इति वाक्यशेषः। शुल्बभाण्डं ताम्रभाण्डं समसुवर्णकेन यावद्भिः शुल्ब(वलै)पत्रैः भाण्डं कृतं तावता सुवर्णेन

[ नीलपीतादिवर्णप्रकृतिभूतानां स्वर्णानां रजतानां च निर्देशः,
अशुद्धानां तेषां शुद्धिक्रमः, तत्तद्वर्णोत्पादनरीतयश्च ]

**तपनीयं ज्येष्ठं सुवर्णं सुरागं समसीसातिक्रान्तं पाकपत्रपक्वं सैन्धविकयोज्ज्वालितं नीलपीतश्वेतहरितशुकपीतवर्णानां प्रकृतिर्भवति**

———————

प्रतिपदपञ्चिका

( यावद्भिः शुल्बपत्रैः ) संयूहयेत् दृढपत्रीकृतेन संयोजयेत् । रूप्यभाण्डं घनं लोलंकटकस्थाल्यादि घनसुषिरं धाभ्यगारकलशादि सुवर्णार्धेनावलेपयेत् रूप्यपलशतं भाण्डं पञ्चाशता सुवर्णपलैस्तनुपत्रकृतैरवलेपयेत् शोषयेत् । चतुर्भागसुवर्णं वा रूप्यभाण्डमिति वर्तते, पलशतघटितं रूप्यभाण्डं पञ्चविंशत्या सुवर्णपलैश्चूर्णीकृतैर्वालुका हिङ्गुलकचूर्णवर्गमिश्ररसेन पारतेन योजितैस्तत्तुषाग्निना द्रवीकृतैर्वासयेत् । तदेव सोमेनार्थेन(?) चतुर्भागेन च त्वष्टृकर्मणा सुवर्णं योजयेदिति ।

श्रीमूला

तपनीयकर्माह—तपनीयमित्यादि । तपनीयम् अलङ्कारार्थम् घटनीयं कनकं, ज्येष्ठम् उत्तमं सप्तदशवर्णकं षोडशवर्णकं वा, सुवर्णं किञ्जल्काद्यन्यतमवर्णम्, सुरागं स्निग्धभ्राजिष्णुरागम्, नीलपीतादीनां पञ्चानां प्रकृतिः कारणं भवति । अनेवम्भूताशुद्धस्वर्णविषये आह—समसीसेत्यादिना । समसीसातिक्रान्तं तत्तुल्यमानसीसशोधितम्, पाकपत्रपक्वं तनुपत्रात्मकं कृत्वारण्यगोमयदग्धम्, सैन्धविकया सौराष्ट्रमृत्तिकया सह उज्ज्वालितम्, इत्थं शोधनेन संस्कृतम्, नीलादीनां प्रकृतिर्भवति ।

चाणक्यटीका

तपनीयमिति, तपनीयं वक्ष्यत इति वाक्यशेषः । तस्य प्रकृतिमाह—ज्येष्ठं सुवर्णम् । यदुक्तम् 'किञ्जल्कवर्णम्' इत्यादि । तन्मिश्रताम्रप्रतिषेधार्थं सुरागग्रहणम्, ज्येष्ठमपि हि प्रकम्पेत् । यथोक्तम् 'रक्तमवरञ्च श्रेष्ठानाम्' इति । कथं पुनस्तद् भवतीति चेत्, तुल्यमानेन सीसेन सहान्तर्मूषाध्माते गोमयक्षीरे वा निषेवितं विवासयेत् । न च तयोर्भेदः, तस्य परिहारार्थं ( धृत ? पाक ) पत्रादि कृत्वा वासितम् ( आपेक्षवात् ? ) सैन्धविकया च सौराष्ट्रमृत्तिकया उज्ज्वलितम् । वर्णव्यक्त्यर्थं सुरागमित्युच्यते । तन्नीलादीनां लोहान्तरसंसृष्टानां प्रकृतिर्भवति ।

प्रतिपदपञ्चिका

तपनीयकर्मणि वर्णप्रकृतिमाह—तपनीयमित्यादि, तपनीयं घाटनीयं ज्येष्ठमुत्तमं सप्तदशवर्णकं षोडषवर्णकं वा सुवर्णं किञ्जल्ककुरण्टककाद्यन्यतमवर्णं सुरागं स्निग्धं भ्राजिष्णु रागनीलादीनां प्रकृतिर्भवति । यत् पुनरेवंभूतं न भवति ।

**तीक्ष्णं चास्य मयूरग्रीवाभं श्वेतभङ्गं चिमिचिमायितं पीतचूर्णितं, काकणिकः सुवर्णरागः । तारमुपशुद्धं वा ।**

**अस्थितुत्थे चतुः, समसीसे चतुः, शुष्कतुत्थे चतुः, कपाले त्रिः, गोमये द्विः, एवं सप्तदशतुत्थातिक्रान्तं सैन्धविकयोज्ज्वालितम् ।**

---

श्रीमूला

तीक्ष्णं चेति । अस्य तपनीयस्य, तीक्ष्णं तदाख्यो लोहविशेषश्च, प्रकृतिर्भवतीत्यनुवर्तते, अर्थान्नीलादीनां पञ्चानाम् । कीदृशं तीक्ष्णम् मयूरग्रीवाभम्, श्वेतभङ्गं छेदे शुक्लम्, चिमिचिमायितम् अत्यन्तभास्वरम्, ईदृशं तीक्ष्णम्, पीतचूर्णितं तप्तचूर्णीकृतं स्वर्णे प्रक्षिप्तमित्यार्थम् । कियति स्वर्णे कियत् तीक्ष्णं रञ्जनार्थं प्रक्षिप्तव्यमित्यत्राह—काकणिक इति । सुवर्णरागः षोडशमाषप्रमाणस्य सुवर्णस्य रागो रञ्जनस्तीक्ष्णांशः, काकणिकः काकणी माषचतुर्भागस्तत्प्रमाणकः ।

स्वर्णानन्तरं रूप्यमाह—तारमित्यादि । उपशुद्धम् अत्यन्तशुद्धम्, तारं रजतं वाशब्दो विकल्पे । नीलादीनां प्रकृतिर्भवतीत्यनुवर्तते ।

तारस्याशुद्धस्य शोधनप्रकारमाह—अस्थितुत्थ इति । अस्थितुत्थे अस्थिचूर्णयुक्तमृत्तिकानिर्मितायां मूषायाम्, चतुः चतुर्वारान्, आवर्तितम्, एवं समसीसे मृत्तिकासीससमप्रमाणनिर्मिते तुत्थे चतुः, शुष्कतुत्थे 'शुष्कतुत्थः कटुशर्करा मूषा' इति भट्टस्वामी, तस्यां चतुः, कपाले शुद्धमृत्तिकामूषायां त्रिः, गोमये गोमयकृतमूषायां द्विः, एवं सप्तदशतुत्थातिक्रान्तं सप्तदशमूषावर्तितं, पश्चात्, सैन्धविकया लवणयुक्तसौराष्ट्रमृत्तिकया सह, उज्ज्वालितम् उज्ज्वलनसंस्कृतम्, शुद्धमित्यार्थम् ।

चाणक्यटीका

तीक्ष्णमिति । कालायसं चास्य माषस्य तपनीयविशेषस्य प्रकृतिः । कीदृशं चेत्, मयूरग्रीवाभं श्वेतं भङ्गे यत् चिमिचिमायति मेचकं भवतीत्यर्थः । तत् प्रताप्य उदकोक्षितं ततश्चूर्णितं काकणीप्रमाणं ज्येष्ठसुवर्णमाषस्य मिश्रितं रागो भवति, नीलवर्णाधानार्थः ॥

तारमुपशुद्धं वेति । तारं ज्येष्ठमित्यपेक्षणीयम् । तच्चोक्तम्—"श्वेतं स्निग्धं मृदु च श्रेष्ठम्" इति । उपायैः शुद्धं वा । ज्येष्ठाभावे तानुपायानाह—गव स्थिलिप्तायां मूषायां तत्कृतायां वा चतुरो वारान् शुद्धम्, समसीसप्रमाणे वा यत्र क्वचन मूषायां चतुष्कृत्वः, एवं शुष्कीकृते ( रिक्त ? तुत्थ ) मूषायां चतुष्कृत्वः, कपालसम्पुटेति पुटपाकपक्वे क्वचिन्मूषायां ( त्रिर् ) विपाच्य महिषगोमये द्विर्निषेचयेत् । एवमनेन क्रमेण सप्तदशभ्योऽतिक्रान्तम् । एतच्च तपनीयप्रकृतिर्भवति ।

प्रतिपदपञ्चिका

तस्य शोधनप्रकारमाह—समसीसातिक्रान्तं तत्तुल्यसीसशोधितम् पाकपात्रपक्वम्

**एतस्मात् काकण्युत्तरापसारिता आ द्विमाषादिति सुवर्णे देयं, पश्चाद् रागयोगः, श्वेततारं भवति ।**

**त्रयोंऽशाः तपनीयस्य द्वात्रिंशद्भागश्वेततारमूर्छितं सत् श्वेतलोहितकं भवति । ताम्रं पीतकं करोति । तपनीयमुज्ज्वाल्य रागत्रिभागं दद्यात् । पीतरागं भवति ।**

———————

प्रतिपदपञ्चिका

अरण्यगोमयदग्धं सैन्धविकया सौराष्ट्रमृत्तिकयोज्ज्वालितं निष्टप्तं नीलादिवर्णानां पञ्चानां प्रकृतिः कारणं भवति ।

किं तदेव केवलं, नेत्याह—तीक्ष्णं चास्येति । तीक्ष्णं लोम(ह)विशेषः चस्समुच्चये । अस्य नीलादेर्वर्णस्य प्रकृतिर्भवतीति वर्तते । तस्य लक्षणमाह—मयूरग्रीवाभमिति । तत्तुल्यवर्णं श्वेतभङ्गं शुक्लच्छेदं चि चम (चि) चमायति, अतिभास्वरत्वात् । कणिका ज्वलन्त्य इव दृश्यन्ते । तदेवम्भूतं पीतचूर्णितं प्रतप्तनिक्षिप्तं चूर्णीकृतम्, काकणिकः माषचतुर्भागिकः । सुवर्णराग इति । सुवर्णष्षोडशमाषकप्रमाणः, तस्य रागार्थं देय इति ।

एवं सुवर्णमभिधाय रूप्यमाह—तारमित्यादि, तारं रूप्यम् उपशुद्धं सम्यक् शुद्धम् । वा विकल्पे । नीलादीनां प्रकृतिर्भवति ।

तस्याप्यशुद्धस्य शोधनविधिमाह—अस्थितुत्थ इत्यादि । अस्थितुत्थः अस्थिचूर्णमिश्रमृत्तिकामूषा, तत्र चतुरो वारानावर्तितम् । तद्वत् समसीसे तुल्यसीसे च चतुष्कृत्वः शुष्कतुत्थः कटकशर्करामूषा, तत्र चतुः कृत्वा कपालं शुद्धमृत्तिकामूषा तत्र त्रिर्गोमयं गोमयमिश्रमृत्तिकामूषा, तत्र द्विः । एवं सप्तदशतुत्थातिक्रान्तं सप्तदशमूषाविशोधितं सैन्धविकयेति पूर्ववदुज्ज्वालितम् । एतस्मादुक्तलक्षणाच्छोधितरूपात् काकणीमपनीय शोधितरूप्य(प्य)काकणीप्रक्षेपोऽपचयक्रमेण द्विमाषकादिति सुवर्णे रूप्यकर्षे देयम् ।

श्रीमूला

एतस्मात् काकणी उक्तरीत्या शोधिताद् रूप्यात् काकणी, सुवर्णे प्रक्षिप्ता, उत्तरा अपसारिता अधिका सुवर्णकाकणी अपनीता भवति । इति आ द्विमाषात् सुवर्णे देयम्, एवं सुवर्णकाकण्यपनयनपूर्वकरूप्यकाकणीप्रक्षेपोपचयक्रमेण अष्टकाकण्यधिकः सुवर्णे रूप्यप्रक्षेपः कर्तव्यः । पश्चाद्, रागयोगः रागयोगार्थो यथोक्ततीक्ष्णकाकणीप्रक्षेपः । श्वेततारं भवति एवंकरणे स्वर्णं श्वेततारसमप्रभं सम्पद्यते । केचित् तु श्वेततारं रागार्थं भवतीति व्याचक्षते ।

रागयोगमाह—त्रयोंऽशा इत्यादि । एवं स्वामी व्याचष्टे—सामान्यसुवर्णाद् द्वात्रिंशद्धा विभक्ताद् अंशत्रयमपनीय, तपनीयस्य यथोक्तप्रकारशोधिततपनीयस्य, त्रयोंऽशाः सामान्यस्वर्णे प्रक्षिप्यन्त इति शेषः । तत् स्वर्णम्, द्वात्रिंशद्भागश्वेततारमूर्छितं

श्रीमूला

द्वात्रिंशद्भागिकेन श्वेतरजतेन सहावर्तितं सत्, श्वेतलोहितकं भवति श्वेतलोहितात्मकवर्णद्वयसम्भिन्नं भवति। ताम्रं कर्तृ, पीतकं पीतवर्णं करोति, अर्थात् तदेव सामान्यस्वर्णं कर्म। इहापि पूर्ववत् 'त्रयोंऽशा' इत्यादि योजनीयम्, श्वेततारस्थाने च ताम्रम्। तथा च तत् स्वर्णं द्वात्रिंशद्भागिकताम्रेण सहावर्तितं सत् पीतवर्णं जायत इत्युक्तं भवति। भाषाटीका त्वन्यथा व्याचष्टे—द्वात्रिंश तिभागेषु त्रयोंऽशास्तपनीयस्य, शेषास्तु रजतस्येत्येवं मिश्रयित्वावर्तने कृते तच्छ्वेतलोहितवर्णं भवति। एवं द्वात्रिंशद्भागात्मके ताम्रे शुद्धसुवर्णस्य त्रीन् भागान् योजयित्वावर्तने कृते तत् पीतरागं भवतीति।

तपनीयमुज्ज्वाल्येति। तपनीयं सामान्यस्वर्णम्, सैन्धविकयोज्ज्वाल्य, रागत्रिभागं शोधितस्वर्णत्रिभागम्, दद्यात्। पीतरागं भवति। तथाकरणे तत् सामान्यस्वर्णं पीतरागं पीतरक्तं भवति। अपरा व्याख्या—तपनीयं शोधितसुवर्णं सैन्धविकयोज्ज्वाल्य तत्र रागत्रिभागं ताम्रत्रिभागं दद्यात्। तत् पीतरागं भवतीति।

चाणक्यटीका

एतस्माच्च काकण्युत्तरम् आ द्विमाषाद् अष्टाभ्यः काकणीभ्य इत्यर्थः। ज्येष्ठसुवर्णस्य कर्षे देयम्। अष्टौ यथोत्तरं शुक्लतारास्तपनीयभेदा भवन्ति। एवमष्टप्रमाणं तपनीयं कृत्वा पश्चाद् रागार्थं युज्यते श्वेततारमिति।

अपरे त्वाहुः—पूर्वं श्रेष्ठं सुवर्णं रूप्यं च परिशुद्धं कृत्वा पश्चाद् रागयोगः श्वेततारम् अ ( भि ? ) त्रयोग इति।

तपनीयस्य अष्टप्रकारस्य प्रयोगाः। तत्र भागमेकं पृथक् कृत्वा तद् द्वात्रिंशद्भागेन पुनः शुद्धरूप्येण संयूहितम् अपराभ्यां भागाभ्यां सम्पृक्तं श्वेताधिकं लोहितं भवति। तदपि अर्थादष्टविधमेव। अंशत्रयग्रहणानुकर्षस्य द्वात्रिंशद्भागं श्वेततारं मूर्च्छितं सुवर्णमिति वाच्यं स्यात्। अपरस्मिन् प्रकारे तपनीयार्थस्य ज्येष्ठसुवर्णस्य त्रयोंऽशाः। तत्रैकोंऽशः तद्द्वात्रिंशद्भागेन श्वेततारमूर्च्छितो द्वाभ्यां संसृष्ट इति। तथा वाल्पत्वाच्छ्वेततारस्य किञ्चिच्छवेतलोहितमेतैर्नवमः पूर्वे त्वष्टौ श्वेतविशेषा इति॥

ताम्रं पीतमिति। ताम्रं परिशुद्धमेव विमिश्रं पीतं करोति। कथमितिचेत्तदाह—तपनीयम्, अष्टप्रकारं सैन्धविकया उज्ज्वाल्य ताम्रत्रिभागं दद्यात्। एवमष्टौ पीतभेदाः तपनीयार्थस्य चेत् सुवर्णस्यैकविधमेव।

प्रतिपदपञ्चिका

पश्चाद्रागयोग इति। शुद्धाशुद्धरूप्यं पूर्वमावर्त्य पश्चाद्यथोक्ततीक्ष्णकार्कणिको रागयोगार्थं देय इत्येवं श्वेततारमलक्षितविशेषं सनवधा भवति। हरणोपायश्चायमवगन्तव्य इति केचित्।

अपरे त्वस्मच्छोधितरूप्यात्तपनीये काकणीकाकणीं प्रक्षिप्य उत्तरामुत्तरां चापनीय एवं रूप्ययुक्तं सुवर्णमष्टधा विभिद्यते। पश्चाद्रागयोग इति पूर्वं सरूप्यं

**श्वेततारभागौ द्वावेकस्तपनीयस्य मुद्गवर्णं करोति । कालायसस्यार्धभागाभ्यक्तं कृष्णं भवति । प्रतिलेपिना रसेन द्विगुणाभ्यक्तं तपनीयं शुकपत्रवर्णं भवति । तस्यारम्भे रागविशेषे प्रतिवर्णिकां गृह्णीयात् ।**

---

### प्रतिपदपञ्चिका

सुवर्णमावर्त्य ततस्तीक्ष्णकाकणी रागयोगार्थं देय इति श्वेतताराभं कनकं भवति ।

त्रयोंऽशास्तपनीयस्येति । सामान्यसुवर्णं द्वात्रिंशद्विधाभिः विभज्य ततोंऽशत्रयमपनीय पूर्वोक्तशोधिततपनीयस्य त्रयोंऽशाः प्रक्षिप्यन्ते । ततस्तद्द्वात्रिंशद्भागिकश्वेततारमूर्छितद्वात्रिंशद्भागिकेन श्वेततारेण सह मूर्छितमावर्तितं सद् वर्णद्वयेन श्वेतेन लोहितेन च सम्भिन्नं भवतीति केचित् । अपरे तु त्रयोंऽशास्तपनीयस्य शुद्धसुवर्णस्य, तद् यथा द्वात्रिंशतां सुवर्णानां तृतीयांशेन सुवर्णत्रिभागं न्यूनांशका दश भवन्ति । ततस्सुवर्णमपनीय त्रयाणामप्यंशानां द्वात्रिंशद्भागेन श्वेततारस्य सुवर्णेन सह मूर्छितं सत् श्वेतलोहितकं भवति । तस्मात् पुनरेकैकांशेन न त्रिभिरपीति व्याख्यायते । त्रयोंऽशग्रहणात् यदि त्रिभिरप्यंशैः सह वर्तमानं अभिप्रेतम्, तदा त्रयोंऽशग्रहणं न कुर्यात् । द्वात्रिंशद्भागश्वेततारमूर्छितमिति ब्रूयात् । ताम्रं पीतं करोतीति पूर्ववत् त्रयोंऽशास्तपनीयस्य श्वेततारस्थाने च ताम्रं योजनीयम् । इत्येवं पीतकं रागं सुवर्णं करोतीति, तपनीयमुज्वाल्येति, तपनीयं सामान्यसुवर्णं पूर्ववत् सैन्धविकयोज्ज्वाल्य रागत्रिभागांशं दद्यात् । तदेव रक्तपीतं पीतरक्तं पीतरागं भवति । यद्वा तपनीयं शोधितसुवर्णं सैन्धविकयोज्ज्वाल्य रागत्रिभागमिति तीक्ष्णलोहस्य सुवर्णे काकणिको रागार्थं प्रक्षेपो विहितः । स एव माषकद्वादशभागसुवर्णं देय इत्येव । पीतमपि तत् कडाराभं भवति ।

### श्रीमूला

द्विगुणशुद्धरूप्ययुक्तं शुद्धसुवर्णमावर्तितं मुद्गवर्णं भवतीत्याह—श्वेततारभागावित्यादि । पश्चाद् रागयोग इति सर्वशेषो द्रष्टव्यः । कालायसस्येति । कालायसस्य तीक्ष्णस्य, अर्धभागाभ्यक्तम् अर्धभागेन रागार्थस्य तीक्ष्णस्य प्रमाणं तृतीयांश उक्तः तदर्धभागः अर्थात् षड्भागेन अभ्यक्तमनुलिप्तं न त्वावर्तितम्, तपनीयं, कृष्णम् अञ्जनवर्णम्, भवति । प्रतिलेपिना द्रवीकृतेन कालायसेन, रसेन पारदयुक्तेन, द्विगुणाभ्यक्तं द्विगुणमनुलिप्तं, तपनीयं, शुकपत्रवर्णं भवति । तस्येति । तस्य नीलादेरुक्तस्य, आरम्भे, रागविशेषे, शुद्धशुद्धस्वर्णरजतरूपेषु रञ्जकभेदेषु विषये, प्रतिवर्णिकां तारतम्यपरिच्छेदार्थम्, गृह्णीयात् ।

### चाणक्यटीका

तथा कालायसस्य तपनीयप्रकृतेः अर्धभागेन अभ्यक्तं तपनीयम् अष्टविधं कृष्णं भवति । तपनीयार्थं चेत् सुवर्णमेकविधमेव । तथा प्रतिलेपनशीलेन रसेन धातुवाद-

**तीक्ष्णताम्रसंस्कारं च बुद्धयेत, तस्माद् वज्रमणिमुक्ताप्रवालरूपाणामपनेयिमानं च रूप्यसुवर्णभाण्डबन्धप्रमाणानि चेति ॥**

---

चाणक्यटीका

शास्त्रविहितेन द्विगुणेन अभ्यक्तम् एतद्द्विगुणं तपनीयम् अष्टविधं शुकपत्रसुवर्णं भवति। तपनीयार्थं चेत् सुवर्णमेकविधं भवति। प्रति ( लिखितं ? लेपनं ) चात्र लक्षणानभिधानाज्ज्ञापयति। धातुवादशास्त्रज्ञसखः सुवर्णाध्यक्षः ख्यातः ( या ? तथा ) अध्यक्षयति। एवं नीलमेकमष्टौ तपनीयस्य भेदाः। तपनीये च रज्यमाने श्वेतलोहितस्य पीतस्य मुद्गवर्णस्य कृष्णस्य शुकवर्णस्य प्रत्येकम् अष्टसत्त्वमिति एकोनपञ्चाशत् तपनीयस्य भेदाः। नीलमेकमष्टविधं तपनीयम्। ज्येष्ठसुवर्णे च रज्यमाने श्वेतलोहित-पीतमुद्गवर्णकृष्णशुकपत्रवर्णानां पञ्चानामेकविधत्वे चतुर्दशविधास्तपनीया इति व्याख्यातं भवति।

तस्य तपनीयस्य आरम्भे ( प्राक्षिश्रयं आपातविशेषेषु ? ) नीलादिप्रतिवर्णिकां प्रतिरागं प्रकृतीनां सुवर्णतीक्ष्णतारताम्राणां गृह्णीयात्। उत्तरकालमनुस्मरणार्थं शोधनार्थं चेति ॥

प्रतिपदपञ्चिका

श्वेततारभागौ द्वावेकस्तपनीयस्येति, एवं द्विगुणशुद्धरूप्यं सुवर्णमावर्तिकं मुद्गवर्णं भवति। पश्चाद् रागायोग इति सर्वत्रानुवर्तते।

कालायसस्य अर्धभागाभ्यक्तमिति। तृतीयांशस्तपनीयस्योक्तस्तदर्थं षड्भागः कालायसस्य भवति। तेनाभ्यक्तमनुलिप्तम्, अभ्यक्तग्रहणमावर्तनप्रतिषेधार्थं तपनीयं कृष्णमञ्जनाभं भवति। प्रातिलेपिना द्रवीकृतभालनकृष्णायसेनेति केचित्। तेनैव हिङ्गुलकसहिते(ने)त्यपरे। रसेन पारदेन च द्विगुणाभ्यक्तं बहुलतराभ्यक्तं द्विगुणं वा तपनीयमभ्यक्तं द्विगुणाभ्यक्तं शुकपत्रवर्णाभिम्। तस्यारम्भ इत्यादि। तस्य नीलादेरारम्भे सुवर्णस्य च रूप्यस्य शुद्धस्याशुद्धस्य हरणप्रतिषेधार्थं प्रतिवर्णिकां गृह्णीयात्। इतरेतरान्तरपरिच्छेदार्थं तीक्ष्णताम्रसंस्कारं तच्छोधनमनुक्तमपि धातुशोधनशास्त्रतः तद्वद्भ्यो वा बुद्धयेत। तथा च—

"निर्दिष्टं तत्क्रियाभिज्ञैः धातुशास्त्रविशारदैः।
औषधैः प्रतिवापैश्च शोधनं ताम्रतीक्ष्णयोः ॥" इति।

अन्ये तु ताम्रसंस्कारमिति तारं पठन्ति। तच्चासत्कारसंस्कारस्यात्रैवाभिहितत्वात्। उक्तं हि अस्थितुत्थे चतुरित्यादि।

श्रीमूला

रञ्जनार्थंतीक्ष्णताम्रयोः शुद्धिपरिज्ञानापेक्षायामाह—तीक्ष्णेत्यादि। तीक्ष्णताम्रयोः संस्कारं शोधनम्, बुध्येत धातुशोधनशास्त्राज्जानीयात्। तस्मात् सुवर्ण-

[ चतुर्दशानां कनकगुणानां निर्देशः ]

**समरागं समद्वन्द्वम् असक्तपृषतं स्थिरम् ।**
**सुविमृष्टमसंपीतं विभक्तं धारणे सुखम् ॥८६॥**

---

श्रीमूला

रजतादिशुद्धिप्रकारज्ञानस्य यो हेतुः कारुहरणशङ्कारूपस्तेनैव हेतुनेत्यर्थः, वज्रमणिमुक्ताप्रवालरूपाणाम्, अपनेयिमानं च असारहीरमाणिक्यादिप्रक्षेपेण सारहीरमणिक्यादिपरिवर्तनादिकं हरण प्रकारं च रूप्यसुवर्णभाण्डबन्धप्रमाणानि च रूप्यसुवर्णाभरणादीनां संव्यूहनादीनि च 'शुल्बभाण्डं समसुवर्णेन संयूहयेत्' इत्यादिनोक्तानि, बुध्येतेति सम्बध्यते । इतिशब्दः प्रकारे ।

चाणक्यटीका

तीक्ष्णताम्रसंस्कारश्च अनुक्तमपि तपनीयाङ्गभूतं धातुवादशास्त्रं विद्यात् । तस्मादिति, तस्मादेव च कारुभ्योऽवप्रमादात् वज्रमणिमुक्ताप्रवालरूपाणां नानाबन्धानाम् आश्रयस्य कटकादेः । अपनेयिनो मण्यादिभिः सह पृथक्त्वमानं बुध्येत । रूप्यसुवर्णभाण्डेन सह बन्धानां भृङ्गारादौ प्रमाणं मण्यादीनां पृथक् सह च विद्यात् ॥

प्रतिपदपञ्चिका

तीक्ष्णसंस्कारस्य चानुक्तत्वात् । तत्सहचरितानुक्तसंस्कारताम्रपायुक्तिमानिति । तस्माद् वज्रेति । तस्मात् सवर्णोदाहरणात् वज्रादिरूपाणामपनेयमानमपनीतत्वमसारमणिप्रक्षेपेण सारमणिपरिवर्तनादिकं हरणप्रकारं बुद्धयेतेति वर्तते । यद्वा वज्रादिसमेतं रूपं वज्रमणिमुक्ताप्रवालसंयोजितमाभरणं तस्मादपनेयिमानम्, तद् यथा, दश सौवर्णके विंशतिः लिकादि पञ्च वज्राण्यायोज्यन्ते । पञ्च माषिकाणि पञ्च मौक्तिकानि दश माषकाणि पञ्च मौक्तिकानि । तदा तैः सह यावत्प्रमाणं कटकं भवति मूषोपनिषदि पादिना, अपि च एकस्मिन् मणौ द्वित्रेषु वापनीतेषु यावत्प्रमाणं तद् भवति, ततः अपनेयिमानं बुद्धयेत । केचिन्मध्यमानप्रमाणमपनेयिमानमाह—अपनेयिमानमिति । तथा रूप्यसुवर्णभाण्डादि निरूप्य सुघर्णाभरणादीनि तेषां बन्धप्रमाणानि संयूहनादिप्रविभागात् । तद् यथा—शुल्बभाण्डं समसुवर्णेन संयूहयेत् इत्यादि, इतिशब्दश्चार्थे प्रकारे वा ।

श्रीमूला

अध्यायान्ते श्लोकद्वयं तपनीयगुणचतुर्दशकप्रतिपादकमाह—समरागमित्यादि । समरागं समवर्णिकम्, समद्वन्द्वं तोलनतो वर्णतश्च स्वसमानद्वितीयम्, असक्तपृषतम् असंसक्तगुटिकम्, स्थिरम् अविसंवादि, सुप्रमृष्टं पूर्वोक्तविधिना सैन्धविकया सम्यगुज्ज्वालितम्, अप्रमृष्टमिति पाठे अकृत्रिमच्छायम्, असम्पीतं छायोत्कर्षार्थं पायितं न भवति, विभक्तं सुविभक्तावयवम्, धारणे सुखम् आमुञ्चताम् अदुःखकरम्, अभिनीतम् अनुद्वणं,

**अभिनीतं प्रभायुक्तं संस्थानमधुरं समम् ।**
**मनोनेत्राभिरामं च तपनीयगुणाः स्मृता ॥८७॥**

[ इत्यध्यक्षप्रचारे अक्षशालायां सुवर्णाध्यक्षस्त्रयोदशोऽध्यायः ।
आदितश्चतुस्त्रिशः ]

---

श्रीमूला

प्रभायुक्तं द्युतिमत्, संस्थानमधुरम् आकृतिरमणीयम्, समम् अनिम्नोन्नतप्रदेशम्, मनोनेत्राभिरामं मनोहरं दृष्टिसुखं च, तपनीयगुणाः स्वर्णाभरणगुणाः ॥

इति कौटिलीयार्थशास्त्रव्याख्यायामध्यक्षप्रचारे द्वितीयाधिकरणे
त्रयोदशोऽध्यायः, अक्षशालायां सुवर्णाध्यक्षः,
आदितः चतुस्त्रिशः ॥

चाणक्यटीका

सम्प्रति तपनीयस्य समाप्तकर्मणो गुणानाह—समरागं तप्तमतप्तं वा अन्तर्बहिश्च समरागम् । समद्वन्द्वं कटकादियुग्ममितरैरभिन्नप्रमाणान्तरम् । असक्तपृषतम् असमविहितपृषतम् । स्थिरम् अविशरणम् । सुप्रमृष्टं सम्यक्कृतप्रमार्ष्टिकम् । असंवीतम् अन्यैः क्षणशोभाकारिभिरनुपहतरागम् । विभक्तं यथाभागावस्थितरूपम् । धारणे सुखम्, अतर्कितत्वादनतिश्लिष्टगाढत्वाच्च ।

स्वभि ( वि ? ) नीतम् अ ( ष्ट ? न ) तिस्पष्टरूपम्, अनुल्बणस्तिमि ( तमित ) मित्येतत् । प्रभायुक्तं भास्वरम् । संस्थानमधुरं कर्त्रा यथेष्टं स्थापयितुं शक्यम् । कर्मण्यमित्यर्थः । समम् आदिमध्यावसानेष्वेकरूपमिति ॥

॥ सुवर्णाध्यक्षस्त्रयोदशं प्रकरणम् ॥
॥ त्रयोदशश्चाध्यायः ॥

प्रतिपदपञ्चिका

सम्प्रति चतुर्दश तपनीयगुणानाह श्लोकद्वयेन—समरागमित्यादि । समरागं समवर्णिकं समद्वन्द्वं स्वसमानद्वितीयं तोलयतो वर्णतश्च असक्तपृषितम् असंसक्तगुणिकासन्निवेशं स्थिरमपि संवादि सुप्रमृष्टं पूर्वोक्तविधिना सैन्धविकयाऽतिशयोज्ज्वालितम् । केचिदप्रमृष्टमिति पठन्तो(न्तः)कृत्रिमच्छायमाचक्षते । असम्वीतमपायितम् अनुत्कर्षितमित्यपरे । विभक्तं सुविभक्तावयवम्, धारणे सुखम् आमुञ्चताम् अदुःखकरं अभिनीतमनुल्बणं प्रभायुक्तं दीप्तिमत् । संस्थानमधुरमाकृतिरमणीयं सम मनिम्नोन्नतप्रदेशं सन्मनोभिरामम् अवाच्यत्वान्मनोहरं नेत्राभिरामं दृष्टिसुलभसुखं चकाराद् रक्षोघ्नपत्रपुष्पादिफलगुणं तपनीयगुणा आभरणगुणास्तज्ज्ञैः स्मृत इति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायाम् अर्थशास्त्रटीकायाम् अध्यक्षप्रचारिके
द्वितीयेऽधिकरणे त्रयोदशोऽध्यायः परिसमाप्तः । श्रोरस्तु ।
आदितः चतुस्त्रिशोऽध्यायः अतीतः ॥

# द्वात्रिंशं प्रकरणम्

## चतुर्दशोऽध्यायः ।

## विशिखायां सौवर्णिकप्रचारः

[ निर्दिष्टकालाद्यतिक्रमे दण्डविधानेन रजत-
स्वर्णसम्बन्धिशिल्पप्रवर्तनविधिः ]

**सौवर्णिकः पौरजानपदानां रूप्यसुवर्णमावेशनी(नि)भिः कारयेत् । निर्दिष्टकालकार्यं च कर्म कुर्युः अनिर्दिष्टकालं कार्यापदेशम् । कालातिपातने पादहीनं वेतनं तद् द्विगुणश्च दण्डः कार्यस्यान्यथाकरणे वेतननाशः तद्द्विगुणश्च दण्डः ॥**

---

श्रीमूला

विशिखायां सौवर्णिकप्रचार इति सूत्रम् । विशिखायां विशिखेह सौवर्णिक विपणिः तस्याम्, सौवर्णिकप्रचारः सौवर्णिकस्य सुवर्णे नियुक्तस्य प्रचारो व्यापारः, सोऽभिधीयत इत्यर्थः । पूर्वाध्याये शिल्पवत्त्वाभिजात्यप्रात्यायिकत्वादिगुणयुक्तं विशिखायां सौवर्णिकं कुर्यादित्युक्तम् । तस्य व्यापारस्तु नोक्तः । स इहोच्यत इति सम्बन्धः ।

सौवर्णिक इति । सौवर्णिकः, पौरजानपदानां पुरवासिनां बहिर्विषयवासिनां च, रूप्यसुवर्णं रूप्यशिल्पं सुवर्णशिल्पं च, आवेशनिभिः शिल्पिशालीयैः सुवर्णकारादिभिः, कारयेत् । निर्दिष्टकालकार्यं च कर्म कुर्युः इयता कालेनेदृशं कटकाङ्गदादि निर्मायार्पणीयम् एतावच्च वेतनमिति परिभाषणपूर्वं शिल्पं कुर्युः, अर्थादावेशनिनः । कार्यापदेशम् अनिर्दिष्टकालमिति निर्मातव्यवस्तुगौरवनिमित्तं तु अपरिभाषितकालमपि कर्म कुर्युः ।

चाणक्यटीका

अयञ्च सुवर्णाध्यक्षः यं स्थापितवान् "शिल्पवन्तमभिजातम्" इति तस्य जातावसरो व्यापारः प्रचार इति प्रकरणमारभ्यते ॥

सौवर्णिक इति सुवर्णकर्मणि नियुक्तः कुशलश्च । पौरजानपदानां न राजकीय-कुप्यसुवर्णभाण्डम् । आवेशनिभिः आपणवद्भिस्तथैव सुवर्णकारैः । आवेशनं हि सुवर्णकारकर्मस्थानम् । निर्दिष्टकालकार्यञ्चेति । सौवर्णिकसुवर्णस्वामिभ्याम् । निर्दिष्टकालम् एतावद्भिरिति । निर्दिष्टकार्यं कटकः कर्णिका वेति कर्म कारयेत् । अपरेतु देशशब्दं पठन्ति । तत्रापि निर्दिष्टदेशमावेशनं गृहं वेति । यत्र पुनः कार्यमात्रमेवापदिष्टं तद् यत्र तत्र वा कृत्वा यदा तदा ( वा ) न दण्डयाः कारवः ॥

### श्रीमूला

कालातिपातन इति। परिभाषितकालातिक्रमे, पादहीनं परिभाषितचतुर्भाग-हीनम् वेतनं भवति, तद्विगुणः गृह्यमाणवेतनद्विगुणः दण्डश्च भवति। कार्यस्याऽन्यथा-करणे कटकं परिभाष्य केयूरादिकरणे, वेतननाशः, तद्द्विगुणः नष्टवेतनद्विगुणः, दण्डश्च भवति। कण्टकशोधने कारुकरक्षणे कारूणां सर्वेषां दण्ड उक्तः, सुवर्णकारूणां त्विह दण्डकथनं विशेषज्ञापनार्थम्। कार्वन्तरदण्डवत् सुवर्णकारुदण्डं प्रशास्तारः केवल न कुर्युः, किन्तु सौवर्णिकसहिता एव कुर्युरिति।

### चाणक्यटीका

( कालातिपातन इति ) अत्रापि देशशब्दं पठन्ति। व्याख्यातञ्च। कार्यस्यान्य-थाकरण इति। कार्यस्य स्वस्य अनभिप्रेतसंस्थानकरणाद् यथोचितो वेतननाशः तद्द्वि-गुणश्च अस्य दण्डः। निर्दिष्टकालातिपातेन वापि पादहीनं वेतनं लभेत कर्त्तेति विशेषः। यथोचितवेतनाद् द्विगुणश्चास्य दण्डः। देशव्यत्ययेऽप्ययं योज्यः॥

### प्रतिपदपञ्चिका

विशिखायां सौवर्णिकप्रचार इति सूत्रम्।

विशिखा रथ्या च सामान्याभिधानेऽपि सौवर्णि(क)विपटि(णि)मार्गः परिगृह्यते। तस्यां विशिखायां सुवर्णे नियुक्तः सौवर्णिकः, तस्य प्रचारो व्यापारो विशिखायां सौवर्णि-कप्रचारः यस्य स इहाभिधीयते इति सूत्रार्थः। सम्बन्धस्तु कोशप्रकृतिः प्रकान्ता, तस्य राज(की)क्रि(क्रे)यसुवर्णरूप्यघटनाद्युपदेशप्रकारै रक्षणमुक्तम्। इदानीं पौरजानपदानां पौराणां बहिर्विषय वासिनां च रूप्यमयं सुवर्णमयं वा भाण्डमाकर्षणादिकमावेशिनी भिरिति। आवेशनं शिल्पिनां शाला, तन्निवासं सुवर्णकारादिभिः कारयेत्।

निर्दिष्टकालकार्यमिति, निर्दिष्टः परिभाषितः कालः पञ्चरात्रादिकः कार्यं कटककेयूरादि चकरात् परिभाषिनवेतनादिकं च कर्म कुर्युरिति। अयमावेशनानामु-पदेशः, किमयमेकान्त एव, नेत्याह—अनिर्दिष्टकालमपरिभाषितकालं कार्यापदेशं कर्त्तव्यातिशयमतिसूक्ष्मपरिकर्म, अथ कालातिपातने को दोषः इत्याह—कालातिपातन इति। यथा परिभाषितं चतुर्भागहीनं वेतनं तद्द्विगुणश्च दण्डः। कार्यस्यान्यथाकरणे विहिते। केयूरकरणेऽभिहिते कटकादिकरणे वेतनाशो मूल्यनाशः। चकरान्नष्टवेतनो द्विगुणश्च दण्ड इति। ननु कण्टकशोधने कारुकरक्षणे समस्तकारुकाणामुक्त एव दण्डः पुनः सुवर्णकारुकाणामिह दण्डाभिधानं कर्तृभेदज्ञापनार्थं, सर्वानेव कण्टकशोधनोक्त दण्डान्प्रग्र(ा)स्तारः केवलाः कुर्वन्ति।

[ संस्कारार्थमर्पितसुवर्णादेः प्रतिग्रहकाले
वर्णादिपरीक्षावश्यकता ]

**यथावर्णप्रमाणं निक्षेपं गृह्णीयुः तथाविधमेवार्पयेयुः । कालान्तरादपि च तथाविधमेव प्रतिगृह्णीयुः अन्यत्र क्षीणपरिशीर्णाभ्याम् । आवेशनीभिः सुवर्णपुद्गललक्षणप्रयोगेषु तत्तज्जानीयात् ।**

---

श्रीमूला

यथावर्णेत्यादि । निक्षेपं घटनीयरूप्यसुवर्णादि, यथावर्णप्रमाणं यद्वर्णिकं यत्प्रमाणं च, गृह्णीयुः, तथविधमेव तत्प्रकारमेव न तु लेशतोऽपि वर्णप्रमाणयोर्हीनम्, अर्पयेयुः कारवः । कालान्तरादपि चेति । ग्रहीतुः कारुकस्य दीर्घप्रवासादिना मरणादिना वा निमित्तेन तत्पुत्रादिहस्तादपि च, तथाविधमेव प्रतिगृह्णीयुः स्वार्पित-वर्णप्रमाणकमेव निक्षेपं प्रतिगृह्णीयुः, न तु तदभ्यधिकवर्णप्रमाणकं कालातिपातदोषा-पदेशेन प्रार्थयेयुः, न वा पुत्रादीनां वेतनहानिर्दण्डो वेत्यभिप्रायः । अपरा व्याख्या—कालान्तरादपि देशविभ्रमादिनिमित्ते कालातिपाते जातेऽपि, तथाविधमेव यथानिक्षिप्त-मघटितमेव, अर्पयेयुः कारवः, निक्षेपकाश्च प्रतिगृह्णीयुरिति । तत्रापवादमाह—क्षीणपरिशीर्णाभ्यामन्यत्र उपभोगघृष्टं प्रच्युतावयवं च निक्षेपमपहाय । क्षीणपरिशीर्ण-योस्तु दण्डो दाप्य एव ।

आवेशनिभिरिति । सुवर्णपुद्गललक्षणप्रयोगेषु सुवर्णः किञ्जल्कवर्णादिः, पुद्गलम् आभारणभृङ्गारादि, लक्षणं मुद्रा एतेषां स्वर्णादिसम्बन्धिनां प्रयोगेषु व्यवहारेषु हरणोपायानुष्ठानेषु वा, तत्तत् छलमच्छलं च ज्ञेयं सर्वं वस्तुतत्त्वम्, आवेशनिभिर्जा-नीयात् शिल्पिद्वारेण विद्यात्, सौवर्णिकः ।

चाणक्यटीका

यथावर्णमिति यद्वर्णकं यत्प्रमाणकं च कर्त्तव्यतया निक्षेपं रूप्पं सुवर्णं वा गृह्णीयुः कर्त्तारः तत्कृत्वा तद्वर्णकं तत्प्रमाणं च सौवर्णिकेन परिज्ञातं स्वामि(ने)नोऽर्पयेयुः ॥

किञ्च कालान्तरादपि च पुनः संस्कारार्थञ्च तथाविधमेव प्रतिगृह्णीयुः कर्तारः । अन्यत्र क्षीणपरिशीर्णाभ्याम् । तत्र हि कर्मणा क्षयं परिशीर्णं वा द्रव्यं कर्तारो न दाप्याः ॥

एवमर्थञ्चाह—आवेशनिभिः सह सौवर्णिकः सुवर्णे सविशेषे जातरूपादौ । पुद्गले संस्थानविशेषे कटकादौ । लक्षणे करमुखादौ । प्रमाणे कर्षादौ । प्रयोगे संयूह्यादिके च । तत्तद् यथोक्तं सविशेषं जानीयात् । तदेतेन जातरूपं गृहीत्वा सपारत(द)मुपसंयूह्य कटकः वलयेन कृत इति ॥

प्रतिपदपञ्चिका

सुवर्णकारदण्डं तु सौवर्णिकसहिता इति, यथावर्णप्रमाणमिति, यद्वर्णिकं च याप्रतिमानं च निक्षेपं घटनीयद्रव्यं कारवो गृह्णीयुः तथाविधमेवार्पयेयुरिति । तथाविध-

[ संस्कारमये न्यूनीभावार्हाः भागाः ]

**तप्तकलधौतकयोः काकणिकः सुवर्णे क्षयो देयः। तीक्ष्णकाकणी रूप्यद्विगुणा रागप्रक्षेपः तस्य षड्भागः क्षयः ॥**

---

प्रतिपदपञ्चिका

ग्रहणं काकणीशतांशेनापि वर्णप्रमाणयोर्विहीनत्वप्रतिषेधार्थं ।

कालान्तरादपि इति । सुवर्णकारस्य व्याध्यादिव्यसनात् मरणाद्वा तत्पुत्रादिहस्तादपि तथाविधमेव गृह्णीयुः अर्पयितारं न हीनवर्णं निक्षिप्योत्तमवर्णिकं प्रार्थयेयुः न वा एषां वेतनहानिर्दण्डो वा भवेत्, कालातिपातनस्य व्यसननिमित्तत्वात् । यद्वा निक्षिप्तमात्र एव देशविभ्रमादिकृतत्वात् कालातिपातात् तथाविधमेवाधितमेव अर्पयेयुः । शिल्पिनमनिक्षेप्तारो वा प्रतिगृह्णीयुरिति । तस्यापवादमाह— अन्यत्र क्षीणपरिशीर्णाभ्यामिति ।

क्षीणमुपभोगादीनां(ना)घृष्टं परिशीर्णं भग्नं प्रच्युतावयवं वा तत्र सहस्रं दाप्य एव । आवेशिनीभिरिति । कालान्तरान्निक्षेप्ता हीनवर्णिकजत्वोत्तमर्णिकं प्रार्थयते । शिल्पवेकातवर्णिका ? गृहीत्वा हीनवर्णमर्पयति । तदेवमादिषु सुवर्णादिप्रयोगेषु तद्विषयेषु विवादेषु तत्तत्सत्यासत्यादिसर्वमावेशिनीभिस्साक्षिभूतैः सुवर्णाध्यक्षो जानीयात् ।

अथवा ऽऽवेशिनीभिः सुवर्णकारादिभिः सुवर्णादिप्रयोगेषु तुलाविषमादिहरणोपायेषु क्रियमाणेषु तत्तत्सर्वं सौवर्णिको जानीयात् । सुवर्णः किञ्जल्कवर्णादि । पुद्गलमाभरणादि । लक्षणं चिह्नितं । प्रयोगः परिवर्तनमिति ।

श्रीमूला

'अन्यत्र क्षीणपरिशीर्णाभ्यामि' त्युक्तस्य प्रतिप्रसवमाह—तप्तेत्यादि । तप्तकलधौतकयोः अशुद्धस्वर्णरजतयोर्विषये, सुवर्णे काकणिकः षोडशमाषके माषचतुर्भागप्रमाणः, क्षयो देयः निक्षेपं घटितं तावन्मात्रन्यूनमेव निक्षेपकः प्रतिगृह्णीयात् । तीक्ष्णकाकणी कालायसकाकणी, रूप्यद्विगुणा रजतकाकणीद्वययुक्ता, रागप्रक्षेपः रागार्थं षोडशमाषकस्वर्णे प्रक्षेप्तव्येत्यर्थः । तस्य षड्भागः प्रक्षिप्तकाकणीत्रयस्य षड्भागः अर्थादर्धकाकणिकः, क्षयः देयो भवति ।

चाणक्यटीका

तप्तकलधौतयोरिति । तापनं तप्तं, मृजार्थं धौतं कलधौतम् । अनयोः कर्मणोः एककाकणीप्रमाणः सुवर्णकर्षे क्षय इति । यच्चात्र अपक्षीयते तच्च कठिने परिश्रीयतेऽनयोः । क्षयो देय इति । सामान्यग्रहणेऽपि कर्तुरपेक्षातः प्रतिपादनीय इत्यर्थः । तीक्ष्णकाकणी इति । तीक्ष्णस्योक्तस्य काकणीरूप्यस्य काकणीद्वयेन सह रागार्थं तपनीये प्रक्षेपः । ततः किमितिचेत्, तस्य प्रक्षिप्तस्य षड्भागः क्षयः तप्तकलधौतयोः न प्रतिपादनीयः ॥

[ वर्णादिह्रापकानां अमार्गव्यवहारिणां च दण्डाः ]

**वर्णहीने माषावरे पूर्वस्साहसदण्डः, प्रमाणहीने मध्यमः, तुलाप्रतिमानोपधावुत्तमः, कृतभाण्डोपधौ च। सौवर्णिकेनादृष्टमन्यत्र वा प्रयोगं कारयतो द्वादशपणो दण्डः; कर्तुर्द्विगुणः, सापसारश्चेत्। अनपसारः कण्टकशोधनाय नीयेत। कर्तुश्च द्विशतो दण्डः पणच्छेदनं वा। तुलाप्रतिमानभाण्डं पौतवहस्तात्क्रीणीयुः, अन्यथा द्वादशपणो दण्डः ॥**

---

प्रतिपदपञ्चिका

इत्युक्तम् तदपवादमाह्-तप्तकलधौतयोरित्यादि, तप्तमशुद्धं सुवर्णं कलधौतम्। रूप्यं तयोः काकणिकः काकणिप्रमाणकः सुवर्णे षोडशमाषके क्षयो देयः। निक्षेपकाले तावन्मात्रमधिकं देयम्। घटितं वा न्यूनप्रार्थनीयं तीक्ष्णकाकणी संस्कृतलोह्काकणी रूप्यद्विगुणा रूप्यकाकणीद्वययुक्ता, रागार्थं सुवर्णे प्रक्षेपः, प्रक्षेप्तव्यः। तस्य त्रयस्य षड्भागो र्धकाकणिकः क्षयः तावन्मात्रं घटनसमये क्षीयते। तं जानीयादिति वर्तते।

श्रीमूला

अथ दण्डमाह्—वर्णेत्यादि। माषावरे वर्णहीने माषप्रमाणे सुवर्णे उत्कृष्टवर्णहानिम् नीते सति, पूर्वः साह्सदण्डः। माषावरे प्रमाणहीने प्रतिमानहानिम् नीते सति, मध्यमः साह्सदण्डः। तुलाप्रतिमानोपधौ न केवलं माषमात्रप्रतिमानहानिः, किन्तु ह्रापितप्रतिमानस्य पूरणकैतवमपि यत्र प्रयुज्यते तादृशे विषय इत्यर्थः, उत्तमः साह्सदण्डः कृतभाण्डोपधौ च माषावरविषये घटितरूपपरिवर्तनादिकैतवे च, उत्तमः साह्सदण्डः। अनया दिशा द्विमाषत्रिमाषादिविषयहान्यादौ तत्तद्दण्डद्वैगुण्यत्रैगुण्यादिकमूह्यम्।

सौवर्णिकेनाननुमतं विशिखायाम्, अनुमतमपि वा विशिखातोऽन्यत्रालंकारादिनिर्माणम् कारयतः कर्तुश्च दण्डमाह्—सौवर्णिकेनेत्यादि। सापसारश्चेदिति। कारयिता यदि सापसारस्तदायं दण्ड इत्यर्थः अपसारोऽपसरणं तच्च स्वर्णादेः स्वामिशुद्धागमप्रतिपादनेन चोरशङ्काकलङ्कादात्मव्यावृत्तिः, तद्वान् सापसारः। अनपसारविषये त्वाह्—अनपसार इति। अनपसारश्चेत् कारयिता, कण्टकशोधनाय वाक्यकर्मानुयोगादिना शुद्धाशुद्धत्वनिर्णयाय, नीयेत प्रदेष्टृसन्निधिम्। कर्तुश्च स्वर्णकार्वादेरनपसारस्य, द्विशतो दण्डो भवति। तस्य द्विशतपणदण्डदानासामर्थ्ये त्वाह्—पणच्छेदनं वेति। पणच्छेदनं पणनसाधनपञ्चाङ्गुलिच्छेदनम्।

तुलाप्रतिमानेत्यादि। तुलाप्रतिमानभाण्डं तुलाप्रतिमानसाधनं माषद्विमाषादिकम्, उपलक्षणात् प्रस्थद्रोणादिकं मानसाधनं च, पौतवहस्तात् वक्ष्यमाणपौतवाध्यक्षसकाशात्, क्रीणीयुः क्रीत्वा तेन व्यवहरेयुः सुवर्णकारादयः। तुलामानभाण्ड-

श्रीमूला

मिति पाठे तुलाभाण्डं माषद्विमाषादिकं मानभाण्डं प्रस्थद्रोणादिकं चेति व्याख्येयम् । अन्यथा स्वयं निर्माणेऽन्यतः क्रयणे वा, द्वादशपणो दण्डः ।

चाणक्यटीका

यदि पुनः कर्त्ता वर्णान्तरमपहरेदित्याह—वर्णहीन इति यथा ( क्ष ? ) वर्णहीनन्तु प्रमाणान्तराहीनेऽपि पूर्वः साहसदण्डः । माषावर इति । ध्रुवतोऽर्धमाषादिहानात् तच्च दाप्यः तद्द्विगुणश्च दण्ड इत्यभिप्रायः । नोपेक्ष्य इति प्रसङ्गनिवृत्यर्थम् । प्रमाणहीने मध्यमः माषावर इत्येव । तथातुलाप्रतिमाने वा प्रत्यर्पणकाले अन्यथा दधतः उत्तमः । कृतभाण्डं वा प्रतिसंस्कारार्थं गृहीत्वा तत्सदृशमुपदधतः ( मधुप ? ) ॥

सौवर्णिकेनादृष्टम् आवेशनाद् अन्यत्र रहसि प्रयोगं कारयतो द्वादशपणो दण्डः । कर्तुस्तु समयं ज्ञात्वा द्विगुणः । सापसारश्चेदिति । सापदेशः कुतस्ते सुवर्णमिति पृष्टो यदि सुवर्णस्य आगमशुद्धिम् अमुष्माल्लब्धं क्रीतं वेति वक्तुं समर्थः कारयिता तदायं विधिः । अनपसारः कण्टकशोधनव्यवहारः सुवर्णस्तेयदण्ड एव दापयितुं प्राप्येत । गत्यर्थकर्मणि चेयं चतुर्थी । कर्तुश्च द्विशतो दण्डः । द्विशताभावे प ( ल ? ण ) स्य अग्रहस्तस्य च्छेदनं स्तेयद्रव्य······॥

तुलाप्रतिमान भाण्डमिति तुलाप्रतिमानं च कर्त्तारः कारयितारश्च पौतवहस्तादिति मानाध्यक्षाद् उपधिपरिहारार्थं क्रीणीयुः । ( अन्यथा ) तुलाप्रतिमानाभ्यां व्यवहरतो द्वादशपणो दण्डः ।

प्रतिपदपञ्चिका

दण्डमाह—वर्णहीनमिति, वर्णिकाहीने माषावरे माषकप्रमाणानिकृष्टके ज्येष्ठवर्णिकमाषमात्रमपि यदा हीनवर्णिकं करोति, तदा तस्य पूर्वस्साहसदण्डः । प्रमाणहीन इति, प्रमाणमङ्गुलवितस्त्यादि तद्धीने मध्यमस्साहसदण्डः । अथवा प्रमाणं प्रतिमानं तद्धीने मध्यमस्साहसदण्डः । तदेवमस्य वक्ष्यमाणस्य तुलाप्रतिमानोपधेश्चायं विशेषः ।

अत्र हानिरेव शुद्धा, न तुलाप्रतिमानोविधानं हानिश्च । अत एवोत्तमो दण्डः । तदाह—तुलाप्रतिमानोपधविति, तुलाप्रतिमानपरिवर्तनादौ उत्तमस्साहसदण्डः इति । कृतभाण्डोपधौ च घटितरूपपरिवर्तनादौ चोत्तम एव दण्डः ।सर्वत्र माषकावर इति योज्यम् । ततश्च हानिवृद्धौ दण्डवृद्धिर्व्याख्येया ।

सौवर्णिकेनादृष्टमननुज्ञातं विशाखायामेवानुज्ञातमेव । विशिखातोन्यत्र वा प्रयोगमलङ्कारादिकं कारयतो घटयतो द्वादशपणो दण्डः । कर्तुश्च सुवर्णकारादेः द्विगुणश्चतुर्विंशतिपणः । सापसारश्चेत्कारयिता, कस्येदं कुतो वा लब्धमित्यादि पृष्टस्तत्स्वामिनं शुद्धागमं वा यदा प्रतिपादयेत् । तदा यथोक्तदण्डः ।

अथ पुनरपसारः पूर्वोक्तविपरीतस्तदा कण्टकशोधनाय नियते वाक्यकर्मादिरनु यो गार्थः । प्रशास्तृपुरुषाणामप्येतत्कर्तुश्च सुवर्णकारादेस्तथाविधस्य कुर्वतो द्विशतो दण्डः ।

[ षड्विधानि शिल्पिकर्माणि, पञ्चापहरणोपायाश्च ]

**घनं घनसुषिरं संयूह्यं अवलेप्यं सङ्घात्यं वासितकं च कारुकर्म। तुलाविषमं अपसारणं विस्रावणं पेटको पिङ्कश्चेति हरणोपायाः।**

[ तत्र तुलाविषमम् ]

**सन्नामिनी उत्कीर्णिका भिन्नमस्तका उपकण्ठी कुशिक्या सकटुकक्ष्या पारिवेल्ली अयस्कान्ता च दुष्टतुलाः ॥**

---

प्रतिपदपञ्चिका

पणच्छेदनं वा, पञ्चाङ्गुलिच्छेदनं हिरण्यभावेनापसारस्यैव। तुला, मानं, भाण्डमिति। भण्डशब्दः प्रत्येकः तत्र तुला वेलकं प्रतिमानानि च माषद्विमाषकादीनि तुलाभाण्डं मानभाण्डं द्रोणादिमानसाधनं, तस्य चेह प्रासङ्गिकमभिधानं सर्वेपि न तद्व्यवहारिणः पौतवहस्ताद्वक्ष्यमाणपौतवाध्यक्षहस्तात् क्रीणीयुः। अन्यथेति, स्वयंकरणेऽन्यत्र क्रये वा द्वादशपणो दण्डः।

श्रीमूला

अथ हरणोपायद्वारभूतं कारोः कर्म षट्प्रकारमाह—घनमित्यादि। घनम् ङ्गुलीयकादि, घनसुषिरं भृङ्गारादि, संयूह्यं स्थूलपत्रयोजनम्, अवलेप्यं लघुपत्रयोजनं, संघात्यम् कटिसूत्रादि, वासितकं रसादिना वासितम्।

तेषु कर्मसु प्रयोज्यान् पञ्चहरणोपायान् नामत उद्दिशति—तुलेत्यादि।

तत्रतुलाविषममाह—सन्नामिनीत्यादि। सन्नमिनी मृदुलोहनिर्मिता यथाकाम-संनाम्या, उत्कीर्णिका तीक्ष्णचूर्णेन पारते(द)न वा पूरिताभ्यन्तरसुषिरा, भिन्नमस्तका सरन्ध्राग्रा सा हि वाताभिमुखं धृता वातेन नामिता भवतीति, उपकण्ठी ग्रन्थिबहुला, कुशिक्या शिक्यं तोल्यवस्तुनिवेशाधारः तत् कुत्सितं यस्याः सा, सकटुकक्ष्या अप्रवण-सूत्रा, पारिवेल्ली परिवेल्लः परिचलनं तद्वती, अयस्कान्ता अयस्कान्ताख्यलोहनिर्मिता, सा हि यतः स्वर्णं ततो याति। चः समुच्चये। अष्टावेता दुष्टतुलाः। इत्थं सम्भविताष्ट-विधदुष्टतुलं तुलविषमम्।

चाणक्यटीका

कर्माण्युच्यन्ते घनमिति। घनम् अच्छिद्रम् असे ( क्य ? च्य ) मित्यर्थः। घनसुषिरमु ̈ ̈व। संयूह्यम् अवच्छाद्यम्। अवलेप्यं पार(द)तसुवर्णद्रव्याभ्याम् अन्यवास्तु-कमवलिप्तम्। सङ्घात्यं संश्लेषणीयं यदा खण्डशः कृतं पश्चाद् बध्यते। वासितकं वालुकाहिङ्गुलपरिभावितम्। एवं षड्विधं कारूणां कर्म ॥

यत्तेषामेते हरणोपायाः तुलाविषमादयः। हरणोपायपरिज्ञानाद्धि रक्षणं भवतीति ॥

[ असारद्रव्यप्रक्षेपेण अपसारितसारद्रव्याणि
चतुर्विधानि, सारद्रव्यापहरणमार्गश्च ]

**रूप्यस्य द्वौ भागावेकः शुल्बस्य त्रिपुटकं। तेनाकरोद्गतमपसार्यते तत्त्रिपुटकापसारितं; शुल्बेन शुल्बापसारितं; वेल्लकेन वेल्लकापसारितं; शुल्बार्धसारेण हेम्ना हेमापसारितम्।**

---

### चाणक्यटीका

सन्नामनी सन्नमनशीला मृदुलोहत्वाद् अल्पेनापि नमति ॥
उत्कीर्णिका सुषिरान्तर्गतलोहादिचूर्णसञ्चाराद् यथेष्टं विषमीक्रियते ॥

भिन्नमस्तका ऊर्ध्वम् अधो वा शीर्षगतगर्ता वायुप्रवेशाद् उन्नतेव अवनतेवालक्ष्यते। गर्तन्यस्तप्रस्तरा वा नमति उपकण्ठी अन्तिकादपनीय कण्ठोपगतयथेष्टसञ्चाराधिक्या ॥ कुशिक्या अशोभनशिक्या। शिक्यमेव विषमं दधता पुनः पुनः विषमीक्रियते। यदि वा···र्णमलिनसिक्थकमिश्रः प्रक्षिप्य विषमयति ॥

कटुकक्ष्या सुवर्तितस्रस्ता वा बद्धस्तब्धकक्ष्या सा ह्यस्तब्धत्वयोगात् कक्ष्यास्प··· विषमीक्रियते ॥

परिवेल्लने जाते पारिवेल्ली वलयवक्रवरिवर्त्तनखच्छेदतारा वृश्चिकविष्ठाकारा वा यथेष्टावस्था······। ( अ ) परे समन्तात् परिभ्रमणविशाला यथेष्टं विषमीक्रियत इति वर्णयन्ति। अयस्कान्तसंयोगाद्—अयस्कान्ता ऊर्ध्वं··अयस्कान्ता ऊर्ध्वमधो वा मुद्रिकादिगतम् अयोऽनुगच्छन्ती, विषमीभव ( ति ? इ ) त्यष्टधा तुलाविषमः ॥

### प्रतिपदपञ्चिका

साम्प्रतं हरणोपायभूतं षड्विधं सुवर्णकारस्य कर्माह—

घनमित्यादि, तत्र घनं लोलप्रभृति। घनसुषिरं भृङ्गारादि, संयूह्यं दृढपत्रयोजनं अवलेप्यं तनुपत्रयोजनं सङ्घात्यं कटिसूत्रादि, वासितं, पारता(दा)दिना वासितंचस्समुच्चये, एवं षड्विधे कर्मणि, तुलाविषमादीन् पञ्चहरणोपाया—(नभिधाय) व्याचष्टे, तत्र तुलादिविषमं तावदाह—सन्नामिनीत्यादि,

मृदुलोभ(ह)घटिता, स्वेच्छासन्नाम्या सन्नामिनी, उत्कर्णिका पार(त)पूरितान्तस्सुषिरा, भिन्नमस्तका, विदारितमस्तका, सुषिरा ग्रासाभिप्रतिघातमत्वेद्वितौल्येवा अनानाम्येतोपकर्णिग्रन्थिबहुला कुशिक्या संप्रयोगचेलका, सकटुकक्ष्या परिवेल्यत्यस्कान्ततल्लोहमयो, सा हि यतस्सुवर्णं ततो याति,

### श्रीमूला

अथ अपसारणमुच्यते। तत्र यदसारद्रव्यं प्रक्षिप्य सारद्रव्यमपसार्यतेऽपह्रियते तदपद्रव्यं चतुर्विधमादावाह—रूप्यस्येति। द्वौ रूप्यस्य भागौ एकः शुल्बस्य भाग

**मूकमूषा पूतिकिट्टः करटकमुखं नाली सन्दंशो जोङ्गनी सुवर्चिका लवणं तदेव सुवर्णमित्यपसारणमार्गाः ।**

**पूर्वप्रणिहिता वा पिण्डवालुका मूषाभेदादग्निष्ठा उद्ध्रियन्ते ।**

---

श्रीमूला

इति भागत्रयमिदं मेलायित्वावर्तितं, त्रिपुटकं तत्संज्ञम् । तेन त्रिपुटकेन प्रक्षिप्तेन, आकरोद्गतम् शुद्धम् अपसार्यते आकर एवाशुद्धमिदमुत्पन्नमिति व्यपदिश्यापह्रियते, तत् तथाविधमपसारणसाधनं, त्रिपुटकापसारितं तदाख्यमपद्रव्यमेकम् । शुल्बेन ताम्रप्रक्षेपेण अपसार्यते तथापह्रियते, तत् शुल्बापसारितं तदाख्यम् अपसारणसाधनं द्वितीयम् । वेल्लकेन तीक्ष्णलोहं रूप्यं च समभागमावर्तितं वेल्लकमिति प्रसिद्धं तेन साधनेन प्राक्षिप्तेन, अपसार्यते, तद् वेल्लकापासारितं तृतीयम् । शुल्बार्धसारेण ताम्रसमभागयोगावर्तितेन, हेम्ना साधनेन, अपसार्यते तथापह्रियते, तत् तथाविधं साधनं, हेमापसारितं तत्संज्ञं चतुर्थम् ।

चाणक्यटीका

अपसारणमाह—रूप्यस्य द्विभागः ( एकः ) शुल्बस्य मिश्रितः त्रिपुटकाख्यः । तेनाकरोद्गतम् अवर्णितत्वाद् रसानुग्रहत्वाच्च संमूर्च्छनयोग्यम् अपसार्यते त्रिपुटकापसारितम् । शुल्बेन शुल्बापसारितम् । तदेव वा आकरोद्गतं वेल्लकेन अपसारितं रूप्यावयवादिकमित्यर्थः । शुल्बार्धसारेण हेम्ना क्रियावादसुवर्णेन हेमापसारितमिति चतुर्विधमपसारणम् ॥

प्रतिपदपञ्चिका

एवमष्टदुष्टतुलासम्भवं तुलाविषममभिधायापसरणमाह—तत्रापि यत्प्रक्षिप्य सारद्रव्यमयसार्यते, अपह्रियते, तच्चतुर्विधमपद्रव्यं तावदाचष्टे—रूप्यस्येत्यादि,

रूप्यसय द्वौ भागवेकं शुल्बस्य तदावर्तितं त्रिपाकमिति, तद्वत्संज्ञा तेनेति, तं प्रक्षिप्याकरोत्गतमिति, शद्धमप्याकर एव मलिनमेतत् । उत्पन्नामतिव्यपदेशोनापसार्यते । अपह्रिते, तत्त्रिपुटकापसारितमिति । तद्विदां संज्ञा ।

एवं शुल्बेन ताम्रेण शुल्बापसारितं तीक्ष्णलोहं रूप्यं च समभागमावर्तितं । वेल्लकमिति प्रतीतं । तेन वेल्लकापसारितं शुल्वार्धसारेण ताम्रसमभागेन हेम्ना-हेमापसारितम् ।

श्रीमूला

अथापद्रव्यप्रक्षेपेण सारद्रव्यापहरणस्य मार्गानाह—मूकमूषेत्यादि । मूकमूषा ससम्पुटार्धमूषा, पूतिकिट्टो लोहमलं,करटकमुखं काकमुखं कर्तरीमुखं वा, नाली प्रसिद्धा, सन्दंशः कङ्कमुखं, जोङ्गनी लोहकटिका सुवर्चिका क्षारविशेषः, लवणं प्रसिद्धम् । तदेव सुवर्णमिति तादृशं हीनवर्णवमेवाकरोद्गतं सुवर्णमिति मिथ्यावादः, अपसारणमार्गाः त एते सुवर्णापहरणोपायाः । अयमर्थः—आकरोद्गते मूकमूषायामावर्त्यमाने शुद्धसुवर्णे

[ विस्रावणम् ]

**पश्चाद्बन्धने आचितकपत्रपरीक्षायां वा रूप्यरूप्येण परिवर्तनं विस्रावणम्, पिण्डवालुकानां लोहपिण्डवालुकाभिर्वा ।**

---

श्रीमूला

लोहमलहरणव्याजेन सुवर्चिकालवणक्षेपव्याजेन च त्रिपुटकादिकमपद्रव्यं प्रक्षिप्य करटमुखादिना साधनेन शुद्धसुवर्णमपहरन्ति सुवर्णकाराः कृतकच्छायमीदृशमेव सुवर्णमाकरादुद्गतमिति वदन्त इति । हरणोपायविकल्पमाह—पूर्वप्रणिहिता वेति । पूर्वप्रणिहिताः पूर्वमेवाग्नौ प्रक्षिप्ताः पिण्डवालुका वा अपसारणमार्गा इति सम्बध्यते । द्रव्यधात्वनुगमपरिगृहीततच्छायाः सूक्ष्मवालुकाः । द्रवीभूतेन रूप्येण सुवर्णेन वा सम्पर्कात् पिण्डतां प्रतिपन्नाः पिण्डवालुकाः । उपायीभावप्रकारमाह—मूषाभेदादग्निष्ठा उद्ध्रियन्त इति । पूर्वमेवाग्निप्रक्षिप्तपिण्डवालुकाप्रमाणं सारद्रव्यमपहृत्य मूषा भिन्नेत्यपदेशेन तत्सम्पृक्तास्ता एव पिण्डवालुकास्तत्स्वामिसमक्षमग्नेरुद्ध्रियन्त इत्यर्थः ।

चाणक्यटीका

अपसारणमार्गानाह—मूकमूषा अल्पमूषी मूषा, यस्यां कियत् किंवा प्रक्षिप्तमिति न ज्ञायते । पूतिकिट्टः लोहकिट्टापनयनव्याजेन अन्यत् प्रक्षिप्यते । करटक··ल्पीमुखम् । तत्र पूर्वप्रक्षिप्तेन त्रिपुटकादिनापसार्यते । अन्यस्त्वाह—ध्मायमानभस्त्रावायुनिर्गमं करटमुखम् । तत्र क्षिप्तेन वायुप्रेर्यमाणो··सार्यते । नाल्या मुखगतः तुत्थ्यादिः सञ्चार्यते । सन्दंशेन अङ्गारादिभिः सह प्रक्षिप्यते । जोङ्गनी कुञ्चिकावृत्तं मर्यारिषणा ( ग्रालोहितया ? ) रूप्यादि प्रक्षिप्य अङ्गारादिनाकृष्यते । सुवर्चिका लवणं लवणमृत्तिकायां विड ( ह ? ) रूप्याद्यवक्षिप्यते तद्द्वारेण अपसार्यते । तदेव सुवर्णमिति सदृशमन्यत् कृतं लाधवेन परिवर्त्यते । अपरेत्वाहुः—तदेवाकरोद्गतसुवर्णक्लृप्तमेव सुवर्णमिति ब्रुवन्नव ( तूद ? गूह ) ते इत्यष्टापसारणमार्गाः ॥

प्रतिपदपञ्चिका

एवमेतान्यपद्रव्याणि, उक्त्वा तानि कथं वा साररद्रव्यमपसार्यत इत्येतत्प्रति पादनायाह-मूकमूषेत्यादि, मूकमूषा ससंपुटा अर्धमूषा, पूतिकिट्टो लोहमलं करटकमुखं, थुल्लमुखं कर्तरिमुखमत्यपरे । नालीसन्दंशौ प्रतीतौ, जोङ्गनी लोहकुटिका वेणुशलाकेत्यपरः सुवर्चका लवणं टङ्कणक्षार इति केचित् । सुवर्चिका सुवर्चिकाख्यः क्षारो लवणं प्रतीतमित्यपरे ।

तदेव सुवर्णमिति श्रेष्ठं त्रिपुटकादिना परिवर्त्य कृतककच्छायं तदेवेदं सुवर्णमिति वदन्नपहरति । इतिशब्दः प्रकारे इत्येवं प्रकारा अपसारणमार्गाः हृत्णोपायाः ।

श्रीमूला

विस्रावणमाह—पश्चादित्यादि । पश्चाद्बन्धने पूर्वं निर्मितस्य उत्तरकालसन्धानप्रसङ्गे, आचितकपत्रपरीक्षायां वा प्रचुरघटितपत्रपरीक्षाप्रसक्तौ वा, रूप्यरूपेण

[ पेटकः, तत्परीक्षाँश्च ]

**गाढश्चाभ्युद्धार्यश्च पेटकः संयूह्यावलेप्यसङ्घात्येषु क्रियते । सीसरूपं सुवर्णपत्रेणावलिप्तमभ्यन्तरमष्टकेन बद्धं गाढपेटकः । स एव पटलसम्पुटेष्व-भ्युद्धार्यः । पत्रमाश्लिष्टं यमकपत्रं वावलेप्येषु क्रियते । शुल्बं तारं वा**

---

श्रीमूला

परिवर्तनं रजतभाण्डप्रक्षेपेण सुवर्णमयस्य विनिमानं, विस्रावणम् । इत्येको विस्रावण-प्रकारः । अपरमाह—पिण्डेत्यादि । पिण्डवालुकानां सुवर्णाकरसम्भूतानां, लोहपिण्ड-वालुकाभिः लोहाकरसम्भूताभिर्वालुकाभिः परिवर्तनं वा विस्रावणम् ।

चाणक्यटीका

विस्रावणमाह—पूर्वप्रणिहिता इति । अग्निष्ठलोपार्थं पूर्वमेव प्रणिहिताः प्रक्षिप्ताः ताम्रगुलिकामिश्राः, पिण्डवालुका इति । पिण्डार्थं वालुकाः, अग्निष्ठमूषायां च लेखाद्दृढीकरणार्था उप्यन्ते । ता मूषाद्रुतसुवर्णव्याजेन ( हि ? गृही ) त्वा पश्चाद् द्रुतेन सुवर्णेन मिश्राः । पश्चाद्बन्ध इति । पुनः निबन्धनिमित्तम (नुष्टुप् ? ग्निष्ठ) शुद्धया ( उ ) द्ध्रियन्ते । ताभिः सुवर्णमपहृतं पूर्यते । वक्ष्यमाणप्रकारान्तरापेक्षो वाशब्दः ॥

उपर्युपरि आचितकानां वा सुवर्णपत्राणां परीक्षार्थमानीतानाम् । रूप्यस्य रूपेणेति । रूपविकारं प्राप्तमन्तः प्रक्षिप्य परिवर्तनं विस्रावणम् ॥

प्रतिपदपञ्चिका

तथा पूर्वप्रणिहिताः प्रक्षिप्ताः वा विकल्पे । पिण्डवालुका भरणोपायं द्रव्यधात्वनु-गमात्तच्छाया सूक्ष्मवालुका द्रवीभूतेन रूप्येण सुवर्णेन वा संपृक्ताः पिण्डीभवन्ति ।

यथा मधुबिन्दुना सक्तपिस्ताः पिण्डवालुका मूषाभेदादिति पूर्वमेव न वालुका-प्रमाणं सारमपहृत्य ततो मूषा भिन्नेति । तत्संपृक्ता वालुका तत्स्वामिप्रत्यक्षमग्निष्ठादु-द्ध्रियन्ते ।

विस्रावणमाह—पश्चाद्बन्धनमित्यादि ।

पूर्वं घटितस्य यदा सन्धेयता तदा(ऽचित)स्योत्तरकालं सम्बन्धने संयोजनकाले न तथा आचितकपत्रपरीक्षायां प्रभूतघटितपत्रपरीक्षायां कृतायामिति वाक्यशेषः । रूप्यरूपेण रूप्यमयेन भाण्डेन परिवर्तनं विनिमयः सुवर्णमयस्येत्यर्थादापन्नमिति, एतद्विस्रावणमिति । हरणप्रकारः । पिण्डवालुकानां सुवर्णाकरसम्भूतानां लोहवालुका-भिः ताम्रादिलोहकारणभूताभिः परिवर्तनं विस्रावणम् । अयं चारविषयोऽपहारः । प्रसङ्गादिहास्याभिधानमिति ।

श्रीमूला

पेटकमाह—गाढश्चेति । पेटकः संश्लेषः, पिटधातोः संश्लेषणार्थत्वात् । स गाढश्च अभ्युद्धार्यश्चेति द्विविधः, संयूह्यावलेप्यसङ्घात्येषु संयूह्यादिषु त्रिषु पूर्वोक्तेषु कर्मसु विषये, क्रियते अनुष्ठीयते । सीसरूपं सीसपत्रं सुवर्णपत्रेण, अवलिप्तम्

**गर्भः पत्राणाम् । सङ्घात्येषु क्रियते शुल्बरूपं सुवर्णपत्रसंहतं प्रमृष्टं सुपार्श्वम् । तदेव यमकपत्रसंहतं प्रमृष्टम् । ताम्रताररूपं चोत्तरवर्णकः ।**

**तदुभयं तापनिकषाभ्यां निश्शब्दोल्लेखनाभ्यां वा विद्यात् । अभ्युद्धार्यं बदराम्ले लवणोदके वा सादयन्ति—इति पेटकः ।**

---

श्रीमूला

आच्छादितम् । अभ्यन्तरम् आच्छादिताच्छादकयोरन्तरालम्, अष्टकेन बद्धं जतुसर्जरसादिना पटलसम्पुटेषु दृढसंश्लेषणार्थं बद्धं, यदि भवतीति शेषः गाढपेटकः अर्थात् स एष बन्धो गाढपेटकाख्यः । स एवेति । स एव पेटकः, पटलसम्पुटेषु अभ्युद्धार्यः अष्टकबन्धरहितत्वादभ्युद्धर्तुं शक्य इति सोऽभ्युद्धार्यपेटकः । स एष द्रव्यापद्रव्ययोः समप्राविभागिके संयूहने हरणप्रकारः । अथ सारार्धभागेषु लेप्येषु हरणप्रकारमाह—पत्रमिति । पत्रं सुवर्णपत्रम्, आश्लिष्टम् एकपार्श्वयोजितं यमकपत्रं वा उभयपार्श्वयोजितं वा अवलेप्येषु क्रियते । बहिः पत्रमुक्त्वा गर्भपत्रमाह—शुल्बं तारं वा, पत्राणां सुवर्णपत्राणां, गर्भः क्रियते । सङ्घात्यविषयं विधिमाह—सङ्घात्येष्विति । सङ्घात्येषु विषये, शुल्बरूपं ताम्रभाण्डं, सुवर्णपत्रसंहतम् एकपार्श्वे सुवर्णपत्रच्छादितं, प्रमृष्टं प्रकर्षेणोज्ज्वलितं, सुपार्श्वं शोभनैकपार्श्वम् क्रियते । तदेव शुल्बरूपं, यमकपत्रसंहतम् उभयपार्श्वयोः सुवर्णपत्रावच्छादितं, प्रमृष्टं क्रियते । पूर्वस्य सुपार्श्वमिति संज्ञा समनन्तरस्य प्रमृष्टमिति संज्ञेत्येके । ताम्रताररूपं च उत्तरवर्णक इति । न केवलं सुवर्णपत्रं यथोक्तमवच्छादनार्थमुपयुज्यते, किन्तु ताम्रभाण्डरजतभाण्डे अपीत्यर्थः । ताभ्यां पुनरौचित्यात् कृष्णायसादिभाण्डमवच्छाद्यं भवतीत्यवगन्तव्यम् ।

पेटकस्य परीक्षामाह—तदुभयमिति । तदुभयं गाढपेटकम् अभ्युद्धार्यपेटकं च, तापनिकषाभ्याम् अग्नितापननिकषघर्षणाभ्यां, निश्शब्दोल्लेखनाभ्यां वा निश्शब्दं शब्दहीनं छेदनम्, उल्लेखनं तीक्ष्णमुखलेखनं ताभ्यां वा, विद्यात् । अभ्युद्धार्ये विशेषमाह—अभ्युद्धार्यं, बदराम्ले कर्कन्धूफलरसे, लवणोदके वा, सादयन्ति निवेशयन्ति । तथाकरणे लोहितवर्णः सञ्जायत इति भाषाटीका । इति पेटकः व्याख्यात इति शेषः ।

चाणक्यटीका

पेटकमाह—पिण्डवालुकानामिति । पिण्डवालुकानामग्निष्ठे लोहमयैस्तत्सदृशैः पिण्डवालुकैः सह ( भू ? द्रु ) तानां प्रद्रुतसुवर्णेन सह मिश्रणाद् गाढ· · ·किट्टापदेशेन पश्चाद्वाप्युद्धार्यः । कर्तुर्लोहमिश्रणात् पेटक उच्यते । अथवा, गाढश्चायं हरणोपाय इति ज्ञात्वा चैव· · ·(पुनरुद्धा) र्यश्च परीक्षकेणेति । एवमपि मन्त्रीकृत्य हरणे कथं पुन ( र्व ? द्र ) क्ष्यत इति चेद्, यस्मात् संयूह्यावलेप्यसङ्घात्येषु क्रियते तत्र पुनरुद्धार्यत इति ।

### चाणक्यटीका

सीसरूपमिति । सीसमयं रूप्यं सुवर्णपत्रेण अवलिप्तम् अवच्छादितम् । अभ्यन्तरमिति अन्तर्गतम् । अष्टकेन संश्लेषकेण जतुप्रकारेण एकपत्रमिव नीतं गाढोऽपरः पेटकः । तत्र सीसप्रमाणं सुवर्णमपह्रियते । अयमप्येवं ज्ञात्वा पटलसंपुटेष्वप्युद्धार्यः परीक्षकेणेति ॥

तत्र हि रूप्यादिपत्रम् आभिमुख्येन श्लिष्टं यमकपत्रं सौवर्णं वा तन्मध्ये रौप्यादिपत्रप्रक्षेपादवलेप्येषु क्रियते तद् दुर्विज्ञानम् ॥

शुल्बं तारं वा अशब्दो मध्यभागः सुवर्णपत्राणाम् अष्टक ( म ? ) श्लिष्टं सङ्घात्येषु न ज्ञायत इति कर्तृभिः क्रियते । तद्विज्ञेयम् । सङ्घात्यं हि कल्पवृक्षप्रदीपादिकर्म । तयोर्यच्छुल्बरूपं सुवर्णपत्रेणैकेन सङ्घातः प्रमृष्टमुज्ज्वलितं तत् सुपार्श्वमिति प्रसिद्धम् । तदेव शुल्बरूपमेकं सुवर्णपत्रावच्छन्नौभयपार्श्वप्रविष्टं ताम्रतारमिश्रीकृतरूपं चावच्छादितम् उत्तरवर्णकम् ।।

तदुभयं सुपार्श्वम् उत्तरवर्णकञ्च तापेनाष्टकं विलाप्य निकष्य वा सुवर्णपत्रक्षयान्निश्शब्दतया, अशुद्धं हि निश्शब्दं भवति, छुर्यादिभिश्चोल्लिख्य विद्यात् परीक्षकः । ततोऽनेन द्रव्यम् उद्धार्यम् । अथवा विद्यादुद्धार्यमस्तीति । बदराम्ले लवणोदके वा सादयन्ति परीक्षका इति । तत्र विक्वथितानां साधनमद्रव्याणां विशरणमिति ॥

### प्रतिपदपञ्चिका

साम्प्रतं द्विविधं संयूह्यादित्रिकर्मकविषयं पेटकमाह—गाढश्चेत्यादि । पीठसंश्लेषण इति पेटकः । तत्र गाढोष्टकोवबन्धः । अभ्युत्द्धार्योऽष्टकावबन्धरहितं । स द्विविधोपि संयुह्यादिषु त्रिषु क्रियते । तत्र संयुह्यवलेप्यसङ्घात्यानि कृतव्याख्यानानि । स कथं क्रियत इत्याह—सीसरूपमिति ।

सोसंरूपं सीसपत्रं सुवर्णपत्रेणावलिप्तं, आच्छादितं, तयोराच्छादनाच्छादितयोरभ्यन्तरं पटलसंपुटेषु दृढसंश्लेषणार्थमष्टकेन जतुसर्जरसादिना बन्धः । स गाढपेटकः । सीसरूपग्रहणं यावन्मात्रं सीसरूपं, तावन्मात्रस्य सुयर्णस्यापहार इति ज्ञापनार्थं । स एवेति, सीससुवर्णपत्रयोगेष्टकर्राहृतः पटलसंपुटेष्वभ्युद्धार्यः । पेटकःअष्टकरहितत्वात् सुखं विश्लेष्यत इति ।

एवं द्रव्यापद्रव्ययोः समप्रतिभागिके सुंयूहने भरणप्रकारमभिधाय सारार्थभागिष्वेव लेप्येषु हरणप्रकारमाह—पत्रमाशिलष्टमिति । सुवर्णपत्रमाशिलष्टमिति सुवर्णपत्रमाशिलष्टमेकापश्र्वेन यमकपत्रं वोभयतोऽवलेप्येषु क्रियते एवं बहिःपत्राण्यभिधाय गर्भमाह—शुल्बं तारं वा गर्भः पत्राणां सुवर्णपत्राणां सङ्घात्येषु क्रियते ।

सङ्घात्यस्यैव विशेषविधिमाह—शुल्बरूप्यमिति ।

शुल्बरूपं ताम्रभाण्डं सुवर्णपत्रसंहृतं बहिः सुवर्णपत्रवेष्टितं । बहिर्ग्रहणं च वक्ष्यमाणयमकशब्दादवगन्तव्यम् । प्रमृष्टं प्रकर्षेणोज्वलितं । सुपार्श्वमिति शोभनमेकमेव

[ पिङ्कः तत्परीक्षाश्च ]

**घनसुषिरे वा रूपे सुवर्णमृन्मा(वा)लुकाहिङ्गुलुककल्को वा तप्तोऽवतिष्ठते; दृढवास्तुके वा रूपे वालुकामिश्रजतुगान्धारपङ्को वा तप्तोऽवतिष्ठते। तयोस्तापनमवध्वंसनं वा शुद्धिः। सपरिभाण्डे वा रूपे लवणमुल्कया कटुशर्करया तप्तमवतिष्ठते। तस्य क्वाथनं शुद्धिः। अभ्रपटलमष्टकेन द्विगुणवास्तुके वा रूपे बध्यते। तस्यापिहितकाचकस्योदके निमज्जत एकदेशः सीदति, पटलान्तरेषु वा सूच्या भिद्यते। मणयो रूप्यं सुवर्णं वा घनसुषिराणां पिङ्कः। तस्य तापनमवध्वंसनं वा शुद्धिः—इति पिङ्कः॥**

---

प्रतिपदपञ्चिका

बहिः पार्श्वं यस्य, तदेव शुल्बभाण्डं यमकपत्रसंहतमन्तर्बहिश्च सुवर्णपत्रावच्छादितं प्रमृष्टमिति। द्विप्रमृष्टग्रहणं बहिरन्तश्च प्रमार्जनार्थमिति केचित्।

अपरे त्वेकपार्श्वविलिप्तस्य सुपार्श्वमिति संज्ञा। उभयपार्श्वविलिप्तस्य प्रमृष्टमिति। प्रथमस्तु प्रमृष्टशब्दो द्वयोरपि संशुद्धिवचनः। ताम्रताररूपं चोत्तरवर्णक इत्यनेन न केवनं शुल्बं तारं वा गर्भसुवर्णपत्राण्येवाच्छादनं कर्तव्यमपि तु कार्ष्णायसभाण्डस्यापि ताम्रताररूपं ताम्रपत्रं रूप्यपत्रं चोत्तरावर्णकस्तदाच्छादनं उक्तमिति। अथवा शुल्बरूपं सुवर्णपत्रसंहतमित्युक्तम्।

तत्किमेकान्ततस्ताम्ररूपं जात्यं सुवर्णपत्राच्छादितमेव कर्तव्यं नेत्याह—
ताम्रताररूपं च ताम्रभाण्डस्य रूप्यपत्रमुत्तमवर्णक स्तदाच्छादिवदनरूपं कर्तव्यमिति वाक्ययोजना।

तस्य परीक्षामाह—तदुभयमिति, गाढमभ्युद्धार्यं च पेटकद्वयं ताप निकर्षेण। तथा निश्शब्देन शव्दरहितेन। छेदनेनेति केचित्। निश्शब्देनोल्लेखनेनेत्यपरे।

उल्लेखनं तीक्ष्णमुखलेखं तेन विद्याज् जानीयात्। अभ्यु(द्धा)त्थार्यस्य विशेषेण परीक्षामाह—अभ्युद्धार्यमष्टकबन्धरहितं बदराम्ललवणोदकानि प्रतीतानि। साधयन्ति केचित् सादयन्तीती पठन्तः शुक्तिकोःपरि कुट्टयन्तीति व्याचक्षते। इत्ययं पेटको भिहितम्(:)।

श्रीमूला

पञ्चविधं पिङ्कं तत्परीक्षणं चाह—घनेत्यादि। घनसुषिरे रूपे घने सुषिरवति च भाण्डे कटकाद्यलङ्कारे, सुवर्णमृन्मालुकाहिङ्गुलुककल्को वा सुवर्णमृत् सुवर्णमालुका च धातुविशेषो, हिङ्गुलुको जातिहिङ्गुलकः एतेषां मिलितानां कल्कः, तप्तः तापयित्वा

श्रीमूला

प्रक्षिप्तः, अवतिष्ठते अवस्थितो भवति। अतस्तद्योजनेन तावत् स्वर्णमपह्रियत इत्यर्थः। अन्यदपद्रव्यमाह—दृढवास्तुके रूपे वा दृढपीठबन्धे अलङ्कारे वा, वालुकामिश्रः पिण्डवालुकायुक्तः जतुगान्धारपङ्कः लाक्षासिन्दूरपङ्कः, तप्तोऽवतिष्ठते। तत्र शुद्धिमाह—तयोः घनसुषिर-दृढवास्तुकयोर्विषये, तापनं दाहः, अवध्वंसनं वा ताडनं वा, शुद्धिः शोधनोपायः। सपरिभाण्डे रूपे पृषतमणिबन्धे, लवणम्, उल्कया ज्वालया, कटुशर्करया तप्तं मृदुपाषाणविशेषेण सह तप्तम्, अवतिष्ठते। तस्य, क्वाथनम् अर्थाद् बदराम्लोदके, शुद्धिः शुद्धिहेतुः। पिङ्कस्य प्रकारान्तरमाह—अभ्रेत्यादि। अभ्रपटलं काचमणिः, अष्टकेन द्विगुणवास्तुके लाक्षादिना द्विगुणावगाढबन्धे, रूपे, बध्यते सम्बध्यते अवतिष्ठत इत्यर्थः। तत्परीक्षामाह—तस्येति। तस्य प्रत्युप्तमणेरन्तरवच्छादितकाचस्य सुवर्णाभरणस्य, उदके निमज्जतः परीक्षार्थं बदराम्लोदके प्रक्षिप्तस्य, एकदेशः सीदति अभ्रपटलरहितोऽवयवो गुरूत्वादधो गच्छति। अर्थादेकेदेशान्तरमभ्रपटलयुक्तं लघुत्वादधो न गच्छति। अभ्रपटलातिरिक्तताम्रपटलादिविषये तु सूच्या भेदनमेव शुद्धिज्ञानोपाय इत्याह—पटलान्तरेष्विति। पुनः पिङ्कस्य घनसुषिराभरणविषये त्रीन् प्रकारानाह मणय इति। घनसुषिराणां घनसुषिराभरणविषये, मणयः पिङ्कः, काचमणयो जात्यमणिहरणोपायः। रूप्यं पिङ्कः रजतं सुवर्णहरणोपायः, सुवर्णं पिङ्कः अशुद्धं स्वर्णं शुद्धस्वर्णहरणोपायः, तत्रशोधनप्रकारमाह—तस्येत्यादि। इति पिङ्कः व्याख्यात इति शेषः।

चाणक्यटीका

विङ्कमिदानीमाह—घने निश्छिद्रे शूर्पे सुषिरे वा घटादौ सुवर्णमृत्को गैरिककल्कः [1]वालुकाहिङ्गुलकल्को वा तप्तत्वात् संश्लिष्टोऽवतिष्ठते। तत्र यावन्तं कल्कं प्रक्षिपति तावत् सुवर्णम् अपहरति। दृढवास्तुके वा रूपे कटकादौ बालुकामेश्र जतुगान्धारपङ्को वा सिन्दूरकल्कःतप्तोवतिष्ठते। तत्रयावन्त कल्कं तावत् सुवर्णमपहरति। तत्रावस्थाने काचोदरा निबध्यन्ते तद्वास्तुकं दृढं चेत् तद्रूपं भवति। तयोरुभयोस्तापेन अन्तर्विलनाद् अवध्वंसनमेव वा चूर्णनं शुचि॥

सपरिभाण्डेवा कटकादिरूपे लवणमुदर्कामिश्रंउल्कातप्तं निर्ज्ञातत्वाद् अग्निनेत्यर्थः। तप्तकटशर्करया वा तप्तं परिभाण्डनिहितमवतिष्ठते। परिभाण्डं हि तत्रादिकर्म। तस्य क्वाथनं शुद्धिः। क्वाथ्यमानं हि द्रवीभूतं भवति॥

अभ्रपटलमिति। द्विगुणवास्तुके संयूह्यक (शा ? ट) कादिरूपे तदन्तरेऽभ्रपटलं तत्प्रमाणम्, यत्प्रमाणमपहर्तुमिष्टं द्रव्यम् अष्टकेन बध्यते तस्य अपिहितकाचस्य प्रच्छन्नमायस्य रूपस्य उदके निमज्जतः एकदेशः यत्राभ्रमपटलं नास्ति स सीदति, अपरः प्लवत इत्यर्थः। इयं तावदेका परीक्षा। पटलान्तेषु वा तीक्ष्णया सूच्या भिद्यते, तत्र रूपमिति शेषः। यत्राभ्रपटलं तद् भिद्यमानं शब्दायत इति॥

———

१. वालुकास्थाने मालुकेति मुद्रितकोशेषु पाठः प्रामादिको भाति।

[ अपहरणावकाशनिरोधाय जात्यादिज्ञानस्यावश्यकता ]

**तस्माद्वज्रमणिमुक्ताप्रवालरूपाणां जातिरूपवर्णप्रमाणपुद्गललक्षणान्युपलभेत ॥**

---

चाणक्यटीका

मणय इति । मणयो बध्यन्ते यत्र स्थाने, रूप्यं वा यदवलिप्यते, सुवर्णं वा रुचकादि तपनीयं वा घनसुषिराणां पिङ्कस्य विषयत्वात् पिङ्कः । तस्य तापनमित्यादि गतार्थम् ॥

प्रतिपदपञ्चिका

साम्प्रतं पञ्चप्रकारपिटकं तच्छोधनं चाह घनसुषिर इति, घनसुषिरे घनं च तत्सुषिरं च घनसुषिरं तस्मिन्रूपे कटकाद्याभरणे सुवर्णवा(मा)लुका सुवर्णमृत् च धातुविशेषः । हिङ्गुलककल्कः जातिहिङ्गुलककल्पः तप्तः प्रताप्य प्रक्षिप्तमन्मध्येवतिष्ठते । गाढवास्तुके धनघटितपीठबन्धे रूपेऽलङ्करणे वालुकामिश्रं पूर्वोक्त सुवर्णवालुका सहितः जतुगान्धारपङ्कस्सितपदकस्तप्तो वतिष्ठते इति । शोधनमाह—तयोरिति ।

तयोः घनसुषिरवास्तुकविषययोः तावद्दाहः अपध्वंसनं ताडनं वा शुद्धिः शोधनोपायः सपरिमाण्डे वा रूपे स वेष्टितमणिबन्धे । लवणं प्रतीतमुल्कयाज्वालया कटकशर्करोपेत स्तं कटकशर्करयामृदु पाषाणजात्या सह तप्तमवतिष्ठते । तस्य शुद्धिर्बदराम्लोदकेन सह क्वाथनम् विकारान्तरमाह—अभ्रपटलमिति ।

काचमणिः अष्टकेन लाक्षादिना द्विगुणवास्तुके द्विगुणावगाढ (सं)पीठबन्धे रूपे बध्यत इति । तत्परोक्षामाह—तस्यापिहितकाचस्येति ।

तस्य मणिप्रत्युप्तस्य सुवर्णाभरणादेरर्पितकाचमण्यादिमतः परिज्ञानमुदके बदराम्लोदके निमज्जतः प्रक्षिप्तस्यैकदेशः सीदति । अभ्रपलरहितागुरवो वयवाअधो गच्छन्ति । न सर्वोऽवयवीति पटलान्तरेषु व्यवधायकेषु सत्सु तदन्तर्गतताम्रपलपरिज्ञानार्थं तदाभरणं सूच्या भिद्यते । मणयो रूप्यं सुवर्ण च त्रयं त्रिविधो घनसुषिराभरणानां पिटकः (ङ्कः) अपहरणावकाशमणयो काचमणयः जात्यमणीनां सुवर्णं चाशुद्धं शुद्धस्य द्वितीयपिट(ङ्क) शब्द उपसंहारार्थः ।

श्रीमूला

तस्मादिति । उच्चावचहरणोपायसम्भवात्, वज्रमणिमुक्ताप्रवालरूपाणां वज्रादिरूपाणां चतुर्णां, जातिरूप वर्णप्रमाणपुद्गललक्षणानि जातिरुत्पत्तिः रूपमाकारः वर्णो रागः प्रमाणं माषकादिपरिमाणं पुद्गलमाभरणं लक्षणं लक्ष्म, एतानि, उपलभेत विद्यात् ।

चाणक्यटीका

तस्मादिति । यस्मादेते हरणमार्गाः तस्मादप्रमादार्थं वज्रादीनां जातिरूपप्रमाणपुद्गलानां प्रयोजनोपलब्धिः कार्या ॥

[ भूषणादिपरीक्षासमये नवीकरणसमये च संभाविताः अपहरणोपायाः चत्वारः ]

**कृतभाण्डपरीक्षायां पुराणभाण्डप्रतिसंस्कारे वा चत्वारो हरणोपायाः— परिकुट्टनम् अवच्छेदनमुल्लेखनं परिमर्दनं वा ।**

**पेटकापदेशेन पृषतं गुणं पिटकां वा यत् 'परिशातयन्ति तत्परिकुट्टनम् । यद्द्विगुणं वास्तुकानां वा रूपे सीसरूपं प्रक्षिप्य अभ्यन्तरमवच्छिन्दन्ति तदवच्छेदनम् । यद् घनानां तीक्ष्णेनोल्लिखन्ति तदुल्लेखनम् । हरितालमनश्शिलाहिङ्गुलकचूर्णानामन्यतमेन कुरुविन्दचूर्णेन वा वस्त्रं संयूह्य यत् परिमृद्गन्ति तत् परिमर्दनम् । तेन सौवर्णराजतानि भाण्डानि क्षीयन्ते । न चैषां किञ्चिदवरुग्णं भवति ॥**

---

प्रतिपदपञ्चिका

तस्मादिति । पूर्वोक्तहरणमार्गदर्शनात् कारणाच्चतुर्णां वज्रादिरूपाणां षड्जात्यादीन्युपलाभेऽवबुद्ध्येत । तत्त जातिरुत्पत्ति वर्णो रागः रूपमाकारः, प्रमाणं माषकादिपरिमाणं पुद्गलमाभरणं लक्षणं चिह्नम् ।

श्रीमूला

इदानीं कृतभाण्डपरीक्षणविषयं परिकुट्टनादिकम् हरणोपायचतुष्टयमाह—कृतेत्यादि । पुराणभाण्डप्रतिसंस्कारे वा जीर्णभाण्डनवीकरणे वा परिकुट्टनादिकं लक्षयति—पेटकेत्यादि । पेटकापदेशेन पूर्वोक्तपेटक परीक्षणव्याजेन, पृषतं क्षुद्रगुटिकां, गुणं कटकाद्यंशमल्पं, पिटकां वा बृहदंशं वा, यत् परिशातयन्ति, पातयन्ति तत् परिकुट्टनं तदाख्यम् । द्विगुणवास्तुकानां बहुपत्रपुटघटितानां, रूपे भाण्डे, सीसरूपं सीसपत्रं सुवर्णनुलिप्तं, प्रक्षिप्य अभ्यन्तरं सुवर्णपत्रं, यदवच्छिन्दन्ति अवछिद्यापहरन्ति, तदवच्छेदनं नाम । घनानां घननिर्मितानां, रूप इति वर्तते, तीक्ष्णेन निशितशस्त्रेण, यदुल्लिखन्ति तद् उल्लेखनम् । हरितालमनश्शिलाहिङ्गुलकानाम् अन्यतमचूर्णेन वा, कुरूविन्दाख्यपाषाणविशेषचूर्णेन च, वस्त्रं संयूह्य मिश्रयित्वा, यत् परिमृद्गन्ति यत् परिघर्षयन्ति, तत् परिमर्दनं तदाख्यम् । तेन परिमर्दनेन, सौवर्णराजतानि भाण्डानि, क्षीयन्ते प्रमाणहानिं प्राप्नुवन्ति । एषां भाण्डानाम्, अवरुग्णं भङ्गः, किञ्चिन् न च भवति मनागपि न भवति च । सोऽयं विनैव भाण्डभङ्गमपहरणोपायः ।

चाणक्यटीका

कृतभाण्डपरीक्षायां परीक्षकस्य, पुराणप्रतिसंस्कारे वा प्रतिसंस्कर्त्तुः, चत्वारः परिकर्तनादयो हरणोपायाः । पेटकापदेशेनेति । पेटकोऽत्र कृत इत्यपदिश्य । पृषतं

[ परिकुट्टनादिसमयपातितद्रव्यपरिमाणेयत्तनिर्णयोपायः ]

**भग्नखण्डघृष्टानां संयूह्यानां सदृशेनानुमानं कुर्यात् । अवलेप्यानां यावदुत्पाटितं तावदुत्पाट्यानुमानं कुर्यात् । विरूपाणां वा तापनमुदकपेषणं च बहुशः कुर्यात् ॥**

———————

चाणक्यटीका

गुटिकाम् । गुणं सूत्रम् । पिटकाम् पिप्पलीफलाकारां चन्द्रिकां वा शुद्धयर्थं किल परि (श्रप ? शात) यन्ति अपकर्षन्ति तत् परिकर्त्तनम् ॥

यद् द्विगुणवास्तुकानां रूपे सीसेन परिक्षिप्येतेति अन्तरे प्रक्षिप्य इदमुन्नतम्, इदमवनतम् इत्यवच्छिन्दन्ति सुवर्णं तदवच्छेदनम् ॥

······यत् परिमृअन्ति तत् परिमर्दनम् । तेन वा परिमर्देन भाण्डानि परिक्षीयन्ते । न चैषामिति भाण्डानां रुग्णं क्षतं भवति, यद्दर्शनादपहृतमिति ज्ञायेत ॥

प्रतिपदपञ्चिका

सम्प्रति कृतभाण्डपरीक्षाविषयांश्चतुरः परिकुट्टनादीन् हरणोपायानभिधाय व्यापष्टे । कृतभाण्डपरीक्षायामिति । न घटितालङ्कारादिपरीक्षणे पुराणभाण्डप्रतिसंस्कारे जीर्णस्य पुनः नवत्वापादनेन च चत्वारः परिकुट्टनादयो हरणोपाया स्तत्र परिकुट्टनमाह—पेटकापदेशेनेति ।

पूर्वोक्तपेटकसदसद्भावपरीक्षणव्याजेन पृषितं क्षुद्रकुटिकां गुणं शकटावयवं पिटकां बृहद्गुलिकां परिशातयन्ति । समन्ततस्ताडनेन परिपातयन्ति तत्परिकुट्टनं नाम । द्विगुणं वास्तुकानां पत्रपुटघटितानां रूपें भाण्डविशेषे सीसरूपं सुवर्णाच्छादितं प्रक्षिप्याभ्यन्तरं सुवर्णपत्रमवच्छिन्दन्ति तदवच्छेदनं,

घनानां घनपटितानां तीक्ष्णेन तीक्ष्णशस्त्रेण यदुल्लिखन्ति तदुल्लेखनम् हरितालादित्रयान्यतमचूर्णेन कुरुविन्दं पाषाणविशेषः । तस्य चूर्णेन वाशब्दश्चार्थे । वस्त्रं संयूह्य व्यामिश्रीकृत्य यत्परि(मु)म्लाति परिघर्षयति । तत्परिमर्दनं नाम । तेन सौवर्णराजतानि भाण्डानि क्षीयन्ते । प्रमाणाद्धीयन्ते । न चैषां रुग्णं भग्नं किञ्चिदपि भवति ।

श्रीमूला

परिकुट्टनादिकृतं वर्णकणिकादिपातनम् एतावदिति कथं निर्णेतव्यम् ? तत्राह—भग्नेत्यादि । संयूह्यानां दृढपत्रघटितभाण्डानां, भग्नखण्डघृष्टानां भग्नं परिकुट्टनशातितं खण्डमवच्छेदनहृतं घृष्टमुल्लेखनपरिमर्दनकर्मापहृतम् एषां भग्नादीनां, सदृशेनानुमानं कुर्यात् सजातीयावयवप्रमाणेन लिङ्गेनानुमितिं कुर्यात्, भग्नस्यावयवस्याभग्नावयवप्रमाणेन खण्डस्याखण्डावयवप्रमाणेन घृष्टस्याघृष्टावयवप्रमाणेन चेयत्तां निश्चिनुया-

श्रीमूला

दित्यर्थः । अवलेप्यानामिति । अवलेप्यानां तनुपत्रघटितभाण्डानां, यावदुत्पाटितं तावदुत्पाट्यानुमानं कुर्यात् यावानंशोऽवच्छिद्य गृहीतस्तावन्तमपरमंशमवच्छिद्य तत्प्रतिमानेनापहृतांशमानं निश्चिनुयात् । विरूपाणामिति । विरूपाणां वा प्रचुराप-द्रव्यमिश्रणेन हीनवर्णकतामापादितानां सुवर्णभाण्डानां च, सदृशेनानुमानं कुर्यादित्य-नुवर्तते । प्रतिमिततदीयैकांशस्य शुद्धीकरणेन वर्णहानीयत्तां विज्ञाय तत्सादृश्येन शेषांशानां वर्णहानीयत्तामभ्यूहेदित्यर्थः । शोधनप्रकारमाह—तापनमिति । तापनं पत्रीकृत्याग्नौ दहनम्, उदकपेषणं च तप्तमुदके प्रक्षिप्य चुक्रिकायोजनेन कुट्टनं च । बहुशो बहुकृत्वः, कुर्याद् यावद् वैवर्ण्यमपैति तावादित्यार्थम् । इयत्तानिर्णयफलं तु 'वर्णहीने माषकावरे पूर्वः साहसदण्ड' इत्यादि पूर्वोक्तदण्डविधानम् ।

चाणक्यटीका

भग्नेति । रुग्णाश्चूर्णिताः । खण्डाः एकांशविकलाः । घृष्टाः परिक्षीणाः । संयूह्याः परिवेष्टिताः । तेषां रूपाणां सदृशेन अपरेण अनुमानं कुर्यादिति । यद् अत्र अनेनापहृतम् इति प्रतिपादनार्थं दण्डनार्थं च ॥

अवलेप्यादीनां छत्रदण्डादीनां यावदुत्पाटयापहृतं तत्प्रमाणं प्रदेशान्तरम् उत्पाटयानुमातव्यम् ॥

विरूपाणामपि द्रव्यान्तरसंसर्गाद् उपभोगाद्वा कालान्तरेण सुवर्णस्य विरूपतायां जातायां तापनं पाकपत्राणि कृत्वा उदकेन पेषणं कुट्टनं बहुशो वर्णप्रत्यापत्यर्थं कुर्यात् ॥

प्रतिपदपञ्चिका

तेषु परिकुट्टनादिषु वर्णकर्णिकापातस्य उपलक्षणार्थमनुमानमाह—भग्नेत्यादि ।

सदृशेनानुमानं, भग्नस्याभग्नेन खण्डस्याखण्डेन, घृष्टस्याधृष्टे,न अवयवान्तरेण एतावदेव हृतमित्यनुमानं । भग्नं पेटकापदेशेन शातितपृषतादिकर्मखण्डसीसरूप-प्रक्षेपणावच्छिन्नसुवर्णपत्रावयवं घृष्टं । तीक्ष्ण मुखोल्लेखनेन वस्त्रसंयूहितकुरुविन्देन वा धर्षितावयवं अवलेप्यानामच्छपत्रावच्छेदितानां यावन्मात्रं यावत्प्रमाणमुत्पाटित-मुच्छेदितं तावन्मात्रमन्यदुत्पाद्य तत्प्रमाणेनाष्टानुमानं कुर्यादिति वर्तते । विरूपाणां वाशब्दश्चार्थे विरूपाणां च प्रभूतप्रक्षिप्तापद्रव्याणां रूप्यसुवर्णभाण्डानां सदृशेनानुमानं कुर्यादिति वर्तते । तद्यथा निष्पन्नेककटिसूत्रादौ प्रभूतापद्रव्यप्रक्षेपणा(सं)पहारशङ्कायां एकां कटिकामादाय तापनंन्तनुपत्रीकृत्य आदौ दहनमुदकपेषणं तप्तमुदके प्रक्षिप्य चुन्तिकयोजकुट्टनं बहुशः कुर्यादिति । आवैवर्ण्यीम्रग्रमपगमात् (आवैवर्ण्यापगमात्) अनुमाने प्रयोजनं दण्डविधानम् उक्तं हि । वर्णहीने, माषकावरे पूर्वः साहसदण्ड इत्यादि । मूकमूषेत्येवमादयो पसारणमार्गा आकरोद्भवस्याभिहिताः ।

[ अन्ये सप्तदश हरणोपायाः ]

**अवक्षेपः प्रतिमानमग्निर्गण्डिका भण्डिकाधिकरिणी पिच्छः सूत्रं चेल्लं बोल्लनं शिर उत्सङ्गो मक्षिका स्वकायेक्षा दृतिरुदकशरावमग्निष्ठमिति काचं विद्यात् ॥**

———————

श्रीमूला

पूर्वोक्ताकरोद्धवापसारणमार्गातिरेकिणोऽवक्षेपादीन् सप्तदश हरणोपायानाह— अवक्षेप इति । अवक्षेपः हस्तलाघवेन सारमपहृत्यायद्रव्यप्रक्षेपः, प्रतिमानं तद्विनिमयादि, अग्निः अग्निमध्ये हरणप्रयोगः, गण्डिका काष्ठाधिकरणी रत्नप्रतिवापाधारकाष्ठं, भण्डिका उपस्काराधारः स्वर्णद्रवनिषेकसाधनम्, अधिकरणी अयस्पात्रविशेषः, पिञ्छः मयूरबर्हः, सूत्रं सुवर्णतुलातन्तुः, चेल्लं वस्त्रं, बोल्लनं कथाव्याजेन द्रष्टृचित्तव्याक्षेपकरणं, चेल्लबोल्लनमिति समस्तपाठे वस्त्रपटलिका, शिरः शीर्षकण्डूयनादि, उत्सङ्गः अङ्कः उपलक्षणाद् गुह्यप्रदेशश्च, मक्षिका मक्षिकानिवारणव्याजेन निर्यासद्रवलिप्तस्वाङ्गसंश्लेषणं, स्वकायेक्षा स्वेदादिदर्शनव्याजः, दृतिः ध्मानभस्त्रा, उदकशरावं जलपात्रम्, अग्निष्ठम् अग्निप्रक्षिप्तमपद्रव्यम्, इति एवम्प्रकारं, काचम् अपहरणोपायं, विद्यात् ।

चाणक्यटीका

काचमिदानीमाह—अवक्षेपो लाघवेन सञ्चारणम् । प्रतिमानं वा परिवर्तयति । अग्नौ प्रक्षिपति । ( गुटि ? गण्डि ) कायां वा सुषिरायाम् । अधिकरिण्यां लौह्यां सव्रणायां श्लेषयति । पिञ्छः पिचुदलम् । बालकूर्चिकेत्यन्ये । तत्र मध्ये क्षिपति । सूत्रस्य वा मध्ये न्यस्य ( त्रि ? ) चेलेन वा वस्त्रखण्डेन संयूह्यते । ( चो ? चे ) ल्लनं नीवीबन्धनं तत्र वा प्रक्षिपति । अपरे चोल्लनमिति वर्णयन्ति, कथाप्रस्तावं कृत्वा तद्व्यासक्तचित्तस्यापहरन्ति । शिरः कण्डूयनवशेन । उत्सङ्ग इति । शिरः कण्डूयनापदेशेन । मक्षिकावारणव्याजेन वा सञ्चारणम् । पौनःपुन्येन स्वकायेक्षाकौतूहलाद् रक्षितापि यावदीक्षते तावत् सञ्चारयति । ध्मापनार्थो दृतिः । ...... न मृदा कलुषीकृतस्योदकस्य शरावः । अग्निष्ठम् अग्न्यगारः । काचाश्रयत्वात् काचं छलं विद्यात् ॥

प्रतिपदपञ्चिका

तद्व्यतिरेकेणात्र अवक्षेप इत्येवमादिकं सप्तदशप्रकारं काचमाह—तत्रापक्षेपो हस्तलाघवेन कथमप्यपहृतस्य तत् द्रव्यप्रक्षेपः । प्रतिमानं तत्परिवर्तनादि । अग्निरिति तन्मध्ये हरणप्रयोगः गण्डिका काष्ठाधिकरिणी । भाण्डिका उपस्काराधिकारः । अधिकरणीविच्चः सूत्रं, नाराचकक्ष्याचेल्कं चेलकं चोलनं कथाव्याजेनानुष्ठायिनां चित्तापहरणमिति केचित् ।

[ राजतेषु दुष्टानि ]

**राजतानां विस्रं मलग्राहि परुषं प्रस्तीनं ( प्रस्तीतं ) विवर्णं वा दुष्टमिति विद्यात् ॥**

[ निगमनम् ]

**एवं नवं च जीर्णं च विरूपं चापि भाण्डकम् ।**
**परीक्षेतात्ययं चैषां यथोद्दिष्टं प्रकल्पयेत् ॥८८॥**

इत्यध्यक्षप्रचारे विशिखायां सौवर्णिकप्रचारः चतुर्दशोऽध्यायः
आदितः पञ्चत्रिंशः ॥

---

प्रतिपदपञ्चिका

अपरे तु चेल्लं बोल्लनमित्येकमेव पठन्तो वस्त्रपेट्टलिकामाचक्षते । तेषां षेडश-विधः काचः शिरः केशसंयमनकण्डूयनादि । उत्सङ्गो गुह्यप्रदेशः । मक्षिका तन्निवारण व्याजेन साक धकोपदिग्धदेहावयवसंश्लेषणं स्वकायेक्षास्वेदापमार्जनपुलकादिनिरूपणं दृतिध्मानभस्त्रोदकशरावं जलभाजनं आग्निष्ठमग्निस्थानं काचोपहरणोपायाः

श्रीमूला

राजतानां पञ्च दु(ष्ट)ष्टिचिह्नान्याह—राजतानामित्यादि । राजतोक्त्या पूर्वोक्तस्य स्वर्णविषयत्वं सूचितम् । विस्रं सोसादिसंसर्गदुर्गन्धि । मलग्राहि मलिनम् । परुषं खरस्वर्शम् । प्रस्तीतं कठिनम् । विवर्णम् अपद्रव्यमिश्रणोपहतनिजप्रभम् । एतच्छोधन-प्रकारस्तु 'अस्थितुत्थे चतुः समसीसे चतुः' इत्यादिना पूर्वाध्याये दर्शित एव ।

चाणक्यटीका

राजतानां भाण्डानां यद् विस्रं मत्स्यगन्धि । मलग्राहि । परुषं रूक्षम् । प्रस्तीतमिति स्तब्धम् जडमित्यन्ये । विवर्णं व······विद्यात् । तस्य च सीसेन शोधनमुक्तम् ॥

प्रतिपदपञ्चिका

राज्ञामाविस्त्रदीनि पञ्च दृष्टलिङ्गानाह—राजतानामिति,

अत्र राजतग्रहणात् पूर्वं सुवर्णस्येति मन्तव्यम् । विस्रं सीसादिसंसर्गसङ्क्रान्त-दुर्गन्धं, मलग्राहि मलयुक्तं, परुषमश्लिक्षणं प्रस्तिनं कठिनं विवर्णं अपद्रव्ययोगात् उप-हतच्छायं दुष्टमिति जानीयात् । तत्प्रतिकारश्च उक्त एवं अस्ति चतुरित्यादि ।

श्रीमूला

अध्यायान्ते श्लोकमाह—एवमित्यादि । विरूपम् अपद्रव्यमिश्रणदूषितम् । अत्ययं दण्डम् । यथोद्दिष्टं 'वर्णहीने माषकावरे' इत्यादिना विहितप्रकारम् । प्रकल्पयेत्

श्रीमूला

प्रकर्षेण कल्पयेत् अवश्यं प्रयुञ्जीतेत्यर्थः। उदाहृतौ चात्र भट्टस्वामिना बार्हस्पत्यौ श्लोकौ—

"अचोराश्चोरधर्माणो वणिजः कारवस्तथा।
तस्मात् तेषु न विश्वासः कर्तव्यो भूतिमिच्छता॥
प्रकाशतस्करानेतान् परद्रव्यापहारिणः।
शिल्पिनो वणिजश्चैव राजा दण्डेन वारयेत्॥" इति॥

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
चतुर्दशोऽध्यायः, विशिखायां सौवर्णिकप्रचारः,
आदितः पञ्चत्रिंशः॥

चाणक्यटीका

एवमिति। एवं यथोक्तेन प्रकारेण। नवं क्रियमाणम् जीर्णं च प्रतिसंस्क्रियमाणम्। विरूपं च अन्यथाभूतसंस्थानम्। भाण्डकं परीक्षेत प्रकृतत्वात् सौवर्णिक एव। अत्ययञ्चैषां यथोद्दिष्टम्। अनया दिशा अनुद्दिष्टमपि कल्पयेत्। कण्टकशोधनानुवृत्या महास्तेनत्वादेषां पुनराहत्याभिधानमिति। यथोच्यते—

सुवर्णस्यापहर्तारं तत्कर्मणि विचक्षणम्।
रक्षेद् विचक्षणतरो येन नापहरेत् (पुनः)॥

इति विशिखायां सौवर्णिकप्रचारः। चतुर्दशं प्रकरणम्॥
॥ चतुर्दशश्चाध्यायः॥

प्रतिपदपञ्चिका

अध्यायप्रान्ते श्लोकमाह—एवमित्यदि, एवमित्युक्तोपसंहारः नवां प्रत्यग्रघटितंजीर्णमिति, चिरन्तनं विरूपं प्रभूतापद्रव्यदूषितं परीक्षेत। यथोक्तैः परीक्षणप्रकारैस्सम्यगवेक्षेत। अत्ययं च दण्डमेषां शिल्पानां यथोद्दिष्टं यथाभिहितवर्णहीने माषकारे पूर्वः साहसदण्ड इत्येवमादिकं प्रकल्पयेत्। प्रकर्षेण कल्पयेत्। अवश्यं कुर्यादित्यर्थः। यस्मात् सम्यगधिष्ठाता अपि कारवो पश्यमपहरन्तीति बार्हस्पत्यौ चात्र श्लोकौ भवतः—

"आचोरश्चोरधर्माणो वणिजः कारवस्तथा।
तस्मात्तेषु न विश्वासः कर्तव्यो भूतिमिच्छता॥
प्रकाशतस्करानेतान् परद्रव्यापहारिणः।
शिल्पिनो वणिजश्चैव राजा दण्डेन वारयेत्॥" इति।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायां अर्थशास्त्रटीकायां
द्वितीयेऽधिकरणे चतुर्दशोऽध्यायस्समाप्तः।
आदितः पञ्चत्रिंशोऽध्यायः॥

# त्रयस्त्रिंशत् प्रकरणम्

## पञ्चदशोऽध्यायः

## कोष्ठागाराध्यक्षः

[ धान्याद्यध्यक्षचिन्तनीयाः दशांशाः ]

**कोष्ठागाराध्यक्षः सीताराष्ट्रक्रयिमपरिवर्तकप्रामित्यकापमित्यकसिंहनिकाऽन्यजातव्ययप्रत्यायोपस्थानान्युपलमेत ।**

---

श्रीमूला

कोष्ठागाराध्यक्ष इति सूत्रम् । कोष्ठमुदरं तेन तदर्थानि धान्यस्नेहक्षारलवणादीन्यभ्यवहार्यद्रव्याणि लक्ष्यन्ते, तेषामगारं संग्रहसंगोपनस्थानं तस्य अध्यक्षः कोष्ठागाराध्यक्षः अर्थात् तद्व्यापारः स इहाभिधीयत इति सूत्रार्थः ।

प्रक्रान्तायाः कोशप्रकृतेराकरकर्मान्तप्रवर्तनादिनोत्पादनरक्षणादिकमुक्तम् । शरीरस्थितहेतुतया प्रधानस्य धान्यादेरुत्पादनरक्षणव्ययप्रकारादिकं तु नोक्तम् । तदिहोपदिश्यत इति सम्बन्धः । यद्वा 'सन्निधाता कोशगृहं कोष्ठागारं पण्यगृहं कुप्यगृहमायुधागारं बन्धनागारं च कारयेद्' इति कोष्ठागारकरणं पूर्वमुक्तम् । तदध्यक्षव्यापारस्त्वनभिहित इदानीमभिधीयत इति सङ्गतिः ।

तमाह—कोष्ठागारेत्यादि । कोष्ठागाराध्यक्षः, सीतादीनि सीता राष्ट्रं क्रयिमं परिवर्तकः प्रामित्यकम् आपमित्यकं सिंहनिका अन्यजातः व्ययप्रत्यायः उपस्थानमित्येतान् दश पदार्थान् उपलभेत चिन्तयेत् ।

चाणक्यटीका

"सन्निधाता कोशगृहं कोष्ठागारं पण्यगृहम् आयुधागारं बन्धनागारं च कारयेत्" ( अधि० २ अध्या० ५ ) इत्युक्तम् । तत्र कोषागारसम्बद्धकर्मानन्तरं कोष्ठागारसम्बद्धान्युच्यन्ते । अथवा गुरुत्वादेव कोशसम्बन्धिकर्माभिधानं प्राक्, तदनन्तरं कोष्ठागारसम्बन्धीनि फल्गु ( कुप्य ) द्रव्यकर्माण्युच्यन्ते कोष्ठागाराध्यक्ष इति ॥

सन्निधातृकृताधिकारः कोष्ठागाराध्यक्षः सीतादीनि कोष्ठागारविषयाण्युपलभेत ।

प्रतिपदपञ्चिका

कोष्ठागाराध्यक्ष इति सूत्रम् ।

कोष्ठमुदरं तद्ग्रहणेन तदर्थानि सर्वस्नेहधान्यक्षारलवणादीन्याहारद्रव्याणि गृह्यन्ते । तेषामगारं सङ्ग्रहं संङ्गोपायनस्थानं कोष्ठागारं तत्र नियुक्तः कोष्ठागाराध्यक्षं तद्ग्रहणेन च लक्षणया तद्व्यापाराभिधानं तमिहाभिधीयत इति सूत्रार्थः ।

[ तेषां यथोद्देशं विवरणम् ]

**सीताध्यक्षोपनीतः सस्यवर्णकस्सीता । पिण्डकरः, षड्भागः, सेनाभक्तं, बलिः, करः, उत्सङ्गः, पार्श्वं, पारिहीणिकम्, औपायनिकं, कौष्ठेयकं च राष्ट्रम् । धान्यमूल्यं, कोशनिर्हारः प्रयोगप्रत्यादानं च क्रयिमम् । सस्यवर्णानामर्घान्तरेण विनिमयः परिवर्तकः । सस्ययाचनमन्यतः प्रामित्यकम् ।**

---

प्रतिपदपञ्चिका

सम्बन्धस्तु कोशप्रकृतिः प्रक्रान्ता, तस्याकरकर्मान्तप्रवर्तनादिभिरुत्पादनरक्षणादिकमुक्तम् । इदानीं शरीरस्थितिसाधनत्वेन प्रधानभूतस्य धान्यादेरुपादानरक्षणोचितव्ययोपदेशादिकमभिधीयत इति ।

अथवा सन्निधाता कोशगृहं कोष्ठागारं पण्यगृहं कुप्यगृहमायुधागारं बन्धनागारं च कारयेदिति कोष्ठागारकरणमुक्तम् । तदध्यक्षस्तद्व्यापारो वा नाभिहितः । सोऽभिधीयत इति सम्बन्धः । तदाह—

श्रीमूला

तान् यथोद्देशं विवृणोति—सीताध्यक्षोपनीत इत्यादि । सीताध्यक्षेण धान्यकरग्रहणकर्माधिकृतेन उपनीतः कोष्ठागारे प्रवेशितः सस्यवर्णकः धान्यजातिः, सीता तदाख्या । कोष्ठागाराध्यक्षस्तां शुद्धामन्यूनां च गृह्णीयात् ।

राष्ट्रमाह—पिण्डेत्यादि । पिण्डकरः तत्तद्ग्रामदेयतया क्लृप्तः करसमुदाः, षड्भागः षडिति चतुर्थादिभागस्याप्युपलक्षणं तेन षड्भागचतुर्भागादिरूपस्तत्तद्देशसिद्धो राजभाग इत्यर्थः, सेनाभक्तं सेनासन्नाहनकाले यथादेशसिद्धं स्नेहतण्डुललवणादि राजदेयमिति स्वामी, सैनिकानां तण्डुलहिरण्यादिदानसमये राजार्थे तैर्दीयमानः स्नेहतण्डुलाद्यंश इति भाषाटीका । बलिः षड्भागातिरिक्तः यथादेशप्रसिद्धो दशविंशतिबन्धादिकः यं भिक्षाभक्तं वदन्ति, करः फलवृक्षादिसम्बद्धं राजदेयम्, उत्सङ्गो राज्ञे पुत्रजन्माद्युत्सवावसरेषु पौरजानपदैर्दत्तं शालाकमध्वादि, पार्श्वम् उचितकरादधिकग्रहणं योगवृत्ताधिकरणे द्वितीये कोशाभिसंहारणाध्याये वक्ष्यमाणम्, पारिहीणिकं चतुष्पदविनाशितसस्यदण्डलभ्यम्, औपायनिकम् उपायनार्थं कौशेयादिकम्, कौष्ठेयकं च, राजस्थापिततटाकारामाद्युत्पन्नं च, इत्येवं दशप्रकारं राष्ट्रम् । पूर्वं समाहर्तृसमुदयप्रस्थापनाध्याये राष्ट्रान्तर्गतो बलिरुक्तः, पार्श्वपारिहीणिकानि चान्यजातान्तर्गतान्युक्तानि । तेषामिह पुनः पाठः समाहर्त्रुत्पादितानामपि कोष्ठागारप्रवेश्यतां ज्ञापयितुम् ।

धान्यमूल्यमिति । धान्यमूल्यं धान्यविक्रयहिरण्यं, कोशनिर्हारः हिरण्येन धान्यक्रयः, प्रयोगप्रत्यादानं वृद्धिप्रयुक्तधान्यप्रवेशनम्, इत्येवं त्रिप्रकारं क्रयिमम् ।

परिवर्तकमाह—सस्येत्यादि । सस्यवर्णानां सस्यजातीयानाम्, अर्घान्तरेण

श्रीमूला

विनिमयः एकेन शालिप्रस्थेन चतुःप्रस्थकोद्रवग्रहणमित्येवञ्जातीयो विनिमयः, परिवर्तकः तदाख्यः ।

प्रामित्यकमाह—सस्येत्यादि । अन्यतः मित्रादेः, सस्ययाचनम् अप्रतिदानार्थम् प्रामित्यकं तत्संज्ञम् ।

चाणक्यटीका

सीता ( न्ते ? ) ध्यक्षेण स्वकर्मान्ते तदुपनीतः सस्यवर्णः सस्यविशेषः शूकधान्यं शिम्बिधान्यं कोशधान्यादिः तत्पूर्वकत्वात् सीतेत्युच्यते ।।

पिण्डकरः क्लृप्तकरः तत्र यद्धान्यमुत्पन्नम् । षड्भागः कुटुम्बिभ्यो धान्यमयं जातम् । सेनाभक्तं ( स्व ) स्थानेस्कन्धावारे वा भुक्तिका । बलिः जनपदेषु प्रार्थना । करः हिरण्यप्रत्यायः । उत्सङ्गः आयुक्तवृत्तिः । ( भृतो युक्तोष्टकोष्ठागारं प्रवेश्यते अबस्ताहराच्छ ? ) भागे षष्ठे समुत्पन्ने पुनरप्युत्सङ्गेन यद्धान्यं स्तोकं प्रयच्छन्ति कुटुम्बिनः । ( खणव्रणिकेत्यर्थः ? ) । पार्श्वम् उत्कोचः । पारिहीणिकं पूर्वप्रचारपरिहीणं वर्तमानकालोद्भावितम् । अन्यस्त्वाह—स्वविषयाच्युतः परिहीणः । तस्य यद् द्रव्यं भुक्तग्रामेष्विति । औपायनिकम् उपायनभवं प्राभृतम् । कौष्ठेयकं कोष्ठागार एव व्यवहारेणोत्पन्नम् । एतद्राष्ट्रम् ।।

धान्यमूल्यमिति । धान्यस्य विक्रीतस्य मूल्यम् । क्षीणे कोष्ठागारधान्ये यत्क्रयार्थं यत् कोशगृहान्निर्हृतं द्रव्यं स कोशनिर्हारः । प्रयोगेण धान्यं दत्तं तत् पूर्णकाले यत् सवृद्धिकं प्रत्यादीयते, तत् प्रयोगप्रत्यादानम्, एतत् क्रयिमसङ्घातः ।।

सस्यवर्णानां शाल्यादीनाम् अर्घान्तरेण कोद्रवादीनां विनिमयः परिवर्तकः ।।

सस्ययाचनम् अन्यतो जनपदादेः । [1]कतिपयैर्दिवसैः प्रदास्यामिति प्रामित्यकम् ।।

प्रतिपदपञ्चिका

कोष्ठागाराध्यक्ष इति । स सीतदीन् दशपदार्थानुपलभेत, जानीयात्, तांश्चोद्दिश्य स्वयमेव व्याचष्टे सीतध्यक्षोपनीत इत्यादि, सीताध्यक्षेण राजकीयकृषिकर्माध्यक्षेणाधिकृतेन, उपनीतः कोष्ठागारं प्रवेशितः सस्यवर्णको व्रीह्यादिधान्यजातिः सीता, सा कोष्ठागाराध्यक्षेण शुद्धाऽभिनवा च पूर्णा च ग्राह्या पिण्डकरः क्लृप्तः । तद्यथा-अमुना ग्रामेणैतावद्धान्यादिकं प्रतिवर्षदेयमिति, षड्भागो राजभागः, षड्ग्रहणं प्रायिकत्वादन्येषामपि, यथादेशप्रसिद्धानां तृतीयचतुर्थादि भागानामुपलक्षणार्थम् ।

केचित्तु-षड्भागमधिकदेयभागमाचक्षते तच्चासत् । या सीतायामेव तस्यान्तर्भावात् इत्यपरे । सेनाभक्तं सेनासमुद्योगकाले यथादेशप्रसिद्धं स्नेहतण्डुललवणादिराजदेयबलिषड्भागादन्यो यथादेशप्रसिद्धो दर्शविंशतिबन्धादिकः करः प्रतिवर्षदेयः ।

---

१. अत्रकियानपि ग्रन्थांशा लुप्तो भाति ।

**तदेव प्रतिदानार्थमापमित्यकम् । कुट्टकरोचकसक्तुशुक्तपिष्टकर्म तज्जीवनेषु तैलपीडनमौरभ्रचाक्रिकेष्विक्षूणां च क्षारकर्म सिंहनिका । नष्टप्रस्मृतादिरन्यजातः । विक्षेपव्याधितान्तरारम्भशेषं च व्ययप्रत्यायः । तुलामानान्तरं हस्तपूरणमुत्करो व्याजी । पर्युषितं प्रार्जितं चोपस्थानमिति ॥**

---

प्रतिपदपञ्चिका

भाद्रपदिक वासन्तिकाद्युपादानम् । उत्सङ्गो राज्ञः पुत्रजन्मादौ पौरजानपददत्तमिति केचित् । शालाकादिकमित्यपरे । पार्श्वमुचितकरादधिकग्रहणम् । कोशाभिसंहरणोक्तं प्रभुत्वादिच्छागम्यमिति केचित् । पारिहीणिकमकृष्टपच्यसस्यं चतुष्पदैर्विनाशितसस्यदण्डाधिगम्यमित्यपरे ।

औपायनिकं तदुपयोगिकौशलिकं कोष्ठेयकं राजस्थापिततटाकारामाद्युत्पन्नम् । अपरे तु कोष्ठेयं ग्रामोत्पन्नमाचक्षते । तदयुक्तम् । षड्भागग्रहणेन तस्य सिद्धत्वादेव दशविधं चैतद्राष्ट्रसंज्ञम् ।

ननु समाहर्तृसमुदप्रयस्थापनाध्याये राष्ट्रान्तर्गत एव बलिरभिहितः । तथा पार्श्वपारिहीणिकौपयनिकानि अन्यजातय एव विशेषे परिपठितानि । तेषां पुनरिह पाठस्तदुत्पादितानामपि कोष्ठागारप्रवेश्यत्वज्ञापनार्थम् । धान्यमूल्यं धान्यविक्रयहिरण्यं कोशनिर्हारः हिरण्येनधान्यक्रयः प्रयोगप्रत्यादानं वृद्धिप्रयुक्तधान्यप्रवेश इत्येवं त्रिविधं क्रयिमम् । सस्यवर्णानां सस्यजातीयानां अर्घान्तरेणार्घविशेषेण यथा-शालिभिश्चतुर्गुणकोद्रवग्रहणमित्ययं विनिमयः । स एवम्प्रकार एव परिवर्तकः सस्ययाचनं धान्यप्रार्थनमन्यतो मित्रादेर्याचितकं ।

श्रीमूला

आपमित्यकमाह—तदेवेति । अन्यतः सस्ययाचनमेव, प्रतिदानार्थं सवृद्धिकप्रत्यर्पणार्थम्, आपमित्यकं तत्संज्ञम् ।

कुट्टककर्मादिपञ्चकजीविभ्यस्तैलपीडनजीविभ्य इक्षुक्षारकर्मजीविभ्यश्च यदुपादीयते तत् सिंहनिकाख्यमित्याह—कुट्टकेत्यादि । कुट्टकादीनां पञ्चानां द्वन्द्वः । कर्मशब्दश्च तेषु प्रत्येकमभिसम्बध्यते । कुट्टककर्म अवघातः, रोचककर्म मुद्गमाषादिविदलनम्, रुक्तुकर्म घरट्टादिना यवादिचूर्णीकरणम्, शुक्तकर्म इक्षुरसादिसन्धानम्, पिष्टकर्म गोधूमपेषणादि । कुट्टकादिकर्म, तज्जीवनेषु कुट्टकादिकर्मोपजीविषु विषये तत्कर्मोपजीवनार्थं तेभ्यः शुल्कं यद् गृह्यते तदित्यर्थः, तैलपीडनं तिलेभ्यो यन्त्रनिष्पीडितेभ्यस्तैलोत्पादनकर्म, औरभ्रचाक्रिकेषु औरभ्रेषु यज्ञियोरभ्रसंज्ञपनकर्मकरेषु नैलिषु विषये तदुपजीवनेष्वित्यनुवर्तनात् तैलपीडनकर्मोपजीवनार्थं तेभ्यो यद् गृह्यते तदित्यर्थः, इक्षूणां क्षारकर्म च फाणितगुडखण्डादिकर्म च तत्कर्मोपजीविभ्यो यदुपादीयते तच्चेत्यर्थः । संहनिकेति तु व्याख्यापाठः सुष्ठु ।

### श्रीमूला

अन्यजातमाह—नष्टेत्यादि। नष्टप्रस्मृतादिः नष्टमपगतं प्रस्मृतं विस्मृतं चेति द्वयम्। आदिपदादायुक्तदण्डादिर्ग्राह्यः।

व्ययप्रत्यायमाह—विक्षेपेत्यादि। विक्षेपशेषं किञ्चित्कार्यसाधनाय प्रेषितस्य सैन्यस्यार्थे व्ययिताद् धनादवशिष्टं व्याधितशेषं भेषजशालाव्ययितावशिष्टम्, अन्तरारम्भशेषं दुर्गप्रासादादिपरिकर्मार्थे निर्गतस्य धनस्य लघुपरिव्ययकरणाच्छेषम्।

उपस्थानमाह—तुलेत्यादि। तुलामानान्तरं तुलामानभेदः तुलामानाभ्यामधिकाभ्यां गृहीत्वा हीनाभ्यां दानादुत्पन्नम्, हस्तपूरणं कराभ्यां प्रस्थादौ धान्यस्य यत्नप्रवेशनं प्रस्थाग्रे कराभ्यां धान्यधारणं वा, हस्तप्रपूरणमिति पाठे हस्तश्लथीकाराङ्गुलिविरलीकरणादिना व्रीह्यादिमेयधान्यानां पूगीफलादिगण्यपण्यानां च प्रच्यावनम्, उत्करः धान्यादिराशिः शालाकादिर्वा, गणनमानप्रदेशयोर्गण्यमेयवस्तुविक्षेपणं वा, व्याजी षोडशभागादि पुनर्मानन्यूनतापरिहारायाधिकतया गृह्यमाणम्, पर्युषितं गतवत्सरशेषम्, प्रार्जितं च पुष्पताम्बूलादिकं च स्वनैपुण्योत्पादितम्, उपस्थानं तदाख्यम्। इतिशब्द उद्दिष्टसीतादिपदार्थविवरणोपसंहारार्थः।

### चाणक्यटीका

कुट्टकेति। कुट्टकानाम् अवघातकानाम् कर्म। रोचकानां शिलापट्टकादिपेषकाणां कर्म। तथा सक्तुशुक्तपिष्टकानां कर्म राजकीयम्। तज्जीवनेष्विति कुट्टकादिजीवनेषु कतिपयैर्दिवसैरध्यक्षेण कर्तुं दातव्यम्। तथा तैलार्थं तिलादिपीडनम् औद्रेषु चाक्रिकेषु च तैलकेषु। औद्रा हि पुटिकायन्त्रेण पीडयन्ति। चाक्रिकास्तु चतुर्षु पार्श्वेषु चाल्यमानेन चक्रेणेति। इक्षूणां च रसः। फाणितादि क्षारकर्म। तज्जीवनेषु का ( र ) यितव्यम्। एषा सिंहनिकेति प्रथिता।

नष्टप्रस्मृतादिरिति। यदुक्तम्—"नष्टप्रस्मृतम् आयुक्तदण्डः" इत्यादि राष्ट्रे, तदन्यजातमित्युच्यते॥

विक्षेपव्याधितान्तरालशेषं वेति। संवत्सरदत्तमुक्तेऽन्तराले कतिभिश्चिन्मासैः परिहस्त्यादौ विक्षिप्ते यो लाभविशेषः, सः विक्षेपान्तरशेषः। ए ( वं व्या ) धिकाले उपयुक्तस्य शेषः। अथवा विक्षेपकाले यद् भक्तं दत्तं व्याधिप्रतीकाराय वा हिरण्यं तस्य अर्धेनावसिते प्रयोजने यदवशिष्टं तदुभयशेषम्। दुर्गस्यारम्भे वा हिरण्यादौ निष्क्रान्ते यदवशिष्टं तदारम्भशेषम्। द्वितीये तु प्रकारे अन्तराल ( म ? ) शेषा इति परकृतमेव दुर्गाद्यल्पेन संस्कृत्य अन्तरा यदवशिष्यत इति व्याख्येयम्। अयं व्ययप्रत्यायः॥

तुलामानान्तरमिति। अल्पया तुलया मानेन वा ( च्यं ? दाय ) विक्रीयमाणे यदतिरिच्यते। ग्रहणकाले मात्रा कौशलाद् यदधिकं हस्ताभ्यां पूर्यते। यश्चोत्करः शलाका शूर्पम्। याच व्याजी वक्ष्यमाणा षोडशभागो मानव्याजी। ( सर्पिः इति ) पूर्वसम्वत्सरभागशेषं पर्युषितम्। व्यवहार्यं यदार्जितं प्रार्जितम्। एतदुपस्थानम्॥

[ धान्यादिवर्गाणां विवरणम् ]

**धान्यस्नेहक्षारलवणानां धान्यकल्पं सीताध्यक्षे वक्ष्यामः। सर्पिस्तैलवसामज्जानः स्नेहाः। फाणितगुडमत्स्यण्डिकाखण्डशर्कराः क्षारवर्गः। सैन्धवसामुद्रबिडयवक्षारसौवर्चलोद्भेदजाः लवणवर्गः। क्षौद्रं मार्द्वीकं च मधु।**

---

प्रतिपदपञ्चिका

तदेवेति। अन्यतः सस्ययाचनमेव वैदेहकादेर्वृद्ध्यादिना प्रतिदानार्थमापमित्यकं भवति। कुट्टकादिभिः पञ्चभिः प्रत्येकं कर्मशब्दः। तत्र कुट्टककर्म तण्डुलम्। रोचककर्म मुद्गमाषादिदलनम् सक्तुकर्म यवक्षोदभर्जनकादिकम्, शुक्तकर्म इक्षुरसादिसन्धानम्, पिष्टकर्म गोधूमादिपेषणम् कुट्टादिकर्म तज्जीवनेषु कुट्टकादिकर्मोपजीवनेषु यदुपादेयं द्विविधं तैलपीडनम्, ओष्ठेषु दुर्दिसंज्ञां मनुष्ययज्ञकरेषु च क्रियासु च प्रसिद्धेषु, तथेक्षूणां च द्विप्रकारमेव क्षारकर्म फाणितगुडसङ्घादिक्रिया तज्जोवनेष्विति सर्वत्रानुवर्तते। तस्माद् गोष्ठागाराध्यक्षकर्तृकाणाम् एतेषां तत्तज्जीव्युपादोनस्य सिंहनिकेति संज्ञा, नष्टप्रस्मृतादिरिति, नष्टम् अनवगतम्, प्रस्मृतम्, विस्मृतं तदुभयमप्युपलभ्यते। नष्टप्रस्मृतमादिशब्दादायुक्तदण्डादयः परिगृह्यन्ते, सोयमन्यजातः।

व्ययप्रत्यायमाह-विक्षेपेत्यादि, शेषशब्दः प्रत्येकं निक्षेपशेषं प्रेषितदण्डोपयुक्तशेषश्चिकित्सोवयोगशेषम् अन्तरारम्भशेषं परिकर्मण्यभिप्रेतदर्थं निर्गतस्य लघुपख्यियकरणाच्छेषमित्ययं व्ययप्रत्यायः। तुलामानान्तरं तुलामानायामधिकाभ्यां ग्राहित्वा हीनाभ्यां दत्ते यदुत्पन्नं हस्तपूरणमिति पूगफलादिगण्यानां व्रीह्यादिमेयधान्यानां च गणने माने च हस्तश्लथान्तर उत्करः शालाकादिः, इत्येषां व्याजीः। पर्युषितमतीतसंवत्सरशेषं प्राजितं पुष्पताम्बूलादिदानेन नैपुण्योत्पादितम्, अपरेतु पर्युषितं प्राजितस्यैकमेव पठन्तोऽतीतसंवत्सरोत्पन्नमनुग्राहितमिदानीम् उदग्राहितमाचक्षते। तदुपस्थानमिति।

श्रीमूला

धान्येत्यादि। धान्यस्नेहक्षारलवणानामित्यधिकार आध्यायपरिसमाप्तेः।

तत्र धान्यकल्पः सीताध्याये वक्ष्यत इत्याह—धान्यकल्पमित्यादि। इयमनागतावेक्षणलक्षणा तन्त्रयुक्तिः। सर्पिरित्यादि। सर्पिस्तैलं वसा मज्जेत्येते चत्वारः स्नेहाः।

इक्षुविकारभेदाः फाणितादयः क्षारवर्ग इत्याह—फाणितेत्यादि। गुडखण्डशर्करयोर्मध्यमावस्था मत्स्यण्डिका।

सैन्धवादिषट्प्रकारं लवणवर्गमाह—सैन्धवेत्यादि। उद्भेदज ऊषरलवणमिति स्वामी।

क्षौद्रमिति। क्षौद्रं क्षुद्राभिः सञ्चितम्। मार्द्वीकं मृद्वीकानां रसः इति द्विविधं मधु।

**इक्षुरसगुलमधुफाणितजाम्बवपनसानामन्यतमो मेषशृङ्गीपिप्पली-क्वाथाभिषुतो मासिकष्षाण्मासिकस्सांवत्सरिको वा चिद्भिटोर्वारुकेक्षुकाण्डाम्रफलामलकावसुतः शुद्धो वा शुक्तवर्गः। वृक्षाम्लकरमर्दाम्रविदलामलकमातुलुङ्गकोलबदरसौवीरकपरूषकादिः फलाम्लवर्गः। दधिधान्याम्लादिः द्रवाम्लवर्गः। पिप्पलीमरिचशृङ्गिबेराजाजीकिराततिक्तगौरसर्षपकुस्तुम्बुरुचोरकदमनकमरुवकशिग्रुकाण्डादिः कटुकवर्गः। शुष्कमत्स्यमांसकन्दमूलफलशाकादि च शाकवर्गः।**

---

चाणक्यटीका

इदानीं वर्गभेदानाह—धान्यादीनां वर्गाः। उच्यन्त इति शेषः। धान्यकल्पं सीताध्यक्षे वक्ष्यामः। तद्भवत्वात् सर्पिरादयः स्नेहाः स्वभेदभिन्नाः प्रपञ्चनीयाः। फाणितं कल्कः। मत्स्यण्डिका खण्डः। (उद्भेदजमादित्यभागम् ?)। क्षौद्रं माक्षिकम्। मार्द्वीकं मृद्वीकाविकारः।

प्रतिपदपञ्चिका

धान्यस्नेहक्षारलवणनामिति अधिकारः। एतेषां मध्ये धान्यकल्पं सीताध्यक्षे वक्ष्याम इति अनागतावेषणम्, तन्त्रयुक्तिरिति। सर्पिरादयश्चत्वारः स्नेहाः फाणितादि पंचविधः क्षारवर्गः। तत्र गुडखण्डशर्करादयोर्मध्यमावस्था, मत्स्यण्डिकाशेषं प्रतीतम्। सैन्धवादि षड्विधो लवणवर्गः। तत्र उद्भेदजमूषलवणम् शेषाणि प्रतीतानि। मधु द्विविधम्, क्षुद्राभिस्संचितं क्षौद्रम् मृद्वीकानां द्राक्षाणां रसो माद्वींकम्।

श्रीमूला

शुक्तवर्गमाह—इक्षुरसेत्यादि। इक्षुरसो, गुलः, मधु, फाणितं च प्रसिद्धं जाम्बवपनसौ जम्बूफलरसः पनसफलरसश्च, एषां षण्णाम्, अन्यतमः, मेषशृङ्गीपिप्पलीक्वाथाभिषुतः मेषविषाणाख्याया भागधाख्यायाश्चौषधेः कषायेण मिश्रः, मासिकः षाण्मासिकः सांवत्सरिको वा मासषण्मासादिकालपरिवासेन क्रमादधममध्यमोत्तमभेदं प्रतिपन्नः, चिद्भिटादिपञ्चकरसैर्व्यस्तैः समस्तैर्मिश्रितः, शुद्धो वा चिद्भिटाद्यमिश्रितो वा, शुक्तवर्गः आसववर्गः। चिद्भिटं वल्लीफलविशेषः, तदेव कटुकमुर्वारुकम्।

फलाम्लवर्गमाह—वृक्षाम्लेत्यादि। वृक्षाम्लं तिन्तिडीकम्, करमर्दः वंशपर्यायः, आम्रामलके प्रसिद्धे, विदलं दाडिमम्, मातुलुङ्गं दाडिमभेदः, कोलं क्षुद्रबदरम्, बदरं स्थूलबदरम्, सौवीरकं स्वादुबदरम्, परूषकं मध्यदेशादिप्रसिद्धं मधुराम्लफलम्, आदिग्रहणं जम्बीराद्यर्थम्। यथोक्तप्रकारः फलाम्लवर्गः।

श्रीमूला

दधीत्यादि । दधि प्रसिद्धं, धान्याम्लं काञ्चिकम् । आदिपदात् तक्रादिग्रहणम् । इत्ययं द्रवाम्लवर्गः ।

पिप्पलीत्यादि । पिप्पल्यादित्रिकं प्रसिद्धम्, अजाजी जीरकः, किराततिक्तः भूनिम्बाख्य ओषधिविशेषः, गौरसर्षपः सिद्धार्थः, कुस्तुम्बुरु धान्याख्यम्, चोरकः शतपुष्पानुकारी गुच्छ इति स्वामी, दमनकं कान्ताख्यम्, मरूवकः पिण्डीतकः, शिग्रुकाण्डः शोभाञ्जनकाण्डः, आदिग्रहणं राजसर्षपाद्यर्थम् । इत्येवञ्जातीयः कटुकवर्गः ।

शुष्केत्यादि । शुष्कशब्दो मत्स्यमांसयोः प्रत्येकं सम्बध्यते । शुष्कमत्स्यः शुष्कमीनः, शुष्कमांसं वल्लूरम्, कन्दः सूरणादिः, मूलं शतमूलीप्रभृति, फलं वार्ताकादि, शाकं वास्तुकादि, आदिग्रहणान्माषविकारादिपरिग्रहः । इत्ययं शाकवर्गः ।

चाणक्यटीका

इक्षुरसादीनामन्यतम इति । अर्थाद् व्यस्तसमस्तानाम् । मेषशृङ्गीपिप्पलीमूलक्वाथेन अभिषुतः मासिकः ( षाण्मासिकः ) सांवत्सरिको वा यथोत्तरं प्रधानः । तत्र जाम्बवो जम्बूफलरसः । तथा पनसफलरसश्च । मेषशृङ्गी वृक्षविशेषः । ( विपदा शोदुवहिस्वात्रः ? चिर्भटा स्वादुरुर्वारुहस्वः ) कर्कटिका[1] शुद्धो वेति विनापि ( हृदादिभिः[2] ) पूर्वोक्तेनैव विधिना यः क्रियते, शुद्धं [3]चुक्रमित्यर्थः ॥

( वल्लूरमाम्रमाम्लम्[4] ? ) विदलं कोलं गुल्मजम्बीरं वृक्षजं सौवीरं फलविशेषः । आदिग्रहणान्मातुलुङ्गादीनां ग्रहणम् ॥

धान्याम्लं काञ्जिकम् । आदिग्रहणात् ( भूविककुलाट ? सौवीरकुल्माष ) शिम्बिक्यादीनां ग्रहणम् ॥

अजा ( विकं ? जिः ) चव्यं कृष्णं श्वेतं च रक्तसर्षपो राजिका । कुस्तुम्बुरुः धान्याकम् । शिग्रुः धान्यकाकारं मधुशिग्रुः । काण्डं शोभाञ्जनमूलम् ॥

शुष्ककन्दम् आर्द्रकादि । मूलं मूलकादि । फलं वार्ताकादि । पुष्पमगस्त्यादि । शाकं वा ( लु ? स्तु ) क्यादि[5] आदिग्रहणात् पत्रादिग्रहणम् । एतत्सर्वं जनपदात् सातत्येन साध्यमित्येतदनुमेयम् ॥

---

१. "उर्वारुः कर्कटी" इत्यमरं व्याचक्षाणः क्षीरस्वामी, "उर्वारुः, स्वादुचिर्भिटीमाहुः, ह्रस्वः कर्कः कर्कटी ।" इत्याह ।

२. "चिर्भटादिभिः इति पठनीयं भाति ।

३. चुक्रम् अम्लव्यञ्जनम् इति क्षीरस्वामी ।

४. वृक्षाम्लम्, आम्राम्लम् इति पाठ्यं स्यात् ।

५. "वातुस्कं शाकभेदाः स्युः" इत्यमरः ।

[ स्नेहादिवर्गोपयोगव्यवस्थाः ]

**ततोऽर्धमापदर्थं जानपदानां स्थापयेत्, अर्धमुपयुञ्जीत । नवेन चानवं शोधयेत् ।**

---

प्रतिपदपञ्चिका

शुक्तवर्गमाह इक्षुरसेत्यादि । तत्रेक्षुरसगुडमधुफाणितानि प्रतीतानि । जम्बूपनसानां फलरसं मेषशृङ्गोपिप्पलीमूलं च प्रतीतम् । क्वाथाभिघातस्तेषां मिश्रितो क्वाथेन मासिकः । षाण्मासिकस्सांवत्सरिको वेतिकालभेदेन निकृष्टमध्यमोत्तमत्वं भवति । चिद्भिदं वल्लीफलं प्रतीतम् । उर्वारुकं तदेव कटुकं इक्षुकाण्डादीनि प्रतीतानि । तैरभिष्टुतो मिश्रितः शुद्धो वा चिद्भिटादिभिहित शुक्तवर्ग इति । इक्षुरसादीनां षण्णां चिद्भिटादीनां च पञ्चानां व्यस्तसमस्तानां प्रयोगवर्गग्रहणम्, फलाम्लवर्गमाह वृक्षाम्लो वृक्ष इति गोलटादीनां प्रतीतः । विदलं दाडिमम्, अम्लं चिञ्चाफलं करमर्दाम्लामलकमातुलुङ्गानि प्रतीतानि । कोलं क्षुद्रबदरं प्रतीतम् । सोवीरकम् उदक्षु स्वादुबदरम् परुषकमन्यदेशादिप्रतीतं मधुराम्लफलम्, आदिग्रहणात् नीपाम्लकादिप्रदर्शनार्थम्, इत्ययं फलाम्लवर्गः । दधि प्रतीतम्, धान्याम्लकांचिकमादिग्रहणमस्तुकतक्रादिपरिग्रहार्थमित्ययं द्रवाम्लवर्गः ।

कटुवर्गमाह पिप्पलीत्यादि, पिप्पली मरीचिशृङ्गिबेराणि प्रतीतानि । अजाजीरकम् तिक्तकं चिकित्सकप्रसिद्धम् गौरसर्षपास्सिद्धार्थकाः । कुस्तुम्बुरुणि धान्यकम् चोरकः शतपुष्पानुकारी गुच्छः दमनकमरुवकौ मारप्रतीतौ । शिग्रुस्सोहंजनकः मधुशिग्रुस्तत्भेद एव मधुरः काण्डग्रहणं तन्मूलग्रहणार्थम् आदिग्रहणं राजसर्षपलोहौकाद्युपसङ्ग्रहार्थमित्ययं कटुकवर्गः ।

शाकानाह—शुष्कं मत्स्येति, शुष्कशब्दः प्रत्येकम् । मत्स्यमांसानि प्रतीतानि । कन्दाः पिण्डालुकसूरणादयः, मूलान्यालुकश्शतावरी प्रभृतीनि । फलानि वार्ताककूष्माण्डादीनि, शाकानि वास्तुकजीरकादीनि । आदिग्रहणाद्सर्षपमाषविकादिपरिग्रहणार्थमित्ययं शाकवर्गः ।

श्रीमूला

तत इति । ततोऽर्धं स्नेहादिवर्गेभ्यः पूर्वोक्तेभ्योऽर्धम्, जानपदानाम्, आपदर्थं दुर्भिक्षाद्यापत्समयोगार्थम्, स्थापयेत् । अर्धम्, उपयुञ्जीत राजमहानसाद्यर्थे विनियुञ्जीत । नवेन चानवं शोधयेत् नवं प्रक्षिप्य पुराणं कालाक्षमं निचितमुपयुञ्जीत ।

चाणक्यटीका

ततोऽर्धमिति । ततो नवस्नेहादिनिचयादर्धम् । आपदर्थमिति आपन्निवृत्त्यर्थम्, यथा मशकार्थो धूम इति । जानपदानामिति अस्त्यसाववस्था यत्र जानपदा अपि राज्ञा भर्त्तव्याः । अर्धं यथायोगमुपयुञ्जीत । उपयुञ्जानश्चानवनीयं नवप्रक्षेपेण पूरयेत् ॥

[ द्रव्याणां क्षोदघर्षणादिसंस्कारसमये वृद्धि-क्षयार्हभागानामियत्तानिर्देशः ]

**क्षुण्णघृष्टपिष्टभृष्टानामार्द्रशुष्कसिद्धानां च धान्यानां वृद्धिक्षयप्रमाणानि प्रत्यक्षीकुर्वीत । कोद्रवव्रीहीणामर्धं सारः । शालीनामष्टभागोनः । त्रिभागोनो वरकाणाम् । प्रियङ्गूणामर्धं सारः नवभागवृद्धिश्च । उदारकस्तुल्यः । यवा गोधूमाश्च क्षुण्णाः । तिला यवा मुद्गमाषाश्च घृष्टाः । पञ्चभागवृद्धिर्गोधूमः सक्तवश्च । पादोना कलायचमसी । मुद्गमाषाणामर्धपादोनः ।**

---

प्रतिपदपञ्चिका

ततोऽर्धं पूर्वोक्तस्नेहादिनिचयवर्गादर्धमापदर्थं दुर्भिक्षाद्युपयोगाय क्षेत्रं हारजानपदनामार्थे स्थापयेत् । अर्धमुपयुञ्जीत राज्ञो महानसादिव्ययेषूपयोजयेत् ।

निचितस्य कालासहिष्णोः प्रतीकारमाह-नवेन चानवं विशोधयेदिति । नवं

श्रीमूला

धान्यानां क्षोदघर्षणाद्यवस्थासु सप्तसु वृद्धिक्षयाववश्यम्भाविनौ तत्तत्कर्मकरेभ्योऽनुमन्तव्यौ । अतस्तयोरियत्तानिश्चयं सकृत्प्रत्यक्षीकरणेन कोष्ठागाराध्यक्षोऽधिगच्छेदित्याह—क्षुण्णेत्यादि । क्षुण्णं सकृदवहतम्, घृष्टं फलीकृतम्, पिष्टं श्लक्ष्णचूर्णितम्, भृष्टं भ्राष्ट्रपक्वम्, आर्द्रं तिमितम्, शुष्कं कृतशोषणम्, सिद्धं राद्धम् । सोऽयं धान्यानां सारमात्राया अल्पत्वानल्पत्वतारतम्ये क्षयवृद्धीयत्तापरिज्ञानार्थो विशेषविधिरुक्तः ।

सामान्यतस्तु तदियत्ताविषयं विधिमुपदेष्टुमाह—कोद्रवेत्यादि । कोद्रवव्रीहीणामर्धं सारः कोद्रवाणां व्रीहीणां च तत्प्रस्थद्वयस्यैकस्तण्डुलप्रस्थः सारः फलति, शेषस्तु क्षय इत्यर्थः । शालीनां कलमाख्यव्रीहिभेदानाम्, अष्टभागोनः प्रकृत्यष्टमांशन्यूनः, अर्धं सार इति वर्तते । तेन शालीनां प्रस्थाष्टकस्य प्रस्थत्रयं सारो भवति । वरकाणां धान्यभेदानाम्, त्रिभागोनः प्रस्थत्रये प्रस्थद्वयं सारो भवति । प्रियङ्गूणां कङ्गूनाम्, अर्धं सारः नवभागवृद्धिश्च अष्टसु प्रस्थेषु प्रस्थपञ्चकं तण्डुलानां भवति । उदारकः तृणकोलकः, तुल्यः प्रियङ्गुतुल्यसारः अनवहतावस्थाप्रमाणतुल्यसारो वा भवति । तत्राद्यः शुष्कावघाते, सजलावघाते पर इति विवेकः । यवाः, गोधूमाश्च, क्षुण्णाः सजलावहताः, तुल्याः अनवहतावस्थाप्रमाण तुल्यसाराः ।

क्षुण्णानुक्त्वा घृष्टानाह—तिला इत्यादि । घृष्टाः दलिताः, तिलाः, यवाः मुद्गमाषाश्च, तुल्या इति वर्तते, अघृष्टावस्थातुल्यप्रमाणाः । गोधूमः, पञ्चभागवृद्धिः पञ्चभागेन वर्धते । सक्तवश्च भृष्टयवजाः, पञ्चभागवृद्धयः । कलायचमसी कलायश्चणभेदः तस्य चमसी श्लक्ष्णचूर्णम्, पादोना कलायप्रस्थचतुष्टयस्य तच्चूर्णं प्रस्थत्रयप्रमाणं भवति । मुद्गमाषाणाम् मुद्गानां माषाणां च चमसी, अर्धपादोनाष्टभागेन ऊना भवति ।

चाणक्यटीका

पू ( रणं ? रितं ) वा विनश्यदुपयुज्य नवप्रक्षेपाच्छुद्धमिति प्रकृत्य वृद्धिक्षय-निरूपणार्थमाह—क्षुण्णा यवगोधूमाः, घृष्टाः तिलमुद्गादयः, पिष्टाः सक्त्वादयः, तेषाम् । आर्द्रशुष्कादीनां च धान्यादीनां वृद्धिप्रमाणं क्षयप्रमाणं च प्रत्यक्षं कुर्वीत । अनपहारार्थम् अभुक्तपरिज्ञानार्थं चेति दिङ्मात्रं ब्रूमः ॥

कोद्रवव्रीहीणां क्षुण्णानाम् अर्धं सारः प्रस्थद्वये तण्डुलप्रस्थः । अष्टभागोन इति प्रस्थद्वये प्रस्थाष्टभाग इति । त्रिभागोनो वराकाणां क्षुण्णानाम् । तेन षण्णां ( चो ? व ) रकप्रस्थानामर्धं त्रयः । त्रिभागोनत्वाद् द्वौ भवतः । नवभागवृद्धिश्चेति कङ्गूनां नवभिः प्रस्थैः पञ्चप्रस्था इत्यर्थः । [1]उदारवृद्धिकस्तुल्यः कङ्गुभिर्नवभागवृद्ध्या । यवा गोधूमाश्च क्षुण्णाः । योगविभागाद् अर्धसारत्वं नवभागवृद्धिश्च ॥

तिलयवमुद्गाश्च घृष्टाः पञ्चभागवृद्धिः एते घृष्टाः । तेषामर्धं सारः पञ्चभाग-वृद्धिश्च । तत्र तिलानां घर्षणं तुषैः शोधनम् यवमुद्गानां तुषैर्घूर्णनम् । गोधूमाः सक्तवश्चेति । एतेषामर्धं पञ्चभागवृद्धिश्च । पादोनेति । चतुर्णां कलायप्रस्थानां चमसी[2] विदलं[3] । प्रस्थत्रयम् । मुद्गमाषाणां चमसी अध्यर्धपादोना अष्टासु प्रस्थेषु पञ्चप्रस्थाः ।

प्रतिपदपञ्चिका

प्रक्षिप्य पुराणस्योपयोगं कुर्यात् । किञ्च क्षुण्णादिसप्तावस्थाभेदानां धान्यानां कियती वृद्धिः कियद् वा क्षय इत्येवमेतत् । कोष्ठागाराध्यक्षः प्रत्यक्षं कुर्वीत । ततोऽन्वयव्यति-रेकाभ्यां अनुमतिः । तत्र क्षुण्णं सकृदवपतं घृष्टं फलीकृतं पिष्टंश्लक्ष्णं चूर्णीकृतम् । भृष्टं कपालपक्षम् आर्द्रं तिमितं सक्तुपिष्टादिकं सिद्धं राद्धं च समर्चये वृद्धिरुपचयः, क्षयो हानिः । प्रमाणमियत्ता एवं वृद्धिक्षयप्रमाणानि स्वयं सकृत् प्रत्यक्षीकृत्य तदनुरुपाणि तत्कर्तृभिः कर्माणि कारयेदिति ।

यद्येवं [4]कोद्रवव्रीहीणाम् अर्धं सारः इत्यादि वचनमनर्थकं प्रत्याक्षादेव तस्य गतत्वात् । तत् कियते यथास्थितस्वभाववेदनाय ततोऽन्यथा हितान्यथाभावे हरण-प्रयोगाज्जानीयात् इति ज्ञापनार्थम् ।

तदाह—कोद्रवव्रीहीणामर्धं सार इति । तत्पक्षद्वयेन तण्डुलप्रस्थः सर्वं-जनसामान्योऽयं विधिः, राजपुत्री(त्रा)णां मुत्तरत्र वक्ष्यमाणत्वात् । शालीनां कलमानां अष्टभागोनः अर्धं सार इति वर्तते । अष्टभागश्च प्रकृतेरेव ग्राह्यः, ततःशालीनां अष्टसु

---

१. 'उदारस्तुल्यवृद्धिकः' इतिः पाठः स्यात् । "उदारः काककङ्गौस्यात्" इति केशव-स्वामी ।

२. "स्त्रियां तु चमसी मित्ते मुद्गादीनाम्" इति केशवस्वामी । श्लक्षणचूर्णमिति भट्टस्वामी ।

३. "विदलं द्विधाकृतं कलायादिकम्" इति अमरव्याख्याने सर्वानन्दः । ३.५.३२

४. कोद्रव व्रीह्यादीनाम्—पा०

**शैम्बानामर्धं सारः । त्रिभागोनः मसूराणाम् । पिष्टमामं कुल्माषाश्चाध्यर्धगुणः । द्विगुणो यावकः । पुलाकः पिष्टं च सिद्धम् । कोद्रववरकोदारकप्रियङ्गूणां त्रिगुणमन्नं, चतुर्गुणं व्रीहीणाम्, पञ्चगुणं शालीनाम् । तिमितम् अपरान्नं द्विगुणमर्धाधिकं विरूढानाम् । पञ्चभागवृद्धिः भृष्टानाम् । कलायो द्विगुणः, लाजा भरुजाश्च । षट्कं तैलमतसीनाम् । निम्बकुशाम्रकपित्थादीनां पञ्चभागः । चतुर्भागिकास्तिलकुसुम्भमधूकेङ्गुदीस्नेहाः । कार्पासक्षौमाणां पञ्चपले पलसूत्रम् ।**

---

## प्रतिपदपञ्चिका

कुटुम्बेषु, कुटुम्बत्रयं तण्डुलानां त्रिभागोना, वरकाणां वरत्राणां कुटुम्बत्रये कुटुम्बद्वयं तण्डुलानामिति केचित् ।

अपरे तु वरकाणां वरपट्टानां त्रिभागोनः प्रकृतितृतीयांशन्यनः ततश्च षट्सवरकप्रस्थेषु प्रस्थत्रयमर्धेन भवति । ततः प्रकृतितृतीयांशप्रस्थद्व्यवाचमातीसारः प्रस्थो भवति । प्रियङ्गूणां अर्धं सार इति । अर्धग्रहणेऽनुवर्तमाने पुनरर्धग्रहणं विस्पष्टार्थम् । नवभागवृद्धिश्चेति, अष्टसु प्रस्थेषु पञ्चप्रस्थं तण्डुलानामिति उदाकरस्तुल्य इति, उदारको यवनाविकाविशेषः । स शुष्कोपहृतः प्रियङ्गुतुल्यसारः क्षुण्णस्तु सजलात्वचहृतः प्रागवस्थाप्रमाणतुल्यसारः । न किञ्चिद्धीयते । यवा गोधूमाश्च क्षुण्णाः सजलावहृताः प्रागवस्थाप्रमाणतुल्याः चकारादुदाहरकश्च क्षुण्णा इति । तथा तिला यवा मुद्गमाषाश्च घृष्टादलितास्तुल्या इति वर्तते । पञ्चभागवृद्धिगोधूम इति गोधूमः पञ्चभागेन वर्धते । सक्तवश्च पञ्चभागवृद्धयो धानाभ्यः पादोना कलाय चक्रसीति । कलायप्रस्थोनतश्लक्ष्णचूर्णस्य कुटुम्बत्रयमुद्गमाषाणाम् अर्धपादोना अष्टभागोना

## श्रीमूला

शैम्बानां कुलत्थादिकोशीधान्यानाम्, अर्धं, सारः वितुषांशो भवति । मसूराणां चणविशेषाणाम्, त्रिभागोनः सारः प्रस्थत्रयदलने प्रस्थद्वयं सारो भवति ।

पिष्टमाह—पिष्टमिति । आमं पिष्टम्, अपक्वं गोधूमादि, कुल्माषश्च मुद्गमाषादिश्च, अध्यर्धगुणः कुडुबचतुष्टये कुडुबषट्कं भवति । यावकः वितुषीकृतो यवः, द्विगुणः चूर्णीकृतो द्वैगुण्यं प्राप्नोति । पुलाकः अर्धसिद्धस्तण्डुलः, पिष्टं च गोधूमादितण्डुलचूर्णं च, सिद्धं राद्धं सत्, द्विगुणं भवति ।

सिद्धमाह—कोद्रववरकेत्यादि । कोद्रवादिचतुष्टयान्नं तत्तत्तण्डुलात् त्रिगुणम्, व्रीह्यन्नं चतुर्गुणम्, शाल्यन्नं पञ्चगुणं च वर्धते इत्यर्थः । अष्टगुणं शालीनामिति भाषाटीकायां पाठो भाति । तिमितमिति । तिमितं लवनाद्यवसरे केदारादावार्द्रीकृत-

श्रीमूला

व्रीह्याद्यन्नम्, अपरान्नम् अपरिणतव्रीह्याद्यन्नं च, द्विगुणं भवति। विरूढानाम् अङ्कुरितानां व्रीह्यादीनाम् अर्धादन्नम् अर्धाधिकम् अर्धाधिकद्विगुणं भवति। अपरा व्याख्या—तिमितम् आर्द्रीकृतम्, अपरान्नं फलाढकीचणकादि, द्विगुणं भवति। चणकादीनामेव विरूढानाम् अङ्कुरितानाम्, अर्धाधिकम् अर्धमधिकमार्द्रीकृताद् भवति इति।

भृष्टमाह—पञ्चभागेत्यादि। भृष्टानां कृतभर्जनानां तेषामेवाऽवरान्नानां, पञ्चभागवृद्धिः प्रस्थपञ्चकं भृष्टं प्रस्थषट्कं भवति। कलायश्चणभेदो भृष्टः द्विगुणः। लाजाः व्रीह्यादयो, भरुजा यवाश्च, भृष्टाः द्विगुणाः।

तैलमाह—षट्कं तैलमतसीनामिति। षट्सु अतसीबीजप्रस्थेषु एकस्तैलप्रस्थो भवति। निम्बकुशाम्रकपित्थादीनां पञ्चभागः निम्बबीजादीनां प्रस्थपञ्चके एकप्रस्थः स्नेहो भवति। आदिग्रहणमेरण्डादिपरिग्रहार्थम्। तिलकुसुम्भमधूकेङ्गुदीस्नेहाः चतुर्भागिकाः तिलकुसुम्भबीजादीनां प्रस्थचतुष्टये एकः स्नेहप्रस्थो भवति।

सूत्रमाह—कार्पासेत्यादि। क्षौमो वल्कविशेषः। कार्पासपलपञ्चकस्य क्षौमपल-पञ्चकस्य च एकपलं सूत्रं भवति।

चाणक्यटीका

शैब्यानामर्धं सारः। शेषाणां निष्वापादीनां द्विधाकृतानामर्धं सारः। त्रिभागोनो मसूराणाम्। अर्धं सार इति वर्तते॥

( अष्ट ? पिष्टा ) मांशाः ( सा ) मान्येन व्रीहीणाम् अपक्वस्या ( अमेयया ? आमा ये ) कुल्माषाश्च ( अध्यर्ध ) गुणाः अध्यर्धहीनाः प्रस्थेनाध्यर्ध इत्यर्थः। यावकः पुलाक इति। स्विन्नः पुलाक उच्यते। यावक इत्यन्यस्मिन् स्विन्नव्रीहिनिवृत्त्यर्थम्। स्विन्नो यवो द्विगुणो भवतीत्यर्थः। पिष्टं च यवस्य द्विगुणं सिद्धम्॥

कोद्रवादीनां त्रिगुणमन्नं बोद्धव्यम्। चतुर्गुणं व्रीहीणां सामान्येन। पञ्चगुणं शालीनाम् अन्नमित्येव। तिमितम् आर्द्रीकृतम्। अपरान्नं मुद्गादि अपरकालोत्पन्नत्वात् द्विगुणम् अध्यर्धिकं विरूढकं[1] प्रादुर्भूताङ्कुरम्। प्रस्थद्वयेन पञ्चमप्रस्थाः॥

पञ्चभागवृद्धिर्भृष्टानाम् अपरान्नानामित्येव। कलायो द्विगुणो भृष्ट इत्येव। भरुजका[2] लाजविशेषाः एकान्तविदितावयवा यवगोधूमानां धाना इत्येव॥

षड्गुण इति। षण्मूलं दीयते यस्याम् अतस्यां तत् षड्गुणं तैलं षण्णामाढका-

---

१. विरूढकं तालास्थिमज्जेति गौडाः, वयन्तु क्षेत्रोद्धृतस्य फलमूलादेः स्वेदस्रवान्न-नोद्भिन्नानङ्कुरान् विरुढाख्यान् बुध्यामहे" इत्यमरव्याख्याने। २.४.१३६। क्षीरस्वामी।

२. 'भरुजस्तु········भक्षभेदे स्नेहभृष्टतण्डुले' इति केशवस्वामी। 'भरुजा भृष्टयवाः' इति आपस्तम्ब धर्मोज्ज्वलायां हरदत्तः।

[ कक्ष्यानुगुण्येन तत्तदभ्यवहार्याः तण्डुलादिभेदाः ]

**पञ्चद्रोणे शालीनां च द्वादशाढकं तण्डुलानां कलभभोजनम्, एकादशकं व्यालानाम्, दशकम् औपवाह्यानां, नवकं सान्नाह्यानाम्, अष्टकं पत्तीनाम्, सप्तकं मुख्यानाम्, षट्कं देवीकुमाराणाम्, पञ्चकं राज्ञाम्। अखण्डपरिशुद्धानां वा तण्डुलानां प्रस्थः। चतुर्भागस्सूपः, सूपषोडशो लवणस्यांशः, चतुर्भागस्सर्पिषस्तैलस्य वा, एकं आर्यभक्तम्। प्रस्थषड्भागस्सूपः अर्धस्नेहमवराणाम्, पादोनं स्त्रीणाम्। अर्धं बालानाम् ॥**

———————

चाणक्यटीका

नाम्। आढकं तैलम्। चतुर्भागिका इति चत्वारो भागा मूलं येषां ते चतुर्भागिकाः। चतुर्थस्नेहा इत्यर्थः। चतुष्वाढकेषु आढकं तैलस्य। निम्बादीनां पञ्चभागा मूलं यस्येत्यर्थः। आदिग्रहणाद् एरण्डाद्युपग्रहः ॥

पञ्चपले पलमिति सूत्रस्य ॥

प्रतिपदपञ्चिका

चमसीशैम्ब्यानां वल्कलस्थकादिकोशिधान्यानामर्धं सारस्तुषरहितो भवति। त्रिभागोनमसुराणां कुटुम्बत्रये दलितेन तुषीकृतसारस्य कुटुम्बद्वयं भवति। पिष्टभावं गोधूमादिकुटुम्बद्वयस्य पिष्टस्य कुटुम्बत्रयं भवति। गुल्माश्च मुद्गमाषादैरर्धम् अर्ध(दि)धिकगुणः। प्रस्थे षट्कुटुम्ब इति, द्विगुणो यावको यवौदनम् पुलकोर्धसिद्धास्तण्डुलाः पिष्टं च गोधूमादितण्डुलचूर्णं सिद्धम्। द्विगुणमेव कोद्रवाद्यन्नम्। त्रिगुणमिति, सुबोधमिति। तिमितमार्द्रीकृतम्। अपरान्नं फलाढकी, चणकादि गुणं भवति। तेषामेव विरूढानाम् अङ्कुरितानामर्धम् अधिकमार्द्रीकृतात् भवति। पञ्चभागवृद्धिस्तेषामेव अपरान्नानां भृष्टानां पञ्चभागो वर्धते।

कलायस्तु भृष्टो द्विगुणो भवति। लाजा व्रीह्यादयो, भरुजा यवाश्च भृष्टा द्विगुणा एव भवन्ति।

तैलमाह-षट्कं तैलमतसीनामिति, षट्स्वतसीकुटुम्बेष्वेकस्तैलकुटुम्ब इति; शेषं सुबोधम्। निम्बकुशाम्रकपित्थादयः पञ्चभागिका एव, आदिग्रहणात् एरण्डहितकादयः पाहगृह्यन्ते। सर्षपाणां प्राधान्यात् पृथक् पाठः।

सूत्रमाह-कार्पासक्षौमाणामिति, क्षौमः वल्कविशेषः, पञ्चपले सूत्रपलं भवति, सूत्रप्रमाणं प्रत्यक्षतोऽवगन्तव्यमिति।

श्रीमूला

अथ भक्तोपयोगाय तण्डुलादीनां व्यवस्थाविशेषानाह—पञ्चद्रोण इत्यादि। शालीनां विंशत्याढकात्मके पञ्चद्रोणे तण्डुलानां द्वादशाढकं यथा निष्पद्येत, तथावहन-

## श्रीमूला

ननिष्पादितास्तत्तण्डुलाः, कलभभोजनं कलभानां बालगजानां भोजनार्थे विनियोज्याः। व्यालानाम् दुष्टगजानाम्, एकादशकं शाल्याढकविंशतावेकादशाढकक्रमेण निष्पन्नास्तण्डुलाः, भोजनार्थे विनियोज्या इत्यार्थम्। एवमुत्तरेष्वपि। औपवाह्यानां राजवाह्यानाम्, दशकं दशाढकं विंशतैर्दशाढकक्रमेण साधितास्तण्डुलाः, विनियोज्याः। सान्नाह्यानां समरोचितानाम्, नवकं नवाढकं विंशतौ नवाढकक्रमनिष्पन्नास्तण्डुलाः। पत्तीनां पदातीनाम्, अष्टकम् अष्टाढकम् अष्टाढकक्रमनिष्पन्नास्तण्डुलाः। मुख्यानां भटप्रधानानाम्, सप्तकं सप्ताढकं सप्ताढकक्रमनिष्पन्नास्तण्डुलाः। देवीकुमाराणां राजपत्नीनां राजपुत्राणां च, षट्कं षडाढकं षडाढकक्रमनिष्पन्नास्तण्डुलाः। सेयं पूर्वाभ्यः प्रतिपत्तिभ्य उत्तमा प्रतिपत्तिः। राज्ञां पुनरितोऽप्युत्तमामाह—राज्ञामिति। राज्ञाम्, पञ्चकं पञ्चाढकं शालिविंशत्याढके पञ्चाढकक्रमनिष्पन्नास्तण्डुलाः भोजनार्थे विनियोज्याः। तदेवमष्टौ वर्णिकास्तण्डुलानां भक्तोपयोगिन्य उक्ताः। राजभोजने पक्षान्तरमाह—अखण्डेत्यादि। वाशब्दः पक्षान्तरे। अखण्डपरिशुद्धानाम् अक्षतावयवानां फलीकरणविवेचनसंशोधितानां च, तण्डुलानाम्, प्रस्थः आढकचतुर्भागः शाल्यशीतिप्रस्थादवहननादिसंस्कृताद् यथोक्तगुणैकतण्डुलप्रस्थग्रहणक्रमेण सम्पन्नस्तण्डुल इत्यर्थः।

चतुर्भाग इति। सूपः चतुर्भागः प्रस्थस्य प्रकृतत्वात् तच्चतुर्थांशः। सूपषोडशः सूपस्य षोडशांशप्रमाणः, लवणस्यांशः। सर्पिषःस्तैलस्य वा, चतुर्भागः सूपचतुर्थभागः। एकमार्यभक्तमिति। तदिदमेकं मध्यमप्रतिपत्तिकस्य पुरुषस्य भोजनं भवति। अवरभोजनमाह—प्रस्थेत्यादि। अवराणां निकृष्टानाम्, प्रस्थषड्भागः सूपः। अर्धस्नेहं अर्धं सूपार्धभागः स्नेहस्तैलादिः यस्य तत्। लवणं तु समानमेव। भोजनस्यान्यपदार्थतामभिप्रेत्य नपुंसकनिर्देशः। पादोनं स्त्रीणामिति। पादन्यूनमार्यपुरुषभक्तमार्यस्त्रीणाम्, अवरपुरुषभक्तमवरस्त्रीणां च यथायथं बोध्यम्। अर्धं बालानामिति। पूर्ववद् यथायथमार्यबालानामवरबालानां च।

## चाणक्यटीका

पञ्चद्रोण इत्यादिना भक्तमाह—पञ्चद्रोणे ( राशी ? शाली ) नां क्षुण्णे यद् द्वादशा ( नां षण्णां ? ढकं ) तण्डुलानां ( सार्धकृपाणा ? ) त्रिद्रोणमित्यर्थः। तद् द्वितीयदशास्थानम्। कलभो दशवर्षादारभ्य आविंशतिवर्षादिति। एकादशमिति। एकादशं पूर्वस्मात् किञ्चिच्छुद्रम्। व्याला दुष्टाः। औपवाह्याः सान्नाह्याश्च हस्त्यध्यक्षे वक्ष्यमाणाः॥

पत्तयः पदातयः मुख्याः पत्तिमुख्याः। ( कार्वातिकादयः ? ) राज्ञामिति बहुवचनाद् राजसदृशानां युवराजदण्डोपनतादीनां ग्रहणम्। पञ्चद्रोण इति सर्वत्र वर्तते। अथवा अयं स्वामिनो विशेषः॥

खण्डपरिशुद्धानामिति। एकावचितानां प्रस्थ इत्यर्थः। चतुष्कर्षः पलम्, चतुष्पलं

[ मांससंस्कारे संयोजनीयस्नेहादिव्यवस्थाः ]

**मांसपलविंशत्या स्नेहार्धकुडुबः, पलिको लवणस्यांशः, क्षारपलयोगः, द्विधरणिकः कटुकयोगः, दध्नश्चार्धप्रस्थः । तेनोत्तरं व्याख्यातम् । शाकानामध्यर्धगुणः, शुष्काणां द्विगुणः स चैव योगः ॥**

---

चाणक्यटीका

कुडुब इति चतुर्भागः । सर्पिषः ( स्तुवरा ? सूपा ) पेक्षयैव ज्ञेयम् । एकम् आर्यस्य पुंसो भक्तम् । द्वितयमनया दिशा कल्प्यम् । अवराणामिति । दासकर्मकराणां कुडुबास्तावन्त एव सूपस्नेहयोस्त्वपकर्षः । पादोनं स्त्रीणाम् आर्याणाम् अनार्याणां च सूपस्नेहम् । एवम् आर्याणाम् आर्यसूपस्नेहपादोनमित्यर्थः । अर्धं बालानां भक्तम् । सूपस्नेहं वराणामवराणां च पूर्ववत् ॥

प्रतिपदपञ्चिका

साम्प्रतं यथार्हभक्तोपयोगाय चतस्रो हस्तिनां चतस्रो मनुष्याणामेवमष्टौ भागा यदा क्षीयन्ते द्वादश विशिष्यन्ते तादृशास्तण्डुलाः, कलभानां बालहस्तिनां भोजनार्थाः । एवं सप्तानां व्याला(णा)दीनाम् एकैकावधट्टनक्रमेण एकादशकादीनि वर्णिकान्तराणि भवन्ति । व्यालः आरोहघातकः । औपवाह्यःयानकोपयोगिनाम् सान्नाह्यः युद्धयोग्यः ।

अष्टकं पत्तीनामिति । पत्तयः पदातयो हि न हिप्रतिपत्तकाः देवाकुमारा राजपत्न्यः राजपुत्राश्च उत्तमप्रतिपत्तिकाः । राज्ञस्तु स्वयमुत्तमोत्तमप्रतिपत्तिकस्य पञ्चसु द्रोणेषु पञ्चाढकनिष्पत्तेश्चतुर्भागग्रहणम् । कुण्डपरिशुद्धानां वेति । पक्षान्तरमवघातपरावफलीकरणविवेचनपरिशुद्धानां तण्डुलानां वा प्रस्थः । चतुः प्रसृतिर्मगधप्रसिद्धः । तच्चतुर्भागः सूपः प्रसृतिप्रमाणः, सूपस्य षोडशभागिकं लवणम्, चतुर्भागः सर्पिषस्तैलस्य वा सूपस्यैव । एवमेतदेकमार्यभक्तं मध्यमप्रतिपत्तिकसाधुपुरुषभोजनम् । अवराणां निकृष्टानां तु प्रस्थः षड्भागः सूपः सूपार्धभागः स्नेहः तैलादिलवणं तुल्यम् ।

पादोनं स्त्रीणामिति । सूर्य(पादोन)भक्तमार्यस्त्रीणांमपरभक्तमपरस्त्रीणां च यथास्वं पादोनम् अर्धं बालानामिति । आर्यबालानामपरबालानां च स्वमर्धं द्रष्टव्यम् ।

श्रीमूला

मांससंस्कारे योजनीयानां स्नेहादीनां परिमाणव्यवस्थामाह—मांसपलेत्यादि । मांसपलविंशत्या सह, स्नेहार्धकुडुबः स्नेहस्य अर्धकुडुबः प्रस्थाष्टभागः, योज्यः । लवणस्यांश, पलिकः पलमितः ! क्षारपलयोगः क्षारस्य सुवर्चिकायवक्षारादेः पलयोगः लवणाभावे । कटुकयोगः कटुकानां पिप्पलीमरिचशृङ्गबेराणां योगः, द्विधरणिकः धरणद्वयमानः । धरणप्रमाणं तु 'अष्टाशीतिगौरसर्षपा रूप्यमाषकः, ते षोडश धरणमि'ति पौतवाध्यक्षे वक्ष्यते । दध्नश्च, अर्धप्रस्थः प्रस्थस्यार्धं कुडुबद्वयं भवति ।

[ हस्त्याद्याहारपरिमाणव्यवस्था: ]

**हस्त्यश्वयोस्तदध्यक्षे विधाप्रमाणं वक्ष्यामः। बलीवर्दानां माषद्रोणं यवानां वा पुलाकः, शेषमश्वविधानम् । विशेषो घाणपिण्याकतुला**

श्रीमूला

तेनेति। तेन उक्तयोगमानेन, उत्तरम् अधिकम् मांसपलत्रिंशच्चत्वारिंशदादीनां स्नेहादियोगमानमर्धगुणद्वैगुण्यादिरूपम्, व्याख्यातं विवृतप्रायम् उन्नेतुं शक्यमित्यर्थः। शाकानां वास्तुकादीनां, स चैव मांसोक्त एव, अध्यर्धगुणः सार्धगुणो, योगः। यथा—शाकपलविंशत्या पादानकुडुबः स्नेहः अध्यर्धपलिकं लवणम् अध्यर्धपलिकं क्षार-मित्यादि। शुष्काणां मांसानां शाकानां च, द्विगुणः स्नेहः मांसविषये कुडुबपरिमाणः शाकविषयेऽध्यर्धकुडुबपरिमाण इत्यादिः।

चाणक्यटीका

मांसपलविंशत्या इति। पले मांसे स्नेहस्य अर्धकुडुबः पाकार्थः। पलिकमिति। पलं परिमाणं यस्य लवणस्य। क्षारपलयोगः क्षारस्य गुडादेः पलिको योगः, यदा गान्धिकः क्रियते। द्विधरणिक इति द्विधरणात् कटुयोगः पिप्पल्यादिभिः। दध्नश्चार्ध (प्र) स्थः ओदनादर्धम्॥

तेनोत्तरमिति तेनोक्तेन मांसवृद्ध्यनुरूपा स्नेहादिवृद्धिर्व्याख्याता। तद्यथा—मांसचत्वारिंशत्पले द्विगुणः स्नेहादियोगः। त्रिगुणे त्रिगुणो (ह्रासे) ह्रास इति। शाकानामध्यर्धगुण इति। शाकपलविंशत्या स्नेहपलम्। शुष्काणां तु स्नेहकुडुब इत्यादि। ( संयोगकल्के ? स चैव योगः उक्ते ) नोत्तरं व्याख्यातमिति॥

प्रतिपदपञ्चिका

सम्प्रति मांससंस्कारस्नेहादीनां मात्रानियममाह-मांसपलविंशत्या स्नेहार्धकुटु-म्बश्चत्वारि पलानि, लवणस्य पलम्। लवण(ा)भावे सुवर्चिका यवक्षारादेः पलमेव द्विधरणिक इति। धरणद्वयं कन्दूनां पिप्पलीमरीचशृङ्गिवेराणां। धरणप्रमाणं वक्ष्यति, "अष्टाशीतिसर्षपः रूप्यमाषकस्ते षोडश धरण"मिति। दध्नश्चात्रार्धप्रस्थः षोडश पलानीत्येयं विंशतिर्मांसपलानामयं योगः। तेनेति, यथोक्तयोगेन उत्तर त्रिंशच्चत्वा-रिंशदादिनामर्धगुणद्वैगुण्यादिना व्याख्यातम्। उत्तरग्रहणं भिन्नस्याप्युपलक्षणार्थम्। शाकानां वास्तुकप्रभृतीनामयमेव अध्यर्धगुणयोगः। तद् यथा—शाकपलविंशत्या स्नेहः, पादोनकुडुम्बोऽध्यर्धपलिकं लवणमित्यादि। शुष्काणां द्विगुणमुभयेषां मांसानां शाकानां च यथास्वमेकत्र स्नेहस्य कुटुम्बोऽन्यत्र अध्यर्धकुटुम्बोऽन्य(ा)

श्रीमूला

हस्त्यश्वयोरिति। हस्त्यश्वयोः, विधाप्रमाणं तण्डुलादिमानम्, तदध्यक्षे तयोरध्यक्षे हस्त्यध्यक्षे अश्वाध्यक्षे च, वक्ष्यामः। इतीयमनागतावेक्षणरूपा तन्त्रयुक्तिः।

**कणकुण्डकं दशाढकं वा । द्विगुणं महिषोष्ट्राणाम् । अर्धद्रोणं खरपृषतरोहितानाम् । आढकमेणकुरङ्गाणाम् । अर्धाढकमजैलकवराहाणां द्विगुणं वा कणकुण्डकम् । प्रस्थौदनश्शुनाम् । हंसक्रौञ्चमयूराणामर्धप्रस्थः । शेषाणामतो मृगपशुपक्षिव्यालानाम् एकभक्तादनुमानं ग्राहयेत् ॥**

———

श्रीमूला

बलीवर्दानाम् उक्षणाम्, माषद्रोणम् यवानां वा पुलाकः अर्धसिद्धस्तण्डुलः, अर्थाद् द्रोणपरिमाणिः । शेषम्, अश्वविधानम् अश्वस्योक्तं विधानं ग्राह्यम् । विशेष इति । विशेषः अश्वापेक्षया विशेष एषामुच्यत इत्यर्थः । घाणपिण्याकतुला—

चाणक्यटीका

हस्त्यश्वयोर्विधाभेदं तदध्यक्षे वक्ष्यामः । कर्मकरबलीवर्दानामिति । वृषस्कन्धकर्मकारिणामित्यर्थः । यवानां वा ( पुलाकः ) द्रोण इत्येव । शेषविधानं तैलादि अश्वविधा ( न ? ) सदृशमेव द्रष्टव्यम् । विशेषस्तु तेषां (या) घाणजपिण्या(ण्डा)कतुला

प्रतिपदपञ्चिका

हस्त्यश्वयोस्तयोरध्यक्ष इति । यथास्वं हस्त्यध्यक्षेऽश्वाध्यक्षे च विधाप्रमाणं स्नेहतण्डुलादि प्रमाणं वक्ष्याम इत्यानागतावेक्षणम् तन्त्रयुक्तिः । बलीवर्दानां वाह्यानां अपुङ्गवानां माषद्रोणमाढकचतुष्टयं यवानां च पुलाकः अर्धसिद्धास्तण्डुलास्तावानेव शेषमश्वविधानमिहाऽनुक्तम् यवसाद्यश्वविधानं तदुक्तं ग्राह्यम् । तत्र विकल्पः घाणपिण्याक-

श्रीमूला

शुष्कस्य तिलकल्कस्य पलशतम्, दशाढकम्, कणकुण्डकं वा तण्डुलानां सूक्ष्मांशमिश्रमलं वा ।

द्विगुणमित्यादि । उक्तं वलीवर्दविधानं द्विगुणं माषद्विद्रोणं यवपुलाकद्विद्रोणं वा महिषाणामुष्ट्राणां च भवति । अर्धद्रोणं माषाणां यवपुलाकानां वा आढकद्वयं खरपृषतरोहितानां गर्दभानां बिन्दुचित्रमृगाणां रोहितमृगाणां च । आढकं प्रस्थचतुष्टयम्, एणकुरङ्गाणाम् एणानां कुरङ्गाणां च मृगभेदानाम् । अर्धाढकं प्रस्थद्वयम्, अजैलकवराहाणाम् । अत्र पक्षान्तरमाह—द्विगुणम् उक्तार्धाढकाद् द्विगुणमेकाढकम्, कणकुण्डकं वा । प्रस्थौदनः प्रस्थपरिमितमन्नं शुनाम् । हंसक्रौञ्चमयूराणाम्, अर्धप्रस्थः द्विकुडुबमन्नम् । शेषाणामिति । अतः उक्तेभ्यः, शेषाणां मृगपशुपक्षिव्यालानाम्, एकभक्ताद् एकदिवसभुक्तपरीक्षणाद् अनुमानं शेषदिवसभक्तेयत्तानिश्चयम्, ग्राहयेत् कारयेत् ।

चाणक्यटीका

निष्पीडितपिण्याककुल्माषयवयोरभावे घानपिण्याकाभावे च षोडशकं कणकु ( ण्ड ? ट्ट ) कस्य दशाढकं वा कणाः क्षुद्रतण्डुलाः कु ( ण्डकुद्दू ? ट्टकोद्धू ) लिताः तदुभयं मिश्रीकृत्य देयम् ।

[ अङ्गारतुषकणानां विनियोगः ]

**अङ्गारांस्तुषान् लोहकर्मान्तभित्तिलेप्यानां हारयेत् ।**

**कणिकाः दासकर्मकरसूपकाराणाम्, अतोऽन्यदौदनिकापूपिकेभ्यः प्रयच्छेत् ।**

---

चाणक्यटीका

द्विगुणं महिषोष्ट्राणां माषद्रोणं यवद्रोणं वा द्विगुणभोजनम् । पृषतश्चित्रमृगः । रोहितो वातहरिणः । अश्वमृग[1] इत्यन्ये । एणः स्वल्पमृगः[2] । कुरङ्गो मृग एव । तस्मात् किञ्चिदधिकः । एते यज्ञार्थं क्रोडार्थं सर्पादिरक्षार्थं च सङ्ग्राह्याः । द्विगुणं वा कणकुण्डकं सर्वत्रैतद् योज्यम् । शेषाणामत इति । अतोऽभिहितेभ्यः शेषाणां मृगादीनामिति । व्यालाः सिंहव्याघ्रादयः । एकभक्तादनुमानं ग्राहयेदिति । आतृप्तेरेकं भक्तं दत्त्वा तदनुमानं प्रतिदिवसं भक्तस्येति ।

प्रतिपदपञ्चिका

तुलाचक्र· · ·डितं शम्वलपलशतं दशाढकं कणकुट्टनकानां । द्विगुणमिदं बलीबर्दविधानं महिषाणामुष्ट्राणं च अर्धद्रोणमाढकद्वयद्वयंमाषयवानाम् एकैकद्वयस्य खराणां गर्दभानां पृषतानां बिन्दुचित्रमृगाणां रोहितानां वाह्यमृगाणामाढकं प्रस्थचतुष्टयम् । एणानां कुरङ्गाणां च प्रतीतानामर्धढकमजानां व्याघ्रसिंहादीनां एकभक्तादेकदिवसभक्त परीक्षणाच्छेषानुमानं मात्रादि नियमानुमानं कारयेत् ।

श्रीमूला

पाककर्मणि निष्पन्नानामङ्गाराणाम् अवघातनिष्पतितानां तुषाणां च विनियोगमाह—अङ्गारानित्यादि । अङ्गारान् तुषांश्च, लोहकर्मान्तभित्तिलेप्यानां हारयेत् लोहकर्मान्तार्थे भित्तिलेप्यकर्मार्थे च सञ्चिनुयात् । भस्मादिसङ्ग्रहस्याप्येतदुपलक्षणम् । भस्माद्यपि हि केदारादौ दोहदाद्यर्थे विनियुज्यते । कणिकाः तण्डुलकणान्, दासकर्मकरसूपकाराणाम्, प्रयच्छेद् भक्तार्थे । अतोऽन्यद् दासदिदत्तशेषम्, औदनिकापूपिकेभ्यः सामान्यान्नपाचकेभ्यः अपूपकर्मकरेभ्यश्च, प्रयच्छेत् तत्कर्मविनियोगार्थे ।

चाणक्यटीका

शेषोपयोगमाह—अङ्गारतुषान् लोहकर्मान्तस्य भित्तिलेप्यस्य च कृते यथासङ्ख्येन रन्धनकुट्टनाभ्यां सङ्ग्राहयेत् । तथा कणिकादीनां यथोपभोगशेषं दद्यात् । अतोऽन्यद् अल्पमवशिष्टम् ओदनापूपविक्रेतृभ्यः प्रयच्छेत् ॥

---

१. रोहितोऽश्वमृग इति कोषाध्यक्षप्र ( धान ? चार ) टीका'' इति अमरव्याख्याने ( २.५.१० ) सर्वानन्दः ।

२. ''एणः सुनयनः स्वल्पमृगः'' ।

[ पाकशालोपयोगीन्युपकरणानि ]

**तुलामानभाण्डं रोचनीदृषन्मुसलोलूखलकुट्टकरोचकयन्त्रपत्रकशूर्प-चालनिकाकण्डोलीपिटकसंमार्जन्यश्चोपकरणानि ।**

[ विष्टिसंज्ञकाः केचन कर्मकराः ]

**मार्जकारक्षकधारकमायकमापकदायकदापकशलाकाप्रतिग्राहकदासकर्म-करवर्गश्च विष्टिः ॥**

---

प्रतिपदपञ्चिका

अ(नु)निष्पतितानां अङ्गारादीनां फलवत्वापादनेन प्रतिपत्तिमाह—अङ्गारान् तुषानित्यादि, पाककर्मणि समुत्पन्नानङ्गारान् लोहकर्मान्तनिमित्तम् । तुषांश्च कुट्टनोत्पन्नानां भित्तिलेप्यानां हारयेत् । तत्कर्मनिमित्तं सङ्गृह्णीयात् । अनेन चैतत्स्थाप्यते । यच्च किञ्चिद्भूस्मावस्करादिकमपि तत्र तत्र फलवत्तामापादयेत् । अल्पमपि प्रयोजनमनुपेक्षणीयमिति । कणिका श्लक्ष्णतण्डुलानां कणं । दासानां कर्म-कराणां च भक्तनिमित्तं प्रयच्छेत् । अतोऽन्यं दासादिदत्तकणिकाशेषमौदनिकेभ्यो लौकिकोनपाचकेभ्यः आपपिकेभ्यः तत्कर्मकरेभ्यः प्रयच्छेत् ।

श्रीमूला

उपकरणान्याह—तुलेत्यादि । तुलामानभाण्डं तुलाभाण्डं मानभाण्डं च पौतवाध्यक्षे वक्ष्यमाणं, रोचन्यादिद्वादशकं च उपकरणानि । तत्र रोचनी दलनयन्त्रम्, दृषत् पेषणी, मुसलोलूखले प्रतीते, कुट्टकरोचकयन्त्रे कुट्टकयन्त्रम्, रोचकयन्त्रं च आद्यमुष्ट्रग्रीवाकारं तण्डुलादिकुट्टनसाधनम्, द्वितीयं तु पेषणयन्त्रम्, 'तच्च त्रिविधं मनुष्यप्रावर्तितं बलीवर्दप्रावर्तितं सलिलप्रावर्तितं चेति' इति भट्टस्वामी । पत्रकं दारुमयं आवपनभेदः शूर्पं प्रस्फोटनम् चालनिका तितउः, कण्डोली वंशदलादिनिर्मितं भाण्डम्, पिटकः पेटारिको, संमार्जनी शोधनी ।

कर्मकरानाह—मार्जकेत्यादि । मार्जकः भूमिसंस्कारकः, आरक्षकः कोष्ठा-गाररक्षी, धारकस्तुलोन्माता, मायको धान्यमाता मापकस्तदधिष्ठाता, दायको दाता, दापकस्तदधिष्ठाता, शलाकाप्रतिग्राहको भारयष्ट्यादिप्रतिग्राही, दासः क्रीतः, कर्मकर-स्तादात्विकभृतिभुक्, वर्गं उक्तजातीयगण आहितकादिः, विष्टिरिति त एते मार्जकादयो विष्टिसंज्ञिताः ।

चाणक्यटीका

उपकरणान्याह—तुलेति । रोचनी दृषत् । पेषणी शिला । ( पेषणपूतश्वः ? ) कुट्टकयन्त्रं पादक्रमणीयमुष्ट्रग्रीवाकारकम् । रोचकयन्त्रं हस्तभ्रमणीयम् । पात्रकं[1]

---

१. 'पात्रकस्तु कृशे त्रि स्यात् कर्परे तु पुमानयम्' इति केशवस्वामी, ( प ? पा ) त्रकं चाङ्गेरिका' इति भट्टस्वामी ।

[ धान्याद्यानुगुण्येन तत्तन्निवेशस्थाननिर्देशः ]

**उच्चैर्धान्यस्य निक्षेपः, मूताः क्षारस्य संहताः ।**
**मृत्काष्ठकोष्ठाः स्नेहस्य, पृथिवी लवणस्य च ।।८९।।**

[ इत्यध्यक्षप्रचारे कोष्ठागाराध्यक्षः पञ्चदशोऽध्यायः
आदितषट्त्रिंशः ]

---

### चाणक्यटीका

**काष्ठविदलादिपात्रम् ।** चालनी परिपवनम् । कण्डोली स्वल्पा, **पिटको** महानिति विशेषः । शेषशब्दाद् अन्यदप्येवं जातीयक ( जात्यङ्कुरादि ? ) उपकरणमूह्यम् ।।

मार्जको भूमिमार्जकः । आरक्षकः स्थानपालः । धरकः तोलयिता । मायकादयः स्वयं ज्ञेयाः प्रतीतार्थाः । शलाकाप्रतिग्राहकः कालयिता । दासकर्मकरवर्गश्चान्यो विष्टिरुच्यते ।।

### प्रतिपदपञ्चिका

उपकरणान्याह—तुलामानभाण्डमिति, तुलाभाण्डं मानभाण्डं च वक्ष्यमाणं, रोचनं दलनयन्त्रं, दृषत्पेषणिमुसलोलूखलैः कुट्टकरोचकयन्त्राणि यन्त्रशब्दः प्रत्येकं, कुट्टकयन्त्रं उष्ट्रग्रीवाकारं प्रतीतढङ्काराख्यम् रोचकयन्त्रं पेषणयन्त्रं च तच्च त्रिविधम् मनुष्यप्रावर्तितं बलीबर्दप्रावर्तितं सलिलप्रावर्तितं चेति । पत्रकं [1]चङ्गोरिका **शूर्पम्**, चालनिका कण्डोली ग्रीवडोरिका मृद्भाण्डविशेष इत्यपरे । पिटकं प्रतीतं । सम्मार्जनी बहुकारिका चशब्दादन्यान्यपि यथोपयोगं कर्तव्यानीति वाक्यशेषः ।

एवमुपकरणान्यभिधाय कर्मकरानह—मार्जक इत्यादि, मार्जको भूमिसंस्कारकः आ(रक्षको)रक्षकः रक्षिताःधारकस्तोलको, मायको धान्यमानकृत् । मापकस्तदधिष्ठाता, दायको दाता, दापकस्तदधिष्ठाता, शलाकाप्रतिग्राहकः दासकर्मकरवृत्तौ वर्गग्रहणमाहितकादिग्रहणार्थम् । विष्टिरिति मार्जनादिकर्मकृतां संज्ञा ।

### श्रीमूला

अध्यायान्ते श्लोकमाह—उच्चैरित्यादि । धान्यस्य, उच्चैरुपरि, **निक्षेपः** भूमिस्पर्शो यथा न भवेत् तथा निक्षेपस्थानम् । क्षारस्य गुडफाणितादेः, **संहताः** सान्द्रघटिताः, मूताः तृणादिबन्धाः, निक्षेपः गोपनस्थानम् । स्नेहस्य घृततैलादेः. मृत्काष्ठकोष्ठाः मृत्कोष्ठाः कुम्भादयः काष्ठकोष्ठाः दारुकोष्ठाश्च मधूच्छिष्टजतुरसाद्यनुलिप्ताः, निक्षेपः लवणस्य, पृथिवी भूमिः पार्थिवो घटादिर्वा, निक्षेपः । **चकाराद्**

---

१. 'शूर्यं जालानिवालनि कण्डोग्रीवं' इति पाठोऽशुद्धः प्रतिभाति ।

श्रीमूला

अनुक्रमन्यदपि निक्षेपस्थानमुक्तानाम्, अनुक्तानां शाकशुक्तादीनां निवेशस्थानं च यथार्हं कार्यमिति सूचयति ।

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे पञ्चदशोऽध्यायः । कोष्ठागाराध्यक्षः । आदितः षट्त्रिंशः ।

चाणक्यटीका

मूषिकादिषु प्रतीकारार्थमाह—उच्चैर्धान्यस्यावस्थानम् । मूताः क्षारस्येति । उदकाहरणत्वात् कटुकभाण्डादीनामपि । संहता सुदृढाः । मृन्मयाः काष्ठमया वा जतुमधूच्छिष्टाभ्यामासारिताः कोष्ठका भाण्डानि स्नेहस्य । पृथिवी लवणस्य । तस्यां शैलत्वान्नक्षीयत इति ॥

॥ इति कोष्ठागाराध्यक्षः पञ्चदशं प्रकरणम् ॥

॥ पञ्चदशश्चाध्यायः ॥

प्रतिपदपञ्चिका

सङ्गोपायनविधिं श्लोकेनाह—उच्चैरित्यादि । उच्चैः उपरिधान्यस्य व्रीह्यादेः । कटकबन्धादौ भूमिमस्पृशतो निक्षेपस्थानं, क्षारस्य गुडममत्स्मण्डिकादेः मूता मूतकाः ते संहताः घटना स्नेहस्य सर्पिरादेः मृत्काष्ठाःकुम्भ्यादयः । काष्ठकोष्ठाः सारदारु-फलकमयास्थितकथकसम्जरसकादिनापिहितानुपलेपनः पृथिवी भूमिः । लवणस्य सैन्धवादेः निक्षेपः, चकारादन्येषां च शाकशुक्ताम्लदिवर्गाणां तत्तदाधानयोग्यानि निक्षेपस्थानानि कर्तव्यानीति ।

इति भट्टस्वामिनः प्रतिपदचञ्चिकायाम्, अध्यक्षप्रचारिके द्वितीयेऽधिकरणे पञ्चदशोऽध्यायः परिसमाप्तः । कोष्ठागाराध्यक्षः आदितः षट्त्रिंशोऽध्यायः ।

# चतुस्त्रिंशं प्रकरणम्

## षोडशोऽध्यायः ।

## पण्याध्यक्षः ।

[ विक्रेयद्रव्यवैलक्षण्यतदुपयोगकालयोरवश्यज्ञेयता ]

**पण्याध्यक्षः स्थलजलजानां नानाविधानां पण्यानां स्थलपथवारिपथोपयातानां सारफल्ग्वर्घान्तरं प्रियाप्रियतां च विद्यात्, तथा विक्षेपसंक्षेपक्रयविक्रयप्रयोगकालान् ।**

---

### श्रीमूला

पण्याध्यक्ष इति सूत्रम् । पण्यं विक्रेयं राजद्रव्यं तस्य विक्रये क्रये च नियुक्तः पण्याध्यक्ष इति सूत्रार्थः । सन्निधातृनिचयकर्माभिहितम् । निचितस्य राजपण्यस्य क्रयविक्रयव्यवहार इदानीमुच्यत इति सम्बन्धः । अथवा 'सन्निधाता कोशगृहं पण्यगृहं कोष्ठागारमि' त्यादिना पण्यगृहकरणमुक्तम् । तदध्यक्षस्तदध्यक्षव्यापारो वा नोक्तः । स इहोच्यत इति सम्बन्धः । ननु च पण्याध्यक्षकर्म नाम वाणिज्यम् । तच्चा कृषिपाशुपाल्यसहपाठात् सीताध्यक्षगोध्यक्षाभ्यामनन्तरं वक्तुमुचितम् । सत्यम् । किन्तु तस्येह कोष्ठागाराध्यक्षानन्तर्येण वचनं कोष्ठागाराध्यक्षस्यापि स्वव्यापाराः क्रयिमपरिवर्तकप्रामित्यकादयः पण्याध्यक्षापेक्षयानुष्ठेया इति ज्ञापनार्थम् ।

पण्याध्यक्ष इति । पण्याध्यक्षः, स्थलजलजानां स्थलजानां कुङ्कुमादीनां जलजानां मुक्ताप्रवालादीनां च, नानाविधानां पृथग् बहुप्रकाराणाम्, स्थलपथवारिपथोपयातानाम्, पण्यानां सारफल्ग्वर्घान्तरं सारस्य बहुमूल्यस्य फल्गुनोऽल्पमूल्यस्य च अर्घान्तरं मूल्यतारतम्यम्, प्रियाप्रियतां च प्रियतां शीघ्रविक्रयताम् अप्रियतां मन्दविक्रयतां च, विद्यात् । तथा, विक्षेपादिप्रयोगकालान् विक्षेपः सङ्क्षिप्तद्रव्यविस्तारः संङ्क्षेपः विक्षिप्तद्रव्यसङ्क्षेपः क्रयः पण्यसङ्ग्रहः विक्रयः संगृहीतपण्यव्ययः इत्येतेषां प्रयोगकालान् अनुष्ठानानुष्ठान् कालान्, विद्यादिति सम्बध्यते ।

### चाणक्यटीका

पूर्ववदेव सन्निधातुः कोशगृहकोष्ठागारविषयव्यापारानन्तर्येण पण्यगृहविषयो व्यापारो वाच्य इति पण्याध्यक्षप्रकरणमुच्यते पण्याध्यक्ष इति । पणितव्येष्वधिकृतः सन्निधातृ ( कृताधिकारः ) । स्थलजलजानां चन्दनोशीरादिनानाविधानां कोशप्रवेश्यानाम् अन्येषां वा रत्नसारफल्गुकुप्यादीनां पण्यानाम् । स्थलपथवारिपथोपया-

[ विक्रेयद्रव्यमूल्यविक्रयस्थानलाभादिव्यवस्थाः ]

**यच्च पण्यं प्रचुरं स्यात्तदेकीकृत्यार्घमारोपयेत् । प्राप्तेऽर्घे वाऽर्घान्तरं कारयेत् । स्वभूमिजानां राजपण्यानामेकमुखं व्यवहारं स्थापयेत्,**

---

चाणक्यटीका

तानामिति आगमप्रदर्शनम् । सारफल्ग्वर्घान्तरमिति । सारफल्गुशब्दौ महाल्पवाचकौ, इदं महार्घमिदमल्पमूल्यमिति । प्रियाप्रियतामिति महार्घमल्पार्घं वा अस्मिन् देशे प्रियम् इदमप्रियमिति । तथा इदमल्पविषयविक्रयम्, इदं महाविषयविक्रयम्, इदं विक्षिप्तम्, इदम् अनेकमुखीकृतम्, इदमत्र क्रेतव्यम्, इदं विक्रेतव्यम् इति, इदमत्र विध्यादिप्रयोगे[1] वर्षेण वर्तत इति विद्यात् ॥

प्रतिपदपञ्चिका

पण्याध्यक्ष इति सूत्रम् ।

पण्यं पणनीयं विक्रेयं राजद्रव्यम् । तस्य विक्रयादौ नियुक्तः पण्याध्यक्ष इति सूत्रार्थः । सम्बन्धस्तु कोशप्रकृतिः प्रक्रान्ता, सन्निधातृनिचयकर्मादिभिः कोष्ठागाराध्यक्षान्तैरनेकशोऽभिहिता । अधुना राजद्रव्यस्यपण्यस्य क्रयविक्रयदिना वार्तानुष्ठानेनाऽभिधीयत इति । यद् वा सन्निधाता कोशग्रहणादीनि कारयेदित्यत्र पण्यग्रहणमुक्तम् । तदध्यक्षस्तद्व्यापारो वा नोक्तः, सोऽभिधीयत इति । एवमपि कृषिपाशुपाल्ये वणिज्या च प्राप्तेति सहपठितायाः सीतागोऽध्यक्षाभ्यां सहानन्तर्येण पाठे प्राप्ते कोष्ठागाराध्यक्षानन्तरं पाठः कोष्ठागाराध्यक्षव्यापाराणां क्रयिमपरिवर्तकादीनां पण्याध्यक्षापेक्षया तस्यापि तत्र कर्तृत्वज्ञापनार्थम् तदाह—पण्याध्यक्ष इति । स्थलजानां कुङ्कुमचन्दनादीनां, जलजानां मुक्ताप्रवालशङ्खादीनां च नानाविधानामुभयेषामपि अनेकप्रकाराणां स्थलपथेन वारिपथेन च उपयातानाम् आगतानां सारस्यमाह—मा(महाम्) ल्यस्य फल्गुनोऽल्पमूल्यस्य अर्घान्तरम् अर्घविशेषम्, प्रियाप्रियतां च शीघ्रमन्दविक्रयतां वा विद्यात् । तथा सङ्क्षेपादिप्रयोग-कालांश्च । सङ्क्षेपो विक्षि(प्ता)प्यार्थसंहारः, विक्षेपः संक्षिप्तद्रव्यविस्तारः, क्रयः पण्यसङ्ग्रहः विक्रयः सङ्गृहीतदानम्, योगकालाननुष्ठानकालं विद्यादिति वर्तते ।

श्रीमूला

यच्चेति । यत् पण्यं कुङ्कुमादि, प्रचुरं प्राज्यं, स्यात्, तद् एकीकृत्य तत् सर्वमेकत्रगतं कृत्वा, अर्घम्, आरोपयेत् आरूढमधिकं स्थापयेत् । प्राप्तेऽर्घे वा न्यायलभ्येऽर्घेऽधिगते वा सति, अर्घान्तरम् अर्घभेदमारोपिताल्लघुं, कारयेत् । स्वभूमीत्यादि । स्वभूमिजानां स्वविषयोद्भवानां, राजपण्यानाम्, एकमुखम् एकस्थानम्, व्यवहारं विक्रयं, स्थापयेद्, राजा ।

---

१. कृष्यादिप्रयोगे वर्षेण वर्धते इति पाठो भवेत् ।

**परभूमिजानानामनेकमुखम् । उभयं च प्रजानामनुग्रहेण विक्रापयेत्, स्थूलमपि च लाभं प्रजानामौपघातिकं वारयेत् । अजस्रपण्यानां कालोपरोधं सङ्कुलदोषं वा नोत्पादयेत् बहुमुखं वा राजपण्यं वैदेहकाः कृतार्घं विक्रीणीरन् । छेदानुरूपं च वैधरणं दद्युः ।**

---

श्रीमूला

परभूमिजानां परविषयोपनीतानाम्, अनेकमुखम्, स्थापयेत् । उभयं च स्वभूमिजं परभूमिजञ्च, जानाम्, अनुग्रहेण अनुपपीडया, विक्रापयेत्, अर्थात् पण्याध्यक्षः । स्थूलं प्रभूतमपि, लाभं प्रजानाम्, औपघातिकम् उपघातः पीडा तत्पर्यवसायिनम्, वारयेत् । अजस्रपण्यानां क्षीरशाकादीनाम्, कालोपरोधं कालविक्रयप्रतिषेधं संकुलदोषंवा शाकादिषु कौश्चिदानीतचरेष्वविक्रीतेष्वन्यैः शाकाद्यानयनं वा, नोत्पादयेत् ।

चाणक्यटीका

यच्च पण्यं प्रचुरं स्याद् अन्यतोऽपिलभमानैः न क्रीयत इति मते, तत् स्वयं क्रयेण एकीकृत्य यथाक्रीतं ततः किञ्चिद् अर्घमारोपयेत् । प्राप्तार्घे चेति प्रसिद्धार्घे च तस्मिन् जाते पुनः स्तोकस्तोकारोपणेन अर्घान्तरं कारयेत् तत् पण्यमन्यत्र नास्तीति कृत्वा ।।

स्वभूमिजानामनेकराजपण्यानाम् एकमुखं व्यवहारं स्थापयेत् । यथान्यस्यापि

प्रतिपदपञ्चिका

यच्च पण्यं कुङ्कुमचन्दनादिकं प्रचुरमतिप्रभूतं स्यात्, तदेकीकृत्य संवाह्य एकरूपं कृत्वा अर्घमारोपयेत् महार्घं कुर्यात् ।

प्राप्तेऽर्घे वेति तस्मिन् प्रसिद्धेऽर्घान्तरमिति भूयोऽप्यारोपयेत् । स्वभूमिजातानां स्वविषयोत्पन्नानां राजपण्यानामेकमुखमेकपणं व्यवहारं विक्रयं कारयेत् । परभूमिजानां

श्रीमूला

बह्वित्यादि । वैदेहकाः वणिजः, कृतार्घं व्यवस्थापितमूल्यम्, राजपण्यम्, बहुमुखं वा बहुषु स्थलेषु वा, विक्रीणीरन् । छेदानुरूपं च वैधरणमिति । यदि विक्रये काश्चिच्छेदोऽर्घहानिर्भवेत् तदनुरूपं छेदतुल्यमानं वैधरणं दद्युः । छेदप्रतिनिधेर्वैधरणमिति संज्ञा ।

चाणक्यटीका

जनपदस्य न विक्रयदानं त ( पो ? तो ) वा वणिजः ( कत्यु ? क्रव्यो ) द्देशात् क्रेतुं ( वा ? प्राप् ) स्यन्तीति । अराजभूमिजानामनेकमुखम् आशु विक्रयार्थं स्थापयेत् । उभयं वेति राजपण्यं जानपदं च प्रजानामनुपजापेन विक्रापयेत् ।।

[ वणिग्भ्यः आदेयाः राजोपदाः, पर-
देशीयद्रव्यानयनक्रमाश्च ]

**षोडशभागो मानव्याजी, विंशतिभागस्तुलामानम्, गण्यपण्यानामेकादशभागः। परभूमिजं पण्यमनुग्रहेणावाहयेत्। नाविकसार्थवाहेभ्यश्च परिहारं आयतिक्षमं दद्यात्। अनभियोगश्चार्थेष्वागन्तूनामन्यत्र सभ्योपकारिभ्यः।**

---

चाणक्यटीका

एवमेवार्थं द्रढीकर्तुकाम आह—स्थूलमपि च ( भाति ? ला ) भं किं पुनरल्पं प्रजौपघातिकं वारयेत्। विक्रेतृनिवारणेन लाभो वारितो भवति। प्रजानुपघाते च अजस्रपण्यानां कालोपरोधं सङ्कुलदोषं वा नोत्पादयेत्। यत्र यदुत्पन्नं तत् तत्रैव विक्रापयेत्, विक्रेतारश्चेत् सर्वत्र न स्युः॥

बहुमुखं वा राजपण्यं तत्र तत्र एकत्र वा नगरे वणिजः पण्याध्यक्षेण कृतार्घमापादितं क्रीणीरन्। छेदानुकूलं वैधरणं दद्युः वाणिजकाः। ऊनमेव पूरयेयुः, नावरं दण्डनीया इत्यर्थः॥

प्रतिपदपञ्चिका

अन्यदेशागतानां अनेकमुखमुभयं चैतत् स्वभूमिजं परविषयागतं च प्रजानां पौरजानपदानाम् अनुग्रहेण अपडीया विक्रापयेत्। पण्याध्यक्षः स्थूलमपि च महान्तमपि लाभं प्रजानामौपधातिकं पीडाकरं निवारयेत् निषेधयेत्। अजस्रपण्यानां क्षीरशाकपुष्पादीनां प(पा)त्रादीनां च कालोपरोधं विक्रयनिषेधं सङ्कुलदोषं च पूर्वप्रविष्टेष्वपि कृतेषु पुनरप्येषाम् उपर्युपरि प्रवेशनं नोत्पादयेत् न कुर्यात्। बहुमुखमनेकापणं वा राजपण्यं वैदेहकाः कृतार्घं निबद्धार्घं विक्रीणीरन् यदि वाऽर्घादिवशात् किञ्चिद्भिद्येत, तदनुरूपं यावन्मात्रं हापितं तावन्मात्रकमेव दद्युः। तस्य वैधरणमिति संज्ञा।

श्रीमूला

वणिग्भ्य उपादेयां राजोपदामाह—षोडशेत्यादि। षोडशभागो मानव्याजी मेयद्रव्यषोडशांशो मानव्याजीसंज्ञः। स राज्ञे देयः। तुलामानं विंशतिभागः तोलनीयद्रव्यं पलशते पञ्चपलमितम्, राज्ञे देयम्। गण्यपण्यानां क्रमुकफलादीनाम्, एकादशभागः, राज्ञे देयः। सर्वेयं व्याजी क्रेतृग्राह्येति केचित्।

परेत्यादि। परभूमिजं पण्यम्, अनुग्रहेण अन्तपालाटविकराजवल्लभाद्युपद्रववारणेन व्याजीमोक्षेण, च आवाहयेत् आनाययेत्। नाविकसार्थवाहेभ्यश्च जलपथवाहकवणिग्भ्यश्च, परिहारम् आदेयमोक्षम्, आयतिक्षमम् उत्तरकालाबाधकम्, दद्यात्। अनभियोगश्च उत्तमर्णकर्तृकाभियोगप्रतिषेधश्च, अर्थेषु ऋणादिषु विषये,

[ विक्रयलब्धधनरक्षणनिवेदनादयः ]

**पण्याधिष्ठातारः पण्यमूल्यमेकमुखं काष्ठद्रोण्यामेकच्छिद्रापिधानायां निदध्युः । अह्नश्चाष्टमे भागे पण्याध्यक्षस्यार्पयेयुः—'इदं विक्रीतमिदं शेषम्' इति । तुलामानभाण्डं चार्पयेयुः । इति स्वविषये व्याख्यातम् ।**

श्रीमूला

आगन्तूनां देशान्तरागतानाम्, तद्विषये अभियोगं विनैव ऋणदानं व्यवस्थाप्यमिति-भावः । अत्रापवादमाह—अन्यत्र सभ्योपकारिभ्यः तदुपकारिकर्मकरानपहाय । तेषां तु परस्पराभियोगोभवत्येव ।

चाणक्यटीका

षोडशभागो मानव्याजी राजपण्यानां षोडशप्रस्थान् विक्रीणानः एकं निवर्त्त-येत् । क्रीणानः सप्तदशकमधिकं गृह्णीयात् । तथातुलनीयानां विंशतिभागः पलविंशत्या एकपलं निर्वर्तयेत्, अधिकं वा गृह्णीयात् तथा गण्यानां मूलफलादीनाम् एकादशभाग इति योज्यम् ॥

परभूमिजं पण्यं ( सं ? अनु ) ग्रहेण चोरनिषेधादिना ( पूजा ? व्याज्या ) द्यनुग्रहेण स्वदेशं प्रवेशयेत् । नाविकसार्थवाहेभ्यश्च परिहारम् आयतिक्षमंदद्यात् । तत्पण्यम् अशुल्कम् अर्धशुल्कं वा कुर्यात् । यथा कालान्तरेण नानुतप्येत कृतोपकार इव करिष्यतीति । अनभियोगं चेति वास्तव्यैर्वणिग्भिरागन्तूनां पण्यादिनासाध्यम् । अभियुक्ता हि विक्रयार्थं नागच्छेयुः कामवृत्ताः स्वदेश एव साध्या इति । अन्यत्र साध्योपकारिभ्य इति साध्योपकारिणस्तु साध्या इत्यर्थः ॥

प्रतिपदपञ्चिका

राजपण्यप्रसङ्गेन वणिग्भ्यो राजादेयं सामान्यमुपादानविशेषमाह—षोडशभागो मानव्याजीति । समस्तमेयद्रव्यस्य षोडशभागं तस्य मानव्याजीति संज्ञा । विंशति-भागस्तुलायाः तौल्यद्रव्याणम् । पलशते पञ्चपलं गण्यपण्यानां । पूगफलादीनामेकादश-भागम् । केचिदेतत् क्रेतृग्राह्यमित्याचक्षते । परभूमिजं पण्यमनुग्रहेण अन्तपालाट-विकवल्लभाद्युपद्रवप्रतिषेधेन षोडशभागमोक्षेण च अनुगृह्याऽऽवाहयेत् आनाययेत् । नाविकेभ्यः जलपथवाहकेभ्यः सार्थवाहेभ्यः सार्धातिवाहिकेभ्यः परिहारमादेयमोक्ष-मायतिक्षमभागमादि 'कालमहोदयं दद्यात् । अनभियोगश्चोत्तमर्णाभिरर्थेष्वृणादिषु विषयभूतेषु आगन्तूनामन्यदेशागतानां दद्यात् इत्येवं स्थापयेत् ।

किं सर्वत्रैव नेत्याह—अन्यत्र सभ्योपकारिभ्य इति, तत्सेवककर्मकरा-दिभ्योऽन्यत्र, तेषां तु परस्परमभियोगाप्रतिषेधः ।

श्रीमूला

पण्याधिष्ठातार इति । राजपण्यविक्रेतारः, पण्यमूल्यं पण्यविक्रयागतं धनम्, एकमुखम् एकस्थानागतम्, काष्ठद्रोण्यां दारुपेटिकायाम् एकच्छिद्रापिधानायाम् एक-

[ परदेशीयद्रव्यविषये लाभव्यवस्थाः,
स्थलजलमार्गव्यवहाररीतयश्च ]

**परविषये तु—पण्यप्रतिपण्ययोरर्घं मूल्यं च आगमय्य शुल्कवर्तन्यातिवाहिकगुल्मतरदेयभक्तभाटकव्ययशुद्धमुदयं पश्येत् । असत्युदये भाण्डनिर्वहणेन पण्यप्रतिपण्यार्घेण वा लाभं पश्येत् । ततः सारपादेन स्थलव्यवहारमध्वना क्षेमेण प्रयोजयेत् । अटव्यन्तपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेदनुग्रहार्थम् ।**

———

श्रीमूला

द्वाराच्छादनायाम्, निदध्युः निक्षिपेयुः । अह्नश्च, अष्टमे चरमे, भागे, उपलक्षणात् क्रयसमयावसाने वा, पण्याध्यक्षस्य, अर्पयेयुः । किं कृत्वा, इदं विक्रीतम् इदंशेषमिति एतावद् विक्रीतम् एतावद् विक्रेयमवशिष्यत इति बोधयित्वा । तुलामानभाण्डकं तुलाप्रस्थकुडुबादिकं च, अर्पयेयुः, पण्याध्यक्षस्य । इति स्वविषये व्याख्यातमिति । एवं **स्वदेशे पण्यपणनविधिर्विवृतः ।**

चाणक्यटीका

पण्याधिष्ठातार इति । पण्यानामधिष्ठातारोऽध्यक्षपुरुषाः पण्यानां नानाजातीयानां मूल्यानाम् अप्येकमुखम् एकाधारम् उप ( स्तु ? स्थि ) तकाष्ठद्रोण्याम् एकच्छिद्रापिधानायां स्वरक्षमुत्पन्नं दद्युः । अष्टमे भागे अपराह्णे । तदानीं क्रेत्रभावादर्पयेयुः—इदं विक्रीतम्, इदं शेषमिति परिबोधयन्तः । इमानि च तुलामानभाण्डानि ( इति ) तेषामाशङ्कापरिहारार्थम् । व्याख्यातं पण्यव्यवहरणं ( स्वविषयइति ) ॥

प्रतिपदपञ्चिका

पण्याधिष्ठातार इति, राजपण्यविक्रेतारः पण्यमूल्यं तद्विक्रयद्रव्यमेकमुखम् एकावस्थानं । काष्ठद्रोण्यां मंजूषायामभेद्यपरिकरायामेकद्वारसापिधानायां निदध्युः स्थापयेयुः । अह्नश्चाष्टमे भागे अर्धप्रहरावशेषेऽह्नि क्रेतृवेलापगमे पण्याध्यक्षस्यार्पयेयुः । कथमित्याह—इदं क्रीतम् इदं पण्यमूलम् इदं शेषमिति, पण्यं स्वरूपतो विविच्य उपनयेयुः । तुलामानभाण्डं च अर्पयेयुरित्ति द्विरर्पयेयुरिति ग्रहणम् । तत्र भाण्डं सर्वव्यवहरणोपसंहरणार्थम् एवं स्वविषये पण्यविधानं व्याख्यातम् ।

श्रीमूला

परविषये त्विति । व्याख्यायत इति शेषः । पण्येत्यादि । पण्यप्रतिपण्ययोः स्वपण्यपरविषयपण्ययोः, अर्घं समन्यूनाधिकम्, मूल्यं च भाण्डोपस्कारादिमूल्यं च, आगमय्य विज्ञाय, शुल्कादिव्ययशुद्धं शुल्कादिव्ययशोधितावशेषम्, उदयं लाभम्, पश्येत् समीक्षेत, सति लाभदर्शने स्वपण्यं परविषये प्रेषयेदित्यभिप्रायः । तत्र शुल्कं शुल्काध्यक्षोक्तम्, देयशब्दस्य वर्तन्यादिभिः प्रत्येकमभिसम्बन्धः । वर्तनीदेयम् अन्त-

श्रीमूला

पालदेयम्, आतिवाहिकदेयं मार्गातिवाहनसहायभूतायुधीयदेयम्, गुल्मदेयं वनस्थानिकदेयम्, तरदेयं नद्याद्युत्तारकनाविकादिदेयम्, भक्तं भोजनं कर्मकरबलीवर्दादिभृतिश्च, भाटकः प्रसेवकादिग्रहणार्थः प्रक्रयः। भागेति त्वपपाठ इति भाति। असतीति। असत्युदये लाभदर्शने भाण्डनिर्वहणेन स्वपण्यस्य परदेशनयनेन लाभकालप्रतीक्षापूर्वकविक्रयद्वारेण लाभं पश्येत् । वा अथवा, पण्यप्रतिपण्यार्घेण स्वपण्यस्य प्रतिपण्यार्घकरणेन स्वपण्यदानपूर्वकप्रियपण्यान्तरग्रहणेनेत्यर्थः, लाभं पश्येत् । तत इति। ततः लाभदर्शनानन्तरम्, सारपादेन समीक्षितलाभचतुर्थांशव्ययेन, स्थलव्यवहारं सुलभापायो जलपथ इति कृत्वा स्थलपथव्यवहारम्, क्षेमेणाध्वना स्थलपथेनापि चोराद्युपद्रवरहितेन, प्रयोजयेत्। अटव्यन्तपालपुरराष्ट्रमुख्यैश्च, अटवीपालान्तपालपुरमुख्यराष्ट्रमुख्यैश्च सह, प्रतिसंसर्गं सोपदानं सङ्गतम्, गच्छेद्, अनुग्रहार्थं तदानुकूल्याथम्।

चाणक्यटीका

परविषये त्विति। अस्य तु पण्यस्य तत्र महानर्घ इति, पण्यस्य तस्यात्र महानर्घ इति आकलय्यालोचयेत्, इदमत्र शुल्कमियन्तः पलाः[1] ग्राह्याः, सपाद ( चतुष्पणो ? पणिका[2] ) वर्त्तनी, ( य इति वाहनमिते ? इयदातिवाहिके ) भ्यो देयम्, इयत् ( शौल्के ? गौल्मे ) भ्यः, इदं नदीतीरे देयम्, इयती भृतिः, इयद् विष्टिभ्यो भ ( क्त ) म्, व्ययोऽपि इयान्, इत्येतैर्विशुद्धं व्ययविशुद्धं च उदयं लाभं पश्येत्, ततोयायादित्यर्थः। असत्युदय इति ( षड् ? ) भाण्डमिह नश्यति, शुल्काभिधेयं समभाण्डं चैतत् समवृद्धिकमिति निर्व्यूढं भवतीति मन्यमानः, प्रतिपण्यमेवाल्पमप्यानीतम् इदं मे लाभं करिष्यतीत्याकलयेत्। तत इति सत्युदये प्रतिविधानं विचित्य पश्चादसारं बह्वनवेक्ष्य सारस्य पण्यस्य पादेनैव नाधिकेन स्थलव्यवहारम् असंचक्रपथादिकम् अध्वना क्षेमेण नाविकेन सं ( गमिते ? यानेन ) प्रयोजयेत्। गच्छंश्च परकीयैरप्याटविकादिभिः रक्षाति ( श ) या ( त्रा ) ह्यनुग्रहार्थं सख्यं कुर्यात् ॥

प्रतिपदपञ्चिका

परविषयेत्विति, अभिधीयत इति वाक्यशेषः। पण्यं स्वकीयं प्रतिपण्यं परकीयं ग्राह्यम्। तयोरर्घं समर्थाधिकंमूल्यं च (परादा)वराटादिकम्। भाण्डोपस्करादिमूल्यं च आगमय्योपलभ्य, तं शुल्कादिव्ययविशुद्धं तेभ्योऽधिकविशेषमुदयं लाभं पश्येन्निरूपयेत्। तत्र शुल्कं शुल्काध्यक्षोक्तं देयशब्दो वर्तन्यादिभिः प्रत्येकं वर्तनीदेयम्।

ते पालदेयम् आतिवाहिक देयम्, आयुधीयसहायवेतनं, गुल्मदेयमाटविकादि स्थानिकदेयं तरदेयं, नावाद्युत्तारकनाविकादिदेयं। भागकं प्रवर्णग्रहणाभ्यवद्यक्रयो भक्तं

———

१. पुल्लिङ्ग पलशब्द उन्मानवाचकः प्रामादिको भाति।

२. "अन्तपालः सपादपणिकां वर्तनी गृह्णीयात् पण्यवहनस्य" इति शुल्काध्यक्षे कौटल्यः। ( २.२१ )।

**आपदि सारमात्मानं वा मोक्षयेत्। आत्मनो वा भूमिमप्राप्तः सर्वदेयविशुद्धं व्यवहरेत्।**

---

प्रतिपदपञ्चिका

कर्मकरबलीवर्दाद्युपक्षयः असत्युदय इति, लाभाभावे भाण्डनिर्वहणेन स्वकीयभाण्डाविक्रापणेन प्रतिपण्यस्य आनयनेन तत्कालप्रतिपण्यविनिमयेन वा लाभं पश्येत्। तत इति। पूर्वोक्तलाभनिश्चयोत्तरकालं सारपदेन लाभचतुर्भागेन(ब)ह्वपायत्वाद् वारिपथस्य स्थलपथव्यवहारमध्वनाक्षेमेण निराबाधेन प्रयोजयेत्। सर्वनाशपरिहारार्थमटव्यादिभिश्च सह प्रतिसंसर्गं एकैकेन सह उपचारपूर्वं मैत्रीं कुर्यात्।

अनुग्रहार्थं तत्कृतपाथेयसहायाद्यर्थं च आटविकादयश्च प्रतीताः।

श्रीमूला

आपदीति। आपदि चोरोपरोधे, सारं रत्नादिद्रव्यम्, आत्मानं वा स्वशरीरं च, मोक्षयेत् रक्षयेत्। इदं च सति सम्भवे। उभयमोक्षणासौकर्ये तु सारपरित्यागेनात्मैव मोक्षणीयः। यदाहुः—

"शरीरमर्थाद् गोप्तव्यं राजगुह्यभयार्दितम्।
वित्तहीनोऽल्पवित्तो वा जीवन् भद्राणि पश्यति॥"

इति। आत्मनो वेति। आत्मनो वा भूमिमप्राप्तः स्वपण्यविक्रयभूमिभूतात् परविषयात् स्वविषयमप्रत्यागतः, परविषयवासकाले कृत्स्नेऽपीत्यर्थः, सर्वदेयविशुद्धं व्यवहरेत् शुल्कादिनिखिलदेयाप्रदानापराधविधुरं विक्रयव्यवहारं कुर्यात्, स्वल्पप्रत्याशया सर्वनाशो मा भूदिति।

चाणक्यटीका

आपदि चोरादिसमुत्थायां सारं न मोक्षयेत्, नान्यदाद्रियेत। तदशक्तोवा आत्मानं सर्वस्य भाजनम् 'जीवन् भद्राणि पश्यति' इति। (सपत्नस्त्वतिधेन ?) आत्मनो भूमिं प्राप्तः स्वदेशस्थः सर्वदेयविशुद्धं व्यवहरेत्। शुल्काध्यक्षो ( हैमनं नाधये- ( दित्यर्थः ? ) अंसपथ उक्तः॥

प्रतिपदपञ्चिका

आपदि तत्करग्रहणादौपस्करसारं सुवर्णादिहस्तसारम् आत्मानं वा शरीरं मोक्षयेत् रक्षेत्। वाशब्दश्चार्थे, उभयमोक्षसंभवे सति अन्यथा सारं परित्यज्यात्मानमेव मोक्षयेत् शरीरमूलत्वाद्वित्तादेः। उक्तं हि :—

शरीरमेव भोक्तव्यं राजगुह्यभयार्दितम्।
वित्तैर्ही नाल्पवित्तो वा जीवन् भद्राणि पश्यति॥

आत्मनो वा भूमिमिति। आत्मनोऽभिप्रेतां वा स्वपण्यस्य विक्रयभूमिं परविषयं प्राप्तश्शुल्कादिसर्वदेयविशुद्धं व्यवहरेत्। अल्पतृष्णया सर्वनाशभयात् अथवा स्वमित्रविषयं प्राप्तः। सर्वदेयविशुद्धमिति राजपण्यापदेशेन शुल्कादिरहितं व्यवहरेत्।

**वारिपथे च यानभाटकपथ्यदनपण्यप्रतिपण्यर्घप्रमाणयात्राकालभय-प्रतीकारपण्यपत्तनचारित्राण्युपलभेत ॥**

**नदीपथे च विज्ञाय व्यवहारं चरित्रतः ।**
**यतो लाभस्ततो गच्छेत् अलाभं परिवर्जयेत् ॥९०॥**

इत्यध्यक्षप्रचारे पण्याध्यक्षष्षोड्शोऽध्यायः,
आदितस्सप्तत्रिंशः ।

---

### श्रीमूला

वारिपथे चेति । जलपथे च, यानभाटकादीनि, उपलभेत ज्ञात्वा तदनुरोधेन व्यवहरेत् । तत्र यानभाटकः नाविकभृतिः, पथ्यदनं मार्गभक्तं, पण्यप्रतिपण्यार्घप्रमाणं पण्यप्रतिपण्ययोरर्घतारतम्यम्, यात्राकालः यात्रार्हऋतुविशेषलक्षणो गतागतापेक्षित-कालेयत्ता वा, भयप्रतीकारः सम्भावितस्करादिभयप्रतिविधिः, पण्यपत्तनचारित्रं स्वपण्यविक्रयस्थानभूतपरकीयपत्तनसमुदाचारः ।

अध्यायान्ते श्लोकमाह—नदीपथे चेति । नदीपथे च न केवलं समुद्रमार्गे किन्तु नदीमार्गेऽपि, व्यवहारं वाणिज्यम्, चरित्रतः तत्तद्देशाचारानुरोधेन, विज्ञाय, यतो येन पथा, लाभः, ततो गच्छेत् । अलाभम् अल्पलाभं क्षयव्ययप्रवासादिमहाक्लेशाननुरू-पलाभं जलपथम्, परिवर्जयेत् ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
षोडशोऽध्यायः पण्याध्यक्षः, आदितः सप्तत्रिंशः ॥

### चाणक्यटीका

वारिपथे च, अस्य नौयानस्य अयं विषह्योभारः, एतावत्कालस्य इदं पथ्यदानम् इदं पण्यप्रतिपण्ययोरर्घप्रमाणम्, अयमनुलोमवातो यात्राकालः, अयं चोरोत्पात-वातादिभयप्रतीकारः, अत्रेदं पण्यं प्रियादानम्, अत्र पत्तने चरित्रमेतद् इत्युपलभेत । सति लाभे यायादित्यर्थः ॥

तद्दर्शयति—नदीपथे वेति । संयानपथस्य महादोषत्वाद् विशेषेण ज्ञात्वा व्यवहारान्, चरित्रतः स्थितिवशाद् अलाभं स्थलपथं परिवर्जयेदिति नियमः ॥

॥ इति पण्याध्यक्षः षोडशं प्रकरणं समाप्तम् ॥
॥ षोडशश्चाध्यायः ॥

### प्रतिपदपञ्चिका

वारिपथे चेति, न केवलं पूर्वोक्तस्थलपथे यानभागको नौभागकः पथ्यदनं प्रतीतम् । पण्य प्रतिपण्ययोरर्घप्रमाणं महत्वं लघुत्वम् यद् वा प्रमाणमथनो नौप्रभृतीनां

प्रतिपदपञ्चिका

योजनादिकं यात्राकालं शरद्वसन्तकादिकं गत्यागमनकालख्यातं वा भयप्रतीकारं तस्करादेः प्रतीकारं वहनसंस्कारं च पण्यपत्तनचरित्रं परविषयकपण्यपत्तनाचारमुपलभेत । उपलभ्य च तथैवानुतिष्ठेत् ।

अध्यायप्रान्ते श्लोकमाह—नदीपथे चेति, न केवलं समुद्रपथे विज्ञाय व्यवहारं वाणिज्यं चरित्रतः चरित्रेण परपरिकल्पितस्थित्यनतिक्रमेण यतो गतस्य लाभस्ततो गच्छेत् । तेन पथा गच्छेत् । अलाभमविद्यमानलाभं वारिपथं वर्जयेत् । ननु यतो लाभः ततो गच्छेदित्यनेनैव अर्थापत्तेरलाभवर्जनस्य सिद्धत्वात् तदग्रहणम् । क्षयव्ययप्रयासार्थबहुलस्य महतोऽपि लाभस्य वर्जनार्थमिति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रटीकायाम्
अध्यक्षप्रचारिके द्वितीयेऽधिकरणे षोडशोऽध्यायः ।
आदितः सप्तत्रिंशोऽध्यायः ॥
प्रतिपदपञ्चिका

# पञ्चत्रिंशं प्रकरणम्

## सप्तदशोऽध्यायः ।

## कुप्याध्यक्षः ।

[ आरण्यकद्रव्याध्यक्षकर्तव्यसंग्रहः ]

**कुप्याध्यक्षो द्रव्यवनपालैः कुप्यमानाययेत् । द्रव्यवनकर्मान्तांश्च प्रयोजयेत् । द्रव्यवनच्छिदां च देयमत्ययं च स्थापयेदन्यत्रापद्भ्यः ॥**

---

श्रीमूला

कुप्याध्यक्ष इति सूत्रम् । कुप्यं सारदारूवेणुवल्लिवल्कादि, तत्र नियुक्तः कुप्याध्यक्षः, अर्थात् तस्य व्यापारः कुप्यविषय इहोच्यत इति सूत्रार्थः । कोशप्रवेश्य-रत्नपरीक्षायां रत्नसारफल्गुकुप्यान्युपक्रम्य रत्नसारफल्गुप्रतिग्रहणमुक्तम्, कुप्यस्य त्वनुक्तमिहोच्यत इति सम्बन्धः । अथवा 'सन्निधाता कोशगृहमित्यदिना कुप्यगृहविधानं पूर्वमुक्तम्, तदध्यक्षव्यापारस्त्वधुनोच्यत इति ।

कुप्याध्यक्ष इत्यादि । कुप्याध्यक्षः, द्रव्यवनपालैः वार्क्षवनरक्षिभिः, कुप्यं सारदार्वादि, आनाययेद् आवाहयेत् । द्रव्यवनकर्मान्तांश्च दारूनिर्मेयान् गृहशकटादि-कान्, प्रयोजयेत् कारयेत् । द्रव्यवनच्छिदां च द्रव्यवनच्छेदोपजीविनां च वृक्षममंज्ञानाम्, देयं छेदनीयशिरश्शाखास्कन्धमूलभागभेदेन छेदनदुर्गतारणाद्यर्थं प्रदेयं वेतनं, स्थापयेद् एतावदिति व्यवस्थापयेत् । अत्ययं च दण्डं चाननुज्ञातच्छेदने, स्थापयेत् । किं सर्वदा, नेत्याह—अन्यत्रापद्भ्य इति । शकटयुगभङ्गादिविपत्प्राप्तौ तु कालबिलम्बासहयुग-योजनाद्यर्थं अननुज्ञातच्छेदनं नापराधः ।

चाणक्यटीका

पूर्ववदेव पण्यगृहविषयव्यापारानन्तर्येण कुप्याध्यक्ष इति प्रकरणमुच्यते—कुप्याध्यक्ष इति । सन्निधात्राधिकृतः कुप्याध्यक्षः । द्रव्यवनपालैरिति 'द्रव्यवनम्' 'अटव्याश्रयम्' इति वचनाद् आटविकैरित्यर्थः । कुप्यम् असारं द्रव्यं वक्ष्यमाणप्रपञ्चम् आनाययेत् । ( हो ? रथा ) द्युपकरणार्थम् । द्रव्य (वन)कर्मान्तानिति द्रव्यवन एव छेदकतक्षकादिभिः, नावाद्यर्थान् उदकाश्रयेण, कर्मान्तान् स्वपुरुषैरधिष्ठाप्य कारयेत् । द्रव्यवनच्छिदामिति द्रव्यवनं छिन्दन्ति इति द्रव्यवनच्छिदः विनाज्ञया अन्येषां देयम् छिन्नद्रव्यमूल्यम्, अत्ययं च "मृगद्रव्यवनान्मृगद्रव्यापहारे शत्योदण्डः" ( अधि० ४ अध्या० १० ) इति । अस्मादन्यदनुक्तमपि स्थापयेत् । अन्यत्रापद्भ्य इति अग्निचोरा-द्युपद्रवे स्तम्भशाखाद्यर्थं गृह्णन्तो न दण्ड्या इत्यर्थः ॥

[ एतत्प्रकरणप्रतिपाद्येषु कुप्यवर्गेषु
सारदार्वादिवर्गपञ्चकव्युत्पादनं ]

**कुप्यवर्गः—शाकतिनिशधन्वनार्जुनमधूकतिलकसालशिंशपाऽरिमेदराजादनशिरीषखदिरसरलतालसर्जाश्वकर्णसोमवल्ककशाम्रप्रियकधवादिः सारदारुवर्गः ।**

---

### प्रतिपदपञ्चिका

कुप्याध्यक्ष इति सूत्रम् । कुप्यं सारदारवेणवल्लिवल्कादिः, तत्र नियुक्तः कुप्याध्यक्षः तस्य कुप्यद्रव्य विषयो व्यापारस्स इहाभिधीयत इति सूत्रार्थः । सम्बन्धस्तु कोशप्रवेश्यरत्नपरीक्षायां रत्नसारफल्गुकुप्यानां प्रतिग्रहणमुक्त्वा तत्र रत्नसारफल्गूनां प्रतिग्रहणमभिहितम् । कुप्यस्य तु नोक्तम् । तदभिधीयत इति, अथवा, सन्निधाता कोशग्रहणादीनि कारयेदिति, तत्र कुप्यग्रहणस्यविधानमुक्तम् । तत्राध्यक्षस्तद्व्यापारो वा नोक्तः, सोऽअभिधीयत ।

तदाह—कुप्याध्यक्ष इति, सद्रव्यवनपालैः सारदार्वादिद्रव्यनारक्षैः कुप्यं वक्ष्यमाणं[1] सारदार्वादि आवाहयेदानाययेत् । द्रव्यवनकर्मान्तांश्च ग्रहशाकटपर्याणकल्पनादिकान् प्रयोजयेत् । कारयेद् द्रव्यवनच्छिदांश्च द्रव्यवनोपजीविनां कार्पटिकानां देयम् । शिरस्कन्धशकटादि भारभेदेन प्रदेयम् । यस्य यावत् प्रमाणमित्येतस्मिन् द्रव्ये छिन्ने दुर्गे वा प्रवेशिते एतावद्वेतनमिति तथा अत्ययं च दण्डमननुज्ञातस्यच्छेदे स्थापयेत् । तस्यापवादोऽन्यत्रापद्भ्य इति, अक्षभङ्गादिकेभ्यः शकटिकादीनामक्षभङ्गादौ तदुपयोगिमात्रभेदनं[2] न दोषः ।

### श्रीमूला

कुप्यवर्ग इति । वक्ष्यत इति शेषः । अयं चाधिकारः । तत्र शाकाद्येकविंशतिः सारदारुवर्ग इत्याह—शाकतिनिशेत्यादि । शाकः पृथुच्छदाख्यो वृक्षः, तिनिशो नेमी, धन्वनः धनुर्वृक्षः, अर्जुनः ककुभः, मधूकः मधुद्रुमः, तिलकः क्षुरकः, सालः कार्ष्यकाख्यः, शिंशपा तीक्ष्णधूमाख्या, अरिमेदः विट्खदिरः पूतिखदिराख्यः, राजादनः फलाध्यक्षाख्यः, शिरीषः कपीतनः खदिरस्तिक्तसाराख्यः, सरलः पूतिकाष्ठाख्यः तालः तृणद्रुमः, सर्जः पीतसालकः, अश्वकर्णः सर्जभेदः, सोमवल्कः सितखदिरः, कशः लोमशपुच्छको नकुलवृक्षभेदः, आम्रश्चूतः, प्रियकः गौरसर्जः, धवः धुरन्धराख्यः, आदिग्रहणमनुक्तसङ्ग्रहार्थम् ।

---

१. मात्रच्छेदनमिति पा० ।

२. अन्यत्र पाठो न दृश्यते ।

**उटजचिमियचापवेणुवंशसातीनकण्टकभाल्लूकादिः वेणुवर्गः। वेत्रशीकवल्लीवाशीश्यामलतानागलतादिर्वल्लीवर्गः। मालतीमूर्वार्कशणगवेधुकातस्यादिः वल्कवर्गः॥**

---

चाणक्यटीका

कुप्यवर्गः कथ्यत इति शेषः। शाकः अनेनैव नाम्ना ( वृतको ? विदितो ) वृक्षः तिनिशः स्पन्दनः। अरिमेदः सुवर्णः। शेफालिका। राजादनः क्षीरिका। सोमवल्को रोहिणीवृक्षः अरिष्ट इत्यन्ये। प्रियकः प्रियाल इत्यन्ये। आदिग्रहणात् तिन्दुकादिपरिग्रहः। अयं सारदारुवर्गः तथा असारोऽपि पलाशोदुम्बरादिदारुवर्गोऽनुक्तोपि ग्राह्यः॥

उटजः त्वचिसार एव नलकल्पः येन विदलानि क्रियन्ते। निर्दुष्टः ( चिमियः ) असुषिरः। स च स्थिरः, चापः सुषिरो विघनो धनुष्युपयुज्यते।

प्रतिपदपञ्चिका

कुप्यवर्ग इत्यधिकारः। वक्ष्यय इति वाक्यशेषः।

शाकादिर्विंशतिविधं सारदारुवर्गमाह—शाकेत्यादि। तत्र सोमवल्को रोहणः अभिच्छत्रको वनंवह इति तद्देशप्रसिद्धं प्रियकोसनः शेषाः शाकादयो यथा देशप्रतीताः आदिग्रहणमर्जुनरक्तचन्दनादि परिग्रहार्थम्।

श्रीमूला

वेणुवर्गमाह—उटजेत्यादि। उटजो महासुषिरस्तनुकण्टकः कर्कशपृष्ठः, चिमियो निस्सुषिरो मृदुत्वक्कः, चापः स्वल्पसुषिरोऽतिखरश्च, वेणुर्निष्कण्टकश्चापयोग्यः, वंशो दीर्घपर्वकः, सरन्ध्रः सकण्टकश्च, सातीनकण्टकौ वेणुभेदौ, भाल्लूकः स्थूलदीर्घो महाप्रमाणो निष्कण्टकः।

वल्लीवर्गमाह—वेत्रेत्यादि। वेत्रं प्रसिद्धम्, शीकवल्ली हंसवल्लीति देशविशेषप्रसिद्धा, वाशी अर्जुनपुष्पसमानपुष्पा, श्यामलता त्रिपुटीसदृशी, नागलता नागजिह्वा।

वल्कवर्गमाह—मालतीत्यादि। मालती माहूलानीति देशविशेषप्रसिद्धा, मूर्वा मरुलिति द्रविडप्रसिद्धा, अर्कः शणोऽतसी च प्रतीताः, गवेधुका नागबला।

चाणक्यटीका

वेणुः कण्टकमयो वृतिषूपयुज्यते। वंशः सुषिरो दीर्घपर्वा गन्धर्ववीणादिषु उपयुज्यते। सा(ती)नः पिटक ( वञ्छि ? मश्चि ) काद्युपकरणोपयोगी। कण्टकः शरस्थापनार्थः कोटक इत्यन्ये पठन्ति। भल्लको महापरिणाहः। नेपालेषूत्पद्यते। क्षीरादिभाजनार्थः। आदिशब्दाद् देशभेदेन अनुक्तोऽपि भेदो ज्ञेयो वेणुवर्गः वेणुशब्दस्य सामान्यवाचित्वात्।

[ रज्जुनिर्माणलेखनरञ्जनानां साधनानि ]

**मुञ्जबल्बजादि रज्जुभाण्डम् ॥**

**तालीतालभूर्जानां पत्रम् । किंशुककुसुम्भकुङ्कुमानां पुष्पम् ॥**

[ औषधवर्गः विषवर्गश्च ]

**कन्दमूलफलादिरौषधवर्गः ॥**

---

चाणक्यटीका

वेत्रं वेत्रमेव शिकवल्ली कालवेत्रवल्ली वाशी पाठिकाकारा पत्रावृत्तिषूपयुज्यते । श्यामलता प्रसिद्धा । नागलता नागवल्ली वातिकोपयोगिनी । आदिशब्दाद् अन्या अपि ग्राह्याः । अयं वल्लीवर्गः ॥

मालती मालका । ( लुता दुर्यो ? ) द्विविधा लता ( पत्रगुच्छत्वक् ? ) गवेथुका चञ्चुः । आदिग्रहणादन्येऽप्येवंजातीयका ग्राह्याः ॥

प्रतिपदपञ्चिका

वेणुवर्गमाह—उटजेत्यादि, उटजौ महासुषिरस्तनुकण्टकः—कर्कशपृष्ठः चिमयो निस्सुषिरो मृदुत्वचो निष्कण्टक चापयोग्यो वेणुः चापः स्वल्पसुषिरोऽतिखरश्च वंशयोग्यो वंशो दीर्घपर्वकः सारन्ध्र सकण्टकश्च सातिनोवंशाष्टदर्पातरं कुणट्टादि स्वकटको महाप्रमाणो गोधूमसदृशफलः हाल्लकस्थूलदीर्घपर्वा महाप्रमाणो निष्कण्टक इति, आदिग्रहणात् अन्येषामपि कर्मण्यानां कीचकादीनां ग्रहणं भवतीत्ययं वेणुवर्गपरिवर्जमाह—वेत्रादि वेत्रः प्रतीतः शोकवल्ली हिंसावल्लीति तद्देशीयानां प्रतीतावाशी, अर्जुनपुष्पसमानपुष्पश्यामलता त्रिवृत्सदृशा नागलता नागजिह्वेति वै ते प्रतियो ? आदिशब्दादन्यासामपि बन्धनादियोग्यानां वल्लीनां ग्रहणमिति वल्लिवर्गः ।

वल्कवर्गमाह—मालत्यादि, मालतोमाहुलानीति तद्देशप्रसिद्धा, मूर्वा, मालीति द्रविडेषु प्रतीता, अर्कशणावेतसी च प्रतीताः । गवेथुका नागबला आदिग्रहणं कुहकूष्माण्डादिवल्कपरिग्रहार्थमिति वल्कवर्गम् ।

श्रीमूला

रज्जुभाण्डादिकमाह—मुञ्जेत्यादि । मुञ्जबल्बजादि मुञ्जः शरः, बल्बजास्तृणविशेषः इत्येवमादि, रज्जुनिर्माणसाधनम् । तालीत्यादि । तालीतालभूर्जाः प्रसिद्धाः, तेषां पत्रं लेख्योपयोगि । किंशुककुसुम्भकुङ्कुमानाम्, पुष्पं वस्त्रादिरञ्जनसाधनम् ।

ओषधिवर्गमाह—कन्दमूलेत्यादि । कन्दाः सूरणादयः, मूलान्युशीरादीनि फलानि आमलकहरीतक्यादीनि, एतदादिः ओषधिवर्गः ।

चाणक्यटीका

मुञ्जबल्बजादीति, आदिग्रहणात् कुशकाशाद्युपग्रहः । तालीतालभूर्जानां पत्रं शासनोपयोगि । किंशुकादीनां पुष्पम् । आदिग्रहणात् केसराद्यपि ।

**कालकूटवत्सनाभहालाहलमेषशृङ्गमुस्ताकुष्ठमहाविषवेल्लितकगौरार्द्र-बालकमार्कटहैमवतकालिङ्गकदारदकाङ्कोलसारकोष्ट्रकादीनि विषाणि । सर्पाः कीटाश्च । त एव कुम्भगताः—विषवर्गः ॥**

---

चाणक्यटीका

वज्रकन्दादिः, शृङ्गिबेरमूलादिः, हरीतकीफलादिः, आदिग्रहणाल्लोध्रत्वगादिः, पटोलपत्रादिः, सालनिर्यासादिः, स्नुहीक्षीरादिरूह्यः ॥

प्रतिपदपञ्चिका

रज्जुभाण्डादीन्याह—मुञ्जबल्बजेत्यादि, मुञ्जबल्बजाः काशाशाः आदिग्रहण-मेरकादर्दादिपरिग्रहार्थमिति, रज्जुभाण्डान्तसाधनं ताल्यादयः प्रतीताः तेषां पत्रं लेख्यनुपयोगि, किंशुकादयश्च प्रतीताः । तेषां पुष्पं वस्त्रादिरागोपयोगि ।

औषधवर्गमाह—कन्दमूलफलादिरौषधवर्ग इति, कन्दास्सूरणादयः मूला-घुशीरबृहत्यादीनि, फलान्यामलकहरीतक्यादीनि, आदिग्रहणं त्वक्पत्रादिपरिग्रहार्थ-मित्ययमौषधवर्गः ।

श्रीमूला

विषवर्गमाह—कालकूटेत्यादि । कालकूटोऽश्वत्थपत्राकृतिपत्रो वृक्षः पर्वान्त-राच्छुष्कमार्द्रं च निर्यासमुद्गिरति । वत्सस्येव नाभिरस्य वत्सनाभः, निर्गुण्डीसदृशपत्रं सूचीपत्रं नीलपल्लवं गोस्तनाकृतिफलं हालाहलम्, मेषशृङ्गमुत्पलमुकुलाकारम्, मुस्ता द्विविधा मुस्ताकारा खण्डशर्करोपमा च, शङ्खपाण्डरा चेति स्वामी, कुष्ठं कुष्ठसमान-कन्दम्, महाविषं मांसवर्णं स्तनचूचुकाकारम्, वेल्लितकं मूलजं कृष्णरक्तम्, गौरार्द्रं कन्दजं कृष्णम्, बालकं पिप्पल्याकारम्, मार्कटं कप्याकारम्, हैमवतं हिमवदुत्पन्नं दीर्घपत्रम् कालिङ्गकं कलिङ्गभवं यवाकृति, दारदकं दरदप्रभवं पत्रविषम्, अङ्कोल-सारकम् अङ्कोलवृक्षजं विषम्, उष्ट्रकम् उष्ट्रमेढ्राकारम्, इत्येवं षोडश, आदिग्रहणाद-नुक्तानामेकोनसप्ततिप्रकाराणां ग्रहणम् । तदेवं स्थावराणि विषाणि पञ्चाशीतिर्भवन्ति दशाश्रयाणि । तथा च भट्टस्वामिनः श्लोकः—

> "त्वक्कन्दपत्रपुष्पाणि फलं निर्यास एव च ।
> मूलं सारस्तथा धातुर्बीजं चेति दशाश्रयाः ॥
> अव्यक्तरसगन्धानि तीक्ष्णान्येकरसानि च ।
> पञ्चाशीतिर्विषाण्येवमुपदिष्टानि तत्त्वतः ॥" इति ।

जङ्गमविषाणि द्विविधान्याह—सर्पाः कीटाश्चेति । सर्पाः कृष्णसर्पादयः, कीटाः चित्रभेककौण्डिन्यकादयः । उभये चैते प्रत्येकं द्विविधाः संस्कृतासंस्कृतभेदेन । तत्रासंस्कृताः स्वभावस्थिताः । संस्कृतांस्त्वाह—त एवेति । त एव सर्पाः कीटाश्च, कुम्भगताः औपनिषदोक्तविधानेन संस्कृत्य कुम्भे त्रपुघटे संयोजिताः । स एष विषवर्गः ।

**चाणक्यटीका**

कालकूटनामा असुरः तस्य शोणिताद् देवासुरयुद्धे समुत्पन्नस्य अश्वत्थसदृश-वृक्षस्य कृष्णो निर्यासः कालकूटविषवीर्यः, अहिच्छत्रमलयकोङ्कश्रृङ्गिबेरपर्वता-दिषूत्पद्यते ।

वत्सनाभः वत्सनाभ्याकारः सिन्दुवारसदृशपत्रः, तत्समीपे वृक्षो न वर्धते, संसृष्टो वायुर्ज्वरयति, विन्ध्ये किष्किन्धायां चोत्पद्यते ।

हालाहलः तालपत्रसंस्थानः, नीलपत्रः गोस्तनाकृतिफलो गुच्छः, तत्समीपे वृक्षादयो दह्यन्ते, हिमवति किष्किन्धायां कोङ्कणे च दक्षिणसमुद्रे जायते। मेष-श्रृङ्गाकृतिकन्दं मेषश्रृङ्गं ( नन्दनम् ? ) उत्पलनालसदृशं प्रावृषिजम् अ ( वन्दैन्द ? दैनन्दि ) नमिति विषान्तरं न पठन्ति । किन्तु मेषश्रृङ्गमेव उत्पलनालसदृशं मेषवत् प्रावृषिजं परिवर्तते, कामरूपगान्धारविषयादि ( षु जायते ) ।

( मुस्ता ) मुस्ताकृतिः, मलयकोङ्कणादिषूत्पद्यते । कुष्ठं कुष्ठसदृशम् उग्रगन्धम् ।

महाविषमिति अतिक्रान्त ( विष ) विशेष ( ण ? ) म्, अन्यान्यपि विषाणि। अपरे महाविषमिति सूचीपत्रसदृशपल्लवं विषान्तरं वर्णयन्ति, तस्याधस्तात् क्षुद्रजन्तवो ( दह्यन्ते ) । अन्ये तु महाविषाणि त्रीणि (पैल्वी ? वेल्लि) तक-गौरार्द्रक-पालकानि । तत्र ( पे ? वे ) ल्लितकं परिवेष्टिताकारकन्दम् गौरार्द्रकं श्वेतम् आर्द्रकाकारम् यद् ब्रह्मघोषमाहुः[1] सिन्धुनेपालकिष्किन्धादिषूत्पद्यते । पालकं पालकाकारं श्वेतकन्दम् । यत् पुण्डरीकमाहुः[2] गान्धारबाह्लीकेषूत्पद्यते ।

मर्कटकं तदाकारमेव ।

सक्तुकं[3] सक्तुवच्चुर्णीभवत्काण्डम् । हैमवतकालिङ्गकदारदकादिस्वप्रभवना-मानि तद्देशप्रसिद्धानि । अङ्कोलसारं नाम अङ्कोलपल्लवसदृशं हिमवत्युत्पद्यते । आदिग्रहणाद् विषतन्त्रोक्तानाम् अन्येषामपिप्युपसंग्रहः । यथोक्तमालम्बायनेन—

"त्वक्किट्टपुष्पपत्राणि फलं निर्यास एव च ।
मूलं सारस्तथा बीजं धातुश्चेति दशाश्रयाः ॥
अव्यक्तरसगन्धानि तीक्ष्णान्येकरसानि च ।
पञ्चाशीतिर्विषाण्येवमुपदिष्टानि तत्त्वतः ॥
किष्किन्धसह्यकोशलाः सकामवर्याः······।
नेपालसिन्धुगान्धारबाह्लिकाः साहिच्छत्रकाः ॥
भूयिष्ठप्रभवाश्चैव तथान्य······तादयः ।
स्थावराणां विषाणां हि तानि तानि वनानि च ॥" इति ॥

---

१. ब्रह्मघोषस्तु गरलविशेष इति केशवस्वामी ।

२. पुण्डरीकं वालुकाख्य विषान्तरे ।

३. विषविशेषवाचकोऽयं शब्दः मुद्रितकौटलीयेषु न दृश्यते ।

[ संग्राह्यचर्मादिवर्गः ]

**गोधासेरकद्वीपिशिंशुमारसिंहव्याघ्रहस्तिमहिषचमरसृमरखड्गगोमृगगवयानां चर्मास्थिपित्तस्नाय्वस्थिदन्तशृङ्गखुरपुच्छानि, अन्येषां वाऽपि मृगपशुपक्षिव्यालानाम् ॥**

चाणक्यटीका

जङ्गमान्याह—सर्पा दर्वीकरा मण्डलिनो राजीवन्तो वा। कीटाश्च चित्रभेकादयः ( शे ? शो ) षणार्थं कुम्भगताः।

प्रतिपदपञ्चिका

विषवर्गमाह—कालकूटेत्यादि, कालकूटोऽश्वत्थपत्राकृतिः पत्रो वृक्षपर्णान्तरान्निर्यासं मुञ्चन्ति(ट)वत्सनाहं(भं) द्विविधं, शुष्कमार्द्रं च निर्गुण्डीसदृशपत्रं च हालाहलं सूचीपत्रं नीलवल्लवं गोस्तनाकृतिफलं मेषशृङ्गमुत्पलमुकुलाकारं मुस्ता द्विविधम्। मुस्ताकारा शङ्खपाण्डरा च (कुष्ठं) कुष्ठसमानकन्दम्, महाविषं मांसवर्ण स्तनचूचुकाकारं वेल्लितकं मूलजं कृष्णरक्तं गौरार्द्रं बालकन्दजं कृष्णं पलागं पिप्पली संस्थानं कटकम्, (मार्कटं)कर्य मेढ्राकृति हैमवतं दीर्घपत्रं हिमवत्प्रभवं कालिङ्गकं कलिङ्गप्रभवं यवाकृति, दारदरं दरदप्रभवं पत्रविषमम् अङ्कोलसारकं जम्बूफलम्, उष्ट्रकं उष्ट्रमेढ्राकृति, आदिग्रहणात् शेषाणामप्येकोनसप्ततीनांग्रहणम्, एवं एतान्यनुवर्तैस्सह पंचाशीति स्थावराणि विषाणि दशाश्रयणानि, तथा च—

"त्वक्कन्दपत्रपुष्पाणि फलं निर्यासमेव च।
मूलं सारस्तथा धातुर्बीजं चेति दशाश्रयाः॥
अव्यक्तरसनान्यन्त्यानीतितीक्ष्णान्येकरसानि[1] च।
पञ्चाशीतिर्विषाण्येवमुपदिष्टानि तत्वतः॥ इति।

विषाणिस्थावराण्यभिधाय जङ्गमान्याह—तानि च द्विविधानि संस्कृतान्यसंस्कृतानि च, सर्पा इत्यादि, तत्र सर्पाः कृष्णसर्पा इत्यादि, कीटाश्चित्रभेककौण्डिन्यादयः, संस्कृतान्याह, त एवेति, त एव कृष्णसर्पादयः कुम्भगताः उपनिषद्विधानेन त्रापुषे कुम्भे संयोजिताः इत्ययमुभयप्रकारो विषवर्गः।

श्रीमूला

अथ चर्मादिवर्गानाह—गोधासेरकेत्यादि। सेरकः गौरत्वग् गोधाभेदः, द्वीपी चित्रकायः, सृमरः शरभः, अन्ये प्रसिद्धाः, एषां चर्मादीनि कुप्याधिकारात् कुप्यसंज्ञानि सङ्ग्राह्याणि च भवन्ति। अन्येषां वापि अनुक्तानामपि मृगपशुपक्षिव्यालानाम्, चर्मादीनि यथोपयोगं सङ्ग्राह्याणि।

---

१. अव्यक्तरस गन्धानि इति श्रीमूलायाम्।

[ लोहवर्गः भाण्डद्वैविध्यं अङ्गारादेः कुप्यता च ]

**कालायसताम्रवृत्तकांस्यसीसत्रपुवैकृन्तकारकूटानि लोहानि । विदल मृत्तिकामयं भाण्डम् । अङ्गारतुषभस्मानि मृगपशुपक्षिव्यालवाटाः । काष्ठ-तृणवाटाश्चेति ।**

———————

चाणक्यटीका

गोधा प्रतीत । शेरकः शाहिका । ऋक्षो भल्लूकः । द्वीपिव्याघ्रयोरल्पमहत्तया भेदः । (·····लमरोपप्र ? वालरोमोपल ) क्षिताश्चमर्यः । तथा खड्गिनः सृमरो मृगः । गोमृगो गवाकृतिः । एषां यथायोगं चर्मादि गृह्णीयात् । पुच्छग्रहणेन वालाः परिगृह्यन्ते । मूषिकादयस्त्वकुप्याः प्रागुक्ताः । अन्येषां चानुक्तानां मृगादीनां ( यथानि ? ) आहरेत् ॥

प्रतिपदपञ्चिका

चर्मादिवर्गानाह—गोधेत्यादि, सेरको गोरत्वक् द्वीपी चित्रकादयः सृमरः शरभः शेषाः प्रतीताः तेषां चर्मादीनि यथासम्भवं सङ्ग्राह्याणि कुप्यसंज्ञकानि च भवन्ति । अन्येषामप्युक्तव्यतिरेकेण पशुमृगपक्षिव्यालानां यथोपयोगं चर्मादयः संग्राह्या इति ।

श्रीमूला

लोहान्याह—कालायसेत्यादि । आकारकर्मान्तप्रवर्तनप्रकरणे पूर्वमुक्तानामपि लोहानामिह पुनः पाठः कुप्यसंज्ञार्थः ।

भाण्डमाह—विदलेत्यादि । भाण्डं, विदलमृत्तिकामयं बिदलमयं वंशवेत्रादिमयं पिटकफेलकादि मृत्तिकामयं कुलालभाण्डं घटशरावादि । अङ्गारेत्यादि । अङ्गारतुष-भस्मानि, मृगपशुपक्षिव्यालवाटाः मृगादीनां वाटाः स्थानानि, काष्ठतृणवाटाश्च-काष्ठतृणानां समूहाश्च कुप्यसंज्ञास्तेऽपि सङ्ग्राह्याः ।

चाणक्यटीका

कालायसादिः सप्तावयवो लोहवर्गः सुवर्णरूप्ययोश्चानुरूप्य ( त्व ? ) त् ।

विदलमयं भाण्डं पि (ट) क आटविकः शूर्पादिः । मृत्तिकामयं घटपिठरादिः ।

तथा अङ्गारादीनि कुप्यानि । एवं ( वट ? पश ) वो गोमहिषाजाविकादयः । मृगा राज्ञः क्रीडार्थं संरुद्धाः । पक्षिणो मयूरशारिकादयः । व्याला व्याघ्रादयः । एषां ( अकट ? ) वेष्टितानि दारूणि वाटाः तदर्था वा वृतयः सारदारुभिः कार्याः । काष्ठ-तृणानां च वाटाः प्रजारक्षिताः कार्याः । तदर्था वा वृतयः ॥

प्रतिपदपञ्चिका

लोहवर्गमाह—कालायसेत्यादि, कालायसादीनि कृतव्याख्यानानि तेषां कुप्यासंज्ञार्थमिह पाठः । भाण्डमाह—विदलं मृत्तिकामयं भाण्डमिति, भाण्डमिति भाण्डशब्दः प्रत्येकं बिदलमयं वंशवेत्रादिमयं विटकफेलकादिभाण्डं मृत्तिकामयं

[ द्रव्यवनोपकरणावश्यकता ]

**बहिरन्तश्च कर्मान्ताः विभक्तास्सर्वभाण्डिकाः ।**
**आजीवपुररक्षार्थाः कार्याः कुप्योपजीविना ॥९१॥**

इत्यध्यक्षप्रचारे कुप्याध्यक्षः सप्तदशोऽध्यायः
आदितोऽष्टात्रिंशः

---

प्रतिपदपञ्चिका

**स्थालीपिटकादिकुलालभाण्डमङ्गारादीनि कुप्यद्रव्याण्याह—अङ्गारेत्यादि, अङ्गार तुषभस्मानि प्रतीतानि, पशुमृगपक्षिव्यालास्सहतास्तदवस्थानानि वा पाटाः काष्ठ-तृणवटाः तत्समूहास्सर्व एवैते कुप्याध्यक्षेण संग्राह्याः कुप्यसंज्ञका भवन्तीति ।**

श्रीमूला

अध्यायान्ते श्लोकमाह—बहिरिति । बहिः द्रव्यवननिकटप्रदेशे जनपदे च, अन्तश्च दुर्गाभ्यन्तरे च, कर्मान्ताः शकटादिघटनरूपाः, विभक्ताः असंकीर्णाः पृथगवस्थानाः, सर्वभाण्डिकाः सर्वविधभाण्डसम्बद्धाः, आजीवपुररक्षार्थाः आजीवार्थाः जीविकाप्रयोजनाः हलमुसलशकटादयः पुररक्षार्था यन्त्रायुधादयश्च, कार्याः कारयितव्याः, कुप्योपजीविना तत्तत्कुप्यशिल्पाजीवेन प्रयोज्यकर्त्रा कुप्याध्यक्षेण प्रयोजकेन ॥

इति कौटिलीयार्थशास्त्रव्यायामध्यक्षप्रचारे द्वितीयाधिकरणे
सप्तदशोऽध्यायः कुप्याध्यक्षः, आदितोऽष्टात्रिंशः ॥

चाणक्यटीका

बहिरन्तश्चेति बहिः राष्ट्रे, अन्तश्चनगरे । कर्मान्ताः कुप्यानाम् । विभक्ताः अन्यत्र सारदारुभिः अन्यत्र वेणुभिरित्यादिना । सर्वभाण्डिकाः उपकरणभाण्डयुक्ताः । आजीवकर्मान्ताः······लशकटाद्यर्थाः । पुरकर्मान्ताः कवाटगोपुराद्यर्थाः । कुप्योपजीवि-नेति । तत्र नियुक्तेनाध्यक्षेणेति ॥

॥ इति कुप्याध्यक्षः सप्तदशं प्रकरणं समाप्तम् ॥
॥ सप्तदशश्चाध्यायः ॥

प्रतिपदपञ्चिका

अध्यायप्रान्ते श्लोकमाह—वहिरित्यादि, बहिर्द्रव्यवनसमीपे जनपदे च तथान्तश्च दुर्गाभ्यन्तरे कर्मान्तरश्शकटादिघटनारम्भः विभक्ताः द्विविधा आजीवपुर-रक्षाभेदेन सर्वभाण्डिकाः सर्वकर्मोपयोगिनः आजीवार्था जीविकासाधनभूताः फालश-कटादयः पुररक्षार्थाः पत्रायुधाद्यावकार्याः कर्तव्याः । संग्राह्याश्च कुप्योपजीविना कुप्याध्यक्षेणेति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायां अर्थशास्त्रटीकायां
अध्यक्षप्रचारिके द्वितीयेऽधिकरणे सप्तदशोध्यायः ।
आदितः कुप्याध्यक्षकाष्टात्रिंशोऽध्यायः ॥

# षट्त्रिंशं प्रकरणम्

## अष्टादशोऽध्यायः ।

## आयुधागाराध्यक्षः ।

[ योगक्षेमोपकरणयन्त्रायुधादिसम्पादनं
तद्रक्षणादिक्रमश्च ]

**आयुधागाराध्यक्षः साङ्ग्रामिकं दौर्गकर्मिकं परपुराभिघातिकं चक्रयन्त्रमायुधमावरणमुपकरणं च तज्जातकारुशिल्पिभिः कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कारयेत् । स्वभूमौ च स्थापयेत् । स्थानपरिवर्तनमातपप्रवातप्रदानं च बहुशः कुर्यात् । ऊष्मोपस्नेहक्रिमिभिरुपहन्यमानमन्यथा स्थापयेत् । जातिरूपलक्षणप्रमाणागममूल्यनिक्षेपैश्चोपलभेत ॥**

———————

श्रीमूला

आयुधागाराध्यक्ष इति सूत्रम् । आयुधशालाध्यक्षव्यापारोऽभिधीयत इति सूत्रार्थः । कुप्यप्रसङ्गात् तदन्तर्गतायुधप्रस्तावसङ्गतिः । अथवा सन्निधातुरायुधागारकरणं पूर्वमुक्तम्, तदध्यक्षस्त्वनुक्त इहाभिधीयत इति सङ्गतिः ।

आयुधागारेत्यादि । आयुधागाराध्यक्षः, साङ्ग्रामिकं सङ्ग्रामप्रयोजनकम्, दौर्गकर्मिकं दुर्गकर्म स्वदुर्गरक्षणं तत्साधकं परपुराभिघातिकं शत्रुदुर्गविध्वंसनानुकूलम्, यन्त्रं सर्वतोभद्रजामदग्न्यादि, चक्रयन्त्रमिति मूलपाठश्चिन्त्यः । आयुधं शक्तिचापादि, आवरणं लोहजालादि, उपकरणं च युग्यादि च, तज्जातकारुशिल्पिभिः तज्जातैस्तत्कर्मसमर्थैः कारुभिः स्थूलकर्मकारिभिः शिल्पिभिः सूक्ष्मकर्मकारिभिश्च, तैः कीदृशैः, कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कृतकर्मप्रमाणकालवेतना कर्मप्रमाणं कर्तव्ययन्त्रायुधादीनां सङ्ख्यासंस्थानादिमानं कालोऽवधिः वेतनं भृतिरित्येतानि कृतानि परिभाषितानि यस्यां सा तथाभूता फलनिष्पत्तिर्यन्त्रादिनिष्पत्तिर्येषां तैस्तथाभूतैः, कारयेत् । स्वभूमौ च स्थापयेदिति । कारितानि च तानि स्वायत्ते स्थाने निवेश्य रक्षेत् । स्थानपरिवर्तनं स्थानात् स्थानान्तरनिवेशनम्, आतपप्रवातप्रदानम् आतपवातविसारणं च, तेषां बहुशः असकृत् त्रिचतुर्दिवसात्यासं, कुर्यात् । ऊष्मोपस्नेहक्रिमिभिः घर्मप्रस्वेदघुणकादिभिः, उपहन्यमानम्, अन्यथा प्रकारान्तरेणानुपघातहेतुना, स्थापयेत् । जातीत्यादि । जात्यादिभिश्च उपलभेत तानि विजानीयात् । तत्र जातिः स्वभावः पाटनादिः, रूपमृजुवक्रतादि, लक्षणं शास्त्रोक्तमुत्तमादिचिह्नं,

### श्रीमूला

प्रमाणं मानोन्मानतो दैर्ध्यविस्तारादिपरिच्छेदः, आगमः यतो लब्धं सः, मूल्यम् अर्घः, निक्षेपः कोशभस्त्रादिः ।

### चाणक्यटीका

उक्तविशेषण एव आयुधागाराध्यक्षोऽभिधीयते । 'कुप्यानामायुधेश्वरः' इत्यत्र एकप्रकरणत्वं वक्ष्यामः[1] । सन्निधातृप्रयुक्त एव वा आयुधागाराध्यक्षः साङ्ग्रामिकं सङ्ग्रामयोग्यम् । दौर्गकर्मिकं दुर्गकर्मणे प्रभवम् । परपुराभिघातिकं च परदुर्गाभिघाते यत् प्रभवति । यन्त्रादिचतुष्टयं तज्जातैः कारुभिः शिल्पकैस्तद्वित्तकैः । इदं कर्म नवम्, ( एतत् ) प्रमाणम्, एतावता कालेन भवद्भिः कर्त्तव्यम्, इयद् वेतनम्, इदृशी च फलनिष्पत्तिः इति कृतव्यवस्थैः कारयेत् ।

तानि च स्वभूमिषु स्वयोग्यासु स्थापयेत् । यद्यपि स्वस्थानस्थितानि तथापि तेषां स्थानपरिवर्तनम् आतपप्रवातप्रदानं च विनाशपरिहारार्थं बहुशः कुर्यात् । तथा उष्मणा सङ्घर्षजेन उपस्नेहेन भूमेः, क्रिमिभिश्च उपहन्यमानम् । अन्यथा प्रवातेऽन्यत्र वा स्थापयेत् । एवं जातिभेदेन शक्तिरसिरिति । देशभेदेन विना शास्त्रं दाक्षिणात्य-मिति । रूपेण मण्डलाग्रमन्तरिति (?) । लक्षणेन ( अर्धवा ? ) अर्धवंशो निर्वंश इति । प्रमाणेन उत्तमो मध्यमोऽधम इति । आगमेन ( कृतमाहितो मध्यमामुदासीनमल्पेन शक्त्या साहस्र इति ? ) । निक्षेपेण वैयाघ्रकोश ( पो ? रौ ) रवकोश इति । विद्याद् असंमोहनार्थम् ।

### प्रतिपदपञ्चिका

आयुधागाराध्यक्ष इति सूत्रम् ।

सूत्रार्थः । सम्बन्धस्तु कुप्याध्यक्षोऽभिहित एव । आयुधादीनां कुप्यान्तर्गतत्वादथवा सन्निधाता कोशगृहादीनि कारयेदित्यत्र पृथगायुधागारकरणमुक्तम् । तदध्यक्षः तद्व्यापारो वा नाभिहितः सोऽभिधीयत इति सम्बन्धः । तदाह— आयुधागाराध्यक्ष इत्यादि, स सङ्ग्रामादिति प्रयोजनम् । यन्त्रादिचतुर्विधं द्रव्यजातं वक्ष्यमाणलक्षणैः कारुशिल्पिभिः कारयेत् । तत्र साङ्ग्रामिकं युद्धप्रयोजनं दौर्गकर्मिकं स्वदुर्गरक्षणसमर्थं परपुराभिघातकं परदुर्गलङ्घननिमित्तं यन्त्रं जामदग्न्यादि उपकरणं युग्यभाण्डादि । चस्समुच्चये तद्ज्ञातास्तत्कर्मनिपुणाः कारवः स्थूलकर्मकृतः शिल्पिनः सूक्ष्मकर्मकृतः कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिरिति कृतशब्दः प्रत्येकं, कर्मप्रमाणं स्थपतिप्रामाण्यादिष्टकादिकर्मरचना कालोवधिवेतनं मूल्यं फल-निष्पत्तिर्यन्त्रादिनिष्पत्तिः एवं कृताः परिकर्मप्रमाणादयो येषां तैः कारयेदिति केचित् । अथवा कृतकर्मप्रमाणैः परिभाषितकर्तव्ययन्त्रायुधादि सङ्ख्यैः एवंकृतकालैः कृतावधिभिः कृतवेतनैः परिभाषितमूल्यैः कृतफलनिष्पत्तिभिः बहुशो दृष्टकर्मभिः कारयेदिति ।

---

१. प्रस्तुताध्यायान्ते ।

[ स्थितचलयन्त्राणां आयुधानां च निर्देशः ]

**सर्वतोभद्रजामदग्न्यबहुमुखविश्वासघातिसङ्घाटियानकपर्जन्यकबाहूर्ध्व-बाह्वर्धबाहूनि स्थितयन्त्राणि । पञ्चालिकदेवदण्डसूकरिकामुसलयष्टिहस्ति-वारकतालवृन्तमुद्गरद्रुघणगदास्पृक्तलाकुद्दालास्फोटिमोद्घटिमोत्पाटिमशत-घ्नीत्रिशूलचक्राणि चलयन्त्राणि शक्तिप्रासकुन्तहाटकभिण्डिपालशूलतोमर-वराहकर्णकणयकर्पणत्रासिकादीनि च हलमुखानि ।**

———————

प्रतिपदपञ्चिका

तानि च कृतानि स्वभूमिष्वनुपघातिषु स्थापयेत् । स्थानपरिवर्तनं स्थानातर-सन्तरणं आतपप्रवातदानं विसारणं बहुशस्त्रि चर्तुदिनानन्तरं कुर्यात् । ऊष्मणा घर्मेण उपस्नेहेन प्रस्वेदेन कृमिभिः घुणकसारिकादिभिः उपहन्यमानं विदूष्यमाणं अन्यथेति । यथा नोपहन्यते तथा स्थापयेत् । तानि जात्यादिभिश्च सप्तभिरुपलभेत । तत्र जातिः पाटनादिः रुपमृजुपत्रादि प्रमाणविस्तारतः पृथुत्वमायागतश्च लक्षणा-मागमोक्तम् प्रशस्तादिलिङ्गम् आगमो यतो लभ्यं मूल्यं शतादि निक्षेपः कोशभस्त्रादिः चस्समुच्चये ।

श्रीमूला

यन्त्राण्याह—सर्वतोभद्रत्यादि । अत्र स्वामी व्याचष्टे—"तत्र सर्वतोभद्रं शकटचक्रप्रमाणं तीक्ष्णनेमि कुड्यास्थितगन्धर्वहस्तथं भ्रमणात् सर्वतः पाषाणान् क्षिपति । अपरे तु सिद्धभूमिकायन्त्राख्यं लघुतरपाषाणक्षेपणमाचक्षते । जामदग्न्यं-मध्यरन्ध्रविनिहितमहाशरं यन्त्रम् । बहुमुखं प्राकारोत्सेधाधिगतश्चक्रसन्निविष्टश्चर्मा-वृतस्त्रिचतुस्तलो धानुष्काधिष्ठानञ्च अट्टालको भवति । तत्र स्थिता धन्विनो नराः सर्वतः शरान् क्षिपन्ति । विश्वासघाति तिर्यगवस्थितो नगरस्य बहिः परिघो यन्त्र-विश्लेषणेन हन्ति । सङ्घाटि दीर्घकाष्ठसंघटितमट्टालकादिप्रदीपनार्थमग्नियन्त्रम् । यानकं चक्रारूढं दण्डायतं फलककोष्ठि । पर्जन्यकमग्निप्रशमनार्थमुदकयन्त्रम्, अन्ये तु पञ्चाशद्धस्तायतं बहिः प्राकारस्य सन्ततं यन्त्रविश्लेषणेन समीपगतं व्यापादयतीत्या-चक्षते । विश्वासघातिनोऽस्य च विशेषः—तत् प्रच्छन्नं लघुतरं च भवति, एतत्तु तद्विपरीतमिति । बाहुयन्त्रं पर्जन्यकार्धप्रमाणं स्तम्भद्वयं परस्पराभिमुखं यन्त्र-विश्लेषणेन मारयति । ऊर्ध्वबाहु ऊर्ध्वस्थितः पर्जन्यकप्रमाणो महास्तम्भः समीपगतान् यन्त्रविश्लेषणेन हन्ति । अर्धबाहु पूर्वस्यैवार्धप्रमाणम् । इत्येवमेतानि दश स्थितयन्त्राणि" इति ।

चलयन्त्राण्याह—पञ्चालिकेत्यादि । पञ्चालिकं तीक्ष्णमुखनिरन्तरसारदारुफलकं प्राकाराद् बहिरुदकमध्ये शत्रुमार्गनिरोधार्थं क्रियते । देवदण्डः कीलरहितः महास्तम्भः

श्रीमूला

प्रतीतरोचाभिधान इति स्वामी। स प्राकारस्योपरि स्थाप्यते। सूकरिका सूत्रचर्ममयी कार्पासोर्णादिपूर्णमध्या महाभस्त्रा प्रमाणतो गोपुराट्टालकदेवपथादीनां प्रच्छादनो बाह्यपाषाणनिवारणाय क्रियत इति केचित्। 'वेणुमयी चर्मावृता सूकराकारा प्राकारग्रहणनिवारणाय क्रियत इत्यन्ये' इति स्वामी। मुसलयष्टिः खादिरः शूलः। हस्तिवारको 'द्विमुखस्त्रिमुखो वेति केचित्। हस्त्याघाताय हस्तिपरिघ इत्यपरे' इति स्वामी। तालवृन्तं वातचक्रम्। मुद्गरः प्रसिद्धः। द्रुघणो मुद्गराकारः। गदा लगुडी। स्पृक्तला गदैव कण्टकनिचिता। कुद्दालः खनित्रम्। आस्फोटिमं चर्मावृतं चतुःस्तम्भं मृत्पाषाणक्षेपणयन्त्रम्। उद्घाटिमं मुद्गराकृतिरेव यन्त्रभेदः। उत्पाटिमं स्तम्भाद्युत्पाटनं श्येनयन्त्रम्। शतघ्नी स्थूलदीर्घकीलाचितो महास्तम्भः पर्यन्ताहितशकटचक्रः प्राकारोपरि क्रियते। त्रिशूलचक्रे प्रसिद्धे। इत्येतानि सप्तदशचलयन्त्राणि। श्लोकश्चात्र भट्टस्वामिनः—

"व्यधितं भ्रामितं चैव भारयुक्तं च कारयेत्।
पीडनाद् भ्रमणाद् भारात् त्रिधा यन्त्रं प्रवर्तते॥" इति।

आयुधान्याह—शक्तिप्रासेत्यादि। शक्तिः सर्वलोहमयङ्करवीरपत्राकृतिमुखम् अधस्ताद् गोस्तनाकारं चतुर्हस्तदीर्घमायुधं, प्रासश्चतुर्विंशत्यङ्गुलो द्विपीठः सर्वलोहमयः काष्ठगर्भश्च, कुन्तः—

"हस्ताः सप्तोत्तमः कुन्तः षड्ढस्तैश्चैव मध्यमः।
कनिष्ठः पञ्चहस्तैस्तु कुन्तमानं प्रकीर्तितम्॥"

इत्युक्तलक्षणः, हाटकं त्रिकण्टकं कुन्ततुल्यप्रमाणं, भिण्डिपालः कुन्त एव पृथुफलः, शूलम् एकमुखमनियतहस्तप्रमाणं, तोमरः शराकृतिशिखः—

"चतुर्हस्तः कनिष्ठस्तु चत्वारोऽर्धं च मध्यमः।
उत्तमः पञ्चहस्तस्तु प्रमाणात् तोमरो भवेत्॥"

इत्यभिहितत्रिभेदः, वराहकर्णः प्रास एव वराहकर्णाकृतिमुखः, कणयः सर्वलोहमय उभयतस्त्रिकण्टकाकारमुखो मध्यमुष्टिः,

"कनिष्ठो विंशतिः स्यात् तदङ्गुलानां प्रमाणतः।
द्वाविंशतिर्मध्यमः स्याच्चतुर्विंशतिरुत्तमः॥"

इत्युक्तप्रकारत्रयः, कर्पणः तोमरतुल्यमानो हस्तक्षेप्यः पक्षयुक्तः शरः—

"कनीयः सप्तकर्षं तु द्विपलं मध्यमं भवेत्।
उत्तमं नवकर्षं तु कर्पणस्य पलं भवेत॥"

इत्युक्तत्रिप्रकारपलप्रमाणः, त्रासिका सर्वलोहमयी प्रासप्रमाणा चूडोपेता, इत्येवञ्जातीयान्यायुधानि, हलमुखानि तीक्ष्णाग्रत्वात्।

चाणक्यटीका

यन्त्राण्याह—सर्वतोभद्रं चक्रयुक्तत्वात् सर्वतो यथेष्टमवस्थापितं बाणान् मुञ्चति। अपरेत्वाहुः—सर्वतोभद्रं जा ( न ? नु ) मुदस्य धनुर्यन्त्रस्योर्ध्वमधस्तिर्यग्वा मुष्टि-देशसञ्चारणाद् यच्छरान् मुञ्चति। अपरः प्रकारः शिलायन्त्रं धनुर्यदेवंविधं तत् सर्वतोभद्रमेव। जामदग्न्यंतु सर्वायुधविसर्गम् अनेकप्रकारमिति।

बहुमुखं बहुच्छिद्रम् अट्टालकादिधानुष्कस्थानम्। विश्वासघातीति अन्तः कीलमोक्षणेन निब ( त्त ? द्धत ) लवद्धपरिघादिमद् विश्वस्तान् हन्ति।

सङ्घाटि ( युग्मकवटे ? ) भित्तिप्रकारादि यानकं चर्मोतं प्राकारदीर्घशाला-कारम्, येनावृता युध्यन्ते वृक्षकवाट प्राकारादि वा नाशयन्ति।

पर्जन्यः लोहमुसलः ( येन ) अधोगता हत्वा श्रृङ्खलाप्रतिघादूर्ध्वं कृष्यन्ते।

बाहुरिव बाहुः यन्त्रसञ्चारितमूलो महार्गलः तिर्य(ग)न्तराद् घातयति।

ऊर्ध्वबाहुः ( त्रिदश एव ? ) उद्यताग्रः पञ्चाशद्धस्तायामः इन्द्र ( द्द ? य ) ष्टयाकृतिः रज्जुकीलसञ्चारादधः स्थितेषु पात्यते।

( स ? ) एतस्यार्धम् अर्धबाहुरिति। एतानि महाप्रमाणत्वादेकदेशस्थितान्येव असञ्चारीणि यन्त्राणि।

पाञ्चालिका मनुष्यादिप्रतिकृतिः, या कुतूहलादपि स्पृष्टमङ्गं गृह्णाति विकली-करोति वा।

देवदण्डो यन्त्रक्षेप्योऽरत्निमात्रो लकुटः[1]।

सुकरिका या बाह्यपाषाणनिवारणार्था चर्मभस्त्रा तूलकार्पासोर्णा ( दिपूर्णा ) गोपुरादिषु स्थाप्यते[2]।

मुसलयष्टिः क्षेप्यैव।

हस्तिवारकः अष्टहस्तप्रमाणः शरभाकृतिपादोऽर्गलाकारो ( ऽन्वि )तार्थः[3]।

तालवृन्ताकृतिश्चर्ममयस्तालवृन्तोऽपि शस्त्रनिवारणार्थः।

मुद्गरगदे, यन्त्रक्षेप्ये।

स्पृकुला अष्मतुला अन्तर्गता ( शा ? श्मा )वतरणाद् बहिरश्मनो मुञ्चति।

कुद्दालं तदाकृति, उत्पाटनार्थम्[4]।

———

१. "देवदण्डोऽरत्निमात्रदीर्घो मुसलयष्टिकः," इति वैजयन्ति।

२. "सूकरिका सूत्रचर्ममयी कार्पासोर्णादिपूर्णामध्या महाभस्त्रा प्रमाणतः गोपुराट्टाल-कादेव पथादीनां प्रच्छादिनी बाह्यपाषाणादिनिवारणाय क्रियत इति केचित्। वेणुमयी चर्मावृता सूकरा(कारा)प्राकारग्रहणनिवारणाय क्रियत इत्यन्ये" इति भट्टस्वामी।

३. हस्तिवारो गजत्रासहेतुः शरभसन्निभः" इति वैजयन्ती "हस्तिचारो गजत्रासहेतोः शरसन्निभे, हस्तिनश्च चारे" इति केशवस्वामी 'वार' स्थाने 'चारं' पठति।

४. "कुद्दालस्तु पुमान् गोदारणाख्ये खनिसाधने। क्लीबंतु वैजयन्त्याह" इति केशवस्वामी।

## चाणक्यटीका

आस्फोटिमम् आस्फोटेन निर्वृत्तं यन्त्रपाषाणम् ।

उत्पाटिमं शूलाकारं कवाटभञ्जनार्थम् ।

उद्घाटिमम् ऊर्ध्वोत्पाटनसमर्थं श्येन ( यन्त्रम् ) । सर्वत्र भावप्रत्ययान्ताद् इमनिच् ।

शतघ्नी कीलशतप्रचिता कपाटाकारा ऊर्ध्वमुक्ता हस्त्यादीन् मारयति ॥

तथा त्रिशूलं त्रिमुखम् ॥

चक्रयन्त्रं भ्रमणेन मारयति विकलीकरोतिवा । क्षिप्यमायत्वाच्चैतानि चलयन्त्राणि ॥

आयुधान्याह—शक्तिः चतुर्हस्ता ( त् ? ) काष्ठचतुर्भागा करवोरपत्रा मुखहला ॥ प्रासो लोहमयदण्डो वा उभयतोलोहः ॥

कुन्तम् अश्वसाद्यायुधञ्च ( षट् ? ) ।

"सप्तहस्तं भवेत् कुन्तं षड्ढस्तं चैव मध्यमम् ।
कन्यसं पञ्चहस्तञ्च ( दण्ड ? कुन्त ) मानं प्रकीर्तितम् ॥" इति

हाटकं तदेव त्रिकण्टकमुखम्[1] । भिण्डिपालः क्षेपणीयो दण्डभूयिष्ठः । शूलमायसं पट्टसाग्रम् । तोमरः कणयमुखो लोहशिरस्को दण्डः चतुष्पञ्चहस्तप्रमाणः भेदनमुखः ।

उक्तञ्च—"हस्ता हीनस्य चत्वारश्चतुरर्धं च मध्यमम् ।
पञ्चहस्तं तु ज्येष्ठं स्यात् प्रमाणात्तोमरं स्मृतम् ॥" इति ॥

वराहकर्णाकृतिमुखस्तोमर एव वराहकर्णः ॥

कणयोऽप्यायसोऽधममध्यमोत्तमः ।

उक्तञ्च—"कन्यसो विंशतिर्ज्ञेयः अङ्गुलानां प्रमाणतः ।
द्वाविंशतिर्मध्यमः स्याच्चतुर्विंशतिरुत्तमः ॥" इति ॥

कम्पनोऽप्येकमुखः सप्ताष्टनवकलोहः कणयः ॥

उक्तञ्च—"कनीयान् सप्तकर्षस्तु द्विपलो मध्यमो भवेत् ।
तृतीयो नवकर्षस्तु कम्पनस्तूत्तमो भवेत् ॥" इति ॥

प्रासिका[2] ( इति ) प्रासार्धशक्तिमाहुः । आदिशब्दादन्यान्यपि ग्राह्याण्येवं-जातीयकानि । एतानि हलमुखानि[3] भेद(न)मुखानीत्यर्थः ॥

---

१. "हाटकस्तु स त्रिकण्टक संस्थित" इति वैजयन्ती ।

२. त्रासिकेति मुद्रितकोश पाठः । प्रासः प्रहरणमस्य प्रासिक इति काशिका । (४.४.५७)

३. मूलकोशेषु हलमुखानीत्येव पाठो दृश्यते । "फलंतु मुनिना खड्गाद्यग्रे दृष्टम्" इति क्षीरस्वामी, (२.८९१) "धारा शस्त्रमुखं फलम्" इति वैजयन्ती, "फलं शस्त्राणां मुखे" "इति केशवस्वामी च । एवं खड्गाद्यायुधमुखवाचिनः फल शब्दस्य बहुत्र दर्शनात् फलमुखानीति पाठः संभाव्यते ।

प्रतिपदपञ्चिका

यन्त्राण्याह-सर्वतोभद्रमित्यादि; तत्र सर्वतोभद्रं शकटचक्रप्रमाणं तीक्ष्णनेमि-कुड्यस्थितगन्धर्वहस्तस्थं भ्रमणात् सर्वतः पाषाणान् क्षिपति। अपरे तु प्रसिद्धम् भ्रमरिकायन्त्राख्यं लघुतरं पाषाणक्षेपणमाचक्षते।

जामदग्न्यं हर्म्यं रन्ध्रविहितमहाशरयन्त्रम्। बहुमुखः प्राकारोत्सेधातिगश्च-क्रसन्निविष्टः चर्मावृतः। त्रिचतुस्तालो धानुष्काधिष्ठानं च अट्टालको भवति। तत्रस्था धन्विनो नरास्सर्वतश्शरान् क्षिपन्ति। विश्वासघाती तिर्यगवस्थितो नगरस्य बहिः परिघो यन्त्रविशेषेण हन्ति। सङ्कटिदीर्घकाष्ठसङ्घटिकाट्टालकादि प्रदीपनार्थमग्नि-यन्त्रम्। यानिकं चक्रारुढादण्डोहितलकूटि। पर्जन्यकमग्निप्रशमनार्थमुदकयन्त्रम्। अन्येतु पञ्चाशद्धस्तायतं बहिः प्राकारस्य सन्नद्धं यन्त्रविश्लेषणेन समीपगतं व्यापाद-यतीत्याचक्षते। विश्वास्यघातिनोऽस्य च विशेषः तत्प्रच्छन्नलघुतरं च भवति। एवं तु तद्विपरीतं पर्जन्यकार्थप्रमाणं स्तम्भद्वयं परस्पराभिमुखं यन्त्रविश्लेषणेन मारयति। ऊर्ध्व-बाहुः उर्ध्वस्थितः पर्जन्यकप्रमाणोपहास्तम्भः समीपगतान्यत्रविश्लेषणेन हन्ति। अर्धबाहुः पूर्वस्यैवार्धप्रमाण इति, एवमेतानि दश स्थितयन्त्राणि। वंचालका तीक्ष्णमुखनिरन्तरता सारदारुफलका प्राकाराद् बहिरुदकं मध्ये कर्दमदण्डच्यपरमार्गनिरोधार्थम् क्रियन्ते। देवदण्डः कीलाहितो महास्तम्भः प्रतीतरोचाभिधानः प्राकारस्योपरि स्थाप्यते।

सूकरिकासूत्रचर्ममयी कार्पासोर्णादिपूर्णमध्यामहाभस्त्राप्रमाणतो गोपुराट्टालक-देवपथादीनां प्रच्छादिनी बाह्यपाषाणनिवारणाय क्रियत इति केचित्। वेणुमयी चर्मा-वृता सूकरप्राकारग्रहणनिवारणाय क्रियत इत्यन्ये। मुसलयष्टिः खादिरः शूलः हस्तिवारको द्विमुखः त्रिमुखो वा महादण्ड इति केचित्। हस्त्याघाताय हस्तिपरिघ इत्यपरे। तालवृन्तं वातचक्रं मुद्गरो द्रुघणः मुद्गराकारलकुटी ( गुडी ) त्यपरे। गदालकुटी प्रतीता स्त्रकतुवा (?) सैव कण्टकनिचिताकार कुद्दालः खनित्रं आस्फोटिमं चर्मावृतं सगोष्पणयष्ट्यपेतमृत्पाषाणक्षेपणयन्त्रं उद्घाटिमं प्रतीतं मुद्गराभिधानं प्रका-राष्टालकोद्धारणाय क्रियते। उत्पाटिमं स्तम्भादीनां भूमिनिखातानां उत्पाटनयन्त्रं बाह्यहलादिग्रहणार्थं क्रियते। शतघ्नी व्यूढदीर्घः कीलाचितो महास्तम्भः पर्यन्ताहित-शकटचक्राप्राकारो परिक्रियते त्रिशूलश्चक्रं च प्रतीतम्। एवमेतानि सप्तदश चलयन्त्राणि, तथा च—

"पीडितं भ्रामितं चैव भारयुक्तं च कारयेत्।
पीडनाद्भ्रामणात् भारात्त्रिधायन्त्रं प्रवर्तते॥" इति।

आयुधान्याह शक्तीत्यादि, सर्वलोहमयी चतुर्हस्ताकारवीरपत्राकृतिमुखास्तना-कृतिरधस्तात्प्रासः चतुर्विंशत्यङ्गुलः स च द्विपीठस्सर्वलोहमयः काष्ठदन्तश्च, कुन्तस्त्रि-विधः। तथा च—"हस्तास्सप्तोत्तमः कुन्तः षड्ढस्तैश्चैव मध्यमः। कनिष्ठः पञ्चहस्तैस्तु कुन्तमानं प्रकीर्तितम्"। इति। हाटकं त्रिमुखं कुन्तप्रमाणं। भिण्डिपालः कुन्त एव पृथुफलः। शूलमेरुशिखमनियतदण्डप्रमाणम्। तोमरशराकारमुखः त्रिप्रमाणः। तथा च—

[ धनुर्ज्याबाणाः बाणाग्रसन्निवेशभेदाश्च ]

**तालचापदारवशार्ङ्गाणि कार्मुककोदण्डद्रूणा धनूंषि मूर्वार्कशणगवेणुस्नायूनि ज्याः। वेणुशरशलाकादण्डासननाराचाश्च इषवः। तेषां मुखानि छेदनभेदनताडनानि आयसास्थिदारवाणि।**

---

प्रतिपदपञ्चिका

चतुर्हस्तः कनिष्ठस्तु चत्वारोऽर्धं च मध्यमः।
उत्तमः पञ्चहस्तस्तु प्रमाणं तोमरो भवेत्॥ इति।

वराहकर्णः प्रास एव वराहकर्णाकारफलः। कणयः सर्वलोहमयः उभयत्र शृङ्गाटकाकारफलो मध्यमुष्टिः। स च त्रिप्रमाणः। तथाच :—

"कनिष्ठं विंशतिं दद्यादङ्गुलानां प्रमाणतः।
द्वाविंशतिर्मध्यमः स्यात् चतुर्विंशतिरुत्तमः॥"

इति। कर्पणस्तोमरतुल्यदण्डो हस्तक्षेप्यश्च त्रिविधं च। तस्य फलप्रमाणम्, तथा च :—

कनीयस्सप्तकर्षंतु द्विपलं मध्यमं भवेत्।
उत्तमं नवकर्षन्तु कर्पणस्य फलं भवेत्॥
हस्तमुक्तो गुरुतया क्षेप्तश्शिक्षावशेन च।
धनुश्शतं व्रजेत्साग्र(र्ध)र्थइत्याह भृगुनन्दनः॥ इति

त्रासिका प्रासप्रमाणा सर्वलोहमयी स शूला भवति। आदिग्रहणं तीक्ष्णो ग्रवेणु सशरादिपरिग्रहार्थम्। एवमेतानि बहुलमुखानीति।

श्रीमूला

धनूंष्याह—तालेत्यादि। तालचापदारवशार्ङ्गाणि तालं तालमयं चापं वेणुविशेषमयं दारवं धन्वनादिसारवृक्षदारुनिर्मितं शार्ङ्गं विषाणमयम् इत्येवं चतुष्प्रकृतीनि, धनूंषि भवन्ति। तानि च कार्मुककोदण्डद्रूणाः आकृतिक्रियादिभेदात् कार्मुकादिसंज्ञानि भवन्ति। तत्र कार्मुककोदण्डयोः प्रमाणलक्षणादिकं धनुर्वेदादवगन्तव्यम्, 'द्रूणस्तु लोकप्रतीत' इति स्वामी।

ज्या आह—मूर्वेत्यादि। स्नायुर्वायुवाहिनी नाडी। शेषं प्रतीतम्। तत्र वेणुविदलज्या कोदण्डस्यैव, अन्ययोस्त्वन्या इति स्वामी।

इषूनाह—वेण्वित्यादि। तत्र वेणुरूटजर्चिमियादिः, शरो जात्यशराख्यः स्तम्बः, शलाका सारदारूमयी, दण्डासनोऽर्धनाराचः, नाराचः सर्वलोहमयः। चकारो भ्रमरद्रोणमक्षिकादिसंग्रहार्थं इति स्वामी। इषुकर्माण्याह—तेषामिति। तेषाम् इषूणां, मुखानि अग्राणि, छेदनानि कर्तनानि, भेदनानि सशोणिताभिघातदायकानि, ताडनानि अशोणितप्रहारदायकानि च भवन्ति। मुखानां प्रकृतिमाह—आयसास्थिदारवाणीति। आयसानि अस्थिमयानि दारवाणि सारदारुमयानि च।

[ खड्गतन्मुष्टीनां आयुधविशेषाणां च भेदाः ]

**निस्त्रिंशमण्डलाग्रासियष्टयः खड्गाः । खड्गमहिषवारणविषाणदारुवेणुमूलानि त्सरवः । परशुकुठारपट्टसखनित्रकुद्दालक्रकचकाण्डच्छेदनाः क्षुरकल्पाः । यन्त्रगोष्पणमुष्टिपाषाणरोचनीदृषदश्च आयुधानि ।**

---

चाणक्यटीका

तालसारात् कृतं तालम्[1] । वंशात् कृतं चापम् दारुभ्यो निष्पादितं दारवम्, शृङ्गान्निष्पन्नं शार्ङ्गम्, तेषां नामानि (कर्मा ? कार्मुका) दीनि(प्र)त्येकं चतुररत्नितो ह्रस्वः । कोदण्डो वैणव (ज्या ? ज्यः) । द्रूणो[2] बाह्यसन्धानः यमाग्ने(या)स्त्रमित्याहुः ।

मूर्वाविणुस्नायूनि ज्याः । अत्रकारणे कार्योपचारः । वेणुशरौ प्रतीतौ । शलाका दारवो दण्डासनो वेण्वादिदण्ड एव, त्रिभागशल्योऽर्धनाराचः पत्रदण्डो वा । नाराचस्त्वायस एव । (इति) शराः पञ्चविधाः । चशब्दाद् ( विधिस्तिकान् ?) अन्ये परिगृह्णन्ति, (तेषां) मुखानि छेदनानि अर्धचन्द्राकृतीनि । भेदनानि रू(प्या ? क्षा)ग्राणि । आयसानि छेदनभेदनार्थानि । (भेदनादन्ये ? ताडनान्येव) तु अस्थिमयानि सारदारुमयानि वा ।

प्रतिपदपञ्चिका

धनूंष्याह-तालचापदारवशांगा( र्ङ्गा )णीति ।

तालं तालमयं, चापं वेणुविशेषमयं, दारवं धान्वनसारदारुमयं, शार्ङ्गं शृङ्गमयं, इत्येवं चतुर्योनिधनुर्द्रष्टव्यम् । तेषां क्रियासंस्थानादि भेदात्तिस्रः कार्मुकादि संज्ञा भवति । तत्र कार्मुककोदण्डयोः प्रमाणलक्षणादीनि धनुर्वेदोपदेशादवगन्तव्यानि । द्रूणं लोकप्रतीतो अशास्त्रोपदेश्यं प्रायशस्तु दार्कषिकणाघातां द्रूणमेवास्त्रं इत्येतानि धनूंषि तेषां मूर्वादि चतुर्विधा ज्यामूर्वादयश्च कुप्याध्यायोक्ताः । कोदण्डस्यैव वेणुविदल ज्याशेषास्वितरयोस्तस्याविषूनाह-वेणुशरशलाकाः दण्डासननाराचाश्चेति । तत्र वेणुः उटजचिमियादिः शरो जात्या शराख्यस्तम्बविशेषः । शलाका चूगभेदादि सारकाष्ठमयी दण्डासनोर्धनाराचाः नाराचस्सर्वादयः चकारो भ्रमर द्रोण मक्षिका द्यसङ्ग्रहार्थः । इत्येवमेत इषवः, तेषामिषूणां मुखान्यग्राणिच्छेदनानि अर्धचन्द्रफलादीनि ताडनान्यशोणितप्रहारकराणि स्थूलमुखानि तानि च मुखान्यायसानि अस्थिमयानि सारदारुमयानि च भवन्ति । व्यूहनस्य भेदनस्य च भेद एवान्तर्भावादनुपादानं यतश्चतु र्विधं हि बाणकर्माभिहितम् । "बाणमोक्षो धनुष्कर्म बाणकर्म च वेधनम् । छेदनम् भेदनं चैव व्यूहनं ताडनं तथा ।" इति ।

श्रीमूला

खड्गानाह—निस्त्रिंशेत्यादि । तत्र निस्त्रिंशो वक्राग्रः, मण्डलाग्रः ऋजुवृत्ता-

---

१. "तालादिभ्योऽण्" (४.३.१५२) । "तालाद्धनुषि" तालम्, इति काशिका ।

२. 'द्रुणं धनुषि' इति ह्रस्वोपकारादिमाह केशवस्वामी ।

श्रीमूला

काराग्रः, असियष्टिस्तनुदीर्घाकृतिः । त्सरुप्रकृतीराह—खड्गेत्यादि । खड्गो गण्डकमृगः, महिषः सैरिभः, वारणो गजः इत्येतेषां विषाणानि शृङ्गाणि दारूणि सारदारूणि वेणुमूलानि वंशमूलानि च, त्सरवः खड्गमुष्टयः ।

क्षुरकल्पानाह—परशुकुठारेत्यादि । तत्र परशुः सर्वलोहमयश्चतुर्विंशत्यङ्गुलः, पट्टस उभयान्तत्रिशूलः, क्रकचः करपत्रम्, काण्डच्छेदनः काण्डासिकः, शेषं प्रतीतम् ।

यन्त्रेत्यादि । पाषाणशब्दस्य यन्त्रादिषु प्रत्येकं सम्बन्धः, यन्त्रपाषाणो यन्त्रक्षेप्यपाषाणः, गोष्पणपाषाणो गोष्पणाख्ययष्टिविशेषक्षेप्यः पाषाणः, गावणेति भाषापाठः साधुतरः । मुष्टिपाषाणो मुष्टिक्षेप्यः पाषाणः, रोचनी दलनयन्त्रशिला, दृषद् महाशिला । चकारः समुच्चयार्थः । इत्येतानि आयुधानि ।

चाणक्यटीका

निस्त्रिंशस्त्रिंशदङ्गुलायामोन्नतवंशः । मण्डलाग्रोऽन्वर्थनामा निर्वंशो ह्रस्वश्च । असियष्टिस्तु दीर्घा ( नवृश्चियाम् ? व्रश्चना ) । उदीच्यास्तरवारिमाहुः[1] । एषां त्सरवो मुष्टयः खड्गादीनि ।

परशुः सर्वलोहः(का)ष्ठदण्डोवा ।

पट्टिसो[2] लोहदण्डः ( कूरायुक ? ) खनित्रकुद्दालक्रकचाः प्रसिद्धाः । कण्टकच्छेदनो द्विमुखः । एते तीक्ष्णधारत्वात् क्षुरप्राः ।

यन्त्रगोष्पणो यन्त्रक्षेप्यबृहच्छैलगुडकः । मुष्टिपाषाणो हस्तक्षेप्यः । रोचनीदृषदिति शिलापट्टिका ( इति ? ) बृहती मुक्ता सती हस्त्यश्वादीन् हन्ति । पूर्वैःसह एतान्यायुधानि ।

प्रतिपदपञ्चिका

निर्स्त्रिंशमण्डलाग्रासियष्टयः खड्गा इति तत्र निर्स्त्रिंशो वक्राग्रः ऋजुवृत्ताग्रो मण्डलाग्रः पृथुफलश्च असियष्टिः तनुदीर्घान् त्सरूनाह-खड्गेत्यादि, खड्गो गण्डकः महिषः प्रतीतः वारणो हस्ती तेषां विषाणानि, दारूणि सारदारूणि वेणु मुलानि च वंशमूलानि च त्स ( सं ) रवो मुष्टयः खड्गानां भवन्ति । क्षुरकल्पानाह—

परशुकुठारे इत्यादि, परशुः सर्वलोहमयः चतुर्विंशत्यङ्गुल्लीऽर्धचन्द्राकारफलः, कुठारोक्तं सारिणीति प्रतीता ।

पट्टस उभयान्तं त्रिशूलः लोहदण्डः परशुरेव त्रिशूलइत्यपरे । खनित्रं कुद्दालं च प्रतीतं, क्रकचः करपत्रं काण्डच्छेदनं कुण्डासिका क्षुरकल्पाः छेदन-

---

१. तरवारिः "स्त्रियां यष्टिनामधेयायुधान्तरे" इति केशवस्वामी "करवालाद् अल्पे कन् करवालिका, तरवारिकेत्येके", इति क्षीरस्वामी । (२.८.९१) ।

२. "पट्टसो लोहदण्डोऽयस्तीक्ष्णधारः क्षुरोपमः कण्टकच्छेदनोऽप्येवं द्विमुखश्च" इति वैजयन्ती ।

[ कवचभेदाः उपकरणभेदाश्च ]

**लोहजालजालिकापट्टकवचसूत्रकङ्कटशिंशुमारकखड्गिधेनुकहस्तिगोचर्म-खुरशृङ्गसङ्घातं वर्माणि, शिरस्त्राणकण्ठत्राणकूर्पासकञ्चुकवारवाणपट्टनागोदारिकाः, पेटीचर्महस्तिकर्णतालमूलधमनिकाकवाटकिटिकाप्रतिहतवलाहकान्ताश्च आवरणानि । हस्तिरथवाजिनां योग्याभाण्डमालङ्कारिकं सन्नाहकल्पनाश्चोपकरणानि । ऐन्द्रजालिकमौपनिषदिकं च कर्म ॥**

---

प्रतिपदपञ्चिका

प्रकाराः । यन्त्रेत्यादि, यन्त्रादीनां त्रयाणां पाषाणशब्दः प्रत्येकं यन्त्रक्षेप्यायन्त्र-पाषाणाख्यः यष्टिविशेषक्षेप्या गोष्पणपाषाणाः हस्तक्षेप्या मुष्टिपाषाणाः रोचनी बृहत्काष्ठं बृहन्महाशिला, चस्समुच्चये । एवमेतान्यायुधानि प्रहरणानिच ।

श्रीमूला

वर्माण्याह—लोहजालेत्यादि । लोहशब्दो जालादिषु चतुर्षु प्रत्येकं सम्बद्ध्यते । लोहजालं सशिरस्त्राणा प्रावरणी, लोहजालिका मुण्डसन्नाहः लोहपट्टो विबाहुसन्नाहः, लोहकवचं बाहुरहितं वक्षःपृष्ठमात्रावरणं, सूत्रकंकटः कार्पासादिसूत्रमयः सन्नाहः, शिंशुमारकादीनां पञ्चानां चर्मखुरशृङ्गसंघातश्च चतुरशिल्पिघटितानि त्वक्शफा-विषाणानि च, वर्माणि भवन्ति । तत्र शिंशुमारकः अम्बुकपिनामा जलचरः, खड्गी खड्गमृगः, धेनुको गोसदृश गवय इति व्याख्येयं, सेरकपाठस्तु धेनुकस्थाने भाषा-टीकायामुपलभ्यते । हस्ती गजः, गौर्वृषभः । शिरस्त्राणेत्यादि । शिरस्त्राणादयः सप्त च वर्माणि । तत्र शिरस्त्राणं शिरोमात्रावरणं, कण्ठत्राणं कण्ठमात्रावरणं, कूर्पासः अर्धबाहुकः, कञ्चुको जानुपर्यन्त,ः वारवाणो गुल्फपर्यन्तः, पट्टो विबाहुरलोहमयः, नागोदरिका करांगुलित्राणम्, इत्येतानि देहधार्याणि । करधार्याण्यावरणान्याह—पेटीत्यादि । पेट्यादयो नव । तत्र पेटी काष्ठवल्लीमयं खेटकं, चर्म चर्मफलकं, हस्तिकर्णः अवगुण्ठनफलकं, तालमूलं काष्ठनिर्मितं खेटकम्, धमनिका सूत्रमयी, कवाटं काष्ठमयफलकभेदः, किटिका चर्मवेणुविदलमयी, अप्रतिहतः हस्तवारकाख्यः, वलाहकान्तः अप्रतिहत एव पर्यन्तबद्धलोहपट्टः, चः समुच्चये ।

उपकरणान्याह—हस्तीत्यादि । हस्तिरथवाजिनां, योग्याभाण्डं शिक्षापरिकर-भूतं कशांकुशादिकम् आलङ्कारिकम् अलङ्कारप्रयोजनकं पताकाक्षुरप्रमालादिकं, सन्नाहकल्पनाश्च वर्मतोमरशरीरावारकादयश्च, उपकरणानि । उपकरणान्तरमाह—ऐन्द्रेत्यादि । ऐन्द्रजालिके कर्म अल्पसैन्यस्य बहुसैन्यत्वप्रदर्शनमनग्नावग्निप्रदर्शनमित्ये-वज्जातीयं मायिकम्, औपनिषदिकं च औपनिषदकाधिकरणोक्तं विषधूमाम्बुदूषण-प्रलम्भनादिप्रयोगतत्प्रतिक्रियालक्षणं, चकारादनुक्तमन्यच्च, कर्म, उपकरणपदानु वर्तनादुपकरणसंज्ञम् ।

चाणक्यटोका

(वर्माण्यभिधो) यन्ते। तत्र लोहमयी जालिका[1]। पट्टः लोहमयः प्रकोष्ठादि-रक्षार्थः। कवचो (लिपि? रिपु) सन्नाहः सूत्रमय उरश्छदः सूत्रकङ्कटः। शिशुमारादीनां यथासम्भवं चर्मादिसङ्घातः शिरोरःकण्ठत्राणार्थाः सन्निवेशविशेषादेते कार्याः, एतानि वर्माणि।

शिरःकण्ठत्राणं चर्मलोहमयम्। कूर्पासादि चर्ममयम्। तत्र (सोर्धवेपकः?) कञ्चुकश्चोलकः। स एवाप्रपदीनो वारबाणः शिरोवेष्टनमुष्णीषपट्टः। उदरबन्धो नागः। उदरिका जङ्घात्राणम्। एतान्य (ङ्ग) लग्नानि।

धार्याणि तु—(वेदोरव? पेटकं) फलकं चर्मेति वरकस्याख्याः। हस्तिकर्णः[2] तालमूलः धमनिका (वृतपरः?) अपरे कू (र्छ? र्म) पृष्ठां चर्ममयीमाहुः। कवाटः शाल्मल्यो याष्टीकवारणो मुष्टिकः। किटिकाशलाका सूत्रप्रोता। चर्मविदलस्यूतकम् अप्रतिहतम्। बलाहकान्तः किटिकैव चर्मावृता। आदिग्रहणात् स्वविकल्पनिर्मितानि अन्यान्यप्यावरणानि।

उपकरणान्याह—कल्पना वैजयन्तीकङ्क (टेषु? ट) प्रभृतिः। तथा ऐन्द्रजालम् इन्द्रजालशास्त्रभवम् आशु प्रयोज्यम्, स्वापनमोहनाद्भुतोत्पादनम्। औपनिषदिकं वा शिल्पजातं प्रयोज्यं शस्त्राग्निरसादि, उपकरणार्थत्वात् कर्मेत्युच्यते।

प्रतिपदपञ्चिका

लोहजातेत्यादि। लोहशब्दश्चतुर्णां प्रत्येकं लोहजालं प्रावरणी सशिरस्त्राणा-जालिकामुण्डसन्नाहः पाटोविबाहुस्सन्नाहः। लोहभट्टघटित इत्यपरे। क्व (क) व-चमनेकपुटवध्यकं वक्षः पृष्ठमात्रावरणं सूत्रकं कटसूत्रसन्नहनं शिशुमारादीनां च पञ्चानां चर्मादिसङ्घातान्निर्व्रणशिल्पिघटिता चर्माणि शरीरावरणं भवन्ति।

शिशुमारादयः तरव्याख्याः शिरस्त्राणं शिरोमात्रावरणं, वा कूर्पासोर्धबाहुकः कंचुको जानुप्रमाणः वारबाणो गुल्फप्रमाणः पट्टो विबाहुः पूर्वस्यास्य च लोहमयत्व-मूर्णादिमयत्वं च विशेष इति। नागोदरिका कराङ्गुलित्राणं, इत्येवं शरीरधार्याणि, वर्माण्यमिधाय हस्तधार्याभरणान्याह-पेटीत्यादि।

पेटीकाष्ठवल्लीमयं खेटकं बलतिटिकेत्यपरे। चर्मवसुनन्दकः हस्तिकर्णोवकुण्ठ-नफलकं तालमूलं काष्ठखेटकं धमनिका सूत्रमयी कवाटं वाकाष्ठफलकं किटिका चर्मवं-शदलमयी अप्रतिहतोहस्तवारकः वलाहकान्तः स एव लोहपट्टवेष्टितपर्यन्तः। एवमाव-रणान्यभिधाय उपकरणान्याह-हस्तिरथवाजिनामिति, हस्त्यादीनां त्रयाणां योग्याभाण्डं शिक्षोपकरण कशाङ्कुशचर्मपुरुषादिक अलङ्कारकं वैजयन्तीकुद्रमालीकुथादिकं

---

१. अयोमय कङ्कटे जालिका इति केशवस्वामी।

२. "हस्तिकर्णस्तु ना शस्त्रत्राणार्थंफलकान्तरे। ज्ञेय कम्बलभेदे च रोचकाख्ये" इति केशवस्वामी।

[ आयुधाध्यक्षपर्यालोचनीयार्थसंग्रहः ]

**कर्मान्तानां च—**

**इच्छामारम्भनिष्पत्तिं प्रयोगं व्याजमुद्दयम् ।**
**क्षयव्ययौ च जानीयात् कुप्यानामायुधेश्वरः ॥९२॥**

इत्यध्यक्षप्रचारे आयुधागाराध्यक्षः अष्टादशोऽध्यायः
आदित एकोनचत्वारिंशः

---

प्रतिपदपञ्चिका

**सन्नाहकल्पना चर्मतोमरशरीरावारकाः** चस्समुच्चये ऐन्द्रजालिकं अल्पसैन्यस्य बहु-सैन्यदर्शनम् । अनग्नावग्निदर्शनमित्यादि मायागतम् । औपनिषदिकं च गरधूमांबु-दूषणप्रलङ्घनादिकं एतद्विप्रकारं च कर्म उपकरणसंज्ञं भवति । चकारादन्यच्च हस्त्यादीनां बन्धनान्युपकरणानि गृह्यन्ते ।

श्रीमूला

कर्मान्तानां चेति वक्ष्यमाणश्लोकान्वयि । श्लोकमाह—इच्छामिति । कुप्यानां कर्मान्तानां गतप्रकृताध्यायद्वयोक्तद्रव्यसम्बन्धिनां व्यापाराणाम् विषये, इच्छां राजरुचिम्, आरम्भनिष्पत्तिम् आरम्भसहितां निष्पत्तिं राजेच्छानुसारेणोपक्रममर्थ-सिद्धिं चेत्यर्थः । प्रयोगम् उपयोगं, व्याजं दोषं, व्याजिमिति पाठे राजपण्यविक्रयेऽन्तर-ग्राह्यम्, उद्दयं लाभम् । उन्नयमिति भाषापाठश्च श्रेयान् । क्षयव्ययौ च क्षयं साधनच्छेदं व्ययं कर्मकरादिभक्तादिपरिव्ययं च, जानीयात् पर्यालोचयेत्, आयुधेश्वरः आयुधागाराध्यक्षः । इदं कुप्याध्यक्षस्याप्युपलक्षणम् ॥

इति कौटिलीयार्थशास्त्रव्याख्यायामध्यक्षप्रचारे द्वितीयाधिकरणे
अष्टादशोऽध्यायः आयुधागाराध्यक्षः, आदित
एकोनचत्वारिंशः ॥

चाणक्यटीका

कर्मान्तानां च किमपरम् इत्यत आह—इच्छां प्रयोजनापेक्षया चिकीर्षाम् । आरम्भमनुष्ठानम् । निष्पत्तिं परिसमाप्तिम् । योगं विनियोगम् । व्याजीम् अन्येषुकार-यितृषु राजांशम् । समुद्दयं सहस्रमूलयस्य द्विसहस्रं मूल्यमिति । कालायसपिण्डस्य पञ्चभागः क्षय इति । व्ययं च वेतनादेः । जानीयात् । कुप्यानाम् आयुधप्रभृतीनाम् आयुधेश्वरस्तदध्यक्षः । यद्येवं कुप्यविकारप्रदर्शनात् प्राधान्यं तु ( काल्य ? कुप्य ) बृहत्वमस्येति ।

॥ इति आयुधागाराध्यक्षः अष्टादशं प्रकरणं समाप्तम् ॥
॥ अष्टादशश्चाध्यायः ॥

## प्रतिपदपञ्चिका

साम्प्रतमध्यायद्वयस्यापि शेषमन्ते श्लोकमाह-इच्छामीत्यादि ।

इच्छां प्रियां विक्रि ( प्रि ) यतां तदाजीविनां राज्ञो वा रुचितेष्वेव आरम्भनिष्पत्तिं पुरुषार्थानां आरम्भणानां निष्पत्तिं प्रक्रान्तपरिसमाप्तिं वा प्रयोगमुपयोगं व्याजं दोषम्, अपरेतु व्याजीमिति पठन्तो राजपण्यविक्रयेऽन्तरग्रहणमाचक्षते। उद्व्ययं लाभं क्षयं लोहपिण्डपञ्चभागादिकं व्ययं शिल्पकर्मकरादि भक्तादिपरिव्ययं एतदिच्छादिकं सर्वं जानीयात्। निरूपयेत् कुप्यानां अध्यायद्वयाभिहितसमस्तद्रव्याणामायुधेश्वरः आयुधागाराध्यक्षो वा राजा वा स्वयमिति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायाम् अर्थशास्त्रटीकायां अध्यक्षप्रचारिके द्वितीयेधिकरणेऽष्टादशोऽध्यायः । आयुधागाराध्यक्षः ।
आदितः एकोनचत्वारिंशोऽध्यायः ।

# सप्तत्रिंशं प्रकरणम्

## एकोनविंशोऽध्यायः ।

## तुलामानपौतवम् ।

[ सुवर्णरूप्ययोः प्रतिमानभेदाः ]

**पौतवाध्यक्षः पौतवकर्मान्तान् कारयेत् ।**

---

श्रीमूला

तुलामानपौतवमितिसूत्रम् । तुलाया उन्मानसाधनस्य मानस्य प्रस्थकुडुबादेश्च पौतवम् पोतुर्मानभाण्डशोधकः तस्य कर्म अकृतकरणं कृतशोधनं चेहाभिधीयत इति सूत्रार्थः । तुलाप्रतिमानं 'पौतवाध्यक्षे वक्ष्याम' इत्युक्तं सुवर्णाध्यक्षे । तदेतत् कुप्याङ्गत्वात् कुप्यानन्तरमभिधीयत इति सङ्गतिः ।

पौतवेत्यादि । पौतवाध्यक्षः पौतवाधिकृतः, पौतवकर्मान्तान् तुलाकुडुवादि घटनकर्माणि, कारयेत् ।

चाणक्यटीका

वृद्धयुदयक्षयव्ययादिपरिज्ञानं सर्वद्रव्याणां तुलामानदेशकालमानैर्विना नास्तीति तुलामानपौतवं देश (काल) मानमिति प्रकरणद्वयमारभ्यते । अथवा सन्निधातुः प्रचारो व्याख्यातः समाहर्तुरुच्यते । समाहर्ता दुर्गाध्यक्ष इत्युक्तम् । तत्र दुर्गे पौतवं पठितमिति । पुनातेस्तुन् प्रत्ययः (कृत्वा ?) पूतिः पोतुः[1] शोधनमुच्यते । तत्र भवः, अध्यक्षस्य तुलामानशोधनार्थो व्यापारः पौतवमिति । तत्र अध्यक्षो मानपरिज्ञानेऽधिकृतः मानपरिशुद्धयर्थान् पौतवकर्मान्तान् शिल्पिभिः कारयेत् ॥

प्रतिपदपञ्चिका

तुलामानपौतवमितिसूत्रम् । तुला षडङ्गुलादिकाः मानानि कुटुम्बादीनि तेषां पौर (त) वमपूर्वकरणं कृतसंशोधनं च शोध्यशोधनयोरभेदोपचारात्तमिहाभिधीयते इति सूत्रार्थः । सम्बधस्तु पूर्वस्मिन्नध्याये क्षयव्ययौ च जानीयात् । कुप्यानामायुधेश्वर इत्युक्तम् । तत्परिज्ञानम्, तुलायामायत्तमतस्तदभिधानम्, अथवा, तुलाप्रतिमानं पौतवाध्यक्षे वक्ष्याम इत्युक्तम् तस्य च कुप्यशेषत्वात्तदनन्तरमेतदभिधोयत इति तदाह—

पौतवाध्यक्ष इत्यादि, पौतवाध्यक्षस्समाहर्ता तदधिकृतो वा कश्चित्सवेतवकर्मान्तात्तुलाघटनारम्भात् कारयेत् ।

---

१. "पुनातेि वि पोतुःमानभाण्डशोधकः पोतवाध्यक्षाख्यः" इति क्षीरस्वामी (११.९.८५) ।

**धान्यमाषा दश सुवर्णमाषकः, पञ्चवा गुञ्जाः । ते षोडश सुवर्णः कर्षो वा । चतुःकर्षं पलम् । अष्टाशीतिर्गौरसर्षपाः रूप्यमाषकः । ते षोडश धरणम्, शैम्ब्यानि वा विंशतिः । विंशतितण्डुलम् वज्रधरणम् । अर्धमाषकः, माषकः, द्वौ, चत्वारः, अष्टौ माषकाः; सुवर्णः, द्वौ, चत्वारः, अष्टौ सुवर्णाः; दश, विंशतिः, त्रिंशत्, चत्वारिंशत्, शतमिति तेन धरणानि व्याख्यातानि ।**

---

श्रीमूला

अभ्यर्हितत्वात् प्रथमं सुवर्णस्य प्रतिमानमाह—धान्येत्यादि। धान्यमाषाः दश सुवर्णमाषकः धान्यमाषदशकप्रतिमानं सुवर्णं माषकसंज्ञम् । पञ्च वा गुञ्जाः गुञ्जापञ्चकं वा, माषक इत्यनुवर्तनान्माषकसंज्ञम् । ते षोडश सुवर्णः कर्षो वा माष-षोडशकं सुवर्णसंज्ञम् भवति कर्षसंज्ञम् वा । चतुष्कर्षं पलमिति चत्वारः कर्षाः पलाख्याः ।

रूप्यस्य प्रतिमानमाह—अष्टाशीतिरिति । अष्टाशीतिः गौरसर्षपाः रूप्यमाषकः रूप्यस्यैको माषकः । ते रूप्यमाषकाः, षोडश, धरणं धरणाख्याः । शैम्ब्यानि विंशतिर्वा शिम्बिफलविंशतिर्वा धरणम् ।

वज्राख्यस्य रत्नस्य प्रतिमानमाह—विंशतीत्यादि । विंशतितण्डुलं मध्यमा-खण्डव्रीहितण्डुलप्रमाणं वज्रधरणं भवति ।

प्रतिमानसंख्या आह—अर्धमाषक इति । अर्धमाषकः, माषकः, द्वौमाषकौ, चत्वारः माषकाः, अष्टौ माषकाः । सुवर्णः, द्वौ सुवर्णौ, चत्वारः सुवर्णाः, अष्टौ सुवर्णाः, दश विंशतिः त्रिंशत् चत्वारिंशत् शतम् इति चतुर्दश भवन्ति ।

सुवर्णोक्तं प्रतिमानविधिं रूप्येष्वतिदिशति—तेनेति । तेन सुवर्णप्रतिमान-कथनेन, धरणानि व्याख्यातानि रूप्यधरणानामपि धरणं द्वे चत्वारि अष्टौ दश विंशतिः त्रिंशत् चत्वारिंशत् शतमित्येवं प्रतिमानसंख्या योज्या इत्यर्थः । एवं धरणग्रहणेन रूप्यमाषकाणामप्युपलक्षणाद् अर्धमाषको माषको द्वौ चत्वार इत्यादयः शतान्त-संख्यास्तत्राप्यूहनीयाः ।

चाणक्यटीका

धान्यमाषा इति धान्यान्येव माष (सङ्ख्या ? संज्ञा) नि (इति) धान्यग्रहणम् । ते धान्यमाषा दश उ (च्चाटे ? न्माने) न सुवर्णस्य माषकः तत्परिच्छेदहेतुत्वादभेदे-नोच्यते । पञ्च वा गुञ्जाः कृष्णला माषकः । ते माषकाः षोडश सुवर्णः कर्षो वा पर्यायेण । चतुष्कर्षं पलं पुराकल्पे ।

रूप्यमानस्यान्यत्वात् तत्प्रसिद्धिमाह—अष्टाशीतिरिति अष्टाभिर्रधिकाः । षोडश माषका धरणम् । रूप्यस्य सुवर्णसङ्ख्याभावाद्धरणमित्युच्यते न सुवर्णम् । शैब्यानि विंशतिर्वा धरणम् । अद्यत्वे तु सुवर्णरूप्यादीनामेकमेव प्रातिमानम् ।

[ प्रतिमाननिर्माणसाधनानि द्रव्याणि ]

**प्रतिमानानि अयोमयानि मागधमेकलशैलमयानि, यानि वा नोदकप्रदेहाभ्यां वृद्धिं गच्छेयुरुष्णेन वा ह्रासम् ।**

---

चाणक्यटीका

विंशतितण्डुलं वज्रधरणं विंशतिव्रीहितण्डुलोन्मानमित्यर्थः । अष्टाभिः सर्षपैः गौरसर्षपैस्तण्डुलं कल्पयेदित्यन्ये । विंशतितण्डुलादूर्ध्वं न वज्रमिति यावत् ।

सुवर्णप्रतिमानमेतत्, रूप्यस्य पृथक् वचनात् । तदाह—तेन धरणानि व्याख्यातानि । अर्धमाषकांस्त्यक्त्वा धरणाद् द्वे चत्वारि इत्यादियोज्यम् ।

प्रतिपदपञ्चिका

तत्र सारत्वात् पूर्वं सुवर्णस्य प्रतिमानमाह—धान्यमाषा इति । मध्यमप्रमाणधान्यमाषा दशसुवर्णस्य माषक इति संज्ञा । पञ्च वा गुंजाः माषक इति वर्तते । गुंजापञ्चकप्रमाणो वा माषक इति एते षोडश सुवर्ण इति माषाः षोडशसुवर्णसंज्ञा भवन्ति । कर्षो वेति संज्ञान्तरं चतुष्कर्षं फलमिति सुबोधम् । रुप्यस्य प्रकारान्तरमाह- अष्टाशीतिः सर्षपा रुप्यमाषक इति । सुबोधम् । ते षोडशधरणमिति, ते षोडशमाषकप्रमाणस्य रूप्यस्य धरणमिति संज्ञा । शैब्यानि विंशतिर्वा मध्यमप्रमाणफलविंशतिर्वा मध्यमप्रमाणफलविंशतिर्वाधरणम्, रुप्यस्यैव विंशतितण्डुलं वज्रधरणमिति मध्यमाखण्डव्रीहितण्डुलविंशतिप्रमाणं वज्रसंज्ञस्य रत्नस्य धरणं भवति । प्रतिमानसङ्ख्यामाह-अर्धमाषक इत्यादि, अर्धमाषमाषकौ द्वौ चत्वारोऽष्टौ माषका इत्यादि व्यस्तसमस्तैरर्धमाषकं न्यूनसुवर्णोत्पत्तिरेवम् । सुवर्णो द्वौ चत्वारोऽष्टौ सुवर्णा दशविंशतिस्त्रिंशच्छतमित्येवमेतैश्चतुर्दशभिः प्रतिमानैस्सर्वसङ्ख्या निष्पत्तिरिति तेनेति, सुवर्णप्रतिमानकरणेन धरणानि व्याख्यानि तेषामपि धरणं द्वे चत्वार्यष्टौ दश विंशतिस्त्रिंशत् चत्वारिंशत् शतमिति सर्वं योजनीयम् ।

धरणग्रहणं च माषकाणामप्युपलक्षणार्थम् । तेषामप्यर्धमाषको माषक इत्याद्यपि योज्यम् ।

श्रीमूला

कीदृशानि प्रतिमानानीत्यत्राह—प्रतिमानानीति । प्रतिमानानि, अयोमयानि लोहमयानि, मागधमेकलशैलमयानि मगधदेशोत्पन्नशिलामयानि मेकलापरनामकाटवीराज्योद्भवशिलामयानि च भवन्ति । पक्षान्तरमाह—शङ्खशुक्तिप्रभृतीनि यानि, उदकप्रदेहाभ्यां जलार्द्रीकरणमललेपाभ्यां, वृद्धिम् आधिक्यम्, उष्णेन, ह्रासं वा न्यूनतां वा, न गच्छेयुः, तन्मयानि वा भवन्ति । तन्मयानीत्येतच्च यत्पदसामर्थ्यलभ्यम् ।

[ तुलाभेदाः निर्माणविधानञ्च ]

**षडङ्गुलादूर्ध्वमष्टाङ्गुलोत्तराः दश तुलाः कारयेल्लोहपलादूर्ध्वमेकपलोत्तराः। यन्त्रमुभयतः शिक्यं वा। पञ्चत्रिंशत्पललोहां द्विसप्तत्यङ्गुलायामां समवृत्तां कारयेत्। तस्याः पञ्चपलिकं मण्डलं बद्ध्वा समकरणं कारयेत्। ततः कर्षोत्तरं पलं पलोत्तरं दशपलं द्वादश, पञ्चदश, विंशतिरिति पदानि कारयेत्। ततः आशताद्दशोत्तरं कारयेत्, अक्षेषु नन्दीपिनद्धं कारयेत्। द्विगुणलोहां तुलाम् अतः षण्णवत्यङ्गुलायामां परिमाणीं कारयेत्। तस्याः शतपदादूर्ध्वं विंशतिः, पञ्चाशत्, शतमिति पदानि कारयेत्।**

---

चाणक्यटीका

प्रतिमानपरिच्छेदार्थानि प्रतिमानानि अयोमयानि मागधमेकलपर्वत (शै) लमयानि वा शोभनतरत्वात्, यानि (वासीदासिमयान्यपि ?) नोदकेनोपस्निग्धायां वा भूमौ स्थितान्यपि प्रदेहेन वृद्धिं गच्छन्ति ह्रासं चोष्णेन, नीतानिस्युरितिवाक्यशेषः।

प्रतिपदपञ्चिका

ना नीचप्रतिमानाद्याह-अयोमयानीति, लोहानि मगधशैलो मगधेषु तदाह्वयो मेकलशैलाक वीश ( रा ) ज्ये तत्पाषाणमयानि यानि चान्यानि शङ्खमयादीनि नोदकेनादि भावेन प्रदेहेन वामलाङ्गेन वृद्धिमाधिक्यं गच्छेयुरुष्णेन वा तालेन ह्रासं न्यूनकत्वं तानिरक्तव्यानिति एवं प्रतिमानान्यभिधाय तुलादश व्याचष्टे। षडङ्गुलादूर्ध्वमित्यादि।

श्रीमूला

दशविधास्तुला आह—षडङ्गुलादिति। षडङ्गुलात् षडङ्गुलायामात् प्रभृति, ऊर्ध्वम्, अष्टाङ्गुलोत्तराः अष्टष्टाङ्गुलाधिकायामाः, दशतुलाः दशप्रकारस्तुलाः, कारयेत्। कियल्लोहपरिमाणाः, लोहपलादूर्ध्वमेकपलोत्तराः एकलोहपलात् प्रभृति एकैकलोहपलाधिकाः। तत्र प्रथमा षडङ्गुलायामा लोहपलप्रमाणा, द्वितीया चतुर्दशाङ्गुलायामा लोहपलद्वयप्रमाणा, तृतीया द्वाविंशत्यङ्गुलायामा त्रिपललोहा च भवतीत्यनेन क्रमेणाष्टसप्तत्यङ्गुला दशपललोहा च दशमी तुला भवति। यन्त्रमुभयतः तुलायन्त्रस्योभयोः पार्श्वयोः, शिक्यं कारयेत् मेयमानयोर्युगपद्धारणार्थम्। वा—शब्दादेकतः शिक्यं वा, तयोः पर्यायधारणसम्भवात्। ता एताः सुवर्णरूप्यतुलाः।

तदन्यतुलामाह—पञ्चत्रिंशदित्यादि। पञ्चत्रिंशत्पललोहां पञ्चत्रिंशत्पलप्रमाणलोहनिर्मिताम्, द्विसप्तत्यङ्गुलायामां त्रिहस्तदीर्घाम्; समवृत्तां तदाख्यां वर्तुलतयान्वितार्थाम्, कारयेत्। तस्याः, पञ्चपलिकम्, मण्डलं चेलम्, बद्ध्वा, समकरणम् अनुन्नतानवनतोभयान्तचिह्नम्, कारयेत्। ततः समचिन्हात् परतः, कर्षोत्तरं पलं

## श्रीमूला

कर्षोऽर्धपलं पादोनपलं पलमिति, कारयेत्। ततः पलोत्तरं दशपलम् एकं पलं द्वे त्रीणि चत्वारि पञ्च षट् सप्ताष्ट नव दशेति, ततः द्वादश पञ्चदश विंशतिरिति षोडश पदानि रेखाः, कारयेत्। ततइति ततः विंशतेरुपरि, आशतात् शतमभिव्याप्य, दशोत्तरं दशदशाधिकं त्रिंशच्चत्वारिंशत् पञ्चाशदित्यादिकम्, कारयेत्। अक्षेषु पञ्चमदशम-पञ्चदशादिषु, नद्ध्रीपिनद्धं वरत्राबन्धं वरत्राकाररेखाबन्धम्, कारयेद् विशेषार्थम्। स्वामिटीकादर्शे तु नान्दीपिनद्धं स्वस्तिकमिति दृश्यते।

परिमाणीसंज्ञां तुलामाह—द्विगुणेत्यादि। अतः समवृत्तायाः, द्विगुणलोहां सप्ततिपललोहाम्, षण्णवत्यङ्गुलायामां चतुर्हस्तदीर्घाम्, परिमाणीम्, कारयेत्। तस्याः शतपदादूर्ध्वं समवृत्तादर्शितदिशा कर्षादिक्रमेण कृताच्छतपदात् परतः, विंशतिः, तदूर्ध्वं पञ्चाशत्, तदूर्ध्वं शतम्, अर्थाच्छतद्वयम् इति पदानि कारयेत्।

## चाणक्यटीका

तुलामाह—षडङ्गुलादूर्ध्वमष्टाङ्गुलोत्तरे त्रिषटशतुर्दशद्वाविंशतित्रिंशदष्टात्रिंशत् षट्चच्चत्वारिंशच्चतुष्पञ्चाशद्द्वाषष्टिषष्ट्यष्टासप्तत्यङ्गुलान्यायता दश (तुलाः)। तासाम् आद्या एकपला, दशमी दशपलेति। यन्त्रमुभयतः शिक्यं वेति यन्त्रमुभयतो मध्ये कक्ष्यं यस्य द्रव्यप्रतिमान (योः ?) धरणयोर्यौगपद्यम्। एकदेशेन वा शिक्यं यस्याः पर्यायेण द्रव्यस्य प्रतिमानस्य चोन्मानात्। इदमुक्तं भवति—या दीर्घा तुला तस्याः एकपार्श्वे शिक्यम्, या ह्रस्वा तामुभयतः शिक्यमिति।

सुवर्णादन्यस्यापि द्रव्यस्योन्मानाद् अन्यास्तुला उच्यन्ते—पञ्चत्रिंशत्पललोहा-मिति। समवृत्ता (ज्जातः ? स्याम्)। तस्याः पञ्चपलिकं मण्डलमिति आमूलात् समां कृत्वा ततः पञ्च पलं मण्डलीकृत्य मूलाग्रे समकरणं रेखाविषुघ्नं कारयेत्, यत्र धार्यमाणं न पुरः न पश्चान्नमति। ततः समी (क) रणादग्रतः कर्षोत्तरमिति—कर्षः (द्विकर्षः) त्रिकर्षः पलमिति। ततोऽपि पलोत्तरं दशपलं द्वादशपलं पञ्चदश विंशति-रिति। ततोऽपि आशताद् दशोत्तरमिति—त्रिंशत् चत्वारिंशत् पञ्चाशत् षष्टिः सप्ततिः अशीतिः नवतिः शतमिति पदानि कारयेत्। अक्षेषु दशाद्यङ्कनस्थानेषु। नान्दीपिनद्धमिति काकपदाकारं चिह्नम्, असंमोहार्थं कारयेत्।

द्विगुणलोहामिति पञ्चत्रिंशत् पलापेक्षया सप्ततिपललोहाम्। षण्णवत्यङ्गुलायामां पारिमाणिकीं नाम तुलां कारयेत्। तस्याः पूर्ववत् पञ्चपलिकं मण्डलं बद्ध्वा समकरणम् शतपदानि च कृत्वा, अत ऊर्ध्वं विंशतिः पञ्चाशत् शतमिति अपरं पदत्रयं द्विशतं तुलनार्थं कारयेत्।

## प्रतिपदपञ्चिका

प्रथमा षडङ्गुलायामा लोहपलप्रमाणाद्वितीयाष्टाङ्गुलोक्ता, तथा चतुर्दशाङ्गुलाः द्विपललोहा च भवतीत्येवं दशमीतुलाष्टसप्तत्यङ्गुला दशलोहपलश्च भवति। यन्त्रमुभयतश्चिक्यं वेति सर्वासामुभयतश्चिक्यं मेयमानयोः युगपद्धारणार्थं वा

[ मानविशेषाः, तेषां मेयद्रव्यभेदेन वैलक्षण्यञ्च ]

**विंशतितौलिको भारः। दशधरणिकं पलम्। तत्पलशतम् आयमानी। पञ्चपलावरा व्यावहारिकी भाजन्यन्तःपुरभाजनी च। तासामर्धधरणावरं पलम्। द्विपलावरमुत्तरलोहम्। षडङ्गुलावराश्चायामाः। पूर्वयोः पञ्च— पलिकः प्रयामो मांसलोहलवणमणिवर्जम्। काष्ठतुला अष्टहस्ता पदवती प्रतिमानवती मयूरपदाधि ( ष्ठाना। ) ष्ठिता। काष्ठपञ्चविंशतिपलं तण्डुल-प्रस्थसाधनम् एष प्रदेशो बह्वल्पयोः—इति तुलाप्रतिमानं व्याख्यातम्॥**

---

प्रतिपदपञ्चिका

शब्दादेकतः त्रिचयं वा पर्यायेणाविधारणसम्भवप्रदर्शनार्थमित्येवं सुवर्णरूप्यतुला-निर्दिश्येतरं व्याचष्टे—पञ्चत्रिंशत्पललोहामिति। तावन्मात्रालोहघटितां द्विसप्तत्यायामां त्रिहस्तदीर्घां समवृत्तामित्यन्वर्थसंज्ञोपेतां कारयेत्। तस्या पञ्चवलितकमण्डलं चेतलकं च बध्वा समरकरणमुन्नतावनतोभयांतचिह्नं कारयेत्। तस्मात्समकरणपाठात् कर्षोत्तरं पलमिति कर्षोत्तरं यावत्पलमिति कृत्वा ततः पलोत्तरमेकपलं द्वे त्रीणीत्येवं यावद्दशपलं ततो द्वादशपलानि पञ्चदशविंशतिषोडशपदानि लेखाः कारयेत्।

तत्तो विंशतेरूर्ध्वं मात ( द ) शत-शादिति शतं यावत् दशोत्तरमिति त्रिंशच्चत्वारिंशदित्येवमादि कारयेत्। अक्षेषु पञ्चमदशमादिषु नान्दीपिनद्धं स्वस्तिकं विशेषार्थं कारयेत्। परिमाणीमाह-द्विगुणलोहामत इति, अतस्समवृत्तायाः द्विगुण-लोहां सप्ततिलोहमयीं षण्णवत्यङ्गुलायामां चतुर्हस्तदीर्घां परिमाणीं नाम तुलां कारयेत्। तस्माच्छतपदादूर्ध्वमिति पूर्वोक्तन्यायेन कर्षोत्तरपलं पलोत्तरं दशपल-मित्येव शतपदं कृत्वा ततस्तस्माच्छतपदादूर्ध्वं विंशतिः पञ्चाशच्छतमिति पदानि कारयेत्। एवं चैषां शतद्वयपलधारिणी भवति।

श्रीमूला

विंशतीत्यादि। विंशतितौलिकः तुला नाम पलशतं विंशतितुलाप्रमाणः, भारः तत्संज्ञः।

अथ पूर्वोक्तात् सुवर्णपलादधिकं पलविशेषं सुवर्णरूप्यातिरिक्तद्रव्यपरिच्छेदोप-योगिनमाह—दशधरणिकमिति। दशधरणिकं पूर्वोक्तधरणदशकपरिमाणम्, पलम्। तत्पलशतं तेषां दशधरणिकानां पलानां शतम्, आयमानी आय एव मीयते अनयेति व्युत्पत्तेरायमानीसंज्ञा तुला।

अन्यास्तिस्रस्तुला आह—पञ्चपलावरेति। सप्तवर्णवदिह वीप्सालोपौ। पञ्चभिः पञ्चभिः पलैः अवरा पूर्वपूर्वापेक्षया यथोत्तरं न्यूनापञ्चपलावरा तुला, व्यावहारिकी तदाख्या क्रयविक्रयोपयोगिनी, भाजनी तदाख्या भृत्यदेयार्था, अन्तःपुरभाजनी तदाख्या

श्रीमूला

देवीकुमारादिदेयार्था च भवति । तत्र प्रथमा आयमानीतः पञ्चपलन्यूना पञ्चनवतिपला, द्वितीया व्यावहारिकीतस्तावन्न्यूना नवतिपला, तृतीया भाजनीतस्तावन्न्यूना पञ्चाशीतिपलेति विवेकः ।

व्यावहारिक्यादीनामपि पलादिमाने परस्परविशेषमाह—तासामित्यादि । तासां व्यावहारिक्यादीनाम् अर्धधरणावरम् अर्धेनार्धेन धरणेन पूर्वपूर्वापेक्षया न्यूनम्, पलं भवति । तद्यथा—दशधरणिकादायमानीपलादर्धोनं सार्धनवधरणिकं पलं व्यावहारिक्याः, ततोऽर्धोनं नवधरणिकं भाजन्याः, ततोऽर्धोनं सार्धाष्टधरणिकमन्तः-पुरभाजन्या इति । द्विपलावरं द्वाभ्यां द्वाभ्यां पलाभ्यां पूर्वपूर्वतो न्यूनम्, उत्तरलोहम् उत्तरासां लोहं भवति । षडङ्गुलावराश्च षट्षडङ्गुलन्यूनाश्च, आयामाः दैर्ध्याणि भवन्ति, अर्थादुत्तरासाम् । तद्यथा—पञ्चत्रिंशत्पललोहा द्विसप्तत्यङ्गुलायामा च यद्याय-मानी, तदा त्रयस्त्रिंशत्पललोहा षट् षष्ट्यङ्गुलायामा च व्यावहारिकी भवति, एक-त्रिंशत्पललोहा षष्ट्यङ्गुलायामा च भाजनी, एकोनत्रिंशत्पललोहा चतुष्पञ्चाशदङ्गुला-यामा चान्तःपुरभाजनीति ।

प्रयाममाह—पूर्वयोरिति । पूर्वयोः परिमाण्यायमान्योः, पञ्चपलिकः प्रयामः पलशते पञ्चपलमधिकदेयं भवति । मांसलोहलवणवर्जं मांसलोहादीन् वर्जयित्वा, तेषां तु न प्रयामः ।

काष्ठतुलामाह—काष्ठेत्यादि । काष्ठतुला सारदारुप्रकृतिस्तुला, अष्टहस्ता, पदवती एकद्वित्र्यादिपदरेखोपेता, प्रतिमानवती प्रमाणपाषाणयुक्ता, मयूरपदाधिष्ठाना मयूरपदौ तदाकारस्तम्भौ अधिष्ठानमाधारो यस्यास्तादृशी, मयूरपदाधिष्ठितेति पाठे मयूरपदाश्रितेत्यर्थः । कर्तव्या ।

काष्ठपञ्चविंशतीत्यादि । काष्ठपञ्चविंशतिपलम् इन्धनपलपञ्चविंशतिः, तण्डुल-प्रस्थसाधनं प्रस्थमिततण्डुलपाकनिष्पादकं भवति । एषो प्रदेशो बह्वल्पयोरिति । प्रस्थाधिकतण्डुलस्य प्रस्थन्यूनतण्डुलस्य चायमेव पाकापेक्षितकाष्ठमानव्यवस्थापन-मार्गः । एतच्च कोष्ठागाराध्यक्षशेषम् असारस्याप्यमितो व्ययो न कर्तव्यः किमुत सारस्येति सामान्यज्ञापनद्वारेण प्राकरणिकेषु मानेष्ववधानोपदेशार्थं द्रष्टव्यम् ।

इति तुलेत्यादि । इति उक्तप्रकारेण, तुलाप्रतिमानं व्याख्यातं तुलाः षोडशविधाः प्रतिमानानि च चतुर्दशविधानि निरूपितानि ।

चाणक्यटीका

विंशतितौलिको भारः[1] विंशतितुलापरिमाणो भार इति । समवृत्त तुलापेक्षया हि शतं तुलेत्युच्यते पारिमाणिकीतुलापेक्षया तु दशतौलिको भारः स्यात् ।

दशधरणिकं पलम् । "अष्टाशीतिः सर्षपो माषकः, ते षोडश धरणम्" इत्युक्तम्,

---

१. "भारः स्याद् विंशतिस्तुला" इत्यमरः ।

चाणक्यटीका

तानि दशपलम्, तत्पलशतम् आय (त ?) मानी तत्पलशतप्रमाणा या सा आयग्रह्-णार्थत्वाद् आयमानीत्युच्यते तुला ।

तदपेक्षया तु पञ्चपला (पला ? वरा) व्यावहारिकी भाजिनी अन्तःपुरभाजिनी च पञ्चनवतिपला (नवतिपला) पञ्चाशीतिपला च क्रमेण । व्यावहारिकी व्यवहारार्था । भृत्यादिविधार्था भाजिनी । अन्तःपुरप्रधानार्था अन्तःपुरभाजिनी पञ्च पञ्च पलन्यून (र) कन्धा ।

( कथं पलमिति पलानि ? ) षडङ्गुलावराश्चायामाः द्विसप्तत्यङ्गुलापेक्षया आयमान्यादीनां षट्षष्टि ( षष्टि ) चतुःपञ्चाशदष्टचत्वारिंशदायामाः ।

पूर्वयोः पञ्चपलिकः प्रयाम इति । आयमानीव्यवहारिक्योः शते पञ्च पलान्या-रोप्यन्ते । तत्रापि मांसादिषु प्रयामो नादेयः ।

अत्रकेचिद् व्यवस्थामाहुः—समवृत्तपरिमाण्यौ सर्वजनस्य तुले भवतः । आयमान्या (दय) श्चतस्रो राज्ञ इति ।

काष्ठतुलामिति अष्टहस्तायामां पदवतीं प्रतिमानवतीं चेति पूर्वापेक्षम् । मयूर-पदाकारस्तम्भद्वयेन विधृतलोहदण्डिकोपरि स्थितां कारयेदित्येव । हस्ताभ्यामुत्क्षेप्तु-मपर्या ( णत्वा ? प्तव ) त्तया ।

काष्ठपञ्चविंशतिपलं तण्डुलप्रस्थसाधनं भवति । एष प्रदेशो बह्वल्पयोरपि योज्यः । ( वा ? ) शतमाढकसाधनं भवति, ( स ) कर्षाणि षट्पलानि कुडुबसाधनं इत्यनया दिशा योज्यम् ।

प्रतिपदपञ्चिका

विंशति तौलिक इति, पलशतप्रमाणं तुला, विंशतिप्रमाणो भारसंज्ञो भवति । पूर्वस्मात्परिभाषितसुवर्णपलादधिकमपरद्रव्यान्तराणां परिच्छेदाय पलविशेषमाह्-दशधरणिकं पलमिति, पूर्वोक्तं दशधरणपरिमाणं पलं ततश्च पूर्वोक्तपलात् कर्षाधिक-मेतत्पलं भवति, दशधरणिकानां पलानां शतं यथाकृति आय एवानयो यस्मान्मीयते तस्मादायमानी संज्ञकेयं तुला भवति ।

पञ्चपलावरेति वीप्सा लोपोऽत्र द्रष्टव्यः । पञ्चभिः पञ्चभिः पलैरवरा, निकृष्टा व्यावहारिक्यादयस्तिस्रस्तुला भवन्ति । आयमान्याः पञ्चभिः पलैः निकृष्टत्वात् पञ्चनवतिपलधारिणी व्यावहारिकी लोकविक्रयार्थं तु भवति । तस्या अपि पञ्चपलावरा नवति पलधारिणी भाजनीहृत्य देयोपयोगिनी तुला भवति । ततोपि पञ्चपलावरा पञ्चा-शीति पलधारिणी ।अन्तःपुरभाजिनी देवीकुमारादिदेयो पयोगिनी तुला भवति । तासा-मिति, व्यावहारीत्यादीनां अर्धधरणावरं पलमर्धधरणेन अवरं पलं भवति । तद्यथा, आयमान्यास्समवृत्तलक्षणाया दशधरणिकं पालं व्यावहारिक्या सार्धनवधरणिकं भाजन्यानवधरणिकं अन्तःपुरभाजन्यास्सार्धाष्टधरणिकम् इति द्विपलावरमुत्तरलोहमिति उत्तरस्याः पलद्वयाहीनं लोहं भवति । तद्यथा, आयमानी पञ्चत्रिंशत्पला षड-ङ्गुलायामा भाजनीहा व्यावहारिकीस्त्रयस्त्रिंशत्पललोहा अन्तःपुरभाजन्येकोनत्रिंशत्

[ द्रोणाढकादिमानानि ]

**अथ धान्यमाषद्विपलशतं द्रोणम् आयमानम् । सप्ताशीतिपलशतमर्धपलं च व्यावहारिकम् । पञ्चसप्ततिपलशतं भाजनीयम् । द्विषष्टिपलशतमर्धपलं चान्तःपुरभाजनीयम् । तेषामाढकप्रस्थकुडुबाश्चतुर्भागावराः । षोडशद्रोणा खारी । विंशतिद्रोणिकः कुम्भः । कुम्भैर्दशभिर्वहः ।**

---

प्रतिपदपञ्चिका

**पललोहेति ।** षडङ्गुलावराश्चायामा इति षड्भिः षड्भिः अङ्गुलैः निकृष्टा आयामाः दीर्घत्वानि । तद्यथा आयमानी द्विसप्तत्यङ्गुलायामा व्यावहारिकीषष्ट्यङ्गुलायामा अन्तःपुरभाजिनी चतुष्पञ्चाशदङ्गुलायामा पूर्वयोरिति समवृत्तपरिमाण्योः परिमाण्याय मान्योर्वा पञ्चपलकप्रयाम इति पलशते तुलिते पञ्चपलमधिकं देयमांसलोह मणिवर्जमिति तेषां प्रयामो न भवति । काष्ठतुलामाह—काष्ठतुलेति, सारं दारुमयी प्रमाणतोष्टवहस्तापदवती कृतपलादिपदा प्रतिमानवती हारादिप्रमाणप्रतिमान- पाषाणोपेता मयूरपदाधिष्ठानस्तम्भद्वयतोरणोपनिबद्धा कर्तव्येतिवाक्यशेषः । काष्ठपञ्च- विंशतिपलमिति, तावतैन्धनेन तण्डुलप्रस्थापाकनिष्पत्तिरेपप्रदेश इति प्रदेशः प्रकारः प्रदर्शनमितियावत् ।

यथाकाष्ठपञ्चाशत्पलं प्रस्थद्वयसाधनमित्यादि प्रसङ्गाश्चाल्पमूल्यस्याप्यमितो- व्ययो न कार्यः किमङ्ग पुनरस्येति ज्ञापनार्थमत एव कोष्ठागाराध्यक्षवे(त)नामित्येवं षोडशतुलाश्चतुर्दशप्रतिमानानि च व्याख्यातानि ।

श्रीमूला

**अथ** द्रोणाढकादिनिरूपणमारभते—अथेत्यादि । धान्यमाषद्विपलशतं तुला- द्वयमितधान्यमाषपूरणीयम्) आयमानं नाम द्रोणम् । सप्ताशीतिपलशतमर्धपलं चेति । अर्थादायमानद्रोणादर्धत्रयोदशभिः पलैर्न्यूनम्, व्यावहारिकं नाम द्रोणं भवति । पञ्चसप्ततिपलशतमिति । अर्थाद् व्यावहारिकद्रोणादर्धत्रयोदशपलैर्न्यूनम्, भाजनीयं नाम द्रोणं भवति । द्विषष्टिपलशतमर्धपलं चेति । अर्थाद् भाजनीयद्रोणाद् अर्धत्रयोदशपलै- र्न्यूनम्, अन्तःपुरभाजनीयं नाम द्रोणं भवति । इति चतुर्विधं द्रोणम् ।

तेषामिति । तेषां चतुर्णां द्रोणानाम्, आढकप्रस्थकुडुबाः, चतुर्भागावराः क्रमेण चतुर्भागाः अवराः स्वस्वपूर्वचतुर्भागात्मका अत एव स्वस्वपूर्वतो निकृष्टाश्चेत्यर्थः । एतदुक्तं भवति—द्रोणचतुर्भाग आढक आढकचतुर्भागः प्रस्थः प्रस्थचतुर्भागः कुडुब इति ।

द्रोणादुत्कृष्टान् मानविशेषानाह—षोडशेत्यादि । षोडशद्रोणमिताखारी, विंशतिद्रोणमितः कुम्भः, दशकुम्भमितो वहः ।

[ मानसाधनानि ]

**शुष्कसारदारुमयं समं चतुर्भागशिखं मानं कारयेत् । अन्तश्शिखं वा । रसस्य तु । सुरायाः पुष्पफलयोः तुषाङ्गाराणां सुधायाश्च शिखामानं द्विगुणोत्तरा वृद्धिः ॥**

---

चाणक्यटीका

तुलाप्रतिमानमुक्त्वा सर्वद्रव्यविषयं मानमाह्—पूर्ववद् धान्यमाषपलशतद्वयम् आयग्रहणार्थत्वाद् द्रोणं कारयेदित्यपेक्ष्य द्वितीया । तथासप्ताशीत्युत्तरं पलशतमर्धपलं च यन्मानं व्यावहारिकम् । भाजनीयमन्तःपुरभाजनीयं च पूर्वस्मादर्धत्रयोदशपलन्यूनमित्यर्थः ।

तेषां चतुर्णामपि द्रोणानाम् । चतुर्भागम् आढकम् । तच्चतुर्भागः प्रस्थः । प्रस्थचतुर्भागः कुडुबमिति ।

उत्तरमायमानमाह्—षोडशद्रोणा खारीत्यादि । आयामादीनां यथास्वं प्रमाणं नेति बोद्धव्यम् ।

प्रतिपदपञ्चिका

मानधान्यादीनाह्—अथेत्यधिकारान्तरे धान्यमाषाणां पलशतद्वयतुलितमायमानं नाम दोणं भवति । ततोऽर्धत्रयो दशपलावरा व्यावहारिकभाजनीयां तं पुरं भाजनीयसंज्ञकानि त्रीणि द्रोणमानानि भवन्ति । तद्यथा, द्विशतं पलं द्रोणमायमानं सप्ताशीतिपलशतं अर्धपलं च व्यावहारिकं पञ्चसप्ततिशतं भाजनीयम् । द्विषष्टिशतमर्धपलंच अन्तःपुरभाजनीयं तेषामिति, चतुर्णामायमानादिद्रोणानामाढकप्रस्थकुटुम्बा यथास्वं चतुर्भागावराः यथाक्रमं चतुर्भागाश्चतुर्भागावरा(प)रानिकृष्टाः तद् यथा, द्रोणस्य आढकश्चतुर्भागः आढकस्य प्रस्थः प्रस्थस्य कुडुब इति, षोडशद्रोणेत्यादिसुबोधम् ।

श्रीमूला

मानसाधनान्याह्—शुष्केत्यादि । शुष्कसारदारूमयम्, समं तुल्यमूलाग्रं चतुर्भागशिखं शिखा मुखोपरितनावकाशः आमुखाद् भागत्रयवतः शिखायां मेयचतुर्भागो यथा तिष्ठेत् तथा कृतशिखम्, मानम्, कारयेत् । अन्तश्शिखं वा अन्तर्गता आमूलमुखान्तावकाशान्तःप्रविष्टा शिखा पूर्वोक्तश्चतुर्भागावकाशो यस्य तत् तथाभूत वा, मानं कारयेत् । धान्यादिमाने चायं विकल्पः । रसस्य त्विति । अन्तश्शिखमित्यनुवर्तते । तत्र तुशब्दोऽवधारणार्थः सम्बध्यते । तदयमर्थः—रसस्य धृततैलादेरन्तश्शिखमेव मानं भवतीति ।

सुरायाइत्यादि । सुरादीनां षण्णां शिखामानम् अस्ति । किन्तु द्विगुणोत्तरा वृद्धिः द्विगुणाधिका तस्य वृद्धिः । धान्यादिषु शिखामानं यदुक्तं चतुर्भागात्मकं

[ तुलानां मानानां च मूल्यव्यवस्था ]

**सपादपणो द्रोणमूल्यम् । आढकस्य पादोनः । षण्माषकाः प्रस्थस्य । माषकः कुडुबस्य । द्विगुणं रसादीनां मानमूल्यम् । विंशतिपणाः प्रतिमानस्य तुलामूल्यं त्रिभागः ॥**

---

### श्रीमूला

तदिह द्वैगुण्यं यातीत्यर्थः । अतश्च सुरादीनां प्रस्थः पञ्चभिरेव कुडुबैः भवति, न तु धान्यानामिव चतुर्भिः । तत्रापि सुरायाः बहिश्शिखासम्भवाभावात् प्रस्थोऽन्तश्शिखोऽथदिन्तः प्रविष्टपञ्चकुडुबः कार्यः ।

### चाणक्यटीका

द्रोणादिमानं शुष्कसारदारु ( मयम् ) असङ्कोचस्फुटनम् । समम् ऊर्ध्वमधश्च । अतएव चतुर्थोभागः शिखा यस्य तन्मानं कारयेत् । भूयोऽभ्यन्तरचतुर्थः शिखेति अन्तःशिखं वेति लोहशलाकावच्छेद्यशिखं वेत्यर्थः ।

रसस्येति रसमानकरणाद् रसादीनां पञ्चानां शिखामानद्विगुणोत्तरा वृद्धिः शिखामानं तावच्चतुर्णां भागत्वाद् द्रोणस्य पलं तदेव द्विगुणं यस्येति बहुव्रीहिः । शिखामानद्विगुणं पञ्चविंशतिपलम्, तदुत्तरा यथाक्रमं वृद्धिः । तद्यथा—रसस्य घृतादेः पञ्चसप्ततिपलानि शिखामानम् । सुरायाः पलशतम् । पुष्पफलयोः पञ्चविंशत्यधिकम् । तुषाङ्गाराणां पलशतम् । सुधायाः पञ्चसप्ततिशतमिति ।' सुधामानस्य द्विगुणोत्तरे तु षष्ठीसमासे मानादपि शिखामानं (द्वि) गुणं सुधायाः स्यात् । शिखाभिश्च सार्धं रसादीनां द्रोणादिव्यवहारो नान्यथेत्यभिप्रायः । एवमाढकादिषु योज्यम् ।

### प्रतिपदपञ्चिका

तेषां तुलापरिच्छिन्नानां द्रोणादीनां सुखव्यवहारार्थं मानान्याह—शुष्कसारदारवमिति, शुष्कदृढदारुघटितं समं सदृशमूलाग्रं चतुर्भागशिवं भागत्रयेण मुखसमं हृतस्य चतुर्भागेन यथाशिखा भवति तथा शिखां कारयेत् । अन्तरशिखां वा मुखसमं हृतशिखा चतुर्भागं वा धान्यानां देशान्तरप्रसिद्ध्या विकल्पोऽयं । रसस्यत्विति, अन्तःशिखमिति वर्तते तु शब्दोऽवधारणे रसस्य तैलघृतादेरन्तश्शिखमेव न तत्र वा शब्दस्सम्बद्ध्यते । सुरादीनां षणणां भागत्रयेण मुखसमं हृतस्य शिखायां भागद्वयं भवति । ततश्चैषां पञ्चभिः कुटुम्बैः प्रस्थो भवति, सुरायास्त्वन्तः प्रविष्ट पञ्चकुटुम्बं कर्तव्यम् । द्रव्याणां शिखाभावात् । पञ्चकुटु(डुप)म्बप्रस्थार्थं—पुष्पादिभिस्सहपाठः ।

### श्रीमूला

तुलामानभाण्डस्य मूल्यमाह—सपादपण इत्यादि । माषकः कुडुबस्येत्येतदन्तमतिरोहितार्थम् ।

[ तुलामानन्यूनाधिकभावपरीक्षाकालनियमः, अपरीक्षितव्यवहारे दण्डः, परीक्षकदेयांशाश्च ]

**चतुर्मासिकं प्रातिवेधनिकं कारयेत् । अप्रतिविद्धस्यात्ययः सपादः सप्तविंशतिपणः । प्रातिवेधनिकं काकणीकमहरहः पौतवाध्यक्षाय दद्युः ।**

---

श्रीमूला

द्विगुणमिति । रसादीनां घृततैलादीनाम्, द्विगुणं सपादपणादिपूर्वोक्तद्विगुणमर्धतृतीयपणादिकम्, द्रोणादिमूल्यं भवति । धान्यमानापेक्षया रसादिमानानामन्तश्शिखत्वेन रूपपृथुत्वात् श्लक्ष्णतरदारुघटितत्वाच्च मूल्यद्वैगुण्योपपत्तिः ।

विंशतीत्यादि । प्रतिमानस्य चतुर्दशविधप्रतिमानसमुदायस्य, विंशतिपणाः, मूल्यम् । तुलामूल्यमित्यादि । तुलामूल्यम् अनन्तरोक्तस्य विंशतिपणात्मकस्य प्रतिमानमूल्यस्य त्रिभागः ।

चाणक्यटीका

"तुलामानभाण्डं पौतवहस्तात् क्रीणीयुः" ( अधि० २, अध्या० १४ ) इत्युक्तम् । अतोमूल्यमाह—सपादः पण इति । पादोन इति द्वादशमाषका इत्यर्थः ।

द्विगुणं रसादीनां पञ्चानां मानमूल्यम् । विंशतिपणाः प्रतिमानस्य सर्वस्य । त्रिभागः विंशत्याः ।

प्रतिपदपञ्चिका

तुलामानभाण्डं पौतवहस्तात् क्रीणोयुरिति उक्तम् । तस्यमूल्यमाह—सपादपण-इत्यादि ।

प्रबोधम् । द्विगुणमित्येतदेव, अर्धतृतीयपणादिरसानां घृतादीनां द्रोणादिमानमूल्ये तेषामन्तःशिखत्वेन धान्यमानेभ्यो रूपतः पृथुत्वात्श्लक्ष्णतरदारुघटनीयत्वाच्च, मूल्यवैगुण्यमिति विंशतिपणाः प्रतिमानस्येति चतुर्दशविधस्यापि समुदितस्य तुलामूल्यं त्रिभाग इति प्रथमायास्सुवर्णतुलायाः पणत्रिभागो मूल्यमेवं पलवृद्धौ मूल्यवृद्धया दशपललोहायास्त्रिभागाधिक, पणत्रयमूल्यम् एवं शेषाणामपि योज्यमिति केचित् । अपरे तुलामूल्यं त्रिभाग इति अनन्तरोक्तमूल्यप्रतिमानविंशतिपणस्त्रिभागस्तुला अप्रतिविद्धस्याशोधितस्य अत्ययो दण्डः पादस्सप्तविंशतिपणः न्यूनातिरिक्तातायां तु कण्टकशोधनोक्तदण्डाः ।

श्रीमूला

चतुरित्यादि । चतुर्मासिकं चतुर्षु चतुर्षु मासेषु भवम्, प्रतिवेधनमेव प्रातवेधनिकं परिशोधनम्, विनयादित्वाट्ठक् । कारयेत् । अप्रतिविद्धस्येति । अप्रतिविद्धस्य अपरिशोधितस्य तुलामानस्य, व्यवहारे, अत्ययो दण्डः, सपादः सप्तविंशतिपणः । प्राति-

[ घृतादिष्वधिकतया ग्राह्या अंशाः
कुडुबादिमानचतुष्टयञ्च ]

**द्वात्रिंशद्भागः तप्तव्याजी सर्पिषः, चतुष्षष्टिभागस्तैलस्य । पञ्चाशद्भागो मानस्रावो द्रवाणाम् । कुडुबार्धचतुरष्टभागानि मानानि कारयेत् ॥**

———————

श्रीमूला

वेधनिकमिति । प्रातिवेधनिकं परिशोधननिमित्तम्, काकणिकम्, अहरहः प्रतिदिनम्, पौतवाध्यक्षाय, दद्युः, दिवसस्यैकाकाकणीति क्रमेण मासचतुष्टयस्य सविंशति काकणीनां शतं शोधनकाले तुलामानव्यवहारिणोऽर्पयेयुरित्यर्थः ।

चाणक्यटीका

चातुर्मासिकमिति । चतुर्षु मासेषु अध्यक्षः तुलामानादिप्रतिवेधनार्थमुपसंहारं कारयेत्—किंक्षीणम्, उतान्यथा कल्पनमिति । अप्रतिविद्धस्य अशोधितस्य मानादेः अर्थान्तरे (ण) व्यवहरतः अत्ययः सपादः सप्तविंशतिपणः । क्रमतश्च मानप्रतिमानानि प्रतिवेधयितारः, काकणी दीयते अस्मिन्नहनि तादृशं दद्युः पौतवाध्यक्षाय । स्वकैर्मानादिभिर्व्यवहरद्भिः प्रतिदिवसं काकणी देयेत्यन्ये ।

प्रतिपदपञ्चिका

प्रातिवेधनिकमिति । प्रतिवेधनानिमित्तंकाकणिकं अहरहरिति, अहन्यहनि माषचतुर्भागं प्रतिवेधनकाले मौनचतुष्टयस्य त्रिंशन्माषकं पौतवाध्यक्षाय वणिजो दद्युः ।

श्रीमूला

रसादिप्रसङ्गाद् घृतादिगतं किञ्चिदाह—द्वात्रिंशदित्यादि । सर्पिषः घृतस्य विलापितस्य क्रीयमाणस्य, द्वात्रिंशभागः अधिकतया ग्राह्य इति वाक्यशेषः । तप्तव्याजी स तप्तव्याजीसंज्ञः । तैलस्य चतुःषष्टिभागः ग्राह्यः । पञ्चाशद्भाग इति । पञ्चाशद्भागो मानस्रावः तदाख्यो, द्रवाणां ग्राह्यः । द्रवसामान्यविषयोऽयं मानस्रावः सर्पिस्तैलयोर्यथोक्तव्याज्या सह समुच्चीयत इत्याहुः ।

कुडुबादीनामल्पपरिमाणानां मानसाधनान्याह—कुडुबार्धेत्यादि । प्रस्थचतुर्भागः कुडुब उक्तः तस्य मानसाधनं कुडुबं कुडुबार्धं कुडुबचतुर्भागं कुडुबाष्टभागम् इत्येतानि मानानि, कारयेत् निर्मापयेत् ।

चाणक्यटीका

तप्तव्याजीति तप्तस्य मीयमानस्य द्वाविंशद्भागः । तैलस्य चतुष्षष्टिभागमधिकं ग्राह्यम् । पञ्चाशद्भागा मानास्रवो द्रोणान्मीयमानादयो ?······

कुडुबार्धं चतुर्भागं तदष्टभागं च मानान्यल्पानि संव्यवहरार्थं द्रवाणां कारयेत् ।

[ वारकघटिकासंज्ञे ]

**कुडुबाश्चतुर (।शीतिः वारकस्सर्पिषो मतः।**
**चतुष्षष्टिस्तु तैलस्य पादश्च घटिकाऽनयोः ॥९३॥**

इत्यध्यक्षप्रचारे तुलामानपौतवं एकोनविंशोऽध्यायः
आदितश्चत्वारिंशः

---

प्रतिपदपञ्चिका

प्रसङ्गादन्यदप्यादेयमाह—द्वात्रिंशद्भाग इति, सर्पिषो द्वात्रिंशद्भागो ग्राह्यः। तस्य तप्तव्याजीति संज्ञा तैलस्य चतुषष्टिभागः पञ्चाशद्भाग इति, तथापरोपि पञ्चाशद्भागस्तैलसर्पिषोस्तप्तव्याजी सहिते ग्राह्यः। अन्येषां तु द्रवाणां पञ्चाशद्भाग एव केवलः तस्य भग्नास्राव इति संज्ञा।

श्रीमूला

अध्यायान्ते श्लोकमाह—कुडुबा इत्यादि। सर्पिषः, चतुरशोतिः कुडुबाः यत्र मान्ति, स वारकस्तत्संज्ञः, मतः। तैलस्य तु, चतुःषष्टिः कुडुबाः यत्र मान्ति, स वारकः। अनयोः सर्पिर्वारकतैलवारकयोः, पादः चतुर्भागः, घटिका सर्पिर्घटिकाख्या तैलघटिकाख्या च, मता ॥

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
एकोनविंशोऽध्यायस्तुलामानपौतवम्,
आदितश्चत्वारिंशः ॥

चाणक्यटीका

कुडुबाः चतुरशीतिर्वारकः सर्पिषो मतः। चतुष्षष्टिकुडुबाः तैलस्य वारकः। घृततैलवारकयोश्चतुर्भागस्य घटिकेत्याख्या। पुराकल्पे स्थितिरियम्, देशान्तरस्थितिर्वेति।

॥ तुलामानपौतवमेकोनविंशं प्रकरणं समाप्तम् ॥
॥ एकोनविंशश्चाध्यायः ॥

प्रतिपदपञ्चिका

कुटुम्बार्थचतुष्टय भागानीति कुटुम्ब(डुव)प्रमाणमुक्तम्। प्रस्थचतुर्भागः कुटुम्व इति तन्मानसाधनम्। कुटुम्बकुडुबार्थं कुडुम्बचतुर्भागं वक्ष्यतिहि। अष्टौ पारकाः सर्पिषः पणीकः प्रच्छमङ्चमंचेत्यादि।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायां अर्थशास्त्रटीकायां
अध्यक्षप्रचारिके द्वितीयेधिकरणे एकोनत्रिंशोध्यायः
आदितः चत्वारिंशोध्यायः ॥

# अष्टात्रिंशं प्रकरणम्

## विंशोऽध्यायः ।

## देशकालमानम् ।

[ देशमानानि ]

**मानाध्यक्षो देशकालमानं विद्यात् ॥**

**अष्टौ परमाणवो रथचक्रविप्रुट् । ता अष्टौ लिक्षा । ता अष्टौ यूकामध्यः । ते अष्टौ यवमध्यः । अष्टौ यवमध्याः अङ्गुलम् । मध्यमस्य पुरुषस्य मध्यमाया अङ्गुल्या मध्यप्रकर्षो वाऽङ्गुलम् । चतुरङ्गुलो धनुर्ग्रहः । अष्टाङ्गुला धनुर्मुष्टिः । द्वादशाङ्गुला वितस्तिः, छायापौरुषं च । चतुर्दशाङ्गुलं शमश्शलः परिरयः पदं च । द्विवितस्तिररत्निः प्राजापत्यो हस्तः । सधनुर्ग्रहः पौतवविवीतमानम् । सधनुर्मुष्टिः किष्कुः कंसो वा ।**

---

श्रीमूला

देशकालमानमिति—सूत्रम् । देशो भूमिस्तद्विकारः प्राकारस्तम्भादिः कालस्त्रुटिलवादिः तयोर्मानमिति सूत्रार्थः । 'द्वादशहस्तादूर्ध्वमोजं युग्मं वा आ चतुर्विंशतिहस्ताद्' इति दुर्गविधाने, 'चतुर्दण्डान्तरा रथ्याः' 'पञ्चारत्नयो रथपथः' इति दुर्गनिवेशेऽन्यत्र च हस्तदण्डारत्न्यादीनां व्यवहारः कृतः । तेषां प्रमाणं तु नोक्तम् । तथा 'पूर्वे दिवसस्याष्टभागे रक्षाविधानमायव्ययौ च शृणुयाद्' इत्येवं राजप्रणिधौ कालविभाग उक्तः । तस्य मानं तु नोक्तम् । तदुभयमिह मानप्रसङ्गादुच्यत इति सङ्गतिः ।

मानाध्यक्ष इति । मानाध्यक्षः पौतवाध्यक्षः, देशकालमानम्, विद्यात् वक्ष्यमाणप्रकारेण जानीयात् ।

अष्टाविति । अष्टौ, परमाणवः अतीन्द्रिया अणवः संहताः, रथचक्रविप्रुट् रथचक्रोत्थापितं चक्षुर्ग्राह्यमेकं रजो भवति । ता विप्रुषः, अष्टौ, लिक्षा । ता अष्टौ लिक्षाः, यूकामध्यः । ते यूकामध्याः अष्टौ, यवमध्यः । अष्टौ यवमध्याः अङ्गुलमेकम् ।

अङ्गुलस्य प्रकारान्तरमाह—मध्यमस्येत्यादि । अङ्गुलशतोत्सेधोऽर्धनवत्यङ्गुलपरिणाहो मध्यमः पुरुषः इति स्वामी । मध्यमस्य पुरुषस्य, मध्यमायाः अङ्गुल्याः हस्तमध्यमाङ्गुल्याः, मध्यप्रकर्षो मध्यप्रदेशपृथुत्वातिशयो वा, अङ्गुलम् ।

श्रीमूला

चतुरङ्गुल इति। चत्वार्यङ्गुलानि, धनुर्ग्रहः धनुर्ग्रहसंज्ञानि। अष्टाङ्गुलेति। धनुर्ग्रहद्विगुणा धनुर्मुष्टिः।

द्वादशेत्यादि। द्वादशाङ्गुला वितस्तिः तदाख्या। छायापौरुषं चेति छायापौरुषं शङ्कुप्रमाणं, तदपि द्वादशाङ्गुलमित्यर्थः। चतुर्दशेत्यादि। चतुर्दशाङ्गुलं शमसंज्ञं शलसंज्ञं परिरयसंज्ञं पदसंज्ञं च। द्वितस्तिररिति। चतुर्विंशत्यङ्गुलोऽरत्निः। स प्राजापत्यो विश्वकर्मं सम्मतो हस्तः।

सधनुर्ग्रह इति। धनुर्ग्रहयुक्तः चतुरङ्गुलाधिकः प्राजापत्यः अर्थादष्टाविंशत्यङ्गुलमानम् पौतवविवीतमानं काष्ठतुलादेः पश्वर्थक्षेत्रादेश्च हस्तमानं भवति। सधनुर्मुष्टिरिति। अष्टाङ्गुलाधिकः प्राजापत्यः किष्कुसंज्ञः कंससंज्ञो वा।

चाणक्यटीका

त्रिविधं प्रमेयं प (ण्यं ? ण्येन) देशकालेन च, तत्र पण्यस्य मानमुक्तम्, देशकालयोरुच्यत इत्याह—मानाध्यक्ष इति। सामान्यनिर्देशोऽप्ययं तुलामा ( नाव ? नवि ) शिष्टयोर्देशकाल ( शिष्ट ? ) योः सर्वव्यवहाराङ्गभूतं मानं विद्यात्।

अष्टौ परमाणव इति कात्स्न्यख्यानात् अत्यन्तसूक्ष्मत्वाद् रथच ( क्रे कृते ? क्रोद्धृतं ) रजः विप्रुषादिकं दृश्यरूपम्। ता अष्टौ लिक्षा। अष्टौ लिक्षाः यूकामध्यः, मध्यग्रहणमवयवप्रतिषेधार्थम्। अष्टौ यवमध्या अङ्गुलम्। किं संज्ञैव। नैवम्। प्राण्यवयवोऽप्यं मध्यमस्य पुरुषस्य मध्यमाया अङ्गुल्या मध्यमो भाग एवंप्रकारः। एवंप्रकर्षो वा ( मध्यम ) प्रमाणस्यायमेव स्यात्। तेनैव अष्टयवमध्यप्रमाणाङ्गुलेन मध्यमत्वम्। अतो ( ऽधिक ? ) न्यूनाधिकत्वं बोद्धव्यम्। चतुर्हस्तप्रमाणश्च मध्यमः पुमानिति। चतरङ्गुलो धनुर्ग्रहः संज्ञैव।

द्वादशाङ्गुला वितस्तिः। छाया (वज्ञो ? भिज्ञा) नार्था छाया पुरुषद्वादशाङ्गुलमेव। शमः[1] शलः परिरयः पदं चेति चतुर्दशाङ्गु ( लका ? ला ) देरविशेषप्रसिद्धाः संज्ञाः। द्विवितस्तिररत्निः प्राजापत्यो हस्तः लोकसंव्यवहारार्थः।

स एव सधनुर्ग्रहः अष्टाविंशत्यङ्गुलः पौतवविवीतमानम्। तद्यथा—"काष्ठतुलामष्टहस्तां पदवतीम्" इत्यादि। पौतवविवीतमानम् इत्युपलक्षणार्थत्वाद् ब्रह्मसोमादिग्रहणम्, तत्र हि गव्यूताद्यनेन मानेनेति। सधनुर्मुष्टिः प्रजापत्य एव द्वात्रिंशदङ्गुलः किष्कुः कंसो वा।

प्रतिपदपञ्चिका

देशकालमानमिति सूत्रम्।

देशो भूमिः तद्ग्रहणात्तद्विकारस्यापि प्राकारादेर्ग्रहणम्। कालोपि त्रुटिलव-

---

१. केशवस्वामी तु 'शमस्तु माने च चतुरङ्गुले, पदं पञ्चदशाङ्गुले" इत्याह।

**द्विचत्वारिंशदङ्गुलस्तक्षणः क्राकचिककिष्कुः स्कन्धावारदुर्गराजपरिग्रहमानम् । चतुष्पञ्चाशदङ्गुलः कुप्यवनहस्तः । चतुरशीत्यङ्गुलो व्यामो रज्जुमानं खातपौरुषं च । चतुररत्निर्दण्डो धनुर्नालिका पौरुषं च । गार्हपत्यमष्टशताङ्गुलं धनुः पथिप्राकारमानम् । पौरुषं च अग्निचित्यानाम् । षट्कंसो दण्डो ब्रह्मदेयातिथ्यमानम् । दशदण्डा रज्जुः । द्विरज्जुकः परिदेशः । त्रिरज्जुकं निवर्तनम् । एकतो द्विदण्डाधिको बाहुः । द्विधनुस्सहस्रं गोरुतम् । चतुर्गोरुतं योजनम् । इति देशमानं व्याख्यातम् ॥**

---

### प्रतिपदपञ्चिका

निमेषादिस्तयोर्मानं परिच्छेद इति सूत्रार्थः । सम्बन्धस्तु द्वादशहस्तादूर्ध्वं । ओजं युग्मं वेत्यादि दुर्गं विधाननिवेशादौ हस्तारत्निदण्डादयोभिहिताः तत्स्वरूपं तु नोक्तम् । तथा राजप्रणिधिप्रभृतौ च पूर्वे दिवसस्य भागे रक्षाविधानमित्यादि कालप्रविभागश्च तन्मानविधिरित्यतः तुलामानादिप्रसङ्गेन देशकालयोरपि मानविधानमभिधीयत इति तदाह—मानाध्यक्षः पौतवाध्यक्ष एवान्यो वा समाहर्तृप्रकृतः स देशकालमानं विद्यात् । कथमित्याह—अष्टौ परमाणव इत्यादि, अष्टावतीन्द्रियाः परमाणवः संहतास्सन्तः एको रथचक्र विप्रुट्रथचक्रोद्धतं चक्षुर्ग्राह्यं यद्रजः ततः क्रमेणाष्टोत्तराणि लीक्षा यूकायवमध्याङ्गुलानि प्रकारान्तरमङ्गुलस्याह—मध्यमस्येत्यादि, मध्यमस्याङ्गुलशतारोहस्यअर्धनवतिपरिणाहस्य पुरुषस्य मध्यहस्ताङ्गुल्या मध्यमप्रदेशस्य प्रकर्षः पृथुत्वातिशयः स्वाङ्गुलं तच्च इ(तु)ष्टयं धनुर्ग्रहं नाम । स द्विगुणों धनुर्मुष्टिः । स एव त्रिगुणो वितस्तिः छायापौरुषं शङ्कुप्रमाणं तदपि द्वादशाङ्गुलमेव । चतुर्दशाङ्गुलस्य शमादयश्चतस्रस्संज्ञाः । स द्विवितस्तिः चतुर्विंशत्यङ्गुलोऽरत्निः स एव प्रजापत्यस्सामान्यो हस्तः । स एव सधनुर्ग्रहोऽष्टाविंशत्यङ्गुलः पौतवविवीतमानम् । तयोर्हस्तप्रमाणं, तत्र पौतवम् काष्ठतुलादि, विवीतं प्रतीतं । सधनुर्मुष्टिःस एव प्राजापत्यो हस्तो द्वात्रिंशदङ्गुलः । किष्कुरुच्यते कंसो वेति

### श्रीमूला

द्विचत्वारिंशदित्यादि । द्विचत्वारिंशदङ्गुलः हस्तः, तक्षणः वर्धकेः कर्मणि, क्राकचिककिष्कुः करपत्रकर्ममानोपयोगी किष्कुः, स्कन्धावारदुर्गराजपरिग्रहमानं स्कन्धावारादीनां च मानम्, भवति । चतुष्पञ्चाशदित्यादि । चतुष्पञ्चाशदङ्गुलः, कुप्यवनहस्तः द्रव्यवनकर्ममानहस्तः ।

चतुरशोतीत्यादि । चतुरशीत्यङ्गुलः हस्तः, व्यामः, स च रज्जुमानम्, खातपौरुषं च कूपादेः पुरुषमानं च भवति ।

चतुररत्निनिरिति । चः संज्ञासमुच्चये । चतुररत्निप्रमाणस्य दण्डः धनु नालिका पौरुषम् इति चतस्रः संज्ञाः ।

## श्रीमूला

गार्हपत्यमिति। गृहपतिर्विश्वकर्मा तद्दृष्टं गार्हपत्यम्, अष्टशताङ्गुलम्, धनुः तदाख्यम्। तच्च पथिप्राकारमानम् अध्वमानं प्राकारमानं च भवति। पौरुषं चेति। पुरुषमानम्, अग्निचित्यानाम् अग्निचयनविशेषाणाम्।

षट्कंस इत्यादि। कंसषट्कप्रमाणः अर्थात् प्राजापत्यहस्ताष्टकप्रमाणः, दण्डः। सः ब्रह्मदेयातिथ्यमानं ब्रह्मदेयानाम् आतिथ्यानां च मानं भवति। ब्रह्मदेयानि ऋत्विगादिब्राह्मणदेयानि, आतिथ्यानि अतिथिभोजनार्थविसृष्टक्षेत्राणि। दशदण्डेति। अर्थाच्चत्वारिंशद्धस्तप्रमाणा, रज्जुः। द्विरज्जुक इति। विंशतिदण्डप्रमाणः, परिदेशः। त्रिरज्जुकमिति। त्रिंशद्दण्डप्रमाणम्, निवर्तनं चतुरश्रनिवर्तनम्।

एकतो द्विदण्डाधिक इति। निवर्तनस्यैवैकपार्श्वे दण्डद्वयाधिकप्रमाणः पार्श्वान्तरेष्वनधिकप्रमाणः अर्थाद् द्वात्रिंशद्दण्डदीर्घस्त्रिंशद्दण्डविस्तारश्च मानविशेषः, बाहुस्तत्संज्ञः। द्विधनुस्सहस्रमिति। धनुस्सहस्रद्वयप्रमाणम्, गोरुतम्। स क्रोश इति व्यवह्रियते। चतुर्गोरुतमिति। अर्थात् क्रोशचतुष्टयं योजनसंज्ञम्। इति देशमानमिति। व्याख्यातमिति शेषः।

## चाणक्यटीका

द्विचत्वारिंशदङ्गुल इति। चतुर्दशाङ्गुलाधिकः तक्ष्णो हस्तः क्रकर एव किष्कुः सारदारुपाटनार्थः। अपरे क्राकचिककिष्कुरित्यन्वर्थमेव पठन्ति। स एव क्राकचिक किष्कुः स्कन्धावारस्य दुर्गस्य राजपरिग्रहस्य राजविशेषस्य मानम्। चतुष्पञ्चाशदङ्गुलः कुप्यवनहस्तः कुप्यवनसमुत्थद्रव्यमानार्थः।

( चतुरशीत्यङ्गुलो ) व्यामो रज्जुमानं ( सम्भव ? ) खातपौरुषं ( च )। चतुररत्निर्दण्डो धनुश्च संज्ञाद्वैधम्[1]। नालिका पौरुषं च नालिकाकारेति ज्ञायते।

गार्हपत्यमष्टशताङ्गुलं धनुः गृहपतीनां वास्तुमानार्थम्। धनुः वितस्त्यधिकमित्यर्थः। तदेव पथिमानं प्राकारस्य च।

पौरुषं च अग्निचित्यानामिति गार्हपत्यं धनुः पौरुषाधिकं यज्ञवाटादिमानं धर्मार्थत्वाद् अधिको दण्डोऽर ( ण्य ? त्न्या ) इत्यर्थः[2]।

षट्कंसो दण्डो ब्रह्मदेयातिथ्यमानं ब्रह्मदेया ( नाम ) तिथीनां चागन्तॄणां यद्देयं तस्य मानम्। दशदण्डा ( यज्ञ ? रज्जु ):, भूमिमानम्। तथा परिवेशो निवर्तनं[3] चोभयं भूमिमानम्।

---

१. "दण्डादयश्चतस्रः संज्ञाः" इति भट्टस्वामी।

२. अग्निचित्यानां धनुः अष्टशताङ्गुलाद् गार्हपत्यधनुषः पौरुषाधिकं वितस्त्यधिकं विंशत्यधिकशताङ्गुलमित्यर्थः। इदं च "पञ्चारत्निः पुरुष इति शुल्बविदः" इति पदमञ्जरीग्रन्थेन संगतार्थं भवति (५.१.२४)।

३. रज्जुत्रयप्रमाणं स्यात् क्लीबलिङ्गं निवर्तनम्, इति केशवस्वामी।

[ कालमानानि तत्र तुटादिरात्र्यन्तानां विवरणम् ]

**कालमानमत ऊर्ध्वम् । तुटः लवो निमेषः काष्ठा कला नालिका मुहूर्तः पूर्वापरभागौ दिवसः रात्रिः पक्षः मासः ऋतुः अयनं संवत्सरः युगमिति कालाः ॥**

**निमेषचतुर्भागः तुटः । द्वौ तुटौ लवः । द्वौ लवौ निमेषः । पञ्च निमेषाः काष्ठा । त्रिंशत्काष्ठाः कला । चत्वारिंशत्कलाः नाडिका । सुवर्णमाषकाश्चत्वारश्चतुरङ्गुलायामाः कुम्भच्छिद्रमाढकमम्भसो वा नालिका । द्विनालिको मुहूर्तः ।**

**पञ्चदशमुहूर्तो दिवसो रात्रिश्च चैत्रे मासि आश्वयुजे च मासि भवतः ॥**

**ततः परं त्रिभिर्मुहूर्तैरन्यतरः षण्मासं वर्धते ह्रसते चेति ॥**

---

चाणक्यटीका

एकतो द्व्यधिको भागो बाहुरित्युच्यते । नैर्मुखमिति परिवेशननिवर्त्तने उभे चतुरश्रे एकवद् द्विदण्डाधिक्याद् व्यञ्जनस्थानीये भवतः । गोरुतं योजनं च प्राजापत्यमानेनैव बोद्धव्यम् ।

प्रतिपदपञ्चिका

तस्यैव संज्ञान्तरम्, द्विचत्वारिंशदङ्गुलः तक्ष्णो विश्वकर्मणो मतेन । यद्वा तक्ष्णो वर्धकेः दुर्गादिपरिकर्मणि क्राकचिककिष्कुः, करपत्राणां च हस्तेनैव स्कन्धावारदुर्गराजपरिग्रहमानं कर्तव्यम् । चतुष्पञ्चाशदङ्गुलः कुप्यवनहस्तः द्रव्यवनकर्मान्तेषु मानहस्तः चतुरशीत्यङ्गुलो व्यामो नाम रज्जुमानं तेन रज्जूनां मानं खातपौरुषञ्चेति खातस्यकूपादेः पुरुषमानमप्येतदेव चतुररत्निरित्यादि तावत्प्रमाणस्य दण्डादयश्चतस्रस्संज्ञाः गार्हपत्यमिति, गृहपतिना विश्व कर्मणा दृष्टमष्टशताङ्गुलं धनुः तच्च पथां राजमार्गादीनां प्राकाराणां च द्वादशहस्तादीनां मानं पौरुषं च पुरुषमानमग्निचित्यानामग्निचयनविशेषाणां सुवर्णविदादीनां । षट्कंस इति प्राजापत्यहस्ताष्टकप्रमाणो दण्डो ब्रह्मदेयानामृत्विगादिदेयक्षेत्राणां आतिथ्यानां च सत्रादिधर्मनिमित्तधर्माधिकारक्षेत्राणां मानं दशदण्डः परिदेशः । चत्वारिंशद्धस्तो रज्जुः ।

त्रिरज्जुकस्त्रिंशद्दण्डः चतुरश्रन्निवर्तनं एकतो द्विदण्डाधिक इति तदेव चतुरश्रान्निवर्तनमेकत एकस्मिन् पार्श्वे दण्डद्वयाधिक्याद् बाहुर्भवति त्रिंशदण्डो यतः त्रिंशद्दण्डविस्तारो बाहुरिति । द्विधनुस्साहस्रं गोरुतमिति गोरुतं, क्रोशं चतुर्गोरुतं योजनमिति सुखबोधम् ।

श्रीमूला

कालमानमित्यादि । व्याख्यास्यत इति शेषः । कालं सप्तदशधा विभजते— तुट इत्यादि ।

## श्रीमूला

तुटादीनि व्याचष्टे—निमेषेत्यादि। निमेषचतुर्भागः कालपरमाणुरिति स्वामी। परमाणुद्वयमिति भाषा। स तुटः तुटसंज्ञः। अयं तुटिस्त्रुटिरिति चोच्यते।

द्वौ तुटावित्यादि चत्वारिंशत्कला नाडिकेत्यन्तमतिरोहितम्। नालिकायाः प्रकारान्तरमाह—सुवर्णेत्यादि। सुवर्णमाषकांश्चत्वारश्चतुरङ्गुलायामा इति मेयमानयोरभेदोपचारात् सुवर्णमाषकचतुष्टयप्रमाणाचतुरङ्गुलदीर्घा जलनिर्गमनालशलाकोच्यते, कुम्भच्छिद्रं तत्समानं जलधारकघटच्छिद्रम्, आढकमम्भसः तत्कुम्भगतमाढकमितं जलम्, इतिशब्द इहाध्याहार्यः, इति वा नालिका इत्येतत्त्रितययोगेन वा नालिका परिच्छिद्यते। यथोक्तमानशलाकायुक्तच्छिद्रात् कुम्भादाढकपरिमितं जलं छिद्रतो यावता कालेन गलति सा वा नालिकेत्यर्थः।

द्विनालिक इति। नालिकाद्वयं मुहूर्तः। एतदुत्तरं पूर्वापरभागयोर्व्याख्यानं क्रमप्राप्तम्। तत्तु न कृतं सुबोधत्वात्। तौ हि मुहूर्तान्तानामुक्तानां वक्ष्यमाणानां च दिवसादीनां यथासम्भवं पूर्वभागोत्तरभागौ भवतः। तत्र पूर्वाह्णो दिवसपूर्वभागोऽपराह्णो दिवसोत्तरभागः। तथा पूर्वरात्रो रात्रिपूर्वभागोऽपररात्रो रात्र्युत्तरभाग इत्यादि यथाव्यवहारमूह्यम्। पञ्चदशेत्यादि। पञ्चदशमुहुर्तो दिवसो रात्रिश्च भवतः, किं सर्वेषु मासेषु, नेत्याह—चैत्रे मासि आश्वयुजे मासि च अर्थाद् विषुवयोर्द्वयोः। ततः परमिति। विषुवद्द्वयादुपरि, अन्यतरो दिवसो रात्रिश्च, त्रिभिर्मुहूर्तैः षण्मासं वर्धते ह्रसते च एकशश्चतुर्लवोपचयापचयक्रमेण मुहुर्तत्रयं यावत् षण्मासान् उपचीयते क्षीयते च। तत्र दिवसस्य चैत्रविषुवादुपरि वृद्धिः आश्वयुजविषुवादुपरि ह्रासः, रात्रेराश्वयुजविषुवादुपरि वृद्धिः चैत्रविषुवादुपरि ह्रासः।

## चाणक्यटीका

कालमानमत ऊर्ध्वम्, वक्ष्यतीति शेषः। तुटो लव इति। अत्र तुटादयस्तावद् अवयविद्रव्यविषयाः साहचर्याद् अवयवस्यापि कालस्याभेदम् ( आ ? औ ) प ( चत्वा ? चा ) रिकं ( कल्प्यच्छेषका ? )। अपरे त्वाहुः—क्रियैव ज्ञातपरिमाणा क्रियान्तरस्य परिमाणं कल्पयति कालम्। तद्यथा—गोदोहं स्वपितीति।

द्वौ तुटौ लव इति। तत्र तुट इति ह्रस्वाक्षरचतुर्भागग्रहणम्, लव इत्यर्धह्रस्वम्, निमेषो ह्रस्वमात्रम्। यथोक्तम्—लघ्वक्षरोच्चारणं निमिष इति। नालिकेति छायानालिका प्रमाणेनैव ग्राह्या।

अपरोऽपि, सुवर्णमाषाश्च चत्वारः चतुरङ्गुलमायतीकृताः। त एव कुम्भच्छिद्रकारणत्वाद् कुम्भच्छिद्रस्रावणत्वाद् ( आढकम् ) अम्भस इति स्रुतिपरिसमाप्तौ नालिकेत्युच्यते गौण्या वृत्त्या। अयं तु वाक्यार्थः—सुवर्णमाषतश्चतुष्टयेन चतुराङ्गुलायलेन निश्छिद्रात् कुम्भाद् यावता कालेन स्रवेद् आढकमम्भः, तावान् कालो

चाणक्यटीका

नालिकेति[1]।

उक्तं च—सुवर्णमाषकाश्चत्वारः कुट्टिताश्चतुरङ्गुलाः। (माषकचतुरङ्गुला ?) तत्प्रमाणकच्छिद्रा (दा) ढका (म्भो) विनिर्गमे नालिकेति साख्याता, (च्छायाभावे घनं पुनरर्धामलकवच्छ्लक्ष्णं समं ताम्रं च कारं चेति ?)।

(द्विनालिको मुहूर्तः)। प (ञ्चाशन् ? ञ्चदशमु) हूर्तो दिवसो रात्रिश्च चैत्रे (मासा ? मेषा) दौ, आश्वयुजे च तुलादौ विषुवदारम्भे भवतः, न सर्वदा। ततस्त्रिभिर्मुहूर्तैरन्यतर इति दिवसो रात्रिर्वा। ततश्चैत्रात् परं प्रत्यहं मुहूर्तत्रिशद्भाग-सञ्चारेण प्रतिमासदिवसानां वैशाखे षोडश मुहूर्ताः, सप्तदश ज्येष्ठे, अष्टादशाषाढे। एवमाश्वयुजे पञ्चदशमुहूर्तो दिवसः। ततः परं प्रतिमासं मुहूर्तहान्या कार्तिके चतुर्दश मुहूर्ताः, (सा ?) मार्गशीर्षे त्रयोदश, पौषे द्वादश मुहूर्ता इति दिवसवृद्धिह्रासक्रमेण च अहोरात्रे ह्रासो वृद्धिश्च।

यद्येवं षण्मासं वर्धते ह्रस्वते चेति कथमेतद् भवति। द्वादशमुहूर्ताद् (वि ?) पौषदिवसात् प्रभृति वृद्धया चैत्रे समत्वम्, आषाढं यावद् दिवसानां वृद्धिप्रकर्षा-दुत्तरायणे षण्मासं वर्धते। तथा अष्टादशमुहुर्ताद् आषाढादिदिवसात् प्रभृति हान्या आश्वयुजे मासे समत्वं पौषं यावद् दिवसानां ह्रासप्रकर्षाद् दक्षिणायने षण्मासं ह्रसत इति वृद्धिह्रासावाकलय्य नालिकां च वा, अहोऽष्टधा रात्रिं च विभजेद् राज-प्रसिद्धयर्थम्।

प्रतिपदपञ्चिका

इत्येवंदेशमानं व्याख्यातम् कालमानमतऊर्ध्वमिति देशमानपूर्वकत्वात् कालमा-नस्य वक्ष्यत इति वाक्यशेषः। तच्च त्रुट्यादियुगान्तं सप्तदशविधमभिधाय स्वयमेव व्याचष्टे। निमेषचतुर्भागः त्रुटिरिति कालपरमाणुः निमेषचतुर्भागः तस्य त्रुटिरिति संज्ञा द्वौ त्रुटौ लवो निमेषार्धः। द्विलवो निमेषः शेषं सुबोधम्। नाडिका घटिका। यदि वा सुवर्णमाषकाश्चत्वारश्चतुरङ्गुलायामा स्तावत्प्रमाणशलाकीकृतास्तावत्प्रमाणक कुंभ-छिद्रमाढकमम्भसो वा कुम्भगतं यावत्तेन छिद्रेण गलतीति वाक्यशेषः सा वा नालिका नालिकाद्वयं मुहूर्तः पूर्वापरभागाविति पूर्वेषामुत्तरेषां च सम्भवतो योजनीयौ उत्तरेषां दिवसादीनां पूर्वाह्णं पूर्वत्रादि पूर्वभागः अपराह्णापरत्रादि अपरभागः। पञ्चदशमुहूर्तो दिवसो रात्रिश्च चैत्राश्वयुजयोर्मासयो मेर्षतुलाभ्यो भवतः। परमूर्ध्वं विषुवंतद्यथात्रि-भिर्मुहूर्तैः प्रत्येकं चतुर्लवोपचयापचयक्रमेण।न्यतरयोरहोरात्रयोरेकतरःष्षण्मासान्वर्धते च तत्रापीति वर्धत इति ह्रसते चेति विशेषो गणितादवगन्तव्यः।

———

१. "नालिकादिभिरिति, उक्तं हि—सुवर्णमाषकाश्चत्वारः चतुरङ्गुलायामाः, तत्प्रमाण-कुम्भच्छिद्रेण जलाढकस्य यावता कालेन स्रुतिः स कालो नालिकेति" इति कामन्दकीय जयमङ्गला। (५.५२)

[ छायया कालमानज्ञानविधिः ]

**छायायामष्टपौरुष्यामष्टादशभागः छेदः, षट्पौरुष्यां चतुर्दशभागः, चतुष्पौरुष्यामष्टभागः, द्विपौरुष्यां षड्भागः, पौरुष्यां चतुर्भागः, अष्टाङ्गुलायां त्रयो दशभागाः, चतुरङ्गुलायाम् अष्टभागाः, अच्छायो मध्याह्न इति । परावृत्ते दिवसे शेषमेवं विद्यात् । आषाढे मासि नष्टच्छायो मध्याह्नो भवति । अतः परं श्रावणादीनां षण्मासानां द्व्यङ्गुलोत्तरा, माघादीनां द्व्यङ्गुलावरा छाया इति ॥**

---

श्रीमूला

छायया कालमानमाह—छायायामित्यादि । छायायाम्, अष्टपौरुष्यां षण्णवत्यङ्गुलायां, दिवसस्य, अष्टादशभागः छेदः अष्टादशो भागः गतांशः त्रिंशन्नाडिकासु पादोनं नाडिकाद्वयमतीतं ज्ञेयं सपादाष्टाविंशतिनाडिकास्तु शेषाः । षट्पौरुष्यां द्विसप्तत्यङ्गुलायाम् छायायाम्, चतुर्दशभागः छेदः त्रयोदश तु शेषाः । चतुष्पौरुष्याम् अष्टाचत्वारिंशदङ्गुलायाम्, अष्टभागः छेदः अर्धयामो गतः सप्त शेषाः । द्विपौरुष्यां चतुर्विंशत्यङ्गुलायाम्, षड्भागश्छेदः पञ्चनालिकागताः पञ्चविंशतिस्तु शेषाः । पौरुष्यां द्वादशाङ्गुलायाम्, चतुर्भागश्छेदः यामो गतः यामत्रयमवशिष्टम् । अष्टाङ्गुलायां छायायाम्, त्रयो दशभागाः दशधाविभक्तस्य दिवसस्य त्रयो दशमांशाः अर्थान्नवनालिकाः, छेदः, एकविंशतिस्तु नालिकाः शिष्टाः । चतुरङ्गुलायाम्, अष्टभागाः अष्टधा विभक्तस्य दिवसस्य त्रयोऽष्टमांशाः गता विज्ञेयाः, पञ्च तु शिष्टाः । अच्छायः शङ्कुप्रविष्टच्छायो, मध्याह्नो भवति ।

मध्याह्नात् परतोऽप्येवच्छायामानं, किन्तु छेदस्थाने शेषकल्पनया विज्ञेयमित्याह—परावृत्त इति । परावृत्ते दिवसे मध्यान्हात् परतः, शेषं गतावशिष्टं दिवसभागम्, एवं विद्यात् चतुरंगुलायां त्रयोष्टभागा इत्यादिना छायायामष्टपौरुष्यामष्टादशभाग इत्यन्तेन प्रकारेणाष्टभागत्रयप्रभृतिमष्टादशभागान्तं जानीयात् ।

आषाढ इति । आषाढे मासि आषाढमासान्ते, नष्टच्छायोऽच्छायः, मध्याह्नः भवति । अतः परं, श्रावणादीनां षण्माषानां पौषान्तानां, द्व्यङ्गुलोत्तरा द्विद्व्यङ्गुलक्रमवृद्धा छाया भवति । तद्यथा—श्रावणस्यान्ते द्व्यङ्गुला भाद्रपदस्य चतुरङ्गुला आश्वयुजस्य षडंगुला कार्त्तिकास्याष्टांगुला मार्गशीर्षस्य दशांगुला पौषस्य द्वादशांगुलेति । अतः परं, माघादीनां षण्माषानामासाढान्तानां, द्व्यङ्गुलावरा द्विद्व्यङ्गुलक्रमक्षीणा, छाया भवति । यथा—माघस्यान्ते दशांगुला छाया फाल्गुनस्याष्टांगुला चैत्रस्य षडंगुला वैशाखस्य चतुरङ्गुला ज्येष्ठस्य द्व्यङ्गुला आषाढस्य तु शंकुप्रविष्टेति ।

## चाणक्यटीका

अथ छायया कथमष्टधा विभागः कार्य इत्यत्राह—छायायामष्टपौरुष्यामिति। पौरुषं वितस्तिरित्युक्तम्। षण्णवत्यङ्गुलायाम् अष्टादशभागश्छेदः दिवसस्य, सप्तदश-भागाश्चावशिष्टा भवन्ति। चतुर्दशभाग इति दिवसस्य चतुर्दशभागाः कल्पनीयाः। तत्र चतुर्दशो भागश्छिन्नः, त्रयोदशावशिष्टाः। [1]दशभागश्छेदः नवभागा अवशिष्टाः। षड्भागश्छेदः पञ्चावशिष्टाः। चतुर्भागश्छेदः द्वावष्टभा (गावा ? गौ) छिन्नौ षड् भागाः शेषमित्यर्थः।

त्रयो दशभागा इति दशधा विभक्तस्य दिवसस्य दशभागस्त्रयश्छिन्नाः सप्त शेषा इत्यर्थः। त्रयोऽष्टभागा इति पञ्चावशिष्टाः। अच्छायो मध्याह्न इति। तत्र चत्वारोऽष्टभागा उक्ताः।

परिवृत्ते अहर्मध्यदिवसे, शेषम् अनेन क्रमेण विद्यात्। यथा भोगस्तथा अपराह्णे शेषम्। तद्यथा—चतुरङ्गुलायां त्रयोऽष्टभागाः शेषाः, दशभागास्त्रयोऽष्टा-ङ्गुलायाम्, पौरुष्यां चतुर्भागः यावन्नष्टच्छायो दिवसान्त इति योज्यम्, एवं रात्रावपि नालिकया छायाविभागोऽप्यूह्यः।

अयं च नष्टच्छायो मध्याह्न आषाढ़े मासि भवति। ततः परं श्रावणो ( द्वय ) ङ्गुलच्छायः। प्रोष्ठपदश्चतुरङ्गुलच्छायः। एवं प्रतिमासं द्वयङ्गुलवृद्धया पौषे पौरषी छाया। ततो माघादीनां द्वयङ्गुलहान्या आषाढ़ो नष्टच्छाय इति भागभोगास्त्वन्ये पूर्ववदेव।

## प्रतिपदपञ्चिका

छाययापि कालज्ञानमाह—छायायामष्टपौरुष्यामिति, षण्णवत्यङ्गुलायां छायायां दिवसस्याष्टादशभागः च्छेदः। अष्टादशभागोऽवगतो मन्तव्यः सप्तदशावशेषाः। षट्-पौरुष्यां द्विसप्तत्यङ्गुलायां चतुर्दश भागो दिवसस्य अवगतस्त्रयोदश शेषाः। चतुष्पौरुष्यां अष्टाभागोर्धप्रहरः सप्त शेषाः। द्विपौरुष्यां षड्भागश्छेदः प्रहरत्रयं शेषम्। अष्टाङ्गुलायां दशधा विभक्तस्यतत्र त्रयो भागावच्छेदः सप्तदश शेषाश्चतुरङ्गुलायामष्टधा विभक्तस्य त्रयोष्टभागावच्छेदभवः पञ्च शेषाः। अच्छायश्शङ्कुप्रविष्टच्छायो मध्याह्नः। परिवृत्ते दिवसे शेषमेव विद्यादिति। परिवृत्तौ मध्याह्नात्परतः दिवसशेषमेव अपगमप्रकारेण चतुरङ्गु-लादिष्वष्टपौरुषीपर्यन्तासु यत्पूर्वमगगतं तदिह शेषं जानीयात्। तद्यथा पूर्वत्र चतुरङ्गुलायां छायायां त्रयोष्टभागा अवगताः त एवेह शेषा इत्यादि, आषाढे मासि आषाढमासावसाने शङ्कुप्रविष्टछायो मध्याह्नो भवति। तत्र श्रावणावसाने द्वयङ्गु-लाच्छायः भाद्रपदान्ते चतुरङ्गुलच्छायः द्व्यङ्गुलोत्तरता च यावत्पौषान्ते द्वादशाङ्गु-लानि, ततो माघे दश, फाल्गुनेष्टद्वयङ्गुलावरोहणं यावत्पुनर्नष्टच्छाय इति।

---

१. अष्टभाग इति मुद्रितमूलकोशेषु।

[ पक्षमासयोः विवरणं, मासभेदाश्च ]

**पञ्चदशाहोरात्राः पक्षः। सोमाप्यायनश्शुक्लः। सोमावच्छेदनो बहुलः। द्विपक्षो मासः। त्रिंशदहोरात्रः प्रकर्ममासः। सार्धस्सौरः। अर्धन्यूनश्चान्द्रमासः। सप्तविंशतिर्नाक्षत्रमासः। द्वात्रिंशन्मलमासः। पञ्चत्रिंशदश्ववाहायाः। चत्वारिंशद्धस्तिवाहायाः॥**

---

श्रीमूला

पञ्चदशेत्यादि। पञ्चदशाहोरात्रसमुदायः पक्षसंज्ञः। तत्र सोमाप्यायनः चन्द्रवृद्धिकरः पक्षः, शुल्कः तत्संज्ञः। सोमावच्छेदनः चन्द्रक्षयकरः, बहुलः तदाख्यः।

द्विपक्ष इति। उक्तौ शुक्लबहुलपक्षौ समुदितौ, मासः, स एव सावनः।

त्रिंशदहोरात्र इति। त्रिंशदहोरात्रसमुदायः, प्रकर्ममासः, कर्मकरभृतिगणनीयो मासः।

सार्ध इति। अर्धाहोरात्रसहित त्रिंशदहोरात्रः, सौरः सौरमासः। अर्धन्यून इति। अर्धाहोरात्रन्यूनस्त्रिंशदहोरात्रः, चान्द्रमासः। सप्तविंशतिरिति। सहाविंशत्यहोरात्रो नाक्षत्रमासः।

द्वात्रिंशदिति। द्वात्रिंशदहोरात्रो मलमासः।

पञ्चत्रिंशदिति। पञ्चत्रिंशदहोरात्रः तावन्मानो मासः, अश्ववाहायाः। अश्वप्रवाहणस्य, अर्थादश्वकर्मभृत्यानाम्। 'अथ प्रवाहणे। वाहा नृस्त्री स्त्रियां बाहौ' इति केशवस्वामी।

चत्वारिंशदित्यादि। चत्वारिंशदहोरात्रो गजशुश्रूषाकर्मकरवेतनमासः।

चाणक्यटीका

एवं त्रिंशन्मुहूर्तमहोरात्रम्। पञ्चदशाहोरात्राः पक्षः। स च द्विविधः—सोमाप्यायनः प्रवर्धमानसोमः शुक्लः। सोमच्छेदनो ह्रीयमानसोमो बहुल इति।

प्रक्रममास इति। अध्यक्षाणां कर्मारम्भमासः। सार्धः सौर इति। द्वौ पक्षौ ( अर्धपक्षश्च ? ) सौरो मासः। अर्धन्यूनश्चान्द्रः। ( अर्धत्रयोविंशतिदिवसः ? ) मलमासः सेनाविक्षेपभक्तदानार्थः। अश्ववाहायाः अश्ववाहनिमित्तायाः दिनादिकल्पनायाः। एवं हस्तिवाहायाः।

प्रतिपदपञ्चिका

पञ्चदश अहोरात्राः पक्षः स द्विविधः सोमाप्यायनश्चन्द्रपूरणश्शुक्लसंज्ञः विपरीतश्च बहुलः।

द्विपक्षो मासः सावनत्रिंशदहोरात्रः अर्धं चाहोरात्रस्यार्धन्यूनश्चान्द्रः चान्द्रमानेन एकोनत्रिंशदहोरात्रोश्वहस्तिवाहायाः अश्वयवसघासकादोनां चत्वारिंशदहोरात्रः हस्तिवाहायाः। हस्तिवाहादीनां वेतनमासः।

[ ऋतुप्रभृति युगान्तकालमानविवरणम् ]

**द्वौ मासावृतुः । श्रावणः प्रोष्ठपदश्च वर्षाः । आश्वयुजः कार्तिकश्च शरत् । मार्गशीर्षः पौषश्च हेमन्तः । माघः फाल्गुनश्च शिशिरः । चैत्रो वैशाखश्च वसन्तः । ज्येष्ठामूलीय आषाढश्च ग्रीष्मः । शिशिराद्युत्तरायणम् । वर्षादि दक्षिणायनम् । द्व्ययनस्संवत्सरः । पञ्चसंवत्सरो युगमिति ॥**

[ अधिकमाससिद्धिक्रमविवरणम् ]

**दिवसस्य हरत्यर्कः षष्टिभागमृतौ ततः ।**
**करोत्येकमहश्छेदं तथैवैकं च चन्द्रमाः ॥९४॥**

---

श्रीमूला

द्वाविति । उभौ द्विपक्षलक्षणौ मासौ मिलितौ ऋतुसंज्ञौ ।

ऋतुं विभज्य व्याचष्टे—श्रावण इत्यादिना ग्रीष्म इत्यन्तेन । वर्षाः वर्षासंज्ञः ; ज्येष्ठामूलीयः ज्येष्ठः । शेषं सुगमम् ।

शिशिरादीत्यादि । शिशरप्रभृति ग्रीष्मान्तमृतुत्रयम्, उत्तरायणसंज्ञम् । वर्षादि हेमन्तान्तमृतुत्रयं, दक्षिणायनम् ।

द्व्ययन इति । अयनद्वयात्मा संवत्सरो भवति ।

पञ्चसंवत्सर इति । संवत्सरपञ्चात्मकः कालो युगं युगसंज्ञया व्यवह्रियते । इतिशब्दो व्यावहारिककालमानसमाप्तौ ।

चाणक्यटीका

द्वौ मासावृतुः । ते च ऋतवो वर्षाद्या आषा ( ढ ? ढात् ) । तत्रापि न सर्वेष्वृतुषु अधिमासका जायन्ते, किन्तु ग्रीष्मे हेमन्ते च भवन्ति ।

शिशिरादि ऋतुत्रयम् उत्तरायणम्, आदित्य उत्तरवीथीमयति, वर्षादि ऋतुत्रयं दक्षिणायनम्, दक्षिणवीथीमयति । द्व्ययनः संवत्सरः । पञ्चसंवत्सरं युगमिति संव्यव ( हार्यम् ) । चतुर्युगं मन्वन्तराद्यवरं राजवृतावसंव्यवहार्यत्वान्नाख्यातम् । न ह्येताव ( त् ? न्तं ) कालं कस्यचिद्राज्ञः त ( त्रा ? न्त्रे ऽ ) वगतो व्यवहार इति ।

प्रतिपदपञ्चिका

द्वौ मासावाद्यमासावृतुः तद्विशेषा वर्षादयः श्रावणादिमासयुग्मैर्भवन्ति । प्रौष्ठपादो भाद्रपदः ज्येष्ठामूलीयो ज्येष्ठः शेषमृजु । शिशिरादिमासादिकमृतुत्रयं उत्त-रायणं एवं वर्षादिश्रावणादिकं दक्षिणं एतद्द्वयं संवत्सरः तैः—पञ्चभिरित्येतैर्व्याव-हारिककालमानमिति ।

श्रीमूला

अधिमासं श्लोकद्वयेनाह—दिवसस्येति । अर्कः सूर्यः दिवसस्य अहोरात्रस्य, षष्टिभागम् एकघटिकात्मकं, हरति प्रतिदिवसं छिनत्ति । ततः प्रतिदिवसमेकघटिका-

**एवमर्धतृतीयानामब्दानामधिमासकम् ।**
**ग्रीष्मे जनयतः पूर्वं पञ्चाब्दान्ते च पश्चिमम् ॥९५॥**

इत्यध्यक्षप्रचारे देशकालमानं विंशोऽध्यायः,
आदित एकचत्वारिंशः ।

---

श्रीमूला

हरणात्, ऋतौ षष्टिदिवसात्मकमासद्वयावसाने, एकमहश्छेदम् एकमधिकमहोरात्रं, करोति उत्पादयति । तथैव अर्कवदेव, चन्द्रमाश्च, एकम् अहश्छेदं करोति । एवम् अनेन प्रकारेण, अर्धतृतीयानामब्दानाम् अर्धोनतृतीयानाम् वर्षाणाम् अर्थान्माघ-प्रभृतीनां त्रिंशतो मासानां, ग्रीष्मे पूर्वम् अधिमासकम् अधिकमासं त्रिंशत्तमं द्वितीयम् आषाढं, पञ्चाब्दान्ते अर्थात् पुनरर्धतृतीयवर्षात्मनां श्रावणप्रभृतीनां त्रिंशतो मासाना-मन्ते, पश्चिममधिमासकं च उत्तरमधिकमासं च अर्थात् त्रिंशत्तमं द्वितीयं पौषं च, जनयतः, अर्कचन्द्रमसौ ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
विंशोऽध्यायः देशकालमानम्, आदित एकचत्वारिंशः ॥

चाणक्यटीका

दिवसस्य हरत्यर्क इति । अत्रापि काले दिवसस्येत्यहोरात्रग्रहणम् । तस्य हरत्यर्को गतिविशेषात् षष्टिभागं नालिका द्विनालिको मुहूर्तः, त्रिंशन्मुहूर्तमहोरात्र-मिति । तत्र करोत्येकमहश्छेदम् । तथैवैकं ( च ) चन्द्रमाः । तथा चोक्तम्— "वर्षाहेमन्तग्रीष्माणां तृतीयसप्तमा दिवसोनाः शेषाः पूर्णाः" इति ( अधि० २. अध्या० ६ ) ।

यदुक्तम्—"पृथगधिमासकः" इति तदर्थमाह—एवमर्धतृतीयानामिति । एव-मनेन प्रकारेण सूर्याचन्दमसौ गति ( गंति ? ) हान्या दिवसमृतौ वर्धयतः । अर्ध-तृतीयानाम् अब्दानाम् एव । ( ते ? ) "अधिमासं करणाधिष्ठितं ( यत् ? ) कुर्याद्" इत्युक्तम्, अयमेषां त्रयोदशमासः संवत्सरः, त्रिमासश्चायमृतुरितिज्ञापनार्थम् । तद्दर्शयति—ग्रीष्मे जनयत इति । पञ्चभिः संवत्सरैः अधि ( क ? ) मासद्वयं भवति । तत्र पूर्वाब्दाः पश्चार्धाब्दाश्च अर्धतृतीयाः । तत्र पूर्वाब्देषु अर्धतृतीयेषु आषाढे मासि सूर्याचन्द्रमसौ पूर्वं प्रथममधिमासकं जनयतः । पश्चिमानामर्धतृतीयानामब्दानां यः (पक्षो ? पौषो) मासो हैमन्तः, तस्मिन् पश्चिममिति । पञ्चाब्दान्त इति पाठान्तरम् । पञ्चानामब्दानामन्ते पूर्वार्धतृतीयाब्दापेक्षयोच्यते, युगस्यान्त इत्यर्थः । पूर्वमर्धयुग एव

**चाणक्यटीका**

जनयतः, पश्चिमं तु युगान्त इति । तेनयुगस्यैव पूर्वपश्चिमभागापेक्षया पूर्वपश्चिमत्वं व्याख्येयमिति ।

॥ इति देशकालमानं विंशतितमं प्रकरणं समाप्तम् ॥

॥ विंशतितमश्चाध्यायः ॥

प्रतिपदपञ्चिका

अधिमासकसम्भवमाह—दिवसस्येत्यादि, दिवसस्याहोरात्रस्य षष्टिभागघटिकामर्कः प्रत्यहं हरति । छिनत्ति, ततः क्रमेणार्त्तौ मासद्वयातिक्रमे करोत्येकमहच्छेदमधिकमहोरात्रं यथा सः तथैव चन्द्रोऽप्येकमेवाहच्छेदः मृतौ करोति, एवमनेन प्रकारेण अर्धतृतीयनाम शब्दानां त्रिशतोमासानामेकमधिमासकमधिकं मासं जनयतः ।

तथा च सति युगस्य द्वावधिमासकौ भवतः । तत्रापि मासादारभ्य पूर्वं प्रथमं ग्रीष्मे त्रिशत्तमं—द्वितीयमाषाढं जनयति पञ्चाब्दान्ते युगावसानसंवत्सरान्ते । श्रावणादारभ्य त्रिंशत्तमं द्वितोय पौषं जनयत इति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायाम् अर्थशास्त्रटीकायां द्वितीयेऽधिकरणे अध्यक्षप्रचारिके विंशोऽध्यायः । आदित एकचत्वारिंशोऽध्यायः ।

# एकोनचत्वारिंशं प्रकरणम्

## एकविंशोऽध्यायः ।

### शुल्काध्यक्षः ।

[ शुल्कशालास्वधिकारिनियोजनेन शुल्कग्रहणविधिः ]

**शुल्काध्यक्षः शुल्कशालां ध्वजं च प्राङ्मुखम् उदङ्मुखं वा महाद्वाराभ्याशे निवेशयेत् । शुल्कादायिनश्चत्वारः पञ्च वा सार्थोपयातान् वणिजो लिखेयुः—"के ? कुतस्त्याः ? कियत्पण्याः ? क्व चाभिज्ञानमुद्रा वा कृता ?" इति ॥**

---

श्रीमूला

शुल्काध्यक्ष इति सूत्रम् । शुल्कः राज्ञे देयं पञ्चदशभागादि तस्य अध्यक्षः शुल्काध्यक्षः । तद्व्यापारोऽभिधीयते इति सूत्रार्थः । देशविशेषभूतदुर्गसम्बन्धित्वाद् मानपरिच्छेद्यनानाभाण्डविषयत्वाच्च शुल्कस्य देशमानानन्तरमभिधानसङ्गतिः ।

शुल्काध्यक्ष इति । शुल्कशालाध्यक्षः, शुल्कशालां शुल्कग्रहणावस्थानं, ध्वजं च तच्चिह्नं च, प्राङ्मुखमुदङ्मुखं वा, महाद्वाराभ्याशे प्रधानद्वारसमीपे, निवेशयेत् कारयेत् ।

शुल्कादायिन इति । शुल्कग्राहिणः, चत्वारः पञ्च वा पुरुषाः शुल्काध्यक्षनियुक्ताः, सार्थोपयातान् सभाण्डोपगतान्, वणिजो नैगमान्, लिखेयुः । किं कृत्वा, के कुतस्त्या इत्यादि पृष्ट्वेति शेषः । तत्र क इति नामजातिविषयः प्रश्नः, कुतस्त्या इति निवासविषयः, कियत्पण्या इति विक्रेयवस्तुपरिमाणविषयः; क्व चाभिज्ञानमुद्रेति अन्तपालकृतपण्यविशेषज्ञप्तिमुद्राविषयः । शुल्कादायिनां बहुत्वं विसंवादपरिहारार्थम् ।

चाणक्यटीका

इदानीं संव्यवहारो दानग्रहणादिर्वाच्यः, स च पण्यप्रवेशात् प्रभृत्येवेति शुल्काध्यक्षव्यवहार एव तावदध्यायद्वयेनोच्यते ।

शुक्लाध्यक्ष इति । समाहर्तृप्रयुक्तः ( शुक्लशालां ) ध्वजं च प्राङ्मुखमभिज्ञानार्थम् । किं पुनर्ध्वजस्य मुखं येन प्राङ्मुख( मुदङ्मुख )मित्युभयं सम्बध्यते । शालाध्वजस्य तत्सम्बन्धान्नगरस्य यानि मार्गद्वाराणि तदभ्याशे ततः किञ्चिन्निगद्यते । पूर्वपश्चिमा(या ? र्गा)भिमुख्यार्थम् उदग्द्वारम् दक्षिणोत्तरमार्गाभिमुख्यार्थं प्राग्द्वारम् ।

[ नियमोल्लङ्घिनां मिथ्याभाषिणां वणिजां दण्डाः,
अनृतव्यवहारपरिज्ञानोपायाश्च ]

**अमुद्राणामत्ययो देयद्विगुणः कूटमुद्राणां शुल्काष्टगुणो दण्डः। भिन्नमुद्राणामत्ययो घटिकाः स्थाने स्थानम्। राजमुद्रापरिवर्तने नामकृते वा सपादपणिकं वहनं दापयेत्। ध्वजमूलोपस्थितस्य प्रमाणमर्घं च वैदेहकाः पण्यस्य ब्रूयुः—"एतत्प्रमाणेनार्घेण पण्यमिदं कः क्रेता?" इति" त्रिरुद्घोषितमर्थिभ्यो दद्यात्। क्रेतृसङ्घर्षे मूल्यवृद्धिः सशुल्का कोशं गच्छेत्।**

---

### चाणक्यटीका

शुक्लादायिन इति। शुक्लादानशीलाः अध्यक्षपुरुषाः। चत्वारः पञ्च वा इति। एकेन लिख्यमाने कालातिपातव्यामिश्रदोषाभ्यां सार्थस्यार्थघातः स्यात्। तस्माद् बहवो यौगपद्येन ब ( ध ? र्ग ) शो विभज्य सार्थाभ्यागतान् वणिजो लिखेयुः—के किंनामानः, कुत आगताः, कियत्पण्याः कियतत्परिमाणं पण्यम् ( अस्य ? एषाम् ) इति। कस्मिंश्च अन्तपालाभिज्ञानमुद्रा युष्माकं राष्ट्रप्रवेशे कृतेति।

### प्रतिपदपञ्चिका

शुल्काध्यक्ष इति सूत्रम्।

शुल्कः पञ्चदशभागादि देयम् राज्ञः। तस्याध्यक्षः इति सूत्रार्थः। सम्बन्धस्तु देशनिर्देशतोऽथवा दुर्गान्तर्गतम्। पौतवाध्यक्षमभिधाय तदनन्तरं समस्तभाण्डानां तुलादिपरिच्छेदपूर्वकत्वात् शुल्कस्य दुर्गान्तर्गतत्वमेव शुल्काध्यक्षव्यापारमाह—शुल्कशालाध्यक्ष इति। शुल्कशालां शुल्कग्रहणावस्थानं च ध्वजं च तच्चिह्नं प्राङ्मुखमुदङ्मुखवेति। दिग्ग्रहणं मङ्गलार्थं महाद्वाराभ्याशे मध्यमद्वारसमीपे निवेशयेत्। शुल्कादायिन इति, शुल्कग्राहिणः शुल्काध्यक्षेण निरूपिताश्च त्वयाः पञ्च वाजिनाः सार्धोपयातास्तद्भूय भाण्डहृतसार्थादागतान्वणिजः पण्यव्यवहारिणो लिखेयुः। कथमित्याह—के कुतस्त्या इत्यादि।

पृष्ट्वा के यूयं किं जातीयाः किंनामधेया वा कुतस्त्याः किं देशवासिनो वा कियत्पण्याः किं परिमाणभाण्डाः क्वचाभिज्ञानमन्तपालकृतपण्यपुटानां स्वचिह्नं मुद्राविमृण्मयी युष्माकं कृतेति पृष्टाः ते यथा ब्रूयुः—तथा लिखेयुः।

### श्रीमूला

अमुद्राणामिति। मुद्रारहितानां वणिजाम्, अत्ययः दण्डः, देयद्विगुणः अन्तपालदेयवर्तनीद्विगुणः। वर्तनी त्वनुपदं वक्ष्यते।

कूटेत्यादि। कूटमुद्राणां कपटकृतमुद्राणां, शुल्काष्टगुणो दण्डः।

### श्रीमूला

भिन्नेत्यादि। भिन्नमुद्राणामत्ययः गृहीतनष्टमुद्राणां दण्डः, घटिकाः स्थाने स्थानं वणिगन्तरदृश्ये क्वापि शुल्कशालैकदेशे घटिकात्रयकालावस्थानं भवति। घटिका इति स्थानक्रियात्यन्तसंयोगे द्वितीया, कपिञ्जलाधिकरणन्यायेन च तासां त्रित्वम्।

राजेत्यादि। राजमुद्रापरिवर्तने, नामकृते वा परिवर्तन इत्यनुषङ्गात् कार्पासादिद्रव्याणां तूलादिनामनिवेशेन नामव्यत्ययकरणे वा, सपादपणिकं पादाधिकपणदण्डं, वहनं पण्यहारकं, दापयेत्।

ध्वजेत्यादि। ध्वजमूलोपस्थितस्य शुल्कशालाङ्गणगतस्य पण्यस्य, प्रमाणम् इयत्ताम्, अर्घं च, वैदेहकाः वणिजः, ब्रूयुः, एतत्प्रमाणेनेत्यादिविधया। त्रिरुद्घोषितं यथोक्तप्रकारेण वारत्रयघोषणया श्रावित, पण्यम्, अर्थिभ्यः क्रेतृभ्यः, दद्यात्, तेनैव वैदेहकनिर्दिष्टेनार्घेण। क्रेतृसंघर्षे क्रेतृणाम् अर्घवर्घनहेतुभूतपरस्परस्पर्धासम्भवे, मूल्यवृद्धिः वणिङ्निर्दिष्टप्रमाणादधिकं मूल्यस्य प्रमाणम्, इष्यत इति शेषः। किन्तु सशुल्का शुल्कसहिता सा मूल्यवृद्धिः, कोशं गच्छेत् राजभाण्डागारं प्राप्नुयाद् निर्दिष्टमूल्यमात्रमेव तु वैदेहकानित्यर्थः। सशुल्कमित्यपि पाठः।

### चाणक्यटीका

अमुद्राणाम् अन्तपालं वञ्चयित्वा आगतानां तैः यद्देयं वक्ष्यमाणं तद्द्विगुणो दण्डः।

कूटमुद्राणामिति। अन्तपालसदृशीं मुद्रां कृत्वा मुद्रितवतां शुल्कद्वयं देयम्, तत् सङ्गृह्यते। ततोऽष्टगुणोऽस्माद् साहसदण्डः।

भिन्नमुद्राणां तु प्रमादाद् अयमेवात्ययः, यद्घटिकास्थाने[1] स्थानम् असंव्यवहारता यावदन्तपालाभिज्ञानं पुनरागतमिति।

मुद्रापरिवर्तन इति। अन्यस्य भाण्डे मुद्रिते तेन प्रतिमुद्रां कृत्वा स्वभाण्डमुद्रणे सपादपणिकं वहनं पत्रं दापयेत् कथं पुनः शुक्लाध्यक्षेण मुद्रापरिवर्तनं ज्ञायत इति चेत्, नामकृते परिवर्तने ज्ञाते इत्यन्तं ज्ञापयति अन्तपालोऽपि नामादिलेख्यमस्मै स्वपुरुषेण प्रेषयतीति। तत्र लेखेन इदमस्य लिखितम्, मुद्रितं च भाण्डम्, ध्रुवं तेन मुद्रा परिवर्तितेति।

ध्वजमूलावस्थितस्येति। पण्यस्य इदं प्रमाणम्, इयता चार्घेण तत्र क्रीतमिति वैदेहकाः पण्यस्वामिनः कथयेयुः। अथवा वास्तव्यवणिजः पण्यप्रमाणमित्यमूलं चाक्ष्यक्षाय कथयेयुः। ततः पण्यस्वाम्येव एतेनार्घेण इयत्प्रमाणं पण्यमिदम्, कः क्रेतेति शुल्कपरिशुद्धिज्ञानार्थं ( दूरा ? त्रिरु )द्घोषयेत्। ततः परिशुद्धत्वाद् दद्यात्।

---

१. अत्र घटिकास्थानमिति शुल्कशालोच्यते। अनन्तशयनप्रकाशिकायां कौटलीयव्याख्यायां घटिकाशब्दस्य नाडिकात्मककालवाचित्वोक्तिर्नोपपन्ना।

**शुल्कभयात् पण्यप्रमाणं मूल्यं वा हीनं ब्रुवतः तदतिरिक्तं राजा हरेत्, शुल्कमष्टगुणं वा दद्यात्। तदेव निविष्टपण्यस्य भाण्डस्य हीनप्रतिवर्णकेनार्घापकर्षणे सारभाण्डस्य फल्गुभाण्डेन प्रतिच्छादने च कुर्यात्। प्रतिक्रेतृभयाद्वा पण्यमूल्यादुपरि मूल्यं वर्धयतो मूल्यवृद्धिं राजा हरेत्, द्विगुणं वा शुल्कं कुर्यात्। तदेवाष्टगुणमध्यक्षस्य च्छादयतः। तस्माद्विक्रयः पण्यानां धृतो मितो गणितो वा कार्यः। तर्कः फल्गुभाण्डानामानुग्रहिकाणां च। ध्वजमूलमतिक्रान्तानां चाकृतशुल्कानां शुल्कादष्टगुणो दण्डः। पथिकोत्पथिकाः तद्विद्युः॥**

---

चाणक्यटीका

क्रेतृसंहर्ष[1] इति। यदा क्रेतॄणामर्थित्वे संहर्षान्मूल्यवृद्धिः स्यात्, तदा मूल्यकृते यच्छुल्कमुचितम्, यावती मूल्यस्य वृद्धिः, तदुभयं राज्ञः कोशं गच्छेत्। अन्यथा परस्परोद्वर्तनेन क्रयं कुर्वाणा ( : ? त् ) पण्येश्वराद् अन्यः पण्यं नैकमप्याप्नुयात्।

प्रतिपदपञ्चिका

अमुद्राणामिति मुद्रारहितानां अत्ययो दण्डः देयद्विगुणश्शुल्कद्विगुणः। कूटमुद्राणां स्वयंकृतमुद्राणां शुल्काष्टगुणो दण्डः। भिन्नमुद्राणां गृहीतमुद्राणामेव प्रमादिना नष्टमुद्राणामत्ययो देशकालाद्यपेक्षया कश्चित्स्वयमेव कल्पनीयः। घटिकास्थाने वेलायामागन्तूनां स्थानं सन्निरोधेन यदि वा शुल्कशालायां सन्निरोधमेकमह(।)ह्स्वस्थानमेव तेषां भिन्न मुद्राणां अत्ययः मुद्रापरिवर्तन इत्यनुषङ्गः। समानद्रव्याणां तूलकार्पासादीनां नामपरिवर्तने कृते कार्पासादिनेव तुलादिनामकरणे तदावेदने वा सापादपणिकं पादाधिकं वर्णं वहनं भाण्डहरकं दापयेत्। ध्वजमूलोपस्थितस्येति शुल्कशालाङ्गणस्थस्य प्रमाणमियत्तामर्धमेतावता लभ्यत इति वैदेहका वणिजः पण्यस्य ब्रूयुः।

श्रीमूला

शुल्केत्यादि। शुल्कभयात्, पण्यप्रमाणं भाण्डेयत्तां, मूल्यं वा पण्यार्घं वा, हीनम् अवरं, ब्रुवतः, तदतिरिक्तं तदुक्तातिरिक्तं प्रमाणं मूल्यं चोपलभ्यमानं, राजा हरेत्। इति तद्दण्डविधिः। तद्विकल्पमाह—शुल्कमष्टगुणं वा दद्याद्, वणिक्।

तदेवेति। तदेव तदुक्तातिरिक्तं शुल्काष्टगुणं वा, निविष्टपण्यस्य पण्यपूरितस्य, भाण्डस्य, हीनप्रतिवर्णकेन निकृष्टप्रतिवर्णकप्रदर्शनेन, अर्घापकर्षणे मूल्यपातने, सारभाण्डस्य फल्गुभाण्डेन प्रतिच्छादने च महार्घस्य पण्यस्य मणिमुक्तादेरल्पार्घकार्पासतूलादिनावच्छादने च, कुर्यात्।

---

१. 'संहर्षः स्पर्धायां च', इति मेदिनी, संघर्षं इति मुद्रितकोशपाठः।

## श्रीमूला

प्रतिक्रेतृभयादिति । प्रतिक्रेतृपुरुषविशेषक्रयणशंकया, पण्यमूल्यान्न्याय्याद्, उपरि, मूल्यं वर्धयतः क्रेतुः, तन्मूल्यवृद्धिं राजा हरेत् । द्विगुणं वा शुल्कं कुर्यादिति दण्डविकल्पः ।

तदिति । तदेव वैदेहकानां तत्तदपराधे यद् देयं विहितं तदेव, अष्टगुणम्, अध्यक्षस्य, छादयतः वैदेहकापराधं मैत्रीलञ्चग्रहणादिना गोपयतः, कुर्याद् राजा ।

तस्मादिति । यथोक्तानृतव्यवहारसम्भवात्, विक्रयः, पण्यानां तोलनीयपरिमेयगणनीयानां, धृतः तुलातोलितः, मितः प्रस्थादिपरिमितः, गणितो वा, कार्यः । तर्कः इदमियत् स्यादिति मानार्घसम्भावनात्मा, कार्यः, फल्गुभाण्डानाम् अङ्गाराद्यल्पपथ्यानाम्, आनुग्रहिकाणां लवणादीनां च

ध्वजमूलमतिक्रान्तानामित्यादि । अकृत एव शुल्के शुल्कशालामतिक्रम्य गतानां विषये, शुल्कादष्टगुणो दण्डः । पथिकेत्यादि । पथिकोत्पथिकाः पथिकाः पथि वाणिज्यच्छलचारिणः उत्पथिकाः अनुज्ञातोत्पथगतागतास्तृणेन्धनहारकाः पशुपालकाश्च प्रणिहिताः, तद् अकृतशुल्कवणिगतिक्रमणं, विद्युः, अत एव साक्षिणश्च स्युर्विवादे ।

## चाणक्यटीका

शुल्कभयादिति । पण्यभागे मूल्ये वा शताद् भयात् पण्यस्य प्रमाणं मूल्यं वा हीनं कथयतः सार्थिकस्य तत् पण्यं मूल्यं वा अतिरिक्तं व्यवहारेषु उपलभ्य राजा हरेदिति नियोगात् शुल्काध्यक्ष एवोच्यते । शुल्कमष्टगुणं वेति प्राक् शुल्कं दत्वा सप्तभागानपरानधिकान् दद्यात् । किञ्च, जानन्नेव प्रकरणाद्बलीयानिति सार्थिको दद्यात् । तदेव शुल्क(मष्टगु)णं दद्यादित्यर्थः ।

तदेवनिविष्टपण्यस्येति । प्रविष्टस्य पण्यस्य हीनप्रतिवर्णकेनार्घापकर्षणे । पण्यमूलं शुल्कं गृह्णात्यध्यक्ष इति बुद्ध्वा पण्यस्य हीनं प्रतिवर्णकं दर्शयित्वा शुल्कार्थमर्घापकर्षणं यः करोति, तदेव तस्य शुल्काष्टगुणं दण्डम्, सारभाण्डस्य कुङ्कुमादेः फल्गुभाण्डेन ऊर्णादिना प्रच्छादने च तदेवाष्टगुणग्रहणं कुर्यात् ।

प्रतिक्रेतृभयाद्वेति । प्रतिपक्षात् क्रेतुर्भयाद्वा—कथमयं न क्रीणीयात् इति द्वेषेण पण्यमूल्याद् उचिताद् उपरि तृतीयं चतुर्थं वा भागमूल्यम् आरोपयतः मूल्यवृद्धिम्, ( ततोऽन्ये तापसा व्यवहारे ज्ञातमर्घकारिणः ? )[1] राजा हरेत् । द्विगुणं वा शुल्कं कुर्यात् ।

तदेवाष्टगुणमध्यक्षस्य छादयत इति । तदेव शुल्काष्टगुणम् अध्यक्षस्यापि वणिक्संवृतस्य छादयतः, फल्गुना( मा ? म्ना )सारमिति, अर्थादवच्छादयतः साराष्टगुणमध्यक्षस्य तदेवाधिकं दण्डं कुर्यात् ।

---

१. ततोऽन्यदपि तापसव्यञ्जनाद् अर्घहारिणः इति पाठः स्यात् ।

[ शुल्काप्रदाननेनैव नेयानि द्रव्याणि, मिथ्याभाषणे दण्डः ]

**वैवाहिकम् अन्वायनम् औपायनिकं यज्ञकृत्यप्रसवनैमित्तिकं देवेज्याचौलोपनयनगोदानव्रतदीक्षणादिषु क्रियाविशेषेषु भाण्डम् उच्छुल्कं गच्छेत् ।**

---

चाणक्यटीका

तस्माद् ( देयज्ञाति ? एतज्जातीय )कदोषपरिहारार्थम्, विक्रयः पण्यानां निसृष्टानां धारणार्हाणां धृतः, मानार्हाणांमितः, गणनार्हाणां गणितः कार्यः, न तु तर्केणैवेति । अस्यैव अपवादस्तर्कः फल्गुभाण्डानां पुष्पफलानाम् अ( नु )ज्ञेयः । आनुग्रहिकाणां यत्र दुर्लभानि तत्र वणिजामनुग्रहार्थं तेषां तर्केणापि विक्रयोऽनुज्ञातव्यः ।

ध्वजमूलमतिक्रान्तानामहृतशुल्कानाम् अकृतमूल्यानां शुल्काष्टगुणो दण्डः । कथं पुनस्तद्विद्यादिति, पथिकोत्पथिकास्तद् विद्युः । महापथक्षुद्रपथरक्षिणः शुल्काध्यक्षपुरुषास्तदतिक्रमं विद्युः । अथवा पथिकास्तेन पथा गन्तारोऽन्ये ( द्र ? प्र )ष्टव्याः, उत्पथिकाश्चारण्यनिवासिनो व्याधादयः ।

प्रतिपदपञ्चिका

तेनेति, तदुक्तप्रमाणेण (पण्यमिदं दातव्यं भयात् पण्यप्रमाण)मिइयत्ता मूल्यं अर्धं वा हीनं ब्रुवतो वैदेहकस्य तदतिरिक्तं कथितातिरिक्तं राजा हरेल । शुल्कमष्टगुणं वा दद्यादिति । तस्यैवं देशकालाद्यपेक्षया विकल्पः । तदेवकथितातिरिक्तं शुल्काष्टगुणं वा वनिविष्टपण्यस्य भाण्डस्य हिनिसन्निवासितचित्रपण्यस्य भाण्डस्यहीनप्रतिवर्णकेन कुष्टवर्णिकाप्रदर्शनेन अघोपकर्षणे मूल्यावरोपणे सारभाण्डस्य च वज्रमणिमुक्तादेः फल्गुभाण्डेन कार्पासादिना प्रच्छादनेन च कुर्यात् । प्रतिक्रेतृभयाद्वेति, अयमपि क्रेष्यतीत्यादावेव प्रसिद्धं पण्यमूल्यादुपरि मूल्यं वर्धं यतः क्रेतुः तन्मूल्यवृद्धिमाहरेद्द्विगुणमुचितशुल्कद्विगुणं वा शुल्कं कुर्यादिति देशकालाद्यपेक्षया विकल्पः । अत्र वाशब्दाचार्थे—वर्णयन्ति । तदेवेति । सर्वंशेषः यस्मिन्नपराधे यद्वणिजामुक्तन्नत्तदपराधे तदेवाष्टगुणं, शुल्काध्यक्षस्य राजा कुर्यात् । तद्दोषमुत्कोचादिना प्रच्छादयतः । तस्मादिति, वणिजामध्यक्षाणां च व्यभिचारसम्भवात् विक्रयः पण्यानां धृतस्तुलया कुङ्कुमादीनामितः कुडुबादिना धान्यादीनां गणितो गण्यपण्यादीनां पूगफलादीनां, कार्यस्तर्कः; प्रत्याकलनादिना, इदमेतावद्भवेदिति फल्गुभाण्डानामसारपण्यानां वहितकाङ्गारसुधादीनां आनुग्राहिकाणां च साराणामपि महोपकाराणां एवानर तप्रवेशार्थं ध्वजमूलमतिक्रान्तानां च शुल्कस्थानातिगतानामकृतशुल्कानां शुल्काष्टगुणो दण्डः चशब्दोऽवधिसमुच्चये । पथिकास्सुखचारिणो वैदेहकव्यञ्जनादयः उत्पथिकास्त्रकाष्ठाहारगोपालादयोनुमताः पथसञ्चाराः तदष्टगुणशुल्ककारणं अतिक्रमणं विद्युः अन्विष्य जानीयुः ।

श्रीमूला

अशुल्कनेयं भाण्डमाह—वैवाहिकमिति । वैवाहिकं विवाहप्रयोजनकम्, अन्वायनं परिणीतायाः पतिगृहं गच्छन्त्याः पितृगृहान्नीयमानम्, औपायनिकम्

**अन्यथावादिनः स्तेयदण्डः ।**

**कृतशुल्केनाकृतशुल्कं निर्वाहयतः द्वितीयमेकमुद्रया भित्त्वा पण्यपुटमपहरतो वैदेहेकस्य तच्च तावच्च दण्डः ।**

**शुल्कस्थानात् गोमयपलालं प्रमाणं कृत्वाऽपहरत उत्तमस्साहसदण्डः ।**

---

श्रीमूला

उपायनमन्नसत्राद्यर्थं उपहारः तत्प्रयोजनकं, यज्ञकृत्यप्रसवनैमित्तिकं यज्ञकृत्यनैमित्तिकं पयोदधिघृतादिकं प्रसवनैमित्तिकं जातकर्मसूतिकाभेषजाद्यर्थं च, देवेज्यादिषु क्रियाविशेषेषु देवेज्या देवानां देवालयगतानाम् इज्या नित्यनैमित्तिकपूजोत्सवादिः चौलोपनयनगोदानानि संस्कारविशेषाः प्रसिद्धाः व्रतदीक्षणं दानविशेषादिलक्षणव्रतपरिग्रहः, एवम्प्रकारेषु धर्म्यकार्येषु, भाण्डम्, उच्छुल्कम् अशुल्कं, गच्छेत् ।

चाणक्यटीका

वैवाहिकमिति । पौरजानपदानां विवाहनिमित्तम् । वैवाहिकक्रियाया गच्छन्त्या वा सुवासिन्या यत् प्रविष्ट (क) तः प्रदेयं नीयते तद् अन्वायतम् । उपायननिमित्तम् औपायनिकम् । उच्छुल्कं गच्छेत् प्रविशेन्निष्क्रामेच्च । तथायज्ञकृत्यनिर्मित्तम् उत्स(व)निमित्तमित्यर्थः । प्रसवनिमित्तमुपकरणमिति तदुत्पाताद्युपशमाय शान्तिवचनादि तन्निमित्तं भाण्डम् । देवेज्या देवपूजा । ( चौलं ) चूडाकरणम् । उपनयनं वटूकरणम् । गोदानं व्रतपरिसमाप्तिः । उपनीतस्य सतः प्रतिवर्षं यद् व्रतम् आदिश्यते । आदिग्रहणात् पुंसवनाद्युपग्रहः । एतेषु क्रियाविशेषेषु भाण्डमुच्छुल्कं गच्छेत् ।

प्रतिपदपञ्चिका

विवादे वा साक्षिणेस्य उच्छुल्कमाह—वैवाहिकमित्यादि, वैवाहिकं विवाहप्रयोजनम् । अन्वायनं परिणीतायाः पितृगृहादानीतमौपायनिकं कौशलिकं, यज्ञकृत्यनैमित्तकं ( यज्ञकृत्योपयोगि ) यज्ञकृत्येचयोहिसती ( ? ) हारादिकं, प्रसवनैमित्तकं जातकर्म सूतिकाभैषज्यार्थं, देवेज्यायां, देवयात्रायां चौलोपनयनगोदानादीनि प्रतीतानि । व्रते देयानि व्रते व्रतादौ द्रव्य(व्यव)धाने उदीक्षणे व्रतमोक्षणे आदिशब्दादन्येष्पि संस्कारधर्माख्येषु कार्येषु भाण्डद्रव्य मुच्छुल्कं गच्छेत् शुल्कं न दद्यात् ।

श्रीमूला

अन्यथावादिन इति । अवैवाहिकादिकमेव भाण्डं वेवाहिकादिकमिति मिथ्या ब्रुवतो वणिजः, स्तेयदण्डः चौर्यस्य यो दण्डो धर्मस्थीयविहितः स कार्यः ।

कृतेत्यादि । कृतशुल्केन दत्तशुल्केन पण्यवासनेन सह, अकृतशुल्कम् अदत्तशुल्कं, निर्वाहयतः सङ्कुले निष्क्रामयतः, इत्येकोऽपराधः, द्वितीयभेकमुद्रयेति एकस्य पण्यवासनस्य मुद्राप्रदर्शनेन तत्तुल्यरूपमपरं पण्यवासनं निर्वाहयत इत्यपरः, भित्वा पुटमपहरत इति पुटं पण्यवासनं कृतशुल्कं भित्त्वा तस्मिन् पण्यमकृतशुल्कं निवेश्य

[ अनिर्वाह्यानयने दण्डादयः ]

**शस्त्रवर्मकवचलोहरथरत्नधान्यपशूनामन्यतमानिर्वाह्यं निर्वाहयतो यथावघुषितो दण्डः पण्यनाशश्च ॥**

**तेषामन्यतमस्यानयने बहिरेवोच्छुल्को विक्रयः ॥**

---

श्रीमूला

नयत इति तृतीयः। एवमेवमपराधिनो वैदेहकस्य, तच्च तावच्च यदेव पण्यं यत्परि-माणमपहृतं तदेव तत्परिमाणमेव, दण्डः।

शुल्कस्थानादिति। ध्वजमूलात्, गोमयपलालं प्रमाणं कृत्वापहरतः गोपुरीषं धान्यस्तम्बं चात्यन्तनिस्सारद्रव्यं विश्वासपदमपदिश्य तन्निगूहितं सारद्रव्यं नयतः, उत्तमः साहसदण्डः पणसाहस्ररूपो दण्डः।

चाणक्यटीका

अन्यथावादिन इति। अतन्निमित्तस्य विवाहादिनिमित्ततां व्यपदिशतः मिथ्या-वादिनः शुल्कस्तेनस्येव पूर्वोक्ता ( द ) न्यदण्डः।

कृतशुल्केन भाण्डेन मिश्रीकृत्य अकृतशुल्कम् अमुद्रितमेव क्वचिन्मुद्रां दर्शयित्वा निर्वाहयतः एकत्वादिवाचा अस्यान्तः प्रवेश्य द्वितीयमपि पुटमपहारयतो वैदेहकस्य तस्य शुल्कग्राह्यं यद् धृतं तावच्च अन्यच्च ( दण्डयमिति किं तत्र ? ) दण्डः।

प्रतिपदपञ्चिका

अन्यथा वादिन इति वैदहकस्यान्यथाभूतं ब्रुवतः स्तेयदण्डः। कृतशुल्केन दत्तशुल्केन अकृतशुल्कं निर्वाहयतःतेनसहसङ्कुलेन चत द्वितीयमेकमुद्रया वा एकस्य मुद्रया समान मन्यं पण्यपुटं निर्वाहयतः भित्वा वा पण्यपुटं पण्यवासनं भित्वा तदन्त-र्गतमपहरतो वैदेहकस्य तच्च तावच्च दण्डः शुल्कस्थानध्वजमूलात् गोमयं पलालं वा नितरामसारं प्रमाणं कृत्वा विधिर्योऽपहरति उत्तमस्साहसदण्डः।

श्रीमूला

शस्त्रेत्यादि। शस्त्रादीनामष्टानाम्, अन्यतमानिर्वाह्यम् अन्यतमम् अनिर्वाह्यत्वेन कस्मिंश्चिन्निमित्ते राज्ञा प्रख्यापितं, निर्वाहयतः, यथावघुषितः प्रख्यापितप्रकारो, दण्डः, पण्यनाशश्च निर्वाह्यमानशस्त्रादिपण्यहानिश्च। तत्र वर्म आवरणसामान्यं, कवचं बाहुकादियुक्तस्तद्विशेषः। शेषं प्रतीतम्।

तेषामिति। अनिर्वाह्यानाम् अन्यतमस्यानयने, बहिरेव दुर्गबाह्यदेश एव, उच्छुल्को विक्रयः अशुल्कस्तस्य विक्रयः।

चाणक्यटीका

शस्त्रवर्मेति। शस्त्रादीनां ( प्रधानम् ? ) अन्यत्र ( मते तु ? ) अनिर्वाह्यत्वेऽव-

[ राज्यसीमान्तपालानां वेतनं तत्कर्तव्यांशाश्च ]

**अन्तपालः सपादपणिकाम् वर्तनीं गृह्णीयात् पण्यवहनस्य, पणिका-मेकखुरस्य, पशूनामर्धपणिकाम्, क्षुद्रपशूनां पादिकाम्, अंसभारस्य माषिकाम्। नष्टापहृतं च प्रतिविदध्यात् ॥**

**वैदेश्यं सार्थं कृतसारफल्गुभाण्डविचयनमभिज्ञानं मुद्रां च दत्त्वा प्रेषयेदध्यक्षस्य ॥**

---

चाणक्यटीका

घोषिते निर्वहणकर्म( णि ) यथावघोषित एव विनानुग्रहेण दण्डः कार्यः। पण्यस्य चास्योच्छेदनम्।

तेषामेव शस्त्रादीनामन्यतो[1] देशाद् दुर्लभानाम् आनयने वहिरेव जानपदानाम् उत्सृष्टशुल्कोऽनुग्रहार्थं विक्रयः। अन्यथा अभ्यन्तरप्रवेशे सति पुनरन्ये·····भावान्न गृह्णन्ति जानपदा ( इति ) मत्वा देशान्त( रं ? रान् )नयन्ति वा देशान्तरमिति।

प्रतिपदपञ्चिका

शस्त्रादीनां हेतुषु सत्सु प्रतिषिद्धनिर्गमानां निर्वाहयतो निर्वाहयतो निर्गमयतो यथाघुषितो, यथोद्दिष्टो दण्डः पण्यनाशश्च तस्य पण्यहानिश्च। पण्यशब्दः प्रत्येकम् शस्त्रमायुधं वर्म सर्वावरणपर्यायः कवचमनेकसंपुटं तस्य च ग्रहणं प्राधान्याद्यर्थं लोहाध्यक्षमन्यत्र व्याख्यातम् तेषां शस्त्रादीनां अन्यतमं परिविषयादानयतो बहिरेव दुर्गादुच्छुल्कः शुल्कहीन विक्रयः।

श्रीमूला

विषयान्तरक्षाधिकारिणो भृतिमाह—अन्तेत्यादि। अन्तपालः, सपादपणिकां पादाधिकपणरूपां, वर्तनीं तत्संज्ञां मार्गरक्षाभृतिं, गृह्णीयात्, पण्यवहनस्य पण्यवहिनः शकटादेः। पणिकाम् एकखुरस्य एकपणात्मिकां वर्तनीं खरादेर्गृह्णीयात्। पशूनामर्ध-पणिकां गवादीनाम् अर्धपणात्मिकां, क्षुद्रपशूनां पादिकां मेषादीनां पादपणरूपाम्, अंसभारस्य माषिकां स्कन्धभारवाहिनस्ताम्रमाषात्मिकां च, वर्तनीं गृह्णीयात्। नष्टा-पहृतमिति। मुष्टनष्टं च प्रतिविदध्यात् तस्करात् प्रत्यानीय वा तस्करानुपलम्भे स्वहस्ताद्वा दद्यात् अन्तपालः।

वैदेश्यमिति। वैदेश्यं विदेशागतं, सार्थं वणिक्सङ्घं, कृपसारफल्गुभाण्ड-विचयनम् अमुकस्यैतावन्ति सारभाण्डानि एतावन्ति फल्गुभाण्डानीति स्वेन कृतं सारफल्गुभाण्डानां विचयनमन्वेषणं यस्य तं तथाभूतम्, अध्यक्षस्य शुल्काध्यक्षस्य, प्रेषयेत्। किं कृत्वा, अभिज्ञानं स्वहस्तलेखाङ्कं, मुद्रां च पण्यवासनकरणीयाम्, दत्त्वा। एष शुल्काध्यक्षहरणस्य निषेधोपायः।

---

१. अन्यतमस्येति पाठो नूनं प्रमादिको मूलकोशेषु मुद्रितेषु।

[ भाण्डनिगूहनवारणोपायाः ]

**वैदेहकव्यञ्जनो वा सार्थप्रमाणं राज्ञः प्रेषयेत्। तेन प्रदेशेन राजा शुल्काध्यक्षस्य सार्थप्रमाणमुपदिशेत् सर्वज्ञत्वख्यापनार्थम्। ततस्सार्थमध्यक्षोऽभिगम्य ब्रूयात्—"इदममुष्यामुष्य च सारभाण्डं फल्गुभाण्डं च न निगूहितव्यम्, एष राज्ञः प्रभावः" इति। निगूहतः फल्गुभाण्डं शुल्काष्टगुणो दण्डः, सारभाण्डं सर्वापहारः ॥**

---

चाणक्यटीका

अन्तपालः सपादपणिकां वर्तनीं गृह्णीयादिति। वर्तनीति तत्प्रभत्वाद् आयस्यापि व्यपदेशः। एकस्य पण्यवहनदेशे एकैकस्य, न तु पुटभेदनं कृत्वा द्रव्यं कलयेत्। सपादपणिकाम् इत्यस्यापवादः। पणिकामेकखुरस्य गर्दभा( दीनामिति )। महिषस्य अर्धपणिकाम्। पादिकां क्षुद्रवर्गाणामजैडकादीनाम्। असंहारकस्य माषिकां गृह्णीयादिति। नष्टापहृतं चेति शालायां गोप्रचारे वा नष्टं गवादि, चोरैर्हृतं ( च ) प्रतिविदध्याद् अन्वेषणेन।

वैदेशमिति। विदेशादागतं वैदेशं सार्थम् आगतं विविच्य यत् फल्गु यत् सारम् इति कृतसारफल्गुभाण्ड एव वा तयोश्च अभिज्ञानं लिखित्वा मुद्रां च मुद्रासङ्क्रान्तां कूटमुद्राभिज्ञानार्थं प्रेषयेद् अन्तपालः शुल्काध्यक्षस्य।

प्रतिपदपञ्चिका

प्रसङ्गादन्तपालनस्य च कृत्यमाह—

अन्तपाल इत्यादि। अन्तपालो विषयान्तरक्षाधिकृतः। पण्यवहनस्य धान्यादिपण्य- वाहिनः शकटादेः सपादपणिकां वर्तनीं गृह्णीयादिति, एकैकस्य पण्यवहनस्य सपादपणं गृह्णीयाद्। अन्तपालादेः यस्य च—वर्तनीति संज्ञा वर्तनी मार्गः तद्रक्षपनिमित्ता वर्तनीतिपणिकामेकखुरस्य खराश्वतरादेः, पशूमांगोमहिषादीनां अर्धपणिकां क्षुद्रपशूनां मार्गेरूपादीनवं पादिकामंसहारस्यस्कन्धभारवहस्य माषिकां। नष्टं स्वयं अपंगमनमपहृत तस्करीन्तपालः प्रतिविदध्यात् अन्विष्य प्रत्यानीय च दद्यात्। तदलाभे स्वकीयमपि दद्यात्। वैदेश्यमन्यदेशगतं कृतसारफल्गुभाण्डविचयनमिति। कृतस्सारभाण्डस्य फल्गुभाण्डस्य बच विचयनमन्वेषणं यस्य तम् अभिज्ञानं स्वाक्षरादिन्यासोपेतं मुद्रां च तस्य दत्वान्तपालः प्रेषयेत्।

श्रीमूला

सर्वनियुक्तपुरुषहरणनिषेधोपायमाह—वैदेहकेत्यादि। वैदेहकव्यञ्जनो वा वणिक्छद्मचारी वा गूढपुरुषो राजनियुक्तः सार्थप्रमाणं पण्यवहनादिसङ्ख्यां, राज्ञः प्रेषयेत् रहसि निवेदयेत्। इत्थमवगतसार्थप्रमाणस्य प्रतिपत्तिमाह—तेनेति। तेन प्रदेशेन गूढपुरुषोपदेशेन, राजा, शुल्काध्यक्षस्य, सार्थप्रमाणं स्वविदितम्, उपदिशेत् ज्ञापयेत्, सर्वज्ञत्वख्यापनार्थं 'सर्वज्ञो राजा परोक्षमपि सार्थवाहप्रमाणं दिव्यदृष्ट्या जानातीति

[ नाशनयोग्याः देशान्तरादनानेयाः शुल्करहिताश्च पदार्थाः ]

**राष्ट्रपीडाकरं भाण्डम् उच्छिन्द्यादफलं च यत् ।**
**महोपकारमुच्छुल्कं कुर्याद् बीजं तु दुर्लभम् ॥९६॥**

इ त्यध्यक्षप्रचारे शुल्काध्यक्ष एकविंशोऽध्यायः
आदितो द्विचत्वारिंशः ।

---

श्रीमूला

ख्यापनार्थम् । तत इति । तत उपदेशानन्तरं, सार्थम्, अध्यक्षः अभिगम्य ब्रूयात्, किमिति—इदममुष्यामुष्य च, सारभाण्डं, फल्गुभाण्डं च, न निगूहितव्यम् । कस्मात्, एष राज्ञः प्रभावः ईदृशो राज्ञो महिमोपलभ्यते—यत् परोक्षस्यापि भवदीयसारफल्गुभाण्डजातस्येयत्तां दिव्यदृष्ट्यावगम्यास्मभ्यमुपदिशति, इति ।

निगूहत इति । निगूहतः राजप्रभावकथनेऽप्यवच्छादयतः, फल्गुभाण्डं कार्पासादिकं, शुल्काष्टगुणो दण्डः । सारभाण्डं मणिमुक्ताप्रवालादिकं, निगूहतः, सर्वापहारः गूहितसर्वसारापहरणं दण्डः ।

चाणक्यटीका

वैदेहकव्यञ्जनो वा समानकर्मतया सार्थमात्रप्रवृतः सार्थप्रमाणं सारतः सङ्ख्यातश्च स्वान्तेवासिभिः राज्ञः संपादयेत् । ( तेन ) प्रदेशेन वैदेहकव्यञ्जनोपदेशेन राजा शुल्काध्यक्षस्य सार्थिकसमर्थं सार्थप्रमाणमपदिशेत्, एवंविधोऽयं सार्थ इति सर्वज्ञत्वख्यापनार्थम् । ततः सार्थमध्यक्षोऽधिगम्य ब्रूयात्—इदं कर्पूरादि, अमुष्य यक्षसेनस्य सारभाण्डम् । फल्गु भाण्डं च इदम् । तस्माद् अतोऽन्यदपि न निगूहितव्यम् । एष राज्ञः प्रभावः यत् परोक्षमपि जानाति ( इति ) ।

विनिगूहतः फल्गुभाण्डमित्यादि स्पष्टम् ।

प्रतिपदपञ्चिका

अन्तपालशुल्काध्यक्षहरणप्रतिषेधार्थमाह—वैदेहकव्यञ्जनं इत्यादि ।

वैदेहकव्यञ्जनो राजप्रयुक्तस्सार्थप्रमाणं वहनपण्यसङ्ख्याः राज्ञः प्रेषयेत् । एकेन प्रदेशेनेति । वैदेहकव्यञ्जनोऽपदेशेन राजान्तपालशुल्काध्यक्षयोः सार्थप्रमाणं भाण्डविशेषं तत्सङ्ख्यां चोपदिशेत् । किमर्थंज्ञौ सर्वं, राजेति लोके ज्ञापनार्थं । ततस्तं सार्थंअध्यक्षोभिगम्यामुष्यामुष्य च वणिजस्सारभाण्डं फल्गुभाण्डं च तद्भवद्भिर्न विनिगूहितव्यम् ।

अपगममेवं तदस्यादिर्न चात्रास्तद्गुणः कश्चिदेष राज्ञः प्रभावो यदेष दिव्येन चक्षुषा दूरस्थोऽपि सर्वं—पश्यति । इति तथापि विनिगूहियतफल्गुभाण्डमूर्णाकार्पासादिकं शुल्काष्टगुणो दण्डः । सारभाण्डं मणिमुक्ता चन्दनकुङ्कुमादिकं सर्वापहारः ।

श्रीमूला

अध्यायान्ते श्लोकमाह—राष्ट्रेत्यादि । राष्ट्रपीडाकरं भाण्डं गरलमदिरादिपण्यम्, उच्छिन्द्याद् वारयेद् अत्यन्ताय वा नाशयेत् । अफलमल्पफलं यद् भाण्डं

### श्रीमूला

वार्ताकोर्वारुकादि, तच्च उच्छिन्द्यात् देशान्तरान्नानाययेत् । महोपकारं दुर्लभं स्वविषये, वीजम् अभ्यवहार्यं व्रीह्यादिधान्यं भैषज्यार्थं च मरिचहरीतक्यादि, उच्छुल्कं शुल्करहितं कुर्यात् । तुशब्दो विशेषार्थः । बीजं चेति पाठे चशब्दस्तुशब्द-स्यार्थे ।

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे एकविंशोऽध्यायः शुल्काध्यक्षः, आदितो द्विचत्वारिंशः ।।

### चाणक्यटीका

राष्ट्रपीडाकरमिति यत् प्रवेशितं भाण्डम् अर्घेण राष्ट्रं पीडयति, तद् उच्छिन्द्यात् गतागतविच्छेदेन । यद् वा अफलम् सुलभत्वात् तदप्युच्छिन्द्यात् । महोपकारं राष्ट्रोपकारं तदशुल्कं कुर्यात् । बीजं च यस्मिन् देशे दुर्लभं तदानयतामुपकारायेति ।

।। इति शुल्काध्यक्षः, एकविंशं प्रकरणम् ।।
।। एकविंशश्चाध्यायः ।।

### प्रतिपदपञ्चिका

अध्यायप्रान्ते श्लोकमाह—राष्ट्रपीडाकरमित्यादि, राष्ट्रपीडाकरं विषसुरादि कर्म उच्छिद्य निषेधयेत् । आच्छाद्य विनाशयेत् यद्वा अफलं च यत् निष्फलं चकारादल्प-फलं च वरकादि तदप्युच्छिन्द्यात् । यत्नेन नावाहयेत् । यन्महोपकारं व्रीह्यादिधान्यं हरीतक्यादिभेषजं बीजं न्तु यत् दुर्लभं दुःशुल्कं कुर्यात् शुल्कं तस्यानुगृह्णीयात् ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायां अध्यक्षप्रचारिके द्वितीयेऽधिकरणे एकविंशोऽध्यायः । शुल्काध्यक्षः । आदितः द्विचत्वारिंशोऽध्यायः ।

## द्वाविंशोऽध्यायः ।

[ अध्यायार्थः, त्रिधा द्विधा च शुल्कविभागः,
सामान्यतः शुल्केयत्तानिर्देशश्च ]

**शुल्कव्यवहारः । बाह्यमाभ्यन्तरं चातिथ्यम्, निष्क्राम्यं प्रवेश्यं च शुल्कम् । प्रवेश्यानां मूल्यपञ्चभागः ।**

---

### श्रीमूला

शुल्कव्यवहार इति । अमुकपण्यस्यैतावच्छुल्कमिति व्यवस्थाकरणं शुल्कव्यवहारः । स इहोच्यते ।

शुल्कामादौ त्रिधा पुनर्द्विधा च विभजते—वाह्यमित्यादि । चः प्रथमो भिन्नक्रमः । शुल्कं, वाह्यमाभ्यन्तरमातिथ्यं च इति त्रिधा भवतीत्यर्थः । तत्र स्वजनपदोत्पन्नपण्यसम्वन्धि वाह्यं, दुर्गस्थानीयाद्यभ्यन्तरभूमिप्रभवपण्यसम्बन्धि आभ्यन्तरम्, विदेशागतपण्यसम्बन्धि आतिथ्यम् । त्रिविधमपि तत् नैष्क्राम्यं निष्क्राम्यपण्यनिष्क्रमणनिमित्तं, प्रावेश्यं च प्रवेशनीयपण्यप्रवेशननिमित्तं च इति पुनः प्रत्येकं द्विविधम् । वृद्धपाठोऽयं व्याख्याभाषयोरुपलब्धः । अवृद्धपाठे तु सम्बन्धि लक्ष्यम् ।

प्रवेश्यानामिति । प्रवेश्यानां परदेशात् स्वदेशं स्वदेशेऽपि स्थानीयं प्रवेशयितव्यानां पण्यानां मूल्यपञ्चभागः, शुल्कं भवति । एष सामान्यविधिः ।

### चाणक्यटीका

शुल्काध्यक्षप्रकरणे रक्षा व्याख्याता । इदानीं शुल्कव्यापार उच्यते शुल्कव्यवहार इति । शुल्कव्यवहार इत्यधिक्रियते ।

बाह्यं राष्ट्रजम्, आभ्यन्तरम् ( दूरा ? दुर्गा )र्थम्, आतिथ्यं देशान्तरादागतमिति । द्विविधं निष्क्राम्यम्—दुर्गाद् राष्ट्रं राष्ट्राद् देशान्तरं वा प्रवेश्यमपि देशान्तराद् राष्ट्रम्, राष्ट्राद् दुर्गं च शुल्कम् ।

तत्र प्रवेश्यानां मूल्यं कृत्वा पण्यानां मध्यमोत्तराधमानां मूल्यपञ्चभागं वणिग्भ्यो गृह्णीयात् । अयमुत्सर्गः ।

### प्रतिपदपञ्चिका

शुल्काध्यक्ष एवाध्यायान्तरेण शुल्कव्यवहारो विधीयते । तत्र बाह्यादिशुल्कभेदानां कस्य वा पण्यस्य कियद्ग्रहणमित्यादिपरिज्ञानं शुल्कव्यवहारः । तमाह—बाह्यमाभ्यन्तरं चेत्यादि । बाह्यं स्वजनपदोत्पन्न । आभ्यन्तरं स्थानीयाद्युत्पन्नचातिथ्यं, चकारो भिन्नक्रम सम्बध्यते । परदेशागतवैदेहकोत्पन्नमातिथ्यम् इत्येवं संक्षेपात्त्रिविधम् ।

[ पुष्पशङ्खक्षौमवस्त्रादीनां विशेषतः शुल्कव्यवस्थाः ]

**पुष्पफलशाकमूलकन्दवल्लिक्यबीजशुष्कमत्स्यमांसानां षड्भागं गृह्णीयात् ।**

**शङ्खवज्रमणिमुक्ताप्रवालहाराणां तज्जातपुरुषैः कारयेत् कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः ।**

---

### प्रतिपदपञ्चिका

शुल्कम् तत्पुनः प्रत्येकं द्विविधं नैष्क्राम्यं प्रावेश्यं च । (नैष्क्राम्यं)निष्क्रामणनिमित्तं, प्रावेश्यं पण्यप्रवेशननिमित्तं शुल्कं प्रावेश्यानां परदेशात् स्वदेशं च स्वदेशे स्वास्थानीयम् प्रविशतां पण्यानां मूल्यं पञ्चभागशुल्कमित्युत्सर्गः ।

### श्रीमूला

तदपवादं त्वाह—पुष्पफलेत्यादि । पुष्पं कुसुम्भादि फलं पनसादि शाकं वास्तुकादि मूलं वालुकादि कन्दः सूरणादिः वल्लिक्यं वल्लिजं कूश्माण्डादि वीजं धान्यादि एतेषां शुष्कमत्स्यमांसयोश्च, षड्भागं मूल्यषड्भागं शुल्कं, गृह्णीयात् ।

शंखेत्यादि । शंखादीनां षण्णां, तज्जातपुरुषैः तल्लक्षणविचक्षणैः, कारयेत् विधापयेत्, शुल्कम् । कीदृशैः, कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कृताः स्वानुभवावगताः कर्मप्रमाणकालवेतनफलनिष्पत्तयो यैस्तथाविधैः । पदमिदमायुधागाराध्यक्षेऽपि व्याख्यातम् ।

### चाणक्यटीका

पुष्पादीनां तु उद( कमर्थं ? कार्धं )व्यवहाराणां तद( र्थं ? ) गृह्णीयात् । तत्र वल्याः फलानि वल्लिक्यानि कूष्माण्डकादीनि ।

शङ्खादीनां हारावसानानां न मिथो मूल्यं कुर्यात् । किं तर्हि, तज्जातपुरुषैः कारयेत् । तेषां विशेषमाह—कर्म यैरेवं कृतम्, प्रमाणैः ज्ञातकालैः, ज्ञातवेतनैः, ज्ञातफलनिष्पतिभिरिति ।

### प्रतिपदपञ्चिका

तस्यापवादः पुष्पफलेत्यादि । पुष्पं कुसुमादि फलं पनसवार्ताकादि । शाकं वा वास्तुकजीरकादि मूलं वालुकादि । कन्दास्सूरणपिण्डारकादयः वल्ल्क्यं कूष्माण्डकटिल्लकादि, वल्लीफलं बीजमेतेषामेव विशेषेण वा धान्यादीनां शुष्कमत्स्यादीनां च शुल्कं षड्भागं गृह्णीयात् । शङ्खादीनां षण्णां तज्जातपुरुषैस्तन्निपुणैः शुल्कं कारयेत् ।

**क्षौमदुकूलक्रिमितानकङ्कटहरितालमनश्शिलाहिङ्गुलुकलोहवर्णधातूनां चन्दनागुरुकटुककिण्वावराणां सुरादन्ताजिनक्षौमदुकूलनिकरास्तरणप्रावरणक्रिमिजातानाम् अजैलकस्य च दशभागः, पञ्चदशभागो वा ।**

---

प्रतिपदपञ्चिका

भूयस्तेषां विशेषणं कृतकर्मेत्यादि, कृत इत्यनेकार्थत्वात् करोतेर्निष्पादिता विज्ञाता दृष्टा शङ्खवज्रादीनां कर्म प्रमाणकालवैतनफलनिष्पत्तयो यैस्तैरेव च तज्ज्ञातैरिति सिद्धे पुरुषग्रहणं स्त्रीणां कुर्यादिति ज्ञानेन विनिवृत्त्यर्थं हारग्रहणं च वज्रादीनामयुक्तानां च परिग्रहार्थम् ।

श्रीमूला

क्षौमेत्यादि । क्षौमादीनां क्षौमं स्थूलवल्कजं दुकूलं सूक्ष्मवल्कजं कृमितानश्चोनपट्टः कङ्कटः सूत्रसन्नाहः हरितालमनश्शिलहिङ्गुलुका व्याख्याताः अञ्जनं सौवीरकादि, इदं व्याख्यायामेव पठ्यते, लोहवर्णो लोहजातिः धातुर्गैरिकादिः इत्येतेषां, चन्दनादीनां चन्दनागुरुणी प्रसिद्धे कटुकं पिप्पल्यादि किण्वावरं किण्वं मद्यबीजं तदन्तं तैलजातीयं द्रवजातम् इत्येतेषां, सुरादीनां सुरा मद्यभेदः दन्तो गजदन्तः अजिनं कृष्णचर्म क्षौमदुकूलनिकरः क्षौमनिष्पादनार्था दुकूलनिष्पादनार्थाश्च तन्तुनिकराः आस्तरणं शयनोपवेशनसाधनं प्रावरणं प्रावारः क्रिमिजातं कौशेयम् इत्येतेषाम्, अजैलकस्य च अजैलकालोमजस्य च, दशभागः पञ्चदशभागो वा शुल्कं भवति ।

चाणक्यटीका

क्षौमादीनां दशभागः पञ्चदशभागो वा । तत्र तत्सूत्रं क्षौमादिषु प्रत्येकमभिसम्बध्यते क्षौमदुकूलसूत्रस्य य ( स्त्र ? स्ता ) यस्तस्येति । कङ्कटः । सूत्रोतस्तु (आ)-वरणविशेषः । लोहं सुवर्णादि, वर्णधातुः गैरकादिः ।

कटुकग्रहणेन कटुकवर्गो गृह्यते जीरकादिः । किण्वावराणामिति किण्वमवरं येषामुत्कृष्टा( दी ? )नां विशिष्टा( दी ? )नाम् । क्षौमग्रहणं निकरविशेषणम् । निकरं वस्त्रं निकराणामित्यपृथक्भूतानाम् । दुकूलवस्त्रम् । कृमिजं कौशेयम् । अजानामेडकानां च मूल्यदशभागः । पञ्चदशभागो देशकालापेक्षया ग्रहीतव्यः ।

प्रतिपदपञ्चिका

क्षौमं स्थूलवल्कलं दुकूलं सूक्ष्मं क्रिमितानश्चीनपट्टः कङ्कटस्सूत्रसन्नाहः हरितालमनश्शिले प्रतीते । अञ्जनं सौवीरकादि लोहवर्णः साह्लादि ? लोहजातिः धातुर्गैरिकादिः चन्दनागुरुणी प्रतीते । कटुकं पिप्पल्यादि किण्वं मद्योप करणम् अवरं विदलमपरे तु चन्दनादीनां किञ्च पर्यवसानानाम् इति व्याचक्षते । तेन समस्तदाराणां तैलवर्णकादीनामपि ग्रहणं भवति । दन्तो हस्तिदन्तादिः अजिनं चर्म क्षौमं दुकूलं निष्पन्न-

**वस्त्रचतुष्पदद्विपदसूत्रकार्पासगन्धभैषज्यकाष्ठवेणुवल्कलचर्ममृद्भाण्डानां धान्यस्नेहक्षारलवणमद्यपक्वान्नादीनां च विंशतिभागः पञ्चविंशतिभागो वा ॥**

[ द्वाराध्यक्षवेतनं तत्तद्द्रव्योत्पत्तिदेशे तद्विक्रयनिषेधः अतिक्रमे दण्डश्च ]

**द्वारादेयं शुल्कपञ्चभागः। आनुग्राहिकं वा यथादेशोपकारं स्थापयेत्।**

---

प्रतिपदपञ्चिका

मभिहितम्। इह तु तत्कारणनिकरास्संहता गृह्यन्ते। आस्तरणं च शयनीयोपकरणं प्रावरणं प्रावारादि कृमिजातं कौशेयं लाक्षादीत्यन्ये अजैलकं प्रतीतमित्येषां दशभागः पञ्चदशभागो वा शुल्कम् विकल्पश्चायं देशकालद्रव्याद्यपेक्षया।

श्रीमूला

वस्त्रचतुष्पदेत्यादि। वस्त्रादयो धान्यादयश्च प्रसिद्धाः, तेषां, विंशतिभागः पञ्चविंशतिभागो वा शुल्कम्। अयं पूर्वोक्तश्च विकल्पो यथादेशकालं द्रष्टव्यः।

द्वारादेयमिति। द्वाराध्यक्षग्राह्यं, शुल्कपञ्चभागः यस्य यच्छुल्कमुपदिष्टं तस्य तच्छुल्कपञ्चभागः भवति। आनुग्राहिकम् अनुग्रहानीतपण्यविषयं शुल्कं द्वारादेयं वा, यथादेशोपकारं स्वदेशानुग्रहानुगुण्येन, स्थापयेत् कल्पयेत्।

चाणक्यटीका

वस्त्रचतुष्पदेति। वस्त्रम्। कार्पासिकं सूत्रम्। कार्पासं केवलमेव। गन्धस्तगरादि। भैषज्यं शृङ्गवेरादि। चर्म गोचर्मादि। पूर्वमजिनं[1] मूषिकोद्भवं ज्ञेयम्। आदिग्रहणात् एवंजातीयकानां शय्यासनादीनां ग्रहणम्। पक्वान्नमोदनम्। ( ओद )-नादपू( र्वका ? पा )द्युपग्रहः। एषां मूल्यस्य विंशतिभागो पञ्चविंशतिभागो वा।

द्वारदेयमिति। पण्यशुल्कं दत्त्वा नगरस्य निष्कासप्रवेशयोरपरं द्वारदेयम्। किं तत्, शुक्लस्य यः पञ्चमो भागः। आनुग्राहिकं वेति। अनुग्रहः प्रयोजनं यस्य शुल्कस्य तदानुग्राहिकम्। यथादेशोपकारं स्थापयेत्। एतद्देशानां द्वादशभाग इति। देशग्रहण-( त्वादु ? मु )पलक्षणम्, ब्राह्मणानामयमनुग्रहः, अयं क्षत्रियाणाम्, अयं सङ्घस्येति।

प्रतिपदपञ्चिका

वस्त्रादयो धान्यादयश्च प्रतीताः। काष्ठवेण्वादीनां पञ्चानां स्वरूपग्रहणं तन्मयानां भाण्डानां च ग्रहणमित्येवमेतेषां विंशतिभागः पञ्चविंशतिभागो वा शुल्कम्।

द्वारादेयमाह—द्वारादेयं शुल्कं पञ्चभाग इति, यस्य शुल्कं मुक्तं तस्य

---

१. दन्ताजिनेति पूर्ववाक्ये पठितमित्यर्थः।

**जातिभूमिषु च पण्यानामविक्रयः। खनिभ्यो धातुपण्याऽऽदाने षट्छत-मत्ययः। पुष्पफलवाटेभ्यः पुष्पफलाऽऽदाने चतुष्पञ्चाशत्पणो दण्डः। षण्डेभ्यः शाकमूलकन्दाऽऽदाने पादोनं द्विपञ्चाशत्पणो दण्डः। क्षेत्रेभ्य-स्सर्वसस्याऽऽदाने त्रिपंचाशत्पणः। पणोऽध्यर्धपणश्च सीतात्ययः।**

---

## प्रतिपदपञ्चिका

पञ्चभागो द्वाराध्यक्षेण ग्राह्य इति, अनुग्राहकं वेति, सर्वापवादः यत्पण्यमनुग्रहनीतं तस्य शुल्कं द्वारादेयं वा यथा देशोपकारमित्यनवरतागमने यथा स्वदेशस्योपकरोति तथा स्थापयेत्।

## श्रीमूला

जातीत्यादि। जातिभूमिषु च उत्पत्तिदेशेषु च, पण्यानाम्, अविक्रयः विक्रयो न कर्तव्य इत्यर्थः।

निषेधातिक्रमे दण्डमाह—खनिभ्य इति। लोहलवणाद्याकरेभ्यः, धातुपण्यादाने धातुपण्यस्य कारणरूपस्य कार्यरूपस्य वा ग्रहणे, षट्छतम् अत्ययः षट्पणशतानि दण्डो भवति, अर्थाद् आदातुर्विक्रेतुश्च।

पुष्पफलवाटेभ्यः इत्यादि। सुगमम्।

षण्डेभ्य इत्यादि। षण्डेभ्यः शाकाद्युद्भिजक्षेत्रेभ्यः। स्पष्टमन्यत्।

क्षेत्रेभ्य इति। क्षेत्रेभ्यः धान्यकेदारेभ्यः, सर्वसस्यादाने, त्रिपञ्चाशत्पणो दण्डः। पणः अध्यर्धपणश्च केतृविक्रेत्रोर्यथाक्रमं, सीतात्ययः धान्यदण्डः। अयं च दण्ड-स्त्रिपञ्चाशत्पणेन समुच्चीयते।

## चाणक्यटीका

जातिभूमिषु चेति। पण्य( भूमि ? ) जन्मभूमिषु लाभाभावात् पण्याना-मविक्रयः। तत्र ह्यविदितो विक्रयः शुक्लम् ( अप )बाहयेत् स प्रतिषेद्धव्यः।

कथमित्याह—खनिभ्य इति। खनिभ्यो धातुपण्यानां वज्राणाम् आदाने क्रेतुः स्वयंगामित्वात् षट्छतमत्ययः। विक्रेतुस्तेनोक्तम्।

पुष्पफलवाटेभ्यस्त्वारामेभ्यः पुष्पफलादाने क्रेतुः चतुष्पञ्चाशत्पणः।

षण्डेभ्यः ( कोचरीकारिकृतेभ्यः ? ) पादोनः काकणीन्यूनः द्विपञ्चाशत्पणः।

सीतात्यय इति। यः सीतायां खले क्रीणाति सस्यं सामान्येन तस्य त्रिपञ्चा-शत्पणः। सीतात्ययश्च पणार्धपणश्च सीतात्ययः। अन्यस्त्वाह—सामान्येन सर्वसस्यादाने त्रिपञ्चाशत्। पणार्धपणश्च सीतात्ययः पणमूल्ये सस्येऽर्धपणः क्षेत्रगत-स्यादानेऽत्ययः।

[ निगमनम् ]

**अतो नवपुराणानां देशजातिचरित्रतः ।**
**पण्यानां स्थापयेच्छुल्कमत्ययं चापकारतः ॥९७॥**

इत्यध्यक्षप्रचारे शुल्कव्यवहारो द्वाविंशोऽध्यायः
आदितस्त्रिचत्वारिंशः ।

---

प्रतिपदपञ्चिका

जातिभूमिष्विति, उत्पत्तिभूमिषु पण्यानामविक्रयः कर्तव्य इति वाक्यशेषः ।

एवमर्थात् क्रेतुरपि प्रतिषेधे तस्य दण्डमाह—खनिभ्य इत्यादि । स चात्ययो विक्रेतुरप्यवगन्तव्यः । शङ्खलोहलवणाद्याकरेभ्यो धातुपण्यादाने कारणस्य कार्यस्य वा ग्रहणे षट्शतमत्ययः षट्शतानि दण्डाः पुष्पादिवाटेभ्यः पुष्पादिग्रहणे चतुष्पंचाशत्पणो दण्डः षण्डेभ्यः शाकाद्यादाने द्विपञ्चाशत्पणः । क्षेत्रेभ्यः सर्वस्यादाने व्रीह्यादि-(पण्यादि) सर्वधान्याग्रहणे त्रिपञ्चाशत्पणो दण्डः । पणोऽध्यर्धपणश्च सीतात्यय इति, क्रेतुः विक्रेतुश्च यथाक्रमं पणोऽध्यर्धपणश्च सीतात्ययः धान्यदण्डः, स च त्रिपञ्चाशत् । पणादधिको ग्राह्यः पुष्पफलादेरपि सर्वशेषोऽयमिति ।

श्रीमूला

अध्यायान्ते श्लोकमाह—अत इति । अत उक्तशुल्कदण्डप्रकारातिरेकेण, नवपुराणानां, पण्यानां, देशजातिचरित्रतः देशाचारजात्याचारानुसारात्, शुल्कं स्थापयेत् । अपकारतः अपकारानुसाराद्, अत्ययं च दण्डं च, स्थापयेत् ॥

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
द्वाविंशोऽध्यायः, शुल्काध्यक्षे शुल्कव्यवहारः,
आदितस्त्रिचत्वारिंशः ॥

चाणक्यटीका

अतो नवपुराणानामिति । शुल्कं द्वारदेयं नियमार्थम् । एवं नवस्य एवं पुराणस्य वा शुल्कमिति । ( एवमितमेकं ? ) निर्देश्यानां पञ्चालानामिदम्, ब्राह्मणानामिदम्, परिभाषापेक्षमिति । पण्यानां शुल्कमत्ययं च अपरा( धतः ) अल्पतापेक्षया अल्पम्, महत्तया महान्तमिति ।

॥ इति शुल्काध्यक्षः द्वाविंशतमं प्रकरणं समाप्तम् ॥
॥ द्वाविंशतिश्चाध्यायः ॥

प्रतिपदपञ्चिका

साम्प्रतमध्यायप्रान्ते श्लोकमाह—अत इत्यादि, अत इत्युक्तव्यतिरेकेण नवानां

प्रतिपदपञ्चिका

पुराणानां च पण्यानां देशचारित्रतो देशाचारतस्तद्वज्जातिचरित्रतो जात्याचारतः शुल्कं स्थापयेत् । अत्ययं च दण्डमपकारतोऽपराधानुरूपमप्यूह्येदित्ति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायाम् अध्यक्षप्रचारिके
द्वितीयेऽधिकरणे द्वाविंशोऽध्यायः ।
आदितस्त्रिचत्वारिंशोऽध्यायः ।।

# चतुस्त्रिंशं प्रकरणम्

## त्रयोविंशोऽध्यायः ।

### सूत्राध्यक्षः ।

[ सूत्राध्यक्षप्रवर्तनीयव्यवहाराः, कर्मसु नियोजनीयाश्च ]

**सूत्राध्यक्षः सूत्रवर्मवस्त्ररज्जुव्यवहारं तज्जातपुरुषैः कारयेत् । ऊर्णावल्ककार्पासतूलशणक्षौमाणि च विधवान्यङ्गाकन्याप्रव्रजितादण्डप्रतिकारिणीभिः रूपाजीवामातृकाभिः वृद्धराजदासीभिः व्युपरतोपस्थानदेवदासीभिश्च कर्तयेत् ।**

---

श्रीमूला

सूत्राध्यक्ष इति सूत्रन् । सूत्रम् ऊर्णादिजो गुणः तस्य अध्यक्षः कर्तनवानादिकारयिता । तद्व्यापारोऽभिधीयत इति सूत्रार्थः । 'कार्पासक्षौमाणां पञ्चपले पलसूत्रम्' इत्युक्तं कोष्ठागाराध्यक्षे । तदध्यक्षस्तद्व्यापारश्चानुक्त इहोच्यते ।

सूत्राध्यक्षः इति । सूत्राध्यक्षः सूत्रवर्मवस्त्ररज्जुव्यवहारं सूत्रादीनां कर्तनवानादिकं, तज्जातपुरुषैः तच्छिल्पिकुलजैस्तत्कर्मकुशलैश्च पुरुषैः, कारयेत् ।

ऊर्णेत्यादि । ऊर्णा मेषादिलोम वल्को मूर्वादित्रसरः कार्पासः प्रसिद्धः तूलं शाल्मल्यादि शणः क्षुपभेदजं क्षौममतसीजम् एतानि च, विधवादिभिः पञ्चभिः तत्र न्यङ्गा अङ्गुविकला दण्डप्रतिकारिणी कर्मणा दण्डनिष्क्रयकारिणी शेषाः प्रसिद्धाः, रूपाजीवामातृकाभिः गणिकाधात्रीभिः, वृद्धाभिर्नृपत्तिपरिचारिकाभिः, व्युपरतोपस्थानदेवदासीभिश्च उपस्थानं देवालयेषु नृत्तगीतादिना देवसभाजनकर्म तद् व्युपरतम् अनर्हतया निवृत्तं यासां ताभिरतथाभूताभिदेवदासीभिर्देवालयपरिचारिकाभिश्च, कर्तयेत् सूत्रयेत् ।

चाणक्यटीका

क्षौमदुकूलादीनां दशभागः शुल्कमित्युक्तम् । तानि पुनः क्षौमदुकूलादीनि कथं कार्याणीति सूत्राध्यक्ष ( : ? स्य ) पुरे, सन्निधातुः राष्ट्रे च कर्माह सूत्राध्यक्ष (इति) । स्वव्यापारविधानार्थं प्रक्रियते सूत्राध्यक्ष इति । (सः) सूत्राणां रज्जूनां च ( व ? क )-र्तन[1]वानव्यवहारांस्तज्जातपुरुषैरध्येतृभिः कारयेत् ।

---

१. 'कर्तनं तु वलीछेदने सूत्रसर्जने' इति केशवस्वामी ।

[ कर्मवेतनयोरानुगुण्यं, बुद्धिमतां प्रोत्साहनेन
तैरपूर्वरक्षादिनिर्माणपणं च ]

**श्लक्ष्णस्थूलमध्यतां च सूत्रस्य विदित्वा वेतनं कल्पयेत्, बह्वल्पतां च। सूत्रप्रमाणं ज्ञात्वा तैलामलकोद्वर्तनैरेता अनुगृह्णीयात् ।**

---

### चाणक्यटीका

ऊणादीनि कारयेदित्येव। अथवा कर्तयेदिति वक्ष्यमाणेन सम्बन्धः। तत्र तूलं शाल्मल्यादीनाम्। ( विकलाः पतिता ? )[१] । न्यङ्गा( नि ? न ) येनाङ्गेन विना शक्नुवन्ति कर्तितुं तेन ( न ) विकलाः। कन्यका दरिद्रदुहितरः। दण्डप्रतिकारिण्यः दण्डं दातुमशक्ता याः, ताः ( किं न ? कर्मणा ) प्रतिकुर्युः। रूपाजीवामातरो वेश्यामातृकाः। वृद्धराजदास्यः अन्यकर्मायोग्यत्वात्। व्युपरतोपस्थानाः देवदास्यः देवस्य कामुकस्य वा उपस्थानासमर्थत्वात् ताभिः कर्तयेत्।

### प्रतिपदपञ्चिका

सूत्राध्यक्ष इति सूत्रम्। सूत्रम् ऊर्णाकार्पासादिजम्, तस्य कर्तनवानादिकारयिता सूत्राध्यक्ष इति सूत्रार्थः। सम्बन्धस्तु कार्पासक्षौमाणां पञ्चपले सूत्रमित्युक्तम्। तस्याध्यक्षः कर्तनवानादिकारयिता तत्कर्तनवानादिकं च नोक्तम्। तदभिधीयत इति। तदाह— सूत्राध्यक्ष इत्यादि, सूत्रवस्त्रादयः प्रतीताः। तेषां व्यवहारं कर्तनवानादिलक्षणं तज्जातपुरुषैः तत्कुशलैः कारयेत्। पुरुषग्रहणं प्राधान्याद्विज्ञादीनामपि व्यापारोपदेशात्। ऊर्णेत्यादि। वल्को मालतीमूर्वाप्रभृतीनां त्रसरः कृमितानादिः तूलमर्कशल्मल्यादि राङ्कवं मृगरोमेत्यपरे। क्षुमा विरुद्विशेषः तत्प्रभवं क्षौमम्, शेषाणि प्रतीतानि।

शणक्षौमयोर्वल्कग्रहणेनैव गृहीतत्वात् पृथगुपादानं प्राधान्यग्रहणार्थम्। विधवादयः प्रतीताः। दण्डप्रतिकारिणी कर्मणा दण्डस्य प्रवेशयित्री रूपाजीवादेवराजकुलप्रतिबन्धात्तन्मातृकाभिः निरुपयोगादिभिः तद्धात्र्यादिभिः वृद्धराजदासीभिः अनन्ययोग्याभिः व्युपरतोपस्थानदेवदासीभिः सङ्गीतकाद्ययोग्याभिः कर्तयेत् सूत्राणि कारयेत्।

### श्रीमूला

श्लक्ष्णेत्यादि। श्लक्ष्णतां स्थूलतां मध्यतां च सूत्रस्य विदित्वा भृतिं कल्पयेत्। बह्वल्पतां चेति। तुल्ये काले कर्तनस्य बहुत्वमल्पत्वं च, विदित्वा वेतनं कल्पयेदित्यनुषज्यते। सूत्रप्रमाणमिति। सूत्रस्य श्लक्ष्णतातिशयं बहुत्वं च, ज्ञात्वा, तैलामलकोद्वर्तनैः तैलाभ्यञ्जनस्नपनैरूष्मशमनार्थैः, एताः दृष्टगुणाः, अनुगृह्णीयात् उपकुर्यात् तत्प्रीतये तदन्यप्रोत्साहनाय च।

---

१. विधवा विपतिका इति पाठः स्यात्।

**तिथिषु प्रतिपादनमानैश्च कर्म कारयितव्याः। सूत्रह्रासे वेतनह्रासः द्रव्यसारात्। कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कारुभिश्च कर्म कारयेत्, प्रतिसंसर्गं च गच्छेत्।**

---

### चाणक्यटीका

श्लक्ष्णस्थूलमध्यतां सूत्रस्य ज्ञात्वा वेतनम्, उत्तमाधममध्यमं कल्पयेत्। बह्वल्पतां चेति। सूत्रस्य बहुत्वे सति तैलादिभिरनुगृह्णीयात् मू(ल्य)वधार्थम् अल्पत्वेनैवेति, (अथोक्तमिति किञ्चिदिति ?)।

### प्रतिपदपञ्चिका

श्लक्ष्णस्थूलमध्यतामिति, सूत्रस्य प्रकारतां ज्ञात्वा त्रिविधमेव वेतनं कल्पयेत्। बह्वल्पतां चेति, तुल्यकाले अल्पत्वबाहुल्ये च कर्तनस्य दत्वा वेतनं कल्पयेत्। सूत्र-प्रमाणं ज्ञात्वेति सूत्रस्य श्लक्ष्णत्वान्याधिक्यं ज्ञात्वा तैलामलकोद्वर्तनैरेनामनुगृह्णीयात्। चक्षुःप्रसादार्थमन्यासामपि यत्नातिशयार्थं च।

### श्रीमूला

तिथिष्विति। तिथिषु कर्मदिवसेषु, प्रतिपादनमानैश्च प्रतिपादनं वेतनदानं दीयमानवेतनं वा तस्य मानैः एतावतः कर्मण एतावद् वेतनमित्येवंरूपैः परिच्छेदैश्च, कर्म कारयितव्याः। अथवा तिथिषु दिवसविशेषेषु पर्वादिषु अशनदानसत्कारैश्च कर्म कारयितव्याः। सूत्रह्रासे सूत्रस्य न्याय्यप्रमाणतो न्यूनत्वे, वेतनह्रासः, द्रव्यसारात् द्रव्यार्घमपेक्ष्य, कर्तव्य इति शेषः।

कृतकर्मेत्यादि। इदं पदमन्यत्र व्याख्यातम्। एवम्भूतैः कारुभिश्च तन्तुवाया-दिभिश्च, कर्म कारयेत्। प्रतिसंसर्गं संख्यं च, गच्छेत् तत्कर्मसम्भावितच्छलप्रयोग-ज्ञानार्थम्।

### चाणक्यटीका

(तिथिषु) पुष्यफल्गुन्यादिषु पुष्पादिप्रतिमाननैः भक्ष्यभोज्यपानदानैश्चोपायैः कर्म सोत्साहं कारयितव्याः।

सूत्रह्रासे वेतनह्रासो द्रव्यसारात् का(र्पा)सपञ्चपलं सूत्रपलं भवति[1]। यदा तर्कितस्य सूत्रस्य ह्रासो भवति तदा तस्मिन् ह्रासे यद्दीयते वेतनं ताभ्यः, तत् कुर्यात्। द्रव्यसारापेक्षया द्रव्यसारान्मूल्यं कृत्वेत्यर्थः।

कुतोऽन्यद्वाप्यतामिति तच्च मूल्यकैः कारयेदित्याह—कृतस्य कर्मणः इयत्प्रमाणं सूक्ष्मं चेदमल्पमपि भवेत्, कालश्च महानपि स्यात्, वेतनं च प्रभूतम्, इयती फलनिष्पत्तिः, इति मूल्यमप्यस्य प्रभूतमेव। तज्ज्ञैः कारयेत्॥

इदानीं वानार्थमाह—कारुभिः तूल(क ?)कौशेयादिभिः सूक्ष्मकर्मकारिभिः

---

१. "कार्पासक्षौमाणां पञ्चपले पलसूत्रम्" इति कोष्ठागाराध्यक्षे कौटल्यः (२.१५)।

**क्षौमदुकूलक्रिमितानराङ्कवकार्पाससूत्रवानकर्मान्तांश्च प्रयुञ्जानो गन्धमाल्यदानैरन्यैश्च औपग्राहिकैराराधयेत् । वस्त्रास्तरणप्रावरणविकल्पानुत्थापयेत् कङ्कटकर्मान्तांश्च तज्जातकारुशिल्पिभिः कारयेत् ॥**

---

प्रतिपदपञ्चिका

तिथिषु अकर्तनदिवसेषु पौर्णमास्यादिषु प्रतिपादनेन उच्छिष्टादिदानेन कर्मकर्तनव्यतिरिक्तं कर्तनीयद्रव्यशोधनादिकं कारयितव्यम् । अथवा तिथिषु शेषदिवसेषु कार्तिक्यादिषु प्रतिपादनेन गन्धमाल्यभक्ष्यादिप्रतिपादनेन कर्मकर्तनमेव सविशेषं कारयितव्यम् । ह्रासे सूत्रह्रासे प्रमाणन्यूनत्वे वा वेतनह्रासो द्रव्यसाराधीनसूत्रप्रमाणमूल्यानुरूपः कल्पनीयः । कारुभिश्चेति, तन्तुवायादिभिः कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिरिति परिभाषितकर्मप्रमाणादिभिः कर्म वस्त्रवानादिकं कारयेत् ।

तत्र कर्म वस्त्रादिप्रमाणं पञ्चहस्तादिकालः पञ्चरात्रादिभिः वेतनं वानमूल्यं फलनिष्पत्तिः पटादिसम्पत्तिः प्रतिसंसर्गं च तैरेकैकेन सह सख्यं कुर्यात् ।

श्रीमूला

क्षौमेत्यादि । राङ्कवं रंकुलोमजं क्षौमादिचतुष्कमन्यत्र व्याख्यातम् । क्षौमादीनां पञ्चानां सूत्रवानकर्मान्तान्, प्रयुञ्जानः कारयन् अध्यक्षः, गन्धमाल्यदानैः, अन्यैश्च, औपग्राहिकैः आनुकूल्यसम्पत्तिफलैः आराधयेत् उपचरेत् तत्कारून् । तदाराधनफलमाह—वस्त्रेत्यादि । वस्त्रास्तरणप्रावरणानां विकल्पान् प्रकारभेदान्, उत्थापयेत् अपूर्वानुल्लेख्य निर्मापयेत् ।

कंकटेत्यादि । कंकटकर्मान्तांश्च सूत्रसन्नाहकर्माणि, तज्जातकारुशिल्पिभिः तत्कर्मनिपुणैः कारुभिः शिल्पिभिश्च, कारयेत् ।

चाणक्यटीका

प्रतिसंसृज्येत । ततः किमिति चेदाह—क्षौमदुकूलेति । तानं सूत्रमुच्यते । प्रत्येकञ्चापि । क्षौमदुकूलक्रिमिसूत्रवानकर्मान्ता( न् ) । राङ्कवं[1] रङ्कुदेशभवं पट्टसूत्रं[2] ( तेनायं ? तानवम्) । राङ्कवसूत्रवानकर्मा(न्त ? न्तान्) तथा कार्पाससूत्रवानकर्मा(न्तांश्च) ।··· दिभिः अन्यैश्चोपग्रहयोजनैः सुरादिभिराराधयेत् कारुशिल्पिनः ।

तथा वस्त्रास्तरणप्रावरणविकल्पांश्च प्रसिद्धान् मूल्यवृद्धयर्थम्, उत्पादयेत् । तथा कङ्कटकर्मान्तांश्च सूत्रेण । तज्जातैः कारुभिरन्यैश्च शिल्पिभिश्चिन्तकैः कारयेत् । ते च कङ्कटाः कूर्पासकाकृतयः पुरुषाणां रास्नादिभिः[3] खचिताः रथा हस्तीति ।

---

१. देशवाचिनि कच्छादिगणे ( ४.२ १३३ ) रङ्कुशब्दः पठितः । रङ्कोर्वृद्धेदे इति केशवस्वामी च ।

२. राङ्कवः कम्बल इति काशिका ( ४.२.१०० ) ।

३. रशनादिभिरित्यर्थः ।

[ स्त्रीभिः सूत्रनिर्मापणविधिः, तासु वर्तनक्रमः, अतिक्रमे दण्डश्च ]

**याश्च अनिष्कासिन्यः प्रोषितविधवाः न्यङ्गाः कन्यका वा आत्मानं बिभृयुः ताः स्वदासीभिरनुसार्य सोपग्रहं कर्म कारयितव्याः। स्वयमागच्छन्तीनां वा सूत्रशालां प्रत्युषसि भाण्डवेतनविनिमयं कारयेत्। सूत्रपरीक्षार्थमात्रः प्रदीपः। स्त्रिया मुखसन्दर्शनेऽन्यकार्यसंभाषायां वा पूर्वस्साहसदण्डः। वेतनकालातिपातने मध्यमः, अकृतकर्मवेतनप्रदाने च ॥**

---

प्रतिपदपञ्चिका

तत्करणं तद्धरणोपायपरिज्ञानार्थं क्षौमादीनां सूत्रवानकर्मान्तान् प्रयुञ्जानः सूत्राध्यक्षो गन्धमाल्यादिदानैरन्यैश्च माल्यादिभिरौपग्रहिकैरनुवर्तननिमित्तैराराधयेत् विधेयीकुर्यात्। क्षौमादयः प्रदेशान्तरे कृतव्याख्याः, राङ्कवं रङ्कुमृगरोमजं वस्त्रादित्रयं प्रतीतम्।

तेषां विकल्पान् विविधान्प्रकारान् उत्पादयेत्। अपूर्वानु(न)पूर्वानुत्पादयेत्। कङ्कटकर्मान्तांश्च सूत्रसन्नाहक्रियारम्भांस्तज्ज्ञातैस्तन्निपुणैः कारुभिः शिल्पिभिश्च कारयेत्। याश्चानिष्कासिन्य इति कुलयोषितः प्रोषितभर्तृकाद्याः चतस्रः पोषकाभावादात्मानं स्वयमेव बिभृयुः।

श्रीमूला

याश्चेति। याश्च, अनिष्कासिन्यः प्रोषितविधवाः भर्तृप्रवासनिमित्तवियुक्तभर्तृकाः परित्यक्तबहिर्निष्क्रमणाः न्यङ्गाः अङ्गविकलाः, कन्यका वा, आत्मानं बिभृयुः स्वपरिश्रमार्जितग्रासादिना देहयात्रां कुर्युः, ताः, स्वदासीभिः, अनुसार्य अनुवर्त्य, सोपग्रहं सप्रीतिबहुमानं यथा भवति तथा, कर्म सूत्रकर्तनादि, कारयितव्याः।

स्वयमिति। स्वयमागच्छन्तीनां, वाशब्दात् स्वदासीसमानीतानां वा, सूत्रशालां, प्रत्युषसि ईषत्तमसि दिनमुखे, भाण्डवेतनविनिमयं तद्गृहकर्तितभाण्डग्रहणपूर्वकवेतनार्पणं, कारयेत्। सूत्रपरीक्षार्थमात्रः प्रदीप इति, सूत्रगुणपरीक्षणप्रयोजना तदन्यप्रयोजनाक्षमा मात्रा प्रकाशपरिमाणं यस्य स तथाभूतः दीपः कार्यस्तत्काल इति शेषः।

स्त्रिया इत्यादि। स्त्रियाः, मुखसन्दर्शने मुखनिर्वर्णने, अन्यकार्यसम्भाषायां प्रकृतकार्यातिरिक्तकार्यप्रश्नादौ वा, पूर्वः साहसदण्डः। वेतनकालातिपातने भृतिदानकालातिक्रमे, मध्यमः साहसदण्डः। अकृतकर्मवेतनप्रदाने च अकृतकर्मणामुत्कोचग्रहणेन वेतनस्य दाने च मध्यम इत्यनुषज्यते।

चाणक्यटीका

या वा अनिष्कासिन्यः स्वगृहात्। कास्ताः प्रोषितपतिकाः विधवा वा, तथा

[ अङ्गीकृतातिक्रमे तासां दण्डः ]

**गृहीत्वा वेतनं कर्म अकुर्वत्याः अङ्गुष्ठसन्दंशं दापयेत्, भक्षितापहृतावस्कन्दितानां च । वेतनेषु च कर्मकराणामपराधतो दण्डः ।**

**रज्जुवर्तकैः चर्मकारैश्च [ पूर्वाकारैश्च ] स्वयं संसृज्येत । भाण्डानि च वरत्रादीनि वर्तयेत् ।**

---

चाणक्यटीका

न्यङ्गाः कन्यका वा आत्मानं परमाश्रित्य बिभृयुः, ताः स्वदासीभिरनुप्रविश्य विदिताभिप्रायाः सोपग्रहं कर्म कारयेत्, सूत्रस्येत्यधिकारात् ।

निष्कासिनीनां स्वयमागच्छन्तीनां सूत्रशालां प्रति उपयापनज्ञानसम्पातो न भवति तावद् भाण्डस्य सूत्रस्य वेतनं कारयेत् । विनिमयश्च सूत्रस्य ग्रहणं कार्पासस्य दानमिति । यदा त्वन्धकारः स्यात्तदा सूत्रपरीक्षामात्रः प्रदीपः दूरं नीत्वा सूत्रं परीक्ष्यं स्त्रियमपश्यतेत्यर्थः ।

करणमनुष्येण तु स्त्रिया मुखदर्शने सूत्रव्यवहाराच्च अन्यस्य कार्यस्य, कियन्तं कालं प्रोषितभर्तृका भवती, इत्यादेरपि सम्भाषायां पूर्वः साहसदण्डः । वेतनकालातिपातने मध्यमः । अकृतकर्मवेतनप्रदाने वा । कस्यायं दण्डः, यैस्तज्जातपुरुषैरध्यक्षः कर्म कारयेदिति ।

प्रतिपदपञ्चिका

ताश्च दासीभिरनुसार्यानुसाध्य सोपग्रहं सप्रश्रयं प्रीतिपूर्वकं च कर्म कर्तनादिकं कारयेत् । स्वयमागच्छन्तीनां वा, वाशब्दात् स्वदासीभिरानीतानां सूत्रशालां प्रत्युषसि सान्धकारवेलाया भाण्डवेतनविनिमयं कारयेत्, सूत्रं गृहीत्वा मूल्यं दद्यात् । सूत्रपरीक्षामात्रः प्रदीप इति । मात्रच् । प्रयोजनानन्तरं व्यावर्तयति, तेन सूत्रपरीक्षामात्रोपयोगी घटप्रदीपः कर्तव्यो न निश्शेषशालावसान इति । स्त्रिया मुखसन्दर्शनेऽन्यकार्यं-सम्भाषायां वा कृते गृहं कृत्वा वर्तयसीत्येवमादिकायां पूर्वस्साहसदण्डः । वेतनकालस्य यथोदितस्य अतिपातने मध्यमः । अकृतकर्मवेतनप्रदाने च मध्यम एव ।

श्रीमूला

गृहीत्वेति । गृहीत्वा पूर्वमादाय, वेतनं, कर्माकुर्वत्याः, अङ्गुष्ठसन्दंशं दक्षिणाङ्गुष्ठतन्मध्यमांगुल्यग्रयोश्छेदोऽङ्गुष्ठसन्दंशः तं, दापयेत् । भक्षितापहृतावस्कन्दितानां भक्षणापहरणपलायनानां च अर्थाद् भक्षयित्वापहृत्य वा पलायितानां च, अंगुष्ठसन्दंशम् दापयेदित्येव । उक्त एव विषये दण्डविकल्पमाह—वेतनेष्विति । कर्मकराणां तन्तुवायादीनाम्, अपराधतः अपराधानुसारेण, वेतनेषु च दण्डः नावश्यं देहदण्डो यथोक्तः किन्तु तत्स्थाने यथापराधं वेतनदण्डोऽपि केवल इष्यत इत्यभिप्रायः । एवञ्च विकल्पपर्यवसित इह चकारो द्रष्टव्यः ।

**सूत्रवल्कमयी रज्जूः वरत्रा वैत्रवैणवीः ।**
**सान्नाह्या बन्धनीयाश्च यानयुग्यस्य कारयेत् ॥९८॥**

इत्यध्यक्षप्रचारे सूत्राध्यक्षस्त्रयोविंशोऽध्यायः,
आदितश्चतुश्चत्वारिंशः ।

---

श्रीमूला

रज्ज्वित्यादि । रज्जुवर्तकैः रज्जुकल्पनजीविभि, चर्मकारैश्च चर्ममयाश्वोपकरणादिकारिभिश्च, वर्मकारैरिति पाठे सूत्रकंकटादिकारिभिः, स्वयं संसृज्येत संख्यं कुर्यात् रज्ज्वादिपालनार्थं तत्कर्मानुष्ठापनार्थं च । भाण्डानि च उपकरणानि च, वरत्रादीनि, गवादिबन्धनीप्रभृतीनि, वर्तयेत् कारयेत् । भाण्डादीनीति तु पाठो न सुष्ठु ।

चाणक्यटीका

अङ्गुष्ठसन्दंशमिति । अङ्गुष्ठाभ्यां सन्दंशं[1] दापयेत् कर्मप्रतिपत्तेति । तथा भक्षितानां कार्पासादीनाम् अपहृतानाम् । अवस्कन्दितानां विनाशितानां ( तैलमूषेत्कारादिना वामिततानां ? )[2] । वेतनेषु प्रदत्तेषु । कर्मकराणामिति । कर्तकानां वापकानां वा अपराधानुरूपो दण्डः ।

रज्जुकर्मान्तानाह—रज्जुवर्तकैः कटकश्रृङ्खलाप्रतिबन्धार्थम् । चर्मकारैः कर्मकारैश्च वर्धक्यादिभिः काष्ठपाषाणादियोजनार्थं (सं) सृज्येत, भाण्डादीनि रज्जुविशेषान् कारयेद् वर्तयेदित्यर्थः ।

प्रतिपदपञ्चिका

गृहीत्वा वेतनं कर्म कुर्वन्त्या अङ्गुष्ठसन्दंशंदक्षिणहस्तांगुष्ठं मध्यमाङ्गुल्यग्रं च दापयेत् प्रणयेत् । भक्षयित्वा अपहृत्य वा सूत्रादिकमवस्कन्दितानां प्रपलायमानानां च पूर्वोक्त एव दण्डः । वेतनेषु चेति, भक्षितेष्वपहृतेषु वा कर्मकराणां कुविन्दादीनां, चकारोऽत्र भिन्नक्रमः सम्बध्यते । अवस्कन्दितानामपराधतोऽपराधानुरूपो दण्डः कल्पनीयः । रज्जुवर्तकैः गुणादिफलदैश्च पालैरश्वादिपालैर्वा-तदुपजीविभिर्वर्मकारैः सूत्रकण्टककर्तृभिः कर्मान्तिकारैश्च सीताध्यक्षादिभिः तदुपयोगिरज्ज्वादिपालनार्थमितरैस्तदनुष्ठानार्थं च संसृज्येत । भाण्डानि चोपस्करजातानि वस्त्रादि निवर्तयेत् पालयेत् ।

श्रीमूला

अध्यायान्ते श्लोकमाह—सूत्रेत्यादि । सूत्रवल्कलमयीः कार्पासादितन्तुमयीः

---

१. तर्जन्यङ्गुष्ठाभ्यां सन्दंशम् अतीक्ष्णां व्यथां जनयेदित्यर्थः । "दक्षिणाङ्गुष्ठतन्मध्यमाङ्गुल्यग्रयोश्छेदः" इति अनन्तशयनमुद्रिता कौटलीयव्याख्या अन्याय्या ।

२. 'तैलमूषिकोत्कर्तनादिना अवमर्दितानाम्' इति पाठः स्यात् ।

श्रीमूला

शणादिवल्कमयीश्च, रज्जूः, वैत्रवैणवीर्वरत्राः वेत्रमयीर्वेणुमयीश्च वरत्राः, कीदृशीः, सान्नाह्याः सन्नाहोपयोगिनीः, यानयुग्यस्य बन्धनीयाश्च रथादेरश्वादेश्च बन्धनयोग्याश्च, कारयेत् ।

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे त्रयोविंशोऽध्यायः सूत्राध्यक्षः, आदितश्चतुश्चत्वारिंशः ॥

चाणक्यटीका

सूत्रवल्कमयीति । सूत्रवल्कमयी रज्जूः कक्ष्याग्रैवेयाद्यर्थाः । वरत्राः चर्म वर्ध्रीनिर्वृत्ताः । वैत्रवैणवीरिति । वेत्रं[1] च वेणुश्चेति, "तस्येदम्" इति ( वर्ण ? अण् ) । सान्नाह्याः सन्नाह्यन्ते आभिरिति सन्नहनाद्दताः । बन्धनीयाः बन्धनाय हिताः । यानस्य रथादेः । युग्यस्यर ( था ? श्व्या )देः कारयेदिति ।

॥ इति सूत्राध्यक्षः त्रयोविंशं प्रकरणं समाप्तम् ॥
॥ त्रयोविंशश्चाध्यायः ॥

प्रतिपदपञ्चिका

श्लोकमाह—सूत्रवल्कमयोरित्यादि, सूत्रमयीः वल्कमयीः शणादिवल्कमयीश्च । रज्जूः कारयेत् । वरत्राख्या वेत्रमयीः वेणुमयीश्च । वेत्रग्रहणेन सर्वेषां वल्लीवर्गपरीतानां ग्रहणम् सन्नाह्याः सन्नाहोपयोगिनीः बन्धनीया बन्धनार्थाः । यानस्य रथशकटादेः युग्यस्य अश्वादेः कारयेदिति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायाम् अर्थशास्त्रटीकायम्
अध्यक्षप्रचारिके द्वितीयेऽधिकरणे त्रयोविंशोऽध्यायः ।
सूत्राध्यक्षः, आदितश्चतुश्चत्वारिंशोऽध्यायः ॥

---

१. "वरेत्रां वैणवी इति तु चाणक्यस्तन्त्राध्यक्षे उपचारादाख्यत्" इति अमरव्याख्याने क्षीरस्वामी । (२.१०.३२) तन्त्राध्यक्षशब्देनात्र सूत्राध्यक्षोऽभिप्रेतः । वस्तुतस्तु वरत्रां वैणवीं वा प्राधान्येनैवाह चाणक्यः । औपचारिकत्वोक्तिस्तु परोक्षचाणक्यग्रन्थस्येति वेदितव्यम् ।

## षट्त्रिंशं प्रकरणम्

### चतुर्विंशोऽध्यायः ।

### सीताऽध्यक्षः ।

[ बीजसंग्रहणतद्वापने ]

**सीताध्यक्षः कृषितन्त्रगुल्मशुल्बवृक्षायुर्वेदज्ञः तज्ज्ञसखो वा सर्वधान्यपुष्पफलशाककन्दमूलवाल्लिक्यक्षौमकार्पासबीजानि यथाकालं गृह्णीयात् । बहुहलपरिकृष्टायां स्वभूमौ दासकर्मकरदण्डप्रतिकर्तृभिर्वापयेत् ।**

---

श्रीमूला

सीताध्यक्षः इति सूत्रम् । कृषिकर्माध्यक्ष इति सूत्रार्थः । 'सीताध्यक्षोपनीतः सस्यवर्णः सीता' इत्युक्तं कोष्ठागाराध्यक्षे । तदध्यक्षस्तद्यापारश्चाधुनोच्यते ।

सीताध्यक्ष इति । सीताध्यक्षः, कृषितन्त्रशुल्बवृक्षायुर्वेदज्ञः कृषितन्त्रं वृद्धपराशरादिप्रणीतं शुल्बशास्त्रं भूमिसिराज्ञानशास्त्रं वृक्षायुर्वेद अग्निवेश्यादिप्रणीतः तज्ज्ञः, तज्ज्ञसखो वा, सर्वधान्यादीनि धान्यादीनि सर्वविधस्वस्वावान्तरभेदयुक्तानि, यथाकालं सङ्गृह्णीयात् । तत्र वाल्लिक्यं कूष्माण्डादिवल्लीफलम् । शेषं प्रसिद्धम् ।

बहुहलपरिकृष्टायामिति । वहुसीरविलिखितायां, स्वभूमौ तत्तद्धान्याद्यनुगुणायां भूमौ, दासादिभिः वापयेत्, दास उदरदासक्रीतदासादिः कर्मकरः वेतनार्थंकर्मकारी दण्डप्रतिकर्ता कर्मणा दण्डनिष्क्रेता ।

चाणक्यटीका

पूर्ववत् शुल्काध्यक्षापेक्षमेवेदं प्रकरणं सी ( तत्यवभिष्टोनतो ? ताध्यक्षोपनीतं ) कर्मेत्ति सीताध्यक्षोऽभिधीयते । सीताध्यक्ष इति समाहर्त्रा प्रयुक्तः कृष्यध्यक्षः । ( कृषिशास्त्रं पाराशरम् । शुल्बशास्त्रं भूम्युदकस्वरूपपरिज्ञानार्थम् । वृक्षायुर्वेदं च यो जानाति । यो वा तज्ज्ञैः सदा संसृज्यते सर्वधान्यानां पूर्वापरमध्यमावापानाम् । पुष्पफलशाकमूलकन्दानाम् । वाल्लिक्यस्य कूष्माण्डकादेः । क्षौमकार्पासयोश्च बीजानि यथाकालं सङ्गृह्णीयात् ।

ततो बीजानि बहुवारं परिकृष्टायां ( मितं न ? ) कृष्टाया( ष्प ? )मित्यर्थः । स्वभूमौ यद्बीजयोग्या या भूमिः तत्तस्याम् । दासकर्मकरदण्डप्रतिकर्तृभिर्वापयेत् ।

प्रतिपदपञ्चिका

सीताध्यक्ष इति सूत्रम् । सीता राजकृषिः, तस्यामधिकृतः सीताध्यक्ष इति सूत्रार्थः । सम्बन्धस्तु सीताध्यक्षोपनीतस्तसस्यवर्णः सीतेत्युक्तम् । तदध्यक्षस्तद्व्या-

[ सकाले उपकरणनिर्मापणम्, सस्यानुकूलवृष्टिप्रमाणं च ]

**कर्षणयन्त्रोपकरणबलीवर्दैश्चैषामसङ्गं कारयेत्। कारुभिश्च कर्मार-कुट्टाकमेदकरज्जुवर्तकसर्पग्राहादिभिश्च। तेषां कर्मफलविनिपाते तत्फल-हानं दण्डः।**

---

प्रतिपदपञ्चिका

पारवानुक्तः। सोऽभिधीयत इति, तदाह—सीताध्यक्षइति। कृषितन्त्राद्यभिज्ञस्तज्ज्ञ-सखो वा सर्वथा सस्यादीन् विजानीयात् यथा कालं सङ्गृह्णीयात्। कृषितन्त्रं वृद्धपराशरादिप्रणीतं कृषिशास्त्रं सीराज्ञानं वृक्षायुर्वेदोऽग्निवेश्यादिप्रणीतः, सर्व-शब्दः प्रत्येकम्, धान्यादयः प्रदेशान्तरे कृतव्याख्याः, बहुफलकृष्टायामिति, बहुफल-लिखितायां स्वभूमौ या यस्य व्रीह्यादेः प्रशस्ता भूमिः तस्यां दासादिभिर्वा दापयेत्। दासकर्मकरौ प्रतीतौ।

श्रीमूला

कर्षणेत्यादि। कर्षणयन्त्राणि हलदण्डयुगादीनि उपकरणानि रज्जुदात्रादीनि परिकर्मकरा जनाश्च बलीवर्दाः प्रसिद्धा एतैर्निर्दिष्टैः, एषां दासादीनाम्, असङ्गं क्रियानुपरोधं, कारयेत्। कारुभिश्च, कर्मारादिभिः, असंगं कारयेत्, तत्र कर्मा-रोऽयस्कारः कुट्टाकस्तक्षा मेदकः खनकः हिंसकत्वात्, भेदकपाठो वा, रज्जुवर्तकः रज्जुकल्पकः सर्पग्राहः व्यालग्राही।

तेषामिति। कारूणां, कर्मफलविनिपाते तद्दोषजनिते कृषिफलविनाशे, तत्फल-हानं दण्डः हापितफलपरिमाणो दण्डः।

चाणक्यटीका

एषां च दासादीनाम्। कर्षणयन्त्रै लाङ्गलादिभिः। उपकरणैः यथाप्रतीतादिभिः। बलीवर्दैश्च असङ्गम् अ( वि )घातं कारयेत्। कारुभिश्च, किंभूतैः कर्मारैः फला-द्यर्थम्[1]। कुट्टकैः तक्षभिः हलाद्यर्थम्। [2]मेदकैर्वरुटैः शूपाद्यर्थम्। रज्जुवर्तकैः हलादि-

---

१. फलम् अयस्कारनिष्पाद्यं हलमुखादीत्यर्थः।

२. वेणुकारवो वरटा इति दुर्गनिवेशे चाणक्यटीका (२.४; पो० ९८), वर्ध्रादिकृदिति भट्टस्वामी।

"वरुटः ·····व्रात्याज्जातेऽथो शाकटायनः।
निरुच्यौष्ठय( व ? प )कारादिमेनं तस्यार्थमाह हि।
मेदं, मेदो हि वैदाहान्निषाद्यां जात उच्यते।"

इति केशवस्वामी च। अत्र शाकटायनस्य मेदकशब्दनिरुक्तिप्रकारश्चेत्थं भाति—पवयोरभेदाद् वरुटः परुटः, तस्यैव परुषः, परुषकश्च ईषद्भेदाः पर्यायाः। परुषकः कौटल्येन फलाम्लवर्गे पठितः सुरासारो मेदोजनकत्वान्मेदः मेदकश्चेति।

**षोडशद्रोणं जाङ्गलानां वर्षप्रमाणम्, अध्यर्धम् आनूपानाम्। देशवापानाम्—अर्धत्रयोदश अश्मकानाम्, त्रयोविंशतिरवन्तीनाम्, अमितमपरान्तानां, हैमन्यानां च कुल्यावापानां च कालतः।**

———————

चाणक्यटीका

बन्धनार्थम्। सर्वग्राहैः आहितुण्डिकैः। आदिशब्दात् एवंप्रकारैश्च गोपजातीयैः स्वव्यापारोपकारिभिरासङ्गं कारयेत्।

तेषां कारूणां कर्मफलस्य विनिपाते यद्दोषात् फलहानं यज्जातं तावद् दण्डः।

प्रतिपदपञ्चिका

दण्डप्रतिकर्ता कर्मणा दण्डस्य प्रवेशयिता कर्षणयन्त्रैः खलखनमित्यादिभिः उपकरणैः, रज्जुकुठारदत्रादिभिः कर्मकरैश्च गोपालादिभिः येषां प्रागुक्तदासादिकृषीवलानामसङ्गं कर्म स्वविधानं कारयेत्। कारुभिश्च कर्मकरादिरसङ्गं कारयेत् इति। तत्र कर्मकारो लोहकारः कुट्टकस्तक्षा मेदको रन्ध्रादिकृत्। रज्जुवर्तकश्च रज्जुकल्पकः सर्पग्राहः शाबरादिः, आदिग्रहणं व्यथनावितादिग्रहणार्थम्, तेषां कारूणां कर्मफलविनिपात इति विलम्बादिकृते कृषिकर्मफलविनाशे तत्फलहानमिति यावती तस्य फलस्य हानिः कृता तज्ज्ञैस्सह निरूप्य तावान् दण्डः कर्तव्यः।

श्रीमूला

भूमिविशेषेषु सस्यनिष्पत्तिनिमित्तं वृष्टिप्रमाणमाह—षोडशद्रोण जागलानां वर्षप्रमाणमिति। हस्तप्रमाणमुखयुक्ते वृष्टिमानार्थानिर्मिते कुण्डे मेघाभिवृष्टोदकासारपरिपूरिते यदि तद्गतं जलं षोडशद्रोणात्मकमुपलभ्येत, तदा तावद् वर्षप्रमाणं मरुप्रायाणां भूभागानां ससस्यनिष्पादनपर्याप्तं भवतीत्यर्थः। अध्यर्धं चतुर्विंशतिद्रोणम्, आनूपानां जलप्रायाणाम्। इदं जांगलानूपभेदेन वर्षप्रमाणमुक्तम्। देशभेदेन तदाह—देशवापानामिति। वर्षप्रमाणं वक्ष्यत इति शेषः। अर्धत्रयोदश अर्धाधिकास्त्रयोदश वर्षप्रमाणद्रोणानि, अश्मकानाम् आरट्टानाम्। त्रयोविंशतिः द्रोणानि। अवन्तीनां मालवानाम्। अमितम् असंख्यातं वर्षप्रमाणम्, अपरान्तानां पाश्चात्यदेशस्य। हैमन्यानां च हिमाम्बुनिष्पाद्यसस्यानां हिमवत्प्रदेशानां च, हैम्यानामिति पाठेऽप्ययमेवार्थः। कुल्यावापानां च कुल्योपनेयजलमातृकप्रदेशानां च, कालतः स्वस्वकालानुसारेण सस्यसम्पत्तिः, न तु वर्षप्रमाणापेक्षयेत्यर्थः।

चाणक्यटीका

षोडशद्रोणमिति यदुक्तम् 'कोष्ठागारे[1] वर्षमानम् अरत्निमुखं कुण्डम्'' इति स एव द्रोणप्रमाणत्वाद् द्रोणः। ते षोडशद्रोणाः वर्षोदकेन यदा पूर्यन्ते तज्जाङ्गलानाम्

———

१. सन्निधातृनिचयकर्मणि। (२.५; पी० १०३)

[ उत्तमसंवत्सरस्य लक्षणानि, ग्रहस्थितिभ्योऽनुमेया अंशाश्च ]

**वर्षत्रिभागः पूर्वपश्चिममासयोः, द्वौ त्रिभागौ मध्यमयोः सुषमारूपम् । तस्योपलब्धिः बृहस्पतेः स्थानगमनगर्भाधानेभ्यः, शुक्रोदयास्तमयचारेभ्यः, सूर्यस्य प्रकृतिवैकृताच्च । सूर्याद् बीजसिद्धिः बृहस्पतेः सस्यानां स्तम्बकरिता, शुक्राद् वृष्टिरिति ॥**

---

### चाणक्यटीका

उदारकादीनां सस्यानां प्रसाधकस्य वर्षस्य मानम् । अध्यर्धमानूपानां चतुर्विंशतिद्रोण-मानूपानां शाल्यादिसस्यानाम् । साधारणसस्यानां मध्यमं वर्षमानमित्यर्थोक्तम् । एवं जाङ्गलानूपसस्यानाम् ( मानवर्षणानाम् इति ? ) वा ( त ? ) पनमुक्तम् । इदानीं देशविशेषापेक्षयोच्यते देशवापानां तु वर्षमानं वक्ष्यत इति शेषः । अर्धत्रयोदशद्रोणम् अश्मकानामिति । ( वातवनगराधिष्ठानिवापसस्यानां निष्कासनम् ? )[1] ।······

॥ इति सीताध्यक्षश्चतुर्विंशोऽध्यायः ॥

### प्रतिपदपञ्चिका

प्रमाणमाह—षोडशद्रोणमित्यादि, कोष्ठागारे वर्षमानमरतिमुखं(?) कुण्डं स्थापयेदित्युक्तम्, तस्यायमुपयोगः । तेन पर्जन्यजलधारापूरितेन वर्षोदकद्रोणपरिच्छेद-मजाङ्गलानां मरुप्रायाणां षोडशद्रोणप्रमाणं वर्षमिति निरुदकमिदमेवाध्यर्धं चतुर्विंशति-द्रोणमानूपानां जलप्रायाणाम् ।

इत्येवं जाङ्गलानूपभेदेन वर्षप्रमाणमभिधाय देशभेदेनाह—देशावापानां द्वितीयां(?), वक्ष्यत इति वाक्यशेषः । अर्धत्रयोदशद्रोणमश्मकानां महाराष्ट्राणां, त्रयो-विंशतिद्रोणमवन्तीनामपरान्तानां तासाममितमसङ्ख्यातमपरान्तानां कोङ्कणविष-याणां हैम्यानां हिमवत्प्रदेशानां च कुल्यावापानां च सारणीपेयतोयानां कालतः स्वर्तुतस्सस्यम्, न वर्षोदकप्रमाणतः ।

### श्रीमूला

शोभनसंवत्सरस्य रूपमाह—वर्षत्रिभाग इत्यादि । वर्षत्रिभागः वर्षस्य तत्त-द्देशोक्तवृष्टिप्रमाणस्य त्रिधा विभक्तस्य एकस्त्रिभागः पूर्वपश्चिममासयोः श्रावणप्रोष्ठ-पदाश्वयुजकार्तिकाख्यमासचतुष्टये प्रथमचरमयोः श्रावणकार्तिकयोः भवति । शेषौ द्वौ त्रिभागौ, मध्यमयोः प्रोष्ठपदाश्वयुजयोः, भवतः । सुषमारूपं सुषमायाः शोभनस्य संवत्सरस्य रूपं भवति, अर्थाद् यथोक्तं भागशो वर्षणम् ।

---

१. इतः परं सीताध्यक्षशेषः, तदनुस्यूताः सुरादयः सत्ताध्यक्षाः, हस्तिप्रचारस्य द्वात्रिंशाध्यायस्य आदिमैकदेशश्च मातृकायां लुप्ताः ।

श्रीमूला

भविष्यतः सुषमारूपस्य ज्ञापकमाह—तस्येत्यादि। तस्य सुषमारूपस्य, उपलब्धिरनुमितिः, बृहस्पतेः स्थानादित्रिकात् शुक्रोदयादित्रिकात् सूर्यस्य प्रकृति-वैकृताच्च भवति। तत्र स्थानं मेषादिराशिस्थितिः। गमनं मेषादेर्वृषभादिसङ्क्रमः। तयोर्वृष्टयादिफलहेतुत्वं ज्योतिश्शास्त्रप्रसिद्धम्। गर्भाधानं मार्गशीर्षादिषु षट्सु मासेषु तुषारादिदर्शनम्। तदुक्तम्—

"मार्गशिराः सतुषारः सहिमः पौषः समारुतो माघः।
साभ्रः फाल्गुनमासः सपवनवृष्टिश्च यदि चैत्रः॥
तडिदभ्रानिलविद्युज्जलवृषितो भवति यदि च वैशाखः।
सम्यग् वर्षति मघवान् धारणदिवसेषु वर्षति चेत्॥"

धारणदिवसा वैशाखकृष्णप्रतिपादयश्चत्वार इति व्याख्यातारः। शुक्रस्योदयास्तमयौ प्रसिद्धौ। चारः आषाढमासपञ्चम्यादिषु नवसु तिथिषु सञ्चारः। सूर्यस्य प्रकृतिवैकृतं स्वभावान्यथाभावः सपरिवेषत्वादि। इत्थं सुषमारूपोपलब्धिकरणं ग्रहत्रयचरित-मुक्तम्।

तत्र विशेषमाह—सूर्यादिति। सूर्यात् प्रकृतिस्थाद् विकृताद् वा, बीजसिद्धिः बीजस्य सस्यफलस्य सिद्धिर्निष्पत्तिः, अनुमीयते भवति न वेति। बृहस्पतेः स्थानादि-युक्तात्, सस्यानां स्तम्बकरिता स्तम्बपरिबृंहणम्, अनुमीयते भवति न वेति। शुक्राद् उदयादियुक्ताद्, वृष्टिः अनुमीयते भवति न वेति।

प्रतिपदपञ्चिका

पूर्वोक्तवर्षप्रमाणभागेन सुषमारूपमाह—वर्षत्रिभाग इत्यादि, यस्य देशस्य यावत्पूर्णवर्षं तत्त्रेधा विभज्य पूर्वपश्चिममानयोः श्रावणकार्तिकयोरेकत्रिभागं वर्षति, मध्यमयोः प्रोष्ठपदाश्वयुजयोः द्वौ त्रिभागौ च यदि वर्षति, तदा सुषमारूपं शोभनं संवत्सररूपं भवति। तस्य सुषमारूपस्योपलब्धिर्भविष्यति।

परिज्ञानकर्म बृहस्पतिस्थानादित्रयात् शुक्रोदयादित्रयात् सूर्यप्रकृतिवैकृताच्च तत्र स्थानं मेषादिराशिगमनं राशेः राश्यन्तरसङ्क्रान्तिः क्रान्तिः, तदुभयं वृष्टयादि, प्रसिद्ध-फलविपाकज्योतिश्शास्त्रादवगन्तव्यः। मार्गशीर्षादिषु षट्सु मासेषु तुलाराशिदर्शनम्। तथा चोक्तम्—

मार्गशिरास्सतुषारस्सहिमः पौषस्समारुतो माघः।
साभ्रः फाल्गुनमासः सपवनवृष्टिश्च यदि चैत्रः॥
तडिदभ्रानिलविद्युज्जलवृषितो भवति यदि च वैशाखः।
सम्यग्वर्षति मघवान् धारणदिवसेषु वर्षति चेत्॥

धारणदिवसाश्च वैशाखबहुलप्रतिपदादयश्चत्वारः शुक्रस्योदयास्तमयाभ्यां पञ्चम्यादिषु चाराच्च। आषाढपञ्चम्यादिषु नवसु तिथिषु सूर्यस्य प्रकृतिः स्वभावः,

[ सस्यनिष्पत्त्यनुकूलवृष्टिक्रमः ]

**त्रयः साप्ताहिका मेघाः अशीतिः कणशीकराः ।**
**षष्टिरातपमेघानामेषा वृष्टिः समाहिता ॥९९॥**
**वातमातपयोगं च विभजन् यत्र वर्षति ।**
**त्रीन् कर्षकांश्च जनयन् तत्र सस्यागमो ध्रुवः ॥१००**

**ततः प्रभूतोदकमल्पोदकं वा सस्यं वापयेत् ।**

---

प्रतिपदपञ्चिका

तद्द्वैकृतं परिवेषोपरागमेघावृतत्वादि चेति सुषमादिरूपेण उपलब्धिरिति । एवं सुषमारूपलिङ्गज्ञानं ग्रहप्रकृतित्रयमुक्तम् ।

अत्र विशेषमाह—सूर्याद्बीजसिद्धिरित्यादि, सूर्यादविपरीतस्वभावाद्विकृताद्वा **बीजसिद्धिः** फलनिष्पत्तिः स्यान्न वेति अनुमीयते । बृहस्पतेस्तिष्ठतः सङ्क्रामतो वा सस्यानां स्तम्बकरिता, तद्विपर्ययपरिज्ञानं शुक्रादुद्युतोऽस्तंयतः चारतश्च वृष्टेस्सिद्धि-रसिद्धिर्वानुमीयते ।

श्रीमूला

शोभनवृष्टिक्रमं श्लोकाभ्यामाह—त्रय इत्यादि । त्रयो मेघाः, साप्ताहिकाः सप्ताहोरात्राविच्छिन्नवृष्टिकारिणः । अशीतिर्मेघाः, कणशीकराः सान्द्रविन्दुवर्षिणः । आतपमेघानाम् आतपयुक्तानां मेघानां, वृष्टिः । एषा इत्थं परिसंख्यातमेघा, वृष्टिः, समा अन्यूनानतिरिक्ता, अत एव हिता लोकश्रेयस्करी च ॥

वातमिति । वातम् आतपयोगं च विभजन् तदुभयासंकरेण तिष्ठन्, त्रीन् कर्षकान् जनयन् तिसृभिर्वृष्टिभिर्ज्यैष्ठादिवापकालेषु तिस्रः कृषीः प्रवर्तयंश्च, त्रीन् करीषान् जनयन्निति पाठे दोहलाभार्थानां शुष्कगोमयानां त्रीन् सङ्ग्रहावसरान् विच्छिन्नवर्षणेनोत्पादयन्नित्यर्थः, अर्थात् पर्जन्यः, यत्र देशे, वर्षति, तत्र सस्यागमो ध्रुवः सस्यनिष्पत्तौ सन्देहो नास्ति ॥

तत इति । ततः यथोक्तवृष्टिप्रमाणादिपरिज्ञानानन्तरं, प्रभूतोदकं प्रचुरजल-निष्पाद्यम्, अल्पोदकं वा अल्पजलनिष्पाद्यं वा, सस्यं वापयेत्, अर्थात् प्रभूतवृष्टा-वल्पवृष्टौ वा देशे यथाक्रमम् ।

प्रतिपदपञ्चिका

सुषमावृष्टि क्रममाह—त्रयस्साप्ताहिका इति ।

त्रयो मेघास्साप्ताहिकाः सप्तरात्रमनवरतवर्षाकराः अशीतिः कणशीकराः अविरल-बिन्दुवर्षाः । षष्टिरातपमेघानामातपसहितानां नीलानां मेघानामेषा वृष्टिस्समा अन्यू-नानधिका सर्वसस्यानां निष्पादकत्वाद्धिता श्रेयस्करी वा तमातपयोगं च विभज्य स्थित्वा

[ सस्यभेदेन तद्वापकालभेदः ]

**शालिव्रीहिकोद्रवतिलप्रियङ्गुदारकवरकाः पूर्ववापाः। मुद्गमाषशैम्ब्याः मध्यवापाः, कुसुम्भमसूरकुलुत्थयवगोधूमकलायातसीसर्षपाः पश्चाद्वापाः। यथर्तुवशेन वा बीजवापाः॥**

[ अकृष्टक्षेत्रकर्षणव्यवस्थाः ]

**वापातिरिक्तम् अर्धसीतिकाः कुर्युः। स्ववीर्योपजीविनो वा चतुर्थपञ्चभागिकाः यथेष्टमनवसितभागं दद्युरन्यत्र कृच्छ्रेभ्यः।**

---

प्रतिपदपञ्चिका

यत्र देशे काले वा वर्षति देवः, त्रीन् कर्षकानिति। त्रिभिर्वर्षैः ज्येष्ठादिवापेषु कर्षकान् जनयन् कर्षकैर्वापयन् तत्र सस्यागमः सस्यनिष्पत्तिः ध्रुवो निश्चितः। तत इति, वर्षप्रमाणाद्यवधारणात् महावर्षे देशे काले वा प्रभूतोदकजन्यं वापयेत्, अल्पवर्षे त्वल्पोदकं जन्यं वा।

श्रीमूला

सस्येषु विशेषमाह—शालीत्यादि। शाल्यादयः सप्त, पूर्ववापाः पूर्वमेव वपनीयाः। मुग्दमाषशैम्ब्याः मध्यवापाः, कुसुम्भादयोऽष्टौ पश्चाद्वापाः पश्चिमकालवपनीयाः।

यथर्तुवशेन वा बीजवापा इति। य एते शाल्यादिबीजवापा उक्ताः अनुक्ताश्चान्ये, ते सर्वे तत्तद्बीजसम्यङ्निष्पत्तियोगकालानुरोधेन कर्तव्याः।

वापातिरिक्तमिति। कृतवापक्षेत्रातिरक्तं क्षेत्रम्, अर्धसीतिकाः कृषिफलार्धभागस्वीकरणसंविदा कृषन्तः बीजवलीवर्दादिसम्पन्नाः ग्राम्यकुटुम्बिनः, कुर्युः, साधयेयुः कर्षणबीजवपनादिना। स्ववीर्येत्यादि। स्ववीर्योपजीविनो वा बीजादिषु स्वामिसम्बन्धिषु सत्सु स्वकायायासमात्रं क्षेत्रे कुर्वाणा वा कर्मकराः, चतुर्थपञ्चभागिकाः निष्पन्नस्य फलस्य चतुर्थभागं पञ्चमभागं वा लभन्ते। यथेष्टमिति। अनवसितभागम् अनवसितस्य अभ्युपेत्याकृष्टस्य क्षेत्रस्य सस्यभागं, यथेष्टं स्वामीच्छानतिक्रमेण, दद्युः, अर्थार्धसीतिकादयः। तत्रापवादः—अन्यत्र कृच्छ्रेभ्य इति। कर्षणविघातकविपदुपनिपातव्यतिरेके।

प्रतिपदपञ्चिका

तत्र विशेषः। शालिव्रीह्यादिः शाल्यादयस्सप्त पूर्ववापाः प्रथमं वपनीयाः, मुद्गादयः तत्र मध्यमवापाः, कुसुम्भादयोऽष्टौ पश्चाद्वापाः। त्रयो त्रिवर्गाः प्रतीताः।

त्रिष्वपि वर्षेषु अपवादमाह—तद्वातिरिक्तेति।

यथर्तुवशेन वेति। येषां वा बीजानां यस्मिन् ऋतावुप्तानां सम्यङ्निष्पत्तिर्भवति, तेषामुक्तानाम् अनुक्तानां वा बीजानां तदावापः कार्यः।

[ सस्योपयोगिजलसौकर्यानुगुण्येन राजग्राह्यभागव्यवस्था ]

**स्वसेतुभ्यः हस्तप्रावर्तिममुदकभागं पञ्चमं दद्युः, स्कन्धप्रावर्तिमं चतुर्थम्, स्रोतोयन्त्रप्रावर्तिमं च तृतीयम्; चतुर्थं नदीसरस्तटाककूपोद्घाटम् ।**

---

प्रतिपदपञ्चिका

बीजग्रहणानुक्त्योपसंहरति—वापातिरिक्तमिति, प्रभूतत्वात्कृष्टक्षेत्रमशक्यं वप्तुम् । तदर्धसीतिकाः अर्धेन भागेन कृषन्तो ग्राम्यकुटुम्बिनः कुर्युः वपेयुः । करोतिग्रहणादकृष्टं च कृषेयुः । यदा तु बीजबलीवर्दादिकमस्ति न कर्मकरः, तास्ववीर्योपजीविनः बीजाद्यभावेन कायक्लेशमात्रोपजीविनः चतुर्थेन पञ्चमेन वा बीजभक्तादि व्ययविशुद्धेन वपेयुः । यथेष्टमिति, यदा अर्धसीतिका स्ववीर्योपजीविनो वा अभ्युपगम्य प्रमादान्न भवन्ति, तदा यथेष्टं यथाभिप्रेतम् अनवसितभागमकृष्टसस्यभागं दद्युः । अन्यत्र कृच्छ्रेभ्य इति, बलीवर्दादिसादकरेभ्यः ।

श्रीमूला

स्वसेतुभ्य इति । स्वसेतुभ्यः स्वदेहायासस्वद्रव्यव्ययनिष्पादितेभ्यस्तटाकादिभ्यः, हस्तप्रावर्तिमं कुम्भादिजलपायनरूपहस्तप्रवृत्तिसाधितम्, उदकभागम् उदकार्थं फलभागम्, पञ्चमं, दद्युः राज्ञेऽर्पयेयुः, कृषीवलाः । स्कन्धप्रावर्तिमं स्कन्धवहप्रवर्तितयन्त्रपायितजलनिष्पन्नम् उदकभागं, चतुर्थं दद्युः । स्रोतोयन्त्रप्रावर्तिमं सारणीपायितजलनिष्पन्नं च उदकभागम्, तृतीयं दद्युः । उदककरश्चायं भूमिकरवद् द्रष्टव्यः, यतो राजा भूम्युदकयोरविशेषात् स्वामी । तदुक्तम्—

"राजा भूमेः पतिर्दृष्टः शास्त्रज्ञैरुदकस्य च ।
ताभ्यामन्यत्तु यद् द्रव्यं तत्र स्वाम्यं कुटुम्बिनाम् ॥" इति ।

स्वसेतुभ्योऽन्यत्र देयमाह—चतुर्थमिति । नदीसरस्तटाककूपोद्घाटम्, उद्घाट्यते निस्सार्यते जलमनेनेत्युद्घाटोऽरघट्टकादियन्त्रं, लक्षणया त्विह तज्जनितग्रहणम् । नद्यादिचतुष्टयाद् यन्त्रविशेषपायितजलनिष्पन्नं, चतुर्थं भागं, दद्युः ।

प्रतिपदपञ्चिका

स्वसेतुभ्य इति । जानपदाः स्वयंकृततटाकादिभ्यो हस्तप्रावर्तिमं कुम्भादिसेकनिष्पादितं च उदकभागम् उद्वर्तितं यन्त्रोदकसेकनिष्पादितं चतुर्थभागं दद्युः स्रोतोयन्त्रप्रावर्तिमं कुल्यासेकनिष्पन्नं तृतीयं भागं दद्युः । उक्तं हि—

"राजा भूमेः पतिर्दृष्टः शास्त्रज्ञैरुदकस्य च ।
ताभ्यामन्यत्तु यद् द्रव्यं तत्र स्वाम्यं कुटुम्बिनाम् ॥" इति ।

[ सस्यस्थापनस्य सिद्धजलप्रमाणानुगुणत्वम्, सस्यविभागश्च ]

**कर्मोदकप्रमाणेन कैदारं हैमनं ग्रैष्मिकं वा सस्यं स्थापयेत्। शाल्यादि ज्येष्ठम्, षण्डो मध्यमः, इक्षुः प्रत्यवरः, इक्षवो हि बह्वाबाधाः व्ययग्राहिणश्च।**

[ क्षेत्रसन्निवेशानुगुणानि सस्यादीनि ]

**फेनाघातो वल्लीफलानाम्, परीवाहान्ताः पिप्पलीमृद्वीकेक्षूणाम्, कूपपर्यन्ताः शाकमूलानाम्, हरणिपर्यन्ताः हरितकानाम्, पाल्यो लवानां गन्धभैषज्योशीरह्रीवेर (हीरबेर) पिण्डालुकादीनाम्। यथास्वं भूमिषु च स्थाल्याश्चानूप्याश्चौषधीः स्थापयेत्।**

———————

प्रतिपदपञ्चिका

चतुर्थं नद्यादिभ्य उद्घाटमरघट्टादियन्त्रं सञ्जातं भागं दद्यात्। नद्यादयः प्रतीताः। इह (वसाह च स्या?)नद्यादीनामप्यरघट्टयन्त्रग्रहणम्। ननु पूर्वत्र स्वसेतुभ्योऽपि स्कन्धप्रावर्तिमे चतुर्भाग एव उदकभागोऽभिहितः तदयुक्तमिति चेत् तन्न, ते हि तेषां नद्यादयस्तु भार्या इत्यदोषः।

श्रीमूला

कर्मोदकप्रमाणेनेति। कृष्यपेक्षितजलप्राचुर्याल्पत्वानुरोधेन, कैदारं शाल्यादिक्षेत्रवाप्यं, हैमनं हेमन्तकालवाप्यं, ग्रैष्मिकं ग्रैष्मकालवाप्यं वा सस्यं, स्थापयेत् वापयेत्।

शाल्यादीत्यादि। शाल्यादिधान्यं, ज्येष्ठं श्रेष्ठं प्रधानाहारद्रव्यत्वादल्पव्ययायासाध्यानल्पफलत्वाच्च। षण्डः कदल्यादिः, मध्यमः अल्पव्ययायाससाध्यफलत्वात्। इक्षुः प्रत्यवरः शाल्याद्यपेक्षया निकृष्टः। कुतः, हि यतः इक्षवः, बह्वावाधाः मनुष्यमूषिकाद्युपद्रवबहुलाः व्ययग्राहिणश्च छेदनपीडनपचनादिबहुकर्मकरसापेक्षत्वात्।

अथ वापयोग्यभूमीराह—फेनाघात इति। फेनेनाहन्यत इति फेनाघातो जलपर्यन्तदेशः, वल्लीफलानां कूष्माण्डादीनाम्। परीवाहान्ताः जलोच्छ्वासपरिसरदेशाः, पिप्पलीमृद्वीकेक्षूणाम्। कूपपर्यन्ताः कूपपरिसरदेशाः, शाकमूलानाम्। हरणिपर्यन्ताः हरणिः कुल्या, सरस्तटाकादे रिक्तीभूत आर्द्रप्रदेश इति स्वामी, तस्याः पर्यन्ताः, हरितकानां यवसादीनाम्। पाल्यः क्षेत्रमध्यकृताः सेतवः, लवानां छिन्नानां गन्धादिपञ्चकप्रभृतीनां, गन्धो मांसीग्रन्थपर्णकादिः भैषज्यं लशुनशतपुष्पादि उशीरं लामज्जं ह्रीबेरं बालाख्यं पिण्डालुकः रोमकन्दः इत्येतदादीनाम्। वापदेश इति सर्वत्र शेषः। यथास्वमिति। यथास्वं भूमिषु च स्वस्वयोग्यभूमिषु जलभूमिषु अनूपभूमिषु चेत्यर्थः, स्थाल्याश्च स्थलप्ररोहिणीश्च, अनूप्याश्च जलप्रायदेशप्ररोहिणीश्च, ओषधीः, स्थापयेत्।

[ बीजसंस्काराः अङ्कुरितानां कीटाद्युपद्रवप्रतीकारश्च ]

**तुषारपायनमुष्णशोषणं चाऽऽसप्तरात्रादिति धान्यबीजानाम्, त्रिरात्रं पञ्चरात्रं वा कोशीधान्यानाम्, मधुघृतसूकरवसाभिः शकृद्युक्ताभिः काण्डबीजानां छेदलेपः, मधुघृतेन कन्दानाम्, अस्थिबीजानां शकृदालेपः शाखिनां गर्तदाहो गोऽस्थिशकृद्भिः काले दौहृदं च । प्ररूढांश्चाऽशुष्ककटुमत्स्यांश्च स्नुहिक्षीरेण पाययेत् ।**

**कार्पाससारं निर्मोकं सर्पस्य च समाहरेत् ।**
**न सर्पास्तत्र तिष्ठन्ति धूमो यत्रैष तिष्ठति ॥ १०१॥**

———————

प्रतिपदपञ्चिका

कर्मोदकप्रमाणेनेति । सेकार्थोदकानुरूपेण प्रभूते सलिले प्रभूतोदकनिष्पाद्यमल्पे त्वल्पोदकनिष्पाद्यं केदारं । वावस्थानं, हैमनं ग्रैष्मिकं वा वापयेत् । शाल्यादिकेदारो ज्येष्ठः अल्पव्ययप्रयाससाध्यमहोदयत्वादाहारद्रव्यप्राधान्याच्च षण्डः कदलीजीरकपिण्डारकादिमध्यमः, अल्पव्ययप्रयासाद्यलाभात् । इक्षुः केदारः, प्रत्यवरोऽधमः हालादिभ्यः । कस्मादित्याह—क्षवोऽभिभेदो बह्वाबाधा मूषिकशृगालशूकरमनुष्यादिप्रभूतोपद्रवा व्ययग्राहिणश्चाभीशूकशोघकच्छेदकपीडकपाचकादयः ।

प्रभूतकर्मभरसाध्यत्वाद् वापभूमिमाह—फेनाघातो वल्लीफलानामित्यादि, फेनाघातः सलिलपर्यन्तो वल्लीफलानां कूष्माण्डकर्कटिकादीनां परीवाहान्तः तटाकाद्युच्छ्वासपर्यन्तः पिप्पलीमृद्वीकेक्षूणां प्रतीतानां कूपपर्यन्तः तत्समीपप्रदेशः शाकमूलकादीनां हरणीपर्यन्तस्तु तटाकादे रिक्तीभूत आर्द्रप्रदेशो हरिणो, तत्समीपः हरीतकादीनां हरिदवयवादीनां पाल्यः मूलः क्षौम्बवानां लूनानाम् इक्ष्वादीनां व इति । गन्धाः मांसीग्रन्धीवर्णिकादयः, भैषज्यं लशुनशष्पपुष्पादिविशेषम् । यथास्वं भूमिष्विति, स्थाल्यां स्थलभूमिषु आनूप्याश्चानूपभूमिषु उक्ताश्चानुक्ताश्च ओषधीः स्थापयेदिति ।

श्रीमूला

बीजसंस्कारमाह—तुषारेत्यादि । तुषारपायनं रात्रौ तुषारे निवेशनम्, उष्णशोषणम् आतपे दिवा निवेशनं च, आ सप्तरात्रात् सप्तरात्रमभिव्याप्य कर्तव्यमिति शेषः । इति एष प्रकारो, धान्यबीजानाम् । त्रिरात्रं पञ्चरात्रं वा, कोशीधान्यानां मुद्गमाषादीनां तुषारपायनमुष्णशोषणं च । मधुघृतसूकरवसाभिः शकृद्युक्ताभिः माध्वीकसर्पिर्वराहकायस्नेहैर्गोमययुक्तैः, काण्डबीजानाम् इक्षुप्रभृतीनां, छेदलेपः छिन्नप्रदेशलेपनम् । मधुघृतेन, कन्दानां, छेदलेपः । अस्थिबीजानां कार्पासादिबीजानां, शकृदालेपः । शाखिनाम् आम्रपनसादिवृक्षाणां, गर्तदाहः तन्निवेशगर्ते तृणादिदहनं,

[ आद्यबीजावापविधिः ]

**सर्वबीजानां तु प्रथमवापे सुवर्णोदकसंप्लुतां पूर्वमुष्टिं वापयेत्; अमुं च मन्त्रं ब्रूयात्—**

———————

श्रीमूला

**गोऽस्थिशकृद्भिः** गवास्थिपुरीषैः, काले दौहृदं च पुष्पफलप्रसवार्हवयःप्राप्तौ दोहलं च कर्तव्यमिति शेषः।

कृमिकीटाद्युपघातप्रतीकारमाह—प्ररूढांश्चेति। प्ररूढांश्च अङ्कुरितत्रिपत्रितमात्रांश्च पूर्वोक्तान् शाखिपर्यन्तान् अशुष्ककटुमत्स्यान् स्नुहिक्षीरेण पाययेत्, आर्द्रक्षुद्रमत्स्यैः समन्तदुग्धाख्यौषधिक्षीरयुक्तैः सेचयेत्। चः समुच्चये।

सर्पप्रतीकारं श्लोकेनाह—कार्पासेत्यादि। कार्पाससारं कार्पासबीजस्य सारं, सर्पस्य निर्मोकं च कञ्चुकं च, समाहरेत् संमेल्य धूपयेत्। एष धूमः मिलितोभयधूपनजनितो धूमः, यत्र तिष्ठति, तत्र सर्पाः न तिष्ठन्ति।

प्रतिपदपञ्चिका

बीजभावनामाह—तुषारपायनमित्यादि। तुषारपायनं नीहारभावनं रात्रौ च उष्णशोषणं उष्णभावनम् अह्नि। आसप्तरात्रादिति। धान्यबीजानां व्रीह्यादिधान्यबीजानां त्रिरात्रं पञ्चरात्रं वा कोशीधान्यानां मुद्गाढकीप्रभृतीनां मधुघृतसूकरवसाभिः प्रतीताभिः सक्तुयुक्ताभिः गोमयसहिताभिः काण्डबीजानामिक्ष्वादीनां छेद लेपः मेदप्रदेशस्य लेपनं मधुघृतेन मधुमिश्रेण कन्दानां सूरणादीनां लेपः अस्थिबीजानां कार्पासादिबीजानां गोमयलेपशाखिनां वृक्षाणां वाऽवगर्तस्यादाहो गोऽस्थिभिः गोमयैश्च काले दौहृदं वृक्षायुर्वेदोक्तं गर्भाधानं कर्तव्यमिति शेषः।

उपघातप्रतीकारमाह—प्ररुढांश्चेत्यादि, प्ररुढानङ्कुरितमात्रान् चकारात् द्विपत्रचतुःपत्रांश्च अयं च सर्वेषां सामान्यकृमिकीटोपधातप्रतीकारः। कथमित्याह—अशुष्कानार्द्रान् कटुमत्स्यान् क्षुद्रमत्स्यान् स्नुहिकारं च प्रत्यादिना कुर्वीतेति, कर्षप्रतीकारमाह—कार्पाससारं तत् बीजसारं सर्पनिर्मोकं च समाहृत्य धूमं कुर्यात्। एतेन सर्वोच्चाटनं भवति।

श्रीमूला

प्रथमवापे विशेषमाह—सर्वबीजानामिति। तुशब्दो विशेषे। सर्वबीजानां प्रथमवापे, सुवर्णोदकसंप्लुतां स्वर्णयुक्तजलकृतसंप्लवां पूर्वमुष्टिम्, प्रथमां बीजमुष्टिं वापयेत्। अमुं वक्ष्यमाणं च, मन्त्रं मन्त्रश्लोकं, ब्रूयात् वापयन्नुचारयेत्।

**प्रजापतये काश्यपाय**
**देवाय च नमः सदा ।**
**सीता मे ऋध्यतां देवी**
**बीजेषु च धनेषु च ॥१०२॥**

[ कर्मकराणां वेतनादिः ]

**षण्डवाटगोपालकदासकर्मकरेभ्यो यथापुरुषपरिवापं भक्तं कुर्यात् । सपादपणिकं मासं दद्यात् । कर्मानुरूपं कारुभ्यो भक्तवेतनम् ।**

[ स्वयंपतितपुष्पफलादिविनियोगः ]

**प्रशीर्णं च पुष्पफलं देवकार्यार्थं, व्रीहियवमाग्रयणार्थं श्रोत्रियास्तपस्विनश्चाहरेयुः । राशिमूलमुञ्छवृत्तयः ।**

---

श्रीमूला

प्रजापतय इत्यादि । देवाय पर्जन्याय । ऋध्यतां वर्धताम् । ऋध्यतेरात्मनेपदमार्षम् । आद्ययोः श्लोकपादयोर्विसन्धानमपि मन्त्रत्वकृतम् । 'प्रजापतेः काश्यपाय देवलाय नमः सदा' इति भाषापाठः । तत्र तु नम इत्येतदन्वयं परिकल्प्य प्रजापतेरिति षष्ठी सम्बन्धे समर्थनीया, 'नमः स्वस्ती'ति सूत्रे स्वस्त्यादिसाहचर्येणाव्ययस्यैव नमःशब्दस्य ग्रहणात् ।

षण्डबाटेत्यादि । षण्डवाटपालकेभ्यो गोपालकेभ्यो दासेभ्यः कर्मकरेभ्यश्च, यथापुरुषपरिवापं पुरुषपरिश्रमानुरूप्येण, भक्तं भोजनं, कुर्यात् कल्पयेत् । सपादपणिकं मासं पादाधिकपणयुक्तं मासजीवितं, दद्यात् । कर्मानुरूपं, कारुभ्यस्तक्षादिभ्यः, भक्तवेतनं भोजनं च दद्यादित्यनुकर्षः ।

प्रशीर्णं चेति । प्रशीर्णं वृक्षादेः स्वयं पतितं, पुष्पफलं पुष्पाणि फलानि च, देवकार्यार्थं देवपूजार्थम्, व्रीहियवं स्वयं पतितान् व्रीहीन् यवांश्च, आग्रयणार्थं नवसस्यार्थं, श्रोत्रियाः छन्दोऽध्यायिनः, तपस्विनः तापसाश्च, आहरेयुः गृह्णीयुः । राशिमूलं खलनिवेशितधान्यराश्यन्तिकगतं कणिशादि, उञ्छवृत्तयः धान्यकणादानजीविनः, आहरेयुरित्यनुषङ्गः ।

प्रतिपदपञ्चिका

प्रथमवापविधिमाह—सर्वबीजानामिति । प्रथमवापे वा प्रारम्भे सुवर्णोदकेन संप्लुतां प्रथमां मुष्टिं वापयेत् ।

वृत्तशीर्णं स्वयं पतितं पुष्पफलं देवकार्यार्थं व्रीहियवं चाग्रयणार्थं नवसस्येष्ट्यर्थं श्रोत्रिया वेदाध्यायिनः तपस्विनः, त एव तपोयुक्ताः हरेयुः । राशिमूलमुञ्छवृत्तय इति । क्षेत्रखलगतधान्यराशिमूलदेशविसृतधान्यदेशकणिशादिकं शिलोञ्छवृत्तयः श्रोत्रियाः, तपस्विन एव, हरेयुरिति ।

[ निष्पन्नसस्यानां कोशप्रापणरक्षणादिविधिः ]

**यथाकालं च सस्यादि जातं जातं प्रवेशयेत् ।**
**न क्षेत्रे स्थापयेत् किञ्चित् पलालमपि पण्डितः ॥१०३॥**
**प्रकराणां समुच्छ्रायान् वलभीर्वा तथाविधाः ।**
**न संहतानि कुर्वीत न तुच्छानि शिरांसि च ॥१०४॥**
**खलस्य प्रकरान् कुर्यात् मण्डलान्ते समाश्रितान् ।**
**अनग्निकास्सोदकाश्च खले स्युः परिकर्मिणः ॥१०५॥**

इत्यध्यक्षप्रचारे सीताध्यक्षः चतुर्विंशोऽध्यायः,
आदितः पञ्चचत्वारिंशः ।

---

श्रीमूला

अध्यायान्ते श्लोकानाह—यथाकालमिति । यथाकालं प्रवेशनार्हकालानतिक्रमेण, सस्यादि, जातं जातं निष्पन्नमखिलं, प्रवेशयेत् । क्षेत्रे किञ्चित् पलालमपि, न स्थापयेत्, पण्डितः अर्थसञ्चयविधानाभिज्ञः । यदाहुः—

"यस्य विघ्नान् न कुर्वन्ति शीतमुष्णं रतिर्भयम् ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ।।" इति ।।

प्रकराणामिति । प्रकराणां धान्यनिवेशस्थानानां, समुच्छ्रायान् उन्नतसन्निवेशान्, कुर्वीत । वलभीर्वा तथाविधाः उच्छ्रितानि कूटागाराणि वा कुर्वीत । शिरांसि च तेषां, न संहतानि कुर्वीत अन्योन्योपश्लिष्टानि न कुर्वीत, न तुच्छानि रिक्तकानि न कुर्वीत किन्तु चण्डवाताद्यपहारनिषेधार्थं लोहपाषाणादिगुरुद्रव्यगर्भाणि कुर्वीत ।

खलस्येति । प्रकरान्, खलस्य मण्डलान्ते स्तम्बधान्यविश्लेषणाय यत्र वलीवर्दपंक्तिर्मण्डलभ्रमणं कार्यते स प्रदेशो मण्डलम्, तस्यान्ते समीपे, समाश्रितात् कुर्यात् । खले, परिकर्मिणः परिकर्मकारिणः, अनग्निका धान्यदाहभयादग्निरहिताः, सोदकाश्च यादृच्छिकाग्निदीपनप्रशमार्थम्, सन्निहितजलाश्च, स्युः ।

इति कौटिलीयार्थशास्त्रव्याख्यायामध्यक्षप्रचारे द्वितीयाधिकरणे
चतुर्विंशोऽध्यायः सीताध्यक्षः, आदितः पञ्चचत्वारिंशः ॥

प्रतिपदपञ्चिका

यथाकालमिति, सस्यानां यो यस्य प्रवेशकालः तदा जातमात्रमेव प्रवेशयेत् । नक्षत्रे किंचित् पलालादिकमपि स्थापयेत् । किमङ्ग पुनरपण्डितः । अर्थसञ्चयविधिश्लोकश्चात्र—

"यस्य विघ्नान्न कुर्वन्ति शीतमुष्णं रतिर्मयम् ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ।।" इति ।

तदर्थं पण्डितग्रहणं प्रकराणां कुलुन्दमानां स्थाने समुच्छ्रायान् महतः कूटाकारसन्निवेशान् कुर्यात् । वलभीर्वा दीर्घप्रकराः तथाविधास्समुच्छिताः न संहृतानि न परस्परं लग्नानि । न च तुच्छानि तेषां शिरांसि रक्षःपिशाचाद्यपहारप्रतिषेधार्थमयःपाषाणाद्यधिष्ठितानि कार्याणि फलस्य प्रकारान् कुलुमान् कुर्यात् । मण्डलान्ते बीलबर्दपङ्क्तिभ्रमणभूमिपर्यन्ते समाश्रितान् समीपस्थान् अनग्निका अग्निरहितास्सोदकाश्चागन्तुवह्निप्रतिषेधार्थं खले स्युः परिकर्मिणः कुर्युरिति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रटीकायाम्
अध्यक्षप्रचारिके द्वितीयेऽधिकरणे चतुर्विंशोऽध्यायः ।
सीताध्यक्षः, आदितः अष्टचत्वारिंशोऽध्यायः ।।

# द्विचत्वारिंशं प्रकरणम्

## पञ्चविंशोऽध्यायः ।

## सुराध्यक्षः ।

[ सुरासन्धानतद्विक्रयादिदेशकालव्यवस्थाः ]

**सुराध्यक्षः सुराकिण्वव्यवहाराद् दुर्गे जनपदे स्कन्धवारे वा तज्जातसुराकिण्वव्यवहारिभिः कारयेत्, एकमुखमनेकमुखं वा विक्रयक्रयवशेन वा । षट्छतमत्ययम् अन्यत्र कर्तृक्रेतृविक्रेतृणां स्थापयेत् ।**

---

श्रीमूला

सुराध्यक्ष इति सूत्रम् । सुरा गौडी माध्वी पैष्टीत्येवं त्रिविधा, तस्था अध्यक्षस्तत्सन्धानाद्यधिकृतः । स इहोच्यत् इति सूत्रार्थः ।

समाहर्तृप्रत्यवेक्षणीये दुर्गे सुरा निर्दिष्टा । तदध्यक्षस्तद्व्यापारो वानभिहित इदानीमभिधीयते ।

सुराध्यक्ष इत्यादि । सः, सुराकिण्वव्यवहारान् सुरातद्बीजसम्बद्धान् तत्सन्धानविक्रयादिव्यवहारान्, तज्जातसुराकिण्वव्यवहारिभिः तत्कर्मकुलोत्पन्ननिपुणतद्व्यवहारिभिः, कारयेत् । कथमित्याह—एकमुखम् एकस्थानकम्, अनेकमुखं वा अनेकस्थानकं वा विक्रयक्रयवशेन वा क्रयविक्रयप्रियाप्रियत्वानुरोधेन वा । षट्छतमत्ययं षट्छतपणात्मकं दण्डम्, अन्यत्र कर्तृक्रेतृविक्रेतृणां व्यवस्थितस्थानेतरस्थानेषु सन्धानक्रयविक्रयकारिणां, स्थापयेत् ।

प्रतिपदपञ्चिका

सुराध्यक्ष इति सूत्रम् । सुराशब्देन सर्वाः पानविशेषा गृह्यन्ते ।

"गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।" इति ॥

वचनादुपलक्षणार्थत्वाच्च सुराशब्दस्य मोदकादीनामपि ग्रहणम् । तेषामध्यक्षः इति । तत्सन्धानविक्रयाद्यधिकारी, स इहाभिधीयत इति सूत्रार्थः । सम्बन्धस्तु समाहर्तृकर्मणि दुर्गान्तर्गता सुरा प्रदिष्टा, तत्प्रभेदस्तदध्यक्षो वा नोक्तः, सोऽभिधीयत इति । तमाह—सुराध्यक्ष इत्यादि । सुरायाः किण्वस्य च तत्कारणस्य च व्यवहारं तत्संयोजनविक्रयादिकं दुर्गादिषु त्रिषु तज्जातेत्यादि तत्कुलकन्यापालैः कारयेत् ।

[ सुरातत्पात्रोरनियमेन बहिःप्रचारदोषाः नियमाश्च ]

**ग्रामादनिर्णयनम् असम्पातं च सुरायाः, प्रमादभयात् कर्मसु निर्दिष्टानां, मर्यादातिक्रमभयादार्याणाम्, उत्साहभयाच्च तीक्ष्णानाम् । लक्षितमल्पं वा चतुर्भागमर्धकुडुबं कुडुबमर्धप्रस्थं वेति ज्ञातशौचाः निर्हरेयुः ।**

**पानागारेषु वा पिबेयुरसञ्चारिणः ॥**

---

श्रीमूला

ग्रामादिति । सुराया मद्यस्य उपलक्षणया तत्पानमदवतां च, ग्रामाद्, अनिर्णयनं बहिरनिस्सरणम्, असम्पातं अगमनं च गृहाद् गृहान्तरे जनाकीर्णे वा, स्थापयेदित्यनुषङ्गः । तत्र कारणमाह—प्रमादभयात् कर्मसु निर्दिष्टानां तत्तत्कर्मनियुक्तानामध्यक्षादीनां स्वकर्मस्ववधानभङ्गभयात्, मर्यादातिक्रमभयात् आर्याणां साधूनां स्वधर्मातिलङ्घनभयात् उत्साहभयाच्च तीक्ष्णानां शूराणाम् अस्थानशस्त्रप्रयोगभयाच्च ।

निर्णयनाभ्यनुज्ञानपक्षमाह—लक्षितमिति । वाशब्दः पक्षान्तरे । लक्षितम् अभिज्ञानमुद्राचिह्नितन्, अल्पम् अल्पपरिमाणम् । अल्पत्वस्यैव व्याख्यानं चतुर्भागमित्यादिना । चतुर्भागं पादकुडुबम् अर्धकुडुबम्, कुडुबम्, अर्धप्रस्थं वा परमावधिपरिमाणम्, इति एवम्प्रकारं सुरापरिमाणम्, ज्ञातशौचाः प्रतीतवृत्ताव्यभिचाराः, निर्हरेयुः निर्णयेयुः ।

सामान्यविधिमाह—पानागारेष्वित्यादि । वेति वाक्यपूरणे । असञ्चारिणः मदकालवर्जितसम्पाताः ।

प्रतिपदपञ्चिका

एकमुखमित्यादि । सुबोधम् । ग्रामादेर्दुर्गादेरनिर्णयनं बहिर्निस्सरणमसम्पातं च गृहाद् गृहान्तरं गमनमसङ्कुलदोषं च स्थापयेत् ।

कुतः प्रमादादिभयात्, कर्मसु निर्दिष्टानाम् अध्यक्षपुरुषाणाम् आर्याणां ब्राह्मणादीनां शूरपुरुषाणां च यथाक्रमं प्रमादादिदोषभयात् । प्रमादः कर्मसु शैथिल्यम्, मर्यादातिक्रमः स्वधर्मलङ्घनम्, उत्साहः कलहः, त एते पानदोषात् सम्भवन्ति । तस्माल्लक्षितं कृताभिज्ञानमल्पं वेत्यल्पस्याप्यवस्थितत्वात् सर्वनिकृष्टं कुटुम्बचतुर्भागं सर्वोत्कृष्टं प्रस्थमिति प्रतिज्ञातशौचादुष्टं निर्हरेयुः । निर्गमयेयुः ।

पानागारेषु वा वक्ष्यमाणलक्षणेषु पिबेयुः । असञ्चारिणो यावन्मदकालमसम्पातिनः ।

[ सुराव्यवहारफलानि ]

**निक्षेपोपनिधिप्रयोगापहृतादीनामनिष्टोपगतानां च द्रव्याणां ज्ञानार्थं-मस्वामिकं कुप्यं हिरण्यं चोपलभ्य निक्षेप्तारम् अन्यत्र व्यपदेशेन ग्राहयेत्, अतिव्ययकर्तारमनायतिव्ययं च ।**

[ सुराव्यवहारपानागारपातॄणां रक्षणादिव्यवस्थाः
मद्यविक्रयिभिरवेक्षणीयोंऽशश्च ]

**न चानर्घेण कालिकां वा सुरां दद्यादन्यत्र दुष्टसुरायाः । तामन्यत्र विक्रापयेत्, दासकर्मकरेभ्यो वा वेतनं दद्यात्, वाहनप्रतिपानं सूकरपोषणं वा दद्यात् ।**

---

श्रीमूला

एवं गर्ह्योऽपि सुराव्यवहारश्चोरसाहसिकाद्युपलम्भसाधनत्वान्महाफल इत्य-भिप्रायेणाह—निक्षेपेत्यादि । निक्षेपो भाण्डघटनाय दत्तम्, उपनिधिः न्यासः, प्रयोगः आधिः, अपहृतं चोरितम्, आदिशब्दात् याचितकादि गृह्यते, एषां निक्षेपादीनाम्, अनिष्टोपगतानां साहसहृतानां च, द्रव्याणां, ज्ञानार्थं तत्त्वावगमार्थम्, अस्वामिकम् अविदितस्वामिकं, कुप्यं खड्गादिकं, हिरण्यं च मद्यपायिना पानायाहितम्, उपलभ्य, निक्षेप्तारं कुप्यहिरण्याधातारं पुरुषम्, अन्यत्र पानागारादन्यस्मिन् प्रदेशे व्यपदेशेन वाक्पारुष्यादिच्छलेन, ग्राहयेत् नगराध्यक्षेण । पानागार एव तद्ग्रहणे व्यपदेशाकरणे चान्ये चोरादयः पानशौण्डा यथोक्तकुप्यादिकमविश्वासात् तत्र नानयेयुरित्यत उक्तम् 'अन्यत्रे'ति 'व्यपदेशेने'ति च । अतिव्ययकर्तारम् आयाधिकव्ययकारिणम् अनाय-तिव्ययम् आयतिं विना व्ययकारिणं च, ग्राहयेदित्यनुषङ्गः ।

न चानर्घेणेति । अनर्घेण अल्पेन मूल्येन, कालिकां वा सवृद्धिकमूल्यदान-कालावधिमतीं वा कालान्तरदेयमूल्येन वेति यावत्, सुरां, न च दद्यात् क्रेतृभ्यः, अन्यत्र दुष्टसुरायाः दुष्टसुराव्यतिरेकेण । दुष्टसुरामपि प्रशस्तसुराविक्रयस्थानादन्यत्र नीत्वा धारणकक्रेतृभ्यो दापयेदित्याह—तामन्यत्र विक्रापयेदिति । दासेत्यादि । दासकर्मकरेभ्यो वा, वेतनं दद्यात् वेतनस्थाने दुष्टसुरां दद्यात् । तच्च वेतनं क्षुद्रकर्मविषयमित्यभिप्रायेणाह—वाहनेत्यादि । वाहनप्रतिपानम् उष्ट्रबलीवर्दादिप्रति-पालनविषयं, सूकरपोषणं वा वराहपोषणविषयं वा, दद्याद् अर्थाद् वेतनम् । वाहन-प्रतिपानमित्यस्य उष्ट्रादिव्यापारणभृतिनिष्क्रयार्थां सुरामिति वार्थः सुवचः ।

प्रतिपदपञ्चिका

निक्षेपे चोपायनार्थम् अर्पितमुपनिधिर्न्यासः प्रयोगो बन्धकः अन्धकघटिता-लङ्कारादिर्वा अपहृतम् मुषितआदिग्रहणाद्याचितमवक्रीतकं च । एवमेषामनिष्टोपगतानां

**पानागाराण्यनेककक्ष्याणि विभक्तशयनासनवन्ति पानोद्देशानि गन्ध-माल्योदकवन्ति ऋतुसुखानि कारयेत् । तत्रस्थाः प्रकृत्यौत्पत्तिकौ व्ययौ गूढा विद्युरागन्तूंश्च । क्रेतॄणां मत्तसुप्तानामलङ्काराच्छादनहिरण्यानि च विद्युः । तन्नाशे वणिजः तच्च तावच्च दण्डं दद्युः । वणिजस्तु संवृतेषु कक्ष्याविभागेषु स्वदासीभिः पेशलरूपाभिरागन्तूनां वास्तव्यानां च आर्य-रूपाणां मत्तसुप्तानां भावं विद्युः ॥**

---

## प्रतिपदपञ्चिका

च साहसाद्यपहृतानां द्रव्याणां चोरडामरिकादिपुरुषाणां च ज्ञानार्थं तत्त्वावबोधार्थं-मस्वामिमद्यपं कुप्यं खङ्गखेटकादि हिरण्यं चोपलभ्य विज्ञाय निक्षेप्तारं पानशौण्डम् अन्यत्र पानाहारादित्यन्येषां अविश्वासप्रतिषेधार्थमपदेशेन न वाक्पारुष्यादिव्याजेन ग्राहयोगरिकादिना अतिव्ययकर्तारमल्पव्ययंमहाव्ययमनायतिव्ययं च विनैवायेन व्ययकारिणं ग्राहयेत् ।

न चानर्घेण हीनार्घेन कालिकं वा धारणकेभ्यः सुरां दद्यात् विक्रीणीयात् । अन्यत्र दुष्टसुरायाः पिष्टसुरायाः तद्धारणकेभ्योऽन्यत्र वा नीत्वा विक्रापयेत् । तदसम्भवे दासादिभ्यो वा वेतनार्थं दद्यात् । वाहनप्रतिपादनमुष्ट्रबलीबर्दादिप्रतिपादनं सूकरप्रोषणं वा तेभ्यो दद्यात् ।

## श्रीमूला

पानागाराणीत्यादि । पानोद्देशानि पानयोग्योत्कृष्टप्रदेशोपेतानि । ऋतुसुखानि ऋतुषु सर्वेषु सुखानि तत्तदुचितभोग्यवस्तुसमृद्धतया सुखकराणि । शेषं सुगमम् । तत्रस्था इति । तत्रस्थाः पानागारस्थाः. प्रकृत्यौत्पत्तिकौ प्रकृतिसिद्धः प्रकृतिर्नित्यः अपूर्वोपजन उत्पत्तिस्तत्सिद्ध औत्पत्तिकः तथाविधौ, व्ययौ मद्यपायिनां, गूढाः पानागारकर्मकरादिव्यञ्जनाः, विद्युः । आगन्तून् विदेशागतांश्च पातॄन् विद्युः ।

क्रेतॄणामिति । मद्यपायिनां, मत्तसुप्तानाम्, अलङ्काराच्छादनहिरण्यानि च देह-गतानि, विद्युः गूढा इत्येव । तन्नाशे तेषामलङ्कारादीनां चोरादिनापहारे, वणिजः मद्यविक्रयिणः, तच्च तावच्च दण्डं नष्टसदृशरूपपरिमाणं दण्डं, दद्युः ।

वणिविषयं प्रस्तावान्तरमाह—वणिजस्त्विति । मद्यविक्रयिणः, संवृत्तेषु विविक्तेषु, कक्ष्याविभागेषु, स्वदासीभिः आप्तप्रेष्याभिः, पेशलरुपाभिः रुचिराकृतिभिः, आगन्तूनां विदेशागतानां, वास्तव्यानां च स्वदेशगतानां च, आर्यरूपाणाम् आर्यवत् प्रतिभासमानानां, मत्तसुप्तानां, भावं विद्युः अभिप्रायं गृह्णीयुः । चोरत्वपरप्रयुक्त-त्वादिपरीक्षार्थम् ।

[ मेदकप्रसन्नासवारिष्टयोगाः ]

**मेदकप्रसन्नाऽऽसवारिष्टमैरेयमधूनाम् उदकद्रोणं, तण्डुलानामर्धाढकं, त्रयः प्रस्थाः किण्वस्य इति मेदकयोगः। द्वादशाढकं पिष्टस्य, पञ्चप्रस्थाः किण्वस्य, पुत्रकत्वक्फलयुक्तो वा जातिसम्भारः प्रसन्नायोगः। कपित्थतुला, फाणितं पञ्चतौलिकम्, प्रस्थो मधुन–इत्यासवयोगः। पादाधिको ज्येष्ठः, पादहीनः कनिष्ठः। चिकित्सकप्रमाणाः प्रत्येकशो विकाराणाम् अरिष्टाः॥**

---

प्रतिपदपञ्चिका

पानागाराणि आपानकगृहाणि अनेककक्ष्याणि । प्रभूतावस्थानानि विभक्तशयनादिप्रदेशा शौण्डिकादीनां यथासुखावस्थापनार्थं गन्धमाल्योदकवन्ति ऋतुसुखानि सर्वर्तुभोज्ययुक्तानि कारयेत् ।

तत्रस्थाः प्रकृतोत्पत्तिकौ नित्यनैमित्तिकौ व्ययौ पातॄणां गूढपुरुषास्तत्कर्मकरादिव्यञ्जना विद्युः । आगन्तूंश्च देशान्तरादागतान् ।

क्रेतॄणां मत्तसुप्तानाम्, अलङ्काराच्छादनहिरण्यानि च तच्छरीरगतानि, एवं गूढा विद्युः । तन्नाशे मत्तसुप्तानामलङ्कारादिनाशे वणिजस्सुराध्यक्षाः तच्च तावच्च दण्डं दद्युः ।

वणिजस्सुराध्यक्षाः, तुशब्दोऽधिकारान्तरे, संवृतेषु कक्ष्याविभागेषु स्वदासीभिः आप्तप्रेष्याभिः पेशलरूपाभिः सुन्दराकाराभिः आगन्तूनां देशान्तरादागतानां वास्तव्यानां तत्रत्यानां च आर्यरूपाणाम् आर्यवेषधारिणां मत्तसुप्तानामभिप्रायं विद्युः, तेषां चोरडामरिकपाप्मयुक्तादिपरीक्षणार्थम् ।

श्रीमूला

मेदकादियोगविधिं प्रतिजानीते—मेदकेत्यादि । मेदकादीनां षण्णां, योगविधिरुच्यत इति शेषः ।

मेदकयोगमाह—उदकद्रोणमित्यादि । द्रोणपरिमितं जलम् अर्धाढकपरिमितास्तण्डुलाः त्रिप्रस्थपरिमितं मद्यबीजमित्यनेन मिश्रणप्रकारेण मेदकयोगो भवति ।

प्रसन्नायोगमाह—द्वादशाढकमित्यादि । पुत्रकत्वक्फलयुक्तः कामरूपजनपदप्रसिद्धपुत्रकाख्यवृक्षविशेषत्वक्फलसहितः । जातिसम्भारः 'पाठालोध्रे'त्यादिनाऽनुपदं वक्ष्यमाणः पाठादिप्रयोगः । शेषं सुगमम् । पूर्वत्र तण्डुलोक्तदिशा जलप्रमाणमप्यत्र पिष्टाष्टगुणमूहनीयम् ।

आसवयोगमाह—कपित्थेत्यादि । कपित्थतुला शतपलः कपित्थफलसारः, फाणितं, पञ्चतौलिकं तुलापञ्चकपरिमाणं, मधुनः प्रस्थः प्रस्थपरिमाणं माध्वीकम्,

[ मैरेयः मधुः किण्वश्च ]

**मेषशृङ्गीत्वक्क्वाथाभिषुतो गुडप्रतीवापः पिप्पलीमरीचसम्भारस्त्रिफलायुक्तो वा मैरेयः। गुडयुक्तानां वा सर्वेषां त्रिफलासम्भारः। मृद्वीकारसो मधु। तस्य स्वदेशो व्याख्यानं कापिशायनं हारहूरकमिति। माषकलनीद्रोणमामं सिद्धं वा त्रिभागाधिकतण्डुलं मोरटादीनां कार्षिकभागयुक्तं किण्वाबन्धः॥**

---

श्रीमूला

इत्येवम्प्रकार आसवयोगः। एष एव कपित्थादिप्रमाणचतुर्भागाधिको ज्येष्ठः, तच्चतुर्भागन्यूनस्तु कनिष्ठ इत्युच्यत इत्याह—पादाधिक इत्यादि। अर्थात् पूर्वोक्तो मध्यमः। तत्तद्रोगाणां यथास्वं चिकित्सोपयोगिनोऽत एव भिषगुपदिष्टयोज्यद्रव्यप्रमाणाः अरिष्टयोगा इत्याह—चिकित्सकप्रमाणा इत्यादि। विकाराणां वातादिविकाररूपाणां रोगाणाम्। अरिष्टा अभयारिष्टादयो वैद्यप्रसिद्धाः।

प्रतिपदपञ्चिका

मेदकेत्यादि। मेदकादीनां षण्णां विधिरभिधीयते इति वाक्यशेषः।

मेदकस्य तावदाह—उदकद्रोणतण्डुलानामिति, किण्वस्य वक्ष्यमाणलक्षणस्य, शेषं सुबोधम्। इत्येवमनया कल्पनया मेदकस्य योगो भवति। प्रसन्नाया वक्ष्यते। द्वादशाढकम् पिष्टस्य, किण्वस्य पञ्चप्रस्थाः, पुत्रकः कामरूपेषु वृक्षविशेषः, तस्य त्वक्फलं तद्युक्तो जातिसम्भारो वक्ष्यमाणः पाठादिप्रयोगः प्रसन्नायोगः इहोदकप्रमाणमनुक्तमपि पूर्वत्र तण्डुलार्धाढकस्य उदकद्रोणे पदे देशात् पिष्टाष्टगुणमुदकमूह्यमिति।

आसवस्याह—कपित्यतुलेति, तत्फलसारशतपलफाणितः पञ्चतौलिकः पञ्चपलशतपरिमाणः प्रस्थो मधुनो माक्षिकस्येत्ययं मध्यमस्यासबस्य योगः। पादाधिकः पूर्वोक्तकपित्थादिमात्रश्चतुर्भागाधिको ज्येष्ठो भवति। पादहीनस्तु कनिष्ठ इति प्रतीतम्। त्रिविधोऽयमासवयोग इति।

अरिष्टमाह—चिकित्सकप्रमाणा इति। वैद्योपदेशप्रमाणः प्रत्येकशो विकाराणां व्याधिविशेषाणाम् अरिष्टा अभयारिष्टादयश्चिकित्सार्था योगा अवगन्तव्याः।

श्रीमूला

मैरेयमाह—मेषशृङ्गीत्यादि। मेषशृङ्गीत्वक्क्वाथाभिषुतः मेषशृङ्गीसंज्ञकवृक्षत्वक्कषायसहितः, गुलप्रतीवापः गुलोपचारयुक्तः, पिप्पलीमरिचसम्भारः पिप्पलीमरिचचूर्णमिश्रः, त्रिफलायुक्तो वा त्रिफलाचूर्णयुक्तो वा, मैरेयः। वाशब्दः सम्भारविकल्पने। गुलप्रतिवापिनां मद्यानां सर्वेषामपि त्रिफलासम्भारः साधारण इति कश्चित् पक्षमाह—गुलयुक्तानामित्यादि।

[ मेदकप्रसन्नासवानां सम्भाराः, श्वेतसुरायोगश्च ]

**पाठालोध्रतेजोवत्येलावालुकमधुकमधुरसाप्रियङ्गुदारुहरिद्रामरिच-**

---

श्रीमूला

मधुविधिमाह—मृद्वीकारस इति। द्राक्षारसः पक्वद्राक्षाफलरसः, मधु भवति। तस्य मधुनः, स्वदेशो व्याख्यानं स्वोत्पत्तिदेशसम्बन्धनिमित्तकं विविधमर्थाद् द्विविधमाख्यानं संज्ञा, कापिशायनमिति हारहूरकमिति च। कपिशेति नदी तत्तीरगतं नगरं च तत्र भवं काषिशायनम्। हरहूरं तदेव नगरं तत्र भवं हारहूरकम्। द्व्याख्यानमिति टीकाभाषयोः स्वरसप्रतीते पाठे आख्यानद्वयमित्यर्थः, क्लीबत्वं त्रिभुवनवत्।

किण्वविधिमाह—माषकलनीत्यादि। माषकलनीद्रोणं माषकल्कभावितमुदक-द्रोणम्, आमं सिद्धं वा अक्वथितं क्वथितं वा, त्रिभागाधिकतण्डुलं त्रिभागाधिकद्रोण-परिमाणतण्डुलपिष्टयुक्तं, मोरटादीनां वक्ष्यमाणानां कार्षिकभागयुक्तं प्रत्येकपादपल-भागयुक्तं, किण्वाबन्धः किण्वयोगः।

प्रतिपदपञ्चिका

मैरेयमाह—मेषशृङ्गपिप्पलीक्वाथाभिषुत इति। मेषशृङ्गत्वात्क्वाथेन योऽभि-षुतः कृतप्रतिबन्धनो गुडप्रतीवापो गुडेनोपचरितः पिप्पलीमरिचसम्भारः तच्चूर्णाव-कीर्णः त्रिफलायुक्तो वेति वाशब्दश्चार्थ इति केचित्। सम्भारविकल्प इत्यन्ये। एवमेष मैरेययोगः। गुडयुक्तानां वा, वाशब्दो गुडरहितानां च सर्वेषां द्रव्यान्तरक्वाथाभिषु-तानामपि त्रिफलासम्भाराः कार्याः।

मध्वाह—मृद्वीकारस इति। परिणतद्राक्षाफलरसो मधु, तस्य मधुनः स्वदेशो व्याख्यानं तदुत्पत्तिभूमिनिमित्तमाख्याद्वयं भवति। तत्र कपिशो अवन्तिषु परिजा नाम नन्दिनगरं च तत्रैव, हारहूरकं तत्प्रभवं कापिशायनं हारहूरकमिति तद्ग्रहणमुत्तमत्व-प्रदर्शनार्थं नान्यनिवृत्यर्थम्, ततश्च कामिराद्यपि मधु भवति। द्राक्षाग्रहणं खर्जूरा-पलक्षणार्थम्, तद्रसोऽपि मधु भवति। सुरामभिधाय किण्वमाह—माषकलिनीत्यादि। माषकलिनी माषकल्कभावितमुदकमामं पक्वं सिद्धं वा क्वथितं त्रिभागाधिकं द्रोणं तण्डुलं पिष्टयुक्तम्। मोरटादीनामुपरि। वक्ष्यमाणानां षण्णां कार्षिकभागयुक्तं किण्व-(चिञ्चा)बन्धः अम्लिकासुबन्धः गुडयुक्तानां वा सर्वेषां त्रिफलासम्भार इति। सामान्य-सम्भारस्योक्तत्वात् प्रत्येकमभिधीयते।

श्रीमूला

मेदकप्रसन्नयोः सम्भारयोगमाह—पाठालोध्रेत्यादि। पाठा अम्बष्ठाख्या, लोध्रः तिरीटकल्कः, तेजोवती इभपिप्पली, एला प्रसिद्धा, वालुकं हरिबालुकं, मधुकं

**पिप्पलीनां च पञ्चकार्षिकः सम्भारयोगो मेदकस्य । प्रसन्नायाश्च मधुकनिर्यूहयुक्ता कटशर्करा वर्णप्रसादिनी च । चोचचित्रकविलङ्गगजपिप्पलीनां च कार्षिकः क्रमुकमधुकमुस्तालोध्राणां द्विकार्षिकश्च आसवसम्भारः । दशभागश्चैषां बीजबन्धः । प्रसन्नायोगः श्वेतसुरायाः ॥**

---

श्रीमूला

मधुयष्टिः, मधुरसा दूर्वा, प्रियङ्गु कुङ्कुमं, दारुहरिद्रा दार्वीसंज्ञा, दार्वितं भिन्नं वा पदं तच्च पीतदारुसंज्ञं, हरिद्रा तु प्रसिद्धा, मरिचं कोलं, पिप्पली प्रसिद्धा । पाठादीनां पञ्चकर्षिकः प्रत्येकं चूर्णपञ्चकर्षप्रमाणः, सम्भारयोगः, मेदकस्य प्रसन्नायाश्च । मधुकनिर्यूहयुक्ता यष्टिमधुककषाययुक्ता, कटशर्करा गङ्गेष्टिः, वर्णप्रसादनी च मेदकप्रसन्नयोवर्णप्रसादहेतुश्च ।

आसवसम्भारमाह—चोचेत्यादि । चोचं त्वचसंज्ञं चित्रकोऽग्निसंज्ञः विलङ्गम् अमोघा गजपिप्पली प्रसिद्धा एतासां चतसृणां च, कार्षिकः प्रत्येकं कर्षप्रमाणः, टीकाभाषयोरनुमिते 'षट्कार्षिक' इति पाठे सार्धफलप्रमाण इत्यर्थः, क्रमुकमधुकमुस्तालोध्राणां क्रमुको घोण्टा मधुकं श्यामकङ्गुः मुस्ता गुरुबिन्दः लोध्रस्तिरीटः एतेषां, द्विकार्षिकश्च कर्षद्वयप्रमाणश्च, आसवसम्भारः । दशभागश्चैषां चोचादीनां दशभागः, बीजबन्धः आसवकरणद्रव्येषु योज्यः ।

प्रसन्नायोगः श्वेतसुराया इति । प्रसन्नाया योगो य उक्तः स एव श्वेतसुराया अपि योगो भवति । किन्तु स सम्भाररहितः समकिण्वाबन्धश्चेत्याह स्वामी । सम्भारबीजबन्धावुभावपि नेत्याह भाषा ।

प्रतिपदपञ्चिका

वाक्योदितपाठादयश्च वैद्यकवेद्याः प्रतीताः, तेषु पञ्चकर्षिकः प्रत्येकं पञ्चकर्षप्रमाणः सम्भारयोगो मेदकस्य ।

प्रसन्नायाश्च मधूको यष्टिमधुकस्तन्निग्रहेण (तन्निर्यूहेण) कषायेण युक्ता कटशर्करा (वर्ण)प्रसादनी तयोरेव मेदकप्रसन्नायोगश्चेति । सुरेति । प्रसन्नायोगः सम्भाररहितः ।

आसवसम्भारमाह—चोचेत्यादि, चोचादीनां चतुर्णां षट्कार्षिकाः कुमुकादीनां चतुर्णां द्विकार्षिकश्चासवसम्भारः । चोचचित्रकादयो वैद्यकादिषु प्रतीताः ।

दशभागश्चैषां चोचादीनां बीजबन्धः आसवकरणद्रव्येषु प्रक्षेप्तव्यः प्रसन्नायोगः । श्वेतसुरेति । प्रसन्नायोगः संहा(भा)ररहितः समकिण्वबन्धश्चेति सुरा भवति ।

[ सुराभेदाः सुरास्वच्छीकरणविधिश्च ]

**सहकारसुरा, रसोत्तरा बीजोत्तरा वा महासुरा, सम्भारिकी वा। तासां मोरटापलाशपत्तूरमेषशृङ्गीकरञ्जक्षीरवृक्षकषायभावितं दग्धकटशर्कराचूर्णं लोध्रचित्रकविलङ्गपाठामुस्ताकलिङ्गयवदारुहरिद्रेन्दीवरशतपुष्पाऽपामार्गसप्तपर्णनिम्बास्फोतकल्कार्धयुक्तम् अन्तर्नखो मुष्टिः कुम्भीं राजपेयां प्रसादयति। फाणितः पञ्चपलिकश्चात्र रसवृद्धिर्देयः ॥**

———————

श्रीमूला

अथ सुराभेदाः—सहकारसुरेति। सुरैव सहकारतैलयुक्ता सहकारसुरा। गुडप्रतिवापयुक्ता सुरा रसोत्तराख्या या शीधु इत्युच्यते। बीजोत्तरा बीजद्रव्यमात्राधिका महासुरा। सम्भारमात्राधिका सुरा सम्भारिकी।

सुराप्रसादनविधिमाह—तासामिति। तासां सर्वासां सुराणां, मोरटादिषट्ककषायभावितं मोरटा मूलपुष्पकाख्यो वल्लीभेदः पलाशः किंशुकः पत्तूरो लोहमारकः मेषशृङ्गी विषाणी करञ्जो नक्तमालः क्षीरवृक्षो वटादिः एतेषां निर्यूहेन भावितं, दग्धकटशर्कराचूर्णं, लोध्रादिकल्कार्धयुक्तं कलिङ्गयवः देशविशेषभवो यवः शतपुष्पा सितपुष्पा सितच्छत्राख्या अपामार्गः खरमञ्जरी आस्फोतः ब्रह्मवृक्षः, शेषं प्रसिद्धम्, एषां लोध्रादीनां कल्कस्य अर्धेन कटशर्कराचूर्णार्धप्रमाणेन युक्तम्, अन्तर्नखो मुष्टिः अदृश्यनखमुष्टिमेयं, प्रक्षिप्तमिति शेषः, कुम्भीं खारीमितां सुरां, राजपेयां प्रसादयति राजपानयोग्या यथा भवेत् तथा स्वच्छां करोति। फाणितः, पञ्चपलिकश्च पलपञ्चकप्रमाणश्च, अत्र प्रसादितसुरायां, रसवृद्धिर्देयः रसवृद्धिप्रयोजनः क्षेप्तव्यः।

प्रतिपदपञ्चिका

तत्प्रसङ्गाच्चान्यानपि द्रव्यभेदकृतान् मात्राभेदकृतांश्च सुराविशेषानाह—सहकारसुरेत्यादि, सहकारतैलयुक्ता सुरैव गुडप्रतिवापा सुरा, (गुडप्रतीता वा सुरा) रसोत्तरा, शीधुसंज्ञा भवति। बीजोत्तरा बीजद्रव्यमात्राधिका महासुरा। बीजोत्तरा, रसोत्तरा च सम्भारिकी सम्भारासि(भि)केव। तासामिति, सर्वसुराणां प्रसाधनविधिमाह—मोरटेत्यादि, मोरटा लधु(लघु)वल्लीत्रिशेषः पत्तुरः पङ्कुरः क्षीरवृक्षाः न्यग्रोधादयः। शेषं प्रतीतम्।

एतेषां कषायेण निर्यासेन भावितं दग्धकटशर्कराचूर्णं तथा लोध्रादिकल्कार्धयुक्तमन्तर्नखो मुष्टिरदृष्टनखो मुष्टिः कुम्भीं चतुष्षष्टिसहस्रपत्रां(फलां) राजपेयां राजार्हां प्रसादयति स्वच्छीकरोति। फाणितः पञ्चपलिकः पञ्चपलप्रमाणः। फाणितश्चात्र कुम्भ्यां स्वच्छीकृतायां रसवृद्धिस्तन्निमित्तं देयः प्रक्षेप्तव्यः।

[ उत्सवेषु सुरासन्धानपानयोरनुज्ञा ]

**कुटुम्बिनः कृत्येषु श्वेतसुरां औषधार्थं वा अरिष्टमन्यद्वा कर्तुं लभेरन् । उत्सवसमाजयात्रासु चतुरहस्सौरिको देयः । तेष्वननुज्ञातानां प्रहवणान्तं दैवसिकमत्ययं गृह्णीयात् ॥**

[ सुराश्रपणादेः तद्रसानभिज्ञकर्तव्यता शुल्कं च ]

**सुराकिण्वविचयं स्त्रियो बालाश्च कुर्युः । अराजपण्याः पञ्चकं शतं शुल्कं दद्युः ।**

---

श्रीमूला

कुटुम्बिन इति । कुटुम्बिनः पौरजानपदाः, कृत्येषु विवाहादिकार्येषु, श्वेतसुराम्, औषधार्थम् वारिष्टम् औषधार्थम् भिषगुपदिष्टमरिष्टं वा, अन्यद्वा मेदकादि वा, कर्तुं सन्धातुं लभेरन् ।

उत्सवेत्यादि । उत्सवसमाजयात्रासु वसन्ताद्युत्सवेषु बन्धुजनमेलनेषु इष्टदेवतापूजासु च, चतुरहः सौरिको देयः चत्वारो दिवसाः सुरापानार्था अनुज्ञातव्याः, सुराध्यक्षेण । तेषु उत्सवादिषु अननुज्ञातानाम् अनुज्ञां विनैव पिबतां, प्रहवणान्तं प्रहवणं तुष्टिभोजनं तेनोत्सवादिसमाप्तिकालो लक्ष्यते, तदवधिकमित्यर्थः, दैवसिकमत्ययं गृह्णीयात् प्रात्यहिकं दण्डं गृह्णीयात् सुराध्यक्षः । अननुज्ञातपानजनितमददिवसेषु कर्महानिनिमित्तं दण्डं कर्मकरेभ्यो गृह्णीयादिति केचिद् व्याचक्षते ।

सुरेत्यादि । सुराकिण्वविचयं सुराया विचयं श्रपणादिरूपं कर्म किण्वस्य विचयं शोषणादिरूपं च, स्त्रियो बालाश्च कुर्युः तद्रसानभिज्ञाः ।

अराजपण्या इति । स्वोत्पादितमद्यविक्रयिणः, शुल्कं राजभागं, दद्युः । कथं दद्युः, पञ्चकं शतम् इतिशब्द इहाध्याहर्तव्यः । पञ्चकं शतमिति । पञ्चशुल्कोऽस्मिञ्छते दीयत इत्यनेन क्रमेण दद्युरित्यर्थः । केषां पण्यानामित्याकाङ्क्षायामाह—सुरकेत्यादि । तत्र सुरैव सुरका, मेदकारिष्टमधूनि प्रतीतानि, फलाम्ला तालनालिकेरादिमद्यम्, अम्लशोधु उदक्षु प्रतीतमिति स्वामी । चकारः किण्वादिग्रहणार्थः ।

प्रतिपदपञ्चिका

कुटुम्बिन इत्यादि । कुटुम्बिनो जानपदाः कृत्येषु विवाहादिषु श्वेतसुरां मधुपसुरां पानार्थम् अरिष्टं वा औषधार्थमध्यक्षाय वा इदं मेदकादीनाम् अन्यतमं कर्तुम् उपयोक्तुं च लभेरन् । उत्सवेषु वसन्तादिषु समाजेषु स्थानस्थानस्वजनमेलनेषु यात्रासु च स्वदेवतापूजासु चेत्याहुः । चतुर्दैवसिकस्सौरिकस्सुरापानकाले देयः (कालो कल्पनीयः) ।

पृष्टेन(प्रष्टेन)अध्यक्षेण समुत्कलनीयः (?) । तेष्वेव विवाह इत्यादिष्वनुज्ञात्तानां पिबतां दैवसिकमत्ययं स्वयमेव परिकल्प्य गृह्णीयात् ।

**सुरकामेदकारिष्टमधुफलाम्लाम्लशीधूनां च**
**अह्नश्च विक्रयं व्याजीं ज्ञात्वा मानहिरण्ययोः ।**
**तथा वैधरणं कुर्यादुचितं चानुवर्तयेत् ॥१०६॥**

इत्यध्यक्षप्रचारे सुराध्यक्षः, पञ्चविंशोऽध्यायः,
आदितष्षट्चत्वारिंशः ।

---

प्रतिपदपञ्चिका

सुराकिण्वविचयमिति । विचयशब्दः प्रत्येकम्, सुराविचयं श्रवणोत्सेचनादि किण्वविचयम् । समुत्सेदनविशोषणमर्दनादिकं स्त्रियो बालाश्च तद्रसानभिज्ञाः कुर्युः ।

अराजपण्यानां राजभाव्यमाह—अराजपण्याः मद्यविक्रयिणः पञ्चकं शतं दद्युः ।

श्रीमूला

उक्तशुल्कातिरेकेण व्याज्या अपि करणमध्यायान्तश्लोकेनाह—अह्नश्चेति । अह्नश्च विक्रयं दिनकृतं विक्रयं, तथा वैधरणं मानावश्यम्भाविनं पण्यच्छेदं च, ज्ञात्वा इयत्तया निर्धार्य, मानहिरण्ययोर्व्याजीम् षोडशभागरूपां मानव्याजीं विंशतिभागरूपां हिरण्यव्याजीं च, कुर्यात् कल्पयेत्, सुराध्यक्षः । करणं च न यथाकामं भवति, किन्तु समुदाचारसिद्धमेवानुसर्तव्यमित्याह—उचितं चानुवर्तयेदिति ॥

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
पञ्चविंशोऽध्यायः, सुराध्यक्षः, आदितः षट्चत्वारिंशः ॥

प्रतिपदपञ्चिका

केषां पण्यानामित्याह—सुरेत्यादि । सुरादीनां तत्कारणानां गुडधातकीकिण्वप्रभृतीनामिति केचित् । तत्र पलाम्ला तालनालिकेरादिमद्यम् अम्लशीधु (स्यादि ?)-सन्धानसम्भवमुदक्षु प्रतीतम् । अन्ये तु सुरादीनुत्तरश्लोकेन सह सम्बध्नन्ति । तच्चाह—अह्नश्चेत्यादि, दैवसिकं विक्रयं ज्ञात्वा तथा वैधरणं च मानविधाववर्ज्यं-पण्यच्छेदनं च ज्ञात्वा ततो मानहिरण्ययोः व्याजीं कुर्यात् । षोडशभागो मानव्याजी, पञ्चकं शतं हिरण्यव्याजी, तच्च शुल्कव्यतिरेकेण अवगन्तव्यम् उचितं च यथोक्तप्रकारातिरेकेण अन्यमपि देशप्रसिद्धमाचारमनुवर्तयेत् अनुपालयेदिति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रटीकायाम्
अध्यक्षप्रचारिके द्वितीयेऽधिकरणे पञ्चविंशोऽध्यायः ।
सुराध्यक्षः, आदितः षट्चत्वारिंशोऽध्यायः ॥

# त्रिचत्वारिंशं प्रकरणम्

## षड्विंशोऽध्यायः ।

### सूनाध्यक्षः ।

[ अहन्तव्यहन्तॄणां दण्डभेदाः ]

**सूनाध्यक्षः प्रदिष्टाभयानाम् अभयवनवासिनां च मृगपशुपक्षिमत्स्यानां बन्धवधहिंसायामुत्तमं दण्डं कारयेत् । कुटुम्बिनामभयवनपरिग्रहेषु मध्यमम् ।**

---

श्रीमूला

सूनाध्यक्ष इति सूत्रम् । सूना भक्ष्यप्राणिवधस्थानं तदध्यक्षव्यापारोऽभिधीयत इति सूत्रार्थः । उत्तममध्यमाधमेषु कर्मसु तदनुरूपा अध्यक्षाः कार्याः इत्युक्तमधस्तात् । तत्र समाहर्तृसन्निधातृप्रभृतय उत्तमाः पौतवाध्यक्षादयो मध्यमाश्चाभिहिताः । इदानीमधमकर्माध्यक्षा अभिधीयन्त इति सम्बन्धः ।

तदाह—सूनाध्यक्ष इति । सूनाध्यक्षः, प्रदिष्टाभयानां प्रख्यापिताहिंसानाम्, अभयवनवासिनां च ब्रह्मसोमारण्यसर्वातिथिमृगवनादिवासिनां च, मृगपशुपक्षिमत्स्यानां च, बन्धवधहिंसायां बन्धनप्रहारमारणेषु, उत्तमम् उत्तमसाहसं, दण्डं कारयेत् । मृगाणां कुरङ्गादीनां पशूनां खड्गमहिषादीनां पक्षिणां मयूरादीनां मत्स्यानां च बन्धवधहिंसायां बन्धनप्रहारमारणेषु, उत्तमं उत्तमसाहसं, दण्डं कारयेत् । कुटुम्बिनाम्, अभयवनपरिग्रहेषु अभयवनवासिमृगादिविषये वधादौ, मध्यमं साहसं, कारयेत् ।

प्रतिपदपञ्चिका

सूनाध्यक्ष इति सूत्रम् ।

सूना वध्यानां भक्ष्यप्राणिनां वधस्थानम्, तस्या अध्यक्षो वध्यावध्यनियमनतदुपादेयाद्यधिकारी, स इहाभिधीयत इति सूत्रार्थः । सम्बन्धस्तूत्तममध्यमावरेषु कर्मसु तज्जातिकर्माध्यक्षं स्थापयेदिति ।

तत्र समाहर्तृसन्निधात्रादीनुत्तमान् पौतवाध्यक्षादींश्च मध्यमानभिधाय अधमानां सूनाध्यक्षादीनां वक्तव्यत्वेन सूनाध्यक्षोऽभिधीयत इति ।

तदाह—सूनाध्यक्ष इत्यादि । स प्रदिष्टभयानां निवारितहिंसानाम् अभयवनवासिनां ब्रह्मसोमारण्यसर्वातिथिमृगवनाभिवासिनां च मृगादीनां, मृगा एडका-

**अप्रवृत्तवधानां मत्स्यपक्षिणां बन्धवधहिंसायां पादोनसप्तविंशतिपणमत्ययं कुर्यात्, मृगपशूनां द्विगुणम्। प्रवृत्तहिंसानामपरिगृहीतानां षड्भागं गृह्णीयात्। मत्स्यपक्षिणां दशभागं वाऽधिकं, मृगपशूनां शुल्कं वाऽधिकम् ॥**

[ स्थानविशेषेषु रक्षणीयाः प्राणिनः, अरक्षणे दण्डश्च ]

**पक्षिमृगाणां जीवत्षड्भागं अभयवनेषु प्रमुञ्चेत्। सामुद्रहस्त्यश्व-**

---

प्रतिपदपञ्चिका

कुरङ्गादयः पशवो वन्याः खड्गमहिषादयः पक्षिणस्तित्तिरिमयूरादयः मत्स्याः प्रतीताः। तद्ग्रहणं कुलीरादीनामप्युपलक्षणार्थं, तेषामपि गुप्तिस्थानेषु रक्षणीयत्वात्तेषां बन्धहिंसायां तन्त्र्यादिबन्धनहंसमारणेषु उत्तमं दण्डं कारयेत्। कुटुम्बिनां कृपीवलानाम् अभयवनपरिग्रहेष्वभयवनसमीपक्षेत्रेषु मृगादीनां वधादिषु मध्यमदण्डं कारयेत्।

श्रीमूला

अप्रवृत्तेत्यादि। अप्रवृत्तवधानां चिरानुष्ठीयमानवधाः प्रवृत्तवधाः तथा न भवन्तीत्यप्रवृत्तवधाः तेषां, मत्स्यपक्षिणां बन्धवधहिंसायां, पादोनसप्तविंशतिपणम्, अत्ययं दण्डं, कुर्यात्। मृगपशूनां तथाविधानां, द्विगुणम् अर्धोनचतुष्पञ्चाशत्पणं दण्डं कुर्यात्।

प्रवृत्तेत्यादि। प्रवृत्तहिंसानाम्, अपरिगृहीतानाम् अस्वामिकारक्षितवनगतानां वधादौ, षड्भागं गृह्णीयात्। मत्स्यपक्षिणां, दशभागं वाधिकं दशमांशं ततोऽधिकं वा, गृह्णीयात्। मृगपशूनां, शुल्कं वाधिकं राजादेयं मृगपशुमूल्यस्य दशभागं ततोऽधिकं वा, गृह्णीयात्।

पक्षीत्यादि। पक्षिमृगाणां वनगृहीतानां, जीवत्षड्भागं जीवतां षड्भागम्, अभयवनेषु प्रमुञ्चेत्।

रक्ष्यप्राणिन आह—सामुद्रेत्यादि। सामुद्राः समुद्रभवाः हस्त्यश्वाद्याकृतयश्चेति

प्रतिपदपञ्चिका

अप्रवृत्तवधानां अप्रसिद्धहंसानां मत्स्यानां हस्तिपुरुषाद्याकृतीनां पक्षिणां क्रौञ्चोत्क्रोशप्रभृतीनां बडबद्धहंसानां पादोनसप्तविंशतिपणमयदण्डं कुर्यात्। मृगाणां रुरुपृषतादीनां पशूनां गोमहिष्यादीनां द्विगुणं सार्धं त्रिपञ्चाशत्पणम्।

प्रवृत्तवधानां राजभाव्यमाह—प्रवृत्तवधानामिति।

अनिषिद्धवधानां शुष्कमूल्यदशभागो वाधिकः, केचित्तु षड्भागमूल्यस्येति व्याचक्षते।

**पुरुषवृषगर्दभाकृतयो मत्स्याः सारसाः नादेयाः तटाककुल्योद्भवा वा । क्रौञ्चोत्क्रोशकदात्यूहहंसचक्रवाकजीवञ्जीवकभृङ्गराजचकोरमत्तकोकिलमयूर - शुकमदनशारिका विहारपक्षिणो मङ्गल्याश्चान्येऽपि प्राणिनः पक्षिमृगाः हिंसाबाधेभ्यो रक्ष्याः । रक्षातिक्रमे पूर्वः साहसदण्डः ॥**

[ मांसविक्रयविधिः ]

**[1]मृगपशूनामनस्थि मांसं सद्योहतं विक्रीणीरन् । अस्थिमतः प्रतिपातं दद्युः । तुलाहीने हीनाष्टगुणम् ॥**

---

श्रीमूला

विग्रहः तथाभूताः, मत्स्याः जलचरविशेषाः, तथा सारसाः सरश्चराः, नादेयाः नदीचराः, तटाककुल्योद्भवा वा तटाकभवाः कुल्याभवाश्च मत्स्याः, तथा क्रौञ्चोत्क्रोशकादयस्त्रयोदश पक्षिणः, तत्र क्रौञ्चः क्रुङ्नामा उत्क्रोशकः कुररः दात्यूहः कालकण्ठकः जीवञ्जीवकः पक्षिभेदः भृङ्गराजो धूम्याटः चकोरश्चन्द्रिकाप्रियः मदन-शारिके पक्षिजातिभेदौ, शेषाः प्रसिद्धाः, विहारपक्षिणः क्रीडार्थाः कुक्कुटादयः मङ्गल्या-श्चान्येऽपि प्राणिनः पक्षिमृगाः मङ्गलार्थाश्च गरुडभरद्वाजादय इतरेऽपि प्राणिनः पक्षिणो मृगाश्च, हिंसाबाधेभ्यः मारणपीडनेभ्यो रक्ष्याः । रक्षातिक्रमे तद्रक्षणानास्थायां, पूर्वः साहसदण्डः, सूनाध्यक्षस्य ।

मांसविक्रयविधिमाह—मृगेत्यादि । मृगपशूनाम्, अनस्थि अस्थिविनाकृतं, मांसं, सद्योहतम् अयातयामम् अभिनवं, विक्रीणीरन् । अस्थिमतः अस्थियुक्तस्य मांसस्य, प्रतिपातं दद्युः । पातो हानिः तत्प्रतिनिधिः प्रतिपातः हीनप्रतीकारः तं दद्युः,

प्रतिपदपञ्चिका

पक्षिमृगाणां जीवग्राहं गृहीतानां षड्भागमादाय यवनादिषु मुञ्चेत् । पण्यार्थमप्रवृत्ते वधानामित्युक्तं दर्शयितुमाह—सामुद्रा इत्यादि । सामुद्राः समुद्रोद्भवा हस्त्यश्वपुरुषाद्याकृतयस्तद्रूपा प्राणिन उदकचारित्वेन मत्स्यव्यपदेशा नादेयाश्च तत्रा-नूपो जलाविलो देशः, शेषं प्रतीतम् । क्रौञ्चादयश्च पक्षिण उत्क्रोशो यः शब्दादि, मत्स्यः मीनोऽवपत्यमत्स्यान् गृह्णाति । दात्यूहश्चातकः । भृङ्गराजः कृष्णो धूमाट-काख्यः । मदनशुकसारिकाः तज्ज्ञात्व(ज्जात्य)न्तर्गताः, विहारपक्षिणः क्रीडार्थाः बाल-कुक्कुटादयः मङ्गलार्थाश्च, श्यामाभरद्वाजादयः । एवमन्येऽप्युक्तव्यतिरेकेण प्राणिनो द्विपदचतुष्पदसरीसृपभेदाः पक्षिणो मृगाश्च यथादेशप्रसिद्धमवगन्तव्यव्यपदेशाहिंसा-बाधेभ्यो रक्ष्याः । तेषां च कृते रक्षातिक्रमे वधबन्धान्युपेक्षणेऽध्यक्षस्य पूर्वस्साहसदण्डः ।

---

1. पशूनाम—इति प्र० प० ।

[ सर्वथा अवध्याः प्राणिनः, तद्वधे दण्डश्च ]

**वत्सो वृषो धेनुश्चैषामवध्याः । घ्नतः पञ्चाशत्को दण्डः, क्लिष्टघातं घातयतश्च ॥**

[ अविक्रेयमांसानि ]

**परिसूनम् अशिरःपादास्थि विगन्धं स्वयंमृतं न विक्रीणीरन् । अन्यथा द्वादशपणो दण्डः ॥**

---

श्रीमूला

अस्थियोगहापितमांसमात्राप्रतिपूरणार्थामधिकमांसमात्रां दद्युरित्यर्थः । तुलाहीने हीनाष्टगुणं तुलोन्मानच्छद्मनिमित्तहानियोगिनि मांसे हीनमांसादष्टगुणं मांसं दद्युः । तत्र चाष्टगुणेऽष्टभाग एव हापितपूरणार्थः क्रेतुः अवशिष्टास्तु अष्टभागाः सप्त सूनाध्यक्षस्येत्याह स्वामी ।

वत्स इति । वत्सः स्तनन्धयः, वृषः रेतस्सेचनक्षमः, धेनुश्च प्रसवधर्मिणी गौश्च, एषां मृगपशूनाम् अनुज्ञातवधानामपि मध्ये, अवध्याः । घ्नतः वत्सादिमारयितुः, पञ्चाशत्कः पञ्चाशत्पणिकः दण्डः । क्लिष्टघातं घातयतश्च विचित्रव्यथोत्पादनदारुणो वधो यथा भवेत् तथा वधं कारयतश्च उक्त एव दण्डः ।

अविक्रेयमांसान्याह—परिसूनमिति । परिसूनं सूना मांसपरिनिष्पादनस्थानं तत् परिवर्जितं यस्य तत् तथाभूतम् अर्थात् सूनातिरिक्तस्थलनिहतप्राणिदेहोद्धृतं मांसं, तथा विगन्धं अशिरःपादास्थि शिरःपादास्थिशून्यं वनहतखादितावशिष्टमृगाङ्गसम्बन्धि मांसं, तथा विगन्धं दुर्गन्धि मांसं, स्वयंमृतं च रोगमृतमांसं च, न विक्रीणीरन् । अन्यथा परिसूनादिविक्रये, द्वादशपणो दण्डः ।

प्रतिपदपञ्चिका

विक्रयविधिमाह—पशूनामिति, पशुग्रहणं मृगाणामप्युपलक्षणार्थम्, अनस्थि अस्थिरहितं शुद्धमांसं विक्रीणीरन् । नन्वयुक्तमिदम्, उत्तरत्रानस्थिमांसविक्रयप्रतिषेधात् । तत्राह–अस्थिमतः प्रतिपातं(कं) दद्युरिति, अस्थिमतो मांसस्य यावन्मात्रमस्थि तावच्छुद्धं मांसमधिकं दद्युरिति, तुलाहीने हीनाष्टगुणं दद्युरिति वर्तते । तत्र भावितपूरणमात्रं क्रेतुरवशिष्टं सूनाध्यक्षस्य ।

वत्सः स्तनन्धयः वृषः सेक्ता स्त्री प्रसवधर्मिणी एषां पशूनां वध्यानामप्येते न वध्याः तत्सन्तानाविच्छित्यर्थं रुन्धतो घ्नतो वत्सादीन् पञ्चाशत्पणो दण्डः । क्लिष्टं घातं दुःखमारिकया घातयतश्च पूर्व एव दण्डः ।

परिसूनमिति । सूनास्थानं वर्जयित्वा अन्यस्मिन् देशे निहत्य अशिरः शिरोरहितम् एवमपादमनस्थि च तत्तच्चिह्नार्थं विगण्डं घुटितं स्वयंमृतं च रोगिणां मांसं न विक्रीणीरन् । अन्यथेति । परिसूनाशिरःपादादिविक्रये द्वादशपणो दण्डः ।

[ वध्याः मृगादयः ]

**दुष्टाः पशुमृगव्याला मत्स्याश्चाऽभयचारिणः ।**
**अन्यत्र गुप्तिस्थानेभ्यः वधबन्धमवाप्नुयुः ॥१०७॥**

इत्यध्यक्षप्रचारे सूनाध्यक्षः षड्विंशोऽध्यायः,
आदितस्सप्तचत्वारिंशः ।

---

प्रतिपदपञ्चिका

अयं च परिसूनवधदण्डो ग्राम्यपशुविषयः अशिरः पादादिविक्रयदण्डश्चारण्यपशुविषयो द्रष्टव्यः ।

अभयवनचारिणां वधबन्धादिप्रतिषेधापवादः ।

श्रीमूला

अध्यायप्रान्ते श्लोकमाह—दुष्टा इति । अभयचारिणः अभयवनेषु रक्ष्यमाणाः, दुष्टाः हिंस्राः, पशुमृगव्यालाः पशवो गवयादयः, मृगाः शुनकादयः, व्याला व्याघ्रादयश्च, मत्स्याश्च शिशुमारादयः, गुप्तिस्थानेभ्योऽन्यत्र अभयवनेभ्योऽन्यस्मिन् स्थाने, समागता इति शेषः, वधबन्धम् अवाप्नुयुः । स एषाऽभयवनस्थपशुमृगादिबधस्य प्राक्प्रतिषिद्धस्य प्रतिप्रसवः ॥

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
षड्विंशोऽध्यायः सूनाध्यक्षः, आदितः सप्तचत्वारिंशः ॥

प्रतिपदपञ्चिका

अध्यायप्रान्ते श्लोकमाह—दुष्टा इत्यादि, दुष्टघातुकाः पशवो महिषादयः व्यालाः व्याघ्रसिंहादयः मत्स्याश्च कुलीरशिशुमारादयः ।

अभयचारिणोऽभयवनस्थाः अन्यत्र गुप्तिस्थानेभ्यो रक्षास्थानेभ्यः खातिकादिभ्यो ग्राहाद्यनवबन्धमाप्नुयुः । तेषु त्वन्यतोऽप्यानीय यत्नतो रक्षणीयाः । अन्यत्र वध्याश्चेति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रटीकायाम् अध्यक्षप्रचारिके
द्वितीयेऽधिकरणे षड्विंशोऽध्यायः सूनाध्यक्षः,
आदितः सप्तचत्वारिंशोऽध्यायः ॥

# चतुश्चत्वारिंशं प्रकरणम्

## सप्तविंशोऽध्यायः ।

## गणिकाध्यक्षः ।

[ वेश्यास्त्रीणां स्थापनभरणयोर्विधिः ]

**गणिकाध्यक्षः गणिकान्वयामगणिकान्वयां वा रूपयौवनशिल्पसम्पन्नां सहस्रेण गणिकां कारयेत्, कुटुम्बार्धेन प्रतिगणिकाम् । निष्पतिताप्रेतयोर्दुहिता भगिनी वा कुटुम्बं भरेत । तन्माता वा प्रतिगणिकां स्थापयेत् । तासामभावे राजा हरेत् ॥**

---

श्रीमूला

गणिकाध्यक्ष इति सूत्रम् । गणिका रूपाजीवाः तासामध्यक्षः, अर्थात् तद्व्यापार उच्यत इति सूत्रार्थः । 'रूपाजीवाः स्नानशुद्धशरीराः परिवर्तितवस्त्रालङ्काराः पश्येदि'-त्युक्तम् । तदध्यक्षस्त्वनुक्त इदानीमभिधीयते ।

गणिकाध्यक्ष इति । सः, गणिकान्वयां गणिकावंशभवाम्, अगणिकान्वयां वा, वाशब्देन गणिकात्वं प्रति वंशस्याप्रयोजकत्वे सूचिते गणिकात्वप्रयोजकं धर्ममाह— रूपयौवनशिल्पसम्पन्नां सौन्दर्यतरुणिमकलाकौशलशालिनीं स्त्रियं, सहस्रेण गणिकां कारयेत् नवकुटुम्बस्थापनार्थं रूप्यसहस्रदानेन गणिकास्थाने स्थापयेत्, वक्ष्यमाणनियोगानुष्ठानाय । अयमेकगणिकास्थापनपक्षः ; अनेकगणिकास्थापनपक्षमाह—कुटुम्बार्धेनेति । कुटुम्बं गणिकाकुटुम्बकर्म राजपरिचर्यालक्षणं तस्यार्धेन अर्धमेकमनयानुष्ठेयमपरमन्ययेत्यर्धशो विभजनेन, अथवा कुटुम्बस्थापनार्थदेयद्रव्यं कुटुम्बं तस्यार्धेन अर्धशो दानेन, प्रतिगणिकां द्वितीयामपि कारयेत् । कुटुम्बार्धोक्त्या पूर्वोक्तस्य सहस्रस्याप्यर्धशो विभज्य दानं गणिकाप्रतिगणिकयोरुक्तप्रायम् ।

निष्पतितेत्यादि । निष्पतिताप्रेतयोः प्रोषिताप्रमीतयोर्गणिकयोः, दुहिता, भगिनी वा, कुटुम्बं गणिकातन्त्रं, भरेत वहेत । अर्थात् तद्धनं च हरेत । तन्माता वा प्रतिगणिकां स्थापयेत्, दुहितृभगिन्योरभावे तन्मातैव तत्स्थानेऽन्यामादिश्य तत्कार्यं कारयेत् । तासां दुहितृभगिनीप्रतिगणिकामातॄणाम्, अभावे, राजा, हरेद् गणिकाधनम् ।

[ तासां रूपवयोऽनुसारेण स्थानमानकल्पनावश्यकता ]

**सौभाग्यालङ्कारवृद्ध्या सहस्रेण वारं कनिष्ठं मध्यममुत्तमं वाऽऽरोपयेत् । छत्रभृङ्गारव्यजनशिबिकापीठिकारथेषु च विशेषार्थम् । सौभाग्यभङ्गे मातृकां कुर्यात् ॥**

---

प्रतिपदपञ्चिका

गणिकाध्यक्ष इति सूत्रम् ।

गणिका वक्ष्यमाणलक्षणाः, तासामध्यक्षो गणिकाध्यक्षः, तद्व्यापारोऽभिधीयत इति सूत्रार्थः । सम्बन्धस्तु सुरासूनाध्यक्षवद् व्याख्येयः । अथवा रूपाजीवाः स्नानशुद्धशरीराः परिवर्तितवस्त्रालङ्काराः पश्येदित्युक्तम् ।

तासामध्यक्षस्तत्प्रचारो वा नोक्तः, सोऽभिधीयत इति । तदाह—गणिकाध्यक्ष इत्यादि, स हि गणिकान्वयामगणिकान्वयां वा इत्यनेन गणिकात्वे रूपादय एव निमित्तं नान्वय इति व्याख्यातं भवति । तत्र रूपयौवने प्रतीते, शिल्पं गीतवाद्यादि वक्ष्यमाणं, तत्सम्पन्नां सहस्रेणेति कोशात् सहस्रं दत्वा सहस्रग्राहिणी गणिकेयमिति प्रसिद्ध्यर्थं गणिकां कारयेत् तत्पत्तिमाकोपयेत्, (तत्पदमारोपयेत्) ।

कुटुम्बार्थे(र्धे)न तद्विगुणोऽर्धेन विभज्य तां प्रतिगणिकां द्वितीयां स्थापयेत् । निष्पतिताप्रेतयोः देशान्तरगतमात्रयोः भगिनी दुहिता वा कुटुम्बं भरेत । तदीयतन्त्रं रिक्थं वाऽधितिष्ठेत् । माता वा तस्या इति भगिनीदुर्हित्रभावे तस्या मातैव अन्यां प्रतिगणिकां तत्स्थाने स्थापयित्वा कुटुम्बं भरेत । तासां भगिन्यादीनां मातुश्चाभावे राजा तद्रिक्थं वा हरेत् । अनेन च गणिकानां पुत्रा अदायादा इत्याख्यातं भवति ।

श्रीमूला

सौभाग्यालङ्कारवृद्ध्येति । सौभाग्यालङ्कारवृद्ध्यानुगुण्येन, सहस्रेण उपदापणसहस्रग्रहणेन, वारं नियोगं, कनिष्ठम् अधमम्, मध्यमम्, उत्तमं वा, आरोपयेद् दद्यात् तत्र कनिष्ठस्य सहस्रग्रहणे मध्यमस्य द्विसहस्रग्रहणम् उत्तमस्य त्रिसहस्रग्रहणमिति बोद्धव्यम् । किमर्थं कनिष्ठादिमारोपयेदित्यत्राह—छत्रभृङ्गारव्यजनशिबिकापीठिकारथेषु च विशेषार्थमिति । छत्रादिग्रहणादिकर्मसु अनुष्ठानप्रतिनियमार्थं, यद्वा तेषु यथायोगमनुष्ठीयमानेषु शोभोत्कर्षार्थम् । तत्रच्छत्रादिषु षट्सु मध्ये प्रथमद्विकं नियोगस्य कनिष्ठस्य द्वितीयद्विकं मध्यमस्य तृतीयद्विकमुत्तमस्येति क्रम औचित्यादवसेवः ।

सौभाग्यभङ्ग इति । रूपयौवनापगमे वार्धकनिमित्ते, मातृकां कुर्यात् तावत्कालभुक्तां मातृस्थानीयां कुर्यात्, अर्थाद् भोग्यगणिकायाः ।

[ कस्याश्चन वेश्यायाः राजदास्यनिर्मोक्षेच्छायां, तस्याः
तत्पुत्रदास्योश्च निर्मोक्षमूल्यवृत्तिकल्पनादिविधिः ]

**निष्क्रयश्चतुर्विंशतिसाहस्रो गणिकायाः। द्वादशसाहस्रो गणिकापुत्रस्य। अष्टवर्षात् प्रभृति राज्ञः कुशीलवकर्म कुर्यात्। गणिकादासी भग्नभोगा कोष्ठागारे महानसे वा कर्म कुर्यात्। अविशन्ती सपादपणम्, अवरुद्धा मासवेतनं दद्यात् ॥**

———————

प्रतिपदपञ्चिका

सौभाग्यालङ्कारवृद्धयेति करणे सप्तम्यर्थे वा तृतीया, सहस्रेणेति सहस्रं गृहीत्वा वारं नियोगं कनिष्ठमधमं, यत्र तु सहस्रेण कनिष्ठः तदा द्वाभ्यां मध्यमः, त्रिभिरुत्तम इत्यारोपयेत् दद्यात्। तत्र छत्रभृङ्गारौ कनिष्ठवारगतानां तौ च व्यजनशिबिके च मध्यमवारगतानां च ते च विकोरथौ(धौ) चोत्तमवारगतानां विशेषार्थं सौभाग्यालङ्कारयोरतिशयार्थमारोपयेदिति।

सौभाग्यभङ्गे वार्धकेन भोग्यत्वापगते मातृकां मातृस्थानीयामेनामन्यस्याः कुर्यात्।

श्रीमूला

गणिकात्वनिर्मोक्षविधिमाह—निष्क्रय इति। निष्क्रयः राजदास्यनिर्मोक्षमूल्यं, चतुर्विंशतिसाहस्रः चतुर्विंशतिसहस्रपणः, गणिकायाः। द्वादशसाहस्रो द्वादशसहस्रपणो निष्क्रयः, गणिकापुत्रस्य। निष्क्रयाभावे त्वाह—अष्टवर्षादिति। अष्टवर्षात् प्रभृति, राज्ञः, कुशीलवकर्म चारणकर्म, कुर्याद् गणिकापुत्रः।

गणिकादासीति। गणिकायाः परिचारिका, भग्नभोगा भोगार्हवयोऽतिक्रान्ता, कोष्ठागारे, महानसे वा, कर्म व्रीह्यवघातादिकं पाकपात्रमार्जनादिकं वा, कुर्यात्। अविशन्ती, कर्माकुर्वती, सपादपणं, मासवेतनं दद्याद् गणिकायै। का दद्यात्, अवरुद्धा पुरुषेण केनचिद् गृहेऽवरुध्यात्मैकभोग्यतां नीता गणिकादासी।

प्रतिपदपञ्चिका

निष्क्रयमाह-निष्क्रयश्चतुर्विंशतिसहस्रो गणिकाया इति गणिकाया राजदास्या निष्क्रयः प्रतिमोक्षणमूल्यं चतुर्विंशतिसाहस्रः, तावन्तं निष्क्रयं दत्वा स्वतन्त्रा भवति। तत्पुत्रस्य द्वादशसहस्र, तस्य निष्क्रयाभावे अष्टवर्षात्प्रभृति राज्ञः कुशीलवकर्मचारणतां कुर्यात्। गणिकाया दासी भग्नभोगा वृद्धा कोष्ठागारे कुट्टनादिकं महानसे वा रन्धनादिकर्म कारयेत्। अभग्नभोगा तु सैव अवरुद्धा नियतैकपुरुषगामिनी सपादपणं मासवेतनं गणिकायै दद्यात्। अपरे तु भग्नभोगैव यदा केनचिद् अवधृता भवति, तदा कर्मनिष्क्रयार्थं गणिकाध्यक्षाय दद्यात्।

[ वेश्याभिः स्वायव्ययादिनिर्देशावश्यकता, भूषणानां रक्षणविधिः, उद्वेजकानां दण्डश्च ]

**भोगं दायमायव्ययमायतिं च गणिकायाः निबन्धयेत् । अतिव्यकर्म च वारयेत् । मातृहस्तादन्यत्राभरणन्यासे सपादचतुष्पणो दण्डः, स्वापतेयं विक्रयमाधानं नयन्त्याः सपादपञ्चाशत्पणो दण्डः, चतुर्विंशतिपणो वाक्पारुष्ये, द्विगुणो दण्डपारुष्ये, सपादपञ्चाशत्पणः पणोऽर्धपणश्च कर्णच्छेदने ॥**

[ अतिचरतां कामुकपुरुषाणां दण्डः ]

**अकामायाः कुमार्या वा साहसे उत्तमो दण्डः, सकामायाः पूर्वः साहसदण्डः ।**

---

श्रीमूला

भोगमिति । भोगं भोक्तृपुरुषदत्तं धनं, दायं मातृक्रमागतं धनम्, आयं भोगातिरिक्तलाभम्, व्ययम्, आयतिं च प्रभावं च, गणिकायाः, निबन्धयेत् पुस्तके लेखयेद्, गणिकाध्यक्षः । अतिव्ययकर्म च, वारयेत् प्रतिषेधयेत् ।

मातृहस्तादिति । मातृहस्त्रादन्यत्र प्रियविटादिहस्ते, आभरणन्यासे आभरणानां रक्षार्थेऽर्पणे, सपादचतुष्पणो दण्डः, गणिकायाः । स्वापतेयं स्वं वस्त्रभाजनादि, विक्रयम्, आधानं वा, नयन्त्याः, सपादपञ्चाशत्पणो दण्डः ।

चतुरित्यादि । चतुर्विंशतिपणः तावन्मानो दण्डः, वाक्पारुष्ये वाचा पराक्रोशे । द्विगुणः अष्टचत्वारिंशत्पणः, दण्डपारुष्ये करपादलगुडताडनादौ । सपादपञ्चाशत्पणः, पणोऽर्धपणश्च सार्धपण इत्यर्थः, कर्णच्छेदने दण्डः । तत्राद्यो राज्ञे देयः, द्वितीयस्तु गणिकाध्यक्षाय । त एते गणिकादण्डाः ।

प्रतिपदपञ्चिका

भोगं भागीयंमपदिष्टसहस्रादिकं दायं मातृक्रमागतं रिक्थम् आयं भागीयव्यतिरिक्तलाभं व्ययं भक्तताम्बूलादिकं गणिकाया गणिकाध्यक्षो निबन्धयेत् । अतिव्ययकर्म अनुचितव्ययकारणं वारयेत् । मातृहस्तादन्यत्र आभरणन्यासे समर्पिते सपादचतुष्पणो गणिकायाः दण्डः । स्वापतेयमलङ्कारातिरिक्तं विक्रयाधानं नयन्त्यास्सपादपञ्चाशत्पणो दण्डः । चतुर्विंशतिपणो वाक्पारुष्ये दुरुक्तदोषे । द्विगुणोऽष्टचत्वारिंशत्पणोदण्डः दण्डपारुष्ये पादताडनादौ सपादपञ्चाशत्पणो राज्ञः पणार्धमर्धपणश्च, गणिकाध्यक्षस्य कर्णच्छेदने दण्डो देयः ।

श्रीमूला

अथ तत्कामुकपुरुशदण्डमाह—अकामाया इति । अकामाया इच्छारहितायाः, कुमार्याः, वाशब्दः प्रस्तावान्तरद्योतनार्थः, साहसे बलात्करणे, उत्तमो दण्डः उत्तमसाहसः । सकामायाः इच्छन्त्याः कुमार्याः, साहसे, पूर्वः साहसदण्डः ।

**गणिकामकामां रुन्धतो निष्पातयतो वा, व्रणविदारणेन वा रूपमुपघ्नतः, सहस्रं दण्डः। स्थानविशेषेण वा दण्डवृद्धिः आ निष्क्रयद्विगुणात्, पणसहस्रं वा दण्डः ।**

**प्राप्ताधिकारां गणिकां घातयतो निष्क्रयत्रिगुणो दण्डः। मातृकादुहितृकारूपदासीनां घाते उत्तमः साहसदण्डः। सर्वत्र प्रथमेऽपराधे प्रथमः; द्वितीये द्विगुणः; तृतीये त्रिगुणः; चतुर्थे यथाकामी स्यात् ॥**

---

### श्रीमूला

गणिकामिति। गणिकाम्, अकामां, रुन्धतः स्वगृहे अवरुध्य वासयतः, निष्पातयतो वा निष्पतनं निर्मोक्षणं कारयतो वा, व्रणविदारणेन वा रूपम् उपघ्नतः व्रणहेतुना दन्तनखादिक्षतेन रूपं विकारयतो वा सहस्रदण्डः। स्थानेत्यादि। स्थानविशेषेण वा शरीरगततत्तत्स्थानविशेषानुरूप्येण वा, दण्डवृद्धिः उक्तस्य सहस्रदण्डस्य वृद्धिः गुणनिका कल्पनीया। आ कुत एषा वृद्धिकल्पनेत्याह—आनिष्क्रयद्विगुणात्, निष्क्रयश्चतुर्विंशतिसाहस्रो य उक्तस्तस्य द्विगुणम् अष्टाचत्वारिंशत्साहस्रमभिव्याप्य। तदुपरि शरीरावयवोपघातनिमित्ता दण्डवृद्धिर्नास्तीत्यर्थः। स्वामी तु स्थानविशेषेण वेति प्रतीकमुपादाय व्याचष्टे—"उत्तमादिवारप्राधान्येन दण्डवृद्धिः कल्पनीया। आ कुत इत्याह—आ निष्क्रयद्विगुणादिति। निष्क्रयश्चतुर्विंशतिसाहस्रः तद्विगुणोऽष्टाचत्वारिंशत्साहस्रः" इति। आ निष्क्रयद्विगुणादित्येतदनन्तरं 'पणसहस्रं वा दण्डः' इति वाक्यम् अर्थशास्त्रादर्शेषु पठ्यते। तत्तु स्वामिटीकाभाषयोरननुसंहितत्वात् पूर्वोत्तरग्रन्थानाकाङ्क्षितत्वाच्च प्रक्षिप्तं मन्यमानैर्न व्याख्यातमस्माभिः। प्राप्ताधिकारामिति। लब्धच्छत्रभृङ्गारादिनियोगां, गणिकां, घातयतः, निष्क्रयत्रिगुणः द्वासप्ततिसाहस्रपणो, दण्डः। मातृकादुहितृकारूपदासीनां घाते कुट्टन्याः कुमार्याः प्रतिकर्मदास्या वा ताडने, उत्तमः साहसदण्डः।

सर्वत्रेति। सर्वस्मिन्, प्रथमेऽपराधे यो य उक्तस्तस्मिंस्तस्मिन्निदम्प्रथमकृतेऽपराधे, प्रथमः यो य उक्तो दण्डः स स प्रथम इत्यर्थः। द्वितीये तस्मिंस्तस्मिन्नपराधे पुनरारब्धे, द्विगुणः स स दण्डः कार्य इति शेषः। तृतीये त्रिगुणः। चतुर्थेऽपराधे, यथाकामी स्यात् चतुर्गण-सर्वस्वहरण—प्रवासनादिरूपं दण्डं स्वेच्छानुरोधेन विदध्यादित्यर्थः।

### प्रतिपदपञ्चिका

गणिकादण्डमभिधाय पुरुषस्याह-अकामाया इति। अनिच्छन्त्याः कुमार्याः गणिकादुहितुः साहसे बलात्करणे उत्तमस्साहसदण्डः सकामायास्तु पूर्वस्साहसदण्डः

[ अतिचरन्तीनां वेश्यानां तद्धनाद्यपहर्तॄणामन्येषां च दण्डः ]

**राजाज्ञया पुरुषमनभिगच्छन्ती गणिका शिफासहस्रं लभेत; पञ्चसहस्रं वा दण्डः। भोगं गृहीत्वा द्विषत्याः भोगद्विगुणो दण्डः। वसतिभोगापहारे भोगमष्टगुणं दद्यात् अन्यत्र व्याधिपुरुषदोषेभ्यः। पुरुषं घ्नत्याः चिताप्रदापोऽप्सु प्रवेशनं वा ॥**

---

प्रतिपदपञ्चिका

पञ्चधर्मस्थीयापवादो दण्डः। केचिदिह साहसं प्रकरणमाचक्षते, तच्चासत्, तद्दण्डस्याभिहितत्वात्। उक्तं हि गणिकादुहितरं प्रकुर्वतश्चतुष्पञ्चाशत्पणो दण्डः।

शुल्कं मातृबलाद्वारयतः निष्पातयतो विनाशयतो व्रणविदारणेन वा नखदशनादिक्षतेन रूपमुपघ्नतो विनाशयतः सहस्रदण्डः। स्थानविशेषेणेति उत्तमादिवारप्राधान्येन दण्डवृद्धिः कल्पनीया। कुत इत्याह—आनिष्क्रयद्विगुणादिति, निष्क्रयश्चतुर्विंशतिसाहस्रस्तद्विगुणोऽष्टचत्वारिंशत्साहस्रः।

प्राप्ताधिकारां लब्धच्छत्रादिनियोगां गणिकां घातयतो निष्क्रयत्रिगुणो दण्डः।

मातृकाकुट्टनी दुहितृका तस्या एव कुमारिका रूपदासी गन्धमालादिकर्मकरी तासामेकां घातयतः उत्तमस्साहसदण्डः। सर्वत्रेति। यो यस्मिन् अपराधे दण्डः अभिहितः, सः प्रथमेऽपराधे कर्तव्यः, द्वितीये द्विगुणः, तृतीये त्रिगुणः। चतुर्गुणसर्वस्ववधादियोजनीयस्साहस्रः गौरवादिति।

श्रीमूला

राजाज्ञयेति। राजाज्ञानुरोधेन, पुरुषमनभिगच्छन्ती, गणिका, शिफासहस्रं कशाघातसहस्रम्, दण्डं लभेत। पञ्चसहस्रं वा दण्डः शिफासहस्राभावपक्षे पञ्चसहस्रपणात्मको दण्डः।

भोगमिति। भोगं सम्भोगवेतनं, गृहीत्वा द्विषत्याः भोगदं पुरुषमरोचयमानायाः, भोगद्विगुणो दण्डः। वसतीत्यादि। वसतिभोगापहारे वसतिभोगस्य रात्रिसम्भोगस्य अपहारे कथादिव्याजेन कालयापने, भोगं सम्भोगवेतनं गृहीतम्, अष्टगुणं दद्यात्। तत्रापवादः—अन्यत्र व्याधिपुरुषदोषेभ्य इति। व्याधयः कुष्ठादयः पुरुषदोषा अरागत्वादयः तद्व्यतिरेकेण।

पुरुषमिति। पुरुषं घ्नत्याः मारयन्त्याः, चिताप्रतापः तेनैव सह चितायामारोप्य दहनम्, अप्सु प्रवेशनं वा गलमहाशिलाबन्धेन जलनिमज्जनं वा कर्तव्यम्।

प्रतिपदपञ्चिका

राजाज्ञया राजादेशेन पुरुषमगच्छन्ती गणिका शिफासहस्रं कशाप्रहारसहस्रं दण्डं लभेत। भोगं गृहीत्वा भोगदण्डं पुरुषं द्विषन्त्याः तमनिच्छन्त्याः दण्डः। वसति भोगापहारे

**गणिकाभरणम् अर्थं भोगं वाऽपहरतोऽष्टगुणो दण्डः । गणिका भोगम् आयतिं पुरुषं च निवेदयेत् ॥**

[ उक्तार्थानां नटादिष्वप्यतिदेशः, नटादिभिर्देया राजभागाश्च ]

**एतेन नटनर्तकगायकवादकवाग्जीवनकुशीलवप्लवकसौभिकचारणानां स्त्रीव्यवहारिणां स्त्रियो गूढाजीवाश्च व्याख्याताः । तेषां तूर्यमागन्तुकं पञ्चपणं प्रेक्षावेतनं दद्यात् । रूपाजीवा भोगद्वयगुणं मासं दद्युः ॥**

---

प्रतिपदपञ्चिका

वसत्यां भोगरात्रौ वासगृहे वा भोगापहारे अनुपचारणे कथादिव्याजेन कालातिगमने वा भोगमष्टगुणं दद्यात् । अन्यत्र व्याधिपुरुषदोषेभ्य इति । व्याधिभ्यः कुष्ठप्रमेहादिभ्यः पुरुषदोषेभ्यश्चारागत्वादसह्यं दन्तनखप्रहारादिभ्यश्च । पुरुषवधे गणिकायाश्चिताप्रताप इति, तेनैव सह दहनमप्सु निमज्जनं वा महाशिलां गले बध्वा ऽधोनयनम् । गणिकाभरणमलङ्कारमर्थं तद्व्यतिरिक्तं वस्तु हिरण्यादिकं भोगं वसतिवेतनं वा अपहरतः कामुकस्याष्टगुणं दण्डं कुर्यात् ।

श्रीमूला

गणिकाभरणमिति । गणिकाया आभरणम्, अर्थं तदन्यद् वा वस्तु, भोगं वा सम्भोगवेतनं वा, अपहरतः, अष्टगुणः अपहृतद्रव्याष्टगुणः, दण्डः । गणिकेति । सा, भोगम् आयतिं तन्मूलमायम्, पुरुषं च कृतवासम्, निवेदयेत् ।

एतेनेति । उक्तेन गणिकाकल्पेन, नटादीनां दशानां, स्त्रियः, गूढाजीवाश्च प्रच्छन्नव्यभिचारजीविन्यश्च, व्याख्याताः उक्ताः, त एते गणिकाविषय एव यथासम्भवामासु योजनीया इत्यर्थः । तत्र नटा अर्थाभिनयजीविनः, नर्तकाः गात्रविक्षेपमात्रकारिणः, गायका कण्ठगायिनः, वादकाः वैणिकादयः, वाग्जीवनाः कथकाः, कुशीलवा नर्तकीप्रधानाः, प्लवका रज्ज्वारोहकाः, सौभिका 'ऐन्द्रजालिकाः छायाग्राहका इत्यपरे' इति स्वामी, चारणाः विटमल्लादयः, स्त्रीव्यवहारिणो बन्धकीकुटुम्बिनः । चारणानां स्त्रीव्यवहारिणामिति व्यस्तपाठोऽपि ।

तेषामिति । तेषां, तूर्यं नटनर्तकादिमेलकम्, आगन्तुकं विदेशादागतं, पञ्चपणं प्रेक्षावेतनं स्वकलाप्रकाशनार्थं वेतनं, दद्याद् राज्ञे ।

रूपाजीवा इति । गणिकाः, भोगद्वयगुणं दिवसद्वयलाभं, मासं मासद्वयं, दद्युः ।

प्रतिपदपञ्चिका

गणिकाभोगं पुरुषं चेति । वसत्यां भोगं भोगनिमित्तामायतिं पुरुषं वसन्तं च पुरुषं गणिकाध्यक्षस्य निवेदयेत् रक्षाविधानार्थम् ।

[ कलापाठकानाम् अभ्यस्तकलानां गणिकादीनां च सौकर्यपरिकल्पनम् ]

**गीतवाद्यपाठ्यनृत्तनाट्याक्षरचित्रवीणावेणुमृदङ्गपरचित्तज्ञानगन्धमाल्यसंयूहनसम्पादनसंवाहनवैशिककलाज्ञानानि गणिकाः दासीः रङ्गोपजीविनीश्च ग्राहयतो राजमण्डलादाजीवं कुर्यात् । गणिकापुत्रान् रङ्गोपजीविनश्च मुख्यान्निष्पादयेयुः सर्वतालावचराणां च ॥**

---

### प्रतिपदपञ्चिका

एतेनेति । गणिकाकल्पेन यथोक्ते नटादीनां स्त्रियो गूढाजीवा छन्नबन्धक्यो यथायोगं व्याख्याताः । तासामपि मातृहस्तादन्यत्राभरणन्यासे सपादचतुष्पणो दण्ड इत्यादयो यथासम्भवं योज्याः ।

तत्र नटनर्तकाः प्रतीताः वाग्जीवनाः कथकचारणादयः, कुशीलवाः नर्तकीप्रधानाः प्लवकाः परत्रारोहकाःसौभिकाः ऐन्द्रजालिकाः छायाग्राहका इत्यपरे, चारणाषिड्गदूत-धूर्तादयः स्त्रीव्यवहारिणो बन्धकीपोषकाः तेषां तूर्य नगादिपेटकमागन्तुकमन्यदेशागतं प्रेक्षामूल्यं पञ्चपणं दद्यात् । रूपाजीवाः सर्वा वेश्या भोगद्वयं दिवसद्वयं लाभं मासस्यं दद्युः ।

### श्रीमूला

गीतवाद्येत्यादि । गीतादीनां कालान्तानां षोडशानां ज्ञानानि, गणिकाः पूर्वोक्ताः दासीरङ्गोपजीविनीश्च दासीर्गणिकातिरिक्तवेश्याः रङ्गोपजीविनीर्नटादिस्त्रियश्च, ग्राहयतः शिक्षयत आचार्यस्य राजमण्डलाद् राज्ञो यन्मण्डलं नगरग्रामादिसमूहोत्थमायजातं तत्सकाशाद्, आजीवं वृत्ति, कुर्यात् कल्पयेद् राजा । तत्र गीतवाद्ये प्रसिद्धे, पाठ्यमाख्यायिकादि, नृत्तं पदार्थाभिनयः, नाट्यं वाक्यार्थाभिनयः, अक्षरं लिपिः, चित्रम् आलेख्यकर्म, वीणा वेणुर्मृदङ्गश्च प्रसिद्धाः, परचित्तज्ञानं परेङ्गिताकारवेदनं, गन्धमाल्यसंयूहनसम्पादने गन्धसंयूहनं गन्धयुक्तिः, माल्यसम्पादनं माल्यगुम्फनं, संवाहनमङ्गमर्दनं, वैशिकं दत्तकाचार्यादितन्त्रं, कलाः उक्तातिरिक्ताश्चतुष्षष्ट्यन्तर्गताः कलाविद्याः ।

गणिकेत्यादि । गणिकापुत्रान्, रङ्गोपजीविनश्च, मुख्यान् निष्पादयेयुः प्रधानान् आचार्यादिस्थानीयान् कुर्युः । केषां, सर्वतालावचराणां च सर्वेषामपि रङ्गोपजीविनाम् ।

### प्रतिपदपञ्चिका

गीतवाद्येत्यादि । तत्र गीतवाद्ये प्रतीते । पाठ्यमाख्याख्यायिकादि,नृत्तं नर्तकीप्रयोज्यम् अक्षराणि लिपयश्चित्रमालेख्यं वीणावेणू प्रतीतौ, तयोश्च वाद्यग्रहणेन गृहीतत्वात् प्राधान्यज्ञापनार्थं पुनरुपादानम् । परचित्ताज्ञानमिङ्गिताकारवेदनं, गन्धसंयूहनं

[ नट्यादिस्त्रीवशीकरणावश्यकता ]

**संज्ञाभाषान्तरज्ञाश्च स्त्रियस्तेषामनात्मसु ।**
**चारघातप्रमादार्थं प्रयोज्या बन्धुवाहनाः ॥१९८॥**

इत्यध्यक्षप्रचारे गणिकाध्यक्षः, सप्तविंशोऽध्यायः,
आदितोऽष्टचत्वारिंशः ।

---

### प्रतिपदपञ्चिका

गन्धयुक्तिः माल्ययूहनं माल्यग्रथनं संवाहनमङ्गमर्दनं संवादनं प्रियवचनरचनाचातुर्यं वैशिकं दत्तकादिकामतन्त्रज्ञानं कलाज्ञानमुक्तव्यतिरिक्तशयनोपचारादिककलाविद्यासु वैदग्ध्यम्, केचित्तु वैशिककलाज्ञानमित्येकमेव पठन्तो बाह्यान्तष्चतुरषष्टिकलापरिज्ञानमाचक्षते। ज्ञानशब्दः प्रत्येकम्, गणिका व्याख्याताः । दासीः शेषवेश्याः रङ्गोपजीजीविनः नटादिस्त्रियश्च, चस्समुच्चये, ग्राहयतस्तत्तदाचार्यस्य राजमण्डलादाजीवं वृत्तिं कारयेत् । गणिकापुत्रा रङ्गोपजीविनो नटादयः तेषां मुख्यान्नायकपात्राणि नाट्याचार्यान्निष्पादयेयुः सर्वतालापचारांश्चेति वक्ष्यमाणेन श्लोकेन सह सम्बन्धः ।

### श्रीमूला

प्रान्ते श्लोकमाह—संज्ञेत्यादि । संज्ञाभाषान्तरज्ञाः सङ्केतविशेषज्ञाः भाषाविशेषज्ञाश्च, तेषां तालावचराणां, स्त्रियः, अनात्मसु अजितेन्द्रियेषु दूष्येषु, चारघातप्रमादार्थं चाराणां परप्रयुक्तगूढपुरुषाणां घातार्थं रहोविस्रम्भवधार्थं च विषयासक्तिजननेन स्वकर्तव्योपेक्षोत्पादनार्थं च, प्रयोज्याः विधेयीकृत्य प्रयोक्तव्याः राज्ञा । विधेयत्वार्थमाह—बन्धुवाहना इति । बन्धुभिरर्थदानशीकृतैर्वाह्यमाना यथाराजादेशं नीयमानाः ।

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
सप्तविंशोऽध्यायः गणिकाध्यक्षः, आदितोऽष्टाचत्वारिंशः ॥

### प्रतिपदपञ्चिका

राज्ञः सङ्केतविशेषविदः भाषान्तरज्ञाः भाषाविशेषज्ञाः स्त्रियः तेषां नटादीनां सम्बन्धिन्यः अनात्मस्वजितेन्द्रियेषु चारघातार्थं तदुपलब्धपरप्रयुक्तगूढपुरुषमप्रयोज्याः प्रयोक्तव्याः बन्धुबान्धवाः अर्घादिनोपगृहीततदासबन्धुवर्गवशीकृता इति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रटीकायां अध्यक्षप्रचारिके
द्वितीयेऽधिकरणे सप्तविंशोऽध्यायः गणिकाऽध्यक्षः ।
अदितस्सप्तचत्वारिंशोऽध्यायः ॥

# पञ्चचत्वारिंशं प्रकरणम्

## अष्टाविंशोऽध्यायः ।

### नावध्यक्षः ।

[ नावध्यक्षव्यवस्थापनीयाः तरपण्यराजदेयादयः ]

**नावध्यक्षः समुद्रसंयाननदीमुखतरप्रचारान् देवसरोविसरोनदीतरांश्च स्थानीयादिष्ववेक्षेत । तद्वेलाकूलग्रामाः क्लृप्तं दद्युः । मत्स्यबन्धका नौकाभाटकं षड्भागं दद्युः । पत्तनानुवृत्तं शुल्कभागं वणिजो दद्युः । यात्रावेतनं राजनौभिः सम्पतन्तः । शङ्खमुक्ताग्राहिणो नौभाटकान् दद्युः, स्वनौभिर्वा तरेयुः । अध्यक्षश्चैषां खन्यध्यक्षेण व्याख्यातः ॥**

---

श्रीमूला

नावध्यक्ष इति सूत्रम् । नावां यानपात्राणाम् अध्यक्ष आदेयभागाधिकृत इत्यर्थः । समाहर्तृकर्मण्यात्मरक्षितके च नावोऽभिहिताः । तदध्यक्षस्त्वनुक्त इहाभिधीयते ।

नावध्यक्ष इति । सः, समुद्रसंयाननदीमुखतरप्रचारान् समुद्रकूलसमीपयानस्य नदीसमुद्रसङ्गमतरणस्य च मार्गान्, देवसरोविसरोनदीतरांश्च देवसरः सदाजलसमृद्धं महासरः, विसरः शोष्यसरः, नदी प्रसिद्धा, एषां तरणमार्गांश्च स्थानीयादिषु स्थानीयद्रोणमुखखार्वटिकसङ्ग्रहग्रामेषु, अवेक्षेत ।

तद्वेलेत्यादि । तद्वेलाकूलग्रामाः समुद्रतटमहासरःप्रभृतितीरवर्तिग्रामवासिनः, क्लृप्तं कल्पितं किमपि तरणार्थं राजादेयं, दद्युः नौत्यापारसततोपयोगात् । तदभावान्नान्ये जानपदास्तद् दद्युः ।

मत्स्येत्यादि । मत्स्यबन्धका दाशाः, नौकाभाटकं राजकीयाया नौकाया अवक्रयं, षड्भागं मत्स्यषष्ठभागं, दद्युः । पत्तनानुवृत्तं पण्यपत्तनसिद्धं, शुल्कभागं शुल्कार्थं भागं पण्यमूल्यस्य पञ्चमभागं षष्ठभागं वा, वणिजः, दद्युः । शुल्काध्यक्षग्राह्य एवायं शुल्कभाग इहोक्तः, तदतिरिक्तप्रार्थना नावध्यक्षेण मा कारीत्येतदर्थम् । यात्रावेतनं, राजनौभिः, सम्पतन्तः गतागतं कुर्वन्तः, दद्युर्यथाप्रसिद्धम् । शङ्खमुक्ताग्राहिणः नौभाटकं दद्युः, विशेषाकथनाद् उक्तमत्स्यबन्धकवत् षड्भागम् । स्वनौभिर्वा तरेयुः । एषां स्वनौतरणाभ्यनुज्ञानान्मत्स्यबन्धानां स्वनौतरणप्रतिषेधो गम्यते । नौहाटकमित्यपपाठः । नौविभागमिति तु व्याख्यापाठः ।

[ पालनीयाः अनुग्राह्याः ध्वंसनीयाश्च नावः ]

**पत्तनाध्यक्षनिबन्धं पण्यपत्तनचारित्रं नावध्यक्षः पालयेत् । मूढ-**

---

श्रीमूला

अध्यक्षश्चेति । नावध्यक्षस्य, एषां शङ्खादीनाम् विषये, खन्यध्यक्षेण व्याख्यातः खन्यध्यक्षवद् भाटकलब्धशङ्खादीनां कर्मान्तान् पण्यव्यवहारं च नावध्यक्षः कारयेदित्यर्थः ।

प्रतिपदपञ्चिका

नावध्यक्ष इति सूत्रम् ।

नावो यानपात्राणि तेषामादेयभागकादिप्रतिजागरणाधिकारी नावध्यक्ष इति सूत्रार्थः। सम्बन्धस्तु समाहर्तृकर्मणि राष्ट्रान्तर्गतं नदीपालास्तारा नावो वा इति आत्मरक्षिके चानाप्तनाविकाधिष्ठितामन्येन प्रतिबद्धामिति नाव उक्तास्तदध्यक्षस्तु-नोक्तः, सोऽभिधीयत इति ।

तमाह—नावध्यक्ष इत्यादि । स समुद्रसंयानादितीरप्रचारान् स्थानीया-दिष्ववेक्षेत प्रतिजागृयात् । तत्र समुद्रयानं कूलसमीपेन गमनं समुद्रवर्जन्यायात् ग्राह्यम्, नदीमुखं नदीसमुद्रसङ्गमः, तेषां तीरप्रचारान् तरणमार्गान् देवसरस्सदाविशोष्यं महासरो विसरस्तद्विपरीतं नदीतराश्च मुखव्यतिरेकेण सर्वनदीनां, चस्समुच्चये, स्थानीयादिषु स्थानीयद्रोणमुखखार्वटिकसङ्ग्रहग्रामेष्ववेक्षत । तद्वेला कूलग्रामा इति समुद्रादितीरनिवासग्रामाः । क्लृप्तमिति, किंचिदुचितपरिकल्पितं दद्युः, नान्य-जानपदं सामान्यं, तेषां नौव्यापारेण सदोपयोगात् मत्स्यबन्धा धीवराः नौविभावकं राजनावमक्रयं षड्भागं बन्धमत्स्यानां दद्युः ।

पत्तनानुवृत्तमिति । पण्यपत्तनं प्रसिद्धम्, शुल्कभागमिति । शुल्कनिमित्तं भागं पण्यमूल्यात् पञ्चमं षष्ठं वा यथाप्रतिष्ठं वणिजः पण्यविक्रयिणो दद्युः । नन्वयं शुल्काध्यक्षव्यापार इति चेत् सत्यम्, तदधिकप्रार्थना नावध्यक्षेण निवारणीयेति तदर्थमिह वचनम् ।

यात्रावेतनं चेति । लुप्तनिर्दिष्टश्चकारो द्रष्टव्यः । गत्यास्समभागकं च राजनौभि-स्सम्पतन्तः पत्तनानुवृत्तमेव दद्युः । शङ्खमुक्ताग्राहिणस्तु नौविभागकं मत्स्यबन्धकवत् भागं दद्युरिति केचित् । देयभागस्य अनिर्देशात् पूर्ववद् यथाप्रसिद्धं स्वपरिकल्पितं वा दद्युरित्यपरे । स्वनौभिर्वा तरेयुरमी शङ्खमुक्ताग्राहिणः मत्स्यवन्धकास्तु राजनौभिरेव । अध्यक्षश्चैषां शङ्खादीनां खन्यध्यक्षेण व्याख्यात इति । यथा खन्यध्यक्षश्शङ्खादि-कर्मान्तान् कारयति, तथा नावध्यक्षोऽपि तद्भागकाद्यधिगतानां शङ्खादीनां तान् कर्मान्तान् पण्यव्यवहारांश्च कारयेत् ।

श्रीमूला

पत्तनेत्यादि । पत्तनाध्यक्षनिबन्धं पत्तनाध्यक्षप्रतिष्ठापितं, पण्यपत्तनचारित्रं पण्यपत्तनाचारं, नावध्यक्षः, पालयेत् नातिवर्तेत ।

**वाताहतां तां पितेवानुगृह्णीयात् । उदकप्राप्तं पण्यमशुल्कमर्धशुल्कं वा कुर्यात् । यथानिर्दिष्टाश्चैताः पण्यपत्तनयात्राकालेषु प्रेषयेत् । संयान्तीर्नावः क्षेत्रानुगताः शुल्कं याचेत । हिंस्रिकाः निर्घातयेत्, अमित्रविषयातिगाः पण्यपत्तनचारित्रोपघातिकाश्च ।**

[ पात्रकालादिव्यवस्थया सनियन्त्रणं नौप्रवर्तनं
नियमोल्लङ्घिनां दण्डस्तदपवादश्च ]

**शासकनियामकदात्ररश्मिग्राहकोत्सेचकाधिष्ठिताश्च महानावो हेमन्त-**

---

श्रीमूला

मूढवाताहतामिति । दिङ्मोहापयातां वाताहतां विपरीतवाताकुलितां च, तां नावं, पितेव, अनुगृह्णीयात् तारयेत् । उदकप्राप्तं जलदूषितं, पण्यम्, अशुल्कम्, अर्धशुल्कं वा, कुर्यात् तच्छेदानुरूप्येण ।

यथानिर्दिष्टाश्चेति । अशुल्का अर्धशुल्का वा, एता नावः, पण्यपत्तनयात्राकालेषु, प्रेषयेद् असङ्गं विसृजेत् । संयान्तीर्गच्छन्तीः, नावः, क्षेत्रानुगताः शुल्कस्थानगताः, शुल्कं याचेत । इह शुल्कस्य याचनं न वक्तव्यं सिद्धत्वात्, तदिहोच्यते शुल्कतोऽधिकं मा याचीत्युपदेशार्थम् । हिंस्रिकाः हिंस्राश्चोरादयः तद्वतीः, नावः, निर्घातयेत् । अमित्रविषयातिगाः शत्रुदेशयायिनीः, पण्यपत्तनचारित्रोपघातिकाश्च नावः, निर्घातयेत् ।

प्रतिपदपञ्चिका

पत्तनाध्यक्षनिबन्धनं तेन प्रतिष्ठानीतं पण्यपत्तनं चरित्रं तदाचारं नावाध्यक्षः पालयेत् ।

मूढवाताहतामिति । मूढा दिङ्मोहादपयातानां वाताहतामनिष्टवातेन अनभिप्रेता तद्द्वीपमायातां नावं पितेवानुगृह्णीयात् । अन्येषामपि अनुरागार्थम् उदकप्राप्तं समुद्रोदकमिति दूषितं पण्यमशुल्कं शुल्करहितमर्धशुल्कं वा दद्युः ।

चरित्रे परे प्रसिद्धार्धानां शुल्कं वा कुर्यात् । तिमित पण्यश्चेदुपेक्षया विकल्पः, यथा निर्दिष्टाश्चैता इति उच्छुल्का अर्धशुल्का वैता नावः पण्यपत्तनयात्राकालेषु यो यस्य पत्तनस्य यात्राकालस्तस्मिन् विसृजेत् न विघातयेत् ।

संयान्तीरिति । संयान्तीरतिक्रान्ता वा नावः क्षेत्रानुगता स्वतीरशुल्कगोचरप्राप्ताः शुल्कं याचेत शुल्कग्रहणमधिकनिवृत्त्यर्थम् । हिंस्रिकास्तस्करनावा निर्घातयेत् प्रतिनौभिरुच्छिन्द्यात् अमित्रविषयातिगाः शत्रुविषयाभिगामिनः पण्यपत्तनचारित्रोपघातिकाश्च नयेदिति वर्तते ।

श्रीमूला

शासकेत्यादि । शासकादिपञ्चकाधिष्ठिताश्च शासको निदेष्टा नियामकः पोत-

**ग्रीष्मतार्यासु महानदीषु प्रयोजयेत् । क्षुद्रिकाः क्षुद्रिकासु वर्षास्राविणीषु । बद्धतीर्थाश्चैताः कार्याः राजद्विष्टकारिणां तरणभयात् । अकालेऽतीर्थे च तरतः पूर्वः साहसदण्डः । काले तीर्थे च अनिसृष्टतारिणः पादोनसप्तविंशतिपणः तरात्ययः । कैवर्तकाष्ठतृणभारपुष्पफलवाटषण्डगोपालकानामनत्ययः सम्भाव्यदूतानुपातिनां च सेनाभाण्डप्रचारप्रयोगाणां च; स्वतरणैस्तरतां, बीजभक्तद्रव्योपस्करांश्चानूपग्रामाणां तारयताम् ।**

---

श्रीमूला

वाहः दात्रग्राहको लवित्रग्राही रश्मिग्राहकः प्रग्रहग्राही उत्सेचकः प्रविशज्जलापनेता एतैरपायप्रतिविधायिभिरध्यासिताश्च, महानावः, हेमन्तग्रीष्मतार्यासु अवर्षाकालेऽपि नौतरणीयासु, महानदीषु सिन्धुसरयूप्रभृतिषु, प्रयोजयेत् । क्षुद्रिकाः क्षुद्रनावः, क्षुद्रिकासु वर्षास्राविणीषु वर्षाकालमात्रतरणीयजलासु कुनदीषु, प्रयोजयेदिति वर्तते ।

बद्धेत्यादि । बद्धतीर्थाश्च बद्धाः संयताः सनियन्त्रणाः कृतारक्षा इति यावत् । तीर्था अवतारा यासां तास्तथाभूताः, एताः नावः, कार्याः । कुतः, राजद्विष्टकारिणां शत्रुप्रयुक्ततीक्ष्णरसदादीनां, तरणभयात् ।

नियन्त्रणविधिमाह—अकाल इति । अकाले निशीथादौ, अतीर्थे अघट्टे च तरतः पूर्वः साहसदण्डः । काले तीर्थे च, अनिसृष्टतारिणः अननुज्ञातस्य तरतः, पादोनसप्तविंशतिपणः, तरात्ययः तरणदण्डः ।

तरणदण्डापवादमाह—कैवर्तेत्यादि । कैवर्तादीनां कैवर्तानां धीवराणां काष्ठवाहिनां तृणवाहिनां पुष्पवाटपालकानां फलवाटपालकानां षण्डपालकानां गोपालकानां च, अनत्ययः अदण्डः । सम्भाव्यदूतानुपातिनां च सम्भाव्यम् अनुपतनीयतया शङ्कितं चोरादिमनुपततां दूतं राजदूतं कार्यशेषार्थमनुपततां च, अनत्यय इत्यनुषज्यते । सेनाभाण्डचारप्रयोगाणां च सेनोपकरणगूढपुरुषप्रयोगाणां च, अनत्ययः । स्वतरणैः स्वकीयैस्तरणसाधनैः बाह्वलाबूभस्त्रादिभिः, तरतां, बीजभक्तद्रव्योपस्करांश्च बीजं वापार्थं भक्तं कर्मकराशनं द्रव्यं पुष्पफलशाकादि उपस्करः वेशवारः इत्येतांश्च, अनूपग्रामाणां जलप्रचुरदेशसन्निविष्टग्रामवासिनां, तारयताम् अनत्ययः ।

प्रतिपदपञ्चिका

शासको निधाता नियामकः सर्वमार्गाभिज्ञः दातृग्राहको दोषग्राहको रश्मिग्राहकः कर्णधार उत्सेचनको विप्रविष्टजपापनायां इत्येवमेतैरधिष्ठिता महानावो हेमन्तग्रीष्मतार्यासु तस्मिन्नपि काले नाव्यप्रहारासु महानदीषु सिन्धुसरस्वत्यादिषु प्रयोजयेत् अपायपरिहारार्थम् । क्षुद्रिकासु लघुनदीषु वर्षास्राविणीषु श्रावणभाद्रपदतार्यासु क्षुद्रिकाः लघुनावः क्षुद्रिकाग्रहणं च कोटिमकतरण्डकाद्युपलक्षणार्थम् । बन्धतीर्थाः सारतीर्थाश्चैता

**ब्राह्मणप्रव्रजितबालवृद्धव्याधितशासनहरगर्भिण्यो नावध्यक्षमुद्राभिस्तरेयुः ॥**

[ परदेशादागन्तॄणां व्यवस्थाः, अपराधिनां बन्धनविधिः, अपराधिचिह्नानि च ]

**कृतप्रवेशाः पारविषयिकाः सार्थप्रमाणा वा विशेयुः । परस्य भार्यां कन्यां वित्तं वाऽपहरन्तं शङ्कितमाविग्नमुद्भाण्डीकृतं महाभाण्डेन मूर्ध्नि भारेणाऽवच्छादयन्तं सद्योगृहीतलिङ्गिनम् अलिङ्गनं वा प्रव्रजितम् अलक्ष्यव्याधितं भयविकारिणं गूढसारभाण्डशासनशस्त्राग्नियोगं विषहस्तं दीर्घपथिकममुद्रं चोपग्राहयेत् ॥**

---

प्रतिपदपञ्चिका

नदीः कारयेत् । कस्मादित्याह राजद्विष्टकारिणां परप्रयुक्ततीक्ष्णरसदादीनां तरणभयात् । अकाले अर्धरात्रादौ अतीर्थे च प्रसिद्धमार्गादन्यत्र तरतः पूर्वस्साहसदण्डः । काले दिवा तीर्थे प्रसिद्धेऽप्यनिसृष्टकारिणोऽनुज्ञातस्य गच्छतः पादोनसप्तविंशतिपणस्तरात्ययः तरणनिमित्तो दण्डः । कैवर्तकानां च तीर्थे अकालेऽपि स्वव्यापारार्थं तरताम् अनत्ययः । सम्भाव्यानुपातिनां तस्करापहृतान्वेषणायानुपातिनां दूतानुपातिनां कार्यशेषेण राजदूतमनुप्रेषितानां सेनाभाण्डप्रचारप्रयोगाणां च राजप्रहितचारपुरुषाणां स्वतरणैरलाबुद्धृतिगण्डिकादिभिस्तरतामनत्ययः (तरात्यय) इति वर्तते । बीजं क्षेत्रावापार्थं भक्तं कृषिपशुपालाद्यशनं द्रव्याणि पुष्पफलशाकगोरसादीनि उपस्कराणां स्वतैरस्तारयतां स्वयं च तरतामनत्ययः ।

श्रीमूला

आतराप्रदानेन नावध्यक्षमुद्रामात्रं गृहीत्वा ये तरणार्हा जनास्तानाह—ब्राह्मणेत्यादि । सुगमम् ।

प्रतिपदपञ्चिका

ब्राह्मणादयः प्रतीताः ते नावाध्यक्षे मुद्राभिगृहीततदीयमुद्राभिस्तरेयुः न वेतनं दद्युः ।

श्रीमूला

कृतप्रवेशा इति । कृतप्रवेशा अभ्यनुज्ञातप्रवेशाः, पारविषयिकाः परदेशागताः, सार्थप्रमाणा वा अननुज्ञातप्रवेशत्वेऽपि अनुज्ञातसार्थाधिष्ठातृका वा, विशेयुः, नृपस्य देशम् ।

परस्येति । परस्य भार्यां कन्यां वित्तं वा अपहरन्तम्, उपग्राहयेत् शङ्कितत्वादिलिङ्गैर्वक्ष्यमाणैरनुमाय बन्धयेत् । तत्र शङ्कितं चकितचारिणम्, आविग्नं सम्भ्रान्तम्

[ देशकालादिभेदेन द्रव्यभेदेन च तरपण्यविधिः ]

**क्षुद्रपशुर्मनुष्यश्च सभारो माषकं दद्यात्। शिरोभारः कायभारो गवाश्वं च द्वौ। उष्ट्रमहिषं चतुरः। पञ्च लघुयानम्। षट् गोलिङ्गम्। सप्त शकटम्। पण्यभारः पादम्। तेन भाण्डभारो व्याख्यातः। द्विगुणो महानदीषु तरः। क्लृप्तमानूपग्रामा भक्तवेतनं दद्युः। प्रत्यन्तेषु तराः शुल्कमातिवाहिकं वर्तनीं च गृह्णीयुः। निर्गच्छतश्चाऽमुद्रस्य भाण्डं हरेयुः। अतिभारेणाऽवेलायामतीर्थे तरतश्च।**

---

श्रीमूला

उद्भ्राण्डीकृतं समधिकभाण्डभारवाहिनं, महाभाण्डेन मूर्ध्नि भारेणावच्छादयन्तं बृहदाकृतिना पलालादिभारेण शिरसि कृतेनावृत्तप्रायमुखं, सद्योगृहीतलिङ्गिनं प्रव्रजितं तत्कालकलितपरिव्राजकचिह्नम्, अलिङ्गिनं वा प्रव्रजितं सद्यःपरित्यक्तपरिव्राजकचिह्नं वा, अलक्ष्यव्याधितं व्याधितव्यपदेशिनमदृष्टव्याधिचिह्नं, भयविकारिणं वदनश्वेतीभावादिभयचिह्नयुक्तं, गूढसारभाण्डशासनशस्त्राग्नियोगं गूढसारभाण्डं गूढरत्नादिद्रव्यं गूढशासनं गूढलेखं गूढशस्त्रं गूढायुधं गूढाग्नियोगं गूढोऽग्नियोगः औपनिषदवक्ष्यमाणनिष्प्रतीकाराद्यग्नियोगद्रव्यं यस्य तं तथाभूतं च, विषहस्तं, दीर्घपथिकं दूराध्वगमनश्रान्तम्, अमुद्रम् अन्तपालमुद्रारहितं च उपग्राहयेत्।

प्रतिपदपञ्चिका

कृतप्रवेशाः प्रविष्टपूर्वा अनुमतप्रवेशाः पारविषयिकाः परविषयादागताः सार्वप्रमाणाः अकृतप्रवेशा अपि कृतप्रवेशसार्था विदितविशेषत्वात् विजिगीषुदेशं प्रविशेयुः।

परस्य भार्यादीनपहरन्तं वक्ष्यमाणलक्षणैर्लिङ्गैर्ज्ञात्वा ग्राहयेत्। तान्याह—शङ्कितमित्यादि। शङ्कितं स्वदोषचरितम् आविग्नम् उत्तरलम् उद्भ्राण्डीकृतम् उद्वाहितभाण्डभारविसंस्थूलम् अभाण्डेन पलालभारादिभारेण वा दुर्बुद्धवोट्टलादिना मूर्ध्नि शिरसि निवातेन प्रत्यभिज्ञायमानं वाऽऽच्छादयन्तं सद्यस्तदानीमेव गृहीतलिङ्गं कृतप्रव्रजितरूपमलिङ्गिनमप्रव्रजितलिङ्गं वा परित्यक्तलिङ्गं प्रव्रजितं परिव्राजकादीनाम् अन्यतमम् अलक्ष्यव्याधिं कृतरोगिव्यपदेशमलक्षितलिङ्गम् भयविकारिणं शुल्कश्यावरक्तादिभयलिङ्गसहितम्। गूढेत्यादि, सारभाण्डं रत्नसुवर्णादि शासनं लेखं शस्त्रंक्षुरिकादि अग्नियोगो निष्प्रतीकाराग्नियोगद्रव्याणि, गूढशब्दः प्रत्येकम्, विषहस्तं गृहीतवत् सनाभादिविषं दीर्घपथिकं दूराध्वानगमनखिन्नम् अमुद्रमगृहीतान्तपालमुद्रं च कारयेत् चकारात् कृतकूटमुद्रं च उपग्राहयेत् बध्नीयात्।

श्रीमूला

तरवेतनविधिमाह—क्षुद्रेत्यादि। क्षुद्रपशुः अजादिः, मनुष्यश्च सभारः कर-

## श्रीमूला

गृहीतभारः, माषकं दद्यात् । शिरोभारः शिरोधार्यो भारः, कायभारः स्कन्धधार्यः, गवाश्वं च गौश्चाश्वश्च, द्वौ माषौ, दद्यादिति सम्बध्यते । उष्ट्रमहिषम् उष्ट्रश्च महिषश्च, चतुरः माषकान्, दद्यात् । पञ्च लघुयानं लघुगन्त्री पञ्च माषकान् दद्यात् । षड् गोलिङ्गं मध्यमगन्त्री षट् माषान् दद्यात् । सप्त शकटम् दद्यात् । पण्यभारः पण्यानां तुलाविंशतिः, पादं पणचतुर्भागं, दद्यात् ।

तेनेति । तेन पण्यभारवेतनकथनेन, भाण्डभारो महिषोष्ट्रादिवाह्यो, व्याख्यातः उक्तः, एकैकस्य भारस्यैकं माषकं दद्यादिति । त एत आतरा लघुनदीविषयाः । अत एवाह—द्विगुणो महानदीषु तर इति । तरः तरणवेतनम् ।

क्लृप्तमिति । क्लृप्तं यत्किञ्चिद्, अनूपग्रामाः, भक्तवेतनं राजभाव्यातिरिक्तं, दद्युः नाविकस्य ।

प्रत्यन्तेष्विति । विषयसीमसु, तराः तारकाः, शुल्कम्, आतिवाहिकम् अतिवाहननिमित्तं राजभाव्यं, वर्तनी च अन्तपालदेयं च, गृह्णीयुः सार्थात् । निर्गच्छतश्चामुद्रस्य सार्थस्य, भाण्डं हरेयुः । अतिभारेणेति । अतिभारेण पुरुषद्वय-बहनीयेन भारेण युक्तस्य, अवेलायाम् अकाले, अतीर्थे अघट्टे, तरतश्च, भाण्डं हरेयुरिति वर्तते ।

## प्रतिपदपञ्चिका

तरवेतनमेवाह—क्षुद्रपशुरित्यादि, क्षुद्रपशुरजैडकादिः, मनुष्यश्च सभारो गृहीतालम्बपोट्टकादिः माषकं दद्यात् । शिरोभारः पोट्टलिकपात्राकारः कायभारः स्कन्धभारः, गवाश्वं च द्वौ द्वौ माषकौ । उष्ट्रमहिषं चतुरः । पञ्चमाषकान् लघुयानं लघुगन्त्रि षण्माषकान् गोलिङ्गं मध्यमगन्त्रीसप्तमाषकान् शकटं महागन्तृ पण्यहारो विंशतितुलाः पादं पणचतुर्भागं दद्यात् । तेन भाण्डभारो महिषोष्ट्रादियानं व्याख्यातं यावन्तो भारास्तावन्तः पादान् दद्युरिति । द्विगुण इत्ययमेव यथोदितो महानदीषु गङ्गायमुनादिकासु द्विगुणो यः अतश्च वचनात् पूर्वं लघुनदीषु विज्ञेयम् ।

क्लृप्तमिति । पूर्वत्र राजभाव्यमिदन्तु नावध्यक्षस्य भक्तवेतनं दद्युरिति केचित् । पूर्वत्राऽविशेषेणाऽभिहितस्य विशेषणार्थमिदमित्यपरे ।

प्रत्यन्तेष्विति । विषयान्तेषु तारयन्तीति तरा नावध्यक्षपुरुषाश्शुल्कं यथोक्त-मातिवाहिकं सार्थादिति वाहिकनिमित्तं वर्तनीयमन्तःपालादेयं च चकारादात्मभाव्यं च गृह्णीयुः । निर्गच्छतश्चेति । उत्तीर्णस्य मुद्रारहितस्य चकारान्निर्गच्छतश्च भाण्डं हरेयुः सर्वापहारं कुर्युः ।

अतिभारेणेति । द्विबाह्यमेकस्य बहवः अवेलायामसम्पाते समये अतीर्थेन प्रसिद्धादन्येन तरतश्च भाण्डं हरेयुरिति वर्तते ।

**पुरुषोपकरणहीनायामसंस्कृतायां वा नावि विपन्नायां नावध्यक्षो नष्टं विनष्टं वा अभ्यावहेत् ।**

**सप्ताहवृत्तामाषाढीं कार्तिकीं चाऽन्तरा तरः ।**
**कार्मिकप्रत्ययं दद्यात् नित्यं चाह्निकमावहेत् ॥१०९॥**

इत्यध्यक्षप्रचारे नावध्यक्षोऽष्टाविंशोऽध्यायः,
आदित एकोनपञ्चाशः ।

श्रीमूला

पुरुषेत्यादि । पुरुषैः शासननियामकादिभिः उपकरणैश्चारिष्टसेचनादिभिर्हीनायाम्, असंस्कृतायां वा सीवनादिसंस्काररहितायां वा, नावि, विपन्नायां सत्यां, नावध्यक्षः, नष्टं जलप्रलीनं लवणजातीयम्, विनष्टं जलयोगदूषितरूपादिकं वा, पण्यद्रव्यम्, अभ्यावहेद् दद्यात् ।

तरवेतनकालं श्लोकेनाह—सप्ताहेत्यादि । सप्ताहो वृत्तो यस्या ऊर्ध्वं सा सप्ताहवृत्ता तादृशीम्, आषाढीम् आषाढपौर्णमासीं, कार्तिकीं कार्तिकपौणमासीं तथाविधाम्, अन्तरा आषाढबहुलसप्तम्याः कार्तिकबहुलसप्तम्याश्च मध्ये इत्यर्थः, तरः आतरः ग्राह्य इति शेषः, निर्दिष्टस्य कालस्य वर्षात्वाद् वर्षातार्यासु नदीषु । सर्वर्तुतार्यासु तु नित्यं ग्राह्य इत्यर्थात् सिद्धम् । कार्मिकप्रत्ययम् अयमयं कर्मदिवस इति कर्मदिवसज्ञानं, दद्याद् नावध्यक्षाय । नित्यं च, आह्निकं दिने दिनेऽधिगतमातरम्, आवहेत् दद्यात् ।

इति कौटिलीयार्थशास्त्रव्याख्यायामध्यक्षप्रचारे द्वितीयाधिकरणे
अष्टाविंशोऽध्यायः, नावध्यक्षः, आदित एकोनपञ्चाशः ॥

प्रतिपदपञ्चिका

पुरुषाश्शासकनियामकादयः । उपकरणानि दातृरश्मिपटरज्ज्वादीनि तद्धीनायामसंस्कृतायामकृतसीवनादिसंस्कारायां नावि विपन्नायां नष्टं सर्वथा प्रलीनं विनष्टमुदकविधृतं नावध्यक्षोऽभ्यावहेत् दद्यात् तद्दोषेण तस्य विनाशात् । तरवेतनकालमाह—सप्ताहवृत्तामाषाढीमित्यादि, आषाढबहुलसप्तमीं कार्तिकबहुल[illegible]प्तमीं चान्तरा तयोः मध्येतरस्तरवेतनं वर्षास्राविणीषु नदीषु ग्राह्यम् इति वाक्यशेषः । ग्रीष्मकार्यासु महानदीषु नित्यं ग्राह्यं तदुभयमपि कार्मिकप्रत्ययं तत्कर्म तद्विदितं दद्यात् नावध्यक्षं प्रवेशयेत् वर्षास्राविणीषु तु जलवृद्धिक्षयानियमादाह्निकं तरदिवसान् विगणय्य तरवेतनमालभेत् दद्यादिति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रटीकायां
द्वितीयेधिऽकरणे अध्यक्षप्रचारिकेऽष्टाविंशोऽध्यायः ।
नावध्यक्षः, आदित एकोनपञ्चाशोऽध्यायः ।

## षट्चत्वारिंशं प्रकरणम्

### एकोनत्रिंशोऽध्यायः ।

### गोऽध्यक्षः ।

[ गोऽध्यक्षेणाऽवेक्षणीया अष्टौ अंशाः ]

**गोऽध्यक्षो वेतनोपग्राहिकं करप्रतिकरं भग्नोत्सृष्टकं भागानुप्रविष्टकं व्रजपर्यग्रं नष्टं विनष्टं क्षीरघृतसञ्जातं चोपलभेत ।**

[ तत्र वेतनोपग्राहिकम् ]

**गोपालकपिण्डारकदोहकमन्थकलुब्धकाः शतं शतं धेनूनां हिरण्यभृताः पालयेयुः । क्षीरघृतभृता हि वत्सानुपहन्युरिति वेतनोपग्राहिकम् ।**

———————

श्रीमूला

गोध्यक्ष इति सूत्रम् । गवाम् उपलक्षणया महिषादीनां गोमहिषाद्याजौवानां चाध्यक्षो गोध्यक्षः तत्कर्माभिधीयत इत्यर्थः । स्वपक्षपरपक्षवशीकरणसाधनभूतासु वार्तापदार्थेषु कृषिपाशुपाल्यवणिज्यासु कृषिवणिज्ये सीताध्यक्षपण्याध्यक्षयोरुपपादिते । पाशुपाल्यं त्वनुक्तमिहाभिधीयत इति सङ्गतिः ।

गोध्यक्ष इति । गोध्यक्षः, वेतनोपग्राहिकादीन्यष्टौ, उपलभेत अध्यक्षयेत् ।

प्रतिपदपञ्चिका

गोऽध्यक्ष इति सूत्रम् । गावः प्रसिद्धाः, तद्ग्रहणं महिष्याजावीनां ग्रहणार्थम् । तासामध्यक्षः तत्प्रजीवगणनाद्यधिकारी गोऽध्यक्ष इति सूत्रार्थः । सम्बन्धस्तु व्ययशरीरे गोमण्डलमुक्तं न स्वरूपमतः तत्प्रतिपाद्यत इति । अथवा कृषिपाशुपाल्ये वाणिज्या च वार्ता तया स्वपक्षं परपक्षं च वशीकरोति कोशदण्डाभ्यामिति वार्तोपदिष्टा, तत्र सीताध्यक्षपण्याध्यक्षयोः कृषिवाणिज्यप्रतिपादिते पाशुपाल्यं वक्तव्यम्, तदभिधीयत इति ।

तदाह—गोऽध्यक्ष इति, स वेतनोपग्राहिकादीनष्टौ पदार्थानुपलभेत जानीयात् ।

श्रीमूला

तानि क्रमशो व्याचष्टे—गोपालकेत्यादि । गोपालकादयः पञ्च गोपालकः प्रसिद्धः पिण्डारको महिषपालः दोहकः क्षीरदोग्धा मन्थको दधिमथनकर्मा लुब्धको व्यालभय-

[ करप्रतिकरः ]

**जरद्गुधेनुगर्भिणीपष्ठौहीवत्सतरीणां समविभागं रूपशतमेकः पालयेत् । घृतस्याष्टौ वारकान्, पणिकं पुच्छं, अङ्कचर्म च वार्षिकं दद्यादिति कर-प्रतिकरः ।**

———·——

श्रीमूला

परिहर्त्ता इत्येते, शतं शतं धेनूनां गवां पालयेयुः । किंवेतनास्ते, हिरण्येन धनधान्यरूपेण वेतनेन भृताः पुष्टाः, न तु तदन्येन क्षीरेण घृतेन वेत्यर्थः । कुतः क्षीरघृतभृता न कर्तव्यास्तत्राह—क्षीरघृतभृता हीति । तद्वेतना हि, वत्सान् स्तनन्धयान्, उपहन्युः क्षीरलोभनिमित्तादतिदोहनात् कर्शयेयुः । इति एतद्, वेतनोपग्राहिकं वेतनोपग्राह-निमित्तत्वात् तत्संज्ञम् ।

प्रतिपदपञ्चिका

तांश्च स्वयमेव व्याचष्टे—गोपालकेत्यादि, स च प्रतीतः, पिण्डारको महिषीपालः, दोहकमन्थकौ प्रतीतौ । लुब्धको व्याघ्रादिव्यालं प्रति विधीयते । शतं शतं धेनूनां स्वच्छन्दिनां हिरण्यहृता हिरण्यवेतनाः पालयेयुः । कस्मान्नक्षीरभृतः हि हेतौ, वत्सान् स्तनन्धयानुपहन्युः । क्षीरलोभादतिदोहेन कृशीकुर्युः । इत्येतद्वेतनप्रदानोपग्राहि-कमित्यन्वेयं: वेतनोपग्राहनिमित्ताऽन्वर्थसंज्ञा । एवमुत्तरेषामपि संज्ञानामन्वर्थता यथासम्भवं योजनीया ।

श्रीमूला

जरदित्यादि । जरद्गुर्जरद्गवी गोह्रस्वत्वमार्षम् । धेनुर्दोग्ध्री गर्भिणी प्रसिद्धा । पष्ठौही वृषगवेषिणी वत्सतरी अतीतस्तनन्धयभावा इत्येतासां पञ्चानां, समविभागं प्रत्येकं विंशतिक्रमेव तुल्यविभागयुक्तं, रूपशतं शतात्मकं जरद्गव्यादिभेदमेलकम्, एकः पालनवृत्तिः, पालयेत् । घृतस्येति । घृतस्य, अष्टौ बारकान् चतुरशीतिकुडुबान्, पणिकं पुच्छं पुच्छगणनया देयः करः पुच्छः तमेकैकस्य पशोरेकैकपणात्मकम्, अङ्कचर्म च राजमुद्रायुक्तं मृतचर्म च वार्षिकं वर्षदेयं, दद्यात् स्वामिने । इति करप्रति-करः एष प्रकारः करप्रतिकरसंज्ञः ।

प्रतिपदपञ्चिका

करप्रतिकरमाह—जरदित्यादि । जरद्गवीधेनुर्गर्भिणी प्रतीते, पष्ठौही वृषाभिलाषिणी, वत्सतरी परित्यक्तस्तनपाना । समांवभागं विंशतिः विंशतिमेकैकस्य भेदस्य, एवं जरद्गुधेन्वादिरूपशतमेकैको गोपालकः पिण्डारको वा पालयेत् । तथा ते पालकाः धृतस्याष्टौ वारकान् चतुरशीतिकुटुम्बप्रमाणान् पणिकं पुच्छे (पशोः) पणशतं मृतस्याङ्कचर्म राजाङ्कोपलक्षितं चर्म, चकारात् स्नायुशृङ्गाणि च वर्षदेयं दद्युः । इत्येतस्य करप्रतिकर इति संज्ञा ।

[ भग्नोत्सृष्टकम् ]

**व्याधितान्यङ्गाऽनन्यदोहीदुर्दोहापुत्रघ्नीनां च समविभागं रूपशतं पालयन्तस्तज्जातिकं भागं दद्युरिति भग्नोत्सृष्टकम् ।**

[ भागानुप्रविष्टकम् ]

**परचक्राटवीभयादनुप्रविष्टानां पशूनां पालनधर्मेण दशभागं दद्युरिति भागानुप्रविष्टकम् ।**

[ व्रजपर्यग्रम् ]

**वत्साः वत्सतराः दम्याः वहिनः वृषाः उक्षाणश्च पुङ्गवाः । युगवाहन-**

---

श्रीमूला

व्याधितेत्यादि । व्याधितादीनां पञ्चानां व्याधिता रुग्णा न्यङ्गा अङ्गविकला अनन्यदोही एकेनैव दोहनीया न त्वन्येन दोहनीया दुर्दोहा पादबन्धनादिकृच्छ्रदोह्या पुत्रघ्नी स्रवद्गर्भा म्रियमाणवत्सा च इत्येतासां च, समविभागं रूपशतं पूर्वोक्तप्रत्येक-विंशतिप्रकारं, पालयन्तः, तज्जातिकं भागं पूर्वोक्तस्यार्धं त्रिभागं वा तदनुरूपं घृतादिराजभागं, दद्युः । इति भग्नोत्सृष्टकं तदाख्यम् ।

भागानुप्रविष्टकमाह—परचक्रेत्यादि । परचक्राटवीभयात् शत्रुच्छलनाभयात् वनचरापहारभयाच्च, अनुप्रविष्टानां राजव्रजप्रवेशितानां, पशूनां, पालनधर्मेण पालनस्य सवेतनत्वनियमेन, दशभागं, दद्युः पशुस्वामिनो राज्ञे । इत्येतद्, भागानु-प्रविष्टकं तदाख्यम् ।

प्रतिपदपञ्चिका

भग्नोत्सृष्टमाह—व्याधितेत्यादि, व्याधिता न्यङ्गा च प्रतीते, अनन्यदोही एकेनैव दोह्या नान्येन दुह्यते दुर्दोहा दुःखेन बन्धनादिना दुह्यते, पुत्रघ्नी म्रियमाण-विजायिनी इत्येतासामपि पूर्ववत् समविभागं रूपशतं पालयन्तस्तज्जातिकं तदनुरूपं भागमिति घृतादिराजभागं दद्युरिति । एतद् भग्नोत्सृष्टसंज्ञं भवति ।

भागानुप्रविष्टकमाह–परचक्राटवीत्यादि, परबलविलोपभयादाटविकलुण्ठनभयाद् वा अनुप्रविष्टानां राजव्रजं प्रवेशितानां गोमहिष्यादीनां पालनधर्मेण रक्षास्वभावेन विना वेतनं रक्षा न भवतीति दशभागं धनिनो गोऽध्यक्षाय दद्युरिति । एतद् भागानुप्रविष्टसंज्ञं भवति ।

श्रीमूला

व्रजपर्यग्रमाह—वत्सा इत्यादि । वत्साः स्तनन्धयाः, वत्सतराः परित्यक्तस्तन-पानाः, दम्याः दमनयोग्याः, वहिनः वोढारः, वृषाः सेक्तारः, उक्षाणश्च जरद्गवाश्च,

**शकटवहा वृषभाः सूनामहिषाः पृष्ठस्कन्धवाहिनश्च महिषाः। वत्सिका वत्सतरी पष्ठौही गर्भिणी धेनुश्चाप्रजाता वन्ध्याश्च गावो महिष्यश्च। मासद्विमासजातास्तासामुपजाः वत्सा वत्सिकाश्च। मासद्विमासजातानङ्कयेत्। मासद्विमासपर्युषितमङ्कयेत्। अङ्कं चिह्नं वर्णं शृङ्गान्तरं च लक्षणम्, एवमुपजाः निबन्धयेदिति व्रजपर्यग्रम्।**

---

श्रीमूला

पुङ्गवाः इत्येते षडविधाः पुमांसो गावः। युगवाहनशकटवहाः, वृषभाः सेक्तारः, सूनामहिषाः मांसमात्रोपयोगिनो महिषाः, पृष्ठस्कन्धवाहिनश्च, महिषाः इत्येते चतुर्विधा महिषाः। स्त्रीगवीनां महिषीणां च साधारणान् भेदानाह—वत्सिकेत्यादि। तत्र धेनुर्दोग्ध्री। अप्रजाता विजननार्हवयोऽनधिरूढा वन्ध्या वशा। शेषाः प्रसिद्धाः। इत्थं सप्तविधा गावो महिष्यश्च। मासेत्यादि। मासद्विमासजाताः मासजाताः द्विमासजाताश्च, तासां गोमहिषीणां, वत्साः स्तनन्धयाः, वत्सिकाः स्तनन्धय्यश्च, उपजाः उपजासंज्ञिताः। तासु मासाद्विमासजातान्, अङ्कयेत् तप्तमुद्रया योजयेत्। भागानुप्रविष्टकादिविषयमङ्कनमाह—मासाद्विमासपर्युषितमङ्कयेदिति। ज्ञातस्वामिकस्याऽज्ञातस्वामिकस्य वा राजव्रजप्रविष्टस्यैकमासपरिवासे द्विमासपरिवासे वा जाते तमप्यङ्कयेद् गोध्यक्ष इत्यर्थः। चतुर्विधं लक्षणमाह—अङ्कमिति। अङ्कं स्वस्तिकादिसन्निवेशं तप्तमुद्राकृतं कृत्रिमं, चिह्नं पुच्छश्वेतिमकालिमादि सहजं, वर्णं शुक्लकृष्णादिं, शृङ्गान्तरं च शृङ्गगतं विशेषं च, लक्षणं, निबन्धयेत् पुस्तके लेखयेत्। एवम् अनेन प्रकारेण उक्तचतुर्लक्षणीयोगेन, उपजाः, निवन्धयेत्। इति एतत् सप्तदशविधं व्रजपर्यग्रं तदाख्यम्।

प्रतिपदपञ्चिका

व्रजपर्यग्रमाह—वत्सा इत्यादि। वत्साः स्तनन्धयाः, वत्सतराः अतीतवत्सभावाः, दम्याः दमनार्हाः, वहिनो वोढारः, वृषाः सेक्तारः, उक्षाणो जरद्गवाः इत्येवमेतेषां प्रकारः। पुङ्गवाः करभाः द्वितीयवर्षजाताः, वृषभाः सेक्तारः, सूनामांसैकोपयोगिनः, महिषाः पृष्ठस्कन्धवाहिनः इत्येवमेते चतुष्प्रकाराः पुंमहिषाः।

स्त्रीपशुप्रकारानाह—वत्सिकेत्यादि, तत्र प्रजाता गोकुमारी, वन्ध्या वृषसम्प्रयोगेऽप्यप्रसविनी, शेषाः प्रतीताः। इत्येवं सप्तस्त्रीपशुप्रकाराः। गावो महिष्यश्च मासद्विमासजाता वत्सा वत्सिकाश्च, तासां महिषीणां उपजसंज्ञा भवति। वत्सवत्सिकाग्रहणं तद्भेदेन लेख्यनिबन्धनार्थम्। मासाद्विमासजातानङ्कयेत् लक्षयेत्।

नानूपजामङ्कयेदिति वक्तव्ये ( कर्तव्ये ) मासद्विमासजातग्रहणं भागानुप्रविष्टाद्युपलक्षणम्।

मासद्विमासपर्युषितमङ्कयेदिति। प्रनष्टस्वामिकविषयं वेदितव्यम्। तच्च लक्षणं

[ नष्टम् ]

**चोरहृतम् अन्ययूथप्रविष्टम् अवलीनं वा नष्टम् ।**

[ विनष्टम् ]

**पङ्कविषमव्याधिजरातोयाहा [धा] रावसन्नं वृक्षातटकाष्ठशिलाभिहतम् ईशानव्यालसर्पग्राहदावाग्निविपन्नं विनष्टम् । प्रमादात् अभ्यावहेयुः ।**

**एवं रूपाग्रं विद्यात् ॥**

[ गवादिहन्तृणां अपहर्तृणां च दण्डः आहर्तृणां सम्मानं च ]

**स्वयं हन्ता घातयिता हर्ता हारयिता च वध्यः । परपशून् राजाङ्केन परिवर्तयिता रूपस्य पूर्वं साहसदण्डं दद्यात् ।**

**स्वदेशीयानां चोरहृतं प्रत्यानीय पणिकं रूपं हरेत् । परदेशीयानां मोक्षयिताऽर्धं हरेत् ।**

---

प्रतिपदपञ्चिका

चतुर्विधं कौष्ठ(?) अङ्कं स्वस्तिकादि । चिह्नं श्वेतपुच्छकादि वर्णः श्वेतरक्तकादिः, शृङ्गं खण्डमुण्डविशङ्कटादि, अन्तरशब्दो विशेषवाची प्रत्येकम्, एवमनेकलक्षणामुपजां निबन्धयेत् लेखयेदित्येतत् सप्तदशप्रकारं व्रजपर्यग्रं नाम ।

श्रीमूला

त्रिविधं नष्टमाह—चोरेत्यादि । चोरहृतम्, अन्ययूथप्रविष्टम्, अवलीनं वा बने स्वयूथाद् भ्रष्टं वा, नष्टं नष्टाख्यम् ।

विनष्टमाह—पङ्केत्यादि । पङ्कादिभिः षडभिः पङ्केन कर्दममज्जनेन विषमेण गर्तादिपतनेन व्याधिना रोगेण जरया वयोवृद्धतया तोयेन महारयजलप्रवाहाकृष्ट्या आहारेण इत्येतैरवसन्नं विपन्नं, वृक्षादिभिश्चतुर्भिः वृक्षपातभृगुभ्रंशमहाकाष्ठपतनमहाशिलापातरूपैरभिहतम्, ईशानादिपञ्चकविपन्नम् ईशानेन विद्युज्ज्योतिषा हिंस्रमृगपन्नगनक्रवनवह्निभिश्च प्रमीतं, विनष्टं तदाख्यं भवति । प्रमादादिति । पालकानवधानदोषाद्, विनष्टमिति वर्तते, अभ्यावहेयुः दद्युः, अर्थात् पालकादयः ।

एवमिति । उक्तेन प्रकारेण, रूपाग्रं गवादिप्रमाणं, विद्यात् ।

स्वयमेव गवादिहननहरणकर्तुंस्तत्प्रयोजयितुश्च गोपालकस्य वधो दण्ड इत्याह—स्वयं हन्तेत्यादि ।

परपशूनामिति । अराजपशूनां, राजाङ्केन रूपस्य परिवर्तयिता राजकीयाङ्कदानेन रूपभेदयिता, पूर्वं साहसदण्ड दद्यात् ।

[ गोपालककर्तव्यसङ्ग्रहः, जीवद्भ्यो मृतेभ्यो वा तेभ्यो लब्धवस्तूनां उपयोगादिविधिः, कर्तव्यभ्रष्टानां दण्डश्च ]

**बालवृद्धव्याधितानां गोपालकाः प्रतिकुर्युः। लुब्धकश्वगणिभिः अपास्तस्तेनव्यालपरबाधभयम् ऋतुविभक्तमरण्यं चारयेयुः। सर्पव्यालत्रासनार्थं गोचरानुपातज्ञानार्थं च त्रस्नूनां घण्टातूर्यं च बध्नीयुः। समव्यूढतीर्थं अकर्दमग्राहम् उदग्राहम् उदकमवतारयेयुः, पालयेयुश्च। स्तेनव्यालसर्पग्राहगृहीतं व्याधिजराऽवसन्नं च आवेदयेयुः, अन्यथा रूपमूल्यं भजेरन्। कारणमृतस्याङ्कचर्म गोमहिषस्य, कर्णलक्षणमजाविकानां, पुच्छमङ्कचर्म चाश्वखरोष्ट्राणां, वालचर्मवस्तिपित्तस्नायुदन्तखुरशृङ्गास्थीनि चाहरेयुः। मांसमाममार्द्रं शुष्कं वा विक्रीणीयुः। उदश्वित् श्ववराहेभ्यो दद्युः। कूर्चिकां[1] सेना भक्तार्थमाहरेयुः। किलाटो घाणपिण्याकक्लेदार्थः।**

---

श्रीमूला

स्वदेशीयानामिति। तेषां, चोरहृतं, प्रत्यानीय प्रत्यर्प्य, पणिकं रूपं हरेत् रूपसङ्ख्यानग्राह्यो दण्ड इह रूपमित्युच्यते। एकैकस्य रूपस्यैकपणप्रमाणं रूपदण्डं गृह्णीयात्। परदेशपशूनामुपगतानां, मोक्षयिता तत्स्वामी, अर्घं हरेत् तन्मूल्यस्यार्धं गृह्णीयात्, अर्थादर्धं दण्डं दद्यात्।

प्रतिपदपञ्चिका

नष्टमाह—चोरहृतमित्यादि, चोरहृतमन्ययूथप्रविष्टं च प्रलीनमवलीनं स्वयूथात् परिभ्रष्टमित्येवमेतत् त्रिप्रकारं नष्टसंज्ञं भवति। विनष्टमाह—पङ्केत्यादि, पङ्कादिभिः षड्भिरवसन्नं निश्चेष्टीभूतं वृक्षादिभिश्चतुर्भिर्हृतं विकलीकृतमीशानादिभिः पञ्चभिर्निमित्तैर्विपन्नम्, एवं पञ्चदशप्रकारं विनष्टं भवति। तत्र पङ्कं प्रतीतम्, विषमं गर्तादि, व्याधिर्विलयजादिः, दावाग्निर्वनवह्निरित्येवम्, एतैर्विपन्नं विनष्टं भवति। प्रमादान्मद्यादिप्रसङ्गाद् विनष्टं वा अभ्यावहेयुः गोपालादयो दद्युरिति।

एवम् उक्तेन प्रकारेण गोऽध्यक्षो रूपाग्रं चतुष्पदप्रमाणं विद्यात्। स्वयं हन्ता पशूनां व्यापादयिता घातयिता प्रयोजको हर्ता हारयिता वा वध्यो हन्तव्यः। पशूनां राजाङ्केन तदङ्ककरणेन परिवर्तयिता रूपस्यैकैकस्य पूर्वं साहसदण्डं दद्यात्।

स्वदेशीयानामित्यादि, सुबोधम्।

श्रीमूला

बालवृद्धेत्यादि। सुगमम्।

लुब्धकस्वगणिभिरित्यादि। व्याधैः श्वगणपोषकैश्च, अपास्तस्तेन-व्यालपर-

---

१. रुचिकां, किञ्चित् कांस्येन—पा०

## श्रीमूला

बाधभयं परिहृतचोरहिंस्रमृगशत्रूपद्रवभयम्, ऋतुविभक्तम् ऋतुषु विभक्तम् अस्मिन्नस्मिन् ऋताविदमिदं तृणजलादिसमृद्धतया समुचितमिति विभज्य व्यवस्थितम्, अरण्यं, चारयेयुः।

सर्पेत्यादि। सर्पव्यालत्रासनार्थं सर्पव्यालानां भयजननार्थं, गोचरानुपातज्ञानार्थं देशममुकमनुसञ्चरन्ति गाव इति घण्टातूर्यशब्दतोऽनुमानार्थं च, त्रस्नूनां शब्दत्रासिनां पशूनामत्रासार्थपरिचेतव्यशब्दानां, घण्टातूर्यं लोहघण्टारूपं तूर्यं, बध्नीयुः, कण्ठे।

समेत्यादि। समव्यूढतीर्थम् अविषमविस्तीर्णावतारम्, अकर्दमग्राहम् अपङ्कनक्रम्, उदकम्, अवतारयेयुः स्नानपानार्थं, पालयेयुश्च यावत्स्नानपानकालमप्रमत्ता जलजन्यभयाद् रक्षेयुश्च पशुयूथम्।

चोरद्यपहृतं रोगवार्धकप्रमीतं पशुमध्यक्षाय काले निवेदयेयुरनिवेदने मूल्यमेकैकस्य रूपस्य दद्युरित्याह—स्तेनेत्यादि।

कारणेत्यादि। कारणमृतस्य व्याधिजरादिमृतस्य, अङ्कचर्म अङ्कयुक्तं चर्म, गोमहिषस्य, आहरेयुः आहृत्य दर्शयेयुः प्रत्ययार्थम्। कर्णलक्षणं कर्णकृतं चिह्नम्, अजाविकानां बस्तोरभ्राणाम्, आहरेयुः। पुच्छम् अङ्कचर्म च अश्वखरोष्ट्राणाम्, आहरेयुः। वालादीनि च नव, आहरेयुः कुप्यार्थम्। तत्र वस्तिर्मूत्राशयः, पित्तं मायुः, स्नायुः स्नावः। शेषं प्रसिद्धम्।

मांसमिति। मांसम्, आमम् अपक्वम्, आर्द्रं, शुष्कं वा, विक्रीणीयुः। उदश्विदिति। उदश्वित् तक्रं, श्ववराहेभ्यो, दद्युः पोषणार्थम्।

कूर्चिकामिति। तक्रयुक्तक्षीरविकृतिं, शुष्कघनीकृततक्रविकारमिति स्वामी। सेनाभक्तार्थम्, आहरेयुः। किलाट इति। किलाटः क्षीरविकृतिः, घाणपिण्याकक्लेदार्थः किञ्चित्सावशेषतैलः पिण्याको घाणपिण्याकः तस्य गोमहिषादिभक्ष्यस्य क्लेदार्थः क्लेदनरूपे संस्कारे विनियोक्तव्यः।

## प्रतिपदपञ्चिका

बालवृद्धव्याधितानां प्रतिकुर्युरिति, तेषां तात्पर्यार्थमकालक्षेपणार्थञ्च वचनमिति। लुब्धकादिभिरपास्तः अपनीतं स्तेनाभयं यत्र तद् ऋतुविभक्तं तत्कालोचितभक्षणोदकसञ्चारमरण्यं सञ्चारयेयुः।

सर्पाः प्रतीताः, व्यालाः व्याघ्रसिंहादयः, तेषां त्रासनार्थं गोचरानुपातज्ञानार्थमस्मिन्देशे गावश्चरन्तीति अदर्शनेऽपि शब्देनाऽनुमानार्थं त्रस्नूनां त्रसनशीलानां नित्यशब्दपरिचयार्थं त्रस्नुग्रहणं सस्यभक्षिकाप्रपलायिनीनामप्युपलक्षणार्थं घण्टातूर्यमिति लोहकाष्ठमयमनेकं बध्नीयुः।

सममविषमं व्यूढं विस्तीर्णं तीर्थं यस्य महतो यूथस्य तुल्यकालमवतरणार्थम्

[ पशूनां विक्रये अध्यक्षादिदेयोंऽशः, दोहनादिकालव्यवस्थाश्च ]

**पशुविक्रेता पादिकं रूपं दद्यात् । वर्षाशरद्धेमन्तान् उभयतः कालं दुह्युः । शिशिरवसन्तग्रीष्मान् एककालम् । द्वितीयकालदोग्धुः अङ्गुष्ठच्छेदो दण्डः । दोहकालमतिक्रामतस्तत्फलहानं दण्डः । एतेन नस्यदम्ययुगपिङ्गनवर्तनकाला व्याख्याताः ॥**

---

प्रतिपदपञ्चिका

अकर्दममपङ्कग्राहि, अग्राहं मकरादिरहितमुदकमवतारयेयुः । चकारोऽवतारणान्त उत्तार्य गोचरगमनार्थम् ।

स्तेनादिगृहीतं व्याधिजराभ्याम् अवसन्न निश्चेष्टीभूतं चावेदयेयुः । अन्यथा अनावेदनात् रूप्यमूल्यं भजेरन् । गोपालकादाप्याः (आप्तव्याः) ।

कारणमृतस्य व्याध्यादीनां नामाङ्कचर्म च तदुपलक्षितं चर्म गोमहिषस्य कर्णलक्षणं तत् चिह्नम् अजावीनां पुच्छमङ्कं चर्म च अश्वखरोष्ट्राणां वालादीनि च कुप्यार्थं मातुर्मनश्शुध्यर्थं च स्वयमुपहरेयुः ।

मांसमाममपक्वं आर्द्रम् शुष्कं वा महिष्यादीनां विक्रीणीरन् ।

उदश्वित् तक्रं श्ववराहेभ्यः पोषणार्थं दद्युः । र्चिकां शुष्कघनीकृततक्रमविकारं सेनाभक्तार्थं हरेयुः ।

किलाटो रुचिरोदकं घाणपिण्याकक्लेदनार्थः किञ्चित् सावशेषं तैलपिण्याको घाणपिण्याकः ।

श्रीमूला

पशुविक्रेतेति । सः, पादिकं रूपम् एकैकस्य रूपस्य विक्रीयमाणस्य पादपणं, दद्यात्, अध्यक्षाय ।

वर्षेत्यादि । वर्षाशरद्धेमन्तान् ऋतून्, उभयतः कालं सायं प्रातश्च, दुह्युः, गोमहिषीः । शिशिरवसन्तग्रीष्मान्, एककालं रात्रावेव, दुह्युः ।

द्वितीयेत्यादि । द्वितीयकालदोग्धुरङ्गुष्ठच्छेदो दण्ड इति अयं च कालनियमो देशव्यवस्थया द्रष्टव्यः, क्वचिद् देशे ग्रीष्मेऽपि त्रिकालदोहदर्शनादित्याह स्वामी । दोहकालमिति । तं प्रातः सायं च यथोक्तम्, अतिक्रामतः, तत्फलहानं तद्दिवसवेतनहानिः, दण्डः ।

एतेनेति । दोहकालातिपातनेन नस्यदम्ययुगपिङ्गनवर्तनकालाः नस्यकालो नासावेधनकालः दम्यकालो दमनार्हकालः युगपिङ्गनकालः अदान्तस्य दान्तेन सह युगे योजनकालः वर्तनकालो मेथिबन्धनप्रचारणकालः इत्येते, व्याख्याताः तानप्यतिक्रामतस्तत्फलहानं दण्ड इत्यर्थः ।

[ पशुभेदेन क्षीरघृतप्रमाणादि ]

**क्षीरद्रोणे गवां घृतप्रस्थः। पञ्चभागाधिको महिषीणाम्। द्विभागाधिकोऽजावीनाम्। मन्थो वा सर्वेषां प्रमाणम्, भूमितृणोदकविशेषाद्धि क्षीरघृतवृद्धिर्भवति।**

[ सेक्तॄणाम् ऋषभाणां दुरुपयोगनिषेधः ]

**यूथवृषं वृषेणावपातयतः पूर्वः साहसदण्डः, घातयत उत्तमः।**

---

प्रतिपदपञ्चिका

पशुविक्रेता जानपदं पादिकं रूपमिति। प्रतिरूपं पणचतुर्भागं गोऽध्यक्षस्य दद्यात्।

वर्षाशरद्धेमन्तान् षण्मासानुभयतः कालं सायं प्रातश्च धेनूः दुह्युः। शिशिरवसन्तग्रीष्मानेककालं रात्रावेव।

तदा द्वितीयदोहे दोग्धुः कराङ्गुष्ठच्छेदो दण्डः। इत्ययं च कालनियमो देशव्यवस्थया द्रष्टव्यः। क्वचिद् देशे ग्रीष्मेऽपि त्रिकालदोहदर्शनाद् दोहकालं यथोक्तमतिक्रामतः तत्फलहानं तद्दिवसवेतनहानमतिक्रमणहीनतुल्यं वा दण्डः।

एतेन दोहकालातिपातनेन सस्यादिकालाः व्याख्याताः, तेषामपि तत्फलहानं दण्डः। तत्र नस्यं नासिकावेधनं दम्यं दमनीयं दमः अङ्कपिण्डनं दान्तेन सहाऽदान्तस्य संयोजनं वर्तनं मेथिनिबन्धनं भ्रमणं प्रातः प्रचारणमित्यपरे।

श्रीमूला

क्षीरेत्यादि। क्षीरद्रोणे, गवां घृतप्रस्थः प्रस्थमितं घृतं जायते। पञ्चभागाधिकः प्रस्थपञ्चमभागयुक्तो घृतप्रस्थः, महिषीणां, क्षीरद्रोणे भवति। इदं च घृतप्रमाणं प्रायिकम्। अत एवाह—मन्थो वेति। मथनमेव, सर्वेषां घृतपरिमाणानां, प्रमाणं निश्चायकम्। तत्र हेतुकथनम्—भूमितृणोदकविशेषाद्धीत्यादिना। क्षीरघृतवृद्धिः क्षीरघृतयोर्वृद्धिः क्षीरे घृतस्य वृद्धिर्वा।

यूथेत्यादि। यूथवृषं सेक्तारं वृषेण तथाविधेन सह, अवपातयतः योधयतः, पूर्वः साहसदण्डः। घातयतः उत्तमः साहसदण्डः।

प्रतिपदपञ्चिका

घृतपरिमाणमाह—क्षीरद्रोण इति, गवां क्षीरद्रोणे घृतप्रस्थो भवति। पञ्चभागाधिकः सकुटुम्बप्रस्थो महिषीणां क्षीरद्रोण इति, द्विभागाधिकः सार्धः प्रस्थोऽजावीनां क्षीरद्रोणे भवतीति। प्रायिकश्चैतन्निश्चयस्तु मन्थादेवावगन्तव्यः। तदाह—मन्थो वा सर्वेषां प्रमाणमिति, कुत इत्याह—भूमितृणोदकविशेषादिति, भूम्यादिविशेषेण क्षीरस्य घृतस्य वृद्धिर्भवति। क्षीरवृद्धिर्घृतादीनां क्षीरस्य च घृतवृद्धिरित्यपरे।

[ गवादिरक्षणतदुपनिवेशादिकदूर्णाग्रहणानां व्यवस्थाः ]

**वर्णावरोधेन दशतीरक्षा। उपनिवेशदिग्विभागो गोप्रचारात् बलान्वयतो वा गवां रक्षासामर्थ्याच्च। अजादीनां षाण्मासिकीमूर्णां ग्राहयेत्। तेनाऽश्वखरोष्ट्रवराहव्रजा व्याख्याताः।**

---

प्रतिपदपञ्चिका

यूथवृषं सेक्तारमन्थेन वृषेण सह पातयतो योधयतः पूर्वः साहसदण्डः। घातयतो विकलीकारयतो वा उत्तमः।

श्रीमूला

वर्णेत्यादि। वर्णावरोधेन दशतीरक्षा वर्णनियमेन दशकवर्गाणां रक्षा शुक्लवर्ण एको दशकवर्गः लोहितवर्णोऽन्य इत्येवं नियतैकैकवर्णयोगिनां दशानां दशतां रक्षणं, कर्तव्यम्। दशतीशब्दस्य स्त्रीत्वमत एव पाठात् कल्प्यं दशतामिति वा पाठः।

उपनिवेशेत्यादि। उपनिवेशदिग्विभागः गवाद्युपनिवेशदिग्व्यवस्था, गोप्रचाराद् गोप्रचारदिशमनुसृत्य, बलान्वयतो वा गवां गोबलयोगमनुसृत्य च, रक्षासामर्थ्याच्च चोरादिभयरहितत्वनिमित्तकं रक्षणसौकर्यमनुसृत्य च, भवति।

अजादीनामिति। अजाविप्रभृतीनां, षाण्मासिकीं षण्मासप्रवृद्धाम्, ऊर्णां ग्राहयेत्।

तेनेति। उक्तेन गवादिकल्पेन, अश्वखरोष्ट्रवराहव्रजाः, व्याख्याताः। वेतनोपग्राहिकादीन्यश्वादियूथेष्वपि यथासम्भवं योज्यानीत्यर्थः।

प्रतिपदपञ्चिका

वर्णावरोधेन वर्णनियमेन दशतीनां पशुदशवर्गाणां रक्षणं करणीयं तद् यथा-शक्ये यूथे दश धवलाः, दश लोहिताः, दश शबलाः, इत्यादि।

पूर्वस्यां दिशि गोचरो भवति। पूर्वद्वार एवोपनिवेशः कर्तव्यः। तथा तद्बला-बलतो गवां यदि गावो दूरात् गन्तुं न शक्नुवन्ति, तदा गोप्रचारसमीपे उपनिवेशः कार्यः। रक्षासामर्थ्याच्च यदि दक्षिणस्यां दिशि चोरादिभयं भवति, तदोत्तरस्यां दिशि गोचरः उपनिवेशो वा कार्यः इति।

अजादीनां षाण्मासिकीमूर्णां ग्राहयेत्। अजादीनामपि क्वचिद् देशे रोमवृद्धि-र्भवतीति प्रसिद्धिः।

तेनेति। प्रागुक्तगवादिविधानेन अश्वखरोष्ट्रवराहव्रजा व्याख्याताः। तेषामपि वेतनोपग्राहिकादिकं सङ्केतः सर्वं योजनीयमिति।

[ गवादीनां आहारव्यवस्था: ]

**बलीवर्दानां नस्याश्वभद्रगतिवाहिनां यवसस्याऽर्धभारः, तृणस्य द्विगुणम्, तुला घाणपिण्याकस्य, दशाढकं कणकुण्डकस्य, पञ्चपलिकं मुखलवणम्, तैलकुडुबो नस्यम्, प्रस्थः पानम् । मांसतुला, दध्नश्चाढकम्. यवद्रोणम्, माषाणां वा पुलाकः, क्षीरद्रोणमर्धाढकं वा सुरायाः, स्नेहप्रस्थः, क्षारदशपलं, शृङ्गिबेरपलं च प्रतिपानम् ।**

---

श्रीमूला

अशनादिकमाह—बलीवर्दानामिति । तेषां मध्ये, नस्याश्वभद्रगतिवाहिनां नस्यानां कृतनासावेधानाम् अश्वभद्रगतिवाहिनां च अश्वास्तेजस्सत्त्वयुक्ता अश्वभद्राः तद्गतिवाहिनां रथव्यायोगार्हाणां गवां, यवसस्य घासस्य, अर्धभारः दश तुलाः, अशनं भवतीति शेषः । तृणस्य सामान्यस्य, द्विगुणं विंशतितुलाः । तुला घाणपिण्याकस्य । दशाढकं चत्वारिंशत् प्रस्थाः कणकुण्डकस्य सूक्ष्मतण्डुलांशयुक्तस्य तण्डुलमलस्य । पञ्चपलिकं, मुखलवणं सिन्धूद्भवं लवणम् । तैलकुडुबो नस्यं कुडुबमितं तैलं नाषापुटनिषेच्यमौषधम् । प्रस्थः प्रस्थपरिमाणं तैलं घृतं वा, पानम् । मांसतुला शतपलप्रमाणं मांसम् । दध्नश्चाढकम् । यवद्रोणं यवानां द्रोणं, माषाणां वा पुलाकः अर्धपक्वः सिक्थो वा, द्रोणपरिमाणः । यवमाषपुलाकयोश्चायं विकल्पः । क्षीरद्रोणमिति । द्रोणमितं क्षीरम्, अर्धाढकं वा सुरायाः क्षीराभावे अर्धाढकमिता सुरा । स्नेहप्रस्थः तैलघृतान्यतरस्य प्रस्थः, क्षारदशपलं गुडपलदशकं, शृङ्गिबेरपलं शुण्ठ्याः पलं च, इत्येतच्चतुष्टयं मिलितं, प्रतिपानम् अग्निदीपनार्थं पानं, भवति ।

प्रतिपदपञ्चिका

बलीबर्दादीनाम् इति, निर्धारणे षष्ठी, नस्याश्वाः, विद्धनासा अश्वाकारा रथादिवाहिनः तदन्तर्भावात् । तेषाम् अयं वक्ष्यमाणो विधिरिति केचित् । अपरे तु बलीबर्दानां नस्याश्वभद्रगतिवाहिनां नासाव्यसनसमनन्तरकालमेव अश्वैः सह भद्रां गतिं वहतीति वाहिनो रथवाहनसमर्थान् (वक्ष्यति कुर्यात् ?) । गवाश्च व्यायोगं रथेष्वल्पभयो न वा इति । तेषामशनं यवसस्य अर्धभारः धाणपिण्याकतुला, दशाढकं कणकुट्टस्येति, प्रदेशान्तरे व्याख्यातम् । दशपलं तावत्प्रमाणममृतलवणं भवति । भक्षार्थं लवणं तैलकुडुम्बो नस्यं नासिकापुटदेयम् । तैलप्रस्थश्च पानं मांसं तुलापलशतं दध्नश्चाढकम्, यवद्रोणं माषाणां वा द्रोणं वा पुलाकोऽर्धसिद्धः । क्षीरद्रोणमर्धाढकं सुराया अर्धेन चार्धप्रस्थः तैलस्य घृतस्य वा । क्षीरस्य ( गुडस्य ? दुग्धस्य ) दशपलं शुण्ठीपलं चैतच्चतुष्टयं संयोजितं प्रतिपानमापराह्निकमेषां च यवादीनां किञ्चिन्नित्यं किञ्चिन्नैमित्तिकं वैकल्पिकं च ।

**पादोनमश्वतरगोखराणां, द्विगुणं महिषोष्ट्राणां कर्मकरबलीवर्दानाम् । पायना (र्थं) र्थानां च धेनूनाम् । कर्मकालतः फलतश्च विधानम् । सर्वेषां तृणोदकप्राकाम्यम् । इति गोमण्डलं व्याख्यातम् ।**

[ यूथकल्पनाः ]

**पञ्चर्षभं खराश्वानामजावीनां दशर्षभम् ।**
**शत्यं गोमहिषोष्ट्राणां यूथं कुर्याच्चतुर्वृषम् ॥११०॥**

इत्यध्यक्षप्रचारे गोऽध्यक्षः, एकोनत्रिंशोऽध्यायः,
आदितः पञ्चाशः ।

---

श्रीमूला

पादोनमिति । पादन्यूनं पूर्वोक्तं भद्रगतिबलीवर्दविधानमेव, अश्वतरगोखराणां वेसरपुङ्गवान्तरगर्दभानां, भवति । द्विगुणमिति । द्विगुणं भद्रगत्युक्तद्विगुणं महिषोष्ट्राणां, कर्मकरबलीवर्दानां शकटाद्युपयोगिनां पुङ्गवानां च । पायनार्थं च धेनूनामिति । पायनप्रयोजनकं यद् विधानमुक्तं तच्च चकाराद् भक्षणार्थं च, द्विगुणमिति वर्तते । कर्मकरबलीवर्दविषये धेनुविषये च विधानद्वैगुण्यवचनेनाप्यपरितुष्यन् विधानसार-मुपदिशति—कर्मकालतः फलतश्च विधानमिति । कर्मकालपरिमाणाद्यनुसारेण कर्मकरबलीवर्दानां दुग्धबाहुल्यादिफलप्राप्त्यनुसारेण च धेनूनामशनपानविधानं द्विगुणं ततोऽप्यधिकं वा निश्चेतव्यमित्यभिप्रायः । सर्वेषामिति । सर्वपशूनां, तृणोदकप्राकाम्यं तृणस्य उदकस्य च प्राकाम्यं पर्याप्तत्वं, कार्यम् । तृणोदकं प्रकाम्य-मिति पाठे तृणं च उदकं च प्रकर्षेण काम्यं दुग्धवृद्ध्यनुरूपमपेक्षणीयं, यद्वा कामः पश्वभिलाषस्तत्पूरणानुरूपमित्यर्थः । इति गोमण्डलं तत्सम्बद्धं विधाजातं, व्याख्यातं वितत्य प्रतिपादितम् ।

प्रतिपदपञ्चिका

पादोनमिति, तदेव भद्रगतिबलीबर्दयवसादिविधानमश्वतरगोखराणां वेस-राणाम् इतरपुङ्गवानां गर्दभानां च द्विगुणं तदेव यवसहारादि महिषोष्ट्राणां कर्मकर-बलीबर्दानाम् अवघट्टहलशकटाद्युपयोगिनां, पायनार्थानां च राज्ञो महानसि वा धेनूनां कर्मकालतः फलतश्च यथासङ्ख्यं यावत्कर्मकालं बलीबर्दानां यवदोहं क्षीरबाहुल्यतो वा धेनूनां विधानम् । सर्वेषां पशूनां तृणोदकप्राकाम्यं तत्प्रत्ययलाभः पर्ग वृष्टिकरं तत् पशूनामिति गोमण्डलं व्याख्यातम् । वेतनोपग्राहिकादिद्विविधानां तत् सर्वं विस्तरेण प्रतिपादितमिति ।

श्रीमूला

यूथकल्पनां श्लोकेनाह—पञ्चर्षभमिति । शत्यं व्यक्तिशतप्रमाणं, यूथं,

श्रीमूला

खराश्वानां, पञ्चर्षभं पञ्च ऋषभाः सेक्तारो यस्मिंस्तत् तथाभूतं, कुर्यात् । अजावीनां, यूथं, दशर्षभं दशसेक्त्रधिष्ठितं, कुर्यात् । गोमहिषोष्ट्राणां, यूथं, चतुर्वृषं सेक्तृचतुष्टया- धिष्ठितं, कुर्यात् ॥

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
एकोनत्रिंशोऽध्यायः, गोध्यक्षः, आदितः पञ्चाशः ॥

प्रतिपदपञ्चिका

अध्यायप्रान्ते श्लोकमाह—पञ्चर्षभमित्यादि, ऋषभो वर्षश्च सेक्ता, शत्यं शतप्रमाणम्, शेषं सुबोधम् ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायाम् अर्थशास्त्रटीकायाम्
अध्यक्षप्रचारे द्वितीयेऽधिकरणे एकोनत्रिंशोऽध्यायः, गोऽध्यक्षः,
आदितः पञ्चाशोऽध्यायः ॥

# सप्तचत्वारिंशं प्रकरणम्

## त्रिंशोऽध्यायः ।

### अश्वाध्यक्षः ।

[ तत्तद्भेदनिर्देशविधानपूर्वकम् अश्वरक्षणविधिः ]

**अश्वाध्यक्षः पण्यागारिकं क्रयोपागतम् आहवलब्धम् आजातं साहाय्यकागतकं पणस्थितं यावत्कालिकं वाऽश्वपर्यग्रं कुलवयोवर्णचिह्नकर्मवर्गागमैर्लेखयेत् । अप्रशस्तन्यङ्गव्याधितांश्चावेदयेत् । कोशकोष्ठागाराभ्यां च गृहीत्वा मासलाभं अश्ववाहश्चिन्तयेत् ।**

---

श्रीमूला

अश्वाध्यक्ष इति सूत्रम् । अश्वाध्यक्षः सर्वाश्वनायकः अर्थात् तद्व्यापारोऽभिधीयत इति सूत्रार्थः । स्वाम्यादिप्रकृत्यभिधानानन्तरं दण्डप्रकृतिं प्राप्तावसरां वक्तुमुपक्रमः । तत्राश्वानां प्राधान्यात् प्रथमं तदध्यक्षाभिधानम् ।

अश्वाध्यक्ष इत्यादि । अश्वपतिः, पण्यागारिकं प्राभृतोपनीतं पण्यागारगतं, क्रयोपागतं, क्रीतम्, आहावलब्धं युद्धाहृतम्, अजातं निजाश्वोत्पन्नं, साहाय्यागतकं साहाय्यदानेन लब्धं, पणस्थितम् आधित्वेन स्थितं, यावत्कालिकं यावान् प्रयोजनकालस्तावते कालायान्यस्मादानीतं, वाशब्दश्चार्थे, इत्थं सप्तप्रकारम्, अश्वपर्यग्रम् अश्वानां प्रमाणं, कुलवयोवर्णचिह्नकर्मवर्गागमैः कुलेन पारसीककाम्बोजारट्टवनायुप्रभृतिना, वयसा द्विवर्षत्रिवर्षचतुर्वर्षादिना, वर्णेन शुक्लकृष्णादिना, चिह्नेन धवलवालफालप्रोथादिना, कर्मणा सान्नाह्यादिना, वर्गेण पारसीकादिभिरियद्भिरियानयं वर्ग इति वर्गीकरणेन, आगमेन प्राप्तिस्थानेन च; इत्येवं सप्तभिर्विशेषैर्युक्तं, लेखयेत् ।

अप्रशस्तेत्यादि । अप्रशस्तान् शृङ्गस्थानमांसबुद्बुदत्वान्यप्रभैकाङ्घ्रित्वादिदोषयुक्तान्, न्यङ्गान् अङ्गविकलान्, व्याधितांश्च, आवेदयेत्, यथाकालं परिवर्तनार्थं चिकित्सार्थं च ।

कोशकोष्ठागाराभ्यां चेति । कोशात् कोष्ठागाराच्च, गृहीत्वा मासलाभं मासपरिव्ययक्लृप्तं हिरण्यमश्वभोज्यं चादाय, अश्ववाहः, चिन्तयेत् तत्कार्यम् ।

प्रतिपदपञ्चिका

अश्वाध्यक्ष इति सूत्रम् । अश्वाध्यक्षो महाश्वपतिः, सोऽश्वपर्यग्राहादीन् वक्ष्यमाणाननुतिष्ठेदिति सूत्रार्थः । सम्बन्धस्तु पूर्वमहर्भागं हस्त्यश्वरथप्रहरणविद्यासु

[ अश्वरुपसंङ्ख्याद्यानुगुण्येन अश्वशालापरिकल्पनविधिः ]

**अश्वविभवेनायताम् अश्वायामद्विगुणविस्तारां चतुर्द्वारोपावर्तनमध्यां सप्रग्रीवां प्रद्वारासनफलकयुक्तां वानर-मयूर-पृषत-नकुल-चकोर-शुक-शारिकाभिराकीर्णां शालां निवेशयेत् ।**

---

प्रतिपदपञ्चिका

विनयं गच्छैदिति हस्त्यादयोऽभिहिताः, तदध्यक्षास्तु नोक्ताः, तेऽभिधीयन्त इत्ययमध्यायत्रयस्यापि सम्बन्धः । अथवा स्वाम्यमात्यजनपददुर्गकोशप्रकृतयोऽभिहिताः । तदनन्तर दण्डप्रकृतिर्वक्तव्या सामिधीयत इति, सम्बन्धस्तु तत्रापि प्राधान्यात् अश्वानामश्वाध्यक्षः इत्येतदाह । तथा चोक्तम्—

शक्यमश्वसहस्रेण वीरारूढेन भारत ! ।
व्यायता यद्द्वितीयेन कृत्स्ना जेतुं वसुन्धरा ।। इति ।

तमाह—अश्वाध्यक्ष इत्यादि। सपण्यागारिकादि सप्तप्रकारमश्वपर्यग्रं कुलादिषड्विशेषणं प्रत्येकं लेखयेत् । तत्र पण्यागारिकं दर्शनागतं क्रयोपगतं क्रीतम् आवहलब्धं सङ्ग्रामाहृतम् आजातं स्ववेदवाघातं साहाय्यागतकं साहाय्यदानेन लब्धं पणस्थितम् अधिकृतं यावत्कालिकं यावत्प्रयोजनं परकीयमानितमश्वपर्यग्रमश्वपारमाणम् । कुलेन काम्मोजादिना वयसा द्विवर्षत्रिवर्षचतुर्वर्षादिना, वर्णेन श्वेतशोणादिना चिह्नेन पौण्ड्र प्रोथादिना पाण्डुप्रोढकालवकालादिना, कर्मणा सान्नाह्यादिना, वर्गेण सभुदायेन, तद्यथैतावतीभिर्बालमीताभिश्च काम्मोजादिभिरेतावानयं वर्ग इति समुदायीकृत्य आगमेन यतो लब्धः इत्येवं लेखयेत् । अश्वाध्यक्षः अप्रशस्तादीन् वा वेदयेत् । अप्रशस्तं कृष्णं तालुकावर्तादि व्यङ्गः काणखञ्जादिः व्याधितः सरोगः ।

कोषकोष्टागाराभ्यामित्यवच्छेदार्थः कोषाद्धिरण्यं कोष्ठागाराध्यक्षस्य स्नेहलवणोर्णादिकं गृहीत्वा मासलाभं पञ्चत्रिंशद्दिवसपरिव्ययं गृहीत्वा अश्वानां मन्दुरादींश्चिन्तयेत् च ।

श्रीमूला

शालाविधिमाह—अश्वविभवेनेति । अश्वविभवेनायताम् अश्वपर्यग्रानुरूप्येण दीर्घाम्, अश्वायामद्विगुणविस्ताराम्, अश्वायाममनुपदं वक्ष्यति, तद्द्विगुणविस्तारां, चतुर्द्वारोपावर्तनमध्यां चतुर्द्वारं सुखप्रवेशनिर्गमार्थमग्न्यादिभये निष्क्रमणद्वाराणां सर्वतः सौलभ्यार्थं च परिकल्पितद्वारचतुष्टयम्, उपावर्तनं प्रलुठनस्थानं मध्ये यस्यास्तां तथाभूतां, सप्रगीवां प्रग्रीवेण मुखप्रासादेन सहितां, प्रद्वारासनफलकयुक्तां प्रद्वाराभ्यां द्वारोभयपार्श्वगताभ्याम् आसनफलकाभ्यां युक्तां, वानरमयूरादिभिः सप्तभिर्विषप्रतीकारप्रयोजनाभिराकीर्णाम्, शालां मन्दुरां, निवेशयेत् निर्मापयेत् ।

**अश्वायामचतुरश्रश्लक्षणफलकास्तारं सखादनकोष्ठकं समूत्रपुरीषोत्सर्गम् एकैकशः प्राङ्मुखमुदङ्मुखं वा स्थानं निवेशयेत् । शालावशेन वा दिग्विभागं कल्पयेत् । वडबावृषकिशोराणाम् एकान्तेषु ॥**

———— —

प्रतिपदपञ्चिका

शालामाह—अश्वविमर्वेनायतामिति, अश्वसङ्ख्याभिरूपेण प्रमाणेनाऽऽयतां दीर्घमानेन च । दैर्घ्यस्याऽनियममाह—अश्वायामद्विगुणविस्तारामिति । अश्वायामं वक्ष्यति द्वात्रिंशदङ्गुलीमुखमुत्तमाश्वस्य पञ्चमुखान्यायाम इति । तदद्विगुणविस्तारां चतुर्द्वारामुपावर्तनमध्यां च प्रवेशनिर्गमयोरसम्बाधार्थम् अग्न्यादिमये यथासन्नद्वारनिर्गमार्यम् । चतुर्द्वारित्वम् उपावर्तनं प्रलुण्ठनस्थानं गोकरीषकल्पिततल्पमध्ये तदेकदेशे यस्याः सोपावर्तनमध्येति केचित् ।

अपरे पुनरुपावर्तनं प्रमाणविशेषणम् आचक्षाणास्तावत् प्रमाणमध्यं पार्श्वपङ्क्ति-( पद )द्वयान्तरमाचक्षते । तथा च—

"केचिदाहुर्युगायामं रथचर्येति चापरे ।
हयायामसमं कैश्चिदुपावर्तनमिष्यते ॥" इति ।

समासकरणं च द्वारस्यापि तावन्मात्रज्ञापनार्थम् । सप्रग्रीवां मुखशालोपेतां प्रद्वारासनफलकां द्वारोभयपार्श्वसम्प्रश्रयासनफलकयुक्तामादक्षिणामवस्थानार्थं वानरमयूरादिमिराकीर्णां विषप्रतीकाराद्यर्थं कारयेत् निवेशयेत् ।

श्रीमूला

अश्वायामेत्यादि । अश्वायामचतुरश्रश्लक्षणफलकास्तारम् अश्वदैर्घ्यानुगुण्येन चतुरश्रनिर्मितं श्लक्षणं च फलकम् आस्तार आस्तरणं यस्मिस्तत् तथाभूतं, सखादनकोष्ठकं खादनकोष्ठैर्यवसादिविकरणाधारभूतैस्तद्भक्षणकोष्ठैः सहितं, समूत्रपुरीषोत्सर्गं मूत्रपुरीषानवरोधसविधानसहितम् अर्थात् किञ्चिदग्रतः समुन्नतम्, एकैकशः प्रत्यश्वं, प्राङ्मुखम् उदङ्मुखं वा स्थानं निवेशयेत् । शालावशेन वा दिग्विभागं कल्पयेदिति । राजभवनस्य य उत्तरपूर्वो दिग्विभागोऽश्वशालार्थ उक्तः 'उत्तरपूर्वं भागं कोशो गवाश्वं च' इति, स चेदश्वानां बाहुल्यादपर्याप्तः, तदा निर्मातव्यशालामहत्त्वानुगुण्येन दिग्विभागोऽन्यः स्वीकरणीय इत्यर्थः । वडवेत्यादि । वडवानां प्रसविनीनां वृषाणां सेक्तॄणां किशोराणां षण्मासादूर्ध्वम् आ त्रिवर्षात् किशोराः तेषां च एकान्तेषु तदन्याश्वानां तेषां चाऽन्योन्यदृष्ट्यगोचरेषु स्थलेषु, स्थानं कल्पयेदिति वर्तते ।

प्रतिपदपञ्चिका

महाशालानिवेशनमभिधाय प्रत्येकमाह-अश्वायामचतुरश्रश्लक्षणफलकास्तारमिति । अश्वायामचतुरश्रश्लक्षणैः फलकैरास्तारो यस्मिन् सखादनकोष्ठं यवसादि-

[ प्रजातजातयोरश्वयोः देशकालवयोऽनुगुणाहारव्यवस्था ]

**वडवायाः प्रजातायास्त्रिरात्रं घृतप्रस्थपानम्; अत ऊर्ध्वं सक्तुप्रस्थः स्नेहभैषज्यप्रतिपानं दशरात्रम्; ततः पुलाको यवसमार्तवश्चाहारः। दशरात्रादूर्ध्वं किशोरस्य घृतचतुर्भागः सक्तुकुडुबः, क्षीरप्रस्थश्चाहार आ षण्मासादिति। ततः परं मासोत्तरमर्धवृद्धिर्यवप्रस्थ आ त्रिवर्षात्; द्रोण आ चतुर्वर्षादिति। अत ऊर्ध्वं चतुर्वर्षः पञ्चवर्षो वा कर्मण्यः पूर्णप्रमाणः।**

———————

प्रतिपदपञ्चिका

विकरणाधारो वेनयवसादिखादनकोटि(बी)कोपेतं वा मूत्रपुरीषोत्सर्गं किञ्चिदग्रतः समुन्नतमेकैकशः प्रत्येकमश्वानां स्थानं निवेशयेत्। प्रागुदङ्मुखग्रहणं मङ्गलार्थं दिगन्तरप्रतिषेधार्थं च। शालावशेन वा दिग्विभागमित्यादि उत्तरपूर्वभागे कोशोगवाश्वं चेत्युक्तम्, तद्यदि न तत्र तावानवकाशो महतो च शाला कार्या, तदा तद्योग्येऽन्यस्मिन्नपि दिग्विभागे शालां कुर्यादित्यर्थः। वडवा प्रसविनी। वृषः सेक्ता। किशोरः षण्मासादूर्ध्वमा त्रिवर्षादिति। एतेषामेकान्तेषु अन्यवाजिनां तेषां च परस्परमदर्शने शालां कुर्यात्।

श्रीमूला

वडवाया इति। तस्याः, प्रजातायाः प्रसूतायाः, त्रिरात्रं, घृतप्रस्थपानं प्रथमदिवसादूर्ध्वं प्रातः प्रातरिति स्वामी। अतः ऊर्ध्वं, सक्तुप्रस्थः अपराह्णभोजनं, तदनन्तरं स्नेहभैषज्यप्रतिपानं स्नेहयुक्तमूलक्वाथादिप्रतिपानं, दशरात्रम्। तत इति। तदनन्तरं, पुलाकः अर्धसिद्धयवादिः यवसं घासः, आर्तवश्चाहारः ऋतुयोग्यश्चाहारः सस्यलक्षणः।

दशरात्रादिति। दशरात्रादूर्ध्वं, किशोरस्य, घृतचतुर्भागः पादकुडुबघृतयुक्तः सक्तुकुडुबः, क्षीरप्रस्थश्च, आहारः। आ षण्मासादिति। आमासषटकम् एवं कर्तव्यम्। ततः परमिति। षण्मासादूर्ध्वं, मासोत्तरमर्धवृद्धिः प्रतिमासं वर्धमानार्धप्रस्थः। आ कुतोऽयं यवप्रस्थो वर्धत इत्याह—आ त्रिवर्षादिति। द्रोण इति। यवद्रोणः त्रिवर्षादूर्ध्वम्, आ चतुर्वर्षाद्, आहारः। अत ऊर्ध्वं, चतुर्वर्षः, पञ्चवर्षो वा अश्वः, कर्मण्यः सान्नाह्यदिकर्मार्हः, पूर्णप्रमाणः पूर्णं प्रमाणं वक्ष्यमाणं यस्य स तथाभूतो भवति।

प्रतिपदपञ्चिका

वडवायाः प्रजाताया इति। प्रसूतायास्त्रिरात्रं घृतप्रस्थः प्रातः प्रातरच्छापानं तच्च दिनमेकं लङ्घिताया इति द्रष्टव्यम्। अतः त्रिरात्रादूर्ध्वं सक्तुप्रस्थः अपराह्णभोजनं स्नेहभैषज्यप्रतिपादनमिति, भोजनानन्तरं स्नेहोक्षितं च मूलादिकं वा प्रतिपानं

[ तत्तत्प्रमाणाद्यानुगुण्येनोत्तमत्वादिव्यवस्था ]

**द्वात्रिंशदङ्गुलं मुखमुत्तमाश्वस्य, पञ्चमुखान्यायामः विंशत्यङ्गुला जङ्घा, चतुर्जङ्घः उत्सेधः। त्र्यङ्गुलावरं मध्यमावरयोः, शताङ्गुलः परिणाहः पञ्चभागावरं मध्यमावरयोः।**

[ अश्वस्वरूपानुगुण्येन आहारव्यवस्थाः, तन्नियोजनव्यवस्थाश्च [

**उत्तमाश्वस्य द्विद्रोणं शालिव्रीहियवप्रियङ्गूणामर्धशुष्कमर्धसिद्धं वा**

---

प्रतिपदपञ्चिका

दशरात्रम्, ततो दशरात्रादूर्ध्वं पुलाकोऽर्धसिद्धयवादिः। यवसम्भरितं शुष्कं वा सस्यमार्तवमृतुयोग्यमाहारःर्थं देयम्। दशरात्रादूर्ध्वं किशोरस्य घृतचतुर्भागः सक्तुकुडुबः चतुर्भागः घृतसंयुक्तः। क्षीरप्रस्थश्चाहार आ षण्मासादिति। ततः परं षण्मासादूर्ध्वं मासोत्तरमर्धप्रस्थ इति मासमेकं यवप्रस्थः। ततो मासे मासें अर्धप्रस्थो वर्धते। आ त्रिवर्षादिति त्रिवर्षादूर्ध्वं द्रोणमेकवर्षमत ऊर्ध्वमिति तृतीयाद् चतुर्थाद्वा वर्षात् चतुर्वर्षः पञ्चवर्षो वा कर्मण्यः सन्नाहादिक्रियायोग्यः पूर्णप्रमाणो वक्ष्यमाण-प्रमाणोपेतो भवति।

श्रीमूला

तदेव प्रमाणं व्याचष्टे—द्वात्रिंशदित्यादि। उत्तमाश्वस्य, द्वात्रिंशदङ्गुलं मुखं, पञ्च मुखानि आयामः षष्टयधिकशताङ्गुलं दैर्घ्यं, विंशत्यङ्गुला जङ्घा, चतुर्जङ्घ उत्सेधः अशीत्यङ्गुलमौन्नत्यम्। त्र्यङ्गुलावरं मध्यमावरयोः यदुक्तमुत्तमस्य मुखादिप्रमाणं तद् मध्यमस्य त्र्यङ्गुलावरं त्र्यङ्गुलन्यूनम् अवरस्य अधमस्य ततोऽपि त्र्यङ्गुलन्यूनम्। टीकाभाषयोः द्वयङ्गुलावरमिति पाठ उपात्तः। अथ परिणाहस्य प्रमाणमाह—शताङ्गुल इति। अङ्गुलशतप्रमाणः, परिणाहः परिक्षेपः, अर्थादुत्तमाश्वस्य। पञ्चभागावरं मध्यमावरयोः उत्तमाश्वपरिणाहप्रमाणात् पञ्चभागन्यूनम् अर्थादशीत्यङ्गुलं मध्य-माश्वस्य षष्ट्यङ्गुलमवराश्वस्य परिणाहप्रमाणम्।

प्रतिपदपञ्चिका

तच्च प्रमाणमाह—द्वात्रिंशदङ्गुलं मुखमाप्रोथमस्तकमुक्तमुत्तमाश्वस्य, पञ्चमुखान्या-यामो दीर्घत्वं, विंशत्यङ्गुला जङ्घा जानुखुरान्तरं, चतुर्जङ्घ उत्सेधः अशीत्यङ्गुलः सखुर-पृष्ठवंश उच्छ्रायः द्वयङ्गुलावरं मध्यमावरयोरिति। मुखाद्युत्सेधान्तमुत्तमाश्वस्य यद् यत् प्रमाणमभिहितम्, तत्र सर्वत्र द्वयङ्गुलाभ्यामवरोऽमध्यमः। ततो द्वयङ्गुलाभ्या-मवरोऽधमः अवगन्तव्यः। शताङ्गुलः परिणाहः आसमार्गवं(मं)ध्रापरिक्षेपः उत्तमस्य पञ्चभागावरं मध्यमावरयोरिति पूर्ववद् व्याख्येयम्। परिणाह इति वर्तते, पञ्चनवत्यङ्गुलं परिक्षेपः प्रमाणं मध्यमस्य, नवत्यङ्गुलमवरस्येति।

श्रीमूला

आहारविधानमाह—उत्तमाश्वस्येति। तस्य, द्विद्रोणं शालिव्रीहियवप्रियङ्गूणां

**मुद्गमाषाणां वा पुलाकः; स्नेहप्रस्थश्च। पञ्चपलं लवणस्य। मांसं पञ्चाशत्पलिकम्। रसस्याढकं द्विगुणं वा दध्नः पिण्डक्लेदनार्थम्। क्षार-पञ्चपलिकः सुरायाः प्रस्थः पयसो वा द्विगुणः प्रतिपानम्। दीर्घ-पथभारक्लान्तानां च खादनार्थं स्नेहप्रस्थोऽनुवासनम्। कुडुबो नस्य कर्मणः। यवसस्यार्धभारः, तृणस्य द्विगुणः, षडरत्निपरिक्षेपः पुञ्जीलग्रहो वा। पादावरमेतन्मध्यमावरयोः। उत्तमसमो रथ्यो वृषश्च मध्यमः। मध्यमसमश्चावरः। पादहीनं वडवानां पारशमानां च; अतोऽर्धं किशोराणां च। इति विधायोगः।**

---

श्रीमूला

शाल्याद्यन्यतमस्य द्रोणद्वयम्, अर्धशुष्कम् अर्धसिद्धं वा, भोजनमिति शेषः। मुद्ग-माषाणां वा, पुलाकः भक्तसिक्थकः, उक्तपरिमाणः। स्नेहप्रस्थश्च घृतस्य तैलस्य वा प्रस्थश्च पानार्थः। पञ्चपलं लवणस्य। मांसं, पञ्चाशत्पलिकं पञ्चाशत्पलप्रमाणम्। रसस्य मांससंस्कृतस्य, आढकं, द्विगुणं वा दध्नः दध्याढकद्वयं वा, पिण्डक्लेदनार्थं भुक्तपुलाकक्लेदनार्थम्। क्षारपञ्चपलिकः गुलादिपञ्चपलयुक्तः सुरायाः प्रस्थः, पयसो वा, द्विगुणः प्रस्थद्वयं, प्रतिपानम् अपराह्णदेयम्। दीर्घपथभारक्लान्तानां च दीर्घाध्वलङ्घन-भारवहनपरिश्रान्तानां च, खादनार्थम् अग्निदीपनद्वारेण सम्यगाहारग्रहणार्थं, स्नेहप्रस्थः, अनुवासनम् अनुवासनाख्यवस्तिचिकित्सादानं, भवति। यदुक्तम्—

> "वस्तिर्द्विधाऽनुवासाख्यो निरूहश्च ततः परः।
> यः स्नेहैर्दीयते स स्यादनुवासननामकः॥
> कषायक्षीरतैलैर्यो निरूहः स निगद्यते॥" इति।

कुडुबः स्नेहस्य प्रस्थचतुर्भागः, नस्यकर्मणः नासिकासेचनस्य। यवसस्य हरितसस्यादेः, अर्धभारः दश तुलाः। तृणस्य शुष्कस्य, द्विगुणः विंशतितुलाः, यवसाभावे। षडरत्निपरिक्षेपः पुञ्जीलग्रहो वा हस्तषट्कपरिणाहः पुञ्जीलानां तृणस्तम्बानां ग्रहो वा अर्थाद् भुजद्वयालिङ्गनग्राह्यस्तृणस्तम्बसङ्घातो वा।

पादावरमेतन्मध्यमावरयोरिति। उत्तमस्याश्वस्योक्तं द्विद्रोणादिकं सर्वं चतुर्भागन्यूनं मध्यमस्य ततोऽपि चतुर्भागन्यूनमधमस्य। उत्तमसम इति। उत्तमा-श्वविधसमानविधः, रथ्यो वृषश्च मध्यमः रथवाही मध्यमाश्वः सेक्ता च मध्यमाश्वः। मध्यमसमश्चावरः अधमाश्वो रथवाही अधमाश्वः सेक्ता च मध्यमाश्वविधासमान-बिधः। पादहीनं चतुर्भागहीनम् अर्थात् त्रिविधमपि विधाविधानं, वडवानां पारशमानां च अश्वतराणां च। इह पारशमानामिति माकारयुक्तपाठलेखनं कोशेषु चिन्त्यम्। पारशवानामिति तु वाकारयुक्तं पठितव्यं, तदा हि पारशवशब्दः सङ्करजातिमनुष्य-

**विधापाचक-सूत्रग्राहक-चिकित्सकाः प्रतिस्वादभाजः ।**

**युद्धव्याधिजराकर्मक्षीणाः पिण्डगोचरिकाः स्युः । असमरप्रयोग्याः पौरजानपदानामर्थेन वृषाः बडबास्वायोज्याः ।**

---

श्रीमूला

वचनः सङ्करजे अश्वे वेगसराख्ये भक्त्या प्रयुक्त इति शक्यते वक्तुम् । अतोऽर्धं बडवाविधाया अर्धम्, किशोराणां च । इति एवं, विधायोगः उक्तः ।

प्रतिपदपञ्चिका

विधाविधिमाह—उत्तमाश्वस्य द्विद्रोणमित्यादि, शाल्यादीनामन्यतमस्य, शाल्यादयः प्रतीताः । प्रियङ्गुकम्बुः अर्धशुष्कं मनाक्क्विन्नमिति, अर्धसिद्धं मनाक्सिद्धं मुद्गमाषाणां वा पुलाकः । स्नेहप्रस्थो पानस्य पञ्चपलकं लवणस्य, मांसं पञ्चाशत्पलिकमिति, तावन्मात्रं मांससंस्कृतस्य रसस्याढकं दध्नो वा द्विगुणमाढकद्वयम् उक्तवतः पिण्डक्लेदनार्थं क्षारपञ्चपलिको गुडादिपञ्चपलोपेतः सुरायाः प्रस्थः पयसो वा द्विगुणः प्रस्थद्वयं प्रतिपानमापराह्णिकम् । दीर्घपथभारक्लान्तानां चेति । दीर्घाध्वगमनेन भारवहनेन च क्लान्तानामाप्यायनार्थं देयम्, तथा खादनार्थं खादितजरणार्थम् अग्निवृद्धयै देयम् । स्नेहप्रस्थोऽनुवासनं वस्तिदानं, कुडुवो नस्यकर्मणः नासिकादानस्य यवसस्य हरितसस्यादेरर्धभारः । तृणस्य शुक्लस्य ( शुष्कस्य ) द्विगुणः । षडरत्निपरिक्षेपस्तद्रज्जुपरिक्षेपः पुञ्जीलग्रहो वा तृणस्य भुजद्वयपरिष्वङ्गग्राह्यः ।

पादावरं चतुर्भागहीनमेतद् द्विद्रोणादिकं मध्यमावरयोर्यथाक्रमं वरं भवति । उत्तमसम इति, उत्तमाश्वविधासमानविधः रथ्यो रथवाहिवृषश्च सेवता मध्यमः । मध्यमसमश्च रथ्यो वृषश्च पादहीनं बडवानामिति । विधानमपि त्रिविधं विधा विधानं पादहीनं भवति । पारशमानां च वेसराणां पादहीनमेव ।

अतोऽर्धमिति । वडवाविधार्धं किशोराणामित्ययं विधायोगः प्रतिपादित इति ।

श्रीमूला

विधापाचकसूत्रग्राहकचिकित्सका इति । अश्वाहारपक्तारोऽश्वपरिचारका अश्ववैद्याश्च, प्रतिस्वादभाजः विधाभागिनः, अतो विधायास्तद्भजनीया मात्रापि अश्वभोज्यमात्राभिः सह संविधेयेत्यभिप्रायः ।

युद्धव्याधिजराकर्मक्षीणा इति । युद्धादित्रयक्षीणाः सान्नाह्यादिकर्मक्षीणाश्च, पिण्डगोचरिकाः अप्रशस्तः पिण्डः कुक्षिपूरणमात्रार्थं आहारो गोचर एषामिति तथाभूताः, स्युः । असमरप्रयोग्या इति । युद्धानर्हाः, पौरजानपदानाम्, अर्थेन प्रसूतिरूपप्रयोजनेन, वृषाः सेक्तारो भवन्तः, वडवासु आयोज्याः ।

**प्रयोग्यानामुत्तमाः काम्भोजक सैन्धवाऽऽरट्टजवानायुजाः । मध्यमाः बाल्हीक-पापेयक-सौवीरक-तैतलाः । शेषाः प्रत्यवराः । तेषां तीक्ष्णभद्रमन्द-वशेन सान्नाह्यमौपवाह्यकं वा कर्म प्रयोजयेत् ॥**

[ सान्नाह्यपदार्थः, औपवाह्याश्वमार्गस्य पञ्चधा विभागः, प्रत्येकं तद्भेदाश्च ]

**चतुरश्रं कर्माश्वस्य सान्नाह्यम् । वल्गनः नीचैर्गतः लङ्घनः धोरणः**

---

प्रतिपदपञ्चिका

विधापाचको रन्धकः, सूत्रग्राहकः पारिकर्मिकः, चिकित्सकश्च वैद्यः, प्रतिस्वादभाजो विधासम्भाजः । युद्धव्याधिजराकर्मक्षीणा इति । युद्धादयः प्रतीताः, कर्म उपवाह्यं तैः क्षीणाः पिण्डगोचरिकाः उदरपूरणमात्रलाभिनो न निश्शेषविधा-लाभिन इति । येत्वसमरप्रयोग्याः समरव्यापारासमर्थास्ते पौरजानपदानां प्रसूतज्याः ( ? प्रसूतासु आयोज्याः ) प्रयोजनीयाः ।

श्रीमूला

प्रयोग्यानामिति । प्रगतचर्यादिशिक्षाणां युद्धयोग्यानामश्वानां मध्ये, उत्तमाः, काम्बोजकादयः कम्बोजादिदेशचतुष्टयोत्पन्नाः । मध्यमा बाह्लीकादिदेशचतुष्टयोत्पन्नाः, शेषाः उक्तेतरसौराष्ट्रादिदेशभवाः, प्रत्यवराः अधमाः ।

अश्वानां द्विविधं कर्माह—तेषामिति । उत्तमादीनां, तीक्ष्णभद्रमन्दवशेन तीक्ष्णोऽतिमात्रतेजस्सत्त्वः आघातलेशस्याप्यसोढा भद्रस्तेजस्सत्त्वयुक्तः, आघात-सत्त्वानुरूपचेष्टी मन्दो निस्तेजस्सत्त्वो महाघातोत्पादनीयकर्मप्रतिपत्तिः त्रिविधैतत्स्व-भावानुगुण्येन, सान्नाह्यं साङ्ग्रामिकम्, औपवाह्यकं वा क्रीडायानाध्वयानादिप्रयोजनकं वा, कर्म, प्रयोजयेत् ।

प्रतिपदपञ्चिका

प्रयोग्यानां युद्धयोग्यानाम् उत्तमाः प्रधानाः काम्भोजादयश्चत्वारः, एवं बाह्लीकादयश्चत्वारो मध्यमाः, शेषास्सौराष्ट्रादयः प्रत्यवराः, तत्र सैन्धवाः सिन्धु-देशजाः, पारसीकाः तद्देशजाः, काम्भोजादयस्तु षट् तुरगाकरा देशविशेषाः ।

तेषामिति । काम्भोजादीनां तीक्ष्णादिवशेन तीक्ष्णोऽतितेजस्वी ततश्च सोऽल्पेनाऽव्याहतेनोद्विजते, भद्रस्तेजस्वी॰, सत्ववांश्च स यथाघातः सत्वसदृशं च चेष्टते, मन्दो निस्तेजाः निस्सत्वश्च स महताऽऽघातेन कर्म प्रतिपद्यते, तद्वशेन तदनुरूपेण सान्नाह्यं सङ्ग्रामादिकम्, औपवाह्यकं क्रीडासुखद्रुतयानप्रयोजनम्, एवं द्विविधं चतुर्विध-फलं कर्म प्रयोजयेत् । तथा च चतुर्विधं फलं दृष्टं, पुष्ट्याऽश्वानां पुरातनैः युद्धक्रीडासु बोधार्थं गमनार्थं तथाऽध्वनः इति ।

श्रीमूला

चतुरश्रमिति । चतुरश्रं सौष्ठवयुक्तम्, कर्म शालिहोत्रादिप्रपञ्चितविशेषं साङ्ग्रामिककर्म, सान्नाह्यं, भवति ।

**नारोष्ट्रश्च औपवाह्याः। तत्रौपवेणुकः वर्धमानकः यमकः आलीढप्लुतः पूर्वगः त्रिकचाली च वल्गनः। स एव शिरःकर्णविशुद्धो नीचैर्गतः षोडशमार्गो वा। प्रकीर्णकः प्रकीर्णोत्तरः निषण्णः पार्श्वानुवृत्तः ऊर्मिमार्गः शरभक्रीडितः शरभप्लुतः त्रितालः बाह्यानुवृत्तः पञ्चपाणिः सिंहायतः स्वाधूतः क्लिष्टः श्लाघितः बृंहितः पुष्पाभिकीर्णश्चेति नीचैर्गतमार्गाः। कपिप्लुतः भेकप्लुतः एणप्लुतः एकपादप्लुतः कोकिलसञ्चारी उरस्यः बकचारी च लङ्घनः। काङ्कः वारिकाङ्क्षः मयूरः अर्धमयूरः नाकुलः अर्धनाकुलः वाराहः अर्धवाराहश्चेति धोरणः। संज्ञाप्रतिकारो नारोष्ट्र इति ॥**

---

श्रीमूला

औपवाह्यं पञ्चधा विभजते—वल्गन इत्यादिना। ओपवाह्याः औपवाह्याश्वमार्गाः।

वल्गनमार्गं विवृणोति—तत्रेत्यादि। तत्र वल्गनादिषु पञ्चसु मार्गेषु मध्ये, ओपवेणुकः हस्तमात्रमण्डल इति स्वामी, वर्धमानकस्तावन्मात्रमण्डलपङ्क्तिपरिपाटीवल्गनः, यमको युगपदुभयमण्डलवल्गनः, आलीढप्लुतः एकपादसङ्कोचापरपादप्रसारणपूर्वप्लुतियुक्तः, पूर्वगः पूर्वार्धवल्गनः, त्रिकचालो त्रिकं पृष्ठवंशाधरः तेन पश्चार्धलक्षणात् पश्चार्धवल्गनः।

स एवेति। वल्गनमार्ग एव, शिरःकर्णविशुद्धः शिरसा कर्णाभ्यां चाविकृतः, नीचैर्गतः तदाख्यः। षोडशमार्गो वा वक्ष्यमाणषोडशविधश्च सः। के ते प्रकारा इत्याह—प्रकीर्णक इत्यादि। प्रकीर्णकः सर्वगतिसङ्करयुक्तः, प्रकीर्णोत्तरः प्रकीर्ण एवैकगतिप्रधानः निषण्णो निष्कम्पपृष्ठगतिः, पार्श्वानुवृत्तस्तिर्यग्गतिः, ऊर्मिमार्गः उन्नतानतगतिः, शरभक्रीडितः शरभगतिः, शरभप्लुतः शरभतुल्योत्पतनः, त्रितालः त्रिपदगामी, बाह्यानुवृत्तः सव्यापसव्यवल्गनगतिः, पञ्चपाणिः चरणत्रयं सकृदवस्थाप्य एकं द्विरवस्थापयति, सिंहायतः सिंहतुल्यगतिः, स्वाधूतः अतिदीर्घगतिः, क्लिष्टो विवहनविस्रब्धगतिः, श्लिङ्गितोऽवनताग्रयायी, बृंहित उन्नताग्रयायी, पुष्पाभिकीर्णो गोमूत्रिकागतिः। इति एते, नीचैर्गतमार्गाः।

लङ्घनमाह—कपिप्लुत इत्यादि। वानरमण्डूकहरिणप्लुतैः सदृशप्लुतत्वात् कपिप्लुतो भेकप्लुत एणप्लुतश्च, एकपादप्लुतः सङ्कोच्य पादत्रयमेकेन पादेन प्लुतं यस्य सः, कोकिलसञ्चारी पिकवत्सञ्चारः, उरस्यः सङ्कोच्य सर्वान् पादान् उरसैव प्लवमानः, बकचारी च बकवत्सञ्चारश्च, लङ्घनः।

धोरणमाह—काङ्क इत्यादि। काङ्कसमानगतिः काङ्कः, वारिकाङ्क्षः हंसादिसमानगतिः। एवं मायूरादिर्व्याख्येयः। इति एवमष्टविधो धोरणः।

[ रथवाहिभिः भारवाहिभिश्चाश्वैः एकदिनप्राप्याश्व-
परिमाणानां निर्देशः, गतिभेदाश्च ]

**षण्णव द्वादशेति योजनान्यध्वा रथ्यानाम् । पञ्च योजनान्यर्धाष्टमानि**

---

श्रीमूला

नारोष्ट्रमाह—संज्ञाप्रतिकार इति । शिक्षितसङ्केतानुरूपचेष्टितः नारोष्ट्राख्यः । इतिशब्द औपवाह्यनिरूपणसमाप्तौ ।

प्रतिपदपञ्चिका

तत्र सान्नाह्यं कर्माह—चतुरश्रमिति । चतुरश्रं युद्धक्रीडासौष्ठवसामर्थ्यलक्षणं कर्माश्वस्य सान्नाह्यं भवति । तच्च विशेषतः शालिहोत्राद् धनुर्वेदादिभ्यश्चाव-गन्तव्यम् ।

सम्प्रति वल्गनादि पञ्चप्रकारमौपवाह्यकमभिधाय स्वयमेव व्याचष्टे—तत्रेत्यादि । औपवेणुकादिषट्प्रकारो वल्गनमार्गः, औपवेणुको हस्तमात्रमण्डलः वर्धमानस्ताव-न्मात्रमण्डलपङ्क्तिपरिपाटीवल्गनः, यमको युगपदुभयमण्डलवल्गनः, वृथाट्टः (?) पूर्वार्ध-वल्गनः त्रिकचाली चार्धपश्चवल्गन इति ।

नीचैर्गतं मार्गमाह—स एवेति । वल्गन एव शिरःकर्णविशुद्धस्तद्विकाररहित इत्येतावता विशेषेण नीचैर्गतो भवति । स षोडशमार्गश्च वक्ष्यमाणः प्रकीर्णकादि-षोडशप्रकारगतिः । वाशब्दश्चार्थे, तानेव प्रकारान् दर्शयति—प्रकीर्णक इत्यादि ।

तत्र प्रकीर्णकः सर्वगतिसङ्कीर्णः, प्रकीर्णोत्तरः स एवैकगतिप्रधानः, निषण्णो निष्कम्पपृष्ठगतिः, पार्श्वानुवृत्तस्तिर्यग्गतिः, ऊर्मिमार्गो निम्नोन्नतगतिः, शरभक्रीडितः तत्तुल्यगतिः, शरभप्लुतः तत्तुल्योत्पतनः, त्रितालश्चरणत्रययायी, बाह्यानुवृत्तसव्याप-सव्यवल्गनगतिः, पञ्चपाणिश्चरणत्रयं सकृदवस्थाप्य एकं द्विरवस्थापयति । सिंहायतः सिंहतुल्यगतिः स्वाधूतः अत्यन्तदीर्घगतिः, क्लिष्टो विवहनविस्रब्धयायी, श्लिङ्गितो-ऽवनताग्रयायी बृंहित उन्नताग्रयायी, पुष्पावकीर्णो गोमूत्रिकागतिरित्येते नीचैर्गतस्य मार्गा शनैर्गतप्रकाराः ।

सप्तप्रकारं लङ्घनमाह—कपिप्लुत इत्यादि । तत्र सङ्कुचितपादत्रयेणैकेन पादेन यः प्लवते स एकपादप्लुतः । सङ्कुचितसर्वपादः उरसैव यः प्लवते स उरस्यः । शेषास्तु कपिप्लुतादयः तद्वदित्युपमानाद् व्याख्येयाः । अष्टप्रकारं धोरणमाह—काङ्क इत्यादि, कङ्कचारिका तुल्यगतिः काङ्कस्तथैव द्विगुणयाकरिकः, मायूरार्धमायूरादयोऽपि मयूरा-दिगतिसाम्यात् साकल्यतो विकल्पनीयाः ।

नारोष्ट्रस्त्वेकप्रकार एव, तमाह—संज्ञाप्रतीकार इति । शिक्षितस्य विज्ञानं संज्ञा, तस्याग्रतः कृतसङ्केतस्य प्रतीकारः, तदनुरूपश्चेष्टितं नारोष्ट्र इति ।

श्रीमूला

गन्तव्याध्वमानमाह—षण्णव द्वादशेत्यादि । रथ्यानां रथवाहिनामुत्तममध्य-

**दशेति पृष्ठवाह्यानामश्वानामध्वा ॥**

**विक्रमो भद्राश्वासो भारवाह्य इति मार्गाः ।**

**विक्रमो वल्गितमुपकण्ठमुपजवो जवश्च धाराः ।**

[ मुखादियोजनीयबन्धनोपकरणालङ्काराहाराणां व्यवस्थापकाः ]

**तेषां बन्धनोपकरणं योग्याचार्याः प्रतिदिशेयुः । साङ्ग्रामिकं रथाश्वालङ्कारं च सूताः । अश्वानां चिकित्सकाः शरीरह्रासवृद्धिप्रतीकारमृतुविभक्तं चाहारम् ।**

---

श्रीमूला

माधमानाम् अश्वानाम्, अध्वा, षट् नव द्वादशेति क्रमात् षड्योजनो नवयोजनो द्वादशयोजनश्च भवति । तथा पञ्च योजनानि, अर्धाष्टमानि सार्धानि सप्त योजनानि, दश योजनानि, इति क्रमेण पृष्ठभारवाहिनाम् अश्वानां त्रिविधानाम् अध्वा ।

त्रिविधं गतिभेदमाह—विक्रम इति । विक्रमः शनैर्गमनम्, भद्राश्वासो मध्यमः, भारवाह्यो द्रुतगमनम्, इति मार्गाः ।

धारा आह—विक्रमो वल्गितमिति । विक्रमः शनैर्गमनम्, वल्गितं प्रेङ्खितम्, उपकण्ठमुत्प्लुत्योत्प्लुत्य गमनम्, उपजवः प्रथमवेगः, जवश्चरमवेगः, इति धाराः ।

तेषामिति । रथ्यानां पृष्ठवाह्यानां चाश्वानाम्, बन्धनोपकरणं बन्धनान्युपकरणानि च मुखकण्ठपृष्ठपादादियोजनीयानि कवियपर्याणादीनि, योग्याचार्याः प्रतिदिशेयुः अश्वशिक्षाचार्याः उपदिशेयुः । साङ्ग्रामिकं रथाश्वालङ्कारं च, सूताः सारथयः प्रतिदिशेयुः । अश्वानां चिकित्सकाः अश्ववैद्याः, शरीरह्रासवृद्धिप्रतीकारं देहबलहानिप्रतिक्रियां मेदोवृद्धिप्रतिक्रियां च ऋतुविभक्तं चाहारं तत्तदृतुयोग्यतया व्यवस्थितम् आहारं च, प्रतिदिशेयुः ।

प्रतिपदपञ्चिका

अध्वप्रमाणमाह—षण्णव द्वादशेति, अध्वा रथ्यानामिति, रथवाहिनामश्वानां त्रिविधानामुत्तमादीनामध्वा तद्वत्पञ्च योजनानि अर्धाष्टमानि दशेति पृष्ठवाह्यानां, द्वियोजनग्रहणमुभयेषामधिकप्रतिषेधार्थम् ।

त्रिविधं गतिभेदमाह—विक्रम इत्यादि । विक्रमश्शनैर्गमनं, भद्राश्वासो मध्यमः, भारवाह्यो द्रुतगमनमिति ।

धारा आह—विक्रम इत्यादि । विक्रमः त्रिविधा स्वभावगतिः पुङ्खितं प्लुतम्, उपकण्ठं प्रथमवेगः । उपजवश्चसमवेगः । धारा इति सर्वेषां संज्ञा ।

तेषामिति । रथ्यापृष्ठवाह्यानामश्वानां बन्धनान्यग्रिमपश्चिमादीनि उपकरणानि रश्मियग्रिखलीनतल्पकपर्याणादीनि, योग्याचार्याः शिक्षोपजीविनः, प्रतीयुः उपदिशेयुः ।

[ उपचारेण अश्वतोषणकर्तारः सप्त ]

**सूत्रग्राहकाऽश्वबन्धकयावसिकविधापाचकस्थानपालकेशकारजाङ्गलीविदश्च स्वकर्मभिरश्वानाराधयेयुः ।**

[ प्राप्तावश्यकर्मसु देशकालातिक्रमे दण्डाः ]

**कर्मातिक्रमे चैषां दिवसवेतनच्छेदनं कुर्यात् । नीराजनोपरुद्धं वाहयतश्चिकित्सकोपरुद्धं वा द्वादशपणो दण्डः । क्रियाभैषज्यसङ्गेन व्याधिवृद्धौ प्रतीकारद्विगुणो दण्डः । तदपराधेन वैलोम्ये पत्रमूल्यं दण्डः ।**

---

प्रतिपदपञ्चिका

साङ्ग्रामिकं रथाश्वालङ्कारमिति, ध्वजचामरस्थानकादिमण्डनं चकारादावरणादिकं च सूतास्सारथयः । अश्वानां चिकित्सकाः वैद्याः अश्ववैद्याः, शरीरह्रासप्रतीकारं दौर्बल्यप्रतिविधानं, वृद्धिप्रतीकारमिति स्थौल्यदर्शनमृतुविभक्तं च यथर्तुयोगं चाहारं प्रतिदिशेयुरिति वर्तते ।

श्रीमूला

सूत्रेत्यादि । सूत्रग्राहकादयः सप्त, स्वकर्मभिः, अश्वान्, आराधयेयुरुपचरेयुः । तत्र सूत्रग्राहकः सूत्रग्रहणाधिकृतः वेल्लनपायनोद्वर्तनादिकर्ता, अश्वबन्धकः खलीनपर्याणाद्युपकरणबन्धनाधिकृतः, यावसिकः ऋत्वनुगुणयवसप्राशयिता, विधापाचकः शालामुद्गमाषादिपक्ता, स्थानपालः अश्वावस्थानदेशशोधकः, केशकारः कालिककेशकल्पकः, जाङ्गलीविद् विषविद्याकोविदः ।

कर्मातिक्रमे चेति । स्वस्वकर्मणामननुष्ठानेऽन्यथानुष्ठाने वा, एषां सूत्रग्राहकादीनाम्, दिवसवेतनच्छेदनं कुर्यात् । नीराजनोपरुद्धं नीराजना शान्त्युदकपुष्पदीपादिना सत्कारो दुरितशान्तये बलवृद्धये च क्रियमाणः तदर्थमुपरुद्धं, चिकित्सकोपरुद्धं वा चिकित्सार्थं, वाहयतः, द्वादशपणो दण्डः । क्रियाभैषज्यसङ्गेन क्रियायाश्चिकित्सनस्य भैषजस्य औषधस्य च यथाकालाकरणेन, व्याधिवृद्धौ, प्रतीकारद्विगुणः प्रतिक्रियार्थव्ययद्विगुणः, दण्डः, अश्वाध्यक्षस्य । तदपराधेन क्रियाभैषज्यदोषेण, वैलोम्ये अश्वस्य विपत्तौ, पत्रमूल्यं विपन्नवाहमूल्यं दण्डः ।

प्रतिपदपञ्चिका

सूत्रग्राहादयः सप्त कर्मकराः स्वकर्मभिः स्वेन स्वेन कर्मणा अश्वानाराधयेयुः । सूत्रग्राहको वेल्लनपायनोद्वर्तनादिना, अश्वबन्धकः पूर्वापरबन्धसौष्ठवेन, यावसिको यथर्तुयवसप्रवेशकारः तथ्येन, विधापाचकः परस्परधारणमूत्रपुरीषादिशोधनेन (?) । केशकारो यथाकालं केशकल्पनैः, जाङ्गलिको विषप्रतीकारेण ।

स्वकर्मातिक्रमे व्यापाराकरणे चैषां सूत्रग्राहादीनां दिवसवेतनस्य छेदनं कुर्यात्

**तेन गोमण्डलं खरोष्ट्रमहिषम् अजाविकं च व्याख्यातम् ॥**

[ प्रतिदिनं पर्वतिथिप्रभृतिषु च कर्तव्यान्यश्वाराधनानि ]

**द्विरह्नः स्नानमश्वानां गन्धमाल्यं च दापयेत् ।**
**कृष्णसन्धिषु भूतेज्याः शुक्लेषु स्वस्तिवाचनम् ॥१११॥**
**नीराजनामाश्वयुजे कारयेन्नवमेऽहनि ।**
**यात्रादाववसाने वा व्याधौ वा शान्तिके रतः ॥११२॥**

इत्यध्यक्षप्रचारे अश्वाध्यक्षः, त्रिंशोऽध्यायः,
आदित एकपञ्चाशः ॥

---

प्रतिपदपञ्चिका

(दद्यात्) । नीराजनोपरुद्धमिति । तदर्थः प्रतिषिद्धारोहं चिकित्सकोपरुद्धं वा सिरामोक्षाद्यर्थं वैद्येन निषिद्धमश्वं वाहयतो द्वादशपणो दण्डः । क्रियाभैषज्ययोश्चिकित्सौषधयोः सङ्गेन व्याघातेन अश्वस्य व्याधिवृद्धौ सत्यां प्रतीकारद्विगुणो दण्डः । तत्परिव्ययद्विगुणो दण्डोऽश्वाध्यक्षस्य । तदपराधेन क्रियाभैषज्यदोषेण वैलोम्ये अश्वमरणे पत्रमूल्यं दण्डः ।

श्रीमूला

तेनेति । तेन अश्वाराधनादिविधिनोक्तेन, गोमण्डलं खरोष्ट्रमहिषम् अजाविकं च व्याख्यातं गोमण्डलादिविधिरप्युक्तप्रायः । अश्ववदेव गोमण्डलादेरप्याराधनादिकं कर्तव्यम्, तदकरणे गवाध्यक्षस्य दण्डश्च भवतीत्यर्थः ।

अध्यायान्ते श्लोकावाह—द्विरह्नः स्नानमश्वानामित्यादि । दिने दिने वारद्वयम् अश्वानां स्नानं, शरद्ग्रीष्मयोः, दापयेत् । गन्धमाल्यं च दापयेत्, नित्यम् । कृष्णसन्धिषु भूतेज्याः कृष्णपर्वसु अमावास्यासु भूतबलीन्, दापयेत् शुक्लेषु शुक्लसन्धिषु स्वस्तिवाचनं ब्राह्मणाशीर्वादनं, दापयेत् । नीराजनाम् आरात्रिकाम्, आश्वयुजे मासि, कारयेत्, नवमेऽह्नि नवम्याम्, यात्रादौ अवसाने वा उद्योगस्यारम्भे समाप्तौ च, व्याधौ वा अश्वमारके च, शान्तिके रतः शान्तिप्रयोजनके कर्मण्यासक्तः ।

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाऽधिकरणे
त्रिंशोऽध्यायः, अश्वाध्यक्षः, आदित एकपञ्चाशः ॥

प्रतिपदपञ्चिका

तेन अश्वप्रकारेण गोमण्डलादिकं च व्याख्यातम्, तदपि तत्कर्मकरैः अश्ववडवादिवदाराधनीयम् । क्रियाभैषज्यप्रसङ्गेन व्याधिवृद्धावित्यादि सर्वं योजनीयम् ।

साम्प्रतमुक्तशेषमुपकारमदृष्टभयप्रतीकारमङ्गल्यञ्च अध्यायप्रान्ते श्लोकाभ्याmाह—द्विरह्नः स्नानमश्वानामिति । शरद्ग्रीष्मयोर्द्रष्टव्यम् । गन्धमाल्यं च दापयेत्

प्रतिपदपञ्चिका

इति । सर्वदा कृष्णसन्धिषु अमावास्यारात्रिषु भूतेज्याः भूतबलीन् मांसोदनोल्लोपिका-फलादिभिरश्वरक्षार्थम् । शुक्लेषु पौर्णमासीपर्वसु स्वस्तिवाचनं ब्राह्मणपूजनाशीर्वादनं, नीराजनं शालिहोत्राद्यभिहितविधानमाश्वयुजे मासि शुक्लपक्षनवम्यां कारयेत् । तथा यात्रादावुद्योगकाले, अवसाने यात्राप्रतिनिवृत्तौ व्याधौ वा अश्वभारके शान्ति-कर्मणि रतस्तत्पर इति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायांम् अर्थशास्त्रटीकायाम् अध्यक्षप्रचारिके
द्वितीयेऽधिकरणे त्रिंशोऽध्यायः । अश्वाध्यक्षः,
आदितः एकपञ्चाशोऽध्यायः ।

## अष्टचत्वारिंशं प्रकरणम्

## हस्त्यध्यक्षो हस्तिप्रचारश्च

## एकत्रिंशोऽध्यायः

### तत्र हस्त्यध्यक्षः

[ हस्त्यध्यक्षेणावेक्षणीयाः अंशाः ]

**हस्त्यध्यक्षो हस्तिवनरक्षां दम्यकर्मशान्तानां हस्तिहस्तिनीकलभानां शालास्थानशय्याकर्मविधायवसप्रमाणं कर्मस्वायोगं बन्धनोपकरणं साङ्ग्रामिकमलङ्कारं चिकित्सकानीकस्थोपस्थायुकवर्गं चानुतिष्ठेत् ।**

---

श्रीमूला

हस्त्यध्यक्ष इति सूत्रम् । हस्त्यध्यक्षव्यापारोऽभिधीयत इति सूत्रार्थः । सङ्गतिस्त्वश्वाध्यक्षवद् द्रष्टव्या । इदं च प्रकरणमध्यायद्वयेन वितन्यते ।

हस्त्यध्यक्ष इति । सः, हस्तिवनरक्षां गजवनप्रवेशनिषेधादिरूपाम्, दम्यकर्मक्षान्तानां शिक्षाग्रहणदान्तानां, हस्तिहस्तिनीकलभानां, शालादिषट्कप्रमाणं शाला कुटी स्थानम् आलानप्रदेशः शय्या संवेशस्थानं कर्म सान्नाह्यादिकं विधा आहारः यवसं हरितसस्यादि एतेषां प्रमाणम्, कर्मसु आयोगं दम्यादिकर्मसु वक्ष्यमाणेषु आसक्तिम्, बन्धनोपकरणं बन्धनमालानग्रैवेयकादि उपकरणम् अङ्कुशवेणुयन्त्रादि च, साङ्ग्रामिकं वर्मतोमरादिकम्, अलङ्कारं वैजयन्तीक्षुरप्रमालादिकम्, चिकित्सकादिवर्गं च चिकित्सका गजवैद्याः अनीकस्थाः गजशिक्षाविचक्षणाः उपस्थायुकाः कर्मकराः तेषां वर्गं च, अनुतिष्ठेत् अवेक्षेत ।

प्रतिपदपञ्चिका

हस्त्यध्यक्ष इति सूत्रम् । अस्य सूत्रस्य अर्थसम्बन्धावश्वाध्यक्षवद् व्याख्येयौ । हस्तिवनरक्षादीन् वक्ष्यमाणाननुतिष्ठेत् । तत्र हस्तिवनरक्षा हस्तिवनप्रतिषेधादिका, दम्यानां दमनीयानां, कर्मरक्षान्तानां गृहीतशिक्षाणां, हस्तिहस्तिन्यौ प्रतीते, कलभानां बालकानां, शाला हस्तिकटिस्थानं स्तम्ब(म्भ)स्थानं, शय्या शयनभूमिः, कर्म सान्नाह्यादिः, विधायवसौ प्रतीतौ । तत्प्रमाणमियत्ता, कर्मस्वायोगं दम्यादिक्रियाभ्यसनम्, बन्धनं ग्रैवेयं वरत्रादिकम् उपकरणमङ्कुशं वेण्या(ण्वा)दिकं, साङ्ग्रामिकं शाटीरजयन्नादिकम्, अलङ्कारं शङ्खचामरनक्षत्रमालादिकं, चिकित्सको हस्तिवैद्यः, अनीकस्थो हस्तिशिक्षाचार्यः, औपस्थायुकवर्गो हस्तिकर्मकरसमूहः ।

[ हस्तिशालायाः तत्र तद्वाससौकर्यस्य च कल्पनं
हस्तिस्वभावभेदेन शालास्थानभेदश्च ]

**हस्त्यामद्विगुणोत्सेधविष्कम्भायामां हस्तिनीस्थानाधिकां सप्रग्रीवां कुमारीसङ्ग्रहां प्राङ्मुखीमुदङ्मुखीं वा शालां निवेशयेत् ।**

**हस्त्यायामचतुरश्रश्लक्ष्णालानस्तम्भफलकान्तरकं मूत्रपुरीषोत्सर्गस्थानं निवेशयेत् ।**

**स्थानसमशय्याम् अर्धापाश्रयां दुर्गे सान्नाह्यौपवाह्यानां, बहिर्दम्यव्यालानाम् ।**

---

श्रीमूला

शालानिवेशमाह—हस्त्यायामेत्यादि । नवहस्तो हस्त्यायामः तद्द्विगुणः अष्टादशहस्त उत्सेध उच्छ्रयः विष्कम्भो विस्तारः आयामो दैर्घ्यं च यस्यास्तां तथाभूताम्, हस्तिनीस्थानाधिकां हस्तिनीस्थानं षडरत्नि तेनाधिकाम् अर्थाच्चतुर्विंशतिहस्तदीर्घां, सप्रग्रीवां प्रग्रीवेण मुखशालयोपेतां, कुमारीसङ्ग्रहां कुमारी आलानस्तम्भोपरिनिवेशिता तुला सुखबन्धनार्था तत्सङ्ग्रहवर्ती, प्राङ्मुखीम् उदङ्मुखीं वा शालां, निवेशयेत् निर्मापयेत् ।

स्थाननिवेशमाह—हस्त्यायामेत्यादि । हस्त्यायामो नवहस्तः तच्चतुरश्रं तदनुरूपमवृत्ताद्याकारं श्लक्ष्णो मसृण आलानस्तम्भः फलकान्तरं फलकरूपं स्थलच्छादकञ्च च यस्य तत् तथाभूतं च, मूत्रपुरीषोत्सर्गस्थानं तदुत्सर्गानुगुणं किञ्चिदग्रोन्नतं स्थानम्, निवेशयेत् । स्थानसमशय्यां स्थानसमां शय्याम्, अर्धापाश्रयाम् अर्धम् अर्धपञ्चमहस्तः तावन्मानोऽपाश्रय उन्नतस्थानं यस्यां तादृशीं, दुर्गे दुर्गान्तः, सान्नाह्यौपवाह्यानां, बहिर्दम्यव्यालानां दुर्गबहिर्देशे दमनीयानां हिंस्राणां च निवेशयेत् ।

प्रतिपदपञ्चिका

शालानिवेशमाह—हस्त्यायामेत्यादि, हस्त्यायामो नवारत्निः, तद्द्विगुणोत्सेधविष्कम्भायामामष्टादशहस्तोच्छ्रायपृथुत्वायामां हस्तिनीस्थानेन षडरत्नीनाधिकामेवंचतुर्विंशतिहस्तां सप्रग्रीवां नवहस्तमुखशालासहितां कुमारीसङ्ग्रहामित्यालानस्तम्भोपरिन्यस्तां तुलाकुमारीं तत्सङ्ग्रहां तदुपेतां सुखबन्धनार्थाम्, प्राङ्मुखीमित्यादि कृतव्याख्यानं हस्त्यायामचतुरश्रं नवहस्तं चतुरश्रग्रहणं वृत्तादिनिवृत्यर्थम् । श्लक्ष्णालानस्तम्भं मसृणालानस्तम्भयुक्तं मसृणफलकान्तरयुक्तं च मूत्रपुरीषोत्सर्गस्थानं किञ्चिदग्रोन्नतं स्थानं शालामध्ये हस्त्यवस्थानं निवेशयेत् ।

स्थानसमां न चतुरस्रां शय्यामर्धापाश्रयामर्धपञ्चमहस्तोन्नतैकपार्श्वां दुर्गे दुर्गाभ्यन्तरे सान्नाह्यानामौपवाह्यानां च बहिर्दुर्गात् दम्यानामारब्धदमनानां व्यालानां च घातुकानाम् ।

[ हस्तिनां दिनचर्याः ]

**प्रथमसप्तमावष्टमभागावह्नः स्नानकालौ, तदनन्तरं विधायाः, पूर्वाह्णे व्यायामकालः, पश्चाह्नः प्रतिपानकालः। रात्रिभागौ द्वौ स्वप्नकालौ, त्रिभागः संवेशनोत्थानिकः।**

[ गजग्रहणयोग्यः कालः, अवस्थाभेदेन गजानां ग्राह्यत्वाग्राह्यत्वे च ]

**ग्रीष्मे ग्रहणकालः। विंशतिवर्षो ग्राह्यः विक्को मूढो मत्कुणो व्याधितो गर्भिणी धेनुका हस्तिनी च अग्राह्याः।**

---

श्रीमूला

कालविनियोगमाह—प्रथमेत्यादि। अह्नः, प्रथमसप्तमौ, अष्टमभागौ, स्नानकालौ। एतेन द्विः स्नानमुक्तम्। तदनन्तरं विधायाः द्वितीयोऽष्टभागो भोजनस्य कालः। पूर्वाह्णे, व्यायामस्य कर्माभ्यासस्य कालः। पश्चाह्नः अपराह्णः, प्रतिपानकालः। इहापरशब्दस्याह्नशब्दपरकस्य पश्चभावकरणमार्षम्। रात्रिभागाविति। रात्रेर्द्वौ त्रिभागौ, स्वप्नकालौ। त्रिभागः संवेशनोत्थानिकः अवशिष्टस्तृतोयभागो दशघटिकात्मकः संवेशनोत्थानविनियोज्यः। तत्र पञ्च घटिकाः संवेशनस्य, परा उत्थानस्येति द्रष्टव्यम्।

गजग्रहणकालमाह—ग्रीष्मे ग्रहणकाल इति। तदा हि गजास्तापातिरेकात् प्रक्षीणबला भूत्वा सुग्रहा भवन्तीति। विंशतिवर्षोऽतिक्रान्तविंशतिवयस्कः तदधिकवयस्को वा, ग्राह्यः ग्रहणार्हः।

अग्राह्यानाह—विक्क इति। विक्कः स्तनन्धयः, मूढः हस्तिनीसमानदन्तः, मत्कुणो दन्तरहितः, व्याधितः रोगी, गर्भिणो प्रसिद्धा, धेनुका स्तनपानदायिनी हस्तिनी च, अग्राह्याः।

प्रतिपदपञ्चिका

प्रथमसप्तमावित्यादि प्रतीतम्, तदनन्तरं द्वितीयाष्टभागो विधाया भोजनस्य कालः पूर्वाह्णे व्यायामस्य कर्माभ्यासस्य कालः पश्चाह्नोऽपराह्णः प्रतिपानस्य कालः, रात्रिविभागौ द्वौ स्वप्नस्य कालः, त्रिभागः संवेशनोत्थानिकः संवेशनोत्थानयोरिति तृतीयमपि कालं द्वि(त्रि)धा विभज्य रात्रौ षड्भागशेषे चोत्थापनमिति ग्रोष्मग्रहणस्य (बन्धनस्य) सम्बन्धस्य काल इति सर्वत्रानुवर्तनीयम्। ग्रोष्मग्रहणं क्षीणबलत्वात् सुखग्रहणार्थम्, नान्यकालप्रतिषेधार्थम्।

विंशतिवर्षो ग्राह्य इति विंशतिग्रहणं तन्न्यूनस्याग्रहणार्थम्, नाधिकप्रतिषेधार्थम्। अग्राह्यानाह-विक्क इत्यादि, विक्कः स्तनन्धयः।

[ गजेषूत्तमादिविभागः तदानुगुण्येनाहारव्यवस्थाश्च ]

**सप्तारत्निरुत्सेधो नवायामो दशपरिणाहः प्रमाणतश्चत्वारिंशद्वर्षो भवत्युत्तमः। त्रिंशद्वर्षो मध्यमः। पञ्चविंशतिवर्षोऽवरः। तयोः पादावरो विधाविधिः।**

[ उत्तमस्याहारप्रमाणानि, गजप्रमाणादिभेदेन आहारभेदश्च ]

**अरत्नौ तण्डुलद्रोणः, अर्धाढकं तैलस्य, सर्पिषस्त्रयः प्रस्थाः, दशपलं लवणस्य, मांसं पञ्चाशत्पलिकं, रसस्याढकं द्विगुणं वा दध्नः पिण्डक्लेदनार्थ, क्षारं दशपलिकं, मद्यस्य आढकं द्विगुणं वा पयसः प्रतिपानम्। गात्रावसेकस्तैलप्रस्थः शिरसोऽष्टभागः प्रादीपिकश्च; यवसस्य द्वौ भारौ सपादौ, शष्पस्य शुष्कस्यार्धतृतीयो भारः। कडङ्गरस्यानियमः। सप्तारत्निना तुल्यभोजनोऽष्टारत्निरत्यरालः। यथाहस्तमवशेषः षडरत्निः पञ्चारत्निश्च। क्षीरयावसिको बिक्कः क्रीडार्थं ग्राह्यः।**

---

प्रतिपदपञ्चिका

ननु विंशतिवर्षो ग्राह्य इत्यनेनैव विक्कप्रतिषेधे सिद्धे तद्ग्रहणं विषयविभागार्थम्। बिक्कः क्रीडार्थमेव ग्राह्यो न कार्यार्थः। मूढो हस्तिनीतुल्यदन्तः मत्कुणो निर्दन्तः, व्याधितः पाकलादिग्रस्तः, गर्भिणीधेनुके प्रतीते। हस्तिनी नित्यदृष्टा।

श्रीमूला

प्रमाणमाह—सप्तारत्निरुत्सेध इति। सप्तहस्तोच्छ्रायवान्, नवायामो नवहस्तदैर्ध्यः, दशपरिणाहः दशहस्तपरिक्षेपः, प्रमाणतः प्रमाणेन यथोक्तेन युक्तः, चत्वारिंशद्वर्षः, उत्तमो भवति। त्रिंशद्वर्षः तावद्वयस्को वक्ष्यमाणषडरत्निप्रमाणो, मध्यमः। पञ्चविंशतिवर्षोऽवरः तावद्वयस्को वक्ष्यमाणप्रमाणोऽधमः।

विधाविधिमाह—तयोः पादावरो विधाविधिरिति। वक्ष्यमाणोत्तमविधाविध्यपेक्षया चतुर्भागन्यूनो विधाविधिर्मध्यमस्य, मध्यमविधापेक्षया चतुर्भागन्यूनश्चाधमस्य।

उत्तमस्य विधाप्रमाणमाह—अरत्नौ तण्डुलद्रोण इति। एकस्योत्सेधारत्नेः प्रमाणस्य एकस्तण्डुलद्रोणः। अर्धाढकं तैलस्येत्यादि सुगमम्। रसस्य मांससंस्कृतस्य आढकं, द्विगुणं वा दध्नः रसाभावे दध्याढकद्वयं वा, पिण्डक्लेदनार्थं भुक्तपिण्डसेचनार्थम्। क्षारं दशपलिकं गुडादि दशपलप्रमाणम्। मद्यस्याढकं, द्विगुणम् आढकद्वयं वा, पयसः क्षीरस्य, प्रतिपानम् अपराह्णदेयम्। गात्रावसेकः शरीराभ्यङ्गः, तैलप्रस्थः। शिरसः, अष्टभागः तैलार्धकुडुबः। प्रादीपिकश्च प्रदीपार्थश्च, अष्टभागः। यवसस्य

श्रीमूला

हरितसस्यादेः, द्वौ भारौ चत्वारिंशत् तुलाः। शष्पस्य बालतृणस्य हरितस्य, सपादौ द्वौ भारौ। शुष्कस्य यवसस्य शष्पस्य च, अर्धतृतीयो भारः सार्धं भारद्वयम्। कडङ्गरस्य शाखावुसस्य सल्लकीपल्लवादेः, अनियमः यावत्तृप्ति दानमित्यर्थः। अनया चैकारत्न्युत्सेधोक्तया प्रक्रियया सप्तारत्न्युत्सेधस्योत्तमहस्तिनस्तण्डुलादिकडङ्गरान्तं विधाजातं सप्तगुणितं द्रष्टव्यम्।

अष्टारत्न्युत्सेधस्यात्यरालाख्यस्यानेन प्रकारेण विधाधिक्यप्राप्तावपवादमाह—सप्तारत्निना तुल्यभोजन इत्यादि।

यथाहस्तमिति। षड त्नेस्तण्डुलद्रोणषट्कं पञ्चारत्नेस्तण्डुलद्रोणपञ्चक-मित्येवम् उत्सेधहस्तमानानुरोधेन, अवशेषः सप्तारत्न्यष्टारत्न्यतिरिक्तः, षडरत्निः सप्तारत्न्युत्सेधापेक्षयैकारत्निन्यूनोत्सेधो मध्यमगणनीयः, पञ्चारत्निश्च मध्यमापेक्ष-यैकारत्निन्यूनोत्सेधोऽधमगणनीयश्च, विधापरिमाणयोगीति शेषः। तत्र मध्यमाधम-योरुत्सेधवदायामे परिणाहे चैकैकारत्निह्रासो द्रष्टव्यः।

क्षीरयावसिक इत्यादि। क्रीडार्थं न तु कर्मार्थं ग्राह्यो विक्को यदि कौतुकाद् गृहीतः, तदा स क्षीरयवसाभ्यां यथातृप्तिदत्ताभ्यां पोषणीय इत्यर्थः।

प्रतिपदपञ्चिका

हस्तिप्रमाणमाह—सप्तारत्निरुत्सेध इति। तावत्प्रमाणोच्छ्रायः नवायामो नवहस्तप्रतिमो न पेचकान्तरो दशपरिणाहो दशहस्तकक्ष्याबन्धः।

प्रमाणतोऽनेनप्रमाणेनेत्थंभूतेन चत्वारिंशद्वर्षः चतुर्थीं दशाम् उत्तरिष्यन् उत्तमो भवति।

त्रिंशद्वर्षस्तृतीयदशावसाने मध्यमो वक्ष्यमाणप्रमाणो भवति। वक्ष्यति हि—"यथाहस्तमवशेषः षडरत्निः पञ्चारत्निश्चे"ति। अनेन चोत्तमप्रमाणात् सप्तभागही-नस्ततोऽपि षड्भागहीनः। पञ्चविंशतिवर्षावर इत्येवमवसेयम्। तयोर्मध्यमावरयोः पादावरो वक्ष्यमाणोत्तमविधायाश्चतुर्भागहीनो मध्यमस्य ततोऽप्यवरस्य चतुर्भागहीनो विधा विधिर्वेदितव्यः इति। तमाह—अरत्नौ तण्डुलद्रोण इति, अयं च विधिः प्रथमोक्तोच्छ्रायप्रमाणविषय इति केचित्, आयामप्रमाणविषय इत्यन्ये। प्रस्थद्वयं तैलस्य, सर्पिषो वा त्रयः प्रस्थाः, दशपलं लवणस्येति प्रतीतमेव। मांसं पञ्चाशत्पलिमं तावत्प्रमाणेन मांसेन संस्कृतस्य रसस्य आढकद्विगुणं वा दघ्नः आढकद्वयं भुक्तवतः पिण्डक्लेदनार्थं देयम्। क्षारं दशपलिकं गुडादि दशपलोपेतं मद्यस्य सुरादेराढकं द्विगुणं वाढकद्वयं, पयसः क्षीरस्य प्रतिपानमापराह्णिकं गात्रावसेको गात्राभ्यङ्गस्तै-लप्रस्थः शिरसोऽभ्यङ्गाष्टभागः। अर्धकुडुबः प्रादीपिकश्च प्रदीपार्थाष्टभाग एव, यवसस्य हरितस्य द्वौ भागौ, शष्पस्य हरिततृणस्य शुष्कस्योभयस्याप्यर्धतृतीयभारः सार्धभारद्वयं, कडङ्गरस्य सल्लकीप्रभृतिशाखायवसस्य, अनियम इत्ययं विधायोगः।

[ अवस्थासप्तकभेदेन गजस्य सप्तशोभाः, तासाम् ऋतूनां चानुगुण्येन व्यायामविधिश्च ]

**सञ्जातलोहिता प्रतिच्छन्ना संलिप्तपक्षा समकक्ष्या अतिकीर्णमांसा समतल्पतला जातद्रोणिकेति शोभाः ।**

**शोभावशेन व्यायामं भद्रं मन्द्रं च कारयेत् ।**
**मृगसङ्कीर्णलिङ्गं च कर्मस्वृतुवशेन वा ॥११३॥**

इत्यध्यक्षप्रचारे हस्त्यध्यक्षः, एकत्रिंशोऽध्यायः,
आदितो द्विपञ्चाशः ।

---

प्रतिपदपञ्चिका

सप्तारत्नेः, तेन सप्तारत्निना तुल्यभोजनोऽष्टारत्निरित्ययं चारत्नौ तण्डुलद्रोण इत्यस्य अपवादः अत्यराल इति ।

तस्य संज्ञा यथाहस्तम् अवशेष इति । सप्तहस्तावष्टहस्तावशेषौ द्वौ षडरत्निः पञ्चारत्निश्च तयोः षडरत्नौ षड्द्रोणः, पञ्चारत्नौ पञ्चेत्यादि सर्वं योजनीयम् । "बिक्को न ग्राह्य" इत्युक्तम्, असावपि क्रीडामात्रैकप्रयोजनो ग्राह्यः । स च क्षीरयावसिकः क्षीरेण यवसेन च उपचरणीयः ।

श्रीमूला

सप्तविधाः शोभा आह—सञ्जातलोहितेति । त्वगस्थिमात्रयुक्तस्य हस्तिन उपजातरुधिरा प्रथमावस्था तत्कृता शोभा सञ्जातलोहिता नाम, प्रतिच्छन्ना किञ्चिन्मांसोपजनच्छन्नास्थिका, संलिप्तपक्षा मांसलेपमसृणपार्श्वा, समकक्ष्या अन्यूनानतिरिक्तमांसावयवा, व्यतिकीर्णमांसा क्वचिदुन्नतं क्वचिदवनतमित्येवं व्यामिश्रं मांसं यस्यां सा तथाभूता, समतल्पतला समं पृष्ठवंशसमोत्पन्नमांसं तल्पतलं पृष्ठवंशपार्श्वं यस्यां सा तथा, जातद्रोणिका द्रोणीव द्रोणिका द्रोणीसमाना पृष्ठस्याकृतिः सा वंशस्य निम्नीभावात् तत्पार्श्वोन्नतिकृताज्जाता यस्यां सा तथा । इति शोभाः, सप्त सप्तावस्थाकृताः ।

अध्यायान्ते श्लोकमाह—शोभावशेनेत्यादि । उक्तावस्थानुगुण्येन, व्यायामं शिक्षां, कारयेत् । कं, भद्रम् उत्तमं, मन्दं मध्यमं, चकारात् मृगमवरं च हस्तिनम् । मृगसङ्कीर्णलिङ्ग च मृगं भद्रादिसङ्करजं च भद्रमन्दभद्रमृगादिनवप्रकारं हस्तिनम् । कर्मसु सान्नाह्यौपवाह्येषु, व्यायामं परिश्रमं कारयेत् । ऋतुवशेन वा शरदाद्यनुष्णकालानुसारेण च, कर्मसु व्यायामं कारयेत् ।

इति कौटिलीयार्थशास्त्रव्याख्यायामध्यक्षप्रचारे द्वितीयाधिऽकरणे
एकत्रिंशोऽध्यायः, हस्त्यध्यक्षः, आदितः द्विपञ्चाशः ।।

प्रतिपदपञ्चिका

साम्प्रतं सप्त शोभा आह—सञ्जातलोहितेत्यादि, तत्र सञ्जातलोहिता त्वगस्थिशेषावस्थितायाः उपजायमानरुधिरावस्था प्रतिच्छन्ना किञ्चिदुपजातमांस-संलिप्ता स्निग्धत्वगनुबन्धमांसा समकक्ष्या सम्पूर्णमांसा व्यतिकीर्णमांसा मांसोपचयाति-शयेन किञ्चिन्निम्नोन्नता समतल्पतला वंशसमुत्पन्नमांसोदयपार्श्वा जातद्रोणिका निम्नवंशा। इत्यासां शोभानां भद्राणां च वक्ष्यमाणगजविशेषाणां विशेषलक्षणं विस्तरेण हस्तिशिक्षातोऽवगन्तव्यम्।

व्यायामप्रकरणं श्लोकेनाऽह—शोभावशेनेत्यादि, शोभावशेन छायानुरूपेण व्यायामं शिक्षाभ्यासं भद्रमुत्तमगजं मन्द्रं च मध्यमगजं च चकारान्मृगनमपरं सङ्कीर्णं च भद्रादिसंयोगोत्पन्नं कर्मसु सान्नाह्यौपवाह्येषु तथा ऋतुवशेन शरद्धेमन्तादिवशेन व्यायामं कारयेदिति।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रे अध्यक्षप्रचारिके
द्वितीयेऽधिकरणे एकत्रिंशोऽध्यायः, हस्त्यध्यक्षः,
आदित द्विपञ्चाशोऽध्यायः।

# द्वात्रिंशोऽध्यायः ।

## हस्तिप्रचारः

[ शिक्षणभेदेन चत्वारो गजभेदाः, यथाक्रमं तेषां निरूपणं च ]

**कर्मस्कन्धाश्चत्वारः—दम्यः सान्नाह्य औपवाह्यो व्यालश्च । तत्र दम्यः पञ्चविधः—स्कन्धगतः स्तम्भगतो वारिगतोऽवपातगतो यूथगतश्चेति । तस्योपविचारो विक्ककर्म ।**

———————

### श्रीमूला

कर्मस्कन्धा इत्यादि । कर्मस्कन्धाः क्रियासमूहाः, चत्वारः चतूरूपाः । रूपाण्याह—दम्य इत्यादि ।

तत्रेति । तेषु चतुर्षु मध्ये, दम्यः पञ्चविधः । ता एव विधा आह—स्कन्धगतः स्कन्धारोहप्रवणः, स्तम्भगतः आलानबन्धनसहः, वारिगतः वारिर्गजग्रहणभूमिस्तत्प्रविष्टः, अवपातगतः अवपातनार्थं कल्पितं तृणादिच्छन्नं गर्तं गतः, यूथगतो दान्तहस्तिनीसहविहारव्यसनी, चः समुच्चये । तस्य दम्यस्य, उपविचारः उपचरणं, विक्ककर्म विक्कस्योपचरणमिव भवति । तच्च क्षीरयवसेक्षुकाण्डादिदानम् ।

### प्रतिपदपञ्चिका

हस्त्यध्यक्षे हस्तिप्रचार इति सूत्रम् ।

पूर्वाध्याये शालादयोऽनुष्ठेया अभिहिताः, तेषां शालास्थानशय्याकर्मविधायवसप्रमाणान्यभिहितानि, कर्मस्वायोगादयस्तु वक्तव्यास्तेऽभिधीयन्ते ।

तदाह—कर्मस्कन्धाश्चत्वार इत्यादि, कर्मस्कन्धाः क्रियासमूहाः अधिष्ठानभूताश्चत्वारः, चतुर्ग्रहणम् अवान्तरभेदभिन्ना अपि चत्वार एवेति ज्ञापनार्थम् । तानेवाह—दम्यः सान्नाह्यऔपवाह्यो व्यालश्चेति ।

तत्र दम्यभेदांस्तावदाह—दम्यः पञ्चविध इति पञ्चप्रकारोपस्थाभेदाः, तानेव प्रकारान् दर्शयति-स्कन्धगत इत्यादि, स्कन्धगतो विसोढः । स्कन्धारोहणः, स्तम्भगतोऽभ्युपगतालानस्तम्भबन्धनः, वारिगतो वारिबन्धाख्यारण्यभागप्रविष्टः, अपपातगतो गर्तगतः, यूथगतो हस्तिबन्धकीभिः सह विहारितस्येति, तस्य दम्यस्य उपचारादिकर्म विक्कस्यैव क्रिया क्षीरयवसेक्षुकाण्डशर्करोत्कादिभिरुपचरणम् ।

**सान्नाह्यः सप्तक्रियापथः उपस्थानं संवर्तनं संयानं वधावधो हस्तियुद्धं नागरायणं साङ्ग्रामिकं च । तस्योपविचारः कक्ष्याकर्म ग्रैवेयकर्म यूथकर्म च ।**

**औपवाह्योऽष्टविधः—आचरणः, कुञ्जरौपवाह्यः, धोरणः, आधानगतिकः, यष्ट्युपवाह्यः, तोत्रोपवाह्यः, शुद्धोपवाह्यः, मार्गायुकश्चेति । तस्योपविचारः**

---

श्रीमूला

सान्नाह्यमाह—सान्नाह्य इत्यादि । सः सप्तक्रियापथः उपस्थानादिसप्तविध-क्रियामार्गः । तत्र उपस्थानं पूर्वापरावयवानां नमनोन्नमनादिकं ध्वजोल्कावेणुरज्ज्वा-दिलङ्घनं च, संवर्तनं शयनोपवेशनरेखागर्तविषमलङ्घनादिकं भूमिकर्म, संयानम् ऋजुवक्रगोमूत्रिकामण्डललाघवादिगतिविशेषः, वधावधः हस्तदन्तगात्रैरश्वनररथा-देस्तत्प्रतिनिधेर्वा घातो ग्रहणं वा, हस्तियुद्धं हस्तिभिर्हीनतुल्यसमैः सह वरण्डकाद्या-मिषमन्तरतः कृत्वा युद्धं 'प्रसिद्धलालापिण्डिकाख्यमि'ति स्वामी । नागरायणं गोपुराट्टालकपरिघादिभञ्जनं, साङ्ग्रामिकं प्रकाशयुद्धसौप्तिकादिकम् । तस्योपविचार इति । सान्नाह्यस्योपचरणं, कक्ष्याकर्म वरत्राबन्धनशिल्पं, ग्रैवेयकर्म कलापिकादि-कण्ठबन्धनकौशलं, यूथकर्म च पूर्वकायोन्नतत्वापरकायोन्नतत्वसमकायत्वादिचिह्नैर्हस्ति-शास्त्रोक्तैर्गिरिचरादियूथान्तर्गतत्वं विज्ञाय तत्तद्यूथानुगुणकर्मसु नियोजनं च ।

औपवाह्यमाह—औपवाह्योऽष्टविध इत्यादि । तत्र आचरणः पूर्वकायोन्नतावन-तापरकायोन्नतावनतादिसर्वविधगजगत्यनुसारी, कुञ्जरौपवाह्यः कुञ्जरान्तरेण सहौपवाह्यादिकर्ता, धोरण एकेनैव पक्षेण सर्वकर्मकरः, आधानगतिकः द्वित्रिविध-गतियायी सर्वगतिकुशलश्च, यष्ट्युपवाह्यः यष्ट्यैव केवलया क्रियाकारी, तोत्रोपवाह्यः सकण्टकयष्ट्या क्रियाकारी, शुद्धोपवाह्यः यष्टितोत्रनैरपेक्ष्येण पदाधातादिसंज्ञयैव केवलया सर्वकर्मकरः, मार्गायुकश्च मृगयुकर्मशिक्षितश्च, इति । मार्गयुक इति ह्रस्वद्वितीयाच्कपाठो युक्तः । तस्य औपवाह्यस्य, उपविचारः उपचरणम् । तदेवाह—

चाणक्यटीका

( वर्षमादिभिर्युद्धकान्ति ? ) साङ्ग्रामिकमिति विचारः । तदेकदेशभूतं वक्ष्यते । ( कक्ष्या )ग्रैवयेकयोः स्वयं विरचनात् कान्तिः स्वयं यूथविरचनयोग्यता चेति ।

औपवाह्योऽष्टविधः[१] । ( आचरणः ) प्रतिहस्तिदर्शनाद् व्यक्तावलेपः । कुञ्ज-

---

१. ''उपस्थानम्, ( सं )वर्तनम्, वधावधः हस्तियुद्धम्, साङ्ग्रामिकमिति सप्तविधेन सान्नाह्येन, औपवाह्येन—आचरणः, कुञ्जरौपवाह्यः, ( अनुगतीर ? आधानगतिकः ), यष्ट्यौपवाह्यः, तोत्रौपवाह्यः, मार्गायुकः, शुद्धौपवाह्यः इति सप्तधा विभक्तेन'' इति अवन्ति-सुन्दरीकथायां दण्डी । ( टी एस एस, न. १७२. पृ. २०४ ) ।

**शारदकर्म हीनकर्म नारोष्ट्रकर्म च। व्याल एकक्रियापथः। तस्योपविचार**

---

चाणक्यटीका

रौपवाह्यः विहारयुद्धादिकुशलः। धोरणः ( आवरणशृङ्गारमष्टव्यूहप्रकामा निगदिता ? )। यष्टिमात्रेण वाह्यते यष्ट्यौपवाह्यः। तोत्रेणैव केवलेन वाह्यते तोत्रौपवाह्यः। यष्टितोत्रादिभिर्विना वाह्यते शुद्धौपवाह्यः। मृगग्रहणार्पणवधाय कुशलो ( मभातयुक्त ? मार्गयुक[1] ) इति। तस्योपविचारः एतैरष्टभिः कर्मभिः विनीतस्य।

प्रतिपदपञ्चिका

सान्नाह्यमाह—सान्नाह्यः सप्तक्रियापथ इति, उपस्थानादिसप्तक्रियामार्गाः। तत्रोपस्थानं पूर्वापरावयवानां प्रतिनमनोन्नमनादिकम्।

तथा ध्वजोल्कावेणुरज्ज्वादिलङ्घनादिकञ्च संवर्तनं शयनोपवेशनरेखागर्तविषमलङ्घनादिकं च संवर्तनं भूमिकर्म, संयानम् ऋजुवक्रगोमूत्रिकामण्डललाघवादिगतिविशेषः, वधावधो हस्तदन्तगात्रैरश्वरथनरादेः तत्प्रतिषेधे व्याघातः, हस्तियुद्धं हस्तिभिस्सह परस्परं वरण्डकाभ्यारान्तरितैर्युद्धं प्रसिद्धलालापिण्डिकाख्यं, नागरायणं गोपुराट्टालिकपरिखासङ्क्रमादिभञ्जनं, साङ्ग्रामिकं प्रकाशयुद्धं सौप्तिकादि तस्य सान्नाह्यस्योप विचारः कक्ष्याकर्म कक्ष्याबन्धविज्ञानं, ग्रैवेयकर्म ग्रीवासम्बन्धकलापकादिज्ञानं, यूथकर्म च।

पूर्वापरोदितसमकायादिलिङ्गैः गिरिचरादियूथतामपगमय्य तदनुरूपक्रियायोजनमाचरणादिकमष्टविधमुपवाह्यमाह—आचरण इत्यादि, तत्राचरणः पूर्वापरोन्नतमध्यविनीतसमानां गिरिचरादिसर्वहस्तिनां गतानुविधायी चेति कुञ्जरौपवाह्यः सन्नाह्योपवाह्यो भवति। निःशेषक्रियायुक्तः धोरणः एकपक्षेण सर्वकर्माणि करोति, यो यत्र यं येभ्यश्चाआधानगतिको द्वित्रिपदयायी सर्वगतिसम्पादकश्च, यष्ट्युपवाह्यः कण्टकवर्जितया यष्ट्या सर्वक्रियासम्पादकः, तोत्रोपवाह्यः कण्टकया शुद्धोपवाह्यः पदादिसंज्ञया, मार्गायुको मृगयाकुशलः। तस्योपविचारः।

श्रीमूला

शारदकर्म शारदस्याप्रतिभस्य अनुरूपं कर्म। शारदश्च चतुर्विधः, स्थूलकृशलोहितप्राकृतभेदात्। तेन स्थूलस्य कृशीकरणं, कृशस्य स्थूलीकरणं, लोहितस्य मन्दाग्नेरग्निदीपनं, प्राकृतस्य प्रकृतिस्थस्य स्वास्थ्यरक्षणमिति चतुष्प्रकारं शारदकर्म। हीनो निर्व्यायामस्तस्य व्यायामयोजनं हीनकर्म, नारोष्ट्रकर्म च संज्ञाशिक्षणं च।

---

१. "मृगयाशीला मृगयवः तेषां कर्म मार्गयुकं पञ्चविधं हस्तिशिक्षोक्तम्। तेन युक्ताः। तत्कर्म ( गो?णि )शब्दे गौण्या वृत्त्या मार्गयुकमिति व्यपदिश्यते। ते हि स्वयं मृगयां गत्वा रूपमादाय वितस्य च स्वमिने समार्पयन्ति" इति भूमिच्छिद्राभिधाने चाणक्यटीका। ( २.२. पृ० ८४ ) मार्गायुक इति दीर्घद्वितीयाच्क पाठ एव अर्थशास्त्रमातृकासु दृश्यते।

**आयम्यैकरक्षः कर्मशङ्कितोऽवरुद्धो विषमः प्रभिन्नः प्रभिन्नविनिश्चयो मदहेतुविनिश्चयश्च । क्रियाविपन्नो व्यालः । शुद्धः सुव्रतो विषमः सर्वदोषप्रदुष्टश्च ।**

---

### श्रीमूला

व्याल इति । सः एकक्रियापथः एककर्ममार्गः । तस्योपविचारः उच्यत इति शेषः ।

### चाणक्यटीका

अधीरोन्मृष्टकर्मणां पुनः ( नगारु ? शारद ) कर्म । क्षीणानां पोषणादिक्षीणकर्म । आश्चर्यार्थं संज्ञया यथेष्टं प्रतिचरणं नारोष्ट्रकर्मेति ।

व्याल ( क ? : ) स च एकक्रियः आ( त्ये ? त्ययि )कक्रियश्च अपप्रतीकारः ।

### प्रतिपदपञ्चिका

शारदकर्म, चतुर्विधश्च शारदः स्थूलः कृशो लोहितः प्रकृतश्च । तत्र स्थूलस्य कर्शणं कृशस्य बृहणं लोहितस्य मन्दाग्नेरपि दीपनं प्रकृतस्य सरोगस्य स्वास्थ्यरक्षणम् एतच्चतुर्विधमपि शारदकर्मौपवाह्यस्य कर्तव्यम् । हीनकर्मेति व्यायामहीनो हीनः, तस्य-कर्मणिव्यायामयोजनमुपवाह्यस्य कर्तव्यम् । नारोष्ट्रवर्म संज्ञाप्रतीकारकरणं दम्योपवाह्ये कर्तव्यमिति । व्यालमाह—व्यालः एकक्रियापथ इति, आयाम्य एकक्रियापथो दुष्टैक-कर्मशास्त्रे समाम्नातः । तस्य व्यालस्योपविचार एक एव केवलो न कर्मभेदः ।

### श्रीमूला

आयम्यैकरक्षः नियम्यैकेन रक्षणीयः अथवा आयम्यो दण्डस्तेनैवैकेन रक्षणीयः सः । तस्य विशेषानाह—कर्मशङ्कितः शिक्षाकाले विसंवादी, अवरुद्धः कर्मानुपयोगोपेक्षितः, विषमः यदृच्छानुष्ठायी, प्रभिन्नो मददोषदुष्टः, प्रभिन्नविनिश्चयः मदाद् विधादिदोषाच्च व्याकुलीभूतः, मदहेतुविनिश्चयश्च सदामदत्वादविज्ञातमदहेतुश्च ।

व्यालसामान्यलक्षणमाह—क्रियाविपन्न इति । दुष्टकर्मदूषितः, व्यालः । शुद्ध इत्यादि तद्विशेषकथनम् । तत्र शुद्धः केवलघातुकोऽष्टादशदोषयुक्तः, सुव्रतः केवलचालकः पञ्चदशदोषयुक्तः, विषमः घातनचालनोभयकारी शुद्धसुव्रतोभयदोषैर्युक्तः, सर्वदोषप्रदुष्टः उक्तैस्त्रयस्त्रिंशद्दोषैः स्वकीयैश्चैकोनविंशतिदोषैर्युक्तः । शुद्धादीनां तद्दोषाणां च लक्षणं हस्तिशास्त्रतोऽवगन्तव्यम् ।

### चाणक्यटीका

तस्योपविचारः तत्र आयामिनो हस्तिपकं गृहीत्वा पलायनस्य एकेन रक्ष्यमाणत्वात् कर्मविशेषादात्मैकरक्षः । कर्मशङ्कितः ( नास्ति नीताविनयनाकर्मणा ? ) । अपराद्धः विपरीतकर्मोपक्रमाद् दुष्टः । तस्य सम्यक् प्रवर्तनम् । विषमः ( आवर्जितविगृह्लीववल्लितंच्छलितोद्धूतपक्षसंसृष्टप्राधान्यान्नाष्टविलितक्रियः ? ) तस्य प्रत्यापत्तिकर्म ।

[ गजसम्बन्धीनि बन्धनाद्युपकरणानि ]

**तेषां बन्धनोपकरणमनीकस्थप्रमाणम् । आलानग्रैवेयकक्ष्यापरायण-परिक्षेपोत्तरादिकं बन्धनम् । अङ्कुशवेणुयन्त्रादिकमुपकरणम् । वैजयन्तीक्षुरप्र-मालास्तरणकुथादिकं भूषणम् । वर्मतोमरशराबापयन्त्रादिकः साङ्ग्रामिका-लङ्कारः ।**

---

### चाणक्यटीका

प्रमत्तः ( सोमक्रयः वदुपचर्यः ? ) । प्रभिन्नः कर्मणा । प्रभिन्नविनिश्चय इति प्रभिद्य-मानस्य कचनादिभिः परिज्ञानं प्रभिन्नविनिश्चय इति । अस्य कर्मविशेषापराधी-करणम् । मदहेतुविनिश्चय इति ( व्रतस्यात्ययमिति सन्तापाभिजनयः ? ) प्रथितयोध-बलानि मदकरणीयानां विनिश्चयः तस्य कर्मविशेषेण विनिश्चयः।

कीदृशः पुनरसौ व्याल इति यत्क्रियाविपन्नो ( व्या ) ल इति मृदुतीक्ष्ण-सुकुमारक्रियाभिर्यथाक्रमं मृदुमन्दभद्रेषु विपर्ययोपक्रमक्रियावचनपदुष्टो व्यालः । स चतुर्विधः । दन्तगात्रापरकार्यैर्दोषकारी शुद्धः । उपरि च ( र ? ल ) नादिदोषकारी सुव्रतः । उभयगतदोषाणां साकल्याद् वल्गुदोषप्रदुष्ट इति ।

### प्रतिपदपञ्चिका

आयम्यैकरक्ष इति । आयम्यः मन्त्रौषधीभिर्वशीकृत्य बद्ध्वा वा एकरक्षः एकेन यन्त्रा रक्षणीयः, अथवा आयम्यैकरक्षो दण्डैकप्रतीकारः, सर्वत्र कर्मशङ्कितः शिक्षाकाले विसंवादशीलः, अवरुद्धो निर्वेदपरित्यक्तः, कर्मसु निरुद्ध इत्यपरे । विषमो यदृच्छया विनीतः, प्रभिन्नो मददोषेण व्यालीभूतः, प्रभिन्नविनिश्चयो विधादिवैषम्यमेदाद् व्यालो-भूतः । मदहेतुविनिश्चयः मदकालकर्मण्यमाचक्षते ।

किं पुनर्व्यालस्य लक्षणमित्याह—क्रियाविपन्नो व्याल इति, क्रियाविपन्नः कर्मणा दूषित इति सामान्यम् ।

तस्य विशेषाः शुद्धादयश्चत्वारः । तत्र शुद्धः केवलघातुकोऽष्टदन्तदोषयुक्तः, सुव्रतः केवलं चालकः पञ्चदशदोषयुक्तः । विषमः प्रतिनियतघातनचालनःशुद्धसुव्रतो-दोषैस्त्रयस्त्रिंशताप्युपेतस्सर्वदोषदुष्टः । समुदितचालनादिप्रकृष्टदोषः स्वदोषैरेकोन-विंशत्या पूर्वैश्च त्रयस्त्रिंशता स एव द्विपञ्चाशता दोषैर्युक्तः । तेषां तद्दोषाणां च विशेषलक्षणं हस्तिशिक्षातोऽवगन्तव्यम् ।

### श्रीमूला

तेषामिति । गजानां, बन्धनोपकरणं बन्धनमुपकरणं च, अनीकस्थप्रमाणम् अनीकस्थो हस्तिशिक्षाविचक्षणस्तत्प्रमाणकं तदुपदिष्टं, करणीयम् । आलानेत्यादि । आलानादिकं बन्धनं तत्र आलानं स्तम्भः ग्रैवेयं कलापकः कण्ठबन्धः कक्ष्या वरत्रा

[ हस्तिपरिचारकवर्गः, तल्लभ्याः आहारभागाः चिकित्सककर्तव्यविशेषाश्च ]

**चिकित्सकानीकस्थाऽऽरोहकाऽऽधोरणहस्तिपकौपचारिकविधापाचकयावसिकपादपाशिककुटीरक्षकौपशायिकादिः औपस्थायिकवर्गः ।**

---

श्रीमूला

परायणम् आरोहणालम्बरज्जुः परिक्षेपः पादपाशादिः उत्तरं द्वितीयं कलापादिकम्, आदिशब्दात् त्रिपद्यादिग्रहणम् । अङ्कुशेत्यादि । अङ्कुशादिकम् उपकरणम् । तत्र अङ्कुशः सृणिः वेणुर्दण्डः यन्त्रम् आयुधागाराध्यक्षोक्तं पाञ्चालिकादि । भूषणमाह—वैजयन्तीत्यादि । वैजयन्ती गजपताका क्षुरप्रमाला नक्षत्रमाला आस्तरणं नमतं कुथः वर्णकम्बलः आदिपदाच्छङ्खादिग्रहणम् । साङ्ग्रामिकालङ्कारमाह—वर्मेत्यादि । वर्म कवचं तोमरश्चतुर्हस्तादिरायुधागाराध्यक्षोक्तः शरावापस्तूणीयन्त्रं नानारूपमायुधाध्यक्षोक्तम् एतदादिकः; साङ्ग्रामिकः युद्धार्थः अलङ्कारः ।

चाणक्यटीका

तेषामेव व्यालानाम् । बन्धनविशेषम्, उपकरणानि च कटकादीनि हस्तिशिक्षाविद्भिर्नियमयेत् ।

यानि तु सर्वेषां साधारणानि आलानानि बन्धनम् । अपरायणम् अपराबन्धः । आदिशब्दाद् गात्रवैरामण्यवारिवर्तीनि (?) स्वस्तिकादिबन्धा द्रष्टव्याः । यन्त्रं काष्टमयं (क्षा ? दा) न्त्यर्थम् । आदिशब्दाद् रज्जुकूकलासिकादयः । क्षुरप्रमाला [1]नक्षत्रमालो कुथा वर्णकम्बल उपरि दीयते । शरावाप इति । यन्त्रादिः सर्वतोभद्रादिः ।

प्रतिपदपञ्चिका

तेषां हस्तिनां बन्धनमुपकरणञ्च अनीकस्थप्रमाणं तच्छास्त्रज्ञोपदिष्टं कार्यमिति वाक्यशेषः । तदाह—आलानेत्यादि । बन्धनशब्दः प्रत्येकम्, आलानबन्धनं स्तम्भबन्धनं, ग्रैवेयं कालापकादि, कक्ष्या कण्ठबन्धनं, पारायणं चतुष्पथाद्यारोपयतामालम्बनरज्जुः, परिक्षेपः पादपाशादिः, उत्तरबन्धनं द्वितीयकक्ष्याकलापादिकम्, आदिग्रहणं वाजिनामप्युपलक्षणार्थम् । अङ्कुशवेणू प्रतीतौ । यन्त्रं हस्तिनादं दन्तकल्पनादौ, यन्त्रणार्थम् अनेकविधम् आयुधागाराध्यक्षाभिहितमित्यपरे । वैजयन्ती कदलिका क्षुरप्रमाला नक्षत्रमालाऽऽस्तरणं गजास्तरणं कुथो वर्णकम्बलः आदिग्रहणं शङ्खचामराद्युपलक्षणार्थम् । वर्म जयन्तं(?)तोमरश्चतुर्हस्तादिः त्रिविध आयुधागाराध्याये व्याख्यातः । शरावः तूणीरो यन्त्रं पाञ्चालिकाद्यनेकविधं चलयन्त्रं, तेषु सम्भवतो हस्त्युपयोगिहस्तिवारतालवृन्तादि चक्रादिकं च ग्राह्यम् । साङ्ग्रामिकः सङ्ग्रामप्रयोजनः चालङ्कारः ।

श्रीमूला

हस्तिकर्मकरवर्गमाह—चिकित्सकेत्यादि । चिकित्सको गजवैद्यः अनीकस्थः

---

१. 'अथ नक्षत्रमाला स्याद्धस्तिमस्तकभूषणे' इति केशवस्वामी ।

**चिकित्सककुटीरक्षविधापाचकाः प्रस्थौदनं स्नेहप्रसृतिं क्षारलवणयोश्च द्विपलिकं हरेयुः; दशपलं मांसस्यान्यत्र चिकित्सकेभ्यः ।**

---

### श्रीमूला

प्रतीतः आरोहकः शास्त्रज्ञो गजारोहः आधोरणः शास्त्राभिज्ञः कर्मकुशलः हस्तिपको हस्तिरक्षी औपचारिकश्चारणोद्वर्तनाभ्यञ्जनादिकर्ता विधापाचकः आहारपक्ता यावसिकः यवसप्रवेशकः पादपाशिकः पादबन्धकः कुटीरक्षकः शालापालनशुचीकरणाद्यधिकृतः औपशायिकः शयनशालाधिकृतः एतदादिः, औपस्थायिकवर्गः कर्मकरवर्गः ।

### चाणक्यटीका

आरोहको हस्त्यारोहः । आधोरणः सौमनस्यादिपरिच्छदकुशलः । हस्तिपकः बन्धनादिकुशलः । औपशायिको वारणानां शाययिता । औपकारिकः प्रत्यवेक्षिता, प्रेषणकारीत्यन्ये[1] । चिकित्सकानीकस्थयोरौपस्थायुकवर्गे पठितत्वात् "चिकित्सकानीकस्थौपस्थायुकवर्ग( मनु )तिष्ठेद्" इत्यत्र उद्देशवाक्ये[2] तयोर्ग्रहः प्राधान्यज्ञापनार्थम्, एतौ विशेषेणानुष्ठेयाविति ।।

### प्रतिपदपञ्चिका

चिकित्सको हस्तिवैद्यः, अनीकस्थो हस्तिशिक्षावित्, आरोहकः शास्त्रज्ञमहामात्रकः आधोरणः, शास्त्रसंस्काररहितः क्रियाकुशलः, हस्तिपकः मेण्टकः औपचारिकश्चरणाभ्यञ्जनाद्यधिकारी, विधापाचको रन्धकः, यावसिकः घासिकः, पादपाशिकः पादबन्धकः कुटीरक्षकः, कुटीरक्षणशोधनाद्यधिकारो औपशायिकः शय्याशालाधिकृतः हस्तपरिशायिको वा । आदिग्रहणं शिखरितूरिकाद्यर्थम् । इत्ययमौपस्थायिकवर्गः कर्मकरवर्गः ।

### श्रीमूला

चिकित्सककुटीत्यादि । चिकित्सकादयस्त्रयः, प्रस्थौदनं प्रस्थप्रमाणमन्नं, स्नेहप्रसृतिं तैलधृतादेरर्धाञ्जलिम्, क्षारलवणयोश्च, द्विपलिकं पलद्वयप्रमाणं, हरेयुः हस्त्याहाराल्लभेरन्, प्रत्येकमात्मार्थे दशपलं मांसस्य, अन्यत्र चिकित्सकेभ्यः चिकित्सकान् वर्जयित्वा, हरेयुः कुटीरक्षा विधापाचकाश्च ।

---

१. "हस्त्यश्वरथविद्याविदः, विद्वत्वादेव शिक्षयितारो रक्षयितारश्च उत्तराध्यक्षाः ।" इति उपयुक्तपरीक्षायां चाणक्यटीका । ( २.९. पृ० १२० ) उत्तराध्यक्षा औपरिका इति भट्टस्वामी ।

२. हस्त्यध्यक्षोपक्रमवाक्ये ।

**पथिव्याधिकर्ममदजराऽभितप्तानां चिकित्सकाः प्रतिकुर्युः ।**

[ हस्तिपरिचारकाणां दण्डहेतवः क्रियाः, दण्डविधिश्च ]

**स्थानस्याशुद्धिः, यवसस्याग्रहणं, स्थले शायनम्, अभागे घातः, परारोहणम्, अकाले यानम् अभूमौ, अतीर्थेऽवतारणं तरुखण्डे—इति अत्ययस्थानानि । तमेषां भक्तवेतनादाददीत ।**

---

### चाणक्यटीका

प्रस्थौदनमिति । औपस्थायुकानामचिकित्सकादय एव त्रयः समग्राः प्रस्थौदनादि हरेयुः । अन्यत्र चिकित्सकेभ्य इति ( अन्यत्र ? ) चिकित्स्यानां तु हस्तिनां मा भूत् न्यूनमात्रेति निर्हरेयुः ।

### प्रतिपदपञ्चिका

चिकित्सकादयः तण्डुलप्रस्थस्यौदनं स्नेहस्य प्रसृतिं घृतस्य तैलस्य वा चुलुकं क्षारलवणयोश्च द्विपलिकं पलद्वयं हरेयुः प्रत्येकम् । हस्तिविधाया लभेत । दशपलिकं मांसस्य दशपलानि, कुटीरक्षकविधापाचकौ चिकित्सकवर्जं गृह्णीयाताम् ।

### श्रीमूला

पथीत्यादि । पथ्यादिपञ्चकाभितप्तानां हस्तिनां, चिकित्सकाः, प्रतिकुर्युः पथिगमनादिजन्याभितापप्रतीकारं कुर्युः ।

दण्डहेतूनाह—स्थानस्येत्यादि । स्थानस्य अशुद्धिः अमार्जनम्, यवसस्य अग्रहणम् आशनाभावः, स्थले स्थण्डिले शायनम्, अभागे घातः ताडनानर्हे मर्मादौ ताडनं, परारोहणम् आरोहणानधिकृतस्याऽऽरोहणम्, अकाले यानम् अनियते काले चारणम्, अभूमौ विषमदेशे यानम्, अतीर्थे नद्यादेरघट्टे अवतारणम्, तरुषण्डे तरुगहने अवतारणम्, इति एवञ्जातीयानि, अत्ययस्थानानि दण्डस्य कारणानि, अर्थाद् औपस्थायिकवर्गस्याऽध्यक्षस्य च । तं दण्डम् एषां भक्तवेतनाद्, आददीत गृह्णीयात् ।

### चाणक्यटीका

पथा, व्याधिना, कर्म( णा ), मदप्रबन्धेन, जरया वा अभितप्तानां तु चिकित्सकाः तापापहरणेन प्रतिकुर्युः ।

मूत्रपुरीषादिना स्थानस्याशुद्धिः । यवसस्य भक्ष्यावय( वस्य ) । आधोरणेनानवधारितायां शायनम् । तोत्राङ्कुशादिभिरनभीष्टे स्थाने घातः । आरोहकादिवर्गादन्यस्य नरस्य अप्रतिपन्नस्य आरोहणम् । अनुचिते काले कूलप्रचारादिना ( यानम् ) । अभूमौ पङ्कादौ । अतीर्थे ( च्छिन्नभेदाकरमार्जनतोर्णे ? )[1] च यान-

---

१. विच्छिन्नसेतावबकरमार्जनतीर्थे इति पाठः स्यात् ।

[ शान्तिकर्मविधिः ]

**तिस्रो नीराजनाः कार्याश्चातुर्मास्यर्तुसन्धिषु ।**
**भूतानां कृष्णसन्धीज्याः सेनान्यः शुक्लसन्धिषु ॥११४॥**

[ गजेभ्यो दन्तग्रहणविधिः ]

**दन्तमूलपरीणाहद्विगुणं प्रोज्झ्य कल्पयेत् ।**
**अब्दे द्व्यर्धे नदीजानां पञ्चाब्दे पर्वतौकसाम् ॥११५॥**

इत्यध्यक्षप्रचारे हस्तिप्रचारे द्वात्रिंशोऽध्यायः,
आदितः त्रिपञ्चाशः ।

---

चाणक्यटीका

मित्येव जनवृन्दे हि संस्तव्यमिति । ( मृद्वकिद्वेति ? ) अत्ययस्थानमिति । स्थानग्रहणम् असत्यपि दोषे ( ण ? ) तेषु स्थानेष्वेव दण्डः कार्यः । जाते तु दोषे सविशेष इति ज्ञापनार्थम् । तद्दोषैरिति । भक्तवेतनाद् उचितं दण्डं निष्पादयेत् ।

प्रतिपदपञ्चिका

व्याध्यादिभिः पञ्चभिरभितप्तानां व्यथितानां चिकित्सकाः प्रतिकुर्युः स्वास्थ्यम् आपादयेयुः । व्याध्यादयः प्रतीताः ।

स्थानस्याशुद्धिरसंमार्जनं कुटीरक्षकस्य यवसस्य घासस्य ग्राहणमनाशनं यावसिकस्य स्थले शय्यारहिते स्थलशायनमौपशायिकस्य भागे निर्निमित्ते प्रदेशे वा मर्मादौ घातस्ताडनं मेकण्डकादेः परारोहणमसम्बन्धिजनारोहणं तस्यैव अकाले यान-मर्धरात्रमध्याह्नादौ प्रचारणमभूमौ विषमे प्रदेशे यानमतीर्थे नावतरणं प्रसिद्धमार्गेण नद्याद्यवगाहनं, तरुखण्डे वा वृक्षगहने वा अवतरणं प्रवेशनम् । इति शब्दः प्रकारे, इत्येवम् अन्यदप्यत्ययस्थानं दण्डनिमित्तं हस्त्यध्यक्षस्य तत्कर्मकराणां च, स च दण्डो देशकालाद्यपेक्षया स्वयमेव कल्पनीयः । तेषां हस्त्यध्यक्षस्य तत्कर्मकराणाञ्च स च दण्डः देशकालाद्यपेक्षया स्वयमेव कल्पनीयः । तेषां हस्त्यध्यक्षतत्कर्मकराणाञ्च दण्डं भक्तवेतनादाददीत गृह्णीयात् ।

श्रीमूला

विधिशेषं श्लोकद्वयेनाह—तिस्र इति । तिस्रो नीराजनाः बलवृद्धिदुरितशान्ति-प्रयोजना आरार्तिकाः, कार्याः । कदा कदा, चतुर्मास्यृतुसन्धिषु चातुर्मास्यश्चतुर्षु मासेषु भवाः पौर्णमास्यः तासु, ऋतुसन्धिषु पूर्वापरऋतुसन्धिस्थासु अर्थात् कार्तिका-फाल्गुन्याषाढीषु, भूतानां, कृष्णसन्धीज्याः अमावस्यासु बलयः, कार्याः । सेनान्यः स्कन्दस्य, शुक्लसन्धिषु पूर्णिमासु, इज्याः कार्या इति शेषः ।

श्रीमूला

दन्तेत्यादि । दन्तमूलपरीणाहद्विगुणं विषाणमूलपरिक्षेपमानद्विगुणप्रमाणं भागं, प्रोज्झ्य परिहाय, कल्पयेत् छित्त्वा गृह्णीयात्, प्रोज्झितातिरिक्तं दन्तभागमित्यार्थम् । छेदकालमाह—अब्दे द्व्यर्धे सार्धे वर्षद्वये अतीते, नदीजानां नदीचारिणां हस्तिनां, पञ्चाब्दे अतीते पर्वतौकसां गिरिचराणाम् ।

इति कौटिलीयार्थशास्त्रव्याख्यायामध्यक्षप्रचारे द्वितीयाधिकरणे द्वात्रिंशोऽध्यायः, हस्त्यध्यक्षे हस्तिप्रचारः, आदितस्त्रिपञ्चाशः ॥

चाणक्यटीका

तिस्र इति, चत्वारो मासाश्चातुर्मासी । ( क इति धातवो मरुतः ? ) वर्षा-हेमन्तग्रीष्माः । तेषां सन्धिषु पौर्णमासीषु ( तिस्रो नीराजनाः ) भवन्ति, कार्तिक्यां, फाल्गुन्याम्, आषाढ्यामिति, अर्थाद् भूतबलिस्तु द्वादशसु । (तम ? सो ऽ) प्यमावास्या-( सु ) इत्येव ।

मूलस्य तस्य परीणाहद्विगुणमायामेन प्रारभ्य कल्पयेदिति यदपेक्षया प्रायो वर्षविधानम् । अत्र विधिस्तु शिक्षायां कृतप्रपञ्चः । अब्दे ( द्व्यर्धे ) नदीजानाम् । ( महाबुद्धि ? पञ्चाब्दे ) पर्वतचारिणामिति । अर्थात् त्र्यब्दे चतुरब्दे वा मिश्राणा-मित्यूह्यम् ।

॥ इति हस्तिप्रचारः त्रिंशं प्रकरणम् ॥
॥ द्वात्रिंशश्चाध्यायः ॥

प्रतिपदपञ्चिका

साम्प्रतं दृष्टरूपं कर्तव्यशेषम् अध्यायप्रान्ते श्लोकाभ्यामाह—तिस्रो नीराजनाः कार्या इति । वर्षाभ्यन्तरे चातुर्मास्यर्तुसन्धिषु कार्तिकफाल्गुनाषाढेषु भूतानां ग्रह-पिशाचादीनां कृष्णसन्धिष्वमावास्यादिषु इज्या बल्युपहारः सेनानिनः कार्तिकेयस्य शुक्लसन्धिषु पौर्णमासीषु । दन्तकल्पनमाह—दन्तमूलपरिणाहमिति । विषाणबध्न-परिक्षेपद्विगुणमभ्यस्तं प्रोज्झ्य मुक्त्वा कल्पयेत् तदधिकं छेदयेत् । "पुनरप्यब्दे द्व्यर्धे अर्धतृतीये वर्षे कल्पयेत् । नदीजानां पञ्चाब्दे पञ्चसु वर्षेषु पर्वतौकसां गिरिचराणा-मि"ति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायाम् अर्थशास्त्रटीकायाम्
अध्यक्षप्रचारिके द्वितीयेऽधिकरणे द्वात्रिंशोऽध्यायः ॥
हस्तिप्रचारः, आदितस्त्रिपञ्चाशोऽध्यायः ।

# एकोनपञ्चाशपञ्चाशैकपञ्चाशानि प्रकरणानि

## त्रयस्त्रिंशोऽध्यायः

## रथाध्यक्षः पत्त्यध्यक्षः सेनापतिप्रचारश्च

[ रथाध्यक्षकर्तव्यविशेषाः ]

**अश्वाध्यक्षेण रथाध्यक्षो व्याख्यातः ।**

**स रथकर्मान्तान् कारयेत् ।**

---

श्रीमूला

रथाध्यक्ष इति सूत्रम् । रथानाम् अध्यक्षः घटनसंस्करणाद्यधिकृतो रथाध्यक्षः अर्थात् तत्कर्माभिधीयत इति सूत्रार्थः ।

अश्वाध्यक्षेणेति । अश्वाध्यक्षविधानेन, रथाध्यक्षः व्याख्यातः रथाध्यक्षविधानं व्याख्यातम्, रथ्यानां शालानिवेशनं विधादानं कर्मायोजनं गन्तव्याध्वपरिकल्पनं बन्धनोपकरणघटनं कर्मकरनियोजनं नीराजनमित्येवञ्जातीयमश्वाध्यक्षोक्तं कर्म रथाध्यक्षेणाप्यनुष्ठेयमित्यर्थः ।

अधिकं त्वाह—स इत्यादि । रथाध्यक्षः, रथकर्मान्तात् घटनसंस्करणरूपान्, कारयेत् ।

चाणक्यटीका

अश्वाध्यक्षेण रथाध्यक्षो व्याख्यातः । पण्यागारादिनिबन्धनेन युद्धे मृतामृत-प्रत्यवेक्षणेन च सादृश्यात् ।

स रथाध्यक्षो रथकर्मान्तान् कारयेत् ।

प्रतिपदपञ्चिका

रथाध्यक्ष इति सूत्रम् । रथा वक्ष्यमाणादेव रथादयः । तेषामध्यक्षो घटनाद्यधिकारी रथाध्यक्ष इति सूत्रार्थः । सबन्धस्त्वश्वाध्यक्षवदस्यापि व्याख्येयः । तमाह-अश्वाध्यक्षेण रथाध्यक्षो व्याख्यात इति । अनेन च शालादिनीराजनान्तं रथ्यानां पृष्ठवाह्यानां चाविशेषेणाश्वाध्यक्षे व्याख्यातम् । विशेषेणाप्युत्तमसमो रथ्यो वृषश्च मध्यमः तथा "षण्णवद्वादशयोजनान्यध्वाश्वानामि"ति चैतदशेषमश्वाध्यक्षोक्तं यथासम्भवं रथाध्यक्षेणाप्यनुष्ठेयमिति ।

अनुक्तं तु रथविधानमाह—स रथकर्मान्तानित्यादि, स रथाध्यक्षो, रथकर्मान्तान् पूर्वघटनाघटितसंस्कारदक्षिणान्, कारयेत्, तेषां च विनियोग-प्राधान्यात् ।

[ प्रमाणविनियोगादिभेदेन रथभेदाः ]

**दशपुरुषो द्वादशान्तरो रथः। तस्मादेकान्तरावराः आ षडन्तरादिति सप्त रथाः।**

**देवरथपुष्यरथसाङ्ग्रामिकपारियाणिकपरपुराभियानिकवैनयिकांश्च रथान् कारयेत्।**

---

श्रीमूला

रथस्य प्रमाणमाह—दशपुरुष इति। 'द्वादशाङ्गुलो वितस्तिश्छायापौरुषं चे'ति द्वादशाङ्गुलो यः पुरुष उक्तः तेन पुरुषप्रमाणेन दशपुरुषः दशवितस्तिः अर्थादुत्सेधे पञ्चहस्तः, द्वादशान्तरः हस्तषट्कविस्तारः, रथः। अयमुत्तमः। इतो न्यूनप्रमाणान् रथानाह—तस्मादिति। दशपुरुषरथाद्, एकान्तरावराः आ षडन्तरात् आ षड्वितस्तिविस्तारादेकैकवितस्तिविस्तारन्यूनाः, अर्थाद् विस्तारन्यूनतानुगुणोत्सेधन्यूनतायुक्ताश्च, रथा भवन्तीति शेषः। इति अनेन प्रकारेण, सप्त रथाः दशपुरुषेणाऽऽदिमेन सह।

विनियोगभेदनिबन्धनांस्तत्संज्ञाभेदानाह—देवरथेत्यादि। देवरथो यात्रोत्सवेषु देवप्रतिमासञ्चारणार्थो रथः, पुष्यरथः विवाहादिमङ्गलावसरारोहणार्थः, साङ्ग्रामिकः अध्वसञ्चारार्थः, परपुराभियानिकः शत्रुदुर्गभञ्जनावसरोपयोज्यः, वैनयिकः विनयश्चर्याशिक्षणं तदर्थः, एवंसंज्ञान् रथान् कारयेत्।

चाणक्यटीका

दशवितस्तिविस्तारः ( रथः )। कथं विज्ञायते ? द्वादशवितस्त्यायाम इति अन्तरशब्देनाऽऽयामाभिधानात्। तथा चोक्तम्—

स्यन्दनस्य प्रमाणं स्याद् विस्तारायामतः पृथक्।

( यश्चा ? पञ्चा ) रत्निः परिग्राह्यः षडरत्निः ( स ) उत्तमः॥ इति।

तस्मादुत्तमाद् एकैकवितस्त्यवरायामा आ ( षडन्तरात् ) सप्त रथा भवन्ति। तदेवात्र प्रमाणं सामान्येन भवति। अन्यस्त्वाह—एकैकवितस्तिह्रासाद् विस्तारह्रासो भवति आ चतुर्वितस्तिविस्तारादिति[1]। कथं पुनः षड्वितस्त्यामेन शय्यानां योग इति चेत् कूबरस्य पञ्चबन्धस्य ( स्वानत्वाददोषः ? )। तथा चोक्तम्—कूबरस्य चतुर्हस्तम्। पञ्चवितस्ति कथं द्वित्रिदण्डफल एवैकतदन्तर इति ? )।

देवरथः देवोत्सवादिषु तत्प्रतिमारोहाय वा योग्यः। पुष्यरथः क्रीडाविहारादिप्रयोजनः। सङ्ग्रामयोग्यः साङ्ग्रामिकः। परिचङ्क्रमार्थः पारियाणिकः।

---

१. अन्या चेयं व्याख्या भट्टस्वामिनाऽऽदृता।

[ रथानुबन्धिकर्मकरप्रोत्साहनावश्यकता ]

**इष्वस्त्रप्रहरणावरणोपकरणकल्पनाः सारथिरथिकरथ्यानां च कर्मस्वायोगं विद्यात् । आ कर्मभ्यश्च भक्तवेतनं भृतानामभृतानां च योग्यारक्षानुष्ठानं अर्थमानकर्म च ।**

---

चाणक्यटीका

संयानाय प्रभवति अतिशयक्रीडार्थं ( सां )यानिकः वैनयिकः, (एव)⋯⋯मादीनां योग्यार्थं इति । एतान् षड् रथविशेषान् कारयेत् ।

प्रतिपदपञ्चिका

तद्भेदमेव तावदाह-देवरथेत्यादि, देवरथो यात्रादौ देवतासञ्चारार्थम्, पुष्परथोऽभिषेकदिवसमङ्गलादावारोहणार्थम्, साङ्ग्रामिको युद्धार्थः, पारियाणिकोऽध्वगमनार्थः, परपुराभियानिकः शत्रुदुर्गादियोगार्थः, वैनयिकोऽभ्यासार्थः, इत्येवं षड् रथान् कारयेत् ।

तेषां प्रमाणमाह-दशपुरुष इत्यादि, द्वादशाङ्गुलेन पुरुषेण दशपुरुषः पञ्चहस्तोत्सेधो द्वादशान्तरः षडरत्निविस्तारः सर्वोत्तमो भवति ।

तस्मादुत्तम-रथप्रमाणादेकान्तरावरा इत्येकेन वितस्त्यन्तरेणावराः आ षडन्तरादित्याषड्वितस्तिविस्तारात् सप्त रथा भवन्ति । एवञ्च विस्तारहान्या सामर्थ्यादुच्छ्रायस्यापि वितस्त्यन्तरेणैव हानिर्द्रष्टव्या । दशभागेनेत्यपरे । तथेश्वादिकल्पनां रथाध्यक्षो विद्यात् ।

श्रीमूला

इष्वस्त्रेत्यादि । इष्वादिकल्पनाः इषूणां बाणानां सतूणीराणाम् अस्त्राणाम् धनुषां प्रहरणानां तोमरादीनाम् आवरणानां पल्याणादीनाम् उपकरणानां वल्गादीनां च कल्पना रचनाः, सारथिरथिकरथ्यानां कर्मसु आयोगं च यन्तॄणां रथयोक्तॄणां रथवाहानां च स्वस्वकर्मसु अभियोगातिशयं च, विद्यात् । आ कर्मभ्यश्चेति । आ कर्मणां परिसमाप्तेः, भक्तवेतनं, भृतानां नित्यनियुक्तशिल्पिनाम्, अभृतानाम् आगन्तुशिल्पिनां च सपरिकर्मिणां, योग्यारक्षानुष्ठानं योग्यानां स्वकर्मण्यतिनिपुणानां शिल्पिनां यद्वा अश्वहृदयरथचर्यादिशिक्षारूपयोग्योपदेशाचार्याणाम् आरक्षा परोपजापाद् रक्षणम् अनुष्ठानं व्यापारसौष्ठवासौष्ठवमात्रं च, अर्थकर्म प्रभूतधनदानं मानकर्म पारितोषिकवलयवस्त्रादिदानसत्कारं च, विद्याद् आकलयेत् ।

इति रथाध्यक्षप्रकरणं समाप्तम् ।

चाणक्यटीका

तथा इष्वस्त्राणां धनुषाम् । प्रहरणानां शक्त्यादीनाम् । आवरणानां वर्मादीनाम् । उपकरणानां युगवरत्रादीनां कल्पनाः विद्यात् । तथा सारथि (रथिक)⋯रथ्यानामश्वानां

[ पदात्यध्यक्षकर्तव्यसङ्ग्रहः ]

**एतेन पत्त्यध्यक्षो व्याख्यातः । स मौलभृतश्रेणिमित्राऽमित्राऽटवीबलानां सारफल्गुतां विद्यात्, निम्नस्थलप्रकाशकूटखनकाकाशदिवारात्रियुद्धव्यायामं च विद्यात्, आयोगमयोगं च कर्मसु ।**

---

चाणक्यटीका

यथास्वं कर्मस्वायोगं विनियोजनं विद्यात् । आ कर्मभ्यश्चेति अभृतानां रथकारादीनां यावत् कर्म परिसमाप्तं तावत् भक्तवेतनम्, एभ्यो दद्यादित्यर्थः । भृतानां च अस्येयम् ईदृशी योग्या, अस्येयं रक्षा, इदमस्य अनुष्ठानम्, इदमस्य अर्थकर्म, इदमस्य मानकर्मेति । विद्यादित्येव ।

॥ रथाध्यक्षः, एकोनपञ्चाशं प्रकरणम् ॥

प्रतिपदपञ्चिका

इषुशब्देन तत्समूहाधारस्तूणः परिगृह्यते । अस्त्रं धनुः, प्रहरणं तोमरादिः, आवरणं जवनादि, उपकरणं तुरगादीनां वध्रावरत्रादि, तेषां कल्पनास्तद्योगानां यथाह्र विरचना, तथा सारथेः सूतस्य, रथिकस्य योध्दुः, रध्यानां रथवाहिनाम्, चकारात् तत्पादरक्षादीनां च कर्मस्वायोगं तात्पर्यं सौष्ठवं सामर्थ्यं वा विद्यात् । आ कर्मभ्यश्च परिसमाप्ति यावत् भक्तवेतनम् आहूतानामागन्तूनां रथकारादि-शिल्पिनां तत्कर्मकराणां च हृतानां च पूर्ववत् परिगृहीतानां भक्तवेतनं विद्यात् । योग्यारक्षानुष्ठानमर्थमानकर्म चेति । ये शिल्पिनामतिशयेन योग्याः कुशलास्तेषां संरक्षणं तदनुष्ठानम्, आरक्षा योग्यारक्षा परोपजापादेस्तेषां रक्षणम्, तदनुष्ठानं तत्कर्म तात्पर्यम्, अर्थकर्म अर्थादानं, मानकर्म वस्त्रस्रगनुलेपनादिदानेन सत्कारकरणम्, तत् कस्य कदा कादृग् वा कर्तव्यमिति रथाध्यक्षो विद्यादिति केचित् । अपरे तु योग्याभ्याम् अभ्यासस्तद्ग्रहणेन सारथिरथिकादीनाम् अश्वहृदयरथचर्यायुद्धादिशिक्षाप्रदायिनो गृह्यन्ते, तेषामारक्षकानुष्ठानमर्थमानकर्म च रथाध्यक्षो विद्यादिति व्याचक्षते ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायाम् अर्थशास्त्रटीकायां
द्वितीयेऽधिकरणे रथाऽध्यक्ष प्रकरणम् ।

श्रीमूला

पत्त्यध्यक्ष इति सूत्रम् । पदात्यधिकृतव्यापारोऽभिधीयत इति सूत्रार्थः ।

एतेनेति । उक्तेन रथाध्यक्षव्यापारेण, पत्त्यध्यक्षो व्याख्यातः, पदात्यध्यक्ष इष्वस्त्रप्रहरणादिकल्पनाः कर्मस्वायोगं भक्तवेतनं योग्यारक्षानुष्ठानमर्थमानकर्म चेत्येतत् सर्वं पदातिविषयं चिन्तयेदित्यर्थः । अधिकविधिमाह—स इत्यादि ।

श्रीमूला

पत्त्यध्यक्षः, मौलभृतश्रेणिमित्रमित्राटवीबलानां मौलं मूले स्थानीये भवं भृतं वेतनपरिगृहीतं बलं श्रेणिर्जनपदावर्त्यायुधीयगणः मित्रबलममित्रबलमटवीपालबलम् इति षड्विधानां बलानां, सारफल्गुतां, विद्यात् स्थानविनियोगाय जानीयात्। निम्नादियुद्धव्यायामं च निम्नयुद्धाद्यष्टविधयुद्धशिक्षां च, विद्यात्। तत्र निम्नयुद्धं सतृणजलमध्यदेशयुद्धं स्थलयुद्धं निरुदकस्तम्बदेशयुद्धं प्रकाशयुद्धं प्रतीतं कूटयुद्धं साङ्ग्रामिकाधिकरणविकल्पितं कपटयुद्धं खनकयुद्धं भूमिं खात्वा तत्र स्थित्वा क्रियमाणं युद्धम् आकाशयुद्धं प्राकारादिकमारुह्य क्रियमाणं युद्धं, दिवायुद्धरात्रियुद्धे प्रतीते। आयोगमयोगं च कर्मस्विति। पत्तीनां स्वकर्मसु 'सर्वदेशकालशस्त्रवहनं व्यायामश्चेति पदातिकर्माणि' इति साङ्ग्रामिकाधिकरणे वक्ष्यमाणेषु तत्परत्वमव्यापारं च विद्यात्।

इति पत्त्यध्यक्षप्रकरणं समाप्तम्।

चाणक्यटीका

एतेन पत्त्यध्यक्षो व्याख्यातः। कर्मस्वायोगभक्तवेतनादिपरिज्ञानसादृश्यात्। विशेषतस्तु मौलादिबलानां प्रत्येकम् इतरेतरापेक्षया च कर्म युद्धकर्म। ( एतोमपदं ग्रहणानि इतरथा ह्याकरकाणिवेत्रे ?[१] )

त्रयस्त्रिंशश्चाध्यायः।

प्रतिपदपञ्चिका

पत्त्यध्यक्ष इति सूत्रम्। पत्तयः पादाताः ये पादचारणैव यूद्ध्यन्ति, तेषामध्यक्षः तेष्वधिकृतः, स इह अभिधीयते। तमाह-एतेन पत्त्यध्यक्षो व्याख्यात इति, एतेन यथाभिहितरथाध्यक्षव्यापारेण पत्त्यध्यक्षस्य व्यापारोऽपि व्याख्यात इति सोऽपि पत्तीनामिष्वस्त्रप्रहरणावरणोपकरणकल्पनास्तेषां कर्म स्वायोगमा कर्मभ्यश्च भक्तवेतनमभृतानां हूभृतानां च योग्यारक्षानुष्ठानार्थमर्थमानकर्म चेति विद्यादिति सर्वं योजनीयम्।

एवमातिदेशिकमभिधाय तस्य वैशेषिकं विधिमाह—स मौलभृतेत्यादि, युद्धव्यायाममायोगमयोगं च कर्मसु विद्यादिति तत्र कर्माणि पत्तिकर्माणि वक्ष्यति हि, सर्वदेशकालास्त्रवहनं व्यायामश्चेति पत्तिकर्माणीति तेष्वायोगस्तात्पर्यसौष्ठवसामर्थ्यानि। अस्य चातिदेशः सिद्धस्य पुनर्वचनं परेषां ( सर्वेषां ) च गणान्तरेभ्यः स्वकर्मस्वायोगः प्रधानमिति ज्ञापनार्थम्। अयोगोऽनुत्थानशीलत्वं, तदपि तेषां प्रोत्साहनाय ज्ञातव्यमेव। एतत्पत्त्यध्यक्षो विद्याज्जानीयादिति।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रटीकायामध्यक्षप्रचारिके द्वितीयेऽधिकरणे पत्त्यध्यक्षप्रकरणम्।

---

१. इतः परं सेनापतिप्रचारः, मुद्राध्यक्षः, विवीताध्यक्षः, समाहर्तृप्रचारस्य आदिमैकदेशश्च मातृकायां त्रुटाः।

[ सेनापतिना अभ्यसनीयाः अंशाः कर्तव्याश्च ]

**तदेव सेनापतिः सर्वयुद्धप्रहरणविद्याविनीतो हस्त्यश्वरथचर्यासङ्घुष्टश्चतुरङ्गस्य बलस्यानुष्ठानाधिष्ठानं विद्यात्। स्वभूमिं युद्धकालं प्रत्यनीकमभिन्नभेदनं भिन्नसन्धानं संहतभेदनं भिन्नवधं दुर्गवधं यात्राकालं च पश्येत् ।**

---

श्रीमूला

सेनापतिप्रचार इति सूत्रम् । हस्त्यश्वरथपदातिरूपचतुरङ्गसमुदायात्मकं मौलभृतादिषट्प्रकारोपेतं बलं सेना तस्य पतिर्नायकः सेनापतिः तस्य प्रचारो व्यापारोऽभिधीयत इति सूत्रार्थः । एकैकाङ्गाध्यक्षकथनानन्तरं सर्वाङ्गसमुदायाध्यक्षस्य क्रमप्राप्तत्वाद् वचनम् ।

तदेवेत्यादि । अश्वाध्यक्षादीनां पत्त्यध्यक्षान्तानां चतुर्णामङ्गाध्यक्षाणां यत् कर्मजातमभिहितं तदेव, सेनापतिः, विद्यात् । स कथम्भूतः, सर्वयुद्धप्रहरणविद्याविनीतः सर्वेषु युद्धेषु निम्नयुद्धादिषु सर्वेषु प्रहरणेषु धनुर्वर्गादिषु विद्यासु आन्वीक्षिकीप्रभृतिषु च कृतशिक्षः, हस्त्यश्वरथचर्यासङ्घुष्टः गजाद्यारोहणयोधनादिकर्मसु प्रख्यातः । तदेवेत्येतद् विशिनष्टि—चतुरङ्गस्य बलस्याऽनुष्ठानाधिष्ठानमिति । हस्त्यश्वरथपदात्यात्मिकायाः सेनायाः यान्यनुष्ठानानि हस्त्यश्वरथपत्तिकर्माणीति साङ्ग्रामिकाधिकरणे वक्ष्यमाणानि कर्माणि तदधिष्ठानं तदाश्रयम् अश्वाध्यक्षादिकर्मणामश्वादिकर्मानुरूपकरणीयत्वात् ।

अतिदिष्टकर्मातिरिक्तं कर्माह—स्वभूमिमित्यादि । स्वभूमिं सेनाव्यायामार्हं देशं, युद्धकालं प्रकाशादियुद्धयोग्यं कालम्, प्रत्यनीकं शत्रुबलम्, अभिन्नभेदनम् अभिन्नस्य परव्यूहस्य भेदनं विश्लेषणम्, भिन्नसन्धानं भिन्नस्य विश्लिष्टस्य स्वबलस्य संश्लेषणम्, संहतभेदनं परस्पररक्षार्थं सङ्घटितानां विघटनम्, भिन्नवधं विघटितानां वधम्, दुर्गवधं परपुरस्थानीयादिविध्वंसनम्, यात्राकालं च अभिषेणनकालं च, पश्येत् विद्यात् ।

प्रतिपदपञ्चिका

सेनापतिप्रचार इति सूत्रम् । सेना चतुरङ्गं षड्विधं च बलं, तस्याः पतिर्नेता सेनापतिः । स च राज्ञः पुत्र एवाऽऽत्मसम्पन्नो यदि लब्धः स एव मुख्यः । उक्तं हि "आत्मसम्पन्नं सेनापत्ये यौवराज्ये वास्थापयेदि"त । तदभावे अन्योऽपि क्षत्रियजातीयो ब्राह्मणोऽब्राह्मणो वा आत्मसम्पन्न एव भवितव्यः इति तस्य सेनापतेः प्रचारः सेनाविषयो व्यापारः, स इहाऽभिधीयत इति सूत्रार्थः ।

सम्बन्धस्तु दण्डप्रकृतेश्चतुर्णामङ्गानां प्रत्येकमध्यक्षान् प्रतिपाद्य तदनन्तरं सर्वाङ्गसमुदितस्य दण्डस्य प्रणेतुः सेनापतेः प्रचारोऽभिधीयत इति । तदाह—तदेव

**तूर्यध्वजपताकाभिर्व्यूहसंज्ञाः प्रकल्पयेत् ।**
**स्थाने याने प्रहरणे सैन्यानां विनये रतः ॥११६॥**

इत्यध्यक्षप्रचारे रथाध्यक्षः पत्त्यध्यक्षः सेनापतिप्रचारश्च,
त्रयस्त्रिंशोऽध्यायः, आदितः चतुष्पञ्चाशः ।

---

प्रतिपदपञ्चिका

सेनापतिरित्यादि, तद्वृत्तेनात्र चाश्वाद्यङ्गचतुष्टयाध्यक्षविषयं कार्यजातं परामृश्यते । तस्य सर्वस्य सेनापतिनाऽवश्यविज्ञाप्यत्वात् सर्वयुद्धप्रहरणविद्याविनीत इति सर्वशब्दो युद्धादिभिः प्रत्येकम्, सर्वेषु युद्धेषु निम्नयुद्धादिषु प्रकाशकूटतूष्णींयुद्धेषु च, सर्वेषु च प्रहरणेषु धनुर्वर्गादिषु, सर्वासु च विद्यासु आन्वीक्षिक्यादिषु विनीतः शिक्षितः हस्त्यश्वरथचर्यारथसङ्घुष्टः हस्त्याद्यारोहविनयनयोधनेषु प्रसिद्धः । एवम्भूतः सेनापतिः तदेव विद्यादिति वीप्सालोपोऽत्र द्रष्टव्यः । तत्तदध्यक्षोक्तं सर्वं विद्यादिति तस्य वेतने विशेषः, चतुरङ्गस्य बलस्य अनुष्ठानाधिष्ठानं विद्यादिति चतुरङ्गबलस्य यदनुष्ठानं हस्त्यश्वरथपत्तिकर्माणीति सूत्रे वक्ष्यमाणानि हस्त्यादिकर्माणीति तदधिष्ठानं तद्विषयं तदेव पूर्वोक्तं वेदितव्यम् । तद्यथा, तानि तेषां कर्माणि परीक्ष्य तदनुरूपपरिकल्पितानि भक्तवेतनविधायवसादिदानानि तत्तदध्यक्षाः कुर्युः, सोऽपि तेषां कृताकृतमहरहर्विद्यात् । स हि तेषां कर्मसु विनियोक्ता ।

एवमातिदेशिकमुक्त्वा तस्य(ा)साधारणं कर्तव्यमाह—स्वभूमिमित्यादि, स्वभूमिः स्वसैन्यव्यायामयोग्यो देशः, अर्थकालस्वसैन्यव्यायामयोग्यं प्रकाशकूटमन्त्रव्यायामयुद्धकालं च प्रत्यनीकं परबलं तदपेक्षया स्वसैन्यप्रतिव्यूहनं च अभिन्नभेदनं परव्यूहस्य भिन्नसाधनं आत्मव्यूहस्य सङ्गतभेदनम्, अन्योन्यरक्षिणां शत्रुसैनिकानां दूरीकरणम् । यथा द्रोणः संशप्तकैरर्जुनमभिमन्योः दूरीचकार, भिन्नवधः, यथा तेनैवार्जुनादपकृष्टस्य अभिमन्योर्वधः कृतः, दुर्गवधः अवस्कन्दसौप्तिकादिना दुर्गलम्भोपायाभिहितैश्च प्रकारैः शत्रोः स्थानीयस्कन्धावारविध्वंसनम्, यात्राकालो मार्गशीर्षादिः वक्ष्यमाणः, एतत्सर्वं सेनापतिः पश्येत् जानीयात् । पश्यतिग्रहणं प्रत्यक्षीकृतानामिव स्पष्टतर विज्ञानार्थम् ।

श्रीमूला

विधिशेषं श्लोकेनाह—तूर्येत्यादि । स्थाने गमननिवृत्तौ, याने गमने प्रहरणे पराभिहनने च विषये, तूर्यध्वजपताकाभिः वाद्यैः शङ्खचक्रादिचिह्नैः वैजयन्तीभिश्च, व्यूहसंज्ञाः युद्धव्यूहितस्वसैन्यस्य सङ्केतान् पराविज्ञेयान्, प्रकल्पयेद् उल्लिखेत् । उल्लिखितसङ्केताविसंवादेन स्वसैन्यानि वाद्यविशेषश्रवणध्वजपताकाविशेषदर्शनैः

श्रीमूला

स्थानयानाद्यनुष्ठानं यथा कुर्युस्तथा तान् शिक्षयेच्चेत्यभिप्रायकमध्यक्षविशेषणमाह—सैन्यानां विनये रत इति ।

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे त्रयस्त्रिंशोऽध्यायः, रथाध्यक्षः पत्त्यध्यक्षः सेनापतिप्रचारश्च, आदितश्चतुष्पञ्चाशः ॥

प्रतिपदपञ्चिका

तस्य कर्तव्यान्तरम् अध्यायप्रान्ते श्लोकेनाह—तूर्यध्वजेत्यादि। तूर्याणि वाद्यानि, ध्वज(झष)ऋषभकलशादिचिह्नानि, पताकाः वैजयन्त्यः, चित्रकपटादिकृताः, ताभिः व्यूहसंज्ञाः युद्धकाले दिने दिने व्यूहीकृतस्य स्वसैन्यस्य सङ्केतात् प्रकल्पयेत् स्थापयेत्। विषयान्याह[1]-स्थाने याने प्रहरणे चेति, तद्विषया इत्यर्थः। तद् यथा अमुष्मिन् वाद्यविशेषे श्रुते अमुकयोर्वा ध्वजपताकयोर्दृष्टयोः स्थातव्यं यातव्यं प्रहर्तव्यं वेति प्रत्यहमन्याः संज्ञाः कर्तव्याः परेषामनभिज्ञानार्थमिति । सैन्यानां स्वयोधानां विनये विविधे नयने यथा स्वयं न भज्येरन्[2] परांश्च विजयेरन्, तथा प्रवर्तने छिद्रेषु च रक्षणे रतः तात्पर्येण सदोद्यत इति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रटीकायामध्यक्षप्रचारिके द्वितीयेऽधिकरणे सेनापतिप्रचारः इति प्रकरणम्। त्रयस्त्रिंशोऽध्यायः। आदितः चतुःपञ्चाशोऽध्यायः ॥

---

१. किं विषया पा० ।

२. मन्येरन्—पा० ।

## द्विपञ्चाशत्रिपञ्चाशे प्रकरणे

### चतुस्त्रिंशोऽध्यायः

### मुद्राध्यक्षो विवीताध्यक्षश्च

[ मुद्राध्यक्षाधिकारः, तत्कृतनियमातिक्रमे दण्डश्च ]

**मुद्राध्यक्षो मुद्रां माषकेण दद्यात्। समुद्रो जनपदं प्रवेष्टुं निष्क्रमितुं वा लभेत। द्वादशपणममुद्रो जानपदो दद्यात्। कूटमुद्रायां पूर्वः साहसदण्डः तिरोजनपदस्योत्तमः।**

---

श्रीमूला

मुद्राध्यक्ष इति सूत्रम्। मुद्रा नाम पण्यलेख्यादिषु करणीयो राजकीयश्चिह्नविशेषः शुल्काध्यक्षे प्रस्तुतः, तस्या अध्यक्षो मुद्राध्यक्षः। स तद्व्यापारश्च तत्रानुक्त इहाभिधीयत इत्यर्थः।

मुद्राध्यक्ष इति। सः, मुद्रां नायं चोरः शत्रुचारो वेति प्रत्ययजननार्थां, माषकेण दद्यात् माषकं राजकोशवृद्धयर्थं गृहीत्वा दद्यात्, प्रवेष्ट्रे निष्क्रमित्रे च।

मुद्राग्रहणस्य फलमाह—समुद्र इति। गृहीतमुद्र एव जनः, जनपदं विजिगीषुदेशं, प्रवेष्टुं निष्क्रमितुं तस्मान्निर्गन्तुं च, लभेत अधिकारं प्राप्नुयादित्यर्थः।

अगृहीतमुद्रस्य प्रविशतो निर्गच्छतश्च दण्डमाह—द्वादशपणमित्यादि। द्वादशपणं दण्डम्, अमुद्रः अगृहीतमुद्रः, जानपदः विजिगीषुजनपदभवः, दद्यात्। अन्यजनपदभवस्य तु अमुद्रस्य कूटमुद्राकरणवक्ष्यमाणदण्डवृद्धिन्यायेन दण्डवृद्धिः काचित् स्थापनीया। कूटमुद्रायां कृत्रिममुद्रायां प्रदर्श्यमानायां, पूर्वः साहसदण्डः, अर्थाद् विजिगीषुजनपदभवस्यैव। तिरोजनपदस्य अन्यजनपदभवस्य कूटमुद्राप्रदर्शयितुः, उत्तमः साहसः।

इति मुद्राध्यक्षप्रकरणं समाप्तम्।

प्रतिपदपञ्चिका

मुद्राध्यक्ष इति सूत्रम्। मुद्रा राजकीयं लाञ्छनं, तस्याः अध्यक्षः तत्प्रवर्तयिता इहाभिधीयत इति सूत्रार्थः। सम्बन्धस्तु उद्देशनिर्देशतोऽथवा के कुतस्त्याः कियत्पण्याः क्वचाभिज्ञानमुद्रा वा कृता इत्यत्र मुद्रोक्ता, तदध्यक्षः तद्व्यापारो वा नोक्तः, स इहाभिधीयत इति सम्बन्धः।

[ गोप्रचारार्हभूभागाध्यक्षकर्तव्याः, तस्करादिनिवारणोपायाश्च ]

**विवीताध्यक्षो मुद्रां पश्येत्। भयान्तरेषु च विवीतं स्थापयेत्। चोरव्यालभयान्निम्नारण्यानि शोधयेत्। अनुदके कूपसेतुबन्धोत्सान् स्थापयेत्, पुष्पफलवाटांश्च। लुब्धकश्वगणिनः परिव्रजेयुररण्यानि। तस्कराऽमित्राभ्यागमे शङ्खदुन्दुभिशब्दम् अग्राह्याः कुर्युः शैलवृक्षविरूढा वा, शीघ्रवाहना वा।**

———————

प्रतिपदपञ्चिका

तदाह—मुद्राध्यक्ष इत्यादि, उक्तं ह्यन्तेष्वन्तपालदुर्गाणि जनपदद्वाराणि अन्तपालाधिष्ठितानि कारयेदिति विजिगीषुदेशनिर्गमयोरन्तपालदुर्गाणि द्वाराणि अतः तैरेव प्रवेशनिर्गमौ नियन्तव्यौ, अतस्तेषु मुद्राध्यक्षो मुद्रां माषेण दद्यादिति। विशद्भ्यो निर्गच्छद्भ्यश्च राजभार्यं माषं गृहीत्वा मुद्रां प्रयच्छेत्। किमर्थम्? परावसर्पज्ञानार्थं, चोरादिग्रहणार्थम्, पण्यव्यवहारिभ्यः शुल्कग्रहणं माषग्रहणाच्च राज्ञः कोशवृद्धिर्भवतीति च।

तदाह—समुद्रो जनपदं प्रवेष्टुं निर्गमितुं च लभेतेति, सर्वोऽपि समुद्रो मुद्राध्यक्षात् गृहीत्वैव मुद्रां विजिगीषुदेशं प्रवेष्टुं निष्क्रमितुं च ततो लभेत। नन्वेको मुद्राध्यक्षः कथमनेकेष्वन्तपालदुर्गेषु मुद्रां दास्यति स्वयमेकत्रान्यत्र च स्वपुरुषैर्दातुं शक्नोति।

अमुद्राणां प्रवेशनिर्गमे दण्डमाह—द्वादशपणमित्यादि। अगृहीतमुद्रो जानपदो विजिगीषुदेशजो द्वादशपणं दद्यात्।

कूटमुद्राकारिणः कृतकमुद्रां दर्शयतो जानपदस्य पूर्वः साहसदण्डः। तिरोजानपदस्यान्यदेशजस्य कूटमुद्राकारिण उत्तमः साहसदण्डः। अनया कूटमुद्रादण्डवृद्ध्या तिरोजानपदस्य पूर्वत्रापि दण्डवृद्धिः कल्पनीया।

ननु दुर्गचारिणां कथं दण्डग्रहणमिति चेत् तेऽपि विवीताध्यक्षहस्ते पतिष्यन्ति, मुद्रादर्शनस्य विहितकार्यत्वात्। वक्ष्यति हि—विवीताध्यक्षो मुद्राः पश्येदिति। शङ्कितेषु च देशेषु विवीतं वक्ष्यति। भयान्तरेषु च विवीतं स्थापयेदिति।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रटीकायामध्यक्षप्रचारिके द्वितीयेऽधिकरणे मुद्राध्यक्षप्रकरणम्।

श्रीमूला

विवीताध्यक्ष इति सूत्रम्। विवीतं गोप्रचरणार्हस्तृणादिमान् प्रदेशः, तस्याऽध्यक्षस्तद्व्यापारोऽभिधीयत इति सूत्रार्थः। य एते मुद्राध्यक्षदण्डनीया उक्ता अमुद्रकूटमुद्राः, ते महापथमृजुमपहाय विमार्गेणैव विवीतगतेन प्रायश्चरन्तो विवीताध्यक्षेणैव स्वयं स्वपुरुषद्वारेण वा गृहीत्वा मुद्राध्यक्षायार्पणीया इत्यतो मुद्राध्यक्षानन्तरं विवीताध्यक्षकथनसङ्गतिः।

श्रीमूला

विवीताध्यक्ष इति। सः, मुद्रां पश्येत् प्रतिविवीतपथिकं मुद्राऽस्ति न वेति परीक्षेत।

मुद्राविचयस्य व्याप्त्यर्थमाह—भयान्तरेषु चेति। भयं चोरपरापसर्पचारशङ्का, तद्गोचरेषु भूप्रदेशेषु कृष्येष्वकृष्येषु वा सर्वविधेषु, विवीतं स्थापयेत्। एतेन 'अकृष्यायां भूमौ पशुभ्यो विवीतानि प्रयच्छेद्' इति भूमिच्छिद्रविधानप्रकरणोक्त्या कृष्यभूमौ विवीताभावात् तत्पथचारिषु मुद्राविचयाभावप्रसङ्ग इति शङ्का निरस्ता। चोरव्यालभयात्, निम्नारण्यानि निम्नानि गभीराणि भूच्छिद्राणि अरण्यानि च, शोधयेत् तस्करा हिंस्रमृगाश्च तत्र निलीय वसन्ति न वेति मुहुः परीक्षेत।

अनुदक इति। निर्जले प्रदेशे, कूपसेतुबन्धोत्सान् कूपान् उदपानान् सेतुबन्धान् जलावरोधबन्धान् उत्सान् तात्कालिकान् क्षुद्रकूपांश्च स्थापयेत्। पुष्पफलवाटान्, चकारात् प्रपादिकं च, स्थापयेत्।

लुब्धकश्वगणिन इति। लुब्धकाश्च श्वगणिनश्च, परिव्रजेयुररण्यानि वनानि परितश्चरेयुः, अर्थाच्चोरामित्रादीनां प्रवेशपरिहाराय प्रविष्टपरिज्ञानाय च। चोराद्यागमस्याऽन्तपालादीन् प्रति निवेदनार्थमाह—तस्करेत्यादि। तस्करामित्राभ्यागमे शङ्खदुन्दुभिशब्दम्, अग्राह्याः तस्करामित्राणां ग्रहणागोचराः सन्तः, कुर्युः। अग्राह्यत्वप्रकारमाह—शैलवृक्षाधिरूढा वेत्यादि। स्पष्टार्थम्।

प्रतिपदपञ्चिका

विवीताध्यक्ष इति सूत्रम्। विवीतं तृणाद्युत्पत्तिस्थानम्, तदध्यक्षस्तद्व्यापारोऽभिधीयत इति सूत्रार्थः। सम्बन्धस्तु उद्देशतोऽथवा कृष्यायां भूमो पशुभ्यो विवीतानि प्रयच्छेदिति विवीतमुक्तम्, तदध्यक्षस्तद्व्यापारो वा नोक्तः, सोऽभिधीयत इति। यद्वा पूर्वस्मिन् सूत्रे [1]अकृतमुद्रादीनां दण्डविधानमुक्तम्, तच्च तेषां दर्शनाधीनम्, दर्शनं च विवीताध्यक्षकार्यमिति तदनन्तरं तत्प्रतिपादनमिति।

तदाह-विवीताध्यक्षो मुद्राः पश्येदिति। सर्वत्र पथिकान् दृष्ट्वा मुद्रापरिचयं कुर्यादित्यर्थः। तत्रामुद्रान्[2] कूटमुद्रांश्च गृहीत्वा मुद्राध्यक्षस्यार्पयेत्, तद्दण्डस्य तत्कार्यत्वात्, अस्य तु दर्शनमात्रमेव विहितमिति। न तु विवीताध्यक्षो विवीतप्रदेशेषु मुद्राः पश्यति, विवीतस्थानं च नियतमकृष्यायां भूमावित्युक्तत्वात्।

कथमन्यत्र मुद्रादर्शनमिति, तत्राह-भयान्तरेषु च विवीतं स्थापयेदिति, भयान्तरेषु शङ्कितपरपुरुषादिसम्पातभयेषु प्रदेशेषु कृष्यायामपि भूमौ षडिति स्थापयेदिति चोरव्यालभयान्निम्नारण्यानि शोधयेदिति। चोराः प्रतीताः, व्यालाः व्याघ्र-

१. कृतमुद्रादीनाम्—पा०।

२. मुद्रा कूटमुद्राश्च—पा०।

**अमित्राटवीसञ्चारं च राज्ञो गृहकपोतैर्मुद्रायुक्तैर्हारयेयुः, धूमाग्निपरम्परया वा**

---

प्रतिपदपञ्चिका

सर्पादयो हिंस्राः, तत्कृतभयान्निम्नानि सोदकान्युदकानि बहुच्छिद्राणि, अरण्यानि तरुगहनानि च शोधयेत्, चोरादीनन्विष्य ग्राहयेत् ।

अनुदके जलवर्जिते देशे कूपादीन् स्थापयेत् । कूपास्सेतुबन्धाश्च प्रतीताः । उत्साः कूपाः एवं स्थिराः क्षुद्राश्च, पथिकानां स्नानपानार्थमेतान् कारयेदिति । पुष्पफलवाटांश्च मनुष्याणाम् उपजीवनाय, चकारात् छायावृक्षप्रपादींश्च तद्रहितेषु स्थापयेदिति ।

लुब्धकाः श्वगणिनश्च विवीताध्यक्षप्रयुक्ताः परिव्रजेयुः, सर्वतश्चरेयुः । किमर्थम् ? चोराद्यागमपरिज्ञानार्थम् । तदाह-अरण्य इत्यादिना । अरण्ये तरुगहने तस्कराणाममित्राणां च, तद्ग्रहणमाटविकानामप्युपलक्षणार्थम् । तेषामभ्यागम आगच्छन्तीति परिज्ञाने शङ्खशब्दं दुन्दुभिशब्दं स्वयमग्राह्यास्तेषाम् अगोचरीभूताः कुर्युः स्वभावतो विषमप्रदेशावस्थिताः कृत्वा वा शङ्खादिशब्दं सुरङ्गे प्रवेशयेयुः[1] इति शङ्खादिशब्दकरणम् अन्तपालप्रबोधनार्थम् । शलवृक्षादिरूढा वा दुरारोहान् वा शैलवृक्षान् अधिरुह्य, सुशीघ्रवाहना वेति शीघ्रगामिभिरश्वतरादिभिर्वाहनैर्गत्वा वा बोधयेयुरिति यथासम्भवं योजनीयम् ।

श्रीमूला

अमित्रेत्यादि । अमित्राटवीसञ्चारं च अमित्राणां शत्रूणाम् अटवीसञ्चारं मृगयाद्यर्थं वनसञ्चारवृत्तान्तं, राज्ञः स्थानीयस्थितस्य गृहकपोतैर्मुद्रायुक्तैः लेखयुक्तैर्गृह्यकपारावतैः, हारयेयुः । धूमाग्निपरम्परया वा हारयेयुः, दिवा धूमपरम्परया नक्तमग्निपरम्परया वा नयेयुः । परम्परा तु—आ वनाद् आस्थानीयं विवीताध्यक्षपुरुषाः कृतसङ्केताः क्रोशान्तरेषु स्थिताः वनगतपुरुषप्रथमप्रदर्शितधूमाग्निदर्शनात् तदुत्तरक्रोशान्तरस्थितेन स्वोत्तरं क्रोशान्तरस्थितं प्रति धूमाग्निप्रदर्शनं, तेन स्वोत्तरं प्रति तेन स्वोत्तरं प्रतीत्येवंरूपा द्रष्टव्या ।

प्रतिपदपञ्चिका

राज्ञोऽपि शीघ्रवेदनोपायमाह-अमित्राटवीसञ्चारमिति ।

अमित्राणामाटविकानां च प्रवृत्तिं राज्ञः स्थानीयस्थस्यैव कपोतेन मुद्रायुक्तेन हारयेत् प्रेषयेत् । वक्ष्यति हि–विदेशप्रवृत्तिज्ञानं तदहरेव गृहकपोतेन मुद्रासंयुक्तेनेति तथा हारयेदित्यर्थः । धूमाग्निपरम्परया अमित्राटवीसञ्चारं राज्ञो हारयेदिति दिवा धूमपरम्परया रात्रावग्निपरम्परया ज्वालापरम्परया, तद्यथा—विवीताध्यक्षपुरुषाः

---

१. प्रविशेयुः—पा० ।

द्रव्यहस्तिवनाजीवं वर्तनीं चोररक्षणम् ।
सार्थातिवाह्यं गोरक्ष्यं व्यवहारं च कारयेत् ॥१७॥

इत्यध्यक्षप्रचारे मुद्राऽध्यक्षोविवीताध्यक्षश्च,
चतुस्त्रिंशोऽध्यायः, आदितः पञ्चपञ्चाशः ।

---

प्रतिपदपञ्चिका

द्विक्रोशान्तरेषु स्थिताः प्रथमेन धूमेऽग्नौ च दर्शने सर्वेऽपि स्वेषु स्वेषु स्थानेषु तदानीमेव दर्शयेयुः । यथा राजा जानीयादिति ।

श्रीमूला

व्यापारशेषं श्लोकेनाह—द्रव्येत्यादि । द्रव्यहस्तिवनाजीवं द्रव्यवने हस्तिवने च विद्यमानो य आजीवः उपजीव्यपदार्थः कुप्याध्यक्षहस्त्यध्यक्षोपादेयव्यतिरिक्तः यवसेन्धनाङ्गारादिः तं, वर्तनीं दुर्गमार्गसन्तारणभृतिं चोररक्षणतद्भृतिं, सार्थातिवाह्यं भयस्थानेषु वणिक्सङ्घस्यातिवाहनवेतनं, गोरक्ष्यं गोरक्षानिमित्तमादेयं, व्यवहारं यथोक्तपदार्थक्रयविक्रयव्यवहारं च, कारयेत् अनुष्ठापयेत् ।

इति कौटिलीयार्थशास्त्रव्यायाख्यामध्यक्षप्रचारे द्वितीयाधिकरणे
चतुस्त्रिंशोऽध्यायः । मुद्राध्यक्षो विवीताध्यक्षश्च,
आदितः पञ्चपञ्चाशः ॥

प्रतिपदपञ्चिका

इदानीमध्यायप्रान्ते श्लोकमाह—द्रव्यहस्तिवनाजीवमित्यादि, आजीव्यत इत्याजीयः, यत्किञ्चिदुपादेयमित्यर्थः । द्रव्यवने हस्तिवने च कूपाध्यक्षः हस्त्यध्यक्षः, विषयसारदार्वादि कुप्यद्रव्यं हस्तिव्यतिरेकेण यथाजीव्यं यवसेन्धनाङ्गारादि तद्विवीताध्यक्षः कारयेत् उपाददीत । वर्तनीं दुर्गमप्रदेशेषु मार्गप्रवर्तनं चोररक्षणं चोरग्रहणम् आटविकादीनामप्युपलक्षणार्थम् । तेभ्यो मार्गसंरक्षणं सार्थातिवाह्यं सार्थानां च वणिजां भयप्रदेशेष्वतिवाहनं गोरक्ष्यमेतच्च वार्तोपलक्षणं कृष्यादिप्रवर्तनमित्यर्थः । व्यवहारं तत्रत्यानां क्रयविक्रयव्यवहारविवादपदनिर्णयं, चकाराद् वर्तन्यादिभिश्च [1]राजभाव्यग्रहणं, परप्रयुक्तगूढपुरुषादिग्रहणं च विवीताध्यक्षः कारयेदिति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रटीकायामध्यक्षप्रचारिके
द्वितीयेऽधिकरणे विवीताध्यक्षप्रकरणम्, चतुस्त्रिंशोऽध्यायः,
आदितः पञ्चपञ्चाशः ॥

---

१. राजार्थानाम्—पा० ।

# चतुःपञ्चाशपञ्चपञ्चाशे प्रकरणे

## पञ्चत्रिंशोऽध्यायः

## समाहर्तृप्रचारः

[ समाहर्त्रा विलिख्य स्थापनीयाः अंशाः ]

**समाहर्ता चतुर्धा जनपदं विभज्य ज्येष्ठमध्यमकनिष्ठविभागेन ग्रामाग्रं परिहारकमायुधीयं धान्यपशुहिरण्यकुप्यविष्टि(कर)प्रतिकरम् इदमेतावदिति निबन्धयेत् ।**

---

श्रीमूला

समाहर्तृप्रचार इति सूत्रम् । सर्वेभ्य आयस्थानेभ्यो दुर्गराष्ट्रखनिसेतुवनव्रजवणिक्पथलक्षणेभ्यो राजार्थानां सम्यगाहर्ता समाहर्ता, तस्य प्रचारो व्यापारः सर्वजनपदचिन्तनरूपोऽभिधीयत इति सूत्रार्थः । एकैकार्थाध्यक्षाणां प्रतिपादनानन्तरं सर्वार्थाध्यक्षस्य प्राप्तावसरत्वात् कथनम् ।

समाहर्तेत्यादि । समाहर्ता, चतुर्धा जनपदं विभज्य चतुर्भिरंशैः जनपदं पृथक्कृत्य, ज्येष्ठमध्यमकनिष्ठविभागेन चतुर्ष्वप्यंशेषु प्रत्येकं ज्येष्ठो मध्यमः कनिष्ठ इति विभागं कुलसङ्ख्याप्रयुक्तं ग्रामाणां सारफल्गुत्वप्रयुक्तं च विभागं कृत्वा, ग्रामाग्रं निबन्धयेत् ग्रामाणां प्रातिस्विकं सामूहिकं च परिमाणं लेखयेत् । कथं निबन्धयेदित्याह—इदमेतावदितीति । एतच्च ग्रामाग्रादौ सर्वत्र सम्बध्यते । अमुकग्राम ईदृग्रूप एतत्परिमाणः अमुकग्रामसमुदाय ईदृग्रूप एतत्परिमाणश्चेत्यनेन प्रकारेण । तथा परिहारकं परिहारः महादानादिनिमित्तः करमोक्षस्तद्युक्तं ग्रामाग्रम्, इदमेतावदिति निबन्धयेत्, एत एतावन्तो ग्रामाः करमोक्षिता इति लेखयेत् । आयुधीयं दण्डकरदायकं ग्रामाग्रम्, इदमेतावदिति निबन्धयेत्, एते एतावन्तो ग्रामाः एतावत आयुधीयान् प्रयच्छन्तीति लेखयेत् । धान्यादिपञ्चकप्रतिकरम् इदमेतावदिति निबन्धयेत् । प्रतिनियतः करः प्रतिकरः, स धान्यादिषु प्रत्येकं सम्बध्यते, धान्यप्रतिकरं पशुप्रतिकरं हिरण्यप्रतिकरं कुप्यप्रतिकरं विष्टिप्रतिकरं च, इदमेतावदिति निबन्धयेत्, एष्वेषु ग्रामेषु अमुकामुकधान्येभ्य एतावांस्तत्तद्धान्यप्रतिकरः प्रतिवत्सरम् उपसम्पद्यत इति लेखयेत् । एतावान् पशुप्रतिकरोऽमुकामुकजातीयान् वाहदोहलोमाद्युपकर्तॄन् एतावतः पशून् उपनयतीति लेखयेत् । एष एतावान् हिरण्यप्रतिकरः कोशप्रवेश्यं हेमरूप्यं रूप्यरूपं ताम्ररूपं चैतावत् प्रयच्छतीति लेखयेत् । कुप्यप्रतिकर एष एतावान् एतान्येतावन्ति कुप्यद्रव्याणि वितरतीति लेखयेत् । विष्टिप्रतिकर एष एतावानेतावतां कर्मकरपुरुषाणामर्पणेनोपकरोतीति लेखयेत् ।

## चाणक्यटीका

( अथसमाहर्तृप्रचारः )······तेषु च गृहेषु। एतावच्चातुर्वर्ण्यं ब्राह्मणादयः। एतावन्तश्च एतादृश एषाम् ( हृतः ? आहृत्य ) कृषिवाणिज्यादिक इति इयत्ताञ्च विद्यात्।

## प्रतिपदपञ्चिका

समाहर्तृप्रचार इति सूत्रम्। जनपदे दुर्गाद्यायस्थानसप्तकाद् राजार्थानां सम्यक् समन्ततो वा आहर्ता समाहर्ता, तस्य प्रचारः स्वयं गोपस्थानीकैश्च जनपदचिन्तनमिति सूत्रार्थः।

सम्बन्धस्तु उद्देशनिर्देशतोऽथवा एकैकार्थाधिकारिणामध्यक्षाणां प्रचारान् प्रतिपाद्य सर्वार्थाधिकारिणः समाहर्तुः प्रतिपाद्यत इति। ननु समाहर्तृसमुदयप्रस्थापनमित्यस्मिन् सूत्रे तत्प्रकारस्याभिहितत्वात् नारब्धव्यमिदं सूत्रमिति चेत् उच्यते, तत्र हि क्रमप्राप्ते कोशप्रकृतिप्रतिपादने सन्निधातृनिचयकर्मान्तरं निचेतव्यस्य समुदयस्य प्रस्थापनं समाहर्तृकार्यमिति तावन्मात्रं प्रतिपादितम्। सर्वसमुदयानां उत्पत्तिक्षेत्रभूतस्य जनपदस्थ चिन्ताप्रकारः तत्सहायाश्च नोक्ता इति तत्प्रतिपादनार्थमिदम् आरभ्यते। तदाह-समाहर्तेत्यादि, स जनपदं तदन्तर्गतानि दुर्गाद्यायस्थानानि चतुर्धा विभज्य चतुरोऽशान् कृत्वा तेष्वंशेषु प्रत्येकं ज्येष्ठमध्यमकनिष्ठविभागेषु नकुलसङ्ख्ययान्वाहसारतया च ग्रामाणां ज्येष्ठादिविभागं कृत्वा ग्रामाग्रं ग्रामसङ्ख्यानियमे इदमेतावदिति ग्रामादिषु सर्वेषु योजनीयम्, इदमिति स्वरूपनिर्देशः। एताबदिति परिमाणनिर्देशः। तच्च परिमाणमेकैकस्य ग्रामस्य ग्रामसमुदायस्य च भवति। एवं ग्रामाग्रं निबन्धयेत् लेखयेत्। तथा परिहारकमिति, ग्रामशब्दोऽपि परिहारकादिभिः सम्बन्धनीयः चकारश्चाऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः। एतदुक्तं भवति। परिहारकंप्रवृत्तपरिहारकं च ग्रामाग्रमिदमेतावदिति न [१]लङ्घयेत्। परिहारो देयमोक्षः। तथा आयुधीयं दण्डकरम्। तथा धान्यपशुहिरण्यकुप्यविष्टिप्रतिकरमिति, धान्यादयः प्रतीताः, प्रतिकरः प्रत्येकं धान्यादिभिः सम्बद्ध्यते, प्रत्येकं नियतः करो प्रतिकरो राजदेयः, तत्र धान्यप्रतिकरं धान्यभोगम्, तद्द्वयं पशुप्रतिकरं हिरण्यप्रतिकरं (कुप्य)विष्टिप्रतिकरमिति धान्यादिष्वपीदमेतावदिति योजनीयम्। तद्यथा-अमुष्मिन् जनपदे चतुर्धा विभक्ते एतावद्भिरेको भागः, तत्रैकस्मिन् भागे एतावन्तो ग्रामाः, एतेष्वेत एव सन्त उत्तमाः, एतावन्तो मध्यमाः, एतावन्तोऽधमाः, तेष्वप्येतावन्तः परिहारकाः निवृत्तकराः, ते चैतावद्भिरायुधीयैरुपकुर्वन्ति, एत एतावन्तो धान्यप्रतिकराः, ते चैतानि चैतानि धान्यानि व्रीह्यादीन्येतावन्ति चैतावन्ति वार्षिकं प्रयच्छन्ति। एत एतावन्तः पशुप्रतिकराः पशुप्रतीकाराः ते चैतानेतान् दोहवाहनोपकारिणः पशून् प्रयच्छन्ति, एत एतावन्तो ( हिरण्यप्रतिकराः ) हिरण्यप्रतीकाराः, ते चैतदेतच्च हेम, रूप्यं जम्बूनदशातकुम्भादिकं वा हिरण्यं काशप्रवेश्यं वा चतुर्भागताम्रं रूप्यं रूपं कार्षापणं

---

१. निबन्धयेत्—पा०।

[ गोपसंज्ञकाधिकारिचिन्तनीयाः अंशाः, चिन्तनक्रमश्च ]

**तत्प्रदिष्टः पञ्चग्रामीं दशग्रामीं वा गोपश्चिन्तयेत्। सीमावरोधेन ग्रामाग्रं, कृष्टाकृष्टस्थलकेदारारामषण्डवाटवनवास्तुचैत्यदेवगृहसेतुबन्धश्मशान-सत्रप्रपापुण्यस्थानविवीतपथिसङ्ख्यानेन क्षेत्राग्रं, तेन सीम्नां क्षेत्राणां च मर्यादारण्यपथिप्रमाणसम्प्रदानविक्रयानुग्रहपरिहारनिबन्धान् कारयेत्; गृहाणां च करदाकरदसङ्ख्यानेन; तेषु च एतावच्चातुर्वर्ण्यम् एतावन्तः कर्षकगोरक्षकवैदेहककारुकर्मकरदासाश्च, एतावच्च द्विपदचतुष्पदम्, इदं च हिरण्यविष्टिशुल्कदण्डं समुत्तिष्ठतीति कुलानां च स्त्रीपुरुषाणां बालवृद्ध-कर्मचरित्राजीवव्ययपरिमाणं विद्यात्।**

---

प्रतिपदपञ्चिका

वा एतावदेतावच्च प्रयच्छन्ति। एत एतावन्तः ( कुप्यप्रतिकराः ) कुप्यप्रतीकाराः, ते चैतदेतच्च कुप्यद्रव्यमेतावदेतावच्च ददति, एत एतावन्तो विष्टिप्रतिकराः ते चैकैकैः एतावद्भिश्च दुर्गादिकर्मोपयोगिभिः पुरुषैरुपकुर्वन्ति।

श्रीमूला

इत्थं कृतनिबन्धस्य जनपदस्य चतुर्भागमेकैकः स्थानिकश्चिन्तयेदिति वक्ष्यति। चतुर्भागेऽपि ग्रामान् पञ्चशो दशशो वा विभज्य एकैकस्मिन् ग्रामविभागे स्थानिक-नियम्यमवान्तरचिन्तकं गोपसंज्ञमेकैकं कुर्यादित्याह—तत्प्रदिष्ट इति। तेन समाहर्त्रा प्रदिष्टो नियुक्तः पुरुषः, पञ्चग्रामीं दशग्रामीं वा ग्रामाणामुत्तमत्वे तत्पञ्चकम् अधमत्वे तद्दशकम् अर्थान्मिध्यमत्वे तत्षट्कादिकं च यथोचितं गोपश्चिन्तयेत् गोपसंज्ञः सन् चिन्तयेत्। यश्चिन्तयति स गोपसंज्ञयोच्यत इत्यर्थः।

कथं चिन्तयेदित्याह—सीमावरोधेनेति। नदीशैलादिसीमपरिच्छेदेन, ग्रामाग्रं ग्रामपरिमाणं, कारयेत् निबन्धयेत्। कृष्टाकृष्टाद्यष्टादशसङ्ख्यानेन, क्षेत्राग्रं क्षेत्रपरिमाणं, कारयेत् एतावत् कृष्टमेतावदकृष्टमित्येवं कृष्टादिक्षेत्रं परिच्छिद्य निबन्धयेत्। तत्र कृष्टं कृष्टपच्यव्रीह्याद्युत्पत्तिक्षेत्रम्, अकृष्टम् अकृष्टपच्यनीवाराद्युत्पत्तिक्षेत्रं, स्थलम् उज्जटदेशः, केदारः शालेयादिक्षेत्रम्, आरामः उपवनं, षण्डः कदल्यादिक्षेत्रं, वाटः इक्ष्वादिभूमिः, वनं ग्रामवास्युपजीव्यवृक्षवृन्दस्थानं, वास्तु ग्रामभूमिः, चैत्यः उद्देशवृक्षः, देवगृहादित्रयं प्रसिद्धं, सत्रम् अन्नदानशाला, प्रपा पानीयशाला, पुण्यस्थानं तीर्थादि, विवीतं गोप्रचारप्रदेशः, पन्थाः रथशकटपद्गगतागतमार्गः। तेनेति। तेन सङ्ख्यानेन, सीम्नां नदीशैलादीनां, क्षेत्राणां च, मर्यादादिनिबन्धान् कारयेत्। तत्र मर्यादा परस्परावधिः, अरण्यमनुपजीव्यवनं, पन्थाः कृष्टादिपरस्परप्रवेशनिर्गममार्गः, प्रमाणं स्वस्वपरिमाणं, सम्प्रदानम् अमुकेनामुकस्य दत्तमितीदृशं, विक्रयः प्रसिद्धः, अनुग्रहः धान्याद्यृणदानेन

श्रीमूला

कर्षकाणामुपकारः, परिहारः करमोक्षः। गृहाणां च करदाकरदसङ्ख्यानेन, निबन्धान् कारयेदिति वर्तते। एतावन्ति गृहाणि करदायकैर्जनैरध्युषितानि एतावन्ति चाकरदायकैरित्येवं सङ्ख्याय पुस्तकेषु लेखयेत्।

तेषु चेति। तेषु च गृहेषु, एतावत् चातुर्वर्ण्यम्, एतावन्तोऽमुकामुकवर्णभवा जनाः, एतावन्तः कर्षकादयः षड्वर्गश्च, एतावच्च द्विपदचतुष्पदमिदं च पिण्डेनैतावन्तो मनुष्याश्च पशवश्चैते, वसन्तीति सर्वत्र शेषः। इदं च हिरण्यविष्टिशुल्कदण्डं हिरण्यं स्वर्णरूप्यादि, विष्टिः कर्मकरः, शुल्कः पट्टदेयं, दण्डः सैन्यः इत्येतच्चतुष्टयं वार्षिकं, समुत्तिष्ठति उत्पद्यते राजार्थम्, इति अनेन प्रकारेण, निबन्धान् कारयेदिति वर्तते।

कुलानामिति। कुलानां च स्त्रीपुरुषाणां कुटुम्बसम्बन्धिनां च स्त्रीणां पुरुषाणां च, बालादिपरिमाणं बालवृद्धिपरिमाणम् एतावद्वयस्काः स्त्रियः पुरुषाश्चेत्येवं वयःपरिच्छेदं कर्माणि वर्णजातिप्रसिद्धानि तत्परिमाणं चरित्रं देशजात्याद्याचारस्तत्परिमाणम् आजीवो वृत्तिः अर्थात् तन्निमित्त आयस्तत्परिमाणं व्ययः कुटुम्बभरणार्थंधनविनियोगस्तत्परिमाणं च, विद्यात्, गोपः।

प्रतिपदपञ्चिका

एवं स्वकारणिकैः पिण्डेन कृतनिबन्धस्य जनपदस्य गोपस्थानिकैर्विभज्य चिन्तामाह, तत्रापि प्रथमं गोपस्वरुपं तच्चिन्तनप्रकारं चाह-तत्प्रदिष्ट इत्यादि। तेनसमाहर्त्रा प्रदिष्टो नियुक्तो यः पञ्चग्रामीं दशग्रामीं वा चिन्तयति तस्य गोप इति संज्ञा। तत्र (तु) पञ्चग्रामीं दशग्रामीमिति सर्वोत्तमसर्वनिकृष्टग्रामसङ्ख्यानिर्देशान्मध्यमानां तारतम्यापेक्षया षडादिसङ्ख्या कल्पनीया। तेन गोप इति उत्तमग्रामाणां पञ्चकं मध्यमानां षट्कं सप्तकमष्टकं नवकं वा, अधमानां दशकं वा चिन्तयेत् निरूपयेत् यथा परिदृष्टं निबन्धयेच्च। कथमित्याह-सीमावरोधेन नदीशैलवृक्षादिभिर्यथोक्ताभिः सीमाभिरवरुध्य अवच्छिद्य ग्रामाग्रं ग्रामपरिमाणं निबन्धयेत्। तथा कृष्टादिसङ्ख्यानेन क्षेत्राग्रं क्षेत्रपरिमाणं निबन्धयेत्। तत्र कृष्टं कृष्टपच्यानां व्रीह्यादिसस्यानां भवनं क्षेत्रम्, अकृष्टं अकृष्टपच्यानां नीवारादीनां स्थलम्, जाङ्गलं, केदारं शाल्यादिक्षेत्रं, खण्डः पूगकदल्यादिक्षेत्रम्, वनं ग्रामवासिनामुपजीव्यवृक्षादिस्थानं, ब्रह्मसोमारण्यं च पाटेक्ष्वादिक्षेत्रम्, वास्तुचैत्यदेवग्रहसेतुबन्धश्मशानानि प्रतीतानि। तत्र सेतुबन्धशब्देन कूपकुल्यादयोऽपि गृह्यन्ते। सत्रं भक्तदानस्थानम्, प्रपा पानीयस्थानम्, पुण्यस्थानं तीर्थाश्रमदेवायतनादि, विवीतः प्रतीतः, पन्थानो महासार्थपथाः, एवमेतेषां कृष्टादीनां सङ्ख्यानेन इदमेतावदिति सङ्ख्याय क्षेत्राग्रं ग्रामसीमान्तर्गतक्षेत्रपरिमाणं निबन्धयेत्।

तद्यथा, अमुष्या नद्या उत्तरतोऽमुष्माच्छैलाद्दक्षिणतोऽमुष्या कृष्टेः पश्चिमतोऽमुष्या नद्याः पूर्वतश्च निविष्टोऽसावमुकनामा ग्रामः, असौ च पिण्डेनैतावत् क्षेत्रमिति पूर्वं निबद्धय पुनरस्मिन्नेतावत् अकृष्टमित्यादि सङ्ख्याय बन्धयेदिति। तैनेति सर्वनाम्ना

[ स्थानिकेन चिन्तनीयाः अंशाः, प्रजानां गोपस्थानिकविधेयीकरणावश्यकता च ]

**एवं च जनपदचतुर्भागं स्थानिकः चिन्तयेत् । गोपस्थानिकस्थानेषु प्रदेष्टारः कार्यकरणं बलिप्रग्रहं च कुर्युः ।**

---

प्रतिपदपञ्चिका

मासान्निष्कृष्य सङ्ख्यानं परामृश्यते । सीम्नां क्षेत्राणां च मर्यादानिबन्धः सङ्ख्यानेन कारयेत् । तत्र सीमानः नदीशैलादयः, क्षेत्राणि कृष्टादीनि, तेषां मर्यादाः अन्योन्याऽवधयः । अरण्यं ग्रामीणैरनुपजीव्यं वनम्, पन्थानः कृष्टादीनाम् अन्योन्यप्रवेशनिर्गममार्गाः, प्रमाणानि प्रत्येकपरिमाणानि, सम्प्रदानं यैर्यैर्येभ्यो यादृशानि दत्तानि, विक्रयः प्रतीतः । तद्यथा, इदं क्षेत्रं अमुनाऽमुष्मादित्थं प्रतिगृहीतं क्रीतं वेति, अनुग्रहपरिहारौ प्रागुक्तौ, अनुग्रहः परिहारश्च ऊह्यः, कोशवृद्धिकारी दद्यादिति । एवमेतेषां मर्यादादीनां सीमाक्षेत्रसम्बन्धिनां यथासम्भवं निबद्धं सङ्ख्यानेन कारयेदिति । गृहाणां च ग्रामान्तर्गतानां करदाकरदसङ्ख्यानेन निबद्धं कारयेदिति वर्तते । गृहशब्देन एतावन्ति गृहाणि करदानि, एतेषु प्रतिगृहं निवासिजनेनैतावद्देयम्, एतेषु च न किञ्चिद् देयमिति ।

तेषु च गृहेषु, एतावच्चातुर्वर्ण्यमिति, ब्राह्मणादयो वर्णाश्चातुर्वर्ण्यमिति, तद्ग्रहणं मन्त्रप्रभावाणामप्युपलक्षणार्थम्, कर्मकरो भृतकः, दासो गृहदासादिः, द्विपादो मनुष्यः, चतुष्पादाः, पशवः, शेषाः प्रतीताः । एतानपि पृथक् सङ्ख्याय निबन्धयेदिति । इदं च हिरण्यादिकमेषु गृहेषु समुत्तिष्ठति राज्ञ उत्पद्यत इति निबन्धयेदिति । हिरण्यादयः कृतव्याख्याः ।

किञ्च, कुलानां कुटुम्बानां स्त्रीपुरुषादिपरिमाणं च गोपो विद्यात् । तत्र स्त्र्यादयः प्रतीताः । कर्माणि जात्युक्तानि अध्ययनादीनि, चरित्रं देशजातिकुलप्रबन्धः, आचारः आजीवः प्रत्युपायः, आयः अर्थोत्पत्तिः, व्ययः कुटुम्बभरणाद्यर्थः, एवमेतेषां स्त्रीपुरुषादीनां, परिमाणमियत्तां गोपो विद्यात् इति ।

श्रीमूला

एवञ्चेति । अनेन प्रकारेण जनपदचतुर्भागं, स्थानिकः स्थानिकपदव्यपदेश्यश्चतुर्भागनायकः, चिन्तयेत् ।

गोपेत्यादि । गोपस्थानिकस्थानेषु गोपानां स्थानिकानां च स्वव्यापारानुष्ठानप्रदेशेषु, प्रदेष्टारः कण्टकशोधनाधिकारिणः, कार्यकरणं कण्टकोद्धरणलक्षणकार्यानुष्ठानं, बलिप्रग्रहं च बलीनां गोपस्थानिकनिबन्धारूढानां राजार्थानां प्रसभग्रहणं च अर्थात् स्वयमदायकेभ्यः, अथवा बलिप्रग्रहं बलिनां राष्ट्रमुख्यानां राजार्थोत्थापनविघ्नकारिणां प्रग्रहं गोपस्थानिकविधेयास्ते यथा स्युस्तथा दमनम्, कुर्युः ।

इति समाहर्तृप्रचारः समाप्तः ॥

## गृहपतिवैदेहकतापसव्यञ्जनप्रणिधयश्च ।

### चाणक्यटीका

एवं जनपदचतुर्भागं स्थानिकश्चिन्तयेत् । यथा गोपाः पञ्चग्रामीं दशग्रामीं वा तथा जनपदचतुर्भागं चत्वारोऽध्यक्षाः स्थानिकसंज्ञाः समाहर्तृप्रयुक्ताश्चिन्तयेयुः ।

गोपस्थानिकप्रचारेषु प्रदेष्टारः कण्टकशोधनोक्ताः कारणिकाः सहायत्वेन नियुक्ताः कार्यस्य यथोक्तस्यानुष्ठानम्, आयानां ग्रहणं च कुर्युरिति ।

॥ इति समाहर्तृप्रचारः, षट्त्रिंशं ( ? चतुःपञ्चाशं ) प्रकरणम् ॥

### प्रतिपदपञ्चिका

गोपस्थानिकस्थानेष्विति । गोपस्थानिकाश्च यत्र यत्र स्थित्वा स्वाधिकारं चिन्तयन्ति, तत्र स्थिताः प्रदेष्टारः कण्टकशोधनाधिकृताः, कार्यकरणं तत्रत्यानां कण्टकानामुद्धरणम्, बलिप्रग्रहं गोपस्थानिकनिबद्धानां राजभाग्यानां समुदयानां प्रग्रहं स्वयमप्रयच्छद्भ्यः प्रसह्य उपादानम्, अथवा बलिनां बलवतां ग्रामराष्ट्रमुख्यानां प्रग्रहं नियमनं गोपस्थानिकवशे स्थापनम्, वाशब्दश्चार्थे, एतत् सर्वं प्रकुर्युरिति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रटीकायाम् अध्यक्ष-
प्रचारिके द्वितीयेऽधिकरणे समाहर्तृप्रचारः इति प्रकरणम् ।

### श्रीमूला

गृहपतिकवैदेहकतापसव्यञ्जनाः प्रणिधय इति सूत्रम् । गृहपतिकव्यञ्जन वैदेहकव्यञ्जनास्तापसव्यञ्जनाश्च संस्थाविशेषाः गूढपुरुषोत्पत्तिप्रकरणोक्ताः, प्रणिधयः गूढपुरुषाः लक्षणया तेषां प्रणिधानानि ग्रामेषु जनपदेषु च नियोजनानि अभिधीयन्त इति सूत्रार्थः । गृहपतिकवैदेहकतापसव्यञ्जनप्रणिधय इति समस्तपाठे गृहपति-व्यञ्जनादीनां त्रयाणां संस्थाविशेषाणां प्रणिधयः प्रणिधानानि नियोजनानीति स्पष्ट एवार्थः । संस्थापञ्चके तिसृणां प्राधान्याद् ग्रहणमन्ययोरप्यभ्युपायत्वाविशेषा-दुपलक्षणम् । तेन कापटिकोदास्थितसंस्थयोरपि प्रणिधानं सङ्गृहीतं द्रष्टव्यम् । संस्था-प्रणिधानं च ग्रामजनपदवृत्तान्तज्ञानस्य गोपस्थानिकप्रचारपरीक्षणस्य च समाहर्त्रा-वश्यापेक्षणीयस्याभ्युपायभूतं समाहर्तृप्रचारस्वाङ्गमिति तस्येहाभिधानसङ्गतिः ।

### चाणक्यटीका

समाहर्तृप्रचारपूर्वकाः गृहपतिबैदेहकतापसव्यञ्जना ( नां ? :, तेषां ) व्यवहारा उच्यन्ते ।

### प्रतिपदपञ्चिका

गृहपतिकवैदेहकतापसव्यञ्जनाःप्रणिधय इति सूत्रम् । व्यञ्जनशब्दः प्रत्येकम्, गृहपतिकव्यञ्जनो वैदेहकव्यञ्जनस्तापसव्यञ्जनश्च संस्थाविशेषा गूढपुरुषोत्पत्ताव-

[ गृहपतिकव्यञ्जनैर्ज्ञेयाः अंशाः ]

**समाहर्तृप्रदिष्टाश्च गृहपतिकव्यञ्जनाः येषु ग्रामेषु प्रणिहिताः, तेषां ग्रामाणां क्षेत्रगृहकुलाग्रं विद्युः; मानसञ्जाताभ्यां क्षेत्राणि, भोगपरिहाराभ्यां गृहाणि, वर्णकर्मभ्यां कुलानि च। तेषां जङ्घाग्रामायव्ययौ च विद्युः। प्रस्थितागतानां च प्रवासावासकारणम्, अनर्थ्यानां च स्त्रीपुरुषाणां चार-प्रचारं च विद्युः।**

———

प्रतिपदपञ्चिका

भिहिताः। तेषां प्रणिधिं प्रणिधानं व्यञ्जनपदे, ग्रामादिषु नियोजनमिति सूत्रार्थः। प्रणिधय इति बहुवचननिर्देशः कापटिकादीनामपि प्रणिधानस्योपसङ्ग्रहार्थः।

तथा च वक्ष्यति—

"चिन्तयेयुश्च संस्थास्ता संस्थाश्चान्यास्वयोनय ॥" इति।

यद्येवं संस्थाप्रणिधिरित्येव वक्तव्यम्, किमर्थं त्रयाणामुपादानमिति चेत्सत्यम्, समाहर्तृकार्योपयोगिनि जनपदवृत्तान्तज्ञाने तेषां प्राधान्यात् स्वरूपतोऽथवा समाहर्तृ-प्रचारे महतो जनपदस्यैकेन समाहर्त्रा चिन्तयितुमशक्यत्वात्। गोपस्थानिकैर्विभज्य चिन्तनमुक्तम्, ते हि कर्मसु परीक्षणीया एव, उक्तं हि "कर्मसु चैषां नित्यं परीक्षां कारयेत्, चित्तानित्यत्वान्मनुष्याणाम्। अश्वसधर्माणो हि मनुष्या नियुक्ताः कर्मसु विकुर्वत" इति। अपसर्पाधिष्ठितं च प्रचारमिति च, तस्मात्तत्प्रचारपरीक्षार्थं समाहर्तृप्रचारशेषभूम्योरेतदन्तरमिदमभिधीयत इति सम्बन्धः।

श्रीमूला

तत्र गृहपतिव्यञ्जनप्रणिधानं तावदाह—समाहर्तृप्रदिष्टाश्चेति। समाहर्त्रा नियुक्ताः, गृहपतिकव्यञ्जनाः, येषु ग्रामेषु, प्रणिहिताः नियोजिताः, तेषां ग्रामाणां, क्षेत्रगृहकुलाग्रं क्षेत्रसङ्ख्यां गृहसङ्ख्यां कुलसङ्ख्यां च, विद्युः। कानि कानि कथं विद्युरित्याह—मानसञ्जाताभ्यां क्षेत्राणीति। मानेन यामविस्तारादिपरिच्छेदेन उत्पन्नसस्यपिण्डेन च क्षेत्राग्रं विद्युः। भोगपरिहाराभ्यां गृहाणि करकरमोक्षाभ्यां गृहवास्तव्यान्, विद्युः। वर्णकर्मभ्यां कुलानि च ब्राह्मणादिजात्या तथा यजनकृष्या-दिकर्मणा कुटुम्बानि च विद्युः। तेषामिति। कुलानां जङ्घाग्रं, जङ्घाशब्देन पादचारिणो लक्ष्यन्ते। कुलसम्बन्धिनां पादचारिणां द्विपदचतुष्पदानामग्रम् इयत्ताम्, आयव्ययौ च धनोत्पत्तिविनियोगौ च, विद्युः। प्रस्थितेत्यादि। प्रस्थितागतानामिति व्यस्तसमस्त-विपर्यस्तग्रहणं प्रस्थितानां निजाधिवासस्थलादन्यत्र वस्तुं गच्छताम्, आगतानां वस्तुमन्यप्रदेशादागतानां, प्रस्थितागतानां वस्तुमन्यत्र गत्वा पुनः प्रत्यागतानाम्, आगतप्रस्थितानां क्वचिद् वस्तुमागत्य ततोऽन्यत्र वस्तुं प्रस्थितानां चेत्यर्थः। प्रवासावासकारणं प्रवासे अध्युष्यमाणस्थलवासपरित्यागे आवासे तदन्यस्थलवास-

[ वैदेहकव्यञ्जनैः ज्ञातव्याः अंशाः ]

**एवं वैदेहकव्यञ्जनाः स्वभूमिजानां राजपण्यानां खनिसेतुवनकर्मान्त-**

———————

श्रीमूला

परिग्रहे च कारणं, विद्युः। अनर्थ्यानां च स्त्रीपुरुषाणां अनाशंसनीयानां नर्तकोबन्धक्यादीनां स्त्रीणां विटकितवादीनाम् पुरुषाणां च प्रवासावासकारणं विद्युः। चारप्रचारं च परप्रयुक्तापसर्पप्रवृत्तिं च, विद्यु :।

चाणक्यटीका

गृहपतिकव्यञ्जनाश्चेत् क्षेत्रकुलाग्रं विद्युः। कथमिति, यदि ( ए )तावत् प्रमाणम् एतावत् फलमिति मानसञ्ज्ञाताभ्यां क्षेत्राणि। एतावन्ति भुज्यन्ते एतावन्ति परिहा( रा ? री )णीति भोगपरिहाराभ्यां गृहाणि। एतावन्तो ब्राह्मणाः क्षत्रिया वा इति जात्या, एतावन्तः कर्षका इति कर्मणा कुलानि। तथा तेषामेव कुलानामाश्रयस्य एतावन्तः पुरुषा इति, अस्य अयमायो व्यय इति च विद्युः। प्रस्थितागतानां स्त्रीपुरुषाणां निर्गतकारणं प्रविष्टानां प्रविष्टकारणम्, तेषां चारादिति। तथा आनर्थ्यानां गतागतं कः केन संसृज्यत इति समाहर्त्रे निवेदयितुं विद्युः॥

प्रतिपदपञ्चिका

तदाह—समाहर्तृप्रदिष्टाश्चेत्यादि, समाहर्त्रा प्रदिष्टाः प्रयुक्ताः, गृहपतिकव्यञ्जना येषु ग्रामेषु प्रणिहिता नियुक्ताः, तेषां ग्रामाणां क्षेत्रकुलगृहाग्रं विद्युरिति क्षेत्रादीनां सङ्ख्या विद्युः। कथमित्याह—मानसञ्ज्ञाताभ्यां क्षेत्राणीति। मानेन क्षेत्राणाम् इयता परिच्छेदेन तदुत्पन्नसस्यादिपिण्डेन क्षेत्राग्रं विद्युः। क्षेत्राणीति बहुवचनं प्रतिकुटुम्बं कृष्टादिविभेदेन विभज्य ज्ञानार्थम्। तथा भोगपरिहाराभ्यां गृहाणीति, करदाकरदसंख्यानेनेत्यर्थः, वर्णकर्मभ्यां कुलानीति, वर्णो जातिः, कर्म कृष्यादिकम्, ताभ्यां कुलानि कुटुम्बानि विद्युरिति। किञ्च तेषां कुलानां जङ्घाग्रमिति, जङ्घाशब्देन पादचारिणो मनुष्याः पशवश्च गृह्यन्ते। एतावद् द्विपदचतुष्पदमिति जानीयादित्यर्थः। आयव्ययौ च अर्थानामुत्पत्तिं व्ययं च विद्युरिति। किञ्च, प्रस्थितानागतानां च प्रवासावासकारणं विद्युरिति। गृहाद् गृहं ग्रामाद् ग्रामं राष्ट्राद् राष्ट्रं च प्रस्थितानागतानामिति। सङ्ख्याविगृहीतविपर्यस्तग्रहणं प्रस्थितानामागतानां प्रस्थितागतानाम् आगतप्रस्थितानां च। तत्र प्रस्थितानामेकत्र वसतामन्यत्र वस्तुं गच्छतामागतानाम् अन्यतस्तत्र वस्तुमागतानां प्रस्थितागतानां च प्रवासावासकारणमितीदमेषां प्रवासे स्थानान्तरगमने कारणमिदमिदमेषां स्थानान्तरादागत्य वासे कारणमिति च विद्युरिति। अनर्थानां च स्त्रीपुरुषाणां नटनर्तकादीनां बन्धक्यादीनामसत्स्त्रीणां पारदारिकाक्षधूर्तादिपुरुषाणां वा प्रवासावासकरणं विद्युरिति। चारप्रचारं च परप्रयुक्तानां चारपुरुषाणां च प्रचारं विद्युरिति।

श्रीमूला

वैदेहकव्यञ्जनप्रणिधानमाह—एवमिति। एवं यथा गृहपतिव्यञ्जनास्तथा

**क्षेत्रजानां परिमाणम् अर्घं च विद्युः, परभूमिजातानां वारिस्थलपथोपयातानां सारफल्गुपण्यानां कर्मसु च। शुल्कवर्तन्यातिवाहिकगुल्मतरदेयभागभक्त-पण्यागारप्रमाणं विद्युः।**

---

श्रीमूला

वैदेहकव्यञ्जनाः, स्वभूमिजानां राजपण्यानां पण्याध्यक्षप्रतिपादितानां, खनिसेतुवन-कर्मान्तक्षेत्रजानां खनिजानां खन्यध्यक्षोक्तानां शङ्खवज्रादीनां सेतुजानां मत्स्यप्लवा-दीनां वनजानां कुप्याध्यक्षोक्तानां द्रव्यवनभवानां कर्मान्तजानां खातवप्रादिकर्मान्त-भूम्युत्पन्नानां क्षेत्रजानां व्रीह्यादीनां सीताध्यक्षोक्तानां च, परिमाणम् इयत्ताम्, अर्घं मूल्यं च, विद्युः। परभूमिजातानां देशान्तरजातानां, वारिस्थलपथोपयातानां साराणां रत्नादीनां फल्गूनां शाकादीनां च पण्यानां, कर्मसु च क्रयविक्रयादिषु च, परिमाणमर्घं च विद्युरिति वर्तते। तथा शुल्काद्यष्टकप्रमाणं शुल्कस्य शुल्काध्यक्षोक्तस्य वर्तन्या अन्तपालादेयस्य आतिवाहिकस्य सार्थातिवाहनार्थस्य विवीताध्यक्षग्राह्यस्य गुल्मदेयस्य रक्षिसङ्घदेयस्य तरदेयस्य नावध्यक्षदेयस्य भागस्य सहव्यवहारि-विभाज्यांशस्य भक्तस्य व्यवहर्तृपुरुषवलीवर्दादिभोजनव्ययस्य पण्यागारस्य पण्य-गृहभाटकादेश्च प्रमाणम् इयत्तां, विद्युः।

चाणक्यटीका

स्वभूमिजानामिति। राजभूम्युत्पन्नानाम् ख(नि)जाः शङ्खादयः। वनजाः शैलेयकमुस्तादयः। कर्मान्तजा वस्त्रादयः। क्षेत्रजाः शाल्यादयः। तेषां परिमाणमर्घं वाऽनुप्रथिश्य विद्युः। परभूमिजानां तु इयता व्यापारेणेदं निष्पादिततिति कर्म-प्रमाणम्। शेषं गतार्थम्।

प्रतिपदपञ्चिका

एवं गृहपतिकव्यञ्जनप्रणिधिमुक्त्वा वैदेहकव्यञ्जनप्रणिधिमाह—एवं वैदेहकव्यञ्जना इत्यादि, यथा गृहपतिकव्यञ्जना ग्रामाणां क्षेत्रकुलगृहादिकं विद्युः, एवं वैदेहकव्यञ्जना अपि स्वभूमिजानां विजिगीषुदेशानां राजपण्यानां पण्याध्यक्षोक्तानां खन्यादिषु पञ्चसूत्पन्नानाम्, तत्र खनिजानि खन्यध्यक्षोक्तानि शङ्खवज्रादीनि, एतच्चाकरजानामप्युपलक्षणार्थम्। सेतुजानि मत्स्यादीनि, उक्तं हि "मत्स्यप्लवहरित-पण्यानां सेतुषु राजस्वाम्यं गच्छेयुरि"ति। वनजानि द्रव्यवनोत्पन्नानि कुप्याध्यक्षो-क्तानि, कर्मान्तजानि निखातवप्रादिकर्मान्तजानि, क्षेत्रजानि सीताध्यक्षोक्तानि, एवमेतेषां परिमाणमियत्ताम् अर्घं मूल्यं च विद्युः।

तथा च परभूमिजानां देशान्तराद् वारिपथाभ्यामुपयातानां विजिगीषुदेशं प्राप्तानाम्, सारपण्यानां चन्दनादीनाम्, फल्गुपण्यानां वस्त्रधान्यलवणादीनाम्, तत्र सारफल्गुशब्देन श्रेष्ठकनिष्ठमात्रौ वरौ सर्वपण्योपलक्षणार्थौ। तेन रत्नादिशाकपर्यन्तं

[ तापसव्यञ्जनैः तच्छिष्यैश्च ज्ञातव्याः अंशाः ]

**एवं समाहर्तृप्रदिष्टास्तापसव्यञ्जनाः कर्षकगोरक्षकवैदेहकानामध्यक्षाणां च शौचाशौचं विद्युः। पुराणचोरव्यञ्जनाश्चाऽन्तेवासिनः चैत्यचतुष्पथशून्यपदोदपाननदीनिपानतीर्थायतनाश्रमारण्यशैलवनगहनेषु स्तेनाऽमित्रप्रवीरपुरुषाणां च प्रवेशनस्थानगमनप्रयोजनान्युपलभेरन्।**

———

### प्रतिपदपञ्चिका

सर्वपण्यानां ग्रहणम्, तेषां कर्मसु क्रयविक्रयादिषु शुल्कादीनां प्रमाणं विद्युः। तत्र शुल्कं शुल्काध्यक्षोक्तम्, वर्तन्यन्तपालादेयम्, आतिवाहिकं सार्थातिवाहननिमित्तं विवीताध्यक्षदेयम्। उक्तं हि—"सार्थादतिवाह्यं गोरक्ष्यव्यवहारं च कारयेदि"ति। गुल्मदेयं चाराद्यादेयम्, तरदेयं नावध्यक्षादेयम्, भागकं दशभागादि राजभाव्यं सहव्यवहारिणां परस्परदेयभागं वा भक्तपरिचारकपुरुषबलीवर्दादिपरिव्ययम्, पण्यागारं प्राभृतादिकम्। एवमेतेषां प्रमाणं वैदेहकव्यञ्जना विद्युरिति। तथा तापसव्यञ्जना अपि कर्षकादीनां शौचाशौचं विद्युरिति यथासम्भवं योजनीयम्।

### श्रीमूला

तापसव्यञ्जनप्रणिधानमाह—एवमिति। अनेन प्रकारेण, समाहर्तृप्रदिष्टाः समाहर्तृनियुक्ताः, तापसव्यञ्जनाः, कर्षकगोरक्षकवैदेहकानाम्, अध्यक्षाणां च गोपादीनां च, शौचाशौचं विद्युः। पुराणचोरव्यञ्जनाश्चेति। सन्धिच्छेदादिना परद्रव्यापहारिणश्चोराः ते चिराभ्यस्ततत्कर्माणः पुराणचोराः तद्व्यञ्जनास्तद्वेषाः, अन्तेवासिनः तापसव्यञ्जनशिष्याः, चैत्यादिष्वेकादशसु स्थानेषु, तत्र चैत्यं देवालयः चतुष्पथं शृङ्गाटकं शून्यपदं निर्जनस्थानम् उदपानः स्रोतःप्रापितावरुद्धजलो जलाधारः नदी प्रसिद्धा निपानम् उपकूपजलाशयः तीर्थायतनं पुण्योदकप्रदेशः आश्रमो मुनिगृहम् अरण्यं ब्रह्मसोमारण्यं शैलगहनवनगहने प्रसिद्धे। एतेषु स्थित्वेति शेषः। स्तेनामित्रप्रवीरपुरुषाणां च स्तेनानां चोराणाम् अमित्रपुरुषाणां शत्रुप्रयुक्तानां तीक्ष्णरसदादीनां प्रवीरपुरुषाणाम् अल्पनिमित्तपरमारणसाहसिकानां च, चकारादनर्थ्यस्त्रीपुरुषाणां च प्रवेशनस्थानगमनप्रयोजनानि अमुष्मिन् देशे अमुष्मिन् काले प्रवेशः स्थितिर्निर्गमनमित्येतानि प्रयोजनं च उपलभेरन् जानीयुः।

### चाणक्यटीका

एवं तापसव्यञ्जनाः समाहर्तृप्रयुक्ताः कर्षकादीनां शौचाशौचं विद्युः। पुराणचोरव्यञ्जनाश्चेति चोरादिविश्वासनार्थं वयं चोरा एव, इदानीमशक्ताः कर्तुं चौर्यमित्येवं ख्यापयन्तः।

[ निगमनम् ]

**समाहर्ता जनपदं चिन्तयेदेवमुत्थितः ।**
**चिन्तयेयुश्च संस्थास्ताः संस्थाश्चान्याः स्वयोनयः ॥११८॥**

इत्यध्यक्षचारे समाहर्तृप्रचारः, गृहपतिवैदेहकतापसव्यञ्जनप्रणिधयश्च, पञ्चत्रिंशोऽध्यायः, आदितः षट्पञ्चाशः ।

---

### प्रतिपदपञ्चिका

पुराणचोरव्यञ्जनाश्चान्तेवासिन इत्यादि । चोरास्तालोद्घाटनसन्धिच्छेदादिकुशलाः, ते बहुशः कृतकर्माणः पुराणचोराः, तद्व्यञ्जनास्तदुपकरणसङ्ग्रहणादिकारिणः, तद्व्यञ्जनं (स्तोमिभिः प्रतिसर्गार्थम् ?) स्तेनादयो हि पुराणचोराः अमित्रपुरुषाः, शत्रुप्रयुक्ताः तीक्ष्णादयः, प्रवीरपुरुषास्साहसिका ये द्यूतनिमित्तेऽपि वा कलहे परानात्मानं वा निर्व्यपेक्ष्यं व्यापादयन्ति इति । तेषां स्तेनादीनामनर्थस्त्रीपुरुषाणां च प्रागुक्तानां प्रवेशस्थाननिर्गमात् प्रयोजनं चोपलभेरन् । अनेन मार्गेणामुष्मिन् काले प्रविशन्ति, अत्र देशे अमुष्मिन् काले तिष्ठन्ति, अनेन मार्गेण काले चास्मिन् निर्गच्छन्ति, इदं चैषां प्रयोजनम्, इह सस्यमिति सर्वमेव जानीयुरिति ।

### श्रीमूला

अध्यायान्ते श्लोकमाह—समाहर्तेति । एवम् उक्तेन प्रकारेण, उत्थित उद्युक्तः, समाहर्ता जनपदं चिन्तयेत्, अर्थाद् गोपस्थानिकसहायः । ताश्च संस्थाः समाहर्तृप्रदिष्टाः पूर्वोक्ताः गृहपतिकव्यञ्जनादयः संस्थाविशेषाः, जनपदं चिन्तयेयुः, चकाराद् गोपस्थानिकौ च । संस्थाश्च तांश्च तत्तद्व्यञ्जनयोनीन् संस्थाविशेषान्, अन्याः स्वयोनयः तत्तद्योनिसमानयोनयः संस्थाः, चिन्तयेयुः परीक्षेरन् । संस्थापरीक्षार्थस्य चेदं संस्थान्तरप्रणिधानस्य वचनं न तात्पर्यतो विध्यर्थं, किन्तु कर्मकराः प्रायोऽर्थलोभाद् राजार्थं वा ह्रापयन्ति प्रजा वा परिपीडयन्तीत्यवश्यं तत्कर्मशोधने समाहर्त्रा नित्यं प्रतिजागरितव्यमित्युपदेशार्थम् । तेन संस्थाचिन्तनाय संस्थान्तरकल्पने संस्थानवस्थाप्रसङ्ग इति न चोदनीयम् ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाऽधिकरणे पञ्चत्रिंशोऽध्यायः, समाहर्तृप्रचारः गृहपतिवैदेहकतापसव्यञ्जनाः प्रणिधयश्च, आदितः षट्पञ्चाशः ॥

### चाणक्यटीका

तत्संस्थाश्च अन्याः संस्थाः परप्रयुक्ताश्चिन्तयेयुः । यस्मादेतास्तासां समानयोनयो विश्वसनीया इत्यर्थः ॥

॥ इति गृहपतिकवैदेहकतापसव्यञ्जनप्रणिधयः, सप्तत्रिंशं ( ? पञ्चपञ्चाशं )प्रकरणम् ॥
॥ पञ्चत्रिंशश्चाध्यायः ॥

### प्रतिपदपञ्चिका

अध्यायप्रान्ते प्रकरणद्वयशेषं श्लोकमाह—समाहर्तेत्यादि, एवं यथोक्तप्रकरणद्वयानुष्ठानेन, उत्थितः नित्योद्युक्तः, समाहर्ता जनपदं चिन्तयेत्। स्वयं गोपस्थानीकैस्संस्थाभिश्च चिन्तयेत्। चिन्तयेयुश्च संस्था इति, संस्थाश्च समाहर्तृप्रदिष्टा एवं चिन्तयेयुरिति, तेषामपि प्रचारमन्यैः तद्व्यञ्जनैस्सह समाहर्ता परीक्षयेदित्यर्थः। नन्वेवमनवस्था प्रसज्येत, सत्यमिदम्, अत्र विवक्षितमाचार्यस्यार्थस्य हि स्वादुत्वादर्थाधिकारिणां भक्षणमवश्यम्भावि दुर्ज्ञानञ्च भवति उक्तं हि—"यथा ह्यनास्वादयितुं शक्यमि"त्यादिना श्लोकत्रयेण, तेषां च भक्षणाद् राजार्थो जनपद उभयं वा पीड्येत। तत्र राजार्थपीडने स्वाम्यर्थपीडनात् नरकपातो दण्डश्चानन्तरः प्रजापीडने महानधर्मो राजदण्डः, ताभिरेकलोष्ठवधश्च, उभयपीडने च उभयं भवति। तस्मादुभयमपि यथा न किञ्चिदपि पीड्येत सर्वप्रकारम्, तथा समाहर्त्रा प्रयतितव्यमवहितेनेति।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रटीकायामध्यक्षप्रचारिके द्वितीयेऽधिकरणे पञ्चत्रिंशोऽध्यायः।

आदितः षट्पञ्चाशोऽध्यायः॥

# षट्पञ्चाशं प्रकरणम्

## षट्त्रिंशोऽध्यायः ।

## नागरिकप्रणिधिः ।

[ नागरिकादिभिश्चिन्तनीया अंशाः ]

**समाहर्तृवन्नागरिको नगरं चिन्तयेत् । दशकुलीं गोपो विंशतिकुलीं चत्वारिंशत्कुलीं वा । स तस्यां स्त्रीपुरुषाणां जातिगोत्रनामकर्मभिः जङ्घाग्रं आयव्ययौ च विद्यात् । एवं दुर्गचतुर्भागं स्थानिकश्चिन्तयेत् ।**

---

श्रीमूला

नागरिकप्रणिधिरिति सूत्रम् । नगरे स्थानीये नियुक्तो नागरिकः, तस्य प्रणिधिः प्रणिधानं व्यापारे नियोजनम् अभिधीयत इति सूत्रार्थः । सर्वसमुदयानां यथोक्तरूपाणां रक्षणीयत्वाद् तद्रक्षणस्य तदाश्रयस्थानरक्षणाधीनत्वात् स्थानीयस्य तदाश्रयस्थानत्वात् तद्रक्षणस्येहाभिधानसङ्गतिः ।

समाहर्तृवदिति । नागरिकः, नगरं स्थानीयं, समाहर्तृवत् चिन्तयेत् । यथा समाहर्ता जनपदं चतुर्धा विभज्य गोपस्थानिकसहायश्चिन्तयेत्, तथा स्थानीयं चतुर्धा विभज्य गोपस्थानिकसहायश्चिन्तयेत् । तत्र गोपस्य चिन्तनीयं विषयमाह— दशकुलीमिति । दशकुलीं दशकुलानि उत्तमानि, गोपः, चिन्तयेदिति सम्वध्यते । तथा विंशतिकुलीं विंशतिकुलानि मध्यमानि, चत्वारिंशत्कुलीं वा चत्वारिंशत्-कुलानि वाधमानि, चिन्तयेत् । स गोपः, तस्यां दशकुल्यां विंशतिकुल्यां चत्वा-रिंशत्कुल्यां वा स्वचिन्ताविषयभूतायां, स्त्रीपुरुषाणां स्त्रीणां पुरुषाणां च, जातिगोत्र-नामकर्मभिः, जङ्घाग्रं जङ्घाशब्देन पादचारिजनो लक्ष्यते, तेन जनसङ्ख्यामित्यर्थः, आयव्ययौ च, विद्यात् ।

स्थानिकस्य चिन्तनीयमाह—एवमिति । एवं यथा गोपो दशकुलीप्रभृतिं तद्गत-स्त्रीपुरुषजङ्घाग्रायव्ययज्ञानपूर्वं चिन्तयेत्, तद्वत् दुर्गचतुर्भागं स्थानिकः चिन्तयेद्, दुर्गचतुर्भागगतस्त्रीपुरुषजङ्घाग्रायव्ययज्ञानपूर्वं तन्त्रयेत्, दुर्गचतुर्भागचिन्तकश्चायं स्थानिकाख्यः ।

चाणक्यटीका

यथा समाहर्त्ता चतुर्धा विभज्य जनपदं चिन्तयेत्, तथा समाहर्तृवन्नागरिको नगरनियुक्तः नगरं चिन्तयेत् । समाहर्तृप्रयुक्त एव । तत्र कनिष्ठादिनाम( चिदि ?-

[ धर्मकर्तृप्रभृतिकर्तव्येषु नगररक्षकनिवेदनेन कर्तव्याः
स्वप्रामाण्येन कर्तव्याश्चांशाः ]

**धर्मावसथिनः पाखण्डिपथिकानावेद्य वासयेयुः, स्वप्रत्ययाश्च तपस्विनः श्रोत्रियांश्च; कारुशिल्पिनः स्वकर्मस्थानेषु स्वजनं वासयेयुः, वैदेहकाश्चान्योन्यं स्वकर्मस्थानेषु। पण्यानाम् अदेशकालविक्रेतारम् अस्वकरणं च निवेदयेयुः। शौण्डिकपाक्वमांसिकौदनिकरूपाजीवाः परिज्ञातमावासयेयुः।**

---

चाणक्यटीका

भिरि )ह कुलविभागमाह—दशकुलीमिति। स गोपः, तस्यां दशकुल्यां स्त्रीपुरुषाणां जात्याद्युपनिबन्धैः जङ्घाग्रायादि विद्यात्।

दुर्गचतुर्भागं स्थानिको नागरिकप्रयुक्तः एकैकश्चिन्तयेत्।

प्रतिपदपञ्चिका

नागरिकप्रणिधिरिति सूत्रम्। नगरं स्थानीयम्, तत्र नियुक्तो नागरिकः, तस्य प्रणिधिः तद्व्यापारानुष्ठानम्, तदिहाभिधीयत इति सूत्रार्थः।

सम्बन्धस्तु उद्देशनिर्देशतोऽथवा समस्तैरध्यक्षैस्सर्वसमुदयानामुत्पत्तिः प्रतिपादिता। उत्पन्नानां समुदयानां राज्ञश्च स्थानीयमाश्रयः। उक्तं हि—"जनपदमध्ये समुदयस्थानं स्थानीयं निवेशयेदि"ति। रक्षितं हि तत्तेषां आश्रयो भवतीति समुदयप्रतिपादनानन्तरं तदाश्रयभूतस्य स्थानीयस्य रक्षणमभिधीयत इत्ययं सम्बन्धः।

तदाह—समाहर्तृवन्नागरिको नगरं चिन्तयेदिति। यथा समाहर्ता जनपदं चतुर्धा विभज्य स्वयं गोपस्थानीयैश्च चिन्तयेदिति। तत्र गोपस्य चिन्त्यकुलसङ्ख्यानियमं तच्चिन्तनप्रकारं चाह—दशकुलीं गोपो विंशतिकुलीं चत्वारिंशत्कुलीं वेति। सर्वोत्तमानि दशकुलानि, सर्वनिकृष्टानि चत्वारिंशत्कुलानि, विंशतिग्रहणस्य प्रदर्शितार्थत्वात्, मध्यमानि सारापेक्षया विंशति पञ्चदश पञ्चविंशतिमित्यादि नागरिकप्रदिष्टोऽयं चिन्तयति तस्य गोप इति संज्ञा। विषयश्च तस्य तावन्ति कुलानि।

चिन्ताप्रकारमाह—स तस्या इत्यादि। स गोपः तस्या दशकुल्यादिकायाः स्त्रीपुरुषाणां स्त्रीप्रधानानां गणिकानाट(? नटो)कशौण्डिकादिकुलानां पुरुषप्रधानानां च वणिक्कारुकर्मकरप्रभृतिकुलानाम्, प्रत्येकं जात्यादिभिः जङ्घाग्रं मनुष्यसङ्ख्यामायव्ययौ च विद्यात्। जात्यादयः प्रतीताः। एवं दुर्गचतुर्भागं स्थानिकः चिन्तयेत्। इति यथा गोपो दशकुलीप्रभृतीनां जङ्घाग्रमायव्ययौ च विद्यादेवं स्थानिकोऽपि दुर्गचतुर्भागस्य स्त्रीपुरुषाणां जात्यादिभिः जङ्घाग्रामायव्ययौ च विद्यादिति। तस्य दुर्गचतुर्भागचिन्तकस्य स्थानिक इति संज्ञा।

श्रीमूला

धर्मावसथिन इति। धर्मावसथाः धर्मशालाः तदधिकारिणो धर्मावसथिनः, पाषण्डिपथिकान् पाशुपतशाक्यभिक्षुकादीन् अध्वगान्, आवेद्य गोपाय निवेद्य, वासयेयुः

**अतिव्ययकर्तारम् अत्याहितकर्माणं च निवेदयेयुः । चिकित्सकः प्रच्छन्नव्रणप्रतीकारकारयितारम् अपथ्यकारिणं च गृहस्वामी च निवेद्य गोपस्थानिकयोर्मुच्यते, अन्यथा तुल्यदोषः स्यात् प्रस्थितागतौ च निवेदयेत्, अन्यथा रात्रिदोषं भजेत । क्षेमरात्रिषु त्रिपणं दद्यात् ।**

---

श्रीमूला

धर्मात्रसथेषु । स्वप्रत्ययाश्च स्वकृतः स्वयं विचार्य कृतः प्रत्ययः तपस्विश्रोत्रियविश्वासो येषां ते तथाभूताः सन्तः, तपस्विनस्तापसान्, श्रोत्रियान् छान्दसांश्च, वासयेयुरिति वर्तते । स्वप्रत्ययत्ववचनं तद्वासनिमित्तस्य दोषस्य स्वगामित्वद्योतनार्थम् ।

कारुशिल्पिन इति । कारवः शिल्पिनश्च, स्वकर्मस्थानेषु स्वजनं, वासयेयुः, स्वप्रत्ययाः । वैदेहकाश्च वणिजश्च, स्वप्रत्ययाः, अन्योन्यं स्वकर्मस्थानेषु तत्पण्यवणिक् तत्पण्यवणिजमिति न्यायमनपहाय पण्यव्यवहारस्थानेषु, वासयेयुः । पण्यानाम्, अदेशकालविक्रेतारम् अदेशे अकाले च विक्रयकर्त्तारम् आगन्तुकं, निवेदयेयुः, नागरिकाय । अस्वकरणं च अस्वीयस्य पण्यस्य व्यवहरणं च, निवेदयेयुः ।

शौण्डिकेत्यादि । शौण्डिकाः मद्यविक्रयिणः पाक्वमांसिकाः पक्वमांसविक्रयिणः औदनिका अन्नविक्रयिणः रूपाजीवाः वेश्याश्च, परिज्ञातं समानशीलादिद्वारेण विदितम्, आवासयेयुः । पुनः किं कुर्युः, अतिव्ययकर्त्तारम्, अतिव्ययस्य विज्ञातायत्यभ्यधिकस्याविज्ञातायतिकस्य वा व्ययस्य कर्त्तारम्, अत्याहितकर्माणं च अतिमात्रारब्धमद्यपानादिकर्माणं च निवेदयेयुः, गोपस्थानिकेभ्यः ।

चिकित्सक इति । भिषक्, प्रच्छन्नव्रणप्रतीकारकारयितारं प्रच्छन्नं स्वकृतापराधोद्भेदभयादन्याविदितं यथा भवति तथा व्रणानां शस्त्राद्युत्पादितानां प्रतीकारस्य चिकित्सायाः कारयितारम्, अपथ्यकारिणं च अपथ्यानि रोगमरणोत्पादकानि द्रव्याणि करोति सम्पादयत्यन्विष्यति वेत्यपथ्यकारी तं च, निवेद्य गोपस्थानिकयोः, मुच्येत शुध्येत् । अन्यथा अनिवेदने, तुल्यदोषः स्याद् अपराधिभ्यां समानदोषो गण्येतेत्यर्थः । तथा गृहस्वामी च यस्मिन् गृहे व्रणप्रतीकारयित्रपथ्यकारिणोरनुष्ठानं तद्गृहपतिश्च, निवेद्य गोपस्थानिकयोर्मुच्येतान्यथा तुल्यदोषः स्यात् ।

प्रस्थितागतौ चेति । प्रस्थितः स्वगृहात् कार्यान्तरेण देशान्तरं प्रस्थितः आगतः देशान्तरात् कार्यान्तरेण स्वगृहं प्राप्तः तौ च, निवेदयेत् प्रस्थानागमनकालप्रयोजनाद्याख्यानपूर्वमावेदयेत्, अर्थाद् गृहस्वामी । अन्यथा निवेदनाभावे, रात्रिदोषं भजेत रात्रौ ताभ्यां कृतस्य चौर्यादिलक्षणस्य दोषस्य भागी भवेत् । क्षेमरात्रिषु क्षेमयुक्तासु अनुपजातचौर्यासु अनिवेदनरात्रिषु, त्रिपणं पणत्रयात्मकमनिवेदनापराधदण्डं, दद्यात् । क्षेमेऽपि दण्डविधानं निवेदनानुष्ठानस्य कदाप्यव्यभिचारार्थम् ।

### चाणक्यटीका

धर्मावसथिन इति। धर्मार्थं कृतपरिग्रहा( र्थानां ? : )पाषण्डान् निवेद्य गोपस्थानिकेभ्यः वासयेयुः। स्वयं तपस्विनोऽनिवेद्य वासयेयुः।

कारवः शिल्पिनश्च स्वकर्मस्थानेषु कर्मशालासु न गृहेषु। स्वजनं नान्यमागन्तुकं वासयेयुः। वैदेहकाश्चाऽन्योऽन्यं स्वकर्म( स्थानेषु। )······( सविकारमाह ? ) आपणादन्यत्र रात्रौ ( वा ) विक्रेतारम्। ( अनु )युक्तश्च ( यः ) स्वकरणं न करोति तं निवेदयेयुः गोपादिभ्य इत्येव।······ना अस्वकरणं लवणस्य वालुकाप्रक्षेपात् द्रव्यकरणमेव गोपादिभिः स्वयं परिज्ञातमेव वासयेयुः। अतिव्ययकर्त्तारम् आश्चर्यकर्माणं च निवेदयेयुः।

चिकित्सको यस्य गृहे प्रतीकारयति, स च गृहस्वामी ( प्र )च्छन्नव्रण प्र( तीकारयितारम् ) अपथ्यकारिणञ्च निवेद्य गोपस्थानिकयोः तद्दोषेण मुच्यते। अन्यथा अव्यवस्थाकारित्वात् तद्विनयात्ययः॥

प्रस्थितागतौ च गृहस्वामी निवेदयेत्। अन्यथा यो हि दोष उत्पद्यते, तमसौ भजेत अनुभवेदित्यर्थः। क्षेमरात्रिषु अनुत्पन्नभोक्ता स्वयमप्यनिवेदयिता त्रिपणं दण्डं दद्यात्।

### प्रतिपदपञ्चिका

धर्मावसथिन इत्यादि, धर्मावसथा धर्मार्थाः सभामण्डपादयः, तदधिकृता धर्मावसथिनः, ते पाषण्डान् शाक्यभिक्षुकादीन्, पथिकांश्च वैदेहकान् वस्तुमागतान् गोपस्य स्थानिकस्य वा निवेद्य वासयेयुः प्रतिश्रयं दद्युः। स्वप्रत्ययात् स्वयमेव प्रतीत्य तपस्विनः श्रोत्रियांश्च आवसेयुरिति। कारुशिल्पिनश्चेति, स्वप्रत्यया इति वर्तते। कारवः शिल्पिनश्च स्वप्रत्ययाः स्वकर्मस्थानेषु स्वकर्मशालासु स्वगृहेषु वा स्वजनं सजातीयं वासयेयुरिति।

वैदेहकाश्चान्योन्यमिति, स्वप्रत्ययाः स्वकर्मस्थानेषु स्वजनं वासयेयुरिति। तेषां स्वकर्मस्थानीयानि क्रयविक्रयस्थानानि ये स्वप्रत्ययाः स्वजनं वासयन्ति, ते तद्दोषांश्च भजेरन्निति। किञ्चित्पण्यानामदेशकालविक्रेतारमदेशे अन्तग्रहादौ अकाले अल्पे वेलायां विक्रयकर्तारः स्वकरणं[1] च अनिषिद्धदेशकालेऽपि कुत इदं त्वया लब्धमिति पृष्टे येन स्वकरणमात्मीयत्वसमर्थनं च कृतम्, गोपस्थानिकयोर्वैदेहका एव निवेदयेयुः।

शौण्डिकादयः सुरादिव्यवहारिणः, रूपाजीवा वेश्याः, ते परिज्ञानं कुलशीलादिभिः परीक्षणं स्वेषु स्वेषु वासयेयुः। अतिव्ययकर्तारम् अप्रतिज्ञातायति सुरापूपादिष्वतिप्रभूतं व्ययं कुर्वाणम् अत्याहितकर्माणं च, सः प्रसिद्धकृष्यादिलब्धविभवः स्वल्पेन प्रणष्टसर्वस्वः अर्थमाहितमारब्धं महापातनदर्शनादिकं कर्म येन तं च त एव शौण्डिकादयो निवेदयेयुः।

---

१. अस्वकरणं—पा० ( श्रीमूला )।

[ नगरे गूढचारिणां कर्तव्यानि ]

**पथिकोत्पथिकाश्च बहिरन्तश्च नगरस्य देवगृहपुण्यस्थानवनश्मशानेषु सव्रणम् अनिष्टोपकरणम् उद्भाण्डीकृतम् आविग्नम् अतिस्वप्नम् अध्वक्लान्तम् अपूर्वं वा गृह्णीयुः एवमभ्यन्तरे शून्यनिवेशावेशनशौण्डिकौदनिकपाक्वमांसिकद्यूतपाषण्डावासेषु विचयं कुर्युः ।**

———————

प्रतिपदपञ्चिका

चिकित्सक इत्यादि । चिकित्सकः प्रतीतः । प्रच्छन्नव्रणप्रतीकारयितारमिति, यच्छस्त्रप्रहरणादिजनितं व्रणं परैरविज्ञातं प्रतीकारयति चिकित्सां कारयति । अपथ्यकारिणं च अपथ्यानि प्राणिनां व्याधिजननमरणानि वा द्रव्याणि यः पृच्छन् कुर्वन् वा दृष्टस्तं च गोपस्थानिकयोर्निवेद्य मुच्येत शुद्धः स्यात्, अन्यथा अनिवेदने तुल्यदोषः, स्वयमपि तत्कारिदोषभाक् स्यात् । गृहस्वामी च तौ यस्य गृहे स्थित्वा व्रणप्रतीकारं अपथ्यानि च कुर्वते, सोऽपि गृहस्वामी गोपस्थानिकयोनिवेद्य मुच्यते, अन्यथा तुल्यदोषः स्यादिति ।

प्रस्थितागतौ च निवेदयेदिति । गृहस्वामी इति वर्तते । स्व स्वगृहे वसन्तं प्रस्थितमपूर्वमागतं च निवेदयेत्—'असावस्मद्गृहवासी अमुना कार्येणामुष्मिन् दिवसे अमुं देशं प्रस्थितः, असौ चामुष्माद् देशादमुना कार्येणागत' इति । अन्यथा तयोरनिवेदने रात्रिदोषं भजेत । रात्रिवृत्तं चौर्यादिकमेतत् कृतं भवेदिति । क्षेमरात्रिष्विति । यासु रात्रिषु चौर्यादिकं न वृत्तं तास्ववस्थितागतानिवेदने त्रिपणं दण्डं दद्यादिति ।

श्रीमूला

पथिकेत्यादि । पथिकोत्पथिकाश्च पथिका महामार्गचारिणो वैदेहकादिव्यञ्जनाः उत्पथिका विवीतपथचारिणः काष्ठतृणादिहारकगोपालकादिव्यञ्जनाः त उभये सञ्चाराः, बहिरन्तश्च नगरस्य विद्यमानेषु, देवगृहादिषु चतुर्षु स्थानेषु, सव्रणं शस्त्राद्युत्पादित-व्रणम्, अनिष्टोपकरणम् अनिष्टानि वर्जनीयान्युपकरणानि काकल्यादीनि चोरादि-साधनानि यस्य तम् उद्भाण्डीकृतं समधिकभारभाण्डवाहिनम्, आविग्नं भीतम्, अतिस्वप्नं रात्रिव्यायामजागरवशादतिमात्रनिद्रापन्नम्, अध्वक्लान्तं दीर्घाध्वसञ्चार-श्रान्तम्, अपूर्वं वा अज्ञातपूर्वं वा, गृह्णीयुः, अर्थान्नागरिकाय चार्पयेयुः ।

एवमिति । अनेन प्रकारेण अभ्यन्तरे स्थानीयान्तराले, शून्यनिवेशादिषु शून्या-लये अवेशने शिल्पशालायाम् शौण्डिकावासे औदनिकावासे पाक्वमांसिकावासे द्यूता-वासे पाषण्डावासे चेत्येवं सप्तसु, विचयं सव्रणाद्यन्वेषणं कुर्युः, अर्थाद् गूढपुरुषा नागरिकादिसम्बन्धिनः ।

[ अग्निभयप्रतीकारविधिः, अप्रतिकुर्वतां शिक्षाः च ]

**अग्निप्रतीकारं च ग्रीष्मे मध्यमयोरह्नश्चतुर्भागयोः। अष्टभागोऽग्नि-दण्डः। बहिरधिश्रयणं वा कुर्युः। पादः पञ्चघटीनाम्। कुम्भद्रोणीनिःश्रेणी-परशुशूर्पाङ्कुशकचग्रहणीदृतीनां च अकरणे। तृणकटच्छन्नान्यपनयेत्। अग्नि-जीविनः एकस्थान् वासयेत्। स्वगृहप्रद्वारेषु गृहस्वामिनो वसेयुः असंपा-तिनो रात्रौ। रथ्यासु कुटव्रजाःसहस्रं तिष्ठेयुः, चतुष्पथद्वारे राजपरिग्रहेषु च। प्रदीप्तम् अनभिधावतो गृहस्वामिनो द्वादशपणो दण्डः, षट्पणोऽवक्र-यिणः, प्रमादाद् दीप्तेषु चतुष्पञ्चाशत्पणो दण्डः। प्रादीपिकोऽग्निना वध्यः।**

---

चाणक्यटीका

पथिकोत्पथिकाः पथ्युत्पथे च नागरिकपुरुषाः बहिरन्तश्च नगरस्य देवगृहादिषु सव्रणम्, चौर्याद्युपकरणसहितम्, उद्भाण्डं तृणादिभारप्रच्छादितभाण्डम्, उद्विग्न-रूपम्, अतिस्वप्नम्, अध्वकान्तम्, अदृष्टपूर्वं भीतं गृह्णीयुः।

एवं नगराभ्यन्तरे शून्यनिवेशने साधारणस्थाने, आवेशने सुवर्णका( रा )-दिघटनाशा( खा ? ला )याम्, शौण्डिक्याद्यावासेषु विचारणां कुर्युः परिशोधनार्थम्।

प्रतिपदपञ्चिका

पथिकोत्पथिका इत्यादि। पथिकाः प्रसिद्धमार्गसञ्चारिणो वैदेहकादयः, उत्पथिकाः काष्ठतृणादिहारकाः गोपालिकादयः चानुमताः, पथसञ्चाराः तद्व्यञ्जनाः पुरुषाः, बहिर्नगरस्य समीपस्थेषु देवगृहादिषु सव्रणादीन् गृह्णीयुः। तत्र देवगृहादीनि प्रतीतानि, सव्रणं शस्त्रप्रहरणादिजनितार्द्रव्रणम् अनिष्टोपकरणं काकलीसन्दंशविष-शस्त्रादिधारणम्, उद्भाण्डीकृतमुद्वाहितभरसंस्थूलदेहम्, आविग्नं यस्य कस्यचिद् दर्शनात् भीतम् अतिस्वप्नं रात्रिप्रजागरातिव्यायामातिगाढनिद्रम्, अध्वक्लान्तं दीर्घाध्वगमनखिन्नम्, अपूर्वमविज्ञातपूर्वम्, वाशब्दादन्यानपि शङ्कनीयान् दृष्ट्वा गृह्णीयुः। स्वयं नागरिकपुरुषैर्वा ग्राहयेयुः।

एवमभ्यन्तरे नगरस्य शून्यनिवेशादिषु पूर्वोक्तसव्रणादीन् विचयमन्वेषणं कुर्युः। नागरिकगोपस्थानिकाः तत्तद्व्यञ्जनैरिति वाक्यशेषः। कर्तुः शून्यनिवेशाः शून्यगृहाणि, आवेशनं शिल्पिशाला, शौण्डिकादीनां प्रत्येकमावासास्तेषां गृहाणि, तत्र द्यूतावासो द्यूतसभा, शेषं प्रतीतम्।

श्रीमूला

अग्नीत्यादि। कुर्युरित्यनुवर्तते। अग्निप्रतिषेधं च अग्निकार्याणां महताम् अग्न्यतिप्रज्वलनवहुलस्फुलिङ्गोद्गतिहेतूनां वारणं च कुर्युः। कदा, ग्रीष्मे ग्रीष्मर्तौ, तत्रापि न सर्वदा, किन्तु मध्यमयोरह्नश्चतुर्भागयोः दिवससम्बन्धिनोः द्वितीयतृतीय-

श्रीमूला

यामयोः। तृणपर्णादिमयपटलावृतगृहविषयश्चायं प्रतिषेधः। निषिद्धकारिणां दण्डमाह—अष्टभाग इति। पणाष्टभागः, अग्निदण्डः निषिद्धकालाग्निकार्यकरणनिमित्तो दण्डः। अग्निकार्यस्य पाकार्थस्थाल्यधिश्रयणस्य तदानीमवर्जनीयत्वे त्वाह—बहिरिति। बहिरधिश्रयणं वा पटलानावृतावकाशाधिश्रयणं वा कुर्युः।

अग्निकार्यकरणस्य घटिकाविशेषसम्बन्धे दण्डविशेषमाह—पाद इति। पादः पणचतुर्भागदण्डः, पञ्चघटीनां द्वितीयतृतीययाममध्यमपञ्चघटिकानां सार्धद्वादशघटिकात ऊर्ध्वम् आ सार्धसप्तदशघटिकात इत्यर्थः। कुम्भद्रोण्यादीनां चाकरणो कुम्भो घटो जलपूर्णः द्रोणी दारुमयो जलाधारो जलपूर्णः निःश्रेणी अधिरोहणी उच्चदेशारोहणार्था परशुः कुठारो दार्वादिच्छेदनार्थः शूर्पं प्रस्फोटनं प्रतिमुखधूमप्रसरवारणार्थम् अङ्कुशं सृणिर्दह्यमानवस्त्वाकर्षणार्थः कचग्रहणी शालापटलतृणहरणसाधनं दृतिश्चर्ममयमुदकपात्रम् इत्येतेषामग्निनिर्वापणसाधनानां ग्रीष्मकाले गृहद्वारेष्वनिवेशने, पाद इत्यनुवर्तते, पणचतुर्भागो दण्डः।

तृणकटच्छन्नान्यपनयेदिति। तृणकटमयच्छदींषि गृहाणि, अपनयेद् निरस्येद् ग्रीष्मे। अग्निजीविनः अयस्कारताम्रतक्षादीन्, एकस्थान् वासयेत्। एकस्मिन् महति चतुश्शाले कृताग्निभयप्रतिविधाने वासयित्वा कर्म कारयेत्। स्वगृहेत्यादि। स्वगृहप्रद्वारेषु स्वगृहमुखद्वारेषु, गृहस्वामिनो वसेयुः। कथम्भूताः, असम्पातिनो रात्रौ निशायामन्यत्र सञ्चारं वर्जयन्तः। रथ्यासु विशिखासु, कुटव्रजाः सजलाः कुम्भपंक्तयः, सहस्रं तिष्ठेयुः। चतुष्पथद्वारराजपरिग्रहेषु च चतुष्पथेषु शृङ्गाटकेषु द्वारेषु नगरादिद्वारेषु राजपरिग्रहेषु कोशगृहकुप्यगृहकोष्ठागारपण्यगृहगजाश्वशालादिषु च, कुटव्रजास्तिष्ठेयुः।

प्रदीप्तमिति। प्रदीप्तम् अनभिधावतः प्रज्वलिताग्निकं किमपि गृहं दृष्ट्वाप्यनभिद्रवतः, गृहस्वामिनः, द्वादशपणो दण्डः भवति। षट्पणोऽवक्रयिणः भाटकेन गृहे वसतोऽनभिधावती गृहस्वाम्युक्तदण्डार्धदण्डः। प्रमादादिति। प्रमादाद् अनवधानाद्, दीप्तेषु सत्सु अर्थात् स्वगृहेष्वपि, चतुष्पञ्चाशत्पणो दण्डः। स गृहारक्षकस्येत्येके।

प्रादीपिक इति। प्रदीपिका वह्निना गृहसन्दीपनं, तत्कर्ता, अग्निना तद्दीपितेनैव, वध्यः तदैव गृहीतश्चेत्। कालान्तरगृहीतस्याप्यग्निदाहः कण्टकशोधने वक्ष्यते—'विवीतक्षेत्रखलवेश्मद्रव्यहस्तिवनदीपकमग्निना दाहयेदि'ति।

चाणक्यटीका

अग्निप्रतिषेधं ग्रीष्मे रक्षार्थं कुर्युः। तत्रापि मध्यमयोरह्नश्चतुर्भागयोः प्रचण्डयोः अग्निकरणे पणस्य अष्टभागो दण्डः। पूर्वपश्चिमयोस्तु प्रशान्तत्वान्न दोषः। तस्यामपि वेलायामवश्यकर्तव्येऽग्नौ ग्रामाद् बहिरधिश्रयणम् उपनिपातप्रतीकारोक्तमेव[1] कुर्युः।

---

१. "ग्रीष्मे बहिरधिश्रयणं ग्रामा ( ः ? त् ) कुर्युः" ( ५.३०. )।

चाणक्यटीका

प्रतिगृहम् उदकपूर्णानां पञ्चघटादीनाम् अकरणे पणपादो दण्डः। भाण्डानाञ्च अग्निप्रतीकारोपकरणानामकरणे पादो दण्ड इत्येव।

तृणकटच्छन्नाद्यपनयेद् ग्रीष्म इत्येव। अग्निजीविनः सुवर्णकारादीन् न ह्यैरकस्थान्[1] आवासयेत्, सर्वेषामन्येषामनर्थो मा भूदिति। स्वगृहद्वारे गृहस्वामिनः अनर्थंरात्रौ वसेयुरसञ्चाररम( व ? )गच्छन्तः। कुटव्रजा उदकपूर्णघटसङ्घाताः। सहस्रमिति प्रभूतोपलक्षणार्थम्। चतुष्पथे पुरद्वारे राजपरिग्रहे वाहनागारादौ।

तत् प्रदीप्तमनभि( करसो ? सरतो )[2] गृहस्वामिनः। द्वादशपणो दण्डः। चतुष्पणोऽवक्रयिणः अन्यतः क्रीत्वा गृहं वसतो[3] दण्डः। गृहस्वामिनां प्रमादाद् दीप्तेष्वंशेषु चतुष्पञ्चाशत्पणो दण्डः। प्रदीपितक इति। गृहाणां प्रदीपिता तेन अ( न्ये ? ग्नि )ना वा निजौषध्या।

प्रतिपदपञ्चिका

अग्निप्रतिषेधं च ग्रीष्म इति। कुर्युरिति वर्तते। अग्निप्रतिषेधम् अग्निनिषेधं ग्रीष्मे कुर्युरिति। कथमित्याह—मध्यमयोरह्नश्चतुर्भागयोरित्यादि। चतुर्धा विभक्तस्याह्नो मध्यमौ द्वौ भागौ, प्रहरद्वयम्, तस्मिन् काले किञ्चिदप्यग्निकार्यं न कुर्युरिति तदानीं कुर्वतां पणाष्टभागोऽग्निदण्डः अग्निनिमित्तो दण्डः।

पादः पञ्चघटीनामिति, तत्रापि मध्यमासु पञ्चसु घटिकासु पादः पूर्वोक्तद्विगुणो दण्डः, कुम्भादीनामकरणे च पाद इति वर्तते। ग्रीष्मे कुम्भादीनि गृहद्वारेष्ववस्थापयतां च पणचतुर्भागो दण्डः। तत्र कुम्भाः प्रतीताः, द्रोण्यः श्लक्ष्णगफलकघटिता जलाधारविशेषाः, कुम्भा द्रोण्यश्च जलपूर्णाः स्थापनीयाः। निःश्रेणिरुच्चाधिरोहणसाधनं, काष्ठादियन्त्रम्, परशुः कुठारः वंशादिच्छेदनाय, शूर्पं प्रतीतम् तच्च निर्वापयतः प्रतिमुखधूमनिवारणाय, अङ्कुशः सृणिः। इहकृतसंस्थानमाह—महाप्रमाणदण्डो दह्यमानदार्वादिकर्षणार्थः, कचग्रहणी यन्त्रविशेषः, किञ्चित्प्रसृतकुञ्चिताङ्गुलिहस्तसंस्थानलोहघटिता ग्रामहायष्टिश्शत्रूणां केशकर्षणार्थं। क्रियते सा तृणाद्यपनयनाय, धृतिः प्रतीता, एवमेतानि ग्रीष्मे गृहद्वारेषु गृहिभिः स्थापनीयानि।

तृणकटच्छन्नान्यपनयेदिति। तृणानि पलालादीनि, कटाः प्रतीताः, तैश्छन्नानि यानि गृहाणि ग्रीष्मे तानि तेषां अपनयेद्(अवस्थापयेदि)त्यर्थः।

---

१. ऐरकस्थान् एरकाख्यतृणच्छन्नगृहवासिनः सुवर्णकारादीन् नावासयेद् इत्यर्थः स्यात्। भट्टस्वामी तु एकस्थान् इति पठित्वा अग्निजीविनः कांस्यायोपजीविनः एक( स्मिन् ? ) शाले निवातप्रदेशे कृताग्निप्रतिकारे सर्वान् समानीय कर्म कारयेत्'' इति व्याचष्टे।

२. ''उह्यमानम् अलाबुदृतिप्लवगण्डिकावेणिकाभिस्तारयेयुः। अनभिसरतां द्वादशपणो दण्डः ( ५.३० ) इत्यादावापदो निस्तारणेऽभिसरतिः प्रयुज्यते।

३. भाटकेन वसत इति भट्टस्वामी।

[ रथ्यादिकलुषीकरणे दण्डाः ]

**पांसुन्यासे रथ्यायामष्टभागो दण्डः, पङ्कोदकसन्निरोधे पादः, राजमार्गे द्विगुणः । पुण्यस्थानोदकस्थानदेवगृहराजपरिग्रहेषु पणोत्तराः विष्ठादण्डाः, मूत्रेष्वर्धदण्डाः, भैषज्यव्याधिभयनिमित्तमदण्ड्याः ।**

---

प्रतिपदपञ्चिका

अग्निजीविनः कांस्यायोपजीविनः, कांस्यायस्कारादिना एकस्मिन् [1]शाले निवातप्रदेशे कृताग्निप्रतीकारो सर्वान् समानीय कर्म कारयेदित्यर्थः । स्वगृहप्रद्वारेष्विति । स्वेषां गृहाणां प्रद्वारेषु प्रथमद्वारेषु गृहस्वामिनः सर्वे गृहिणो वसेयुः । सदा[2] सन्निधानं कुर्युः । तत्र विशेषमाह—असम्पातिनो रात्राविति, रात्रौ त्वसञ्चारिणो वसेयुः, रात्रिसञ्चारस्याशङ्कास्थानत्वात् । रथ्यासु कुटव्रजाः सहस्रास्तिष्ठेयुरिति । प्रतिरथ्यं सोदकाः कुम्भाः बहवः श्रेणीकृताः तिष्ठेयुः । तथा च चतुष्पथादिषु च तिष्ठेयुः इति । चतुष्पथाः पथासन्धयः, द्वाराणि नगरराजगृहद्वारि, राजपरिग्रहा हस्त्यादिशालागोष्ठागारादयो, बाह्योपकार्यादयश्च, प्रदीप्तमनभिधावत इति ।

यत्र क्वचिदग्निमुत्थितं दृष्ट्वा सहसानभिधावतो गृहस्वामिनो यस्य गृहं तस्य द्वादशपणो दण्डः । षट्पणोऽवक्रयिण इति । भागकेन वसतोऽनभिद्रवतः षट्पणो गृहस्वामिनोऽर्धदण्ड इति, प्रमादादनवधानात् दीप्तेषु स्वेष्वपि गृहादिषु चतुष्पञ्चाशत्पणो दण्डः । प्रादीपिको गृहादिष्वग्निदोऽग्निना वध्यः, तस्मिन्नेवाग्नौ प्रक्षेप्तव्यः । यदि तदानीमेव गृहीतः ,कालान्तरगृहीतस्याप्यग्निदाहनं वक्ष्यति । विवीतक्षेत्रखलवेश्मद्रव्यहस्तिवनदीपकमग्निना दाहयेदिति ।

श्रीमूला

पांस्वित्यादि । रथ्यायां रथशकटादिसञ्चारमार्गे, पांसुन्यासे पांसूनां धूलीनां तज्जातीयानामवकराणां च निक्षेपे, अष्टभागः पणाष्टमांशः, दण्डः । तत्रैव पङ्कोदकसन्निरोधे पङ्कमिश्रजलावरोधने, पादः पादपणदण्डः । राजमार्गे, महामार्गे, द्विगुणः पांसुन्यासे पङ्कोदकसन्निरोधे च रथ्योक्तद्विगुणः पादपणात्मकोऽर्धपणात्मकश्च क्रमेण दण्डः ।

पुण्येत्यादि । राजमार्ग इत्यनुवर्तते, तत्र पुण्यस्थानादिषु चतुर्षु च, पणोत्तरा उत्तरोत्तरैकैकपणकाधिकाः राजमार्गे एकपणः पुण्यस्थाने द्विपणः उदकस्थाने तटाकादौ त्रिपणः देवगृहे चतुष्पणः राजपरिग्रहे राजगृहकोशागारादौ पञ्चपण इत्येवमात्मकाः, विष्ठादण्डाः । मूत्रेषु उक्तेष्वेव प्रदेशेषु मूत्रविसर्जने, अर्धदण्डाः क्रमाद् अर्धपणैकपणसार्धपणार्धतृतीयपणात्मका दण्डाः ।

---

१. काले—पा० ।　　२. यथा—पा० ।

[ शवविषये नियमोल्लङ्घने दण्डाः ]

**मार्जारश्वनकुलसर्पप्रेतानां नगरस्यान्तरुत्सर्गे त्रिपणो दण्डः, खरोष्ट्राश्वतराश्वपशुप्रेतानां षट्पणः, मनुष्यप्रेतानां पञ्चाशत्पणः। मार्गविपर्यासे शवद्वारादन्यतः शवनिर्णयने पूर्वः साहसदण्डः। द्वास्थानां द्विशतम्। श्मशानादन्यत्र न्यासे दहने च द्वादशपणो दण्डः ॥**

---

श्रीमूला

भैषज्यव्याधिभयनिमित्तमदण्ड्या इति। भैषज्यं विरेचनद्रव्यसेवनं व्याधिरतिसारप्रमेहादि भयं प्रसिद्धम् एतन्निमित्तकं चेद् विष्ठामूत्रकरणं राजमार्गादौ, तर्हि दण्ड्या न भवन्ति।

चाणक्यटीका

पांसुन्यासे रथ्यायामष्टभागो दण्डः पणस्येत्यर्थः। पङ्कोदकसन्निरोधे पादः। रथ्यायामित्येव। राजमार्गे द्विगुणः। उभयं तत्रेत्यर्थः।

राजमार्गादिषु विष्ठयावघातस्य यथोत्तरमेकैकपणोत्तरा दण्डाः। मूत्रेणावघात(क ?)स्य सार्धका दण्डाः।

भैषज्येन व्याधिना भयेन वा दूरं गन्तुमसमर्था न दण्डयाः।

प्रतिपदपञ्चिका

पांसुन्यास इति। रथ्यायामेव गृहावस्करन्यासे वर्णाष्टभागो दण्डः। पङ्कोदकसन्निरोधे रथ्यायामेव पङ्कोदकाभ्यां सञ्चारनिरोधे पादः पूर्वोक्तद्विगुणो दण्डः। राजमार्गे महारथ्यायां पांसुन्यासे पङ्कोदकसन्निरोधे च रथ्यादण्डो द्विगुणः।

राजपरिग्रहे राजाङ्कणादौ वा पञ्चपण इति। मूत्रेष्वित्ति, तेष्ववस्थानेषु मूत्रकरणे पूर्वोक्ताद् विष्ठादण्डादर्थदण्डः। भैषज्यव्याधिभयनिमित्तमदण्ड्य इति, भैषज्यादिनिमित्तमेतेष्ववस्थानेषु मूत्रपुरीषकरणे दण्ड्यो न भवति। तत्र भैषज्यः विरेचनादिद्रव्यप्रयोगः व्याधिः प्रमेहातिसारादिः भयं प्रतीतम्।

श्रीमूला

मार्जारेत्यादिवाक्यत्रयमतिरोहितार्थम्।

मार्गेत्यादि। मार्गविपर्यासे प्रसिद्धमार्गादन्येन मार्गेण शवानां नयने, शवद्वारादन्यतः शवनिर्णयेन व्यवस्थितप्रेतनिर्हरणद्वारातिरिक्तद्वारेण प्रेतनिर्हरणे, पूर्वः साहसदण्डः। द्वाःस्थानां द्वाररक्षिणां द्वारान्तरनिर्णयनमप्रतिषेधतां, द्विशतं पणद्विशतदण्डः। श्मशानादित्यादि। न्यासे स्थापने, स च बालानाथादीनाम्। शेषं स्पष्टम्।

[ अपररात्रेषु अनिमित्तं सञ्चारनिषेधः ]

**विषण्नालिकमुभयतोरात्रं यामतूर्यम्; तूर्यशब्दे राज्ञो गृहाभ्याशे सपाद-पणमक्षणताडनं प्रथमपश्चिमयामिकम्, मध्यमयामिकं द्विगुणं बहिश्चतुर्गुणम् । शङ्कनीये देशे लिङ्गे पूर्वापदाने च गृहीतमनुयुञ्जीत । राजपरिग्रहोपगमने नगररक्षारोहणे च मध्यमःसाहसदण्डः । सूतिकाचिकित्सकप्रेतप्रदीपयान-नागरिकतूर्यप्रेक्षाग्निमित्तं मुद्राभिश्चाग्राह्याः । चाररात्रिषु प्रच्छन्नविपरीत-वेषाः प्रव्रजिता दण्डशस्त्रहस्ताश्च मनुष्या दोषतो दण्ड्याः ॥**

---

चाणक्यटीका

मार्जारादीनां मृतानां नगराभ्यन्तरोत्सर्गे यथोक्ता दण्डाः ।

मार्गविपर्यासे प्रतिमार्गविपर्यासे शवद्वारादन्यतश्च (व्रीहिसुयमेन ? बहिर्नयने) दण्डः । द्वाःस्थानां द्विशतो दण्डः प्रेतानिवारणात् । श्मशानादन्यत्र प्रेतस्य तस्य न्यासे अन्यदेशे दहने वा दण्डः । दुर्गनिवेशे हि यथावर्णं स्थाननियमो व्याख्यातः[१] ।

प्रतिपदपञ्चिका

मार्जारश्वनकुलसर्पप्रेतानां तच्छवानां नगरस्य अन्तरुत्सर्गे त्रिपणो दण्डः । खरोष्ट्राश्वतराश्वपशुप्रेतानां षट्पणः, मनुष्यप्रेतानां पञ्चाशत्पणो दण्ड इति सुबोधम् । मार्गविपर्यासे क्लृप्तमार्गादन्येन मार्गेण द्वारादन्यतश्च प्रसिद्धद्वारादन्यद्वारेण शवनिर्णयने (शव)निर्हरणे पूर्वः साहसदण्डः । द्वास्थानामनवतारयतां द्विशतो दण्डः । श्मशानादन्यत्र न्यासे दहने वा द्वादशपणो दण्ड इति । तत्र न्यासो बालानाथादिशवानां त्यागो निखननं वा ।

श्रीमूला

विषण्नालिकमिति । यामतूर्यं यामे यन्त्रणीयजनसञ्चारे प्रहरे भवं तूर्यं तत्सञ्चारनिरोधसूचकं वाद्यघोषणं यामतूर्यं, तत्, उभयतोरात्रं रात्रेरुभयोः, पार्श्वयोः, अर्थात् प्रथमपश्चिमयामयोः कर्तव्यमिति शेषः । तत्रापि घटिकानियमार्थमाह— विषण्नालिकं विवर्जिताः षट् नालिकाः रात्रिपूर्वपश्चिमभागसम्बन्धिन्यो यस्मिंस्तद् यथा भवति तथा, रात्रेरादितः षटसु घटिकास्वतीतासु अन्ततश्च षट्सु घटिकास्ववशिष्टा-स्वित्यर्थः । इह उभयतोरात्रमिति रात्रिमुभयत इत्यर्थेऽव्ययीभावः समासान्तश्चार्षः । तूर्यशब्द इति । श्रूयमाणे, राज्ञो, गृहाभ्याशे गृहसमीपे सञ्चरतामिति शेषः, सपादपणम् अक्षणताडनं पादाधिकपणोऽकालसञ्चारणदण्डः भवति । तच्चाक्षणसञ्चारदण्डनं किं सर्वरात्रियामविषयं, नेत्याह—प्रथमपश्चिमयामिकं प्रथमयामशेषसञ्चारविषयम्

---

१. उत्तरः पूर्वो वा श्मशानवाटः दक्षिणेन वर्णोत्तराणाम् इत्यत्र । ( पी० ९९ )

## श्रीमूला

पश्चिमयामशेषसञ्चारविषयं चेत्यर्थः। द्वितीयतृतीययामसञ्चारविषयमाह—मध्यमेत्यादि। मध्यमयामिकम् अक्षणताडनं, द्विगुणम् अर्धतृतीयपणम्। इदं सर्वं नगरान्तःसञ्चारविषयं, नगरबहिर्देशसञ्चारविषयमाह—बहिरिति। बहिर्नगराद् बहिर्नगरपरिसरदेशे, चतुर्गुणं राजगृहाभ्याशसञ्चारोक्तदण्डचतुर्गुणम् अर्थात् पञ्चपणात्मकम् अक्षणताडनं भवति।

शङ्कनीय इति। शङ्कन्तेऽस्मिन् स्थितं पुरुषं चोरजारादित्वेनेति शङ्कनीयः तथाभूते सति, देशे निष्कुटादौ, शङ्कनीयेलिङ्गे अवगुण्ठनकुड्यच्छायानिलयनादिके सति, पूर्वापदाने च पूर्वकृते चौर्यादिवृत्ते च प्रतीते सति, गृहीतम् अनुयुञ्जीत तद्देशस्थं तल्लिङ्गिनं तदपदानकं च जनं दृष्टं गृहीत्वा पृच्छेत्—कस्त्वं कुतः कस्य किमर्थमिहागतोऽसीति।

राजपरिग्रहोपगमन इति। राजकीयावसथोद्यानादिष्वननुमतस्य प्रवेशने, नगररक्षारोहणे च नगररक्षाणां प्राकाराट्टालकादीनामारोहणे च, मध्यमः साहसदण्डः।

सूतिकेत्यादि। सूतिकादिसप्तकनिमित्तं सूतिका प्रसूता तत्पदेन तच्छुश्रूषणं लक्ष्यते। सूतिकानिमित्तं सूतिकाशुश्रूषणे निमित्ते चिकित्सकनिमित्तं चिकित्सकपरिचरणे निमित्ते प्रेतनिमित्तं शवनिर्हरणे निमित्ते प्रदीपयाननिमित्तं दीपेनात्मानं प्रकाश्य गमने निमित्ते नागरिकतूर्यनिमित्तं नागरजनसमूहनचिह्नतूर्यवादने निमित्ते प्रेक्षानिमित्तं राजानुज्ञातनाटकादिप्रयोगदर्शने निमित्ते अग्निनिमित्तं च स्वपरगृहाद्यग्निदीपने निमित्ते च, अग्निग्रहणस्योपलक्षणार्थत्वादन्यऽस्मिन्नपि भयहेतौ निमित्ते, अग्राह्याः अक्षणसञ्चारिणो न ग्राह्याः, किन्तु निमित्तं परीक्ष्य मोक्तव्या इत्यर्थः। तथा मुद्राभिश्चाग्राह्याः मन्त्रिनागरिकादिमुद्रोपेताश्चाक्षणचारिणो न ग्राह्याः।

चाररात्रिष्विति। चारः सर्वसञ्चारः तत्सम्बन्धिनीषु रात्रिषु अनुमतसर्वसञ्चारासु महोत्सवादिरात्रिष्वित्यर्थः, प्रच्छन्नविपरीतवेषाः प्रच्छन्ना अवगुण्ठनादिसंवृत्तस्वरूपाः विपरीतवेषाः पुंवेषाः स्त्रियः स्त्रीवेषाः पुरुषाश्च राजाज्ञानिष्कासिताः, प्रव्रजिताः परिव्राजकाः, दण्डशस्त्रहस्ताश्च दण्डपाणयः शस्त्रपाणयश्च, मनुष्याः, दोषतो दण्ड्याः परीक्ष्य यथादोषोपलम्भं दण्डनीयाः।

## चाणक्यटीका

षण्णालिकमुभयत इति। प्रदोषे नालिकात्रयं पश्चार्धे नालिकात्रयम् इति उभयतो रात्रेः षण्णालिकाः, (प्रायामभूत् ?) परस्य तू(र्य)शब्दे कृतेऽपि प्रथमपश्चिमयोर्द्वारदेशे प्रसिद्धे (र)क्षणे[1] सञ्चारे यत् ताडनं सञ्चरतो ग्रहणं तत्र सपादपणो

---

१. षण्णालिकमिति रक्षणताडनमिति च चाणक्यटीकापाठः शुद्धिमत्तरः।

## चाणक्यटीका

दण्डः । मध्यमयामिकं ( द्विगुणं ) मध्यमयो रक्षणताडने अर्धतृतीयपणो दण्डः । वहिश्चतुर्गुणं[1] राजगृहाद् विदूरे पञ्चपणमित्यर्थः ।

शङ्कनीये देशे शून्यप्रत्यासन्ने ( न ? ) च ( प्रपूर्वकृतख्यातिं गृहीत्वा ततः किं निमित्तं सनाथीत्युपचर्यानुयुक्ते ? ) परीक्षेत ।

राजपरिग्रहसमीपगमने नगररक्षाणाञ्च प्राकारादीनाम्[2] आरोहादीनाम् आरोहे गृहीतस्य दण्डः ।

सूतिकानिमित्तं चिकित्सार्थं सञ्चरन्तः, तथा प्रदीपयानारूढः, नारीसहायः, तूर्यप्रेक्षार्थं समुद्रा न ग्राह्याः ।

अपरारात्रिषु[3] उत्सन्नरात्रिषु ( यज्ञलवोये ? ) उत्सवप्रेक्षार्थम्, प्रच्छन्नवेषाः, विपरीतवेषाः, प्रव्रजिताः, निर्लोहदण्डमात्रहस्ताः, शस्त्रहस्ताश्च मनुष्याः ( विशेषवत् ? ) । दोषतः ( दण्डयाः ) ।

## प्रतिपदपञ्चिका

विषण्नालिकमुभयतोरात्रं यामतूर्यमिति । यमनं यामः सञ्चारनिरोध इत्यर्थः । तच्चिह्नं तूर्यं यामतूर्यम्, तदुभयतोरात्रं विषण्नालिकं कुर्यात् । रात्रेरादितः षट्सु नालिकासु गतासूपक्रान्तासु शिष्टासु विरमेदित्यर्थः । यामतूर्ये दत्ते सर्पोऽपि न सम्पतेदिति । तूर्यशब्द इति । तस्मिन् तूर्यशब्दे वर्तमाने राजाभ्याशे अन्तर्नगरे सपादपणमक्षणतालनमिति, तालनं ताडनं, तेन च दण्डो लक्ष्यते । क्षणोऽनुज्ञातः कालः, अक्षणो निषिद्धः, तन्निमित्तो दण्डः । अक्षणतालनं तत्प्रथमपश्चिमयामिकं प्रथमपश्चिमयामयोरनुज्ञातषण्नालिकावशिष्टकादिविषयं सपादपणं भवति । तद्यथा प्रथमस्यादौ पश्चिमस्यान्ते च षट् षण्नालिका वर्जयित्वा अवशिष्टकालमतद्विषयमेतद्दण्ड-विधानमिति । मध्यमयामिकं द्विगुणमिति । मध्यमयामयोरक्षणतालनद्विगुण-मर्धाधिकपणद्वयं भवति । बहिश्चतुर्गुणमिति नियमात् नगराद् बहिस्तत्पर्यन्तदेशे चतुर्गुणं पञ्चगुणं भवति ।

शङ्कनीये देशे निष्कुटादौ प्रस्थितस्य चोर्यादिकं शङ्कनीयं लिङ्गं च शङ्कनीयः । अवगुण्ठने किञ्चिद्गूहनादिके पूर्वापदानेऽपि च पूर्वमपि यत्कृतचोर्यादिकर्मणि एवमेतेषु दृष्टेषु गृहीतमनुयुञ्जीत । एभिरुपलक्षितो यो दृष्टः, तं गृहीत्वा वाक्यकर्मभ्या-मनुयुञ्जीत वाक्यकर्मानुयोगं च कण्टकशोधने वक्ष्यति ।

---

१. अन्तश्चतुर्गुणम् इति केरलभाषाटीकापाठः ।

२. आरोहो नगाद्युच्छ्रितो देशः ।

३. अपरात्रेषु इतिपाठः स्यात् । "पूर्वरात्रव्यवहारिणाम्" (३.१.) इत्यादिः कृतसमा-सान्तः प्रयुज्यते । चाररात्रिषु इति मुद्रितकोशपाठः ।

[ अनुचितकर्मकर्तॄणाम् आरक्षिणां दण्डाः ]

**रक्षिणामवार्यं वारयतां वार्यं चाऽवारयतामक्षणद्विगुणो दण्डः। स्त्रियं दासीम् अधिमेहयतां पूर्वः साहसदण्डः, अदासीं मध्यमः, कृतावरोधामुत्तमः, कुलस्त्रियं वधः ॥**

---

### प्रतिपदपञ्चिका

राजपरिग्रहोपगमन इति, राजपरिग्रहाणां महानसकोष्ठागारादीनामुद्यानादि-विहारस्थानानां च अनधिकृतस्योपगमने प्रवेशने नगररक्षारोहणे च नगररक्षणानाम् अट्टालप्रतोलीकोशादीनामनधिकृतस्य आरोहणे च मध्यमः साहसदण्डः।

अक्षणसञ्चारिष्वग्राह्यानाह—सूतिकाचिकित्सकेत्यादि, तत्र सूतिकानिर्देशात्, तस्याः स्वयं गमनाभावात् तत्परिकर्मिणः स्त्रीपुरुषाः गृह्यन्ते। चिकित्सका मन्त्रौषधा-दिभिर्विषरोगादिप्रतिकर्तारः। तद्ग्रहणं तत्परिकर्मिणामप्युपलक्षणार्थम्। प्रेतग्रहणं च शवनिर्हारिणामुपलक्षणार्थमेव। एते प्रदीपयाने प्रदीपेनाऽऽमानं प्रकाश्य सञ्चरन्तो न ग्राह्याः। तथा नागरिकतूर्यप्रेक्षाग्निनिमित्तमिति। निमित्तशब्दः प्रत्येकम्, तत्र नागरिकतूर्यनिमित्तं नागरिककृते सर्वनागरसमवायचिह्नं तूर्यनिनादे सति प्रेक्षानिमित्तं राजानुमतमहानटादिदर्शननिमित्तं गृहादिषु प्रदीप्तेषु। उक्तं हि 'प्रदीप्तमनभिद्रवतो गृहस्वामिनो द्वादशपणो दण्डः, षट्पणोऽवक्रयिण' इति। अग्निग्रहणं परावस्कन्दादीनां भयहेतूनामप्युपलक्षणार्थम्। मुद्राभिश्च राजमन्त्रिणो नागरिकस्य वा मुद्राभिः, एवमेतेषु निमित्तेषु क्षणसञ्चारिणोऽवग्राह्याः। अत्र च ग्रहणप्रतिषेधात् निमित्तानि परीक्ष्यैव मुञ्चेदिति।

तथा चाररात्रिष्विति। अनिषिद्धसर्वजनप्रचारासु च देवोत्सवादिरात्रिषु च प्रच्छन्नवेषा अवगुण्ठनादिना विपरिवर्तितवेषा आज्ञया निष्कासिताः यष्ट्यादिप्रहार-जनितगूढव्रणाः शस्त्रहस्ताश्च आर्द्रव्रणाः, एवमेते प्रच्छन्नवेषादयो दोषतो दण्ड्याः। तेषु यस्य यो दोषः उपलब्धः शङ्कितो वा, तद्दोषानुरूपं दण्ड्या इत्यर्थः।

### श्रीमूला

रक्षिणामिति। अवार्यम् अभ्यनुज्ञाताक्षणसञ्चारं सूतिकाशुश्रूषुप्रभृति, वारयतां, वार्यं च सामान्यजनम्, अवारयतां, रक्षिणां नागरिकपुरुषाणाम्, अक्षणद्विगुणः अक्षणसञ्चारविहितदण्डद्विगुणः सार्धपणद्वयात्मकः, दण्डः। स्त्रियं दासीम् अन्यदीयाम् अधिमेहयतां, बलाद् गच्छतां रक्षिणां, पूर्वः साहसदण्डः। अदासीं गणिकाम् अधिमेहयतां, मध्यमः साहसदण्डः। कृतावरोधां दासीमदासीं वा केनचिद् भार्यात्वेन परिगृहीताम्, अधिमेहयताम्, उत्तमः साहस दण्डः। कुलस्त्रियम्, अधिमेहयतां, वधः प्राणवियोजनं दण्डः।

[ नागरिककर्तव्यविशेषाः अकृतकृत्यानां दण्डश्च ]

**चेतनाचेतनिकं रात्रिदोषम् अशंसतो नागरिकस्य दोषानुरूपो दण्डः, प्रमादस्थाने च। नित्यमुदकस्थानमार्गभूमिच्छन्नपथवप्रप्राकाररक्षावेक्षणं नष्टप्रस्मृतापसृतानां च रक्षणम् ॥**

---

चाणक्यटीका

द्विगुण इति । रक्षणताडनमेव दण्डो यथोक्ताद् द्विगुण इत्यर्थः । स्त्रिया दण्ड एवायम्, तामधिमेहयतां कामयमानानां दण्डः । कुलस्त्रियम्······( उत्स )-वादेनिमित्तात् ज्ञातिगृहे । सञ्चर( न्ति ? न्तीम् ) तामधिमेहयताञ्च स एव दण्डः ।

प्रतिपदपञ्चिका

रक्षिणां नागरिकपुरुषाणामवार्यं चिकित्सकादिकं वारयतां वार्यं च महाजन-मक्षणप्रचारणमवारयतामक्षणद्विगुणो दण्डः, अक्षणचारिणां यो दण्ड उक्तः, तद्द्विगुणो दण्डः इति ।

स्त्रियं दासीमधिमेहयतां पूर्वः साहसदण्डः इति, रक्षिणामिति वर्तते । यां काञ्चित् कस्यचिद् दासीस्त्रीमधिमेहयतां बलाद् गच्छतां रक्षिणां पूर्वः साहसदण्डः । अदासीं स्वतन्त्रां गणिकां मध्यमः । कृतावरोधां कस्यचिद् गृहिणीत्वेन नियतवर्तनी-मुत्तमः । कुलस्त्रियं वध इति सुबोधम् ।

श्रीमूला

चेतनाचेतनिकमिति । चेतनभवमचेतनभवं च, रात्रिदोषं रात्रिदृष्टममङ्गलम्, अशंसतः अनिवेदयतः, नागरिकस्य पौरस्य, दोषानुरुषो दण्डः कल्प्यः । प्रमादस्थाने च प्रमादो रक्षिपुरुषाणां रक्षाव्यापारशैथिल्यं तस्य स्थाने हेतुभूते मद्यपानादौ च, दोषानुरुपो दण्डः कल्प्यः । प्रमादस्थाने च प्रमादो रक्षिपुरुषाणां रक्षाव्यापारशैथिल्यं तस्य स्थाने, हेतुभूते मद्यपानादौ च दोषानुरूपो दण्डः ।

नित्यमिति । उदकस्थानानि नदीकूपतटाकादीनि, मार्गाः प्रवेशनिगर्मद्वाराणि, भूमयः स्थलानि, छन्नपथाः सुरुङ्गादिमार्गाः, वप्राः प्राकाराधाराः, प्राकारा वरणाः, रक्षाः अट्टालकपरिखादयः, एषामुदकस्थानादीनां सप्तपदार्थानामवेक्षणं परीक्षणं, नित्यं प्रतिदिवसानुष्ठेयं कर्म भवति नागरिकस्य ।

नष्टप्रस्मृतापसृतानां च नष्टानां स्वामिप्रमादगलितानां भूषणादीनां प्रस्मृतानां स्वामिविस्मृतानाम् अपसृतानां स्वयमपगतानां द्विपदचतुष्पदानां च रक्षणं, नित्यं नियतानुष्ठेयम् आ स्वामिदर्शनात् ।

चाणक्यटीका

चेतनिकं बेरादिगृहं, अचेतनिकञ्च प्राकारादिपतनात् । रात्रिदूषकस्य दोषानु-रूपो दण्डः । प्रमादस्थाने च ।

[ कारागृहबद्धविषये बन्धितव्यविषये च देशकालाधिकारिभेदेन पालनीयाः नियमाः ]

**बन्धनागारे च बालवृद्धव्याधितानाथानां जातनक्षत्रपौर्णमासीषु विसर्गः, पुण्यशीलाः समयानुबद्धा वा दोषनिष्क्रयं दद्युः ॥**

---

चाणक्यटीका

नित्यमुदकस्थानाद्यवेक्षणं कार्यम् । तथा नष्टं प्रपलायितं स्वामिभिः प्रस्मृतम् अपहृतं चोरादिभिः यत् तेषाम् आ स्वामिपरि( स ? सर )प्राप्तेः रक्षणं कार्यम् ।

प्रतिपदपञ्चिका

चेतनाचेतनिकं, प्राण्यप्राणिसम्भवं रात्रिदोषं रात्रौ यद् कुशलं नगरे वृत्तं तदंशतः प्रातरेव नागरिकस्य अनिवेदयतः नगरवासिजनस्य दोषानुरूपो दण्डः कार्यः । सर्वेषां प्रमादस्थाने शङ्कितापायकरणे च तत्तद्दोषानुरूपो दण्ड इति वर्तते ।

नित्यमुदकस्थानेत्यादि, उदकस्थानं नदीतटाककूपादिकम् मार्गाः द्वाराणि, भूमिपथः जलनिस्सरणमार्गः, छन्नपथप्रकाराः प्रागुक्ताः, रक्षाः अट्टालकादयः । एवमेतेषामुदकस्थानादीनां नित्यमवेक्षणं रक्षिपुरुषैः कार्यमिति शेषः । किमर्थमुदकदूषणादिप्रतिषेधार्थम् । तन्नष्टप्रस्मृताप्रसृतानां च रक्षणं कार्यमिति । नष्टानां प्रमोषादिना स्वामिनामदर्शनागतानां प्रस्मृतानां क्वचिदङ्कचिह्नितानामेवं विस्मृतानामपसृतानां स्वयमेव पलायितानां दासादीनां पशूनां च रक्षणं नागरिकेन कर्त्तव्यं नष्टादीनि स्वामिन एव यावद् गृह्णन्ति, तावन्नागरिकपुरुषैः रक्षितव्यानीति ।

श्रीमूला

बन्धनागारे चेति । कारागृहे च स्थितानां, बालादीनां चतुर्णां, जातनक्षत्रपौर्णमासीषु राज्ञो वार्षिकजन्मर्क्षोत्सवेषु पूर्णिमासु च, विसर्गः बन्धनगृहाद् मोक्षणं, कर्तव्यमिति शेषः । पुण्येत्यादि । पुण्यशोलाः धर्माचरणस्वभावाः कुतोऽपि यादृच्छिकाद् वृत्तव्यतिक्रमात् प्रसक्तकारागृहप्रवेशा इत्यार्थम्, समयानुबद्धा दोषनिष्क्रयं दद्युः समयेन आयतिविशुद्धिप्रातिभाव्यसंविदा प्रतिबद्धाः कृतदोषानुरूपं हिरण्यदण्डं दद्युः, बन्धनगृहे प्रवेशाभावाय । तदिदं बन्धनगृहप्रवेशनपक्षप्रतिक्षेपकं पक्षान्तरं वाशब्दो द्योतयति ।

चाणक्यटीका

बन्धनस्थानां बालादीनाम् अनाथानाञ्च । यस्मिन् राजा जातः तस्मिन् दशमैकान्नविंशति( मयो ? तमयोर )न्नक्षत्रयोः पौर्णमास्यां रक्षाबन्धनविक्रमणार्थं विसर्गः । पुण्यशीलाः केचित्तु ( त एव वा ? ) प्रतिभाव्यशपथादि( खण्डन्वेषणमाहुयैः ? दण्डनिष्क्रयणमाहुः ) तन्निष्क्रयं वा बन्धा(द्)[1] दद्युः ।

---

१. बन्धस्त्वाधौ इति केशवस्वामी ।

**दिवसे पञ्चरात्रे वा बन्धनस्थान् विशोधयेत् ।**
**कर्मणा कायदण्डेन हिरण्यानुग्रहेण वा ॥११९॥**
**अपूर्वदेशाधिगमे युवराजाभिषेचने ।**
**पुत्रजन्मनि वा मोक्षो बन्धनस्य विधीयते ॥१२०॥**

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे नागरिकप्रणिधिः,
षट्त्रिंशोऽध्यायः, आदितः सप्तपञ्चाशः,
एतावता कौटलीयस्यार्थशास्त्रस्य अध्यक्षप्रचारो नाम
द्वितीयमधिकरणं समाप्तम्

———————

प्रतिपदपञ्चिका

बन्धनागाराच्च कारागृहात्, बालानां वृद्धानां व्याधितानामनाथानां च जातिनक्षत्रे रात्रौ जन्मनक्षत्रे, पौर्णमासीषु कार्तिक्यादिषु, विसर्गो मोक्षः कार्य इति। पुण्यशीलाः समयानुबन्धाः वा दोषनिष्क्रयं दद्युरिति। पुण्यशीला धार्मिकाः, तेषामपि यदि कदाचित् केनचित् दोषेण बन्धनागारप्रवेशः प्राप्तः, तदा ते समयानुबन्धान्न पुनरेवं करिष्याम इति समयानुबन्धं प्रातिभाव्यादिदानेन कृत्वा दोषनिष्क्रयं बन्धनागार-प्रवेशनिमित्तस्य निष्क्रयं दोषानुरूपं हिरण्यदण्डं दद्युः, न बन्धनागारं प्रविशेयुः। वाशब्दान्निष्क्रयादाने समयानुबन्धाकरणे च प्रविशेयुरेव।

श्रीमूला

अध्यायान्ते श्लोकावाह—दिवस इति। दिवसे प्रतिदिवसं, पञ्चरात्रे वा प्रतिपञ्चरात्रं वा, बन्धनस्थान्, विशोधयेत् विशोधनं दण्डग्रहणेन दोषनिष्क्रयं कारयेत्। कथम्, कर्मणा भारवहनशकटाकर्षणादिना दण्डदानासामर्थ्ये, कायदण्डेन शरीरताडनादिना कर्मकरणासौकर्ये, हिरण्यानुग्रहेण वा हिरण्यग्रहणरूपेणानुग्रहेण वा बन्धनस्थगुणत्वे। इह केचिद् 'विशोधयेदि' त्यस्यावृत्या 'बन्धनगतान् विशोधयेत् सुस्था दुःस्था वेति परीक्षेतेत्यर्थान्तरमपि सङ्गृह्णन्ति।

बद्धमोक्षनिमित्तान्याह—अपूर्वेत्यादि। अपूर्वदेशाधिगमे शत्रुजयनिमित्ते नूतन-देशलाभे। शेषं सुगमम्।

व्याख्यायामर्थशास्त्रस्य श्रीमूलाख्यानभाजने।
आध्यक्ष्याख्याधिकरणं द्वैतीयीकमपूर्यत ॥

इति श्रीवञ्चिमण्डलमहाराजाश्रितस्य ताम्रपर्णीतीरवर्तितरुवाग्रहाराभिजनस्य श्रीसीताम्बाश्रीरामसुब्रह्मण्यार्यसूनोर्महामहोपाध्यायगणपतिशास्त्रिणः कृतिषु कौटिलीयार्थशास्त्रव्याख्यायां श्रीमूलाख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे षट्त्रिंशोऽध्यायः, नागरिकप्रणिधिः।

अध्यक्षप्रचारो द्वितीयमधिकरणं समाप्तम् ॥

शुभं भूयात्।

## चाणक्यटीका

दिवसे दिवसे पञ्चरात्रे वा वन्धनस्थान् विशोधयेत्, कः किं ददाति किंसमर्थो वेति । कर्मणा कायबन्धेन शारीरेण । हिरण्यानुग्रहेण वा ।

अपूर्वदेशस्याधिगमे प्राप्तौ । मोक्ष इति बन्धनस्य । विनापि कर्मादिदण्डेन धर्माभिवृद्धयर्थं विधीयते । धर्मलाभो ह्यन्येभ्यो लाभेभ्यः श्रेयानिति ।

इति नागरिकप्रणिधिरष्टत्रिंशं ( ? षट्पञ्चाशं ) प्रकरणं समाप्तम्,
षट्त्रिंशश्चाऽध्यायः, आदितः सप्तपञ्चाशोऽध्यायः,
समाप्तं चाऽध्यक्षप्रचारो द्वितीयमधिकरणम् ॥

## प्रतिपदपञ्चिका

इदानीमध्यायप्रान्ते श्लोकाभ्यां कर्तव्यशेषमाह—दिवस इत्यादि, दिवसे पञ्चरात्रे, वीप्सालोपो द्रष्टव्यः । दिवसे दिवसे पञ्चरात्रे पञ्चरात्रे वेति तत्र प्रतिदिवस-विशोधनं मुख्यम्, पञ्चरात्रविशोधनं जघन्यम्, द्विरात्रादिषु मध्यमम् । एव बन्धनस्थानां विशोधनं दोषनिष्क्रयं कारयेदिति । कथमित्याह—कर्मणेति, हिरण्यादिदानासमर्थाच्छूद्रान्तरपरिक्लेशैर्हिरण्येन हिरण्यग्रहणेन अनुग्रहेण वाऽल्पायकारिणं प्रभूतोपकारेण अनुग्रहं कृत्वा वा एवं चतुर्विधं विशोधयेदिति ।

सर्वबन्धनमोक्षनिमित्तमाह—अपूर्वदेशाधिगमे विजिगीषोर्यातव्योच्छेदादिना देशान्तरप्राप्तिः । तथा युवराजाभिषेचने पुत्रस्य भ्रातुर्वा यौवराज्यप्रतिपादने पुत्र-जन्मनि वा राज्ञः पुत्रजनने, पुत्रग्रहणं पौत्रनप्त्रोरपि उपलक्षणार्थम् । वाशब्दादश्व-मेधादिमहाक्रतुदीक्षासु उल्कापा भूमिकम्पादितमहोत्पातेषु राज्ञो जनपदस्य वा व्याधिदुर्भिक्षादिमहाभयेषु च सर्वेषामपि बन्धनागारस्थानां बन्धनस्य मोक्षोऽभिधीयते विशालाक्षप्रभृतिभिः पूर्वाचार्यैरिति । एतेषु निमित्तेषु महादोषानपि मुञ्चेदित्यर्थः इति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायामर्थशास्त्रटीकायामध्यक्षप्रचारिके
द्वितीयेऽधिकरणे षट्त्रिंशोऽध्यायः । नागरिकप्रणिधिः, आदितः
सप्तपञ्चाशोऽध्यायः, द्वितीयमधिकरणं समाप्तम् ।

# अथ धर्मस्थीयं नाम तृतीयमधिकरणम्

## सप्तपञ्चाशाष्टपञ्चाश प्रकरणे

### प्रथमोऽध्यायः

### व्यवहारस्थापना विवादपदनिबन्धश्च

[ धार्मिकामात्यप्रवर्तनीयव्यावहारिककर्मस्थानानि ]

**धर्मस्थास्त्रयस्त्रयोऽमात्याः जनपदसन्धिसङ्ग्रहणद्रोणमुखस्थानीयेषु व्यावहारिकानर्थान् कुर्युः ।**

---

श्रीमूला

अथ धर्मस्थीयं नाम तृतीयमधिकरणम् । धर्मेषु वर्णाश्रम-जाति-सम्बन्धिषु तिष्ठन्ति तान् विदन्ति अनुवर्तन्ते चेति धर्मस्थाः, तानधिकृत्य प्रवृत्तं धर्मस्थीयम् । 'धर्मोपधाशुद्धान् धर्मस्थीयकण्टकशोधनेषु स्थापयेदि'ति प्रथमाधिकरणस्य दशमाध्याये, द्वितीये भागे 'पौरजानापदानां कार्याणि पश्येद्' इति एकोनविंशाध्याये चोक्तम् । के कति वा कार्यद्रष्टारः कुत्र स्थित्वा कार्यं पश्येयुरित्यादिकं वक्तुमिदमधिकरणमारभ्यते ।

तत्र व्यवहारस्थापना इति प्रथमं सूत्रम् । विवादपदनिबन्धः इति द्वितीयम् । तदुभयमेकस्मिन्नध्याये प्रतिपाद्यते । व्यवहारा नाम विवाहसंयुक्तं, दायभागः इत्यादयो द्वादश वक्ष्यमाणाः, तेषां स्थापना ग्राह्याग्राह्यत्वनिरूपणमिति पूर्वसूत्रस्यार्थः । विवाद-पदानां पूर्ववाद्युत्तरवादिवचनानां निबन्धः व्युष्टदेशजात्यादिक्रमेण पत्रलेखनमित्युत्तर-सूत्रस्य ।

प्रथमसूत्रं व्याचष्टे—धर्मस्था इत्यादि । धर्मस्थास्त्रयस्त्रयः, अमात्याः सहा-वस्थिताः, जनपदसन्ध्यादिषु जनपदसन्धावन्तपालदुर्गे सङ्ग्रहणे दशग्रामीप्रधानाधिष्ठाने चतुश्शतग्रामीप्रधाने द्रोणमुखेऽष्टशतग्रामीप्रधानाधिष्ठाने स्थानीये चेत्येतेषु, व्याव-हारिकान्, अर्थान् कार्याणि, कुर्युः ।

चाणक्यटीका

अध्यक्षाधि(प्र?)करणेन प्रपञ्चवता योगमभिधाय क्षेमाय धर्मस्थीयकण्टक-शोधनयोगवृत्तानि त्रीण्यधिकरणान्युच्यन्ते । तेष्वप्ययं प्रथमतमः, यदर्थाद् विनीत-शास्त्रानुविधायिभिर्व्यवहारैः प्रजानांक्षेमो विधीयत इति धर्मस्थीयं तावदुच्यते । अत्रापि प्रमाणानां व्यवहाराणां स्थापना व्यवस्थितिरिति, विवादपदानां च निबन्ध इति प्रकरणद्वयमशेषप्रकरणोपक्रमकार्यम् एकेनाध्यायेन विधीयते ।

[ निषेध्याः व्यवहाराः, उल्लङ्घने दण्डश्च ]

**तिरोहितान्तरगारनक्तारण्योपध्युपह्वरकृतांश्च व्यवहारान् प्रतिषेधयेयुः। कर्तुः कारयितुश्च पूर्वस्साहसदण्डः। श्रोतॄणामेकैकं प्रत्यर्धदण्डाः। श्रद्धेयानां तु द्रव्यव्यपनयः।**

---

चाणक्यटीका

तत्र अधिकरणाधिकारीयं सूत्रमाह—धर्मस्था इति। सहकारित्वेन निश्चिताः। ननु राज्ञ एवात्र कर्तृत्वम्, यथोक्तम्—'द्वितीये पौरजानपदानां कार्याणि पश्येत्' ( अधि० १ अध्या० १९ ) इति। सत्यम्, राज्ञ एवाधिकारः, तस्य तु सहकारिणश्च देशव्यवहितानां व्यवहारणामिति तावत् स्वयं राज्ञः प्रयोजककर्तृत्वमा ( द्य ? प्य ) त इति प्रयोज्यकर्तारः सदा कार्यदर्शने कार्यविपर्यासप्रतिविधानार्थं कल्पिताः स्युः। यथोक्तम्—

यतः स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम्।
सोऽस्य कार्याणि सम्पश्येत् सभ्यैरेव त्रिभिर्वृतः॥[1]

धर्मस्थैरित्यर्थः। तस्माद्राज्ञः सहकारित्वेन प्रयोज्यकर्तृत्वे विषयीक्रियन्ते।

त्रयस्त्रय इति स्थाने व्याप्त्यर्थं द्विर्वचनम्। त्रित्वसङ्ख्या च एकस्य यथेष्टम् अनवग्रहचारित्वाद् द्वयोः संहतयोरसंहतयोर्वा राजकार्यविनाशित्वात्। चतुरादिष्वपि (दश ? दोषः)।

( अमात्या इति ) अमात्योत्पत्तौ सहाध्यायित्वादिभिर्यथासम्भवम् उक्तलक्षणाः। जनपदसन्धौ अन्तपालदुर्गे। सङ्ग्रह इति कार्वटिके द्रोणमुखे स्थापयेत् जनपदनिवेशोपलक्षिते[2]। व्यावहारिकानिति व्यवहारयोग्यान् अष्टादशव्यवहारपदनिबन्धादीन् पदार्थान् नि(श्चये ? श्चिनु)युः।

श्रीमूला

अग्राह्यव्यवहारानाह—तिरोहितेत्यादि। तिरोहितादीन् षड् व्यवहारान् आरप्स्यमानान् आरब्धांश्च, प्रतिषेधयेयुः। तत्र तिरोहितः प्रच्छन्नदत्तविषयः प्रच्छन्नात्तविषयश्च। स च स्वामिदेशकालक्रियाद्रव्यादिभेदेन बहुविधः। तत्र

---

१. यदा स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम्।
तदा नियुञ्ज्याद् विद्वांसं ब्राह्मणं कार्यदर्शने॥
सोऽस्य कार्याणि सम्पश्येत् सभ्यैरेव त्रिभिर्वृतः।
सभामेव प्रविश्याग्र्यामासीनः स्थित एव वा॥
इति मुद्रितमनुपाठः, ( ८,९,१० )

२. 'दशग्रामी सङ्ग्रहेण सङ्ग्रहं स्थापयेत्'' इति जनपदनिवेशाध्याये कौटल्यः। (२.१)

[ तेषामेव देशकालादिभेदेनोपादेयत्वादुष्टत्वे ]

**परोक्षेणाऽऽधिकर्णग्रहणम् अवक्तव्यकरा वा तिरोहिताः सिद्धयेयुः ॥**

**दायनिक्षेपोपनिधिविवाहसंयुक्ताः स्त्रीणाम् अनिष्कासिनीनां व्याधितानां च अमूढसंज्ञानाम् अन्तरगारकृताः सिद्धयेयुः । साहसानुप्रवेशकलहविवाहराजनियोगयुक्ताः पूर्वरात्रव्यवहारिणां च रात्रिकृताः सिद्धयेयुः । सार्थव्रजाश्रमव्याधचारणमध्येषु अरण्यचराणाम् अरण्यकृताः सिद्धयेयुः । गूढाजीविषु चोपधिकृताः सिद्धयेयुः । मिथःसमवाये च उपह्वरकृताः सिद्धयेयुः ॥**

---

श्रीमूला

स्वामितिरोहितः स्वाम्यनुज्ञां विनैवान्येन तद्धनं यद् विनियुज्यते, देशतिरोहितः परोक्षिसाक्षिकः, कालतिराहितः शतवर्षोपेक्षितऋणादिविषयः, क्रियातिरोहितः देशान्तरस्थे प्रमाणलेख्ये ऋणार्थनाविषयः, द्रव्यतिरोहितः द्विपाच्चतुष्पात्स्थावरेषु दृष्ट्यगोचरेषु तद्विक्रयः। अन्तरगारकृतः गर्भागारकृतः, नक्तकृतः रात्रिकृतः, अरण्यकृतः, उपधिकृतः छद्मकृतः, उपह्वरकृतः रहस्यकृतो दातृप्रतिग्रहीतृमात्रविदितः । कर्तुः प्रतिषिद्धव्यवहारप्रयोक्तुः, कारयितुस्तत्प्रयोजकस्य च, पूर्वः साहसदण्डः । श्रोतृणां धर्मस्थानाम्, एकैकं प्रति प्रत्येकम्, अर्धदण्डाः पूर्वसाहसस्यार्धानि । श्रद्धेयानां तु निष्कपटानां तु प्रतिषिद्धव्यवहारस्पर्शिनां, द्रव्यव्यपनयः साध्यद्रव्यहानिः, न तु दण्ड इत्यर्थः ।

चाणक्यटीका

तिरोहितकृतः दातृप्रति उपह्वरकृतः । गृहीतदेया(दा)नाय (साक्ष्य)सान्निध्यकृतः । अरण्यकृतः । उपधिकृतः च्छद्म, गृहान्तःकृतः यत्साहसं प्रयच्छति । उपह्वरकृतः असाक्षिकार्यकः, एवंविधो व्यवहारो न कोऽपि दाप्य इति प्रतिषेध्यार्थपक्षे (पा)तयेयुः । ( तथा चिरव्यवहार इति यद्वाध्यक्षोऽननुज्ञाता तावति तयोर्व्यवस्थाभेदेन दण्डः ? ) । श्रोतृणां साक्षिणाम् । ( स ? ) श्रद्धेयानां ( दम ? ) सम्भाव्यन्यायानां ( स्व ? )दण्डो द्रव्यव्यय एव व्यवहारनिवृत्तिरित्यर्थः ।

श्रीमूला

प्रतिषिद्धापवादमाह—परोक्षेणेति । परोक्षेण अधिकर्णग्रहणम् अप्रत्यक्षं गृहारामादिकमाधिं कृत्वा ऋणग्रहणम्, सिध्येत् तिरोहितमपि । अवक्तव्यकरा वा अमुकधनममुकेन व्यवह्रियमाणं न दुष्यतीति लोकसम्प्रतिपन्ना व्यवहारा वा, तिरोहिताः स्वामितिरोहिता अपि, सिध्येयुः ।

श्रीमूला

अन्तरगारकृतानुपादेयानाह—दायेत्यादि । दायो दायविभागस्तत्सम्बद्धः, निक्षेपः आभरणाद्यर्थं स्वर्णाद्यर्पणम् अथवा अन्तस्स्थद्रव्यरूपसङ्ख्याप्रदर्शनपूर्वं वासनस्यार्पणं, तत्सम्बद्धः उपनिधिः अनाख्यातवस्तुगर्भसमुद्रवागनोपनिधानसम्बद्धः, विवाहसंयुक्तः स्त्रीधनविषयः इत्येतेऽन्तरगारकृताः, स्त्रीणाम्, अनिष्कासिनीनां गृहबहिरनिर्गत्वरीणाम्, व्याधितानां चामूढसंज्ञानां रोगिणां चानष्टचेतनानाम्, अन्तरगारकृताः सिध्येयुः ।

रात्रिकृतव्यवहारेष्वदुष्टानाह—साहसेत्यादि । साहसयुक्तः परधन-प्रसभलुण्ठन-सम्बद्धः अनुप्रवेशयुक्तः परधनस्वगृहानुप्रवेशनविषयः कलहयुक्तः वाक्पारुष्यादिसम्बद्धः विवाहयुक्तः प्रसिद्धः राजनियोगयुक्तः राजनियोगो राजाज्ञाप्रयुक्तो नगररक्षाधिकृत-व्यापारः तद्युक्तस्तत्सम्बद्धः इति पञ्चैते व्यवहाराः, पूर्वरात्रव्यवहारिणां च वेश्या-शौण्डिकादीनां च व्यवहाराः, रात्रिकृताः सिध्येयुः ।

अरण्यकृतव्यवहारेष्वदुष्टानाह--सार्थेत्यादि । सार्थो वणिक्सङ्घः व्रजा गोष्ठवृत्तयो गोपालाः आश्रमो वनकुटुम्बिनः व्याधाः किराताः चारणाः लङ्घनप्लवनादिजीविनः इत्येषां मध्येषु, अरण्यचराणां वनचराणां, व्यवहाराः, अरण्यकृताः सिध्येयुः ।

उपधिकृतव्यवहारानुपादेयानाह—गूढाजीविषु चेति । कूटहिरण्यादिव्यवहारिषु च, उपधिकृताः छलकृता व्यवहाराः सिध्येयुः ।

उपह्वरकृतव्यवहारान् उपादेयानाह—मिथःसमवाये चेति । रहःसम्प्रयोगे स्त्रीपुंसयोर्गान्धर्वविवाहनिमित्ते, उपह्वरकृताः सिध्येयुः ।

चाणक्यटीका

प्रसङ्गनिवृत्तये अस्यापवादमाह—परोक्षेणेति । परोक्षाधिना स्थावरेण जङ्गमेन (वा) कृतम्, क्षेत्रं दासीं वा गृहीत्वा शतं देहीति यद् ऋणग्रहणम् तत् तिरोहितमपि सिध्यति ।

न तु परोक्षेण प्रतिभूप्रचारापरोक्षेण मूल्येन वा क्रयादिप्रत्ययितकर्तृतया ये व्यवहारा व्याख्याताः, तानेवोपपादयति—ते सर्वे सिध्येयुरिति । दायेति भर्तॄणां वा स्थितये विभागो दायः । कारुहस्ते करणाद्यर्थं सुवर्णादेर्निक्षेपः । उपनिधिरिति न्यासस्य दानार्पणे । विवाहसंयुक्ता धनदानादयः । तथा स्त्रीणामनिष्कासिनीनां व्याधितानां वा अमूढसंज्ञानां षडेव अन्तर( गार )कृताः सिध्येयुः ।

तथा साहससंयुक्ताः, गृहानुप्रवेशाहरणादयश्च तद्युक्ताः, कलहयुक्ताः, विरुद्ध-श्चारो विचारः सङ्ग्रहणं तद्युक्ताः, राजाज्ञया च ये दानग्रहणादयः, पूर्वरात्रव्यवहारिणां च ( सारिता पूर्वितो ? ) अ(दी ? ही)ना[1] रात्रिकृतानुविचारार्हत्वात् सिध्येयुः ।

---

१. ''अथाहीनो नृलिङ्गकः । द्विरात्रादिषु यज्ञेषु प्राक् त्रयोदशरात्रतः'' इति केशव-स्वामी ।

[ उक्तातिरिक्तानां परतन्त्रकृतानां च अकार्यकरत्वम् ]

**अतोऽन्यथा न सिद्ध्येयुः—अपाश्रयवद्भिश्च कृताः, पितृमता पुत्रेण, पित्रा पुत्रवता, निष्कुलेन भ्रात्रा, कनिष्ठेनाविभक्तांशेन; पतिमत्या पुत्रवत्या च स्त्रिया, दासाहितकाभ्याम्, अप्राप्तातीतव्यवहाराभ्याम्, अभिशस्तप्रव्रजितव्यङ्गव्यसनिभिश्च, अन्यत्र निसृष्टव्यवहारेभ्यः। तत्रापि क्रुद्धेनार्तेन मत्तेनोन्मत्तेनावगृहीतेन वा कृताः व्यवहाराः न सिद्ध्येयुः। कर्तृकारयितृश्रोतॄणां पृथग् यथोक्ताः दण्डाः।**

---

चाणक्यटीका

( मूढाजीविषु ) च्छद्मव्यवहारिषु अतिसन्धानार्हेष्वित्यर्थः।

( स ? ) मिथःसमवायेन एकमत्या, असाक्षि(कृ)ता अपि सिध्येयुः।

श्रीमूला

अतोऽन्यथा न सिध्येयुरिति। उक्तातिरिक्तप्रकारास्तिरोहितादयो नोपादेयाः। अपाश्रयवद्भिश्चेति। अपाश्रयवन्तः परतन्त्राः तैश्च, कृताः व्यवहाराः, न सिध्येयुः। परतन्त्रान् प्रपञ्चयति—पितृमता पुत्रेण पितरि व्यवहारनिपुणे विद्यमाने पुत्रेण कृताः, पित्रा पुत्रवता पुत्रे कुटुम्बभरणक्षमे विद्यमाने पित्रा निवृत्तव्यवहारेण कृताः, निष्कुलेन भ्रात्रा कुलनिष्पतितेन भ्रात्रा कृताः, कनिष्ठेनाविभक्तांशेन कनिष्ठेन दायभागात् प्राक्कृताः पतिमत्या पुत्रवत्या च स्त्रिया भर्तरि पुत्रे च कुटुम्बभरणक्षमे विद्यमाने स्त्रिया कृताः, दासाहितकाभ्यां दासेन स्वाम्यधीनेन आहितकेन आधीकृतेन चाधिग्राहकाधीनेन कृताः, अप्राप्तातीतव्यवहाराभ्याम् अप्राप्तव्यवहारेण ऊनषोडशवयस्केन अतीतव्यवहारेण अतिक्रान्तसप्ततिवयस्केन च कृताः, अभिशस्तादिभिश्चतुर्भिश्च अभिशस्तैर्महापातकदूषितैः प्रव्रजितैः संन्यासिभिः व्यङ्गैः मूक-बधिरादिभिः व्यसनिभिः स्त्रीद्यूतपानासक्तैश्च कृताः। तत्रापवादमाह—अन्यत्र निसृष्टव्यवहारेभ्य इति। निसृष्टव्यवहारव्यतिरेकेण, ते चेत् पितृ-मातृपुत्र-पुत्रवत्पित्रादयः प्रधानैरर्पितव्यवहाराधिकारास्तदा,तत्कृता व्यवहाराः सिध्येयुरेवेत्यर्थः।

निसृष्टव्यवहारेष्वपि तेषु विशेषमाह—तत्रापीति। निसृष्टव्यवहारेष्वपि मध्ये, क्रुद्धेन जिघांसुना, आर्तेन दुःखिना, मत्तेन हर्षवता, उन्मत्तेन विभ्रान्तचित्तेन अवगृहीतेन वा दण्डितेन वा, कृताः व्यवहाराः न सिध्येयुः। कर्तृकारयितृश्रोतॄणां पृथग् यथोक्ता दण्डा इति। ये प्रतिषिद्धान् व्यवहारान् कुर्वन्ति कारयन्ति शृण्वन्तश्च साक्षीभवन्ति, तेषां प्रत्येकं यथाविहिताः दण्डा भवन्ति।

चाणक्यटीका

अतोऽन्यथा न सिध्येयुरिति यथोक्तविशेषणाभावात् कृता अपि न सिध्येयुरिति नियमार्थं वचनम्।

[ सर्वेषां व्यवहाराणाम् उपादेयत्वे हेतवः, लेखनेषु उत्तरोत्तरप्राबल्यञ्च ]

**स्वे स्वे तु वर्गे देशे काले च स्वकरणकृताः सम्पूर्णाचाराः शुद्धदेशाः दृष्टरूपलक्षणप्रमाणगुणाः सर्वव्यवहारास्सिद्धयेयुः। पश्चिमं त्वेषां करणमादेशाधिवर्जं श्रद्धेयम् ॥ इति व्यवहारस्थापना ॥**

---

चाणक्यटीका

अपाश्रयवद्भिश्च कृताः, न सिध्येयुः। अनेन कर्तृविशेषापेक्षया प्रतिषेधमाह केन इत्यस्य विशेषः—पितृमातृव्यवहारयोः सपितृकेण पुत्रेण। पुत्रवता निवृत्तप्रसवेन पित्रा। ( निष्कलेन ) कलम् इति बीजपर्यायः। भ्रात्रा[1] कनिष्ठेन अविभक्तांशेन। पतिमत्या प्राप्तव्यवहारपुत्रया च स्त्रिया। अपाकृतव्यवहाराभ्यां दासाहितकाभ्यामिति। सम्बन्धात् स्वामिद्रव्यप्रतिषेधो नात्मद्रव्यस्य। एवम् अभिशस्तप्रव्रजितव्यसनिभिश्च ( पि ? अपु )त्रादिभिः। अन्यत्र निसृष्टव्यवहारेभ्यः अपाश्रयैरनुज्ञातव्यवहारेभ्यः पुत्रादिभ्यः।

तत्रापि स्वतन्त्रेष्वपि। क्रुद्धादिना न सिध्येयुः। पृथग् यथोक्ता दण्डा इति कर्तुः कारयितुश्च पूर्वः साहसदण्डः। श्रोतृणामर्ध इति व्यवस्थादृढीकरणार्थम्।

श्रीमूला

सर्वापवादमाह—स्वे स्वे इति। स्वे स्वे वर्गे स्वकरणकृताः स्वस्वजातौ स्वक्रियाक्रमकृताः, स्वे स्वे देशे अरण्यादौ अरण्यादिचरैः स्वकरणकृताः, स्वे स्वे काले च रात्रौ रात्रिव्यहारिभिः दिवा दिवाव्यवहारिभिश्च स्वकरणकृताश्च, सर्वव्यवहाराः सिध्येयुः। सम्पूर्णचाराः राजमार्गो दिवा अर्थिप्रत्यर्थिसान्निध्यमित्येवमाद्यपेक्षितदेशकालादिसमुदाचारश्चारः, क्वचिदाचार इत्येव पाठः। स सम्पूर्णः अविकलनिर्वृत्तः येषु ते तथाभूताः, व्यवहाराः शुद्धदेशाः दिशन्ति उपदिशन्ति स्वोपलब्धमर्थं प्राड्विवाकायज्ञापयन्तीति देशाः साक्षिणः ते शुद्धाः परोक्षित्वादिदोषरहिताः येषु ते तथाभूताः, दृष्टरूपलक्षणप्रमाणगुणाः दृष्टं साक्षात्कृतं रूपमाकृतिः लक्षणं व्यावृत्तिचिह्नं प्रमाणं माषगुञ्जादि आढकद्रोणादि वितस्तिहस्तादि च गुणः शुक्लनीलभ्राजिष्णुत्वादिश्च येषु ते तथाविधाः, सर्वव्यवहाराः, सिध्येयुः। त एते व्यवहारा उपादेया लेख्यप्रमाणकाः प्रवर्तन्ते। तच्च लेख्यं पूर्वकालकृतमेकमुत्तरकालकृतं चापरमित्येवं द्वयोरेकार्थगोचरयोर्लेख्यकरणयोः पूर्वोत्तरकालजन्मनोर्यदि कदाचिदुपलब्धिस्तदा किं प्रतिपत्तव्यमित्याह—पश्चिमं चैषां करणमिति। एतत्सम्बन्धि उत्तरकालकृतं लेख्यकरणम्, श्रद्धेयं विश्वसनीयं पूर्वकरणपरीक्षापुरस्सरप्रवृत्तिकत्वादुत्तरकरणस्येत्यभि-

---

१. 'कलं शुक्रे चरमधातौ' इति मेदिनी, 'देहधात्वन्तरे' इति केशवस्वामी। क्लीबेन भ्रात्रेत्यर्थः। निष्कुलेनेति प्रामादिकः पाठो मुद्रितकोशेषु।

## (विवादपदनिबन्धः)

[ पुस्तकेषु लेखनीयाः विवादसम्बधिनोंऽशाः ]

**संवत्सरम् ऋतुं मासं पक्षं दिवसं करणम् अधिकरणम् ऋणं वेदकावेदकयोः कृतसमर्थावस्थयोः देशग्रामजातिगोत्रनामकर्माणि चाभिलिख्य, वादिप्रतिवादिप्रश्नान् अर्थानुपूर्व्या निवेशयेत्; निविष्टांश्चावेक्षेत ॥**

———————

### श्रीमूला

प्रायः। आदेशाधिवर्जमित्यपवादः। आदेशं बन्धं च वर्जयित्वा, आदेशः आदानम् अर्थस्य स्वत्वेन स्वीकरणं क्रयः प्रतिग्रहो वेति यावत्। आधिस्तु बन्धो भोग्यरूपः। आदेशाध्योस्तु विषये पूर्वकरणमेव श्रद्धेयम्, यतोऽर्थस्य परसंस्थत्वेन तद्भुक्त्युपोद्बलितस्य पूर्वलेख्यस्य प्राधान्यं न हीयते। तथा च याज्ञवल्क्यः—

"सर्वेष्वेव विवादेषु बलवयुत्तरा क्रिया।
आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥" इति ॥

इति व्यवहारस्थापना समाप्ता।

### चाणक्यटीका

पुनरपवादमाह—स्वे स्व इति ब्राह्मणानां ब्राह्मणेष्वित्यादि। करणस्थाने व्यवहारवेलायां स्वकरणकृता इति सजातीयसाक्षिमध्ये कृताः। सम्पूर्णाचाराः अयं गौरयमश्वश्चेति। दृष्टरूपाः दृष्टप्रमाणाः दृष्टलक्षणाः दृष्ट ( प्रदृष्ट ? प ) वाहादिगुणा व्यवहारा निरवद्याः सिध्येयुः।

पश्चिमं चैषामिति कारणात् पौनःपुन्ये साक्षिपत्रलेख्यादिगुणयुक्तात् पश्चिमं करणम् (अ)कृतपूर्वम् दत्ताधिकेन वा तत्र पूर्वपूर्वमेव श्रद्धेयमिति।

॥ इति व्यवहारस्था(पना) ॥

### श्रीमूला

अथ विवादपदनिबन्ध इति सूत्रम्। तदर्थादिकं तु वर्णितं प्रागेव। संवत्सरमित्यादि। संवत्सरं राजवर्षोपलक्षितं कलिशकादिवर्षम्, ऋतुं वसन्तादिं, मासं चैत्रादिं, पक्षं मासार्धं, दिवसं तिथिं, करणं बवादिकं तिथ्यर्धम्, अधिकरणं स्थानीयद्रोणमुखादि, ऋणं वृद्धयर्थप्रयुक्तं धनं, वेदकावेदकयो वेदकः परोत्पादितपीडानुभवितृत्वात् तन्निवेदयितृत्वाद् वा अभियोक्ता अवेदको वेदकविपरीतोऽभियोज्यः तयोः, कीदृशयोः, कृतसमर्थावस्थयोः समर्थावस्था सम्बद्धावस्था अधमर्णोत्तमर्णभावलक्षणः सम्बन्धः स कृतो याभ्यां तथाभूतयोः समर्था क्षमा उत्तमाधमर्णभावावस्था कृता याभ्यां तथाभूतयोर्वा, कृतसमस्यावस्थयोरिति पाठे समस्थशब्दस्य समानस्थितिकार्थतया कृतसमानस्थितिकसम्बन्धयोरित्यर्थः। देशग्रामादीनि षट् च, अभिलिख्य,

[ साक्षिनिमित्तं पराजयहेतवो विपर्यस्तवृत्तयो नव, पराजितस्य दण्डश्च ]

**निबद्धं पादमुत्सृज्यान्यं पादं सङ्क्रामति; पूर्वोक्तं पश्चिमेनार्थेन नाभिसं [धत्ते] बध्यते; परवाक्यम् अनभिग्राह्यमभिग्राह्यावतिष्ठते; प्रतिज्ञाय 'देशं निर्दिश' इत्युक्ते न निर्दिशति, हीनदेशमदेशं वा निर्दिशति; निर्दिष्टाद् देशादन्यं देशमुपस्थापयति; उपस्थिते देशेऽर्थवचने 'नैवम्' इत्ययपव्यते; साक्षिभिरवधृतं नेच्छति; असम्भाष्ये देशे साक्षिभिर्मिथस्सम्भाषते—इति परोक्तहेतवः ।**

---

श्रीमूला

वादिप्रतिवादिप्रश्नान् अभियोक्त्रभियोज्यविषयाणि चोद्यानि अर्थानुपूर्व्या अर्थगुरूलघुभावक्रमेण, निवेशयेत् अभिलिखेत् । निविष्टांश्च, अवेक्षेत शोधयेद् अधिकोद्वापार्थं न्यूनप्रतिपूरणार्थं च ।

चाणक्यटीका

विवादपदनिबन्धः

कथमित्याह—तत्रेति । तद्यथा—पुष्यमित्रस्य करणं श्रद्धेयम् । (सन्दंशेन ?) (चे ? शु)क्लपक्षपञ्चम्यां (र्धं ? ध)र्माधिकरणे वणिग्भिक्षदत्ते लग्नकेन मागधेन ब्राह्मणेन कौण्डिन्यगोत्रेण अध्यापकविष्णुभूतिना आवेदकेन संव्यवहार्यवर्षे अष्टमे व(ह ? स) न्ते (फाल्गुनशुषमाषककरणो वैपवणिश्च ? ) सुभद्र आवेदयतीति अभिलिख्य ( आदौ एवं चतुरंशहवति गोभूमिलग्नकोष्ठाद्दत्त्वा ? ) कृतसमर्थाव (त्ता ?-स्था ) भवतः[1] पश्चात् पूर्वपक्षोत्तरपक्षमाक्षिप्रश्ना(ना)नुपूर्व्या यथाक्रमं लेखयेत् । लिखितांश्च एवं भवतोक्तम्, अनेन प्रत्युक्तम्, पृष्टे साक्षिभिरेवं कथितम्, इति दृढीकरणार्थमवेक्षेत । निविष्टश्चेति एकधर्मसम्बन्धादेकवचनम् ।

श्रीमूला

पराजयहेतूनाह—निबद्धमित्यादि । निबद्धं पूर्वलिखितं पादमुत्सृज्यान्यं पादं सङ्क्रामति । तद्यथा—वाक्पारुष्यमिति पूर्वं विलिख्य पश्चाद् दण्डपारुष्यं वक्ति । पूर्वोक्तं पश्चिमेनार्थेन नाभिसन्धत्ते इति । यथा—पूर्वं पशुहिरण्यधान्यानि देयान्युक्त्वा पश्चाद् हिरण्यमात्रं देयमिति वक्ति, न तु सर्वं निर्दिशति । परवाक्यमिति ।

---

१. कृतसमर्थविस्थयोरिति इदं कौटल्यवचनम् "उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये," इति याज्ञवल्क्यस्मृतौ (२. १०) परिवर्तितं भाति । "कृतावस्थो गृहीतप्रतिभूः" इति मेधातिथिः ( मनु ८. ६० ) । समर्थेन प्रतिभुवा कृतप्रत्यर्पणबन्धस्येत्यर्थः ।

### श्रीमूला

प्रत्यर्थ्युक्तम्, अनभिग्राह्यम् अदूषणीयमेव, अभिग्राह्य दूषयित्वा, अवतिष्ठते तूष्णीमास्ते दुष्टत्वं न समर्थयते। प्रतिज्ञाय देशमित्यादि। त्रयो मे साक्षिणः सन्तीत्येवमादिना सङ्ख्याविशेषेण साक्षिणं प्रतिश्रुत्य, निर्दिशेत्युक्ते न निर्दिशति तान् नामादितो निर्दिशेति कथिते नोद्दिशति। हीनदेशम् अदेशं वा निर्दिशति प्रतिज्ञातसङ्ख्यान्यूनसङ्ख्यान् साक्षिण उद्दिशति स्यालमातुलादीन् वा साक्षित्वानर्हान् उद्दिशति निर्दिष्टाद् देशादिति नामत उद्दिष्टात् साक्षिणः अन्यं, देशं साक्षिणम्, उपस्थापयति सन्निधापयति। उपस्थिते देश इति। सन्निहिते साक्षिणि, अर्थवचने स्वदृष्टमर्थं ब्रुवाणे, नैवमिति अपव्ययते नैवंविधोऽर्थ इति वदन्नपसरति। अपपूर्वो व्ययतिरनभ्युपगमार्थक आत्मनेपदी मृग्यः। साक्षिभिरिति। साक्षिवाक्यैः अवधृतं नेच्छति निर्णीतं नानुमन्यते। असम्भाष्ये देश इति। सम्भाषणानर्हे देशे, साक्षिभिः सह, मिथः सम्भाषते रहसि मन्त्रयते। इति एवम् एतेऽन्यपादसङ्क्रमादयः साक्षिमिथस्सम्भाषान्ताः, परोक्तहेतवः उक्तं वचनं समर्थनं तद्विपरीतं परोक्तम् असर्थनं तेन च तन्मूलः पराजय इह लक्ष्यते पराजयस्य हेतव इत्यर्थः। पराशब्दोपसृष्टस्य वचेः पराजिवत् स्वार्थविपरीते वृत्तिरिह द्रष्टव्या।

### चाणक्यटीका

भङ्गहेतूनाह—(नि)बद्धं (पद) मुत्सृज्येति। ऋणं धारयतीति निबध्य प्रतिपादयितुमसमर्थः उपनिहितमेव द्रव्यं नार्पयतीति अन्यत् पदं सङ्क्रामति।

पूर्वोक्तमिति। प्रतिश्रुत्य यन्न ददाति तत् किमृणं न भवतीति पश्चिमेन अर्थेन अतिसन्धत्ते व्यंसयति[1]।

परवाक्यमनभिग्राह्यमिति वणिज्यार्थम् अनेन मत्तो माषकशतकमुद्धृतमिति अभियुक्तोऽस्मि। किमनेन वणिज्यार्थमेतदेव प्रतिपादयेत्। अन्यथा मया जितमित्यन्यथा प्रधानमुपतिष्ठते।

प्रतिज्ञाय देशं देशयितारं साक्षिणं निर्देशेत्युक्ते कृतसङ्ज्ञानत्वान्न तावन्निर्दिशति।

हीनं देशम् अन्वयम्, बन्धुमित्रादिर्ह्यापृच्छयताम्, किं ते ( हे ? न ), इत्यन्यमुपस्थापयति।

उपस्थिते साक्षिणि विशेषणं ब्रवीति न ( मत्वा ? ) मयापि धारयतीत्युक्तं नैव सहस्रं लिखितमिति अर्थवचनमपव्ययते।

साक्षिभिरभिहिते (छिन्दन्तीति ?) विना कारणेन ममैते न प्रमाणमिति।

असम्भाष्ये निर्जने देशे मिथः उपजापार्थं सम्भाषते। इति साक्षिवचनमन्तरेणापि गतानुमानेन भङ्गस्य हेतवः, तस्यैव वचनाद्वा।

---

१. वञ्चयतीत्यर्थः।

**परोक्तदण्डः पञ्चबन्धः। स्वयंवादिदण्डो दशबन्धः। पुरुषभृतिरष्टांशः। पथिभक्त म(र्घ)र्थविशेषतः। तदुभयं नियम्यो दद्यात् ॥**

[ अपराधिस्थाने निर्दिष्टेन निर्देशकेन च पालनीयाः नियमाः ]

**अभियुक्तो न प्रत्यभियुञ्जीत, अन्यत्र कलहसाहससार्थसमवायेभ्यः। न चाभियुक्तेऽभियोगोऽस्ति। अभियोक्ता चेत् प्रत्युक्तस्तदहरेव न प्रतिब्रूयात्, परोक्तस्स्यात्। कृतकार्यविनिश्चयो ह्यभियोक्ता, नाभियुक्तः। तस्याप्रतिब्रुवतस्त्रिरात्रं सप्तरात्रमिति। अत ऊर्ध्वं त्रिपणावरार्ध्यं द्वादशपणपरं दण्डं कुर्यात्। त्रिपक्षादूर्ध्वमप्रतिब्रुवतः परोक्तदण्डं कृत्वा यान्यस्य द्रव्याणि स्युस्ततोऽभियोक्तारं प्रतिपादयेदन्यत्र वृत्त्युपकरणेभ्यः। तदेव निष्पततोऽभियुक्तस्य कुर्यात्। अभियोक्तुर्निष्पातसमकालः परोक्तभावः। प्रेतस्य व्यसनिनो वा साक्षिवचनाः सारम्। अभियोक्ता दण्डं दत्त्वा कर्म कारयेत्। आधिं वा स कामं प्रवेशयेत्। रक्षोघ्नरक्षितं वा कर्मणा प्रतिपादयेत्, अन्यत्र ब्राह्मणादिति ॥**

---

श्रीमूला

पराजितदण्डमाह,परोक्तदण्डः पञ्चबन्ध इति। साक्षिनिमित्तस्वपक्षासिद्धिमूलस्य पराजयस्य दण्डः पराजितदेयस्यार्थस्य पञ्चमांशो भवति।

स्वयंवादिदण्डो दशबन्ध इति। विनैव साक्षिणं स्वयं वादं कृतवतः पराजितस्य दण्डः पराजितदेयस्य दशभागः। पुरुषभृतिरष्टांशः व्यवहारद्रष्टृकर्मकरपुरुषवेतनमष्टभागः, स च सामर्थ्यात् कार्षापणस्यैव ग्राह्यः। पथिभक्तमिति। साक्ष्यानेतॄणां मार्गगतागतभोजनार्थदेयम् अर्घविशेषतः तण्डुलादिमूल्यभेदमनुसृत्य, कल्पनीयमिति शेषः। तदुभयमिति। पुरुषभृतिं पथिभक्तं च नियम्यः पराजितः, दद्यात्।

अभियुक्त इति। केनचित् कृताभियोगः, न प्रत्यभियुञ्जीत अर्थादभियोक्तारम् अनिस्तीर्णे स्वाभियोगे। तत्रापवादः अन्यत्र कलहसाहससार्थसमवायेभ्य इति। कलहसाहसादिषु तु विषये प्रत्यभियुञ्जीतैव। अभियुक्तमपि केनचित् तदन्यो नाभियुञ्जीतेत्याह—न चाभियुक्त इत्यादि।

यदाह योगीश्वरः—

"अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत्।
न चाभियुक्तमन्येन नोक्तं विप्रकृतिं नयेत् ॥" इति।

अभियोक्तेति। सः, प्रत्युक्तः अभियुक्तदत्तोत्तरः, तदहरेव न प्रतिब्रूयाच्चेत्

श्रीमूला

यस्मिन् दिने प्रत्युक्तस्तस्मिन्नेव दिने प्रत्युत्तरमभियुक्तोवत्युपमर्देन स्वपक्षसमर्थनक्षमं न दद्याच्चेत्, परोक्तः स्यात् सद्यः प्रतिवचनाभावमात्रेण स पराजितो मन्तव्य इत्यर्थः। कुत इत्याह—कृतकार्यविनिश्चयो ह्यभियोक्ता नाभियुक्त इति। इदमीदृशमेवं साधनीयमिति प्रागेव सम्प्रधार्य कार्यप्रवृत्त इत्यभियोक्ता सपदि प्रत्युरदानप्रतिबद्धः, अन्यस्तु सम्प्रधारणीयकार्यगतित्वान्न तथेत्यर्थः।

अभियुक्तप्रतिवचनकालावधिमाह—तस्याप्रतिब्रुवतस्त्रिरात्रं सप्तरात्रमिति। तस्य अभियुक्तस्य श्रुतार्थस्य प्रतिवचनदानकालावधिस्त्रिरात्रात् प्रभृति आ सप्तरात्राद् अनुमन्तव्यः। अत ऊर्ध्वमिति। सप्तरात्रात् परतः, त्रिपणावरार्ध्यं त्रिपणोऽवरार्ध्यः अवरो यस्मिंस्तं तथाभूतं, द्वादशपणपरं द्वादशपणोत्तमं, दण्डं कुर्यात्। त्रिपक्षात् पक्षत्रयाद्, ऊर्ध्वम्, अप्रतिब्रुवतः अभियुक्तस्य, परोक्तदण्डं पराजितदण्डं पञ्चबन्धरूपं, कृत्वा, यानि अस्य अभियुक्तस्य, द्रव्याणि धान्यहिरण्यलोहदारुभाण्डादीनि स्युः, ततः तैर्द्रव्यैस्तदुद्धृतद्रव्यैर्वा, अभियोक्तारं प्रतिपादयेत्। यथाप्रार्थितधनभाजं कुर्यादित्यर्थः। किं सर्वैरेवाभियुक्तद्रव्यैः, नेत्याह—अन्यत्र वृत्युपकरणेभ्य इति। कृष्यादिजीविकार्थानि हलखनित्रकुद्दालानि वर्जयित्वा। तदेवेति। अप्रतिब्रुवतोऽभियुक्तस्य यदुक्तं विधानं तदेव, निष्पततोऽभियोक्तृसन्निधानेऽपसरतः अभियुक्तस्य कुर्यात्। अभियोक्तुः, निष्पातसमकालः निष्पातोऽभियुक्तसन्निधानेऽपसरणं तत्समानकालः, परोक्तभावः पराजितत्वं मन्तव्यम्। प्रेतस्य व्यसनिनो वा साक्षिवचनाः सारमिति। प्रमीतस्य विपद्गतस्य वाभियोक्तुरथवाभियुक्तस्य धनं साक्षिभिर्विभाव्यमानाः तत्पुत्रादयो दद्युर्गृह्णीयुर्वा। अभियुक्ते पराजिते निरुपाये किमभियोक्ता कुर्यादित्यत्राह—अभियोक्तेति। सः, दण्डं पराजयदण्डं, दत्त्वा स्वयं राज्ञे, कर्म कारयेत् अर्थादभियुक्तम्। आधिं वा स कामं प्रवेशयेदिति। अथवा, सः अभियोक्ता अभियुक्तवन्ध्वन्यतममाधित्वेन कर्म करणार्थं गृह्णीयाद् यथेच्छम्। रक्षोघ्नेत्यादि। वाशब्दश्चार्थे। रक्षोघ्नरक्षितम् अकुशलपरिहारार्थः शिरसि सितसर्षपप्रक्षेपो रक्षोघ्नरक्षा तद्युक्तं यथा भवति तथा कर्मणा प्रतिपादयेत् योजयेत्, अर्थात् पराजितं तदर्पितमाधिपुरुषं वा। एतेन, कर्म कारयितुरात्मरक्षणे प्रयत्नः कर्तव्यतयोपदिष्टो द्रष्टव्यः। इतरथा हि पराजित आधिपुरुषो वा कर्म कुर्वन्नवेतनकर्मकरण निर्बन्धमात्मनोऽसहमानः कारयितारं कदाचिज्जिघांसेदिति। 'कर्म कारयेद'त्यस्य विधेः सङ्कोचमाह—अन्यत्र ब्राह्मणादितीति। इतिशब्दात् क्षत्रियादेरपि तपस्वी ब्राह्मणप्रकारो ग्राह्यः।

चाणक्यटीका

परोक्तस्य पराजयदण्डः पञ्चबन्धः। परिवा(द ? दित)स्य वस्तुनः पञ्चभाग इत्यर्थः। यदि पूर्वमभियुज्य च एत्य वा स्वयं भङ्गं प्रतिपद्यते तदा पूर्वस्मादर्धः।

साक्षिप्रतिवादिसन्निधापनार्थानां भृतानां या दिवसभृतिः पणाष्टभागः, पथिभक्तं भक्तदानम् (एवादिवस ?) कालापेक्षया अर्घविशेषात्। तदुभयं (राम्यान् ?) नियम्यः पराजित एव दद्यात्।

[ धर्मप्रवर्तनमेव राजधर्मः ]

**चतुर्वर्णाश्रमस्यायं लोकस्याचाररक्षणात् ।**
**नश्यतां सर्वधर्माणां राजा धर्मप्रवर्तकः ॥१२१॥**

---

चाणक्यटीका

अभियुक्तः असमाप्तव्यवहारः अभियोक्तारं न प्रत्यभियुञ्जीत, अन्यत्र कलहादिभ्यः अहमनेनापि पूर्वं पश्चादाक्रुष्ट इति ब्रूयात् । साहसेऽपि अभियुक्तश्चेद् ब्रूयादनेन ( अद्वियेचार्यादिकृतभितोऽवेक्ष्य ? ) सार्थमपि अनेन द्रव्यं कूटमुद्रया अपनीतम् । अभियुक्तश्चेद् ब्रूयादनेनापि सारम् असारेण प्रतिच्छादितम् अनेनापीति, उभयमनुसर्त्तव्यम् । जनपदादि (स)मवायेऽपि अनेन समवायो भिन्नः, अनेनापीति, उभावप्य-( नुम ) न्तव्यौ । न चाभियुक्ते अभियोगोऽस्ति द्वितीयेनाभियोक्त्रेत्यर्थः ।

प्रत्युक्तः (प्रीतरात्तः ? परोक्तः ) स्यात् । भङ्गकारणमाह—कृतकार्यविनिश्चय इति । एवं मया प्रतिपादनीयमिति प्रागेव अवधृतविचारपदनिश्चय इति न प्रतिब्रूयात् । ( इतस्रतु तमभिस्यतीति योजयति प्रतीत्यर्थं न स्मरति आगमय्यानेनाद्यष्टव्यवहारः सुवाच्यम् ? ) ।

असावपि चिरं नोपेक्ष्यः, तद्दर्शयति—तस्य अप्रतिब्रुवतः देशकालापेक्षया त्रिसप्तरात्रमेव उपेक्ष्यम्, अत ऊर्ध्वं त्रिपणं द्वादशपणपरं शनैर्दण्डं वर्धयेत् । न भङ्गमवतारयेत् । परोक्तदण्डं कृत्वेति यथोक्तं दण्डम् । ततोऽभियोक्तारमिति । तस्माद् सकाशाद् द्रव्याणि यथाभियोगम् अभियोक्तारं प्रतिपादयेत् लम्भयेत् । ( अन्यत्र ) वृत्त्युपकरणेभ्य इति । कर्षकादीनां कृषिकरणादिद्र(व्यार्थे ? व्येभ्य ) इत्यर्थः ।

तदेव निष्पतत इति । तदेव वृत्त्युपकरणम् अन्ततः पलायमानस्य अभियुक्तस्य अभियोक्तार लम्भयेत् । निष्पातसमकालमिति पलायनसमकालं परोक्त ( भावः ) । प्रेत (यत ? ) स्य ( तिच ? ) कृत्वा अधियोगकर्म तस्य जातव्यसनस्य वा निष्पतितस्य साक्षिवचनात्[1] सत्यासत्यतामुपलभ्य ( परेभ्योऽभिभवः भङ्गमङ्गं वा ? ) अपराधयेदित्यर्थः । असारं त्वभियुक्तं परोक्तश्च तदीयं दण्डं दत्त्वा अभियोक्ता कर्म कारयेद् आ स्वद्रव्यशुद्धेः ।

आधिं वा सकाममिति । यो ब्रूयाद् ऋणाय मा आध ( मस्य ? त्स्व ) इति तम् अन्यत्र आधिना प्रवेशयेत् । ( रक्षोघ्ना ) दिभिः प्रत्ययैर्वा कृताकृतरक्षं कर्मणा प्रतिपादयेत्, असम्प्रत्ययार्थं पुनर्वचनम् । ब्राह्मणं तु न कर्म कारयेत् । न चतुर्थाश्रमस्यायं यथोक्तभङ्गदण्डः ।

श्रीमूला

सम्यग्व्यवहारदर्शनस्य सर्वलोकयोगक्षेमसाधकतां श्लोकैराह—चतुर्वर्णेत्यादि ।

---

१. 'साक्षिवसनात् । सारं' इति, "साक्षिवचनमसारम्" इति च उभावप्यपपाठौ मुद्रितकोशेषु ।

[ धर्मादिषु चतुर्षु राजाज्ञाया एव प्राबल्यम् ]

**धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।**
**विवादार्थश्चतुष्पादः पश्चिमः पूर्वबाधकः ॥१२२॥**
**अत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु ।**
**चरित्रं सङ्ग्रहे पुंसां राज्ञामाज्ञा तु शासनम् ॥१२३॥**

---

श्रीमूला

अयं राजधर्मः सम्यग्व्यवहारदर्शनरूपः, चतुर्वर्णाश्रमस्य चत्वारो वर्णा ब्राह्मणादयः आश्रमाश्च ब्रह्मचर्यादयो यस्मिंस्तथाभूतस्य, लोकस्य, आचाररक्षणात् स्वस्वसमुदाचारपरिरक्षणाद्धेतोः नश्यतां सर्वधर्माणां स्वतः क्षीयमाणानां सर्वेषां धर्माणां, प्रवर्तकः प्रोज्जीवकः ।

चाणक्यटीका

लोकस्याचाररक्षणहेतुत्वात् । तदभावे नश्यतां सर्वधर्माणां प्रवर्त्त (कं ? कः) धर्मसंस्थ(मि ? इ)त्यर्थः । नार्थभूषणं राजधर्म एव ।

श्रीमूला

व्यवहारस्तावच्चतुष्पादः । तत्पादानां स्वरूपं बलाबलं चाह—धर्मश्चेति । धर्मो व्यवहारः चरित्रं राजशासनमिति चतुर्भिः पादैर्युक्तो, विवादार्थः विवादविषयोऽर्थः । पश्चिमः एषु पादेषु पश्चिमः चरमः पादः पूर्वबाधकः पूर्वान् पादान् बाधते सर्वपादापेक्षया प्रबल इत्यर्थः ।

धर्मादीनां स्वरूपमाह—अत्रेति । अत्र धर्मादिषु मध्ये, सत्ये स्थितः प्रतिष्ठितः धर्मः अर्थयाथात्म्यं धर्मपदार्थ इत्यर्थः । व्यवहारस्तु साक्षिषु स्थितः साक्षिवाक्यविभावनीयो व्यवहारपदार्थ इत्यर्थः । चरित्रं लोकाचारः, सङ्ग्रहे ग्रामसमूहे दशग्राम्यादौ, पुंसां प्रतिष्ठितम् । राज्ञाम् आज्ञा तु इदमित्थमेवेति न्यायोपपत्तियुक्तो यथार्हदण्डप्रणयनादिर्नियोगस्तु, शासनं राजशासनपदार्थः ।

चाणक्यटीका

पश्चिमः पूर्वबाधक इति । धर्मस्य विवादनिर्णयार्थस्य व्यवहारः । तस्यापि चरित्रम् । तस्यापि च मन्त्रम् । तत्रापि राजशासनम् ।

तत्र अर्थिप्रत्यर्थिनोरन्यतरस्य । सत्य इति सत्यप्रतिबद्धास्तुलादयोऽपि शपथाः प्रोच्यन्ते । तैरसाक्षिकं व्यवहारं निर्णयेत्, स धर्म इत्युच्यते । व्यवहारस्तु साक्षिषु प्रमाणेषु स्थितम्, तेषु शपथो नाश्रयणीयः । चरित्रं पुंसां सङ्ग्रहे एकवाक्यतया स्थितम्, इयमत्रास्तु व्यवस्थेति ।

[ व्यवहारविशुद्धेः अदृष्टहेतुत्वम् ]

**राज्ञः स्वधर्मस्स्वर्गाय प्रजा धर्मेण रक्षितुः ।**
**अरक्षितुर्वा क्षेप्तुर्वा मिथ्यादण्डमतोऽन्यथा ॥१२४॥**

[ दण्डप्रशंसा ]

**दण्डो हि केवलो लोकं परं चेमं च रक्षति ।**
**राज्ञा पुत्रे च शत्रौ च यथादोषं समं धृतः ॥१२५॥**

---

चाणक्यटीका

**यथोच्यते**—"देशस्य जातेः सङ्घस्य धर्मो ग्रामस्य वापि यः ।
उचितस्तस्य तेनैव दायधर्मं प्रवर्त्तयेत् ॥"
( अधि० २ अध्या० ७ ) इति ।

( तत्र साक्षिणेति अन्तर्भया दैवानुसारिणी यामाज्ञामर्थापराधा आज्ञा अर्थशास्त्रपतयः ? ) शासनं तेन सर्वं बाध्यते ।

"तस्माद्धर्मान् यथेष्टेषु········पार्थिवः ।
अनिष्टं[1] त्वप्यनिष्टेषु तद्धर्मान्न विचारयेत् ॥" इति ।

यथोक्तम्—अनर्थसंयुक्तं च व्यवहारे न्यू·····हि[2] ।

श्रीमूला

राज्ञ इति । राज्ञः, स्वधर्मः शस्त्राजीवो भूतरक्षणं च, स्वर्गाय भवति । कथम्भूतस्य, प्रजा धर्मेण रक्षितुः । अरक्षितुर्वा अरक्षकस्य वा क्षेप्तुर्वा मिथ्यादण्डम् अयथार्हदण्डं प्रणेतुर्वा, राज्ञः, अतोऽन्यथा उक्तादन्यः प्रकारः अर्थान्नरकः भवति । एवमदृष्टसाधकता सम्यग्व्यवहारदर्शनस्य दर्शिता ।

दण्डं प्रशंसति—दण्डो हीति । दण्डो हि, केवल एकोऽनितरसहायः, लोकं परं च इमं रक्षति उभयलोकसुखभोगसौभाग्यं प्रयोक्तुः प्रयच्छति । कथम्भूतोऽसौ, राज्ञा प्रयोक्त्रा, पुत्रे च शत्रौ च, यथादोषम् अपराधानुरूप्येण, समं धृतः अविशेषेण प्रयुक्तः ।

---

१. तस्माद्धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः ।
अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ॥
इति मुद्रितमनुकोशपाठः । (७.१९)

२. "वश्येन्द्रियः······अनर्थसंयुक्तं च व्यवहारं वर्जयेत्" इति विनयाधिकारान्तर्गते राजर्षिवृत्ते कौटल्यः ।

[ सम्यग्व्यवहारप्रवर्तनस्य ऐहिकफलहेतुत्वम् ]

**अनुशासद्धि धर्मेण व्यवहारेण संस्थया ।**
**न्यायेन च चतुर्थेन चतुरन्तां महीं जयेत् ॥१२६॥**

[ क्वचित् धर्मशास्त्रस्य क्वचिन्न्यायस्य च प्राबल्यम् ]

**संस्थया धर्मशास्त्रेण शास्त्रं वा व्यावहारिकम् ।**
**यस्मिन्नर्थे विरुध्येत धर्मेणार्थं विनिश्चयेत् (विनिर्णयेत्) ॥१२७॥**
**शास्त्रं विप्रतिपद्येत धर्मन्यायेन केनचित् ।**
**न्यायस्तत्र प्रमाणं स्यात्तत्र पाठो हि नश्यति ॥१२८॥**

---

चाणक्यटीका

राज्ञः स्वधर्मो ( यत ? क्तम् ) अधिकं वा दधतः स्वर्गाय, अन्यथा (पत)नीयः स्यादित्यर्थः ।

अस्यैव समर्थनमाह—दण्डो हि केवल इति । तस्मात् ( शुद्धो मनो न मुञ्च ? ) पथा असङ्करेण रक्षति राज्ञा चान्ततः केवल इति । यस्माच्छुद्धः अत्रैव च यथादोषं समं धृतः न द्वेषादधिकं स्नेहाद् वा न्यूनीकृत इत्यर्थः ।

श्रीमूला

सम्यग्व्यवहारदर्शनस्य परमं दृष्टफलमाह—अनुशासद्धीति । अनुशासत् लोकं न्याय्ये पथि स्थापयन्, कथं, धर्मेण धर्मानुसारेण, व्यवहारेण साक्षिवाक्यानुसारेण, सस्थया लोकाचारेण, न्यायेन च चतुर्थेन न्यायोपपन्नराजकीयनिर्णयलक्षणेन चतुर्थ-पादरूपेण, चतुरन्तां चतुस्सागरपर्यंतां, महीं जयेत् । यथोक्तप्रकारानुशासनमहिम्ना सार्वभौमत्वं राजा प्राप्नुयादित्यर्थः ।

धर्मादिषु 'पश्चिमः पूर्वबाधकः' इति यत् पूर्वमुक्तं, तस्यापवाद माह—संस्थ-येति । संस्थया महाजनाचारेण, धर्मशास्त्रेण मानवादिना च सह, शास्त्रं वा व्यावहारिकं शास्त्रं राजशासनं वा व्यावहारिकं साक्षिवच्च वा, यस्मिन्नर्थे विरुध्येत, यच्छब्देन तच्छब्दाक्षेपात् समर्थं, धर्मेण विनिर्णयेत् धर्मशास्त्रमपि विनिश्चिनुयात् । न तु तथाविधे विषये राजवचन-साक्षिवचनयोः प्रामाण्यमित्यर्थः ।

क्वचिद् धर्मशास्त्रमपि न्यायेन बाध्यत इत्याह—शास्त्रमिति । शास्त्रं मानवादिधर्मशास्त्रं, केनचिद् धर्मन्यायेन सर्वप्रकारोपपन्नेन धर्मयुक्तेन लोकाचारेण विप्रतिपद्येत अत्यन्तबाधितार्थविषयतया विरुध्येत, यत्रेति शेषः । तत्र, न्यायः, प्रमाणम् अर्थनिर्णयहेतुः स्यात् । कुतः, तत्र पाठो हि नश्यति यस्मात् तादृशे विषये धर्मशास्त्र-वचनम् अदर्शनं प्राप्नोति, न प्रवर्तत इत्यर्थः ।

[ साक्ष्याद्यतिरिक्तानि पञ्च व्यवहारसाधनानि ]

**दृष्टदोषस्स्वयंवादः स्वपक्षपरपक्षयोः ।**
**अनुयोगार्जवं हेतुः शपथश्चार्थसाधकः ॥१२९॥**

श्रीमूला

"कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः ।"

इति सत्यपि स्मृतिवचने सेतोर्भिन्नस्य समीपे कुद्दालहस्तं कमपि शिशुं तिष्ठन्तं दृष्ट्वा न कोऽप्यध्यवस्यति—अनेन शिशुना सेतुर्भिन्न इति ।

चाणक्यटीका

धर्मेणेति । सत्येन साक्षिवचनेन चरित्रेण न्यायेन धर्मकामनया आ मूलात् शास्त्रानुरोधिना अर्थानुशासनेनेत्यर्थः ।

पश्चिमः पूर्वबाधक इति व्यासङ्गनिवृत्त्यर्थमाह—संस्थायेति । यत्र चरित्रेण वर्णाश्रमेण वा शास्त्रं सक्षिवचनादिप्रतिबद्धं तत्र धर्मेण निर्णयेत् । वर्णाश्रमधर्माविरोधे तु साक्षिभिश्चरित्रेण वेत्यर्थः ।

शास्त्रं विप्रति( पत्ति )शास्त्रं व्यवहा( रे ? रः )धर्मन्यायेन चेद् विरुध्यते तत्र शास्त्रोक्तं वा न्याय्यं ( यतनी ? वाचरणी )यम्, ( वायु ? न्याय )निरुद्धमुभयं हि नश्यति । नाचरणीयमित्यर्थः । तद्यथा—

"अपुत्रा शयनं पत्युः पालयन्ती गुरौ स्थिता ।
भुञ्जीतामरणाद् द्रव्यं दायदास्तूर्ध्वमाप्नुयुः ॥" ( कात्यायनः )

इति धर्मशास्त्रवचनम्[१] । "तीर्थोपरोधो हि धर्म(पर ? वधः । )" ( अधि० ३. अध्या० ४ ) इत्यर्थशास्त्रवचनम् । तत्र न्यायः चरित्ररक्ष( ण ? णा )समर्था चेद् अर्थशास्त्रोक्तमाचरणीयम् । असमर्था न क(यातिम् ? दाचिद्) उपरोद्धव्या, उपरोधे हि अननुज्ञातैः संसृज्यत इति ।

श्रीमूला

उक्तसाक्ष्याद्यतिरेकेण पञ्च व्यवहारसाधनान्याह— दृस्तेत्यादि । दृष्टदोषोऽर्थसाधकः दृष्टदोषः उपलब्धापराधचिह्नः दह्यमाने गृहे ज्वलितालातपाणिस्तदन्तस्तिष्ठन् जनः स्वाग्निदत्वानुमापकः, कायगतनवव्रणक्षरत्क्षतजोक्ष्यमाणभूमेर्वा कस्यचिद् रुधिरार्द्रशस्त्रपाणिः पार्श्वे तिष्ठन् स्वात्मनस्तच्छेतृत्वानुमापकः । स्वयंवादः मयैवेदं कृतमिति वादः, अर्थसाधकः अर्थनिर्णायकः । स्वपक्षपरपक्षयोरनुयोगार्जवं वादि-

---

१. "धर्मशास्त्रवचनमपीदम् "अपुत्रा पतिशयनं पालयन्ती गुरुसमीपे स्त्रीधनम् आ आयुःक्षयाद् भुञ्जीत । आपदर्थं हि स्त्रीधनम् । ऊर्ध्वं दायादं गच्छेत् ।" (३.२) इति कौटल्यग्रन्थपङ्क्त्या शब्दतोऽर्थतश्च साम्यं वहति ।

[ पराजयहेतुभूताः अंशाः ]

**पूर्वोत्तरार्थव्याघाते साक्षिवक्तव्यकारणे ।**
**चारहस्ताच्च निष्पाते प्रदेष्टव्यः पराजयः ॥१३०**

इति धर्मस्थीये विवादपदनिबन्धः, प्रथमोऽध्यायः,
आदितोऽष्टपञ्चाशः

---

श्रीमूला

प्रतिवादिनोरजिह्मप्रश्नोत्तरकरणम्, अर्थसाधकम् । यथा—पथि शकटचक्रारोपणेन पादो मे भग्नः शाकटिकेनेति तं प्रति कस्यचिदभियोगे 'कुत एवं कृतवानसी' ति धर्मस्थेन पृष्टं शाकटिकं भयवशात् क्षणं तूष्णीम्भूतं दृष्ट्वा 'किमयं मूक' इति शङ्कमाने प्राड्विवाके 'बहुवारमेष मां शकटनिकटादपसरेति शृण्वत्सु शकटगजनेषु तदोक्तवान्' इदानीं तु मूक इव लक्ष्यते' इत्यभियोक्तुः प्रश्नोत्तरवचनमृजुभावेन प्रवृत्तम् अभियोज्य निरपराधत्वसमर्थकं सद्व्यवहारनिर्णयाय कल्पत इत्येवञ्जातीयं द्रष्टव्यम् । हेतुरर्थसाधकः उपपन्नकारणप्रदर्शनमर्थनिर्णायिकम्, यथा—पारदारिकत्वविषयेऽभि-योगेऽभियुक्तेनात्मनः क्लीबत्वनिवेदनम् । शपथः पुत्रादिभिः शपनम् उपलक्षणाद् दिव्यक्रिया च, सोऽर्थसाधकः ।

चाणक्यटीका

उक्तोपकारमाह—दृष्टदोष इति । प्रायप्ययं कलहकारः । तस्मादनेनैवायं कलहः कृत इति । स्वयं पदस्य प्रतिपत्तिः । स्वपक्षपरपक्षयोः वादिप्रतिवादिनोः पक्षयोः अनुपूर्वकः प्रश्न आर्जवं वा यस्य । सम्भावि(तं ? तो ) हेतुः । ( पूर्वानुशये तस्मादनेनैवाह ? ) । सर्वाभावे शपथाश्चार्थस्य ( मधो ? मिथो ) निर्णयस्येति ।

श्रीमूला

पराजयनिमित्तान्याह—पूर्वोत्तरेत्यादि । पूर्वोत्तरार्थव्याघाते चोरोऽयमिति शङ्क्यमानस्य 'क्व भुक्तं क्व शयितं त्वये'त्यादि पृष्टस्य प्रत्युक्तौ पूर्वोत्तरविरोधे, साक्षिवक्तव्यकारणे साक्षिणां वक्तव्यस्याप्रामाण्यदोषस्य कारणे बन्धुत्वोपकार्यत्वादि-रूपे निमित्ते, चारहस्ताच्च निष्पाते बन्धनागारिकहस्तात् प्रच्छन्नपलायने च सति, पराजयः, प्रदेष्टव्यः स्थापयितव्यः ।

इति कौटलीयार्थशास्त्रव्याख्यायां धर्मस्थीये तृतीयाधिकरणे
प्रथमोऽध्यायः विवादपदनिबन्धः,
आदितोऽष्टपञ्चाशः ॥

चाणक्यटीका

पूर्वं निबद्धस्य उत्तरेण वचनेन व्याघाते, साक्षिवक्तव्ये स्यालादीनाम् उद्देशे, चारहस्ताच्च निष्पाते आरक्षिभ्योऽपक्रमणे, प्रदेष्टव्यः पराजयः परिच्छेत्तव्यः एवं-कारिणो भङ्ग इति ।

॥ इति प्रथमं प्रकरणम्, प्रथमश्चाध्यायः[1] ॥

---

१. चाणक्यटीकाया इयानेवादर्शः समुपलब्धः । अन्ते च माधवयज्वकृतायाः कौटल्य-व्याख्याया सप्तमाधिकरणीयषष्ठाध्यायान्तिमं वाक्यं सप्तमाध्यादिमं च वाक्यशकलं लिखित-मस्ति । यथा—

गूढबधे त्वर्णलक्षणादिदानम् इत्येतास्तूष्णीं युद्धस्य लक्षणम् अताधारणरूपम् इत्यर्थः । इति षाड्गुण्ये नयचद्रिकायां संहितप्रयाणिकं परिपणितादिसन्धयश्च: षष्ठोऽध्यायः ॥

तदेवं परिपणितादिभेदसन्धिम्·······सम्प्रति तेषामेव द्वैधीभाविकानां समहीनाश-लाभ·······॥

# एकोनषष्टितमं प्रकरणम्

## द्वितीयोऽध्यायः ।

## विवाहसंयुक्तम् ।

### तत्र विवाहधर्मः, स्त्रीधनकल्पः आधिवेदनिकश्च

[ विवाहधर्मः—तत्र विवाहनिरूपणप्राथम्ये हेतुः ]

**विवाहपूर्वो व्यवहारः ।**

[ अष्टौ विवाहभेदाः, तेषु धर्म्याः अधर्म्याश्च ]

**कन्यादानं कन्यामलङ्कृत्य ब्राह्मो विवाहः । सहधर्मचर्या**

---

श्रीमूला

विवाहसंयुक्तमिति सूत्रम् । विवाहा अष्टविधाः ब्राह्मप्राजापत्यार्षदैवगान्धर्वाऽऽसुरराक्षसपैशाचाख्याः तत्संयुक्तं तत्सम्बद्धं स्त्रीधनकल्पादि, तदिहाभिधीयत इति सूत्रार्थः । व्यावहारिकाणामर्थानामनुष्ठानप्रकार उक्तः, व्यवहाराणां प्रतिपादनमधुना प्रस्तूयते । तेषु च ऋणादानादिषु कतमः पूर्वनिरूपणार्ह इति चिन्तायाम्, ऋणादानपूर्वो व्यवहार इति मनुः । वास्तुकपूर्वो व्यवहार इति भार्गवः । निक्षेपपूर्वो व्यवहार इति बृहस्पतिः । कौटल्यस्तु—गृहस्थस्यैव व्यवहारेष्वधिकाराद् गार्हस्थ्यं प्रति च विवाहस्यैव हेतुत्वाद् विवाहसंयुक्तव्यवहार एव व्यवहारेषु मुख्य इति विवाहसंयुक्तप्रकरणमेवादौ निरूपणीयं मन्यते । यदाहुः—

"ऋणमादौ मनुर्ब्रूते वास्तुकं भार्गवो मुनिः ।
बृहस्पतिस्तु निक्षेपं विवाहं कुटलान्वयः ॥" इति ।

इदं प्रकरणं त्रिभिरध्यायैर्वितन्यते । तत्रादिमे विवाहधर्मः, स्त्रीधनकल्पः, आधिवेदनिकमिति त्रिकं प्रतिपाद्यते, द्वितीये शुश्रूषाभर्मपारुष्यद्वेषातिचारोपकारव्यवहारप्रतिषेधाः, तृतीये निष्पतनं पथ्यनुसरणं ह्रस्वप्रवासो दीर्घप्रवासश्चेति ।

विवाहसंयुक्तस्य प्रथमं निरूपणे हेतुं निर्दिशति—विवाहपूर्वो व्यवहार इति । व्यवहार इति जातावेकवचनं, सर्वे व्यवहाराः विवाहमूलाः । विवाहपूर्वत्वं चोपपादितम् ।

विवाहभेदांस्तल्लक्षणप्रदर्शनपूर्वमाह—कन्यादानमिति । कन्यामलङ्कृत्य यत् तस्याः प्रदानं, स विवाहो ब्राह्म इत्युच्यते ।

**प्राजापत्यः । गोमिथुनादानात् आर्षः । अन्तर्वेद्यामृत्विजे दानात् दैवः । मिथस्समवायात् गान्धर्वः । शुल्कादानात् आसुरः । प्रसह्यादानात् राक्षसः । सुप्तादानात् पैशाचः । पितृप्रमाणाश्चत्वारः पूर्वे धर्म्याः, मातापितृप्रमाणाश्शेषाः । तौ हि शुल्कहरौ दुहितुः । अन्यतराभावेऽन्यतरो वा ।**

[ विवाहसमयलब्धेषु धनेषु कन्ययैव ग्राह्या अंशाः,
तद्विभागतदुपयोगव्यवस्थादयश्च ]

**द्वितीयं शुल्कं स्त्री हरेत । सर्वेषां प्रीत्यारोपणमप्रतिषिद्धम् । वृत्तिरावन्ध्यं वा स्त्रीधनम् । परद्विसाहस्रा स्थाप्या वृत्तिः आबन्ध्याऽनियमः ।**

---

श्रीमूला

सहधर्मं चर्येति । 'सहधर्मंश्चर्यतामि'त्येतावदुक्त्वा समन्त्रकं यत् कन्या दीयते, स प्राजापत्याख्यः ।

गोमिथुनादानादिति । वरसकाशाद् गोद्वयं गृहीत्वा यत् कन्या दीयते, स आर्षः ।

अन्तर्वेद्यामिति । यज्ञवेदिमध्ये स्थिताय ऋत्विजे यद् दीयते, स दैवः ।

मिथस्समवायादिति । कन्यावरयोर्निजेच्छयान्योन्यसंयोगाद् गान्धर्वो विवाहो भवति ।

शुल्कादानादिति । आत्मार्थे कन्यार्थे च वराच्छुल्कं गृहीत्वा यत् कन्यादानं, स आसुराख्यः ।

प्रसह्यादानादिति । बलात्कारेण कन्याहरणाद् राक्षसविवाहो भवति ।

सुप्तादानादिति । सुप्ताया हरणात् पैशाचाख्यो विवाहः ।

पितृप्रमाणा इति । एतेष्वष्टसु विवाहेषु पूर्वे ब्राह्मादयश्चत्वारः, पितृप्रमाणाः धर्म्याः पितृप्रमाणत्वाद् धर्मयुक्ताः । अन्ये त्वधर्म्या इत्यर्थसिद्धम् । मातापितृप्रमाणा इति । माता पिता चेत्युभौ प्रमाणभूतौ येषां ते तथाभूताः, शेषाः गान्धर्वादयः । कस्मान्मातापितृप्रमाणकत्वमित्याह—तौ हीत्यादि । मातापितरौ हि, शुल्कहरौ दुहितुः कन्याशुल्कं गृह्णीतः । अन्यतराभावे अन्यतरो वा माता पिता वा शुल्कं हरति । एवं विवाहधर्म उक्तः ।

स्त्रीधनं प्रस्तौति—द्वितीयमिति । द्वितीयं शुल्कं वरसकाशग्राह्यपरिभाषितशुल्कव्यतिरिक्तं शुल्कं प्रीतिवशाद् दत्तं, स्त्री कन्यैव हरेत, न तु पितरौ । सर्वेषां प्रीत्यारोपणमप्रतिषिद्धमिति । वरेण न केवलं वरबन्ध्वादिभिः सर्वैरपि कन्याया देहे भूषणादिनिवेशनम् अप्रतिषिद्धम् अनिवारितम् । अर्थात् तदपि कन्यैव हरेत ।

**तदात्मपुत्रस्नुषाभर्मणि प्रवासाप्रतिविधाने च भार्याया भोक्तुमदोषः, प्रतिरोधकव्याधिदुर्भिक्षभयप्रतीकारे धर्मकार्ये च पत्युः। सम्भूय वा दम्पत्योर्मिथुनं प्रजातयोस्त्रिवर्षोपभुक्तं च धर्मिष्ठेषु विवाहेषु नानुयुञ्जीत। गान्धर्वासुरोपभुक्तं सवृद्धिकमुभयं दाप्येत। राक्षसपैशाचोपभुक्तं स्तेयं दद्यात्। इति विवाहधर्मः।**

[ स्त्रीधनकल्पः—मृतपतिकस्त्रीधनस्य स्त्रीवृत्त्या-
द्यानुगुण्येन विनियोगभेदाः ]

**मृते भर्तरि धर्मकामा तदानीमेवास्थाप्याभरणं शुल्कशेषं च लभेत। लब्ध्वा वा विन्दमाना सवृद्धिकमुभयं दाप्येत। कुटुम्बकामा तु श्वशुरपतिदत्तं**

---

श्रीमूला

तदिदं कन्याहरणीयं स्त्रीधनशब्दितं द्विरूपमित्याह—वृत्तिरावन्ध्यं वा स्त्रीधनमिति। वृत्तिर्भूमिहिरण्यादिर्जीविकार्था, आवन्ध्यं भूषणादि। परद्विसाहस्रा कार्षापणसहस्रद्वयपरमावधिः, वृत्तिः, स्थाप्या कल्पयितुमर्हा। आवन्ध्यानियमः आभरणस्य सङ्ख्यानियमाभावः।

तदिति। तत् स्त्रीधनम्, आत्मपुत्रस्नुषाभर्मणि स्वस्य पुत्राणां तद्भार्यायाश्च पोषणे, प्रवासाप्रतिविधाने च भर्तृविदेशगमननिमित्ते जीविकोपायविरहसङ्कटे च, भार्याया, भोक्तुम्, अदोषः दोषाभावः। प्रतिरोधकेत्यादि। 'साम्प्रतमेवादत्त्वा मा याहीʼ त्येवं रोधेन हरणं प्रतिरोधकं तत्प्रतीकारे व्याधिप्रतिकारे दुर्भिक्षप्रतीकारे भयप्रतीकारे च, धर्मकार्ये च विषये, पत्युः स्त्रीधनव्ययकारिणः, अदोष इत्यनुवर्तते। इतोऽपि स्त्रीधनस्य व्ययाद् भर्तुरदोष इत्याह—सम्भूय वेति। दम्पत्योः, मिथुनं प्रजातयोः अपत्यद्वयं यद्वा पुमपत्यमेकं स्त्र्यपत्यं चैकं जनितवतोः, सम्भूय मिलित्वा, त्रिवर्षोपभुक्तं च स्त्रीधनं, धर्मिष्ठेषु विवाहेषु ब्राह्मादिषु चतुर्षु, नानुयुञ्जीत नार्थयेत प्रत्यर्पयेति। गान्धर्वेत्यादि गान्धर्वासुरोपभुक्तम्, उभयं धर्मकार्यादिविनियुक्तं सम्भूय त्रिवर्षोपभुक्तञ्च समनन्तरोक्तं द्विरूपं स्त्रीधनं, सवृद्धिकं, दाप्येत निर्यात्येत। राक्षसेत्यादि। राक्षसपैशाचोपभुक्तं स्त्रीधनं, स्तेयं दद्यात् स्तेयं चौर्यं चोरितद्रव्यं तदिव दद्यात् चोरदण्डयुक्तं दद्यादित्यर्थः।

इति विवाहधर्म इति। व्याख्यात इति शेषः।

स्त्रीधनकल्पमाह—मृत इति। मृते भर्तरि, धर्मकामा भर्तुरात्मनश्च परलोकहितं धर्मं कामयमाना, तदानीमेव सद्य एव, आस्थाप्याभरणं देहधृतं भूषणमवतार्यं शुल्कशेषं च सह भुक्तावशिष्टं शुल्कं चकारादाभरणं च, लभेत। लब्ध्वा वेति। आभरणं शुल्कशेषं चाधिगम्य, विन्दमाना भर्त्रन्तरं परिगृह्णती, सवृद्धिकम्, उभयं दाप्येत कुटुम्बकामा तु सन्तानकामनया देवरं भजमाना तु, श्वशुरपतिदत्तं स्त्रीधनं,

**निवेशकाले लभेत । निवेशकालं हि दीर्घप्रवासे व्याख्यास्यामः ।**

**श्वशुरप्रातिलोम्येन वा निविष्टा श्वशुरपतिदत्तं जीयेत । ज्ञातिहस्ताद-भिमृष्टायाः ज्ञातयो यथागृहीतं दद्युः । न्यायोपगतायाः प्रतिपत्ता स्त्रीधनं गोपायेत् । पतिदायं विन्दमाना जीयेत । धर्मकामा भुञ्जीत । पुत्रवती विन्दमाना स्त्रीधनं जीयेत । तत्तु स्त्रीधनं पुत्रा हरेयुः । पुत्रभरणार्थं वा विन्दमाना पुत्रार्थं स्फातीकुर्यात् । बहुपुरुषप्रजानां पुत्राणां यथापितृदत्तं स्त्रीधनमवस्थापयेत् । कामकारणीयमपि स्त्रीधनं विन्दमाना पुत्रसंस्थं कुर्यात् । अपुत्रा पतिशयनं पालयन्ती गुरुसमीपे स्त्रीधनम् आ आयुःक्षया-द्भुञ्जीत ।**

---

श्रीमूला

निवेशकाले लभेत । कोऽसौ निवेशकालः तत्राह—निवेशकालं हीत्यादि । दीर्घप्रवासे उत्तरतराध्यायव्युत्पादिते ।

श्वशुरप्रातिलोम्येन वेति । श्वशुरशासनातिक्रमेण, निविष्टा भर्त्रन्तरं गता, श्वशुरपतिदत्तं जीयेत श्वशुरेण पत्या च दत्तं दाप्येत । ज्ञातिहस्तादभिमृष्टाया इति । विद्यमान एव पत्यौ पत्यन्तरपरिगृहीतायाः, ज्ञातयः नवपतयः यथागृहीतं गृहीतान्यूनं श्वशुरपतिदत्तं, दद्युः अर्थाच्छ्वशुराय पत्ये च ।

न्यायोपगताया इति । न्यायेन देवरादिमुपगतायाः, प्रतिपत्ता परिग्रहीता, स्त्रीधनं गोपायेत् रक्षेत् न तु स्वयमुपयूञ्जीत ।

पतिदायमिति । पत्या दत्तं वस्त्राभरणादिकं, विन्दमाना भर्त्रन्तरपरिग्राहिणो, जीयेत दाप्येत, श्वशुरकुलाय । धर्मकामा भुञ्जीतेति । अविन्दमाना संयता चेत् पतिदायं भुञ्जीत ।

पुत्रवतीति । पुत्रयुक्ता, भर्त्रन्तरगामिनी, जीयेत दाप्येत स्त्रीधनं न स्वयं भुञ्जीतेत्यर्थः । के तद्भोक्तारः, तत्राह—तत्तु स्त्रीधनमित्यादि ।

पुत्रभरणार्थं वेति । पुत्रपोषणार्थं, विन्दमाना पुत्रार्थं पुत्रनिमित्ते, स्फीतीकुर्यात् वर्धयेत् स्त्रीधनम् ।

बहुपुरुषप्रजानामित्यादि । यासां बह्वो भर्तारः पुत्राश्च तासां, स्त्रीधनं, यथापितृदत्तं पुत्राणामवस्थापयेत् तत्तद्भर्तृदत्तं तत्तद्भर्तृजनित पुत्रार्थे दद्यात् ।

कामकारणीयमपीति । यथेच्छविनियोज्यमपि, स्त्रीधनं विन्दमाना भर्त्रन्तरगामिनी, पुत्रसंस्थं कुर्यात् पुत्राय दद्यात् । अपुत्रेति । पुत्रहीना, पतिशयनं पालयन्ती पतिव्रता गुरुसमीपे स्त्रीधनम्, आ आयुःक्षयाद् यावज्जीवं, भुञ्जीत मूलमविनाशयन्त्यूती वृघादिकं सञ्जातमात्रमुपयुञ्जीतेत्यर्थः ।

**आपदर्थं हि स्त्रीधनम् । ऊर्ध्वं दायादं गच्छेत् ।**

[ मृतस्त्रीधनभागिनः ]

**जीवति भर्तरि मृतायाः पुत्राः दुहितरश्च स्त्रीधनं विभजेरन्, अपुत्रायाः दुहितरः, तदभावे भर्ता । शुल्कमन्वाधेयमन्यद्वा बन्धुभिर्दत्तं बान्धवा हरेयुः । इति स्त्रीधनकल्पः ॥**

[ आधिवेदनिकम्—पुत्रार्थिनो बहुभार्यापरि-
ग्रहानुमतिः, कालादिनियमश्च ]

**वर्षाण्यष्टौ अप्रजायमानामपुत्रां वन्ध्यां चाकाङ्क्षेत, दश बिन्दुं, द्वादश कन्याप्रसविनीम् । ततः पुत्रार्थी द्वितीयां विन्देत । तस्यातिक्रमे शुल्कं स्त्रीधनमर्धं चाधिवेदनिकं दद्यात् । चतुर्विंशतिपणपरं च दण्डम् ।**

---

श्रीमूला

कुतः, आपदर्थं हि स्त्रीधनं वृत्तिकृच्छ्रपरिहारमात्रविनियोज्यं हि स्त्रीधनं नाम न पुनः कामचारव्ययार्थम् । ऊर्ध्वं दायादं गच्छेदिति । तया तथा रक्षितं स्त्रीधनं तस्यामुपरतायां भर्तृसपिण्डं गच्छेत् ।

ध्रियमाणे पत्यौ प्रमीतायाः स्त्रीधनं पुत्रा दुहितरश्चाविशेषाद् विभजेयुः, पुत्राभावे दुहितरः तदुभयाभावे तु पतिर्गृण्हीयादित्याह—जीवतीत्यादि ।

आसुराद्यधर्म्यविवाहविषये तु स्त्रीधनं न भर्तृगामि, किन्तु स्त्रीबन्धुगामीत्याह—शुल्कमित्यादि । शुल्कं प्रतीतम्, अन्वाधेयं पितृगृहानीतम्, अन्यद् वा, बन्धुभिर्भ्रात्रादिभिः दत्तं स्त्रीधनं, बान्धवाः पित्रादयः, हरेयुः ।

इति स्त्रीधनकल्प इति । अनेन प्रकारेण स्त्रीधनविनियोगविधिर्व्याख्यातः ।

अथाधिवेदनिकमाह—वर्षाणीति । अप्रजायमानां सकृत् प्रसूय पुनर्गर्भमगृह्णतीम्, अपुत्रां व्याध्यादिवशात् पुत्ररहितां, वन्ध्यां च गर्भधारणायोग्यां च, अष्टौ वर्षाणि, आकाङ्क्षेत प्रतिपालयेत् पुत्रं प्रसूते नवेति परीक्षार्थम् । दश बिन्दुं दश वर्षाणि नश्यत्प्रसूतिं, प्रतिपालयेत् । द्वादश कन्याप्रसविनीं स्त्र्यपत्यप्रसवशीलां द्वादश वर्षाणि आकाङ्क्षेत । काङ्क्षतेरात्मनेपदमार्षम् ।

तत इति । यथोक्तकालप्रतीक्षानन्तरं पुत्रप्रसवाभावे, पुत्रार्थी पुत्रकामश्चेद्, द्वितीयां विन्देत अन्यामुद्वहेत् । तस्येति । यथोक्तकालनियमस्य, अतिक्रमे अननुवर्तने, शुल्कं, स्त्रीधनम्, अर्धं चाधिवेदनिकं परिणीताया उपरिन्यस्याः परिणयनमधिवेदनं तन्निमित्तं यद् द्रव्यं गतं तस्यार्धं च, दद्याद् अधिविन्नायै । चतुर्विंशतिपणपरं च दण्डमिति । चतुर्विंशतिपणोत्तमं नियमातिक्रमदण्डं च, राज्ञे दद्यात् ।

**शुल्कं स्त्रीधनमशुल्कस्त्रीधनायास्तत्प्रमाणमाधिवेदनिकम् अनुरूपां च वृत्तिं दत्त्वा बह्वीरपि विन्देत । पुत्रार्था हि स्त्रियः**

[ परिगृहीतपत्नीनाम् ऋतुयौगपद्ये तद्गमनविधिः ]

**तीर्थसमवाये चासां यथा विवाहं पूर्वोढां जीवत्पुत्रां वा पूर्वं गच्छेत् । तीर्थगूहनाऽगमने षण्णवतिर्दण्डः ।**

[ स्त्रीष्वगम्यानां निर्देशः, तादृशीनामेव
पुरुषाणां क्वचिद्गम्यता च ]

**पुत्रवतीं धर्मकामां वन्ध्यां बिन्दुं नीरजस्कां वा नाकामामुपेयात् । न चाकामःपुरुषः । कुष्ठिनीमुन्मत्तां वा न गच्छेत् । स्त्री तु पुत्रार्थमेवंभूतं वोपगच्छेत् ।**

[ भर्तुरपि क्वचित्त्याज्यता ]

**नीचत्वं परदेशं वा प्रस्थितो राजकिल्बिषी ।**
**प्राणाभिहन्ता पतितस्त्याज्यः क्लीबोऽपि वा पतिः ॥१६१॥**

इति धर्मस्थीये विवाहसंयुक्ते विवाहधर्मः स्त्रीधनकल्प आधिवेदनिकं
च द्वितीयोऽध्यायः । आदित एकोनषष्टितमः ।

---

श्रीमूला

नवं शुल्कं स्त्रीधनम् आधिवेदनिकतुल्यमानं द्रव्यं तत्तद्विवाहोचितशरीरयात्रोपायं च प्रतिपाद्य बह्वीनामप्यधिवेदनं न दुष्यतीत्याह—शुल्कमित्यादि । तत्र हेतुवचनं—पुत्रार्था हि स्त्रिय इति । अनेन पूर्वपरिणीतानाम् अपुत्रवतीनां निष्फलजन्मत्वादुपेक्षणं न्याय्यमिति दर्शयति ।

बह्वीनाम् ऋतुयौगपद्येऽभिगमनविधिमाह—तीर्थसमवाये चासामिति । तीर्थं स्त्रीपुष्पं तत्समवाये बह्वीनां पत्नीनां युगपदृतुप्राप्तौ, यथाविवाहं ब्राह्मादिविवाहक्रममनपहाय, पूर्वं गच्छेत् । विवाहतुल्यतायामाह—पूर्वोढां पूर्वकालपरिणीतां, जीवत्पुत्रां वा अपूर्वोढामपि, पूर्वं गच्छेत् ।

तीर्थेत्यादि । तीर्थगूहनागमने तीर्थस्याप्रकाशने भर्त्रनभिगमने च, षण्णवतिः षण्णवतिपणः, दण्डः । पुत्रवतीमिति । पुत्रवतीं, धर्मकामां वन्ध्यां पुत्रार्थव्रतोपवासिनीं वन्ध्यां, बिन्दुं नश्यत्प्रसूतिं, नीरजस्कां वा निवृत्तार्तवां वा, अकामाम् अनिच्छन्तीं, नोपेयात् न गच्छेत्, अर्थात् पुरुषः सकामोऽपि । न चाकामः पुरुषः, उपेयात् अर्थात् सकामामपि । कुष्ठिनीम् उन्मत्तां वा, न गच्छेत्, पुरुषः । स्त्री तु, पुत्रार्थं पुत्रोत्पत्त्यर्थम्, एवंभूतं वा कुष्ठिनमुन्मत्तं वा उपगच्छेत् ।

अध्यायप्रान्ते श्लोकमाह—नीचत्वमित्यादि । नीचत्वं परदेशं वा प्रस्थितः

श्रीमूला

नीचत्वं गतो वा विदेशं गतो वा, राजकिल्बिषी राजदुष्पुरोहितो राजदुष्प्रतिग्रही राजयक्ष्मवांश्च इति त्रिरूपः, प्राणाभिहन्ता नरमारकः, पतितः महापातकदूषितः, क्लीबोऽपि वा षण्डो वा, पतिः, त्याज्यः ॥

इति कौटलीयार्थशास्त्रव्याख्यायां धर्मस्थीये तृतीयाधिकरणे
द्वितीयोऽध्यायः । विवाहसंयुक्ते विवाहधर्मः, स्त्रीधनकल्पः,
आधिवेदनिकम्, आदित एकोनषष्टितमः ॥

## तृतीयोऽध्यायः

### शुश्रूषाभर्मपारुष्यद्वेषातिचारोपकारव्यवहारप्रतिषेधाश्च ।

[ शुश्रूषार्हवयोव्यवस्था ]

**द्वादशवर्षा स्त्री प्राप्तव्यवहारा भवति । षोडशवर्षः पुमान् । अत ऊर्ध्वम् अशुश्रूषायां द्वादशपणः स्त्रिया दण्डः पुंसो द्विगुणः ॥**

[ गृहभरणनियुक्ताभ्यः स्त्रीभ्यः भरणो-
पकरणार्पणव्यवस्थाः ]

**भर्मण्यायाम् अनिर्दिष्टकालायां वाऽधिकं ग्रासाच्छादनं यथापुरुषपरिवापं सविशेषं दद्यात् । निर्दिष्टकालायां तदेव सङ्ख्याय बन्धं च दद्यात्; शुल्कस्त्रीधनाधिवेदनिकानामनादाने च ।**

---

श्रीमूला

पूर्वाध्याये विवाहधर्मादिकमुक्तम् । इह तु शुश्रूषादय उच्यन्ते । तत्र शुश्रूषा परिचरणं, भर्म कुटुम्बभरणनियोगः, पारुष्यं वाक्पारुष्यं दण्डपारुष्यं च, द्वेषः अप्रीतिः, अतिचारः प्रतिषिद्धाचरणम्, उपकारव्यवहारप्रतिषेधः जनविशेषविषयोपकाराचरणनिषेधः ।

द्वादशवर्षेति अतिक्रान्तद्वादशवयस्का स्त्री, प्राप्तव्यवहारा व्यवरारयोग्या परिचरणकर्मनियोजनार्हा भवति । षोडशवर्षः पुमान्, प्राप्तव्यवहारः भवति । अत ऊर्ध्वम्, अशुश्रूषायाम् अपरिचर्यायां द्वादशपणः स्त्रियाः दण्डः, पुंसो द्विगुणः चतुर्विंशतिपणो दण्डः ।

भर्मण्यायामिति । गृहभरणनियुक्तायाम्, अनिर्दिष्टकालायाम् अद्यैतावद् गृहीतमेतावद् विनियुक्तमित्यकृतकालनिर्देशायां, ग्रासाच्छादनं वार्षिकं ग्रासमाच्छादनं च पर्याप्तं किञ्चिदधिकं वा, यथापुरुषपरिवापं गृहभरणीयजनोपकरणानतिक्रमणे, सविशेषं सातिशयं दद्याद् असङ्ख्यायैव । निर्दिष्टकालायां तदेव ग्रासाच्छादनमेव न तु ततोऽधिकं, संख्याय एकस्याहोरात्रस्यैतावदितीयत्तामाकलय्य दद्यादित्यनुषज्यते । बन्धं च दद्यात् विवदमानायां तस्यां साध्यद्रव्यस्य पञ्चभागं दशभागं च दद्यात् । शुल्कादीनामनादाने च शुल्कस्त्रीधने प्रतीते आधिवेदनिकम् अधिवेदनिमित्तं पत्या दत्तम्''एतेषामग्रहणेऽपि, बन्धं दद्यात् ग्रहणे तु का कथेत्यर्थः ।

**श्वशुरकुलप्रविष्टायां विभक्तायां वा नाभियोज्यः पतिः—इति भर्म ।**

[ वाग्दण्डपारुष्ये, द्वेषे दण्डाश्च ]

**"नग्ने ! विनग्ने ! न्यङ्गे ! अपितृके ! अमातृके !" इत्यनिर्देशेन विनयग्राहणम् । वेणुदलरज्जुहस्तानामन्यतमेन वा पृष्ठे त्रिराघातः तस्यातिक्रमे वाग्दण्डपारुष्यदण्डाभ्यामर्धदण्डाः । तदेव स्त्रिया भर्तरि प्रसिद्धमदोषाया ईर्ष्याया बाह्यविहारेषु द्वारेषु । अत्ययो यथानिर्दिष्टः—इति पारुष्यम् ॥**

**भर्तारं द्विषती स्त्री सप्तार्तवान्यमण्डयमाना तदानीमेव स्थाप्याभरणं निधाय भर्तारम् अन्यया सह शयानमनुशयीत । भिक्षुक्यन्वाधिज्ञातिकुलानामन्यतमे वा भर्ता द्विषन् स्त्रियम् एकाम् अनुशयीत ।**

---

श्रीमूला

श्वशुरेत्यादि । श्वशुरकुलप्रविष्टायां विभक्तायां वा श्वशुरगृहप्राप्तायां वा भर्तृकृतविभागायां वा स्त्रियां, नाभियोज्यः पतिः भर्ता तया अभियोक्तुं न योग्यो ग्रासाच्छादनार्थे । इति भर्मेति । व्याख्यातमिति शेषः ।

पारुष्यमाह—नग्ने इत्यादि । नग्ने । असंस्कृतबुद्धित्वात् कोट्टवीतुल्ये, विनग्ने । विशेषेण नग्ने । नष्टे । विनष्टे । इति पाठे स्फुट एवार्थः । न्यङ्गे । निन्द्ये अङ्गहीने वा अपितृके । अमातृके । कुत्सितपितृके । कुत्सितमातृके, इत्यनिर्देशेन एवम्प्रकारेण साक्रोशसम्बोधनेन, विनयग्राहणं सदाचारस्योपदेशना कर्तव्या । अनिर्देशेन विनयासिद्धावाह—वेणुदलेत्यादि । वेणुदलादीनां त्रयाणाम् अन्यतमेन वा पृष्ठे, त्रिराघातः त्रीणि ताडनानि, कर्तव्यानि । तस्यातिक्रमे उक्तस्य द्विविधस्य पारुष्यस्य अतिक्रमे विहितविजातीयारुन्तुदाक्रोशकरणे अवेण्वादिना अपृष्ठे सकृदपि वाघाते वेण्वाद्यन्यतमेन पृष्ठ एव चतुराघाते चेत्यर्थः, वाग्दण्डपारुष्यदण्डाभ्यामर्धदण्डाः वाक्पारुष्यदण्डाद् दण्डपारुष्यदण्डाच्च वक्ष्यमाणादर्धदण्डाः, भवन्ति ।

गणिकाद्यासक्तिनिमित्तकेर्ष्यावशाद् भर्तरि विषये स्त्रियाः पतिव्रतायाः पारुष्यस्य प्रसक्तस्य मात्रामाह—तदेवेत्यादि । तदेव भर्तुर्यादृशमुक्तं तादृशमेव । द्वारेषु पारुष्यप्रयोगस्थानेषु । अत्ययो यथानिर्दिष्ट इति, उक्ता विध्य तिक्रमनिमित्तः स्त्रिय : दण्डः वाक्पारुष्यदण्डपारुष्योक्त एव न त्वर्धदण्डः पुंस इव । इति पारुष्यं, व्याख्यातम् ।

द्वेषमाह—भर्तारमिति भर्तारं द्विषती आरोचयमाना, स्त्री, सप्तार्तवनि सप्त ऋतुकालान् अमण्डयमाना शयनार्थमनुपतिष्ठमाना प्रतीक्ष्येतेति शेषः । ततो मण्डयमाना किं कुर्यादित्याह—तदानीमेव सद्य एव, स्थाप्या भरणं निधाय स्थाप्यशब्दो न्यासवाची स्वीयं भूषणम् अपुनर्द्वेषप्रत्ययार्थे भर्तुर्न्यासं कृत्वा, अन्यया सह शयानं भर्तारम् अनुशयीत ।

**दृष्टे लिङ्गे, मैथुनापहारे, सवर्णापसर्पोपगमे वा मिथ्यावादी द्वादशपणं दद्यात् । अमोक्ष्या भर्तुरकामस्य द्विषती भार्या, भार्यायाश्च भर्ता । परस्परं द्वेषान्मोक्षः । स्त्रीविप्रकाराद्वा पुरुषश्चेन्मोक्षमिच्छेत्, यथागृहीतमस्यै दद्यात् । पुरुषविप्रकाराद्वा स्त्री चेन्मोक्षमिच्छेत्, नास्यै यथागृहीतं दद्यात् । अमोक्षो धर्मविवाहानामिति—इति द्वेषः ॥**

[ अतिचारे ( प्रतिषिद्धाचरणे ) दण्डाः ]

**प्रतिषिद्धा स्त्री दर्पमद्यक्रीडायां त्रिपणं दण्डं दद्यात् । दिवा स्त्रीप्रेक्षा-विहारगमने षट्पणो दण्डः, पुरुषप्रेक्षाविहारगमने द्वादशपणः, रात्रौ**

---

श्रीमूला

सपश्चात्तापमुपतिष्ठेत । स्त्रियाः स एव भर्तृद्वेषदण्डो बोद्धव्यः । स्त्रियं द्विषतो भर्तुर्विधिमाह—भिक्षुकीत्यादि । भर्ता, द्विषन् स्त्रियं, भिक्षुक्यादिकुलानां भिक्षुकी शान्तशुद्धव्यवहारिणी श्रमणी अन्वाधिः स्त्रीधनाधिष्ठाता ज्ञातिर्बन्धुः एषां कुलानि गृहाणि तेषाम्, अन्यतमे न त्वन्यकुले वसन्तीमिति शेषः, एकां पुरुषान्तरमस्पृशन्तीं ताम्, अनुशयीत अनुतपन् स्वयमुपतिष्ठेत । एकामित्युक्त्या पुरुषान्तरसहशयने । स्त्रियास्त्यागः सूचितः । पुरुषस्य तु अन्यसहशयनेऽप्यदोषः प्रागुक्तः ।

दृष्टेत्यादि । दृष्टलिङ्गे साक्षादुपलब्धेऽन्यस्त्रीमैथुनचिह्ने सति, मैथुनापहारे मैथुनस्यापलापे, द्वादशपणं दण्डं, दद्याद्, अपलपिता । सवर्णापसर्पोपगमे वा मिथ्या-वादी सवर्णा सखी तद्रूपापसर्पसङ्गमे सति वा तदपलापकर्ता, द्वादशपणं दद्यात् ।

दम्पत्योरन्यतरद्वेषात् तदन्यमोक्षो न भवति, किन्तु परस्परं द्वेषान्मोक्ष इत्याह—अमोक्ष्येति । अकामस्य मोक्षमनिच्छतः । भार्यायाश्च अकामाया लिङ्गवि-परिणामेनात्र सम्बन्धः ।

स्त्रीविप्रकाराद्वेति । स्त्रिया अपराधात्, पुरुषश्चेद्, मोक्षमिच्छेद् यथा गृहीतम् अस्यै दद्यात् स्त्रीसकाशाद् गृहीतं सर्वविधं द्रव्यं स्त्रियै दत्त्वा मुच्येत ।

पुरुषविप्रकाराद्वेति । पुरुषापराधात्, स्त्री चेन्मोक्षमिच्छेत्, नास्यै यथागृहीतं दद्यात् अदत्त्वैव स्त्रियै स्त्रीधनं तत्सकाशात् मुच्येत । स एष स्त्रीपुंसान्योन्य मोक्षविधिरधर्म्यविवाहानामासुरादीनाम् । ब्राह्मादीनां तु मोक्षणं नास्ती त्याह—अमोक्षो धर्मविवाहानामिति । इति द्वेषो व्याख्यातः ।

अतिचारविधिमाह—प्रतिषिद्धेत्यादि । प्रतिषिद्धा भर्त्रा वारिता, स्त्री, दर्पमद्यक्रीडायां दर्पक्रीडायां मद्यक्रीडायां च प्रवर्तमानेति शेषः, त्रिपणं दण्डं दद्यात् । दिवेति । अह्नि, स्त्रीप्रेक्षाविहारगमने स्त्रीप्रयुज्यमाननाटयदर्शनार्थम् उद्यानक्रीडार्थं च गमने, षट्पणो दण्डः, अर्थात् स्त्रियाः प्रतिषिद्धायाः । पुरुषप्रेक्षाविहारगमने

**द्विगुणः। सुप्तमत्तप्रव्रजने भर्तुरदाने च द्वारस्य द्वादशपणः। रात्रौ निष्कासने द्विगुणः॥**

**स्त्रीपुंसयोर्मैथुनाङ्गविचेष्टायां रहश्शीलसम्भाषायां वा चतुर्विंशतिपणः स्त्रिया दण्डः; पुंसो द्विगुणः। केशनीवीदन्तनखावलम्बनेषु पूर्वस्साहसदण्डः; पुंसो द्विगुणः। शङ्कितस्थाने संभाषायां च पणस्थाने शिफादण्डः। स्त्रीणां ग्राममध्ये चण्डालः पक्षान्तरे पञ्चशिफा दद्यात्, पणिकं वा प्रहारं मोक्षयेत्—इत्यतिचारः॥**

**प्रतिषिद्धयोः स्त्रीपुंसयोरन्योन्योपकारे क्षुद्रकद्रव्याणां द्वादशपणो दण्डः, स्थूलकद्रव्याणां चतुर्विंशतिपणः; हिरण्यसुवर्णयोश्चतुष्पञ्चाशत्पणः स्त्रिया दण्डः पुंसो द्विगुणः॥**

---

श्रीमूला

पुरुषप्रयुज्यमानप्रेक्षाविहारगमने, द्वादशपणः। रात्रौ द्विगुणः स्त्रैणप्रेक्षाविषये द्वादशपणः पौंस्नप्रेक्षाविषये चतुर्विंशतिपणः।

सुप्तेत्यादि। सुप्तमत्तप्रव्रजने सुप्ते मत्ते च भर्तरि स्वगृहं विहाय गमने, **भर्तुरदाने च** द्वारस्य आगतस्य भर्तुर्गृहद्वारकवाटानुद्घाटने च, द्वादशपणः दण्डः। **रात्रौ** निष्कासने गृहाद् बहिर्भर्तुर्निरसने, द्विगुणः चतुर्विंशतिपणः।

**स्त्रीपुंसयोरिति।** तयोः, मैथुनार्थे अनङ्गविचेष्टायां मैथुनमावां गमिष्याव इत्याकूतसूचककामचेष्टितकरणे, रहोऽश्लीलसम्भाषाऽयां वा रहसि असभ्यवृत्तसम्भाषणे च, चतुर्विंशतिपणः स्त्रिया दण्डः, पुंसः द्विगुणः अष्टचत्वारिंशत्पणः।

केशेत्यादि। केशग्रहणे नीवीग्रहणे दन्तक्षतकरणे नखक्षतकरणे च पूर्वः **प्रथमः**, साहसदण्डः स्त्रियाः, पुंसः द्विगुणः पञ्चशतपणात्मको मध्यमः साहसदण्डः।

शङ्कितेत्यादि। शङ्कितस्थाने सम्भाषायां च शङ्कास्पदे प्रदेशे सम्भाषणमात्रेऽपि कृते, पणस्थाने शिफादण्डः एकैकस्य पणस्य स्थाने एकैकशिफाताडनं **दण्डः।** स्त्रीणामिति। तासां, ग्राममध्ये पश्यत्सु ग्रामजनेषु, चण्डालः वधताडननियुक्तः पुरुषः, पक्षान्तरे एकैकपार्श्वावकाशे, पञ्चशिफाः पञ्चशिफाप्रहारान्, दद्यात्। पणिकं **वा** पणोऽस्य शुल्को दीयते पणिकः तथाभूतं वा प्रहारं मोक्षयेत्, एकैकस्य प्रहारस्यैकैकं पणं निष्क्रयं दत्त्वा प्रहारदण्डं मोचयेदित्यर्थः। इत्यतिचारः, व्याख्यातः।

अथप्रतिषेधमाह—प्रतिषिद्धयोरिति। वारितपरस्परव्यवहारयोः, स्त्रीपुंसयोः, **अन्योन्योपकारे** क्षुद्रकद्रव्याणां स्रक्चन्दनाद्यल्पद्रव्याणां परस्परदानेनोपकारे, **द्वादशपणो दण्डः,** स्त्रियाः। स्थूलकद्रव्याणां वस्त्राभरणादीनाम्, अन्योन्योपकारे

**त एवागम्ययोरर्धदण्डाः; तथा प्रतिषिद्धपुरुषव्यवहारेषु च—इति प्रतिषेधः ॥**

[ स्त्रियाः स्वाम्यप्रच्युतिहेतवः ]

**राजद्विष्टातिचाराभ्याम् आत्मापक्रमणेन च ।**
**स्त्रीधनानीतशुल्कानाम् अस्वाम्यं जायते स्त्रियः ॥१३२॥**

इति धर्मस्थीये विवाहसंयुक्ते शुश्रूषाभर्मपारुष्यद्वेषातिचाराः
उपकारव्यवहारप्रतिषेधाश्च तृतीयोऽध्यायः ।
आदितष्षष्टितमः ।

---

श्रीमूला

चतुर्विंशतिपणः । हिरण्यसुवर्णयोः, अन्योन्योपकारे, चतुष्पञ्चाशत्पणः । पुंसो विशेषमाह—दण्ड इति । उक्तो द्वादशपणादिः सर्वो दण्डः, पुंसो द्विगुणः ।

त एवेति । उक्ता एव दण्डाः, अगम्ययोः अर्धदण्डाः भ्रातृभगिन्यादिरूपयोः स्त्रीपुंसयोर्विषये अर्धहीना भवन्ति । ननु च भ्रातृभगिन्यादीनामन्योन्योपकारो निसर्गसिद्ध वात्सल्यप्रयुक्तो न त्वन्येषां स्त्रीपुंसानामिव सम्भावितदुरभिसन्धिप्रयुक्तः इति कथमसौ दण्डार्ह इति चेत्, सत्यं, किन्तु ऋजुबुद्ध्यारब्धोऽसावनुष्ठानप्रबन्धवशात् क्रमेण दुरभिसन्धिं जनयेदिति दण्डार्ह एवासौ ।

य एते स्त्रीपुंसयोः प्रतिषिद्धव्यवहारयोः परस्परोपकारे दण्डास्त एव पुरुषयोरपि प्रतिषिद्धव्यवहारयोरित्याह—तथेत्यादि । इति प्रतिषेध इति । एवम् उपकारव्यवहारप्रतिषेधो व्याख्यातः ।

राजद्विष्टातिचाराभ्यामिति । राजद्विष्टकथनेन दर्पमद्यक्रीडादिगमनेन च, आत्मापकमणेन च स्वयं भर्तृसकाशान्निष्पतनेन च, स्त्रीधनानीत शुल्कानाम् अस्वाम्यं स्त्रिया जायते स्त्रीधने पितृगृहोपाहृते शुल्के च स्त्रियाः स्वामित्वं हीयते ॥

इति कौटलीयार्थशास्त्रव्याख्यायां धर्मस्थीये तृतीयाधिकरणे
तृतीयोऽध्यायः । विवाहसंयुक्ते शुश्रषाभर्मपारुष्यद्वेषाति-
चारोपकारव्यवहारप्रतिषेधाः, आदितः षष्टितमः ॥

# चतुर्थोऽध्यायः

## निष्पतनं पथ्यनुसरणं ह्रस्वप्रवासः दीर्घप्रवासश्च

[ स्त्रियाः पतिकुलान्निर्गमने, तस्याः अन्यैः
वासावकाशदाने च दण्डाः ]

**पतिकुलान्निष्पतितायाः स्त्रियाः षट्पणो दण्डोऽन्यत्र विप्रकारात्; प्रतिषिद्धायां द्वादशपणः; प्रतिवेशगृहातिगतायाः षट्पणः। प्रातिवेशिकभिक्षुकवैदेहकानामवकाशभिक्षापण्यादाने द्वादशपणो दण्डः; प्रतिषिद्धानां पूर्वः साहसदण्डः; परगृहातिगतायाः चतुर्विंशतिपणः। परभार्यावकाशदाने शत्यो दण्डोऽन्यत्रापद्भ्यः; वारणाज्ञानयोर्निर्दोषः ॥**

---

श्रीमूला

पूर्वाध्यायशेषोक्तमपक्रमणं 'निवेशकालं हि दीर्घप्रवासे व्याख्यास्यामः' इत्युक्तं निवेशकालं च वर्णयितुमयमध्याय आरभ्यते।

पतिकुलादिति। पतिगृहात्, निष्पतितायाः निर्गतायाः, स्त्रियाः प्राप्तव्यवहारायाः, षट्पणो दण्डः, अन्यत्र विप्रकाराद् पुरुषकृतापराधाभावे। प्रतिषिद्धायां 'मा कुरु निष्पतनमि'ति वारितायां सत्यां तस्या निष्पतने, द्वादशपणः। प्रतिवेशगृहातिगतायाः इतीदं वाक्यं क्वचिन्न पठ्यते।

प्रातिवेशिकभिक्षुकवैदेहकानामिति। प्रातिवेशिकः प्रतिगृही भिक्षुको वृत्तच्युतः पाषन्डादिः वैदेहकः कुवणिक् इत्येतेषाम्, अवकाशभिक्षापण्यादाने अवकाशभिक्षाशब्दौ तद्दानपरौ अवकाशदाने भिक्षादाने पण्यग्रहणे च, द्वादशपणो दण्डः। प्रतिषिद्धानां, पूर्वः प्रथमः, साहसदण्डः पञ्चाशदुत्तरद्विशतपणात्मकः। परगृहातिगतायाः भर्तृगृहसमनन्तरगृहमतिक्रम्य व्यवहितं गृहं गतायाः, चतुर्विंशतिपणः दण्डः।

परेत्यादि। परभार्यावकाशदाने परभार्याया वासभूमिदाने, शत्यो दण्डः पणशतपरिमाणो दण्डः। अपवादमाह—अन्यत्रापद्भ्य इति। आपत्सु तु न दोषः।

[ पतिगृहान्निर्गमनेऽपि क्वचिददोषः
गन्तव्यस्थानव्यवस्था च ]

**'पतिविप्रकारात् पतिज्ञातिसुखावस्थग्रामिकान्वाधिभिक्षुकीज्ञातिकुलानामन्यतममपुरुषं गन्तुमदोषः' इत्याचार्याः। 'सपुरुषं वा ज्ञातिकुलम्। कुतो हि साध्वीजनस्य छलम्! सुखमेतदवबोद्धुम्' इति कौटल्यः। प्रेतव्याधिव्यसनगर्भनिमित्तमप्रतिषिद्धमेव ज्ञातिकुलगमनम्॥**

**तन्निमित्तं वारयतो द्वादशपणो दण्डः। तत्रापि गूहमाना स्त्रीधनं जीयेत। ज्ञातयो वा छादयन्तः शुल्कशेषम्—इति निष्पतनम्॥**

---

श्रीमूला

वारणाज्ञानयोर्निर्दोष इति, 'मा मम गृहं प्रविशे'ति वार्यमाणापि वा अज्ञायमानैव वा यदि प्रविशेत्, तदा निरपराधः, कः, अर्थाद् गृहस्वामी।

पतिधिक्कारवशादन्यत्रापसरणस्यावश्यं प्राप्तौ साध्वीजनः कमाश्रयं गच्छेदित्याकाङ्क्षायामाह—पतिविप्रकारादिति। भर्तृकृतधिक्कारदोषात्, पतिज्ञात्यादिकुलानां पतिज्ञातिर्भर्तृबान्धवः सुखावस्थः विवाहस्थेयः ग्रामिको ग्राममहत्तरः अन्वाधिः स्त्रीधनस्थेयः भिक्षुकी तपस्विनी भैक्षजीविनी ज्ञातिः स्वबान्धवः एतत्सम्बन्धिनां गृहाणाम्, अन्यतमम्, अपुरुषम् अविद्यमानपुरुषं, गन्तुं गत्वाधिवस्तुम्, अदोषः दोषाभावः स्त्रियाः। इत्याचार्याः मन्यन्त इति शेषः।

आचार्यमतमभ्युपगम्यैव ज्ञातिकुले विशेषं स्वमतेनाह—सपुरुषं वेति विद्यमानपुरुषमपि वा, ज्ञातिकुलं पतिबन्धुगृहं स्वबन्धुगृहं च, गन्तुमदोष इति वर्तते। तत्र हेतुमाह—कुतो हि साध्वीजनस्य, छलं व्यभिचरणं, निष्कल्मषहृदयतया न कुतोऽपि भवतीत्यर्थः। प्रकाशभयाच्च छलं न जायत इत्याह—सुखमेतदवबोद्धुमिति। छलं स्त्रीकृतं भर्तुरन्यस्य वा सद्यः सुज्ञानं नतु गोपयितुं शक्यमित्यर्थः।

पतिकुलादन्यत्रगमनं यत् सामान्यतः प्रतिषिद्धं तस्यापवादमाह—प्रेतव्याधीत्यादि। सुबोधम्।

तन्निमित्तमिति। उक्तनिमित्तकं ज्ञातिकुलगमनं, वारयतः पुरुषस्य, द्वादशपणो दण्डः। तत्रापीति। ज्ञातिकुलेऽपि, गूहमाना केनापि छलेन गूढं वसन्ती, स्त्रीधनं, जीयेत हाप्येत अर्थाद् भर्त्रा स्वयं ह्रियेत। ज्ञातयो वा छादयन्तः स्त्रियं छलेन गूढं स्वगृहे वासयन्तः, शुल्कशेषं, जीयेरन्निति विपरिणतानुषङ्गः। इति निष्पतनमिति। व्याख्यातमिति शेषः।

[ पतिगृहान्निर्गम्य पथि पुरुषान्तरानुगमने दण्डाः तदपवादश्च ]

**पतिकुलान्निष्पत्य ग्रामान्तरगमने द्वादशपणो दण्डः, स्थाप्याभरणलोपश्च। गम्येन वा पुंसा सहप्रस्थाने चतुर्विंशतिपणः, सर्वधर्मलोपश्चान्यत्र भर्मदानतीर्थगमनाभ्याम् । पुंसः पूर्वः साहसदण्डः तुल्यश्रेयसः, पापीयसो मध्यमः । बन्धुरदण्ड्यः । प्रतिषेधेऽर्धदण्डः । पथि व्यन्तरे गूढदेशाभिगमने मैथुनार्थेन शङ्कितप्रतिषिद्धाभ्यां वा पथ्यनुसारेण सङ्ग्रहणं विद्यात् । तालावचरचारणमत्स्यबन्धकलुब्धकगोपालकशौण्डिकानामन्येषां च प्रसृष्टस्त्रीकाणां पथ्यनुसरणमदोषः । प्रतिषिद्धे वा नयतः पुंसः स्त्रियो वा गच्छन्त्यास्त एवार्धदण्डाः—इति पथ्यनुसरणम् ॥**

---

श्रीमूला

अथ पथ्यनुसरणमाह—पतिकुलादिति। पतिगृहात् निष्पत्य पत्यननुज्ञया निर्गम्य, ग्रामान्तरगमने, द्वादशपणो दण्डः, स्थाप्याभरणलोपश्च अपुनर्गमन प्रत्ययार्थन्यस्तभूषणहानिश्च, भवति। गम्येन वा पुंसा, सहप्रस्थाने प्रस्थाय ग्रामान्तरगमने, चतुर्विंशतिपणो दण्डः, सर्वधर्मलोपश्च भर्त्रनुष्ठीयमानयज्ञादिसर्वधर्मसहचरणहानिश्च।

तत्रापवादः—अन्यत्र भर्मदानतीर्थगमनाभ्यामिति। भर्मदानं गृहभरणं तदर्थं वा तीर्थगमनम् ऋतुगमनं तदर्थं वा भर्त्रन्तिकगमने न दोष इत्यर्थः। पुंसो दण्डमाह—पुंस इति। स्त्रियं ग्रामान्तरं नेतुः पुरुषस्य, पूर्वः साहसदण्डः पञ्चाशदधिकद्विशतपणात्मकः, कीदृशस्य तुल्यश्रेयसः स्त्रीसमानजातिश्रेष्ठ्यस्य । पापीयसो मध्यमः स्त्री-(नि ? )हीनजातीयस्य मध्यमः साहसदण्डः पञ्चशतपणात्मकः । बन्धुरदण्ड्यः बन्धुर्नेता दण्डार्हो न भवति। प्रतिषेधेऽर्धदण्ड इति । बन्धोरपि भर्त्रा प्रतिषिद्धस्य नेतुरुक्तसमांशो दण्डः।

पथीति। मार्गेऽपि, व्यन्तरे मार्गविदूरावकाशे, गूढदेशाभिगमने छन्नप्रदेशगमने च सति, मैथुनार्थेन विद्यात् मैथुनमभिसन्धाय तद् गमनमिति जानीयात्। शङ्कितप्रतिषिद्धाभ्यां वेति। मैथुनार्थित्वशङ्काविषयीभूतेन, भर्तृप्रतिषिद्धेन चेत्याभ्यां सह, पथ्यनुसारेण पथ्यनुगमनेन, सङ्ग्रहणं विद्यात् स्त्रीसङ्ग्रहणोक्तो दण्डविधिः स्त्रीपुंसयोर्वेदितव्य इत्यर्थः। स तूत्तराधिकरणे कन्या प्रकर्मणि वक्ष्यते।

तालावचरेत्यादि। तालावचरो नटः चारणः कुशीलवः मत्स्यबन्धको बलिशजीवी लुब्धको व्याधः गोपालक आभीरः शौण्डिकः सुरासन्धानजीवी इत्येतेषाम्, अन्येषां च प्रसृष्टस्त्रीकाणां तदितरेषां चानुज्ञातस्त्रीकाणां ताम्बूलिकमालाकारादीनां, पथ्यनुसरणं प्रकरणात् स्त्रियाः पथि पुरुषान्तरानुगमनम्, अदोषः दोषो न भवति। तालावचरादिस्त्रियमपि भर्तृप्रतिषिद्धां पथि नयतः पुरुषस्य नीयमानायाश्च पूर्वोक्तदण्डार्धदण्डा भवन्तीत्याह—प्रतिषिद्धे वेत्यादि। इति पथ्यनुसरणं व्याख्यातम्।

## एकषष्टितमद्विषष्टितमे प्रकरणे

### दशमोऽध्यायः

### विवीतक्षेत्रपथहिंसा समयस्यानपाकर्म च

[ तत्तन्मार्गरोधं कुर्वतां सेतुकूपादिविषये
अतिक्रमप्रवृत्तिमतां च दण्डाः ]

**कर्मोदकमार्गमुचितं रुन्धतः कुर्वतोऽनुचितं वा पूर्वस्साहसदण्डः। सेतुकूपपुण्यस्थानचैत्यदेवायतनानि च परभूमौ निवेशयतः पूर्वानुवृत्तं धर्मसेतुमाधानं विक्रयं वा नयतो नाययतो वा मध्यमस्साहसदण्डः; श्रोतॄणामुत्तमः, अन्यत्र भग्नोत्सृष्टात्। स्वाम्यभावे ग्रामाः पुण्यशीला वा प्रतिकुर्युः। पथिप्रमाणं दुर्गनिवेशे व्याख्यातम्। क्षुद्रपशुमनुष्यपथं रुन्धतो द्वादशपणो दण्डः। महापशुपथं चतुर्विंशतिपणः। हस्तिक्षेत्रपथं चतुष्पञ्चाशत्पणः।**

---

श्रीमूला

अथ वास्तुकस्य तृतीयाध्याय आरभ्यते। पूर्वाध्याये सीमादिनिर्णयः क्षेत्रादीनामुक्तः। उदकमार्गनिरोधे सस्यादिहिंसने च दण्डविधिरिहोच्यते।

कर्मोदकमार्गमिति। कृष्यर्थजलमार्गम्, उचितं पूर्वानुवृतं, रुन्धतः, अनुचितं कुर्वतो वा नवं प्रवर्तयतो वा, पूर्वः साहसदण्डः।

सेतुकूपपुण्यस्थानचैत्यदेवायतनानि चेति। सेत्वादीनि पञ्च, परभूमौ, निवेशयतः सृजतः, पूर्वानुवृतं धर्मसेतुमाधानं विक्रयं वा नयती नाययतो वा पूर्वपूरुषैर्धर्मार्थे विसृष्टं सेतुकूपतटाकादिकम् आधीकुर्वतो विक्रीणानस्य तत्पुत्रादेस्तत्प्रयोजकस्य वा, मध्यमः साहसदण्डः। श्रोतॄणां तत्साक्षिणाम् उत्तमः साहसः। तत्रापवादः—अन्यत्र भग्नोत्सृष्टात्, उपहतासंस्कृतोपेक्षितसेत्वादिव्यतिरेकेण।

स्वाम्यभाव इति। प्रवर्तकतत्पुत्राद्यभावे ग्रामाः ग्रामवास्तव्याः, पुण्यशीला वा ग्रामावास्तव्या अपि, प्रतिकुर्युः संस्कुर्युः, अर्थाद् भग्नं सेत्वादिकम्।

पथिहिंसां वक्तुं तत्प्रमाणं दुर्गनिवेशोक्तं स्मारयति—पथिप्रमाणमित्यादि। क्षुद्रपशुमनुष्यपथमिति। क्षुद्रपशुमार्गं मनुष्यमार्गं च दुर्गनिवेशोक्तं, रुन्धतः, द्वादशपणो दण्डः। महापशुपथं गवाश्वादिमार्गं, रुन्धतः, चतुर्विंशतिपणः। हस्तिक्षेत्रपथं रुन्धतः चतुष्पञ्चाशत्पणः।

**सेतुवनपथं षट्छतः। श्मशानग्रामपथं द्विशतः। द्रोणमुखपथं पञ्चशतः। स्थानीयराष्ट्रविवीतपथं साहस्रः। अतिकर्षणे चैषां दण्डचतुर्था दण्डाः। कर्षणे पूर्वोक्ताः।**

[ क्षेत्रविषये क्रयविक्रयकृष्यादिव्यवस्थाः,
अक्रमव्यवहर्तॄणां दण्डाश्च ]

**क्षेत्रिकस्याऽक्षिपतः क्षेत्रं उपवासस्य वा त्यजतो बीजकाले द्वादशपणो दण्डः, अन्यत्र दोषोपनिपाताविषह्येभ्यः। करदाः करदेष्वाधानं विक्रयं वा कुर्युः, ब्रह्मदेयिका ब्रह्मदेयिकेषु। अन्यथा पूर्वस्साहसदण्डः, करदस्य वाऽकरदग्रामं प्रविशतः। करदं तु प्रविशतः सर्वद्रव्येषु प्राकाम्यं स्यात्, अन्यत्रागारात्। तदप्यस्मै दद्यात्।**

---

श्रीमूला

सेतुवनपथं रुन्धतः षट्छतः। श्मशानग्रामपथं रुन्धतो द्विशतः। द्रोणमुखपथं रून्धतः पञ्चशतः। स्थानीयराष्ट्रविवीतपथं स्थानीयं प्रसिद्धं राष्ट्रविवीते समाहर्तृ-समुदयप्रस्थापनोक्ते तेषां पन्थानं, रुन्धतः साहस्रः। अतिकर्षणे चैषामिति। अति-कर्षणमपकर्षणं न्यूनीकरणम् उक्तानां पथामेकदेशापहरणेन प्रमाणतो न्यूनीकरणे, दण्डचतुर्थाः पूर्वोक्तदण्डचतुर्भागाः, दण्डाः। कर्षणे पथिषु कृषिकरणे, पूर्वोक्ताः दण्डाः।

क्षेत्रिकस्येति। बीजकाले, क्षेत्रम् अक्षिपतः कर्षकायानर्पयतः, क्षेत्रिकस्य क्षेत्रस्वामिनः, त्यजत उपवासस्य वा कृषिमभ्युपेत्य बीजवापकाले क्षेत्रं मुञ्चतः कर्षकस्य वा, द्वादशपणो दण्डः। अन्यत्र दोषोपनिपाताविषह्येभ्य इति। दोषः क्षेत्रदोषः उपनिपातो राजचोराद्युपद्रवः अविषह्यं महारोगादि एतेषु निमित्तेषु क्षेत्रत्यागो न दोषाय।

करदा इति। करदायकाः, करदेषु आधानं विक्रयं वा कुर्युः, न त्वकरदेष्वि-त्यर्थः। ब्रह्मदेयिकाः, ब्रह्मदायिका इत्यपि पाठः, ब्रह्मदेयं ब्रह्मदायो वा करमोक्षितं ब्राह्मणयोग्यं क्षेत्रादिकमुच्यते। तथाविधभूमिस्वामिनः, ब्रह्मदेयिकेषु आधानं विक्रयं वा कुर्युः, न त्वतथाभूतेषु। अन्यथा उक्तविध्यतिक्रमेणाधानविक्रयकरणे, पूर्वः साहसदण्डः। आहितविक्रीतक्षेत्रस्वीकर्तुर्दण्डमाह—करदस्य वेत्यादि।

करदं त्विति। करदं ग्रामं, प्रविशतः करदस्य, सर्वद्रव्येषु धान्यचतुष्पदादिषु, प्राकाम्यं स्वाच्छन्द्यं स्वामित्वं, स्यात्, अन्यत्रागारात् विक्रेतृगृहवर्जम्। तदपि अस्मै दद्यात् क्षेत्रविक्रेता यदि गृहमपि विक्रेतुमिच्छेत् तदा क्षेत्रक्रेत्रे एव तद् विक्रीणीयात्।

**अनादेयमकृषतोऽन्यः पञ्चवर्षाण्युपभुज्य प्रयासनिष्क्रयेण दद्यात् । अकरदाः परत्र वसन्तो भोगमुपजीवेयुः ॥**

[ ग्रामरक्षणविषये सर्वसहकारावश्यकता, चोरादिनिरसनेन प्राकारादिकरणावश्यकता च ]

**ग्रामार्थेन ग्रामिकं व्रजन्तम् उपवासाः पर्यायेणानुगच्छेयुरननुगच्छन्तः पणार्धपणिकं योजनं दद्युः । ग्रामिकस्य ग्रामात् अस्तेनपारदारिकं निरस्यतश्चतुर्विंशतिपणो दण्डः । ग्रामस्योत्तमः । निरस्तस्य प्रवेशो ह्यधिगमेन व्याख्यातः । स्तम्भैस्समन्ततो ग्रामाद्धनुश्शतापकृष्टमुपसालं कारयेत् ॥**

---

श्रीमूला

अनादेयमिति । संस्कृतं ग्राह्यफलत्वादादेयं तद्भिन्नमनादेयसंस्कृतं क्षेत्रम्, अकृषतः संस्करणाशक्तत्वादकर्षयतः स्वामिनः अन्यः स्वामिनियुक्तः, पञ्च वर्षाणि उपभुज्य, प्रयासनिष्क्रयेण दद्यात् कूपतटाकादिखननार्थं व्ययमात्मकृतं गृहीत्वा प्रत्यर्पयेत् क्षेत्रम् ।

अकरदा इति । अकरदा ब्रह्मदेयिकादयः, परत्र ग्रामान्तरे, वसन्तः भोगम् उपजीवेयुः क्षेत्रभोगमात्रं गृह्णीयुः, हिरण्यकरदण्डं तु राजा गृह्णीयादिति भाषाटीका ।

ग्रामार्थेनेति । ग्रामकार्यवशेन, ग्रामिकं ग्राममुख्यं, ब्रजन्तं देशान्तरं गच्छन्तम्, उपवासाः उपजीव्य ग्रामं वसन्तः कर्षकाः, पर्यायेण वारव्यवस्थया, अनुगच्छेयुः । अननुगच्छन्तः, पणार्धपणिकं योजनं दद्युः एकैकस्य गन्तव्याध्वयोजनस्यैतावदिति व्यवस्थया देयं द्रव्यमिह योजनं तत् सार्धपणात्मकं ग्रामिकाय दद्युः ।

ग्रामिकस्येति । ग्राममुख्यस्य, ग्रामाद्, अस्तेनपारदारिकं स्तेयेन परदाररतत्वेन वा दोषेणायुक्तं, निरस्यतः वहिष्कुर्वतः, चतुर्विंशतिपणो दण्डः । ग्रामस्य ग्रामवासिसमुदायस्य वहिष्कुर्वतः उत्तमः साहसदण्डः ।

निरस्तस्येति । ग्रामान्निष्कासितस्य, चोरपारदारिकादेः, प्रवेशः पुनर्ग्रामाभिगमनं, हिशब्दस्तुशब्दार्थे, अधिगमेन व्याख्यातः परगृहाभिगमनोक्तेन दण्डेन समानदण्ड इत्यर्थः ।

स्तम्भैरिति । स्तम्भैः शिलामयैर्दारुमयैर्वा, समन्ततः समन्तात्, ग्रामात्, समन्तग्रामादिति पाठे ग्रामपर्यन्तदेशादित्यर्थः, धनुश्शतापकृष्टं धनुश्शतविप्रकृष्टम्, उपसालम् उपप्राकारं, कारयेत् ।

[ पशुप्रचारदेशसंरक्षणव्यवस्था, नियमोल्लङ्घनेन पशून् चारयतां दण्डश्च ]

**पशुप्रचारार्थं विवीतमालवनेनोपजीवेयुः। विवीतं भक्षयित्वापसृतानामुष्ट्रमहिषाणां पादिकं रूपं गृह्णीयुः। गवाश्वखराणां चार्धपादिकम्। क्षुद्रपशूनां षोडशभागिकम्। भक्षयित्वा निषण्णानामेत एव द्विगुणा दण्डाः। परिवसतां चतुर्गुणाः। ग्रामदेववृषा वा अनिर्दशाहा वा धेनुरुक्षाणो गोवृषाश्चादण्ड्याः। सस्यभक्षणे सस्योपघातं निष्पत्तितः परिसङ्ख्याय द्विगुणं दापयेत्। स्वामिनश्चानिवेद्य चारयतो द्वादशपणो दण्डः, प्रमुञ्चतश्चतुर्विंशतिपणः। पालिनामर्धदण्डः।**

---

श्रीमूला

पशुरित्यादि। पशुप्रचारार्थं पशुसञ्चारखादनार्थं, विवीतमालवनेन विवीतं तृणस्तम्बजलयुक्तं स्थलं मालमुन्नतभूतलं वनं प्रसिद्धम् एतैर्विसृष्टैः, उपजीवयेयुः अर्थाद् ग्रामजनान्।

विवीतमिति। तद् भक्षयित्वा अपसृतानाम् उष्ट्रमहिषाणां, पादिकं रूपं पादपणं, गृह्णीयुः विवीताध्यक्षाः। गवाश्वखराणां च अर्धपादिकं रूपं पणाष्टांशं, गृह्णीयुः। क्षुद्रपशूनां षोडशभागिकं रूपं पणषोडशभागं, गृह्णीयुः।

भक्षयित्वा निषण्णानामिति। भक्षयित्वा अनपसृत्य विवीत एवोपविष्टानाम् उष्ट्रादीनाम्, एत एव द्विगुणा दण्डाः यथोक्ता एव पादपणादयो द्विगुणीभूता दण्डाः भवन्ति। परिवसतां रात्रौ तत्रैव संविशतां, चतुर्गुणाः दण्डाः। भक्षणादौ केषाञ्चित् पशूनामदण्डमाह—ग्रामदेववृषा वेति। ग्रामवृषभाः देववृषभाश्च, अनिर्दशाहा धेनुर्वा अनतिक्रान्तदशाहा प्रसूता गौश्च, उक्षाणः वृद्धवृषभाः, गोवृषाश्च सेक्तारश्च, अदण्ड्याः।

सस्यभक्षण इत्यादि। उष्ट्रमहिषादिभिः सस्ये भक्षिते सति, सस्योपघातं भक्षितक्षेत्रैकदेशरूञ्जातं सस्यविनाशं, निष्पत्तितः परिसङ्ख्याय कृत्स्नक्षेत्रनिष्पद्यमानफलपर्यालोचनया परिच्छेद्य, द्विगुणं तद्द्विगुणं दण्डं, दापयेत् स्वामिने।

स्वामिनश्चानिवेद्य चारयत इति। विवीताध्यक्षमविज्ञाप्य पशून् विवीते चारयतः तत्स्वामिनः, द्वादशपणो दण्डः। अथवा अविज्ञाप्यैव स्वामिने प्रचारणं पशून् उपक्षेत्रं नियन्त्र्य चारयतः, द्वादशपणो दण्डः नाशितसस्यफलद्विगुणदण्डातिरेकेण। प्रमुञ्चतः निर्यन्त्रणं पशून् विसृज्य चारयतः, चतुर्विंशतिपणः दण्डः भक्षितद्विगुणदण्डातिरेकेण। पालिनां क्षेत्रपालकानाम्, अर्धदण्डः प्रमोक्तृदण्डस्यार्धदण्डो भवति। 'उष्ट्रमहिषादीनां बालत्वे' इति भाषोक्त्यनुरोधे तु वालानामिति पठनीयम्।

**तदेव षण्डभक्षणे कुर्यात्। वाटभेदे द्विगुणः। वेश्मखलवलयगतानां च धान्यानां भक्षणे हिंसाप्रतीकारं कुर्यात्। अभयवनमृगाः परिगृहीताः भक्षयन्तः स्वामिनो निवेद्य यथाऽवध्यास्तथा प्रतिषेद्धव्याः। पशवो रश्मिप्रतोदाभ्यां वारयितव्याः। तेषामन्यथा हिंसायां दण्डपारुष्यदण्डाः। प्रार्थयमाना दृष्टापराधा वा सर्वोपायैर्नियन्तव्याः इति क्षेत्रपथहिंसा ॥**

[ सम्भूय कल्प्यमानव्यवस्थानां यथाङ्गीकार-
मनुवर्तनावश्यकता, अतिक्रमे दण्डाश्च ]

**कर्षकस्य ग्रामम् अभ्युपेत्याकुर्वतो ग्राम एवात्ययं हरेत्। कर्माकरणे कर्मवेतनाद्द्विगुणम्, हिरण्यादाने प्रत्यंशद्विगुणम्, भक्ष्यपेयादाने च प्रहवणेषु**

---

श्रीमूला

तदेव षण्डभक्षणे कुर्यादिति। सस्यभक्षणोक्तमेव दण्डविधानं कदलीवार्ताकोर्वारुकादिवनभक्षणेऽनुतिष्ठेत्। वाटभेदे द्विगुण इति। वृतिं भित्वा क्षेत्रादिप्रवेशे पूर्वोक्तद्विगुणो दण्डः। वेश्मेत्यादि। वेश्यखलवलयगतानां वेश्म गृहं खलं धान्यपवनस्थानं वलयं राशिः, तद्गतानां, धान्यानां, भक्षणे च, द्विगुणो दण्डः। हिंसाप्रतीकारं कुर्यादिति। भक्षणनिमित्तस्य धान्यादिनाशस्य निष्क्रयं कुर्यात्, सर्वत्र।

अभयवनमृगाः परिगृहीता वेत्यादि। अभयवनचारिणो मृगाः, गृह्यमृगाश्च, भक्षयन्तः, स्वामिनो निवेद्य, यथा अवध्यास्तथा प्रतिषेद्धव्याः, अवधेन वारणीया इत्यर्थः।

पशव इति। ते, रश्मिप्रतोदाभ्यां वारयितव्याः रज्जुतोत्राभ्यां देहे ताडेनेन प्रतिषेद्धव्याः। तेषां पशूनाम्, अन्यथा प्रकारान्तरेण, हिंसायां, दण्डपारुष्यदण्डाः दण्डपारुष्यस्य ये दण्डा वक्ष्यन्ते त एव दण्डा भवन्ति। प्रार्थयमानाः वारकं प्रतियुध्यमानाः, दृष्टापराधा वा पूर्वहिंसितजना वा, पशवः, सर्वोपायैः बन्धनावरोधनादिभिः, नियन्तव्याः दमयित्वा वारयितव्याः। इति क्षेत्रपथहिंसेति। व्याख्यातेति शेषः। तदेवं वास्तुकं परिसमापितम् ॥

समयस्यानपाकर्मेति सूत्रम्। बहुभिः सम्भूय कल्प्यमाना व्यवस्था समयः तस्य अनपाकर्म अत्यागः तदिहोच्यते इति सूत्रार्थः। उद्देशक्रमेणास्य प्रकरणस्य व्याख्यानसङ्गतिः।

कर्षकस्येति। कृषीवलस्य, ग्राममभ्युपेत्याकुर्वतः ग्रामजनसमुदायकार्यमङ्गीकृत्याननुतिष्ठतः, ग्राम एव, अत्ययं दण्डं, हरेत्, न तु राजा। दण्डविधिमाह—कर्माकरण इति। कर्मणः समुदायकार्यस्य अकरणे, कर्मवेतनाद् आत्मलभ्याद्

**द्विगुणमंशं दद्यात् । प्रेक्षायामनंशदः सस्वजनो न प्रेक्षेत । प्रच्छन्नश्रवणेक्षणे च सर्वहिते च कर्मणि निग्रहेण द्विगुणमंशं दद्यात् । सर्वहितमेकस्य ब्रुवतः कुर्युराज्ञाम् । अकरणे द्वादशपणो दण्डः । तं चेत् सम्भूय वा हन्युः, पृथगेषामपराधद्विगुणो दण्डः । उपहन्तृषु विशिष्टः ॥**

**ब्राह्मणतश्चैषां ज्यैष्ठ्यं नियम्येत । प्रहवणेषु चैषां ब्राह्मणे नाकामाः कुर्युः । अंशं च लभेरन् ॥**

[ निगमनम् ]

**तेन देशजातिकुलसङ्घानां समयस्यानपाकर्म व्याख्यातम् ।**

---

श्रीमूला

वेतनभागाद्, द्विगुणं दण्डं, दद्यात् । हिरण्यादाने समुदायकार्यार्थं सर्वैर्हिरण्ये-दीयमाने सति स्वयं हिरण्यस्य अदाने, प्रत्यंशद्विगुणम् एकैकदेयस्य हिरण्यांशस्य द्विगुणं दण्डं, दद्यात् । भक्ष्यपेयादाने च प्रवहणेषु गोष्ठीभोजनादिषु भक्ष्यपेययो-रात्मदेययोरदाने च, द्विगुणमंशं दण्डं, दद्यात् ।

प्रेक्षायामिति । कुशीलवनटनर्तकादिकर्मणि, अनंशदः स्वदेयमंशमददानः, सस्वजनो न प्रेक्षेत स्वयं नेक्षेत स्वजनमपि नेक्षयेत् । प्रच्छन्नश्रवणेक्षणे च प्रच्छन्नं स्थित्वा गीताद्याकर्णने नाट्याद्यवलोकने च, द्विगुणमंशं स्वदेयांशद्विगुणं दण्डं, दद्यात् । सर्वहिते च कर्मणि, निग्रहेण प्रतिबन्धाचरणेन, द्विगुणमंशं स्वदेयांश-द्विगुणं दण्डं, दद्यात् ।

सर्वहितमिति । सर्वजनानुकूलं, ब्रुवतः, एकस्य आज्ञाम् एकस्यापि नियोग-वचनं कुर्युः अनुतिष्ठेयुः अर्थादन्ये सामयिकाः । अकरणे द्वादशपणो दण्डः । तं चेदिति । वेति पक्षान्तरे । तं सर्वहितवक्तारं सम्भूय हन्युश्चेद्, मत्सरवशादन्ये सामयिका इत्यार्थम् । पृथक् प्रत्येकम्, एषां हन्तृणाम् अपराधद्विगुणः अकरणा-पराधोक्तदण्डद्विगुणश्चतुर्विंशतिपणात्मकः, दण्डः । उपहन्तृषु विशिष्टः साक्षाद् घातकेषु पूर्वोक्त एव दण्डः सातिशयः । ब्राह्मणतश्चेति । एषां सामयिकानां, ब्राह्म-णतो ब्राह्मणात् प्रभृति, ज्यैष्ठ्यं नियम्येत अलङ्घ्यवचनत्वलक्षणं ज्येष्ठत्वं व्यवस्था-प्येत । प्रवहणेष्विति । प्रीतिभोजनादिषु, एषां सामयिकानां मध्ये, ब्राह्मणे विषये, नाकामाः कुर्युः अंशं च लभेरन् अविज्ञाततदभिप्राया अंशं न कल्पयेयुः अंशञ्च लभेरन् सत्यां तदिच्छायामित्यर्थः ।

तेनेति । तेन यथोक्तेन समयानपाकर्मन्यायेन, देशजातिकुलसङ्घानां देशीय-जनसङ्घस्य जातीयजनसङ्घस्य कुलीथजनसङ्घस्य चेत्येतेषां, समयस्यानपाकर्म, व्याख्यातम् उक्तप्रायम् ।

**राजा देशहितान् सेतून कुर्वतां पथि सङ्क्रमान् ।**
**ग्रामशोभाश्च रक्षाश्च तेषां प्रियहितं चरेत् ॥१३९॥**

इति धर्मस्थीये वास्तुके विवीतक्षेत्रपथहिंसा, दशमोऽध्यायः । वास्तुकं समाप्तम्, समयस्यानपाकर्म च । आदितस्सप्तषष्टितमः ।

---

श्रीमूला

अध्यायान्ते श्लोकमाह—राजेति । नृपतिः, देशहितान्, सेतून् सीमबन्धान्, पथि मार्गे, सङ्क्रमान् दुर्गसञ्चारान्, ग्रामशोभाश्च रक्षाश्च कुर्वतां, तेषां सामयिकानां, प्रियहितं चरेत् ॥

इतिकौटलीयार्थशास्त्राव्याख्यायां धर्मस्थीये तृतीयाधिकरणे दशमोऽध्यायः, वास्तुके विवीतक्षेत्रपथहिंसा, वास्तुकं समाप्तं समयस्यानपाकर्म च । आदितः सप्तषष्टितमोऽध्यायः ॥

## त्रिषष्टितमं प्रकरणम्

### एकादशोऽध्यायः

### ऋणादानम्

[ वृद्धयर्थप्रयुक्तधनविषये वृद्धयंशव्यवस्था ]

**सपादपणा धर्म्या मासवृद्धिः पणशतस्य । पञ्चपणा व्यावहारिकी । दशपणा कान्तारकाणाम् । विंशतिपणा सामुद्राणाम् ॥**

**ततः परं कर्तुः कारयितुश्च पूर्वस्साहसदण्डः श्रोतृणामेकैकं प्रत्यर्ध-दण्डः । राजन्ययोगक्षेमवहे तु धनिकधारणिकयोश्चरित्रमवेक्षेत ॥**

---

श्रीमूला

ऋणादानमिति सूत्रम् । ऋणं वृद्धयर्थं प्रयुक्तं धनं तस्य आदानं ग्रहणमिति सूत्रार्थः । "ऋणरिक्थयोः समो विभागः" इति दायविभागप्रकरणे ऋणं प्रस्तुतम् । तत् कियता कालेन कियत् वर्धत इत्येतत् तु अनुक्तमिहाभिधीयते ।

सपादेत्यादि । पणशतस्य, सपादपणा पादाधिकपणात्मिका, धर्म्या धर्मानपेता, मासवृद्धिः । सेऽयं बन्धकाधानपूर्वा । बन्धकरहितामाह—पञ्चपणेति । पणशतस्य पञ्चपणात्मिका मासवृद्धिर्व्यावहारिकी पण्यक्रयविक्रयव्यवहारप्रयोजना । दशपणा, मासवृद्धिः, कान्तारगाणां दुर्गममार्गपण्यवाहिनां वणिजाम् । विंशतिपणा मासवृद्धिः, सामुद्राणां समुद्रवणिजां सम्भावितसर्वपण्यापायानाम् ।

तत इति । ततः परं पणविंशतेरूर्ध्वं, कर्तुः कारयितुश्च वृद्धिं कुर्वतः कारयतश्च, पूर्वः साहसदण्डः । श्रोतृणां सक्षिणां मध्ये एकैकं प्रति, अर्धदण्डः प्रथम-साहसस्यार्धं दण्डः ।

राजनीति । तु किन्तु, राजनि धनिकधारणिकयोरुत्तमर्णाधमर्णयोः, अयोग-क्षेमवहे सति व्यसनपरचक्राद्युपद्रववशात् योगक्षेमौ अवहमाने सति । अदण्डक्षेमवह इति क्वचित् पाठः । चरित्रमवेक्षेत परस्परवृत्तमवेक्ष्य ऋणव्यवहारं कुर्यात्, अर्थाद् धनिको धारणिकश्च ।

[ तादृशधान्यविषये वृद्धयंशव्यवस्थाः ]

**धान्यवृद्धिस्सस्यनिष्पत्तावुपार्धा, परं मूल्यकृता वर्धेत; प्रक्षेपवृद्धिरुदयादर्धम्, सन्निधानसन्ना वार्षिकी देया। चिरप्रवासः संस्तम्भप्रविष्टो वा मूल्यद्विगुणं दद्यात्। अकृत्वा वृद्धिं साधयतो वर्धयतो वा मूल्यं वा वृद्धिमारोप्य श्रावयतः बन्धचतुर्गुणो दण्डः। तुच्छश्रावणायाम् अभूतचतुर्गुणः। तस्य त्रिभागमादाता दद्यात्। शेषं प्रदाता ॥**

[ धनिकैः क्वचिद्वृद्धयंशस्य क्वचिदृणस्यैव च प्रतिग्रहनिषेधः ]

**दीर्घसत्रव्याधिगुरुकुलोपरुद्धं बालमसारं वा नर्णमनु वर्धेत।**

---

श्रीमूला

अथ धान्यवृद्धिमाह—धान्येत्यादि। धान्यवृद्धिः वृद्धयर्थं प्रयुक्तं धान्यं, सस्यनिष्पत्तौ सस्यफलनिष्पत्तिकाले, उपार्धा अध्यर्धगुणा, वर्धेत। परं तत ऊर्ध्वं, मूल्यकृता वर्धेत। अयमर्थः—वृद्धयर्थं प्रयुक्तं धान्यम् आ सस्यनिष्पत्तिकालात् सार्धगुणं वर्धेत। ततोऽप्यधिकवृद्धयपेक्षायां तावत्पर्यन्तवृद्धियुक्तस्य तस्य मूलधान्यस्य सार्धगुणितस्य मूल्यं हिरण्यं किमपि परिकल्प्य तस्य वृद्धिरेतावतीति व्यवस्थापयेत्, न तु धान्यस्य स्वरूपतो भूयोवृद्धिरिति। तत्रापि विशेषमाह—प्रक्षेपेत्यादि। प्रक्षेपवृद्धिः येयं मूलधान्यमूल्येन सह प्रक्षिप्ता वृद्धिः, अर्थाद् वृद्धिधान्यमूल्यं सापि, उदयाद् मूलधान्यमूल्यवृद्धयपेक्षया, अर्धं वर्धेत, न तु तत्समम्। सन्निधानेत्यादि। सन्निधानसन्ना ग्रहणयोग्येऽपि काले तूष्णींस्थापनेनानुपयुक्ता, अर्थाद् धान्यवृद्धिः, वार्षिकी देया एकवर्षभवैव दातव्या, बहुवर्षपूगापगमेऽपीत्यार्थम्।

चिरप्रवास इति। चिरप्रोषितः, संस्तम्भप्रविष्टो वा संस्तम्भो जडीभावः तं गतो वा, मूल्यद्विगुणं धान्यमूल्यस्य द्विगुणमेव दद्यात्, बहुवर्षात्ययेऽपि द्वैगुण्यप्राप्तेः परतो वृद्धयभावादित्यभिप्रायः। अकृत्वा वृद्धिमित्यादि। वृद्धिमपरिभाष्यैव पूर्वं पश्चात् तां, साधयतो वा, अल्पां वृद्धिं पूर्वं परिभाषितां पश्चाद् वर्धयतो वा अधिकां वदतो वा, मूल्यं, वृद्धिमपरिभाषितामेव सतीम् आरोप्य, श्रावयतो वा अर्थात् साक्षिणः, बन्धचतुर्गुणः मूलधनचतुर्गुणो दण्डः। तुच्छश्रावणायामित्यादि। अल्पं दत्त्वा बहुदत्तमिति साक्षिषु श्राव्यमाणेषु, अभूतचतुर्गुणः श्राव्यमाणधनचतुर्गुणो दण्डः। तस्य दण्डस्य, त्रिभागम्, आदाता ऋणग्राही, दद्यात् शेषं त्रिभागद्वयम्, प्रदाता धनिकः दद्यात्।

दीर्घसत्रेत्यादि। दीर्घसत्रव्याधिगुरुकुलोपरुद्धं दीर्घसत्रेण द्वादशवार्षिकादिना यज्ञविशेषेण व्याधिना गुरुकुलवासेन चोपरुद्धं, बालम् अप्राप्तव्यवहारम्, असारं वा अबालमप्यशिक्षितलोकयात्रं वा जनम्, अनु, ऋणं न वर्धेत।

**मुच्यमानमृणमप्रतिगृह्णतो द्वादशपणो दण्डः। कारणापदेशेन निवृत्त-वृद्धिकमन्यत्र तिष्ठेत् ॥**

**दशवर्षोपेक्षितमृणमप्रतिग्राह्यमन्यत्र बालवृद्धव्याधितव्यसनिप्रोषितदेश-त्यागराज्यविभ्रमेभ्यः ॥**

[ प्रमीतकृतऋणप्रतिनिवर्तकाः ]

**प्रेतस्य पुत्राः कुसीदं दद्युः। दायादा वा रिक्थहरास्सहग्राहिणः, प्रति-भुवो वा; न प्रातिभाव्यमन्यत्। असारं बालप्रातिभाव्यम्। असङ्ख्यात-देशकालं तु पुत्राः पौत्रा दायादा वा रिक्थं हरमाणा दद्युः। जीवितविवाह-भूमिप्रातिभाव्यमसङ्ख्यातदेशकालं तु पुत्राः पौत्रा वा वहेयुः ॥**

[ बहुषु ऋणेषु निवर्तनप्राथम्यव्यवस्था: ]

**नानर्णसमवाये तु नैकं द्वौ युगपदभिवदेयातां अन्यत्र प्रतिष्ठमानात्। तत्रापि गृहीतानुपूर्व्या राजश्रोत्रियद्रव्यं वा पूर्वं प्रतिपादयेत्।**

---

श्रीमूला

मुच्यमानमिति। मोक्ष्यमाणम् ऋणम्, अप्रतिगृह्णतः धनिकस्य, द्वादशपणो दण्डः। कारणापदेशेनेत्यादि। यदि कारणं युक्तमपदिश्य धनिको न प्रतिगृह्णीयाद् ऋणं, तदा निवृत्तवृद्धिकं वृद्धिहीनम्, अन्यत्र स्थेयपुरुषे, तिष्ठेद् ऋणम्।

दशवर्षेत्यादि। दशवर्षोपेक्षितम् ऋणम्, अप्रतिग्राह्यं धनिकेन। तत्रापवादः— अन्यत्रेत्यादि। बाल्यवृद्धभावव्याधितत्वादिभिः सप्तभिर्निमित्तैर्दशवर्षोपेक्षितं तु ऋणं प्रतिग्राह्यं भवत्येवेत्यर्थः।

प्रेतस्येति। मृतस्य, पुत्राः कुसीदम् ऋणं, दद्युः। दायादा वा रिक्थहराः मृतधन-ग्राहिणः ऋणं दद्युः। न प्रातिभाव्यमन्यादात। धनप्रातिभाव्यातिरिक्तं दर्शनादिप्राति-भाव्यं कर्तृ, न ऋणं दद्यादिति सम्बन्धनीयम्। असारम् अकिञ्चित्करं बालप्रातिभाव्यम्। पुत्रपौत्रदायादा रिक्थहारिणः सर्वत्र सर्वदा ऋणं रिक्थिनो मृतस्य दद्युरित्याह— असंख्यातदेशकालमित्यादि।

जीवितविवाहभूमिप्रातिभाव्यमित्यादि। जीवितप्रातिभाव्यं जीवितविषयं प्रातिभाव्यं विवाहप्रातिभाव्यं स्त्रीधनादिप्रातिभाव्यं भूमिप्रातिभाव्यं भूक्रयणादिविषयं प्रातिभाव्यम् इत्येतानि प्रातिभाव्यानि पित्राङ्गीकृतानि तस्मिन्नतीते पुत्राः पौत्रा वा सर्वत्र सर्वदा परिरक्षेयुः।

नानर्णसमवाये त्वित्यादि। नानाभूतानामृणानां समवाये, एकं धारणिकं, द्वौ धनिकौ, युगपत् एककाले, नाभिवदेयातां नाभियुञ्जीयातां, धारणिकश्चेत् स्वदेश-मपहाय विदेशं न प्रतिष्ठते। तत्रापीति बहुऋणसमवायेऽपि, गृहीतर्णक्रमेण प्रतिपादयेद् ऋणमृणिकः। राजश्रोत्रियद्रव्यं वा पूर्वं प्रतिपादयेत्।

[ व्यवहारेण साधयितुमयोग्यानि ऋणानि,
अग्राह्याः ग्राह्याः ऋणिनश्च ]

**दम्पत्योः पितापुत्रयोः भ्रातृणां चाविभक्तानां परस्परकृतमृणमसाध्यम् । अग्राह्याः कर्मकालेषु कर्षका राजपुरुषाश्च; स्त्री वाऽप्रतिश्राविणी पतिकृतं ऋणम्, अन्यत्र गोपालकार्धसीतिकेभ्यः । पतिस्तु ग्राह्यः—स्त्रीकृतम् ऋणमप्रतिविधाय प्रोषित इति ॥**

[ ऋणसाधनप्रकाराः ]

**सम्प्रतिपत्तावुत्तमः; असम्प्रतिपत्तौ तु साक्षिणः प्रमाणम् । प्रात्ययिकाश्शुचयोऽनुमता वा त्रयोऽवराध्यीः । पक्षानुमतौ वा द्वौ ऋणं प्रति, न त्वेवैकः ॥**

---

श्रीमूला

दम्पत्योरिति । जायापत्योः, परस्परकृतम् ऋणम्, असाध्यं व्यवहारेण साधयितुं न योग्यम् । तथा पितापुत्रयोः अविभक्तानां भ्रातृणां च, परस्परकृतमृणमसाध्यम् ।

धनिकैरभियुक्तानाम् ऋणिनां ग्रहणे विशेषमाह—अग्राह्या इति । कर्षकाः राजपुरुषाश्च, कर्मकालेषु स्वस्वकर्मानुष्ठानकालेषु, अग्राह्याः । स्त्री वेति । स्त्री च, अग्राह्या, कीदृशी, पतिकृतम् ऋणम् अप्रतिश्राविणी अहं दास्यामीत्येनङ्गीकारिणी । अङ्गीकारिणी तु ग्राह्यैव । तत्रापवादः—अन्यत्र गोपालकार्धसीतिकेभ्य इति । गोपालकाः प्रसिद्धाः अर्धसीतिकाः कृषिकर्मसिद्धसीताफलार्धभागिनः तेषां स्त्रीप्रधानानां स्त्रियं विना । सा तु अप्रतिश्राविण्यपि ग्राह्यैवेत्यर्थः ।

पतिस्त्विति । पतिः पुनः अप्रतिश्राव्यपि ग्राह्य एव, स्त्रीकृतमृणमप्रतिविधाय प्रोषित इति कृत्वा ।

ऋणसाधनप्रकारमाह—संप्रतिपत्ताविति । धनिकनिवेद्यमानार्थाभ्युपगमे ऋणिकेन क्रियमाणे, उत्तमः निर्णयोपायः सिद्ध इत्यर्थः । असम्प्रतिपत्तौ तु, साक्षिणः प्रमाणं विवादनिर्णयसाधनम् । साक्षिण इति लिखितस्याप्युपलक्षणम् । कथम्भूताः साक्षिणः कार्याः, प्रात्ययिकाः विश्वासार्हाः, शुचयः बाह्याभ्यन्तरशौचयुक्ताः, अनुमता वा वादिप्रतिवादिसंमताश्च ते च त्रयोऽवराध्याः त्र्यवराः । पक्षानुमतौ वा द्वौ उभयपक्षसंमतौ द्वौ वा । साक्षिणौ, ऋणं प्रति ऋणविषये, न त्वेवैकः एकस्तु साक्षी नैव कार्यः ।

[ साक्षिभावानर्हाः अर्हश्च ]

**प्रतिषिद्धाः स्यालसहायान्वर्थिधनिकधारणिकवैरिन्यङ्गधृतदण्डाः। पूर्वे चाव्यवहार्याः राजश्रोत्रियग्रामभृतककुष्ठिव्रणिनः पतितचण्डालकुत्सितकर्माणोऽन्धबधिरमूकाहंवादिनः स्त्रीराजपुरुषाश्चान्यत्र स्ववर्गेभ्यः। पारुष्यस्तेयसङ्ग्रहणेषु तु वैरिस्यालसहायवर्जाः। रहस्यव्यवहारेष्वेका स्त्री पुरुष उपश्रोता उपद्रष्टा वा साक्षी स्यात् राजतापसवर्जम्।**

**स्वामिनो भृत्यानाम्, ऋत्विगाचार्याश्शिष्याणां, मातापितरौ पुत्राणां चानिग्रहेण साक्ष्यं कुर्युः, तेषामितरे वा। परस्पराभियोगे चैषामुत्तमाः परोक्ताः दशबन्धं दद्युः, अवराः पञ्चबन्धम् इति साक्ष्यधिकारः॥**

———

श्रीमूला

साक्षिभावानर्हानाह—प्रतिषिद्धा इति। स्यालादयोऽष्टौ साक्षिभावे प्रतिषिद्धाः। तत्र अन्वर्थी अर्थिनमनुगतस्तदुपजीवी, न्यङ्गो निहीनाङ्गः, धृतदण्डः राजदण्डितः। शेषाः प्रतीताः। पूर्वे चाव्यवहार्या इत्यादि। पूर्वे अव्यवहार्याः पितापुत्राविभक्तभ्रात्रादयो व्यवहारानर्हाः पूर्वोक्ताः। अहंवादी साक्षी भवामीति स्वयमागतः। शेषाः प्रतीताः। सर्वे एते साक्षित्वे निषिद्धाः। अन्यत्र स्ववर्गेभ्य इति। स्वस्ववर्ग्यातिरिक्ताः प्रतिषिद्धातिरेकिणः सामान्यतः साक्षिणो भवेयुः।

पारुष्यस्तेयसङ्ग्रहणेष्वित्यादि। तुशब्दो विशेषे। पारुष्यादिषु, वैरिस्यालसहायवर्जाः, सर्वे साक्षिणः स्युः। रहस्यव्यवहारेषु, एका स्त्री, एकः पुरुषः, एक उपश्रोता साक्षादश्रावितोऽपि समीपस्थितिवशात् श्रुतार्थः, उपद्रष्टा वा समीपस्थितिवशाद् यदृच्छादृष्टार्थो वा, साक्षी स्यात् राजतापसवर्जं राजानं तापसं च वर्जयित्वा।

स्वामिन इति। ते, भृत्यानाम्, ऋत्विगाचार्याः शिष्याणां, मातापितरौ पुत्राणां च, अनिग्रहेण अबलात्कारेण आत्मेच्छयेत्यर्थः, साक्ष्यं साक्षिकर्म कुर्युः। तेषामितरे वेति। तेषां स्वामिनाम् ऋत्विगाचार्याणां मातापित्रोश्च इतरे भृत्याः शिष्याः पुत्राश्च, अनिग्रहेण साक्ष्यं कुर्युः। परस्परेत्यादि। एषां स्वामिभृत्यादीनां परस्पराभियोगे, उत्तमाः परोक्ताः स्वामिऋत्विगादयः पराजिताश्चेद्, दशबन्धं पराजितधनदशभागं, दद्युः, अवरेभ्यः। अवराः भृत्यादयः, परोक्ताः, पञ्चबन्धं पराजितधनपञ्चभागम्, दद्युः, उत्तमेभ्यः। इति साक्ष्यधिकार इति। व्याख्यात इति शेषः।

[ साक्ष्यनुयोगविधिः ]

**ब्राह्मणोदकुम्भाग्निसकाशे साक्षिणः परिगृह्णीयात् । तत्र ब्राह्मणं ब्रूयात्—'सत्यं ब्रूहि' इति । राजन्यं वैश्यं वा—'मा तवेष्टपूर्तफलं, कपालहस्तः शत्रुबलं भिक्षार्थी गच्छेः' इति । शूद्रम्—'जन्ममरणान्तरे यद्वः पुण्यफलं तद्राजानं गच्छेत्, राज्ञश्च किल्बिषं युष्मान् वा अन्यथावादे, दण्डश्चानुबन्धः । पश्चादपि ज्ञायेत यथादृष्टश्रुतम् । एकमन्त्रास्सत्यमवहरत' इति । अनवहरतां सप्तरात्रादूर्ध्वं द्वादशपणो दण्डः । त्रिपक्षादूर्ध्वमभियोगं दद्युः ॥**

[ साक्षिवचनविसंवादे कर्तव्याः व्यवस्थाः ]

**साक्षिभेदे यतो बहवः शुचयोऽनुमता वा ततो नियच्छेयुः; मध्यं वा**

———

श्रीमूला

अथ साक्ष्यनुयोगविधिमाह—ब्राह्मणोदकुम्भाग्निसकाश इति । ब्राह्मणान् उदकुम्भम् अग्निं चाग्रे कृत्वा, साक्षिणः, परिगृह्णीयाद् विभावयेत् ।

ब्राह्मणानुयोगमाह—तत्र ब्राह्मणमित्यादि । राजन्यं वैश्यं वेति । ब्रूयादिति सम्बध्यते । वचनप्रकारः—मा तवेष्टापूर्तफलमिति । तव यज्ञफलं खातादिकर्मफलं च न सिध्येत् । कपालहस्तः भिक्षापात्रपाणिः, शत्रुकुलं शत्रुगृहं, भिक्षार्थी सन्, गच्छेः, यद्यनृतं ब्रूया इति शेषः । शूद्रानुयोगमाह—शूद्रमिति । ब्रूयादितीहापि सम्बध्यते । वचनप्रकारः—जन्ममरणान्तर इति । जन्ममरणयोर्मध्ये, यद् वः, पुण्यफलं कृतानां पुण्यकर्मणां फलं, तद् राजानं गच्छेत्, राज्ञश्च, यद् जन्ममरणान्तरे किल्बिषं पापं, तद् युष्मान् गच्छेत्, अन्यथावादे असत्यकथने । दण्डश्च अन्यथावादनिमित्तः, अनुबन्धः अनुयायी कालान्तरभावी । न चान्यथावादनिश्चयो निरुपाय इत्याह—पश्चादपीति । यथादृष्टश्रुतं सत्यं तदात्वे गूहितं, पश्चादपि कालान्तरेऽपि, ज्ञायेत अस्मद्यत्नादिति शेषः ।

एकमन्त्राः यूयं सर्वे सम्भूय कृतसंमन्त्रणाः भूत्वा, सत्यं परमार्थम्, अवहरत उपनयत इति ।

अनवहरतामित्यादि । सत्यावहरणार्थं सप्तरात्रावधिर्देयः । तत ऊर्ध्वम् अनवहरताम्, द्वादशपणो दण्डः अर्थादेकैकदिवसस्य । त्रिपक्षादूर्ध्वम्, अभियोगम् अभियोगद्रव्यम्, दद्युः, अर्थाद् दण्डसहितम् । इदं च विधानं मानान्तरेण परमार्थे विज्ञाते सति द्रष्टव्यम् ।

साक्षिभेद इति । साक्षिणामन्योन्यवचनविसंवादे, यतः यस्मिन् पक्षे, बहवः शुचयः अनुमता वा, तिष्ठन्तीति शेषः, ततो नियच्छेयुः तं पक्षमाश्रित्य व्यवहारं

**गृह्णीयुः; तद्वा द्रव्यं राजा हरेत् । साक्षिणश्चेदभियोगादूनं ब्रूयुरतिरिक्त-स्याभियोक्ता बन्धं दद्यात्; अतिरिक्तं वा ब्रूयुस्तदतिरिक्तं राजा हरेत् । बालिश्यादभियोक्तुर्वा दुश्श्रुतं दुर्लिखितं प्रेताभिनिवेशं वा समीक्ष्य साक्षि-प्रत्ययमेव स्यात् ।**

[ मिथ्यावादिसाक्षिविधेयदण्डांशे मतभेदाः ]

**'साक्षिबालिश्येष्वेव पृथगनुयोगे देशकालकार्याणां पूर्वमध्यमोत्तमा दण्डाः' इत्यौशनसाः । 'कूटसाक्षिणो यमर्थमभूतं वा नाशयेयुस्तद्दशगुणं दण्डं दद्युः' इति मानवाः । बालिश्याद् विसंवादयतां चित्रो घातः', इति बार्हस्पत्याः । 'न' इति कौटल्यः । ध्रुवा हि साक्षिणश्श्रोतव्याः ।**

---

श्रीमूला

निर्णयेयुः । मध्यं वा गृह्णीयुः उभयोः पक्षयोः साक्षिगुणसाम्ये उभयसमं कमपि प्रकारं गृह्णीयुः । तदसम्भवे विसंवादितमर्थं राजा गृह्णीयादित्याह—तद्वा द्रव्यं राजा हरेदिति । साक्षिण इति । ते चेदभियुक्तद्रव्याद् ऊनं ब्रूयुः, तर्हि अभियोक्ता, अतिरिक्तस्य स्वार्थितस्य, बन्धं पञ्चभागं, दद्याद्, राज्ञे । अतिरिक्तं वा ब्रूयुः अभियोक्त्रर्थितादधिकम् वा साक्षिणश्चेद् ब्रूयुः, तर्हि, तद् अतिरिक्तं राजा हरेत् । अत्रापवादमाह—बालिश्यादभियोक्तुर्वेति । अभियोक्तृमौर्ख्याद् वा, दुःश्रुतं लेखकेनान्यथाश्रुतं, दुर्लिखितम् अन्यथा लिखितं च, समीक्ष्य पर्यालोच्य, प्रेताभिनिवेशं वा बन्धुमरणशोकनिमित्तं लेखकचित्तविक्षेपं च, समीक्ष्य, साक्षिप्रत्ययमेव स्यात् साक्षिवाक्याप्तिनिर्णयमेव ऋणादानं स्यात् ।

साक्षिबालिश्येष्वेव पृथगनुयोग इति । प्रत्येकं प्रश्ने साक्षिणां मौर्ख्यकृतेषु वचनविसंवादेषु, देशकालकार्याणां विसंवादे इति शेषः, पूर्वमध्यमोत्तमा दण्डाः यथा-सङ्ख्यं पूर्वादिसाहसदण्डाः । इति औशनसाः ।

कूटसाक्षिण इति । कपटसाक्षिणः, यमर्थम्, अभूतं वा कुर्युः असत्यमेव कल्पयित्वा ब्रूयुः, भूतं वा नाशयेयुः यमर्थं सत्यमेव हीनं कथयेयुः, तद्दशगुणं कल्पित-नाशितदशगुणं, दण्डं दद्युः । इति मानवाः ।

बालिश्याद्वेति । मौर्ख्याद्, विसंवादयतां विसंवादं कथयताम्, चित्रो, घातः वधः । इति बार्हस्पत्याः ।

नेति कौटल्य इति । एतच्च विशेषपरं न तु प्रतिषेधपरम् । विशेषश्चायम्—यद् ध्रुवसाक्षिण एव साक्षिपदे कर्तव्या इति । तदाह—ध्रुवा हि साक्षिणः श्रोतव्या इति ।

**अशृण्वतां चतुर्विंशतिपणो दण्डः, ततोऽर्धमध्रुवाणाम् ॥**

[ निगमनम् ]

**देशकालाविदूरस्थान् साक्षिणः प्रतिपादयेत् ।**
**दूरस्थान् अप्रसारान् वा स्वामिवाक्येन साधयेत् ॥१४०॥**

इति धर्मस्थीये ऋणादानम्, एकादशोऽध्यायः,
आदितोऽष्टषष्टितमः

---

श्रीमूला

अशृण्वतां श्रवणार्थमाहूतानामनागतानां ध्रुवाणां, चतुर्विंशतिपणो दण्डः । ततोऽर्धं द्वादशपणः, अध्रुवाणाम् । तत्र ध्रुवाश्चत्वारिंशत्कुलिकाः, तदनन्तर्गता अध्रुवाः ।

अध्यायान्ते श्लोकमाह—देशकालाविदूरस्थानिति । देशतः कालतश्चादूरस्थितान्, साक्षिणः, प्रतिपादयेद् अर्थी स्वयमेवानीय वादयेत् । दूरस्थान्, अप्रसारान् वा समीपस्थानेवाहूतानागतान् वा, स्वामिवाक्येन प्राड्विवाकाज्ञया, साधयेत् आनाययेत् ॥

इति कौटलीयार्थशास्त्रव्याख्यायां धर्मस्थीये तृतीयाऽधिकरणे
एकादशोऽध्यायः, ऋणादानम्,
आदितोऽष्टषष्टितमः ॥

# चतुष्षष्टितमं प्रकरणम्

## द्वादशोऽध्यायः

## औपनिधिकम्

[ निक्षेपाप्रत्यर्पणोपाधयः ]

**उपनिधिः ऋणेन व्याख्यातः। परचक्राटविकाभ्यां दुर्गराष्ट्रविलोपे वा, प्रतिरोधकैर्वा ग्रामसार्थव्रजविलोपे, चक्रयुक्ते नाशे वा ग्राममध्याग्न्युदकाबाधे वा, किञ्चिदमोक्षयमाणे कुप्यमनिर्हार्यवर्जमेकदेशमुक्तद्रव्ये वा, ज्वालावेगोपरुद्धे वा, नावि निमग्नायां मुषितायां वा स्वयमुपरूढो नोपनिधिमभ्याभवेत् ॥**

---

श्रीमूला

औपनिधिकमिति सूत्रम्। उपनिधिर्न्यासो निक्षेप इति पर्यायाः। तत्संबद्धमभिधीयते इति सूत्रार्थः। उपनिधिर्विप्रतिपत्तावृणवद् व्यवहार्य इत्यतस्तदनन्तरमस्याभिधानसङ्गतिः।

उपनिधिर्ऋणेन व्याख्यात इति। ऋणं यथाधमर्णेन तत्पुत्रादिना च प्रत्यर्पणीयं, विप्रतिपत्तौ तु साक्ष्यनुयोगादिना विभावनीयं, तथैवोपनिधिरित्यतिदेशार्थः। उपनिधिरिति च अध्यादेशान्वाधीनामप्युपलक्षणम्। प्रत्यर्पणापवादमाह—परचक्राटविकाभ्यामिति। शत्रुसैन्येनाटविकेन च, दुर्गराष्ट्रविलोपे वा नोपनिधिमभ्यावहेत् उपनिधिं न प्रत्यर्पयेत्। प्रतिरोधकैर्वा ग्रामसार्थव्रजविलोपे चौरैर्ग्रामस्य सार्थस्य वणिक्सङ्घस्य व्रजस्य गवाश्वादिस्थानस्य च विलोपे, नोपनिधिमभ्यावहेत्। चक्रयुक्ते नाशे वा चक्रं छद्मविशेषः तत्प्रयुक्ते, नाशे वा, नोपनिधिमभ्यावहेत्। ग्राममध्याग्न्युदकाबाधे वा ग्राममध्येऽग्निदाहजलप्रवाहबाधायां वा, नोपनिधिमभ्यावहेत्। किञ्चिदमोक्षयमाणे कुप्यमनिर्हार्यवर्जमेकदेशमुक्तद्रव्ये वेति। अयमर्थः—अग्न्युदकबाधे कुप्यद्रव्यं निर्हार्यमेकदेशतो मोचयित्वा किञ्चिदवशिष्टं कुप्यांशममोचयमानः कुप्यं नाभ्यावहेत्। अनिर्हार्यवर्जमिति च निर्हार्यद्रव्य एवैकदेशतो विमोक्षणस्य सम्भवो न त्वनिर्हार्यद्रव्य इति वस्तुस्थितिमात्रं कथ्यते। तेनानिर्हार्य कुप्यविषये तूष्णीमवस्थानमप्यग्न्युदकबाधे नापराधायेत्युक्तप्रायम्। ज्वालावेगोपरुद्धे वेति। ज्वालावेगोपरोधवशादुपनिधिमोचनासमर्थे वा सति, नोपनिधिमभ्यावहेत्। नावि निमग्नायां, मुषितायां वा चोरितायां वा सत्यां, स्वयमुपरूढः कृतात्मत्राणः, नोपनिधिमभ्यावहेत्। इह

[ स्वाम्यनुज्ञां विना निक्षिप्तस्य धनस्य दुरुपयोगे व्यवस्थाः ]

**उपनिधिभोक्ता देशकालानुरूपं भोगवेतनं दद्यात्, द्वादशपणं च दण्डम् । उपभोगनिमित्तं नष्टं विनष्टं वाऽभ्याभवेत्, चतुर्विंशतिपणश्च दण्डः; अन्यथा वा निष्पतने । प्रेतं व्यसनगतं वा नोपनिधिमभ्यावहेत् । आधानविक्रयापव्ययनेषु चास्य चतुर्गुणपञ्चबन्धो दण्डः । परिवर्तने वा मूल्यसमः । तेन आधिप्रणाशोपभोगविक्रयाधानापहारा व्याख्याताः ॥**

[ चरस्थिरपदार्थानाधीकृत्य धनग्रहणे प्रत्यर्पणव्यवस्थाः ]

**नाधिस्सोपकारः सीदेत्, न चास्य मूल्यं वर्धेत । निरुपकारः सीदेन्मूल्यं चास्य वर्धेत अन्यत्र निसर्गात् ॥**

---

श्रीमूला

चोत्तरत्र च 'अभ्याभवेदि'ति मातृकासु पाठो दृश्यते, स तु 'अभ्यावहेद्' इत्यस्मिन्नेव-पदे केरलीयलिपिलिखिते हकारे भकारभ्रान्तिं कृत्वा वकारस्य तदुत्तरस्थानस्थितियोग्यतां मन्यमानेन लेखकेन कल्पितो नूनम् । अभ्याङ्पूर्वस्य भवतेर्वा प्रत्यर्पणार्थत्व-मदृष्टश्रुतस्यापि लिपिलेखनप्रामाण्याभिमाने कल्पनीयम् ।

उपनिधिभोक्तेति । विना स्वाम्यनुज्ञामुपनिधिं भुञ्जानः, देशकालानुरूपं भोगवेतनं, दद्यात् स्वामिने । द्वादशपणं दण्डं च दद्याद् राज्ञे । उपभोगनिमित्तम् उपभोगाय गृहीतं द्रव्यं, नष्टम् अन्यापहृतं, विनष्टं वा स्वरूपहानिं प्राप्तं वा ।

अभ्यावहेत् प्रतिदद्यात् । चतुर्विंशतिपणश्च दण्डः नाशकस्य । अन्यथा वा निष्पतने उपभोगं विनैवोपनिधेरन्यत्र गमने च, चतुर्विंशतिपणो दण्ड इति वर्तते । प्रेतं, व्यसनगतं वा उपनिधिग्राहिणम्, उपनिधिं, नाभ्यावहेत् न दापयेत् ।

आधानेत्यादि । अस्य उपनिधेः, आधानविक्रयापव्ययनेषु च आधीकरण-परस्वीकरणापलापेषु च, चतुर्गुणपञ्चबन्धो दण्डः उपनिहितं चतुर्गुणं देयम् उपनिधात्रे चतुर्गुणस्य पञ्चभागोदण्डः च राज्ञे । परिवर्तन इति । उपनिहितविनिमये, निष्पातने वा अन्यत्र सङ्क्रामणे वा, मूल्यसमः, दण्ड इति वर्तते ।

तेनेति । उक्तेन विधानेन, आधिप्रणाशोपभोगविक्रयाधानापहाराः व्याख्याताः आधिप्रणाशोपभोगादिविषयं विधानम् उपनिधिप्रणाशोपभोगादिविधानेन यथोक्तेन तुल्यमित्यर्थः ।

नाधिरिति । सोपकारः आधिः वाहदोहादियुक्तो गवादिरूपः, न सीदेत् न नश्येत्, धनं गृहीत्वा प्रत्यर्पणीयमित्यर्थः । कुत इत्याकाङ्क्षायां प्रणाशनिमित्तं धन-द्वैगुण्यं प्रति हेतुभूताया वृद्धेस्तत्राभावादित्याह—न चास्य मूल्यं वर्धेतेति । अस्य सोपकारस्याधेः । निरुपकार इति । उपभोगरहितः आधिः, सीदेत्, अस्य मूल्यं च

**उपस्थितस्याऽऽधिमप्रयच्छतो द्वादशपणो दण्डः। प्रयोजकासन्निधाने वा ग्रामवृद्धेषु स्थापयित्वा निष्क्रयमाधिं प्रतिपद्येत। निवृत्तवृद्धिको वाऽऽधिस्तत्कालकृतमूल्यस्तत्रैवावतिष्ठेत, अनाशविनाशकरणाधिष्ठितो वा। धारणकसन्निधाने वा विनाशभयात् उद्‌गतार्घं धर्मस्थानुज्ञातो विक्रीणीत; आधिपालप्रत्ययो वा॥**

**स्थावरस्तु प्रयासभोग्यः फलभोग्यो वा। प्रक्षेपवृद्धिमूल्यशुद्धम् आजीवममूल्यक्षयेणोपनयेत्॥**

---

श्रीमूला

धनं च, वर्धेत। कदा, अन्यत्र निसर्गात्। निसर्गं उपभोगानुज्ञा सा चेन्न दत्ता तदा। सति तु निसर्गेऽनुपभोगो धनिकस्यैवापराध इति धनं नैव वर्धेतेत्यभिप्रायः।

उपस्थितस्येति। सधनस्याधिग्रहणाय गृहमुपगतस्याधमर्णस्य, आधिम्, अप्रयच्छतः अप्रत्यर्पयतो धनिकस्य, द्वादशपणो दण्डः। प्रयोजकासन्निधाने वेति। धनप्रयोक्तुर्देशान्तरगमनादिना सान्निध्याभावे, ग्रामवृद्धेषु निष्क्रयं देयं मूल्यं, स्थापयित्वा, आधिं, प्रतिपद्येत प्रतिगृह्णीयात्। आधिग्रहणासौकर्ये त्वाह—निवृत्तेत्यादि। आधिः, निवृत्तवृद्धिकः निष्क्रयस्थापनकालात्प्रभृति वृद्धिरहितः, तत्कालकृतमूल्यः कालान्तरविनाशशङ्कायां धारणकोपस्थानकाल एव व्यवस्थापितमूल्यः, तत्रैव प्रयोजककुल एव, अवतिष्ठेत। धारणकासन्निधाने विनाशशङ्कायामाह—अनाशविनाशकरणाधिष्ठितो वेति। अनाशस्याविनाशस्य च यत् करणं साधनं तद्युक्तो वा, कार्यं इति शेषः। रक्षणाशक्तावाह—धारणकसन्निधाने वेति। अधमर्णस्य सन्निधाने वा, विनाशभयाद्, उद्‌गतार्घम् उद्रिक्तमूल्यं यथा भवति तथा, धर्मस्थानुज्ञातो विक्रीणीत।

आधिपालप्रत्ययो वेति। आधिपाल आधिस्थेयः प्रत्ययः प्रमाणं यस्य स तथाभूतो वा भवेद्, आधिपालवचनानुरोधेन रक्षणं विक्रयणं वाधेः कुर्यादित्यर्थः।

स्थावरस्त्विति। स्थावरः अचरः आधिर्भूमिवृक्षादिः, प्रयासभोग्यः आधिग्राहकेण स्वयं कर्षणादिना परिश्रमेण भोक्तव्य इत्येकः, फलभोग्यः फलम् आधातृश्रमनिष्पन्नं भोग्यम् आधिग्राहकेण भोक्तव्यं यस्य स तथाभूत इत्यपरः इत्येवं द्विप्रकारः।

भोग्यत्वोक्त्या च भोगातिरेकेण स्थावरस्य वृद्ध्यभावो विक्रयाभावश्चोक्तप्रायः। प्रक्षेपवृद्धिमूल्यशुद्धमिति। वाणिज्याधिगतस्यैतावतो लाभस्यैतावद् देयमिति परिभाषिता वृद्धिः प्रक्षेपवृद्धिः तस्या मूल्यतः शुद्धं विशोधितं कृत्वेति शेषः, आजीवम् उपभुज्यमानमाधिम्, उपनयेत् प्रत्यर्पयेत्, कथम्, अमूल्यक्षयेण मूल्यक्षयाभावेन प्रयुक्तयावन्मूल्यग्रहणेनेत्यर्थः।

[ आधीकृतस्य दुरुपयोगे दण्ड., आदेशा-
न्वाध्वोर्विषये विशेषश्च ]

**अनिसृष्टोपभोक्ता मूल्यशुद्धमाजीवं बन्धं च दद्यात् । शेषमुपनिधिना व्याख्यातम् ॥**

**एतेनादेशोऽन्वाधिश्च व्याख्यातौ ॥**

**सार्थेनान्वाधिहस्तो वा प्रदिष्टां भूमिमप्राप्तश्चोरैर्भग्नोत्सृष्टो वा नान्वाधिमभ्यावहेत् । अन्तरे वा मृतस्य दायादोऽपि नाभ्यावहेत् शेषमुपनिधिना व्याख्यातम् ॥**

[ याचितकादिविषये व्यवस्था: ]

**याचितकमवक्रीतकं वा यथाविधं गृह्णीयुस्तथाविधमेवार्पयेयुः । भ्रेषोपनिपाताभ्यां देशकालोपरोधि दत्तं नष्टं विनष्टं वा नाभ्याभवेयुः । शेषमुपनिधिना व्याख्यातम् ॥**

---

श्रीमूला

अनिसृष्टोपभोक्तेति । अननुज्ञाताधिभोक्ता, मूल्यशुद्धं मूल्याच्छुद्धम्, आजीवं बन्धं च दद्याद् आधातुर्भोगमूल्यं राज्ञो दण्डं च दद्यात् स्वप्रयुक्तं मूल्यं भोगमूल्यदण्डतष्टावशिष्टमेव लभेत न तु सर्वमित्यर्थः । शेषमुपनिधिना व्याख्यातमिति । अनुक्तं विधानमुपनिधिविधानेन समानमित्यर्थः ।

आधिकल्पमादेशान्वाध्योरतिदिशति—एतेनेत्यादि । अन्यस्मै दीयतामित्युक्त्वा तदन्यस्य हस्तेऽर्पितं द्रव्यमादेशः । एतावदध्वान्तरं रक्षित्वा देहीत्यर्पितमन्वाधिः । सार्थेनेति । अन्वाधिहस्तः अन्वाधिमध्वनि नयन्, वाशब्दो वाक्यभूषणम् । प्रदिष्टां निर्दिष्टां, भूमिम् अध्वोत्तरावधिम्, अप्राप्तः, चोरैः, सार्थेन अध्वगसङ्घेन सह, भग्नोत्सृष्टो वा मुषितविसृष्टश्च, अन्वाधिं, नाभ्यावहेत् न निष्क्रीणीयात् । अन्तरे वा अध्वमध्ये वा, मृतस्य अन्वाधिहस्तस्य, दायादोऽपि नाभ्यावहेत् । शेषं विधानम् उपनिधिना व्याख्यातम् उपानिधिविधानवद् द्रष्टव्यम् ।

याचितकमिति । याच्ञयोपयोगाय गृहीतम्, अवक्रीतकं वा भाटकगृहीतं वा यथाविधं गृह्णीयुस्तथाविधमेवार्पयेयुः । भ्रेषोपनिपाताभ्यामिति । भ्रेषो हस्त्यादिदुष्टसत्त्वजनितं भयम् उपनिपातश्चोरादिभयं ताभ्यां, नष्टं विनष्टं वा, देशकालोपरोधि अमुकदेशान्न प्रस्थातव्यमिति वा एतावतः कालस्य न प्रस्थातव्यमिति वा देशकालोपरोधान्नष्टं विनष्टं वा, दत्तं नाभ्यावहेयुः । शेषमित्यादि सुबोधम् ।

स्वामिप्रतिनिधित्वेन वस्तूनि विक्रीणानानां नियमाः ]

**वैयावृत्यविक्रयस्तु—वैयावृत्यकराः यथादेशकालं विक्रीणानाः पण्यं यथाजातमूल्यमुदयं च दद्युः। शेषमुपनिधिना व्याख्यातम् ॥**

**देशकालातिपातने वा परिहीणं सम्प्रदानकालिकेन अर्घेण मूल्यमुदयं च दद्युः। यथासम्भाषितं वा विक्रीणानाः नोदयमधिगच्छेयुः, मूल्यमेव दद्युः। अर्घपतने वा परिहीणं यथापरिहीणं मूल्यमूनं दद्युः ॥**

**सांव्यवहारिकेषु वा प्रात्ययिकेष्वराजवाच्येषु भ्रेषोपनिपाताभ्यां नष्टं विनष्टं वा मूल्यमपि न दद्युः। देशकालान्तरितानां तु पण्यानां क्षयव्यय-शुद्धमूल्यमुदयं च दद्युः, पण्यसमवायानां च प्रत्यंशम्। शेषमुपनिधिना व्याख्यातम्। एतेन वैयावृत्यविक्रयो व्याख्यातः ॥**

---

श्रीमूला

वैयापृत्यविक्रयस्त्विति। अभिधीयत इति शेषः। वैयापृत्यकराः इह पृशब्दः पठ्यते न तु वृशब्दः। व्यापृतो व्याप्रियमाणस्तस्य कर्म वैयापृत्यं कर्मणि ष्यञ् तत्कराः कर्मकरा इत्यर्थः। वैयावृत्यकरा इति वृशब्दपाठे यथा कर्मकरार्थता, तथा व्याख्यातमधस्तात्। यथादेशकालं स्वस्वक्लृप्तदेशकालावनतिक्रम्य, पण्यं विक्रीणानाः, यथाजातं यथोत्पन्नं मूल्यम्, उदयं लाभं च, दद्युः, पण्यस्वामिने। शेषमित्यादि स्पष्टम्।

देशकालातिपातने वेति। देशातिक्रमणे कालातिक्रमणे वा स्वकृते सति, परिहीणं लाभच्छेदं, सम्प्रदानकालिकेनार्घेण क्लृप्तकालप्रसिद्धमूल्यकल्पनेन, मूल्यं पण्यमूल्यम्, उदयं च दद्युः।

यथासम्भाषितं वेति। अमुकेनार्घेण विक्रेतव्यमिति स्वामिपरिभाषानुसारेण, कर्मकराः विक्रीणानाश्चेद्, उभयं मूल्यं लाभं च, नाधिगच्छेयुः, अर्थात् पण्यस्वामिनः। मूल्यमेव दद्युः मूल्यं केवलं पण्यस्वामिने दद्युः कर्मकराः, लाभं तु स्वयं हरेयुरित्यर्थः। अर्घपतने वा परिहीणमिति। अर्घपतनवशात् किञ्चित् परिहीणं यदि भवेत्, यथा परिहीणं मूल्यमूनं दद्युः परिहीणानुरोधेन पण्यमूल्यमूनं पूरयित्वार्पयेयुः।

सांव्यवहारिकेषु वेति। परपण्यक्रयविक्रयजीविषु, प्रात्ययिकेषु प्रत्ययार्हेषु, अराजवाच्येषु राजाप्रतिषिद्धेषु सत्सु, भ्रेषोपनिपाताभ्यां, नष्टं विनष्टं वा पण्यं, यदि भवेदिति शेषः, मूल्यमपि न दद्युः अर्थात् ते। देशकालान्तरितानां देशान्तरे कालान्तरे च विक्रेतुमर्पितानां पण्यानां, क्षयव्ययविशुद्धं क्षयः कालपरिवासनिमित्तः पण्यक्षयः व्ययः कर्मकरादिभक्तपरिव्ययस्ताभ्यां परितष्टं, मूल्यम्, उदयं च लाभं च दद्युः। पण्यसमवायानां च प्रत्यंशमिति। वणिजः स्वदत्तपण्यानि देशान्तरे विक्रीय ततः समानीतानां नानापण्यान्तराणां विषये प्रतिलाभांशं सांव्यवहारिकेभ्यो दद्युः।

[ भूषणाद्यर्थं शिल्पहस्तनिक्षिप्तानां सुवर्णादीनां रक्षणोपायः ]

**निक्षेपश्चोपनिधिना ॥**

**तमन्येन निक्षिप्तमन्यस्यार्पयतो हीयेत निक्षेपापहारे पूर्वापदानं निक्षेप्तारश्च प्रमाणम् ॥**

**अशुचयो हि कारवः। नैषां करणपूर्वो निक्षेपधर्मः। कारणहीनं निक्षेपमव्ययमानं गूढभित्तिन्यस्तान् साक्षिणो निक्षिप्ता रहस्यप्रणिपातेन प्रज्ञापयेत्। वनान्ते वा मद्यप्रहवणे विश्वासेन ॥**

[ शिल्पिनामार्जवज्ञानाय प्रयोक्तव्याः परीक्षाः ]

**रहसि वृद्धो व्याधितो वैदेहकः कश्चित् कृतलक्षणं द्रव्यमस्य हस्ते निक्षिप्यापगच्छेत्।**

---

श्रीमूला

शेषमित्यादि गतार्थम्। सांव्यवहारिकोक्तमेतद् विधानं वैयापृत्यविक्रयेऽप्यतिदिशति—एतेनेत्यादि।

निक्षेपश्चेति। भूषणादिनिर्माणार्थं कारुषु निक्षिप्यमाणं स्वर्णादिकं निक्षेपः, सः, उपनिधिना, व्याख्यात इत्यनुवर्तते। तमिति। तं निक्षेपम्, अन्येन निक्षिप्तम्। अन्यस्यार्पयतः तदन्यस्मै ददानस्य कारोः, हीयेत द्रव्यहानिर्भवति साक्षान्निक्षेप्तृहस्ते स पुनर्देय एवेत्यर्थः। निक्षेपापहारे, पूर्वापदानं निक्षेप्तारश्च प्रमाणं कारुपूर्वचरितं निक्षेप्तृसुजनतां च पर्यालोच्य निर्णयः कर्तव्य इत्यर्थः। कुत एवं, तत्राह—अशुचयो हीति। हि यतः, कारवः अशुचयः सत्यहीनाः। एषां, निक्षेपधर्मः निक्षेपव्यवहारः, करणपूर्वो न साक्षिलेख्यपूर्वो न क्रियते विश्वासादेव केवलात् क्रियते। करणहीन-मिति। साक्ष्यादिरहितं, निक्षेपम्, अपव्ययमानम् अपलपन्तं कारुं, गूढभित्तिन्यस्तान्, साक्षिणः, निक्षेप्ता, रहस्यप्रणिपातेन रहस्ये प्रार्थनपूर्वकश्रावणेन, प्रज्ञापयेत् प्रबोधयेत्। वनान्ते वा, मद्यप्रहवणविश्वासेन मद्यगोष्ठीरचनविस्रम्भेण, रहसि साक्षिणः प्रज्ञापयेदिति वर्तते। इह मद्यप्रहवणेति प्रहवणशब्द एव मातृकाग्रन्थेषु सर्वेषु पठ्यते। स च प्रपूर्वाज्जुहोतेरधिकरणे ल्युटि साध्यः। प्रकर्षेण हूयते दीयते पान-भोजनादिकमस्मिन्निति प्रहवणं गोष्ठीरचनमुच्यते। प्रवहणशब्दस्य यथेदृशोऽर्थस्तथोक्तं प्राक्।

रहसीति। विजने वृद्धो व्याधितो वा, वैदेहको भूषणवणिक्, क्वचित् कृत-लक्षणं चिह्नविशेषयुक्तं, द्रव्यम्, अस्य कारोः, हस्ते, निक्षिप्य, अपगच्छेत् म्रियेत।

**तस्य प्रतिदेशेन पुत्रो भ्राता वाऽभिगम्य निक्षेपं याचेत। दाने शुद्धिरन्यथा निक्षेपं स्तेयदण्डं च दद्यात् ॥**

**प्रव्रज्याभिमुखो वा श्रद्धेयः कश्चित्कृतलक्षणं द्रव्यमस्य हस्ते निक्षिप्य प्रतिष्ठेत। ततः कालान्तरागतो याचेत। दाने शुचिरन्यथा निक्षेपं स्तेयदण्डं च दद्यात् ॥**

**कृतलक्षणेन वा द्रव्येण प्रत्यानयेदेनम्। बालिशजातीयो वा रात्रौ राजदायिकाङ्क्षणभीतः सारमस्य हस्ते निक्षिप्यापगच्छेत्। स एनं बन्धनागारगतो याचेत। दाने शुचिः अन्यथा निक्षेपं स्तेयदण्डं च दद्यात् ॥**

[ प्रत्यर्पणात्पूर्वं शिल्पिनो मरणे कर्तव्योंऽशः
निक्षेप्तृपरीक्षा च ]

**अभिज्ञानेन चास्य गृहे जनमुभयं याचेत। अन्यतरादाने यथोक्तं पुरस्तात् ॥**

---

श्रीमूला

तस्य, प्रतिदेशेन वचनेन, पुत्रो भ्राता वा अभिगम्य निक्षेपं याचेत, चेदिति शेषः, दाने शुद्धिः तदा तदर्पणे कारोरानृण्यं भवति। अन्यथा तदपलापे, निक्षेपं स्वामिने, स्तेयदण्डं च राज्ञे दद्यात्।

प्रव्रज्याभिमुख इत्यादि। सुबोधम्। कृतलक्षणेन वा द्रव्येण प्रत्यानयेदेनमिति। स्वनिक्षेपद्रव्यस्य यल्लक्षणं पूर्वकृतं तद्दर्शनेन वा तदुपलम्भेन वा कारुगृहान्निक्षेपं प्रत्याहरेत्। बालिशजातीयो वेति। मूर्खप्रायो जनः, रात्रौ, राजदायिकाङ्क्षणभीतः राजदायिना राज्ञेऽर्पयिष्यता राजामात्यादिना यत् काङ्क्षणमभिलषणं तेन हेतुना भीतः, सारं रत्नादि प्रशस्तं वस्तु, अस्य कारोः, हस्ते निक्षिप्य अपगच्छेत्। सः निक्षेप्ता, बन्धनागारगतः राजदाय्याकाङ्क्षितसारद्रव्यानुपहरणात् कारणान्तराद् वा कारागारं प्राप्तः, एनं सारं याचेत। चेदिति शेषः। दाने तदा प्रत्यर्पणे शुचिः कारुः। अन्यथा निक्षेपं स्तेयदण्डं च दद्यात्।

अप्रत्यर्पितनिक्षेपादिकस्य कारोर्मरणेत्याह– अभिज्ञानेन चेति। निक्षेपतद्ग्राहिकारुलक्षणाद्यभिज्ञानकथनेन, अस्य कारोः, गृहे, जनं तत्पुत्रादिम् उभयं निक्षेपं सारं च, याचेत। अन्यतरादाने अन्यतरानर्पणे यथोक्तं पुरस्तात् पूर्वं यथोक्तं तथा कुर्यात् निक्षेपं स्तेयदण्डं च दद्यादित्यर्थः।

**द्रव्यभोगानामागमं चास्यानुयुञ्जीत। तस्य चार्थस्य व्यवहारोपलिङ्गनम् अभियोक्तुश्चार्थसामर्थ्यम् ॥**

**एतेन मिथस्समवायो व्याख्यातः ॥**

[ निगमनम् ]

**तस्मात्साक्षिमदच्छन्नं कुर्यात्सम्यग्विभाषितम्।**
**स्वे परे वा जने कार्यं देशकालाग्रवर्णतः ॥१४१॥**

इति धर्मस्थीये औपनिधिकं द्वादशोऽध्यायः,
आदित एकोनसप्ततितमः।

---

श्रीमूला

सत्यासत्यनिश्चयार्थं धर्मस्थकरणीयमाह—द्रव्यभोगानामिति। तद् गृहोपमुज्यमानद्रव्याणाम्, आगमं च, अस्य निक्षेपाद्यपलापकस्य, अनुयुञ्जीत धर्मस्थः। तस्य चार्थस्य अनुयुक्तनिवेदितस्य चार्थस्य, व्यवहारोपलिङ्गनं व्यवहारैर्न्यायैः सत्यासत्यत्वानुमानं, कर्तव्यमिति शेषः। अभियोक्तुश्चार्थसामर्थ्यम् अमुकद्रव्यनिक्षेप्ताहमिति वदितुस्तथाविधद्रव्यनिक्षेपणयोग्यत्वं च, विभावनीयमिति शेषः।

निक्षेपापलापोक्तविधानदिशा रहस्यऋणदानगान्धर्वविवाहाद्यपलापेष्वपि सत्यासत्यनिर्णयोपाया ऊहनीया इत्याह—एतेनेत्यादि।

अध्यायप्रान्ते श्लोकमाह—तस्मादिति। तस्माद् वस्त्वपलापसम्भवात् सत्यासत्यनिर्णयस्य दुस्साधत्वाच्च, कार्यं, साक्षिमद्, अच्छन्नम्, स्वे परे वा स्वजने परजने च, देशकालाग्रवर्णतः देशतः कालतः संख्यातो रूपतश्च, सम्यग्, विभाषितं विविच्य कथितं कुर्याद् वस्त्वपलापस्य परिहारार्थं परिज्ञानार्थं च।

इति कौटलीयार्थशास्त्रव्याख्यायां धर्मस्थीये तृतीयाधिकरणे
द्वादशोऽध्यायः, औपनिधिकम्,
आदितः एकोनसप्ततितमः॥

## पञ्चषष्टितमं प्रकरणम्

### त्रयोदशोऽध्यायः

### दासकर्मकरकल्पः

[ आर्याणां दासीकरणे दण्डाः, तदपवादाश्च ]

**उदरदासवर्जम् आर्यप्रमाणप्राप्तव्यवहारं शूद्रं विक्रयाधानं नयतः-स्वजनस्य द्वादशपणो दण्डः, वैश्यं द्विगुणः, क्षत्रियं त्रिगुणः, ब्राह्मणं चतुर्गुणः। परजनस्य पूर्वमध्यमोत्तमवधा दण्डाः क्रेतृश्रोतॄणां च ॥**

**म्लेच्छानामदोषः प्रजां विक्रेतुमाधातुं वा। न त्वेवार्यस्य दासभावः ॥**

---

श्रीमूला

दासकर्मकरकल्प इति सूत्रम्। दासाः गर्भदासाः कर्मकराः कर्षकगोपालादयः तेषां कल्पः आधानविक्रयादिविधानम् उच्यत इति सूत्रार्थः 'पतिमत्या पुत्रवत्या च स्त्रिया दासाहितकाभ्याम्' इति विवादपदनिबन्धे मनुष्याणामाधानमुक्तम्। विक्रीत-क्रीतानुशये च विक्रय उक्तः। तत्र क आधातव्यो विक्रेतव्यो वेत्येतदधुनाभिधीयते।

उदरेत्यादि। उदरदासवर्जम् अशननिरुपायोऽन्नाच्छादनदानेन रक्ष्यमाण उदरदासः तद्वर्जम्, आर्यप्राणम् आर्यजीवितम्, अप्राप्तव्यवहारं, शूद्रं, विक्रयाधानं नयतः विक्रीणानस्यादधानस्य च, स्वजनस्य, द्वादशपणो दण्डः, वैश्यं द्विगुणः वैश्यं विक्रयाधानं नयतः स्वजनस्य चतुर्विंशतिपणः। क्षत्रियं त्रिगुणः क्षत्रियं विक्रयाधानं नयतः षट्त्रिंशत्पणः। ब्राह्मणं चतुर्गुणः विक्रयाधानं नयतोऽष्टाचत्वारिंशत्पणः। परजनस्य अस्वजनस्य यथोक्तं कुर्वतः, पूर्वमध्यमोत्तमवधाः यथाक्रमं प्रथमसाहसो मध्यमसाहस उत्तमसाहसो घातश्च दण्डाः। क्रेतृश्रोतॄणां च शूद्रादि मूल्यदानेन स्वीकुर्वतां तत् साक्षिणां च पूर्वमध्यमोत्तमवधा दण्डाः।

म्लेच्छानामिति। म्लेच्छाः अनार्याः कृषिशस्त्रजीविनो तेषां वन्याः विषये, अदोषः प्रजां विक्रेतुमाधातुं वा स्वीयप्रजाविक्रयाधानम् न दोषाय। आर्यस्य जनस्य दासभावः नत्वेव नैवापादनीयः।

**अथवा आर्यमाधाय कुलबन्धने आर्याणामापदि निष्क्रयं चाधिगम्य बालं साहाय्यदातारं वा पूर्वं निष्क्रीणीरन् ॥**

[ मिथ्याधानकरणे दण्डाः ]

**सकृदात्माधाता निष्पतितः सीदेत्, द्विरन्येनाहितकः, सकृदुभौ परविषयाभिमुखौ । वित्तापहारिणो वा दासस्यार्यभावमपहरतोऽर्धदण्डः । निष्पतितप्रेतव्यसनिनामाधाता मूल्यं भजेत ॥**

[ आधीकरणार्थदत्तमूल्यनाशने आधीकृत-
विमोचनहेतवः, विशेषे दण्डश्च ]

**प्रेतविण्मूत्रोच्छिष्टग्राहणम् आहितस्य नग्नस्नापनं दण्डप्रेषणमतिक्रमणं च स्त्रीणां मूल्यनाशकरम् ।**

---

### श्रीमूला

आपत्कल्पमाह—अथवेति । कुलबन्धने कुलस्य कृच्छ्रप्राप्तौ, आर्याणामापदि बहूनामार्याणां विपत्प्राप्तौ च, आर्यम् आधाय आपन्निवृत्त्यपेक्षितधनग्रहणेन धनिके आहितं कृत्वा न तु विक्रीय, निष्क्रयं चाधिगम्य धनिकप्रत्यर्पणीये धने हस्तप्राप्ते सति, बालम् आहितपूर्वं कुमारं, साहाय्यदातारं वा स्वयमाधीभावेन कृतोपकारमबालमपि वा, पूर्वं निष्क्रीणीरन् प्रथमं धनं दत्त्वा प्रत्यानयेयुः शान्तविपदां तन्निष्क्रयणमेव प्रथमानुष्ठेयं कृत्यमित्यर्थः ।

सकृदात्माधाता निष्पतितः सीदेदिति । धनग्रहणेन स्वयमेवात्मानमाधिं कृत्वा धनिकसकाशात् सकृदपसृतश्चेत् पुनर्धनिकमुपगन्तुं नार्हेत्, सद्य एव तद्दृणं निर्यातयेच्चेत्यर्थः । द्विरिति । अन्येनाहितकः, द्विः, निष्पतितः सीदेत् । सकृदिति । उभौ आत्माधातान्याहितकश्च, सकृत् परविषयाभिमुखौ परविषयगामिनौ, सीदेतामिति विपरिणतसम्बन्धः ।

वित्तापहारिणो वेति । स्वामिवित्तमपहरतो, दासस्य गर्भदासस्य, आर्यभावमपहरतोऽर्धदण्डः आर्यद्रव्यहारिस्तेनदण्डस्यार्धं दण्डो भवति । आर्यद्रव्यमपहरत इति क्वचित् पाठः । निष्पतितप्रेतव्यसनिनाम् आधिग्राहकदोषान्निष्पतितस्य देशान्तरगतस्य प्रेतस्य मृतस्य व्यसनिनो मद्यद्यूतादिव्यसनप्राप्तस्य च दासस्य, मूल्यम् आधाता भजेत ।

प्रेतविण्मूत्रोच्छिष्टग्राहणमिति । आहितस्य प्रेतादिग्राहणं, स्त्रीणाम् आहितानां, नग्नस्नापनं विवस्त्रपुरुषस्नापनं, दण्डप्रेषणं लगुडताडनम्, अतिक्रमणं च उपभोगश्च मूल्यनाशकरम् ।

**धात्रीपरिचारिकार्धसीतिकोपचारिकाणां च मोक्षकरम् । सिद्धमुपचारकस्याभिप्रजातस्य अपक्रमणम् ॥**

**धात्रीमाहितिकां वा अकामां स्ववशामधिगच्छतः पूर्वस्साहसदण्डः, परवशां मध्यमः । कन्यामाहितिकां वा स्वयमन्येन वा दूषयतः मूल्यनाशः शुल्कं तद्द्विगुणश्च दण्डः ॥**

[ विक्रीतात्मतत्पुत्रयोर्विषयें युद्धार्थगृहीतविषये च व्यवस्था: ]

**आत्मविक्रयिणः प्रजाम् आर्यां विद्यात् । आत्माधिगतं स्वामिकर्माविरुद्धं लभेत, पित्र्यं च दायम् । मूल्येन चार्यत्वं गच्छेत् । तेनोदरदासाहितकौ व्याख्यातौ ॥**

**प्रक्षेपानुरूपश्चास्य निष्क्रयः दण्डप्रणीतः कर्मणा दण्डमुपनयेत् ॥**

**आर्यप्राणो ध्वजाहृतः कर्मकालानुरूपेण मूल्यार्धेन वा विमुच्येत ॥**

---

श्रीमूला

धात्रीत्यादि । धात्री उपमाता परिचारिका शुश्रूषिका अर्धसीतिका कर्षकस्त्री उपचारिका आस्तरणबीजनाद्युपचारकर्त्री एतासामाहितानां, च मोक्षकरम् अर्थात् प्रेतविण्मूत्रादिग्राहणादिकम् । सिद्धमिति । दास्याः भक्तदायी भर्ता भवंस्तेनैव वेतनेन दासीस्वामिनः कर्म कुर्वाण उपचारकः उपचारकस्य, अभिप्रजातस्य दास्यां प्रजामुत्पादितवतः, अपक्रमणम् अपूर्णेऽपि कालेऽपसरणं सिद्धम् ।

धात्रीमाहितिकां वेति । ताम् अकामां, स्ववशाम् अभर्तृवशाम्, अधिगच्छतः, पूर्वः साहसदण्डः । परवशां भर्तृवशाम् अधिगच्छतः मध्यमः ।

कन्यामाहितिकां वेत्यादि । तां, स्वयमतिक्रामतोऽन्येनातिक्रामयतो वा, मूल्यं नश्यति । शुल्कं कन्यायै तेन दातव्यं भवति, शुल्कद्विगुणश्च दण्डो राज्ञे दातव्यः ।

आत्मविक्रयिण इति । तस्य, प्रजाम् आत्मविक्रयात् प्रागुत्पन्नमपत्यम्, आर्यां विद्याद् अदासीं जानीयात् । आत्माधिगतमित्यादि । आत्मविक्रयी स्वामिकर्माविरोधेन तन्नार्जितं धनं पितृदायं च लभेत मूल्यदानेन दासभावमोक्षं च प्रतिपद्येत । तेनोदरदासाहितकौ व्याख्याताविति । तयोरप्यात्माधिगतलाभः पितृदायलाभ आर्यत्वप्रत्यापत्तिश्च भवतीत्यर्थः ।

प्रक्षेपेत्यादि । अस्य आत्मविक्रयिणः, निष्क्रयः प्रक्षेपानुरूपः आत्ममोक्षणार्थं देयद्रव्यं विक्रयकालकृतपरिभाषानुरोधि भवेत् ।

दण्डप्रणीत इति । अभिजातः, ध्वजाहृतः युद्धप्रगृहीतः, कर्मकालानुरूपेण

[ दास्यानर्हाणां केषाञ्चिद् दासीकरणे दण्डाः ]

**गृहजातदायागतलब्धक्रीतानामन्यतमं दासम् ऊनाष्टवर्षं विबन्धुमकामं नीचे कर्मणि विदेशे दासीं वा सगर्भामप्रतिविहितगर्भभर्मण्यां विक्रयाधानं नयतः पूर्वस्साहसदण्डः, क्रेतृश्रोतॄणां च। दासमनुरूपेण निष्क्रयेणार्य-मकुर्वतो द्वादशपणो दण्डः, संरोधश्चाऽऽकारणात्। दासद्रव्यस्य ज्ञातयो दायादाः, तेषाम् अभावे स्वामी ॥**

**स्वामिनः स्वस्यां दास्यां जातं समातृकम् अदासं विद्यात्। गृह्या चेत् कुटुम्बार्थचिन्तनी माता भ्राता भगिनी चास्याः अदासाः स्युः। दासं दासीं वा निष्क्रीय पुनर्विक्रयाधानं नयतो द्वादशपणो दण्डः अन्यत्र स्वयं-वादिभ्यः ॥ इति दासकल्पः ॥**

---

श्रीमूला

मूल्यार्धेन विमुच्येत कर्मणः कालस्य चानुरूप्येण मूल्यं किमपि परिकल्प्य तदर्धदानेन मोक्षं लभेत।

गृहजातेत्यादि। गृहजातो दायागतः लब्धः क्रीत इति चतुर्णाम् अन्यतमं दासम्, ऊनाष्टवर्षम् अपूर्णाष्टवयसं, विबन्धुं बन्धुहीनम्, अकामं, नीचे कर्मणि, नयतो नियोजयतः, विदेशे विक्रयाधानं नयतश्च दासीं वा सगर्भाम्, अप्रतिविहितगर्भ-भर्मण्याम् असंविहितप्रसवशुश्रूषापेक्षितद्रव्यां, विक्रयाधानं नयतः, पूर्वः साहसदण्डः। क्रेतृश्रोतॄणां च, पूर्वः साहसदण्ड इति सम्बध्यते।

दासमिति। तम्, अनुरूपेण निष्क्रयेण, आर्यमकुर्वतः दास्यादमोचयतः, द्वादशपणो दण्डः। संरोधश्चाकारणादिति। आकारणमाह्वानं कृत्वा बन्धुभिस्तस्य सम्भूयरोधनेनोपालम्भश्च कार्यः। दासद्रव्यस्येति। दासधनस्य, ज्ञातयो दासम्बन्धवो, दायादाः दायहराः। तेषामभावे स्वामी दायहरः।

स्वामिनः स्वस्यां दास्यामित्यादि। स्वामी यदि स्वीयायां दास्यां पुत्रं जनयेत्, तर्हि स पुत्रो दासो न भवति, सा च दासी दास्यान्मुच्येत। गृह्या चेत् कुटुम्बार्थचिन्तनीति। सा दासी गृहासक्ता कुटुम्बमर्थं च यदि चिन्तयेद्, अस्याः माता भ्राता भगिनी च, अदासाः स्युः दास्यनिर्मुक्ताः स्युः।

दासं दासीं वा निष्क्रीयेत्यादि। सकृद् विक्रीतमाहितं वा दासं तथाविधां दासीं वा निष्क्रयदानेन प्रत्यापद्य पुनस्तौ विक्रीणानस्यादधानस्य च द्वादशपणो दण्डः। अन्यत्र स्वयंवादिभ्यः इति। यदि निष्क्रीताः स्वात्मानं पुनर्विक्रेतव्यमाधा-तव्यं च स्वयं वदेयुस्तदा तद्विक्रयाधानयोर्न दोषः। इति दासकल्प इति। व्याख्यात इति शेषः।

[ कर्मकरभ्यो देयानां वेतनानां व्यवस्था ]

**कर्मकरस्य कर्मसम्बन्धमासन्ना विद्युः। यथासम्भाषितं वेतनं लभेत। कर्मकालानुरूपमसम्भाषितवेतनम्। कर्षकस्सस्यानां गोपालकस्सर्पिषां वैदेहकः पण्यानामात्मना व्यवहृतानां, दशभागसम्भाषितवेतनो लभेत। सम्भाषितवेतनस्तु यथासम्भाषितम्॥**

**कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपरिचारकादिः आशाकारिकवर्गस्तु यथाऽन्यस्तद्विधः कुर्यात्। यथा वा कुशलाः कल्पयेयुः, तथा वेतनं लभेत साक्षिप्रत्ययमेव स्यात्। साक्षिणामभावे यतः कर्म ततोऽनुयुञ्जीत॥**

[ वेतनदातृकर्मकरयोरनार्जवे दण्डाः,
आपत्कालदेयविशेषवेतनं च ]

**वेतनादाने दशबन्धो दण्डः षट्पणो वा अपव्ययमाने द्वादशपणो दण्डः, पञ्चबन्धो वा।**

---

श्रीमूला

कर्मकरकल्पमाह—कर्मकरस्येति। कर्षकगोपालकादेः कर्मकरस्य, कर्मसम्बन्धं कर्मस्वाभियोगम्, आसन्ना विद्युः तदन्तिकस्था भूत्वा उपलभेरन्। यथासम्भाषितं परिभाषितप्रकारं वेतनं लभेत, कर्मकरः असंभाषितवेतनं, कर्मकालानुरूपं कर्मणः तत्कालस्य चानुगुणं, लभेत। तच्च कियदित्याकाङ्क्षायामाह—कर्षक इति। असंभाषितवेतनः, कर्षकः, आत्मना, व्यवहृतानां साधितानां, सस्यानां, दशभागं, लभेत। गोपालकः सर्पिषां दशभागं, लभेत। वैदेहकः पण्यानां दशभागं लभेत। संभाषितवेतनस्तु कर्षकादिः, यथासंभाषितं दशभागान्न्यूनमधिकं वा लभेत।

कारुशिल्पीत्यादि। कार्वादयः षट् प्रतीताः तदादिः, आशाकारिक वर्गः आशया कारिका क्रिया येषां त आशाकारिकाः तेषां वर्गः, यथान्यस्तद्विधः तज्जातीयोऽपर इव कुर्यात्, कर्म। यथा वा कुशलाः, तत्कर्मगुणविशेषज्ञाः कल्पयेयुः स्थापयेयुरेतावद् देयमिति, तथा वेतनं लभेत। साक्षिप्रत्ययमेव स्यादिति, अन्योन्यविप्रतिपत्तौ साक्षिप्रमाणकमेव वेतनं देयम्। साक्षिणामभावे, यतः कर्म ततोऽनुयुञ्जीत यत्र तादृशं कर्म कृतं तत्र कियद् दत्तमिति पृष्ट्वा जानीयात्।

वेतनादाने इति। वेतनस्याप्रदाने, दशबन्धः न्याय्यवेतनदशभागः, षट्पणो वा, दण्डः। अपव्ययमाने गृहीत्वा वेतनं गृहीतं वदति कर्मकरे, द्वादशपणो दण्डः, पञ्चबन्धो वा वेतनपञ्चभागो वा, दण्डः।

**नदीवेगज्वालास्तेनव्यालोपरुद्धः सर्वस्वपुत्रदारात्मदानेनार्तस्त्रातारमाहूय निस्तीर्णः कुशलप्रदिष्टं वेतनं दद्यात् । तेन सर्वत्राऽऽर्तदानानुशया व्याख्याताः ॥**

[ कुलटासम्भोगवेतनव्यवस्था ]

**लभेत पुंश्चली भोगं सङ्गस्योपलिङ्गनात् ।**
**अतियाच्ञा तु जीयेत दौर्मत्याविनयेन वा ॥१४२॥**

इति धर्मस्थीये दासकर्मकरकल्पे दासकल्पः, कर्मकरकल्पे
स्वाम्यधिकारश्च त्रयोदशोऽध्यायः,
आदितस्सप्ततितमः ।

---

श्रीमूला

नदीवेगेत्यादि । नदीवेगादिभिश्चतुर्भिरापत्स्थानैरुपरुद्धः, आर्त्तः सर्वस्वपुत्रदारात्मदानेन त्रातारमाहूय 'यो मां रक्षति तस्मै स्वर्वस्वास्वादिकं दास्यामि' इति प्रतिज्ञया रक्षकमाहूय निस्तीर्णः आहूतेन रक्षितः, कुशलप्रदिष्टं निपुणनिर्दिष्टं वेतनं दद्याद्, रक्षकाय । यथाप्रतिज्ञातं दानं निस्तरणोत्तरकालेऽनुशयानस्य कर्तुमनिच्छतोऽयं विधिः । एवमन्येष्वपि आर्तदानानुषयेषु विधिर्द्रष्टव्य इत्याह—तेनेत्यादि ।

अध्यायान्ते श्लोकमाह—लभेतेति । पुंश्चली बन्धकी, भोगं मैथुनभृतिं, लभेत, सङ्गमस्य उपलिङ्गनात् चिह्नेन विभावनात् । अतियाच्ञा तु अतिमात्रभृतिप्रार्थिनी तु पुंश्चली, जीयेत दण्ड्येत । दौर्मत्याविनयेन वा जीयेत दुर्बुद्धित्वप्रयुक्तेन पुरुषकामप्रातिकूल्याचरणेन च दण्ड्येत ॥

इति कौटिलीयार्थशास्त्रव्याख्यायां धर्मस्थीये तृतीयाऽधिकरणे
त्रयोदशोऽध्यायः, दासकर्मकरकल्पो दासकल्पः, कर्मकरकल्पे
स्वाम्यधिकारः, आदितः सप्ततितमोऽध्यायः ॥

## षट्षष्टितमं प्रकरणम्

### चतुर्दशोऽध्यायः

### ( कर्मकरकल्पः ) सम्भूयसमुत्थानञ्च

[ कर्मकरणात्पूर्वमेव भृत्यादिग्रहणे कर्मकरैः
पालनीया नियमाः ]

**गृहीत्वा वेतनं कर्म अकुर्वतो भृतकस्य द्वादशपणो दण्डः, संरोधश्चाऽऽकारणात् । अशक्तः कुत्सिते कर्मणि व्याधौ व्यसने वा अनुशयं लभेत, परेण वा कारयितुम् । तस्य व्ययं कर्मणा लभेत भर्ता वा कारयितुम् । 'नान्यस्त्वया कारयितव्यो मया वा नान्यस्य कर्तव्यम्' इत्यवरोधे भर्तुरकारयतो भृतकस्याकुर्वतो वा द्वादशपणो दण्डः । कर्मनिष्ठापने भर्तुरन्यत्र गृहीतवेतनो नासकामः कुर्यात् ॥**

---

श्रीमूला

अथ दासकर्मकरकल्पस्य शेषोऽस्मिन्नध्याय आदावुच्यते । भक्तवेतनमन्वहमगृहीत्वा कर्म कुर्वतो विधिरुक्तः पूर्वाध्याये । इह तु गृहीतभक्तवेतनस्य कर्माभिधीयते ।

गृहीत्वेत्यादि । सुबोधम् । संरोधश्चाकारणादिति । आहूय बलादुपरुध्य वा तं कर्म कारयेत् ।

यत्कर्मकरणाय वेतनं गृहीतं तत्कर्मकरणासामर्थ्ये, कुत्सिते वा सति तस्मिन् कर्मणि व्याध्युद्भवे वा पुत्रविपत्त्यादिव्यसनसम्भवे वा कर्म कर्त्तव्यं त्यजन् परेण वा कारयन् कर्मकरो न दुष्यतीत्याह—अशक्त इत्यादि ।

तस्येति । तस्य व्ययकर्मणा अनुशयिहस्ताद् भृतिव्ययक्रियया, भर्ता वा कारयितुं लभेत परेण तत्कर्मानुष्ठापयितुमर्हेत् ।

'मदन्यस्त्वया कर्म न कारयितव्यः, त्वदन्यस्य च मया कर्म न कर्तव्यम्' इति भर्तृभृतकयोः समयनिर्बन्धे सति भर्तुः कर्माकारयतो भृतकस्य चाकुर्वतो द्वादशपणो दण्ड इत्याह—नान्यस्त्वया कारयितव्यः इत्यादि । कर्मेत्यादि । कर्मनिष्ठापन इत्यपपाठः, कर्मानिष्ठापन इत्येव युक्तः पाठः । गृहीतवेतनः, भर्तुः कर्मानिष्ठापने कर्मणोऽपरिसमापने असकामोऽन्यत्र न कुर्याद् भर्त्रनिच्छयान्यत्र कर्म नानुतिष्ठेत् ।

[ सकाले उपस्थितस्य कर्मकरस्य कर्मकरण-
निरोधे मतभेदेन व्यवस्थाः ]

**'उपस्थितमकारयतः कृतमेव विद्यात्' इत्याचार्याः। 'न' इति कौटल्यः। कृतस्य वेतनं, नाकृतस्यास्ति। स चेदल्पमपि कारयित्वा न कारयेत्, कृतमेव अस्य विद्यात्। देशकालातिपातनेन कर्मणामन्यथाकरणे वा नासकामः कृतमनुमन्येत। सम्भाषितादधिकक्रियायां प्रयासं न मोघं कुर्यात् ॥**

[ सङ्घीभूय भृतिग्रहणेन परकीयकर्मकारिणां विशेषः ]

**तेन सङ्घभृता व्याख्याताः। तेषामाधिस्सप्तरात्रमासीत। ततोऽन्यमुप-स्थापयेत्; कर्मनिष्पाकं च। न चानिवेद्य भर्तुस्सङ्घः किञ्चित्परिहरेत्, अपनयेद्वा। तस्यातिक्रमे चतुर्विंशतिपणो दण्डः। सङ्घेन परिहृतस्यार्ध-दण्डः। इति भृतकाधिकारः ॥**

---

श्रीमूला

उपस्थितमिति। अवरोधानुरोधेन कर्म कर्तुमुपस्थितं कर्मकरम्, अकारयतः भर्तुः, कृतमेव विद्याद् अकृतमपि कर्म कृतं जानीयात्, कर्मार्थं पूर्वदत्तं वेतनमपैतीत्यर्थः। इत्याचार्याः वदन्तीति शेषः।

स्वमतमाह—नेति कौटल्य इति। कुत इत्याह—कृतस्येति। कृतस्य वेतन-मस्ति, अकृतस्य वेतनं नास्ति। सः भर्ता, अल्पमपि किञ्चिदपि कर्म कारयित्वा, न कारयेच्चेद् अर्थाच्छेषम्, अस्य भर्तुः कर्मेति शेषः, कृतमेव विद्यात्। देशकालाति-पातनेनेति। क्लृप्तदेशकालातिक्रामणेन करणे, कर्मणाम् अन्यथाकरणे वा, असकामः अनिच्छन्, कृतं नानुमन्येत। सम्भाषितादधिकक्रियायां, प्रयासं तद्विषयं श्रमं मोघं वन्ध्यं, न कुर्याद् यत्किञ्चिदधिकं तदर्थं वेतनं दद्यादित्यर्थः। 'प्रयासं मोघं कुर्यादि'ति पाठे तु स्पष्ट एवार्थः।

तेनेति। उक्तेन भृतकस्य विधिना, सङ्घभृताः संहत्य भृतिग्रहणेन परकीय-कर्मकारिणो भृतकाः, व्याख्याताः, तेष्वपि स एव विधिर्योज्य इत्यर्थः। तेषामाधिरिति। सङ्घभृतानाम्, आधिः अधिष्ठानं बन्धो वा, सप्तरात्रम् आसीत। ततः तदनन्तरम्, अन्यं भृतकसङ्घम्, उपस्थापयेत् सन्निधापयेत्। कर्मनिष्पाकं च पूर्वसङ्घकृतकर्म-परिणामं च, उपस्थापयेद् अवगच्छेत्। न चानिवेद्येति। सङ्घः, भर्तुरनिवेद्य, कञ्चित्, सङ्घावयवं, न च परिहरेत् नैव वर्जयेद् नचोपनयेद् वा। अपनयेदित्यपपाठो नूनम्। तस्य उक्तविधेः, अतिक्रमे, चतुर्विंशतिपणो दण्डः, सङ्घस्य। सङ्घेन परिहृतस्य अनिवेद्य भर्तुरितीहानुवर्तते भर्तारमनिवेद्य गतस्येत्यर्थः, अर्धदण्डः द्वादशपणो दण्डः।

[ सम्भूयसमुत्थानम्—तत्र सङ्घे वेतनविभागः, व्याधि-
दौष्ट्यादिना कर्मानन्वितव्यक्तिविषये व्यवस्थाश्च ]

**सङ्घभृताः सम्भूयसमुत्थातारो वा यथासम्भाषितं वेतनं समं वा विभजेरन् । कर्षकवैदेहका वा सस्यपण्यारम्भपर्यवसानान्तरे सन्नस्य यथाकृतस्य कर्मणः प्रत्यंशं दद्युः । पुरुषोपस्थाने समग्रमंशं दद्युः । संसिद्धे तु धृतपण्ये सन्नस्य तदानीमेव प्रत्यंशं दद्युः । सामान्या हि पथि सिद्धिश्चाऽसिद्धिश्च ॥**

**प्रक्रान्ते तु कर्मणि स्वस्थस्यापक्रामतो द्वादशपणो दण्डः । न च प्राकाम्यमपक्रमणे ॥**

[ तादृशचोरसङ्घव्यवस्था ]

**चोरं त्वभयपूर्वं कर्मणः प्रत्यंशेन ग्राहयेत्, दद्यात् प्रत्यंशमभयं च ।**

---

श्रीमूला

अथवा परिहारप्रयोजकापराधनिमित्तोऽयं दण्डो बोद्धव्यः । इति भृतकाधिकार इति । व्याख्यात इति शेषः ।

सम्भूयसमुत्थानमिति सूत्रम् । बहूनां सम्भूय क्वचित् कर्मणि प्रवृत्तिरिति सूत्रार्थः । तत्कर्तारश्च द्विप्रकाराः परकर्मकराः स्वकर्मकराश्चेति । तत्रोक्ताः पूर्वे । परास्त्विहाभिधीयन्ते ।

सङ्घभृता इति । समुदेत्य कर्मकराः, सम्भूयसमुत्थातारो वा समुदेत्य वाणिज्यादिकारिणो वा, यथासम्भाषितं वेतनं, विभजेरन्, समं वा विभजेरन् सम्भाषणाभावे ।

कर्षकवैदेहका वेति । कृषीवला वणिजश्च, सस्यपण्यारम्भपर्यवसानान्तरे सस्यानां पण्यानां च आरम्भपर्यवसानयोरन्तरे मध्यकाले, सन्नस्य व्याधितस्य सङ्घिनः, यथाकृतस्य कर्मणः प्रत्यंशं यावत् कृतं कर्म तावतः प्रविभागं, दद्युः । पुरुषोपस्थाने कर्मकरणाय व्याधितप्रतिपुरुषोपस्थितौ, समग्रं पूर्णम्, अंशं दद्युः । संसिद्धे त्विति । उद्धृतपण्ये संसिद्धे देशान्तरविक्रयणाय समारोपितपण्ये शकटादौ प्रस्थानसज्जे सति, सन्नस्य व्याधितस्य सम्भूयवाणिज्यकारिणामन्यतमस्य, तदानीमेव प्रत्यंशं तदीयं पण्यभागं, दद्युः । कुतः, सामान्या हि पथि सिद्धिश्चासिद्धिश्चेति । मार्गे पण्यानां रक्षा चापायश्चानियतौ यतः ।

प्रक्रान्ते त्विति । कर्मणि सम्भूयसमुत्थानलक्षणे, प्रक्रान्ते सति, स्वस्थस्य, अपक्रामतः अपसरतः द्वादशपणो दण्डः । दण्डं दत्त्वापि नापक्रमणे स्वाच्छन्द्यमित्याह—न च प्राकाम्यमपक्रमण इति । चोरं त्वभयपूर्वं कर्मणः प्रत्यंशेन ग्राहयेदिति ।

**पुनस्स्तेये प्रवासनमन्यत्र गमने च । महापराधे तु दूष्यवदाचरेत् ॥**

[ यज्ञादिवैदिककर्मणि सङ्घशोऽन्वितानां
तल्लब्धांशभागव्यवस्थाः ]

**याजकाः स्वप्रचारद्रव्यवर्जं यथासम्भाषितं वेतनं समं वा विभजेरन् ॥**

**अग्निष्टोमादिषु च क्रतुषु दीक्षणादूर्ध्वं याजकस्सन्नः पञ्चममंशं लभेत; सोमविक्रयादूर्ध्वं चतुर्थमंशम्; मध्यमोपसदः प्रवर्ग्योद्वासनादूर्ध्वं तृतीयमंशम्; मध्यादूर्ध्वमर्धमंशम्; सुत्ये प्रातस्सवनादूर्ध्वं पादोनमंशम् । माध्यन्दिनात् सवनादूर्ध्वं समग्रमंशं लभेत । नीता हि दक्षिणा भवन्ति । बृहस्पतिसवनवर्जं प्रतिसवनं हि दक्षिणा दीयन्ते । तेनाहर्गणदक्षिणा व्याख्याताः ॥**

**सन्नानाम् आ दशाहोरात्राच्छेषभृताः कर्म कुर्युः । अन्ये वा स्वप्रत्ययाः ।**

---

श्रीमूला

चोरान्तरैः सह चौर्यकर्मकरणविषये सम्भाषितप्रत्यंशं कमपि चोरं पूर्वदत्ताभयं कृत्वा तेनैव तत्सहचरांश्चोरान् ग्राहयेत् । दद्यात् प्रत्यंशमभयं चेति । तस्य ग्राहितचोरस्य प्रतिश्रुतमभयं प्रत्यंशं च यथासम्भाषितं दद्यात् । पुनः स्तेये दत्ताभयचोरेण पुनश्चौर्ये कृते, अन्यत्र गमने च देशान्तरं गत्वा चौर्यकरणे च, प्रवासनं कार्यमिति शेषः । महापराधे दूष्यवदाचरेत्, महापराधं दूष्यवदुपांशु हन्यात् ।

याजका इति । ऋत्विजः, स्वप्रचारद्रव्यवर्जं स्वस्वव्यापारप्रातिस्विकदक्षिणाद्रव्यमपहाय, यथासम्भाषितं वेतनं सामुदायिकं, समं तुल्यं विभजेरन् ।

ऋत्विजोऽग्निष्टोमादिक्रतुकर्मारम्भपर्यवसानान्तरे व्याधितस्यावान्तरतत्तत्कर्मानुष्ठानावधिभेदेनांशभेदानाह—अग्निष्टोमादिषु च क्रतुष्वित्यादि । तत्र याजको दीक्षणाद् दीक्षाकर्मणः, ऊर्ध्वं सन्नः, स्वांशस्य पञ्चममंशं लभेत । सोमविक्रयाद् ऊर्ध्वं, चतुर्थमंशं लभेत । मध्यमोपसदः प्रवर्ग्योद्वासनात् मध्योपसत्सम्बन्धिनः प्रवर्ग्योत्सादनकर्मण ऊर्ध्वं, तृतीयमंशं लभेत । प्रवर्ग्योपासनादिति मातृकयोः पाठः । मध्यात् मध्योपसदनकर्मण ऊर्ध्वम्, अर्धमंशं लभेत । द्वितीयमंशमिति पाठे द्वितीयांशोऽर्धमेव । सुत्ये सुत्याहे, प्रातस्सवनादूर्ध्वं पादोनमंशं लभेत । माध्यन्दिनात् सवनादूर्ध्वं समग्रमंशं लभेत । नीता हि दक्षिणा भवन्तीति । माध्यन्दिनसवनकर्मणि निर्वृत्ते हि दक्षिणाः सर्वाः प्राप्ता भवन्ति । बृहस्पतिसवनवर्जं बृहस्पतिसवनमपहाय, प्रतिसवनं सवने सवने, दक्षिणा दीयन्ते हि । तेनाहर्गणदक्षिणा व्याख्याता इति । उक्तरीत्या याजककार्येष्वहीनयज्ञेष्वपि दक्षिणानयनानुरोधेन याजकांशाः कल्प्याः ।

सन्नानामिति । व्याधितानां भृतकानां कर्म, आ दशाहोरात्रात् शेषभृताः अवशिष्टा भृतकाः, कुर्युः । अन्ये वा स्वप्रत्ययाः स्वाभिमताः, कुर्युः ।

**कर्मण्यसमाप्ते तु यजमानस्सीदेत्, ऋत्विजः कर्म समापय्य दक्षिणां हरेयुः। असमाप्ते तु कर्मणि याज्यं याजकं वा त्यजतः पूर्वस्साहसदण्डः॥**

[ यागादौ सङ्घीभूयसमुत्थानकर्मण्यन्वयानर्हाः ]

**अनाहिताग्निश्शतगुः अजज्वा च सहस्रगुः।**
**सुरापो वृषलीभर्ता ब्रह्महा गुरुतल्पगः॥१४३॥**
**असत्प्रतिग्रहे युक्तः स्तेनः कुत्सितयाजकः।**
**अदोषस्त्यक्तुमन्योन्यं कर्मसङ्करनिश्चयात्॥१४४॥**

इति धर्मस्थीये दासकर्मकरकल्पे भृतकाधिकारः
सम्भूयसमुत्थानम्, चतुर्दशोऽध्यायः,
आदित एकसप्ततितमः

---

श्रीमूला

कर्मणीति। यज्ञकर्मणि, असमाप्ते तु, यजमानः सीदेद् व्याधितो भवेच्चेत्, ऋत्विजः, कर्म समापय्य, दक्षिणां तदर्थां हरेयुः।

असमाप्ते त्विति। कर्मणि असमाप्ते, याज्यं यजमानं त्यजतः याजकस्य, याजकं त्यजतः याज्यस्य वा, पूर्वः साहसदण्डः।

विधिशेषं श्लोकाभ्यां वदन्नध्यायमुपसंहरति—अनाहिताग्निरिति। शतं गावो यस्य स शतगुः। शतगुरनाहिताग्निः शतगवधनः सन्नप्यकृताग्न्याधानः, सहस्रगुरयज्वा च सहस्रगवधनः सन्नप्यकृतयज्ञः, सुरापः मद्यपः वृषलीभर्ता, ब्रह्महा, गुरुतल्पगः गुरुपत्नीगामी, असत्प्रतिग्रहे युक्तः असतः पापिष्ठजनात् प्रतिषिद्धद्रव्यस्य वा प्रतिग्रहे युक्तः आसक्तः, स्तेनः, कुत्सितयाजकः निन्दितान् यो याजयति स च, त्यक्तुमदोषः त्यागे दोषानुत्पादकः संसर्गानर्ह इत्यर्थः। कस्माद्, अन्योन्यं कर्मसङ्करनिश्चयात् कर्मदोषनिश्चयात्।

इति कौटलीयार्थशास्त्रव्याख्यायां धर्मस्थीये तृतीयाधिकरणे
चतुर्दशोऽध्यायः, दासकर्मकरकल्पे भृतकाधिकारः,
सम्भूयसमुत्थानम्, आदितः एकसप्ततितमः॥

## सप्तषष्टितमं प्रकरणम्

### पञ्चदशोऽध्यायः

### विक्रीतक्रीतानुशयः

[ क्रेत्रे विक्रीतवस्त्वनर्पणे दण्डाः, तदपवादश्च ]

**विक्रीयपण्यमप्रयच्छतो द्वादशपणो दण्डः अन्यत्र दोषोपनिपाताविषह्येभ्यः। पण्यदोषो दोषः। राजचोराग्न्युदकबाध उपनिपातः। बहुगुणहीनमार्तकृतं वाऽविषह्यम्। वैदेहकानामेकरात्रमनुशयः, कर्षकाणां त्रिरात्रम्, गोरक्षकाणां पञ्चरात्रम् व्यामिश्राणां उत्तमानां च वर्णानां वृत्तिविक्रये सप्तरात्रम्। आतिपातिकानां पण्यानामन्यत्राविक्रेयमित्यविरोधेनानुशयो देयः। तस्यातिक्रमे चतुर्विंशतिपणो दण्डः, पण्यदशभागो वा ॥**

[ क्रीतपदार्थानां सकालेऽग्रहणे दण्डाः, अपवादाश्च ]

**क्रीत्वा पण्यमप्रतिगृह्णतो द्वादशपणो दण्डः, अन्यत्र दोषोपनिपाताविषह्येभ्यः। समानश्चानुशयः विक्रेतुरनुशयेन ॥**

---

श्रीमूला

विक्रीतक्रीतानुशय इति सूत्रम्। मूल्यग्रहणेन दत्तं विक्रीतं मूल्यदानेन गृहीतं क्रीतं तयोरनुशयो विसंवादोऽभिधीयत इति सूत्रार्थः। क्रयविक्रयविधिरध्यक्षप्रचारे प्रतिपादितः। तद्विषयोऽनुशयोऽनुशयदण्डश्चानुक्ताविहाभिधीयेते।

विक्रीयेत्यादि। सुगमम्।

दोषादीन् व्याचष्टे—पण्यदोषो दोष इत्यादि। बहुगुणहीनं बहुगुणां मूल्यहानिं प्राप्तम्। आर्तकृतम् अस्वस्थमानसकृतम्। शेषं सुगमम्।

अनुशयकालेयत्तामाह—वैदेहकानामित्यादि। वृत्तिविक्रये स्वजीविकाहेतुभूतभूमिविक्रये। शेषं सुबोधम्।

आतिपातिकानामिति। कालपरिवासासहानां सद्योविक्रयाणां पण्यानां पुष्पक्षीरादीनाम्, अन्यत्राविक्रेयमिति परिवासदोषात् तथाविधं पण्यमन्यत्र विक्रेतुमर्हं न भवेदित्येतत् पर्यालोच्य, अविरोधेन तत्तत्पण्यरक्षानुकूल्येन, अनुशयो देयः। तस्यातिक्रम इत्यादि सुबोधम्। क्रीतानुशयमाह—क्रीत्वा पण्यमित्यादि। सुबोधम्। विक्रेत्रनुशयं क्रेतुरतिदिशति—समानश्चेत्यादि।

[ वर्णभेदेन कन्याप्रतिनिवर्तनकालाः
अवधयः, उपाधयश्च ]

**विवाहानां तु त्रयाणां पूर्वेषां वर्णानां पाणिग्रहणासिद्धमुपावर्तनम्; शूद्राणां च प्रकर्मणः। वृत्तपाणिग्रहणयोरपि दोषम् औपशायिकं दृष्ट्वा सिद्धमुपावर्तनम्। न त्वेवाभिप्रजातयोः। कन्यादोषमौपशायिकमनाख्याय प्रयच्छतः कन्यां षण्णवतिर्दण्डः, शुल्कस्त्रीधनप्रतिदानं च। वरयितुर्वा वरदोषमनाख्याय विन्दतो द्विगुणः। शुल्कस्त्रीधननाशश्च॥**

[ सामान्यतः स्वीकृतानां प्राणिनां
प्रतिनिवर्तने कालाः ]

**द्विपदचतुष्पदानां तु कुष्ठव्याधितानामशुचीनाम् उत्साहस्वास्थ्यशुचीनामाख्याने द्वादशपणो दण्डः। आ त्रिपक्षादिति चतुष्पदानामुपावर्तनम्; आ संवत्सरादिति मनुष्याणाम्। तावता हि कालेन शक्यं शौचाशौचौ ज्ञातुमिति॥**

---

श्रीमूला

विवाहानां त्विति। त्रयाणां पूर्वेषां वर्णानां ब्राह्मणक्षत्रियवैश्यानाम्, विवाहानां विवाहविषये, पाणिग्रहणासिद्धमुपावर्तनं पाणिग्रहणेनावरुद्धं पाणिग्रहणावधिकं कन्याप्रत्याहरणं भवति। पाणिग्रहणात् सिद्धमिति पाठे पाणिग्रहणमवधीकृत्येति ल्यब्लोपे पञ्चमी। शूद्राणां च, प्रकर्मणः योनिक्षतिमवधीकृत्य, उपावर्तनं भवति। वृत्तपाणिग्रहणयोरपीति। तथाभूतयोरपि स्त्रीपुंसयोः, दोषमौपशायिकम् उपशायिकासम्बद्धं दोषं योनिक्षतिक्लैब्यादिरूपं दृष्ट्वा साक्षात्कृत्य, सिद्धमुपावर्तनम्। न त्वेवाभिप्रजातयोरिति। जनितप्रजयोरुपार्तनं नास्त्येव।

कन्यादोषमित्यादि। षण्णवतिः षण्णवतिपणः। शुल्कस्त्रीधनप्रतिदानं च शुल्कस्त्रीधनयोर्गृहीतयोः प्रत्यर्पणं च।

वरयितुर्वेत्यादि। विन्दतः परिणयतः।

द्विपदचतुष्पदानां त्विति। तेषां, कुष्ठव्याधिताशुचीनाम्, उत्साहस्वास्थ्यशुचीनामाख्याने उत्साहस्वस्थत्वशुचित्वकथने, द्वादशपणो दण्डः।

आ त्रिपक्षादितीति। पक्षत्रयावधिकमित्येवं, चतुष्पदानामुपावर्तनम्। आ संवत्सरादिति संवत्सरावधिकमित्येवं, मनुष्याणामुपावर्तनम्। तावता हीत्यादि। शौचाशौचे दुष्टत्वमदुष्टत्वं च।

[ निगमनम् ]

**दाता प्रतिग्रहीता च स्यातां नोपहतौ यथा ।**
**दाने क्रये वाऽनुशयं तथा कुर्युस्सभासदः ॥१४५॥**

इति धर्मस्थीये विक्रीतक्रीतानुशयः, पञ्चदशोऽध्यायः,
आदितो द्विसप्ततितमः ।

---

श्रीमूला

अध्यायप्रान्ते श्लोकमाह—दातेत्यादि । कुर्युः व्यवस्थापयेयुः । सभासदः धर्मस्थाः । शेषं सुगमम् ।

इति कौटलीयार्थशास्त्रव्याख्यायां धर्मस्थीये तृतीयाधिकरणे
पञ्चदशोऽध्यायः, विक्रीतक्रीतानुशयः,
आदितो द्विसप्ततितमः ।

## अष्टषष्टितमैकोनसप्ततितमसप्ततितमानि प्रकरणानि

### षोडशोऽध्यायः

### दत्तस्यानपाकर्म, अस्वामिविक्रयः स्वस्वामिसम्बन्धश्च

[ धर्मादिदत्तत्वेन व्यवहृतस्य अप्रदाने व्यवस्था: ]

**दत्तस्याप्रदानमृणादानेन व्याख्यातम् । दत्तमव्यवहार्यमेकत्रानुशये वर्तेत । सर्वस्वं पुत्रदारम् आत्मानं प्रदायानुशयिनः प्रयच्छेत, धर्मदानमसाधुषु, कर्मसु चौपघातिकेषु वा; अर्थदानमनुपकारिषु अपकारिषु वा; कामदानमनर्हेषु च । यथा च दाता प्रतिग्रहीता च नोपहतौ स्यातां तथानुशयं कुशलाः कल्पयेयुः । दण्डभयादाक्रोशभयादनर्थभयाद्वा भयदानं प्रतिगृह्णतः स्तेयदण्डः प्रयच्छतश्च, रोषदानं परहिंसायाम् ।**

---

श्रीमूला

दत्तस्यानपाकर्मेति सूत्रम् । 'तुभ्यमहं सम्प्रददे' इति प्रतिज्ञादिपूर्वं वाचा दत्तस्य अप्रदानमिति सूत्रार्थः । क्रयविक्रयविषयस्तावदनुशय उक्तः, धर्मादिदानविषयस्त्वधुनाभिधीयते ।

दत्तस्याप्रदानमिति । तद्, ऋणादानेन व्याख्यातम् ऋणादानवद् द्रष्टव्यम् । दत्तमनपाकृतम् ऋणमिव साक्ष्यादिभिर्विभाव्य ग्राह्यमित्यर्थः ।

अनुशयविषयं दत्तमाह—दत्तमव्यवहार्यमित्यादि । वाग्दत्तं व्यवहारायोग्यं चेद्, एकत्र अनुशये वर्तेत अनुशये एव केवले वर्तेत । न त्वनुशयात् कदापि मुच्येतेत्यर्थः । सर्वस्वं पुत्रदारम् आत्मानं प्रदाय, अनुशयिनः प्रयच्छेत् पुनर्दद्यात् सर्वस्वादिकम् । धर्मदानमसाधुष्विति । अनुशये वर्तेतेत्यनुवर्तते । साधव इति बुद्ध्या धर्मदानं तेषु प्रतिज्ञातम् असाधुत्वज्ञानानन्तरमनुशये वर्तेत । कर्मसु चौपघातिकेषु वेति । गोरक्षादिप्रशस्तकर्मार्थं धार्मिकत्वबुद्ध्या चोरपारदारिकादिषु कृतं धर्मदानम्, अनुशये वर्तेत । अर्थदानमनुपकारिष्वपकारिषु, वेति, उपकारित्वबुद्ध्यानुपकारिषु अपकारिषु वा कृतमर्थदानम्, अनुशये वर्तेत । कामदानमनर्हेषु चेति । कामनिमित्तं दानमनर्हेष्वर्हत्वबुध्या कृतमनुशये वर्तेत । यथा चेत्यादि सुगमम् ।

दण्डभयादिति । ताडनभयाद्, आक्रोशभयात् निन्दनभयाद्, अनर्थभयाद् वा रोगोन्मादाद्युत्पत्तिभयाद् वा, क्रियमाणं भयदानं, प्रतिगृह्णतः कृत्याभिचारादिवृत्तेः, प्रयच्छतश्च भीरोः स्तेयदण्डः । रोषदानं परहिंसायामिति । कोपदानं परमारणार्थं, प्रतिगृह्णतः प्रयच्छतश्च स्तेयदण्डः इति सम्बध्यते ।

**राज्ञामुपरि दर्पदानं च—तत्रोत्तमो दण्डः ।**

**प्रातिभाव्यदण्डः शुल्कशेषम् आक्षिकं सौरिकं कामदानं च नाकामः पुत्रो दायादो वा रिक्थहरो दद्यात् । इति दत्तस्यानपाकर्म ॥**

[ अस्वामिविक्रये व्यवस्थाः ]

**अस्वामिविक्रयस्तु—नष्टापहृतमासाद्य स्वामी धर्मस्थेन ग्राहयेत् । देशकालातिपत्तौ वा स्वयं गृहीत्वोपहरेत् । धर्मस्थश्च स्वामिनमनुयुञ्जीत—'कुतस्ते लब्धम्' इति । स चेदाचारक्रमं दर्शयेत न विक्रेतारं, तस्य द्रव्यस्यातिसर्गेण मुच्येत । विक्रेता चेद्दृश्येत, मूल्यं स्तेयदण्डं च । स चेदपसारमधिगच्छेदपसरेत् आ अपसारक्षयादिति । क्षये मूल्यं स्तेयदण्डं च दद्यात् ।**

---

श्रीमूला

राज्ञामुपरि दर्पदानं चेति, नृत्तगीतादिकलाकुशलेभ्यो राजभिः कृतात् पारितोषिकदानादधिकतरं पारितोषिकदानं च, कश्चित् कुर्याच्चेदिति शेषः । तत्र विषये उत्तमः उत्तमसाहसो दण्डः ।

प्रातिभाव्यमित्यादि । प्रातिभाव्यं वृथादानोपलक्षणं तद्, दण्डशुल्कशेषं दण्डशेषं शुल्कशेषं च, आक्षिकम् अक्षदेवनकृतमृणं, सौरिकं सुरापानकृतमृणं, कामदानं च नटनर्तकादिदत्तं च, रिक्थहरः पुत्रो दायादो वा, अकामा न दद्यात् । इति दत्तस्यानपाकर्मेति । व्याख्यातमिति शेषः ।

अस्वामिविक्रय इति सूत्रम् । अस्वामिकृतो विक्रयोऽस्वामिविक्रयः । सः तद्दण्डश्चाभिधीयते इति सूत्रार्थः । अस्वामिविक्रयस्त्विवति । प्रतिपाद्यत इति शेषः । नष्टापहृतमिति । तद् द्रव्यम् आसाद्य कस्यचिद् वशे विद्यमानमुपलभ्य, स्वामी, धर्मस्थेन ग्राहयेद् अर्थाद् यस्य वशे द्रव्यं विद्यते तम् । धर्मस्थश्च, स्वामिनं सम्प्रति तदद्रव्योपनेतारम्, अनुयुञ्जीत पृच्छेत्—कुतः ते त्वया लब्धमिति । स पृष्टो द्रव्यहस्तः, आचारक्रमं द्रव्यागमपरिपाटीं, दर्शयेति विभावयेच्चेत्, विक्रेतारं न दर्शयेत चेत्, तस्य द्रव्यस्य अतिसर्गेण स्वामिहस्तेऽर्पणेन, मुच्येत, न तु तस्य स्तेयदण्डः । विक्रेतेति । स चेद् दृश्येत, मूल्यं क्रेतुर्दद्यात्, स्तेयदण्डं च राज्ञे दद्यात् । स चेदिति । स विक्रेता अपसारमधिगच्छेच्चेत् अपराधिपदादात्मापसरणहेतुं विभावयेच्चेद् आत्मनो विक्रेतारमन्यं प्रदर्शयेच्चेदित्यर्थः, अपसरेद् अपक्रामेद् दण्डं विना । आपसारक्षयादिताति ; अयमुत्तरोत्तरापसाराधिगमेनापसरणक्रमोऽपसारक्षयावधिकः सम्भवतीत्यर्थः । क्षये चरमोपलब्धस्य विक्रेतुरपसारानधिगमे सति, मूल्यं स्तेयदण्डं च दद्याद् अर्थात् स एव ।

**नाष्टिकं च स्वकरणं कृत्वा नष्टप्रत्याहृतं लभेत। स्वकरणाभावे पञ्चबन्धो दण्डः। तच्च द्रव्यं राजधर्म्यं स्यात्। नष्टापहृतमनिवेद्योत्कर्षतः स्वामिनः पूर्वः साहसदण्डः॥**

**शुल्कस्थाने नष्टापहृतोत्पन्नं तिष्ठेत्। त्रिपक्षादूर्ध्वमनभिसारं राजा हरेत्, स्वामी स्वकरणेन।**

**पञ्चपणिकं द्विपदरूपस्य निष्क्रयं दद्यात्। चतुष्पणिकमेकखुरस्य; द्विपणिकं गोमहिषस्य; पादिकं क्षुद्रपशूनां; रत्नसारफल्गुकुप्यानां पञ्चकं शतं दद्यात्। परचक्राटवीभृतं तु प्रत्यानीय राजा यथास्वं प्रयच्छेत्। चोरहृतमविद्यमानं स्वद्रव्येभ्यः प्रयच्छेत्। प्रत्यानेतुमशक्तो वा; स्वयंग्राहेणाहृतं प्रत्यानीय तन्निष्क्रयं वा प्रयच्छेत्।**

---

श्रीमूला

नाष्टिकं चेति। नाष्टिकं नष्टवस्तुविषयं, स्वकरणं स्वत्वसाधकं साक्षिलेख्यादि, कृत्वा दर्शयित्वा, नष्टप्रत्याहृतं, लभेत। स्वकरणाभावे, पञ्चबन्धः तद्द्रव्यमूल्यपञ्चभागो दण्डः। तच्च द्रव्यं राजधर्म्यं राज्ञो न्यायप्राप्तं स्यात्।

नष्टापहृतमिति। तद् द्रव्यम्, अनिवेद्य स्वयं गृह्णतः, स्वामिनः पूर्वः साहसदण्डः।

शुल्कस्थान इति। तस्मिन्, नष्टापहृतोत्पन्नं, तिष्ठेत् स्थापितं भवेत्। त्रिपक्षादूर्ध्वम्, अनभिसारम् अभिसारोऽनुगामी तद्रहितं, राजा हरेत्। स्वामी वा स्वकरणेन स्वत्वविभावनेन हरेत्।

नष्टापहृतोत्पन्नस्य द्विपदादेर्मोचननिष्क्रयमाह—पञ्चपणिकमिति। द्विपदरूपस्य द्विपदो दासीदासादिः तद्व्यक्तेरेकस्याः, पञ्चपणिकं निष्क्रयं दद्यात्। तावन्निष्क्रयदानेन द्विपदरूपं मोचयेत्। चतुष्पणिकम्, एकखुरस्य अश्वखरोष्ट्रादेः। द्विपणिकं गोमहिषस्य। पादिकं क्षुद्रपशूनाम्। रत्नसारफल्गुकुप्यानां पञ्चकं शतं शतस्य पञ्चभागं निष्क्रयं दद्यात्।

परचक्राटवीहृतं त्विति। परचक्रेण आटविकेन द्विपदचतुष्पदादिकं, प्रत्यानीय राजा यथास्वं यथायथं प्रयच्छेत्। चोरहृतमविद्यमानं लुप्तं द्रव्यं, स्वद्रव्येभ्यः तज्जातीयेभ्यः, प्रयच्छेत् स्वामिने, राजा प्रत्यानेतुं चोरसकाशात् प्रत्याहर्तुम्, अशक्तो वा अशक्तश्चेत्। स्वयं ग्राहेण आत्मनिर्बन्धेन स्तेनग्रहणविषयेण अथवा स्तेनग्रहणाधिकृतेन, आहृतं प्रत्यानीय प्रयच्छेत्। तन्निष्क्रयं वा मुष्टद्रव्यमूल्यं वा प्रयच्छेत्, पूर्वोक्तासम्भवे।

**परविषयाद्वा विक्रमेणानीतं यथाप्रदिष्टं राज्ञा भुञ्जीतान्यत्रार्यप्राणेभ्यो देवब्राह्मणतपस्विद्रव्येभ्यश्च । इत्यस्वामिविक्रयः ॥**

[ स्वामिनः स्वत्त्वनिवृत्तिहेतवः,
तदपवादाश्च ]

**स्वस्वामिसम्बन्धस्तु—भोगानुवृत्तिरुच्छिन्नदेशानां यथास्वं द्रव्याणाम् । यत् स्वं द्रव्यमन्यैर्भुज्यमानं दशवर्षाण्युपेक्षेत हीयेतास्य अन्यत्र बालवृद्धव्याधितव्यसनिप्रोषितदेशत्यागराज्यविभ्रमेभ्यः विंशतिवर्षोपेक्षितम् अनुवसितं वास्तु नानुयुञ्जीत । ज्ञातयश्श्रोत्रियाः पाषण्डा वा राज्ञामसन्निधौ परवास्तुषु विवसन्तो न भोगेन हरेयुः, उपनिधिमाधिं निधिं निक्षेपं स्त्रियं सीमानं राजश्रोत्रियद्रव्याणि च ॥**

[ आश्रमिप्रभुतिषु परस्परसहानु-
भूतेरावश्यकता ]

**आश्रमिणः पाषण्डा वा महत्यवकाशे परस्परमबाधमाना वसेयुः ।**

---

श्रीमूला

परविषयाद्वेति । शत्रुदेशाद्, विक्रमेण आनीतं सैनिकहृतं धनं, राज्ञा, यथाप्रदिष्टं यथाज्ञप्तं, भुञ्जीत । अन्यत्रार्यप्राणद्रव्येभ्यो देवब्राह्मणतपस्विद्रव्येभ्यश्चेति । आर्यजीवितानां द्रव्याणि देवादीनां द्रव्याणि च तेभ्य एव पुनर्दापयेदित्यर्थः । इत्यस्वामिविक्रयः ।

स्वस्वामिसम्बन्ध इति सूत्रम् । स्वस्वामिनोः सम्बन्धः न्यायाधिगमलक्षणोऽभिधीयत इति सूत्रार्थः ।

स्वस्वामिसम्बन्धस्त्विति । अधिक्रियत इति शेषः । भोगानुवृत्तिरिति । उच्छिन्नदेशानाम् उच्छिन्नसाक्षिकाणां, द्रव्याणां, यथास्वं यथायथं, भोगानुवृत्तिः अविच्छिन्नो भोगः, स्वत्वे प्रमाणं भवतीति वाक्यशेषः ।

यदिति । यत् स्वं स्वीयं द्रव्यम् अन्यैर्भुज्यमानं, दशवर्षाणि उपेक्षेत, हीयेतास्य उपेक्षमाणस्य तद् द्रव्यं हीयेत । अन्यत्र बालेत्यादि । बालवृद्धव्याधितव्यसनिप्रोषितानां द्रव्यम् उपेक्षमाणानां न हीयेत, अबालादीनामपि द्रव्यं देशत्यागे राज्यविभ्रमे चोपेक्षमाणानां न हीयेत ।

विंशतिवर्षोपेक्षितमिति । तथाविधम्, अनुवसितम् अविच्छिन्नाध्युषितं, वास्तु गृहं, नानुयुञ्जीत न प्रार्थयेत । इह वसितपदे सम्प्रसारणाकरणमार्षम् ।

तत्रापवादमाह—ज्ञातय इत्यादि । अतिरोहितार्थम् । आश्रमिण इत्यादि । सुबोधम् ।

**अल्पां बाधां सहेरन् । पूर्वागतो वा वासपर्यायं दद्यात् । अप्रदाता निरस्येत ॥**

[ वानप्रस्थादिधनभागिनः, विवादे व्यवस्थाश्च ]

**वानप्रस्थयतिब्रह्मचारिणाम् आचार्यशिष्यधर्मभ्रातृसमानतीर्थ्याः रिक्थभाजः क्रमेण । विवादपदेषु चैषां यावन्तः पणाः दण्डाः तावती रात्रीः क्षपणाभिषेकाग्निकार्यमहाकृच्छ्रवर्धनानि राज्ञश्चरेयुः । अहिरण्यसुवर्णाः पाषण्डास्साधवः, ते यथास्वमुपवासव्रतैराराधयेयुः अन्यत्र पारुष्यस्तेयसाहससङ्ग्रहणेभ्यः । तेषु यथोक्ता दण्डाः कार्याः ॥**

———————

श्रीमूला

अल्पां बाधां सहेरन्निति । अमहति अवकाशे परस्परबाधमल्पं जायमानं क्षमेरन् । पूर्वागतो वा, वासपर्यायं वासवारं दद्यात् नवागताय । अप्रदाता पूर्वागतः, निरस्येत बहिष्क्रियेत ।

वानप्रस्थयतिब्रह्मचारिणामित्यादि । तत्र धर्मभ्राता सखा, समानतीर्थ्यः समानगुरुकुलवासी । क्रमेण आचार्याभावे शिष्यः शिष्याभावे धर्मभ्रातेत्यादिक्रमेण । शेषं प्रतीतम् ।

विवादपदेषु चैषामिति । व्युत्क्रमागतानामाचार्यादीनां विवादपदेषु रिक्थविषयेषु, यावन्तः पणाः दण्डाः पराजितानां शास्त्रोक्ताः तावतीः तत्समानसङ्ख्याः, रात्रीः, क्षपणाभिषेकाग्निकार्यमहाकृच्छ्रवर्धनानि क्षपणमुपवासः अभिषेकः स्नानम् अग्निकार्यं होमः महाकृच्छ्रं चान्द्रायणप्राजापत्यादिकं प्रशस्तव्रतं तैर्वर्धनानि श्रेयोयोजनानि, राज्ञश्चरेयुः राजार्थे कुर्युः, अर्थात् पराजिता आचार्यादयः । वर्तनानीति पाठे क्षपणादीनां महाकृच्छ्रान्तानां वर्तनानि अनुष्ठानानि राजार्थे कुर्युरित्यर्थः । अहिरण्यसुवर्णा इति । हिरण्यसुवर्णहीनाः, पाषण्डाः, साधवः धर्मशीलाः । ते कथञ्चिद् विवादपदेषु पराजयदण्डं प्राप्ता इत्यार्थं यथास्वम् उपवासव्रतैः, आराधयेयुः धर्ममुपासीरन् राजश्रेयोर्थे । तत्रापवादमाह—अन्यत्र पारुष्यस्तेयसाहससङ्ग्रहणेभ्य इति । वक्ष्यमाणवाक्पारुष्यदण्डपारुष्यस्तेयादिविवादव्यतिरेकेण । के तर्हि तेषां पारुष्यादिषु दण्डास्तत्राह—तेष्विति । तेषु विषये, यथोक्ताः पारुष्यादिप्रकरणोक्ताः, दण्डाः, कार्याः ।

[ मिथ्याचारनिषेधस्यावश्यकता ]

**प्रव्रज्यासु वृथाचारान् राजा दण्डेन वारयेत् ।**
**धर्मो ह्यधर्मोपहतः शास्तारं हन्त्युपेक्षितः ॥१४३॥**

इति धर्मस्थीये दत्तस्यानपाकर्म, अस्वामिविक्रयः,
स्वस्वामिसंबन्धश्च; षोडशोऽध्यायः ।
आदितस्त्रिसप्ततितमः ।

---

श्रीमूला

अध्यायान्ते श्लोकमाह—प्रव्रज्यास्वित्यादि । प्रव्रज्यासु वृथाचारान् चतुर्थाश्रमेषु मिथ्याचारान् । शेषं सुगमम् ।

इति कौटलीयार्थशास्त्रव्याख्यायां धर्मस्थीयेतृतीयाऽधिकरणे षोडशोऽध्यायः
दत्तस्यानपाकर्म अस्वामिविक्रयः स्वस्वामिसम्बन्धः,
आदितस्त्रिसप्ततितमः ॥

## एकसप्ततितमं प्रकरणम्

### सप्तदशोऽध्यायः

### साहसम्

[ साहसस्तेययोर्भेदः ]

**साहसमन्वयवत्प्रसभकर्म । निरन्वये स्तेयम् अपव्ययने च ॥**

[ साहसस्य रत्नादिविषयकत्वे दण्डः ]

**'रत्नसारफल्गुकुप्यानां साहसे मूल्यसमो दण्डः' इति मानवाः । मूल्यद्विगुणः' इत्यौशनसाः । 'यथापराधः' इति कौटल्यः ॥**

[ साहसस्य क्षुद्रद्रव्यविषयकत्वे स्थूलद्रव्य-
विषयकत्वे च दण्डाः ]

**पुष्पफलशाकमूलकन्दपक्वान्नचर्मवेणुमृद्भाण्डादीनां क्षुद्रकद्रव्याणां द्वादशपणावरश्चतुर्विंशतिपणपरो दण्डः ।**

———— —

श्रीमूला

साहसमिति सूत्रम् । बलात् क्रियमाणं परस्वहरणादि साहसम् । यदाह नारद :—

"सहसा क्रियते कर्म यत् किञ्चिद् बलदर्पितैः ।
तत् साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥" इति ।

तदुच्यत इति सूत्रार्थः । तद् गताध्याये प्रस्तुतम् । तस्य स्वरूपं दण्डश्चात्राभिधीयते ।

साहसमिति । अन्वयवत्प्रसभकर्म अन्वयः अनेकसाधारण्यं तद्वतोऽनेकसाधारणस्य द्रव्यस्य प्रसभकर्म एकेनानेकान्तर्गतेन बलादपहरणं साहसम् । निरन्वये असाधारणद्रव्ये परकीयद्रव्य इति यावत्, स्तेयं स्तेयव्यपदेश्यम् अर्थात् प्रसभहरणं प्रच्छन्नहरणं वा । अपव्ययने च परकीयं गृहीत्वा न गृहीतमित्यपलापे च विषये, स्तेयं भवति ।

रत्नसारफल्गुकुप्यानामित्यादि । मूल्यसमः रत्नादितत्तन्मूल्यतुल्यः । यथापराधः अपराधानुरूपः । शेषं सुगमम् ।

पुष्पफलेत्यादि । पुष्पादिषट्कं प्रतीतं चर्मभाण्डं वेणुभाण्डं मृद्भाण्डं चेति त्रिकम् एतदादीनां क्षुद्रकद्रव्याणां, साहसे, द्वादशपणावरश्चतुर्विंशतिपणपरो दण्डः द्वादशपणोऽधमदण्डः चतुर्विंशतिपण उत्तमदण्डः ।

कालायसकाष्ठरज्जुद्रव्यक्षुद्रपशुपटादीनां स्थूलकद्रव्याणां चतुर्विंशतिपणावरोऽष्टचत्वारिंशत्पणपरो दण्डः । ताम्रवृत्तकंसकाचदन्तभाण्डादीनां स्थूलकद्रव्याणाम् अष्टचत्वारिंशत्पणावरः षण्णवतिपरः पूर्वस्साहसदण्डः । महापशुमनुष्यक्षेत्रगृहहिरण्यसुवर्णसूक्ष्मवस्त्रादीनां स्थूलकद्रव्याणां द्विशतावरः पञ्चशतपरः मध्यमस्साहसदण्डः । 'स्त्रियं पुरुषं वाऽभिषह्य बध्नतो बन्धयतो बन्धं वा मोक्षयतः पञ्चशतावरः सहस्रपर उत्तमः साहसदण्डः' इत्याचार्याः ॥

[ साहसकर्मकारयितॄणां दण्डः ]

यस्साहसं प्रतिपत्तेति कारयति स द्विगुणं दद्यात् । यावद्धिरण्यमुपयोक्ष्यते तावद्दास्यामि' इति स चतुर्गुणं दण्डं दद्यात् ।

"यः–'एतावद्धिरण्यं दास्यामि' इति प्रमाणमुद्दिश्य कारयति स यथोक्तं हिरण्यं दण्डं च दद्यात्" इति बार्हस्पत्याः ॥

---

श्रीमूला

स्थूलकद्रव्याणां दण्डमाह—कालायसेत्यादि । ताम्रवृत्तेत्यादि । ताम्रभाण्डवृत्तभाण्डकंसभाण्डकाचभाण्डगजदन्तभाण्डादीनां स्थूलकद्रव्याणां, साहसे, अष्टचत्वारिंशत्पणावरः षण्णवतिपरः, दण्ड इति वर्तते, तत्र षण्णवतिपणदण्डः, पूर्वः साहसदण्डः पूर्वसाहसाख्यः । महापशुमनुष्येत्यादि । महापशुमनुष्यक्षेत्रप्रभृतीनां स्थूलकद्रव्याणां, साहसे, द्विशतावरः द्विशतपणाधमः पञ्चशतपरः पञ्चशतपणोत्तमः दण्डः । स च पञ्चशतपणः मध्यमः साहसदण्डः ।

स्त्रियमित्यादि । तां, पुरुषं वा, अभिषह्य प्रसह्य बध्नतः, बन्धयतः, बन्धं वा मोक्षयतः, पञ्चशतावरः पञ्चशतपणाधमः सहस्रपरः सहस्रपणोत्तमः दण्डः । स च उत्तमः साहसदण्डो नाम्ना । इत्याचार्याः मन्यन्त इति शेषः ।

य इति । यः, साहसं, प्रतिपत्तेति 'अहमभ्युपगन्ते'त्युक्त्वा, कारयति, सः द्विगुणं साहसार्थद्विगुणं दण्डं दद्यात् । 'यावत् हिरण्यमुपयोक्ष्यते साहसकरणार्थे तावद् दास्यामि' इत्युक्त्वा यः साहसं कारयति, सः चतुर्गुणं साहसार्थचतुर्गुणं, दण्डं दद्यात् ।

य इति । 'एतावद् हिरण्यं दास्यामि' इति प्रमाणं साहसार्थदेयद्रव्येयत्ताम्, उद्दिश्य निर्दिश्य, कारयति, स यथोक्तं हिरण्यं, दण्डं च दद्यात् । इति बार्हस्पत्याः ।

**'स चेत्कोपं मदं मोहं चाऽपदिशेत्, यथोक्तवद्दण्डमेनं कुर्यात्' इति कौटल्यः ॥**

[ निगमनम् ]

**दण्डकर्मसु सर्वेषु रूपमष्टपणं शतम् ।**
**शतावरेषु तु व्याजीं च विद्यात् पञ्चपणं शतम् ॥१४७॥**
**प्रजानां दोषबाहुल्यात् राज्ञां वा भावदोषतः ।**
**रूपव्याज्यावधर्मिष्ठे धर्म्यानुप्रकृतिः स्मृता ॥१४८॥**

इति धर्मस्थीये साहसं सप्तदशोऽध्यायः,
आदितश्चतुस्सप्ततितमः

---

श्रीमूला

स्वमतमाह—स इति । सः कारयिता, कोपं, मदं चित्तविभ्रमं, मोहम् अज्ञानं वा, अपदिशेच्चेत् कारणायां हेतुं कथयेच्चेद्, एनं कारयितारं, यथोक्तवद्दण्डं कर्तृसमानदण्डं कुर्यात् । इति कौटल्यः ।

अध्यायप्रान्ते श्लोकावाह—दण्डकर्मस्वित्यादि । सर्वेषु दण्डकर्मसु दण्डविधिषु, रूपं तत्संज्ञं दण्डादुपरि नियतग्राह्यं द्रव्यं, विद्यात् जानीयात् । रूपं कियद्, अष्टपणं शते दण्डपणशतेऽष्टपणात्मकम् । शतावरेषु शतन्यूनेषु दण्डकर्मसु, व्याजीं तत्संज्ञं दण्डद्रव्यादुपरि नियतग्राह्यं द्रव्यं, विद्यात् । व्याजीं किमात्मिकां, पञ्चपणं शते शते पञ्चपणात्मिकाम् । शतमिति मान्तपाठश्चिन्त्यः ॥

प्रजानामिति । तासां, दोषबाहुल्यान्निमित्ताद्, राज्ञां वा भावदोषतः तासामदुष्टत्वेऽपि राज्ञां धनलिप्सालक्षणचित्तवृत्तिदोषान्निमित्ताद् वा, कल्प्यमाने इति शेषः, रूपव्याज्यौ अधर्मिष्ठे धर्मिष्ठे न भवतः । अतस्तदकल्पनानुकूलं राजभिः प्रजाभिश्चाचरितव्यमित्याभिप्रायः । अत एवाह—धर्म्या तु प्रकृतिः स्मृतेति । यथाविहितो दण्ड एव तु धर्म्यः स्मृतिषु कथितः ॥

इति कौटलीयार्थशास्त्रव्याख्यायां धर्मस्थीये तृतीयाधिकरणे
सप्तदशोऽध्यायः, साहसम्,
आदितश्चतुःसप्ततितमः ॥

## द्विसप्ततितमं प्रकरणम्

### अष्टादशोऽध्यायः

### वाक्पारुष्यम्

[ वाक्पारुष्यस्य त्रेधा विभागः ]

**वाक्पारुष्यम्—उपवादः कुत्सनमभिभर्त्सनमिति ।**

[ तत्र शरीरोपवादे दण्डाः ]

**शरीरप्रकृतिश्रुतवृत्तिजनपदानां शरीरोपवादेन काणखञ्जादिभिस्सत्ये त्रिपणो दण्डः, मिथ्योपवादे षट्पणो दण्डः ।**

[ कुत्सने दण्डाः, तस्य सत्यादि-
विषयकत्वे प्रमाणानि च ]

**शोभनाक्षिदन्त इति काणखञ्जादीनां स्तुतिनिन्दायां द्वादशपणो दण्डः । कुष्ठोन्मादक्लैब्यादिभिः कुत्सायां च ।**

---

श्रीमूला

वाक्पारुष्यमिति सूत्रम् । वक्तव्यवचनं वाक्पारुष्यम् । तच्च तद्दण्डश्चाभिधीयत इति सूत्रार्थः ।

तत् त्रिधा विभजते—वाक्पारुष्यमित्यादि । उपवादोऽङ्गवैकल्यादिवचनं, कुत्सनं कुष्ठोन्मादादिवचनम्, अभिभर्त्सनं घातादिभयोपदर्शनम् ।

शरीरेत्यादि । शरीरं प्रकृतिः स्त्रीपुरुषादिलक्षणा श्रुतं वृत्तिर्जनपद इति पञ्च विषया वाक्पारुष्यस्य, तेषां शरीरादीनां मध्ये, काणखञ्जादिभिः काण एकदृक् खञ्जः कोलः आदिना कुणिदन्तुरादिग्रहणम् । एतैः काणखञ्जकुणिशब्दैः शरीरोपवादेन, सत्ये काणत्वादौ यथार्थे सति त्रिपणो दण्डः । मिथ्योपवादे षट्पणो दण्डः ।

शोभनाक्षिदन्त इतीति । शोभनाक्षः शोभनदन्त इति रीत्या, काणखञ्जादीनां, स्तुतिनिन्दायां स्तुतिव्याजेन निन्दायां कृतायां, द्वादशपणो दण्डः ।

कुत्सनविषयमाह—कुष्ठोन्मादक्लैब्यादिभिः कुत्सायां चेति । कुष्ठी उन्मत्तः क्लीब इत्यादिप्रकारेण कुत्सने च, द्वादशपणो दण्ड इति वर्तते । सत्यमिथ्यास्तुति-निन्दासु कुष्ठादिसत्यत्वे तन्मिथ्यात्वे कुष्ठ्यादीन् प्रति कल्य इत्यादिरीत्या स्तुति-

**सत्यमिथ्यास्तुतिनिन्दासु द्वादशपणोत्तरा दण्डाः तुल्येषु, विशिष्टेषु द्विगुणः, हीनेष्वर्धदण्डः, परस्त्रीषु द्विगुणः, प्रमादमदमोहादिभिरर्धदण्डाः ।**

**कुष्ठोन्मादयोश्चिकित्सकाः सन्निकृष्टाः पुमांसश्च प्रमाणम् । क्लीबभावे स्त्रियः मूत्रफेनः अप्सु विष्ठानिमज्जनं च ।**

[ प्रकृत्युपवादे दण्डाः ]

**प्रकृत्युपवादे ब्राह्मणक्षत्रियवैश्यशूद्रान्तावसायिनामपरेण पूर्वस्य त्रिपणोत्तराः दण्डाः, पूर्वेणापरस्य द्विपणाधराः, कुब्राह्मणादिभिश्च कुत्सायाम् ।**

[ श्रुताद्युपवादेषु दण्डाः ]

**तेन श्रुतोपवादो वाग्जीवनानां, कारुकुशीलवानां वृत्त्युपवादः, प्राग्घूणकगान्धारादीनां च जनपदोपवादाश्च व्याख्याताः ।**

---

श्रीमूला

निन्दायां च, द्वादशपणोत्तराः उत्तरोत्तरद्वादशपणाधिकाः द्वादशपणश्चतुर्विंशतिपणः षट्त्रिंशत्पणः इत्येवंरुपाः दण्डाः भवन्ति, तुल्येषु समानेषु विषये । विशिष्टेषु गुणाधिकेषु विषये, द्विगुणः दण्डः । हीनेषु अर्धदण्डः । परस्त्रीषु विषये द्विगुणः । प्रमादमदमोहादिभिः कुत्सायाम् अर्धदण्डाः उक्ताः सर्वे दण्डा अर्धहीनाः ।

कुत्सनस्य सत्यासत्यविषयत्वनिर्णयप्रमाणापेक्षायामाह—कुष्ठोन्मादयोश्चिकित्सका इत्यादि । क्लीबभावे, स्त्रियः, मूत्रफेनः अनुपलभ्यमानो मुत्रे फेनः, अप्सु विष्ठानिमज्जनं च, प्रमाणम् ।

प्रकृतिविषयस्योपवादस्य दण्डमाह—प्रकृत्युपवादे ब्राह्मणक्षत्रियवैश्यशूद्रान्तावसायिनामपरेण पूर्वस्येत्यादि । अन्तावसायिना चण्डालेन शूद्रस्य, शूद्रेण वैश्यस्य, वैश्येन क्षत्रियस्य क्षत्रियेण ब्राह्मणस्य चोपवादे, उत्तरोत्तरत्रिपणाधिकाः दण्डाः । पूर्वेण अपरस्य उपवादे द्विपणाधराः उत्तरोत्तरद्विपणावराः दण्डाः । कुब्राह्मणादिभिश्च कुत्सायां, द्विपणाधरा इत्येव ।

प्रकृत्युपवाददण्डविधानं श्रुतोपवादादिष्वतिदिशति—तेनेति । उक्तेन प्रकृत्युपवादेन, वाग्जीवनानां श्रुतोपवादः विद्याकुत्सनं, कारुकुशीलवानां वृत्त्युपवादः जीविकाकुत्सनं, प्राग्घूणकगान्धारादीनां हूणका नाम जनपदविशेषः कामगिर्युत्तरतोवृत्तिरुदीच्यः तस्य पूर्वावयवः प्राग्घूणकाः भाषायां तु चण्डा(ल)राष्ट्रमित्युक्तम् । गान्धाराः प्रसिद्धाः तदादीनां जनपदोपवादाश्च जनपददोषोद्भावनेन कुत्सनानि च, व्याख्याताः । प्राग्घूणकेति चायं भाषापाठः । अर्थशास्त्रस्यादर्शे तु क्वचित् प्राकारणकारयोर्मध्ये वर्णस्यैकस्य लेखनस्थानमुत्सृष्टम् । क्वचित् प्राणकेति पाठः ।

[ अभिभर्त्सने दण्डाः ]

**यः परं 'एवं त्वां करिष्यामि' इति करणेनाभिभर्त्सयेदकरणे, यस्तस्य करणे दण्डः ततोऽर्धदण्डं दद्यात् ।**

**अशक्तः कोपं मदं मोहं वाऽपदिशेत्, द्वादशपणं दद्यात् ।**

**जातवैराशयः शक्तश्चापकर्तुं यावज्जीविकायस्थं दद्यात् ।**

[ सर्वेषामपि वाक्पारुष्याणां
विषयभेदेन दण्डभेदाः ]

**स्वदेशग्रामयोः पूर्वं मध्यमं जातिसङ्घयोः ।**
**आक्रोशाद्देवचैत्यानां उत्तमं दण्डमर्हति ॥१४९॥**

इति धर्मस्थीये वाक्पारुष्यम्, अष्टादशोऽध्यायः,
आदितः पञ्चसप्ततितमः ।

---

श्रीमूला

अभिभर्त्सनविषयमाह—य इति । यः परम् अन्यम्, 'एवं त्वां करिष्यामि' इति 'तव पादं भङ्क्ष्यामि भुजं भङ्क्ष्यामी'त्येवं, करणेन शरीरावयवेन, अभिभर्त्सयेत् तर्जयेत्, अकरणे उक्तस्याक्रियायां, तस्य अभिभर्त्सकस्य, करणे यो दण्डः 'पाणिपाद-दन्तभङ्गे' इत्यादिना दण्डपारुष्ये वक्ष्यमाणः, ततोऽर्धदण्डं दद्यात् ।

अशक्त इति । उक्तपादभङ्गादिकरणाशक्तः, कोपं मदं मोहं वा, अपदिशेत् पादभङ्गादेरुक्तिकारणं वदेच्चेद्, द्वादशपणं दण्डं स दद्यात् । शक्तस्यकोपाद्यपदेशो न स्वीकार्य इत्यभिप्रायः ।

जातवैराशय इति । तथाभूतः, अपकर्तुं शक्तश्च जनः, उक्तविधमभिभर्त्सनं कुर्वन्निति शेषः, यावज्जीविकावस्थं यावज्जीवस्थेयम् आस्वमरणप्रतिभुवं, दद्याद् धर्मस्थेभ्य इत्यार्थम् ।

अध्यायान्ते श्लोकमाह—स्वदेशग्रामयोरिति । तयोः, आक्रोशात् निन्दनात् पूर्वं दण्डं पूर्वसाहसम् अर्हति । जातिसङ्घयोः अर्थात् स्वीययोः, आक्रोशात् मध्यमं मध्यमसाहसं दण्डम्, अर्हति । देवचैत्यानाम् आक्रोशाद् उत्तमम् उत्तमसाहसं दण्डम्, अर्हति ॥

इति कौटलीयार्थशास्त्रव्याख्यायां धर्मस्थीये तृतीयाधिकरणे
अष्टादशोऽध्यायः, वाक्पारुष्यम्
आदितः पञ्चसप्ततितमः ।

## त्रिसप्ततितमं प्रकरणम्

### एकोनविंशोऽध्यायः

### दण्डपारुष्यम्

[ दण्डपारुष्यभेदाः ]

**दण्डपारुष्यम्—स्पर्शनमवगूर्णं प्रहतमिति ।**

[ स्पर्शने दण्डाः ]

**नाभेरधःकायं हस्तपङ्कभस्मपांसुभिरिति स्पृशतस्त्रिपणो दण्डः । तैरेवामेध्यैः पादष्ठीवनिकाभ्यां च षट्पणः, छर्दिमूत्रपुरीषादिभिर्द्वादशपणः । नाभेरुपरि द्विगुणाः, शिरसि चतुर्गुणाः समेषु । विशिष्टेषु द्विगुणाः, हीनेषु अर्धदण्डाः, परस्त्रीषु द्विगुणाः, प्रमादमदमोहादिभिरर्धदण्डाः । पादवस्त्र-हस्तकेशावलम्बनेषु षट्पणोत्तरा दण्डाः पीडनावेष्टनाञ्जनप्रकर्षणाध्यासनेषु पूर्वस्साहसदण्डः । पातयित्वाऽपक्रामतोऽर्धदण्डाः ।**

---

श्रीमूला

दण्डपारुष्यमिति सूत्रम् । दण्डग्रहणं हस्तादेरप्युपलक्षणम् । दण्डहस्तादिभिः प्रहरणमिति सूत्रार्थः ।

तस्य त्रीन् प्रकारानाह—दण्डपारुष्यमिति । स्पर्शनं केवलं परामर्शनम्, अवगूर्णनम् उद्यमनं, प्रहतं ताडनम् ।

नाभेरित्यादि । तस्य, अधःकायं हस्तपङ्कभस्मपांसुभिः तत्प्रकारैश्च स्पृशतः त्रिपणो दण्डः ।

तैरेवामेध्यैरिति । हस्तादिभिरेवाशुद्धैः, स्पृशतः, पादष्ठीविकाभ्यां च पादेन मुखकफादिनिरसनेन च, स्पृशतः, षट्पणः । छर्दीत्यादि स्पष्टम् ।

समेषु दण्डमुक्त्वा उत्कृष्टादिष्वाह—विशिष्टेष्वित्यादि ।

पादेत्यादि । पादादीनां ग्रहणेषु, षट्पणोत्तराः यथोत्तरं षट्पणाधिकाः पाद-ग्रहणे षट् वस्त्रग्रहणे द्वादश हस्तग्रहणेऽष्टादश केशग्रहणे चतुर्विंशतिरिति रीत्या दण्डाः ।

पीडनावेष्टनाञ्जनप्रकर्षणाध्यासनेष्वित्यादि । अवमर्दने परिवेष्टने कज्जलादिलेपने भूप्रकर्षणे देहोपर्यारुह्योपवेशने च पूर्वः साहसदण्डः । पातयित्वापक्रमतः भूमौ निपात्यापक्रमणाद्, अर्धदण्डः अर्धप्रथमसाहसदण्डः ।

**शूद्रो येनाङ्गेन ब्राह्मणमभिहन्यात् तदस्य छेदयेत् ।**

[ हस्तादिना प्रहर्तुमुद्यमने दण्डाः ]

**अवगूर्णे निष्क्रयः, स्पर्शेऽर्धदण्डः । तेन चण्डालाशुचयो व्याख्याताः ।**

**हस्तेनावगूर्णे त्रिपणावरो द्वादशपणपरो दण्डः । पादेन द्विगुणः । दुःखोत्पादनेन द्रव्येण पूर्वस्साहसदण्डः । प्राणाबाधिकेन मध्यमः ।**

[ प्रहरणदण्डाः ]

**काष्ठलोष्टपाषाणलोहदण्डरज्जुद्रव्याणामन्यतमेन दुःखमशोणितमुपादधतश्चतुर्विंशतिपणो दण्डः । शोणितोत्पादने द्विगुणः अन्यत्र दुष्टशोणितात् । मृतकल्पमशोणितं घ्नतो हस्तपादपराञ्चिकं वा कुर्वतः पूर्वस्साहसदण्डः । पाणिपाददन्तभङ्गे कर्णनासाच्छेदने व्रणविदारणे च अन्यत्र दुष्टव्रणेभ्यः ।**

---

श्रीमूला

शूद्र इत्यादि स्पष्टम् । अवगूर्ण इति । हस्ताद्यङ्गोद्यमने, निष्क्रयः एकाङ्गवधनिष्क्रयः कण्टकशोधने वक्ष्यमाणो दण्डः । स्पर्शे उद्यतहस्तादिना स्पर्शनमात्रे, अर्धदण्डः अर्धनिष्क्रयः । तेन उक्तविधिना, चण्डालाशुचयः चण्डालप्रभृतयोऽशुचयः अर्थाद् ब्राह्मणाभिहननं स्वाङ्गेन कुर्वाणाः, व्याख्याताः विहितदण्डा वेदितव्याः । अनया रीत्या तेषामपि दण्डा यथोचितमूह्या इत्यर्थः ।

अवगूर्णविधिमाह—हस्तेनेत्यादि । करेण अवगूर्णे उद्यमने, त्रिपणावरो द्वादशपणपरो दण्डः । पादेनावगूर्णे, द्विगुणः चतुर्विंशतिपणः । दुःखोत्पादकेन द्रव्येण कण्टकादिना, अवगूर्णे, पूर्वः साहसदण्डः । प्राणाबाधिकेन प्राणबाधाकरेण सर्पादिना अवगूर्णे, मध्यमः साहसः ।

काष्ठेत्यादि । काष्ठादीनां षण्णामन्यतमेन, दुःखम् अशोणितम् अरक्तम्, उत्पादयतः, चतुर्विंशतिपणो दण्डः । शोणितोत्पादने द्विगुणः अष्टाचत्वारिंशत्पणः । अन्यत्र दुष्टशोणिताद् दुष्टशोणितातिरिक्ते विषये, कुष्ठादिदुष्टशोणितोत्पादने तु न द्विगुणः, किन्तु अर्धमौचित्यात् ।

मृतकल्पमिति । मृततुल्यत्वं यथा भवेत् तथा, अशोणितम् अरक्तं, घ्नतः, हस्तपादपराञ्चिकां हस्तस्य पादस्य वा पराञ्चिकां पराञ्चनम् अन्यथाभावं सन्धिविघतनमिति यावत् । परोपमृष्टादञ्चेर्धात्वर्थनिर्देशे ण्वुल् । पारञ्चिकमिति पाठे त्वर्थव्युत्पत्ती चिन्त्ये । तां वा कुर्वतः, पूर्वः साहसदण्डः । पाणिपादेत्यादि । पाण्यादिभङ्गे कर्णनासाच्छेदने, दुष्टव्रणव्यतिरेकेण व्रणानामुद्भेदने च, पूर्वः साहसदण्ड इति वर्तते ।

**सक्थिग्रीवाभञ्जने नेत्रभेदने वा वाक्यचेष्टाभोजनोपरोधेषु च मध्यमस्साहसदण्डः, समुत्थानव्ययश्च, विपत्तौ कण्टकशोधनाय नीयेत ।**

**महाजनस्यैकं घ्नतः प्रत्येकं द्विगुणो दण्डः ।**

[ अतीतकलहादिविषये दुःखनिवेदनागमन-
पौर्वापर्यविषये च मतभेदाः ]

**'पर्युषितः कलहोऽनुप्रवेशो वा नाभियोज्यः' इत्याचार्याः 'नास्त्यपकारिणो मोक्षः' इति कौटल्यः ।**

**'कलहे पूर्वागतो जयति, अक्षममाणो हि प्रधावति' इत्याचार्याः । 'न' इति कौटल्यः । पूर्वं पश्चाद्वा आगतस्य साक्षिणः प्रमाणम् असाक्षिके घातः कलहोपलिङ्गनं वा । घाताभियोगमप्रतिब्रुवतस्तदहरेव पश्चात्कारः ।**

---

श्रीमूला

सक्थीत्यादि । ऊरुकण्ठभङ्गे नेत्रभेदने वा वचनसञ्चरणाभ्यवहरणशक्तिप्रतिबन्धेषु च मध्यमः साहसदण्डः । समुत्थानव्ययश्च यथावत्कार्यक्रियापाटवं समुत्थानं तत्प्रत्यापत्त्यर्थो व्ययश्च, अपराधिना देयः । विपत्ताविति । मरणे, कण्टकशोधनाय कण्टकशोधनोक्तविधानाय, नीयेत ।

महाजनस्येति । जनसमूहस्य, एकं जनं, घ्नतः, प्रत्येकं द्विगुणो दण्डः एकस्यैकं घ्नतो यो दण्डस्तद्द्विगुणो दण्डः ।

पर्युषित इति । चिरातीतः, कलहः, अनुप्रवेशो वा हृतद्रव्यायत्तीकरणं वा, नाभियोज्यः अभियोक्तुमर्हो न भवति । इत्याचार्याः ।

कलहानुप्रवेशलक्षणापराधकारिणः अपराधः पर्युषित इत्येतावता मोक्षणं न भवति, किन्तु चिरादपि सोऽभियोज्य एवेत्येवं स्वमतमाह—नास्त्यपकारिण इत्यादि ।

कलह इति । कलहे, पूर्वागतः पूर्वावेदकः, जयति । कुतः हि यतः, अक्षममाणः प्रधावति परकृतमाबाधमसहमानो धर्मस्थायावेदयितुं त्वरितः पूर्वं गच्छति, अर्थात् पश्चादागतः पराजयते । इत्याचार्याः ।

नेति कौटल्य इति । पूर्वागमनं पश्चादागमनं वा यद्यकिञ्चित्करं, किं तर्हि तत्त्वनिर्णयसाधनमित्याकाङ्क्षायामाह—पूर्वं पश्चाद्वेत्यादि । असाक्षिके घातः कलहोपलिङ्गनं वेति । साक्ष्यभावे घातदर्शनेन तत्त्वनिर्णयः घातादर्शने लिङ्गैः कलहस्याभ्यूहनम् ।

घाताभियोगमिति । घातविषयमभियोगं, तदहरेव तस्मिन्नेव दिने, अप्रतिब्रुवतः, पश्चात्कारः पराजयः ।

[ मनुष्यहिंसने हिंसकद्रव्यभेदेन दण्डभेदाः ]

**कलहे द्रव्यमपहरतो दशपणो दण्डः। क्षुद्रकद्रव्यहिंसायां तच्च तावच्च दण्डः। स्थूलकद्रव्यहिंसायां तच्च द्विगुणश्च दण्डः। वस्त्राभरण-हिरण्यसुवर्णभाण्डहिंसायां तच्च पूर्वश्च साहसदण्डः। परकुड्यमभिघातेन क्षोभयतस्त्रिपणो दण्डः। छेदनभेदने षट्पणः पातनभञ्जने द्वादशपणः प्रतीकारश्च। दुःखोत्पादनं द्रव्यमन्यवेश्मनि प्रक्षिपतो द्वादशपणो दण्डः, प्राणाबाधिकं पूर्वस्साहसदण्डः।**

[ पशुहिंसायां दण्डभेदाः ]

**क्षुद्रपशूनां काष्ठादिभिर्दुःखोत्पादने पणो द्विपणो वा दण्डः। शोणि-तोत्पादने द्विगुणः। महापशूनामेतेष्वेव स्थानेषु द्विगुणो दण्डः, समुत्थान व्ययश्च।**

[ वृक्षादिच्छेदने दण्डभेदाः ]

**पुरोपवनवनस्पतीनां पुष्पफलच्छायावतां प्ररोहच्छेदने षट्पणः। क्षुद्रशाखाच्छेदने द्वादशपणः। पीनशाखाच्छेदने चतुर्विंशतिपणः। स्कन्ध-वधे पूर्वस्साहसदण्डः। समुच्छित्तौ मध्यमः।**

---

श्रीमूला

कलह इत्यादि। कलहायमानयोर्द्वयोर्द्रव्यमपहरतोऽन्यस्य दशपणो दण्डः। अपहृतद्रव्यप्रत्यानयनं तु सिद्धमेव। इह 'द्विशतपणो दण्डः' इति तु भाषानुसारेण पाठोऽनुमेयः।

क्षुद्रकेत्यादि। क्षुद्रकद्रव्यहिंसायां क्षुद्रकद्रव्याणां पुष्पफलादीनां हिंसायां कलहकारिभिरुपहनने, तच्च हिंसितं क्षुद्रद्रव्यं च स्वामिने देयमिति शेषः। तावच्च तत्परिमाणं द्रव्यं च दण्डो भवति।

स्थूलकेत्यादि। कालायसादिस्थूलकद्रव्यहिंसायां, तच्च, द्विगुणः तद्द्रव्यद्विगुणो दण्डश्च।

वस्त्राभरणेत्यादि शोणितोत्पादने द्विगुण इत्येतदन्तं सुबोधम्। 'पातनभञ्जने द्वादशपणः' इति क्वचिन्न पठ्यते।

महापशूनामिति। गवादीनाम्, एतेष्वेव स्थानेषु दुःखोत्पादनादिषु क्षुद्रपशूक्तेषु विषयेषु द्विगुणो दण्डः। समुत्थानव्ययश्च तत्स्वस्थीकरणार्थो व्ययश्च देयः।

पुरोपवनेत्यादि। प्ररोहच्छेदने पल्लवच्छेदने, स्कन्धवधे प्रधानभञ्जने। समुच्छित्तौ उन्मूलने। शेषं स्पष्टम्।

**पुष्पफलच्छायावद्गुल्मलतास्वर्धदण्डः । पुण्यस्थानतपोवनश्मशानद्रुमेषु च ।**

**सीमवृक्षेषु चैत्येषु द्रुमेष्वालक्षितेषु च ।**
**त एव द्विगुणा दण्डाः कार्या राजवनेषु च ॥१५०॥**

इति धर्मस्थीये दण्डपारुष्यम्, एकोनविंशोऽध्यायः,
आदितष्षट्सप्ततितमः ।

---

श्रीमूला

पुष्पफलच्छायावद्गुल्मलतास्विति । पुष्पादिमत्सु स्तम्बेषु वल्लीषु च विषये प्ररोहच्छेदनादौ, अर्धदण्डः वनस्पत्युक्तदण्डस्यार्धम् । पुण्यस्थानतपोवनश्मशानद्रुमेषु च, अर्धदण्ड इति संबध्यते ।

सीमवृक्षेष्वित्यादिरध्यायान्तश्लोकः सुबोधः ॥

इति कौटलीयार्थशास्त्रव्याख्यायां धर्मस्थीये तृतीयाधिकरणे,
एकोनविंशोऽध्यायः, दण्डपारुष्यम्,
आदितः षट्सप्ततितमः ॥

## चतुःसप्ततिपञ्चसप्ततितमे प्रकरणे

### विंशोऽध्यायः

### द्यूतसमाह्वयं प्रकीर्णकानि च

[ सदेशकालव्यवस्थं द्यूतप्रवर्तनावश्यकता ]

**द्यूताध्यक्षो द्यूतमेकमुखं कारयेत् । अन्यत्र दीव्यतो द्वादशपणो दण्डः; गूढाजीविज्ञापनार्थम् ।**

[ जेतृपराजितयोः दण्डविशेषाः ]

**द्यूताभियोगे जेतुः पूर्वस्साहसदण्डः । पराजितस्य मध्यमः । बालिशजातीयो ह्येष जेतुकामः पराजयं न क्षमते' इत्याचार्याः । 'न' इति**

---

श्रीमूला

द्यूतसमाह्वयमिति सूत्रम् । द्यूतम् अक्षशलाकाद्यप्राणिक्रीडा समाह्वयो मल्लमेषकुक्कुटादिप्राणिदेवनं तयोः समाहारो द्यूतसमाह्वयं, तत्संबद्धो व्यवहारो दण्डश्चाभिधीयत इति सूत्रार्थः । पारुष्यप्रसङ्गात् सर्वविधपारुष्यविसंवादादिदोषनिदानस्यास्येह कथनसङ्गतिः ।

द्यूताध्यक्ष इति । सः, द्यूतम् एकमुखम् एकमार्गम् एकस्मिन् प्रदेशे इत्यर्थः, कारयेत् । अन्यत्र प्रदेशान्तरे, दीव्यतः द्वादशपणो दण्डः । ननु च द्यूतमेव तावन्निन्दितं प्रतिषिद्धं च शास्त्रेषु—

'प्रकाशमेतत् तास्कर्यं यद् देवनसमाह्वयम्' इति,

'प्रच्छन्नं वा प्रकाशं वा द्यूत राष्ट्रे निवारयेद्' ।

इति च स्मृतौ, 'अक्षैर्मा दीव्यः' इति चाम्नाये । तत् कुतोऽस्य प्रवर्तनविधिः कुतस्तरां चैकमुखत्वनियमनमित्याशङ्कामपाकर्तुमेकमुखत्वनियमस्य प्रयोजनमाह—गूढाजीविज्ञापनार्थमिति । गूढाजीविनस्तस्करसाहसिकादयो लोककण्टकाः तज्ज्ञापनार्थम् । अयमाशयः—प्रतिषेधातिक्रमेण प्रवृत्तौ श्येनादिवदयं द्यूतसमाह्वयस्य विधिः । तच्च लोककण्टकप्रायजनभूयिष्ठसेव्यं सुरापानवदधर्मरूपमप्येकमुखतया प्रवर्त्यमानं कण्टकज्ञानसाधनीभूय तदुद्धरणरूपधर्मान्तरोपायतां प्रतिपद्यत इति तदेकमुखत्वनियमोऽप्युपपद्यत इति ।

द्यूताभियोगे जेतुरित्यादि । द्यूतविषयमभियोगं द्यूतजेता कुर्वन् पूर्वसाहसदण्ड्यः, द्यूतपराजितस्तद्द्विगुणं दण्डं मध्यमसाहसम् । पराजितस्य दण्डाधिक्ये अधर्म्यजयकामुकता हेतुरित्याह—बालिशजातीयो हीत्यादि । बालिशजातीयो मूर्खप्रायः ।

**कौटल्यः। पराजितश्चेत् द्विगुणदण्डः क्रियेत, न कश्चन राजानमभिसरिष्यति। प्रायशो हि कितवाः कूटदेविनः।**

[ तदध्यक्षैर्नियन्तव्या अंशाः ]

**तेषामध्यक्षश्शुद्धाः काकणीः अक्षांश्च स्थापयेयुः। काकण्यक्षणामन्योपधाने द्वादशपणो दण्डः। कूटकर्मणि पूर्वस्साहसदण्डः, जितप्रत्यादानम्, उपधौ स्तेयदण्डश्च। जितद्रव्यादध्यक्षः पञ्चकं शतमाददीत काकण्यक्षारलाशलाकावक्रयमुदकभूमिकर्मक्रयं च। द्रव्याणामाधानं विक्रयं च कुर्यात्। अक्षभूमिहस्तदोषाणां चाप्रतिषेधने द्विगुणो दण्डः।**

---

श्रीमूला

नेति कौटल्य इत्याचार्यमतप्रतिषेधे कारणमाह—पराजितश्चेदिति। स चेद् द्विगुणदण्डः क्रियेत, न कश्चन राजानमभिसरिष्यति न कोऽपि पराजितो जेतृकृतमात्मदुःखं राज्ञे निवेदयितुमागमिष्यति। माभिसरतु को दोष इति चेत् तत्राह—प्रायशो हि कितवाः कूटदेविन इति। प्रायेण हि धूर्ताः कपटदेवनशीलाः। अतश्च तेभ्य एकान्तजयिभ्य आपततोऽनर्थजातान् कूटानभिज्ञतया नित्यपराजयिनामनिर्मोक्ष एवापद्येतेत्यभिप्रायः।

तेषामिति। कितवानाम्, अध्यक्षाः द्यूतकर्मप्रत्यवेक्षकाः, शुद्धाः कूटरहिताः, काकणीः कपर्दान्, अक्षांश्च पाशकांश्च तथाविधान्, स्थापयेयुः, देवनार्थम्।

काकण्यक्षाणामिति। तेषाम्, अन्योपधाने अन्येषां स्थापितातिरिक्तानां तज्जातीयानाम् उपधाने, द्वादशपणो दण्डः। इहान्यशब्दस्य, सापेक्षत्वेऽपि समास आर्षः। कूटकर्मणीति। कपटाक्षादिसृष्टौ, पूर्वः साहसदण्डः, जितप्रत्यादानं जितद्रव्यापहरणं च। उपधौ स्थापितेष्वेवाक्षादिषु रेखाव्यत्ययकरणलक्षणे व्याजे मणिमन्त्रादिना बुद्धिवञ्चनायां वा, स्तेयदण्डश्च, चकारात् पूर्वोक्तं च।

जितद्रव्यादिति। जिताद् द्रव्याद्, अध्यक्षः, पञ्चकं शतम् आददीत शते विंशतिभागं गृह्णीयात्, आत्मवृत्त्यर्थम्। काकण्यक्षारलाशलाकावक्रयं काकण्यः कपर्दाः अक्षाः पाशकाः अरलाः चर्मपट्टिकाजातीयाः साधनभेदाः शलाका दन्तादिमय्यो दीर्घचतुरश्राः काकण्यादीनां देवनसाधनानाम् अवक्रयं भाटकम्, उदकभूमिकर्मक्रयं च, आददीत, जेतृसकाशात्। द्रव्याणाम् आधानं विक्रयं च कुर्याद् द्यूतकरैराधीयमानानि विक्रीयमाणानि च द्रव्याणि स्वीकुर्यात्। अक्षभूमिहस्तदोषाणां च अक्षदोषस्य भूमिदोषस्य हस्तदोषस्य च, अप्रतिषेधने प्रतिषेधाकरणे, द्विगुणः स्वादेयद्रव्यभागद्विगुणः, दण्डः, अध्यक्षस्य।

[ समाह्वये विशेषः ]

**तेन समाह्वयो व्याख्यातः, अन्यत्र विद्याशिल्पसमाह्वयादिति ।**

[ केचन दण्डोपाधयः ]

**प्रकीर्णकं तु—याचितकावक्रीतकाहितकनिक्षेपकाणां यथादेशकालमदाने, यामच्छायासमुपवेशसंस्थितीनां वा देशकालातिपातने, गुल्मतरदेयं ब्राह्मणं साधयतः, प्रतिवेशानुवेशयोरुपरि निमन्त्रणे च द्वादशपणो दण्डः ।**

**सन्दिष्टमर्थमप्रयच्छतः, भ्रातृभार्यां हस्तेन लङ्घयतः, रूपाजीवामन्योपरुद्धां गच्छतः, परवक्तव्यं पण्यं क्रीणानस्य, समुद्रं गृहमुद्भिन्दतः, सामन्तचत्वारिंशत्कुल्याः बाधामाचरतश्च अष्टाचत्वारिंशत्पणो दण्डः ।**

———————

श्रीमूला

अप्राणिद्यूतोक्तं दण्डविधानं द्विपदचतुष्पदादिप्राणिद्यूते विद्याशिल्पसमाह्वयातिरिक्तेऽतिदिशति—तेनेत्यादि ।

प्रकीर्णकानीति सूत्रम् । प्रकीर्णानि विक्षिप्तानि परिशिष्टानि च, तत्र किञ्चित् किञ्चित् विवाहसंयुक्तादिशेषं किञ्चित् किञ्चिदध्यक्षप्रचारकण्टकशोधनान्तर्गतम् । तान्युच्यन्त इति सूत्रार्थः ।

प्रकीर्णकं त्विति । प्रतिपाद्यत इति शेषः । याचितकेत्यादि । याचितकावक्रीतकाहितकानि प्रतीतानि, निक्षेपको भूषणादिनिर्माणार्थमर्पितं सुवर्णादि एतेषां, यथादेशकालम्, अदाने द्वादशपणो दण्डः । यामच्छायासमुपवेशसंस्थितीनां वा देशकालातिपातने 'नक्तममुकयामे दिवामुकच्छायानालिकायां चामुकदेशे सम्भूयोपवेष्टव्यमि'त्येवं कृतसङ्केतानां समुपवेशव्यवस्थानां देशकालातिक्रामणे वा द्वादशपणो दण्डः । इदं समयस्यानपाकर्मशेषम् । गुल्मतरदेयं गुल्मतारणभृतिं नदीतारणभृतिं च, ब्राह्मणं साधयतः ब्राह्मणात् प्रयत्नेन गृह्णतः, द्वादशपणो दण्डः । प्रतिवेशानुवेशयोरुपरि निमन्त्रणे च प्रतिवेशः प्रतिमुखगृहम् अनुवेशोऽनन्तरगृहं तयोर्विद्यमानं श्रोत्रियमतिक्रम्यान्यस्य निमन्त्रणे च, द्वादशपणो दण्डः ।

सन्दिष्टमिति । प्रतिश्रुतमर्थमप्रयच्छतः, भ्रातृभार्यां हस्तेन लङ्घयतः अवलम्बमानस्य, रूपाजीवां गणिकाम्, अन्योपरुद्धां गच्छतः, अष्टचत्वारिंशत्पणो दण्डः । इदं साहसशेषम् । परवक्तव्यं परपरीवादगोचरं, पण्यं क्रीणानस्य, अष्टचत्वारिंशत्पणो दण्डः । इदमस्वामिविक्रयशेषम् । समुद्रं मुद्रया युक्तं गृहम् उद्भिन्दतः, अष्टचत्वारिंशत्पणः । इदं साहसशेषम् । सामन्तचत्वारिंशत्कुल्याः सामन्तिकानां चत्वारिंशतः कुलानां बाधाम् आचरतश्च, अष्टचत्वारिंशत्पणो दण्डः । इदं वास्तुकशेषम् ।

**कुलनीवीग्राहकस्यापव्ययने, विधवां छन्दवासिनीं प्रसह्याधिचरतः, चण्डालस्यार्यां स्पृशतः प्रत्यासन्नमापद्यनभिधावतः, निष्कारणमभिधावनं कुर्वतः, शाक्यजीवकादीन् वृषलप्रव्रजितान् देवपितृकार्येषु भोजयतः शत्यो दण्डः ।**

**शपथवाक्यानुयोगमनिसृष्टं कुर्वतः युक्तकर्म चायुक्तस्य, क्षुद्रपशु-वृषाणां पुंस्त्वोपघातिनः, दास्या गर्भमौषधेन पातयतश्च पूर्वस्साहसदण्डः**

**पितापुत्रयोर्दम्पत्योर्भ्रातृभगिन्योर्मातुलभागिनेययोश्शिष्याचार्ययोर्वा परस्परमपतितं त्यजतः, सार्थाभिप्रयातं ग्राममध्ये वा त्यजतः पूर्वस्साहस-दण्डः, कान्तारे मध्यमः, तन्निमित्तं भ्रेषयत उत्तमः, सहप्रस्था-यिष्वन्येष्वर्धदण्डः ।**

**पुरुषमबन्धनीयं बध्नतो बन्धयतो बन्धं वा मोक्षयतः, बालमप्राप्त-व्यवहारं बध्नतो बन्धयतो वा सहस्रदण्डाः । पुरुषापराधविशेषेण दण्डः कार्यः ।**

---

श्रीमूला

कुलनीवीग्राहकस्यापव्ययन इति । कुलसाधारणं धनं गृहीत्वापलपने, विधवां छन्दवासिनीं स्वच्छन्दवर्तिनीमकामां, प्रसह्याधिचरतः बलाद् गच्छतः, चण्डालस्य आर्यां स्पृशतः, प्रत्यासन्नम् अन्तिकस्थम् आपदि अनभिधावतः अभिधाव्यारक्षतः, निष्कारणमभिधावनं कुर्वतः, शाक्यजीवकादीन् शाक्यान् क्षपणकादींश्च वृषलप्रव्र-जितान् देवपितृकार्येषु भोजयतः, शत्यो दण्डः शतपणदण्डः ।

शपथवाक्यानुयोगमनिसृष्टं कुर्वत इति । आधिकरणिकाः साक्ष्याद्यनुयोगं शपथपूर्वं यमनुतिष्ठन्ति स शपथवाक्यानुयोगः तं धर्मस्थानननुज्ञातं कुर्वतः, युक्तकर्म चायुक्तस्य अनधिकृतस्याधिकृतकर्म कुर्वतश्च, क्षुद्रपशुवृषाणां पुंस्त्वोपघातिनः, दास्या गर्भम् औषधेन पातयतश्च स्रावयतश्च, पूर्वः साहसदण्डः ।

पितापुत्रयोरित्यादि । सार्थाभिप्रयातं ग्राममध्ये त्यजतः सङ्घसाह्याश्रयेण प्रस्थितं रोगादिवशाद् ग्रामान्तरे त्यक्त्वा गच्छतः सार्थमुख्यस्य । शेषं सुबोधम् । कान्तारे मध्यम इति । दुर्गमेऽरण्ये त्यजतो मध्यमसाहसः । तन्निमित्तं भ्रेषयतः कान्ता-रत्यागेन निमित्तेन विगतजीवितं कुर्वतः, उत्तमसाहसः । सहप्रस्थायिषु अन्येषु सार्थान्तर्गतेषु विषये, अर्थदण्डः ।

पुरुषमित्यादि । सुबोधम् ।

[ अनुग्राह्युपाधयः ]

**तीर्थकरः तपस्वी व्याधितः क्षुत्पिपासाऽध्वक्लान्तः तिरोजनपदः दण्डखेदी निष्किञ्चनश्चानुग्राह्याः ।**

**देवब्राह्मणतपस्विस्त्रीबालवृद्धव्याधितानाम् अनाथानाम् अनभिसरतां धर्मस्थाः कार्याणि कुर्युः । न च देशकालभोगच्छलेनातिहरेयुः । पूज्याः विद्याबुद्धिपौरुषाभिजनकर्मातिशयतश्च पुरुषाः ।**

**एवं कार्याणि धर्मस्थाः कुर्युरच्छलदर्शिनः ।**
**समास्सर्वेषु भावेषु विश्वास्या लोकसम्प्रियाः ॥१५१॥**

इति धर्मस्थीये द्यूतसमाह्वयं प्रकीर्णकानि च, विंशोऽध्यायः,
आदितस्सप्तसप्ततितमः एतावता
कौटिल्यस्यार्थशास्त्रस्य धर्मस्थीयं
तृतीयमधिकरणं समाप्तम्

---

तीर्थंकर इत्यादि । तीर्थंकरः दानोदकहस्तः दानशीलः । तिरोजनपदः अन्यजनपदागतः । दण्डखेदी बहुकृत्वोऽनुभूतदण्डः ।

देवब्राह्मणेत्यादि । देवादीनां सप्तानाम्, अनाथानां योगक्षेमचिन्तकरहितानाम्, अनभिसरतां स्वदुःखनिवेदनाय धर्मस्थानभिगच्छतां, कार्याणि, धर्मस्थाः कुर्युः । देशकालभोगच्छलेन देशादिव्याजेन, न चातिहरेयुः अनाथद्रव्यं नातीव हरेयुः ।

साक्ष्यादिभावेनोपगच्छन्तः पुरुषास्तत्तद्विद्याबुद्धिपौरुषाभिजनकर्मणामतिशयानुरोधेन धर्मस्थैर्माननीया इत्याह—पूज्या इत्यादि ।

एवं कार्याणीत्यादिः श्लोकः स्पष्टार्थः ॥

व्याख्यायामर्थशास्त्रस्य श्रीमूलाख्यानभाजने ।
धर्मस्थीयाधिकरणं तार्तीयीकमपूर्यत ॥

इति श्रीवञ्चिमण्डलमहाराजाश्रितस्य ताम्रपर्णीतीरवर्त्तितरुवाग्रहाराऽभिजनस्य श्रीसीताम्बाश्रीरामसुब्रह्मण्यार्यसूनोर्महामहोपाध्यायगणपतिशास्त्रिणः कृतिषु कौटलीयार्थशास्त्रव्याख्यायां श्रीमूलाख्यायां धर्मस्थीये तृतीयाधिकरणे विंशोऽध्यायः,
द्यूतसमाह्वयं प्रकीर्णकानि । धर्मस्थीयं
तृतीयमधिकरणं समाप्तम् ॥

●

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 130 ]

# KAUṬALĪYAMARTHAŚĀSTRAM

OF

ĀCĀRYA VIṢṆUGUPTA

[ VOLUME TWO, PART TWO ]

With the Commentaries

## 'ŚRĪMŪLĀ'

BY

M. M. T. GAṆAPATI ŚĀSTRĪ

&

## 'NAYACANDRIKĀ'

BY

ŚRĪ MĀDHAVAYAJVA MIŚRA

EDITED BY

ŚRĪ VIŚVANĀTHA ŚĀSTRĪ DĀTĀRA
Ex. Head of Department,
Prācīnarājaśāstrārthaśāstra-Department
Sampurnanand Sanskrit University
Varanasi







VARANASI
1991

**Research Publication Supervisor—**
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.

□

**[ Published under the Rare Texts Publication Scheme of 'Sarasvatī-Bhavana' Library with financial assistance provided by University Grants Commission.]**

□

**Published by—**
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit University
Varanasi—221 002.

□

Available at—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi—221 002.

□

First Edition, 1000 Copies
Price Rs. 90·00

□

**Printed by—**
**VIJAYA PRESS,**
Sarasauli, Varanasi.

सरस्वतीभवन-ग्रन्थमाला

[ १३० ]

आचार्यविष्णुगुप्तविरचितं

# कौटलीयमर्थशास्त्रम्

## [ द्वितीयभागस्य द्वितीयं सम्पुटम् ]

म० म० टी० गणपतिशास्त्रिकृतया

'श्रीमूला' व्याख्यया

श्रीमन्माधवयज्वमिश्रकृतया

'नयचन्द्रिका' व्याख्यया च

विभूषितम्

सम्पादकः

'शास्त्ररत्नाकर' श्रीविश्वनाथशास्त्रिदातारः

पूर्वविभागाध्यक्षः,

प्राचीनराजशास्त्रार्थशास्त्रविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी



वाराणस्याम्

२०४८ तमे वैक्रमाब्दे    १९१३ तमे शकाब्दे    १९९१ तमे ख्रैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वारणसी ।

□

[ सरस्वतीभवनपुस्तकालयस्य प्रकाशनसम्बन्धिविशेषयोजनान्तर्गतं
विश्वविद्यालयानुदानायोगतः प्राप्तवित्तीयसाहाय्येन प्रकाशितम् ]

□

प्रकाशकः—
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्राप्तिस्थानम्—
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्— ९०=०० रूप्यकाणि

□

मुद्रकः—
**विजय-प्रेस,**
सरसौली, वाराणसी ।

# प्ररोचना

बहोःकालात् प्रतीक्ष्यमाणा दिवङ्गतैः **पण्डितराजराजेश्वरशास्त्रिद्राविडैः** सम्पादिता कौटलीयार्थशास्त्रकृतिरधुना प्रकाश्यतामानीयत इति महान्तं परितोषमनुभवामि। आजीवनं पण्डितवर्यैरस्य महतो ग्रन्थस्य वैदिकसिद्धान्तानुसारं निर्वचने प्रायाति। श्रीगणपतिशास्त्रिभिर्विरचिता '**श्रीमूला**' टीका, श्रीमन्माधवयज्वमिश्रप्रणीता '**नयचन्द्रिका**' टीके चाप्यत्र सङ्गृहीते। अनयोष्टीकयोः समुच्चयेनार्थशास्त्रग्रन्थस्य गूढा अर्थाः सुखं ग्राह्याः।

खेदस्यायं विषयः पण्डितराजानां परिश्रमं तेषां जीवनकाले मुद्रणावसरं नालभत। तेषां प्रमुखैः शिष्यैः **श्रीविश्वनाथशास्त्रिदातारैः** पाण्डुलिपेष्टीकाभ्यामाभ्यां संयोजनं सादरं सपरिश्रमं च सम्पन्नम्।

अनया भूमिकया सर्वांशतः सह ऐक्यमत्यमादधानोऽपि अस्याः प्रौढिं सोपपत्तित्वञ्च प्रशंसितुमर्हामि। प्रस्तुतस्यार्थशास्त्रसंस्करणस्येदमेव वैशिष्ट्यं यत्तस्य निर्वचनस्य सर्वे पक्षाः समुद्घाटिताः। तेन विदुषां स्वकीयमतनिर्धारणे सौकर्यं भविष्यति। श्रीदातारशास्त्रिणो द्वौ सहयोगिनौ **श्रीजगन्नाथशास्त्रितैलङ्ग-श्रीलक्ष्मीकान्तखनङ्गौ आस्ताम्**। तयोः श्रमोऽधुना सफलः।

कौटलीयमिति अभिधानमधुना विदुषां बहुतरेणादरास्पदम्। कौटलीयमित्येवाभिधानमाद्रियन्ते बहुशो बुधाः। कुटलगोत्रे विष्णुगुप्तस्य जातत्वात् कौटल्यस्य कौटलीयस्योपपन्नत्वात्। भवतु, कौटिलीयमर्थशास्त्रं कतिभिश्चित् पाश्चात्यैः छलयुक्तिप्रधानं राजशास्त्रमिति मन्यते; किन्तु शास्त्ररीत्या समग्रपरीक्षणेन चायं भ्रम एव प्रतीयते। यतो हि भ्रम एवास्य शास्त्रस्य मूलम्। राज्ञा विद्याविनीतेनैव वर्तितव्यमिति प्रोक्तवता कौटल्येनैवमुक्तम्—"**श्रुताद्धि प्रज्ञोपजायते, प्रज्ञया योगः, योगादात्मवत्ता, इति विद्यासामर्थ्यम्**"।

अनेन वचनेन स्वतःसिद्धं कौटलीयार्थशास्त्रस्य आत्मविद्यामूलत्वम्। वस्तुतो दृष्टस्यादृष्टस्य च, लौकिकस्य लोकोत्तरस्य च, दैहिकस्य आत्मिकस्य च जगतः पार्थक्यं शास्त्रकारैर्न विचीयते स्म। एतादृशोरुभयोर्युग्मयोः परस्परमुपकारित्वमेवाभिमतमस्ति। पण्डितराजकृतः श्रम इममेवार्थं समुपपादयतीति नो हर्षः।

मन्ये, कौटलीयार्थशास्त्रस्य प्रस्तुतं संस्करणं प्राचीनराजशास्त्राध्ययने काञ्चन नूतनां सरणिं विवरिष्यति। साम्प्रतं चतुर्षु खण्डेषु विभक्तोऽयं ग्रन्थ प्रकाश्यतां गच्छतीति महते परितोषाय। अत्र संलग्नाः सर्वे पण्डिता अभिनन्दनार्हाः।

**वाराणस्याम्,**
मौनी-अमावास्यायाम्,
२०४७ **वैक्रमाब्दे**
**(१५-१-१९९१ खैस्ताब्दे)**

**विद्यानिवासमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्राक्कथनम्

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन सरस्वतीभवनस्थानां महत्त्वपूर्णानामप्रकाशितानां पाण्डुलिपीनां मुद्रणाय तथा दुर्लभानां मुद्रितग्रन्थानां पुनः प्रकाशनाय चैका योजना पञ्चमपञ्चवर्षीययोजनायां विश्वविद्यालयानुदानायोगसमक्षं प्रेषिताऽऽसीत्। आयोगेन च नियोजितस्य निरीक्षकमण्डलस्य संस्तुतिमनुसृत्य प्रकाश्यमानग्रन्थानां महत्तां चोररीकृत्य स्वीकृतिः प्रदत्ता। अस्यां प्रक्रियायां वर्षद्वयं व्यतीतम्। अवशिष्टयोजनावधेरल्पत्वात्, अत्रत्यप्रकाशनविभागे कार्यबाहुल्यात्, योजनायाश्च सरस्वतीभवनद्वारा प्रस्तुतत्वात् कार्यस्य शीघ्रमेव सम्पादनार्थं निम्नाङ्कितानां विश्वविद्यालयीयविदुषामेका समितिर्निर्मिता—

**अध्यक्षः**

प्रो० बदरीनाथशुक्लः ( कुलपतिः )

**सदस्याः**

१. प्रो० जगन्नाथोपाध्यायः ( पालिविभागाध्यक्षः, श्रमणविद्यासङ्कायाध्यक्षश्च )
२. श्रीव्रजवल्लभद्विवेदः ( साङ्ख्ययोगतन्त्रागमविभागाध्यक्षः )
३. डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री' (निदेशकः, अनुसन्धानसंस्थानस्य)
४. श्रीबलिरामशास्त्री भारद्वाजः ( उपपुस्तकाध्यक्षः, हस्तलिखितानुभागे )
५. श्रीजनार्दनपाण्डेयः ( सरस्वतीभवनस्थः )
६. श्रीलक्ष्मीनारायणतिवारी ( पुस्तकाध्यक्षः, समितेः संयोजकः )

संयोजकस्य श्रीलक्ष्मीनारायणतिवारिणः सततप्रयत्नेन अनया समित्या प्रकाशनार्हग्रन्थानां चयनम्, तेषां सम्पादनव्यवस्था, मुद्रणव्यवस्था च तत्परतया सम्यक् प्रारब्धा।

सम्पाद्यमानग्रन्थेषु संस्कृतपालिवाङ्मयस्य प्रायः समस्तप्रमुखविषयाणां महत्त्वपूर्णाः समुपयोगिनश्च ग्रन्थास्समावेशिताः, तत्तत्सम्पादनकार्यभारो विश्वविद्यालयस्य विद्वद्भ्यः, सम्बद्धविषयाणां कतिपयेभ्यो बहिष्ठविद्वद्भ्यश्च समार्प्यत।

अस्यामेव योजनायां प्रकाश्य प्रस्तूयत इदं कौटलीयमर्थशास्त्रं बहुभिरतिप्रसिद्धटीकाटिप्पणीसंवलितम्, **शास्त्ररत्नाकरविश्वनाथशास्त्रिदातारेण** सम्पादितम्।

अर्थशास्त्रं हि पूर्वाचार्यैर्भारतदेशस्य सुखशान्तिसमृद्धये त्रिवर्गोन्नतये च निर्माय राष्ट्रस्य पुरतः समुपस्थापितम्। तद् अतिविस्तृततया दुरूहं जातम्, तत्रत्याः कतिपयेऽशा उत्सन्नकल्पा अभूवन्निति कामसूत्रादिनिर्दिष्टहेतुभिर्ज्ञायते। आचार्यः कौटल्यः सम्पूर्णम् अर्थशास्त्रं वेदञ्च अधीत्य वैदिकमर्यादाया लोकयात्रासाधनत्वञ्चानुभूय तत्सङ्ग्रहभूतमेकम् अर्थशास्त्रं निर्मितवान्। यदर्थमुपजीव्य रामराज्यं धर्मराजराज्यं चन्द्रगुप्तमौर्यराज्यं च स्वर्णयुगायते। तदिदमर्थशास्त्रं पञ्चदशाधिकरणं सार्धशताध्यायं साशीतिप्रकरणशतं षट्सहस्रश्लोकात्मकमुपलभ्यते। तस्येयं प्रतिज्ञा **"पृथिव्या लाभे**

**पालने च'''इदमर्थशास्त्रं कृतम्''** (कौ० अ० १।१) इति। तच्च सर्वेष्वपि देशेष्वद्यावधि उत्कृष्टतमं चकास्तीति सर्वैराधुनिकैर्विपश्चिदपश्चिमैरपि सत्क्रियते।

अस्यार्थशास्त्रस्य परम्परायामध्ययनाध्यापनद्वारा कतिपयाष्टीका अपि बभूवुः, याः समवलोक्य जयमङ्गलाभिधेयां टीकां **श्रीशङ्करार्यो** निर्मितवानिति तट्टीकातो ज्ञायते। इयं टीका केवलं प्रथमाधिकरणे उपलब्धा १९५८ ई० वर्षे प्रकाशिता। **श्रीगणपतिशास्त्रिभिः** १९२४ ई० वर्षे अनन्तशयने राजकीयमुद्रणालये सम्पादनपूर्वकं 'श्रीमूला'ख्या स्वरचिता टीका प्रकाशिता।

'नीतिनिर्णीति'नाम्नी टीका **श्रीयोग्घमाचार्यविरचिता** २०१६ वै० संवत्सरे **मुम्बापुरीस्थभारतीयविद्याभवनतः** सिन्धीजैनग्रन्थमालाद्वारा प्राकाशि। एतट्टीका-त्रितयसत्त्वेऽपि न्यायव्याकरणादिशास्त्राध्ययनपरम्परावद् अर्थशास्त्राध्ययनपरम्परा भारतदेशे समभूदिति न दृश्यते। अत उत्कृष्टतममिदमर्थशास्त्रमधिकृत्य 'प्राचीन-भारतीयशासनपद्धतिप्रभृतिष्वनेकेषु ग्रन्थेषु विद्वद्भिर्नैके आक्षेपा उद्भाविताः। यतोऽस्य अप्रामाण्यं जनेषु जागर्ति। तन्निरासाय **''विश्वविद्यालय-अनुदान-आयोगेन''** इदमनुभूतं यत् स्वसाहाय्येन पदवाक्यप्रमाणपारावारीणा विद्वांसोऽर्थशास्त्रव्याख्यानाय प्रेरणीयाः। प्रातस्स्मरणीया गुरुचरणाः पद्मभूषणादिविविधविरुदावलीसमलङ्कृताः श्रीमतः **स्व० पण्डितराजराजेश्वरशास्त्रिद्रविडमहाभागाः** संस्कृतविश्वविद्यालया-धिकारिभिः एतदर्थं सानुरोधं प्राथिताः। एतैर्द्वादशवर्षाधिकवर्षमर्थशास्त्रमधीत्य राजनीतिवर्गं संस्थाप्य विद्यार्थिनोऽध्यापिताः। ततः 'वैदिकसिद्धान्तसंरक्षिणी'ति नाम निधाय अर्थशास्त्रं व्याख्यातम्। प्रायः अष्टमशताब्द्यां शङ्करार्यैः(शङ्कराचार्यैः) निर्मितां **'जयमङ्गलाम्'** अधिकृत्य आधुनिकविद्वदुद्भाविताः शङ्का आन्वीक्षिकीद्वारेण निरस्य क्रोडपत्रमपि व्याख्यातम्।

अधीतेषु विद्यार्थिवृन्देषु शास्त्ररत्नाकरादिभूषाभूषणैः **पण्डितश्रीविश्वनाथ-शास्त्रिदातारैरधीत्य** गुरुचरणकृतं व्याख्यानम् अन्याश्च टीका हृदयङ्गमय्य तन्निर्देशा-नुसारेण 'वैदिकसिद्धान्तसंरक्षिणी-जयमङ्गलाक्रोडपत्रयोः' सङ्कलनं सम्पादनञ्च विहितम्। एतट्टीकाद्वयोपेतं 'श्रीमूला'दिटीकात्रितयसहितमर्थशास्त्रं प्रथमाधिकरण आदितः पञ्चमाध्यायान्तं विदुषां पुरत उपायनीक्रियते। आशास्यते यद् विद्वद्वरेण्या ग्रन्थ-रत्नमिदमादितोऽन्तपर्यन्तं समवलोड्य अधीति-बोधाचरणप्रचारणैः सर्वसाधारणजनेषु रुचिमुत्पाद्य एतद्देशस्य सुखशान्तिसमृद्धये सहयोगं प्रदास्यन्ति।

विस्तृतं टीकाग्रन्थं दातारशास्त्रिभिः सङ्क्षिप्य भूमिकायां सर्वोऽपि विषयः समालोचितः, यत्र नीतिलक्षणादिकं सर्वं स्फुटीभवति, भवति च शङ्कानां समाधानमपि। विश्वस्यतेऽग्रिमं सम्पुटमप्यचिरेण प्रकाशमेष्यति।

**वाराणस्याम्,**
कार्तिकपूर्णिमायाम्,
वि० सं० २०३७
(२२-११-१९८० खैस्ताब्दे)

**बदरीनाथशुक्लः**
तदानीन्तनः कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# सम्पादकीयं वक्तव्यम्

भारतवर्षस्य अभ्युन्नतिः वेदेन **'न मे स्तेनो जनपदे'** इत्यादिना प्रदर्शिता। तत्परम्परा एतद्देशे पूर्वतनराज्येषु वंशपरम्परायां समुदीयते स्म। साम्प्रतं तु अस्यां शताब्द्यां विशेषतो भारतदेशे वर्तमानामशान्तिमनुरुद्ध्य तन्निवारणोपायं चिन्तयद्भिः श्रीगुरुदेवैः श्रीमद्भिः पण्डितराजराजेश्वरशास्त्रिद्रविडचरणैः राजशास्त्रचिन्तन-प्रचारणं विना देशे शान्तिर्न भविष्यतीति ज्ञात्वा प्रथमतो जयमङ्गलासहितः कामन्दकीय-नीतिसारः अमलनेरनगरस्थपुस्तकागारात् सम्प्राप्तः। तत्र 'विद्याप्रतिबद्धत्वाल्लोक-स्थितेः' इत्युपलभ्य श्रीचरणैः राजनीतिं पर्यालोचयितुं राजनीतिवर्गो वाराणसेये रामघट्टस्थिते व० शा० साङ्गवेदविद्यालये महाराजश्रीकाशीनरेशसान्निध्ये तत्कालीनबिहारराज्यपालश्रीअणेकरकमलद्वारा पञ्चविंशतिवर्षेभ्यः पूर्वं संस्थापितः। तत्र स्व० गुरुवर्य-हरिरामशास्त्रिशुक्ल-गणपतिशास्त्रिहेब्बार-रामचन्द्रशास्त्रिहोसमने-जयरामशास्त्रिशुक्ल-स्व० नटराजऐय्यरप्रभृतिभिः सह अहमपि प्रविष्टः। तत्र गुरुचरणैः महता श्रमेण नीतिसारः कण्ठस्थीकृत्य समुपस्थितनैकविधप्रश्नजालसमाधानपुरस्सरम् अध्यापितः। तत्र तत्र देशान्तरेषु गत्वा तैरस्माभिश्च राजशास्त्रं व्याख्यानमालाभिः संश्रावितं प्रसारितं च। सर्वेषां श्रोतॄणां रुचिं ज्ञात्वा 'राजनीतिशास्त्र का दिग्दर्शन', 'शान्ति का अग्रदूत' इति पुस्तकद्वयं प्रकाशितम्।

ततो गुरुभिः जयमङ्गलादिटीकोपेतं कौटलीयमर्थशास्त्रमध्यापितम्, तत्रोपवर्णितेन विषयेण अस्माभिः सर्वैरपि निरणायि यद् भारतदेशे वर्णाश्रमप्रधाने समेषामेकरूपता-सम्पादकं सत्त्वं धृतिभावापरपर्यायम् आसीत्, अस्ति च। एतदाश्रयं विना क्वचिदपि सुखं शान्तिः समृद्धिर्भ्रातृभावेन सर्वेषां सम्प्रदायानां मानवानां वाऽस्तित्वं च न भवितु-मर्हति। एतच्छास्त्रनिर्देशानुसारेण देशे विद्याप्रचारकार्यमेव नैतिकं प्राथमिकं कार्यं विदुषाम्, इति विज्ञाय अर्थशास्त्रस्य चर्चा पुनरपि चर्चिता। तत्र अनेकविधाः शङ्का आधुनिकैः समुपस्थापिताः, आन्वीक्षिकीमीमांसामर्यादया कार्यकारणभावविवेचनपुरस्सरं समाहिताः। एतदेवानुरुद्ध्य रामायण-महाभारत-पुराणादिग्रन्था अपि यदि समा-लोच्येरन्, तर्हि समाजस्य आन्ध्यं व्यपगतं भवेदिति ज्ञात्वा राजनीतिवर्गे प्रविष्टैः स्वकार्यारम्भः समालोचितः। तदानीमेव तत्कालीनकुलपतिश्रीसुरतिनारायणमणि-त्रिपाठिभिः साहाय्यं सम्प्रदाय विशेषतया प्रोत्साहिता गुरुचरणाः। ततः श्रीगौरीनाथ-शास्त्रिभिरुपकुलपतिभी राजनीतिवर्गे स्वयमुपस्थाय अर्थशास्त्रमधिकृत्य निबन्धः प्रकाशितो भवत्विति अभिप्रायः प्रकटितः। नवीनग्रन्थनिर्माणेऽस्माकं सामर्थ्यमननुभूय गुरुशिष्यसंवाद एव ग्रन्थरूपेण प्रकाशनीय इत्यपि अभ्यधायि। ततः पुनरपि आदितः अर्थशास्त्रं गुरुचरणैरध्यापितं व्याख्यानमालारूपेण। तत्र प्रथमाधिकरणे चतुर्दशा-ध्यायान्तमेव अध्ययनाध्यापनयोर्महान् समयः समतिक्रान्तः। तस्य सम्पादनं सङ्कलनञ्च

अनेन शरीरेण कर्तव्यमस्तीति गुरुचरणानामादेशः समभूत्। तमनुरुद्ध्य परिश्रम-पुरःसरम् उक्तसंवादस्य सङ्कलनम् अनेकैः वर्षैः कृतमद्य विदुषां सेवायां कथञ्चन समुपस्थापयितुं प्राभवम्।

अर्थशास्त्रकर्ता चाणक्यस्तस्मिन् समये प्रादुर्भूतः, यत्र नीतिशास्त्रस्य विलोप-प्रसक्त्या सह देशे सत्त्वगुणस्योन्मूलनमेव प्रसक्तमासीत्। अनेनैवाचार्येण सर्वाणि शास्त्राणि चतुरो वेदानधीत्य सत्त्वोन्मूलनकारणमनुशील्य आन्वीक्षिक्या सह त्रय्यादिविद्यानां संस्थापनं कृतम्। राज्यञ्च धर्मप्रधानं व्यवस्थापितम्, यद्धि ऐतिहासिकानां मतानु-सारेणापि स्वर्णयुगायते स्म। अनेनैव सिद्ध्यति यद् अनेन आचार्येण पाटलिपुत्रमवस्थाय चन्द्रगुप्तं मौर्यं राज्यपदे समभिषिच्य स्वयं शमप्रधानः सन् सत्त्वमेव संस्थापितवान्। सोऽयमाचार्य इतः पूर्वं चतुर्विंशतिवर्षशतकपूर्वमवनीतलं भूषयामासेति न्यायवार्तिक-भूमिकाकर्तृभिः उद्धृतात् चतुर्विंशतितमतीर्थङ्करजैनाचार्यवाक्याद् उन्नीतम्। अर्थशास्त्रस्य पदानि गुरुपरम्पराध्ययनाभावाद् दुरवगाहानीति ज्ञात्वा गुरुचरणैः अर्थशास्त्रस्य टीकाः सङ्कलिताः। तासु समग्रस्य अर्थशास्त्रस्य टीका स्व० म० म० पं० त० गणपतिशास्त्रिभिः प्रणीता दृष्टा।

एते काञ्चिमण्डलपतेः श्रीमूलरामवर्ममहाराजस्य कृपापात्राणि स्वं व्याख्यानं श्रीमूलेतिनाम्ना सम्पादितवन्तः।

जयमङ्गलानाम्नी टीका मद्रप्रान्ते प्रकाशिता। इयं कामन्दकीयटीका-वाक्यसादृश्यात् प्रामाणिकत्वाच्च शङ्करार्यैरेव विरचितेति मन्यते। सापि केवलं प्रथमाधिकरण एव प्रकाशनभावं प्राप्ता। नीतिनिर्णीतिरपि केषुचित्स्थलविशेषेषु तदीयाभिप्रायं द्योतयति। सा सिन्धीजैनग्रन्थमालायामाचार्यजिनवरमुनिवरसङ्गृहीता उपलब्धा। एषैव स्वकीयपाठाख्याने सामग्री अभूत्।

एतदर्थशास्त्रस्य समस्तटीकासहितस्य प्रकाशनं अशक्यप्रायमस्तीति मन्वान एवासम्; परं श्रीजगन्नाथोपाध्याय-(पालिविभागाध्यक्षः) प्रभृतिविदुषां प्रोत्साहनमुपलभ्य वर्तमानश्रीकुलपतिभिरेतत् प्रकाशनं प्रतिज्ञायाहमादिष्टस्तदर्थम्।

अस्य समग्रस्य प्रकाशनं भागत्रयेण कर्तव्यम्। एकस्मिन् भागे सम्पुटद्वयं भविष्य-तीत्यपि निर्णीत गुरुचरणैः, कृतस्य व्याख्यानस्य अतिदीर्घत्वात्।

एतत्कार्यसम्पादने **श्री पू० महाराजैः श्रीविभूतिनारायणसिंह**महाभागैः कृतेन प्रोत्साहनेन एतावद्दूरम् अहमागत इति तेषामुपकृतिं स्मरामि।

श्रीगुरुचरणव्याख्यानस्य सङ्कलितस्य शुद्धिः **स्व० गुरुचरणैर्हरिरामशास्त्रिभिः** शुक्लमहाभागैः सम्पादिता। तथैवाग्रे तैर्विधास्यत इत्याशायां स्थितस्तेषां वियोगेन खिन्नमनास्तेषां चरणौ स्मरन् तदुक्ति शरणं मन्यमान आसम्।

एतत्सामग्रीसम्पादने साहाय्यं साङ्गवेदविद्यालयाध्यक्षैः **श्रीरामचन्द्रशास्त्रि-होसमनेमहाभागैः** पुस्तकं प्रदाय कृतम्, तथा गुरुपुत्राभ्यां **श्रीविश्वेश्वरशास्त्रि-गणेश्वरशास्त्रिभ्यां** पितृचरणानां कृतिः प्रकाश्यतां प्राप्नोतीति श्रुत्वा महता हर्षेण सर्वविधमपि साहाय्यं प्रादायीति तेषां समेषां उपकृतिं सर्वान् सभाजयामि ।

मूलपाठं विभज्य तत्र तत्र शीर्षकं तदेव स्थापितं यद् एन्० एस्० वेङ्कटा-चार्यैर्विद्वद्भिः संयोजितमिति तानपि स्मरामि एतत्प्रसङ्गे । **श्रीटोणपेगोपालाचार्यैस्तु** प्रकाशनाय पुस्तकमेवार्थशास्त्रस्य समर्पितम् । इयं तेषामुपकृतिरपि स्मरणीया वर्तते ।

सम्पादन-प्रकाशनकार्ये च **श्रीलक्ष्मीकान्तशास्त्रिखनङ्ग-श्रीजगन्नाथशास्त्रि-तैलङ्गाभ्यां** महान् परिश्रमः कृतो वर्तते । तदधमर्णतां भजमानस्तयोरुपकृतिं स्मरामि ।

अस्य प्रकाशने प्रमादाद् अज्ञानाद् मुद्रकदोषाद् असौष्ठवाद् असामर्थ्याच्च अशुद्धयो जाताः प्रकाशनानन्तरमुपलब्धा वर्तन्ते । तदर्थं क्षमस्वेत्युक्तिं विनाऽन्य उपायो नास्ति । इयं प्रथमावृत्तिः, तत्र दोषा भविष्यन्त्येवेति ज्ञात्वा विद्वांसः पाठं शोधयित्वा अधीतिबोधाचरणप्रचारणैः समन्वेष्यन्तोमां कृतिमित्याशास्य विश्वेश-गुरुचरणौ नमन् विरमामीति ।

विदुषां वशंवदः

**विश्वनाथशास्त्रिदातारः**

# विषयानुक्रमणिका

## अथ कण्टकशोधनं नाम चतुर्थमधिकरणम्

### षट्सप्ततितमं प्रकरणम्

### प्रथमोऽध्यायः (कारुकरक्षणम्) ३-११



### सप्तसप्ततितमं प्रकरणम्

### द्वितीयोऽध्यायः (वैदेहकरक्षणम्) १२-१६



### अष्टसप्ततितमं प्रकरणम्

### तृतीयोऽध्यायः (उपनिपातप्रतीकारः) १७-२२

## एकोनाशीतितमं प्रकरणम्

### चतुर्थोऽध्यायः (गूढाजीविनां रक्षा) २३-२६



## अशीतितमं प्रकरणम्

### पञ्चमोऽध्यायः ( माणवप्रकाशनम् )२७-३०



## एकाशीतितमं प्रकरणम्

### षष्ठोऽध्यायः ३१-३६



## द्व्यशीतितमं प्रकरणम्

### सप्तमोऽध्यायः ३७-४१

## त्र्यशीतितमं प्रकरणम्

### अष्टमोऽध्यायः ४२-४७



## चतुरशीतितमं प्रकरणम्

### नवमोऽध्यायः ४८-५४



## पञ्चाशीतितमं प्रकरणम्

### दशमोऽध्यायः ५५-५८



## षडशीतितमं प्रकरणम्

### एकादशोऽध्यायः (शुद्धश्चित्रश्च दण्डकल्पः) ५९-६२

## सप्ताशीतितमं प्रकरणम्

### द्वादशोऽध्यायः ( कन्याप्रकर्म ) ६३-६७



## अष्टाशीतितमं प्रकरणम्

### त्रयोदशोऽध्यायः (अतिचरणदण्डः) ६८-७३



॥ इति कण्टकशोधनं नाम चतुर्थमधिकरणम् ॥

## अथ योगवृत्तं नाम पञ्चममधिकरणम्

## एकोननवतितमं प्रकरणम्

### प्रथमोऽध्यायः (दाण्डकर्मिकम्) ७४-८२

## नवतितमं प्रकरणम्

### द्वितीयोऽध्यायः (कोशाभिसंहरणम्) ८३-९१



## एकनवतितमं प्रकरणम्

### तृतीयोऽध्यायः (भृत्यभरणीयम्) ९२-९७



## द्विनवतितमं प्रकरणम्

### चतुर्थोऽध्यायः (अनुजीविवृत्तम्) ९८-१०१



## त्रिनवतितमं प्रकरणम्

### पञ्चमोऽध्यायः (समयाचारिकम्) १०२-१०६

**चतुर्नवतितमपञ्चनवतितमे प्रकरणे**

**षष्ठोऽध्यायः** (राज्यप्रतिसन्धानमेकैश्वर्यं च) १०७-११३



॥ इति योगवृत्तं नाम पञ्चममधिकरणम् ॥

**अथ मण्डलयोनिर्नाम षष्ठमधिकरणम्**

**षण्णवतितमं प्रकरणम्**

**प्रथमोऽध्यायः** (प्रकृतिसम्पदः) ११४-११९



**सप्तनवतितमं प्रकरणम्**

**द्वितीयोऽध्यायः** ( शमव्यायामिकम् ) १२०-१२६



॥ इति मण्डलयोनिर्नाम षष्ठमधिकरणम् ॥

## अथ षाड्गुण्यं नाम सप्तममधिकरणम्

### अष्टनवति-नवनवतितमे प्रकरणे

**प्रथमोऽध्यायः** ( षाड्गुण्यसमुद्देशः, क्षयस्थानवृद्धिनिश्चयश्च ) १२९-१३६



### शततमं प्रकरणम्

**द्वितीयोऽध्यायः** (संश्रयवृत्तिः) १३७-१४०



### एकशततमद्विशततमे प्रकरणे

**तृतीयोऽध्यायः** (समहीनज्यायसां गुणाभिनिवेशः, हीनसन्धयश्च) १४१-१४६



### त्रिशततमादिसप्तशततमान्तानि प्रकरणानि

**चतुर्थोऽध्यायः** ( विगृह्यासनादयः ) १४७-१५३

## अष्टशततमादिदशशततमान्तानि प्रकरणानि

### पञ्चमोऽध्यायः (यातव्यामित्रयोरभिग्रहचिन्तादि) १५४-१६१



## एकादशशततमद्वादशशततमे प्रकरणे

### षष्ठोऽध्यायः (संहितप्रयाणिकादि) १६२-१७०



## त्रयोदशशततमं प्रकरणम्

### सप्तमोऽध्यायः (द्वैधीभाविकास्सन्धिविक्रमाः) १७१-१८३

## अष्टशततमादिदशशततमान्तानि प्रकरणानि

### अष्टमोऽध्यायः (यातव्यवृत्तिः, अनुग्राह्यमित्रविशेषाश्च) १८४-१९४



## षोडशशततमं प्रकरणम्

### नवमोऽध्यायः (मित्रादिसन्धयः ) १९५-२०८



### दशमोऽध्यायः ( भूमिसन्धिः ) २०९-२१७



### एकादशोऽध्यायः ( अनवसितसन्धिः) २१८-२२७

**द्वादशोऽध्यायः ( कर्मसन्धिः) २२८-२३३**



**सप्तदशशततमं प्रकरणम्**

**त्रयोदशोऽध्यायः (पार्ष्णिग्राहचिन्ता) २३४-२४१**



**अष्टादशशततमं प्रकरणम्**

**चतुर्दशोऽध्यायः ( हीनशक्तिपूरणम् ) २४२-२४८**



**एकोनविंशतिशततमविंशतिशततमे प्रकरणे**

**पञ्चदशोऽध्यायः ( बलवता विगृह्योपरोधहेतवः ) २४९-२५७**

**एकविंशतिशततमं प्रकरणम्**

**षोडशोऽध्यायः** ( दण्डोपनायिवृत्तम् ) २५८-२६७



**द्वाविंशतिशततमं प्रकरणम्**

**सप्तदशोऽध्यायः** (सन्धिकर्म) २६८-२८३

## चतुर्विंशतिशततमादिषड्विंशतिशततमान्तानि प्रकरणानि

### अष्टादशोऽध्यायः (मध्यमोदासीनमण्डलचरितानि ) २८४-२९९

(मध्यमचरितम्)



( उदासीनचरितम् )



( मण्डलचरितम् )



॥ इति षाड्गुण्यं नाम सप्तममधिकरणम् ॥



श्रीमूलाटीकया संवलितं

# कौटिलीयमर्थशास्त्रम्

द्वितीयो भागः

( द्वितीयं सम्पुटम् )

❀ श्रीविश्वेश्वरः शरणम् ❀

॥ श्रीगुरुः शरणम् ॥

श्रीमूलाटीकया संवलितं

# कौटिलीयमर्थशास्त्रम्

## द्वितीयो भागः

( द्वितीयं सम्पुटम् )

# अथ कण्टकशोधनं नाम चतुर्थमधिकरणम्

## षट्सप्ततितमं प्रकरणम्

### प्रथमोऽध्यायः

### कारुकरक्षणम्

[ दुष्टशिल्प्यादिनिग्रहविधिः शिक्षकसङ्ख्या च ]

**प्रदेष्टारस्त्रयस्त्रयोऽमात्याः कण्टकशोधनं कुर्युः ।**

---

श्रीमूला

अथ चतुर्थं कण्टकशोधनं नामाधिकरणमारभ्यते । कण्टकानां कण्टकाः प्रजापीडाकरत्वात् कण्टकतुल्याः कारुकवैदेहकादयः तेषां शोधनं तेभ्यः प्रजापीडा यथा न भवेत् तथा तच्छमनं कण्टकशोधनम् । तदस्मिन्नधिकरणे प्रस्तुतम् ।

तत्र प्रथमं सूत्रम्—कारुकरक्षणमिति । नाडिन्धमतक्षायस्कारादयः कारुकाः तेभ्यः प्रजानां रक्षणमिति सूत्रार्थः ।

प्रदेष्टार इति । कण्टकशोधनाधिकृताः प्रदेष्टार इत्याख्यायन्ते । ते त्रयस्त्रयः, अमात्याः जानपदत्वाद्यमात्यगुणयुक्ताः, कण्टकशोधनं कुर्युः । इह वीप्सा कण्टकशोधनस्थानेषु सर्वेष्वपि प्रदेष्टृत्रित्वप्रतिपत्त्यर्था ।

[ जनदत्तसंस्कार्यद्रव्यग्रहणयोग्यता:,
प्रत्यर्पणकालादिनियमश्च ]

**अर्थ्यप्रकाराः कारुशासितारः सन्निक्षेप्तारः स्ववित्तकारवः श्रेणीप्रमाणाः निक्षेपं गृह्णीयुः। विपत्तौ श्रेणी निक्षेपं भजेत। निर्दिष्टदेशकालकार्यं च कर्म कुर्युः, अनिर्दिष्टदेशकालकार्यापदेशम्। कालातिपातने पादहीनं वेतनं, तद्द्विगुणश्च दण्डः। अन्यत्र भ्रेषोपनिपाताभ्यां नष्टं विनष्टं वा अभ्यावहेयुः। कार्यस्यान्यथाकरणे वेतननाशः, तद्द्विगुणश्च दण्डः।**

[ वस्त्रद्विपटीकम्बलादिनिर्माणतद्वेतने,
विरूपकरणे दण्डश्च ]

**तन्तुवायाः दशैकादशिकं सूत्रं वर्धयेयुः। वृद्धिच्छेदे छेदद्विगुणो दण्डः।**

---

श्रीमूला

कीदृग्गुणाः कारवः निक्षेपं ग्रहीतुमर्हन्तीत्याह—अर्थ्येत्यादि। अर्थ्यप्रकाराः अर्थानपेतप्रकाराः शुचिस्वभावा इत्यर्थः अर्थनीयस्वभावा वा अप्रतीकारा इति। क्वाचित्के पाठे अनाशंसनीय प्रतिकारा इत्यर्थो वाच्यः। कारुशासितारः बहूनां कारूणामधश्चराणामुपरि स्थित्वा कर्तव्योपदेष्टारः, सन्निक्षेप्तारः प्रतिवेशिकानुवेशिकसाक्षिकं निक्षेपग्रहणप्रत्यर्पणव्यवहर्तारः, स्ववित्तकारवः स्वधनेनापि भूषणशिल्पकारिणः, एतेन भक्षितनिक्षेपनिष्क्रयार्पणशक्तत्वलक्षणां धनवत्तामाह। श्रेणीप्रमाणाः श्रेणीविधेयाः, उक्तविशेषणपञ्चकयुक्ताः, निक्षेपं गृह्णीयुः। विपत्तौ ग्रहीतृमरणदीर्घप्रवासादिना निक्षेपहानिसंभवे श्रेणी निक्षेपं भजेत भागशो दद्यात्। निर्दिष्टदेशकालकार्यं चेति। अयं देशोऽयं काल इदं च कार्यवस्तुस्वरूपमित्येवं निर्दिष्टं व्यवस्थापितं देशादिकं यस्य तत् तथाभूतं, कर्म कुर्युः। अनिर्दिष्टदेशकालकार्यापदेशं कर्म कुर्युरिति वर्तते। अर्थाद् यद् बहुतरदेशकालैकसाध्यम् अनन्योल्लेख्यनानावैचित्र्ययोगकमनीयतया स्वरूपतो निर्देष्टुमशक्यं च भवति, तत् कर्म।

कालातिपातन इत्यादि। निर्दिष्टकालातिक्रमे पादहीनं वेतनं, तद्द्विगुणश्च दण्डः। अन्यत्र भ्रेषोपनिपाताभ्यामिति। भ्रेषो व्यालकृत उपप्लवः उपनिपातो दैवाग्न्यादिकृतः तदतिरिक्तेन, निमित्तेन, नष्टम् अत्यन्तनाशं गतं, विनष्टं वा एकदेशलुप्तं वा, अभ्यावहेयुः निर्यातयेयुः। कार्यस्य अन्यथाकरणे निर्दिष्टप्रकारातिरिक्तप्रकारेण करणे, वेतननाशः तद्द्विगुणश्च दण्डः।

तन्तुवायकर्माह—तन्तुवाया इति। कुविन्दकाः, दशैकादशिकं सूत्रं वर्धयेयुः दशपलस्य सूत्रस्य सकाशाद्धिकमेकादशपलाधिकमुतं सूत्रं दद्युः। वृद्धिच्छेदे छेदद्विगुणो, दण्डः।

**सूत्रमूल्यं वानवेतनं क्षौमकौशेयानामध्यर्धगुणम्, पत्त्रोर्णाकम्बल-दुकूलानां द्विगुणम्। मानहीने हीनावहीनं वेतनं, तद्द्विगुणश्च दण्डः। तुलाहीने हीनचतुर्गुणो दण्डः। सूत्रपरिवर्तने मूल्याद्द्विगुणः। तेन द्विपटवानं व्याख्यातम्। ऊर्णातुलायाः पञ्चपलिको विहननच्छेदश्च।**

[ वस्त्रशोधकोपयोज्यफलकादिः, तद्धार्यवस्त्रम्,
संस्कारार्थदत्तवस्त्रविक्रयादौ दण्डश्च ]

**रजकाः काष्ठफलकश्लक्ष्णशिलासु वस्त्राणि नेनिज्युः। अन्यत्र नेनि-जन्तो वस्त्रोपघातं षट्पणं च दण्डं दद्युः।**

**मुद्गराङ्कादन्यद्वासः परिदधानाः त्रिपणं दण्डं दद्युः। परवस्त्रविक्र-यावक्रयाधानेषु च द्वादशपणो दण्डः; परिवर्तने मूल्यद्विगुणो वस्त्रदानं च।**

[ शोधनरञ्जनाद्यर्थदत्तवस्त्रप्रत्यर्पणकालनियमः ]

**मुकुलावदातं शिलापट्टशुद्धं धौतसूत्रवर्णं प्रमृष्टश्वेतं चैकरात्रोत्तरं दद्युः;**

---

श्रीमूला

वानवेतनमाह—सूत्रमूल्यं वानवेतनमिति। ऊतिकर्मणो वेतनं सूत्रमूल्यं यावत् तावद् दातव्यम्। क्षौमकौशेयानां वानवेतनम् अध्यर्धगुणं सूत्रमूल्यसार्धगुणम्। पत्त्रोर्णाकम्बलदुकूलानां वानवेतनं द्विगुणं सूत्रमूल्यद्विगुणम्।

मानहीने इति। निर्दिष्टायामविस्तारहानौ, हीनावहीनं हीनस्यावहीनम् अर्थादष्टहस्तायामचोदनायां सप्तहस्तायामवानेऽष्टमांशहीनं वानवेतनं, देयम्। तद्द्विगुणश्च दण्डः अयथोक्तवानकारिणो भवति। तुलाहीने इति अन्तरालसूत्रन्यूनतायां, हीन-चतुर्गुणो दण्डः। सूत्रपरिवर्तने दत्तं सूत्रमपहृत्यान्यस्य सूत्रस्य प्रतिनिधाने, मूल्य-द्विगुणः दण्डः। एष एवैकसूत्रवानविधिर्द्विसूत्रवानेऽपि ऊह्य इत्याह—तेन द्विपटवानं व्याख्यातमिति।

ऊर्णातुलाया इति। शतपलाया ऊर्णायाः पञ्चपलो विहननच्छेदः विहननं पिञ्जनं शोधनं तन्निमित्तश्छेदः। रोमच्छेदश्च पञ्चपलः, वानानिमित्तः।

रजककर्माह—रजका इत्यादि। ते, काष्ठफलकश्लक्ष्णशिलासु काष्ठफलकेषु मसृणशिलासु च, वस्त्राणि नेनिज्युः शोधयेयुः। अन्यत्र खरशिलादौ नेनिजतः नेजनंकुर्वन्तः, णिजेरभ्यस्ताच्छतरि जसि रूपमिदम्। वस्त्रोपघातं, षट्पणं दण्डं च दद्युः।

मुद्गराङ्कादित्यादि। मुद्गरायुधप्रतिमोपरञ्जितात्। शेषं सुबोधम्। अर्पित-वस्त्रप्रत्यर्पणकालनियमं तदतिक्रमे दण्डं चाह—मुकुलावदातमिति। मुकुलवन्मसृणसितं शिलापट्टशुद्धं शिलापट्टस्वच्छम्, धौतसूत्रवर्णं क्षालितसूत्रधवलं, प्रमृष्टश्वेतं च अत्यन्त-

**पञ्चरात्रिकं तनुरागम्; षड्रात्रिकं नीलम्; पुष्पलाक्षामञ्जिष्ठारक्तं गुरुपरिकर्मयत्नोपचार्यं जात्यं वासः सप्तरात्रिकम् । ततः परं वेतनहानिं प्राप्नुयुः; श्रद्धेयाः रागविवादेषु वेतनं कुशलाः कल्पयेयुः । परार्ध्यानां पणो वेतनम्; मध्यमानामर्धपणः; प्रत्यवराणां पादः । स्थूलकानां माषद्विमाषकम्, द्विगुणं रक्तकानाम् । प्रथमनेजने चतुर्भागः क्षयः, द्वितीये पञ्चभागः । तेनोत्तरं व्याख्यातम् । रजकैः तुन्नवाया व्याख्याताः ।**

---

श्रीमूला

धवलं च, एवं चतुष्प्रकारधावल्यं वस्त्रम्, एकरात्रोत्तरं पूर्वपूर्वापेक्षया एकरात्राधिकप्रत्यर्पणकालमुत्तरोत्तरं यस्मिंस्तत् तथाभूतं दद्युः । तत्राद्यं मुकुलावदातमेकरात्रेण प्रत्यर्पणीयं द्वितीयं द्विरात्रेण तृतीयं त्रिरात्रेण चतुर्थं चतूरात्रेणेति व्यवस्था ।

रञ्जनार्थान् दिवसानाह—पञ्चेत्यादि । तनुरागं शोणशिलावृक्षत्वश्योगसाधितकषायरञ्जनीयं वस्त्रं, पञ्चरात्रिकं पञ्चरात्रेण देयम् । नीलं नील्या महारसया रक्तं, पुष्पलाक्षामञ्जिष्ठारक्तं पुष्पं कुङ्कुमकुसुम्भशेफालिकादि लाक्षा अलक्तः मञ्जिष्ठा अञ्जनवल्लिकाख्या आभिः रञ्जितं, षड्रात्रिकम् । गुरुपरिकर्म बहुशिल्पम्, अत एव यत्नोपचार्यं यत्नसंस्कार्यं, जात्यं प्रशस्तं, वासः नेत्रादि, सप्तरात्रिकं सप्तरात्रप्रत्यर्पणीयम् ।

ततः परं विहितकालातिक्रमे वेतनहानिं प्राप्नुयुः ।

श्रद्धेया इति । आप्ताः, कुशलाः रागगुणपरीक्षानिपुणाः, रागविवादेषु वेतनं, कल्पयेयुः ।

रागवेतनमाह—परार्ध्यानामिति । प्रशस्तानां रागाणां, पणोवेतनं, मध्यमानाम् अर्धपणः, प्रत्यवराणाम् अधमानां पादः पादपणः ।

निर्णेजनभृतिमाह—स्थूलेत्यादि । स्थूलकानां निर्णेजने माषद्विमाषकं माषकं द्विमाषकं वा वेतनम् अधममध्यमोत्तमानुसारेण कल्प्यम् । रक्तकानां द्विगुणं द्विमाषकचतुर्माषकादि पूर्ववत् । नेजनावृत्तिकृतमर्घक्षयमाह—प्रथमनेजन इति । तत्र, चतुर्भागः क्षयः क्रयणकालिकमूल्यस्य चतुर्भागो हीयते । द्वितीये नेजने, पञ्चभागः क्षयः, अर्थात् प्रथमनेजनमूल्यस्य । तेनोत्तरं व्याख्यातमिति । अनया रीत्या तृतीयादौ नेजने द्वितीयादिनेजनमूल्यादेः षड्भागादिः क्षयो द्रष्टव्य इत्यर्थः ।

रजकैस्तुन्नवाया व्याख्याता इति । तुन्नवायाः सौचिकाः । तैरपि वस्त्राणां सप्तरात्रेण प्रत्यर्पणं, विनाशितानां प्रथमनेजनाद्यनुसारेण चतुर्भागादिहीनमूल्यदानं च रजकवत् कर्तव्यमित्यर्थः ।

[ अशुद्धवृत्तानां सुवर्णकाराणां
तत्तदपराधानुगुण्येन दण्डः ]

**सुवर्णकाराणाम् अशुचिहस्ताद्रूप्यं सुवर्णम् अनाख्याय सरूपं क्रीणतां द्वादशपणो दण्डः; विरूपं चतुर्विंशतिपणः; चोरहस्तादष्टचत्वारिंशत्पणः; प्रच्छन्नविरूपमूल्यहीनक्रयेषु स्तेयदण्डः, कृतभाण्डोपधौ च। सुवर्णान्माषकमपहरतो द्विशतो दण्डः, रूप्यधरणान्माषकमपहरतो द्वादशपणः। तेनोत्तरं व्याख्यातम्।**

**वर्णोत्कर्षमपसाराणां योगं वा साधयतः पञ्चशतो दण्डः। तयोरपचरणे रागस्यापहारं विद्यात्।**

[ तेषां वेतनव्यवस्था, वस्तुनिर्माणसमये न्यूनीभवन-
योग्यतत्तल्लोहपरिमाणनियमश्च ]

**माषको वेतनं रूप्यधरणस्य, सुवर्णस्याष्टभागः। शिक्षाविशेषेण द्विगुणा वेतनवृद्धिः।**

---

श्रीमूला

सुवर्णकाराणामिति। सम्बद्धममिधीयत इति शेषः। अर्थात् तत्प्रतारणपरिहारोपायोऽभिधीयते। अशुचिहस्तादिति। अशुचयो दासकर्मकरादयः तद्द्वारेण, सरूपं भूषणाद्याकारयुक्तं, रूप्यं सुवर्णं च, अनाख्याय सौवर्णिकमनिवेद्य क्रीणतां, द्वादशपणो दण्डः। विरूपं तत् क्रीणतां, चतुर्विंशतिपणः। चोरहस्तात् क्रीणताम्, अष्टचत्वारिंशत्पणो दण्डः। प्रच्छन्नविरूपमूल्यहीनक्रयेषु स्तेयदण्ड इति। अन्याविदितं विनाशितरूपं रूप्यसुवर्णं हीनेन मूल्येन क्रीणानस्य चोरदण्डः। कृतभाण्डोपधौ च निर्मितभाण्डपरिवर्तने च स्तेयदण्ड इति वर्तते।

सुवर्णादिति। तस्मात्, माषकं सुवर्णषोडशभागम्। अपहरतः, द्विशतो द्विशतपणो दण्डः। रूप्यधरणात् धरणप्रमाणाद् रूप्यात्, माषकमपहरतः, द्वादशपणो दण्डः। तेनोत्तरं व्याख्यातमिति। अनेन प्रकारेण द्विमाषकाद्यपहारे दण्डद्वैगुण्यादिकं कल्पनीयमित्यर्थः।

वर्णेत्यादि। वर्णोत्कर्षम् असाराणां हीनवर्णानां, साधयतः, योगं वा सारैरसारयोगं वा साधयतः, पञ्चशतो दण्डः। तयोरिति। कृत्रिमवर्णोत्कर्षस्य असारयुक्तस्य चेत्येतयोः, रागस्य वर्णस्य, अपचरणे यथाविध्यग्निप्रक्षेपेणापगमने, अपहारं विद्यात्।

कर्मवेतनमाह—माषको वेतनं रूप्यधरणस्येति। धरणप्रमाणस्य रूप्यस्य शिल्पकरणे रूप्यमाषक एको वेतनम्। सुवर्णस्य षोडशमाषकमितस्य स्वर्णस्य शिल्पे, अष्टभागः सुवर्णमाषस्याष्टमांशः, वेतनम्। शिक्षाविशेषेण शिल्पवैचित्र्येण, द्विगुणा वा वेतनवृद्धिः।

तेनोत्तरं व्याख्यातम् ।

ताम्रवृत्तकंसवैकृन्तकारकूटकानां पञ्चकं शतं वेतनम् । ताम्रपिण्डो दशभागक्षयः पलहीने हीनद्विगुणो दण्डः । तेनोत्तरं व्याख्यातम् ।

सीसत्रपुपिण्डो विंशतिभागक्षयः । काकणी चास्य पलवेतनम् । कालायसपिण्डः पञ्चभागक्षयः । काकणीद्वयं चास्य पलवेतनम् । तेनोत्तरं व्याख्यातम् ।

[ अमार्गप्रवृतानां पणदर्शकानां दण्डः
रत्नविषये अवधेयाः अंशाश्च ]

रूपदर्शकस्य स्थितां पणयात्रान् अकोप्यां कोपयतः कोप्यामकोपयतो द्वादशपणो दण्डः । व्याजीपरिशुद्धा पणयात्रा । पणान्माषकम् उपजीवतो द्वादशपणो दण्डः । तेनोत्तरं व्याख्यातम् ।

कूटरूपं कारयतः प्रतिगृह्णतो निर्यापयतो वा सहस्रं दण्डः । कोशे प्रक्षिपतो वधः ।

———————

श्रीमूला

तेनोत्तरं व्याख्यातमिति । अनेन प्रकारेण गुरुशिल्पकरणे वेतनवृद्धिः कल्पनीया ।

ताम्रवृत्तकंसवैकृन्तकारकूटानामिति । ताम्रादीनां पञ्चानां, पञ्चकं शतं तुलाप्रमाणस्य कर्मणि पञ्चपणं वेतनम् । कर्मणि क्षयमानमाह—ताम्रपिण्ड इति । दशभागक्षयः कर्मकरणे दशभागहानिर्भवति । पलहीन इत्यादि । कर्मण्येकपलहानौ, हीनद्विगुणो दण्डः । एवं द्विपलादिहानौ दण्डविधिरूह्य इत्याह—तेनोत्तरं व्याख्यातमिति ।

सीसत्रपुपिण्ड इत्यादि । सुबोधम् ।

रूपदर्शकस्येति । पणपरीक्षको रूपदर्शकः तस्य, स्थितां वर्तमानां, पणयात्रामकोप्याम् अदूषणीयं पणव्यवहारं, कोपयतः दूषयतः, कोप्यामकोपयतः दूषणीयामदूषयतः, द्वादशपणो दण्डः ।

व्याजीपरिशुद्धा पणयात्रेति । राजदेयं शते पञ्चभागं दत्त्वा पणयात्रां कुर्यात् । पणादिति । पणात् माषकम् उपजीवतः एकस्मिन् शुद्धे पणे माषमेकं हरतः लक्षणाध्यक्षस्य, द्वादशपणो दण्डः । एवमुपजीवनबहुत्वे दण्डबहुत्वमूह्यमित्याह—तेनोत्तरमित्यादि ।

कूटरूपमिति । कपटनाणकं, कारयतः, प्रतिगृह्णतः स्वीकुर्वतः निर्यापयतो वा निर्गमयतो वा, सहस्रं पणसहस्रं, दण्डः । कोशे प्रक्षिपतः अकूटरूपैः सह मिश्रयतः, वधः ।

**सरकपांसुधावकाः सारत्रिभागं लभेरन्, द्वौ राजा रत्नं च। रत्नापहारे उत्तमो दण्डः।**

[ अनर्हाधीनखनिरत्नादिनिवेदकदेयांशः आनुवंशिकनिधिस्वायत्तीकरणविधिश्च ]

**खनिरत्ननिधिनिवेदनेषु षष्ठमंशं निवेत्ता लभेत; द्वादशमंशं भृतकः। शतसहस्राादूर्ध्वं राजगामी निधिः। ऊने षष्ठमंशं दद्यात्। पौर्वपौरुषिकं निधिं जानपदः शुचिः स्वकरणेन समग्रं लभेत। स्वकरणाभावे पञ्चशतो दण्ड:, प्रच्छन्नादाने सहस्रम्।**

[ अमार्गप्रवृत्तवैद्यशिक्षा ]

**भिषजः प्राणाबाधिकमनाख्यायोपक्रममाणस्य विपत्तौ पूर्वस्साहसदण्डः, कर्मापराधेन विपत्तौ मध्यमः, मर्मवेधवैगुण्यकरणे दण्डपारुष्यं विद्यात्।**

---

श्रीमूला

सरकेत्यादि। सरकपांसुधावकाः सरकं रत्नं खनिषु रत्नसम्पृक्तपांसुधावनकर्मकराः, सारत्रिभागं तत्कर्मलब्धसारवस्तुत्रिभागं लभेरन्। द्वौ सारत्रिभागौ, रत्नं च, राजा लभेत। रत्नापहारे उत्तमो दण्डः, सरकपांसुधावकानाम्।

खनिरत्ननिधिनिवेदनेष्विति। खन्यादीनामनर्हहस्तगतानां राज्ञे निवेदनेषु षष्ठम् अंशं, निवेत्ता निवेदयिता, लभेत। भृतकः खन्यादिनिवेदनवृत्तिः, द्वादशमंशं, लभेत।

निधिः कियद्द्रव्यमानादूर्ध्वं राजगामीत्याह—शतसहस्रादित्यादि। तावत्पणमानपर्यन्तस्तूपलब्धृगामीत्यर्थः। ऊने, षष्ठम् अंशं, दद्याद् राज्ञे।

पौर्वपौरुषिकमिति। पितृपितामहादयः पूर्वपुरुषाः तैः स्थापितं, निधिं, जानपदः, शुचिः सद्वृत्तः, स्वकरणेन साक्ष्यलेख्यादिभिः स्वत्वविभावनेन, समग्रं लभेत शतसहस्रातिगमपि। स्वकरणाभावे पञ्चशतो दण्डः। प्रच्छन्नादाने अप्रकाश्य स्वायत्तीकरणे, सहस्रं दण्डः।

प्राणबाधाकरं रोगमनिवेद्य राज्ञे रोगिणं चिकित्सतो वैद्यस्य तद्विपत्तौ पूर्वः साहसदण्डः, चिकित्सादोषेण तद्विपत्तौ मध्यम इत्याह—भिषज इत्यादि। मर्मवेधवैगुण्यकरण इति। मर्मणि शस्त्रक्रियान्यथाकरणे, दण्डपारुष्यं विद्यात् तदाख्येन विवादपदेन भिषजमभियुञ्जीत, भिषक्क्रियादोषेण रोगिणो यदङ्गमुपहतं तद् भिषज उपहन्यादित्यर्थः।

[ नटनर्तकादीनां स्थितिगतिक्रियादिव्यवस्था
अतिक्रमे दण्डश्च ]

**कुशीलवाः वर्षारात्रिम् एकस्था वसेयुः। कामदानमतिमात्रम् एकस्यातिवादं च वर्जयेयुः। तस्यातिक्रमे द्वादशपणो दण्डः। कामं देशजातिगोत्रचरणमैथुनापहाने नर्मयेयुः।**

[ चारणभिक्षुकयोः सधनत्वे उक्ततुल्यता
निर्धनत्वे दण्डविशेषश्च ]

**कुशीलवैश्चारणाः भिक्षुकाश्च व्याख्याताः। तेषाम् अयश्शूलेन यावतः पणान् अभिवदेयुः तावन्तः शिफाप्रहारा दण्डाः।**

[ शिल्पानुगुण्येन वेतनव्यवस्थोक्तिः निगमनं च ]

**शेषाणां कर्मणां निष्पत्तिवेतनं शिल्पिनांकल्पयेत्।**

---

श्रीमूला

कुशीलवा इति। लङ्घनप्लवनगीतादिवृत्तयः, वर्षारात्रिं वर्षाकालिकरात्रीः, एकस्था वसेयुः एकं स्थानमाश्रित्य वसेयुः, न तु स्थानात् स्थानान्तरं गच्छन्तः स्ववृत्तिमनुतिष्ठेयुः, तदनुष्ठाने हि सति कर्षकाणां तदासङ्गात् कृषिकर्मणे वर्षाकालकरणीयस्योपघातः स्यादिति। कामदानमतिमात्रमिति। प्रीतिवशात् केनचित् न्याय्यां मात्रामतिक्रम्य दीयमानं द्रव्यं, वर्जयेयुः न स्वीकुर्युः। एकस्यातिवादं च बहुषु मध्ये एकस्यातिस्तुतिं च, वर्जयेयुः। तस्यातिक्रमे द्वादशपणो दण्डः। काममिति। देशजातिगोत्रचरणमैथुनापहाने चरणः शाखाध्येता शेषं प्रतीतं, देशजात्याद्यपहासादिपरिहारे सति, कामं नर्मयेयुः विनोदयेयुः प्रेक्षकान्।

कुशीलवोक्तमेव विधानं चारणानां भिक्षुकाणां च द्रष्टव्यमित्याह—कुशीलवैरित्यादि। चारणाः अङ्गविक्षेपमात्रकर्तारः। तेषां निर्धनानां दण्डे विशेषमाह—तेषामिति। तेषान्, अयश्शूलेन हृदयतोदकत्वाद् अयश्शूलतुल्येन परमर्मोद्घाटनेन निमित्तेन, यावतः पणान्, अभिवदेयुः दण्डत्वेन विदध्युर्धर्मस्थाः, तावन्तः विहितपणतुल्यसङ्ख्याः, शिफाप्रहाराः दण्डाः धनदण्डप्रतिनिधयः कार्याः।

शिल्पिनामुक्तातिरिक्तकर्मविषयं निष्पत्तिवेतनमूहनीयमुक्तदिशेत्याह—शेषाणामित्यादि।

एवं चोरानचोराख्यान् वणिक्कारुकुशीलवान् ।
भिक्षुकान् कुहकांश्चान्यान् वारयेद्देशपीडनात् ॥१४२॥

इति कण्टकशोधने कारुकरक्षणं प्रथमोऽध्यायः
आदितोऽष्टसप्ततितमः ॥

---

श्रीमूला

अध्यायान्ते श्लोकमाह—एवमित्यादि । चोरान् अचोराख्यान् चोरकर्म कुर्वाणानप्यचोरसंज्ञान् । कुहकान् ऐन्द्रजालिकान् ॥

इति कौटलीयार्थशास्त्रव्याख्यायां कण्टकशोधने चतुर्थाधिकरणे
प्रथमोऽध्यायः, कारुकरक्षणम्,
आदितोऽष्टसप्ततितमः ॥

## सप्तसप्ततितमं प्रकरणम्

### द्वितीयोऽध्यायः

### वैदेहकरक्षणम्

[ वणिक्सङ्घाध्यक्षकर्तव्यविशेषाः ]

**संस्थाध्यक्षः पण्यसंस्थायां पुराणभाण्डानां स्वकरणविशुद्धानामाधानं विक्रयं वा स्थापयेत् । तुलामानभाण्डानि चावेक्षेत, पौतवापचारात् ।**

[ मिथ्यापरिमाणप्रदर्शननिषेधः ]

**परिमाणीद्रोणयोरर्धपलहीनातिरिक्तमदोषः, पलहीनातिरिक्ते द्वादशपणो दण्डः । तेन पलोत्तरा दण्डवृद्धिर्व्याख्याता ।**

**तुलायाः कर्षहीनातिरिक्तमदोषः, द्विकर्षहीनातिरिक्ते षट्पणो दण्डः ।**

---

श्रीमूला

वैदेहकरक्षणमिति सूत्रम् । वैदेहकाः वणिजः कण्टकेषु प्रधानाः, तेभ्यो जनपदस्य रक्षणमभिधीयते इति सूत्रार्थः । 'वणिक्कारुकुशीलवानि'ति वणिक्प्रस्तावात् तद्रक्षणप्रकारो व्युत्पाद्यते ।

संस्थाध्यक्ष इति । विपणिमार्गाध्यक्षः, पण्यसंस्थायां पण्यशालायां, पुराणभाण्डानां पुराणानां धान्यादिपण्यानां, पुराणत्वोक्तिः कालपरिवाससम्भावितगुणयोगार्था, स्वकरणविशुद्धानां विभावितस्वत्वानाम्, एतच्च चोरितत्वपरिहारार्थम् । आदानं ग्रहणं प्रवेशनम्, आधानपाठे निवेशनं, विक्रयं वा, स्थापयेत् । तुलामानभाण्डानि च परिमाण्यादीनि द्रोणाढकादीनि च, अवेक्षेत परीक्षेत, पौतवापचारात् पौतवदोषं परिहर्तुम् ।

परिमाणीद्रोणयोरिति । तुलादण्डधान्यमानविशेषयोः अर्धपलहीनातिरिक्तम् अर्धपलन्यूनत्वमर्धपलाधिकत्वं च, अदोषः दोषाभावः । पलहीनातिरिक्ते एकपलहानौ तदतिरेके वा, द्वादशपणो दण्डः । तेन पलोत्तरा द्विपलहान्यतिरेके चतुर्विंशतिपणो दण्ड इत्यादिरूपा दण्डवृद्धिः व्याख्याता ।

तुलाया इत्यादिस्तुलाया आढकस्येत्यादिराढकस्य चार्धकर्षैककर्षन्यूनातिरिक्तविषयविधानग्रन्थः स्पष्टार्थः ।

**तेन कर्षोत्तरा दण्डवृद्धिर्व्याख्याता । आढकस्यार्धकर्षहीनातिरिक्तमदोषः; कर्षहीनातिरिक्ते त्रिपणो दण्डः । तेन कर्षोत्तरा दण्डवृद्धिर्व्याख्याता । तुलामानविशेषाणामतोऽन्येषामनुमानं कुर्यात् । तुलामानाभ्यामतिरिक्ताभ्यां क्रीत्वा हीनाभ्यां विक्रीणानस्य त एव द्विगुणा दण्डाः ।**

[ केषाञ्चित् वञ्चनव्यवहाराणां दण्डाः ]

**गण्यपण्येष्वष्टभागं पण्यमूल्येष्वपहरतः षण्णवतिर्दण्डः ।**

**काष्ठलोहमणिमयं रज्जुचर्ममृण्मयं सूत्रवल्करोममयं वा जात्यमिति अजात्यं विक्रयाधानं नयतः मूल्याष्टगुणो दण्डः ।**

**सारभाण्डमित्यसारभाण्डं, तज्जातमित्यतज्जातं राढायुक्तम् उपधियुक्तं समुद्गपरिवर्तिमं वा विक्रयाधानं नयतो हीनमूल्यं चतुष्पञ्चाशत्पणो दण्डः, पणमूल्यं द्विगुणः, द्विपणमूल्यं द्विशतः । तेनार्घवृद्धौ दण्डवृद्धिर्व्याख्याता ।**

---

श्रीमूला

अनुक्तानां तुलाविशेषमानविशेषाणां हीनातिरिक्तविषयं विधानमुक्तदिशानुमेयमित्याह—तुलामानविशेषाणामित्यादि ।

तुलामानाभ्यामतिरिक्ताभ्यामिति । तुलाविशेषेण भाजन्यादिना मानविशेषेण च प्रस्थकुडुबादिनातिरिक्तेन, क्रीत्वा, हीनाभ्यां ताभ्यां, विक्रीणानस्य त एव द्वादशपणादय एव, द्विगुणा दण्डाः ।

गण्यपण्येष्विति । तेषु विषये, पण्यमूल्येषु अष्टभागम् अपहरतः षण्णवतिर्दण्डः ।

काष्ठादिमयं पण्यं निकृष्टं श्रेष्ठव्यपदेशेन विक्रयमाधानं च कुर्वतो मूल्याष्टगुणो दण्ड इत्याह—काष्ठेत्यादि ।

सारेत्यादि । सारभाण्डमित्यसारभाण्डं कर्पूरादिकमकृत्रिमं सारपण्यमित्युक्त्वा तत् कृत्रिमं, हीनमूल्यं पणावरमूल्यं, विक्रयाधानं नयतः, तज्जातमित्यतज्जातं तद्देशजमित्युक्त्वा अतद्देशजं, हीनमूल्यं विक्रयाधानं नयतः, राढायुक्तं राढा शोभा तया गुणवद्रत्नलक्षणात् श्रेष्ठरत्नयुक्तम् अर्थात् कृत्रिममौक्तिकादिकं, हीनमूल्यं विक्रयाधानं नयतः, उपधियुक्तं कृत्रिमपण्यमिश्रं, हीनमूल्यं विक्रयाधानं नयतः, समुद्गपरिवर्तिमं समुद्गस्य सम्पुटस्य पूर्वदर्शितस्य परिवर्तेन कृतं कस्मिंश्चित् समुद्गे पण्यं प्रदर्श्यान्यस्मात् समुद्गाद् उद्धृतमित्यर्थः, हीनमूल्यं विक्रयाधानं नयतः, चतुष्पञ्चाशत्पणोदण्डः । पणमूल्यम् एकपणमूल्यम् असारभाण्डादिकं, विक्रयाधानं नयतः, द्विगुणः उक्तदण्डद्विगुणो दण्डः । द्विपणमूल्यं विक्रयाधानं नयतः, द्विशतः । तेन उक्तप्रकारेण, अर्घवृद्धौ त्रिपणचतुष्पणादिपण्यमूल्यवृद्धौ, दण्डवृद्धिः व्याख्याता ।

**कारुशिल्पिनां कर्मगुणापकर्षम् आजीवं विक्रयं क्रयोपघातं वा सम्भूय समुत्थापयतां सहस्रं दण्डः ।**

**वैदेहकानां वा सम्भूय पण्यमवरुन्धताम् अनर्घेण विक्रीणतां क्रीणतां वा सहस्रं दण्डः ।**

**तुलामानान्तरमर्घवर्णान्तरं वा, धरकस्य मापकस्य वा, पणमूल्यादष्टभागं हस्तदोषेणाचरतो द्विशतो दण्डः तेन द्विशतोत्तरा दण्डवृद्धिर्व्याख्याता ।**

**धान्यस्नेहक्षारलवणगन्धभैषज्यद्रव्याणां समवर्णोपधाने द्वादशपणो दण्डः ।**

[ विक्रेतृविषये संस्थाध्यक्षप्रकल्पनीया नियमाः ]

**यन्निसृष्टमुपजीवेयुः, तदेषां दिवससञ्जातं सङ्ख्याय वणिक् स्थापयेत् ।**

---

श्रीमूला

कारुशिल्पिनामिति । कारूणां शिल्पिनां च, कर्मगुणापकर्षम् 'एवङ्गुणकं भाण्डं निर्मातव्यमि'त्युक्ते 'तादृग्गुणं मा कुर्वि'ति प्रतिषेधेन कर्मगुणहानिं, सम्भूय ऐकमत्येन, समुत्थापयताम्, आजीवं लाभं, सम्भूय समुत्थापयताम् एकपणवेतनं कर्म पणद्वयवेतनं कल्पयतां, विक्रयक्रयोपघातं वा विक्रयोपघातं वा स्वपण्यविक्रये मूल्यातिरेचनेनोपघातं वा क्रयोपघातं वा परपण्यस्वीकरणे मूल्यपातनेनोपघातं वा, सम्भूय समुत्थापयतां, सहस्रं दण्डः पणसहस्रं प्रत्येकं दण्डः ।

वैदेहकानां वेति । वणिजां च, सम्भूय ऐकमत्येन, पण्यम् अवरुन्धताम् अन्यत्र विक्रेतुमविसृजताम्, अनर्घेण अयुक्तेन मूल्येन, विक्रीणतां, क्रीणतां वा, सहस्रं दण्डः प्रत्येकम् ।

तुलेत्यादि । तुलामानान्तरम् आयमान्यादितुलाभ्य उत्पद्यमानो लाभविशेषः प्रस्थादिमान्विशेषेभ्य उत्पद्यमानो लाभविशेषश्च, अर्घवर्णान्तरं वा मूल्यभेदनिमित्तो लाभविशेषश्च, पुस्तके लेख्यम् इति वाक्यशेषः । धरकस्य तुलाधारकस्य, मायकस्य वा, पणमूल्यादष्टभागम् एकपणमूल्यस्याष्टमांशप्रमाणं तुलामानान्तरं, हस्तदोषेण, आचरतः कुर्वतः, द्विशतो दण्डः । तेन उक्तविधिना, द्विशतोत्तरा चतुर्भागाद्याहरणे द्विगुणादिका, दण्डवृद्धिः व्याख्याता ।

धान्यस्नेहक्षारलवणगन्धभैषज्यद्रव्याणामिति । धान्यादीनां, समवर्णोपधाने तुल्यवर्णैर्हीनमूल्यैर्धान्यादिभिर्मिश्रणे, द्वादशपणो दण्डः ।

यन्निसृष्टमिति । यत् निसृष्टम् उपजीव्यत्वेनानुमतम् उपजीवेयुः विक्रेत्रादयः । तद् एषां दिवससञ्जातं प्रतिदिनोत्पन्नं, सङ्ख्याय सङ्ख्यया परिच्छिद्य, वणिक् स्थापयेत्

**क्रेतृविक्रेत्रोरन्तरपतितम् अदायादन्यं भवति। तेन धान्यपण्यनिचयाश्चानुज्ञाताः कुर्युः। अन्यथा निचितमेषां पण्याध्यक्षो गृह्णीयात्। तेन धान्यपण्यविक्रये व्यवहरेत अनुग्रहेण प्रजानाम्।**

[ विक्रेतृप्रजोभ्यो निसृष्टभागः, आधिक्ये दण्डः ]

**अनुज्ञानक्रयादुपरि चैषां स्वदेशीयानां पण्यानां पञ्चकं शतमाजीवं स्थापयेत्, परदेशीयानां दशकम्। ततः परमर्घं वर्धयतां क्रये विक्रये वा भावयतां पणशते पञ्चपणाद्द्विशतो दण्डः। तेनार्घवृद्धौ दण्डवृद्धिर्व्याख्याता।**

[ सम्भूयक्रये पण्यबहुत्वे देशकालव्यवहितत्वे च व्यवस्थाः ]

**सम्भूयक्रये चैषां अविक्रीते नान्यं सम्भूयक्रयं दद्यात्। पण्योपघाते चैषामनुग्रहं कुर्यात्।**

---

श्रीमूला

संस्थाध्यक्षः प्रकल्पयेत्। क्रेतृविक्रेत्रोरन्तरपतितमिति। क्रेतृविक्रेतृशब्दौ क्रयविक्रयोपलक्षकौ, क्रये विक्रये च पण्यानां संस्थाध्यक्षेण स्वयं क्रियमाणेऽन्तरागतमधिकं धनम् अदायादन्यं दायादनानर्हम् अन्याविभाज्यं भवति केवलराजग्राह्यमेव भवतीत्यर्थः। आदायादन्यमिति वृद्धपाठो मातृकासु चिन्त्यार्थः। अदायाद्यमित्येव वा पाठः शुद्धः सम्भाव्यते। तेनेति। धान्यपण्यनिचयाश्च, तेन संस्थाध्यक्षेण, अनुज्ञाताः कुर्युः। एषाम् अन्यथानिचितम् अननुज्ञातनिचितं, पण्याध्यक्षो गृह्णीयात्। तेनेति। तेन निचितेन, धान्यपण्यविक्रये विषये, प्रजानाम् अनुग्रहेण व्यवहरेत प्रजानामुपकारो यथा स्यात् तथा समाचरेदित्यर्थः।

किं तन्निसृष्टमित्याह—अनुज्ञातक्रयादुपरि चेति। स्वीकरणकालिकादर्घादुपरि, एषां वणिजां, स्वदेशीयानां स्वदेशभवानां, पण्यानां, पञ्चकंशतम् आजीवं स्थापयेत्। शते पञ्चपणिकं लाभं व्यवस्थापयेत्। परदेशीयानां पण्यानां, दशकं शतं शते दशपणिकं लाभं स्थापयेत्। ततः परम् उक्तलाभादधिकम्, अर्घं मूल्यं, वर्धयतां, क्रये विक्रये वा, भावयतां लाभमुत्पादयतां, पणशते पञ्चपणात् पणपञ्चकमात्रलाभभावनादपि, द्विशतो दण्डः। तेनेति। उक्तविधिना, अर्घवृद्धौ अर्घवर्धनेन लाभवर्धने, दण्डवृद्धिः व्याख्याता पणशते दशपणभावनाच्चतुश्शतो दण्ड इत्यादिरीत्या दण्डस्य वृद्धिः व्याख्याता।

सम्भूयेत्यादि। एषां वणिजां, सम्भूयक्रये सम्भूयक्रीते, अविक्रीते अकृतविक्रये सति, अन्यं सम्भूयक्रयं, न दद्यात् अर्थाद् वणिगन्तरेभ्यः। पण्योपघाते च जलाग्न्यादिजनिते पण्यदूषणे, एषां सम्भूयक्रयकारिणाम्, अनुग्रहम् उपकारं, कुर्यात्। पण्यबाहुल्यात् पण्यानां बहुत्वे सति। इदमुत्तरवाक्येन वा सम्बध्यते।

**पण्यबाहुल्यात्पण्याध्यक्षः सर्वपण्यान्येकमुखानि विक्रीणीत । तेष्वविक्रीतेषु नान्ये विक्रीणीरन् । तानि दिवसवेतनेन विक्रीणीरन् अनुग्रहेण प्रजानाम् ।**

**देशकालान्तरितानां तु पण्यानाम् ।**

**प्रक्षेपं पण्यनिष्पत्तिं शुल्कं वृद्धिमवक्रयम् ।**
**व्ययानन्यांश्च सङ्ख्याय स्थापयेदर्घमर्घवित् ॥१५३॥**

इति कण्टकशोधने वैदेहकरक्षणं द्वितीयोऽध्यायः
आदित एकोनाशीतिः

---

श्रीमूला

पण्याध्यक्ष इति । सः, सर्वपण्यानि, एकमुखानि विक्रीणीत एक विक्रेतृद्वारेण विक्रीणीत । तेषु सर्वपण्येषु, अविक्रीतेषु सत्सु, अन्ये पूर्वाङ्गीकृतविक्रयकर्मभ्योऽतिरिक्ताः, न विक्रीणीरन्, तानि पण्यानि दिवसवेतनेन दिवसवेतनदानेनऽविक्रीणीरन्, प्रजानाम् अनुग्रहेण आनुकूल्येन ।

देशकालव्यवहितपण्यविषयमाह—देशकालान्तरितानां तु पण्यानामिति । इदं प्रक्षेपमित्यादिवक्ष्यमाणश्लोकान्वयि । देशव्यवहितानां कालव्यवहितानां च पण्यानां, प्रक्षेपं वस्तुमूल्यं, पण्यनिष्पत्तिम्, इदमियता कालेन निष्पद्यत इत्यमुमर्थं, शुल्कं, वृद्धिम्, अवक्रयं शकटबलीवर्दादिभाटकम्, अन्यान् व्ययांश्च, सङ्ख्याय, अर्घं, स्थापयेत् कल्पयेत्, अर्घवित् अर्घविधानाभिज्ञः संस्थाध्यक्षः ।

इति कौटलीयार्थशास्त्राव्याख्यायां कण्टकशोधने चतुर्थाधिककरणे
द्वितीयोऽध्यायः वैदेहकरक्षणम्, आदित एकोनाशीतितमः ।

## अष्टसप्ततितमं प्रकरणम्

### तृतीयोऽध्यायः

### उपनिपातप्रतीकारः

[ दैव्यो विपदः ]

**दैवान्यष्टौ महाभयानि—अग्निः उदकं व्याधिः दुर्भिक्षं मूषिकाः व्यालाः सर्पाः रक्षांसीति । तेभ्यो जनपदं रक्षेत् ।**

[ तत्र अग्निभयाद् रक्षणप्रकारः ]

**ग्रीष्मे बहिरधिश्रयणं ग्रामाः कुर्युः, दशकुलीसङ्ग्रहेणाधिष्ठिताः वा । नागरिकप्रणिधावग्निप्रतिषेधो व्याख्यातः; निशान्तप्रणिधौ राजपरिग्रहे च । बलिहोमस्वस्तिवाचनैः पर्वसु चाग्निपूजाः कारयेत् ।**

---

श्रीमूला

उपनिपातप्रतीकार इति सूत्रम् । उपनिपाता नाम दैव्योऽग्न्यादिनिमित्ता विपदः, तेषां प्रतीकारोऽभिधीयत इति सूत्रार्थः । कण्टकास्तावद् द्विविधा मनुष्यकण्टका देवकण्टकाश्चेति । तत्र मनुष्यकण्टकाः कारुकादय उक्ताः, देवकण्टकास्त्वधुनोच्यन्ते दैवान्यष्टावित्यादि । स्पष्टार्थम् ।

तेष्वष्टसु अग्नितो रक्षणप्रकारमाह—ग्रीष्म इति । तस्मिन्, ग्रामाः, अधिश्रयणं पाकस्थाल्याश्चुल्ल्यां निवेशनं, बहिः गृहबहिर्देशे, कुर्युः । दशकुलीसङ्ग्रहेण दशकुलीरक्षकेण गोपनाम्ना, रक्षकेणेत्येव भाषापाठः । अधिष्ठिता वा 'इहाधिश्रयणं कर्तव्यमि' ति चोदिता वा, कुर्युः । नागरिकप्रणिधौ, अग्निप्रतिषेधः अग्निभय-परिहारविधिः, व्याख्यातः अग्निप्रतीकारं च ग्रीष्मे इत्यादिनोक्तः । निशान्तप्रणिधौ राजपरिग्रहे च व्याख्यातः 'मानुषेणाग्निना त्रिरपसव्यं परिगतमन्तःपुरमग्निरन्यो न दहती'त्यादिनोपदिष्टः ।

बलीत्यादि । पर्वसु पूर्णिमादिषु, बलिहोमस्वस्तिवाचनैः भूतबलिभिः रक्षाहोमैः शान्तिकैः स्वस्तिवाचनैश्च, अग्निपूजाः कारयेत् ।

[ उदकभयाद् रक्षणम् ]

**वर्षारात्रमनूपग्रामाः पूरवेलामुत्सृज्य वसेयुः । काष्ठवेणुनावश्चावगृह्णीयुः । उह्यमानम् अलाबूदृतिप्लवगण्डिकावेणिकाभिस्तारयेयुः । अनभिसरतां द्वादशपणो दण्डः—अन्यत्र प्लवहीनेभ्यः ।**

**पर्वसु च नदीपूजाः कारयेत् । मायायोगविदो वेदविदो वा वर्षमभिचरेयुः । वर्षावग्रहे शचीनाथगङ्गापर्वतमहाकच्छपूजाः कारयेत् ।**

[ व्याधिभयप्रतीकारविधिः ]

**व्याधिभयमौपनिषदिकैः प्रतीकारैः प्रतिकुर्युः, औषधैश्चिकित्सकाः, शान्तिप्रायश्चित्तैर्वा सिद्धतापसाः । तेन मरको व्याख्यातः । तीर्थाभिषेचनं**

---

श्रीमूला

अथ जलप्रतिषेधमाह—वर्षारात्रमिति । वर्षाकालिकरात्रीः, अनूपग्रामाः जलप्रायप्रदेशवासिनः, पूरवेलाम् उत्सृज्य जलप्रवाहसन्निकृष्टं तटं परिहृत्य, वसेयुः । इह वर्षापूर्वपदकाद् रात्रिशब्दाद् अच्प्रत्ययोऽन्वेष्यः । रात्रिमिति वा पाठः । काष्ठवेणुनावश्च काष्ठं वेणुं नावञ्च जलप्रवाहतरणार्थाः, अवगृह्णीयुः सङ्गृह्णीयुः ।

उह्यमानमिति । प्रवाहेण नीयमानं बाहुतरणाक्षमम्, अलाबुदृतिप्लव गण्डिकावेणिकाभिः अलाबूस्तुम्बीफलं दृतिः चर्मभस्त्रा प्लव उडुपं गण्डिका तरुप्रकाण्डकं वेणिका जलतरणसाधनभेदः ताभिः, तारयेयुः । अनभिसरतां तारयितुमनभिगच्छतां, द्वादशपणो दण्डः । अन्यत्र प्लवहीनेभ्य इति । तरणसाधनहीनाश्चेदनभिसरन्तो नापराध्यन्तीत्यर्थः ।

पर्वसु चेति । अमावास्यादिषु, नदीपूजाः कारयेत् जलविपत्प्रशमार्थम् ।

मायायोगविद इति । शैवादयो मान्त्रिकाः, वेदविदः अथर्ववेदनिपुणाः, वर्षम् अतिवृष्टिम्, अभिचरेयुः जपहोमादिना प्रशमयेयुः ।

वर्षावग्रह इति । वृष्टिप्रतिबन्धे सति, शचीनाथगङ्गापर्वतमहाकच्छपूजाः इन्द्रजाह्नवीशैलसमुद्रपूजाः, कारयेत् ।

अथ व्याधिभयप्रतीकारः । व्याधिस्तावद् द्विविधः कृत्रिमोऽकृत्रिमश्च । आद्य औपनिषदिकोक्त विषधूमविषाम्बवादिदोषप्रभवः, द्वितीयो धातुदोषजः । तत्र कृत्रिमव्याधिभयम् औपनिषदिकोक्तैर्विधानैः प्रतिकुर्युः, अकृत्रिमव्याधिभयं भिषज औषधैः सिद्धतापसाश्च शान्तिकर्मभिर्व्रतोपवासादिभिः प्रतिविदध्युरित्याह—व्याधिभयमित्यादि ।

तेनेति । उक्तेन व्याधिशमनप्रकारेण, मरको मारीनामा महाव्याधिः, व्याख्यातः

**महाकच्छवर्धनं गवां श्मशानावदोहनं कबन्धदहनं देवरात्रिं च कारयेत् । पशुव्याधिमरके स्थानानि अर्धनीराजनं स्वदैवतपूजनं च कारयेत् ।**

[ दुर्भिक्षभयप्रतीकारः ]

**दुर्भिक्षे राजा बीजभक्तोपग्रहं कृत्वाऽनुग्रहं कुर्यात्; दुर्गसेतुकर्म वा भक्तानुग्रहेण, भक्तसंविभागं वा, देशनिक्षेपं वा । मित्राणि वा व्यपाश्रयेत । कर्शनं वमनं वा कुर्यात् । निष्पन्नसस्यमन्यविषयं वा सजनपदो यायात् । समुद्रसरस्तटाकानि वा संश्रयेत । धान्यशाकमूलफलावापान् सेतुषु कुर्वीत । मृगपशुपक्षिव्यालमत्स्यारम्भान् वा ।**

---

श्रीमूला

उक्तप्रतीकारः । विशेषं त्वाह—तीर्थाभिषेचनमिति । गङ्गादितीर्थस्नानं, महाकच्छवर्धनं समुद्रपूजनं, गवां श्मशानावदोहनं श्मशाने दोहनं, कबन्धदहनं तण्डुलसक्तुनिर्मितस्य कबन्धस्य श्मशाने दहनं, देवरात्रिं च देवं क्वचित् स्थानेऽर्चयित्वा रात्रिजागरणं च कारयेत् ।

पशुव्याधिमरक इति । पशूनां गजाश्वादीनां व्याधौ मरके च, स्थानानि भिन्नस्थानस्थितीः, अर्थनीराजनं नीराजनद्रव्यैर्नीराजनं, स्वदैवतपूजनं च कारयेत् । तत्र गजस्य स्वदैवतं सुब्रह्मण्यः, अश्वस्याश्विनौ, गोः पशुपतिः, महिषस्य वरुणः, वेसरस्य वायुः, अजस्याग्निरिति बोद्धव्यम् ।

दुर्भिक्षभयप्रतीकारमाह—दुर्भिक्ष इति । दुर्भिक्षसमये, राजा, बीजभक्तोपग्रहं प्रजानां बीजभक्ताभ्यामनुकूलाचरणं कृत्वा, अनुग्रहं कुर्यात् । दुर्गसेतुकर्म वा दुर्गकर्म सेतुनिर्माणकर्म वा, भक्तानुग्रहेण भक्तदानेन, कुर्यात् । भक्तसंविभागं वा दुर्गसेतुकर्माभावेऽपि केवलान्नदानं, कुर्यात् । देशनिक्षेपं वा अनन्तरदेशे तद्देशराजान्तिके 'प्रजा इमा मे कञ्चित् कालं रक्षित्वा प्रत्यर्पये' त्युक्त्वा प्रजानिक्षेपणं वा, कुर्यात् । मित्राणि वा धनदानाद्युपकारक्षमाणि, व्यपाश्रयेत प्रजाभक्तार्थम् । कर्शनं निरुपयोगजनानां तत्काले देशान्तरप्रेषणेनाल्पत्वकरणं, वमनं वा सुभिक्षविदेशप्रेषणं वा, कुर्यात् ।

निष्पन्नसस्यमिति । सस्यसमृद्धम्, अन्यविषयं वा अन्यदेशं वा, सजनपदो जानपदसहितो, यायात् उपजीवनार्थम् । समुद्रसरस्तटाकानि वा संश्रयेत, मत्स्यपक्षिकूर्मादिजलचरजन्तुभक्षणेन जीवनार्थम् । धान्यशाकमूलफलावापान् सेतुषु कुर्वीत जलाधारान् निर्माय तत्र कुर्वीत । मृगपशुपक्षिव्यालमत्स्यारम्भान् वा मृगादीनां वधारम्भान् वा, कुर्वीतेति वर्तते ।

[ मूषिकोपद्रवनिवारणम् ]

**मूषिकभये मार्जारनकुलोत्सर्गः। तेषां ग्रहणहिंसायां द्वादशपणो दण्डः, शुनामनिग्रहे चान्यत्रारण्यचरेभ्यः। स्नुहिक्षीरलिप्तानि धान्यानि विसृजेत्, उपनिषद्योगयुक्तानि वा मूषिककरं वा प्रयुञ्जीत। शान्तिं वा सिद्धतापसाः कुर्युः। पर्वसु च मूषिकपूजाः कारयेत्। तेन शलभपक्षिक्रिमिभयप्रतीकारा व्याख्याताः।**

[ व्यालभयनिवारणम् ]

**व्यालभये मदनरसयुक्तानि पशुशवानि प्रसृजेत्; मदनकाद्रवपूर्णान्यौदर्याणि वा। लुब्धकाः श्वगणिनो वा कूटपञ्जरावपातैश्चरेयुः। आवरणिनः शस्त्रपाणयो व्यालानभिहन्युः।**

---

श्रीमूला

मूषिकप्रतीकारमाह—मूषिकभय इति। तस्मिन्नुत्पन्ने, मार्जारनकुलोत्सर्गः मार्जाराणां नकुलानां चोत्सर्गः गृहेषु स्वैरसञ्चारघटना कर्तव्या। तेषां मार्जारनकुलानां, ग्रहणहिंसायां ग्रहणे हिंसने वा, द्वादशपणो दण्डः। शुनाम् अनिग्रहे च परोपद्रवादनिवारणे च, द्वादशपणो दण्डः। अन्यत्रारण्यचरेभ्य इति। वनेचराणां शुनामनिग्रहे दण्डाभावः।

स्नुहीत्यादि। स्नुहिक्षीरलिप्तानि धान्यानि, विसृजेद् विकिरेत् तानि हि भक्षयित्वा मूषिका म्रियेरन्निति। उपनिषद्योगयुक्तानि वा उपनिषदुक्तौषधयुक्तानि वा, धान्यानि विसृजेत्। मूषिककरं वा प्रयुञ्जीत अमुकगृहे प्रतिदिनमेतावन्तो मूषिका देया इति मूषिकरूपं करं वा कल्पयेत्। शान्तिं वा मूषिकशमनार्थं जपहोमादिकर्म वा, सिद्धतापसाः कुर्युः। पर्वसु च पूर्णिमादिषु च, मूषिकपूजाः कारयेत्।

उक्तरीत्या शलभभयपक्षिभयक्रिमिभयानां प्रतीकारा द्रष्टव्या इत्याह—तेन शलभेत्यादि।

व्यालभयप्रतीकारमाह—व्यालभय इति। व्यालाः हिंस्रमृगाः व्याघ्रादयः तत्कृते भये, मदनरसयुक्तानि उपनिषदुक्तेन मदनरसेन युक्तानि, पशुशवानि पशूनां गोमहिषमेषादीनां तद्भक्ष्याणां शवानि कुणपान्, प्रसृजेत् तद्गोचरे क्षिपेत्। मदनकोद्रवपूर्णानि वनकोद्रवेण वरकेण च पूर्णानि, औदर्याणि वा पशुकोष्ठान् वा, प्रसृजेत्। व्याला हि तद्भक्षणान्म्रियन्ते।

लुब्धका इति। व्याधाः, श्वगणिनो वा श्वभिर्मृगान् ये ग्राहयन्ति ते वा, कूटपञ्जरावपातैः कपटकुलायैः तृणादिच्छन्नैः पातनगर्तैश्च, चरेयुः व्यवहरेयुः। आवरणिनः सावरणाः, शस्त्रपाणयस्तीक्ष्णाः, व्यालान् अभिहन्युः।

**अनभिसर्तुर्द्वादशपणो दण्डः । स एव लाभो व्यालघातिनः । पर्वसु च पर्वतपूजाः कारयेत् । तेन मृगपक्षिसङ्घग्राहप्रतीकारा व्याख्याताः ।**

[ सर्पभयप्रतीकारः ]

**सर्पभये मन्त्रैरोषधिभिश्च जाङ्गलीविदश्चरेयुः । सम्भूय वोपसर्पान् हन्युः । अथर्ववेदविदो वाऽभिचरेयुः, पर्वसु नागपूजाः कारयेत् । तेनोदकप्राणिभयप्रतीकारा व्याख्याः ।**

[ रक्षोभयान्निवारणविधिः ]

**रक्षोभये रक्षोघ्नान्यथर्ववेदविदो मायायोगविदो वा कर्माणि कुर्युः । पर्वसु चवितर्दिच्छत्रोल्लोपिकाहस्तपताकाच्छागोपहारैः चैत्यपूजाः कारयेत् ।**

[ सिद्धादिसहकारेण सर्वविधभयनिवारणावश्यकता ]

**'चरुं वश्चरामः' इत्येवं सर्वभयेष्वहोरात्रं चरेयुः । सर्वत्र चोपहतान् पितेवानुगृह्णीयात् ।**

---

श्रीमूला

अनभिसर्तुरिति । व्यालेन द्रुह्यमाणं दृष्ट्वानभिगच्छतः, द्वादशपणो दण्डः । स एव लाभो व्यालघातिन इति । व्यालं हतवते द्वादशपणं पारितोषिकं देयम् । पर्वसुचेति । स्फुटार्थम् ।

सर्पप्रतीकारमाह—सर्पभय इति । तस्मिन् सति, मन्त्रैः गारुडादिभिः, औषधिभिश्च विषघ्नीभिः, जाङ्गलीविदः विषचिकित्सितकुशलाः, चरेयुः प्रतीकारव्यवहारं कुर्युः । सम्भूय वा, उपसर्पान् दृष्टिगोचरमुपगतान् सर्पान्, हन्युः अर्थात् पौराः । अथर्ववेदविदो वा अभिचारमन्त्राभिज्ञा वा, अभिचरेयुः मन्त्रप्रयोगैः सर्पान् हन्युः । पर्वसु च नागपूजाः सर्पपूजाः, कारयेत् । तेन उक्तप्रकारेण, उदकप्राणिभयप्रतीकाराः व्याख्याताः नक्रादिजलचरप्राणिभयस्य प्रतिविधय ऊह्याः ।

रक्षःप्रतीकारमाह—रक्षोभय इति । तस्मिन् सति, अथर्ववेदविदो, मायायोगविदो वा, रक्षोघ्नानि रक्षोघातकराणि, कर्माणि कुर्युः । पर्वसु च कृष्णचतुर्दश्यष्टम्यादिषु च, वितर्दिच्छत्रोल्लोपिकाहस्तपताकाच्छागोपहारैः वितर्दिर्वेदिका छत्रमातपत्रम् उल्लोपिका भक्ष्यभेदः हस्तपताका क्षुद्रध्वजः छागोपहारः छागबलिदानम् इत्येतैः, चैत्यपूजाः चिताङ्के रक्षःपूजाः, कारयेत् । चरुं वश्चराम इति युष्मभ्यं हविः पचाम इत्येवं वदन्तः सन्तः, सर्वभयेषु अहोरात्रं नक्तन्दिवं चरेयुः सञ्चरेयुः ।

सर्वत्र चेति । सर्वेषु भयेषु, उपहतान् पीडितान् जनान्, पितेव अनुगृह्णीयाद्, राजा ।

**मायायोगविदस्तस्मात् विषये सिद्धतापसाः ।**
**वसेयुः पूजिता राज्ञा दैवापत्प्रतिकारिणः ॥१५४॥**

इति कण्टकशोधने उपनिपातप्रतीकारः तृतीयोऽध्यायः
आदितोऽशीतितमः ।

---

श्रीमूला

श्लोकमाह—मायेत्यादि । तस्मात् विपत्प्रतीकारकरणेन जनाः सर्वथानुग्राह्या इत्येतस्मात् कारणात् । शेषं सुबोधम् ।

इति कौटलीयार्थशास्त्रव्याख्यायां कण्टकशोधने चतुर्थाधिकरणे
तृतीयोऽध्यायः उपनिपातप्रतीकारः,
आदितोऽशीतितमः ॥

## एकोनाशीतितमं प्रकरणम्

### चतुर्थोऽध्यायः

### गूढाजीविनां रक्षा

[ गूढचारनियोजनेन उपदाग्राहकपरिशोधनम् ]

**समाहर्तृप्रणिधौ जनपदरक्षणमुक्तम् । तस्य कण्टकशोधनं वक्ष्यामः—**

**समाहर्ता जनपदे सिद्धतापसप्रव्रजितचक्रचरचारणकुहकप्रच्छन्दककार्तान्तिकनैमित्तिकमौहूर्तिकचिकित्सकोन्मत्तमूकबधिरजडान्धवैदेहककारुशिल्पि-कुशीलववेशशौण्डिकापूपिकपाक्वमांसिकौदनिकव्यञ्जनान् प्रणिदध्यात् । ते ग्रामाणामध्यक्षाणां च शौचाशौचं विद्युः यं चात्र गूढजीविनं शङ्केत, तं सत्त्रिसवर्णेनाहपसर्पयेत् । धर्मस्थं प्रदेष्टारं वा विश्वासोपगतं सत्री ब्रूयात्—'असौ मे बन्धुरभियुक्तः; तस्यायमनर्थः प्रतिक्रियताम्, अयं चार्थः प्रतिगृह्यताम्' इति । स चेत् तथा कुर्यात्, 'उपदाग्राहकः' इति प्रवास्येत ।**

---

श्रीमूला

गुढाजीविनां रक्षेति सूत्रम् । गूढाजीविनः प्रच्छन्नलञ्चग्रहणजीवनाः कूटसाक्ष्यादयः तेषां रक्षा वारणं प्रतिक्रियाभिधीयत इति सूत्रार्थः । प्रकटकण्टकाः प्रच्छन्नकण्टका इति द्विविधेषु कण्टकेषु कार्वादिप्रकटकण्टकरक्षणं पूर्वमुक्तं प्रच्छन्नकण्टकरक्षणं त्वधुनोच्यते ।

समाहर्तृप्रचारे जनपदरक्षणस्योक्तत्वात् पुनरपि रक्षणप्रस्तावः किमर्थं इत्याशङ्क्य गूढकण्टकेभ्यो रक्षणस्यानुक्तस्याभिधानार्थं इत्यभिप्रायवानाह—समाहर्तृप्रणिधावित्यादि ।

गूढकण्टकपरिज्ञानार्थमपसर्पप्रणिधानमाह—समाहर्तेत्यादि । सिद्धतापसेत्यादिपदे चक्रचरः अश्वस्तनिकः, प्रच्छन्दकः स्वच्छन्दचरः, वेशो वेश्यावाटचरः, शेषाः प्रतीताः । त इत्यादि । ते सिद्धतापसादिव्यञ्जनाः प्रणिहिताः, ग्रामाणां ग्राममुख्यानाम्, अध्यक्षाणां च, शौचाशौचं विद्युः । यं चेति । अत्र ग्राममुख्येषु अध्यक्षेषु च, यं गूढजीविनं शङ्केत तं, सत्त्रिसवर्णेन सत्त्रिणा सवर्णेन, अपसर्पयेत् सापसर्पं कुर्यात् । धर्मस्थं, 'प्रदेष्टारं वे'ति प्रक्षिप्तं प्रतिभाति । विश्वासोपगतं विश्वस्तं, सत्री प्रणिहितः ब्रूयात् । वचनप्रकारः—असौ मे बन्धुरित्यादि । स्पष्टार्थम् ।

**तेन प्रदेष्टारो व्याख्याताः ।**

[ उत्कोचपरिशोधनम् ]

**ग्रामकूटमध्यक्षं वा सत्री ब्रूयात्—'असौ जाल्मः प्रभूतद्रव्यः, तस्यायमनर्थः तेनैनमाहारयस्व' इति स चेत् तथा कुर्यात् 'उत्कोचकः'; इति प्रवास्येत ।**

[ कूटसाक्षिपरिशोधनम् ]

**कृतकाभियुक्तो वा कूटसाक्षिणोऽभिज्ञातान् अर्थवैपुल्येन आरभेत । ते चेत् तथा कुर्युः, 'कूटसाक्षिणः' इति प्रवास्येरन् । तेन कूटश्रावणकारका व्याख्याताः ।**

[ वशीकरणाभिचारादिप्रवृत्तानां परिशोधनम् ]

**यं वा मन्त्रयोगमूलकर्मभिः श्माशानिकैर्वा संवननकारकं मन्येत, तं सत्री ब्रूयात्—'अमुष्य भार्यां स्नुषां दुहितरं वा कामये, सा मां प्रतिकामयताम्, अयं चार्थः प्रतिगृह्यताम्', इति । स चेत् तथा कुर्यात् 'संवननकारकः' इति प्रवास्येत ।**

---

श्रीमूला

तेनेति । उक्तेन धर्मस्थविधानेन, प्रदेष्टारः कण्टकशोधनाधिकृताः, व्याख्याताः उक्तविधाना बोद्धव्याः ।

ग्रामकूटमिति । ग्राममुख्यम्, अध्यक्षं वा, सत्री ब्रूयात्, किमिति, असौ जाल्मोऽसमीक्ष्यकारी, प्रभूतद्रव्यः प्रचुरधनः । तस्य अयम् अनर्थः आपतित इति शेषः । तेन उपस्थितानर्थापदेशेन, एनं धनिकम् आहारयस्व अर्थात् सर्वस्वम्, इति । स चेदित्यादि स्पष्टम् ।

कूटसाक्षिपरीक्षणमाह—कृतकाभियुक्तो वेति । मृषाभियुक्तः सत्री, कूटसाक्षिणः अभिज्ञातान् शङ्कितान्, अर्थवैपुल्येन प्रभूतधनार्पणोपधया, आरभेत प्रलोभयेत् । ते चेदित्यादि स्पष्टम् ।

तेनेति । उक्तेन कूटसाक्षिविधानेन, कूटश्रावणकारकाः अगृहीत एव ऋणे 'ऋणममुकेन मत्सकाशादेतावद् गृहीतमि'त्येवं मृषार्थं प्रातिवेशिकानानुवेशिकांश्च साक्ष्यार्थे ये श्रावयन्ति त एते कूटश्रावयितारः, व्याख्याताः उक्तविधाना बोद्धव्याः ।

यं वेत्यादि । यं वा पुरुषं, मन्त्रयोगमूलकर्मभिः मन्त्रोपायैरौषधप्रयोगैश्च, श्माशानिकैर्वा श्मशानकरणीयकर्मभिर्वा, संवननकारकं वशीकरणकर्तारं मन्येत, तं सत्री ब्रूयात्, किमिति, अमुष्य भार्यामित्यादि । सुबोधम् ।

**तेन कृत्याभिचारशीलौ व्याख्यातौ ।**

[ विषादिप्रयोक्तृपरिशोधनम् ]

**यं वा रसस्य वक्तारं क्रेतारं विक्रेतारं भैषज्याहारव्यवहारिणं वा रसदं मन्येत तं सत्री ब्रूयात्—'असौ मे शत्रुः, तस्योपघातः क्रियताम्, अयं चार्थः प्रतिगृह्यताम्' इति । स चेत् तथा कुर्यात्, रसदः' इति प्रवास्येत । तेन मदनयोगव्यवहारो व्याख्यातः ।**

[ कूटरूपकारकपरिशोधनक्रमः ]

**यं वा नानालोहक्षाराणामङ्गारभस्त्रासन्दंशमुष्टिकाधिकरणीबिम्बटङ्कमूषाणामभीक्ष्णं क्रेतारं मषीभस्मधूमदिग्धहतवस्त्रलिङ्गं कर्मारोपकरणसंवर्गं कूटरूपकारकं मन्येत, तं सत्री शिष्यत्वेन संव्यवहारेण चानुप्रविश्य प्रज्ञापयेत् । प्रज्ञातः 'कूटरूपकारकः' इति प्रवास्येत । तेन रागस्यापहर्ता कूटसुवर्णव्यवहारी च व्याख्यातः ।**

---

श्रीमूला

तेनेत्यादि । कृत्याभिचारशीलौ कृत्याशीलः पिशाचावेशनकर्ता अभिचारशीलो मन्त्रप्रयोगेण मारणशीलः ।

यं वा रसस्येत्यादि । रसस्य विषस्य भैषज्याहारव्यवहारिणं भेषजाभ्यवहार्ययोर्विषोपयोजनशीलम् । शेषं सुगमम् ।

तेनेति । उक्तेन रसदविधानेन, मदनयोगव्यवहारी मदनयोगः मदजनकौषधदानोपायः तद्व्यवहारी, व्याख्यातः ।

यं वेति । यं वा, नानालोहक्षाराणां नानाजातीयानां लोहानां क्षाराणां च, अङ्गारादीनाम् अङ्गारो निर्वाणाग्निकमिन्धनं भस्त्रा ध्मानदृतिः सन्दंशः कङ्कमुखः मुष्टिका कर्मारोपकरणभेदः अधिकरणी लोहाभिघाताधारः विम्वः प्रतिमा तङ्कः दारणः मूषा ताम्राद्यावर्तनी इत्येतासाम् अभीक्ष्णं क्रेतारं, मषीभस्मधूमदिग्धहस्तवस्त्रलिङ्गं मष्याद्युपलिप्तहस्तवस्त्रचिह्नं, कर्मारोपकरणसंवर्गम् अयस्कारकर्मसाधनसम्पन्नं, कूटरूपकारकं मन्येत, तं सत्री शिष्यत्वेन, संव्यवहारेण च परस्परव्यवहरणेन च, अनुप्रविश्य आश्रित्य, प्रज्ञापयेत् ईदृग्व्यापारोऽयमिति राज्ञे निवेदयेत् । प्रज्ञातः तथा विदितः, कूटरूपकारक इति, प्रवास्येत ।

तेनेति । उक्तेन विधानेन, रागस्यापहर्ता स्वर्णादिवर्णकस्य हानिकर्ता, कूटसुवर्णव्यवहारी च, व्याख्यातः उक्तविधानो द्रष्टव्यः ।

[ निगमनम् ]

**आरब्धारस्तु हिंसायाः गूढाजीवास्त्रयोदश ।**
**प्रवास्याः निष्क्रयार्थं वा दद्युर्दोषविशेषतः ॥१५५॥**

इति कण्टकशोधने गूढाजीविनां रक्षा चतुर्थोऽध्यायः
आदित एकाशीतिः

---

**श्रीमूला**

आरब्धारस्त्विति । हिंसायाः लोकोपद्रवस्य, आरब्धारः कर्तारः गूढाजीवाः त्रयोदश धर्मस्थः प्रदेष्टा ग्राममुख्यः अध्यक्षः कूटसाक्षी कूटश्रावकः संवननकर्ता कृत्याशीलः अभिचारशीलः रसदः मदनयोगव्यवहर्ता कूटरूपकर्ता कूटसुवर्णव्यवहारी-त्युक्तास्त्रयोदशसङ्ख्याः, प्रवास्याः स्वदेशान्निष्कासयितव्याः । दोषविशेषतो निष्क्रयार्थं वा दद्युः अपराधतारतम्येन दण्डं च दद्युः ।

इति कौटलीयार्थशास्त्रव्याख्यायां कण्टकशोधने चतुर्थाधिकरणे
चतुर्थोऽध्यायः गूढाजीविनां रक्षा,
आदित एकाशीतितमः ॥

## अशीतितमं प्रकरणम्

### पञ्चमोऽध्यायः

### सिद्धव्यञ्जनैर्माणवप्रकाशनम्

[ चोरजारवशीकरणानुकूलाः प्रलोभनप्रकाराः ]

**सत्रिप्रयोगादूर्ध्वं सिद्धव्यञ्जनाः माणवाः माणवविद्याभिः प्रलोभयेयुः; प्रस्वापनान्तर्धानद्वारापोहमन्त्रेण प्रतिरोधकान्, संवननमन्त्रेण पारतल्पिकान् ।**

**तेषां कृतोत्साहानां महान्तं सङ्घमादाय रात्रावन्यं ग्राममुद्दिश्यान्यं ग्रामं कृतकस्त्रीपुरुषं गत्वा ब्रूयुः—'इहैव विद्याप्रभावो दृश्यताम्, कृच्छ्रः परग्रामो गन्तुम्' इति । ततो द्वारापोहमन्त्रेण द्वाराण्यपोह्य 'प्रविश्यताम्' इति ब्रूयुः ।**

---

श्रीमूला

सिद्धव्यञ्जनैर्माणवप्रकाशनमिति सूत्रम् । सिद्धव्यञ्जनाः मुण्डजटिलादयः पूर्वोक्ताः तैः माणवानां चोरपारदारिकादीनां कुपुरुषाणां प्रकाशनमिति सूत्रार्थः । कण्टकविशेषपरिज्ञानोपायः सत्रीप्रयोग उक्तः, अपर इदानीमभिधीयते ।

सत्रिप्रयोगादिति । तत ऊर्ध्वं, सिद्धव्यञ्जना माणवाः, माणवविद्याभिः प्रस्वापनान्तर्धानादिकारिभिः कुमन्त्रैः, प्रलोभयेयुः अर्थात् कण्टकान् । तत्र विशेषमाह—प्रस्वापनेत्यादि । प्रतिरोधकान् चोरान् । पारतल्पिकान् पारदारिकान् ।

तेषामित्यादि । तेषां प्रतिरोधकपारतल्पिकानाम् । कृतोत्साहानां स्वव्यापाराकुतोभयानुष्ठानमार्गप्रदर्शकसिद्धलाभजनितोत्साहानाम्, महान्तं सङ्घम् आदाय रात्रौ अन्यं ग्रामम् उद्दिश्य, प्रस्थिता इति शेषः, अन्यम् उद्दिष्टग्रामादितरं, ग्रामं, कृतकस्त्रीपुरुषं कृतकाः कृत्रिमाः स्वप्रवृत्त्यानुकूल्याय दत्तसङ्केताः स्वविधेयाः स्त्रीपुरुषा यस्मिंस्तं तथाभूतं, गत्वा ब्रूयुः । किमिति, इहैव अस्मिन्नेव ग्रामे, विद्याप्रभावः प्रस्वापनादिमन्त्रमहिमा, दृश्यताम् । परग्रामो गन्तुं कृच्छ्रः श्रमवशाद् विदूरत्वाच्चाशक्यः इति । ततो द्वारापोहमन्त्रेण द्वारार्गलापोहनमन्त्रेण, द्वाराण्यपोह्य पूर्वंसङ्केतापोहितार्गलेष्वेव द्वारेषु अर्गलापोहनमभिनीय, प्रविश्यतामिति ब्रूयुः ।

अन्तर्धानमन्त्रेण जाग्रतामारक्षिणां मध्येन माणवानतिक्रामयेयुः। प्रस्वापयित्वा रक्षिणश्शय्याभिर्माणवैस्सञ्चारयेयुः। संवननमन्त्रेण भार्याव्यञ्जनाः परेषां माणवैस्संमोदयेयुः। उपलब्धविद्याप्रभावाणां पुरश्चरणाद्यादिशेयुरभिज्ञानार्थम्।

[ चोरजारयोः ग्रहणप्रकाराः ]

कृतलक्षणद्रव्येषु वा वेश्मसु कर्म कारयेयुः, अनुप्रविष्टान् वा एकत्र ग्राहयेयुः कृतलक्षणद्रव्यक्रयविक्रयाधानेषु योगसुरामत्तान् वा ग्राहयेयुः। गृहीतान् पूर्वापदानसहायाननुयुञ्जीत। पुराणचोरव्यञ्जना वा चोराननुप्रविष्टास्तथैव कर्म कारयेयुः ग्राहयेयुश्च।

---

श्रीमूला

अन्तर्धानमन्त्रेण, जाग्रतां जाग्रत्त्वेऽपि सङ्केतवशादपश्यन्तमिवात्मानमभिनयताम्, आरक्षिणां मध्येन, माणवान् अतिक्रामयेयुः। प्रस्वापनमन्त्रेण, रक्षिणः, प्रस्वापयित्वा अस्वपत एव स्वापाभिनयं कारयित्वा, शय्याभिः रक्षिशयनीयवर्त्मना, माणवैः सञ्चारयेयुः। प्रस्वापयित्वेति ल्यबकरणं समासाविवक्षया। प्रतिरोधकप्रत्यायकमुक्त्वा पारतल्पिकप्रत्यायकमाह—संवननेत्यादि। संवननमन्त्रेण, परेषां भार्याव्यञ्जनाः परदारच्छलधारिणीः पूर्वदत्तसङ्केता एव वनिताः, माणवैः, संमोदयेयुः वशीकरणाभिनयद्वारेण सङ्गसुखमनुभावयेयुः।

उपलब्धविद्याप्रभावानामिति। एवं प्रत्यक्षदृष्टमन्त्रमहिम्नां, पुरश्चरणादि पुरश्चरणप्रभृतिकं मन्त्रसिद्ध्यङ्गं कर्म, आदिशेयुः, अभिज्ञानार्थं स्मरणार्थम्।

कृतलक्षणद्रव्येषु वेति। कृतस्वामिचिह्नद्रव्योपेतेषु, वेश्मसु, कर्म चौर्यं, कारयेयुः, पूर्वोक्तान् गृहीतमन्त्रान् माणवान्। अनुप्रविष्टान् वा अन्तःप्रविष्टांश्च, एकत्र क्वचिद् गृहे, ग्राहयेयुः।

कृतलक्षणद्रव्यक्रयविक्रयाधानेष्विति। कृतलक्षणद्रव्याणां मुष्टानां क्रयणविक्रयणाधीकरणावसरेषु, योगसुरामत्तान् वा भेषजयुक्तमद्यपानमत्तान् वा, ग्राहयेयुः। गृहीतान् तथाग्रहणं प्राप्तान् माणवान्, पूर्वापदानसहायान् पूर्वकृतानि चौर्याणि चौर्यसहायांश्च, अनुयुञ्जीत पृच्छेत्।

पुराणचोरव्यञ्जना वेति। पुरातनतस्करच्छद्मानो वा भूत्वा, चोरान् अनुप्रविष्टाः, तथैव पूर्वोक्तरीत्यैव, कर्म कारयेयुः ग्राहयेयुश्च।

[ ग्रहणानन्तरं प्रकटीकरणीयाः रीतयः ]

**गृहीतान् समाहर्ता पौरजानपदानां दर्शयेत्—'चोरग्रहणीं विद्यामधीते राजा; तस्योपदेशादिमे चोरा गृहीताः; भूयश्च ग्रहीष्यामि; वारयितव्यो वः स्वजनः पापाचारः' इति। यं चात्रापसर्पोपदेशेन शम्याप्रतोदादीनामपहर्तारं जानीयात्, तमेषां प्रत्यादिशेत्, 'एष राज्ञः प्रभाव' इति।**

[ आरण्यकचोरग्रहणोपायाः ]

**पुराणचोरगोपालकव्याधश्वगणिनश्च वनचोराटविकाननुप्रविष्टाः प्रभूतकूटहिरण्यकुप्यभाण्डेषु सार्थव्रजग्रामेष्वेनानभियोजयेयुः; अभियोगे गूढबलैर्घातयेयुः, मदनरसयुक्तेन वा पथ्यादनेन। अनुगृहीतलोप्त्रभारान् आयतगतपरिश्रान्तान् प्रस्वपतः प्रहवणेषु योगसुरामत्तान् वा ग्राहयेयुः।**

---

श्रीमूला

गृहीतानिति। ग्रहणं प्राप्तांश्चोरान्, समाहर्ता, पौरजानपदानां दर्शयेत्। किं कृत्वा, चोरग्रहणीं विद्यामधीते राजेत्याद्युक्त्वा।

यं चात्रेति। यं च जनम्, अत्र पुरादौ, शम्याप्रतोदादीनाम् अपहर्तारं युगकीलकतोत्रादीनां चोरयितारम्, अपसर्पोपदेशेन जानीयात्, तम्, एषां पौरजानपदानां, प्रत्यादिशेत् प्रज्ञापयेत्, किं कृत्वा, एष राज्ञः प्रभाव इति अत्यल्पविषयस्यापि चौर्यस्येदंपरिज्ञानं राज्ञो माहात्म्यकृतमित्युक्त्वा।

वनचोरग्रहणोपायमाह—पुराणचोरेत्यादि। पुराणचोराः गोपालकाः व्याधाः श्वगणिनश्च राजपुरुषभूता इति शेषः, वनचोराटविकान् वनचोरान् अटवीचरान् पुलिन्दादींश्च, अनुप्रविष्टाः, प्रभूतकूटहिरण्यकुप्यभाण्डेषु प्रभूतानि प्रचुराणि कूटानि फालानि हिरण्यानि कुप्यभाण्डानि च येषु तेषु तथाभूतेषु, सार्थव्रजग्रामेषु वणिक्सङ्घगतागतमार्गेषु गोष्ठेषु ग्रामेषु च, एनान् वनचोराटविकान्, अभियोजयेयुः चौर्यायोद्योजयेयुः। अभियोगे आरब्धे सति, गूढबलैः गूढसैन्यैः, घातयेयुः। मदनरसयुक्तेन मोहजनकविषयुक्तेन, पथ्यादनेन वा पथिभोजनेन वा, घातयेयुः। अनुगृहीतलोप्त्रभारान् उपगृहीतमुष्टद्रव्यभारान्, आयतगतपरिश्रान्तान् दीर्घाध्वगमनपरिखिन्नान्, अत एव प्रस्वपतः एनान्, ग्राहयेयुः। प्रहवणेषु तुष्टिभोजनदानेषु, योगसुरामत्तान् वीर्यवन्मद्यपानमत्तान् वा ग्राहयेयुः।

[ बहिः प्रकाशविषये पूर्वातिदेशः ]

**पूर्ववच्च गृहीत्वैनान् समाहर्ता प्ररूपयेत् ।**
**सर्वज्ञख्यापनं राज्ञः कारयन् राष्ट्रवासिषु ॥१५६॥**

इति कण्टकशोधने सिद्धव्यञ्जनैर्माणवप्रकाशनं
पञ्चमोऽध्यायः आदितो द्व्यवशीतिः

---

श्रीमूला

अध्यायान्ते श्लोकमाह—पूर्ववच्चेति । समाहर्ता, पूर्ववत् पुर्वोक्तपुरराष्ट्र-चोरवत्, एनान् वनचोराटविकान्, गृहीत्वा, राज्ञः सर्वज्ञख्यापनं 'चोरग्रहणीं विद्यामधीते राजा सर्वांश्चोरान् जानाति तत्प्रभावादिमे चोरा गृहीताः' इत्येवं सर्वज्ञत्वख्यापनं, कारयन्, राष्ट्रवासिषु, प्ररूपयेद् दर्शयेत् ।

इति कौटलीयार्थशास्त्रव्याख्यायां कण्टकशोधने चतुर्थाधिकरणे
पञ्चमोऽध्यायः, सिद्धव्यञ्जनैर्माणवप्रकाशनम्,
आदितो द्व्यशीतितमः ।

## एकाशीतितमं प्रकरणम्

### षष्ठोऽध्यायः

### शङ्कारूपकर्माभिग्रहः

[ आशङ्क्यैव बन्धनीयश्चोराः ]

**सिद्धप्रयोगादूर्ध्वं शङ्कारूपकर्माभिग्रहः ।**

**क्षीणदायकुटुम्बम्, अल्पनिर्वेशं, विपरीतदेशजातिगोत्रनामकर्मापदेशं, प्रच्छन्नवृत्तिकर्माणं, मांससुराभक्ष्यभोजनगन्धमाल्यवस्त्रविभूषणेषु प्रसक्तं, अतिव्ययकर्तारं पुंश्चलीद्यूतशौण्डिकेषु प्रसक्तं, अभीक्ष्णप्रवासिनम्, अविज्ञातस्थानगमनपण्यम्, एकान्तारण्यनिष्कुटविकालचारिणं, प्रच्छन्ने सामिषे वा देशे बहुमन्त्रसन्निपातं, सद्यःक्षतव्रणानां गूढप्रतीकारयितारम्,**

---

श्रीमूला

शङ्कारूपकर्माभिग्रह इति सूत्रम् । आत्मनः परान् प्रति परेषामात्मानं प्रति चेति शङ्का द्विरूपा रूपं लोप्त्रं कर्म सन्धिच्छेदादि एतैर्लिङ्गैरभिग्रहः चोराणां ग्रहणमभिधीयत इति सूत्रार्थः ।

गूढाजीविनां रक्षा प्रकान्ता । तत्र सिद्धव्यञ्जनादिभिर्ग्रहीतुं शक्यानां गूढाजीविनां ग्रहणप्रकार उक्तः, तदग्राह्याणां शङ्कारूपकर्मभिर्ग्रहणप्रकार इदानीमुच्यते ।

सिद्धप्रयोगादूर्ध्वमिति । सिद्धव्यञ्जनप्रयोगात् परतः, शङ्कारूपकर्माभिग्रहः, वक्ष्यत इति क्रियाध्याहारः ।

शङ्काभिग्रहं तावदाह—क्षीणदायकुटुम्बमिति । दायः कुलक्रमागतं द्रव्यं कुटुम्बं कृषिः तदुभयं क्षीणं यस्य तं तथाभूतम्, अल्पनिर्वेशं भक्तव्ययापर्याप्तभृतिं कर्माननुरूपनिहीनभृतिं वा, विपरीतदेशजातिगोत्रनामकर्मापदेशम् अन्यथाकल्पितदेशजात्यादि व्यवहारं, प्रच्छन्नवृत्तिकर्माणम् अन्याविदित वृत्त्यर्थकर्माणं, मांससुरादिष्वष्टसु, प्रसक्तं प्रकर्षेण सक्तम्, अतिव्ययकर्तारं, पुंश्चलीद्यूतशौण्डिकेषु प्रसक्तम्, अभीक्ष्णप्रवासिनं पौनःपुन्यप्रवासशीलम्, अविज्ञातस्थानगमनं क्व तिष्ठति क्व गच्छतीत्यन्याविदितस्थानगमनम्, एकान्तारण्यनिष्कुटविकालचारिणं विजने वने गृहारामे च विकाले चरणशीलं, प्रच्छन्ने सामिषे वा देशे बहुमन्त्रसन्निपातम् अन्यदर्शनागोचरे देशे सामिषे सद्रव्ये धनिकगृहनिकटदेशे वा बहुमन्त्रयन्तं बहुकृत्वो गच्छन्तं च, सद्यःक्षतव्रणानां गूढप्रतिकारयितारं व्रणकारणो-

**अन्तर्गृहनित्यम्, अभ्यधिगन्तारं, कान्तापरं, परपरिग्रहाणां परस्त्रीद्रव्य-वेश्मनामभीक्ष्णप्रष्टारं, कुत्सितकर्मशस्त्रोपकरणसंसर्गं, विरात्रे छन्नकुड्यच्छाया-सञ्चारिणं, विरूपद्रव्याणामदेशकालविक्रेतारं, जातवैराशयं, हीनकर्म-जातिं, विगूह्यमानरूपं, लिङ्गेनालिङ्गिनं, लिङ्गिनं वा भिन्नाचारं, पूर्वकृतापदानं, स्वकर्मभिरपदिष्टं, नागरिकमहामात्रदर्शने गूहमानमपसरन्तं, अनुच्छ्वासोपवेशिनम्, आविग्नं, शुष्कभिन्नस्वरमुखवर्णं, शस्त्रहस्तमनुष्य संपातत्रासिनं, हिंस्रस्तेननिधिनिक्षेपापहारवरप्रयोगगूढाजीविनामन्यतमं शङ्केत—इति शङ्काभिग्रहः ।**

[ नष्टलब्धद्रव्यस्वायत्तीकरणेन चोरपरिशोधनक्रमः ]

**रूपाभिग्रहस्तु—नष्टापहृतमविद्यमानं तज्जातव्यवहारिषु निवेदयेत्**

---

श्रीमूला

च्छेदशङ्कया रहसि चिकित्सयितारम्, अन्तर्गृहनित्यं गर्भगृहनित्योपविष्टम्, अभ्य-धिगन्तारम् आगच्छतोऽभिमुखं झडिति गत्वा प्रतिनिवर्तमानं, कान्तापरं स्त्रीलोलं, परपरिग्रहाणां परपरिजनानां, परस्त्रीद्रव्यवेश्मनाम् अभीक्ष्णप्रष्टारं कुत्सितकर्मशस्त्रो-पकरणसंसर्गं मारणचौर्यादिगर्हितकर्मोपयोगिषु शस्त्रेषु उपकरणेषु परिचयवन्त, शास्त्रेत्यपि पाठः । विरात्रे अर्धरात्रे, छन्नकुड्यच्छायासञ्चारिणं छन्नं यथा भवति तथा कुड्यच्छायायां सञ्चरणशीलं, विरूपद्रव्याणां विनष्टस्वरूपाणां द्रव्याणाम्, अदेशकाल विक्रेतारम् अदेशे अकाले च विक्रयकारिणं, जातवैराशयं, हीनकर्मजातिं, विगूह्यमानरूपं छाद्यमानस्वरूपं, लिङ्गेनालिङ्गिनम् अनुपातलिङ्गिचिह्नं लिङ्गिव्रतेन युक्तं, लिङ्गिनं वा भिन्नाचारम् उपात्तलिङ्गिचिह्नं वा लिङ्गिव्रतरहितं पूर्वकृतापदानं पूर्वमन्यत्र कृतचौर्यं, स्वकर्मभिरपदिष्टं परदारग्रहणादिभिः ख्यातं, नागरिकमहामात्रदर्शने नगररक्षिपुरुषस्य महामात्रस्य च दर्शने गूहमानमपसरन्तं स्वरूपं छादयन्तं निलीय चरन्तं च, अनुच्छ्वा-सोपवेशिनं तूष्णीं बहिर्भूम्यादावुपवेशनशीलम्, आविग्नं भीतं, शुष्कभिन्नस्वरमुखवर्णं शुष्कः क्षामः भिन्नः अयथाप्रकारश्च स्वरो मुखवर्णश्च यस्य तं तथाभूतं, शस्त्रहस्त-मनुष्यसम्पातत्रासिनं शस्त्रपाणिपुरुषागमनभीरुकम्, एवम्भूतैर्विशेषणैर्यथासम्भवं युक्तं जनं, हिंस्रस्तेनादीनां हिंस्रो घातुकः स्तेनश्चोरः निधिनिक्षेपापहारो निधिनिक्षेप-योरपहर्ता वरप्रयोगः वरः क्रोधस्तन्निमित्तः प्रयोगः शस्त्रप्रयोगो यस्य स तथाभूतः गूढाजीवी प्रतीतः इत्येतेषाम् अन्यतमं, शङ्केत । 'वरो ना भूपजामात्रोर्देवादेरीप्सिते क्रुधि' इति केशवः । इति शङ्काभिग्रह इति । व्याख्यात इति शेषः ।

रूपाभिग्रहस्त्विति । वक्ष्यत इति शेषः । नष्टापहृतमिति । प्रमादभ्रष्टं चोरेणापहृतं द्रव्यम् अविद्यमानं, तज्जातव्यवहारिषु तज्जातिद्रव्यव्यहारिषु,

**तच्चेन्निवेदितमासाद्य प्रच्छादयेयुः, साचिव्यकरदोषमाप्नुयुः । अजानन्तोऽस्य द्रव्यस्यातिसर्गेण मुच्येरन् । न चानिवेद्य संस्थाध्यक्षस्य पुराणभाण्डानामाधानं विक्रयं वा कुर्युः ।**

**तच्चेन्निवेदितमासाद्येत रूपाभिगृहीतमागमं पृच्छेत्–'कुतस्ते लब्धम्' इति । स चेद् ब्रूयात्—'दायाद्यादवाप्तम्, अमुष्माल्लब्धम्, क्रीतम्, कारितम्, अधिप्रच्छन्नम्, अयमस्य देशः कालश्चोपसम्प्राप्तः, अयमस्यार्थः प्रमाणं लक्षणं मूल्यं च' इति तस्यागमसमाधौ मुच्येत ।**

**नाष्टिकश्चेत् तदेव प्रतिसन्दध्यात्, य(त)स्य पूर्वो दीर्घश्च परिभोगः शुचिर्वा देशस्तस्य द्रव्यमिति विद्यात् । चतुष्पदानामपि हि रूपलिङ्गसामान्यं भवति, किमङ्ग ! पुनरेकयोनिद्रव्यकर्तृप्रसूतानां कुप्याभरणभाण्डानाम् इति ।**

---

श्रीमूला

निवेदयेत् । निवेदितम् आसाद्य प्रच्छादयेयुश्चेत्, साचिव्यकरदोषं चौर्यसाहाय्यकारिदण्डम्, आप्नुयुः । अजानन्तः अमुकस्येदमित्यविदन्तः, अस्य द्रव्यस्य, अतिसर्गेण अर्पणेन, मुच्येरन् अपराधमुक्ताः स्युः । न चेति । संस्थाध्यक्षस्य पण्यसंस्थाधिकारिणः, अनिवेद्य, पुराणभाण्डानाम्, आधानं विक्रयं वा न च कुर्युः ।

तच्चेदिति । निवेदितं तद् नष्टापहृतम्, आसाद्येत चेत्, रूपाभिगृहीतं जनम्, आगमं पृच्छेत्—कुतस्ते लब्धमिति। स चेद् ब्रूयात्, किमिति, दायाद्यादवाप्तं दायादभावाल्लब्धम्, अमुष्माल्लब्धम्, क्रीतम्, कारितं नवनिर्मापितम्, आधिप्रच्छन्नम् आधीकरणवशादियन्तं कालमप्रकाशतया स्थितम्, अयम् अस्य देशः, अस्यार्थस्यायं साक्षी, यद्वा अस्यायं प्रदेशः, उपसम्प्राप्तः उपसम्प्राप्तिमान्, अस्यायं कालश्च उपसम्प्राप्तिमान्, अयम् अस्य अर्घो रूपमूल्यम्, इदं प्रमाणं लक्षणं मूल्यं च । इदमस्य सुवर्णकर्षादिमानम्, इदमस्य चिह्नम्, इदमस्य प्रकृतिमूल्यम् इति, तर्हीति शेषः, तस्य द्रव्यस्य आगमसमाधौ आगमसमर्थने सति, मुच्येत रूपाभिगृहीतः । अन्यथा तु तस्य चोरदण्ड इत्यार्थम् ।

नाष्टिकश्चेदिति । नाष्टिकोऽभियोक्ता, तदेव प्रतिसन्दध्याच्चेत् रूपाभिगृहीतप्रयुक्तमेव समाधानं यदि प्रतिसन्दधीत, यस्य रूपाभिगृहीतनाष्टिकयोरन्यतरस्य, पूर्वो दीर्घश्च, परिभोगः अनुभवः, शुचिर्वा देशः, विश्वास्यवचनश्च साक्षी, तस्य द्रव्यमिति विद्यात् निर्णयेत् । न च तदीयत्वमसम्भावितमित्याह—चतुष्पदानामपि हीति । तेषामपि भिन्नयोन्यादिप्रसूतानां रूपलिङ्गसामान्यम् आकृतिसादृश्यं च भवति । एवं स्थिते इति शेषः, एकयोनिद्रव्यकर्तृप्रसूतानां कुप्याभरणभाण्डानां कुप्यनिर्मित-

**स चेद् ब्रूयात्—'याचितकमवक्रीतकमाहितकं निक्षेपमुपनिधिं वैयापृत्यभर्म वाऽमुष्य' इति, तस्यावसर(पसार)प्रतिसन्धानेन मुच्येत। 'नैवम्' इत्यपसारो वा ब्रूयात्। रूपाभिगृहीतः परस्य दानकारणम् आत्मनः प्रतिग्रहकारणम् उपलिङ्गनं वा दायकदापकनिबन्धकप्रतिग्राहकोपदेष्टृभिरुपश्रोतृभिर्वा प्रतिसमानयेत्।**

**उज्झितप्रणष्टनिष्पतितोपलब्धस्य देशकाललाभोपलिङ्गनेन शुद्धिः। अशुद्धस्तच्च तावच्च दण्डं दद्यात्। अन्यथा स्तेयदण्डं भजेत। इति रूपाभिग्रहः।**

---

श्रीमूला

भूषणपात्राणम्, किमङ्ग पुनः किमु वक्तव्यम्, तेषां रूपलिङ्गसामान्यं सुतरां भवतीत्यर्थः। इति अतः कारणात्।

स चेदिति। स रूपाभिगृहीतः याचितकं याञ्चया लब्धम्, अवक्रीतकं भाटकगृहीतम्, आहितकम् आधित्वेन गृहीतम्, निक्षेपं भूषणभाण्डनिर्माणार्थं निक्षिप्तम्, उपनिधिं रक्षणाय विश्वासाद् दत्तम्, वैयापृत्यभर्म वा कर्मणः कृतस्य दत्तां भृतिं वा, अमुष्येति ब्रूयाच्चेत् अमुकपुरुषसम्बन्धीत्येवं वदेच्चेत्, अर्थान्नाष्टिकार्थितं रूपम्, तस्य द्रव्यस्य, अपसारप्रतिसन्धानेन मदीयमेवेदं याचितकादीत्यपसारपुरुषकृतेनाभ्युपगमेन, मुच्येत, अर्थात् सः।

नैवमित्यपसारो वा ब्रूयादिति। न मे याचितकादीत्यपसारो यदि वदेत्, रूपाभिगृहीतः, परस्य अपसारस्य दानकारणम्, आत्मनः प्रतिग्रहकारणम्, उपलिङ्गनं वा लिङ्गैरभिज्ञापनं च, प्रतिसमानयेत् निरूपयेत्, कैः, दायकदापकनिबन्धकप्रतिग्राहकोपदेष्टृभिः उपश्रोतृभिर्वा, वाशब्दश्चार्थे। तत्र निबन्धको लेखकः, उपदेष्टा लेखनीयवाक्यवक्ता, शेषाः प्रतीताः।

उज्झितेत्यादि। उज्झितप्रनष्टनिष्पतितोपलब्धस्य उज्झितं विस्मृतं वस्त्राभरणादि प्रनष्टं स्वयूथच्युतं गोमहिषादि निष्पतितं छन्नापसृतं दासीदासादि तस्योपलब्धस्य, देशकाललाभोपलिङ्गनेन देशादीनां विभावनेन, शुद्धिः अभियोक्तुः। अशुद्धः अविभावितदेशादिः सः, तच्च तावच्च दण्डं दद्याद् यत् स्वीयमित्युक्तं तत्समम्, अन्यच्च तत्समपरिमाणं दण्डं दद्यात्, अभियोक्ता। अन्यथा स्तेयदण्डं भजेत देशाद्युपलिङ्गनेन स्वत्वस्याविभावने, चौर्यदण्डभाग् भवति। इति रूपाभिग्रह इति। व्याख्यात इति शेषः।

[ आभ्यन्तरादित्रिविधचौर्यपरिज्ञानोपायाः ]

**कर्माभिग्रहस्तु—मुषितवेश्मनः प्रवेशनिष्कसनमद्वारेण, द्वारस्य सन्धिना बीजेन वा वेधम्, उत्तमागारस्य जालवातायननीव्रवेधम्, आरोहणावतरणे च कुड्यस्य वेधम्, उपखननं वा गूढद्रव्यनिक्षेपग्रहणोपायमुपदेशोपलभ्यम्, अभ्यन्तरच्छेदोत्करपरिमर्दोपकरणम् अभ्यन्तरकृतं विद्यात्, विपर्यये बाह्यकृतम्, उभयतः उभयकृतम् ।**

[ आभ्यन्तरकृतत्वसंशये परीक्षाक्रमः ]

**अभ्यन्तरकृते—पुरुषमासन्नं व्यसनिनं क्रूरसहायं तस्करोपकरणसंसर्गं स्त्रियं वा दरिद्रकलामन्यप्रसक्तां वा, परिचारकजनं वा तद्विधाचारम्, अतिस्वप्नं निद्राक्लान्तम्, आधिक्लान्तम्, आविग्नम्, शुष्कभिन्नस्वरमुखवर्णम्, अनवस्थितम्, अतिप्रलापिनम्, उच्चारोहणसंरब्धगात्रम्, विलूननिघृष्टभिन्नपाटितशरीरवस्त्रम्, जातकिणसंरब्धहस्तपादम्, पांसुपूर्ण-**

---

श्रीमूला

कर्माभिग्रहस्त्विति । उच्यत इति शेषः । चौर्यं नाम त्रिविधम्—अभ्यन्तरकृतम्, बाह्यकृतम्, उभयकृतमिति । तत्राभ्यन्तरचौर्यमाह—मुषितवेश्मन इति । चोरितगृहस्य, अद्वारेण पश्चाद्द्वारेण प्रवेशनिष्कसनं प्रवेशो निर्गमनं च, द्वारस्य सन्धिना सुरुङ्गया बीजेन वेधसाधनेन वा वेधं निर्माणम्, उत्तमागारस्य उपरिभूमिकायाः जालवातायननीव्रवेधम् आनायगवाक्षवलीकभेदनम्, आरोहणावतरणे च कुड्यस्य वेधं पदन्यासस्थानकरणम्, गूढद्रव्यनिक्षेपग्रहणोपायं कुड्यगूहितस्य द्रव्यनिक्षेपस्य ग्रहणं प्रत्युपायभूतम्, उपदेशोपलभ्यम्, उपदेशैकविज्ञेयम्, अभ्यन्तरच्छेदोत्करपरिमर्दोपकरणम्, अन्तर्गतकुड्यच्छेदपान्सूत्करपरिमर्दनसाधनम्, उपखननं वा कुड्यसमीपभूखननं वा, अभ्यन्तरकृतम् अभ्यन्तरजनकृतम्, विद्याद् अभ्यूहते । विपर्यये उक्तलक्षणवैपरीत्ये, बाह्यकृतं विद्यात् । उभयत उभयलक्षणसत्त्वे, उभयकृतं विद्यात् ।

अभ्यन्तरकृतत्वशङ्कायां परीक्षणमाह—अभ्यन्तरकृत इति । अभ्यन्तरजनकृतं चौर्यमित्यूहे सति, पुरुषम् आसन्नम्, अभ्यन्तरम्, परीक्षेत, कथम्भूतं परीक्षेत, व्यसनिनं द्यूतमद्यप्रसक्तम्, क्रूरसहायं क्रूरास्त्यक्तात्मानस्तेषां सहायम्, तस्करोपकरणसंसर्गं स्त्रियं वा दरिद्रकुलाम्, अन्यप्रसक्तां स्त्रियं वा, परिचारकजनं वा तद्विधाचारम् अन्यस्त्रीप्रसक्तम्, अतिस्वप्नं मोषणानन्तरदिवसेऽतिमात्रनिद्रं निद्राक्लान्तं स्वापाभावश्रान्तम्, आधिक्लान्तम्, आविग्नं भीतम्, शुष्कभिन्नस्वरमुखवर्णम्, अनवस्थितम्, अतिप्रलापिनम्, उच्चारोहणसंरब्धगात्रम् उच्चारोहणपरवशवपुषम्, विलूननिघृष्टभिन्नपाटितशरीरवस्त्रमित्यादि विशेषणसप्तकं स्फुटार्थम् । पांसुपिच्छिलेषु तुल्यपाद-

**केशनखं, विलूनभुग्नकेशनखं वा, सम्यक् स्नातानुलिप्तं तैलप्रमृष्टगात्रं सद्योधौतहस्तपादं वा, पांसुपिच्छिलेषु तुल्यपादपदनिक्षेपं प्रवेशनिष्क-सनयोर्वा तुल्यमाल्यमद्यगन्धवस्त्रच्छेदविलेपनस्वेदं परोक्षेत। चोरं पारदारिकं वा विद्यात्।**

[ बाह्याभ्यन्तरचोरान्वेषणकर्तारः ]

**सर्गोपस्थानिको बाह्यं प्रवेष्टा चोरमार्गणम्।**
**कुर्यान्नागरिकश्चान्तर्दुर्गे निर्दिष्टहेतुभिः ॥१५७॥**

इति कण्टकशोधने शङ्कारूपकर्माभिग्रहः, षष्ठोऽध्यायः,
आदितस्त्र्यशीतिः।

---

श्रीमूला

पदनिक्षेपं पांसुषु पङ्किलेषु च स्वपादसदृशचरणन्यासम्, प्रवेशनिष्कसनयोर्वा प्रवेश-निर्गमनयोर्वा, तुल्यमाल्यमद्यगन्धवस्त्रच्छेदविलेपनस्वेदं मुषितवेश्मगतेन माल्यमद्यगन्धेन समानगन्धं वस्त्रक्छेदेन समानवस्त्रच्छेदं विलेपनस्वेदेन तुल्यविलेपनस्वेदम्। चोरं पारदारिकं वा विद्यादिति। पूर्वोक्तविशेषणविशिष्टं परीक्ष्य तस्कर इति वा पारतल्पिक इति वा जानीयात्।

विधिशेषं श्लोकेनाह--सर्गोपस्थानिक इति। गोपो दशकुलीपञ्चकुलीरक्षकः स्थानिको दुर्गजनपदचतुर्भागरक्षी ताभ्यां सहितः, प्रदेष्टा कण्टकशोधनाधिकृतः, बाह्यं चोरमार्गणं कुर्यात्। नागरिकश्च, अन्तर्दुर्गे दुर्गान्तर्भागे, निर्दिष्टहेतुभिः, चोरमार्गणं कुर्यात्।

॥ इति कौटलीयार्थशास्त्रव्याख्यायां कण्टकशोधने चतुर्थाधिकरणे
षष्ठोऽध्यायः, शङ्कारूपकर्माभिग्रहः,
आदितस्त्र्यशीतितमः ॥

# द्व्यशीतितमं प्रकरणम्

## सप्तमोऽध्यायः

## आशुमृतकपरीक्षा

[ शवपरीक्षाः, तैस्तैश्चिह्नैरनुमेया मृतिहेतवश्च ]

**तैलाभ्यक्तमाशुमृतकं परीक्षेत ।**

**निष्कीर्णमूत्रपुरीषं वातपूर्णकोष्ठत्वक्कं शूनपादपाणिमुन्मीलिताक्षं सव्यञ्जनकण्ठं पीडननिरुद्धोच्छ्वासहतं विद्यात् ।**

**तमेव सङ्कुचितबाहुसक्थिम् उद्बन्धहतं विद्यात् ।**

**शूनपाणिपादोदरम् अपगताक्षम् उद्वृत्तनाभिम् अवरोपितं विद्यात् ।**

**निस्तब्धगुदाक्षं सन्दष्टजिह्वम् आध्मातोदरम् उदकहतं विद्यात् ।**

---

श्रीमूला

आशुमृतकपरीक्षेति सूत्रम् । अन्तरेण व्रणाभिघातादिकमकाण्डे मृत आशुमृतकस्तस्य परीक्षाभिधीयत इति सूत्रार्थः । द्रव्यापहारिणः कण्टकाः प्रागुक्ताः, प्राणापहारिण इदानीमुच्यन्ते ।

तैलेत्यादि । आशुमृतकं तैलाभ्यक्तं परीक्षेत तस्य कायमखिलं तैलेनाभ्यक्तं कृत्वा परीक्षेत । तैलाभ्यञ्जने हि कृते गूढाः प्रहारा व्यक्तीभवन्तीति तद्व्यक्तीभावानुरूपा परीक्षा प्रवर्तत इति ।

निष्कीर्णमूत्रपुरीषमिति । निस्सृतकीर्णमूत्रपुरीषं वातपूर्णकोष्ठत्वक्कं वातपूर्णमुदरं त्वक् च यस्य तम्, शूनपादपाणि प्रवृद्धपादपाणिम्, उन्मीलिताक्षम् अमीलितनेत्रम्, सव्यञ्जनकण्ठं सचिह्नः पतित्वरूपचिह्नयुक्तः कण्ठो यस्य तम्, इत्थम्भूतं जनम्, पीडननिरुद्धोच्छ्वासहतं कण्ठपीडनकृतेनोच्छ्वासनिरोधेन हतं विद्यात् । तमेवेति । उक्तलक्षणमेव, सङ्कुचितबाहुसक्थि प्राप्तसङ्कोचभुजोरुम्, उद्बन्धहतम् उल्लम्बनहतम्, विद्यात् ।

शूनेत्यादि । शूनपाणिपादोदरम्, अपगताक्षम् अन्तर्मग्नचक्षुषम्, उद्वृत्तनाभिम् उद्गतनाभिम्. अवरोपितं शूलारोपितम्, विद्यात् ।

निस्तब्धगुदाक्षमिति । गुदमक्षि च निर्गतं यस्य तम्, सन्दष्टजिह्वम्, आध्मातोदरं शूनोदरम्, उदकहतं विद्यात् ।

**शोणितानुसिक्तं भग्नभिन्नगात्रं काष्ठै रश्मिभिर्वा हतं विद्यात् ।**

**सम्भग्नस्फुटितगात्रम् अवक्षिप्तं विद्यात् ।**

**श्यावपाणिपाददन्तनखं शिथिलमांसरोमचर्माणं फेनोपदिग्धमुखं विषहतं विद्यात् ।**

**तमेव सशोणितदंशं सर्पकीटहतं विद्यात् ।**

**विक्षिप्तवस्त्रगात्रम् अतिवान्तविरिक्तम् मदनयोगहतं विद्यात् ।**

**अतोऽन्यतमेन कारणेन हतं हत्वा वा दण्डभयादुद्बन्धनिकृत्तकण्ठं विद्यात् ।**

[ विषहतचिह्नानि, विप्रदातृपरिज्ञानोपायः,
उद्बन्धने विशेषश्च ]

**विषहतस्य भोजनशेषं पयोभिः परीक्षेत । हृदयादुद्धृत्याग्नौ प्रक्षिप्तं चिटचिटायद् इन्द्रधनुर्वर्णं वा विषयुक्तं विद्यात्, दग्धस्य हृदयमदग्धं दृष्ट्वा वा ।**

**तस्य परिचारकजनं वाग्दण्डपारुष्यातिलब्धं मार्गेत, दुःखोपहतमन्य-प्रसक्तं वा स्त्रीजनम् ।**

---

श्रीमूला

शोणितानुसिक्तमित्यादि । स्फुटार्थम् । संभग्नेत्यादि । अवक्षिप्तं प्रासादादि-पातितम् । श्यावपाणीत्यादि । श्यावशब्दः कपिशार्थः । विषहत वत्सनाभादिस्थावर-विषहतम् ।

तमेवेति । श्यावपाणिपाददन्तनखत्वादियुक्तमेव ।

विक्षिप्तेत्यादि । विक्षिप्तवस्त्रगात्रं वस्त्रं गात्रं च तत इतो विसारितं येन तम् । मदनयोगहतं मदकररसदानहतं विद्यात् ।

निष्कीर्णेत्यादिनोक्तेषु कारणेषु अन्यतमदर्शनेन हतमनुमिनुयात्, हन्त्रा वा स्वदण्डभयादुल्लम्बनच्छिन्नकण्ठमनुमिनुयादित्याह—अत इत्यादि ।

विषहतस्येत्यादि । हृदयादुद्धृत्य हृदयदेशात् खण्डमवदाय । चिटचिटायत् चिटचिटाशब्दं कुर्वत् । विषदपरिज्ञानोपायमाह—तस्येति । विषहतस्य, परिचारक-जनं वाग्दण्डपारुष्यातिलब्धं वाक्पारुष्य-दण्डपारुष्याभ्यां पीडितम्, मार्गेत अन्विष्येत्, तथाभूतो हि परिजनः स्वामिनो विषदायो सम्भाव्यत इति । दुःखोपहत-मिति । तथाभूतं स्त्रीजनम् । अन्यप्रसक्तं वा पुरुषान्तरसक्तं वा स्त्रीजनम्, मार्गेतेति वर्तते ।

**दायनिवृत्तिस्त्रीजनाभिमन्तारं वा बन्धुम्। तदेव हतोद्बद्धस्य परीक्षेत।**

**स्वयमुद्बद्धस्य वा विप्रकारमयुक्तं मार्गेत।**

[ सामान्यतो मारणनिमित्तानि ]

**सर्वेषां वा स्त्रीदायाद्यदोषः कर्मस्पर्धा, प्रतिपक्षद्वेषः, पण्यसंस्था, समवायो वा विवादपदानामन्यतमं वा रोषस्थानम्, रोषनिमित्तो घातः।**

[ अनाथशवदर्शने मारकपरिशोधनक्रमविशेषः ]

**स्वयम्, आदिष्टपुरुषैर्वा चौरैः अर्थनिमित्तं सादृश्यादन्यवैरिभिर्वा हतस्य घातमासन्नेभ्यः परीक्षेत। येनाहूतः सहस्थितः प्रस्थितो हतभूमिमानीतो वा, तमनुयुञ्जीत। ये चास्य हतभूमावासन्नचरास्तानेकैकशः पृच्छेत् 'केनायमिहानीतो हतो वा कः सशस्त्रः सङ्गूहमान उद्विग्नो वा युष्माभिर्दृष्टः' इति। ते यथा ब्रूयुस्तथाऽनुयुञ्जीत।**

---

श्रीमूला

दायनिवृत्तिस्त्रीजनाभिमन्तारं वा 'अमुकेन विभक्तव्यो दायस्तस्य मरणे निवृत्तो मामभिगमिष्यति' इत्यभिमानवन्तं तस्य स्त्रीजनो मद्भोग्यो भविष्यतीत्यभिमानवन्तं च वा, बन्धुं मार्गेत। तदेव यथोक्तमेव, हतोद्बद्धस्य हत्वोल्लम्बितस्य परीक्षेत।

स्वयमुद्बद्धस्य वेति। 'स्वयमुल्लम्बनमृतस्य विप्रकारम् अयुक्तं मात्रातिगं पीडनं मार्गेत केन कीदृशमुत्पादितमित्यन्विष्येत्।

सामान्यतः परमारणनिमित्तान्याह-सर्वेषां वेति। जनसामान्यस्य, रोषस्थानं कोपहेतुः, स्त्रीदायाद्यदोषः स्त्रीनिमित्तो दायादत्वनिमित्तश्च दोषः, कर्मस्पर्धा-राजकुलनियोगापचारादिकृतः सङ्घर्षः, प्रतिपक्षद्वेषः शत्रुवैरम्, पण्यसंस्था वाणिज्यम् अपचारादिद्वारेण, समवायो वा समूहो वा प्राधान्यभङ्गद्वारेण, विवादपदानाम् अन्यतमं वा पूर्वोक्तानां विवाहसंयुक्तादीनामेकतमं वा, भवतीति शेषः। रोषनिमित्तो घातो वेधः।

स्वयमिति। आत्मना हतस्य, आदिष्टपुरुषैः स्वनियुक्तपुरुषैर्वा हतस्य, चौरैः अर्थनिमित्तं धनार्थं हतस्य, सादृश्यादन्यवैरिभिर्वा हतस्य हतादन्यस्मिन् वैरवद्भिः 'स एवायमि'ति सादृश्याद् मिथ्याबुद्धिं कृत्वा हतस्य, घातम्, आसन्नेभ्यः हतप्रत्यासन्नजनेभ्यः, परीक्षेत अन्विष्य जानीयात्। येनाहूत इत्यादि। सङ्गूहमानः छन्नचरः। उद्विग्नः भीतः, शेषं सुबोधम्।

[ घातकान्वेषणविधिः ]

**अनाथस्य शरीरस्थमुपभोगं परिच्छदम् ।**
**वस्त्रं वेषं विभूषां वा दृष्ट्वा तद्व्यवहारिणः ॥१५८॥**
**अनुयुञ्जीत संयोगं निवासं वासकारणम् ।**
**कर्म च व्यवहारं च ततो मार्गणमाचरेत् ॥१५९॥**

[ आत्मघातिनां शरीरस्य शास्त्रीयसंस्कारनिषेधः
संस्कर्तृबहिष्कारश्च ]

**रज्जुशस्त्रविषैर्वाऽपि कामक्रोधवशेन यः ।**
**घातयेत् स्वयमात्मानं स्त्री वा पापेन मोहिता ॥१६०॥**
**रज्जुना राजमार्गे तां चण्डालेनापकर्षयेत् ।**
**न श्मशानविधिस्तेषां न सम्बन्धिक्रियास्तथा ॥१६१॥**
**बन्धुस्तेषां तु यः कुर्यात् प्रेतकार्यक्रियाविधिम् ।**
**तद्गतिं स चरेत् पश्चात् स्वजनाद् वा प्रमुच्यते ॥१६२॥**

---

श्रीमूला

अनाथस्येत्यादि श्लोकद्वयमेकान्वयम् । अनाथस्म मृतस्य, शरीरस्थम्, उपभोगं माल्यादि, परिच्छेदं छत्रोपानहादि, वस्त्रम्, वेषं जटिलमुण्डितत्वादि, विभूषां वा, दृष्ट्वा तद्व्यवहारिणः माल्याद्युपभोगव्यवहर्तॄन् मालाकारादीन् । अनुयुञ्जीत पृच्छेत् किं किं ? संयोगं सख्यं निवासं वासकारणं कर्म च वृत्तिं च, व्यवहारं च दानादानक्रियानुष्ठानं च, अर्थाद्धतस्य । ततो मार्गणं घातकान्वेषणम् आचरेत् ।

रज्जुशस्त्रेत्यादि श्लोकद्वयमेकान्वयम् । रज्जुना गुणेन, पुंस्त्वमार्षं 'रज्ज्वा वे'ति पाठ एव वा प्रमादाद् निरूपितः । सम्बन्धिक्रियाः ज्ञातिकार्याणि । शेषं सुगमम् । रज्जुवस्त्रेति क्वापि पाठः ।

बन्धुस्तेषामित्यादि । तेषाम् आत्मघातिनाम् । पश्चात् तद्गतिं चरेत्, आत्मघातिप्रेतक्रियाकर्ता देहान्ते आत्मघातिगतिं प्राप्नुयात् । स्वजनाद् वा प्रमुच्यते स्वजनपरित्यक्तश्च भवति, अर्थात् पतितत्वेन हेतुना ।

**संवत्सरेण पतति पतितेन समाचरन् ।**
**याजनाध्यापनाद् यौनात् तैश्चान्योऽपि समाचरन् ॥१६३॥**

इति कण्टकशोधने आशुमृतकपरीक्षा, सप्तमोऽध्यायः,
आदितश्चतुरशीतिः

---

श्रीमूला

संवत्सरेणेति । पतितेन सह, याजनाऽध्यापनात्, यौनाद् विवाहसम्बन्धाच्च, समाचरन् व्यवहरन्, संवत्सरेण वर्षेणैकेन, पतति । तैश्च पतितसंसर्गपतितैश्च, समाचरन् व्यवहरन्, अन्योऽपि, संवत्सरेण पतति ।

इति कौटलीयार्थशास्त्रव्याख्यायां कण्टकशोधने चतुर्थाधिकरणे
सप्तमोध्यायः, आशुमृतकपरीक्षा,
आदितश्चतुरशीतितमः ।

## त्र्यशीतितमं प्रकरणम्

## अष्टमोऽध्यायः

## वाक्यकर्मानुयोगः

[ शङ्कागृहीतेषु कृतापराधत्वतदभावयोः निर्णयक्रमः,
चोरत्वाङ्गीकारस्य चोरत्वाव्याप्यता च ]

**मुषितसन्निधौ बाह्यानामभ्यन्तराणां च साक्षिणम् अभिशस्तस्य देशजातिगोत्रनामकर्मसारसहायनिवासाननुयुञ्जीत। तांश्चापदेशैः प्रतिसमानयेत्। ततः पूर्वस्याह्नः प्रचारं रात्रौ निवासं च आ ग्रहणादित्यनुयुञ्जीत। तस्यापसारप्रतिसन्धाने शुद्धः स्यात्। अन्यथा कर्मप्राप्तः।**

**त्रिरात्रादूर्ध्वमग्राह्यः शङ्कितकः, पृच्छाभावादन्यत्रोपकरणदर्शनात्।**

---

श्रीमूला

वाक्यकर्मानुयोग इति सूत्रम्। वाक्येन कर्मणा च शङ्काभिगृहीतस्य अनुयोगोऽभिधीयत इति सूत्रार्थः। शङ्कादिलिङ्गानां व्यभिचारसम्भवाद् वस्तुतोऽचोरस्यापि दण्डभयादिनाऽनृतवादित्वदर्शनाच्च चोरत्वनिर्णयाय वाक्यकर्मानुयोगः प्रस्तूयते।

मुषितसन्निधाविति। चोरहृतधनस्य जनस्य सन्निधौ, बाह्यानाम् अभ्यन्तराणां च सन्निधौ, साक्षिणम्, अभिशस्तस्य शङ्काभिगृहीतस्य, देशं, जातिं, गोत्रं, नाम, कर्म, सारं, धनं, सहायं, निवासं चेत्येतान् देशादीन् अष्टौ, अनुयुञ्जीत। तांश्चेति। अभिशस्तदेशादीन्, अपदेशैः निमित्तैरुपपत्तिभिः, प्रतिसमानयेत् पर्यालोचयेत् सुष्ठु न वेति। तत इति। पश्चात्, पूर्वस्य अह्नः प्रचारं, रात्रौ निवासं च शयनं च, आ ग्रहणात् यावदभिशस्तग्रहणकालम्, इत्यनुयुञ्जीत अनुयोगोचितेन प्रकारेण पृच्छेद्, अभिशस्तम्। तस्य अभिशस्तस्य, अपसारप्रतिसन्धाने अपराधापसरणकारणोपलब्धौ, शुद्धः स्याद्, अभिशस्तः। अन्यथा कर्मप्राप्तः कृतापराधः।

त्रिरात्रादूर्ध्वमिति। तिसृषु रात्रिषु अतीतासु, शङ्कितकः, अग्राह्यः ग्रहीतुं योग्यो न भवति, कस्मात्, पृच्छाभावात् मोषणदिवसपूर्वदिवसादिचरितस्य विस्मृतिसम्भवेन प्रश्नायोगात्, अन्यत्रोपकरणदर्शनात् मोषणसाधनानामचोरगृहेषूपलम्भसम्भवाच्च।

**अचोरं 'चोर' इत्यभिव्याहरतश्चोरसमो दण्डः, चोरं प्रच्छादयतश्च। चोरेणाभिशस्तो वैरद्वेषाभ्यामपदिष्टकः शुद्धः स्यात्। शुद्धं परिवासयतः पूर्वः साहसदण्डः।**

**शङ्कानिष्पन्नमुपकरणमन्त्रिसहायरूपवैयावृत्यकरान्निष्पादयेत्। कर्मणश्च प्रवेशद्रव्यादानांशविभागैः प्रतिसमानयेत्। एतेषां कारणानाम् अनभिसन्धाने विप्रलपन्तमचोरं विद्यात्। दृश्यते ह्यचोरोऽपि चोरमार्गे यदृच्छया सन्निपाते चोरवेषशस्त्रभाण्डसामान्येन गृह्यमाणो दृष्टः चोरभाण्डस्योपवासेन वा; यथा हि माण्डव्यः कर्मक्लेशभयादचोरः 'चोरोऽस्मि' इति ब्रुवाणः। तस्मात् समाप्तकरणं नियमयेत्।**

---

श्रीमूला

अचोरमिति। तं, चोर इति अभिव्याहरतः प्रदेष्ट्रादेः, चोरसमो दण्डः। चोरं प्रच्छादयतश्च तम् अचोर इत्यभिव्याहरतश्च, अथवा चोरं गृहान्तरवस्थाप्याप्रकाशयतश्च, चोरसमो दण्डः।

चोरेणाभिशस्त इति। चोरेणान्यश्चोर इत्युक्तः, वैरद्वेषाभ्याम् अपदिष्टकः वैरेण द्वेषेण च निमित्तेन कृताभिशंसन इति विभावितश्चेत्, शुद्धः स्यात्। शुद्धं, परिवासयतः अमोचयतः प्रदेष्टुः, पूर्वः साहसदण्डः।

शङ्कानिष्पन्नमिति। शङ्कागृहीतम्, उपकरणादीन् पञ्च, निष्पादयेत् पृष्ट्वा साधयेत्। तत्र रूपं लोप्त्रं, शेषं प्रतीतम्। कर्मणश्च प्रवेशेत्यादि। चौर्यार्थं द्रव्यरक्षागृहे केन केन प्रवेशः कृतः केन द्रव्यं गृहीतं कस्य कियानंशविभागः इति प्रवेशादिप्रश्नैस्तत्त्वं विचारयेत्।

एतेषां कारणानामिति। उक्तानां चोरत्वसाधकानाम्, अनभिसन्धाने अपरिचिन्तने, विप्रलपन्तं भयादिना विरुद्धवाचिनमपि, अचोरं विद्यात्। किमर्थं परीक्षायत्नो महानुपदिश्यत इत्यत्राह—दृश्यतेहीत्यादि। चोरभाण्डस्योपवासेन मुष्टद्रव्यस्य समीपस्थित्या। माण्डव्यः आणिमाण्डव्यो नाम महर्षिः। स किलाचोर एव राजपुरुषताडनादिक्लेशभीत्या चोरमात्मानं वदन् विनैव परीक्षां तं चोरं मन्यमानेन राज्ञा शूलमारोपित इति महाभारते कथानुसन्धेया।

तस्मादिति। अदण्ड्यदण्डप्रणयनं मा प्रसाङ्क्षीदिति हेतोः, समाप्तकरणं सम्यग् बहुप्रकारपरीक्षावधारितापराधं, नियमयेत् दण्डयेत्।

[ दण्डनकर्मस्वनुयोजनीयाः अपराधिनः
चोरत्वपरिज्ञानहेतवः वञ्चनाश्च ]

**मन्दापराधं बालं वृद्धं व्याधितं मत्तमुन्मत्तं क्षुत्पिपासाध्वक्लान्तम् अत्याशितम् आमकाशितं दुर्बलं वा न कर्म कारयेत्। तुल्यशीलपुंश्चली-प्रावादिककथावकाशभोजनदातृभिरपसर्पयेत्। एवमतिसन्दध्यात्, यथा वा निक्षेपापहारे व्याख्यातम्।**

[ निश्चितापराधेष्वपि व्यक्त्यानुगुण्येन दण्डभेदाः ]

**आप्तदोषं कर्म कारयेत्; न त्वेव स्त्रियं गर्भिणीं सूतिकां वा मासावर-प्रजाताम्। स्त्रियास्त्वर्धकर्म, वाक्यानुयोगो वा। ब्राह्मणस्य सत्रिपरिग्रहः श्रुतवतस्तपस्विनश्च। तस्यातिक्रमे उत्तमो दण्डः कर्तुः कारयितुश्च, कर्मणा व्यापादनेन च।**

---

श्रीमूला

मन्दापराधमित्यादि। अल्पापराधम्। अत्याशितम् अतिमात्रभुक्तान्नम्। आमकाशितम् अजीर्णान्नम्।

चोरादीन् कथं जानीयादित्याह—तुल्यशीलेत्यादि। तुल्यशीलादिभिः तुल्य-शीलाः समानवृत्ताः पुंश्चल्यो बन्धक्यः प्रावादिकाः प्रवदनचारिणः दक्षभाषाः कथावकाशभोजनदातारः कथादातारः कथकाः अवकाशदातारो भोजनदातारश्च इत्येतैः, अपसर्पयेत् अपसर्पैः कृतैर्जानीयात्, अर्थाच्चोरादीन्। एवमतिसन्दध्यात् उक्तेन प्रकारेण तान् वञ्चयेत्। ज्ञानोपायान्तरमन्यत्रोक्तं चेहातिदिशति—यथा वेति। निक्षेपापहारे, यथा व्याख्यातं 'क्षीणदायकुटुम्बमि'त्यादिना निरूपितं, तथा वा जानीयादिति वाक्यशेषः।

निश्चितापराधस्य दण्डमाह—आप्तदोषमिति। निश्चितापराधं, कर्म कारयेत्। गर्भिण्याः स्त्रियाः प्रसूतायाश्चानतीतमासाया न दण्ड इत्याह—न त्वेवेत्यादि। स्त्रियास्त्वर्धकर्मेति। पुंसो यावद् दण्डकर्म विहितं तस्यार्धं स्त्रियाः। वाक्यानुयोगो वा वाचा परिभाषणं वा कर्त्तव्यम् अर्धस्याप्ययोगे।

ब्राह्मणस्येति। तस्य श्रुतवतो विदुषः, तपस्विनश्च, सत्रिपरिग्रहः सत्रिभिः परिग्रहणं तथा परिग्रहणेन तत इतः पर्यटनक्लेशयोजनेति यावत्, अर्थाद् दण्डः। तस्यातिक्रम इति। उक्तदण्डातिरिक्तदण्डकरणे, कर्तुः, कारयितुश्च, उत्तमो दण्डः उत्तमसाहसः, कर्मणा, व्यापादनेन च द्रोहचिन्तनेन च हेतुना।

[ साधारणानां विशिष्टानां च दण्डनकर्मणां
परिगणनं क्रमश्च ]

**व्यावहारिकं कर्मचतुष्कम्—षड् दण्डाः, सप्त कशाः, द्वावुपरिनिबन्धौ, उदकनालिका च ।**

**परं पापकर्मणाम्—नववेत्रलताद्वादशकं, द्वावूरुवेष्टौ, विंशतिर्नक्तमाललताः द्वात्रिंशत्तलाः, द्वौ वृश्चिकबन्धौ, उल्लम्बने च द्वे, सूची हस्तस्य, यवागूपीतस्य, एकपर्वदहनमङ्गुल्याः; स्नेहपीतस्य प्रतापनमेकमहः, शिशिररात्रौ बल्बजाग्रशय्या चेत्यष्टादशकं कर्म । तस्योपकरणं प्रमाणं प्रहरणं प्रधारणमवधारणं च खरपट्टादागमयेत् ।**

———————

श्रीमूला

व्यावहारिकं कर्मचतुष्कमिति । लोकव्यवहारप्रसिद्धानि चतुष्प्रकाराणि दण्डकर्माणि भवन्ति । षड् दण्डाः दण्डाघाताः षडित्येकः प्रकारः, सप्त कशाः कशाप्रहाराः इति द्वितीयः, द्वौ उपरिनिबन्धौ हस्तयोः पृष्ठतः कृत्वा संश्लेषितयोर्बन्धनं तेन सह शिरसो बन्धनं चेति द्विरूपं बन्धनमिति तृतीयः, उदकनालिका च नासायां सलवणोदकनिषेचनं च इति चतुर्थः । अन्यत् पापकर्मणां चतुर्दशभेदं दण्डनकर्माह—परं पापकर्मणामिति । परम् उक्तचतुष्कातिरिक्तं, पापकर्मणां, नववेत्रलताद्वादशकं नवहस्तदीर्घवन्यलतया द्वादशप्रहाराः, द्वौ ऊरुवेष्टौ द्वाभ्यां रज्जुभ्यां पादयोर्वेष्टनं तेन सह शिरसोऽपि वेष्टनमिति द्विप्रकारावूरुवेष्टौ, विंशतिर्नक्तमाललताः विंशतिः करञ्जलताप्रहाराः, द्वात्रिंशत् तलाः चपेटाघाताः, द्वौ वृश्चिकबन्धौ वामकरस्य वामपादस्य च पृष्ठतः संयोज्य बन्धनमित्येको वृश्चिकबन्धः दक्षिणकरस्य दक्षिणपादस्य च तथा संयोज्य बन्धनमित्यपर इत्येवं द्वौ, उल्लम्बने च द्वे संयुक्तबद्धकरद्वयस्य ऋजूर्ध्वलम्बनं संयुक्तबद्धपादद्वयस्योर्ध्वलम्बनं चेति द्विप्रकारे उल्लम्बने, सूची हस्तस्य करस्य नखे सूचीप्रवेशनं, यवागूपीतस्य यवागूपानस्य कारणेति शेषः, यवागूं पाययित्वा मूत्रनिरोधनेनावस्थापनमित्यर्थः । अङ्गुल्या एकपर्वदहनं, स्नेहपीतस्य प्रतापनमेकमहरिति पायितसर्पिष आतपेऽग्नौ वैकदिनप्रतापनं, शिशिररात्रौ वल्वजाग्रशय्या च जलसिक्तवल्वजाग्रशय्याशायनं च, इत्यष्टादशकं पूर्वोक्तचतुष्केण सहाष्टादशावयवकं, कर्म ।

तस्येति । उक्तस्य कर्मणः, उपकरणं रज्ज्वादि, प्रमाणं दण्डकशाद्यायामः, प्रहरणं वेत्रनक्तमालादि, प्रधारणं दण्डनीयस्य स्थापनप्रकारः, अवधारणं च शरीरानुगुणदण्डप्रकारनिर्धारणं च, खरपट्टात् कर्तृनामप्रसिद्धाच्चौर्यशास्त्राद्, आगमयेद् अधीयीत ।

दिवसान्तरमेकैकं च कर्म कारयेत् ।

[ क्षत्रियादीनां दण्ड्यत्वे हेतवः ]

पूर्वकृतापदानं, प्रतिज्ञायापहरन्तम्, एकदेशदृष्टद्रव्यं, कर्मणा रूपेण वा गृहीतं राजकोशमवस्तृणन्तं, कर्मवध्यं वा राजवचनात् समस्तं व्यस्तमभ्यस्तं वा कर्म कारयेत् ।

[ ब्राह्मणदण्डनक्रमः ]

सर्वापराधेष्वपीडनीयो ब्राह्मणः । तस्याभिशस्ताङ्को ललाटे स्याद्व्यवहारपतनाय;—स्तेये श्वा, मनुष्यवधे कबन्धः, गुरुतल्पे भगम्, सुरापाने मद्यध्वजः ।

---

श्रीमूला

दिवसान्तरमित्यादि । दण्डितं दिवसव्यवधानेनैकैकं कर्म कृच्छ्रव्यापारं कारयेत् । इत्युत्सर्गः ।

विशेषविधिमाह—पूर्वेत्यादि । पूर्वकृतापदानं पूर्वकृतचौर्यं, प्रतिज्ञायापहरन्तम् अपहरिष्यामीति प्रतिश्रुत्यापहरन्तम्, एकदेशदृष्टद्रव्यं नष्टद्रव्यैकदेशयुक्ततयोपलब्धं, कर्मणा गृहीतम् अद्वारप्रवेशनिर्गमसन्धिच्छेदनादिकर्मयुक्तत्वेन दृष्टं, रूपेण वा गृहीतं लोप्त्रयुक्तं गृहीतं, राजकोशम् अवस्तृणन्तं राजधनमवच्छादयन्तं, कर्मवध्यं वा कृतमहापराधं वा, राजवचनात्, समस्तं समुदितं, व्यस्तं तद्विपरीतम्, अभ्यस्तं वा आवृत्तं वा कर्म कारयेद् यावत्प्राणवियोगम् । स एष क्षत्रियादीनां दण्डविधिः ।

ब्राह्मणस्य विधिमाह—सर्वापराधेष्वित्यादि । वधताडनादिना दण्डेन न योज्यः । कस्तर्हि तस्य दण्डस्तत्राह—तस्येति । ब्राह्मणस्य, अभिशस्ताङ्कः ललाटे स्यात् कर्तव्यः, किमर्थं, व्यवहारपतनाय व्यवहारात् पतनाय प्रच्युतये अज्ञानात् तेनान्यः सहव्यवहारं मा कार्षीदित्येतदर्थमित्यर्थः । अपराधभेदेनाङ्कभेदानाह—स्तेय इति । तत्र, श्वा अभिशस्ताङ्कः कर्तव्यः, मनुष्यवधे कबन्धः, गुरुतल्पे गुरुदार गमने, भगं योनिः, सुरापाने मद्यध्वजः ।

**ब्राह्मणं पापकर्माणमुद्घुष्याङ्कृतव्रणम् ।**
**कुर्यान्निर्विषयं राजा वासयेदाकरेषु वा ॥१६४॥**

इति कण्टकशोधने वाक्यकर्मानुयोगः, अष्टमोऽध्यायः,
आदितः पञ्चाशीतिः

———————

श्रीमूला

श्लोकमाह—ब्राह्मणमित्यादि। उद्घुष्य पापकर्मामुक इति पुरग्रामादिषु सघोषणं दर्शयित्वा। निर्विषयं कुर्यात् स्वदेशान्निष्कासयेत्।

इति कौटलीयार्थशास्त्रव्याख्यायां कण्टकशोधने चतुर्थाधिकरणे
अष्टमोऽध्यायः, वाक्यकर्मानुयोगः,
आदितः पञ्चाशीतितमः ॥

# चतुरशीतितमं प्रकरणम्

## नवमोऽध्यायः

### सर्वाधिकरणरक्षणम्

[ राजकीयप्रदेशेषु चौर्यं कुर्वतां द्रव्यानुगुण्येन दण्डविधानानि ]

**समाहर्तृप्रदेष्टारः पूर्वमध्यक्षाणामध्यक्षपुरुषाणां च नियमनं कुर्युः ।**

**खनिसारकर्मान्तेभ्यस्सारं रत्नं वाऽपहरतश्शुद्धवधः; फल्गुद्रव्यकर्मान्तेभ्यः फल्गुद्रव्यमुपस्करं वा पूर्वः साहसदण्डः ।**

**पण्यभूमिभ्यो वा राजपण्यं माषमूल्यादूर्ध्वमा पादमूल्यादित्यपहरतो द्वादशपणो दण्डः, आ द्विपादमूल्यादिति चतुर्विंशतिपणः, आ त्रिपादमूल्यादिति षट्त्रिंशत्पणः, आ पणमूल्यादित्यष्टचत्वारिंशत्पणः, आ द्विपणमूल्यादिति पूर्वः साहसदण्डः आ चतुष्पणमूल्यादिति मध्यमः, आ अष्टपणमूल्यादित्युत्तमः, आ दशपणमूल्यादिति वधः ।**

---

श्रीमूला

सर्वाधिकरणरक्षणमिति सूत्रम् । सर्वेषाम् अधिकरणानां धनोत्पत्तिस्थानानाम् अधिकरणस्थानां वा समाहर्त्रादीनां रक्षणं धनहरणाद् वारणं सर्वाधिकरणरक्षणं, तदुच्यत इति सूत्रार्थः । जानपदादिकण्टकशोधनमुक्तम् । राजधनापहारिशोधनमधुनाभिधीयते । समाहर्तृप्रदेष्टार इति । समाहर्तारः प्रदेष्टारश्च, पूर्वं कार्यारम्भात् प्राक्, अध्यक्षाणाम्, अध्यक्षपुरुषाणां च नियमनं व्यवस्थापनं, कुर्युः ।

खनिसारकर्मान्तेभ्य इति । खनिकर्मान्तेभ्यः रत्नस्वर्णरजतादिकर्मस्थानेभ्यः सारकर्मान्तेभ्यः चन्दनागुर्वादिकर्मस्थानेभ्यः, सारं रत्नं वा, अपहरतः, शुद्धवधः धनदण्डामिश्रो घातदण्डः ।

फल्गुद्रव्यकर्मान्तेभ्य इति । कार्पासादिद्रव्यकर्मान्तेभ्यः, फल्गुद्रव्यम्, उपस्करं वा वेशवारं वा, अपहरत इति वर्तते । पूर्वः साहसदण्डः ।

पण्यभूमिभ्यो वेति । जीरकाजमोदाद्युत्पत्तिभूमिभ्यः, राजपण्यं, माषमूल्यादूर्ध्वम्, आ पादमूल्यात् पादः पणचतुर्भागश्चतुर्माषाः आ चतुर्माषमूल्यात्, इत्येवम् अपहरतः, द्वादशपणो दण्डः । आ द्विपादमूल्यादिति । चतुर्माषमूल्यादूर्ध्वमष्टमाष-

**कोष्ठपण्यकुप्यायुधागारेभ्यः कुप्यभाण्डोपस्करापहारेष्वर्धमूल्येष्वेत एव दण्डाः। कोशभाण्डागाराक्षशालाभ्यश्चतुर्भागमूल्येष्वेत एव द्विगुणा दण्डाः।**

**चोराणामभिप्रधर्षणे चित्रो घातः। इति राजपरिग्रहेषु व्याख्यातम्।**

[ राजकीयातिरिक्तपौरजानपदक्षेत्रादिषु द्रव्यापहर्तॄणां द्रव्यानुगुणाः दण्डाः ]

**बाह्येषु तु प्रच्छन्नमहनि क्षेत्रखलवेश्मापणेभ्यः कुप्यभाण्डमुपस्करं वा माषमूल्यादूर्ध्वमा पादमूल्यादित्यपहरतस्त्रिपणो दण्डः, गोमयप्रदेहेन वा प्रलिप्यावघोषणम्। आ द्विपादमूल्यादिति षट्पणः, गोमयभस्मना वा प्रलिप्यावघोषणम्। आ त्रिपादमूल्यादिति नवपणः, गोमयभस्मना वा प्रलिप्यावघोषणम्, शरावमेखलया वा। आ पणमूल्यादिति द्वादशपणः, मुण्डनं प्रव्राजनं वा। (आ द्विपणमूल्यत्रिपादमूल्यादिति नवपणः, गोमय-भस्मना वा प्रलिप्यावघोषणं शरावमेखलया वा। आ पणमूल्यादिति**

---

श्रीमूला

मूल्यान्तम्, अपहरतः, चतुर्विंशतिपणः। आ त्रिपादमूल्यादिति षट्त्रिंशत्पण इत्यादि आ दशपणमूल्यादिति वध इत्येतदन्तं सुबोधम्।

कोष्ठपण्यकुप्यायुधागारेभ्य इति। कोष्ठागारात् पण्यागारात् कुप्यागाराद् आयुधागाराच्च, कुप्यभाण्डोपस्करापहारेषु, अर्धमूल्येषु अर्धमाषमूल्यादिद्विमाष-मूल्यान्तेषु विषये, एत एव द्वादशपणादयो, दण्डाः।

कोशभाण्डागाराक्षशालाभ्य इति। ताभ्यः, चतुर्भागमूल्येषु काकणीमूल्येषु माषमूल्यान्तेषु अपहृतेषु विषये, एत एव द्विगुणा दण्डाः चतुर्विंशतिपणाष्टाचत्वारिंश-त्पणादयः।

चोराणामभिप्रधर्षणे इति। स्वयमपहृतवतामेव राजपुरुषाणां चोरापहरण-च्छलकल्पने, चित्रो घातः क्लेशवधः। इति अनेन प्रकारेण, राजपरिग्रहेषु राजकीयेषु प्रदेशेषु, व्याख्यातम्।

बाह्येषु त्वित्यादि। बाह्येषु राजकीयातिरिक्तेषु पौरजानपदक्षेत्रादिषु। शेषं सुगमम्। चोरस्य निर्धनत्वे दण्डप्रकारमाह—गोमयप्रदेहेन वेति। गोशकृदुपलेपेन, प्रलिप्यदेहं प्रकर्षेण लिप्त्वा, अवघोषणं पटहघोषणपुरस्सरं नगरमभितः सञ्चारणम्। आ द्विपादमूल्यादितीत्यादि। स्पष्टम्। शरावमेखलया वेति। अवघोषणमिति वर्तते, शरावो मृद्भाण्डविशेषः, प्रोतशरावां रशनां कण्ठे बद्ध्वा पूर्ववन्नगरमभितः सञ्चारणं गोमयभस्माभावपक्षे दण्ड इत्यर्थः। आ पणमूल्यादिति द्वादशपण इत्यादि आ

**द्वादशपणः; मुण्डनं प्रव्राजनं वा ।) आ द्विपणमूल्यादिति चतुर्विंशतिपणः, मुण्डनमिष्टकाशकलेन प्रव्राजनं वा । आ त्रिपणमूल्यादिति चत्वारिंशत्पणः । आ पञ्चपणमूल्यादिति अष्टचत्वारिंशत्पणः । आ दशपणमूल्यादिति पूर्वः साहसदण्डः । आ विंशतिपणमूल्यादिति द्विशतः । आ त्रिंशत्पणमूल्यादिति पञ्चशतः । आ चत्वारिंशत्पणमूल्यादिति साहस्रः । आ पञ्चाशत्पणमूल्यादिति वधः ।**

[ आरक्षिपुरुषरक्षाव्यापृतद्रव्यापहारे
कपटलेख्यादौ च दण्डाः ]

**प्रसह्य दिवा रात्रौ वान्तर्याममेव हरतोऽर्धमूल्येष्वेत एव द्विगुणा दण्डाः । प्रसह्य दिवा रात्रौ वा सशस्त्रस्यापहरतश्चतुर्भागमूल्येष्वेत एव दण्डाः ।**

**कुटुम्बिकाध्यक्षमुख्यस्वामिनां कूटशासनमुद्राकर्मसु पूर्वमध्यमोत्तमवधा दण्डाः, यथाऽपराधं वा ।**

---

श्रीमूला

पञ्चाशत्पणमूल्यादिति वध इत्यन्तं वाक्यजातं स्पष्टार्थम् । यदत्र चतुर्विंशतिपणदण्डासामर्थ्ये मुण्डीकृत्येष्टकाखण्डप्रक्षेपेण देशाद् बहिर्निष्कासनमुक्तं, तत् षट्त्रिंशत्पणादिसहस्रपणान्तदण्डासामर्थ्ये दण्डापूपिकान्यायेन सिद्धं द्रष्टव्यम् ।

प्रसह्येति । बलात्कारेण, दिवा रात्रौ वा, अन्तर्यामिकं यामान्तरालकालरक्षाव्यापृतम्, अपहरतो मुष्णतः, अर्धमूल्येषु माषमूल्यादूर्ध्वमित्याद्युक्तमूल्यापेक्षयार्धमूल्येषु अर्थादर्धमाषमूल्यप्रभृतिषु द्विमाषमूल्यान्तेषु विषये, एत एव पूर्वोक्तास्त्रिपणादय एव वधान्ताः, द्विगुणाः अर्थात् षट्पणादयः, दण्डाः । इहद्विगुणा इति पाठो नास्तीति भाषास्वरसतो गम्यते । अन्तर्यामिकमेव दिवा रात्रौ वा प्रसह्य शस्त्रपाणेर्मुष्णतो माषचतुर्भाग(काकणी)मूल्यादिषु माषमूल्यान्तेषु विषयेऽपि यथोक्ता एव दण्डा इत्याह—प्रसह्य दिवा रात्रौ वा सशस्त्रस्येत्यादि ।

कुटुम्बिकाध्यक्षमुख्यस्वामिनामिति । कुटुम्बिनः सुवर्णाध्यक्षादेर्ग्राममुख्यस्य समाहर्तुश्चेत्येतेषां चतुर्णां, कूटशासनमुद्राकर्मसु कपटलेख्यकर्मसु कपटलक्षणकर्मसु च पूर्वमध्यमोत्तमवधाः दण्डाश्चत्वारो यथाक्रमं भवन्ति । यथापराधं वा अपराधानुगुण्येन वा दण्डाः ।

[ सम्भाविताः धर्मस्थापराधाः दण्डाश्च ]

**धर्मस्थश्चेद्विवदमानं पुरुषं तर्जयति, भर्त्सयत्यपसारयति, अभिग्रसते वा पूर्वमस्मै साहसदण्डं कुर्यात्। वाक्पारुष्ये द्विगुणम्।**

**पृच्छ्यं न पृच्छति, अपृच्छ्यं पृच्छति, पृष्ट्वा वा विसृजति, शिक्षयति, स्मारयति, पूर्वं ददाति वेति मध्यममस्मै साहसदण्डं कुर्यात्। देयं देशं न पृच्छति, अदेयं देशं पृच्छति, कार्यमदेशेनाति बाहयति, छलेनातिहरति, कालहरणेन श्रान्तमपवाहयति, मार्गापन्नं वाक्यमुत्क्रमयति; मतिसाहाय्यं साक्षिभ्यो ददाति; कारितानुशिष्टं कार्यं पुनरपि गृह्णाति; उत्तममस्मै साहसदण्डं कुर्यात्।**

**पुनरपराधे द्विगुणं; स्थानाद् व्यवरोहणं च।**

---

श्रीमूला

धर्मस्थशोधनमाह—धर्मस्थश्चेदित्यादि। तर्जयति शिरःकम्पनतर्जनीनिर्देशादिना भीषयति। भर्त्सयति वचनेन भीषयति। अपसारयति अपसरन्तं प्रयोजयति। अभिग्रसते भक्षयति उपजीवतीत्यर्थः। पूर्वं साहसदण्डं प्रथमसाहसम्। वाक्पारुष्ये द्विगुणमिति। विवदमानं प्रति परुषवाक्प्रयोगे उक्तद्विगुणं दण्डं कुर्यात्।

भूयो धर्मस्थापराधानुल्लिखति—पृच्छ्यमिति। पृच्छार्हं साक्षिणम्, इह दण्डादित्वाद् यत्। न पृच्छति। प्रच्छन्नमित्यपि पाठः। अपृच्छ्यं पृच्छानर्हं विवादिबन्ध्वादिकं, पृच्छति। पृष्ट्वा वा विसृजति अदत्तोत्तरमेवोपेक्षते। शिक्षयति वक्तव्यमध्यापयति। स्मारयति वक्तव्यं विस्मृतमभिज्ञापयति। पूर्वं ददाति वा वाक्यस्य वक्तव्यस्य पूर्वांशं शेषपूरणानुगुणं सूचयति वा इति एवं, चेष्टमानायेति शेषः, अस्मै धर्मस्थाय, मध्यमं साहसदण्डं कुर्यात्। देयं देशं न पृच्छतीति। विभाव्यवस्तुविभावनायावश्यापेक्ष्यं साक्षिणं न पृच्छति। अदेयं देशं तद्विपरीतं साक्षिणं, पृच्छति। कार्यम्, अदेशेन अतिवाहयति साक्षिणं विनैव निर्णयति। छलेन अतिहरति सत्यवादिनमपि साक्षिणं छलवाक्येन अपराधयति। कालहरणेन श्रान्तं, कृत्वेति शेषः, अपवाहयति परावर्तयति मार्गापन्नं वाक्यम् अपरित्यक्तक्रमं साक्षिवाक्यम्, उत्क्रमयति त्यक्तक्रममित्याचष्टे। मतिसहाय्यं साक्षिभ्यो ददाति। तारितानुशिष्टं विचारितनिर्णीतं, कार्यं, पुनरपि गृह्णाति विचारणार्थम्। अस्मै एवं चेष्टमानाय धर्मस्थाय, उत्तमं साहसदण्डं कुर्यात्। पुनरपराधे कृते, द्विगुणम् अर्थाद् दण्डनम्। स्थानाद् व्यवरोपणं च निरसनं च।

[ दुर्लेखकानां दण्डाः ]

**लेखकश्चेदुक्तं न लिखति, अनुक्तं लिखति, दुरुक्तमुपलिखति, सूक्तमुल्लिखति, अर्थोत्पत्तिं वा विकल्पयतीति, पूर्वमस्मै साहसदण्डं कुर्यात्; यथाऽपराधं वा ।**

[ अदण्ड्यदण्डने दण्डाः ]

**धर्मस्थः प्रदेष्टा वा हैरण्यमदण्ड्यं क्षिपति, क्षेपद्विगुणमस्मै दण्डं कुर्यात्, हीनातिरिक्ताष्टगुणं वा । शारीरदण्डं क्षिपति, शारीरमेव दण्डं भजेत, निष्क्रयद्विगुणं वा । यं वा भूतमर्थं नाशयत्यभूतमर्थं करोति, तदष्टगुणं दण्डं दद्यात् ।**

[ बन्धनाध्यक्षपरिशोधनं, नियमोल्लङ्घने दण्डश्च ]

**धर्मस्थीयाच्चारकान्निसारयतो बन्धनागाराच्छय्यासनभोजनोच्चारसञ्चारं रोधबन्धनेषु, त्रिपणोत्तरा दण्डाः कर्तुः कारयितुश्च ।**

---

श्रीमूला

लेखकशोधनमाह—लेखकश्चेदित्यादि । दुरुक्तमुपलिखति उक्तमसाधु साधूकृत्य लिखति । सूक्तम् उल्लिखति सुष्ठूक्तमसाधूकृत्य लिखति । अर्थोत्पत्तिं वा विकल्पयति साध्यसिद्धिं वान्यथयति । शेषं सुगमम् ।

धर्मस्थ इति । धर्मस्थः, प्रदेष्टा वा, अदण्ड्यं, हैरण्यं क्षिपति हिरण्यं दण्डयति चेत्, अस्मै दण्डयित्रे, क्षेपद्विगुणं क्षिप्तदण्डद्विगुणं, दण्डं कुर्यात् । हीनातिरिक्ताष्टगुणं वेति । न्याय्यदण्डाद्धीनदण्डकरणे न्याय्यदण्डादतिरिक्तदण्डकरणे च हीनदण्डादधिकदण्डाच्च अष्टगुणं दण्डं कुर्यात् । शारीरदण्डं क्षिपति हस्तच्छेदादिरूपं दण्डम् अदण्ड्ये यदि प्रयुङ्क्ते, शारीरमेव दण्डं हस्तच्छेदादिरूपं तमेव, भजेत । निष्क्रयद्विगुणं वा तत्तच्छारीरदण्डस्थानीयधनदण्डद्विगुणं वा दण्डं, भजेत । न्याय्यार्थनाशने अन्याय्यार्थसाधने च नाशितसाधितार्थाष्टगुणं दण्डं दद्यादित्याह—यं वा भूतमर्थमित्यादि ।

बन्धनाध्यक्षशोधनमाह—धर्मस्थीयादिति । धर्मस्थपरिकल्पितात्, चारकात् संरोधागारात्, निस्सारयतः लब्धग्रहणेन तद्गतान् बहिः सञ्चारयतः, बन्धनागारात् कारागृहात् निस्सारयतः, रोधबन्धनेषु रोधागारेषु बन्धनागारेषु च शय्यासनभोजनोच्चारसञ्चारं शयनीयासनभोजनानि मूत्रपुरीषोत्सर्गस्थानं च, कर्तुः, कारयितुश्च, त्रिपणोत्तराः उत्तरोत्तरत्रिपणाधिकाः, दण्डाः ।

**चारकादभियुक्तं मुञ्चतो निष्पातयतो वा मध्यमः साहसदण्डः, अभियोगदानं च । बन्धनागारात् सर्वस्वं वधश्च । बन्धनागाराध्यक्षस्य संरुद्धकमनाख्याय चारयतश्चतुर्विंशतिपणो दण्डः, कर्म कारयतो द्विगुणः । स्थानान्यत्वं गमयतोऽन्नपानं वा रुन्धतः षण्णवतिर्दण्डः । परिक्लेशयत उत्कोचयतो वा मध्यमः साहसदण्डः । घ्नतः साहस्रः ।**

**परिगृहीतां दासीमाहितिकां वा संरुद्धिकामधिचरतः पूर्वः साहसदण्डः । चोरडामरिकभार्यां मध्यमः । संरुद्धिकामार्यामुत्तमः । संरुद्धस्य वा तत्रैव घातः । तदेवाध्यक्षेण गृहीतायामार्यायां विद्यात् । दास्यां पूर्वः साहसदण्डः ।**

**चारकमभित्वा निष्पातयतो मध्यमः । भित्वा वधः । बन्धनागारात् सर्वस्वं वधश्च ।**

---

श्रीमूला

चारकादिति । धर्मस्थीयसंरोधगृहात्, अभियुक्तं मुञ्चतः, निष्पातयतो वा निष्पतनप्रतिकूलानाचरणान्निष्पतनं प्रयोजयतश्च, मध्यमः साहसदण्डः, अभियोगदानं च अभियुक्तदेयद्रव्यदानं च । बन्धनागारात् प्रदेष्टृकारागृहात्, अभियुक्तं मुञ्चत इति वर्तते, सर्वस्वं सर्वस्वहरणं, वधश्च दण्डः ।

संरुद्धं जनं बन्धनागाराध्यक्षाननुज्ञया चारयतश्चतुर्विंशतिपणो दण्डः, तद्द्विगुणः कर्म कारयत इत्याह—बन्धनागाराध्यक्षस्येत्यादि । स्थानान्यत्वमित्यादि । स्थानान्यत्वम् स्थानदम् (? अन्यस्थानम्) । परिक्लेशयतः ताडनादिना दुन्वतः । उत्कोचयतः उत्कोचधनं दापयतः । शेषं स्पष्टम् ।

परिगृहीतामिति । क्रयाधिगतां, दासीम्, आहितिकां वा, संरुद्धिकां बन्धनागाररुद्धाम्, अधिचरतो गच्छतः, पूर्वः साहसदण्डः । चोरडामरिकभार्यां चोरभार्यां डमरगतकभार्यां च, अधिचरतः, मध्यमः । संरुद्धिकाम्, आर्यां कुलस्त्रियम्, अधिचरतः, उत्तमः । तत्रैव संरुद्धस्य वा बन्धनागार एव संरुद्धस्य च अर्थात् पूर्वोक्ताः स्त्रीरधिचरतः, घातः वधः । तदेवेति । वधरूपं विधानमेव, अध्यक्षेण गृहीतायाम् अधिचरितायाम्, आर्यायां, विद्यात् । दास्याम् अध्यक्षेण गृहीतायामिति वर्तते, पूर्वः साहसदण्डः अध्यक्षस्य ।

चारकमिति । धर्मस्थीयसंरोधागारम्, अभित्त्वा निष्पातयतः अर्थात् संरुद्धं मध्यमः साहसदण्डः । भित्वा निष्पातयतः, वधः । बन्धनागारात् निष्पातयतः, सर्वस्वं सर्वस्वहरणं, वधश्च दण्डः ।

[ निगमनम् ]

**एवमर्थचरान् पूर्वं राजा दण्डेन शोधयेत् ।**
**शोधयेयुश्च शुद्धास्ते पौरजानपदान् दमैः ॥१६५॥**

इति कण्टकशोधने सर्वाधिकरणरक्षणं, नवमोऽध्यायः,
आदितष्षडशीतिः

---

श्रीमूला

अध्यायप्रान्ते श्लोकमाह—एवमिति । अनेन प्रकारेण, अर्थचरान् राजार्थ-व्यवहाराधिकृतान्, राजा, दण्डेन शोधयेत् । ते च अर्थचराश्च, शुद्धाः, भूत्वेति शेषः, पौरजानपदान्, दमैः दण्डैः, शोधयेयुः ।

इति कौटलीयार्थशास्त्रव्याख्यायां कण्टकशोधने चतुर्थाधिकरणे
नवमोऽध्यायः, सर्वाधिकरणरक्षणम्,
आदितः षडशीतितमः ॥

## पञ्चाशीतितमं प्रकरणम्

### दशमोऽध्यायः

### एकाङ्गवधनिष्क्रयः

[ तीर्थघातादिदण्डाः ]

**तीर्थघातग्रन्थिभेदोर्ध्वकराणां प्रथमेऽपराधे सन्दंशच्छेदनं चतुष्पञ्चाशत्पणो वा दण्डः। द्वितीये—छेदनं पणस्य शत्यो वा दण्डः। तृतीये—दक्षिणहस्तवधश्चतुश्शतो वा दण्डः। चतुर्थे—यथाकामी वधः।**

[ कुक्कुटादिस्तेये, तेषां विध्युल्लङ्घनेन
बन्धने च दण्डाः ]

**पञ्चविंशतिपणावरेषु कुक्कुटनकुलमार्जारश्वसूकरस्तेयेषु हिंसायां वा चतुष्पञ्चाशत्पणो दण्डः, नासाग्रच्छेदनं वा। चण्डालारण्यचराणामर्धदण्डाः।**

———————

श्रीमूला

एकाङ्गवधनिष्क्रय इति सूत्रम्। एकाङ्गं हस्तः पादः अङ्गुलिः कर्ण इत्येवमादि तस्य वधश्छेदनम् एकाङ्गवधः तद्युक्तो निष्क्रयः तत्प्रतिनिधिधनदण्डः एकाङ्गवधनिष्क्रयः सोऽभिधीयत इति सूत्रार्थः। पूर्वाध्याये 'शारीरमेव दण्डं भजेत, निष्क्रयद्विगुणं वा' इत्युक्तम्। कस्मिन्नपराधे शारीरदण्डः, स कस्याङ्गस्य, कियान् वा तस्य निष्क्रय इत्येतत्तु नोक्तम्। तदिह प्रतिपाद्यत इति सङ्गतिः।

तीर्थघातग्रन्थिभेदोर्ध्वकराणामिति। तीर्थघातः तीर्थे वस्त्राद्यपहर्ता ग्रन्थिभेदः बन्धच्छेत्ता सन्धिच्छेदको वा ऊर्ध्वकरः पुटच्छेदकः गृहोर्ध्वपटलादौ प्रवेशद्वारकृद् वा एषां त्रयाणां, प्रथमे, अपराधे, सन्दंशच्छेदनं कनिष्ठिकाङ्गुष्ठयोश्छेदनं, दण्डः। वा अथवा सन्दंशच्छेदाभावपक्षे चतुष्पञ्चाषत्पणो दण्डः। द्वितीये अपराधे, पणस्य छेदनं पणशब्देन व्यवहारसाधनाङ्गुलिलक्षणात् सर्वाङ्गुलिच्छेदनं, शत्यो वा दण्डः शतपणो वा निष्क्रयः। तृतीये अपराधे, दक्षिणहस्तवधः, चतुश्शतो वा दण्डः निष्क्रयरूपः। चतुर्थेऽपराधे यथाकामो वधः शुद्धश्चित्रो वा यथेच्छम्।

पञ्चविंशतीत्यादि। पञ्चविंशतिपणावरेषु पञ्चविंशतिपणाधस्तनमूल्येषु। हिंसायां वा अर्थात् कुक्कुटादीनाम्। अर्धदण्डाः सप्तविंशतिपणात्मकाः।

पाशजालकूटावपातेषु बद्धानां मृगपशुपक्षिव्यालमत्स्यानामादाने तच्च तावच्चा दण्डः ।

मृगद्रव्यवनान्मृगद्रव्यापहारे शत्यो दण्डः । बिम्बविहारमृगपक्षिस्तेये हिंसायां वा द्विगुणो दण्डः ।

[ शिल्प्यादिद्रव्यहरणे अक्रमप्रवेशादौ
नौपश्वाद्यपहारे च दण्डाः ]

कारुशिल्पिकुशीलवतपस्विनां क्षुद्रकद्रव्यापहारे शत्यो दण्ड, स्थूलकद्रव्यापहारे द्विशतः; कृषिद्रव्यापहारे च ।

दुर्गमकृतप्रवेशस्य प्रविशतः प्राकारच्छिद्राद्वा निक्षेपं गृहीत्वाऽपसरतः कन्धरावधो द्विशतो वा दण्डः ।

चक्रयुक्तां नावं क्षुद्रपशुं वाऽपहरत एकपादवधः त्रिशतो वा दण्डः ।

[ काकण्यादिवैषम्यकरणे चौर्यसहायकरणे
गवाद्यपहरणे च दण्डाः ]

कूटकाकण्यक्षारलाशलाकाहस्तविषमकारिणः एकहस्तवधश्चतुश्शतो वा दण्डः ।

---

श्रीमूला

पाशजालकूटावपातेष्वित्यादि । पाशः कर्णिका जालमानायः कूटावपातः तृणादिच्छन्नो मृगपातनार्थो गर्तः इत्येतेषु । तच्च तावच्च दण्डः अपहृतं च अपहृतसममन्यच्चेति द्वितयं दण्डः ।

मृगद्रव्यवनादित्यादि । मृगवनात् चन्दनादिपण्यद्रव्यवनाच्च । बिम्बविहारमृगपक्षिस्तेये बिम्बो नानावर्णः कृकलासः विहारमृगः क्रीडामृगः कृष्णसारादिः विहारपक्षी शुकादिः तेषां स्तेये ।

कारुशिल्पिकुशीलवतपस्विनामित्यादि । कारुः स्थूलशिल्पकारी शिल्पी सूक्ष्मशिल्पकर्ता कुशीलवः चारणः तपस्वी तापसः एतेषाम् । कृषिद्रव्यापहारे हलादिचौर्ये ।

अननुज्ञातप्रवेशस्य दुर्गं प्रविशतः, प्राकारच्छिद्रान्निक्षेपमपहृत्यापसरत इत्यनयोः, कन्धरावधः अर्थात् पादपश्चाद्भागगतसिराद्वयच्छेदनं दण्डः द्विशतपणो वा निष्क्रय इत्याह—दुर्गमित्यादि ।

चक्रयुक्तामित्यादि । धनयुक्तां शस्त्रयुक्तां वा ।

कूटकाकण्यक्षारलाशलाकाहस्तविषमकारिण इत्यादि । काकण्यक्षादयो द्यूतसमाह्वये उक्ताः । कूटकाकण्यक्षादिकारिणः हस्तविषमं हस्तकौशलात् काकण्यक्षादिचारवैषम्यकरणं तत्कारिणश्च ।

**स्तेनपारदारिकयोस्साचिव्यकर्मणि स्त्रियाः सङ्गृहीतायाश्च कर्णनासाच्छेदनं पञ्चशतो वा दण्डः; पुंसो द्विगुणः ।**

**महापशुमेकं दासं दासीं वाऽपहरतः प्रेतभाण्डं वा विक्रीणानस्य द्विपादवधः षट्छतो वा दण्डः ।**

[ उत्तमावमानने अपलादौ च दण्डाः ]

**वर्णोत्तमानां गुरूणां च हस्तपादलङ्घने राजयानवाहनाद्यारोहणे चैकहस्तपादवधः सप्तशतो वा दण्डः ।**

**शूद्रस्य ब्राह्मणवादिनो देवद्रव्यमवस्तृणतो राजद्विष्टमादिशतो द्विनेत्रभेदिनश्च योगाञ्जनेनान्धत्वमष्टशतो वा दण्डः ।**

[ अपराधविशेषेषु दण्डाः ]

**चोरं पारदारिकं वा मोक्षयतो राजशासनमूनमतिरिक्तं वा लिखतः कन्यां दासीं वा सहिरण्यमपहरतः कूटव्यवहारिणो विमांसविक्रयिणश्च वामहस्तद्विपादवधो नवशतो वा दण्डः । मानुषमांसविक्रये वधः देवपशुप्रतिमामनुष्यक्षेत्रगृहहिरण्यसुवर्णरत्नसस्यापहारिण उत्तमो दण्डः शुद्धवधो वा ।**

---

श्रीमूला

स्तेनपारदारिकयोरिति । साचिव्यकर्मणि साहाय्यकरणे । स्त्रियाः सङ्गृहीतायाश्चेति चकारात् साचिव्यकर्तुर्जनस्य च । द्विगुणः सहस्रपणः ।

महापशुमित्यादि । महापशुर्गवाश्वमहिषादिः । प्रेतभाण्डं शवमुखपटादिकम् । द्विपादवधः चरणद्वयच्छेदनम् ।

वर्णोत्तमानामित्यादि । हस्तपादलङ्घने हस्तेन पादेन वा ताडने । एकहस्तपादवधः एकस्य हस्तस्य पादस्य च छेदनम् ।

शूद्रस्य ब्राह्मणवादिन इति । ब्राह्मणोऽहमिति वादिनः शूद्रस्य, देवद्रव्यम् अवस्तृणतः अवच्छाद्यापहरतः, राजद्विष्टम् आदिशतः राज्ञोऽनिष्टं मरणपरचक्राक्रमणादिकं भविष्यत् कथयतो दैवज्ञादेः, द्विनेत्रभेदिनश्च, योगाञ्जनेनान्धत्वम् अन्धङ्करणौषधयुक्ताञ्जनलेपेनान्ध्यजननम्, अष्टशतो वा दण्डः निष्क्रयार्थः ।

चोरमित्यादि । मोक्षयतः बन्धनान्मोचयतः । सहिरण्यम् अपहरतः अलङ्कारेण सहितं यथा भवति तथा हरतः । कूटव्यवहारिणः धूपितरञ्जितादिकपटस्वर्णव्यवहर्तुः । विमांसविक्रयिणश्च अभक्ष्यं शृगालादिमांसं विक्रेतुश्च । वामहस्तद्विपादवधः सव्यहस्तच्छेदनं पादद्वयच्छेदनं च । देवेत्यादि । देवसम्बन्धिपश्वादिनत्रकहर्तुः, उत्तमो दण्डः । शुद्धवधो वा अक्लेशमारणं वा ।

[ निगमनम् ]

**पुरुषं चापराधं च कारणं गुरुलाघवम् ।**
**अनुबन्धं तदात्वं च देशकालौ समीक्ष्य च ॥१६६॥**
**उत्तमावरमध्यत्वं प्रदेष्टा दण्डकर्मणि ।**
**राज्ञश्च प्रकृतीनां च कल्पयेदन्तरास्थितः ॥१६६॥**

इति कण्टकशोधने एकाङ्गवधनिष्क्रयो दशमोऽध्यायः,
आदितः सप्ताशीतिः

---

श्रीमूला

प्रान्ते श्लोकावाह—पुरुषमित्यादि । प्रदेष्टा राज्ञश्च, प्रकृतीनाम् अत्मात्यादीनां च अन्तरास्थितः मध्यस्थः सन्, पुरुषं च, अपराधं च, कारणं च, गुरुलाघवं पुरुषादिगौरवलाघवम्, अनुबन्धम् आयतिं, तदात्वं च तत्कालफलं च, देशकालौ च, समीक्ष्य पर्यालोच्य, दण्डकर्मणि उत्तमावरमध्यत्वम् उत्तमत्वं प्रथमत्वं मध्यमत्वं च कल्पयेत् ।

इति कौटलीयार्थशास्त्रव्याख्यायां कण्टकशोधने चतुर्थाधिकरणे
दशमोऽध्यायः एकाङ्गवधनिष्क्रयः,
आदितः सप्ताशीतितमः ।

## षडशीतितमं प्रकरणम्

### एकादशोऽध्यायः

### शुद्धश्चित्रश्च दण्डकल्पः

[ मरणपर्यवसायिप्रहारे दण्डाः ]

**कलहे घ्नतः पुरुषं चित्रो घातः। सप्तरात्रस्यान्तः मृते शुद्धवधः, पक्षस्यान्तरुत्तमः; मासस्यान्तः पञ्चशतः, समुत्थानव्ययश्च। शस्त्रेण प्रहरत उत्तमो दण्डः, मदेन हस्तवधः, मोहेन द्विशतः, वधे वधः।**

[ गर्भघातिनां प्रसह्यहिंसकानां चोराणां
तत्सहायानां च दण्डाः ]

**प्रहारेण गर्भं पातयत उत्तमो दण्डः, भैषज्येन मध्यमः, परिक्लेशेन पूर्वः साहसदण्डः।**

**प्रसभस्त्रीपुरुषघातकाभिसारकनिग्राहकावघोषकावस्कन्दकोपवेधकान् पथिवेश्मप्रतिरोधकान् राजहस्त्यश्वरथानां हिंसकान् स्तेनान् वा शूलानारोहयेयुः।**

---

श्रीमूला

शुद्धश्चित्रश्च दण्डकल्प इति सूत्रम्। शुद्धः अक्लेशमारणं चित्रः क्लेशमारणम् इति द्विप्रकारो दण्डविधिरुच्यत इति सूत्रार्थः। पूर्वाध्याये वधः प्रस्तुतः। स कस्मिन्नपराधे कीदृशः कर्तव्य इत्येतदिहाभिधीयते।

कलहे घ्नत इत्यादि। मृते अर्थाच्छस्त्रादिप्रहृते। समुत्थानव्ययश्च चिकित्सनादिव्ययश्च।

शस्त्रेणेति। तेन प्रहरतः, उत्तमो दण्डः। मदेन बलदर्पेण, प्रहरतः, हस्तवधः। मोहेन क्रोधेन, प्रहरतः, द्विशतः पणशतद्वयदण्डः। वधे कृते सति, वधः हन्तुः।

प्रहारेणेत्यादि। भैषज्येन औषधेन, गर्भं पातयत इति सम्बध्यते। परिक्लेशेन कृच्छ्रकर्मानुष्ठापनेन।

प्रसभेत्यादि। प्रसभस्त्रीपुरुषघातकः बलात्कारेण स्त्रियाः पुरुषस्य वा घातकः प्रसभाभिसारकः स्त्रीहठाभिसरणकर्ता प्रसभनिग्राहकः बलाज्जानपदकर्ण-

**यश्चैनान् दहेदपनयेद्वा स तमेव दण्डं लभेत, साहसमुत्तमं वा ।**

**हिंस्रस्तेनानां भक्तवासोपकरणाग्निमन्त्रदानवैयापृत्यकर्मसूत्तमो दण्डः । परिभाषणमविज्ञाने । हिंस्रस्तेनानां पुत्रदारम् असमन्त्रं विसृजेत्, समन्त्रमाददीत ।**

[ राज्यकामनया भेदकानां दण्डाः ]

**राज्यकामुकमन्तःपुरप्रधर्षकमटव्यमित्रोत्साहकं दुर्गराष्ट्रदण्डकोपकं वा शिरोहस्तप्रादीपिकं घातयेत् । ब्राह्मणं तमपः प्रवेशयेत् ।**

[ मातृपितृहिंसायां दण्डाः ]

**मातृपितृपुत्रभ्रात्राचार्यतपस्विघातकं वाऽत्वक्छिरःप्रादीपिकं घातयेत् ।**

---

श्रीमूला

नासादिच्छेदकर्ता अवघोषकः 'हरिष्यामि हनिष्यामी'त्येवमवघोषणकर्ता अवस्कन्दकः बलान्नगरग्रामादेर्द्रव्यापहारकः उपवेधकः भित्तिसन्धिच्छेदनेन चौर्यकर्ता इत्येतान्, पथिवेश्मप्रतिरोधकान् पान्थविश्रमशालापानीयशालयोश्चौर्यकारकान् राजहस्त्यश्वरथानां राजसम्बन्धिनां गजाश्वसहितानां रथानां हिंसकान् स्तेनान् वा तेषामेव चोरान् वा, शूलान् वध्यारोपणशस्त्रविशेषान् आरोहयेयुः, आरोपयेयुरिति क्वचित् पाठः ।

यश्चैनानित्यादि । एनान् शूलारोपणमारितान् । हिंस्रस्तेनानामिति हिंस्राणां स्तेनानां च, भक्तवासोपकरणाग्निमन्त्रदानवैयापृत्यकर्मसु भक्तदाने वासस्थानदाने उपकरणदाने अग्निदाने मन्त्रदाने वैयापृत्यकर्मणि कैङ्कर्यकरणे च, उत्तमो दण्डः । परिभाषणमविज्ञाने हिंस्रस्तेना इत्यपरिज्ञानाद् भक्तदानादौ उपालम्भः दण्डः । हिंस्रस्तेनानाम् असमन्त्रं पुत्रदारं सहमन्त्रणरहितान् पुत्रान् दारांश्च, विसृजेद् निरपराधत्वात् । समन्त्रं पुत्रदारम्, आददीत अपराधित्वेन गृहीत्वा दण्डयेत् ।

राज्यकामुकमित्यादि । अटव्यमित्रोत्साहकम् अटवीचराणां पुलिन्दादीनाम् अमित्राणाम् उत्साहजनकम् । दुर्गराष्ट्रदण्डकोपकं दुर्गराष्ट्रवासिनां सेनायाश्च कोपोत्पादकम् । शिरोहस्तप्रादीपिकं घातयेत् शिरसि हस्ते च दीपितप्रदीपं कृत्वा मारयेत् ।

ब्राह्मणं तमः प्रवेशयेदिति । राज्यकामुकादिश्चेद् ब्राह्मणः तं तमोगृहं प्रवेशयेदपुनर्निर्गमाय ।

मातृपित्रित्यादि । अत्वक्शिरःप्रादीपिकं घातयेत् त्वग्वियोजिते शिरस्यग्निं दीपयित्वा मारयेत् ।

**तेषामाक्रोशे जिह्वाच्छेदः, अङ्गाभिरदने तदङ्गान्मोच्यः । यदृच्छाघाते पुंसः, पशुयूथस्तेये च शुद्धवधः । दशावरं च यूथं विद्यात् ।**

[ सेतुं भिन्दतां विषदातॄणां च दण्डाः ]

**उदकधारणं सेतुं भिन्दतस्तत्रैवाप्सु निमज्जनम् । अनुदकमुत्तमः साहसदण्डः । भग्नोत्सृष्टकं मध्यमः ।**

**विषदायकं पुरुषं, स्त्रियं च पुरुषघ्नीम् अपः प्रवेशयेद् गर्भिणीम् । गर्भिणीं मासावरप्रजाताम् ।**

**पतिगुरुप्रजाघातिकां अग्निविषदां सन्धिच्छेदिकां वा गोभिः पादयेत् ।**

[ अग्निप्रयोगे जिह्वालौल्ये स्तैन्ये रति-
सामर्थ्यनाशने च दण्डाः ]

**विवीतक्षेत्रखलवेश्मद्रव्यहस्तिवनादीपिकमग्निना दाहयेत् ।**

**राजा क्रोशकमन्त्रभेदकयोरनिष्टप्रवृत्तिकस्य ब्राह्मणमहानसावलेहिनश्च जिह्वामुत्पाटयेत् ।**

---

श्रीमूला

तेषामाक्रोशे मात्रादीनां निन्दने । अङ्गाभिरदने नाखादिना मात्राद्यङ्गविलेखने, तदङ्गाद् मोच्यः करादिकमङ्गं यत् तेषां विलेखितं तेनाङ्गेन विलेखनकर्ता वियोज्यः । यदृच्छया पुरुषवधे पशुयूथचौर्ये चाल्केशमारणं दण्ड इत्याह—यदृच्छाघात इत्यादि । यूथमानमाह—दशावरमित्यादि ।

उदकधारणमिति । जलं धारयन्तं, सेतुं, भिन्दतः, तत्रैव सेतौ, अप्सु निमज्जनं दण्डः । अनुदकं सेतुं, भिन्दतः उत्तमः साहसदण्डः । भग्नोत्सृष्टकं स्वयं भग्नमसंस्कृतविसृष्टं, सेतुं भिन्दतः, मध्यमः साहसदण्डः ।

विषदायकमिति । तादृशं, पुरुषं, स्त्रियं च पुरुषघ्नीं पुरुषघातिनीम्, अपः प्रवेशयेद्, अगर्भिणीं सा चेद गर्भिणी न भवति । गर्भिणीं मासावरप्रजातामिति । सा चेद् गर्भिणी, प्रसवानन्तरमेकमासेऽतीते तामप्सु प्रवेशयेत् ।

पतिगुरुप्रजाघातिकामित्यादि । सन्धिच्छेदिकां सन्धिं छित्त्वा चौर्यकारिणीम् । गोभिः, पादयेत् पादाघातेन मारयेत् । 'प्रातिपदिकाद्धात्वर्थे' इत्यादिना पादशब्दात् पादाघातवृत्तेर्णिच् ।

विवीतक्षेत्रेत्यादि । विवीतक्षेत्राद्यादीपनकर्तारम् । राजाक्रोशमन्त्रभेदकयोरिति । तयोः, अनिष्टप्रवृत्तिकस्य राजमरणाद्यनिष्टवार्ताप्रसारकस्य, ब्राह्मणमहानसावलेहिनश्च ब्राह्मणमहानसादन्नमपहृत्य भुञ्जानस्य च, जिह्वाम्, उत्पाटयेत् छिन्द्यात् ।

**प्रहरणावरणस्तेनम् अनायुधीयं इषुभिर्घातयेत् । आयुधीयस्योत्तमः ।**
**मेढ्रफलोपघातिनस्तदेव छेदयेत् ।**
**जिह्वानासोपघाते सन्दंशवधः ॥**

[ निगमनम् ]

**एते शास्त्रेष्वनुगताः क्लेशदण्डा महात्मनाम् ।**
**अक्लिष्टानां तु पापानां धर्म्यः शुद्धवधः स्मृतः ॥१६८॥**

इति कण्टकशोधने शुद्धश्चित्रश्च दण्डकल्पः, एका-
दशोऽध्यायः, आदितोऽष्टाशीतिः

———————

श्रीमूला

प्रहरणावरणस्तेनमिति । आयुधस्यावरणस्य च चोरम् अनायुधीयम् अनस्त्र-जीविनम् इषुभिः घातयेत् । आयुधीयस्योत्तमः स चेदायुधादिचार आयुधजीवो तरयोत्तमसाहसः !

मेढ्रफलोपघातिन इति । लिङ्गाण्डयोः रतिसामर्थ्यभञ्जकस्य, तदेव मेढ्रफलमेव छेदयेत् ।

जिह्वानासोपघात इति । जिह्वाया रसास्वादनशक्त्युपघाते नासाया गन्ध-ग्रहणशक्त्युपघाते च, सन्दंशवधः कनिष्ठिकाङ्गुष्ठयोश्छेदनं दण्डः ।

प्रान्ते श्लोकमाह—एत इति । एत उक्ताः क्लेशदण्डाः, महात्मनां मन्वादीनां, शास्त्रेषु अनुगता अनुज्ञाता विहिताः । अक्लिष्टानाम् अदुष्कराणामल्पानामित्यर्थः, पापानां, शुद्धवधः अक्लेशदण्डः, धर्म्यः न्याय्यः, स्मृतः ॥

इति कौटलीयार्थशास्त्राव्याख्यायां कण्टकशोधने चतुर्थाधिकरणे
एकादशोऽध्यायः, शुद्धश्चित्रश्च दण्डकल्पः,
आदितोऽष्टाशीतितमः ॥

## सप्ताशीतितमं प्रकरणम्

### द्वादशोऽध्यायः

### कन्याप्रकर्म

[ पुरुषविशेषवरणात्प्राक्कन्यादूषणे दण्डाः ]

**सवर्णामप्राप्तफलां कन्यां प्रकुर्वतो हस्तवधश्चतुश्शतो वा दण्डः, मृतायां वधः। प्राप्तफलां प्रकुर्वतो मध्यमाप्रदेशिनीवधो द्विशतो वा दण्डः पितुश्चापहीनं दद्यात्। न च प्राकाम्यमकामायां लभेत। सकामायां चतुष्पञ्चाशत्पणो दण्डः, स्त्रियास्त्वर्धदण्डः।**

**परशुल्कावरुद्धायां हस्तवधश्चतुश्शतो वा दण्डः, शुल्कदानं च।**

[ वरणादूर्ध्वं वृतपुरुषनागमने भोगानुज्ञा ]

**सप्तार्तवप्रजातां वरणादूर्ध्वमलभमानां प्रकृत्य प्राकामी स्यात्।**

---

श्रीमूला

कन्याप्रकर्मेति सूत्रम्। कन्यायाः योनिक्षतेन दूषणमित्यर्थः। दण्डप्रस्तावात् तन्निमित्तो दण्डविधिरिहोच्यते।

सवर्णामित्यादि। अप्राप्तफलाम् अनुद्भिन्नपुष्पाम्। मृतायां योनिक्षतवशेन प्रमीतायां सत्याम्।

प्राप्तफलामित्यादि। मध्यमाप्रदेशिनीवधः ज्येष्ठातर्जन्योश्छेदः। पितुश्च अवहीनं नष्टं तत्प्रार्थितं, दद्यात्।

न चेत्यादि। अकामायां कन्यायां, प्राकाम्यम् इच्छापूर्तिं न च लभेत। अतो दण्डमात्रलाभफलं तद्रमणमित्युपदेशः। सकामायामिति। इच्छन्त्यां तस्यां, चतुष्पञ्चाशत्पणो दण्डः। स्त्रियास्तु, अर्धदण्डः सप्तविंशतिपणः।

परशुल्कावरुद्धायामिति। परशुल्कग्रहणप्रतिबद्धायां कन्यायां, हस्तवधः, चतुश्शतो वा दण्डः, अर्थात् प्रकुर्वतः। शुल्कदानं च पूर्वदत्तशुल्काय परस्मै कर्तव्यम्, पक्षद्वयेऽपि।

सप्तार्तवप्रजातामिति। सप्त आर्तवानि प्रजातानि यस्यास्तां तथाभूतां, वरणादूर्ध्वम् अलभमानां कृतवरणं पुरुषं तावन्तं कालमनासादयन्तीं, प्रकृत्य, प्राकामी प्राकाम्यवान् यथेच्छभोक्ता, स्यात्।

**न च पितुरपहीनं दद्यात् । ऋतुप्रतिरोधिभिः स्वाम्यादपक्रामति । त्रिवर्षप्रजातार्तवायास्तुल्यो गन्तुमदोषः, ततः परम् अतुल्योऽप्यनलङ्कृतायाः । पितृद्रव्याऽऽदाने स्तेयं भजेत ।**

[ प्रतिश्रुतयोर्वरकन्ययोर्विपर्यासकरणे दण्डाः ]

**परमुद्दिश्यान्यस्य विन्दतो द्विशतो दण्डः । न च प्राकाम्यमकामायां लभेत । कन्यामन्यां दर्शयित्वाऽन्यां प्रयच्छतः शत्यो दण्डस्तुल्यायां; हीनायां द्विगुणः ।**

[ क्षताक्षतयोन्योरक्षतक्षतयोनीकरणे दण्डाः ]

**प्रकर्मणि अकुमार्याश्चतुष्पञ्चाशत्पणो दण्डः, शुल्कव्ययकर्मणी च प्रतिदद्यात् अवस्थाय । तज्जातं पश्चात्कृता द्विगुणं दद्यात् ।**

**अन्यशोणितोपधाने द्विशतो दण्डः, मिथ्याभिशंसिनश्च पुंसः । शुल्कव्ययकर्मणी च जीयेत । न च प्राकाम्यमकामायां लभेत ।**

---

श्रीमूला

न च पितुः अवहीनं शुल्कं, दद्यात् । कुतः, ऋतुप्रतिरोधिभिः आर्तवरूपैस्तस्करैर्निमित्तभूतैः, स्वाम्याद् अपक्रामति स्वामित्वादपैति, पिता ।

त्रिवर्षप्रजातार्तवाया इति । वर्षत्रयोपजातरजस्काया विषये, तुल्यो गन्तुम् अदोषः सजातीयस्तां गच्छन् निर्दोषः । ततः परं वर्षत्रयादूर्ध्वम्, अतुल्योऽपि गन्तुम् अदोषः, अनलङ्कृतायाः पितृद्रव्यरहितायाः विषये । पितृद्रव्यादाने स्तेयं भजेतेति । पितृद्रव्यसहितायाः ग्रहणे चौर्यदण्डं प्राप्नुयात् ।

परमुद्दिश्येत्यादि । योऽभिप्रेतः स एवाहमित्यात्मानं व्यपदिश्य तदन्यस्य कन्यां विवहतो द्विशतो दण्डः । न च कामचारमकामायां तस्यां विन्देत ।

कन्यामन्यामित्यादि । तुल्यायां सजातीयायां सत्याम् । हीनायां हीनजातीयायां सत्याम् ।

प्रकर्मण्यकुमार्या इति । अकुमार्याः दत्ताया अक्षतयोनेः क्षतयोनीकरणे, चतुष्पञ्चाशत्पणो दण्डः । शुल्कव्ययकर्मणो च पूर्वप्रतिग्रहीतृदत्तं शुल्कं तत्कृतं कर्मव्ययं च, प्रतिदद्याद्, अवस्थाय विवाहप्रतिभुवे । पश्चात् कृता द्वितीयानन्तरं तृतीयेन स्वीकृता, तज्जातं दण्डं, द्विगुणम् अष्टोत्तरशतपणं, दद्यात् ।

अन्यशोणितोपधान इति । क्षतयोनित्वप्रदर्शनार्थम् । अन्यरुधिरस्य स्ववस्त्रलेपने, द्विशतो दण्डः, स्त्रियाः । मिथ्याभिशंसिनश्च पुंसः अक्षतयोनिमेव क्षतयोनिरिति मिथ्यावदतः पुरुषस्य च, द्विशतो दण्डः । शुल्कव्ययकर्मणी च जीयेत शुल्कं कर्मव्ययं च दाप्येत । न च प्रकाम्यमित्यादि प्रतीतम् ।

**स्त्री प्रकृता सकामा समाना द्वादशपणं दण्डं दद्यात्, प्रकर्त्री द्विगुणम् अकामायाश्शत्यो दण्डः आत्मरागार्थम्, शुल्कदानं च। स्वयं प्रकृता राजदास्यं गच्छेत्। बहिर्ग्रामस्य प्रकृतायां मिथ्याभिशंसिने च द्विगुणो दण्डः। प्रसह्य कन्यामपहरतो द्विशतः, ससुवर्णामुत्तमः। बहूनां कन्या-पहारिणां पृथग् यथोक्ता दण्डाः।**

**गणिकादुहितरं प्रकुर्वतश्चतुष्पञ्चाशत्पणो दण्डः; शुल्कं मातुर्भोगः षोडशगुणः।**

**दासस्य दास्या वा दुहितरमदासीं प्रकुर्वतश्चतुर्विंशतिपणो दण्डः शुल्काबन्ध्यदानं च। निष्क्रयानुरूपां दासीं प्रकुर्वतो द्वादशपणो दण्डः, वस्त्राबन्ध्यदानं च।**

**साचिव्यावकाशदाने कर्तृसमो दण्डः।**

---

श्रीमूला

स्त्रीति। सकामा समाना तुल्यजातीया स्त्री, प्रकृता क्षतयोनितां नीता, द्वादशपणं दण्डं दद्यात्। प्रकर्त्री तद्योनिक्षतिकर्त्री, द्विगुणं चतुर्विंशतिपणं दद्यात्। अकामायाः शत्यो दण्ड इत्यादि। अनिच्छन्त्या एव पुंसा स्वरागार्थं प्रकर्मणि कार्यमाणे, कारयितुः शत्यो दण्डः। शुल्कदानं च। स्वयं प्रकृता स्वयं कृतयोनिक्षतिः, राजदास्यं राजदासीभावं गच्छेत्।

बहिरिति। ग्रामस्य, बहिर्देशे विजने, प्रकृतायां सत्यां द्विगुणः चतुर्विंशतिपणो दण्डः, स्त्रियाः। मिथ्याभिशंसने च प्रकृत्य न प्रकृतेति मिथ्यावादे च द्विगुणो दण्डः, पुंसः।

प्रसह्य कन्यामित्यादि। उत्तमः साहसदण्डः। पृथक् प्रत्येकम्।

गणिकादुहितरमिति। तां प्रकुर्वतः, चतुष्पञ्चाशत्पणो दण्डः। शुल्कं मातुर्भोगः षोडशगुणः, शुल्कं मातुर्भोगम् उक्तदण्डषोडशगुणं चतुष्षष्ट्यधिकाष्टशतपणात्मकं भवति।

दासस्य दास्या वेत्यादि। शुल्कावन्ध्यदानं च शुल्काभरणयोर्दानं च। निष्क्रया-नुरूपां दास्यमोक्षणानुरूपां रूपादिमत्तया।

साचिव्यावकाशदान इति। कन्यादूषणं प्रति साहाय्यदाने प्रदेशदाने च, कर्तृसमो दूषकदण्डतुल्यो दण्डः।

[ पतिप्रवाससमये व्यभिचरन्त्याः स्त्रियाः
जारस्य तत्सहायानां च दण्डाः ]

**प्रोषितपतिकाम् अपचरन्तीं पतिबन्धुस्तत्पुरुषो वा सङ्गृह्णीयात् । सङ्गृहीता पतिमाकाङ्क्षेत । पतिश्चेत् क्षमेत, विसृज्येतोभयम् । अक्षमायां स्त्रियः कर्णनासाच्छेदनं वधं जारश्च प्राप्नुयात् ।**

**जारं 'चोर' इत्यभिहरतः पञ्चशतो दण्डः, हिरण्येन मुञ्चतस्तदष्टगुणः ।**

[ स्त्रीसङ्ग्रहणचिह्नानि ]

**केशाकेशिकं सङ्ग्रहणम्; उपलिङ्गनाद् वा शरीरोपभोगानां तज्जातेभ्यः, स्त्रीवचनाद् वा ।**

[ दण्डानर्हाः परस्त्रीग्रहणप्रकाराः ]

**परचक्राटवीहृतां ओघप्रव्यूढाम् अरण्येषु दुर्भिक्षे वा त्यक्तां प्रेतभावोत्सृष्टां वा परस्त्रियं निस्तारयित्वा यथासम्भाषितं समुपभुञ्जीत । जातिविशिष्टामकामामपत्यवतीं निष्क्रयेण दद्यात् ।**

---

श्रीमूला

प्रोषितपतिकामित्यादि । अपचरन्तीं व्यभिचरन्तीम् । तत्पुरुषः पतिभृत्यः । सङ्गृह्णीयात् नियम्य रक्षेत् । आकाङ्क्षेत प्रतीक्षेत । उभयं विसृज्येत जारो जारिणी च न दण्ड्येत ।

जारमित्यादि । अभिहरतः व्यभिचारगोपनार्थमभिवदतः । हिरण्येन मुञ्चतस्तदष्टगुण इति । हिरण्यमुत्कोचं गृहीत्वा जारं मुञ्चतो रक्षिपुरुषस्य गृहीतहिरण्याष्टगुणो दण्डः ।

सङ्ग्रहणज्ञानोपायमाह—केशाकेशिकं सङ्ग्रहणमिति । परस्परकेशग्रहणपुरस्सरारब्धा कामकेलिः केशाकेशि तदेव केशाकेशिकम्, तत् प्रत्यक्षदृष्टं कर्तृभूतम्, सङ्ग्रहणं बोधयतीति शेषः । उपलिङ्गनाद् वा शरीरोपभोगानां कस्तूर्याद्युपभोगलिङ्गदर्शनाद् वा, सङ्ग्रहणं जानीयात् । तज्जातेभ्यः तद्विषयेङ्गितज्ञेभ्यो जानीयात् । स्त्रीवचनाद् वा परामृष्टस्त्रीवाक्याद् वा जानीयात् ।

दण्डानर्हं परस्त्रीग्रहणप्रकारमाह—परचक्राटवीहृतामिति । परचक्रापहृताम् आटविकहृतां च, ओघप्रव्यूढां नदीप्रवाहनीताम्, अरण्येषु दुर्भिक्षे वा त्यक्ताम्, प्रेतभावोत्सृष्टां वा रोगोन्मूर्च्छनात् मृतत्वबुद्ध्या परित्यक्तां वा, परस्त्रियम्, निस्तारयित्वा विपदुत्तीर्णां कृत्वा, यथासम्भाषितं समुपभुञ्जीत परस्परसंविदनुरोधेन भार्यीकृत्य दासीकृत्य वा सम्यग् उपभुञ्जीत । इह निस्तारयित्वेति समासाकरणमार्षम् । जातिविशिष्टां जात्युत्कर्षवतीम्, अकामां सजातित्वेऽप्यकामाम्, अपत्यवतीम्, निष्क्रयेण दद्याद् निस्तरणश्रमवेतनग्रहणेन तत्स्वामिनेऽर्पयेत् ।

[ तन्निगमनम् ]

**चोरहस्तान्नदीवेगात् दुर्भिक्षाद् देशविभ्रमात् ।**
**निस्तारयित्वा कान्ताराद् नष्टां त्यक्तां मृतेति वा ॥१६९॥**
**भुञ्जीत स्त्रियमन्येषां यथासम्भाषितं नरः ।**
**न तु राजप्रतापेन प्रमुक्तां स्वजनेन वा ॥१७०॥**
**न चोत्तमां न चाकामां पूर्वापत्यवतीं न च ।**
**ईदृशीं चानुरूपेण निष्क्रयेणोपवाहयेत् ॥१७१॥**

॥ इति कण्टकशोधने कन्याप्रकर्म, द्वादशोऽध्यायः,
आदित एकोननवतिः ॥

---

श्रीमूला

अध्यायान्ते श्लोकमाह—चोरहस्तादित्यादि । राजप्रतापेन स्वजनेन वा प्रमुक्तां राजकोपत्यक्तां स्वजनपरित्यक्तां वा । न तु भुञ्जीतेत्यत्र सम्बन्धनीयम् । एवं तृतीय-श्लोकपूर्वार्धेऽपि न च भुञ्जीतेति योजनीयम् । ईदृशीम् उत्तमजातिम् अनिच्छन्तीं पूर्वापत्यवतीं च । अपवाहयेत् अपनाययेत् । प्रदापयेदिति क्वापि पाठः ।

॥ इति कौटलीयार्थशास्त्रव्याख्यायां कण्टकशोधने चतुर्थाधिकरणे
द्वादशोऽध्यायः, कन्याप्रकर्म,
आदित एकोननवतितमः ॥

# अष्टाशीतितमं प्रकरणम्

### त्रयोदशोऽध्यायः

### अतिचरणदण्डः

[ अभक्ष्यभक्षणे दण्डाः ]

**ब्राह्मणम् अपेयमभक्ष्यं वा सङ्ग्रासयत उत्तमो दण्डः, क्षत्रियं मध्यमः, वैश्यं पूर्वः साहसदण्डः, शूद्रं चतुष्पञ्चाशत्पणो दण्डः । स्वयं ग्रसितारो निर्विषयाः कार्याः ।**

[ अप्राप्तकालेषु परगृहप्रवेशे प्राकारकुड्याऽऽ-
रोहणभेदनयोश्च दण्डाः ]

**परगृहाभिगमने दिवा पूर्वः साहसदण्डः, रात्रौ मध्यमः । दिवा रात्रौ वा सशस्त्रस्य प्रविशत उत्तमो दण्डः । भिक्षुकवैदेहकौ मत्तोन्मत्तौ बलादापदि चातिसन्निकृष्टाः प्रवृत्तप्रवेशाश्चादण्ड्याः, अन्यत्र प्रतिषेधात् ।**

---

श्रीमूला

अतिचारदण्ड इति सूत्रम् । अतिचारस्य अभक्ष्यभक्षणागम्यागमनादेर्दण्डोऽभिधीयत इति सूत्रार्थः । चोरादिकण्टकशोधनकथनानन्तरमवशिष्टं स्वधर्मव्यतिक्रमिणां कण्टकानां शोधनमिह प्रतिपाद्यते ।

ब्राह्मणमपेयमित्यादि । सङ्ग्रासयतः सङ्ग्रासमानं प्रयोजयतः । शेषं स्फुटम् ।
स्वयङ्ग्रसितार इत्यादि । विनैव परप्रेरणाम् अपेयाभक्ष्यग्रासिनः, निर्विषयाः कार्याः देशान्निष्कासयितव्याः ।

परगृहाभिगमन इत्यादि । सशस्त्रस्य प्रविशतः, शस्त्रसहितस्य परगृहं प्रविशतः ।

भिक्षुकवैदेहकाविति । तौ, मत्तोन्मत्तौ बलाद् मधुपानविकृतचित्तः विभ्रान्तचित्तश्चेत्येतौ बलात्कारेण, आपदि च आपत्समये आपन्नाश्च, अतिसन्निकृष्टा बान्धवाः, प्रवृत्तप्रवेशाश्च सौहार्दारब्धप्रवेशाश्च, अदण्ड्याः, अर्थात् परगृहं प्रविशन्तः । कदा, अन्यत्र प्रतिषेधाद् गृहजनप्रतिषेधाभावे ।

**स्ववेश्मनोऽपि विरात्रादूर्ध्वं परिवार्यमारोहतः पूर्वः साहसदण्डः; परवेश्मनो मध्यमः, ग्रामारामवाटभेदिनश्च ।**

[ मुषितानामन्यत्र नीतानां च वणिग्द्रव्याणां
प्रत्यानयनव्यवस्थाः ]

**ग्रामेष्वन्तः सार्थिका ज्ञातसारा वसेयुः, मुषितं प्रवासितं चैषां अनिर्गतं रात्रौ ग्रामस्वामी दद्यात् । ग्रामान्तेषु वा मुषितं प्रवासितं विवीताध्यक्षो दद्यात्, अविवीतानां चोररज्जुकः । तथाप्यगुप्तानां सीमावरोधेन विचयं दद्युः, असीमावरोधे पञ्चग्रामी दशग्रामी वा ।**

[ जीर्णगृहाद्यसमीकरणेन हठाद्वृक्षशाखादिच्छेदनेन
च परहिंसायां दण्डाः ]

**दुर्बलं वेश्म, शकटमनुत्तब्धमूर्धस्तम्भं शस्त्रमनपाश्रयम् अप्रतिच्छन्नं श्वभ्रं कूपं कूटावपातं वा कृत्वा हिंसायां दण्डपारुष्यं विद्यात् ।**

---

श्रीमूला

स्ववेश्मन इति । स्वगृहस्य, विरात्रादूर्ध्वं रात्रियामापगमात् परतः, परिवार्यं प्राकारकुडयादिकम्, आरोहतः, पूर्वः साहसदण्डः । परवेश्मनः, परिवार्यमारोहतो मध्यमः । ग्रामारामवाटभेदिनश्च ग्रामवृत्तिमुपवनवृतिं च भित्त्वा ग्राममुपवनं च प्रविशतश्च, मध्यम इति सम्बध्यते ।

ग्रामेष्वन्तरित्यादि । सार्थिका वणिजो यदि ग्रामान्तर्वसेयुः, तर्हि स्ववशस्थितं सारद्रव्यं तद्ग्राममुख्यायावेद्येव वसेयुः । मुषितं प्रवासितं च अन्यत्र नीतं च, एषां सार्थिकानाम्, अनिर्गतं रात्रौ नक्तं ग्रामादबहिर्गतं ग्रामस्वामी दद्यात् । ग्रामान्तेषु ग्रामसीमासु, मुषितं प्रवासितं द्रव्यम्, विवीताध्यक्षो दद्यात् । अविवीतानां प्रदेशानां चोररज्जुकः चोरग्रहणनियुक्तः, दद्यात् । तथाप्यगुप्तानां तेन प्रकारेणाप्यरक्षितानां सीमावरोधविचयं दद्युः, यस्य सीमायां मोषणं जातं तत्सीमास्वामी यथा विचयं कुर्यात् तथावसरं दद्यु । असीमावरोधे सीमावरोधस्याप्यभावे, पञ्चगामी दशग्रामी वा, अर्थाद् मोषणदेशनिकटं दद्याद् मुष्टं प्रत्यानीय प्रतिपादयेत् ।

दुर्बलमिति । दुर्बलं जीर्णशीर्णकुडयम्, वेश्म गृहम्, कृत्वा, शकटम् अनुत्तब्धमूर्धस्तम्भम् अनुद्धृतशिरःस्थूणम्, कृत्वा, शस्त्रम्, अनपाश्रयम् असम्यग्बद्धोर्ध्वाधारम्, कृत्वा, अप्रतिच्छन्नम् अमृत्पूरितं श्वभ्रं गर्तं कूपं कूटावपातं वा कूटगर्तं वा, कृत्वा, हिंसायां दण्डपारुष्यं तद्विहितं दण्डं विद्याद् हिंसितुः ।

**वृक्षच्छेदने दम्यरश्मिहरणे चतुष्पदानामदान्तसेवने वाहने काष्ठ-लोष्टपाषाणदण्डबाणबाहुविक्षेपणेषु याने हस्तिना सङ्घट्टने च 'अपेहि' इति प्रक्रोशन् अदण्ड्यः ।**

[ हस्त्यादिना घातने दण्डाः, मुमूर्षुविषये विशेषश्च ]

**हस्तिना रोषितेन हतो द्रोणान्नं मद्यकुम्भं माल्यानुलेपनं दन्तप्रमार्जनं च पटं दद्यात् । अश्वमेधावभृथस्नानेन तुल्यो हस्तिना वध इति पादप्रक्षालनम् । उदासीनवधे यातुरुत्तमो दण्डः ।**

**शृङ्गिणा दंष्ट्रिणा वा हिंस्यमानमोक्षयतः स्वामिनः पूर्वः साहसदण्डः, प्रतिक्रुष्टस्य द्विगुणः ।**

[ पशूनां दुरुपयोगे, शकटादिभिः प्राणिहिंसासम्भवे
मारणादौ च दण्डाः ]

**शृङ्गिदंष्ट्रिभ्यामन्योन्यं घातयतस्तच्च तावच्च दण्डः ।**

---

श्रीमूला

वृक्षच्छेदन इति। वृक्षस्य छेदनावसरे, दम्यरश्मिहरणे दम्यनस्यबन्धनावसरे, चतुष्पदानाम्, अदान्तसेवने वाहने अदान्तशिक्षणार्थे वाहने, काष्ठलोष्टपाषाणदण्ड-बाणबाहुविक्षेपणेषु कलहायमानयोरन्योन्यं प्रति काष्ठलोष्टादिप्रेरणावसरेषु, याने हस्तिना च गजमारुह्य गमनावसरे च, सङ्घट्टने छिन्नवृक्षसङ्घट्टनादितोऽङ्गभङ्गादि-प्रसङ्गे, 'अपेही'ति प्रक्रोशन्, सङ्घट्टनप्राप्तेः पूर्वमेव 'अपसरापसरे'ति प्रकर्षेण क्रोशन्, अदण्ड्यः ।

हस्तिना रोषितेन हत इति। गजेन तद्गमनमार्गाभिमुखशयनकोपितेन हतः, द्रोणान्नं द्रोणपरिमाणमोदनम्, कुम्भं मद्यकुम्भम्, माल्यानुलेपनम्, दन्तप्रमार्जनं पटं च दन्तसक्तासृक्प्रसृष्टिसाधनं वस्त्रं च, दद्याद् हस्तिने। तेन हस्तिसकाशादात्मघात-मिच्छता पूर्वसज्जितं द्रोणान्नादिकं तन्मरणानन्तरं तदीयो बन्धुर्दद्यादित्यर्थः। कस्मादेवं हन्ता पूज्यत इत्यत्राह--अश्वमेधावभृथस्थानेनेति। अश्वमेधयज्ञान्तस्नानेन, तुल्यः तुल्यपुण्यः, हस्तिना वध इति हेतोः, पादप्रक्षालनं हस्तिनः पूजाविशेषोऽय-मित्यर्थः। अरोषयितृवधे हस्त्यारोहस्योत्तमसाहसो दण्ड इत्यत आह—उदासीनेत्यादि।

शृङ्गिणेति। शृङ्गिणा गवादिना, दंष्ट्रिणा वाश्वादिना, हिंस्यमानम्, अमोक्षयतः, स्वामिनः हिंसकस्वामिनः, पूर्वः साहसदण्डः। 'हिंसन्तं मारये'त्यप्रतिक्रुष्ट-स्यायं दण्डः, प्रतिक्रुष्टस्य त्वाह–प्रतिक्रुष्टस्य द्विगुण इति।

शृङ्गिदंष्ट्रिभ्यामिति। ताभ्याम्, अन्योन्यं शृङ्गिणा दंष्ट्रिणं शृङ्गिणं च, घातयतः, तच्च तावच्च तन्मूल्यं तत्परिमाणमन्यच्च द्रव्यं दण्डः।

**देवपशुमृषभमुक्षाणं गोकुमारीं वा वाहयतः पञ्चशतो दण्डः, प्रवासयत उत्तमः । लोमदोहवाहनप्रजननोपकारिणां क्षुद्रपशूनामादाने तच्च तावच्च दण्डः, प्रवासने च; अन्यत्र देवपितृकार्येभ्यः ।**

**छिन्ननस्यं भग्नयुगं तिर्यक्प्रतिमुखागतं प्रत्यासरद् वा चक्रयुक्तं यानपशुमनुष्यसम्बाधे वा हिंसायामदण्ड्यः । अन्यथा यथोक्तं मानुषप्राणिहिंसायां दण्डमभ्यावहेत् अमानुषप्राणिवधे प्राणिदानं च । बाले यातरि यानस्थः स्वामी दण्ड्यः; अस्वामिनि यानस्थः प्राप्तव्यवहारो वा याता । बालाधिष्ठितमपुरुषं वा यानं राजा हरेत् ।**

[ वशीकरणविशेषाभ्यनुज्ञा, (विस्तरेण)
अगम्यागमने दण्डविशेषाश्च ]

**कृत्याभिचाराभ्यां यत् परमापादयेत्, तदापादयितव्यः ।**

---

श्रीमूला

देवपशुमिति । देवसम्बन्धिनं पशुम्, ऋषभम्, उक्षाणं देवगोवृन्दसेक्तारं पुङ्गवं गोकुमारीं वा, वाहयतो हरतः, पञ्चशतो दण्डः । प्रवासयतो मारयतः, उत्तमः ।

लोमदोहवाहनप्रजननोपकारिणामिति । ऊर्णादिदानोपकारिणां क्षुद्रपशूनां मेषादीनाम्, आदाने अपहरणे, तच्च तावच्च दण्डः । प्रवासने च, तच्च तावच्च दण्डः । अन्यत्र देवपितृकार्येभ्यः, देवपितृकार्यार्थे प्रवासने तु न दोषः ।

छिन्ननस्यमिति । छिन्नबलीवर्दनासारज्जुकं भग्नयुगं भग्नेषान्तदारुकं तिर्यक्प्रतिमुखागतं च, तिर्यगागतमभिमुखागतं च, प्रत्यासरद् वा पश्चादपसरद् वा, चक्रयुक्तं शकटं यदा भवति तदेति शेषः, यानपशुमनुष्यसम्बाधे वा तत इतो गच्छतां यानपश्वादीनां भ्रमणसङ्कटे वा हिंसायां पशुमनुष्यवधसम्भवे, अदण्ड्यः शाकटिकः । अन्यथा छिन्ननस्यत्वाद्यभावे, मानुषप्राणिहिंसायां यथोक्तं दण्डम् अभ्यावहेत् । अमानुषप्राणिवधे अजकुक्कुटादिवधे प्राणिदानं च, कार्यम् ।

बाले यातरि अप्राप्तव्यवहारे सति, यानस्थः स्वामी दण्ड्यः, शकटनिमित्तप्राप्यतासम्भवे । अस्वामिनि याने, यानस्थो दण्ड्यः, प्राप्तव्यवहारो याता वा यन्ता वा दण्ड्यः । बालाधिष्ठितमपुरुषं वेति । बालयन्तृकं प्रधानपुरुषरहितं वा, यानम्, राजा हरेत् ।

कृत्याभिचाराभ्यामिति । ताभ्यां यद् मारणस्तम्भनादि, परम् अन्यजनम्, आपादयेत् प्रापयेत्, तद्, आपादयितव्यः, अर्थात् कृत्याभिचारकारकः ।

**कामं भार्यायामनिच्छन्त्यां कन्यायां वा दारार्थिनां भर्तरि भार्याया वा संवननकरणम् । अन्यथा हिंसायां मध्यमः साहसदण्डः ।**

**मातापित्रोर्भगिनीं मातुलानीमाचार्याणीं स्नुषां दुहितरं भगिनीं वाऽधि(भि)चरतः त्रिलिङ्गच्छेदनं वधश्च । सकामा तदेव लभेत, दासपरिचारकाहितकभुक्ता च ।**

**ब्राह्मण्यामगुप्तायां क्षत्रियस्योत्तमः, सर्वस्वं वैश्यस्य; शूद्रः कटाग्निना दह्येत । सर्वत्र राजभार्यागमने कुम्भीपाकः ।**

**श्वपाकीगमने कृतकबन्धाङ्कः परविषयं गच्छेत्, श्वपाकत्वं वा शूद्रः श्वपाकस्याऽऽर्यागमने वधः, स्त्रियाः कर्णनासाच्छेदनम् ।**

**प्रव्रजितागमने चतुर्विंशतिपणो दण्डः सकामा तदेव लभेत ।**

**रूपजीवायाः प्रसह्योपभोगे द्वादशपणो दण्डः ।**

**बहूनामेकामधिचरतां पृथक् चतुर्विंशतिपणो दण्डः ॥**

---

श्रीमूला

भार्यायामनिच्छन्त्यां विषये भर्तुः संवननकरणम्, कन्यायामनिच्छन्त्यां दारार्थिनां संवननकरणम्, भर्तरि अनिच्छति भार्यायाः संवननकरणं चाभ्यनुजानाति– कामं भार्यायामित्यादि । अन्यथा उक्तातिरिक्तविषये, हिंसायां संवननादिना हिंसने, मध्यमः साहसदण्डः ।

मातापित्रोर्भगिनीमित्यादि । मातुलानीं मातुलभार्याम् । आचार्यानीम् आचार्यपत्नीम् । त्रिलिङ्गच्छेदनं मेढ्रमुष्कच्छेदनम् । सकामा तदेव लभेतेति । मातापितृभगिन्यादिः सकामा चेत् त्रिलिङ्गच्छेदनं सस्तनभगच्छेदनम्, वधं च लभेत । दासपरिचारिकाहितकभुक्ता च तदेव लभेत तुल्यन्यायाद् दासादिरपि तदेव लभेत ।

ब्राह्मण्यामगुप्तायामिति । तस्यां स्वतन्त्रायां क्षत्रियस्य गन्तुमुत्तमः साहसदण्डः । सर्वस्वं सर्वस्वहरणं वैश्यस्य दण्डः । शूद्रो ब्राह्मणीगन्ता, कटाग्निना दह्येत अग्निप्रदीपनेन नगरं परिगमय्य दग्धव्यः । सर्वत्र क्षत्रियादिषु सर्वेषु विषये, राजभार्यागमने, कुम्भीपाकस्तप्तभ्राष्ट्रभर्जनं दण्डः ।

श्वपाकीगमन इत्यादि पुरुषमधिमेहतश्चेत्येतदन्तं वाक्याष्टकं सुबोधम् ।

[ अयोनौ तिर्यग्योनौ च गन्तॄणां दण्डाः ]

**स्त्रियमयोनौ गच्छतः पूर्वः साहसदण्डः, पुरुषमधिमेहतश्च ।**

**मैथुने द्वादशपणः तिर्यग्योनिष्वनात्मनः ।**
**दैवतप्रतिमानां च गमने द्विगुणः स्मृतः ॥१७२॥**

[ दण्डानर्हदण्डने राज्ञः प्रायश्चित्तविधानम् ]

**अदण्ड्यदण्डने राज्ञो दण्डस्त्रिंशद्गुणोऽम्भसि ।**
**वरुणाय प्रदातव्यो ब्राह्मणेभ्यस्ततः परम् ॥१७३॥**
**तेन तत् पूयते पापं राज्ञो दण्डापचारजम् ।**
**शास्ता हि वरुणो राजा मिथ्याव्याचरतां नृषु ॥१७४॥**

॥ इति कण्टकशोधने अतिचरणदण्डः, त्रयोदशोऽध्यायः,
आदितः नवतिः,
एतावता कौटलीयस्यार्थशास्त्रस्य कण्टकशोधनं
चतुर्थमधिकरणं समाप्तम् ॥

---

श्रीमूला

**मैथुन** इत्यादि । तिर्यग्योनिषु गवादियोनिषु । अनात्मनः दुरात्मनः । **द्विगुणः** चतुर्विंशतिपणः ।

**अदण्ड्यदण्डन** इति । दण्डानर्हस्य दण्डने, राज्ञो दण्डस्त्रिंशद्गुणः, गृहीताद् दण्डात्; स कस्मै दातव्यः, अम्भसि वरुणाय प्रदातव्यः, जले वरुणमुद्दिश्य प्रक्षेप्तव्यः । ततः परं ब्राह्मणेभ्यः, प्रदातव्यः ।

**तेनेति** । तेन तथा प्रदानेन, राज्ञो दण्डापचारजं दण्डान्यथाप्रणयनजनितं तत् पापं पूयते शोध्यते । लूयत इति पाठे छिद्यत इत्यर्थः । कस्माद् वरुणाय दानेन राजपापं पूयते, हि यस्मात् कारणात्, वरुणः, नृषु, मिथ्या अनृतम्, व्याचरतां विविधमाचरतां राज्ञां शास्ता शासकः । 'मिथ्या च चरताम्' इत्यपि पाठः ।

व्याख्यायामर्थशास्त्रस्य श्रीमूलाख्यानभाजने ।
इत्थं तुर्याधिकरणं पूर्णं कण्टकशोधनम् ॥

॥ इति श्रीवञ्चिमण्डलमहाराजाश्रितस्य ताम्रपर्णीतीरवर्तितरुवाग्रहाराभिजनस्य श्रीसीताम्बाश्रीरामसुब्रह्मण्यार्यसूनोर्महामहोपाध्यायगणपतिशास्त्रिणः कृतिषु कौटलीयार्थशास्त्रव्याख्यायां श्रीमूलाख्यायां कण्टकशोधने चतुर्थाधिकरणे त्रयोदशोऽध्यायः, अतिचरणदण्डः, आदितो नवतितमः ॥

॥ इति कण्टकशोधनं नाम चतुर्थमधिकरणं समाप्तम् ॥

# अथ योगवृत्तं नाम पञ्चममधिकरणम्

## एकोननवतितमं प्रकरणम्

### प्रथमोऽध्यायः

### दाण्डकर्मिकम्

[ राज्यभेदकेषूपजापापसर्पयोरावश्यकता ]

**दुर्गराष्ट्रयोः कण्टकशोधनमुक्तम्; राजराज्ययोर्वक्ष्यामः ।**

---

श्रीमूला

अथ योगवृत्ताख्यं पञ्चममधिकरणमारभ्यते । योगानां सत्रितीक्ष्णरसदादीनां वृत्तमनुष्ठानं योगवृत्तं तत्प्रतिपादकत्वादस्याधिकरणस्य योगवृत्तमिति संज्ञा । यद्यपीदं दाण्डकर्मिकप्रकरणात्मना पर्यवस्यति, तथाप्या समाप्तेर्योगवृत्तस्य प्रतिपादनात् तत्प्राधान्यादस्याधिकरणस्य हस्तिवनवद् योगवृत्तव्यपदेशः । दण्डकर्मप्रतिपादकत्वसामान्येऽपि च नेदं पूर्वाधिकरणे प्रवेशितम्; किन्तु तस्मात् पृथक्कृतं कर्तृभेदात् कण्टकभेदादुपायभेदाच्छोधनीयभेदाच्च । कण्टकशोधने हि प्रदेष्टृप्रभृतयः कर्तारः, कारुकवैदेहकादयः कण्टकाः, शङ्कारूपकर्माभिग्रहशुद्धचित्रवधादय उपायाः, दुर्गराष्ट्रे च शोधनीये । अत्र तु गूढपुरुषसहितो राजा कर्ता, राजावग्रहोपजीवना राष्ट्रमुख्यादयः कण्टकाः, उपांशुदण्ड उपायः, नृपतिरमात्याश्च शोधनीया इति ।

अथ प्रथमं सूत्रम्—दाण्डकर्मिकमिति । दण्ड उपांशुवधः तस्य कर्म प्रयोगो दण्डकर्म तदधिकृत्य प्रवृत्तमिति सूत्रार्थः । पूर्वस्मिन् प्रकरणे शुद्धचित्रवधादयः प्रकाशदण्डा विभज्य दर्शिताः, तत्प्रयोगाविषये अवश्यशोधने प्रयोक्तव्यस्तूष्णीन्दण्ड इहाभिधीयत इति प्रकरणसङ्गतिः ।

अधिकरणसङ्गतिं सूचयन् प्रकरणार्थं वक्तुमारभते—दुर्गराष्ट्रयोरित्यादि । दुर्गं स्थानीयादि राष्ट्रं जनपदादि तयोः, कण्टकशोधनम् उक्तम्, गतेऽधिकरणे । राजराज्ययोः राजा स्वामी राज्यममात्यादि तयोः, कण्टकशोधनं वक्ष्यामः, अस्मिन्नधिकरणे ।

**राजानमवगृह्योपजीविनः शत्रुसाधारणा वा ये मुख्यास्तेषु गूढपुरुषप्रणिधिः कृत्यपक्षोपग्रहो वा सिद्धिः—यथोक्तं पुरस्तादुपजापोऽपसर्पो वा, यथा च पारग्रामिके वक्ष्यामः।**

[ राज्यघातिषूपांशुदण्डप्रयोगाः दशविधाः ]

**राज्योपघातिनस्तु वल्लभास्संहता वा ये मुख्याः प्रकाशमशक्याः प्रतिषेद्धुं दूष्याः, तेषु धर्मरुचिरुपांशुदण्डं प्रयुञ्जीत।**

**(१) दूष्यमहामात्रभ्रातरं सत्कृतं सत्री प्रोत्साह्य राजानं दर्शयेत्। तं राजा दूष्यद्रव्योपभोगातिसर्गेण दूष्ये विक्रमयेत्। शस्त्रेण रसेन वा विक्रान्तं तत्रैव घातयेत् 'भ्रातृघातकोऽयम्' इति।**

---

श्रीमूला

तत्रादौ राजकण्टकान् प्रस्तौति—राजानमिति। तम्, अवगृह्य अधःकृत्य उपजीविनः, शत्रुसाधारणा वा उभयवेतनाश्च, ये मुख्याः मन्त्रिपुरोहितसेनापतियुवराजादयः प्रधानपुरुषाः, तेषु गूढपुरुषप्रणिधिः गूढपुरुषप्रणिधानम्, सिद्धिः छेदः—शत्रूच्छेदहेतुत्वात् सिद्धिरित्याख्यायते, कृत्यपक्षोपग्रहो वा कृत्याः शत्रोः क्रुद्धलुब्धभीतादयस्तेषां स्वीकारश्च, सिद्धिः शत्रूच्छेदहेतुत्वात्। तत्स्वीकारः कथं कर्तव्यः, यथोक्तं पुरस्तात् पूर्वं गूढपुरुषप्रणिध्युक्तेन प्रकारेण कर्तव्यः। कोऽसौ, उपजापोऽपसर्पो वा। यथा च पारग्रामिके वक्ष्याम इति। दुर्गलम्भाधिकरणीयपारग्रामिकप्रस्तावे उपजापापसर्पप्रणिधिप्रकरणयोर्यं प्रकारं वक्ष्यामस्तेन च प्रकारेणोपजापोऽपसर्पो वा कर्तव्यः।

राज्योपघातिन आह—राज्योपघातिनस्त्विति। राज्योपहन्तारः, वल्लभा अध्यक्षाः, संहता वा मुख्याः संहत्यकृतैकमत्यसङ्केता अमात्यादयः प्रधानपुरुषाश्च, ये, प्रकाशमशक्याः प्रतिषेद्धुं राज्योपघातकप्रवृत्तेः साक्षाद् वारयितुमशक्याः, अत एव दूष्याः कथमप्युपहन्तव्या भवन्ति, तेषु धर्मरुचिः उपघातकपरिहारेण राज्यक्षेमचिकीर्षुः, उपांशुदण्डं तूष्णींदण्डं प्रयुञ्जीत।

उपांशुदण्डप्रकारमाह—दूष्यमहामात्रभ्रातरमित्यादि। दूषणीयस्य हस्त्यारोहाध्यक्षस्य भ्रातरमलब्धदायांशं सत्कारपूर्वं सत्री स्वभ्रातृसकाशाद् भेदयित्वा 'कण्टकशोधना द्वारं ते राजा दास्यती'ति प्रोत्साह्य राजानं दर्शयेत्। तमिति। तथा दर्शितं दूष्यद्रव्योपभोगातिसर्गेण दूष्यनिग्रहार्थशस्त्रभटाद्युपकरणद्रव्यदानेन, दूष्ये, विक्रमयेद् विक्रमाय प्रेरयेत्। शस्त्रेण, रसेन वा, विक्रान्तं भ्रातरि प्रयुक्तविक्रमं तं, तत्रैव तस्मिन्नेवापराधे निमित्ते, भ्रातृघातकोऽयमिति प्रख्याप्येति शेषः, घातयेत्।

**तेन पारशवः परिचारिकापुत्रश्च व्याख्यातौ ।**

**(२) दूष्यमहामात्रं वा सत्रिप्रोत्साहितो भ्राता दायं याचेत । तं दूष्यगृहप्रतिद्वारि रात्रावुपशयानं अन्यत्र वा वसन्तं तीक्ष्णो हत्वा ब्रूयात्— 'हतोऽयं दायकामुकः' इति । ततो हतपक्षं परिगृह्येतरं निगृह्णीयात् ।**

**(३) दूष्यसमीपस्था वा सत्रिणो भ्रातरं दायं याचमानं घातेन परिभर्त्सयेयुः । तं रात्राविति समानम् ।**

**(४) दूष्यमहामात्रयोर्वा यः पुत्रः पितुः, पिता वा पुत्रस्य दारानधिचरति, भ्राता वा भ्रातुः, तयोः कापटिकमुखः कलहः पूर्वेण व्याख्यातः ।**

**(५) दूष्यमहामात्रपुत्रमात्मसम्भावितं वा सत्री 'राजपुत्रस्त्वं शत्रुभयादिह न्यस्तोऽसि' इत्युपजपेत् । प्रतिपन्नं राजा रहसि पूजयेत्—'प्राप्त-**

---

श्रीमूला

तेन पारशव इत्यादि । उक्तेन प्रकारेण महामात्रस्यावरवर्णापुत्रं परिचारिकापुत्रं च प्रोत्साहितानीतं दूष्यद्रव्योपभोगातिसर्गेण पितरि विक्रान्तं कात्वा पितृघातकोऽयमिति प्रख्याप्य घातयेदित्यर्थः ।

प्रकारान्तरमाह—दूष्यं महामात्रं वेत्यादि । अन्यत्र वा दूष्यगृहप्रतिद्वारातिरिक्तप्रदेशे वा । तीक्ष्णो हिंस्राचारश्चारभेदो गूढपुरुषप्रणिध्युक्तः । हतपक्षं परिगृह्य हतस्य बन्धून् पुत्रमातुलादीन् आनाय्य । इतरं निगृह्णीयाद् महामात्रं घातयेद् भ्रातृघातक इति ख्यापयन् ।

प्रकारान्तरमाह—दूष्येत्यादि । दूष्यसमीपस्थाः दूष्यसेवकलिङ्गाः । घातेन परिभर्त्सयेयुः 'दायमपेक्षस्व अन्यथा त्वां हनिष्यामः' इति वादेनोद्वेजयेयुः । तं रात्राविति समानमिति । 'तं रात्रौ दूष्यगृहप्रतिद्वारि उपशयानमन्यत्र वा वसन्तं तीक्ष्णो हत्वा ब्रूयात् 'हतोऽयं दायकामुक इति, ततो हतपक्षं परिगृह्य महामात्रं निगृह्णीयादि'-त्येतत् पूर्वोक्तमिहापि तुल्यं द्रष्टव्यमित्यर्थः ।

दूष्यमहामात्रयोर्वेति । दूष्यस्य महामात्रस्य वा, यः पुत्रः पितुर्दारान् अधिचरति अधिगच्छति, पिता वा पुत्रस्य दारान् अधिगच्छति,भ्राता वा भ्रातृदारान् अधिगच्छति, तयोः पितापुत्रयोर्भ्रात्रोर्वा, कापटिकमुखः कापटिकाख्यचारप्रणिधानद्वारकः कलहः, पूर्वेण पूर्वोक्तेन प्रकारेण व्याख्यातः । तत्रान्यतरस्य वधे कृते शेषवधः प्राग्वद् द्रष्टव्य इत्यर्थः ।

प्रकारान्तरमाह—दूष्यमहामात्रपुत्रमित्यादि । दूष्यस्य महामात्रस्य च पुत्रम्, आत्मसम्भावितं शौर्यौदार्यादिगुणसम्पन्नम्मन्यम्, सत्री उपचरेत्, कथमिति, 'राजपुत्रस्त्वं शत्रुभयाद् इह महामात्रे न्यस्तोऽसी'ति । प्रतिपन्नं सत्रिवचनमङ्गीकृत्यागतम्, राजा

**यौवराज्यकालं त्वां महामात्रभयान्नाभिषिञ्चामि' इति । तं सत्री महामात्रवधे योजयेत्, विक्रान्तं तत्रैव घातयेत्—'पितृघातकोऽयम्' इति ।**

**(६) भिक्षुकी वा दूष्यभार्या सांवननिकीभिरोषधीभिः संवास्य रसेनातिसन्दध्यात् । इत्याप्यप्रयोगः ।**

**(७) दूष्यमहामात्रमटवीं परग्रामं वा हन्तुम्, कान्तारव्यवहिते वा देशे राष्ट्रपालमन्तपालं वा स्थापयितुम्, नागरस्थानं वा कुपितमवग्रहीतुम्, सार्थातिवाह्यं प्रत्यन्ते वा सप्रत्यादेयमादातुं फल्गु बलं तीक्ष्णयुक्तं प्रेषयेत् । रात्रौ दिवा वा युद्धे प्रवृत्ते तीक्ष्णाः प्रतिरोधकव्यञ्जना वा हन्युः—'अभियोगे हतः' इति ।**

---

श्रीमूला

रहसि पूजयेत्, किमित्युक्त्वा, 'प्राप्तयौवराज्यकालं त्वां महामात्रभयाद् महामात्रो राज्यकामुकस्त्वामभिषिक्तं सद्यो हन्यादिति शङ्कया, नाभिषिञ्चामि' इत्युक्त्वा । तं राजकृतोपजापप्रवणम्, सत्री, महामात्रवधे, योजयेत् । विक्रान्तं हतपितृकम्, तत्रैव तस्मिन्नेव निमित्ते, घातयेद् राजा, पितृघातकोऽयमिति ख्यापयन्निति शेषः । हतेऽपि दूष्ये हन्तुर्वधोऽयमुपदिश्यते स कालान्तरे भूतार्थवेदी भूत्वा शत्रुर्मा भूदित्येतदर्थम् ।

भिक्षुकी वेति । सा वा, चारभूता, दूष्यभार्या दूष्यस्य महामात्रादेर्भार्या मन्दसौन्दर्या, सांवननिकीभिः संवननफलाभिः, ओषधीभिः, निमित्तभूताभिः, स्वगततथाविधौषधिप्रयोगनिपुणताख्यानेनेत्यर्थः । संवास्य आत्मपरिचयं कारयित्वा, रसेन विषेण, अतिसन्दध्यात् वञ्चयेत्, संवननौषधव्याजेन विषं भार्याद्वारा ग्रासयित्वा दूष्यं हन्यादित्यर्थः । इत्याप्यप्रयोग इति । एवं क्रियमाणमतिसन्धानम् आप्यप्रयोग इत्याख्यायते ।

दूष्यमहामात्रमिति । दूष्यं महामात्रम्, आटवीम् अटवीपालम्, परग्रामं वा पारग्रामिकान् वा हन्तुं कान्तारव्यवहिते वा देशे दुर्गमारण्यान्तरिते देशे वा, राष्ट्रपालं स्थापयितुम्, अन्तपालं वा स्थापयितुम्, नागरस्थानं वा, कुपितम्, अवग्रहीतुं नियन्तुम्, प्रत्यन्ते वा सार्थातिवाह्यं सार्थातिवाहनयोग्यं स्थलम्, सप्रत्यादेयं प्रत्यादेयं परस्तात् पूर्वं गृहीतं पुनः प्रतिग्रहीतव्यं स्थलं तत्सहितम्, आदातुम्, फल्गु बलम् अल्पं सैन्यम्, तीक्ष्णयुक्तं तीक्ष्णैरुपेतम्, प्रेषयेत् । रात्रौ दिवा वा युद्धे प्रवृत्ते, तीक्ष्णाः प्रतिरोधकव्यञ्जनाः चोरवेषास्तीक्ष्णाः, हन्युः अभियोगे युद्धे हत इति । अर्थात् पूर्वोक्तं हन्तव्यं जनम् । वाशब्दः प्रकारविकल्पे ।

**(८) यात्राविहारगतो वा दूष्यमहामात्रान् दर्शनायाह्वयेत् । ते गूढशस्त्रैस्तीक्ष्णैस्सह प्रविष्टा मध्यमकक्ष्यामात्मविचयमन्तः प्रवेशनार्थं दद्युः । ततो दौवारिकाभिगृहीतास्तीक्ष्णाः 'दूष्यप्रयुक्ताः स्मः' इति ब्रूयुः । ते तदाभिविख्याप्य दूष्यान् हन्युः । तीक्ष्णस्थाने चान्ये वध्याः ।**

**(९) बहिर्विहारगतो वा दूष्यान् आसन्नावासान् पूजयेत् । तेषां देवीव्यञ्जना वा दुःस्त्री रात्रावावासेषु गृह्येतेति समानं पूर्वेण ।**

**(१०) दूष्यमहामात्रं वा 'सूदो भक्षकरो वा ते शोभनः' इति स्तवेन भक्षभोज्यं याचेत, बहिर्वा क्वचिदध्वगतः पानीयम् । तदुभयं रसेन योजयित्वा प्रतिस्वादने तावेवोपयोजयेत् । तदभिविख्याप्य 'रसदौ' इति घातयेत् ।**

---

श्रीमूला

उपायान्तरमाह—यात्राविहारगतो वेत्यादि । अयमर्थः—राजकुलमशस्त्रेण प्रवेष्टव्यमित्याघोषणे स्थिते जातु प्रस्तुतयात्राविहारो दूष्यमहामात्रान् राजा दर्शनायाह्वयेत् । तैः सह राजकुलं निगूढशस्त्रास्तीक्ष्णाः राजदत्तपूर्वसङ्केताः प्रविश्य प्रथमद्वारमतीत्य द्वितीयकक्ष्याद्वारं गता द्वाराधिकृतैः सशस्त्राशस्त्रपरीक्षणं कुर्वद्भिः 'कुतो यूयं सशस्त्राः' इति पृष्टाः 'नृपतिवधाय महामात्रेण प्रेरिता वयम्' इति वदेयुः । ततस्तं दोषं प्रख्याप्य महामात्रान् राजा घातयेत्, तीक्ष्णानां स्थाने चान्यांस्तीक्ष्णापदेशेन घातयेदिति ।

बहिरित्यादि । बहिर्विहारगतः दुर्गबाह्यग्रामनगरादिदर्शनार्थं गतः, दूष्यान् आसन्नावासान् राजवासस्थानाभ्यर्णस्थानवासिनः, पूजयेत् पौनःपुनिकसन्दर्शनसम्भाषणसम्भोजनादिना सत्कुर्यात् स्नेहख्यापनार्थम् । स्नेहख्यापनं तु वक्ष्यमाणो वधप्रयोगः पारमार्थिकमहापराधनिमित्तो न द्वेषनिमित्त इति लोकप्रत्ययार्थम् । तेषां देवीव्यञ्जना वा दुःस्त्री रात्रावावासेषु गृह्येतेति । पुंश्चलीं काञ्चिद् राजभार्याव्यञ्जनां कृत्वा रात्रौ दूष्याणामावासेषु सम्प्रेष्य स्वगृहादर्शनसंरम्भाभिनयेन स्वनिवासासन्नगृहेषु सपदि स्वभटैः कारितान्वेषणां कृत्वा दूष्यगृहाद् राजा ग्राहयेत् । इति समानं पूर्वेणेति । एवमादि पूर्वोक्तेन तुल्यम्, तच्च तमिमं देवीकामुकत्वदोषं घातयेदित्येवंरूपम् ।

प्रकारमन्यमाह—दूष्यमहामात्रमित्यादि । शोभनः सुष्ठुकारी । याचेत राजा । बहिर्वा मृगयाप्रदेशे वा । तदुभयं रसेन योजयित्वा महामात्रदत्तं भक्ष्यभोज्यं विषेण योजयित्वा पानीयं च विषेण योजयित्वा प्रतिस्वादने अग्रग्रसने । तावेव भक्ष्यभोज्यदायिनं पानीयदायिनं च । रसदौ अर्थात् भक्ष्यभोज्यदापकः पानीयदापकश्चेत्येतौ ।

[ अभिचारशीलानां दूष्याणां
निग्रहक्रमः त्रिविधः ]

**(१) अभिचारशीलं वा सिद्धव्यञ्जनो 'गोधाकूर्मकर्कटकूटानां लक्षण्यानामन्यतमप्राशनेन मनोरथानवाप्स्यसि' इति ग्राहयेत् । प्रतिपन्नं कर्मणि रसेन लोहमुसलैर्वा घातयेत्—'कर्मव्यापदा हतः' इति ।**

**(२) चिकित्सकव्यञ्जनो वा दौरात्मिकमसाध्यं वा व्याधिं दूष्यस्य स्थापयित्वा भैषज्याहारयोगेषु रसेनातिसन्दध्यात् ।**

**(३) सूदारालिकव्यञ्जना वा प्रणिहिता दूष्यं रसेनातिसन्दध्युः—इत्युपनिषत्प्रतिषेधः ।**

[ एकेनैव यत्नेन दूष्यपक्षद्वय-
निग्रहप्रकाराः षट् ]

**उभयदूष्यप्रतिषेधस्तु—**

**(१) यत्र दूष्यः प्रतिषेद्धव्यस्तत्र दूष्यमेव फल्गुबलतीक्ष्णयुक्तं प्रेषयेत्—**

---

श्रीमूला

अभिचारशीलदूष्यनिग्रहोपायमाह—अभिचारशीलं वेत्यादि । तथाविधं दूष्यम्, सिद्धव्यञ्जनः, गोधाकूर्मकर्कटककूटानां गोधा निहाका कूर्मकर्कटकौ प्रसिद्धौ कूटो भग्नशृङ्गमृगः इत्येतेषां लक्षण्यानां लक्षणयुक्तानाम्, अन्यतमप्राशनेन अन्यतमस्य श्मशानाग्निहुतावशिष्टस्य भक्षणेन, मनोरथान्, अवाप्स्यसि, इति ग्राहयेत् बोधयेत् । प्रतिपन्नं तथेति कृताभ्युपगमम्, कर्मणि तथाविधहोमे वर्तमाने रसेन विषप्राशनेन, लोहमुसलैर्वा, घातयेत् । कर्मव्यापदा हत इति कर्मवैगुण्येन पिशाचादिना हत इति ख्यापयन् ।

चिकित्सकव्यञ्जनो वेति । दौरात्मिकं दुर्वृत्तकृतम्, असाध्यम् अप्रतिकार्यं वा, व्याधिं दूष्यस्य स्थापयित्वा, भैषज्याहारयोगेषु औषधाभ्यवहारप्रयोगेषु, रसेन विषेण, अतिसन्दध्यात् मारयेत् ।

सूदारालिकव्यञ्जना वेति । सूदो मांसपाचकः, आरालिकस्तण्डुलादिपाचकः, तद्व्यञ्जनाः प्रणिहिताः, दूष्यं रसेन अतिसन्दध्युः । इत्युपनिषत्प्रतिषेध इति ।

उभयदूष्यप्रतिषेधस्त्विति । उभयोर्दूष्यपक्षयोर्निग्रह एकेन यत्नेन यथा सिध्येत्, तथा कश्चित् प्रकार उच्यत इत्यर्थः । यत्रेति । यस्मिन् प्रदेशे, दूष्यः, प्रतिषेद्धव्यो निग्राह्यः, वसतीति शेषः, तत्र दूष्यमेवान्यं फल्गुबलतीक्ष्णयुक्तम् अल्पसैन्येन तीक्ष्णेन च

**'गच्छामुष्मिन् दुर्गे राष्ट्रे वा सैन्यमुत्थापय हिरण्यं वा, वल्लभाद्वा हिरण्यमाहारय, वल्लभकन्यां वा प्रसह्यानय, दुर्गसेतुवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्मणामन्यतमं वा कारय, राष्ट्रपाल्यमन्तपाल्यं वा। यश्च त्वां प्रतिषेधयेत्, न वा ते साहाय्यं दद्यात्, स बन्धव्यः स्यात्' इति। तथैव इतरेषां प्रेषयेत् 'अमुष्याविनयः प्रतिषेद्धव्यः' इति। तमेतेषु कलहस्थानेषु कर्मप्रतिघातेषु वा विवदमानं तीक्ष्णाश्शस्त्रं पातयित्वा प्रच्छन्नं हन्युः। तेन दोषेणेतरे नियन्तव्याः।**

**(२) पुराणां ग्रामाणां कुलानां वा दूष्याणां सीमाक्षेत्रखलवेश्ममर्यादासु द्रव्योपकरणसस्यवाहनहिंसासु प्रेक्षाकृत्योत्सवेषु वा समुत्पन्ने कलहे तीक्ष्णैरुत्पादिते वा तीक्ष्णाश्शस्त्रं पातयित्वा ब्रूयुः 'एवं क्रियन्ते येऽमुना कलहायन्ते' इति। तेन दोषेणेतरे नियन्तव्याः।**

**(३) येषां वा दूष्याणां जातमूलाः कलहास्तेषां क्षेत्रखलवेश्मान्यादीप-**

---

श्रीमूला

युक्तं प्रेषयेत्। किं कृत्वेत्याह—गच्छामुष्मिन्नित्यादि। इतीत्यनन्तरम् उक्त्वेति शेषः। सैन्यमुत्थापय सेनासमवाययोग्यं जनं सङ्गृह्णीष्व। वल्लभाद् अध्यक्षात्। दुर्गसेतुवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्मणां दुर्गसेतुवणिक्पथकर्माणि प्रतीतानि शून्यनिवेशकर्म जाङ्गले नवगृहादिसन्निवेशकर्म खनिकर्म आकरकर्म द्रव्यवनकर्म दार्वादिवनकर्म हस्तिवनकर्म हस्तिवनाध्यक्षकर्म तेषाम्। राष्ट्रपाल्यं राष्ट्रपालकर्म। अन्तपाल्यम् अन्तपालकर्म। आन्तपाल्यमिति पठितुं युक्तम्। बन्धव्यः बद्ध्वा नेतव्यः। तथैवेतरेषां प्रेषयेदित्यादि। पूर्वोक्तो यत्र प्रेष्यते तत्रत्यानामपि अमुष्य प्रेष्यमाणस्योन्मर्यादाः प्रवृत्तयो वार्यन्ताम्' इति वाचिकं धैर्यप्रदं प्रेषयेत्। तमेतेष्वित्यादि। एतेषु सैन्यहिरण्योत्थापनादिषु कलहकारणेषु सन्दिष्टदूष्यपुरुषारब्धेषु कर्मविघ्नेषु वा विसंवादिनं पूर्वदूष्यं तीक्ष्णाः शस्त्रप्रयोगेण रहसि हन्युः। तं च नियुक्तराजपुरुषघातापराधं सन्दिष्टदूष्येष्वारोप्य तेऽपि हन्तव्याः।

पुराणामित्यादि। पुरग्रामकुलानां दूष्याणां च पुरग्रामकुलक्षेत्रखलवेश्मसीमाविषये हिरण्यवस्त्रसस्ययानोपघातविषये नृत्तदर्शनविवाहाद्युत्सवेषु च कलहे सञ्जाते तीक्ष्णनिष्पादिते वा तथाविधे कलहे तीक्ष्णाः प्रच्छन्नं कांश्चिद्दूष्यान् शस्त्रेण हत्वा तदन्येषु दूष्येषु तं घातदोषं नामनिर्देशपूर्वमारोपयेयुः—'अमुनामुना सह कलहायमानानां गतिरीदृशी'ति प्रवदन्तः। तद्दोषापदेशेन च तान् दूष्यान् राजा दण्डयेत्।

येषां वा दूष्याणां जातमूलाः कलहा इत्यादि। कलहमूलभूतानां दूष्याणां

**यित्वा, बन्धुसम्बन्धिषु वाहनेषु वा तीक्ष्णाः शस्त्रं पातयित्वा तथैव ब्रूयुः— 'अमुना प्रयुक्ताः स्म' इति। तेन दोषेणेतरे नियन्तव्याः।**

**(४) दुर्गराष्ट्रदूष्यान् वा सत्रिणः परस्परस्यावेशनिकान् कारयेयुः, तत्र रसदा रसं दद्युः। तेन दोषेणेतरे नियन्तव्याः।**

**(५) भिक्षुकी वा 'दूष्यराष्ट्रमुख्यं दूष्यराष्ट्रमुख्यस्य भार्या स्नुषा दुहिता वा कामयते' इत्युपजपेत्। प्रतिपन्नस्याभरणमादाय स्वामिने दर्शयेत्—'असौ ते मुख्यो यौवनोत्सिक्तो भार्यां स्नुषां दुहितरं वाऽभिमन्यते' इति। तयोः कलहो रात्रौ इति समानम्।**

**(६) दूष्यदण्डोपनतेषु तु युवराजः सेनापतिर्वा किञ्चिदपकृत्यापक्रान्तो विक्रमेत। ततो राजदूष्यदण्डोपनतानेव प्रेषयेत् फल्गुबलतीक्ष्णयुक्तान्—**

---

श्रीमूला

क्षेत्रखलवेश्मानि तीक्ष्णा वह्निना सन्दीप्य बन्धून् सम्बन्धिनो वाहनानि वा शस्त्रेण हत्वा प्रागुक्तरीत्या तं दोषमन्येषु दूष्येषु नामनिर्देशपूर्वमारोपयेयु—'अमुनामुना सह कलहायमानानां गतिरीदृशी, वयं ह्यमुनामुना प्रयुक्ता एवमकार्ष्मे'ति। तद्दोषापदेशेन च तान् दूष्यान् राजा दण्डयेत्। तीक्ष्णदण्डस्तु 'तीक्ष्णस्थाने चान्ये वध्या' इत्युक्तदिशार्थात् सिद्ध इत्यत्र नोक्तः।

दुर्गराष्ट्रदूष्यान् वेत्यादि। दुर्गराष्ट्रवास्तव्यान् परस्परवैरिणो दूष्यान् सन्धिकरणेन परस्परं सङ्गमय्य सत्रिपुरुषाः परस्परगृहातिथीन् कारयेयुः। भोजनप्रसङ्गे च विषं दापयित्वा दूष्यान् घातयेयुः। घातितानां प्रतिपक्षांस्तु दूष्यांस्तेनैव रसदानदोषेण राजा नियमयेत्।

भिक्षुकी वेत्यादि। भिक्षुकी, दूष्यराष्ट्रमुख्यं दूष्यराष्ट्रमुख्यस्यान्यस्य, भार्या स्नुषा दुहिता वा कामयत इति। उपजपेद् मिथ्याबोधनं कुर्यात्। प्रतिपन्नस्य अङ्गीकृततदुपजापस्य दूष्यस्य आभरणम् अभिगन्तव्यस्त्रीसत्कारार्थत्वापदेशेन गृहीत्वा स्त्रीसम्बन्धिने दूष्यराष्ट्रमुख्याय दर्शयेत् 'अमुकनामा मुख्यो यौवनदृप्तस्त्वदीयां कामयते' इति, ततो रात्रौ तया स्त्रीगृहमानीते कामुके तस्य स्त्रीबन्धोश्च कलहः प्रवर्तते। कामुके च हते तेनापराधेन कामुकघातकं दूष्यं हन्यात्।

दूष्यदण्डोपनतेषु त्विति। दण्डोपनता बलतोऽधःकृता दण्डोपनतवृत्तप्रकरणवक्ष्यमाणचरितास्तेषु दूष्यभूतेषु विषये, युवराजः, सेनापतिर्वा, किञ्चिदपकृत्य तज्जनपदोपघातमल्पं कृत्वा, अपक्रान्तो विक्रमेत अनत्याक्रामन् विक्रमं दर्शयेत्। ततः तदनु, राजा, दूष्यदण्डोपनतानेव अन्यान्, फल्गुबलतीक्ष्णयुक्तान् प्रेषयेत्।

**इति समानास्सर्व एव योगाः ।**

[ हृतदूष्यसम्बन्धिनां पुत्राणां वृत्तिकल्पनविधिः ]

**तेषां च पुत्रेषु अनुक्षिपत्सु यो निर्विकारः स पितृदायं लभेत । एवमस्य पुत्रपौत्रान् अनुवर्तते राज्यम् अपास्तपुरुषदोषमिति ।**

[ निगमनम् ]

**स्वपक्षे परपक्षे वा तूष्णीं दण्डं प्रयोजयेत् ।**
**आयत्यां च तदात्वे च क्षमावानविशङ्कितः ।।१७५।।**

।। इति योगवृत्ते दाण्डकर्मिकं प्रथमोऽध्यायः,
आदित एकनवतिः ।।

---

श्रीमूला

अर्थाद् दूष्यैः सह संवित्करणार्थम् । इति सर्व एव योगा एवम्प्रायाः सर्वेऽभ्युपायाः, समानाः पूर्वोक्ततुल्याः । संविन्निमित्तकलहप्रवर्तनाः, तीक्ष्णैर्दूष्याणां राजप्रेषितानां प्रच्छन्नवधः, तस्य सन्धेयदूष्यकृतत्वख्यापनम्, तेन निमित्तेन तेषां निग्रहणमित्येवञ्जातीयमूहनीयमित्यभिप्रायः । तेषां चेति । तथा मारितानां दूष्याणां पुत्रेषु, अनुक्षिपत्सु निन्दत्सु मध्ये, यो निर्विकारः द्रोहचिन्तनरहितः, सः पितृदायं लभेत अर्थाद् दूष्योद्धर्तुस्तद्राज्यप्रभविष्णुतां प्राप्तस्य राज्ञ इच्छया । न केवलं पुत्रस्तत्पुत्रपौत्रपरम्परापि निर्विकारतायामेव राज्यं लभेतेत्याह – एवमस्येत्यादि । अपास्तपुरुषदोषमिति क्रियाविशेषणम् । पुरुषदोषः पुरुषस्य सविकारत्वम् । तद्योगे तु राज्यं स्ववशे स्थापयेत् प्रभविष्णुरित्यर्थः । इतिशब्दः प्रकरणसमाप्तौ ।

अध्यायान्ते श्लोकमाह—स्वपक्षे परपक्षे वेत्यादि । सुगमम् ।

।। इति कौटलीयार्थशास्त्रव्याख्यायां योगवृत्ते पञ्चमाधिकरणे
प्रथमोऽध्यायः, दाण्डकर्मिकम्,
आदित एकनवतितमः ।।

# नवतितमं प्रकरणम्

## द्वितीयोऽध्यायः

## कोशाभिसंहरणम्

[ धनधान्यसङ्ग्रहावश्यकता, तदर्थं याच्याः
अयाच्याश्चांशाः ]

**कोशमकोशः प्रत्युत्पन्नार्थकृच्छ्रः सङ्गृह्णीयात् । जनपदं महान्तमल्पप्रमाणं वा देवमातृकं प्रभूतधान्यं धान्यस्यांशं तृतीयं चतुर्थं वा याचेत, यथासारं मध्यममवरं वा । दुर्गसेतुकर्मवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्मोपकारिणं प्रत्यन्तमल्पप्रमाणं वा न याचेत ।**

———————

श्रीमूला

कोशाभिसंहरणमिति सूत्रम् । कोशस्य सुवर्णादेर्धान्यादेश्च अभिसंहरणं क्लृप्तादभ्यधिकतया सङ्ग्रहणम् अर्थनिस्तरणीयकृच्छ्रप्राप्त्यवसरेषु राज्ञा क्रियमाणं कोशाभिसंहरणम्, तदिह प्रतिपाद्यत इति सूत्रार्थः । कण्टकशोधने दुर्गराष्ट्रगतकण्टकानां शोधनप्रकार उक्तः । अत्र तु राजा स्वगतस्य कण्टकत्वस्य शोधनं कथमनुतिष्ठेदित्येतदुपदिश्यते ।

कोशमिति । तम्, अकोशः अल्पकोशः प्रत्युत्पन्नार्थकृच्छ्रः प्रत्युत्पन्नमतर्कितोपनतम् अर्थकृच्छ्रम् अर्थचिकित्सनीयः क्लेशो यस्य स तथाभूतः, सङ्गृह्णीयाद् अर्थसङ्ग्रहणेन वर्धयेत् ।

जनपदमित्यादि । जनपदं लक्षणया जानपदान् । देवमातृकं वृष्ट्यम्बुसंवर्धितसस्यम्, प्रभूतधान्यं समृद्धनिष्पन्नधान्यम् । याचेत याचित्वा गृह्णीयात्, न तु प्रसह्य यथासारं तत्तद्धान्यपरिमाणानुसारेण । मध्यम् अवरं वा जनपदम् ।

दुर्गसेत्वित्यादि । दुर्गकर्मसेतुकर्मादिभिः सप्तभिरुपकारिणं सप्तप्रकारम्, न याचेत, अर्थात् कर्मविघ्नभयात् । प्रत्यन्तं विषयसीमावासिनम्, न याचेत, विषयान्तरवासिशत्रुपक्षप्रवेशभयात् । अल्पप्रमाणम् अल्पधनप्रमाणम्, न याचेत ।

[ कर्षकश्रोत्रियाणामनुग्रहः, चोराणां दण्डश्च ]

**धान्यपशुहिरण्यादि निविशमानाय दद्यात् । चतुर्थमंशं धान्यानां बीजभक्तशुद्धं च हिरण्येन क्रीणीयात् ।**

**अरण्यजातं श्रोत्रियस्वं च परिहरेत् । तदप्यनुग्रहेण क्रीणीयात् । तस्याकरणे वा समाहर्तृपुरुषाः ग्रीष्मे कर्षकाणामुद्वापं कारयेयुः प्रमादावस्कन्नस्यात्ययं द्विगुणमुदाहरन्तो बीजकाले बीजलेख्यं कुर्युः । निष्पन्ने हरितपक्वादानं वारयेयुः, अन्यत्र शाककटभङ्गमुष्टिभ्यां देवपितृपूजादानार्थं गवार्थं वा । भिक्षुकग्रामभृतकार्थं च राशिमूलं परिहरेयुः ।**

**स्वसस्यापहारिणः प्रतिपातोऽष्टगुणः, परसस्यापहारिणः पञ्चाशद्गुणः सीतात्ययः स्ववर्गस्य, बाह्यस्य तु वधः ।**

---

श्रीमूला

अर्थकृच्छ्रावस्थायामपि राज्ञा नवकुलनिवेशकविषये कर्त्तव्यमाह—धान्यपशुहिरण्यादिति । धान्यं पशुं हिरण्यमित्येवमादिकं कृषिसाधनम्, निविशमानाय नवं कुलं स्थापयते कृषकाय, दद्यात् । धान्यानां तत्कृषिनिष्पन्नानां चतुर्थमंशं हिरण्येन क्रीणीयाद् निविशमानसकाशात् क्रयेणाधिगच्छेत्, न तु सामान्यजानपदादिव बलित्वेन गृह्णीयात् । बीजभक्तशुद्धं च बीजभोजनार्थोपयोक्तव्यावशिष्टं च धान्यं हिरण्येन क्रीणीयात् ।

अरण्यजातमिति । वनोत्पन्नं धान्यं वरकादि, श्रोत्रियस्वं च छान्दसव्रीह्यादिकं च, परिहरेत्, न तु विभजेत् । तदपि धान्यम्, अनुग्रहेण बीजभक्तार्थपेक्षितपरिहारेण, क्रीणीयात् ।

तस्याकरणे वेति । श्रोत्रियेण कृष्यकरणे, आकरणे इति पाठे श्रोत्रियेणाह्वानेऽभ्यनुज्ञाने कृत इत्यर्थः, समाहर्तृपुरुषाः, ग्रीष्मे, कर्षकाणाम्, उद्वापम् उद्वपनकर्म, कारयेयुः । प्रमादावस्कन्नस्य कर्षकानवधानविनष्टस्य, द्विगुणम्, अत्ययं दण्डम्, उदाहरन्तः संविल्लेख्ये कथयन्तः, बीजकाले बीजावापकाले, बीजलेख्यं बीजसम्बद्धं लेख्यं कुर्युः । निष्पन्ने फलिते बीजे, हरितपक्वादानम् आमस्य पक्वस्य च फलस्य ग्रहणं वारयेयुः । अर्थात् कर्षकाणाम् । तत्रापवादः—अन्यत्र शाककटभङ्गमुष्टिभ्यामित्यादि । शाकमुष्टिर्हरितमुष्टिः कटभङ्गमुष्टिः हस्तच्छिन्नधान्यादिः, देवपितृपूजादाननिमित्ते गोनिमित्ते च यच्छाकमुष्टिग्रहणं यच्च कटभङ्गमुष्टिग्रहणं तमपहाय । भिक्षुकग्रामभृतकार्थं चेति । भिक्षुकार्थं ग्रामभृतकार्थं च, राशिमूलं करतलगतं धूलिधान्यम्, परिहरेयुः प्रकल्पयेयुः ।

स्वसस्यापहारिण इति । स्वकृष्यमाणक्षेत्रसस्यहर्तुः, प्रतिपातो दण्डः, अष्टगुणः अपहृतसस्यस्याष्टावृत्तिः, कार्य इति शेषः । परसस्यापहारिणः अनन्तरक्षेत्रगत-

[ कर्षकेभ्यो धान्यादिसङ्ग्रहक्रमः ]

**चतुर्थमंशं धान्यानां षष्ठं वन्यानां तूललाक्षाक्षौमवल्ककार्पासरौमकौशेयकौषधगन्धपुष्पफलशाकपण्यानां काष्ठवेणुमांसवल्लूराणां च गृह्णीयुः, दन्ताजिनस्यार्धम् । अनिसृष्टं विक्रीणानस्य पूर्वः साहसदण्डः । इति कर्षकेषु प्रणयः ।**

[ क्रयविक्रयादिव्यवहारिभ्यः सुवर्णादिसङ्ग्रहक्रमः ]

**सुवर्णरजतवज्रमणिमुक्ताप्रवालाश्वहस्तिपण्याः पञ्चाशत्कराः, सूत्रवस्त्रताम्रवृत्तकंसगन्धभैषज्यसीधुपण्याश्चत्वारिंशत्कराः, धान्यरसलोहपण्याः शकटव्यवहारिणश्च त्रिंशत्कराः, काचव्यवहारिणो महाकारवश्च विंशतिकराः, क्षुद्रकारवो बन्धकीपोषकाश्च दशकराः, काष्ठवेणुपाषाणमृद्भाण्डपक्वान्नहरितपण्याः पञ्चकराः, कुशीलवा रूपाजीवाश्च वेतनार्धं दद्युः ।**

---

श्रीमूला

सस्यहर्तुः पञ्चाशद्गुणः, सीतात्ययः क्षेत्रसस्यापहारनिमित्तो दण्डः, स्ववर्गस्वस्वग्रामस्थस्य सतः । बाह्यस्य तु ग्रामान्तरवासिनः पुनः परसस्यापहारिणः, वधः ।

चतुर्थमिति । धान्यानाम् अनूननिष्पन्नानां चतुर्थमंशं गृह्णीयुः । षष्ठम् अंशं वन्यानां वनभवधान्यानाम्, तुलादीनां द्वादशानां काष्ठादीनां चतुर्णां च, गृह्णीयुः । तत्र शाकं दशविधमुक्तचरम्, वल्लूरं शुष्कमांसम्, शेषं प्रसिद्धम् । दन्ताजिनस्य गजदन्तस्य गवादित्वचश्च, अर्धं गृह्णीयुः । अनिसृष्टं स्वच्छन्दविनियोगानर्हं राजभोगमित्यर्थः, विक्रीणानस्य पूर्वः साहसदण्डः ।

इति कर्षकेषु प्रणय इति । अनेन प्रकारेण कर्षकविषया प्रार्थना व्याख्याता ।

सुवर्णेत्यादि । सुवर्णरजताद्यष्टपण्याः, पञ्चाशत्कराः । पञ्चाशद्भागकराः । सूत्रवस्त्रताम्राद्यष्टकपण्याः, चत्वारिंशत्कराः चत्वारिंशद्भागकराः । धान्यरसलोहपण्या इत्यादि । व्रीहिशाल्यादि धान्यं तैलघृतादि रसम् अयस्ताम्रादिकं लोहं च शकटवाह्यं कृत्वा क्रयविक्रयादिकं कुर्वन्तस्त्रिंशद्भागकराः । काचव्यवहारिणः विजातिमणिव्यवहरणकर्तारः, महाकारवश्च सुवर्णकारुमहानौकारुप्रभृतयश्च, विंशतिकराः विंशतिभागकराः, क्षुद्रकारवः तक्षायस्कारजकादयः, बन्धकीपोषकाश्च वेश्यातुल्याः कुलस्त्रियो बन्धक्यः, तत्पोषकाश्च, दशकराः स्वार्जितदशभागकराः । काष्ठेत्यादि । काष्ठादिषट्कपण्याः पञ्चकराः । कुशीलवा नटनर्तकादयः, रूपाजीवाश्च वेश्याश्च, वेतनार्धं स्वार्जितस्यार्धं दद्युः ।

**हिरण्यकरम् अकर्मण्यानाहारयेयुः । न चैषां कश्चिदपराधं परिहरेयुः । ते ह्यपरिगृहीतमभिनीय विक्रीणीरन् । इति व्यवहारिषु प्रणयः ।**

[ तिर्यग्जातिपोषकेभ्यः प्राणिसङ्ग्रहक्रमः ]

**कुक्कुटसूकरमर्धं दद्यात्, क्षुद्रपशवः षड्भागम्, गोमहिषाश्वतरखरोष्ट्राश्च दशभागम् । बन्धकीपोषका राजप्रेष्याभिः परमरूपयौवनाभिः कोशं संहरेयुः । इति योनिपोषकेषु प्रणयः ।**

[ एवं याचनया सङ्ग्रहपक्षे नियमः ]

**सकृदेव, न द्विः प्रयोज्यः ।**

[ याचनयाऽकरणपक्षे धनधान्यसङ्ग्रहप्रकारा नव ]

**(१) तस्याकरणे वा समाहर्ता कार्यमपदिश्य पौरजानपदान् भिक्षेत ।**

---

श्रीमूला

हिरण्येत्यादि । अकर्मण्यान् वाणिज्यादिकर्मसु अव्यापृतान् वणिगादीन् हिरण्यकरम् एकवराटकलक्षणं करं प्रातिशीर्षिकम् आहारयेयुः दापयेयुः । न चैषां कश्चिदपराधं परिहरेयुरिति । वणिक्तक्षादीनाम् अव्यापारलक्षणमपराधं नैवोपेक्षेरन् । स्वकर्मसु अव्यापारो नाम नोपेक्षणीयोऽर्थः; किन्तु तमपराधपक्षे निक्षिप्य तद्दण्डत्वबुद्ध्या वा हिरण्यकरस्तेभ्यो ग्राह्य एवेत्यभिप्रायः । न च तेषामव्यापारः प्रत्यययोग्य इत्याह—ते ह्यपरगृहीतमभिनीय विक्रीणीरन्निति । हि स्वीयमेव पण्यम् अस्वीयमित्यपदिश्य विक्रीणीरन् ।

इति व्यवहारिषु प्रणय इति । एवम्प्रकारा क्रयविक्रयानुष्ठायिविषया करप्रार्थना । अथ तिर्यग्योनिपोषकेषु प्रणयमाह—कुक्कुटसूकरमिति । कुक्कुटसूकरशब्दौ तत्पोषकोपलक्षकौ कुक्कुटपोषकाः सूकरपोषकाश्च, अर्धं स्ववर्धितानां कुक्कुटसूकराणाम् अर्धभागं दद्यात् । क्षुद्रपशवः अजाविप्रभृतिपोषकाः, षड्भागम् अजाव्यादीनां षष्ठं भागं दद्युः । गोमहिषाश्वतरखरोष्ट्राश्च गोमहिषवेसरगर्दभक्रमेलकपोषकाश्च, दशभागं दद्युः । बन्धकीपोषकाः, राजप्रेष्याभिः परमरूपयौवनाभिः स्वपोषिताभिर्दारभूताभिः, कोशं संहरेयुः सञ्चिनुयुः ।

इति योनिपोषकेषु प्रणय इति । व्याख्यात इति शेषः । स कुक्कुटसूकरप्रणयः सकृदेव प्रयोक्तव्य, न तु द्विः, प्रजाकोपभयादित्याह—सकृदेव न द्विः प्रयोज्य इति । तस्याकरणे वेति । तथा प्रणयस्य करणायोगपक्षे, समाहर्ता विषयबलाधिकृतः, कार्यमपदिश्य अमुककार्यं साधनीयमस्तीति व्यपदिश्य, पौरजानपदान्, भिक्षेत याचेत ।

**योगपुरुषाश्चात्र पूर्वमतिमात्रं दद्युः। एतेन प्रदेशेन राजा पौरजानपदान् भिक्षेत। कापटिकाश्चैनानल्पं प्रयच्छतः कुत्सयेयुः। सारतो वा हिरण्यमाढ्यान् याचेत। यथोपकारं वा स्ववशा वा यदुपहरेयुः स्थानच्छत्रवेष्टनविभूषाश्चैषां हिरण्येन प्रयच्छेत्। पाषण्डसङ्घद्रव्यश्रोत्रियभोग्यं देवद्रव्यं वा कृत्यकराः प्रेतस्य दग्धगृहस्य वा हस्ते न्यस्तमित्युपहरेयुः।**

**(२) देवताध्यक्षो दुर्गराष्ट्रदेवतानां यथास्वमेकस्थं कोशं कुर्यात्, तथैव चाहरेत्। दैवतचैत्यं सिद्धपुण्यस्थानभौमवादिकं वा रात्रावुत्थाप्य यात्रासमाजाभ्यामाजीवेत्। चैत्योपवनवृक्षेण वा देवताभिगमनमनार्तवपुष्पफलयुक्तेन ख्यापयेत्। मनुष्यकरं वा वृक्षे रक्षोभयं प्ररूपयित्वा सिद्धव्यञ्जनाः**

---

श्रीमूला

योगपुरुषाश्च कृतव्याजसङ्केताः समाहर्तृपुरुषाश्च, अत्र समाहर्तृव्यपदिष्टे कार्ये विषये, पूर्वम्, अतिमात्रम् अमितं धनं दद्युः। एतेन, प्रदेशेन प्रकारेण, राजा पौरजानपदान् भिक्षेत कापटिकाश्च गूढपुरुषभेदाः, एनान् पौरजानपदान्, अल्पं धनं प्रयच्छतः, कुत्सयेयुः निन्दयेयुः। सारतो वा तत्तद्धनबलानुसारेण वा, हिरण्यं धनम्, आढ्यान् धनिनो, याचेत। यथोपकारं वा उपकारानुगुण्येन वा, स्ववशा वा यद् उपहरेयुः, तद् गृह्णीयादिति वाक्यशेषः।

स्थानच्छत्रवेष्टनविभूषाश्चेति। स्थानमध्यक्षपदं छत्रं श्वेतातपत्रं वेष्टनमुष्णीषं विभूषा कनकवलयादिरित्येताश्च बहुमानचिह्नभूताः, एषाम् आढ्यानाम्, हिरण्येन धनग्रहणेन, प्रयच्छेत्। पाषण्डसङ्घद्रव्यमिति। पाषण्डद्रव्यं सङ्घद्रव्यं च, अश्रोत्रियभोग्यं श्रोत्रियभोग्यव्यतिरिक्तम्, देवद्रव्यं वा रक्षणीयम्, कृत्यकराः, प्रेतस्य दग्धगृहस्य वा हस्ते न्यस्तमिति यस्य हस्ते रक्षणाय निक्षिप्तं स प्रमीतः, अथवा तस्य गृहं दग्धमिति, वदन्त इति शेषः, उपहरेयुः यत्नादुपलभ्य राजान्तिकेऽर्पयेयुः।

देवताध्यक्ष इति। स वा, दुर्गराष्ट्रदेवतानां दुर्गगतदेवतानां राष्ट्रगतदेवतानां च, कोशं धनम्, यथास्वं यथायथम्, एकस्थं परचक्रभयाद्यपदेशेनैकस्थानगतम्, कुर्यात्। तथैव चाहरेद् राजान्तिकेऽर्पयेत्। दैवतचैत्यं दैवतवेदिम्, सिद्धपुण्यस्थानभौमवादिकं वा सिद्धपुण्यस्थाने भौमवादिकं भूमिमुद्भिद्याविर्भूतं स्वयम्भूलिङ्गमिति वादेन युक्तम्, रात्रौ शयने उत्थाप्य रचयित्वा, यात्रासमाजाभ्यामाजीवेत् तत्रोत्सवकरणेन जनमेलकप्रस्थानेन च धनं दैवार्थमुपहारयन्नपहरेत्। चैत्यादिषु देवसान्निध्यविश्वासार्थमद्भुतकल्पनमाह—चैत्योपवनवृक्षेण वेत्यादि। चैत्यारामगते वृक्षविशेषे कस्मिंश्चित् पुष्पं फलं च प्रयत्नादनृतावुत्पादितं दर्शयित्वा देवतासान्निध्यमहिमकृतमिदमिति प्रख्यापयेत्। मनुष्यकरं वा वृक्षे रक्षोभयमित्यादि। सिद्धव्यञ्जना रात्रौ

**पौरजानपदानां हिरण्येन प्रतिकुर्युः । सुरुङ्गायुक्ते वा कूपे नागमनियतशिरस्कं हिरण्योपहारेण दर्शयेत् । नागप्रतिमायामन्तश्छिद्रायां चैत्यच्छिद्रे वल्मीकच्छिद्रे वा सर्पदर्शनमाहारेण प्रतिबद्धसंज्ञं कृत्वा श्रद्दधानानादर्शयेत् । अश्रद्दधानानामाचमनप्रोक्षणेषु रसमुपचाय्य देवताभिशापं ब्रूयात्, वा दंशयित्वा योगदर्शनप्रतीकारेण वा कोशाभिसंहरणं कुर्यात् ।**

**(३) वैदेहकव्यञ्जनो वा प्रभूतपण्यान्तेवासी व्यवहरेत । स यदा पण्यमूल्ये निक्षेपप्रयोगैरुपचितस्स्यात्तदैनं रात्रौ मोषयेत । एतेन रूपदर्शकः सुवर्णकारश्च व्याख्यातौ ।**

---

श्रीमूला

पितृवनादिगते वृक्षे रक्षोवेषेण स्थित्वा 'मह्यं मनुष्य एकैको दिने दिने करत्वेन दातव्य अन्यथा सर्वान् युगपत् खादेयम्, इत्येवं स्वयं श्रावयित्वा रक्षसा श्रावितमिति प्रख्याप्य निर्दिष्टमनुष्यबलिकस्य तथाविधस्य रक्षोभयस्य प्रतीकारार्थं पौरजानपदेभ्यः प्रभूतं हिरण्यमुत्थाप्य राज्ञ उपहरेयुः । सुरुङ्गायुक्ते वेति । भूविवरयुक्ते, कूपे, नागम्, अनियतशिरस्कं त्रिशीर्षं पञ्चशीर्षादि सर्पं कृत्रिमम्, हिरण्योपहारेण अद्भुतनागदर्शनार्थं द्रष्टृदेयतया स्वकल्पितस्य हिरण्यकस्य ग्रहणेन, दर्शयेद् दिदृक्षुभ्यः, कुत्र दर्शयेत्, नागप्रतिमायाम् अन्तश्छिद्रायां सत्यसर्पावस्थानयोग्यान्तस्सुषिरवत्याम् । चैत्यच्छिद्रे वल्मीकच्छिद्रे वा देवचैत्यभित्यादिगते रन्ध्रे तद्गतवल्मीकविवरे वा, सर्पदर्शने यदृच्छोपजाते सति, तं सर्पम्, आहारेण आहार आहरणम् आयत्तीकरणं तत्साधनभूतेन मन्त्रेणौषधेन वा, प्रतिबद्धसंज्ञं निरुद्धगतिम्, कृत्वा श्रद्दधानान् आदर्शयेद् अर्थाद् देवतासान्निध्यप्रभावकृतमिदमगमनं सर्पस्येति ब्रुवन् । अश्रद्दधानानाम् आचमनप्रोक्षणेषु प्राशनस्नानेषु, रसम् अवपाय्य तन्मोहोत्पादनपर्याप्तमात्रं विषम् उपयोज्य देवताभिशापं ब्रूयात्, नागदेवताकोपकृतं तन्मोहनं ख्यापयेत् । अभिव्यक्तं वेति । वधयोग्यं दैवनिन्दकं वा दंशयित्वा रात्रौ सर्पेण दष्टं कारयित्वा, देवताभिशापं ब्रूयादिति सम्बध्यते । योगदर्शनप्रतीकारेण वा औपनिषदिकोक्तविषचिकित्सारम्भेण वा, कोशाभिसंहरणं कुर्यात्, दुष्टपक्षाद् धनं गृहीत्वेत्यार्थम् ।

वैदेहकव्यञ्जनो वेति । स वा, प्रभूतपण्यान्तेवासी प्रचुरपण्यः प्रचुरान्तेवासी च, व्यवहरेत क्रयविक्रयानुष्ठानं कुर्यात् । स यदा पण्यमूल्ये वस्तुमूल्ये निक्षेपप्रयोगैः आढ्यविस्रम्भादन्यकृतैर्धननिक्षेपैर्वृद्ध्यर्थऋणार्पणैश्च, उपचितः स्यात्, तदा, एनं वैदेहकव्यञ्जनम्, रात्रौ, मोषयेत् चोरमुषितं कुर्यात्, मोषणकरणेन राजा तदीयं धनमपहरेदित्यर्थः ।

एवं रूपदर्शने रूपदर्शकेन सुवर्णपरीक्षणादौ सुवर्णकारेण च छलं कारयित्वा धनाभिसंहरणं कुर्यादित्याह—एतेन रूपदर्शक इत्यादि ।

**(४) वैदेहकव्यञ्जनो वा प्रख्यातव्यवहारः प्रवहणनिमित्तं याचितकमवक्रीतकं वा रूप्यसुवर्णभाण्डमनेकं गृह्णीयात्। समाजे वा सर्वपण्यसन्दोहेन प्रभूतं हिरण्यसुवर्णमृणं गृह्णीयात्, प्रतिभाण्डमूल्यं च। तदुभयं रात्रौ मोषयेत्।**

**(५) साध्वीव्यञ्जनाभिः स्त्रीभिर्दूष्यानुन्मादयित्वा तासामेव वेश्मस्वभिगृह्य सर्वस्वान्याहरेयुः।**

**(६) दूष्यकुल्यानां वा विवादे प्रत्युत्पन्ने रसदाः प्रणिहिता रसे दद्युः। तेन दोषेणेतरे पर्यादातव्याः।**

**(७) दूष्यमभित्यक्तो वा श्रद्धेयापदेशं पण्यं हिरण्यनिक्षेपमृणप्रयोगं दायं वा याचेत। दासशब्देन वा दूष्यमालम्बेत, भार्यामस्य स्नुषां दुहितरं वा दासीशब्देन भार्याशब्देन वा। तं दूष्यगृहमतिद्वारि रात्रावुपशयानमन्यत्र वा वसन्तं तीक्ष्णो हत्वा ब्रूयात्—'हतोऽयमित्थं कामुकः' इति।**

---

श्रीमूला

वैदेहकव्यञ्जनो वा प्रख्यातव्यवहार इति। स वा प्रतीतक्रयानुष्ठानः, प्रवहणनिमित्तं तुष्टिभोजनमिमित्तम्, याचितकम्, अवक्रीतकं वा, रूप्यसुवर्णभाण्डं जनसमुदायसन्निधाने रूप्यभाण्डं सुवर्णभाण्डञ्च, अनेकं गृह्णीयात्। समाजे वा, सर्वपण्यसन्दोहेन सकलपण्यभाण्डसमूहप्रदर्शनेन, प्रभूतं हिरण्यसुवर्णम् ऋणं गृह्णीयात्। अर्थात् पण्यसन्दोहमिमं विक्रीय प्रत्यर्पयिष्यामीत्युक्त्वा। प्रतिभाण्डमूल्यं च गृह्णीयात् प्रतिपण्यस्य श्वोऽर्पयिष्यमाणस्य मूल्यं च प्रतिपण्यक्रेतृभ्यो गृह्णीयात्। तदुभयं गृहीतं द्वयम्, रात्रौ, मोषयेद् मोषणच्छलेनापहरेत्।

साध्वीत्यादि। साध्वीव्यञ्जनाभिः, स्त्रीभिः दूष्यान् राजद्वेषित्वेन हेतुना दूषणार्हान् जनान्, उन्मादयित्वा रञ्जयित्वा, तासामेव, वेश्मसु गृहेषु, अभिगृह्य सर्वस्वानि आहरेयुः।

दूष्यकुल्यानां वेति। तेषां विवादे दायप्रभृतिविषये, प्रत्युत्पन्ने, रसदाः प्रणिहिताः सूदादिवेषेण प्रयुक्ताः, रसं दद्युः विवदमानेष्वन्यतमाय। तेन दोषेण रसदानदोषारोपेण, इतरे रसमारितादन्ये दूष्याः, पर्यादातव्याः सर्वस्वं हारयितव्याः।

दूष्यमभित्यक्तो वा वध्यो वा, दूष्यं श्रद्धेयापदेशं लोकप्रत्यययोग्यसम्बन्धव्यपदेशं पण्यं हिरण्यनिक्षेपम् ऋणप्रयोगं दायं वा, याचेत। दासशब्देन वा दूष्यम् आलम्बेत, मम दास इति वा दूष्यं व्यपदिशेत्। भार्याम्, अस्य दूष्यस्य, स्नुषां दुहितरं वा दासीशब्देन भार्याशब्देन वा आलम्बेत। तं यथोक्तमभित्यक्तं दूष्यगृहपतिद्वारि रात्रौ उपशयानम् अन्यत्र वा वसन्तं तीक्ष्णो हत्वा, ब्रूयात् प्रख्याप्यापसरेत्, किमिति—हतोऽयम् इत्थं कामुक इति।

**तेन दोषेणेतरे पर्यादातव्याः ।**

**(८) सिद्धव्यञ्जनो वा दूष्यं जम्भकविद्याभिः प्रलोभयित्वा ब्रूयात्— 'अक्षयं हिरण्यं राजद्वारिकं स्त्रीहृदयमरिव्याधिकमायुष्यं पुत्रीयं वा कर्म जानामि' इति । प्रतिपन्नं चैत्यस्थाने रात्रौ प्रभूतसुरामांसगन्धमुपहारं कारयेत्, एकरूपं चात्र हिरण्यं पूर्वनिखातम् । प्रेताङ्गं प्रेतशिशुर्वा यत्र निहितस्स्यात् ततो हिरण्यमस्य दर्शयेत्, अत्यल्पमिति च ब्रूयात् । 'प्रभूत-हिरण्यहेतोः पुनरुपहारः कर्तव्य इति स्वयमेवैतेन हिरण्येन श्वोभूते प्रभूत-मौपहारिकं क्रीणीहि' इति । तेन हिरण्येनौपहारिकक्रये गृह्येत ।**

**(९) मातृव्यञ्जनया वा 'पुत्रो मे त्वया हत' इत्यवरूपितः स्यात् । संसिद्धमेवास्य रात्रियागे वनक्रीडायां वा प्रवृत्तायां तीक्ष्णा विशस्याभि-त्यक्तमतिनयेयुः ।**

---

श्रीमूला

तेन दोषेण तीक्ष्णकृतेनाभित्यक्तवधदोषेणारोपितेनेत्यर्थः, इतरे दूष्याः, पर्यादातव्याः सर्वस्वं हारयितव्याः ।

सिद्धव्यञ्जनो वेति । स वा, दूष्यं जम्भकविद्याभिः मायाविद्याभिः, प्रलोभ-यित्वा, ब्रूयात्, किमिति, अक्षयं हिरण्यं निधिदर्शनम्, राजद्वारिकं राजवशीकरणम्, स्त्रीहृदयं स्त्रीहृदयाकर्षणम्, अरिव्याधिकरम्, आयुष्यम् आयुष्करम्, पुत्रीयं वा पुत्रो-त्पत्तिनिमित्तं वा, कर्म जानामि इति । प्रतिपन्नं तद्वाक्यविश्वस्तं दूष्यम्, चैत्यस्थाने श्मशानादौ, रात्रौ, प्रभूतसुरामांसगन्धम्, उपहारं देवताबलिदानम्, कारयेत् । एकरूपं च, अत्र चैत्यस्थाने, हिरण्यम्, पूर्वनिखातं पूर्वं निखाय निवेशितम्, कारयेत् प्रेताङ्गं प्रेतशिशुर्वा यत्र, निहितः स्थापितः स्यात्, ततः तस्मिन् प्रदेशे, हिरण्यम्, अस्य दूष्यस्य दर्शयेत्, अत्यल्पमिति च ब्रूयाद् अत्यल्पोपहारेणात्यल्पं हिरण्यमेकरूपात्मकं लब्धमिति च कथयेत् । प्रभूतहिरण्यहेतोः, पुनरुपहारो भूयः प्रभूतबलिः कर्तव्यः, इति अतः कारणात्, स्वयम् एतेन हिरण्येन, श्वोभूते प्रभूतम् औपहारिकम् उपहारार्थं द्रव्यं क्रीणीहि इति ब्रूयात् । तेन हिरण्येन औपहारिकक्रये, क्रियमाण इति शेषः गृह्येत अर्थाद् दूष्यो राजपुरुषैः । तेन दोषेण सर्वस्वहरणादिकं तुल्यम् ।

मातृव्यञ्जनया वेति । मातृवेषया वा, पुत्रो मे त्वया हत इत्यनवरूपितः मिथ्यादर्शितः, स्यात्, अर्थाद् दूष्यः । अपराधलिङ्गार्थमाह—संसिद्धमेवास्येति । अस्य दूष्यस्य, रात्रियागे, वनयागे, वनक्रीडायां वा, प्रवृत्तायाम्, तीक्ष्णाः, ससिद्धमेव अभित्यक्तं मरणसज्जितमेव वध्यम्, विशस्य मारयित्वा, अतिनयेयुः, दूष्यप्रवर्तितरात्रि-यागादिप्रदेशे निदध्युः । तेन दोषेण दूष्यमारणादिकमार्थम् । एवमुत्तरत्रापि ।

[ दूष्यनिग्रहार्थं तद्ग्रहणोपायाः चत्वारः ]

**(१) दूष्यस्य वा भृतकव्यञ्जनो वेतनहिरण्ये कूटरूपं प्रक्षिप्य प्ररूपयेत् ।**

**(२-३) कर्मकारव्यञ्जनो वा गृहे कर्म कुर्वाणः स्तेनकूटरूपकारकोपकरणम(मु)पनिदध्यात्; चिकित्सकव्यञ्जनो वा गदमगदापदेशेन ।**

**(४) प्रत्यासन्नो वा दूष्यस्य सत्री प्रणिहितमभिषेकभाण्डममित्रशासनं च कापटिकमुखेन आचक्षीत, कारणं च ब्रूयात् ।**

[ एषां प्रयोगाणां विषयनियमः, निगमनं च ]

**एवं दूष्येष्वधार्मिकेषु च वर्तेत, नेतरेषु ।**

**पक्वं पक्वमिवारामात् फलं राज्यादवाप्नुयात् ।**
**आत्मच्छदभयादामं वर्जयेत् कोपकारकम् ॥१७६॥**

॥ इति योगवृत्ते कोशाभिसंहरणं द्वितीयोऽध्यायः,
आदितो द्विनवतिः ॥

---

श्रीमूला

दूष्यस्य वेति । तस्य वा, भृतकव्यञ्जनो वेतनहिरण्ये, कूटरूपं कपटपणादिकं प्रक्षिप्य स्वयं क्षिप्त्वा, प्ररूपयेत् स्वामिनं कूटरूपप्रक्षेप्तारं निरूपयेत् ।

कर्मकारेत्यादि । कर्मकारवेषो वा, गृहे कर्म कुर्वाणः, स्तेनकूटरूपकारकोपकरणं चोरकपटनाटकनिर्मापकोपकरणम्, अपनिदध्यात् प्रच्छन्नं निदध्यात्, अर्थाद् दूष्यस्य गृहे । उपनिदध्यादित्यपि पाठः । चिकित्सकव्यञ्जनो वेति । भिषग्वेषो वा, गरं विषम्, अगरापदेशेन विषहरौषधव्याजेन, उपनिदध्यात्, अर्थाद् दूष्यस्य हस्ते । गदमगदापदेशेनेति पाठे रोगहेतुमौषधापदेशेनेत्यर्थः ।

प्रत्यासन्नो वा दूष्यस्येति । दूष्यस्य बन्धुर्वा, सत्री गूढपुरुषविशेषः, प्रणिहितं दूष्यस्य गृहे अपनिहितम्, अभिषेकभाण्डम्, अमित्रशासनं च शत्रुलेख्यं च, कापटिकमुखेन कापटिकाख्यगूढपुरुषविशेषमुखेन, आचक्षीत कथयेत् । कारणं च ब्रूयात् 'हत्वा राजानं तच्छत्रुं राज्येऽभिषेक्तुमयं यतते' इत्येवंरूपम् ।

त एते कोशाभिसंहरणोपाया दूष्येषु अधार्मिकेषु च प्रयोक्तव्याः, न तु धार्मिकेष्वित्याह—एवं दूष्येष्वित्यादि ।

अध्यायान्ते श्लोकमाह—पक्वमिति । आरामात् पक्वं परिणतं फलमिव, राज्यादवाप्नुयात्, दोषपरिपाकयुक्तमर्थाद् दुष्टजनस्वामिकं धनम्, अवाप्नुयात् । आत्मच्छदभयाद् आमम् अपक्वमदोषयुक्तं धनम्, वर्जयेत् । कुतः, कोपकारकं यस्मात् तादृशं धनमिति कोपहेतुः ।

॥ इति कौटलीयार्थशास्त्रव्याख्यायां योगवृत्ते पञ्चमाधिकरणे
द्वितीयोऽध्यायः, कोशाभिसंहरणम्, आदितो द्विनवतितमः ॥

# एकनवतितमं प्रकरणम्

## तृतीयोऽध्यायः

## भृत्यभरणीयम्

[ धर्मार्थाविरुद्धेन धनेन भृत्यवर्ग-
स्थापनावश्यकता ]

**दुर्गजनपदशक्त्या भृत्यकर्म समुदयपादेन स्थापयेत् । कार्यसाधनसहेन वा भृत्यलाभेन शरीरमवेक्षेत । न धर्मार्थौ पीडयेत् ।**

[ स्थापनीयानां भृत्यवर्गाणां सङ्ख्याः, तदर्थं
विनियोज्या धनभागाश्च ]

**ऋत्विगाचार्यमन्त्रिपुरोहितसेनापतियुवराजराजमातृराजमहिष्यः अष्ट-चत्वारिंशत्साहस्राः । एतावता भरणे नानास्वाद्यत्वमकोपकं चैषां भवति ।**

---

श्रीमूला

भृत्यभरणीयमिति सूत्रम् । भृत्या नाम धीसचिवाः शास्त्रसचिवाः कर्मसचिवा इति त्रिप्रकाराः, तेषां भरणं पोषणमधिकृत्य प्रवृत्तमिदं प्रकरणमित्यर्थः । असद्भृत्यानां शोधनकथनानन्तरं सद्भृत्यभरणस्य प्राप्तावसरत्वात् कथनम् ।

दुर्गजनपदशक्त्येति । दुर्गजनपदशक्त्यनुसारेण, भृत्यकर्म भृत्यभरणीयम् समुदयपादेन समुदयस्य सर्वदुर्गजनपदोत्थस्य धनपिण्डस्य चतुर्भागेन, स्थापयेत् । कार्यसाधनसहेन वा भृत्यलाभेन कार्यसाधनसमर्थस्य भृत्यस्य लाभो यावता धनेन भवति तावता वा, अर्थात् समुदयपादाधिकेनापि वा, भृत्यकर्म स्थापयेत् । शरीरम् आयशरीरम्, अवेक्षेत । धर्मार्थौ न पीडयेत्, धर्मं देवपितृकार्यनित्यदानादिकम्, अर्थं दुर्गसेतुवणिक्पथादिकर्मलक्षणं च नोपरुन्ध्यात् ।

समुदयपादस्य भृत्यविशेषापेक्षया विनियोगविशेषानाह ऋत्विगित्यादि । ऋत्विगादयोऽष्टौ, अष्टचत्वारिंशत्साहस्राः अष्टचत्वारिंशत्सहस्रपणाः । एतावता द्रव्येण, भरणे, एषाम् ऋत्विगादीनाम्, नानास्वाद्यत्वं बहुविधभोज्यभोग्ययुक्तत्वम्, अकोपकम् अकोपजनकं तृप्तिकरमित्यर्थः, भवति ।

**दौवारिकान्तर्वंशिकप्रशास्तृसमाहर्तृसन्निधातारः चतुर्विंशतिसाहस्राः । एतावता कर्मण्या भवन्ति ।**

**कुमारकुमारमातृनायकपौरव्यावहारिककार्मान्तिकमन्त्रिपरिषद्राष्ट्रान्तपालाश्च द्वादशसाहस्राः । स्वामिपरिबन्धबलसहाया ह्येतावता भवन्ति ।**

**श्रेणीमुख्या हस्त्यश्वरथमुख्याः प्रदेष्टारश्च अष्टसाहस्राः । स्ववर्गानुकर्षिणो ह्येतावता भवन्ति ।**

**पत्त्यश्वरथहस्त्यध्यक्षा द्रव्यहस्तिवनपालाश्च चतुस्साहस्राः ।**

**रथिकानीकस्थचिकित्सकाश्वदमकवर्धकयो योनिपोषकाश्च द्विसाहस्राः ।**

**कार्तान्तिकनैमित्तिकमौहूर्तिकपौराणिकसूतमागधाः पुरोहितपुरुषास्सर्वाध्यक्षाश्च साहस्राः ।**

---

श्रीमूला

दौवारिकेत्यादि । दौवारिको द्वाराधिकृतः अन्तर्वंशिकः अन्तःपुराधिकृतः प्रशास्ता आयुधाध्यक्षः समाहर्ता धान्यकराध्यक्षनेता सन्निधाता भाण्डागाराध्यक्षः इत्येते, चतुर्विंशतिसाहस्राः । एतावता धनेन, कर्मण्याः कर्मयोग्याः, भवन्ति ।

कुमारेत्यादि । कुमारादयोऽष्टौ द्वादशसाहस्राः । तत्र कुमारोऽश्वानुचरः, कुमारमाता अशीतिजननेतेति भाषा, नायकः पदातिनेता, पौरव्यावहारिकः पुरगतव्यवहारचिन्तकः, कार्मान्तिकः कृषिद्रव्यवनादिकर्मान्तनियुक्तः, मन्त्रिपरिषद् द्वादशामात्याः, राष्ट्रपालोऽन्तपालश्च । एतावता, स्वामिपरिबन्धबलसहायाः स्वामिनः परिकरबलभूताः सहायाश्च भवन्ति ।

श्रेणीमुख्या इति । श्रेण्याः सजातीयशिल्पिगणस्य मुख्याः, हस्त्यश्वरथमुख्याः हस्त्याद्येकैकमुख्याः, प्रदेष्टारश्च कण्टकशोधनादिकृताश्च, अष्टसाहस्राः । एतावता, स्ववर्गानुकर्षिणः स्ववर्गानुकूलनशीलाः, भवन्ति हि ।

पत्त्यश्वेत्यादि । पत्त्यध्यक्षादयश्चत्वारो द्रव्यवनपाला हस्तिवनपालाश्च चतुस्साहस्राः ।

रथिकेत्यादि । रथिकादयः पञ्च, तत्र रथिको रथचर्याशिक्षकः, अनीकस्थो गजशिक्षकः, अनीकपाठे अनीकस्थो लक्ष्यः, चिकित्सको भिषक्, अश्वदमकः अश्वशिक्षकः, वर्धकयश्च । योनिपोषकाश्च कुक्कुटसूकरादिसंवर्धकाध्यक्षाश्च, द्विसाहस्राः ।

कार्तान्तिकेत्यादि । कार्तान्तिकः स्त्रीपुरुषादिलक्षणदर्शनेनातीतानागतादेष्टा, नैमित्तिकः शाकुनविचक्षणः, मौहूर्तिको ज्यौतिषिकः, पौराणिकः पुराणवक्ता, सूतः सारथिः, मागधः स्तुतिपाठकः, इत्येते षट् पुरोहितपुरुषाः पुरोहितपरिकर्मिणः, सर्वाध्यक्षाश्च सर्वे सुरासूनासूत्राद्यध्यक्षाश्च, साहस्राः ।

**शिल्पवन्तः पादाताः सङ्ख्यायकलेखकादिवर्गः पञ्चशताः । कुशीलवास्त्वर्धतृतीयशताः । द्विगुणवेतनाश्चैषां तूर्यकराः । कारुशिल्पिनो विंशतिशतिकाः ।**

**चतुष्पदद्विपदपरिचारकौपारिकर्मिकौपस्थायिकपालकविष्टिबन्धकाः षष्टिवेतनाः ।**

**आर्ययुक्तारोहकमाणवकशैलखनकाः सर्वोपस्थायिन आचार्या विद्यावन्तश्च पूजावेतनानि यथार्हं लभेरन् पञ्चशतावरं सहस्रपरम् ।**

**दशपणिको योजने दूतो मध्यमः, दशोत्तरे द्विगुणवेतन आ योजनशतादिति ।**

**समानविद्येभ्यस्त्रिगुणवेतनो राजा राजसूयादिषु क्रतुषु, राज्ञस्सारथिः साहस्रः ।**

---

श्रीमूला

शिल्पवन्त इति । चित्रकारादयः, पादाताः पदातिकर्मकुशलाः सङ्ख्यायकलेखकादिवर्गः सङ्ख्यायको गणकः, लेखको लिपिकरः, आदिपदाद् उन्मातृपरिमातृप्रभृतयो गृह्यन्ते तेषां वर्गः, पञ्चशताः ।

कुशीलवास्त्विति । ते, अर्धतृतीयशताः पञ्चाशदधिकद्विशतपणाः । एषां कुशीलवानां मध्ये, तूर्यकराः प्रधानवाद्यकरा, द्विगुणवेतना इतरापेक्षया ।

कारुशिल्पिन इति । ते, विंशतिशतिकाः विंशत्यधिकशतपणाः ।

चतुष्पदेत्यादि । चतुष्पदसम्बन्धी परिचारकः अनुचरः पारिकर्मिकः प्रधानः, तथा द्विपदपरिचारको द्विपदपारिकर्मिक औपस्थायिकः शरीरपरिचारकः पालको गवादिरक्षको विष्टिर्बन्धकश्चेत्येते, षष्टिवेतनाः ।

आर्येत्यादि । आर्यः शीलाभिजनसम्पन्नः सत्पुरुषः युक्तारोहकः अविधेयहस्त्यश्वारोहणसमर्थः, माणवकः कुपुरुषो वृद्धचोरादिः शैलखनकः शिलाशिल्पकर इत्येते, सर्वोपस्थायिन आचार्या गान्धर्वाचार्याः, विद्यावन्तश्च धर्मार्थादिशास्त्रकुशलाश्च, पूजावेतनानि पूजायुक्तानि वेतनानि, यथार्हं लभेरन् । कियत्, पञ्चशतावरं सहस्रपरम् ।

दशपणिक इति । मध्यमः अमन्दाद्रुतगतिः दूतः, योजने योजनगमने दशपणवेतनः आ दशयोजनात् । दशोत्तरे दशयोजनादुपरि आ योजनशतात्, द्विगुणवेतनः प्रतियोजनं विंशतिपणवेतनः ।

समानविद्येभ्य इति । समानविद्या मन्त्रिपुरोहितास्तेभ्यः, त्रिगुणवेतनः, राजा राजसूयादिषु क्रतुषु, आनीत इति शेषः । राज्ञः सारथिः, साहस्रः सहस्रपणः, क्रतुषु ।

**कापटिकादौ स्थितगृहपतिकवैदेहकतापसव्यञ्जनास्साहस्राः ।**

**ग्रामभृतकसत्रितीक्ष्णरसदभिक्षुक्यः पञ्चशताः ।**

**चारसञ्चारिणः अर्धतृतीयशताः, प्रयासवृद्धवेतना वा ।**

[ एषां भक्तवेतनदानाद्यर्थम् अध्यक्षादिनियोजनविधिः ]

**शतवर्गसहस्रवर्गाणामध्यक्षाः भक्तवेतनलाभमादेशं विक्षेपं च कुर्युः । अविक्षेपे राजपरिग्रहदुर्गराष्ट्ररक्षावेक्षणेषु च, नित्यमुख्यास्स्युरनेकमुख्याश्च ।**

[ अनुग्राह्या भृत्यसम्बन्धिनः, इतरे च ]

**कर्मसु मृतानां पुत्रदारा भक्तवेतनं लभेरन् । बालवृद्धव्याधिताश्चैषामनुग्राह्याः । प्रेतव्याधितसूतिकाकृत्येषु चैषामर्थमानकर्म कुर्यात् ।**

**अल्पकोशः कुप्यपशुक्षेत्राणि दद्यात्, अल्पं च हिरण्यम् । शून्यं वा निवेशयितुमभ्युत्थितो हिरण्यमेव दद्यात्; न ग्रामं ग्रामसञ्जातव्यवहार-**

---

श्रीमूला

कापटिकेत्यादि । प्रतीतम् ।

ग्रामभृतकेत्यादि । ग्रामभृतका रजकादयः । शेषं प्रतीतम् ।

चारसञ्चारिण इति । ते, अर्धतृतीयशताः पञ्चाशदधिकद्विशतपणवेतनाः । प्रयासवृद्धवेतना वेति । येषां वेतनमभिहितं ते सर्वे प्रयासानुरूप्येण यथोक्ताभ्यधिकवेतना वा कर्तव्याः ।

यथोक्तवेतनानां भृतकानामेकैकस्य शतवर्गस्य सहस्रवर्गस्य चैकैकमध्यक्षं कृत्वा तन्मुखेन भक्तवेतनदानं राजादेशानुष्ठानं समुचितकर्मनियोजनं च तत्तद्वर्गं कारयेदित्यभिप्रायेणाह—शतवर्गेत्यादि । अविक्षेप इति । व्यापाराभावे, प्रथमान्तपाठोऽशुद्धः । राजपरिग्रहदुर्गराष्ट्ररक्षावेक्षणेषु च, कुर्युः, अर्थादध्यक्षाः स्वं स्वं वर्गम् । नित्यमुख्याः स्युः, तत्तद्वर्ग्याः स्वस्वमुख्याधीनप्रवृत्तिका भवेयुर्न तु जातु स्वतन्त्राः । अनेकमुख्याश्च बहुप्रधानाश्च, स्युः ।

कर्मस्विति । कर्मसु राजकर्मकरणावस्थायाम्, मृतानाम्, पुत्रदाराः पुत्रा दाराश्च, भक्तवेतनं लभेरन् । बालवृद्धव्याधिताश्च, एषां मृतभृत्यानां पोष्यभूता इत्यर्थः, अनुग्राह्याः । प्रेतेत्यादि । अर्थमानकम अर्थदानबहुमानकर्म ।

अल्पकोश इति । तथाभूतो राजा, कुप्यपशुक्षेत्राणि, दद्यात्, दानीयेभ्यः । अल्पं च हिरण्यं सुवर्णादिकं तु स्वल्पं दद्यात् । शून्यं वा निवेशयितुम् अभ्युत्थितः शून्यं देशं ग्रामीकर्तुमुद्युक्तो राजा, हिरण्यमेव दद्यात्, निविशमानानामनुग्रहार्थम्, न ग्रामं दद्यात् ।

**स्थापनार्थम्। एतेन भृतानामभृतानां च विद्याकर्मभ्यां भक्तवेतनविशेषं च कुर्यात्। षष्टिवेतनस्याढकं कृत्वा हिरण्यानुरूपं भक्तं कुर्यात्।**

[ राजपण्यविक्रयदत्तवेतनप्रत्यापत्त्योरनुकूलाः कर्तव्यव्यवस्थाः ]

**पत्त्यश्वरथद्विपाः सूर्योदये बहिः सन्धिदिवसवर्जं शिल्पयोग्याः कुर्युः। तेषु राजा नित्ययुक्तः स्यात्, अभीक्ष्णं चैषां शिल्पदर्शनं कुर्यात्। कृतनरेन्द्राङ्कं शस्त्रावरणमायुधागारं प्रवेशयेत्। अशस्त्राश्चरेयुरन्यत्र मुद्रानुज्ञातात्। नष्टं विनष्टं वा द्विगुणं दद्यात्। विध्वस्तगणनां च कुर्यात्।**

**सार्थिकानां शस्त्रावरणमन्तपाला गृह्णीयुः, समुद्रमवचारयेयुर्वा। यात्रामभ्युत्थितो वा सेनामुद्योजयेत्। ततो वैदेहकव्यञ्जनास्सर्वपण्यान्या-**

---

श्रीमूला

किमर्थम्, ग्रामसञ्जातव्यवहारस्थापनार्थम् अमुकग्राम एतावद्धिरण्यमूल्यः, अमुकग्रामोत्पन्नाद्धिरण्यादेतावद् देयमित्येवंरूपस्य व्यवहारस्य प्रवर्त्तनार्थम्।

एतेनेति। उक्तेन प्रकारेण, भृतानामभृतानां च स्थिरभृतिकानाम् अस्थिरभृतिकानां च कर्मकराणाम्, विद्याकर्मभ्यां विद्याकर्मप्रकर्षानुसारेण, भक्तवेतनविशेषं च भोजनभृतितारतम्यं च, कुर्यात्। कियद्वेतनस्य कियद् भक्तमिति व्यवस्थामाह— षष्टिवेतनस्याढकं कृत्वेति। षष्टिपणवेतनस्य तण्डुलाढकमिति क्रममाश्रित्य, हिरण्यानुरूपं भक्तं कुर्याद् हिरण्यवृद्ध्यानुरूप्येण भक्तवृद्धिं कुर्यात्।

पत्त्यश्वरथद्विपा इत्यादि। सन्धिदिवसवर्जम् अमावास्याद्यनध्यायदिवसान् वर्जयित्वा शिल्पयोग्या विचित्राः शस्त्रचर्याशिक्षाः। तेषु पत्त्यादिषु। नित्ययुक्तो नित्यासक्तः। कृतनरेन्द्राङ्कं दत्तराजमुद्राचिह्नम्। शस्त्रावरणं शस्त्रं चावरणं च। अशस्त्राश्चरेयुरित्यादि। मुद्रानुज्ञातादन्यत्र मुद्रादानानुज्ञातसशस्त्रसञ्चारं राजपुरुषमपहाय। मुद्रानुज्ञानादित्यपि पाठः। नष्टं विनष्टं वेति। विस्मृतम् उपहतं च, शस्त्रावरणं द्विगुणं दद्यात्। विध्वस्तगणनां च कुर्यादिति। एतावन्ति शस्त्राणि ध्वस्तानीति गणयित्वा जानीयात्।

सार्थिकानामिति। सार्थेन चरतां परदेशागतानाम्, शस्त्रावरणम्, अर्थान्मुद्रानुज्ञानरहितम्, अन्तपाला गृह्णीयुः। समुद्रं मुद्रानुज्ञानयुक्तम्, अवचारयेयुः अवारितं विसृजेयुः। यात्रामभीति। युद्धयात्रामुद्दिश्य, उत्थितः उद्यतः, सेनाम्, उद्योजयेत् समूहयेत्। ततो वैदेहकव्यञ्जना राजप्रयुक्ताः, सर्वपण्यानि सर्वाणि पण्यानि युद्धोप-

**युधीयेभ्यो यात्राकाले द्विगुणप्रत्यादेयानि दद्युः। एवं राजपण्यविक्रयो वेतनप्रत्यादानं च भवति। एवमवेक्षितायव्ययः कोशदण्डव्यसनं नावाप्नोति। इति भक्तवेतनविकल्पः।**

[ आयुधयोधिशौचाशौचपरीक्षाक्रमः ]

**सत्त्रिणश्चायुधीयानां वेश्याः कारुकुशीलवाः।**
**दण्डवृद्धाश्च जानीयुश्शौचाशौचमतन्द्रिताः ॥१७७॥**

इति योगवृत्ते भृत्यभरणीयं तृतीयोऽध्यायः
आदितस्त्रिनवतिः ॥

---

श्रीमूला

करणभूतानि, आयुधीयेभ्यः अर्थान्निरूपकरणेभ्यः, यात्राकाले, द्विगुणप्रत्यादेयानि दद्युः युद्धावसाने द्विगुणमेतानि प्रत्यर्पणीयानीत्युक्त्वा ऋणत्वेन दद्युः। ईदृशदानस्य फलमाह—एवमिति। अनेन प्रकारेण दाने, राजपण्यविक्रयः वेतनप्रत्यादानं च दत्तवेतनप्रत्यापत्तिश्च, भवति सिध्यति।

एवमिति। यथोक्तेन प्रकारेण अवेक्षितायव्ययः राजा कोशदण्डव्यसनं धनदरिद्रतां सैन्यदरिद्रतां च, नावाप्नोति।

इति भक्तवेतनविकल्प इति। व्याख्यात इति शेषः।

आयुधयोधिनां शुचित्वमशुचित्वं च सत्त्रिणः वेश्याः कारवः कुशीलवाः पुराणभटाश्चाप्रमत्ता विद्युरितीममर्थं श्लोकेनाह—सत्त्रिणश्चेत्यादि।

इति कौटलीयार्थशास्त्रव्याख्यायां योगवृत्ते पञ्चमाधिकरणे
तृतीयोऽध्यायः, भृत्यभरणीयम्,
आदितस्त्रिनवतितमः ॥

## द्विनवतितमं प्रकरणम्

### चतुर्थोऽध्यायः

### अनुजीविवृत्तम्

[ भृत्यैराश्रयणदशायां राज्ञि परि-
शीलनीयाः गुणाः ]

**लोकयात्रावित् राजानमात्मद्रव्यप्रकृतिसम्पन्नं प्रियहितद्वारेणाश्रयेत। यं वा मन्येत—'यथा अहमाश्रयेप्सुः एवमसौ विनयेप्सुराभिगामिकगुणयुक्तः' इति, द्रव्यप्रकृतिहीनमप्येनमाश्रयेत। न त्वेवानात्मसम्पन्नम्। अनात्मवान् हि नीतिशास्त्रद्वेषादनर्थ्यसंयोगाद्वा प्राप्यापि महदैश्वर्यं न भवति।**

---

श्रीमूला

अनुजीविवृत्तमिति सूत्रम्। अनुजीविनो मन्त्र्यादयः तेषां वृत्तं स्वामिनं प्रत्यनुष्ठानमुच्यत इति सूत्रार्थः। पूर्वस्मिन् प्रकरणे भृत्यानां प्रस्तुतत्वादिह तद्वृत्ताख्यानस्य साङ्गत्यं स्पष्टमेव।

कीदृग्गुणोऽनुजीवनाधिकारी कीदृग्गुणमनुजीव्यमाश्रयेतेत्याकाङ्क्षायामाह—लोकयात्राविदिति। अर्थशास्त्राभिज्ञः, राजानम्, आत्मद्रव्यप्रकृतिसम्पन्नम् आत्मसम्पन्नं द्रव्यप्रकृतिसम्पन्नं च, तत्रात्मसम्पन्नं 'महाकुलीनो दैवबुद्धिरि'त्यादिना प्रकृतिसम्पत्प्रकरणे वक्ष्यमाणयात्मसम्पदा युक्तं, द्रव्यप्रकृतिसम्पन्नं द्रव्यप्रकृतिभिरमात्यादिभिः पञ्चभिर्जानपदत्वादिगुणयोगिभिर्युक्तं, प्रियहितद्वारेण राज्ञः प्रियाश्च हिताश्च ये पुरुषास्तद्द्वारेण, आश्रयेत। राज्ञस्तथाविधस्यालाभेत्वाह—यं वेति। यथा अहम् आश्रयेप्सुः आश्रयार्थी, एवम् असौ, विनयेप्सुः विद्यावृद्धसंयोगार्थी, आभिगामिकगुणयुक्तः महाकुलीनत्वादिभिराभिगामिकगुणैर्युक्तः, इति यं वा मन्येत, एनं राजानं, द्रव्यप्रकृतिहीनमपि सन्तम्, आश्रयेत। अनात्मसम्पन्नं तु आत्मसम्पद्रहितं तु, नैवाश्रयेत। तत्र हेतुमाह—अनात्मवान् हीति। सः, नीतिशास्त्रद्वेषाद् अर्थाद् मौर्ख्यंप्राज्ञपुरुषासंयोगकृतात्, अनर्थ्यसंयोगाद् वा अनर्थावहानां मृगयाद्यूतस्त्रीपानानां वाग्दण्डपारुष्यार्थदूषणानां नटनर्तकादीनां च संयोगाद् वा, प्राप्यापि महदैश्वर्यं महदिति राज्यमुच्यते तदीश्वरत्वं पितृपैतामहं लब्ध्वापि, न भवति नश्यति।

[ आश्रयणानुपदमेव अवश्यकर्तव्याः
वाग्व्यवहाराः ]

**आत्मवति लब्धावकाशः शास्त्रानुयोगं दद्यात्। अविसंवादाद्धि स्थानस्थैर्यमवाप्नोति। मतिकर्मसु पृष्टः तदात्वे च आयत्यां च धर्मार्थसंयुक्तं समर्थं प्रवीणवत् अपरिषद्भीरुः कथयेत्। ईप्सितः पणेत— धर्मार्थानुयोगम् अविशिष्टेषु, बलवत्संयुक्तेषु दण्डधारणम्, बलवत्संयोगे तदात्वे च दण्डधारणम्, इति न कुर्याः। पक्षं वृत्तिं गुह्यं च मे नोपहन्याः। संज्ञया च त्वां कामक्रोधदण्डनेषु वारयेयम्' इति।**

[ अत्यन्तवर्जनीयाः दुर्व्यवहाराः ]

**आयुक्तप्रदिष्टायां भूमावनुज्ञातः प्रविशेत्; उपविशेच्च पार्श्वतस्सन्निकृष्टविप्रकृष्टः। प (व) रासनं विगृह्य कथनम्, असभ्यम् अप्रत्यक्षम् ऊश्रद्धेयम-**

श्रीमूला

आत्मवतीत्यादि। आत्मसम्पन्ने आश्रये, लब्धावकाशः प्राप्तावसरः, शास्त्रानुयोगम् अर्थशास्त्रादिविषयप्रश्नोत्तरं, दद्यात्। किमर्थमिदमित्याह—अविसंवादाद्धीत्यादि। स्वोक्तेऽर्थे शास्त्राविसंवादिनि हि सति निश्चितशास्त्रज्ञभावः स्थिरामधिकारपदे स्थितिमनुजीवी प्राप्नोति। लक्षणपरीक्षानन्तरं लक्ष्यपरीक्षामाह—मतिकर्मसु पृष्ट इति। बुद्धिसाध्यकर्मविषयेऽनुयुक्तः, तदात्वे चायत्यां च समर्थं तत्काले चोत्तरकाले च क्षमं, धर्मार्थसंयुक्तं, प्रवीणवत् मतिकर्मनिपुणैस्तुल्यम्, अपरिषद्भीरुः सभाकम्परहितः, कथयेत्। ईप्सित इति। लक्ष्यलक्षणकोविदत्वमवधार्य राज्ञा स्वामात्यकर्मणे प्रार्थितोऽनुजीवी, पणेत संविदं कुर्यात्, राज्ञा सह। केन प्रकारेण, धर्मार्थानुयोगमविशिष्टेषु गुणोत्कर्षरहितेषु धर्मार्थप्रश्नं, बलवत्संयुक्तेषु दण्डधारणं मत्संयोगे तदात्वे च दण्डधारणं मत्सम्बद्धे विषये सद्यश्च दण्डप्रयोगम्, इति एवञ्जातीयं, न कुर्याः। पक्षं स्ववर्गं, वृत्तिं व्यापारं, गुह्यं च रहस्यं च, मे नोपहन्याः। संज्ञया च अक्षिनिकोचभ्रूविकारादिचेष्टया च, त्वां, कामक्रोधदण्डनेषु कामक्रोधनिमित्तकेषु मिथ्यादण्डनेषु, प्रवर्तमानमिति शेषः, वारयेयम्, इति अनेन प्रकारेण।

आयुक्तप्रदिष्टायामिति। आयुक्ताः अधिकारपदनियुक्ताः तत्प्रवेशार्हायाम्, 'आदिष्टः प्रदिष्टायमि'त्यपपाठः। भूमौ अनुज्ञातः प्रविशेत्। उपविशेच्च पार्श्वतः राज्ञः पार्श्वे न त्वग्रे श्वासादिस्पर्शभयात्। कथम्भूतः, सन्निकृष्टविप्रकृष्टः अनतिसन्निकृष्ट इत्यर्थः। स्वग्रन्थे 'विप्रकृष्टे'ति न पठ्यते।

वरासनमिति। श्रेष्ठमासनम्। परासनमिति पाठेऽपि स एवार्थः। विगृह्य कथनम् आक्षिप्य कथनम्, असभ्यम् अश्लीलम्, अप्रत्यक्षं परोक्षार्थविषयम्, अश्रद्धेयम्

**नृतं च वाक्यं, उच्चैरनर्मणि हासं वातष्ठीवने च शब्दवती न कुर्यात्; मिथः कथनमन्येन, जनवादे द्वन्द्वकथनं, राज्ञो वेषम् उद्धतकुहकानां च, रत्नातिशयप्रकाशाभ्यर्थनम्, एकाक्ष्योष्ठनिर्भोगं, भ्रुकुटीकर्म, वाक्यावक्षेपणं च ब्रुवति। बलवत्संयुक्तविरोधं, स्त्रीभिः स्त्रीदर्शिभिस्सामन्तदूतैर्द्वेष्यापक्षावक्षिप्तानर्थ्यैश्च प्रतिसंसर्गम्, एकार्थचर्यां, सङ्घातं च वर्जयेत्।**

[ राजसेविभिः परिपालनीया नियमाः ]

**अहीनकालं राजार्थं स्वार्थं प्रियहितैस्सह।**
**परार्थे देशकाले च ब्रूयाद्धर्मार्थसंहितम् ॥१७८॥**
**पृष्टः प्रियहितं ब्रूयान्न ब्रूयादहितं प्रियम्।**
**अप्रियं वा हितं ब्रूयात् शृण्वतोऽनुमतो मिथः ॥१७९॥**

---

श्रीमूला

अविश्वास्यम् अनृतं च असत्यं च, वाक्यम्, उच्चैरनर्मणि हासं नर्मानवसरे उच्चैर्हसितं, शब्दवती वातष्ठीवने च सशब्दे उपर्यधोवातवृत्तिष्ठीवने च, न कुर्यात्। मिथः कथनमन्येनेति। राजसन्निधावन्येन रहसि मन्त्रणं, जनवादे द्वन्द्वकथनं समूहवादे 'इदमेवं भवति न त्वद' इति विधिनिषेधादिकथनं, राज्ञो वेषम्, उद्धतकुहकानां च वेषम् उद्धतानां पाषण्डादीनां च वेषं, रत्नातिशयप्रकाशाभ्यर्थनं राजधार्यमाणरत्नगतस्यातिशयस्य स्वस्मै प्रकाशनप्रार्थनम् एकाक्ष्योष्ठनिर्भोगम् एकस्याक्ष्णः ओष्ठस्य च वक्रत्वं, भ्रुकुटीकर्म भ्रूभङ्गं, वाक्यावक्षेपणं च ब्रुवति राज्ञि कथयति सति मध्ये वाक्यकथनं च, न कुर्यादिति वर्तते। बलवत्संयुक्तविरोधमिति। बलवत्सम्बन्धिभिः सह विरोधं, स्त्रीभिः, स्त्रीदर्शिभिः स्त्रीदर्शनशीलैरन्तर्वंशिकैः, सामन्तदूतैः विषयानन्तरनृपतिदूतैः द्वेष्यापक्षावक्षिप्तानर्थ्यैश्च राज्ञो द्वेष्यैरक्षिगतैः अपक्षैरसहायैरुदासीनैः अवक्षिप्तैरपहृतार्थमानैः अनर्थ्यैर्नटनर्तकादिभिश्च, प्रतिसंसर्गं सख्यम्, एकार्थचर्याम् बहूनामर्थिनां मध्ये एकार्थानुष्ठानं, सङ्घातं च सङ्घसमवायं च, वर्जयेत्, अर्थात् प्रधानामात्यादिः :

विधिशेषं श्लोकैराह—अहीनकालमित्यादि। राजार्थं राजप्रयोजनम्, अहीनकालं ब्रूयात् विना कालविलम्बं सद्य एव कथयेत्। स्वार्थम् आत्मप्रयोजनं, प्रियहितैः सह- राज्ञः प्रियैर्हितैश्च जनैः सह, ब्रूयात्, परार्थं परस्य प्रयोजनं, देशकाले समुचितेऽवसरे, ब्रूयात्। धर्मार्थसंहितमिति सर्वशेषः यद्यद् ब्रूयात् तत् सर्वं धर्मेणार्थेन च संयुक्तं स्यादित्यर्थः।

पृष्ट इति। राज्ञानुयुक्तः, प्रियहितं ब्रूयात्। अहितं प्रियं न ब्रूयात्। अप्रियं वा

तूष्णीं वा प्रतिवाक्ये स्यात् द्वेष्यादींश्च न वर्णयेत् ।
अप्रिया अपि दक्षास्स्युः तद्भावाद् ये बहिष्कृताः ॥१८०॥
अनर्थ्याश्च प्रिया दृष्टाः चित्तज्ञानानुवर्तिनः ।
अभिहास्येष्वभिहसेत् घोरहासांश्च वर्जयेत् ॥१८१॥
परात्सङ्क्रामयेद्घोरं न च घोरं (स्वयं) परे वदेत् ।
तितिक्षेतात्मनश्चैव क्षमावान् पृथिवीसमः ॥१८२॥

[ सारतः अग्निसेवनादप्युग्रात् राजसेवनात् स्वरक्षणविधिः ]

आत्मरक्षा हि सततं पूर्वं कार्या विजानता ।
अग्नाविव हि संप्रोक्ता वृत्ती राजोपजीविनाम् ॥१८३॥
एकदेशं दहेदग्निः शरीरं वा परं गतः ।
सपुत्रदारं राजा तु घातयेद्वर्धयेत वा ॥१८४॥

इति योगवृत्ते अनुजीविवृत्तं चतुर्थोऽध्याय. आदितश्चतुर्नवतिः ।

---

श्रीमूला

हितं ब्रूयात् । कथम्भूतस्य कथम्भूतो ब्रूयात्, शृण्वतोऽनुमतो मिथः ब्रूहीत्यभ्यनुज्ञातो रहसि श्रद्धयाकर्णयतः ।

अप्रियं हितमुच्यमानं न शृणयादिति मन्यमानः किं कुर्यादिति सार्धश्लोकेनाह—तूष्णीं वा प्रतिवाक्ये स्यादिति । प्रतिवाक्यदानप्रसङ्गे अप्रियकथनभये सति मौनमवलम्बेत । द्वेष्यादींश्च न वर्णयेत् राज्ञो द्वेष्यादिवर्णनम् न कुर्यात् । कुत इत्याह—ये, तद्भावाद् बहिष्कृताः राजच्छन्दाननुवर्तिनः ते दक्षा अपि अप्रियाः स्युः । चित्तज्ञानानुवर्तिनः राजच्छन्दानुवर्तिनः, अनर्थ्याश्च अनर्थावहाः नटनर्तकादयोऽपि, प्रियाः दृष्टाः ।

अभिहास्येष्विति । हसति राज्ञि तदभिमुखहसनीयेष्वर्थेषु, अभिहसेत् अभिमुखं हसेत् न तु काष्ठवन्निर्विकारस्तिष्ठेत् । घोरहासान् वर्जयेच्च ।

परादिति । परद्वारेण, घोरम् अश्राव्यमर्थं, सङ्क्रामयेत् राजानं ग्राहयेत्, न च घोरं स्वयं वदेत् । 'परे वदेदि'ति मूलमातृकापाठे तु परविषय इत्यथः । क्षमावान् पृथिवीसमः, आत्मनश्चैव, घोरम् उपनतं, तितिक्षेत सहेत ।

अग्निसेवनवद् राजसेवनं सुलभापायमिति कृत्वा तत् कुर्वता स्वात्मरक्षायां प्रतिजागरितव्यमित्याह—आत्यरक्षा हीत्यादि ।

अग्न्यपेक्षया राज्ञौ व्यतिरेकमप्याह—एकदेशं दहेदग्निरित्यादि । सुबोधम् ।

इति कौटलीयार्थशास्त्रव्याख्यायां योगवृत्ते पञ्चमाधिकरणे
चतुर्थोऽध्यायः अनुजीविवृत्तम्, आदितश्चतुर्नवतितमः ॥

## त्रिनवतितमं प्रकरणम्

### पञ्चमोऽध्यायः

### समयाचारिकम्

[ अर्थाधिकारिभिः राजसेविभिः परिपालनीया
नियमाः वर्तनक्रमः, ज्ञेया अंशाश्च ]

**नियुक्तः कर्मसु व्ययविशुद्धमुदयं दर्शयेत् ।**

**आभ्यन्तरं बाह्यं गुह्यं प्रकाश्यम् आत्ययिकम् उपेक्षितव्यं वा कार्यम् 'इदमेवम्' इति विशेषयेच्च ।**

**मृगयाद्यूतमद्यस्त्रीषु प्रसक्तं चानुवर्तेत । प्रशंसाभिरासन्नश्चास्य व्यसनोपघाते प्रयतेत । परोपजापातिसन्धानोपधिभ्यश्च रक्षेत् ।**

---

श्रीमूला

समयाचारिकमिति सूत्रम् । समयस्य व्यवस्थायाः आचारोऽनुष्ठानं समयाचारः तमधिकृत्य प्रवृत्तमित्यर्थः । पूर्वाध्याये मन्त्रिणां वृत्तमुक्तम् । तन्मूलत्वात् कोशस्य राज्यफलत्वाच्च अर्थाधिकारिणां वृत्तमिहोच्यत इति सङ्गतिः ।

नियुक्तः कर्मस्विति । कर्मसु नियुक्तः समाहर्तृसन्निधातृप्रभृतिपुरुषः, व्ययविशुद्धम्, उदयम् आयं दर्शयेत् ।

आभ्यन्तरमिति । अभ्यन्तरभवं दुर्गसम्बन्धि, बाह्यं बहिर्भवं जनपदसम्बन्धि इदमुभयविधं कार्यं, गुह्यं प्रकाश्यम् आत्ययिकम् उपेक्षितव्यं वेति चतुर्विधम्, इदमेवमिति विशेषयेत् इदमीदृशमिति राज्ञे निवेदयेत् लेख्ये निवेशयेच्च । तत्र गुह्यं राजरहस्यादि, प्रकाश्यं राजसर्वज्ञत्वख्यापनादिकं कोशाभिसंहरणोक्तम्, आत्ययिकं सद्योऽनुष्ठाने हीयमानम्, उपेक्षितव्यं सद्योऽनुष्ठानेऽप्यहीयमानम् ।

मृगयाद्यूतमद्यस्त्रीषु प्रसक्तं चेति । तथाविधं राजानम्, अनुवर्तेत प्रशंसाभिः श्लाघावचनैरनुसरेत् । अनुवर्तनफलमाह—आसन्नश्च, अस्य राज्ञः, व्यसनोपघाते, प्रयतेत प्रकर्षेणोत्सहेत् । परोपजापातिसन्धानोपधिभ्यश्च परप्रयुक्तात् उपजापाद् भेदात् अतिसन्धानाद् वञ्चनात् उपधेस्तीक्ष्णरसदादेश्च, रक्षेत् ।

**इङ्गिताकारौ चास्य लक्षयेत्। कामद्वेषहर्षदैन्यव्यवसायभयद्वन्द्व-विपर्यासम् इङ्गिताकाराभ्यां ही मन्त्रसंवरणार्थमावरन्ति प्रज्ञाः।**

[ राज्ञस्सन्तोषचिह्नानि ]

**दर्शने प्रसीदति, वाक्यं प्रतिगृह्णाति, आसनं ददाति, विविक्तो दर्शयते, शङ्कास्थाने नातिशङ्कते, कथायां रमते, परिज्ञाप्येष्वतेक्षते, पथ्यमुक्तं सहते, स्मयमानो नियुक्ते, हस्तेन स्पृशति, श्लाघ्येनोपहसति, परोक्षे गुणं ब्रवीति, भक्ष्येषु स्मरति, सह विहारं याति, व्यसनेऽभ्यवपद्यते, तद्भक्तीन् पूजयति, गुह्यमाचष्टे, मानं वर्धयति, अर्थं करोति, अनर्थं प्रतिहन्ति—इति तुष्टज्ञानम्।**

[ असन्तोषचिह्नानि ]

**एतदेव विपरीतमतुष्टस्य। भूयश्च वक्ष्यामः—सन्दर्शने कोपः, वाक्यस्या-**

---

श्रीमूला

इङ्गिताकारौ चेति। इङ्गितमयथापूर्वमाचरणम् आकारो मुखरागादिः तौ च, अस्य, लक्षयेत् सूक्ष्मेक्षिकया जानीयात्। कामद्वेषहर्षदैन्यव्यवसायभयद्वन्द्वविपर्यासं कामादीनां व्यत्ययेन प्रदर्शनम्, इङ्गिताकाराभ्यां प्रज्ञाः आचरन्ति हि। किमर्थमाचरन्ति, मन्त्रसंवरणार्थं मन्त्रगोपनार्थम्। अतौ दुर्लक्षौ मतिमतापीङ्गिताकाराविति तद्दर्शनेऽवधानविशेषो देय इति भावः।

प्रीतिलिङ्गान्याह—दर्शन इति। दर्शने प्रसीदति तुष्यति। वाक्यं प्रतिगृह्णाति सादरं शृणोति। आसनं ददाति। विविक्ते दर्शयते जनान्तराप्रवेश्येऽन्तःपुरादावपि दर्शनावसरं ददाति। शङ्कास्थाने नातिशङ्कते, विश्वासात्। कथायां सम्भाषणप्रबन्धे, रमते। परज्ञाप्येषु अपेक्षते अन्यैर्विज्ञाप्येषु कार्येष्वपि प्रियपुरुषसाचिव्यमिच्छति। परिज्ञाप्येष्विति पाठेऽप्येष एवार्थः। पथ्यम् उक्तं सहते अर्थात् परुषमपि। स्मयमानो नियुङ्क्ते 'त्वमेवेदं कर्तुमर्हसी'ति सस्मितं कार्ये प्रेरयति। हस्तेन स्पृशति स्पृशन् वक्ति। श्लाघ्येन उपहसति श्लाघनीयेन कर्मणा कृतेन सम्मुखे परिहसति। परोक्षे गुणं ब्रवीति अप्रत्यक्षे श्लाघते। भक्ष्येषु स्मरति, संविभागार्थम्। सह विहारं सञ्चारं याति। व्यसने अभ्यवपद्यते तत्परिहारसाहाय्यमाचरति। तद्भक्तीन् पूजयति तदनुरक्तान् बहु मन्यते। गुह्यं रहस्यम् आचष्टे। मानं वर्धयति उत्कृष्टपदारोपणादिना बहुमानमुपचिनोति। अर्थं करोति धर्मार्थकामलक्षणमीप्सितं साधयति। अनर्थं प्रतिहन्ति निवारयति। इति तुष्टज्ञानम् उक्तप्रकारः प्रीतज्ञानोपायः।

एतदेव विपरीतमतुष्टस्येति। उक्तमेव दर्शनप्रसादादिकं विपरीतम् अर्थाद प्रसादादिकमतुष्टस्य ज्ञानोपायः। भूयश्च अधिकं च लिङ्गं, वक्ष्यामः। तन्निर्दिशति—

**इति कणिङ्को भारद्वाजः; 'तृणम्' इति दीर्घश्चारायणः; 'शीता शाटी' इति घोटमुखः; 'हस्ती प्रत्यौक्षीत्' इति किञ्जल्कः; रथाश्वं प्राशंसीत्' इति**

---

श्रीमूला

कश्चिदुदकसेचकः आगच्छति कात्यायने जलमूर्ध्वंतो विकिरन्नसिञ्चत्। मन्त्री च मद्देहजलबिन्दुपातपरिहारायाधः शनैः सेचनं ह्यो यावत् कृतवतोऽद्येदमुच्चैरुदक-सेचनं किमपि मयि राजप्रकोपसूचकं वृत्तिवैकृतमिति जानन् राजानं परितत्याजेति।

अथामानुषाणाह—क्रौञ्च इति। क्रुङ्नामा पक्षिविशेषः, अपसव्यं, गत इति शेषः। इति हेतोः, कणिङ्कः तदाख्यः, भारद्वाजः भारद्वाजगोत्रः, प्रवव्राजेत्यनुवर्तते।

अयमिहेतिहासः—कोसलेषु किल परन्तपस्य राज्ञोऽनुजीवी कणिङ्को नामार्थ-शास्त्रविचक्षण आसीत्। तस्य राजकुलगमने क्रौञ्चः प्रदक्षिणं नित्यं गच्छेत्। कणिङ्कः क्वचिद् दिवसे स्वस्मिन् अन्तःपुरस्थे सति समागत इति कृत्वा तं राजा क्रुध्यन् निनिन्द। श्रुततन्निन्दः क्रौञ्चस्तस्यापसव्यं गतः। तदपसव्यगमनानुमितराजकोपश्च कणिङ्को राजानं परित्यक्तवानिति।

तृणमिति दीर्घश्चारायण इति। तृणमिति ज्ञात्वा चारायणगोत्रो दीर्घः प्रवव्राज। इदमिहैतिह्यम्—मगधेषु पुरा बालः कश्चिद् राजा बभूव। तस्याचार्यो दीर्घो नाम कश्चित् तत्पितुः प्रिय आसीत्। आगते तस्मिन् राज्ञो माता स्वभर्तृभक्त्या तं प्रत्युत्थानादिना नित्यमुपचचार। अथ पुत्रः प्राप्तवयस्को मात्रा क्रियमाणं दीर्घस्यो-पचारमसहमानो मातरं क्वचिद् दिने पप्रच्छ—'किमर्थं ब्राह्मणोऽयमुपचर्यते' इति। तं च राजमाता जगाद—'विद्वानयमस्माकमाचार्यः पितुस्ते परमः स्निग्धो बहुमान-नीयश्च ते। तमेनं भक्तचेलदानादिना पूजये'ति। तच्छ्रुत्वा सद्य एव तृणपर्यवच्छन्न-मन्नं कृत्वा तस्मै प्रायच्छत्। तेन परिज्ञाततदनादरो दीर्घस्तं परित्यक्तवानिति।

शीता शाटीति घोटमुख इति। वस्त्रं शीतमित्यनेनेङ्गितेन घोटमुखो नामाचार्यः प्रवव्राज। इहेदं पुरावृत्तम्—अवन्तिष्वंशुमतो नाम राज्ञः पुत्रं घोटमुखो नीतिविद्या-मध्यापयन्नुवास। तस्मै च राजा कस्मिंश्चिन्निमित्ते जातु चुक्रोध। तमर्थं विदित्वा गुरुभक्तो राजपुत्र इङ्गितं स्वगुरवे दर्शयाम्बभूव। स हि स्नात्वा गच्छन् नियमेन वस्त्रं निष्पीडितं कण्ठे धरति। तस्मिंस्तु दिने स्नात्वा वस्त्रं शीतमिति वदन् वस्त्र-रिक्तकण्ठो जगाम। अनेनेङ्गितेन राज्ञ आत्मनि भावविकारं ज्ञात्वा घोटमुखस्तं तत्याजेति।

हस्ती प्रत्यौक्षीदिति किञ्जल्क इति। गजः प्रतिसिक्तवानित्यतः किञ्जल्कः प्रवव्राज। तथा चेतिहासः—वङ्गेषु शतानन्दस्य राज्ञोऽनुजीवी किञ्जल्को नामाचार्य आसीत्। सोऽनुदिनं राजौपवाह्यं हस्तिनं प्रतिलालयन्तमग्रे क्षणमुपलाल्य पश्चाद् राजकुलं गच्छेत्। कदाचिद् राजा तं हस्तिनमधिरूढ आचार्यद्रोहममन्त्रयत। श्रुतार्थो हस्ती पुष्करजलैराचार्यमसिञ्चत्। अपूर्वेण तेन जलसेकेङ्गितेन भावविकारमात्मनि राज्ञो विज्ञाय किञ्जल्कस्ततः प्रव्रजित इति।

**पिशुनः; 'प्रतिरवणे शुनः' पिशुनपुत्रः इति ।**

[ स्वस्वामिनोरपराधपरिशीलनेन सम्भाविता-
पराधमार्जनादिविधिः ]

**अर्थमानावक्षेपे च परित्यागः । स्वामिशीलमात्मनश्च किल्बिषमुपलभ्य वा प्रतिकुर्वीत । मित्रमपकृष्टं वाऽस्य गच्छेत् ।**

**तत्रस्थो दोषनिर्घातं मित्रैर्भर्तरि चाचरेत् ।**
**ततो भर्तरि जीवेद् वा मृते वा पुनराव्रजेत् ॥१८५॥**

इति योगवृत्ते समयाचारिकं पञ्चमोऽध्यायः,
आदितः पञ्चनवतिः

---

श्रीमूला

रथाश्वं प्राशंसीदिति पिशुन इति । इयमिह कथा—पिशुनो नामाचार्य उज्जयिन्यां प्रद्योतस्य पुत्रं पालकं नीतिविद्यामध्यापयाम्बभूव । अथ समाप्तेऽध्यापने राजा पिशुनस्य धनमपहर्तुममन्त्रयत स्वपुत्रसन्निधौ । तच्छ्रुत्वा पुत्र आचार्यद्रोहं परिजिहीर्षुः स्यन्दनमश्वयुक्तमारुह्याचार्यस्याग्रे स्थित्वा रथाश्वं श्लाघितवान्—अश्वोऽयमेकेनाह्ना त्रिशतं योजनानि गच्छेदिति । तेनात्मगमनं चोदितं ज्ञात्वा पिशुनस्ततो गत इति ।

प्रतिरवणे शुनः पिशुनपुत्र इति । श्वभषणं श्रुत्वा पिशुनपुत्रः प्रव्रजितः । अत्र चेदमैतिह्यम्—पिशुनस्याचार्यस्य पुत्रोबाल्य एवाधीतनीतिशास्त्रतत्त्वः राजानं सेवमानः स्थितः । राजा चैनं विद्वत्तम इत्यनुसरन्नवर्तत । कदाचिद राजामन्त्रयत—पिशुनपुत्रोऽयं बालत्वाद् मन्त्रिपदायोग्यः । अत आ योग्यवयःप्राप्तेर्बद्ध्वायं रक्षणीयः, अन्यथा देशान्तरं गच्छेदिति । मन्त्रणमिदं श्रुत्वा कुक्कुरः पिशुनपुत्रस्याग्रे बुक्कति स्म । तेनेङ्गितेन राजचित्तवैकृतमनुमाय पिशुनपुत्रः सद्य एव ततो गत इति । इतीति । एवं वृत्तिविकारं ज्ञात्वा राजानं त्यजेदित्यर्थः ।

अर्थमानावक्षेपे च परित्याग इति । अर्थमानहानिकरं च राजानं परित्यजेत् । स्वामीत्यादि । स्वामिशीलं राज्ञः स्वभावं, आत्मनः किल्बिषं च अपराधं च, उपलभ्य पर्यालोच्य, प्रतिकुर्वीत वा राजकोपस्य प्रतिक्रियां कुर्वीत वा राजानमपरित्यजन् । अस्य स्वामिनः, उप्रकृष्टं सन्निकृष्टं, मित्रं गच्छेद् वा आश्रयेत वा स्वामिचित्तप्रसादनार्थम् ।

तत्रस्थ इति । राजदुर्गस्थः, मित्रैर्मित्रद्वारेण, भर्तरि, दोषनिर्घातं स्वापराधमार्जनम्, आचरेच्च । ततो दोषमार्जनान्तरं भर्तरि जीवेद् वा, मृते भर्तरि पुनराव्रजेद् वा ।

इति कौटलीयार्थशास्त्रव्याख्यायां योगवृत्ते पञ्चमाधिकरणे
पञ्चमोऽध्यायः समयाचारिकम्,
आदितः पञ्चनवतितमः ॥

# चतुर्नवतिपञ्चनवतितमे प्रकरणे

## षष्ठोऽध्यायः

## राज्यप्रतिसन्धानमेकैश्वर्यं च

[ राज्ञोऽस्वस्थतादशायाममात्यैस्स्वराष्ट्रे
परिकल्पनीयाः व्यवस्थाः ]

**राजव्यसनमेवममात्यः प्रतिकुर्वीत; प्रागेव मरणबाधभयाद्राज्ञः। प्रियहितोपग्रहेण मासद्विमासान्तरं दर्शनं स्थापयेत्—'देशपीडापहममित्रापहमायुष्यं पुत्रीयं वा कर्म राजा साधयति' इत्यपदेशेन। राजव्यञ्जनमनुरूपवेलायां प्रकृतीनां दर्शयेत्, मित्रामित्रदूतानां च तैश्च यथोचितां सम्भाषाम् अमात्यमुखो गच्छेत्। दौवारिकान्तर्वंशिकमुखश्च यथोक्तं राजप्रणिधिमनुवर्तयेत्। अपकारिषु च हेडं प्रसादं वा प्रकृतिकान्तं दर्शयेत्, प्रसादमेवोपकारिषु।**

---

श्रीमूला

राज्यप्रतिसन्धानमिति सूत्रम्। राज्यस्य प्रतिसन्धानं राजव्यसने सति तत्पुत्रादीनभिषिच्य परिचिन्तनम्। तदिहोच्यत इति सूत्रार्थः। पूर्वप्रकान्तमनुजीविवृत्तं मन्त्रिवृत्तात्मनार्थाधिकार्यात्मना च द्वाभ्यामध्यायाभ्यां प्रतिपादितं राजस्वास्थ्यदशायाम्। तदस्वस्थतायां मन्त्रिव्यापारोऽधुनाभिधीयते।

राजव्यसनमिति। राज्ञो व्यसनमस्वास्थ्यम्, एवम् अनेन वक्ष्यमाणेन प्रकारेण, प्रतिकुर्वीत। मरणाबाधभयात् प्रागेव, राज्ञः, प्रियहितोपग्रहेण प्रियहितजनोपसङ्ग्रहेण प्रियहितवचनेन च, मासद्विमासान्तरं मासव्यवहितं द्विमासव्यवहितं च, दर्शनं दिदृक्षुदर्शनावसरदानं, स्थापयेत् नियमयेत्। केनापदेशेन स्थापयेत्, देशपीडापहम्, अमित्रापहम् आयुष्यमायुष्यकरं, पुत्रीयं पुत्रोत्पत्त्यर्थं वा, कर्म राजा साधयति इत्यपदेशेन। राजव्यञ्जनं राजचिह्नयुक्तं कमप्याप्तजनं कृत्वा, अनुरूपवेलायां प्रकृतिदर्शनयोग्ये समये, प्रकृतीनां मित्रामित्रदूतानां च दर्शयेत्। तैः सहावश्यकार्यतया प्रसक्तां सम्भाषां मन्त्रिमुखेन राजा कुर्यान्मौनव्रतमपदिश्येत्याह—तैश्च यथोचितामित्यादि। दिवसाष्टभागकरणीयतया पूर्वमुक्तं राज्ञो व्यापारं द्वाराधिकृतान्तःपुराधिकृतमुखेनानुष्ठापयेदित्याह—दौवारिकेत्यादि। अपकारिष्विति। तेषु, हेडम्

आप्तपुरुषाधिष्ठितौ दुर्गप्रत्यन्तस्थौ वा कोशदण्डावेकस्थौ कारयेत्. कुल्यकुमारमुख्यांश्चान्यापदेशेन ।

यश्च मुख्यः पक्षवान् दुर्गाटवीस्थो वा वैगुण्यं भजेत तमुपग्राहयेत् । बह्वाबाधां वा यात्रां प्रेषयेत् मित्रकुलं वा ।

[ तदैव तैः परराष्ट्रविषये कल्पनीयाः व्यवस्थाः ]

यस्माच्च सामन्तादाबाधं पश्येत् तमुत्सवविवाहहस्तिबन्धनाश्वपण्यभूमिप्रदानापदेशेन अवग्राहयेत्, स्वमित्रेण वा । ततः सन्धिमदूष्यं कारयेत् ।

आटविकामित्रैर्वा वैरं ग्राहयेत् ।

तत्कुलीनमवरुद्धं वा भूम्येकदेशेनोपग्राहयेत् ।

---

श्रीमूला

अनादरं कोपं, प्रसादं वा, प्रकृतिकान्तं प्रकृतिसम्मतं, दर्शयेत् । प्रसादमेव न तु हेडम्, उपकारिषु दर्शयेत् ।

दुर्गगतौ प्रत्यन्तभूमिगतौ च कोशदण्डावाप्तपुरुषरक्षितौ कृत्वा केनचिद् व्याजेनैकस्थानगतौ कारयेत् । तथा कुलीनान् राजकुमारान् राजमुख्यांश्चैकस्थान् कारयेदित्याह—आप्तपुरुषाधिष्ठितावित्यादि ।

यश्चेति । यश्च मुख्यः, पक्षवान् सहायवान्, दुर्गाटवीस्थो वा दुर्गस्थोऽटवीस्थो वा, वैगुण्यं विक्रियां, भजेत, तम्, उपग्राहयेत् अनुकूलयेत् । बह्वाबाधां वा यात्रां बह्वपायदेशसाधनार्थां यात्रां वा, प्रेषयेत् कारयेत् । मित्रकुलं वा प्रेषयेत् मित्रकुलं प्रति वा तत्साहाय्यार्थं प्रहिणुयात् ।

इत्थं स्वविषये कर्तव्यमुक्त्वा परविषये कर्तव्यमाह—यस्माच्चेति । यस्माच्च, सामन्ताद् भूम्यनन्तरात्, अबाधं, पश्येत् सम्भावयेत्, तम्, उत्सवविवाहहस्तिबन्धनाश्वपण्यभूमिप्रदानापदेशेन उत्सवादिपञ्चकान्यतमव्याजेन, अवग्राहयेत् । आनाय्यानुकूलयेत् । स्वमित्रेण वा स्वमित्रद्वारेण वा, तम् अवग्राहयेत् । ततः तन्मुखेन, सन्धिम् अदूष्यं कारयेत् ।

आटविकामित्रैर्वेति । आटविकैरमित्रैश्च वा, वैरं ग्राहयेत्, पूर्वोक्तस्य सामन्तस्य । तत्कुलीनं सामन्तकुलोत्पन्नम्, अवरुद्धं वा, भूम्यैकदेशेन भूम्यैकदेशदानेन, उपग्राहयेत् अर्थात् तद्द्वारेण तं सामन्तं दमयेत् ।

[ राज्ञि तु मृते युवराजे चाविद्यमाने
स्वराष्ट्रे कर्तव्याः अंशाः ]

**कुल्यकुमारमुख्योपग्रहं कृत्वा वा कुमारमभिषिक्तमेव दर्शयेत् । दाण्डकर्मिकवद्वा राज्यकण्टकानुद्धृत्य राज्यं कारयेत् ।**

[ तदैव परराष्ट्रे कर्तव्याः अंशाः ]

**यदि वा कश्चिन्मुख्यः सामन्तादीनामन्यतमः कोपं भजेत, तम् 'एहि, राजानं त्वा करिष्यामि' इत्यावाहयित्वा घातयेत् । आपत्प्रतीकारेण वा साधयेत् ।**

[ तदैव युवराजे विद्यमाने विशेषः ]

**युवराजे वा क्रमेण राज्यभारमारोप्य राजव्यसनं ख्यापयेत् ।**

[ राज्ञः परभूमौ मरणे राज्यप्रतिसन्धानक्रमः ]

**परभूमौ राजव्यसने मित्रेणामित्रव्यञ्जनेन शत्रोस्सन्धिमवस्थाप्यापगच्छेत् । सामन्तादीनामन्यतमं वाऽस्य दुर्गे स्थापयित्वापगच्छेत् । कुमार-**

---

श्रीमूला

त एते राज्ञि ध्रियमाणे व्यापाराः । मृते तु कर्तव्यमाह—कुल्यकुमारमुख्योपग्रहमिति । राजकुल्यानां राजकुमाराणां राष्ट्रमुख्यानां चोपग्रहं, कृत्वा वा, कुमारम्, अभिषिक्तमेव दर्शयेत् । दाण्डकर्मिकवद् वा दाण्डकर्मिकोक्तरीत्या वा, राज्यकण्टकान् उद्धृत्य राज्यं कारयेत् ।

इत्थं स्वविषये कर्तव्यमुक्तम् । परविषये कर्तव्यमाह—यदि वेत्यादि । सामन्ताद्यन्यतमः कश्चिन्मुख्यो यदि कुप्येत्, तदा 'बालोऽयं राज्यानर्हः प्रकृतिक्षोभपरिहारार्थं केवलमभिषिक्तः । तद् आगच्छ त्वामेवाभिषेक्ष्यामः' इत्युक्त्वा तमानाय्य घातयेत् । यदि स नागच्छेत्, तदा आपत्प्रतीकारोक्तकल्पेन तं साधयेत् ।

उक्तमविद्यमाने युवराजे । यदि स विद्येत, तर्हि तस्मै राज्यभारं जीवत्येव राज्ञि अर्पयित्वा पश्चाद् राजमरणं ख्यापयेदित्याह—युवराजे वेत्यादि ।

इत्थं स्वभूमौ राजमरणे राज्यप्रतिसन्धानमुक्त्वा परभूमावाह—परेत्यादि । परभूमौ, राजव्यसने, अमित्रव्यञ्जनेन मित्रेण सह शत्रोः सन्धिम्, अवस्थाप्य स्थापयित्वा, इत्थं परविषयगतकोशदण्डरक्षार्थं संविधानं कृत्वेत्यर्थः, अपगच्छेत् । सामन्तादीनाम् अन्यतमं वा, दुर्गे परकीये स्थापयित्वा कोशदण्डरक्षार्थं नियुज्य, अपगच्छेत् पश्चात् कोपाद्यपदेशेनेत्यार्थम् । कुमारं युवराजम्, अभिषिच्य वा, प्रतिव्यूहेत शत्रुं प्रतियुध्येत ।

मभिषिच्य वा प्रतिव्यूहेत । परेणाभियुक्तो वा यथोक्तमापत्प्रतीकारं कुर्यात् ।

[ आत्मगुणसम्पन्नराजकुमारसत्त्वे तस्यैव राज्यार्हता,
भारद्वाजमतनिरासः, तादृशकुमाराभावे
कर्तव्योंऽशश्च ]

'एवमेकैश्वर्यममात्यः कारयेत्' इति कौटल्यः ।

'नैवम्' इति भारद्वाजः—'प्रम्रियमाणे राजनि अमात्यः कुल्यकुमारमुख्यान् परस्परं मुख्येषु वा विक्रामयेत् । विक्रान्तं प्रकृतिकोपेन घातयेत् । कुल्यकुमारमुख्यानुपांशुदण्डेन वा साधयित्वा स्वयं राज्यं गृह्णीयात् । राज्यकारणाद्धि पिता पुत्रान् पुत्राश्च पितरमभिद्रुह्यन्ति, किमङ्ग! पुनरमात्यप्रकृतिर्ह्येकप्रग्रहो राज्यस्य । तत् स्वयमुपस्थितं नावमन्येत । स्वयमारूढा हि स्त्री त्यज्यमानाऽभिशपतीति लोकप्रवादः ।

---

श्रीमूला

परेण शत्रुणा, अभियुक्तो वा, यथोक्तं 'बाह्याभ्यन्तराश्चापदः' 'दूष्यशत्रुसंयुक्ताः' 'अर्थानर्थसंयुक्ताः' इत्यभियास्यत्कर्माधिकरणगतसूत्रत्रयोक्तम् आबलीयसोक्तं च, आपत्प्रतीकारं कुर्यात् । इति राज्यप्रतिसन्धानं व्याख्यातम् । अथैकैश्वर्यमुच्यते ।

एकैश्वर्यमिति सूत्रम् । एकस्यैव राजपुत्रस्य एकातपत्रमैश्वर्यं कर्तव्यमित्येतदुच्यत इति सूत्रार्थः । राज्यप्रतिसन्धानमधस्तादुक्तम् । अमात्यस्यैश्वर्यप्रसङ्गे राजपुत्रस्यैव तत् कर्तव्यमित्यधुनाभिधीयते ।

एवमिति । अनेन प्रकारेण, अमात्यः, एकैश्वर्यं, कारयेत् अर्थाद् राजपुत्रस्य । इति कौटल्यः ।

नैवमिति भारद्वाज इति । अमात्यो राजपुत्रमेकेश्वरं न कुर्यादिति भारद्वाजो मन्यते । तर्हि स किं कुर्यात् तत्राह—प्रम्रियमाणे वेत्यादि ।

अयमर्थः—आसन्नमरणे राज्ञि कुल्यान् कुमारं राष्ट्रमुख्यांश्च परस्परं वा मुख्येषु वा विक्रमयेत् योधयेत् । विक्रान्तं प्रकृतिकोपेन घातयित्वा कुल्यकुमारमुख्यांस्तूष्णीन्दण्डेन वा घातयित्वा स्वयं राज्यं निष्कण्टकं हरेदमात्यः । कुतः, राज्यहेतोर्हि पिता पुत्रान् पुत्राश्च पितरमभिद्रुह्यन्ति, किमुतामात्यो राज्यैकनियामकः । तस्मात् स्वयमुपनतं राज्यममात्यो न प्रत्याचक्षीत । रन्तुं स्वयमुपगता हि स्त्री प्रत्याख्यायमाना पुरुषमभिशपतीति लोकवादहृष्टान्तेन श्रीरपि स्वयमुपस्थिता नोपेक्षणीयेति ।

**कालश्च सकृदभ्येति यं नरं कालकाङ्क्षिणम् ।**
**दुर्लभस्स पुनस्तस्य कालः कर्म चिकीर्षतः॥१८६॥**

**'प्रकृतिकोपकमधर्मिष्ठमनैकान्तिकं चैतत्' इति कौटल्यः । राजपुत्रमात्मसम्पन्नं राज्ये स्थापयेत् ।**

**सम्पन्नाभावे—व्यसनिनं कुमारं राजकन्यां गर्भिणीं देवीं वा पुरस्कृत्य महामात्रान् ब्रूयात्—'अयं वो निक्षेप, पितरमस्यावेक्षध्वं सत्त्वाभिजनमात्मनश्च; ध्वजमात्रोऽयं, भवन्त एव स्वामिनः; कथं वा क्रियताम्' इति ।**

**तथा ब्रुवाणं योगपुरुषा ब्रूयुः—'कोऽन्यो भवत्पुरोगादस्माद्राज्ञश्चातुर्वर्ण्यमर्हति पालयितुम्' इति । 'तथा' इत्यमात्यः कुमारं राजकन्यां गर्भिणीं देवीं वाऽधिकुर्वीत । बन्धुसम्बन्धिनां मित्रामित्रदूतानां च दर्शयेत् ।**

**भक्तवेतनविशेषममात्यानामायुधीयानां च कारयेत् । 'भूयश्चाऽयं**

---

श्रीमूला

अस्मिन्नर्थे श्लोकमप्युदाहरति—कालश्चेत्यादि । कर्मकरणाय चिरात् प्रतीक्ष्यमाणं कालं पुरुषः सकृदेव लभते, लब्धमुपेक्षितं तु पुनर्न लभत इत्यतः स सर्वथा नोपेक्षणीय इत्यर्थः ।

तदिदं भारद्वाजमतं प्रतिक्षिपति—प्रकृतिकोपकमिति । प्रकृतिकोपकरम्, अधर्मिष्ठं धर्मापेतम्, अनैकान्तिकं नियमेन कार्यासाधकं च, एतत् कुल्यकुमारमुख्यविक्रमणादिकम्, इति कौटल्यः । किं तर्ह्यमात्यः कुर्यादित्याह—राजपुत्रमात्मसम्पन्नमित्यादि । व्यसनिनं पानादिप्रसक्तमपि । महामात्रान् राष्ट्रमहत्तरान् युक्तमहत्तरांश्च । सन्निपात्य एकत्र मेलयित्वा । निक्षेपो रक्षणीयपदार्थः । सत्त्वाभिजनं पराक्रमं कुलं च । ध्वजमात्रः पताकास्थानीयः ।

तथा ब्रुवाणमित्यादि । योगपुरुषाः संमेलिताः श्राविताः पुरुषाः । भवत्पुरोगात् त्वदधिष्ठातृकात् । तथेति योगपुरुषानुमतिं स्वीकृत्य । अधिकुर्वीत अभिषिञ्चेत् । बन्धुसम्बन्धिनां बन्धूनां सम्बन्धिनां च ।

भक्तवेतनविशेषमिति । भक्तस्य वेतनस्य च विशेषं पूर्वापेक्षयाधिक्यम्, अमात्यानाम् आयुधीयानां च, कारयेत् । भूयश्च बहुतरं च, अयं कुमारः वृद्धः प्राप्तव्यव-

**वृद्धः करिष्यति' इति ब्रूयात्। एवं दुर्गराष्ट्रमुख्यानाभाषेत, यथार्हं च मित्रामित्रपक्षम्। विनयकर्मणि च कुमारस्य प्रयतेत। कन्यायां समानजातीयादपत्यमुत्पाद्य वाऽभिषिञ्चेत्। मातुश्चित्तक्षोभभयात् कुल्यमल्पसत्वं छात्रं च लक्षण्यमुपनिदध्यात्। ऋतौ चैनां रक्षेत् न चात्मार्थं कश्चिदुत्कृष्टमुपभोगं कारयेत्। राजार्थं तु यानवाहनाभरणवस्त्रस्त्रीवेश्मपरिवापान् कारयेत्।**

[ अभिषिक्तस्य यौवनावस्थायां स्वनिवृत्त्यनुवृत्तिपरिशीलनावश्यकता कर्तव्योंऽशश्च ]

**यौवनस्थं च याचेत विश्रमं चित्तकारणात्।**
**परित्यजेदतुष्यन्तं तुष्यन्तं चानुपालयेत् १८७॥**
**निवेद्य पुत्ररक्षार्थं गूढसारपरिग्रहान्।**
**अरण्यं दीर्घसत्रं वा सेवेतारुच्यतां गतः ॥१८८॥**

---

श्रीमूला

हारः, करिष्यतीति ब्रूयात् तदुत्साहार्थम्। एवं दुर्गराष्ट्रमुख्यान् दुर्गमुख्यान् राष्ट्रमुख्यांश्च, आभाषेत। यथार्हं च यथोचितं च, मित्रामित्रपक्षम्, आभाषेत। विनयकर्मणि च विद्याशिक्षणव्यापारे च, कुमारस्य, प्रयतेत। कन्यायां राज्याभिषिक्तायां समानजातीयात् पुरुषात् अपत्यं पुमपत्यम्, उत्पाद्य वा अभिषिञ्चेत्। मातुरिति। कुमारमातुः चित्तक्षोभभयात्, कुल्यं कुलीनम्, अल्पसत्त्वम् अल्पौजसं, छात्रं च, लक्षण्यं सौम्यलक्षणम्, उपनिदध्यात् मातुः समीपे निदध्यात्, अर्थाद् देवतार्चनपरिकर्मपुराणश्रावणाद्यर्थे। ऋतौ च, एनां रक्षेत्। न च आत्मार्थं, कश्चिद् उत्कृष्टम् अमात्यपदक्लृप्ताभ्यधिकम्, उपभोगं कारयेत्। राजार्थं तु यानवाहनाभरणवस्त्रस्त्रीवेश्मपरिवापान् यानादिषट्कं परिवापं शयनासनादिकं च, कारयेत्।

यौवनस्थं चेति। प्राप्तयौवनं सन्तं कुमारं चित्तकारणात् तदभिप्रायज्ञानार्थं, विश्रमम् आत्मनोऽमात्यकर्मविश्रान्तिं, याचेत। अतुष्यन्तं परित्यजेत् याचितं तं 'याही'ति वदन्तं त्यक्त्वा गच्छेत्। तुष्यन्तं चानुपालयेत् 'मा याही'ति वदन्तं भूयोऽप्युपासीत।

निवेद्येति। पुत्ररक्षार्थं, गूढसारपरिग्रहान् गूढपुरुषान् मूलबलम् आपदर्थे पितृपितामहादिस्थापितं निधिपरिग्रहं च, निवेद्य राजपुत्राय ज्ञापयित्वा, अरण्यं सेवेत, तपसे। दीर्घसत्रं वा दीर्घकालनिर्वर्त्यं यज्ञं वा, सेवेत, अनरण्ये। कथम्भूतः, अरुच्यतां गतः अमात्यवृत्तौ अरुचिमत्त्वं प्राप्तः, अथवा राजानं प्रति द्वेष्यतां गतः।

**मुख्यैरवगृहीतं वा राजानं तत्प्रियाश्रितः ।**
**इतिवृत्तपुराणाभ्यां बोधयेदर्थशास्त्रवित् ॥१८९॥**
**सिद्धव्यञ्जनरूपो वा योगमास्थाय पार्थिवम् ।**
**लभेत लब्ध्वा दूष्येषु दाण्डकर्मिकमाचरेत् ॥१९०॥**

इति योगवृत्ते राज्यप्रतिसन्धानम् एकैश्वर्यं च षष्ठोध्यायः,
आदितष्षण्णवतिः

एतावता कौटलीयार्थशास्त्रस्य योगवृत्तं
पञ्चममधिकरणं समाप्तम्

---

श्रीमूला

मुख्यैरिति । राजमातुलादिभिः, अवगृहीतं वा स्वायत्तीकृतं च राजानं, तत्प्रियाश्रितः तत्प्रियानेवाश्रितः, इतिहासपुराणाभ्यां, बोधयेद् धर्मार्थतत्त्वमित्यार्थम् । कीदृशो बोधयेत्, अर्थशास्त्रवित् पुरुषार्थप्रतिपादकशास्त्राभिज्ञः ।

तथा बोधयितुमशक्ये राज्ञि का गतिस्तत्राह—सिद्धव्यञ्जनरूपो वेति । सिद्धवेषधारी वा, योगम् आस्थाय वर्णकेशान्यथाकरणलक्षणं कपटमाश्रित्य, पार्थिवं राजानं, लभेत वशे कुर्यात् । लब्ध्वा वशे कृत्वा, दूष्येषु मातुलादिषु, दाण्डकर्मिकं तत्प्रकरणोपदिष्टं दण्डकर्म, आचरेत् ।

व्याख्यायामर्थशास्त्रस्य श्रीमूलाख्यानभाजने ।
योगवृत्ताधिकरणं पञ्चमं समपूर्यत ॥

इति श्रीवञ्चिमण्डलमहाराजाश्रितस्य ताम्रपर्णीतीरवर्तितरुवाग्रहाराभिजनस्य-
श्रीसीताम्बाश्रीरामसुब्रह्मण्यार्यसूनोर्महामहोपाध्यायगणपतिशास्त्रिणः
कृतिषु कौटलीयार्थशास्त्रव्याख्यायां श्रीमूलाख्यायां योगवृत्ते
पञ्चमाधिकरणे षष्ठोऽध्यायः, राज्यप्रतिसन्धानम् एकैश्वर्यम्,
आदितः षण्णवतितमः ॥
॥ योगवृत्तं पञ्चमाधिकरणं समाप्तम् ॥

# अथ मण्डलयोनिर्नाम षष्ठमधिकरणम्

## षण्णवतितमं प्रकरणम्

### प्रथमोऽध्यायः

### प्रकृतिसम्पदः

[ प्रकृतीनां विभागः ]

**स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणि प्रकृतयः ।**

---

श्रीमूला

इत्थं वैनयिकादिभिर्योगवृत्तपर्यन्तैः पञ्चभिरधिकरणैस्तन्त्रभागोऽभिहितः। आवाप इदानीमारभ्यते। तन्त्रमिति स्वराष्ट्रानुष्ठानस्य संज्ञा, आवाप इति परराष्ट्रानुष्ठानस्य। तन्त्र्यन्ते विस्तार्यन्ते दुर्गसेतुकर्मवणिक्पथशून्यनिवेशाः खनिद्रव्यहस्तिवनकर्माणि शक्तिसिद्धयो धर्मार्थकामाश्च विजिगीषुणास्मिन्निति तन्त्रव्युत्पत्तिः। आ समन्तात् परराष्ट्रेषु उप्यन्ते प्रयुज्यन्ते इत्यावापाः सन्ध्यादयः तदनुष्ठानमपि तद्विषयत्वादावाप इत्यावापव्युत्पत्तिः। अथवा आ समन्तात् परराष्ट्रप्रयोज्याः सन्ध्यादय उप्यन्ते प्रतिपाद्यन्तेऽत्रेत्यावापो मण्डलयोन्यादिसप्ताधिकरणसमुदाय उच्यते।

तत्रादिममधिकरणं मण्डलयोनिर्नाम। विजिगीष्वरिमध्यमोदासीनाख्यचतुरवयवं मण्डलं, योनिरुत्तराधिकरणार्थस्य षाड्गुण्यस्य विषयः। मण्डलं हि विजिगीष्वादिलक्षणं परस्परानुष्ठेयस्य सन्धिविग्रहादेः षाड्गुण्यस्य प्रकृतिर्भवतीति।

तत्र प्रथमं सूत्रम्—प्रकृतिसम्पद इति। प्रकृतयः स्वाम्यमात्यराष्ट्रदुर्गकोशदण्डमित्राणि, प्रकृष्टं परस्परमुपकुर्वन्तीति व्युत्पत्तेः, तासां सम्पदः अपेक्षितगुणपुष्कलता इहोच्यन्त इत्यर्थः। 'लोकयात्राविद् राजानमात्मद्रव्यप्रकृतिसम्पन्नमाश्रयेत' इत्युक्तमधस्तात्। तत्रेयमात्मसम्पद् एषा प्रकृतिसम्पदिति विभागस्त्वधुना प्रदर्श्यते।

प्रकृतीराह—स्वाम्यमात्येत्यादि। स्वाम्यादयः सप्त। तत्र स्वामी अमात्यादीनां पञ्चानां द्रव्यप्रकृतीनामधिपतिः। स द्विधा राजा युवराजश्चेति। अमात्याः बुद्धिसहायाः ते च त्रयश्चत्वारो द्वादश षोडश विंशतिरित्युक्ता मन्त्राधिकारे। जनपदो ग्रामादिभेदेनाष्टविधः। दुर्गम् 'अन्तर्द्वीपमि'त्यादिना विभक्तम्। कोशो रत्नसारफल्गुकुप्यभेदाच्चतुर्विधः। दण्डश्चतुर्विधो रथगजतुरगपदातिभेदात्। मित्रं सहजकृत्रिमप्राकृतभेदेन त्रिप्रकारम्। सप्तैतानि अन्योन्यसहकारीणि त्रिविष्टब्धकवदन्योन्याश्रयाणि परस्परं प्रकृष्टमुपकुर्वन्तीत्यतः प्रकृतय इत्याख्यायन्ते।

तत्र स्वामिसम्पत् ( स्वामित्वोपयोगिनो गुणाः ) ]

**तत्र स्वामिसम्पत्—महाकुलीनः दैवबुद्धिसत्त्वसम्पन्नः वृद्धदर्शी धार्मिकः सत्यवाक् अविसंवादकः कृतज्ञः स्थूललक्षः महोत्साहः अदीर्घसूत्रः शक्यसामन्तः दृढबुद्धिः अक्षुद्रपरिषत्कः विनयकामः इत्याभिगामिका गुणाः। शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशाः प्रज्ञागुणाः । शौर्यम् अमर्षः शीघ्रता दाक्ष्यं चोत्साहगुणाः।**

**वाग्मी प्रगल्भः स्मृतिमतिबलवान् उदग्रः स्ववग्रहः कृतशिल्पः व्यसने दण्डनायी उपकारापकारयोर्दृष्टप्रतीकारी ह्रीमान् आपत्प्रकृत्योर्विनियोक्ता**

---

श्रीमूला

तेषु स्वामिनः प्राधान्यात् प्रथमं स्वामिसम्पदमाह—स्वामिसम्पदिति। उच्यत इति शेषः। सा च द्विविधा आभिगामिकगुणा इत्यात्मसम्पदिति च। तत्राभिगामिकान् गुणान् प्रथममाह—महाकुलीन इत्यादि। महाकुलीनः सूर्यसोमादिवंशोत्पन्नः श्रुतशीलैश्वर्ययुक्तश्च दैवबुद्धिसत्त्वसम्पन्नः दैवसम्पन्नः दैवं पौर्वदेहिकं शुभकर्म अल्पप्रयत्नमात्रकार्यसिद्ध्यानुमेयं तत्सम्पन्नः बुद्धिसम्पन्नः शुश्रूषाश्रवणादिबुद्धिगुणयुक्तः सत्त्वसम्पन्नश्च सत्त्वं धैर्यं व्यसनाभ्युदययोर्निर्विकारिता तद्युक्तश्च, वृद्धदर्शी ज्ञानोत्कृष्टदर्शनशीलः, धार्मिको धर्मानुष्ठानपरः, सत्यवाक् तथ्यभाषी, अविसंवादकः वचनकर्मणोस्तुल्यार्थः। कृतज्ञः उपकारस्मर्ता, स्थूललक्षो महेच्छो महादाता च महोत्साहः प्रशस्तव्यवसायः, अदीर्घसूत्रः क्षिप्रकारी, शक्यसामन्तः पीडयितुं कर्शयितुमुच्छेत्तुं च शक्याः विषयान्तरभूपा यस्य स तथाभूतः, दृढबुद्धिः अभेद्यनिश्चयः, दृढभक्तिरिति पाठे त्वभेद्यस्नेहः, अक्षुद्रपरिषत्को गुणवत्परिवारः, विनयकामः शास्त्रसंस्कारार्थी, इति षोडश, आभिगामिका गुणाः।

शुश्रूषेत्यादि। शुश्रूषा श्रोतुमिच्छा, श्रवणं शब्दावगमः, ग्रहणमर्थावगमः, धारणम् अवगताविस्मरणम्, विज्ञानं विशेषज्ञानम्, ऊहः ज्ञातस्यार्थस्योपपत्तिपरिचिन्तनम्, अपोहो दुष्टपक्षपरित्यागः, तत्त्वाभिनिवेशः गुणवत्पक्षानुष्ठानम्, इति अष्टौ प्रज्ञागुणाः।

शौर्यमिति। निर्भीकत्वम्, अमर्षः अक्षमा, शीघ्रता क्षिप्रक्रियत्वं, दाक्ष्यं लङ्घनप्लवनादिनैपुण्यं च, उत्साहगुणाः चत्वारः।

वाग्मीति। अभिसंहितार्थसमर्पणक्षमवाक्यवक्ता, प्रगल्भः असभाकम्पवक्ता, स्मृतिमतिबलवान् स्मृतिरतीतविषया धीः मतिरागामिगोचरा बलं शरीरेन्द्रियदार्ढ्यं तद्वान्, उदग्रः चित्तोन्नतिमान्, स्ववग्रहः अकार्यात् सुखनिवार्यः, कृतशिल्पः हस्त्यश्वप्रहरणविद्यानिपुणः, व्यसने दण्डनायी शत्रोर्दैवमानुषव्यसनावसरे स्वसैन्यं तद्विजयाय

**दीर्घदूरदर्शी देशकालपुरुषकारकार्यप्रधानः सन्धिविक्रमत्यागसंयमपणपरच्छिद्रविभागी संवृतः अदीनाभिहास्यजिह्मभ्रुकुटीक्षणः कामक्रोधलोभस्तम्भचापलोपतापपैशुन्यहीनः शुक्लः स्मितोदग्राभिभाषी वृद्धोपदेशाचारः—इत्यात्मसम्पत् ।**

[ अमात्यसम्पत् ]

**अमात्यसम्पदुक्ता पुरस्तात् ।**

[ जनपदसम्पत् ]

**मध्ये चान्ते च स्थानवान्, आत्मधारणः परधारणश्च, आपदि स्वारक्षः, स्वाजीवः शत्रुद्वेषी शक्यसामन्तः पङ्कपाषाणोषरविषमकण्टकश्रेणीव्याल-**

---

श्रीमूला

प्रेषयिता आत्मनो व्यसनावसरे स्वसैन्यं रक्षिता च, उपकारापकारयोर्दृष्टप्रतिकारी शास्त्रदृष्टप्रतिकारविधायी, ह्रीमान् लज्जावान् अकार्यानुष्ठानविमुख इत्यर्थः। आपत्प्रकृत्योर्विनियोक्ता आपद् दुर्भिक्षं प्रकृतिः स्वास्थ्यं सुभिक्षं तयोर्धान्यादिकं विनियोक्ता सुभिक्षे सञ्चित्य दुर्भिक्षे विनियोक्तेत्यर्थः, अथवा आपदि प्रजायां च धान्यादिविनियोक्ता, दीर्घदूरदर्शी दीर्घकालसम्बद्धमर्थं प्रज्ञया द्रष्टुं दूरदेशसम्बद्धमर्थं चारचक्षुषा द्रष्टुं च शीलमस्येति तथाभूतः, देशकालपुरुषकारकार्यप्रधानः स्वसैन्यस्य युद्धोचितो देशः कालः पुरुषकार उत्साहादिशक्तिलक्षणाः कार्यं च प्रधानं यस्य स तथाभूतः, सन्धिविक्रमत्यागसंयमपणपरच्छिद्रविभागी विभागं विविच्य ज्ञानं तद्वान् विभागी स सन्ध्यादिषु प्रत्येकं सम्बध्यते। सन्धिविभागी सन्धिप्रयोगाभिज्ञः विक्रमविभागी प्रकाशयुद्धादिप्रयोगज्ञः त्यागविभागी यथादेशकालपुरुषदानसमर्थः संयमपणविभागी प्रजानुपपीडया गूढकोशाभिसंहरणप्रवीणः परच्छिद्रविभागी शत्रोश्छिद्रं पानमृगयादिव्यसनमुपलभ्य तीक्ष्णरसादिप्रयोगसमर्थः, संवृतः संरक्षिताभयस्थानो गूढमन्त्रश्च, अदीनाभिहासी दीनानभिहसितुं शीलमस्य नास्तीति तथाभूतः गभीरहासी वा, अजिह्मभ्रुकुटीक्षणः अवक्रसौम्यवीक्षणः, कामादिसप्तकहीनः तत्र स्तम्भ उत्सेकः चापलम् अविवेकानुष्ठानम् उपतापः प्रजाद्रोहः, शेषं प्रतीतं, शक्लः प्रियंवदः, स्मितोदग्राभिभाषी स्मितपूर्वोदाराभिभाषणशीलः, वृद्धोपदेशाचारः विद्यावृद्धोपदेशानुसार्यनुष्ठानः, इत्यात्मसम्पत् ।

अमात्यसम्पदिति । सा, उक्ता पुरस्ताद् वैनयिकाधिकरणे ।

जनपदसम्पदमाह—मध्ये चान्ते च स्थानवानिति । मध्ये सीमायां च दुर्गवान्, आत्मधारणः परधारणश्च स्ववास्तव्यजनस्वदेशागन्तुकजनोभयभरणक्षमधान्यादिप्रसोता, आपदि स्वारक्षः विपत्समये शैलवननदीदुर्गवत्तया सुकररक्षः स्वाजीवः अल्पायासनिष्पाद्यधान्यादिमान्, शत्रुद्वेषी राजशत्रुद्वेषणशीलजनयुक्तः, शक्यसामन्तः

**मृगाटवीहीनः कान्तः सीताखनिद्रव्यहस्तिवनवान् गव्यः पौरुषेयो गुप्तगोचरः पशुमान् अदेवमातृकः वारिस्थलपथाभ्यामुपेतः सारचित्रबहुपण्यो दण्डकरसहः कर्मशीलकर्षकः अबालिशस्वामी अवरवर्णप्रायः भक्तशुचिमनुष्यः— इति जनपदसम्पत् ।**

[ दुर्गसम्पत् ]

**दुर्गसम्पदुक्ता पुरस्तात् ।**

[ कोशसम्पत् ]

**धर्माधिगतः पूर्वैस्स्वयं वा, हेमरूप्यप्रायः चित्रस्थूलरत्नहिरण्यः दीर्घामप्यापदमनायतिं सहेत—इति कोशसम्पत् ।**

[ दण्डसम्पत् ]

**पितृपैतामहो नित्यो वश्यः तुष्टभृतपुत्रदारः प्रवासेऽपि सम्पादितः**

---

श्रीमूला

दुर्बलसामन्तः, पङ्कपाषाणोषरविषमकण्टकश्रेणीव्यालमृगाटवीहीनः पङ्काद्यष्टकरहितः तत्र कण्टकाश्चोरपारदारिकादयः क्षुद्रशत्रवः श्रेणी राजप्रत्यनीकवृत्तिजनसङ्घः शेषं प्रतीतं, कान्तः वृक्षौषधिनदीसरस्तटाकारामादिरमणीयः सीताखनिद्रव्यहस्तिवनवान् सीता कृष्यभूमिः खनिर्वज्रादिमणिसुवर्णाद्याकरः द्रव्यवनं शाकतिनिशजातीयसारदारुत्पत्तिस्थानं हस्तिवनं गजारण्यं तद्युक्तः, गव्यः गोहितः, पौरुषेयः पुरुषहितः, गुप्तगोचरो लुब्धकादिरक्षितभूमिः, पशुमान् गोच्छागादिबहुलः, अदेवमातृकः नद्यम्बुसम्पद्यमानव्रीहिपालितः, वारिस्थलपथाभ्याम् उपेतः जलमार्गस्थलमार्गयुक्तः, सारचित्रबहुपण्यः महार्घनानाजातीयबहुलक्रय्यवस्तुकः, दण्डकरसहः दण्डोऽपराधप्रायश्चित्तधनं करो राजभागः तावुद्रिक्तावपि सहत इति तथाभूतः, कर्मशीलकर्षकः अनलसकृषीवलः, अबालिशस्वामी अबालिशा बुद्धिमन्तः स्वामिनः स्वाम्यनिर्वाहिका यस्मिन् स तथाभूतः, अवरवर्णप्रायः अधमवर्णबहुलः, भक्तशुचिमनुष्यः अनुरक्ताः शुद्धाश्च मनुष्या यस्मिन् स तथाभूतः, इति एवं, जनपदसम्पत् ।

दुर्गसम्पदिति । सा, उक्ता पुरस्ताद् दुर्गविधानप्रकरणे ।

कोशसम्पदमाह—धर्माधिगत इति । न्यायार्जितः धान्यषड्भागपण्यदशभागादिभिः शास्त्रविहितैरुपचित इति यावत्, कैः, पूर्वैः स्वयं वा पूर्वभूपतिभिरात्मना वा, हेमरूप्यप्रायः सुवर्णरजतप्रचुरः, चित्रस्थूलरत्नहिरण्यः, बहुविधानि बृहन्ति च रत्नानि हिरण्यानि च नाणकाश्च यस्मिन् सः, दीर्घामप्यापदम् अनायतिं चिरकालानुवृत्तमपि दुर्भिक्षं धनानागमं च, सहेत, अर्थात् कोशः । इति कोशसम्पत् ।

दण्डसम्पदमाह—पितृपैतामह इति । पितृपितामहक्रमायातः, अत एव नित्यः स्थिरसेवी वश्यो वशवर्ती, तुष्टभृतपुत्रदारः सन्तृप्ता यथा स्युस्तथा राज्ञा पुष्टाः पुत्रा

**सर्वत्राप्रतिहतो दुःखसहो बहुयुद्धः सर्वयुद्धप्रहरणविद्याविशारदः सहवृद्धिक्षयिकत्वादद्वैध्यः क्षत्रप्रायः—इति दण्डसम्पत् ।**

[ मित्रसम्पत् ]

**पितृपैतामहं नित्यं वश्यमद्वैध्यं महत् लघुसमुत्थम् इति—मित्रसम्पत् ।**

[ सुखसमुच्छेद्या शत्रुसम्पत् ]

**अराजबीजी लुब्ध क्षुद्रपरिषत्कः विरक्तप्रकृतिः अन्यायवृत्तिः अयुक्तो व्यसनी निरुत्साहो दैवप्रमाणो यत्किञ्चनकारी अगतिः अननुबन्धः क्लीबो नित्यापकारी च—इत्यमित्रसम्पत् । एवंभूतो हि शत्रुस्सुखः समुच्छेत्तुं भवति ।**

[ आसां प्रकृतिसम्पदामवश्यसम्पादनीयता ]

**अरिवर्जाः प्रकृतयः सप्तैताः स्वगुणोदयाः ।**
**उक्ताः प्रत्यङ्गभूतास्ताः प्रकृता राजसम्पदः ॥१९१॥**

---

श्रीमूला

दाराश्च यस्य सः, प्रवासेष्वपि सम्पादितः प्रयाणकेष्वपि यथार्हभोगसम्पन्नः कृतः, सर्वत्राप्रतिहतः क्वचिदप्यप्राप्तभङ्गः, दुःखसहः प्रवासादिक्लेशसहः, बहुयुद्धः बहुसमरपरिचितः, सर्वयुद्धप्रहरणविद्याविशारदः सर्वविधेषु युद्धेषु आयुधविद्यासु च प्रवीणः, सहवृद्धिक्षयिकत्वाद् अद्वैध्यः स्वामिवृद्धौ वृद्धिः स्वामिक्षये क्षय इति स्वामिसमानवृद्धिक्षयत्वाद्धेतोर्द्वैध्यरहितः भेदरहितः अभेद्य इत्यर्थः, क्षत्रप्रायः क्षत्रियप्रचुरः, इति दण्डसम्पत् ।

मित्रसम्पदमाह—पितृपैतामहमिति । तथाभूतं, नित्यं अकृतकं, वश्यम्, अद्वैध्यं, महत् प्रभुमन्त्रोत्साहशक्तियुक्तं, लघुसमुत्थं काले सद्यस्साहाय्योद्यतम्, इति मित्रसम्पत् ।

मित्रसम्पत्प्रसङ्गादमित्रसम्पदमाह—अराजबीजीत्यादि । अराजबीजी अराजवंश्यः लुब्धः, क्षुद्रपरिषत्कः दुष्टपरिवारः, विरक्तप्रकृतिः अन्यायवृत्तिरयथाशास्त्रानुष्ठानः, अयुक्तः अनुत्थानः, व्यसनी, निरुत्साहः दैवप्रमाणः पुरुषकारशून्यः, यत्किञ्चनकारी अविवेकानुष्ठानः, अगतिः उच्छिन्नतायामशरणः, अननुबन्धः असहायः क्लीबो धैर्यहीनः, नित्यापकारी च स्वजनपरजनयोः, इत्यरिसम्पत् । एवम्भूतो हीति । यथोक्तचतुर्दशगुणयुक्तो हि, शत्रुः, समुच्छेत्तुं, सुखः अनायासेन शक्यः, भवति ।

अरिवर्जा इति । चरमोक्तारिं राजत्वात् स्वामिप्रकृतावन्तर्भूतं वर्जयित्वा, एताः स्वाम्यादयः, सप्त, प्रकृतयः, स्वगुणोदयाः स्वस्वगुणयुक्ताः, उक्ताः । प्रत्यङ्गभूताः परस्परोपकारकतया परस्पराङ्गभूताः, ताः, प्रकृताः स्वस्वकर्मसु व्यापृताः सत्यो, राजसम्पदः उच्यन्त इति शेषः ।

**सम्पादयत्यसम्पन्नाः प्रकृतीरात्मवान्नृपः ।**
**विवृद्धाश्चानुरक्ताश्च प्रकृतीर्हन्त्यनात्मवान् ॥१९२॥**
**ततस्स दुष्टप्रकृतिः चातुरन्तोऽप्यनात्मवान् ।**
**हन्यते वा प्रकृतिभिर्याति वा द्विषतां वशम् ॥१९३॥**
**आत्मवांस्त्वल्पदेशोऽपि युक्तः प्रकृतिसम्पदा ।**
**नयज्ञः पृथिवीं कृत्स्नां जयत्येव न हीयते ॥१९४॥**

इति मण्डलयोनौ षष्ठेऽधिकरणे प्रकृतिसम्पदः प्रथमोऽध्यायः,
आदितस्सप्तनवतितमः

---

श्रीमूला

सम्पादयतीति । आत्मवान् आत्मसम्पद्युक्तः, नृपः, असम्पन्नाः स्वस्वगुणसम्पद्रहिताः, प्रकृतीः, सम्पादयति तत्सम्पन्नाः करोति । अनात्मवान् नृपः, विवृद्धाश्च गुणसमृद्धाश्च, अनुरक्ताश्च, प्रकृतीः, हन्ति ।

तत इति । तद्दोषेण, दुष्टप्रकृतिः दुष्टाः प्रकृतयो यस्य स तथाभूतः अनात्मवान्, सः राजा, चातुरन्तोऽपि चतुस्समुद्रपर्यन्तभूमीश्वरोऽपि सन्, प्रकृतिभिर्हन्यते वा, द्विषतां, वशम् आयत्ततां, याति वा ।

आत्मवांस्त्विति । प्रकृतिसम्पदा युक्तः, नयज्ञः, आत्मवांस्तु, अल्पदेशोऽपि स्वल्पभूम्यधिपोऽपि सन्, कृत्स्नां पृथिवीं जयत्येव, न हीयते ।

इति कौटलीयार्थशास्त्रव्याख्यायां मण्डलयोनौ षष्ठाधिकरणे
प्रथमोऽध्यायः प्रकृतिसम्पदः,
आदितः सप्तनवतितमः ॥

## सप्तनवतितमं प्रकरणम्

### द्वितीयोऽध्यायः

### शमव्यायामिकम्

[ शमव्यायामयोः फलं स्वरूपं हेतुश्च ]

**शमव्यायामौ योगक्षेमयोर्योनिः । कर्मारम्भाणां योगाराधनो व्यायामः कर्मफलोपभोगानां क्षेमाराधनश्शमः । शमव्यायामयोर्योनिष्षाड्गुण्यम् ।**

[ षाड्गुण्यफलानि तत्प्रापकाणि कर्माणि च ]

**क्षयः स्थानं वृद्धिरित्युदयाः तस्य । मानुषं नयापनयौ, दैवम् अयानयौ ।**

---

श्रीमूला

शमव्यायामिकमिति सूत्रम् । कर्मफलोपभोगानां क्षेमसाधनं शमः व्यायामस्तु कर्मारम्भोपकरणानां कर्मयोगघटकः, तदुभयमस्मिन् प्रकरणे प्रतिपाद्यत इत्यर्थः । शक्तिसिद्धियुक्तेन सम्पन्नप्रकृतिना विजिगीषुणा मण्डलेषु षाड्गुण्यं प्रयोक्ष्यमाणेन योगः क्षेम इति द्वयमवश्यं विज्ञातव्यम् । योगक्षेमयोश्च कारणं शमव्यायामाविति तयोरिहाभिधानसङ्गतिः ।

शमव्यायामौ योगक्षेमयोर्योनिरिति । अपूर्वलाभो योगः तस्य व्यायामः कारणम्, आर्जितानां निर्विघ्नोपभोगः क्षेमः तस्य शमः कारणम् । यथासङ्ख्यमिह न विवक्षितम् ।

कर्मारम्भाणामिति । आरभ्यमाणानां कर्मणां स्वविषये दुर्गादीनां परविषये सन्ध्यादीनां च, योगाराधनः योगः कर्मकरपुरुषसम्बन्धस्तदपेक्षितोपकरणसम्बन्धश्च तत्साधकः, व्यायामः व्यायामपदार्थः । कर्मफलोपभोगानां कर्मणां पूर्वोक्तानां फलं स्वविषये रत्नसारफल्गुकुप्यधान्यहिरण्यादि परविषये मित्रभूमिहिरण्यादि तस्य उपभोगाः दृष्टादृष्टार्था विनियोगाः तेषां, क्षेमाराधनः क्षेमः सर्वविघ्नविधातः तत्साधकः, शमः शमपदार्थः ।

शमव्यायामयोरिति । षाड्गुण्यं षड् गुणाः सन्धिविग्रहादयः, शमव्यायामयोः, योनिः कारणम् ।

क्षय इति । क्षयोऽपचयः, स्थानं तादवस्थ्यं, वृद्धिरुपचयः, इत्येते, तस्य षाड्गुण्यस्य, उदयाः फलानि ।

उदयानां प्रापकं च द्विरूपं कर्म प्रतीतम्—मानुषं दैवमिति । तद् विभजते—

**दैवमानुषं हि कर्म लोकं यापयति । अदृष्टकारितं दैवं; तस्मिन्निष्टेन फलेन योगः अयः, अनिष्टेनानयः। दृष्टकारितं मानुषं; तस्मिन् योगक्षेमनिष्पत्तिर्नयः, विपत्तिरपनयः । तच्चिन्त्यम्; अचिन्त्यं दैवमिति ।**

[ विजिगीषुः तच्छत्रुमित्रे च ]

**राजा आत्मद्रव्यप्रकृतिसम्पन्नो नयस्याधिष्ठानं विजिगीषुः । तस्य समन्ततो मण्डलीभूता भूम्यनन्तरा अरिप्रकृतिः, तथैव भूम्येकान्तरा मित्रप्रकृतिः ।**

---

श्रीमूला

मानुषमिति। मानुषं कम, नयापनयौ नयश्चापनयश्चेति द्विप्रकारम्। दैवम्, अयानयौ अयश्चानयश्चेति द्विप्रकारम् ।

दैवमानुषं हीति। दैवमानुषात्मकं हि, कर्म लोकं यापयति लोकयात्रां वर्तयति । अदृष्टकारितं दैवमिति । अदृष्टेन धर्मात्मकेन वा अधर्मात्मकेन वा कारितं, दैवं भवति। तस्मिन् अर्थाद् धर्मादृष्टकारिते दैवे सति, इष्टेन फलेन अर्थलाभप्रियसङ्गमादिलक्षणेन, योगः, अयः इत्युच्यते । अनिष्टेन फलेनार्थहानिप्रियविरहादिलक्षणेन, योगः अनयशब्दवाच्यः, अर्थादधर्मादृष्टकारिते दैवे सति ।

दृष्टकारितं मानुषमिति । प्रभुमन्त्रोत्साहशक्तिहेतुकषाड्गुण्यप्रयोगप्रभवं मानुषं कर्म। तस्मिन् सति, योगक्षेमनिष्पत्तिः अपूर्वलाभकर्मफलोपभोगयोः सिद्धिः, नयः नयपदार्थः अर्थात् सन्ध्यादिसम्यक्प्रयोगः । विपत्तिः अपनयः योगक्षेमनिष्पत्तिरपनयपदार्थः, अर्थात् सन्ध्याद्यसम्यक्प्रयोगः। तच्चिन्त्यमिति। मानुषं कर्म प्रत्यक्षत्वाद् विमृश्यानुष्ठेयं योगक्षेमनिष्पत्तये विपत्तिपरिहाराय च । दैवम्, अचिन्त्यं विम्रष्टुमशक्यमप्रत्यक्षत्वात् । इतिशब्दः शमव्यायामकथनपरिसमाप्त्यर्थः ।

अथ मण्डलं वक्तुं तदवधिभूतं विजिगीषुमाह—राजेति । सः आत्मद्रव्यप्रकृतिसम्पन्नः आत्मसम्पद्युक्तः अमात्यादिद्रव्यप्रकृतिपञ्चकसम्पद्युक्तश्च, तत्र महाकुलीनत्वादयो वृद्धोपदेशाचारत्वान्ता गुणाः पूर्वोक्ता आत्मसम्पत् । नयस्य सन्ध्यादिसम्यक्प्रयोगलक्षणस्य, अधिष्ठानम् आश्रयः, विजिगीषुः सामदानाद्युपायैः शत्रून् विजेतुमिच्छुः । तस्य विजिगीषोः, समन्ततः, मण्डलीभूता, भूम्यनन्तरा स्वभूम्यव्यवहिता भूमिः अव्यवहिता भूमी वा अर्थादव्यवहितभूम्यधिपतिः, अरिप्रकृतिः । तथैव, भूम्येकान्तरा देशेनैकेन व्यवहिता एकभूव्यवहिता भूमी वा, मित्रप्रकृतिः ।

[ शत्रुभेदाः तदानुगुण्येनाक्रमणभेदाः रीतयश्च ]

**अरिसम्पद्युक्तः सामन्तः शत्रुः व्यसनी यातव्यः। अनपाश्रयो दुर्बलाश्रयो सोच्छेदनीयः। विपर्यये पीडनीयः कर्शनीयो वा। इत्यरिविशेषाः।**

[ राजमित्रमण्डलानि ]

**तस्मान्मित्रमरिमित्रं मित्रमित्रम् अरिमित्रमित्रं चानन्तर्येण भूमीनां प्रसज्यते पुरस्तात्। पश्चात् पार्ष्णिग्राह आक्रन्दः पार्ष्णिग्राहासार आक्रन्दासार इति।**

[ शत्रुमित्रयोरवान्तरभेदाः ]

**भूम्यनन्तरः प्रकृत्यमित्रः तुल्याभिजनस्सहजः। विरुद्धो विरोधयिता वा कृत्रिमः।**

---

श्रीमूला

अथ शत्रुभेदाश्चत्वार उच्यन्ते—अरिसम्पद्युक्त इति। अरिसम्पदा 'अराजबीजी'-त्यादिना पूर्वमुक्तया युक्तः, सामन्तः शत्रुः। व्यसनी यातव्य इति। शत्रुः मृगयादुर्भिक्षादिव्यसनवान् अभिषेणयितव्यः। अनपाश्रयः दुर्गमित्रहीनः, दुर्बलाश्रयो वा दुर्बलदुर्गमित्रो वा शत्रुः, उच्छेदनीयः। विपर्यये पीडनीयः कर्शनीयो वेति। अनपाश्रयत्वविपर्यये बलवदाश्रयत्वे कर्शनीयः धनदण्डकृशतां नेतव्यः। इति चत्वारः, अरिविशेषाः।

तस्मादित्यादि। शत्रोरनन्तरं, मित्रम्। तदनन्तरम् अरिमित्रं, तदनन्तरं मित्रमित्रं, तदनन्तरम् अरिमित्रमित्रं च, आनन्तर्येण अव्यवधानेन, भूमीनां, प्रसज्यते, पुरस्ताद् विजिगीषोररिमभियोक्तुं प्रवृत्तस्याग्रतः। त एते एवंसंज्ञकाः पुरस्तात् पञ्च राजानः। पश्चात् किंसंज्ञका इत्याह—पश्चादित्यादि। विजिगीषोः पृष्ठतः, पार्ष्णिग्राहः अनन्तरः पार्ष्णिग्राहसंज्ञः शत्रुमित्रं विजिगीषोः पार्ष्णि शत्रुहिताय गृह्णातीति व्युत्पत्तेः, आक्रन्दः पार्ष्णिग्राहानन्तर आक्रन्दसंज्ञो विजिगीषुमित्रम् 'आगत्य पार्ष्णिग्राहं मे वारये'त्याक्रन्द्यत इति व्युत्पत्तेः, पार्ष्णिग्राहासार आक्रन्दानन्तरस्तत्संज्ञः अरिमित्रमित्रम् अनुबलदानेन पार्ष्णिग्राहमासरतीति व्युत्पत्तेः, आक्रन्दासारः पार्ष्णिग्राहासारानन्तरस्तत्संज्ञः विजिगीषुमित्रमित्रम्। इति एवं चत्वारः प्रसज्यन्ते। मध्ये च विजिगीषुरेक इत्याहृत्य दशराजमण्डलम्।

अथ शत्र्ववान्तरभेदमाह—भूम्यनन्तर इत्यादि। प्रकृत्यमित्रस्तुल्याभिजन इति द्वौ सहजशत्रू। प्रकृत्यमित्रः स्वभूम्यनन्तरः, तुल्याभिजनः समानकुलोत्पन्नो दायार्हः। अपराद्धोऽपराधयिता च कृत्रिमः शत्रुः।

**भूम्येकान्तरं प्रकृतिमित्रं मातापितृसम्बन्धं सहजं; धन-जीवितहेतोराश्रितं कृत्रिममिति ।**

[ मध्यामोदासीनौ ]

**अरिविजिगीष्वोर्भूम्यनन्तरः संहतासंहतयोरनुग्रहसमर्थः निग्रहे चासंहतयोः—मध्यमः ।**

**अरिविजिगीषुमध्यानां बहिः प्रकृतिभ्यो बलवत्तरः संहतासंहतानामरिविजिगीषुमध्यमानामनुग्रहे समर्थः, निग्रहे चासंहतानाम्—उदासीनः इति प्रकृतयः ।**

[ चतुर्मण्डलसङ्क्षेपः ]

**विजिगीषुर्मित्रं मित्रमित्रं चाऽस्य प्रकृतयस्तिस्रः । ताः पञ्चभिरमात्यजनपददुर्गकोशदण्डप्रकृतिभिरेकैकशः संयुक्ताः मण्डलमष्टादशकं भवति । अनेन मण्डलपृथक्त्वं व्याख्यातम् अरिमध्यमोदासीनानाम् ।**

---

श्रीमूला

मित्रावान्तरभेदमाह—भूम्येकान्तरमित्यादि । स्वभूम्येकव्यवहितं प्रकृतिमित्रमेकं सहजमित्रं, मातापितृसम्बन्धं मातुलपैतृष्वसेयादिरूपमपरं सहजमित्रम् । धनार्थमुपजीवनार्थं चाश्रितं कृत्रिमं मित्रम् ।

मध्यममाह—अरिविजिगीष्वोर्भूम्यनन्तर इत्यादि । तयोर्भूम्यव्यवहितः विदिग्भागाश्रितः, तयोः कृतसन्धिकयोर्विगृहीतयोश्चानुग्रहसमर्थः, विगृहीतयोर्निग्रहे च समर्थो मध्यमः । तस्य भूम्यनन्तरत्वेन शत्रुत्वेऽपि भिन्नलक्षणत्वान्मध्यमसंज्ञा बोद्धव्या ।

उदासीनमाह—अरिविजिगीषुमध्यानामित्यादि । अर्थादीनां प्रकृतिभ्यो बाह्यः, बलवतो मध्यमादपि दण्डकोशादितो बलवत्तरः, तेषां संहतानां विगृहीतानां चानुग्रहशक्तः, विगृहीतानां निग्रहे च शक्त उदासीनाख्यः । इति प्रकृतयः एवं द्वादश राजप्रकृतय उक्ताः ।

अथ चतुर्मण्डलसङ्क्षेपमाह—विजिगीषुरित्यादि । अयमर्थः—विजिगीषुस्तस्य मित्रं मित्रमित्रमिति तिस्रः प्रकृतयः । तासां प्रत्येकममात्यादिप्रकृतिपञ्चकसंयोगेन षट्कत्रयसम्पत्तौ अष्टादशावयवकं मण्डलमेकं विजिगीषुसम्बद्धं जायते । तथा अरिस्तस्य मित्रं मित्रमित्रमिति तिसृणां प्रकृतीनां प्रत्येकममात्यादिपञ्चकयोगेन षट्कत्रयसम्पत्तावष्टादशकमरिसम्बद्धं मण्डलं द्वितीयं जायते । एवं मध्यमसम्बद्धं तृतीयम् उदासीनसम्बद्धं चतुर्थं च मण्डलमूह्यमिति ।

**एवं चतुर्मण्डलसङ्क्षेपः—द्वादश राजप्रकृतयः; षष्टिर्द्रव्य प्रकृतयः— सङ्क्षेपेण द्विसप्ततिः । तासां यथास्वं सम्पदः ।**

[ शक्तिसिद्धयोः स्वरूपविभागौ ]

**शक्तिः सिद्धिश्च । बलं शक्तिः; सुखं सिद्धिः । शक्तिस्त्रिविधा—ज्ञानबलं मन्त्रशक्तिः; कोशदण्डबलं प्रभुशक्तिः; विक्रमबलमुत्साहशक्तिः । एवं सिद्धिस्त्रिविधैव—मन्त्रशक्तिसाध्या मन्त्रसिद्धिः; प्रभुशक्तिसाध्या प्रभुसिद्धिः; उत्साह शक्तिसाध्या उत्साहसिद्धिरिति ।**

[ स्वस्मिन् तदभिवर्धनस्य शत्रुषु तन्न्यूनीकरणस्य चावश्यकता ]

**ताभिरभ्युच्छ्रितो ज्यायान् भवति, अपचितो हीनः, तुल्यशक्तिस्समः । तस्माच्छक्तिं सिद्धिं च घटेतात्मन्यावेशयितुम् । साधारणो वा द्रव्यप्रकृतिष्वानन्तर्येण शौचवशेन वा । दूष्यामित्राभ्यां वाऽपक्रष्टुं यतेत ।**

---

श्रीमूला

एतावतोक्तं पिण्डीकृत्याह—एवं चतुर्मण्डलसङ्क्षेप इत्यादि । द्विसप्ततिरिति राजप्रकृतयः शुद्धा द्वादश अमात्यादिद्रव्यप्रकृतियुक्ताः षष्टिरित्याहृत्य ।

तासां यथास्वं सम्पद इति । प्रकृतीनां यथायथं सम्पदः पूर्वमुक्ता इति शेषः ।

शक्तिसिद्धी आह—शक्तिः सिद्धिश्चेत्यादि ।

शक्तिस्त्रिविधेत्यादि । ज्ञानबलं ज्ञानयोगक्षेमसाधनसामर्थ्यम्, मन्त्रशक्तिरित्येकः प्रकारः । कोशदण्डबलं कोशदण्डयोगक्षेमसाधनसामर्थ्यम्, प्रभुशक्तिरिति द्वितीयः । विक्रमबलं विक्रमयोगक्षेमसाधनसामर्थ्यम्, उत्साहशक्तिरिति तृतीयः ।

मन्त्रशक्तिप्रभुशक्त्युत्साहशक्तिसाध्याः क्रमान्मन्त्रसिद्धिः प्रभुसिद्धिरुत्साहसिद्धिरिति त्रिविधाः सिद्धय इत्याह—एवं सिद्धिस्त्रिविधैवेत्यादि ।

ताभिरिति । शक्तिभिः, अभ्युच्चितः उपचितः, ज्यायान् श्रेष्ठः । अपचितः, हीनः अधमः । तुल्यशक्तिः अन्यूनानधिकशक्तिः, समः मध्यमः । तस्मात् शक्तिसिद्धयोः प्राधान्यात्, शक्तिं सिद्धिं च आत्मनि, आवेशयितुं, वर्धयितुं, घटेत व्याप्रियेत । साधारणो वेति । आत्मनि तथा घटनपाटवरहितश्चेत्, द्रव्यप्रकृतिषु अमात्यादिषु, आनन्तर्येण पूर्वममात्ये ततो जनपदे ततो दुर्ग इति क्रमेण, शौचवशेन वा क्रमासम्भव शुचित्ववशेन वा, आवेशयितुं घटेत । द्रव्यप्रकृतिष्वप्यावेशनासामर्थ्ये आह—दूष्यामित्राभ्यां वापक्रष्टुं यतेतेति । दूष्यमुखेन शत्रुमुखेन वा, अपक्रष्टं शत्रोः शक्तिं सिद्धिं च न्यूनयितुं व्यवस्येत् ।

[ शत्रावपि शक्त्याद्यभिवर्धनाशंसने निमित्तानि ]

यदि वा पश्येत्—"अमित्रो मे शक्तियुक्तो वाग्दण्डपारुष्यार्थदूषणैः प्रकृतीरुपहनिष्यति; सिद्धियुक्तो वा मृगयाद्यूतमद्यस्त्रीभिः प्रमादं गमिष्यति; स विरक्तप्रकृतिरुपक्षीणः प्रमत्तो वा साध्यो मे भविष्यति; विग्रहाभियुक्तो वा सर्वसन्दोहेनैकस्थो दुर्गस्थो वा स्थास्यति; स संहतसैन्यो मित्रदुर्गवियुक्तस्साध्यो मे भविष्यति; बलवान् वा राजा परत शत्रुमुच्छेत्तुकामस्तमुच्छिद्य न मामुच्छिन्द्यात् इति बलवता प्रार्थितस्य मे विपन्नकर्मारम्भस्य वा साहाय्यं दास्यति, मध्यमलिप्सायां च" इति, एवमादिषु कारणेष्वमित्रस्यापि शक्तिं सिद्धिं चेच्छेत् ।

[ शत्रुजये उपायविशेषः ]

नेमिमेकान्तरान् राज्ञः कृत्वा चानन्तरानरान् ।
नाभिमात्मानमायच्छेत् नेता प्रकृतिमण्डले ॥१९५॥

---

श्रीमूला

अपकर्षणापवादमाह—यदि वा पश्येदित्यादि । अयमर्थः—मम शत्रुः शक्तियुक्तश्चेत् तदा दर्पाद् वाक्पारुष्यदण्डपारूष्यार्थदूषणैरमात्यादीन् उपहनिष्यति, सुखयुक्तश्चेत् मृगयाद्यूतादिव्यसनैः प्रमत्तो भविष्यति, स विरक्तप्रकृतिरसहायः प्रमत्तश्च जय्यो मे भविष्यति, सर्वसैन्यसमुदायेन सह मया विग्रहार्थमभियुक्तः शक्तिगर्वादेकाकी दुर्गस्थो वा स्थास्यति, स संहतसैन्यो मित्रदुर्गरहितः साध्यो मे भविष्यति, बलवान् व स राजा परदेशे शत्रुमुच्छेत्तुकामस्तमुच्छिद्य मां नोच्छिन्द्यात्, इति यदि मन्येत, बलवता प्रतियुध्यमानस्य कर्मारम्भेषु विपन्नेषु मध्यमे चापेक्ष्यमाणे साहाय्यं करिष्यति इति च यदि मन्येत, एवञ्जातीयेषु निमित्तेषु शत्रोरपि शक्तिं सिद्धिं च इच्छेदेव, न तु तां विहन्यादिति ।

अध्यायप्रान्ते श्लोकमाह—नेमिमित्यादि । नेता द्वादशराजमण्डलनायको विजिगीषुः, एकान्तरान् स्वभूम्येकव्यवहितान् मित्रभूतान्, राज्ञः, नेमिं कृत्वा, अनन्तरान् राज्ञः, अरान् कृत्वा अरस्थाने कल्पयित्वा, आत्मानं, नाभिम्, आयच्छेत् कल्पयेत् । कुत्र, प्रकृतिमण्डले राजमण्डलात्मके चक्रे ।

**मध्येह्युपहितः शत्रुः नेतुर्मित्रस्य चोभयोः ।**
**उच्छेद्यः पीडनीयो वा बलवानपि जायते ॥१९६॥**

इति मण्डलयोनौ षष्ठेऽधिकरणे शमव्यायामिकं
द्वितीयोऽध्यायः आदितोऽष्टनवतितमः
एतावता कौटलीयस्यार्थशास्त्रस्य मण्डलयोनिः
षष्ठमधिकरणं समाप्तम्

---

श्रीमूला

मध्ये हीत्यादि । बलवानपि शत्रुः विजिगीषोर्मित्रस्येत्युभयोर्मध्ये, उपहितः निवेशितश्चेत् उच्छेद्यः पीडनीयो वा जायते ।

व्याख्यायामर्थशास्त्रस्य श्रीमूलाख्यानभाजने ।
इत्थं मण्डलयोन्याख्यं षष्ठाधिकरणं गतम् ॥

इति श्रीवञ्चिमण्डलमहाराजाश्रितस्य ताम्रपर्णीतीरवर्तितरुवाग्रहाराभिजनस्य
श्रीसीताम्बाश्रीरामसुब्रह्मण्यार्यसूनोर्महामहोपाध्यायगणपतिशास्त्रिणः
कृतिषु कौटलीयार्थशास्त्रव्याख्यायांश्रीमूलाख्यायां
मण्डलयोनौ षष्ठाधिकरणे द्वितीयोऽध्यायः,
शमव्यायामिकम्, आदितोऽष्टनवतितमः ।
मण्डलयोनिः षष्ठमधिकरणं समाप्तम् ॥

श्रीमूला-नयचन्द्रिका-टीका-द्वय-संवलितं

# कौटिलीयमर्थशास्त्रम्

## षाड्गुण्यं नाम सप्तममधिकरणम्

॥ श्रीविश्वेश्वरः शरणम् ॥

❀ श्रीगुरुः शरणम् ❀

**श्रीमूला-नयचन्द्रिका-टीका-द्वय-संवलितं**

# कौटिलीयमर्थशास्त्रम्

## अथ षाड्गुण्यं नाम सप्तममधिकरणम्

### अष्टनवतितमनवनवतितमे प्रकरणे

### प्रथमोऽध्यायः

**षाड्गुण्यसमुद्देशः, क्षयस्थानवृद्धिनिश्चयश्च**

[ षाड्गुण्यस्वरूपहेतूनां विवरणम् ]

**( षाड्गुण्यसमुद्देशः । )**

**षाड्गुण्यस्य प्रकृतिमण्डलं योनिः ।**

---

**श्रीमूला**

पूर्वस्मिन्नधिकरणे 'शमव्यायामयोर्योनिः षाड्गुण्यम्' इत्युक्तम् । तदिदानीं प्रपञ्चयितुमिदमधिकरणमारभ्यते षाड्गुण्यं नाम । तत्र—

'षाड्गुण्यसमुद्देश' इति प्रथमं सूत्रम् । षाड्गुण्यस्य समुद्देशः सङ्क्षेपः इति सूत्रार्थः । अथवा, षाड्गुण्यस्य समुद्देशः पूर्वपक्षनिराकरणपूर्वं स्वपक्षस्थापनमित्यर्थः । 'द्वैगुण्यमिति वातव्याधिः इति हि पूर्वपक्षं निराकृत्य 'षाड्गुण्यमेवैतदवस्थाभेदादिति कौटल्यः' इत्येवं स्वपक्षः स्थाप्यते । तदभिधीयत इति सूत्रार्थः । पूर्वस्मिन् प्रकरणे दैवमानुषयोर्मानुषं चिन्त्यमुक्तम् । चिन्तनप्रकारस्त्वत्र प्रदश्यंत इति सम्बन्धः ।

'षाड्गुण्यस्य प्रकृतिमण्डलं योनिरि'ति । सन्ध्यादीनां षण्णां गुणानां स्वाम्यादिप्रकृतिसप्तकं द्वादशराजमण्डलं च योनिः ।

**'सन्धिविग्रहासनयानसंश्रयद्वैधीभावाः षाड्गुण्यम्' इत्याचार्याः ।**

**'द्वैगुण्यम्' इति वातव्याधिः; सन्धिविग्रहाभ्यां हि षाड्गुण्यं सम्पद्यत इति ।**

**'षाड्गुण्यमेवैतदवस्थाभेदात्' कौटल्यः ।**

**तत्र—पणबन्धः सन्धिः, अपकारो विग्रहः, उपेक्षणं आसनम्, अभ्युच्चयो यानम्, परार्पणं संश्रयः, सन्धिविग्रहोपादानं द्वैधीभावः—इति षड्गुणाः ।**

---

श्रीमूला

सन्धीत्यादि । सन्धिर्विग्रह आसनं यानम् आश्रयो द्वैधीभाव इत्येवं षड् गुणाः इत्याचार्याः, वदन्ति ।

द्वैगुण्यमिति । द्वावेव गुणौ सन्धिविग्रहलक्षणौ इति वातव्याधिः । तत्र हेतुः—सन्धिविग्रहाभ्यां हि षाड्गुण्यं सम्पद्यत इतीति । सन्धिविग्रहौ हि षड्गुणरूपतां प्रतिपद्येते—आसनादयश्चत्वारः सन्धिविग्रहयोरन्तर्भवन्ति । तत्रासनसंश्रयौ सन्धौ, यानं विग्रहे, द्वैधीभाव उभयोरित्यतः सन्धिविग्रहौ द्वावेव प्राधान्याद् गुणाविति ।

स्वमतमाह—षाड्गुण्यमेवैतदवस्थाभेदादिति कौटल्य इति । एतयोः सन्धिविग्रहयोरवस्थाभेदेन स्वरूपभेदात् षडेव गुणा गणनीया इति कौटल्यमतम् । तान् निरूपयति—तत्रेति । तेषु मध्ये, पणबन्धः सन्धिः 'एवमस्य कार्यस्य करणे भूमिकोशदण्डान्यतमं दास्यामी'त्युक्त्वा तस्य सत्यशपथादिना दृढीकरणं सन्धिपदार्थः । अपकारो विग्रह इति । शत्रुं प्रति द्रोहाचरणं विग्रहपदार्थः । उपेक्षणमासनमिति । सन्ध्याद्यप्रयोग आसनम् । अभ्युच्चयो यानमिति । शक्तिदेशकालाद्यतिशययोगोऽभ्युच्चयः स यानहेतुत्वाद् यानमित्युच्यते कारणे कार्योपचारात् । परार्पणं संश्रय इति । बलवतेऽन्यस्मै राज्ञे स्वात्मस्वपुत्रस्वद्रव्याणामर्पणं संश्रयपदार्थः । सन्धिविग्रहोपादानं द्वैधीभाव इति । सन्धिविग्रहयोरुभयोरुपादानं द्वैधीभावः । इदं तु बोद्धव्यम्—उभाभ्यां शत्रुभ्यां सह वाङ्मात्रेणात्मसमर्पणं कृत्या गूढचित्तवृत्तित्वेन वर्तनमेको द्वैधीभावः । यथा कामन्दकेन व्याख्यातः—

> "बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन् ।
> द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥" (१६, २३)

इति शत्रुणैकेन सह प्रकटं सन्धानं प्रच्छन्नं द्रोहाचरणं चेत्येवं सन्धिविग्रहसमुदायानुष्ठानमपरो द्वैधीभावः । अयमिह कण्ठोक्तः । प्रथमस्तु 'सहायसाध्ये कार्ये द्वैधीभावं गच्छेद्' इति वक्ष्यमाणग्रन्थेन सूचित इति । षड् गुणाः, निरूपिता इति शेषः ।

[ तेषां षड्गुणानां निमित्तानुगुणप्रयोगकालाः ]

**परस्माद्धीयमानः सन्दधीत । अभ्युच्चीयमानो विगृह्णीयात् । 'न मां परो नाहं परमुपहन्तुं शक्तः' इत्यासीत । गुणातिशययुक्तो यायात् । शक्तिहीनस्संश्रयेत । सहायसाध्यकार्ये द्वैधीभावं गच्छेत्—इति गुणावस्थापनम् ।**

[ आचार्यमतरीत्या स्वाभिवृद्धिसम्पादनप्रकारः ]

**(क्षयस्थानवृद्धिनिश्चयः । )**

**तेषां यस्मिन् वा गुणे स्थितः पश्येत् । 'इहस्थः शक्ष्यामि दुर्गसेतुकर्मवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्माण्यात्मनः प्रवर्तयितुं,परस्य चैतानि कर्माण्युपहन्तुम्' इति, तमा तिष्ठेत्—सा वृद्धिः । 'आशुतरा मे**

---

श्रीमूला

अथ गुणानां प्रयोगविषयमाह—परस्मादिति । शत्रोः, हीयमानः, सन्दधीत सन्धिं कुर्यात्, परेण । अभ्युच्चीयमानः उपचीयमानः, विगृह्णीयात् शत्रुविषये द्रोहमाचरेत् । न मां पर इत्यादि । शत्रुः माम् उपहन्तुं न शक्तः, अहं परमुपहन्तुं न शक्तः, इति, मन्यमान इति शेषः । आसीत परमुपेक्षेत । गुणातिशययुक्तो यायादिति । अभियास्यत्कर्माधिकरणोक्तः शक्तिदेशकालादिर्गुणातिशयः तद्युक्तः अभिषेणनं कुर्यात् । शक्तिहीन इति । सः, संश्रयेत प्रबलमाश्रयेत । सहायसाध्य इत्यादि । कार्ये सहायसापेक्षे सति, द्वैधीभावं गच्छेद् अनुतिष्ठेत् ।

इति गुणावस्थापनमिति । एवं विषयभेदेन षड् गुणाः स्थापिताः । इत्थं षाड्गुण्यसमुद्देशो निरूपितः ।

क्षयस्थानवृद्धिनिश्चय इति सूत्रम् । क्षयः कोशदण्डयोरल्पत्वं, स्थानं साम्यावस्था, वृद्धिर्बाहुल्यम् एषां निश्चयः स्वरूपावधारणम् उच्यत इति सूत्रार्थः । गुणाः ह्युक्ताः, तेषां फलभूताः क्षयस्थानवृद्धय इह निरूप्यन्ते ।

तत्र चरमनिर्दिष्टापि वृद्धिः प्राधान्यात् प्रथमं निरूप्यते—तेषां यस्मिन् वेत्यादि । अयमर्थः—गुणानां मध्ये यं गुणमाश्रितो मन्येत—'अहमस्मिन् गुणे स्थितो दुर्गकर्मसेतुकर्मादीन्यात्मनः प्रवर्तयितुं परस्य तान्युपहन्तुं च शक्तो भविष्यामि' इति, तं गुणमनुतिष्ठेत् । तच्च गुणानुष्ठानं वृद्धिनिमित्तत्वादुपचाराद् वृद्धिशब्दितमिति ।

परवृद्ध्युपेक्षाया विषयमाह—आशुतरा मे वृद्धिरित्यादि । वृद्धिर्मे शीघ्रं भविष्यति परस्य चिराद् भविष्यतीति यदि मन्येत स एको विषयः । यौगपद्येऽपि

**वृद्धिर्भूयस्तरा वृद्ध्युदयतरा वा भविष्यति, विपरीता परस्य' इति ज्ञात्वा परवृद्धिमुपेक्षेत। तुल्यकालफलोदयायां वृद्धौ सन्धिमुपेयात्।**

[ स्वक्षयस्वरूपावधारणम् ]

**यस्मिन् वा गुणे स्थितः स्वकर्मणामुपघातं पश्येत् नेतरस्य, तस्मिन् न तिष्ठेत्—एष क्षयः। 'चिरतरेणाल्पतरं वृद्ध्युदयतरं वा क्षेष्ये; विपरीतं परः' इति ज्ञात्वा क्षयमुपेक्षेत। तुल्यकालफलोदये वा क्षये सन्धिमुपेयात्।**

[ साम्यावस्थितिस्वरूपावधारणम् ]

**यस्मिन् वा गुणे स्थितः स्वकर्मवृद्धिं क्षयं वा नाभिपश्येत्—एतत् स्थानम्। 'ह्रस्वतरं वृद्ध्युदयतरं वा स्थास्यामि विपरीतं परः' इति ज्ञात्वा स्थानमुपेक्षेत।**

---

श्रीमूला

वृद्धिर्मेऽधिकतरा परस्याल्पा भविष्यतीति यदि मन्येत सोऽपरो विषयः। समापि मे वृद्धिर्वृद्ध्यनुबन्धिनी भविष्यति परस्य तु वृद्ध्यननुबन्धिनीति यदि मन्येत सोऽन्यो विषयः। एषु विषयेषु परस्य वृद्धिं नोपहन्तुं यतेत तुल्यकालफलोदयायामित्यादि। परस्यात्मनश्च वृद्धिस्तुल्यकाला तुल्यफलोदया च भविष्यतीति चेन्मन्येत तदा सन्धिमनुतिष्ठेत्।

यद्गुणानुष्ठाने स्वकर्मोपघातं परकर्मानुपघातं च पश्येत् तं गुणं नानुतिष्ठेत्। तदनुष्ठानं च क्षयनिमित्तत्वादुपचारात्। क्षय इत्याह—यस्मिन् वा गुणे स्थितः स्वकर्मणामुपघातमित्यादि।

सुदीर्घतरकालातिक्रमानन्तरं मे क्षयो भविष्यति शत्रोः शीघ्रमि'ति वा, 'अल्पो मे क्षयो भविष्यति शत्रोः शीघ्रमि'ति वा, 'अल्पो मे क्षयो भविष्यति, शत्रोर्बहुतर' इति वा, 'मम क्षयो वृद्ध्युदयानुबन्धी'ति 'शत्रोस्तु क्षयानुबन्धी'ति वा यदि मन्येत, एषु त्रिषु विषयेष्वात्मनो जायमानं क्षयमुपेक्षेत न तु तदुपघाताय यत्नं कुर्यादित्याह—चिरतरेणाल्पतरमित्यादि।

तुल्यकालफलोदये वेत्यादि। शत्रोरात्मनश्च क्षयस्तुल्ये काले भविष्यति तुल्यफलोदयश्चेति यदि पश्येत्, तदा सन्धिमनुतिष्ठेत्।

यद्गुणानुष्ठाने स्वस्य वृद्धिं क्षयं वा न पश्येत्, तदिदं तादवस्थ्यहेतुत्वात् स्थानमित्युच्यत इत्याह—यस्मिन् वा गुणे स्थितः स्वकर्मवृद्धिमित्यादि।

ह्रस्वतरमित्यादि। 'अदीर्घकालं मे स्थानं भविष्यति परस्य दीर्घकालमि'ति वा 'मम स्थानं वृद्ध्यनुबन्धि भविष्यति परस्य तु क्षयानुबन्धि' इति वा, यदि मन्येत्, तदा स्थानमुपेक्षेत।

**'तुल्यकालफलोदये वा स्थाने सन्धिमुपेयात्' इत्याचार्याः ।**

[ स्वमतानुसारेण सन्धिकरणनिमित्त-
मभिवृद्धिसम्पादनरीतयः ]

**'नैतद् विभाषितम्' इति कौटल्यः ।**

**यदि वा पश्येत्—'सन्धौ स्थितो महाफलैः स्वकर्मभिः परकर्माण्युपहनिष्यामि; महाफलानि वा स्वकर्माण्युपभोक्ष्ये, परकर्माणि वा; सन्धिविश्वासेन वा योगोपनिषत्प्रणिधिभिः परकर्माण्युपहनिष्यामि; सुखं वा सानुग्रहपरिहारसौकर्यं फललाभभूयस्त्वेन स्वकर्मणां परकर्मयोगावहं जनमास्रावयिष्यामि; बलिनाऽतिमात्रेण वा संहितः परः स्वकर्मोपघातं प्राप्स्यति; येन वा विगृहीतो मया सन्धत्ते तेन अस्य विग्रहं दीर्घं करि-**

---

श्रीमूला

तुल्यकालफलोदये वेति । परेण तुल्यकाले तुल्यफले च सति, स्थाने, सन्धिम्, उपेयात् कुर्यात् । इत्याचार्या इति । उक्तमिदमर्थजातम् आचार्या ऊचुरित्यर्थः ।

नैतद् विभाषितमिति कौटल्य इति । इदमाचार्यैर्विशेषेण न भाषितम् इति कौटल्यः मन्यते ।

स्वयं तु विशेषमाह—यदि वा पश्येदित्यादि । एषोऽर्थः—सन्धौ क्रियमाणे महाफलैः स्वकर्मभिर्दुर्गसेतुखनिवणिक्पथादिभिः परकर्मणामुपघातं करिष्यामि—अर्थात् स्वकर्मोत्पादितानां प्रभूतानां साराणां च वस्तूनां परविषये नयनेन परकर्मजनितवस्तूनां मूल्यहानिमुत्पादयिष्यामि—इति चेन्मन्येतेत्येको विषयः, अथवा सन्धिवशान् महाफलानि कर्माण्यनुभविष्यामीति चेन्मन्येतेति द्वितीयः । यद्वा सन्धिवशान् महाफलानि परस्य कर्माण्यनुभविष्यामीति चेन्मन्येतेति तृतीयो विषयः, अथवा सन्धिना परस्य विश्वासं जनयित्वा गूढपुरुषतीक्ष्णादिप्रयोगलक्षणैर्योगप्रणिधानैर्विषधूमाम्बुदूषणादिलक्षणैरुपनिषत्प्रयोगैश्च महाफलानां परकीयकर्मणामुपघातं करिष्यामीति चेन्मन्येतेति चतुर्थो विषयः, अथवा सन्धिविश्वासेन शत्रुकर्मानुष्ठानकारिणं जनं बीजदानाद्युपकारलक्षणानुग्रहेण करमोक्षलक्षणपरिहारेण च कृष्यादिसौकर्यातिशययुक्तं कृत्वा फललाभेन च भूयसा योजयित्वा स्वकर्मनियोगार्थेऽनायासादाक्रक्ष्यामीति चेन्मन्येतेति पञ्चमो विषयः, अथवा बलवता प्रवृद्धकोशेन स्वशत्रुणा कृतसन्धिः शत्रुः तस्मै अतिमात्रधनार्पणेन क्षीणकोशो भूत्वा स्वकर्मोपघातं प्राप्स्यतीति चेन्मन्येतेति षष्ठो विषयः, अथवा येन विग्रहमनुष्ठातुं मया सह सन्धिं करोति तेन सहास्य विग्रहं चिरकालविच्छिन्नमा-

ष्यामि; मया वा संहितस्य मद्द्वेषिणो जनपदं पीडयिष्यति; परोपहतो वाऽस्य जनपदो मामागमिष्यति ततः कर्मसु वृद्धिं प्राप्स्यामि; विपन्नकर्मारम्भो वा विषमस्थः परः कर्मसु न मे विक्रमेत; परतः प्रवृत्तकर्मारम्भो वा ताभ्यां संहितः कर्मसु वृद्धिं प्राप्स्यामि; शत्रुप्रतिबद्धं वा शत्रुणा सन्धिं कृत्वा मण्डलं भेत्स्यामि; भिन्नमवाप्स्यामि; दण्डानुग्रहेण वा शत्रुमुपगृह्य मण्डललिप्सायां विद्वेषं ग्राहयिष्यामि; विद्विष्टं तेनैव घातयिष्यामि' इति, सन्धिना वृद्धिमातिष्ठेत् ।

[ विग्रहमूलकाभिवृद्धिसम्पादनक्रमः ]

यदि वा पश्येत्—'आयुधीयप्रायः श्रेणीप्रायो वा मे जनपदः शैलवननदीदुर्गैकद्वारारक्षो वा शक्ष्यति पराभियोगं प्रतिहन्तुम्' इति; 'विषयान्ते दुर्गमविषह्यम् अपाश्रितो वा शक्ष्यामि परकर्माण्युपहन्तुम्' इति; 'व्यसनपीडोपहतोत्साहो वा परः सम्प्राप्तकर्मोपघातकालः, इति'; 'विगृहीतस्यान्यतो

———— —

श्रीमूला

पादयिष्यामीति चेन्मन्येतेति सप्तमो विषयः, अथवा मया कृतसन्धेर्मच्छत्रोर्जनपदमयं पीडयिष्यामीति चेन्मन्येतेति अष्टमो विषयः, अथवा परोपहतोऽस्य जनपदोऽनेन सहेदानीं सन्धिकरणे मम वशं गमिष्यति तेन मे कर्मवृद्धिर्भविष्यतीति चेन्मन्येतेति नवमो विषयः, अथवा उपहतदुर्गादिकार्यारम्भोऽयं शत्रुः सङ्कटस्थः, अन्यसाह्येन च प्रवृत्तकार्यारम्भोऽसौ सङ्कटस्थः आभ्यां सन्धिकरणे कर्मसु विघातो मे न भविष्यति प्रत्युत वृद्धिर्भविष्यतीति चेन्मन्येतेति दशमैकादशौ विषयौ, अथवा शत्रुणा भेदमप्राप्तं मण्डलं शत्रुणा सह सन्धिं कृत्वा भेत्स्यामीति चेन्मन्येतेति द्वादशो विषयः, भिन्नं च शत्रुं साधयिष्यामीति चेन्मन्येतेति त्रयोदशो विषयः, अथवा सैन्यसाह्यदानेन शत्रुं वशयित्वा मण्डललाभार्थं यतमाने तस्मिन् मण्डलस्य तेन सह द्वेषं जनयिष्यामीति चेन्मन्येतेति चतुर्दशो पिषयः । द्विष्टं च तेनैव घातयिष्यामीति चेन्मन्येतेति पञ्चदशो विषयः एषु पञ्चदशसु विषयेष्वन्येषु चैवञ्जातीयेषु सन्ध्यनुष्ठानेनात्मनो वृद्धिं सम्पादयेदिति ।

इत्थं सन्धिकरणेन वृद्धिरुक्ता । विग्रहेण वृद्धिमाह—यदि वा पश्येदित्यादि । आयुधजीविक्षत्रियादिप्रचुरः कृपिकर्तृकारयितृश्रेणीबहुलः शैलदुर्गवनदुर्गनदीदुर्गयुक्तः एकद्वारप्रवेशनिर्गमतयानायासरक्ष्यो वा मे जनपदः पराभियोगं प्रतिहन्तुं शक्तो भविष्यतीति चेन्मन्येत, अथवा विषयसीमायाम् अविनाश्यं दुर्गम् आश्रितः परकर्माण्युपहन्तुं शक्ष्यामीति चेन्मन्येत, अथवा शत्रोर्व्यसनपीडाभग्नोत्साहत्वात् तत्कर्मोपघातं

**वा शक्ष्यामि जानपदमपवाहयितुम्' इति, विग्रहे स्थितो वृद्धिमातिष्ठेत् ।**

[ आसनयानाभ्याम् अभिवृद्धिसम्पादनक्रमः ]

**यदि वा मन्येत—'न शक्तः परः कर्माण्युपहन्तुं; नाहं तस्य कर्मोपघाती वा, व्यसनमस्य, श्ववराहयोरिव कलहे वा स्वकर्मानुष्ठानपरो वा वर्धिष्ये' इति, आसनेन वृद्धिमातिष्ठेत् ।**

**यदि वा मन्येत—'यानसाध्यः कर्मोपघातः शत्रोः, प्रतिविहितस्वकर्मारक्षश्चास्मि' इति, यानेन वृद्धिमातिष्ठेत् ।**

[ संश्रयद्वैधीभावाभ्याम् अभिवृद्धिसम्पादनप्रकारः ]

**यदि वा मन्येत—'नास्मि शक्तः परकर्माण्युपहन्तुं, स्वकर्मोपघातं वा त्रातुम्' इति, बलवन्तमाश्रितः स्वकर्मानुष्ठानेन क्षयात् स्थानं स्थानाद्वृद्धिं चाकाङ्क्षेत ।**

**यदि वा मन्येत—'सन्धिनैकतः स्वकर्माणि प्रवर्तयिष्यामि, विग्रहेणैकतः परकर्माण्युपहनिष्यामि' इति, द्वैधीभावेन वृद्धिमातिष्ठेत् ।**

---

श्रीमूला

मे कर्तुमवसरः प्राप्त इति चेन्मन्येत, अथवा विगृहीतस्य शत्रोर्जनपदमन्येन पथाऽवस्कन्दितुं शक्ष्यामीति चेन्मन्येत, एषु चतुर्षु विषयेष्वेवञ्जातीयेष्वन्येषु च विग्रहमास्थाय वृद्धिमन्विच्छेत् ।

आसनेन वृद्धिमाह—यदि वा मन्येतेत्यादि । शत्रुर्मम कर्माण्युपहन्तुं न शक्तस्तस्य चाहं कर्माण्युपहन्तुं न शक्तः, व्यसनं चास्य वर्तते श्ववराहयोरिव समयोरावयोर्विग्रहे वा सति स्वकर्मानुष्ठानपरो वृद्धिं प्राप्स्यामीति चेन्मन्येत, तादृशे निमित्ते आसनेन वृद्धिमन्विच्छेत् ।

यानेन वृद्धिमाह—यदि वा मन्येत यानसाध्य इत्यादि । परस्य कर्मोपघातो यानेनैव साध्यः, स्वकर्मरक्षा च मया सुसंविहितेति चेत् पश्येत्, तदा यानेन वृद्धिमन्विच्छेत् ।

संश्रयेण वृद्धिमाह—यदि वा मन्येत नास्मि शक्त इत्यादि । परकर्माण्युपहन्तुं स्वकर्मोपघातं प्रतिविधातुं चाहं न शक्त इति चेन्मन्येत्, बलवन्तं समाश्रयेत् । ततः स्वकर्मानुष्ठानेन क्षयं परिहृत्य स्थानावस्थां चासाद्य ततो वृद्धिं लिप्सेत ।

द्वैधीभावेन वृद्धिमाह—यदि वा मन्येत सन्धिनेत्यादि । शत्रुणैकेन सन्धिं कृत्वा स्वकर्माणि प्रवर्तयितुमन्येन विगृह्य तत्कर्माण्युपहन्तुं च शक्ष्यामीति चेन्मन्येत, तदा द्वैधीभावेन वृद्धिं प्राप्नुयात् ।

[ निगमनम् ]

**एवं षड्भिर्गुणैरेतैः स्थितः प्रकृतिमण्डले ।**
**पर्येषेत क्षयात् स्थानं स्थानाद्वृद्धिं च कर्मसु ॥१९७॥**

इति षाड्गुण्ये षाड्गुण्यसमुद्देशः क्षयस्थानवृद्धिनिश्चयश्च
प्रथमोऽध्यायः, आदितो नवनवतितमः ।

---

**श्रीमूला**

प्रान्ते श्लोकमाह—एवमित्यादि । प्रकृतिमण्डलस्थो राजाऽनेन प्रकारेण सन्ध्यादिषड्गुणप्रयोगैः कर्मसु क्षयावस्थामुत्तीर्याधिगतस्थानावस्थो वृद्धिमन्विच्छेदिति ।

इति कौटलीयार्थशास्त्राव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे
प्रथमोऽध्यायः षाड्गुण्यसमुद्देशः क्षयस्थानवृद्धिनिश्चयश्च,
आदितो नवनवतितमः ।

## शततमं प्रकरणम्

## द्वितीयोऽध्यायः

## संश्रयवृत्तिः

[ द्वयोर्गुणयोर्वृद्धिसाम्ये अनुष्ठेयगुणनिर्णयः ]

**सन्धिविग्रहयोस्तुल्यायां वृद्धौ सन्धिमुपेयात् । विग्रहे हि क्षयव्यय-प्रवासप्रत्यवाया भवन्ति । तेनासनयानयोरासनं व्याख्यातम् ।**

**द्वैधीभावसंश्रययोर्द्वैधीभावं गच्छेत् । द्वैधीभूतो हि स्वकर्मप्रधानः आत्मन एवोपकरोति । संश्रितस्तु परस्योपकरोति, नात्मनः ।**

---

श्रीमूला

संश्रयवृत्तिरिति सूत्रम् । प्रबलाश्रयणेन स्वशक्तिपरिपूरणं संश्रयवृत्तिः साभिधीयत इति सूत्रार्थः ।

अदौ क्षयस्थानवृद्धि निश्चयप्रकरणशेषं वक्ष्यमाणस्य संश्रयवृत्तिप्रकरणस्य प्रसङ्गकमुच्यते । तत्र पूर्वमेकेन गुणेन वृद्ध्यन्विच्छाप्रकार उक्तः, इदानीं द्वयोर्गुणयो-र्वृद्धिसाम्ये कतरोऽनुष्ठेय इत्येतदभिधीयते ।

सन्धिविग्रहयोरित्यादि । तयोर्वृद्धिलाभे समाने सन्धिमनुतिष्ठेत् । कुतः, विग्रहे हि क्षयव्ययप्रवासप्रत्यवाया भवन्तीति । विग्रहोपादाने हि प्राणिक्षयो धन-धान्यादिव्ययः विदेशगमनं परपुरुषकृतविषाम्बुदूषणादिनिमित्तः प्रत्यवायश्चेत्येते-ऽनर्था जायन्ते, सन्ध्युपादाने तु नायं दोष इति ।

अनेन न्यायेन यानासनयोस्तुल्यायां वृद्धौ आसनमनुष्ठेयमित्येतदुक्तप्राय-मित्याह—तेनासनेत्यादि ।

द्वैधीभावसंश्रययोरिति । तयोः समवृद्धिकयोः सतोः, द्वैधीभावं गच्छेद् उपाददीत् । तत्र हेतुमाह—द्वैधीभूतो हि, स्वकर्मप्रधानः प्राधान्येन स्वकर्मैवानुतिष्ठन्, आत्मन एव उपकरोति । संश्रितस्तु परस्योपकरोति तद्विधेयत्वात्, आत्मनः नोप-करोति । इत्येतावता क्षयस्थानवृद्धिनिश्चयः परिसमापितः ।

[ बलवदेकशत्र्वभियोगे कर्तव्याः अंशाः ]

**यद्बलस्सामन्तः तद्विशिष्टबलमाश्रयेत। तद्विशिष्टबलाभावे तमेवाश्रितः कोशदण्डभूमीनामन्यतमेनास्योपकर्तुमदृष्टः प्रयतेत। महादोषो हि विशिष्टबलसमागमो राज्ञाम्—अन्यत्रारिगृहीतात्। अशक्ये दण्डोपनतवद्वर्तेत।**

**यदा चास्य प्राणहरं व्याधिं अन्तःकोपं शत्रुवृद्धिं मित्रव्यसनम् उपस्थितं वा तन्निमित्तमात्मनश्च वृद्धिं पश्येत्, तदा सम्भाव्यव्याधिकर्मकार्यापदेशेनापयायात्। स्वविषयस्थो वा नोपनगच्छेत्। आसन्नो वाऽस्य छिद्रेषु प्रहरेत्।**

[ बलवच्छत्रुद्वयाभियोगे कर्तव्याः व्यापाराः ]

**बलीयसोर्वा मध्यगतः त्राणसमर्थमाश्रयेत्; यस्य वा अनन्तर्धिः स्यात्।**

---

श्रीमूला

यद्बलः सामन्त इत्यादि। यावद्बलयुक्तः सामन्तोऽभियोक्ता ततोऽप्युत्कृष्टबलयुक्तं सेवेत। विशिष्टबलस्यालाभेऽभियोक्तारमेवाश्रितः कोशदण्डभूमीनामन्यतमदानेन तं प्रसादयितुमदृष्टो दूरस्थोऽसमागत एव सन् यत्नं कुर्यात्। अदृष्टसेवायां कारणमाह—महादोषो हीत्यादि। राज्ञां हि विशिष्टबलेन सह समागमो वधबन्धादिमनर्थमुत्पादयेत्। तत्रापवादः—अन्यत्रारिविगृहीतादिति। शत्रुविगृहीतमपहाय। स विशिष्टबलः शत्रुणा विगृहीतश्चेत् तेन समागमो न दोषावह इत्यर्थः।

अशक्य इति। असमागम्य सेवितुमशक्ये विशिष्टबले, दण्डोपनतवद् वर्तेत दण्डार्पणकृतसन्धिर्यथा वर्तेत तथा तदन्तिके प्रणतस्तिष्ठेत्।

यदा चास्येति। यदा, अस्य सेव्यमानस्य, प्राणहरं व्याधिम्, अन्तःकोपं मन्त्रिपुरोहितादिकोपं, शत्रुवृद्धिं, मित्रव्यसनं वा, उपस्थितं पश्येत्, तन्निमित्ताम् आत्मनो वृद्धिं च उपस्थितां पश्येत्, तदा, सम्भाव्यव्याधिधर्मकार्यापदेशेन प्रत्येयं कमपि व्याधिं धर्मकार्यं वा किञ्चिदपदिश्य, अपयायात् ततोऽपसरेत्। स्वविषयस्थो वा नोपगच्छेत् स्वविषये स्थितश्चेद् आहूतोऽपि व्याधिधर्मकार्यशेषापदेशेन तदन्तिकं न गच्छेत्। आसन्नो वा सन्निकृष्ट एव वा भूत्वा, अस्य छिद्रेषु प्रहारस्थानेषु प्रहरेत्। तदिदं बलवतैकेनाभियुक्तं प्रति अभिहितम्।

द्वाभ्यां बलवद्भ्यामभियुक्तस्य विधिमाह—बलीयसोर्वेति। तयोर्वा, मध्यगतः, त्राणसमर्थम् अन्यतरम् आश्रयेत्। उभयोः समबलतायामाह—यस्य वानन्तर्धिः स्यादिति।

**उभौ वा । कपालसंश्रयस्तिष्ठेत् । मूलहरमितरस्येतरमपदिशन् भेद-मुभयोर्वा परस्परापदेशं प्रयुञ्जीत, भिन्नयोरुपांशुदण्डम् ।**

**पार्श्वस्थो वा बलस्थयोरासन्नभयात् प्रतिकुर्वीत । दुर्गापाश्रयो वा द्वैधीभूतस्तिष्ठेत् । सन्धिविग्रहक्रमहेतुभिर्वा चेष्टेत । दूष्यामित्राटविकानुभयो-रुपगृह्णीयात् । एतयोरन्यतरं गच्छंस्तैरेवान्यतरस्य व्यसने प्रहरेत् । द्वाभ्यामुपहितो वा मण्डलापाश्रयस्तिष्ठेत्, मध्यममुदासीनं वा संश्रयेत । तेन सहैकमुपगृह्येतरमुच्छिन्द्यादुभौ वा ।**

---

श्रीमूला

यो वा न व्यवहितः तमाश्रयेदित्यर्थः । उभयोरासन्नतायामाह—उभौ वेति । उभावप्याश्रयेत् । उभयाश्रयणावस्थानप्रकारश्च कपालसन्धिकरणेनावस्थानमित्याह—कपालसंश्रयस्तिष्ठेदिति । त्वमेव मे रक्षकः त्वदरक्षितं मां पर उच्छेत्तुमिच्छतो-त्येकैकश उक्त्वा द्वावप्याश्रित्यावस्थानं कपालसन्धिः । मूलेत्यादि । इतरस्य इतरं मूलहरं द्रव्यनाशकमपकर्तारम् अपदिशन् वदन् गूढपुरुषद्वारकं स्वगतमेवापकर्तृत्व-मितरस्मिन्नारोप्य कीर्तयन्नित्यर्थः, उभयोर्वा, भेदं प्रयुञ्जीत्, कथम्भूतं, परस्परापदेशं परस्परस्यापकर्तृत्वारोपो निमित्तं यस्मिंस्तम् । भिन्नयोः उक्तरीत्या भेदितयोः उपांशुदण्डं रहोवधं प्रयुञ्जीत ।

पार्श्वस्थो वेत्यादि । बलिनोरुभयोर्यस्माद् भयमासन्नं पश्यति तस्मादात्मानं प्रतिक्रियया रक्षेत् तत्पार्श्वस्थः । दुर्गापाश्रयो वेति । दुर्गमाश्रितः द्वैधीभूतः प्रच्छन्न-सन्धिविग्रहोभयाभिमुख्यः, तिष्ठेत् । सन्धिविग्रहक्रमहेतुभिर्वेति 'महाफलैः स्वकर्मभिः परकर्माण्युपहनिष्यामि' इत्यादिनोक्तैः सन्धिनिमित्तैर्विक्रमनिमित्तैश्च 'आयुधीयप्रायः श्रेणीप्रायो वा मे जनपदः' इत्यादिनोक्तैः, चेष्टेत प्रवर्तेत । दूष्यामित्रेत्यादि । उभयो-रभियोक्त्रोर्दूष्यान् अमित्रान् आटविकांश्च, उपगृह्णीयात् दानमानादिना स्ववशे कुर्यात् । एतयोः अभियोक्त्रोर्मध्ये, अन्यतरं गच्छन् प्रत्यभियुञ्जानः, तैरेव उपगृहीतैर्दूष्यादि-भिरेव साधनभूतैः, अन्यतरस्य, व्यसने रन्ध्रे, प्रहरेत् । द्वाभ्यामुपहितो वेति । उभाभ्यां पीडितश्चेत्, मण्डलापाश्रयस्तिष्ठेत् उभयोर्मण्डलमपाश्रित्य वर्तेत 'सर्वात्मना प्रणतं मामेतौ पीडयत' इति वदन् । मध्यममिति । तम् उदासीनं वा पूर्वोक्तलक्षणं, संश्रयेत । तेन सह मध्यमेनोदासीनेन वा सहितः, एकम् उपगृह्य दानादिना वशयित्वा, इतरम् उच्छिन्द्यात्, उभौ वा उच्छिन्द्यात् । इत्येवमुभयभेत्तुर्व्यापार उक्तः ।

[ उभाभ्यामुच्छेदे कर्तव्याः अंशाः ]

**द्वाभ्यामुच्छिन्नो वा मध्यमोदासीनयोस्तत्पक्षीयाणां वा राज्ञां न्यायवृत्तिमाश्रयेत। तुल्यानां वा यस्य प्रकृतयः सुख्येयुरेनं, यत्रस्थो वा शक्नुयादात्मानमुद्धर्तुं, यत्र वा पूर्वपुरुषोचिता गतिः आसन्नस्सम्बन्धो वा मित्राणि भूयांसीति शक्तिमन्ति वा भवेयुः।**

[ प्रशस्ता आश्रयणरीतिः ]

**प्रियो यस्य भवेद्यो वाऽप्रियोऽस्य कतरस्तयोः।**
**प्रियो यस्य स तं गच्छेत् इत्याश्रयगतिः परा ॥१९८॥**

इति षाड्गुण्ये संश्रयवृत्तिः द्वितीयोऽध्यायः,
आदितः शततमः।

---

श्रीमूला

उभाभ्यामुच्छिन्नस्य व्यापारमाह—द्वाभ्यामुच्छिन्न इति। तथाभूतः, मध्यमोदासीनयोः, तत्पक्षीयाणां वा मध्यमोदासीनसम्बन्धिनां मित्रादीनां वा, राज्ञां मध्ये, न्यायवृत्तिं राजानम्, आश्रयेत्। सर्वेषां न्यायवृत्तित्वतुल्यतायामाह—तुल्यानां वा यस्य प्रकृतय इत्यादि। तुल्यशीलानां मध्ये यस्य प्रकृतयः स्वस्मिन् प्रीतिमावहेयुः एनम् आश्रयेत। प्रकृतिप्रीतितुल्यतायां वा यमाश्रित्यात्मोद्धरणं सुकरं मन्यते, एनमाश्रयेत। आत्मोद्धरणसौकर्यतुल्यतायां यस्मिन् पूर्वपुरुषानुवृत्तः प्रवेशः विवाहादिलक्षणो वान्तरङ्गः सम्बन्धोऽस्ति, मित्राणि वा भूयस्त्वाच्छक्तिमन्ति भवेयुः, एनमाश्रयेत।

अथ सर्वोत्कृष्टामाश्रयवृत्तिमाह—प्रियो यस्येति। यस्य यः प्रियः तयोर्मध्ये, कतरः अस्य अप्रियः कतरः कतरस्य प्रियो न भवति द्वावपि परस्परस्य प्रियावेवेत्यर्थः। ततश्च यो यस्य प्रियः, सः तं गच्छेत् आश्रयेत्। इत्याश्रयगतिः परा इत्येषाश्रयवृत्तिः प्रशस्ता॥

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे
द्वितीयोऽध्यायः संश्रयवृत्तिः,
आदितः शततमः॥

## एकशततमद्विशततमे प्रकरणे

### तृतीयोऽध्यायः

### समहीनज्यायसां गुणाभिनिवेशः, हीनसन्धयश्च

[ शक्त्यनुगुणाः षाड्गुण्यप्रयोगाः,
तत्र सन्धिविग्रहप्रयोगोपाधयः ]

**( समहीनज्यायसां गुणाभिनिवेशः । )**

**विजिगीषुः शक्त्यपेक्षः षाड्गुण्यमुपयुञ्जीत ।**

**समज्यायोभ्यां सन्धीयेत । हीनेन विगृह्णीयात् । विगृहीतो हि ज्यायसा हस्तिना पादयुद्धमिव अभ्युपैति । समेन च आमं पात्रमामेनाहतमिव उभयतः क्षयं करोति । कुम्भेनेवाश्मा हीनेनैकान्तसिद्धिमवाप्नोति ।**

**ज्यायांश्चेन्न सन्धिमिच्छेत्, दण्डोपनतवृत्तम् आबलीयसं वा योगमातिष्ठेत् ।**

---

श्रीमूला

समहीनज्यायसां गुणाभिनिवेश इति सूत्रम् । समः शत्रुणा तुल्यशक्तिसिद्धिः, हीनः शत्रुतो न्यूनशक्तिसिद्धिः, ज्यायान् ततोऽधिकशक्तिसिद्धिः, आसु समाद्यवस्थासु गुणस्थापनोच्यत इति सूत्रार्थः । पूर्वं निमित्तापेक्षः षाड्गुण्यप्रयोग उक्तः, शक्त्यपेक्ष इदानीमभिधीयते ।

विजिगीषुरिति । सः शक्त्यपेक्षः स्वशक्तिमपेक्ष्य, षाड्गुण्यम्, उपयुञ्जीत प्रयुञ्जीत । समज्यायोभ्यां सन्धीयेत समेन ज्यायसा च सह सन्दधीत । हीनेन विगृह्णीयात् । ज्यायसा सह हीनस्य विग्रहः पदातेरिव हस्तिना युद्धं नाशहेतुः, समेन समस्य विग्रह आमपात्रस्येवामपात्रेणाहननमुभयनाशहेतुः, हीनेन ज्यायसो विग्रहः कुम्भेनेव शिलायाः सङ्घट्ट एकान्तसिद्धिहेतुर्भवतीत्याह—विगृहीतो हि ज्यायसेत्यादि ।

ज्यायांश्चेदिति । स चेत्, सन्धिं नेच्छेत्, दण्डोपनतवृत्तं तत्प्रकरणोक्तम्, आबलीयसं योगं वा आबलीयसाधिकरणीययोगातिसन्धानप्रकरणोक्तम्, आतिष्ठेत् अनुतिष्ठेत् ।

**समश्चेन्न सन्धिमिच्छेत्, यावन्मात्रमपकुर्यात् तावन्मात्रमस्य प्रत्यपकुर्यात्। तेजो हि सन्धानकारणं; नातप्तं लोहं लोहेन सन्धत्त इति।**

**हीनश्चेत् सर्वत्रानुप्रणतस्तिष्ठेत्, सन्धिमुपेयात्। आरण्योऽग्निरिव हि दुःखामर्षजं तेजो विक्रमयति, मण्डलस्य चानुग्राह्यो भवति।**

**संहितश्चेत् 'परप्रकृतयो लुब्धक्षीणापचरिताः प्रत्यादानभयाद्वा नोपगच्छन्ति' इति पश्येत्, हीनोऽपि विगृह्णीयात्।**

**विगृहीतश्चेत् 'परप्रकृतयो लुब्धक्षीणापचरिता विग्रहोद्विग्ना वा मां नोपगच्छन्ति' इति पश्येत्—ज्यायानपि सन्धीयेत, विग्रहोद्वेगं वा शमयेत्।**

---

श्रीमूला

समश्चेन्न सन्धिमिच्छेदित्यादि। यावन्मात्रमपकुर्यात् यत्परिमाणमपकारं कुर्यात् सन्धिमिच्छुः समः तावन्मात्रमस्य प्रत्यपकुर्यात् प्रत्यपकारं कुर्यादितरः। तथाकरणं सन्धित्सोत्पादनेन सन्धिकारणं भवतीति तप्तलोहदृष्टान्तपूर्वमाह—तेजो हीत्यादि।

हीनेनासन्धिः पूर्वं प्रतिपादितः। विषयविशेषे तेनापि सन्धि कुर्यादित्याह—हीन इति। स चेत्, सर्वत्र अनुप्रणतः तिष्ठेत्, तर्हि सन्धिम् उपेयात् अर्थात् तेन सह। प्रणतेन सन्ध्यकरणे दोषमाह—आरण्योऽग्निरिव हीति। वन्यो वह्निरिव दुर्विषह्यं, दुःखामर्षजं दुःखप्रभवममर्षप्रभवं च, तेजः, विक्रमयति विजिगीषौ विक्रान्तं करोति, अर्थात् तं हीनम्। मण्डलस्य च, अनुग्राह्यः अनुकम्पाविषयो, भवति।

विजिगीषोर्हीनावस्थायां सन्धिसंश्रययोरनुष्ठानप्रकार उक्तः। तत्रापवादमाह—संहितश्चेदित्यादि। अयमर्थः—हीनो विजिगीषुः परेण सह कृतसन्धिर्यदि मन्येत—'परप्रकृतयो लुब्धाश्च क्षीणाश्चातृप्ताश्च नोपगच्छन्ति उच्छेदशङ्कया वा मां नोपगच्छन्ती'ति तर्हि हीनोऽपि ज्यायसापि परेण सह विगृह्णीयात्। अपचकितशब्दोऽपतृप्तार्थकः 'चक्र तृप्तावि'ति धातोरपपूर्वात् क्तप्रत्ययेन निष्पन्नः। अपचरितपाठे दानमानाद्यकरणेनानादृता इत्यर्थः।

ज्यायसो हीनेन सह यत् विग्रहणं तस्यापवादमाह—विगृहीतश्चेदित्यादि। अयमर्थः—ज्यायान् विजिगीषुः परेण विगृह्णन् यदि मन्येत—'प्रकृतयो लुब्धक्षीणापचरिताः विग्रहभीता वा मां नोपगच्छन्ती'ति, तर्हि, ज्यायानपि परेण हीनेनापि सन्धि कुर्याद्, विग्रहनिमित्तमुद्वेगं वा प्रकृतीनां शमयेदिति। ज्यायसो हीनेन सह सन्धिकर्तव्यतामन्यन्निमित्तमाह—व्यसनयौगपद्य इत्यादि। 'द्वयोर्व्यसनस्य युगपद्भावे मम व्यसनं गुरु परस्य व्यसनं लघु आत्मव्यसनस्य प्रतीकारं परः सुखेन कृत्वा मामभिषुञ्जीत' इति चेद् विजिगीषुर्मन्येत, तदा ज्यायानपि सन् परेण सन्धि कुर्यात्।

**व्यसनयौगपद्ये 'गुरुव्यसनोऽस्मि, लघुव्यसनः परः, सुखेन प्रतिकृत्य व्यसनमात्मनोऽभियुञ्ज्यात्' इति पश्येत्—ज्यायानपि सन्धीयेत ।**

[ आसनादिगुणपञ्चकप्रयोगोपाधयः ]

**सन्धिविग्रहयोश्चेत् परकर्शनमात्मोपचयं वा नाभिपश्येत्—ज्यायानप्यासीत ।**

**परव्यसनमप्रतिकार्यं चेत् पश्येत्—हीनोऽप्यभियायात् । अप्रतिकार्यासन्नव्यसनो वा ज्यायानपि संश्रयेत ।**

**सन्धिनैकतो विग्रहेणैकतश्चेत् कार्यसिद्धिं पश्येत्—ज्यायानपि द्वैधीभूतस्तिष्ठेत् इति । एवं समस्य षाड्गुण्योपयोगः ।**

[ अथ हीनसन्धयः, तत्र
आत्मामिषादयस्त्रयो दण्डोपनतसन्धयः ]

**तत्र तु प्रतिविशेषः—**

---

श्रीमूला

सन्धौ विग्रहे वा क्रियमाणे परापचयमात्मोपचयं वा यदि न सम्भावयेत् तदा ज्यायानप्यासनमेवानुतिष्ठेदित्याह—सन्धिविग्रहयोश्चेदित्यादि । परव्यसनस्यान्तःकोपादिलक्षणस्याप्रतिविधेयत्वसम्भावनायां हीनोऽपि यानमनुतिष्ठेदित्याह—परव्यसनमित्यादि ।

आत्मनो व्यसनमप्रतिविधेयमासन्नं यदि पश्येत् स ज्यायानपि सन् हीनं संश्रयेतेत्याह—अप्रतिकार्यासन्नव्यसन इत्यादि ।

एकेन सन्धिकरणे कार्यसिद्धिः अन्येन विग्रहकरणे कार्यसिद्धिरिति चेत् पश्येत्, तादृशे निमित्ते ज्यायानपि द्वैधीभावमनुतिष्ठेदित्याह—सन्धिनैकत इत्यादि । इतिशब्दः प्रक्रान्तप्रकरणसमाप्त्यर्थः ।

हीनसन्धय इति सूत्रम् । हीनः शक्तिसिद्धिभ्यां शत्रोरपकृष्टः, तेन कर्तव्याः सन्धय इति सूत्रार्थः । पूर्वस्मिन् प्रकरणे समहीनज्यायसां षाड्गुण्यप्रयोग उक्तः, अत्र तु हीनं प्रति विशेष उच्यते ।

एवमिति । पूर्वोक्तेन प्रकारेण, समस्य सर्वस्य समहीनज्यायसां सर्वेषामित्यर्थः । षाड्गुण्योपयोगः, दर्शित इति शेषः । तत्र तु प्रतिविशेष इति । तेषु मध्ये हीनं प्रति विशेषस्तूच्यते ।

प्रवृत्तचक्रेणाक्रान्तो राज्ञा बलवताऽबलः ।
सन्धिनोपनमेत् तूर्णं कोशदण्डात्मभूमिभिः ॥१९९॥
स्वयं सङ्ख्यातदण्डेन दण्डस्य विभवेन वा ।
उपस्थातव्यमित्येष सन्धिरात्मामिषो मतः ॥२००॥
सेनापतिकुमाराभ्याम् उपस्थातव्यमित्ययम् ।
पुरुषान्तरसन्धिस्स्यान्नात्मनेत्यात्मरक्षणः ॥२०१॥
एकेनान्यत्र यातव्यं स्वयं दण्डेन वेत्ययम् ।
अदृष्टपुरुषः सन्धिर्दण्डमुख्यात्मरक्षणः ॥२०२॥
मुख्यस्त्रीबन्धनं कुर्यात् पूर्वयोः पश्चिमे त्वरिम् ।
साधयेद् गूढमित्येते दण्डोपनतसन्धयः ॥२०३॥

---

श्रीमूला

प्रवृत्तेत्यादि । प्रवृत्तचक्रेण प्रवृत्तसैन्येन, बलवता, राज्ञा, आक्रान्तो विजितः, अबलो राजा, कोशदण्डात्मभूमिभिः सन्धिना कोशादिदानपूर्वकेण सन्धिना, तूर्णं त्वरितम्, उपनमेत् प्रणमेद् बलवन्तम् ।

स्वयमित्यादि । तत्र दण्डेऽपेक्ष्यमाणे तन्निर्दिष्टसङ्ख्याकेन दण्डेन विभवेन च स्वशक्त्यनुरूपेण स्वयं शत्रुसमीपं गत्वा उपस्थातव्यं तदाराधनं कर्तव्यम् । इत्येष सन्धिरात्मामिषो नाम आत्मानमामिषीकृत्य क्रियमाणत्वात् ।

सेनेत्यादि । सेनापतिकुमाराभ्यां समुचितपरिवाराभ्यामुपस्थातव्यमित्येष पुरुषान्तरो नाम सन्धिः सेनापतिकुमारलक्षणपुरुषविशेषार्पणेन शत्रुसाधनात् । अयमेव सन्धिरात्मरक्षण इत्यप्युच्यते आत्मार्पणेन न क्रियत इति कृत्वा ।

एकेनेत्यादि । स्वयम् एकेन शत्रुसैन्यसाह्यरहितेन स्वसैन्येन वा शत्रुकार्यसाधनायान्यत्र यातव्यमिति पणनेन क्रियमाणः सन्धिरदृष्टपुरुषाख्यः, न दृष्टः पुरुषः शत्रुणा तत्कार्यं साधयन्नस्मिन् सन्धाविति कृत्वा । दण्डमुख्यात्मरक्षण इत्यप्ययमुच्यते अनेन सन्धिना दण्डमुख्यानामात्मनश्च रक्षणसम्पत्तेः ।

मुख्यस्त्रीबन्धनमित्यादि । उक्तेषु त्रिषु सन्धिषु पूर्वयोरात्मामिषात्मरक्षणसन्ध्योर्ज्यायसो ये मुख्यास्तत्कन्यानां विवाहसम्बन्धं विश्वासार्थं कुर्यात् । अन्तिमे तु सन्धौ शत्रुं प्रच्छन्नविषादिप्रयोगैः साधयेत् । इत्येते त्रयः दण्डदानप्रणतकरणीयाः सन्धयः ।

[ परिक्रयादयश्चत्वारः कोशोपनतसन्धयः ]

**कोशदानेन शेषाणां प्रकृतीनां विमोक्षणम् ।**
**परिक्रयो भवेत् सन्धिः स एव च यथासुखम् ॥२०४॥**
**स्कन्धोपनेयो बहुधा ज्ञेयस्सन्धिरुपग्रहः ।**
**निरुद्धो देशकालाभ्याम् अत्ययस्स्यादुपग्रहः ॥२०५॥**
**विषह्यदानादायत्यां क्षमः स्त्रीबन्धनादपि ।**
**सुवर्णसन्धिर्विश्वासादेकीभावगतो भवेत् ॥२०६॥**
**विपरीतः कपालस्स्यात् अत्यादानाभि(द)भाषितः ।**
**पूर्वयोः प्रणयेत् कुप्यं हस्त्यश्वं वा गरान्वितम् ॥२०७॥**
**तृतीये प्रणयेदर्थं कथयन् कर्मणां क्षयम् ।**
**तिष्ठेच्चतुर्थ इत्येते कोशोपनतसन्धयः ॥२०८॥**

[ आदिष्टादयश्चत्वारः देशोपनतसन्धयः ]

**भूम्येकदेशत्यागेन देशप्रकृतिरक्षणम् ।**

---

श्रीमूला

कोशोपनतसन्धीनाह—कोशदानेनेत्यादि । श्लोकत्रयमनुवृत्तपदम् । बलवच्छत्रुहृतावशिष्टानां प्रकृतीनां धनदानेन यद् विमोचनं, स परिक्रयो नाम सन्धिः । स एव चात्मानुपपीडया कोशस्य सङ्ख्यातस्य बह्ववधिषु स्कन्धस्कन्धेन देयत्वव्यवस्थाया-मुपग्रहसंज्ञः परिक्रयभेदः । उपग्रहश्चासौ अमुकदेशेष्वमुककालेष्वेतावद् धनं देयमित्येवं देयदानदेशकालनियमकल्पनायामत्ययसंज्ञः । यथासुखधनदानव्यवस्थाकृतः सन्धिरयं सहनीयदानाद्धेतोरुत्तरकालशुभावहः कन्यादानसन्धितोऽतिप्रशस्तः शत्रुविजिगीष्वो-र्विश्वासवशादन्योन्यस्यैकात्मतामपि प्रयोजयेत् सुवर्णयोरिव तप्तयोः । अत एव चायं सुवर्णसन्धिरित्युच्यते ।

विपरीत इत्यादि । उक्तविपरीतः सद्यस्सर्वकोशदानव्यवस्थाकृतः सन्धिः कपालाख्यः । स तत्क्षणातिमात्रधनग्रहणदुष्टत्वादुपादेयतया नोक्तः शास्त्रे । परिक्रयादिषु पूर्वोक्तेषु चतुर्षु मध्ये पूर्वयोः परिक्रयोपग्रहसन्ध्योर्वस्त्रावरणादिकमसारं कुप्यद्रव्यं दद्यात् । गजाश्वं वा शत्रुणापेक्ष्यमाणं द्वित्रमासान्तरमरणानुकूलविषप्रयोगयुक्तं कृत्वाल्पसङ्ख्यं दद्यात् ।

तृतीय इत्यादि । सुवर्णसन्धौ देयस्य कमप्यंशं दद्यात् 'कर्माणि मे विपन्नानी'-त्येवं वदन् । चतुर्थे कपालसन्धौ मध्यममुदासीनं वाश्रित्य 'ददामि ददामी'ति वदन् तिष्ठेत् कालं थापयेत् । इत्येवमेते चत्वारः कोशदानेनोपनतैः कर्तव्याः सन्धयः ।

देशोपनतसन्धीनाह—भूम्येकदेशत्यागेनेत्यादि । जनपदस्य प्रकृतीनां च

**आदिष्टसन्धिस्तत्रेष्टो गूढस्तेनोपघातिनः ॥२०९॥**
**भूमीनामात्तसाराणां मूलवर्जं प्रणामनम् ।**
**उच्छिन्नसन्धिस्तत्रैष परव्यसनकाङ्क्षिणः ॥२१०॥**
**फलदानेन भूमीनां मोक्षणं स्यादवक्रयः ।**
**फलातिमुक्तो भूमिभ्यः सन्धिस्स परदूषणः ॥२११॥**
**कुर्यादवेक्षणं पूर्वौ पश्चिमौ त्वाबलीयसम् ।**
**आदाय फलमित्येते देशोपनतसन्धयः ॥२१२॥**

[ निगमनम् ]

**स्वकार्याणां वशेनैते देशे काले च भाषिताः ।**
**आबलीयसिकाः कार्यास्त्रिविधा हीनसन्धयः ॥२१३॥**

इति षाड्गुण्ये समहीनज्यायसां गुणाभिनिवेशो हीनसन्धयश्च,
तृतीयोऽध्यायः, आदित एकशततमः

---

श्रीमूला

रक्षणार्थं जनपदैकदेशदानेन यत् सन्धानं, स आदिष्टसन्धिर्नाम । सोऽयं भूम्येकदेशे दत्ते गूढपुरुषैः स्तेनैश्चोपघातं तस्य पुनस्स्वायत्तीकरणार्थं कर्तुं शक्तस्येष्टो भवति ।

भूमीनामित्यादि । स्वभूमिभ्यः कृत्स्नं फलं गृहीत्वा राजधानीदुर्गवर्जितानां सर्वासां तासां शत्रवेऽर्पणेन क्रियमाणः सन्धिरुच्छिन्नसन्धिर्नाम्ना । स एव 'परव्यसने भूमिं प्रत्याच्छेत्स्यामो'ति बुद्ध्या तत् प्रतीक्षमाणस्येप्सितो भवति ।

फलदानेनेत्यादि । भूम्युत्पन्नफलदानेन भूमीनां मोक्षणम् अवक्रयसन्धिर्नाम । भूमीनामेव दाने तु तत्स्वामित्वमात्मनोऽपेयादित्ययं क्रियते । सर्वभूमिभ्य उत्पद्यमानं यत् फलं तदेव केवलं शत्रवे नार्प्यते किन्तु ततोऽधिकमपि समर्प्यते यस्मिन् सन्धौ, स परदूषणो नाम, आयाभ्यधिकदानसंविदा परं दूषयत्युपहन्तीति व्युत्पत्त्यान्वर्थाख्यः ।

कुर्यादित्यादि । एषु चतुर्षु पूर्वौ आदिष्टसन्ध्युच्छिन्नसन्धी उद्दिश्य तन्निमित्तानर्थपरिहारविषये परव्यसनकालप्रतीक्षां कुर्यात् । पश्चिमयोरवक्रयसन्धिपरदूषणसन्ध्योर्विषये च भूमिफलमुपहृत्याबलीयसप्रकरणवक्ष्यमाणविधिना शत्रोर्द्रोहानुष्ठानं कुर्यात् । इत्येवमेते चत्वारो भूम्युपनतसन्धयः ।

स्वकार्याणामित्यादि । त एते हीनसन्धयः दुर्बलैः स्वकार्यानुसारेण देशानुसारेण कालानुसारेण च परिभाष्यानुष्ठेयाः सन्तः पुनस्त्रिविधा वेदितव्याः ।

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे
तृतीयोऽध्यायः, समहीनज्यायसां गुणाभिनिवेशः
हीनसन्धयश्च । आदितः एकशततमः ॥

## त्रिशततमादिसप्तशततमान्तानि प्रकरानि

### चतुर्थोऽध्यायः

### विगृह्यासनम्, सन्धायासनम्, विगृह्ययानम्, सन्धाययानम्, सम्भूयप्रयाणं च ।

[ आसनभेदाः आसनसामान्ये निमित्तं च ]

**( विगृह्यासनम् । )**

**सन्धिविग्रहयोरासनं यानं च व्याख्यातम् । स्थानमासनमुपेक्षणं चेत्यासनपर्यायाः । विशेषस्तु—गुणैकदेशे स्थानम्, स्ववृद्धिप्राप्त्यर्थमासनम्, उपायानामप्रयोग उपेक्षणमिति ।**

---

श्रीमूला

विगृह्यासनमिति सूत्रम् । शत्रुणा सह धान्यप्राप्त्यादिप्रतिघातलक्षणं विग्रहं कृत्वा यदासनं तदुच्यत इति सूत्रार्थः । केवलमासनं यानं च पूर्वमुक्तं, गुणान्तरविशिष्टं त्वधुनाभिधीयते ।

सन्धिविग्रहयोरित्यादि । सन्धौ विग्रहे चासनं यानं च व्याख्यातं पूर्वाचार्यैः । स्थानम् आसनम् उपेक्षणमित्येते शब्दा आसनस्य पर्यायवाचिनः ।

विशेषस्त्विति । तत्र विशेषस्तूच्यते । गुणैकदेशे स्थानमित्यादि । गुण इहासनं तच्च शक्तिसाम्यलक्षणं तस्यैकदेशोऽवयवः स च शक्तेरल्पोंऽशः शत्रुकृतापकारप्रत्य-पकारकरणासामर्थ्यरूपा शक्त्यल्पतेति यावत्, तस्यामासनलक्षणादपकृष्टायां स्थान-शब्दः प्रयुज्यते । तच्च स्थानं विजिगीषोः सन्धायासनस्य कारणं द्रष्टव्यम् । स्ववृद्धि-प्राप्त्यर्थमासनमिति । आत्मनो वृद्धिप्राप्तिनिमित्ते आसने आसनशब्दः प्रयुज्यते । इय परकृतापकारं केवलं प्रतिकुर्वतः स्वयमनपकुर्वतश्चावस्था स्थानविपरीता । वृद्ध्यर्थं चेदमासनं शक्तिसाम्यलक्षणासनापेक्षया शक्त्याधिक्ययोगाद् विगृह्यासनस्य कारणम् । उपायानामप्रयोग उपेक्षणमिति । उपायानां प्रयोगाभाव ईषत्प्रयोगे वा उपेक्षणशब्दः प्रयुज्यते । एवं पर्यायवचनानामपि स्थानासनोपेक्षणानां कमपि कमपि विशेषमाश्रित्य संज्ञाभेदा उक्ताः । केचित् तु स्थानादीनां स्वरूपमन्यथा वर्णयन्ति । कपालसन्ध्यादिषु प्रदेयद्रव्याप्रदानं स्थानं, कृतोच्छिन्नसन्धेः परव्यसनप्रतीक्षणावस्थानमासनं, सामाद्यु-पायाप्रयोग उपेक्षणमिति ।

**सन्धानकामयोररिविजिगीष्वोः उपहन्तुमशक्तयोः विगृह्यासनं सन्धाय वा ।**

[ तत्र विगृह्यासने निमित्तभेदास्त्रयः ]

**(१) यदा वा पश्येत्—'स्वदण्डैर्मित्राटवीदण्डैर्वा समं ज्यायांसं वा कर्शयितुमुत्सहे' इति, तदा कृतबाह्याभ्यन्तरकृत्यो विगृह्यासीत ।**

**(२) यदा वा पश्येत्—'उत्साहयुक्ता मे प्रकृतयस्संहताः विवृद्धाः स्वकर्माण्यव्याहताश्चरिष्यन्ति, परस्य वा कर्माण्युपहनिष्यन्ति' इति, तदा विगृह्यासीत ।**

**(३) यदा वा पश्येत्—'परस्यापचरिताः क्षीणा लुब्धाः स्वचक्र-स्तेनाटवीव्यथिता वा प्रकृतयः स्वयं उपजापेन वा मामेष्यन्ति' इति; 'सम्पन्ना मे वार्ता, विपन्ना परस्य, तस्य प्रकृतयो दुर्भिक्षोपहता मामेष्यन्ति; विपन्ना मे वार्ता, सम्पन्ना परस्य, तं मे प्रकृतयो न गमिष्यन्ति; विगृह्य चास्य**

---

श्रीमूला

प्रसङ्गागतमासनभेदमभिधाय प्रस्तुतमनुसन्धत्ते—सन्धानकामयोरित्यादि । सन्धिमिच्छतोः शत्रुविजिगीष्वोः परस्परापकारकारणाशक्तत्वे विगृह्यासनं सन्धायासनं वा कर्तव्यम् । तत्र च शक्त्याधिक्ये आद्यं शक्त्यल्पत्वे द्वितीयम् । फलं चाद्यस्य परकर्मोपघातः स्वकर्मानुष्ठानं च, द्वितीयस्य स्वकर्मरक्षणमात्रमिति विवेक्तव्यम् ।

अथ विगृह्यासने निमित्तविशेषमाह—यदा वा पश्येत् स्वदण्डैरित्यादि । 'स्वसैन्यैर्मित्रसैन्यैराटविकसैन्यैर्वाहमात्मनः समशक्तिमधिकशक्तिं वा शत्रुं कर्शयितुं शक्नोमी'ति चेन्मन्येत, तदा कृतबाह्याभ्यन्तरकृत्यः सन् जनपदगता दुर्गादिगताश्च कृत्याः क्रुद्धलुब्धभीतादयः कृताः परविषये वर्धिताः स्वविषये शामिताश्च येन तथाभूतः सन् विगृह्यासनमनुतिष्ठेत् ।

यदा वा पश्येद् उत्साहयुक्ता इत्यादि । 'मम प्रकृतय उत्साहवत्य एकमनस्काः वृद्धिमत्यः स्वकर्मण्यप्रतिहता अनुष्ठास्यन्ति परकर्माणि चोपहनिष्यन्ति' इति चेन्मन्येत, तदा विगृह्यासनमनुतिष्ठेत् ।

यदा वा पश्येत् परस्येत्यादि । 'परस्य प्रकृतयः परेणानाहताः दुर्भिक्षोपहताः लुब्धाः स्वसैन्यचोराटविकपीडिताः स्वयं मदीयभेदोपायानुष्ठानेन वा मामुपगमिष्यन्ती'ति चेन्मन्येत, तदा विगृह्यासीत । 'कृषिपाशुपाल्यवणिज्या मे सम्पन्नाः परस्य तु विपन्नाः, तस्य प्रकृतयः दुर्भिक्षपरिक्षीणाः मामाश्रयिष्यन्ती'ति चेन्मन्येत विगृह्यासीत । 'मम कृषिपाशुपाल्यवणिज्या विपन्नाः, परस्य सम्पन्नाः, प्रकृतयश्च मेऽनुरक्ताः

**धान्यपशुहिरण्यान्याहरिष्यामि, स्वपण्योपघातीनि वा परपण्यानि निवर्तयिष्यामि, परवणिक्पथाद्वा सारवन्ति मामेष्यन्ति विगृहीते नेतरं, दूष्यामित्राटवीनिग्रहं वा विगृहीतो न करिष्यति, तैरेव वा विग्रहं प्राप्स्यति; मित्रं मे मित्रभावि अभिप्रयातो बह्वल्पकालं तनुक्षयव्ययमर्थं प्राप्स्यति, गुणवन्तीमादेयां वा भूमिं सर्वसन्दोहेन वा मामनादृत्य प्रयातुकामः कथं न यायात्' इति, परवृद्धिप्रतिघातार्थं प्रतापार्थं च विगृह्यासीत ।**

[ अत्राचार्यमतं स्वमतं प्रयोजनान्तरं च ]

**'तमेव हि प्रत्यावृत्तो ग्रसते' इत्याचार्याः । 'न' इति कौटल्यः—कर्शनमात्रमस्य कुर्यादव्यसनिनः' परिवृद्धचा तु वृद्धस्समुच्छेदनम् ।**

---

श्रीमूला

परं न गमिष्यन्ति, अतः परस्य धान्यपशुहिरण्यानि विगृह्यापहरिष्यामी'ति चेन्मन्येत, तदा विगृह्यासीत । 'विक्रयार्हाणां मम पण्यानां विक्रयं परदेशागतानि पण्यान्युपघ्नन्ति । तदेतानि स्वदेशान्निवर्तयिष्यामी'ति चेन्मन्येत, तदा विगृह्यासीत । 'विगृहीते सति शत्रौ तदीयवणिक्पथात् सारवन्ति, हस्त्यश्वगजदन्तादीनि, मामागमिष्यन्ति, न तु शत्रुमि'ति चेन्मन्येत, तदा विगृह्यासीत । अथवा 'मया विग्रहे क्रियमाणे परो दूष्यामित्राटविकानां निग्रहं स्वमण्डलशुद्धचर्थं न करिष्यन्ती'ति चेन्मन्येत विगृह्यासीत । 'तैरेव वा दूष्यामित्राटविकैः सह विग्रहं प्राप्स्यती'ति चेन्मन्येत, विगृह्यासीत । इत्थं समस्य विगृह्यासनमुक्त्वा ज्यायस आह—मित्रं मे मित्रभावीत्यादि । 'मम मित्रं मित्रभावि—

एकार्थानर्थसम्बद्धमुपकार्यविकारि च ।
मित्रभावि भवत्येतन्मित्रमद्वैध्यमापदि ॥

इति मित्रसन्धिवक्ष्यमाणलक्षणम् । अभिप्रयातः परोऽल्पकालेनाल्पसैन्यधनव्ययेन महान्तमर्थं प्राप्स्यति, तदहमस्याभिप्रयाणं विहनिष्यामि' इति चेन्मन्येत, तदा विगृह्यासीत । अथवा 'गुणवतीं परसुखसाध्यां भूमिमपहर्तुं सर्वसैन्यसमुदयेन मामवज्ञाय प्रयातुकामोऽयं परो यथा न यायात् तथा करिष्यामी'ति चेन्मन्येत, तर्हि विगृह्यासीत, किमर्थं, परवृद्धिविघातार्थं स्वप्रतापाविष्करणार्थं च ।

तमेव हि प्रत्यावृत्तो ग्रसत इत्याचार्या इति । योऽयं विजिगीषुः सर्वसन्दोहेन यातव्याभिप्रयाणोद्यतं परं प्रति तद्वृद्धिप्रतिषेधार्थं विगृह्यासनमनुतिष्ठति, तमेव स्वप्रयाणविघातकुपितः परो यातव्यात् प्रत्यावृत्योच्छिनत्ति इत्येवमनर्थं प्रसङ्गात् तं प्रति विगृह्यासनं नानुष्ठेयमित्याचार्या मन्यन्ते ।

**एवं परस्य यातव्यः अस्मै साहाय्यमविनष्टः प्रयच्छेत् । तस्मात् सर्वसन्दोहप्रकृतं विगृह्यासीत ।**

**( सन्धायासनम् । )**

[ सन्धायासने निमित्तम् ]

**विगृह्यासनहेतुप्रातिलोम्ये सन्धायासीत ।**

**( विगृह्ययानम् । )**

[ विगृह्ययाने निमित्तभेदाः ]

**विगृह्यासनहेतुभिरभ्युच्चितः सर्वसन्दोहवर्जं विगृह्य यायात् ।**

---

श्रीमूला

आचार्यमतं दूषयति—नेति कौटल्य इति । तत्र हेतुमाह—कर्शनमात्रस्य कुर्यादव्यसनिन इति । अस्य विगृह्यासीनस्य अव्यसनिनः व्यसनहीनस्य सतो विजिगीषोः कर्शनमात्रं कुर्यात् कर्शनमेव केवलं कुर्यात् प्रत्यावृत्तः, न तूच्छेदनमित्यर्थः । प्रत्युत विगृह्यासनस्याननुष्ठान एव स निष्प्रतिबन्धविजितयातव्यसकाशाधिगतैश्वर्याप्यायितनिजशक्तिर्भवन् विजिगीषोरुच्छेदनमेव कुर्यादित्याह—परवृद्धया तु वृद्धः समुच्छेदनमिति ।

विगृह्यासनस्यानुष्ठानेऽनुपेक्षणीयं प्रयोजनान्तरमाह—एवं परस्येत्यादि । एवं विगृह्यासनस्यानुष्ठानेन, अविनष्टः अप्राप्तनाशः प्राप्तपरिरक्षः, परस्य यातव्यः, अस्मै आत्मोपकारिणे विजिगीषवे, साहाय्य प्रयच्छेत् । तस्मादिति । यथोक्ताद्धेतोः, सर्वसन्दोहप्रकृतं विगृह्यासीत सर्वसैन्यसमुदयेनारब्धयानं प्रति विगृह्यासनमनुतिष्ठेत् । इति विगृह्यासनं व्याख्यातम् ।

अथ सन्ध्यायासनम् । सन्ध्यायासनमिति सूत्रम् । शत्रुणा सह सन्धिं कृत्वा आसनं सन्धायासनम् । तदभिधीयत इति सूत्रार्थः ।

विगृह्यासनहेतुप्रातिलोम्य इत्यादि । य एते विगृह्यासनहेतवः उक्ताः तेषामात्मनि वैपरीत्यदर्शने अर्थात् तेषां शत्रावुत्पत्तिदर्शने सन्धायासनमनुतिष्ठेत् । इति सन्धायासनं व्याख्यातम् ।

विगृह्ययानमिति सूत्रमुत्तानार्थम् । विगृह्यासनहेतुभिरिति । तैः, अभ्युच्चितः शक्त्युपचयं प्राप्तः विगृह्य यायात्, शत्रुम् । सर्वसन्दोहवर्जं सर्वसन्दोहसहितो यो यातव्यं प्रति अभिप्रयातस्तथाविधं शत्रुं वर्जयित्वा । तं प्रत्याचरितव्यं तु विगृह्यासनमुक्तमेव ।

यदा वा पश्येद् व्यसनीत्यादि । शत्रुर्व्यसनवान् इति चेत् पश्येत्, अस्य प्रकृतीनां वामात्यादीनां व्यसनं शेषप्रकृतिभिः प्रतिकर्तुमशक्यमुत्पन्नमिति यदि पश्येत्, अस्य प्रकृतयः स्वसैन्यपीडिताः राज्ञि निरनुरागाः कर्शिताः अत एव निरुत्साहाः परस्पर-

**यदा वा पश्येत्—'व्यसनी परः, प्रकृतिव्यसनं वाऽस्य शेषप्रकृतिभिरप्रतिकार्यं, स्वचक्रपीडिता विरक्ता वाऽस्य प्रकृतयः कर्शिता निरुत्साहाः परस्परात् भिन्नाः शक्या लोभयितुम्, अग्न्युदकव्याधिमरकदुर्भिक्षनिमित्तक्षीणपुण्यपुरुषनिचयरक्षाविधानः परः' इति, तदा विगृह्य यायात् ।**

**यदा वा पश्येत्—'मित्रमाक्रन्दश्च मे शूरवृद्धानुरक्तप्रकृतिर्विपरीतप्रकृतिः परः पार्ष्णिग्राहश्चासारश्च, शक्ष्यामि मित्रेणासारम् आक्रन्देन पार्ष्णिग्राहं वा विगृह्य यातुम्' इति, तदा विगृह्य यायात् ।**

**यदा वा फलमेकहार्यमल्पकालं पश्येत् तदा पार्ष्णिग्राहासाराभ्यां विगृह्य यायात् ।**

**( सन्धाययानम् । )**

[ सन्धाययाने हेतुः ]

**विपर्यये सन्धाय यायात् ।**

---

श्रीमूला

भिन्नाः लोभयितुं शक्याः इति चेत् पश्येत् परोऽग्न्युदकव्याधिमरकदुर्भिक्षैर्निमित्तैर्युग्यकर्मकरकोशानां रक्षाविधानस्य च क्षयं प्राप्त इति च यदि पश्येत्, एषु चतुर्षु निमित्तेषु विगृह्य यायात् ।

यदा वा पश्येन्मित्रमित्यादि । 'मम पुरस्तान्मित्रभूतो राजा । पृष्ठतो मित्रभूतो राजा वा शूरैर्वृद्धैरनुरागिभिश्चामात्यादिभिः प्रकृतिभिरुपेतो भवति, परो विपरीतप्रकृतिस्तथैव पार्ष्णिग्राहश्च आसारश्च, मित्रेण पार्ष्णिग्राहासारम्, आक्रन्देन पार्ष्णिग्राहं च विग्राह्य यातव्यं प्रति प्रयातुं शक्ष्यामि' इति चेन्मन्येत, तदा विगृह्य यायात् ।

यदा वा फलमित्यादि । यदा वा किमपि फलम् आत्मनैकेनैवाल्पेन कालेन साध्यं पश्येत्, तदा पार्ष्णिग्राहेण तदासारेण च सह विगृह्य यातव्यमभियायात् । फलस्य त्वन्यहार्यत्वे चिरसाध्यत्वे च ताभ्यां सन्धायैव यातव्यं यायात् । एतच्च पार्ष्णिग्राहासाराभ्यां विग्रहणं पृष्ठकोपारम्भात् प्रागेव फलस्य सुसाधत्वाद् यातव्यसाधनानन्तरमपि तौ साधयितुं शक्याविति कृत्वोपदिष्टं द्रष्टव्यम् । इति विगृह्ययानं व्याख्यातम् ।

सन्धाययानमिति सूत्रम् । सन्धानपुरस्सरं यानमुच्यत इति सूत्रार्थः ।

विपर्यये सन्धाय यायादिति । यथोक्तानि विगृह्ययाननिमित्तान्यात्मनो यदा न पश्यति शत्रोस्तु पश्यति, तदा विजिगीषुः सन्धाययानमनुतिष्ठेत् । इति सन्धाययानं व्याख्यातम् ।

## ( सम्भूयप्रयाणम् । )

[ सम्भूयप्रयाणे हेतुः ]

**यदा वा पश्येत्—'न शक्यमेकेन यातुं, अवश्यं च यातव्यम्' इति, तदा समहीनज्यायोभिस्सामवायिकैस्सम्भूय यायात्; एकत्र निर्दिष्टेनांशेन, अनेकत्रानिर्दिष्टेनांशेन। तेषामसमवाये दण्डमन्यतमस्मिन्निविष्टांशेन याचेत। सम्भूयाभिगमनेन वा निर्विश्येत। ध्रुवे लाभे निर्दिष्टेनांशेन अध्रुवे लाभांशेन।**

[ सम्भूययानलब्धधनविभागक्रमः ]

**अंशो दण्डसमः पूर्वः प्रयाससम उत्तमः।**
**विलोपे वा यथालाभं प्रक्षेपसम एव वा ॥२१४॥**

इति षाड्गुण्ये विगृह्यासनं सन्धायासनं विगृह्ययानं सन्धाययानं संभूयप्रयाणं च, चतुर्थोऽध्यायः, आदितो द्विशततमः।

---

श्रीमूला

सम्भूयप्रयाणमिति सूत्रम्। समहीनज्यायसां शत्रुं प्रति समुदेत्य प्रयाणमुच्यत इति सूत्रार्थः। यदा वा पश्येन्न शक्यमित्यादि। असहायेन मया यातुं न शक्यते, यातव्यं चावश्यमिति यदि मन्येत, तदा समहीनज्यायोभिः समवेतैः सम्भूय यायाद् यातव्यम्। एकत्रेत्यादि। एकस्मिन् देशेंऽश इयानिति भाषित्वा यायाद् अनेकत्राभाषित्वा यायात् तत्तद्देशानुरोधेन। तेषामसमवाय इति। समादीनां मध्ये, अन्यतमस्मिन् अन्यतमे राज्ञि, असमवाये असमवेते सति, दण्डं निविष्टांशेन याचेत तद्देयत्वेन व्यवस्थितो योंऽशः परिमाणं तद्युक्तं सैन्यं देहीति याचेत। इह अन्यतमस्मिन् इति सर्वनामकार्यकरणमार्षम्। अन्यतरस्मिन् इति पाठे तु बहुविषयनिर्धारणाप्रतीतिः। सम्भूयाभिगमनेन वा निर्विश्येतेति। सम्भूयाभिगमनं वा सहायकर्मणो निर्वेशः कल्पेत, 'यदि मम कार्ये सम्भूयाभिगमनेन त्वमिदानीं साहाय्यं कुर्याः अहमपि तव कार्ये तथा साहाय्यं दास्यामि' इति वा साहाय्यदानप्रयोजनं निर्दिशेदित्यर्थः। ध्रुवे लाभ इति। लाभश्चेद् ध्रुवो भूम्यादिस्तर्हि, निर्दिष्टेनांशेन निर्विश्येत सहायकर्मनिर्वेशतया ध्रुवस्य कश्चिद्देशो निर्दिष्टेनांशेन निर्देष्टव्यः पूर्वमेव। अध्रुवे लाभे, लाभांशेन निर्विश्येत अध्रुवस्य लब्धपदार्थस्य कश्चिदंशो निर्वेशतया निर्देष्टव्यः।

यातव्यं सम्भूययानेन जितवद्भिर्लब्धस्य धनस्य कथं विभागस्तत्राह—अंशो दण्डसम इति। दत्तसैन्यबहुत्वाल्पत्वानुरूपो दातॄणामंशः कल्प्य इति प्रथमः पक्षः। प्रयाससम उत्तम इति। परिस्पन्दाधिक्याल्पत्वानुरूपोंऽश इत्युत्तमः पक्षः। विलोपो वा

यथालाभमिति। यथालाभं तेन तेन परिलुण्ठितोऽर्थस्तस्य तस्य परिलुण्ठितुरंश इत्यपरः पक्षः। प्रक्षेपसम एव वेति। अथवा धनसाध्ये कार्ये सम्भूययातृभिः साधिते व्ययार्थधनप्रक्षेपबहुत्वाल्पत्वानुरूपो धनप्रक्षेप्तॄणामंशः।

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे
चतुर्थोऽध्यायः, विगृह्यासनं सन्धायासनं विगृह्ययानं
सन्धाययानं सम्भूयप्रयाणम्,
आदितो द्विशततमः॥

## अष्टशततमादिदशशततमान्तानि प्रकरणानि

### पञ्चमोऽध्यायः

### यातव्यामित्रयोरभिग्रहचिन्ता, क्षयलोभविरागहेतवः प्रकृतीनां, सामवायिकविपरिमर्शश्च ।

### ( यातव्यामित्रयोरभिग्रहचिन्ता । )

[ यातव्यामित्रयोर्व्यसनसाम्ये यानप्रकारः ]

**तुल्यसामन्तव्यसने यातव्यममित्रं वा ? इति—**

**अमित्रमभियायात्, तत्सिद्धौ यातव्यम् । अमित्रसिद्धौ हि यातव्यस्साहाय्यं दद्यान्नामित्रो यातव्यसिद्धौ ।**

[ तयोरेव व्यसनवैषम्ये यानप्रकारः ]

**गुरुव्यसनं यातव्यं, लघुव्यसनममित्रं वा ? इति—**

**'गुरुव्यसनं सौकर्यतो यायात्' इत्याचार्याः । 'न' इति कौटल्यः—**

---

श्रीमूला

यातव्यामित्रयोरभिग्रहचिन्तेति सूत्रम् । अरिसम्पद्युक्तो व्यसनी यातव्यः, अमित्रो नित्यापकारी सामन्तः, अभिग्रहः पीडनकर्शनादिः तद्धेतुत्वाद् यानमिहोच्यते, चिन्ता सम्प्रधारणम् । यातव्यामित्रयोर्मध्ये कतरं प्रति यानमनुष्ठेयमिति सम्प्रधारणमभिधीयत इति सूत्रार्थः । यानभेदाः कथिताः, यातव्यभेदास्तु कथ्यन्ते ।

तुल्यसामन्तव्यसने यातव्यममित्रं वेतीत्यादि । तुल्ये सामन्तयोर्यातव्यामित्रयोर्व्यसने यातव्यं वा पूर्वमभियायादमित्रं वेति चिन्तायाम्, अमित्रमेव पूर्वमभियायात्, तत्साधनानन्तरं तु यातव्यमभियायात् । कुतः, हि यस्मात् कारणात् अमित्रसाधने विषये यातव्यो हेतुं ग्राहितो भृत्यभावी मित्रभावी वा सन् साहाय्यं विजिगीषवे दद्यात्, अमित्रस्तु यातव्यसाधने पूर्वमारभ्यमाणे साहाय्यं न दद्यादरिभावित्वेन विजिगीषुं प्रति नित्यापकारशीलत्वात् ।

इत्थं व्यसनसाम्ये यानप्रकारमुक्त्वा व्यसनवैषम्ये आह—गुरुव्यसनमित्यादि । गुरुव्यसनं यातव्यं वा यायाल्लघुव्यसनममित्रं वेति चिन्तायां, गुरुव्यसनमेव पूर्वं यायात् सुखसाध्यत्वादित्याचार्या वदन्ति । तत् प्रतिषेधति—नेति कौटल्य इत्यादि ।

**लघुव्यसनममित्रं यायात् । लघ्वपि हि व्यसनमभियुक्तस्य कृच्छ्रं भवति । सत्यं गुर्वपि गुरुतरं भवति । अनभियुक्तस्तु लघुव्यसनः सुखेन व्यसनं प्रतिकृत्यामित्रो यातव्यमभिसरेत्; पार्ष्णिं गृह्णीयात् ।**

[ त्रयाणां यातव्यानां यौगपद्ये यानप्रकारः ]

**यातव्ययौगपद्ये गुरुव्यसनं न्याय्यवृत्तिं, लघुव्यसनमन्याय्यवृत्तिं, विरक्तप्रकृतिं वा ? इति—**

**विरक्तप्रकृतिं यायात् । गुरुव्यसनं न्यायवृत्तिमभियुक्तं प्रकृतयोऽनुगृह्णन्ति । लघुव्यसनमन्यायवृत्तिमुपेक्षन्ते । विरक्ता बलवन्तमप्युच्छिन्दन्ति । तस्माद्विरक्तप्रकृतिमेव यायात् ।**

[ द्वयोर्यौगपद्ये तत्प्रकृत्यानुगुण्येन यानप्रकारः ]

**क्षीणलुब्धप्रकृतिम् अपचरितप्रकृतिम् वा ? इति—**

**'क्षीणलुब्धप्रकृतिम् यायात् । क्षीणलुब्धा हि प्रकृतयस्सुखेनोपजापं पीडां वोपगच्छन्ति, नापचरिताः प्रधानावग्रहसाध्याः' इत्याचार्याः । 'न'**

———————

श्रीमूला

गुरुव्यसनलघुव्यसनसन्निपाते लघुव्यसनममित्रमेव यायात्, कुतः, लघ्वपि स्वव्यसनमभियोगेन युक्तं शत्रुणा कृच्छ्रप्रतिकार्यं भवतीति सुखजय्यः शत्रुः । यद्यपि यातव्यस्य गुरुव्यसनमभियोगेन युक्तं गुरुतरं भवतीति शत्रुरभियुक्तः सुजय्यतरो भवति, तथापि, लघुव्यसनोऽमित्र एवाभियोक्तव्यः, अन्यथा सोऽभियोगपीडाविरहादात्मनो व्यसनस्य लघुनः सुखेन प्रतीकारं कृत्वा यातव्याय साहाय्यं दद्यात्, तस्य पार्ष्णिं वा गृह्णीयात् ।

इत्थं द्विविषयं यानानुष्ठानमुक्त्वा त्रिविषयमाह—यातव्ययौगपद्य इत्यादि । न्याय्यवृत्तिर्गुरुव्यसन एकः, अन्याय्यवृत्तिर्लघुव्यसनोऽपरः, विरक्तप्रकृतिरन्य इति त्रिषु यातव्येषु कतमं यायादिति विचारणायां विरक्तप्रकृतिं यायात् । कुतः, न्याय्यवृत्तिर्गुरुव्यसनो हि प्रकृतिभिरनुगृह्येतेत्यसाध्यः, अन्याय्यवृत्तिर्लघुव्यसनः प्रकृतिभिरुपेक्ष्येत पुनर्द्विष्येतेति केवलस्वबलसाध्यः, विरक्तप्रकृतिस्तु बलवानपि विरक्ताभिः स्वप्रकृतिभिरुच्छिद्येतेति विजिगीषोः सुखतरोच्छेद्य इत्येतस्मात् कारणात् ।

क्षीणलुब्धप्रकृतिमपचरितप्रकृतिं वेतीत्यादि । क्षीणाः दुर्भिक्षव्यसनादिपीडिता लुब्धाश्च यस्य प्रकृतयस्तथाभूतस्यानाहृतप्रकृतेश्चैत्युभयोर्यातव्ययोः प्रसङ्गे क्षीणलुब्धप्रकृतिं यायात् । कस्मात्, क्षीणलुब्धा हि प्रकृतयोऽनायासेन भेदयितुं पीडयितुं च शक्याः, न त्वपचरिताः प्रकृतयः । ता हि प्रधानपुरुषस्वीकारैकसाध्या इत्याचार्याणां

इति कौटल्यः—क्षीणलुब्धा हि प्रकृतयो भर्तरि स्निग्धा भर्तृहिते तिष्ठन्ति । उपजापं वा विसंवादयन्ति, अनुरागे सार्वगुण्यमिति । तस्मादपचरित-प्रकृतिमेव यायात् ।

[ सबलदुर्बलयोर्यातव्ययोर्यौगपद्ये व्यवस्था ]

बलवन्तमन्यायवृत्तिं दुर्बलं वा न्यायवृत्तिम् ? इति—

बलवन्तमन्यायवृत्तिं यायात् । बलवन्तमन्यायवृत्तिम् अभियुक्तं प्रकृतयो नानुगृह्णन्ति, निष्पातयन्ति, अमित्रं वाऽस्य भजन्ते । दुर्बलं तु न्यायवृत्तिमभियुक्तं प्रकृतयः परिगृह्णति, अनुनिष्पतन्ति वा ।

( क्षयलोभविरागहेतवः प्रकृतीनाम् । )

[ प्रकृतिषु क्षयलोभप्रद्वेषकारणानि त्रिंशत्,
तत्परिहारावश्यकता च ]

अवक्षेपेण हि सताम् असतां प्रग्रहेण च ।
अभूतानां च हिंसानाम् अधर्म्याणां प्रवर्तनैः ॥२१५॥

---

श्रीमूला

मतम् । तत् प्रत्याचष्टे—नेति कौटल्य इत्यादि । कुतः, क्षीणलुब्धा हि प्रकृतयः भर्तरि स्नेहवत्यश्चेत् तस्य हितमेव कुर्युः भेद्यमाना वा भेदं नाङ्गीकुर्युः स्वाम्यनुरागे सर्वगुण-योग इति मन्यमानाः । तस्मादनादृतप्रकृतिमेव यातव्यं यायात् ।

बलवन्तमन्यायवृत्तिमित्यादि । अन्याय्यचरितो बलवानेकः न्याय्यचरितो दुर्बल एक इत्यनयोः कतरमभियायादिति विमर्शे, बलवन्तमन्याय्यवृत्तिमेव यायात् । कुतः, तं हि शत्रुणाभियुक्तं प्रकृतयो नानुगृह्णन्ति, प्रत्युत दुर्गादिस्थानेभ्यो निष्कासयन्ति, अस्य शत्रुं वाश्रयन्ते । दुर्बलं तु न्याय्यचरितं परेणाभियुक्तं प्रकृतयोऽनुगृह्णन्ति दुर्गादितो निष्क्रामन्तमनुनिष्क्रामन्ति च । इति यातव्यामित्रयोरभिग्रहचिन्ता व्याख्याता ।

क्षयलोभविरागहेतवः प्रकृतीनामिति सूत्रम् । क्षयो गजतुरगमुख्यपुरुषाल्पी-भावो धनाल्पीभावश्च लोभोऽतितृष्णा विरागः प्रद्वेषः त एते प्रकृतीनां कैर्हेतुभिरुत्पद्यन्त इत्येतदिहोच्यत इति सूत्रार्थः । प्रकृतिक्षयलोभविरागा नाम विजिगीषोर्यातव्य-प्रयोजकाः । अतस्तद्धेतवो विजिगीषुणा हानार्थं विज्ञातव्या इति कृत्वेहोपदिश्यन्ते ।

तानेकान्वयेन श्लोकाष्टकेनाह—अवक्षेपेण हीत्यादि । सताम् अवक्षेपेण विद्यावृत्ताभिजनशौर्यादिसम्पन्नानामवज्ञानेन, असतां प्रग्रहेण नटनर्तकादीनामर्च-नेन, अभूतानाम् अनुचितानां धर्मापेतानां च हिंसानां प्रवर्तनैः ।

उचितानां चरित्राणां धर्मिष्ठानां निवर्तनैः ।
अधर्मस्य प्रसङ्गेन धर्मस्यावग्रहेण च ॥२१६॥

अकार्याणां च करणैः कार्याणां च प्रणाशनैः ।
अप्रदानैश्च देयानाम् अदेयानां च साधनैः ॥२१७॥

अदण्डनैश्च दण्ड्यानां दण्ड्यानां चण्डदण्डनैः ।
अग्राह्याणामुपग्राहैः ग्राह्याणां चानभिग्रहैः ॥२१८॥

अनर्थ्यानां च करणैः अर्थ्यानां च विघातनैः ।
अरक्षणैश्च चोरेभ्यः स्वयं च परिमोषणैः ॥२१९॥

पातैः पुरुषकाराणां कर्मणां गुणदूषणैः ।
उपघातैः प्रधानानां मान्यानां चावमाननैः ॥२२०॥

विरोधनैश्च वृद्धानां वैषम्येणाऽनृतेन च ।
कृतस्याप्रतिकारेण स्थितस्याकरणेन च ॥२२१॥

राज्ञः प्रमादालस्याभ्यां योगक्षेमवधेन च ।
प्रकृतीनां क्षयो लोभो वैराग्यं चोपजायते ॥२२२॥

---

श्रीमूला

उचितानां धर्मानपेतानां समुदाचाराणां निवर्तनैः, परस्त्रीग्रहणस्तेयाद्यधर्मासक्त्या, कूपतटाकनिर्माणादिधर्मप्रत्याख्यानेन, अनर्थफलकार्यानुष्ठानैः दुर्गसेतुकर्मादिकार्योपघातैः, भृत्यवेतनादीनां देयानामप्रदानैः, अपूर्वक्लृप्तानामुपदानां प्रजाभ्यः प्रसभहरणैः, दण्डार्हादण्डनैः, दण्ड्यानामत्युग्रदण्डनैः, अग्राह्याणां स्तेनादीनां स्वीकारणैः, जानपदत्वादिगुणोपेतानां पितृपितामहक्रमागतानां ग्राह्याणामसङ्ग्रहणैः, अनर्थावहानां सन्ध्यादीनां करणैः, अर्थावहानां तेषां विघातनैः, चोरेभ्यः प्रजानामरक्षणैः, स्वयं चौर्यकरणैः, पुरुषकाराणां त्यागैः, कर्मणां सम्यगनुष्ठितत्वगुणस्य निन्दनैः, प्रधानानां सेतुदुर्गादिकर्माध्यक्षाणां दोषारोपेण निकृष्टकर्मनियोजनैः, मान्यानाम् ऋत्विगाचार्यपुरोहितादीनामवमाननैः, विद्यादिवृद्धानां विरोधाचरणैः 'विरोधनैश्च भृत्यानाम्' इति पाठे भृत्यानामन्योन्यवैरोत्पादनैः, भृत्येषु समानसामर्थ्येषु विषमवृत्त्या, असत्यवचनेन, उपकारानिष्क्रयेण, स्थितस्य नित्यस्य शक्रोत्सवादेरकरणेन, राज्ञो द्यूतमृगयाद्यासक्तिलक्षणेन प्रमादेन, अलसतया, योगक्षेमवधेन इत्येतैर्हेतुभिः प्रकृतीनां क्षयो लोभो राज्ञि अपरागश्च जायते ।

**क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागताम् ।**
**विरक्ता यान्त्यमित्रं वा भर्तारं घ्नन्ति वा स्वयम् ॥२२३॥**

**तस्मात्प्रकृतीनां क्षयलोभविरागकारणानि नोत्पादयेत् । उत्पन्नानि वा सद्यः प्रतिकुर्वीत ।**

[ प्रकृतिषु क्षयादिपरिज्ञानचिह्नानि, तत्परिहारस्य
शक्यत्वाशक्यत्वविवरणं च ]

**क्षीणा लुब्धा विरक्ता वा प्रकृतयः ? इति—**

**क्षीणाः पीडनोच्छेदनभयात् सद्यस्सन्धिं युद्धं निष्पतनं वा रोचयन्ते । लुब्धाः लोभेनासन्तुष्टाः परोपजापं लिप्सन्ते । विरक्ताः पराभियोगमभ्युत्तिष्ठन्ते ।**

**तासां हिरण्यधान्यक्षयः सर्वोपघाती कृच्छ्रप्रतीकारश्च । युग्म(ग्य)-पुरुषक्षयो हिरण्यधान्यसाध्यः ।**

---

श्रीमूला

क्षीणा इत्यादि । प्रकृतयः क्षये जाते तत एव हेतोर्लोभं प्राप्नुवन्ति, लोभाच्च राज्ञि अपरागमलब्धकामाः प्राप्नुवन्ति, अपरक्ताश्च स्वामिनं परित्यज्य तच्छत्रुं भजन्ते अथवा स्वयमेव स्वामिनं मारयन्ति ।

तस्मात् प्रकृतीनां क्षयलोभविरागहेतवो यथा नोत्पद्येरन् तथा प्रयतेत राजा, उत्पन्नांश्च सद्यः प्रतिक्रियया शमयेदित्याह—तस्मादित्यादि ।

क्षीणासु लुब्धासु विरक्तासु चेति त्रिविधासु प्रकृतिषु यथोत्तरं गौरवमित्याह—क्षीणा लुब्धा इत्यादि । इतिशब्दानन्तरं गौरवक्रम इति शेषः । गौरवतारतम्यनिमित्त-भूतांस्ताभ्यः सम्भावितानर्थानाह—क्षीणाः पीडनोच्छेदनभयादित्यादि । क्षीणा हि प्रकृतयः पीडनमुच्छेदनं वा शङ्कमानाः शत्रुणा सह सन्धिं सद्यः कुर्युरनिच्छत्यपि विजिगीषौ शत्रोः प्रतिहतोत्साहतामापाद्य पश्चात् तं कर्तव्यं मन्यमाने । युद्धं वा ताः सद्य आरभेरन् विजिगीषौ परस्य च्छिद्रमुपलभ्य पश्चात् तद् आरम्भणीयं मन्य-मानेऽपि । निष्क्रमणं वा दुर्गात् ताः सद्यः कुर्युर्विजिगीषौ 'सर्वोपायप्रयोगनैष्फल्यदर्शने पश्चाद् दुर्गम् आदीप्य निष्पतिष्यामो'ति मन्यमानेऽपि । अथ लुब्धाः प्रकृतयो लोभेनातृप्ताः परेण क्रियमाणं भेदमुपगच्छन्ति । विरक्तास्तु विजिगीषुं प्रति परेणारब्ध-स्याभियोगस्याभिमुख्येन चेष्टन्ते, शत्रुपक्षमनुप्रविश्य विजिगीषुमभियुञ्जत इत्यर्थः ।

तासामिति । प्रकृतीनां, हिरण्यधान्यक्षयः, सर्वोपघाती गजतुरगपदात्यादीनां सर्वेषामुपघातकः, अत एव कृच्छ्रप्रतिकारः अशक्यप्रतिविधानः । अश्वपुरुषक्षयस्तु हिरण्यधान्यसाध्यः सुकरप्रतिविधानः ।

**लोभ ऐकदेशिको मुख्यायत्तः परार्थेषु शक्यः प्रतिहन्तुमादातुं वा । विरागः प्रधानावग्रहसाध्यः । निष्प्रधाना हि प्रकृतयो भोग्या भवन्त्यनुपजात्याश्चान्येषामनापत्सहास्तु । प्रकृतिमुख्यग्रहैस्तु बहुधा भिन्ना गुप्ता भवन्त्यापत्सहाश्च ।**

**( सामवायिकविपरिमर्शः । )**

[ विजिगीषुणा सह साह्यार्थं नेतव्यानां
गुरुलघुभावोपपादनम् ]

**सामवायिकानामपि सन्धिविग्रहकारणान्यवेक्ष्य शक्तिशौचयुक्तौ सम्भूय यायात् । शक्तिमान् हि पार्ष्णिग्रहणे यात्रासाहाय्यदाने वा शक्तः; शुचिस्सिद्धौ चासिद्धौ च यथास्थितकारीति ।**

**तेषां ज्यायसैकेन द्वाभ्यां वा सम्भूय यातव्यम् ? इति—**

**द्वाभ्यां समाभ्यां श्रेयः, ज्यायसा ह्यवगृहीतश्चरति समाभ्यामतिसन्धानाधिक्ये वा तौ हि सुखौ भेदयितुम् ।**

———————

श्रीमूला

लोभ इति । सः, ऐकदेशिकः प्रकृत्येकदेशाश्रितः मुख्यायत्तः प्रवर्तननिवर्तनयोर्मुख्याधीनः, परार्थेषु शक्यः प्रतिहन्तुमादातुं वा परेषां यातव्यारिप्रभृतीनामर्थैरेव विषयभूतैः शमयितुं शक्यः मुख्यपुरुषैः स्वयं ग्रहीतुं च शक्यः ।

विरागः प्रधानावग्रहसाध्य इति । विरागस्तु प्रधानपुरुषनिग्रहसाध्यः । निष्प्रधाना हीति । मुख्यरहिताः, प्रकृतयः, भोग्याः विजिगीषोर्वश्याः भवन्ति, अन्येषाम् अनुपजाप्याश्च पराभेद्याश्च भवन्ति । यद्यपीदृशो गुणो निष्प्रधानत्वे, तथापि कश्चिद् दोषो गणनीयोऽस्तीत्याह—अनापत्सहास्तु आपत्सहास्तु न भवन्ति आपद्युपस्थितायां विजिगीषुं परित्यज्य गच्छन्तीत्यर्थः । सप्रधानत्वे तु बहुविधैः प्रकृतिमुख्यकृतैरुपलालनैः पराभेद्या रक्षिताश्च सत्यः पराभियोगविपत्सहाश्च भवन्तीत्याह—प्रकृतिमुख्यप्रग्रहैस्त्वित्यादि । इत्थं क्षयलोभविरागहेतवः प्रकृतीनामित्येतद् व्याख्यातम् ।

सामवायिकविपरिमर्श इति सूत्रम् । समवायेन चरन्तीति सामवायिका विजिगीष्वनुयायिनः तेषां विपरिमर्शो गुरुलघुभावचिन्तनमभिधीयत इति सूत्रार्थः । सम्भूयप्रयाणे सामवायिकानामंशकल्पनमुक्तं, गुरुलघुभावस्तु नोक्तः, स इह निरूप्यते ।

सामवायिकानामपीति । तेषां च मध्ये, सन्धिविग्रहकारणानि, अवेक्ष्य गुरुलघुभावतः पर्यालोच्य, शक्तिशौचयुक्तेन सम्भूय यायात् । शक्तिशौचयुक्ताविति पाठे शक्तिशौचयोगे सतीत्यर्थः । शक्तिशौचयोगस्य फलमाह—शक्तिमान् हीत्यादि ।

**दुष्टश्चैको द्वाभ्यां नियन्तुं भेदोपग्रहं चोपगन्तुमिति ।**

**समेनैकेन द्वाभ्यां हीनाभ्यां वा ? इति—**

**द्वाभ्यां हीनाभ्यां श्रेयः, तौ हि द्विकार्यसाधकौ वश्यौ च भवतः ।**

[ कार्यसिद्धयनन्तरं विजिगीषुकर्तव्याः ]

**कार्यसिद्धौ तु—**

**कृतार्थात् ज्यायसो गूढः सापदेशमपस्रवेत् ।**
**अशुचेश्शुचिवृत्तात्तु प्रतीक्षेताविसर्जनात् ॥२२४॥**
**सत्रादपसरेत् यत्तः कलत्रमपनीय वा ।**
**समादपि हि लब्धार्थात् विश्वस्तस्य भयं भवेत् ॥२२५॥**

---

श्रीमूला

उत्साहादिशक्तित्रययुक्तो हि पार्ष्णिग्राहवारणे, युद्धयात्रासहायसेनादाने वा समर्थो भवति । शुचिश्च ईप्सितस्यार्थस्य सिद्धावसिद्धौ वा न्याय्यमनुतिष्ठति ।

सामवायिकापेक्षायामेको ज्यायान् लभ्यते समौ च द्वौ, तत्र का प्रतिपत्तिरिति चिन्तायां, द्वाभ्यां समाभ्यां सम्भूययानं प्रशस्तं, कस्मात्, यस्मात् ज्यायसा सह याने विजिगीषुणा तदधश्चरितव्यं, समाभ्यां सह याने न तथा चरितव्यमित्येको गुणः । पक्षे चातिसन्धानवशादाधिक्ये लब्धे तौ परस्परस्माद् भेदयितुमनायासशक्यौ । यदि च तयोरन्यतरो दुष्टो भवेत् स विजिगीषुणा तदन्यसहायेन दमयितुं शक्यः, दूष्यादिद्वारकेण भेदप्रयोगेण निग्रहं च गमयितुं शक्य इत्याह—तेषां ज्यायसैकेनेत्यादि ।

समेनैकेन वा सम्भूययानमनुष्ठेयं द्वाभ्यां हीनाभ्यां वेति चिन्तायां द्वितीयः पक्ष एव श्रेयान्, कस्मात् यस्मात् हीनौ पुरः पश्चाच्च रक्षकौ भूत्वा कार्यद्वयं साधयन्तौ विजिगीषोर्वशवर्तनौ च भवत इत्याह—समेनैकेन द्वाभ्यां हीनाभ्यां वेत्यादि ।

एवं राजान्तरेषु सम्भूययानाय विजिगीषुणा मुख्येन सतापेक्ष्यमाणेषु विधिरुक्तः, विजिगीषौ तु राजान्तरैरपेक्ष्यमाणे विधिमाह—कार्यसिद्धौ तु कृतार्थादित्यादि । साह्यार्थमात्मनेतरि ज्यायसि कार्यसिद्ध्यनन्तरमशुचौ दृष्टे अन्याविदितः किमपि निमित्तमपदिशंस्तत्सकाशाद् विजिगीषुरपस्रवेत् अपेयात् । तं शुचिवृत्तमवगत्य तु आ विसर्जनाद् विसर्जनं प्रतीक्षमाणस्तदन्तिक एव तिष्ठेत् ।

अपसरणस्य कर्तव्यतायामाह—सत्रादिति । दुर्गादिः सङ्कटप्रदेशः सत्रं तस्मात्, अपसरेत्, यत्तः यत्नवान्, किं कृत्वा कलत्रमपनीय वा कलत्रमित्यन्तरङ्गपरिग्रहाणामुपलक्षणं तान् अन्यत्र नीत्वा । समादपसरणे कारणमाह—समादपि हीति । समानादपि लब्धार्थात् विश्वस्तस्य भयं भवेत् अनर्थो जायेत, तस्याशुचित्वात् ।

**ज्यायस्त्वे चापि लब्धार्थः समो विपरिकल्पते ।**
**अभ्युच्चितश्चाविश्वास्यो वृद्धिश्चित्तविकारिणी ॥२२६॥**
**विशिष्टादल्पमप्यंशं लब्ध्वा तुष्टमुखो व्रजेत् ।**
**अनंशो वा ततोऽस्याङ्के प्रहृत्य द्विगुणं हरेत् ॥२२७॥**

[ विजिगीषोः स्वतन्त्रयाने विशेषः ]

**कृतार्थस्तु स्वयं नेता विसृजेत् सामवायिकान् ।**
**अपि जीयेत न जयेत् मण्डलेष्टस्तथा भवेत् ॥२२८॥**

इति षाड्गुण्ये यातव्यामित्रयोरभिग्रहचिन्ता क्षयलोभविरागहेतवः
प्रकृतीनां सामवायिकविपरिमर्शश्च पञ्चमोऽध्यायः,
आदितस्त्रिशततमः ।

---

श्रीमूला

ज्यायान् वा भवतु समो वा । लब्धार्थः सर्वो विपरीतवृत्तिर्भवति । अभ्युच्चितो वृद्धिप्राप्तः न विश्वसनीयः । वृद्धिर्हि नाम चित्तं विकारयतीत्याह—**ज्यायस्त्वे चापीत्यादि** ।

विशिष्टादिति । ज्यायसः सकाशात्, अल्पमप्यंशं लब्ध्वा तुष्टमुखः प्रसन्नवदनो गच्छेत् । अनंशो वा अलब्धांशो वा तुष्टमुखो गच्छेत् । ततः पश्चात्, अस्याङ्के प्रहृत्य विशिष्टस्य रन्ध्रे प्रहरणं दत्त्वा, प्रकृत्येति पाठे प्रयत्नं कृत्वेत्यर्थः, द्विगुणम् आदेयांशद्विगुणं, हरेत् ।

विजिगीषोः परतन्त्रयानेऽनुष्ठानमभिधाय स्वतन्त्रयानेऽनुष्ठानमाह—**कृतार्थस्त्विति** । स्वयं नेता तु स्वतन्त्रयानकर्ता तु, विजिगीषुः कृतार्थः सिद्धसमीहितः, सामवायिकान्, विसृजेत् सत्कृत्य प्रेषयेत् । जीयेतापि स्वयं न्यूनांशत्वं प्राप्येतापि, न तु जयेत्, न पुनः सामवायिकान् न्यूनांशत्वं प्रापयेत् । तथा तेन प्रकारेणानुष्ठाने, **मण्डलेष्टः** राजमण्डलस्य प्रियः, भवेत् ।

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे पञ्चमोऽध्यायः,
यातव्यामित्रयोरभिग्रहचिन्ता, क्षयलोभविरागहेतवः
प्रकृतीनां, सामवायिकविपरिमर्शः,
आदितस्त्रि-शततमः ॥

# एकादशशततमद्वादशशततमे प्रकरणे

## षष्ठोऽध्यायः

### संहितप्रयाणिकम्, परिपणिताऽपरिणिताऽपसृतसन्धयश्च

#### ( संहितप्रयाणिकम् । )

[ कृतसन्धिविजिगीषुसामन्तातिसन्धानप्रकारः ]

**विजिगीषुर्द्वितीयां प्रकृतिमेवमतिसन्दध्यात् । सामन्तं संहितप्रयाणे योजयेत्—'त्वमितो याहि, अहमितो यास्यामि, समानो लाभः' इति । लाभसाम्ये सन्धिः, वैषम्ये विक्रमः ।**

[ अत्र निरूप्यमाणं सन्धिद्वयम् ]

**सन्धिः परिपणितश्चाऽपरिपणितश्च ।**

---

श्रीमूला

संहितप्रयाणिकमिति सूत्रम् । संहितयोः अन्योन्यकृतसन्धिकयोर्विजिगीष्वोः स्वं स्वं यातव्यं प्रति यद् भिन्नदिक्कं प्रयाणं तदुच्यत इति सूत्रार्थः ।

यानं हि प्रकृतं द्विविधं—शुद्धं गुणान्तरमिश्रमिति । तत्र शुद्धं 'यानेन वृद्धिमातिष्ठेद्' इति प्रथमाध्यायेऽभिहितम् । गुणान्तरमिश्रमपि चतुर्विधं—विगृह्ययानं सन्धाययानं सम्भूयप्रयाणं संहितप्रयाणं चेति । तत्रापि विगृह्ययानादित्रिकं निरूपितम् । सम्भूयप्रयाणं त्वधुना निरूप्यते ।

विजिगीषुरिति । सः, द्वितीयां प्रकृतिम् अरिप्रकृतिम्, एवमतिसन्दध्यात् वक्ष्यमाणप्रकारेण वञ्चयेत् । तं प्रकारमाह—सामन्तं संहितप्रयाणे योजयेत् प्रवर्तयेत् । किमित्युक्त्वा, त्वम् इतो याहि यत्र ते यातव्यस्तत्र देशे याहि, अहमितो यास्यामि यत्र मे यातव्यस्तत्राहं यास्यामि । समानो लाभः उभयत्रोत्पत्स्यमानो लाभ उभयोरावयोः समानः । इत्युक्त्वा ।

लाभसाम्ये सन्धिरिति । उभयोर्लाभे समाने सन्धिः समशक्तित्वात् करणीयः । वैषम्ये विक्रमः; विजिगीषोर्लाभाधिक्ये स ज्यायस्त्वाद् विक्रमेत । इति संहितप्रयाणिकं व्याख्यातम् ।

परिपणितापरिपणितापसृताश्च सन्धय इति सूत्रम् । परिपणितसन्धिः अपरिपणितसन्धिः अपसृतसन्धिश्चाभिधीयत इति सूत्रार्थः । परिपणितसन्धिर्नाम देशं

[ देशकालकार्यभेदानुरोधेन त्रिविधाः परिपणितसन्धयः ]

**(१) 'त्वमेतं देशं याहि, अहमिमं देशं यास्यामि' इति परिपणितदेशः ।**

**(२) 'त्वमेतावन्तं कालं चेष्टस्व, अहमेतावन्तं कालं चेष्टिष्ये' इति परिपणितकालः ।**

**(३) त्वमेतावत्कार्यं साधय, अहमेतावत् कार्यं साधयिष्यामि' इति परिपणितार्थः ।**

[ एषां क्रमेण प्रयोगनिमित्तानि ]

**(१) यदि वा मन्येत–'शैलवननदीदुर्गं अटवीव्यवहितं छिन्नधान्यपुरुषवीवधासारमयवसेन्धनोदकमविज्ञातं प्रकृष्टमन्यभावदेशीयं वा सैन्यव्याया-**

---

श्रीमूला

कालं कार्यं चानुरुध्य क्रियमाणः । तद्विपरीतोऽपरिपणितसन्धिः। आत्मानं कुतश्चिन्निमित्ताद् विहायापगतैर्मित्रैर्भृत्यैर्वा सह सन्धिरपसृतसन्धिः ।

तृतीयाध्याये त्रिविधा हीनसन्धय'इति हीनसन्धय उक्ताः। किमेतावन्त एव सन्धय इति सन्देहे परिपणितादयोऽन्येऽपि सन्धयः सन्तीति निरूपयितुमिदं प्रकरणमारभ्यते ।

सन्धिः परिपणितश्चापरिपणितश्चेति । निरूप्यत इति शेषः ।

तत्र परिपणितसन्धिं सप्तविधं क्रमेणाह—त्वमेतमित्यादि । त्वमेतं देशं याहि, अहमिमं देश यास्यामी'त्येवं देशं परिपण्य कृतः सन्धिः परिपणितदेशो नाम प्रथमः परिपणितसन्धिः।

त्वमेतावन्तमित्यादि। 'त्वमियन्तं कालं यथेष्टं चेष्टस्व, अहमियन्तं कालं यथेष्टं चेष्टिष्य' इति कालं परिपण्य कृतः परिपणितकाल इति द्वितीयः ।

त्वमेतावत् कार्यमित्यादि। 'त्वं दुर्गादिष्वेतावत् कार्यं निर्वर्तय, अहमेतावन्निर्वर्तयिष्यामी'ति कार्यं परिपण्य कृतः सन्धिः परिपणितार्थ इति तृतीयः ।

त्रयाणामेषां क्रमेण प्रयोगनिमित्तान्याह—यदि वा मन्येत शैलवनेत्यादि। 'गिरिदुर्गयुक्तं वनदुर्गयुक्तं नदीदुर्गयुक्तं कान्तारव्यवहितं देशान्तरादनानेतव्यधान्यम् अनानेतव्यपुरुषम् अनानेतव्यतैलघृतादिभारम् अनानेतव्यसुहृद्बलं तृणकाष्ठजलरहितम् अपरिचितं विप्रकृष्टं अन्यभावदेशीयम्—अस्वामिभक्तदेशीयजनं—वा सैन्यपरिस्पन्द-

**मानामलब्धभौमं वा देशं परो यास्यति, विपरीतमहम्' इति, एतस्मिन् विशेषे परिपणितदेशं सन्धिमुपेयात् ।**

**(२) यदि वा मन्येत—'प्रवर्षोष्णशीतमतिव्याधिप्रायमुपक्षीणाहारोपभोगं सैन्यव्यायामानां चौपरोधिकं कार्यसाधनानामूनमतिरिक्तं वा कालं परश्चेष्टिष्यते, विपरीतमहम्' इति, एतस्मिन् विशेषे परिपणितकालं सन्धिमुपेयात् ।**

**(३) यदि वा मन्येत—'प्रत्यादेयं प्रकृतिकोपकं दीर्घकालं महाक्षयव्ययमल्पमनर्थानुबन्धमकल्यमधर्म्यं मध्यमोदासीनविरुद्धं मित्रोपघातकं वा कार्यं परस्साधयिष्यति, विपरीतमहम्' इत्येतस्मिन् विशेषे परिपणितार्थं सन्धिमुपेयात् ।**

[ परिपणितस्यान्ये चत्वारः प्रकाराः निगमनं च ]

**एवं देशकालयोः कालकार्ययोः देशकार्ययोः देशकालकार्याणां चावस्थापनात् सप्तविधः परिपणितः ।**

---

श्रीमूला

योग्यभूमिरहितं वा अत एव दुस्साधं देशं परो यास्यति, विपरीतं सुसाधं देशम् अहं यास्यामि' इति यदि मन्येत विजिगीषुः, एतस्मिन् कारणविशेषे परिपणितदेशं सन्धिं कुर्यात् ।

यदि वा मन्येत प्रवर्षेत्यादि । 'प्रकृष्टवर्षं प्रकृष्टोष्णं प्रकृष्टशीतम् अत्यन्तव्याधिबहुलम् आहारोपभोगार्थद्रव्योपक्षययुक्तं सैन्यव्यायामोपरोधहेतुं कार्यसाधनानामपर्याप्तम् अधिकं वा कालं परो व्यापरिष्यते, अहं तु यथोक्तप्रत्यनीकं कालं चेष्टिष्ये'इति चेद् विजिगीषुर्मन्येत, एतस्मिन् कालविशेषे निमित्ते परिपणितकालं सन्धिं कुर्यात् ।

यदि वा मन्येत प्रत्यादेयमित्यादि । 'रक्षणासुकरत्वात् परप्रत्याच्छेद्यं प्रकृतिकोपजनकं दीर्घकालनिर्वर्त्यं प्रभूतपुरुषनाशं प्रभूतधनव्ययम् अल्पम् अनर्थोत्तरम् अनुष्ठानकालेऽपि दुःखकरं धर्मापेतं मध्यमोदासीनयोर्विरूद्धं मित्रस्यापि पीडावहं कार्यं परः साधयिष्यति, अहं तु यथोक्तविपरीतं कार्यं साधयिष्यामि' इति चेन्मन्येत विजिगीषुः, एवंविधे विशेषे परिपणितार्थं सन्धिं कुर्यात् ।

इत्थं त्रयः प्रकाराः परिपणितसन्धेरुक्ताः । एष्वेव देशकालयोः कालकार्ययोः देशकार्ययोः देशकालकार्याणां चेत्येवमन्योन्यमिश्रणे चत्वारोऽन्ये प्रकारा भवन्तीति सप्तविधः परिपणितसन्धिरित्याह—एवं देशकालयोरित्यादि ।

**तस्मिन् प्रागेवारभ्य प्रतिष्ठाप्य च स्वकर्माणि, परकर्मसु विक्रमेत ।**

[ अपरिपणितसन्धिः तदनन्तरकर्तव्यं च ]

**व्यसनत्वराऽवमानालस्ययुक्तमज्ञं वा शत्रुम् अतिसन्धातुकामो देशकाल-कार्याणामनवस्थापनात् 'संहितौ स्वः' इति सन्धिविश्वासेन परिच्छद्रमा-साद्य प्रहरेत्—इत्यपरिपणितः ।**

**तत्रैतद्भवति—**

**सामन्तेनैव सामन्तं विद्वानायोज्य विग्रहे ।**
**ततोऽन्यस्य हरेद् भूमिं जित्वा पक्षं समन्ततः ॥२२९॥**

[ सन्धिधर्माश्चत्वारः विग्रहधर्मास्त्रयश्च ]

**सन्धेरकृतचिकीर्षा कृतश्लेषणं कृतविदूषणमवशीर्णक्रिया च ।**

**विक्रमस्य प्रकाशयुद्धं, कूटयुद्धं, तूष्णींयुद्धम् । इति सन्धिविक्रमौ ।**

[ सन्धिधर्माणां निरूपणम् ]

**अपूर्वस्य सन्धेस्सानुबन्धैस्सामादिभिः पर्येषणं, समहीनज्यायसां च**

---

श्रीमूला

तस्मिन्निति । यथोक्ते परिपणितसन्धावुपेते, प्रागेव पूर्वमेव, स्वकर्माणि आरभ्य प्रतिष्ठाप्य च फलपर्यन्तानुष्ठानेन परिसमाप्य च परकर्मसु विक्रमेत उपघाताय यतेत ।

अपरिपणितसन्धिमाह—व्यसनत्वरावमानालस्ययुक्तमज्ञं वेत्यादि । पानद्यूताद्यासक्त्या त्वरया अवज्ञया आलस्यं च युक्तम् अविद्वांसं शत्रुम् अतिसन्धित्सुर्विजिगीषुर्देशकालकार्याणां व्यवस्थापनमकृत्वैव 'सहितावावां भवावः' इति वाङ्मात्रकृतेन सन्धिना विश्वासमुत्पाद्य परस्य च्छिद्रमुपलभ्य प्रहरेत् । इत्यपरिपणितसन्धिर्व्याख्यातः ।

तत्रैतद् भवतीति । उक्ते सन्धौ कृते तदुत्तरकरणीयमिदं भवति ।

तच्छ्लोकेनाह—सामन्तेनैवेति । विद्वान् विजिगीषुः, सामन्तेनैव पार्ष्णिग्राहेणैव सह, सामन्तं पार्ष्णिग्राहानन्तरं राजानमर्थादात्मन आक्रन्दं विग्रहे आयोज्य, ततः अन्यस्य यातव्यस्य, भूमिं हरेत् । किं कृत्वा, समन्ततः पक्षं यातव्यमित्रं, छित्त्वा उच्छिद्य ।

अकृतचिकिर्षादयश्चत्वारः सन्धेर्धर्माः, प्रकाशयुद्धादयस्त्रयो विग्रहस्य धर्मा इत्याह—सन्धेरकृतचिकीर्षेत्यादि । इति सन्धिविक्रमाविति । विभक्ताविति शेषः ।

सन्धिधर्मेष्वकृतचिकिर्षां निरूपयति—अपूर्वस्य सन्धेरिति । केनचिद् राज्ञा सह पूर्वमकृतस्य सन्धेः, सानुबन्धैः सामादिभिः पर्येषणं दानानुबन्धयुक्तैः सामभिः

**यथाबलमवस्थापनं अकृतचिकीर्षा। कृतस्य प्रियहिताभ्यामुभयतः परिपालनम्, यथासम्भाषितस्य च निबन्धनस्यानुवर्तनं, रक्षणं च 'कथं परस्मान्न भिद्येत' इति कृतश्लेषणम्। परस्य अपसन्धेयतां दूष्यातिसन्धानेन स्थापयित्वा व्यतिक्रमः कृतविदूषणम्। भृत्येन मित्रेण वा दोषापसृतेन प्रतिसन्धानमवशीर्णक्रिया।**

[ चत्वारो गतागतप्रकाराः तन्निरूपणं च ]

**तस्यां गतागतश्चतुर्विधः—कारणात् गतागतः, विपरीतः, कारणात् गतोऽकारणादागतः विपरीतश्चेति।**

**स्वामिनो दोषेण गतो गुणेनाऽऽगतः, परस्य गुणेन गतो दोषेणाऽऽगत**

———————

श्रीमूला

सामानुबन्धयुक्तैर्दानैश्चानुष्ठानाध्यवसायः, समहीनज्यायसां यथाबलमवस्थापनं च समशक्तिकेन कोशदण्डादिदानोपादानादिव्यवहाराकरणं हीनात् कोशदण्डादिग्रहणं, ज्यायसे कोशदण्डादिदानमित्येवंरूपं समादीनां स्वबलानतिक्रमेणावस्थानाकलनं च, अकृतचिकीर्षा नाम।

कृतश्लेषणमाह—कृतस्य प्रियहिताभ्यामुभयतः परिपालनमित्यादि। कृतस्य सन्धेः प्रियाचरणेन हिताचरणेन च उभाभ्यां पक्षाभ्यां रक्षणं यथासम्भाषितस्य च समयबन्धस्यानुवर्तनं शत्रूपजापात् स यथा न विहतो भवेत् तथा रक्षणं च कृतश्लेषण नाम।

कृतविदूषणमाह—परस्यापसन्धेयतामित्यादि। दूष्यद्वारकेणातिसन्धानेन निमित्तेन परस्य सन्धानानर्हत्वं स्थापयित्वा, व्यतिक्रमः—विजिगीषोः पूर्वकृतसन्धिलङ्घनं—कृतविदूषणमुच्यते।

अवशीर्णक्रियामाह—भृत्येनेत्यादि। तेन वा, मित्रेण वा दोषापसृतेन कुतश्चिद् दोषाद् विजिगीषुं परित्यज्य गतेन, प्रतिसन्धानं पुनःसन्धिकरणम्, अवशीर्णक्रिया नाम। इयमपसृतसन्धावन्तर्भवति।

तस्यामिति अवशीर्णक्रियायाम्, गतागतः गत्वा प्रत्यागतः चतुर्विधः चतुष्प्रकारः। प्रकारानाह—कारणाद् गतागत इत्यादि। कारणादेव गतः कारणादेव च प्रत्यागत इत्येकः, अकारणाद् गतः अकारणादेव चागत इति पूर्वविपरीतो द्वितीयः, कारणाद्गतोऽकारणात् प्रत्यागत इति तृतीयः अकारणाद् गतः कारणात् प्रत्यागत इति तृतीयविपरीतश्चतुर्थः।

तत्र कारणाद्गतागतं प्रत्याह—स्वामिन इति। तस्य, दोषेण अप्रसादलक्षणेन, गतः, गुणेन स्वामिप्रसादलक्षणेन, आगतः। परस्य, गुणेन गतः गत्वा परमुपाश्रितः, दोषेण परस्मिन् दोषदर्शनेन निमित्तेन, आगतः परं विहाय स्वामिनं

**इति कारणात् गतागतस्सन्धेयः ।**

**स्वदोषेण गताऽऽगतो गुणमुभयोः परित्यज्य अकारणात् गतागतश्चल-बुद्धिरसन्धेयः ।**

**स्वामिनो दोषेण गतः, परस्मात् स्वदोषेणाऽऽगत इति कारणात् गतोऽकारणादागतस्तर्कयितव्यः—'परप्रयुक्तः स्वेन वा दोषेणापकर्तुकामः परस्योच्छेत्तारममित्रं मे ज्ञात्वा प्रतिघातभयादागतः ? परं वा मामुच्छेत्तु-कामं परित्यज्यानृशंस्यादागतः ?' इति ज्ञात्वा कल्याणबुद्धिं पूजयेत्, अन्यथाबुद्धिमपकृष्टं वासयेत् ।**

**स्वदोषेण गतः परदोषेणाऽऽगत इत्यकारणात् गतः कारणादागत-स्तर्कयितव्यः—'छिद्रं मे पूरयिष्यति ? उचितोऽयमस्य वासः ? परत्रास्य**

---

श्रीमूला

प्रत्यागतः । इति सनिमित्तगमनागमनकारित्वाद्धेतोः, कारणाद्गतागतः, सन्धेयः सन्धातुं योग्यः ।

विनैव स्वामिदोषं स्वदोषेण स्वामिनं विहाय परमुपाश्रितः तेनैव हेतुना-परमपि विहाय स्वामिनं प्रत्यागतः स्वामिपरयोरुभयोर्गुणप्रत्याकलनविकलश्चञ्चल-बुद्धिश्चेति अकारणाद्गतागतो न सन्धानयोग्य इत्याह—स्वदोषेणेत्यादि ।

स्वामिनो दोषेण तं विहाय शत्रुमाश्रितः शत्रोः सकाशात् स्वदोषेण प्रत्यागत इति हेतोः कारणाद्गतोऽकारणादागतस्तर्कयितव्य इत्याह—स्वामिनो दोषेणगत इत्यादि । तर्कणप्रकारमाह—परप्रयुक्त इत्यादि । 'किमयं परचोदनया मामपकर्तुकाम आगतः, अथवा मया पूर्वकृतमपकारं स्मरन् स्वेनैव बुद्धिदोषेण मामपकर्तुकाम आगतः, उत ममामित्रं शत्रुसकाशागतपुरुषवधप्रवृत्तं दृष्ट्वा स्वात्मनोऽपि शत्रुसकाशा-गतत्वाद् वधमाशङ्कमान आगतः, उताहो मदुच्छेदकृतसमीहं मे शत्रुं परित्यज्य मयि पूर्वपरिचयस्नेहादागतः, इत्येवं तर्कयितव्यः । ज्ञात्वेत्यादि । पुनरागमनकारणेषु चतुर्षु अन्यतमं निर्धार्य तं चेत् कल्याणबुद्धिमवगच्छेत्, तमासन्ने कृत्वा सत्कुर्यात् । अन्यथाबुद्धिं दूरे वासयेत् ।

अकारणाद्गतः कारणादागतो यः सोऽपि स्वामिदोषमन्तरेण स्वेनैव दोषेण गतः परदोषेण प्रत्यागत इत्यतस्तर्कयितव्य इत्याह—स्वदोषेण गत इत्यादि । तर्कण-प्रकारमाह—छिद्रमित्यादि । किमयं मम छिद्रं परस्य सुखप्रवेश्यं यथा स्यात् तथा विस्तारयिष्यति अथवास्यैतज्जनपदवासः उपशयोचितः, यद्वास्य कलत्रादिः परिजनः

**जनो न रमते ? मित्रैर्मे संहितः ? शत्रुभिर्विगृहीतः ? लुब्धक्रूरादाविग्नः ? शत्रुसंहिताद्वा परस्मात् ?' इति ज्ञात्वा यथाबुद्ध्यवस्थापयितव्यः ।**

[ गतागतविषये वक्तव्याः भूयो विशेषाः ]

**'कृतप्रणाशः शक्तिहानिः विद्यापण्यत्वं आशानिर्वेदः देशलौल्यं अविश्वासः बलवद्विग्रहो वा परित्यागस्थानम्' इत्याचार्याः—भयमवृत्तिरमर्ष इति कौटल्यः । इहापकारी त्याज्यः, परापकारी सन्धेयः । उभयापकारी तर्कयितव्य इति समानम् ।**

**असन्धेयत्वेन त्ववश्यं सन्धातव्ये यतः प्रभावः ततः प्रतिविदध्यात् ।**

---

श्रीमूला

परदेशवासं न रोचयते, आहो अयं मम मित्रैः कृतसन्धानः, उत शत्रुभिर्विप्रकृतः, उताहो परस्माल्लुब्धक्रूराद् भीतः, शत्रुणा कृतसन्धेर्वा परस्माद् इत्येवं तर्कयितव्यः । ज्ञात्वेत्यादि । तर्कणेनागमनहेतुं निर्धार्य तदीयबुद्धिकल्याणत्वाकल्याणत्वानुरोधेन स वर्तयितव्यः ।

अथ स्वामिनः परित्याज्यत्वे हेतुभूतान् दोषानाह—कृतप्रणाश इत्यादि । कृतप्रणाशः कृतोपकारास्वीकरणं, शक्तिहानिः शक्तीनां क्षयः, विद्यापण्यत्वं विद्या पण्यमिव पण्यं विक्रेयवस्तुतुल्या मूल्यप्रतिग्राह्यप्राकृतपण्यवस्तुसाधारणप्रतिपत्तिविषय इति यावत् यस्य स विद्यापण्यः विद्यावहेली तस्य भावस्तत्त्वम्, आशानिर्वेदः ददामीति वचनेनाशामुत्पाद्य अदानेन ततो निर्वेदजननम्, देशलौल्यं देशे दंशमशकव्याध्युपद्रवः, अविश्वासः भृत्येष्वविश्वस्तत्वं बलवद्विग्रहो वा बलवताशत्रुणा विगृह्यासनं वा, परित्यागस्थानं स्वामिपरित्यागहेतुः, इत्याचार्याः । भयम् अनारम्भः क्रोधः इति त्रयमेव परित्यागस्थानमिति स्वमतमित्याह—भयमित्यादि ।

गतगतं प्रति भूयो विशेषमाह—इहापकारी त्याज्य इति । आत्मनोऽपकृत्य गतः परस्यापकारमकृत्वा प्रत्यागतः त्यक्तव्यः न तु सन्धेयः । परापकारी सन्धेयः इहापकारमकृत्वैव गतः परस्यापकारं कृत्वा प्रत्यागतः सन्धातुं योग्यः । उभयापकारी तर्कयितव्य इत्यादि । इह परस्मिश्च कृतापकारः परीक्षणीयः केन निमित्तेनागत इति । यथाबुद्धि चावस्थापनीय इति प्राग्भवत् ।

असन्धेयेन त्ववश्यं सन्धातव्ये इति । सन्धानायोग्येन सह सन्धानेऽवश्यकरणीयत्वेनापतिते, यतः प्रभावस्ततः प्रतिविदध्यात् यत् परस्य प्रभावे निमित्तं तद् वारयेत् ।

[ अरिपक्षीयगतागतजनविषये व्यवस्थापनीया अंशा: ]

**सोपकारं व्यवहितं गुप्तमायुःक्षयादिति ।**
**वासयेदरिपक्षीयं अवशीर्णक्रियाविधौ ॥२३०॥**
**विक्रामयेद्भर्तरि वा सिद्धं वा दण्डचारिणम् ।**
**कुर्यादमित्राटवीषु प्रत्यन्ते वाऽन्यतः क्षिपेत् ॥२३१॥**
**पण्यं कुर्यादसिद्धं वा सिद्धं वा तेन संवृतम् ।**
**तस्यैव दोषेणादूष्य परसन्धेयकारणात् ॥२३२॥**
**अथ वा शमयेदेनं आयत्यर्थमुपांशुना ।**
**आयत्यां च वधप्रेप्सुं दृष्ट्वा हन्याद्गतागतम् ॥२३३॥**
**अरितोऽभ्यागतो दोषः शत्रुसंवासकारितः ।**
**सर्वसंवासधर्मित्वात् नित्योद्वेगेन दूषितः ॥२३४॥**

---

श्रीमूला

अथ परपक्षीय आत्माश्रितः केनचिद् दोषेण परं गत्वा पुनरायातः। तथा—विधेन गतागतेनावशीर्णविशेषभूतेन कथं सन्धातव्यमित्यपेक्षायामाह—सोपकारमिति। अवशीर्णक्रियाविधौ, अरिपक्षीयं गतागतं जनं, सोपकारं स्वाम्युपकारावहं, व्यवहितं भृत्यान्तराधश्चरं स्वाम्यनासन्नम्, आ आयुःक्षयाद् गुप्तं याज्जीवं भृत्यैरन्याविज्ञात-रक्षितं, कृत्वेति शेषः, इति अनेन प्रकारेण वासयेत्।

विक्रामयेद् भर्तरि वेति। भर्तुरन्तिके वा तं परिचारयेत्, अर्थाद् व्यवधानवृत्तौ शुचित्वेन ज्ञातम्। सिद्धं वा दण्डचारिणं कुर्यात् तत्र दृष्टकौशलं सैन्यकर्मणि व्यापारयेत्। अमित्राटवीषु अमित्रेषु अटवीषु च, क्षिपेद् व्यापारयेत्। अन्यतः प्रत्यन्ते वा अन्यत्र दूरदेशे वा, क्षिपेत्।

पण्यं कुर्यादसिद्धं वेति। असिद्धं वा पण्यं कुर्यात् यत्र क्षिप्तस्तत्रासमर्थं पण्यवन्तं कुर्यात् 'एतावतः पण्यस्यैतावद् धनमि'ति परिभाषया शत्रु विषये पण्यविक्रयाय प्रेषयेदित्यर्थः। तेन संवृत्तम् अनाम्ना शत्रुणा सह गूढकृतसङ्केतं 'शत्रुर्मया साधित' इत्यादिमिथ्यावादव्यक्तीकृतवाम्यं, परसन्धेयकारणाद् आदूष्य सन्धेयशत्रुप्रतिबोधनाय आ समन्तादवघोषणयोपालभ्य, तस्यैव दोषेण मिथ्यावादलक्षणेन, सिद्धं वा कुर्यात् मारयेत्।

अथवेति। आदूष्यमारणपक्षाभावे, एनम्, आयत्यर्थम् उत्तरकालयोगक्षेमार्थम्, उपांशुना शमयेत् उपांशुदण्डेन हन्यात्। गतागतसामान्यविषयमाह—गतागतम्, आयत्यां वधप्रेप्सुम् उत्तरकालवधेच्छुं, दृष्ट्वा ज्ञात्वा, हन्यात्।

अरित इति। शत्रोः सकाशात्, अभ्यागतः पुरुषः शत्रुसंवासकारितो दोषः

**जायते प्लक्षबीजाशात् कपोतादिव शाल्मलेः ।**
**उद्वेगजननो नित्यं पश्चादपि भयावहः ॥२३५॥**

[ त्रिविधानां युद्धानां लक्षणम् ]

**प्रकाशयुद्धं निर्दिष्टो देशे काले च विक्रमः ।**
**बिभीषणमवस्कन्दः प्रमादव्यसनार्दनम् ॥२३६॥**
**एकत्र त्यागघातौ च कूटयुद्धस्य मातृका ।**
**योगगूढोपजापार्थं तूष्णीं युद्धस्य लक्षणम् ॥२३७॥**

इति षाड्गुण्ये संहितप्रयाणिकं परिपणितापरिपणितापसृताश्च षष्ठोऽध्यायः, आदितश्चतुश्शततमः ।

---

श्रीमूला

शत्रुसहवासशिक्षितत्वादेकान्तदोषहेतुः, सर्पसंवासधर्मित्वात् सर्पसहवासतुल्यत्वात्, नित्योद्वेगेन नित्यभयहेतुतया निन्दितः ।

जायत इति । स गतागतः, प्लक्षबीजाशात् प्लक्षफलभोजिनः, कपोतात् शाल्मलेरिव तूलैकसारफलत्वेनानुपजीव्यस्य शाल्मलितरोरिव अर्थात् तस्य कपोत इव, नित्यम् उद्वेगजननः स्वस्मान्निर्वेदजनकः अर्थादनभिलष्यमाणफलस्य विजिगीषोः, पश्चादपि भयावहः जायते । ईदृशश्चार्थः 'प्लक्षबीजाशः कपोतः इव, इति पाठे सति सुबोधो भवति ।

अथ युद्धधर्मगतं द्वाभ्यां श्लोकाभ्यामाह—प्रकाशयुद्धमित्यादि । 'अमुकदेशे अमुककाले युद्धमावयोर्वर्तिष्यत' इति सम्भाष्य विक्रमणं प्रकाश युद्धं नाम । अल्पस्यापि सैन्यस्य बहुत्वभ्रान्त्युत्पादनेन भयजननं दुर्गादिदाहपरिलुण्ठनादिकरणं प्रमादवसनावसरेषु पीडनम् एकत्र युद्धे वर्तमाने तत्परित्यागः अन्यघातारम्भश्च इत्येषा कूटयुद्धस्य मातृकालक्षणम् । योगगूढोपजापार्थं योगेन गूढभित्तिशिलापातनादिना योगातिसन्धानोक्तेनोपायेन गूढोपजापेन गूढपुरुषद्वारकोपजापप्रयोगेण च अर्थः शत्रुद्रोहरूपं प्रयोजनं यस्मिस्तत् तथाभूतं चेष्टितं, तूष्णींयुद्धस्य लक्षणम् ।

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे षष्ठोऽध्यायः, संहितप्रयाणिकं परिपणितापरिपणितापसृताश्च सन्धयः, आदितश्चतुश्शततमः ।

## त्रयोदशशततमं प्रकरणम्

### सप्तमोऽध्यायः

### द्वैधीभाविकास्सन्धिविक्रमाः

[ विजिगीषुसामन्तोपसङ्ग्रहणहेतवः ]

**विजिगीषुर्द्वितीयां प्रकृतिमेवमुपगृह्णीयात्—सामन्तं सामन्तेन सम्भूय यायात् ।**

———————

श्रीमूला

द्वैधीभाविकाः सन्धिविक्रमा इति सूत्रम् । सन्धिविग्रहोपादानं द्वैधीभावः तत्र कर्तव्याः सन्धयो विक्रमाश्चाभिधीयन्ते इति सूत्रार्थः । परिपणितादिसन्धयो ह्युक्ताः पूर्वाध्याये । तेषां द्वैधीभाविकानामनुष्ठानकारणान्यत्र निरूप्यन्ते ।

विजिगीषुरिति । सः द्वितीयां प्रकृतिं स्वविषयानन्तरं शत्रुम्, उपगृह्णीयात् साहाय्यार्थं स्वीकुर्यात् । कस्मिन् कार्ये साह्यार्थं, तत्राह—सामन्त सामन्तेन सम्भूय यायादिति । यातव्यं भूम्यनन्तरं पृष्ठपार्श्वभूम्यनन्तरेण सहैकार्थ्यमासाद्य यायात् ।

वादिकविचूडामणि-महोपाध्याय·

श्रीमन्माधवयज्वमिश्रप्रणीता अर्थशास्त्रव्याख्या

नयचन्द्रिका

तदेवं परिपणितादिभेदसन्धिमुक्त्वा सम्प्रति तेषामेव द्वैधीभावितानां समहीनांशलाभनैरपेक्षाभ्युपगमादिकारणप्रदर्शनार्थं सूत्रम्—द्वैधीभाविकाः सन्धिविक्रमा इति । सन्धिविग्रहोपादानं हि द्वैधीभावः तन्निविष्टाः सन्धिविग्रहभेदाः कारणादिभेदा उच्यन्त इत्यर्थः ।

सन्धिविग्रहयोरन्विष्टत्वात् प्रतियोगिद्वयं तावदाह—विषिगीषुरित्यादि । द्वितीयां प्रकृतिमिति । भूम्यनन्तरं शत्रुमुपगृह्णीयादिति सहकारितया स्वीकुर्यादित्यर्थः । अत्र साहाय्यार्थमित्यत्राह—सामन्तं सामन्तेनेति । सामन्तमिति यातव्यम् । सामन्तेनेति पश्चाद्वा पार्श्वयोर्वा भूम्यनन्तरेण । संभूयेति एकार्थतापादनेन यातव्यं यायादित्यर्थः । अनेन चास्य संभूय प्रयाणाङ्गत्वमुक्तमिति ग्राह्यम् ।

**यदि वा मन्येत—'पार्ष्णिं मे न ग्रहीष्यति, पार्ष्णिग्राहं वारयिष्यति, यातव्यं नाभिसरिष्यति, बलद्वैगुण्यं मे भविष्यति, वीवधासारौ मे प्रवर्तयिष्यति, परस्य वारयिष्यति, बह्वाबाधे मे पथि कण्टकान् मर्दयिष्यति, दुर्गाटव्यपसारेषु दण्डेन चरिष्यति, यातव्यमविषह्ये दोषे सन्धौ वा स्थापयिष्यति, लब्धलाभांशो वा शत्रूनन्यान् मे विश्वासयिष्यति' इति ।**

———

श्रीमूला

सम्भूययानस्य प्रयोजनान्याह—यदि वा मन्येत पार्ष्णिं मे न ग्रहीष्यतीत्यादि । उपगृहीतो हि सामन्तो विजिगीषोः पार्ष्णिग्रहणापकारं न करिष्यतीत्येकं प्रयोजनं, पार्ष्णिं गृह्णन्तमन्यं शत्रुं वारयिष्यतीति द्वितीयं, यातव्यस्य शत्रोः पक्षं नानुप्रवेक्ष्यतीति तृतीयम्, उपगृहीतसामन्तबलेन सहितं विजिगीषोर्बलं द्विगुणं भविष्यतीति चतुर्थम्, उपगृहीतो विजिगीषोः स्वदेशधान्याद्यायतिलक्षणं वीवधं सुहृद्बलागमनं च न वारयिष्यतीति पञ्चमं, परस्य च वारयिष्यतीति षष्ठम्, विजिगीषोः प्रस्थितस्य पथि गतिप्रतिबन्धकान् प्रतिरोधकान् स मर्दयिष्यतीति सप्तमं, दुर्गेषु काननेषु च विजिगीषुबलमपसरणप्रसङ्गेषु सामन्तः स्वसैन्यसहितः समन्ताच्चरन् पराबाधाद् रक्षिष्यतीत्यष्टमम्, असह्नीयानर्थापाते यातव्येन सह सन्धिं वा घटयिष्यतीति नवमं, विजिगीषुसकाशाल्लाभांशं यथासम्भाषितं लब्ध्वा सामन्तो विजिगीषावविसंवादित्वख्यापनेन शत्रूनन्यान् विश्वस्तान् करिष्यतीति दशमम् । इत्येवं पार्ष्णिशुद्ध्यादीनि दश प्रयोजनानि सम्भूययाने भवन्ति ।

नयचन्द्रिका

यातव्यमभियास्यतः सामन्तान्तरोपग्रहः । किमित्यत्राह—पार्ष्णिमित्यादि । विजिगीषोरस्वयं पार्ष्णिग्रहणाकरणार्थम् अपेक्ष्यार्थः । पार्ष्णिं गृह्णतोऽन्यस्य वारणार्थं वेत्याह—पार्ष्णिग्राहं वा वारयिष्यति । विजिगीषोर्यो यातव्यः तदभिसरणं तत्पक्षा··नुत्यर्थं वेव्यमित्यादि यद्बलं तद्बलेन सहितं द्विगुणं स्यात् तदिति तदर्थं वेत्यर्थः ।

बलद्वैगुण्यमित्यादि । वीवधासारप्रवर्तनार्थं वेत्याह—वीवधेत्यादि । स्वदेशादन्वायतिर्वीवधः मित्रबलमासारः तयोरनिवारणार्थः ।

प्रस्थितस्य मे मार्गं प्रतिबन्धका··त्वमर्दयितुं वेत्याह—बलान्वाय (?बह्वाबाधे) इत्यादि । शैलादिदुर्गेषु चारण्येषु च यात्राभङ्गादौ बलस्य सरणस्थानानि तेषूपदेशेषु कलहाऽवस्कन्दपरिहारार्थं सन्नद्धबलः सर्वतश्चरिष्यतीति तदर्थं वेत्याह—दुर्गाटवीत्यादि । यात्वरिहार्येणार्थे वा सन्धौ वा स्थापयितुं वेत्याह—यातव्यमित्यादि । मत्प्रयाणसाध्यर्थे अयमप्यङ्गहानिर्भूत्वा मय्यविश्वस्तानन्यान्विश्वासयिष्यतीत्येतदर्थं वेत्याह—लब्धलाभांशे वेत्यादि । एभिः प्रयोजनैः सामन्तान्तरं न सहायीकुर्यादित्यर्थः ।

**द्वैधीभूतो वा कोशेन दण्डं दण्डेन कोशं सामन्तानामन्यतमाल्लिप्सेत ।**

[ तद्धेतवः सन्धिभेदाः ]

**तेषां ज्यायसोऽधिकेनांशेन समात्समेन हीनाद्धीनेनेति समसन्धिः । विपर्यये विषमसन्धिः । तयोर्विशेषलाभादतिसन्धिः ।**

---

### श्रीमूला

सम्भूतो चेद् विजिगीषुरविश्वस्तस्तदा किं कुर्यात्, तत्राह—द्वैधीभूतो वेत्यादि । द्वैधीभावमास्थितः, सामन्तानां पृष्ठपार्श्वगतानां राज्ञाम्, अन्यतमात्, कोशेन् दण्डं लिप्सेत दण्डाल्पत्वे, दण्डेन कोशं लिप्सेत कोशाल्पत्वे ।

सम्भूययाने तदपेक्षितांशादिलाभे च सन्धेरपेक्षणात् तद्भेदानाह—तेषामित्यादि । सामन्तानां मध्ये बलाधिकाद् दण्डकोशलिप्सायामधिकांशदानसम्भाषणेन सन्धिरेकः, समानबलात् समानांशदानसम्भाषणेन सन्धिरपरः, हीनबलाद् हीनांशदानसम्भाषणेन सन्धिरन्य इत्येवं त्रिप्रकारः समसन्धिः । विपर्यये विषमसन्धिरिति । बलाधिकात् समेनांशेन हीनेनांशेन वेति प्रथमप्रकारविपर्यये द्वौ, समाद् अधिकेन हीनेन वेति द्वितीयप्रकारविपर्यये द्वौ, हीनात् समेनाधिकेन वेति तृतीयप्रकारविपर्यये द्वौ, इति षट्प्रकारो विषमसन्धिरित्यर्थः । तयोर्विशेषलाभादतिसन्धिरिति । समसन्धिभेदानां विषमसन्धिभेदानां चेत्याहृत्य नवानां प्रत्येकं विशेषलाभात् सम्भाषिताभ्यधिकलाभादतिसन्धिर्नाम नवविधो निर्वर्तते । तदेवमष्टादशसन्धयो द्वैधीभाविकाः ।

### नयचन्द्रिका

एवं यातव्याभियाने पार्ष्णिशुद्ध्यादिभिः प्रयोजनैः संभूययानार्थं सन्धिमुक्त्वा तदविस्रंभणे तेन सह संभूतये द्वैधीभूत इत्यनुवादः । कोशदण्डानपेक्षया सन्धानस्यापि द्वैधीभावे अन्तर्भावज्ञापनार्थं सामन्तादीनामपि सामन्तो भूम्यनन्तरः । आदिशब्दान्मध्यमादिस्वीकारः । सामन्तादीनामित्यत्रादिशब्दं विना पाठे पृष्ठे पार्श्वयोश्चावस्थितानां समभिन्नज्यायसामन्यतमादित्यर्थः ।

सामन्तेन संभूययानस्यांशादिलाभस्य च सन्ध्यधीनत्वाद् द्वैधीभाविकान् सन्धिभेदानाह—तेषामित्यादिना । तेषामिति । समहीनज्यायसाम् । अत्र समसन्धयः त्रयः कण्ठोक्ता विषमसन्धयस्तु षडित्युभये संभूय नव, अतिसन्धयोऽपि तेषामेव विशेषलाभरूपत्वात् नव वेत्यष्टादश सन्धयः ।

अन्ये त्वाहुः—समसन्धयस्त्रयः, विषमसन्धयोऽपि त्रय एव न तु षट् । विपर्यये विषमसन्धिरित्यत्र विपर्ययपदेन हीनत्वस्यैव विवक्षितत्वात् । अन्यथा तयोर्विषयलाभात् अतिसन्धिरित्यन्यस्यानुपपत्तेः । हीनत्रयवदधिकत्रयस्यापि विषमसन्धित्वे सन्धिस्तत्र न स्यात्, विशेषलाभासंभवात् । अतो विशेषलाभपदसामर्थ्यादेवाधिकत्रयं हीनत्रयञ्च

[ हीनस्य ज्यायसा बलसमलाभसन्धिः ]

**व्यसनिनम् अपायस्थाने सक्तम् अनर्थिनं वा ज्यायांसं हीनो बलसमेन लाभेन पणेत । पणितस्तस्यापकारसमर्थो विक्रमेत । अन्यथा सन्दध्यात् ।**

---

नयचन्द्रिका

षडेवातिसन्धयः । एवञ्च विषमसन्धयो ज्यायसः समः समाद्धीनेन हीनाद्धीनतरेणेति त्रय एव ।

अतिसन्धयस्तु हीनात्समेन समादधिकेन ज्यायसोऽधिकतरेणेत्येवं समसन्धौ विशेषलाभः । विषमसन्धावपि ज्यायसः समेन समाद्धीनेन हीनाद्धीनतरेणेत्येवं विशेषलाभ इति षट् तथा च संभूयपञ्चदशेति ।

तत्र विशेषलाभपदस्यान्यथैवार्थोपपत्तेः । वक्ष्यति हि मित्रहिरण्यभूमिलाभाना-मुत्तरोत्तरो लाभः श्रेयानित्युक्त्वा त्वञ्चाहञ्च मित्रं लभाव इत्यादिः समसन्धिः । त्वं मित्रमहं हिरण्यमित्यादिर्विषमसन्धिः । तयोर्विशेषलाभादतिसन्धिरित्युक्तम् ।

समसन्धौ तु यः सम्पन्नं मित्रकृच्छ्रे वा मित्रमाप्नोति । सन्धत्ते इत्यत्र सन्धिश्चोक्तः । तदिदं तदा दुर्घटम्, तत्र हि त्वं मित्रमहं हिरण्यमित्यत्र सन्धिः स्यात्, न तु विषमसन्धिः सम्पन्नमित्रलाभे हि सन्धिरित्यवरुध्येत । विषमसन्धिरेवातित-योक्तत्वात् । ज्यायसोऽधिकांशेन समसन्धिरित्यनेन च विरोधः स्यात्, तस्याधिक-फलेनातिसन्धित्वापत्तेः । बलसमादधिकत्वं तत्र विवक्षितम् ।

अतिसन्धौ तु ततोऽप्यधिकत्वमिति चेत् अनधिकत्वस्यावधिभेदनियमाभि-धानात् । तस्माद्धीनाधिकसाधारण्येन प्रसरतो विपर्ययपदस्याधिकं विहाय हीन एव व्यवस्थानस्याशक्यत्वाद्विशेषलाभपदस्य अन्यथैवोपपन्नत्वाच्च हीनत्वेनाधिकत्वेन च षडपि विक्रमसन्धय एव । अतिसन्धयस्तु विषमसन्धिषु न वि········पणनीयं द्रव्यस्वरूपगतविशेषोपाधिकमतिसन्धित्वमस्त्येवेति संभूयाष्टादशैवेत्यलम् ।

सदाग्रहेणेति । एवं द्वैधीभाविकाः सन्धिभेदास्त्रिधा विभज्य सम्प्रति विजिगी-षोस्समहीनज्यायोभिः सन्धिकरणे द्वयोर्ज्यायस्त्वं हीनत्वं वा अन्योन्योपेक्षया न संभवति द्वयोरपि ज्यायस्त्वे हीनत्वे वा समत्वापत्तेः । तेन विजिगीषोर्ज्यायस्त्वं हीनापेक्षं हीनत्वमपि च ज्यायस्त्वापेक्षम् । अतो हीनस्य ज्यायसा वा समस्य समेन वा ज्यायसो हीनेन वा त्रिभिर्वर्ज्ये सन्धिर्वाच्यः । तत्र लाभभेदात् हीनः सन्धिभेदः ।

श्रीमूला

इह हि लाभास्त्रयः—बलसमः बलसमादधिको बलसमाद्धीन इति । तन्निमित्तान् हीनस्य ज्यायसा सन्धौ सम्भवतो भेदानाह-व्यसनिनमिति । गुणप्रातिलोम्यवन्तम्, अपायस्थाने सक्तं शरीरनाशादिहेतौ रतम्, अनर्थिनं वा एकतोऽनर्थोभयतोऽनर्थयुक्तं वा, ज्यायांसम्, हीनः बलसमेन लाभेन दण्डानुरूपेणांशेन, पणेत सन्दध्यात् । ज्याय-

**एवंभूतो हीनशक्तिप्रतापपूरणार्थं सम्भाव्यार्थाभिसारी मूलपार्ष्णित्राणार्थं वा ज्यायांसं हीनो बलसमाद्विशिष्टेन लाभेन पणेत । पणितः कल्याणबुद्धिमनुगृह्णीयात्, अन्यथा विक्रमेत ।**

---

श्रीमूला

सोऽधिकांशेन समसन्धौ कर्तव्येऽप्ययं विषमसन्धिः क्रियते, विजिगीषुणा व्यसनाद्यभिभूते तस्मिन्नवज्ञानादिति बोद्धव्यम् । अवज्ञातस्य कृत्यमाह—पणितस्तस्येत्यादि । तथा पणितो ज्यायान् स्वावज्ञातुर्विजिगीषोरपकारे शक्तश्चेत् स्वव्यसनादिप्रशमनपूर्वं विगृह्णीयात्, अपकारशक्तौ तु सन्दध्यात् । स एष बलसमलाभसन्धिः ।

नयचन्द्रिका

लाभश्च त्रिविध एव सम्भवी । बलसमः बलसमादधिकः बलसमहीनश्चेति । एवं लाभत्रैविध्यात् प्रत्येकं त्रिधा भूत्वा नवधा स्युरिति आशयवान् प्रथमं हीनस्य ज्यायसा सन्धिभेदान् त्रिविधलाभोपाधिना त्रिधैव दर्शयति—व्यसनिनमित्यादि । नाव्यसनं गुणप्रातिलोम्यादिकम् अपायः शरीरनाशादिः अनर्थं एकतो अनर्थोभयतः अनर्थादिः सद्युक्तमित्यर्थः ।

एवंभूतं ज्यायांसं बलसमेन दण्डानुरूपेण अंशो दण्डसमः पूर्वं इति प्रागुक्तेन लाभेन पणेतेत्ययं विषमसन्धिः ज्यायसोऽधिकेनांशेन समसन्धिरित्युक्तत्वात् । एवं पणमानस्याभिप्रायमुक्त्वा पणितस्याप्याह—पणित इति । तस्यापकारसमर्थं इति बलसमाल्लाभ इति केन हि ज्यायान् पणनीयः तथापि हीनेन राज्ञा तस्य व्यसनाद्युपगतत्वबुद्ध्या तथा न पणितम् । अतस्तत्र अपचिकीर्षा स्यादेव । तथा च अपकारं क्षमयेत् तदाव्यसनादिप्रशमनेन विगृह्णीयादित्यर्थः ।

श्रीमूला

हीनस्य ज्यायसा सह विषमसन्धिमुक्त्वा समसन्धिमाह—एवम्भूत इति । व्यसनाद्यभिभूतो हीनः, हीनशक्तिप्रतापपूरणार्थं हीनयोरात्मशक्तिप्रतापयोः पूरणार्थं, सम्भाव्यार्थाभिसारी मूलपार्ष्णित्राणार्थं वा, लभ्यत्वेन निश्चितप्रायमर्थं साधयितुमभियातुरात्मनो दुर्गस्य पार्ष्णेश्च रक्षणार्थं वा, ज्यायांसं, हीनो, बलसमाद् विशिष्टेन अधिकेन लाभेन पणेत, अर्थात् समसन्धि 'ज्यायसोऽधिकेनांशेन समसन्धिरि'त्युक्तपूर्वं कुर्यात् । पणितस्य ज्यायसः कर्तव्यमाह—पणित इत्यादि । पणितो ज्यायान् पणमानं हीनं यद्यपचिकिर्षारहितं पश्येत् तदाऽनुगृह्णीयाद्, इतरथा विगृह्णीयात् । स एष बलसमाधिकलाभसन्धिः ।

नयचन्द्रिका

हीनस्यैवाधिकलाभेन ज्यायसा सह समसन्धिमाह—एवंभूत इति । एवंभूतः व्यसनित्वादित्युक्तः । हीनानां शक्तीनां प्रतापस्य ज्यायसा सह सन्धिना पूरणं स्यादिति

[ बलसमाधिकलाभसन्धिः ]

**जातव्यसनप्रकृतिरन्ध्रमुपस्थितानर्थं वा ज्यायांसं हीनो दुर्गमित्रप्रतिस्तब्धो वा ह्रस्वमध्वानं यातुकामः शत्रुमयुद्धमेकान्तसिद्धिं लाभमादातुकामो बलसमाद्धीनेन लाभेन पणेत । पणितस्तस्य अपकारसमर्थो विक्रमेत, अन्यथा सन्दध्यात् ।**

---

नयचन्द्रिका

वा संभाव्यस्य निश्चितप्रायस्यार्थस्य प्राप्त्यर्थं वा मूलस्य स्थानीयस्य पार्ष्णेः पश्चाद्विषयस्य त्राणार्थी वा हीनो व्यसनादिमत्तया बलसमाल्लाभाद्विशिष्टेनाधिकेन लाभेन पणेतेत्ययं समसन्धिः ज्यायसाऽधिकांशस्यानुरूपतया समसन्धित्वेनोक्तत्वात् ।

पणितस्य राज्ञो विधिमाह—पणित इति । अत्राधिकांशं पणनेन ज्यायसो नापचिकीर्षेत्यनुगृह्णीयादित्युक्तम् ।

श्रीमूला

ज्यायसा सह हीनस्य बलसमाद्धीनेन लाभेन सन्धिमाह—जातव्यसनप्रकृतिरन्ध्रमिति । उपजातमृगयादिव्यसनम् उपजातक्रुद्धलुब्धभीतादिप्रकोपं च उपस्थितानर्थं वा एकतोऽनर्थोभयतोऽनर्थयुक्तं वा, ज्यायांसं, दुर्गमित्रप्रतिस्तब्धो वा विशिष्टदुर्गमित्रयोगगर्वितो वा, ह्रस्वम् अध्वानं शत्रुं यातुकामो वा अयुद्धमेकान्तसिद्धिं लाभमादातुकामः युद्धं विनैव निश्चितसिद्धिं लाभं जिघृक्षुर्वा, बलसमाद्धीनेन लाभेन पणेत । पणितो ज्यायान् तस्य अपकारसमर्थो विक्रमेत हीनलाभपणनकृतात्मावज्ञानस्य हीनस्यापकारे शक्तश्चेद् विगृह्णीयात् । अन्यथा सन्दध्यात् अपकारासामर्थ्ये सन्धिं कुर्यात् ।

नयचन्द्रिका

हीनस्यैव ज्यायसा हीनेन लाभेन पणनमाह—जातव्यसनेत्यादि । व्यसनं मृगयादि बलव्यसनं वा प्रकृतिरन्ध्रं क्रुद्धहिताभिप्रायम् । अनर्थ एकतोऽनर्थ उभयतोऽनर्थादि तद्युक्तं ज्यायांसं स्वदुर्गमित्राभ्याम् उद्धतो वा मार्गमदोर्घं यियासुर्वा शत्रुं युद्धेनापि सैव गृहीतुकामो वा निश्चितसिद्धिकं लाभमादातुकामो वेत्यर्थः ।

दुर्गमित्रादिदर्पाद्वा कार्यादितो वा हीनो ज्यायांसमपि समबलसमाल्लाभात् हीनलाभेन पणेतेत्यर्थः । तथा पणितस्य ज्यायसो विधिमाह—पणित इत्यादिना ।

अपकारसमर्थ इति । हीनलाभेन पणनाव्यसनिनोऽपि ज्यायसोऽपचिकीर्षा न्याय्येति भावः ।

[ बलसमहीनलाभसन्धिः ]

**अरन्ध्रव्यसनो वा ज्यायान् दुरारब्धकर्माणं भूयः क्षयव्ययाभ्यां योक्तुकामो वा, दूष्यदण्डं प्रवासयितुकामः दूष्यदण्डमावाहयितुकामो वा, पीडनीयमुच्छेदनीयं वा हीनेन व्यथयितुकामः, सन्धिप्रधानो वा कल्याणबुद्धिः हीनं लाभं प्रतिगृह्णीयात्। कल्याणबुद्धिना सम्भूयार्थं लिप्सेत, अन्यथा विक्रमेत।**

---

## श्रीमूला

हीनमपि लाभं हीनात् कार्यविशेषवशेन ज्यायान् पणितः स्वीकुर्यादित्याह— अरन्ध्रव्यसनो वेति। प्रकृतिरन्ध्रमृगयादिव्यसनरहितः, ज्यायान्, दुरारब्धकर्माणम् अदेशकालोपक्रान्तकर्माणं शत्रुम्, भूयः दुरारम्भोपनतक्षयव्ययातिरेकेण, क्षयव्ययाभ्यां युग्यपुरुषनाशधनव्ययाभ्यां योक्तुकामो वा, दूष्यदण्डं प्रवासयितुकामो वा स्वदूष्यबलं विध्वंसयितुमिच्छुर्वा, दूष्यदण्डम् आवाहयितुकामो वा परपूज्यबलमानेतुमिच्छुर्वा, पीडनीयमुच्छेदनीयं वा हीनेन व्यथयितुकामो वा उभयतः पीडनयोग्यम् उन्मूलनीयं वा शत्रुं हीनेन सहायभूतेन पीडयितुमुच्छेत्तुं च वांछन् वा, सन्धिप्रधानः बह्वपायाद् विग्रहात् सन्धिरेव श्रेयानिति मन्यमानः, कल्याणबुद्धिः, हीनं लाभं हीनेन पणमानेन दीयमानं, प्रतिगृह्णीयात्। कल्याणबुद्धिना सम्भूय अदुष्टधिया हीनेन सहैकार्थीभूय, अर्थं लिप्सेत साहाय्यमाचरेत्। अन्यथा हीनस्य दुष्टबुद्धित्वे, विक्रमेत। स एष बलसमहीनलाभसन्धिः।

## नयचन्द्रिका

व्यसनिनो ज्यायसो हीनलाभपणने विक्रममुक्त्वा व्यसनभावेऽपि तस्य तथापणितस्यापि हीनात् कार्यान्तरैरपि हीनलाभः प्रतिग्राह्य इत्याह— अरन्ध्रव्यसनो वेत्यादिना। रन्ध्रं प्रकृतिभेदादिव्यसनं मृगयादि बलव्यसनं वा तद्गृहीत इत्यर्थः। दुरारम्भो देशकालादिविरुद्धत्वं क्षयोयुग्यपुरुषापचयः। प्रवृत्तितसैन्यभक्तोपकरणदानादि भूयस्ताभ्यां योक्तुकाम इति। सहायतया ज्यायसः प्रवृत्तो दुरारम्भो हीन विश्रम्येदिति भावः। दूष्यदण्डमिति। स्वदूष्यबलं प्रवासयितुकामः नाशयितुमन्यत्र नमयितुं वेत्यर्थः। आवाहयितुकामो वेति। परदूष्यबलमानयितुकामो वा। पीडनोयमिति। उभयतः पीडनीयं वोन्मूलनीयं वा। स्वशत्रुमनेन सहायभूतेन हीनेन तथाकर्तुंकामः। सन्धिप्रधानोवेति। विग्रहस्य क्षयव्ययप्राणसंशयादिदोषदर्शीत्यर्थः। कल्याणबुद्धिरित्यादिना अनर्थान्तरजना नार्थीत्यर्थः। कल्याणबुद्धिनेति। हीनांशदोपि अदुष्टबुद्धिश्चेतत्साहाय्यं कुर्यादित्यर्थः।

[ समस्य समेन सह सन्धिः बलसमलाभेन पणनम् ]

**एवं समः सममतिसन्दध्यात्; अनुगृह्णीयाद्वा ।**

**परानीकस्य प्रत्यनीकं मित्राटवीनां वा शत्रोर्विभूमीनां देशिकं मूल-पार्ष्णित्राणार्थं वा समस्समबलेन लाभेन पणेत । पणितः कल्याणबुद्धिमनु-गृह्णीयात्; अन्यथा विक्रमेत ।**

[ तादृशबलसमाधिकलाभसन्धिः ]

**जातव्यसनप्रकृतिरन्ध्रमनेकविरुद्धमन्यतो लभमानो वा समः सम-बलाद्धीनेन लाभेन पणेत । पणितस्यापकारसमर्थो विक्रमेत अन्यथा संदध्यात् ।**

---

श्रीमूला

एवं हीनस्य ज्यायसा सह सन्धावुक्तान् प्रकारान् समस्य समेन सह सन्धावति-दिशति—एवं समः सममतिसन्दध्यादनुगृह्णीयाद्वेति । हीनज्यायसोः सन्धिषु दुष्टबुद्धि-त्वकल्याणबुद्धि त्वापेक्षावतिसन्धानानुग्रहौ यथा भक्तस्तथा समयोरपि सन्धौ तौ द्रष्टव्यावित्यर्थः ।

अथ समयोः सन्धौ बलसमेन लाभेन पणनमाह—परानीकस्येति । शत्रुबलस्य, मित्राटवीनां वा शत्रुसम्बधिनाम् मित्राटविकानां च, प्रत्यनीकं प्रतियोधनशक्तं, शत्रोः, विभूमीनां शैलगुहादीनां, देशिकं प्रचारोपदेष्टारम् अर्थात् समं राजानं, मूलपार्ष्णित्रा-णार्थं वा स्थानीयस्य पृष्ठस्य च रक्षार्थं वा, समः समबलेन लाभेन बलसमलाभेन पणेत । पणितस्य कर्तव्यमाह पणितः कल्याणबुद्धिमित्यादि ।

बलसमाद्धीनेन लाभेन पणनमाह—जातव्यसनप्रकृतिरन्ध्रमिति । तथाभूतम्, अनेकविरुद्धं बहुविरोधिनम् अर्थात् समं, समः, समबलाद्धीनेन लाभेन बलसमहीन-लाभेन, पणेत अन्यतो लभमानो वा समसाह्येन विनापीप्सितकार्यसिद्धिं प्राप्स्यन् वा समः, समबलाद्धीनेन लाभेन पणेत । अपराव्याख्या—हीनलाभपणनीयसामन्ता-न्तरसौलभ्ये सति समबलाद्धीनेन लाभेन पणेतेति । पणितस्तस्यापकारसमर्थं इत्यादिगतार्थम् ।

नयचन्द्रिका

एवं हीनस्य ज्यायसा सह सन्धित्रिकमभिधाय समस्य समेव सन्धित्रिकेऽपि तमेव प्रकारं सामान्यतोऽतिदिशति—एवं समनुत्यादिना । तथा हीनस्य ज्यायान् सन्धिप्रार्थनायां तस्य दुष्टबुद्धित्वेऽतिसन्धानं विशेषलाभप्रकारः । कल्याणबुद्धित्वे तस्यानुग्रहश्च प्रतिपादितां स्वीकारश्चोक्तिः ।

तथा समस्य समेवसिद्धिप्रार्थने पणितेनातिसन्ध्यनुग्रहौ कार्यावित्यतिदेशार्थः । अत्रापि लाभत्रैविध्येन त्रीन् प्रकारान् विशेषतो दर्शयेत् । प्रथमं बलसमालाभेन

[ अतिसन्धिः ]

**एवंभूतो वा समस्सामन्तायत्तकार्यः कर्तव्यबलो वा बलसमाद्विशिष्टेन लाभेन पणेत । पणितः कल्याणबुद्धिमनुगृह्णीयात्; अन्यथा विक्रमेत ।**

[ ज्यायसो हीनेन सह बलसमाधिकलाभसन्धिः ]

**जातव्यसनप्रकृतिरन्ध्रमभिहन्तुकामः स्वारब्धमेकान्तसिद्धिं वास्य कर्मोपहन्तुकामो मूले यात्रायां वा प्रहर्तुकामो यातव्यात् भूयो लभमानो वा ज्यासांसं हीनं समं वा भूयो याचेत ।**

———————

नयचन्द्रिका

पणनमाह—परनीकस्येत्यादि । परबलस्य परिमितादपि·····प्रत्यनीकमवस्कन्दक्षमं शत्रोर्या विभूमयः शैलगुह्यनादयस्तद्देशिकस्तत्प्रचाराभिज्ञं मूलस्य स्थानीयस्य पश्चाद्विषयस्य च रक्षार्थं वेत्यर्थः ।

"पणितस्य विधिमाह" पणित इति ।

हीनलाभपणनमाह—जातव्यसनेत्यादि व्यस्तदैवकृतभयादिकंऽकृतिरन्ध्रं तस्याः क्रुद्धभीतादिभूयिष्ठत्वम् । अनेकमविरुद्धमिति अनेकशत्रुकम् एवंभूतं सममित्यर्थः । अन्यतो लभमानोवेति । एवं विनापि सामन्तान्तरं सहायं लभमान इत्यर्थः । सम्बन्धादिति । लाभादिविशेषः । पणितस्य विधिमाह—पणित इति । अपकारसमर्थं इति । हीनलाभपणनादपचिकीर्षुरिति भावः ।

श्रीमूला

बलसमादधिकेन लाभेन पणनमाह—एवम्भूतो वेति । जातव्यसन प्रकृति-रन्ध्रत्वानेकविरुद्धत्वयुक्तः, समः सामन्तायत्तकार्यः सामन्तसाह्यसाध्यकार्यः, कर्तव्य-बलो वा उत्पाद्यदण्डो वा सन्, बलसमाद्, विशिष्टेन अधिकेन, लाभेन, पणेत । पणितः कल्याणेत्यादि प्रतीतार्थम् ।

विजिगीषुणा पण्यमानस्य सामन्तस्य हीनत्वज्यायस्त्वाद्यवधीरणेन बहुतरं लाभं याचमानस्य विशेषलाभे निमित्ते प्रवर्तमानमतिसन्धिमाह—जातव्यसनप्रकृति-रन्ध्रमिति । तथाभूतं, ज्यायांसं हीनं समं वेत्यग्रिमेण सम्बन्धः । अभिहन्तुकामः, स्वारब्धं समुचितदेशकालप्रयुक्तम्, अत एव एकान्तसिद्धिं निश्चितसिद्धिकम्, अस्य विजिगीषोः, कर्म, उपहन्तुकामो वा, यात्रायां मूले प्रहर्तुकामोवा, विजिगीषोर्याने सति तदीयं दुर्गादिकमवस्कन्दितुमिच्छुर्वा, यातव्याद् भूयो लभमानो वा विजिगीषु-दित्सितादभ्यधिकमर्थं तदीययातव्यसकाशाल्लप्स्यमानो वा अर्थात् हीनो ज्यायान् समो वा, क्रमेण ज्यायांसं हीनं समं वा, भूयो याचेत हीनत्वाद्यनादरेणाधिकमर्थं यथेष्टं याचेत । एष पणितस्य विधिः ।

नयचन्द्रिका

अधिकलाभपणनमाह—एवंभूतो वेति । एवंभूतः व्यसनप्रकृतिरन्ध्रादियुक्तम् ।

**भूयो वा याचितः स्वबलरक्षार्थं दुर्धर्षमन्यदुर्गमासारमटवीं वा परदण्डेन मर्दितुकामः: प्रकृष्टेऽध्वनि काले वा परदण्डं क्षयव्ययाभ्यां योक्तुकामः, परदण्डेन वा विवृद्धस्तमेवोच्छेत्तुकामः परदण्डमादातुकामो वा भूयो दद्यात् ।**

---

नयचन्द्रिका

सामन्तायत्तकार्य इति । व्यसनादिमत्वे भावम् । कर्तव्यबलो वेति । अशिक्षितहस्त्यश्व इति वा संपाद्यबलो वेत्यर्थः । बलसमार्थिनो वेति—बलसमादंशात् न्यूनो वेत्यर्थः । बलसमाद्धीनेनेति—बलसमादंशान्न्यूनो वेत्यर्थः ।

समस्य समेन सन्धित्रिकमुक्त्वा समहीनज्यायस्त्वाविभागेन पण्यमानस्यैव भूयो याचनं विशेषणलाभरूपत्वेनातिसन्धिमाह—जातव्यसनप्रकृतिरन्ध्रमिति । ज्यायांसं समं हीनं वेत्यग्रभाविना सम्बन्धः । अभिहर्तुकामः संशयितुकामः । स्वारब्धमिति । देशकालाद्युचितमित्यर्थः । अत एवैकान्ते सिद्धनिश्चितस्सिद्धिकामस्य कर्म विहन्तुकामो वेत्यन्वयः । मूले स्थानीये यात्रायामवगमनदशायां वा प्रहर्तुकामः । विजिगीषोर्यो यातव्यः तस्मादेतद्देयात् बहुतरं लभमानो ऽन्वाज्यायस्त्वान्यविभागेन बहुतरमेव याचेत ।

श्रीमूला

पणितुर्याचितस्य विधिमाह—भूयो वा याचित इति । बहुतरं द्रव्यं याचितः पणमानः, स्वबलरक्षणार्थं, भूयो दद्यात् याचितमखिलं याचमानाय प्रयच्छेत् । प्रयोजनान्तराण्याह—दुर्धर्षं कृच्छ्रधर्षणीयम्, अन्यदुर्गं शत्रोर्दुर्गम्, आसारं तदीयं मित्रबलम्, अटवीं तदीयमाटविकम्, परदण्डेन पण्यमानसामन्तबलेन, मर्दयितुकामो वा प्रकृष्टेऽध्वनि दूरविप्रकृष्टे पथि, तथाभूते काले, परदण्डं पण्यमानस्य बलं, क्षयव्ययाभ्यां दूराध्वगतागत—चिरकालव्यापारणनिमित्ताभ्यामित्यार्थं, योक्तुकामो वा, परदण्डेन वा विवृद्धस्तमेवोच्छेत्तुकामः यातव्यस्य गजतुरगादिबलेन यातव्यजयोत्तरकाललब्धव्येन संवृद्धबलो भूत्वा लाभातिशयमात्मदत्तपूर्वं पण्यमानस्य प्रत्याहरिष्यामीति मन्यमानो वेत्यर्थः परदण्डमादातुकामो वा यातव्यबलं पण्यमानसाह्येन ग्रहीतुकामो वा, भूयो दद्यात् ।

नयचन्द्रिका

एवं वश्यमानस्य विधिमुक्त्वा पणमानस्याप्याह—याचित इति । तस्य यावदन्याश्चितदाने कारणान्याह—स्वबलरक्षार्थमिति । कारणान्तरमाह—दुर्धर्षमित्यादि । अन्यदुर्गमिति । शत्रुदुर्गमासारं दुर्गबलम् अटवीम् आटविकम् । अन्यस्य स्वशत्रोर्दुर्गादिकम् परस्य प्रमाणस्य बलेनावमर्दयितुकामो वा । प्रकृष्टे दूरतरे अन्यवनि चिरतरे काले चापरत् अन्यं पणमानस्य बलं क्षयव्ययाभ्यां योक्तकाम इति । स्वयाहार्य-

[ तादृशबलसमलाभसन्धिः ]

**ज्यायान् वा हीनं यातव्यापदेशेन हस्ते कर्तुकामः, परमुच्छिद्य वा तमेवोच्छेत्तुकामः त्यागं वा कृत्वा प्रत्यादातुकामः, बलसमाद्विशिष्टेन लाभेन पणेत। पणितस्तस्यापकारसमर्थो विक्रमेत; अन्यथा संदध्यात्। यातव्यसंहितो वा तिष्ठेत्। दूष्यामित्राटवी दण्डं वाऽस्मै दद्यात्।**

---

नयचन्द्रिका

विश्वासे पणमानो दूरोत्सवगमनचिरप्रवृत्यादिषु वारऽप्स्येत तत्क्षयव्ययौ चाप्स्यतीतिभावः। परदण्डेति—परस्य यातव्यस्य दण्डेन बलेन ततो गृहीतगजाश्वादिना। वृद्धौ भूत्वा पुनः पूर्वदत्तमस्यलाभातिशयमाच्छेत्स्यामीति बुद्धत्वादेवेत्यर्थः। परदण्डमित्यादि। परस्य यातव्यस्य दण्डमनेन सहायेन गृहीतुकामो वेत्यर्थः। एतानि कारणानि बुद्धवा बहुतरमभिलाभांशं दद्यादित्यर्थः। ज्यायांसं हीनं समं वेति हीनो ज्यायान् समो वेति शेषः।

श्रीमूला

इत्थं भूयोयाचनतत्प्रदाननिबन्धनमतिसन्धिमुक्त्वा ज्यायसो हीनेन सहसन्धित्रयमाह—ज्यायान् वा हीनमिति। ज्यायान्, हीनं बलसमाद् विशिष्टेन अधिकेन लाभेन पणेत, कथम्भूतः यातव्यापदेशेन हस्ते कर्तुकामः यातव्योच्छेदार्थसर्वबलसन्दोहसन्नाहव्याजेन हीनं ग्रहीष्यामीत्यभिसन्धियुक्तः, परमुच्छिद्य वा तमेवोच्छेत्तुकामः यातव्योन्मूलनान्तरं हीनमप्युन्मूलयितुकामो वा, त्यागं वा कृत्वा प्रत्यादातुकामः विशिष्टलाभदानं कृत्वा पश्चात् तदपजिहीर्षुर्वा। अत्र 'ज्यायान् वा हीनम्' इत्यत्र स्थाने 'ज्यायांसं वा हीनं वे'त्यपपाठः। पणमानविधिमुक्त्वा पणितविधिमाह—पणितस्तस्येत्यादि। यातव्यसंहितो वा तिष्ठेत् पणितो यातव्येन सहसन्धि कृत्वा वा स्थानमनुतिष्ठेत्। दूष्यामित्राटवीदण्डं वास्मै दद्यात् दूष्यामित्राटविकबलं वा स्ववध्यं ज्यायसे पणमानाय दद्यात् सन्ध्यर्थम्।

नयचन्द्रिका

एवं समहीनज्यायस्त्वाविभागेन भूयो याचनतत्प्रसादनाभ्यां अतिसन्धिमुक्त्वा ज्यायसो हीनेन सह सन्धित्रिकं दर्शयति—ज्यायान्वेत्यादिना॥ यातव्योच्छेवमपदिश्य सर्वबलसन्दोहेन कृतसन्नाहो हीनमेव जिघृक्षुर्वा यातव्योच्छेदानन्तरं हीनमप्युच्छेत्सुकामो वा ज्यायान् हीनं बलसमूहादधिकलाभेन पणेतेत्यर्थः। यातव्येनैव सन्धि कृत्वा स्थानं स्वीकुर्याद् वा। अस्मै ज्यायसे सन्ध्यर्थं दण्डं दद्यात्। दूष्यामित्राटविकबलं वा दद्यात्, तेषामात्मनैव वध्यत्वादित्याशयः।

[ तादृशबलसमहीनलाभसन्धिः ]

**जातव्यसनप्रकृतिरन्ध्रो वा ज्यायान् हीनं बलसमेन लाभेन पणेत । पणितस्तस्यापकारसमर्थो विक्रमेत; अन्यथा संदध्यात् ।**

[ निगमनम् ]

**एवंभूतं वा हीनं ज्यायान् बलसमाद्धीनेन लाभेन पणेत । पणितस्तस्यापकारसमर्थो विक्रमेत; अन्यथा सन्दध्यात् ।**

**आदौ बुद्ध्येत पणितः पणमानश्च कारणम् ।**
**ततो वितर्क्योभयतो यतः श्रेयस्ततो व्रजेत् ॥२३८॥**

इति षाड्गुण्ये द्वैधीभाविकास्सन्धिविक्रमाः
सप्तमोऽध्यायः, आदितः पञ्चशतः ।

---

श्रीमूला

बलसमाधिकलाभेन सन्धिमुक्त्वा बलसमलाभेन सन्धिमाह—जातव्यसनप्रकृतिरन्ध्रो वा ज्यायानित्यादि । सुबोधम् ।

बलसमाद्धीनेन लाभेन सन्धिमाह—एवम्भूतं वा हीनमित्यादि । एवम्भूतं जातव्यसनप्रकृतिरन्ध्रम् । शेषं सुगमम् ।

अध्यायान्ते श्लोकमाह—आत इति । आतः अव्ययमिदमतश्शब्दस्यार्थे । लाभपणनतदंगीकरणनिमित्तवैचित्र्याद्धेतोः पणितः, पणमानश्च, कारणं बुध्येत जानीयात् । ततः कारणबोधानन्तरम्, उभयतो वितर्क्य सन्धिर्वा श्रेयान् विग्रहो वेति सम्प्रधार्य, यतः श्रेयस्ततो व्रजेत् यस्मिन्नुपादीयमाने श्रेयः पश्यति तमनुतिष्ठेत् । अत्र 'आत' इत्यस्य स्थाने 'आदौ' इति क्वचित् पाठः ।

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे,
सप्तमोऽध्यायः द्वैधीभाविकाः सन्धिविक्रमाः,
आदितः पञ्चशततमः ॥

नयचन्द्रिका

एवं हीनेन सहाधिकलाभेन सन्धिमुक्त्वा समबललाभेन सन्धिमाह—जातव्यसनेत्यादि । ज्यायानपि व्यसनादिमत्तया हीनेन सह समबलेन लाभेन पणेतेत्यर्थः । पणितस्यविधिमाह पणित इति । अपकारसमर्थ इति । हीनोऽप्यस्य ज्यायसो दुष्टबुद्धित्वं ज्ञात्वापचिकीर्षुरितिभावः ।

हीनलाभेन सन्धिमाह—एवंभूतमिति । पूर्वं यथा ज्यायान् व्यसनादिमान् तथेदानीं हीनो व्यसनादिमानित्यर्थः । बलसमादिति । लाभादितिशेषः । एवं ज्यायस्यहितेन सन्धित्रयमुक्तम् ।

एवं समहीनादिषु पणितपणमानयोः अधिकलाभपणनस्य तत्स्वीकारयोश्च कारणान्युक्त्वा इदानीं तान्येवालोच्य तदनुगुणं सन्धौ वा विग्रहे वा तिष्ठेदित्याह— अत इत्यादि । यत एव समबलादिलाभपणनतदभ्युपगमानां कारणानि बहूनि च । अतो यथोक्तानि विचार्य निश्चिनुयात् । निश्चित्य चोभयतः सन्धिविग्रहयोः द्वयोर्यतः श्रेयः स्यात् तमेव स्वीकुर्यादित्यर्थः । अत्र च सर्वत्र पणितत्वं पणमानत्वञ्चोभयमेव विजिगीषोरेवावस्थाभेदेनेति द्रष्टव्यम् ।

इति श्रीवादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वविरचितायां
कौटिलीयटीकायां नयचन्द्रिकायां षाड्गुण्ये सप्तमेऽधि-
करणे सप्तमोऽध्यायः ।

# अष्टशततमादिदशशततमान्तानि प्रकरणानि

## अष्टमोऽध्यायः

### यातव्यवृत्तिः, अनुग्राह्यमित्रविशेषाश्च

[ यातव्यस्य स्वसामवायिकेषु वृत्तिः ]

**(यातव्यवृत्तिः ।)**

**यातव्योऽभियास्यमानः सन्धिकारणम् आदातुकामो विहन्तुकामो वा सामवायिकानामन्यतमं लाभद्वैगुण्येन पणेत ।**

———

श्रीमूला

यातव्यवृत्तिरिति सूत्रम् । यातव्यो नाम कश्चिद् विजिगीषुं यातारमपेक्ष्य यातव्यावस्थापन्नस्तस्यैव प्रत्यभियाता विजिगीषुविशेषः । तस्य सामवायिकेषु वृत्तिः तस्मिंश्च सामवायिकानां वृत्तिरुच्यत इति सूत्रार्थः । यातव्याभियानसमवायिनामन्योन्यसन्धिविक्रमादिकमुक्तं, यातव्यस्य तेषु तेषां वा यातव्ये वृत्तिस्तु नोक्ता । सेदानीमभिधीयते ।

यातव्य इति । यातव्यावस्थापन्नो विजिगीषुः, अभियास्यमानः यातारं विजिगीषुं प्रति अभियानात् प्राक् सन्धिकारणम् आदातुकामः सन्धिनिमित्तं ग्रहीतुकामः स्वयं सन्धित्सुरित्यर्थः, सन्धिकारणं विहन्तुकामो वा परचिकीर्षितसन्धिप्रतिजिघांसुर्वेत्यर्थः, सामवायिकानाम् अन्यतमं, लाभद्वैगुण्येन पणेत व्यवस्थिततल्लाभांशद्विगुणेन लाभेन सम्भाषेत अर्थात् परसामवायिकी भावानभ्युपगमार्थम् ।

नयचन्द्रिका

यातव्याभिधानार्थं समवायिनां भूयः प्रमाणं(?)सम्भूयप्रयाणं मिथः सन्धिविक्रमाश्चोक्ताः । संप्रति यातव्यस्य कथं तेषु वृत्तिः, तेषां यातव्ये च कथमित्येतद्विचारार्थं सूत्रम् यातव्यवृत्तिरिति । यातव्यस्य समा सामवायिकेषु तेषां यातव्येषु च वृत्तिरुच्यत इत्यर्थः ।

तदेवाह—यातव्योऽभियास्यमान इत्यादिना अत्र विजिगीषुरेव यातव्यस्तदवस्थापन्नः । स च सामवायिकानामन्यतमं सन्धिकारणं सन्धिनिमित्तं स्वीकर्तुकामो वा परसन्धित एवैनं विहर्तुकामो वा तत्र याऽस्य लाभांशतया व्यवस्थापितः ततो द्विगुणेन लाभेन पणेतेत्यर्थः ।

**प्रपणिता क्षयव्ययप्रवासप्रत्यवायपरोपकारशरीराबाधांश्चास्य वर्णयेत् । प्रतिपन्नमर्थेन योजयेत् । वैरं वा परैर्ग्राहयित्वा विसंवादयेत् ।**

[ सामवायिकानां यातव्येन साकं व्यवहारक्रमाश्चत्वारः ]

**(१) दुरारब्धकर्माणं भूयः क्षयव्ययाभ्यां योक्तुकामः, स्वारब्धायां वा यात्रायां सिद्धिं विघातयितुकामः, मूले यात्रायां वा प्रतिकर्तुकामः, यातव्यसंहितः पुनर्याचितुकामः, प्रत्युत्पन्नार्थकृच्छ्रः तस्मिन् अविश्वस्तो वा, तदात्वे लाभमल्पमिच्छेत्; आयत्यां प्रभूतम् ।**

---

### श्रीमूला

तदभ्युपगमे च दोषान् प्रद्वेषाय पणमानो वर्णयेदित्याह—प्रपणितेति । पणमानः, नयचन्द्रिकायां पणमान इत्येव पाठः । प्रपणित इति पाठस्तु चिन्त्यः । क्षयव्ययप्रवासप्रत्यवायपरोपकारशरीराबाधांश्च युग्यपुरुषापचयं धनव्ययं दीर्घाध्वगतागतं सम्भूयप्रवृत्तिसम्भावितं संविद्व्यतिक्रमदोषं परस्य शत्रोः पक्षं प्रविश्योपकारकरणं शरीरपीडां चेत्येतान् सामवायिकभावसम्भाव्यान् षड्दोषान्, अस्य पण्यमानस्य, वर्णयेत् बोधयेत् । प्रतिपन्नम् अभ्युपगतपणनम्, अर्थेन योजयेत् पणितमर्थं दत्त्वा स्वसामवायिकं कुर्यादित्यर्थः । विहन्तुकामस्त्व आह—वैरं वा अपरैर्ग्राहयित्वा विसंवादयेदिति । अन्यैः सामवायिकैः सह विरोधमुत्पाद्य सन्धिं विघटयेत् । एवं तावद् यातव्यस्य सामवायिकान्यतमपणनमुक्तम् ।

अथ सामवायिकानामन्येन पणनं प्रस्तूयते । तत्र यातव्यं प्रति सन्धिच्छलेनापकारं चिकीर्षोः प्रभूतार्थग्रहणे तत्करणायुक्तत्वं मन्यमानस्यायत्यां प्रभूतलाभैषिण एव सतस्तदात्वेऽल्पलाभाभ्युपगमपक्षमाह—दुरारब्धकर्माणं भूयः क्षयव्ययाभ्यां योक्तुकाम इति । अनुचितदेशकालाद्युपक्रान्तयुद्धयात्रम् अत एव युग्यपुरुषापचयेन सहायाराधनार्थधनव्ययेन च स्वत एव युक्तं दुरारब्धानुवृत्त्या बहुतराभ्यां ताभ्यां योजयितुकामः, स्वारब्धायां वा यात्रायां सिद्धिं विघातयितुकामः समुचितदेशकालाद्यारब्धत्वाद् यात्रायाः फलसिद्धिं सम्भाव्यां विघटयितुमिच्छुर्वा, मूले यात्रायां वा प्रतिहर्तुकामः स्थानीये अभियाने प्रहर्तुमिच्छुर्वा, यातव्यसंहितः पुनर्याचितुकामः सम्प्रत्यल्पेन लाभेन सन्धिं कृत्वा भूयः प्रभूतं याचिष्य इति मन्यमानो वा, प्रत्युत्पन्नार्थकृच्छ्र इति अतर्कितोपनतधनव्ययो वा तस्मिन् अविश्वस्तो वा पणमाने विषये प्रभूतं प्रतिश्रुत्याप्यसौ पश्चान्न दास्यतीत्युपजातशङ्को वा, तदात्वे तत्काले, लाभम् अल्पम् इच्छेत्, आयत्यां प्रभूतं प्रचारम् इच्छेत् । एवं पञ्चसु निमित्तेषु तदात्वाल्पलाभपणनमित्येकः पक्ष उक्तः ।

### नयचन्द्रिका

सामवायिकतया लाभग्रहणे क्षयादयः सन्ति न त्विहेति च वर्णयेदित्याह—प्रपणित इति । युग्मपुरुषापचयः क्षयः । व्ययः सैन्यप्रवर्तने अर्थदानम् । प्रवासो

(२) मित्रोपकारममित्रोपघातम् अर्थानुबन्धमवेक्षमाणः, पूर्वोपकारकं

नयचन्द्रिका

दीर्घाध्वगमनम् । प्रत्यवायः सम्भूयावृत्तौ संविल्लङ्घनदोषः वधादिर्वा । परोपकारः शत्रोरेव कार्यंकरणं तत्सहकारितयाऽनुप्रवेशादिति भावः । एतानि अनुवर्णयेत् पुनः पुनर्भूयादित्यर्थः । (?) (ब्रूयादित्यर्थ ॥)

प्रतिपन्नमिति । अभ्युपगतवन्तं पणितार्थेन योजयेदित्यर्थः । एवमादातुकामो वेति पक्षमुक्त्वा विहन्तुकामो वेति पक्षमाह—वैरंवेति । परैः सामवायिकान्तरैः सह मिथः कलहोत्पादेन भेदयित्वा । विसंवादयेत् सन्धिं शिथिलयेदित्यर्थः ।

एवं यातव्यस्य सामवायिकेषु अन्यतमेन पणनमुक्त्वा सामवायिकानामेवान्योन्यतः पणनप्रकारमुक्ताशयमाह—दुरारब्धेत्यादि ।

अत्र हि चत्वारः पक्षाः संभविनः । तत्र नित्यापकार्यस्य विश्वास्ये वा शत्रौ सन्धिच्छद्मनापि सर्वथापकर्तव्यम् । न च प्रभूतार्थग्रहणे पुनरपकारो युक्तः । अतः तदात्वे अल्पमादायायत्यां प्रभूतमेष्टव्यमित्याद्यपेक्षम् (?पक्षः) । मित्रस्योपकारं वा शत्रोः पीड़नं वा लाभान्तरानुबद्धं पश्यन् तादात्विकं प्रभूतमप्युपेक्ष्यायत्यां चाल्पमेवेच्छेदिति द्वितीयः । [बलवताक्रान्तं बद्धमनेन सन्धिकारणादविघ्नितव्यापारं यं रक्षितुं वान्येन मित्रादिना रक्षितुं वा नेतयौ न सम्बन्धार्थी वा न किञ्चिदपीति तृतीयः] । परेण स्वोकृतं सन्धिं विघटयितुकामोवा मित्राभ्यां लघ्वर्थदानेन कृतं सन्धिं विश्लेषयितुकामो वा पराभियोगं वाशङ्कमानः प्रभूतार्थं प्रार्थनेन तद्विहतिं चिकीर्षुर्वा तदात्व एवाप्राप्तमधिकं वा लाभमिच्छेदिति चतुर्थः ।

एवं चतुष्पक्षमभिधाय आद्यं तावदाह—दुरारब्धेत्यादि । दुरारब्धत्वमनुचितदेशकालाद्युपक्रमसन्देशकालाद्यनुचितकर्मप्रवृत्तं, भूयः क्षयव्ययाभ्यां योक्तुकामो वा, क्षेपो युग्य (योग्य) पुरुषापचयः, व्यस्ये (?व्ययो) न्यसत्काराद्यर्थं दानम् । क्षयव्ययादौ व्यर्थे जातेऽपि पुनस्तदनुवर्तनमनर्थायैवेति तद्योजनार्थं वेत्यर्थ. । स्वारब्धायामिति । सुष्ठुदेशकालाद्यौचित्येन आरब्धार्थायामपि यात्रायां तद्विघटनार्थं वेत्यर्थः । मूल इत्यादि । मूलं स्थानीयं यात्रा यातव्याभिधानं तयोः प्रहर्तुं वा । यातव्येत्यादि । प्रथममल्पं लाभमादाय पुनर्यातव्येन सन्धिं कुर्यात् । बहु त्वां याचितुं लेभे(वे)त्यर्थम् (?) । प्रत्युत्पन्नार्थकृच्छ्र इति सहसैवापतितार्थक्षयः । तस्मिन्नविश्वस्तो वेति तस्मिन्पण्यमाने विश्वासाभावात् बहुतरं दास्यामीत्युक्त्वा तदप्रदानस्य शङ्कितत्वादिति । एवमेतेषु-कारणेषु सत्सु तदा······ल्पमासत्यां+प्रभूताञ्चेच्छेदिति प्रथमः ।

श्रीमूला

आयत्यामल्पलाभपणनरूपमन्यं पक्षमाह—मित्रोपकारममित्रोपघातमित्यादि । स्वमित्रस्योपकारं स्वामित्रस्यापकारं च फलान्तरानुबद्धं पश्यन् तदात्वोपस्थितं महान्तमपि लाभं परित्यज्य आयत्याम् अल्पम् लाभम् इच्छेत् । तथा पूर्वोपकारकं

**कारयितुकामो भूयः, तदात्वे महान्तं लाभमुत्सृज्य आयत्यामल्पमिच्छेत् ।**

**(३) दूष्यामित्राभ्यां मूलहरेण वा ज्यायसा विगृहीतं त्रातुकामः, तथाविधमुपकारं कारयितुकामः, सम्बन्धापेक्षी वा, तदात्वे च आयत्यां च लाभं न प्रतिगृह्णीयात् ।**

**(४) कृतसन्धिरतिक्रमितुकामः परस्य प्रकृतिकर्शनं मित्रामित्रसन्धिविश्लेषणं वा कर्तुकामः, पराभियोगाच्छङ्कमानो लाभमप्राप्तमधिकं वा**

---

श्रीमूला

भूयः कारयितुकामो वा—अर्थात् पणमानेन पूर्वं कृतमुपकारं तेनैव भूयः कारयितुमिच्छुर्वा—तदात्वोपस्थितं महान्तं लाभं परित्यज्यायत्यामल्पमिच्छेत् ।

आयत्यां तदात्वे वा लाभः सामवायिकेन न प्रतिगृह्यत इत्यपरः पक्षः । तमाह—दूष्यामित्राभ्यामिति । दूष्यो राजार्थविग्रहचारी पुरमुख्यादिः अमित्रः शत्रुः ताभ्यां, मूलहरेण उच्छेदकारिणा ज्यायसा वा, विगृहीतम्, अर्थाद् बन्ध्वादिं, त्रातुकामः स्वयं रक्षितुमिच्छन्, तथाविधमुपकारं कारयितुकामः अन्येन वा स्वीयेन रक्षयितुकामः, सम्बन्धापेक्षी वा यातव्येन सह विवाहसम्बन्धमपेक्षमाणो वा, तदात्वे चायत्यां च, लाभं न प्रतिगृह्णीयात् स्वल्पमपि ।

अथ अप्राप्तस्यार्थस्य वाधिकस्यार्थस्य वा सद्योदानप्रार्थनमित्येवमात्मकं चतुर्थं पक्षमाह—कृतसन्धिरतिक्रमितुकाम इति । पूर्वकृतमेव सन्धिं पश्चाल्लङ्घयितुकामः, अप्राप्तं लाभं पणितमप्रविष्टं लाभम्, अधिकं लाभं वा पणितादधिकं लाभं वा, याचेत 'तदात्वे देहो'ति प्रार्थयेत । तथा याचितस्य हि पणमानस्य दानासामर्थ्यात् सन्धिः शैथिल्यं प्राप्स्यतीति । परस्य पणमानस्य, प्रकृतिकर्शनं प्रकृतीनां वृत्तिकृच्छ्रं, कर्तुकामो वा, तथा याचेत । मित्रामित्रसन्धिविश्लेषणं कर्तुकामो वा मित्रामित्रयोरल्पलाभपणनेन पूर्वं कृतात् सन्धेर्विश्लेषणमपसरणम् उत्पादयितुमिच्छुर्वा, तथा याचेत ।

नयचन्द्रिका

आशाभ्या(आयत्याम)पकारापेक्षणारूपं द्वितीयमाह—मित्रेत्यादिना । स्वमित्रस्योपकारं स्वशत्रोः पीड़नमपि कालान्तरानुबन्धमवश्यं तदाप्रभूतमपि लाभमुपेक्ष्यायत्यामविकल्पमपि लाभमिच्छेदित्यर्थः पूर्वं कृतमुपकारं तेनैव भूयःकारयितुकामो वेति । अस्मासु तदा' 'किञ्चिदप्यनपेक्ष्यायत्यामल्पञ्चेच्छेत् । प्राग्वदुपकरिष्यतीति मत्वा वेति ।

एवमप्रतिग्रहपक्षमाह—दूष्येत्यादि । राजा तमेव गृह्यचरमुख्यो दूष्यः । अमित्रः शत्रुः, मूलहरोच्छेदकारी । दूष्यामित्राभ्यां वा मूलहरेण ज्यायसा वा विगृहीतं बन्धुः स्वयमेव वा त्रातुं वा मित्रादिना रक्षयितुं वेच्छत्येतत्संबधापेक्षि वा न किञ्चिदपि नेच्छेदित्यर्थः ।

**याचेत । तमितरस्तदात्वे च आयत्यां च क्रममवेक्षेत । तेन पूर्वे व्याख्याताः ।**

[ अनुग्राह्यमित्रविशेषाः, अनुग्राह्याः मित्रभेदाः पञ्च तैर्लभ्या अंशाश्च ]

**अरिविजिगीष्वोस्तु स्वं स्वं मित्रमनुगृह्णतोः शक्यकल्यभव्यारम्भिस्थिरकर्मानुरक्तप्रकृतिभ्यो विशेषः । शक्यारम्भी विषह्यं कर्मारभेत । कल्यारम्भी निर्दोषम् । भव्यारम्भी कल्याणोदयम् । स्थिरकर्मा नासमाप्य**

---

### श्रीमूला

'मयेव हि ताभ्यामपि याचितस्य दानासामर्थ्यात् सन्धिः शिथिलो भविष्यती'ति । पराभियोगात् शङ्कमानो लाभमप्राप्तमधिकं वा याचेत "पर आत्मानमभियुञ्जीते"ति शङ्कया वा तथा याचेत । याचिते हि परेण दत्ते स आत्मानं नाभियोक्तुं शक्नुयादिति । याचितस्य कर्तव्यमाह—तमितर इति । इतरो याचितः, तदात्वे च आयत्यां च, तं क्रमं याचमानोक्तं प्रकारम्, अवेक्षेत अनुष्ठेयो न वेति पर्यालोच्य निर्णयेत् । तेन पूर्वे व्याख्याता इति । एतत्पक्षे क्रमावेक्षणकथनेन पूर्वोक्तेष्वपि त्रिषु पक्षेषु क्रमावेक्षणमुक्तप्रायमित्यर्थः । इत्थं यातव्य वृत्तिर्निरूपिता ।

अनुग्राह्यमित्रविशेषा इति सूत्रम् । अनुग्राह्याणां साहाय्यदानोपकार्याणां मित्राणां भूम्येकान्तराणां विशेषा अभिधीयन्त इति सूत्रार्थः । भूम्यनन्तरास्तावत् सामन्ताः शत्रव इति तेषु सन्ध्यादय उक्ताः, भूम्येकान्तरेषु तु मित्रभूतत्वादनुग्राह्यत्वमेव प्राप्तमिति तदिदानीं निरूप्यते ।

के ते अनुग्राह्या मित्रविशेषाः, किं च तेभ्यः प्रार्थनीयं फलमित्याकाङ्क्षायामाह—अरिविजिगीष्वोरिति । तयोः, स्वं स्वं मित्रं स्वस्वभूम्येकान्तरं राजानम्, अनुगृह्णतोः साहाय्यदानेनोपकुर्वतोः, शक्यकल्यभव्यारम्भिस्थिरकर्मानुरक्तप्रकृतिभ्यो

### नयचन्द्रिका

प्रभूतयाञ्चापेक्षं चतुर्थमाह—कृतसन्धिरित्यादिना । प्रागेव कृतसन्धिस्तदतिक्रमार्थी वा । मम प्रभूतदानार्थं परस्वप्रकृतिं कामयेदिति परप्रतिकर्शनार्थी वा । [अनेन लब्ध्वर्थदानेन कृतसन्धिं प्रभूतार्थकृतमुत्संबन्धि(सन्धि)दृष्ट्वाऽमित्रः शिथिलीभ्रयिष्यत इति संविशेषयितुं वा । परो मामभियोक्ष्यते मम प्रभूतार्थता नैतदशक्यकरणस्याद्यानेन सन्धिरेव न स्यादित्यभिसन्धाय वा । लाभप्राप्तं दानेनाधिकमिति] प्रभूतं वार्थमिच्छेदिति चतुर्थः पक्षः ।

एवं प्रभूतयाञ्चाकरणे द्वितीयं कुर्यादित्यत्राह—तमितर इति । इतरः याच्यमानः । तं क्रमं प्रकारमपेक्षेत निरूपयेत् । अस्य प्रभूतप्रार्थनाकारणादिदम् । अत्र दानमादानं वा युक्तमिति विचार्य तत्कुर्यादित्यर्थः ।

**कर्मोपरमते। अनुरक्तप्रकृतिः ससहायत्वादल्पेनाप्यनुग्रहेण कार्यं साधयति। त एते कृतार्थाः सुखेन प्रभूतं चोपकुर्वन्ति। अतः प्रतिलोमे नानुग्राह्याः।**

———————

### श्रीमूला

विशेषः बहूनां मित्राणां मध्ये शक्यारम्भी कल्यारम्भी भव्यारम्भी स्थिरकर्मा अनुरक्तप्रकृतिरित्येतेभ्य एव मित्रेभ्य उपकृतेभ्यो विशेषलाभो भवति, अतश्च शक्यारम्भिप्रभृतय एवानुग्राह्या इति भावः। तान् व्याचष्टे—शक्यारम्भीति। सः, विषह्यं शक्यनिर्वहणं, **कर्म आरभेत।** कल्यारम्भी, निर्दोषं कर्मारभेत। भव्यारम्भी, कल्याणोदयं कल्याणफलं, कर्मारभेत। स्थिरकर्मा, कर्म प्रारब्धम्, असमाप्य, नोपरमते न विरमति। अनुरक्तप्रकृतिः. सुसहायत्वात्, अयत्नसुलभसहायत्वाद्, अल्पेनापि अनुग्रहेण सैन्यदानेन, कार्यं साधयति। त एते इति। एते शक्यारम्भिप्रभृतयः, कृतार्थाः अनुग्रहसाधितकार्याः सन्तः, सुखेन अनायासेन, प्रभूतं च बहुगुणं च, उपकुर्वन्ति। अतः प्रतिलोम इति। एभ्यः शक्यारम्भादिभ्यः प्रातिलोम्ये सति, नानुग्राह्याः उपकार्या न भवन्ति, अर्थादशक्यारम्भिप्रभृतयः।

### नयचन्द्रिका

याच्यमानस्य चतुर्थपक्षोक्तं प्रकारं पूर्वेषु त्रिष्वप्यतिदिशति तेनेति। तेनाप्राप्ताधिकयोर्याच्ञायां याच्यमानो यथा तत्कारणं विचार्य दानमदानं वा करोति तदाल्पप्रभूतयोः प्रार्थने अल्पमात्रस्य प्रार्थने च त्रिष्वपि पक्षेषु याच्यमाना अन्ये च तद्याञ्चायाञ्चयोः कारणानि विचार्य तदप्यदानं दानं वा कुर्यादित्यर्थः।

एवं द्वैधीभाविकसन्धिषु समहीनाधिकलाभनिमित्तस्समाधि सन्धिभेद इत्युक्तम्। लाभाश्च मित्रहिरण्यभूमय एव। तत्र हिरण्यभूम्योः सुज्ञानत्वात् पश्चाद्वक्ष्यमाणत्वाच्च, मित्रत्वस्य गुणसम्पद् व्यवस्थाप्यत्वात् तद्व्यवस्थापनार्थं सूत्रम्—अनुग्राह्यमित्रविशेषा इति।

अथवा भूम्यनन्तराः सामन्ता इति तेषु सन्ध्यादय उक्ताः। भूम्येकान्तरं मित्रमित्री?मित्रमित्रंचोक्तम्। तत्र सन्ध्याद्यननुपेक्षणात्नुग्राह्यत्वमेव वाच्य (सन्ध्याधनपेक्षणात्) मिति बुध्या कानि मित्राण्यनुग्राह्याणि कानि नेति विचारार्थं सूत्रम्—अनुग्राह्यमित्रविशेषा इतीति। अनुग्राह्याणां तत्सहकार्येषु साहाय्यदानेन उपकार्याणां मित्राणां भूम्येकान्तराणां विशेषा उच्यन्त इत्यर्थः।

तद्विशेषानेवाह—अरिविजिगीष्वो वारित्यादिना। स्वं(ष्वो)स्वमिति—अरिविजिगीष्वो र्वाएकमित्रस्येतरशत्रुत्वेन भिन्नत्वादिति भावः। शक्येत्यादिरशक्यारम्भी कल्यारम्भी भव्यारम्भी स्थिरकर्मानुरक्तप्रकृतिः, एभ्यः पञ्चभ्योऽनुग्राह्यत्वे विशेषः स्यादित्यर्थः।

स्वयमेवैषां अर्थं विवृण्वन् भेदमनुवदति—शक्यारम्भीत्यादिना। विषह्यमिति

**तयोरेकपुरुषानुग्रहे यो मित्रं मित्रतरं वानुगृह्णाति सोऽतिसन्धत्ते। मित्रादात्मवृद्धिं हि प्राप्नोति। क्षयव्ययप्रवासपरोपकारान् इतरः। कृतार्थश्च शत्रुर्वैगुण्यमेति।**

---

नयचन्द्रिका

शक्यनिर्माणम्। कल्यारम्भी दोषरहितं। कर्मारभत इति। स्थिरकर्मा प्रारब्धं समापयति। अल्पेनाप्यनुग्रहेणेति। साहाय्यार्थमल्पसैन्यदानेनेत्यर्थः।

एते कृतार्था इति। अनुगृहीततया कृतकार्याः। सुखेनेति। अक्लेशेन। प्रभूतञ्चेति। बहुफलञ्चेत्यर्थः। अतः प्रतिलोमा इति। एभ्यो विपरीताः अशक्यारम्भिप्रभृतयः।

श्रीमूला

तयोरिति। शत्रोर्वा विजिगीषोर्वा, एकपुरुषानुग्रहे मित्रामित्रयोरेकस्य पुरुषस्य मित्रयोर्वैकस्य पुरुषस्यानुग्रहे कर्तव्यतया प्रसक्ते, यः, मित्रं मित्रतरं वा अनुगृह्णाति अमित्रं परिहृत्य मित्रसम्पद्युक्तमुपकरोति मित्रमुपेक्ष्य अतिशयितमित्रसम्पद्युक्तं वोपकरोति, सः मित्रानुग्राही मित्रतरानुग्राही च, अतिसन्धत्ते विशेषलाभं भजते। विशेषलाभश्च मित्रादात्मवृद्धिप्राप्तिलक्षण इत्याह—मित्रादात्मवृद्धिं हि प्राप्नोतीति। मित्रभूतो हि पुरुषः स्वभावादेव स्वसुहृदो वृद्ध्यर्थं यतेत, किमुत तेनानुगृहीत इत्यभिप्रायः। अमित्रानुग्राही मित्रसामान्यानुग्राही च नैवमित्याह—क्षयव्ययप्रवासपरोपकारानितर इति। क्षयव्ययप्रवासाः युग्यपुरुषापचयधनहानिदीर्घाध्वगमनानि शत्रूपकारार्थानि परोपकारः स्वस्मिन् प्रत्युपकर्तव्ये शत्रुणा परस्योपकारकरणम् इत्येतान्, इतरः प्राप्नोति। कथं पुनः शत्रुरुपकृतः स्वस्मिन् प्रत्युपकर्तव्ये परस्योपकारं कुर्यात्, तत्राह— कृतार्थश्च शत्रुर्वैगुण्यमेतीति। शत्रुः स्वकार्ये साधनीये गुणवत्तामात्मनो दर्शयति, सिद्धे तु तस्मिन् शत्रुस्वाभाव्याद् विकुरुत इत्यर्थः।

नयचन्द्रिका

एवमभिन्नयोः स्वस्वमित्रयोरनुग्रहे विशेषलाभमुक्त्वा यदैकमेव पुरुषमुभावप्यनुगृह्णीतः। तत्रापि विशेषलाभमाह—तयोरिति। विजिगीषोर्वा एतस्य पुरुषस्यानुग्रहे कार्ये यो मित्रं मित्रतरं वानुगृहणाति सोऽतिसन्धत्ते विशेषं लभत इत्यर्थः। मित्रतरमिति, अतिशयेनमित्रसंपद्युक्तमित्यर्थः। उभाभ्यामप्येकमित्रानुग्रहे अतिशयेन मित्रभूतमनुगृह्णन् विशेषं लभत इत्यर्थः। विपरीत इति। अमित्रानुग्राही मित्रमात्रानुग्राही वेत्यर्थः।

अत्र हेतुमाह—मित्रादिति। अनुगृहीतादिति शेषः। इतर इति। अमित्रः। तत्साहाय्यकरणे क्षयादयोऽन्ततः प्रकारश्च फलंस्युरित्यर्थः।

शत्रुरप्युपकृतो मित्रमेव स्यादित्यत्राह—कृतार्थं इति। कृतकार्यदशायां शत्रुर्वैगुण्यं अपकारकत्वमेव भजत इत्यर्थः।

[ मध्यमोदासीनयोरनुग्रहफलानि ]

**मध्यमं त्वनुगृह्णतोर्यो मध्यमं मित्रं मित्रतरं वाऽनुगृह्णाति सोऽतिसन्धत्ते। मित्रादात्मवृद्धिं हि प्राप्नोति, क्षयव्ययप्रवासपरोपकारानितरः। मध्यमश्चेदनुगृहीतो विगुणः स्यादमित्रोऽतिसन्धत्ते। कृतप्रयासं हि मध्यमामित्रमपसृतमेकार्थोपगतं प्राप्नोति।**

**तेनोदासीनानुग्रहो व्याख्यातः।**

---

श्रीमूला

मध्यमविषयमनुग्रहमाह—मध्यमं त्वित्यादि। गतार्थम्। मध्यमोऽरिविजिगीषुभ्यामुपकृतो यदि विरुद्धवृत्तिर्भवेत्, तर्हि तस्यामित्रो विशेषलाभं प्राप्नोतीत्याह—मध्यमश्चेदनुगृहीत इत्यादि। लाभस्वरूपमाह—कृतप्रयासं हीत्यादि। मध्यमेन सह प्रयासं कृत्वा पूर्वं तन्मित्रभावे स्थितं सम्प्रति तद्वैगुण्यात् तदमित्रत्वं प्रतिपद्य तस्माच्चापसृत्यात्मना सहैकार्थतां गतं मित्रविशेषं हि मध्यमामित्रः प्राप्नोतीत्येष तस्य विशेषलाभ इत्याभिप्रायः।

मध्यमानुग्रहोक्तरीत्या—उदासीनानुग्रहेऽपि मित्राद्यनुग्रहीतुर्मित्रसकाशाद् वृद्धिविशेषलाभः उदासीनवैगुण्ये तदमित्रस्य मित्रविशेषलाभश्च भवतीत्यर्थकमतिदेशमाह—तेनेत्यादि।

नयचन्द्रिका

एवं मित्रामित्रयोरनुग्रहमुक्त्वा मध्यमेऽप्याह—मध्यमं त्विति। मित्रं मित्रतरं वेत्यादि पूर्ववद् व्याख्येयम्।

मध्यमानुग्रहे विशेषमाह—मध्यममन्वेति। उभाभ्यामप्यनुगृहीतो मध्यमो यदि विगुणो विरुद्धः स्यात् तदा तस्यामित्रभूतोऽयं स तन्मित्रभूतमितरमतिसन्धत्ते।

तत्र हेतुमाह—कृतप्रयासं हीति। मध्यमेन सह क्लेशेन कृतमैत्रं तस्य यन्मित्रं तदिदानीम् अमित्र एव, अरिमित्रन्यायेन तुल्ययोगक्षेमं लभत इत्यर्थः। पूर्वं ह्येको मध्यमस्यामित्रम्। इदानीं तूभावपि तस्यामित्रौ। एवं चारिविजिगीष्वोरेको मध्यमामित्रात् प्रच्युतमन्यतस्तु अन्यतरं मित्रमेकार्थतया लब्धवानिति मित्रलाभालाभाभ्याम् उभयोरन्यतरस्य विशेषलाभ इति हृदयम्।

मध्यमेऽनुग्रहमुक्तमुदासीनेप्यतिदिशति तेनेति। उदासीनानुग्रहेऽपि मित्रामित्रकरानुग्राहकोऽतिसन्धत्ते। तद्वैगुण्ये चामित्रोऽतिसन्धत्त इत्यतिदेशार्थः।

[ मध्यमोदासीनयोरसहायत्वेन मूलबलस्याप्रेषणीयता, तदपवादश्च ]

**मध्यमोदासीनयोर्बलांशदाने यश्शूरं कृतास्त्रं दुःखसहमनुरक्तं वा दण्डं ददाति, सोऽतिसन्धीयते; विपरीतोऽतिसन्धत्ते ।**

[ शङ्कनीयवृत्तयोर्मध्यमोदासीनयोर्विषये व्यवस्था ]

**यत्र तु दण्डः प्रतिहतस्तं वा चार्थमन्यांश्च साधयति । तत्र मौलभृतश्रेणीमित्राटवीबलानामन्यतममुपलब्धदेशकालं दण्डं दद्यात् । अमित्राटवीबलं वा व्यवहितदेशकालम् ।**

---

श्रीमूला

मध्यमोदासीनयोर्बलांशदानेनानुग्रहे कर्तव्यतया प्रसक्ते शूरत्वशिक्षितास्त्रत्वजितश्रमत्वानुरक्तत्वविशिष्टम् आत्मनो मूलबलं यो ददाति सोऽयुक्तकारित्वाद् वञ्च्यते, तद्विपरीतस्तु दूष्यादिबलदायी युक्तकारो भवतीत्याह—मध्यमोदासीनयोर्बलांशदान इत्यादि ।

क्वचिन्मूलबलस्यापि प्रेषणमाह—यत्र त्विति । यस्मिंस्त्वर्थे, दण्डः प्रतिहतः अन्यद् बलं कुण्ठितं जातं, तं वा चार्थं यातव्यरूपम्, अन्यांश्च जनपदावस्कन्दकमार्गप्रतिरोधकादींश्च, साधयति साधयितुं प्रवृत्तश्चेदित्यर्थः, तत्र, मौलभृतश्रेणीमित्राटवीबलानां मौलादीनां पञ्चानां बलानाम्, अन्यतमं दण्डं सैन्यम्, उपलब्धदेशकालं दद्यात् समुचितं देशं कालं चोपलभ्य प्रेषयेत् । अमित्राटवीबलं वा व्यवहितदेशकालमिति । विप्रकृष्टे देशे काले च यदि बलं दद्यात्, तर्हि अमित्राटविकबलमेव दद्यात् न त्वन्यन्मौलादिकमित्यर्थः ।

नयचन्द्रिका

तयोर्दण्डानुग्रहे विशेषान्तरमाह—मध्यमेत्यादिना । मित्रानुग्रहे शौर्यादिमद्बलमपि देयमित्यभिप्रायेण मध्यमोदासीनग्रहणम् । सोतिसन्धीयत इति । आत्मवद्रक्षणीयस्य बलस्य बहिः प्रेक्षणमयुक्तमित्याशयः । ( बलादेशान ) बलांगदान इति साफल्यदानमयुक्तमित्याशयः । विपरीतमिति दूष्यादिप्रदम् ।

शूरादिबलं क्वचिदपि न प्रदेयमेव नेत्याह—यत्र त्विति । तद्वदर्थं यातव्यौ जनमन्यांश्च जनपदलुण्टकाटविकमार्गप्रतिरोधकादीनपि साधयति, तत्रान्तरं मौलादिबलानामन्यतमं न तु सकलम् । उपलब्धदेशकालमिति । यात्रारण्यादिदेशे शिशिरवर्षादिकाले वा योद्धव्यम् । तत्र प्रागपि परिचयवन्तमित्यर्थः ।

तत्रापवादमाह—अमित्राटवीति । अटवि—आटविकाः तद्बलम् । व्यवहितदेशकालमिति—व्यवहितौ निष्प्रकृष्टौ दूरदीर्घौ आयोधनदेशकालौ यस्य तत् तथा । दूरदेशचिरकालसाध्यायोधनमित्राटविकबलमेव दद्यादित्यर्थः ।

**यं तु मन्येत—'कृतार्थो मे दण्डं गृह्णीयात्, अमित्राटव्यभूम्यनृतुषु वा वासयेत्, अफलं वा कुर्यात्' इति। दण्डव्यासङ्गापदेशेन नैनमनुगृह्णीयात्। एवमवश्यं त्वनुग्रहीतव्ये तत्कालसहमस्मै दण्डं दद्यात्। आ समाप्तेश्चैनं वासयेद्योधयेच्च, बलव्यसनेभ्यश्च रक्षेत्। कृतार्थाच्च सापदेशमवस्रावयेत्। दूष्यामित्राटवीदण्डं वाऽस्मै दद्यात्। यातव्येन वा सन्धायैनमतिसन्दध्यात्।**

---

### श्रीमूला

यं तु मन्येतेत्यादि। यं तु मध्यममुदासीनं वा शङ्केत—'एष मदीयस्य दण्डस्य साहाय्येन स्वार्थं साधयित्वा तमात्मसात् करिष्यति, अथवा अमित्रान्तिके आटविकान्तिके अभूमिषु वासायोग्येषु प्रदेशेषु अनृतुषु युद्धानर्हेषु वर्षादिकालेषु च दण्डम् वासयिष्यति, अथवा दण्डं शत्रुजयलभ्यफलाभाजनं करिष्यति' इति, एनं, दण्डव्यासङ्गापदेशेन नानुगृह्णीयात् 'दण्डो मे कार्यान्तरे व्यासक्त' इति व्याजमुल्लिखन् दण्डं तस्मै न दद्यादित्यर्थः। एवमवश्यं त्वनुग्रहीतव्ये इति। दण्डदानेनावश्यमनुग्रहे कर्तव्ये तु, तत्कालसहं तत्कालक्षमं, दण्डम्, अस्मै अनुग्राह्याय, दद्यात्। आ समाप्तेश्च आ कार्यसमाप्तेः, एनं दण्डं, वासयेद् योधयेच्च योग्यभूमौ वासयन् युद्धं कारयेत्, बलव्यसनेभ्यश्च शस्त्रक्षयादिभ्यश्च, रक्षेत्। कृतार्थाच्च दण्डकृतप्रयोजनाच्च मध्यमादुदासीनाद् वा, सापदेशं कमपि व्याजमुल्लिख्य, अवस्रावयेत् अपवाहयेत् तदपहारादिदोषपरिहारार्थम्। दण्डपालनक्लेशभीरुत्वे त्वाह—दूष्यामित्राटवीदण्डं वास्मै दद्यादिति। तद्धि स्वविनाश्यमन्येन नाशितं भवत्वित्यभिसन्धिनेत्यार्थम्। अनुग्राह्यस्य दुर्बुद्धित्वशङ्कायां प्रकारान्तरानुष्ठानमाह—यातव्येन वेति। तेन अनुग्राह्यसम्बन्धिना सह, सन्धाय, एनं, यातव्यम्, अतिसन्दध्यात् एतत्सकाशाद् अनुग्राह्यसकाशलभ्याभ्यधिकं लाभं प्राप्नुयादित्यर्थः।

### नयचन्द्रिका

मध्यमोदासीनयोर्यः (यत्) कनीयः हृदयं तदर्थं (र्थं) दण्डं न प्रेषयेदित्यर्थ(मा)ह—यन्तु मन्येतेत्यादिना। एवं कुर्यादिति। यन्तु मन्येत एतन्नानुगृह्णीयादिति वाक्यार्थः। कृतार्थ इति मद्दण्डेन। शत्रून्निगृह्य पुनरेनमपि निगृहणीयादिति वा। अपायबहुलां (लं) र(लारा)तिमित्राटविकभूमिषु अनु वायु् ''युद्धायोग्येषु प्रावृड़ादिकालेषु च दण्डं वासयेद्वा। शत्रुभङ्गप्राप्तफलभाविनं कुर्यादित्यर्थः। इत्येवं यं मन्येत तं दण्डेन अनुगृह्णीयादित्यर्थः। व्यासङ्गोपदेशेनेति। प्रागेवान्यत्र व्यासक्तं तदवसाने प्रेषयिष्यामीति व्याजोक्त्येत्यर्थः।

अनुग्रहवश्यकार्यत्वे(ते)त्याह—अवश्यं त्वित्यादि। तत्कालसहमिति—यस्तदानीमाकुर्वंतत्रे ( त्र ) तदायोधनक्षममित्यर्थः।

[ सामान्यतस्सन्धिविग्रहयोर्निमित्तानि ]

**समे हि लाभे सन्धिस्स्यात् विषमे विक्रमो मतः ।**
**समहीनविशिष्टानामित्युक्ताः सन्धिविक्रमाः ॥**

इति षाड्गुण्ये यातव्यवृत्तिरनुग्राह्यमित्रविशेषाश्च,
अष्टमोऽध्यायः, आदितः षट्छततमः ।

---

नयचन्द्रिका

एनमिति—दण्डं वासयेदित्यर्थः । कार्यभूमाविति शेषः । योधयेच्चेति । युद्धमपि कारयेच्चेत्यर्थः । बलव्यसनेभ्यश्चेति । क्षीणास्त्रत्वमपि सन्नाहादिभ्यः ।

कृतार्थञ्चेति । कृतकार्यञ्च दण्ड······व सन्निधानादिव्याजेनापवाहयेदित्यर्थः ।

एवं रक्षणीयं दण्डदाने विधिमुक्त्वा स्वविनाश्य एव दण्डो वा पा(प्र)देय इत्याह— दूष्येत्यादि ।

पक्षान्तरमाह—यातव्येनेति । अनुग्राह्यस्य यो यातव्यः तेन सहितः तमतिसन्दध्यात् तद्देयादधिकं लाभं गृह्णीयादित्यर्थः ।

श्रीमूला

इत्थं सन्धिविग्रहगतान् लाभपणनादिविशेषानभिधाय सामान्यतः सन्धिविग्रहयोर्निमित्तं श्लोकेन कीर्तयन्नध्यायमुपसंहरति—समे हि लाभे सन्धिः स्यादित्यादि । सुगमम् ।

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे
अष्टमोऽध्यायः, यातव्यवृत्तिरनुग्राह्यमित्रविशेषाश्च,
आदितः षट्छततमः ॥

नयचन्द्रिका

एवं सामवायिकानां लाभपणने तत्र सन्धिकरणे प्रभूता प्रार्थना । प्रार्थनातः दानादीनि दण्डदानप्रकारांश्चोक्त्वा सामान्यतः सन्धिविक्रमयोर्निदानं वा······ साम्यवैषम्ये इत्याह—समे हीत्यादिना । दण्डादितः समे लाभे मित्रभूम्यादौ सति समहीनज्यायसां समवायिनां सन्धिः स्यात् । तस्मिंस्तु विषमे क्रमः स्यादिति । द्वैधीभाविकाः सन्धिविक्रमाः अशेषेण सामान्यत उक्ता इत्यर्थः ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां
कौटिलीयटीकायां नयचन्द्रिकायां षाड्गुण्ये
सप्तमेऽधिकरणे अष्टमोऽध्यायः ।

# षोडशशततमं प्रकरणम्

## नवमोऽध्यायः

## मित्रहिरण्यभूमिकर्मसन्धयः

### तत्र मित्रहिरण्यसन्धौ

[ मित्रादिलाभेषु तरतमभावनिरूपणम् ]

**संहितप्रयाणे मित्रहिरण्यभूमिलाभानामुत्तरोत्तरो लाभः श्रेयान् ।**

———— ————

श्रीमूला

मित्रहिरण्यभूमिकर्मसन्धय इति सूत्रम् । मित्रं नित्यवश्यादिषट्प्रकारं हिरण्यं स्वर्णरजतादि भूमिर्नित्यामित्रादिर्भूमिसन्ध्यध्याये वक्ष्यमाणा, कर्म दुर्गादि एषां लाभैः क्रियमाणाः सन्धयः कथ्यन्त इति सूत्रार्थः । श्रेष्ठाश्रेष्ठलाभैः पणनमुक्तम् । श्रैष्ठ्याश्रैष्ठ्ये तु अनिरूपिते इह निरूप्येते ।

इदं च प्रकरणं नवमादिभिश्चतुर्भिरध्यायैर्वितन्यते । तत्र नवमेऽस्मिन्नध्याये मित्रसन्धिर्हिरण्यसन्धिश्च निरूप्येते ।

संहितप्रयाण इति । तस्मिन् विषये, मित्रहिरण्यभूमिलाभानाम् उत्तरोत्तरो लाभः श्रेयान् मित्रलाभापेक्षया हिरण्यलाभः प्रशस्ततरः, हिरण्यलाभापेक्षया भूमिलाभः प्रशस्ततरः ।

नयचन्द्रिका

यातव्यवृत्तिरनुग्राह्यमित्रविशेषाः । उत्तमादिलाभानां प्रार्थनप्रदानयोः कारणादिचिन्तां कृत्वा लाभानामेव उत्तमादित्वनिश्चयो न कृत इति तदर्थं सूत्रम्— मित्रहिरण्यभूमिकर्मसन्धय इति । तत्र मित्रं नित्यत्ववश्यत्वादिषड्गुणयुक्तमित्यग्रे वक्ष्यते । हिरण्यं हेमादिभूमिर्नित्यामित्रादिका । कर्म दुर्गादिकम् । एभिः सन्धयः पणबन्धाः वक्ष्यन्त इत्यर्थः ।

लाभानामुत्तमादिभावमाह—संहितप्रयाण इत्यादिना । मित्रादीनां प्रतिलोमक्रमेण श्रैष्ठ्यमित्यर्थः । इतरस्य तत्साध्यत्वं श्रेष्ठमित्याशयेनाह—मित्रहिरण्यभूमीति ।

**मित्रहिरण्ये हि भूमिलाभाद्भवतः, मित्रं हिरण्यलाभात् । यो वा लाभः सिद्धः शेषयोरन्यतरं साधयति ।**

[ समविषमसन्धी, समसन्धौ विशेषश्च ]

**'त्वं चाहं च मित्रं लभावहे' इत्येवमादिः समसन्धिः । 'त्वं मित्रम्' इत्येवमादिर्विषमसन्धिः । तयोर्विशेषलाभादतिसन्धिः ।**

**समसन्धौ तु यस्सम्पन्नं मित्रं मित्रकृच्छ्रे वा मित्रमवाप्नोति सोऽतिसन्धत्ते ।**

**आपद्धि सौहृदस्थैर्यमुत्पादयति ।**

---

श्रीमूला

कुत इत्याह—मित्रहिरण्ये हीत्यादि । भूमिलाभे हि सिद्धे तदुत्पन्नकृष्यादिफलसम्पदा साधनेन मित्रं हिरण्यं च साधयितुं शक्यते हिरण्यलाभेन च मित्रलाभः साधयितुं शक्यते इति भूमिलाभो हिरण्यलाभश्च स्वेतरसाधको यस्मात् तस्मादित्यर्थः । लाभश्रेष्ठत्वं च शेषान्यतरसाधकत्वरूपमित्याह—यो वेत्यादि । स श्रेष्ठ इति वाक्यशेषः ।

मित्रादिलाभनिबन्धनान् समविषमान् सन्धीनाह—त्वं चाहं चेत्यादि । 'त्वं चाहं च मित्रं लभावहे' 'त्वं चाहं च हिरण्यं लभावहे' 'त्वं चाहं च भूमिं लभावहे' इत्येवं पणनेन क्रियमाणः सन्धिः समसन्धिः । त्वं मित्रमित्येवमादिरिति । 'त्वं मित्रं लभसे अहं भूमिं, त्वं हिरण्यमहं भूमिं, त्वं हिरण्यमहं मित्रम्' इत्येवम्प्रकारो, विषमसन्धिः । तयोरिति । समसन्धिविषमसन्ध्योः, विशेषलाभात् । अतिसन्धिः भवति ।

समसन्धौ विशेषलाभमाह—समसन्धौ त्विति । तस्मिन्, यः सम्पन्नं वक्ष्यमाणनित्यत्ववश्यत्वादिगुणयुक्तं, मित्रम् अवाप्नोति, अथवा मित्रकृच्छ्रे मित्रस्य मित्रसम्पद्युक्तस्य कृच्छ्रे आपद्दशायां, मित्रं तदेव, अवाप्नोति, सः, अतिसन्धत्ते अतिसन्धिनिमित्तं विशेषलाभं भजते । आपदपेक्षणस्य प्रयोजनमाह—आपद्धीत्यादि । सौहृदस्थैर्यं मैत्रीदार्ढ्यम् ।

नयचन्द्रिका

हिरण्यस्य मित्रैकसाधनत्वमित्याह—मित्रमिति । मित्रदेशकालावस्थादिभिर्नायमेकान्त इत्याशयवान् प्रयोजकमाह—यो वा लाभ इति ।

एवं लाभानामुत्तमादित्वं व्यवस्थाप्य तन्निमित्तात् ( न् ) समविषमातिसन्धिभेदानाह—त्वञ्चाहञ्चेत्यादिना । हिरण्यं लभावहे भूमिं लभावह इत्यादिरेवमेव शब्दार्थः ।

विषमेत्यादि । त्वं मित्रमहं भूमिः (मिम्) । त्वं हिरण्यमहं भूमिरि(मि)त्यादिः । तयोरिति । समविषम सन्ध्योर्द्वयोरप्यतिसन्धिः स्यादेव विशेषलाभादित्यर्थः ।

[ सम्भावितेषु बहुविधेषु मित्रेषु तरतम-
भावनिर्णयाः ]

**(१) मित्रकृच्छ्रेऽपि नित्यमवश्यम् अनित्यं वश्यं वा ? इति । 'नित्यमवश्यं श्रेयः; तद्ध्यनुपकुर्वदपि नापकरोति' इत्याचार्याः ।**

**'न' इति कौटल्यः । वश्यमनित्यं श्रेयः; यावदुपकरोति तावन्मित्रं भवति । उपकारलक्षणं मित्रमिति ।**

---

## नयचन्द्रिका

तत्र समसन्धावतिसन्धिमाह—समसन्धौ त्विति । सम्पन्नमिति । मित्रत्वादिषड्गुणयुक्तम् । मित्रकृच्छ्रे वेति । विपदवस्थापन्ने मित्र इत्यर्थः । मित्रस्य गुणवत्ता दौर्गत्यञ्च विशेषलाभोऽतिसन्धिनिमित्तमिति भावः ।

ननु मित्रकृच्छ्रं विशेषायेत्यत्राह—आपद्धीति । सा हि मिथः स्नेहं द्रढयतीत्यर्थः ।

## श्रीमूला

मित्रकृच्छ्रेऽपि विशेषनिर्धारणार्थं विप्रतिपत्तिमुपक्षिपति—मित्रकृच्छ्रेऽपि नित्यमवश्यमित्यादि । वक्ष्यमाणलक्षणावश्यत्वयुक्तं नित्यं मित्रं वा श्रेयः, आहोस्विद् अनित्यं वश्यं वा श्रेयः इति विचार्यत इत्यर्थः । तत्राचार्याणां निर्धारणमाह—नित्यमवश्यं श्रेय इत्यादि ।

आचार्यमतं प्रतिषेधन् स्वमतमाह—नेति कौटल्य इत्यादि । वश्यमनित्यं मित्रं श्रेयः । तत्र हेतुमाह—यावदुपकरोति तावन्मित्रमित्यादि । मित्रस्योपकारलक्षणत्वादुपकुर्वद्दशायामेव मित्रव्यपदेशो भवति नानुपकुर्वद्दशायां, वश्यं च सर्वचित्रमहाभोगत्वलक्षणत्वादुपकुर्वदेव भवतीत्यर्थः । तथा च नित्यवश्ययोर्मध्ये महाभोगत्वलक्षणं वश्यमनित्यं श्रेय इति कौटल्यमतमुक्तं भवति ।

## नयचन्द्रिका

कृच्छ्रेऽपि तुल्ये मित्रस्य विशेषान्तरं विमृशति—मित्रकृच्छ्रेऽपीत्यादि ।

अवधारयति—नित्यमवश्यमिति । नित्यत्वावश्यत्वञ्चाग्रे वक्ष्यत इत्याशयः ।

हेतुमाह—तद्धीति । अवश्यानुपकर्तृत्वे व्यभिचारित्वेनापकाराभावनिश्चयादिति भावः ।

स्वमतमाह—वश्यमनित्यमिति । वश्यत्वं हि सर्वचित्रमहाभोगत्वं, तेनानित्यत्वे व्यवहारदशायां मित्रमेवेत्यर्थः ।

**(२) वश्ययोरपि महाभोगमनित्यम् अल्पभोगं वा नित्यम् ? इति । 'महाभोगमनित्यं श्रेयः; महाभोगमनित्यमल्पकालेन महदुपकुर्वत् महान्ति व्ययस्थानानि प्रतिकरोति' इत्याचार्याः ।**

**'न' इति कौटल्यः । नित्यमल्पभोगं श्रेयः; महाभोगमनित्यमुपकार-भयादपक्रामति; उपकृत्य वा प्रत्यादातुमीहते । नित्यमल्पभोगं सातत्या-दल्पमुपकुर्वत् महता कालेन महदुपकरोति ।**

---

श्रीमूला

वश्ययोरेव नित्यत्वानित्यत्वयोगे श्रेयस्त्वं विचारयति—वश्योरपीत्यादि । महाभोगवश्याल्पभोगवश्ययोर्मध्ये किं महाभोगवश्यमनित्यं श्रेयः उताल्पभोगवश्यं नित्यं श्रेय इति चिन्तायाम् आचार्या वदन्ति—महाभोगवश्यमनित्यं श्रेयः, कुतः, तद्धि अल्पेन कालेन महान्तमुपकारं करोति, तेन च व्ययहेतवः प्रभूताः प्रतिकृता भवन्तीत्येतस्मात् कारणात् ।

आचार्यमतं निराकुर्वन् स्वमतमाह—नेति कौटल्य इत्यादि । अयमर्थः— अल्पभोगवश्यं नित्यं श्रेयः, कुतः, अनित्यमहाभोगसकाशसम्भावितदोषानास्पदत्वात् तत्सकाशसम्भावितगुणास्पदत्वाच्च । अनित्यं हि महाभोवश्यम् उपकारभीत्या हार्दा-भावनिमित्तया मित्रत्वात् प्रच्यवेत, उपकारं कृत्वा वापहर्तुं पश्चाद् यतेत । नित्यं त्वल्पभोगमव्यभिचारित्वेन मित्रभावान्न जातु प्रच्यवेत, अविच्छेदेन चाल्प उपकार-स्तेन क्रियमाणो महता कालेन महान् भविष्यतीति ।

नयचन्द्रिका

एवं नित्यत्ववश्यत्वयोर्वश्यत्वाख्यं महाभोगत्वमनित्यं श्रेय इति स्वमतमुक्तम् । वश्यत्वतारतम्यस्याऽनित्यत्वनित्यत्वाभ्यां योगे किं श्रेय इति विमृशति—वश्ययोरपी-त्यादिना ।

अत्राचार्यदेश (? देशीयो ऽ)वधारयति—महाभोगमनित्यं श्रेय इति । महाभोग-मिति वश्यमुच्यते महोपकारजननात् ।

ननु व्याहतमेतत् । वश्यमनित्यं श्रेय इति स्वमततया प्रागुक्तम् । आचार्यैश्चा-ऽन्यथोक्तस्त्वं प्रति (? क्तम्, सम्प्रति) स्वमतमाचार्यैरुक्तमित्युच्यते । वश्यत्वं हि महाभोगत्वमेवेष्टमिति चेत् । नैवम् । पूर्वं हि नित्यादवश्याद्वा स्वमनित्यं श्रेय इत्युक्तम् ।

**(३) गुरुसमुत्थं महन्मित्रं, लघुसमुत्थमल्पं वा ? इति । 'गुरुसमुत्थं महन्मित्रं प्रतापकरं भवति; यदा चोत्तिष्ठते, तदा कार्यं साधयति' इत्याचार्याः ।**

**'न' इति कौटल्यः । लघुसमुत्थमल्पं श्रेयः, लघुसमुत्थमल्पं मित्रं कार्यकालं नातिपातयति, दौर्बल्याच्च यथेष्टभोग्यं भवति, नेतरत् प्रकृष्टभौमम् ।**

**(४) विक्षिप्तसैन्यमवश्यसैन्यं वा ? इति । 'विक्षिप्तं सैन्यं शक्यं प्रतिसंहर्तुं वश्यत्वात्' इत्याचार्याः ।**

**'न' इति कौटल्यः । अवश्यसैन्यं श्रेयः, अवश्यं हि शक्यं सामादिभिर्वश्यं कर्तुं; नेतरत् कार्यव्यासक्तं प्रतिसंहर्तुम् ।**

---

नयचन्द्रिका

इदानीमत्रत्यान्महाभोगान्नित्यमल्पभोगमिति प्रतियोगिभेदादुभयोर्न्न व्याघातगन्धोऽपीति ग्राह्यम् ।

आचार्यमते दोषमाह—महाभोगमित्यादि । अपक्रामतीति । अपकारोऽवश्यकार्यं इति भयान्मैत्राच्च्यवत इत्यर्थः ।

श्रीमूला

गुरुसमुत्थमहामित्र-लघुसमुत्थाल्पमित्रयोः किं श्रेय इति विचारयति—गुर्वित्यादि । गुरुसमुत्थं देशविप्रकर्षादिना प्रयत्नोत्थाप्यसैन्यं, महत् प्रबलं, मित्रं वा, श्रेय इति वर्तते, लघुसमुत्थम् अयत्नोत्थाप्यसैन्यम्, अल्पं दुर्बलं मित्रं वा श्रेय इति विचार्यत इति शेषः । तत्राचार्याणां मतमाह—गुर्वित्यादि । गुरुसमुत्थं महत् मित्रं श्रेयः, कुतः, तद्धि शत्रावतिशयेन पराक्रमेत, चिरयत्नेनापि यदोत्थितं भवति तदा कार्यमव्यभिचारेण साधयति चेत्यर्थः ।

स्वमतमाह—नेति कौटल्य इत्यादि । कार्यकालं नातिपातयति कार्यानुष्ठानार्हमवसरं नातिक्रामयति । इतरत् गुरुसमुत्थम् । प्रकृष्टभौमं विप्रकृष्टभूमिस्थितम् ।

विक्षिप्तेत्यादि । विक्षिप्तसैन्यं कार्यान्तरसाधनायानेकत्र प्रेषितं सैन्यं येन तत् तथाभूतं, मित्रं वा श्रेयः अवश्यसैन्यं वा, श्रेय इति विचार्यत इति शेषः । आचार्यमतमाह—विक्षिप्तं सैन्यमित्यादि । प्रतिसंहर्तुं समूहयितुम् ।

स्वमतमाह—नेति कौटल्य इत्यादि । सामादिभिः सामदानभेदैः । इतरत् विक्षिप्तम् ।

**(५) पुरुषभोगं हिरण्यभोगं वा मित्रम्? इति। 'पुरुषभोगं मित्रं श्रेयः; पुरुषभोगं मित्रं प्रतापकरं भवति। यदा चोत्तिष्ठते तदा कार्यं साधयति' इत्याचार्याः।**

**'न' इति कौटल्यः। हिरण्यभोगं मित्रं श्रेयः, नित्यो हिरण्येन योगः, कदाचिद्दण्डेन। दण्डश्च हिरण्येनान्ये च कामाः प्राप्यन्त इति।**

**(६) हिरण्यभोगं भूमिभोगं वा मित्रम्? इति। 'हिरण्यभोगं गतिमत्त्वात् सर्वव्ययप्रतीकारकरम्' इत्याचार्याः।**

---

श्रीमूला

पुरुषैरुपकारकमेकं मित्रं हिरण्येनोपकारकमन्यदित्यनयोर्मध्ये कि श्रेय इति चिन्तयति—पुरुषभोगमित्यादि। तत्र पुरुषभोगमित्रं प्रशस्ततरं, यस्मात् शत्रुषु तत् स्वयं पराक्रमितुमर्हम्, उत्थितं च कार्यं साधयतीत्याचार्या मन्यन्त इत्याह—पुरुषभोगं मित्रं श्रेय इत्यादि।

स्वमतमाह—नेति कौटल्यो हिरण्यभोगमित्यादि। अयमर्थः—हिरण्यभोगं मित्रं प्रशस्ततरं, कुतः, यस्मात् हिरण्यं सर्वत्र नयनानयनयोग्यं हस्ते नित्यं सन्निहितं सर्वदोपयोगक्षमं, दण्डस्तु कादाचित्कोत्थानत्वात् कदाचिदेवोपयोगक्षमो भवति। किञ्च हिरण्येन दण्डश्च अन्ये चेप्सितार्थाः सुसाधा भवन्ति, न पुनर्दण्डेन हिरण्यमन्ये वा कामा इति।

हिरण्योपकारकभुम्युपकारकमित्रयोर्मध्ये कतरत् प्रशस्ततरमिति विचारयति–हिरण्यभोगमित्यादि। हिरण्यभोगं, हिरण्योपकारकं, गतिमत्त्वात् नयनानयनयोग्यत्वात्, सर्वव्ययप्रतीकारकरं सर्वविधव्ययोपयोगक्षमम्, अर्थाद् भूमिभोगम् अगतिमत्वादताद्दशम्। ततश्च तदेव श्रेय इत्यर्थः। इत्याचार्या आहुः।

नयचन्द्रिका

अपेक्षितजातं सर्वमपि हिरण्येन सुसाधमित्याह—हिरण्येन दण्डश्चेति।

हिरण्यभूम्युपकारयोर्मित्रयोः श्रेयो विमृशति—हिरण्यभोगं भूमिभोगं वेति।

आचार्यमतमाह—हिरण्यभोगमिति। हिरण्योपकारकं मित्रं श्रेयः। हिरण्यस्य गतिमत्वात्। गतिर्नयनानयनयोग्यत्वम्, तद्वत्वात्। सर्वव्ययप्रतीकारकरमिति। सर्वे धर्मकामाद(द्य) र्था व्या(व्य)याः गुरुलघुव्यसनप्रतीकारांश्च हिरण्यवत् भूत्यः कर्तुं न शक्याः। हिरण्यस्यैवंभूतत्वात् मित्रमपि य( त )थोच्यत इति ग्राह्यम्।

**'न' इति कौटल्यः। 'मित्रहिरण्ये हि भूमिलाभाद्भवतः' इत्युक्तं पुरस्तात्। तस्माद् भूमिभोगं मित्रं श्रेयः इति।**

[ पुरुषहिरण्यभोगेषु तदीयभोगभेदान्तराद्वैशिष्ट्यम् ]

**तुल्ये पुरुषभोगे विक्रमः क्लेशसहत्वमनुरागः सर्वबललाभो वा मित्रकुलाद्विशेषः। तुल्ये हिरण्यभोगे प्रार्थितार्थता प्रभूत्यमल्पप्रयासता सातत्यं च विशेषः।**

---

श्रीमूला

मित्रहिरण्योभयसाधकत्वलक्षणम् गुणातिशयं पूर्वोक्तं स्मारयन् तेन हेतुना भुम्यूपकारकं मित्रमेवं प्रशस्ततरमित्येवं स्वमतमाह--नेति कौटल्यो मित्रहिरण्ये हीत्यादि। तदेवं पुरुषभोगहिरण्यभोगभूमिभोगानां गुरुलघुभावो विचारितः।

अथ पुरुषभोगेष्वेव कश्चिद् भेदः पुरुषभोगभेदान्तरापेक्षया विशिष्ट इत्याह--तुल्ये पुरुषभोग इत्यादि। शौर्यम् आयासक्षमत्वं स्नेहो मौलभृतादिसर्वविधबलदायकत्वमित्येभिर्गुणैर्युक्तं पुरुषभोगमित्रमतादृशात् पुरुषभोगमित्रवर्गात् प्रशस्ततरमित्यर्थः।

हिरण्यभोगभेदस्य कस्यचित् तद्भोगभेदान्तरापेक्षया वैशिष्ट्यमाह-तुल्ये हिरण्यभोग इत्यादि। प्रार्थितार्थता प्रार्थितोऽर्थो यस्माल्लभ्यते स प्रार्थितार्थस्तत्वं, प्राभूत्यं समृद्धधनत्वम्, अल्पप्रयासता अल्पेन प्रयासेन कार्यसाधकता, सातत्यं च नित्योपकारिता च, विशेषः वैशिष्ट्यनिमित्तम्, एतैर्गुणैर्युक्तं हिरण्यभोगमित्रमतद्विधाद्धिरण्यभोगमित्रवर्गात् प्रशस्ततरमित्यर्थः। एवं पुरुषभोगहिरण्यभोगयोरवान्तरविशेषोऽभिहितः। भूमिभोगस्य तूपरिष्टाद् अभिधास्यते।

नयचन्द्रिका

स्वमतमाह—मित्रहिरण्ये इति। लाभगुरुलघुत्वचिन्तायां भूमिलाभस्य शेषयोः कारणत्वमुक्तमित्यर्थः।

उपसंहरति—तस्मादिति। भूमेर्मित्रादिकारणत्वाद् भूम्युपकारं श्रेय इत्यर्थः।

एवं पुरुषहिरण्यभूमिभोगानां वैषम्यमुक्त्वा पुरुषभेदस्यैवावान्तरभेदे वैषम्यमाह—तुल्ये पुरुषभोग इति। विक्रमः शौर्यम्। क्लेशसहत्वमाया(सा)भीरुता। अनुरागः स्नेहः। सर्वबललाभो मौलभृतादिषड्विधबललाभ इत्येभिः गुणैः शेषात् पुरुषभोगामित्रकुलाद्विशेषः स्यात्। मित्रस्येति शेषः।

हिरण्यभोगेऽपि अवान्तरतारतम्ये विशेषमाह--तुल्ये हिरण्यभोगे इति। प्रार्थितार्थतेति। यदा यदपेक्ष्यते तदा तद्दायित्वम्। प्राभूत्यमिति। विभावयोगित्वम्। अल्पप्रयासेतति अक्लेशता, कार्यकरणत्वम्। सातत्यमिति। पुनः पुनरुपकारकरणम्।

[ गुणषट्कभेदेन सम्पन्नाः मित्रभेदाः षट् ]

**तत्रैतद्भवति—**

**नित्यं वश्यं लघूत्थानं पितृपैतामहं महत् ।**
**अद्वैध्यं चेति सम्पन्नं मित्रं षड्गुणमुच्यते ।।२४०।।**

[ तत्र नित्यम् ]

**ऋते यदर्थं प्रणयाद्रक्ष्यते यच्च रक्षति ।**
**पूर्वोपचितसम्बन्धं तन्मित्रं नित्यमुच्यते ।।२४१।।**

---

नयचन्द्रिका

एभिर्हिरण्यभोगान्तरेभ्यः मित्रस्य विशेषः । एवं त्वमित्रलाभसन्धौ ईदृशं मित्रं लभमानोऽतिसन्धत्ते इत्यर्थः । भूमेरवान्तरविशेषस्त्वग्रे वक्ष्यमाणत्वान्ते भोक्त (? न्नेहोक्त) इति ग्राह्यम् ।

श्रीमूला

अथ मित्रस्य गुणभेदकृतान् भेदान् वक्तुमाह—तत्रेति। तत्र मित्रलाभसन्धौ, एतद् वक्ष्यमाणं मित्रनिरूपणं भवति ।

मित्रस्य गुणानाह—नित्यमित्यादि । मित्रसम्पदुपेतं मित्रं नित्यत्ववश्यत्वादिभिः षड्भिर्गुणैर्युक्तमुच्यत इति श्लोकस्यार्थः ।

गुणान् क्रमेण लक्षयति—ऋते इत्यादि । पूर्वप्ररुढयौनादिसम्बन्धनिमित्तस्नेहत्वमात्राद् विनैवार्थसम्बन्धं यद् रक्ष्येत, यच्च कर्तृ रक्षति, तदुभयमन्योन्यं प्रति नित्यं मित्रमित्यर्थः । यदर्थप्रणयादिति समस्तपाठोऽप्यस्ति ।

नयचन्द्रिका

एवं मित्रलाभे तज्जन्यो(न्यै)रुपकारविशेषैः अतिसन्धानमुक्त्वा सम्प्रति गुणभेदैः तद्भेदनिरूपणमवतारयति-तत्रेतदिति । तत्र मित्रलाभसन्धौ । एतत् वक्ष्यमाणम् । मित्र······यंरूपणं भवतीत्यर्थः ।

तत्र मित्रगुणानाह—मित्रमित्यादि ।

तस्य मित्रत्वादीन् षड्गुणनुक्तानात् । (? षड्गुणानुक्तान्) क्रमेण दर्शयति-ऋते यदर्थेत्यादि । अर्थप्रमाणयोरर्थसम्बन्धः, तस्माद्दते रक्ष्यं रक्षकत्वञ्च ययोस्तयोर्मिथो मित्रमिति । किं निमित्तं तर्हि तदित्याह—पूर्वोपचितेति । अर्थदानाऽदानाभ्यां विना पूर्वपूर्वजनितयौवनादिसम्बन्धितया यद्रक्ष्यं यच्च रक्षकं तन्मित्रं नित्यमित्युच्यत इत्यर्थः ।

[ वश्यम् ]

**सर्वचित्रमहाभोगं त्रिविधं वश्यमुच्यते ।**
**एकतोभोग्युभयतः सर्वतोभोगि चापरम् ॥२४२॥**

[ नित्यमवश्यम् ]

**आदातृ वा दातृ अपि वा जीवत्यरिषु हिंसया ।**
**मित्रं नित्यमवश्यं तद् दुर्गाटव्यपसारि च ॥२४३॥**

———— ——

श्रीमूला

वश्यमाह—सर्वचित्रमहाभोगमित्यादि । वश्यं मित्रं, सर्वचित्रमहाभोगं त्रिविधं सर्वभोगं चित्रभोगं महाभोगमिति त्रिविधम् । तत्र दण्डकोशभूमिभिरुपकारकं सर्वभोगं, दण्डकोशाभ्यां प्रभूतमुपकुर्वत् महाभोगं, रत्नसारफल्गुकुप्यद्रव्यवनादिनोपकारकं चित्रभोगम् । इदमर्थप्राप्तिलक्षणोपकारप्रयुक्तं त्रैविध्यम् । अनर्थपरिहारलक्षणोपकार-निमित्तं त्रैविध्यमुत्तरार्धेनोच्यते—एकतोभोगि उभयतोभोगि सर्वतोभोगीति च । एकतो यद् अमित्रप्रतिकारकं तदाद्यं, यद् अमित्रतदासारोभयप्रतिकारकं तद् द्वितीयं, यद् अमित्रासारप्रतिरोधकाटविकप्रतिकारकं तत् तृतीयमिति बोद्धव्यम् ।

अथ नित्यं वश्यत्वहीनं भवति, वश्यं च नित्यत्वहीनम् । तत्राद्यमाह—आदातृ वेत्यादि । यद् विजिगीष्वनुपकारकमपि शत्रुषु लुण्टनाद्यपकारैरादानं दानं वा कुर्वदुप-जीवति, दुर्गाटव्यपसरणशीलतया चात्मानं रक्षच्छत्रोरग्राह्यं भवति, तद् वश्यत्वरहितं नित्यं मित्रमित्यर्थः ।

नयचन्द्रिका

वश्यं लक्षयति—सर्वचित्रेत्यादि । उपकारो हि द्विविधः । अर्थप्राप्तिरनर्थ-परिहारश्च । तत्रान्यवश्यस्यैवाद्यभेदनिमित्तान् संज्ञाभेदानाह—सर्वेत्यादि । सर्वभोगं चित्रभोगं महाभोगमिति वश्यं त्रिविधमिति । द्वितीयप्रकारेणापि तस्य त्रैविध्यमाह—एकतोभोगीत्यादि । एकतोभोगि उभयतोभोगि सर्वतोभोगीति च त्रिविधमित्यर्थः । वक्ष्यन्ति तेषां वश्यपत्तनग्रामखनिसञ्जातेन रत्नसारफल्गुतुल्यद्रव्यहस्तिवनव्रजसमर्थेन यानवाहनेन यावद् बहुश उपकरोति तच्चित्रभोगम् । यद्दण्डेन कोशेन वा महदुपकरोति तन्महाभोगम् । यद्दण्डकोशभूमीरुपकरोति तत्सर्वभोगमिति । अर्थप्राप्तिमुक्त्वा अनर्थ-परिहारमाह—यदि मित्रमेकतः प्रतिकरोति तदेकतोभोगि । यदमित्रमासारञ्चोभयतः प्रतिकरोति तदुभयतोभोगि । यदमित्रासारप्रवेशाटविकान् सर्वतः प्रतिकरोति तत्सर्वतोभोगीति ।

एवं नित्यत्ववश्यत्वे लक्षयित्वा वश्यभेदांश्च प्रदर्श्य वश्यचरहित्यत्वरहितं (? वश्यत्वरहिते नित्यं, नित्यत्वरहितं) वश्यञ्च दर्शयति—आदातृ वेत्यादिना श्लोक-द्वयेन । तत्रावश्यनित्यत्वमाह—आदातृ वेत्यादिना । हिंसायाभाह(? हिंसयाऽभय)-

[ वश्यमनित्यम् ]

**अन्यतो विगृहीतं यत् लघुव्यसनमेव वा ।**
**सन्धत्ते चोपकाराय तन्मित्रं वश्यमध्रुवम् ।।२४४।।**

[ अद्वैध्यं (मित्रभावि) ]

**एकार्थानर्थसम्बन्धमुपकार्यविकारि च ।**
**मित्रभावि भवत्येतन्मित्रमद्वैध्यमापदि ।।२४५।।**

---

नयचन्द्रिका

विलोपादिद्वारा शत्रुष्वेव दानादानादिकं कुर्वद्यज्जीवति तद् विजिगोषोरनुपकारकं, अरिहिंसनेऽपि तदनुच्छेद्यञ्च । हेतुमाह—दुर्गाटव्यपसारवदिति । अव(प) सारो हन्त-(त)स्यापसुण(सरण)स्थानम् । दुर्गादिमत्वात् तदनुच्छेद्यमित्यर्थः ।

श्रीमूला

द्वितीयमाह—अन्यत इति । यत्, अन्यतः शत्रुणा विगृहीतं, लघुव्यसनमेव वा अल्पव्यसनयुक्तं वा सत्, उपकाराय, सन्धत्ते विजिगोषुणा सह सन्धि करोति, तत् मित्रं, वश्यम् उपकारकत्वात्, अध्रुवम् अनित्यम् आत्मोपकारकालमात्रावस्थायि-मैत्रत्वात् ।

अयत्नकरणीयसैन्यसन्नाहत्वलक्षणं लघूत्थानत्वं, पितृपितामहक्रमानुवृत्तमैत्र-बन्धत्वलक्षणं पितृपैतामहत्वं, प्रमाणप्रतापगरिष्ठसैन्ययुक्तत्वलक्षणं महत्त्वं च सुबोधत्वान्न लक्षणीयमिति मन्वानस्तान्यतिक्रम्याद्वैध्यं लक्षयति—एकार्थानर्थसम्बन्ध-मिति । समानसुखदुःखसम्बन्धम्, उपकारि, अविकारि च अव्यभिचारि च, मित्रम्, आपदि अद्वैध्यं द्वैध्यं भेदः तद्रहितत्वात् तदाख्यम् । अत एव एतत् मित्रं, मित्रभावि मित्रभावनित्ययोगित्वान्मित्रभावीत्यप्याख्यायत इत्यर्थः ।

नयचन्द्रिका

वश्यमनित्यमाह—अन्यत इति । वश्यमुपकारमपि स शत्रुणाश्यन्तु······ यच्छायान्तु क्षुद्रव्यसनसंयुक्तं यदपि विजिगीषुणा सहोपकारार्थं स लभते तदुपकार-निमित्तं मित्रमित्यर्थः । अत्युप (? अध्रुव) मिति अनित्यम् ।

एवं नित्यवश्यभेदान् प्रदर्श्य वयू(?लघू)त्थानपितृपैतामहत्वानां स्फुटत्वा-त्तल्लङ्घ्यनेनाद्वै( वि? )ध्यं लक्षयति—एकार्थेनेत्यादि । अर्थानर्थाभ्यां सम्बन्धः एक अभियानस्य तत्तथा । यत एवं तस्माद् वश्यत्वनित्यत्वयुक्तमापाद्य द्वै( वि? )ध्यत्वादे-कत्वमित्रभाविसंज्ञमेकान्तमित्रमित्यर्थः ।

[ उभयभावि त्रिविधम् ]

**मित्रभावाद् ध्रुवं मित्रं शत्रुसाधारणाच्चलम् ।**
**न कस्यचिदुदासीनं द्वयोरुभयभावि तत् ॥२४६॥**
**विजिगीषोरमित्रं यन्मित्रमन्तर्धितां गतम् ।**
**उपकारे निविष्टं वा शक्तं वाऽनुपकारि तत् ॥२४७॥**

---

### श्रीमूला

मित्रभाविविपरीतम् उभयभाव्यप्यस्ति । तच्चोभयभावित्वं शत्रुविजिगीषूभयानुपकारकत्वात् तदुभयोपकारकत्वात् दुर्बलतया तदुभयसेवित्वाद् वा त्रिप्रकारं भवति । तत्र यदाद्यमुभयभावि तद् मित्रभावस्य शत्रुविजिगीषूभयसाधारणत्वेनानित्यत्वाच्च नित्यानित्योभयरूपम् । तदेतदाह—मित्रभावाद् ध्रुवं मित्रमित्यादि । मित्रभावात् शत्रुमित्रातिरिक्तागोचरत्वेनासाधारणादित्यार्थम् । न कस्यचिद्, उपकारकमिति शेषः । तदिदं शक्तत्वेऽप्यनभिनिवेशादुभयानुपकारकम् ।

उपकाराभिनिविष्टमपि शक्तिबिरहादुभयानुपकारकम् उभयभाव्याह—विजिगीषोरमित्रमिति । विजिगीषोर्भूम्यनन्तरत्वात् शत्रुभूतम्, अन्तर्धितां गतं मित्रं शत्रुविजिगीष्वोर्मध्यस्थो दुर्बलोऽन्तर्धिः तत्तां गतम् अत एव विधेयत्वान्मित्रशब्दितम्, उपकारे निविष्टं वा अशक्तं वा उभयोरुपकारकरणे साभिनिवेशं च शक्तिहीनं च यद्, अनुपकारि, तद् उभयभावीत्यनुवर्तते । अमित्रमिति क्लीबनिर्देश आर्षः ।

### नयचन्द्रिका

एवं समसुखदुःखत्वान्मित्रभाविसंज्ञमेकान्तमित्रमुक्त्वा तद्विपर्ययरूपमुभयभावित्वमाह—मित्रभावादित्यादि । उभा(?उभयभावि) त्वं हि त्रिविधम् । उभयोत्करतया वा । उभयोरपि सम्यगनुग्राह्यतया वा । दौर्बल्येनोभयानुवर्तित्वाद्वेति । रप्यकिञ्चिंमित्राद्यमिदम् । मित्रभावादिति, असाधारणादिति शेषः । असाधारणान्मित्रभावाद्धि मित्रमनित्यं स्यात् । शत्रुसाधारणात्तु मित्र एव मित्रंचलमनित्यं स्यात् । विजिगीषोरसाधारणस्य शत्रुसाधारणस्य वोपकारस्य करणात् हि नित्यत्वे स्याताम् । उभयत्राऽकिञ्चित्करणत्वे चोदासीनत्वात् उभयभावि स्यादित्यर्थः ।

औदासीन्यादुभयोरनुपकारकमुभयभावीत्युक्त्वा यदशक्ततयानुपकारकं तदाह—विजिगीषोरित्यादि । विजिगीषोरसाधारणस्य शत्रुसाधारणस्य वोपकारकस्य मित्रस्य यदकिञ्चित्करं तदुदासीनतया उभयभावीत्यर्थः ।

औदासीन्यादुभयोरनुपकारकमपि उभयोर्विशिष्टत्वादुभयभावीत्युक्त्वा यदशक्ततयाऽनुपकारकं तदाह—विजिगीषोरित्यादि । विजिगीषोरसाधारण्यस्य शत्रुसाधारण्यस्य वा उपकारकस्य मित्रस्य यदकिञ्चित्करं तदुदासीनतया उभयभावीत्यर्थः ।

प्रियं परस्य वा रक्ष्यं पूज्यसम्बन्धमेव वा ।
अनुगृह्णाति यन्मित्रं शत्रुसाधारणं हि तत् ॥२४८॥
प्रकृष्टभौमं सन्तुष्टं बलवच्चालसं च यत् ।
उदासीनं भवत्येतद्व्यसनादवमानितम् ॥२४९॥
अरेर्नेतुश्च यद् वृद्धिं दौर्बल्यादनुवर्तते ।
उभयस्याप्यविद्विष्टं विद्यादुभयभावि तत् ॥२५०॥

---

नयचन्द्रिका

औदासीन्यादुभयोरनुपकारकमपि उभयोर्विशिष्टत्वादुभयभावीत्युक्त्वा यदशितोऽ-(?दशक्तितोऽ)नुपकारकं तदाह—विजिगीषोरित्यादिना । विजिगीषोर्भूम्यानन्तर्येणाऽमित्रभूतं शत्रोरन्तर्द्धितांनिवार(ण)तां प्राप्तम् । अत एव मित्रं सद्दौर्बल्यादुपकारासक्तं वास्तु सर्वथानुपकारकम् । न चोदासीनम् । अतोऽनुपकारकं मित्रमेवोच्यत इत्यर्थः ।

श्रीमूला

उभयानुग्राहकमुभयतोभाव्याह—प्रियमिति । यत् मित्रं, परस्य शत्रोः, प्रियं, रक्ष्यं वा, पूज्यसम्बन्धमेव वा स्वपूजनीयगुर्वादिसम्बद्धं वा, अनुगृह्णाति, तत् शत्रु-साधारणं शत्रुमित्रोभयसमानम्, उभयतोभावीति यावत् ।

अथ कीदृशं मित्रमुपकारकर्तव्यतादशायामुदासीनं स्यादित्याह—प्रकृष्टभौम-मिति । विप्रकृष्टभूमिस्थितं, सन्तुष्टम् अपूर्वलाभनिःस्पृहं स्थितार्थपरितृप्तं बलवत् शौर्यगर्वादनुपजातद्वेषम्, अलसं, व्यसनादवमानितं च द्यूतादिव्यसनदोषादवज्ञातं च, एतत् ईदृशं मित्रम्, उदासीनं भवति ।

दुर्बलत्वादुभयसेवकमुभयभाव्याह—अरेर्नेतुश्चेति । शत्रोर्विजिगीषोश्च, वृद्धिं, यत् मित्रं, दौर्बल्यात्, अनुवर्तते तामभिनन्दत् तावाश्रयतीत्यर्थः, कथम्भूतम्, उभय-स्यापि शत्रुमित्रयोरपि, अविद्विष्टम् । तत्, उभयभावि उभयानुवर्त्युभयभावि, विद्यात् । तदेवं मित्रविशेषा निरुपिताः ।

नयचन्द्रिका

उभयानुग्राहकमुभयभाव्याह—प्रियं परस्येत्यादि । परस्य यदिष्टं यच्च रक्ष्यं स्वपूज्येन गुर्वादिना सम्बन्धवच्च यत्तच्छत्रुसाधारणं तदुभयावीत्यर्थः ।

उभयोरुदासीनमुभयभावीत्युक्तम् । तत्रौदासीन्यस्य किं निमित्तमित्यपेक्षायां तद्भेदानाह—प्रकृष्टभौममित्यादि । प्रकृष्टभौमं विप्रकृष्टदर्श (?देश) सम्बन्धि । सन्तुष्टं प्राप्तांशेन सन्तुष्टम् । बलवन्महाबलतया सिंहहिरण्य (?हरिण) न्यायेनाविद्वेषम् अलसं, व्यसने अवमानितम् उपेक्षितम् एतानि मित्राण्युदासीनानि स्युः ।

दौर्बल्यादुभयानुकूल्योभयभाव्याह—अरेर्नेतुश्चेत्यादि । अरेर्विजिगीषोश्च बुद्धि-दौर्बल्याद्यदुभयाविद्युष्टत्वं (?विद्विष्टत्वं) भूत्वाऽनुवर्तते तदुभयानुवृत्योभयभावीत्यर्थः ।

[ त्याज्यं मित्रम् ]

**कारणाकरणध्वस्तं कारणाकरणागतम् ।**
**यो मित्रं समुपेक्षेत स मृत्युमुपगूहति ॥२५१॥**

[ ग्राह्यो लाभः ]

**क्षिप्रमल्पो लाभः चिरान्महानिति वा ? 'क्षिप्रमल्पो लाभः कार्यदेशकालसंपा(वा)दकः श्रेयान्' इत्याचार्याः ।**

**'न' इति कौटल्यः । चिरादविनिपाती बीजसधर्मा महान् लाभः श्रेयान्, विपर्यये पूर्वः ।**

---

श्रीमूला

मित्रसामान्यविषयं विधिमाह—कारणाकरणध्वस्तमिति । कारणानुत्पादेऽपगतं, कारणाकरणागतं कारणानुत्पादे पुनरायातं, मित्रं, यः, समपेक्षेत स्वीकुर्यात्, सः, मृत्युम्, उपगूहति आलिङ्गति ।

अथ मित्रलाभप्रसङ्गागतमित्रविशेषकथनान्तरं लाभसामान्यगतं कालस्वरूपप्रयुक्तं विशेषं चिन्तयति—क्षिप्रमल्पो लाभ इत्यादि । सद्योभावी स्वल्पो लाभो वा श्रेयान्, चिरभावी प्रसूतो लाभो वा श्रेयानिति संशय इत्यर्थः । आचार्यमतमाह—क्षिप्रमल्पो लाभः श्रेयान्, कथम्भूतः, कार्यदेशकालसंवादकः अनेन कार्येणास्मिन् देशे अस्मिन् काले अयं लाभो भविष्यतीति समीक्षासंवादी । इत्याचार्याः ।

स्वमतमाह—नेति कौटल्य इत्यादि । चिरादपि भवन् निष्प्रतिबन्धभाविसिद्धितयावधारितो धान्यबीजसमानधर्मा महान् लाभः श्रेयान् । विपर्यये महतो लाभस्य विनिपातित्वसम्भावनायां, पूर्वं आचार्योक्तः कल्प इत्यर्थः ।

नयचन्द्रिका

एवं मित्रभेदानुक्त्वा चलबुद्धिरसन्धेय इति प्रागेवोक्तम् । तत्र तस्यासन्धेयत्वमर्थप्राप्त्यभावादनर्थापत्तिभयाद्वा, पूर्वत्रार्थप्राप्तिसन्देहेऽपि सन्धेयता स्यादिति मन्वानोऽनर्थप्राप्तिनिश्चयादित्याह—कारणाऽकारणध्वस्तमित्यादि । कारणात्परदोषाद्वा । अकारणात् स्वदोषाद्वा । ध्वस्तमपगमितम् । कारणाऽकारणतमिति । कारणात् परगतदोषाद्वा । अकारणात् स्वदोषाद्वा पुनरागतम् । एवंभूतं मित्रं यः स्वीकरोति स मृत्युं स्वयमाश्लिष्यतीत्यर्थः ।

एवं मित्रलाभप्रसक्तान् मित्रभेदानुक्त्वा सामान्यत एव लाभस्य कालस्वरूपभेदाद् वैषम्यं विमृशति—क्षिप्रमित्यादिना ।

अत्राचार्यमतमाह—क्षिप्रमिति । कार्यदेशकालसम्पा(वा)दक इति कार्यसिद्ध्यविषयदेशकालयोः सन्निकर्षविप्रकर्षादिविषयश्च निश्चयं यथासमर्थितमेव दर्शयन् अल्पोऽपि लाभः श्रेयानित्यर्थः ।

[ निगमनम् ]

**एवं दृष्ट्वा ध्रुवे लाभे लाभांशे च गुणोदयम् ।**
**स्वार्थसिद्धिपरो यायात् संहितस्सामवायिकैः ॥२५२॥**

इति षाड्गुण्ये मित्रहिरण्यभूमिकर्मसन्धौ मित्रसन्धिः
हिरण्यसन्धिश्च नवमोऽध्यायः,
आदितस्सप्तशततमः ।

———

नयचन्द्रिका

स्वमतमाह—चिरादित्यादि । अवनिपातीति । विनिपातः प्रतिबन्धः तद्रहित-तया निश्चितः । विजयसधर्मेति । यथा शाल्यादिः । निश्चिता······रथफलगौरवं निश्चितावग्रहादिप्रतिबन्धाभावश्च तथेत्यर्थः । तत्किं नदीजलाद्यभावनिश्चये अवग्र-हादिसंभावनायाञ्च शालिबीजान्युप्यन्ते इत्यत्राह—विपर्यय इति । कार्यदेशकाल-सम्पादकाल्पलाभ इत्यर्थः ।

श्रीमूला

प्रान्ते श्लोकमाह—एवमित्यादि । लाभे मित्रहिरण्यभूमिरूपे । गुणोदयं गुण-विशेषोत्पत्तिम् । शेषं सुबोधम् ।

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे नवमोऽध्यायः,
मित्रहिरण्यभूमिकर्मसन्धौ मित्रसन्धिर्हिरण्यसन्धिश्च
आदितः सप्तोत्तरशततमः ।

नयचन्द्रिका

उक्तं सर्वं संक्षिप्योपसंहरति—एवमित्यादिना । अयमर्थः—प्रथमत एव कार्यस्य लाभस्तावन्निश्चयः, ततो मित्रभूमिहिरण्यात्मनः तस्य गुणोदयो विशेषरूपो निश्चयः तेष्वन्यतमः श्रेय ( श्रेयान् ) इति । ततश्च मित्रादन्यतमेऽपि षड्गुणसम्पन्न-त्वादिरूपमविशेषं दृष्ट्वा निश्चित्य स्वार्थस्य सिद्धौ तत्परस्तदनुगुणसाधनानुष्ठानपरः सामवायिकैः कृतसन्धिः यातव्यं प्रति यायादित्यर्थः ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां
कौटिलीयटीकायां नयचन्द्रिकायां षाड्गुण्ये नवमोऽध्ययायः ।

## दशमोऽध्यायः

### भूमिसन्धिः

[ सम्पद्युक्तभूमेर्बलवत्सकाशाल्लाभावश्यकता ]

**'त्वं चाहं च भूमिं लभावहे' इति भूमिसन्धिः ।**

**तयोर्यः प्रत्युपस्थितार्थः सम्पन्नां भूमिमवाप्नोति सोऽतिसन्धत्ते ।**

**तुल्ये सम्पन्नालाभे यो बलवन्तमाक्रम्य भूमिमवाप्नोति सोऽतिसन्धत्ते, भूमिलाभं शत्रुकर्शनं प्रतापं च हि प्राप्नोति ।**

---

श्रीमूला

गताध्याये मित्रहिरण्यसन्ध्योर्निरूपितयोः क्रमप्राप्तः भूमिसन्धिरिह निरूप्यते—त्वं चाहं चेत्यादि । भूमिसन्धिरिति । स च समसन्धिः, भूमेरेव द्वाभ्यां लाभात् ।

अतिसन्धिमाह—तयोरिति । शत्रुविजिगीष्वोर्मध्ये, यः, प्रत्युपस्थितार्थः प्रत्युपस्थितः अचिरकरणीयतया सन्निहितः अर्थः सेतुबन्धादिकर्मव्ययरूपो गुणवद्भृत्य-पूजादिरूपो वा यस्य स तथाभूतः, सम्पन्नां वक्ष्यमाणानित्यामित्रत्वादिभूमिसम्पद्युक्तां भूमिम् अवाप्नोति, सः, अतिसन्धत्ते विशेषलाभं भजते ।

सम्पन्नभूमिलाभेऽपि विशेषमाह—तुल्ये सम्पन्नालाभ इति । सम्पन्नाया भूमेर्लाभे द्वयोः समाने, यः बलवन्तम्, आक्रम्य परिभूय, भूमिम् अवाप्नोति, सः अतिसन्धत्ते । अतिसन्धानस्वरूपमाह—भूमीत्यादि । बलवत्सकाशाद्धि भूमिं गृह्णन् न केवलभूमिभाग् भवति, किन्तु शत्रुकर्शनप्रतापलाभावपि नान्तरीयकतया प्राप्नोतीत्यर्थः ।

नयचन्द्रिका

तदेवं मित्रहिरण्यभूमिकर्मसन्धय इति सूत्रे मित्रहिरण्यसन्ध्योर्विशेषान् प्रदर्श्य क्रमाद् भूमिसन्धिविशेषानाह—त्वञ्चाहञ्चेत्यादिना ।

उभाभ्यामपि भूमेरेव लाभात् समसन्धिरित्याशयवान् छत्रादतिसन्धिमाह—तयोरित्यादि । तयोररिविजिगीष्वोः । प्रत्यवसितार्थ इति । सेतुबन्धादिकर्मव्ययेष्व-विड़म्बिन्येन सन्निहितार्थोऽस्येति । तथा गुणवत् भृत्यतादिर्वाऽर्थशब्दार्थः । सम्पन्ना-मिति, या भूमेः सम्पदुक्ता अनित्यामित्रत्वादिका तद्व(तीं भूमि)मितीत्यर्थः ।

सम्पन्नभूमिलाभे विशेषमाह—तुल्य इति । बलवन्तमाक्रम्येति भङ्क्त्वेत्यर्थः ।

बलवत्या(ता)क्रान्ते कथमतिसन्धानमित्यत्राह—भूमिलाभमित्यादि । भूमि-हरणाच्छत्रोः कर्शनमात्मनः प्रतापञ्चाप्नोति यत इत्यर्थः ।

**दुर्बलाद् भूमिलाभे सत्यं सौकर्यं भवति, दुर्बल एव च भूमिलाभः; तत्सामन्तश्च मित्रममित्रभावं गच्छति ।**

[ बलवतः चलामित्राच्च भूमिलाभेऽपि लाभविशेषहेतुप्रकारविशेषाः ]

**तुल्ये बलीयस्त्वे यः स्थिरं शत्रुमुत्पाट्य भूमिमवाप्नोति सोऽतिसन्धत्ते ।**

---

श्रीमूला

दुर्बलाद् भूमिलाभे यथोक्तव्यतिरेकमाह—दुर्बलादित्यादि । अयमर्थः—दुर्बलाद् भूमिलाभः सत्यं सुखेन साध्यः । किन्त्वसौ दुर्बल एव निकृष्ट एव दुर्बलहिंसाधिगतत्वात् । किञ्चास्य दुर्बलस्य सामन्तः शत्रुः स्वस्य भूम्येकान्तरमित्रभूतः स्वस्मिन् दुर्बलसाधुर्हिंसिन्यविश्वस्तो दुर्बलोच्छेदद्वारेणात्मोच्छेदं शङ्कमानः शत्रूभूय दुर्बलस्य साहाय्यं दद्यादित्येवमनर्थानुबन्धश्च दुर्बलाद् भूमिलाभ इति ।

बलवत्सकाशाद् भूमिलाभे विशेषमाह—तुल्ये बलीयस्त्व इति । द्वयोः शत्र्वोर्बलवत्तायां मानायां, यः, स्थिरं दुर्गादिमत्वेन सुप्रतिष्ठितं, स्थितमिति पाठेऽप्ययमेवार्थः, शत्रुम्, उत्पाट्य उच्छिद्य, भूमिम् अवाप्नोति, सः अतिसन्धत्ते । तत्र हेतुमाह—

नयचन्द्रिका

ननु दुर्बलाद् भूमिलाभेऽपि शत्रुकर्शनमस्त्येव सौकर्यन्त्वधिकमित्याह—दुर्बलादिति । सत्यं दुर्बलाद्भूमिलाभे सौकर्यमस्त्येव, किन्तु भूमिलाभ एव दुर्बलः स्यात् । दौर्बल्यं हि नाम लाभाद्धीनत्वम् । यथोक्तं पुरस्तात्—"मित्र(हिरण्यभूमि)लाभानां उत्तरोत्तरो लाभः श्रेयान् "[प्रक० ११६ अधि० ७, अध्या० ९, सूत्र १] इत्युक्त्वा "यो वा लाभः सिद्धः शेषयोरन्यतरं साधयति" [प्रक० ११६, अधि० ७, अध्यायः ९ सूत्रम् ३] इति । तेनैव द्वयोर्वा लाभयोरन्यतरं भावयन्ति । स हीन इत्यपि लभ्यते । लाभस्य च दौर्बल्यं हीनत्वमेवेति । भूमिलाभो हीनः स्यात्, तथा च कथमतिसन्धानवार्त्तेत्यर्थः ।

ननु कोऽसौ लाभः ? यमयं भावयेदित्यत्राह—सामन्तश्चेति । तस्य दुर्बलस्य राज्ञः सामन्तो भूम्यनन्तरः, सोऽपि विजिगीषोर्मित्रभूतः । तमेव दुर्बलं मित्रं गच्छेत् अभिसरेदित्यर्थः । तेनैकीभावादित्यर्थः ।

अयमाशयः—दुर्बलस्य हि कर्शनमुच्छेदनं वा क्रियेत, उभयथापि तत्सामन्तो बिभ्येत्, एनमुच्छिद्य मामप्युच्छिन्द्यादिति । ततश्च तत्साहाय्यदानेनास्य सोऽप्यमित्र एव स्यात् । एवं तदुच्छेदनेऽपि स एव भूम्यनन्तरतया शत्रुः स्यात् । ततो हीनो भूमिलाभो नातिसन्धाय स्यात् सौकर्यमात्रेण; अपि तु मित्रभूतस्यैकस्यामित्रार्थापत्तौ तत आरभ्य मित्रपरम्पराया अपि तथात्वापत्त्या मण्डलप्रद्वेष एव स्यादिति हृदयम् । धार्मिकदुर्बलोच्छेदे वैतदिति द्रष्टव्यम् ।

उभयोरपि बलवच्छत्रूत्सादनेन तद्भूमिलाभयोर्दुर्गादिमत्तया स्थिरमविचाल्यं शत्रुमुत्साद्य भूमिं लभेत, सोऽतिसन्धत्ते इत्याह—तुल्ये बलीयस्त्व इति ।

**दुर्गावाप्तिर्हि स्वभूमिरक्षणममित्राटवीप्रतिषेधं च करोति ।**

**चलामित्रात् भूमिलाभे शक्यसामन्ततो विशेषः । दुर्बलसामन्ता हि क्षिप्राप्यायनयोगक्षेमा भवति । विपरीता बलवत्सामन्ता कोशदण्डावच्छेदनी च भूमिर्भवति ।**

[ सविचारं लब्धव्यभूस्वरूपतद्यजमान-
स्वरूपयोरुपपादनम् ]

**(१) सम्पन्ना नित्यामित्रा, मन्दगुणा वा भूमिरनित्यामित्रा ? इति ।**

---

श्रीमूला

दुर्गावाप्तिर्हीत्यादि । अयमर्थः—शत्रुसम्बन्धि दुर्गं तावदवाप्यते, तेन स्वभूमिरक्षणं शत्रुप्रतिघात आटविकप्रतिघातश्च निर्वर्तत इति ।

चलामित्राद् भूमिलाभे विशेषमाह—चलामित्रादिति । अस्थिराद् दुर्गादिरहितादमित्राद्, भूमिलाभे, तुल्य इत्यनुवर्तते, शक्यसामन्ततो विशेषः दुर्बलसामन्तत्वतो विशेषः भूमेर्दुर्बलसामन्तत्वकृतो विशेषलाभः प्रबलसामन्ताया भूमेर्ग्राहकमपेक्ष्य दुर्बलसामन्ताया भूमेर्ग्राहको विशिष्यत इत्यर्थः । कुत इत्याह—दुर्बलसामन्ता हीति । तथाभूता हि, भूमिः, क्षिप्राप्यायनयोगक्षेमा अलब्धलाभो योगः लब्धपालनं क्षेमः तौ क्षिप्राप्यायनौ शीघ्रवर्धनौ यस्याः सा तथाभूता भवति । बलवत्सामन्ता प्रबलशत्रुका भूमिः, विपरीता चिराप्यायनयोगक्षेमा, कोशदण्डावच्छेदनी च कोशं दण्डं च अवच्छिनत्ति सामन्तबाधपरिहारार्थविनियोगवशात् क्षपयतीति तथाभूता च, भवति ।

सम्पन्नभूम्यरियुक्तभूम्योः कतरस्याः श्रेष्ठत्वमिति विचारयति—सम्पन्नेत्यादि । भूमिसम्पद्युक्ता यद्यपि, तथापि नित्यामित्रा काचिद् भूमिः ।

नयचन्द्रिका

कुत एवमित्यत्राह—दुर्गादिप्राप्तिर्हीति । तद्दुर्गलाभात् स्वभूमिं रक्षति, शत्रूनाटविकांश्च प्रतिहन्तीत्यर्थः ।

दुर्गादिरहितात् भूमिलाभेऽप्यसन्धानमाह—तुल्ये चलामित्रादिति । शक्यसामन्तत इति । दुर्बलात्सामन्तादन्तराद्विशेष इति । दुर्बलसामन्तां भूमिं गृह्णीयात्, प्रबलसामन्तां गृह्णन्तमतिसन्धत्त इत्यर्थः ।

तत्र हेतुमाह—दुर्बलेति । क्षिप्राप्यायनयोगक्षेमेति । अचिरेणाप्यायनौ वृद्धिकारणयोगक्षेमौ यस्यास्या तथा । योगोऽपूर्वकर्मप्रवर्तनम्, क्षेमः पूर्वक(र्म) रक्षणम् । सद्योवृद्धिकरयोगक्षेमः स्यादित्यर्थः ।

विपरीतेति । चिराप्यायितयोगक्षेमा । अत एव राज्ञो न कोशदण्डक्षयाय स्यादित्यर्थः ।

सम्पन्नेऽरिमित्रविरहस्य च द्वयोः कतरच्छ्रेय इति विमृशति—सम्पन्नेत्यादिना । नित्यमित्रत्वञ्चाग्रे वक्ष्यति ।

**'सम्पन्ना नित्यामित्रा श्रेयसी भूमिः; सम्पन्ना हि कोशदण्डौ सम्पादयति। तौ चामित्रप्रतिघातकौ।' इत्य चार्याः।**

**'न' इति कौटल्यः। नित्यामित्रालाभे भूयान् शत्रुलाभो भवति। नित्यश्च शत्रुरुपकृते चापकृते च शत्रुरेव भवति। अनित्यस्तु शत्रुरुपकारादनपकाराद्वा शाम्यति। यस्या हि भूमेः बहुदुर्गाः चोरगणैर्म्लेच्छाटवीभिर्वा नित्याविरहिताः प्रत्यन्ताः सा नित्यामित्रा, विपर्यये त्वनित्यामित्रेति।**

---

श्रीमूला

सा वा श्रेयसी अल्पगुणयुक्ता कादाचित्कामित्रा भूमिर्वा श्रेयसीति विचारे, आचार्यमतमाह—सम्पन्ना नित्यामित्रा श्रेयसीत्यादि। तौ सम्पन्नभूमिसम्पादितौ कोशदण्डौ। नित्यामित्रत्वमनुपदं वक्ष्यते।

स्वमतमाह—नेति कौटल्य इति। नित्यामित्रालाभ इति। नित्यामित्राया लाभे, भूयान् बहुतरः, शत्रुलाभो भवति। नित्यश्च शत्रुः, उपकृते च अपकृते च उपकारे अपकारे च कृते, शत्रुरेव भवति न तु शत्रुत्वं सहजं जातुचिद् जहाति। अतश्चामित्रवती भूमिर्नोपादेयेत्यर्थः। अनित्यशत्रुकाया भूमेरुपादेयत्वे कारणमाह—अनित्यस्त्वित्यादि। शाम्यति शान्तो भवति, न त्वपकरोतीत्यर्थः। नित्यामित्रानित्यामित्रत्वे लक्षयति—यस्या हीत्यादि। यस्याः भूमेः, प्रत्यन्ताः विषयान्ताः, बहुदुर्गाः वध्यापसरणस्थानबहुलाः, चोरगणैः म्लेच्छाटवीभिर्वा नित्याविरहिताः नित्यसंयुक्ताः, सा भूमिः, नित्यामित्रा। विपर्यये तु अनित्यामित्रा।

नयचन्द्रिका

अत्राचार्यमतमाह—सम्पन्नेत्यादिना।

अत्रैव युक्तिमाह—सम्पन्ना हीति। सम्पन्ना कोशदण्डसम्पादनद्वारा शत्रुप्रतिघातिनीत्यर्थः।

स्वमतमाह—नित्यामित्रेति। एकामित्रां भूमिमाप्नुवतो बहुमित्रापत्तिः स्यादित्यर्थः।

यतश्चानित्यशत्रोर्भूमिं लभते। सद्योपकारानपकाराभ्यां शाम्यति, न तु नित्याः शत्रवः, सा भूमिर्हेयेत्यर्थः।

का पुनर्नित्यामित्रा नाम, या एवम्भूता? इत्यत्राह—यस्या हि भूमेरित्यादि। यस्याः प्रत्यन्ता विषयान्ताः, बहुभिः शैलवनदुर्गादिपङ्कैर्युक्ताश्चौरैः गूढचारिभिः लणकैः म्लेच्छैः शबरपुलिन्दादिभिराटविकैश्चाक्रान्ता, सा नित्यामित्रेत्यर्थः।

**(२) अल्पा प्रत्यासन्ना, महती व्यवहिता वा भूमिः ? इति, अल्पा प्रत्यासन्ना श्रेयसी। सुखा हि प्राप्तुं पालयितुमभिसारयितुं च भवति; विपरीता व्यवहिता।**

**(३) व्यवहिताव्यवहितयोरपि दण्डधारणाऽऽत्मधारणा वा भूमिः ? इति, आत्मधारणा श्रेयसी। सा हि स्वसमुत्थाभ्यां कोशदण्डाभ्यां धार्यते, विपरीता दण्डधारणा दण्डस्थानमिति।**

---

### श्रीमूला

लभ्यभूमेः स्वभूम्यासन्नत्वमहत्त्वयोः किं श्रेय इति विचारयति—अल्पेत्यादि। अल्पा प्रत्यासन्ना श्रेयसीत्यत्र हेतुमाह—सुखा हीत्यादि। गन्तुं रक्षितुं विपदवसरेष्व-पसरणस्थानीकर्तुं चानायासशक्येत्यर्थः। व्यवहिता विप्रकृष्टा, विपरीता प्राप्त्यादौ न सुखा।

विप्रकृष्टप्रत्यासन्नयोरपि विषये दण्डधारणा वा भूमिः श्रेयसी आत्मधारणा वेति विचारो भवतीत्याह—व्यवहिताव्यवहितयोरपीत्यादि। निर्णयमाह—आत्मधारणा श्रेयसीति। कुत इत्याह—सा हीत्यदि। आत्मोत्थिताभ्यां कोशदण्डाभ्यामात्मनो धारणं भरणं यस्याः सात्मधारणेत्यन्वितार्था सेत्यर्थः। विपरीतेत्यादि। दण्डधारणा, विपरीता स्वसमुत्थाभ्यां कोशदण्डाभ्यां न धार्यते, किन्तु परसमुत्थाभ्यामेव कोशदण्डाभ्यां धार्यते, अत एव दण्डस्य परसमुत्थस्य स्वरक्षणार्थं वसतः केवलस्थानभूतेत्येतावता दण्डधारणे-त्युच्यत इत्यर्थः।

### नयचन्द्रिका

भूमेः प्रत्यासन्नमहत्वयोः किं श्रेय इति विमृशति—अल्पेत्यादिना। अवता(धा)र-यति—अल्पेत्यादि।

हेतुमाह—सुखा हीति। अयत्नसाध्यप्राप्त्यादिकेत्यर्थः। अभिसारयितुञ्चेति। पराभियोगादौ स्वदेशं नेतुमित्यर्थः।

व्यवहिता दूरस्था, सा तु न सुखेत्याह—विपरीतेति।

व्यवहिताव्ययहितयोरपि भूम्योः दण्डसाधारणत्वमात्मसाधारणत्वं वा श्रेय इति विमृशति—(व्यवहिता व्यवहि) तयोरपीति भूमिरिति।

श्रेयसीत्यवधारयति—आत्मधारणेति।

हेतुमाह—सा हीति। रक्षणपर्यायाभिधारणा कोशदण्डाभ्यां साध्या। तौ च स्वयमर्थौ। अतोऽन्यानपेक्षत्वात् सैव श्रेयसीत्यर्थः।

विपरीतेति। न स्वसमुत्थकोशदण्डधारणेति ? दण्डेनाऽन्यसमुत्थेन धारणं रक्षणं यस्याः सा तथा। दण्डस्थानमिति। अन्यतः समुत्थस्य दण्डस्य स्थानम्। स्वरक्षणार्थमन्योऽर्थदण्डसापेक्षा इत्यर्थः।

**(४) बालिशात्प्राज्ञाद्वा भूमिलाभः ? इति, बालिशाद् भूमिलाभः श्रेयान् । सुप्राप्याऽनुपाल्या हि भवत्यादेया च, विपरीता प्राज्ञादनुरक्तेति ।**

**(५) पीडनीयोच्छेदनीययोरुच्छेदनीयाद् भूमिलाभः श्रेयान् । उच्छेदनीयो ह्यनपाश्रयो दुर्बलापाश्रयो वाऽभियुक्तः कोशदण्डावादायापसर्तुकामः प्रकृतिभिस्त्यज्यते; न पीडनीयो दुर्गमित्रप्रतिस्तब्धः इति ।**

---

श्रीमूला

अरेर्मुर्खाद् वा भवन् भूमिलाभः श्रेयान् पण्डिताद् वा भवन्निति विमर्शे स मूर्खादेव भवन् श्रेयान्, यतो भूमिर्मूर्खात् सुखेन प्राप्तुं चानुपालयितुं च शक्या अनाशङ्कनीयप्रत्यादाना च, पण्डिताद् तु भूमिरनुरक्तप्रकृतितया न सुखप्राप्या प्राप्तापि न सुखरक्ष्या रक्ष्यमाणापि नित्यशङ्क्यमानप्रत्यादानेति विपरीतेत्याह—बालिशात् प्राज्ञाद्वेत्यादि ।

अरिर्हि कश्चित् शत्र्वादिद्वारेण पीडनीयः कश्चिच्च स्थानीयादुच्छेत्तव्यः । तयोर्मध्ये कतरस्माद् भूमिलाभः श्रेयानिति विचारे उच्छेत्तव्याद् भूमिलाभः श्रेयान्, कुतः यस्मात् स दुर्गमित्रापाश्रयरहितः दुर्बलदुर्गमित्राश्रयो वा सन् कोशदण्डावादाय स्थानीयादपसर्तुमेव यतत इति तं प्रकृतयः परित्यजन्ति, पीडनीयस्तु अपसर्तुमिच्छन्नपि दुर्गमित्राभ्यां वारयित्वा स्थापितो भवतीत्यतस्तं प्रकृतयो न परित्यजन्तीत्याह—पीडनीयोच्छेदनीययोरित्यादि ।

नयचन्द्रिका

शत्रोरज्ञत्वप्राज्ञत्वयोः किं श्रेयः इति विमृशति—बालिशादित्यादि । अवधारयति—बालिशादित्यादि ।

सुप्रापा । सुखेनोच्छेत्तुं शक्येत्यर्थः । स्वनुपाला । सुखेनानुपाल्या । पुनः प्रत्यादानभयरहिता च भूमिः स्यादित्यर्थः ।

विपरीतेति । प्राज्ञाल्लब्धा भूमिः दुष्प्रापत्वादिमतीत्यर्थः । तत्र हेतुमाह—अनुरक्तेति ! शत्रावनुरक्तत्वात् ।

पीडनीयेत्यादि । विजिगीषुणा, मित्रेण चोभयतः पीडनीयो नियन्त्रणीयः । उच्छेदनीयः । स्थानीयात् भ्रंशयितव्यः । तयोर्मध्ये उच्छेदनीयाद् भूमिलाभः श्रेयानित्यर्थः । उच्छेदनीयत्वञ्च दुर्गमित्राद्यप्रतिस्तब्धत्वं तदधारितत्वम् ।

तच्छ्रेयस्त्वमुपपादयति—उच्छेदनीयो हीति । अपाश्रयो धारकः, तस्य दौर्बल्येन भावे वा दौर्बल्यादव(प)सरन् धारकहितोऽयमिति बुद्ध्वा(ध्या)प्रकृतिभिस्त्यज्यत इत्यर्थः ।

प्रतिस्तब्ध इति । गच्छतो धारणं प्रतिस्तम्भनम् । दुर्गमिति । श' 'त्प्राशितात् पीडनीयः । तेन प्रकृतिभिस्त्यज्यत इत्याह—पीडनीय इति ।

**(६) दुर्गप्रतिस्तब्धयोरपि स्थलनदीदुर्गीयाभ्यां स्थलदुर्गीयात् भूमिलाभः श्रेयान्। स्थलीयं हि सुरोधावमर्दावस्कन्दमनिस्राविशत्रु च। नदीदुर्गं तु द्विगुणक्लेशकरम् उदकं च पातव्यं वृत्तिकरं चामित्रस्य।**

**(७) नदीपर्वतदुर्गीयाभ्यां नदीदुर्गीयाद् भूमिलाभः श्रेयान्। नदीदुर्गं हि हस्तिस्तम्भसङ्क्रमसेतुबन्धनौभिस्साध्यमनित्यगाम्भीर्यम् अपस्राव्युदकं च। पार्वतं तु स्वारक्षं दुरव(रुप)रोधि कृच्छ्रारोहणं च। भग्ने चैकस्मिन् न सर्ववधः। शिलावृक्षप्रमोक्षश्च महापकारिणाम्।**

---

श्रीमूला

दुर्गकृतरक्षयोर्द्वयोर्मध्ये स्थलदुर्गीय एकः नदीदुर्गीयोऽपरः। तयोः सकाशाद् भूमिलाभश्रेयस्त्वविचारे स्थलदुर्गीयाद् भूमिलाभः श्रेयान् कस्मात्, स्थलभवं हि दुर्गं सुखेन रोद्धुमवमर्दयितुं अवस्कन्दितुं च शक्यं शत्रुनिस्सरणसौकर्याप्रदायकं च सुखोच्छेद्यमिति ततो भूमिः सुखलभ्या। नदीदुर्गं तु द्विगुणक्लेशसाधनीयं पानार्हजलवत्तया जलाधीनधान्यफलवृक्षलतादिसम्पद्योगेन च शत्रोः सुखोपजीव्यं च दुरुच्छेदमिति ततो भूमिर्न सुखलभ्येत्याह—दुर्गप्रतिस्तब्धयोरपीत्यादि।

नदीदुर्गीयपर्वतदुर्गीयाभ्यां शत्रुभ्यां भूमिलाभश्रेयस्त्वविचारणायां नदीदुर्गीयाद् भूमिलाभः श्रेयान्, कुतः, नदीदुर्गं हि गजैर्दारुस्तम्भारब्धैः सङ्क्रमैः सेतुबन्धैर्नौभिश्च तार्यम् अस्थिरगाम्भीर्यं तटभेदापसृतजलं च सुखसाध्यं भवति 'पार्वतं तु दुर्गं सुष्ठुशिलाबन्धादिकृतपरिरक्षं दुष्करोपरोधम् अशक्यारोहणं भवति। किञ्चास्मिन्नेकेनास्त्रेणैक एव हन्तुं शक्यो न बहवः, महापकारिणामुपरि च शिलावृक्षादेरधित्यकातः पातनेन प्रतीकारः सुकर इति तत् कृच्छ्रसाधनीयं भवतीत्याह—नदीपर्वतदुर्गीयाभ्यामित्यादि।

नयचन्द्रिका

द्वयोरपि दुर्गप्रतिस्तब्धके विशेषमाह—दुर्गेत्यादि। द्वयोरपि दुर्गवतोः स्थलनदीदुर्गीयाभ्यां भूमिलाभविमर्शे स्थलदुर्गीयात् लाभः श्रेयान् इत्यर्थः।

हेतुमाह—स्थालेयं हीति। स्थले भवं दुर्गं सुखेनायत्ते न साध्यम्।

अवरोधो निरोधनम्। अवमर्दनं भञ्जनम्। अवस्कन्दः अविज्ञातैः प्रविश्य ग्रहणं यस्य तत्तथा। अनिस्राविशत्रु चेति—शत्रोरपसरापेक्षायामशक्यनिस्सरणं चेत्यर्थः।

एवं स्थलदुर्गोच्छेदादौ कार्यं प्रदर्श्य नदीदुर्गस्य दुश्छेद्यत्वमाह—नदीदुर्गन्त्विति। द्विगुणक्लेशकरमिति, स्थलदुर्गादिति शेषः। क्लेशकरत्वहेतु दुर्गवतः अशक्तित्व शत्रोरशितवतनिष्पादकतया दुरुच्छेद्यत्वमित्याह—उदकञ्चेत्यादि। पातव्यं पानयोग्यञ्च, फलवृद्ध्यौषध्यादिहेतुश्चेत्यर्थः। ततश्च नदीदुर्गीयाद् भूमिलाभो न श्रेयानित्यर्थः।

**(८) निम्नस्थलयोधिभ्यो निम्नयोधिभ्यो भूलाभः श्रेयान् । निम्नयोधिनो ह्यपरुद्धदेशकालाः । स्थलयोधिनस्तु सर्वदेशकालयोधिनः ।**

**(९) खनकाकाशयोधिभ्यः खनकेभ्यो भूमिलाभः श्रेयान् । खनका हि खातेन शस्त्रेण चोभयथा युध्यन्ते; शस्त्रेणैवाकाशयोधिनः ।**

---

नयचन्द्रिका

विशेषान्तरमाह—नदीपर्वतेत्यादि । नदीपर्वतदुर्गीयाभ्यां भूमिलाभविमर्शे सतीति योज्यम् ।

नदीदुर्गस्य सुसाध्य‥त्वमाह—नदीदुर्गञ्चेति । हस्तिभिश्च, स्तम्भः धारकः, धृतैः, सङ्क्रमैश्च सेतुबन्धैश्च नौभिश्च सुतरम् । अनित्यं गाम्भीर्यमिति, जलपूरस्य कादाचित्कत्वादिति भावः । अव(प)स्राव्युदकञ्चेति, तदभेदादपसृतजलन्त्वस्यामित्यर्थः ।

पर्वतदुर्गस्य दुस्साधत्वादाह—पावक(र्वत)न्त्विति । स्वारक्षमितयनेक भेदनादि-प्रवृत्ता (त्त) शिलावर्षादिना सुखप्रतीकारमित्यर्थः । दुरुपरोधीति । अशक्योपरोधम्, शिखरस्थैरुपरोधकानां, निद्रादिरन्ध्रापेक्षणेन सुखावस्कन्दनत्वादिति भावः । कृच्छ्रा-रोहणमिति, कण्टकिगुल्मविषमशिलाभिरिति शेषः । शरादिभिः कतिपयघातेऽपि न सर्ववधः शक्य इत्याह—भग्ने चेति ।

शिलेत्यादि । बद्धवैरतया प्राणनिरपेक्षाणामप्यारुरुक्षूणां महापकारिणां शत्र्वा-दिक्षयन्ते तच्छिलावृक्षादिप्रमोक्षश्च प्रतोकारः शक्य इत्यर्थः ।

श्रीमूला

निम्ने स्थित्वा नावाद्यारूढयोद्धारः केचित्, स्थलयोधिनः केचित् । तेभ्य उभयेभ्यो भूमिलाभश्रेयस्त्वचिन्तायां निम्नयोधिभ्यो भूमिलाभ एव श्रेयान्, कुतः यस्मात् निम्नयोधिनो हि अवच्छिन्नदेशकालयोधित्वात् सुसाधाः, इतरे तु अनवच्छिन्न-देशकालयोधित्वाद् दुसाधा इत्याह—निम्नस्थलयोधिभ्य इत्यादि ।

भूमिं खात्वा तत्र स्थिता ये युध्यन्ते ते खनकयोधिनः, अनावृतेऽवकाशे स्थित्वा युध्यमाना आकाशयोधिनः । तेभ्य उभयेभ्यो भूमिलाभश्रेयस्त्वसम्प्रधारणायां खनक-योधिभ्यो भूलाभः श्रेयान्, कस्मात्, ते हि खातशस्त्रोभयसापेक्षतयोपरूद्धदेशकाल-योधिनः खातालाभावसरे सुखेन साध्या भवन्ति । आकाशयोधिनस्तु देशकालोपरोधा-भावात् सदा सर्वत्र युध्यन्त इति दुस्साधा इत्याह—खनकाकाशयोधिभ्य इत्यादि ।

नयचन्द्रिका

निम्नयोधिन इति । नावादिभिरुदके स्थित्वा योद्धारः ।

खनकादीनामवच्छिन्नदेशकालत्वं कथमित्यत्राह—खनकादीति । तेषां शस्त्रवत् खातस्यापि उपकरणतयाऽपेक्षितत्वात् तस्य च सर्वत्राभावात् ते सुसाधाः । आकाश-योधिनस्तु सर्वदेशकालयोधित्वाद् दुस्साधाः । तथा च खनकेभ्यो लाभः श्रेयानित्यर्थः ।

[ निगमनम् ]

**एवंविधेभ्यः पृथिवीं लभमानोऽर्थशास्त्रवित् ।**
**संहितेभ्यः परेभ्यश्च विशेषमधिगच्छति ॥२५३॥**

इति षाड्गुण्ये मित्रहिरण्यभूमिकर्मसन्धौ भूमिसन्धिः
दशमोऽध्यायः, आदितोऽष्टशततमः ।

---

श्रीमूला

अध्यायं श्लोकेनोपसंहरति—एवंविधेभ्य इति । 'यो बलवन्तमाक्रम्य भूमिमवाप्नोति सोऽतिसन्धत्ते' इत्यादिनोक्तप्रकारेभ्यो बलवदादिभ्यः खनकान्तेभ्यः, पृथिवीं लभमानः, अर्थशास्त्रवित्, संहितेभ्यः पणितेभ्यः सामवायिकेभ्यः, परेभ्यश्च शत्रुभ्यश्च, विशेषम् उत्कर्षम्, अधिगच्छति, अर्थाद् विजिगीषुः ।

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे दशमोऽध्यायः,
मित्रहिरण्यभूमिकर्मसन्धौ भूमिसन्धिः, आदितोऽष्टोत्तरशततमः ।

नयचन्द्रिका

एवमुक्तप्रकारेभ्यो भूमिलाभे विजिगीषुः सर्वतो विशेषभागी स्यादित्याह—एवंविधेभ्य इत्यादिना । एवंविधेभ्य इति । ये बलवदुपक्रमेण खनकान्ता उक्तास्तेभ्यः, भूमिलाभैः, संहितेभ्यः सामवायिकेभ्यः, यातव्यादिभिश्च विजिगीषुरतिशयं गच्छेदित्यर्थः ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां
कौटलीयटीकायां नयचन्द्रिकायां षाड्गुण्ये दशमोऽध्यायः ।

# एकादशोऽध्यायः

## अनवसितसन्धिः

[ तत्तन्निवेशस्थापनयोग्यशून्यभूमिलाभस्याप्यवश्यकता,
तत्र देवनदीमातृकयोर्वैशिष्ट्यं च ]

**'त्वं चाहं च शून्यं निवेशयावहे' इत्यनवसितसन्धिः ।**

---

### श्रीमूला

भूमेः पणितव्याया विशेषानभिधाय शून्यनिवेशनरूपे तदीयकर्मणि अनवसितसन्धय इह निरूप्यन्ते । शून्यनिवेशनं जनपदखनिद्रव्यवनहस्तिवनादिनिवेशनविशेषरूपतया वस्तुतः पर्यवस्यदपि सामान्यरूपेणैवेहोल्लिख्यमानमनध्यवसितविशेषरूपत्वादनवसितं कर्मेति तद्विषयाः सन्धयोऽनवसितसन्धय उच्यन्ते । अत एवास्माद् अवसितविषयस्य कर्मसन्धेर्वक्ष्यमाणस्य भेदो द्रष्टव्यः ।

त्वं चाहं चेत्यादि । शून्यं निवेशयावहे जनपदादिनिवेशनेनाशून्यं कुर्वहे । अनवसितसन्धिरिति । समसन्धिश्चायमुभयोः समानत्वात् ।

### नयचन्द्रिका

मित्रहिरण्यभूमिकर्मसन्धौ भूमिसन्धिः, तदेवं 'मित्रहिरण्यभूमिकर्मसन्धय' इति सूत्रेण सामवायिकैः सह सन्धिभूमिविशेषानुक्त्वा भूमेः शून्यनिवेशने कर्मविशेषे अनवसितसन्धीनाह—त्वञ्चाहञ्च शून्यमित्यादिना । अनवसितसन्धिरिति, जनपदखनिद्रव्यहस्तिनखाननानां ( ? हस्तिकाननानां ) शून्यनिवेशनस्य फलसिद्ध्याऽत्रापि निश्चयाभावात् कालनियमाभावाच्च नावसितसन्धित्वमस्येति केचिद् व्याचक्षते । तदसत् । सर्वेषामपि दुष्कर्मणां फलसन्देहस्याविशिष्टत्वात्तदन्तरा प्रतिबन्धादि—सम्भवात् ।

ननु भूमिसन्ध्यनन्तरं कर्मसन्धौ वक्तव्ये कोऽयमन्तराऽनवसितसन्धिः ? न वाच्यं शून्यनिवेशनस्य कर्मत्वात् कर्मसन्धावेवास्यान्तर्भाव इति । "उक्ताः कर्मसन्धय" (७ अधि० १२ अध्या० ४२ सूत्रम्) इति उत्तरार्धतया कर्मसन्धीनामुपसंहारात् एषामपि कर्मत्वे वा तत्रैवाभिधेयत्वाच्चेतिचेत् सत्यम् । शून्यनिवेशनं तावत् कर्मैवेत्यभिहितम् । तत्र सामान्यतो निवेश्यमानोऽध्यवसायवत्, यथा तत्र सामान्यतो वृक्षविशेषसंज्ञास्फुरणेऽपि धवखदिरादिरूपेणानुल्लेखः, तथा सामान्यतो निवेशनीयानां शून्यानां स्फुरणेऽपि धान्यवापद्रव्यहस्तिवनादिरूपेणानुल्लेख एवेत्यनवसितत्वं शून्यनिवेशकर्मणामिति भावः ।

शून्यनिवेशनस्य चोभयोस्तुल्यत्वात् समसन्धिरयम् ।

**तयोर्यः प्रत्युपस्थितार्थो यथोक्तगुणां भूमिं निवेशयति सोऽतिसंधत्ते ।**

**तत्रापि स्थलमौदकं वा ? इति—महतः स्थलादल्पमौदकं श्रेयः, सातत्यादनवस्थितत्वाच्च फलानाम् । स्थलयोरपि प्रभूतपूर्वापरसस्यमल्पवर्षपाकमसक्तारम्भं श्रेयः । औदकयोरपि धान्यवापमधान्यवापाच्छ्रेयः । तयोरल्पबहुत्वे धान्यकान्तादल्पान्महदधान्यकान्तं श्रेयः । महत्यवकाशे हि स्थाल्याश्चाऽऽनूप्याश्चौषधयो भवन्ति । दुर्गादीनि च कर्माणि प्राभूत्येन क्रियन्ते । कृत्रिमा हि भूमिगुणाः ।**

---

श्रीमूला

तत्रातिसन्धिमाह—तयोरित्यादि । संहितयोर्मध्ये, यः सन्निहितसामग्रीको जनपदनिवेशोक्तगुणसम्पन्नां भूमिं निवेशयति, सः अतिसन्धत्ते विशेषलाभं भजते, अतथाविधभूमिनिवेशकापेक्षयेत्यर्थः ।

यथोक्तगुणायामपि विशेषं चिन्तयति—तत्रापि स्थलमौदकं वेति । स्थलं वृष्टिमात्रलभ्यजलम्, औदकं सदाजलसरोयुतं नदीयुक्तं च । विपुलात् स्थलाद् अल्पमौदकं प्रशस्ततरं, कस्मात्, सर्वकालोत्पाद्यफलोदयत्वात् सुनिश्चितफलोत्पत्तिकत्वाच्चेत्याह—महतः स्थलादित्यादि ।

स्थलयोरपि मध्ये प्राज्यशारदिकग्रैष्मिकलक्षणपूर्वापरसस्यप्रसवम् अल्पवृष्टिनिष्पाद्यफलं दन्तुरत्वशर्करिलत्वादिरहिततया निरुपरोधकर्षणारम्भं स्थलं श्रेय इत्याह—स्थलयोरपीत्यादि ।

औदकत्वेऽपि विशेषमवधारयति—औदकयोरपीति । तयोरपि मध्ये, धान्यवापं धान्यानि व्रीहिशाल्यादीन्युप्यन्तेऽत्रेति तथाभूतम्, अधान्यवापात् श्रेयः । तयोरिति । धान्यवापाधान्यवापयोरौदकयोः, अल्पबहुत्वे अल्पत्वे च, विमृश्यमाने इति शेषः । धान्यकान्तात् धान्येन कमनीयाद् धान्यवापादित्यर्थः, अल्पाद्, महद् अधान्यकान्तं, श्रेयः । कस्मात्, हि यतः, महति अवकाशे, स्थाल्याः स्थलजाः, आनूप्याः जलप्रायदेशजाः षष्टिकादयश्च, ओषधयः, भवन्ति । महत्त्वे गुणान्तरमप्याह—दुर्गादीनि चेत्यादि । प्राभूत्येन प्राचुर्येण । धान्यकान्तत्वमपि तत्र सम्पादयितुं शक्यं भूमिगुणानां क्रियासाध्यत्वादित्यभिप्रायेणाह—कृत्रिमा हि भूमिगुणा इति ।

नयचन्द्रिका

अत्रैवातिसन्धिमाह—तयोर्य इत्यादि । प्रत्युपस्थितार्थ इति । प्रत्यग्रसन्निहिततत्सामग्रीक इत्यर्थः । यथोक्तगुण(णा)मिति—जनपद निवेशोक्तगुणवतीम् । अतिसन्धत्त इति । विशेषं न लभते ।

यथोक्तगुणभूमावपि तद्विशेषद्वारा विमृशति—तत्रापीत्यादि । स्थलमिति । वर्षमात्रलभ्योदकम् । औदकमिति । अधोजलवननदीमातृकञ्च ।

[ साधनीयांशविशेषोपयोगिगुणविशिष्टानां
प्रदेशानां लब्धव्यत्वनिरूपणम् ]

**(१) खनिधान्यभोगयोः खनिभोगः कोशकरः, धान्यभोगः कोश-कोष्ठागारकरः। धान्यमूला हि दुर्गादीनां कर्मणामारम्भाः। महाविषय-विक्रयो वा खनिभोगः श्रेयान्।**

---

नयचन्द्रिका

अवधारयति—महत इत्यादि। हेतुमाह—सातत्यादिति। औदकभावानां धान्यादीनां सार्वकालिकत्वादनपायितया निश्चितत्वाच्चेत्यर्थः।

स्थलत्वेऽपि विशेषमाह—स्थलयोरपीति। अरिविजिगीषु प्राप्ययोरिति शेषः। प्रभूतपूर्वापरसस्यमिति, पूर्वं शारदम् अपरं ग्रैष्मिकं ते प्रभूते अक्षुद्रफले यस्य तत्तथा। अल्पवर्षेणैव पाको यस्येति तथा। असक्तारम्भमिति, निम्नोत्तप्तशिलाभूयिष्ठत्वादे-रशक्यकर्षणन्नेत्यर्थः।

औदकत्वेऽपि विशेषमाह—औदकयोरपीति। अत्रापि अरिविजिगीषुप्राप्ययोरिति ग्राह्यम्।

तयोरल्पबहुत्वे इति। धान्यकान्ताधान्यकान्तयोरल्पबहुत्वविमर्श इत्यर्थः। महतः श्रेयस्त्वे युक्तिमाह—महतीत्यादि। स्थाल्या इति स्थलभवाः। आनूप्या इति, जलप्रायत्वदेशभवाः षष्टिकादयः।

महतिदेशे दुर्गादिक्रियापि शक्येत्याह—प्राभूत्येनेति। महतेत्यर्थः।

तथापि धान्यकान्तत्वं नान्यत्रेत्याह—कृत्रिमा हीति। उदकेकंवाद्यगुणैवेत्यर्थः।

श्रीमूला

खनिधान्यभोगयोरिति। विशेषो विमृश्यत इति शेषः। खनिभोगः कोशकरः कोशमात्रहेतुः, धान्यभोगः कोशकोष्ठागारकरः कोशस्य कोष्ठागारस्य च धान्यनिधान-स्थानभूतस्य कारकः। अतश्च धान्यभोगः श्रेयानित्यर्थः। दुर्गसेतुवणिक्पथादि-कर्मान्तरोपयोगो च धान्यभोग इत्याभिप्रायेणाह—धान्यमूला हीत्यादि। धान्यभोगं खनिभोगविशेषेण विकल्पयति—महाविषयविक्रय इति। महान्तः क्रेतृबहुत्वेन बहवः विषयविक्रयाः खन्युत्पन्नानां भोगविषयभूतानां लवणजातीयानां विक्रयाः यस्मिन् स तथाभूतः, खनिभोगो वा श्रेयान्।

नयचन्द्रिका

खनिभोगाद्धान्यभोगस्य श्रेयस्त्वमाह—खनीत्यादि। कोशकर इति, कोश-मात्रकर इत्यर्थः।

कोष्ठागारं—धान्यादिनिधानस्थानम्। उभयकरत्वात्तस्यश्रेयस्त्वमित्यर्थः।

**(२) 'द्रव्यहस्तिवनभोगयोर्द्रव्यवनभोगः सर्वकर्मणां योनिः प्रभूतनिधानक्षमश्च । विपरीतो हस्तिवनभोगः' इत्याचार्याः । 'न' इति कौटल्यः—शाक्यं द्रव्यवनमनेकमनेकस्यां भूमौ वापयितुं, न हस्तिवनम्; हस्तिप्रधानो हि परानीकवध इति ।**

**(३) वारिस्थलपथभोगयोरनित्यो वारिपथभोगः, नित्यः स्थलपथभोग इति ।**

---

नयचन्द्रिका

सर्वकर्मोपयोगमप्याह—धान्येत्यादि । दुर्गादीनामिति, यानि दुर्गसेतुवणिक्पथशून्यनिवेशनादिकर्माणि तदारम्भा इत्यर्थः ।

एतदपवादं विकल्पेनाह—महाविष(क्र)यो वेति । महान्तोऽनेकक्रेतारो विक्रयविषयोऽस्येति तथा । यथा लवणमिति भावः ।

श्रीमूला

द्र०ाहस्तिवनभोगयोरिति । तयोर्विशेषचिन्तायां, द्रव्यवनभोगः, सर्वकर्मणां योनिः साधकः, प्रभूतनिधानक्षमः प्रचुरसञ्चयार्हश्च । हस्तिवनभोगः, विपरीतः अतथाभूतः । ततश्च स एव हस्तिवनभोगात् श्रेयानित्यर्थः । इत्याचार्याः ।

स्वमतमाह—नेति कौटल्य इत्यादि । द्रव्यवनमनेकासु भूमिष्वनेकप्रकारमुत्पादयितुं शक्यं, न तु हस्तिवनं हस्तिनां क्वचित् क्वचिदेवोत्पत्तेः । मुख्ये च शत्रुसैन्यवधलक्षण उपकारे हस्ती प्रधानं साधनमित्यतो हस्तिवनभोग एव श्रेयान् द्रव्यवनभोगादित्यर्थः ।

वारिस्थलपथभोगयोरिति । वारिपथभोगस्थलपथभोगयोः, अनित्ययोरित्यार्थम्, अनित्यः कादाचित्कः, वारिपथभोगः, श्रेयानिति शेषः । तयोरेव नित्ययोर्मध्ये श्रेयांसमाह—नित्यः स्थलपथभोग इति ।

नयचन्द्रिका

आचार्यमतमाह—द्रव्यहस्तिवनभोगयोरिति । द्रव्यं-सारदार्वादि, तद्वनभोगो हस्तिवनभोगाद्धस्तिलाभरूपाच्छ्रेयानित्यर्थः । सर्वकर्मणां दुर्गादीनां सारदार्वपेक्षत्वादित्यर्थः । प्रभूतनिधानक्षमश्चेति, संहतानां गुरुतरगोपुरखरादिधारणक्षमत्वादिति भावः । स्वमते शक्तिमाह—शक्यं द्रव्यवनमिति । न हस्तिवनमिति, सर्वत्र हस्त्यनुवादादिति भावः ।

तथापि दारुवनहस्तिनामुपयोग इत्यत्राह—(हस्तिप्रधानोहीति) । हस्तिप्रधान इत्यर्थः ।

वारिपथभोगः—नौयानादिसाध्यः । स्थलपथभोगो········गर्भादिसाध्यः । अनित्य इति । कादाचित्कः ।

**(४) भिन्नमनुष्या श्रेणीमनुष्या वा भूमिः ? इति—भिन्नमनुष्या श्रेयसी। भिन्नमनुष्या भोग्या भवत्यनुपजाप्या चान्येषाम्, अनापत्सहा तु; विपरीता श्रेणीमनुष्या कोपे महादोषा।**

**(५) तस्यां चातुर्वर्ण्याभिनिवेशे सर्वभोगसहत्वादवरवर्णप्राया श्रेयसी। बाहुल्यात् ध्रुवत्वाच्च कृष्याः कर्षणवती।**

———

श्रीमूला

असंहतमनुष्यायाः संहतमनुष्यायाश्चेत्यनयोर्भूम्योर्मध्ये का श्रेयसीति विचारे पूर्वा श्रेयसीत्याह—भिन्नमनुष्या श्रेणीमनुष्या वेत्यादि। श्रेयस्त्वे कारणमाह—भिन्नमनुष्येति। सा, भोग्या स्वविधेया, अन्येषाम् अनुपजाप्या च अभेद्या च, भवति। सर्वेष्वसंहतेषु कः कमुपजपिष्यतीति भावः। अनापत्सहा तु किन्तु सा आपदं न सहते आपत्समये पर्यवस्थापकाभावेन क्लिश्यत इत्यर्थः। श्रेणीमनुष्या श्रेणीसंहतत्वं प्राप्ता मनुष्या यस्यां सा तथाभूता भूमिः विपरीता अविधेया अन्योपजाप्या आपत्सहा च। कोपे महादोषेति। सा चेत् कुपिता राजानमप्युच्छिन्द्यादित्यर्थः।

तस्यामिति। भूमौ चातुर्वर्ण्याभिनिवेशे तद्विषयश्रेयस्त्वविचारे, सर्वभोगसहत्वात् कर्षणभारवहनादिसर्वकर्मविनियोगक्षमत्वात्, अवरवर्णप्राया अवरवर्णग्रहणस्योपलक्षणत्वात् शूद्रगोपालकादिबहुला, भूमिः श्रेयसी। तस्याश्च कर्षणवत्त्वे गोरक्षकवत्त्वे वणिग्वत्त्वे च प्राशस्त्यं सहेतुकं क्रमेणाह—बाहुल्यादिति। कृष्याः, बाहुल्यात् सार्वत्रिकत्वेन प्रचुरत्वाद्, ध्रुवत्वाच्च निश्चितफलोदयत्वाच्च, कर्षणवती भूमिः श्रेयसी।

नयचन्द्रिका

निवासपुरुषभेदात् श्रेयस्त्वं भूमेर्विमृशति—भग्न(भिन्न)मनुष्येत्यादि। मिथोऽसंहता मनुष्या यस्यां सा तथा। श्रेणीमनुष्येति। श्रेणीत्वेन संहतमनुष्येत्यर्थः।

अवधारयति—(भिन्न)मनुष्येति।

भोग्येति—स्वविधेयेत्यर्थः। अन्येषामनुपजाप्या—अभेद्याचेत्यर्थः। तत्र दोषांशमप्याह—अनापत्सहेति। मिथः सङ्घातभावात् एकस्यधारकस्याभावात् परावस्कन्दादिभयेषु सीदतीत्यर्थः। विपरीतेति, पूर्वोक्तगुणदोषरहितेत्यथः। दोषान्तरमप्याह—कोपे इति। महादोषे(ष)इति। राज्ञोऽपि विनाशकरीत्यर्थः।

तस्या भूमेश्चातुर्वर्ण्यनिवेशनविमर्शे शूद्रप्रायमनुष्या श्रेयसी, तत्र भोगः, सर्वभोगसहत्वादिति। भोगः—कर्षणभारवहनदुर्गकरणादिविनियोगः, तद्योग्यत्वादित्यर्थः। कृषि गोरक्ष्य ( क्ष ) वाणिज्यवतीति क्रमेण सयुक्तिकमाह—बाहुल्यादित्यादि। कृषिरहिता प्रायः क्वचिदपि नास्तीति भावः। ध्रुवत्वादिति–निश्चितफलत्वादित्यर्थः। अतः कर्ष ( ण ) वती श्रेयसीत्यर्थः।

**कृष्याश्चान्येषां चारम्भाणां प्रयोजकत्वात् गोरक्षकवती,पण्यनिचयर्णानुग्रहादाढ्यवणिग्वती ।**

**(६) भूमिगुणानामपाश्रयः श्रेयान् ।**

**(७) दुर्गापाश्रया पुरुषापाश्रया वा भूमिः ? इति—पुरुषापाश्रया श्रेयसी । पुरुषवद्धि राज्यम् । अपुरुषा गौर्वन्ध्येव किं दुहीत ।**

———————

### श्रीमूला

कृष्याः कृषिव्यापारस्य अन्येषां भारवहनादिकर्मणां च गावो गोपालाश्च प्रयोजका इत्यतो गोरक्षकवती भूमिः श्रेयसीत्याह—कृष्या इत्यादि पण्यनिचयर्णानुग्रहादिति । पण्यनिचयेन पणनीयधान्यादिसञ्चयेन ऋणेन वृद्ध्यर्थद्रव्यदानेन च अनुग्रहाद् वणिग्भ्यो धनिकेभ्यश्चोपकारलाभात्, आढ्यवणिग्वती धनिकवाणिजवती भूमिः, श्रेयसी ।

अनित्याऽमित्रत्वसम्पन्नत्वादिषु भूमेर्गुणेषु मध्ये कःश्रेयानित्याह—भूमिगुणानामिति । तेषां मध्ये, अपाश्रयः श्रेयान् रक्षा श्रेयसी ।

अपाश्रयेषु विशेषं चिन्तयति—दुर्गापाश्रयेत्यादि । पुरुषारक्षायाः श्रेयस्त्वे कारणमाह—पुरुषवद्धीत्यादि । पुरुषवत् बहुलपुरुषयोगि । किं दुहित आरम्भकपुरुषाभावान्न किमपि फलं प्रसुवीत ।

### नयचन्द्रिका

गोरक्ष्य ( क्ष ) श्रेयस्त्वमाह—कृष्याश्चे(चे)त्यादि । कृष्याश्च फलकर्मणोऽन्येषां भारवहनादीनाञ्च कर्मणां तदधीनत्वाद्गोरक्ष्य ( क्ष ) वती श्रेयसीत्यर्थः ।

वाणिज्यवृत्तिमाह—पण्येत्यादि । पण्यानि—पणनार्हद्रव्याणि । निचयः—धान्यादिसञ्चयः । ऋणानि, वृद्ध्यर्थं हिरण्यादीनाम् । एभिरनुग्रहात् वाणिज्यवती श्रेयसीत्यर्थः ।

एवमुदकस्य निवासिपुरुषकर्मविशेषैः भूमेः श्रेयस्त्वं प्रदर्श्य भूमिगुणेषु रक्षावत्वं प्रधानमित्याशय वा नपाश्रयवती श्रेयसीत्याह—भूमिगुणानामित्यादि । अनित्यामित्रसंपन्नेत्यादीनामुक्तगुणानां सर्वेषां मध्ये रक्षावत्ता श्रेयसीत्यर्थः ।

एवमनपाश्रयाया भूमेः अपाश्रयवती श्रेयसीत्युक्त्वाऽपाश्रयत्वेपि तद्विशेषश्रेयस्त्वे विमृशति—दुर्गापाश्रया पुरुषापाश्रयावेत्यादि ।

अवधारयति—पुरुषेत्यादि ।

हेतुमाह—पुरुष(व)द्धीति । पुरुषवत्वं राज्यस्य प्रधानाङ्गमित्यर्थः । अपुरुषा-गौरिति अपुरुषा गौर्भूमिर्वन्ध्यैवानुपजीव्यैव वन्ध्या गौरिवेत्यर्थः ।

[ महाक्षयव्ययसाधनीयजनपदादिनिवेशवत्प्रदेशविक्रये पणनप्रकारः पणितव्याश्च ]

**महाक्षयव्ययनिवेशां तु भूमिमवाप्तुकामः पूर्वमेव क्रेतारं पणेत, दुर्बलं अराजबीजिनं निरुत्साहम् अपक्षम् अन्यायवृत्तिं व्यसनिनं दैवप्रमाणं यत्किञ्चनकारिणं वा ।**

---

श्रीमूला

भूमेर्निवेशने शत्रुविजिगीष्वोरतिसन्धिभेदमाह—महाक्षयव्ययनिवेशां त्विति । महता युग्यपुरुषाद्यपचयेन धनव्ययेन च साधनीयजनपदादिनिवेशनां, भूमिम्, अवाप्तुकामः, पूर्वमेव अवाप्तेः प्रागेव, क्रेतारं पणेत । कथम्भूतं, दुर्बलादानामष्टानामन्यतमम् । ते हि महता यत्नेन क्षयव्ययादिना भूमिं निवेश्य पश्चादात्महस्तमेवातिक्षयव्ययावसन्नाः प्रापयेयुरिति तत्पणनोपदेशः । स चायं विजिगीषोर्दुर्बलादिप्रयत्नसम्पादितनिवेशाया भूमेर्भोगो महाक्षयव्यय स्वप्रयत्ननिवेशितभूमेः शत्रोर्भुमिभोगाद् विशेषलाभो भवतीत्यतिसन्धिर्वेदितव्यः ।

नयचन्द्रिका

अरिविषिगीष्वोभूमिनिवेशनेऽतिसन्ध्यन्तरमाह—महाक्षयव्ययेत्यादि । महाक्षयव्ययो निवेशोऽस्या इति तथा महता क्षयेण व्ययेन च निवेशनीयां भूमिमवाप्तुकामो विजिगीषुः प्राप्तेः प्रागेव क्रेतारं पणेत । ताम······हि भूमिं दुर्बलादिभिः क्षयव्ययादिभिः प्रयत्नेन निवेशिता ( तां ) पुनरप्यचिरेणात्मन्येव सङ्क्रामेदिति हृदयम् ।

के ते क्रेतारो ये पणनीया इत्यत्राह—दुर्बलमराजबीजिनमित्यादि । अत्र शत्रोः क्रेतरि प्रबले विजिगीषुर्दुर्बलं, शत्रोर्दुर्बले विजिगीषुरराजविजनमिति, एवं शत्रोः पूर्वपूर्वक्रेतृषु विजिगीषुरुत्तरोत्तरा क्रेतॄन् कुर्यादिति व्याचक्षतेऽतिसन्धिसिद्ध्यर्थम् । तदसत्, अन्यथैवातिसन्धिसिद्धेः । उक्तदिशातिसन्ध्यसिद्धेश्च । तथाहि, यथा महार्थव्ययनिवेशां भूमिं शत्रुर्युक्त (क्ति) तो निवेश्य भुङ्क्ते तदा विजिगीषोर्महाव्ययादिनाऽन्यैर्निवेशितां भूमिं तेभ्योऽचिरेणैव प्राप्नुवतोऽतिसन्धिः सिद्ध्यत्येव । पक्षान्तरे च दुर्बलादिषु क्रेतृषु सर्वेषु च भूमेः प्रत्यादानाविशेषात् कथं विशेषलाभरूपोऽतिसन्धिः स्यात् । किञ्च तेषामलाभे पार्ष्णिग्रहोपग्रहोक्तविधिनाऽन्यत्र भूमिमवस्थापयेदित्युक्तम् ।

ननु शत्रुणाप्येवं कृत इति शत्रूणामपि पार्ष्णिग्राहोक्तविध्याचरणे विजिगीषोः कथमतिसन्धिः स्यात् । तस्माच्छत्रोः भूमिनिवेशने महान् क्लेशः । विजिगीषोस्तु तदा निमेष·········मुख्यलाभ·········( इतः परमियं व्याख्या पञ्चदशाध्यायस्य एकोनत्रिंशत्तमसूत्रतः प्राप्यते ) ।

[ तथा पणितानां दुर्बलादीनामवसादनप्रकाराः ]

**महाक्षयव्ययनिवेशायां हि भूमौ दुर्बलो राजबीजी निविष्टस्सगन्धाभिः प्रकृतिभिस्सह क्षयव्ययेनावसीदति, बलवानराजबीजी क्षयव्ययभयादसगन्धाभिः प्रकृतिभिस्त्यज्यते ।**

**निरुत्साहस्तु दण्डवानपि दण्डस्याप्रणेता सदण्डः क्षयव्ययेनावभज्यते । कोशवानप्यपक्षः क्षयव्ययानुग्रहहीनत्वान्न कुतश्चित्प्राप्नोति ।**

**अन्यायवृत्तिः निविष्टमप्युत्थापयेत्, स कथमनिविष्टं निवेशयेत् । तेन व्यसनी व्याख्यातः । दैवप्रमाणो मानुषहीनौ निरारम्भो विपन्नकर्मारम्भो वाऽवसीदति । यत्किश्चनकारी न किञ्चिदासादयति । स चैषां पापिष्ठतमो भवति ।**

———————

श्रीमूला

दुर्बलादयः पणिताः कथमवसीदन्ति, तत्राह—महाक्षयव्ययनिवेशायां हीत्यादि । राजबीजी राजवंश्यः । निविष्टः कृतनिवेशनः । सगन्धाभिः समानजातीयाभिः साह्यदायिनीभिः ।

बलवन्तमप्यराजबीजिनं सगन्धत्वाभावात् प्रकृतयः साहाय्यदानेन नानुगृह्णन्ति, किन्तु क्षयव्ययभयात् परित्यजन्तीत्याह—बलवानित्यादि ।

निरुत्साहं प्रत्याह—निरुत्साहस्त्विति । सः दण्डवानपि बलवानपि, दण्डस्याप्रणेता दण्डं यथास्थानमविनियोक्ता, सदण्डः दण्डेन सहेत्यर्थः, क्षयव्ययेन अवभज्यते भग्नकार्यो भवति ।

मित्ररहितः कोशवानपि क्षयव्ययोपकारालाभान्न कुतोऽपि सिद्धिमेतीत्याह—कोशवानपीत्यादि ।

अन्यायवृत्तिः प्राक्कृतनिवेशमप्युद्वासयेदन्यायशीलत्वेनैवहेतुना । कथं तस्मादनिविष्टनवनिवेशप्रत्याशेत्याह—अन्यायवृत्तिरित्यादि ।

तेन व्यसनी व्याख्यात इति । व्यसनिनि व्यसनित्वादेवानिविष्टनिवेशनमसम्भावनीयमित्यर्थः ।

दैवप्रमाण इत्यादि । दैवप्रमाणो यद्भविष्यः । मानुषहीनः पुरुषकाररहितः ।

यत्किञ्चनकारीत्यादि । इदमेवं कर्तव्यम् एवं कृते इदं सेत्स्यती' त्यादिविमर्शविकलं यत्किञ्चित् कुर्वाणो यत्किञ्चनकारी । एषां दुर्बलादीनां मध्ये ।

[ तत्र यत्किञ्चनकारिविषये मतभेदः ]

**'यत्किञ्चिदारभमाणो हि विजिगीषोः कदाचिच्छिद्रमासादयेत्' इत्याचार्याः । 'यथा छिद्रं तथा विनाशमप्यासादयेत्' इति कौटल्यः ।**

[ उक्तदुर्बलादिरूपक्रेत्रलाभे लब्धक्रेत्रानुगुण्येन
कर्तव्याः व्यवस्थाः ]

**तेषामलाभे यथा पार्ष्णिग्राहोपग्रहे वक्ष्यामस्तथा भूमिमवस्थापयेत्—इत्यभिहितसन्धिः ।**

**गुणवतीमादेयां वा भूमिं बलवता क्रयेण याचितस्सन्धिमवस्थाप्य दद्यात्—इत्यनिभृतसन्धिः ।**

**समेन वा याचितः कारणमवेक्ष्य दद्यात्—'प्रत्यादेया मे भूमिर्वश्या वा, अनया प्रतिबद्धः परो मे वश्यो भविष्यति, भूमिविक्रयाद्वा**

---

श्रीमूला

यत्किञ्चनकारिण्यपि कमपि गुणमाचार्यमतेनाह—यत्किञ्चिदित्यादि । अयमभिप्रायः—यत्किञ्चिदारभमाणो हि शत्रुर्विजिगीषुणा 'मूर्खोऽयमि' त्यवज्ञायमानस्तस्यात्मानं प्रत्यप्रतिजागरचेष्टितस्य कदाचित् प्रहारस्थानमुपलभेतेति ।

स्वमतमाह—यथा छिद्रमिति । विनाशमप्यासादयेदिति । आत्मच्छिद्रस्य विजिगीषुणा बहुशो लाभादिति भावः ।

उक्तदुर्बलाद्यलाभे पार्ष्णिग्राहचिन्तावक्ष्यमाणरीत्याऽतिसन्धिरेषितव्य इत्याह—तेषामलाभ इत्यादि । पार्ष्णिग्राहयोर्हि मिथोऽतिसन्धिः शङ्कितानर्थपरिहारादिलक्षणस्तत्रोक्तः । तथाविधं यं कमपि परापेक्षया विशेषलाभं पुरस्कृत्य भूमिं निवेशयेदित्यर्थः । इत्यभिहितसन्धिरिति । अभिहितोबद्धः भूमिदानाऽदाननिर्वृत्तत्वादविचाल्यः सन्धिरित्यर्थः ।

अतथाभूतं सन्धिमाह—गुणवतीमिति । सम्पन्नत्वाऽनित्यामित्रत्वादिगुणयुक्ताम्, अन्याशक्यभोगतायामाह—आदेयां वा क्रेतुरुपेक्षया कालान्तरे पुनः प्रत्यादानयोग्यां वा, भूमिं, बलवता प्रबलेन सामन्तेन, क्रयेण याचितः 'मह्यं विक्रीणीष्वे'ति प्रार्थितः, सन्धिम् अवस्थाप्य 'समयेषु मामनुगृहाणे' त्येवं सामान्यतः संधिं स्थापयित्वा, दद्यात् विक्रीणीत । इत्यनिभृतसन्धिरिति । इत्ययम् अविश्वस्तसन्धिः, दुर्बलं प्रति प्रबलस्य समयलङ्घनसम्भवादिति भावः ।

समेन यथोक्तभूमिप्रार्थने विधिमाह—समेन वा याचित इत्यादि । यथोक्तां भूमिं समेन प्रार्थितः, तस्याः शक्यप्रत्यादानतां वा, आत्मोपभोग्यतां वा, तत्सम्बन्धात्

**मित्रहिरण्यलाभः कार्यसामर्थ्यकरो मे भविष्यति' इति । तेन हीनः क्रेता व्याख्यातः ।**

[ निगमनम् ]

**एवं मित्रं हिरण्यं च सजनामजनां च गाम् ।**
**लभमानोऽतिसन्धत्ते शास्त्रवित् सामवायिकान् ॥२५४॥**

इति षाड्गुण्ये मित्रहिरण्यभूमिकर्मसन्धौ अनवसितसन्धिः
एकादशोऽध्यायः, आदितो नवशततमः ।

———— —

श्रीमूला

परस्यात्मवशे वर्तिष्यमाणतां वा, तद्विक्रयवशान्मित्रलाभहिरण्यलाभयोः कार्यसाधनक्षमयोर्भविष्यत्तां वा कारणं विमृश्य तदवधारणे विक्रीणीयादित्यर्थः ।

समविधि हीनेऽप्यतिदिशति—तेनेत्यादि ।

एवमिति । उक्तेन प्रकारेण, मित्रं नित्यत्ववश्यत्वादिविशेषयुक्तं, हिरण्यं च प्रार्थितार्थत्वादिभेदभिन्नं, सजनाम् अजनाम्, एतच्च सम्पन्नत्वादेरुपलक्षणम् । गां च भूमिं च, लभमानः शास्त्रवित् अर्थशास्त्रज्ञः, सामवायिकान् अतिसन्धत्ते सामवायिकान्तरापेक्षया विशेषलाभं प्राप्नोति ।

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे एकादशोऽध्यायः,
मित्रहिरण्यभूमिकर्मसन्धौ अनवसितसन्धिः,
आदितो नवोत्तरशततमः ।

## द्वादशोऽध्यायः

### कर्मसन्धिः

[ अतिशयितलाभसम्पादनहेतवः कर्मविशेषाः,
तत्र दुर्गसन्धिविषये तत्प्रकारः ]

**'त्वं चाहं च दुर्गं कारयावहे' इति कर्मसन्धिः ।**

**तयोर्यो दैवकृतमविषह्यमल्पव्ययारम्भं दुर्गं कारयति सोऽतिसन्धत्ते । तत्रापि स्थलनदीपर्वतदुर्गाणामुत्तरोत्तरं श्रेयः ।**

[ सेतुबन्धविषये ]

**सेतुबन्धयोरप्याहार्योदकात् सहोदकश्श्रेयान् । सहोदकयोरपि प्रभूतवापस्थानः श्रेयान् ।**

[ द्रव्यवनविषये ]

**द्रव्यवनयोरपि यो महत् सारवद्द्रव्याटवीकं विषयान्ते नदीमातृकं द्रव्यवनं छेदयति, सोऽतिसन्धत्ते । नदीमातृकं हि स्वाजीवमपाश्रयश्च आपदि भवति ।**

---

श्रीमूला

अथ कर्मसन्धिं निरूपयिष्यंस्तल्लक्षणमाह—त्वं चाहं चेत्यादि । दुर्गग्रहणं सेतुबन्धादेरप्युपलक्षणम् । 'दुर्गाद्यन्यतममावां कारयावहे' इति संविदा क्रियमाणः सन्धिः कर्मसन्धिः ।

तत्र दुर्गसन्धावतिसन्धिमाह—तयोर्य इत्यादि । सहितयोर्मध्ये, यः, दैवकृतं स्वभावविषयस्थलम्, अत एव अविषह्यं, शत्रुदुर्विषहम्, अल्पव्ययारम्भम् अल्पव्ययसाध्यनिष्पादं दुर्गं कारयति, सः, अतिसन्धत्ते अर्थादुक्तविपरीतदुर्गकारकमन्यं लाभतोऽतिशेते ।

दैवकृतदुर्गभेदेष्वपि श्रेयस्त्वमवधारयति—तत्रापीत्यादि ।

सेतुबन्धतारतम्ये श्रेयस्त्वमाह—सेतुबन्धयोरपीत्यादि । तयोरपि, आहार्योदकात् वर्षासु प्रयत्नविधारणीयजलात्, सहोदकः सहजतोयः, श्रेयान् । सहोदकयोरपि मध्ये, प्रभूतवापस्थानः प्रचुरसस्यवापयोग्यप्रदेशोपेतः सहोदकः श्रेयान् ।

द्रव्यवनविषयमतिसन्धिमाह—द्रव्यवनयोरपीति । तयोर्मध्ये, यः, महत् विस्तीर्णं सारवद्द्रव्याटवीकं प्रभूतफलप्रसवयोग्यता सारः सारवती द्रव्याटवी द्रव्योत्पत्तिभूमि-

[ हस्तिवनविषये ]

**हस्तिवनयोरपि यो बहुशूरमृगं दुर्बलप्रतिवेशमनन्तावक्लेशि विषयान्ते हस्तिवनं बध्नाति, सोऽतिसन्धत्ते ।**

**'तत्रापि—बहुकुण्ठाल्पशूरयोरल्पशूरं श्रेयः । शूरेषु हि युद्धम् । अल्पाश्शूरा बहूनशूरान् भञ्जन्ति, ते भग्नास्स्वसैन्यावघातिनो भवन्ति' इत्याचार्याः ।**

**'न' इति कौटल्यः—कुण्ठा बहवः श्रेयांसः, स्कन्धविनियोगादनेकं कर्म कुर्वाणाः स्वेषाम् अपाश्रया युद्धे, परेषां दुर्धर्षा बिभीषणाश्च । बहुषु हि कुण्ठेषु विनयकर्मणा शक्यं शौर्यमाधातुं, न त्वेवाल्पेषु शूरेषु बहुत्वमिति ।**

---

श्रीमूला

यस्मिंस्तत् तथाभूतं, विषयान्ते स्वीयजनपदप्रत्यन्ते, नदीमातृकं नदीपायनीयजलं, द्रव्यवनं छेदयति अद्रव्यच्छेदनेन सम्पादयति, सः, अतिसन्धत्ते अनदीमातृकद्रव्यवनच्छेदकापेक्षया विशेषलाभं प्राप्नोति । कुतः, हि यतः, नदीमातृकं, स्वाजीवं सुखोपजीव्यम्, आपदि दुर्भिक्षे, अपाश्रयश्च रक्षास्थानं च, भवति ।

हस्तिवनविषयमतिसन्धिमाह—हस्तिवनयोरपीति । तयोरपि मध्ये, यः, बहुशूरमृगं, दुर्बलप्रतिवेशं दुर्बलाः नियतिनिवासस्थानापेक्षया निहीनवाससौकर्याः प्रतिवेशा वनैकदेशा यस्मिंस्तत् तथाभूतम्, अनन्तावक्लेशि अनन्तैः अवक्लेशैः प्रवेशनिर्गमादिविषयैरुपेतं, हस्तिवनं, विषयान्ते प्रत्यन्ते, बध्नाति निवेशयति, सः, अतिसन्धत्ते, अर्थादुक्तविपरीत हस्तिवननिवेशिनम् ।

यथोक्तगुणेऽपि हस्तिवने विशेषावधारणमाचार्यमतेनाह—तत्रापीति । बहुकुण्ठाऽल्पशूरयोः बह्वशूराल्पशूरयोर्हस्तिवनयोर्मध्ये, अल्पशूरं श्रेयः । कुतः, हि यतः, शूरेषु युद्धं शूरेष्वेव हस्तिष्वायत्तं युद्धं, कुण्ठास्तु युद्धानुपयोगिन इत्यर्थः । शूराशूरैरुपकारापकारौ दर्शयति—अल्पाः शूरा इत्यादि । ते अशूराः । स्वसैन्यावघातिनः अकुतोमुखपलायनावसरे स्वीयमपि सैन्यमवमृन्दन्तीति भावः ।

स्वमतमाह—नेति कौटल्य इत्यादि । स्कन्धविनियोगात् सैन्यसमुदाये विनियोगात् । कर्म उपकरणनयनानयनादिकम् । स्वेषाम् अपाश्रयाः स्वीयानामुपकारकाः । परेषां दुर्घषा विभीषणाश्च स्वबहुत्वमात्रेण दृष्टेन शत्रूणां भीतिजनकाः अत एव धर्षयितुमशक्याश्च । यश्च शौर्यगुणोऽल्पेषु श्रैष्ठ्यहेतुरुक्तः स कुण्ठेष्वपि बहुषु हस्तिशिक्षाकर्मणोत्पादयितुं शक्यः न तु स्वभावशूरेष्वल्पेषु बहुत्वमापादयितुं शक्यमित्याह—बहुषु हीत्यादि । इतिशब्दः बहुकुण्ठश्रेयस्त्वं प्रति 'स्कन्धविनियोगादि'त्यादिनोक्तस्यार्थस्य हेतुतां द्योतयति ।

[ खनिविषये ]

**खन्योरपि यः प्रभूतसारामदुर्गमार्गामल्पव्ययारम्भां खनिं खानयति, सोऽतिसन्धत्ते ।**

**तत्रापि—महासारमल्पम् अल्पसारं वा प्रभूतम् ? इति—'महासारमल्पं श्रेयः । वज्रमणिमुक्ताप्रवालहेमरूप्यधातुर्हि प्रभूतमल्पसारमत्यर्घेण ग्रसते' इत्याचार्याः ।**

**'न' इति कौटल्यः—चिरादल्पो महासारस्य क्रेता विद्यते । प्रभूतस्सातत्यादल्पसारस्य ।**

[ वणिक्पथविषये मतभेदः विशेषाश्च ]

**एतेन वणिक्पथो व्याख्यातः ।**

**तत्रापि 'वारिस्थलपथयोर्वारिपथः श्रेयान्, अल्पव्ययव्यायामः प्रभूतपण्योदयश्च' इत्याचार्याः ।**

———————

श्रीमूला

खन्योरपि मध्ये प्रचुरसारवस्तुत्वाकृच्छ्रगम्यमार्गत्वाल्पव्ययसाध्यत्वैर्युक्तां खनिं खानयन् अतथाभूतखनिखानकापेक्षया विशेषलाभं भजत इत्याह—खन्योरपीत्यादि ।

खनावपि महार्घं वज्रमण्यादिकं सारवस्तु परिमितं लभ्यमानं वा श्रेयः अल्पार्धमसारवस्तु वा प्रचुरं लभ्यमानं श्रेय इति विमर्शे, वज्रमण्यादेर्महासारस्याऽल्पस्यापि मूल्यतः प्रभूताल्पसारातिशायित्वादाद्यमेव श्रेय इत्याचार्याणां मतमाह—तत्रापि महासारमित्यादि ।

आचार्यमतं न युक्तं, यतो महासारस्य वज्रमण्यादेः क्रेता बहोरपि कालादल्प एव लभ्यते, अल्पसारस्य तु लवणादेर्नित्यावर्जनीयोपकारत्वात् क्रेतारो बहवश्च नित्यं च लभ्यन्त इत्याह—नेति कौटल्यश्चिरादित्यादि । एवञ्च प्रभूतमल्पसारं श्रेय इति स्वमतमुक्तं भवति ।

उक्तेन प्रकारेण वणिक्पथोऽपि विशेषलाभमवेक्ष्य निवेशनीय इत्याह—एतेनेत्यादि ।

वणिक्पथोऽपि तावद् द्विविधो वारिपथः स्थलपथ इति । तत्र वारिपथः श्रेयान्, कुतः, अल्पेन धनव्ययेन पुरुषपरिश्रमेण च साध्यत्वाद्, स्थलपथापेक्षया पण्यनयनानयनसौकर्यातिशयेन बहुतरलाभहेतुत्वाच्चेत्याचार्यमतमाह—तत्रापि वारिस्थलपथयोरित्यादि ।

**'न' इति कौटल्यः—संरुद्धगतिरसार्वकालिकः प्रकृष्टभययोनिर्निष्प्रतीकारश्च वारिपथः, विपरीतः स्थलपथः ।**

**वारिपथे तु कूलसंयानपथयोः कूलपथः पण्यपट्टबाहुल्याच्छ्रेयान्; नदीपथो वा सातत्याद्विषह्याबाधत्वाच्च ।**

**स्थलपथेऽपि—'हैमवतो दक्षिणापथाच्छ्रेयान् । हस्त्यश्वगन्धदन्ताजिनरूप्यसुवर्णपण्यास्सारवत्तराः' इत्याचार्याः ।**

**'न' इति कौटल्यः—कम्बलाजिनाश्वपण्यवर्जाः शङ्खवज्रमणिमुक्तास्सुवर्णपण्याश्च प्रभूततरा दक्षिणापथे । दक्षिणापथेऽपि बहुखनिः सारपण्यः प्रसिद्धगतिरल्पव्यायामो वा वणिक्पथः श्रेयान्, प्रभूतविषयो वा फल्गुपण्यः । तेन पूर्वः पश्चिमश्च वणिक्पथो व्याख्यातः ।**

---

श्रीमूला

स्वमतमाह—नेति कौटल्यः संरुद्धगतिरित्यादि । विपदि सर्वतोनिरुद्धगमनः, वृष्ट्यादिबाधकालेष्वगम्यः स्थलपथाभ्यधिकव्यपायहेतुरशक्यप्रतिक्रियश्च जलपथ इति स न श्रेयान्, उक्तविपरीतगुणत्वात् तु स्थलपथः श्रेयानित्यर्थः ।

वारिपथोऽपि द्विप्रकारः अनुतीरगमनमार्गो जलगमनमार्ग इति । तत्राद्यः श्रेयान् पण्यपुटभेदनबहुत्वादित्याह—वारिपथे त्वित्यादि । तत्र विकल्पेनाऽपवादमाह—नदीपथो वेति । नदीवारिपथो वा, श्रेयान्, कुतः, सातत्यात् सन्ततगतित्वात्, विषह्याबाधत्वाच्च अनुत्कटाबाधत्वाच्च ।

स्थलपथेऽपि विशेषमाचार्यमतेनाह—स्थलपथेऽपीति । तत्रापि, हैमवतः उत्तरापथः, दक्षिणापथात् श्रेयान् । कुत इत्याह—हस्त्यश्वेत्यादि । हस्त्यादिषु गन्धः कस्तूरी । हस्त्यादयः सप्त पण्यपदार्थाः, सारवत्तराः अतिशयेनार्घवन्तः, तत्र प्रचुरा इति वाक्यशेषः ।

तत् खण्डयति—नेति कौटल्य इत्यादि । कम्बलाजिनाश्ववर्जमन्ये हस्त्यादयः, शङ्खवज्रमणिमुक्तास्वर्णरूपाः पण्यपदार्थाश्च उत्तरापथापेक्षया दक्षिणापथे प्रचुरतराः । ततश्च पण्यभेदनान्योन्यापेक्षं श्रेयस्त्वमुभयोरविशिष्टमित्यभिप्रायः ।

दक्षिणापथेऽपि विशेषमाह—दक्षिणापथेऽपीति । तत्रापि, बहुखनिः प्रसिद्धगतिः निरपायासिद्धगतागतः, अल्पव्यायामः अल्पपरिश्रमः, एवम्भूतः सारपण्यो वणिक्पथो वा श्रेयान् । प्रभूतविषयो वा फल्गुपण्यः असारपण्यत्वेऽपि प्रचुरक्रेतृको वणिक्पथो वा श्रेयान् ।

पूर्वपश्चिमवणिक्पथयोरपि विषये श्रेयस्त्वमित्थं द्रष्टव्यमित्याह—तेनेत्यादि ।

**तत्रापि चक्रपादपथयोः चक्रपथो विपुलारम्भत्वाच्छ्रेयान्, देशकाल-सम्भावनो वा खरोष्ट्रपथः ।**

[ अंसपथविषये ]

**आभ्यामंसपथो व्याख्यातः ।**

[ कर्मफलभूतानां क्षयवृद्धिस्थानानां लक्षणानि ]

**परकर्मोदयो नेतुः क्षयो वृद्धिर्विपर्यये ।**
**तुल्ये कर्मपथे स्थानं ज्ञेयं स्वं विजिगीषुणा ॥२५५॥**
**अल्पागमातिव्ययता क्षयो वृद्धिर्विपर्यये ।**
**समायव्ययता स्थानं कर्मसु ज्ञेयमात्मनः ॥२५६॥**

[ निगमनम् ]

**तस्मादल्पव्ययारम्भं दुर्गादिषु महोदयम् ।**
**कर्म लब्ध्वा विशिष्टस्स्यादित्युक्ताः कर्मसन्धयः ॥२५७॥**

इति षाड्गुण्ये मित्रहिरण्यभूमिकर्मसन्धौ कर्मसन्धिः,
द्वादशोऽध्यायः, आदितो दशशततमः

---

श्रीमूला

वणिक्पथे विशेषान्तरमाह—तत्रापीति । वणिक्पथेऽपि, चक्रपादपथयोः चक्रपथश्चक्रयुक्तमनुष्यवाह्यक्षुद्रशकटगम्यो मार्गः, पादपथो मनुष्यपादचारप्राप्यो मार्गः, तयोर्मध्ये, चक्रपथः विपुलारम्भत्वात् पादपथापेक्षया प्रचुरपण्यव्यवहारत्वा-द्धेतोः, श्रेयान् । विकल्पमाह—देशकालसम्भावनो वा खरोष्ट्रपथ इति । विप्रकृष्टदेशं भूरिपण्यापेक्षं च पण्यप्रियकालमनुसृत्य खरपथ उष्ट्रपथश्च वा श्रेयस्त्वेन ग्राह्य इत्यर्थः ।

इममेव विधिमंसपथेऽतिदिशति—आभ्यामित्यादि । अंसपथः युग्यबलीवर्दा-दिनीयमानपण्यो मार्गः ।

कर्मफलभूतानां क्षयवृद्धिस्थानानां लक्षणमाह—परकर्मोदय इति । परस्य शत्रोः कर्मोदयः कर्मजो लाभः, नेतुः विजिगीषोः क्षयः, ज्ञेय इत्यपकृष्य सम्बध्यते । विपर्यये स्वकर्मोदये, वृद्धिः, ज्ञेया । कर्मपथे तुल्ये शत्रुसमफले सति, स्वं स्थानं क्षयवृद्धिव्यतिरेकेण स्वभावावस्थानं, ज्ञेयं, विजिगीषुणा ।

लक्षणान्तरमाह—अल्पागमातिव्ययतेति । आत्मनः कर्मसु आयाधिकव्यय-योगित्वं, क्षयः क्षयपदार्थः । विपर्यये बह्वायाल्पव्ययत्वे वृद्धिः । समायव्ययता स्थानं ज्ञेयम् ।

तस्मादिति । इत्थं क्षयवृद्धिस्थानज्ञानात्, दुर्गादिषु दुर्गसेत्वादिषु, अल्पव्यया-

---

श्रीमूला

रम्भं, महोदयं महाफलं, कर्म लब्ध्वा आसाद्य, विशिष्टः परस्मादभ्यधिकः स्याद्, विजिगीषुः । इति एवं, कर्मसन्धयः उक्ताः ।

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे
द्वादशोऽध्यायः, मित्रहिरण्यभूमिकर्मसन्धौ कर्मसन्धिः,
आदितो दशोत्तरशततमः ।

# सप्तदशशततमं प्रकरणम्

## त्रयोदशोऽध्यायः

## पार्ष्णिग्राहचिन्ता

[ लाभविशेषप्रयोजकपार्ष्णिग्रहणभेदाः एकादश ]

**(१) संहत्यारिविजिगीष्वोरमित्रयोः पराभियोगिनोः पार्ष्णि गृह्णतो-र्यश्शक्तिसम्पन्नस्य पार्ष्णि गृह्णाति, सोऽतिसन्धत्ते। शक्तिसम्पन्नो ह्यमित्र-मुच्छिद्य पार्ष्णिग्राहमुच्छिन्द्यात्, न हीनशक्तिरलब्धलाभ इति।**

**(२) शक्तिसाम्ये यो विपुलारम्भस्य पार्ष्णि गृह्णाति, सोऽतिसन्धत्ते। विपुलारम्भो ह्यमित्रमुच्छिद्य पार्ष्णिग्राहमुच्छिन्द्यान्नाल्पारम्भः, सक्तचक्रः इति।**

---

श्रीमूला

पार्ष्णिग्राहचिन्तेति सूत्रम्। पार्ष्णिग्राहः पृष्ठस्थः शत्रुः तदवस्थापन्नस्य राज्ञः चिन्ता अनुष्ठानविचारः क्रियत इति सूत्रार्थः। सामवायिकादीनामतिसन्धिरुक्तः। पार्ष्णिग्राहस्येदानीमभिधीयते।

संहत्येति। अमित्रयोः स्वशत्रुभूतयोः, पराभियोगिनोः पराभियोगव्यापृतयोः, अरिविजिगीष्वोः पार्ष्णि यथोक्तारिसम्बन्धिनं यथोक्तविजिगीषुसम्बन्धिनं च पार्ष्णि, संहत्य गृह्णतोः यौ द्वौ सम्भूय गृह्णीतस्तयोर्मध्ये इत्यर्थः, यः शक्तिसम्पन्नस्य पार्ष्णि गृह्णाति, सः अतिसन्धत्ते हीनशक्तिपार्ष्णिग्राह्यपेक्षया लाभविशेषं प्राप्नोति। तत्र हेतुमाह—शक्तिसम्पन्नो हीत्यादि। अयमर्थः—शक्तिमान् हि स्वामित्रोच्छेदे सिद्धे प्राप्तोपचयो भूत्वा पार्ष्णिग्राहस्याप्युच्छेदं कुर्यादिति तदमित्रोच्छेदप्रतिबन्धाचरणं पार्ष्णिग्राहस्य स्वात्मत्राणाय कल्पेत। हीनशक्तिस्तु स्वामित्रोच्छेदासमर्थत्वादप्राप्त-लाभोऽशङ्कनीय इति तत्पार्ष्णिग्राहिणो न कश्चिद् विशेषलाभ इति।

शक्तिसाम्य इत्यादि। समशक्तिकयोरपि ग्राह्यपार्ष्ण्योर्मध्ये, यः विपुलारम्भस्य भक्तोपकरणादिसर्वविधयात्रासाधनसम्पन्नस्य, पार्ष्णि गृह्णाति, सः अतिसन्धत्ते अल्पा-रम्भपार्ष्णिग्राह्यपेक्षया लाभविशेषं स्वात्मत्राणलक्षणं प्राप्नोति। तत्र कारणमाह—विपुलारम्भो हीति। हि यतः, विपुलारम्भः, अमित्रमुच्छिद्य शत्रूच्छेदेन प्राप्तवृद्धि-र्भूत्वा, पार्ष्णिग्राहम् उच्छिन्द्यात्। नाल्पारम्भः परिमितसैन्योद्योगस्तु पार्ष्णिग्राहं

**(३) आरम्भसाम्ये यः सर्वसन्दोहेन प्रयातस्य पार्ष्णिं गृह्णाति, सोऽतिसन्धत्ते। शून्यमूलो ह्यस्य सुकरो भवति, नैकदेशबलप्रयातः कृतपार्ष्णिप्रतिविधान इति।**

**(४) बलोपादानसाम्ये यश्चलामित्रं प्रयातस्य पार्ष्णिं गृह्णाति, सोऽतिसन्धत्ते। चलामित्रं प्रयातो हि सुखेनावाप्तसिद्धिः पार्ष्णिग्राहमुच्छिन्द्यान्न स्थितामित्रं प्रयातः। असौ हि दुर्गप्रतिहतः। पार्ष्णिग्राहे च प्रतिनिवृत्तस्थितेनामित्रेणावगृह्यते।**

---

श्रीमूला

नोच्छिन्द्यात्, कुतः सक्तचक्र इति विक्षिप्तसैन्य इति कृत्वा सज्जनीयसैन्यत्वाद्धेतोरित्यर्थः।

तुल्यारम्भविषयं विशेषमाह—आरम्भसाम्य इति। समानारम्भयोर्मध्य इत्यर्थः, यः सर्वसन्दोहेन प्रयातस्य, सर्वसैन्यसमूहनेन स्वं मूलबलमप्युपादाय यातव्यमभिगतस्य, पार्ष्णिं गृह्णाति, सः, अतिसन्धत्ते एकदेशबलप्रयातपार्ष्णिग्राह्यपेक्षया लाभविशेषं प्राप्नोति।

हेतुमाह—हि यतः, शून्यमूलः अकृतरक्षमूलस्थानो ग्राह्यपार्ष्णिः, अस्य पार्ष्णिग्राहस्य, सुकरः सुखसाध्यः भवति। नैकदेशबलप्रयातः, स तु सुकरो न भवति, कुतः, कृतपार्ष्णिप्रतिविधान इति। सः बलैकदेशस्थापनेन सम्पादित पार्ष्णिग्राहप्रतिविधिरिति कृत्वा।

समानं बलमुपात्तवतोर्ग्राह्यपार्ष्ण्योः पार्ष्णिग्रहणेऽतिसन्धिमाह—बलोपादानसाम्य इति। तत्र, यः, चलामित्रम् अकृतदुर्गं, शत्रुं प्रयातस्य पार्ष्णिं गृह्णाति सः अतिसन्धत्ते। कुतः, हि यतः, चलामित्रं प्रयातः, सुखेन अक्लेशेन, अवाप्तसिद्धिः लब्धशत्रुजयः, भूत्वेति शेषः, पार्ष्णिग्राहम् उच्छिन्द्यात्। अतश्च तत्पार्ष्णिग्रहणे सत्यात्मपरित्राणं भवतीत्येष विशेषलाभ इति भावः। दुर्गादिसुप्रतिष्ठितं स्थितामित्रं प्रयातस्तु सुखेन सिद्धिं नावाप्नुयात्, न च पार्ष्णिग्राहमुच्छिन्द्यादिति न तत्पार्ष्णिग्राहिणो विशेषलाभः कश्चिदित्यभिप्रायेणाह—न स्थितामित्रं प्रयात इति। स्थितामित्रं प्रयातः केन कारणेनावाप्तसिद्धिर्न भवतीत्यत्राह—असाविति। हि यतः, असौ, दुर्गप्रतिहतः परदुर्गेण कुण्ठितवीर्यो भवति। न केवलं विशेषलाभाभावः, प्रत्युतानर्थोऽपि स्थितामित्राभियायिपार्ष्णिग्राहिणः सम्भाव्यत इत्याह—पार्ष्णिग्राहे चेति। स्थितामित्राभियायिपार्ष्णेर्ग्रहणे च क्रियमाण इति शेषः, प्रतिनिवृत्तस्थितेन स्थितामित्राद् दुर्गप्रतिहतिवशात् प्रतिनिवृत्य स्थितेन अमित्रेण, अवगृह्यते अर्थात् तत्पार्ष्णिग्राहो।

**तेन पूर्वे व्याख्याताः ।**

**(५) शत्रुसाम्ये यो धार्मिकाभियोगिनः पार्ष्णि गृह्णाति सोऽतिसन्धत्ते । धार्मिकाभियोगी हि स्वेषां च द्वेष्यो भवति अधार्मिकाभियोगी संप्रियः । तेन मूलहरतादात्विककदर्याभियोगिनां पार्ष्णिग्रहणं व्याख्यातम् ।**

**मित्राभियोगिनोः पार्ष्णिग्रहणे त एव हेतवः ।**

**(६) मित्रममित्रं चाभियुञ्जानयोर्यो मित्राभियोगिनः पार्ष्णि गृह्णाति सोऽतिसन्धत्ते । मित्राभियोगी हि सुखेनावाप्तसन्धिः पार्ष्णिग्राहमुच्छिन्द्यात् । सुकरो हि मित्रेण सन्धिर्नामित्रेणेति ।**

---

श्रीमूला

तेनेति । तेन स्थितामित्राभियायिपार्ष्णिग्राहिण उक्तेन विधिना, पूर्वे हीन-शक्तिपार्ष्णिग्राही अल्पारम्भपार्ष्णिग्राही एकदेशबलप्रयातपार्ष्णिग्राही चेत्येते, व्याख्याता उक्तविधानाः, तेऽपि हीनशक्त्यादिभिः शत्रोः प्रतिनिवृत्तस्थितैरवगृह्यन्त इत्यर्थः ।

शत्रुसाम्य इति । समानयोः शत्र्वोर्मध्ये, यः धार्मिकाभियोगिनः धार्मिकं शत्रु-मभियुञ्जानस्य, पार्ष्णि गृह्णाति, सः, अतिसन्धत्ते विशेषलाभं भजते । कुतः, हि यतः, धार्मिकाभियोगी, स्वेषां, चकारात् परेषां च द्वेष्यो भवति । अतश्च सर्वद्वेष्यत्वाद् दुर्लभसिद्धिः पार्ष्णिग्राहेण सुसाधो भवतीत्येष एव तस्य विशेषलाभ इति भावः । अधार्मिकाभियोगी, संप्रियः स्वेषां परेषां च सम्यक् प्रेमविषयः, ततश्च सः निश्चित-जयः पार्ष्णिग्राहस्यासाध्यो भवतीति भावः ।

तेनेति । उक्तेन विधिना, मूलहरतादात्विककदर्याभियोगिनां मूलहरः पितृपैता-महार्थान्यायभक्षकः तादात्विकस्तदातदोत्पद्यमानार्थभक्षकः कदर्यो भृत्यात्मपीडयार्थो-पचायकः मूलहराद्यभियोगिनां त्रयाणां पार्ष्णिग्रहणं, व्याख्यातं व्याख्यातप्रायलाभ-विशेषं, द्रष्टव्यमिति शेषः । तद् यथा—मूलहरतादात्विकाभियोगिनोर्मध्ये मूलहरा-भियोगिनो यः पार्ष्णि गृह्णाति, सोऽतिसन्धत्ते, मूलहराभियोगी हि सुखेन मूलहरमर्थकृच्छ्रणमुच्छिद्य पार्ष्णिग्राहमुच्छिन्द्यात् । तादात्विककदर्याभियोगिनोश्च मध्ये कदर्याभियोगिनो यः पार्ष्णि गृह्णाति सोऽतिसन्धत्ते, कदर्याभियोगी हि कदर्यमभृत्योपकारकं सुखेनोच्छिद्य पार्ष्णिग्राहमुच्छिन्द्यादिति ।

य एतेऽतिसन्धिहेतवः उक्ताः, त एव मित्राभियोगियोः पार्ष्णिग्रहणेऽति-योज्या इत्याह—मित्राभियोगिनोरित्यादि ।

मित्रममित्रं चाभियुञ्जानयोरित्यादि । अयमर्थः—मित्रामित्राभियोगिनो-र्द्वयोर्मध्ये मित्राभियोगिनः पार्ष्णि गृह्णन् विशेषलाभं मित्राभियोगप्रतिबन्धाचरण-

**(७) मित्रममित्रं चोद्धरतोर्योऽमित्रोद्धारिणः पार्ष्णि गृह्णाति सोऽतिसन्धत्ते। वृद्धमित्रो ह्यमित्रोद्धारी पार्ष्णिग्राहमुच्छिन्द्यात्, नेतरः स्वपक्षोपघाती।**

**(८) तयोरलब्धलाभापगमने यस्यामित्रो महतो लाभात् वियुक्तः क्षयव्ययाधिको वा, स पार्ष्णिग्राहोऽतिसन्धत्ते। लब्धलाभापगमने यस्यामित्रो लाभेन शक्त्या हीनः, स पार्ष्णिग्राहोऽतिसन्धत्ते, यस्य वा यातव्यः शत्रोर्विग्रहापकारसमर्थस्स्यात्।**

**(९) पार्ष्णिग्राहयोरपि यश्शक्यारम्भबलोपादानाधिकः स्थितशत्रुः**

———

श्रीमूला

द्वारकात्मपरित्राणलक्षणं प्राप्नोति। कुतः, यतो मित्राभियोगी पार्ष्णिग्राहेणोपेक्षितश्चेत् स सुखात् मित्रेण सह सन्धिक्रियया प्राप्तवृद्धिर्भूत्वा पार्ष्णिग्राहस्योच्छेदं कुर्याद्, अमित्राभियोगी तूपेक्षितोऽपि अमित्रेण सह सन्धेरसुकरतयाऽनवाप्तसिद्धिर्भवन् न पार्ष्णिग्राहमुच्छेत्तुं प्रभवेदिति।

मित्रामित्रोद्धारिणो पार्ष्णिग्रहणे विशेषमाह—मित्रममित्रं चोद्धरतोरिति। तयोर्मध्ये, यः, अमित्रोद्धारिणः, पार्ष्णि गृह्णाति, सः, अतिसन्धत्ते। कुतः, हि यतः वृद्धमित्रः अनुग्रहतस्वपक्षः, अमित्रोद्धारी, पार्ष्णिग्राहम्, उच्छिन्द्यात्। इतरः मित्रोद्धारी, स्वपक्षोपघाती स्वमित्रोपघातप्राप्तपरिक्षयतयेत्यर्थः, पार्ष्णिग्राहम्, नोच्छिन्द्यात् नोच्छेत्तुं शक्नुयात्।

विशेषान्तरमाह—तयोरिति। मित्रामित्रोद्धारिणोः, अलब्धलाभापगमने कमपि लाभमनवाप्य प्रत्यागमने सति, यस्य पार्ष्णिग्राहस्य, अमित्रः, महतो लाभाद्, वियुक्तः अपेतः, क्षयव्ययाधिको वा युग्यपुरुषापचयेन धनव्ययेन च परस्मादभ्यधिको वा भवति, सः पार्ष्णिग्राहः, अतिसन्धत्ते। लब्धलाभापगमने लाभमवाप्य प्रत्यागमने सति, यस्य अमित्रः, लाभेन शक्त्या हीनः परापेक्षया हीनलाभा हीनशक्तिश्च भवति, स पार्ष्णिग्राहः, अतिसन्धत्ते। प्रकारान्तरमाह—यस्य वेत्यादि। यातव्यः अरिः, यस्य पार्ष्णिग्राहस्य, शत्रोः अर्थाद् विजिगीषोः, विग्रहापकारसमर्थो भवति, स वा पार्ष्णिग्राहोऽतिसन्धत्ते इति सम्बन्धः।

अतिसन्ध्यन्तरमाह—पार्ष्णिग्राहयोरपीति। तयोरपि गुणान्तरसमानयोर्मध्ये, यः, शक्यारम्भबलोपादानाधिकः साध्यकार्यारम्भस्य सैन्यस्योपादाने अधिकः परस्मादुत्कृष्टः परसैन्याभ्यधिकप्रमाणतथाविधसैन्ययुक्तो भवति, सः पार्ष्णिग्राहः, अतिसन्धत्ते। यः स्थितशत्रुः गृहीतपार्ष्णौ चलशत्रौ सति स्वयं दुर्गादिप्रतिष्ठितः

**पार्श्वस्थायी वा सोऽतिसन्धत्ते। पार्श्वस्थायी हि यातव्याभिसारो मूलबाधकश्च भवति, मूलाबाधक एव पश्चात्स्थायी।**

[ त्रयः पार्ष्णिग्राहभेदाः ]

**पार्ष्णिग्राहास्त्रयो ज्ञेयाः शत्रोश्चेष्टानिरोधकाः।**
**सामन्ताः पृष्ठतो वर्गः प्रतिवेशौ च पार्श्वयोः ॥२५८॥**

[ अन्तर्धिलक्षणस्य पार्ष्णिग्राहावस्थाऽनर्हता ]

**अरेर्नेतुश्च मध्यस्थो दुर्बलोऽन्तर्धिरुच्यते।**
**प्रतिघाते बलवतो दुर्गाटव्यपसारवान् ॥२५९॥**

**(१०) मध्यमं त्वरिविजिगीष्वोर्लिप्समानयोर्मध्यमस्य पार्ष्णि गृह्णतो लब्धलाभापगमने यो मध्यमं मित्राद्वियोजयति; अमित्रं च मित्रमाप्नोति,**

---

श्रीमूला

शत्रुर्भवति, सः पार्ष्णिग्राहः, अतिसन्धत्ते। यो वा पार्श्वस्थायी यातव्यपार्श्वस्थितिशीलः, सः पार्ष्णिग्राहः, अतिसन्धत्ते। तत्राद्ययोः परप्रधर्षकत्वं विशेषलाभः प्रतीत एव। अन्त्यस्य तु विशेषलाभं विशदयितुमाह—पार्श्वस्थायी हीति। स हि, यातव्याभिसारः यातव्यसङ्गतः, मूलबाधकश्च मूलं विजिगीषोः स्थानीयं तद्बाधकश्च भवति। एवञ्च यातव्यसख्यबन्धपूर्वकविजिगीषुमूलबाधनसौकर्यमेव पार्श्वस्थायिनो विशेषलाभ इत्युक्तं भवति। पश्चात्स्थायी तु न तथेत्याह—मूलाबाधक एवेत्यादि।

त एते शत्रोर्व्यापारप्रतिबन्धकाः पार्ष्णिग्राहाः अभियोक्तुर्विषयानन्तराः पश्चाद्भागभवाः पार्श्वप्रतिनिविष्टा इति त्रिरूपा इत्याह—पार्ष्णिग्राहास्त्रयो ज्ञेया इत्यादि।

अन्तर्धिर्नाम कश्चिद् मध्यमविशेषोऽस्ति। स तु अकिञ्चित्करत्वात् पार्ष्णिग्राहावस्थां नार्हतीत्यभिप्रायं तल्लक्षणकथनभङ्ग्याविष्करोति—अरेर्नेतुश्च मध्यस्थ इति। शत्रुविजिगीष्वोर्मध्यगतः, दुर्बलः तदुपकारापकाराशक्तः, अन्तर्धिरुच्यते अन्तर्धिरिति संज्ञायते। स कथंस्वभावः, बलवतः प्रतिघाते, प्रसक्ते इति शेषः, दुर्गाटव्यपसारवान् दुर्गाटवीरूपबहुनिलयनस्थानयुक्तः। एवञ्च तिरोधानयोगात् संज्ञान्वर्थत्वं बोद्धव्यम्।

मध्यमपार्ष्णि गृह्णतोऽतिसन्धिमाह—मध्यमं त्विति। तं पूर्वोक्तलक्षणम्, अरिविजिगीष्वोर्लिप्समानयोः सतोः, मध्यमस्य पार्ष्णिम् अर्थात् स्वलिप्सुसाह्यव्यापृतस्य सम्बन्धिनं पार्ष्णि, गृह्णतः, लब्धलाभापगमने लाभं प्राप्य प्रत्यागमने, यः मध्यमं मित्राद् वियोजयति वियुक्तं करोति, अमित्रं च मित्रम् आप्नोति शत्रुं च

**सोऽतिसन्धत्ते । सन्धेयश्च शत्रुरुपकुर्वाणो, न मित्रं मित्रभावादुत्क्रान्तम् । तेनोदासीनलिप्सा व्याख्याता ।**

[ मन्त्रयुद्धस्यैव व्यायामयुद्धापेक्षया प्रशस्तत्वम् ]

**पार्ष्णिग्रहणाभियानयोस्तु मन्त्रयुद्धादभ्युच्चयः । व्यायामयुद्धे हि क्षयव्ययाभ्यां उभयोरवृद्धिः । जित्वाऽपि हि क्षीणदण्डकोशः पराजितो भवति; इत्याचार्याः । 'न' इति कौटल्यः—सुमहताऽपि क्षयव्ययेन शत्रुविनाशोऽभ्युपगन्तव्यः ।**

[ व्यायामयुद्धेऽपि विशेषः ]

**तुल्ये क्षयव्यये यः पुरस्ताद् दूष्यबलं घातयित्वा निश्शल्यः पश्चाद् वश्यबलो युध्येत, सोऽतिसन्धत्ते । द्वयोरपि पुरस्ताद् दूष्यबलघातिनोर्यो बहुलतरं**

---

श्रीमूला

सन्धाय मित्रीकरोति, सः, अतिसन्धत्ते । शत्रुर्नाम कथं सन्धातुं योग्य इत्याशङ्कां परिहर्तुमाह—सन्धेयश्चेत्यादि । शत्रुरप्युपकुर्वाणः सन्धातुं योग्यो भवति, न तु मित्रमपि मित्रभावादपेतमनुपकुर्वाणमपकुर्वाणं वेत्यर्थः ।

मध्यमलिप्सोक्तं न्यायमुदासीनलिप्सायामतिदिशति—तेनोदासीनेत्यादि ।

अथ पार्ष्णिग्राहेणाभियात्रा चानुष्ठातव्ये युद्धे विशेषमाचार्यमतेनाह—पार्ष्णिग्रहणाभियानयोस्त्विति । पार्ष्णिग्रहणेऽभियाने चाऽध्यवसितयोः मन्त्रयुद्धादभ्युच्चयः, युद्धं हि सामान्यतो द्विविधम्—युद्धरङ्गं प्रविश्य शस्त्रादिप्रयोगेण शत्रुहिंसनमित्येकं व्यायामयुद्धाख्यम्, युद्धरङ्गमप्रविश्यैव सत्रिरसदतीक्ष्णादिगूढपुरुषप्रयोगेण शत्रुहिंसनमिति द्वितीयं मन्त्रयुद्धाख्यम्, तत्र मन्त्रयुद्धानुष्ठानाद् वृद्धिर्भवतीत्यर्थः । व्यायामयुद्धानुष्ठाने योद्धभियोद्धव्ययोर्द्वयोरपि युग्यपुरुषापचयधनव्ययाभ्यामवृद्धिः, जयप्राप्तस्यापि क्षीणदण्डकोशतया पराजितप्रायत्वं च भवतीत्याह—व्यायामयुद्धे हीत्यादि ।

स्वमतमाह—नेति कौटल्य इत्यादि । एवञ्च शत्रुविनाशरूपमहाफलसिद्धिहेतुत्वाद् व्यायामयुद्धस्याप्युपादेयत्वमविशिष्टमित्यभिप्रायः ।

व्यायामयुद्धेऽपि विशेषमाह—तुल्ये क्षयव्यये इति । योद्धृप्रतियोद्ध्रोः क्षयव्यये समानेऽपि, यः पुरस्ताद्, दूष्यबलं राज्योपघातकबलं, घातयित्वा राज्योपघातकबलं स्वव्यूहाग्रनिवेशनेन प्रतिबलकर्तृकवधगोचरतां पूर्वं नीत्वेत्यर्थः, अत एव निश्शल्यः, पश्चाद् वश्यबलः त्रिविधवश्यसैन्ययुक्तः, युध्येत, सः अतिसन्धत्ते विशेषलाभं भजते, अपरिहार्ये स्वबलक्षये दूष्यबलक्षयाधिक्यघटनपूर्वं वश्यबलक्षयाल्पत्वापादनमिह विशेषलाभः ।

**शक्तिमत्तरमत्यन्तदूष्यं च घातयेत्, सोऽतिसन्धत्ते । तेनामित्राटवीबलघातो व्याख्यातः ।**

[ विजिगीषोः पार्ष्णिग्राहाद्यवस्थासु
कर्तव्यान्यनुष्ठानानि ]

**पार्ष्णिग्राहोऽभियोक्ता वा यातव्यो वा यदा भवेत् ।**
**विजिगीषुस्तदा तत्र नैत्रमेतत् समाचरेत् ॥२६०॥**
**पार्ष्णिग्राहो भवेन्नेता शत्रोर्मित्राभियोगिनः ।**
**विग्राह्य पूर्वमाक्रन्दं पार्ष्णिग्राहाभिसारिणा ॥२६१॥**
**आक्रन्देनाभियुञ्जानः पार्ष्णिग्राहं निवारयेत् ।**
**तथाऽऽक्रन्दाभिसारेण पार्ष्णिग्राहाभिसारिणम् ॥२६२॥**
**अरिमित्रेण मित्रं च पुरस्तादवघट्टयेत् ।**
**मित्रमित्रमरेश्चापि मित्रमित्रेण वाररेत् ॥२६३॥**

---

श्रीमूला

पुरस्ताद् दूष्यबलघातयितृत्वे द्वयोः समाने यः परकीयाद् दूष्यबलात् सङ्ख्यातिशयेन दूष्यतातिशयेन च युक्तं दूष्यबलं घातयेत् सोऽतिसन्धत्त इत्याह—द्वयोरपीत्यादि ।

दूष्यबलघातनवदमित्रबलघातनमाटविकबलघातनं च पूर्वं कृत्वा पश्चाद् वश्यबलो यो युध्येत, सोऽप्यतिसन्धत्त इतीदमर्थमतिदेशभङ्ग्याऽऽह—तेनेत्यादि ।

विधिशेषं श्लोकैराह—पार्ष्णिग्राह इत्यादि । विजिगीषुः पार्ष्णिग्राहाभियोक्तृयातव्यावस्थासु नेतृकर्म वक्ष्यमाणमनुतिष्ठेदिति प्रथमश्लोकार्थः ।

तत्र पार्ष्णिग्राहावस्थायां नैत्रमाह—पार्ष्णिग्राहो भवेदिति । नेता पार्ष्णिग्राहावस्थापन्नो विजिगीषुः, मित्राभियोगिनः शत्रोः स्वामित्रमभियुञ्जानस्य स्वामित्रस्य, पार्ष्णिग्राहो भवेत् पार्ष्णिग्रहणमनुतिष्ठेत् । किं कृत्वा, आक्रन्दं शत्रोः पश्चान्मित्रं, पार्ष्णिग्राहाभिसारिणा पार्ष्णिग्राहासारेण अर्थात् स्वमित्रेण सह, पूर्वं विग्राह्य विग्रहार्थं योजयित्वा । अभियोक्त्रवस्थायां नैत्रमाह—आक्रन्देनेति । अभियुञ्जानः अभियोक्त्रवस्थापन्नः, पार्ष्णिग्राहं स्वपृष्ठशत्रुम्, आक्रन्देन स्वपृष्ठमित्रे, निवारयेत् । तथा पार्ष्णिग्राहाभिसारिणं पार्ष्णिग्राहासारम्, आक्रन्दाभिसारेण आक्रन्दासारेण, निवारयेत् ।

एवं पृष्ठतोऽनुष्ठानमुक्त्वा पुरस्तादनुष्ठानमाह—अरिमित्रेणेति । अभियुञ्जान इति वर्तते । सः, पुरस्तात् मित्रं स्वीयम्, अरिमित्रेण प्रत्यवस्थितेन, अवघट्टयेच्च प्रतिघातयेच्च । अरेः मित्रमित्रं चापि, मित्रमित्रेण स्वकीयेन, वारयेत् ।

**मित्रेण ग्राहयेत् पार्ष्णिमभियुक्तोऽभियोगिनः ।**
**मित्रमित्रेण चाऽऽक्रन्दं पार्ष्णिग्राहान्निवारयेत् ॥२६४॥**

[ राज्ञः आत्मसहायभूतराजमण्डलस्थापनेन
संवृतवृत्त्याश्रयणावश्यकता ]

**एवं मण्डलमात्मार्थं विजिगीषुर्निवेशयेत् ।**
**पृष्ठतश्च पुरस्ताच्च मित्रप्रकृतिसम्पदा ॥२६५॥**
**कृत्स्ने च मण्डले नित्यं दूतान् गूढांश्च वासयेत् ।**
**मित्रभूतः सपत्नानां हत्वा हत्वा च संवृतः ॥२६६॥**
**असंवृतस्य कार्याणि प्राप्तान्यपि विशेषतः ।**
**निस्संशयं विपद्यन्ते भिन्नप्लव इवोदधौ ॥२६७॥**

इति षाड्गुण्ये पार्ष्णिग्राहचिन्ता, त्रयोदशोऽध्यायः,
आदित एकादशशततमः ।

———————

श्रीमूला

अभियुक्तावस्थायामनुष्ठानमाह—मित्रेणेति । अभियुक्तः, अभियोगिनः अभियुञ्जानस्य, पार्ष्णिं, मित्रेण स्वस्य मित्रेण प्रयोज्यकर्त्रा, ग्राहयेत् । आक्रन्दम् अभियोगिनः पृष्ठमित्रं पार्ष्णिग्राहबाधनप्रवृत्तमित्यर्थः, मित्रामित्रेण अर्थात् पार्ष्णिग्राहासारेण प्रयोज्यकर्त्रा, पार्ष्णिग्राहात्, निवारयेत् ।

एवमिति । अनेन प्रकारेण, विजिगीषुः, मित्रप्रकृतिसम्पदा मित्रप्रकृतेर्या गुणसमृद्धिः पूर्वोक्ता तया युक्तमिति शेषः, मण्डलं राजपरम्पराम्, आत्मार्थम् आत्मसाह्यार्थं, पृष्ठतश्च, पुरस्ताच्च, निवेशयेत् स्थापयेत् ।

कृत्स्ने च मण्डल इति । सर्वस्मिन् आत्मार्थनिवेशिते मण्डले, दूतान् गूढान् वासयेच्च, मण्डलप्रवृत्तिच्छलविज्ञानार्थं विजिगीषुरित्यार्थम् । किञ्च, सपत्नानां शत्रूणां, मित्रभूतः मित्रतुल्यो मित्रभावं बहिरभिनयन्, हत्वा हत्वा, अर्थात् सपत्नान्, संवृतः गूढाकारेङ्गितः, भवेत् ।

असंवृत्तवृत्तेर्दोषमाह—असंवृतस्येति । संवरणरहितस्य, कार्याणि क्रियाफलानि, विशेषतः प्राप्तान्यपि अतिशयेनोपस्थितान्यपि, निस्संशयं विपद्यन्ते नश्यन्ति । भिन्नप्लव इवोदधाविति । समुद्रे भिन्नतरुणसाधनः पुरुष इव च असंवृतो विजिगीषुर्भवतीत्यर्थः ॥

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे
त्रयोदशोऽध्यायः, पार्ष्णिग्राहचिन्ता,
आदित एकादशोत्तरशततमः ॥

# अष्टादशशततमं प्रकरणम्

## चतुर्दशोऽध्यायः

## हीनशक्तिपूरणम्

[ सामवायिकैर्बहुभिरभियोगे तत्प्रधानं प्रति
सान्त्वभेदप्रयोगाभ्यां हीनशक्तिवर्धनोपदेशः ]

**सामवायिकैरेवमभियुक्तो विजिगीषुः यस्तेषां प्रधानस्तं ब्रूयात्—'त्वया मे सन्धिः; इदं हिरण्यम्; अहं च मित्रं; द्विगुणा ते वृद्धिः; नार्हस्यात्मक्षयेण मित्रमुखानमित्रान् वर्धयितुम्; एते हि वृद्धास्त्वामेव परिभविष्यन्ति' इति ।**

**भेदं वा ब्रूयात्—'अनपकारो यथाऽहमेतैस्सम्भूयाभियुक्तः तथा**

---

श्रीमूला

हीनशक्तिपूरणमिति सूत्रम् । अपचितानां शक्तीनां वर्धनमभिधीयत इति सूत्रार्थः । यातव्यावस्थापन्नस्यैकेनाभियुज्यमानतायामनुष्ठानप्रकारो 'मित्रेण ग्राहयेत् पार्ष्णिम्' इत्यादिना पूर्वमुक्तः । तस्य बहुभिरभियुज्यमानतायामनुष्ठानप्रकारः सम्प्रत्यभिधीयते ।

सामवायिकैरित्यादि । अयमर्थः—यथैकेन तथा सम्भूयाभियोगिभिर्बहुभिः अभियुक्तो विजिगीषुरभियोगं प्रतिविधातुमशक्तः स्वशक्तिं वर्धयितुकामः सामवायिकानां प्रधानं ब्रूयात्—'त्वया मे सन्धिः' इति । एतच्च प्रधानस्य धर्मावेक्षित्वे । तस्य लुब्धत्वे तु 'इदं ते हिरण्यं ददामि अहं च ते मित्रविशेषो भवामि विपत्समये त्वया रक्ष्यमाणः । सैषा तेऽभियोक्तृदीयमानहिरण्यापेक्षया हिरण्यद्वैगुण्याद् आपद्गतमित्रलाभाच्च गुणद्वयवती वृद्धिः' इति ब्रूयात् । इदं वचनमनभ्युपगच्छन्तं पुनर्ब्रूयात्—'आत्मनो योग्यपुरुषापचयधनव्ययाभ्युपगमेन शत्रून् वाङ्मात्रमित्रताभिनयवतो वृद्ध्या योजयितुं नार्हसि । एते हि सामवायिकास्त्वत्साह्येन मामुच्छिद्य प्राप्तवृद्धयो भूत्वा त्वामेवावज्ञास्यन्ति' इति ।

सान्त्वप्रयोगमीदृशमनङ्गीकुर्वाणे तस्मिन् भेदं प्रयुञ्जीतेत्याह—भेदं वा ब्रूयादिति । किमिति ब्रूयात्, अनपकारः अपराधरहितः, यथा अहम्, एतैः, सम्भूय

**त्वामप्येते संहितबलाः स्वस्थाः व्यसने वाऽभियोक्ष्यन्ते; बलं हि चित्तं विकरोति; तदेषां विघातय' इति ।**

**भिन्नेषु प्रधानमुपगृह्य हीनेषु विक्रमयेत्, हीनाननुग्राह्य वा प्रधाने; यथा वा श्रेयोऽभिमन्येत तथा । वैरं वा परैर्ग्राहयित्वा विसंवादयेत् ।**

**फलभूयस्त्येन वाः प्रधानमुपजाप्य सन्धिं कारयेत् । अथोभयवेतनाः फलभूयस्त्वं दर्शयन्तस्सामवायिकान् 'अति संहितास्स्थ' इत्युद्दूषयेयुः; दुष्टेषु सन्धिं दूषयेत् । अथोभयवेतना भूयो भेदमेषां कुर्युः 'एवं तद्यदस्माभिर्दर्शितम्' इति; भिन्नेष्वन्यतमोपग्रहेण वा चेष्टेत ।**

———— ——

श्रीमूला

अभियुक्तः तथा त्वमपि एते स्वस्थाः संहितबलाः मदभियोगसंरम्भोत्तरणानन्तरं सज्जितबलाः, भूत्वेति शेषः, व्यसने वा त्वद्व्यसनावसरं प्रतीक्ष्य वा, **अभियोक्ष्यन्ते** । कुतः, हि यतः, बलम् उपचितमिति शेषः, चित्तं विकरोति दर्पयति । तत् बलम्, एषां, विघातय विघटय इति ।

भिन्नेष्विति । उक्तभेदवचनप्राप्तप्रधानविघटनेषु, हीनेषु, प्रधानम्, उपगृह्य स्वीकृत्य, विक्रमयेत् विक्रमं प्रयुञ्जीत । हीनान् अनुग्राह्य वा प्रधान इति । उक्तसामादिप्रयोगेण सामवायिकान् हीनान् स्ववशं नीत्वा वा प्रधाने विक्रमयेत् । हीनप्रधानविक्रमणयोश्चायं विकल्पोऽन्यतरश्रेयस्त्वनिर्धारणपूर्वमनुष्ठेय इत्याह—यथा वा श्रेयोऽभिमन्येत तथेति । विक्रत्रणस्यायुक्तत्वानुसन्धाने त्वाह—वैरं वेत्यादि । एकैकस्यान्यैर्विरोधमुत्पाद्य वा सामवायिकान् विघटयेत् ।

फलभूयस्त्वेन वेति । बहुतरधनदानप्रतिश्रवेण वा, प्रधानम्, उपजाप्य भेदयित्वा, सन्धिं कारयेत्, अर्थात् प्रधानमुखेनान्यैः सह । अथेति । सन्धिकारणानन्तरम्, उभयवेतनाः विजिगीषुपक्ष्याः सामवायिकाप्तभावाभिनयिनः, फलभूयस्त्वं दर्शयन्तः प्रधानस्यान्यापेक्षया बहुतरधनलाभपणनमुपपादयन्तः, सामवायिकान्, 'अतिसंहिताः स्थ प्रधानेन यूयं वञ्चिता भवथः', इति, उक्त्वेति शेषः, उद्दूषयेयुः प्रधानकारितात् सन्धेर्विश्लेषयेयुः । दुष्टेषु एवं सन्धिविश्लिष्टेषु समवायिषु, सन्धिं दूषयेत् समवायिविसंवाददुष्ट इत्युक्त्वा व्यभिचरेद् विजिगीषुः, प्रधानाय न किमपि धनं दद्यादित्यर्थः । अथ सन्धिदूषणानन्तरम्, उभयवेतनाः, एषां भेदं समवायिनां प्रधानाद् भेदनं, भूयः कुर्युः, पूर्वकृतभेददाढर्यार्थम् । कथमित्याह—एवं तदिति । यदस्माभिर्दर्शितं प्रधानस्य फलभूयस्त्वं यत् पूर्वमवदाम, तद्, एवं अनेन प्रकारेण कृतसन्धिदूषणलक्षणेन व्यक्तमिति शेषः । अयं भावः—स्वाभीप्सितभूयःफलालाभात् प्रधानेन पुनरपि युष्मत्समवायमासाद्य चेष्टितुकामेनेदं सन्धिदूषणमुत्पादितमिति । भिन्नेष्विति । उक्तो-

[ तत्रैव प्रधानाभावे जनविशेषवशीकरणेन
हीनशक्तिपूरणम्, वशीकार्यजनपरिगणनं
वशीकरणप्रकाराश्च ]

**प्रधानाभावे सामवायिकानामुत्साहयितारं स्थिरकर्माणमनुरक्तप्रकृतिं लोभाद्भयाद्वा सङ्घातमुपगतं विजीगीषोर्भीतं राज्यप्रतिसम्बन्धं मित्रं चलामित्रं वा पूर्वानुत्तराभावे साधयेत् ।**

**उत्साहयितारमात्मनिसर्गेण; स्थिरकर्माणं सान्त्वप्रणिपातेन; अनुरक्तप्रकृतिं कन्यादानयापनाभ्यां; लुब्धमंशद्वैगुण्येन; भीतमेभ्यः कोशदण्डानुग्रहेण ।**

---

श्रीमूला

पायवशाद् भेदं प्राप्तेषु सामवायिकेषु मध्ये अन्यतमोपग्रहेण वा चेष्टेत अन्यतमं पक्षं स्वानुकूलीकृत्य तत्सहायो वा तदन्यं पक्षमभियुञ्जीत ।

सोऽयं सामवायिकेषु प्रधानसत्त्वेऽनुष्ठानक्रमः। प्रधानाभावे तमाह—प्रधानाभाव इति। प्रधानस्य कस्यचिदभावे सति, सामवायिकानाम् मध्ये, उत्साहयितारं, स्थिरकर्माणं शत्रूच्छेदपर्यन्तानुवर्तिसमुद्यमम्, अनुरक्तप्रकृतिं, लोभात्, सङ्घातं समवायम्, उपगतं, भयाद् वा समवायप्रकोपभयाद् वा, सङ्घातमुपगतं, विजिगीषोः भीत्वा वा सङ्घातमुपगतं, राज्यप्रतिसम्बन्धं राज्यसम्बन्धिनम्, मित्रम् आत्ममित्रमेव सामवायिकसङ्गतं, चलामित्रं वा, साधयेत् स्ववशं नयेत्। तत्र क्रममाह—पूर्वानुत्तराभावे इति। एषु नवसु मध्ये उत्तरोत्तराभावे पूर्वंपूर्वान् साधयेत्। यथा—उत्साहयितृस्थिरकर्मणोः स्थिरकर्माभावे उत्साहयितारं साधयेत्। स्थिरकर्मसत्त्वे तमेव साधयेत्। स्थिरकर्मा ह्यनुच्छेद्य यातव्यं न विरमति, उत्साहयिता तु यातव्यसाधनमात्रेण विरमतीत्युत्साहयितृसाधनाद् अधिकप्रयोजनं स्थिरकर्मसाधनं भवतीति। एवमन्यदप्यूहनीयम्। 'पूर्वान्यतराभावे' इति तु अपपाठो द्रष्टव्यः।

तेषां साधनप्रकारमाह—उत्साहयितारमिति। तम्, आत्मनिसर्गेण 'अयमहं सामात्यः सपुत्रः सधनस्त्वय्यायत्तः, यथेच्छसि तथा मां करणीये नियोजय, मा मामुच्छेत्सीरि'त्युक्त्वात्मसमर्पणेन, साधयेदिति वर्तते। उत्साहयिता हि शौर्यप्रधानत्वादित्थमभिधीयमानः सुसाधो भवतीति। स्थिरकर्माणं, सान्त्वप्रणिपातेन जितोऽस्मि भवता सर्वगुणोत्कृष्टेन रक्षणीय इत्यनुनयपुरस्सरेण प्रणामेन, साधयेत्। स ह्येवमुच्यमानो मानोन्नतत्वात् साध्यो भवतीति। अनुरक्तप्रकृतिं, कन्यादानयापनाभ्यां कन्याया आदानयापनाभ्याम् आदानं स्वीकरणं यापनं प्रस्थापनमर्थाद् दानं ताभ्यामित्यर्थः, साधयेत्। स हि 'त्वत्सम्बन्धाभिलाषिणं त्वदनुरक्तं मां माभियुङ्क्ष्वे'त्येवं न्याय्यमभिधीयमानः प्रकृतिविरागशङ्की साध्यो भवतीति। लुब्धं धनगृध्नुम्, अंशद्वैगुण्येन परपरिपणितार्थद्विगुणार्थदानेन, साधयेत्। एभ्यो भीतं सामवायिकेभ्यो भीत्वा

**स्वतोभीतं विश्वासयेत् प्रतिभूप्रदानेन, राज्यप्रतिसम्बन्धमेकीभावोपगमनेन, मित्रमुभयतः प्रियहिताभ्यामुपकारत्यागेन वा, चलामित्रमवधृतमनपकारोपकाराभ्याम् । यो वा यथाऽयोगं भजेत, तं तथा साधयेत्; सामदानभेददण्डैर्वा यथाऽऽपत्सु व्याख्यास्यामः ।**

[ हीनशक्तिपूरकं प्रकारान्तरम् ]

**व्यसनोपघातत्वरितो वा कोशदण्डाभ्यां देशे काले कार्ये वाऽवधृतं सन्धिमुपेयात् । कृतसन्धिर्हीनमात्मानं प्रतिकुर्वीत ।**

[ सहायसम्पादनस्य मन्त्रशक्तिपूरणस्य चोपदेशः ]

**पक्षे हीनो बन्धुमित्रपक्षं कुर्वीत, दुर्गमविषह्यं वा । दुर्गमित्रप्रतिस्तब्धो हि स्वेषां परेषां च पूज्यो भवति ।**

---

श्रीमूला

तत्सङ्गतं, कोशदण्डानुग्रहेण धनसैन्यदानेन, साधयेत् । स हि 'मा परेभ्यो भैषीः, अहं ते कोशदण्डाभ्यां साहाय्यं करोमी'त्युक्त्या साध्यो भवतीति ।

स्वतो भीतम् आत्मनः सकाशाद् भीत, प्रतिभूप्रदानेन विश्वासयेत् 'अहं न ते किञ्चिदपकुर्याम् अस्मिन्नर्थेऽयं चासौ च प्रतिभूः' इत्युक्त्वा साधयेत् । राज्यप्रतिसम्बन्धम्, एकीभावोपगमनेन 'त्वं चाहं चैकीभावमुपगतौ, मम परिभवस्तवापि खलु परिभवः, न युक्तं ते परेष्वनुप्रविश्य मामभियोक्तुमि'ति कथनेन साधयेत् । मित्रम्, उभयतः प्रियहिताभ्यां 'समानसुखदुःखौ खल्वावाम्' इत्याद्युभयप्रियहितवचनेन, उपकारत्यागेन वा 'यस्त्वया मह्यं देयः करो व्यवस्थितः तमद्यप्रभृति न मे दातुमर्हसि' इत्युक्त्वा क्लृप्तकरमोक्षणेन वा, साधयेत् । चलामित्रम् अनपकारोपकाराभ्याम् अवधृतम् 'अपकारं ते न करिष्यामि उपकारं च करिष्यामि' इत्यनपकारोपकारप्रतिश्रवाभ्याम् अवधृतिमन्तं विश्वासितं, कृत्वेति शेषः, साधयेत् ।

यो वेति । यः सामवायिकः, यथा येन प्रकारेण, अयोगं समवायिभ्यो विश्लेषं, भजेत, तं तथा तेन प्रकारेण साधयेत् । सामेत्यादि । सामदानभेददण्डैर्वा उपायैः, साधयेत् परं स्वायत्तीकुर्यात् । कथं, यथा आपत्सु व्याख्यास्यामः अभियास्यत्कर्माधिकरणे आपत्प्रकरणे वक्ष्यामस्तथा ।

व्यसनोपघातत्वरितो वेत्यादि । अथवा आत्मनो व्यसनमुपहन्तुं कालविलम्बमक्षममाणः, अमुष्मिन् देशे काले कार्ये वा कोशदण्डाभ्यां साहाय्यमनुष्ठेयमित्येवं शपथादिना निश्चितं सन्धिं सामवायिकैः सह विदध्यात् । कृतसन्धिश्चैवमात्मानं हीनशक्तिं शक्त्याऽऽप्याययेत् ।

शक्त्युपचयस्य पक्षमूलत्वात् पक्षमाह—पक्ष इति । पक्षः सहायस्तद्विषये, हीनः, बन्धुमित्रपक्षं बन्धुमित्रलक्षणं पक्षं, कुर्वीत । अविषह्यं परैरलङ्घ्यं, दुर्गं वा, कुर्वीत ।

**मन्त्रशक्तिहीनः प्राज्ञपुरुषोपचयं विद्यावृद्धसंयोगं वा कुर्वीत । तथा हि सद्यःश्रेयः प्राप्नोति ।**

[ दुर्गादिप्रयोजनोपपादनेन तत्साध्य-
प्रभुशक्तिपूरणोपदेशः ]

**प्रभावहीनः प्रकृतियोगक्षेमसिद्धौ यतेत । जनपदस्सर्वकर्मणां योनिः; ततः प्रभावः ।**

**तस्य स्थानं, आत्मनश्चापदि दुर्गम् ।**

**सेतुबन्धस्सस्यानां योनिः । नित्यानुषक्तो हि वर्षगुणलाभः सेतुवापेषु ।**

**वणिक्पथः परातिसन्धानस्य योनिः । वणिक्पथेन हि दण्डगूढपुरुषाऽतिनयनं शस्त्रावरणयानवाहनक्रयश्च क्रियते, प्रवेशो निर्णयनं च ।**

---

श्रीमूला

तत्र हेतुमाह—हि यतः, दुर्गमित्रप्रतिस्तब्धः दुर्गमित्राभ्यां प्रतिबद्धः, स्वेषां स्वपक्ष्याणां परेषां परपक्ष्याणाञ्च, पूज्यो भवति ।

मन्त्रप्रभूत्साहशक्तिषु मध्ये मन्त्रशक्तिपूरणप्रकारमाह—मन्त्रशक्तिहीन इति । मन्त्रशक्तिः प्रज्ञाबलं तद्धीनः, प्राज्ञपुरुषोपचय कुर्वीत प्राज्ञान् पुरुषांस्तत्तदधिकारस्थानेषु बाहुल्येन नियुञ्जीत । विद्यावृद्धसंयोगं वा कुर्वीत राज्यतन्त्रनिष्णातेभ्यो वा नीतिं श्रृणुयादित्यर्थः । तथाहि तेन प्रकारेण करणे हि, सद्यः श्रेयः प्राप्नोति ।

प्रभुशक्तिपूरणमाह—प्रभावहीन इति । प्रभावः कोशदण्डोत्पत्तिः तद्धीनः, प्रकृतियोगक्षेमसिद्धौ यतेत । प्रकृतिषु मध्ये जनपदः प्राधान्येन चिन्तनीययोगक्षेम इत्यभिप्रायेणाह - जनपद इति । सः, सर्वकर्मणां दुर्गादीनां सर्वेषां कर्मणां, योनिः कारणम् । अतश्च स प्रधान इत्यर्थः । ततः प्रभावः सर्वकर्मभ्यः कोशदण्डोत्पत्तिः । तथा च प्रभावकामो दुर्गादिकर्मणां योगक्षेमसिद्धौ यतेतेति भावः ।

तेषु दुर्गस्य प्रयोजनमाह—तस्येति । दुर्गं, तस्य प्रभावस्य, स्थानं निवासः, आत्मनश्च आपदि स्थानं रक्षादेशः, भवति ।

सेतुबन्धस्य प्रयोजनमाह—सेतुबन्ध इति । सः, सस्यानां योनिः कुतः हि यतः सेतुवापेषु सेतुबन्धावरुद्धजलपायनपोष्येषु व्रैहेयशालेयादिक्षेत्रेषु वर्षगुणलाभः वृष्टिसाध्यसस्यफलाधिगमः, नित्यानुषक्तः नित्यानुवृत्तः भवति ।

वणिक्पथस्याह—वणिक्पथ इति । सः, परातिसन्धानस्य शत्रुवञ्चनस्य, योनिः । तद् उपपादयति—वणिक्पथेन हीति । तेन, दण्डगूढपुरुषातिनयनं सैन्यानां

**खनिः सङ्ग्रामोपकरणानां योनिः ।**

**द्रव्यवनं दुर्गकर्मणां, यानरथयोश्च ।**

**हस्तिवनं हस्तिनाम् ।**

**गवाश्वरथोष्ट्राणां च व्रजः ।**

**तेषामलाभे बन्धुमित्रकुलेभ्यः समार्जनम् ।**

[ उत्साहशक्तिपूरणोपदेशः ]

**उत्साहहीनः श्रेणीप्रवीरपुरुषाणां चोरगणाटविकम्लेच्छजातीनां परापकारिणां गूढपुरुषाणां च यथालाभमुपचयं कुर्वीत ।**

[ एवं शक्तिपूरणाशक्तौ कर्तव्योंऽशः ]

**परमिश्रः प्रतीकारमाबलीयसं वा परेषु प्रयुञ्जीत ।**

---

श्रीमूला

गूढपुरूषाणां च सत्रितीक्ष्णादीनां शत्रुविषयप्रापणं, शस्त्रावरणयानवाहनक्रयश्च शस्त्रादिविषयः क्रयविक्रयव्यवहारश्च, क्रियते। प्रवेशो निर्नयनं च परदेशपण्यस्य स्वदेशे प्रवेशनं स्वदेशपण्यस्य परदेशनयनं च, क्रियते।

खनेराह—खनिरिति। सा, सङ्ग्रामोपकरणानां खड्गादीनां, योनिः तन्निर्माणापेक्षितलोहाद्युत्पादनद्वारेण कारणम्।

द्रव्यवनस्याह—द्रव्यवनमिति। सारदार्वादिवनं, दुर्गकर्मणां गोपुराट्टालकादीनां, यानरथयोश्च, योनिरिति वर्तते।

हस्तिवनं हस्तिनामिति। योनिरित्यनुवर्तते।

गवाश्वखराष्ट्राणां चेति। तेषां, व्रजः गोष्ठः, योनिरित्येव।

तेषामिति। उक्तानाम्, अलाभे स्वीयत्वेनाप्राप्तौ, बन्धुमित्रकुलेभ्यः, समार्जनं सङ्ग्रहणं, कर्तव्यमिति शेषः।

उत्साहशक्तिपूरणमाह—उत्साहहीन इति। सः, श्रेणीप्रवीरपुरुषाणां श्रेण्यन्तर्गतपुरुषाणां शूरपुरुषाणाञ्च, चोरगणाटविकम्लेच्छजातीनां चोरगणानाम् अटवीभवानां म्लेच्छजातीनां च परापकारिणां शत्रवपकरणशीलानां, गूढपुरुषाणां च सत्रिप्रभृतीनां च, यथालाभं लाभानुसारेण, उपचयम् उत्साहशक्तिपूरणं, कुर्वीत।

शक्तेरुपचेतुमशक्यतायामाह—परमिश्र इति। परेण शत्रुणा सन्धिकरणेन सङ्गतः सन्, परमित्र इति पाठे सन्धिना मित्रीकृतशत्रुः सन्नित्यर्थः, प्रतीकारम् आबलीयसं वा आबलीयसाधिकरणे वक्ष्यमाणं प्रतिविधिं वा परेषु प्रयुञ्जीत।

[ निगमनम् ]

**एवं पक्षेण मन्त्रेण द्रव्येण च बलेन च ।**
**सम्पन्नः प्रतिनिर्गच्छेत् परावग्रहमात्मनः ॥२६८॥**

इति षाड्गुण्ये हीनशक्तिपूरणं चतुर्दशोऽध्यायः,
आदितो द्वादशशतः ।

---

श्रीमूला

एवमिति । उक्तेन प्रकारेण, पक्षेण बन्धुमित्रलक्षणेन, मन्त्रेण विद्यावृद्धसंयोगादिना, द्रव्येण च दुर्गसेतुबन्धवणिक्पथाद्युत्पन्नेन, बलेन च श्रेणीप्रवीरपुरुषचोरगणादिरूपेण, सम्पन्नः पूरितशक्तिः विजिगीषुः, आत्मनः, परावग्रहं प्रतिनिर्गच्छेत् शत्र्वभियोगं प्रतिकुर्यात् ।

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे
चतुर्दशोऽध्यायः, हीनशक्तिपूरणम्,
आदितो द्वादशोत्तरशततमः ।

# एकोनविंशतिशततमविंशतिशततमे प्रकरणे

## पञ्चदशोऽध्यायः

### बलवता विगृह्योपरोधहेतवः दण्डोपनतवृत्तं च

[ प्रबलशत्रुणा विग्रहसम्भवे तन्निग्रहोपायविवरणम् ]

**दुर्बलो राजा बलवताऽभियुक्तः तद्विशिष्टबलमाश्रयेत, यमितरो मन्त्रशक्त्या नातिसन्दध्यात् । तुल्यबलमन्त्रशक्तीनां आयत्तसम्पदो वृद्धसंयोगाद्वा विशेषः ।**

**विशिष्टबलाभावे समबलैस्तुल्यबलसङ्घैर्वा बलवतस्सम्भूय तिष्ठेत्, यावन्न मन्त्रप्रभावशक्तिभ्यामतिसन्दध्यात् ।**

———————

श्रीमूला

बलवता विगृह्योपरोधहेतव इति सूत्रम् । प्रबलेन शत्रुणा सह विग्रहं कृत्वा उपरोधस्य दुर्गप्रवेशस्य हेतवः कारणानि अभिधीयन्त इति सूत्रार्थः । हीनस्य प्रबलेन शत्रुणा सह सन्धिं कृत्वा शक्तिपूरणं पूर्वमुक्तम् । प्रबलश्चेत् सन्धिं नोपगच्छेत् तदा हीनस्यानुष्ठानप्रकार इदानीमभिधीयते ।

दुर्बलो राजेति । सः, बलवता अभियुक्तः, तद्विशिष्टबलम् अभियोक्त्रपेक्षयोत्कृष्टबलं राजानम्, आश्रयेत । यम्, इतरः अभियोक्ता, मन्त्रशक्त्या, नातिसन्दध्यात् न वञ्चयेत्, तं तद्विशिष्टबलमिति सम्बन्धः ।

तुल्यबलमन्त्रशक्तीनां बहूनां सत्त्वे मन्त्रशक्तियुक्तामात्यादिमन्तमाश्रयेत्, मन्त्रशक्तियुक्तामात्यादिमतां बहुत्वे च वृद्धसंयोगवन्तमाश्रयेतेत्यभिप्रायकमाह—तुल्यबलमन्त्रशक्तीनामित्यादि । आयत्तसम्पदो विशेषः आयत्ता अमात्यादयस्तेषां सम्पत् मन्त्रशक्तियोगः तन्निमित्त आश्रयणीयविशेषावसाय इत्यर्थः ।

विशिष्टबलाभाव इति । अभियोक्त्रपेक्षया विशिष्टबलस्यालाभे, बलवतः प्रबलस्याभियोक्तुः समबलैः तुल्यशक्तिभिः, तुल्यबलसंख्यैर्वा समपरिमाणसैन्यैर्वा बहुभिः सहायैः, सम्भूय तिष्ठेत् शत्रुं प्रतियुध्येत कियन्तं कालं तिष्ठेत्, यावत्, मन्त्रप्रभावशक्तिभ्यां, नातिसन्दध्यात् न भेदयेत्, अर्थात् स्वसहायान् शत्रुः ।

**तुल्यमन्त्रप्रभावशक्तीनां विपुलारम्भतो विशेषः । समबलाभावे हीनबलैश्शुचिभिरुत्साहिभिः प्रत्यनीकभूतैर्बलवतस्सम्भूय तिष्ठेत्, यावन्न मन्त्रप्रभावोत्साहशक्तिभिरतिसन्दध्यात् ।**

**तुल्योत्साहशक्तीनां स्वयुद्धभूमिलाभाद्विशेषः । तुल्यभूमीनां स्वयुद्धकाललाभाद्विशेषः । तुल्यदेशकालानां युग्यशस्त्रावरणतो विशेषः ।**

[ तथाकरणे सहायानामलाभे दुर्गाश्रयणविधिः ]

**सहायाभावे दुर्गमाश्रयेत, यत्रामित्रः प्रभूतसैन्योऽपि भक्तयवसेन्धनोदकोपरोधं न कुर्यात् । स्वयं च क्षयव्ययाभ्यां युज्येत ।**

**'तुल्यदुर्गाणां निचयापसारतो विशेषः । निचयापसारसम्पन्नं हि मनुष्यदुर्गमिच्छेत्' इति कौटल्यः ।**

———

श्रीमूला

तुल्यमन्त्रप्रभावशक्तीनामिति । तेषां बहुत्वे, विपुलारम्भतो विशेषः विपुलारम्भत्वलक्षणो व्यतिरेको यस्मिन्नस्ति तमाश्रियेदित्यर्थः । भक्तोपकरणादिसर्वविधयात्रासाधनसम्पन्नो विपुलारम्भ इति प्रागवोचाम ।

समबलाभावे आह—समबलाभाव इति । समबलानामलाभे, बलवतः प्रबलाच्छत्रोः, हीनबलैः, शुचिभिः, उत्साहिभिः, प्रत्यनीकभूतैः परशत्रुभूतैः, बहुभिः सहायैः, सम्भूय तिष्ठेत् शत्रुं प्रार्थयेत । कियन्तं कालं, यावत्, मन्त्रप्रभावोत्साहशक्तिभिः, नातिसन्दध्यात् न भेदयेत् अर्थात् सहायान् ।

तुल्योत्साहशक्तीनामिति । तेषां बहूनां मध्ये, स्वयुद्धभूमिलाभाद् विशेषः यस्याश्रयणे स्वस्य युद्धयोग्यदेशलाभो भवति तमाश्रयेदित्यर्थः । तुल्यभूमीनामिति । तुल्यतथाविधदेशानां बहूनां मध्ये, स्वयुद्धकाललाभाद् विशेषः यस्मिन्नाश्रिते स्वस्य युद्धयोग्यकाललाभो भवति तमाश्रयेदित्यर्थः । तुल्यदेशकालानामिति । यथाभूतानां बहूनां सम्भवे, युग्यशस्त्रावरणतो विशेषः गवाश्वोष्ट्रायुधावरणरूपोपकरणसमृद्धिर्यस्यास्ति तमाश्रयेदित्यर्थः ।

सहायाभावे इति । आश्रयणीयस्य कस्याप्यलाभे, दुर्गम्, आश्रयेत । तत् कीदृशं, यत्र यस्मिन्, स्थितस्येति शेषः, प्रभूतसैन्योऽपि, अमित्रः अभियोक्ता, भक्तयवसेन्धनोदकोपरोधं यथापेक्षितभोज्ययवसादिप्रवेशोपघातं, न कुर्यात् । स्वयं च क्षयव्ययाभ्यां युज्येत युग्यपुरुषापचयधनव्ययौ च स्वयं प्राप्नुयादित्यर्थः ।

तुल्यदुर्गाणामिति । यथोक्तगुणानां दुर्गाणां बहूनां सम्भवे, निचयापसारतो विशेषः निचयः स्नेहलवणादेर्नित्योपयोज्यस्य सञ्चयः अपसारो दुर्गनिर्गमनमार्गः ताभ्यां विशेषः । निचयापसारवन्तं दुर्गमाश्रयेतेत्यर्थः । निचयेत्यादि । मनुष्यदुर्गं मनुष्या-

[ तत्र चानुसन्धेयानां कारणानां परिगणनम् ]

**तदेभिः कारणैराश्रयेत—**

**"पार्ष्णिग्राहमासारं मध्यममुदासीनं वा प्रतिपादयिष्यामि; सामन्ताटविकतत्कुलीनावरुद्धानामन्यतमेनास्य राज्यं हारयिष्यामि, घातयिष्यामि वा; कृत्यपक्षोपग्रहेण वाऽस्य दुर्गे राष्ट्रे स्कन्धावारे वा कोपं समुत्थापयिष्यामि; शस्त्राग्निरसप्रणिधानैरौपनिषदिकैर्वा यथेष्टमासन्नं हनिष्यामि; स्वयमधिष्ठितेन वा योगप्रणिधानेन क्षयव्ययमेनमुपनेष्यामि; क्षयव्ययप्रवासोपतप्ते वाऽस्य मित्रवर्गे सैन्ये वा क्रमेणोपजापं प्राप्स्यामि; वीवधाऽऽसारप्रसारवधेन वाऽस्य स्कन्धावारावग्रहं करिष्यामि; दण्डोपनयेन वाऽस्य रन्ध्रमुत्थाप्य सर्वसन्दोहेन प्रहरिष्यामि; प्रतिहतोत्साहेन वा यथेष्टं सन्धि-**

---

श्रीमूला

श्रयणीयं दुर्गमाश्रयेतेत्यर्थः। मनुष्यदुर्गं मनुष्याश्रयणीयं दुर्गम्। इति कौटल्य इत्युक्त्यान्येषामाचार्याणां मतमनीदृशमिति सूचयति।

तच्च दुर्गं वक्ष्यमाणेषु फलेष्वन्यतममभिसन्धायाश्रयणीयमित्याह—तदेभिरित्यादि। तानि कारणानि 'पार्ष्णिग्राहमि'त्यादिना 'न निर्गमिष्यतीति' इत्यन्तेन महावाक्येन दर्शयति। तदवान्तरवाक्यानि तु षोडश। तेषु च प्रत्येकम् इतिशब्दः सम्बन्धनीयः। तदयमर्थः—पार्ष्णिग्राहं सुहृद्बलं मध्यमम् उदासीनं वा प्रागुक्तलक्षणम् अभियोक्तुः प्रत्यभियोगाय नेष्यामीति चेन्मन्येत तदा दुर्गमाश्रित्य तिष्ठेत्। सामन्तेन आटविकेन अभियोक्तृकुलीनेन वावरुद्धेन राज्यमभियोक्तुर्हारयिष्यामि दाहविलोपाद्युपघातयुक्तं वा कारयिष्यामीति चेन्मन्येत, तदा दुर्गमाश्रयेत। अथवा अभियोक्तुः कृत्यपक्षम् उपायैः स्वायत्तीकृत्य तदीये दुर्गे राष्ट्रे सेनानिवेशे वा बाह्याभ्यन्तरं प्रकृतिकोपमुत्पादयिष्यामीति चेन्मन्येत तदा दुर्गमाश्रयेत। अथवा शस्त्राग्निरसप्रणिधानेनात्रलीयसोक्तेन, औपनिषदिकोक्तैर्वा योगैर्यथेच्छं सन्निकृष्टं हनिष्यामीति चेन्मन्येत, तदा दुर्गमाश्रयेत। अथवा विस्रब्धघाति पुरुषप्रयोगेण, स्वयं कृतेन युग्यपुरुषापचयं धनव्ययं चाभियोक्तारं नेष्यामीति चेन्मन्येत तदा दुर्गमाश्रयेत। अथवा क्षयव्ययप्रवासैरुपतापं प्राप्तेऽभियोक्तुर्मित्रवर्गे सैन्ये वा क्रमेण भेदं प्रयोक्तुं लप्स्ये इति चेन्मन्येत, तदा दुर्गमाश्रयेत। अथवाभियोक्तुः स्वदेशागतभक्तोपकरणानां सुहृद्बलस्य यवसेन्धनादेश्च निरोधेन तत्सेनानिवेशपीडामुत्पादयिष्यामीति चेन्मन्येत, तदा दुर्गमाश्रयेत। अथवा स्वसैन्यान् कांश्चिद् अभियोक्तुः स्कन्धावारं गूढं नीत्वा तत्र प्रहारस्थानमुत्पाद्य पश्चात् सर्वसैन्यसमुदयेन गत्वा प्रहरिष्यामीति चेन्मन्येत, तदा दुर्गमाश्रयेत। अथवा कथञ्चिदभियोक्तुरुत्साहं प्रतिहत्य यथेष्टं सन्धिमवाप्स्यामीति

**मवाप्स्यामि; मयि प्रतिबन्धस्य वा सर्वतः कोपाः समुत्थास्यन्ति; निरासारं वाऽस्य मूलं मित्राटवीदण्डैरुद्घातयिष्यामि; महतो वा देशस्य योगक्षेम-मिहस्थः पालयिष्यामि; स्वविक्षिप्तं मित्रविक्षिप्तं वा मे सैन्यमिहस्थस्यै-कस्थमविषह्यं भविष्यति; निम्नखातरात्रियुद्धविशारदं वा मे सैन्यं पथ्याबाधमुक्तमासन्ने कर्मणि करिष्यति; विरुद्धदेशकालमिहागतो वा स्वयमेव क्षयव्ययाभ्यां न भविष्यति; महाक्षयव्ययाभिगम्योऽयं देशो दुर्गाटव्यपसारबाहुल्यात्; परेषां व्याधिप्रायस्सैन्यव्यायामानां अलब्धभौमश्च, तमापद्गतः प्रवेक्ष्यामि; प्रविष्टो वा न निर्गमिष्यति" इति ।**

---

श्रीमूला

चेन्मन्येत, तदा दुर्गमाश्रयेत । अथवा मद्विषयाभियोगव्यासक्तमभियोक्तारं प्रति सर्वतः सामन्तप्रकोपा उद्भविष्यन्तीति चेन्मन्येत, तदा दुर्गमाश्रयेत । अथवा निरुद्धसुहृद्बलमभियोक्तुः स्थानीयं मित्रसैन्यैराटविकसैन्यैश्चोपहतं करिष्यामीति चेन्मन्येत, तदा दुर्गमाश्रयेत । अथवा महतो देशस्य योगक्षेमम् इहस्थः पालयितुं शक्ष्यामीति चेन्मन्येत, तदा दुर्गमाश्रयेत । अथवा स्वकार्यार्थे मित्रकार्यार्थे चान्यत्र प्रेषितं मम सैन्यमत्रैकीभूय मया सङ्गतं शत्रोरलङ्घनीयं भविष्यतीति चेन्मन्येत, तदा दुर्गमाश्रयेत । अथवा निम्नयुद्धे खातयुद्धे रात्रियुद्धे च निपुणं मे सैन्यं पथिगमन-श्रममिह दुर्गेऽपनीय कर्म काले प्राप्ते करिष्यतीति चेन्मन्येत, तदा दुर्गमाश्रयेत । अथवाभियोक्ता स्वसैन्याननुकूले देशे काले चेहागतो विनैवास्मद्यत्नं स्वयमेव क्षयव्ययाननुभूय नङ्क्ष्यतीति चेन्मन्येत, तदा दुर्गमाश्रयेत । अथवा दुर्गबहुलत्वादटवी-प्रायत्वादपसारस्थानबहुलत्वाच्च महान्तं क्षयं व्ययं चानुभवतैवाभिगन्तव्योऽयं देशः, परेषां विदेशागतानां व्याधिजनकः, सैन्यव्यायामयोग्यभूमिरहितश्च, तं परः प्रविशन्नेव विपदं लप्स्यते, कथञ्चित् प्रविष्टो वा न ततः स्वस्तिमान् निर्गमिष्यतीति चेन्मन्येत, तदा दुर्गमाश्रित्य तिष्ठेदिति । एवं तावत् षोडशकारणान्युक्तानि ।

नयचन्द्रिका

निवेशक्लेशविधानेनाचिरात् भूमिपा(पः) परेषामत्र परिचितानां, अतिव्याधिप्रायः सर्वत्र महारोगजनकः । सैन्यस्य व्यायामायु·········व्यापाराः, तेषामलब्धयोग्य-भूमिश्च, तमेनमापद्गतः परः प्रवेक्ष्यति । प्रवेशं विना कार्यनिर्वहणमेवापद्गतः प्रवेक्ष्यति ततो न भविष्यति चेत्यभिप्रायाद्वेत्यर्थः । एभिः कारणैर्दुर्गमाश्रयेतेति सम्बन्धः ।

[ उक्तकारणादर्शने कर्तव्याः अंशाः ]

**'कारणाभावे बलसमुच्छ्रये वा परस्य दुर्गमुन्मुच्यापगच्छेत्; अग्निपतङ्गवत् अमित्रे वा प्रविशेत्। अन्यतरसिद्धिर्हि त्यक्तात्मनो भवति' इत्याचार्याः। 'न' इति कौटल्यः—सन्धेयतामात्मनः परस्य चोपलभ्य सन्दधीत। विपर्यये विक्रमेण सन्धिमपसारं वा लिप्सेत।**

---

श्रीमूला

यथोक्तकारणाभावे यत् कर्तव्यं तदाचार्यमतेनाह—कारणाभाव इति। यथोक्तकारणविरहे, परस्य शत्रोः, बलसमुच्छ्रये वा सैन्यप्राबल्ये वा सति, दुर्गम्, उन्मुच्य त्यक्त्वा, अपगच्छेत् अपसरेत्। अग्निपतङ्गवदमित्रे वा प्रविशेदिति। यथा हि शलभोऽग्नौ प्रविशति, तथात्मजीवितनिराशः शत्रौ प्रविशेत्, शत्रुमध्यं प्रविश्य यावच्छक्ति पराक्रमेतेत्यर्थः। न चायं महाबलशत्रुप्रत्यभियोगः प्रत्यभियोक्तुरेकान्तपराजयफलः, किन्तु पाक्षिकं शत्रुजपमप्युपनयति, यथाऽग्निप्रवेशः शलभस्यैकान्ततो न नाशहेतुः किन्तु अग्निमपि पक्षे निर्वाणं करोति तद्वदित्यभिप्रायेणाह—अन्यतरसिद्धिर्हीत्यादि। अन्यतरस्य शत्रुजयात्मविनाशयोरेकतरस्य सिद्धिः।

आत्मनः परित्राणोपाये सुलभे पाक्षिकमपि नाशमभ्युपगम्य प्रवृत्तेरयुक्तत्वात् तदिदमाचार्यमतं मुख्यतया नोपादेयमित्याह—नेति कौटल्य इति। किं तर्हि कारणाभावादावनुष्ठेयमित्याह-सन्धेयतामात्मनः परस्य चेति। आत्मनः सन्धेयतां निरपराधत्वलक्षणां परस्य सन्धेयतां धर्मविजयित्वलक्षणां च, यद्वा द्वयोरपि तप्तत्वरूपां सन्धानयोग्यतामित्यर्थः उपलभ्य, सन्दधीत। विपर्यये सन्धेयत्वाभावे, विक्रमेण सिद्धिम् अग्निपतङ्गवच्छत्रौ प्रवेशनेनान्यतरसिद्धिं, लिप्सेत। सन्धिमिति पाठे तप्तत्वरूपा सन्धानयोग्यता शत्रोर्यथा जायेत तथा विक्रमप्रयोगेण सन्धिं लिप्सेतेत्यर्थः। अपसारं वा लिप्सेत, सन्धेरशक्यत्वे। इत्थं 'बलवता विगृह्योपरोधहेतवः' इतीदं प्रकरणं व्याख्यातम्।

नयचन्द्रिका

उक्तकारणाभावे परस्य महाबलत्वे च दुर्गमविमुच्यावव (? मुन्मुच्याप)गच्छेदित्याचार्यमतमाह—कारणाभाव इति।

आचार्यमतेनैव पक्षान्तरमाह—अग्निपतङ्गवदिति। पतङ्गः शलभः, तस्मिन् प्रदीपं प्रविष्टे प्रदीपोऽपि निर्वाणः स्यात्। स्वयं वा···दित्यन्यतरसिद्धिनियमस्येदमुदाहरणम्।

स्वमतमाह—सन्धेयतामिति। उभयोः सन्धानयोग्यतां तप्ततालक्षणामुपलभ्य सन्दध्यात्।

विपर्यय इति। परस्य तापाभावे इत्यर्थः। विक्रमेण परं भङ्क्त्वा सन्धिं कुर्यात्, तथापि परस्यासन्धित्सायां दुर्गादु(द)पसारमिच्छेत्।

## ( दण्डोपनतवृत्तम् । )

[ सर्वथा परेण स्वनिग्रह एव प्राप्ते
तदाश्रयणोपदेशः ]

**सन्धेयस्य वा दूतं प्रेषयेत् । तेन वा प्रेषितमर्थमानाभ्यां सत्कृत्य ब्रूयात्—इदं राज्ञः पण्यागारम्, इदं देवीकुमाराणां देवीकुमारवचनात्, इदं राज्यमहं च त्वदर्पणः' इति ।**

---

श्रीमूला

अथ दण्डोपनतवृत्तमुच्यते—दण्डोपनतवृत्तमिति सूत्रम् । दण्डोपनतस्य दण्डेनाधःकृतस्य वृत्तमनुष्ठानमभिधीयत इति सूत्रार्थः । सन्धेयतामित्यादिना सन्धिः कर्तव्यत्वेनोक्तः । तस्य प्रकारान्तराणां ज्यायसा सह कथमप्यसम्भवेऽन्ततस्तस्मिन्नात्मार्पणेन वा सन्धिः कर्तव्यः इत्येतदधुनाभिधीयते ।

सन्धेयस्य वेति । वाशब्दः सन्ध्यन्तरासम्भवरूपे पक्षान्तरे । सन्धेयस्य ज्यायसो धर्मविजयिन इति शेषः । दूतं प्रेषयेत् । अथवा, तेन वा सन्धेयेन वा, प्रेषितं दूतम्, अर्थमानाभ्यां धनदानपूजनाभ्यां, सत्कृत्य उपचर्य, ब्रूयात् । किमिति, इदं राज्ञः पण्यागारं सन्धेयाय राज्ञेऽर्पणीयं प्राभृतम्, इदं देवीकुमाराणां देवीकुमारवचनाद् इदं प्राभृतं सन्धेयस्य देव्यै कुमारेभ्यश्चास्मद्देवीवचनादस्मत्कुमारवचनाच्चार्पणीयम्, इदं राज्यम् अहं च त्वदर्पणः त्वयि अर्पणं यस्य स त्वदर्पण इत्येतत् पदं राज्येऽपि सम्बन्धनीयं, मयेदं राज्यं तुभ्यमर्पितम् आत्मा च तुभ्यमर्पित इत्यर्थः । इति एवं, ब्रूयादित्यनेन सम्बन्धः ।

नयचन्द्रिका

एवं बलवता विगृह्योपरोधहेतव इति प्रकरणमुक्त्वा सन्ध्यन्तरानभ्युपगमे आत्मार्पणेन सन्ध्यभिधानार्थं सूत्रम्—दण्डोपनतवृत्तमिति । दण्डेनोपनतवृत्तमुच्यत इत्यर्थः ।

तत्र········माह—सन्धेयस्य वेति ।

तेन वा प्रेषितमिति । दूतमित्येवमुपचारः ।

वचनप्रकारमाह—इदं राज्ञ इत्यादि । पण्यागारं प्राभृतं राज्ञः संज्ञे यस्येति भावः । देवीकुमाराणामिदं प्रणुतमिति । अत्र विजिगीषुणा स्वयमेव (देवी?)परस्य देवीकुमाराणां प्राभृतप्रेषणं शङ्काजनकत्वादनुचितमित्यत आह—देवीकुमारवचनादिति । विजिगीषोः देवीकुमाराणां वचनादिति, तैः प्रेषितमिति वाच्यमित्यर्थः । तदर्पण इति, त्वय्यर्पणं यस्य तत्तथा, त्वदायत्तं द्वयमित्यर्थः । एवं तस्मिन् वक्तव्यं ब्रूयादिति योज्यम् ।

[ अनुपदमेव चाश्रणीयाः सेवकधर्माः ]

**लब्धसंश्रयः समयाचारिकवद्भर्तरि वर्तेत । दुर्गादीनि च कर्माण्यावाहविवाहपुत्राभिषेकाश्वपण्यहस्तिग्रहणसत्रयात्राविहारगमनानि चानुज्ञातः कुर्वीत । स्वभूम्यवस्थितप्रकृतिसन्धिमुपघातमपसृतेषु वा सर्वमनुज्ञातः कुर्वीत ।**

**दुष्टपौरजानपदो वा न्यायवृत्तिरन्यां भूमिं याचेत । दूष्यवदुपांशुदण्डेन वा प्रतिकुर्वीत । उचितां वा मित्राद् भूमिं दीयमानां न प्रतिगृह्णीयात् ।**

---

श्रीमूला

लब्धसंश्रय इति । दूतप्रेषणादिनावाप्ताश्रयः, समयाचारिकवत् समयः सेवकधर्मनियमस्तस्याचारः समयाचारस्तद्युक्तः समयाचारिकः सेवकः तद्वद्, भर्तरि ज्यायसि संहिते, वर्तेत । वर्तनप्रकारमेवाह—दुर्गादीनि च कर्माणीति । तानि, आवाहविवाहपुत्राभिषेकादीनि च आवाहः कन्यास्वीकरणं विवाहः कन्यादानं पुत्राभिषेकः यौवराज्याभिषेचनम् अश्वपण्यम् अश्वक्रयः हस्तिग्रहणं गजबन्धनं सत्रं यागः यात्रा पराभियानं विहारगमनम् उद्यानादिक्रीडागमनम् इत्येतान्यष्टौ च, अनुज्ञातः स्वाम्यनुमतः, कुर्वीत । स्वभूम्यवस्थितप्रकृतिसन्धिमिति । स्वभूमौ अवस्थिताभिः प्रकृतिभिः स्वामात्यादिभिः सन्धिम्, अपसृतेषु स्वस्मादपसृत्य परस्मात् प्रत्यागतेषु उपघातं वा, सर्वम् अनुज्ञातः कुर्वीत ।

दुष्टपौरजानपदो वेति । दुष्टा अन्याय्यवृत्तयः पौरा जानपदाश्च यस्य स तथाभूतो वा, न्यायवृत्तिः न्याय्याचारः, न्यायवृत्तिमिति पाठे भूमेस्तद् विशेषणम् । अन्यां भूमिं याचेत अर्थात् स्वभूमिं वंशपरम्परागतामपि परित्यज्य । दूष्यैस्तुल्यम्, अयाचमान एव वान्यां भूमिं दूष्यार्हेणोपांशुदण्डेन स्वभूमिगतान् दुष्टान् प्रवासयेदित्याह—दूष्यवदित्यादि । अदुष्टजानपदामपि भूमिं स्वमित्रादाच्छिद्य स्वामिना दीयमानां

नयचन्द्रिका

लब्धसंश्रय इति । लब्धत्वं श्रयणाभ्युपगमः । समयाचारिकवदिति, समया: (यः) सेवकधर्मव्यवस्था तमाचरतीति यथोक्तः । भर्तरि स्वामिनि सेवकवद्वर्तेतेत्यर्थः ।

अनुक्तान् धर्मविशेषानाह— दुर्गादीनि चेत्यादि । दुर्गादीनि कर्माणि प्रागुक्तानि । आवाहः (कन्यास्वीकरणं) विवाहः कन्यादानम्, अत्र पुत्राभिषेको यौवराज्यदानम्, अश्वपण्यम् अश्वक्रयः, हस्तिग्रहणं हस्तिबन्धनम्, हस्तिबन्धनस्य दुर्गाद्यन्तर्गतत्वेऽपि पुनर्वचनमादरार्थं ग्राह्यम् । सूत्रं विचारसाध्यो योगः, यात्रा परानभियोक्तुं गमनम्, देवोत्सवगमनं वा, विहारश्चिरमुद्यानादि क्रीड़ा, एतान्यनुज्ञातः कुर्यादित्यर्थः ।

एवं सन्धेयविषयस्य विधिमुक्त्वा स्वभूमावेव तदाश्रयेण स्थितस्य विधिमाह— स्वाभूमीत्यादि । यदा स्वभूमावेव न वर्त्तते तदा स्वप्रकृतिभूतैरमात्यादिभिर्विशिष्टैः

**मन्त्रिपुरोहितसेनापतियुवराजानामन्यतमम् अदृश्यमाने भर्तरि पश्येत् । यथाशक्ति चोपकुर्यात् । दैवतस्वस्तिवाचनेषु तत्परा आशिषो वाचयेत् । सर्वत्रात्मनिसर्गं गुणं ब्रूयात् ।**

**संयुक्तबलवत्सेवी विरुद्धः शङ्कितादिभिः ।**
**वर्तेत दण्डोपनतो भर्तर्येवमवस्थितः ॥२६९॥**

इति षाड्गुण्ये बलवता विगृह्योपरोधहेतवः दण्डोपनतवृत्तं च,
पञ्चदशोऽध्यायः, आदितस्त्रयोदशशतः ।

---

श्रीमूला

न गृह्णीयादित्याह—उचितां वेत्यादि । आत्मनो मन्त्रिणं पुरोहितं सेनापतिं युवराजं वा भर्तुः सन्निधौ न पश्येदित्याह—मन्त्रिपुरोहितेत्यादि । एतच्च स्वामिसन्निधावात्मनानुष्ठीयमानं भृत्यसमुदाचारमात्मभृत्या मा द्राक्षुरित्येतदर्थमुक्तम् । यथाशक्ति चोपकुर्यादिति । स्वशक्त्यनुसारेण यत्किञ्चित् स्वामिने प्राभृतमुपहरेद् दर्शनावसरेषु । दैवतस्वस्तिवाचनेष्विति । देवताराधनेषु मङ्गलाह्निकेषु च तत्पराः भर्तृगोचराः, आशिषः वाचयेत् । सर्वत्रेति सर्वेषु जनेषु आत्मनिसर्गं भर्तर्यात्मार्पणं ब्रूयात्, गुणं ब्रूयात् स्वामिगुणांश्च कीर्तयेत् ।

संयुक्तेत्यादि । एवम् उक्तरीत्या, भर्तरि अवस्थितः, दण्डोपनतः, संयुक्तबलवत्सेवी संयुक्ताः स्वामिसम्बद्धा ये बलवन्तोऽमात्यादयस्तत्सेवी तदनुकूलवृत्तिः, शङ्कितादिभिर्विरुद्धः स्वाम्यसंयुक्तत्वेन ये शङ्किताः आदिग्रहणात् स्वमिद्विष्टाश्च ये तैर्विरुद्धश्च, वर्तेत ।

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे पञ्चदशोऽध्यायः
बलवता विगृह्योपरोधहेतवो दण्डोपनतवृत्तं च, आदितस्त्रयोदशोत्तरशततमः ।

नयचन्द्रिका

सह सन्धिम्, एवमव(प)सृतेषु तेषु पुनरागतेषु उपातमुपांशुवधादिकं वाऽनुज्ञातः कुर्वीतेत्यर्थः ।

यदा त्वात्मनो न्यायवृत्तित्वेऽपि पौरादयो दुष्टतया विरुन्धते, तदा कुलक्रमागतामपि स्वभूमिमुपेक्ष्य अन्यां याचेतेत्याह—दुष्टेत्यादि ।

भूम्यन्तरयाञ्चां विनैवोपायान्तरमाह—दूष्यवदिति ।

स्वमित्रेण दीयमानां योग्यामपि भूमिं नाददीतेत्याह—उचितां वेति ।

स्वमन्त्र्यादीनामन्यतमं भर्तुस्सन्निधौ न पश्येदित्याह—मन्त्रीत्यादि ।

दैवतेत्यादि । दैवतेषु गम्यमानेषु स्वस्तिव(वा)चनेषु क्रियमाणेषु चेत्यर्थः । भर्तुरिति सन्धेयः ।

सर्वत्र चेति । सर्वत्र पुरुषेषु भर्तुः स्वामिनि (नः) स्नेहं तस्य सौजन्यादींश्च प्रकाशयेदित्यर्थः ।

---

नयचन्द्रिका

शङ्कितत्वे द्वेषादिसंसर्गञ्च परिहरेदित्युपसंहरति—संयुक्तेत्यादि । येऽस्य संश्लिष्टा बलवन्तश्च महामात्याः तैः संसृष्टः, येऽस्य संसर्गतया शङ्किताः तैर्विरुद्ध-नियमेन संसृष्टः, दण्डेन बलेन, उपनतः संश्रितः, भर्तर्येवं वर्तते । अवस्थितः-नियतो वा ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां
कौटिलीयटीकायां नयचन्द्रिकायां षाड्गुण्ये
पञ्चदशोऽध्यायः समाप्तः ।

## एकविंशतिशततमं प्रकरणम्

### षोडशोऽध्यायः

### दण्डोपनायिवृत्तम्

[ दण्डादयः शत्रुवशीकरणोपायाः,
वशीकृतानां नियोजनानि च ]

**अनुज्ञातस्तद्धिरण्योद्वेगकरं बलवान् विजिगीषमाणः, यतः स्वभूमिः स्वर्तुवृत्तिश्च स्वसैन्यानां अदुर्गापसारः शत्रुरपार्ष्णिरनपसारश्च, ततो यायात् ।**

---

श्रीमूला

दण्डोपनायिवृत्तमिति सूत्रम् । दण्डेन बलेन शत्रुम् आत्मनः समीपं नयति उपनमयतीति दण्डोपनायी अर्थाद् दण्डोपनामी तदवस्थापन्नस्य विजिगीषोर्वृत्तमुच्यत इति सूत्रार्थः । उपनतवृत्ते निरूपिते उपनमयितृवृत्तस्य निरूपणं प्राप्तावसरमिति सङ्गतिः ।

प्रथममुपनमनस्य हेतुभूतमभियानमाह—अनुज्ञात इति । अनुज्ञा अभ्युपगमः ततः पञ्चम्यर्थे तसिः ल्यब्लोपे च पञ्चमी अभ्युपगमं 'सन्धौ त्वया पणितं हिरण्यं ददामी'त्येवमात्मकं विधायेत्यर्थः । प्रथमान्तं वानुज्ञात इति बलवतो विशेषणं 'सन्धौ त्वया पणितं हिरण्यं ददामो'त्यभ्युपगमेन सम्भावित इति तदर्थः । तद्धिरण्योद्वेगकरं तेन हिरण्येन सन्धिपणितेनादत्तेन हेतुनोद्वेगोत्पादकं, यातव्यं, विजिगीषमाणः विजेतुमिच्छन्, बलवान्, ततो यायात् तत्र देशेऽभिगच्छेत्, कुत्र, यतः यत्र गन्तव्ये, स्वसैन्यानां, स्वभूमिः स्वकीया भूमिर्गमनमार्गतया लभ्यते, सा स्वर्तुवृत्तिश्च स्वानुकूलकालयुक्ता स्वयोग्यभक्तोपकरणसम्पन्ना च, शत्रुः, अदुर्गापसारः दुर्गं पार्वतादि अपसारोऽपसरणमार्गः तदुभयरहितः भवति, अपार्ष्णिरनासारश्च आद्यं विजिगीषोर्विशेषणं द्वितीयं शत्रोर्विशेषणं स्वयं पार्ष्णिग्राहरहितः शत्रुस्तु सुहृद्बलरहित इत्यर्थः, यद्वा अपार्ष्णिरित्यपि शत्रोरेव विशेषणं पार्ष्णिशब्देन पार्ष्णिग्राहणरूपप्रतीकारलक्षणात् तद्रहित इत्यर्थः ।

नयचन्द्रिका

एवं दण्डोपनतावस्थस्य विजिगीषोर्वृत्तमुक्त्वा दण्डोपनाय्यवस्थस्याभिधातुं सूत्रम्—दण्डोपनायिवृत्तमिति । दण्डेन बलेनात्मनः समीपं नयन्तीति श्रुतस्य (नयतीति तस्य) वृत्तमुच्यत इत्यर्थः ।

यद्यप्यत्र दण्डोपनायी(मी)ति वाच्यः (च्यम्), तथा चाग्रे वक्ष्यति "सामदानाभ्यां

**विपर्यये कृतप्रतीकारो यायात् ।**

**सामदानाभ्यां दुर्बलानुपनमयेत्, भेददण्डाभ्यां बलवतः । नियोगविकल्पसमुच्चयैश्चोपायानामनन्तरैकान्तराः प्रकृतीस्साधयेत् ।**

———————

नयचन्द्रिका

दुर्बलानुपनमयेत्" (७ अधि०, १६ अ०, ३ सूत्रं) 'भेददण्डाभ्यां बलवतः' (७ अधि०, १६ अध्या०, ४ सूत्रं) इति । तथाप्युपग(न) मनस्याप्यर्थः । स्वसमीपनयनमिति दण्डोपनायीत्युक्तमिति ग्राह्यम्, तथैव पाठोऽस्त्विति ।

अस्त्रदण्डेन बलवादान्युपगमनस्य अभियोगसाध्यत्वादभियोगप्रकारमाह—अनुज्ञात इत्यादि । अननुज्ञातसंधिपण्योद्वेगकरमिति पाठः । अनभ्युपगतं सन्धौ पण्यं पणनीयं भूमिहिरण्यादि येन स तथा । अत एव वा जनपददाहविलोपादेवोद्वेगकरममर्षकरम्, विजिगीषमाणो—विजिगीषुः, तत्र यायादिति वाक्यार्थः । अननुज्ञातस्तद्धिरण्योद्वेगकरमिति त्वपपाठः । तद्व्याख्यातारस्तु अनुकम्पनीया इत्यलम् । कुत्र यायादित्यत आह—यत इत्यादि । (मुखातस्थलाकाशप्रकाशतुंमादियोगिधिष्ठरथगजादिषु चान्यतमभूयिष्ठानां स्वबलानां यत्र तत्तद्विधानुगुणा स्व(सु)भूमिः तत्तदनुगुणश्च?) तथा वृत्तिर्भक्तादि च, शत्रुश्चादुर्गापसारः—दुर्गं पार्वतादि, अपसारो भयोवापहृत्यवापसरणमार्गः तद्रहितः । एवमपार्ष्णिः, पार्ष्णिविरुद्धलक्षणया पार्ष्णिग्रहणप्रतीकारः तद्रहितः । अना(अनप)सारः मित्रबलः रहितश्च तयोः (ततो)या यादित्यर्थः ।

श्रीमूला

विपर्यये कृतप्रतीकारो यायादिति । उक्तस्वभूम्याद्यभावे शत्रोः सदुर्गापसारत्वादौ च सति तत्तत् प्रतिविधाय गच्छेत् ।

यातव्योपनमनोपायानां विषयनियममाह—सामदानाभ्यामित्यादि । एवञ्च दण्डोपनायिवृत्तमिति संज्ञापदे दण्डग्रहणमुपायमात्रोपलक्षणं दण्डस्य प्रायिकत्वज्ञापनार्थं कृतमिति द्रष्टव्यम् ।

उपायानुष्ठाननियममाह—नियोगविकल्पसमुच्चयैश्चेति । अयमेवोपायोऽस्मिन् पुरुषविशेषेऽनुष्ठेयो नान्य इत्यवधारणं नियोगः अयं वासौ वेति विकल्पः अयं चासौ चेति समुच्चयः । एवमुपायानां नियोगाद्यनुष्ठानैः, अनन्तरैकान्तराः प्रकृतीः अमित्रप्रकृतीः मित्रप्रकृतीश्च, साधयेत् उपनमयेत् ।

नयचन्द्रिका

(विपर्यय इति ।) विपर्यये—स्वबलानां स्व(सु) भूम्याद्यलाभे शत्रोः दुर्गादिसत्त्वे च तत्तत् प्रतीकारं कृत्वैव यायादित्यर्थः ।

दण्डोपनायीत्यत्र दण्डोप(नयन)मुपायमात्रोपलक्षणमित्याशयवान् विषयभेदेन उपायान् व्यवस्थापयति—सामदानाभ्यामित्यादि । दुर्बलानिति । अनुद्धतानिति यावत् ।

बलवत इति । उद्धतानाम् ।

**ग्रामारण्योपजीविव्रजवणिक्पथानुपालनमुज्झितापसृतापकारिणां चार्पणमिति सान्त्वमाचरेत् ।**

**भूमिद्रव्यकन्यादानमभयस्य चेति दानमाचरेत् ।**

**सामन्ताटविकतत्कुलीनावरुद्धानामन्यतमोपग्रहेण कोशदण्डभूमिदाययाचनमिति भेदमाचरेत् ।**

**प्रकाशकूटतूष्णींयुद्धदुर्गलम्भोपायैरमित्रप्रग्रहणमिति कोशदण्डमाचरेत् । एवमुत्साहवतो दण्डोपकारिणः स्थापयेत्, स्वप्रभाववतः कोशोपकारिणः, प्रज्ञावतो भूम्युपकारिणः ।**

---

नयचन्द्रिका

एवं विषयनियममुक्त्वा उपायानां प्रयोगप्रकारमाह—नियोगेत्यादि । साम्नैव दानेनैवेत्यादिनियोगः, साम्ना वा दानेन वेत्यादिविकल्पः, साम्ना च दानेन चेत्यादिः समुच्चयः, इत्येवं प्रयुक्तैरुपायैरमित्ररूपां प्रकृतिं विधेयीकुर्यादित्यर्थः । अनन्तरैकान्तरा इति, भूम्यनन्तरा शत्रुमित्रप्रकृतिरित्यर्थः ।

श्रीमूला

दुर्बले सामदानाचरणमाह—ग्रामारण्येत्यादि । ग्रामारण्योपजीविनो व्रजस्य गोमहिषादेः वणिक्पथस्य च वारिपथस्थलपथरूपस्य यातव्यसम्बन्धिनः अनुपालनं प्रतिरोधकादितो रक्षणम्, उज्झितापसृतापकारिणामर्पणं च उज्झितानां परचक्रादिभयत्यक्तानाम् अपसृतानां स्वयं प्रणष्टानां दासादीनाम् अपकारिणाम् अपकृत्य गतानां दूष्यादीनां च दुर्बलसम्बन्धिनाम् अन्विष्योपलभ्य प्रदानम्, इति एवंरूपं, सान्त्वं साम, आचरेद् दुर्बलेषु प्रयुञ्जीत । भूमिद्रव्यकन्यादानमिति । भूमिदानं द्रव्यदानं कन्यादानं च, अभयस्य च अर्थाद् दानं शत्रुभ्यो भयप्रसङ्गे, इति एवंरूपं, दानम् आचरेत् दानोपायमनुतिष्ठेत् ।

बलवद्विषये भेददण्डयोराचरणमाह—सामन्तेत्यादि । सामन्ताटविकौ प्रसिद्धौ तत्कुलीनः यातव्यज्ञातिः, अवरुद्धः यातव्यपुत्रादिर्नियन्त्रितः, इत्येषाम्, अन्यतमोपग्रहेण एकतमस्य स्वायत्तीकरणेन, कोशादियाचनं हिरण्यस्य सैन्यस्य भूमेः दायस्य च याचनम्, इति एवम्प्रकारं, भेदम् आचरेत् । प्रकाशेत्यादि । प्रकाशयुद्धं निर्दिष्टदेशकालं युद्धम् अनिर्दिष्टदेशकालं कूटयुद्धं योगगूढोपजापैर्घातनं तूष्णींयुद्धमिति त्रिकं परिपणितापरिपणितापसृतसन्धिप्रकरणलक्षितं दुर्गलम्भोपायो रसदानादिकं वक्ष्यमाणम्, इत्येतैः, अमित्रप्रग्रहणं शत्रुनियन्त्रणम्, इति एवंरूपं, दण्डम् आचरेत् ।

सामादिभिरुपनमितानां विनियोगमाह—एवमुत्साहवत इत्यादि । एभिः प्रकारैर्नमितेषु मध्ये उत्साहशक्तियुक्तान्, दण्डोपकारिणः निजसैन्योपकारकान्, स्थापयेत्

[ अर्थप्राप्त्युपकारिणोऽनर्थनिवारकाश्च मित्रभेदाः ]

**तेषां पण्यपत्तनग्रामखनिसञ्जातेन रत्नसारकुप्येन द्रव्यहस्तिवनव्रज-समुत्थेन यानवाहनेन वा यद्बहुश उपकरोति तच्चित्रभोगं; यद्दण्डेन कोशेन वा महदुपकरोति तन्महाभोगं; यद्दण्डकोशभूमीरुपकरोति तत्सर्वभोगम् ।**

———————

श्रीमूला

नियोजयेत् । स्वभाववतः कोशसम्पन्नान् कोशोपकारिणः कोशदानेनोपकर्तॄन्, स्थापयेत् । प्रज्ञावतः मन्त्रशक्तियुक्तान्, भूम्युपकारिणः भूमिविषये कार्ये तत्सारासार-त्वावधारणादौ उपकर्तॄन्, स्थापयेत् ।

नयचन्द्रिका

दुर्बलेषु सामप्रकारं दर्शयति—ग्रामारण्येत्यादि । प्रयोगा महिष्यादि, वणिक्पथो वारिस्थलपथो वा तेषामनुपालनम्, उज्झितपरचक्रादिभयात् त्यक्त (म?) गामहिषादि, अपस्मृ(सृ)तं स्वयमेव प्रणष्टं दासदास्यादि, अपकारिणो दुर्बलस्य राज्ञोऽपकृत्यागताः, एषाञ्च प्रदानमित्येवं साम कुर्यादित्यर्थः ।

दुर्बलस्यैव दानमाह—भूमीत्यादि । भूमिः कृष्यादिका, द्रव्यं हिरण्यादिका-(कम्), कत्या(न्या)दृढाः········एषाञ्च राजान्तराद् भयशङ्कायामभयस्य चेत्येवं प्रकारं दानं कुर्यादित्यर्थः ।

बलवत्सु भेदमाह—सामन्तेत्यादि । सामन्ता भूम्यनन्तराः, आटविका राज-सधर्माणः, तत्कुलीनाः शत्रुकुलीनाः, अवरुद्धा निर्यन्त्रिताः?, तस्य अत्रादयः, तेषां शत्रूणामन्यतममक्षिकारेण(अन्यतमोपग्रहेण)क्रमात् कोशाभि(दि याचनं, सामन्ताय कोषमाटविकाय बलं तत्कुलीनाय भूमिमवरुद्धाय दायमंशमित्यर्थः ।

बलवत्स्वेव दण्डमाह—प्रकाशेत्यादि । निर्दिष्टदेशकालं प्रकाशयुद्धं विपरीतं कृतं तूष्णीं युद्ध·····दिभिर्घातनं, दुर्गालम्भोपायः संवननादिव्याजेन महिष्यादिना राज्ञि रसदानादि, शत्रोः प्रग्रहणं प्रतिबन्धनमित्येवं दण्डमित्यर्थः ।

एषामुपनतानां शक्त्यनुरूपं स्वकार्येषूपयोगमाह—एवमित्यादि । एवमिति, दुर्बलादौ सामादिनियमनवच्छक्ति(क्ते)रप्येषां स्वकार्येषु नियम कुर्यादित्यर्थः । उत्साह-वत इति, विक्रमशीलान् स्वसैन्यसहायतयोपयुञ्जीतेत्यर्थः ।

(स्व)प्रभाववत इति । कोशादिसम्पन्नान् कोशा(शो)पकारिणः कोशक्षयादौ तत्कस्याप्यपकारितयोपयुञ्जीतेत्यर्थः । प्रज्ञावत इति, मन्त्रशक्तिमतः ।

भूम्युपकारिण इति, भूमेः सगुणत्वनिर्गुणत्वादिनिश्चये शून्यनिवेशनादौ चोपयुञ्जीतेति ।

श्रीमूला

एवं सामाद्युपायैरुपनमय्य मित्रीकृतानामुपयोगविशेषं तन्निमित्तं संज्ञाभेदं चाह—तेषामिति । दण्डोपनमितानां मध्ये, पण्यपत्तनग्रामखनिसञ्जातेन पणनीय-

**यदमित्रमेकतः प्रतिकरोति तदेकतोभोगि; यदमित्रमासारं चापकरोति तदुभयतोभोगि; यदमित्रासारप्रतिवेशाटविकान् सर्वतः प्रतिकरोति तत्सर्वतोभोगि ।**

---

श्रीमूला

द्रव्यक्रयविक्रयस्थानाद् ग्रामात् सुवर्णाद्युत्पत्तिस्थानाच्च सञ्जातेन, रत्नसारफल्गुकुप्येन रत्नेन मणिमुक्तादिना सारेण चन्दनादिना फल्गुना शङ्खादिना कुप्येन वस्त्रादिना च, द्रव्यहस्तिवनव्रजसमुत्थेन द्रव्यवनाद् हस्तिवनाद् व्रजाच्च सञ्जातेन, यानवाहनेन वा रथादियानैर्गजादिवाहनैश्च वा, यत् मित्रं, बहुशः बाहुल्येन, उपकरोति, तत् मित्रं, चित्रभोगं चित्रा नानाप्रकारा भोगा उपयोगा येनेति व्युत्पत्त्या तदाख्यं भवति । यद् दण्डेन कोशेन वा प्रभूतमुपकारं विधत्ते, तद् महाभोगाख्यमिति, यद् दण्डकोशभूमीर्दत्त्वोपकरोति तत् सर्वभोगमिति च वाक्यद्वयेनाह—यद् दण्डेनेत्यादिना यद् दण्डकोशेत्यादिना च ।

अर्थप्राप्त्युपकारिणो मित्रभेदानभिधायानर्थनिवारणोपकारिण आह—यदिति । यत् मित्रम्, अमित्रम् एकतः एकमेव शत्रुमित्यर्थः । प्रतिकरोति, तत् एकतोभोगि तत्संज्ञम् । यत्, अमित्रं, आसारं च अमित्रस्य मित्रं च, अपकरोति वारयति, तद् मित्रम्, उभयतोभोगि । यद्, अमित्रासारप्रतिवेशाटविकान् अमित्रं शत्रुम् आसारं शत्रुमित्रं प्रतिवेशं पार्श्वस्थं शत्रुम् आटविकम् अटवीपतिं चेत्येतान्, सर्वतः प्रतिकरोति, तत् मित्रम्, सर्वतोभोगि तत्संज्ञम् ।

नयचन्द्रिका

उपनतानां मित्रभूतानां राज्ञामात्मनोऽर्थप्राप्तावनर्थपरिहारे च प्रकारभेदेनोपयोगमाह—तेषां पण्यपत्तनग्रामेत्यादि । तेषां मित्राणां पण्यपत्तनं पणनीयद्रव्याणां क्रयविक्रयादिस्थानं पण्यवतामित्यर्थजातेन, रत्नं वज्रादि, सारं चन्दनादि, फल्गु शङ्खादि, कुप्यं वस्त्रास्तरणादि, एभिश्च द्रव्यवनहस्तिवनाभ्यां प्रजा चोत्पन्नेन यानेन रथशिविकादिना वाहनेनाश्वादिना च यन्मन्त्रं बहुश उपकुर्यात् चित्रभोगाख्यमित्यर्थः ।

महदिति । प्रभूतम् ।

दण्डादिभिर्भोगैः सर्वे(र्वो)भोगोऽस्येति सर्वभोगमित्याह—दण्डेत्यादि ।

अनर्थप्रतीकारोपयोगभेदानाह—यदमित्रमिति । एकत इति, अमित्रमेकमेवेत्यर्थः ।

यदमित्रासारेत्यादि । अमित्रमसारं तन्मित्रं, प्रतिवेशौ पार्श्वयोर्भूम्यनन्तराः पटव्यधिपतिश्चेत्यर्थः । (?प्रतिवेशाटविकौ पार्श्वयोर्भूम्यनन्तरोऽटव्यधिपतिश्चेत्यर्थः । )

[ दानोपायप्रयोगे देयभूस्वरूपतत्सम्प्रदानयोर्व्यवस्था ]

**पार्ष्णिग्राहश्चाऽऽटविकश्शत्रुमुख्यश्शत्रुर्वा भूमिदानसाध्यः कश्चिदासाद्येत—निर्गुणया भूम्यैनमुपग्राहयेत्, अप्रतिसम्बद्धया दुर्गस्थं, निरुपजीव्ययाऽऽटविकं प्रत्यादेयया तत्कुलीनं, शत्रोरुपच्छिन्नया शत्रोरुपरुद्धं, नित्यामित्रया श्रेणीबलं, बलवत्सामन्तया संहतबलम्, उभाभ्यां युद्धे प्रतिलोमं, अलब्धव्यायामयोत्साहिनं, शून्ययाऽरिपक्षीयं, कर्शितयाऽपवाहितं, महाक्षयव्ययनिवेशया गतप्रत्यागतं, अनुपाश्रयया प्रत्यपसृतम् । परेणानधिवास्यया स्वयमेव भर्तारम् उपग्राहयेत् ।**

———

श्रीमूला

अथ दानोपायप्रयोगे कीदृशी भूमिः कस्मै दातव्येत्याह—पार्ष्णिग्राहश्चेति । सः, आटविकः अटवीपतिः, शत्रुमुख्यः शत्रोरमात्यप्रभृतिः, शत्रुर्वा, भूमिदानसाध्यः कश्चिद्, आसाद्येत, चेदिति शेषः, निर्गुणया भूम्या, एनम् उपग्राहयेत् स्वायत्तीकुर्यात् । कथम्भूतं कथम्भूतया, दुर्गस्थम्, अप्रतिसम्बद्धया दुर्गसम्बन्धरहितया दुर्गाद् बहिर्देशान्तरव्यवहितया भूम्या, उपग्राहयेत् । निरुपजीव्यया उपजीवनयोग्यधान्यवापादिरहितया भूम्या, आटविकम् उपग्राहयेत् । प्रत्यादेयया कार्यान्तेऽपहर्तुमर्हया, तत्कुलीनम् उपग्राहयेत् । शत्रोरुपच्छिन्नया शत्रुसकाशप्रसभाहृतया, शत्रोरुपरुद्धं शत्रुणा नियन्त्रितं तत्पुत्रादिम्, उपग्राहयेत् । नित्यामित्रया चोराटविकादिनित्योपद्रवयुक्तया, श्रेणीबलं जनगणात्मकं नायकरहितं सैन्यविशेषम्, उपग्राहयेत् । बलवत्सामन्तया प्रबलप्रत्यमित्रया, संहतबलं जनसङ्घात्मकं सनायकं सैन्यविशेषम्, उपग्राहयेत् । उभाभ्यां नित्यामित्रया बलवत्सामन्तया चेति द्वाभ्यां भूमिभ्यां, युद्धे प्रतिलोमं कूटकारिणम्, उपग्राहयेत् । अलब्धव्यायामया व्यायामायोग्यया भूम्या, उत्साहिनम् उत्साहशीलं, उपग्राहयेत् । शून्यया अलभ्यफलया, अरिपक्षीयम्, उपग्राहयेत् । कर्शितया परचक्राटविकाद्युपद्रुतया, अपवाहितं युद्धोपतप्तं, कृतसन्धिभ्रंशितमिति माधवयज्वा, उपग्राहयेत् । महाक्षयव्ययनिवेशया महता पुरुषापचयेन धनव्ययेन च साध्यो निवेशो यस्यां तया, गतप्रत्यागतम्, उपग्राहयेत् । अनुपाश्रयया दुर्गहीनया, प्रत्यपसृतं शत्रुभीत्या स्वदेशादपसृतम्, उपग्राहयेत् । परेणानधिवास्यया स्वभर्तृव्यतिरिक्तेनाधिष्ठातुमशक्यया भूम्या, स्वयमेव भर्तारं यस्तस्या भूतपूर्वो भर्ता तमेवेत्यर्थः, उपग्राहयेत् ।

नयचन्द्रिका

प्रतिबद्धयेति । व्यवहितयेत्यर्थः । दुर्गस्थस्य बहिर्विप्रकृष्टोपजीवनानुपत्तिरत्र प्रयोजनमिति भावः ।

निरुपजीव्ययेति । सस्यवापेति·····रिक्तोपजीव्यरहितयाटविकं ततश्च तद्वृद्धिः स्यादिति भावः ।

[ एवं वशीकृतेष्वेषां वर्तनप्रकाराः ]

**तेषां महोपकारं निर्विकारं चानुवर्तयेत् । प्रतिलोममुपांशुना साधयेत् । उपकारिणमुपपकारशक्त्या तोषयेत् । प्रयासतश्चार्थमानौ**

---

नयचन्द्रिका

प्रत्यादेययेति । तत्कार्यावसाने ग्रहीतुं शक्यया, तुल्यमुपग्राहयेत् सतुल्यस्य भूमौ, प्रतिष्ठापनायोगादिति भावः ।

अव(उप)च्छिन्नयेत्यादि । (भिः?) शत्रोः सकाशादवच्छिन्नया बलात् स्वीकृतया, अव(उप)रुद्धं पुत्रादिकम् ।

नित्यामित्रयेति । सङ्घातजीवितश्रेणि तद्बलम् नित्यामित्रया चोरगणम्लेच्छाटविकादिनित्योपप्लुतया भूम्येत्यर्थः । एवं हि सति श्रेणीबलस्य चोरादिभिर्वा, तेन चोरादीनां वा विनाशः स्यात्, उभयमीष्टमिति भावः ।

बलवत्सामन्तयेति । बलवान् भूम्यनन्तरः स्यादिति, तथा संहतबलमुपग्राहयेत् । मिथः संहतः समप्रधानतोजनः श्रेणी, एकप्रधानः सङ्घः इत्यनयोर्भेदः ।

अलब्धव्यायामयेति । उत्साद(हि)नं व्यापारशीलम्, व्यापारविषयभूतया असाध्य इत्यर्थः ।

शून्ययेति । अनिष्टजनकत्वेन फलसम्भवहीनयेत्यर्थः ।

कर्शितयेत्यादि । अपवाहितम्, प्रथमं संहितं पश्चात् संधेर्भ्रंशितं दण्डपरकरपरचक्राटविकादिभिः, कर्शितया, पूर्वदत्ताया एव दानेऽपि फलभा(भो)गार्थं कर्शितयेत्युक्तम् ।

महाक्षयव्ययनिवेशितयेति(शयेति) । प्रभूतौ क्षयव्ययौ अस्या निवेशयेत् तथा गतप्रत्यागतं यथास्य भाविभवक्षयः स्यादिति भावः ।

अनपाश्रययेति । प्रत्यपसृतम् शत्रुभयेन स्थानाच्च्युतम्, अनपाश्रयया दुर्गरहितयेत्यर्थः

परेणानधिवास्ययेति । स्वयमेव भर्तारं पूर्वस्वामिनमेव, परेण ततोऽन्येन, अधिवास्यया अनिर्वर्ण्यया, पूर्वस्वामिनोऽन्येन केनचिदपि दुर्निर्वाहया भूम्या तमेवोपग्राहयेत् विधेयतामापादयेदित्यर्थः ।

श्रीमूला

अथ दण्डोपनतेषु तद्वृत्तिभेदेन दण्डोपनायिनः समाचरणभेदानाह—तेषामिति । दण्डोपनतानां मध्ये, महोपकारं, निर्विकारं च, अनुवर्तयेत् उपकारवृत्तेर्निर्विकारवृत्तेश्च विच्छेदो यथा न भवेत् तथा तं नयेत् । प्रतिलोमं प्रतिकूलाचारम्, उपांशुना उपांशुदण्डेन, साधयेत् प्रकाशवधेऽन्ये दण्डोपनता उद्विग्नाः स्युरिति । उपकारिणमुपकारशक्त्या स्वशक्त्यानुगुण्येनोपकर्तारं, तोषयेत् प्रीणयेत् । प्रयामतश्च

**कुर्यात्, व्यसनेषु चानुग्रहम्। स्वयमागतानां यथेष्टदर्शनं प्रतिविधानं च कुर्यात्। परिभवापघातकुत्सातिवादांश्चैषु न प्रयुञ्जीत। दत्त्वा चाभयं पितेवानुगृह्णीयात्। यश्चास्यापकुर्यात्तद्दोषमभिविख्याप्य प्रकाशमेनं घातयेत्। परोद्वेगकारणाद्वा दाण्डकर्मिकवच्चेष्टेत। न च हतस्य भूमिद्रव्यपुत्रदारानभिमन्येत। कुल्यानप्यस्य स्वेषु पात्रेषु स्थापयेत्। कर्मणि मृतस्य पुत्रं राज्ये स्थापयेत्।**

**एवमस्य दण्डोपनताः पुत्रपौत्राननुवर्तन्ते।**

---

श्रीमूला

प्रयासानुगुण्येन च, अर्थमानौ धनदानं सत्कारं च, तेषां कुर्यात्। अर्थमाने इत्यवपाठः। व्यसनेषु च, बन्धुविपत्त्यादिशोकेषु च, अनुग्रहं परिसान्त्वनादिरूपं, कुर्यात्। स्वयमागतानामनाहूतागतानां यथेष्टदर्शनं यथेच्छं दर्शनं, कुर्यात् अनुरागार्थम्। प्रतिविधानं च कुर्यात् तेभ्यः शङ्क्यमानादपायादात्मनो रक्षार्थं संविधानं च कुर्यात्। परिभवेत्यादि। परिभवोऽनादरः उपघातो दोषवचनं कुत्सा निन्दा अतिवादोऽतिस्तुतिः इत्येतांश्च, एषु दण्डोपनतेषु विषये, न प्रयुञ्जीत। दत्त्वा चाभयं भयस्थानप्राप्तौ पितेव अनुगृह्णीयात्। यश्च दण्डोपनतः, अस्य विजिगीषोः, अपकुर्यात्, तद्दोषं तदपराधम्, अभिविख्याप्य, एनम् अपराधिनं, प्रकाशं घातयेत्। परोद्वेगकारणाद् वा तत्प्रकाशवधेनान्येषां दण्डोपनतानामुद्वेगः स्यादिति शङ्कारूपकारणसत्त्वे वा, दाण्डकर्मिकवत् दाण्डकर्मिकप्रकरणोक्तविधानतुल्यं, चेष्टेत उपांशुदण्डं प्रयुञ्जीतेत्यर्थः। न चेति। हतस्य, भूमिद्रव्यपुत्रदारान्, न च अभिमन्येत स्वत्वाभिमानविषयान् न कुर्यात्, स्वयं नापहरेदित्यर्थः। किं तर्हि कुर्यात्, अस्य हतस्य कुल्यानपि अपिशब्दात् पुत्रादीनपि, स्वेषु पात्रेषु स्वस्वोचितेषु राजादिस्थानेषु, स्थापयेत्। कर्मणि उपनाय्यर्थे युद्धे, मृतस्य, पुत्रं, राज्य पितृसम्बन्धिनि, स्थापयेत्।

उपदिष्टवर्त्मनानुष्ठाने दण्डोपनताः विजिगीषुं न केवलं तत्पुत्रपौत्रानप्यनुसरन्तीत्याह—एवमस्येत्यादि।

नयचन्द्रिका

तेषामित्यादि। भूमिदानविषयभूतानां दुर्गस्थादीनां मध्ये यो महोपकारं दण्डकोषाभ्यां महदुपकरोति, यन्निर्विकारं, एकरूपमेवानुधावति तं न विच्छेदयेदित्यर्थः।

( प्रतिलोममिति।) प्रतिलोमं-प्रतिकूलकारिणम्, उपांशुदण्डेन साधयेत्, अन्येषामनुद्वेगार्थमिति भावः।

उपकारशक्त्येति, यावत्युपकारशक्तिस्तावत्या········तेनोपकारेण तोषयेदित्यर्थः।

[ एतदतिक्रमे दोषाः ]

**यस्तूपनतान् हत्वा बद्ध्वा वा भूमिद्रव्यपुत्रदारानभिमन्येत, तस्योद्विग्नं मण्डलम् अभावायोत्तिष्ठते। ये चास्यामात्यास्स्वभूमिष्वायुक्ताः ते चास्योद्विग्ना मण्डलमाश्रयन्ते; स्वयं वा राज्यं, प्राणान् वाऽस्याभिमन्यन्ते।**

———————

नयचन्द्रिका

न केवलं फलमात्रानुगुणौ किन्तु········बाहुल्याद्यपेक्षितविभवसत्कारौ कुर्यादित्याह—प्रयासतश्चेति।

अत्र मरणादिषु·····सनादिना भूतानामपि स्वयमेवागतानां स्वदर्शनन्तु व्यसनपरिहारञ्च दद्यादित्याह—स्वयमित्यादि।

परिभवेत्यादि। परिभवस्तुल्येभ्यो हीनदानसत्कारादिः, उपपा(घा)तो दोषख्यापनं, कुत्सा तदाचारादिनिन्दा, अतिवादः तद्वृत्तीनामतिस्तुतिः, एतानि च, एष् न कुर्यादित्यर्थः।

सर्वतोऽप्यभयमेभ्यो दत्त्वा पितृवदनुगृह्णीयादित्याह—दत्त्वा चेत्यादि। यश्चाऽस्येति। अस्य विजिगीषोरपराधमेषु यत्कुरुते तद्(त्) प्रकाशयेदित्यर्थः। एतद्वधादन्येषामागतानां शङ्का मा भूदिति दाण्डकर्मिकवदुपांशुवधं वा कुर्यादित्यर्थः।

दाण्डकर्मिकवदुपांशुदण्डवधप्रकार उक्ता·····।

न च हतस्येत्यादि। प्रकाशमुपांशु वा हतस्य भूम्यादीन् नाभिमन्येत। तेषु ममकारं न कुर्यात्, न स्वोकुर्यादिति भावः। यावदिति पदं कन्यानामप्युपलक्षणं ग्राह्यम्।

कुल्यानपीत्यादि। अस्येति, मृतकुल्यानपि स्वेष्वधिकारेषु स्थापयेत्। किन्तु तेषु पात्रेषु सत्सु, यथापूर्वं स्वस्वाधिकारेषु विभवेषु चास्य कुल्यानपि स्थापयेत् यदि ते योगा (ग्या) इत्यर्थः।

कर्मणीत्यादि। विजिगीषोरर्थे युद्धादौ मृतस्योपन(र)तस्य पुत्रं तद्राज्ये स्थापयेदित्यर्थं उक्तः।

प्रकारान्तरेण फलमाह—एवमिति। अस्य विजिगीषोः पुत्रपौत्रानप्यनुवर्तते दण्डोपनतम्। अनुरक्ता भवन्तीत्यर्थः।

श्रीमला

उपदिष्टविपरीतानुष्ठायिनो दण्डोपनायिनो दोषमाह—यस्त्वित्यादि। यस्तु, विजिगीषुः, उपनतान्, दण्डप्रणतान्, हत्वा, बद्ध्वा वा बन्धनागारं नीत्वा वा, भूमिद्रव्यपुत्रदारान् उपनतसम्बन्धिनः, अभिमन्येत आत्मसात् कुर्यात्, तस्य उद्विग्नं तं प्रति कुपितं सत्, मण्डलं द्वादशराजकम्, अभावाय तस्य नाशाय, उत्तिष्ठते उद्युङ्क्ते। ये च अस्य विजिगीषोः, अमात्याः, स्वभूमिषु, आयत्ताः व्यापृताः, ते च अस्योद्विग्नाः,

**स्वभूमिषु च राजानः तस्मात् साम्नाऽनुपालिताः ।**
**भवन्त्यनुगुणा राज्ञः पुत्रपौत्रानुवर्तिनः ॥२७०॥**

इति षाड्गुण्ये दण्डोपनायिवृत्तं षोडशोध्यायः,
आदितश्चतुर्दशशतमः ।

---

श्रीमूला

मण्डलम् उत्तिष्ठमानं राजमण्डलम्, आश्रयन्ते विजिगीषोरपकारार्थम् । स्वयं वा, अस्य राज्यम्, अभिमन्यन्ते ममकारविषयं कुर्वन्ति, एनं बद्ध्वेत्यार्थम् । अस्य प्राणान् वाभिमन्यते आत्मसात्कुर्वन्ति हरन्तीत्यर्थः ।

नयचन्द्रिका

विपर्यये तु नानुरागाभावमात्रमपि तु विनाशायैव स्यादित्याह—यस्त्विति । सर्वता(था) स्वेच्छयाऽतिक्रमन् मण्डलातिक्रमणं शक्यं तथा च मण्डलमेवास्य कुपितमभावायैव स्यात् (न) सहेतेत्यर्थः ।

न केवलं मण्डलस्यैव कोपः, अपि तु स्वामात्या अपि स्वभूमिष्वसिना अप्येन-माहार्यादिकमण्डलमाश्रयेरन्, अस्मिन्नविश्वासादित्यर्थः । अस्योद्विस्ता(ग्ना) इत्यत्र अस्येति पञ्चम्यर्थे षष्ठी, अस्य··मिमण्डलमति··नीयम् ।

स्वयं वेत्यादि । एनं बद्ध्वा स्वमेव राज्यं निर्वहेयुर्विघातयेयुर्वैनमित्यर्थः ।

श्रीमूला

अध्यायप्रान्ते श्लोकमाह—स्वभूमिषु चेति । तस्मात् पूर्वोक्तात् कारणात्, स्वभूमिषु च राजानः स्वीयास्वनन्यदत्तासु भूमिषु राज्यं भुञ्जन्तः चकाराद् विजि-गीषुदत्तराज्यभुजश्च राजानः, साम्ना अनुपालिताः विजिगीषुणा रक्षिताः, राज्ञः विजिगीषोः, अनुगुणाः, पुत्रपौत्रानुवर्तिनः पुत्रान् पौत्रांश्च सानुरागमनुसरन्तीत्यर्थः ।

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे
षोडशोऽध्यायः, दण्डोपनायिवृत्तम्,
आदितश्चतुर्दशोत्तरशततमः ।

नयचन्द्रिका

उक्तमेवार्थमुपसंहरति—स्वभू(मि)षु चेति । न केवलमागता एव किन्तु स्वस्वभूमिस्थिता अपि राजानः साम्नैवानुपालिता यावत्पुत्रपौत्रमस्याऽनुगुणाः स्युः । अन्यो(अतो)दण्डादीन् विहाय साम्नैवानुपाल(न)मित्यर्थः ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां
कौटिलीयटीकायां नयचन्द्रिकायां षाड्गुण्ये षोडशोऽध्यायः ।

## द्वाविंशतिशततमत्रयोविंशतिशततमे प्रकरणे

### सप्तदशोऽध्यायः

### सन्धिकर्म, सन्धिमोक्षश्च

[ सन्धिपदार्थः ]

**शमः सन्धिः समाधिरित्येकोऽर्थः—राज्ञां विश्वासोपगमः शमः सन्धिः समाधिरिति ।**

---

श्रीमूला

सन्धिकर्मेति सूत्रम् । सन्धेः कर्म विश्वासार्थं सत्यशपथादिना दृढीकरणं सन्धिकर्म, तदुच्यत इत्यर्थः । पणबन्धः सन्धिः पूर्वमुक्तः । स कृतोऽपि अदृढीकृतोऽकृत एवेति तस्य दृढीकरणमधुनोच्यते ।

शम इत्यादि । शमः सन्धिः समाधिरित्येतैः शब्दैरेक एवार्थोऽभिधीयत इत्यर्थः । कोऽसावर्थ इत्याह—राज्ञां विश्वासोपगम इत्यादि । सन्धिकारिणां, विश्वासोपगमः विश्वासः पणबन्धविषयो निश्चय उपगम्यतेऽनेनेति विश्वासोपगमः सत्यशपथप्रतिभूप्रतिग्रहान्यतमरूपोऽर्थः, शमः सन्धिः समाधिरित्युच्यते ।

नयचन्द्रिका

भिन्नयोर्घटनमेव हि सन्धिर्नाम, तस्य द्रव्यदेशकालादिनियमरूपं पणबन्धं कारणमप्युपचारात् सन्धिरुक्तः, तस्य च प्रकाराः सामवायिकादीनां दण्डोपनतपर्यन्ता(दी)नां दर्शिताः, इदानीं तस्य तात्विकत्त्वनिश्चयं विना वस्तुतोऽपि असङ्कल्पत्वात् तदभिधानार्थं सूत्रं सन्धिकर्मेति । सन्धेः पणबन्धस्य यद् विश्वासोपगमनं कर्म तत्क्रिया तदुच्यत इत्यर्थः ।

तदेवावतारयति—शमः सन्धिरित्यादिना । शमः सन्धिः समाधिरित्येषां त्रयाणां शब्दानामप्येक एवार्थ इति ग्राह्यम् । शास्त्रप्रदेशेष्वभिव्यवहारेषु एक एवार्थो बोद्धव्य इति भावः ।

कस्तेषामेकार्थ इत्यत्राह—राज्ञां विश्वासोपगम इत्यादि । अत्र राज्ञामित्युपलक्षणं प्रकृतपणबन्धात्मकसन्धेः निश्चयहेतुर्विश्वासोपगम( मः ) प्रत्यक्षोऽर्थ इति वन्निश्चेयस्यापि निश्चायके सामानाधिकरण्यं तत् प्राधान्यविवक्षयेत्याशयवता उक्तविश्वासोपगमः सन्धिः समाधिरिति, विश्वासोपगमक्रिया युक्तः पणबन्धः शमादित्रयवाच्य इत्यर्थः ।

[ सत्यादिषु चतुर्षु चलस्थिरसन्धिहेतुत्वव्यवस्था ]

**'सत्यं शपथो वा चलः सन्धिः। प्रतिभूः प्रतिग्रहो वा स्थावरः' इत्याचार्याः। 'न' इति कौटल्यः—सत्यं वा शपथो वा परत्रेह च स्थावरः सन्धिः; इहार्थ एव प्रतिभूः प्रतिग्रहो वा बलापेक्षः।**

---

श्रीमूला

सत्यादिचतुष्टये चलस्थावरविभागमाचार्यमतेनाह—सत्यमिति। सत्यम् 'इदमेवमेव नान्यथा भविष्यती'ति वचनमात्रं कार्तयुगैर्जनैर्बहुलमादृतं, शपथो वा पितृपादसुवर्णादिस्पर्शपूर्वमर्थवचनं च, चलः अस्थायी अनतिविश्वास्य इत्यर्थः। सन्धिः सन्धिशब्दः संश्लेषे तद्धेतौ च वर्तते। प्रतिभूः अव्यतिक्रमप्रातिभाव्यवाही, प्रतिग्रहो वा वचनविश्वासार्थमर्पितः पुत्रादिश्च, प्रतिभूकृतः प्रतिग्रहकृतश्च सन्धिरित्यर्थः, स्थावरः स्थायी अत्यन्तविश्वसनीय इत्यर्थः इत्याचार्याः, मन्यन्त इति शेषः।

आचार्यमतप्रतिलोमं स्वमतमाह—नेति कौटल्य इत्यादि। ययोश्चलत्वमुक्तं तौ सत्यशपथौ प्रत्युत स्थावरौ, यतो व्यतिकान्तौ परलोके नरकपातमिह लोके शिष्टासंव्यवहार्यतां च प्रयोजयत इत्यभिप्रायः। इहार्थ एवेत्यादि। इहार्थ एव इहलोकप्रयोजनक एव। अयं भावः—ययोः स्थावरत्वमुक्तं तौ प्रतिभूप्रतिग्रहौ प्रत्युत चलौ, यतो व्यतिक्रान्ताविह लोके केवलमसंव्यवहार्यत्वलक्षणमनर्थं जनयतो न तु परलोके कश्चित्। किञ्च तौ बलापेक्षौ प्रतिभूर्हि यदि बलवांस्तदा विश्वसनीयो भवति प्रतिग्रहश्च तदाधातृप्रेमपात्रं चेद् विश्वसनीयो नान्यथेति।

नयचन्द्रिका

विश्वासोपगमस्य कारणभेदात् सन्धिभेदमाचार्यमतेन तावदाह—सत्यमित्यादिना। सत्यमिति, सत्यमिदमित्यर्थकथनम्। शपथ इति, स्वर्णादिस्पर्शनार्थकथनम्। आभ्यां कृतः सन्धिश्चलः अव्यवस्थितः अविश्व(स)नीय इत्यर्थः।

प्रतिभूरिति। प्रमाणीकृतः मुख्यादिकृतः। प्रतिग्रहः, अनतिक्रमणार्थमर्पितः पुत्रादिः। आभ्यां कृतः स्थावरो विश्वास्य इत्यर्थः।

आचार्योक्तिविचरितं[1] युक्तिगर्भं स्वमतमाह—सत्यमित्यादि। सत्यादयश्चत्वारोऽपि स्थावरा एव। किञ्च दीर्घदर्शितया पारलौकिकैहिकयोरनर्थयोः प्रत्यवेक्षणात् पूर्वपूर्वातिक्रमे सत्युत्तरापेक्षा सत्यशपथयोरतिक्रमे परलोकभयं तावदङ्गादिकम्, इह चाऽसत्यश्चादैष्टिकश्चेत्यविश्वास्यता, इत्युभयतो भयं सत्यशपथयोरतिक्रमे। प्रतिभू-

---

१. आचार्योक्तिप्रतिकूलम्।

[ सत्यादिस्वरूपाणि, पूर्वपूर्वातिक्रमस्यैवोत्तरोत्तरहेतुत्वम्,
अपत्यप्रतिग्रहे विशेषश्च ]

**'संहिताः स्मः' इति सत्यसन्धाः पूर्वे राजानः सत्येन सन्दधिरे। तस्यातिक्रमे शपथेन अग्न्युदकसीताप्राकारलोष्टहस्तिस्कन्धाश्वपृष्ठरथोपस्थशस्त्ररत्नबीजगन्धरससुवर्णहिरण्यान्यालेभिरे;—हन्युरेतानि, त्यजेयुश्चैनम्, यः शपथमतिक्रामेत्—इति।**

———————

नयचन्द्रिका

प्रतिग्रहयोस्तु दृष्टभयमेव, तदपि बलापेक्षम्, बलाभावेऽभिबल( व )ताऽवध्यतिक्रमे दुर्बलः प्रतिभूः किं कुर्यात् ? एवं सन्ध्यर्थमर्पितो मत्पुत्रो मुच्यतामिति बलवतोक्ते- दुर्बलस्य तन्मोचनमेव कार्यमिति व्यवस्थितेरित्याशयः। परत्रेह चेति, उभयत्रानर्थभयादिति शेषः।

इहार्थं इति। इहलोकभयार्थावेव प्रतिभूप्रतिग्रहौ बलापेक्षौ चेत्यर्थः।

श्रीमूला

सत्यादिषु पूर्वपूर्वातिलङ्घनाद् गुणदोषकृतादुत्तरोत्तरस्यापेक्षणीयत्वप्राप्तिं कथयंस्तेषां लक्षणमाह—संहिताः स्म इतीत्यादि। सत्यसन्धाः पूर्वे अवितथप्रतिज्ञा नलादयः।

तस्यातिक्रम इति। सत्यस्यावितथार्थवचनलक्षणस्यातिलङ्घने, अग्न्यादीनि आलेभिरे अग्न्यादीनि चतुर्दश पस्पृशुः। तानि च अग्निः,उदकम्, सीता लाङ्गलपद्धतिस्तया भूमिर्लक्ष्यते, प्राकारलोष्टः, हस्तिस्कन्धः, अश्वपृष्ठम्, रथोपस्थम्, शस्त्रम्, रत्नम्, वीजं शाल्यादिधान्यबीजम्, गन्धश्चन्दनादिः, रसः, सुवर्णं हेम, हिरण्यं नाणकः इत्येवं चतुर्दश। हन्युरेतानीत्यादि। अग्न्याद्यालम्भनपूर्वशपथकर्तारं शपथातिक्रमेऽग्न्यादीनि नानुगृह्णीयुरिति विश्वासादित्यर्थः।

नयचन्द्रिका

कालदोषादिना पूर्वपूर्वातिक्रमात् उत्तरापेक्षां दर्शयति—संहिताः स्म इत्यादिना। सत्यसन्धा इति, अवितथा सन्धा प्रतिज्ञा येषान्ते य(त)था।

(तस्यातिक्रम इति।) यदा तु सत्यमेवैवं कुर्यादित्युक्त्वापि तथा नाचरन्ति तथा (दा)शपथेन अग्न्यादि स्पृशन्ति। अत्राग्निरिति तेजोमात्रोपलक्षणम्। सीतेति लाङ्गलपद्धत्या भूमिर्लक्ष्यते। रसः सर्पिरादि। सुवर्णं काञ्चनं हिरण्यम्। आलेभिरे अस्पृशन्। अग्निमुदकं सितां प्रकारलोष्टं हस्तिस्कन्धं अश्वपृष्ठं रथोपस्थं शस्त्ररत्नं शाल्यादिबीजं गन्धद्रव्यं चन्दनादिकं रसं सुवर्णं हिरण्यञ्च शपथेन स्पृष्टवन्त इत्यर्थः। येषां स्पर्शने। अपत्यसमाधाविति। अपत्यप्रग्रहणबन्धावित्यर्थः।

**शपथातिक्रमे महतां तपस्विनां मुख्यानां वा प्रातिभाव्यबन्धः प्रतिभूः । तस्मिन् यः परावग्रहसमर्थान् प्रतिभुवो गृह्णाति, सोऽतिसन्धत्ते; विपरीतोऽतिसन्धीयते ।**

**बन्धुमुख्यप्रग्रहः प्रतिग्रहः । तस्मिन् यो दूष्यामात्यं दूष्यापत्यं वा ददाति सोऽतिसन्धत्ते, विपरीतोऽतिसन्धीयते । प्रतिग्रहग्रहणविश्वस्तस्य हि परः छिद्रेषु निरपेक्षः प्रहरति ।**

**अपत्यसमाधौ तु—कन्यापुत्रदाने ददत् तु कन्यामतिसन्धत्ते, कन्या ह्यदायादा परेषामेवार्थाय क्लेशाय च, विपरीतः पुत्रः ।**

---

श्रीमूला

शपथातिक्रम इति । शपथस्य अग्न्याद्यालम्भनपूर्वार्थवचनलक्षणस्य कालदोषात् पुरुषदोषाच्च अतिक्रमे जायमाने महतां तपस्विनाम्, मुख्यानां वा ग्रामादिप्रधानानां वा, प्रातिभाव्यबन्धः प्रतिभूत्वेन नियमनं प्रतिभूः प्रतिभूसंज्ञं विश्वासस्थानम् । तस्मिन्निति । प्रातिभाव्यबन्धे, यः, परावग्रहसमर्थान् परेषां प्रतिज्ञातार्थत्यागिनां निग्रहणे शक्तान्, प्रतिभुवः, गृह्णाति, सः, अतिसन्धत्ते वञ्चयति परम्, विपरीतः परावग्रहासमर्थप्रतिभूग्राही, अतिसन्धीयते वञ्च्यते, परेण ।

बन्धुमुख्यप्रग्रह इति । बन्धुमुख्यानां परकीयानां प्रग्रहः परवचनविश्वासार्थमाधित्वेन ग्रहणम्, प्रतिग्रहः । तस्मिन्निति । प्रतिग्रहे यः, दूष्यामात्यं दूष्यममात्यम्, दूष्यापत्यं वा दूष्यमपत्यं वा, ददाति आधीकरोति, सः अतिसन्धत्ते अर्थादाधिग्राहिणम् । विपरीतः दीयमानतथाविधाधिग्राही, अतिसन्धीयते । अतिसन्धानप्रकारमाह—प्रतिग्रहग्रहणविश्वस्तस्य हीति । 'परस्मात् प्रतिग्रहो मया गृहीत' इति विस्रम्भेण स्थितस्य हि विजिगीषोः, छिद्रेषु, परः शत्रुः, निरपेक्षः स्वदत्तप्रतिग्रहनिरादरः, प्रहरति ।

अपत्यसमाधौ त्विति । अपत्यप्रतिग्रहविषये विशेष उच्यत इति शेषः । कन्यापुत्रदान इति । कन्यायाः पुत्रस्य च दानप्रसङ्गे, कन्यां ददत्, अतिसन्धत्ते । कुत इत्याह—कन्या हीति । सा हि, अदायादा अदायहरा, परेषामेव, अर्थाय प्रयोजनाय परोपभोग्यत्वात्, क्लेशाय च धनव्ययादिद्वारेण पितुर्दुःखाय च भवति । पुत्रः, विपरीतः दायादः पितुः स्वार्थाय क्लेशशान्तये च कल्पत इत्यर्थः ।

नयचन्द्रिका

कथमित्यत्राह—कन्या हीति । कन्यायाभ्यु (अभ्यु)पघातन (नं) सर्वदा पुत्रोदयात् प्रच्यावनं वा स्वयमेव वरेण भार्यात्वेन स्वीकरणं वा कशाप्रहारादिभिः क्लेशनं वा ? तत्राद्ये तावदाह—आ(अ)दायादेति । कन्याया

[ सन्ध्यर्थंपरस्परपुत्राधानप्रसङ्गे जात्यादिपुत्रापेक्षया अजात्याद्याधानस्यैव श्रेयस्त्वम् ]

**पुत्रयोरपि—जात्यं शूरं प्राज्ञं कृतास्त्रमेकपुत्रं वा ददाति, सोऽतिसन्धीयते, विपरीतोऽतिसन्धत्ते। जात्यादजात्यो हि लुप्तदायादसन्तानत्वात् आधातुं श्रेयान्, प्राज्ञादप्राज्ञो मन्त्रशक्तिलोपात्, कृतास्त्रादकृतास्त्रः प्रहर्तव्यसम्पल्लोपात्, एकपुत्रादनेकपुत्रो निरपेक्षत्वात्।**

———————

नयचन्द्रिका

दायाभोगित्वादेव दायाच्च्यवनं नानिष्टमित्याशयः। द्वितीये त्वाह—परेषामेवार्थायेति। कन्यायाः परेणैव केनचिदवश्यं स्वीकार्यत्वात् तत्स्वीकारोऽपि नानिष्ट इति भावः। तृतीयेऽप्याह—अक्लेश्या चेति। स्त्रियो हि कदाचिदवरोधवत्योऽप्यक्लेश्या इति स्थितेरिति हृदयम्। विपरीतः पुत्र इति। तस्मिन् दायादत्वादेः सत्वादिति भावः।

श्रीमूला

सन्ध्यर्थः परस्परपुत्राधाने विशेषमाह—पुत्रयोरपीति। पुत्रद्वयमध्ये, जात्यं समानजातीयं, प्राज्ञं, शूरं, कृतास्त्रम् अस्त्रविद्याशिक्षितम्, एकपुत्रं वा ददाति यः सः अतिसन्धीयते। विपरीतः अजात्यप्राज्ञादिपुत्रदायी, अतिसन्धत्ते। अजात्याधानस्य श्रेयस्त्वं समर्थयते—जात्यादिति। समानजातीयात्, अजात्यो हि, लुप्तदायादसन्तानत्वात् राज्यहरसन्तानरहितत्वाद्धेतोः, आधातुं श्रेयान् आधीयमान आधातुः श्रेयस्कर इत्यर्थः। प्राज्ञादप्राज्ञ इत्यादि। वाक्यत्रयं स्पष्टार्थम्। तत्र प्रहर्तव्यसम्पल्लोपादित्यस्य प्रहरणसाधनगुणसमृद्धिविरहादित्यर्थः। एकपुत्रादिति। एकेन पुत्रेण युक्तो यः पुत्रमाधत्ते, तदपेक्षया, अनेकपुत्रः अनेकैः पुत्रैर्युक्तो यस्तदन्यतमं पुत्रमाधत्ते सः, श्रेयान् अतिसन्धाता भवतीत्यर्थः। कुतः, निरपेक्षत्वात् पुत्रान्तरसत्त्वेनाधीयमानपुत्रनिरादरत्वादित्यर्थः। अथवा एकपुत्रादित्यादेरयमर्थः—एकपुत्रादिति। एक एव पुत्र एकपुत्रः तस्मात् तदपेक्षया, अनेकपुत्रः एकपुत्रभिन्नः अर्थाद् बहुपुत्रान्यतमः आधातुं श्रेयान् आधीयमान आधातुः श्रेयस्करः, कुतः निरपेक्षत्वात् स्वपित्रा पुत्रान्तरयुक्तेनोपेक्ष्यमाणत्वादिति।

नयचन्द्रिका

द्वयोरपि राज्ञोः सन्ध्यर्थमन्योन्यपुत्रार्पणे विशेषमाह—पुत्रयोरपीति। जात्यत्वादिषु पञ्चस्वेकैकरहितं पुत्रं तत्तद्विपरीतमतिसन्धत्त इत्यर्थः।

एतदेव क्रमाद्दर्शयति—जात्यादित्यादि। जात्यो राजबीजो, अजात्यो विपरीतः। लुप्तदायादसन्तानत्वादिति। दायादो दायभागी सन्तानो लुप्तो यस्य तथा तस्य भावः तत्वम्। आधातुं श्रेयानिति। विश्वासार्थमाधीयमान आधातुः शुभावह इत्यर्थः।

[ जात्यादिषु परस्परवैलक्षण्योपपादनम् ]

**जात्यप्राज्ञयोर्जात्यमप्राज्ञमैश्वर्यप्रकृतिरनुवर्तते; प्राज्ञमजात्यं मन्त्राधिकारः। मन्त्राधिकारेऽपि वृद्धसंयोगाज्जात्यः प्राज्ञमतिसन्धत्ते।**

---

नयचन्द्रिका

प्राज्ञादप्राज्ञ इति। आधातुः श्रेयानिति। अत्र हेतुमाह—मन्त्रशक्तिलोपादिति, ततश्च मन्त्रशक्तिरहितस्य त्यागे तत्सहितत्यागवन्न हानिरित्यर्थः।

उत्साहशक्तिलोपादिति, विक्रमणादिव्यापारविरहादित्यर्थः।

कृतास्त्रादिति। शिक्षितास्त्रादित्यर्थः। प्रहर्त्तव्यसंपल्लोपादिति, प्रहरणमेव प्रहर्त्तव्यं तत्संपदस्तत्प्रकर्षस्याभावादित्यर्थः।

निरपेक्षत्वादिति, अत्रान्तरसत्वेन स्वविषयपित्रपेक्षारहितत्वादित्यर्थः। पितुस्तदपेक्षारहितत्वादिति त्वर्थो न युक्तः, आधातुं श्रेयानित्यनेनानन्वयात्।

श्रीमूला

अथ जात्यादिषूत्तरोत्तरापेक्षया पूर्वपूर्वस्यातिशयं समर्थयते—जात्यप्राज्ञयोरिति। तयोर्मध्ये, जात्यम्, अप्राज्ञम्, ऐश्वर्यप्रकृतिः राज्यस्वामित्वम्, अनुवर्तते। अतश्च राज्यदायहरत्वं तस्य गुणः। प्राज्ञम् अजात्यम्, मन्त्राधिकारः मन्त्रशक्तिः अनुवर्तते। अतश्च मन्त्रशक्तियुक्तत्वं तस्य गुणः। एवमुभयोः पृथग्गुणसत्त्वे विशेषमाह—मन्त्राधिकारेऽपीति। प्राज्ञस्य मन्त्रशक्तियोगे सत्यपि, जात्येकः जन्मसिद्धराज्यस्वामिभावः, वृद्धसंयोगाद् विद्यावृद्धसंयोगं प्राप्य, प्राज्ञम्, अतिसन्धत्ते अतिशेते। जात्यो वृद्धोपासनया प्राज्ञगुणं मन्त्राधिकाररूपमर्जयितुं शक्नोति जात्यगुणं राज्यार्हत्वलक्षणं नार्जयितुं शक्नोतीत्यभिप्रायः।

नयचन्द्रिका

एवं जात्यादीनां प्रत्येकं स्वस्वभावैस्सह सम्बन्धविशेषमुक्त्वा तेषामेव पूर्वपूर्वमुत्तरोत्तरतः प्रकृष्टमित्याह—जात्यप्राज्ञयोरपीत्यादिना। ऐश्वर्यप्रकृतिरिति। प्रभुत्वं स्वराज्ययोग्यतेति यावत्।

मन्त्राधिकार इति, मन्त्रशक्तिरित्यर्थः।

तत्र जात्ये विशेषमाह—मन्त्राधिकारेऽपीति। राज्य(जात्य)प्राज्ञयोरन्योन्यगुणरहितत्वेऽपि राज्ययोग्यता दुस्संपादा, मन्त्रशक्तिव्याधिसंयोगात् शक्यसम्पादनेति सारम्।

**प्राज्ञशूरयोः प्राज्ञमशूरं मतिकर्मणां योगोऽनुवर्तते । शूरमप्राज्ञे विक्रमाधिकारः । विक्रमाधिकोऽपि हस्तिनमिव लुब्धकः प्राज्ञः शूरमतिसन्धत्ते ।**

**शूरकृतास्त्रयोः शूरमकृतास्त्रं विक्रमव्यवसायोऽनुवर्तते । कृतास्त्रमशूरं लक्षलम्भाधिकारः । लक्षलम्भाधिकारेऽपि स्थैर्यप्रतिपत्त्यसम्मोषैः शूरः कृतास्त्रमतिसन्धत्ते ।**

---

श्रीमूला

प्राज्ञशूरयोर्गुणकथनपूर्वं विशेषमाह—प्राज्ञशूरयोरित्यादि । मतिकर्मणां योगः बुद्धिमत्कर्मसम्बन्धः । विक्रमाधिकारः पराक्रमोद्योगः । हस्तिनामिव लुब्धक इति बुद्धियोगमाहात्म्यस्य दृष्टान्तप्रदर्शनम् ।

शूरकृतास्त्रयोर्गुणमाह—शूरकृतास्त्रयोरिति । तयोर्मध्ये शूरम् अकृतास्त्रम् अशिक्षितास्त्रम्, विक्रमव्यवसायः पराक्रमोद्योगः, अनुवर्तते । कृतास्त्रम्, अशूरम्, लक्षलम्भाधिकारः अस्त्रस्य यथालक्ष्यप्रापणशक्तिः, अनुवर्तते । विशेषमाह—लक्षलम्भाधिकारेऽपीति । तत्सत्त्वेऽपि, स्थैर्यप्रतिपत्त्यसंमोषैः स्थैर्यं निष्कम्पत्वम्, प्रतिपत्तिः सङ्कटे सद्यःक्रियानुष्ठानम्, असंमोषः असंमोहः आत्मरक्षणावधानम् इत्येतैर्गुणैः, शूरः, कृतास्त्रम्, अतिसन्धत्ते अतिशेते ।

नयचन्द्रिका

जात्यमुक्त्वा तदुत्तरयोर्गुणद्वयं तावद्दर्शयति—प्राक्षशूरयोरित्यादिना । प्राज्ञे विशेषमाह—विक्रमाधिकारेऽपीति । बलवत्तरं हस्तिनं व्याधो बुद्धियोगादेवाऽऽक्रमतीति तथेत्यर्थः ।

जात्यप्राज्ञावुक्त्वा तदुत्तरयोर्गुणमाह—शूरकृतास्त्रयोरिति । विक्रमव्यवसायो विक्रमोद्योगः ।

लक्षलम्भाधिकारो लक्षघातित्वापादनशक्तिः ।

कृतास्त्रस्याऽस्त्रशिक्षागुणेऽपि स्थैर्यादिभिर्गुणैः शूरो विशिष्यत इत्याह—लक्षलम्भाधिकारेऽपीति । स्थैर्यं निर्भयतयानालं(भ)त्वम् प्रतिपत्तिः संशयेषु तदुत्तरक्रियाशैघ्र्यम, असम्मोहः—स्वरक्षणावधानम्, एभिः शूरः कृतास्त्रमतिशेत इत्यर्थः ।

**बह्वेकपुत्रयोः बहुपुत्र एकं दत्त्वा शेषवृत्तिस्तब्धः सन्धिमतिक्रामति, नेतरः ।**

[ उभयोरेकैकपुत्रकत्वे विशेषः ]

**पुत्रसर्वस्वदाने सन्धिश्चेत् पुत्रफलतो विशेषः समफलयोः शक्तप्रजननतो विशेषः । शक्तप्रजननयोरप्युपस्थिप्रजननतो विशेषः । शक्तिमत्येकपुत्रे तु लुप्तपुत्रोत्पत्तिरात्मानमादध्यात्, न चैकपुत्रमिति ।**

---

श्रीमूला

बह्वेकपुत्रयोरित्यादि । बहुपुत्रैकपुत्रयोर्मध्ये, बहुपुत्रः, एकम् अन्यतमं पुत्रम्, दत्त्वा सन्ध्यर्थम् आधाय, शेषबृत्तिस्तब्धः अवशिष्टपुत्रसद्भावदृप्तः सन्, शेषप्रतिस्तब्ध इत्यपि पाठः । सन्धिम् अतिक्रामति लङ्घयति, इतरः एकपुत्रः, नातिक्रामति । अतो बहुपुत्र एकपुत्रमतिशेत इत्यभिप्रायः । पूर्वम् 'एकपुत्रादनेकपुत्रो निरपेक्षत्वाद्' इत्याधेयस्याधेयान्तरापेक्षया विशेष उक्तः । इह तु आधेयगतविशेषद्वारक एवाधातुराधात्रन्तरापेक्षया विशेष उच्यते मन्दबुद्धिप्रवोधनार्थम् ।

उभयोरेकपुत्रत्वे विशेषमाह—पुत्रसर्वस्वदान इति । पुत्रसर्वस्वमेकः पुत्रः तस्य दाने, सन्धिश्चेत्, पुत्रफलतो विशेषः पुत्रस्य फलं पुत्रवत्ता तत्कृतो विशेषः । अयमाशयः—स चेदेकः पुत्रः पुत्रवान् भवेत् तं दद्यात् कदाचित् सन्ध्यतिक्रमेण तदपायेऽपि तत्पुत्रस्य राज्यैश्वर्यभोगयोग्यस्य स्थितत्वेन दातुरत्यन्तहान्यभावात् । अपुत्रैकपुत्रदातुस्तु हानिरेवेति । सपुत्रैकपुत्रत्वे द्वयोः समाने गर्भोत्पादनशक्तियुक्तस्य पुत्रस्य तच्छक्तिहीनपुत्रापेक्षया गुणातिशय इत्याह—समफलयोरित्यादि । शक्तप्रजननतः शक्तं स्वशक्तिविषयभूतं प्रजननं गर्भोत्पादनं यस्य स शक्तप्रजननः ततः तस्येत्यर्थः । शक्तप्रजननयोरिति । उभयोरपि एकपुत्रयोः गर्भोत्पादनशक्तिमतोः सतोः, उपस्थितप्रजननतो विशेषः आसन्नगर्भोत्पादनस्य गुणातिशयः, अतश्च स न देय इत्यर्थः ।

शक्तिमत्येकपुत्रे त्विति । पुत्रोत्पादनशक्ते राज्यभारवहनशक्ते वा एकस्मिन्नेव पुत्रे विद्यमाने, लुप्तपुत्रोत्पत्तिः स्वयं पुत्रोत्पादनशक्तिहीनः, आत्मानम्, आदध्यात् आधीकुर्यात् । न चैकपुत्रं न त्वेकं पुत्रमादध्यात् । इतिशब्दः सन्धिकर्मप्रकरणसमाप्तिद्योतकः ।

नयचन्द्रिका

बह्वेकपुत्रयोरित्यादि । न कृतास्त्रैकपुत्रयोः, विपुत्रत्वमवका( धा )र्य विचारोऽसङ्गतः एकपुत्रत्वानेकपुत्रत्वयोः प्रागेव विचारितत्वेन पौनरुक्त्यं चेति चेत् । सत्यम्, एकपुत्रस्य उत्तरत्वेऽपि पूर्वस्मादपि कृतास्त्रत्वात् प्रकर्षस्येष्टतया पूर्वपूर्वप्रकर्षनियमस्य भानत्वेन तयोर्विशेषाविचारणात् एतदेव द्वैभावः ( द्विभावे )

[ सन्ध्यर्थमाहितानां पुत्रादीनां मोक्षोचितः कालः
मोक्षोपायाश्चाष्टादशविधाः ]

**( सन्धिमोक्षः । )**

**अभ्युच्चीयमानः समाधिमोक्षं कारयेत् ।**

———

नयचन्द्रिका

चतुःसद्भावे चैकाभाव इति त्रयश्चेति सङ्कलय्य त्रयोविंशतिभेदाः, तत्रोक्तदिशैवानुक्ता अपि विशेषाः स्वयमूह्या इत्यभिप्राय इति ।

यत्तु पूर्वोक्तस्यैव एकपुत्रस्य पुनर्वचनात् पौनरुक्त्यमिति, तत्र पूर्वं ह्यनेकः पुत्र आधातुं श्रेयान् न विकुर्वन्नात्यपेक्षितत्वादित्युक्तम् । इदानीन्तु बहुपुत्रो राजैकपुत्रमतिसन्धत्ते इत्युच्यते इति त्वपौनरुक्त्यगन्धोऽपि तुल्यम् ।

शेषप्रतिस्तब्ध इति । बहुपुत्रेणैकस्यादानेऽपि विशेषपुत्रैरवलम्बितः सन्धिमतिक्रामतीत्यत्रापि बहुपुत्रस्य पूर्वत्वात् प्रकर्ष उत्तरत एकपुत्रादो( दि )ति न प्रकारभेदोऽपीति ग्राह्यम् ।

द्वयोरप्येकपुत्रस्यैवान्योन्यदानेऽपि विशेषमाह—पुत्रसर्वस्वदान इति । एको हि पुत्रः पुत्रसर्वस्वं तद्दाने पुत्रफलत(तोऽ)स्येत्यपीत्यादिना साहाय्यदानाद्विशेष इत्यर्थः ।

उभयोरप्येकयोग्यपुत्रत्वे तुल्ये विशेषमाह—शक्तप्रजननत इति । अलुप्तप्रजननशक्तिबलात्, विशेष इति पुनः पुत्रान्तरोत्पादसम्भवादिति भावः ।

उपस्थितप्रजननत इति । पुनरासन्नपुत्रप्रसूतित्वादित्यर्थः ।

राज्यनिर्वहणशक्त्येकपुत्रे सति लुप्तपुनःप्रजननशक्तिश्चेत् राजा स्वात्मानमेवाऽऽदध्यात् न त्वेकपुत्रमित्याह—शक्तिमतीति ।

इति सन्धिप्रकरणम् ।

श्रीमूला

सन्धिमोक्ष इति सूत्रम् । सन्ध्यर्थमाहितः पुत्रादिरिह सन्धिरित्युपचर्यते तस्य मोक्षः मोचनोपाय उच्यत इति सूत्रार्थः । सन्धेर्दृढीकरणमुक्तम्, मोचनमिदानीमभिधीयत इति सङ्गतिः ।

अभ्युच्चीयमान इति । सन्धिवशादुपचितशक्तिसिद्धिः समाधिमोक्षं शत्रुविजिगीषुभ्यां सम्भूयोभयसंवादेन विश्वासार्थमाहितः समाधिः तस्य मोक्षम्, कारयेद् अनुतिष्ठेत् ।

नयचन्द्रिका

एवं सन्धौ विश्वासोपगमार्थं स्वपुत्रादिप्रतिग्रहेऽभिहिते तन्मोचनविसंवादे सति तदुपधाय(पाद)नार्थं सूत्रं समाधिमोक्ष(सन्धिमोक्ष)इति ।

सम्भूयोभयसंवादेनाधीयते विश्वासार्थनाप्स्यत इति समाधिः पुत्रादिरर्पितः, तस्य मोक्षो मोचनोपायः स उच्यत इत्यर्थस्तमापादयति—अभ्युच्चीयमान इति । अभ्युच्चयः शक्तिसिद्ध्युपचयः, तद्वदन्यथानुष्ठानाशक्तेरिति भावः ।

**( १ ) कुमारासन्नाः सत्रिणः कारुशिल्पिव्यञ्जनाः कर्माणि कुर्वाणाः सुरङ्गया रात्रावुपखानयित्वा कुमारमपहरेयुः ।**

**( २ ) नटनर्तकगायकवादकवाग्जीवनकुशीलवप्लवकसौभिका वा पूर्वप्रणिहिताः परमुपतिष्ठेरन्; ते कुमारं परम्परयोपतिष्ठेरन् । तेषामनियत-कालप्रवेशस्थाननिर्गमनानि स्थापयेत्; ततस्तद्व्यञ्जनो वा रात्रौ प्रतिष्ठेत ।**

श्रीमूला

मोक्षोपायमाह—कुमारेत्यादि । कुमारासन्नाः आहितस्य कुमारस्य आसन्नाः, सत्रिण गूढपुरुषाः, कारुशिल्पिव्यञ्जनाः कारवस्तक्षायस्कारादयः, शिल्पिनः स्वर्णकारादयः तद्वेषाः, भूत्वेति शेषः, कर्माणि शकटभूषणादीनि, कुर्वाणाः, सुरुङ्गया भूम्यन्तस्तिर्यक्खातवर्त्मना, रात्रो उपखानयित्वा सुरुङ्गाप्रवेशद्वारं कुमारगृहसमीपे कारयित्वा, कुमारम्, अपहरेयुः ।

अन्यमपहरणोपायमाह—नटनर्तकेत्यादि । नटादयोऽष्टौ वा, तत्र नटोऽभिनय-विचक्षणः—नर्तको गात्रविक्षेपमात्रकर्त्ता गायनो गीतज्ञः वादको वाद्यनिपुणः वाग्जीवनः कथोपजीवी कुशीलवः श्लोकपाठकः प्लवकः खड्गाग्रनर्तकः सौभिकः आकाशयानिकः, पूर्वप्रणिहिताः प्रागेव विजिगीषुणा प्रणिहिताः, परं शत्रुम्, उपतिष्ठेरन् आश्रयेयुः । ते तथा परमाश्रित्य तिष्ठन्तः, कुमारम् आधिभूतं, परम्परया क्रमेण, उपतिष्ठरेन् स्वविद्यया राजामात्यादिप्रीत्युत्पादनद्वारेण उपसमागच्छेयुः । तेषां नटादीनां तथो-पतिष्ठमानानाम्, अनियतकालप्रवेशस्थाननिर्गमनानि यथेप्सिते काले स्ववासगृहे प्रवेशम् अवस्थानं ततो निष्क्रमणं च, स्थापयेद् राजानुज्ञया व्यवस्थापयेत्, अर्थात् कुमारः । ततः तव्द्यञ्जनो वा नटाद्यन्यतमवेषधारी च भूत्वा, रात्रौ प्रतिष्ठेत नटादिभिः सः निर्गत्य स्वदेशं प्रयायात् ।

नटाद्यन्यतमव्यञ्जनतया निर्गमकथनेन रूपाजीवाव्यञ्जनतया भार्याव्यञ्जन-तया च निर्गमनं व्याख्यातप्रायमित्याह—तेन रूपाजीवेत्यादि ।

नयचन्द्रिका

अ(आ)हितपुत्राद्य(दे)पार(रपरमु)पायमाह—कुमारासन्ना इत्यादि । सत्रिणः गूढ-पुरुषा उक्तलक्षणाः, कारवः स्थूलकर्मकृतस्तुषा(तुन्नवाया[१])दयः, शिल्पिनः सूक्ष्मकर्मकृतः स्वर्णकारादयः, एतद्व्यञ्जना भूत्वा कुमारस्य शिबिकाभरणादिनिर्वाणः सुरु (र)ङ्गया रात्रौ तमपहरेयुः, उपखानयित्वा कुमारगृहसमीपं यावत् सुरु (र)ङ्गां खानयित्वेत्यर्थः ।

अपहरणे तस्योपायान्तरमाह—नटेत्यादि । नटा—अभिनयज्ञाः, नर्तकाः—शोभार्थं भा(व) विक्षेपविदः, गायनाः—गीतिविद , वादकाः—वाद्यविदः, वाग्जीविनः—सूतादयः, कुशोलवाः—काव्यादिपाठकाः, प्लवकाः[२]—परत्राकृतः, सौभिकाः, क्वचित्

---

१. तुन्नवायः सौचिकः ।

२. प्लवकाः चाण्डालाः ।

**तेन ( ३ ) रूपाजीवा ( ४ ) भार्याव्यञ्जनाश्च व्याख्याताः ।**

**( ५ ) तेषां वा तूर्यभाण्डफेलां गृहीत्वा निर्गच्छेत् । ( ६ ) सूदाऽरालिकस्नापकसंवाहकाऽऽस्तरककल्पकप्रसाधकोदकपरिचारकैर्वा द्रव्यवस्त्रभाण्डफेलाशयनासनसम्भोगैर्निर्ह्रियेत ।**

---

नयचन्द्रिका

सौभिकशब्दो न दृश्यते, एते विजिगीषुणा प्रणिहिताः परं सेवेरन् ।

ततो महामात्यान् ततः क्रमात् कुमारम्, परप्रयुक्तशङ्कानिर्वृत्त्यर्थमित्याशयः ।

तेषामित्यादि । नगा(टा)दीनां विशेषविचारे क्रमप्राप्ते शक्ये चे(दि?)ति क्रमेणाप्रस्तुतं बहुवशं (क्रमेणास्तुतप्रवेश) । स्थान(नं)निर्गमनञ्च स्वेच्छाधीनानि व्यवस्थापयेदित्यर्थः ।

क्रमत इत्यत्राह—तत इत्यादि । तद्व्यञ्जन इति, नटाद्यन्यतमवेशः । उक्तप्रकारं गणिकादिव्यञ्जनासु स्त्रीष्वप्यतिदिशति—तेनेति । नटादिना व्याख्यातानुपतिष्ठेदित्यर्थः ।

श्रीमूला

उपायान्तरमाह—तेषां वेति । नटनर्तकादीनां वा, तूर्यभाण्डफेलां तूर्यफेलां वादित्रपेटीं भाण्डफेलाम् आभरणपेटीं च, गृहीत्वा निर्गच्छेद्, अर्थात् तत्कालप्रदर्शनसमाप्तौ ।

अन्यमुपायमाह—सूदारालिकेत्यादि । सूदादयोऽष्टौ तत्र सूदः सूपकारः आरालिको भक्ष्यकारः स्नापको मज्जनादिकारयिता सवाहकोऽङ्गमर्दकः आस्तरकः शयनचिन्तकः कल्पको नापितः प्रसाधकोऽलङ्कर्ता उदकपरिचारकः उदकदानाधिकृतः एतैर्वा कर्तृभिः, द्रव्यवस्त्रादिसम्भोगैः द्रव्यं निहतच्छागादि वस्त्रं प्रसिद्धं भाण्डफेला भूषणपेटी शयनं शयनीयम् आसनम् इत्येतेषां सम्भोगैः सम्भुक्तैर्द्रव्यादिभिबर्हिर्निर्ह्रियमाणैः सहेत्यर्थः, निर्ह्रियेत बहिर्नीयेत, कुमारः ।

नयचन्द्रिका

नटादिव्यञ्जनतया कुमारस्य निर्गमनमुक्त्वा तेषामुपकारग्राहकतया तैः सह निर्गमनं वा स्यादित्याह—तेषामित्यादि । तूर्णा भाण्डं—तूर्यसंस्थानं तस्य······ पात्रीम्, केचिद् भाण्डवे(ण्डेन)प्रसाधनपे······मित्याहुः ।

प्रकारमाह—सूदेत्यादि । सूदः सूपकारः, आरालिको भक्ष्यकारः, स्नापकः मज्जनादि(कारः)प्रवाहकोऽङ्गमर्दकः, आस्तरकः शय्याधिकृतः कल्पकः चण्डिलः, प्रसाधकः परिकर्मकृत्, उदकपरिचारकः पानीयाधिकृतः, एभिर्दि(र्द्र)व्यादिभिः सह कुमारो निर्ह्रियेत्तेति वाक्यार्थः । तत्र द्रव्यं निहतच्छागादिः, ···भरणसमुद्गः, शयनं शय्या, आसनं मसूरकादिः, येषां सम्भोगैः प्लवभङ्गादिसमभुक्तैरेभिः सह रजकार्पण्याद्यर्थं नियामनैः(कैः)सह कुमारो निर्ह्रियेतेत्यर्थः ।

**( ७ ) परिचारकात्मना वा किञ्चिदरूपवेलायामादाय निर्गच्छेत्; ( ८ ) सुरङ्गामुखेन वा निशोपहारेण । ( ९ ) तोयाशये वा वारुणं योगमातिष्ठेत् ।**

**( १० ) वैदेहकव्यञ्जना वा पक्वान्नफलव्यवहारेणारक्षिषु रसमवचारयेयुः । ( ११ ) दैवतोपहारश्राद्धप्रवहणनिमित्तमारक्षिषु मदनयोगयुक्तमन्नपानरसं वा प्रयुज्यापगच्छेत्, आरक्षकप्रोत्साहनेन वा ।**

---

श्रीमूला

उपायान्तरमाह—परिचारकच्छद्मना वेति । परिचारकव्याजेन वा, किञ्चिद् द्रव्यं परिचारग्रहणोचितम्, अरूपवेलायाम् अग्राह्यरूपायां सन्धिकारायां वेलायाम्, आदाय स्वयं गृहीत्वा, निर्गच्छेत् । प्रकारान्तरमाह—सुरङ्गामुखेन वा निशोपहारेणेति । रात्रौ भूतबलिदानापदेशेन द्रष्टृजनसन्निध्यं परिहृत्य सुरङ्गाद्वारेण निर्गच्छेत् । प्रकारान्तरमाह—तोयाशये वेत्यादि । नदनदीसरोरूपे महति जलाशये वा, वारुणं योगम् आतिष्ठेद् 'उदकवस्तिना जरायुणा वा शिरोवगूढनास' इत्यादिना दुर्गलम्भोपाये वक्ष्यमाणम् उदकान्तस्सञ्चरणलक्षणमुपायमाश्रित्य निर्गच्छेदित्यर्थः ।

वैदहेकव्यञ्जना वेति । वणिग्वेषा वा, आरक्षिषु पक्वान्नफलव्यवहारेण आरक्षिपुरुषेषु पक्वान्नफलविक्रयवृत्त्या युक्ताः, रसं विषं विषयुक्तमन्नादिकम्, अवचारयेयुः आरक्षिपुरुषान् खादयेयुः । तेषु मोहमुपगतेषु कुमारो निर्गच्छेदित्यभिप्रायः ।

दैवतोपहारश्राद्धप्रहवणनिमित्तमिति । दैवतोपहारनिमित्तं श्राद्धनिमित्तं प्रहवणनिमित्तं प्रहवणं तुष्टिभोजनं तन्निमित्तं च अर्थाद् देवतोपहाराद्युयुक्तशेषम्, अन्नपानरसं वा, मदनयोगयुक्तम् आरक्षिषु प्रयुज्य मदकरद्रव्ययुक्तं कृत्वा रक्षिपुरुषान् खादयित्वा, अपगच्छेत् कुमारः । आरक्षकप्रोत्साहनेन वेति । अथवा रक्षिपुरुषान् धनदानेन प्रभूतधनदानप्रतिज्ञया वा सन्तोष्य वाऽपगच्छेदित्यर्थः ।

नयचन्द्रिका

प्रकारान्तरमाह—परिचारकेत्यादि । अरूपवेलायामिति, रूपम(व)न्मिथो व्यावृत्तं स्वरूपं यस्यां न ज्ञायते तस्याम् । अन्धकारेहि निरूपयेयुः, अतस्तस्यां वेलायां यत्किञ्चिद् द्रव्यमादाय कुमारो निर्गच्छेदित्यर्थः ।

निशायां भूतबलिदानव्याजेन विजनीकृत्य सुरु(र)ङ्गामुखेन वा निर्गच्छेदित्याह—सुरु(र)ङ्गामुखेनेति । प्रकारान्तरमाह—तोयाशयेत्यादि, वारुणं योगमिति, वक्ष्यति दुर्गलम्भोपाये वस्तिना जरायुणा वा सशिरोवगूढनासापृषता कुलीन(र)नक्रशिशुमारवसाभिर्वेत्याद्युक्त्वा केन रात्रिर्गणशश्चररोति तज्जलान्तश्चारोपायं कुर्याद्वेत्यर्थः ।

**( १२ ) नागरककुशीलवचिकित्सकापूपिकव्यञ्जना वा रात्रौ समृद्ध-गृहाण्यादीपयेयुः । ( आरक्षिणां ) वैदेहकव्यञ्जना वा पण्यसंस्थामादी-पयेयुः । ( १३ ) अन्यद्वा शरीरं निक्षिप्य स्वगृहमादीपयेदनुपातभयात् । ततः सन्धिच्छेदखातसुरङ्गाभिरपगच्छेत् ।**

---

नयचन्द्रिका

प्रकारान्तरमाह—वैदेहकव्यञ्जना वेत्यादि । गूढकुमारगृहतः फलवत्वा(पक्वा)-न्नादिभक्ष्यविक्रयवृत्तयो विश्वास्यतामागता आरक्षिणः पुरुषान् विषयुक्तान्नफलाद्युप-चारयेयुः खादयेयुः । ततः कुमारोऽपयादित्यर्थः ।

प्रकारान्तरमाह—दैवतेत्यादि । दुर्गादिदेवताबल्यर्थं वा श्राद्धकर्मणि यद् भोजनं प्रवहणं निमित्तं वाऽन्नपानशेषं व्याजीकृत्यारक्षिषु उन्मादकेनामारकेण द्रव्येण वा युक्तमन्नपानमुपयोग(गं)प्रयुज्यापगच्छेद्वेत्यर्थः ।

उपायान्तरमाह—आरक्षकेति । प्रोत्साहनेन वा, अत्र यः(त्यः)क्षुद्रालाभः, मद-पनयने तु सर्वस्वं दास्यामीति विश्वासकारणेन वेत्यर्थः ।

श्रीमूला

नागरककुशीलवेत्यादि । नगररक्षप्रभृतयो ये रात्र्यभ्यनुज्ञातपुरसञ्चारास्तद्वेषा वा, रात्रौ धनिकगृहाण्यग्निनाऽऽदीपयेयुः । तन्निमित्ते जनव्याकुलीभावे वर्तमाने कुमारो निर्गच्छेदित्यर्थः ।

उपायान्तरमाह—अन्यद्वेति । अन्यत् शरीरं शवं वा, निक्षिप्य स्वगृहे निवेश्य, स्वगृहम् आदीपयेत् कुमारः । किमर्थमन्यशवनिक्षेपस्तत्राह—अनुपातभयात् स्वान्वेषणभयं परिहर्तुम् । दृष्टे हि शवे 'कुमारो दग्ध' इति बुद्ध्या तदन्वेषणाय यत्नं रक्षिणो न कुर्युरिति । एवमादीपितात् स्वगृहात् कथं कुमारो निर्गच्छेत् तत्राह—तत इति । आदीपनानन्तरं, सन्धिच्छेदखातसुरङ्गाभिः सन्धिच्छेदेन भित्तिरन्ध्रकरणेन खातसुरङ्गाभिः पुष्करिणीप्रणालीभिश्च, अपगच्छेत् ।

नयचन्द्रिका

उपायान्तरमाह—नागरकेति, पुरे रात्रावप्यनिषिद्धसञ्चारनागरिकव्यञ्जनादयः समृद्धानां महामात्रा(त्या)दीनां गृहाणि दहेयुः, तत्सङ्कुलादपगच्छेदित्यर्थः ।

प्रकारान्तरमाह—वैदेहकेत्यादि । पण्यसंस्थां पणनीयद्रव्यशालायां तद्विधिं वा दहेयुः । तत्सङ्कुलेवाऽपगच्छेत् ।

प्रकारान्तरमाह—अन्यद्वेति । स्वगृहमेवान्तः शवं निक्षिप्य दहेत् । शवनिक्षे-पोपयोगमाह—अनुपातभयादिति, अनुपतन्तीत्यनुपाता अद्वेष्टारः, गृहान्तस्थकुमारा दग्ध इति नापतेयुः, ततो निर्भयमपगमनं स्यादिति भावः । स्वगृहे दह्यमाने कथमा-त्मनोऽपगमनमित्यत्राह—ततः सन्धिच्छेदेति, सन्धिच्छेदेन कपाटार्गलादिभञ्जनादिना वा निद्या(खा)तेन निषूदपुष्करिण्या भूमेरन्तरं कृतया सुरङ्गया वा गच्छेदित्यर्थः ।

**( १४ ) काचकुम्भभाण्डभारव्यञ्जनो वा रात्रौ प्रतिष्ठेत। ( १५ ) मुण्डजटिलानां प्रवासनान्यनुप्रविष्टो वा रात्रौ तद्व्यञ्जनः प्रतिष्ठेत, ( १६ ) विरूपव्याधिकरणारण्यचरच्छद्मनामन्यतमेन वा। ( १७ ) प्रेतव्यञ्जनो वा गूढैर्निर्ह्रियेत। ( १८ ) प्रेतं वा स्त्रीवेषेणानुगच्छेत्।**

[ तदन्वेषकानुपातभयपरिहारविधिः ]

**वनचरव्यञ्जनाश्चैनमन्यतो यान्तमन्यतोऽपदिशेयुः, ततोऽन्यतो गच्छेत्। चक्रचराणां वा शकटवाटैरपगच्छेत्। आसन्ने चानुपाते सत्रं वा गृह्णीयात्। सत्राभावे हिरण्यं रसविद्धं वा भक्षजातमुभयतः पन्थानमुत्सृजेत्। ततोऽन्यतोऽपगच्छेत्।**

---

श्रीमूला

काचकुम्भभाण्डभारव्यञ्जनो वेति। काचभारस्तृणकाष्ठादिवाहो कुम्भभारो जलवाहकः भाण्डभारः अश्वाद्युपकरणवाही तदन्यतमवेषो वा, रात्रौ प्रतिष्ठेत। मुण्डजटिलप्रवासानिति। मुण्डजटिलानां विजिगीषुप्रणिहितानां प्रवासान् अर्थात् तान् प्रवसतः, 'मुण्डजटिलानां प्रवासनानि' इत्यपि पाठः। अनुप्रविष्टो वा, रात्रौ, तद्व्यञ्जनः मुण्डजटिलवेषः, प्रतिष्ठेत, तैः सहः। विरूपव्याधिकरणेत्यादि। विरूपकरणम् औपनिषदिकोक्तयोगेन स्वाभाविकरूपविलक्षणरूपकरणं व्याधिकरणं व्याधितव्यञ्जनकरणम् अरण्यचरच्छद्म पुलिन्दादिवेषः इत्येतेषाम्, अन्यतमेन वा, प्रतिष्ठेतेति वर्तते। प्रेतव्यञ्जनो वेति। तद्वेषो वा गूढैः गूढपुरुषैः, निर्ह्रियेत अपनीयेत। प्रेतं वेति। शवं वा कश्चिन्नीयमानं, स्त्रीवेषेण, युक्त इति शेषः, अनुगच्छेत्।

अन्वेषकानुपातभयपरिहारार्थमाह—वनचरव्यञ्जनाश्चेति। वनचरवेषा गूढपुरुषाः, अन्वेषकैः पृष्टाः इति शेषः, एनं कुमारं गतम्, अन्यतो यान्तम्, अन्यतोऽपदिशेयुः अन्येन वनमार्गेण गतं कथयेयुः। ततोऽन्यतो गच्छेदिति। कुमारस्तु वनचरव्यञ्जनापदिष्टान्मार्गादन्येन मार्गेण गच्छेत्, एवं हि गच्छन्नन्वेष्टृभिरग्राह्यो भवतीति। चक्रचराणां वेति। शकटचारिणां वा, शकटवाटैः शकटसङ्घातैः सह, अपगच्छेत्।

आसन्ने चानुपात इत्यादि। स्वान्वेष्टृजने निकटागते तु, सत्रं वा गृह्णीयात् वनं वा आश्रयेत् वनसङ्कटदेशे निलीयेत। सत्राभावे, हिरण्य, रसविद्धं विषयुक्तं, भक्षजातं वा, उभयतः पन्थानं पथ्युभयपार्श्वयोः, उपसृजेत् विकिरेत्। तदुत्सर्गफलमाह—ततोऽन्यतोऽपगच्छेदिति। यथान्वेष्टृजन उत्सृष्टहिरण्याद्यादानव्यग्रश्चरति ततोऽन्येन पार्श्वेनापसरेदित्यर्थः।

[ अन्वेष्टृभिर्गृहीतस्य ग्रहणभयान्निलीनस्य चापसरणोपायः ]

**गृहीतो वा सामादिभिरनुपातमतिसन्दध्यात्, रसविद्धेन वा पथ्यदानेन ।**

---

नयचन्द्रिका

काचेत्यादि । काचहरास्त्र······काष्ठादिवाहिनः, कुम्भहरा जलवाहिनः तैः समं वा प्रतिष्ठेतेत्यर्थः ।

मुण्डजटिलानांप्रवासानानीति । (प्रवासतो मुण्डिजटिलप्रवासादिति) प्रवसतो मुण्डिजटिला······।। ननुप्रविष्टः, ( प्रवसतांमुण्डिजटिलानामनुत्रासनान्यनुप्रविष्ठः । ) तैः समं वा रात्रौ यायात् ।

प्रकारान्तरमाह—विरूपेत्यादि । स्वाभाविकाद् रूपाद्वैरूप्यमेव विरूपं तत्करणेन वा, व्य ( व्या ) धिकरणेन, व्याधितवेषकरणेन, अरण्यचराणां व्याधादीनां छद्म व्याजं तेन वा प्रतिष्ठेतेत्यर्थः । उपायान्तरमाह—प्रेतव्यञ्जनो वेति, शववेषं कृत्वा शिबिकागतो गूढैर्निर्हार्यो वेत्यर्थः ।

प्रेतं वेत्यादि । सत्यशवं वा नीयमानं स्त्रीवेषो भूत्वाऽनुगच्छेद्वेत्यर्थः ।

गच्छन्तं त्वेनमनुपातयेत् ( युः ) अनुगच्छेयुः, त्वं ( क्व ) गच्छसीति पृच्छेयुश्च, तदाप्युपायमाह—वनचरेति । वनचरव्यञ्जना गूढा येन पथाऽयं गतस्ततोऽन्यद् व्यपदिशेयुः ।

ततो व्यपदिष्टादन्यतोऽन्येन पथा गच्छेदित्यर्थः ।

उपायान्तरमाह—चक्रचराणामित्यादि । चक्रैः शकटान्नैश्चरन्तीति चक्रचराः शाकटिकास्तेषाम्, शकटसंघातैः सहापगत्वे(च्छेदि)त्यर्थः ।

आसन्नेऽन्वेष्टृगणे प्रतिविधानमाह—आसन्न इति । अनुपात इति, अन्वेष्टृवर्गे । सत्रं (वा) गृह्णीयादिति, निग्रहणस्थानं गृह्णीयादित्यर्थः ।

सत्राभावे विधिमाह—सत्राभाव इति । हिरण्यं पणादिकम् । उभयतः पन्थानमिति मार्गपार्श्वयोः । पणादिकं वा रसविद्धमपूपादिकं वा विसृजेत् ।

श्रीमूला

अन्वेष्टृगृहीतस्य प्रतिपत्तिमाह—गृहीतो वेति । ग्रहणं प्राप्तः, सामादिभिः सान्त्ववचनदानादिभिरुपायैः, अनुपातम् अन्वेष्टृजनम्, अतिसन्दध्याद् वञ्चयित्वाऽपगच्छेत् । रसविद्धेन वा पथ्यदानेन विषयुक्तेन पाथेयदानेन वा, अतिसन्दध्यात् मूर्छयित्वा मारयित्वा वाऽपगच्छेत् । पथ्यदानेनेति पाठे पथ्यशनेनेत्यर्थः । पाथेयेनेत्येव माधवपाठः ।

नयचन्द्रिका

तद्ग्रहणपरेष्वेतेषु मार्गान्तरेण गच्छेदित्याह—ततोऽन्यत इति । ग्रहणे सति कृत्यमाह—गृहीतो वेति । अनुपातमिति अन्वेष्टृग्रहणम्, सामादिभिरतिसन्दध्यात्, उपायैस्तद्वशीकृत्य कथमप्यु ( प्य ) पसरेदित्यर्थः ।

**वारुणयोगाग्निदाहेषु वा शरीरमन्यदाधाय शत्रुमभियुञ्जीत—'पुत्रो मे त्वया हतः' इति ।**

[ उक्तसर्वविधमोक्षोपायस्याप्यनुष्ठाना-
शक्यत्वे कर्तव्योंऽशः ]

**उपात्तच्छन्नशस्त्रो वा रात्रौ विक्रम्य रक्षिषु ।**
**शीघ्रपातैरपसरेत् गूढप्रणिहितैः सह ॥२७१॥**

**इति षाड्गुण्ये सन्धिकर्म सन्धिमोक्षश्च** सप्तदशोऽध्यायः,
आदितः पञ्चदशशतः

---

श्रीमूला

ग्रहणभयनिलीनस्य कुमारस्यापसरणोपायमाह—वारुणयोगाग्निदाहेषु वेति । पूर्वोक्तेषु वारुणयोगेषु अग्निदाहेषु च, शरीरमन्यदाधाय, प्रयुक्तेष्विति शेषः, शत्रुम् अभियुञ्जीत, विजिगीषुः । अभियोगनिमित्तमाह—पुत्रो में त्वया हत इतीति । अपदिशन्निति शेषः । अभियोगवशाच्च 'कुमारो मृत' इति मत्वा तदन्वेषणविमुखतां गते शत्रौ कुमारः सुखमपसरेदित्यभिप्रायः ।

पूर्वोक्तसर्वोपायासम्भवे कुमारः किं कुर्यात् तत्राह—उपात्तच्छन्नशस्त्रो वेत्यादि । गूढधृतं शस्त्रं गृहीत्वा रात्रौ रक्षिपुरुषान् हत्वा शीघ्रगामिभिरश्वादियानैः पूर्वसङ्केतितगूढपुरुषसहितोऽपगच्छेदित्यर्थः ।

इति कौटलीयार्थशास्त्रव्याख्यायां षाड्गुण्ये सप्तमाधिकरणे
सप्तदशोऽध्यायः, सन्धिकर्म सन्धिमोक्षः,
आदितः पञ्चदशोत्तरशततमः ।

नयचन्द्रिका

उपायान्तरमाह—पात्रेत्यादि । रात्रौ दृगगृहीतशस्त्रकुमारो निश्शङ्केषु सरस्खि(रसवि)द्धेन वेति विषमिश्रेण पाथेयेन वेति । अतिसन्दध्यादित्येवं शवं कञ्चिन्निक्षिप्य स्वगृहदाहेन वाग्भिर (?) (वाग्निना) पुष्करिण्यादिप्रवेशेन वारुणयोगेन वा कुमारे क्वचिन्निलीने स्थिते ग्रहणभयादपसरणे वा शक्ये विजिगीषोर्विधिमाह—वारुणेत्यादि, एवञ्च कुमारमरणनिश्चयाद् विश्वस्तेषु निशशङ्ककुमारस्यापसरणं(अ?)सुकरं स्यादित्याशयः ।

अपसरणोपायान्तरमाह—उपात्तेत्यादि । रात्रौ गूढगृहीतशस्त्रो निश्शङ्केषु रक्षिषु विक्रणान्निहतेषु वेगवद्भिरश्वैरपसरेत्, प्रागेव प्रणिहितैर्गूढैस्तीक्ष्णादिभिः । सहायवानित्यर्थः ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचित्तयां
कौटिलीयटीकायां नयचन्द्रिकायां षाड्गुण्ये सप्तदशोऽध्यायः ।

# चतुर्विंशतिशततमपञ्चविंशतिशततमषड्विंशतिशततमानि प्रकरणानि

## अष्टादशोऽध्यायः

### मध्यमोदासीनमण्डलचरितानि

[ मध्यमसम्बन्धियः प्रकृतिविकृतयः, तत्र स्वमित्रा-
ऽभियोक्तरि मध्यमे विजिगीषोर्वर्तनक्रमः ]

**मध्यमस्य—आत्मा, तृतीया पञ्चमी च प्रकृती, प्रकृतयः, द्वितीया च चतुर्थी षष्ठी च विकृतयः। तच्चेदुभयं मध्यमोऽनुगृह्णीयात्, विजिगीषुर्मध्यमानुलोमः स्यात्। न चेदनुगृह्णीयात् प्रकृत्यनुलोमः स्यात्।**

---

श्रीमूला

मध्यमचरितमिति सूत्रम्। विजिगीषोर्मध्यमं प्रति अनुष्ठानमुच्यत इति सूत्रार्थः। अरिमित्रविषयस्यानुष्ठानस्य कथनानन्तरं मध्यमविषयस्य कथनसङ्गतिः।

मध्यमस्य प्रकृतिविकृतीराह—मध्यमस्येति। तस्य, आत्मा, तृतीया पञ्चमी च प्रकृती मित्रं मित्रमित्रं चेति द्वे प्रकृती च, प्रकृतयः आत्मादयस्तिस्रः प्रकृतय इत्युच्यन्ते प्रकृष्टकरणात्। अरिररिमित्रमरिमित्रमित्रं चेत्येतास्तिस्रो विकृतय इत्याह—द्वितीयेत्यादि। विकृतित्वं च विरुद्धकरणाद् बोद्धव्यम्। प्रकृतित्रिकं विकृतित्रिकं चेत्येतस्य त्रिकद्वयस्य यदि मध्यमस्तुल्यहितवृत्तिः स्यात् तदा विजिगीषुर्मध्यमं प्रति अनुकूलवृत्तिः स्यादित्याह—तच्चेदुभयमित्यादि। न चेदनुगृह्णीयादिति। तच्चेत् त्रिकद्वयं मध्यमो नानुगृह्णीयात्, प्रकृत्यनुलोमः प्रकृतेरात्ममित्रमित्रमित्रात्मकस्य स्वप्रकृतिमात्रस्यानुकूलः, स्यात्।

नयचन्द्रिका

एवं शत्रौ मित्रे च विजिगीषोर्वृत्तिर्बहुप्रकारोक्ता, इदानीं मध्यमोदासीनयोर्मण्डले च वृत्तिर्वाच्या। अत्र मध्यमे वृत्तिमभिधातुं सूत्रम्—मध्यमचरितमिति, मध्यमे विजिगीषोश्चरितं वृत्तिरुच्यत इत्यर्थः।

मध्यमे वृत्तिप्रदर्शनार्थं तत्प्रकृत्यादिकं तावद्दर्शयति मध्यमस्येत्यादिना। आत्मेति, एका प्रकृतिरिति शेषः। तृतीया पञ्चमी च प्रकृतीति, मित्रं मित्रमित्रञ्चेति प्रकृती द्वे इत्यर्थः। प्रकृतय इति तिस्र इति बहुवचनार्थः। अत्र प्रकृष्टकरणादेषां प्रकृतित्वम्, विरुद्धकरणाद्विकृतित्वम्। अथवा स्वाभाविकानुग्रहविषयत्वं विकृतित्वमिति ग्राह्यम्, तदुभयमनुगृह्णीयादित्यभिधानात्।

[ तत्र मित्रभाविमित्रस्य मध्यमाद्रक्षणक्रमः ]

**मध्यमश्चेद्विजिगीषोः मित्रं मित्रभावि लिप्सेत, मित्रस्यात्मनश्च मित्राण्युत्थाप्य मध्यमाच्च मित्राणि भेदयित्वा मित्रं त्रायेत। मण्डलं वा प्रोत्साहयेत्—'अतिप्रवृद्धोऽयं मध्यमः सर्वेषां नो विनाशाय अभ्युत्थितः,**

---

नयचन्द्रिका

एवं प्रकृतित्रिकमुक्त्वा विकृतित्रिकमाह—द्वितीयेत्यादि। अरिररिमित्रं अरिमित्रमित्रञ्चेति विकृतय इत्यर्थः।

एवं स्थिते यद्येतदनुकूलः स्यात् विजिगीषुरपि मध्यमानुकूलः स्यात्, अन्यथा तत्प्रकृतिविकृत्यनुकूलः स्यादित्याह—तच्चे(दि)त्यादिना। तदिति त्रिकद्वयमित्यर्थः।

श्रीमूला

यदि मध्यमो विजिगीषोः—

"एकार्थानर्थसम्बन्धमुपकार्यविकारि च। मित्रभावि भवत्येतन्मित्रमद्वैध्यमापदि॥"

इत्युक्तलक्षणं मित्रभावि मित्रं निग्रहीतुमिच्छेत्, तदा विजिगीषुः स्वमित्रस्य स्वस्य च मित्राण्युत्थाप्य मध्यमाच्च तदीयमित्राणि भेदयित्वा स्वीयं मित्रं रक्षेदित्याह—मध्यमश्चेदित्यादि। तथाविधमध्यममपकर्तुमुपायान्तरमाह—मण्डलं वा प्रोत्साहयेदिति। राजमण्डलं वा समुद्योजयेत्, अर्थान्मध्यमापकारे। किमुक्त्वा प्रोत्साहयेदित्याह—अतिप्रवृद्धोऽयं मध्यम इत्यादि। इतिशब्दानन्तरम् उक्त्वेति शेषः। तच्चेदिति। तद्मण्डल तथा प्रोत्साहितम्, अनुगृह्णीयाच्चेत् आत्मसाहाय्यमनु-

नयचन्द्रिका

विजिगीषोर्मित्रं मध्यमो यद्यादातुमिच्छेत् तदा विजिगीषो(षु)र्मध्यमेन विगृह्य मित्रं त्रायेतेत्याह—मध्यमश्चेदिति। मित्रं मित्रभावीति॥ यथोक्तं प्राक्—

एकार्थानर्थसम्बन्धमुपकार्यविकारि च।
मित्रभावि भवत्येतन्मित्रद्वैविध्यमापदि॥ इति

[ अधि० ७, अध्या० ९, सू० ५५ ]

मित्रमिति, भूम्येकान्तरम्। मित्रस्यात्मनश्चेति, स्वमित्रस्यात्मनश्च यानि मित्राणि तानि सर्वाण्युपस्थाप्य मध्यममित्राणि च मध्यमाद् भेदयित्वा तदनुगृहीतं स्वमित्रं त्रायेतेत्यर्थः।

मण्डलं वेति। प्रकृतिमण्डलमपि मध्यमकर्शनादौ प्रोत्साहयेदुद्योजयेत्।

प्रोत्साहनप्रकारमाह—अतिप्रवृद्धोऽयमिति। अभ्युत्थित इति, विनाशं कर्तुमुत्साहवान्।

**सम्भूयास्य यात्रां विहनाम' इति। तच्चेन्मण्डलमनुगृह्णीयान्मध्यमावग्रहेणात्मानमुपबृंहयेत्। न चेदनुगृह्णीयात्, कोशदण्डाभ्यां मित्रमनुगृह्य, ये मध्यमद्वेषिणो राजानः परस्परानुगृहीता वा बहवस्तिष्ठेयुः; एकसिद्धौ वा बहवस्सिद्ध्येयुः, परस्पराद्वा शङ्किता नोत्तिष्ठेरन्, तेषां प्रधानमेकमासन्नं वा सामदानाभ्यां लभेत। द्विगुणो द्वितीयं, त्रिगुणस्तृतीयम्। एवमभ्युच्चितो मध्यममवगृह्णीयात्।**

---

### श्रीमूला

तिष्ठेद् यदि, मध्यमावग्रहेण मध्यमस्य कर्शनेन, आत्मानम्, उपबृंहयेत् वर्धयेत्। न चेदनुगृह्णीयादित्यादि। अयमर्थः—मण्डलं चेदात्मानं नानुगृह्णीयात्, तदा विजिगीषुः, धनदानसैन्यदानाभ्यां स्वमित्रं मध्यमलिप्सितम्, अनुगृह्य, ये मध्यमद्वेषिणो राजानः परस्परसहकृता बहवो मध्यममपकर्तुं सज्जाः स्युः, ये वा मध्यमद्वेषिणो बहवस्तेष्वेवाऽन्यतमेऽनुकूलितेऽनुकूलिता भवेयुः ये वा मध्यमद्वेषिणो बहवः संहृत्य समुत्थातुकामा अप्यन्योन्यभेदभयान्नोत्थिताः स्युः, तेषामन्यतमं प्रधानं स्वदेशासन्नं वा साम्ना दानेन च स्वायत्तं कुर्यात्। तथाविधं सहायं लभमानश्च द्वितीयं लभमानो द्विगुणबलो भवेत् तृतीयं लभमानस्त्रिगुणबलः। अनेन च प्रकारेणोपचितशक्तिर्मध्यमं कर्शयेदिति।

### नयचन्द्रिका

तच्चेन्मण्डलमिति। प्रोत्साहितं तन्मण्डलं यदि विजिगीषोस्सहकुर्यात्, तथा (दा)मध्यममवग्राह्य कर्शयित्वा आत्मानं वर्धयेदित्यर्थः।

यदि मण्डलं मध्यमकर्शनादौ विजिगीषोर्न सहकुर्यात् तदा विधिमाह—न चेर्(द)त्यादिना। स्वमित्रत्राणार्थं मध्यममवजिघृक्षोर्विजिगीषोर्मण्डलं यदि न सहकुर्यात् तदा मध्यमादिभिर्युक्तस्य स्वमित्रस्य कोशेन वा दण्डेन वा साहाय्यं कृत्वा मध्यमद्वेषिणां राज्ञामन्यतमं स्वीकुर्यादिति वाक्यार्थः। परस्परानुगृहीता वेति, बहवोऽन्योन्यसहकारिणो वा स्युः, एकस्योपग्रहे सर्वेऽप्युपगृह्येरन्, अथवा मध्यमद्वेषे सक्ता अपि यद्यन्योन्य स्वभेदशङ्कया मध्यमावग्रहार्थं नोत्सहेरन्, सर्वथा तेषां प्रधानं वा निर्वाणकं स्वभूमेरासन्नं लघुसमुत्थमेकं वा साम्ना दानेन वा स्वकीयं कुर्यात्।

तस्मिन्नात्मनो द्वितीये स्वीकृते पूर्वतो द्विगुणबलः स्यात्, ततस्तृतीयस्वीकारे त्रिगुणबलः स्यादिति।

एवं शक्त्यधिको भूत्वा विजिगीषुः पश्चान्मध्यमं कर्शयेदित्यर्थः।

**देशकालातिपत्तौ वा सन्धाय मध्यमेन मित्रस्य साचिव्यं कुर्यात्, दूष्येषु वा करसन्धिम् ।**

[ कर्शनीयमित्रस्य मध्यमाद्रक्षणक्रमः ]

**कर्शनीयं वाऽस्य मित्रं मध्यमो लिप्सेत, प्रतिस्तम्भयेदेनम् 'अहं त्वा त्रायेय' इत्याकर्शनात् । कर्शितमेनं त्रायेत ।**

---

श्रीमूला

देशकालातिपत्तो वेति । मध्यमद्वेषिसाहाय्यसम्पादनात् प्रागेव मध्यमः स्वमित्र-मुच्छिन्द्यादिति शङ्कायां, सन्धाय मध्यमेन स्वयं मध्यमेन सह सन्धिं कृत्वा, मित्रस्य साचिव्यं मध्यमसन्धिसङ्घटनलक्षणं साहाय्यं, कुर्यात् । असन्धित्सौ म यमे त्वाह—दूष्येषु वा कर्मसन्धिमिति । मध्यमस्य ये दूष्याः राष्ट्रमुख्यास्तैः सह कर्मसन्धिं कुर्यात् 'यूयं देशदाहविलोपादिकमारभध्वम् अहमग्रे योत्स्ये' इत्येवं कर्मसंविदा सन्धिं कुर्यादित्यर्थः ।

इत्थं मध्यमेन मित्रभाविमित्रे लिप्सिते विजिगीषोर्विधानमुक्त्वा कर्शनीये मित्रे लिप्सिते विधिमाह—कर्शनीयं वेत्यादि । अस्य विजिगीषोर्मित्रं भूम्येकान्तरं, कर्शनोयं स्वविरुद्धवृत्तित्वात् कोशदण्डादिक्षपणेन कृशतां नेतव्यं, मध्यमो लिप्सेत, चेदिति शेषः, एनं कर्शनीयं, प्रतिस्तम्भयेत् प्रतिस्तब्धं निर्भयं कुर्यात्, किमित्युक्त्वा, अहं त्वा त्रायेय मध्यमाद् रक्षेयमित्युक्त्वा । कियन्तं कालमीदृशमभयवचनमित्याह—आ कर्शनादिति । मध्यमसकाशाद् यावत् कर्शनं प्राप्तो भवति तावदित्यर्थः । कर्शित-मेनं त्रायेत 'साधु कर्शितोऽयमि'ति निश्चितमेनं रक्षेत् ।

नयचन्द्रिका

अस्य महतः संविधानस्य करणात् प्रागेव स्वमित्रं मध्यमश्चेदवगृह्णीयात् तदा विधिमाह—देशकालेत्यादि । मध्यमेन सह स्वयं सन्धाय स्वमित्रस्य गूढं कोशदण्डाभ्यां साहाय्यं कुर्यादित्यर्थः ।

पक्षान्तरमाह—दूष्येषु वेति । ये मध्यमद्विष्टा मुख्यास्तैर्दूष्यैः सममहत् (हं) पुरस्ताद् योत्स्यामि युष्माभिर्वीवधप्रतिबन्धो जनपदविलोपादिकं वा कार्यमित्यादिरूपं कर्मसन्धिं वा कुर्यादित्यर्थः ।

एवमनुकूलानां मित्राणां मध्यमात् त्राणमुक्त्वा भूम्येकान्तरत्वेऽपि विरुद्धकर-णाद्यः कर्शनीयः स्यात् उच्छेद्यो वा तयोर्मध्यमेन लिप्सायां विधानमाह—कर्शनीय-मित्यादि, अस्य विजिगीषोः कर्शनीयं यन्मित्रं तन्मध्यमश्चेत् लिप्सेत तदा तत्प्रतिस्त-म्भयेत् निर्भयीकुर्यात्, अस्य दर्शनीयत्वात् यावत्कर्शनं स्यात् तावत् त्रायेयेत्याश्वासयेत् ।

अथ जाते कर्शने पश्चात् क्रि(त्रा)येतेति कर्शनीयं मित्रं वक्ष्यति :—

"प्रसाध्य शत्रुं यन्मित्रं वृद्धं गच्छेदवश्यताम् ।" इत्यारभ्य ।

"यथा वानुग्रहापेक्षं तिष्ठेत्तथा चरेत् ।" इति

( अधि० ७, अध्या० १८, सू० ३६, ३७ )

मध्यमेन विजिगीषोरुच्छेदनीयमित्रलिप्सायामाह—उच्छेदनीयं वेति ।

[ उच्छेदनीयमित्रस्य मध्यमाद्रक्षणक्रमः ]

**उच्छेदनीयं वाऽस्य मित्रं मध्यमो लिप्सेत, कर्शितमेनं त्रायेत मध्यमवृद्धिभयात् ।**

[ उक्तरक्षणयत्नवैफल्ये कर्तव्योंऽशः ]

**उच्छिन्नं वा भूम्यनुग्रहेण हस्ते कुर्यादन्यत्रापसारभयात् ।**

**कर्शनीयोच्छेदनीययोश्चेन्मित्राणि मध्यमस्य साचिव्यकराणि स्युः, पुरुषान्तरेण सन्धीयेत । विजिगीषोर्वा तयोर्मित्राण्यवग्रहसमर्थानि स्युः, सन्धिमुपेयात् ।**

---

श्रीमूला

विजिगीषोरुच्छेदनीये मित्रे मध्यमेन लिप्सिते विधिमाह—उच्छेदनीयं वास्य मित्रमित्रादि । विजिषीषुस्तं कर्शनप्राप्तिपर्यन्तमुपेक्ष्य पश्चाद् मध्यमाद् रक्षेत् अन्यथा उच्छेदपर्यन्तमुपेक्षायां मध्यमस्य वृद्धिः स्यादिति भयादित्यर्थः ।

अथ विजिगीषुणा कृतेऽपि त्राणयत्ने बलवत्तरेण मध्यमेन यद्युच्छिन्नः स्यादुच्छेदनीयः, तदा विजिगीषुः किं कुर्यादित्याह—उच्छिन्नं वेति । तं, भूम्यनुग्रहेण स्वीयभूमिप्रदानेन, हस्ते कुर्यात् स्ववशे कुर्यात्, किमर्थम्, अन्यत्रापसारभयात् शत्रुपक्षप्रवेशभयं परिहर्तुम् ।

कर्शनीयोच्छेदनीययोरिति । तथाभूतयोः स्वमित्रयोः, मित्राणि, मध्यमस्य साचिव्यकराणि साहाय्यदायीनि, स्युश्चेत्, पुरुषान्तरेण सन्धीयेत सेनापतिकुमारान्यतरोपस्थापनेन सन्धीयेत, अर्थान्मध्यमो विजिगीषुणा ।

'सेनापतिकुमाराभ्यामुपस्थातव्यमित्ययम् ।
पुरुषान्तरसन्धिः स्यान्नात्मनेत्यात्मरक्षणम् ॥'

इत्युक्तलक्षणेन सन्धिना मध्यमस्य साह्यं स्वयमपि विजिगीषुः कुर्यादित्यभिप्रायः । विजिगीषोर्वा तयोरित्यादि । कर्शनीयोच्छदेनीययोर्मित्राणि चेद् विजिगीषोरवग्रहणे शक्तानि भवेयुः, तदा विजिगीषुर्मध्यमेन सह सन्धिं कुर्यादित्यर्थः ।

नयचन्द्रिका

उच्छेद्यमपि कर्शयित्वा पुनस्त्रायेतेत्यर्थः । उच्छेदनीयस्य त्राणमयुक्तमित्यत्राह—

मध्यमवृद्धिभयादिति, मध्यमादभियुक्ते सुखोच्छेद्ये विजिगीषुर्यदि नानुग्रहं कुर्यात् मध्यमः स्यात्, तेनोच्छेद्यस्यापित्राणमित्यर्थः । वक्ष्यति वो(चो)च्छेद्यमित्रम् :—

अति(रि)[1]साधारणं मित्रं[2] तिष्ठेद्यदरितः[3] शठम् ॐ ।
भेदयेद् भिन्नमुच्छिन्द्यात्ततः शत्रुमनन्तरम् ॥ इति

( अधि० ७, अध्या० १८ सूत्र० ४० )

---

१. अरि, २. यद्वा, ३. तत् ।

[ अमित्राभियोक्तरि मध्यमे वृत्तिक्रमः ]

**अमित्रं वाऽस्य मध्यमो लिप्सेत, सन्धिमुपेयात् । एवं स्वार्थश्च कृतो भवति मध्यमस्य प्रियं च ।**

---

नयचन्द्रिका

बलवता मध्यमेन तस्मिन्नुच्छिन्ने विधिमाह—उच्छिन्नं वेति, मध्यमोच्छिन्नं त्व(तं) स्वविषये भूमिदानेनानुगृह्य स्वहस्तगतं कुर्यात् । किमर्थमित्यत्राह—अन्यत्रेति, अन्यत्र शत्रावपसारः तदेकीभावः तद्भयादित्यर्थः । (कर्षनीयेति ।) कर्शनीयोच्छेदनीययोः स्वमित्रयोर्यानि मित्राणि तान्यपि यदि मध्यमस्य तदभियोक्तुः साहाय्यं कुर्युः तदा विजिगीषुरपि तस्य साहाय्यं कुर्यात् । कथमित्यत्राह पुरुषान्तरेणेति, स्वयन्तेन सहायस्तु तत्सन्धिं(न)कुर्यात् विशिष्टबलसमागमस्य भयहेतुत्वात्, अपितु सेनापत्यादिपुरुषान्तरप्रेरणेन । उक्तं हि प्राक्—

सेनापति कुमाराभ्यामुपस्थातव्यमित्ययम् ।
पुरुषान्तर सन्धिः स्यान्नात्मनेत्यात्मरक्षणम् ( : ) ॥
( अधि० ७, अध्या० ३, सू० २५ )

अथ विजिगीषोः (ष्वोः) कर्शनीयादित्वेन विरुद्धयोर्मित्राण्यपि विजिगीषो (ष्वो) रवग्रहसमर्थानि यदि न स्युः तानि विजिगीषु (षू) कर्शनादौ मध्यम (म) विप्रोत्साह्य······

तत्र यदि चेष्टेरन् तत्राह—विजिगीषो (ष्वो)र्वेति । तयोरिति, कर्शनीयोच्छेदनीययोः । सन्धिमुपेयादिति, मध्यमेनेति शेषः तैरेव सन्धिमितिकेचित्, तत्र मध्यमचरितस्य प्रकृतत्वादसङ्गतिदोषः ।

श्रीमूला

इत्थं विजिगीषोः स्वमित्राभियोक्तरि मध्यमे वृत्तिर्व्याख्याता । विजिगीषोस्तदमित्राभियोक्तरि मध्यमे वृत्तिमाह—अमित्रं वास्येत्यादि । विजिगीषोरमित्रमभियुञ्जाने मध्यमे तेन सह विजिगीषुः सन्धिं कुर्यात् । किमर्थमित्याह—एवमिति । इत्थंकरणे, स्वार्थश्च स्वामित्रनिग्रहलक्षणः, कृतो भवति, मध्यमस्य प्रियं च कृतं भवति ।

नयचन्द्रिका

एवं विजिगीषोरनुकूलप्रतिकूलरूपाणां मित्राणामभियोगोद्यते मध्यमे वाऽस्य वृत्तिमुक्त्वा तदमित्राभियोगेऽप्याह—अमित्रं वास्येति । विजिगीषोरमित्रं यदि लिप्सेत, मित्रं यद्यादातुमिच्छेदित्यर्थः । सन्धिमुपेयादिति, अत्रापिमध्यमेनेति शेषः ।
तत्सन्धिकरणे फलं द्वैगुण्यमाह—एवं स्वार्थश्चेति ।

[ तन्मित्राधियोक्तरि तदनभियोक्तरि च मध्यमे वर्तनक्रमः ]

**मध्यमश्चेत्स्वमित्रं मित्रभावि लिप्सेत, पुरुषान्तरेण सन्दध्यात् । सापेक्षं वा 'नार्हसि मित्रमुच्छेत्तुम्' इति वारयेत् । उपेक्षेत वा 'मण्डल-मस्य कुप्यतु स्वपक्षवधात्' इति ।**

[ उदासीनं मध्यमे लिप्समाने तस्मिन् वर्तनक्रमः ]

**अमित्रमात्मनो वा मध्यमो लिप्सेत, कोशदण्डाभ्यामेनमदृश्य-मानोऽनुगृह्णीयात् । उदासीनं वा मध्यमो लिप्सेत—'उदासीनाद्भिद्यताम्' इति, मध्यमोदासीनयोर्यो मण्डलस्याभिप्रेतः तमाश्रयेत ।**

---

श्रीमूला

अथ मध्यमे तन्मित्रमभियुञ्जाने विजिगीषोर्वृत्तिमाह—मध्यमश्चेदित्यादि । मध्यमः मित्रभावि अधिकरणशेषवक्ष्यमाणं स्वमित्रं लिप्सेत चेत्, पुरुषान्तरेण सन्दध्यात् विजिगीषुः सेनापत्यादिप्रेषणेन मध्यमस्य साहाय्यमनुतिष्ठेदित्यर्थः । सापेक्षं वेति । मित्रे किञ्चिदपेक्षायुक्तम् आत्मनि सानुरोधं वा मध्यमं, 'नार्हसि मित्रमुच्छेत्तुम्' इत्युक्त्वा, वारयेत् आत्माप्तत्वाविष्करणार्थम् । निरपेक्षविषय आह—उपेक्षेत वेत्यादि । राजमण्डलमेवास्मै मध्यमाय स्वमित्रवधोद्यतायाऽन्यायवृत्तये कोपिष्यतीति बुद्ध्योपेक्षां मध्यमे कुर्यात् ।

मध्यमे तदमित्रमभियुञ्जाने वृत्तिमाह—अमित्रमित्यादि । यदि मध्यमस्त-च्छत्रुमभियुञ्जीत तदा विजिगीषुस्तच्छत्रोर्गूढं साहाय्यं कुर्यात् ।

उदासीनं मध्यमे लिप्समाने वृत्तिमाह—उदासीनं वेत्यादि । तं चेद् मध्यमोऽभियुञ्जीत, तदा विजिगीषुः 'उदासीनाद् मध्यमोऽत्यन्तं भेदं प्राप्नोतु' इत्येतदर्थं मध्यमोदासीनयोरन्यतरं मण्डलस्य प्रीतिविषयभूतमाश्रित्य तस्मै साहाय्यं दद्यादित्यर्थः । इह लिप्सेतेत्येतदुत्तरम् 'अस्मै साहाय्यं दद्याद्' इत्यधिकपाठो माधवयज्वटीकापर्यालोचनया प्रतीयते । तदा तु मध्यमाय साह्यं कुर्यादित्यर्थो वक्तव्यः, न चायं विधिरैकान्तिक इत्यभिप्रायकं चोत्तरवाक्यं योज्यम् । इत्थं मध्यमचरितम् व्याख्यातम् । अथ क्रमप्राप्तमुदासीनचरितमभिधीयते ।

नयचद्रिका

एवं विजिगीषोर्मित्राणाममित्राणाञ्च मध्यमेनाभियोगे विधिमुक्त्वा मध्यमस्यैव यानि मित्राण्यमित्राणि च तदादित्सायां विजिगीषोर्विधानमाह—मध्यमश्चेदिति । मित्रभावीति, अनुकूलमपि भूम्येकान्तरं तद्भूमिजिघृक्षयेत्याशयः । तदभियोक्तुं मध्यमसाहाय्यं सेनापत्यादिप्रेषणन सन्धिकरणेन कुर्यादित्यर्थः ।

पक्षान्तरमाह—सापेक्षं वेति । अनुच्छेदरुचिं मध्यममभियोगाद् वारयेदित्यर्थः ।

[ उदासीनविषये विजगीषोर्वर्तनक्रमः ]

**( उदासीनचरितम् । ) मध्यमचरितेनोदासीनचरितं व्याख्यातम् । उदासीनश्चेत् मध्यमं लिप्सेत, यतश्शत्रुमतिसन्दध्यात् मित्रस्योपकारं कुर्यात्, मध्यममुदासीनं वा दण्डोपकारिणं लभेत, ततः परिणमेत ।**

---

नयचन्द्रिका

मित्रविशेषणत्वे अनुकूलं मित्रमुच्छेत्तुं नार्हसीत्यर्थमाहुः । परशब्दान्तरितत्वं तत्र दोषः । पक्षान्तरमाह—उपेक्षेतवेति ।

कोशेति । कोशेन वा दण्डेन वा यथा मध्यमो न जानीयात् तथा गूढमनुगृह्णीयादित्यर्थः । उदासीनलिप्सायामाह—उदासीनं वेति ।

अस्मै (इति?) मध्यमायासहायादानं तदनुग्रहेण, किन्तु तस्योदासीनाद् भेदोऽस्त्वित्याह—उदासीनादिति ।

तर्हि किं मध्यमाश्रयणमेव कार्यं, नेत्याह—मध्यमोदासीनयोरिति । मण्डलस्य बलवत्वेन तदनुगुणमाश्रयीतेत्यर्थः ।

श्रीमूला

उदासीनचरितमिति सूत्रम् । उदासीनं प्रति विजिगीषोरनुष्ठानमुच्यत इति सूत्रार्थः ।

मध्यमोक्तमुदासीनेऽतिदिशति—मध्यमचरितेनेत्यादि । मध्यमस्य याः प्रकृतयः उक्ता आत्मा तृतीया पञ्चमी चेति प्रकृतयः, याश्च विकृतयो द्वितीया चतुर्थी षष्ठी च ता उदासीनस्यापि समानाः । या च मध्यमे विजिगीषोर्वृत्तिरुक्ता सोदासीनेऽपि समानेत्यर्थः । तत्र विशेषमाह—उदासीनश्चेदिति । उदासीनो यदि मध्यममभियुञ्जीत, तदा यस्मिन् पक्षे मध्यमस्योदासीनस्य वा प्रविष्टः स्वशत्र्वतिसन्धानं स्वमित्रोपकारं च कुर्यात्, मध्यममुदासीनं वा सैन्यदानोपकारिणं लभेत, तं पक्षं परिणमेत प्रविशेदित्यर्थः । इह 'कुर्यादि' त्येतदुत्तरम् 'उदासीनं वा दण्डोपकारिणम्' इत्येव मूलादर्शेषु पाठः उपलभ्यते । किन्तु भाषास्वरसात् 'मध्यममुदासीनं वा दण्डोपकारिणम्' इति पाठः साधुतरोऽनुमितः । एवमुदासीनचरितमुक्तम् ।

अथ मण्डलचरितमुच्यते—मण्डलचरितमिति सूत्रम् । मण्डलमरिमित्रात्मकं, तस्मिन् विजिगीषोर्वृत्तिरभिधीयत इति सूत्रार्थः ।

नयचन्द्रिका

मध्यमानन्तरं क्रमादुदासीने वृत्तिमभिधातुं सूत्रम्—उदासीनचरितमिति, उदासीने विजिगीषोर्वृत्तिरुच्यत इत्यर्थः । विजिगीषोर्मध्यमेऽभिहितां वृत्तिमुदासीनेऽप्यतिदिशति—मध्यमचरितेनेति । व्याख्यातयाविजिगीषो(ष्त्रो)रिति, यथा मध्यमः

[ अरिमित्रात्मकमण्डलविषये विजगीषोर्वर्तनक्रमः,
तत्र अरिमित्रभृत्यभाविनां सामन्तानां परिगणनम् ]

**(मण्डलचरितम् ।) एवमुपगृह्यात्मानमरिप्रकृतिं कर्शयेत् । मित्रप्रकृतिं चोपगृह्णीयात् । सत्यप्यमित्रभावे तस्य—अनात्मवान्, नित्यापकारी, शत्रुः, शत्रुसहितः, पार्ष्णिग्राहो वा, व्यसनी, यातव्यः, व्यसने वा नेतुरभियोक्ता—इत्यरिभाविनः ।**

————

नयचन्द्रिका

स्यात्(?मध्यमस्यात्मा)तृतीयापञ्चमी चेति प्रकृत्यादिकं विजिगीषोस्तत्र वृत्तिश्चोक्ता नित्यान्युदासीनेपि तुल्यादित्यर्थः ।

विशेषमाह—यत इत्यादि । यदि विजिगीषोः शत्रुं (त्रुः) मध्यमेन पूर्वं (त्वं) सहितः तदा स विजिगीषारपि सन्धावसत्कल्पः स्यात् (तदा संहितः?) तदा मध्यमसहायो विजिगीषुः शत्रुमुच्छिन्द्यात्, एवन्त्व (श्च) विजिगीषुमित्रस्याप्ययमुपकारस्तुल्यः स्यात् ।

अथोदासीनः सर्वाधिकबलस्तदा तस्यापि प्रकृष्टतया विजिगीषोर्दण्डे तत्साहाय्यदानमेवोपकार इत्याशयवानाह उदासीनं वेति । दण्डोपकारिणमिति, दण्डेन बलेनोप कर्त्तारं लभेतेत्यर्थः । ततः परिणमेदिति । अस्मिन्नेवपक्षे क्रमेण प्रविशेदित्यर्थः ।

श्रीमूला

एवमिति यथोक्तया मध्यमोदासीनवृत्त्या, आत्मानम् उपगृह्य उपचितशक्तिं कृत्वा, अरिप्रकृतिं सामन्तं, कर्शयेत् क्षीणशक्तिं कुर्यात् । मित्रप्रकृतिं भूम्येकान्तरम्, उपगृह्णीयात् सामदानादिना स्वायत्तं कुर्यात् ।

तत्र सामन्ता अरिशब्दितास्तावत् त्रिप्रकाराः—अरिभाविनो मित्रभाविनो भृत्यभाविन इति । तान् क्रमेण वक्ष्यन् प्रथमम् अरिभाविन आह—सत्यप्यमित्रभाव तस्येत्यादि । विजिगीषुं प्रति भूम्यनन्तरत्वेनामित्रत्वे तुल्येऽपि अनात्मवत्त्वादिभिरष्टभिर्विशेषैररिभाविनोऽष्टरूपा भवन्तीत्यर्थः । तत्र अनात्मवान् अवश्येन्द्रियः । नित्यापकारी सदापकारशीलः । शत्रुः निष्कारणं द्विषन् द्विष्यमाणश्च । शत्रुसहितः शत्रुसहायः । पार्ष्णिग्राहः पृष्ठकोपोत्पादकः । व्यसनी बन्धुमरणादिदुःखी । यातव्यः अभियाक्तव्यः । व्यसने वा नेतुरभियोक्ता विजिगीषोर्व्यसनमुपलभ्याभियोगकर्ता च ।

नयचन्द्रिका

एवमुदासीने वृत्तिमुक्त्वा मण्डले वृत्तिमभिधातुं सूत्रम् मण्डलचरितमिति । अरिमित्ररूपं मण्डलं तस्मिन् वृत्तिरुच्यत इत्यर्थः । ननु षाड्गुण्ये शत्रुमित्रादौ विजिगीषोश्चरितमेवेति चेत्, सत्यम्, शत्रुमित्रादि भेदास्तारतम्यादिकं तद्वृत्ति (वि)

**एकार्थाभिप्रयात पृथगर्थाभिप्रयातः संभूययात्रिकः संहितप्रयाणिकः स्वार्थाभिप्रयातः सामुत्थायिकः कोशदण्डयोरन्यतरस्य क्रेता विक्रेता द्वैधीभाविक—इति मित्रभाविनः ।**

---

नयचन्द्रिका

शेषाश्चोक्ता इति तदर्थम् न ह्यरिभाविभृत्यभावित्वा·····विजिगीषोस्तत्रोक्ता इत्याशयः । मण्डलचिन्तामुपक्षिपति—एवमुपबृहयेति ।

मध्यमोदासीनावग्रहेणात्मानमुपबृंहयेदिति प्रोक्तं तत्कृत्वेत्यर्थः । अरिकर्शनं मित्रोपग्रहञ्च कुर्यादित्याह—अरिप्रकृतमित्यादिना । कर्शयेदिति, सिद्धिभिर्वियोजयेत् । उपगृह्णीयादिति, स्वीकुर्यादित्यर्थः । सामन्ता अरयो भूम्येकान्तराणि मित्राणीति प्रागुक्तम्, तत (त्र) सामन्तास्त्रिविधा अरिमित्रभृत्यभावित्वेनेति विभागमभिसन्धायारिभाविनस्तावदाह सत्यप्यमित्रभाव इत्यादि ।

(तस्येति) । तस्य विजिगीषोरेषाममित्रमावे साधारणेऽपि विशेषाअनात्म वत्वादय इत्यर्थः । तत्रा (ना) त्मवान् अजितेन्द्रियः, नित्यापकारी—कलहशोलः, शत्रुः अनिमित्तद्वेषी, (शत्रुसंहितः), शत्रुणा कृतसन्धिः पार्ष्णिग्राहो—यातस्य पश्चात्कोपकरः, व्यसनीमृगयादि··मृगयासक्तस्यात्मवत्वेनैव सिद्धत्वात्, मित्रमरणादिव्यसनपातीति केचित् यातव्यः अभियोज्यः, व्यसने विजिगीषोरभियोक्तेति, व्यसनं बलादिव्यसनं तत्राभियोक्तेत्यष्टा(व)रिभाविन इत्यर्थः ।

अनात्मवानिति च यातव्य इति च पदाभ्यामेव व्यसनित्वं सिद्धयत्येव, अनात्मवत्वानान्तरोयत्वात्, व्यसनित्वान्यरिसम्पद्युक्तः ? । शत्रुः व्यसनी यातव्य इति चाभिधानात् तथापि प्राधान्यख्यापनार्थं तस्य पृथग्ग्रहणमिति ग्राह्यम् ।

श्रीमूला

मित्रभाविन आह—एकार्थाभिप्रयात इति । यमर्थमुद्दिश्य विजिगीषुः प्रयातः तमेवार्थं साधयितुं भिन्नदिक्कं प्रयातः पृथगर्थाभिप्रयातः विजिगीषौ भूम्युद्देशेन प्रयाते हिरण्योद्देशेन प्रयातः, सम्भूययात्रिकः विजिगीषुणा समवेत्य प्रयातः, संहितप्रयाणिकः विजिगीषुणा सह सन्धि कृत्वा 'त्वमितोयाहि अहमन्यतो यास्यामी'ति परिभाष्य प्रयातः, स्वार्थाभिप्रयातः विजिगीषुकार्यसाधनाय प्रयातः, सामुत्थायिकः सम्भूय शून्यनिवेशनादिकर्मानुष्ठानसंविदा प्रवृत्तः, कोशदण्डयोरन्यतरस्य क्रेता विक्रेता कोशेन दण्डस्य दण्डेन कोशस्य वा क्रयकर्ता विक्रयकर्ता च, द्वैधीभाविकः द्वैधीभावगुणोपयोगी कृतसन्धिः पार्ष्णिग्राहादिरित्यर्थः, इति, अष्टाविति शेषः, मित्रभाविनः ।

नयचन्द्रिका

अथ मित्रभाविनोऽरिभेदानाह—एकार्थाभिप्रयात इत्यादिना । विजिगीषुणा सहैकं प्रयोजनमुद्दिश्य याता (तः), यथा विजिगीषुः भूमिमुदिश्य(वेद्यः?)अरिः भूमि-

**सामन्तो बलवतः प्रतिघातोऽन्तर्धिः प्रतिवेशो वा, बलवतः पार्ष्णिग्राहो वा, स्वयमुपनतः प्रतापोपनतो वा दण्डोपनतः—इति भृत्यभाविनस्सामन्ताः । तैर्भूम्येकान्तरा व्याख्याताः ।**

—————

नयचन्द्रिका

मुद्दिश्य यातः दिगादिभेदेनेति भावः । पृथगर्थाभिप्रयात इति, विजिगीषुः भूमिञ्चेत्युद्दिश्य, अयन्तु हिरण्यमित्यर्थः । सम्भूययात्रिक इति, लाभं बलादिमात्रया समं विभज्य सामवायिकतयैवोक्तं (क्त) शिविरनिवेशेन यात इत्यर्थः । संहितप्रयाणादिक इति, येन पार्ष्णिग्राहेण सन्धाय विजिगीषुर्यातव्यमभियातिसपार्ष्णिग्राहस्तथोक्तः संहितप्रयाण विषयभूत इत्यर्थः । स्वार्थाभिप्र()यात इति, स्वशब्देन विजिगीषुरुच्यते, विजिगीषोः प्रयोजनोद्देशेनैव यातो न तु स्वार्थोद्देशेनेत्यर्थः । सामुत्थायिक इति, समुत्थानं कर्मानुष्ठानं तत्र कृतसन्धिः, यथा त्वञ्चाहञ्च शून्यं निवेशयावह इत्यादिरूपेणेत्यर्थः । कोशदण्डयोरन्यतरस्य क्रेता-विक्रेता वेति, सामवायिकतयैव कोशेन दण्डं दण्डेन कोशं वा यः क्रीणाति विक्रीणाति वा स इत्यर्थः । द्वैधीभाविक इति, द्वैधीभावगुणविषयभूतः पार्ष्णिग्राहेण सन्धानं यातव्येन विग्रहश्चेति हि द्वैधीभावोऽपि हि मतः तत्रैव संहितः पार्ष्णिग्राह इत्यर्थः । एते मित्रभाविनोऽप्यष्टावेवेति भावः ।

श्रीमूला

भृत्यभाविन आह—सामन्त इति । बलवतो राज्ञः, प्रतिघातः प्रतिहन्ता 'प्रतिघातोबलवतो दुर्गाटव्यपसारवानि'त्युक्तलक्षणः, अन्तर्धिः 'अरेर्नेतुश्च मध्यस्था दुर्बलो भूम्यनन्तरः' इत्युक्तरूपः, प्रतिवेशो वा पार्श्वयोर्भूम्यनन्तरो वा, इत्येव त्रिरूप इति शेषः, सामन्तो भूम्यनन्तरो दुर्बलः, बलवतः पार्ष्णिग्राहो वा बलवतः पार्ष्णिं यो दुर्बलो गृह्णाति स वा यातव्यसाहाय्यकारी स्थानीयबाधक इत्युभयरूपः, स्वयमुपनतः स्वयमेवोपगम्याश्रयी प्रतापोपनतो वा प्रतापप्रणतो वेति द्विरूपो दण्डोपनतः, इत्येते भृत्यभाविनः सामन्ताः ।

तैरिति । तैः 'सत्यप्यमित्रभावे तस्ये'त्यादिना त्रिरूपतया व्याख्यातैरमित्रैः, भूम्येकान्तराः व्याख्याताः मित्राण्यपि व्याख्यातप्रायाणि । अमित्रेष्विव मित्रेष्वपि अरिभावित्वमित्रभावित्वभृत्यभावित्वरूपा भेदा भवन्तीत्यर्थः ।

नयचन्द्रिका

भृत्यभाविनन्त्वाह—सामन्त इत्यादि । यद्यपि सामन्ता इति सर्वार्थतया समाप्तौ वक्ष्यति तथाप्यस्य सामन्तस्य ग्रहणमर्थभेदस्य विवक्षित्वात्, समासिगतसाम(न्त) पदस्य विजिगीषोर्भूम्यानन्तर्यमर्थः, अत्र बहु (ब) लवतो राजान्तरस्येत्यर्थभेदः । बलवतो राजान्तरस्य प्रतिहन्ता दुर्बला भूम्यनन्तरोऽन्तर्द्धिरिति । केचित्तु प्रतिघातोऽन्तर्द्धिर्द्वावपीत्याहुः, प्रतिघातो बलवतो दुर्गाटव्यपसारपातीति, पूर्वत्राप्यन्तर्द्धिप्रतिघातौ

[ मित्रेषु अवस्थाविशेषानुगुणा वृत्तिक्रमाः ]

**तेषां शत्रुविरोधे यत् मित्रमेकार्थतां व्रजेत् ।**
**शक्त्या तदनुगृह्णीयात् विषहेत तया परम् ॥२७२॥**
**प्रसाध्य शत्रुं यन्मित्रं वृद्धं गच्छेदवश्यताम् ।**
**सामन्तैकान्तराभ्यां तत् प्रकृतिभ्यां विरोधयेत् ॥२७३॥**

———

नयचन्द्रिका

द्वाविति, तत्र युक्तिमाह निर्भूमिकोऽन्तर्द्धिः अरेर्नेतुश्च मध्यस्थो दुर्बलोऽन्तर्द्धिरुच्यत इत्यस्वतन्त्रतयैवाभिधानात्, अत्र सामन्तो बलवतः प्रतिघात इति वचनादिति। तदसत्। अन्तर्द्धिरिति वचनेऽपि सामन्तप्रकरणे वचनात् सामन्तत्वापातो दुर्वार एवेति। प्रतिवेशो वा बलवतः पार्ष्णिग्राह इति, पार्श्वयोर्भूम्य(न)न्तरो हि प्रतिवेशः स च यातव्याभिसारी मूलबाधकश्चेत्युभयधा(था)बाधकतयोक्तः, स च विजिगीषोर्भृत्य भावी, बलवतोऽन्यस्य राज्ञा भूम्यनन्तरतया पार्ष्णिग्राह इति न विरोधः। स्वयमित्यादिस्वयमेव वा संश्रयणार्थं प्रतापतश्चलाक्रन्तत्वेन वेत्युभयप्रकारोऽपि दण्डोपनत इत्येते भूम्यनन्तरा अपि भृत्यभाविन इत्याशयः। एतेऽपि त्रय इति केचिद् सामन्ता अप्युक्तास्त्रिविधा अप्येते भूम्यनन्तरा इत्यर्थः।

सत्यप्यमित्रभाव इति सामन्त इति चामित्रेषूक्तं त्रैविध्यमेष्वेवप्यतिदिशति—तैर्भूम्येकान्तरा इति। सत्यप्यमित्र इत्यारभ्य विशेषा द्रष्टव्या इत्यर्थः।

श्रीमूला

मित्रेष्ववस्थाविशेषे वृत्तिविशेषानाह—तेषामिति। तेषां भूम्येकान्तराणां मित्राणां, शत्रुविरोधे शत्र्वभियोगे प्राप्ते, यत् मित्रम्, एकार्थतां शत्रुणा समानार्थत्वं सन्धिमित्यर्थः, व्रजेत्, तत्, शक्त्या कोशदण्डादिकया, अनुगृह्णीयात् उपचितं कुर्यात्। कीदृश्या शक्त्या, यया स्वीकृतया परं शत्रुं विषहेत अभिभवेत्।

प्रसाध्येति। यत् मित्रं, शत्रुं, प्रसाध्य जित्वा, वृद्धं सत्, अवश्यताम् अविधेयत्वं, गच्छेत्, तत् मित्रं, सामन्तैकान्तराभ्यां प्रकृतिभ्याम् अरिप्रकृतिमित्रप्रकृतिभ्यां विरोधयेत्।

नयचन्द्रिका

अरिषु विकृतेषु तत्प्रकाराः प्रागेवोक्ता मित्रेषु नोक्तास्ते चावश्यं वक्तव्यास्तेषामप्यपरिभावित्वं(त्व) सम्भवादित्याशयवानाह—तेषामित्यादिना। तत्र मित्रस्य शत्रुणाभिभवे तत्साहाय्यदानं तावदाह तेष मिति। तेषां मित्राणां मध्ये शत्रुणा विरोधेऽभिभवे सति यन्मित्रमेकार्थतां विजिगीषुणा सहैकत्र प्रयोजनतां गच्छेत्, तुल्ययोगक्षेमः स्यादित्याशङ्क्याह—शक्त्येति, कोशदण्डादिरूपयानुगृह्णीयात् सहायीभवेत् यथाशक्त्या (क्ति)शत्रुमाक्रामेदित्यर्थः।

तत्कुलीनावरुद्धाभ्यां भूमिं वा तस्य हारयेत् ।
यथा वाऽनुग्रहापेक्षं वश्यं तिष्ठेत्तथा चरेत् ॥२७४॥
नोपकुर्यादमित्रं वा गच्छेद्यदतिकर्शितम् ।
तदहीनमवृद्धं च स्थापयेन्मित्रमर्थवित् ॥२७५॥
अर्थयुक्त्या चलं मित्रं सन्धिं यदुपगच्छति ।
तस्यापगमने हेतुं विहन्यान्न चलेद्यथा ॥२७६॥

---

नयचन्द्रिका

यत्तु शत्रुः स्वयमभिभूय वृद्धं सद्विजिगीषोरविधेयं स्यात् तत्र विधानमाह—प्रसाध्येत्यादि । शत्रुः स्वयमेवाक्रम्य वृद्धं यद्विजिगीषोरविधेयतां गच्छेत् तन्मित्रं तद्भूम्यनन्तराः तन्मित्राश्च (णिच) तदा तदमात्यादिभिश्च भेदनेन विरोधयेदित्यर्थः । प्रकृतिभ्य इत्यत्र चकारोऽध्याहार्यः, ततश्च प्रकृतिभेदात्सापेक्षमेव तत्स्यादिति भावः ।

श्रीमूला

तत्कुलीनेत्यादि । अथवा, तत्कुलीनावरुद्धाभ्यां तस्यावश्यस्य मित्रस्य कुलीनेन ज्ञातिना अवरूद्धेन पुत्रादिना च, तस्य भूमिं हारयेत् । अथवा, अनुग्रहापेक्षं वश्यं यथा तिष्ठेत् स्वसाह्यार्थि स्वविधेयं च यथा मित्रं तिष्ठेत्, तथा चरेद् अनुतिष्ठेत् ।

यत् मित्रं प्राप्तातिकर्शनं सत् स्वस्योपकारं न कुर्यात् शत्रुणा वा संसर्गं गच्छेत्, तत् मित्रं हानिरहितं वृद्धिरहितं च स्थापयेत् स्वार्थसाधनपण्डितो विजिगीषुरित्याह—नोपकुर्यादित्यादि ।

चलमित्रविषयेऽनुष्ठेयमाह—अर्थेत्यादि । यच्चलं मित्रं प्रयोजनयोगेन सन्धिमात्मना सह गच्छति, तत् पुनर्यथा न चलेत् तथा तस्यापगमनकारणं भूयोऽर्थलिप्सारूपं स्वयं तद्दानेन विहन्यात् ।

नयचन्द्रिका

तस्यैव वश्यत्वापादने प्रकारान्तरमाह—तत्कुलीनेत्यादि । तत्कुलीनः कुल्योवरुद्धो नियन्त्रितः पुत्रादिस्ताभ्यां भूमिं वा तस्य हारयेत्, स्वावष्टम्भगृहीताभ्यामित्यर्थः । आत्मनः सहकारापेक्षया आत्मनो वश्यं यथा वर्त्तेत तथा कुर्यादित्यर्थः ।

यद् वृद्धौ विजिगीषोर्नोपकुर्यादिति हानौ च तदभिसरेत् तन्मित्रमहीनं वृद्धं च स्थापयेदित्याह नोपकुर्यादिति । अर्थविदिति, स्वप्रयोजनोपायविदित्यर्थः ।

······निश्चलीकरणोपायमाह—अर्थयुक्त्येत्यादि । अर्थयुक्त्येति, प्रयोजनसिद्ध्यनुगुणत्वं यदप्य(न)वस्थितं कदाचित्सन्धिं विजिगीषुणा करोति तदैवास्य चलनहेतुमर्थलिप्सादिकं स्वयं प्रदानादिनापि हन्यात्, यथा पुनर्न चलेदित्यर्थः । अचलनमपि सिद्धिस्वरुपे निवेश्यमि(शयेद)ति हृदयम् ।

अरिसाधारणं यद्वा तिष्ठेत्तदरितश्शठम् ।
भेदयेद् भिन्नमुच्छिन्द्यात् ततश्शत्रुमनन्तरम् ॥२७७॥
उदासीनं च यत्तिष्ठेत् सामन्तैस्तद्विरोधयेत् ।
ततो विग्रहसन्तप्तमुपकारे निवेशयेत् ॥२७८॥
अमित्रं विजिगीषुं च यत्सञ्चरति दुर्बलम् ।
तद्बलेनानुगृह्णीयात् यथा स्यान्न पराङ्मुखम् ॥२७९॥
अपनीय ततोऽन्यस्यां भूमौ वा संनिवेशयेत् ।
निवेश्य पूर्वं तत्रान्यं दण्डानुग्रहहेतुना ॥२८०॥

---

### श्रीमूला

अरिविजिगीष्वोः समानं शठं यत् मित्रं, तत् शत्रुसकाशात् भेदयेत् भिन्नं चोच्छिन्द्यात्, तदुच्छेदानन्तरं च शत्रुमुच्छिन्द्यादित्याह—अरिसाधारणमित्यादि ।

यद् अरिविजिगीष्वोरुदासीनं तिष्ठति, तत् मित्रं, सामन्तैः विरोधयेत्, सामन्तारब्धविग्रहोपजातसन्तापं च कृत्वा स्वकर्तव्योपकारसापेक्षतां नयेदित्याह—उदासीनं चेत्यादि ।

यत् मित्रं दुर्बलं स्वबलाधानार्थं शत्रुविजिगीषू उभावप्याश्रयति, तत् स्वबलदानेन तथानुगृह्णीयात् यथा शत्रुणा न तत् संसृज्येतेत्याह—अमित्रं विजिगीषु चेत्यादि ।

उक्तस्योभयमुखप्रेक्षिणो दुर्बलस्यानुग्रहणेऽन्यं प्रकारमाह—अपनीयेति । पूर्वोक्तं मित्रं, ततोऽपनीय तदीयभूमेरपगमय्य, अन्यस्यां, भूमौ वा शत्रुसाह्यनिरपेक्षायां स्वभूमौ वा सन्निवेशयेत् स्थापयेत् । तदीयभूमौ कर्तव्यमाह—तत्र तदीयभूमौ, दण्डानुग्रहहेतुना सैन्येनानुग्रहकरणार्थम्, अन्यं तत्समर्थं, पूर्वं मित्रापनयनात् प्रागेव, निवेश्य स्थापयित्वा ।

### नयचन्द्रिका

यत्तु अरिविजिगीष्वोर्द्वयोरपि साधारणीभूतैवातिशठमश्व तदरि(त)स्तावद्भेद(येत्) भिन्नश्चोच्छिन्द्यात्, सह्यसंभूते । तस्मिन्नुच्छिन्ने पुनः शत्रुमुपच्छिन्द्यादित्याह—अरिसाधारणमित्यादिना ।

आत्मनि परे च यदुदासीनं तत्र विधिमाह—उदासीनञ्चेति । यत्स्वपरयोरुदासीनं तद्भूम्यनन्तरैर्विरुद्धं कुर्यात् ततस्तद्विग्रहेणो(णा)पकारेण पोडितमुपकारेण स्वजन्ये निवेशयेत् सापेक्षं कुर्यादित्यर्थः ।

पूर्वमुभयानपेक्षतया उभयसाधारणे विधिरुक्तः, इदानीन्तु दुर्बलतयोभयसापेक्षचले विधिमाह—अमित्रमित्यादिना । यद्दौर्बल्या (द्) बलार्थमुभावालम्बते तद्दण्डेन बलेनानुगृह्णीयात्, यथा विमुखं न स्यादित्यर्थः ।

अपकुर्यात् समर्थं वा नोपकुर्याद्यदापदि ।
उच्छिन्द्यादेव तन्मित्रं विश्वस्याङ्कमुपस्थितम् ।।२८१।।
मित्रव्यसनतो वाऽरिः उत्तिष्ठेद्योऽनवग्रहः ।
मित्रेणैव भवेत् साध्यः छादितव्यसनेन सः ।।२८२।।
अमित्रव्यसनान्मित्रमुत्थितं यद्विरज्यति ।
अरिव्यसनसिद्धया तच्छत्रुणैव प्रसिद्धयति ।।२८३।।

---

नयचन्द्रिका

उभयापेक्षस्य दुर्बलस्यैव प्रकारान्तरविकल्पानाह—अपनीयेत्यादि ।

पूर्वस्या भूमेरपनीय भूम्य(न ?)न्तरे पार्थत्वापयेत् (पार्श्वं स्थापयेत्)येन परापेक्षा न स्यात् । किं कृते(त्वे)त्याह—निवेश्येत्यादि, पूर्वमयन्त्रं (?मन्यत्र)भूमौ स्थितः तत्रान्यं स्थापयित्वा । किमत्रान्यत् स्थापनमित्यत्राह—दण्डानुग्रहहेतुनेति, दण्डेन साहाय्य-करणार्थमेको दण्डेन साहाय्यदायितया तत्रान्यः प्रथममेव स्थापनीय इत्यर्थ ।

श्रीमूला

यत् मित्रं विजिगीषोरपकारं कुर्यात् समर्थं वा सद् उपकारम् आपदि न कुर्यात्, तत् मित्रम् उपायैरात्मनि विश्वासयुक्तं कृत्वा स्वोत्सङ्गगतं विजिगीषुरुच्छिन्द्यात् न तूपेक्षेतेत्याह—अपकुर्यादित्यादि ।

योऽरिर्विजिगीषोर्मित्रव्यसनवशात् प्रतिबन्धं विनैव वृद्धिं प्राप्नुयात्, सः मित्रेणैव स्वप्रयत्नप्रशमितव्यसनेन स्वप्रयत्नाप्रकाशितव्यसनेन वा साधनीय इत्याह—मित्रव्यसनतो वारिरित्यादि ।

यत् मित्रम् अमित्रस्य बलादिव्यसनाद् वृद्धिं प्राप्तं सद् विजिगीषुविरक्तं भवति, तत् मित्रम् विजिगीषुररिव्यसननिवर्तनपूर्वमरिणैवोद्योजितेन साधयेदित्याह—अमित्रव्यसनान्मित्रमित्यादि । अरिव्यसनसिद्धया अरिव्यसनस्यापोहेनेत्यर्थः ।

नयचन्द्रिका

( अपकुर्यादिति ) यत्तु समर्थं सत् विजिगीषोरपकुर्यात् तस्यापदि न वोपकुर्यात् परिहारार्थं न चेष्टेत, तन्मित्रं प्रथमं विश्वस्तं कृत्वा उच्छेदसौकर्यदशायामुच्छिन्द्यादेव न विचारयेदित्येवकारार्थः । अङ्कमुपागतम्—स्वगोचरतापन्नमित्यर्थः ।

विजिगीषुः स्वमित्रस्य प्रकृत्यादिव्यसनेन कर्मसु व्यापृतः स्वशत्रुं स्वयं च (?) साधयेदपि कुतः, तत्साहाय्यार्थं गूढप्रतिहतदण्डः पराविज्ञेयबलादिव्यसनेन मित्रैणै-वेत्यर्थः । अनवग्रह इति निष्प्रतिबन्धः । मित्रेऽभिह (हि) तो न्यायः शत्रावपि तुल्य इत्याह—अमित्रव्यसनादित्यादि । अरेर्बलादिव्यसनस्य दैवतसिद्धया यन्मित्रममित्रा-(त्र) व्यसनादुत्थित(तं) व्यसनं विसृज्य स्वकर्मसिद्धियुक्तं विजिगीषावनपेक्षं भवति

[निगमनम् ]

**वृद्धिं क्षयं च स्थानं च कर्शनोच्छेदनं तथा ।**
**सर्वोपायान् समादध्यात् एतान् यश्चार्थशास्त्रवित् ।।२८४।।**
**एवमन्योन्यसञ्चारं षाड्गुण्यं योऽनुपश्यति ।**
**स बुद्धिनिगडैर्बद्धैरिष्टं क्रीडति पार्थिवैः ।।२८५।।**

इति षाड्गुण्ये मध्यमचरितमुदासीनचरितं मण्डलचरितं
चाऽष्टादशोऽध्यायः, आदितः षोडशशतः,
एतावता कौटलीयस्यार्थशास्त्रस्य षाड्गुण्यं
सप्तमाधिकरणं समाप्तम्

---

नयचन्द्रिका

तच्छत्रुणैव साधनीयं न तु स्वयमिति, स्वस्या नृशंस्यार्थं शत्रुणैव प्रसिध्यतीति, शत्रुणैव साधितं भवतीत्यर्थः ।

श्रीमूला

वृद्धिमिति । योऽर्थशास्त्रवित् स तु, वृद्धिं क्षयं स्थानं च, तथा कर्शनोच्छेदनं कर्शनमुच्छेदनं च, एतान् सर्वोपायान् सर्वांश्च सामदानादीनुपायान्, समादध्यात् सम्यक् तत्तद्विषयसम्प्रधारणपूर्वं प्रयुञ्जीत ।

यथाप्रपञ्चितार्थसम्यक्प्रयोगप्रयोजनाख्यानेनाधिकरणमुपसंहरति—एवमिति । प्रपञ्चितैः प्रकारैः, यः, अन्योन्यसंञ्चारं परस्परोपश्लिष्टं, षाड्गुण्यम्, अनुपश्यति अनुसन्धत्ते सः बुद्धिनिगलैः बुद्धिभिरेव बन्धनश्रृंखलाभिः, बद्धैः स्वायत्ततां नीतैः, पार्थिवैः क्रीडासाधनैः, इष्टं यथाकामं क्रीडति ।

व्याख्यायामर्थशास्त्रस्य श्रीमूलाख्यानभाजने ।
षाड्गुण्याख्याधिकरणं सप्तमं समपूर्यत ।।

इति श्रीवञ्चिमण्डलमहाराजाश्रितस्य ताम्रपर्णीतीरवर्तितरुवाग्रहाराभिजनस्य श्रीसीताम्बाश्रीरामसुब्रह्मण्यार्यसूनोर्महामहोपाध्याय गणपतिशास्त्रिणः कृतिषु कौटलीयार्थशास्त्रव्याख्यायांश्रीमूलाख्यायां षाड्गुण्ये सप्तमाधिकरणे अष्टादशोऽध्यायः,
मध्यमचरितोदासीनचरितमण्डलचरितानि,
आदितः षोडषोत्तरशततमः
षाड्गुण्यं सप्तममधिकरणं
समाप्तम्
द्वितीयसम्पुटः समाप्तः
शुभं भूयात्

---

नयचन्द्रिका

एवं षाड्गुण्यप्रयोगं प्रपञ्चेनोक्त्वा तदर्थं समासेनोपसहरति वृद्धि( )क्षयश्चेत्यादि। अरिर्विजिगीषूणां वृद्ध्याद्यवस्थाः षाड्गुण्यस्य निमित्ततयाऽनुसन्धेयाः अरिषु कर्शनोच्छेदने कार्यतया, सामादयः सर्वेऽप्युपायः साधनतया वेत्यर्थः। एतानिति, अनुक्रान्तानुपायान् समादध्यात् तत्राधिकारिविशेषमाह—य़श्चार्थशास्त्रविदिति। शास्त्रशिक्षित एवाधिकारो नान्य इत्याशयः।

सम्यक् प्रयुक्तस्यास्य फलमाह—एवमित्यादिना। अन्योन्यसञ्चारमिति, षडपि गुणानन्योन्यस्मिन् सञ्चार्य बन्धेन तया(बन्धनतया)तद्विचार्यते तत्र विग्रहादीन् यच्चविग्रहादौ स्थानतया विचार्यते तत्र सन्धिमपि सञ्चार्य, अत्र विग्रहादौ कृते किं स्यादितीति वा, अत्र सन्ध्यादिक किं स्यादिति (इति वा), एवं षडपिरणे गुणान्यन्योन्यत्रसञ्चार्य योऽनुप(दि ?)श्यति अनुबन्धेन कार्यतयाऽध्यवस्यति। स बुद्धीति गलै बुध्यत(न्त) इति बुद्धयः उपायाः त एव निगलाः अशक्यमोचनत्वात् तैर्बन्धैः (द्धैः) परतन्त्रीकृतैः पार्थिवैरिष्टैः (ष्टं) यथेच्छं वृद्धानां होनतां हीनानां वृद्धताञ्चापादयत्(न)क्रोडति विनोदमिव करोतीत्यर्थः।

इति श्री वादिकविचूडामणि महोपाध्याय श्रीमन्माधवमिश्रयज्वविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां षाड्गुण्ये सप्तमेऽधिकरणे अष्टादशोऽध्यायः, समाप्तः।

समाप्तञ्च षाड्गुण्यमधिकरणम्।